# THE SIDDHANTA KAUMUDI

OF

## BHATTOJI DEEKSHIT

WITH

THE TATTVABODHINI COMMENTARY

OF

JNANENDRA SARASVATI

THE SUBODHINI COMMENTARY

OF

JAYAKRISHNA

AND

THE CHANDRAKALA COMMENTARY

OF

BHAIRAVA MISRA

WITH

THE NOTES OF

Mahamahopadhyaya Pandit Sivadatta Shastri.

PRINTED AND PUBLISHED BY

KHEMRAJ SHRI KRISHNADAS,

*Proprietor of "Shri Venkateshwar" Steam Press*

BOMBAY.

1941

श्रीः।

भट्टोजिदीक्षितविरचिता

# सिद्धान्तकौमुदी।

तत्त्वबोधिनीटीकासहिता।

लौकिकभागे-ज्ञानेन्द्रसरस्वतीविरचिततत्त्वबोधिनीसमाख्यया,
वैदिकभागे-पं० जयकृष्णविरचितसुबोधिनीसमाख्यया,
लिङ्गानुशासने-भैरवमिश्रनिर्मितचन्द्रकलाख्यया
च व्याख्यया,

जयपुरीयसंस्कृतपाठशालाध्यापक-दाधिमथ-कुदाल-पण्डितबदरीलालसूनुलवपुरीयप्राच्यविद्यालयप्रधानाध्यापकमहामहोपाध्यायपं० शिवदत्तविरचितटिप्पणीभिश्च समन्विता,

पाणिनीयशिक्षा-अष्टाध्यायीसूत्रपाठ-गणपाठ-धातुपाठ-धातुपाठ-कारिका-लिङ्गानुशासन-वार्तिकपाठ-परिभाषापाठ-उणादिपाठ-फिट्सूत्रपाठ-सूत्रसूची-गणपाठसूची-धातुसूची-वार्तिकसूची-परिभाषासूच्युणादिसूत्रसूची-फिट्सूत्रसूची-लिङ्गानुशासनसूचीभिर्विभूषिता च।

सैव

अत्रत्यैर्बहुभिर्विद्वद्वरैः संशोध्य

**क्षेमराज-श्रीकृष्णदासश्रेष्ठिना**

**मुम्बय्यां**

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालये

सम्मुद्र्य प्रकाशिता।

संवत् १९९८ शके १८६३



ग्रन्थोपस्कर्ता

महामहोपाध्याय-दाधिमथ-पण्डित-शिवदत्तशर्मा.

लवपुरीय-प्राच्यविद्यालय-प्रधानाध्यापकः.

**Mahamahopadhyaya Pandit Shivadatta,**

*Head Pandit, Oriental College, Lahore.*

ए. सी. वुल्नर. एम. ए.

लवपुरीयप्राच्यविद्यालयाध्यक्षः

# A. C. WOOLNER, Esq., M. A.

Principal, Oriental College, Lahore.



एषां विवाहोत्सवे संमानार्थं कौमुदी समर्प्यते ग्रन्थोपस्कर्त्रा.

This was presented at the time of marriage ceremony.

# प्रस्तावना ।

इदं तावदवधानदानेनाकर्णयन्तु सन्तः—यत् किल धर्मार्थकाममोक्षाभिधानेषु परमपुरुषार्थेषु मोक्षस्यैव प्राधान्यमाकलयन्ति पूर्वजा महर्षिपुङ्गवाः । स च आदिपुरुषनिःश्वाससन्ततिसंकलनरूपस्य वेदस्य सम्यगर्थज्ञानसाधनक एव । वेदार्थज्ञानं च 'अयं शब्द इममर्थमवगमयति, अस्य च शब्दस्यास्मिन्नर्थेऽभिधाशक्तिः' इत्यादिशक्तिग्रहाधीनमेव । शक्तिग्रहश्च—'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।' इत्येवंविधवृद्धजनवचनपर्यालोचनेन व्याकरणशास्त्रायत्त एवेत्यध्यवसीयते । निरुक्तमपि व्याकरणस्यैवावशिष्टांशपूरकमिति न तस्यापि वेदार्थप्रत्यायकत्वे काचित् क्षतिः । तच्च व्याकरणं विविधविषयकान् (लौकिकानलौकिकांश्च) शब्दकदम्बान् व्याकुर्वाणं बहुविधं बहुशो बहुभिस्तीव्रतरशेमुषीमुखस्थीकृतनिखिलशास्त्रसारैः प्रवर्तितमासीदिति पुरातनसुधीजनबुद्धिवृद्धिसमुद्धृतग्रन्थावगाहनेनावगम्यते, परन्तु नेदानीं केवलं पाणिनीयमन्तरा तेष्वन्यतममपि पाणितलमलङ्करोति, यद्यपि सन्ति कियन्त्याधुनिकानि । श्रीपाणिनिमुनिविनिर्मितं च समस्तशब्दशास्त्रातिशायि सकलव्याकरणतत्त्वसञ्चितमष्टभिरध्यायैरुपनिबद्धं सूत्ररूपमेवेति नातिगुप्ततमम् । सूत्रव्याख्यानभूतो व्याडिविदुषा **सङ्ग्रहो**ऽपि समगृह्यत, यदिदानीमसौ नोपलभ्यत इति त्वैहिकपुरुषदौर्भाग्यध्वनकमेव । सूत्राणां निसर्गदुरूहाभिप्रायत्वान्नेदं मन्दमतिमतिसमाक्रान्तं भविष्यतीति विचिन्त्य करुणाक्रान्तमनस्केन श्रीभगवता **पतञ्जलिना** मुनिनाऽस्योपरि **महाभाष्य**नामको ग्रन्थो निरमायि । व्याकरणन्यायमिश्रितपदावलीमध्यगतार्थप्रतिपादनसाधनकं **वाक्यपदीय**मपि (**भर्तृ**) हरिपादैः प्राणायि । परन्तु नैतावताऽपि करालकलिकालफूत्कृतिविकम्पितधियां व्याकरणतन्त्रे धिषणासमुद्रेक इति **वामन-जयादित्याभ्यां** सरलगत्या सूत्रार्थतदुदाहरणप्रकाशिका **काशिका**ऽपि प्रकाशिता । एतस्यामपि च काशिकायां नैतादृशं प्रकरणसौष्ठवम्, येन प्रवर्तमानो मानवोऽनत्यायासेन झटिति व्युत्पत्तिमनुविन्देत् । एकस्यापि शब्दस्य व्याकृतिमार्गमार्गणेऽनेकस्थलावलोडनापेक्षा नितान्तं गौरवावहा च, तेन सूत्रार्थोदाहरणमात्रप्रतिपादिका नेयमपि निरतिशयं लोकोपकारिणीत्यवगत्य सकलन्यूनतानिरासबद्धपरिकरेण मनीषिणा **श्रीरामचन्द्रेण** व्याकरणार्णवपारगमनसेतुरूपः **प्रक्रियाकौमुदी**ग्रन्थोऽपि संजग्रन्थे । यस्य च **शेषश्रीकृष्णा**चार्यः **प्रक्रियाप्रकाश**नाम्नीं टीकां व्यरचयत् । अव्याख्याताखिलसूत्रत्वादस्य ग्रन्थकस्य नोपकारभूयस्त्वमुपकल्प्य एतद्ग्रन्थगतामेव च प्रणालीमवलम्ब्य **शेषश्रीकृष्ण**शिष्येण सुधिया श्री**भट्टोजिदीक्षिते**न भाष्यार्णवं प्रमथ्य **सिद्धान्तकौमुदी**यमुल्लासिता, या साम्प्रतमखिलायामिलायां कौमुदीवाज्ञानतमःप्रसरमपसारयन्ती प्रसरन्ती रात्रिन्दिवं विद्वज्जनमनःकुमुदमोदिनी मोदतेतराम् । सन्ति यद्यप्यस्या भूयस्यष्टीकाः परन्तु नापरा काऽपि तथा मनीषिजनमनोविनोदिनी यथेयं **ज्ञानेन्द्रभिक्षु**विरचिता **तत्त्वबोधिनी**त्यवधार्य तयैव सहितामिमां प्रथमवृत्तावहममुद्रयम् । नातिचिरेण चाहमहमिकया तूर्णं ग्राहकैर्गृह्यमाणा कथाशेषतामशिश्रियन्नः कार्यालये । सम्प्रति भूय एतस्याः प्रचिकाशयिषयाऽन्यत्सरलतापादनाय विदुषां मनः प्रसादयितुं च मया पुनरस्या विषमस्थलपरिष्करणनिमित्तं लवपुरीयप्राच्यविद्यालयसंस्कृतश्रेणिप्रथमाध्यापका महामहोपाध्यायपण्डितवर**श्रीशिवदत्त**शर्माणः सादरमभ्यर्थिताः । एतैश्च पुनः करुणाक्रान्तमनस्कैर्विद्यार्थिजनोपकारकरणबद्धैकपरिकरैरस्यां भ्रमविभ्रमवशादसाधुत्वेन यत्र कुत्रापि कदर्थीक्रियमाणानां शब्दानां यथाशास्त्रं साधुत्वप्रतिपादनप्रमुखं सम्प्रति प्रतिस्थलमेतादृशं टिप्पणमकारि यत्साहाय्येन विद्यार्थिजनः स्वयमेवास्या दुर्भेद्यग्रन्थितस्थलान्यपि सुखं प्रस्फोटयितुं प्रभवेत् । उत्तरभागस्य च टिप्पणनिर्माणसमये स्वप्रातिभोपकल्पितयुक्तियुक्तैर्वचोभिर्व्याकरणशास्त्रधुरीणाः श्री**शिवनारायणशास्त्रिणो**ऽपि यदस्यामुपकृतवन्तः, तमुपकारं मनसि सततं सम्भावयन्तस्तान् मनीषिणो धन्यान् वदामः ।

अथ चादिमाऽऽवृत्तावटीकलिङ्गानुशासनतया न परामानन्ददानकोटिमाटीकन्नेयमिना सक्तसर्वावयवातिलकेत्याकलय्याधुना मिश्रोपाह्वश्री**भैरवसमुद्भवललितकल**चन्द्रकलाकलाऽऽलिङ्गितलिङ्गानुशासनतया विकलङ्कलताकलङ्कपङ्कप्रक्षालनोज्ज्वलतामवापिता । प्रशस्तप्रकाशायामपि कौमुद्यामन्तरा सूचिकामात्मेप्सितपदार्थस्थानावगमो झटिति न भवति कलिकालकालव्यालकवलितस्मृतिततीनामिति तेषामनायासतस्सूत्राद्युपलब्धये सूत्र-वार्तिक-परिभाषोणादिसूत्र-धातु-फिट्सूत्र-लिङ्गानुशासनसूत्राणामकारादिक्रम-

सूच्या च विभूषिता । कतिपयवार्तिकानामपि सूत्ररूपेण विन्यासः परम्परया प्रागासीदिति यथावत्संशोध्य सूत्र-वार्तिक-गणसूत्र-परिभाषाभाष्येष्ट्याद्यन्यतमत्वावगमक्लेशनिरासाय च्छात्राणां क्रमेण (सू.) (वा.) (ग.) (प.) ( इ. ) इत्यादितत्तदादिवर्णविभूषितचिह्नान्यपि तत्र तत्र निवेशितानि । यद्यपि इतः पूर्वकालिकमुद्रणसमये कतिपयटिप्पण्यो यथासमयं न प्राप्ताः, तथापि अस्मिन्मुद्रणावसरे विषमस्थलस्थावश्यवर्धनीयांशाः टिप्पण्यः सर्वाः संयोजिताः । तथा सूर्यपुरस्थरैकजातीयज्योतिर्वित्-केशवात्मज**कृष्णशङ्करेण** विरचितधातुपाठकारिका च संनिवेशिता । अक्षरयोजकप्रमादाद् यत्र कुत्रापि वर्णभ्रंशतदन्यस्थानपातादिनाऽशुद्धपाठा अभवंस्तथा शीघ्रतयाऽवलोकनतः शरीरिधर्मत्वाच्च यच्चेदत्र स्खलनं तददोषैर्दोषज्ञैरनुकम्पया क्षन्तव्यम्, सूचनीयं च यतः पुनरावृत्तौ सर्वथोज्ज्वलतया को मोदयेदियं कौमुदी कोविदकुमुदकुलानीति ।

एवमत्रत्यैर्विद्वद्भिः संशोध्य मया स्वकीये "**श्रीवेङ्कटेश्वर**" (स्टीम्) मुद्रणयन्त्रालये संमुद्रय प्रकाश्यते । तदेतद्ग्रहणपठनपाठमादिना सफलयन्तु मे परिश्रमं महोदया अनुग्राहका ग्राहका विद्वांस इति भृशमभ्यर्थयते—

**विद्वज्जनकृपाकाङ्क्षी-क्षेमराज-श्रीकृष्णदासः,**

**" श्रीवेङ्कटेश्वर " स्टीम्-मुद्रणयन्त्रालयाध्यक्षो मुम्बई-स्थः ।**



॥ श्रीः ॥

# अथ सिद्धान्तकौमुदीस्थविषयानुक्रमः ।

# सिद्धान्तकौमुदीस्थविषयानुक्रमः।



इति सिद्धान्तकौमुदीस्थविषयानुक्रमः॥



Dhuni Ram ~~Sharma~~ Tripathi २ जनवरी १९२८

श्रीः ।

श्रीगणेशाय नमः ।

# तत्त्वबोधिनीव्याख्योपेता वैयाकरणसिद्धान्तकौमुदी ।

## संज्ञाप्रकरणम् ।

**(१) मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च ॥ वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥१॥**

---

(१) ॐ ॥ नत्वा विश्वेश्वरं साम्बं कृत्वा च गुरुवन्दनम् । सिद्धान्तकौमुदीव्याख्या क्रियते तत्त्वबोधिनी ॥ १ ॥
विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नंश्चिकीर्षितं प्रतिजानीते-**मुनित्रयमित्यादिना** । त्रयोऽवयवा

---

ओ ३ म्-ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् । ध्रुवासः पर्वता इमे ध्रुवो राजा विशामयम् ।
**दधिर्भ**क्तजनान् धात्री **मथी** तदरिमाथिनी । देवी **दधिमथी** नाम धन्वदेशे विराजते ॥ १ ॥
वायव्येऽञ्च्यां दधिमथी पुष्करात् योजनाष्टके ॥
यत्क्षेत्रे[२]जाता जगतीतले जना गच्छन्त्यमी **दाधिमथा**[३]ख्यया प्रथाम् ।
देवैः स्तुता **श्रीदधिमथ्य**संशयं सोपासकानां विजयं सदा क्रियात् ॥ २ ॥
भक्ता दधिमथीदेव्या एते दाधिमथा जनाः । ब्रह्मक्षत्रियविट्शूद्रा दाधीचा[४]श्च **तदन्वनात्** ॥ ३ ॥
वैराणसीयतु सदा जयपत्तनं[५] विद्याविलासिभिरिदं सुमनीषिवर्यैः ।
**श्रीरामसिंहनृप**मालिक इत्यवेत्य विद्यालतामवपदादृतधीरवीरः ॥ ४ ॥
उप्तां तु तां समवलोक्य निजेन पित्रा विद्यालतां नृपति**माधवसिंह**वीरः ।
संजीव[६]नादिपरिरक्षणदत्तचित्तः संवर्धयत्यनिशमात्मयशोऽभिवृद्ध्यै ॥ ५ ॥
गङ्गागोपालसद्भक्तः । श्रौतस्मार्तक्रियारतः । **श्रीमाधवकृपाप्राप्तराज्यो मानो**ऽवताचिरम् ॥ ६ ॥
यस्यानुपमसौहार्दहृद्याः सद्भावभाविताः । **श्रीशानचन्द्रप्रमुखाः** सभ्याः श्रेयसि जाग्रति ॥ ७ ॥
**नाथावतान्वयपयोधिसुधाकरश्रीः सामोद**भूमिपतिरूर्जितविक्रमश्रीः ।
श्रीगीःश्रितः **फतहसिंहनरेन्द्रसूनुः संग्रामसिंह**नरपश्चिरमेतु मोदम् ॥ ८ ॥
**बदरीनाथ**तनयो **गोदा**देव्यास्तु गर्भजः । **शिवदत्तो** दाधिमथष्टिप्पणीं कर्तुमुद्यतः ॥ ९ ॥

१ **परिभाव्य** विचिन्त्य, अनेनास्य निर्मूलत्वं निरस्तम् । तिरस्कृत्येति वा, अनेनास्य गतार्थत्वं च निरस्तम् । न च 'परीभावस्तिरस्क्रिया' इति कोषस्य विचारार्थप्रतिबन्धकता युक्ता, धातूनामनेकार्थत्वात् । 'कोशस्य नामलिङ्गानुशासनत्वेनार्थव्यवस्थापकत्वाभावात्' इति तु न मनोरमम्, अर्थप्रत्यायकत्वाऽभावे नामाऽनुशासनत्वस्यैवानुपपत्तेः, "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च" इत्यभियुक्तोक्त्या कोशस्यार्थप्रत्यायकत्वापरपर्यायशक्तिग्राहकत्वस्य सर्वैरङ्गीकृतत्वाच ॥ २ **सिद्धान्तेति**-विषयाः वैयाकरणसिद्धान्ताः, प्रयोजनं वैयाकरणसिद्धान्तज्ञानम्, अधिकारी वैयाकरणसिद्धान्ताजिज्ञासुः, संबन्धश्च प्रतिपाद्यप्रतिपादकभावः, एवमत्रानुबन्धचतुष्टयं बोध्यम् ॥

---

१ अञ्चितुं गन्तुं पूजयितुं याचितुं च योग्या-स्वार्थणिजन्तात् गतिपूजनयाचनार्थात् अञ्चुधातोः कर्मणि यत् । २ "**दधिमथ्याः परं क्षेत्रं पुष्करादष्टयोजनम्**" इत्युक्तेः **श्रीपुष्करक्षेत्रा**दष्टयोजनान्तरे उत्तरस्यां दिशि वर्तते । ३ **दाधिमथ**शब्दस्यैव प्राकृतभाषायां "**दाहिमह**" इति प्रसिद्धिः । एतन्नाम संस्कृतमपि सार्थकम्, शत्रुचेतोदाहि प्रतापवत्त्वेन । ४ गतियाचनयोः पूजनार्थत्वात् पूजार्थस्यार्थापत्तिसिद्धत्वात् अविवक्षितत्वात् गतियाचनयोरेव विवक्षितत्वात् शाकपार्थिवादित्वान्मथीशब्दलोपे धातोर्नलोपे दध्यच्शब्दात् स्वार्थेऽपत्यार्थे वाऽणि दाधीचशब्दसिद्धिः । ५ जन इति कर्तृपदमध्याहार्यम् । तथा च 'जनो लोकः सदा मे जयपत्तनं पण्डितभूयस्त्वेन वाराणसीतुल्यमाचरतु' इत्यवायनकर्म ॥ ६ **संजीवनं** छात्रवृत्तिदानं जलं च । **संजीवनः** पाठशालाध्यक्षश्च ॥ ७ इमे श्रीमन्त **ईशानचन्द्रशर्माणो** जयपुरमन्त्रिप्रवरचराणां **श्रीकान्तिचन्द्रशर्मणां** पुत्रप्रकाण्डा विराजन्ते ॥ ८ ॥ प्रमुखपदेनात्र बहुव्रीहिणा श्रीगोपीनाथ-SriGopinathjiPandit R. B. Knight प्रमुखा गृहेलिमाः ।

---

१ अस्मिन् दधिमथीक्षेत्रे १४४ ग्रामा आसन् । तत्तद्ग्रामनाम्नैव तदभिजनत्वेनैव दाधिमथावान्तरभेदाः कुदालादयः एतत्क्षेत्रोत्पन्नाः सर्वेऽपि वर्णा दाहिमह-( दाहिमा )-( दाइमअ )-( दाइमा ) पदेन प्रसिद्धाः । अत एव पृथ्वीराजरासानामके ग्रन्थे **दाहिमानामानः** क्षत्रिया अपि २८ शे प्रस्तावे वर्णिताः । रथकारप्रभृतयश्च कचित्काचित् समुपलभ्यन्ते ॥

(२) (सू) अइउण् १ ॥ (सू) ऋलृक् २ ॥ (सू) एओङ् ३ ॥ (सू) ऐऔच् ४ ॥ (सू) हयवरट् ५ ॥ (सू) लण् ६ ॥ (सू) ञमङणनम् ७ ॥ (सू) झभञ् ८ ॥ (सू) घढधष् ९ ॥ (सू) जबगडदश् १० ॥ (सू) खफछठथचटतव् ११ ॥

---

यस्येति त्रयम् 'संख्याया अवयवे तयप् २४९९' 'द्वित्रिभ्यां तयस्य-२५००' इत्ययच् । मन्तारो वेदशास्त्रार्थतत्त्वावगन्तारो मुनयः 'मनेरुच्च ४७६८' इत्यौणादिकसूत्रेण मनेरत उकारो मनेः पर इन् प्रत्ययश्च । गुणस्तु नेह भवति, किदित्यनुवर्तनात्तप्रकरणाद्वा । तेषां पाणिनिकात्यायनपतञ्जलीनां त्रयं मुनित्रयम् । ननु 'स्वयंभुवे नमस्कृत्य' इत्यत्रेवात्रापि 'नमःस्वस्ति-८४९' इत्यादिना चतुर्थी स्यात् । मैवम्, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी ८५०' इति वक्ष्यमाणत्वात् 'नमस्करोति देवान्' इतिवद् द्वितीयाया एव युक्तत्वात् । किंच 'जहत्स्वार्था वृत्तिः' इति पक्षे नमःशब्दस्यात्र निरर्थकत्वात् तद्योगे चतुर्थी न भवति, अर्थवद्ग्रहणपरिभाषायाः ११३ प्रवृत्तेः । 'स्वयंभुवे नमस्कृत्य' इत्यत्र तु स्वयंभुवमनुकूलयितुमित्यर्थविवक्षायां 'क्रियार्थोपपदस्य-८४७' इत्यादिना चतुर्थीति मूल एव स्फुटीभविष्यति । न चैवं 'नमःस्वस्ति-' इति सूत्रे नमःपदं व्यर्थमिति शङ्क्यम्, 'हरये नमः' इत्यत्र हरिमनुकूलयितुमित्यर्थेऽविवक्षिते संबन्धसामान्ये षष्ठ्यां प्राप्तायां तदपवादतया तस्यावश्यकत्वात् ॥ **तदुक्तीरिति** । तेषां पाणिन्यादीनामुक्तीः । सूत्रवार्त्तिकभाष्याणीत्यर्थः । तस्य मुनित्रयस्योक्तीरिति व्याख्यानेऽपि समुदायेन सूत्रं वार्त्तिकं भाष्यं वा नोक्तमिति समुदायिनां मुनीनामेवोक्तीरिति पर्यवस्यति ॥ **परिभाव्येति** । पर्यालोच्येत्यर्थः । न च परिपूर्वस्य भवतेस्तिरस्कारार्थत्वात्कथमत्र ज्ञानार्थतेति शङ्क्यम्, परीत्यस्य भावीति चुरादिणिजन्तेन योगात् । केचिदत्र भवतिना योगमभ्युपेत्याहुः-'परौ भुवोऽवज्ञाने ५०२१' इति सूत्रे परौ भुव इत्यस्यावज्ञान इति विशेषणान्न तिरस्कारार्थत्वनियमः । 'मनसा परिभाव्य किंचित्' इत्यादिश्रीहर्षप्रयोगाच्च । अत एवात्राप्रयुक्तत्वदोषशङ्काऽपि नास्तीति । अन्ये तु 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इति कोशात्परिपूर्वकाद्भवतेर्घञन्तादेव तिरस्कारप्रतीतिर्नान्यस्मादित्याशङ्कैवात्र नास्तीत्याहुः । तन्मन्दम्, परिभूय परिभवतीत्यतोऽपि तिरस्कारप्रतीतेः ॥ **वैयाकरणेति** । व्याकरणमधीयते विदन्ति वा वैयाकरणास्तत्सिद्धान्तानां कौमुदी । प्रकाशिकेत्यर्थः । निर्दुष्टसकलजनाह्लादकत्वसाम्येन कौमुदीशब्दप्रयोगः । करिष्यमाणाया अपि कौमुद्या बुद्ध्या संनिधापितत्वादियमित्यङ्गुल्या निर्देशः ॥ **विरच्यत इति** । मयेति शेषः । 'रच प्रतियत्ने' । प्रतियत्नो गुणाधानम् । विपूर्वादस्माद्वर्तमानसामीप्ये भविष्यदर्थे वर्तमानप्रत्ययः । (२) **अइउणिति** । णोऽनुबन्धोऽण्संज्ञार्थः । या या संज्ञा सा सा प्रयोजनवती ॥ **ऋलृगिति** । ककारस्त्वक्इक्उक्संज्ञार्थः ॥ **एओङिति** । ङकार एङ्संज्ञार्थः ॥ **ऐऔजिति** । चकारस्त्वच्इच्एच्ऐच्संज्ञार्थः । वर्णानामसंदिग्धत्वेन बोधनाय संहिताया अविवक्षणादेतेष्वसन्धिः । स्वराणां चादिषु पाठात् 'चादयोऽसत्त्वे ४१' इति निपातसंज्ञायां 'निपात एकाजनाङ् १६५' इति प्रगृह्यत्वे प्रकृतिभावान्न संधिरित्यन्ये ॥ स्यादेतत्, अकाराद्युपदेशेन यथा तत्सवर्णानामाकारादीनां लाभात्पृथगाकारादयो नोपदिष्टास्तथा ऋलृवर्णयोरपि सावर्ण्यादृकारोपदेशेनैवोभयसिद्धेः किं पृथगुपदेशेन । न च जातिपक्षे ऋलृवर्णयोः पृथगुपदेश आवश्यकस्तयोर्भिन्नजातित्वादिति वाच्यम्, सावर्ण्यादेवैकजात्युपदेशे जात्यन्तरस्यापि लाभात् । ऋलृवर्णयोः प्रत्येकं त्रिंशतः संज्ञासिद्धये 'अणुदित्सवर्णस्य-३३' इति सूत्रे अण्ग्रहणस्य जातिपक्षेऽप्यावश्यकत्वादिति चेत् । अत्राहुः 'ऋलृवर्णयोः सावर्ण्यस्यानित्यतां ज्ञापयितुमुभयोर्निर्देशः, तत्फलं तु क्लृप्ता शिखा यस्य क्लृप्तशिखः, तस्य दूरात्संबोधने क्लृ३प्तशिखेति प्लुतः । ऋलृवर्णयोः सावर्ण्यस्य नित्यत्वे तु 'अनृतः १५८' इति पर्युदासादृकारस्येव लृकारस्यापि प्लुतो न स्यादिति समाधानान्तरमपि 'ओर्गुणः १२१९' इत्यत्र दर्शयिष्यते ॥ **हयवरडिति** । टोऽनुबन्धोऽट्संज्ञार्थः । हकारोपदेशस्तु अट्अश्हश्हल्इण्ग्रहणेषु हकारग्रहणार्थः । अर्हेण 'अड्व्यवायेऽपि २८२' इति णत्वम् । देवा हसन्ति 'भोभगो-२४७' इति रोर्यत्वम् । देवो हसति 'हशि च २४६' इत्युत्वम् । लिलिहिध्वे लिलिहिढ्वे 'विभाषेटः ३१०४' इति वा ढः ॥ **लणिति** । णकारोऽनुबन्धोऽण्इण्यण्संज्ञार्थः ॥ नन्वणिति क्वचित्पूर्वणकारेण गृह्यते, क्वचित्तु परेण णकारेण, इणिति तु परणकारेणैव । तथा च निःसंदेहार्थमनुबन्धान्तरमेव कर्तुमुचितम् । सत्यम्, 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति परिभाषाज्ञापनाय पुनर्णकारोऽनुबन्ध इति स्थितमाकरे ॥ **ञमङणनमिति** । मकार इह अम्यम्ङम्अम्संज्ञार्थः ॥ **झभञिति** । ञकारो यञ्संज्ञार्थः ॥ **घढधषिति** । षकारस्तु झष्भष्संज्ञार्थः ॥ **जबगडदशिति** । शोऽनुबन्धोऽश्हश्वश्झश्जश्बश्संज्ञार्थः ॥ **खफछठथचटतवेति** । वकारस्तु छव्संज्ञार्थः ॥

---

१ अइउण्-इत्यत्र कारप्रत्ययः कस्मान्न भवतीति चेदुच्यते-'वर्णात्कारः' इत्यस्य नायमर्थो वर्णादुच्चार्यमाणात्कारप्रत्ययो भवतीति, एवं हि विज्ञायमाने ककार इत्यादावुच्चार्यमाणस्याज्झल्समुदायस्यावर्णत्वात्कारप्रत्ययो न स्यात् । किन्तर्हि ? निर्देश इत्यनुवृत्तेर्यस्योच्चार्यमाणस्य प्रयोगस्थो वर्णो निर्देश्यः प्रतिपाद्यस्तस्माद्वर्णाद्वर्णस्य प्रतिपादकात्कारप्रत्यय इत्यर्थः । अत्र चानुपूर्वीसंपादन एव तात्पर्यम्, न तु कविपुत्र इत्यादिषु दृष्टानामकारादीनां प्रतिपादन इति कारप्रत्ययाभावः ॥ २ अयं मकारस्तु सर्वान् मान्तान् प्रत्याहाराञ्ञान्तान्पठित्वा भाष्यकृता प्रत्याख्यातः ॥

**कपय्** १२ ॥ **शषसर्** १३ ॥ **हल्** १४ ॥ इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि ॥ एषामन्त्या इतः । [ लण्सूत्रेऽकारश्च ] हकारादिष्वकार उच्चारणार्थः ॥ ( ३ ) **हलन्त्यम्** । १ । ३ । ३ । हलिति सूत्रेऽन्त्यमित्स्यात् ॥

---

**कपयिति** । यकारो यय्मय्झय्खय्चय्संज्ञार्थः ॥ **शषसरिति** । रेफस्तु यर्झर्खर्चर्संज्ञार्थः ॥ **हलिति** । लकारः अल्हल्वल्रल्झल्शल्संज्ञार्थः। पुनर्हकारोपदेशस्तु वल्रल्झल्शल्षु हकारग्रहणार्थः । रुदिहि, स्वपिहि 'रुदादिभ्यः सार्वधातुके ३२८८' इति वलादिलक्षण इट् । स्निहित्वा-स्नेहित्वा ' न क्त्वा सेट् '११४३' इति निषेधं बाधित्वा 'रलो व्युपधाद्- ३४७५' इति वा कित्त्वम् । अदाग्धाम्, घत्वस्यासिद्धत्वेऽपि हकारस्य झल्त्वात् ' झलो झलि ३०४८ ' इति सलोपः । अलिक्षत् ' शलः-३११७ ' इति क्सः ॥ ननु पुनर्हकारोपदेशस्यावश्यकत्वेऽपि शर्मध्य एव हकारं पठित्वा 'अलोऽन्त्यस्य ६६ ' 'हलोऽनन्तराः संयोगः ५३ ' ' झलो झलि ३०४८' ' शल इगुपधा-३११७ ' इत्यादिसूत्राणि यावन्ति लानुबन्धानि तानि 'अरोऽन्त्यस्य ' 'हरोऽनन्तराः,' इत्येवंरूपेण रेफानुबन्धान्येव च कृत्वा 'हल् ' इति पृथक् सूत्रं त्यज्यताम् । मैवम्, तथा हि सति हरिर्हसति हरिर्हरित्यादि न सिध्येत् । तत्र ' खरवसानयोर्विसर्जनीयः ११८' 'वा शरि २२५' इत्यादिप्रसङ्गात् । अतो 'हल्' इति सूत्रमावश्यकमेव । एवं च 'हलिति सूत्रेऽन्त्यम्-' इति वक्ष्यमाणग्रन्थोऽपि स्वरसतः संगच्छते ॥ **अणादिसंज्ञार्थानीति** । अणादिसंज्ञा अर्थः प्रयोजनं येषां तानीति विग्रहः । अणादिसंज्ञाभ्य इमानि इत्यस्वपदविग्रहो वा, 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च १०११' इति वक्ष्यमाणत्वात् ॥ **एषामन्त्या इत इति** । एषां सूत्राणामन्त्या णादयो 'हलन्त्यम् ५'इत्यनुपदं वक्ष्यमाणेनेत्संज्ञका इत्यर्थः ॥ **लण्सूत्रेऽकारश्चेति** । अनन्त्यत्वात्पृथगुक्तिः। वचनविपरिणामेनेदिति संबध्यते । इत्संज्ञा चास्य 'उपदेशेऽजनुनासिक इत् ६' इत्यनेन । एवं च णादिभिरिद्भिः 'आदिरन्त्येन- ४' इति वक्ष्यमाणेन प्रत्याहारग्रहणात् 'अणादिसंज्ञार्थानि' इति यदुक्तं तत्संगच्छत इति भावः ॥ **अकार उच्चारणार्थ इति** । न तु लण्सूत्रस्थाकार इव प्रयोजनार्थ इत्यर्थः ॥ ( ३ ) **हलन्त्यम्** । अन्तेऽवसाने भवमन्त्यम्, दिगादित्वाद्यत् । 'उपदेशेऽजनुनासिक इत् ६' इत्यत उपदेश इति,इदिति चात्रानुवर्तते । 'आदिरन्त्येन-४' इति सूत्रेण सहान्योन्याश्रयमाशङ्क्य आवृत्त्या तं परिहरति-**हलिति सूत्रेऽन्त्यमिति** । हलि अन्त्यमिति विग्रहे 'सप्तमी १०३९' इति योगविभागात्, 'सुप्सुपा ९४९[२]' इति वा समास इति भावः । यद्वा, षष्ठीतत्पुरुषोऽयम्, 'हलिति सूत्रस्यान्त्यमित्स्यात्' इति व्याख्यानसम्भवात् ॥

---

१ **माहेश्वराणीति** । महेश्वरादागतानीत्यर्थः । 'तत आगतः' इत्यण् । तथा चोक्तम्-"येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ " अस्य श्रुतितुल्यता चोक्ता शिक्षायाम्, प्रत्याहाराह्निकान्ते भाष्ये च समाम्नायपदप्रयोगेण सूचिता, तट्टीकायां हरिणा स्पष्टीकृता च । यद्वा महेश्वरेण प्रोक्ता उपज्ञाता माहेश्वराः चतुर्दशानुबन्धाः । **"अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् । धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥"** इति नन्दिकेश्वरकाशिकायां सूत्रचतुर्दशकेऽनुबन्धचतुर्दशकस्य महेश्वरोपज्ञातत्वनिवेदनात् । माहेश्वराश्चतुर्दशानुबन्धा यत्र तानि । महेश्वरोपज्ञातानुबन्धयुक्तानीत्यर्थः ॥ २ ॥ संज्ञार्थमितो दर्शयति-**एषामिति** ॥ ३ **अकारश्चेति**-तेन सवर्णसंज्ञासूत्रे कैयटोक्तस्य रप्रत्याहारस्य सिद्धिः ॥ परन्तु 'कृञ् इति नेदं धातुग्रहणम्, किं तर्हि प्रत्याहारग्रहणम्' इत्यत्रेवात्र 'र इति नेदं वर्णग्रहणम् किं तर्हि प्रत्याहारग्रहणम्' स्वशैलीसिद्धस्याकथनेन नैवर प्रत्याहारे मुनित्रयसंमतिः॥ किंच रप्रत्याहाराङ्गीकारे कमलानीत्यत्र णत्ववारणाय प्रफुल्त इत्यादौ निष्ठानत्वादिवारणाय, धीवरीत्यादौ **"वनो र च"** इत्यनेन,अहर्गणस्य इत्यादौ **'रोऽसुपि'** इत्यनेन दन्त्यत्वसाम्येनापरिहार्यप्राप्तेर्लकारस्य वारणाय च 'णत्वादिविधौ स्वरूपस्यैव ग्रहणं, न प्रत्याहारस्य' इत्यर्थबोधनाय व्याख्यानानुसरणक्लेशोऽङ्गीकरणीयः स्यात् । तस्मात् 'उरण् रपरः' इत्यत्रापि तवल्कार इत्यादिसिद्ध्यर्थम् 'ऌकारस्याण् लपरः' इत्यपूर्ववचनमेव करणीयमित्येव भाष्यकृत आशयः । अत एव 'अतो ऌरान्तस्य' इत्यत्र लकारं निर्दिष्टवानाचार्यः ॥ इतोऽप्यधिकमस्माभिर्दाधिमथ्यां भाष्यटिप्पण्यां च प्रपञ्चितम् ॥ ४ **उच्चारणार्थ इति**-तथा चोक्तं भाष्यकृता-"न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि सम्भवति" इति । 'सर्वं वाक्यं सावधारणम्' इति न्यायादुच्चारणमात्रार्थ इत्यर्थः । उच्चारणातिरिक्तप्रयोजनरहित इति यावत्॥ ऊच्चारणार्थानामपि निवृत्तिस्त्वित्संज्ञालोपावन्तरेण न भवतीति बोध्यम् ॥ ५ **'भ्रेष्यन्नुवोर्हविषः'** इति निर्देशस्तु विसर्गाभावपक्षे उपपन्न इति न विसर्गस्य वारकः **'तङानावात्मनेपदम्'** इत्यादौ पाणिनिनाऽभावानुष्ठानस्यापि वैकल्पिकेषु कृतत्वाद् इति केचित्॥ तन्न, **'वा शरि'** इत्यस्य **'विसर्जनीयस्य सः'** इत्येतत्प्रकरणस्थत्वेन विसर्गाभावे सकारनिर्देशेनैव वक्तव्यत्वात् ॥ तस्मादुक्तनिर्देशेन सत्वविसर्गयोरुभयोरपि वारणे प्रत्यङ्हारिरित्यादौ पक्षे कुगाद्यागमापत्तिरित्यादिपदेन संग्राह्यमिति वदन्ति ॥ वयं तु ब्रवीमि-सूत्रनिर्देशानामपि प्रायः सूत्रसाध्यानुवादकत्व एव लाघवेन न सूत्रासिद्धसाधकत्वकल्पनम् इति ॥ ६ 'हलन्त्यम्' इत्यत्र हल्पदस्य प्रविष्टत्वात् 'आदिरन्त्येन-'इत्यत्रेत्पदार्थस्य प्रविष्टत्वात् 'इत्पदार्थप्रसिद्ध्युत्तरं हल्पदार्थप्रसिद्धिः, हल्पदार्थप्रसिद्ध्युत्तरम् इत्पदार्थप्रसिद्धिः, इत्यन्योन्याश्रयः ॥

इति लस्येत्संज्ञायाम्। ( ४ ) (सू) आदिरन्त्येन सहेता । १ । १ । ७१ । अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । इति हल्संज्ञायाम्-॥ (५) (सू) हलन्त्यम् ।१।३।३। उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम्। ततोऽणजित्यादिसंज्ञासिद्धौ ॥ ( ६ ) (सू) उपदेशेऽजनुनासिक इत् । १। ३ । २ । उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् प्रतिज्ञानुनासिक्याः पाणिनीयाः॥(७)[लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा]॥(८)प्रत्याहारेष्वितां न ग्रहणम्,

---

( ४ ) **आदिरन्त्येन सहेता** । अन्त्येनेति किम्, सुडिति प्रत्याहारस्तृतीयैकवचनावयवेन मा भूदिति काशिकाकृत् । यद्यपि टकारान्तसङ्घस्य टाटकारोऽप्यन्त्यो भवति, तथाप्यन्त्येनेति ग्रहणसामर्थ्यादन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेनैव प्रत्याहारः, न हि टाटकारे 'हलन्त्यम् ५' इतीत्संज्ञा प्रवर्तते । न चैवं रप्रत्याहारासिद्धिः, लण्सूत्रस्थावर्णस्यानुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि इता प्रत्याहारात्तत्सिध्यतीति काशिकाकाराशयः। निष्कर्षस्त्विह 'खौजसमौट्-२६८' इति सूत्रे दर्शयिष्यते । विस्तरस्तु शब्दकौस्तुभेऽनुसंधेयः। इतेति किम्, रप्रत्याहारो यथा स्यात् । स ह्यनुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि गृह्यत इत्युक्तम्, न चैतदितेत्यस्य विरहे लभ्यत इति शब्दकौस्तुभे स्थितम् ॥ अत्राद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती संज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादित्याशयेनाह-**मध्यगानामिति** ॥ **स्वस्य** चेति 'स्वं रूपम् ४६' इत्यनुवर्तत इति भावः । स्वं रूपं चादेरेव गृह्यते नान्त्यस्य, 'अन्त्येन' इत्यप्रधानतृतीयानिर्देशात् । सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् ॥ ननु स्वमित्यस्यानुवृत्तौ 'कः संज्ञी' इत्याकाङ्क्षायाः शान्तत्वादवयव्याक्षेपो न स्यात् । तथा च 'इको यणचि ७४' इत्यादौ 'इकारस्य स्थाने यकारः स्यादकारे परे' इत्येवमर्थः स्यात् । मैवम्, आदेरेव संज्ञित्वे तु 'आदिरन्त्येन' इति संज्ञाकरणस्यैव वैयर्थ्यापत्तेः । किञ्च, अण्अक्अच्अट्अम्अशादीनां पृथङ्निर्देशोऽपि व्यर्थः स्यात्, सर्वत्राकारस्यैव संज्ञित्वादिति दिक् । शब्दकौस्तुभे तु-आद्यन्तावयवद्वारा समुदायानुकरणेन सिद्धेऽन्त्यव्यावृत्त्यर्थमिदं सूत्रमिति स्थितम् ॥

( ५ ) **उपदेशेऽन्त्यं हलिति** । उपदेशे किम् । अग्निचित्, सोमसुत्-इति काशिका । अत्रेत्संज्ञायां लोपः स्यात् । न च तुको वैयर्थ्यम् आगत्येत्यादौ चरितार्थत्वात् । न च क्विपः पित्त्वस्य वैयर्थ्यम्, अग्निचितावित्यादौ चरितार्थत्वादिति हरदत्तः ॥ अन्त्यं किम्, मनिनो मकारस्य मा भूत् । सत्यां हीत्संज्ञायामन्त्यादचः परः स्यात् । वेश्म, सद्म । 'सर्वधातुभ्यो मनिन् ४७९०'॥ हलिति किम्, 'भू सत्तायाम्' भविता । न च प्रयोजनाभावान्नेत्त्वमिति वाच्यम्, सत्यामित्संज्ञायाम् 'ऊदितः ३०४६' इति इड्विकल्पापत्तेः । अन्ये तु-चिरिणोति, जिरिणोति । इह धातोरन्त्यस्य मा भूत् । सत्यामित्संज्ञायामिदितः-३०२६' इति नुम् स्यादित्याहुः ॥ **आद्योच्चारणम् इति** । आद्योच्चारणविषयीभूतो यः शब्दस्तस्यान्त्यं हलित्स्यादिति फलितोऽर्थः ॥

( ६ ) **उपदेशेऽजनु**-। उपदेशनमुपदेशः, भावे घञ् । उपदेशे किम्, अभ्र आँ अपः । सप्तम्यर्थद्योतकोऽत्राङ् 'आङोऽनुनासिकश्छन्दसि ५३७४' इत्याकारोऽनुनासिकः । यद्यपीह 'उञ ऊँ १६९' इत्यत्रेवानुनासिकविधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम् । अच् किम्, मनिनो मकारस्य मा भूत् । न च 'हलन्त्यम् ५' इत्यन्त्यग्रहणसामर्थ्यादनन्त्यस्य मकारस्य न भवेदिति वाच्यम्, आलच्प्रत्ययादावतिप्रसङ्गवारणेन तस्य चरितार्थत्वात् । अनुनासिक इति किम्, 'ईक्ष दर्शने' ईक्षितः । सत्यां हीत्संज्ञायां 'श्वीदितो निष्ठायाम् ४०५२' इतीट् न स्यात् । यद्यप्यत्रोपजीव्यत्वादनुनासिकसंज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थत्वादनुनासिकसंज्ञासूत्रं मन्दप्रयोजनमिति ध्वनयितुं नेहोपन्यस्तम् । न चैवं 'यरोऽनुनासिके-१८०' इत्यत्र यरः पदान्तस्यानुनासिकशब्दे परेऽनुनासिकशब्दः स्यादित्यर्थः प्रसज्येत 'स्वं रूपम्-४६' इति परिभाषोपस्थानात्, संज्ञाकरणे तु 'अशब्दसंज्ञा' इति निषेधान्नायं दोष इति वाच्यम्, उक्तपरिभाषाया भाष्ये प्रत्याख्यानात् । 'उपान्मन्त्रकरणे ३६०५' 'पुच्छभाण्डचीवराण्णिङ् ३५६५' 'ङमुण् नित्यम् २०२' इत्यादिनिर्देशेन 'स्वं रूपम् ४६' इति परिभाषाया अनुपस्थितिकल्पनात्सूत्रमतेऽपि दोषाभावात् । ननूक्तनिर्देशाश्रयणे प्रतिपत्तिगौरवमिति चेत्, अत एव निष्प्रयोजनमित्यनुक्त्वा मन्दप्रयोजनमित्युक्तम् ॥ **प्रतीति** । प्रतिज्ञायत इति प्रतिज्ञा 'आतश्चोपसर्गे ३८५८' इति कर्मण्यङ् । अनुनासिकस्य भाव आनुनासिक्यम् 'गुणवचनब्राह्मणादिभ्यः-२४२०' इति ष्यञ् । प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः । केचित्तु-प्रतिज्ञानं प्रतिज्ञा सा अस्यास्तीति प्रतिज्ञम् 'अर्शआद्यच् २६२५' प्रतिज्ञमानुनासिक्यमेषामिति विगृह्णन्ति ॥ यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टः, तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः ॥ **पाणिनीया इति** । पाणिनिना प्रोक्तं पाणिनीयम् 'वृद्धाच्छः १८८०' । तदधीयते विदन्ति वा पाणिनीयाः । 'तदधीते-१७९१' इत्यणः 'प्रोक्ताल्लुक् १८०४' इति लुक् ॥ (८) ननु रलयोरिति न्यूनं, टकारस्यापि मध्यगतत्वादत आह-**प्रत्याहारेष्विति** ॥

---

१ 'आदिरन्त्ये न' इति-सूत्रमनित्यम् 'अचिश्नु-' इति सूत्रे इण इत्येव सिद्धे य्वोरिति निर्देशात्' इति तु न सम्यक्, 'अणुदित्सवर्णस्य' इत्येतत् परिहाय पूर्वेणाण्ग्रहणं परेणेण्ग्रहणम्, इति लण्सूत्रस्थभाष्यविरोधात् ॥ २ **आद्योच्चारणमिति**-आद्यम् उच्चारणं यस्मिन्निति आद्योच्चारणं शास्त्रम्, तच्च "सिद्धं तु व्यवसितान्त्यत्वात् । के पुनर्व्यवसिताः ? धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः" इति प्रकृतसूत्रभाष्ये व्यवसितपदार्थत्वेन निर्दिष्टेषु धात्वादिष्वन्यतम आद्यम् । उपदेशपदस्य तु नानुवृत्तिरिति भाष्ये ध्वनितम्, शेखरकृता स्पष्टीकृतं च ॥ आदेशेष्वपि पाणिनीयत्वव्यवहारोऽस्त्येवेति भावः ॥

अनुनासिक इत्यादिनिर्देशात्[1] । नह्यत्र ककारे परेऽच्कार्यं दृश्यते । आदिरन्त्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते ॥ (९) ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।१।२।२७। उश्च ऊश्च ऊ३श्च वः[2] । वां काल इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । (१०) स[3] प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ (११) उच्चैरुदात्तः[4] ।१।२।२९। ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । आ ये ('आ । ये' ऋ०प०म०१। सू०१९।ऋ०८)॥ (१२) नीचैरनुदात्तः ।१।२।३०। स्पष्टम् । ('अर्वाङ्' ऋ० प० म० १। सू०१०४। ऋ० ९)॥(१३) समाहारः स्वरितः[5] ।१।२।३१। उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच् स्वरितसंज्ञः स्यात् ॥ (१४) तस्यादित उदात्तमर्धह्रस्वम् ।१।२।३२। ह्रस्वग्रहणमतन्त्रम् । स्वरितस्यादितोऽर्धमुदात्तं बोध्यम् । उत्तरार्धं तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा[6] । क 1 वोऽश्वाः ('क्वे । वः । अश्वाः' ऋ० पद०म०५ । सू० ६१ । ऋ० २ ) ॥ (रथानां न) ये 1-राः ('रथानाम् । न । ये । अराः' ऋ०पद०म०१०।सू०७८। ऋ० ४ ) ॥ (शतचक्रं )यो 3ऽह्यः ('शतचक्रम् 'यः । अह्यः' ऋ० पद० म० १० । सू० १४४ । ऋ० ४ ) ॥

---

अनुनासिक इत्यादीति । आदिशब्देन 'पापाणके कुत्सितैः १०५९', 'एङः पदान्तादति १४१' इत्यादि ग्राह्यम् ॥ प्रत्याहारशब्देनेति । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति प्रत्याहारः 'करणाधिकरणयोश्च ५१०९' इति ल्युटि प्राप्ते 'कृत्यल्युटो बहुलम् ३७८६' इति बहुलग्रहणादधिकरणे घञ् । यद्यपि योगमात्रमकारादिसंज्ञास्वतिप्रसक्तम्, तथापि योगरूढिरिति भावः ॥ (९) ऊकालोऽज्झ्रस्वदीर्घप्लुत इति । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् ॥ ऊ इति त्रयाणां प्रश्लेषेण निर्देश इत्याह-उश्च ऊश्च ऊ ३ श्चेति ॥ वः । वामिति । त्रयाणां सवर्णदीर्घे कृते जसि परतो यणि वः, आमि तु वाम् ॥ वां काल इव कालो यस्येति । फलितार्थकथनमिदम् । विग्रहस्तु वः कालो यस्येति बोध्यः । ऊशब्देन स्वोच्चारणकालो लक्ष्यते । अच् किम् । संयोगस्य मा भूत्,-प्रतक्ष्य, प्ररक्ष्य, कषयोरेकमात्रत्वेन ह्रस्वसंज्ञायां 'ह्रस्वस्य पिति कृति-३८०६' इति तुक् स्यात् ॥ आ ये इति । 'निपाता आद्युदात्ताः ५६६२' इत्याकार उदात्तः, यच्छब्दस्तु 'फिषः ५५४३' इत्यन्तोदात्तः। ततः परस्य जसः सुप्त्वादनुदात्तत्वम्, त्यदाद्यत्वे पररूपत्वे शीभावे आद्गुणे च सति 'एकादेश उदात्तेन-५५२९' इत्येकार उदात्तः ॥ (१२) अर्वाङिति । अर्वन्तमञ्चतीति अर्वाङ् 'ऋत्विक्-५०७' आदिना अञ्चतेः सुप्युपपदे क्विन् । 'ऋ गतौ' इत्यस्मात् 'स्नामदिपद्यर्ति-४७५८' इत्यादिना वनिपि गुणे च निष्पन्नोऽर्वन्शब्दो धातुस्वरेणाद्युदात्तः । वनिपः पित्त्वेनानुदात्तत्वात् । अञ्चतेरकारोऽपि धातुस्वरेण नित्स्वरेण वा उदात्तः, 'उपपदमतिङ् ११२६' इति समासे कृते 'समासस्य ५८००' इति स्वरेण तदपवादभूतेन 'गतिकारकोपपदात्कृत् ५८४५' इति कृदुत्तरपदप्रकृतिस्वरेण वा अञ्चतेरकार उदात्तः । वनो नलोपे सवर्णदीर्घे च कृते 'एकादेश उदात्तेन-५५२९' इत्याकार उदात्त इति 'अनुदात्तं पदमेकवर्जम् ५५१५' इति शेषनिघातादाद्योऽकारोऽत्रानुदात्तः । *एतच्च संभवाभिप्रायेणोक्तम् । वेदभाष्ये तु-'अर्वाङ् अभिमुखः' इति स्थितम्* ॥ (१४) अतन्त्रमिति । अविवक्षितमित्यर्थः ॥ तस्य चोदात्तस्वरितपरत्व इति । उदात्तस्वरितौ परौ यस्मात्तदुदात्तस्वरितपरं तस्य भावस्तत्त्वं तस्मिन् सति उदात्तो वा स्वरितो वा परश्चेत्पूर्वस्य स्वरितस्य यदुत्तरार्धमनुदात्तं तस्य श्रवणं स्पष्टमित्यर्थः ॥ अन्यत्रेति । उदात्तस्वरितपरत्वाभावे ॥ क्वेति । 'किमोऽत् २६६०' 'तित्स्वरितम् ५६९४' ॥ व इति । 'अनुदात्तं सर्वमपादादौ ५४१' इत्यधिकारादनुदात्तः ॥ अश्वा इति । अशेः क्वनि नित्स्वरेणाद्युदात्तं, संहितायां तु 'एकादेश उदात्तेनोदात्तः ५५२९' इत्योकार उदात्तः ॥ उदात्तपरत्वे ह्रस्वस्वरितस्योदाहरणमुक्त्वा दीर्घस्वरितस्योदाहरणमाह-(रथानां न) य इति । ये (उ.) 'अ. (अ.) रा (उ.):' इति पदद्वयमपि फिट्स्वरेणान्तोदात्तम् । एकादेशस्तु पक्षे स्वरितः 'स्वरितो वाऽनुदात्ते पदादौ ५५३०' इत्युक्तेः ॥ स्वरितपरत्वे उदाहरणमाह-(शतचक्रं) य इति । फिट्स्वरेणान्तोदात्तः, ततः परस्य सकारस्य रुत्वे उत्वे कृते आद्गुणे च उदात्तेनैकादेशादोकार उदात्तः ॥ अह्य इति । स्वरितान्तत्वादकारस्य शेषनिघातत्वे, ओकारेण सह एकादेशे च कृते 'स्वरितो वानुदात्ते पदादौ ५५३०' इत्योकारः स्वरितः ॥ कथमह्यस्य स्वरितान्तत्वमिति चेदत्राहुः-'अह व्याप्तौ' इत्यस्मात्कर्मणि ण्यत्, 'तित्स्वरितम् ५६९४' वृद्ध्यभावस्तु संज्ञापूर्वकविधेरनित्यत्वादिति । 'नोदात्तस्वरित-५५३२ इति निषेधस्त्वनन्तरस्येति न्यायाद् 'उदात्ताद्-५५३१' इति प्राप्तस्य । यदाऽहेरित्यर्थेऽह्यः वृत्रस्येत्यर्थः, तदा 'छन्दसि वा वचनम् ५४४२' इति गुणाभावः, 'उदात्तस्वरितयोः ५५२९'

---

१ निर्देशादिति-इदं "प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।" इति पूर्वार्द्धेनाऽऽशङ्क्य "आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ॥" इत्युक्तानां समाधीनां मध्येऽप्रधानत्वलोपयोरप्युपलक्षणम् ॥ २ उश्चेति-कुक्कुटरुते एकमात्रद्विमात्रत्रिमात्रत्वेनोकारस्य प्रसिद्धत्वादुकारोपादानम् ॥ ३ स इति-प्राप्तह्रस्वादिसंज्ञक इत्यर्थः ॥ ४ उच्चैरिति-श्रुतिकृतस्योच्चैस्त्वस्य ग्रहणे एकस्यैव शब्दस्य रोगिबधिरौ प्रति उच्चैस्त्वनीचैस्त्वसत्त्वाद् व्यवस्थाऽभावः स्यादतोऽभिव्यक्तिस्थानभागगतमेवोच्चैस्त्वादि ग्राह्यम् ॥ ५ लौकिकत्वेन प्रत्याख्यातलिङ्गबाधकल्पनापेक्षया शास्त्रीयाप्रत्याख्यातवचनबाधकल्पनस्यान्याय्यस्य कर्तव्यत्वापत्त्यैवेतरेतरयोगोऽनुचित इत्यभिप्रेत्याह-समाहारेति ॥ ६ अत एव दीर्घप्लुतयोरप्येष विभागः सिद्धः, अन्यथा स्वशास्त्रसंकेतितत्वेन ह्रस्वस्यैव स्यात् । किन्तु, कालपरत्वेन अर्द्धमात्राबोधकम् । प्रातिशाख्यानामप्यस्मिन्नेवार्थे संवाद इति प्रपञ्चितं प्रक्रियाप्रपञ्चव्याख्याने ॥ A. B. कोष्ठकान्तर्गतलेखस्तु मन्त्रस्मरणायैवेति नात्रोपयुक्तः ॥

इत्यादिष्वनुदात्तः॥ अग्निमीळे ('अग्निम् । ईळे' ऋ० पद०म० १ । सू० १ । ऋ० १ ) इत्यादावुदात्तश्रुतिः । (१५) सं नवविधोऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा ॥(१६) मुखनासिकावचनोऽनुनासिकः ।१।१।८। मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । (१७) तदित्थम्–अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । (१८) ऌवर्णस्य द्वादश, तस्य दीर्घाभावात् । (१९) एचामपि द्वादश, तेषां ह्रस्वाभावात् ॥ (२०) तुल्यास्यप्रयत्नं सवर्णम् । १ । १ ।९। ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद् द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। (२१–१)अकुहविसर्जनीयानां कण्ठः।(२१–२)इचुयशानां तालु।(२१–३)ऋटुरषाणां मूर्धा।(२१–४) ऌतुलसानां दन्ताः। (२१–५)उपूपध्मानीयानामोष्ठौ । (२१–६) ञमङणनानां नासिका च । (२१–७) एदैतोः कण्ठतालु (२१–८) ओदौतोः कण्ठोष्ठम् (२१–९)वकारस्य दन्तोष्ठम् ।( २१–१० ) जिह्वामूलीयस्य जिह्वामूलम् । (२१–११) नासिकाऽनुस्वारस्य॥ इति स्थानानि ॥ (२२) यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । ( २३ ) आद्यश्चतुर्धा, स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । तत्र

---

इति स्वरितः, उदात्तपर इति छान्दसत्वात्(ऽ)॥अग्निमीळ इति । ईकारः स्वरितः ळे इति तु प्रचयापरपर्याय एकश्रुतिरिति च स्वरप्रक्रियायां मूल एव स्फुटीभविष्यति। (१६)–मुखनासिका । मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यादत आह–मुखसहितेति ॥ नासिकयोच्चार्येति । फलितार्थकथनमिदम् । उच्यतेऽनेनेति वचनं, मुखनासिका वचनमस्यास्तीति विग्रहः। (२०)–तुल्यास्य। आस्ये भवमास्यं 'शरीरावयवाद्यत् '२२६३' इत्यभिप्रेत्याह–ताल्वादीति ॥ आभ्यन्तरेति । एतच्च प्रशब्दबलाल्लभ्यते । ओष्ठात्प्रभृति प्राक् काकलकादास्यम् । तुल्यास्ये किम्, तर्प्ता । अत्र पकारस्य तकारे परे 'झरो झरि १०६' इति लोपो मा भूत् । प्रयत्नग्रहणं किम्, वाक् श्चोतति । अत्र शस्य लोपो न ।(२१–६) ञमङणनानामिति । नासिका चेति । चकारेण स्ववर्गानुकूलं ताल्वादि समुच्चीयते । (२१–७) एदैतोरित्यादौ तपरत्वमसंदेहार्थं, न तत्कालग्रहणार्थम् । तेन प्लुतस्यापि संग्रहः । (२३)–चतुर्धेति। निष्कर्षपक्षे तु पञ्चधा, ऊष्मणामीषद्विवृतप्रयत्नाभ्युपगमात् ॥ स्पृष्टेषत्स्पृष्टेति । एतेषामाभ्यन्तरत्वं, वर्णोत्पत्तिप्राग्भावित्वात् । तथाहि–नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति,ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः।तत्रोत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशन्ति तदा स्पृष्टता, ईषद्यदा स्पृशन्ति तदा ईषत्स्पृष्टता, समीपावस्था–

---

१ ऌ इति–प्राप्तह्रस्वोदात्तादिसंज्ञक इत्यर्थः ॥ २ अष्टादश भेदा इति । अत्वादिजातिव्याप्यह्रस्वोदात्तानुनासिकत्वादिरूपेणेति भावः ॥ ३ ऌवर्णस्येति–विवृतस्येति शेषः । अत एव ईषत्स्पृष्टप्रयत्नवतः 'ऌति ऌ वा' इति विहितऌकारस्य दीर्घत्वं सर्वैरङ्गीकृतम् ॥४ ताल्वादीति–तालोरादिस्ताल्वादिः कण्ठः, तालुरादिर्येषां तानि ताल्वादीनि । एवं तद्गुणसंविज्ञानबहुव्रीहितत्पुरुषयोः कण्वादिशब्दवदेकशेषाङ्गीकारेण कण्ठस्थानस्यापि ग्रहणम् ॥ ५ अकुहेति–"हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् । उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥" इति शिक्षोक्तेरत्र हकारोऽसंयुत एव ग्राह्यः ॥'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इत्युक्तेर्विसर्जनीयोऽकारपर एव ग्राह्य इति केचित् ॥६ दन्ता इति–अत्र दन्तशब्देन तन्निकटदेशो गृह्यते । अत एव भग्नदन्तोऽप्युच्चारणे प्रभवति ॥ ७ कण्ठतालिवति । एङ्ऐचोऽवर्णस्य प्रश्लिष्टत्वादान्तरतम्यपरीक्षायां कण्ठोऽव्यावर्तकस्ताल्वेव व्यवस्थापकम् । अत एव 'सिद्धमेङः सस्थानत्वात्'इति वार्तिकम्'इचयेशास्तालौ'(१।६६)उवोपोपध्मा ओष्ठे(१।७०)' इति शुक्लयजुःप्रातिशाख्यं च सङ्गच्छते।एवमुक्तिस्त्वैचोरिवेङोरपि सन्ध्यक्षरत्वप्रसिद्धिमनुसृत्य॥८दन्तोष्ठमिति–ओष्ठस्थानफलं तु दुध्वूर्षतीत्यादौ 'उदोष्ठ्यपूर्वस्य' इत्युकारः । दन्त्यफलं तु सति प्रामाणिकप्रयोगे गुहधातोः अगुह्वहीत्यत्र क्सलुक् ॥ ९ आभ्यन्तर इति–उक्तस्थानेषु जातत्वेनाभ्यन्तरत्वम्। उक्तस्थानबहिर्देशजातत्वेन बाह्यत्वम् ॥ १० प्रक्रियाप्रपञ्चे तु 'षोढा' इत्युक्त्वा 'विवृततरम् एङोः' 'विवृततमम् ऐचोः'–इति विभागः प्रदर्शितः॥११ 'हनुमूले जिह्वामूलेन कवर्गे स्पर्शयति' 'तालौ जिह्वामध्येन चवर्गे' 'जिह्वाग्रेण प्रतिवेष्ट्य मूर्धनि टवर्गे' 'जिह्वाग्रेण तवर्गे दन्तमूलेषु' 'ओष्ठाभ्यां पवर्गे' 'तालौ जिह्वा मध्यान्ताभ्यां यकारे' 'रेफे जिह्वाग्रमध्येन प्रत्यादन्तमूलेभ्यः, 'दन्तमूलेषु च लकारे' 'ओष्ठान्ताभ्यां दन्तैर्वकारे' 'स्पर्शस्थानेषूष्माण आनुपूर्व्येण' ( २ । ३२ ।–४४ ) इति तैत्तिरीयप्रातिशाख्योक्तदिशाऽवसेयम् ॥

---

१ ओष्ठान्ताभ्यामिति–अग्रभिन्नावयवरूपोष्ठभागस्य स्थानत्वम्। दन्तैरिति तु दन्तैरुपश्लिष्टयोरर्थादाभ्यन्तरयोरेव स्थानत्वम्, नतु बहिर्भागावयवयोरिति सूचयितुमुपात्तम् ॥ दन्तैरिति स्थाननिर्देश इति त्रिभाष्यरत्नकारस्तु भ्रान्तः ऋक्तन्त्रव्याकरणे शाकटायनेन "दन्ते तलसाः" "ओष्ठे वओ ॅपप ॐ" इति सूत्रयोः शुक्लयजुःप्रातिशाख्ये कात्यायनेन 'उवोपोपध्मा ओष्ठे (१।७०)' इति सूत्रे सप्तम्यौष्ठयोरेव स्थानत्वस्य 'वो दन्ताग्रैः' (१।८१) इति सूत्रे तृतीयया दन्तानां करणत्वस्यैव प्रदर्शितत्वात्।दन्तस्थानसाम्येन प्राप्तस्य वकारस्य संप्रसारणेषु ऌकारस्य वारणाय एचो ह्रस्वादेशे कण्ठस्थानसाम्यप्राप्तस्याकारस्य वारणाय 'एच इक्' इति सूत्ररचनयत्नस्यैवात्र यत्नस्याकरणाच्च ॥ अत एव बहुत्र पुस्तकेषूपलभ्यमाने 'दन्तोष्ठ्यो वः स्मृतो बुधैः' इति शिक्षापाठे दन्तसंनिकृष्ट ओष्ठे भव इति विग्रहे 'शिवो भगवान् भक्तिरस्य' इति विग्रहे 'शिवभाग–

---

१ यथासंख्यसूत्रस्य तु 'स्थानेऽन्तरतमः' इत्यस्याप्रवृत्तियोग्येषु 'नन्दिग्रहि' इत्यादिसूत्रेष्वेव प्रवृत्तिः । अन्यथा 'हयवट्' इति सूत्रन्यासस्योत्थानमेव न स्यात् ॥ स्थानेऽन्तरतमसूत्रभाष्यं त्वेकदेश्युक्तिरिति दाधिमथोपज्ञातं रहस्यम् ॥

स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । विवृतमूष्मणां स्वराणां च । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । एतच्च सूत्रकारेण ज्ञापितम् । तथा हि–॥ ( २४ ) अ अ ( इति ) । ८ । ४ । ६८ । विवृतमनूद्य संवृतोऽनेन विधीयते । अस्य चाष्टाध्यायीं संपूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव । तथा च सूत्रम्– (२५) पूर्वत्रासिद्धम् । ८ । २ । १ । अधिकारोऽयम् । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् । (२६) बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति ।

(२७–१) खयां यमाः खयः ᳲकᳲपौ विसर्गः शर एव च । एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः । अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥

(२७–२) वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः । पलिक्क्नी । चख्ख्नतुः । अग्ग्निः । घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः । (२८) तत्र वर्गाणां प्रथमद्वितीयाः खयः, तथा तेषामेव यमाः, जिह्वामूलीयोपध्मानीयौ, विसर्गः, शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च । अन्येषां तु संवारो नादो घोषश्च । (२९) वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः । अन्ये महाप्राणा इत्यर्थः ॥ (३०) बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्त इति बोध्यम् ॥ कादयो मावसानाः स्पर्शाः ।

---

नमात्रे, संवृतता दूरत्वे विवृतता । अत एव इचुयशानां तालव्यत्वाविशेषेऽपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्तव्ये सम्यक् स्पर्शः, यकारे ईषत्स्पर्शः, शकारेकारयोस्तु दूरेऽवस्थितिरित्याद्यनुभवं शिक्षाकारोक्तिं चानुसृत्य विवेचनीयम् । विवारसंवारादयस्तु वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यन्त इति बाह्या इत्युच्यन्ते, गलबिलस्य संकोचात्संवारः, तस्यैव विकासाद्विवारः, एतौ च संवृतविवृतरूपाभ्यामाभ्यन्तराभ्यां भिन्नावेव, तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयम् ॥ (२४) अ अ–। 'सुपाम्–५४१३' इति विभक्त्योर्लुक् । आद्यो विवृतः, द्वितीयस्तु संवृतस्तदाह–**विवृतमनूद्येति** । विवृतस्य स्थान इत्यर्थः ॥ **विवृतत्वमस्त्येवेति** । तेन दण्डानयनमित्यादौ सवर्णदीर्घः सिध्यतीति भावः ॥ (२५)**पूर्वत्रासिद्धम्** । यद्ययं स्वतन्त्रो विधिः स्यात्तर्हि त्रिपादी पूर्वं प्रत्यसिद्धेत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यात्, तथा च प्रशानित्यत्र 'मो नो धातोः ४६५' इति नत्वस्य सिद्धत्वान्नलोपः स्यात्, नत्वविधेः संबुद्धौ चरितार्थत्वात् । तथाऽनड्वानित्यत्र संयोगान्तलोपस्य सिद्धत्वान्नलोपः स्यात्, नुम्विधेस्तु संबुद्धौ चरितार्थत्वादत आह–**अधिकारोऽयमिति** । त्रिपाद्यां विहितं कार्यमिति कार्यासिद्धिपक्षे अमू अमूमित्यादि न सिद्ध्येदिति भावः । यथा चैतन्न सिध्यति तथाऽदःशब्दव्याख्यावसरेऽस्माभिरुपपादयिष्यते ॥ ( २६ ) **एकादशधेति** । यद्यपि भाष्येऽष्टावुक्ताः, उदात्तादयस्तु नोक्ताः, तथापि कैयटोक्तिमनुसृत्यैकादशोक्ता इति बोध्यम् ॥ (२७–१)**खयां यमा इति** । बालबोधनाय बाह्यप्रयत्नाः कैश्चित्सुगमोपायेनोपनिबद्धाः । तद्यथा– 'खरो विवाराः श्वासा अघोषाश्च, हशः संवारा नादा घोषाश्च, वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः, वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः' इति ॥ **श्वासानुप्रदाना इति** । श्वासप्रयत्नका इत्यर्थः ॥ **विवृण्वते कण्ठमिति** । विवार एषां प्रयत्न इति भावः ॥ **अन्ये त्विति** । हशो, हशां यमा अनुस्वारश्च ॥ **नादेति** । नादभागिनः । नादप्रयत्नवन्त इत्यर्थः ॥ **अयुग्मा इति** । प्रथमतृतीयपञ्चमा वर्गेष्वयुग्माः ॥ **वर्गयमगाः इति** । वर्गगा यमगाश्चेत्यर्थः ॥ **अल्पेति** । अल्पासवोऽल्पप्राणाः 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः ॥ (३०) **अनुपयुक्ता इति** । अन्यथा कखगघादीनां परस्परं सावर्ण्यं न स्यादिति भावः ॥ **आन्तरतम्यपरीक्षायामिति** । परीक्षा च–'अघोषस्य महाप्राणस्य सस्य तादृश एव थकारः, घोषवतो नादवतो महाप्राणस्य हस्य तादृशो वर्गचतुर्थः' इत्यादिना मूले एव स्फुटीभविष्यति ॥

---

१ **तत्सदृशा एवेति**–कवर्गीया एव, न त्वन्यवर्गीयाः । अत एव "श्रीश्च ते लक्ष्मीश्च पत्क्न्यौ" इत्यत्र तकारनकारयोर्मध्ये "सूर्य आत्क्मा" इत्यत्र तकारमकारयोर्मध्येऽपि ककार एव दृश्यते । "त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः" इत्युक्तसंख्योपपादनावसरे 'चत्वारश्च यमाः स्मृताः' इति चतुःसंख्या चोपपद्यते ॥ २ **अन्येषामिति**–अचां हशां तद्यमानां चेत्यर्थः ॥ ३ **चेति**–अचां चेन संग्रहः ॥

---

–वतः इत्यत्र भगवच्छब्दादिव ओष्ठशब्दादेव यत्प्रत्यय उपलभ्यते ॥ एतदजानानेन नागेशभट्टेन तु शरीरावयवसमुदायस्य शरीरावयवत्वाङ्गीकाराभावेन दन्तशब्दादपि यत्प्रत्ययं कृत्वा दन्त्यशब्दोष्ठ्यशब्दयोः कर्मधारयमाश्रित्य 'दन्त्योष्ठ्यो वः' इति पाठः शोधितः ॥ मूलेऽपि 'कण्ठोष्ठम्' इति द्वयोःस्थानत्वप्रदर्शक एकवद्भावः प्रयुक्तः ॥ मम मते तु 'दन्तोष्ठौ' इति पाठो योग्यः । 'दन्तसंनिकृष्टावोष्ठौ' इति विग्रहे संनिकृष्टशब्दलोपः शाकपार्थिवादेराकृतिगणत्वात् इति ज्ञेयम् । संसर्गिमात्रस्यैव स्थानत्वाङ्गीकारे 'तालुस्थाना मध्येन' (का. प्रा. सू. १ । ७९ ) इति सूत्रप्रदर्शितसंसर्गस्य जिह्वामध्यस्यापि स्थानत्वाङ्गीकारे इचुयशानां जिह्वामध्यस्थानकत्वापत्तिर्दुर्वारा स्यादिति दिक् ॥

यरलवा अन्तःस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ᳲकᳲप इति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अं अः इत्यचः परावनुस्वारविसर्गौ ॥ इति स्थानप्रयत्नविवेकः ॥ (३१) (वा) **ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्** ॥ (३२-१) अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्लृकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते–॥ (३२-२) (सू) **नाऽऽज्झलौ** । १ । १ । १० । आकारसहितोऽच् आच्, स च हल् चेत्येतौ मिथः सवर्णौ न स्तः ॥ तेन दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतेषु परेषु यणादिकं न । अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् । तथा हि ॥ (३३) (सू) **अणुदित्सवर्णस्य चाप्रत्ययः** । १ । १ । ६९ । प्रतीयते विधीयत इति प्रत्ययः । अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात् । अत्राण् परेण णकारेण । कु चु टु तु पु एते उदितः । (३४) तदेवम्–अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवम् लृकारोऽपि । एचो द्वादशानाम् ॥ एदैतोरोदौतोश्च न मिथः सावर्ण्यम् । ऐ औजिति ( मा.सू. ४ ) सूत्रारम्भसामर्थ्यात् । तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयम् ॥ ( ३५ ) नाऽऽज्झलाविति निषेधो यद्यप्याक्षरसमाम्नायिकानामेव तथापि हकारस्याऽऽकारो न सवर्णः, तत्राऽऽकारस्यापि प्रश्लिष्टत्वात् । तेन विश्वपाभिरित्यत्र 'हो ढः ४४७' इति ढत्वं न भवति ॥ अनुनासिकाननुनासिकभेदेन यवला द्विधा ।

---

**काद्य इति** । लोकप्रसिद्धपाठापेक्षमिदम्, चतुर्दशसूत्र्यां मावसानत्वायोगात् ॥ **कपाभ्यां प्रागिति** । एतच्चोपलक्षणम्, खफाभ्यां प्रागित्यपि बोध्यम् ॥ **अर्धविसर्गेति** सादृश्यमुच्चारणे लेखने च बोध्यम् ॥ (३१) **ऋलृवर्णयोरिति** । 'ऋत्यकः १५०' इति प्रकृतिभावः ॥ विग्रहस्तु–आ च लृवर्णश्च ऋलृवर्णौ तयोरित्येके ॥ मनोरमायां तु–आ च आ च रलौ, तौ च तौ वर्णौ चेत्यादि स्थितम् ॥ ( ३२-२ )–**नाज्झलौ** । **आकारसहित इति** । 'कालसमयवेलासु–४९६६' इत्यादिनिर्देशा आकारप्रश्लेषे लिङ्गम् ॥ **यणादिकमिति** । शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः । इह असेधदित्यादौ 'हो ढः ४४' इति ढत्वं नेत्यपि सुवचम् । इण इति सस्य षत्वमपि नेति तु न सुवचम्, ढत्वं प्रति तस्यासिद्धत्वादिति दिक् ॥ **अन्यथेति** । 'नाऽऽज्झलौ' इत्यस्यानारम्भे ॥ **ग्रहणकशास्त्रबलादिति** । अयं भावः–दीर्घादीनामिव हकारादीनामप्यकारवाच्यत्वेऽभ्युपगते ह्यच्त्वं स्यात् । प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमादिति ॥ (३३) **अविधीयमानोऽणिति** । तेन इत इत्यत्र 'इदम इश् २६४९' इति त्रिमात्र ईकारो न भवति **उदिच्चेति** । इह अविधीयमान इति न सम्बध्यते, उदित्करणसामर्थ्यात् । तेन विधीयमानोऽप्युदित्सवर्णान्गृह्णात्येव । 'कुहोश्चुः ३००५' जगाद, जघटे ॥ **परेण णकारेणेति** । व्याख्यानतो विशेषप्रतिपत्तेः, 'उपसर्गादृति–११६' 'ऋत उत्-३९०' इत्यादौ तपरकरणाल्लिङ्गाच्च । यदि पूर्वेण स्यात्तर्हि तपरत्वमिहानर्थकं स्यात् ऋकारस्यानण्त्वेन सवर्णाग्राहकत्वात् । एवं च 'तपरत्वाद्दीर्घे न, उप ऋकारीयति' इत्यादिवक्ष्यमाणग्रन्थोऽपि संगच्छते । **एवम् लृकारोऽपीति** । त्रिंशतः संज्ञेत्यनुषज्यते । एतच्च न्यायसाम्यादुक्तम् । वस्तुतः लृकारस्य ऋकारग्राहकत्वं न कुत्राप्युपलभ्यते ॥ **सूत्रारम्भसामर्थ्यादिति** । सति तु सावर्ण्ये एकारेण ऐकारग्रहणादोकारेण चौकारग्रहणाद् 'ऐ औच्' इति सूत्रारम्भो वृथा स्यादिति भावः ॥ **नापादनीयमिति** । तेन ग्लावं ग्लाव इत्यत्र 'औतोऽम्शसोः ३९०' इति न प्रवर्तत इति मूल एव स्फुटीभविष्यति ॥ (३५) **यद्यपीति** । ग्रहणकशास्त्रस्याव्याप्यनिष्पत्तेरिति भावः । एतच्च 'अकः सवर्णे दीर्घः १३६' इत्यत्र व्युत्पादयिष्यामः ॥ **आक्षरेति** । अक्षराणां समाम्नाय उपदेशसूत्राणि । तत्र भवाः आक्षरसमाम्नायिकाः । 'बह्वचोऽन्तोदात्ताट्ठञ्' इति ठञ् ॥ **हो ढ इति ढत्वं न भवतीति** । यद्यप्याकारप्रश्लेषाभावे संयोगान्तलोप एव प्राप्नोति न तु ढत्वं, तस्यासिद्धत्वात्, अतोऽत्र संयोगान्तलोपो न भवतीति वक्तुमुचितम्, तथापि 'कार्यकालं संज्ञापरिभाषम्' इति पक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषायाः प्रवृत्तेरन्तरङ्गे ढत्वे कर्तव्ये बहिरङ्गः संयोगान्तलोपोऽसिद्ध इति मत्वेदमुक्तमित्येके ॥ अन्ये तु–'संज्ञापूर्वको विधिरनित्यः' इति लोपस्य वारणं कथंचित्कर्तुं शक्यमित्याशयेन ढत्वं नेत्युक्तमित्याहुः । विश्वपाभिरित्यत्रेत्युपलक्षणम्, विश्वपाः विश्वपाभ्यामित्यादावपि न भवति । 'हो ढः ४४' इत्युपलक्षणम्, पृथगायुरित्यादौ 'झयो हः–१८४'

---

१ **नाऽऽज्झलाविति**–अत एव निर्देशात् सवर्णसंज्ञासूत्रारम्भसामर्थ्याच्च अचां हलां च, परस्परं न सावर्ण्यनिषेधः । किन्तु, अच्सावर्ण्यस्य हल्षु हल्सावर्ण्यस्याक्षु निषेधः ॥ २ **चतुर्विंशतेरिति**–इद च "स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च" ॥ इति शिक्षोक्तम् एङैचोः प्रयत्नभेदमनाश्रित्य ज्ञेयम् । तदाश्रयणे तु प्रयत्नभेदान्नैव सावर्ण्यापत्तिः ॥ ३ 'उपसर्गादृति–' इति तपरकरणात्–इति तु न युक्तम्, लृकारग्रहणेन चारितार्थ्यात्–इति शेखरोक्तं तु न सम्यक्, 'उरण्–' इत्यत्रेव विनाऽपि तपरकरणम् लृकारस्य ग्रहणासिद्धेः इति प्रपञ्चितं लघुकौमुदीव्याख्याने इति कश्चित् ॥ ४ **ग्रहणकशास्त्रस्येति** । ग्रहणकशास्त्रार्थबोधस्येत्यर्थः ॥ वाक्यार्थबोधे पदार्थज्ञानसाधकपदशक्तिग्रहस्य कारणत्वे कल्पिते **"वर्णानामुपदेशस्तावत् । उपदेशोत्तरकालेत्संज्ञा । इत्संज्ञोत्तरकालः प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सवर्णसंज्ञोत्तरकालं सवर्णग्रहणम् ॥"** इति वाक्यापरिसमाप्तिन्यायेन 'नाऽऽज्झलौ' इत्यस्य वाक्यैकवाक्यतया सवर्णसंज्ञाकोटिनिविष्टत्वेन सवर्णग्रहणतः प्रागेव जातत्वेन सवर्णग्रहणस्य 'नाऽऽज्झलौ' इत्यतः प्रागनिष्पत्तेरिति भावः ॥ ५ 'संयोगान्तस्य लोपो झलो लोपः' इति पक्षेणोक्तम् । झल्त्वविशिष्टहकारस्य सवर्णग्राहकत्वाभावेन अणुत्वविशिष्टहकारेण गृहीतत्वादाकारस्य झल्त्वाऽयोगात्–इति कश्चित् ॥

तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा ॥ (३६) (सू) तपरस्तत्कालस्य । १ । १ । ७० । तः परो यस्मात्स च तात्परश्चो-च्चार्यमाणसमकालस्यैव संज्ञा स्यात् । तेन अत् इत् उत् इत्यादयः षण्णां षण्णां संज्ञा । ऋदिति द्वादशानाम् ॥ (३७) (सू) वृद्धिरादैच् । १ । १ । १ । आत् ऐच वृद्धिसंज्ञः स्यात् ॥ (३८) (सू) अदेङ् गुणः । १ । १ । २ । अत् एङ् च गुणसंज्ञः स्यात् ॥ (३९) (सू) भूवादयो धातवः । १ । १ । ३ । क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥ (४०) (सू) प्राग्रीश्वरान्निपाताः । १ । ४ । ५६ । इत्यधिकृत्य ॥ (४१) (सू) चादयोऽसत्त्वे । १ । ४ । ५७ । अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः ॥ (४२) (सू) प्रादयः । १ । ४ । ५८ । अद्रव्यार्थाः प्रादयस्तथा ॥ (४३) (सू) उपसर्गाः क्रियायोगे । १ । ४ । ५९ । (४४) (सू) गतिश्च । १ । ४ । ६० । प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप । एते प्रादयः ॥ (४५) (सू) न वेति विभाषा । १ । १ । ४४ । निषेधविकल्पयोर्विभाषा संज्ञा स्यात् ॥

---

इत्याकारस्य घकारो नेति दिक् ॥ यदि तु 'विवृतमूष्मणाम्' इत्यत्र 'ईषत्स्पृष्टम्' इत्यत ईषदित्यनुवर्त्य स्वराणां चेत्यत्र निवर्त्य ईषद्विवृतमूष्मणां, विवृतं स्वराणामिति प्रयत्नभेदो व्याख्यायते, तदा 'नाऽऽज्झलौ ३२-२' इति सूत्रं त्यक्तुं शक्यमित्याकरे स्थितम् ॥ **अननुनासिकास्ते इति ।** ये त्वाक्षरसमाम्नायिका अणस्त एव सवर्णानां संज्ञा भवन्तीति भावः । एवं च रेफो हकारश्च अण्प्रत्याहारान्तर्गतोऽपि न कस्यचित्संज्ञा, तत्सवर्णस्यान्यस्याभावादित्यवगन्तव्यम् ॥ **(३६) स च तात्परश्चेति ।** तन्त्रादिना उभय विवक्षितमिति भावः ॥ **(३७) वृद्धिरादैच् ।** आच्च ऐचेति इतरेतरयोगद्वन्द्वः 'सुपां सुलुक्-५४१३' इति औङः सुलुग्वा । यद्वा-समाहारद्वन्द्वः । न चैवं 'द्वन्द्वाच्चुदषहान्तात्समाहारे १३३४' इति टच् स्यादिति वाच्यम्, समासान्तविधेरनित्यत्वात् । तत्र च प्रमाणं समासेषु वक्ष्यामः । अथ वा-'आद्' इत्यसमस्तमेवास्तु । वृद्धिशब्दस्तन्त्रेणावृत्त्या वा योजनीयः । अय-स्मयादित्वेन भत्वाच्चोः कुर्न । ऐजिह द्विमात्र एव, तात्परत्वात् तेन कृष्णैकत्वमित्यत्र त्रिमात्रो न । वृद्धिप्रदेशाः 'वृद्धिरेचि १०७' इत्यादयः ॥ **(३८) अदेङ् गुणः ।** तपरकरणमिह सर्वार्थम् । तेन गङ्गोदकमित्यत्र त्रिमात्रो न । तरतीत्यत्र त्वकार एव, न तु कदाचिदाकारः । न च प्रमाणत आन्तर्येण नियमसिद्धिः, रपरत्वे कृते एकस्याध्यर्धमात्रत्वाद्, अपरस्यार्धतृतीयमात्र-त्वात् । गुणप्रदेशास्तु-'आद्गुणः १०४' 'अतो गुणे २७६' इत्यादयः ॥ **(३९) भूवादय इति ।** भूश्च वाश्च भूवाविति द्वन्द्वः, आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः, आदिश्च आदिश्च आदी, भूवौ आदी येषामिति विग्रहः, भूप्रभृतयो वासदृशाः । सादृश्य च क्रियावाचित्वेनेत्यभिप्रेत्याह-**क्रियावाचिन इति ।** क्रियावाचिन इति किम्, याः पश्यसीत्यादौ धातुत्वं मा भूत् । सति हि तास्मिन् 'आतो धातोः ३४४' इत्याकारलोपः स्यादिति स्थितं मनोरमायाम् । भ्वादयः किम्, हिरुक् पृथग् इत्याद्यव्ययानां, शिश्ये इति भावार्थतिङन्तस्य च मा भूत् । स्तन्भ्वादीनामुदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते । चुलुम्पादीनां 'बहुलमेतन्निदर्शनम्' इति गणसूत्रेण संग्रहः ॥ **(४०) प्राग्रीश्वरात्-।** रेफविशिष्टग्रहणं किम्, 'ईश्वरे तोसुन्कसुनौ ५२७५' इत्यस्य व्याप्तिन्यायेनावधित्वं मा भूत् । यदि तु प्रत्यासत्त्यैव 'अधिरीश्वरे ९४४' इत्यस्यावधित्व-सिद्धिरित्युच्यते, तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्तु ॥ **(४१) चादयः ।** अद्रव्यार्थाः किम्, पशुः । लिङ्गसंख्यान्वितं द्रव्यम् । इह तु स्यादेव-'लोधं नयन्ति पशु मन्यमानाः ।' पशु इति सम्यगर्थे ॥ **(४४) गतिश्च ।** उपसर्गसंज्ञायाः समावेशार्थश्चकारः । अन्यथा 'आ कडारात्-३३३' इति पर्यायः स्यात् । तत्फलं तु-प्रणेयमित्यादौ 'उपसर्गादसमासेऽपि-३०५४' इति णत्वं, 'गतिकारक-५८४५' इति कृदुत्तरपदप्रकृतिस्वरसिद्धिश्चेति दिक् ॥ **निस्निर्दुस्दुर् इति ।** 'उपसर्गस्यायतौ ३१०५' इति निर्दुरोर्लत्वम्, निलयते दुलयते । निसो दुसश्च रुत्वस्यासिद्धत्वाल्लत्वाभावः, निरयते दुरयते ॥ **(४५) न वेति विभाषा ।** नेति प्रतिषेधो वेति विकल्पस्तदाह-**निषेधविकल्पयोरिति ।** 'विभाषा श्वेः ३२३४' इत्यादिषु प्रतिषेध-विकल्पावुपतिष्ठेते, तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तते, शुशाव शिश्वायेत्यत्राप्राप्तौ विकल्पः, शुशुवतुः शिश्वियतुरित्यादौ तु 'वचिस्वपि-३२१३' इति नित्यप्राप्ताविति विवेकः । अत्रेदं बोध्यम्-इतिशब्दः काकाक्षिन्यायेनोभाभ्यां सम्बध्यते, स च पदार्थविपर्यासकृत्, तेन निषेधो विकल्पश्च नवाशब्दार्थः संज्ञी, विभाषाशब्दार्थो विकल्पः[3] संज्ञा । उभयत्र-विभाषार्थं चेदं सूत्रम् । प्राप्तविभाषायामप्राप्तविभाषायां च नास्योपयोगः, प्राप्तविभाषायां भावांशस्य सिद्धत्वेन विभाषाश्रुत्या पक्षे भवतीति भावांशमनूद्य पक्षे न भवतीत्यभावांशमात्रकरणात् । अप्राप्तविभाषायां तु अभावांशस्य सिद्धत्वेन पक्षे न

---

१ बहुव्रीहेरङ्गीकारेण 'अदेङ् गुणः' इत्यत्र दीर्घप्लुतयोरकारयोर्न गुणसंज्ञापत्तिः । तत्पुरुषाङ्गीकारेण नैङः प्लुतस्य ग्रहणम् । 'अतो भिस-' इत्यादौ तकारोच्चारणं बहुव्रीहौ, 'सहिवहो:-' इत्यत्र वर्णग्रहणं च तत्पुरुषे मूलम् ॥ विभक्तितकारे तु नास्य प्रवृत्तिः अत एव 'उपसर्गादृति-' इति तपरकरणं सार्थकम् । तेन न ह्रस्वेऽकारे गुणस्याप्रवृत्तिः । 'प्रत्यये' इत्यादि-निर्देशाः अप्यत्रार्थे तात्पर्यग्राहकाः ॥ २ जातिपक्षेण गुणाभेदकत्वेन च प्राप्तस्य भिन्नकालग्रहस्य व्यावृत्तिरेवकारेण सूच्यते । अन्यथा 'वृद्धिरादैच्' इत्यत्र तपरकरणस्यानण आकारस्य सवर्णग्रहणार्थं चरितार्थत्वेनैवकारस्य नियमसूचकस्यालाभापत्तिः स्यात् ॥ ३ विकल्प इति । तद्वाचकाः शब्दाः अन्यतरस्याम्, प्राचाम्, उभयथा, शाकल्यस्य-इत्यादय इत्यर्थः । अर्थस्य सूत्रादावुल्लेखाद्यसंभवात् । यत्तु-अर्थस्य संज्ञात्वं न दृष्टचरम्-इति । तन्न, कर्मादिसंज्ञाविषये दृष्टत्वादिति चिन्त्यमेव ॥

( ४६ ) (सू) स्वं रूपं शब्दस्याशब्दसंज्ञा । १ । १।६८ । शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना ॥ ( ४७ ) (सू) येन विधिस्तदन्तस्य ।१। १ । ७२ । विशेषणं तदन्तस्य संज्ञा स्यात् [ स्वस्य च रूपस्य ] ॥ (४८) (वा) समासप्रत्ययविधौ प्रतिषेधः॥४९ (वा) उगिद्वर्णग्रहणवर्जम् ॥ (५०) (सू) विरामोऽवसानम् ।१। ४ । ११० ।

---

भवतीत्यभावांशमनूद्य पक्षे भवतीति भावांशमात्रकरणात् । 'विभाषा श्वेः ३२३४' इत्युभयत्रविभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव संप्रसारणविकल्पः स्यात्, कित्सु तु यजादित्वात् ' वचिस्वपि-३२१३ ' इति नित्यमेव स्यात् । अथ प्रतिषेधमुखेन प्रवृत्तिस्तर्हि कित्स्वेव प्रवृत्तिः स्यात्, न तु पित्सु । न च पित्सु. विधिमुखेन कित्सु तु निषेधमुखेनेत्युभयथापि प्रवृत्तिरस्त्विति वाच्यम्, वैरूप्यलक्षणवाक्यभेदप्रसङ्गात् । संज्ञाकरणे तु श्रुतक्रमानुरोधेन नेति प्रतिषेधः प्रथमं कित्सु प्रवर्तते, ततः किदकिद्रूपे सर्वस्मिन् लिटि एकरूपे प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव प्रवर्तते । इतीति किम्, घुसंज्ञावत् 'स्वं रूपम्-४६' इति वचनाच्छब्दस्य संज्ञा मा भूत् । तथा हि सति 'विभाषा श्वेः ३२३४' इत्यस्य नवाशब्दः श्वयतेरादेश इत्यर्थः स्यात् । इतिशब्दे तु सति अर्थः संज्ञीति लभ्यते । तथा हि लोके ह्यर्थप्रधानः शब्दः, 'गौरित्ययमाह' इत्यादौ तु शब्दस्वरूपपरः संपद्यते। व्याकरणे तु 'स्वं रूपम्-४६' इति परिभाषणात्स्वरूपपरत्वमौत्सर्गिकम्, इतिशब्दसमभिव्याहारे त्वर्थपरतेति विशेषः । इदमेवेतिशब्दस्य पदार्थविपर्यासकत्वं नाम । संज्ञात्वमर्थस्यैव न तु विभाषाशब्दस्येति व्याख्यानस्य 'हृक्रोरन्यतरस्याम् ७८९ ' इत्यादौ वैरूप्योद्धारः फलम् । उभयत्रविभाषा हि तत्सूत्रम्, अभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थस्य करोतेरकर्मकत्वाच्च 'गतिबुद्धि-७७९' इत्यादिना अणौ कर्तुर्णौ कर्मत्वे प्राप्ते अर्थान्तरे चाप्राप्ते तदारम्भात् । उदाहृतं च भाष्ये-'प्राप्ते तावद् अभ्यवहारयति सैन्धवान् अभ्यवहारयति सैन्धवैः, विकारयति सैन्धवान् विकारयति सैन्धवैः' । अप्राप्ते तु 'हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन, करोति कटं देवदत्तः,कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन' इति दिक्।(४६)**स्वं रूपं शब्दस्य**-। 'अग्नेर्ढक् १७४६' आग्नेयम् । 'आङो यमहनः ३६११' आयच्छते, आहते । इह अग्नि, आङ्, यम्, हन्, एत एव संज्ञिनः । नन्वग्न्यादिवाच्यादङ्गारादेर्ढगादिप्रत्ययो न संभवतीति स्वरूपादेव स्यात् 'प्रातिपदिकात्-२६६' इत्याद्यधिकाराच्च किमनेन सूत्रेणेति चेत् । सत्यम्, अग्न्यादिशब्दपर्यायेभ्यो वह्न्यादिभ्यो मा भूदिति सूत्रस्यास्यारम्भः । नन्वत्र रूपग्रहणं विनापि स्वशब्देन रूपमेव ग्रहीष्यते, प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च । अर्थो हि प्रतीतौ संबन्धग्रहणमपेक्षते, पर्यायैरपि प्रत्यायनात्साधारणः, पदज्ञानजन्यबोधविषयत्वाद्बहिरङ्गः, अनुकरणदशायामप्रतीतेरनियतोपस्थितिकश्चेति किमनेन रूपग्रहणेन । उच्यते-इह शास्त्रे अर्थोऽपि विवक्षितो रूपवदिति ज्ञापनार्थं रूपग्रहणम् । तेन 'अर्थवद्ग्रहणे नानर्थकस्य ११३' इत्युपपन्नं भवति । तत्रोक्तज्ञापकादर्थो ग्राह्यः, स्वमिति वचनात्स्वं रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम् । तेन काशे, कुशे इत्यत्र ' शे १६४ ' इत्ययं प्रगृह्यसंज्ञो न भवति । ' प्रादूहोढ-१६२ ' इत्यत्र तु 'ऊढग्रहणेन क्तान्तमेव गृह्यते, न तु क्तवत्वन्तस्यैकदेशः' इत्यन्यत्र विस्तरः ॥ अशब्दसंज्ञेति किम्, 'उपसर्गे घोः किः ५०६५' दाधाभ्यो यथा स्यात्, घुधातोः शब्दार्थकान्मा भूत् । न च 'दाधा घ्वदाप्-३१६६' इति घुसंज्ञाकरणसामर्थ्यादेव दाधाभ्यः किः स्यादिति वाच्यम्, 'घुमास्था-३२७४' इत्यादिना आत ईत्वविधौ संज्ञाकरणस्यावश्यकतया सामर्थ्योपक्षयात् ॥ इहाशब्दस्य संज्ञाऽशब्दसंज्ञेति न षष्ठीसमासः, 'कर्म ७६८' 'करणम्-८१३' इत्यादिष्वर्थसंज्ञासु स्वरूपग्रहणापत्तेः।किन्तु शब्दः शब्दशास्त्रं तत्र संज्ञा शब्दसंज्ञेति सप्तमीसमासस्तदाह-**शब्दशास्त्रे या संज्ञेति**॥(४७) **येन विधिः**-। विधिरित्यत्र 'उपसर्गे घोः किः ५०६५' इति कर्मणि किः प्रत्ययः । येनेति करणे तृतीया न तु कर्तरि, तस्याः कृद्योगषष्ठ्या बाधात् । न च 'उभयप्राप्तौ कर्मणि ९०९' इति नियमेन निर्वाहः, कर्मण उक्तत्वेनोभयप्राप्त्यभावात् । तथा चात्र करणे तृतीयैव । करणं च परतन्त्रं, कर्त्रधिष्ठितस्यैव करणत्वात् । एवं चेह तृतीयया पारतन्त्र्यं लक्ष्यते।न च ' एरच् ५०२२ ' इत्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं वास्यादीनामिव तक्षादीनामिव संभवति, किन्तु वैवाक्षिकम् । तेन विशेषणमप्रधानम् । तच्चात्मान्तस्य संज्ञेति फलित, तदेतदाह-**विशेषणं तदन्तस्येति** ॥ **स्वस्य चेति**[1] । 'स्वं रूपम्-४६' इत्यनुवृत्तेरेतल्लभ्यते । 'एरच् ५०२२' इकारान्तादिकाररूपाच्च धातोरच् । चयः, जयः, अयः । (४८) **समासप्रत्ययविधाविति** । कृष्णं श्रितः कृष्णश्रितः, ( 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते वा तत्पुरुषः) । नेह कृष्णमुपाश्रितः । 'नडादिभ्यः फक् ५७७' नडस्य गोत्रापत्यं नाडायनः। नेह-(सूत्रनडस्यापत्यं) सौत्रनाडिः । अनुशतिकादित्वादुभयपदवृद्धिः।(४९)**उगिद्वर्णेति**। उगिद्वर्णग्रहणं वर्जयित्वा उगिद्वर्णग्रहणवर्जम्, 'द्वितीयायां च ५१९५' इति णमुल्।महान्तमतिक्रान्ता अतिमहती,महच्छब्दस्य गौरादित्वेऽप्युपसर्जने 'षिद्गौर-६९३' इति ङीषोऽप्रवृत्तेः 'उगितश्च ६९०' इत्युगिदन्तात् ङीप् । 'अत इञ् १५७१' दाक्षिः।न चेह सामर्थ्यात्तदन्तविधिः,अस्यापत्यमिः काम इत्यत्र चरितार्थत्वात् । न चैवमिञो ञित्त्वं व्यर्थमिति वाच्यम्, 'बाह्वादिभ्यश्च १५७३' इत्यत्र यथायथं वृद्ध्याद्युदात्ताभ्यां चरितार्थत्वात् । नन्वेवमपि औपगविरित्यादावेव 'अत इञ् १५७१' स्यात्, न तु दाक्षिरित्यादौ, अकारस्येहानर्थकत्वादिति चेन्न, वर्णग्रहणे अर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेः । ( ५० ) **विरामोऽवसानम्** । विरमणं विरामः, भावे घञ् ॥ शब्दानुशासनप्रस्तावादाह-

---

१ 'व्यपदेशिवदेकस्मिन्' इत्येतात्सिद्धमाह-**स्वस्य चेति** ॥

वर्णानामभावोऽवसानसंज्ञः स्यात् ॥ (५१) (सू) परः संनिकर्षः संहिता । १।४।१०९ । वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात्॥(५२) (सू) सुप्तिङन्तं पदम्।१।४।१४।सुबन्तं तिङन्तं च पदसंज्ञं स्यात्॥(५३) (सू) हलोऽनन्तराः संयोगः ।१।१।७।अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः॥(५४) (सू) ह्रस्वं लघु।१।४।१०॥(५५) (सू) संयोगे गुरु।१।४।११। संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ॥ (५६) (सू) दीर्घं च ।१।४।१२ । दीर्घं च गुरुसंज्ञं स्यात्॥ इति संज्ञा[३]प्रकरणम् ॥

अथ परिभाषाप्रकरणम् ।

(५७) (सू) इको गुणवृद्धी । १।१। ३ ।गुणवृद्धिशब्दाभ्यां[४] यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते ॥

---

वर्णानामिति॥संज्ञाप्रदेशाः‘वाऽवसाने२९२’ इत्यादयः।अभावस्यापि[१] बुद्धिकृतं पौर्वापर्यमस्त्येव।यथोच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानाम् । यद्वा-विरम्यतेऽनेनेति विरामः, बाहुलकात्करणे घञ्।यदुच्चारणोत्तरं वर्णान्तरं नोच्चार्यते, सोऽन्त्यवर्णः अवसानसंज्ञ इत्यर्थः । अस्मिंस्तु पक्षे ‘खरवसानयोः-११८’इत्येकाऽपि सप्तमी विषयभेदाद्भिद्यते-खरि परे रेफस्य विसर्गः, अवसाने च [परे] रेफे स्थानिनीति ॥ (५२) सुप्तिङन्तं पदम्[२]। अत्रान्तग्रहणम्‘अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ३१२’ इति ज्ञापनार्थम् । तेन ‘ईदूदेद् द्विवचनं प्रगृह्यम् १६२’ इति न द्विवचनान्तस्य प्रगृह्यत्वम् । अन्यथा कुमार्योरगारं कुमार्यगारमित्यत्र प्रकृतिभावः स्यात्। कथं तर्हि प्रातिपदिकसंज्ञायां कृत्तद्धिताभ्यां तदन्तग्रहणमिति चेत् । अत्राहुः—‘कृत्तद्धित-२६३’ इति सूत्रे अर्थवद्ग्रहणमनुवर्तते, तत्सामर्थ्यात्तदन्तग्रहणमिति ॥ ( ५३ ) हलोऽनन्तराः संयोगः । लघ्वर्थमेकाक्षरायां संज्ञायां कर्तव्यायां संयोग इति महासंज्ञाकरणमन्वर्थसंज्ञाज्ञापनार्थम्-संयुज्यन्तेऽस्मिन्समुदाये वर्णा इति । तेनाऽत्र समुदाये वाक्यपरिसमाप्तिर्न तु गुणवृद्ध्यादिसंज्ञावत्प्रत्येकम्। तथा हि सति दृषद्भिर्भर्तीत्यत्र बकारसंनिधौ दकारस्य संयोगत्वात्संयोगान्तलोपः स्यात्, निर्यायादित्यत्र यकारः संयोग इति ‘ वाऽन्यस्य संयोगादेः ३१७१ ’ इत्येवं स्यात्। सिद्धान्ते तु ‘अचो रहाभ्याम्-९०’ इति द्वित्वे सत्यपि तस्यासिद्धत्वादेत्वमत्र न भवति । हल इति जातौ बहुवचनम्, ‘जात्याख्यायामेकस्मिन्बहुवचनम्-११७०’ इति वचनात्। तेन द्वयोरपि संयोगसंज्ञा भवतीति शिक्षेत्यादौ ‘गुरोश्च हलः ५०८३’ इत्यप्रत्ययः सिध्यति । यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाविशेषेण संज्ञेति स्थितमाकरे । यदि तु बहूनामेव स्यात्तर्हि गोमान्करोति इत्यत्र मतुपस्तकारस्य संयोगान्तलोपो न स्यादिति दिक् ॥ हलः किम्, तितउभ्याम् । अत्र ‘तनोतेर्डउः सन्वच्च ४९३६’ इति डउप्रत्ययः, सन्वद्भावाद् द्वित्वं ‘सन्यतः ३०९३’इति इत्वं च, व्यस्तोच्चारणसामर्थ्याद्गुणाभावः । यदि त्वचोरप्यनन्तरयोः संयोगसंज्ञा स्यात्तर्हि इह ‘संयोगान्तस्य-८१’ इत्युकारलोपः स्यात् । अनन्तरा इति किम्, पनसम् । यदीह सकारमकारयोः संयोगसंज्ञा स्यात्तर्हि ‘स्कोः-५१६’ इति सलोपः स्यात् ॥ इति तत्त्वबोधिन्यां संज्ञाप्रकरणम् ॥

---

अथ परिभाषाप्रकरणम् ॥ (५७) इको गुणवृद्धी । यत्र साक्षात्स्थानी न निर्दिष्टः‘सार्वधातुकार्धधातुकयोः २९२२’ ‘सिचि वृद्धिः-३०७०’ इत्यादौ तत्रैवेयं परिभाषा प्रवर्तते न तु ‘अचोञ्णिति ३५९’ इत्यादौ, स्थानिनिर्देशात् ॥ गुणवृद्धिशब्दाभ्यामिति । एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते। तेनेह न ‘त्यदादीनामः ३७०’ इमम्, ‘दिव औत् ४६०’ द्यौः ॥ विधीयेते इति । यत्र त्वनुवादो ‘वृद्धिर्यस्याचामादिः-१८७८’ इत्यादौ तत्रेक इति षष्ठ्यन्तं नोपतिष्ठते, अनुवादे परिभाषाणामनुपस्थितेरिति भावः । ‘अनुवादे परिभाषाणाम्’ इत्यस्यानूद्यमानविशेषणेष्वित्यर्थः । अनुपस्थितौ लिङ्गं फलं च-‘उदीचामातः स्थाने६४३’ इत्यत्र स्फुटीकरिष्यते ॥ षष्ठ्यन्तमिति । सूत्रे षष्ठ्यन्तस्यानुकरणाच्छब्दस्वरूपपरतया

---

१ अभाव इति-प्रसक्त्यभावपरत्वे तु सोमसुद् इत्यत्र सुप्रत्ययप्रसक्तिसत्त्वेनावसानसंज्ञाया अप्राप्तौ चर्त्वानुपपत्तिः । तस्मादुच्चारणाभाव एव ग्राह्यः । स च संसर्गाभावरूपः । तेन रामः, भवावः, भवामः, इत्यादौ सकारात् परो वर्णात्यन्ताभावः, भुदित्यादौ धकारात्परो ध्वंसाभावो वर्णस्येति भावः ॥ २ सुप्तिङन्तमिति-न च सुप् च तिङ् च अन्तं चेति द्वन्द्वोऽस्तु, अन्त इवाचरति अन्तति इत्यत्र पररूपाभाव एव तस्य फलमस्त्विति वाच्यम्, ‘संज्ञाविधौ प्रत्ययग्रहणे’-इति परिभाषाज्ञापकपरभाष्येण तादृशप्रयोगाणामनभिधानकल्पनात् ॥ ३ संज्ञाप्रकरणमिति-एवंभूतानि प्रायः शक्यशक्तयोरभेदं दर्शयितुम्-‘ओमित्येकाक्षरं ब्रह्म,’ ‘रामेति द्व्यक्षरं नाम’ इत्यादौ च सामानाधिकरण्येनोद्देश्यविधेयनिर्देशसूत्राणि संज्ञासूत्राणि भवन्तीति बोधनायैवैतद्दिक्प्रदर्शनम्। अत एवाग्रे टिसंज्ञादीनां प्रदर्शनेऽपि न प्रतिज्ञाहानिः । ‘उदित् सवर्णस्य’, ‘तपरस्तत्कालस्य’ इति निर्देशस्तु क्वचिच्छक्यशक्तयोर्भेदं प्रदर्शयितुं भिन्नविभक्त्यापि शक्यशक्तयोरुपादानम् ‘तस्य वाचकः प्रणवः’ ‘उञः’ इत्यादौ भवतीति बोधनाय । ‘अ अ’ इत्यस्योपन्यासस्तु सवर्णसंज्ञोपयोगिप्रयत्नप्रसङ्गेन । ‘तस्यादित’-इत्यस्योपन्यासस्तु स्वरित उदात्तानुदात्तयोः क्रमविभागप्रदर्शनाय । प्रत्याहारसंज्ञोपयोगित्वेऽपि तस्य लोपः’ इत्यस्यानुपन्यासस्तु ‘आचाराद्’इति प्रथमोपायेनैव सकलेष्टसिद्धेः साधारणतया लोपस्य नात्यन्तमुपयोगोऽत्रेति बोधयितुमिति केचित् ॥ ४ गुणशब्देन गुणविधानम्’ वृद्धिशब्देन वृद्धिविधानं चैतदुपस्थितौ लिङ्गम् ॥५ अयं क्वाचित्काऽपपाठ एव, ‘अन्त्यवर्णोऽवसानसंज्ञः’ इत्युपक्रमविरोधात् ॥

(५८) (सू) **अचश्च** ।१।२।२८। ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्राऽच इति षष्ठयन्तं पदमुपतिष्ठते ॥(५९) (सू) **आद्यन्तौ टकितौ** । १ ।१। ४६ । टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ॥(६०) (सू) **मिदचोऽन्त्यात्परः** ।१।१।४७। अच इति निर्धारणे षष्ठी । अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् ॥ ( ६१ ) (सू) **षष्ठी स्थानेयोगा** ।१ । १ । ४९ । अनिर्धारितसंबन्धविशेषा षष्ठी स्थानेयोगा बोध्या । स्थानं च प्रसङ्गः ॥ (६२) (सू) **स्थानेऽन्तरतमः**

---

नपुंसकत्वात्सोर्लुकि'अत्वसन्तस्य-५७०'इति दीर्घो नेति भावः ॥ **पदमिति** । तच्च संभवति सामानाधिकरण्ये इगन्तस्याङ्गस्ये-त्यादिक्रमेण संबध्यते । 'मिदेर्गुणः ३१२७' 'मृजेर्वृद्धिः ३२८६' इत्यादौ तु सामानाधिकरण्यासंभवान्मिदिमृज्योरवयवस्येक इति संबध्यते ॥ (५८) **अचश्च । ह्रस्वदीर्घेत्यादि** । 'एतच्च ऊकालोऽज्झ्रस्वदीर्घप्लुतः ९' इति सूत्रादज्ह्रस्वदीर्घप्लुत इत्यनुवर्त्य ह्रस्वो दीर्घः प्लुत इति योऽजिति योजनया लभ्यते।ह्रस्वेत्यादि किम्, 'दिव उत् ४६१'द्युभ्याम्'अष्टन आ विभक्तौ५०२'अष्टौ। 'अष्टाभ्य औश् ५०३' इत्यत्र कृतात्वनिर्देशाज्ज्ञापकाज्जश्शसोर्विषये प्रवर्तमानस्य ' अष्टन-५०२ ' इत्यात्वस्याच्स्थानिकत्वे सति नैतत्सिध्येदिति दिक् ॥ **षष्ठयन्तं पदमिति** । तच्च सति संभवे सामानाधिकरण्येनैव संबध्यते, न वैयधिकरण्येन । तेन 'ह्रस्वो नपुंसके-४४०' इत्यजन्तप्रातिपदिकस्यैव ह्रस्वः । श्रीपम् । नेह—सुवाग् ब्राह्मणकुलम् । 'शमामष्टानां दीर्घः-३३३८' इत्यत्र तु सामानाधिकरण्यासंभवात् शमादीनामच इति संबध्यते । तेन शाम्यतीत्यादि सिद्धम् । 'वाक्यस्य टेः प्लुतः-१५१' इत्यत्र सामानाधिकरण्यसंभवेऽपि टेर्ग्रहणसामर्थ्यात् टेरवयवस्याचः प्लुत इति व्याख्यायते । अन्यथा 'अलोऽन्त्यस्य ६६' 'अचश्च ५८' इति परिभाषाभ्यामेहि कृष्णेत्यादिवाक्यान्त्यस्याचः प्लुतसिद्धौ किमनेन टेर्ग्रहणेन । तेन आयुष्मानेधीन्द्रवर्म३न् इत्यादि सिध्यतीति दिक् ॥ (५९) **आद्यन्तौ टकितौ** । भविता । ' आर्धधातुकस्येड्-२९३९ ।' पाययति, ' शाच्छासाह्वा-३४३८ ' इत्यादिना युक् । पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवादः । 'प्रत्ययः२६४' 'परश्च २६५' इत्यनेन तु परत्वादयं बाध्यते । तेन 'चरेष्टः ३९०८' 'गापोष्टक् ३८९३' इत्यादयः परा एव भवन्ति ॥ ( ६० ) **मिदचोऽन्त्यात्परः**।स्थानेयोगत्वस्य 'प्रत्ययः २६४' 'परश्च २६५ ' इति परत्वस्य चायमपवादः । यशांसि, वनानि 'नपुंसकस्य झलचः ४३५' इति नुम् । रुणद्धि, ' रुधादिभ्यः श्नम् ३३७३ ' । ननु पूर्वयोगवदयमपि पुरस्तादपवादन्यायेन स्थानेयोगमात्रस्यापवादोऽस्त्विति चेन्न, बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यते इतीहाभ्युपगमात्, अन्यथा इनमो मित्करणं व्यर्थं स्यात् । न च श्रवणार्थ एव मकारः स्यादिति वाच्यम्, 'तृणह इम् ३३७५' इति निर्देशात् ॥ **अचां मध्य इति** । सूत्रे जात्यभिप्रायेण ' अचः' इत्येकवचनमिति भावः । अचां मध्य इति किम्, मुञ्चति लुम्पति । 'अन्त्यादचः परो मित्स्यात्' इति प्राचो व्याख्यायां नैतत्सिध्येत्, 'शे मुचादीनाम् ३३७२ ' इत्यत्रान्त्यस्याचोऽसंभवेन मित्परिभाषाया अनुपस्थितिप्रसङ्गात् ॥ अन्ये तु अचोऽन्त्यात्परो मित्स्यादिति व्यत्यासेन योजयित्वा प्राचो व्याख्यानमपि कथंचित्समर्थयन्ते ॥ पूर्वसूत्रादन्त इत्यनुवर्तते,एकदेशे स्वरितत्वप्रतिज्ञानादतो व्याचष्टे--**अन्तावयव इति** । तेन वारीणीत्यादावङ्गस्य नान्तत्वेन दीर्घः सिद्धः। परादित्वे स न सिध्येत् ।अभक्तत्वे तु वहंलिह इत्यत्र 'वहाभ्रे लिहः ३९३१' इति खशि 'अरुर्द्विषत्--३९२२'इति मुमि मोऽनुस्वारो न स्यादपदान्तत्वादिति भावः ॥ यत्तु कैश्चिदुक्तमभक्तत्वे वारीणीति दीर्घो न स्यादिति, तत् 'तदादिग्रहणं स्यादिनुमर्थम्' इति अङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम् ॥ (६१) **षष्ठी स्थानेयोगा**। स्थानेन योगोऽस्या इति विग्रहः । निपातनादेत्वम् । षष्ठ्याः संबन्धमात्रवाचित्वेऽपीह शास्त्रे या षष्ठी सा स्थानेयोगा बोध्या ॥ किमविशेषेण, नेत्याह—**अनिर्धारितसंबन्धविशेषेति** । अनिर्धारितेति किम्, 'ऊदुपधाया गोहः ३१५७''शास इदङ्हलोः ३३०४' इत्यादावुपधासंनिधाने-नावयवषष्ठीत्वे निर्णीते गोहः शास इत्यादौ मा भूत् । सति हि तत्रापि स्थानेयोगत्वे गोहिशासिस्थाने धातुमात्रस्योपधायाश्च स्थाने ऊदितौ स्यातामिति दिक् । **स्थानं च प्रसङ्ग इति** । न चास्य प्रसङ्गार्थकत्वे विवदितव्यम्, 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्'इत्युक्ते दर्भाणां प्रसङ्ग इति प्रतीतेः।एवं च 'इको यणचि७४'इत्यादाविगुच्चारणप्रसक्तौ यणुच्चारणीय इत्याद्यर्थः संपद्यते॥

---

१ ह्रस्वशब्देन ह्रस्वस्य, दीर्घशब्देन दीर्घस्य, प्लुतशब्देन प्लुतस्य विधानं चैतदुपस्थापकं लिङ्गम् ॥ २ **अवयवा इति**—अत एव कस्यचित्कथंचिदङ्गाधिक्ये तद्विशिष्टस्यैव यथा प्रवेशनिर्गमौ तथैवैतद्विशिष्टस्य ग्रहणेन 'यदागमाः' इति परिभाषा लोकन्याय-सिद्धात्राप्यङ्गीकार्येति 'नेटि' इति सूत्रं ज्ञापयति । टित्कितोर्विधानं चैतस्या उपस्थितौ लिङ्गम् ॥ ३ मितो विधानं त्वेतदुपस्थितौ लिङ्गम्॥ ४टित्किन्मिद्विधाने षष्ठ्या अवयवार्थत्वनिर्णयेन प्रत्ययटित्किन्मिद्व्यतिरिक्तविधौ षष्ठ्युपादानमेतस्या उपस्थितौ लिङ्गम्॥ ५ **प्रसङ्ग इति**—'स्थान्यर्थाभिधानसमर्थस्यैवादेशता' इति सिद्धान्तानुसारेण प्रसङ्गोऽर्थबोधकतया प्रयुक्तस्यैव संभवतीति "**सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः । एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥** " इत्युपपन्नं भवति । एवं च'धात्वादेः षः सः' इत्यादीनां 'षकारादेर्धातोः स्थाने प्रसङ्गे सकारादिधातुरादेशो भवति' इत्येवमादिरीत्या व्याख्या करणीया ॥

१।१।५०। प्रसङ्गे[1] सति सदृशतम आदेशः स्यात् ॥ (६३) (प) यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ (६४) (सू) तस्मिन्निति निर्दिष्टे पूर्वस्य । १।१।६६। सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य[2] बोध्यम् ॥ (६५) (सू) तस्मादित्युत्तरस्य । १ । १ । ६७ । पञ्चमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य[3] ज्ञेयम् ॥ (६६) (सू) अलोऽन्त्यस्य ।१।१।५२। षष्ठीनिर्दिष्टस्यान्त्यस्याल[4] आदेशः स्यात् ॥ (६७) (सू) ङिच्च ।१।१।५३।अयमप्यन्त्यस्यैव स्यात् । सर्वस्येत्यस्यापवादः॥(६८) (सू) आदेः परस्य ।१।१।५४। परस्य[5] यद्विहितं तत्तस्यादेर्बोध्यम् । अलोऽन्त्यस्येत्यस्यापवादः ॥ (६९) (सू) अनेकाल् शित्सर्वस्य ।१।१।५५। स्पष्टम् । अलोऽन्त्यसूत्रापवादः ।

---

(६२)स्थाने-।सदृशतम इति।अर्थात्प्राप्यमाणानां मध्ये एव । अत एव गङ्गोदकमित्यत्र त्रिमात्र ओकारो न । इह स्थाने इत्यनुवर्तमाने पुनः स्थानेग्रहणादन्योऽपि वाक्यार्थः संमतः । ताल्वादिरूपे स्थाने योऽन्तरतमस्तत्प्रयुक्तान्तर्यवानिति यावत । स तु प्राप्यमाणानां मध्ये स्यादिति, तदेतदाह-(६३) यत्रानेकविधमिति । स्थानार्थगुणप्रमाणतश्चतुर्विधमित्यर्थः । स्थानतो यथा-दध्यत्र । तालुस्थानस्यकारस्य तालुस्थानो यकारः । अर्थतो यथा-वातण्ड्ययुवतिः, वतण्डशब्दात् 'वतण्डाच्च १५८८' इति गोत्रापत्ये यञ्।तस्य 'लुक् स्त्रियाम् १५८९'इति लुक् । शार्ङ्गरवादित्वान्ङीन् । वतण्डी चासौ युवतिश्चेति विग्रहे'पोटायुवति-१०७३'इत्यादिना समासः, 'पुंवत्कर्मधारय-१०७५१' इत्यतिदिश्यमानः पुंशब्दो वतण्डापत्यवाचिनो वतण्डीशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति, न तु वतण्डादिः । गुणतो यथा-वाग्घरिः । घोषवतो महाप्राणस्य तादृश एव घकारः। प्रमाणतो यथा-अमुम् अमू अमून् 'अदसोऽसेः-५६१' इत्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः । तमब्ग्रहणं किम्, वाग्घरिरित्यत्र 'झयो होऽन्यतरस्याम् १८४' इति पूर्वसवर्णे क्रियमाणे महाप्राणत्वसाम्येन द्वितीयो नादवत्त्वसाम्येन तृतीयश्च मा भूत्। किन्तु, नादवान् महाप्राणश्चतुर्थो घ एव यथा स्यादिति ॥ बलीय इति । तेन चेता, स्तोतेत्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः ॥ (६४) तस्मिन्निति।सप्तम्यन्तानुकरणमिदम्। निःशब्दो नैरन्तर्यपरः । दिशिरुच्चारणक्रियः । अचि यणित्युक्ते व्यवहितेऽव्यवहिते च सति प्राप्तमव्यवहिते एवेति, पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते । अव्यवहितस्येति तु फलितार्थकथनम् । पूर्वस्यैवेति किम्, दध्युदकम्। अत्रोकारस्य मा भूत् । अव्यवहितस्यैवेति किम्, अग्निचिदत्र, सोमसुदत्र । व्यवधानं चात्र वर्णकृतमेव निषिध्यते, न तु कालकृतम्, संहिताधिकाराज्ज्ञापकात् । अन्यथा निर्दिष्टग्रहणादेवासंहितायां यणाद्यप्रसङ्गात्किं तेन संहिताधिकारेणातो व्याचष्टे-वर्णान्तरेणेति । एवं च संहिताधिकारबहिर्भूतविधयः कालव्यवायेऽपि संभवन्तीति । तेनाग्नाविष्णू इत्यादाववग्रहेऽपि 'आनङ् ऋतो द्वन्द्वे १३२३''देवताद्वन्द्वे च १३२४' इत्यादिना उत्तरपदे परतो विहिता आनङादयो भवन्तीति दिक् ॥ (६५) तस्मादिति। उत्तरस्येति किम्, 'तिङ्ङतिङः ५९११'इति निघात उत्तरस्यैव यथा स्यात्-अग्निमीळे । नेह-ईळे अग्निम् ॥ अव्यवहितस्येति । एतच्च निर्दिष्टग्रहणानुवृत्त्या लभ्यते। तेन उत्संस्थानम् , उत्संस्तम्भनम्, इत्यादौ 'उदः स्था--१८३' इति पूर्वसवर्णो न प्रवर्तते ॥ ( ६६ ) *अलोऽन्त्यस्य।स्थानषष्ठीनिर्दिष्टस्य य उच्यते सोऽन्त्यस्यालः* स्थाने स्यादित्यर्थः । 'त्यदादीनामः ३७०' सः, यः। स्थानषष्ठीति किम् , ' आर्धधातुकस्येट्-२९३९ ' तृच ऋकारात्पूर्वो मा भूत् । इदं च 'षष्ठी स्थाने-६१' इत्यनुवृत्त्या लभ्यते । अल इति किम्, 'पदस्य ५३९ ' इत्यधिकृत्य विधीयमानं 'वसुस्रंसु-४५८' इति दत्वं परमानडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत् । (६७) ङिच्च। अयमपीति । 'अवङ् स्फोटायनस्य १४३' गवाग्रम्, 'अनङ् सौ ३५२' सखा । (६८) परस्य यदिति । 'तस[illegible]युत्तरस्यादेः' इति न सूत्रितम्,आदेरित्यंशस्य सर्वादेशबाधकत्वापत्तेः । सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति ॥ आदेर्बोध्यमिति । आदेरलो बोध्यमित्यर्थः।अल इति ह्यनुवर्तते। (६९) अनेकाल्-। 'अस्तेर्भूः । २२८३' बभूव ननु। 'निर्दिश्यमानस्यादेशा भवन्ति ३२७' इत्यनेकालादेशस्य सर्वादेशत्वं सिध्यति, तत्किमनेनानेकाल्ग्रहणेन । न च 'अलोऽन्त्यस्य ६६' इत्यन्त्यस्य स्यादिति शङ्क्यम्, 'ङिच्च ६७' इत्यस्य नियमार्थत्वाभ्युपगमात् । उच्यते-अनेकाल्ग्रहणाभावे रामैरित्यादावैसादेशः 'आदेः परस्य ६८ ' इति भकारस्यैव स्थाने स्यान्न तु सर्वस्य स्थाने इति दिक् । शित उदाहरणम् 'इदम इश् २६४९' इतः ॥

---

१ प्रसङ्ग इति-बहूनामादेशानामित्यादिः । तथा चैकस्यानेकादेशप्राप्तिरेतस्या उपस्थितौ लिङ्गम् । २ विधौ सप्तमीनिर्देश एतस्या उपस्थितौ लिङ्गम् । एतदुपस्थित्या तु सप्तमीनिर्दिष्टापेक्षया पूर्वस्यैवाव्यवहितस्यैव कार्यं भवति ॥ ३ विधौ पञ्चमीनिर्देश एतदुपस्थितौ लिङ्गम् । एतदुपस्थित्या तु पञ्चमीनिर्दिष्टापेक्षया परस्यैवाव्यवहितस्यैव कार्यं भवति ॥ ४ अल इति सूत्रे षष्ठ्यन्तमेव, अन्त्यस्येत्यनेन सामानाधिकरण्यस्य संभवे वैयधिकरण्यस्यान्याय्यत्वादिति भावः ॥ ५ तस्येति-परत्वेन निर्दिष्टस्येत्यर्थः। आदेशविधौ 'परस्य' इति षष्ठ्यन्ततयोपस्थितिरेवास्योपस्थितौ लिङ्गम् । अत एवादिरपि प्रत्यासत्त्या परत्वेन निर्दिष्टस्यैवेति बोध्यम् । 'परबोधकशब्देन यत्र परस्य स्थाने विधानं तत्रैवेयमुपतिष्ठते' । तेन 'नित्यं ङितः' इत्यादौ न दोषः, इति तु न सम्यक्, 'तिङ्शित्सार्वधातुकम्'इत्यादौ ' धातोः ' इत्यस्य संबन्धार्थं प्रकृतसूत्रेऽपि तत्संबन्धे 'तस्मादित्युत्तरस्य' इत्यनेन 'परस्य' इत्युपस्थितौ परशब्देन परस्य कार्यविधानेन ' आदेः ' इत्यस्योपस्थितिप्रतिबन्धकाभावात् । तस्मात्तत्रेत्थं व्यवस्था बोध्या-उत्तरस्येति षष्ठीनिर्देशेनोपस्थितस्य 'अन्त्यस्य' इत्यस्य ' सः ' इत्येतद्विशेषणत्वेन धातोः परस्य ङित्लकारोत्तमपुरुषस्यान्तो योऽल् सकारस्तस्य इत्येव व्याख्यानस्य लक्ष्यानुरोधाद्वैयधिकरण्येनान्वयस्वीकारेण निर्दिश्यमानस्य सकारस्यैव स्थानित्वेनोपादानादसंदेहाद् 'आदेः परस्य' इत्यनुपस्थित्या दोषाभाव इति बोध्यम् ॥

अष्टाभ्य औशित्यौंदावादेः परस्येत्येतदपि परत्वांदनेन बाध्यते ॥ ( ७० ) ⊛ स्वरितेनाधिकारः । १ । ३ । ११ । स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् ॥ ( ७१ ) ⊛ परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥

---

इत्यादाविति। आदिशब्देन 'अतोभिस ऐस् २८८' इत्यादि गृह्यते ॥ परत्वादिति । अत एव 'आदेः परस्य ६८' इति पृथक् क्रियत इत्युक्तम् ॥ ननु 'अनेकाल् शित्सर्वस्य' इत्यतः प्रागेव 'तस्मादित्युत्तरस्यादेः' इति पठ्यताम्, किमनेन पृथक् सूत्रकरणेन। न चैवं 'तस्मिन्निति निर्दिष्टे-६४' इत्यतो निर्दिष्टग्रहणं नात्रानुवर्तेत इति वाच्यम्; तस्यापि सूत्रस्य प्राक् पठने बाधकाभावेन निर्दिष्टग्रहणानुवृत्तिसिद्धेः । मैवम्, ब्राह्मणा अष्टौ इत्यत्र अष्टाभ्यः पूर्वयोरपि जश्शसोरौश्प्रसङ्गात् । यथाश्रुतसूत्राभ्युपगमे तु 'उत्तरस्य' इत्यंशः प्रवर्तते एवेति नायं दोषः प्रसजति इति॥ अत्र केचिन्निष्कर्षमाहुः–'अनेकाल् शित्–' सूत्रात् प्रागेव वर्णलाघवाय 'तस्मादित्युत्तरस्यादेः' इति सूत्रिते परत्वात्सर्वादेशेन आदेरित्यंशवदविशेषादुत्तरस्येत्यंशस्यापि बाधितत्वाद्वाक्यसंस्कारपक्षे ब्राह्मण अस्, अष्टन् अस् इति स्थिते 'अष्टाभ्य औश् ५०३ ' इत्यस्य दिग्योगे पञ्चमीत्वाद् व्याप्तिन्यायेन अष्टनोऽङ्गात्पूर्वयोरपि जश्शसोरौश् स्यात् । व्याप्तिन्यायस्तु 'प्राग्रीश्वरान्निपाताः' इति पठितेऽपि प्रत्यासत्तिन्यायेन 'अधिरीश्वरे' इति सूत्रावधिकत्वसिद्धौ 'ईश्वरे तोसुन्कसुनौ' इति सूत्रावधिकत्वनिराकरणाय रेफविशिष्टग्रहणं कुर्वता सूत्रकृतैव ज्ञापितः । ततश्च सर्वादेशेन 'उत्तरस्य' इत्यस्यावाधनार्थं निर्दिष्टग्रहणानुवृत्त्यर्थं च 'तस्मिन्निति-६४' इति सूत्रात्परत्र कृते तु ' आदेः ' इत्यस्य सर्वादेशबाधकत्वं स्यात् । तथा च 'अतो भिस् ऐस् २८८'इत्याद्यादेश आदेरेव स्यात, 'अनेकाल्–'सूत्रस्य'अस्तेर्भूः ३२८३' इत्यादौ चरितार्थत्वात् । यथान्यासे तु 'उत्तरस्य ६५'इत्यंशः प्रवर्तत एवेत्यष्टाभ्यः परयोरेव जश्शसोरौश् स्यात, न तु पूर्वयोः । तथा 'तस्मादित्युत्तरस्यादेः ' इति न सूत्रितमित्यादिमनोरमाग्रन्थस्याप्ययमेवाशय इति ॥ अन्ये तु–यथाश्रुतसूत्रनिराकरणपरतयैव मनोरमां योजयन्ति । तद्यथा––न सूत्रितमित्यस्य 'अनेकाल्शित्–' सूत्रात्प्राङ् न सूत्रितमिति नार्थः, आदेरित्यंशस्य सर्वादेशबाधकत्वापत्तेरित्याद्यग्रिमग्रन्थविरोधात्, किन्तु तद्ग्रन्थानुकूल्याय 'स्वं रूपम् ४६ ' इति सूत्रात्प्राङ् न सूत्रितमित्यर्थोऽभ्युपेयः । एवं च ' अनेकाल्–' सूत्रात् प्राक् सूत्रिते तु नास्त्येव दोष इति मनोरमाग्रन्थाशयः । एवं स्थिते निर्दिष्टग्रहणानुवृत्तिलाभाय 'तस्मिन्निति निर्दिष्टे-६४' सूत्रं 'तस्मादित्युत्तरस्यादेः परस्य' इत्यस्मात्प्रागेव पठनीयम् । अष्टनोऽङ्गात्पूर्वयोरप्यौश् स्यादित्युक्तदोषस्तु इत्थं परिहरणीयः–' तस्मादित्युरस्यादेः परस्य ' इत्यत्र ' आदेः ' इति पृथग्वाक्यम् । तत्र 'उत्तरस्य' इत्यनुवर्तते । सा च स्थानषष्ठी, ' षष्ठी स्थाने--६१' इत्यस्य प्राप्तेः । तत्र चायमर्थः–पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसंबन्धी, उत्तरस्य स्थाने यद्विधीयते तदादेर्भवतीति । इत्थं वाक्यभेदेन व्याख्यानाश्रयणात् 'अनन्तरस्य–' इति न्यायेन 'आदेः' इत्यंश एव सर्वादेशेन बाध्यते, न तु 'उत्तरस्य'इत्यंशोऽपि, इति नास्त्येव पूर्वोक्तदोषः। वाक्यभेदेन व्याख्यानं तु'उत्तरस्यादेः' इत्यसमस्तन्यासकरणेन ज्ञाप्यते । अन्यथा'उत्तरादेः, इति न सूत्रितम् इति वदेत् । किञ्च, 'अष्टाभ्य औश्५०३' इत्यस्य दिग्योगे पञ्चमीत्वेन पूर्वपरसाधारणतया अष्टनोऽङ्गाज्जश्शसोरित्युक्तेऽप्यष्टनोऽङ्गसंज्ञानिमित्तभूतौ यौ जश्शसौ तावेव शीघ्रोपस्थितिकावित्यष्टन्शब्दादुत्तरयोरेव औश् स्यात, न तु पूर्वयोरिति दिक् ॥ (७०) स्वरितेनाधिकारः । अत्रेत्थंभूतलक्षणे तृतीया । अधिकारो विनियोगः । कियद्दूरमधिकार इत्यत्र तु व्याख्यानमेव शरणम् । यथा–आ सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः, न तु प्रागभ्यासविकारेभ्य एवेत्यादि । यद्वा–स्वरित इति सप्तम्यन्तम्, स्वरिते दृष्टे अधिकारो निवर्तते इत्यर्थः । कः स्वारितोऽधिकारार्थः कश्च तन्निवृत्त्यर्थ इत्यत्र तु व्याख्यानमेव शरणम् । नन्वेवं व्याख्यानादेवानुवृत्त्यननुवृत्ती स्तः, किमनेन सूत्रेणेति चेत् । अत्राहुः–अर्थान्तरसंग्रहायेदं सूत्रं कृतम् । तथाहि अधि अधिकः कारोऽधिकारः, अधिकं कार्यं गौणेऽपि शास्त्रप्रवृत्तिरित्यर्थः । तथा च गौणमुख्यन्यायो यत्र नेष्यते अपादानाधिकरणादौ, तत्र स्वरितः पाठ्यः । किञ्च आधिकः कारः कृतिरियं यत्पूर्वः सन् परं बाधते। तथा च 'नुमचिरतृज्वद्भावेभ्यो नुट्–३९२' इत्यादिवक्ष्यमाणपूर्वविप्रतिषेधाः सर्वे संगृहीता भवन्ति । तत्र स्वरितपाठेनैव गतार्थत्वादिति ॥ (७१) परनित्येति। परात् नित्यं यथा–'तुदादिभ्यः शः ३३५७' तुदति, 'रुधादिभ्यः श्नम् ३३७३' रुणद्धि,परमपि लघूपधगुणं बाधित्वा नित्यत्वात् श-श्नमौ । तथा–धिनवाव, धिनवाम। परमपि 'लोपश्चास्यान्यतरस्यां म्वोः ३११३' इत्युकारलोपं बाधित्वा नित्यत्वात् 'आडुत्तमस्य–२९५९' इत्याट् । परादन्तरङ्गं यथा–उभये देवमनुष्याः । इह 'प्रथमचरम--२२३' इति परमपि विकल्पं बाधित्वा 'सर्वादीनि–२९९' इति सर्वनामसंज्ञा, विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात् । तथा–स्रवतेः 'णिश्रि–३०८७' इति चङि द्वित्वे उपधागुणादन्तरङ्गत्वादुवङ्, असुस्रुवत् । परादपवादो यथा–परमपि 'अनेकाल्–६९' इति सर्वादेशं बाधित्वा 'ङिच्च ६७' इत्यन्तादेशः । दध्ना, दध्ने, 'अस्थिदधि–४४५' इत्यनङ् । नित्यादन्तरङ्गं यथा–ग्रामणिनि कुले । नित्यमपि 'इकोऽचि–४४२' इति नुमं बाधित्वा 'ह्रस्वो नपुंसके–४४०' इति ह्रस्वः । कृते तु नुमि अनजन्तत्वाद्ध्रस्वो न स्यात् । अन्तरङ्गादपवादो यथा–दैत्यारिः, श्रीशः । परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वादाद्गुणे प्राप्ते च प्राप्तेऽपवादत्वात्सवर्णदीर्घः । तथा उन्न्यौ, उन्न्यः, सुल्वौ, सुल्वः इत्यत्रान्तरङ्गत्वादियङि, उवङि च प्राप्तेऽपवादत्वाद् ' एरनेकाचः--३८० ' इति, 'ओः सुपि ३९३ ' इति च यण् । यद्यपवादोऽन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां बाध्यत एव।

---

१ परनित्येति–'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते, तेषां मिथः प्रसङ्गे परबलीयस्त्वम्' इति 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे प्रदीपे पठितम् । तत्फलितार्थमिदमिति बोध्यम् ॥

(७२) (प) असिद्धं बहिरङ्गमन्तरङ्गे ॥ (७३) (प) अकृतव्यूहाः पाणिनीयाः ॥ निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः ॥ इति परिभाषाप्रकरणम् ॥

अथाच्सन्धिप्रकरणम्।

(७४) (सू) इको यणचि ।६।१।७७। इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते-स्थानत आन्तर्यादीकारस्य यकारः । सुध्य् उपास्य इति जाते-॥(७५) (सू) अनचि च ।८।४।४७। अचः परस्य यरो द्वे वा स्तो

---

तथाहि-'क्ङिति च ६७' इत्येतदनन्यार्थङकारयुक्तेष्वनङादिषु चरितार्थत्वात्ताताङि न प्रवर्तते, किन्तु परेण 'अनेकाल् शित् ६९' इत्यनेन बाध्यते-जीवतात्, भवतात्। अयजे इन्द्रम्, ग्रामे इह, सर्वे इत्थम् । अत्र अयज इ इन्द्रम्, ग्राम इ इह, सर्व ई इत्थमिति स्थिते अन्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते, तस्याऽसमानाश्रये दैत्यारिः, श्रीश इत्यादौ चरितार्थत्वात्॥ (७२) असिद्धमिति । तेन पचावेदमित्यादौ 'एत ऐ ३०१५' इत्यैत्वं न ॥ (७३) अकृतव्यूहा इति । अकृतकार्या इत्यर्थः। एवं तर्हि सर्वस्य शास्त्रस्य वैयर्थ्यं स्यादत आह-निमित्तं विनाशोन्मुखं दृष्ट्वेति । लोकसिद्धार्थकथनमेतत् । यद्वा-अक्षरार्थेनाप्येतत्कथनम्। उह्यते तर्क्यते इत्यूहः कार्यम्, विशिष्टो य ऊहो विनाशोन्मुखनिमित्तकं कार्यम्, अकृतो व्यूहो यैस्ते अकृतव्यूहा इति। यद्यपि 'कृतमपि शास्त्रं निवर्तयन्ति' इति परिभाषान्तरं पठ्यते फलं च तुल्यं तथापि अकृतव्यूहा इत्येव लघु, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति भावः॥कुर्वन्तीति।यथा 'निषेदुषीम्' इत्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि भाविना संप्रसारणे वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः ॥ इति तत्त्वबोधिन्यां परिभाषाप्रकरणम्॥

अथाच्सन्धिः॥ (७४) इको यणचि। प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा 'यू स्त्र्याख्यौ,' 'ल्वादिभ्यः' इति च निर्देशात् । तेन इक्शब्देन षट्षष्टिर्गृह्यन्ते, यण्शब्देन चत्वारः । भाव्यमानस्याणः सवर्णाग्राहकत्वात् । एवं चेह यणि तद्वाच्यवाच्ये लक्षणा तु न शङ्क्यैव, भाव्यमानस्याणः सवर्णग्राहकत्वाभावेन यण्वाच्ययकारादिवाच्यानामभावात् । अतो नास्ति यथासंख्यम् । न च लक्ष्यार्थबोधात्पूर्वभाविनं शक्यार्थज्ञानमादाय यथासंख्यमस्त्विति वाच्यम्, एवमपि तृतीयचतुर्थाभ्यामृकारलृकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ लृवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गात्। तस्मादिह 'स्थानेऽन्तरतमः ६२' इति सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्यानुपदं वक्ष्यति-'स्थानत आन्तर्यात्' इति॥ अचीति । कस्मादचि पर इत्याकाङ्क्षायामर्थादिक इति संबध्यते ॥ संहितायां विषय इति । दध्यत्रेत्यादौ कार्यिनिमित्तयोर्यदाऽतिशयितसंनिधिर्विवक्ष्यते तदैव यण् भवतीति भावः॥(७५) अनचि च। यरो द्वे वेति । 'यरोऽनुनासिके-१०' इति सूत्राद्यरो वेति चानुवर्तते, 'अचो रहाभ्याम्-९०' इति सूत्रादचो द्वे इति च, तदाह-अचः परस्येत्यादि । एवं चात्र वाग्रहणानुवृत्त्यैवेष्टसिद्धेः 'त्रिप्रभृतिषु शाकटायनस्य ८७' 'सर्वत्र शाकल्यस्य ८८' 'दीर्घादाचार्याणाम् ८९' इति च सूत्रत्रयं नारम्भणीयमिति भावः। अच इति किम्, तादात्म्यमित्यादौ मस्य द्वित्वं मा भूत्। 'अनचि' इति यदि पर्युदासः स्यात्ततो 'नञिवयुक्तमन्यसदृशे तथा ह्यर्थगतिः' इति न्यायादज्भिन्नेऽच्सदृशे वर्णे हलीत्यर्थः स्यात्, ततो लाघवात् हलीत्येव वदेत्, तस्मात् प्रसज्यप्रतिषेध इति ब्रवीति ॥

---

१ असिद्धमिति-'मनुष्योऽयं प्रातरुत्थाय पूर्वं स्वशरीरकार्याणि करोति, ततः सुहृदाम्, ततः संबन्धिनाम्' इति लोकन्यायसिद्धेयं परिभाषा शास्त्रेऽस्मिन्नप्याश्रयणीयेति 'वाह ऊठ्' इत्यूठ्ग्रहणेन ज्ञाप्यते-इतीयमपि ज्ञापकदेशषष्ठाध्यायस्येति बोध्यम्॥ २ अकृतेति-इयं च 'समर्थानां प्रथमाद्वा' इति सूत्रे कृतसन्धिकार्यार्थकसमर्थग्रहणेन ज्ञाप्यते इति केचित्। परन्तु भाष्ये न दृश्यते । तथा चैतत्परिभाषासाध्यप्रयोजनानामन्यथासिद्धिस्तु तत्र तत्र व्यक्तीकरिष्यते ॥ ३ परिभाषाप्रकरणमिति-इत्थं लिङ्गवती परिभाषा ज्ञेयेति दिक्प्रदर्शनम्। अतोऽग्रे समर्थपरिभाषालेखनेऽपि न क्षतिः । यथा सप्तमीनिर्देशादि निर्दिष्टपदोपस्थितौ लिङ्गम्, तथा पदविधित्वं समर्थपदोपस्थितौ लिङ्गम् । पदविधित्वलक्षणमग्रे स्फुटीभविष्यति ॥ ४ इक इति-'इक्वृद्धिप्रसङ्गे अच्संनिधाने यण्बुद्धिः' इत्येवंरीत्या व्याख्याने बुद्धिविपरिणाममात्रे न शब्दनित्यत्वहानिः। प्रतिवाक्यं सङ्केतग्रहासम्भवात् तत्रावापोद्वापाभ्यां शक्तिग्रहलाघवाय पदकल्पने, पदेष्वपि शक्तिग्रहलाघवाय प्रकृतिप्रत्ययकल्पनायां संहितैव पदवाक्योच्चारणे कृते तत्र वर्णान्तरदर्शनेऽसाधुत्वभ्रमवारणायेदं शास्त्रम् । तथाहि-गौरी गच्छतीत्यत्र रेफोत्तरमीकारः श्रूयते, तथा गौर्यागतेत्यत्र रेफोत्तरं यकारः श्रूयते । तत्रैवं संशयः स्यात्-ईकारः साधुर्यकारो वेति। तत्रैवं निर्णीयते-उभयमपि साधु-इकारात्परो यदि स्वरो न श्रूयते तदा यकारोऽसाधुः, यदि स्वरः श्रूयेत तदा तु इकारोऽसाधुः, यकार एव साधुरिति ॥ ५ संहितायामिति-एतेन 'इगुच्चारणोत्तरं यत्रार्धमात्रान्तराल एवाजुच्चारणं तत्रैव यणुच्चारणम् । यत्र त्वर्धमात्राधिककालव्यवधानं तत्र यण् न साधुः' इति नियमः सूच्यते ॥ ६ स्थानत इति-व्यक्तिपक्षे इक्पदेन षट्षष्टे (६६) र्ग्रहणेन, यण्पदेन चतुर्णां ग्रहणेन यथासङ्ख्येनानिर्वाहात्स्थानकृतान्तर्येणैव निर्वाहः। जातिपक्षे तु यथासंख्येनापि निर्वाहो यद्यपि संभवति, तथापि 'यत्रानेकविधम्'-इति न्यायेन स्थानकृतान्तर्यमेव न्याय्यत्वादुपन्यस्तमिति भावः॥

न त्वचि। इति धकारस्य द्विस्वम्॥ (७६) स्थानिवदादेशोऽनल्विधौ। १। १। ५६। आदेशः स्थानिवत् स्यान्न तु स्थान्यलाश्रयविधौ। अनेनेह यकारस्य स्थानिवद्भावेनाच्त्वमाश्रित्यानचीति ७५ द्वित्वनिषेधो नाऽऽश-

---

नत्वचीति। एवं चावसानेऽपि द्वित्वं भवति—वाक्क् वाक्॥ (७६) स्थानिवदादेशो–। आदेशे कृते स्वरूपभेदात्स्थानिप्रयुक्तकार्याणामप्रवृत्तावतिदेश आरभ्यते। 'अस्तेर्भूः ३२८३'। आर्धधातुके विवक्षिते धात्वादेशो धातुवत्, तेन 'अचो यत् ३७९७' इत्यादिधातुप्रत्ययः। भव्यं, बभूव॥ 'किमः कः ४६६' अङ्गादेशोऽङ्गवत्। तेन इनादेशदीर्घैस्भावाः। केन, काभ्यां कैः॥ आदेशग्रहणं किमर्थम्, स्थानिवदित्येतावतैव संबन्धिशब्दमहिम्ना तल्लाभात्। यथा 'पितृवदधीते' इत्युक्ते 'पुत्रः' इति गम्यते इति चेदत्राहुः—द्विविध आदेशः—प्रत्यक्ष आनुमानिकश्चेति। 'अस्तेर्भूः ३२८३' इत्यादिः प्रत्यक्षः। 'तेस्तुः' इत्यादिस्त्वानुमानिकः। 'एरुः २९५१' इत्यत्र हि इकारेणेकारान्तस्थानी अनुमीयते, उकारेण चोकारान्त आदेशः। तथा च 'तेस्तुः' इति फलितोऽर्थः। तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्नत्वानुमानिकस्य। आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहः। तेन पचत्वित्यादेस्तिङन्तत्वात् पदसंज्ञा सिध्यतीति। ननु 'एरुः २९९१' इत्यादि यथाश्रुतमेवास्तु, एकदेशविकृतस्यानन्यत्वात्पदत्वं भविष्यतीति चेन्न, अर्थवत्येव स्थान्यादेशभावविश्रान्तेर्वाच्यत्वात्तस्यैवात्र प्रसङ्गासंभवात्। तथाहि 'षष्ठी स्थानेयोगा ६१' इत्युक्तम्। स्थानं च प्रसङ्गः। स चार्थवतः, अर्थप्रत्ययार्थं शब्दप्रयोगात्। यद्यपि च्लेः सिजादिवसंभवीदं, तथापि सति संभवे अर्थप्रयुक्त एव प्रसङ्गो ग्राह्य इत्यनेनैवादेशग्रहणेन ज्ञाप्यते। उक्तं च—"सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते"॥ इति। पदमिहार्थवत्, पद्यतेऽनेनेति व्युत्पत्तेः। यद्यपि सर्वविकारे सुतरां नित्यत्वानुपपत्तिः, तथापीह विकार एव नास्तीति तात्पर्यम्। एतच्च शब्दकौस्तुभे स्पष्टम्। अनल्विधाविति किम्, यश्चाला विधिः, यश्चालः परस्य विधिः, यश्चालो विधिः, यश्चालि विधिस्तत्र मा भूत्। तत्राला विधौ यथा—व्यूढोरस्केन, अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य 'अड्व्यवाय—३३६७' इति णत्वं प्राप्तम्। अलः परस्य यथा—द्यौः, पन्थाः, इह 'हल्ङ्यादिलोपो ३५६' न। अलो विधौ यथा—द्युकामः, 'लोपो व्योर्वलि १२५४' इति लोपो न। न चोत्त्वविधिसामर्थ्याल्लोपो न भवेदिति शङ्क्यम्, द्युयानमित्यादौ तस्य सावकाशत्वात्। अलि विधौ—यजेः क्तः, क इष्टः 'हशि च २४६' इत्युत्वं न। न चेह स्थानिवद्भावेन जातेऽप्युत्वे, आद्गुणेऽवादेशे च कृते 'हलि सर्वेषाम् २५२' इति नित्यलोपेन क इष्ट इति रूपं सिद्ध्यत्येवेति वाच्यम्, कयिष्ट इति रूपान्तरासिद्धिप्रसङ्गात्। सिद्धान्ते तु 'भोभगोअघोअपूर्वस्य—२४७' इति यस्य लोपविकल्पे क इष्टः—कयिष्ट इति रूपद्वयमभ्युपगम्यते। अल् चेह स्थान्यवयव एव गृह्यते। तेन रामायेत्यादौ 'सुपि च २९७' इति दीर्घः सिध्यति। तद्विधौ हि यञादित्वमाश्रितम्। यञ् चादेशावयवो न तु स्थान्यवयवः। तथाऽरुदितामित्यादौ 'रुदादिभ्यः—३२८८' इति वलादिलक्षण इट् च सिध्यति। तदेतदाह—न तु स्थान्यलाश्रय इति। आश्रयणं चेह यथाकथंचिन्नतु प्राधान्येनैवेत्याग्रहः। तेन प्रपठ्येत्यत्र वलादिलक्षण इण्

---

१ धकारस्येति—अनुपदोक्ते—'सुध्य् उपास्य' इति स्थितौ धकारस्यैवाचः परत्वादिति भावः। यत्तु—न तु द्वित्वे पूर्वधकारस्य जश्त्वनिष्पन्नदकारस्यापि, लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः। विकारभेदेन लक्ष्यभेदस्यानङ्गीकारादिति। तन्न, एतावत्कालपर्यन्तं दकारविधायकस्यानुल्लेखेन दकारस्यास्यां प्रक्रियायामनिष्पत्तेस्तद्द्वयावृत्तौ तात्पर्याभावात्। 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यत्रत्यतत्त्वबोधिन्यां दकारोत्तरं द्वित्वाङ्गीकरणं तु उदवोढामित्यत्र 'लक्ष्ये लक्षणम्' इति न्यायेनैव वृद्धिवारणपर 'सिचि वृद्धिः'—इतिसूत्रस्थभाष्यविरुद्धम्। तत्रापि पूर्वमकारस्य पश्चादोकारस्येति विकारकृतलक्ष्यभेदानङ्गीकारात्॥ २ वदिति किमर्थम्—वत्करणाभावे "स्थान्यादेशः" इतीयत्युच्यमाने द्वयोरप्युद्देश्यविधेययोः सामानाधिकरण्येन निर्देशात्संज्ञासंज्ञिनिश्चयात् स्थानी आदेशस्य संज्ञा स्यात्तर्हि 'आङो यमहनः' इत्यात्मनेपदं हन्तेर्न स्यात्, किन्तु वधेरेव स्यात्। यत्तु—उत्तरत्राभावातिदेशार्थं तत्। स्पष्टार्थं चात्र तस्य सत्त्वम्—इति। तन्न सम्यक्, वतिं विनापि 'ङित्' इत्यर्थेऽपि यथा ङिति सति यत्संप्रसारणादि 'जरीगृहते' इत्यादौ भवति तदतिदिष्टङित्त्वेऽपि 'गृह्णाति' इत्यादौ भवति, ङिति सति वृद्धिगुणौ यथा मृष्टात्, वित्तात् इत्यादौ न भवत एवमतिदिष्टङित्त्वे मृष्टः, वित्त इत्यादौ न भवतः। तथैवोत्तरत्रापि विनैव वतिं 'स्थानिनि सति यद्भवति तदादेशेऽपि भवति, स्थानिनि सति यन्न भवति तदादेशेऽपि न भवति' इति भावाभावातिदेशयोः सिद्धौ वतिकरणेऽभावातिदेशस्तदभावे तदभाव इत्यत्र विनिगमकाभावात्॥ ३ अनचीति द्वित्वनिषेध इति—अनेन 'च' इत्यत्र 'अचो यरो द्वे' इत्यनुवर्त्य 'अचश्च परस्य यरो द्वे वा स्तः' इति विधिसूत्रम्। तस्यैव प्रतिषेधसूत्रम्—'अचः परस्य यरो द्वे न स्तः अचि परे' इत्यर्थकम् 'अनचि' इति। एवं द्वित्वनिषेधोऽपि शास्त्रीयं कार्यमेव—इति सूच्यते॥ ४ नाऽऽशङ्क्य इति—एतेन द्वित्वनिषेधशङ्कैव नास्ति, तद्धेतुस्थानिवद्भावस्यैव निषेधात्। 'अनेन स्थानिवद्भावेऽपि 'णेरध्ययने' इत्यादिनिर्दिष्टादेशप्रयुक्तकार्यवारणस्यानङ्गीकारात्' इति समाधानान्तरगवेषणमपि न कार्यमिति सूच्यते॥

ङ्योऽनल्विधाविति तन्निषेधात्॥(७७) अचः परस्मिन्पूर्वविधौ[२]।१।१।५७ अल्विध्यर्थमिदम्। परनिमित्तोऽजा-

न॥(७७)अचः परस्मिन्पूर्वविधौ। अचः किम्, आगत्य 'वा ल्यपि५१५५' इत्यनुनासिकलोपस्तुकि कर्तव्ये न स्थानिवत्। परस्मिन् किम्, आदीध्ये नित्यत्वादिट एत्वम्, तच्च न परनिमित्तम्, तेन 'यीवर्णयोः–३३०६' इति लोपे कर्तव्ये तन्न स्थानिवत्। पूर्वविधौ इति किम्, नैधेयः, निपूर्वाद्धाञः 'उपसर्गे घोः किः५०६५' 'अतो लोपः३१६५' 'द्व्यचः१६०२' 'इतश्चानिञः १६०३' इति ढक्। आकारस्य स्थानिवत्त्वे तु त्र्यच्त्वव्यपदेशेन द्व्यच्त्वं विरुद्धत्वाद्बाध्येत। न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते। नन्वेवमपि विधिग्रहणं व्यर्थम्, पूर्वस्येति षष्ठ्या कार्ये कर्तव्ये इत्यर्थस्याक्षेप्तुं शक्यत्वादिति चेन्न, 'पूर्वस्य विधिः, पूर्वस्माद्विधिः' इति समासद्वयलाभार्थं विधिग्रहणात्। यद्यप्यत्र पञ्चमीसमासपक्षो मूले नोक्तः, तथापि 'पूर्वस्मादपि विधौ स्थानिवद्भावः' इति पक्षे तु 'अड्व्यवाये' इत्येवात्र णत्वम् इति 'पद्दन्–३२८' आदिप्रघट्टके स्वीकृत एव सः॥ **अल्विध्यर्थमिदमिति**। तेन वव्रश्चेत्यत्र वस्य संप्रसारणं न, उरदत्त्वस्य स्थानिवत्त्वेन संप्रसारणतया 'न संप्रसारणे–४९३' इति निषेधात्। न चोरदत्त्वं परनिमित्तं नेति वाच्यम्, अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात्। पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षस्य तु प्रयोजनम्–तन्वन्ति, तन्वते। इह यणादेशस्य स्थानिवद्भावान्नेट्। अत्र हि तनित्यङ्गं निमित्तम्, तच्च स्थानिभूतादुकारात्पूर्वमिति। नन्विदं न प्रयोजनम्, बहिरङ्गस्य यणोऽसिद्धत्वादिडागमस्यात्राप्रसक्तेः। न च 'नाजानन्तर्ये–' इति निषेधः, 'यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्यम्' इति हरदत्तादिमते निषेधप्रवृत्तावपि 'उत्तरकार्ये यत्राच आनन्तर्यमाश्रितं तत्र बहिष्ट्वप्रक्ळृप्तिर्न' इति कैयटमते तदभावात्। न चैवमपीपचन्निति प्रयोजनं भवत्येव, इह हि अन्तेरकारस्य चङकारस्य च 'अतो गुणे २७६' इति पररूपे, तस्य च परादिवद्भावाज्झिग्रहणेन ग्रहणे सति 'सिजभ्यस्त–२९८१' इति जुस् प्राप्नोति, णिलोपस्य एकादेशस्य वा स्थानिवद्भावान्न भवतीति वाच्यम्, वेत्तेर्हि लङ्येवानन्तरो झिः संभवतीति तत्साहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात्। न च सिचा साहचर्यात् लुङ एव ग्रहणमस्त्विति शङ्क्यम्, 'विप्रतिषेधे परम्–२५९' इति परसाहचर्यस्य बलीयस्त्वात्। न चैवमपि 'अदभ्यस्तात् ३२९३' इत्यदादेशस्य निवारणाय पञ्चमीसमासपक्ष आवश्यक इति वाच्यम्, चङकारस्यान्तेरकारेण च 'अतो गुणे २७६' इति पररूपे कृते झस्याभावाददादेशाप्रसक्तेः। अत्र त्वेकादेशस्य परादिवद्भावाज्झग्रहणेन ग्रहणं न भवति, अल्विधौ अन्तादिवद्भावाप्रवृत्तेः। अन्यथा अयजे इन्द्रमित्यादौ सवर्णदीर्घो दुर्वार एव स्यात्। अस्तु वा परादिवद्भावस्तथापि झकारस्यात्स्यादित्यदादेशे कर्तव्येऽन्तादेशो न स्थानिवदल्विधित्वात्। तस्मात् पञ्चमीसमासपक्षो निरर्थक एव चेदत्राहुः–पञ्चमीसमासप्रयोजनतया अपीपचन्नित्युदाहरतो भगवतस्तु नेह साहचर्यं नियामकतया संमतम् 'द्वित्रिश्चतुर्–२३७' इति सूत्रे कृत्वोऽर्थग्रहणाज्ज्ञापकात् साहचर्यं न सर्वत्राश्रीयते। एवं च भवतेर्यङ्लुकि अभ्यस्ताश्रयस्य जुसः प्रवृत्त्या अबोभूवुरिति रूपं सिध्यति, 'आतः २९८२' इति नियमस्य सिचः परत्वमाश्रित्य यो जुस्प्राप्तस्तन्मात्रपरतया माधवादिभिर्व्याख्यातत्वात्। अत एव 'अभ्यस्ताश्रयो जुस्, नित्यत्वाद् वुक्, अबोभूवुः' इति मूले यङ्लुगन्तेषूक्तम्। तथा चापीपचन्नित्येतत्सिद्धये पञ्चमीसमासपक्ष आश्रयणीय इति॥ अन्ये त्वाहुः–पञ्चमीसमासपक्षप्रयोजनतया भाष्ये 'बेभिदिता, माथितिकः' इत्यस्याप्युदाहृतत्वान्न तस्य वैयर्थ्यशङ्का कार्या। यद्यपि यङोऽकारलोपस्य स्थानिवद्भावं विनापि 'एकाच उपदेशेऽनुदात्तात् ३००६' इत्यत्र बिहितविशेषणाश्रयणादेव इण्निषेधाप्रवृत्तौ भिदेर्यङन्तात्तृचि बेभिदितेति रूपं सुसाधम्, तथापि माथितिक इत्यादिसिद्ध्यर्थं स पक्षोऽभ्युपगन्तव्यः। न च मथितं पण्यमस्य माथितिक इत्यत्रापि 'तदस्य पण्यम् २१९३' इति ठकि इकादेशे च कृते 'यस्येति च ४३१' इति लोपात् 'इसुसुक्तान्तात्–१७२४' इति इकः स्थाने प्रसज्यमानो यः कादेशः सोऽप्यल्लोपस्य स्थानिवद्भावं विनैव सुपरिहरः। 'ठस्येकः १६५४' इत्यत्र 'स्थान्यादेशयोरकार उच्चारणार्थः' इत्यभ्युपगमे अल्विधित्वेन स्थानिवद्भावाप्रवृत्त्या ठस्थानिक इकादेशष्ठो न भवतीति कादेशाप्रसक्तेर्माथितिक इति रूपसिद्धौ किमनेन पञ्चमीसमासपक्षाश्रयणेनेति वाच्यम्, मथितयतेः क्विपि टिलोपणिलोपयोर्वेरपृक्तलोपे च मथित्, तेन चरति माथितिक इत्यत्र 'चरति २१३७' इति ठकि तस्येकादेशसिद्धये तत्पक्षस्यावश्यकत्वात्। न ह्यत्र स्थानिवद्भावं विनापि इकादेशापवादः कादेशः सुपरिहरः, नाप्येतादृशकल्पनायां मानाभावः शङ्क्यः, माथितिक इति भाष्योदाहरणस्यैव मानत्वादिति। स्यादेतत्, पूर्वत्वस्य सावधित्वेन संनिहितस्यैवावधित्वमुचितम्, संनिहितं चेह त्रयं–स्थानी, आदेशो, निमित्तं च। तत्र तावत् स्थानी न अवधिः, तस्यादेशेनापहारात्। नाप्यादेशनिमित्ते, वैयाकरण इत्यत्रैकारस्यायादेशापत्तेरित्या-

---

१ **अनल्विधावितीति**–'यत्र शास्त्रे विशेष्यतया विशेषणतया वा आदेशस्थानिभूतः आदेशस्थानिसंबन्धी वा योऽल् तन्मात्रवृत्तिधर्माश्रयणम्, तादृशे विधौ कर्तव्ये न स्थानिवत्' इति हि प्रसज्यप्रतिषेधाश्रयणे वाक्यार्थः। एवं चात्र यकारादेशोत्तरम् अच्त्वरूपवैकल्यप्रयुक्ता अनचीतिनिषेधाप्रवृत्तिरतोऽतिदेशमार्गणे तस्याच्त्वस्य यणादेशस्थानिभूतो योऽल् ईकारस्तन्मात्रवृत्तित्वादत्रातिदेशप्रतिषेध इति भावः॥ २ **अजादेश इति**–अच इत्युपादानसामर्थ्याद् अच एवादेश इत्यर्थः। तेन लोलुवः, पोपुव इत्यत्र 'यङोऽचि–' इति यङोऽज्झलात्मकस्य लुकि तस्य स्थानिवत्त्वाभावेनोवङ् सिध्यतीति भाष्ये स्पष्टम्। एवं हारितं करोति हारयति, अत्र टिलोपस्याज्झलादेशत्वेन स्थानिवत्त्वाभावाद् वृद्धिः सिध्यति॥

देशः स्थानिवत्स्यात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवद्भावे प्राप्ते-॥ (७८) ॥ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिषु । १ । १ । ५८ । पदस्य चरमावयवे द्विर्वचनादौ च

---

शङ्कयाह-अचः पूर्वत्वेन दृष्टस्येति । पूर्वत्वमुपलक्षणं, न तु विशेषणमिति भावः ॥ ( ७८ ) न पदान्त- । पदान्तादीनां चरन्तानां द्वन्द्वः, ततो विधिशब्देन कर्मषष्ठ्यन्तस्य समासः । विधिशब्दश्च भावसाधनो विधानं विधिरिति, स च द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं संबध्यते ॥ पदस्य चरमावयव इति । वृक्षं वेतीति वृक्षवीः, वृक्षं वातीति वृक्षवाः । तमाचष्टे वृक्षवयति, ततो विच् वृक्षव् । इह 'लोपो व्योर्वलि १२५४' इति वलोपो न, टिलोपस्य णिलोपस्य वा स्थानिवत्त्वात् । न च सुबन्ताण्णिजिति हरदत्तादिमते अन्तर्वर्तिसुपा पदत्वात् 'न पदान्त-' इति निषेधः शङ्क्यः, विधेयस्य लोपस्य पदानवयवत्वात् । पदान्तस्य स्थाने विधौ नेति व्याख्याने तु 'न पदान्त-' इति स्थानिवत्त्वनिषेधाद्वलोपः स्यादेवेत्यादि मनोरमायां स्थितम् ॥ द्विर्वचनादौ चेति । यलोपादय आदिशब्दार्थः, वरे इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम् । सहविवक्षाभावेऽपि निपातनाद् द्वन्द्वः सप्तम्यलुक् च । अथोदाहरणानि-पदान्ते-कानि सन्ति,कौ स्तः । इह यणावादेशयोः कर्तव्ययोः श्नसोरल्लोपो न स्थानिवत् । न चेकारौकारयोः स्थानिभूतादचः पूर्वत्वाविरहादेवाल्लोपो न स्थानिवदिति वाच्यम्, 'वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते' इति पक्षे स्थानिभूतादचः पूर्वत्वस्य सत्त्वात् । यद्वा-गोचः गोचेत्यादावोकारस्यावाङि कर्तव्ये 'अचः ६६८' इत्यल्लोपो न स्थानिवदित्युदाहार्यम् । अत्र हि लोपस्थान्यकारात्पूर्वत्वेन दृष्टत्वादोकारस्य ॥ द्विर्वचने--सुद्ध्युपास्यः । 'नाजानन्तर्ये-' इति निषेधाद्बहिरङ्गपरिभाषाऽत्र न प्रवर्तते, स्थानिवद्भावनिषेधसामर्थ्याच्च । एवं क्वचिदन्यत्राप्यूह्यम् ॥ वरे--यायावरः । यातेर्यङन्ताद् 'यश्च यङः ४१८२' इति वरच् । 'अतो लोपः ३०८२'स च'आतो लोप इटि च ३१६५' इत्यालोपे कर्तव्ये न स्थानिवत् ॥ यलोपे—यातिः । यातेर्यङन्तात् क्तिच्, 'अतो लोपः' [३४९०] यलोपः अल्लोपस्य स्थानिवत्त्वादातो लोपः, यलोपः, न च पुनरालोपः शङ्क्यः, चिणो लुङ्न्यायेन आलोपस्यासिद्धत्वात्स्थानिवद्भावाच्च। ननु यदि यलोपविधिं प्रति स्थानिवत्त्वनिषेधस्तर्हि कथं वाय्वोरिति, उच्यते-'असिद्धं बहिरङ्गम्-७२' इति यणोऽसिद्धत्वान्न यलोपः । न च'नाजानन्तर्ये-'इति निषेधः, अन्तरङ्गकार्ये अच आनन्तर्यं यत्र तत्रैव तदभ्युपगमात् । किञ्चात्र 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति वार्तिकमस्ति । तेनान्यः स्थानिवदेव भवतीति न दोषः ॥ स्वरे—चिकीर्षकः । ईकारस्य 'लिति ५५५०' इत्युदात्तत्वे कर्तव्ये सनोऽतो लोपो न स्थानिवत् । न च 'लिति' इत्यारम्भसामर्थ्यं, कारक इत्यादौ सावकाशत्वात् ॥ सवर्णानुस्वारयोः-शिण्ढि। श्नसोरल्लोपो न स्थानिवत् । यद्यप्यनुस्वारो न स्थानिभूतादचः पूर्व इति तस्य परसवर्णे कर्तव्येऽल्लोपस्य स्थानिवत्त्वप्रसङ्ग एव नास्ति, तथापि स्थानिद्वाराऽनुस्वारोऽपि इष्ट इत्यस्त्येव तत्प्रसङ्ग इत्याहुः । ननु सवर्णग्रहणमात्रेणानुस्वारोऽप्याक्षेप्तुं शक्यत इति किमनेन पृथगनुस्वारग्रहणेन । सत्यम्,पृथग् ग्रहणाभावे यत्र परसवर्णस्तत्रैवेति संभाव्येत । तथा च यत्र न परसवर्णप्रसङ्गः शिंषन्तीत्यादौ तत्र स्थानिवद्भावं निषेद्धुमनुस्वारग्रहणम् । एवं यत्र वरे अजादेशस्य प्रसङ्गो नास्ति यातिरित्यादौ तत्र यलोपे स्थानिवद्भावं निषेद्धुं वरेग्रहणात्पृथग्यलोपग्रहणं कृतमिति ज्ञेयम् ॥ दीर्घे-प्रतिदीव्ना, प्रतिदीव्ने । 'हलि च ४८१' इति दीर्घे कर्तव्ये अल्लोपो न स्थानिवत् । यणादेशस्तु स्थानिवद्भवत्येव, 'लोपाजादेश एव न स्थानिवत्' इत्युक्तत्वात् । तेन 'हलि च ४८१' 'उपधायां च ३०२९' इति दीर्घाप्रवृत्त्या किर्योः, गिर्योः, विव्यतुरित्यादि सिद्धम् ॥ जशि-सग्धिश्च मे । अदनं ग्धिः। तत्र अदेः क्तिनि 'बहुलं छन्दसि ५२२५' इति घस्लादेशः, घसिभसोर्हलि च ५४०२' इत्युपधालोपः, 'झलो झलि ३०४८' इति सलोपः, 'झषस्तथोः-३०४७' इति धत्वं, धस्य 'झलां जश् झशि ७९' इति जश्त्वे कर्तव्ये उपधालोपो न स्थानिवत् । 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु १४५८' इति सः । समाना ग्धिः सग्धिः । न चात्र सलोपे धत्वे च कर्तव्ये पूर्वस्मादपीति स्थानिवद्भावात्सग्धिरिति रूपं न स्यादिति शङ्क्यम्, पञ्चमीसमासपक्षस्यानित्यत्वात् । तत्र 'निष्ठायां सेटि ४०७२' इति लिङ्गात् । तथाहि-तत्र 'सेटि' इति पदं न तावदनिड्व्यावृत्त्यर्थम्, णिजन्तात्तदसंभवात् । ननु संज्ञपितः पशुरित्यत्र 'यस्य विभाषा ४०३६' इति इण्निषेधे संभवत्येवानिट्त्वं, 'सनीवन्त-३४७७' इति विकल्पितेट्त्वादिति चेन्न, 'यस्य विभाषा' इत्यत्र 'एकाचः' इत्यनुवृत्तेः । अन्यथा दरिद्रित इति इण् न स्यात्, तत्र 'तनिपतिदरिद्रातिभ्य-३४८२' इति वार्तिकेन सनो विकल्पितेट्त्वात् । तस्मात्कालावधारणार्थं सेड्ग्रहणम् । इटि कृते णिलोपः, न तु ततः प्रागिति। अन्यथा कारितमित्यादौ णिलोपे कृते 'एकाच उपदेशे-३००६'इति इण्निषेधः स्यादिति । यदि तु पूर्वस्माद्विधौ स्थानिवत्त्वं तर्हि णिचा व्यवधानान्निषेधप्राप्तिरेव नास्तीति 'सेटि' इत्यनर्थकं सत्तस्यानित्यतां ज्ञापयति इति स्थितम् । ननु जश्त्वविधौ यदि स्थानिवत्त्वनिषेधस्तर्हि पठ्यतीत्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वा-

---

१ स्थानिवद्भाव इति-'स्थानिनि सति यन्न भवति तदादेशेऽपि न भवति' इति रीत्याऽभावातिदेशेन 'अनचि' इत्यस्य पर्युदासत्वमते । प्रसज्यप्रतिषेधत्वमते तु भावातिदेशेन स्थानिन ईकारस्य सत्त्वेऽप्राप्नुवतो द्वित्वस्य यणादेशोत्तरमप्यप्राप्तिसाधके- इति आदौ पूरणीयम् ॥ २ चरमावयव इति-विधौ तत्प्रतिबन्धे वा कर्तव्ये इति शेषः । तत्रान्त्योदाहरणम्-गोदुहः सन्ति इत्यत्र 'श्नसोः-' इत्यल्लोपस्य स्थानिवत्त्वे 'वा शरि' इति विसर्गप्रतिबन्धः स्यादिति बोध्यम् ॥

कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् । इति स्थानिवद्भावनिषेधः ॥ (७९) (सू) झलां जश् झशि । ८ । ४ । ५३ । स्पष्टम् । इति धकारस्य दकारः ॥(८०) (सू) अदर्शनं लोपः । १ । १ । ६० । प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ॥ (८१) (सू) संयोगान्तस्य लोपः । ८ । २ । २३ । संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात् । इति यलोपे प्राप्ते-॥ (८२) (वा) यणः प्रतिषेधो वाच्यः ॥ (८३) (वा) यणो मयो द्वे वाच्ये ॥ मय इति पञ्चमी यण इति षष्ठीति पक्षे यकारस्यापि द्वित्वम् । तदिह धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । एकधमेकयम् ।

---

ज्जश्त्वं स्यात् । मैवम्, 'इष्टवत्' इत्यतिदिष्टया भसंज्ञया पदसंज्ञाया बाधाज्जश्त्वाप्रवृत्तेः ॥ चरि-जक्षतुः, जक्षुः । घसेर्लिटि अतुस् उस् च, 'गमहन-३१५६' इत्युपधालोपः 'खरि च १८६' इति चर्त्वं प्रति न स्थानिवत् । भाष्ये तु 'पूर्वत्रासिद्धे न स्थानिवत् ३३७' इत्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः । तद्रीत्या तु सलोपे धत्वे च कर्तव्ये स्थानिवद्भावशङ्कैव नास्तीति बोध्यम् ॥ (८०)अदर्शनं लोपः । अत्र दृशिर्ज्ञानसामान्यवचनः, दर्शनं ज्ञानम्, तदिह शब्दानुशासनप्रस्तावाच्छब्दविषयकं सत् श्रवणं सम्पद्यते । तच्च श्रोतृव्यापारस्तन्निषेधोऽश्रवणम् । नन्वेवं 'लोपो व्योर्वलि १२५४' इत्यादौ वकारयकारौ न श्रोतव्याविति श्रोतृव्यापार एव निषिध्येत, प्रयोक्तृव्यापार उच्चारणमनिषिद्धं स्यात् । अत्राहुः-असति च श्रवणे उच्चारणमनर्थकमेवेति सामर्थ्याच्छ्रवणनिषेधे तद्धेतुभूतमुच्चारणमपि निषिद्धं भवतीति ॥ प्रसक्तस्येति । इह 'स्थाने' इत्यनुवर्तनादेतल्लभ्यते । प्रसक्तस्येति किम्, दधि मध्वित्यादौ तुगागमो मा भूत् । अस्ति हि तत्र क्विपोऽदर्शनम्, तच्च लोप इति प्रसक्तविशेषणाभावे प्रत्ययलक्षणेन तुक् स्यादेवेति दिक् ॥ (८१) संयोगान्तस्य । तदन्तस्येति । 'अलोऽन्त्यस्य ६६' इति परिभाषयेति भावः । यद्यपि विशेषणेन तदन्तविधिलाभात् 'संयोगस्य' इत्येव सूत्रयितुमुचितं, तथापि 'प्रत्येकं संयोगसंज्ञा' इति पक्षे 'दृषत्करोति' इत्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणमिति मनोरमायां स्थितम् ॥ 'संयोगः' इति महासंज्ञाकरणसामर्थ्यादेकस्य संयोगसंज्ञा न भविष्यतीति अन्तग्रहणमिह त्यक्तुं शक्यम् ॥ (८२) यणः प्रतिषेध इति । वाचनिकमिदम् । यद्वा-वाच्यो व्याख्येयः । व्याख्या च द्वेधे-'झलो झलि ३०४८' इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयते इति, अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा । न च षाष्ठी परिभाषा त्रैपादिकमन्तरङ्गलोपं न पश्यतीति वाच्यम्, कार्यकालपक्षाभ्युपगमात् । न च 'नाजानन्तर्ये-' इति निषेधः, उत्तरकालप्रवृत्ते लोपे अजानन्तर्याभावात् । तदुक्तम्-'संयोगान्तलोपे यणः प्रतिषेधः,' 'न वा झलो लोपात्' 'बाहिरङ्गलक्षणत्वाद्वा' इति ॥ (८३)चत्वारि रूपाणीति । इह धकारस्य द्वित्वे जश्त्वे च कृते 'पूर्वत्रासिद्धीयमद्वित्वे ३२५७' इति जशोऽसिद्धत्वाभावेन लक्ष्यभेदात्पुनर्दकारे द्वित्वप्रवृत्तौ रूपाधिक्यमस्ति ॥ अत्र केचिदाहुः-उकारात्परस्य यरो द्वित्वे कृते पुनरुकारात्परस्य यरो द्वित्वं न भवति, निमित्तभेदाभावादित्याशयेनेदमुक्तमिति । तेषां तुदादिगणे वव्रश्चेत्यत्र उरर्दत्त्वस्य 'अचः परस्मिन्-७७' इति स्थानिवद्भावात् 'न संप्रसारणे-४९३' इति वस्योत्वं न इति समाधानग्रन्थो मूलस्थो विरुध्येत, तन्निमित्तस्य लिटो भेदाभावादिति दिक् ॥ अन्ये तु-धकारस्य जश्त्वे कृते 'पूर्वत्रासिद्धीयमद्वित्वे ३२५७' इति जशोऽसिद्धत्वाभावाद्दकारे पुनर्द्वित्वं भवत्येव, व्यक्तिभेदात् । अत एव सँय्यन्तेत्यादौ परसवर्णद्वित्वं भाष्यकृता उदाहृतम् । षट् सन्त इत्यत्र सकारद्वित्वसिद्धये 'पूर्वत्रासिद्धीयमद्वित्वे ३२५७' इति मनोरमायाम-

---

१ निषेध इति-द्विर्वचनस्य कर्तव्यत्वादिति भावः ॥ २ जश् इति-असन्देहाय षत्वजश्त्वे न कृते इत्युपधासंज्ञासूत्रोद्योते स्पष्टम् ॥ ३ प्रसक्तस्येति-शास्त्रतोऽर्थतो वेत्यादिः । तत्रान्त्योदाहरणम्-'चादिलोपे विभाषा' इत्यादि॥ ४ महासंज्ञेति-महासंज्ञाकरणं तु प्राचामनुरोधेनैव, न त्वन्वर्थतालाभाय । अन्वर्थतयैव प्रत्येकसंज्ञावारणे सिद्धे गर्गदण्डनन्यायानुसरणं भाष्यकृतो व्यर्थं स्यादिति बोध्यम् ॥ ५ पुनर्द्वित्वं भवत्येव, व्यक्तिभेदादिति-इदं सर्वमसङ्गतम्, विकारकृतलक्ष्यभेदाश्रयणे हि तत्सङ्गतं स्यात् । तदेव न युक्तम्, उदवह् स् तामिति स्थिते, सिचि हलन्तलक्षणवृद्धौ कृतायाम् उदवाह् स् तामिति जाते ढत्वसलोपधत्वष्टुत्वढलोपेषु जातेषु 'सहिवहोः-' इत्याकारस्यौकारे जाते पुनरप्यौपदेशिकहलन्तत्वेन ढत्वढलोपयोरसिद्धत्वेन वौकारस्य प्राप्ता सिचि वृद्धिर्विकारकृतलक्ष्यभेदमनाश्रित्य 'लक्ष्ये लक्षणम्-' इति न्यायेनैव वारिता 'सिचि वृद्धिः' इति सूत्रभाष्ये, तद्विरोधात् ॥ ६ भाष्यकृतेति-इदमपि भाष्यार्थाऽज्ञानसूचकम्, यदि भाष्येऽनुस्वारद्वित्वोत्तरं परसवर्णे कृते तस्य द्वित्वं कृतमभविष्यत्, तदा भवन्मतसाधकमभविष्यत् । तदेव तु न, भाष्ये हि-द्वित्वपरसवर्णयोः प्राप्तौ पूर्वं परसवर्णस्याऽसिद्धत्वेन द्वित्वेऽङ्गीकृते तत्खण्डनाय परसवर्णस्य सिद्धत्वमङ्गीकृत्य द्वित्वे बाधित्वा परसवर्णे परत्वात्कृते परसवर्णस्य द्वित्वमङ्गीकृतमिति न तद्भाष्यं भवन्मतसाधकम् ॥ ७ मनोरमायामिति-इदमप्यविकृतबुद्धित्वसूचकमेव षट्ट्स्सन्त इत्यत्र डकारस्य टकारस्य वा द्वित्वं तु 'अनचि च' इति सूत्रेण, सकारस्य द्वित्वं 'शरः खयः' इति वार्तिकेनेति लक्षणभेदात् 'लक्ष्ये लक्षणम्-' इति न्यायाविषयत्वात्। संस्स्कर्तेत्यादौ विकारं विनैव स्थानिभेदादनुस्वारसकारयोरेकेनैव लक्षणेन द्वित्वाङ्गीकरणस्यापि न भवन्मतसाधकत्वम् । प्रकृते तु विकारकृते एव स्थानिभेदः, स तु 'सिचि वृद्धिः' इति सूत्रभाष्ये नाङ्गीकृत इति दकारस्य द्वित्वकरणमसङ्गतमेवेति दिक् ॥

**द्धिधं द्धियम् । द्धिधमेकयम् । एकधं द्धियम् । सुद्ध्युपास्यः । मद्धरिः । धात्त्रंशः । लाकृतिः ॥**

---

प्युक्तम् । एवं यकारेऽपि द्वित्वस्य पुनः प्रवृत्तौ क्षत्यभावः । आष्टमिकाद्विर्वचनस्य स्थाने द्विर्वचनरूपत्वात्स्थान्यादेशव्यक्त्योश्च भेदात् ॥ यत्तूक्तं मनोरमायाम्--'एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्तते' इति 'एकः पूर्वपरयोः १०३' इति सूत्रे भाष्ये सिद्धान्तितत्वात्कथं पुनर्द्वित्वप्रवृत्तिः । अन्यथा द्वित्वानन्त्यापत्तेरित्यादि । तदनवधाननिबन्धनम् । तत्राधानादिशास्त्रदृष्टान्तेन क्वचिदेवैकस्मिन्प्रयोगे गुणादिशास्त्रस्यानुष्ठापकत्वं स्यान्न प्रयोगान्तर इत्याशङ्क्य ज्योतिष्टोमादिशास्त्रदृष्टान्तेन प्रयोगान्तरेऽपि गुणादिशास्त्रप्रवृत्तेरेव सिद्धान्तितत्वात् । ने तु सकृच्छास्त्रप्रवृत्तेः । आनन्त्यापत्तिरपि प्रकृते न दोषः । सा हि अनन्तकार्यसहितप्रयोगस्याशक्यत्वात्तच्छास्त्रकर्तव्यस्य परिनिष्ठितप्रयोगस्याभावात्तच्छास्त्रस्याननुष्ठापकत्वापत्त्या दोषः । प्रकृते तु नास्ति, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्ति द्वित्वप्रयोगसहितस्य परिनिष्ठितत्वेन तेनैव शास्त्रस्य कृतार्थत्वात् । 'लिटि धातोः-२९३१' इति द्वित्वस्य तु नित्यत्वादानन्त्यापत्तेः क्वचिद्विश्रान्तौ कल्पनीयायां लाघवात्प्रथमप्रवृत्तावेव विश्रान्तिकल्पनादनभ्यासग्रहणं प्रत्याख्यातम् । अत एव 'सर्वस्य द्वे २८८२' इत्यस्यापि न पुनःपुनः प्रवृत्तिरित्याहुः ॥'नन्वत्र 'इकोऽसवर्णे-१४७' इति शाकल्यमतेन रूपान्तरमस्त्विति चेन्मैवम्, समासे तन्निषेधात् । न च नित्यसमास एव तन्निषेध इति वाच्यम्, 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इति वार्तिकस्थनित्यग्रहणस्य भाष्ये प्रत्याख्यातत्वात् ॥ मनोरमायां तु-जश्त्वेन दकारे कृते तस्य द्वित्वं नेत्याद्याशयेन सकारद्वित्वेनाष्टौ विसर्गद्वित्वेन षोडशेत्युक्तम् ॥ **द्धिधमिति** । यद्यपि धस्य जश्त्वेन दकारे धद्वयं नास्ति, तथापि भूतपूर्वगतिमाश्रित्यैवमुक्तम् ॥ **सुद्ध्युपास्य इति** । 'कर्तृकरणे कृता बहुलम् १००४' इति तृतीयासमासः ॥ नन्विह यणेव दुर्लभः सुधीशब्दस्य ध्यायतेः संप्रसारणेन निष्पन्नत्वेन 'संप्रसारणाच्च ४५४' इति पूर्वरूपापत्तेरिति चेन्मैवम्, 'संप्रसारणपूर्वत्वे समानाङ्गग्रहणम्' इति वार्तिकोक्तेः । न चैवमपि 'न भूसुधियोः-२८३' इति यण्निषेधः शङ्क्यः, आङ्गत्वेन प्रत्यये परत एव तन्निषेधस्य प्रवृत्तेः, 'सुपि' इत्यनुवर्त्य सुपि परत एव यण्निषेधाच्च ॥ **धात्त्रंश इति** । अत्र रेफस्य द्वित्वं न, द्वित्वप्रकरणे

---

१ **लाकृतिरिति**-यणुत्तरप्राग्वर्तियरो द्वित्वप्रयुक्तभेदाभावादेकम्, विसर्गद्वित्वेन तु द्वे रूपे । वकारस्तु नैवात्रापत्तियोग्यः, अन्यूनानतिरिक्तस्थानकादेशलाभेनाधिकस्थानकस्याप्रवृत्तेः । वस्तुतस्तु-कण्ठताल्वित्यादौ कण्ठस्योपलक्षणत्वेनाविवक्षितत्वमिव दन्तानामप्यत्रोपलक्षणत्वेनाविवक्षितत्वमेव । अगुह्हीति प्रयोगस्तु न भाष्याक्षरस्वरसासिद्धः । परमार्थतस्तु-लाकृतिरिति सत्त्वे लद्वयश्रवणापत्त्या 'उरण्-' इत्यत्र अणूप्रत्याहारस्य परणकारकत्वाङ्गीकारे चारितार्थ्येन 'सामर्थ्यात् पूर्वेण, न परेण' इति भाष्योक्तं सामर्थ्यवर्णनमसंगतं स्यात् । अत ईदृशानामनभिधानमेव कल्पनीयम् । अभिधाने वा रप्रत्याहाराभावे 'लृवर्णस्य लपरत्वम्' इति वार्तिकमनाश्रितवतस्तात्पर्यं कल्पनीयम् ॥ २ **आष्टमिकेति**-इदमसंगतम् । 'एकाचो द्वे-' इति षाष्ठे,'सर्वस्य द्वे' 'अचो रहाभ्यां यरो द्वे' इत्याष्टमिके च द्वे इत्यस्य संख्येयविशेषापेक्षायां शब्दानुशासनप्रस्तावाच्छब्दरूपे प्रत्यासत्त्या 'स्थानेऽन्तरतमः' इति परिभाषया स्थानिसमानाकारे यदा गृह्येते, तदा एकाचः, सर्वस्य, यर इति स्थानषष्ठीति स्थाने द्विर्वचनपक्षः । यदा तु शब्दद्वयोच्चारणसाध्यत्वेन तद्बुद्ध्यारोहावश्यकत्वेन तदध्याहारेण 'द्वे उच्चारणे' इत्यर्थः, तदा तत्क्रियापेक्षा सा कर्मणि षष्ठीति द्विःप्रयोगपक्षः । तत्र कारकविभक्तेर्न्याय्यत्वेनादोषेण चान्त्यपक्ष एव सिद्धान्तः । स्थाने द्विर्वचनपक्षेऽपि पुनःप्रवृत्तिस्तु न, द्वितीयपक्षानुरोधात् तेनैवाभीक्ष्ण्यादिबोधनाच्च, पदद्वित्वस्याप्याावृत्त्यापत्तौ पचति पचतीत्यादौ वीप्सादेरप्यनेकद्योत्यत्वापत्तेश्च ॥ ३ **न तु सकृच्छास्त्रप्रवृत्तेरिति**-इदं भाष्याशयानवबोधमूलकम् । 'एकः पूर्वपरयोः' इति सूत्रभाष्यतो हि यथा 'अनयोः पूलयोः कटं कुरु'इत्यादौ एकशेषनिर्देशादेव कटमित्येकत्वाविवक्षणेनोभयपूलसंबन्ध्येककटकरणप्रतीतिस्तथा 'आदचि पूर्वपरयोर्गुणः' इत्यादावपि द्वन्द्वानिर्देशाद्विधेयगतसंख्याविवक्षणाच्चोभयोः स्थान एक एवादेशो भविष्यतीत्येकग्रहणं प्रत्याख्यातम् । ततः 'तत्र गुणो भवतीत्याद्यंशो लक्ष्यसंस्कारक एव, यथाऽऽधानमग्निसंस्कारकम् । शास्त्रतात्पर्यविषयप्रयोगविधिश्च पुरुषसंस्कारक एव' इत्याशयेन 'शास्त्राधिकारिणः पुरुषान् प्रति प्रवृत्तं संस्कारकं तत्तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेवार्थबोधकम्, यथा-'आधानेनाग्नीन् संस्कुर्यात्' इत्यर्थकम् 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति वाक्यं प्रतिब्राह्मणं सकृदेवार्थबोधकं, सकृदेव स्वविषये प्रवर्तकं च । अत एव पुनःपुनर्नाधानादिसंस्कारः । तथा व्याकरणशास्त्रस्य 'अवर्णादचि पूर्वपरयोर्गुणो भवति, गुणवाञ्शब्दश्च साधुर्भवति, साधुश्च प्रयोक्तव्यः' इत्येतावत्पर्यन्तं व्यापारात् तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य कृतार्थत्वान्मालेन्द्रादिप्रयोगो न स्यादतस्तत्तल्लक्ष्यविषयकवाक्योपप्लवेन वाक्यभेदवत् पूर्वपरविषयकवाक्यभेदस्यापि प्राप्तौ तद्वारणायैकग्रहणमावश्यकम्-इति शङ्कितम् । ततः-यथा नित्ये 'न ब्राह्मणं हिंस्यात्' इत्यादौ तदकरणजन्यप्रत्यवायपरिहाराय, काम्ये 'ज्योतिःष्टोमेन स्वर्गकामो यजेत' इत्यादौ फलाय, नैमित्तिके 'पूर्ववया ब्राह्मणः प्रत्युत्थेयः' इत्यादौ तूभयस्मै वाक्यभेदेन यावद्ब्राह्मणपूर्ववयस्कवसन्तविषयकशास्त्रोपप्लवात् पुनः प्रवर्तकत्वम्, तथाऽसाधुप्रयोगे प्रत्यवायश्रवणान्नित्यसमत्वं प्रयोगविधेः, अर्थबोधनार्थतया नैमित्तकत्वम्, "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इत्यनेन काम्यत्वं चेति कामनायां तृप्त्यभावेन तत्तद्विषयानन्तवाक्योपप्लवेन भवत्येव मालेन्द्रादिप्रयोगः-इति समाहितम् । एवं च प्रयोगविध्यंशस्य नित्यकाम्यत्वव्यवस्थापनेन तत्तल्लक्ष्यविषयोपप्लुतवाक्ये गुणविध्यंशस्य आधानादिवत् फलाश्रवणाच्छुद्धसंस्कारार्थत्वमेवोक्तम् । एवञ्च तस्याधानादिवदेवाग्निस्थानीयलक्ष्येषु सर्वेषु प्रवृत्तावपि एकामावि-

( ८४ ) (सू) नादिन्याक्रोशे पुत्रस्य । ८ । ४ । ४८ । पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने । पुत्रादिनी त्वमसि पापे । आक्रोशे किम् । तत्त्वकथने द्विर्वचनं भवत्येव । पुत्त्रादिनी सर्पिणी ॥ (८५) (वा) तत्परे च ॥ पुत्रपुत्रादिनी त्वमसि पापे ॥ ( ८६ ) (वा) वा हतजग्धयोः ॥ पुत्रहती । पुत्त्रहती । पुत्रजग्धी । पुत्त्रजग्धी ॥ ( ८७ ) (सू) त्रिप्रभृतिषु शाकटायनस्य । ८ । ४ । ५० । त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम् । इन्न्द्रः । इन्द्रः । राष्ट्ट्रम् । राष्ट्रम् ॥ ( ८८ ) (सू) सर्वत्र शाकल्यस्य । ८ । ४ । ५१ । द्वित्वं न । अर्कः । ब्रह्मा ॥ ( ८९ ) (सू) दीर्घादाचार्याणाम् । ८ । ४ । ५२ । द्वित्वं न । दात्रम् । पात्रम् ॥ ( ९० ) (सू) अचो रहाभ्यां द्वे । ८ । ४ । ४६ । अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । हर्य्यनुभवः । हर्यनुभवः । नह्य्यस्ति । नह्यस्ति ॥ ( ९१ ) (सू) हलो यमां यमि लोपः । ८ । ४ । ६४ । हलः परस्य यमो लोपः स्याद्वा यमि । इति लोपपक्षे द्वित्वाभावपक्षे चैकयं रूपं तुल्यम् । लोपारम्भफलं तु–आदित्यो देवताऽस्येत्यादित्यं हविरित्यादौ । यमां यमीति यथासंख्यविज्ञानान्नेह–माहात्म्यम् ॥ ( ९२ ) (सू) एचोऽयवायावः । ६ । १ । ७८ । एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥ (९३) (सू) तस्य लोपः । १ । ३ । ९ । तस्येतो लोपः स्यात् । इति यवयोर्लोपो न उच्चारणसामर्थ्यात् । एवं चेत्संज्ञाऽपीह न भवति।

---

'रहाभ्याम् ९० ' इति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधनात् । सुद्ध्युपास्य इत्यादौ तु स्थानित्वेन निमित्तत्वमिको न बाध्यते, 'तस्मादित्युत्तरस्य' 'वार्ण्र्तुपित्रुषसः–' इत्यादिनिर्देशाज्ज्ञापकात् । तकारस्य तु द्वित्वं भवत्येव । तच्च वेत्यतो रूपद्वयम् ॥ ( ८४ ) नादिन्या– । स्त्रीष्वाक्रोशः प्रायेण प्रवर्तत इति स्त्रीलिङ्गमुदाहरति—पुत्रादिनीति । इह 'सुप्यजातौ–२९९१' इति णिनिः ॥ ( ८५ ) तत्परे चेति । आदिनि यः पुत्रशब्दस्तस्मिन् परेऽपि पुत्रशब्दस्य न द्वे स्त इत्यर्थः ॥ ( ८६ ) वा हतेति । द्वित्वस्य वैकल्पिकत्वे वार्तिकमिदं नारम्भणीयमित्येके ॥ अन्ये तु–'हतजग्धयोः परतः पुत्रशब्दस्यैव 'अनाचि च ७५' इति द्वित्वं नान्येषाम्' इत्यादिनियमसंभवात् तदर्थमारम्भणीयमेवेदमित्याहुः ॥ पुत्रहतीति । पुत्रो हतो यया सा 'अस्वाङ्गपूर्वपदाद्वा ७२६' इति ङीष् । एवं पुत्रो जग्धो यया सा पुत्रजग्धी ॥ ( ९० ) अचो रहाभ्याम्– । अचः किम्, ह्नुते इत्यादौ नकारस्य मा भूत् ॥ ( ९१ ) हलो यमां यमि— । हलः किम् । न्याय्यम् । इह यकारादीनां यकारादौ परे यथासंभवमुदाहरणान्युच्यन्ते । सुध्युपास्यः, मध्वरिः । अत्र 'यणो मयः–८३' इति मयः परस्य यस्य वस्य च द्वित्वे कृते अनेन लोपः । दुर्लभः । दुर्गुङ्वे । कुर्मः । अत्र तु 'अचो रहाभ्याम्–९०' इति लस्य गस्य मस्य च द्वित्वे कृते लोपः । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः । अत्र 'अनाचि च ७५' इति ङमो द्वित्वे सत्यनेन ङकारणकारनकाराणां लोपः ॥ लोपः स्याद्वेति । 'झयो हः–१८४' इति सूत्रादन्यतरस्यामित्यनुवर्तते इति भावः ॥ लोपारम्भफलं तु–आदित्यो देवतेति । आदित्यशब्दात् 'दित्यदित्या–१५३९ ' इति ण्यप्रत्यये 'यस्येति च ४३१ ' इत्यकारलोपे अनेन च यलोपे आदित्यमित्येकयकारकं रूपं सिध्यति, नान्यथेति भावः । न च 'आपत्यस्य च तद्धितेऽनाति १५५३' इत्यनेन यलोपे कृते एकयकारकं रूपं सिध्यतीति वाच्यम्, अदितौ जात आदित्य इत्यादिविवक्षायां तस्याप्रवृत्तेः ॥ यथासंख्यविज्ञानादिति । उक्तोदाहरणेषु लोपारम्भफलाभावाद्रेफस्य रेफे परत उदाहरणाभावाच्च यथासंख्यसूत्रमिह नोपन्यस्तम् ॥ माहात्म्यमिति । अत्र मलोपो नेत्यर्थः । 'हलो यरां यरि सवर्णे लोपः' इति तु न सूत्रितम्, मूर्ध्नः शार्ङ्गमित्यादौ रेफात्परस्य लोपापत्तेः ॥ ( ९२ ) एचः क्रमादिति । नन्वत्रैव यथासंख्यसूत्रं वक्तुमुचितम्, प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमेऽपि लक्ष्यार्थबोधापूर्वभावि शक्यार्थज्ञानमादाय यथासंख्यत्वस्यावश्यं वक्तव्यत्वात् । अन्यथा एचां क्रमेणायवायावो न सिध्येरन् ।

---

–वैकलक्ष्ये पूर्वपरभेदजा नावृत्तिरिति पूर्वपरयोर्नादेशद्वयप्रसक्तिरिति तात्पर्यम् । एकस्मिंल्लक्ष्ये शास्त्रस्य पुनःपुनर्न प्रवृत्तिरिति यावत् । एतन्मूलकमेव पठ्यते–'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इति, 'संग्राहकवाक्याल्लक्ष्यसंस्कारकवाक्योपप्लवः' इति च । एवञ्च स्पष्टमेव पूर्वपक्षसिद्धान्तसमाधानयोरयं न्यायः संस्कारकविधिविषये सिद्धान्तित एवेति दिग् ॥

---

१ पुत्रशब्दस्येति–'यरोऽनुनासिके–'इत्यतो यर इति वर्तते, तदपेक्षया पुत्रशब्दस्येत्यवयवषष्ठी । तथा च 'अचः परस्य पुत्रशब्दावयवयर आदिनीशब्दप्राग्वर्तिनो न द्वित्वम्' इत्यर्थे नान्तादिवत्त्वापेक्षा । सामर्थ्याद्व्यवधानांशस्य नोपस्थितिरिति बोध्यम् ॥ २ एचोऽयवेति–'इचोऽचि यणयवायावः । वान्तौ यि प्रत्यये' इत्येवं न्यासेनापि इष्टसिद्धिरित्याहुः ॥ तथा न्यासे 'धातोस्तन्निमित्तस्यैव' इत्यत्रापि इच एवानुवृत्तौ व्रेजः कर्मणि ऊयत इत्यादौ वान्तादेशवारणाय ओदौतोरिति वक्तव्ये पदलाघवाभावाद्यथान्यासमेव वरमित्येके ॥ ३ तस्येति–उपदेशेऽजित्यतः 'इत्' इत्यनुवर्त्य विभक्तिविपरिणामेन इत इत्यस्य लाभेऽपि ञिटुडूनामन्त्यलोपवारणाय तस्य ग्रहणम् ॥ ४ झयो ह इति सूत्रादिति–इदं काशिकासंमताष्टाध्यायीपाठमनुसृत्य बोध्यम् । "दीर्घादाचार्याणाम् । अनुस्वारस्य ययि परसवर्णः । वा पदान्तस्य । तोर्लि । उदः स्थास्तम्भोः पूर्वस्य । झयो होऽन्यतरस्याम् । शश्छोऽटि । झलां जश् झशि । अभ्यासे चर्च । खरि च । वाऽवसाने । अणोऽप्रगृह्यस्यानुनासिकः ।" इत्येवं भाष्यसंमताष्टाध्यायीपाठे 'वाऽवसाने' इत्यतोऽनुवर्तेत इति बोध्यम् ॥

हरये । विष्णवे । नायकः । पावकः ॥ ( ९४ ) (सू०) **वान्तो यि प्रत्यये** ।६।१।७९। यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गोर्विकारो गव्यम् । गोपयसोर्यदिति यत् । नावा तार्यं नाव्यम् । नौवयोधर्मेत्यादिना [२२३७] यत् ॥ ( ९५ ) (वा०) **गोर्यूतौ छन्दस्युपसंख्यानम्** ॥ ( ९६ ) (वा०) **अध्वपरिमाणे च** ॥ गव्यूतिः । ऊतियूतीत्यादिना यूतिशब्दो निपातितः ॥ ( ९७ ) वान्त इत्यत्र वकाराद्गोर्यूतावित्यत्र छकाराद्वा पूर्वभागे लोपो व्योर्वलीति [१] लोपेन वकारः प्रश्लिष्यते । तेन श्रूयमाणवकारान्त आदेशः स्यात् । वकारो न लुप्यत इति यावत् [२] ॥ ( ९८ ) (सू०) **धातोस्तन्निमित्तस्यैव** । ६ । १ । ८० । यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य । लव्यम् । अवश्यलाव्यम् । तन्निमित्तस्यैवेति किम् । ओयते । औयत ॥ ( ९९ ) (सू०) **क्षय्यजय्यौ शक्यार्थे** [३] ।६।१।८१। वान्तादेशनिपातनार्थमिदम् । क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । शक्यार्थे किम् । क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं मनः ॥ ( १०० ) **क्रय्यस्तदर्थे** । ६।१।८२। तस्मै [४] प्रकृत्यर्थायेदं तदर्थम् । क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम् । क्रेयमन्यत् । क्रयणार्हमित्यर्थः ॥ ( १०१ ) (सू०) **लोपः शाकल्यस्य** ।८।३।१९। अवर्णपूर्वयोः [५] पदान्तयोर्यवयोर्वा लोपोऽशि परे । पूर्वत्रासिद्धमिति लोपशास्त्रस्या-

---

सिद्धत्वान्न स्वरसन्धिः ॥ इत्येवम्, अन्तरतमत्वेनापि तत्सिद्धेः । तथाहि—एचः सन्ध्यक्षराणि । ततश्च संवृताकारतालव्यस्य एकारस्य संवृताकारतालव्योऽय्, संवृताकारोष्ठ्यस्य ओकारस्य तादृश एव अव्, ऐचश्चोत्तरभूयस्त्वादैकारे इकारः अध्यर्धमात्रः, अकारस्त्वर्धमात्र एव । एवमौकारेऽप्युकारोऽध्यर्धमात्रः, अकारस्त्वर्धमात्रः । एवं च विवृताकारतालव्यस्य ऐकारस्य विवृताकारतालव्य आय् । विवृताकारौष्ठ्यस्य औकारस्य विवृताकारौष्ठ्य आव् ॥ ( ९४ ) **वान्तो यि प्रत्यये** । यीति किम्, गोभ्याम् । नौभ्याम् । प्रत्यये किम्, गोयानम् ॥ **यकारादाविति** । 'येन विधिः-४७' इति सूत्रस्यापवादभूतेन 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्तिकेनायमर्थो लभ्यते ॥ **ओदौतोरिति** । पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णीतत्वादिति भावः ॥ ( ९६ ) **अध्वेति** । भाषार्थमिदम् । गोर्यूतौ लोकेऽपि वान्तादेशः स्यात्समुदायेन अध्वनः परिमाणं गम्यते चेदित्यर्थः । 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः ॥ **निपातित इति** । क्तिन्नन्तत्वेनेत्यर्थः ॥ ( ९७ ) ननु गव्यं नाव्यमित्यत्र भत्वेनापदत्वाद्वलोपाभावेऽपि गव्यूतिरित्यत्र 'हलि सर्वेषाम् २५२' इति 'लोपः शाकल्यस्य १०१' इति वा लोपः स्यादत आह—**वान्त इत्यत्रेति** ॥ **वकारो न लुप्यत इति** । एवं च 'हलि सर्वेषाम् २५२' इति सूत्रे 'व्योः-२४८' इत्यनुवृत्तावपि वकारं परित्यज्य यस्य लोपः स्यादिति व्याख्यास्यमानं संगच्छते । एतच्च तत्रैव स्फुटीकरिष्यते ॥ ( ९८ ) **धातोस्तन्निमित्तस्यैव** । पूर्वेण सिद्धे नियमार्थमिदम् । अत्र पूर्वसूत्रमनुवर्तते, एच इति च । तच्छब्देन यादिप्रत्ययः परामृश्यते योग्यत्वात्, न तु संनिहितोऽपि धातुः । न हि स्वस्यैचः स्वयं निमित्तं भवति । एवकारस्त्विष्टतोऽवधारणार्थः । अन्यथा हि तन्निमित्तस्यैचो यदि भवति, तर्हि धातोरेवेति विपरीतनियमः संभाव्येत । ततश्च बाभ्रव्य इत्यत्र न स्यात् । धातोस्त्वतन्निमित्तस्यापि स्याद् ओयत इत्यादौ, तदेतत्सकलमभिप्रेत्याह—**यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेश** इत्यादि ॥ **लव्यमिति** । लुनातेः 'अचो यत् ३७९७' इति यत्, 'सार्वधातुकार्धधातुकयोः २९२२' इति गुणः ॥ **अवश्यलाव्यमिति** । 'ओरावश्यके ३८४२' इति ण्यत् । 'मयूरव्यंसकादयश्च १०८३' इति समासः । 'लुम्पेदवश्यमः कृत्ये' इति मकारलोपः । लव्यमित्यादौ पूर्वसूत्रेणैव सिद्धे नियमसूत्रमिदं व्यर्थमित्याक्षिपति—**तन्निमित्तस्यैवेति किमिति** । एकदेशाक्षेपेऽपि सूत्रस्यैवायमाक्षेपः पर्यवसन्नः ॥ **ओयत इति** । आङ्पूर्वाद् वेञः कर्मणि लट्, यगात्मनेपदे, यजादित्वात्संप्रसारणम् । पूर्वरूपम् । 'अकृत्-३०७१' इति दीर्घः । आद्गुणस्य परादिवद्भावेन धातोरेचत्वेऽपि यादिप्रत्ययनिमित्तकत्वं नास्तीति भावः ॥ **औयत इति** । वेञः कर्मणि लङ्, यगादि प्राग्वत् । 'आडजादीनाम् ३०१६' 'आटश्च ३७७' इति वृद्धिः ॥ ( ९९ ) **क्षय्यमिति** । 'शकि लिङ् च ३७६१' इति यत्, चात्कृत्याः । **क्षेयमिति** । 'अर्हे कृत्यतृचश्च ३७६०' इति यत् ॥ ( १०० ) **प्रकृत्यर्थायेति** । प्रकृत्यर्थो द्रव्यविनिमयः ॥ ( १०१ ) **लोपः शाकल्यस्य** । अवर्णपूर्वयोः किम्, दध्यत्र । मध्वत्र ॥ **अशि पर इति** । एतच्च 'भोभगो-२४७' इति सूत्रादनुवर्तते ।

---

१ **लोपो व्योरितीति**—यद्यपि 'लोपो व्योः-' इति सूत्रे 'अनारम्भो वा' इत्यनेन वकारलोपप्रत्याख्यानं दृश्यते, तथापि प्रत्याख्यातान्यपि 'नाऽऽज्झलौ' इत्यादिसूत्राण्युपन्यस्यतां दीक्षितानां प्रत्याख्यानस्य वार्तिककारीयत्वेन पाणिनिन्यासमाश्रित्यैव प्रवृत्तत्वान्न कौमुद्यां तदुपन्यासो विरुध्यते ॥ भाष्यकृतामपि 'लुप्तनिर्दिष्टो वकारः' इति वदतां पाणिनिन्यासमाश्रित्यैव प्रवृत्तिर्दृश्यते ॥ २ **यावदिति**—वस्तुतस्तु गव्यम्, नाव्यमित्यत्र भत्वेन पदत्वबाधात्, लव्यमित्यादौ पदत्वस्याप्राप्त्या, गव्यूतिरिति च्छन्दसि छन्दसो दृष्टानुविधित्वेनापाद्यमानरूपापत्तेरभावात्, लौकिकेऽपि संज्ञाभङ्गभयान्न वलोपापत्तिरिति व्यर्थ एवायं वकारप्रश्लेषक्लेश इति बोध्यम् ॥ ३ **क्षय्यजय्याविति**—व्याख्यानात् 'क्षि-क्षये' 'जि-जये' इत्यनयोरेव ग्रहणम्, न तु 'क्षै-जै-क्षये' 'क्षीष्' इत्यस्य ॥ ४ **तस्मै प्रकृत्यर्थायेति**—'दृश्यते राजमातङ्गास्तस्यैवामी तुरङ्गमाः' इत्यादौ सर्वनाम्नां प्रधानपरामर्शित्वव्यभिचारदर्शनादत्राप्युपसर्जनप्रकृतेरेव सर्वनाम्ना परामर्शः । वस्तुतस्तु—क्रय्य इत्यत्र विधेयस्य स्थानिनश्च प्रकृतिसंबन्धितया तच्छब्देन प्रकृतेरेव ग्रहणमिति बोध्यम् ॥ ५ **अवर्णेति**—'भोभगोअघोअपूर्वस्य' इत्यस्यानुवृत्तावप्योकारान्तांशे तु 'ओतो गार्ग्यस्य' इति नित्यलोपस्य वक्ष्यमाणत्वेन परिशेषादिदं सूत्रमवर्णपूर्वस्यैव विकल्पविधायकमित्यभिप्रायः ॥

सिद्धत्वान्न स्वरसंधिः। हर एहि। हरयेहि। विष्ण इह। विष्णविह। श्रिया उद्यतः। श्रियायुद्यतः। गुरा उत्कः। गुरावुत्कः॥(१०२)कानि[1] सन्ति कौ स्त इत्यत्रास्तेरल्लोपस्य स्थानिवत्त्वेन यणावादेशौ प्राप्तौ न पदान्तेति सूत्रेण पदान्तविधौ तन्निषेधान्न स्तः॥(१०३) (सू) एकः[2] पूर्वपरयोः।६।१।८४। इत्यधिकृत्य॥(१०४) (सू) आद् गुणः[3]।६।१।८७।अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्संहितायाम्। उपेन्द्रः[4]। रमेशः।गङ्गोदकम्॥(१०५) (सू) उरण् रपरः।१।१।५१। ऋ इति त्रिंशतः संज्ञेत्युक्तम्। तत्स्थाने योऽण्[5] स रपरः[6] सन्नेव प्रवर्तते। तत्रान्तरतम्यात्कृष्णर्द्धिरित्यत्राऽर्, तवल्कार इत्यत्राऽल्। अचो रहाभ्यामिति पक्षे द्वित्वम्॥(१०६) (सू) झरो झरि सवर्णे।८।४।६५। हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि। द्वित्वाभावे लोपे सत्येकधम्। असति लोपे द्वित्वेऽलोपे योर्वा द्विधम्। सति द्वित्वे लोपे चासति त्रिधम्। कृष्णर्धिः। कृष्णर्द्धिः। कृष्णर्द्द्धिः। यण इति पञ्चमी मय इति षष्ठीति पक्षे ककारस्य द्वित्वम्। लस्य त्वनचि चेति। तेन तवल्कार इत्यत्र रूपचतुष्टयम्।

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि। तवल्कारादिषु[7] बुधैर्बोध्यं रूपचतुष्टयम्[8]॥

(१०७) (सू) वृद्धिरेचि।६।१।८८।आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्। गङ्गौघः।

---

अशि किम्, वृक्षव् करोति। अत्र लोपो मा भूत्। न चात्र टिलोपस्य स्थानिवद्भावेन निर्वाहः, 'पूर्वत्रासिद्धे न स्थानिवत् ३३८' इत्यभ्युपगमात्। न चैवमपि 'हलि सर्वेषाम् २५२' इति नित्यं लोपः स्यादिति शङ्क्यम्, तत्र 'अशि' इत्यनुवर्त्य अशा हलो विशेषणात्। 'लोपो व्योर्वलि १२५४' इति लोपस्तु न शङ्कनीय एव, स्थानिवत्त्वान्नेति 'न पदान्त-७८' इति सूत्र एवोक्तत्वात्॥ **हर एहीति**।'ओमाङोश्च १२५' इति पररूपं प्राप्तम्॥(१०२)**तन्निषेधादिति**। न च स्थानिवत्त्वनिषेधेऽपि 'असिद्धं बहिरङ्गमन्तरङ्गे ७२' इत्यल्लोपस्यासिद्धत्वाद्यणावादेशौ स्त एवेति वाच्यम्, पदद्वयाश्रयत्वेन तयोरेव बहिरङ्गत्वात् 'नाजानन्तर्ये-' इति निषेधाच्च॥(१०५)**उरण् रपरः**।अनुवादे'षष्ठी स्थानेयोगा ६१'इति परिभाषाया अनुपस्थितावपि स्थानेग्रहणं ततोऽनुवर्तते इत्याशयेनाह-**तत्स्थाने योऽणिति**॥ 'स्थानेऽन्तरतमः' इत्यतोऽपि स्थानेग्रहणमिहानुवर्तते। तेन प्रसङ्गावस्थायामेवाण् रपरो भवति। तदेतद्व्याचष्टे-**रपरः सन्नेव प्रवर्तत इति**॥ उः किम् 'ईद्यति ३७६२' गेयम्, देयम्। अण् किम्, रीङादीनां रपरत्वं मा भूत्। 'रीङृतः १७३९' मात्रीयति। रिङ्, क्रियते॥ **आन्तरतम्यादिति**। रेफशिरस्कस्य अरित्यस्य रेफद्वारेण ऋकारेण स्थानसाम्यादित्यर्थः॥ **पक्षे द्वित्वमिति**। ऋधेर्धस्येति भावः॥(१०६) **झरो झरि**-। 'हलो यमाम्-९१' इत्यतो हल इत्यनुवर्तते, तदाह-**हलः परस्येति**। हलः किम्, प्रत्तम्। झर इति किम्, शार्ङ्गम्। झरीति किम्, प्रियपञ्च्नाम्। अल्लोपोऽत्र पूर्वत्रासिद्धे स्थानिवन्न भवतीति चकारस्य नकारे परे लोपः स्यात्। सवर्ण इति किम्, तर्प्ता। सवर्णग्रहणसामर्थ्याद्यथासंख्यमत्र न भवति। तेन शिण्ढीत्यत्र डस्य विकल्पेन लोपः सिध्यतीति दिक्॥ **लोपो वेति**। 'झयो हः-१८४' इति सूत्रादन्यतरस्यामित्यनुवृत्तेः॥ **असति लोप इति**। द्वित्वाभावे इत्यनुषज्यते। द्वित्वलोपयोरसतोरित्यर्थः॥ **त्रिधमिति**। 'यणो मयः-८३' इति लक्षणान्तरेण पुनर्द्वित्वे चतुर्धमिति बोध्यम्॥(१०७) **वृद्धिरेचि**। पूर्वसूत्रादादित्यनुवर्तते, तदाह-**आदेचीति**॥ **कृष्णैकत्वमिति**। कृष्णेति सम्बोधने पृथक् पदम्। एवं देवेत्यपि। इत्थं चात्र षष्ठीसमासत्वमभ्युपेत्य 'पूरणगुण-१०२२' इति निषेधमाशङ्क्य 'संज्ञाप्रमाणत्वात्' इत्यादिनिर्देशेन 'गुणेन निषेधोऽनित्यः' इति केषांचिद्व्याख्यानं नात्यन्तावश्यकमिति

---

१ **कानि सन्तीति**-इदं च वाक्यविभज्यान्वाख्यानेऽपि 'किम् जस्, अस् झि' इत्येवं स्थितौ पूर्वं कानीत्येतत् संसाध्य सन्तीत्येतत्साधनमिति रीत्या क्रमसंस्कारपक्षे बोध्यम्। पूर्वं सन्तीत्येतत्साधयित्वा कानीत्येतत्साधने, सिंहो माणवक इत्यादौ प्रथमासिद्धये 'संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवति' इति मुख्ये पदविभज्यान्वाख्यानपक्षे च नैव दोष इति बोध्यम्॥ २ **एक इति**-एकग्रहणं यथा स्पष्टार्थं तथा प्राग्वर्णितम्॥ ३ **गुण इति**-गुणसंज्ञा च द्विमात्रयोरेवेङोः। तेन गङ्गोदकं, रमेश इत्यत्र त्रिमात्रचतुर्मात्रौ नादेशौ॥ ४ **उपेन्द्र इति**-एतच्च 'विभक्तितकारे 'तपरस्तत्कालस्य' इति न प्रवर्तते' इति सूचयितुम्॥ ५ **योऽणिति**-अत्राण् प्रत्याहारः पूर्वेणैवेति 'अणुदित्सवर्णस्येत्येतत्परिहाय पूर्वेणाण्ग्रहणम्, परेणेण्ग्रहणम्' इति भाष्याल्लभ्यते॥ ६ **रपर इति**-अत्र परशब्दोऽन्तशब्दवदवयववाची। अत एव 'रन्तोणु' इत्येवं व्याकरणान्तरे सूत्रितम्। अत एव वत्र इत्यादौ हलादिशेषेण रेफनिवृत्तिः सिध्यति॥ ७ **अत्र प्राज्ञैरिति** पाठो ज्यायान्, बुधैरिति पाठस्य छन्दोभ्रष्टत्वेनाऽसाधुत्वात्। इति केचित् तन्न, अष्टाक्षरनियतायामनुष्टुब्जातौ २५६ रूपेभ्योऽस्य रूपस्याबहिर्भावात्॥ ८ **रूपचतुष्टयमिति**-विसर्गद्वित्वेन तु द्वैगुण्यं भवत्येवेति बोध्यम्॥

देवैश्वर्यम् । कृष्णैकत्वम् । कृष्णौत्कण्ठ्यम् ॥ (१०८) (सू.) एत्येधत्यूठ्सु ।६।१।८९। अवर्णादेजाद्योरेत्येधत्योरूठि[1] च परे वृद्धिरेकादेशः स्यात् । पररूपंगुणापवादः[2] । उपैति । उपैधते । प्रष्ठौहः।एजाद्योः किम् । उपेतः। मा भवान्प्रेदिधत्[3]।(१०९) पुरस्तादपवादन्यायेनेयं वृद्धिरेङि पररूपमित्यस्यैव बाधिका न त्वोमाङोश्चेत्यस्य। तेनावेहीति[4] वृद्धिरसाधुरेव॥(११०) (वा.) अक्षादूहिन्यामुपसंख्यानम्॥अक्षौहिणी सेना ॥(१११) (वा.) स्वादीरेरिणोः॥ स्वैरः । स्वेनेरितुं शीलमस्येति स्वैरी । स्वैरिणी॥ (११२)(वा.) प्रादूहोढोढ्येषैष्येषु॥प्रौहः।प्रौढः॥(११३)(प.) अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्[5]॥तेन ऊढग्रहणेन क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकदेशः । प्रोढवान् । प्रौढिः । इष इच्छायां तुदादिः । इष गतौ दिवादिः । इष आभीक्ष्ण्ये क्र्यादिः । एषां घञि ण्यति च एष एष्य इति रूपे । तत्र पररूपे प्राप्तेऽनेन वृद्धिः । प्रैषः । प्रैष्यः। यस्तु, ईष उञ्छे, यश्च,ईष गतिहिंसादर्शनेषु,तयोर्दीर्घोपधत्वात्–ईषः।ईष्यः । तत्राद्गुणे–प्रेषः । प्रेष्यः॥(११४ )(वा.) ऋते तृतीयासमासे॥ सुखेन ऋतः सुखार्तः । तृतीयेति किम् । परमर्तः॥ ११५ (वा.) प्रवत्सतरकम्बलवसनार्णदशानामृणे ॥ प्रार्णम् । वत्सतरार्णमित्यादि ॥ ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम् । दशार्णो देशः। नदी च दशार्णा । ऋणशब्दो

---

बोध्यम् ॥(१०८)**एत्येधत्यूठ्सु** । अत्र एचीत्यनुवर्तते । तच्च एत्येधत्योर्विशेषणं, न तूठः, असंभवात् ॥'आद्गुणः१०२' इत्यत आदित्यनुवर्तते एवातो व्याचष्टे–**अवर्णादेजाद्योरिति** ॥ **प्रष्ठौह इति** । प्रष्ठं वहतीति प्रष्ठवाट् 'वहश्च ५२३८' इति ण्विः। ततः शसि 'वाह ऊठ्४५३'गुणापवादतया अनेन वृद्धिः॥**प्रेदिधदिति** । प्रपूर्वस्यैधतेर्ण्यन्तस्य लुङि रूपम्। 'न माङ्योगे२९८३' इत्याडागमाभावः ॥ (१०९)**पुरस्तादिति**। 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्' इति न्यायेनेत्यर्थः । (११०) **अक्षादिति**।आदित्यनुवर्तते, अचीति च।तेन पूर्वपरयोर्वर्णयोरेव भवति । एवमन्यत्राप्यूह्यम् ॥ **अक्षौहिणीति** । ऊहः समूहः। सोऽस्त्यस्याः सा ऊहिनी।अक्षाणामूहिनीति विग्रहः । परिमाणविशेषविशिष्टा सेना अक्षौहिणी। 'पूर्वपदात्संज्ञायाम्–१२३३' इति णत्वम् । अक्षाणामित्यस्य ऊहशब्देन समासे तत इनौ तु अक्षोहिणीत्येव भवति । न तु तत्र वृद्धिः, अन्तरङ्गेण गुणेन बाधात् । अपवादभूताया अपि वृद्धेरूहिनीशब्देन समासे चरितार्थत्वात् । यथोक्तं प्राक् 'यद्यपवादोऽन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां बाध्यते'इति ॥(१११) **स्वादीरेरिणोः**। 'ईरेरिण्योः' इति क्वाचित्कोऽपपाठः। **स्वैरीति** णिन्यन्तस्याऽस्त्रियां वृद्ध्यभावप्रसङ्गात् ॥ ईरिन्ग्रहणस्य फलमाह–**स्वेनेरितुमिति** । यदा त्वीर इति घञन्तेन स्वशब्दस्य समासे 'स्वादीरे–' इति वृद्धौ कृतायां मत्वर्थीय इनिः । यदा वा मत्वर्थीयेनिप्रत्ययान्तेन ईरिन्शब्देन स्वशब्दस्य समासः, तथापि तदेकदेश ईरशब्दोऽस्त्येवेति पृथगीरिन्ग्रहणं व्यर्थं स्यादिति भावः ॥ **स्वैरीति** । 'सुप्यजातौ–३९९१' इति णिनिः, उपपदसमासः ॥ **स्वैरिणीति** । ङीपः प्रागभागमीरिन्शब्दमादाय वृद्धिः । केचित्तु–लिङ्गविशिष्टपरिभाषयाऽत्र वृद्धिरित्याहुः–तन्निष्फलमिति भावः ॥ ( ११३ ) **नानर्थकस्येति** । उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसंभवे त्यागायोगादिति भावः॥ **प्रैष्य इति** । एषसाहचर्यादेष्योऽप्यनव्ययं गृह्यते । तेन ण्यन्तादिषेः क्त्वो ल्यपि पररूपमेव, न तु वृद्धिः । प्रेष्य गतः ॥ लघूपधगुणमाशङ्क्याह–**तयोर्दीर्घोपधत्वादिति** ॥ (११५ ) **प्रवत्सतरेति** । इह केचिद्वत्सशब्दं वत्सरशब्दं च प्रक्षिपन्ति, तद्भाष्यादावदृष्टत्वादुपेक्ष्यम् ॥ **वत्सतरार्णमिति** । तकारमकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । रेफात्परस्य तु 'अचो रहाभ्याम्–९०'

---

१ **ऊठि चेति**–अत्र 'वाह ऊठ्–' 'च्छ्वोः शूड्–' इति विहितसम्प्रसारणसंज्ञकस्यादेशस्यैव ऊठो ग्रहणम्, 'दित्यौही च मे' इति मन्त्रवर्णात, 'प्रष्ठौहः पश्य' 'धौतः' इति भाष्योदाहरणाच्च । 'आगमस्यैवात्र ग्रहणम्' इति तु 'स्वरूपव्याक्रियैव पराक्रिया' इति न्यायेन अत्र टितिकिन्मित्त्वस्याभावेनागमत्वासम्भवात्पराकृतम् । अनयोर्द्वयोरपि चर्त्वेन ठितो निर्देश इति 'च्छ्वोः–' इति सूत्रभाष्ये स्पष्टम् । तथाहि तत्र भाष्यम्—"यदि तर्हि ठित्' धौतः पटः' इति 'एत्येधत्यूठ्सु' इति वृद्धिर्न प्राप्नोति । चर्त्वे कृते भविष्यति । अस्ति चान्यो 'वाह ऊड्' इति ॥ एषोऽपि ठित् करिष्यते । तत्रोभयोश्चर्त्वे कृते आश्रयात्सिद्धत्वं भविष्यति" इति ॥ २ यद्यपि पररूपं च गुणश्चेति विग्रहेऽल्पाच्तरत्वेन गुणशब्दस्य पूर्वनिपातो युक्तस्तथापि "एत्येधत्योः पररूपस्योठि त्वाद्गुणस्य" इति विवेकप्रदर्शनाय न तथा कृत इति बोध्यम् ॥ ३ **मा भवान्प्रेदिधदिति**–'इणीकारादौ प्रतिषेधः' इति वार्तिके, तदुदाहरणपरे 'उपेतः, प्रेतः' इति भाष्ये च केवलमिण्धातोरेवोपादानेन नास्त्येव इकारादित्वमेधधातोरिति वर्णयतां मते 'एत्येधत्योरेचोः' इति योगविभागभाष्ये एच्पदस्यैधिना सम्बन्धः सम्भवमात्रेणैव, न तु तत्राग्रहः, तादृशोदाहरणाप्रदानात् । एवञ्च लुङि ण्यन्तस्यैधधातोरनभिधानमेव वरम् ॥ ४ **अवेहीति**–अवेहीत्यत्रेत्यर्थः । अयं भावः–'अव एहि' इति स्थिते 'एङि पररूपम्' इति पररूपं परादिवद्भावेनैङादिधातुत्वप्रयुक्तं प्राप्तं बाधित्वा परादिवद्भावेनैजादिमिण्धातुमाश्रित्य प्राप्ता वृद्धिः पूर्वान्तवद्भावेन एकारे आङ्त्वमाश्रित्य प्राप्तम् 'ओमाङोश्च' इति पररूपं न बाधते, पूर्वपठितापवादस्य प्रथमोपस्थितबाध्यबाधनेन शिथिलीभूतत्वात् पश्चादुपस्थितबाध्यबाधे सामर्थ्याभावादिति ॥ ५ **अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति**–इत उत्तरम् आधुनिकपुस्तकेषु "व्रश्चेति सूत्रे राजेः पृथग् भ्राजिग्रहणा–

दुर्गभूमौ जले च ॥ ( ११६ ) (सू) उपसर्गादृति धातौ ।६।१।९१। अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । उपार्च्छति । प्रार्च्छति ॥(११७)(सू) अन्तादिवच्च । ६ । १ । ८५ । योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात्। इति रेफस्य पदान्तत्वे-॥ ( ११८ ) (सू) खरवसानयोर्विसर्जनीयः ।८।३।१५। खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते । इति विसर्गे प्राप्ते-॥ ( ११९ ) अन्तवद्भावेन पदान्तरेफस्य न विसर्गः, उभयथर्क्षु, कर्तरि चर्षिदेवतयोरित्यादिनिर्देशात्॥(१२०) उपसर्गेणैव धातोराक्षेपे सिद्धे धाताविति योगविभागेन पुनर्वृद्धिविधानार्थम्। तेन ऋत्यक इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति॥(१२१) (सू) वा सुप्यापिशलेः। ६ । १ । ९२ । अवर्णान्तादुपसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा स्यात् । आपिशलिग्रहणं पूजार्थम्।प्रार्षभीयति। प्रर्षभीयति।सावर्ण्याद् लृवर्णस्य ग्रहणम्। प्राल्कारीयति । प्रल्कारीयति । तपरत्वाद्दीर्घे न। उप ॠकारीयति। उपर्कारीयति॥(१२२)(सू) एङि पररूपम्।६।१।९४। आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात्। प्रेजते।उपोषति । इह वा सुपीत्यनुवर्त्य वाक्यभेदेन व्याख्येयम्। तेन एङादौ सुब्धातौ वा । उपेडकीयति । उपैडकीयति । प्रोघीयति । प्रौघीयति ॥ ( १२३ ) (वा) एवे चानियोगे ॥

---

इति द्वित्वे 'यणो मयः-८३' इति वचनान्तरेण पुनर्द्वित्वे एकणं द्विणं त्रिणमिति द्वादश । 'खयः शरः २१०' इति सकारद्वित्वे चतुर्विंशतिः । न चेह 'शरोऽचि ४६४' इति द्वित्वनिषेधः शङ्क्यः, तस्य सौत्रद्वित्वमात्रविषयत्वात् । अत एव 'खयः शरः २१०' इति वार्तिकस्य 'वत्सरः' 'अप्सराः' इत्युदाहरणं भाष्ये दत्तम्। न च वदेः सरप्रत्यये परतश्चर्त्वे कृते तस्यासिद्धत्वात्सस्य खयः परत्वं नेति शङ्क्यम्, 'पूर्वत्रासिद्धीयमद्वित्वे ३२५७' इत्युक्तेः । अत एव मनोरमायां 'षट्सन्तः' इत्यत्र टकारात्परस्य सस्य द्वित्वं स्वीकृतमिति दिक् ॥ ( ११६ ) **उपसर्गादिति**-।उपसर्गात्किम्, खट्वर्च्छति । ऋति किम्, उपेतः । तपरकरणमुत्तरार्थम्, इह दीर्घकारादेर्धातोरसंभवेन व्यावर्त्यालाभात् । धातोः किम्, उपर्कारः । नन्वत्र उपेत्युपसर्ग एव न भवति क्रियायोग एवोपसर्गत्वात् , उपगतः ऋकार इति विगृह्य क्रियायोगत्वसंपादनेऽपि 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' इति ऋकारं प्रत्यनुपसर्ग एव, तथा चाकृतेऽपि धातुग्रहणे ऋकारादिधातावेव वृद्धिर्भविष्यत्युपसर्गेण धातोराक्षेपान्न त्वत्रेति चेत्सत्यम्, अत एव योगविभागेन पुनर्विधानार्थमित्यनुपदं वक्ष्यतीति न काऽप्यनुपपत्तिः ॥ ( ११७ ) **अन्तादिवच्च**। इह 'एकः पूर्वपरयोः १०३' इत्यनुवर्तते यथासंख्यं चाश्रीयते इत्यभिप्रेत्याह-**पूर्वस्यान्तवदिति** । स्थानिवत्सूत्रेणैव गतार्थमिदम् । न चाल्विध्यर्थमिदमस्त्विति शङ्क्यम्, अस्याप्यल्विधावनिष्टत्वात् । अन्यथा अयजे इन्द्रमित्यत्र सवर्णदीर्घापत्तेः ॥ (११९ )**न विसर्ग इति**। एतच्च सुखार्त इत्यादावपि बोध्यम् ॥ ( १२१ ) **सुब्धाताविति** । सुबन्तावयवके इत्यर्थः। सुबन्तस्य धातोरसंभवात् । यद्यपि 'ऋज गतौ' इत्यादीनां क्विपि धातुत्वं सुबन्तत्वं च संभवति, तथापि न तादृशेषु तपरत्वव्यावर्त्यत्वं प्रसिद्धम्, नामधातुष्वेव तत्संभवतीति त एवेह गृह्यन्ते इति भावः ॥ **प्रार्षभीयतीति**। 'शरोऽचि ४६४' इति वक्ष्यमाणेन द्वित्वनिषेधः ॥ ( १२२ ) **एङि पररूपम्**। 'एङ्येङ्' इत्येव सिद्धे परग्रहणमुत्तरार्थम्। रूपग्रहणं तु स्पष्टार्थम् , अमि पूर्ववद् 'एङि परः' इत्येव सिद्धेः॥**प्रेजत इति**।

---

-ल्लिङ्गात्" इत्येवं पाठः समुपलभ्यते, स तु मनोरमायां सीरदेवीयत्वेनोपन्यस्त इत्यसिद्धान्तत्वात् सिद्धान्तकौमुद्यां नोचितः कैश्चित्प्रक्षिप्त इति बोध्यम् ॥

---

१ **उपसर्गादृतीति**-अच्छर्च्छतीत्यादौ वृद्धिवारणाय 'गतेर्ऋति' इत्येवं न सूत्रितम् ॥ २ **योऽयमिति**-'एकादेशशास्त्रप्रवृत्तेः प्राक् अन्तघटितपूर्वसमुदाये आदिघटितपरसमुदाये वा ये ये धातुत्वप्रातिपदिकत्वनिपातत्वोपसर्गत्वादिविशिष्टधर्मास्ते कृतैकादेशेऽप्यातिदिश्यन्ते' इति वास्तविकः सूत्रार्थः ॥ ३ **पदान्तत्व इति**-प्रशब्दवृत्तिपदत्वस्य प्राग्-भागे पूर्वान्तवत्त्वेन समानीते रेफस्य पदान्तत्वं स्फुटमेत्र प्राप्नोतीति भावः ॥ ४ **निर्देशादिति**-यत्तु-निर्देशे साध्यरूपे चैकादेशस्य पदद्वयसंबन्धिवर्णद्वयाश्रितत्वाद्बहिरङ्गत्वेनासिद्धत्वान्नैव विसर्जनीयप्राप्तिः-इति तदसङ्गतम्, "अयुक्तः परिहारः-न वा बहिरङ्गलक्षणत्वात्-इति-" इति प्रकृतसूत्रभाष्येण कार्यकालपक्षेऽपि त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तेः स्पष्टमुक्तत्वात् ॥५ **उपसर्गेणैवेति**-उपसर्गसंज्ञाप्रयोजकक्रियायोगस्य धातुप्रयोगमन्तराऽनुपपत्तेरिति भावः । 'यद्धात्वर्थक्रियान्वय्यर्थकाः प्रादयस्तद्धातुयोग एवोपसर्गसंज्ञाः' इत्यर्थस्य प्रत्यासत्त्या लाभेन प्रभूत ऋद्धः प्रर्द्ध इत्यत्र प्रशब्दस्य भवत्यर्थ एवान्वयान्न ऋद्धशब्दार्थे प्रत्युपसर्गत्वमिति न वृद्धिरिति बोध्यम् । **प्रर्षभमित्यादौ** 'यत्क्रियायुक्ताः प्रादयः-' इत्येव वृद्धिवारणे 'धातौ' इत्यस्य वैयर्थ्यं मनसि निधाय समाहितं भाष्ये-"इदं तर्हि प्रयोजनम्-'उपसर्गादृति धातौ' वृद्धिरेव यथा स्यात् । यदन्यत् प्राप्नोति ह्रस्वत्वम् 'ऋत्यकः' तन्मा भूद्" इति । एवञ्च धाताविंत्यंशस्यैवेदृगर्थकथनं स्पष्टमेवेति ॥ ६ **धाताविति**-'एवे चानियोगे' इति वार्तिकारम्भसामर्थ्यादत्र 'धातौ' इति मण्डूकप्लुत्याऽनुवर्तत एवेति बोध्यम् ॥ ७ इत्यनुवर्त्य **वाक्यभेदेनेति**-अत्र व्याख्यानमेव शरणमिति पदमञ्जरी । भाष्ये तु नोपलभ्यते ॥

नियोगोऽवधारणम् । क्वे[1]वं भोक्ष्यसे । अनवक्लृप्तावेवशब्दः। अनियोगे किम् । तवैव ॥ ( १२४ ) (सू.) **अचोऽन्त्यादि टि** । १ । १ । ६४ । अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् ॥ ( १२५ ) (वा.) **शकन्ध्वादिषु पररूपं वाच्यम्** ॥ तच्च[2] टेः । शकन्धुः । कर्कन्धुः । कुलटा ॥ (१२६) सीमन्तः केशवेशे । सीमान्तोऽन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः ॥ ( १२७ ) सारङ्गः[3] पशुपक्षिणोः । साराङ्गोऽन्यः ॥ आकृ[4]तिगणोऽयम् ॥ मार्तण्डः ॥ ( १२८ ) (वा.) **ओत्वो[5]ष्ठयोः समासे वा** ॥ स्थूलोतुः । स्थूलौतुः । बिम्बोष्ठः । बिम्बौष्ठः । समासे किम् । तवौष्ठः ॥ ( १२९ ) (सू.) **ओमाङोश्च** । ६ । १ । ९५ । ओमि आङि चात्परे पररूपमेकादेशः स्यात् । शिवायों नमः । शिव एहि–शिवेहि ॥ ( १३० ) (सू.) **अव्यक्तानुकरणस्यात इतौ** । ६ । १ । ९८ । ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात् । पटत् इति–पटिति ॥ ( १३१ ) (वा.) **एकाचो न** ॥ श्रदिति ।

---

'एजृ दीप्तौ' कम्पनार्थस्तु परस्मैपदी–प्रेजति ॥ ( १२३ ) **नियोगोऽवधारणमिति** । निर्धारणमित्यर्थः । तदुक्तम्–"अन[6]वक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः । एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत् ॥" इति । अस्यार्थः–अनवक्लृप्तौ अनिश्चये यदा एवकारो दृष्टः स पररूपस्य विषयः । यस्तु नियमे निर्धारणे यदा दृष्टः स वृद्धिविषय इति । ये तु–नियोगे त्वयैव गच्छेति प्राचो ग्रन्थे स्थितस्य प्रत्युदाहरणस्यानुगुणतया नियोजनं नियोगो व्यापार इति व्याचक्षते, तेषां 'यदेव पूर्वं ज्वलने शरीरम्', 'ममैव जन्मान्तरपातकानाम्' इति लौकिकप्रयोगाः, 'तपस्तपः[३७०३]कर्मकस्यैव', 'लङः शाकटायनस्यैव[३२७८]' इत्यादिसौत्रप्रयोगाश्च न सिध्येयुः । उदाहृतवृत्तिश्लोकविरोधश्च स्यात् । अवधारणमिति व्याकुर्वतां तु सर्वेष्टसिद्धिः ॥ ( १२४ ) **अचोऽन्त्यादि टि** । अच इति निर्धारणे षष्ठी । जातावेकवचनं, तदाह–**अचां मध्य इति** ॥ ( १२५ ) **शकन्ध्वादिष्विति** । शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः । अत एवाह–**तच्च टेरिति** । यदि तु आदित्यधिकारादकारस्यैवेष्येत, तर्हि मनीषा पतञ्जलिरिति न सिध्येत् ॥ केचित्तु–मनःपतच्छब्दयोः पृषोदरादित्वादन्त्यलोपे अकारस्यैव पररूपमाहुः ॥ शकानां देशविशेषाणामन्धुः कूपः शकन्धुः । कर्कोणां राजविशेषाणामन्धुः कर्कन्धुः । अटतीत्यटा, पचाद्यचि[३०१३] टाप् । कुलस्य अटा कुलटा । यदि तु कुलम् अटतीति विगृह्यते, तदा कर्मण्यणि[३१६७] ङीपि कुलाटीति स्यात् । 'ईष उञ्छे' 'ईष गत्यादिषु' आभ्यां 'गुरोश्च हलः ५०८३' इत्यप्रत्यये ईषा, मनस ईषा मनीषा । हलस्य ईषा हलीषा । ईषा लाङ्गलदण्डः । पतन्तः अञ्जलयोऽस्मिन्नमस्कार्यत्वादिति पतञ्जलिः ॥ **मार्तण्ड इति** । पररूपेणानेन मृतण्ड इति सिद्धे तत अण्यादिवृद्धिः[३०३७] । 'परा मार्ताण्डमास्यत्' 'पुनर्मार्ताण्डमाभरत्' इत्यादिषु तु दीर्घश्छान्दस इति भावः ॥ केचिदत्र सवर्णदीर्घमेवाहुः[१३६६], पूर्वोक्तवैदिकप्रयोगास्तेषामनुकूलाः ॥ ( १२८ ) **ओत्वोष्ठयोरिति** । अकारस्य ओत्वोष्ठयोश्च एकत्र समासे स्थितौ सत्यामिदं प्रवर्तते । तेनेह न, वृषलस्तुतौष्ठव्रणस्त इति ॥ ( १२९ ) **शिवेहीति** । ननु शिव आ इहीत्यत्र सवर्णदीर्घे[१३६] कृते पश्चादाद्गुणे[४] च सिद्धमिष्टं तत्किमाङ्ग्रहणेन । सत्यम् । 'पूर्वं धातुरुपसर्गेण युज्यते' इति दर्शनेन धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वं गुणे कृते वृद्धिःस्यात्, तन्मा भूदित्याङ्ग्रहणम् ॥ ( १३० ) **अव्यक्तानुकरणस्यात इतौ** । यद्यपि 'अतो गुणे[२७६]' इति पूर्वसूत्रादत इत्यनुवर्त्यातोग्रहणमिह त्यक्तुं शक्यम्, तथापि पूर्वसूत्रे अत इति तपरकरणाद्ध्रस्वाकारस्य ग्रहणमिह तु शब्दाधिकारपक्षाश्रयणाद् अच्छब्दस्य ग्रहणमिति व्याख्याने क्लेशः स्यादिति पुनरत्रातोग्रहणं कृतम् । अव्यक्तशब्दं व्याचष्टे–**ध्वनेरिति** ॥ **अनुकरणस्येति** । परिस्फुटाकारादिवर्णस्येति भावः । तस्य चानुकरणत्वं किंचित्साम्येन बोध्यम् । पररूपस्यास्य नित्यत्वेऽपि संहितायामविवक्षितायां तदभावादाह–**पटत् इतीति** ॥

---

1 **क्वेव भोक्ष्यस इति**–विलम्बेनागतं प्रति उपवेशनस्थलालाभे, अनेकनिमन्त्रणे वा वाक्यमिदं प्रयुज्यते ॥ 2 **तच्च टेरिति**–भाष्ये त्वेतन्न दृश्यते । टिग्रहणसाध्यानां मनीषादिशब्दानां पृषोदरादित्वमेव कल्पनीयम् । अत एव 'चत्वारि वाक्परिमिता–' इति श्रुतिव्याख्यायां प्रदीपे–'मनीषीशब्दः पृषोदरादित्वात्साधुः' इत्युक्तम् ॥ 3 **सारङ्गः पशुपक्षिणोरिति**–भाष्ये त्वेतन्न दृश्यते । सारङ्गशब्दसिद्धिस्तु 'पतेरङ्गच् पक्षिणि' इत्युत्तरं 'सृवृभ्योर्वृद्धिश्च' इत्युणादिसूत्रेण । आधुनिकोपलब्धगणपाठस्तु नैव प्रामाणिकः । वार्तिकस्थगणानामपि तत्र प्रक्षेपदर्शनात् । पाणिनिना सर्वेऽष्टाध्यायीगणग्राह्या अपि न निर्दिष्टाः 'श्रेण्यादयः पठ्यन्ते कृतादिराकृतिगणः' इति भाष्येण केषांचिदेव पाठाभ्यनुज्ञानात् । अत एव 'अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्यः' 'अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः' इति तत्र तत्र भाष्यं संगच्छते ॥ 4 **आकृतीति**–अत एव 'आममन्त्रे' 'कतन्तेभ्यः' इत्यादिनिर्देशाः संगच्छन्ते ॥ 5 **ओत्वोष्ठयोरिति**–समासघटकोत्तरपदभूतोत्वोष्ठशब्दावयवेऽचि परे पूर्वपदान्त्यावर्णान्पूर्वपरयोः पररूपमित्यर्थः । तथा च 'दन्त्योष्ठ्यो वः स्मृतः' इति शिक्षाप्रयोग उपपद्यते । अकारलोपोत्तरमपि एकदेशविकृतन्यायेनौष्ठशब्दत्वम् । अत एव बिम्बोष्ठीति ङीप्यपि प्रयोगो भाष्ये संगच्छते ॥ 6 'नावक्लृप्तौ यदा' इति पाठे न च्छन्दोभङ्ग इति शब्दरत्नम् ॥

( १३२ ) (सू) **नाम्रेडितस्यान्त्यस्य तु वा । ६ । १ । ९९ ।** आम्रेडितस्य प्रागुक्तं न स्यादन्त्यस्य तु तकारमात्रस्य वा स्यात् ॥ ( १३३ ) (वा) **डाचि बहुलं द्वे भवतः ।** इति बहुलवचनाद् द्वित्वम् ॥ ( १३४) (सू) **तस्य परमाम्रेडितम् । ८ । १ । २ ।** द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । पटत्पटेति ॥ ( १३५ ) (सू) **झलां जशोऽन्ते । ८ । २ । ३९ ।** पदान्ते झलां जशः स्युः । पटत्पटदिति ॥ ( १३६ ) (सू) **अकः सवर्णे दीर्घः । ६ । १ । १०१ ।** अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । अचि किम् । कुमारी शेते ॥ ( १३७ ) नाऽऽज्झलाविति[३२-२] सावर्ण्यनिषेधस्तु न दीर्घशकारयोः, ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः । अकः किम् । हरये ॥ [(१३८ ) **अकोऽकीत्येव सुवचम्** ॥] ( १३९ ) (वा) **ऋति सवर्णे ऋ वा ॥** होतॄकारः ।होतृकारः॥ (१४०) (वा) **ऌति सवर्णे ऌ वा ॥** होत्ॢकारः। पक्षे ऋकारः सावर्ण्यात् । होतृकारः । ऋति ऋ वा, ऌति ऌ वेत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम् ।आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा, अभितोऽज्भक्तेरपरा । द्वितीयस्य तु मध्ये द्वौ लकारौ। शेषं प्राग्वत् । इहोभयत्रापि ऋत्यकः[१५] इति पाक्षिकः प्रकृतिभावो वक्ष्यते ॥ ( १४१ ) (सू) **एङः पदान्तादति । ६ । १ । १०९ ।** पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ॥

---

( १३७) **नाऽऽज्झलावित्यादि** । अयं भावः-विधेयभेदे वाक्यभेदात्सम्भवन्त्यामेकवाक्यतायां तदयोगात् 'तुल्यास्यप्रयत्नम्–'[३] 'नाऽऽज्झलौ'[३२-२] इत्यस्य च एकवाक्यत्वलाभाय ' अज्झल्भिन्नं तुल्यास्यप्रयत्नं सवर्णम्' इत्यर्थोऽभ्युपेयते । 'अज्झल्भिन्नम्' इत्यत्र परस्परनिरूपिततुल्यत्वविशिष्टास्यप्रयत्नकौ यावज्झलौ तदुभयभिन्नत्वं विवक्षितम् । तथा च 'यो ह्रस्वदीर्घाद्यात्मको वर्णो येन वर्णेन तादृशेन तुल्यास्यप्रयत्नस्तदुभयं मिथः सवर्णं भवति' । तथा 'येन हला तुल्यास्यप्रयत्नकं यद्धल् तदुभयं मिथः सवर्णं स्यात्, यश्च दीर्घप्लुतात्मको वर्णो येन हला तुल्यास्यप्रयत्नस्तदुभयमपि मिथः सवर्णम्' इत्यर्थः फलितः । ततश्चानेन सूत्रद्वयेन सवर्णसंज्ञायां सिद्धायाम् 'अणुदित्सवर्णस्य–'[३३] इति ग्राहकशास्त्रं प्रवर्तते, न तु ततः प्राक् । अतो 'नाऽऽज्झलौ ३२–२' इत्यनेन आक्षरसमाम्नायिकानामेव सावर्ण्यं व्युदस्यते, न तु सर्वेषाम् । तेनात्र दीर्घशकारयोः सावर्ण्यमस्त्येवेति, तद्वारणाय 'अकः सवर्णे–'[३६] इत्यत्राचीत्यनुवर्तनं युक्तमिति । यदा तूष्मणामीषद्विवृतत्वं परिकल्प्य 'नाऽऽज्झलौ ३२–२' इति सूत्रं प्रत्याख्यायते, तदेह सवर्णसूत्रे अचीति नानुवर्तनीयम् । हे त्रिपासो इत्यादौ 'गुरोरनृतः–१५८' इत्याकारस्य प्लुते कृते ततः परस्य सस्य इणः परत्वेन षत्वं[२] स्यात्, 'नाऽऽज्झलौ ३२–२' इत्यत्राकारप्रश्लेषेण दीर्घहकारयोः सावर्ण्याभावेऽपि प्लुताकारस्य हकारसवर्णत्वेन इण्त्वादित्याशङ्क्य तत्समाधानार्थमाश्च आश्चेति द्वन्द्वं कृत्वा सवर्णदीर्घेण दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यत इति क्लिष्टव्याख्यानमपि नाश्रयणीयम् । विश्वपाभिरित्यादौ ढत्वादेरप्यप्रसक्तिः । स्वराणामूष्मणां च प्रयत्नभेदेन सावर्ण्याभावादिति सुगमोऽयं पन्थाः ॥ (१३८) **अकोऽकीत्येवेति** । 'अकोऽकि दीर्घः' इत्येवेत्यर्थः ॥ **सुवचमिति** । यथासंख्यसम्बन्धेन दध्यत्रेत्यादावतिप्रसङ्गाभावात् । ऋ इति त्रिंशतः संज्ञेत्युक्तत्वात् होतृ–ऌकार इत्यत्र ऋकारस्य ऋकारपरत्वमस्त्येवेत्यप्रसङ्गाभावादीकारशकारयोः सावर्ण्ये सत्यप्यचीत्यनुवर्तनं विनैव समीहितरूपसिद्धेश्चेति भावः ॥ (१३९) 'ऋति ऋ वा' ' ऌति ऌ वा' इति वार्तिकं सूत्रस्थेन सवर्णपदेन योजयित्वा पठति–**ऋति सवर्ण इत्यादि** ॥ नन्वेवम् 'अकः सवर्णे–१३६' इति सवर्णपदाकरणे वार्तिकयोः सवर्णग्रहणं कर्तव्यम् । सूत्रे तु 'अकोऽकि–१३८'इति कर्तव्यमिति विपरीतगौरवात्कथम् ' अकोऽकीत्येव सुवचम्' इत्युक्तमिति चेदत्राहुः । भाष्यकारैरेतद्वार्तिकद्वयस्य प्रत्याख्यानान्नास्त्येव गौरवमिति । प्रत्याख्याने तूपपत्तिः ऌकारान्तेषु विचारयिष्यते ॥ **वर्णद्वयं द्विमात्रमिति** । एतेन दीर्घे प्राप्ते ह्रस्व ऋकारो ह्रस्व ऌकारश्च विधीयत इति प्राचो व्याख्यानमाकरविरुद्धमिति ध्वनितम् ॥(१४०)**एङः पदान्तात्–**। अयवोरपवादः। 'ङसिङसोश्च३५०' इत्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टप्रतिपत्तये इहैव कृतमिति मनोरमायां स्थितम् ॥ केचित्तु–'पदान्तात्' इत्येतदिहाप्यावश्यकमेवान्यथाऽपदान्तादपि स्यात् । 'ङसिङसोश्च ३५०' इति सूत्रं तु 'सुप्संबन्धिन्याति परतः पूर्वरूपं चेन्ङसिङसोरेवाति परे' इति नियमार्थं स्यात् । तत्फलं तु हरयः, गुरवः, इः स्मृतो यैस्ते स्मृतयः, इत्यादौ पूर्वरूपाप्रवृत्तिरित्याहुः । एङः किम्, दध्यत्र । पदान्तात्किम्, चयनम् । लवनम् । अचिनवम् । अति किम्, हरयिह । विष्णविह

---

१ **अकोऽकीति**–यद्यप्ययं पाठो न कौमुदीस्थः, किन्तु मनोरमास्थः कैश्चित्स्मृत्यर्थमेव कौमुद्यां प्रक्षिप्तस्तथापि तत्त्वबोधिन्यां प्रतीकदर्शनेन पुस्तके रक्षितः अस्य न्यासस्यामुख्यता तु मूलटिप्पण्यां दाधिमथ्यां निरूपिता, तत एवावगन्तव्या ॥

२ अवात्तामित्यादिसिद्धये प्रत्याहारसूत्रेषु जातिपक्षस्याश्रयणाद्दीर्घप्लुतयोरप्याक्षरसमाम्नायिकत्वेन दीर्घप्लुतयोरपि हल्भिः सावर्ण्यनिषेधः क्लिष्टव्याख्यानमन्तराऽपि सुलभ एव । अत एव प्रक्रियाप्रपञ्चे 'नाऽऽज्झलौ' इति सूत्रे आकारप्रश्लेषो नाङ्गीकृतः॥

( १४२ ) **सर्वत्र विभाषा गोः** । ६ । १ । १२२ । लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते । गोअग्रम् । गोऽग्रम् । एङन्तस्य[1] किम् । चित्रग्वग्रम्[2] । पदान्ते किम् । गोः ॥ ( १४३ ) **अवङ् स्फोटायनस्य** । ६ । १ । १२३ ॥ अतीति निवृत्तम् । आचि परे पदान्ते गोरवङ् वा स्यात् । गवाग्रम् । पदान्ते किम् । गवि ॥ ( १४४ ) व्यवस्थितविभाषया गवाक्षः ॥ ( १४५ ) **इन्द्रे च** । ६ । १ । १२४ ॥ गोरवङ् स्यादिन्द्रे । गवेन्द्रः ॥

**अथ प्रकृतिभावः ।**

(१४६) **प्लुतप्रगृह्या अचि नित्यम्** ।६।१।१२५।प्लुताः प्रगृह्याश्च वक्ष्यन्ते तेऽचि नित्यं प्रकृत्या स्युः । एहि कृष्ण३ अत्र गौश्चरति । हरी एतौ । नित्यमिति किम् । हरी एतावित्यादावयमेव[3] प्रकृतिभावो यथा स्यादिकोऽसवर्णे इति ह्रस्वसमुच्चितो मा भूत् ॥ ( १४७ ) **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** ।६।१।१२७। पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या

---

तपरः किम्, वायवायाहि ॥ ( १४२ ) **सर्वत्र विभाषा-** । यद्यपीह 'छन्दसि' इति न प्रकृतम्, तथापि 'यजुष्युरः ५३६९' इत्यादिप्रक्रमाच्छन्दस्येव संभाव्येत । अतः 'सर्वत्र' इत्युक्तम् । तद्व्याचष्टे--**लोके वेदे चेति** । इह एङ इत्यनुवर्त्य एङन्तस्य गोरिति व्याख्येयम् । तेनेह न । चित्रग्वग्रम्॥ **प्रकृतिभाव इति** । एतच्च 'प्रकृत्याऽन्तःपादम् ५३६७' इति सूत्रात्प्रकृत्येत्यनुवृत्त्या लभ्यते । 'नान्तःपादम्' इति पाठे तु 'सर्वत्र विभाषा--' इति सूत्रेण पूर्वरूपमेव विभाषा निषिध्यत इत्यवधेयम् । निषेधविकल्पे विधिविकल्पः फलित इत्याशयेन पूर्वरूपमेव विकल्प्यत इति मनोरमायां स्थितम्॥(१४३)**अवङ् स्फोटायनस्य**। स्फोटोऽयनं परायणं यस्य सः स्फोटप्रतिपादनपरो वैयाकरणः, तस्य स्फोटायनस्य । अत्राप्येङन्तस्य गोरिति व्याख्येयम् । अगित्येव सूत्रयितुमुचितम् ॥ विभाषानुवृत्तेः स्फोटायनग्रहणं पूजार्थम् ॥ **अतीति निवृत्तमिति** । अन्यथा गवेशः, गवोद्ध इत्यादि न सिद्ध्येदिति भावः॥ **अचि पर इति** । अत्राचीत्यनुवर्तते । 'अतीति तु निवृत्तम्' इत्यत्र व्याख्यानमेव शरणम् ॥(१४४) **गवाक्ष इति** । गवां किरणानाम् अक्षीवेति विग्रहः । 'अक्ष्णोऽदर्शनात् १३५७' इत्यच् समासान्तः। वातायने रूढोऽयम् । पुंस्त्वं लोकात् ॥ ( १४५ ) **इन्द्रे च** । आरम्भसामर्थ्यान्नित्यमिदम् । इदं च सूत्रं त्यक्तुं[4] शक्यम् । अन्यार्थं स्वीकृतेन व्यवस्थितविभाषाश्रयणेनैवेष्टसिद्धेरित्याहुः । 'प्लुतप्रगृह्याः-१४६' इति सूत्रादव्यवहितपूर्वः '**अथ प्रकृतिभावः**' इति पाठो मूलपुस्तकेषु प्रायेण दृश्यते स चापपाठ एव । 'सर्वत्र विभाषा गोः १४२' इति प्रकृतिभावस्य प्रागेवारब्धत्वादित्येके । अन्ये तु-'अवङ् स्फोटायनस्य' १४३' 'इन्द्रे च १४४' इति सूत्रद्वयं प्रकृतिभावप्रकरणे पठितमपि तद्बहिर्भूतमित्यवश्यं वक्तव्यं, ताभ्यां तदविधानात्। न च'अवङ्-१४३'सूत्रस्य प्रकृतिभावापवादत्वेनोत्सर्गापवादरूपत्वात् तत्प्रकरणस्थत्वं सूपपादमित्यवङादेशानुवृत्त्यर्थं तदनन्तरं पठितस्य'इन्द्रे च १४४' इति सूत्रस्यापीति वाच्यम्, पूर्वरूपापवादत्वस्यापि 'अवङ्-१४३'सूत्रस्य सुवचत्वात् । एतत्प्रकरणपाठस्य गोशब्दानुवृत्त्यर्थतया चरितार्थत्वात् । एवं च स्वलेख्यप्रकृतिभावप्रकरणाद्बहिस्तत्सूत्रद्वयं लिखितं तदनुकूलत्वेन 'सर्वत्र विभाषा-१४२' इति सूत्रमपि तत्रैवेति स्थितस्य गतिर्बोध्येत्याहुः ॥

**अथ प्रकृतिभावः**॥(१४६)**प्लुतप्रगृह्याः**-।प्रकृतिभावं प्रति प्लुतो नासिद्धः,प्लुतमनूद्य प्रकृतिभावविधानसामर्थ्यात् ।अचि किम्, जानु उ जानू । उञः प्रगृह्यत्वेऽपीह सवर्णदीर्घः॥ अचीत्यनुवर्तमाने पुनरचिग्रहणमादेशनिमित्ते एवाचि प्रकृतिभावः । तेन इहाप्येकादेशः स्यादेव--जानु उ अस्य रुजति, जानू अस्य रुजति । इह 'मय उञः-१७१' इति पाक्षिके वकारे तु जान्वस्य रुजति । **एहि कृष्णेति** । 'दूराद्धूते च १५६' इति प्लुतः । प्राचा तु-कृष्ण ३ एहि-इत्युदाहृतम् । तदसत् 'वाक्यस्य टेः-१५१' इत्यधिकारात् ॥ **ह्रस्वसमुच्चितो मा भूदिति**। अयं भावः--हरी ईशावित्यादौ 'प्लुतप्रगृह्याः-१४६' इत्येतत्सावकाशम्, चक्रि अत्रेत्यत्र तु 'इकोऽसवर्णे-१४०'इति, ततश्च हरी एतावित्यत्र परत्वाद् ह्रस्वसमुच्चित एव स्यात् । नित्यग्रहणे तु

---

१ **एङन्तस्य किमिति**-गोशब्दे एङन्तत्वाव्यभिचारादिति भावः ॥ २ **चित्रग्वग्रमिति**-'एकदेशविकृतमनन्यवद्भवति' इति न्यायेन गोशब्दत्वातिदेशात्प्रकृतिभावापत्तिः । एङन्तग्रहणे तु कृते, 'विकृतावयवनिबन्धनकार्ये नायं न्यायः' इत्युक्तेर्न कश्चिद्दोषः । अत्र सूत्रे त्वेङ् प्रतिपदोक्त एव गृह्यते । तेन हे चित्रगोऽग्रमित्यत्र न प्रकृतिभावावङौ । 'एङः पदान्तात्--' इत्यत्र तु 'हलोऽनन्तराः-' इत्यादिनिर्देशैर्लाक्षणिकमपि गृह्यत इति बोध्यम् । इदं चैङन्तपदानुवर्तनमवङ्विध्योरपि करणीयम् । तेन न चित्रग्विन्द्र इत्यत्रावङापत्तिरिति बोध्यम् ॥ ३ **अयमेवेति**-प्रायिक एवेत्यर्थः । एवेन वैकल्पिकव्यावृत्तिः । अयं भावः--विकल्पविध्युत्तरं पठितानाम् 'इको यणचि' इत्यादीनां नित्यपदं विनापि वैकल्पिकत्वाभावस्य निश्चयवदत्रापि विकल्पाभावेऽस्वरितत्वादेव नित्यग्रहणं 'नित्यवीप्सयोः' इति भाष्योक्तरीत्याऽऽभीक्ष्ण्यार्थकमेव । तेन प्राय इति फलति । तथा च बहुत्र प्रकृतिभावो भवति न सर्वत्र किन्तु क्वचिन्न भवत्यपि इति फलति । 'अप्लुतवदुपस्थिते' इत्यादिसूत्रन्यासस्त्वेतत्सिद्धार्थानुवादक एव-इति । अत एव 'पुत्रेति तन्मयतया' इत्यत्र न शङ्कावसरोऽपि ॥ ४ **त्यक्तुं शक्यमिति** । व्यवस्थितविभाषाणां 'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥' इति परिगणितत्वाद्विकल्पस्याशक्यवारणत्वाद्विकल्पाभावाय सूत्रावश्यकत्वेन चिन्त्यमिदमिति बोध्यम् ॥

स्युर्ह्रस्वश्च वा। अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो[1] न कर्तव्य इति भाष्ये स्थितम्। चक्रि अत्र। चक्र्यत्र। पदान्ता इति किम्। गौर्यौ॥ (१४८) वा न समासे॥ वाप्यश्वः॥ (१४९) वा सिति च॥ पार्श्वम्॥ (१५०) सू ऋत्यकः। ६।१।१२८। ऋति परेऽकः प्रागवत्। ब्रह्म ऋषिः। ब्रह्मर्षिः। पदान्ता इत्येव। आर्च्छत्। समासेऽप्ययं प्रकृतिभावः। सप्त ऋषीणाम्। सप्तर्षीणाम्॥ (१५१) सू वाक्यस्य[2] टेः प्लुत उदात्तः। ८।२।८२। इत्यधिकृत्य॥ (१५२) सू प्रत्यभिवादेऽशूद्रे। ८।२।८३। अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात्, स चोदात्तः। अभिवादये देवदत्तोऽहं भोः[3]। आयुष्मानेधि देवदत्त ३[4]॥ (१५३) वा स्त्रियां[5] न॥ अभिवादये गार्ग्यहं भोः। आयुष्मती भव गार्गि॥ (१५४) नाम गोत्रं वा[6] यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते। नेह, आयुष्मानेधि॥ (१५५) वा भोराजन्यविशां वेति वाच्यम्॥ आयुष्मानेधि भो ३ः। आयुष्मानेधीन्द्रवर्म३न्। आयुष्मानेधीन्द्रपालित ३॥ (१५६) सू दूराद्धूते

---

कृते तत्सामर्थ्यात् परमपि बाधत इति॥(१४७)चक्र्यत्रेति। इह 'स्कोः-५१६' इति कलोपो न, यणः कार्यकालपक्षे बहिरङ्गपरिभाषया असिद्धत्वात्, स्थानिवद्भावाच्च। 'पूर्वत्रासिद्धे न स्थानिवत्-३३८' इति तु नास्ति, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु ३३१' इति वक्ष्यमाणत्वात्॥(१४९)पार्श्वमिति। पर्शूनां समूहः। 'पर्श्वा णस् वक्तव्यः १७७१' इति णस्। 'ओर्गुणस्तु १२१९' न 'सिति च १७७२' इति पदत्वस्य भत्वापवादत्वात्॥ (१५०) ऋत्यकः ब्रह्म ऋषिरिति। ननु 'ऋत्यस्य' इत्येव सूत्रमस्तु। दधि ऋच्छतीत्यादौ 'इकोऽसवर्णे-१४७' इत्यनेनैव प्रकृतिभावसिद्धेः। मैवम्, होतृ-ऋकार इत्यत्र प्रकृतिभावार्थमग्ग्रहणस्यावश्यकत्वात्। एतेन 'अकोऽसवर्णे-' इत्येवमेव सूत्रमस्त्विति शङ्काया निरवकाश एव उक्तदोषानिवृत्तेः। सप्तऋषीणामित्यत्र 'न समासे १४८' इति निषेधापत्तेश्च॥ 'न समासे१४८' इति निषेधवार्तिकं हि 'इकोऽसवर्णे-१४७' इति सूत्र एव, न तु 'ऋत्यकः १५०' इत्यत्रेति सिद्धान्तः। अत एवाह-समासेऽप्ययमिति। एवं च 'ऋलृवर्णयोः ३१' इति पूर्वोक्तो निर्देशः संगच्छते॥ (१५२) प्रत्यभिवादे-। इह प्रत्यभिवादशब्देन आशीर्वचनमुच्यते। अशूद्रे किम्, अभिवादये तुषजकोऽहं भोः। आयुष्मानेधि तुषजक॥ आयुष्मानेधीति। अस्तेः 'सेर्हिः २९५६' 'ध्वसोः-३२८४' इति एत्वम्, 'हुझल्भ्यो हेर्धिः ३२३१' 'श्नसोरल्लोपः ३२८'॥(१५४) नामगोत्रं वेति। गोत्रस्योदाहरणम्-अभिवादये गार्ग्योऽहं भोः। आयुष्मानेधि गार्ग्य ३ इत्यूह्यम्॥ (१५६) दूराद्धूते च। हूतमाह्वानं तच्च संबोधनमात्रोपलक्षणमित्याह-

---

१ तदनुकर्षणार्थ इति। अयं भावः—ह्रस्वविधानं किं श्रवणार्थम्, उत यणादेशार्थम्। नान्त्यः, न हि ह्रस्वविधिमन्तरा यण् न भवति दीर्घस्यापि 'नद्यौ' इत्यादौ यणः सर्वसम्मतत्वात्। नाद्यः, यणाद्यादेशोत्तरं श्रवणाप्रसङ्गात्॥ तथा च ह्रस्वविधानं व्यर्थं सत् स्वश्रवणसाधकं प्रकृतिभावं ज्ञापयतीति प्रकृतिभावसिद्धौ किं तदनुकर्षणार्थचकारेण—इति॥ इदमुपलक्षणं सर्वेषां चकाराणाम्। तथा चोक्तम्—'अथेदानीमन्तरेणापि चकारमत्रानुवृत्तिर्भवति, इहापि नार्थश्चकारेण। एवं सर्वे चकाराः प्रत्याख्यायन्ते' इति 'लुटि च क्लृपः' इति सूत्रभाष्ये। किञ्च प्रकृतिभावस्य चानुकृष्टत्वे 'ऋत्यकः' इत्यत्रानुवृत्तिर्न स्यात् 'चानुकृष्टं नोत्तरत्र' इत्युक्तेः॥ २ वाक्यस्य टेरिति। प्रतिपदं टेः प्लुतवारणाय वाक्यग्रहणम्। व्यञ्जनान्तस्यापि संग्रहार्थं टिग्रहणम्। असति टिग्रहणे प्लुतश्रुत्याऽच्परिभाषोपस्थानादचा तदन्तविधौ सत्यजन्तस्यैव वाक्यस्य स्यात्। टिग्रहणे तु कृते तदुपादानसामर्थ्याट्टिनाऽज्विशेष्यते—टिसंबन्धिनोऽच इतीति हलन्तस्यापि सिध्यति प्लुतः—सोमसु३त, अग्निचि३त्-इति॥ ३ अभिवादये देवदत्तोऽहं भो इति। अभिवादनवाक्यप्रक्रियेत्थमभिहिता-"अभिवादात्परं विप्रो ज्यायांसमभिवादयन्। असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत्॥ (अ० २। श्लो० १२२) भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने। नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः॥ (अ० २। श्लो० १२४)" इति मनुना॥ सांख्यायनोऽपि—'असावहं भो इत्यात्मनो नामादिशेत्' इत्युक्तवान्-इत्येवं भोःशब्दोऽभिवाद्यनामप्रतिनिधित्वेनाभिवादनवाक्यस्यान्तेऽवश्यं प्रयोज्य इति बोध्यम्। अत्र नाम च "अभिवादनीयं च समीक्षेत। तन्मातापितरावेव विद्यातामोपनयनात्" इत्याश्वलायनोक्त्यनुसारेण दशम्यां पितृभ्यामभिवादनीयत्वेन कृतमेव ग्राह्यम्। तदसंभवे तु 'द्व्यक्षरम्' इत्युक्तरीत्या कृतं व्यावहारिकाद्यपि ग्राह्यमेव॥ ४ आयुष्मानेधि देवदत्तेति। अभिवादने कृते सति गुर्वादिर्यदाशीर्वाक्यं प्रयुङ्क्ते तत्प्रत्यभिवादः। प्रत्यभिवादवाक्यप्रक्रियापीत्थमभिहिता—"आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने। अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः॥ (अ० २ श्लो० २२५)" इति मनुना। अत्राकारग्रहणमकारान्तस्य नामत्वे। हलन्तत्वेऽन्त्यहलः पूर्वोऽच्, अजन्तत्वे त्वन्त्योऽच् प्लुतः कार्य एवेति बोध्यम्॥ ५ स्त्रियां नेति। यद्यप्यत्र वार्तिककृताऽसूयकेऽपि निषेध उक्तः, तथापि 'असूयकस्त्वमसि न त्वं प्रत्यभिवादनमर्हसि' इति भाष्येणासूयकस्य प्रत्यभिवादनानर्हत्वसूचनात् स्त्रीमात्रप्रतिषेधो दीक्षितेन स्वीकृतः। एतेन स्त्रीणामपि संस्कृतभाषणसाध्याभिवादनप्रत्यभिवादनयोरधिकारः सूचितः॥ ६ नाम गोत्रं वेति। अभिवादनस्य नामगोत्रान्यतरोच्चारणेनैव कर्तव्यत्वस्य स्मृतिग्रन्थयोरभिहितत्वेन प्रत्यभिवादेऽपि अभिवादकनामगोत्रान्यतरोच्चारणस्यावश्यकत्वादिति भावः॥

च । ८ । २ । ८४ । दूरात्संबोधने यद्वाक्यं तस्य टेः प्लुतः स्यात् । सक्तून्पिब देवदत्त ३ ॥ ( १५७ ) (सू) **हैहेप्रयोगे हैहयोः** । ८ । २ । २५ । एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात् । हे ३ राम । राम है ३ ॥ ( १५८ ) (सू) **गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्** । ८ । २ । ८६ । दूराद्धूते यद्वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा प्लुतः स्यात् । दे ३ वदत्त । देवद ३ त्त । देवदत्त ३ । गुरोः किम् । वकारात्परस्याकारस्य मा भूत् । अनृतः किम् । कृष्ण ३ । एकैकग्रहणं पर्यायार्थम् । ( १५९ ) इह प्राचामिति योगो विभज्यते । तेन सर्वः प्लुतो विकल्प्यते ॥ ( १६० ) (सू) **अप्लुतवदुपस्थिते** । ६ । १ । १२९ । उपस्थितोऽनार्ष इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवद्भवति । अप्लुतकार्यं यणादिकं करोति । सुश्लोक ३ इति सुश्लोकेति । वत्किम् । अप्लुत इत्युक्तेऽप्लुत एव विधीयेत प्लुतश्च निषिध्येत । तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात् । अग्नी ३ इति ॥ ( १६१ ) (सू) **इ चाक्रवर्मणस्य** । ६ । १ । १३० । इ ३ प्लुतोऽचि परेऽप्लुतवद्वा स्यात् । चिनु हि ३ इति । चिनु हीति । चिनु हि ३ इदम् । चिनु हीदम् । उभयत्र विभाषेयम् ॥ ( १६२ ) (सू) **ईदूदेद्द्विवचनं प्रगृह्यम्** । १ । १ । ११ । ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू । पचेते इमौ । मणीवोष्ट्रस्येति[३]

---

**दूरात्संबोधन इति**। उपलक्षणतया व्याख्यानस्य फलमुदाहरति—**सक्तून्पिबेत्यादि**॥(१५८) **गुरोरनृतः—अनन्त्यस्यापीति** । अत्र वदन्ति—यद्यन्त्यस्य गुरोः प्लुतार्थोऽपिशब्द इति व्याख्यायेत, तर्हि गुरुस्थानिकप्लुतानामेव पर्यायता स्यात्तथा च 'दूराद्धूते–१५७' इति लक्षणान्तरेण लघोष्टेः स्थाने विहितेन प्लुतेन सह युगपत् प्रयोगः प्रसज्येत । तस्मादपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थ इत्येव व्याख्यातव्यं, टेरिति प्रकृतत्वादिति ॥ **दे३वदत्तेति** । वाक्यत्वसंपत्तये अस्यादिरेहीति शब्दो बोध्यः । एवमग्रेऽपि ॥(१५९)**सर्वः प्लुतो विकल्प्यत इति**। एतेन'द्वैपायनो विरहकातर आजुहाव । पुत्रेति' इति भागवतं व्याख्यातम्। प्लुतस्य वैकल्पिकत्वात् । 'आर्षः प्रयोगः' इति श्रीधराचार्योक्तिस्तु नादर्तव्या । विस्तरस्त्वत्र मनोरमायामनुसन्धेयः ॥ (१६०) **यणादिकं करोतीति**। अत्र नव्याः—यद्येवमग्नी इति, विष्णू इतीत्यत्र प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादनेन यणादिकार्यं स्यात्, ततश्च वत्करणप्रयोजनं यणादिकमेव स्यात्, तस्मात् 'प्लुतकार्यं प्रकृतिभावं न करोतीत्यर्थः'इति प्राचां व्याख्यैव ज्यायसी। एवं च 'इको यणचि ७४' इत्यत्र इग्ग्रहणस्य वैयर्थ्यशङ्कापि नास्ति । तथाहि—तत्रेग्ग्रहणाभावेऽपि 'ह्रस्वस्य पिति कृति तुक्३८०६' 'दीर्घात् २२२' इत्यतो ह्रस्वदीर्घपदानुवृत्त्या तयोर्यण्विधानान्न व्यञ्जनस्य भविष्याति । प्लुतस्य तु प्रकृतिभावेनैव भवितव्यमेव। अयादयोऽपवादा हरय इत्यादौ । उपेन्द्रः, कृष्णैकत्वमित्यादौ तु 'आद्गुणः १०४' 'वृद्धिरेचि १०७' इति बाधके भविष्यतः । यथा सत्यपि इग्ग्रहणे श्रीश इत्यादौ सवर्णदीर्घत्वं बाधकम् । अतो नार्थ इग्ग्रहणेन । तथापि एहि करभोरु ३ इति, सुतनु ३ इति, चिनु हि ३ अत्रेत्यादौ 'अप्लुतवदुपस्थिते १६०' 'इ चाक्रवर्मणस्य १६१' इति प्रकृतिभावनिषेधेऽपि आभ्यां यणादिकार्याविधानात् प्लुतस्यास्य यण् न स्यात् । ह्रस्वदीर्घपदाननुवृत्तौ तु व्यञ्जनस्य स्यात् । तस्मादिग्ग्रहणं व्यर्थमिति न शक्यते शङ्कितुमित्याहुः ॥ अन्ये त्विग्ग्रहणस्य प्रयोजनान्तरमप्याहुः—इको यणेव क्वचिद्यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूत् । किंचान्यत् प्राप्नोति 'इकोऽसवर्णे–१४७'इति शाकलम् । एवं च यदुक्तं 'न समासे१४८''सिति च १४९'इति तदनेन संगृहीतं भवतीति ॥ ( १६१ ) **चिनुहीति**। चिन्विति लोडन्तम् । हीत्यव्ययम् । 'अनन्त्यस्यापि प्रश्नाख्यानयोः५४६६'इत्यनेन प्लुतः[४] ॥ **उभयत्र विभाषेयमिति** । इतिशब्दे परतः पूर्वेण प्राप्ते अन्यत्राप्राप्ते चारम्भादिति भावः ॥ (१६२)**ईदूदेदन्तमिति**। अत्र विशेषणेन तदन्तविध्याश्रयणं किम्, पचेते इमाविति यथा स्यात् । हरी विष्णू इत्यादिष्वेकादेशस्य परादिवद्भावाश्रयेण ईकारादीनां द्विवचनत्वादीदूदेद्रूपं द्विवचनमित्युक्तेऽपि प्रगृह्यत्वं सिध्यतीति बोध्यम् ॥ **द्विवचनमिति** । 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ३१२' 'सुप्तिङन्तम्–५२' इत्यन्तग्रहणाज्ज्ञापकात्तेन कुमार्योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति सिद्धम् । द्विवचनान्तं प्रगृह्यं स्यादिति व्याकुर्वतः प्राचस्तु नेदं सिध्येत् ॥ **हरी एताविति** । इह ह्रस्वसमुच्चितप्रकृतिभावो न, 'प्लुतप्रगृह्या:–१४६' इत्यत्र नित्यग्रहणादित्युक्तम् ॥ अत्र वृत्तिकारेण 'मणीवादीनां प्रतिषेधो वक्तव्यः' इति पठित्वा मणीव रोदसीव जम्पतीवेत्युदाहृतम् । तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटादयः । एवं स्थिते 'मणीवोष्ट्रस्य लम्बेते'

---

१ **दूरादिति**। 'यत्र प्राकृतात्प्रयत्नाद्विशेषेऽनुपादीयमाने संदेहो भवति–'श्रोष्यति न श्रोष्यति वा' इति तद् दूरमिहावगम्यते' इति भाष्यम् ॥ २ **संबोधन इति** । संबोधनमत्र ह्वेञः शब्दार्थत्वात् सम्यक् कथनमात्रम्, न तु संबोधनप्रथमाविभक्तिनियामकस्याभिमुखीकृत्य बोधनस्यैव 'आगच्छतु भवान् देवदत्तः' इत्येवमाह्वानस्यापि संभवात् । अत एवाकडारसूत्रे भाष्ये गुरुनदीसंज्ञयोः समावेशे वात्सीबन्धुरित्यत्र 'गुरोः' इति प्लुतो 'नदीबन्धुनि' इति पूर्वपदान्तोदात्तत्वं च फलमुक्तम् ॥ ३ **मणी वोष्ट्रस्येति** । रोदसीवेत्यत्र पदपाठे इवेति पदविभागस्य दर्शितत्वात्तद्विरोधापत्त्या चिन्त्योऽयं समाधिरिति । प्रकृतिभावस्य नित्यग्रहणेन प्रायिकत्वादत्र तदप्रवृत्त्या तु न कश्चिद्दोषः ॥ ४ 'विभाषा पृष्टप्रतिवचने हेः' इति प्लुतः—इति शेखरादिस्तु—अनन्त्यस्येत्यस्यासिद्धत्वाभिप्रायेणेति ज्ञेयम् ॥

तु इवार्थे वशब्दो वाशब्दो वा बोध्यः॥ (१६३) **अदसो मात्** ।१।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। मात्किम्। अमुकेऽत्र। असति माद्ग्रहणे एकारोऽप्यनुवर्तेत ॥ (१६४) **शे** ।१।१।१३। अयं प्रगृह्यः स्यात्। अस्मे इन्द्राबृहस्पती ॥ (१६५) **निपात एकाजनाङ्** ।१।१।१४। एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात्। इ विस्मये। इ इन्द्रः। उ वितर्के। उ उमेशः। अनाङित्युक्तेराङिदाकारः प्रगृह्य एव। आ एवं नु मन्यसे। आ एवं किल तत्। ङित्तु न प्रगृह्यः। ईषदुष्णम्। ओष्णम्। ( १६६ ) वाक्यस्मरणयोरङित्। अन्यत्र ङिदिति विवेकः ॥

---

प्रियौ वत्सतरौ मम' इति भारतप्रयोगं समर्थयते—**इवार्थे इति** ॥ **वशब्द इत्यादि** । 'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्' इति मेदिनी । 'व वा यथा तथैवैवं साम्ये-' इत्यमरः । 'कादम्बखण्डितदलानि व पङ्कजानि' इत्यादिप्रयोगदर्शनाच्चेति भावः ॥ ( १६३ ) **अदसो मात्** । इह एकारो नानुवर्तते, असंभवादित्यभिप्रेत्याह—**ईदूताविति** ॥ अदसः किम्, शम्यत्र, वाम्यत्र। ननूकारानुवृत्तिर्व्यर्था, स्त्रियौ फले वा अमू आसाते इत्यत्र पूर्वेणैव सिद्धेः मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वादत आह—**रामकृष्णाविति**। पुंसि पूर्वेण न सिध्यत्यौकारान्तत्वादिति भावः । 'अदसो मात्१६६' इति सूत्रं प्राति मूत्वमीत्वं च नासिद्धम्, आरम्भसामर्थ्यात् ॥ **अमुकेऽत्रेति** । स्त्रीलिङ्गद्विवचनस्य तु पूर्वसूत्रेण प्रगृह्यत्वे प्रकृतिभाव एव अमुके अत्र ॥ **एकारोऽप्यनुवर्तेतेति**[1]। तथा च एकाराननुवृत्तितात्पर्यग्रहफलकं माद्ग्रहणमिति भावः ॥ (१६४) शे । छान्दसमपीदं संदर्भशुद्ध्यर्थमुक्तमित्याहुः ॥ **अस्मे इति**[2] । अस्मभ्यमित्यर्थः, 'सुपां सुलुग्-५४१३' इति भ्यसः शे आदेशः । 'शेषे लोपः५२१' ॥ (१६५) **निपात एकाच्**-। निपातः किम्, अततेर्डः अः । हे अ आगच्छ । अत्र प्रगृह्यसंज्ञा मा भूत्। एकग्रहणाभावे 'येन विधिः-४७' इति सूत्रात्तदन्तलाभे प्रेदमित्यत्र स्यादत उक्तम्-'एक-' इति। 'एकाज्' इति तु न बहुव्रीहिः उक्तातिप्रसङ्गतादवस्थ्यात्। अतः 'पूर्वकालैक-१०५०' इति कर्मधारय एव ॥ ननु निपातोऽजनाङ्' इत्युक्ते हलन्तस्य सत्यपि प्रगृह्यत्वे प्रयोजनाभावादजन्ते प्राप्ते अज्ग्रहणसामर्थ्यादज्रूपस्यैव निपातस्य प्रगृह्यत्वे सिद्धे किमेकग्रहणेन। न च पुरोऽस्तीत्यादौ हलन्तस्य संज्ञायां सत्यां प्रकृतिभावात् 'अतो रोः-२४३' इति रोरुत्वं न स्यादतोऽज्ग्रहणसामर्थ्यमुपक्षीणमित्येकग्रहणमावश्यकमिति वाच्यम्, प्रगृह्यसंज्ञां प्रति रुत्वस्यासिद्धतया रेफान्तस्यैतस्य प्रगृह्यसंज्ञाभावेन दोषाप्रसक्तेः। न च सान्तस्य कृता प्रगृह्यसंज्ञा एकदेशविकृतन्यायेन रेफान्तस्यापि स्यादेवेति प्रकृतिभावादुत्वाभावप्रसङ्गस्तदवस्थ इति वाच्यम्, प्रगृह्यसंज्ञां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वस्यासिद्धत्वात्प्रकृतिभावाप्रवृत्तेः। सकारान्तस्य तु न किंचिदपि सिद्धकाण्डस्थं प्रयोजनं प्राप्नोति यत्प्रकृतिभावेन व्यावर्त्येत। न चाज्ग्रहणसामर्थ्यादजन्तस्यैव प्रपराऽपेत्यादिनिपातस्य प्रगृह्यसंज्ञा स्यान्न त्वज्रूपनिपातस्येति वैपरीत्यशङ्कानिवारणार्थमेकग्रहणमिति वाच्यम्, अनाङ्ग्रहणस्य वैयर्थ्यापत्तेः। 'व्याहरति मृगः' इत्यादिनिर्देशाविरोधाच्चोक्तशङ्काया अप्रवृत्तेः । किंच, 'निपातोऽजनाङ्' इत्युक्तेऽप्यनाङिति प्रतिषेधसामर्थ्यान्निपातस्य विशेषणत्वाभ्युपगमे तदन्ताविध्यप्रवृत्त्या निपातरूपो योऽच् स प्रगृह्य इत्यर्थलाभादज्रूपस्यैव निपातस्य प्रगृह्यत्वं सिद्धमिति नास्त्येव प्रयोजनमेकग्रहणस्य । नन्वेवमपि समुदायनिवृत्त्यर्थमेकग्रहणमावश्यकमेव। अन्यथा अ इ उ अपेहीत्यत्रैकाज्द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यान्नावयवानामिति चरमस्यैव प्रकृतिभावः स्यान्न तु पूर्वयोरिति चेन्न, अजित्येकत्वस्य विवक्षयैव समुदायनिराससंभवात्समुदायसंज्ञया अवयवानामननुग्रहेणैकाज्द्विर्वचनन्यायस्याप्यप्रवृत्तेः । एकस्मिन्निपाते संज्ञाविधानसंभवेन निपातसमुदायस्य निपातग्रहणेनाग्रहणाच्च । अत्राहुर्भाष्यकाराः—'अच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति—वर्णग्रहणेषु व्यक्तिसङ्ख्या न विवक्ष्यते किं तु जातिरेव निर्दिश्यते' इति। तेन 'हलन्ताच्च' इति सनः कित्त्वात् 'दम्भ इच्च' इतीत्वे धिप्सतीत्यादि सिद्धम्। हल्ग्रहणस्य व्यक्तिपरत्वे तु योऽत्रेकः समीपो हल् नकारो न ततः परः सन्, यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्त्वं न स्यात्, ततश्च नलोपो न स्यात्। वस्तुतस्तु—अपृक्तसंज्ञायामेकग्रहणमुक्तार्थज्ञापकमित्याश्रित्य प्रकृतसूत्रे एकाज्ग्रहणं त्यक्तुं शक्यम्। अत एव मनोरमायामनाङिति पर्युदासादेवाज्रूपनिपाते लब्धे निपातग्रहणमुत्तरार्थं सत् स्पष्टप्रतिपत्त्यर्थमिहैव कृतमिति निपातग्रहणस्यैव प्रयोजनमुक्तं, न त्वेकाज्ग्रहणस्य। अत्र नव्याः—यदुक्तं मनोरमायाम् 'अनाङिति पर्युदासात्' इत्यादि तच्चिन्त्यम्, 'ओत् १६७' सूत्रे भाष्यकारैः प्रसज्यप्रतिषेधस्यैवाङ्गीकृतत्वात्। न च लक्ष्यभेदाभावात्प्रौढिवादमात्रं भाष्यमिति वाच्यम्, अस्मादेव भाष्यवचनाल्लक्ष्यभेदोऽप्यस्तीति सुवचत्वात्। तथाहि—अततेर्डः, अः, 'अकारो वासुदेवः स्यात्' इति वचनाद्रूढिशब्दो वा। अनेन अशब्देन सह 'आङ्मर्यादाभिविध्योः ८७०' इति आङोऽव्ययीभावे सवर्णदीर्घे 'अव्ययीभावश्च ६०७' इति नपुंसकत्वाद्ध्रस्वत्वे सोरम्यामि पूर्वे च कृते आमिति रूपं भाष्यकृत्संमतम्। तथा इणो निष्ठायामितः, वेञस्तु

---

[1] **एकारोऽप्यनुवर्तेतेति** । 'एकयोगनिर्दिष्टानां सहैव प्रवृत्तिः सहैव निवृत्तिः' इति न्यायादिति शेषः । माद्ग्रहणे तु कृते मकाराव्यवहितोत्तरस्यैकारस्यासम्भवान्नानुवृत्तिरिति भावः ॥ [2] **शे इति** । 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषया 'सुपां सुलुक्-' इति विहितः शे इत्यादेश एव गृह्यत इति न काशे कुशे वंशे हरिशे बभ्रुश इत्यत्र दोष इति भावः ॥

(१६७) **ओत्** ।१।१।१५। ओदन्तो निपातः प्रगृह्यः स्यात्। अहो ईशाः॥(१६८) **संबुद्धौ शाकल्यस्येतावनार्षे**।१।१।१६। संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे। विष्णो इति। विष्ण इति। विष्णविति। अनार्ष इति किम्। ब्रह्मबन्धवित्यब्रवीत्॥ (१६९) **उञः** ।१।१।१७। उञ इतौ वा प्रागुक्तम्। उ इति। विति॥ (१७०) **ऊँ**।१।१।१८। उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात्। ऊँ इति॥ (१७१) **मय उञो वो वा** ।८।३।३३। मयः परस्य उञो वो वा स्यादचि। किमु उक्तम्। किम्वुक्तम्। वत्वस्यासिद्धत्वान्नानुस्वारः॥ ( १७२ ) **ईदूतौ च सप्तम्यर्थे** । १ । १ । १९ । सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात् । सोमो गौरी अधिश्रितः। मामकी तनू इति।

---

निष्ठायां संप्रसारणे उतः, 'अम् इतः एतः, अम् उतः ओतः' इत्यासमुद्रक्षितिवत्समासे रूपं च तत्संमतम्। तत्र पर्युदासपक्षे अमि पूर्वो गुणश्च न सिध्यति, अशब्दस्याङ्भिन्नत्वात्स्थानिवद्भावेन निपातत्वाच्च प्रगृह्यत्वात् । प्रसज्यप्रतिषेधाश्रये तु सिध्यति, तस्याङ्त्वेन प्रगृह्यत्वनिषेधात् । न चैतादृशप्रयोगोऽप्रामाणिक इति वक्तुं युक्तम्, प्रकृतभाष्यस्यैव प्रमाणत्वात्। अन्यथा हि भाष्यकारेङ्गितमात्रावलम्बनेन तत्र प्राचां ग्रन्थानामधिक्षेपाय भवतां प्रवृत्तयो व्याहन्येरन्नित्याद्याहुः। **आङ्वर्ज इति**। प्रतिषेधपक्षे तु प्रगृह्यः स्यादित्येतदुत्तरमिदं द्रष्टव्यम्। वर्ज्यत इति वर्जः। वृजेर्ण्यन्तात्कर्मणि घञ्। वर्जनीय इत्यर्थः। आङो न भवतीति यावत्॥ **आ एवमिति** । पूर्वप्रकान्तवाक्यार्थस्य अन्यथात्वद्योतकोऽयमाकारः, पूर्वमित्थं नामंस्थाः इदानीं त्वेवं मन्यस इत्यर्थः॥ **आ एवं किलेति** । स्मरणद्योतकोऽयमाकारः॥ **वाक्यस्मरणयोरित्यादि**। अत्रायमाशयः—'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' इति भाष्यस्याङित्लक्षण एव तात्पर्यं लाघवात्। अन्यस्य ङित्त्वं त्वर्थसिद्धम् । 'ईषदर्थे' इत्यादिस्त्वेकदेशानुवादः। एवं च अभ्रआँ अप इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्त्वात् 'आङोऽनुनासिकश्छन्दसि ५३७४' इति प्रवर्तत इति॥ (१६७) **ओत्**। निपात इति किम्, देवोऽसि वाय्वायाहि॥ (१६८) **संबुद्धौ**—। ऋषिर्वेदः 'तदुक्तमृषिणा' इत्यादौ तथा दर्शनादित्यभिप्रेत्याह—**अवैदिक इति**। संबुद्धौ किम्, अहो इति। अत्र परत्वाद्विकल्पो मा भूत्। न च 'ओत् १६७' इति सूत्रस्य निरवकाशत्वं शङ्क्यम्, अहो ईशा इत्यादौ तस्य सावकाशत्वात्। इताविति किम्, पटोऽत्र॥ ( १६९ ) **उञः** । 'निपात एकाच्-१६१' इति नित्यं प्राप्ते विभाषेयम्। शाकल्यस्येतो प्रगृह्यमिति चात्रानुवर्तते तदाह—**इतौ वा प्रागुक्तमिति**। इह 'उञ ऊँ' इत्येकमेव सूत्रं योगविभागेन व्याख्यातम्। एकसूत्रत्वे तु 'उञ इतौ ऊँ शाकल्यस्य' इत्यर्थात् 'ऊँ इति' इत्येव रूपं शाकल्यमते सिध्यति। अन्येषां तु मते नित्यं प्रगृह्य इति 'उ इति' इत्येव रूपं सिध्यति, वितीति रूपं तु न सिध्यत्येवेति ज्ञेयम्॥ (१७०) ऊँ॥ **अनुनासिक इति**। तेनास्मिन् परे 'यरोऽनुनासिके-१८०' इति विकल्पः। यदेतन्ँ इति पठसि यदेतद्ँ इति वा एतदर्थमेवात्रानुनासिकग्रहणम्। अन्यथा 'यरो ञम्यनुनासिको वा' इत्येवावक्ष्यत्। 'यरो ञमि ञम्वा' इत्येवावक्ष्यदित्युक्तौ तु यथासंख्यप्रवृत्त्या अम्मयं तन्नेत्यादिसिद्धावपि चिन्मयं एतन्मुरारिरिति न सिध्येत्। 'कृन्मेजन्तः' 'ङमुण्नित्यम्' इत्यादि निर्देशाश्रयणे तु प्रतिपत्तिगौरवम्। वस्तुतस्तु 'यरोऽनुनासिके ञम्वा' इत्येव सूत्रयितुं युक्तमित्याहुः॥ प्रगृह्यमित्यनुवर्तनादाह—**प्रगृह्यश्चेति**। ननु दीर्घोच्चारणसामर्थ्यादेव प्रकृतिभावसिद्धौ किमनेन प्रगृह्यत्वेनेति चेदत्राहुः—प्रगृह्याप्रगृह्ययोर्द्वयोरप्युञोरादेशापत्तौ प्रगृह्यादेशे प्रकृतिभावादिष्टसिद्धावपि अप्रगृह्यादेशस्यानुनासिको वकारः स्यात्तद्वारणाय प्रगृह्यत्वाश्रयणमिति। आदेशस्यास्य स्थानिवत्त्वेनोञत्वात् 'उञः १६९' इति प्रगृह्यत्वविकल्पे प्राप्ते नित्यार्थं तदाश्रयणमित्यन्ये॥ यदि तु प्रगृह्यमित्यस्य स्थानविशेषणत्वं स्वीकृत्य 'प्रगृह्यस्योञः ऊँ इत्ययमादेशः' इति व्याख्यायते, तदा दीर्घानुनासिकोक्तिवत्प्रगृह्यश्चेत्युक्तिरपि स्वरूपकथनमेवेति बोध्यम्। ॐ इत्यत्र यदि शाकल्यस्येति नापेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्ततश्च विति, ऊँ इति, एते द्वे रूपे स्याताम्, तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सिद्धे त्रीणि रूपाणि सिध्यन्तीति कैयटस्तदाह—**अयमादेशो वा स्यादिति**॥(१७१)**वत्वस्यासिद्धत्वादिति**। अत एवेदं वत्वं त्रिपाद्यां विधीयते, प्रकृतिभावमात्रबाधनार्थत्वे हि 'इको यण्-७४' इत्यनन्तरं 'मय उञो वा' इत्येवावक्ष्यत्, यणं चान्ववर्तयिष्यत्॥ (१७२) **ईदूतौ च**—। ईदूताविति किम्, 'प्रियः सूर्ये प्रियो अग्ना भवाति'। अग्निशब्दात्परस्याः सप्तम्याः 'सुपां सुलुक्-५४१३' इत्यादिना डा आदेशः। पदकारैः प्रगृह्येषु इतिशब्दप्रयोगस्य नियमितत्वेन इहापि पदकाले इतिशब्दप्रयोगप्रसङ्गः स चानिष्ट इति बोध्यम्। सप्तमीग्रहणं किम्, धीती। मती। सुष्टुती। धीत्या, मत्या, सुष्टुत्या, इति प्राप्ते तृतीयैकवचनस्य पूर्वसवर्ण ईकारः। ततः 'अकः सवर्णे दीर्घः १३६' इत्येकादेशः। न त्विह 'सुपां सुलुक्-५४१३' इति लुक्, ह्रस्वश्रवणापत्तेः॥ **सोमो गौरी इति**। वातप्रमी अत्र, ययी असक्त इत्याद्युदाहरणे सत्यप्यूकारान्तस्य लौकिकोदाहरणाभावाद् उभयोरपि वेद एवोदाहरणमुक्तम्॥ **मामकी तनू इति**। यद्यप्यत्र संहितायां प्रगृह्यप्रयोजनं

---

१ इदं दीक्षितानां बुद्धिविलसितम्। शाकल्योपज्ञातयोः प्रगृह्ययलोपयोः सामानाधिकरण्यासंभवात्॥ २ अस्योल्लेखः काशिकानुरोधेन। ३ **उञ इति**। नायं प्रत्याहारः। व्याख्यानात्। किन्तु निपात एव ञकारानुबन्ध इति बोध्यम्॥ ४ **नानुस्वार इति**। नापि प्रकृतिभावेन वारणशङ्का। अत एव 'ङमो ह्रस्वादचि-' इत्युत्तरम्-'इको यण्। मय उञो वा' इत्येवं सूत्रपाठो नाकारि॥ ५ **अन्यथात्वमिति** । अनभिमतत्वमित्यर्थः।

सुपां सुलुगिति सप्तम्या लुक्। अर्थग्रहणं किम्। वृत्तावर्थान्तरोपसंक्रान्ते मा भूत्। वाप्यामश्वो वाप्यश्वः॥ (१७३) अणोऽप्रगृह्यस्यानुनासिकः।८।४।५७। अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात्। दधिँ। दधि। अप्रगृह्यस्य किम्? अग्नी॥ इत्यच्सन्धिः॥

---

अथ हल्सन्धिः।

(१७४) स्तोः श्चुना श्चुः।८।४।४०। सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। हरिश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय॥ (१७५) शात्।८।४।४४। शात्परस्य तवर्गस्य श्चुत्वं न स्यात्। विश्नः। प्रश्नः॥

---

नास्ति, तथापि 'मामकी इति' 'तनू इति' पदकाले तदस्त्येव, 'स्वायां तनू ऋत्व्ये नाधमानाम्' इत्यत्र तु संहिताकालेऽप्यस्ति तथापि 'ऋत्यकः १५०' इति पाक्षिकप्रकृतिभावेनाप्येतत्सिद्धं छन्दसि रूपान्तरस्यापादयितुमशक्यत्वादिति बोध्यम्॥ **सप्तम्या लुगिति**। यदि धीत्यादाविव विभक्तेः पूर्वसवर्णे कृते सवर्णदीर्घ एकादेश इति व्याख्यायेत, तदा एकादेशं बाधित्वा परत्वादाङ्त्वाच्च 'आण्नद्याः ३७६' इत्याट् ङेराम् च स्यादिति भावः॥ **अर्थग्रहणं किमिति**। वाप्यश्व इत्यादावपि सप्तम्यर्थोऽस्त्येवेति नार्थोऽर्थग्रहणेनेति प्रश्नः॥ **अर्थान्तरोपसंक्रान्त इति**। वाप्यश्व इत्यत्र यो वापीशब्दः स तु वाप्यधिकरणकद्रव्ये उपसंक्रान्तः, 'सोमो गौरी' इत्यत्र गौरीशब्दस्तु सप्तम्यर्थमात्रे पर्यवसन्नः न तु तदधिकरणकद्रव्ये, वृत्त्यभावादिति भेदः॥ (१७३) **अणोऽप्रगृह्यस्य**—। अण इति किम्। कर्तृ हर्तृ॥ **अच्सन्धिरिति**। कुत्वं श्चुत्वं वाऽत्र न कृतं स्पष्टप्रतिपत्त्यर्थम्। अत एवानुस्वारस्याप्यच्त्वादित्यादिनिर्देशोऽप्युपपन्नः॥ इति तत्त्वबोधिन्यामच्सान्धिः॥

---

**अथ हल्सन्धिः॥ (१७४) स्तोः श्चुना श्चुः**। स्तोरिति समाहारद्वन्द्वः, सौत्रं पुंस्त्वम्। एवं श्चुः ष्टुरित्यपि बोध्यम्॥ **श्चुनेति**। 'सहयुक्ते–८१८' इति सूत्रे 'विनापि तद्योगं तृतीया' इति वक्ष्यमाणत्वात्तृतीया॥ **योगे इति**। एतदध्याहारलभ्यम्। अत्र स्थान्यादेशयोर्यथासङ्ख्यम्। निमित्तकार्यिणोस्तु न, 'शात् १७५' इति ज्ञापकात्। यथासङ्ख्यसूत्रमिह नोपन्यस्तम् 'स्थानेऽन्तरतमः ६२' इत्यनेनापि इष्टसिद्धेर्नात्यन्तावश्यकत्वात्॥ **हरिश्शेत इति**। 'वा शरि २२५' इति पाक्षिकत्वाद्विसर्जनीयस्य सस्तस्य शेन योगे शः। चवर्गयोगे रामश्चिनोति। तवर्गस्य तु चवर्गयोगे सच्चिदित्यादि। शेन योगे तु तच्शिव इत्याद्युदाहरिष्यति॥ (१७५) **शात्**। नेति तोरिति चानुवर्तते तदाह—**तवर्गस्येत्यादि**। जश्त्वमित्यादिव्याख्यातॄनिर्देशे निःसन्दिग्धत्वेन बोधनाय 'व्रश्च–४११' इति षत्वं जश्त्वं च न कृतं,तथा श्चुत्वमपि न कृतमिति परिहारसंभवाद्वर्गान्त्यमेवोदाहरति—**विश्नः। प्रश्न इति**। 'विच्छ गतौ' 'प्रच्छ ज्ञीप्सायाम्'। 'यजयाच–५०६३' इत्यादिना नङ्। 'च्छ्वोः शूड्–३३९४' इति छस्य शत्वम्, नङो ङित्त्वाद्गुणाभावः। 'प्रश्ने चासन्न–३७१२' इति निर्देशात्संप्रसारणाभावः॥ ननु ञमङणनानां नासिकास्थानाधिक्याद्वर्गेष्वाद्यैश्चतुर्भिः सह तुल्यस्थानत्वाभावेन सावर्ण्याभावात् 'स्तोः श्चुना–१७४' इति तुशब्देन नकारो न गृह्यते किंतु स्ववर्गाद्याश्चत्वार एवेति विश्नः प्रश्न इत्यत्र श्चुत्वाप्रसक्तेः किमनेन निषेधेनेति चेदत्राहुः—'शात् १७५' इति निषेधाल्लिङ्गादेव 'तुल्यास्यप्रयत्नम्–२०' इत्यत्रास्यग्रहणेन *नासिकास्थानभिन्नं ताल्वादिस्थानं गृह्यते*, तत्स्थानं तु तुल्यमेवेति तुशब्देन पञ्चमस्यापि ग्रहणात् श्चुत्वप्रसक्तौ निषेधोऽयमावश्यकः। एवं च–'तोर्लि १८२' इति तुशब्देन नकारस्यापि ग्रहणाद् विद्वाँल्लिखति इत्यादि सिध्यति। न च निमित्तकार्यिणोर्यथासङ्ख्यनिरासज्ञापकमित्युक्तत्वात्तेनैव चार्थवत्त्वे कथमुक्तार्थे ज्ञापकं भवेदिति वाच्यम्, तुशब्देन नकारग्रहणे सिद्धे हि यथासङ्ख्यनिवृत्तिरनेन ज्ञापनीयेत्युभयज्ञापने बाधकाभावात्। नापि 'तुल्यास्य–२०' इत्यत्र यत्किंचित्स्थानतुल्यत्वविवक्षायां वर्गेषु पञ्चापि वर्णाः परस्परं सवर्णा भवेयुरित्युक्तोदाहरणे श्चुत्वप्रसक्तौ 'शात् १७५' इत्यारम्भ आवश्यक इत्येतज्ज्ञापकाश्रयणं किमर्थमिति वाच्यम्। तथाहि सति ञमङणनानां परस्परसावर्ण्यापत्त्या त्वं नयसीत्यादौ 'अनुस्वारस्य यायि

---

१ **अर्थग्रहणं किमिति**। 'ईदूतौ सप्तमी' इत्येव सूत्रेऽपि यद्यपि 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति परिभाषया तदन्तविध्यभावे ईकारोकाररूपा सप्तमी इत्येवमर्थो लभ्यते, तथापि 'ईदूतौ सप्तमी प्रगृह्यम्। अदसः। एच द्विवचनम्' इत्येवं लघीयसा न्यासेन सिद्धे गुरुतरन्यासकरणसामर्थ्यात् ऊकारांशे सप्तमीरूपत्वासंभवाच्च तदन्तविधौ 'सप्तम्यन्तं यदीदूदन्तम्' इत्यर्थेन सकलेष्टसिद्धौ किमर्थग्रहणेनेति प्रश्नः॥ २ **वाप्यश्व इति**। अर्थग्रहणसामर्थ्यात् समभिव्याहृतान्तरपदार्थानन्वयित्वेनोपस्थितिविषयसप्तम्यर्थपर्यवसन्नस्यैव सप्तम्यन्तस्य ग्रहणं भवतीति वृत्तावुत्तरपदार्थान्वयित्वस्य सप्तम्यर्थे सत्त्वान्न तस्य ग्रहणमिति न दोष इति भावः॥ ३ **अणोऽप्रगृह्यस्येति**। अत्राण् प्रत्याहारः पूर्वणकारेणैवेति लण्सूत्रभाष्ये स्पष्टम्॥ ४ अचां सन्धिद्वयं समाप्तमित्यर्थः। एवं च 'अक्षु' 'अनेकाक्षु' इत्यत्र कुत्वकरणमपि भ्रममूलकमेव '**कुत्वं कस्मान्न भवति**' इति प्रश्नस्य '**भत्वात्**' इति समाधानोत्तरं जश्त्वानुपपत्तिसमाधानयोरिव कुत्वानुपपत्तिसमाधानयोरकरणात् 'कुत्वं कुत्रापि न भवति' इत्यत्रैव भाष्यकृतां दृढाभिनिवेशात्। इति दाधिमथाः॥ ५ **योग इति**। सत्यभामा भामेतिवत् पूर्वपदलोपेन संयोग इत्यर्थः। संयोगश्चानन्तरयोरेव हलोर्भवतीति न चितं कटुतैलमित्यादौ दोषः॥ ६ 'ऋत्यकः' इत्यनेन ह्रस्वस्यैव ह्रस्वसमुच्चितप्रकृतिभावस्यैव वा विधानेन प्रकृतोदाहरणे ह्रस्वादर्शनेन तत्प्रवृत्तिकल्पनं परां प्रतिभां दर्शयतीति बोध्यम्॥ ७ **यथासङ्ख्यमिति**। तथदधनेत्यादेरप्यनादितया तत्क्रममादाय 'परस्मैपदानां णल–' इत्यादौ सूत्रान्तरस्थक्रमेणेव यथासङ्ख्यमिति भावः। च्वादिशब्दैरपि अनादिसिद्धलोकप्रसिद्धक्रमेणैवोपस्थितिरिति तात्पर्यम्॥ ८ **स्थानेऽन्तरतम इत्यनेनापीति**। प्रथमत्वादिनाऽऽन्तर्ये तु यथासङ्ख्य एव पर्यवसानम्। तस्माद्बाह्यप्रयत्नकृतमान्तर्यं ग्राह्यम्। तत्रापि तृतीयपञ्चमयोर्भेदकं त्वानुनासिक्यमेव ग्राह्यम्। अत एव 'आनुनासिक्यमेषामधिको गुणः' इत्युक्तम्। गुणपदेन च सावर्ण्यानुपयोगिन आन्तरतम्यपरीक्षोपयोगिनो विवारादय उच्यन्ते॥

( १७६ ) सू ष्टुना ष्टुः ।८।४।४१। स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥ (१७७) सू न पदान्ताट्टोरनाम् ।८।४।४२। अनामिति लुप्तषष्ठीकं पदम् । पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते।पदान्तात्किम्? ईट्टे। 'टोः किम्? सर्पिष्टमम्॥ (१७८) वा अनाम्नवतिनगरीणामिति वाच्यम्।षण्णाम्। षण्णवतिः।षण्णगर्यः॥(१७९) सू तोः षि ।८।४।४३। तवर्गस्य षकारे परे न ष्टुत्वम्। सन्षष्ठः॥ १३५ सू झलां जशोऽन्ते।८।२।३९।वागीशः॥चिद्रूपम् ॥(१८०) सू यरोऽनुनासिकेऽनुनासिको वा।८।४।४५।यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारिः।एतद्मुरारिः । स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते । चतुर्मुखः ।

---

परसवर्णः १९०' 'वा पदान्तस्य १९१' इत्यनुस्वारस्य ञादयोऽपि स्युः। ताल्वादिस्थानसाम्याभावेऽपि नासिकारूपस्य यत्किंचित्स्थानस्य तुल्यत्वात् । नापि तुल्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां ञादीनां परस्परसावर्ण्यं न भवेत्, तेषां नासिकास्थानसाम्येऽपि ताल्वादिस्थानसाम्याभावेन न्यूनस्थानकत्वात् । ततश्च त्वं नयसीत्यादिषु नातिप्रसङ्गः, स्ववर्गाद्यैः सह तु ञादीनां सावर्ण्यं स्यादेव । नासिकास्थानाधिक्येऽपि तदन्यूनस्थानकत्वात्तेषामिति विद्वाँल्लिखतीत्यादीष्टं सिध्यति, वर्गाद्यानां तु नासिकास्थानाभावे न्यूनस्थानकत्वात्पञ्चमेन च सावर्ण्याभावेऽपि न क्षतिरिति ज्ञापकाश्रयणं विनैवेष्टसिद्धिरिति वाच्यम् । हे गौरि एहीत्यादौ सवर्णदीर्घापत्तेः, 'इकोऽसवर्णे-१४७' इति शाकलप्रकृतिभावानापत्तेश्च । इकारान्न्यूनस्थानकत्वेन तत्सवर्णत्वादेकारस्य । 'स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥' इति वचनात्प्रयत्नभेदेन सावर्ण्याभावमभ्युपगम्योक्तानिष्टवारणेऽपि तद्वस्तु, तद्व्लमित्यत्र 'तोर्लि १८२' इति परसवर्णविधिना दकारस्य वकारापत्तेः । वकारस्य ओष्ठस्थानाधिक्येऽपि दन्तस्थानसाम्येन लकारान्न्यूनस्थानकत्वात् । यदि तु 'वकारस्य दन्तोष्ठम्' इति समाहारनिर्देशात् ओष्ठस्थानदन्तस्थानभिन्नमेव दन्तोष्ठस्थानमिति वकारस्य लकारसावर्ण्याभावात्तद्वस्त्वित्यादौ नातिप्रसङ्ग इति ब्रूषे, तर्हि 'लुग्वा दुह-३१५८' इत्यादिना दन्त्ये तङि विधीयमानो यः क्सस्य लुक् अदुग्ध्वहीत्यत्र न स्यात् , किंतु अदुग्धेत्यादावेव स्यात् । तथापि पूर्तः, पिपुरतीत्यादौ विधीयमानम् 'उदोष्ठ्यपूर्वस्य ३३१२' इत्युत्वं सुस्वूर्षतीत्यादौ न स्यादुक्तरीत्या वकारस्यौष्ठ्यत्वाभावात् । न च वस्यौष्ठ्यत्वे दन्त्यत्वे च सति 'सेक्सृप्-३०३०' इति षोपदेशलक्षणे स्विदादीनां पृथग्ग्रहणं व्यर्थं स्यात् तेषामपि दन्त्यान्तसादित्वादिति भ्रमितव्यम्, 'दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि' इत्यादेर्मूल एव वक्ष्यमाणत्वात् ॥ ये तु-पाणिनिशिक्षायां यमानुस्वारयोरेव नासिकास्थानत्वकथनादन्येषां स्थानं नासिका न भवति किंत्वनुनासिकत्वं गुण एव,नासिकाव्यापारेणोच्चार्यमाणत्वमात्रेण नासिकास्थानत्वकथने त्वकारादीनामप्युक्तरीत्या नासिका स्थानमिति स्थाननिरूपणे तेषां तदकथनान्न्यूनतेत्यादि वदन्ति, तेषामत्रोक्तज्ञापकाश्रयणं विनैवेष्टसिद्धिः ॥ अन्ये त्वकारादीनां नासिकया सर्वदाऽनुच्चारणादनुनासिकत्वं गुणः'सत्त्वे निविशतेऽपैति-'इत्यादिलक्षणलक्षितत्वात् । ञमङणनानां त्वनुनासिकत्वं नापैति सर्वदैव उच्चारणादिति न गुणः, किंतु यमानुस्वारयोरिव स्थानमेव नासिकेति स्थाननिरूपणे ञमङणनानां नासिका चेत्युक्तं न त्वकारादीनां नासिका चेति ॥ यत्तूक्तं तुल्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां तद्वास्त्वित्यादौ 'तोर्लि १८२' इति दकारस्य वकारप्रसङ्ग इति। तदापाततः, 'तोर्लि १८२' इत्यत्र लकारद्वयनिर्देश इति स्वीकृत्य लकाररूपे लकारे परे परसवर्ण इति व्याख्यायामुक्तदोषाप्रसक्तेरित्याहुः॥(१७६)ष्टुना ष्टुः। इहापि कार्यिनिमित्तयोर्यथासंख्यं न, 'तोः षि १७९' इति ज्ञापकात् ॥ ( १७७ ) सर्पिष्टमामिति । 'ह्रस्वात्तादौ तद्धिते १८६६' इति षत्वम् ॥( १८० ) यरो-। पदान्तस्येति किम्, वेद्मि। स्तघ्नाति ॥ स्पर्शे चरितार्थ इति। प्रसिद्धप्रयोगाभिप्रायेणेदमुक्तम् । कमल् मुरारिः, वृक्षव् नेता इत्यादौ लकारवकारयोरनुनासिकप्रवृत्तौ बाधकाभावात् । 'स्पर्शस्यैवेष्यते' इति प्राचो ग्रन्थानुरोधेन स्पर्शभिन्नेषु अनुनासिकविधिर्न प्रवर्तते, अनभिधानादिति वा योज्यम् ॥ रेफे न प्रवर्तत इति । यद्यपि 'व्यक्तिः पदार्थः'

---

१ टोः किमिति । ष्टुपदानुवृत्तावपि पदान्ते षकारस्यापि जश्त्वेन डकार एव लप्स्यत इत्यभिप्रायेण प्रश्नः॥ २ सर्पिष्टममिति । अत्रत्यस्य 'ह्रस्वात्तादौ-' इति विहितषकारस्यासिद्धत्वेन जश्त्वासंभवेन षकार एव श्रूयते इति तद्व्यावृत्त्यर्थं टोऽग्रहणमावश्यकमिति भावः ॥ ३ स्थानप्रयत्नाभ्यामिति । 'स्थानेऽन्तरतमः' इति प्रथमान्तपाठपक्षे आदेशनियमोपपत्तये प्रतिस्थानिलक्षणोपप्लवाङ्गीकारेण 'पदान्तस्य रेफस्यानुनासिको भवति' इत्यत्र लक्षणस्याचारितार्थ्येन णकारोऽनुनासिकः प्राप्नोतीति तद्वारणाय 'स्थानेऽन्तरतम उरण् रपरः' इति संहितायाः 'स्थानेऽन्तरतमे' इति सप्तम्यन्तच्छेदाङ्गीकारेण प्रकृतिनियमोपपत्तये प्रत्यादेशं लक्षणोपप्लवाङ्गीकारेण 'णकारः पदान्तस्य यरः स्थाने' इत्यस्य लक्षणस्य स्थानप्रयत्नाभ्यां सदृशतमे स्पर्शे चरितार्थस्य केवलस्थानसदृशे रेफे न प्रवृत्तिरित्यभिप्रायः । यद्यपीत्थमापत्तिपरिहारौ 'कमल् मुरारिः, वृक्षव् नेता' इत्यादावपि संभवतः, तथापि तादृशां प्रयोगाणां कष्टसाध्यत्वेनानभिव्यक्तत्वादभिव्यक्ततरे सुप्रसिद्धे चतुर्मुखशब्दे एवाभिहितौ । तादृशप्रयोगाणामभिधाने तूपलक्षणमेतत् ॥ प्राञ्चस्तु व्यक्तिपक्षेण शङ्का, जातिपक्षेण समाधानमिति वदन्ति । तत्तु नैव सतां मनोरमम् । 'न ब्राह्मणं हन्यात्' इति लक्षणस्य व्यक्तिपक्ष एव प्रतिब्राह्मणविषयता न जातिपक्षे इत्यत्र मानाभावात् वैपरीत्यलाभाच्च । यदि तु जातिपक्षे जात्याश्रयसकलव्यक्तीनां स्वत एव विषयत्वम्,अतस्तदेकवाक्यतायै फलैक्याय च व्यक्तिपक्ष एव प्रतिलक्ष्यं लक्षणोपप्लवाङ्गीकार इति विभाव्यते तर्हि पक्षद्वयेऽपि फलभेदाभावादस्मदुक्तरीतिरेवानुसरणीयेति दिक्। यदि तु सप्तम्यन्तपदच्छेदस्य सुद्ध्युपास्य इत्याद्यसिद्ध्यापत्त्या दूषितत्वेन प्रथमान्तपदच्छेदस्यावश्यकत्वे दुष्परिहरैवोक्ताऽऽपत्तिरित्युच्यते, तदा प्रकृतसूत्रे सवर्णपदापकर्षणापत्तिः सुपरिहरैव ॥ 'रेफोष्मणां सवर्णा न सन्ति' इति भाष्योक्तेः ॥ ननु 'नेमौ रहौ कार्यिणौ द्विर्वचनस्य' इति भाष्यात् 'अचो रहाभ्याम्' इति द्वित्वप्रकरणे यर्पदे रेफभिन्नग्राहकत्वस्यैव निर्णीतत्वेन तत्रानुवर्तनीयस्य यर्पदस्यानुनासिकविधावपि तादृशस्यैव—

(१८१) (वा॰) **प्रत्यये भाषायां नित्यम्** ॥ तन्मात्रम् । चिन्मयम् । कथं तर्हि मदोदग्राः ककुद्मन्त इति । यवादिगणे दकारनिपातनात् ॥ (१८२) (सू॰) **तोर्लि** ।८।४।६०। तवर्गस्य लकारे परे परसवर्णः स्यात् ।तल्लयः।विद्वाँल्लिखति। नकारस्याऽनुनासिको लकारः॥ (१८३) (सू॰) **उदः स्थास्तम्भोः पूर्वस्य** ।८।४।६१।उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्। आदेः [१]परस्य । उत्थानम् । उत्तम्भनम् । अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकारः। तस्य झरो झरीति पाक्षिको लोपः । लोपाभावपक्षे तु थकारस्यैव [१]श्रवणं न तु खरि चेति चर्त्वम् । चर्त्वं प्रति थकारस्याऽसिद्धत्वात् ॥ (१८४) (सू॰) **झयो होऽन्यतरस्याम्** ।८।४।६२।झयः परस्य हस्य पूर्वसवर्णो वा स्यात्। घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः । वाग्घरिः । वाग्हरिः ॥ (१८५) **शश्छोऽटि** ।८।४।६३। पदान्ताज्झयः परस्य शस्य छो वा स्यादटि । दस्य [१०४]श्चुत्वेन जकारे कृते ॥ (१८६) (सू॰) **खरि च** ।८।४।५५।खरि परे झलां चरः स्युः । इति जकारस्य चकारः।तच्छिवः।तच्शिवः॥ (१८७) (वा॰) **छत्वममीति वाच्यम्** ।तच्छ्लोकेन ।तच्श्लोकेन । अमि किम् । वाक्श्च्योतति॥ (१८८) (सू॰) **मोऽनुस्वारः** ।८।३।२३। मान्तस्य पदस्यानुस्वारः स्याद्धलि । अलोऽन्त्यस्य[६६]।हरिं वन्दे।पदस्येति किम्।गम्यते॥ (१८९) (सू॰) **नश्चापदान्तस्य झलि** ।८।३।२४।नस्य मस्य चापदान्तस्य झल्यनुस्वारः स्यात्। यशांसि । आक्रंस्यते। झलि किम् । मन्यते ॥ (१९०) (सू॰) **अनुस्वारस्य ययि परसवर्णः** ।८।४।५८। स्पष्टम् । अङ्कितः।अञ्चितः । कुण्ठितः ।शान्तः।

---

इति पक्षे लक्ष्यभेदे लक्षणभेदादस्यां व्यक्तौ लक्षणस्याचरितार्थत्वाद्रेफेऽपि प्रवृत्तिर्दुर्वारैव, तथापि लक्ष्यानुरोधेन जातिपक्षमाश्रित्येदमुक्तम् ॥ **दकारनिपातनादिति** । ननु यवादिगणे ककुदित्येव पठ्यते, न तु ककुद्मन्त इति मतुब्विशिष्टम् । तथा च यरोऽनुनासिको दुर्वारः । न च यरोऽनुनासिकप्रवृत्तौ झयन्तत्वाभावेन 'झयः २५६३' इति मतुपो मकारस्य वत्वाप्रसक्त्या यवादिगणे ककुदिति पाठो निरर्थकः स्यादिति वाच्यम्, अनुनासिकविधेरसिद्धत्वेन झयन्तत्वानपायाद्गणे तत्पाठस्य सार्थक्यादिति चेदत्राहुः—यद्यत्र ककुद्दकारस्य नकार इष्टः स्यात्तर्हि गणे ककुनित्येव पठेन्न तु ककुदिति । मतुपः प्रकृतिभूतककुच्छब्दस्य नान्तत्व निपातनेऽपि अन्यत्र दकारान्तप्रयोगस्य निर्बाधत्वात्तस्माद्यरोऽनुनासिकोऽत्र न प्रवर्तते इति ॥ अन्ये त्वाहुः—'यचि भन्तसौ मत्वर्थे' इति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम्, तसाविति द्विवचननिर्देशस्तु दतयोः समाहारद्वन्द्वं कृत्वा इतरेतरयोगद्वन्द्वे कृते समुपपद्यते [३]इति ॥ ( १८३ ) **उदः स्था-** 'अनुस्वारस्य ययि-१९०' इत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते, एकदेशे स्वरितत्वप्रतिज्ञानादित्याभिप्रेत्याह—**पूर्वसवर्णः स्यादिति** ॥ ( १८५ ) **शश्छोऽटि** । इह पदान्तादित्यनुवर्त्य पदान्ताज्झय इति व्याख्येयम्, तेनेह न, 'मध्वश्चोतन्त्यभितो विरप्शम्' विपूर्वाद्रपेरौणादिकः शः ॥ (१८७) **छत्वममीति** । 'शश्छोऽटि१८५' इति सूत्रं 'शश्छोऽमि' इति पठनीयमित्यर्थः ॥ **तच्छ्लोकेनेति** । तच्छ्मश्रुणेत्याद्यप्युदाहर्तव्यम् ॥ ( १८८ ) **मोऽनु-** । 'हलि सर्वेषाम् २५२' इत्यतो हलीत्यनुवर्तते 'पदस्य ५३९' इति च तदाह—**मान्तस्येत्यादि** ॥ हलि किम्, त्वमत्र । किमत्र ॥ ( १८९ ) **नश्चापदान्तस्य—** । अपदान्तस्य किम्, राजन् पाहि ॥ **आक्रंस्यत इति** । 'आङ उद्गमने ३६३३' इति तङ्। 'स्नुक्रमोः-३१०३' इति नेट् ॥ ( १९० ) **अनुस्वारस्य—** । अत्र ययीति स्पष्टार्थम्, अचि परे अनुस्वाराभावात् । शलि तु परसवर्णोऽनुस्वारान्तरतमो न सम्भवतीति कुण्डं रथेनेत्यत्रैव दंशनामित्यादावपि परसवर्णविध्यप्रवृत्तेः । अत्र वदन्ति-ईषद्विवृतमूष्मणां, विवृतं स्वराणामिति भाष्यमते ययीत्यस्यापार्थकत्वम् । सूत्रकारमते तदावश्यकमेव । अन्यथा दंशनमित्यादावनुस्वारान्तरतमः परसवर्णोऽनुनासिक ईकारः स्यात् । ईकारशकारयोस्तन्मते सावर्ण्यस्य सत्त्वात् । तथा कुण्डं शेते इत्यादावनुस्वारस्य 'वा पदान्तस्य १९१' इति स्यादिति ॥ **अङ्कित इति** । 'अङ्क पदे लक्षणे च' इति चुरादिण्यन्तात् क्तः । 'निष्ठायां सेटि ४०७२' इति णिलोपः । परसवर्णेन ङः । 'अकि लक्षणे' इत्यस्माद्वा क्तः ।

---

-ग्रहणेनापि चतुर्मुख इत्यादावनुनासिकवारणं संभवति-इति चेत्—उपायस्योपायान्तरादूषकत्वमित्यत्र स्वसंमतिप्रदर्शनाय सवर्णपदापकर्षणं भाष्यकृता ध्वनितम् ॥ यद्वा द्वित्वविधौ साक्षाच्छ्रुतेन रेफगतनिमित्तत्वेन यरन्तर्गतत्वानुमितरेफनिष्ठद्वित्वस्थानित्वस्य बाधेनैव तत्रोपपत्तौ प्रकृते तथाऽभावेन दृष्टान्तवैषम्यान्न तस्यानुनासिकवारणोपायत्वमिति सवर्णपदापकर्षणमेव वरमिति दिग् ॥ [४] **न स्यादिति**-इदं च वकारस्य दन्त्यत्वमभिप्रेत्य। वस्तुतस्तु '**उवोपोपध्मा ओष्ठे**' '११७०' इति शुक्लयजुःप्रातिशाख्यसंमतं केवलोष्ठ्यत्वमाश्रितवतां न **पदान्तसूत्रस्थ "कसलोपः सलोपे"** इति वार्तिकभाष्यकृतां मते तु न भवत्येवात्र लुगित्यग्रे वक्ष्यामः इति सर्वोऽप्ययं विचारः काकदन्तगणनावन्निष्फल एवेति दिक् ॥

---

[१] **थकारस्यैव श्रवणमिति**—इदं काशिकानुसारिसूत्रपाठानुरोधेन । परं त्विदमसङ्गतम्, चर्त्वं प्रति थकारस्यासिद्धत्वेन चर्त्वाप्राप्तौ प्रकृतसूत्रस्थ 'उदः पूर्वत्वे स्कन्दे रोगे च' इति वार्तिकस्योदाहरणे उत्कन्दो रोगः इत्यत्रापि थकारश्रवणलेखनापत्तेः । तस्माद्भाष्यसम्मताष्टाध्यायीपाठे थकारस्यासिद्धत्वाभावे चर्त्वेन तकारद्वयमुपलक्ष्यते । लोपस्य तु सम्भावनैव न, सवर्णझर्परत्वाभावात् ॥ [२] **हस्य पूर्वसवर्ण इति**—'उदः स्थास्तम्भोः-' इत्यतः सवर्णपदान्वितं पूर्वस्येति पदमनुवर्तत इति भावः ॥ [३] नित्यपदस्य प्रायःसमानार्थकत्वं स्वीकुर्वतां दाधिमथानां सिद्धान्ते तु कुत्रापि दोषाभावेन नैव दकारप्रश्लेषावश्यकता नापि निपातनकल्पनावश्यकतेति तत्त्वम् ॥ [४] भाष्यमतैक्याय प्रत्याहारसूत्रेषु जातिपक्षाङ्गीकारे 'नाज्झलौ' इत्यत्रापि दीर्घादीनामच्पदेन ग्रहणात्सवर्णसंज्ञानिषेधे सूत्रमतेऽपि न तस्यावश्यकत्वमिति तत्त्वम् ॥

गुम्फितः । कुर्वन्तीत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम् ॥ (१९१) (सू) वा पदान्तस्य ।८।४।५९। पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि । त्वं करोषि । सँय्यन्ता । संयन्ता । सँव्वत्सरः । संवत्सरः । यँल्लोकम् । यं लोकम् । अत्रानुस्वारस्य पक्षेऽनुनासिका यवलाः ॥ (१९२) (सू) मो राजि समः क्वौ ।८।३।२५। क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥ (१९३) (सू) हे मपरे वा ।८।३।२६। मपरे हकारे परे मस्य म एव स्याद्वा । ह्मल ह्मल चलने । किम् ह्मलयति । किं ह्मलयति ॥ (१९४) (वा) यवलपरे यवला वेति वक्तव्यम् ॥ (१९५) (सू) यथासंख्यमनुदेशः समानाम् ।१।३।१०। समसम्बन्धी विधिर्यथासंख्यं स्यात् । किँय्ँ ह्यः । किं ह्यः । किव्ँ ह्वलयति । किं ह्वलयति । किल्ँ ह्लादयति । किं ह्लादयति ॥ (१९६) (सू) नपरे नः ।८।३।२७। नपरे हकारे मस्य नः स्याद्वा । किन्ह्नुते । किं ह्नुते ॥ (१९७) (सू) ङ्णोः कुक्टुक् शरि ।८।३।२८। ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । कुक्टुकोरसिद्धत्वाज्जश्त्वं न ॥ (१९८) (वा) चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् ॥ प्राङ्ख् षष्ठः । प्राङ्क्षष्ठः । प्राङ् षष्ठः । सुगण्ठ् षष्ठः । सुगण्ट् षष्ठः । सुगण् षष्ठः ॥ (१९९) (सू) डः सि धुट् ।८।३।२९। डात्परस्य सस्य धुड्वा स्यात् । षट्त्सन्तः । षट्सन्तः ॥ (२००) (सू) नश्च । ८ । ३ । ३० । नकारान्तात्सस्य

---

नुमोऽनुस्वारे परसवर्णेन ङः ॥ अञ्चित इति । 'अञ्चेः पूजायाम् ४०६०' इति निष्ठायामिट् । 'नाञ्चेः-५६८' इति नलोपनिषेधः ॥ कुण्ठित इति । 'कुठि प्रतिघाते' क्तः । नुमोऽनुस्वारे परसवर्णेन णः ॥ शान्त इति । 'शम उपशमे' क्तः । 'वा दान्तशान्त-४०८३' इति निपातनादिडभावः । 'अनुनासिकस्य क्वि-३५४५' इति दीर्घः । मस्यानुस्वारे परसवर्णेन नकारः ॥ गुम्फित इति । 'गुम्फ ग्रन्थे' क्तः । मस्यानुस्वारे परसवर्णेन मः ॥ (१९२) मो राजि समः क्वौ । राजीति किम्, सम्पत् । सम इति किम्, इदं राट् । क्वाविति किम्, संराजितुम्, संराजितव्यम् । मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थं, तदाह—म एव स्यादिति सम्राडिति । 'राजृ दीप्तौ' । सम्पूर्वादस्मात् 'सत्सूद्विष-३९७४' इत्यादिना क्विप् । 'व्रश्च-४११' आदिना षत्वं 'जश्त्वचर्त्वे ॥ (१९३) हे मपरे वा । मपर इति बहुव्रीहिः ॥ (१९४) यवलेति । यवला परा यस्मात्स यवलपरस्तस्मिन्हकारे परे मस्य यवला भवन्तीत्यर्थः ॥ (१९५) यथासंख्यमनुदेशः-। अनुदिश्यत इति अनुदेशः । पश्चादुच्चार्यत इत्यर्थः । समानामिति सम्बन्धे षष्ठी । तदाह—समसम्बन्धी विधिरिति । समकर्मकं विधानमिति तु नोक्तम्, तथाहि सति यत्रोद्देशिषु समेषु समानां विधानं पाघ्रादिषु पिबादीनां, प्रियस्थिरादिषु च प्रस्थादीनां तत्रैव यथाक्रमं प्रवृत्तिः स्यात् । इष्यते तु अनुवाद्ययोरपि यथासंख्यत्वम् । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः ५१७९' इत्यत्र यथा । समानामिति किम्, 'लक्षणेत्थंभूता-८०५' इत्यत्र लक्षणादयश्चत्वारोऽर्थाः प्रत्यादयस्तु त्रयः, तत्र सर्वेषां सर्वत्र कर्मप्रवचनीयसंज्ञा यथा स्यात् ॥ (१९६) नपरे-। अयमपि बहुव्रीहिरेव । हे इति तु अनुवर्तते तदाह—नपरे हकारे इति ॥ (१९७) ङ्णोः—। (१९८) चयो द्वितीया इति । एतच्च 'नादिन्याक्रोशे-' इति सूत्रे भाष्ये स्थितम् । अत एव मनोरमायां 'डः सि-१९९' इति सूत्रे तु डित्युच्यमाने 'चयो द्वितीयाः-१९८' इति पक्षे थकारापत्तिरुक्ता । यदि तु 'ङ्णोः-१९७' इति सूत्रस्थं स्यात्, तर्हि तुडित्येव सुवचं स्यात् । तुटोऽसिद्धत्वेन 'चयो द्वितीयाः-१९८' इत्यस्याप्रवृत्तेः ॥ पौष्करसादेरिति । पुष्करे तीर्थविशेषे सीदतीति पुष्करसत् । तस्यापत्यं पौष्करसादिराचार्यः । बाह्वादित्वादिञ् । अनुशतिकादित्वादुभयपदवृद्धिः ॥ (१९९) डः सि धुट् । उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वादित्यभिप्रेत्याह—सस्येति । सीति सप्तमीनिर्देशस्तु लाघवार्थः ॥ षट्त्सन्त इति । धुटश्चर्त्वेन तकारः । 'चयो द्वितीयाः-१९८' इति तस्य थो न, चर्त्वस्यासिद्धत्वात् । अत एव धुडभावे षट् सन्त इत्यत्र टस्य ठो न भवति ॥ नन्वेवमपि 'डः सि धुग् १९९' इति धुग्विधीयतां डकारस्य सकारे परे धुगिति व्याख्यानसम्भवात् किमनेन धुटः परादित्वाभ्युपगमेन । मैवम्, पूर्वान्तत्वे तु 'न पदान्ताट्टोरनाम् १७७' इति निषेधाप्रवृत्त्या धकारस्य ष्टुत्वप्रसङ्गात् । अत एव वक्ष्यमाणस्तुगिहैव न कृतः । डस्य तुकि ष्टुत्वे तस्यासिद्धत्वेन 'चयो द्वितीयाः-१९८' इत्यस्यापि प्रसङ्गाच्च । इह धुड्विकल्पेन रूपद्वये सति टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश रूपाणि । 'खयः शरः २१०' इति द्वित्वे द्वात्रिंशत् । 'शरोऽचि ४६४' इति निषेधोऽत्र न प्रवर्तते तस्य सौत्रद्वित्वमात्रविषयत्वस्योक्तत्वात् । न च चर्त्वस्यासिद्धत्वात् खयः परत्वमेव नास्तीति शङ्क्यम्,

---

१ मो राजीति । यद्यपि 'न राजि-' इत्येवं न्यासेऽपि सिध्यत्यनुस्वारनिषेधात्, तथापि 'हे मपरे वा' इत्येतदर्थं मकारविधानम् । तत्रापि नेत्यनुवृत्तौ 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायेन 'मो नो धातोः' इति विहितनकारादेशस्य निषेधो न स्यात्, किं त्वनन्तरोक्तस्यानुस्वारस्यैवेति प्रशाम् ह्मलयति इत्यत्र नकारादेशापत्तिः स्यादिति भावः ॥ २ समेति । साम्यं च संख्याकृतमेव, यथासंख्यमित्युक्तेः । तच्च प्रायः शब्दकृतमेव । अत एव ' स्यतासी लृलुटोः ' इत्यादिषु न दोषः 'एचोऽयवायावः' इत्यादौ त्वर्थकृतसाम्याङ्गीकारात्-अन्तरतमपरिभाषया वा न दोषः ॥ ३ किय्ँह्य इति । यवलानामनुनासिकाननुनासिकभेदेन द्विविधानामपि प्राप्तौ मकारस्यानुनासिकत्वेन तादृशा एव यवला भवन्तीति पदमञ्जरी । परं त्विदमसम्मतम् । 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषयाऽनुनासिकानां विधीयमानग्राह्यत्वाभावादप्रसङ्गे कथमान्तरतम्येनानुनासिकविधानम् । ४ 'मस्य' इति त्वपपाठः 'नकारजावनुस्वारपञ्चमौ' इत्यभियुक्तोक्तेः । तस्मात् 'नस्य' इत्येव पठनीयम् ॥

धुड्वा । सन्त्सः । सन्सः । ( २०१ ) शि तुक् । ८ । ३ । ३१ । नस्य पदान्तस्य शे परे तुग्वा स्यात् । शश्छोऽटीति छत्वविकल्पः । पक्षे झरो झरीति चलोपः । सञ्छंभुः । सञ्च्छंभुः । सञ्च् शंभुः । सञ् शम्भुः । ञछौ ञचछा ञचशा ञशाविति चतुष्टयम् । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥

( २०२ ) ङमो ह्रस्वादचि ङमुण्नित्यम् । ८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याऽचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ॥ ( २०३ ) समः सुटि । ८।३।५। समो रुः स्यात् सुटि । अलोऽन्त्यस्य ॥ ( २०४ ) अत्रानुनासिकः पूर्वस्य तु वा । ८।३।२। अत्र रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात् ॥

---

'पूर्वत्रासिद्धीयमद्वित्वे ३२५७'इत्युक्तेः॥(२०१) शि तुक् । शीति सप्तमी पूर्वत्र कृतार्थाया न इति पञ्चम्याः षष्ठीं कल्पयतीत्याह-नस्येति ॥ चलोप इति । 'झरो झरि-१०६' इत्यत्र सवर्णग्रहणसामर्थ्याद्यथासंख्यं न प्रवर्तते इति भावः॥सञ्छंभुरिति । इह श्चुत्वतुकोरसिद्धत्वमाश्रित्य 'नश्छवि-२१३' इति रुत्वं नाशङ्क्यं, छत्वस्यासिद्धत्वात् ॥ चतुष्टयमिति । अत्र तुकः श्चुत्वे 'चयो द्वितीयाः-१९८' इति पक्षे चस्य छत्वे शस्यापि छत्वविकल्पात् सञ्छ्छंभुः सञ्छ्शंभुरिति रूपद्वयवृद्धिर्बोध्या ॥ न च शस्य छत्वपक्षे शर्परत्वाभावात् 'चयो द्वितीयाः १९८' इति पक्षे चस्य छो नेति शङ्क्यम्,'शश्छोऽटि १८५' इति छत्वस्यासिद्धत्वादित्याहुः ॥ (२०२) ङमो ह्रस्वात्-। ङम् प्रत्याहारः, संज्ञायां च कृतं टित्त्वं सामर्थ्यात्संज्ञिभिः संबध्यते। तेन यथासंख्यं ङुट्-णुट्-नुटः प्रवर्तन्ते । नित्यग्रहणं विस्पष्टार्थम्, 'हे मपरे-१९३' इति 'मय उञो वो वा १७१' इति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभात् । नन्विह नित्यग्रहणाभावे 'हे मपरे वा १९३' इति वाग्रहणमुत्तरसूत्रेषु पञ्चस्वप्यनुवर्तते वा नवेति शङ्का स्यादिति चेत्सत्यम्, अत एव विस्पष्टार्थमित्युक्तं न तु व्यर्थमिति ॥ तस्मात्परस्याच इति । ननु ङम इत्यस्य षष्ठ्यन्ततामाश्रित्याचि परे पूर्वस्यैव विधीयतां को दोष इति चेत् । मैवम्, तथाहि सति ङमन्तस्य पदस्य पूर्वावयवः स्यादित्यनिष्टं प्रसज्येत । पदस्य यो ङम् तस्येति वैयधिकरण्येन व्याख्यायामपि कुर्वन्नास्ते इत्यत्र णत्वं प्रसज्येत, 'पदान्तस्य २८३' इति निषेधस्याप्रवृत्तेः। यद्यपि बहिरङ्गपरिभाषया ङमुड्विधेरसिद्धत्वादिष्टं सिध्यति, तथापि यथोद्देशपक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेः प्रसज्यत एव णत्वमिति यथोक्तव्याख्यानमेव साध्विति दिक् ॥ सुगण्णीश इति । ण्यल्लोपौ न स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात् । ननु परमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न,'उत्तरपदत्वे चापदादिविधौ ५९३' इति प्रत्ययलक्षणप्रतिषेधात् । अत एव परमवाचौ, परमगोदुहौ, परमलिहावित्यादौ कुत्वघत्वभत्वादीनि न । प्राचा तु-'उञि च पदे २५०' इत्यतः पदे इत्यनुवर्त्य अजादेः पदस्येति व्याख्यानान्ङमुण्नेत्युक्तं, तदनेन प्रत्युक्तम् । इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात् ॥ ( २०३ ) समः सुटि । यद्यपि मोऽनुस्वारेण सिद्धं तथापि अनुनासिकत्रिसकारसिद्ध्यर्थमिदम् ॥ ( २०४ ) अत्रानुनासिकः-। अयमधिकारो विधिर्वेति पक्षद्वयम् । आद्ये अत्रग्रहणमनर्थकम्, अधिकारादेव रुप्रकरणलाभात् । तुशब्दस्तु-अधिकारपक्षे परस्मात्कार्यिणः पूर्वकार्यस्य विशेषद्योतनार्थः-परस्य नित्यं रुत्वं पूर्वस्य तु वाऽनुनासिक इति । विधिपक्षे ( तुशब्दः ) व्यर्थः वाग्रहणं स्पष्टार्थम्, 'अनुनासिकात्परः-२०५' इति ज्ञापकादेव सिद्धेः । नहि विकल्पं विना 'अनुनासिकं विहाय' इत्यनुनासिकाभावपक्षः संभवति । इदमेव ध्वनयितुं वृत्तौ तु-वेतिशब्दावनुक्त्वा रोः पूर्वस्यानुनासिकः स्यादित्येवोक्तम् ॥ रोः पूर्वस्येति । उपलक्षणमेतल्लोपस्यापि । अत्र

---

१ नित्यमिति । 'नित्यप्रहसितो नित्यप्रजल्पितः' इत्यादाविव 'नित्यवीप्सयोः' इत्यत्र भाष्ये नित्यपदस्याभीक्ष्ण्यवाचित्वेन प्रायःसमानार्थकत्वं व्यवस्थापितम् । अत एव 'तिङ्ङतिङः' 'तस्मिन्नणि च' इत्यत्र ङमुट् कृतः 'सुप्तिङन्तम्' 'सनाद्यन्ताः' इत्यादौ ङमुड् न कृतः 'सन्नन्तान्न सनिष्यते' इत्यत्र तु ङमुटो भावाऽभावौ ॥ २ सुगण्णीश इति । इदं क्विचो लौकिकत्वमभिप्रेत्य । वस्तुतस्तु-दृष्टानुविधिच्छन्दोविषयत्वाद्विचो लोकेऽनभिधानाद् ह्रस्वात्परस्य पदान्तणकारस्यानभिधानमेव । वेदेऽपि तादृशणकारो नास्ति । अत एव प्रातिशाख्यकृद्भिः-"पदान्तीयो ह्रस्वपूर्वो ङकारो नकारश्च क्रामत उत्तरे स्वरे" "ङ्नौ चेद्ध्रस्वपूर्वौ स्वरे पदान्तौ" इति णकारो नोपदिश्यते । एतदेव ध्वनयितुम् 'इको यणचि' इत्यादौ क्वापि ङमुट् णकारस्य न निर्दिष्टः पाणिनिना । एवं च सूत्रवार्तिकभाष्येषु ङकारनकारयोरेव ङमुट्करणात् णकारस्य ङमुडकरणात् ज्ञाप्यते-'नैव वर्तते क्वापि ह्रस्वात्परो णकारो लोके वेदे वा ङमुड्योग्यः' इति । यथासंख्यनिर्वाहस्तु पदमञ्जर्यां 'बशो भष्' इत्यत्रोपदर्शितेन-" चत्वारो भष आदेशाः स्थानिनस्तु बशस्त्रयः । ङकारस्य तु न क्वापि संभवोऽस्ति कथंचन ॥ शास्त्रप्रतीतिवेलायां यथासंख्यस्य संभवात् । प्रवर्तते यथासंख्यमनुष्ठाने त्वसंभवः ॥" इति न्यायेन भविष्यति । इति दिक् ॥ ३ 'समस्स्सुटि' इति त्रिसकारकः पाठः, 'द्विसकारको निर्देशः' इति भाष्ये द्विपदमनेकोपलक्षणम् । 'तस्मान्नुड् द्विहलः' इत्यत्र द्विपदस्यानेकार्थकत्वदर्शनात् । तत्र विभक्तिसकारस्य द्वित्वं मन्यमानस्य मतेन 'रुः' इति विधेयमनुवर्त्याह-रुः स्यादिति ॥ ४ "यदि तु स निषेधोऽपदादिविधाविति पर्युदासात्पदान्तानिमित्तके विधावेवेति 'न लुमता-' इति सूत्रे भाष्ये स्पष्टम् । किं चोत्तरपदस्य कार्यित्व एवैतत्प्रवृत्तिः । अत एव माषकुम्भवापेनेत्यादौ 'पदव्यवायेऽपि' इति निषेधसिद्धिरित्युच्यते, तदा 'अजादेः पदस्य' इति व्याख्यानमेव शरणम् । स्पष्टं चेदं व्याख्यानं प्रकृतसूत्रे 'उञि च पदे' इत्यत्र च भाष्ये" इति शब्दरत्ने ॥

(२०५) सू॰ **अनुनासिकात्परोऽनुस्वारः**।८।३।४।अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः[1] स्यात्। खरवसानयोर्विसर्जनीयः॥(२०६) सू॰ **विसर्जनीयस्य सः**।८।३।३४। खरि विसर्जनीयस्य सः स्यात्।एतदपवादे वा[२२८] शरीति पाक्षिके विसर्गे[2] प्राप्ते-॥(२०७) वा॰ **संपुंकानां सो वक्तव्यः**[3]।संस्स्कर्ता सँस्स्कर्ता॥(२०८) वा॰ **समो वा लोपमेके** इति भाष्यम्[4]। लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम्।द्विसकारं तूक्तमेव।तत्रानचि[८८] चेति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम्॥(२०९)अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यातत्वे[5]-नानुस्वारस्याप्यच्त्वात्।अनुनासिकवतां त्रयाणां(२१०) वा॰ **शरः खय** इति कद्वित्वे षट्।अनुस्वारवतामनुस्वारस्यापि[6] द्वित्वे द्वादश।एषामष्टादशानां तकारस्य द्वित्वे वचनान्तरेण पुनर्द्वित्वे[7] चैकतं द्वितं त्रितमिति चतुष्पञ्चाशत्।अणोऽनुनासिकत्वेऽष्टोत्तरशतम् ॥(२११) सू॰ **पुमः खय्यम्परे**।८।३।६।अम्परे खयि पुम्शब्दस्य रुः स्यात्। व्युत्पत्तिपक्षे[8] प्रत्ययस्येति षत्वपर्युदासात् ⅹकⅹपयोः प्राप्तौ अव्युत्पत्तिपक्षे[9] तु षत्वप्राप्तौ[10] संपुंकानामिति सः।पुँस्कोकिलः।पुंस्कोकिलः।पुँस्पुत्रः। पुंस्पुत्रः। अम्परे किम्।पुंक्षीरम्। खयि किम्। पुंदासः॥(२१२)ख्याञादेशे न। पुंख्यानम्॥(२१३) सू॰ **नश्छव्यप्रशान्**।८।३।७।

---

रुप्रकरणे यो विधिस्ततः पूर्वस्येति निष्कृष्टोऽर्थः। एवं रोः पूर्वस्मात्पर इत्यस्यापि रुप्रकरणे यो विधिस्ततः पूर्वस्मात्पर इत्यर्थो बोध्यः ॥ (२०५) **अनुनासिकात्**-। ल्यब्लोपे पञ्चमीत्याह—**अनुनासिकं विहायेति** । अनुनासिकाभावपक्षे इत्यर्थः॥ पूर्वस्येति प्रकृतस्य तु विभक्तिविपरिणामेन पञ्चम्यन्ततेत्यभिप्रेत्याह--**रोः पूर्वस्मादिति**। 'संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात् 'अवत्सा धेनुरानीयताम्' इत्यत्रेव संभावितानुनासिकत्वगुण एवोपस्थितत्वादाकाङ्क्षितत्वाचावधित्वेन संबध्यत इत्यभिप्रेत्याह-रोः पूर्वस्मादिति-' इति तु मनोरमायामवतारितं, तत्तु पूर्वस्येत्यनुवर्तनं विभक्तिविपरिणामं चानपेक्ष्य लौकिकन्यायेनैवेष्टं सिध्यतीत्याशयेनोक्तमित्याहुः॥ **अनुस्वारागम इति** । आगमत्वं च परशब्देनैव लभ्यते। यथा-'पूर्वौ तु ताभ्यामैच् १५७४' इत्यत्र पूर्वशब्देन ऐचोरागमत्वमिति भावः॥ ( २०६ ) **विसर्जनी**-।**खरीति**। एतच 'खरवसानयोः-११८' इति सूत्रान्मण्डूकप्लुत्याऽनुवर्तते।(२०७)**संस्स्कर्तेति**।'संपरिभ्याम्-३३९१'इति करोतेः सुट्॥ (२०९) ननु अनुस्वारस्यानच्त्वात्ततः परस्य द्वित्वं न स्यादेवेति अनुस्वारपक्षे त्रिसकारकं रूपं कथं स्यादित्याशङ्कयाह-**अनुस्वारविसर्गेत्यादि** ॥ **अकारोपरीति**। यदि त्विकारोपरि पठेयुस्तर्हि पयःसु, यशःसु, इत्यादौ इणः परस्येति षत्वं स्यादिति भावः॥ **अच्त्वादिति** । न चैवं हरिः कर्ता, हरिं स्मरेत, रामः पातीत्यादौ यणादिप्रसङ्गः, त्रिपादीस्थत्वेन विसर्गादिनामासिद्धत्वात्। (२१०)**अनुस्वारस्यापि द्वित्व इति** । अपिशब्दात्ककारस्य॥**वचनान्तरेणेति**। 'अचो रहाभ्याम्-९०'इति कृतेऽपि'यणो मयः-८२' इति भवत्येवेति भावः॥ ( २११ ) **पुमः खयि**-। पुंसः संयोगान्तलोपेऽवशिष्टभागस्येदमनुकरणम्। अम्पर इति बहुव्रीहिः॥ **पर्युदासादिति**।'इदुदुपधस्य-२३२' इति षत्वविधायके सूत्रे इति भावः॥(२१२)**ख्याञादेशे नेति**। 'चक्षिङः ख्याञ् २४३'इत्यत्र ख्शादिरयमादेशः।असिद्धकाण्डे णत्वानन्तरं'शस्य यो वा'इति स्थितामिति वक्ष्यते।एवं च यत्वस्यासिद्धतया अम्परत्वाभावात् 'पुमः खयि-२११'इति रुत्वं नेत्यर्थः॥**पुंख्यानमिति**। चक्षिङो'ल्युट् च५१०६' इति ल्युटि ख्याञादेशः॥ननु आदेश इह दुर्लभः'**वर्जने प्रतिषेधः३२४७**' '**असनयोश्च**' इति वार्तिकादिति चेत्सत्यम्, '**बहुलं तण्यन्नबधकगात्रविच**-

---

१ **अनुस्वारागम इति** । अस्य च नावयवत्वम्, तत्त्वे फलाभावात्। 'मानाभावात्' इति तु 'रपरः' इत्यत्र परशब्दस्य तथार्थकत्वदर्शनेन विरुद्धत्वान्नादरणीयम् ॥ २ **विसर्ग इति** । 'खर्परे शरि वा विसर्गलोपः' इत्यस्याप्युपलक्षणमिदमिति भावः॥ ३ 'समस्स्सुटि' इति त्रिसकारकनिर्देशो विभक्तिसकारस्य द्वित्वं न, किन्तु विधेयं सकारान्तरं निर्दिष्टमिति मन्यमानस्य मते सकारस्य विधेयस्य निर्देशेन नैव विधेयाकाङ्क्षेति नैवात्र रुरनुवर्त्यत इत्याह-**सो वक्तव्य इति**। अयमेव सकारः 'पुमः खय्यम्परे' 'कानाम्रेडिते' इत्यनयोरनुवर्तत इति भावः॥ ४ **समो वेति**। एतदर्थमेव 'रुप्रकरणे' इति व्याख्यातम्॥ ५ **शर्षु च पाठस्येति**। अत्र केचित्-'अयं च पाठोऽनित्यः, 'अट्कुप्वाङ्-' इति सूत्रे 'नुम्विसर्जनीय-' इति सूत्रे चानुस्वारोपलक्षकनुम्ग्रहणात्, अत एव 'यज्ञशब्दे यमपरत्वेऽपि जद्वित्वं भवति।' इति वदन्ति। तन्न मनोरमम्, 'अट्कुप्वाङ्-' सूत्रे नुम्ग्रहणस्य प्रत्याख्येयत्वात्। पुंसु, सुहिन्सु इत्यत्र षत्ववारणाय नुम्स्थानिकानुस्वारोपलक्षणाय नुम्ग्रहणस्यावश्यकत्वात्। इष्टसिद्धय एवायोगवाहानामट्सु शर्षु च पाठस्य कृतत्वेन यमस्य शर्षु पाठेन तत्परत्वं कथं द्वित्ववारकं स्यात्। अन्यथा उरःकेणेत्यत्र णत्वं शर्षु पाठेन, उरः ⅹ क इत्यत्र द्वित्वमट्सु पाठेन कथं न व्याहन्येतेति दिक्॥ ६ **अनुस्वारस्यापीति**। शर्षु पाठेन यत्वादिति भावः॥ ७ **पुनर्द्वित्व इति**। वचनान्तरेण कृतद्वित्वस्यैव पुनर्द्वित्वे, वर्णान्तरस्य द्वित्वाय तस्यैव वचनस्य पुनः प्रवृत्तौ च न 'लक्ष्ये लक्षणम्-' इति वचनं वारणाय प्रवर्तत इति भावः॥ ८ **व्युत्पत्तीति**। 'अयामन्ताल्वाय्येत्न्विष्णुषु' 'उणादयो बहुलम्' इत्येतत्सूत्रारम्भेण '**उणादयो व्युत्पन्नानि प्रातिपदिकानि**' इति सूचनादिति भाष्ये उक्तम्-'**नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्**' इति॥ प्रकृतिप्रत्ययविभागवत्त्वमेव **व्युत्पन्नत्वम्** ॥ ९ **अव्युत्पत्तीति**। 'अर्थवदधातुरप्रत्ययः-' इति सूत्रेण 'अतः कृकमिकंस-' इति कमेः पृथक् कंसग्रहणेन च '**उणादयोऽव्युत्पन्नानि प्रातिपदिकानि**' इति सूचनादिति भावः॥ प्रकृतिप्रत्ययविभागशून्यत्वमेव **अव्युत्पन्नत्वम्** ॥ १० **षत्वेति**। इदमनुनासिकपक्ष एव। अनुस्वारपक्षे तु विसर्गस्योदुपधत्वाभावात्, उपधाग्रहणाभावेऽनुस्वारेण व्यवधानाच्च न षत्वप्राप्तिरिति बोध्यम्॥

अम्परे छवि नकरान्तस्य पदस्य रुः स्यान्न तु प्रशान्शब्दस्य । विसर्गः । सत्वम् । श्चुत्वम् । शार्ङ्गिँश्छिन्धि । शार्ङ्गिंश्छिन्धि । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व । पदस्य किम् । हन्ति । अम्परे किम् । सन्त्सरुः खड्गमुष्टिः । अप्रशान् किम् । प्रशान् तनोति ॥ ( २१४ ) (सू) नॄन्पे ।८।३।१०। नॄनित्यस्य रुः स्याद्वा पकारे परे ॥ ( २१५ ) (सू) कुप्वोः ≍क≍पौ च ।८।३।३७। कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः । चाद्विसर्गः । (२१६) येन नाप्राप्ते इति न्यायेन विसर्जनीयस्य स इत्यस्यापवादोऽयम् । न तु शर्परे विसर्जनीय इत्यस्य । तेन वासः क्षौममित्यादौ विसर्ग एव । नॄँ≍पाहि । नॄं≍पाहि । नॄँःपाहि । नॄंः पाहि । नॄन्पाहि ॥ (२१७) (सू) कानाम्रेडिते ।८।३।१२। कान्नकारस्य रुः स्यादाम्रेडिते परे । संपुंकानामिति सः। यद्वा–॥(२१८) (सू) कस्कादिषु च ।८।३।४८। एष्विण उत्तरस्य विसर्गस्य षः स्यादन्यत्र तु सः। ≍क≍पयोरपवादः। इति सः। काँस्कान् कांस्कान् । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका। धनुष्कपालम् । आकृतिगणोऽयम् ॥ (२१९) (सू) संहितायाम् ।६।१।७२। इत्यधिकृत्य ॥(२२०) (सू) छे च ।६।१।७३। ह्रस्वस्य छे परे तुगागमः स्यात्संहितायाम् । श्चुत्वस्यासिद्धत्वाज्जश्त्वेन दः । ततश्चर्त्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः । तस्य चर्त्वेन चः । श्चुत्वस्यासिद्धत्वाच्चोः कुरिति कुत्वं न । स्वच्छाया । शिवच्छाया ॥ (२२१) (सू) आङ्माङोश्च ।६।१।७४। एतयोश्छे परे तुक् स्यात् । पदान्ताद्वेति विकल्पापवादः । आच्छादयति । माच्छिदत् ॥ (२२२) (सू) दीर्घात् ।६।१।७५। दीर्घाच्छे परे तुक् स्यात् । दीर्घस्यायं तुक् न तु छस्य । सेनासुराच्छायेति ज्ञापकात् । चेच्छिद्यते ॥ (२२३) (सू) पदान्ताद्वा ।६।१।७६। दीर्घात्पदान्ताच्छे परे तुग्वा स्यात् । लक्ष्मीच्छाया । लक्ष्मीछाया ॥ इति हल्संधिः ॥

---

क्षणाजिराद्यर्थम्' इति वार्तिके बहुलग्रहणात्समाधेयम् । विस्तरस्त्विह मनोरमायामनुसन्धेयः ॥ त्रायस्वेति॥ 'त्रैङ् पालने' लोटि शप्यायादेशः ॥ प्रशानिति । प्रपूर्वात् शाम्यतेः क्विप् । 'अनुनासिकस्य–३५४५' इति दीर्घः । 'मो नो धातोः ४६५' इति नः । तस्यासिद्धत्वान्नलोपो न ॥ ( २१४ ) नॄन्पे । पकारोपरि अकार उच्चारणार्थः । तेन नॄः पुनातीत्यादि सिद्धम् । 'उभयथर्क्षु ५४९५' इत्यत उभयथेत्यनुवृत्तेर्विकल्पः फलित इत्याशयेनाह—रुः स्याद्वेति ॥ ( २१५ ) कुप्वोः ≍क≍पौ च । अत्र कुप्वोरिति रेफस्य विसर्गः, जिह्वामूलीयस्य खर्त्वात् । 'खर्परे शरि–२२६' इति विसर्गस्यास्य लोपः, जिह्वामूलीयस्य शर्त्वात् । 'वा शरि–२२५' इति विसर्गस्य विसर्ग एव वा । आदेशयोः कपावुच्चारणार्थौ ॥ चाद्विसर्ग इति । प्राचा तु–चाद्विकल्पः इत्युक्तं, तदसत्, ≍क≍ पाभ्यां मुक्ते विसर्जनीयस्य सत्वप्रसङ्गात् ॥ ( २१७ ) कानाम्रेडिते 'कान्कान्' इति वाच्य आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यात् । इह मा भूत्, कान् कान् पश्यसीति । अत्र एकः किंशब्दः प्रश्ने । द्वितीयः क्षेपे । कान् कुत्सितान् पश्यसीत्यर्थः ॥ वार्तिके कान्ग्रहणाभावेऽपि सत्वं सिध्यतीत्याशयेनाह— यद्वेति । सम्पुमोस्तु वार्तिकेनैव सत्वम् । कस्कादिषु संस्कर्ता, संस्करिष्यति, पुंस्कोकिलः । पुंस्कामः, इत्यादिबहूनां पाठे गौरवात् । कस्कादिषु सम्पुङ्कानिति पठित्वा सर्वमपि वार्तिकं त्यक्तुमशक्यं, पुंस्कोकिल इत्यादाविणः परत्वेन विसर्गस्य षत्वप्रसङ्गात् । किं तु कान्ग्रहणमिव संग्रहणं वार्तिके त्यक्तुं शक्यमित्यन्ये ॥ (२१८) कस्कादिषु च । अत्र 'सोऽपदादौ २२७' इत्यतः स इति 'इणः षः २३१' इति सूत्रं चानुवर्तते, तदाह—एष्विण उत्तरस्येत्यादि॥ कौतस्कुत इति । कुतः कुत आगत इत्यर्थे अव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादणित्याहुः । 'अव्ययानां भमात्रे–१८६४' इति वक्ष्यमाणेनात्र टिलोपः ॥ सर्पिष्कुण्डिकेति । 'नित्यं समासे–२३९' इत्येव सिद्धे इह पाठस्य प्रयोजनमसमासे व्यपेक्षाविरहेऽपि षत्वार्थमित्यादि वक्ष्यति ॥ ( २१९ ) संहितायाम् ॥ इत्यधिकृत्येति । एतच्च 'इको यणचि ७४' इत्यत्रैव वक्तव्यमपि सूत्रक्रमानुरोधेनात्रोक्तम् ॥ ( २२० ) छे च । छकारोपरि अकार उच्चारणार्थः । 'विदिभिदिच्छिदेः–४१६४' इति निर्देशात् । तेन विच्छिन्नमित्यादि सिद्धम् ॥ ह्रस्वस्येति । एतच्च 'ह्रस्वस्य पिति कृति–३८०६' इत्यतोऽनुवर्तते, तुक् च ॥(२२२) सेनासुरेति । यदि हि छस्य तुक् स्यात्तर्हि छस्य चर्त्वे सति चद्वयं स्यात् । सन्निपातपरिभाषया चर्त्वाप्रवृत्तौ तु छकारोपरि चकारः श्रूयेतेति भावः ॥ (२२३) पदान्ताद्वा । प्रकृतेन दीर्घेण पदविशेषणात्तदन्तविधिलाभेनेष्टसिद्धावप्यन्तग्रहणं पदान्तस्यैव तुग्यथा स्यात्पदस्य मा भूदित्येतदर्थम् । अन्यथा पदविधित्वात्समर्थपरिभाषोपस्थितौ समर्थेषु लक्ष्मीच्छायादिष्वेव स्यात् तिष्ठतु कुमारी च्छत्रं हर देवदत्तेत्यत्र न स्यात्, असामर्थ्यात् । एवं 'न पदान्ताट्टोः–' इति सूत्रे पदाट्टोरिति वक्तव्येऽन्तग्रहणं दुष्टाः षड् सन्तन्नय इत्यत्रापि ष्टुत्वनिषेधार्थमित्याहुः ॥ इति तत्त्वबोधिन्यां हल्संधिः ॥

---

१ न तु प्रशान्शब्दस्येति । सूत्रे 'अप्रशान्' इति लुप्तषष्ठीकं पदम् । अप्रशानित्यस्य पर्युदासत्वे सुसखिशब्दे घिसंज्ञाया इव सुप्रशान्-अप्रशान्–शब्दादिषु रुत्वप्रसङ्ग इति भावः ॥ २ कवर्गे पवर्गे चेति । खरीति सम्बध्यते । तेन 'कवर्गपवर्गसम्बन्धिनि खरि' इत्यर्थेन रामो गच्छति, हरिर्गच्छतीत्यादौ नापत्तिः ॥ ३ आङ्माङोश्चेति । सानुबन्धकनिर्देशेन गतिकर्मप्रवचनीयभिन्नस्याङः, प्रतिषेधार्थभिन्नस्य माङो न ग्रहणम् । तेनेह न—आछायामानयति, प्रमा छन्द इति ॥ ४ चेच्छिद्यत इति । द्वित्वसमये साक्षात् स्थानिद्वारा वर्तमानानामेव हलादिशेषेण निवृत्त्यङ्गीकारादत्र तुको न निवृत्तिः म्लेच्छादौ तु द्वित्वात्प्रागेव तुको जातत्वेन द्वित्वसमये वर्तमानत्वान्निवृत्तिर्भवत्येव । वव्रश्चेत्यादौ रपराकारस्थानित्वं परम्परया रेफस्येति बोध्यम् ॥

अथ विसर्गसन्धिः ।

( २०६ ) (सू) **विसर्जनीयस्य सः** । ८ । ३ । ३४ । विष्णुस्त्राता ॥ (२२४) (सू) **शर्परे विसर्जनीयः**।८।३।३५। शर्परे खरि विसर्जनीयस्य विसर्जनीयो, न त्वन्यत् । कः त्सरुः । घनाघनः क्षोभणः । इह यथायथं सत्वं जिह्वामूलीयश्च न ॥ (२२५) (सू) **वा शरि** । ८ । ३ । ३६ । शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात् । हरिः शेते । हरिश्शेते ॥ ( २२६ ) (वा) **खर्परे शरि वा विसर्गलोपो वक्तव्यः** ॥ राम स्थाता । हरि स्फुरति । पक्षे विसर्गे सत्वे च त्रैरूप्यम् ॥ कुप्वोः ≍क≍पौ च ॥ क≍करोति । कः करोति । क≍ खनति । कः खनति । क≍पचाति । कः पचाति । क≍फलति । कः फलति ॥ (२२७) (सू) **सोऽपदादौ** । ८ । ३ । ३८ । विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः ॥ ( २२८ ) (वा) **पाशकल्पककाम्येष्विति वाच्यम्** ॥ पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति ॥ ( २२९ ) (वा) **अनव्ययस्येति[1] वाच्यम्** । प्रातःकल्पम् ॥ ( २३० ) (वा) **काम्ये रोरेवेति वाच्यम्** ॥ नेह गीः काम्यति ॥ ( २३१ ) (सू) **इणः षः** । ८ । ३ । ३९ । इणः परस्य विसर्गस्य षः स्यात्पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति ॥ ( २३२ ) (सू) **नमस्पुरसोर्गत्योः[2]** ८ । ३ । ४० । गतिसंज्ञयोरनयोर्विसर्गस्य सः स्यात् कुप्वोः परयोः । नमस्करोति । साक्षात्प्रभृतित्वात् कृञो योगे विभाषा गतिसंज्ञा । तदभावे नमः करोति । पुरोऽव्ययमिति[3] नित्यं गतिसंज्ञा । पुरस्करोति । अगतित्वान्नेह । पूः पुरौ पुरः प्रवेष्टव्याः॥ (२३३) (सू) **इदुदुपधस्य चाऽप्रत्ययस्य** । ८ । ३ । ४१ । इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः । निष्प्रत्यूहम् ।

---

**अथ विसर्गसन्धिः** ॥(२०६)**विष्णुस्त्रातेति** । प्रातिपदिकात् 'स्वौजसमौट्-२६८' इति सुप्रत्यये तस्य रुत्वे 'खरवसानयोः-११८' इति विसर्गे च कृते 'विसर्जनीयस्य सः२०६'इति सः । अस्य च रुत्वं नाशङ्क्यं,रुत्वं प्रति विसर्जनीयस्य सत्वस्यासिद्धत्वात् ॥ ( २२४ ) **शर्परे विसर्जनीयः** । शर्परे इति बहुव्रीहिरनुवर्तमानश्च खरन्यपदार्थः । सत्वादेरयमपवादः । यदि तु 'शर्परे न' इत्येवोच्येत, तर्हि प्रकृते सत्वे निषिद्धेऽपि कुप्वोः ≍क≍पौ स्याताम् , वासः क्षौममद्भिः प्सातमित्यादौ, विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह-**न त्वन्यदिति** । तदेव स्फुटयति-**इहेति** ॥ ( २२७ ) **सोऽपदादौ**। **अपदाद्योरिति**। सूत्रे व्यत्ययेन एकवचनम्। यदि तु 'विसर्जनीयस्य सः२०६''शर्परे विसर्जनीयः२२४' इत्यत्र मण्डूकप्लुत्याऽनुवर्तितो यः खर् स इहाप्यनुवर्त्य विशेष्यते अपदादौ खरीति, तदा यथाश्रुतं साधु । परंतु पुनर्मण्डूकप्लुत्याऽनुवर्तने क्लेश इति भावः । अन्ये त्वाहुः—पुनर्मण्डूकप्लुतिं विनाऽप्यनुवर्तितुं शक्यः । 'वा शरि २२५' इत्यत्र शरा खरं विशेष्य शर्रूपे खरीति व्याख्याने'कुप्वोः-२१५'इति सूत्रे कुप्वोः खरीति व्याख्याने च क्षत्यभावादिति॥(२२८)**पयस्पाशमिति**।'याप्ये पाशप्२७०५' 'ईषदसमाप्तौ कल्पप्-२७३६' 'अज्ञाते २७४२' 'कुत्सिते २७४६' इति कः । 'काम्यच्च ३५३८' इति काम्यच् । **पाशकल्पककाम्येष्विति** वृत्तिः।संभवप्रदर्शनमेतत् , न तु परिगणनम् ,अन्यस्यासंभवात्॥(२२९)**प्रातःकल्पमिति** । अधिकरणशक्तिप्रधानस्यापि प्रातःशब्दस्येह वृत्तिविषये शक्तिमत्परत्वं,दोषाभूतमहः,दिवाभूता रात्रिरितिवत्॥(२३०)**गीः काम्यतीति** । न च सत्वनिषेधेऽपीह 'इणः षः २३१' इति षत्वं स्यादिति वाच्यम् , तत्रापि 'काम्ये रोरेव-' इत्यस्यानुवृत्तेः। यदि तु 'इणः षः २३१' इत्यत्रैवेदं पठ्येत, तर्हि षत्वमात्रप्रतिषेधेऽपि पूर्वेण सत्वं स्यात् ॥ ( २३१ ) **इणः षः**। 'सोऽपदादौ २२७' इत्यस्यापवादः॥(२३२)**पुरः प्रवेष्टव्या इति** । 'पॄ पालनपूरणयोः' 'भ्राजभास-४१८३'इत्यादिना क्विप् । तदन्ताज्जस् । जसन्ततां स्फुटीकर्तुं पूः पुरावित्युपन्यस्तम् ॥ ( २३३ ) **इदुदुपधस्य**-। इदुदिति किम् , गीः करोति । पूः करोति । इह इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्ग इति वैयधिकरण्येन संबन्धः ॥ अप्रत्ययस्येति तु अप्रत्ययो यो विसर्ग इति संबध्यते । संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् । न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम् , अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः । न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम् , अप्रत्ययस्येति निषेधेनैव सिद्धत्वज्ञापनात् । अत एव अग्निरित्यादौ रोर्विसर्गः सिध्यति । अन्यथाऽपदान्तत्वान्न स्यात् । विसर्गविधिस्तु पुनरित्यादौ चरितार्थः । ज्ञापकं च विशेषापेक्षम् । तेन 'अचः परस्मिन्-७७' इति त्रिपाद्यां न प्रवर्तते । एवं च 'पूर्वत्रासिद्धीये न स्थानिवत् ३३७' इति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति मनोरमायां स्थितम् ॥ अत्र वदन्ति—अप्रत्ययस्येत्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्याद्यर्थ एव आकरे स्थित इति अप्रत्ययो यो विसर्ग इति सामानाधिकरण्येनान्वयो न युक्तः । सर्पिष्करोतीत्यत्र 'इसुसोः सामर्थ्ये २३९' इति वैकल्पिकषत्वप्रवृत्तावपि तिष्ठतु सर्पिः पिब त्वमुदकमित्यत्र 'इदुदुपधस्य-२३३' इत्यनेन नित्यं षत्वप्रसङ्गात् । न चाकरमतेऽप्युणादीनामव्युत्पत्त्याश्रयणे तथा स्वीकारादिष्टापत्तिरिति वाच्यम्, व्युत्पत्त्याश्रयणे दोषतादवस्थ्यात्, 'इसुसोः-२३८' इत्यत्र सर्पिष्करोतीत्युदाहरणेन व्युत्पत्तिपक्षस्यैव वार्तिककारेण स्वीकृतत्वानुमानात् । अन्यथा 'इदुदुपधस्य-२३३' इत्यनेनैव

---

१ **अनव्ययस्येतीति** । अव्ययीभावस्याव्ययत्वे प्रयोजनं कथितम्-उपचार इति, भाष्ये । उपचारशब्देन 'अतः कृकमि-' इति सूत्रविशेषविहित एव सकार उच्यते । तन्निवृत्तिश्चात्र प्रयोजनमिति सकारान्तरनिवृत्तौ न मानमिति उपपयस्काम्यतीत्यत्र सत्वं भवत्येवेति केचित् ॥ २ **नमस्पुरसोरिति** ।अपदादाविति निवृत्तमस्वरितत्वाद्गतिग्रहणाच्च॥ ३ 'असुं पुरः पश्यासि देवदारुम्-' इत्यत्र तु 'असुं पुरःस्थितं देवदारुं पश्यसि' इत्यर्थे स्थाधात्वर्थं प्रति पुरश्शब्दस्य गतिसंज्ञा,न दृश्-धातुं प्रति इति न सत्वापत्तिः॥

आविष्कृतम् । दुष्कृतम् । अप्रत्ययस्य किम् । अग्निः करोति । वायुः करोति।(२३४)एकादेशशास्त्रनिमित्तकस्य न षत्वम् । कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात् । तेनेह न । मातुः कृपा ॥ (२३५) (वा) मुहुसः प्रतिषेधः। मुहुःकामा ॥ (२३६) (सू) तिरसोऽन्यतरस्याम्।८।३।४२। तिरसः सो वा स्यात्कुप्वोः । तिरस्कर्ता । तिरःकर्ता॥(२३७) (सू) द्वित्रिश्चतुरिति कृत्वोऽर्थे।८।३।४३। कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात्कुप्वोः।द्विष्करोति।द्विः करोतीत्यादि।कृत्वोऽर्थे किम् । चतुष्कपालः ॥ (२३८) (सू) इसुसोः सामर्थ्ये।८।३।४४। एतयोर्विसर्गस्य षः स्याद्वा कुप्वोः । सर्पिष्करोति । सर्पिः करोति । धनुष्करोति । धनुः करोति । सामर्थ्यमिह व्यपेक्षा । सामर्थ्ये किम् । तिष्ठतु सर्पिः, पिब त्वमुदकम् ॥ (२३९) (सू) नित्यं समासेऽनुत्तरपदस्थस्य।८।३।४५। इसुसोर्विसर्गस्यानुत्तरपदस्थस्य नित्यं षः स्यात्कुप्वोः परयोः । सर्पिष्कुण्डिका । धनुष्कपालम् । अनुत्तरपदस्थस्येति किम् । परमसर्पिःकुण्डिका । कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः । व्यपेक्षायां नित्यार्थश्च ॥ (२४०) (सू) अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्व-

---

व्युत्पत्त्यव्युत्पत्तिपक्षभेदेन षत्वविकल्पसिद्धेस्तदुदाहरणस्यासंगतिप्रसङ्गात् । किं च तिष्ठतु सर्पिरित्यादौ 'इदुदुपधस्य-२३३' इति षत्वस्येष्टत्वे'कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः' इति स्वमूलग्रन्थविरोध इति॥अत्र केचित्-इदुद्भ्यामप्रत्ययस्येति वक्तव्ये इदुदुपधस्येतिग्रहणं नित्यं य इदुदुपधस्तस्यैव विसर्गस्य षत्वं यथा स्यात्, कविभिः कृत-मित्यादौ मा भूदित्येवमर्थम्, भिसो विसर्गस्य हि नित्यमिदुदुपधत्वं नास्ति रामैरित्यादौ तदभावादिति। तन्न, अग्निः करोतीति निषेधोदाहरणस्यासंगत्यापत्तेः। देव इत्यादौ अकारोपधत्वात् प्रियचत्वा इत्यादावाकारोपधत्वेन चतुष्कपाल इत्यादौ षत्वाना-पत्तेश्चेति यत्किंचिदेतत् ॥ अन्ये तु-'प्रत्ययस्य यो विसर्जनीयो न भवति' इत्यादिव्याख्याने तूक्तोदाहरणे षत्वस्याप्रवृत्तेरुप-धस्येत्येतत्सुत्यजमित्याहुः । स्यादेतत्, *अप्रत्ययग्रहणमेव स्थानिवत्सूत्रं प्रति त्रिपादी सिद्धेत्यत्र ज्ञापकमित्युक्तम्* । तदिदं वैयधिकरण्येनान्वयमभ्युपगच्छतां न सिध्येत् । अत्राहुः-'न मु ने ५८९' इत्यत्र नेति योगं विभज्य स्थानिवत्सूत्रं प्रति त्रिपादी नासिद्धेति व्याख्यायते।'प्रत्ययः२६४' 'परश्च २६५' इत्यादिनिर्देशाश्चेहानुकूलाः । योगविभागस्येष्टसिद्ध्यर्थत्वात्'अचः परस्मि-न्-७७' इति सूत्रं प्रति त्वसिद्धैव । ततश्च 'पूर्वत्रासिद्धे न स्थानिवत् ३३७' इति सिद्धान्तो *युक्तिमूलक इत्यादि सर्वं संगच्छत* इति ॥ ( २३४ ) अप्रत्ययो यो विसर्ग इति सामानाधिकरण्यपक्षे मातुः कृपेत्यादौ ' इदुदुपधस्य-२३३' इति षत्वमाशङ्क्याह-**एकादेशशास्त्रनिमित्तिकस्येति**। मातुरित्यत्र हि 'ऋत उत् ३९०' इति एकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम् । आकरे तु-'एकादेशनिमित्तात्' इति प्रचुरः पाठः । तत्र एकादेश एकादेशशास्त्रं निमित्तं यस्य उकारस्य तस्मादित्यर्थः ॥ नन्वेवम् 'अप्रत्ययस्य' इत्यत्र सामानाधिकरण्यपक्षोऽप्याकरसंमत इति चेदत्राहुः-प्रत्येकं'संयोगसंज्ञा' इति पक्ष आकरसंमतोऽपि यथा निष्प्रयोजनस्तथाऽयमपि।वैयधिकरण्यपक्षस्त्वावश्यक एव । अन्यथा तिष्ठतु सर्पिः पिब त्वमुदकमित्याद्यसिद्ध्यापत्तेरिति ॥ **भ्रातुष्पुत्रशब्दस्य पाठादिति** । न च 'षत्वतुकोरसिद्धः ५११४' इत्येकादेशशास्त्रस्यासिद्धत्वात्षत्वाप्राप्तौ विध्यर्थ एव तत्र पाठो न ज्ञापनार्थ इति वाच्यम्, षत्वे तुकि च कर्तव्ये *पदान्तपदाद्योः सतोरेवैकादेशोऽसिद्ध इति सिद्धान्तात् । अन्यथा* शकहूष्वित्यत्रापि षत्वं न स्यात्। शकान् ह्वयन्तीत्यत्र 'आदेच उपदेशे-३१६१' इत्यात्वे क्विपि संप्रसारणे कृते 'संप्रसारणाच्च ४५४' इति पूर्वरूपैकादेशे च 'हलः ३३९०' इति दीर्घः । भवति हि कोऽसिचत् सोऽसिचद् इत्यादौ पदान्तपदाद्योरादेशः । तेन तत्र षत्वनिषेधः सिध्यति, न तु शकहूष्वित्यत्र । एवं च भ्रातुष्पुत्र इत्यत्रापि 'षत्वतुकोः-५११४' इत्येकादेशशास्त्रमसिद्धं न भवतीत्युक्तं ज्ञापकं सुस्थमेव । ननूक्तज्ञापकात् शकहूष्वित्यत्रापि मातुः कृपेत्यत्रेव षत्वं न स्यात् । मैवम्, तुल्यजातीयस्य ज्ञापकत्वात्, कश्च तुल्यजातीयः, यः कुप्वोरिति दिक् ॥ (२३७) **द्वित्रिश्चतुरिति**—। इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यते । कृत्वोऽर्थग्रहणं तु साहचर्यं न सर्वत्र व्यवस्थापकमित्यत्र ज्ञापकम् । तेन ' दीधीवेवीटाम् २९४५' इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणम् ॥ **चतुष्कपाल इति** । चतुर्षु कपालेषु संस्कृत इत्यर्थे 'संस्कृतं भक्षाः १७२०' इत्यणः 'द्विगोर्लुगनपत्ये १५५१' इति लुक् । अत्र मनोरमायाम्-'इदुदुपधस्य-२३३' इति नित्यं ष इत्युक्तम् । एवं च 'द्वितं त्रितमिति चतुःपञ्चाशत्' इति स्वमूलग्रन्थे प्रयोगश्चिन्त्यः स्यात्, चतुष्कपाल-वत्तत्रापि नित्यतया षत्वप्रवृत्तेः, अतोऽत्र षत्वनिवारणाय 'अप्रत्ययस्य' इत्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्यर्थ एव स्वीकर्तव्यः । चतुष्कपाल इत्यत्र तु कस्कादेराकृतिगणत्वात्षत्वप्रवृत्तिरित्याहुः॥ (२३९)**व्यपेक्षाविरहेऽपीति**[3] । तिष्ठतु सर्पिष्कु-ण्डिकामानयेत्यादावित्यर्थः ॥ **व्यपेक्षायामिति** । इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः । अत्र सर्पिरित्यसमस्तं पदमिति बोध्यम् । समासे तु 'नित्यं समासे-२३९' इत्यनेन सिद्धेः समासाभावमेव ज्ञापयितुमिदमिति सर्पिर्विशेषणमुक्तम् ॥ **नित्यार्थश्चेति** । अयं भावः-असमासे व्यपेक्षाविरहेऽत्यन्ताप्राप्तौ नित्यतया षत्वार्थः पाठः । व्यपेक्षायां त्वसमासे

---

१ **तिरसोऽन्यथेति** । पराभवे गतिसंज्ञाया अप्राप्तावपि 'तिरस्क्रिया ' इति सत्वदर्शनाद्गतिग्रहणं नानुवर्तते ॥ २ **चतु-ष्कपाल इति** । न चात्र व्युत्पत्तिपक्षे षत्वं न प्राप्नोतीति वाच्यम् । 'अतः कृकमि-' इत्यत्र कंसग्रहणेनोणादिष्व-व्युत्पत्तिपक्षस्यैव सिद्धान्तत्वात् । अत एव 'चतुष्पादो गर्भिण्या' इति निर्देशः संगच्छते । एवं च चतुष्पञ्चाशादित्यत्रापि नित्यं षत्वमेवेति कौमुद्यां क्वाचित्कः 'चतुःपञ्चाशत्' इति प्रयोगोऽपि केनचिद्विद्वद्वरेण शोधित एवेति बोध्यम् ॥ ३ स्वार्थपर्यव-सायिनां पदानामाकाङ्क्षादिवशाद् योऽन्वयः सा व्यपेक्षा ॥

नव्ययस्य ।८।३।४६। अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात्करोत्यादिषु परेषु न तूत्तरपदस्थस्य । अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुम्भः । अयस्पात्रम् । अयःसहिता कुशा अयस्कुशा । अयस्कर्णी । अतः किम् । गीःकारः । अनव्ययस्य किम् । स्वःकामः । समासे किम् । यशः करोति । अनुत्तरपदस्थस्य किम् । परमयशःकारः ॥ (२४१) अधःशिरसी पदे ।८।३।४७। एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे । अधस्पदम् । शिरस्पदम् । समास इत्येव । अधः पदम् । शिरः पदम् । अनुत्तरपदस्थस्येत्येव । परमशिरःपदम् । कस्कादिषु च ॥ भास्करः ॥ इति विसर्गसन्धिः ॥

---

## अथ स्वादिसन्धिः ।

स्वौजसमौडिति सुप्रत्यये शिवस् अर्च्य इति स्थिते ॥ (२४२) ससजुषो रुः ।८।२।६६। पदान्तस्य सस्य सजुषशब्दस्य च रुः स्यात् । जश्त्वापवादः ॥ (२४३) अतो रोरप्लुतादप्लुते ।६।१।११३। अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । भोभगोअघो इति प्राप्तस्य यत्वस्यापवादः ॥ उत्वं प्रति रुत्वस्यासिद्धत्वं तु न भवति, रुत्वमनूद्य उत्वाविधेः सामर्थ्यात् ॥ (२४४) प्रथमयोः पूर्वसवर्णः ।६।१।१०२। अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ॥ (२४५) नादिचि ।६।१।१०४। अवर्णादिचि परे न पूर्वसवर्णदीर्घः । आद्गुणः । एङः पदान्तादति । शिवोऽर्च्यः । अत इति तपरः किम् । देवा अत्र । अतीति तपरः किम् । श्व आगन्ता । अप्लुतात्किम् । एहि सुस्रोत ३ अत्र स्नाहि । प्लुतस्यासिद्धत्वादतः परोऽयम् । अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम् । तपरकरणस्य तु न

---

'इसुसोः-२३८' इति विकल्पेन प्राप्तौ नित्यार्थ इति ॥ (२४०) **अयःसहितेति** । न त्वयसो विकारः, 'जानपद-७००' इति ङीष्प्रसङ्गात् ॥ **अयस्कर्णीति** । अय इव कर्णो यस्याः, 'नासिकोदर-७३१' इति ङीष् ॥ ( २४१ ) **अधःशिरसी**—। **एतयोरिति** । सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोध्या ॥ **अधस्पदमिति** । पदस्याध इति विग्रहः । मयूरव्यंसकादित्वात्स मासः ॥ **शिरस्पदमिति** । षष्ठीसमासः ॥ इति तत्त्वबोधिन्यां विसर्गसन्धिः ॥

---

**अथ स्वादिसन्धिः** ॥ शिव इत्यस्यावसाने विसर्गस्तस्यार्च्य इत्यनेन समभिव्याहारे सस्याभावाद्रुत्वं कथं स्यादित्याशङ्कायामाह—**स्वौजसमौडित्यादिनेति** । एवं चात्र मूलभूत एव सुरस्तीति रुत्वादिकं स्यादेव । विसर्गास्त्विह न भवति, खरवसानाभावात् । भाविन्यवसानभङ्गेऽकृतव्यूहपरिभाषयाऽर्च्यपदसमभिव्याहारात्पूर्वमपि न भवतीति बोध्यम् ॥ (२४२) **ससजुषो-रुः** पदस्येत्यनुवृत्तं ससजूभ्यां विशेष्यते, विशेषणेन तदन्ताविधिः । न च सजूःशब्दांशे 'ग्रहणवता प्रातिपदिकेन तदन्ताविधिर्न' इति निषेधः शङ्क्यः, तस्य प्रत्ययविधिविषयकत्वात् । सान्तं सजुषशब्दान्तं च यत्पदं तस्य रुः स्यात्स चालोऽन्त्यस्य । एवं स्थिते फलितमाह—**पदान्तस्य सस्येति** ॥ **सजुषशब्दस्येति** । तदन्तस्य पदस्येत्यर्थः । तेन सजुषौ, सजुष इत्यत्रापि नातिव्याप्तिः । न च सजूरित्यत्राव्याप्तिः 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधादिति वाच्यम्, तस्यापि प्रत्ययविधिविषयकत्वात् । अत एव 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति, 'ग्रहणवता—' इति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति 'दिव उत्' सूत्रे हरदत्तेनोक्तम् । कैयटहरदत्ताभ्यामिति तु मनोरमायां स्थितम् । तत्र कैयटेनानुक्तत्वात्कैयटग्रहणं प्रमादपतितमिति नव्याः । केचित्तु—'दिव उत्' सूत्रं यस्मिन्निति बहुव्रीहिरयं, सूत्रसमुदायश्चान्यपदार्थः । तथा च 'दिव उत्' सूत्रशब्देन 'इन्द्रे च' इति सूत्रस्यापि क्रोडीकारात्तत्र कैयटेनोक्तत्वान्नोक्तदोष इति कुकविक्रान्तिवत् क्लेशेन मनोरमां योजयन्ति ॥ ( २४३ ) यत्वस्यासिद्धत्वादुत्वे कृतेऽपि तस्य स्थानिवत्त्वेन रुत्वाद्यत्वं स्यादित्याशङ्कायामाह—**यत्वस्यापवाद इति** ॥ **उत्वविधेः सामर्थ्यादिति** । न च 'अतो रोरप्लुतात्-२४३' इति सूत्रं परित्यज्य 'रोः सुपि ४६३' इति सूत्रानन्तरम् 'अत उरति' इत्येव लाघवादुच्यतां किमनेन सामर्थ्याश्रयणप्रयासेनेति वाच्यम्, तथा हि सति उत्वस्यासिद्धतया शिवोऽर्च्य इत्यादावाद्गुणस्याप्रवृत्तिप्रसङ्गात् ॥ ( २४४ ) **प्रथमयोः**— । अत्र प्रथमाशब्दः प्रथमाद्वितीययोः समुदाये गौणः, द्विवचनं तु समुदाय्यपेक्षया ॥ 'इको यणचि ७४' इत्यतोऽचीति 'अकः सवर्णे दीर्घः १३६' इत्यतोऽको दीर्घः इति 'एकः पूर्वपरयोः १०३' इति सूत्रं चानुवर्तत इत्याशयेन व्याचष्टे—**अकः प्रथमाद्वितीययोरचीत्यादिना** । अचि किम्, रामः । अकः किम्, गावौ, नावौ । प्रथमयोः किम्, वृक्षे, प्लक्षे । यद्यपीदं 'नादिचि २४५' इत्यनेनैव सिध्यति, तथापि हरी इत्यत्रेव हर्योरित्यत्रापि पूर्वसवर्णदीर्घः स्यात् । तद्वारणाय प्रथमयोरित्युक्तमिति दिक् ॥ पूर्वग्रहणं किम्, अग्नी इत्यत्र पक्षे परसवर्णो मा भूत् । दीर्घग्रहणं किम्, त्रिमात्रे स्थानिनि त्रिमात्रो मा भूत् ॥ आद्गुणे इत्यपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिरिति न्याया-

---

१ **करोत्यादिष्विति** । 'नहिवृतिवृषिव्यधि-' इत्यत्र क्विग्रहणेन ज्ञापितया 'धातुग्रहणे तदादिविधिः' इति परिभाषया तदादिविधिः । यस्मिन्विधिरितीयमपि तदन्तविधिबाधिका । तथा च तदन्तविधेः 'प्रकृते तदन्ताविधिरित्युक्त्या विशेष्यस्यानुपादानेऽननुवृत्तौ वाऽप्रवृत्तिवदस्यापि तदादिविधेरप्रवृत्तिः । अत एव 'संपरिभ्याम्-' इत्यत्र विशेष्यासंनिधानेन तदादिविध्यभावेऽपि धातूपसर्गकार्यत्वेनान्तरङ्गत्वात्सुड् भवति 'संस्कृतम्' इति निर्देशाद्वा ॥ २ **अयस्कुम्भ इति** । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषयाऽयस्कुम्भीत्यत्रापि समत्वं भवत्येव ॥ ३ 'देवोऽत्र' इति स्यादिति भावः ॥ ४ लोपाभावपक्षे यकारस्यैव श्रवणं यथा स्यात् वकारस्य श्रवणं मा भूत् । रोरुत्वे गुणैकादेशे अवादेशे लोपाभावे वकारश्रवणमापद्येतेति भावः ॥ ५ एतत्परिभाषाऽनङ्गीकारे तु "उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते" इति परिभाषयेति बोध्यम् ॥

सामर्थ्यं, दीर्घनिवृत्त्या चरितार्थत्वात् । अप्लुते इति किम् । तिष्ठतु पय अ३ग्निदत्त । गुरोरनृत इति प्लुतः ॥ (२४६) सू हशि च । ६ । १ । ११४ । अप्लुतादतः परस्य रोरुः स्याद्धशि । शिवो वन्द्यः । रोरित्युकारानुबन्धग्रहणान्नेह । प्रातरत्र । प्रातर्गच्छ । देवास् इह इति स्थिते । रुत्वम् ॥ ( २४७ ) सू भोभगोअघोअपूर्वस्य योऽशि । ८ । ३ । १७ । एतत्पूर्वस्य रोर्यादेशः स्यादशि परे । असन्धिः सौत्रः । लोपः शाकल्यस्य । देवा इह । देवायिह । अशि किम् । देवाः सन्ति । यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते, तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात् । न ह्ययमल्विधिः, रोरिति समुदायरूपाश्रयणात् । भोस् भगोस् अघोस् इति सकारान्ता निपाताः । तेषां रोर्यत्वे कृते — ॥ ( २४८ ) सू व्योर्लघुप्रयत्नतरः शाकटायनस्य । ८ । ३ । १८ । पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे । यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं स लघूच्चारणः ॥ (२४९) सू ओतो गार्ग्यस्य । ८ । ३ । २० । ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात् । गार्ग्यग्रहणं पूजार्थम् । भो अच्युत । लघुप्रयत्नपक्षे भोयच्युत । पदान्तस्य किम् । तोयम् ॥ (२५०) सू उञि च पदे । ८ । ३ । २१ । अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उञि पदे । स उ एकाग्निः । पदे किम् । तन्त्रयुतम् । वेञः संप्रसारणे रूपम् । ( २५१ ) यदि तु प्रतिपदोक्तो निपात उञिति गृह्यते, तर्ह्युत्तरार्थं पदग्रहणम् ॥

---

दिति भावः । अत्र 'भिद्योद्ध्यौ नदे' 'तौ सत्' इत्यादि लिङ्गं, तद्धि 'नादिचि २४५' इति पूर्वसवर्णदीर्घे निषिद्धे पुनरुत्सर्गस्य वृद्धेः प्रवृत्त्यैव सिध्यति नान्यथेति ॥ नन्वेवं 'नान्तःपादमव्यपरे ५३६७' इति पाठे 'सुजाते अश्वसूनृते' 'उपप्रयन्तो अध्वरम्' इत्यादौ 'एङः पदान्तादति १४१' इति पूर्वरूपमेव हि तेन निषिध्यते, तस्मिंश्च निषिद्धे 'एचोऽयवायावः ९९' इत्युत्सर्गोऽपि प्रवर्तेत । मैवम्, बाधके निषिद्धे बाध्यमपि क्वचिन्नेति स्वीकारात्तत्सिद्धेः ॥(२४७) **भोभगो–। असन्धिः सौत्र इति**। सूत्रे कृतः सौत्रः, 'कृतलब्ध–१९७४' इत्यण् । भगोअघोशब्दयोरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः । यदि तु भोस् भगोस् अघोस् इति सान्तं रान्तं वाऽनुकृत्य भो इत्यादीनां त्रयाणाम् 'अलोऽन्त्यस्य ६६' इत्यन्त्यस्य यः स्यात्, अपूर्वस्य रोश्चेति व्याख्यायते, तर्हि असन्धिर्न्याय्य एवेति बोध्यम् ॥ ननु रोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्थानि, तथा च 'अनल्विधौ ७६' इति स्थानिवद्भावो न स्यादित्याशङ्क्याह—**न ह्ययमिति** । यथा अग्रहीदित्यत्र 'ग्रहोऽलिटि–३३९५' इति दीर्घस्य स्थानिवद्भावेन इट्त्वाद् 'इट ईटि ३०३१' इति प्रवर्तते, एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्ततेति भावः । यद्यपि 'रो रि २५७' इत्यतो र इत्यनुवर्त्य रोर्यो रेफः तस्य यादेश इति व्याख्याने अयमल्विधिरेव, तथापि उत्तरार्थं कर्तव्यमशिग्रहणं र इत्यस्यानुवृत्तिक्लेशवारणार्थमिहैव कृतम् ॥ **निपाता इति** । 'भोभगो–२४७' इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोध्याः । यदि तु 'विभाषा भवद्भगवदघवतामोच्चावस्य' इति वार्तिकेन 'एषां रुः स्याद् अवस्योकारो वा संबुद्धौ' इत्यर्थकेन निष्पन्ना एव भोःशब्दादयो गृह्येरन्, तदा पुंलिङ्गैकवचनमात्रे भो हरे इत्यादिसिद्धावपि भो हरिहरौ, भो विद्वद्वृन्द, भो गङ्गे, इत्यादि न सिध्येत् । तस्मात् 'विभाषा भवद्–' इति वार्तिकं *नावश्यमाश्रयणीयमिति भावः* ॥ मनोरमायां तु–भाष्यस्वरसरीत्या तु 'विभाषा–' इति वार्तिकमारब्धव्यमेवेत्युक्तम् । तथाहि–हे भवन् इतिवद् हे भो इति प्रयोगस्यापीष्टत्वात्, तस्य च वार्तिकारम्भ एव सिद्धेः । 'स्युः पाट्प्याडङ्गहेहैभोः' इत्यमरोक्तानां तु सम्बोधनार्थानां निपातानां सह प्रयोगायोगात् । किं च, 'अत्र भवान् हरिः, तत्र भवान्, ततो भवान्' इतिवत् तत्रभो इत्याद्यपि वार्तिके सत्येव सिध्यति, 'इतराभ्योऽपि दृश्यन्ते ३६६४' इति सर्वविभक्त्यन्तात्त्रतसोर्भवदादियोग एवेष्टत्वात् । किं च, आमन्त्रितत्वे पदात्परस्याष्टमिकानिघातः 'आमन्त्रितं पूर्वमविद्यमानवत् ५५३' इत्यविद्यमानवद्भावश्चेत्यादि सिध्यति, नान्यथा । भो हरिहरावित्यादिसिद्धये भो इति निपातोऽप्यवश्याभ्युपगन्तव्यः । यदि तु भगो अघो इति निपातावपि प्रामाणिकौ, तर्हि स्तां नाम, वार्तिकं तूक्तप्रयोजनाय स्वीकर्तव्यमेवेति दिक् ॥ स्यादेतत्, निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन् प्रतिपदोक्तत्वान्न तु सम्बुद्ध्यन्ताः लाक्षणिकत्वादिति चेन्मैवम्, 'स्वरितेनाधिकारः ७०' इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात्, लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वाच्च । अनित्यत्वे लिङ्गं तु 'भुवश्च महाव्याहृतेः ५४६७' इति सूत्रे महाव्याहृतिग्रहणं, 'यावत्पुरा–३७१८' इति सूत्रे निपातग्रहणं च । न चैवं लाक्षणिकानामपि ग्रहणे विभोरिदं, सुप्रभा गौर्यस्य स सुप्रभगुः तस्य सुप्रभगोरिदं, रघोरिदमित्यत्रापि यत्वापत्तिरिति वाच्यम्, परस्परसाहचर्येण निपातानां वार्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात् । साहचर्यं त्वेषां सम्बोधनार्थे इति बोध्यम् ॥ भो इत्यादीनां त्रयाणामलोऽन्त्यस्य यः स्यादिति व्याख्याने तु अर्थवद्ग्रहणपरिभाषया नातिप्रसङ्गः । न च 'अजहत्स्वार्था वृत्तिः' इति पक्षे विभोरिदं प्रभोरिदमित्यत्र भोरित्येकदेशस्य अर्थोऽस्तीति शङ्क्यं, 'जहत्स्वार्था वृत्तिः' इति मुख्यपक्षे तदभावादिति दिक् ॥ ( २४८ ) **व्योर्लघु–। वकारयकारयोरिति** । भोभगोअघोअपूर्वयोरित्यर्थः । लघुप्रयत्नतरः लघूच्चारणतरः । स चान्तरतम्याद्वस्य वः, यस्य य इत्याह—**वयाविति** ॥(२४९) विधानसामर्थ्याल्लघुप्रयत्नतरस्य न भवतीत्याशयेनाह—**अलघुप्रयत्नस्येति** ॥ **भोयच्युतेति** । एवं भगोयच्युत । अघोयच्युत । वकारस्योदाहरणं तु असावादित्यः । एतच्च काशिकायां स्पष्टम् ॥(२५१) **उत्तरार्थं पदग्रहणमिति** । वस्तुतस्तूत्तरत्रापि नोपयुज्यते, पदस्येत्यनुवृत्त्यैव निर्वाहात् । 'उञि च पदे २५०' इत्यतः पदे इत्यनुवर्त्य अजादेः पदस्येति व्याख्यानात् परमदण्डिनावित्यादौ ङमुण्नेति प्राचो व्याख्यानस्य

---

१ **व्योरिति** । यकारस्य प्रथमोच्चारितत्वेन प्रागुच्चारणे 'लोपो व्योः' इति लोपे यकारनिवेशज्ञानाय व्याख्यानापेक्षा स्यादिति गौरवनिराकरणाय व्युत्क्रमोच्चारणम् ॥ २ **पूजार्थमिति** । 'ओकाराल्लोपवचनं नित्यार्थम्' इति वार्तिकोक्तेरिति भावः ॥
३ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषास्वरूपम् ॥

(२५२) (सू) **हलि सर्वेषाम्** ।८।३।२२। भोभगोअघोअपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन । भो देवाः । भो लक्ष्मि । भो विद्वद्वृन्द । भगो नमस्ते । अघो याहि । देवा नम्याः । देवा यान्ति । हलि किम् । देवायिह ॥ (२५३) (सू) **रोऽसुपि** ।८।२।६९। अह्नो रेफादेशः स्यान्न तु सुपि । रोरपवादः । अहरहः । अहर्गणः । असुपि किम् । अहोभ्याम् । अत्राहन्निति रुत्वम् ॥ (२५४) (वा) **रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्** ॥ अहोरूपम् । गतमहो रात्रिरेषा । (२५५) एकदेशविकृतस्यानन्यत्वादहोरात्रः । अहोरथन्तरम् ॥ (२५६) (वा) **अहरादीनां पत्यादिषु वा रेफः**॥ विसर्गापवादः । अहर्पतिः । गीर्पतिः । धूर्पतिः । पक्षे विसर्गोपध्मानीयौ ॥ (२५७) (सू) **रो रि** ।८।३।१४। रेफस्य रेफे परे लोपः स्यात् ॥ (२५८) (सू) **ढ्रलोपे पूर्वस्य दीर्घोऽणः** ।६।३।१११। ढरेफौ लोपयतीति तथा, तस्मिन्वर्णेऽर्थाद् ढकाररेफात्मके परे पूर्वस्याणो दीर्घः स्यात् । पुना रमते । हरी रम्यः । शंभू राजते । अणः किम् । तृढः । वृढः । तृहू हिंसायाम् । वृहू उद्यमने । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् ।

---

'ङमो ह्रस्वादचि-' इति सूत्रे मनोरमायां निरस्तत्वाच्च । ननु 'हलि सर्वेषाम् २५२' इत्यत्र पदेग्रहणानुवृत्तौ हलादौ पदे इति व्याख्यानलाभाद् वृक्षवृभ्यां वृक्षवृभिरित्यत्र वस्य नित्यं लोपो न भवति, किन्तु 'लोपः शाकल्यस्य १०१' इति वैकल्पिक एव लोप इत्यस्ति पदेग्रहणस्य प्रयोजनमिति चेन्मैवम्, 'हलि सर्वेषाम् २५२' इत्यत्र वस्यानुवर्तितत्वात् । किं च, माभ्यां माभिरित्यत्र भ्यामादौ परतो यस्य विकल्पेनैव भवन्मते लोपः स्यात्तत्र 'हलि सर्वेषाम् २५२' इत्यस्याप्रवृत्तेः । न चेष्टापत्तिः, भाष्यकारैर्दण्डिनेत्यत्र ङमुड्वारणाय 'ङमो ह्रस्वादचि-२०२' इत्यत्रानुवृत्त्यर्थं पदेग्रहणमित्युक्तत्वात् । न च तदेव प्रयोजनमस्त्विति वाच्यम्, ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडिति व्याख्यानेन दण्डिनेत्यत्र ङमुटः प्रसक्त्यभावात् ॥ (२५२) **हलि सर्वेषाम्** । **यकारस्येति** । वकारस्तु नानुवर्तते । भोभगोअघोअपूर्वस्यासंभवात् । अपूर्वस्तु यद्यपि संभवति-वृक्षव् करोतीति । तथापि तत्र लोपाप्रसङ्गः, अशीत्यनुवर्त्यांशा हलो विशेषणात् । वृक्षव् हसतीत्यादि त्वनभिधानादसाध्वित्याहुः । गव्यमित्यत्र तु पदान्तत्वं नास्ति, गव्यूतिरित्यत्र वकारप्रश्लेषान्न वलोप इत्युक्तम् ॥ **देवा नम्या इति** । अत्र 'लोपो व्योर्वलि १२५४' इति न प्रवर्तते, तं प्रति यत्वस्यासिद्धत्वात् ॥ **हलि किम्** । **देवायिहेति** । उत्तरार्थमावश्यकं हलीति ग्रहणमिहैव कृतम् । तेन 'लोपः शाकल्यस्य १०१' इत्यस्यास्य च विषयविभागोऽत्र सिध्यतीति भावः ॥ (२५३) **रोऽसुपि** । असुपीति यदि पर्युदासः स्यात्ततः सुप्सदृशे प्रत्यय एव स्यादहर्यतीत्यादौ, न त्वहर्भातीत्यादावपि । तस्मात्प्रसज्यप्रतिषेध एवेति व्याचष्टे—**न तु सुपीति**[1] ॥ **अहरहरिति** । 'नित्यवीप्सयोः २८८३' इति द्वित्वम् । न चात्र रेफादेशस्यासिद्धत्वात्पूर्वं नलोपे अकारस्यैव रेफः स्यादिति वाच्यम्, 'अहन्' इत्यावर्त्य एकेन नलोपाभावं निपात्य द्वितीयेन रुर्विधेय इति 'अहन् ५९५' इति सूत्रे वक्ष्यमाणतया रुत्वापवादस्यापि रेफादेशस्य नकारस्थानिकत्वलाभात् ॥ (२५५) **अहोरात्र इति** । 'अहः सर्वैकदेश-११३३' इत्यादिना समासान्तो वक्ष्यते । 'रात्राह्नाहाः पुंसि ११६६' इति पुंस्त्वम् ॥ **अहोरथन्तरमिति** । रथन्तरं साम, तेनाह्नः समाहारद्वन्द्वः, पृथक्पदत्वं वा ॥ (२५६) **अहरादीनामिति** । उभयत्राप्यादिशब्दः प्रकारे । तेन 'स्वर्चक्षा रथिरः, कविः काव्येना स्वर्चना' इत्यादि ग्राह्यम् ॥ **विसर्गापवाद इति** । मो राजिवद्रेफस्य रेफो विधीयते विकारनिवृत्त्यर्थमिति भावः ॥ (२५८) **ढ्रलोपे-** । ढ्रेत्यकार उच्चारणार्थः । ढश्च रश्च ढ्रौ, तौ लोपयतीति ढ्रलोपः । णिजन्तात्कर्मण्यणि उपपदसमासः ॥ **तृढः । वृढ इति** । उदित्त्वेन वेट्कत्वाद् 'यस्य विभाषा ४०३६' इति निष्ठायां नेट् । ढत्वधत्वष्टुत्वढलोपाः । प्राचा दृढ इति प्रत्युदाहृतम्, तदसत्, तत्र ढलोपस्यैवाभावात् । 'दृढः स्थूलबलयोः ४०७५' इति सूत्रेण हि दृंहेर्नकारहकारयोर्लोपः, तकारस्य ढत्वं च निपात्यते, न त्वसिद्धकाण्डस्थढत्वस्य इह प्रवृत्तिः, 'दादेर्धातोः-४४८' इति घत्वेन बाधात् । न चेडभावो ढत्वं नलोपश्च निपात्यतां धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम्, तथा सति परिदृढय्येत्यत्र 'ल्यपि लघुपूर्वात् ५१५८' इति णेरयादेशो न स्यात् । 'पारिवृढी कन्या' इत्यत्र 'इतो मनुष्यजातेः ७४९' इति ङीषं बाधित्वा 'अणिञोः-१६६१' इति ष्यङ् स्याद्, ढलोपस्यासिद्धत्वेन गुरूपोत्तमत्वादित्याकरे स्थितम् । ननु परिदृढय्येत्यत्र ल्यबादेशः कथं भवेत्, यावता परिदृढमाचष्टे इति णिचि कृते क्त्वाप्रत्यये च क्त्वान्त एव परेरन्तर्भावात्समासाभाव इति चेत् । अत्र कैयटः-संग्रामयतेरेव सोपसर्गात्प्रत्ययोत्पत्तिर्नान्यस्मादिति नियमात्परिशब्दं पृथक्कृत्य दृढशब्दादेव णिच् क्रियते । णिजन्तस्य धातुत्वात् क्त्वाप्रत्यये कृते परेः क्त्वान्तेन कृदन्तेन समास इति सिद्धो ल्यबादेशः, णाविष्ठवद्भावाद्भ्रभाव इति ॥ ननु पूर्वस्येति व्यर्थं, सप्तमीनिर्देशादेव तल्लाभादत आह-**पूर्वग्रहणमित्यादि**। 'ढ्रलोपे पूर्वस्य-२५७' इति सूत्रस्योत्तरपदाधिकारस्थत्वादुत्तरपदस्थयोरेव ढरेफयोः परतो दीर्घः स्यान्न तु लीढः, अजर्घा इत्यत्रेति भावः ॥ यद्य-

---

[1] **न तु सुपीति** । 'तस्मिन्निति-' परिभाषाफलिते 'सुपि परे' इत्यर्थे कस्मादित्याकाङ्क्षायां प्रत्यासत्त्या 'अहन्' इत्यस्यैव पञ्चमीविपरिणतस्योपस्थितौ पञ्चम्यन्तात्परस्य प्रत्ययस्याश्रयणेन 'प्रत्ययग्रहणे चापञ्चम्याः' इत्यनया 'प्रत्ययग्रहणे यस्मात्स विहितः' इति प्राप्तं तदन्तग्रहणं बाध्यत इति भावः । २ 'एकदेशविकृतमनन्यवत्' इति परिभाषास्वरूपम् 'प्राग्दीव्यत इति विकृतनिर्देशात्सिद्धम्' । ३ **अणः किमिति** । 'न हि ढ्रलोपे परेऽणः सन्ति' इति भाष्यमनुसरतः प्रश्नः ॥ ४ **तृढः । वृढ इति** । 'ननु चायमस्ति-आवृढः' इति भाष्यमनुसरतः उत्तरम् । अयमाशयः—यद्यण् परेण स्यात् तर्हि दीर्घपदश्रुत्या अच इत्युपस्थितौ अणूपदं व्यर्थं सद् 'अण् पूर्वेणैव णकारेण' इति बोधयतीति भावः ॥

अजर्घाः । लीढः । मनस् रथ इत्यत्र[२४३] रुत्वे कृते [२४६] हशि चेत्युत्वे रो [२५७] रीति लोपे च प्राप्ते-॥(२५९) विप्रतिषेधे परं कार्यम् । १ । ४ । २ । तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते-। पूर्वत्रासिद्धमिति रो रीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ॥ ( २६० ) एतत्तदोः सु लोपोऽकोरनञ्समासे हलि । ६।१। १३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे । एष विष्णुः । स शंभुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हलि किम् । एषोऽत्र ॥ ( २६१ ) सोऽचि लोपे चेत्पादपूरणम् । ६ । १ । १३४ ॥ स इत्यस्य

---

प्यसंभवादेवानुत्तरपदस्थे ढकारे दीर्घो भवेत्, तथाप्यजर्घा इत्यत्र दीर्घो न स्यादिति ज्ञेयम्।वस्तुतस्तु–उत्तरपदस्य समासचरमावयवे रूढत्वात्पुना रमत इत्यादावपि न स्यात्, किं तु नीरक्तं दूरक्तमित्यादावेव स्यादिति तत्त्वम् ॥ **लीढ इति** 'लिह आस्वादने' क्तः । ढत्वधत्वष्टुत्वढलोपाः । इहं ढलोपं प्रति ष्टुत्वं नासिद्धं, ढकारे परतो लोपविधिसामर्थ्यात् । अत एव 'ढो ढे लोपः १६२३' इत्यस्य पदाधिकारस्थत्वेऽप्यपदान्तस्य ढस्य लोपो भवति ॥ **अजर्घा इति** । 'गृधु अभिकाङ्क्षायाम्' यङ्लुकि द्वित्वे अभ्यासस्य रुक्, लङः सिपि शब्लुकि सिप ईडभावपक्षे लघूपधगुणो रपरः, 'इतश्च २९६२' इतीकारलोपे हल्ङ्यादिलोपः, भष्भावः, जश्त्वम् 'दश्च ३२८१' इति रुत्वपक्षे अजर्घर् र् इति स्थिते 'रो रि२५६'इति रेफलोपेऽनेन दीर्घः।।अत्रेयं सुगमा व्याख्या-**ढ्रलोपे पूर्वस्य दीर्घोऽणः** । लीढः, नीरक्तं, दूरक्तम् । अणः किम् , तृढः । वृढः । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । अजर्घाः । पुना रमते । हरी रम्यः । शम्भू राजत इति ॥ (२५९) **विप्रतिषेधे**—। विप्रतिपूर्वात् 'षिधू शास्त्रे माङ्गल्ये च' 'षिध गत्याम्' इत्यस्माद्वा धातोर्घञ् । 'उपसर्गात्सुनोति–३०३७'इति षत्वम् । उपसर्गवशाच्च विरोधार्थकत्वम्।।**कार्यमिति**। 'अर्हे कृत्यतृचश्च २७६०'इत्यर्हार्थे कृत्यप्रत्ययः । तेन तुल्यबलविरोध इति पर्यवसानादतुल्यबलेषूत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गविधिषु नेदं प्रवर्तते । न ह्यपवादादीनां संनिधावुत्सर्गादीनां कृत्यर्हत्वं, तैर्बाधितत्वात् । तत्र नित्यमावश्यकत्वाद्बाधकमन्तरङ्गं तु लाघवात्, अपवादस्तु वचनप्रामाण्यात्, तद्भिन्नस्तु प्रकृतसूत्रस्य विषयः । अत एव 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ७१' इत्युक्तम् । यद्यतुल्यबलेष्वपि परमेव स्यात्-तन्नोपपद्येताऽतो व्याचष्टे—**तुल्यबलविरोध इति** । जातौ पदार्थे विध्यर्थमिदं सूत्रम् । वृक्षेषु, वृक्षाभ्यामित्यत्र हि लब्धावकाशयोरेत्वे दीर्घत्वे शास्त्रयोर्वृक्षेभ्य इत्यत्र युगपत्प्रसङ्गे विनिगमकाभावादप्रतिपत्तिरेव स्यात् । तदुक्तम्–'अप्रतिपत्तिर्वा उभयोस्तुल्यबलत्वात्' इति । तत्रास्माद्वचनात्परस्मिन् कृते यदि पूर्वस्यापि निमित्तमस्ति तर्हि तदपि भवति यथा भिन्धकीत्यत्र परत्वाद्द्विभावे कृतेऽप्यकच् । तदुच्यते—'पुनःप्रसङ्गविज्ञानात्सिद्धम्' इति । व्यक्तौ तु पदार्थे तत्तद्व्यक्तिविषयकयोर्लक्षणयोरन्यत्र चरितार्थत्वासंभवात्तव्यत्तव्यानीयरामिव पर्यायेण प्रवृत्तौ नियमार्थमिदं सूत्रं–विप्रतिषेधे परमेव स्यान्न तु पूर्वमिति । एतल्लक्षणारम्भाच्च तत्र तत्र पूर्वस्यानारम्भोऽनुमीयते । तथा च–जुहुतात्त्वमित्यत्र परत्वात्तातङि कृते स्थानिवद्भावेन 'हुझल्भ्यः–३२३१' इति धित्वं न भवति । तदुच्यते—'सकृद्गतौ विप्रतिषेधेन यद्बाधितं तद्बाधितमेव' इति लक्ष्यानुरोधाद्व्यवस्थाप्यमेतद्द्वयमपि । तत्र विधिपक्षे तूत्वे रेफलोपे च प्राप्ते इति पाठ्यम् । नियमार्थमिति पक्षे परमेव कार्यं स्यादित्येवकारोऽध्याहर्तव्यो वृत्तौ ॥ **उत्वमेवेति** । सिद्धासिद्धयोरतुल्यबलत्वेन 'विप्रतिषेधे परम्२५९'इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः।तदुक्तम्–'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति । एतेन 'विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे' इति वक्ष्यमाणग्रन्थो व्याख्यातः ॥ ( २६० ) **एतत्तदोः**—। अत्र त्यदाद्यत्वमेकशेषश्च न कृतः, सौत्रत्वात्, 'प्रकृतिवदनुकरणम्' इति वैकल्पिकातिदेशाद्वा । एवं च वृत्तावप्येत्तदोरिति प्रयोगः साधुः । 'हल्ङ्याब्भ्यः–२५६' इत्यस्यानन्तरमेवेदं लाघवाय न कृतम्, संहिताधिकारोपजीवनादित्याहुः ॥ सूत्रे सु इति पृथक्पदं लुप्तषष्ठीकमित्याह—**एतत्तदोर्यः सुरिति** । एतत्तदर्थगतसख्याभिधायी यः सुस्तस्येत्यर्थः । एतत्तदोर्विहित इति व्याख्याने तु परमस ददाति, परमैष ददातीत्यादौ सुलोपो न स्यात् । एतत्तदोः पर इति व्याख्यानं तु न संभवति, एतत्तद्भ्यामिति पञ्चम्यभावात् । एतत्तदोरवयव इति तु न संभवत्येव, सोः प्रत्ययत्वात् । तस्मादर्थद्वारकसंबन्ध एवाश्रितः । तदाश्रयणे लिङ्गं तु–अनञ्समास इति बोध्यम् । एतत्तदोः किम्, यो ददाति ॥ **अकोः किमिति** । साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः॥**एषक इति**। अकोरिति प्रतिषेध एव'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते'इति परिभाषां ज्ञापयतीति भावः॥(२६१)**सोऽचिलो**—। अचीति विस्पष्टार्थमिति वृत्तौ स्थितम् । तस् इति शब्दस्य प्रथमैकवचनान्तस्यानुकरणं लुप्तषष्ठीकमित्याह—**स**

---

१"सूर्य्यो रूपं कृणुते"वा० सं०अ० ३३ मं०३८।"सोमो राजा"वा० सं० अ०१९ मं०७२।इत्यादिषु कल्पनीयां साधनप्रक्रियां दर्शयितुमुपन्यस्यति-**मनस् रथ इत्यत्र** इति। २ **इति लोपे प्राप्ते इति** । यद्यत्र जातेऽपि लोपे तस्य स्थानिवद्भावेन रुत्वादुत्वं प्राप्नोतीत्युत्वस्य नित्यत्वमस्तीति विभाव्यते, तदापि 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इतिनिषेधं सूचयितुं विप्रतिषेधस्य दर्शनीयत्वादेतत्सूत्रोपन्यासोऽपि न्याय्य एवेति बोध्यम् । यत्तु 'भोभगो–'इति सूत्रभाष्योक्तरीत्याऽल्विधित्वेन स्थानिवत्त्वप्रवृत्तिर्नेति । तत्तु तत्रत्यभाष्याशयानवबोधमूलकमेव, यत्वविधौ र इत्यनुवृत्तेरतिदिश्यमानरत्वस्याल्मात्रवृत्तित्वेनाल्विधित्वेऽपि 'हशि च' इत्यत्र रोरित्यस्यैवानुवृत्त्याऽतिदिश्यमानरुत्वस्याल्मात्रावृत्तित्वेनाल्विधित्वाभावात्स्थानिवत्त्वप्रवृत्तेर्दुर्वारत्वादिति बोध्यम् ॥ ३ **अनञ्समासे किमिति** । नञर्थस्य प्राधान्येनोपसर्जनीभूतार्थयोरेतत्तदोः सर्वनामत्वाप्राप्तौ त्यदाद्यत्वाभावे हल्ङ्यादिलोपेन सोः प्रसङ्गाभावेन किं लोपनिषेधेनेति प्रश्नतात्पर्यम्॥ ४ **असः शिव इति** । एतन्निषेधसामर्थ्यादेव तत्पुरुषस्योत्तरपदार्थप्रधानत्वाज्ञकारे सर्वनामत्वत्यदाद्यत्वयोरव्याघाते हल्ङ्यादिलोपाप्राप्तौ सोर्लोपेऽनेन प्राप्ते निषेधवचनमिति समाधानम् ॥

सोऽर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । 'सेमांमविड्ढि प्रभृतिं य ईशिषे' ( ऋ. सं. । २ । २४ । १ । ) इह ऋक्पाद एव गृह्यत इति वामनः । अविशेषाच्छ्लोकपादोऽपीत्यपरे । सैष दाशरथी रामः । लोपे चोदिति किम् । स इत् क्षेति । स एवमुक्त्वा । सत्येवेत्यवधारणं तु स्यश्छन्दसि बहुलमिति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या लभ्यते । तेनेह न । सोऽहमाजन्मशुद्धानाम् ॥ इति स्वादिसन्धिः ॥

---

## अथाजन्तपुँल्लिङ्गम् ।

**(२६२ ) अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५ । धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं

---

**इत्यस्येति** ॥ **बहुलग्रहणेति** । अत एव लोपं विना पादपूरणेऽपि क्वचिद्भवति—'सास्मा अरम्' इति । अत्र वदन्ति-ये तु 'सोऽहमाजन्मशुद्धानाम्' इत्यादिसिद्धयर्थं पादश्चेल्लोपे सत्येव पूर्येतेति सावधारणं व्याचख्युस्तेषां 'सास्मा अरम्' इत्यादौ सुलोपानापत्तिः । अत्र हि सः अस्मै इति च्छेदः । बहुलग्रहणानुवृत्त्या तदुपपादने तु सोऽहमाजन्मेत्याद्येव तथा उपपाद्यतां किमवधारणेनेति ॥ इति तत्त्वबोधिन्यां स्वादिसन्धिः ॥

---

**अथाजन्तपुँल्लिङ्गम्**॥(२६२) **अर्थवदधातु-।प्रत्ययं प्रत्ययान्तं चेति** । सूत्रे तन्त्रादिनोभयं विवक्षितमिति भावः ॥ **अर्थवदिति** नपुंसकनिर्देशस्यानुगुणं विशेष्यमध्याहरति—**शब्दस्वरूपमिति** ॥ अधातुरप्रत्यय इति पुँल्लिङ्गनिर्देशस्तु-'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः११६३'इत्युत्तरपदलिङ्गवत्त्वाद्बोध्य इत्याहुः। यदि तु धातुभिन्नमित्यर्थे परित्यज्यारोपितो धातुरधातुरिति व्याख्यायते, तदा नपुंसकत्वप्राप्तिशङ्कैव नास्तीति ज्ञेयम् । अर्थवदिति किम्, धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् । तस्यां च सत्यां स्वादयः, स्युः । ननु संख्याकर्मादेरभावान्न भविष्यतीति चेन्न, 'एकवचनमुत्सर्गतः करिष्यते' इति सिद्धान्तात् । हुंफडादिभ्य इव सोर्दुर्वारत्वात् । न चार्थवद्ग्रहणेपरिभाषया अनर्थके न स्यादिति वाच्यम्, तस्या विशिष्टरूपोपादानविषयत्वात् । 'प्रादूहोढ-११२ ' इत्यत्र तु ऊढ इति विशिष्टरूपमुपात्तमिति क्तवत्वन्तैकदेशस्यानर्थकस्योढशब्दस्य ग्रहणं नेत्युक्तम् । न ह्यत्र तथा विशेषरूपस्योपादानमस्ति । यद्यप्यधातुरित्यादिपर्युदासेनार्थवत्त्वं लभ्यते, तथाप्युत्तरार्थमर्थवद्ग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम् । न चैकाज्द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यात्, नावयवानामित्यर्थवद्ग्रहणमिह व्यर्थमिति शङ्क्यम्, समुदाये द्विरुक्ते अवयवा अपि द्विरुक्ता भवन्ति, 'वृक्षः प्रचलन् सहावयवैः प्रचलति' इति न्यायात् । इह तु समुदाये प्रवृत्तया प्रातिपदिकसंज्ञया नावयवानां तत्कार्यसिद्धिरिति वैषम्यात् । अत एव यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाविशेषेण

---

१ **सेमेति** । अष्टाचत्वारिंशदक्षरजगती च्छन्दः, पादस्य द्वादशाक्षरत्वात् ॥ ' स इत् क्षेति सुधित ओकसि स्वे' ऋ. सं०४ । ५० । ८ ॥ २ **धातुमिति** । 'धातोश्चेत्कृदन्तस्यैव' इति नियमेन 'अहन्' इत्यादिव्यावृत्तौ सत्याम् अधातुग्रहणं स्पष्टार्थमिति भाष्ये ध्वनितम् । धातोरिति विशेषविहितप्रत्ययानां बाधकत्वाच्च न स्वाद्यापत्तिरित्यपि क्वचित् ।। ३ **प्रत्ययमिति** । अत्र सूत्र उत्तरसूत्रे चार्थवत्त्वस्य "कृत्तद्धितान्तं चैवार्थवत्, न केवलाः कृतस्तद्धिता वा" इति पदसंज्ञासूत्रभाष्यम् , "शास्त्रीयार्थग्रहणेऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते" इति तत्रत्यप्रदीपम्, "धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते । कृत्तद्धितानामर्थश्च केवलानामलौकिकः ॥ प्राग् विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ।" इति वाक्यपदीयम्, "न हि लोके केवलेन प्रत्ययेनार्थो गम्यते । केन तर्हि ? सप्रकृतिकेन" इति 'संख्याया अतिशदन्तायाः-' इति सूत्रभाष्यं चानुकूलयितुम्-एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपस्यैव ग्राह्यत्वेन न केवले प्रत्यये प्रातिपदिकत्वापत्तिरिति 'प्रत्ययं वर्जयित्वा' इति व्यर्थमेव । अत एव प्रत्ययपर्युदासो भाष्यकृता नाङ्गीकृत इति बोध्यम् ॥ ४ **प्रत्ययान्तमिति** । 'प्रत्ययान्तस्य चेत्प्रातिपदिकसंज्ञा तर्हि तद्धितान्तस्यैव' इति नियमेन हरिषु, काण्डे इत्यादिव्यावृत्तौ सत्याम्, अप्रत्ययग्रहणमपि स्पष्टार्थमेव, । किञ्च, व्यावर्त्याभावोऽपि । तथाहि-सत्त्वप्रधानप्रातिपदिकस्यैव ह्रस्वविधानान्न काण्डे इत्यादौ ह्रस्वापत्तिः । औत्सर्गिकैकवचनस्यापि विना गमकमनङ्गीकारेण तदर्थस्य संख्याकर्माद्ययोगेन च न सुबापत्तिः । धातुसाहचर्याद्विभक्त्यतिरिक्तशब्दघटितप्रातिपदिकावयवस्यैव सुपो लुग्विधानान्न प्रत्ययान्तस्य प्रातिपदिकत्वेऽपि तदवयवसुपो लुगापत्तिः । नापि फिट्स्वरापत्तिः, तत्तत्स्वराणां विशेषविहितानां बाधकत्वात्, प्रकृतिप्रत्ययविभागशून्येष्वेव फिट्स्वरप्रवृत्तेश्च । नापि पचेरन्नित्यादौ नलोपापत्तिः, रादेशेनैव सकलेष्टसिद्धौ नान्तादेशोच्चारणसामर्थ्यात् । एवं च वर्ज्यत्रयस्य नियमादिना वर्जने 'अर्थवत् प्रातिपादिकम्' इत्येव सूत्रमावश्यकमिति ध्वनयितुम् 'अर्थवच्छब्दरूपम्' इत्येव विधेयसंनिकृष्टमुच्चारितमिति बोध्यम् ॥ ५ **अर्थवदिति** । एतद्व्यावर्त्यं तु निरर्थकसमुदाय एव । संख्याकर्मादेरभावान्नैव प्रतिवर्णं विभक्त्युत्पत्तिः ॥ यद्यपि सिद्धान्तेऽर्थवत्त्वं वाक्यस्यैव "पदसमूहो वाक्यमर्थसमाप्तौ ( समर्थम् ) " इति न्यायभाष्यकारोक्तेः । तथापि प्रतिवाक्यं संकेतग्रहासंभवात्तत्र पदानां कल्पने आवापोद्वापाभ्यां पदार्थानामपि कल्पनं वाक्यवाक्यार्थग्रहोपायभूतमसत्यमेव ॥ तदुक्तम्-"उपायाः शिक्ष्यमाणानां बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥" इति । एवं च समासघटकपदानामपि सर्वेषां शास्त्रकृत्कल्पितमेवार्थवत्त्वं शास्त्रप्रक्रियामात्रोपयोगि । तथा च रथन्तराक्षौहिण्यादिष्वपि प्रक्रिया न विरुध्यते ॥

प्रातिपदिकसंज्ञं स्यात् ॥ (२६३) सू॰ कृत्तद्धितसमासाश्च ।१।२।४६। कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः । पूर्व-

---

संयोगसंज्ञेति सिद्धान्तः संगच्छते । अन्यथा त्वदुपन्यस्तन्यायेन समुदाय एव संयोगसंज्ञा प्रवर्तेत ॥ अत्र केचित्-धनं वनमित्यादौ प्रतिवर्णं सत्यामपि संज्ञायां सत्स्वपि स्वादिषु न क्षतिः । 'हल्ङ्याब्– ३५६' इत्यादिना सुलोपात् । न च नलोपः घस्य जश्त्वं च स्यादिति शङ्क्यम्, धातुपाठे धनवनेत्युच्चारणसामर्थ्यात्तदप्रवृत्तेरित्याहुः । तदसत्, अकारात्सोरुत्पत्तौ रुत्वप्रवृत्तेः । यद्यपि समुदितप्रातिपदिकस्यावयवत्वेन सुपो लुकि रुत्वं न भवेत्तथापि चिकीर्षति विघ्न इत्यादौ रेफदकारयोः पदान्तत्वे सति 'खरवसानयोः–११८' इति विसर्गस्य 'यरोऽनुनासिके–१८०' इत्यनुनासिकस्य च प्रसङ्गादिति दिक् ॥ अधातुः किम्, अहन् । धातोः प्रातिपदिकसंज्ञायां सत्यां तिङां स्वाद्यपवादत्वादहन्नित्यत्र हन्तेस्तिपि सिपि वा कृते 'इतश्च–२९६२' इति इकारलोपे हल्ङ्यादिलोपे च प्राक् कृता प्रातिपदिकसंज्ञा नापगतेति 'नलोपः प्रातिपदिकान्तस्य ३३७' इति नलोपः स्यात्तन्मा भूत् । 'अहन् ५९५' इति रुत्वं 'रोऽसुपि २५३' इति रत्वं चेह नाशङ्क्यम्, लाक्षणिकत्वात् । न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासात्प्रातिपदिकसंज्ञाऽभावेन नलोपो न भवेदिति वाच्यम्, प्रत्ययलक्षणेन उक्तपर्युदासाप्रवृत्तेः 'न ङिसंबुद्ध्योः ४८८' इति निषेधेन ज्ञापितत्वात् । कथमन्यथा राजेत्यादौ नलोपः स्यात् ॥ यद्यपि व्युत्पत्तिपक्षे राजन्शब्दस्य कनिन्प्रत्ययान्ततया 'कृत्तद्धित–२६३' इति प्रातिपदिकसंज्ञायां राजेत्यादौ नलोपः स्यात् । तथा च 'न ङिसंबुद्ध्योः ४८८' इति निषेधो न ज्ञापक इति कार्यकालपक्षेऽधातुग्रहणं व्यर्थं, तथाप्यव्युत्पत्तिपक्षे ज्ञापकमेवेति कार्यकालेऽपि तत्स्वीकर्तव्यम् । न च 'सुपो धातु–९५०' इति सूत्रे प्रातिपदिकात्पृथग्धातुग्रहणाद्धातोर्नेयं संज्ञेति वाच्यम्, पुत्रीयतीत्यादौ प्रत्ययान्ते धातुग्रहणस्य चरितार्थत्वात् ॥ अप्रत्ययः किम्, हरिषु, करोषि । अत्र सुप्सिपोर्मा भूत् । अप्रत्ययान्तः किम्, तत्रैव विभक्तिविशिष्टयोर्मा भूत् । न चान्तवद्भावेन काण्डे, कुड्ये इत्यादौ प्रातिपदिकत्वं स्यादेव । तथा च 'ह्रस्वो नपुंसके–४४०' इति ह्रस्वः सोरुत्पत्तिश्च स्यादिति वाच्यम्, 'सप्तम्यधिकरणे च ९२७' इत्यादिर्निर्देशेन विभक्त्येकादेशस्यान्तवद्भावानभ्युपगमादिति दिक् ॥ ननु प्रत्ययपर्युदासो न कर्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थत्वात् । व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति चेत् । मैवम्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणात्, केवलस्य चातथात्वात् । अन्यथा सुप्तिङोरपि तदन्तत्वात् पदत्वं स्यात् । तथा च हरिषु, करोषीत्यादौ षत्वं न स्यात्, 'सात्पदाद्योः २८६३' इति निषेधात् । न च षत्वविधेर्निरवकाशता, सर्पिषे, एष इत्यादौ चरितार्थत्वात् ॥ अन्ये तु व्याचक्षते–'कृत्तद्धित–२६३' इत्यत्र हि तदन्तविधिर्वक्ष्यते । तथा च तद्धितग्रहणस्य तद्धितान्तानामेव न त्वन्यप्रत्ययान्तानां संज्ञेति नियमार्थतामाश्रित्य प्रत्ययान्तपर्युदासोऽत्र न कर्तव्यः । अथवा–'सात्पदाद्योः २९६३' इति सूत्रे सातिग्रहणात्प्रत्ययो न प्रातिपदिकमिति सिद्धे प्रत्ययग्रहणं सामर्थ्यात्तदन्तपरम् । उत्तरसूत्रे तद्धितग्रहणं तु विध्यर्थमेवास्तु । यद्वा–सातिग्रहणात्प्रत्ययस्य प्रातिपदिकत्वाभावे तद्धितग्रहणस्योक्तरीत्या नियमार्थत्वे च 'अर्थवदधातुः प्रातिपदिकम्' इत्येव सुवचमिति तेषाम् 'इको यणचि ७४' इति सूत्रं व्यर्थं स्यात्, 'तस्मादित्युत्तरस्य ६५' 'वाम्नतुपित्रुषसः–१७३८' इत्यादिनिर्देशाज्ज्ञापकादिष्टसिद्धेः । 'नाऽऽज्झलौ ३२–२' इत्यत्राकारसहितोऽच् आजिति मूलस्थग्रन्थोऽयमपि विरुध्येत । 'कालसमयवेलासु–४९६६' इत्यादिज्ञापकादेव ढत्वाभावसिद्धेः । यदि ज्ञापकेन प्रत्याख्यानमयुक्तमिति, यदि चाऽऽकारप्रश्लेषे एव तल्लिङ्गमित्यभ्युपगमे सूत्राक्षरैरेवेष्टं सिध्यतीत्युच्येत, तर्हि 'अप्रत्ययः–' इत्येतदभ्युपगम्य प्रत्ययपर्युदासे सातिग्रहणं लिङ्गं, प्रत्ययान्तपर्युदासे तु तद्धितग्रहणमित्यप्रत्ययग्रहणमेवावर्त्य व्याख्यायतां, किमनया कुसृष्ट्येति दिक् ॥ अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानम् 'अप्रत्ययः' इत्यस्यावृत्तिसौकर्यार्थम् । महासंज्ञाकरणं श्रुत्यनुरोधात् । तथा चाथर्वणे पठ्यते—'को धातुः, किं प्रातिपदिकं, कः प्रत्ययः' इति । डित्थादीन्यव्युत्पन्नानीहोदाहरणम् । अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः ॥ वस्तुतस्तु–व्युत्पत्तिपक्षे बहुपटव इत्याद्यर्थं सूत्रमिति नव्याः । न चैवं 'बहुच्पूर्वः प्रातिपदिकम्' इत्येव सूत्र्यतामिति वाच्यम्, मूलकेनोपदंशमित्यादौ कृदन्तत्वेनातिप्रसङ्गाद्, गतिकारकपूर्वस्यापि कृदन्तत्वात् । न च समासग्रहणं नियमार्थमिति निस्तारः, अर्थवत्सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वायोगात् ॥ ( २६३ ) **कृत्तद्धितसमासाश्च** । अर्थवदित्यनुवर्तते, तत्सामर्थ्यात्तदन्तविधिः । ननु यद्यर्थवत्ता पारमार्थिकी विवक्ष्यते, सा पदस्य वाक्यस्य वाऽस्ति, न तु कृत्तद्धितान्तस्य, यदि तु प्रक्रियादशायां या कल्पिता सा विवक्ष्यते, तर्हि कृत्तद्धितयोरपि साऽस्तीति कथमर्थवद्ग्रहणानुवृत्त्या तदन्तग्रहणमिति चेदत्राहुः–अत एवार्थवद्ग्रहणसामर्थ्यमुक्तम् । प्रत्ययान्तेन ह्येकार्थीभूतेन प्रतीयमानोऽर्थ इह गृह्यते । तस्य लौकिकार्थं प्रति प्रत्यासन्नतरत्वान्मतुपः प्राशस्त्यपरतया तस्यैव ग्रहणात् । अत एव च तदुपादानं सार्थकं पूर्वसूत्रे अधातुरिति पर्युदासबलेनापि तल्लाभसंभवादिति । तदेतत्सकलमभिप्रेत्याह–**कृत्तद्धितान्ताविति** ॥ लिट्, धुग् इत्यादौ 'अधातुः' इति, कर्ता औपगव इत्यादौ 'अप्रत्ययान्तः' इति च पर्युदासे

सूत्रेण सिद्धे[१] समासग्रहणं नियमार्थम्[२] । यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव । तेन वाक्यस्य[३] न ॥ (२६४) (सू) प्रत्ययः ।३।१।१। आपञ्चमपरिसमाप्तेरधिकारोऽयम्[४] ॥ (२६५) (सू) परश्च[५] ।३।१।२। अयमपि तथा ॥ (२६६) (सू)

---

प्राप्ते 'कृत्तद्धित-' इत्यारम्भः ॥ **नियमार्थमिति** । न च प्रत्ययान्तत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शङ्क्यम्, वाक्यस्याप्रत्ययान्तत्वात् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव[६३१] ग्रहणात् । न चैवमपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावाद्राजकुमारीत्यादौ ङीबन्ते विध्यर्थमस्त्विति वाच्यम्, 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ५१५६' इति लुग्विषये हल्ङ्याद्[८०६]िलोपाप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः । तत्र च कुमारीशब्दस्य सुबन्तत्वेऽपि राजकुमारीशब्दस्यातथात्वादप्रत्ययान्तत्वेन प्रवृत्तायाः संज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात् । अत एव गोमत्प्रिय इत्यादौ नुमादयो न, लुकः प्रागन्तरङ्गस्य हल्ङ्यादिलोपस्य प्रवृत्तौ तु स्युरेवेति दिक् ॥ नियमशरीरमाह—**यत्र संघात इति** ॥ नियमश्चात्र सजातीयापेक्ष इत्याह—**पूर्वो भागः पदमिति** । षड्विधेऽपि समासे पूर्वभागस्य पदत्वाव्यभिचाराद्भवत्ययं सजातीयः । पूर्वो भाग इत्युपलक्षणम्, 'उत्तरस्तु प्रत्ययो न' इत्यपि बोध्यम् । अन्यथा जन्मवानित्यादौ संज्ञा न स्यात, 'स्वादिषु-३३१' इत्यनेन पूर्वभागस्य पदत्वात् । न च तद्धितग्रहणसामर्थ्यात्तत्र स्यादेवेति वाच्यम्, तद्धितग्रहणस्य भानव इत्यादौ कृतार्थत्वात् । तत्र हि पूर्वभागस्य भत्वं, न तु पदत्वम् । न चैवमयमियानित्यादिसमुदायस्य प्रातिपदिकत्वं स्यादेव, पूर्वभागस्य पदत्वेऽप्युत्तरस्य प्रत्ययत्वादनेन नियमेन वारयितुमशक्यत्वादिति वाच्यम्, 'उत्तरस्तु प्रत्ययो न' इत्यत्र 'तद्विहितप्रत्ययो न' इति व्याख्यानात् । पूर्वो भागः पदमिति किम्, बहुज्विशिष्टस्य प्रातिपदिकसंज्ञा यथा स्यात् । तेन बहुपटव इत्यत्र उपोत्तमोदात्तत्वं सिध्यति । प्रथमजसो लुकि 'चितः सप्रकृतेर्बह्वकजर्थम् ५६७२' इति चित्स्वरे कृते पुनर्जस उत्पत्तेः । प्रातिपदिकसंज्ञायामसत्यां तु जसेवोदात्तः स्यात् । यद्वा-'प्रकृतिप्रत्ययभावानापन्नसंघातस्य चेद्भवति तर्हि समासस्यैव'इति नियमार्थं समासग्रहणम् । तेन गवित्ययमाहेत्यादौ नातिप्रसङ्गः इति दिक् ॥ नियमफलमाह—**तेन वाक्यस्य नेति** । गामभ्याज शुक्लामित्यादिवाक्यस्य न भवतीत्यर्थः । सत्यां हि संज्ञायां सुब्लुक् स्यात् । नन्वेवमपि मूलकेनोपदंशं भुङ्क्ते इत्यादिवाक्यस्य संज्ञा दुर्वारा 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाद् १००५' इति चेन्मैवम्, समासग्रहणकृतनियमेन परत्वाद्बाधात् । एवं च 'कृत्तद्धित-२६३' इति सूत्रे कृद्ग्रहणपरिभाषा निष्फलत्वान्नोपतिष्ठते । तस्याश्च परिभाषायाः व्यावक्रोशी, व्यावहासीत्यत्रावकाशः । तत्र हि 'कर्मव्यतिहारे णच् स्त्रियाम् ५००६' इति धातोर्णचि कृते गतिपूर्वस्य णजन्तत्वात् 'णचः स्त्रियाम्-५००७' इत्यञि सत्युपसर्गाकारस्यादिवृद्धिस्वरौ भवतः । कृद्ग्रहणे कारकपूर्वस्याप्युदाहरणमवतप्ते नकुलस्थितमित्यादि स्फुटीभविष्यति ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन 'निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या' इति वार्तिकं गतार्थम् । येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम्, अवद्यति । अनुकरणेषु तु-अनुकार्येण सहाभेदविवक्षायामर्थवत्त्वाभावादेव न प्रातिपदिकत्वम् । 'भू[६] सत्तायाम्' इति यथा । भेदविवक्षायां तु संज्ञा स्यादेव 'भुवो वुक्-२९२८' इति यथा ॥ (२६४) **अधिकारोऽयमिति** । प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इत्यर्थः ॥

---

१ **सिद्ध इति** । शशशृङ्गादिपदानामपि बौद्धे शशशृङ्गादौ शक्तिरिति पूर्वसूत्रेणैव प्रातिपदिकत्वं सिद्धम् । स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्यावश्यकत्वम् । 'पुत्रस्ते जातः कन्या ते गर्भिणी' इत्यादौ पुत्रादिना बाह्यविसंवादिनोऽपि बौद्धस्यार्थस्य हर्षशोकजनकत्वाच्च ॥ २ **नियमार्थमिति** । नियमाकारस्तु-"**यत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः । स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत्** ॥" इति । जन्मवानित्यादौ प्रातिपदिकत्वासिद्धये उत्तरभागे, बहुपटव इत्यादौ प्रातिपदिकत्वसिद्धये पूर्वभागे स्वातन्त्र्येण प्रयोगार्हत्वं विशेषणमुपात्तम् ॥ ३ **वाक्यस्य नेति** । व्यपेक्षायां राजन् ङस् पुरुष सु इत्यादेरित्यर्थः । गवित्ययमाहेत्यत्र 'गविति' इति वाक्यस्यापि अनितिपरस्याप्यनुकरणस्य प्रयोगसत्त्वेन 'गो' इति पूर्वभागस्यापि स्वातन्त्र्येण प्रयोगार्हत्वाद्व्यावृत्तिः ॥ ४ व्याख्यानात्संज्ञाधिकारत्वज्ञानेऽपि न तदन्तर्गतानां विकारागमानां प्रत्ययत्वम्, महासंज्ञाकरणेन स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकस्यैव तत्संज्ञकत्वात् । स्वप्रकृत्यर्थश्च धातुपाठकोशादावुपात्तो ग्राह्यः । आदेशानां च स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वाङ्गीकारेण नैव स्वार्थो वर्तते ॥ ५ **परश्चेति** । 'गुप्तिज्किद्भ्यः-' इत्यादिषु पञ्चम्या दिग्योगलक्षणत्वेन पूर्वः परो वेति सन्देहव्यावृत्तये प्रत्ययः पर एवेति नियमार्थम् । 'ङ्याप्पोः' 'व्रीहिशाल्योः' इति षष्ठ्यपि पञ्चम्यर्थे आनन्तर्ये वेति पूर्वः परो वेत्यनियमप्रसक्तिरस्त्येव । षष्ठ्यंशाविकलतस्मादिति परिभाषोपस्थित्यैव सिद्धे 'प्रकृतिः प्रत्ययपरैव प्रयोक्तव्या' 'प्रत्ययः प्रकृतिपर एव प्रयोक्तव्यः' इति नियमार्थोऽयं योग इति 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति फलितम् । अकज्बहुज्विषये तु 'प्राक् टेः' 'पुरस्ताद्' ग्रहणेन न दोषः ॥ ६ **भू इति** । 'अपदं न प्रयुञ्जीत' इत्यस्यापरिनिष्ठितमित्यर्थः । परिनिष्ठितत्वं त्वस्य 'भ्वेध' इत्यादिनिर्देशादेव लिङ्गादिति बोध्यम् ॥

**ङ्याप्प्रातिपदिकात्** ।४।१।१। ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्यापञ्चमपरिसमाप्तेरधिकारः। (२६७) **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येव** सिद्धे ङ्याब्ग्रहणं ङ्यावन्तात्तद्धितोत्पत्तिर्यथा स्यात्, ङ्याब्भ्यां प्राङ् मा भूदित्येवमर्थम् ॥ (२६८) **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** । ४।१।२। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः। सुङस्योरुकारेकारौ जशटङपाश्चेतः ॥ (२६९) **विभक्तिश्च** ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः। तत्र सु औ जस् इत्यादीनां सप्तानां त्रिकाणां प्रथमादयः

---

(२६६)**ङ्याप्प्रातिपदिकात्**। समाहारद्वन्द्वादेकवचनम्। ङीति ङीब्ङीष्ङीनां सामान्यग्रहणम्, आबिति च टाब्डाप्चापाम्॥ **आपञ्चमसमाप्तेरिति**। ननु 'घकालतनेषु–१३९७' इति ज्ञापकात्सुबन्तात्तद्धितोत्पत्तिरित्यभ्युपगतेः–किमर्थस्तद्धितेषु प्रातिपदिकाधिकार इति चेदत्राहुः–असति त्वधिकारे 'अत इञ् १५७१' इत्यत्रात इत्येतत्सुबन्तस्यैव विशेषणं स्यात्, ततश्च दक्षस्यापत्यामित्यत्रैव इञ् स्यान्न तु दक्षयोर्दक्षाणामित्यत्र। किंच, 'वृद्धाच्छः १८८०' इत्यत्र वृद्धमित्येतत्सुबन्तविशेषणं मा भूत्। अन्यथा जानन्तीति ज्ञाः 'इगुपध–३८५७' इति कः। ज्ञानामयमित्यत्र सुबन्तस्य वृद्धत्वाच्छः स्यात्। प्रातिपदिकाधिकारे तु वृद्धं यत्प्रातिपदिकं तत्प्रकृतिकात्सुबन्ताच्छ इत्यर्थलाभादिह प्रातिपदिकस्यावृद्धत्वाच्छो न भवति, किंतु अणेव भवति। शब्दकौस्तुभे त्वसत्यस्मिन्नधिकारे वाक्यादपि कप्रत्ययादयः स्युः। ततो विशिष्टप्रातिपदिकतया सकलसुब्लोपे स्पष्टमेवानिष्टमिति स्थितम्॥(२६७) **लिङ्गविशिष्टस्येति**। लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः। परिभाषायाः प्रयोजनं–श्वश्रूः। प्रत्ययान्तत्वेनाप्रातिपदिकत्वेऽपि इह स्वादयः। न च 'श्वशुरः श्वश्र्वा १३५२' इति निर्देशादेव स्वादिसिद्धिरिति वाच्यम्, निर्देशस्य शब्दपरत्वात्। 'विपराभ्यां जेः ३५८६' 'ङेर्यः २८९' इतिवत्। किंच, कुमारीमाचष्टे कुमारयति 'णाविष्ठवत्' इति टिलोपः। एवं यामिन्य इवाचरन्ति यामिनयन्तीत्यत्राचारे क्विबपि फलम्॥ **ङ्याब्भ्यां प्रागिति**। तेन एनिका, आर्यका च सिध्यति। तथाहि। 'न सामिवचने २८०६' इति ज्ञापयिष्यमाणोऽत्यन्तस्वार्थिकः कः एतार्याशब्दाभ्यां ङ्यापौ बाधेत, ततश्च एतिका, आर्यिकेत्येव रूपं स्यात्। ङ्याब्ग्रहणसामर्थ्यात्तु ङीबन्तात्कनि एनिकेत्यपि सिध्यति। 'वर्णादनुदात्तात्–६८७' इत्यस्य वैकल्पिकत्वात्। आबन्तात्कनि तु 'उदीचामातःस्थाने–६९३' इतीत्वविकल्पादार्यका, आर्यिकेति रूपद्वयं सिध्यति। वस्तुतस्तु–ङ्यापोर्ग्रहणं माऽस्तु। 'घकालतनेषु–१३९७' इत्यलुग्विधानसामर्थ्यात्सुबन्तात्तद्धितोत्पत्तिरिति हि निष्कर्षः। तथा च सुपः *प्रागेव ङ्यापौ प्रवर्तेते*। स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयम्॥ (२६८) **स्वौजसमौट्–**। समाहारे द्वन्द्वः॥ **सुङस्योरिति**। सोरुकारः 'अर्वणस्त्रसौ–४९४' इत्यत्र विशेषणार्थः। 'असि' इत्युक्ते हि असकारादावित्यर्थः स्यात्। तथा च 'वाजमर्वत्सु' इति न सिध्येत्। ङसेरिकारः 'टाङसिङसां–२८६' 'ङसिङ्योः स्मात्स्मिनौ ३०३' इत्येतदर्थः। जश्शसोर्जकारशकारौ 'जसः शी ३००' 'तस्माच्छसो नः–२८५' इत्यनयोर्विषयविभागार्थौ। ननु अन्यतरस्य निरनुबन्धकत्वमेवास्त्विति चेन्न, जसो जकाराभावे औ इत्यस्य आव् स्यात्, ततश्च प्रत्ययस्य वकारान्तता संभाव्येत, एवं शसः शकाराभावे औटो डित्त्वं संभाव्येत, तथा च तेजसी इत्यादौ टिलोपः स्यात्। अथवा लिहावित्यादौ डित्त्वसामर्थ्यादभस्यापि टेर्लोपः संभाव्येत। औटष्टकारः सुडिति प्रत्याहारार्थः। टाटकारस्तु 'टाङसिङसां–२८६' 'द्वितीयाटौस्स्वेनः ४७६' इति विशेषणार्थः। एतेन 'आदिरन्त्येन–४' इति सूत्रे काशिकाकारेण यदुक्तम्–अन्त्येनेति किम्–,सुडिति तृतीयैकवचनावयवेन मा भूद्–इति, तत्परास्तम्। औटष्टकारस्यानन्यार्थतया तेनैव संभवात्, प्रत्यासत्तेश्च। अत एव शब्दकौस्तुभे तत्रान्यदेव प्रयोजनमुक्तम्–मध्यमेनेता सहित आदिस्तदुत्तरेषामपि ग्राहको मा भूदित्यन्त्येनेति ग्रहणम्। अन्त्येनेता सहितो मध्यमः पूर्वेषामपि मा भूदित्यादिग्रहणम्–इति। अमुमेवार्थं मनसि निधाय आद्यन्ताभ्याम[illegible]यवाभ्यामवयवी समुदाय आक्षिप्यत इति निष्कृष्टमुक्तं प्राक्॥ प्रकृतमनुसरामः। ङेप्रभृतीनां ङकारो 'घेर्ङिति ३४९' 'ङेराम्–३७८' इति विशेषणार्थः। सुपः पकारस्तु प्रत्याहारार्थः॥ (२६९) **विभक्तिश्च**। 'तिङस्त्रीणि त्रीणि–२९१४' इत्यतस्तिङ्ग्रहणं व्यवहितमपि स्वरितत्वबलादनुवर्तते। 'सुपः २७०' इति च सांनिहितामित्यभिप्रेत्याह—**सुप्तिङाविति**। तिङां

---

१ **प्रातिपदिकाच्चेति**। परश्चेत्येतत्फलितेन 'नापि केवलः प्रत्ययः प्रयोक्तव्यः' इति नियमेन प्रकृतेराक्षेपात् तिङां विशेषविहितत्वेन धातुभ्यः, संख्याया अभावात् संख्यायास्तिङोक्तत्वाच्च तिङन्तेभ्यः, स्वादिप्राप्त्यभावात् प्रातिपदिकाधिकारो व्यर्थ एवेति चेत्। शृणु—स्वार्थद्रव्यलिङ्गसंख्याकारकरूपार्थपञ्चकप्रयुक्तकार्यैः संस्कृतस्यैव बहिर्भूतापत्याद्यर्थप्रत्यययोग इति कुत्सितसूत्रभाष्यसंमतन्यायेन 'तस्यापत्यम्' इत्यादौ प्रथमोच्चारितबोध्यात्सुबन्तादेव प्रत्ययाङ्गीकारेण तस्यैव अनुदात्तादेरित्यादिविशेषणत्वे अनुदात्तादेः षष्ठ्यन्तादित्यर्थाङ्गीकारे सर्वस्य विकारः सार्व इत्यत्रानुपपत्तिः 'सर्वस्य सुपि' इति सर्वशब्दस्याद्युदात्तत्वात्। एतस्मिन्कृते तु तत्सामर्थ्याद् अनुदात्तादेरित्यादि प्रकृतिभूतप्रातिपदिकस्यैव विशेषणमिति न दोषः, सर्वशब्दस्योञ्छादित्वेनान्तोदात्तत्वेनानुदात्तादित्वात्॥ २ **प्रातिपदिकेति**। समानाधिकरणाधिकारे 'युवा खलतिपलितवलिनजरतीभिः' इत्यत्र जरतीसामानाधिकरण्यस्य 'युवा' इति पुंलिङ्गेऽसंभवान्निर्देशानुपपत्तिर्मूलमस्यामिति बोध्यम्। आवश्यिका चेयम्, त्यूङन्तेभ्यो ङ्याब्ग्रहणेऽप्यप्राप्तेः॥ ३ **ङ्याबन्तादिति**। स्त्रीप्रत्ययमात्रोपलक्षणम्। तेन युवतितरेत्यादिसिद्धिः॥ ४ **तद्धितोत्पत्तिरिति**। अत्र तद्धितपदं तिसमासान्तात्यन्तस्वार्थिकातिरिक्तपरम्। अत एव 'लोहितालिङ्गबाधनं वा' इति वार्तिकमारब्धम्। एतन्न्यायसिद्धार्थानुवाद एव ङ्याब्ग्रहणम्। अत्यन्तस्वार्थिके त्वार्यका एनिकेति नैव भवति। उपलभ्यते चेत्स्वार्थिकमात्रकल्पनमिति तत्त्वम्। तद्धितो यथा स्यादित्येव पाठो नागेशेनोपलब्धः॥ ५ **विभक्तीति**। विभक्तिप्रदेशेषु 'सुप्तिङोः' इति करणे यत्र तत्रेत्यादौ प्राग्दिशीये त्यदाद्यत्वानुपपत्तिः। 'प्राग्दिशः सुप्' इत्येव तत्र करणे तु 'एतर्हि' इत्यादौ 'सुपि च' इति दीर्घापत्तिः॥

सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः ॥ ( २७० ) (सं) **सुपः** । १ । ४ । १०३ । सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥ ( २७१ ) (सं) **द्व्येकयोर्द्विवचनैकवचने** । १ । ४ । २२ । द्वित्वैकत्वयोरेते स्तः ॥ ( २७२ ) (सं) **बहुषु बहुवचनम्** । १ । ४ । २१ । बहुत्वे एतत्स्यात् । रुत्वविसर्गौ । रामः ।

---

विभक्तिसंज्ञायाः प्रयोजनं 'न विभक्तौ तुस्माः २७५' इति । सुपां तु त्यदाद्यत्वादिकमपि । चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः । अन्यथा एकसंज्ञाधिकारादेकवचनादिसंज्ञाभिः सह वचनद्वयप्रामाण्यात्पर्यायः स्यात् । ततश्च रामेभ्यः नमाम इत्यादौ बहुवचनसंज्ञापक्षे विभक्तित्वाभावात्सस्येत्संज्ञा स्यात् ॥ **इहापीति** । अस्मिन्नपि तन्त्रे 'प्रातिपदिकार्थलिङ्गपरिमाण-७६५' इत्यादौ इत्यर्थः ॥ ( २७० ) **सुपः** । अत्र 'तिङस्त्रीणि त्रीणि-२९१४' इति सूत्रात् 'त्रीणि त्रीणि' इति पदं 'तान्येकवचन-२९१५' इति सूत्रं च तानीति पदं विहायानुवर्तत इति व्याचष्टे—**सुपस्त्रीणि त्रीणी**त्यादिना ॥ **एकश इति** । एकैकमित्यर्थः । 'संख्यैकवचनाच्च-२८४७' इति वीप्सायां प्रथमान्ताच्छस् ॥ (२७१) **द्व्येकयोः**—। इह द्व्येकशब्दौ संख्यापरावित्यभिप्रेत्याह—**द्वित्वैकत्वयोरिति** । संख्येयपरत्वे तु बहुवचनं स्यादिति भावः ॥ ( २७२ ) **बहुषु**—। अयमपि संख्यापर एवेत्याह—**बहुत्व इति** । बहुवचनं स्वाश्रयद्रव्यगतबहुत्वं धर्मे आरोप्य[3] कृतम् । तत्फलं तु बहुः पर्वत इति वैपुल्यवाचिनो नेह ग्रहणमिति सूचनमेव । वस्तुतो व्यर्थं तत्, परत्वादेकवचनसंभवादिति शब्दकौस्तुभादौ स्थितम् ॥ **रुत्वविसर्गाविति** । ननु रुत्वस्यासिद्धत्वादुकारस्येत्संज्ञालोपयोरभावात् 'स्थानिवदादेशः-७६' इत्यस्यापि त्रिपाद्यामप्रवृत्त्या रेफान्तस्य 'सुप्तिङन्तम्-५२' इति पदसंज्ञाभावेन विसर्गोऽत्र दुर्लभः, विसर्गविधेस्तु पुनरित्यादौ चरितार्थत्वादिति चेन्मैवम्, 'न मु ने ५८९' इति सूत्रे नेति योगं विभज्य आसिद्धं नेति व्याख्यायामिष्टसिद्धिरित्युक्तत्वात्॥ **राम**[4] **इति** । संज्ञाशब्दोऽयमव्युत्पन्न इति पक्षे अर्थवत्सूत्रेण प्रातिपदिकसंज्ञा, 'करणाधिकरणयोश्च ५१०९' इत्यधिकारे घापवादेन 'हलश्च ५११६' इति घञा रमन्तेऽस्मिन्निति व्युत्पादने तु 'कृत्तद्धित-२६३' इति सूत्रेणेति विवेकः ॥ अत्र केचित् परिष्कुर्वन्ति-'गन्धर्वः शरभो रामः सृमरो गवयः शशः । इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः' इत्यमरोक्त्या यदि पशुविशेषे प्रयुज्यते, तदा रूढोऽयं रामशब्द इत्यर्थवत्सूत्रेण संज्ञा । यदा तु रामचन्द्रे भगवति

---

१ **द्व्येकयोरिति** । अत्र 'एकवचनम्' इति सामान्यसूत्रम् उत्सर्गत एकवचनविधायकम् । तस्य बाधकं 'द्विबहोर्द्विवचनबहुवचने' इति द्वित्वविवक्षायां द्विवचनस्य बहुत्वविवक्षायां बहुवचनस्य विधायकं सूत्रमिति निरर्थकेभ्योऽसंख्येभ्य एकत्वसंख्याविरहेऽप्येकवचनं सिध्यतीति बोध्यम् । स्पष्टा चेयं रीतिः 'तद्धितश्चासर्व-' इत्यत्र भाष्ये ॥ २ **शसिति** । एवं च वीप्सायाः शसोक्तत्वेन न द्विर्वचनम् ।'ऋषिसहस्रमेकां कपिलामेकैकशो दत्त्वा' इति भाष्ये तु प्रधानार्थकैकशब्दस्य संबोधनम्-एक इति । 'उत्तरा संख्या पूर्वां संख्यां बाधते'इत्यत्र श्रौतो वा स्मार्तो वाऽयं व्यवहारो भगवतोदाहरणत्वेनोपन्यस्त इति च्छान्दसत्वान्न कोऽपि दोषः ॥ ३ **आरोप्येति** । यथाऽसमस्ते आपः, दारा इत्यादावव्यवगतं बहुत्वमवयविन्यारोप्य बहुवचनम् । समस्ते तु दारपती अप्तेजसी इत्यादौ नेत्यत्र शब्दशक्तिस्वभाव एव कारणम् । क्वचित्तु प्रवृत्तिनिमित्तगतसंख्यारोपोऽपि । यथा—वेदाः प्रमाणमिति प्रवृत्तिनिमित्तप्रमितिकरणत्वगतसंख्यारोपेणैकवचनम् । एवं प्रमाणगतसंख्याश्रयणे तु वेदाः प्रमाणानीति भवत्येव । वेदा इत्यत्र बहुवचनं स्वाश्रयगतसंख्यामाश्रित्य। उभयत्रापि प्रवृत्तिनिमित्तगतसंख्यामाश्रित्य त्वेकवचनमपि वेदः प्रमाणमित्यपि । एवम् 'इति हेतुस्तदुद्भवे' इत्यस्य व्याख्याने 'त्रयः समुदिता हेतुः' इत्यत्रापि समुदित एव हेतुत्वं न तु व्यस्त इति सूचयितुं हेतुत्वगतसंख्याश्रयणमेव । एवमेव 'व्यक्त्याकृतिजातयस्तु पदार्थः' इत्यत्राप्येकतमस्य पदार्थत्वेऽन्ययोराक्षेपादिकल्पने गौरवाभिया समुदायस्यैव पदार्थत्वमिति सूचयितुमेकवचनमेवेति वदन्ति ॥ अन्ये तु-द्वन्द्वैकशेषस्थले उद्भूतावयवभेदे प्रत्येकमन्वयाङ्गीकारेण त्वेकवचनम् । यथा-'आदिर्ञिटुडवः' 'व्यक्त्याकृतिजातयस्तु पदार्थः' 'वेदाः प्रमाणम्' 'गावो धनम्-' इत्यादि । समुदायान्वयाङ्गीकारेण बहुवचनम् । यथा-'फढखच्छघां प्रत्ययादीनाम्' 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति प्रोचुः ॥ अत्र दाधिमथाः—**'वेदाः प्रमाणम्'** इत्यत्र 'प्रमाणम्' इत्यस्य विभक्तिप्रतिरूपकनिपाताव्ययत्वस्वीकारे नैव काप्यनुपपत्तिरित्यव्ययप्रकरणे वक्ष्यते । अव्ययत्वानङ्गीकारपक्षेऽपि नानुपपत्तिरिति **'जात्याख्यायामेकस्मिन्-'** इति सूत्रटिप्पण्यां वक्ष्यते ॥ **'इति हेतुस्तदुद्भवे'** इत्येतद्व्याख्याने काव्यप्रकाशे **'इति त्रये समुदिता तस्य काव्यस्य उद्भवे निर्माणे हेतुः'** इत्येतावत्येव वास्तविके पाठे 'इत्युक्ते त्रिके शक्तिनिपुणताभ्यासरूपे **समुदिता** सम्यगुद्भूता प्रकृष्टतया प्रारम्भे **उदिता** कथिता शक्तिः' इत्यर्थस्य **"स हि ( अभ्यासो हि ) सर्वगामी सर्वत्र निरतिशयं कौशलमाधत्ते । तावुभावपि शक्तिमुद्भासयतः । सा केवलं काव्ये हेतुरिति यायावरीयः"** इति नवम AD शतकोत्पन्नराजशेखररचित**काव्यमीमांसा**नुसारेण सिद्धान्तत्वेऽपि **'त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः'** इति रुद्रटानुरोधेन 'त्रये समुदिता' इत्यनयोः प्रथमाबहुवचनान्तत्वमवगत्य तयप्प्रत्ययान्तस्य त्रयशब्दस्यैकत्रिकपरत्वे बहुवचनस्यायुक्तत्वात् त्रिशब्दस्यैव प्रथमाबहुवचनसंभवं **'त्रयः समुदिताः'** इत्येवं पाठं मूले शोधयित्वा **'न तु व्यस्ताः' 'न तु हेतवः'** इति केनचिट्टिप्पण्यां तात्पर्यत्वेन कथितं पश्चात् कैश्चिन्मूले वर्धितम् । अन्यथासिद्धयोर्हेतुत्वाप्राप्त्या तन्निरासस्य व्यर्थस्य लेखने व्यङ्ग्यस्य वाच्यत्वे इव चमत्काराभावेन वाच्यव्यङ्ग्यचमत्कारवर्णकस्य तथा कथनाऽसंभवात् ॥ इति व्यर्थं कोलाहलं कुर्वाणो गदाधरभट्टाचार्यः कथं न वाचालपदवीं प्राप्नोति-इति मात्सर्यमुत्सार्य विचार्यमार्यैः । इति ॥ ४ **राम इति** । रमन्ते योगिनोऽस्मिन्निति रमधातोः 'हलश्च' इति घञ् । तथा च कृत्तद्धितसूत्रेण प्रातिपदिकसंज्ञा । राम इत्यादीनां नामत्वेऽपि 'कृतं कुर्यान्न तद्धितम्' इत्युक्त्याऽव्युत्पत्तिपक्षस्यानङ्गीकारात्।अर्थवत्सूत्रं तु आधुनिकमूर्खकल्पितसंज्ञार्थमेव। पाणिनेरुणादीनामव्युत्पन्नत्वस्यैवाङ्गीकारेण तदर्थमपि॥

(२७३) ⓢ सरूपाणमेकशेष एकविभक्तौ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते।

---

प्रयुज्यते, तदा रमन्ते योगिनो अस्मिन्निति व्युत्पत्त्याश्रयणात् 'कृत्तद्धित–२६३' इति सूत्रेण संज्ञेति ॥(२७३) **सरूपाणामेकशेषः**–। इतरनिवृत्तिपूर्वकमवस्थानं शेषशब्दार्थः। न च विरूपेष्वेकशेषाप्रवृत्त्या घटकलशाविति द्वन्द्वापत्तिरिति शङ्क्यम्, 'विरूपाणाम्–१३३५' इति वार्तिकस्य वक्ष्यमाणत्वात्। वस्तुतस्तु सूत्राक्षरैरेव वार्तिकार्थो लभ्यते, रूप्यते बोध्यते इति रूपमर्थः। समानं रूपं येषामिति सरूपाः 'ज्योतिर्जनपद–१४५९' इत्यादिना समानस्य सभावः, तथा समानं रूपं स्वरूपं येषां ते सरूपाः। सरूपाश्च सरूपाश्च सरूपाः तेषामित्येकशेषेण व्याख्यानात्। न च स्वाङ्गे स्वव्यापारायोगः वाक्यापरिसमाप्तिन्यायादिति वाच्यम्, उद्देश्यतावच्छेदकरूपाक्रान्ततया स्वस्मिन्नपि प्रवृत्तेः। अन्यथा 'तुल्यास्यप्रयत्नम्–२०' इत्यादौ सवर्णदीर्घो न स्यात्। तथा 'अर्थवत्–२६२' सूत्रान्तर्गतानां प्रातिपदिकत्वं, 'प्रत्ययः–२६४' 'परश्च२६५' इत्यत्र सुप्रत्ययः, 'ससजुषोः–२४३' इत्यत्र रुः, 'खरवसानयोः–११८' इति सूत्रे विसर्गश्च न स्यादिति सर्वोपप्लवः स्यात्। 'स्वाध्यायोऽध्येतव्यः' इत्यस्य 'नेह नाना–' इत्यादिश्रुतेश्च स्वस्मिन्नपि यथा प्रवृत्तिस्तथा दीर्घादीनामपीति चेत्तुल्यमेकशेषेऽपि ॥ एतेन 'अइउण्' इत्यादौ 'आद् गुणः १०४' इत्यादिसन्धिकार्यं कुतो नेत्याशङ्कायाम्–वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्सन्धिर्न—इति केषांचित्समाधानं परास्तम्। वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां गुणादीनामुपेन्द्र इत्यादौ तटस्थ इव उद्देश्यतावच्छेदकरूपाक्रान्ते वर्णोपदेशादपि प्रवृत्तेरावश्यकत्वात्। स्यादेतत्, 'सरूपाणामेक एकविभक्तौ' इत्येव सूत्रमस्तु किमनेन शेषग्रहणेन। अत्राहुः–तथा हि सति सरूपाणां स्थाने एकोऽन्तरतम आदेशो भवतीत्यर्थः स्यात्। तथा चाश्वश्चाश्वश्चेत्यत्रोदात्तद्वयवतः स्थाने उदात्तद्वयवानादेशस्तथा अनुदात्तद्वयवतः स्थाने अनुदात्तद्वयवानादेशः प्रसज्येतेति ॥ **एक विभक्तौ यानीति**। विभक्तिः सारूप्ये उपलक्षणं, न त्वेकशेषे निमित्तम्। एवं चानैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्तते। यद्येतन्नारभ्येत, तर्हि प्रत्येकं विभक्तिः स्याद्, द्वन्द्वश्च प्रवर्तेत। आरब्धे त्वेकशेषेऽनेकसुबन्तविरहाद् द्वन्द्वप्राप्तिरेव नास्तीति भावः। ननु सुबुत्पत्तेः प्रागेकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थं बोधयतीति द्विवचनाद्युत्पत्तौ रामौ रामा इत्यादि न सिध्येत्। नैष दोषः, शिष्यमाणस्य लुप्यमानार्थाभिधायित्वात्। अत एव 'कृत्तद्धितसमासैकशेष–' इत्येकशेषो वृत्तिषु गण्यते। परार्थाभिधानं हि वृत्तिः। अत एव च लुप्तेऽपि प्रत्यये लिङ् धुग् इत्यादौ कर्ता प्रतीयत इति दिक् ॥ **सरूपाण्येवेति**। एतच्च उत्तरसूत्रस्थस्यैवकारस्य इहानुकर्षणाल्लभ्यते। अत्र च एकस्यामपि विभक्तौ परतः विरूपाणि न दृष्टानीति पर्यवसन्नोऽर्थः, तेन मातृशब्दयोर्जननीवाचिपरिच्छेत्तृवाचिनोर्नैकशेषः, मातृभ्यां मातृभिरित्यादौ सारूप्येऽपि औजसादिषु वैरूप्यात्। नन्वेवं पयः पयो नयति, देव देवेत्यादावतिप्रसङ्गः स्यादेवेति चेत्। उच्यते, सहविवक्षायामेव एकशेषः प्रवर्तते। इतरेतरयोगद्वन्द्वस्य विषय इति यावत्। यत्र ह्यनेकस्यार्थस्य मिलितस्य इतरान्वयः स तथाभूतो विषयः। इदं च 'इदितो नुम् धातोः' इति लिङ्गाल्लभ्यते, न्यायाच्च। तथाहि। 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति स्थिते श्रूयमाणैकशब्दोपस्थितं सर्वमविशेषादेकरूप्येणैवान्वेतुमर्हति। यद्वा–'तिष्यपुनर्वस्वोः–११७४' इति सूत्राद् द्वन्द्वे इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सति इति व्याख्येयं, न तु द्वन्द्वे कृते सतीति। पन्थानौ पन्थान इत्यादौ 'ऋक्पूरब्धूः–१३५०' इत्यादिना समासान्तापत्तेः, करौ करा इत्यादौ 'द्वन्द्वश्च प्राणितूर्य–१३०५' इत्यादिना एकवद्भावापत्तेश्चेति दिक्। सूत्रे शेषशब्दः कर्मसाधन इत्याह–**एक एव शिष्यत इति**। असत्येकग्रहणे द्विबह्वोरपि शेषः स्यादित्येकग्रहणम्। न चैवमप्येकविभक्तावित्यत्र एकग्रहणं व्यर्थमिति शङ्क्यम्, एकस्यामपि विभक्तौ परतः विरूपाणि न दृष्टानीत्यर्थलाभाय तस्यावश्यकत्वात्। किञ्च स्वसा च स्वसारौ चेत्यादौ विभक्तौ परतः पूर्वभागयोर्वैरूप्यदर्शनात्स्वसार इत्येकशेषस्तत्र न स्यात्। तथा स्वसारे च स्वस्रोश्चेत्यत्र वैरूप्यदर्शनात्स्वसृष्विति न स्यात्। किंतु कमलौ कमल इत्यादिष्वेव स्यात्। कृते त्वेकग्रहणे नायं दोषः प्रसज्यते, एकविभक्तौ परतः पूर्वत्र वैरूप्यादर्शनात्। यदा तु विभक्तावित्यत्रैकत्वस्य विवक्षितत्वान्माऽस्त्वत्र एकग्रहणमित्युच्यते, तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्त्विति केचित् ॥ अन्ये त्वाहुः–एकग्रहणमेकैकविभक्तावित्यर्थलाभार्थम्। तथा च सकलविभक्तावित्यर्थलाभादेवकारापकर्षणं विनैव सिद्धमिष्टमिति दिक् ॥ एकश्च एकश्च द्वौ च द्वौ चेत्यादावेकशेषो न भवत्यनभि-

---

१ **एकविभक्काविति**। एकग्रहणं तु स्पष्टार्थम्। अत एव भाष्यकृता विभक्तिः 'सारूप्य उपलक्षणम्' इत्यत्रैकपदं नोपात्तम्॥ २ **इतरेतरयोगेति**। 'एकवचास्यान्यतरस्याम्' इत्यनेनैकशेषविषयपदानां समाहारे वृत्त्यभावबोधनात् ॥ ३ **इतरान्वय इति**। एकरूपेणैकरूपावच्छिन्ने इतरत्रान्वय इत्यर्थः ॥ ४ **तथाभूत इति**। समुदायस्यैकार्थनिरूपितैककारकावेशरूपसहविवक्षाविषय इत्यर्थः। पयः पयो नयतीत्यादौ गौणमुख्ययोरपि कर्मत्वेन तत्र समुदायादेकविभक्तेः कर्तुं शक्यत्वेन विभक्तिपदेन व्यावर्त्यासंभवेन सहविवक्षायामित्यावश्यकमेवेति भावः ॥ ५ **एकवद्भावापत्तेरिति**। तथा च समाहारविषयत्वेनेतरेतरयोगविषयत्वाभावेनैकशेषानुपपत्तिरिति भावः ॥

प्रथमयोः पूर्वसवर्णः । नादिचि । वृद्धिरेचि । रामौ ॥(२७४) (सू) चुटू ।१।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः । इति जस्येत्संज्ञायाम्-॥ (२७५) (सू) न विभक्तौ तुस्माः ।१।३।४। विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । इति सकारस्य नेत्त्वम् ॥ (२७६) (सू) अतो गुणे ।६।१।९७। अपदान्तादकाराद् गुणे परतः पररूपमेकादेशः स्यात् । इति प्राप्ते-। परत्वात्पूर्वसवर्णदीर्घः । अतो गुणे इति हि (प) पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति[1] न्यायेनाकः सवर्णे इत्यस्यैवापवादो न तु प्रथमयोरित्यस्यापि[2] ॥ रामाः ॥ (२७७) (सू) एकवचनं संबुद्धिः ।२।३।४९। संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ॥ ( २७८ ) (सू) एङ्ह्रस्वात्सम्बुद्धेः । ६ । १ । ६९ । एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । संबुद्ध्याऽऽक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह । हे कतरत्कुलेति[3] । हे राम । हे रामौ । हे रामाः । एङ्ग्रहणं किम् । हे हरे । हे विष्णो । अत्र हि परत्वान्नित्यत्वाच्च संबुद्धिं गुणे कृते ह्रस्वात्परत्वं नास्ति ॥

---

धानात् । द्वन्द्वोऽप्यत्रानभिधानेनैव वारणीयः, उत्सर्गतः संख्याशब्देष्वेवमेव[4] । विंशत्यादौ त्वेकशेष इष्ट एवेति बोध्यम् ॥(२७४) **चुटू** । 'आदिर्ञिटुडवः-३०५६' इत्यत आदिः, 'षः प्रत्ययस्य ६६०' इत्यतः प्रत्ययस्येति चानुवर्तते, तदाह-**प्रत्ययाद्याविति** । प्रत्ययाद्याविति किम् । वाचाटः । 'तेन वित्तश्चुञ्चुपचणपौ २४६८' इत्यत्र प्रत्ययादौ यकारो लुप्तनिर्दिष्टस्तेन चस्य नेत्संज्ञेति वक्ष्यति ॥ ( २७५ ) **न विभक्तौ**—। 'हलन्त्यम् ५' इतीत्संज्ञाप्राप्तौ निषेधारम्भः । तु इत्यस्योदाहरणम्-रामात्, पचेरन् । मकारस्य तु रामम्, अद्राक्षम् । विभक्तौ किम्? 'अचो यत् ३७८७' 'ऊर्णाया युस् २६२०' 'रुधादिभ्यः श्नम् ३३७३' एतेष्वन्त्यस्येत्संज्ञा यथा स्यात् । 'इदमस्थमुः २६८२' इत्यत्र मकारपरित्राणार्थमुकारानुबन्धासञ्जनादनित्योऽयमिति[5] ज्ञायते । अन्यथा 'प्राग्दिशो विभक्तिः २६४७' इति थमो विभक्तित्वाद्दानीमो मकारस्येवानेनैव सूत्रेणेत्त्वनिषेधसिद्धेः किं तेनेति । तेन 'किमोऽत् २६६०' क्वेति सिद्धम् ॥(२७७) **एकवचनम्**-। 'सुः संबुद्धिः' इत्येव सुवचम् । न च सप्तमीबहुवचनेऽतिप्रसङ्गः, संबोधने प्रथमेत्यधिकारादेव तदभावादिति नव्याः ॥ अत्र व्याचख्युः-'सुः संबुद्धिः' इति वाच्ये एकवचनग्रहणमेकोऽर्थ उच्यते येन तावन्मात्रस्य प्रत्ययस्य संज्ञार्थम् । अन्यथा 'सामन्त्रितम् ५५२' इति पूर्वसूत्रे तदन्तस्यामन्त्रितसंज्ञा कृतेति प्रक्रमाभेदाय इयमपि संज्ञा तदन्तस्यैव[6] स्यादिति ॥ (२७८) **एङ्ह्रस्वात्संबुद्धेः** । यद्यत्र 'हल्ङ्याब्भ्यः-२५६' इत्यतो हलमननुवर्त्य एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परस्याः संबुद्धेर्लोप इति व्याख्यायेत, हलनुवृत्तावप्यङ्गात्परा या संबुद्धिः तस्याः यद्धलिति वा । उभयथापि हे ज्ञानेति न सिध्येत् । लोपात्परत्वात्सोरतोऽमि, अमि पूर्वत्वे च कृते एकादेशस्य परादिवद्भावे ह्रस्वान्तात्परत्वाभावात्पूर्वान्तवद्भावे अम एवाभावाद् 'उभयत आश्रयणे नान्तादिवद्' इति निषेधादतो व्याचष्टे **एङन्तादित्यादिना चेदित्यन्तेन** ॥ **संबुद्ध्याऽऽक्षिप्तस्येति**[7] । तदन्तस्यैव संज्ञाभ्युपगमे तु संबुद्ध्या अङ्गमाक्षेप्तुं न शक्यत इति बोध्यम् ॥ **ह्रस्वात्परत्वं नास्तीति** । तथा च सूत्रे एङ्ग्रहणमावश्यकमिति भावः । किञ्च, 'इमां किमाचामयसे न चक्षुषी' इति श्रीहर्षप्रयोगे से इति पृथक् पदं सलक्ष्मीके हे दमयन्तीत्यर्थ इति 'निगरणचलनार्थेभ्यश्च' इति सूत्रे मनोरमायां व्युत्पादितम् ॥ ततश्च तत्रापि संबुद्धेर्लोपार्थमेङ्ग्रहणमावश्यकमेव । स्यादेतत् , एङ्ग्रहणस्य से इत्यत्र सावकाशतया हे हरे इत्यादौ संबुद्धिलोपो न स्यात्, संनिपा-

---

१ **नोत्तरानिति** । न पूर्वोपस्थितापेक्षया व्यवहितानित्यर्थः । सन्निहितबाधेन चरितार्थस्य दूरस्थव्यवहितबाधे सामर्थ्याभावादिति भावः ॥ २ **न तु प्रथमयोरिति** । अत एव 'नादिचि' इत्यत्रेज्ग्रहणचारितार्थ्यम् । तद्धि जश्शसोर्निषेधाभावाय । पररूपेण पूर्वसवर्णदीर्घस्यापि बाधे तु नैव तत्र पूर्वसवर्णदीर्घश्रवणमिति तद्वैयर्थ्यं स्पष्टमेव ॥ ३ **कुलेतीति** । न चोपदेशावस्थायामेवोकारस्येत्संज्ञालोपयोजातयोरविशिष्टस्य सकारमात्रस्य संबुद्धिसंज्ञायां सकारमात्रवृत्तिसंबुद्धिसंज्ञायाः कथं स्थानिवद्भावेनादेशेऽतिदेश इति वाच्यम्, सुप्संज्ञाया उकारविशिष्टसकारे सत्त्वेन तत्समनियतैकवचनसंज्ञासमनियतसंबुद्धिसंज्ञाया अपि विशिष्टधर्मत्वेनानल्धर्मत्वादिद्त्वस्येव सुत्वस्यापि स्थानिवत्त्वातिदेशे बाधकाभावात् । तथा चोक्तं भगवता-'विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम'-इति॥ ४ **संख्याशब्देष्वेवमेवेति** । एकादि-नवदशपर्यन्तेत्यादिः । एवं च, अष्टवर्षादिशब्दे अष्टौ चाष्टौ चेत्येकशेषमाश्रित्य व्याचक्षाणाः निरंकुशा एवेति तत्त्वम् । नवदशशब्देन वाच्यत्वे त्वर्थस्य नैवैकशेषः । एकोनविंशत्यादिशब्देनोक्तौ तु भवत्येवैकशेष इति बोध्यम् । एवमेव तिङन्तान्यपि नैकशेषं प्रयोजयन्ति, क्रियाया एकेनैवोक्तत्वात्सरूपतिङन्तान्तरप्रयोगस्य प्राप्त्यभावात् ॥ ५ **अनित्योऽयमिति** । तेन ङेरादेशे औति तकारस्येत्संज्ञा सिद्धा । तद्धिते तु नैव निषेधप्रवृत्तिः । दानीमो मकाररक्षार्थं तु मकारोत्तरं 'लोपो व्योः-' इति लोपेन यकारप्रश्लेषेण मकारस्यान्त्यत्वाभावादिति प्रकृतसूत्रे भाष्ये स्पष्टम् ॥ ६ **तदन्तस्यैवेति** । अङ्गाधिकारे संबुद्धावित्युक्तेः संबुद्धिपरत्वमङ्गस्य केवलप्रत्ययस्यैव संबुद्धिसंज्ञायां संभवतीति न महासंज्ञाकरणसामर्थ्येन 'संज्ञाविधौ प्रत्ययग्रहणे-' इति परिभाषाबाध इति वक्तुं शक्यमिति नामन्त्रितसंज्ञाया इव तदन्तस्य संज्ञापत्तिरिति ध्येयम् ॥ ७ **संबुद्ध्येति** । अयं भावः—संबुद्धिसंज्ञायाः प्रत्ययस्यैव जातत्वात्, 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः-' इति परिभाषया 'यस्माद्विहितस्तदादेः' इत्यंशस्योपस्थितौ प्रत्यासत्त्या संबुद्ध्योपस्थितस्य तदादिपर्यायस्याङ्गपदार्थस्य संबुद्धिपदार्थ एवान्वयस्य न्याय्यत्वेन 'अङ्गात्परा या संबुद्धिस्तदवयवो हल् लुप्यते स च हल् एङ्ह्रस्वात्परीभूतश्चेत्' इत्यर्थे हे कतरदित्यत्र तकारलोपापत्तिः स्यात् । तद्वारणाय 'अङ्गात्परा या संबुद्धिस्तद्रूपो हल् लुप्यते' इत्यर्थकरणे तु हे कुलेत्यत्र लोपानुपपत्तिरतोऽन्येनोपस्थितस्यान्यत्रान्वयाङ्गीकरणे तु नैव कतरदित्यत्र लोपापत्तिः, नापि हे कुलेत्यत्र लोपानुपपत्तिरिति ॥

(२७९) (सू) अमि पूर्वः । ६ । १ । १०७ । अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात् । रामम् । रामौ ॥
(२८०) (सू) लशक्वतद्धिते । १ । ३ । ८ । तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः । इति शसः शस्येत्संज्ञा ॥
(२८१) (सू) तस्माच्छसो नः पुंसि । ६ । १ । १०३ । पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नः स्यात्पुंसि[2] ॥
(२८२) (सू) अट्कुप्वाङ्नुम्व्यवायेऽपि । ८ । ४ । २ । अट् कवर्ग पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे । पदव्यवायेऽपीति (१०१८) निषेधं बाधितुमाङ्ग्रहणम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । तच्चाकर्तुं शक्यम्, अयोगवाहानामट्सूपदेशस्योक्तत्वात् । इति णत्वे प्राप्ते-॥ (२८३) (सू) पदान्तस्य[3] । ८ । ४ । ३७ । पदान्तस्य नस्य णत्वं न स्यात् । रामान् ॥ (२८४) (सू) यस्मात्प्रत्ययविधिस्तदादि

---

तपरिभाषाविरोधात् । तथा ह्रस्वग्रहणस्यापि हे रामेत्यत्र सावकाशत्वाद् हे गौरि इत्यत्र परत्वाद्धल्ङ्यादिलोपं बाधित्वा 'अम्बार्थनद्योः-३७५' इति ह्रस्वे कृते संबुद्धिलोपो न स्यात् । लक्ष्मीशब्दे तु हल्ङ्यादिलोपस्याप्यभावाद् हे लक्ष्मि इत्यत्र सुतरां संबुद्धिलोपो न स्यात् । सत्यम्, 'गुणात्संबुद्धेः' इति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषां बाधित्वाऽपि संबुद्धिलोपः प्रवर्तते इति दिक् ॥ (२७९) अमि पूर्वः । प्रथमयोरिति पूर्वसवर्णदीर्घे प्राप्तेऽयमारम्भः ॥ 'इको यणचि ७४' इत्यतोऽचीत्यनुवर्तते तदाह—**अम्यचीति** । आमि योऽच् तस्मिन् अमोऽवयवे अचीति यावत् । तेन मकारसहितस्य पूर्वरूपं नेति स्थितं मनोरमायाम् । एवम् 'अक्षादूहिन्याम्-११०' इत्यादावपि ऊहिन्यां योऽच् तस्मिन्नित्यादि बोध्यम् । 'पदास्वैरिबाह्या-' इत्यादिनिर्देशाश्चास्मिन् व्याख्याने लिङ्गमित्यपि स्थितम् ॥ कथं तर्हि काशिकादावमि परत इत्येवोक्तं, न त्वम्यचीति चेदत्राहुः।'तस्मादित्युत्तरस्य ५५' 'आदेः परस्य ६८' इत्यादेरेवादेश इति निर्णीते 'एकः पूर्वपरयोः १०३' इत्यादेशः पूर्वपरयोर्वर्णयोरेव भाविष्यतीत्याशयेन नोक्तमिति ॥ (२८०) लशक-। 'आदिर्ञिटुडवः ३०५६' इत्यत आदिरनुवर्तते, 'षः प्रत्ययस्य ६६०' इत्यतः प्रत्ययस्येति, 'अतद्धिते' इति पर्युदासाद्वा लभ्यत इत्याह—**प्रत्ययाद्या इति** । लश्च शश्च कुश्चेति समाहारद्वन्द्वे लशकिति नपुंसकम् । तदितरेतरयोगद्वन्द्वेन विवृणोति—**लशकवर्गा इति** । अतद्धित इति किम्, प्राणिस्थादातः-२५६८' इति लच् । चूडालः । 'लोमादि-२५३४' । लोमशः । अत्र प्रयोजनाभावादेव नेत्संज्ञेति नेदं प्रत्युदाहरणमिति नव्याः । 'कर्णललाटात्-५००८' इति भवार्थे कन् । कर्णिका । सत्यां हीत्संज्ञायां 'किति च १५३८' इति वृद्धिः स्यात् ॥ प्रत्ययाद्या इति किम्, 'जल्पभिक्ष-४१५६' इति वृङः षाकन् । वराकः । अत्र 'क्ङिति च २९७२' इति गुणो न स्यात् ॥ (२८१) **तस्माच्छसो**-। तच्छब्देन संनिहितः पूर्वसवर्णदीर्घः परामृश्यते । दीर्घमात्रपरामर्शे तु एतान् गाः पश्येत्यत्रापि नत्वप्रसङ्गात् । शस इत्यवयवषष्ठी स चावयवः परत्वेन विशेष्यते-पूर्वसवर्णदीर्घात् परस्य शसोऽवयवस्येति, तदेतदाह—**परो यः शसः सकार इति** । परो यः शसिति न व्याख्यातम्, कृते पूर्वसवर्णदीर्घे ततः परस्य शसोऽसंभवात् ॥ (२८२) **अट्कुप्वाङ्**-। 'रषाभ्याम्-२३६' इति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमिदम् ॥ तत्र सर्वैर्व्यवायोऽसंभवी, एकैकमात्रव्यवाय इत्यपि नार्थः, क्षुभ्नादिषु क्षुभ्नपाठसामर्थ्यात् 'सरूपाणाम्-२७३'इत्यादिनिर्देशाच्चेत्यभिप्रेत्याह—**व्यस्तैर्यथासंभवं मिलितैश्चेत्यादि**। नन्वेवं कृत्स्नं कार्त्स्न्यमित्यादावडादिव्यवधानाभावाण्णत्वाभावेऽप्यादर्शेनेत्यादावड्व्यवधानादातिप्रसङ्गः । न च अडादिभिरेव व्यवधान इति नियमः, अप्राप्ते विधिरयमित्युक्तत्वात् । सत्यम्, योगविभागोऽत्र बोध्यः। 'व्यवायेऽपि' इत्येको योगो विध्यर्थः । 'अट्कुप्वाङ्नुम्' इत्यन्यो नियमार्थः । छान्दसो भिसो लुक् । अत्र योगविभागं विनापि निर्वाहः सुकर इति तु नव्याः । तथाहि 'अट्कुप्वाङ्-' इति सूत्रे 'रषाभ्याम्-२३६' इत्यनुवर्तते । पञ्चमीश्रुत्या 'तस्मादित्युत्तरस्य ६५'इति परिभाषोपतिष्ठते । उपस्थिताऽपि सा वचनप्रामाण्यादडादिव्यवाये न प्रवर्तते । तदन्यव्यवाये तु प्रवर्तते एव । अत एव-येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादेकवर्णव्यवहितस्यैव इको गुणो न तु भिनत्तीत्यादावनेकव्यवहितस्येक इति 'पुगन्तलघूपधस्य च २९४४' इति सूत्रे वक्ष्यति । एव च यत्राडादिभिरेव व्यवधानं रामेणेत्यादौ तत्र भवत्येव णत्वम् । यत्र त्वडादिभिन्नेन व्यवधानमादर्शेनेत्यादौ तत्र न भवति, 'तस्माद्-६५' इति परिभाषाया जागरूकत्वात् ॥ **निषेधं बाधितुमिति** । तेन पर्याणद्धमित्यत्र 'उपसर्गादसमासेऽपि-३०५४' इति णत्वं सिध्यतीति भावः॥ **उपलक्षणार्थमिति** । नुम्स्थानिकस्य स्वाभाविकस्य वाऽनुस्वारमात्रस्योपलक्षणार्थं नुम्ग्रहणमित्यर्थः । तेन 'बृहि वृद्धौ' इदित्त्वान्नुम्, तस्यानुस्वारः 'तृंहू हिंसायाम्' स्वाभाविकोऽत्रानुस्वारः बृंहणं, तृंहणम्, उभयत्रापि णत्वं सिद्धम् ॥ **अयोगवाहानामिति** । अविद्यमानो योगः प्रत्याहारेषु संबन्धो येषां ते अयोगाः अनुपादिष्टत्वादुपदिष्टैरगृहीतत्वाच्च प्रत्याहारसंबन्धशून्या इत्यर्थः। वाहयन्ति निर्वाहयन्ति प्रयोगमिति वाहाः, अयोगाश्च ते वाहाश्च अयोगवाहाः । अनुपदिष्टत्वे उपादिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः ॥ **अट्स्विति** । निष्कर्षस्त्वकारोपरीति, तेन पयःस्वित्यादाविणः परस्येति षत्वं न भवति । अत एवोक्तं प्राक्--अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि-इति ॥ **णत्वं न स्यादिति** । 'न भाभूपूकमिगमि-२७८३' इत्यतो नेत्यनुवर्तते इति भावः ॥ (२८४) **यस्मात्**--। **तदादीति** । तत्प्रकृति-

---

१ **राममिति** । 'प्रथमयोः-' इत्यतः पूर्वसवर्ण इत्यस्यानुवृत्तौ रामम्, हरिम् इत्यत्र पूर्वपरयोर्द्विमात्रत्वेनान्तरतम्याद् द्विमात्रादेशवारणाय पूर्वग्रहणमिति यादृक् पूर्वः तादृगेवादेश इत्यर्थाङ्गीकारेण न द्विमात्रापत्तिरिति भावः ॥ २ **पुंसीति** । पुंसि वर्तमानाद्विहितस्य शसोऽवयवो यः पूर्वसवर्णदीर्घात्परः सकारस्तस्य नकारादेश इति परमार्थः ॥ ३ **पदान्तस्य** । णत्वप्रकरणेऽपि 'अपदान्तस्य' इत्यधिकाराङ्गीकारेणेदं सूत्रं प्रत्याख्यातं भाष्ये ॥ ४ वराहादिभ्यो विहितस्य ककः कित्करणायान्त्यककारकरणमन्यस्यैवार्थस्य ज्ञापकम् ॥

प्रत्ययेऽङ्गम् । १ । ३ । १३ । यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात् । भवामि भविष्यामीत्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थं तदादिग्रहणम् । विधिरिति किम् । स्त्री इयती । प्रत्यये किम् । वव्रश्च । प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूत् ॥ ( २८५ ) (सू) अङ्गस्य । ६ । ४ । १ । इत्यधिकृत्य ॥ ( २८६ ) (सू) टाङसिङसामिनात्स्याः ।७।१।१२। अकारान्तादङ्गाट्टादीनां क्रमादिनादय आदेशाः स्युः । णत्वम् । रामेण॥( २८७ ) (सू) सुपि च ।७। ३ ।१०२। यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात् । रामाभ्याम् ॥(२८८)(सू) अतो भिस ऐस् ।७।१।९। अकारान्तादङ्गाद्भिस ऐस् स्यात् । अनेकाल्त्वात्सर्वादेशः । रामैः॥(२८९)(सू)ङेर्यः ।७।१।१३।

---

रूपमादिर्यस्य शब्दस्वरूपस्येति बहुव्रीहिः ॥ ननु 'यस्मात्प्रत्ययविधिस्तदङ्गम्' इत्येवास्तु, किमादिग्रहणेनेत्यत आह—**भवामीत्यादि** । प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वादङ्गत्वम्, तेन कर्ता कारक इत्याद्यपि सिध्यतीति भावः ॥ **अङ्गसंज्ञार्थमिति** । अन्यथा 'अतो दीर्घो यञि २९२४' इति दीर्घो न स्यादिति भावः । न चारम्भसामर्थ्यादेव दीर्घः स्यादिति वाच्यम्, 'पय गतौ', 'वय गतौ' आभ्यां यङ्लुकि पापामि पापावः वावामि वावाव इत्यादौ चरितार्थत्वात् ॥ **स्त्री इयतीति** । इदमः परिमाणे वतुप् । 'किमिदंभ्यां वो घः २४९७' इति घस्तस्य इयादेशः । 'इदंकिमोः–१४६५' इति ईश् । 'यस्येति च ४३१' इति ईशो लोपः । 'उगितश्च६१९'इति ङीप् । सत्यां हि संज्ञायां स्त्रीशब्दस्य 'यस्येति च४३१' इति लोपः स्यात् । न चेशो लोपस्य 'असिद्धवदत्राभात् २९३७' इत्यसिद्धत्वान्नातिप्रसङ्ग इति वाच्यम्, 'प्राग् भादसिद्धत्वम्' इति पक्षाभ्युपगमादनित्यत्वाद्वेति व्याख्यातारः ॥ नव्यास्तु–स्त्री अं पश्यतीत्यत्र स्त्रीशब्दस्य 'स्त्रियाः ४२१' इति इयङ् स्यात् । अकारादमि कृते 'अमि पूर्वः २७९' इत्येकादेशस्य परादिवद्भावेन प्रत्ययत्वात् । अततेर्डप्रत्यये टिलोपे च सत्यकारस्य स्वत एव प्रत्ययत्वाच्च । विधिग्रहणे कृते तु नायं दोषः प्रसज्यते, अम्प्रत्ययस्याकाराड्प्रत्ययस्य चाततेर्विहितत्वेऽपि स्त्रीशब्दादविधानात् । स्यादेतत्, वतुपोऽम्प्रत्ययस्य च स्त्रीशब्दादविधानेऽपि सोर्विधिरस्त्येवेति तद्दोषतादवस्थ्यमिति चेन्मैवम्, संनिधानबलेन यस्माद् यः प्रत्ययो विहितस्तस्मिन् तदङ्गमिति व्याख्यानात् ॥ **प्रत्यये किमिति** । तदादिरूपं कियदित्यपेक्षायां यस्मात्प्रत्यय इति प्रत्ययस्य श्रुतत्वात्प्रत्ययपर्यन्तमेवाङ्गं भविष्यतीति मत्वा प्रश्नः । प्रत्ययस्य श्रुतत्वेऽपि प्रत्ययविशिष्टं ततोऽप्यधिकं वा निरवधिकमङ्गं स्यात्, तदादीत्यस्यार्थनिर्णये प्रत्ययश्रवणस्योपक्षयादित्याशयेन व्याचष्टे––**प्रत्ययविशिष्टस्येत्यादिना** । प्रत्ययविशिष्टस्येति किम्, वव्रश्च अत्र विशिष्टस्याङ्गसंज्ञायाम् 'उरत् ३००४' इत्यदादेशस्य परनिमित्तत्वालाभात् 'अचः परस्मिन्–७७' इति स्थानिवत्त्वाप्रवृत्त्या 'न संप्रसारणे–४९७' इति निषेधाभावादभ्यासस्य पुनरपि संप्रसारणं प्रवर्तेत । तथा श्वर्थं श्र्यर्थमित्यत्र'अचि श्नुधातुभ्रुवाम्–२७९'इति इयङुवङौ स्यातामुक्तरीत्या अचीत्यनेनाजादौ प्रत्यय इत्यलाभात्॥ततोऽधिकस्याङ्गसंज्ञायां तु 'देवदत्त ओदनमपाक्षीत्' इत्यत्र देवदत्तशब्दात्प्रागडागमः स्याद्देवदत्तशब्दात्सुप्रत्ययस्य विहितत्वेन लुङः प्राग्वर्तिसमुदायस्याङ्गत्वात् । द्वितीयप्रत्ययग्रहणे कृते तु न कोऽपि दोषः प्रसज्यते ॥ अन्ये तु यस्माल्लुङादिविधिः प्रत्यासत्त्या तस्यैवाङ्गस्याडागमः स्यादिति ततोऽप्यधिकस्येत्येतदनास्थायोक्तं, किं तु एतस्यापि विशिष्टस्याङ्गत्वे यद् दूषणं तदेवेत्याहुः ॥ **( २८६ ) टाङसि–** । 'अतो भिस ऐस् २८८' इत्यस्मादनुवृत्तेन अत इत्यनेन सामानाधिकरण्येन विशेषणात् 'अङ्गस्य २८५' इत्यधिकृतं षष्ठ्यन्तमपि पञ्चम्या विपरिणम्यते विशेषणेन तदन्तविधिस्तदाह––**अकारान्तादङ्गादिति**॥ **( २८७ ) सुपि च** । यञीत्यनुवर्तते । अल्ग्रहणात्तदादिविधिरित्याह––**यञादौ सुपीति** । यञि किम्, रामः । अत इति किम्, अग्निभ्याम्॥ **( २८८ ) अतो भिस ऐस्** ॥ ननु एस् इत्येवास्तु । न च 'अतो गुणे २७६' इति पररूपापत्तिः, एकारोच्चारणवैयर्थ्यापत्तेः । अन्यथा इसमेव विदध्यादिति चेत्सत्यम्, ऐदेतोर्द्विमात्रत्वाविशेषेण गौरवाभावात् । 'बहुलं छन्दसि' इत्यत्र अनतोऽपि भवति । नद्यैरिति काशिकोदाहृतप्रयोगस्य ऐस्करणं विना अनिर्वाहाच्च । केचिदैस्करणं निर्जरसैरित्यैकारश्रवणार्थमिति व्याचख्युः । तच्चिन्त्यं, संनिपातपरिभाषया जरसादेशाप्रवृत्तेर्निर्जरैरित्येव भाष्ये सिद्धान्तितत्वात्॥ **(२८९) ङेर्यः**।ङेरिति चतुर्थ्येकवचनस्य ग्रहणं,न सप्तम्ये-

---

१ **इत्यधिकृत्येति** । अत्रैतल्लेखनेनेदं सूच्यते–'एङ्ह्रस्वात्–' इति सूत्रे नाङ्गाधिकारः । किन्तु तदादेरित्यन्तांशस्यैवोपस्थितिरिति ॥ २ **अकारान्तादिति** । 'अकारात्परस्याङ्गसंज्ञानिमित्तस्य भिसः' इत्येव परमार्थः । अत एव ब्राह्मणभिस्सा इत्यत्र भिस ऐस् न । अन्यथाऽन्तर्वर्तिविभक्त्या ब्राह्मणेत्यस्याकारान्ताङ्गत्वेन तदापत्तिर्दुष्परिहरैवेति बोध्यम् ॥ ३ **पक्षाभ्युपगमेति** । यथाश्रुतन्यासपक्षेऽपि न दोषः, प्रत्यासत्त्याऽजादिप्रत्ययनिरूपिताङ्गसंज्ञकस्यैवेयङ्विधानात्प्रकृते तथात्वाभावात् ॥ ४ **वव्रश्चेति** । अयं भावः–अत्र सप्तम्यन्तप्रत्ययपदोपादान एव प्रत्ययप्राग्भागस्याङ्गसंज्ञालाभेनैवाऽर्थापत्त्या 'अङ्गाधिकारे सति प्रत्यये' इति सप्तम्यन्तमुपतिष्ठते नान्यथेति 'उरत्' इत्यत्र 'प्रत्यये' इति सप्तम्यन्तानुपस्थानेऽकारादेशस्य परनिमित्तकत्वाभावेन 'स्थानिवत्त्वाभावे 'न संप्रसारणे–' इति निषेधो न स्यात् । अङ्गाधिकारे सप्तम्यन्तप्रत्ययपदोपस्थाने तु तस्य परनिमित्तकत्वेन स्थानिवत्त्वं सुलभमिति 'न संप्रसारणे–' इति निषेधोऽपि सुलभ इति ॥ ५ **प्रत्यासत्त्या तस्यैवेति** । तदादिपदग्राह्यस्य संकोचे मानाभावाल्लुङ्पर्यन्तस्यैवाङ्गसंज्ञापत्तिर्न तत्प्राग्वर्तिन इति लुङादिनिरूपिताङ्गसंज्ञकस्येत्यर्थस्य दुर्लभत्वेन लुङन्तस्याङ्गस्येत्यर्थस्यैव वाच्यत्वेन सुप्रत्ययविधिमाश्रित्य देवदत्तादिलुङ्पर्यन्तसमुदायस्यैवाङ्गत्वेन देवदत्तशब्दात्प्रागेवाडागमापत्तिः स्यादित्ययं दोषो दृढ एवेति बोध्यम् ॥

अतोऽङ्गात्परस्य ङे इत्यस्य यादेशः स्यात् । रामाय । इह स्थानिवद्भावेन यादेशस्य सुप्त्वात्[1] सुपि चेति दीर्घः । (२९०) (प०) संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषा तु नेह प्रवर्तते, कष्टाय[२८५३] क्रमणे इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात् । रामाभ्याम् ॥ (२९१) (सू०) बहुवचने झल्येत् ।७।३।१०३। झलादौ बहुवचने सुपि परे अतोऽङ्गस्यैकारः स्यात् । रामेभ्यः । बहुवचने किम् । रामः । रामस्य[३] । झलि[४] किम् । रामाणाम् । सुपि किम् । पचध्वम् । जश्[२३५]त्वम् ॥

---

कवचनस्य, व्याख्यानात् । अत एव 'ङेराम्–३७८' इत्यत्रास्याग्रहणम्, 'समानाधिकरणे' 'स्त्रियाम्' इत्यादिनिर्देशाच्च ॥ **स्थानिवद्भावेनेति** । आदेशालाश्रयविधौ स्थानिवत्त्वनिषेधाभावादिति भावः ॥ **सुपि चेति दीर्घ इति** । न च परत्वात् 'अकृत्सार्वधातुकयोः–३०७१' इति दीर्घोऽस्त्विति शङ्क्यम्, तत्र 'अयङ् यि क्ङिति ३५१८' इत्यतः क्ङितीत्यनुवर्तनात् । अन्यथा उरुयेत्यत्रापि दीर्घः स्यात् । उरुशब्दात्परस्य टा इत्यस्य 'सुपां सुलुक्–५४१३' इति यादेशः, एतच्च काशिकायां स्पष्टम् ॥ यद्यपि ङेर्यादेशस्य ङित्त्वमस्ति 'न ल्यपि ५१५७' इति ज्ञापकेन अनुबन्धकार्येष्वल्विधावपि स्थानिवत्त्वाभ्युपगमात्, तथापि शानचः शित्त्वेन लिङ्गेन क्वचिदनुबन्धकार्येषु स्थानिवत्त्वानभ्युपगमादादेशे ङित्त्वं नेत्यभ्युपेत्येदं, विरोधाभावात्परत्वमत्राकिंचित्करमित्यनादरेण वा 'अकृत्सार्वधातुक–३०७१' इति दीर्घो नोक्त इति स्थितस्य गतिमाहुः ॥ ननु 'ज्यादादीयसः २७२६' इति ज्याशब्दात्परस्य ईयस आकारविधानमङ्गवृत्तपरिभाषाया लिङ्गम् । अन्यथा 'बहोर्लोपः–२७३१' इत्यतो लोप इत्यनुवर्त्य लोपमेव विदध्यादाकारं तु न विदध्यात्, 'अकृत्सार्वधातुकयोः ३०७१' इति दीर्घेण ज्यायानिति रूपसिद्धेरिति भाष्ये स्थितम् । तदिदानीं विरुध्येत, क्ङितीत्यनुवृत्तौ तु ज्यायानित्यत्र 'अकृत्सार्व–३०७१' इति दीर्घाप्रवृत्तेः । तथा च 'अकृत्–३०७१' इति सूत्रे क्ङितीति नानुवर्तनीयमुरुया धृष्णुयेत्यत्र दीर्घाभावश्छान्दस इत्येवाभ्युपेयमिति चेत्, अत्राहुः–'ज्ञाजनोर्जा ३३३०' इत्याकारग्रहणमुक्तपरिभाषालिङ्गम् । अन्यथा जमेव विदध्यात् । 'अतो दीर्घो यञि २९२४' इति जायते, जानातीत्यादौ दीर्घसिद्धेरित्यपि भाष्ये स्थितं, तच्च ज्ञापकम् 'अकृत्–३०७१' इत्यत्र क्ङितीत्यनुवृत्तावपि संगच्छते । एवं च सति 'ज्यादात्–२७२६' इत्याकारग्रहणं लिङ्गमिति तु भाष्ये प्रौढिवादमात्रमस्तु ॥ (२९०) **संनिपातेति** । संनिपातः संश्लेषः लक्षणं निमित्तं यस्य स संनिपातलक्षणः,तं संनिपातं विहन्तीति तद्विघातः।'कर्मण्यण् ३८७९'कुत्वतत्वे । उपजीवकविधिः स्वोपजीव्यविघातकविधेर्निमित्तं न भवतीत्यर्थः ॥ (२९१) **रामः । रामस्येति** । यद्यपि रामस्येत्यत्र सन्निपातपरिभाषयाप्येत्वं सुपरिहरम्, तथापि 'अदः सर्वेषाम् ३२३२' इति निर्देशादेत्वविधौ संनिपातपरिभाषा न प्रवर्तते इत्याशयेनोक्तमिति

---

१ **सुप्त्वादिति** । अत्र यादेशे जाते सुप्त्ववैकल्यप्रयुक्ता दीर्घशास्त्राप्राप्तिरिति सुप्त्वस्य भ्यामादावपि सत्त्वेन स्थान्यल्माश्रवृत्तित्वाभावान्न निषेधप्रवृत्तिरिति भावः ॥ २ **झल्येदिति** । अङ्गस्येगागमे परत्वादाङ्गत्वाच्च गुणं बाधित्वा 'इकोऽचि–' इति नुमापत्तिरिति ज्ञानयोरित्यस्य सिद्ध्यनुपपत्तिः । प्रत्ययस्येडागमे हे गङ्गे इत्यत्र संबुद्धिलोपानुपपत्तिः । गुणैकादेशस्य पञ्चमीसमासपक्षे स्थानिवद्भावेनैङन्तत्वाभावादेङ्ह्रस्वादित्यस्याप्राप्तेः, इकारेण व्यवधानाच्च 'हल्ङ्याब्भ्यः–' इत्यस्याप्राप्तेः ॥ ३ ननु राम इत्यत्र "प्रत्ययः" "परश्च" इत्यादिनिर्देशेन "एङ्ह्रस्वात्संबुद्धेः" इति सूत्रे ह्रस्वग्रहणेन च "सौ परे एत्त्वं न" इति कल्पनात् न दोषोऽत आह–**रामस्येति** । नन्वत्रापि "टाङसिङसामिनादस्याः" इति न्यासेन न दोष इति चेन्न, रामाभ्यामित्यादावेत्वापत्तेः । ननु चात्रापि दीर्घविधानसामर्थ्यादेत्वाभावकल्पनेन न दोषः । न च रामायेत्यत्र चारितार्थ्यमिति वाच्यम्, "ङेरय" इति न्यासेनैव निर्वाहादिति चेन्न, रामेभ्य इत्यत्र दोषसद्भावात् । एत्वस्य रामेष्वित्यत्र चारितार्थ्यात् ॥ इति वावदूकाः ॥ **'नासूया कर्तव्या यत्रानुगम आचार्येण क्रियते'** इति **'पङ्क्तिविंशति–'** इति सूत्रभाष्यमेवान्ततः सर्वैरनुसरणीयमेवेति दाधिमथाः ॥ ४ **झलि किमिति** । 'उतो वृद्धिर्लुकि–' इत्यतो हलीत्यनुवर्त्य संनिपातपरिभाषया रामाणामित्यत्र नापत्तिरिति प्रश्नः । एत्वे संनिपातपरिभाषाया न प्रवृत्तिरिति सामान्यापेक्षसूचकमेव झल्ग्रहणमित्येत्वापत्तिरित्युत्तराशयः । 'परस्मैपदानाम्' इत्यादिनिर्देशैः सर्वत्रैत्वे तदप्रवृत्तिकल्पने मानाभाव इति स्पष्टानुगमार्थमेवैतादिति तत्त्वम् ॥ ५ **शित्त्वेन लिङ्गेनेति** । इदं शित्त्वं तु तत्सूत्र एव भाष्यकृता प्रत्याख्यातमेवेति बोध्यम् ॥ ६ **दीर्घो नोक्त इति** । रामाभ्यामित्यर्थमुक्तमेव सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् । अकृत्सार्वधातुकयोरिति पर्युदासबलेनासुप्येव तत्प्रवृत्तिस्वीकारादिति तु तत्त्वम् ॥ ७ **प्रौढिवादेति** । यथाशक्यं प्रक्रियालाघव एव कार्ये इत्येवैतत्परिभाषाफलितार्थः । परिभाषायां तु न निर्भरः अन्यथासिद्धप्रयोजनदानेन तस्या वैयर्थ्यसूचनात्, 'द्वाभ्याम्' 'तयोः' इत्यादिबहुलक्ष्यसिद्धिप्रतिबन्धिकाया अप्रवृत्तिकल्पने निर्देशसंभालनगौरवापत्तेश्च ॥ ८ **उपजीव्येति** । उपजीव्यविरोधमूलिकैषेति भावः ॥ ९ **एत्वविधौ संनिपातेति** । 'सर्वेषाम्' इति निर्देशेन सुटयेत्वे परिभाषाया अप्रवृत्तिकल्पनेऽपि स्यादेशे तदप्रवृत्तिकल्पने मानाभावः । 'प्रत्ययस्य' 'सर्वस्य' इत्यादिनिर्देशैः परिभाषायाः प्रवृत्त्यङ्गीकारसूचनाच्चिन्त्यमिदम् । एवं च 'बहुवचने' इति स्पष्टानुगमार्थमेव कृतम्, 'नासूया कर्तव्या यत्रानुगम आचार्येण क्रियते' इति भाष्यात् । रामाभ्यामिति प्रत्युदाहरणम् । परत्वादेत्वापत्तिः । दीर्घस्य रामायेत्यत्र एत्वस्य रामेष्वित्यत्र चारितार्थ्यादिति भावः ॥

(२९२) (सू.) **वाऽवसाने**।८।४।५६। अवसाने झलां चरो वा स्युः। रामात्। रामाद्। द्वित्वे[१] रूपचतुष्टयम्। रामाभ्याम्। रामेभ्यः। रामस्य। सस्य द्वित्वपक्षे खरि चेति [१८६] चर्त्वेऽप्यान्तरतम्यात्सस्य स एव न तु तकारः, अल्पप्राणतया[२] प्रयत्नभेदात्। अत एव सः सीति [३१३३] तादेश[३] आरभ्यते॥ (२९३) **ओसि च**।७।३।१०४। ओसि परे अतोऽङ्गस्य एकारः स्यात्। रामयोः॥ (२९४) **ह्रस्वनद्यापो नुट्**।७।१।५४। ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात्॥ (२९५) (सू.) **नामि**।६।४।३।

स्थितस्य गतिः समर्थनीया॥ **जश्त्वम्**। (२९२) **वाऽवसान इति**। अत्राहुः–जश्त्वे कृतेऽवसाने चर्त्वमिति न मन्तव्यं किन्तु येन नाप्राप्तिन्यायेन अवसाने चर्त्वस्य जश्त्वापवादत्वाच्चर्त्वाभावपक्षे जश्त्वमिति योज्यम्॥ **द्वित्व इति**। 'अनचि च ७५' इत्यनेन। अनचीति प्रसज्यप्रतिषेध इति प्रागेवोक्तम्। पर्युदासाभ्युपगमे तु इह द्वित्वं न स्यात्॥ **तादेश आरभ्यत इति**। वत्स्यतीत्यादौ चर्त्वेन तकारो न लभ्यत इति 'सः स्यार्धधातुके ३१२३' इत्यनेन सकारस्य तकारो विधीयत इत्यर्थः॥ (२९४) **ह्रस्वनद्यापो–**। अङ्गस्येत्यनुवर्तते। तच्च पञ्चम्यन्तेन सामानाधिकरण्याद् अङ्गादिति विपरिणमय्य ह्रस्वादिभिर्विशेष्यते, विशेषणेन तदन्तविधिरित्याशयेनाह–**ह्रस्वान्तादिति**। एतेन ह्रस्वनद्याप इति पञ्चमी, न तु षष्ठीति स्फोटितम्। ज्ञापकं त्वत्र 'नामि २९५' इति। न हि प्रकृत्यागमत्वे अङ्गसंज्ञानिमित्तं नाम् संभवति। एवं चानया पञ्चम्याऽनन्यार्थया 'तस्मादित्युत्तरस्य ६५' इति परिभाषोपस्थित्या 'आमि सर्वनाम्नः सुट् ३०४' इत्यतोऽनुवृत्तमामीति सप्तम्यन्तं 'ङसि धुट् १९९' इत्यत्रेव षष्ठ्या विपरिणम्यते, आमीति सप्तम्याः 'त्रेस्त्रयः ३६९' इत्यत्र चरितार्थत्वादित्यभिप्रेत्याह–**आमो नुडागमः स्यादिति**। अत्र नव्याः–'नुट्' इति योगं विभज्य 'अङ्गात्परस्यामो नुट्' इत्युत्सर्गविधिं कृत्वा 'नद्यापः' इत्यंशेन 'दीर्घात्परस्यामो नुट् चेद्भवति तर्हि नद्याप एव' इति नियमविधिं व्याख्याय ह्रस्वग्रहणं प्रत्याख्येयम्। न चैवं लिहां दुहामित्यादावतिप्रसङ्ग इति वाच्यम्, 'हलन्ताच्चेद्भवति तर्हि षट्चतुर्भ्य एव' इति नियमाभ्युपगमात्, 'ध्वंस्वनडुहां ४५८' 'कतिपयचतुरां २५०९' 'युजिक्रुञ्चां ५००७' 'झलाम् १३५' इत्यादिनिर्देशाच्च। तस्माद् ह्रस्वग्रहणप्रत्याख्याने न कोऽपि दोष इत्याहुः॥ अत्र वदन्ति–नुडिति पृथग्योगे कृते सति ङेरामि कृते परमप्याटं बाधित्वा अन्तरङ्गत्वादामो नुट् स्यात्। तथा च–परत्वादाटा नुड् बाध्यते—इति वक्ष्यमाणग्रन्थेन 'आटि कृते सकृद्गतिन्यायात् नुट् न' इति भाष्यग्रन्थेन च विरोधः स्यात्। यद्यपि नियमसूत्राणां विधिमुखेन[४] प्रवृत्तिरिति पक्षे ङेरामि कृते तस्य 'नद्यापः' इत्यनेनैव नुडागमे प्रसज्यमाने 'आण् नद्याः ३७६' इत्यनेन स बाध्यत इति परत्वादाटा नुड् बाध्यत इत्यादिग्रन्थः संगच्छते, तथापि नियमसूत्राणां निषेधमुखेन[५] प्रवृत्तिरिति पक्षे परमपि आटं बाधित्वा अन्तरङ्गत्वान्नुट् स्यादेव। किञ्च 'नद्यापः' इत्यत्र 'नद्यापः परस्यामो नुडेव स्यान्नान्यत्' इत्यर्थः स्यात्। तथा च–गौर्यां, रमायां, सर्वासां, सर्वस्यामिति न सिध्येत्। सुडागमस्य पुंसि आड्याट्स्याडागमानां तु ङिदन्तरे चरितार्थत्वात्। अपि च– गौर्यामित्यादौ ङेरामि कृते नुटं बाधित्वा प्राप्तमाटं बाधितुं नदीग्रहणम्। एवं–रमायां, सर्वासां, सर्वस्यामित्यादौ प्राप्तं याटं, सुटं च बाधितुमाब्ग्रहणमिति 'नद्यापः' एतद्विध्यर्थमेव स्यान्न नियमार्थम्। ततश्च–विश्वपां, वातप्रम्यामित्यादौ नुट् दुर्वार एव। 'नद्यां मतुप् १८३८' 'भाषायां सदवसश्रुवः ४११५' 'सर्वासां प्रायदर्शनम् ८९१' 'तदस्यां प्रहरणम्–१७८८' इत्यादिनिर्देशाञ्शरणीकृत्य विध्यर्थतापादनस्य नुडेवेति प्रागुक्तनियमस्य च निवारणे तु प्रतिपत्तिगौरवम्। अपि च–'आकारान्तादीकारान्तादूकारान्ताच्चेद्भवति तर्हि नद्याप एव' इति नियमस्यापि संभवात्। विश्वपां, वातप्रम्यां, खलप्वामित्यादौ नुडागमाभावेऽपि गवामित्यादौ नुट् स्यात्। न च छन्दसि 'गोः पादान्ते–५४२८' इत्यारम्भाल्लोके गोशब्दात्परस्यामो नुड् न भवेदिति वाच्यम्, पादान्ते गोशब्दात्परस्यामो नुट् चेच्छन्दस्येवेति नियमेन लोके पादान्ते गोनामिति प्रयोगस्याभावेऽप्यपादान्ते तस्यानिवार्यत्वापत्तेः, रायां, ग्लावां, नावामित्यादौ दुर्निवारत्वाच्च। यदि तु दीर्घात्परस्य आमो नुट् चेदित्यादिनियमे 'गोः पादान्ते–५४२८' इति सूत्रं विध्यर्थं भवेत्। आकारान्तादिभ्यः परस्यामो नुट् चेदित्यादिनियमे तु नियमार्थं स्यात्तत्र 'विधिनियमयोर्विधिरेव ज्यायान्' इति न्यायाननुसन्धानेन दीर्घान्तात्परस्यामो नुट् चेदित्यादिनियम एव स्वीक्रियत इत्युच्यते तदापि पुनः प्रतिपत्तिगौरवमस्त्येव[६], तस्माद् ह्रस्वग्रहणप्रत्याख्यानस्यातिक्लेशसाध्यत्वाद्यथाश्रुतमेव रमणीयमिति॥ (२९५) **नामि**। 'ढ्रलोपे–२५८' इत्यतो दीर्घ इत्यनुवर्तते। दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्येति विशेष्यते, विशेषणेन च तदन्त-

१ **द्वित्वे इति**। 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्युक्त्या द्वित्वं प्रति चर्त्वस्यासिद्धत्वाभावेन पूर्वं चर्त्वम्, ततो द्वित्वमिति प्रक्रियाऽत्र सूचितेति भावः॥ २ **अल्पप्राणेति**। तकारस्येत्यादिः, सकारस्य महाप्राणतयेति शेषः॥ ३ **तादेश इति**। यदि चर्त्वेनैव सकारस्य तकारः स्यात्तर्हि 'सः सि–' इति सूत्रं व्यर्थमेव स्यादिति भावः॥ ४ **विधिमुखेनेति**। नियमशास्त्राणां विधित्वमेव, आर्थी त्वितरनिवृत्तिरित्यर्थस्य भाष्यसंमतत्वेन नद्यापः परस्यामो नुडिति रीत्येति भावः॥ ५ **निषेधमुखेनेति**। व्याकरणे नियमपदस्य परिसंख्यायां पर्यवसानेनेतरव्यावृत्तेरेव विधीयमानत्वेन नद्याब्व्यतिरिक्तेभ्यः परस्यामो न नुडिति सूत्रार्थपर्यवसाने सामान्यापेक्षनुडिति सूत्रस्य विशेषापेक्षाणाम् 'आण्नद्याः' इत्यादीनामपेक्षयाऽन्तरङ्गत्वान्नुडेव स्यादित्यर्थः॥ ६ **प्रतिपत्तिगौरवमिति**। 'नद्यापः–' इत्यस्य 'स्त्रीलिङ्गानां चेद् नद्याप एव' इति नियमपरतयाऽपि व्याख्यातुं शक्यत्वेन नदीत्वापूत्वयोर्ह्रस्वेऽपि दृष्टत्वेन तदुक्तनियमे दृढतरमानाभावेन च मतीनामित्यादौ नुडनुपपत्तिरित्यपि बोध्यम्॥

१ भाष्यकृतोदाहृतस्य वत्सर इत्यस्योणादित्वेनाव्युत्पन्नत्वादविरोधात् संज्ञाकृतबहिरङ्गत्वस्य प्राचां मतेऽङ्गीकरणादार्धधातुकसंज्ञानिमित्तकस्य 'सः सि–' इति तादेशस्य बहिरङ्गत्वात्तद्विषये संज्ञानिरपेक्षत्वेनान्तरङ्गस्य द्वितीयादेशस्य प्रवृत्त्यभावात् वैयर्थ्य—

परेऽजन्ताङ्गस्य दीर्घः स्यात् । रामाणाम् । सुपि[२८७] चेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते, संनिपात[२९०]परिभाषाविरोधात् । नामी[२९५]त्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते । रामे । रामयोः । सुपि[२८७] एत्वे कृते–॥

विधिः । तदेतदाह–**अजन्ताङ्गस्येत्यादि**।अर्थवद्ग्रहण[११३]परिभाषया नामी[२९५]ति नुट्सहित एवाम् गृह्यते । तेन–पामनाम्, अङ्गनाम्, इत्यादौ न भवति, तत्र हि पामादिलक्षणे[२०८४] नप्रत्यये टापि द्वितीयैकवचने च कृते त्रयाणामपि प्रत्ययानां प्रत्येकमर्थवत्त्वेऽपि नामीति समुदायस्यानर्थकत्वात् । यद्यपि नलोपस्यासिद्धत्वात् अनेन पामनामित्यत्र दीर्घः सुपरिहरः, तथापि 'नोपधायाः५०१' इत्यनेन तु स्यादेवेति बोध्यम् ॥ 'नुटि' इति तु न सूत्रितम् । 'भृञः किन्नुट् च ४३२४' इत्यौणादिकगन्प्रत्ययान्ते भृङ्गशब्दे[१] मा भूदिति । स्यादेतत्, नुडागमस्याम्भक्तत्वादामूग्रहणेन सनकारोऽप्याम् ग्रहीष्यत इति 'आमि' इत्येव सूत्रमस्तु । न चामीति दीर्घस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात्परमपि नुटं बाधित्वा अग्नीनामिन्दूनामित्यत्र दीर्घे कृते ह्रस्वाश्रयो नुट् न भवेदिति वाच्यम्, ह्रस्वान्तान्नुडिति वचनसामर्थ्यात् कृतेऽपि दीर्घे भूतपूर्व[२]गत्याश्रयणेन तत्प्रवृत्तेः । नापि 'न तिसृचतसृ ४१८'इति निषेधात्तिसृणां चतसृणामित्यत्र ह्रस्वान्तान्नुडिति वचनस्य प्रयोजनमस्तीति वाच्यम्, चतसृणामित्यत्र 'षट्चतुर्भ्यश्च४६३' इत्यनेनैव नुट्सिद्धेः, 'ह्रस्वनद्यापः–२९४' इति सूत्रे 'त्रेस्त्रयः ३६९' इत्यतः त्रेरित्यनुवर्त्य त्रिशब्दात्परस्यामो नुडिति व्याख्यानात् तिसृणामित्यत्रापि तत्सिद्धेः ॥ यद्यपि नृणामित्यत्र प्रयोजनमस्ति, तथापि नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति । अन्यथा 'नृनद्यापः–' इत्येव वदेत् । तस्मादामीत्युक्तौ न किंचिद्बाधकमस्ति इत्यामः सनकारस्य ग्रहणं व्यर्थमिति चेत् । अत्रोच्यते–उत्तरार्थं सनकारग्रहणं कर्तव्यं 'नोपधायाः५०१'इति दीर्घो नामि यथा स्यात्,चर्मणां वर्मणामित्यत्र मा भूदिति । तदुक्तं वार्तिककृता–'नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड् भवेत् । वचनाद्यत्र तन्नास्ति नोपधायाश्च वर्मणाम् ॥' इति ॥ अत्र वदन्ति–वचनाद्भूतपूर्वगत्याश्रयणेन तत्प्रवृत्तिरित्येतच्चिन्त्यम्, गौणत्वे 'षट्चतुर्भ्यश्च ४६३' इति नुटोऽप्रवृत्त्या प्रियचतसृणामित्यत्र नुडर्थं ह्रस्ववचनस्य चरितार्थत्वेन सामर्थ्यस्योपक्षयात् । तत्र हि'नुमचिर–३९२'इति रादेशात्पूर्वविप्रतिषेधेन नुडिष्यत इति तदयुक्तम्, 'ऋन्नद्यापः–'[३] इति सूत्रितेऽपि ऋदन्तान्नुट् सिध्यत्येवेति ह्रस्वग्रहणसामर्थ्यस्यानुपक्षीणत्वादिति दिक् ॥ **परिभाषाविरोधादिति** । इति कृताकृतप्रसङ्गित्वेन नामी[२९५]ति दीर्घस्य नित्यत्वात्परोऽपि'सुपि च २८७'इति दीर्घो न प्रवर्तत इति नोक्तम् , 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति' इति 'नामि२९५' इति दीर्घस्याप्यानित्यत्वात् ॥ **आरम्भसामर्थ्यादिति** । 'सुपि च २८७' इत्यस्य तु न सामर्थ्यं रामाभ्यामित्यादौ सावकाशत्वादिति भावः । ननु कतीनामित्यत्र परत्वात्'षट्चतुर्भ्यश्च४६२' इति नुटि'नामि २९५'इति दीर्घः संनिपातपरिभाषामबाधित्वैव प्रवर्तत इत्यारम्भसामर्थ्यस्योपक्षयात् 'नामि२१५' इति सूत्रमपि रामाणामित्यत्र संनिपात[२९०]परिभाषया न प्रवर्तते । तथा च 'आचार्याणाम्८९' इति निर्देशेनोक्तपरिभाषाया अनित्यत्वमाश्रित्य सुपि च २८७' इति दीर्घ एव परत्वात् प्रवर्ततामिति चेत् । अत्र केचित्समाधयन्ति–चतुर्ग्रहणसाहचर्यात् हलन्तषट्संज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुड् भवति न तु कतिशब्दात् परस्यामः, तथा च कतीनामित्यत्र ह्रस्वाश्रय एव नुडित्यारम्भसामर्थ्यं नोपक्षीणमिति । तदपरे न क्षमन्ते, रेफो यथा हल्संज्ञकस्तथा अम्संज्ञकोऽपि भवतीत्यमन्तषट्संज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुड् भवति न तु षकारान्तात्परस्येति वक्तुं शक्यतया षण्णा[४]मित्यत्र नुड[४६२]भावप्रसङ्गात् । तस्मादिह साहचर्यं न ग्राह्यमेव ॥ अन्ये तु-

---

—मव्याहतमेवेति भावः ॥ त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तिमङ्गीकुर्वतां मते तु नास्य ग्रन्थस्योपयोग इति ध्येयम् ॥ वस्तुतस्तु सूत्रनिर्माणकाले वार्तिकानि नासन्निति सूत्रकृद् न वार्तिकविधेयमभिप्रैति किंतु वार्तिककृदेव सूत्रविधेयमभिप्रैति' इत्यस्यार्थस्य 'असंज्ञायाम्' 'न बहुव्रीहौ ।' 'अनुपसर्जनात्' इत्यादिसूत्रनिर्माणेन निश्चितत्वात् न सूत्रकर्तुः 'सः सि–' इति तादेशस्य द्वितीयादेशप्रयोजनकं विधानमिति चर्त्वेनापि तकारमात्रसिद्धौ 'सः सि–' इति तादेशविधानं व्यर्थमेव स्यादिति भावः॥ जिघत्सतीत्यादौ द्वितीयादेशे प्राचां प्रयोगानुसरणमेव कार्यम् ॥

---

१ **भृङ्गशब्द इति** । न च भृङ्गशब्दस्यौणादिकत्वेनाव्युत्पन्नत्वात्तत्र नुटोऽप्रतीतेर्दोषाभावेन अनश्व इत्यादौ नुटः प्रतीतावपि पूर्वपदस्य नुड्निरूपिताङ्गत्वाभावाद् दोषाभावेन अक्षण्वन्त इत्यादौ 'अनो नुट्' इति जातस्य नुटो मतुब्भक्तत्वेन सनुड्मतुन्निरूपिताङ्गत्वस्य अक्षशब्दनिष्ठत्वेऽपि तस्य नुटस्त्रैपादिकतयाऽसिद्धत्वाद्दोषाभावेन 'नुटि' इत्येव सुवचमिति वाच्यम् । 'न मु ने' इत्यत्र 'न' इति योगं विभज्य 'त्रिपादी पूर्वत्र नासिद्धा' इत्यर्थस्य त्रिपाद्यां स्थानिवद्भावादिप्रवृत्त्यर्थमङ्गीकरणीयस्य ज्ञापने नामीत्यस्य स्वांशे चारितार्थ्यायावश्यकत्वात् ॥ २ **भूतपूर्वेति** । ह्रस्वत्वं हि मात्राकालिकाच्त्वम् । तत्र सामर्थ्याद्भूतपूर्वगत्याश्रयणं विशेषणीभूते मात्राकालिकत्व एव न तु विशेष्यभूताच्त्वेऽपीति । सत्यचि तत्र मात्राकालिकत्वमात्रं भूतपूर्वगत्या नेयम्, न त्वसति भूतपूर्वगत्याऽच्त्वमप्यानेयम् । विशेषणविशेष्ययोरुभयोरप्यानयने गौरवात् । तेन पदां दतामित्यादौ भूतपूर्वगत्या नोभयोरानयनमिति न तत्र नुडापत्तिरिति भावः॥ ३ **ऋन्नद्याप इति** । इदं चिन्त्यम् । तिसृणां चतसृणामित्यत्र प्रकारान्तरेण नुटं संसाध्य केवलं नृणामित्येतदर्थमेव 'नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति' इति भाष्योक्तिसमन्वयाय प्रियचतसृणामित्यस्य न ह्रस्वग्रहणमात्रसाध्यत्वम् । किं तु तत्र तु चतुर्ग्रहणेनैव नुट्सिद्धिरिति सिद्धये 'षट्चतुर्भ्यः–' इति बहुवचनं लाघवायैव न तदर्थसंख्याप्राधान्यबोधनायेति कल्पनीयम् ॥ ४ इदं च 'अनाम्' इति पर्युदासस्य तत्रत्यभाष्योदाहरणस्य च विस्मरणमूलकम् ॥

(२९६) (सू) **अपदान्तस्य मूर्धन्यः** । ८ । ३ । ५५ । आ पादपरिसमाप्तेरधिकारोऽयम् ॥ (२९७) (सू) **इण्कोः** ।८।३। ५७ । इत्यधिकृत्य-॥ ( २९८ ) (सू) **आदेशप्रत्यययोः** । ८ । ३ । ५९ । सहेः साँडः स इति सूत्रात्स इति षष्ठ्यन्तं पदमनुवर्तते। इण्कवर्गाभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात् । विवृताघोषस्य सस्य तादृश एव षः । रामेषु । इण्कोः किम् । रामस्य । आदेशप्रत्यययोः किम् । सुपीः । सुपिसौ। सुपिसः । अपदान्तस्य किम् । हरिस्तत्र । एवं कृष्णमुकुन्दादयः ॥ ( २९९ ) **सर्वादीनि सर्वनामानि** ।

---

'षट्चतुर्भ्यश्च-४६२' इति बहुवचननिर्देशादर्थपरोऽयं निर्देशः, तथा चार्थे प्राधान्यं यत्र तत्रैव षट्संज्ञाश्रयो नुड् भवति न तु प्रियपञ्चां, प्रियषषामित्यादौ इति सिद्धान्ताद् बहिरङ्गः षट्संज्ञाश्रयो नुट् । तथा चान्तरङ्गत्वात्कतीनामित्यत्र ह्रस्वाश्रय एव नुडिति 'नामि २९५' इति दीर्घः संनिपातपरिभाषां बाधित्वैव प्रवर्तते, ततश्चारम्भसामर्थ्यादिति मूलोक्तग्रन्थस्य न काप्यनुपपत्तिरिति समादधुः ॥ इतरे तु-आरम्भसामर्थ्यादित्यस्यायमर्थः-'न तिसृचतसृ' ४१८' इति निषेधारम्भसामर्थ्यादिति । तिसृणामित्यत्र ह्रस्वान्तलक्षणे नुटि कृते 'नामि २९५' इति दीर्घप्रवृत्तौ हि 'न तिसृ-४१८' इति निषेध आरभ्यते। संनिपातपरिभाषया दीर्घाप्रवृत्तौ तु किमनेन निषेधेनातो ज्ञायते 'नामि२९५' इति दीर्घः संनिपातपरिभाषां बाधत इति ।यैस्तु 'ह्रस्वनद्यापः-२९४' इत्यत्र ह्रस्वग्रहणं प्रत्याख्यायते, तैस्तु 'नामि २९५' इति दीर्घे आरम्भसामर्थ्यं नाश्रयणीयमेव ॥ (२९६) **अपदान्तस्य**-। ष इत्येव सिद्धे मूर्धन्यग्रहणम् 'इणः षीध्वम्-३००९' इति ढत्वार्थम् । चकृढ्वे । अकृढ्वम् ॥(२९७)**इण्कोः** । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । कोः किम् , गवाक्षु । गवाङ्क्षु ॥ ( २९८ ) **आदेशप्रत्यययोः** । प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकः । 'हलि सर्वेषाम्२५२' इति निर्देशात, सात्पदाद्योः २८६३' इत्यत्र सातिग्रहणाच्च लिङ्गादित्याशयेन व्याचष्टे-**आदेशः प्रत्ययावयवश्चेति** । यदि तु आदेशावयवो गृह्येत, तर्हि तिसृणामित्यादौ दोषः । यद्यपि सकारोच्चारणसामर्थ्यात्तत्र षत्वं न स्यात्, तथापि विसंविसं मुसलं मुसलमित्यादौ षत्वं दुर्वारं स्याद्, आष्टमिकाद्विर्वचनस्यादेशरूपत्वात् । यदि तु प्रत्ययो यः सकार इति गृह्येत, तर्हि रामेषु करिष्यतीत्यादौ न स्यात्, किंतु 'इन्द्रो मा वक्षत्' इत्यादावेव स्यात् । इह मनोरमायामेकाऽपि षष्ठी विषयभेदाद् भिद्यत इत्युक्त्वा सहविवक्षाभावेऽपि सौत्रत्वाद् द्वन्द्व इत्युक्तं, तत्तु प्रत्ययशब्दे लक्षणामनङ्गीकृत्य यथाश्रुताभिप्रायेणोक्तमिति बोध्यम्॥ **विवृताघोषस्येति** । विवृतस्य सस्य तादृश एवेत्युक्ते ऋकारेऽतिप्रसङ्गस्तद्वारणायाघोषस्येति । अघोषस्येत्येतावत्युच्यमाने टकारेऽतिप्रसङ्गस्तद्वारणायोभयमुपात्तम् ॥ **तादृश एव ष इति** । तादृशः ष एवादेशो भवति नान्य इत्यर्थः । न च दधिसेचौ दधिसेच इत्यादौ प्राक् सुबुत्पत्तेः समासे षत्वं वारयितुं पदादादिः पदादिरिति पञ्चमीसमासो भाष्ये उक्तस्ततश्च इहापि 'सात्पदाद्योः २८६३' इति निषेधः स्यात् करिष्यतीत्यादौ षत्वविधेः सावकाशत्वादिति चेन्नैवम् , 'स्वादिषु-३३१' इति या पदसंज्ञा तामाश्रित्य उक्तनिषेधो न प्रवर्तत इति सातिग्रहणेन ज्ञापितत्वात् ॥ **रामस्येति** । 'टाङसिङसामिनात्स्याः' इति वक्तव्ये सकारोच्चारणसामर्थ्यात्षत्वं न भवेत्, नडादिषु अमुष्येति निपातनात्ततः फगादौ 'आमुष्यायण-१४०४' इत्यादिवार्तिकनिर्देशाच्च अमुष्येत्यत्र षत्वं भवेत्, इति यदि तर्हि विश्वपास्विरत्यादि प्रत्युदाहर्तव्यम् । न च तत्रापि सुबिति वक्तव्ये सुबिति सकारोच्चारणसामर्थ्यादेव न भवेदिति शङ्क्यम्, लिट्त्सु प्रशान्त्सु इत्यत्र 'ङः सि धुट् १९९' 'नश्च २००' इति धुटः प्रवृत्तये सकारोच्चारणस्यावश्यं स्वीकर्तव्यत्वादिति दिक् ॥ ( २९९ ) **सर्वादीनीति**। तद्गुणसंविज्ञानो बहुव्रीहिरयम्, 'अदः सर्वेषाम् ३२३२' इति लिङ्गात् । आदिशब्दोऽत्रावयववाची, सर्व आदिरावयवो येषां तानीति विग्रहः, उद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनम् । तस्य समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात् 'आनर्थक्यात्तदङ्गेषु' इति न्यायेन तदवयवेषु प्रवर्तमाना सर्वनामसंज्ञा अविशेषात्सर्वशब्देऽपि प्रवर्तत इति युक्तं तद्गुणसंविज्ञानत्वम् । तस्यान्यपदार्थस्य गुणा वर्तिपदार्थरूपाणि विशेषणानि तेषां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यक्षरार्थः । लोकवेदयोरपि संयोगसमवायान्यतरसंबन्धे 'लोहितोष्णीषा ऋत्विजश्चरन्ति' 'लम्बकर्णमानय' इत्यादौ तद्गुणसंविज्ञानत्वमेव । स्वस्वामिभावसंबन्धे त्वतद्गुणसंविज्ञानत्वं चित्रगुमानयेत्यादौ ।

---

१ ननु सुपीरित्यत्र न दोषः पदान्तत्वात् षत्वस्याप्राप्तत्वेन रुत्वे कृते विसर्गप्रवृत्तेः सुलभत्वादत आह-**सुपिसाविति** ।
२ **अर्थपरोऽयं निर्देश इति** ।'षट्चतुर्भ्यश्च' इत्यस्य गौणेऽपि प्रवृत्तिः । अप्रवृत्तौ मानाभावात् । बहुवचनं तु द्विवचनप्रयोगे एकमात्राधिक्येन लाघवार्थं भविष्यति । अप्रवृत्तिसाधकभाष्यान्तरस्याभावाच्चेति चिन्त्यमिदम् । प्रियपञ्चां प्रियषषामित्यत्र तु न नुडापत्तिः, षट्संज्ञासूत्रे संख्याग्रहणानुवृत्त्या संख्याबोधकशब्दपरत्वात् प्रधानन्यायेन संख्यारूपार्थस्यानुपसर्जनस्यैव ग्रहणेनोपसर्जने षट्त्वमेव न । संख्यापदेन च संख्येयमुच्यतेऽतः संख्येयपरमपञ्चादौ तस्य प्राधान्यात्संज्ञा सिद्धेति केचित् ॥
३ **प्रत्ययावयवश्चेति** । प्रकृत्यर्थान्वितस्वार्थबोधनाय लक्ष्ये प्रयुक्तस्यैव प्रत्ययस्यावयवो गृह्यते । न तु प्रत्ययाधिकारे पठितस्य तदनुकरणस्य वा, 'ओसि च' इति निर्देशात् ॥ ४ **सकारोच्चारणसामर्थ्यादिति** । तिसृ इत्यत्र 'न रपर-' इति षत्वनिषेधे सकारोच्चारणचारितार्थ्याच्चिन्त्यमेतत् ॥ ५ **प्राक् सुबुत्पत्तेरिति** । सोपपदात् सिचेर्विंचिदम् । केवलात् सिचेर्विंचि दध्नः सेचाविति समासे तु 'उत्तरपदत्वे च-' इत्यस्य 'अपदादिविधौ' इति निषेधेन प्रत्ययलक्षणे पदत्वसत्त्वात् 'पदस्यादिः पदादिः' इति पक्षेऽपि सिद्धिरिति भावः ॥

१ । १ । २७ । सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । तदन्तस्यापीयं संज्ञा, द्वन्द्वे चेति ज्ञापकात् । तेन परमसर्वत्रेति त्रल् परमभवकानित्यत्राकच्च सिध्यति ॥ ( ३०० ) (सू०) **जसः शी** । ७ । १ । १७ । अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । न चावर्णस्तृ इत्यादाविव ( ३०१ ) (वा०) **नानुबन्धकृतमनेकाल्त्वमिति** वाच्यम्, सर्वादेशत्वात्प्रागित्संज्ञाया एवाभावात् । सर्वे ॥ ( ३०२ ) (सू०) **सर्वनाम्नः स्मै** ।७।१।१४। अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात् । सर्वस्मै ॥ (३०३) **ङसिङ्योः स्मात्स्मिनौ** ।७।१।१५। अतः सर्वनाम्नो ङसिङ्योरेतौ स्तः । सर्वस्मात् ॥ ( ३०४ ) (सू०) **आमि सर्वनाम्नः सुट्** । ७।१।५२ । अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । सर्वादयश्च पञ्चत्रिंशत् । सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम ॥ ( ३०५ ) (ग०) **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्** ॥ ( ३०६ ) (ग०) **स्वमज्ञातिधनाख्यायाम्** ॥ (३०७) (ग०) **अन्तरं बहिर्योगोपसंव्यानयोः** ॥ त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्, इति । (३०८) उभशब्दो द्वित्वविशिष्टस्य वाचकः। अत एव नित्यं द्विवचनान्तः । तस्येह पाठस्तु उभकावि-

---

ननु सर्वनामानीत्यत्र 'पूर्वपदात्संज्ञायाम्–१२३३' इति णत्वं कस्मान्न भवति । सौत्रत्वान्नेति चेल्लोके सर्वनामशब्दस्यासाधुत्वापत्त्या सर्वनामसंज्ञानि स्युरित्युत्तरग्रन्थस्यासाधुत्वापत्तेरिति चेन्मैवम्, 'निपातनाण्णत्वं न' इति भाष्योक्तव्याख्याश्रयणादिष्टसिद्धेः । अत्र भाष्यानुसाराद् 'बाधकान्येव निपातनानि भवन्ति' इति पक्ष आश्रितः । 'अबाधकान्यपि निपातनानि भवन्ति' इति पक्षस्तु 'विभाषा फाल्गुनी–११२९' इति सूत्रे श्रवणाशब्दे निपातितेऽपि श्रावणीति प्रयोगोऽपि साधुरित्येवमर्थमाश्रयिष्यते ॥ विशेषणानुगुणविशेष्यमध्याहरति—**शब्दस्वरूपाणीति** । **द्वन्द्वे चेति** । स हि निषेधः समुदायस्यैव न त्ववयवानामिति वक्ष्यति, न च तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्तीति भावः ॥ नन्वङ्गाधिकारे तदन्तविधिं विनैव परमसर्वस्मा इत्यादौ स्मायादिसिद्धेस्तदन्तसंज्ञायाः किं फलमित्यत आह–**तेनेति** । न चेहापि प्रातिपदिकादित्यनुवृत्तेः सर्वनाम्नस्तद्विशेषणत्वे तदन्तविधिर्भविष्यतीति वाच्यम्, 'समासप्रत्ययविधौ प्रतिषेधः ४८' इत्युक्तत्वादिति भावः ॥ **अकच्चेति** । चकारात्परमसर्वत इत्यत्र तसिल् ॥ ( ३०० ) **जसः शी** । दीर्घोच्चारणमुत्तरार्थम् । वारिणी । मधुनी ॥ **अनेकाल्त्वादिति** । न तु शित्त्वादिति भावः ॥ **इत्संज्ञाया एवाभावादिति** । तृ इत्यत्रोपदेशकाल एव ऋकारस्येत्संज्ञा, शीभावस्य तु सर्वादेशत्वानन्तरं स्थानिवत्त्वेन प्रत्ययत्वे लब्धे 'लशक्वतद्धिते २८०' इति प्रत्ययादेः शस्येत्संज्ञेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः ॥ (३०४)**अवर्णान्तादिति** । अवर्णान्तादङ्गात्परस्येत्यर्थः, तेन येषां तेषामित्यादौ नाव्याप्तिः ॥ **सर्वनाम्नो विहितस्येति** । सर्वनाम्नः परस्येति तु नोक्तं वर्णाश्रमेतराणामित्यत्र सुट्प्रसङ्गात् । 'द्वन्द्वे च ३२१' इत्यनेन समुदायस्य सर्वनामसंज्ञानिषेधेऽप्यवयवस्यानिषेधात् । विहितविशेषणत्वाश्रयणे प्रमाणं तु 'दक्षिणोत्तरपूर्वाणाम्' इति भाष्यकारप्रयोग एव ॥ **आम इति** । सर्वनाम्न इति पञ्चम्या निरवकाशतया आमीति सप्तम्याः 'त्रेस्त्रयः ३६९' इत्युत्तरसूत्रे कृतार्थायाः षष्ठी प्रकल्प्यत इति भावः ॥ **पञ्चत्रिंशदिति** । पञ्च च त्रिंशच्चेति द्वन्द्वः।पञ्चाधिका त्रिंशदिति तत्पुरुषो वा । न च 'संख्यायास्तत्पुरुषस्य–१२२६' इति वक्ष्यमाणवार्तिकेन समासान्तो डच् स्यादिति वाच्यम्, तत्रैव वार्तिके 'अन्यत्राधिकलोपात्' इत्युक्तत्वात् । ननु सर्वेषां नाम सर्वनामेत्यन्वर्थत्वात्संज्ञायाः सर्वविश्वादय एव संज्ञिनो भविष्यन्ति, नान्ये इति किमनेन पञ्चत्रिंशदिति परिगणनेन, 'सर्वादीनि–२९९' इति सूत्रेण वा । मैवम्, परिगणनाभावे कृत्स्नसमस्तादिष्वतिप्रसङ्गात् । एवं च पञ्चत्रिंशत्संख्याकानि सर्वादीन्येव सर्वनामसंज्ञकानि नान्यानीति नियमाय 'सर्वादीनि–२९९' इति सूत्रमावश्यकं न त्वनुनासिकसंज्ञासूत्रमिव मन्दप्रयोजनमिति बोध्यम् ॥ ( ३०५ ) **पूर्वपरावर—**। व्यवस्थायामसंज्ञायां यानि पूर्वपरावरदक्षिणोत्तरापराधराणि तानि सर्वादिगणसंनिविष्टानि नान्यानीत्यर्थः । सर्वनामसंज्ञा तु 'सर्वादीनि सर्वनामानि९२९' इत्यनेनैव सिध्यति । एवमुत्तरसूत्रद्वयेऽपि बोध्यम् ॥ त्यद् तद् एतौ उक्तपरामर्शकौ । तत्राद्यश्छान्दस इति गणरत्नकारोक्तिर्नादर्तव्या, 'स्यश्छन्दसि बहुलम्५३७६' इति सूत्रे छन्दोग्रहणवैयर्थ्यापत्तेः॥ **एक इति** 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते' ॥ (३०८) **अत एवेति** । द्वयोर्द्विवचनस्यैव युक्तत्वादिति भावः । **नित्यं द्विवचनान्त इति** । सर्वदा द्विवचनान्तः इत्यर्थः । न चैवम् 'उभादुदात्तो नित्यम् २५०१' उभ (शब्द )स्य सर्वनामत्वे कोऽर्थः–इति सूत्रकारभाष्यकारप्रयोगो विरुध्यत इति शङ्क्यम्, अर्थपरस्यैव नित्यं द्विवचनान्तता न तु स्वरूपानुकरणपरस्येत्यभ्युपगमात् । अथ सर्वादिषु उभशब्दपाठो व्यर्थः, सर्वनामकार्याणां स्मायादीनां

---

१ **शेषमिति** । कर्मणि घञ् । 'घञजपः पुंसि' इति तु प्रायोवादः ॥ २ **सर्वविश्वशब्दौ** बुद्धिविषययावत्त्वावच्छिन्नसमूहवाचिनाविति कथमेकवचनमिति चेत् । शृणु–अनुद्भूतावयवभेदसंघातवाचित्वेन वनशब्दवदेकवचनोपपत्तिरिति बोध्यम् । उद्भूतावयवभेदसमूहवाचित्वेन सर्वे घटा इति ॥ ३ **केवल इति** । असहाय इत्यर्थः ॥ ४ अत्र शब्दशब्दः प्रक्षिप्तः, भाष्ये तदभावात्, विरुध्यत इत्युक्तिविरोधाच्च ॥ ५ **स्वरूपेति** । शब्दस्वरूपपरस्येत्यर्थः । शब्दस्वरूपमात्रपरत्वे संख्याविवक्षाभावेन 'त्रेस्त्रयः' 'चतुरः शसि' इत्यत्रैवैकवचनमेवौत्सर्गिकमिति भावः ॥

त्ययेऽकजर्थः । न च कप्रत्ययेनेष्टसिद्धिः, द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादावयचोऽप्रसङ्गात् । तदुक्तम् ॥ ( ३०९ ) वा॰ उभयोऽन्यत्रेति ॥ अन्यत्रेति द्विवचनपरत्वाभावे । ( ३१० ) उभयशब्दस्य द्विवचनं नास्तीति कैयटः । अस्तीति हरदत्तः । तस्माज्जस्ययजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया प्रथमचरमेति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवति । उभये ॥ ( ३११ ) डतरडतमौ प्रत्ययौ । ( 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति तदन्ता ग्राह्याः ) यद्यपि ( ३१२ ) प॰ संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति सुप्तिङन्तमिति सूत्रेऽन्तग्रहणात् ज्ञापकात् । तथापीह तदन्तग्रहणम्, केवलयोः संज्ञायाः प्रयोजनाभावात् ॥ अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा ॥ त्व त्व इति द्वावप्यदन्तावन्यपर्यायौ । एक उदात्तोऽपरोऽनुदात्त इत्येके । एकस्तान्त इत्यपरे ॥ नेम इत्यर्धे । समः

---

द्विवचनेऽभावात् । न च 'सर्वनाम्नस्तृतीया च ८९०' इति सूत्रेणोभाभ्यां हेतुभ्यामुभयोर्हेत्वोरिति षष्ठीतृतीयासिद्धिस्तत्फलमिति वाच्यम्, 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् ८९१' इति वार्तिकेनैव गतार्थत्वात् । न च वृत्तिकृता 'सर्वनाम्नस्तृतीया च८९०' इति सूत्रे पठितत्वादिदमपि वार्तिकं सर्वनाम्न एव सर्वविभक्तिप्रापकं नान्यस्येति वाच्यम्, भाष्ये 'हेतौ ८२३' इति सूत्रे तद्वार्तिकस्य पठितत्वात् । अत एव 'अन्नेन कारणेन वसति' 'अन्नस्य कारणस्य' इत्युदाहृतं हरदत्तेनेत्याशङ्क्याह--**तस्येह पाठस्त्विति** । ननु कप्रत्ययेनापीष्टसिद्धेः किमनेनाकजर्थपाठेन । न च काकचोः स्वरे विशेषोऽस्तीति वाच्यम्, प्रत्ययस्वरेण चित्स्वरेण वा अन्तोदात्तत्वे विशेषाभावादित्याशङ्क्याह—**न चेति** । उभयशब्दस्य द्विवचनपरत्वमकच्प्रत्ययो न विहन्ति, टेः प्राक् जायमानत्वात्, तन्मध्यपातितस्य तद्ग्रहणेन ग्रहणात् । कप्रत्ययस्तु विहन्त्येव प्रातिपदिकात्परत्र जायमानत्वादित्याशङ्कायामाह—**द्विवचनपरत्वाभावेनेति** ॥ **अयच्प्रसङ्गादिति** । उभशब्दात्त्रतसोः परतः स्वार्थे यथा अयच् भवति तथा कप्रत्यये सति स्यादिति भावः । यद्यपि स्वार्थे अयच् दृष्टान्तेऽपि दुर्लभस्तथापि 'उभादुदात्तः २५०१' इति सूत्रे 'नित्यम्' इति योगविभागात्सुलभ एव । तथाहि—'उभादुदात्तः२५०१' 'द्वित्रिभ्याम्–२०५०' इति सूत्राद्वेति नानुवर्तते अस्वरितत्वात् । अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थे अयच् स्यात् । उभयो मणिः । उभयः पाशः । ततो 'नित्यम्--' । उभशब्दात् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे । तेन उभयतः उभयत्र 'उभयपक्षविनीतनिद्राः' इत्यादि सिद्धम् ॥ नन्वेवमकचि कृतेऽप्ययच् दुर्वारः, वृत्तिविषये स्वार्थे नित्यमयाजिति त्वयैवोक्तत्वादिति चेत्, एवं तर्हि योगविभागस्येष्टसिद्ध्यर्थतया 'उभौ साभ्यासस्य ३४६२' इति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायमिति व्याख्यायते, न तु वृत्तिविषय इति न दोषः ॥ **तदुक्तमिति** । वार्तिककृतेति शेषः ॥ ( ३०९ ) **उभयोऽन्यत्रेति** । उभयेति यः स्वार्थिकोऽयजन्तः सोऽन्यत्र प्रयुज्यते न तु द्विवचने परत इत्यर्थः ॥ न च उभावित्यादौ द्विवचनपरत्वं दुरुपपादम्, उभयत आश्रयणेऽन्तादिवद्भावविरहादिति वाच्यम्, उभशब्दादुत्पन्नं द्विवचनं लुका[3] नापहृतं यत्र ततोऽन्यत्रायजिति विवक्षितोऽर्थ इति मनोरमायामुक्तत्वात् । एवं च सर्वादिषूभशब्दपाठोऽकजर्थ इति स्थितम् । भाष्ये तु–कप्रत्ययस्य स्वार्थिकत्वेन स्वार्थाभिधानसमर्थत्वादुभशब्दात्परस्य द्विवचनपरत्वमस्तीत्याश्रित्योभशब्दपाठः सर्वादिगणे प्रत्याख्यातः । मनोरमायां तु–भाष्ये प्रत्याख्यानं प्रौढिवादमात्रं कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वात्, अन्यथा त्रतसिलादावतिप्रसक्तत्वादित्यादि स्थितम् ॥ ( ३१० ) **उभयशब्दस्येति** । उभौ अवयवौ यस्य उभयः । 'उभादुदात्तो नित्यम् २५०१' इति तयपोऽयच्[4] ॥ **नास्तीति** । अनभिधानादिति भावः । तथा चोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वेनाव्ययत्वे प्राप्ते 'तद्धितश्चासर्वविभक्तिः६०४' इति सूत्रे 'कृत्तद्धितानां ग्रहणं च पाठे' इति भाष्यं कैयटेनावतारितम् ॥ **अस्तीति** । पचतिकल्पं पचतिरूपमित्यादिवारणेन पाठस्योपक्षीणत्वादनभिधाने प्रमाणं नास्तीति भावः ॥ **तस्मादिति** । उभयशब्दादित्यर्थः ॥ **तयप्प्रत्ययान्ततयेति** । उभयशब्दस्येति शेषः । यदि तूभयशब्दादयच् स्वतन्त्रः, न तु तयप आदेश इति निष्कर्षः स्वीक्रियते, तदापि 'प्रथमचरमतया–३२२' इति वैकल्पिकप्राप्तिर्नास्त्येवेति बोध्यम् ॥ **नित्यैवेति** । उभया अमित्रा इति तु छान्दसत्वाद्बोध्यम् ॥ ( ३११ ) **डतरडतमाविति** । 'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् २७७३' 'वा बहूनां जातिपरिप्रश्ने डतमच् २७७४' 'एकाच्च प्राचाम् २७७५' इति विहितौ ॥ **अव्युत्पन्नाविति** । एतच्च पस्पशायां कैयटे स्पष्टम् ॥ **एक इति** । काशिकाकाराः 'एतं त्वं मन्ये–' इत्युदात्तस्य 'उत त्वः पश्यन्' इत्यनुदात्तस्य च दर्शनादिति भावः ॥ **एक इति** । प्रथम इत्यर्थः । संहितया पाठे तान्त-

---

१ अयं कोष्ठकान्तर्गतः पाठः कतिपयपुस्तकेषु नोपलभ्यते ॥ २ **अवयविन्यर्थ इति** । अयं चायच् प्रत्ययान्तरमेवेति वक्ष्यामः ॥ ३ **लुका नापहृतमिति** । लुक्कृतापहारसंभावनाभाववदित्यर्थः ॥ द्विवचनाविषयत्वाभावसंभावनायामेवायजिति भावः । संभावनानिवेशाच्चोभशब्दस्य पाठाभावेऽपि उभयत इत्यादिसिद्धिः । अन्यथोभशब्दादसर्वनामतया तसिलादेः कर्तुमशक्यत्वेन द्विवचनस्य लुगभावेन तद्विषयत्वस्यैव सत्त्वेनायजनुपपत्तौ उभयत इत्याद्यसिद्धिः । संभावनानिवेशे तु यद्यत्र तसिलादि स्यात्तर्हि लुगपि स्यादिति लुकाऽपहारसंभावनासत्त्वेन लुक्कृतापहारसंभावनाभाववतोऽन्यत्वान्न दोष इति भावः ॥ ४ **तयपोऽयजिति** । इदं च वार्तिकरीत्या, भाष्यमते तु स्वतन्त्रमेव प्रत्ययान्तरमिति बोध्यम् ५ ॥ **अनभिधानादिति** । 'उभयोऽन्यत्र' इति वार्तिकस्य 'उभयो मणिः उभये देवमनुष्याः' इति भाष्योदाहरणे एकवचनबहुवचनयोरेव दर्शनादिति भावः ॥

सर्वपर्यायः। तुल्यपर्यायस्तु नेह गृह्यते, यथासंख्यमनुदेशः समानामिति ज्ञापकात्॥ अन्तरं बहिर्योगेति गणसूत्रे ( ३१३ ) वा॰ अपुरीति वक्तव्यम्॥ अन्तरायां पुरि॥ ( ३१४ ) सू॰ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्।** १।१।३४। एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे। पूर्वाः। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्। दक्षिणा गाथकाः। कुशला इत्यर्थः। असंज्ञायां किम्। उत्तराः कुरवः॥ ( ३१५ ) सू॰ **स्वमज्ञातिधनाख्यायाम्।** १। १। ३५। ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्। स्वे। स्वाः। आत्मीया इत्यर्थः। आत्मान इति वा। ज्ञातिधनवाचिनस्तु स्वाः। ज्ञातयोऽर्था वा॥ ( ३१६ ) सू॰ **अन्तरं बहिर्योगोपसंव्यानयोः**।१।१।३६। बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्। अन्तरे अन्तरा वा गृहाः। बाह्या इत्यर्थः। अन्तरे

---

त्वस्यास्फुटत्वेऽपि त्वदिति तान्तश्छेत्तव्यः। अन्यथा एकश्रुत्या सकृदेव पठेत्। न च तान्ते विप्रतिपत्तव्यम्। 'त्वत्त्वसमसिमेत्यनुच्चानि ५६६०' इति फिट्सूत्रात्। तथा च ऋङ्मन्त्रः—'स्तरीरुत्वद्भवति सूत उत्वत्' इति॥ जयदेवोऽपि प्रायुङ्क्त–'त्वदधरमधुरमधूनि पिबन्तम्' इति। त्वत्तोऽन्यस्या अधर इति विग्रहः न तु तवाधर इति 'पश्यति दिशिदिशि रहसि भवन्तम्' इति पूर्ववाक्येन सहानन्वयापत्तेः॥ **सम इति**। तथा च श्रूयते—'मानो वृकाय वृक्ये समस्मै'। 'उतो समस्मिन्' इत्यादि॥ 'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः'॥ **गणसूत्र इति**। यद्यपि भाष्येऽष्टाध्यायीस्थसूत्रे 'अपुरीति वक्तव्यम्' इति वार्तिकं पठितं, तथापि तद्गणसूत्रस्यैव शेषो न तु जसि विभाषाविधायकस्य। अत इत्यधिकृत्य जसः शीविधानादाबन्तात्प्राप्त्यभावात्॥ ( ३१३ ) **अन्तरायामिति**। प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां वेत्यर्थः। लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा सर्वनामतायाः प्राप्तिर्बोध्या। ( ३१४ ) इत्थं सर्वादिगणं व्याख्यायेदानीं तदन्तर्गतत्रिसूत्रीसमानाकारामष्टाध्यायीस्थां त्रिसूत्रीं व्याचष्टे—**पूर्वपरावरेत्यादिना**॥ **स्वाभिधेयेति**। स्वस्य पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः। अपेक्ष्यत इत्यपेक्षः। कर्माणि घञ्। कथं तर्हि 'दिशः सपत्नी भव दक्षिणस्याः' इति। अत्राहुः–अस्त्येवात्रापि व्यवस्था प्रसिद्धत्वान्नावधिवाची शब्दः प्रयुज्यते। न च संज्ञात्वान्निषेधः। आधुनिकसंकेतो हि संज्ञा, न च दिक्षु साऽस्तीति। दिक्षु चिरंतनः, कुरुषु त्वाधुनिकः संकेत इत्यत्र तु व्याख्यातृवचनमेव प्रमाणम्। एतेन 'विश्वेषां देवानाम्' इति व्याख्यातम्, वेदे प्रसिद्धत्वाद्देवगणविशेषे विश्वशब्दस्याधुनिकसंकेताभावात्॥ **दक्षिणा गाथका इति**। 'गः स्थकन् ३८७४' इति शिल्पिनि थकन्। इहामुकस्मात्कुशला इत्यवध्यन्वयसंभवेऽपि तन्नियमो नास्तीति भावः। एवमधरे ताम्बूलरागः, उत्तरे प्रत्युत्तरे च शक्तः, इत्यपि प्रत्युदाहर्तव्यम्॥ **उत्तराः कुरव इति**। सुमेरुमवधिमपेक्ष्य कुरुषु उत्तरशब्दो वर्तते इत्यस्तीह व्यवस्था, किं त्वाधुनिकसंकेतोऽयमित्याहुः॥ ( ३१५ ) **स्वमज्ञेति**। आत्मात्मीयज्ञातिधनवाची स्वशब्दः, तत्र ज्ञातिधनयोः पर्युदासादात्मात्मीयौ परिशिष्टावित्याशयेन व्याचष्टे—**आत्मीया इत्यर्थः। आत्मान इति वेति**। यत्त्वाहुः, आत्मनि स्वशब्दो नपुंसकः, तेन स्वे स्वा इत्युदाहरणं तत्रायुक्तमिति। तद्भ्रमात्, 'स्वो ज्ञातावात्मानि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इत्यमरसिंहोक्तेरात्मन्यपि स्वशब्दस्य पुंस्त्वात्। न च 'स्वो ज्ञातौ' इत्यमरकोशे आत्मनीत्यस्य स्वमित्युत्तरेणान्वयादात्मवाची स्वशब्दो नपुंसक एवेति वाच्यम्, 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनीकोशविरोधेनात्मनीति पूर्वान्वयि, न तु उत्तरान्वयि इति व्याख्यातुमुचितत्वात्॥ किं च, 'विभाषा जसि ३२२' इति प्रकरणे'स्व आत्मीये' इत्येव वक्तव्ये गुरुनिर्देशं कुर्वन्सूत्रकारोऽप्यात्मवाचिस्वशब्दस्य पुंस्त्वे प्रमाणम्। तस्मात् स्वे स्वा इत्यस्य आत्मान इति विवरणं सम्यगेवेति स्थितम्॥ **ज्ञातिधनवाचिनस्त्विति**। ताच्छील्येन णिनिना ज्ञातिधनयोरप्यात्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामताऽस्त्येवेति ध्वनयति। एतदर्थमेव हि सूत्रे आख्याग्रहणं कृतम्। 'स्वमात्मात्मीयाख्यायाम्' इति वक्तव्ये ज्ञातिधनयोः पर्युदासाश्रयणं मात्रालाघवाय। न च 'स्वमात्मात्मीययोः' इत्युच्यमाने आख्याग्रहणं नापेक्षितमिति वाच्यम्, वस्तुतस्तु आत्मीयस्यापि ज्ञातित्वेन धनत्वेन विवक्षायां सर्वनामता मा भूदिति तस्यावश्यकत्वात्॥ ( ३१६ ) **अन्तरं बहिर्योगोपसंव्यानयोरिति**। बहिरित्यानावृतो देशो बाह्यं चोच्यते। तत्राद्यमर्थं गृहीत्वाऽऽह—**बाह्या इत्यर्थ इति**। द्वितीये त्वाभ्यन्तरा इत्यर्थो बोध्यः। बाह्ये न ह्याभ्यन्तरस्य योगोऽस्ति। अर्थद्वयमप्याकरे स्थितम्। इदमेवार्थद्वयं मनसि निधाय अन्तरायां पुरीत्यत्र प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां वेति व्याख्यातम्॥ उपसंव्यानशब्दो-

---

१ **कृत्स्न इति**। 'आद्रात्री वासस्तनुते सिमस्मै' 'उच्छुक्मत्कमजते सिमस्मात्' इत्युभयत्रापि 'सिमशब्दः सर्वपर्यायः' इति वेदभाष्यम्॥ २ **प्राप्त्यभावादिति**। पूःशब्देन स्त्रीत्वविशिष्टस्यैव बोधनेन तादृशार्थस्य विशेष्यत्व एव तत्प्रवृत्तेः। अत एव भाष्ये 'अन्तरायाम्' इति स्त्रियां सप्तम्यामेवोदाहृतमिति भावः॥ ३ **प्रत्युदाहर्तव्यमिति**। 'तथा परेषां युधि च' इति 'अपरे प्रत्यवतिष्ठन्ते' इत्यादावपि परापरशब्दयोर्देशान्तरनिष्ठत्वादिकमेवार्थः। शत्रुत्वादिकं त्वार्थिकोऽर्थ इत्येव ज्ञेयम्॥

अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ ( ३१७ ) (सू.) **पूर्वादिभ्यो नवभ्यो वा** । ७ । १ । १६ । एभ्यो ङसि-ङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनामपि । शेषं सर्ववत् । एकशब्दः संख्यायां नित्यैकवचनान्तः ॥ ( ३१८ ) (सू.) **न बहुव्रीहौ** । १ । १ । २९ । बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात् । त्वकं पिता यस्य स त्वत्कपितृकः । अहकं पिता यस्य स मत्कपितृकः । इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते । अन्यथा लौकिके विग्रहवाक्ये इव तत्राप्यकच् प्रवर्तेत । स च समासेऽपि श्रूयेत । अतिक्रान्तो भवकन्तमतिभवकानितिवत् । भाष्यकारस्तु—त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनां प्रामाण्यम् । (३१९) संज्ञोपसर्जनीभूतास्तु न सर्वादयः, महासंज्ञाकरणेन तदनुगुणानामेव गणे संनि-वेशात् । अतः संज्ञाकार्यमन्तर्गणकार्यं च तेषां न भवति । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्व-स्तस्मै अतिसर्वाय देहि । अतिकतरं कुलम् । अतितत् ॥ ( ३२० ) (सू.) **तृतीयासमासे** । १ । १ । ३० । अत्र सर्वनामता

ऽपि करणव्युत्पत्त्या उत्तरीयपरः । कर्मव्युत्पत्त्या त्वन्तरीयपरः॥ एकशब्दस्याष्टावर्था उक्तास्तत्र विशेषमाह—**संख्यायामिति** । अन्येषु तु सप्तस्वर्थेषु वचनान्तरमपि स्यादेव, एके एकेषामिति यथेति भावः ॥ ( ३१८ ) **न बहुव्रीहौ** । कृते बहुव्रीहौ निषेधो व्यर्थः, 'उपसर्जनीभूता न सर्वादयः ३१९' इति वक्ष्यमाणत्वात् । अत आह चिकीर्षित इति । बहुव्रीहावित्यत्र विषय-सप्तम्याश्रयणादयमर्थो लभ्यते ॥ **त्वकमिति** । अज्ञाते कुत्सिते वा 'अव्ययसर्वनाम्नाम्—२७४०' इत्यकच् । एवमहकमित्यादि ॥ **प्रक्रियावाक्ये इति** । अलौकिकविग्रहवाक्ये इत्यर्थः । तच्च युष्मद् सु पितृ सु इत्याद्याकारकम् । ननु तत्राकच् प्रवर्ततां को दोष इत्यत आह—स चेति । न च निमित्तस्यानुपसर्जनत्वस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषया समासात्प्रागपि सर्वनामता न भविष्यतीति वाच्यम्, तस्या अनित्यत्वात् । तत्र चैतत्सूत्रस्यैव ज्ञापकत्वात् ॥ **अतिभवकानिति** । इदमेव ज्ञापनफलमिति भावः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया ११२०' इति प्रादिसमासः ॥ **प्रत्याचख्याविति** । 'च्छ्वोः शूड्—३३९४' इति सतुग्ग्रहणं प्रकृतिप्रत्यापत्तिवचनं वा अनित्यत्वे ज्ञापकं, लक्ष्यानुरोधाच्च व्यवस्थेति भावः ॥ **यथोत्तर-मिति** । तथा च संप्रति भाष्यकारोक्त्यैव व्यवस्थेति भावः ॥ **गणे संनिवेशादिति** । एतेन 'पूर्वपरावर—३०५' इति गणसूत्रे 'असंज्ञायाम्' इति ग्रहणं मन्दप्रयोजनमिति ध्वनितम् । संज्ञायां यानि पूर्वादीनि, तेषां गणे संनिवेशाभावात् । एवमष्टाध्यायीस्थे 'पूर्वपरापर—३१४' इति सूत्रेऽपि 'असंज्ञायाम्' इत्येतत्त्यक्तुं शक्यम् । न च तदभावे जसि परतः संज्ञायामुत्तराः कुरव इत्यत्रा-प्राप्तविकल्पः स्यादिति वाच्यम्, सर्वनामसंज्ञाया अन्वर्थत्वेन संज्ञायामप्राप्तविधेरसंभवादसंज्ञायामेव पूर्वेण प्राप्ता संज्ञा जसि वा स्यादिति वक्तुमुचितत्वात् ॥ ( ३१९ ) **संज्ञाकार्यमिति** । सर्वनामसंज्ञाप्रयुक्तं स्मायादिकमित्यर्थः ॥ **अन्तर्गणकार्यमिति** । 'अद्ड्डतरादिभ्यः—४३६', 'त्यदादीनामः ३००', 'तदोः सः सौ—५१७' इत्यादिकमित्यर्थः ॥ **अतिकतरमिति** । अत्राद्डा-देशो न । अतितदित्यत्र तु त्यदाद्यत्वं 'तदोः सः सौ—५१७' इति सत्वं च नेति भावः ॥ ( ३२० ) **तृतीयासमासे** ।

---

१ **पूर्वादिभ्यो नवभ्यो वेति** । अत्रेदमवधेयम्—अस्य सूत्रस्य 'जसः शी' इत्यत्रानुवर्तने वाक्यभेदेन 'पूर्वादिभ्यो नवभ्यः सर्वनामभ्यो जसः शी वा' इत्येवं व्याख्यानाङ्गीकरणे जसाधारे शीभाव एव विकल्पविधायिका 'पूर्वपरा—' इति त्रिसूत्री गतार्थेति महल्लाघवम्' इति मनोरमायां दीक्षितैर्दर्शितम् । तथापि तथासति शीभावविकल्पसिद्धावपि गणसूत्रप्राप्तायाः सर्वनाम-संज्ञाया बाधाभावे 'सर्वके' इत्यादाविव 'पूर्वे' इत्यत्रानिष्टोऽकजपि स्यादिति तद्वारणाय 'विभाषा जसि' इति प्रकरणे 'जसः कार्यं प्रति विभाषा, अकज्झि न भवति' इति भाष्यप्रामाण्येन शीभावमात्रनिमित्तसर्वनामसंज्ञाविधायकं सूत्रत्रयं गुरुमूलमपि कृतम् ॥ २ **यथोत्तरमिति** । एतच्च 'धिन्विकृण्व्योर च' इति सूत्रे लोपग्रहणमकुर्वताऽकारादेशं विदधता सूत्रकारेणैव व्यञ्जितम्॥ ३ **प्रकृतिप्रत्यापत्तिवचनमिति** । 'नक्षत्रयोगे ज्ञि' इति वार्तिके पुष्ययोगं जानातीत्यर्थे पुष्येण योजयतीत्येतदादिसाधके भाष्यकृत्कृता प्रकृतिप्रत्यापत्त्यनुवृत्तिरित्यर्थः।तत्र 'चजोः—' इत्येतत्प्रवृत्तये घित्त्वे आनेये 'न लुमता—' इति प्रत्ययलक्षणप्रतिषेधात् घित्त्वानतिदेशे कुत्वाप्राप्तावपि कुत्वनिवृत्तये प्रकृतिप्रत्यापत्तिवचनं कृतम् । अकृतव्यूहपरिभाषाया 'निमित्तापाये—' इति परि-भाषाया वा सत्त्वे घञो लुकि चिकीर्षिते कृते वा कुत्वस्यानुत्पत्तिर्निवृत्तिर्वा भविष्यतीति प्रकृतिप्रत्यापत्तिवचनमनर्थकमेव स्यादिति भावः ॥ ४ **भाष्यकारोक्त्यैवेति** । 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' इति भाष्यकारोक्त्यैव सकलव्य-वस्था करणीया । प्रत्याख्यानं च लक्ष्यसिद्धिरूपदृष्टार्थसाधकताया एव, पारायणे तूपयोग एव—'सामर्थ्ययोगान्न हि किंचिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्' इति, 'तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्' इति च भाष्योक्तेरिति बोध्यम् । दाधिमथास्तु—एवं सूत्रभाष्यविरोधं प्रदर्श्य कुत्र प्रामाण्यमिति जिज्ञासायाम् **"साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षा-त्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः । उपदेशाय ग्लायन्तोऽवरे विल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं वेदाङ्गानि च"** इति निरुक्तसूचितं पूर्वतमापेक्षयाऽद्यतमानां क्रमशोऽल्पज्ञमेवेति दर्शयति—**यथोत्तरमिति** । यथोच्चतरमि-त्यर्थः ॥ एवं च सूत्रकृतः प्राचीनतरत्वेन सूत्रसंमतमेव कार्यं करणीयम्, न भाष्यकारप्रौढिदर्शितमिति सूचयितुमेव 'गोनर्दी-यस्त्वाह' इत्येवं तुघटितं ब्रवीति भगवान् भाष्यकारः ॥ 'नैको मुनिर्यस्य वचो न मानम्' इति भारतवाक्यप्रामाण्यतो विकल्प एव वरणीय इति वदन्ति ॥

न स्यात्। मासपूर्वाय। तृतीयासमासार्थवाक्येऽपि न। मासेन पूर्वाय॥ (३२१) सू. द्वन्द्वे च। १। १। ३१। द्वन्द्वे उक्ता संज्ञा न। वर्णाश्रमेतराणाम्। समुदायस्यायं निषेधो न त्ववयवानाम्। न चैवं तदन्तविधिना सुट्प्रसङ्गः, सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात्॥ (३२२) सू. विभाषा जसि।१।१।३२। जसाधारं शीभावाख्यं यत्कार्यं तत्र कर्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात्। वर्णाश्रमेतरे। वर्णाश्रमेतराः। शीभावं प्रत्येव विभाषेत्युक्तमतो नाकच्। किं तु कप्रत्यय एव। वर्णाश्रमेतरकाः॥ (३२३) सू. प्रथमचरमतयाल्पार्धकतिपयनेमाश्च। १।१।३३। एते जसः कार्यं प्रत्युक्तसंज्ञा वा स्युः। प्रथमे। प्रथमाः। शेषं रामवत्॥ तयः प्रत्ययः ततस्तदन्ता ग्राह्याः। द्वितये। द्वितयाः। शेषं रामवत्॥ नेमे। नेमाः। शेषं सर्ववत्॥ (३२४) वा. विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम्॥ द्वितीयस्मै। द्वितीयायेत्यादि। एवं तृतीयः। अर्थवद्ग्रहणान्नेह। पटुजातीयाय॥ निर्जरः॥ (३२५) सू. जराया जरसन्यतरस्याम्।७।२।१०१। जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ॥

---

अत्र 'विभाषा दिक्समासे-४०८' इत्यतः समास इत्यनुवर्तमाने पुनः समासग्रहणं गौणार्थस्यापि संग्रहार्थमित्यभिप्रेत्याह—**तृतीयासमासार्थेति**। इह 'पूर्वसदृश-१००१' इति विहितः समासो गृह्यते प्रतिपदोक्तत्वात्[2]। न तु 'कर्तृकरणे-१००४' इति समासः, तेन त्वयका कृतामित्यत्र निषेधो न भवति। 'ओकारसकारभकारादौ सुपि-२७४३' इति व्यवस्थापयिष्यमाणत्वादिह सुपष्टेः प्रागकच्॥ (३२१) **द्वन्द्वे च**॥ **समुदायस्येति**। तत्रैव द्वन्द्वशब्दस्य मुख्यत्वात्। न च द्वन्द्वे यानि सर्वादीनीति संबन्धः, कारकाणां क्रिययैवान्वयात्। न च द्वन्द्वे विद्यमानानि यानीति संबन्धः, विद्यतिक्रियाध्याहारे गौरवात्, निषेध्याया भवतिक्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्चेति[3] भावः॥ **सुट्प्रसङ्ग इति**। न च 'द्वन्द्वे च ३२१' इति निषेधसामर्थ्याद्वर्णाश्रमेतराणामित्यादौ सुट् न प्रसज्यत इति वाच्यम्, अनाङ्गस्य त्रतसिलादेर्व्यावृत्त्या[4] तत्सामर्थ्यस्योपक्षीणत्वात्॥ (३२२) **जसाधारमिति**। शीभावेन जस्यपहृतेऽप्यौपचारिकाधारत्वमत्र बोध्यम्। यद्वा—जस इर्जसिः[5] तस्मिन्, सौत्रः सप्तम्या लुक् इत्यर्थतो व्याचष्टे—**जसाधारमिति**। अन्यथा सत्यकाचि 'जसः शी ३००' इत्यस्य प्रवृत्तौ वर्णाश्रमेतरके इत्यपि रूपं स्यादिति भावः। यदा अज्ञातः कुत्सितो वा इतरः इतरकः इत्यकचं कृत्वा वर्णाश्च आश्रमाश्च इतरकाश्चेति द्वन्द्वः क्रियते तदा रूपद्वयं स्यादेव। परंतु—इतरशब्देन द्वन्द्वं कृत्वा अज्ञाता वर्णाश्रमेतरा इत्यज्ञाताद्यर्थयोगो यदा क्रियते तदा वर्णाश्रमेतरका इत्येकमेव रूपं साध्विति बोध्यम्। ननु द्वन्द्वावयवस्येतरशब्दस्याप्यकच् दुर्वारः, अवयवस्य सर्वनामतानपायात्। 'द्वन्द्वे च ३२१' इत्यनेन हि समुदायस्य निषेधो न त्ववयवानामिति चेत्। अत्राहुः—सिद्धान्ते हि जहत्स्वार्था वृत्तिरिति पक्षो मुख्यस्तस्मिंस्तु पक्षे अवयवानामित्युक्तं निरर्थकत्वात्। अज्ञाताद्यर्थयोगाभावेनाकचः प्राप्तिरेव नास्ति। यैस्तु 'द्वन्द्वे च ३२१' इति चकारेणावयवेष्वपि संज्ञा निषिध्यत इत्युच्यते, तेषामजहत्स्वार्थावृत्तिपक्षाभ्युपगमेऽपि न दोष इति॥ (३२३) **प्रथमचरम—**। नेमशब्दस्य नित्यं प्राप्ते अन्येषामप्राप्ते चायमारम्भः॥ **तयः प्रत्यय इति**। 'संख्याया अवयवे तयप् २४९९' इति विहितः॥ (३२४) **तीयस्येति**। 'द्वेस्तीयः २५१३', 'त्रेः संप्रसारणं च २५१४' इति विहितस्य[6]॥ **पटुजातीयायेति**। 'प्रकारवचने जातीयर् २७३८'॥ (३२५) **जराया जर—**। 'अष्टन आ विभक्तौ ५०२' इत्यतो विभक्तावित्यनुवर्त्य 'अचि र ऋतः ४१७' इत्यतोऽनुवृत्तेनाचीत्यनेन विशेष्यते, विशेषणेनेह तदादिविधिः, 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्यस्य तदन्तविधेरपवादत्वादित्याशयेनाह—**अजादौ विभक्ताविति**। अजादौ किम्, जराभ्याम्। जराभिः। विभक्ताविति किम्, जराया इदं जारम्। न च जराया असुङेवास्त्विति वाच्यम्, जराशब्दात् 'तत्करोति-३४१७' इति णिचि 'णाविष्ठवत्' इति टिलोपे ततः क्विपि णिलोपे चैकदेशविकृतस्यानन्यतया जरित्यस्य जराशब्दत्वादसुङि सति 'ङिच्च ६७' इत्यन्त्यस्य प्रवृत्त्या जसौ जस इति रूपापत्तेः। इष्यते त्वत्रापि जरसौ जरस इति। न च णिलोपस्य स्थानिवद्भावाद्विभक्तिपरत्वाभावेन जरसावित्यादि न सिध्यतीति शङ्क्यम्, 'क्वौ लुप्तं न स्थानिवत् ३८४' इति निषेधात्। यद्यपि 'क्वौ लुप्तं न स्थानिवत् ३८४' इति क्वाचित्कं,

---

१ **द्वन्द्वे चेति**। द्वन्द्वशब्दे द्विशब्दत्वस्यागमनेऽपि सञ्ज्ञात्वान्न सर्वनामकार्य—स्मिन्निति बोध्यम्॥ २ **प्रतिपदोक्तत्वादिति**। यदन्तत्वमादाय सर्वनामसंज्ञा चिकीर्ष्यते तमुच्चार्य विहितत्वाद्वाक्यमपि तत्संबन्ध्येव गृह्यते प्रत्यासत्तेरिति भावः। तेन करोतिद्वारा सामर्थ्ये मासेन कृताय पूर्वस्मै मासपूर्वस्मै इति वाक्ये समासे च न सर्वनामसंज्ञा॥ ३ **चेति**। 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' इति भाष्यकारेष्टया सर्वनामसंज्ञानिषेधप्रकरणस्थसप्तम्याः प्रथमार्थकत्वकल्पनैव, समुदायस्य तु स्मायादिनिरोधकः पाणिन्यभिहितो निषेधः, अवयववर्तिनीं संज्ञामाश्रित्याकच्स्वरौ इति भाष्यकारसंमता संज्ञेति मुनिद्वयवाक्ययोरविरोधायाश्रयणीयेति भावः॥ ४ **त्रतसिलादेरिति**। समुदायात्प्राप्तस्येत्यादिः॥ ५ **जस इरिति**। इकारेण सर्वनाम्नो विहितस्य दीर्घेकारस्य ग्रहणं, न तु 'जश्शसोः शिः' इति विहितस्य, व्याख्यानादिति भावः॥ ६ **विहितस्येति**। विहितस्यैवेत्यर्थः, शीघ्रोपस्थितत्वात्। तेन 'पूरणाद्भागे-' इति विहितान्प्रत्ययान्तस्य द्वितीयाय भागायेत्यत्र कृतपररूपैकादेशस्य सर्वनामसंज्ञा न भवति॥

(३२६) (प॰) पदाङ्गाधिकारे तस्य च तदन्तस्य च॥अनेकाल्त्वात्सर्वादेशे प्राप्ते-॥(३२७)(प॰) निर्दिश्यमानस्यादेशा भवन्ति ॥ एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः । इनादीन् बाधित्वा परत्वाज्जरस् । निर्जरसा । निर्जरसे । निर्जरसः । पक्षे हलादौ च रामवत् । वृत्तिकृता तु पूर्वविप्रतिषेधेन इनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसादिति रूपे न तु निर्जरसा निर्जरस इति केचिदित्युक्तम् । तथा भिसि निर्जरसैरिति रूपान्तरमुक्तम् । तदनुसारिभिश्च षष्ठयेकवचने निर्जरस्येत्येव रूपमिति स्वीकृतम् ।एतच्च भाष्यविरुद्धम् ॥ ( ३२८ ) (वि॰) पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ।६।१।६३ । पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष, दोष, यकृत्, शकृत्, उदक, आस्य एषां पदादय आदेशाः स्युः शसादौ वा । ( ३२९ ) यत्तु आसनशब्दस्य आसन्नादेश इति काशिकायामुक्तं तत्प्रामादिकम् । पादः । पादौ । पादाः । पादम् । पादौ । पदः । पादान् । पदा । पादेन इत्यादि ॥ (३३०) (वि॰) सुडनपुंसकस्य ।१ । १ । ४३ । सुट्

---

तथापीह तदाश्रयणे जरसिति गुर्वादेशकरणमेव मानमित्यवधेयम् ॥ (३२६) पदाङ्गाधिकार इति । परिभाषेयं 'येन विधिः ४७' इत्यस्य प्रपञ्चभूता । अत एव मनोरमायां पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिरित्युक्तम् । विशेष्यमिति तु प्रायेणेति बोध्यम् । तेन 'अल्लोपोऽनः ३३५' इति सूत्रे अङ्गावयवो योऽन् इति वक्ष्यमाणग्रन्थः स्वरसतः संगच्छते । अत्र नव्याः-नन्वाकरे 'तस्य तदुत्तरपदस्य च' इति प्रचुरः पाठः। तदन्तस्य चेति पाठे तु बहुच्पूर्वकेष्वपि पदाङ्गाधिकारकार्याणि प्रवर्तेरन्नित्याशङ्क्य समादधुः-अनभिधानात्पदाङ्गाधिकारकार्याणि बहुच्पूर्वकेषु न प्रवर्तन्त इत्याशयेन फलितार्थकथनपरतया तदुत्तरपदस्य चेति पठितं न त्विदमपूर्वं वचनमिति ॥ (३२७) सोपसर्गस्य सर्वस्य स्थाने जरसादेशमाशङ्क्याह—निर्दिश्येति । ननु तदन्तविधिनापि जराशब्दान्तं यदङ्गं तत्रैव निर्दिश्यमानजराशब्दे जरसादेशेन भवितव्यं न त्वन्यत्रेत्यत आह-एकदेशविकृतस्येति । पदाधिकारेऽपि तदन्तविधावुदाहरणं तदन्तस्यापि ह्स्वत्वे दीर्घाहो निदाघ इत्यादि वक्ष्यति । 'अलुगुत्तरपदे १३७४' इत्ययमुत्तरपदाधिकारोऽपि पदाधिकारग्रहणेन गृह्यते । तत्फलं तु तत्रैव स्फुटीकरिष्यति ॥ पक्षे इति । जरसादेशाभावे ॥ तदनुसारिभिरिति । ये तु निर्जरसिनेत्यादि व्याचक्षते तन्मतानुसारिभिरित्यर्थः ॥ निर्जरस्येत्येवेति । पूर्वविप्रतिषेधेन स्यादेशे कृते जरसादेशो न प्रवर्तत इत्येकमेव रूपमिति तेषामाशयः । अत एव 'वीतजन्मजरसः परं शुचिर्ब्रह्मणः पदम्' इति भारविप्रयोगमसमञ्जसं मत्वा 'वीतजन्मरजसः' इति पठनीयमिति तैरुक्तम् ॥ एतच्चेति । भाष्यकृता हि-'टाङसि-२८६' इति सूत्रे इनातौ प्रत्याख्याय नादेशमदादेशं च विधाय नादेशे परे एत्वं 'आङि चापः ४०५' इत्यत्र 'आङि च' इति योगं विभज्य साधितम् । तथा च निर्जरसिन निर्जरसादित्येतद्भाष्यविरुद्धमिति स्पष्टमेव । न च नादेशे कृते हलि लोपप्रवृत्त्या अनेनेत्येतन्न सिध्यतीति शङ्क्यम् , नशब्दे परतो विशिष्यानादेशविधानात् । तथाहि-'अनाप्यकः ४७०' इत्यत्र 'अन् नापि' इति पदच्छेदः । नपुंसकत्वात्सोर्लुकि नलोपः । 'नापीति' समाहारद्वन्द्वात्सप्तम्येकवचनम् ॥ न च ङसेरदादेशे कृते पररूपं स्यादित्यपि शङ्क्यम् , अकारोच्चारणसामर्थ्याद्दीर्घसंभवात् । तथा 'जराया जरसन्यतरस्याम्' इत्यस्मिन्नेव सूत्रे भाष्ये उक्तम् [ इष्टमेवैतत्संगृहीतम् ] 'अतिजरैरिति भवितव्यं संनिपातपरिभाषया' इति । ततश्च निर्जरसैरित्यपि भाष्यविरुद्धमेव । एतेन 'अतो भिसः-२८८'इति सूत्रे एसिति वक्तव्ये ऐस्करणं निर्जरसैरिति रूपार्थमिति केषांचिद्व्याख्यानं प्रामादिकमिति स्पष्टमेव ॥ (३२८)पद्दन्नो—। शसादौ वेति । 'अनुदात्तस्य चर्दुपधस्य-३२०५'इत्यतोऽन्यतरस्यामित्यनुवर्तत इति भावः॥अत्र शस्प्रभृतयो निमित्ततयोपात्तास्ते च पदाद्यादेशानुरूपान् प्रकृतिविशेषानाक्षिपन्तीत्याह--पाददन्तेति । यद्यपि 'शीर्षंश्छन्दसि ५३६१' इत्यतः छन्दसीति अनुवर्तते, तथापि भाषायामपि क्वचित्पदादयो भवन्ति 'मासश्छन्दसि-५४५३' इति वार्तिके छन्दोग्रहणसामर्थ्यादिति वक्ष्यति ॥ ( ३२९ ) प्रामादिकमिति । तथाहि--'आस्नो वृकस्य वर्तिकाम्' इति मन्त्रे मुखादित्यर्थः औचित्यात् । 'वृकस्य चिद् वर्तिकामन्तरास्यात्' इति मन्त्रान्तरसंवादाच्च। तथा-'हव्या जुह्वान आसनि' इति मन्त्रे मुखे इत्यर्थः।एवम् 'आसन्यं प्राणमूचुः' इत्यादि बोध्यम्॥ (३३०) सुडनपुं-

---

१ पदाङ्गेति । पदशब्देन केवलपदाधिकार उत्तरपदाधिकारश्च गृह्यते इति बोध्यम् ॥ २ 'षष्ठी स्थानेयोगा' इति सूत्रसिद्धार्थकथनपरेयम् ॥ ३ एकदेशविकृतेति । स्थानिवत्त्वेनेति शेषः । लौकिकन्यायस्य नात्र प्रवृत्तिः, 'जरा' इत्युक्तपरिमाणस्य ग्रहादिति तत्त्वम् । एवं च स्थानिबुद्ध्यैव कार्यप्रवृत्त्या निर्दिश्यमानत्वमव्याहतमेव तदन्ते तु निर्दिश्यमानत्वं व्याहतमेवेति भावः ॥ ४ परत्वादिति इदं च विभक्त्यादेशानां जरसादेशात्पूर्वविप्रतिषेधेन पूर्वं प्रवृत्तिरित्येतत्सूचकस्य 'नुमो जरस् विप्रतिषेधेन' इति वार्तिकस्य विस्मर्तॄणां प्राचामनुरोधेन । किं चैतद्वार्तिकभाष्यप्रामाण्येन विभक्तित्वज्ञानप्रकृतिविशेषप्रत्ययोभयापेक्षजरसादेशापेक्षया विभक्तिसंबन्धिकार्याणामन्तरङ्गत्वस्यापि संभवेन पूर्वं प्रवृत्तिस्वीकार एव न्याय्यः ॥ ५ संनिपातेति । वक्ष्यमाणप्रकारेण इनादेशे इकारोच्चारणम्, आदादेशे दीर्घोच्चारणं, भिस आदेशे ऐकारोच्चारणं च संनिपातपरिभाषाया अनित्यत्वे लिङ्गमिति तेषामभिमानः ॥ ६ एतच्चेति । संनिपातपरिभाषाया अनित्यत्वमात्रमित्यर्थः । तेषां ज्ञापकत्वेनाभिमतानां भाष्यकृता प्रत्याख्यातत्वादिति भावः । एवं च विभक्त्यादेशानां पूर्वविप्रतिषेधस्तु भाष्यसंमत एव, केवलं संनिपातपरिभाषाया अनित्यत्वमेव भाष्यविरुद्धम् । तथा च 'टा' प्रत्यये निर्जरेण, भिसि निर्जरैः, ङेप्रत्यये निर्जराय, ङसिप्रत्यये निर्जरात्, ङस्प्रत्यये निर्जरस्य, आमि निर्जराणामिति रूपाण्येव भवन्ति । न तु एष्वादेशेषु कृतेषु जरस्, नाप्येतेषु प्रत्ययेषु जरसूघटितानीति बोध्यम् । ७ अनुरूपानिति । समानानुपूर्वीककल्पान् समानार्थानिति भावः ॥

प्रत्याहारः[१] । स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ (३३१) (सू.) **स्वादिष्वसर्वनामस्थाने** ।१।४।१७। कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात् ॥ (३३२) (सू.) **यचि भम्** । १ । ४ । १८ । यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात् ॥ (३३३) (सू.) **आकडारादेका संज्ञा**[२] । १ । ४ । १ । इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या पराऽनवकाशा च । तेन शसादवचि भसंज्ञैव न पदत्वम् । अतो जश्त्वं न । दतः । दता । जश्त्वम् । दद्भ्यामित्यादि ॥ मासः । मासा । भ्यामि रुत्वे यत्वे च यलोपः । माभ्याम् । माभिरित्यादि ॥ (३३४) (सू.) **भस्य** । ६ । ४ । १२९ । अधिकारोऽयम् ॥ (३३५) (सू.) **अल्लोपोऽनः** । ६ । ४ । १३४ । अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन्, तस्याकारस्य लोपः स्यात् ॥ (३३६) (सू.) **रषाभ्यां नो णः समानपदे** ।८।४।१।एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः

---

सकस्य । 'सुट् स्त्रीपुंसयोः' इति वक्तव्ये अनपुंसकस्येति वचनं ज्ञापकं 'प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्ति' इति कैयटः । तेन असूर्यंपश्यानि मुखानीत्यादि सिद्धम् ॥ (३३१) **स्वादिष्वसर्वनाम**–।सुरत्र सप्तमीबहुवचनमिति न शङ्क्यम्, किं तु 'असर्वनामस्थाने' इति पर्युदासात्प्रथमैकवचनमेव । 'सुपि' इत्येव सिद्धे आदिग्रहणमाधिकपारिग्रहार्थमित्याशयेनाह–**कप्प्रत्ययावधिष्विति** । नन्वेवं राजेत्यत्र नलोपो न स्यात्, प्रत्ययलक्षणेन सर्वनामस्थानपरतया पदत्वाभावात् । नैष दोषः सौ परतः 'स्वादिषु–३३१' इत्यनेन पदत्वासंभवेऽपि सुब्विशिष्टस्य 'सुप्तिङन्तम् ५२' इति पदसंज्ञायां हल्ङ्यादिना सुलोपे एकदेशविकृतन्यायेन नकारान्तस्य पदत्वात् । यदि तु 'स्वादिषु' इति योगेन स्वादिषु परेषु पूर्वं पदं भवतीति पूर्वस्य पदसंज्ञां विधाय 'यचि भम् ३३२' इत्यत्र यचीति छित्त्वा यजादौ सर्वनामस्थाने परतः पूर्वं पदं नेति निषिध्यते, तदा औजसादिषु पदसंज्ञाभावेऽपि सौ परतः पदत्वसंभवात् राजेत्यादौ नलोपे कार्ये न काप्यनुपपत्तिः ॥ (३३२) **यचि भम्** । यचीत्यल्ग्रहणेन सप्तमीनिर्देशात्तदादिविधिरित्याह—**यकारादिष्वित्यादि** । यकारादिषु किम्, गार्ग्यः । वात्स्यः । 'गर्गादिभ्यो यञ्' 'यस्येति च ३३३' इत्यकारलोपो यथा स्यात् । असर्वनामस्थानेषु किम्, सुपादौ, सुपादः, विद्वांसौ विद्वांसः, दित्यवाहौ दित्यवाहः इत्यादौ 'पादः पत् ५५६' 'वसोः संप्रसारणम् ५८२' 'वाह ऊठ् ४५३' इत्यादयो मा भूवन्निति ॥ (३३३) **आकडारा**–। इह 'प्राक्कडारात्समासः ९४८' इत्यस्य नावधित्वं, व्याप्तिन्यायात् । 'तत्पुरुषो–९९१' 'द्विगुश्च ९९२' इति लिङ्गाच्च । संज्ञाद्वयसमावेशार्थं हि तत्र चकारः । तदाह—**कडाराः कर्मधारय इत्यत इति** ॥ **एकस्यैकैव संज्ञेति** । उभयोः सावकाशत्वे 'विप्रतिषेधे परम्–२५९' इति परैव गृह्यते, निरवकाशत्वे तु सैव । तत्र परस्या उदाहरणं–धनुषा विध्यतीति । अत्र शराणामपाये प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञा अपादानसंज्ञां बाधते । निरवकाशायाः पूर्वस्यास्तूदाहरणं 'भवतष्ठक्छसौ १८८३' भवदीय इति । अत्र हि 'सिति च १७७२' इति पदसंज्ञा परामपि भसंज्ञां बाधते, निरवकाशत्वात् । तेन तकारस्य जश्त्वं भवति ॥ प्रकृते तु परा अनवकाशा भसंज्ञा पदसंज्ञां बाधते इति शसादावचि सैव ग्रहीतुमुचितेत्याशयेनाह—**या परेत्यादि** ॥ **यलोप इति** । 'हलि सर्वेषाम् २५२' इत्यनेन, 'लोपो व्योर्वलि १२५४' इति तु न प्रवर्तते यत्वस्यासिद्धत्वात् ॥ (३३५) **अल्लोपोऽनः** । *'भस्य ३३४' इत्यनेनाक्षिप्तः प्रत्ययाविशेषः* अङ्गं चेति द्वयमनो विशेषणम्, अन् तु अकारस्येत्यभिप्रेत्य व्याचष्टे—**अङ्गावयव इत्यादि** । अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादिति प्राचां व्याख्याने तक्ष्णेत्यादौ तकाराकारस्यापि लोपः स्यात् । भस्याङ्गस्यानोऽकारस्येति व्याख्याने तु अनसा मनसेत्यादौ स्यात् । तन्त्रावृत्त्यादिना अन्नन्तस्य भस्याङ्गस्यानोऽकारस्येति व्याख्यानेऽपि अनस्तक्ष्णेत्यादावतिव्याप्तिरेवेति भावः ॥ सूत्रे तपरकरणं नञ्समासभ्रमनिवारणाय कृतमित्येके ॥ ननु प्राणितीति प्राण् ततः शसादिप्रत्यये प्राणः प्राणेत्यादौ 'अनितेः ३२२२' इति णत्वस्यासिद्धतया अतिप्रसङ्गः स्यादिति तद्वारणायैव तपरकरणमस्त्विति चेन्नैवम्, सवर्णदीर्घे कृते अन एव तत्रासत्त्वात् । न च 'वार्णादाङ्गं बलीयः ३०६०' इति सवर्णदीर्घात्प्रागेव लोपः प्रवर्तत इति अस्त्येवात्रूपमिति वाच्यम्, तथाहि सति व्यावर्त्यालाभेन तपरकरणवैयर्थ्यस्य तदवस्थत्वात् । वस्तुतो वार्णपरिभाषेह न प्रवर्त्तते, युगपत्प्रवृत्तावेव वार्णादाङ्गस्य बलीयस्त्वात् । क्विपि 'अनुनासिकस्य–३५४५' इति दीर्घे सवर्णदीर्घात्प्रागपि अनोऽभावाच्च । तस्माद् भ्रमनिरासार्थमेव तपरकरणं न तु प्राण इत्यादावनोऽकारलोपवारणार्थमिति तेषामाशयः ॥ वस्तुतस्तु–एकदेशविकृतन्यायेन भवत्येव तत्रातिप्रसङ्ग इति तपरकरणमत्रावश्यकमेवेति नव्याः ॥ (३३६) **रषाभ्यां नो णः**—। अत्र 'अपदान्तस्य मूर्धन्यः २५६' इत्यनुवर्त्य णग्रहणं 'पदान्तस्य २८३' इति सूत्रं च भाष्ये प्रत्याख्यातम् ॥ **समानपदे इति** । निमित्तनिमित्तिनोरपदस्थत्वासंभवात् 'पदे' इतीयतैव सामर्थ्यादेकपदत्वे लब्धे समानग्रहणं यत्समानमेव पदं–निमित्तवत्पदाभिन्नपदस्थत्वाभाववादिति यावत्, तत्र यथा स्यादित्येतदर्थम् । तेन समासे रामनाम गन्धर्वगानामित्यादौ न भवति । तत्र हि–नकारस्यैकपदवृत्तित्वेऽपि निमित्तवत्पदाभिन्नपदस्थत्वात् । भवति हि यूष्ण इत्यादौ णत्वम् । निमित्तवत्पदाभिन्नपदत्वाभाववद्वृत्तित्वान्नकारस्य । मातृभोगीण इत्यादावपि नस्य णत्वं भवत्येव, प्रत्ययवृत्तित्वेऽपि निमित्तवत्पदाभिन्नपदवृत्तित्वाभावात् । एतेन समानग्रहणमखण्डपदलाभार्थमिति व्याख्याय रामनामेत्यादावतिप्रसङ्गे निवारितेऽपि मातृभोगीण इत्यादावव्याप्तिः स्यादेवेति केषांचिदुक्तिः परास्ता । उक्तरीत्या

---

१ **प्रत्याहार इति** । व्याख्यानादौटष्टकारेणेति बोध्यम् । आगमस्य तु न ग्रहणम्, 'इतोऽत्सर्वनामस्थाने' इत्यादावसंभवात् ॥ २ **संज्ञेति** । स्पष्टार्थम् । प्रकरणाद्, एकेति स्त्रीलिङ्गनिर्देशाच्च तल्लाभसिद्धेरिति केचित् ॥ ३ यदि तु अदमुयङित्यर्थम 'अनन्त्यविकारेऽन्त्यसदेशस्य' इति परिभाषाऽऽवश्यकी तयैवानस्तक्ष्णेत्यादौ व्यावृत्तिरित्युच्यते, तदाऽस्तु अङ्गविशेषणमेव तदित्याहुः–इति शब्दरत्नम् ॥

स्यात्। यूष्णः। यूष्णा। पूर्वस्मादपि[1] विधौ स्थानिवद्भाव इति पक्षे तु[2] अड्व्यवाय इत्येवात्र णत्वम्॥ (३३७) वा॰ पूर्वत्रासिद्धे न स्थानिवत्। इति तु इह नास्ति॥ (३३८) वा॰ तस्य दोषः संयोगादिलोपलत्वणत्वेषु॥ इति निषेधात्॥ (३३९) सू॰ न लोपः प्रातिपदिकान्तस्य।८।२।७। नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात्। नलोपस्यासिद्धत्वाद्दीर्घत्वमेत्त्वमैस्त्वं च न। यूषभ्याम्। यूषभिः। यूषभ्यः-इत्यादि॥ (३४०) सू॰ विभाषा ङिश्योः। ६। ४। १३६। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः। यूष्णि। यूषणि। पक्षे रामवत्॥ (३४१) [3]पद्दन्निति सूत्रे प्रभृतिग्रहणं प्रकारार्थम्। तथा च औङः श्यामपि दोषन्नादेशो भाष्ये ककुद्दोषणी इत्युदाहृतः। तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्', 'स्वान्तं हृन्मानसं मनः' इति संगच्छते। आसन्यं प्राणमूचुरिति च। आस्ये भवः आसन्यः। दोष्शब्दस्य नपुंसकत्वमप्यत एव भाष्यात्। तेन 'दक्षिणं दोर्निशाचरः' इति संगच्छते। 'भुजबाहू प्रवेष्टो दोः' इति साहचर्यात्पुंस्त्वमपि। 'दोषं तस्य तथाविधस्य भजतः' इति। द्वयोरह्नोर्भवो द्व्यह्नः॥

---

त्वव्याप्तिशङ्काया निरस्तत्वात्॥ **यूष्ण इति।** यूषो मण्डः। 'मुद्गामलकयूषस्तु भेदी दीपनपाचनः' इति दर्शनात्॥ (३३७) **पूर्वत्रासिद्धे न स्थानिवदिति।** एतच्च न्यायसिद्धम्। त्रिपाद्या असिद्धत्वेन तत्रत्ये कर्तव्ये 'अचः परस्मिन्-७७' इत्यतिदेशस्याप्रवृत्तेः॥ (३३८) **तस्येति।** तस्य पूर्वत्रासिद्धे नेत्यस्य। तथा च स्थलत्रये स्थानिवद्भावो वक्तव्य इत्यर्थः। संयोगादिलोपे चक्र्यत्र। इह 'अचः परस्मिन्-७७' इति यणादेशस्य स्थानिवत्त्वात् 'स्कोः-५१६' इति कलोपो न। लत्वे निगाल्यते। अत्र णिलोपस्य स्थानिवत्त्वात् 'अचि विभाषा ३३६९' इति लत्वम्। णत्वे माषवपनी। इह 'यस्येति च ४३१' इत्यल्लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाभावाण्णत्वं न। ननु गर्गभगिनीत्यत्रेव माषवपनीत्यत्रापि णत्वप्राप्तिर्नास्त्येव। उत्तरपदं यत्प्रातिपदिकं तदन्तस्येति वक्ष्यमाणत्वात्। अत्राहुः—'साधनं कृता' इति ल्युडन्तेन समासे पश्चान्ङीपि 'यस्येति च ४३१' इत्यल्लोपे कृते नकारस्योत्तरपदान्तत्वाण्णत्वप्राप्तिरस्त्येवेति। स्यादेतत्, यूष्ण इत्यादौ 'रषाभ्याम्-३३६' इत्यस्य नोपयोगः, ष्टुत्वेनैव रूपसिद्धेः। अत एव च षग्रहणमुत्तरार्थमित्याकरे स्थितमिति चेत्। उच्यते-उत्तरार्थतयापीह षग्रहणं स्थितम्, ततश्च यूष्णः पुष्णातीत्यादौ 'रषाभ्याम्-३३६' इति णत्वस्य प्रवृत्तिः केन वार्यताम्। ष्टुत्वेनेति चेन्न, तस्यासिद्धत्वात्। न च वचनप्रामाण्यात्सिद्धत्वं शङ्क्यम्, पुष्टः पुष्टिः षष्ठः इत्यादौ चरितार्थत्वात्। नस्य षयोगे ण इत्यंशोऽचरितार्थ इति चेन्न, तस्य पृथगनुक्तेः, इह षात्परस्येत्युक्तिरप्यचरितार्थेत्यस्यापि तुल्यत्वाच्च। एवमप्युत्तरार्थं षग्रहणमित्याकरो विरुध्यत इति चेन्न,। आकरेऽपीह षग्रहणं विना पुष्णातीत्यादिलक्ष्यस्यासिद्धिर्नास्तीत्येतावदभिप्रेतं, न तु पुष्णातीत्यादौ 'रषाभ्याम्-३३६' इत्यस्याप्रवृत्तिरिति॥ (३३९) **न लोपः प्रातिपदिकान्तस्य। लुप्तषष्ठीके इति।** सौत्रत्वात्। न तु षष्ठीतत्पुरुषौ, पूर्वपदे सापेक्षत्वेन समासासंभवात्। प्रातिपदिकस्य पदविशेषणत्वाच्चेति भावः॥ **तदन्तस्येति।** षष्ठीतत्पुरुषोऽयम्। तस्य प्रातिपदिकसंज्ञकपदस्य अन्तो यो नकारस्तस्येत्यर्थः। यदि तु प्रातिपदिकेनेव नेत्यनेनापि पदं विशेष्यते, तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्यमकर्तुमिति[4] मनोरमायां स्थितम्। प्रातिपदिकेति किम्, अहन्। पदमिति किम्, राजानौ। राजानः॥(३४०) **विभाषा ङिश्योः।** शीति 'नपुंसकाच्च ४३०' इति विहितो गृह्यते, न तु 'जश्शसोः शिः ४३३' तस्मिन्नभत्वात्। 'भस्य ३३४' इत्यनेनासर्वनामस्थाने इत्यस्येव यजादेराक्षेपात्। तदेतदाह-**असर्वनामस्थानेत्यादि॥** **ककुद्दोषणी इति।** ककुद् दोषणी इति च्छेदः। एकपदत्वे त्वनुपपत्तिरनुपदमेव वक्ष्यते॥ **आसन्यमिति।** 'ये चाभावकर्मणोः १६३६' इति प्रकृतिभावात् 'नस्तद्धिते ९८६' इति टिलोपो न॥ **अत एवेति।** 'ककुद्दोषणी' इति भाष्यप्रयोगादेवेत्यर्थः। यद्यपि ककुच्च दोश्च तयोः समाहारः ककुद्दोः। ककुद्दोश्च ककुद्दोश्च ककुद्दोषणी इत्येकशेषे कृते भाष्यं सुयोजमिति न दोःशब्दस्य नपुंसकत्वे इदं प्रमाणं, तथापि ककुदित्यस्य पृथक्पदत्वमेव न्याय्यम्। अन्यथा बाह्वोर्द्वित्वे लब्धेऽपि ककुद एकत्वं न लभ्यते इति भावः। 'तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः' इति रघुस्तत्र दक्षिणं दोरुद्यम्य तमुपाद्रवदित्यन्वयः॥ **दोषं तस्येति।** अयं च श्रीहर्षप्रयोगः। दोषं हस्तं दूषणं च भजतः चापस्येति संबन्धः॥ **द्वयोरह्नोर्भव इति।** 'तद्धितार्थ-१०५२' इति समासः। 'राजाहः—

---

१ **पूर्वस्मादिति।** अव्यवहितस्य इति शेषः। तेन हे गौरित्यत्र पूर्वस्माद्गकारादव्यवहितत्वाभावेन न संबुद्धिलोपापत्तिः। व्यवहितस्यापि ग्रहणे तु पूर्वस्मान्निमित्तत्वेनाश्रितादित्यङ्गीकार्यम्॥ २ **इति पक्षे त्विति।** तुना, तदङ्गीकारे प्राविगण्य्येत्यादिर्न सिध्यति। णौ जातस्याल्लोपस्य स्थानिवत्त्वेन 'ल्यपि लघुपूर्वात्' इति णेरयादेशानुपपत्तिः। न च सूत्रारम्भसामर्थ्यम्, संगमय्येत्यादौ मिति तस्य चारितार्थ्यात्। एतस्माद्भाष्योदाहरणात् 'निष्ठायां सेटि' इति सूत्रे परमपीटं बाधित्वा नित्यत्वाद् णिलोपोत्तरम् 'एकाचः-' इतीड्निषेधप्रवृत्तिसूचनद्वारा सार्थकात् सेटीति ग्रहणात्, पञ्चमीसमासेन णिलोपस्य स्थानिवत्त्वेन णिलोपोत्तरमप्येकाच्त्वाभावादिड्व्यावृत्तौ व्यर्थाच्च पञ्चमीसमासस्यानित्यत्वज्ञापनान्न तस्य सार्वत्रिकत्वमित्यरुचिः सूच्यते॥ ३ **प्रकारार्थमिति।** प्रकारः सादृश्यम्। तच्च न शब्दत्वेन, 'नासिकाया नस्, यत्तस् क्षुद्रेषु'-इत्यादिवैयर्थ्यापत्तेः। किं तु सुप्त्वेनैव। मांस्पचनीत्यादौ तु 'न लुमता-' इति निषेधस्यानित्यत्वेन प्रत्ययलक्षणेन सुप्परत्वम्। ४ **शक्यमकर्तुमिति।** पदस्येत्यस्य क्वचिद्वैयधिकरण्येनान्वयेऽस्य तात्पर्यग्राहकत्वं भाष्ये उक्तम्, तत्तु लक्ष्यानुसारिव्याख्यानादेव ज्ञापकं विनापि सिद्धमित्यभिमानः। इति शब्दरत्नम्॥

( ३४२ ) सू संख्याविसायपूर्वस्याह्नस्याऽहनन्यतरस्यां ङौ।६।३।११०। संख्यादिपूर्वस्याह्नस्याहनादेशो वा स्यात् ङौ । द्व्यह्नि । द्व्यहनि । द्व्यह्ने । विगतमहर्व्यह्नः । व्याह्नि । व्यहनि । व्यह्ने ॥ अह्नः सायः सायाह्नः । सायाह्नि । सायाहनि । सायाह्ने ॥ इत्यदन्ताः ॥ विश्वपाः ॥ ( ३४३ ) सू दीर्घाज्जसि च । ६।१।१०५। दीर्घाज्जसि इचि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् । वृद्धिः । विश्वपौ । सवर्णदीर्घः । विश्वपाः । यद्यपीह औङि नादिचीत्येव सिद्धं जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति तथापि गौर्यौ गौर्य इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् ॥ ( ३४४ ) सू आतो धातोः ।६ । ४ । १४०। आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । अलोऽन्त्यस्य । विश्वपः । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् । हाहान् । टा सवर्णदीर्घः । हाहा । ङे वृद्धिः । हाहै । ङसिङसोर्दीर्घः । हाहाः २ । ओसि वृद्धिः । हाहौः । ङौ आद्गुणः । हाहे । शेषं विश्वपावत् । आत इति योगविभागादधातोरप्याकारलोपः क्वचित्[2] । क्त्वः । श्नः ॥ इत्यादन्ताः । हरिः । प्रथमयोः पूर्वसवर्णः । हरी ॥ ( ३४५ ) सू जसि च ।७।३।१०९। ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे । हरयः ॥ ( ३४६ ) सू ह्रस्वस्य गुणः । ७ । ३ । १०८ । ह्रस्वस्य गुणः स्यात्संबुद्धौ । एङ् ह्रस्वादिति संबुद्धिलोपः । हे हरे । हरिम् । हरी । हरीन् ॥ ( ३४७ ) सू शेषो घ्यसखि । १। ४।७। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं[3] सखिवर्जं घिसंज्ञं स्यात् । शेषः किम् । मत्यै । एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थम्[4] । ह्रस्वौ किम् । वातप्रम्ये । यू किम् । मांत्रे[5] ॥ ( ३४८ ) सू आङो

---

सखिभ्यः–११३४' इति टच्, 'अह्नोऽह्न एतेभ्यः ११३६' इति अह्नादेशः, कौलौद्वयो 'द्विगोर्लुगनपत्ये १५११' इति लुक् ॥ ( ३४२ ) अह्नः साय इति । स्यतेर्घञि अवसानवचनः सायशब्दः, 'संख्याविसाय ३४३' इति ज्ञापकादेकदेशिसमासः ॥ इत्यदन्ताः ॥ विश्वपा इति । विश्वं पाति रक्षतीति विग्रहे 'पा रक्षणे' इत्यस्मात् 'आतोऽनुपसर्गे–३८८३' इति कं बाधित्वा 'आतो मनिन्क्वनिब्वनिपश्च ५२४७' इति चकाराद्विजिति व्याख्यातारः । इह छन्दसि 'आतो मनिन्–५२४७' इति विच्, लोके तु 'अन्येभ्योऽपि दृश्यते ४१८४' इत्यनेनेति विवेकः ॥ ( ३४३ ) दीर्घाज्जसि च । चकारादिचीत्यनुकृष्यते, नेति चानुवर्तते तदाह––दीर्घाज्जसि इचि चेति । सूत्रे चकाराभावे ह्रस्वाकारादिचि दीर्घाकारात्तु जसीति व्यवस्था संभाव्येतेति भावः ॥ इत्याद्यर्थमिति । ननु 'यू स्त्र्याख्यौ–३७३' 'त्वादिभ्यः ४०२६' इति निर्देशादिक्प्रत्याहाराच्प्रत्याहारयोरेव निरूढलक्षणेति व्याख्यायतां, तथा च–दीर्घस्याच्त्वाभावाद्गौर्यावित्यादौ पूर्वसवर्णदीर्घो न प्राप्नोतीति किमनेन निषेधसूत्रेणेति चेन्मैवम्, अस्मादेव निषेधाज्ज्ञापकादिगजिभिन्नेष्वपि प्रत्याहारेषु लक्षणा[6] स्वीक्रियते । अन्यथा गौरीरित्यादौ शसि परतः पूर्वसवर्णदीर्घो न स्यात् । किञ्च, उपार्छतीत्यादौ 'उरण् रपरः १०५' नैषादकर्षुक इत्यादौ 'इसुसुक्–१७२४' इति ठस्य कादेशः, अमीषामित्यादौ इणः परस्य सस्य च षत्वं न सिध्यतीति दिक् ॥ 'प्रथमयोः–२४४' इति सूत्रानन्तरं 'दीर्घाच्छसि' इत्येव सुवचम् । दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इति तस्यार्थः । एवं च चकारो न कर्तव्यो नेति च नानुवर्तनीयमिति महल्लाघवमित्येके ॥ शसि दीर्घादेवेति विपरीतनियमवारणाय 'नृन्पे २१४' 'कानाम्रेडिते २१७' इति निर्देशाश्रयणे प्रतिपत्तिगौरवं स्याद् इति यथान्यास एव श्रेय इत्यन्ये ॥ ( ३४४ ) हाहानिति । गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम् । 'हाहा हूहूश्चैवमाद्या गन्धर्वाः' इत्यमरः । केचित्तु अकारो वासुदेवस्तेन सह वर्तन्ते इति सास्तान् सानिति प्रत्युदाहरन्ति । क्त्वः । श्नः इति । यद्यपि 'क्त्वो ल्यप्' 'श्नः शानज्झौ' 'क्रमश्च क्त्वि' इति निर्देशादेतत्सूत्रेष्वातो लोपः सिध्यति, तथापि क्त्वो ल्यब् भवति, श्नः शानज् भवतीति व्याख्यानवाक्येष्वसाधुत्वशङ्कावारणायेदमुक्तम् ॥ इत्यादन्ताः ॥ ( ३४७ ) सूत्रे शेषपदस्य प्रयोजनमाह—अनदीसंज्ञाविति । 'यू स्त्र्याख्यौ–३७३' इत्यतः यू इति, 'ङिति ह्रस्वश्च ४१४' इत्यतः ह्रस्व इति चानुवर्तते तदाह—ह्रस्वौ यावित्यादि ॥ मत्यै इति । नदीसंज्ञापक्षेऽपि घिसंज्ञायां सत्याम् 'आण् नद्याः ३७६' इत्याडागमे 'घेर्ङिति ३४९' इति गुणे कृते अयादेशे च मतयै इति स्यादिति भावः ॥ ( ३४८ ) आङो ना—। 'पुंसि' इति तु नोक्तम्, अमुना कुलेनेत्यत्र यथा स्यात् । न च नुमा रूपसिद्धिः, मुत्वस्यासिद्धत्वात् 'इकोऽचि ४४२' इति नुमोऽप्रवृत्तेः । नादेशे तु नासिद्धत्वम्, 'न मुने ५८९' इति निषेधात् । न च 'न मु ने ५८९' इति निषेधो नुम्येव किं न स्यात्, न इत्यकारस्याविवक्षितत्वादिति

---

१ पूर्वस्येति । 'सायेभ्यः' इति वक्तव्ये पूर्वग्रहणम्, अधिकृतस्य 'उत्तरपदे' इत्यस्यैवाह्नविशेषणतया स्थानित्वबोधनार्थम् । तेन 'सायादिपूर्वकस्योत्तरपदभूतस्याह्नस्याहन्नादेशः' इत्येव सूत्रार्थः । अन्यथा द्व्यह्नप्रिय इत्यादावेव स्यात् ॥ २ अधातोरपीति । आबन्तभिन्नस्यैवेति शेषः । 'अनापः' इत्यस्यैव प्रत्याख्यानाय योगविभागस्य भाष्ये कृतत्वेनारम्भप्रत्याख्यानयोः फलैक्यायेत्थमेवाङ्गीकरणीयत्वात् । एवं च धातुग्रहणमाबन्तव्यावृत्त्यर्थमेवेति यदि विभाव्यते, तर्हि हाहाशब्दस्य 'अकारेण सह वर्तते' इत्यर्थकसाशब्दस्याप्याकारलोपो भवत्येवेति तत्त्वम् ॥ ३ तदन्तमिति । अनुवृत्तस्य 'यू' इत्यस्य विशेषणत्वात् 'शेषः' इत्यस्य विशेष्यत्वाद्विशेषणे तदन्तविधिरिति भावः ॥ ४ स्पष्टार्थमिति । स्पष्टतया तदन्तविधिलाभार्थमित्यर्थः ॥ ५ मान्त्रे इति । 'ङसो ङिसर्वनाम–' इत्यत्र ङिग्रहणमपि यू इत्यनुवृत्तावेव तात्पर्यग्राहकमिति न पित्रेत्यादौ नादेशापत्तिरिति भावः ॥ ६ लक्षणेति । जातिपक्षाश्रयणमिति तत्त्वम् ॥

**नाऽस्त्रियाम्** । ७।३।१२०। घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा प्राचाम् । हरिणा । अस्त्रियां किम् । मत्या ॥ (३४९) (सू) [1]**घेर्ङिति** । ७ । ३।१११। घिसंज्ञकस्य ङिति सुपि गुणः स्यात् । हरये । घेः किम् । सख्ये । ङिति किम् । हरिभ्याम् । सुपि किम् । पट्वी । घेर्ङि[350]तीति गुणे कृते ॥ (३५०) (सू) [2]**ङसिङसोश्च** ।६।१।११०। एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात् । हरेः । हर्योः । हरीणाम् ॥ (३५१) (सू) **अच्च घेः** । ७।३।११९। इदुद्भ्यामुत्तरस्य ङेरौत्स्याद् घेरन्तादेशश्चाकारः । हरौ । हर्योः । हरिषु । एवं श्रीपत्यग्निरविकव्यादयः॥ (३५२) (सू) **अनङ् सौ**।७।१।९३। सख्युरङ्गस्यानङादेशः स्यादसंबुद्धौ सौ परे । ङिच्चे[46]त्यन्तादेशः ॥ (३५३) **अलोऽन्त्यात्पूर्व उपधा** । १ । १ । ६५ । अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ॥ (३५४) (सू) **सर्वनामस्थाने चासंबुद्धौ** ।६।४।८। नान्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे ॥ (३५५) (सू) **अपृक्त एकाल् प्रत्ययः** । १।२।४१। एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः

---

वाच्यम् । [3]अमुना घटेनेत्याद्यसिद्धयापत्तेः । अमुष्मै कुलायेत्यादौ नुमप्रसङ्गाच्च । न च तत्र स्माद्यादेशे सति नुमोऽप्रवृत्तिरिति शङ्क्यम्, स्मायादेशं बाधित्वा परत्वान्नुमः प्रवृत्तेः ॥ **प्राचामिति** । आचार्याणामिति शेषः ॥ ( ३५० ) **ङसिङसोश्च** । इह ङसिङसौ द्वौ एङावपि, तयोर्यथासंख्यं न, अस्वरितत्वात् । अल्पाच्तरस्य पूर्वनिपाताकरणाल्लिङ्गात् 'अच्च घेः ३५१' 'उपसर्गे घोः किः ५०६५' इति निर्देशाच्च ॥ ( ३५१ ) **अच्च घेः** । अत्र इदुद्भ्याम्, औद् इति 'ङेराम्–३७८' इत्यतो ङेरिति च पदत्रयमनुवर्तत इत्याशयेनाह--**इदुद्भ्यां परस्य ङेरौत्स्यादिति** । घेरुत्तरस्येति प्राचां व्याख्यानमिह तु नोक्तम्, सूत्रे घेरित्यस्य षष्ठ्यन्तत्वात्, तन्त्रावृत्त्यादौ च प्रमाणाभावात् । 'औत् ३६१' इति पूर्वसूत्रे इदुद्भ्यामुत्तरस्य ङेरिति क्लृप्तसंबन्धस्य त्यागायोगाच्च ॥ यत्तु व्याचख्युः, अदिति तपरत्वं बुद्धावित्यादावत्वे कृते स्त्रियां टाप् मा भूदित्येतदर्थमिति । तच्चिन्त्यम्, तपरग्रहणाद्धि टापा सह दीर्घो मा भूत् टाप् तु स्यादेव, लक्षणद्वयबाधे मानाभावात् । अत एव 'कृन्मेजन्तः' इति सूत्रे भाष्यादौ संनिपातपरिभाषया पद्धतावित्यत्र टाप् नेत्युक्तम्, टापा व्यवधाने ह्यानन्तर्यविघातः स्यादिति । तपरकरणाट्टाबभावे तु संनिपातपरिभाषोपन्यासस्तत्र विरुध्येत । यदपि व्याचख्युः, औतस्तकारः स्वरितार्थ इति । तदपि न, 'स्तीर्णे बर्हिषि सामिधाने अग्नौ' इत्यादौ स्वरितत्वादर्शनात् । 'न विभक्तौ–२७५' इति सूत्रे ङेरौतस्तु तकार उच्चारणार्थो नेत्संज्ञकः इति स्वयमेव भाषितत्वाच्च । तस्मादुभयत्र तपरकरणमुच्चारणार्थमेवेति मनोरमायां स्थितम् ॥ ( ३५२ ) **अनङ् सौ** । नकारादकार उच्चारणार्थः । 'असंबुद्धौ' इति पर्युदासात् साविति प्रथमैकवचनं गृह्यते, न तु सप्तमीबहुवचनम् ॥ 'सोर्डा' इत्येव सिद्धे अनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनार्थम्, तेन उशनसः संबुद्धावनङ् सिध्यतीति प्राञ्चः ॥ यद्यपि 'सोर्डा' इत्युक्ते 'ऋदुशन–३८७' इत्युत्तरसूत्रेणापि डा स्यात् । ततश्च उशनेत्यत्र 'सर्वनामस्थाने चासंबुद्धौ ३५४' इति दीर्घः स्यात् । पुरुदंसेत्यत्र तु 'सान्तमहतः–४३९' इति दीर्घः स्यात्, तथापि संज्ञापूर्वकविधेरनित्यत्वाद् अङ्ग[6]वृत्तपरिभाषया वा तत्समाधेयमिति तेषामाशयः ॥ (३५३) **अलोऽन्त्यात्पूर्वः**–। अल् इति पञ्चमी अन्त्यादित्यनेन विशेष्यत इत्याह--**अन्त्यादल इति** । अलः किम्, शिष्टः शिष्टवानित्यादौ अन्त्यात्संघातात् पूर्वस्य शकारस्य मा भूत् । सत्यां हीत्संज्ञायां 'शास इदङ्हलोः २३०४' इति शस्येत्त्वं स्यात् ॥ नन्वेवमप्यन्त्यादलः पूर्वस्य संघातस्योपधासंज्ञायां शिष्ट इत्यादौ शकारविशिष्टस्याकारस्य इत्त्वं स्यादित्यतिप्रसङ्गदोषस्तदवस्थ एवेति चेदुच्यते। यथा हि–लोके अमीषां ब्राह्मणानामन्त्यात्पूर्व आनीयतामित्युक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते, तथाऽत्राप्यन्त्योऽलात्मक इति तत्पूर्वोऽप्यलेव गृह्यते । तदेतदाह— **पूर्वो वर्ण इति** । अत्र 'अचोऽन्त्यादि टि १२४' इत्यत्रेव अल इति निर्धारणे षष्ठीत्यपि सुवचमिति केचिदाहुः । 'अलां मध्ये योऽन्त्यस्तस्मात्पूर्वो वर्ण उपधासंज्ञः स्यात्' इति व्याख्याया अपि संभवदुक्तिकत्वात् ॥ (३५४) **सर्वनामस्थाने**–। 'नोपधायाः ५०१' इति सूत्रं 'ढ्लोपे–२५८' इति सूत्राद्दीर्घग्रहणं चानुवर्तत इत्याशयेनाह–**नान्तस्येत्यादि** ॥ (३५५) **अपृक्त एकाल्**–। असहायवाच्यत्रैकशब्दः संख्यावाची वा । न च संख्यावाचित्वे अभैत्सीदित्यत्र हलन्तात्परस्य सिचोऽपृक्तत्वाल्लोपः स्यादिति वाच्यम्, विभक्तिसाहचर्याद्विभक्तेरेव लोप इति व्याख्यानात् । एकालिति किम्, जागृविः । 'वेरपृक्तस्य ५१०' इति लोपो न । अलित्यनेनैकत्वे लब्धे इदमेवैकग्रहणं 'वर्णग्रहणे जातिग्रहणम्' इति ज्ञापयति । फलं तु

---

१ **घेर्ङिति** । 'घेर्ङि' इत्येव सूत्रं तु न कृतम्, 'प्रवाहवा' इत्यत्राङादेशे ङादित्वाभावाद् गुणानुपपत्तेः ॥ २ **ङसिङसोश्चेति** । 'ङिति च' 'ङितश्च' इति वा न कृतम्, 'ऋत उत्' इत्यत्राप्यनुवृत्तौ 'जाग्रति' इत्यत्राप्युकारैकादेशापत्तेः । 'ङसोश्च' इति न्यासेन सकलेष्टसिद्धौ ङसिग्रहणं स्पष्टार्थम् ॥ ३ **अमुना घटेनेति** । तत्र क्लीबवृत्तित्वाभावान्नुमोऽप्राप्तेरिति भावः । यदि च 'ने' इत्यत्र तन्त्रेण नाभावे नकारे च कार्ये तं प्रत्ययं प्रति च कृते च कार्यान्तरं प्रति मुभावो नासिद्ध इत्यर्थाङ्गीकारेण नोक्तदोष इत्युच्यते, तदाप्याह–अमुष्मै कुलायेतीति ॥ ४ **कृन्मेजन्त इति सूत्र इति** । ङेराम्सूत्रभाष्येऽपीति बोध्यम् ॥ ५ **उच्चारणार्थमिति** । सूत्रे सुखेनोच्चारणमेव प्रयोजनं, न लक्ष्ये तत्प्रयुक्तकार्यमिति भावः ॥ इत्संज्ञालोपौ तु भवत एव । तौ विना प्रयोगे श्रवणापत्तेः । अत एव 'दिव औत्' इत्यौकारादेशस्य सर्वादेशत्वमाशङ्कितमनुबन्धानामेकान्तत्वपक्षे 'तस्य लोपः' इति सूत्रभाष्ये । 'न विभक्तौ–' इति निषेधस्त्वनित्य एवेति प्रागुक्तमेव । औदादेशे निषेधाप्रवृत्तिरित्यत्र 'विभक्तौ' इत्यादिनिर्देशः, आदादेशे निषेधप्रवृत्तिरित्यत्र 'दीर्घात्' 'पदान्ताद्वा' इत्यादिनिर्देश एव मानम् ॥ ६ अङ्गवृत्तपरिभाषाया अगतिकगतित्वात् 'सोर्डा' इति न्यासे पदमात्रालाघवाभावाच्च, डित्वसामर्थ्याट्टिलोपकल्पने गौरवाच्च, उशनसः संबुद्धौ वैकल्पिकानङो लोपविकल्पस्य च भाष्यानुक्तत्वाच्चिन्त्यमिति शब्दरत्ने ॥

स्यात् ॥ (३५६) **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** ।६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते । हल्ङ्याब्भ्यः किम् । ग्रामणीः [ दीर्घात्किम् । निष्कौशाम्बिः । अतिखट्वः । सुतिसीति किम् । अभैत्सीत् । (३५७) तिपा सहचरितस्य सिपो ग्रहणात्सिचो ग्रहणं नास्ति । अपृक्तमिति किम् । बिभर्ति । हल् किम् । बिभेद । प्रथमहल् किम् । राजा । नलोपो न स्यात् संयोगान्तलोपस्यासिद्धत्वात् । ] सखा । हे सखे ॥

---

दम्भितुमिच्छति धीप्सतीत्यत्र सनो 'हलन्ताच्च ३४७०' इति कित्त्वम् । तत्र हल्ग्रहणस्य व्यक्तिपरत्वे योऽन्त्येकः समीपवर्ती हल् नकारः ततः परः सन् न, यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्त्वं न स्यात् । ततश्च नलोपो न स्यात् । इत्यभ्युपगम्य 'निपात एकाजनाङ् १६५' इत्यत्र एकाज्ग्रहणं त्यक्तुं शक्यमित्यवोचाम ॥( ३५६ )**हल्ङ्याब्भ्यो**—। दीर्घादित्येतद् ङ्यापोरेव विशेषणं न तु हलोऽसंभवादित्याह—**दीर्घौ याविति** ॥ **परमिति** । न त्विदं विहितविशेषणम्, प्रमाणाभावात् । या, सा, का, इत्यादावव्याप्तेश्च । न च तत्र हलन्ताद्विहितत्वेन निर्वाहः, यः स इत्यादावतिव्याप्तेः । कर्ता, सखेत्यादावव्याप्तेश्च । यद्यपि त्यदाद्यत्वविधौ विभक्तावित्यस्य विषयसप्तमीत्वे स्वीकृते या सेत्यादौ नोक्तदोषः । सुविभक्तेराबन्ताद्विहितत्वस्य संभवात् । तथा अनङ्विधौ सावित्यस्य विषयसप्तमीत्वे कर्ता सखेत्यादावपि न दोषः । हलन्ताद्विहितस्य सोः संभवात्, तथापि बहुश्रेयसीत्यत्राव्याप्तिप्रसङ्ग इति भावः ॥ **हलिति** । तस्य सुतिसीत्येवंरूपत्वमेकदेशविकृतन्यायेन बोध्यम् ॥ **लुप्यत इति** । यद्यपि इह 'लोपो व्योर्वलि १२५४' इत्यतो लोप इत्यनुवर्तते, तच्च तत्र भावसाधनं तथापीह कर्मसाधनं, हलिति प्रथमान्तेन सामानाधिकरण्यादिति भावः ॥ **निष्कौशाम्बिः** । **अतिखट्व इति** । प्रादिसमासे 'गोस्त्रियोः—९५७' इति ह्रस्वः । नन्विह समस्तस्य ङ्याबन्तत्वं नास्ति । न च स्त्रीप्रत्यये तदादिनियमो नास्तीति वाच्यम्, अनुपसर्जने हि तथा, इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येव । अन्यथा अतिकारीषगन्ध्यापुत्र इत्यस्य ष्यङन्तपूर्वपदलक्षणसंप्रसारणप्रसङ्गात् । सत्यम्, तथाप्युत्तरपदस्य ङ्याबन्तत्वेन सोस्ततः परत्वानपायाद्दीर्घग्रहणाभावे सुलोपः स्यादेव । न हीदं ङ्याब्ग्रहणं विहितविशेषणमित्यधुनैवोक्तम् । स्यादेतत्, गङ्गामात्मन इच्छति गङ्गीयति, ततः क्विप्, अल्लोपे यलोपे च गङ्गीः । इह ईकारस्य स्थानिवद्भावेनाप्त्वात् दीर्घत्वाच्चातिव्याप्तिः । न चाल्लोपस्य स्थानिवत्त्वात्सोरापः परत्वं नेति शङ्क्यम्, 'क्वौ लुप्तं न स्थानिवत् ३८४' इति निषेधादिति चेन्मैवम्, ङी ई आ आप् इति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यातत्वेन प्रकृते आकाररूपस्य आपोऽभावादुक्तातिप्रसङ्गाभावात् । निष्कौशाम्बीयतेः क्विपि तु निष्कौशाम्बी इति भवत्येव, ईकारपरङीबन्तत्वेन सुलोपप्रवृत्तेः ॥ **अपृक्तमिति किम्** । **बिभर्तीति** । इदं च प्रत्युदाहरणं चिन्त्यम्, विशिष्टस्याहल्त्वात् । सुतिसीनां हलिति क्लिष्टं व्याख्यायातिप्रसङ्गापादनस्यानुचितत्वात् । यत्तु व्याचख्युः, सुरां सुनोतीति सुरासुत्, तमाचष्टे सुरासयति, ततः क्विप् । सुराः । सुरासौ । सुरासः । इह सुनोतेरवयवस्य सस्य लोपं व्यावर्तयितुमपृक्तग्रहणमिति । तदपि चिन्त्यम्, परस्परसाहचर्येण सुतिसीनां विभक्तीनामेव ग्रहणात् । अन्यथा सिचो लोपापत्तेरुक्तत्वात् । प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणाच्च । यत्तु, 'तित्स्वरितम्' इति सूत्रे कैयटेनोक्तं न क्वचिदियं परिभाषा भाष्यवार्तिककाराभ्यामाश्रितेति । तद्भ्रमसात्, 'अङ्गस्य' इति सूत्रे भाष्यादौ तस्याः पठितत्वात्, स्वयमपि तत्र व्याख्यातत्वाच्च ॥ **संयोगान्तलोपस्यासिद्धत्वादिति** । ननु संयोगान्तलोपो नासिद्धः, 'न ङिसंबुद्ध्योः ४८८' इति सूत्रे संबुद्धिग्रहणाज्ज्ञापकात् । न चैवं गोमानित्यादावपि नलोपापत्तिः, ज्ञापकस्य विशेषविषयत्वात् यत्र हि नकारविभक्त्योरानन्तर्यं तत्रैव सिद्धं व्याख्यानात् । यत्त्वाहुः, हे ब्रह्मन्निति नपुंसकार्थत्वात् नैतज्ज्ञापकमिति । तन्न, लुका लुप्ते प्रत्ययलक्षणाभावात् । 'संबुद्धौ वा नपुंसकानाम्—४९९' इत्यस्यावश्यकत्वाच्च संबुद्धिग्रहणस्य नपुंसकविषयत्वासंभवेनोक्तज्ञापकस्य सुस्थत्वात् । तस्मान्नलोपो न प्रयोजनमिति चेदिह तर्हि अभिनोऽत्रेत्यत्र रोरुत्वं न स्यात् । सिपि 'दश्च ३२८१' इति रुत्वे विभक्तिसकारस्य संयोगान्तलोपे तस्यासिद्धत्वात् । तथा अबिभर्भवान् अजागर्भवानित्यत्र तिलोपो न स्यात् । 'रात्सस्य ३९१' इति नियमात् । तदुक्तम्—"संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति । रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते" इति । नलोपादिरित्यादिशब्देनोत्वं संगृह्यते । अत्रेदमवधेयम्—ङ्याब्ग्रहणं सोरेव विशेषणं न तु तिस्योः, व्याख्यानात् । तेन मालेवाचरद् अमालाद् । गङ्गेवाचरद् अगङ्गाद् इत्यत्र नातिप्रसङ्गः । तथा च—हलन्तात्परं सुतिसीत्येतदपृक्तं हल् लुप्यते, दीर्घौ यौ ङ्यापौ तदन्तात्परं 'सु' इत्येतदपृक्तं हल् लुप्यते इति वाक्यार्थोऽत्र पर्यवसन्नः । यत्तु व्याचख्युः,—ङ्याब्भ्यां तिस्योरसंभव एवेति । तत्र ङ्यन्तादसंभव इति सत्यम् । आबन्तात्तु आचारक्विबन्तान्लङस्तिसिपौ स्त एव । अगङ्गात् । अगङ्गा इति यथा ।

---

१ दीर्घात्किम् । निष्कौशाम्बिरित्यारभ्य संयोगान्तलोपस्यासिद्धत्वादित्यन्तोऽपपाठः, मनोरमायामस्यार्थस्य दर्शनात् । इति शेखरकृत् ॥ २ **आबन्तादिति** । पुंसि अकारान्ताद्विहितत्वसंभवान्न लोपापत्तिरित्यपि बोध्यम् ॥ ३ **बहुश्रेयसीत्यत्रेति** । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेऽप्युपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वेन यस्मात्समुदायाद्विहितः सुस्तस्य ङ्यन्तत्वाभावादिति भावः ॥ ४ **एकदेशविकृतेति** । अर्धाधिकविकारे तत्त्वप्रत्यभिज्ञाया अभावेन लौकिकन्यायाप्रवृत्त्या स्थानिवत्त्वस्योपलक्षणतया नेयमिति बोध्यम् । भूतपूर्वगत्याश्रयणं सानुबन्धकेषु सर्वत्रेति घिसंज्ञासूत्रे भाष्ये सिद्धान्तितमिति न दोष इति वदन्ति ॥ ५ **आबन्तात्त्विति** । आबन्तप्रकृतिकाचारक्विबन्तप्रकृतिककर्तृक्विबन्ता न सन्त्येवानभिधानादिति 'आतो धातोः' इत्यत्र 'आतोऽनापः' इति न्यासं कुर्वता वार्तिककृता सूचितमित्यरुचिः ॥

(३५८)सख्युरसंबुद्धौ।७।१।९२।सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णित्कार्यकृत् स्यात्(३५९)अचो ञ्णिति।७।२।११५।ञिति णिति च परेऽजन्ताङ्गस्य वृद्धिःस्यात्।सखायौ।सखायः।सखायम्।सखायौ।घिसंज्ञाभावान्न तत्कार्यम्। सख्या। सख्ये॥ (३६०)ख्यत्यात्परस्य।६।१।११२। खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उत्स्यात्।सख्युः २॥ (३६१)औत्।७।३।११८। इदुद्भ्यां परस्य ङेरौत्स्यात्। उकारानुवृत्तिरुत्तरार्था। सख्यौ। शेषं हरिवत्। शोभनः सखा सुसखा। सुसखायौ। सुसखायः। अनङ्णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः। समुदायस्य सखिरूपत्वाभावादसखीति निषेधाप्रवृत्तेर्घिसंज्ञा। सुसखिना। सुसखये। ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावात् ख्यत्यादित्युत्वं न। सुसखेः। सुसखौ इत्यादि॥ एवमतिशयितः सखा अतिसखा॥ परमः सखा यस्येति विग्रहे परमसखा। परमसखायावित्यादि॥ गौणत्वेऽप्यनङ्णित्त्वे प्रवर्तेते। सखीमतिक्रान्तोऽतिसखिः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच्।हरिवत्। इहानङ्णित्त्वे न भवतः, गोस्त्रियोरिति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात्॥

---

न च शपा व्यवधानम्, एकादेशस्य पूर्वान्तत्वेन ग्रहणात्। न च स्थानिवद्भावः, अपूर्वविधित्वात्॥ अन्ये त्वाहुः—ङ्याब्ग्रहणमसंभवादेव तिस्योर्विशेषणं न भवतीति यदुक्तं तत्सम्यगेव। न च अगङ्गादगङ्गा इत्यत्र संभवोऽस्तीत्युक्तमिति वाच्यम्, तत्र स्थानिभूतस्य शपः पूर्वस्मान्निमित्तभूतादापः परत्वोस्तिस्योर्लोपे कर्तव्ये स्थानिवद्भावेन शपा व्यवधानात् तिस्योर्लोपस्याप्रसक्तेः। न च फलाभावात्पञ्चमीसमासपक्षो न स्वीक्रियत इत्यपि वाच्यम्, तत्प्रयोजनस्य प्रागेव प्रदर्शितत्वादिति॥ **सखेति**। समानं ख्यायते जनैरिति सखा। 'ङिच ४७७९' 'यलोपः ४७८१' इति चानुवर्तमाने 'समाने ख्यः स चोदात्तः ४७८२' इति ख्या इत्यस्मादिण्, समानशब्दस्योदात्तः सभावश्च। न चेह सुविभक्तिसंनियोगेन सखिशब्दस्यानङि कृते संनिपातपरिभाषया 'हल्ङ्याब्-२५६' इति सुलोपो न भवतीति शङ्क्यम्, 'स्वतन्त्रः कर्ता ८१२' इत्यादिनिर्देशेनानङो नकारमाश्रित्य सुलोपे कर्तव्ये तत्परिभाषाया अप्रवृत्तेः॥ ( ३५८) **सख्युरसंबुद्धौ**। इह 'इतोऽत्सर्वनामस्थाने ४९६' इत्यतः सर्वनामस्थान इत्यनुवर्तते तदसंबुद्धावित्यनेन विशेष्यते। 'गोतो णित् ३९८' इति सूत्राण्णिदित्यनुवृत्तं तत्सामानाधिकरण्येन सप्तम्याः प्रथमा कल्प्यत इत्याह—**संबुद्धिवर्जं सर्वनामस्थानमिति**। 'सख्युरसंबुद्धिः' इत्येव सूत्रयितुं युक्तमिति मनोरमायां स्थितम्। ननु सखेत्यत्रोपधादीर्घं बाधित्वा परत्वात् 'अत उपधायाः २०४९' इति वृद्ध्या भाव्यं सोर्णित्त्वादिति चेद्। अत्राहुः कृताकृतप्रसङ्गित्वमात्रेणापि नित्यत्वस्वीकारात् अन्तरङ्गत्वाच्च सखेत्यत्र वृद्धिं बाधित्वा 'सर्वनामस्थाने चासंबुद्धौ ३५४' इत्युपधादीर्घेणैव भवितव्यम्, 'सख्युरसंबुद्धौ ३५८' इति णिद्वद्भावमुपजीव्यात्र प्रवर्तमानस्य 'अत उपधायाः २०४९' इत्यस्य बहिरङ्गत्वादिति॥ (३५९) **अचो ञ्णिति**। 'मृजेर्वृद्धिः ३२८६' इत्यतो वृद्धिरित्यनुवर्तते, अङ्गस्येति चानुवृत्तमचा विशेष्यते, विशेषणेन तदन्तविधिरित्याशयेन व्याचष्टे-**अजन्ताङ्गस्येति**। (३६०)**ख्यत्यात्**—। पञ्चमीनिर्देशादेव परस्येति लब्धे परस्येति ग्रहणम् 'एकः पूर्वपरयोः १०३' इति निवृत्तम्, इह नाधिक्रियत इति ध्वननार्थम्। ख्यश्च त्यश्चेति समाहारद्वन्द्वे ख्यत्यं,तत्र खिखीशब्दयोः कृतयणादेशयोरनुकरणं ख्य इति। एवं तितीशब्दयोस्त्य इति, उभयत्राप्यकार उच्चारणार्थो न तु मुख्यापत्यादिशब्दैकदेशानुकरणमिदम् 'सख्युर्यः २४२७' 'पत्युर्नः-७८१' संख्यायाः 'संवत्सरसंख्यस्य च ३२७७' 'आपत्यस्य च-१५५३' इत्यादिनिर्देशादित्यभिप्रेत्याह-**खितिशब्दाभ्यामिति**। एवं च यत्र यण्प्रवृत्तिः तत्रैवोत्वं न त्वतिसखेरित्यादौ। न चैवं यणा निर्देशस्योक्तप्रयोजनत्वाद् ह्रस्वान्तयोरेव ग्रहणं स्यान्न तु दीर्घान्तयोरिति शङ्क्यम्, निर्देशस्य ह्रस्वदीर्घसाधारणत्वाच्छास्त्रस्य बहुविषयत्वसंभवे तत्संकोचस्यान्याय्यत्वाच्चेति भावः॥ ( ३६१ ) **औत्**। एतच्च सूत्रं नदीसंज्ञकेषु 'इदुद्भ्याम् ४१५' इति पूर्वसूत्रेण बाध्यते। घिसंज्ञकेषु 'अच घेः ३५१' इति उत्तरसूत्रेण। तस्मात्संज्ञाद्वयशून्योऽस्य विषयः॥ न च तादृश उकारोऽस्तीत्यत आह-**उकारानुवृत्तिरिति**। प्राचा तु घिनदीसंज्ञावर्जिताभ्यामिदुद्भ्यां परस्येत्युक्तम्। तदसत्, तादृशस्योकारस्याप्रसिद्धेः॥ **सुसखेति**। प्रादिसमासे 'राजाहःसखिभ्यः-११३४' इति टचो 'न पूजनात् १३६९' इति निषेधः। 'शेषो घ्यसखि ३४७' इत्यत्रासखीति नायं प्रसज्यप्रतिषेधः, असमर्थसमासादिदोषापत्तेः, किन्तु पर्युदास एवेति सुसखीत्यस्य सखिशब्दभिन्नत्वाद्घिसंज्ञा स्यादेव। न च समुदायस्य सखिशब्दभिन्नत्वेऽपि सखिशब्दान्तभिन्नत्वं नेति कथमसखीति निषेधाप्रवृत्तिरिति शङ्क्यम्, विशेष्यासंनिधानादसखीत्यत्र 'येन विधिस्तदन्तस्य ४७' इत्यस्याप्रवृत्तेः, तदेतत्सकलमभिप्रेत्याह-**समुदायस्येत्यादि**। एवमतिसखेत्यत्रापि समासान्तनिषेधादिकं बोध्यम्॥**गौणत्वेऽपीति**।आतिदिश्रेत्यादावस्थ्यायनङ्गदिति भावः। तथा च-'येन विधिः-४७'

---

१ **विशेष्यासंनीति**। शब्दस्वरूपं विशेष्यं त्वव्यावर्तकम्। सत्यपि विशेष्ये सखिभिन्नान्तस्येत्येव स्यान्न तु सख्यन्तभिन्नस्येति, नचैकार्थीभावापन्नस्यान्यत्रान्वयायोगादिति भावः। एतत्सर्वं हरदत्तानुरोधेन। 'यस्येति च' इति सूत्रभाष्यात्तु सखिशब्दस्य सख्यवयवे लक्षणा पिण्डग्र इत्यादिसिद्ध्यर्थमत्वसन्तस्येति सूत्रेऽधातुसमासघटकधातुपदस्य धात्ववयव इव। ततश्च सख्यवयवभिन्नैवर्णाद्यन्तामित्येवार्थः। तदन्तविधिश्च शेषपदार्थविशेषणतयेति प्रागुक्तमेव। एवं च प्रकृते नैव घिसंज्ञेति लभ्यते। तत्र भाष्ये-'इवर्णस्येति किमुदाहरणम्। अतिसखेरागच्छति, अतिसखेः स्वम्। 'यदि लोपो न स्याद् उपसर्जनह्रस्वत्वेऽसखीति प्रतिषेधः प्रसज्येत' इत्युक्तम्। लोपाभावे दीर्घैकादेशस्य पूर्वान्तवद्भावेन सखिशब्दत्वात् प्रतिषेधः स्यात्। लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोष इति तदाशयः। लक्षणाङ्गीकारे तु समुदायस्य सखिभिन्नत्वाद् घिसंज्ञा निर्बाधैवेति भाष्यासंगतिः स्पष्टैवेति बोध्यम्॥

(प) लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् ॥(३६२)(सू) पतिः समास एव।१।४।८। पतिशब्दः समास एव घिसंज्ञः स्यात् । पत्या। पत्ये । पत्युः२।पत्यौ।शेषं हरिवत्॥समासे तु भूपतिना।भूपतये॥कतिशब्दो नित्यं बहुवचनान्तः॥ (३६३) (सू) बहुगणवतुडति संख्या।१।१।२३।एते संख्यासंज्ञाः स्युः । (३६४)(सू)डति च ।१।१।२५। डत्यन्ता संख्या

---

इति सूत्रे परमसखायाविति बहुव्रीहिः, तत्पुरुषे हि टचा भाव्यमिति कैयटः । तथा–'द्वितीयाश्रिता–९९३' इति सूत्रे सोमसखेति प्रतीकमुपादाय बहुव्रीहित्वान्न समासान्त इति स एवाह। 'अनुद्युक्षो वरुण इन्द्रसखा', 'आग्ने याहि मरुत्सखा', 'तीव्रं सोमं पिबति गोसखायम्' इत्यादिप्रयोगाश्चैवमेव संगच्छन्ते । तत्र तु बहुव्रीहिप्रयुक्तस्य पूर्वपदप्रकृतिस्वरस्य दर्शनेन गौणत्वात् । एतेन घिसंज्ञासूत्रे शोभनः सखा अस्य सुसखिरित्युदाहरन्तौ हरदत्तन्यासकारौ तदनुगामिनश्चान्ये उपेक्ष्याः॥ **अनित्यत्वादिति**। शक्तिलाङ्गलाङ्कुश–३८९६' इति वार्तिके घटघटीग्रहणमत्र लिङ्गम् ॥ (३६२) **पतिः समास एव** । एवकार इष्टतोऽवधारणार्थः। अन्यथा हि 'समासे पतिरेव' इति नियमः संभाव्येत,ततश्च महाकविनेत्यादिप्रयोगो न सिध्येत् । 'अनल्विधौ–७६' 'धात्वादेः–३०२८' इत्यादिज्ञापकानुसरणे तु प्रतिपत्तिगौरवं स्यादिति भावः ॥ **पत्येत्यादि** । नन्वेवं 'शेषो घ्यसखिपती' इत्येवोच्यतां, किमनेन 'पतिः समास एव ३६२' इति सूत्रेणेति चेन्न, समुदायस्य पतिरूपत्वाभावेन बहुच्पूर्वकपतिशब्दस्यापि घिसंज्ञा स्यात्। ततश्च सुसखिनेत्यादिवद् बहुपतिनेत्यादि प्रसज्येत, इष्यते तु बहुपत्येत्यादि । नापि 'सखिपती समास एव' इत्येव सूत्र्यतामिति शङ्क्यम्, बहुपत्येत्यादिवद्बहुसख्येत्याद्यापत्तेः, इष्यते तु बहुसखिनेत्यादि । अथ कथं 'सीतायाः पतये नमः' इति, 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ' इति पराशरश्च । अत्राहुः–पतिरित्याख्यातः पतिः 'तत्करोति तदाचष्टे ३४१७' इति णिचि टिलोपे 'अच इः ४७८४' इत्यौणादिक इप्रत्यये 'णेरनिटि ३०८८' इति णिलोपे च निष्पन्नोऽयं पतिशब्दः 'पतिः समास एव ३६२' इत्यत्र न गृह्यते, लाक्षणिकत्वादिति । एतेन 'कृष्णस्य सखिरर्जुनः' इति भारतम् , 'सखिना वानरेन्द्रेण' इति रामायणं च व्याख्यातम् ॥ **कतिशब्द** इति । का संख्या येषां ते कति । 'किमः संख्यापरिमाणे डति च २४९८' इति डतौ डित्त्वाट्टिलोपः ॥ ( ३६३ ) **बहुगणवतु**–। बहुगणौ प्रातिपदिके संख्यावाचके गृह्येते न तु संघवैपुल्यवाचके अपि, संख्यायते अनयेत्यन्वर्थसंज्ञाविज्ञानात् । अत एव डतिरपि 'किमः संख्यापरिमाणे डति च २४६८' इति विहितस्ताद्धित एव गृह्यते, वतु-

---

१ **बहुवचनान्त इति** । बहुत्वसंख्यावच्छिन्नसंख्येयाविषयप्रश्न एव किमो डतिरिति 'किमः संख्या–' इति सूत्रभाष्ये स्पष्टत्वादिति भावः ॥ २ **डत्यन्तेति** । 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति तु नेह प्रवर्तते 'षट्कतिकतिपय–' इत्यनेन संख्याविहितडडनुवादेन थुग्विधानसामर्थ्यात् ॥ ३ **बहुसखिनेत्यादीति** । वस्तुतस्तु–सूत्रे पतिशब्दस्तदवयवेकारे लाक्षणिकः । तथा च वर्णसंज्ञापक्षे–पत्यवयवेकार इति, तदन्तसंज्ञापक्षे पतिशब्दावयवेकारान्त इत्यर्थस्यैवाङ्गीकारेणैव सकलेष्टसिद्ध्या बहुसखिनेति रूपस्य यथाऽनिष्टत्वं तथोपपादितमेवेति ॥ ४ **पराशरश्चेति** । वस्तुतस्तु पराशरस्मृतौ तु 'अपतौ' इत्येव च्छेदः । सूचितश्चायम् 'अपतौ' इति च्छेदः **"विजामातुरसुसमाप्ताज्जामातुः । विजामातेति शश्वद् दक्षिणाजाः क्रीतापतिमाचक्षते । असुसमाप्त एव वरोऽभिप्रेतः"** इति ( ६।८।१ ) निरुक्ते कथितस्यैव विशब्दार्थस्य **"विधवेव देवरम्"** इति श्रुतिघटकेऽपि विशब्दे ग्राह्यत्वेन 'असुसमाप्तधवा द्वितीयं वरम्' इत्यर्थस्यैव सर्वस्मृतिसंमतस्योपन्यासं कुर्वता निरुक्तकृता भगवता यास्केन॥ विधवेति श्रुतौ बहुव्रीहिः, 'अपतौ' इति स्मृतौ 'विजामातुः' इत्यत्रेव तत्पुरुष इत्येतावान् भेदस्तु नार्थबाधक इति बोध्यम् ॥ प्रपञ्चितश्चायमर्थो निरुक्तटिप्पण्याम् ॥ तथा च ईषदर्थकेन नञा सह समासे घिसंज्ञा निर्बाधैव । सप्तपदीतः प्राक् ईषत्पतित्वस्यैव सत्त्वेन **"कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥ ( ५।१५७ ) पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विवाहात्सप्तमे पदे ॥ (८।२२७) नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः ॥ ( ९।६५ ) अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः । मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥ ( ९।६६ ) स महीमखिलां भुञ्जन्राजर्षिप्रवरः पुरा । वर्णानां संकरं चक्रे कामोपहतचेतनः ॥ ( ९।६७ ) यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः ॥ ( ९।६९ )"** इति मनूक्त्या **"अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि । न च मन्त्रोपनीता सा कुमारी पितुरेव सा ॥"** इति स्मृत्यन्तरेण च सह न विरोध इति दिक् ॥ ५ **व्याख्यातमिति** । वस्तुतस्त्वेतद् व्याकरणानिष्पन्नत्वेनासाध्वेव । तेषामृषीणां तपोमाहात्म्येनासाधुशब्दप्रयोगेऽपि दोषाभावः । स्मृतिपुराणान्तर्गतानां तु तेषामुच्चारणेऽस्माकमपि दोषाभावः। स्वातन्त्र्येण तादृशं प्रयुञ्जानास्तु प्रत्यवेयाम् एव ।**'छन्दोवत्कवयः कुर्वन्ति नैषेष्टिरस्ति'** इति नदीसंज्ञासूत्रे भाष्योक्तेः । इत्थं यथाकथंचित्साधुत्वाभिप्रायस्य तेषां वाक्येषु कल्पनानौचित्यात् । पराशरस्मृतौ पतित्वेनाख्यात एव न तु वास्तवः, सप्तपदीतः प्राक् पतित्वाप्राप्तेरित्येवमर्थसामञ्जस्येऽपि **'सीतायाः पतये'** इत्यत्र तादृगर्थकल्पनं न सम्यक् । तत्र पतित्वस्य जातत्वेन **सर्वं वाक्यं सावधारण**मिति न्यायेन 'आख्यात एव' इत्यर्थप्रतीतौ तत्रानर्थसंभावनाया अपि प्राप्तेः ॥ दाधिमथास्तु **'तत्र भवन्तः शिष्टाः शब्देषु प्रमाणम्'** इति पृषोदरादिसूत्रभाष्यहार्दाशयपर्यालोचनेन तु **'नैषेष्टिः'** इति भाष्यस्य काकुमन्थत्वमङ्गीकुर्वन्तो न क्वाप्यृषिवाक्येषु साधुत्वाभावं मन्यन्ते ॥

षट्संज्ञा स्यात् ॥ (३६५) (सू.) प्रत्ययस्य लुक्श्लुलुपः। १।१।६१। लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं[1] क्रमात्तत्तत्संज्ञं स्यात्॥ (३६६) (सू.) षड्भ्यो लुक् ।७।१।२२। षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् ॥ (३६७) (सू.) प्रत्ययलोपे प्रत्ययलक्षणम् । १।१।६२। प्रत्यये लुप्तेऽपि तदाश्रितं[2] कार्यं स्यात्। इति जँ सि[3] चेति गुणे प्राप्ते-॥ (३६८) (सू.) न लुमताऽङ्गस्य ।१।१।६३। लुक् श्लु लुप् एते लुमन्तः। लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं[4] न स्यात् । कति । कति । कतिभिः । कतिभ्यः। कतिभ्यः। कतीनाम् । कतिषु ॥ युष्मदस्मद्षट्संज्ञकास्त्रिषु सरूपाः[5] । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः।

---

साहचर्याच्च । न तु 'पातेर्डतिः ४७०१' । यद्यपि 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ३१२' तथापीह वतुडत्योः केवलयोः संज्ञाविधौ फलाभावादन्वर्थताबलाच्च तदन्तयोरेव संज्ञा प्रवर्तते । सानुबन्धनिर्देशस्तु ब्राह्मणवद्वसतिरित्यादावतिप्रसङ्गशङ्कां निराकर्तुमित्याहुः । न चैवं संख्याकार्येषु कृत्वसुजादिषु कृत्रिमसंख्याया एव ग्रहणं स्यान्न त्वकृत्रिमाया इति पञ्चकृत्व इत्यादि न सिध्येत्। कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययादिति वाच्यम्, 'संख्याया अतिशदन्तायाः कन् २२९६' इत्यत्र तिशदन्तपर्युदासबलेन संख्याकार्येषु कृत्रिमाकृत्रिमन्यायाप्रवृत्तेः ॥ नन्वेवं भूरिशब्दात्कृत्वसुच्प्रत्ययप्रसङ्ग इति चेद् । अत्राहुः— 'अनियतसंख्यावाचिनां चेत्संख्याकार्यं स्यात्तर्हि बहुगणयोरेव' इत्येवंभूतनियमफलकसंख्याविज्ञानान्नास्त्यतिप्रसङ्ग इति ॥ **( ३६४ ) डति च** । 'ष्णान्ता षट् ५००' इत्यतः षडित्यनुवर्तते । संख्येति च प्रकृतं डतीत्यनेन विशेष्यते तदाह—**डत्यन्ता संख्येति** । संख्येति किम्, पतयः ॥ **(३६५) प्रत्ययस्य लुक्श्लुलुपः** । 'अदर्शनं लोपः ८०' इत्यतोऽनुवृत्तस्यादर्शनस्यानेकसंज्ञाकरणसामर्थ्यात्तन्त्राद्याश्रित्य तद्भावितसंज्ञा इह विज्ञायन्ते, तेन संज्ञासंकरोऽत्र न भवति तदेतदाह—**लुक्श्लुलुप्शब्दैरित्यादि** । सति तु संज्ञासंकरे हन्तीत्यत्र शब्लुकि 'श्लौ ३३०८' इति द्वित्वं स्यात् । जुहोतीत्यत्र श्लौ सति 'उतो वृद्धिर्लुकि हलि ३२५२' इति वृद्धिः स्यात् । न च तत्र 'अभ्यस्तस्य न' इत्यनुवृत्तेः योयोति नोनोतीत्यादाविव वृद्धिर्न भविष्यतीति वाच्यम्, संज्ञासंकरपक्षे तदनुवृत्त्यसंभवात् । अन्यथा सूत्रस्य निर्विषयत्वापत्तेः । न च यौतीत्यादिरवकाशः, संज्ञासंकरे तत्रापि द्वित्वस्य दुर्वारत्वादिति भावः । 'फले लुक् २११६' 'जुहोत्यादिभ्यः श्लुः ३३०७' 'जनपदे लुप् १८२४' इत्यादिविधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाविज्ञानान्नान्योन्याश्रयः ॥ **( ३६६ ) षड्भ्यो लुक्** । 'सर्वनाम्नः स्मै ३०२' इतिवत् 'षषो लुक्' इति वक्तव्ये बहुवचननिर्देशोऽत्रार्थप्राधान्य[6]सूचनार्थः, कृत्रिमाकृत्रिमन्यायेन स्वरूपनिरासस्सिद्धेः । तेन षडर्थगतसंख्याभिधायिनोरेव जश्शसोर्लुगित्यर्थपर्यवसानात्प्रियपञ्चान इत्यादौ नातिप्रसङ्गः ॥ 'जश्शसोः शिः ४३३' इत्यतोऽनुवर्तनादाह—**जश्शसोर्लुक् स्यादिति** ॥ **(३६७) प्रत्ययलोपे**— । विशेषविहिता अपि लुगादिसंज्ञाः लोपसंज्ञां न बाधन्ते । एकसंज्ञाधिकारादन्यत्र संज्ञानां बाध्यबाधकभावानङ्गीकारादिति भावः । स्थानिवत्सूत्रेण[7] सिद्धे नियमार्थमिदं सूत्रं, प्रत्ययस्यासाधारणं रूपं यत्र प्रयोजकं, तदेव कार्यं प्रत्ययलोपे सति भवति न तु प्रत्ययाप्रत्ययसाधारणमिति । तेन शोभना दृषदो यस्य सुदृषत् प्रासाद इत्यत्र 'नञ्सुभ्याम् ५८७९' इत्यन्तोदात्ततां बाधित्वा 'सोर्मनसी अलोमोषसी ५८२२' इत्युत्तरपदाद्युदात्तत्वम् 'अत्वसन्तस्य–५७०' इति दीर्घश्च न भवति । यद्वा-यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राल्विधावपि विध्यर्थमिदम्, तेन अतृणेडित्यत्र हलादौ पिति सार्वधातुके विहित इम् लुप्तेऽपि तस्मिन् भवति । 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति तु वर्णप्राधान्य[8]विषयकम्, तेन गवे हितं गोहितमित्यत्र अवादेशो न । यद्यपीदं पक्षद्वयमाकरारूढं, तथापि नियमपक्ष एव प्रबल इति यङ्लुगन्ते मनोरमायां स्थितम् । स्यादेतत् । सूत्रस्यास्यावश्यकत्वेऽपि 'प्रत्ययलोपे तल्लक्षणम्[9]' इत्येव सूच्यतां किमनेन द्वितीयप्रत्ययग्रहणेन । अत्राहुः–प्रत्ययस्यासाधारणं रूपं यत्रेत्यादिलाभाय द्वितीयप्रत्ययग्रहणमिति ॥ **( ३६८ ) न लुमताऽङ्गस्य** । लुमतेति किम्, कार्यते हार्यते । अत्र 'णेरनिटि ३०८८' इति णिलोपेऽपि णिजपेक्षा वृद्धिर्भवत्येव । अङ्गस्येति किम्, पञ्च सप्त कतीत्यादौ प्रत्ययान्तकार्यं

---

१ **लुगिति** । लुक्श्लुलुपां विषये 'अलोऽन्त्यस्य' इति न प्रवर्तते, 'क्सस्याचि' इति लोपे प्रकृते लुग्विधानसामर्थ्यात् ॥ २ **तदाश्रितमिति** । तन्निमित्तकमेव न तु तत्स्थानिकमिति नखभिन्न इत्यादावैसादिकं नेति बोध्यम् ॥ ३ **जसि चेति गुणे प्राप्ते इति** । कार्यातिदेशस्यैवाङ्गीकारेण 'जसि च' इति विहिते गुणेऽनेन प्रत्ययलक्षणेन प्राप्ते इत्यर्थः ॥ ४ **अङ्गकार्यमिति** । अङ्गोद्देश्यकं कार्यमङ्गाधिकारीयमनङ्गाधिकारीयं वेति राजपुरुष इत्यादौ न भसंज्ञेति भावः ॥ ५ **सरूपा इति** । परिनिष्ठितरूपेषु वैजात्यासंभवादित्यर्थः । तेन प्रक्रियायां पञ्चेत्यादौ ङीपः प्राप्तिः स्त्रियाम्–॥ इति विशेषसत्त्वेऽपि परिनिष्ठितरूपे ङीपो निषेधाद्विशेषाभाव एवेति भावः ॥ ६ **अर्थप्राधान्येति** । इदं सर्वं प्राचामनुरोधेन । वस्तुतस्तु बहुवचनं तु तिसृभ्य इतिवत् , षषूशब्दस्य बहुवचनान्तस्यैव संज्ञात्वाद्वोपपन्नम् । गौणे तु नापत्तिर्विहितविशेषणात् । परमपञ्चादीनां तु विशिष्टस्यापि संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचितया षट्त्वमेवास्तीति बोध्यम् ॥ ७ **वर्णप्राधान्येति** । प्राधान्यं चात्र प्रत्ययनिरूपितविशेष्यत्वमितराविशेषणत्वं वा । तत्रान्त्योदाहरणमाह–तेन गवे हितमिति । आद्योदाहरणं तु चित्रायां जाता चित्रेत्यादौ 'तत्र जातः' इत्यणः 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्' इति लुकि, अण् योऽकारस्तदन्तान् ङीबित्यर्थकेन 'टिड्ढा–' इत्यनेन न ङीबिति बोध्यम् । गोहितमित्यत्र 'न लुमता–' इत्यस्य तु न प्राप्तिः, लुप्तप्रत्ययनिमित्तकाङ्गोद्देश्यककार्य एव तेन निषेधात् ॥ ८ **तल्लक्षणमिति** । इदं कैयटानुरोधेन । 'प्रत्ययलोपे' इत्येव सूत्रे कर्तव्ये स्थानिवदित्यस्यैवानुवृत्त्या तात्पर्यं प्रश्नभाष्यस्येति तत्त्वम् ॥ ९ **लाभायेति** । तेन 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति सिध्यतीति बोध्यम् ॥

त्रिभ्यः ॥ (३६९) (सू०) त्रेस्त्रयः ।७।१।५३। त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । परमत्रयाणाम् । गौणत्वे तु नेति केचित् । प्रियत्रीणाम् । वस्तुतस्तु प्रियत्रयाणाम् । त्रिषु ॥ द्विशब्दो नित्यं द्विवचनान्तः ॥ (३७०) (सू०) त्यदादीनामः ।७।२।१०२। एषामकारोऽन्तादेशः स्याद्विभक्तौ ॥ (३७१) (वा०) द्विपर्यन्तानामेवेष्टिः ॥ द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ । द्विपर्यन्तानां किम् । भवान् । भवन्तौ । भवन्तः । संज्ञायामुपसर्जनत्वे च नात्वम् । सर्वाद्यन्तर्गणकार्यत्वात् । द्विर्नाम कश्चित् । द्विः । द्वी । द्वावतिक्रान्तोऽतिद्विः । हरिवत् ॥ प्राधान्ये तु परमद्वौ इत्यादि ॥ औडुलोमिः । औडुलोमी । बहुवचने तु उडुलोमाः ॥ (३७२) (वा०) लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः । बाह्वादीञोऽपवादः । औडुलोमिम् । औडुलोमी । उडुलोमान् ॥ इतीदन्ताः ॥ (उ०) वातप्रमीरित्युणादिसूत्रेण माङ ईप्रत्ययः, स च कित् । वातं प्रमिमीते वातप्रमीः । दीर्घाज्जसि च । वातप्रम्यौ । वातप्रम्यः । हे वातप्रमीः ॥ अमि पूर्वः ॥ वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् ३ । वातप्रम्ये । वातप्रम्यः २ । वातप्रम्योः २ । वातप्रम्याम् । दीर्घत्वान्न नुट् । ङौ तु * सवर्णदीर्घः वातप्रमी । वातप्रमीषु ॥ एवं ययीपप्यादयः । यान्त्यनेनेति ययीर्मार्गः । पाति लोकमिति पपीः सूर्यः ॥ (उ०) यापोः किद् द्वे चेति ईप्रत्ययः । क्विबन्तवातप्रमीशब्दस्य तु अमि शसि ङौ च विशेषः । वातप्रम्यम् । वातप्रम्यः । वातप्रम्यि । एरनेकाच इति वक्ष्यमाणो यण् । प्रधीवत् ॥ बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी । दीर्घङ्यन्तत्वाद्धल्ङ्याबिति सुलोपः ॥ (३७३) (सू०) यू स्त्र्याख्यौ नदी ।१।४।३।

---

'सुप्तिङन्तम्–५२' इति पदसंज्ञा यथा स्यात् ॥ **अस्मदिति** । प्राचा त्वव्ययास्मादिति पठितं, तत्र अव्ययेत्युपेक्षितम् 'सदृशं त्रिषु' इति श्रुतेर्लिङ्गत्रयाद्यभावपरत्वेन अव्ययानामलिङ्गत्वात्, अव्ययीभावस्य तु वचनात्क्लीबत्वेऽपि लिङ्गान्तराभावाच्च ॥ **त्रिशब्द इति** । 'तरतेर्ड्रिः ७४४' डित्त्वाट्टिलोपः ॥ (३६९) **त्रेस्त्रयः** । त्रेरिति षष्ठी, न तु पञ्चमी । त्रय इत्यदन्तं न तु सान्तं 'निजां त्रयाणाम्–३३२०' इति निर्देशादित्यभिप्रेत्याह–**त्रिशब्दस्य त्रयादेश इति** । ननु 'निजां त्रयाणाम्–३३२०' इति निपातनादेव त्रयादेशे सिद्धे किमनेन सूत्रेणेति चेत् । मैवम्, 'अबाधकान्यपि निपातनानि भवन्ति' इत्यनेन ज्ञापनात् । तेन पुरातनमिति सिध्यति । अन्यथा 'पुराणप्रोक्तेषु–२०४८' इति निपातनादेतद्बाध्येत । 'त्रेरयङ्' इत्येव न सूत्रितम् । तत्करोति आचष्टे वेत्यर्थे 'तत्करोति–३४१७' इत्यादिना णिचि ततः क्विपि 'प्रकृत्यैकाच् २७२४' इति प्रकृतिभावाट्टिलोपाभावे 'ह्रस्वस्य पिति–३८०६' इति तुकि त्रित् । ततो बहुत्वविवक्षायामामि कृते त्रेरयङि त्रयाणामिति रूपासिद्धेः । न च 'वार्णादाङ्गं बलीयः ३०६०' इति तुकः प्रागेवायं स्यादिति शङ्क्यम्, युगपत्प्रवृत्तावेवाङ्गस्य बलीयस्त्वात् ॥ **केचिदिति** । त्रेः संबन्धिन्यामीति विज्ञानाद्गौणत्वे त्रयादेशो न भवतीति तेषामाशयः ॥ **वस्तुतस्त्विति** । अर्थप्राधान्यबोधकस्य बहुवचनस्याभावाद्गौणत्वेऽपि त्रयादेशो न्याय्यः, प्रियास्त्रेत्यादावस्थ्याद्यनङ्वदिति भावः ॥ (३७०) **त्यदादीनामः** । 'अष्टन आ विभक्तौ ५०२' इत्यतोऽनुवर्तनादाह–**विभक्ताविति** । विभक्ताविति किम् । तद् यद् । सोर्लुका लुप्तत्वात्प्रत्ययलक्षणं न ॥ (३७१) **द्विपर्यन्तानां किमिति** । युष्मदस्मच्छब्दयोरिष्ट्यभावेऽपि दोषो नास्ति, आत्वयत्वलोपैर्विशेषविहितैरत्वस्य बाधनात् । तथा किंशब्देऽपि न दोषः, किमः कादेशस्य विशिष्य विधानादिति प्रश्नः ॥ **भवानिति** । भवत् सु इति स्थिते तकारस्थाने अत्वे कृते 'अतो गुणे २७६' इति पररूपे 'उगिदचाम्–३६१' इति नुमि सति 'सर्वनामस्थाने–३५४' इत्यनेन दीर्घे सुलोपे नलोपे च सति भवा इति रूपं स्यादिति भावः ॥ **भवन्ताविति** । पूर्ववत्तकारस्यात्वे पररूपे नुमि दीर्घे भवानाविति रूपं स्यादिति भावः ॥ उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः ॥ (३७२) **इञोऽपवाद इति** । तथा च बहुत्वे अकारान्तोऽयमुडुलोमशब्दः स औडुलोमिशब्दादन्य एव, तस्यैव इकारान्तेषु व्युत्पादनं प्रासङ्गिकमिति बोध्यम् ॥ इति इदन्ताः ॥ **किदिति** । तेन 'आतो लोप इटि च ३१६५' इत्यालोप इति भावः ॥ **क्विबन्तवातप्रमी इति** । माङ्धातोः क्विपि 'ईत्वमवकारादौ' इति निषेधादीत्वं नेति शङ्कायां मीनातेरेव क्विप् बोध्यः । यद्वा— । ईप्रत्ययान्तवातप्रमीशब्दादाचारक्विबन्तात्कर्तरि क्विप् बोध्यः ॥ **श्रेयस्य इति** । 'प्रशस्यस्य श्रः २७२३' इतीयसुनि श्रादेशः । 'उगितश्च ६१९' इति ङीप् ॥ **बहुश्रेयसीति** । 'स्त्रियाः पुंवत्–११९७' इति पुंवद्भावः । 'ईयसश्च १२७७' इति न कप् । नाप्युपसर्जनह्रस्वः,

---

१ **भवन्ताविति** । स च भवांश्च भवन्तौ, देवदत्तश्च भवांश्च भवन्तावित्येकशेषार्थं भवच्छब्दस्य त्यदादिषु पाठ आवश्यकः । त्यदादित्वे च सर्वनामत्वमित्यकचि भवकान् इति, आत्वे भवादृग् इति च सिध्यतीति भावः ॥ * ङौ सवर्णदीर्घयोग्यानां दीर्घेकारान्तानां तु **'नचास्ति सप्तमी ईदूतौ'** इति **'ईदूतौ च–'** इति सूत्रभाष्यप्रामाण्येनानभिधानमेवेति तत्त्वम् ॥ २ **त्रेरयङिति** । 'त्रेरयङ्' तु न कृतः 'अयङ् यि क्ङिति' 'इत्यादाविवोच्चारणार्थाकारत्वशङ्कावारणाय' इति शेखरोक्तं तु न सम्यक् । त्रयाणामिति निर्देशेनैव, सकारान्तत्वशङ्काया इवोच्चारणार्थाकारत्वशङ्काया अपि सुवारत्वात् ॥ ३ **विज्ञानादिति** । 'आमि सर्वनाम्नः–' इत्यत्रेव प्रत्यासत्त्या सूत्रोपात्तप्रकृत्यर्थसंबन्धित्व एव प्रत्ययत्वादिति भावः ॥ ४ **गौणत्वेऽपीति** । गौणमुख्यन्यायस्तु प्रातिपदिककार्ये न प्रवर्तते, किं तु पदकार्य एवेति न तेनापि निषेधापत्तिः ॥ किञ्च गौणत्वं तत्राप्रसिद्धत्वं गौणलाक्षणिकत्वमेव वा गृह्यते, न त्वितरविशेषणत्वरूपमपीति प्रियत्रिशब्देऽपि तिस्रादेशो भाष्योदाहृतो न विरुध्यते ॥ ५ **'घुमास्था–'** इति सूत्रस्थम् 'अवकारादौ' इति वार्तिकं भाष्ये प्रत्याख्यातमितीत्वं सुलभम्–इति शब्दरत्ने ॥

इदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः ॥ (३७४) (वा॰) **प्रथमलिङ्गग्रहणं च** ॥ पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥ (३७५) (सू॰) **अम्बार्थनद्योर्ह्रस्वः** । ७ । ३ । १०७ । अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्संबुद्धौ । **हे बहुश्रेयसि** । शसि बहुश्रेयसीन् ॥ (३७६) (सू॰) **आण् नद्याः** । ७ । ३ । ११२ । नद्यन्तात्परेषां ङितामाडागमः स्यात् ॥ ( ३७७ ) ॥ (सू॰) **आटश्च** । ६ । १ । ९० । आटोऽचि परे वृद्धिरेकादेशः स्यात् । बहुश्रेयस्यै । बहुश्रेयस्याः । नद्यन्तात्परत्वान्नुट्[२९४] । बहुश्रेयसीनाम् ॥ (३७८) (सू॰) **ङेराम् नद्याम्नीभ्यः** । ७ । ३ । ११६ । नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात् । इह परत्वादाटा[३१७७] नुट्[२९४] बाध्यते । बहुश्रेयस्याम् । शेषमीप्रत्ययान्तवातप्रमीवत् ॥ अङ्यन्तत्वान्न

---

'ईयसो बहुव्रीहेर्न १२७८' इति निषेधात् ॥ ( ३७३ ) **यू स्त्र्याख्यौ**–। ईश्च ऊश्च यू व्याख्यानाद्दीर्घयोरेव ग्रहणम् । आविभक्तिकोऽयं निर्देश इत्येके । 'दीर्घाज्जसि च ३४३' इति निषेधस्य 'वा छन्दसि ५३६२' इति पाक्षिकत्वात् 'प्रथमयोः पूर्वसवर्णः २४४' इति दीर्घ इत्यन्ये ॥ इह 'प्रत्ययस्यैव ग्रहणम्' इति परिभाषा नोपतिष्ठते, 'नेयङुवङ्स्थानावस्त्री४२३' इति निषेधाल्लिङ्गात् । तेन प्रध्यै प्रध्य इत्यादौ नदीकार्यं स्यादेव ॥ स्त्रियमाचक्षाते स्त्र्याख्यौ । [३]मूलंविभुजादित्वात्कः 'चक्षिङः ख्याञ् ३२४३' 'आतो लोप इटि च ३१६६' इत्यालोपः ॥ **ईदूदन्ताविति** । इह वर्णयोरेव संज्ञेत्यपि पक्षोऽस्ति, 'आच्छीनद्योः–५९९' इति सूत्रस्वरसात् । तयोः स्त्र्याख्यत्वं तु ङ्यादिषु स्वतः, तन्त्रीलक्ष्मीरित्यादौ तु स्त्रीवाचकवर्णसमुदाये घटकत्वेन प्रवेशात् । तेन नद्यन्तादिव्यवहारो न विरुध्यते । एवं 'शेषो घ्यसखि ३४७' इत्यत्रापि इवर्णोवर्णयोरेव घिसंज्ञेति पक्षोऽप्यस्तीति बोध्यम् । तेन 'घ्यन्ताजाद्यन्तयोर्घ्यन्तं परम्' इति व्यवहारः संगच्छते । वर्णसंज्ञापक्षे 'असखि' इत्यस्य सखिभिन्नस्यावयव इत्यर्थः, न तु सखिशब्दावयवं वर्जयित्वेति । तेन समुदायस्य सखिशब्दभिन्नत्वादतिसखिनेत्यादि निर्बाधमित्यवधेयम् ॥ स्त्रियामित्येव वक्तव्ये आख्याग्रहणं नित्यस्त्रीत्वलाभार्थमित्याशयेनाह—**नित्यस्त्रीलिङ्गाविति** । यू किम्, मात्रे ॥ स्त्र्याख्याविति किम्, ग्रामण्ये ॥ ( ३७४ ) **पूर्वमिति** । वृत्तेः प्रागित्यर्थः । संज्ञायां यथोद्देशप्रवृत्तौ न्यायसिद्धमिदं, कार्यकालपक्षे तु वाचनिकमित्याहुः ॥ ( ३७५ ) वर्णसंज्ञापक्षाश्रयेणाह—**नद्यन्तानामिति** ॥ **हे बहुश्रेयसीति** । अत्र ह्रस्वविधानसामर्थ्याद्गुणो न प्रवर्तते । अन्यथा 'अम्बार्थनद्योर्गुणः' इत्येव ब्रूयात् । न च लाघवाभावः शङ्क्यः, ह्रस्वग्रहणे मात्राधिक्यात् 'ह्रस्वस्य गुणः ३४६' इत्युत्तरसूत्रे गुणग्रहणत्यागेन सुतरां लाघवसंभवाच्च ॥ अन्ये तु कृतेऽपि ह्रस्वे यदि गुण इष्टः स्यात्तर्हि 'अम्बार्थानां ह्रस्वः' इत्युक्त्वा 'नदीह्रस्वयोर्गुणः' इत्येव ब्रूयादित्याहुः । तत्र पदलाघवाभावेऽपि प्रक्रियालाघवमस्ति परं तु 'जसि च ३४५' इत्यत्र ह्रस्वस्येत्येकदेशानुवृत्तौ क्लेशोऽस्तीति बोध्यम् ॥ ( ३७६ ) **आण् नद्याः** । 'अण् नद्याः' इत्येव [४]सुवचम् । विधानसामर्थ्यात् 'अतो गुणे ३७६' इत्यस्याप्रवृत्तौ यथायथं वृद्धिसवर्णदीर्घाभ्यां बहुश्रेयस्यै बहुश्रेयस्या इत्यादिरूपसिद्धेः । ननु परत्वादाटा नुट् बाध्यत इत्युत्तरग्रन्थपर्यालोचनया ङेरामि कृते तस्य नुडागमनिवारणार्थमाड्विधेरावश्यकत्वात्सामर्थ्यमुपक्षीणमिति चेद्, एवं तर्हि 'ह्रस्वनद्यापः–२९४' इत्यनन्तरं 'ङेर्न' इत्येव सूच्यतामामीत्यनुवृत्त्या ङेरामो नुट् नेत्यर्थलाभात् । तस्मात् 'अण् नद्याः' इति विधानसामर्थ्यात् 'अतो गुणे २७६' इति न प्रवर्तत इति दिक् ॥ ( ३७७ ) **आटश्च** । यद्यपि इह ङयि 'वृद्धिरेचि १०७' इत्येव सिद्धं ङसिङसोर्ङेरामि च सवर्णदीर्घेण, तथाप्यैन्दिददित्याद्यर्थं सूत्रमिहापि [५]न्याय्यत्वादुपन्यस्तम् ॥ 'अजादीनामटा सिद्धम्' 'आडजादीनाम् ३०१६' इति सूत्रं माऽस्तु इति वदतो वार्तिककारस्य मते तु 'अटश्च' इत्येव सूत्रमिति बोध्यम् ॥ ( ३७८ ) **ङेराम्न**–। ङेरिति सप्तम्येकवचनस्य ग्रहणं 'समानाधिकरणे' 'स्त्रियाम्'–इत्यादिनिर्देशात् ॥ **आटा नुड् बाध्यत इति** । आटि कृते तु पुनर्न

---

१ "इवर्णस्य इति किमुदाहरणम्–अतिसखेरागच्छति, अतिसखेः स्वम् । यदि लोपो न स्याद् उपसर्जनह्रस्वत्वे कृते दीर्घैकादेशस्य पूर्वान्तवत्त्वेन सखिग्रहणेन ग्रहणाद् असखीति प्रतिषेधः प्रसज्यते" इति 'यस्येति च' इति सूत्रभाष्यात्तु 'सख्यवयवं वर्जयित्वा' इत्येवार्थो लभ्यते । तथा च ङ्यन्तोपसर्जनह्रस्वविशिष्टस्यैव 'अतिसखिना' इति रूपम् । शुद्धसखिशब्देन समासे तु सख्यवयवेकारस्यैव सत्त्वान्न घिसंज्ञेति–श्रीनागेशभट्टरामकृष्णादिसिद्धान्तः ॥ २ **वाचनिकमिति** । आकडाराधिकारस्थसंज्ञाविषये यथोद्देश एवेति केचित् । अन्ये तु–कार्यकालेऽपि समासे स्पष्टैव तदवयवस्य संज्ञाप्राप्तिः । अत एव भाष्ये—'अवयवोऽत्र स्त्रीविषयः, तदाश्रया नदीसंज्ञा भविष्यति' । इत्युक्तम् । कार्यवेलायामपि भविष्यतीत्यर्थः । अन्यथा 'तदाश्रया नदीसंज्ञाऽस्ति'–इत्येव वदेत् । कुमारीत्यादावपि विशेषणतया नित्यस्त्रीलिङ्गत्वमस्त्येव । प्राधान्येन तद्बोधकत्वनिवेशे तन्मात्रबोधकत्वनिवेशे वा न मानमिति वदन्ति । एवं चेदं वार्तिकमपि प्रत्याख्यानफलैक्याय 'यू स्त्र्याख्यौ–' इत्येतद्विषय एव प्रवर्तते न तु 'ङिति ह्रस्वश्च' इत्येतद्विषयेऽपीत्यग्रे स्फुटीभविष्यति ॥ ३ **अम्बार्थनद्योर्गुण इत्येवेति** । 'सा घण्टा पातु नो देवि पापेभ्योऽनः सुतानिव' इत्यत्र मातृवाचकस्यानःशब्दस्य दृष्टत्वेन तत्संबुद्धौ गुणापत्त्या चिन्त्यमिदम् । हे वारे इत्यादौ नपुंसकेऽपि गुणस्य दृष्टत्वात् ॥ ४ **सुवचमिति** । 'अस्वपो हसतीत्यत्र धातौ वृद्धिमटः स्मरेत्' इति वार्तिकेन अस्वपो हसतीत्यत्र 'अटश्च' इति न्यासे प्राप्ताया वृद्धेर्वारणाय धातावित्यस्यापकर्षस्य सूचितत्वादत्र वृद्ध्यनुपपत्तेश्चिन्त्यमेतत् । 'वृद्धिरेचि' इत्यस्य तु पररूपं बाधकमिति शेखरकृत् । 'पररूपं गुणे नाटः' इति वार्तिकमपि धात्वादौ गुण एव प्रवर्तत इति भावः ॥ ५ **इहापि न्याय्यत्वादिति** । 'आटश्च' इति न्यास इति भावः । अटश्चेति न्यासे तु यद्यपीत्याद्युक्तमेव ॥ ६ 'न माङ्योगे' इत्यत्र भाष्ये ।

सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् ॥ कुमारीमिच्छन् कुमारीवाचरन्वा ब्राह्मणः कुमारी । क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । हल्ङ्याबिति सुलोपः ॥ (३७९) **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ६।४।७७ ।** श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रू इत्यस्य[१] चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । ङिच्चेत्यन्तादेशः । आन्तरतम्यादेरियङ् ओरुवङ् । इतीयङि[२] प्राप्ते—॥ ( ३८० ) **एरनेकाचोऽसंयोगपूर्वस्य । ६ । ४। ८२ ।** धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे । इति यण् । कुमार्यौ । कुमार्यः । हे कुमारि । अमि शसि च कुमार्यम् । कुमार्यः । कुमार्यै । कुमार्याः २ । कुमारीणाम् । कुमार्याम् ॥ प्रधीः । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यः॥ उन्नयतीत्युन्नीः । [धातुना[३] संयोगस्य विशेषणादिह स्यादेव यण् ]॥ उन्न्यौ । उन्न्यः । हे उन्नीः । उन्न्यम् । ङेराम् । उन्न्याम् ॥ एवं ग्रामणीः ॥ अनेकाचः किम् । नीः । नियौ । नियः । अमि शसि च परत्वादियङ् । नियम् । नियः । ङेराम् । नियाम् ॥ असंयोगपूर्वस्य किम् । सुश्रियौ । यवक्रियौ ॥

---

प्रवर्तते ।'सकृद्गतौ–' इति न्यायाश्रयणादिति भावः॥**न सुलोप इति** ।'लक्षेर्मुट् च ४६४३' इत्यौणादिक ईप्रत्ययान्तो लक्ष्मीशब्द इत्युपसर्जनह्रस्वोऽपि नेति बोध्यम् ॥ **कुमारीति** । यद्यपि क्विबर्थं प्रति ङ्यन्तस्योपसर्जनत्वाद्ध्रस्वत्वं प्राप्तं, तथापि 'गोस्त्रियोः–९५७' इत्यत्र कृत्रिमोपसर्जनत्वं गृह्यते न त्वप्रधानरूपमिति नात्र ह्रस्वः प्रवर्तते। अत एव हरीतक्याः फलानि हरीतक्य इत्यत्रापि ह्रस्वो न भवति । 'लुक् तद्धितलुकि १९६५' इत्यत्र त्वप्रधानरूपमुपसर्जनमेव गृह्यते, न तु कृत्रिमोपसर्जनमसंभवादिति वक्ष्यामः ॥ ( ३७९ ) **अचि श्नु–।** 'भ्रमेश्च डूः ४४२९' इति डूप्रत्ययान्तत्वाद् भ्रूशब्दस्य धातोः पृथग्ग्रहणम्॥ अन्ये त्वाहुः 'गमः क्वौ ३९८७' इत्यत्र 'ऊङ् च गमादीनामिति वक्तव्यम् ३९८९' इति वार्तिकादनुनासिकलोपे ऊङादेशे च कृते निष्पन्नोऽयं भ्रूशब्दः । तथा च धातुग्रहणेनैव सिद्धे भ्रूग्रहणं निरर्थकमिति ॥ इण इति वक्तव्ये य्वोरिति गुरुनिर्देश इण् प्रत्याहारः परेणैव णकारेण गृह्यत इति ज्ञापनार्थः । इह य्वोरिति धातोरेव विशेषणं न तु श्नुभुवोरव्यभिचारादित्याह–**इवर्णोवर्णान्तधातोरिति** । श्नुधातुभ्रुवामिवर्णोवर्णयोरिति व्याख्याने तु इयङुवङोर्ङित्त्वं व्यर्थं स्याद्वैयधिकरण्यं च प्रसज्येतेति भावः ॥ ननु सामानाधिकरण्यपक्षेऽपि ङित्त्वं व्यर्थं 'निर्दिश्यमानस्यादेशा भवन्ति ३२७' इति इवर्णोवर्णान्तधातोः सर्वादेशत्वनिवृत्तिसंभवादिति चेन्न, । श्नुभ्रुवोरपि निर्दिश्यमानत्वेन सर्वादेशत्वप्रसङ्गात् ॥ इ उ इत्यष्टादशानां संज्ञेत्युक्तत्वाद् यथासंख्यमिह न प्रवर्तते इत्याह–**आन्तरतम्यादिति** । स्थानत इति भावः ॥ य्वोः किम् , चक्नतुः । चक्नुः । अचीति किम् , आप्नुयात् । जुहुयात्॥(३८०) **एरनेकाचः–।** 'इणो यण् ३२६६' इत्यतो यण् इति वर्तते । 'अचि श्नुधातु–३७९' इति सूत्रादिह धातुरेवानुवर्तते, न तु श्नुभ्रुवौ, तयोरिवर्णासंभवात् ॥ धातुग्रहणं चावृत्त्योभयोर्विशेषणं संयोगस्याङ्गस्य चेति व्याचष्टे–**धात्ववयवसंयोगेत्यादि** । तत्र धातुना संयोगस्य विशेषणादिह यण् । उन्न्यौ । उन्न्यः । हरी, हरीन् इत्यादिसिद्ध्यर्थं धातुना अङ्गं विशेष्य । अन्यथा प्रध्यं प्रध्य इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण् स्याद् -धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तत्वादङ्गस्य ॥ **प्रधीरिति** । प्रध्यायतीति प्रधीः । 'ध्यायतेः संप्रसारणं च ४१८८' इति क्विपि संप्रसारणे पूर्वरूपे च कृते 'हलः ३३९०' इति दीर्घः ॥ यदा तु प्रकृष्टा धीर्बुद्धिर्यस्येति विगृह्यते, तदा धीशब्दस्य नित्यस्त्रीत्वात् 'प्रथमलिङ्गग्रहणं च ३७४' इति नित्यस्त्रीलिङ्गातिदेशे यथासंभवं नदीकार्यं बोध्यम् ॥ ' प्रथमलिङ्गग्रहणं च ३७४' इति वार्तिकस्य प्रथमलिङ्गं गृहीत्वा 'यू स्त्र्याख्यौ–३७३' इत्यनेन नदीत्वं वक्तव्यमित्यर्थाद् 'एरनेकाचः–३८०' इति यण्विषयत्वेन 'नेयङुवङ्–४२३' इति निषेधस्याप्रवृत्तेश्चेत्येके ॥ अन्ये त्वाहुः– एवं तर्हि यथोद्देशे प्रवृत्तौ न्यायसिद्धमिति मनोरमाग्रन्थो विरुध्येत । यथोद्देशपक्षेऽपि प्रधीशब्दाद्यर्थतया वचनस्यावश्यकत्वात् । मूले हि उपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्युक्तं, न तु नित्यस्त्रीत्वमिति । तस्मात् 'प्रथमलिङ्गग्रहणम्–३७४' इत्यनेन लिङ्गप्रयुक्तं यन्नदीत्वं वृत्तेः प्राक् स्थितं तदिहातिदिश्यते । धीशब्दे तु 'नेयङुवङ्–४२३' इति निषेधेन नदीत्वाभावान्नास्त्येव प्रधीशब्दे नदीत्वातिदेश इति ॥ 'ङिति ह्रस्वश्च ४१४' इति वैकल्पिकनदीत्वमपीह नातिदिश्यते, प्रथमलिङ्गेति वचनं यथोद्देशे न्यायसिद्धमिति ग्रन्थानुरोधेन वृत्तेः प्रागवस्थायामवयवत्वेनाभिमतेति विद्यमानाया एव नदीसंज्ञायाः समुदाये अभ्युपेयत्वात् । न च प्रकृष्टा धीर्यस्य तस्मै प्रध्यै प्रध्य इत्यादौ प्रथमान्तधीशब्दस्य ङिति परे प्रवर्तमाना नदीसंज्ञाऽस्तीति दिक् ॥ **उन्नीरिति** । 'सत्सूद्विष–२९७४' इत्यादिना क्विप् ॥ **ङेरामिति** । आङ्त्वान्नीशब्दान्तादपि ङेराम् भवतीति भावः ॥ **ग्रामणीरिति** । ग्रामं नयतीति ग्रामणीः । 'अग्रग्रामाभ्यां

---

१ **इत्यस्येति** । इत्यन्तस्येत्यर्थः, तेन सुभ्रुवावित्यादिसिद्धिः ॥ २ **इतीयङीति** । 'न भूसुधियोः' इति निषेधारम्भसामर्थ्यादत्र प्रकरणे 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ' इति परिभाषा न प्रवर्तते ॥ ३ धातुनेत्यादिः कोष्ठकान्तर्गतः कौमुद्यामपपाठः, मनोरमास्थत्वात् ॥ ४ **न प्रवर्तत इति** । इदं व्यक्तिपक्षे । जातिपक्षे तु यथासंख्येनापि निर्वाह एवेति प्रागुक्तमेव ॥ ५ **तदन्तत्वादिति** । न च–धात्ववयवसंयोगपूर्वत्वस्य धात्ववयवेकार एव संभवात् , संयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वेन तद्भिन्नस्यापि धात्ववयवस्यैव ग्रहणान्न दोष इति वाच्यम् , तन्त्रीत्यादौ धात्ववयवसंयोगपूर्वस्याधात्ववयवस्यापि संभवेन व्यभिचारात् । न च 'उत्सर्गसमानदेशा अपवादा भवन्ति' इति न्यायेनेयङो धात्ववयव एव प्रवृत्तेर्यणोऽस्यापि तत्रैव प्रवृत्त्या न दोष इति वाच्यम् , अङ्गांशे धातुपदानन्वये हरिमित्यादावपि यण्प्राप्त्या येननाप्राप्त्यभावेन यण इयङपवादत्वादत्वस्यैवानुपपत्तेः । यदि च प्रत्यासत्त्यैव धात्ववयवसंयोगपूर्वाभिन्नत्वं धात्ववयव एव ग्रहीष्यत इत्युच्यते, तदा स्पष्टप्रतिपत्त्यर्थमावृत्तिरेवाश्रितेति दिक् ॥

(३८१) वा॰ **गतिकारकेतरपूर्वपदस्य यण् नेष्यते ॥** शुद्धधियौ । परमधियौ । कथं तर्हि दुर्धियो वृश्चिकभियेत्यादि । उच्यते । दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्य धीशब्दं प्रति गतित्वमेव नास्ति । ( ३८२ ) यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः । वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम् । वृश्चिकसम्बन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा ॥(३८३) सू॰ **न भूसुधियोः**।६।४।८५।एतयोर्यण् न स्यादचि सुपि । सुधियौ[1]। सुधियः इत्यादि॥ सखायमिच्छति सखीयति।ततः क्विप्। अल्लोपयलोपौ[2]।अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते-॥(३८४) वा॰ **क्वौ लुप्तं न स्था-**

---

नयतेः-३९७५' इति णत्वम् ॥ **नीरिति** । नयतीति नीः क्विप् ॥ ( ३८१ ) **गतिकारकेतरेति** । 'गतिकारकपूर्वस्यैव यणिष्यते' इति तु नोक्तम्, कुमारीमिच्छन् ब्राह्मणः कुमारी कुमार्यौ कुमार्यः इत्यत्र यणभावप्रसङ्गात् ॥ **शुद्धधियाविति** । यदा तु शुद्धं ब्रह्म ध्यायतीति विगृह्यते तदा भवत्येव यण् । शुद्धध्यौ शुद्धध्यः । एवमग्रेऽपि ॥ **कथं तर्हीति** । गतिकारकेतरपूर्वपदत्वमिह नास्तीति यणैव भाव्यमिति प्रश्नः ॥ दुर्धिय इत्यत्र 'प्रादिभ्यो धातुजस्य-११९४' इति वार्तिकेन उत्तरपदलोपो बोध्य इत्याशयेनाह-**दुःस्थिता धीर्येषामिति** ॥ ( ३८२ ) **वृश्चिकशब्दस्येति** । भाष्यकृता हि बुद्धिपरिकल्पितमपायमाश्रित्य 'भीत्रार्थानाम्-८५९' इति सूत्रं प्रत्याख्यातम् । ततश्च संबन्धमात्रविवक्षायां षष्ठ्येवेति नास्त्यत्र कारकपूर्वत्वमिति भावः ॥ **वृश्चिकसम्बन्धिनी भीरिति** । एवं च भययोगाभावाद्वृश्चिकस्य नापादानकारकत्वमिति सूत्रमतेऽपि न दोष इति भावः ॥ ( ३८३ ) 'ओः सुपि ३९२' इत्यतः सुपीत्यनुवर्तनादाह-**अचि सुपीति** । सुपि किम्, सुध्युपास्यः । वस्तुतस्तु सुपीत्यननुवृत्तावपि न क्षतिः, 'अनन्तरस्य-४८८' इति न्यायेन 'एरनेकाचः-३८०' इति 'ओः सुपि ३९२' इति च सूत्रद्वयेन प्रापितस्यैव यणो 'न भूसुधियोः ३८३' इति निषेधाभ्युपगमात् ॥ **स्थानिवत्त्वाद्यणि प्राप्त इति** । 'एरनेकाचः-३८०' इत्यनेन ॥ ( ३८४ ) न चान्तर्वर्तिनीं विभक्तिमाश्रित्य सखिशब्दस्य पदत्वात् 'न पदान्त-७८' इति निषेधेन अल्लोपो न स्थानिवादिति वाच्यम्, 'नः क्ये ३५३०' इति नियमेन क्याचि नान्तस्यैव पदत्वादत आह—**क्वौ लुप्तमिति** । 'नपुंसके भावे क्तः ४१०८' क्वौ लोप इत्यर्थः । इदं सर्वं कुमारीमिच्छन् कुमारीत्यत्रापि बोध्यम् । क्वौ लुप्तमित्येतत्काचित्कं, क्वौ विधिं प्रति न स्थानिवदित्यभ्युपगमात् । अन्यथा बेभिदि ब्राह्मणकुलानीति हलन्तनपुंसके वक्ष्यमाणं न संगच्छेत । बेभिद्यतेः क्विपि अल्लोपे यलोपे च क्वौ लुप्तत्वेनाल्लोपस्य स्थानिवत्त्वाभावे झलन्तलक्षणनुम्प्रसङ्गात् । क्वौ विधिं प्रति न स्थानिवदित्यस्योदाहरणं तु लवमाचक्षाणो लौः । अत्र णिचि यष्टिलोपः यश्च क्वौ णिलोपः तदुभयं 'च्छ्वोः शूड्-३३९४' इति वकारस्य क्विनिमित्ते ऊठि कर्तव्ये न स्थानिवत् । 'एत्येधत्यूठ्सु १०७' इति वृद्धिः । अत्रेदमवधेयम्-'न पदान्त-७८' इति सूत्रे 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्' इति वार्तिकमस्ति तदेकदेशानुवादोऽयं 'क्वौ लुप्तम्-३८४' इत्यादीति । 'लुका लुप्तं न स्थानिवत्' इत्यादीनामप्युदाहरणान्यत्रोच्यन्ते-पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः । 'आर्हात्-२२८८' इति ठक्, तस्य 'अध्यर्धपूर्व-२३०५' इति लुक्, 'लुक् तद्धितलुकि १९६५' इति ङीषो लुक्, तस्य लुका लुप्तत्वेन स्थानिवत्त्वाभावाद् अत्र यणादेशो न भवति । न च ङीषो लुकः परनिमित्तकत्वाभावात्स्थानिवत्त्वं न भवेदिति शङ्क्यम्, ङीषो लुकं प्रति स्थानिद्वारा तद्धितलुकः परत्वस्वीकारात् । यद्वा बुद्धिपरिकल्पितं पौर्वापर्यमभावेऽप्यस्तीति नास्त्यत्रानुपपत्तिः । न च अढे तद्धिते विवक्षिते 'भस्याढे-१२०४' इति पुंवद्भावादुक्तनिषेधं विनैवेष्टसिद्धिरित्यपि शङ्क्यम्, यत्र भावि भत्वं तत्रैव पुंवद्भावः, इह तु लुकि भत्वाभावात्कुतः पुंवद्भाव इति कैयटेनोक्तत्वात् । तथा-पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः । 'साऽस्य देवता १७३०' इत्यण् । 'द्विगोर्लुगनपत्ये १५५१' इति लुक् । ततो ङीषो लुकि तस्य स्थानिवत्त्वाभावात् ङीषा संनियुक्त आनङ् न श्रूयते । पुंवद्भावस्यात्र शङ्काऽपि नास्ति, इन्द्रे इन्द्रत्वमिन्द्राण्यामिन्द्रस्त्रीत्वमिति प्रवृत्तिनिमित्तभेदे भाषितपुंस्कत्वस्यानभ्युपगमात् । ये तु 'न पदान्त-७८' इति सूत्रे वर ई इति ईकारप्रश्लेषं कुर्वन्ति, तेषामिह लुग्ग्रहणं न कार्यम् ॥ 'उपधात्वे कर्तव्ये न स्थानिवत्'। तेन परिखाशब्दाच्चातुरर्थिकेऽणि कृते 'वृद्धादकेकान्त-१९१६' इत्यादिना पारिखशब्दात्खोपधलक्षणे छप्रत्यये पारिखीयः सिध्यति । अन्यथा उपधासंज्ञायाः पूर्वविधित्वेन तस्यां कर्तव्यायामालोपः स्थानिवत्स्यात् । नन्वेवं पटयतीत्यादौ वृद्धिः स्यादिति चेन्न, यत्रोपधासंज्ञामुपजीव्य प्रत्ययो विहितस्तत्रैवायं निषेध इति भाष्ये स्थितत्वात् । तत्र चङ्परनिर्ह्रासग्रहणमेव ज्ञापकम् ॥ चङ्परो यो ह्रस्वः स चङ्परनिर्ह्रासस्तत्र न स्थानिवत् । वादितवन्तं प्रयोजितवान्, अवीवदद्वीणां परिवादकेन । अत्र प्रथमणिलोपस्य स्थानिवत्त्वादाकारोऽनुपधेति 'णौ चङ्-२०९०' इत्युपधाह्रस्वो न प्राप्नोति । णिसामान्यग्रहणादेतत्सिद्ध-

---

१ **सुधियाविति** । न च-अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तत्वात् 'लोपः शाकल्यस्य' इति यलोपः प्राप्नोति-इति वाच्यम्, 'उत्तरपदत्वे चापदादिविधौ-' इति प्रत्ययलक्षणनिषेधात् । इति टिप्पण्यां शङ्काग्रन्थ एव न युज्यते, यकारस्यावर्णपूर्वत्वाभावात् ॥ २ **अल्लोपयलोपाविति** । 'अतो लोपः' 'लोपो व्योर्वलि' इति सूत्राभ्यामिति भावः ॥ ३ 'गतिकारकपूर्वस्यैव यणिष्यते' इति भाष्ये पाठः । तस्य 'सपूर्वपदस्य चेद्भवति तर्हि गतिकारकपूर्वपदस्यैव' इति नियमे नियमस्य च सजातीयापेक्षत्वेन सपूर्वपदस्यैव व्यावर्त्यत्वेन 'कुमार्यौ' इत्यादिषु नाव्याप्तिः । सकृल्ल्व्यावित्यादौ क्रियाविशेषणानां कर्मत्वेन कारकपूर्वत्वाद्यण् स्यादेव ॥

निवत्॥एकदेशविकृतस्यानन्यतयाऽनङ्णित्वे । सखा । सखायौ । सखायः । हे सखीः । आमि पूर्वरूपात्परत्वाद्याणि प्राप्ते ततोऽपि परत्वात् 'ख्यत्यात्' 'ख्युरसंबुद्धाविति प्रवर्तते । सखायम् । सखायौ । शसि यण् । सख्यः ॥ सह खेन वर्तत इति सखः । तमिच्छतीति सखीः । सुखमिच्छतीति सुखीः । सुतमिच्छतीति सुतीः । सख्यौ । सुख्यौ । सुत्यौ । ख्यत्यादिति दीर्घस्यापि ग्रहणादुकारः । सख्युः । सुख्युः । सुत्युः॥ लूनमिच्छतीति लूनीः । क्षाममिच्छतीति क्षामीः । प्रस्तीममिच्छतीति प्रस्तीमीः । एषां ङसिङसोर्यण् । नत्वमत्वयोरसिद्धत्वात् ख्यत्यादित्युत्वम् । लून्युः । क्षाम्युः । प्रस्तीम्युः ॥ शुष्कीयतेः क्विप् । शुष्कीः । इयङ् । शुष्कियौ । शुष्कियः । ङसिङसोः शुष्किय इत्यादि । इति ईदन्ताः ॥ शंभुर्हरिवत् । एवं विष्णुवायुभान्वादयः ॥ (३८५) (सू) तृज्वत्क्रोष्टुः ।७।१।९५। क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते असंबुद्धौ सर्वनामस्थाने परे । क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ॥ (३८६) (सू) ऋतो ङिसर्वनामस्थानयोः ।७।३।११०। ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात् । इति प्राप्ते-॥ (३८७) (सू) ऋदुशनस्पुरुदंसोऽनेहसां च । ७।१।९४। ऋदन्तानामुशनसादीनां चाऽनङ् स्यादसंबुद्धौ सौ परे ॥ (३८८) (सू) अप्तृन्तृच्-

---

मिति चेत्, तर्ह्यन्यदुदाहर्तव्यम्-वारि आख्यदवीवरत् । न च '३४१२ अग्लोपि' इति निषेधः शङ्क्यः, परत्वाद्वृद्धौ सत्यां टिलोप इत्यभ्युपगमेनाग्लोपित्वाभावात् । अत एव 'मुण्डमिश्र-३५६९' इति सूत्रे हलिकल्योर्हलकलेत्यदन्तनिपातनं सार्थकम् ॥ 'कुत्वे न स्थानिवत्' । अर्चयतेरर्कः 'कृदाधारार्चिकलिभ्यः ४५२३' इति कः । पाचयतेः पाक्तिः । इह 'चोः कुः ५१३' इति कुत्वे णिलोपो न स्थानिवत् ॥ वार्तिकेऽस्मिन् क्विचङ्परानिर्ह्रासोपधानां ग्रहणमावश्यकं, लुक ईकारप्रश्लेषेण गतार्थत्वात् कुत्वस्य पूर्वत्रासिद्धीयत्वाच्चेत्यवधेयम् । 'चजोः-३८१४' इति कुत्वे चोदाहरणमन्वेषणीयम् ॥ **सख इति** । 'तेन सहेति-१२२१' इति बहुव्रीहौ 'वोपसर्जनस्य १२२२' इति सभावः ॥ **सखीरित्यादि** । 'सुप आत्मनः क्यच् ३५२८' 'क्यचि च ३५२९' इतीत्त्वम् ॥ **दीर्घस्यापीति** । एतदर्थं कृतयणादेश इति भावः ॥ ननु अतिसखेर्भूपतेरिति गुणविषयं व्यावर्तयितुं यणा निर्देश इति चेद् । अस्त्वेवं, तथापि दीर्घे प्रवृत्तिः केन वार्यतां, न हि ह्रस्वे यणा भाव्यं न दीर्घेष्वित्यत्र प्रमाणमस्ति । सौत्रस्य विकृतनिर्देशस्याव्याप्त्यतिव्याप्त्युभयवारकत्वे सारवत्त्वलाभेन तथैवौचित्याद्भाष्यारूढत्वाच्च ॥ **लूनमिति** । 'ल्वादिभ्यः ४०२६' इति निष्ठातस्य नः ॥ **क्षाममिति** । 'क्षायो मः ४०४४' इति मः ॥ **प्रस्तीममिति** । 'प्रस्त्योऽन्यतरस्याम् ४०४६' इति मः । 'स्त्यः प्रपूर्वस्य ४०४५' इति संप्रसारणम् ॥ **शुष्कीरिति** । 'शुषः कः ४०४२' इति निष्ठातस्य कः ॥ **पक्कीरिति** । 'पचो वः ४०४३' इति वः ॥ **इयङिति** । संयोगपूर्वत्वादिवर्णस्य यण् नेति भावः ॥ इति ईदन्ताः ॥ **हरिवदिति** । तद्वत्साध्य इत्यर्थः॥(३८५)**तृज्वत् क्रोष्टुः**।'कुश आह्वाने रोदने च' अस्मात् 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्४२६८' इति तुन्प्रत्यये क्रोष्टुशब्दः, तृचि तु क्रोष्टृशब्दः, द्वावपि शृगालवचनौ, तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियां च तृजन्त एव, तृतीयादावच्युभयम्, अन्यत्र तुन्नन्त एवेति नियमार्थं त्रिसूत्री आरभ्यते ॥ क्रोष्टुरिति तुन्नन्तात्प्रथमा । तृज्वदिति तृतीयान्ताद्वतिः । निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपविषयत्वेनातिदेशस्यानेकविधत्वेऽपि प्राधान्यादिह रूपमेवातिदिश्यत इत्याह-तृजन्तवद्रूपमिति । तच्च न पचादेर्यस्य कस्यचित् । किं तु क्रुशेरेव, उपस्थितत्वाद्, अर्थत आन्तर्याच्चेत्यभिप्रेत्य फलितमाह—**क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्द इति** । निमित्तातिदेशो यथा-चिकीर्षति । चिकीर्षते । अत्र सन्नन्तस्य 'पूर्ववत् सनः ३६५५' इत्यनेन ञित्त्वातिदेशे कर्तृगामिनि क्रियाफले आत्मनेपदं सिध्यति । ननु कार्यातिदेशेनाप्येतद्गतार्थमिति चेत् । अत्राहुः-निमित्तप्रतिसंधानपूर्वकत्वात्तस्येति निमित्तातिदेशः पृथगुक्त इति । व्यपदेशातिदेशो यथा-'आद्यन्तवदेकस्मिन् ४७३' इत्यनेन कर्तव्यमित्यादौ सावकाशप्रत्ययाद्युदात्तत्वफलक आदित्वव्यपदेश औपगवादावतिदिश्यते । तादात्म्यातिदेशो यथा-'सुबामन्त्रिते पराङ्गवत्स्वरे ५५२३' इत्यनेन 'द्रवत्पाणी शुभस्पती' इत्यत्र शुभशब्दस्य पराङ्गवत्त्वे सति षाष्ठिकेन 'आमन्त्रितस्य ५५२०' इत्यनेन शकारादुकारस्याद्युदात्तत्वं सिध्यति । शास्त्रातिदेशो यथा-। 'कालेभ्यो भववत् १७४२' इत्यनेन कालवाचिभ्यः 'तत्र भवः १९८९' इत्यधिकारे यच्छास्त्रं तत् 'साऽस्य देवता १७३०' इत्यर्थे अतिदिश्यते । तेन मासिकं प्रावृषेण्यमित्यत्र यथाविहितं 'कालाट्ठञ् १९३२' 'प्रावृष एण्यः १९४०' इति सिध्यति, कार्यातिदेशे तु इह प्रकृतिप्रत्ययादीनां सांकर्यं स्यात् । कार्यातिदेशो यथा-'गोतो णित् ३९८' गौः गावौ गावः । अत्र णित्कार्यं वृद्धिरतिदिश्यते प्राधान्यात् । केचित्तु निमित्तातिदेशे 'गोतो णित् ३९८' इत्युदाहरन्ति, तन्मते कार्यातिदेशस्य 'कर्मवत्कर्मणा-३६९३' 'स्थानिवदादेशः ७६' इत्याद्युदाहर्तव्यम् । रूपातिदेशो यथा-वतण्डी चासौ वृन्दारिका च वातण्ड्यवृन्दारिका । अत्र वतण्डीशब्दे 'पुंवत् कर्मधारय-१०७५' इत्यनेन पुंवाचकवातण्ड्यशब्दरूपमतिदिश्यते । इह मनोरमायामतिदेशस्य षड्विधत्वमुक्तम् ॥ अन्ये तु-"कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः । व्यपदेशश्च सप्तैतानतिदेशान्प्रचक्षते' इति सप्तविधत्वमाहुः । अर्थातिदेशस्योदाहरणं-गार्गी च गार्ग्यायणौ च गर्गाः । अत्र 'स्त्री पुंवच्च १३३७' इत्यनेन गोत्रप्रत्ययान्तस्त्रीवाचकस्य 'वृद्धो यूना-१३३६' इत्येकशेषे सति स्त्र्यर्थस्य पुमर्थोऽतिदिश्यते, तेन स्त्रियामपत्यकृतबहुत्वे 'यञञोश्च १८५४' इति लुक् सिध्यति ॥ (३८६) **ऋतो ङि**—। कॄ तॄ एतयोरनुकरणे ऋकारान्ते गुणवारणाय तपरकरणमिति बोध्यम् ॥ (३८८) अप्तृन्—। 'तुरिष्ठेमेयस्सु २७२२' इतिवत्तृ इत्येव सिद्धे तृन्-

**स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्** ।६।४।११। अबादीनामुपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेन पितृमातृप्रभृतीनां न । उद्गातृशब्दस्य तु भवत्येव । समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात् । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्टून् ॥ ( ३८९ ) (सू) **विभाषा तृतीयादिष्वचि** । ७।१।९७। अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्ट्रे ॥ ( ३९० ) (सू) **ऋत उत्** । ६ । १ । १११ । ऋदन्तात् ङसिङसोरति परे उकार एकादेशः स्यात् । रपरत्वम् ॥ ( ३९१ ) (सू) **रात्सस्य** ।८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रेफस्य विसर्गः । क्रोष्टुः । आमि परत्वात्तृज्वद्भावे प्राप्ते-॥ ( ३९२ ) (वा) **नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन** ॥ क्रोष्टूनाम् । क्रोष्टरि । क्रोष्ट्रोः । पक्षे हलादौ च शंभुवत् ॥ इत्युदन्ताः ॥ हूहूः । हूहौ । हूहः । हूहूम् । हूहौ । हूहूनित्यादि ॥ अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः २ । अतिचमूनाम् । अतिचम्वाम् ॥ खलपूः ॥ ( ३९३ ) (सू) **ओः सुपि** ।

---

तृचोर्भेदेनोपादानं 'क्वचित्सामान्योक्तावपि विशेष एव गृह्यते' इति ज्ञापनार्थम् । तेन 'न कोपधायाः १२०८' इत्यत्र सामान्योक्तावपि वुतद्धितयोरेव को गृह्यते, न कमात्रम् । तेन यदग्रे वक्ष्यति 'कोपधप्रतिषेधे तद्धितवुग्रहणम् १२०९' इति तदुपपन्नं भवतीत्येके । अन्ये त्वाहुः-'अप्तृ-' इत्येव वक्तव्ये तृन्तृजिति भेदेनोपादानमर्वणस्तृव्यावृत्तये । यद्यप्यर्थवत्परिभाषया तन्निवृत्तिः सिध्यति, तथापि तस्याः परिभाषाया अनित्यत्वज्ञापनाय तयोः पृथगुपादानम् । तेन 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ४८९' इति सिद्धमिति व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह—**नियमार्थमिति** । औणादिकानामन्येषां संज्ञाशब्दानां मा भूदित्येतदर्थमित्यर्थः । धातृशब्दस्त्वौणादिकः संज्ञाशब्दो न भवतीति तत्र दीर्घो भवत्येव । धातारौ । धातारः । अव्युत्पत्तिपक्षे तु नप्त्रादिग्रहणं विध्यर्थमिति पितृभ्रातृप्रभृतीनां दीर्घशङ्कैव नास्तीति बोध्यम् ॥ **तेनेति** । पितरौ । पितरः । भ्रातरौ । भ्रातरः । इत्यादौ दीर्घो नेत्यर्थः ॥ **क्रोष्टेति** । अनङ् हल्ङ्याब्भ्यादिलोपात्परत्वादुपधादीर्घः । स च 'सर्वनामस्थाने च-३५४' इत्यनेन यद्यपि लभ्यते, तथापि परत्वात् 'अप्तृन्-३८८' इत्येव न्याय्यः । कृतेऽप्यनङि एकदेशविकृतस्यानन्यत्वेन तृच्त्वात् । अन्यथा गुणे कृतेऽपि क्रोष्टारावित्यादौ दीर्घो न स्यादिति भावः ॥ ( ३८९ ) **विभाषा तृ**— । 'यस्मिन्विधिस्तदादौ-' इति तदादिविधिरित्याह—**अजादिष्विति** ॥ ( ३९० ) **ऋत उत्** । ऋकाराकारयोरेकादेशे सति ह्रस्व एव उकारः स्यान्न तु दीर्घ इत्येतदर्थेकेन तपरकरणेन 'भाव्यमानोऽण् क्वचित् सवर्णान् गृह्णाति' इति ज्ञाप्यते, तेन यवलपरे हकारे मस्य विधीयमाना यवला अनुनासिका भवन्ति ॥ ( ३९१ ) **रात्सस्य** । 'संयोगान्तस्य लोपः ८१' इत्येनेनैव सिद्धे नियमार्थमिदमित्याह—**सस्यैवेति** ॥ **नान्यस्येति** । ऊर्क् परिमार्ड् इत्यादौ रेफात्संयोगान्तस्य लोपो नेत्यर्थः । रादेव सस्येति विपरीतनियमोऽत्र न भवति । उरःप्रभृतिषु कृतसंयोगान्तलोपस्य पुमानित्यस्य दर्शनात् ॥ **परत्वादिति** । न च नुट् नित्य इति वाच्यम्, तृज्वद्भावे कृते संनिपातपरिभाषया नुटो दुर्लभत्वादिति भावः ॥ ( ३९२ ) **नुमचिरेति** । वारीणां तिसृणां क्रोष्टूनामिति क्रमेणोदाहरणानि ॥ ननु रेण स्वविषये प्राप्तं सर्वं बाध्यं, बाध्यसामान्यचिन्ताश्रयणात् । अत एव गुणदीर्घोत्वानामपवाद इति वक्ष्यति ; तथा चाविशेषान्नुडप्यनेन बाध्यत इति कथमिह विप्रतिषेधः । उत्सर्गापवादयोस्तदयोगादिति चेत्, अत्राहुः अत एव तदंशे विप्रतिषेधं दूषयित्वा 'न तिसृचतसृ ४१८' इति ज्ञापकान्नुडिति भाष्यकृतोक्तम् । एवं च नुम्तृज्वद्भावाभ्यामित्येव सुवचमिति ॥ इत्युदन्ताः ॥ **हूहूरिति** । गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम् ॥ **हूहाविति** । 'दीर्घाज्जसि च २४३' इति पूर्वसवर्णदीर्घनिषेधे सति 'इकः-७४' इति यण् ॥ **अतिचमूशब्दे त्विति** । 'प्रथमलिङ्गग्रहणं च ३९४' इत्युक्तेः । तथा चैवमतिचम्वादय इति प्राचोक्तं नादर्तव्यमिति भावः ॥ **खलपूरिति** । खलं पुनातीति पूञः क्विप् ॥ ( ३९३ ) **ओः सुपि** । 'इणो यण् ३२६६' इत्यतो यण्, 'एरनेकाचः-३८०' इति सूत्रं च सर्वमनुवर्तते

---

१ **नप्त्रादिग्रहणमिति** । ण्वुल्तृचाविति सूत्रे भाष्ये तु 'तृचश्चकारो व्यर्थः । न चाप्तृन्नित्यत्र विशेषणार्थः' तत्रापि तृ इत्येव सिद्धेः । न च 'तृ' इत्युच्यमाने मातरौ पितरावित्यादौ दीर्घापत्तिस्तत्र तृप्रत्ययस्य निरनुबन्धकत्वादिति वाच्यम्, नप्तृग्रहणस्य योनिसंबन्धिवाचिनां चेदस्यैव नान्येषां योनिसंबन्धिवाचिनामिति नियमाद् ' इत्युक्तम् । नेष्टृप्रभृतिग्रहणं तु प्रपञ्चार्थमेव तेषां 'तृन्' इति सूत्रभाष्ये साधितत्वात्, एवमुद्गातृशब्दस्याप्यौणादिकत्वमप्रामाणिकमेव । योगरूढत्वं तु पङ्कजादेरिव बोध्यम् । २ **परत्वादिति** । परत्वाद्-उत्कृष्टत्वात्-विशेषविहितत्वेन शीघ्रोपस्थितिकत्वादित्यर्थः ॥ ३ **अणिति** । ज्ञापकसाजात्येन सर्वाण्विषयकं न ज्ञाप्यते, किं तु केवलमुकारविषयकमेव । फलं तु-'अदसोऽसेः-' इत्यनेन विधीयमानोऽप्युकारः सवर्णस्य दीर्घस्य ग्राहक इति बोध्यम् ॥ ४ एते यवला निरनुनासिका एव विधीयमानत्वेन सवर्णाग्राहकत्वात् । अत एव 'तद्धानासामुप-' इत्यत्र दकारश्रुतिः । अन्यथा 'झयः' इत्यनेन मतुपो मस्य सानुनासिकवकारे तस्मिन्परे 'प्रत्यये भाषायाम्-' इति नित्यं नकारादेशापत्तिः स्यादिति शेखरे ॥

६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि॥ गतिकारकेतरपूर्वपदस्य यण् नेष्यते॥ खलप्वौ। खलप्व इत्यादि। एवं सुल्वादयः॥ अनेकाचः किम्। लूः। लुवौ। लुवः॥ धात्ववयवेति किम्। उल्लूः। उल्ल्वौ। उल्ल्वः॥ असंयोगपूर्वस्य किम्। कटप्रुवौ। कटप्रुवः। गतीत्यादि किम्। परमलुवौ॥ सुपि किम्। लुलुवतुः॥स्वभूः। न भूसुधियोः। स्वभुवौ। स्वभुवः॥(३९४)(सू) वर्षाभ्वश्च।६।४।८४। अस्योवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वौ। वर्षाभ्वः॥दृम्भतीति दृम्भूः। (उ) अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूरित्युणादिसूत्रेण व्युत्पादितः। दृम्भ्वौ। दृम्भ्वः। दृम्भूम्। दृम्भ्वौ। दृम्भून्। शेषं हूहूवत्। दृन्निति नान्ते हिंसार्थेऽव्यये भुवः क्विप्। दृन्भूः॥ (३९५)(वा) दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः॥ दृन्भ्वौ। दृन्भ्व इत्यादि खलपूवत्॥ करभ्वौ। करभ्वः। दीर्घपाठे तु कर एव कारः। स्वार्थिकः प्रज्ञाद्यण्। कारभ्वौ। कारभ्वः। पुनर्भूर्यौगिकः पुंसि। पुनर्भ्वावित्यादि। दृग्भूकाराभूशब्दौ स्वयंभूवत्॥ इत्यूदन्ताः॥ धाता। हे धातः। धातारौ। धातारः॥ (३९६)(वा) ऋवर्णान्नस्य णत्वं वाच्यम्॥ धातॄणामित्यादि॥ एवं नप्त्रादयः। उद्गातारौ॥ पिता। व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः। पितरौ। पितरः। पितरम्। पितरौ। शेषं धातृवत्। एवं जामातृभ्रात्रादयः॥ ना। नरौ। नरः। हे नः॥ (३९७)(सू) नृ च।६।४।६। नृ इत्येतस्य नामि वा दीर्घः स्यात्। नॄणाम्। नृणाम्॥ इति ऋदन्ताः॥

---

इवर्णवर्जम्, ओरित्युकारस्य कार्यिणो निर्देशात्। 'अचि श्नुधातु–३७९' इति सूत्राद्धातुः 'एरनेकाचः–३८०' इत्यत्रैव संबध्यत इत्याशयेन व्याचष्टे—**धात्ववयवसंयोगेत्यादि**॥ (३९४) **वर्षाभ्वौ। वर्षाभ्व इति**। अत्र 'इको यणचि ७४' इति यणं बाधित्वा 'प्रथमयोः–२४४' इति पूर्वसवर्णदीर्घः प्राप्तः तस्य 'दीर्घाज्जसि च ३४३' इति निषेधे पुनरपि यणादेशप्रसक्तौ 'अचि श्नुधातुभ्रुवाम्–३७९' इत्युवङ्, तं च बाधित्वा 'ओः सुपि ३९३' इति यण्, तस्य 'न भूसुधियोः ३८३' इति निषेधे पुनरुवङादेशस्य प्रसक्तौ 'वर्षाभ्वश्च ३९४' इति यणिति बोध्यम्। एवमन्यत्राप्युत्सर्गापवादविषय ऊह्याः॥ 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः। 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः॥ **दृम्भतीति**। 'दृम्भी ग्रन्थे' तुदादिः। दृम्भूर्ग्रन्थकर्ता। कथक इत्यन्ये॥ **व्युत्पादित इति**। ऊप्रत्ययो नुमागमश्चात्र निपात्यते इत्यर्थः। दशपादीवृत्तौ तु 'दर्भेणं दृम्भूः नुमागमोऽनुस्वारश्च निपात्यते' इत्युक्तम्। अयमूकारो न धातोरित्युवङोऽप्रसङ्गात् 'इको यणचि ७४' इति यण्, स च 'अमि पूर्वः २७९' इत्यनेन बाध्यत इत्याशयेनाह—**दृम्भूमिति**। शसि 'दीर्घाज्जसि च ३४३' इति निषेधाप्रवृत्त्या पूर्वसवर्णदीर्घेणापि बाध्यत इत्याह—**दृम्भूनिति। दृन्निति**। इदं च श्रीपतिमतम्, माधवेन तु 'अन्दूदृन्भू–४२९२' इत्यादिसूत्रेण दृढशब्दे उपपदे भुवः कूप्रत्ययः उपपदस्य दृन्नादेशश्च निपात्यत इत्युक्तम्॥ **दृन्भूरिति**। तरुः। सर्पजातिभेद इत्येके। कपिरित्यन्ये॥ (३९५) **वक्तव्य इति**। 'वर्षाभ्वश्च ३९४' इति चकारस्यानुक्तसमुच्चयार्थत्वादिति भावः। एवं च 'ओः सुपि ३९३' इति प्राप्तस्य यणो 'न भूसुधियोः ३८३' इति निषेधे 'वर्षादृन्करपुनःपूर्वस्य भुवः' इत्येतद्विध्यर्थमिति स्थितम्। अत्र नव्याः–'वर्षादृन्कर–' इत्यस्य नियमार्थतां स्वीकृत्य 'न भूसुधियोः ३८३' इत्यत्र भूग्रहणं त्यक्तुं शक्यमिति तन्न, दृन्करपुनःपूर्वस्य चेद्भवेदिति विपरीतनियमापत्तेः।तथा च पुनर्भ्वौ वर्षाभ्वौ इत्यादि न सिद्ध्येदिति॥ **दीर्घपाठ इति**। 'दृन्कार–' इति पाठे इत्यर्थः। एवं च ह्रस्वपाठे कारपूर्वस्योवङेव, दीर्घपाठे तु करपूर्वस्योवङिति विवेकः॥ 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरोक्तेः पुनर्भूशब्दो नित्यस्त्रीलिङ्गः। तथा च स्त्रीलिङ्गप्रकरण एव वक्तुमुचितो, न त्वत्रेत्याशङ्कायामाह—**यौगिकः पुंसीति**। पुनर्भवतीति पुनर्भूरिति क्रियाशब्दः पुँल्लिङ्गेऽप्यस्तीत्यर्थः॥ **स्वयम्भूवदिति**। प्राचा तु दृग्भूकाराभूशब्दौ वर्षाभूवदुदाहृतौ तदुपेक्ष्यमिति भावः॥ इत्यूदन्ताः॥ **धातेति**। दधातीति धाता अब्जयोनिः। डुधाञस्तृच्, तृन् वा अनङ्, दीर्घसुलोपनलोपाः॥ **व्युत्पत्तिपक्ष इति**। अव्युत्पत्तिपक्षे दीर्घशङ्कैव नास्ति, अबादिष्वपठनादिति भावः॥ **नेति**। 'नयतेर्डिच्च ४४६०' इति ऋप्रत्ययान्तो नृशब्दः।अनङादि प्राग्वत्॥(३९७) **नृ च**। इह 'छन्दस्युभयथा ५३९७' इति सूत्रादुभयथेत्यनुवर्तत इत्यभिमेत्याह—**वा दीर्घः स्यादिति**। केचित्त्विह छन्दसीत्यप्यनुवर्तयन्ति, तेषां हि 'चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा' 'नृणामेको गम्यस्त्वमसि–' इत्यादिप्रयोगा न संगच्छेरन्। किञ्च, 'छन्दस्युभयथा ५३९७' इति पूर्वसूत्रेणैव नृणां नॄणामिति सिद्धे 'नृ च ३९७' इति सूत्रस्य वैयर्थ्यं स्यात्। यदपि पूर्वसूत्रे तिसृचतसृ इत्यनुवर्तयन्ति तदप्ययुक्तम्, अविशेषेण विकल्पदर्शनात्। तथा च–'धाता धातॄणाम्' इति मन्त्रे तैत्तिरीयैर्ह्रस्वः पठ्यते, बह्वृचैस्तु दीर्घ इति

---

१ **स्वार्थिक इति**। स्वस्याः प्रकृतेरर्थे भवः स्वार्थिकः। अध्यात्मादित्वाट्ठञ्। द्वारादिषु स्वग्रामस्वाध्यायशब्दयोः पाठेन 'स्वशब्दादेश्चेदेतयोरेव' इति नियमार्थकैजागमो नेति बोध्यम्॥

कॄ तॄ अनयोरनुकरणे (वा॰) **प्रकृतिवदनुकरणमिति** वैकल्पिकातिदेशात् [ इत्वे रपरत्वम् । कीः । किरौ । किरः । तीः । तिरौ । तिरः । इत्यादि गीर्वत् ।] इत्वाभावपक्षे तु ३८७ऋदुशन इति ३८६ऋतो ङीति च तपरकरणादनङ्गुणौ न । कॄः । क्रौ । क्रः । क्रम् । क्रौ । कॄन् । क्रा । क्रे इत्यादि ॥ इति **ॠदन्ताः** ॥ गम्लृ शक्लृ अनयोरनुकरणेऽनङ् । गमा । शका । गुणविषये तु लपरत्वम् । गमलौ । गमलः । गमलम् । गमलौ । गमॄन् । गम्लौ[3] । गम्ले । ङसिङसोस्तु ३९०ऋत उदित्युत्वे लपरत्वे संयोगान्तस्य लोपः । गमुल् । शकुल् । इत्यादि ॥ इति **ऌदन्ताः** ॥ [4]सेः । सयौ । सयः ॥ स्मृतेः । स्मृतयौ । स्मृतयः ॥

---

दिक् ॥ इत्यॄदन्ताः ॥ **प्रकृतिवदनुकरणमित्यादि** । 'यत्तदेतेभ्यः परिमाणे--२६९४' इति निर्देशोऽत्र लिङ्गम् । भवति हि तत्र त्यदाद्यत्वकरणादनुकरणस्य प्रकृतिवत्त्वमेकशेषाभावदर्शनाच्च वैकल्पिकत्वमिति ॥ **इत्वे रपरत्वमिति** । 'ॠत इद्धातोः ३१८२' इतीत्वे 'उरण् रपरः १०५' इति रपरत्वम् ॥ **कीरिति** । कॄधातुरित्यर्थः ॥ एवं—**तीरिति** । तॄधातुः ॥ **इत्यादीति** । 'ऋत उत् ३९०' इति तपरकरणात् ङसिङसोरतः उदादेशो न, क्रः । दीर्घान्तत्वादामो न नुट्, क्राम् । ङौ तु क्रि । इत्यादि ॥ इत्यॄदन्ताः ॥ **अनङिति** । ऋऌवर्णयोः सावर्ण्यात् 'ऋदुशन—३८७' इति सूत्रप्रवृत्तेः ॥ **गुणविषय इति** । 'ऋतो ङि—३८६' इति गुणविषये ॥ **गमॄनिति** । ऌवर्णस्य दीर्घाभावात् 'प्रथमयोः—२४४' इति यः पूर्वसवर्णदीर्घः स ऌकाराकारयोः स्थाने ॠकार एव भवति । नन्वत्र लकारद्वयगर्भो ऌकारो दीर्घोऽस्त्विति चेत्, अत्राहुः—'प्रथमयोः पूर्वसवर्णः २४४' इत्यस्याकः प्रथमाद्वितीययोरचि पूर्वस्य सवर्णो यो दीर्घः स पूर्वपरयोः स्थाने भवतीत्यर्थादॢवर्णयोर्वचनेन सावर्ण्यसद्भावात् ॠकार एव ऌकाराकारयोः स्थाने भवति न तु लकारद्वयगर्भो दीर्घः, तस्य ईषत्स्पृष्टप्रयत्नत्वात्प्रयत्नभेदेन ऌकारसावर्ण्याभावादिति । एवं च होतॄनित्यादौ रेफद्वयगर्भो दीर्घ ऋकाराकारयोः स्थाने न भवत्येवेति बोध्यम् ॥ **इत्यादीति** । गम्लृभ्याम् । गम्लृभिः । गम्लृभ्यः । आमि तु गमॄणामिति केचित् । वस्तुतस्तु—ऌकारस्थाने लकारद्वयगर्भेणैव दीर्घेण भवितव्यं स्थानत आन्तर्यस्य बलीयस्त्वात् । होतॄणामित्यत्र तु ॠकार एव भवति स्थानप्रयत्नोभयसाम्यात् ॥ स्यादेतत् । रेफद्वययुक्तस्य लकारद्वययुक्तस्य चेषत्स्पृष्टप्रयत्नत्वात् प्रयत्नभेदेन ऋऌवर्णाभ्यां सावर्ण्याभावेनात्वाभावात् 'ऊकालोऽज्—९' इत्यादिना दीर्घसंज्ञा नास्तीति कथमत्र लकारद्वयगर्भेण भवितव्यम्, 'ऋति ॠ वा १३९' 'ऌति ॡ वा १४०' इति वार्तिकप्रत्याख्यानं वा कथं संगच्छताम्, 'अकः सवर्णे—१३६' इत्यनेन इष्टरूपाणामसिद्धेः, अत्राहुः—उभयोरप्यच्त्वसिद्धये वर्णसमाम्नाये 'ऋऌक् मा॰ २' सूत्रोत्तरं पाठः कर्तव्यः, तेन सर्वेष्टसिद्धिः । न च दीर्घत्वसिद्धावपि विवृतप्रयत्नसाम्यात् होतृ-ऋकार इत्यत्र ऋकारो दीर्घ एव स्यात्, न तु रेफद्वययुक्तो दीर्घ इति शङ्क्यम्, ऋकारद्वयस्थाने रेफद्वयवतः साम्येन कदाचित्तस्यापि प्रवृत्तेः । होतृऌकार इत्यत्र ऌकारेण आन्तर्यात्कदाचिल्लकारद्वययुक्तः कदाचिदृकारेण आन्तर्यादृकारश्च भवति । परन्तु—वार्तिकमते होतृ-ऋकार इत्यत्र रेफद्वयगर्भो न भवति । प्रत्याख्यानपक्षे तु कदाचिद्भवतीति वैषम्यमस्ति, तत्रेष्टापत्तिर्वा प्रत्याख्यानस्य प्रौढिवादमात्रता वा अभ्युपगन्तव्येति । अत्रेदं बोध्यम्—'अकः सवर्णे—१३६' इति सूत्रस्थभाष्ये 'ऋति ॠ वा' 'ऌति ॡ वा' इत्येतन्न प्रत्याख्यातम्, 'तुल्यास्य—२०' इति सूत्रस्थभाष्ये तु तस्य प्रत्याख्यानेऽपि फलभेदे तदयोगात् । स्वीकृते तु तस्मिन् 'अकोऽकीत्येव सुवचम्' इति ग्रन्थोऽनुपपन्न एव । यदि तु—'ऋति ॠ वा १३९' इति वार्तिकम्, 'उर्ॠ' इति 'ॠ वा' इति पठ्यते, तदा वार्तिकयोः सवर्ण इति पदानुवृत्त्यनपेक्षणात्सुवचमेवाऽकोऽकीति । प्रकृतमनुसरामः । ङौ तु 'ऋतो ङि—३८६' इति गुणो लपरः । गमलि । गम्लोः । गम्लृषु । एवं शक्लृशब्देऽप्यूह्यम् ॥ इति ऌदन्ताः ॥ **सेरिति** । अस्यापत्यमिः कामः, अस्य स्त्री ई लक्ष्मीस्तेन तया वा सह वर्तत इति विग्रहे 'तेन सहेति तुल्ययोगे १२२१' इति बहुव्रीहौ 'वोपसर्जनस्य १२२२' इति सहस्य सभावे 'आद्गुणः १०४' ॥ **सय इति** । ननु से इत्येकारस्य अन्तवद्भावेन पदान्तत्वादयादेशं बाधित्वा जसि परतः 'एङः पदान्तात्—१४१' इति पूर्वरूपमेकादेशः स्यात्, तथा च सेरित्येव रूपं स्यान्न तु सय इति चेत् । अत्र केचित्—एवं तर्हि 'थासः से २९९५' 'ईशः से ३२४८' इति विहितादेशस्यानुकरणशब्दोऽयमस्तु, तत्र हि जसि परतोऽयादेशस्य निर्बाधत्वादिति ॥ **स्मृतेरिति** । इः कामः स्मृतो येन सः, ई लक्ष्मीः स्मृता येनेति वा विग्रहः । 'निष्ठा १२८८' इति स्मृतशब्दस्य पूर्वनिपातः ॥ **स्मृतय इति** । नन्वत्र पूर्वोक्तरीत्या 'एङः पदान्तादति १४१'

---

१ अयं कोष्ठकान्तर्गतः पाठो हलन्तेषु पठनीयोऽपि समानप्रकृतित्वेन प्रसङ्गादजन्तेषु लिखित इति बोध्यम् ॥ २ **किर इति** । अत एव ङसिप्रत्ययेऽपि 'किरश्च—' इति निर्देशः संगच्छते ॥ ३ **गम्ला गम्ले इति** । ऋकारस्य यणि, रेफे रपरेऽपि जाते 'रो रि' इति लोपेन विशेषाभावेऽपि, ऌकारस्य लकारे लपरे लकारद्वयश्रवणापत्त्या विशेषस्य सत्त्वाद् 'उरण् रपरः' इत्यत्र 'अण्' ग्रहणसामर्थ्यादण् पूर्वेणैव इति लण्सूत्रस्थभाष्यानुरोधेनेदृशानामनभिधानमेवेति ॥ ४ **सेरिति** । न च 'नान्तःपादम्—' इति सूत्रस्थेन 'न चैङः पदान्तात्परो ह्रस्वोऽस्ति' इति भाष्येण विरोधादीदृशानामनभिधानमेव न्याय्यम्, 'स्वादिषु' इति योगं विभज्य स्वादिषु पूर्वं पदमित्यर्थेन औजसादावपि प्राप्तस्य 'यजादौ सर्वनामस्थाने पूर्वं पदं न' इत्यर्थकेन 'असर्वनामस्थाने यचि' इत्यंशेन निवृत्तिरिति सौ पदत्वस्य निर्बाधत्वादिति वाच्यम्, 'योगविभागादिष्टसिद्धिः' इत्युक्त्या योगविभागेनानिष्टापादनस्यान्याय्यत्वात्, तादृशभाष्येण सावनभिधानेऽपि सर्वत्रानभिधानकल्पनस्यान्याय्यत्वाच्च ॥ ५ **क्र इति** । अत एव 'भ्रो यङि' इति निर्देशः संगच्छते ॥ ६ **इति विहितेति** । केनचिच्छोधितोऽयमपपाठः 'ईशः से' इत्यनेन से इत्यस्याविधानात् । तस्माद् 'इत्यभिहितादेशस्य' इति पठनीयम् ॥

इत्यैदन्ताः ॥ ( ३९८ ) (सू) गोतो णित् । ७ । १ । ९० । गोशब्दात्परं सर्वनामस्थानं णिद्वत्स्यात् । गौः । गावौ । गावः ॥ ( ३९९ ) (सू) औतोऽम्शसोः ।६।१।९३। आ ओत इति छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । शसा साहचर्यात्सुबेवाऽम् गृह्यते । नेह । अचिनवम् । असुनवम् । गाम् । गावौ । गाः । गवा । गवे । गोः । इत्यादि ॥ (४००) (वा) ओतो णिदिति वाच्यम् ॥ ( ४०१ ) (वा) विहितविशेषणं च ॥ तेन । सुद्यौः[1] । सुद्यावौ । सुद्यावः । ओकारान्ताद्विहितं सर्वनामस्थानमिति व्याख्यानान्नेह । हे भानो । हे भानवः ॥ उः शम्भुः स्मृतो येन सः स्मृतौः[2] । स्मृतावौ । स्मृतावः । स्मृताम् । स्मृतावौ । स्मृताः—इत्यादि ॥ इत्योदन्ताः ॥ ( ४०२ ) (सू) रायो हलि ।७।२।८५। रैशब्दस्याऽऽकारोऽन्तादेशः स्याद्धलि विभक्तौ । अचि आयादेशः । राः । रायौ । रायः । रायम् । रायौ । रायः । राया । राभ्यामित्यादि ॥ इत्यैदन्ताः ॥ ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः । इत्यादि । औतोऽम्शसो[३९९]रितिह न प्रवर्तते ऐ औच् (मा० ४) इति सूत्रेण ओदौतोः सावर्ण्याभावज्ञापनात् ॥ इत्यजन्ताः पुँल्लिङ्गाः ॥

---

इति पूर्वरूपेण भाव्यं न त्वयादेशेन, न ह्यत्रानुकरणशब्दत्वकल्पनमौचित्यं लभते इति चेत् । अत्र नव्याः—'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः ५९३' इति प्रत्ययलक्षणप्रतिषेधाद् 'एङः पदान्तादति १४१' इत्यस्याप्रवृत्तिः । किञ्च 'स्वादिष्वसर्वनामस्थाने ३३१' 'यचि भम् ३३२' इत्यत्र भाष्यकृता स्वादिषु पूर्वं पदसंज्ञं भवतीति व्याख्याय ततोऽसर्वनामस्थाने यचीति छित्त्वा नञं च क्रियया सम्बध्य यजादौ सर्वनामस्थाने परतः पूर्वं पदसंज्ञं न भवतीति व्याख्यातम् । ततश्चानेन 'सुप्तिङन्तम्—५२' इति 'स्वादिषु—३३१' इति च द्विविधाऽपि संज्ञा निषिध्यत इति पूर्वान्तत्वप्रयुक्ता पदान्तताेह दुर्लभेति स्मृतय इति रूपं निर्बाधमेव । तथा सय इत्यत्र इना सहेत्यादिव्युत्पत्तिपक्षेऽपि नानुपपत्तिः । न चैकादेशस्य पूर्वान्तत्वेनाव्ययत्वात्सुपो लुक् स्यादिति शङ्क्यम्, अव्ययसंज्ञाया अन्वर्थत्वेनोपसर्जने तदभावात् । न चैवमपि सह इ इति स्थिते अन्तरङ्गत्वाद्गुणे कृते सहशब्दस्य सादेश एव न स्यादेकादेशस्य परादिवद्भावे सहशब्दाभावात्पूर्वान्तत्वे तूत्तरपदत्वाभावात् उभयत आश्रयणे अन्तादिवद्भावनिषेधाच्च । अस्तु वा—सहशब्दस्य सभावः तथापि स इत्यदन्तमेव रूपं स्यान्न तु स इत्येदन्तमिति शङ्क्यम्, 'नेन्द्रस्य परस्य १७४५' इत्युत्तरपदवृद्धिप्रतिषेधेन 'पूर्वोत्तरपदयोः प्रथमं कार्यं भवति तत एकादेशः' इति सामान्यज्ञापनादित्याहुः ॥ ( ३९८ ) **गोतो णित्** । 'इतोऽत्सर्वनामस्थाने ४९६' इत्यतोऽनुवृत्तं सप्तम्यन्तं सर्वनामस्थानग्रहणं प्रथमया विपरिणम्यते, णिदित्यनेन सामानाधिकरण्यात्, तदाह—**सर्वनामस्थानमिति** ॥ **णित्कार्यकृत्स्यादिति** । णिति परे पूर्वस्य यत्कार्यं तत्करोतीत्यर्थः ॥ **गौरित्यादि** । चित्रगुरित्यत्र तु न भवति ओत इति वक्ष्यमाणत्वात् ॥ ( ३९९ ) तद्धितो यः शस् स ओकारान्तान्न सम्भवतीत्याशयेनाह—**शसा साहचर्यादिति** । 'सुपि' इत्यनुवर्तनाच्चेत्यपि काशिकायामुक्तम् ॥ कैयटस्तु तद्धितोऽपि शसस्तीति कथमिह साहचर्यादमः सुप्त्वमित्याशङ्क्याचीत्यधिकारादजादिशस् सुबेव संभवति, न तु तद्धित इत्याह—**अचिनवमिति** । चिनोतेर्लङादेशस्य मिपः 'तस्थस्थमिपाम्—२२५४' इत्यम् ॥ ( ४०० ) **ओतो णिदिति वाच्यमिति** । गोत[3] इत्यपहाय ओत इति वाच्यमित्यर्थः । एवं च गामित्यत्र परत्वाद्वृद्धिः स्यादिति शङ्काया अनवकाशः, निरवकाशतया आत्वेन वृद्धेरेव बाधनात् ॥ इत्योदन्ताः ॥ ( ४०२ ) **रायो हलि** । 'अष्टन आ विभक्तौ ५०२' इत्यत आ इति, विभक्ताविति च वर्तते तदाह—**आकारोऽन्तादेश इति** । 'अर्थरैविभवा अपि' इत्यमरः । 'रायिश्छान्दसः' इति भाष्यम्, तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं न तु केवलस्यापीति 'वान्तो यि—' इति सूत्रे कैयटः । स एव केवलोऽपि छान्दस इति पक्षान्तरमप्याह ॥ इत्यैदन्ताः ॥ **ग्लौरिति** । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । एवं जनानवतीति जनौः । 'ज्वरत्वर—३५२५' इत्यूठ्, 'एत्येधत्यूठ्सु १०८' इति वृद्धिः । अच्यावादेशः । जनावौ जनाव इत्यादि ॥ **न प्रवर्तत इति** । हे ग्लौरित्यत्र सम्बुद्धिलोपः, ग्लाव इत्यत्र 'ङसिङसोश्च ३५०' इति पूर्वरूपं च न प्रवर्तत इत्यपि बोध्यम् ॥ **सावर्ण्याभावज्ञापनादिति** । सति तु सावर्ण्ये एचश्चतुर्विंशतेः संज्ञा भवन्तीति 'वृद्धिरादैच् ३७' इत्येतत् 'वृद्धिरादेङ्' इति पठितुं शक्यत्वात् 'ऐ औच् मा० ४' इति सूत्रं व्यर्थं सत् सावर्ण्याभावं ज्ञापयति । अत एव एदैतोरोदौतोश्च न मिथः सावर्ण्यम् 'ऐ औच् मा० ४' इति सूत्रारम्भसामर्थ्यादित्यादि 'अणुदित्सवर्णस्य—३३' इति सूत्र एवोक्तमिति भावः ॥ ननु 'ऐ औच् मा० ४' इति सूत्राभावे 'न य्वाभ्याम्—१५७४' इति सूत्रे ताभ्यामैजिति प्रत्याहारोऽयं न सिध्येत्, 'पूर्वौ तु ताभ्यामेङ्' इत्युक्ते तु विधीयमानस्य सवर्णग्राहकतया वैयाकरणः सौवश्व इत्यादावेदोतावेवागमौ स्तो, न त्वैदौतौ । ततश्च वैयर्थ्याभावात् 'ऐ औच् मा० ४' इति सूत्रं सावर्ण्याभावं न ज्ञापयतीति चेन्मैवम्, 'पूर्वौ तु ताभ्यामै औ' इति पठनेनापि इष्टसिद्धेस्तत्सूत्रवैयर्थ्यस्य तदवस्थत्वात् । स्थितस्य गतिप्रदर्शनमिदम् । वस्तुतस्तु—'ए ओङ् मा० ३' इति सूत्रारम्भसामर्थ्यादित्युक्ते तु 'ताभ्यामैच्' इत्यत्रानुपपत्तिर्नास्त्येव । न च

---

१ **सुद्यौरिति** । केवलद्योशब्दस्य स्त्रीत्वाद्बहुव्रीहिरुदाहृतः ॥ २ **स्मृतौरिति** । यदि तु वर्णग्रहणे प्रतिपदोक्तपरिभाषा प्रवर्तते, तदा वृथैवायं श्रमः । किं च 'गोतः' इति सूत्रन्यासे 'द्योः सर्वनामस्थाने णित्त्वं वक्तव्यम्' इति 'औतोऽम्शसोः' इत्यत्र भाष्ये द्योरेवोपादानसामर्थ्यादीदृशानामनभिधानमेवेत्येके ॥ ३ **गोत इत्यपहायेति** । सूत्रे तपरकरणेन गकारस्याविवक्षितत्वादिति भावः । तेन चित्रगुरित्यादौ न दोषः । अन्यथा 'पदाङ्गाधिकारे—' इति तदन्तविधौ स्थानिवत्त्वे गोन्तत्वाद्दोषः स्यादेव । गकारस्याविवक्षितत्वे तु अल्विधित्वेन स्थानिवत्त्वाप्राप्त्या न दोषः ॥

## अथाजन्तस्त्रीलिङ्गप्रकरणम् ।

रमा । (४०३)(सू)**औङ आपः** । ७।१।१८। आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥ (४०४)(सू)**सम्बुद्धौ च**।७।३।१०६। आप एकारः स्यात्संबुद्धौ । एङ्ह्रस्वादिति सम्बुद्धिलोपः। हे रमे । हे रमे ।हे रमाः । रमाम् । रमे । रमाः । स्त्रीत्वान्नत्वाभावः ॥ (४०५)(सू)**आङि चापः** ।७।३।१०५। आङि ओसि च परे आबन्तस्याऽङ्गस्य एकारः स्यात् । रमया । रमाभ्याम् । रमाभिः ॥ (४०६)(सू)**याडापः**।७।३।११३। आपः परस्य ङिद्वचनस्य याडागमः स्यात् । वृद्धिरेचि । रमायै । सवर्णदीर्घः । रमायाः । रमयोः । रमाणाम् । रमायाम् । रमयोः । रमासु । एवं दुर्गादयः॥(४०७)(सू)**सर्वनाम्नः स्याड्ढ्रस्वश्च**।७।३।११४। आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः।

---

'ए ओङ् मा० ३' इति सूत्राभावे 'अदेङ् गुणः ३८' 'एङि पररूपम् १२२' 'एङः पदान्तादति १४१' इत्यादावेङ्प्रत्याहारः कथं सिध्येदिति वाच्यम्, सति तु सावर्ण्ये'अदेज् गुणः' 'एचि पररूपम्' 'एचः पदान्तादति' इति पठितुं शक्यत्वादतिप्रसङ्गस्य एच्ग्रहणेऽपि तुल्यत्वात् । न चैवमप्येचां चतुर्णां क्रमादयावाद्यादेशसिद्ध्यर्थम् 'ए ओङ् मा. ३' 'ऐ औच् मा. ४' इति सूत्रद्वयमप्यावश्यकमिति वाच्यम्, 'स्थानेऽन्तरतमः ६२' इत्यनेनैव एचां क्रमादयादयः सिध्यन्तीति प्रागेवास्माभिरुपपादितत्वाच्च । यदा हि 'स्वराणामूष्मणां चैव' इत्यादिप्रागुक्तशिक्षावचनानुरोधात्–'एङौ विवृततरौ, ऐचौ विवृततमौ' इत्यभ्युपगम्यते, तदा त्वेदैतोरोदौतोश्च मिथः सावर्ण्यप्रसक्तिरेव नास्तीति 'ऐऔच् मा. ४' इति 'एओङ् मा. ३' इति वा सूत्रं नोक्तज्ञापकमिति ज्ञेयम् । केचित्तु विवृततरयोरेङोर्विवृततमत्वाभावेऽपि विवृततरे विवृततमे च विवृतत्वस्य सत्त्वात्तदादाय तुल्यप्रयत्नत्वमेङोरैचोश्चास्तीति सावर्ण्यप्रसक्तावुक्तज्ञापकाश्रयणं सम्यगेवेत्याहुः । तदपरे न क्षमन्ते––तथा हि सति 'इको गुणवृद्धी' इति सूत्रस्थशब्दकौस्तुभग्रन्थेन सह विरोधप्रसङ्गात् । तत्र हि––'स्वराणामूष्मणां च–' इत्यादिशिक्षानुरोधाच्चेता नेतेत्यादौ गुणाप्रवृत्तिः स्याद्विवृततरत्वरूपवैलक्षण्यस्य सत्त्वादिति न शङ्क्यम्, विधेर्निर्विषयत्वापत्तेः । 'जयः करणम् ५५६५' 'धान्यानां भवने– २४४२' इत्यादिनिर्देशैरिकारादिषु गुणप्रवृत्त्यनुमानाच्च––इति प्रकारान्तरेण समाहितम् । त्वदुक्तरीत्या तुल्यप्रयत्नवत्त्वे तु चेता नेतेत्यादौ गुणाप्रवृत्तिशङ्का निरालम्बनैव स्यात् । तस्मादीषद्विवृतभेदेन स्वराणामूष्मणामिव विवृततराविवृततमभेदेन सावर्ण्याभावोऽत्र सुवच इति दिक् ॥ इत्यजन्ताः पुँल्लिङ्गाः ॥

---

**रमेति** । रमते इति रमा 'रमु क्रीडायाम्' इत्यस्मात्पचाद्यचि टाप्, लिङ्गविशिष्टपरिभाषया स्वादयः । हल्ङ्याबिलोपः । न चात्राबन्तत्वादेव स्वाद्युत्पत्तिरस्तु प्रत्ययान्तस्याप्रातिपदिकत्वेऽपि ङ्यापोः पृथग्ग्रहणादिति वाच्यम्, ङ्याब्ग्रहणस्यान्यार्थतायाः प्रागेवोक्तत्वात्प्रत्याख्यातत्वाच्च तद्ग्रहणस्य ॥ (४०३) **शी स्यादिति** । 'जसः शी ३००' इत्यतः शी इत्यनुवर्तते इति भावः ॥ (४०४) **संबुद्धौ च** । 'बहुवचने झल्येत् २९१' 'आङि चापः ४०५' इत्यतः एत् आप इति चानुवर्तते तदाह–**आप एकारः स्यादिति । एङ्ह्रस्वादिति** । न चात्र हल्ङ्यादिनैव सुलोपोऽस्तु प्रत्ययलक्षणन्यायेन 'संबुद्धौ च ४०४' इत्येत्वस्यापि प्रवृत्तिसंभवादिति शङ्क्यम्, परत्वात्प्रतिपदोक्तत्वाच्च एत्वे कृते हल्ङ्यादिलोपस्याप्रवृत्तेः स्थानिवद्भावादाप्त्वेऽप्याकाररूपत्वाभावात् । आ आबित्याकारं प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानात् । 'एङ्ह्रस्वात्–२७८'इति लोपस्यैव परत्वेन न्याय्यत्वाच्चेति भावः॥ (४०५) **आङि–** । चकारेण 'ओसि च ३९३' इति प्रकृतं परामृश्यत इत्याह–**ओसि च पर इति** ॥ **रमाभिरिति** । नन्विह एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'अतो भिस ऐस् २८८' इत्यैस् प्राप्नोति । न च तपरत्वसामर्थ्यान्नैवमिति वाच्यम्, अकृतैकादेशे विश्वपाभिरित्यादौ कृतार्थत्वादिति चेन्मैवम्, अल्विधौ 'अन्तादिवच्च ११७' इत्यस्याप्रवृत्तेः ॥ (४०६) **याडापः**।'घेर्ङिति ३४९' इत्यतोऽनुवृत्तं ङितीति सप्तम्यन्तमाप इति पञ्चम्यनुरोधेन षष्ठ्या विपरिणम्यत इत्याह–**ङिद्वचनस्येति** । अत्र 'सुपि च २८७' इत्यतः सुपीत्यनुवर्तनात् सुप एव याट् । तेन अपित्सार्वधातुकस्य ङित्त्वेऽपि मालेवाचरतो मालात इत्यादौ तसादेर्न भवति । एतच्च 'अचः परस्मिन्–७७' इत्यत्र पूर्वस्य विधिः पूर्वविधिरिति षष्ठीसमासपक्षाभ्युपगमेनोक्तम्, पञ्चमीसमासपक्षाभ्युपगमे तु–शपः स्थानिवत्त्वेन व्यवधानान्मालात इत्यादौ याटः प्रसङ्ग एव नास्तीत्याहुः॥ 'यट्' इत्येव वक्तव्ये दीर्घोच्चारणं स्पष्टप्रतिपत्त्यर्थम् । न च 'अतो गुणे २७६' इति पररूपापत्तिः, अकारोच्चारणसामर्थ्यादेव तद्बाधात् ॥ **वृद्धिरेचीति** । प्राचा तु 'आटश्च ३७७'इत्युपन्यस्तम् ।तदुपेक्षितम्, याट्स्याटोष्टकारस्य समुदायानुबन्धत्वेनेह आटोऽभावात्॥(४०७)**सर्वनाम्नः स्याट्–** । दीर्घोच्चारणं प्राग्वत्स्पष्टप्रतिपत्त्यर्थम् ॥

---

१ **रमे इति** । सर्वनामस्थाने भत्वाभावाद् 'यस्येति–' इति लोपस्य प्राप्तिरेव नेति भावः ॥ २ **स्याडिति**। 'आमि सर्वनाम्नः सुट्' 'याटो ह्रस्वश्च' इति सुवचम् । अकारोच्चारणसामर्थ्येन पररूपवारणे, दीर्घोच्चारणसामर्थ्याद्याट एव न ह्रस्वापत्तिः । 'त्रेस्त्रयः' इत्यत्रामीत्यस्य मण्डूकप्लुत्याऽनुवृत्तिरिति बोध्यम् । 'सर्वनाम्नोऽसुङ् च'इति न्यासे 'अमुष्यै' इत्यादि न सिध्येत्, पूर्वमसुङि असान्तत्वाभावेन मुत्वानुपपत्तिः । पूर्वं मुत्वे त्वासिद्धिः स्फुटैव । चकारेण याडसुङोर्द्वयोरपि विधेयत्वावगतौ 'विभाषा द्वितीयातृतीयाभ्याम्' इत्यनेन विकल्पापत्तौ द्वितीयाया इत्यादिसिद्ध्यनुपपत्तिरित्यपि केचित् । 'सर्वनाम्नोऽस्यड्' इति यद्यपि सुवचम्, तथापि कदाचिदान्तरतम्येनास्यडादेशस्योदात्तत्वे 'एकादेश उदात्तेनोदात्तः' इति विभक्तेरुदात्तत्वापत्तिरित्यन्ये ॥ ३ **आबन्तादिति** । आबन्तात्परस्य सर्वनाम्नो विहितस्येत्यर्थः । तेन तस्यै इत्यादौ नानुपपत्तिः' । नापि मासपूर्वायै इत्यादावापत्तिरिति बोध्यम् ॥ ४**लिङ्गविशिष्टेति** । एकादेशस्य पूर्वान्तवत्त्वेन प्रातिपदिकत्वादित्यपि बोध्यम् ॥ ५ **प्रतिपदोक्तत्वाच्चेति** । अपवादत्वाच्चेत्यर्थः । संनिपातपरिभाषा त्वनित्यत्वान्न प्रवर्तत इति 'कन्मेजन्तः' इति सूत्रे भाष्ये ध्वनितम् ॥

याटोऽपवादः । सर्वस्यै । सर्वस्याः २ । एकादेशस्य पूर्वान्तत्वेन ग्रहणादामि सर्वनाम्न इति सुट् । सर्वासाम् । सर्वस्याम् । सर्वयोः । सर्वासु । एवं विश्वादय आबन्ताः ॥ ( ४०८ ) **सू० विभाषा दिक्समासे बहुव्रीहौ** ।१।१।२८। अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै । उत्तरपूर्वायै । दिङ्नामान्यन्तराले इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह । योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै । बहुव्रीहिग्रहणं स्पष्टार्थम् । अन्तरस्यै शालायै । बाह्यायै इत्यर्थः । अपुरीत्युक्तेर्नेह । अन्तरायै नगर्यै[1] ॥ ( ४०९ ) **सू० विभाषा द्वितीयातृतीयाभ्याम्** । ७।३।११५ । आभ्यां ङितः स्याट् स्याद्वाऽऽपश्च ह्रस्वः । इदं सूत्रं त्यक्तुं शक्यम्, तीयस्य ङित्सूपसंख्यानात् । द्वितीयस्यै । द्वितीयायै । द्वितीयस्याः । द्वितीयायाः । द्वितीयस्याम् । द्वितीयायाम् । शेषं रमावत् ॥ एवं तृतीया । अम्बार्थनद्योर्ह्रस्वः[2] । हे अम्ब । हे अक्क । हे अल्ल । (४१०) **वा० असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न** । हे अम्बाडे । हे अम्बाले । हे अम्बिके ॥ जरा । जरसौ शीभावात्परत्वाज्जरस् । आमि नुटः परत्वाज्जरस् । जरसामित्यादि । पक्षे हलादौ च रमावत् । इह पूर्वविप्रतिषेधेन शीभावं कृत्वा सन्निपातपरिभाषाया अनित्यतां चाश्रित्य जरसी इति केचिदाहुस्तन्निर्मूलम्[3] । यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य औङ आपः । आङि चापः । याडापः । ह्रस्वनद्यापः[4] । ङेराम् । इति पञ्चापि विधयः प्राप्ताः । एवं नसुनिशसूत्सु । तथाप्यनल्विधावित्युक्तेर्न भवन्ति । आ आबिति प्रश्लिष्य आकाररूपस्यैवाऽऽपः सर्वत्र ग्रहणात् । एवं हल्ङ्यादिसूत्रेऽपि आ आप् ङी ई इति प्रश्लेषादतिखट्वः निष्कौशाम्बिरित्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम् । न चैवमप्यतिखट्वायेत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनापूर्वं चाश्रित्य याट् स्यादिति वाच्यम्, आबन्तं यदङ्गं ततः परस्य याड्वि-

---

आबन्तस्य सर्वादिगणे पाठाभावात् सर्वनामत्वं नेत्याशङ्क्याह—**एकादेशस्य पूर्वान्तत्वेनेति** ॥ ( ४०८ ) **विभाषा दिक्समासे**— । गौणत्वादप्राप्ते विभाषेयं, न तु 'न बहुव्रीहौ २१८' इति निषेधे प्राप्ते इति भ्रमितव्यम्, तस्यालौकिकप्रक्रियावाक्यान्तर्गतसर्वादिविषयत्वादस्य च समासविषयत्वात् ॥ **स्पष्टार्थमिति** । प्रतिपदोक्तदिक्समासविधायके 'दिङ्नामानि—१२१७' इति सूत्रे 'शेषो बहुव्रीहिः ११९१' इत्यतो बहुव्रीहिरित्यधिकारादिति भावः ॥ ( ४०९ ) **त्यक्तुं शक्यमिति** । न चाबन्तस्य द्वितीयादिशब्दस्य तीयप्रत्ययान्तत्वाभावाद् 'विभाषा द्वितीया—४०९' इति सूत्रमावश्यकमिति शङ्क्यम्, । एकादेशस्य पूर्वान्तत्वेन ग्रहणादाबन्तस्यापि तीयप्रत्ययान्तत्वात् । 'तीयस्य' इति पुंनपुंसकार्थमवश्यं वक्तव्येनानेनैव सिद्धौ 'विभाषा द्वितीया—४०९' इति सूत्रं न कर्तव्यमिति[5] भावः ॥ **अम्बार्थनद्योर्ह्रस्वः** । ( ४१० ) अत्र 'अम्बार्थं द्व्यक्षरं यदि' इति वचनात् द्व्यच्कस्यैवाम्बार्थस्य ह्रस्वो भवति नान्येषामित्याशयेन फलितमाह—**असंयुक्ता ये डलका इत्यादि** ॥ **जरेति** । 'जॄष् वयोहानौ' इत्यस्मात् 'षिद्भिदादिभ्यः—५०८६' इत्यङि 'ऋदृशोऽङि—२२०९' इति गुणे कृते टाप् ॥ **शीभावात्परत्वाज्जरसित्यादि** । ननु 'औङ आपः ४०३' 'ह्रस्वनद्यापो नुट् २९४' इत्यपेक्षया 'जरायाः—३२५' इति सूत्रस्य परत्वादस्त्येव परत्वम्, 'आङि चापः ४०५' 'याडापः ४०६' 'ङेराम्—३७८' इति विधयो जरसादेशं बाधित्वा परत्वात्स्युरिति चेत् । अत्राहुः—'आङि चापः ४०५' इत्येकारादेशे कृतेऽप्येकदेशविकृतन्यायेन 'जरायाः—३२५' इति जरसादेशप्रसक्त्या नित्यत्वादेकारादेशं बाधित्वा जरसादेश एव भवति । न चैकारादेशोऽपि नित्य एव, जरसादेशे कृतेऽपि स्थानिवत्त्वेनाबन्तत्वात् 'आङि चापः ४०५' इति प्रवृत्तेरिति वाच्यम्, आकाररूपस्यैवापः सर्वत्र ग्रहणादित्यनुपदमेव वक्ष्यमाणत्वात्तदप्रवृत्तेः । 'याडापः ४०६' इति याडागमं तु जरसादेशोऽन्तरङ्गत्वाद्बाधते, आकाररूपापः परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात् । ङेरामम्पि जरसादेशो नित्यत्वाद्बाधते । न चाकाररूपाबन्तात्परस्य ङेरामि कृते सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तौ न तस्य नित्यतेति वाच्यम्, रूपमालायां जरसीत्युक्तत्वादिष्टानुरोधादुक्तपरिभाषाया अनित्यत्वाभ्युपगमे बाधकाभावादिति ॥ **स्वाश्रयमिति**[6] । यजादिसुबाश्रयं तन्निमित्तकमित्यर्थः । यजादिसुप एव याडागमापादनात्स्वशब्देन तत्परामृश्यते ॥ **स्थानिवद्भावेनेति** । न चैवं लाक्षणि-

---

१ **नगर्या इति** । 'पूःशब्दार्थस्य विशेष्यत्वे न' इत्येव 'अपुरि' इत्यस्यार्थ इति भावः । परं त्वत्र मूलं मृग्यम् ॥ २ **अम्बार्थेति** । अत्र वार्तिकम्—'मातॄणां मातच् पुत्रार्थमर्हते' इति । यः पुत्रः श्लाघ्यगुणतया कुलसंभूतया मात्रा व्यपदेशमर्हति तत्र 'नद्यृतश्च' इति कपं बाधित्वा मातृशब्दस्य मातजादेश एव । यथा गार्गी माता यस्य तत्संबुद्धौ 'हे गार्गीमात' इत्येव भवति । यत्र पितुरसंविज्ञानेन मात्रा व्यपदेशस्तत्र 'हे जाबालामातृक' इत्यत्र कबेव भवति ॥ ३ **तन्निर्मूलमिति** । विभक्तिसम्बन्धिकार्याणां पूर्वविप्रतिषेधेन जरसादेशात्प्रागिष्टत्वेऽपि संनिपातपरिभाषाया अनित्यत्वं निर्मूलमेव । अत एव प्रक्रियाप्रपञ्चे—जसि, अमि, शसि, टौसोरेव जरसादेशः प्रदर्शित इति बोध्यम् ॥ ४ **ह्रस्वनद्याप इति** । अस्यात्रोपादानमनर्थकम् । अत्र प्रश्लेषे फलाभावात् । ह्रस्वोत्तरं ह्रस्वाश्रयत्वेनापि नुट इष्टत्वादिति बोध्यम् ॥ ५ **न कर्तव्यमिति** । तृतीयाशब्दसाहचर्येण सहायवाचिद्वितीयाशब्दस्य न ग्रहणम् । भागार्थे विधीयमानस्यानो भक्तेर्विशेष्यत्वेन न स्त्रीत्वमनभिधानात् ॥ ६ **स्वाश्रयमिति** । स्व आकाररूपादेशस्तदाश्रयमित्यर्थः । एतेन 'आकाररूपत्वस्य स्वयमेव वर्तमानत्वान्न तदानेतुमतिदेशापेक्षा । तेन 'अनल्विधौ' इति प्रतिषेधोऽपि न । यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशमार्गणं तत्त्वस्यालसाधारणत्व एव निषेधाङ्गीकारात् इति सूचितम् ॥ तत्त्वबोधिनीकारस्त्वत्राविकृतबुद्धिरेव स्थानिवत्सूत्रभाष्योक्तमर्यादोल्लंघित्वात् ॥

धानात् । उपसर्जनस्त्रीप्रत्यये तदादिनियमात् ॥ पद्दन्न इति नासिकाया नस् । नसः । नसा । नोभ्यामित्यादि । पक्षे सुटि च रमावत् ॥ निशाया निश् । निशः । निशा ॥ ( ४११ ) (सू) **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।** ८।२।३६। व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च । षस्य जश्त्वेन डकारः । निड्भ्याम् । निड्भिः । सुपि डः सीति पक्षे धुट् । चर्त्वम् । तस्यासिद्धत्वाच्चयो द्वितीया इति टतयोष्ठथौ न । न पदान्ताट्टोरिति ष्टुत्वं न । निट्त्सु, निट्सु ॥ ( ४१२ ) (सू) **षढोः कः सि ।** ८।२।४१। षस्य ढस्य च कः स्यात्सकारे परे । इति तु न भवति । जश्त्वं प्रत्यसिद्धत्वात् । केचित्तु व्रश्चादिसूत्रे दादेर्धातोरिति सूत्राद्धातोरित्यनुवर्तयन्ति । तन्मते जश्त्वेन जकारे निज्भ्याम् । निज्भिः । जश्त्वम् । श्चुत्वम् । चर्त्वम् । निच्शु । चोः कुरिति कुत्वं तु न भवति, जश्त्वस्यासिद्धत्वात् ॥ ( ४१३ ) (वा) **मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा ॥** पृतः । पृता । पृद्भ्याम् । पक्षे सुटि च रमावत् ॥ गोपाः विश्वपावत् ॥ मतिः प्रायेण हरिवत् । स्त्रीत्वान्नत्वाभावः । मतीः । नात्वं न मत्या ॥ ( ४१४ ) (सू) **ङिति ह्रस्वश्च ।** १ । ४ । ६ । इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे । आण्नद्याः । मत्यै, मतये । मत्याः २, मतेः २ । नदीत्वपक्षे औदिति ङेरौत्वे प्राप्ते-॥ ( ४१५ ) (सू) **इदुद्भ्याम् ।** ७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात् । पक्षे अच्च घेः । मत्याम्, मतौ । एवं श्रुतिस्मृत्यादयः ॥ ( ४१६ ) (सू) **त्रिचतुरोः स्त्रियां तिसृचतसृ ।** ७।२।९९। स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ परतः ॥ ( ४१७ ) (सू) **अचि र ऋतः ।** ७।२।१००।

---

कत्वात्कथमिह याट् स्यादिति वाच्यम्, अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषायाः प्रवृत्तावतिदेशस्य वैयर्थ्यापत्तेः । अतो व्याचष्टे—**आबन्तं यदङ्गमिति** ॥ 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणम्' इति नियमादतिखट्वेति यदङ्गं तदाबन्तं न भवति, यच्चाबन्तं खट्वेति तदङ्गं न भवतीति नात्र याडागमप्रसक्तिरिति भावः । अत्र नव्याः-'प्रत्ययग्रहणे तदन्तग्रहणम् ६२१' इत्याब्ग्रहणेनाबन्तं गृह्यते । आबन्तस्याङ्गविशेषणे त्वाबन्तान्तग्रहणादतिखट्वायेत्यत्रोक्तदोषतादवस्थ्यमिति यद्युच्यते, तर्ह्यङ्गेनाबन्तं विशेष्यताम्—अङ्गसंज्ञकं यदाबन्तमिति, तथा च नोक्तातिप्रसङ्गशङ्कालेश इत्याहुः ॥ स्त्रीप्रत्यये तदादिनियमो नेत्याशङ्क्याह—**उपसर्जनेति** । अयं भावः । 'स्त्रीप्रत्यये चानुपसर्जने न १४४१' इत्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमप्रतिषेधो वक्ष्यते न तूपसर्जनेऽपि । अत एव परमकारीषगन्धीपुत्रवदतिकारीषगन्ध्यापुत्र इत्यत्र 'ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे १४३९'इति संप्रसारणं न भवति । अतिकारीषगन्ध्यस्य हि ष्यङन्तत्वाभावात् । न च बहुश्रेयसीत्यत्र श्रेयसीत्युत्तरभागस्य ङ्यन्तत्वाद्यथा हल्ङ्याब्भ्यो दीर्घादिलोपः प्रवर्तते, तथा तत्राप्युत्तरभागस्य ष्यङन्तत्वात्संप्रसारणं स्यादेवेति शङ्क्यम्, पूर्वपदस्य ष्यङन्तस्य पुत्रपत्योरुत्तरपदयोः संप्रसारणमिति 'ष्यङः संप्रसारणम्-१४३९' इत्यत्रैव वक्ष्यमाणत्वात् ॥ **टतयोष्ठथौ नेति** । धुडभावे टस्य ठो न । धुट्पक्षे तु तस्य थो नेति विवेकः ॥ ( ४१२ ) **न भवतीति** । जश्त्वात्प्राक् षस्य कुत्वं न भवतीत्यर्थः ॥ **केचित्त्विति** । परिशिष्टकारादयः ॥ **निच्श इति** । अत्र 'शश्छोऽटि १८५' इति पक्षे छत्वं बोध्यम् ॥ ( ४१३ ) **मांसपृतनेति** । पृतना सेना ॥ **नात्वं नेति** । 'अस्त्रियाम्' इति पर्युदासादिति भावः ॥ ( ४१४ ) **ङिति ह्रस्वश्च** । 'वाऽऽमि ४२४' इति सूत्राद्वेत्यनुवर्तते । अप्राप्तविभाषेयम्, ह्रस्वयोरप्राप्तावितरयोस्तु 'नेयङुवङ्स्थानौ-४२३' इति निषेधप्राप्तावारम्भसामर्थ्यात् । इहेयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गाविति त्रीणि ईदूतोर्विशेषणानि । ह्रस्वयोस्तु स्त्रियामित्येव विशेषणं, न तु नित्यस्त्रीत्वपर्यन्तम् । अन्यथा इष्वशनिप्रभृतीनामुभयलिङ्गानां, पटुमृदुप्रभृतीनां सर्वलिङ्गानां च स्त्रीत्वेऽपि नदीत्वं न स्यात् । कैयटमते हि तेषां नित्यस्त्रीत्वाभावात् । मतान्तरेऽपि ह्रस्वांशे नित्यग्रहणव्यावर्त्यालाभाच्च ॥ अत एवाख्याग्रहणं विहाय स्त्रीशब्दमात्रं निष्कृष्य संबध्यते, तदेतदाह—**ह्रस्वौ चेवर्णोवर्णौ स्त्रियामिति** ॥ **औत्त्वे प्राप्त इति** । 'ङेराम्-३७८' इत्यपेक्षया परत्वादिति भावः । प्राचा तु-'औत् ३६१' इति सूत्रे 'इदुद्भ्याम् ४१५' 'अच्च घेः ३५१' इति पूर्वोत्तरसूत्रद्वयबललभ्यार्थमुपादाय घिनदीसंज्ञावर्जिताभ्यामिति व्याख्यातम् । 'इदुद्भ्याम् ४१५' इति सूत्रं च नोपन्यस्तमित्यसमञ्जसमेतत् ॥ ( ४१६ ) **त्रिचतुरोः**-। 'अष्टन आ विभक्तौ ५०२' इत्यतोऽनुवर्तनादाह—**विभक्तौ परत इति** । विभक्तौ किम्, त्रिभार्यः चतुर्भार्य इति केचित् । तन्मन्दम्, 'स्त्रियाः पुंवद्-११९६' इति पुंवद्भावेनापीष्टसिद्धेः । किन्तु, प्रियादौ परतः पुंवद्भावो नेति त्रिप्रिय इत्याद्युदाहर्तव्यमिति नव्याः ।

---

१ **छशान्तयोरिति** । 'च्छ्वोः शूड्-'इत्यत्र क्ङितीत्यनुवृत्तेःप्रष्टेत्यादौ क्ङित्परत्वाभावेन शत्वस्याजातत्वेन षत्वस्यानुपपत्तिः स्यादतः सतुक्छकारोपादानम् । 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति तु नास्ति । इति तु प्रागुक्तमेव ॥ २ **तस्यासिद्धत्वादिति** । 'चयो द्वितीयाः-' इति वार्तिकस्य 'नादिन्याक्रोशे-' इत्यत्र पठितत्वादिति भावः ॥ ३ **विभक्ताविति** । तिसृका ग्राम इत्यत्र तु 'तिसृभावे संज्ञायां कन्युपसंख्यानम्' इति वार्तिकेन तिस्रादेशे टाबन्तस्यैव संज्ञात्वमिति केचित् । बहुवचनान्तस्यैव संज्ञात्वमित्यन्ये ॥ ४ **अङ्गसंज्ञकं यदाबन्तमिति** । अङ्गस्य विशेष्यत्वमेव भाष्यसंमतम् । अङ्गस्य विशेषणत्वे हि 'ङ्याब्ग्रहणेऽदीर्घः' इति वार्तिकस्य तत्प्रत्याख्यानस्य वैयर्थ्यमेव । किञ्च, खट्वाया अर्धे अर्धखट्वायामित्यत्राङ्गस्याबन्तत्वाभावादनिष्टमापद्येत ॥ ५ **पुंवद्भावेनापीति** । तिसृभिर्भरणीयः, चतसृभिर्भरणीय इत्यर्थे पुंवद्भावप्राप्तेश्चिन्त्यमिदम् ॥

तिसृ चतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः २ । आमि नुमचिरेति नुट् ॥ (४१८) (सू.) न तिसृचतसृ ।६।४।४। एतयोर्नामि दीर्घो न स्यात् । तिसृणाम् । तिसृषु ॥ स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह । प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः मतिवत् । आमि तु प्रियत्रयाणामिति विशेषः । प्रियास्तिस्रो यस्य स इति विग्रहे तु प्रियतिसा । प्रियतिस्रौ । प्रियतिस्रः । प्रियतिस्रामित्यादि ॥ प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि । स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । न लुमतेति निषेधस्यानित्यत्वात्पक्षे प्रियतिसृ । (४१९) रादेशात्पूर्वविप्रतिषेधेन नुम् ॥ प्रियतिसृणी प्रियतिसॄणि । तृतीयादिषु वक्ष्यमाणपुंवद्भावविकल्पात्पर्यायेण नुम्रभावौ । प्रियतिस्रा । प्रियतिसृणा-इत्यादि ॥ द्वेरत्वे सत्याप् । द्वे २ । द्वाभ्याम् ३ । द्वयोः २॥ गौरी । गौर्यौ । गौर्यः । नदीकार्यम् । हे गौरि । गौर्यै-इत्यादि । एवं वाणीनद्यादयः ॥ (प.) प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणा[२६९]दनङि णिद्वद्भावे च प्राप्ते-। (४२०) (प.) विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ सखी । सख्यौ । सख्यः-इत्यादि गौरीवत् ॥ अङ्यन्तत्वान्न सुलोपः । लक्ष्मीः । शेषं गौरीवत् ॥ एवं तरीतन्त्र्यादयः ॥ स्त्री । हे स्त्रि ॥ (४२१) (सू.) स्त्रियाः । ६ । ४ । ७९ । स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः ॥ (४२२) (सू.) वाऽम्शसोः । ६ । ४ । ८० । अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् , स्त्रीम् । स्त्रियौ । स्त्रियः, स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः २ । स्त्रियोः । परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् । स्त्रियोः । स्त्रीषु ॥ स्त्रियमतिक्रान्तोऽतिस्त्रिः । अतिस्त्रियौ । गुणनाभावौत्वनुड्भिः परत्वात्पुंसि बाध्यते । क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥ जसि[३४५] च । अतिस्त्रयः । हे अतिस्त्रे । हे अतिस्त्रियौ । हे अतिस्त्रयः । वाऽम्[४२२]शसोः । अतिस्त्रियम् , अतिस्त्रिम् । अतिस्त्रियौ । अतिस्त्रियः, अतिस्त्रीन् । अतिस्त्रिणा । घेर्ङिति[३४१] अतिस्त्रये । अतिस्त्रेः २ । अतिस्त्रियोः २ । अतिस्त्रीणाम् । औत्[३८८] घेः । अतिस्त्रौ ॥ ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया । इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥ क्लीबे तु नुम् । अतिस्त्रि । अतिस्त्रिणी ।

---

(४१७) **गुणदीर्घोत्वानामिति** । तिस्रस्तिष्ठन्तीत्यत्र 'ऋतो ङि-३८६' इति गुणस्य रत्वमपवादः, तिस्रः पश्येत्यत्र तु 'प्रथमयोः-२४४' इति पूर्वसवर्णदीर्घस्यापवादः, प्रियतिस्र आगतः प्रियतिस्रः स्वमित्यत्र 'ऋत उत् ३९०' इत्युत्वस्येति विवेकः । यद्यपि मध्येऽपवादन्यायेन दीर्घोत्वयोरेव रत्वमपवादः स्यान्न तु 'ऋतो ङि-३८६' इति गुणस्य, तथापि बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वमेवेह बाध्यत इति भावः ॥ **त्रिचतुरोर्विशेषणादिति** । श्रुतत्वाद्धि त्रिचतुरोरित्यस्यैव स्त्रियामिति विशेषणं नाङ्गस्येति भावः ॥ **प्रियतिसेति** । प्रिया जस्-त्रि जस् इति स्थिते 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इत्यकृत एव तिस्रादेशे सुपो लुकि कृते समासाद् या विभक्तिस्तस्यां परतास्तिस्रादेशः, 'स्त्रियाः पुंवत्-११९६' इति प्रियाशब्दस्य पुंवद्भावः, 'ऋदुशन-३८७' इत्यनङ् । यद्यपीह जहत्स्वार्थावृत्तिपक्षे त्रिशब्दस्य निरर्थकत्वेन स्त्रीवाचित्वं दुर्लभं, तथापि भूतपूर्वगत्या स्त्रियां वृत्तिर्बोध्या । 'उत्तरपदार्थप्रधानस्तत्पुरुषः' इत्यादिसिद्धान्तप्रवादस्यैवमेव निर्वाह्यत्वात् । अजहत्स्वार्था वृत्तिरिति पक्षे तु-स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोऽर्थः । तेन प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिरित्यत्र प्रियत्रिशब्दस्य स्त्रियां वृत्तित्वेऽपि न तिस्रादेशप्रसङ्गः, 'प्रत्ययोत्तरपदयोश्च' इत्येतत्सूत्रगतभाष्यग्रन्थसंदर्भश्चोक्तव्याख्याने प्रमाणम् ॥ **अनित्यत्वादिति** । 'इकोऽचि-४४२' इत्यज्ग्रहणमिह लिङ्गम् । तथाहि-भ्याम् भिसादिषु सत्यपि नुमि 'नलोपः प्रातिपदिकान्तस्य ३३९' इति तल्लोपसंभवादचीति व्यर्थम् । न च 'न ङिसंबुद्ध्योः ४७७' इति निषेधात्संबुद्धौ लोपो न संभवतीति तत्रानिष्टवारणायाचीत्यावश्यकमिति वाच्यम् , संबुद्धिश्च लुका लुप्तेति नुमः प्राप्तेरेव तत्र दुर्लभत्वात् । 'न लुमता-३६८' इति निषेधस्यानित्यतां विना तत्र प्रत्ययलक्षणाप्रवृत्तेः । नाप्युत्तरार्थं तदिति वाच्यम् , उत्तरत्रैव कर्त्तव्ये तत्राचीति करणस्य वैयर्थ्यात् । 'न लुमता-३६८' इति निषेधस्यानित्यत्वे तु संबुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुं तदिति भवत्येवाज्ग्रहणं लिङ्गम् । न चेदमनित्यत्वं संबुद्धिगुणमात्रविषयकमित्याभिनिवेष्टव्यम् , लक्ष्यानुरोधेनान्यत्रापि क्वचित्तदभ्युपगमे बाधकाभावात् । अत एव प्रियतिसृ प्रियत्रीति रूपद्वयमपि कैयटेन स्वीकृतम् ॥ (४१९) **रादेशादिति** । अत्र 'प्रियतिसृणी, प्रियतिसॄणि' इति भाष्यं मानम् ॥ **इत्यादीति** । प्रियतिस्रे, प्रियतिसृणे । प्रियतिस्रः, प्रियतिसृणः । आमि रादेशं बाधित्वा पूर्वविप्रतिषेधेन नुम् , तं च बाधित्वा पूर्वविप्रतिषेधेन नुट् । प्रियतिसॄणाम् ॥ **द्वेरत्वे सत्याबिति** । विभक्तिसन्निपातकृतमपि त्यदाद्यत्वं टापो निमित्तं 'न यासयोः ६३३' इति निर्देशेन सन्निपातपरिभाषाया अनित्यत्वादिति भावः ॥ **अङ्यन्तत्वादिति** । केचिदिह 'कृदिकारात्-७०७' इति पाक्षिकं ङीषमिच्छन्ति । तन्मते तु सुलोपः पक्षे स्यादेव । अत एव 'वातप्रमी श्री लक्ष्मीति पक्षे ङ्यन्ताः सुसाधवः' इति राक्षितः । 'लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशश्च ॥ **स्त्री इति** । स्त्यायतोऽस्यां शुक्रशोणिते इति स्त्री । 'स्त्यायतेर्ड्रट् ४८११' 'लोपो व्योः-१२५४' इति यलोपः, टित्त्वान् ङीप् । ङ्यन्तत्वात्सुलोपः ॥ **परत्वादिति** । 'स्त्रियाः ४२१' इतीयङपेक्षया ॥ **इयादेशोऽचि नान्यत्रेति** । अजादौ य इयादेशो विहितः स उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्यौसादिषु चतु-

---

१ अत एव 'तां दृष्ट्वा श्रीमिवायतीम्' इति मुकुटप्रयोगः, 'कन्थामिव श्रीमपि कुत्सयन्तः' इति शङ्करभगवत्पादप्रयोगश्चोपपद्यते ॥

अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिणे । ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावात्पक्षे प्राग्वद्रूपम् । अतिस्त्रये । अतिस्त्रिणः २, अतिस्त्रेः २ । अतिस्त्रिणोः २ । अतिस्त्रियोरित्यादि ॥ स्त्रियां तु प्रायेण पुंवत् । शसि अतिस्त्रीः । अतिस्त्रिया । ङिति ह्रस्वश्चेति ह्रस्वान्तत्वप्रयुक्तो विकल्पः । अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव पर्युदासः । तत्संबद्धस्यैवानुवृत्तेर्दीर्घस्यायं निषेधो न तु ह्रस्वस्य । अतिस्त्रये, अतिस्त्रियै । अतिस्त्रियाः २, अतिस्त्रेः २ । अतिस्त्रीणाम् । अतिस्त्रियाम्, अतिस्त्रौ ॥ श्रीः । श्रियौ । श्रियः ॥ ( ४२३ ) **(सू) नेयङुवङ्स्थानावस्त्री** ।१।४।४। इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री । हे श्रीः । श्रियै । श्रिये । श्रियाः । श्रियः ॥ ( ४२४ ) **(सू) वाऽऽमि** । १ । ४ । ५ । इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री । श्रीणाम्, श्रियाम् । श्रियाम्, श्रियि ॥ प्रधीशब्दस्य तु वृत्तिकारादीनां मते लक्ष्मीवद्रूपम्, पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति स्वीकारात् । लिङ्गान्तरानभिधायकत्वं तदिति कैयटमते तु पुंवद्रूपम् । प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत् । आमि शसि च प्रध्यं प्रध्य इति विशेषः ॥ सुष्ठु धीर्यस्याः, सुष्ठु ध्यायति वेति विग्रहे तु वृत्तिमते सुधीः श्रीवत् । मतान्तरे पुंवत् । सुष्ठु धीरिति विग्रहे तु श्रीवदेव ॥ ग्रामणीः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः । एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥ धेनुर्मतिवत् ॥ ( ४२५ ) **स्त्रियां च** ।७।१।९६। स्त्रीवाची क्रोष्टुशब्दस्तृ-

---

ध्वेव, न त्वन्यत्र, गुणनाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः ॥ **इयङुवङ्स्थानावित्यस्यैवेति** । 'यू स्त्र्याख्यौ-३७३' इत्यनुवर्तनादियङुवङ्स्थानावितीदूतोर्विशेषणम् । तेन इयङुवङ्स्थानावीदूतावेवास्त्रीति पर्युदस्तौ न तु ह्रस्वाविति भावः ॥ **श्रीरिति** । 'क्विब्वचिप्रच्छि-४१८५' इत्यादिना क्विब्दीर्घौ । ङ्यन्तत्वाभावान्न सुलोपः ॥ ( ४२३ ) **नेयङुवङ्स्थानावस्त्री** । तिष्ठतो ययोरिति स्थानौ । अधिकरणे ल्युट् । इयङुवङोः स्थानाविति षष्ठीसमासः । तथा च फलितार्थमाह—**इयङुवङोः स्थितिर्ययोरिति** । स्थानग्रहणं किम्, प्रकृष्टा धीः प्रधीः । हे प्रधि । अत्र 'एरनेकाचः-३८०' इति यणा इयङो बाधनात् 'नेयङुवङ्स्थानौ-४२३' इति निषेधो न प्रवर्तते । 'यत्रेयङुवङौ निष्पद्येते तत्रैव नदीसंज्ञाया निषेधः । यत्र त्वपवादेन बाध्येते तत्र न निषेधः' इत्येतदर्थं हि स्थानग्रहणं कृतम् । अन्यथा 'नेयङुवङोः' इत्येव ब्रूयात् । इयङुवङोर्निमित्तभूतौ यू नदीसंज्ञकौ नेत्यर्थलाभात् । अस्त्रीति किम्, हे स्त्रि ॥ ( ४२४ ) **वाऽऽमि** । 'यू स्त्र्याख्यौ नदी ३७३' 'नेयङुवङ्स्थानावस्त्री ४२३' इत्यनुवर्तनादाह—**इयङुवङ्स्थानावित्यादि** । यद्यपि नेति प्रकृतो निषेधोऽनेन विकल्प्यते, तथापि निषेधविकल्पे विधिविकल्प एव फलतीति स एव सूत्रार्थ उचित इत्याशयेनाह—**वा नदीसंज्ञौ स्त इति** । 'ङिति ह्रस्वश्च ४१४' इति सूत्रेऽप्येवमेव ॥ **प्रधीशब्दस्य त्विति** । 'एरनेकाचः-३८०' इति यणा इयङो बाधनात् 'नेयङुवङ्स्थानौ-४२३' इति निषेधोऽत्र न प्रवर्तते ॥ यत्र त्वपवादेनेयङुवङौ बाध्येते तत्र निषेध इत्याशयेन व्याचष्टे—**लक्ष्मीवद्रूपमिति** । आमि शासि च विशेष इत्यनुपदमेव वक्ष्यति । **पुंवद्रूपमिति** । अयं च मतभेदः—प्रकृष्टा धीर्यस्याः, प्रकर्षेण ध्यायतीति वा विग्रहे बोध्यः ॥ **लक्ष्मीवदिति** । मतद्वयेऽपीति शेषः ॥ **सुष्ठु धीर्यस्या इति** । नन्वस्मिन्विग्रहे कैयटमते सुधीशब्दस्य नित्यस्त्रीत्वाभावेऽपि धीशब्दस्य नित्यस्त्रीत्वात् 'प्रथमलिङ्गग्रहणं च ३७४' इति सुधीशब्दः श्रीवदेव भवति, न तु पुंवदिति चेत् । अत्राहुः—'नेयङुवङ्स्थानावस्त्री ४२३' इति धीशब्दे नदीसंज्ञानिषेधात्सुधीशब्दे 'प्रथमलिङ्गग्रहणं च ३७४' इत्यस्याप्रवृत्तिः, तथा च वृत्तिमते इति ग्रन्थः स्वरसतः संगच्छत इति ॥ **मतान्तर इति** । लिङ्गान्तरानभिधायकत्वं तदिति कैयटमत इत्यर्थः ॥ **श्रीवदेवेति** । बुद्धिवाचकधीशब्दस्य नित्यस्त्रीत्वान्मतद्वयेऽपि श्रीवदेवेत्यर्थः ॥ ( ४२५ ) **स्त्रियां च** । असर्वनामस्थानार्थमयमारम्भः । 'तृज्वत्क्रोष्टुः ३८५' इति वर्तते तद्वदेवात्रापि रूपातिदेशः ॥ स्त्रियामित्यर्थग्रहणं तदाह—**स्त्रीवाची क्रोष्टुशब्द इत्यादि** । एवं च पञ्चभिः क्रोष्ट्रीभिः क्रीतै रथैः पञ्चक्रोष्ट्रीरथैरित्यत्रापि तृज्वद्भावः सिध्यति । ये तु—स्त्रियामिति स्त्रीप्रत्यये इति व्याचक्षते, ङीषर्थं च क्रोष्टुशब्दं गौरादिषु पठन्ति, तेषामिह तृज्वद्भावो न सिध्येत् । 'तेन क्रीतम् २३१६' इति ठकः 'अध्यर्धपूर्व-२३०५' इति लुका लुप्त-

---

१ **ङेप्रभृताविति** । तृतीयैकवचनेऽपि यद्यपि पुंवद्भावो भवत्येव तथापि पुंवद्भावे आङो नाभावेन पुंवद्भावाभावे नुमागमेन रूपवैलक्षण्याभाव एवेति भावः ॥ २ **पर्युदास इति** । प्रसज्यप्रतिषेधे वाक्यभेदापत्तिरिति भावः ॥ ३ **दीर्घस्येति** । यू इत्यत्र दीर्घनिर्देशस्यैव सिद्धान्तितत्वात्तस्यैवात्रानुवृत्तेरुत्तरत्र ह्रस्वग्रहणादिति भावः ॥ ४ **हे श्रीरिति** । श्रीशब्देकारे संबुद्धावियङभावेऽप्यौजसादौ तत्स्थितेर्दृष्टत्वान्नदीसंज्ञानिषेधो भवत्येवेति भावः ॥ ५ **श्रीणामिति** । 'वाऽऽमि' इत्यत्र नदीकार्यस्य नुडागमस्य षष्ठीबहुवचन एव संभवाद् 'आमि' इत्येव च्छेदः, न त्वमीति, तत्र नदीकार्यासंभवादिति भावः ॥ ६ **प्रधीशब्दस्येति** । प्रकृष्टं ध्यायतीति विग्रहे, प्रकृष्टा धीर्यस्या इति बहुव्रीहौ वेति पूर्वशेषः ॥ ७ **स्त्रियामिति** । स्त्रियमाचक्षाणावित्यर्थेन स्त्रीवाचकत्वमात्रं विवक्षितमधिके प्रविष्टे न तद्धानिरिति भावः ॥ ८ **लिङ्गान्तरेति** । अब्भक्ष इत्यादाविव सर्वं वाक्यं सावधारणमिति न्यायेन स्त्रीमात्रवाचकत्वं विवक्षितमिति भावः ॥ ९ **उत्सर्गत इति** । अनेन क्वचिदुत्सर्गस्य त्यागदर्शनाद् हे असौ इत्यादाविव सति शिष्टप्रयोगे नदीसंज्ञा वृत्तिकारमते भवत्येवेति सूचितम् ॥

न्तवद्रूपं लभते ॥ (४२६) (सू) ऋन्नेभ्यो ङीप्।४।१।५। ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । क्रोष्ट्री । क्रोष्ट्र्यौ । क्रोष्ट्र्यः॥ वधूर्गौरीवत् । भ्रूः श्रीवत् । हे सुभ्रूः । कथं तर्हि 'हापित[1]ः क्वासि हे सुभ्रु' इति भट्टिः । प्रमाद[2] एवायमिति बहवः॥ खलपूः पुंवत् ॥ पुनर्भूः । दृन्करेति यणा उवङो बाधनान्नेयङुवङिति निषेधो न । हे पुनर्भु । पुनर्भ्वम् । पुनर्भ्वौ । पुनर्भ्वः ॥ (४२७) (सू) एकाजुत्तरपदे णः।८।४।१२। एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात् । आरम्भसामर्थ्यान्नित्यत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम् । यणं बाधित्वा परत्वान्नुट् । पुनर्भूणाम् ॥ वर्षाभूः । भेकजातौ नित्यस्त्रीत्वाभावात् हे वर्षाभूः कैयटमते । मतान्तरे तु हे वर्षाभु । पुनर्नवायां तु हे वर्षाभु । 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः । वर्षाभ्वौ । वर्षाभ्वः । स्वयंभूः पुंवत् ॥ (४२८) (सू) न षट्स्वस्रादिभ्यः ।४।१।१०। षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः ॥ स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मा[3]तेति सप्तैते स्वस्रादय उदाहृताः ॥ अप्तृन्निति दीर्घः । स्वसा । स्वसारौ । स्वसारः ॥ माता पितृवत् । शसि मातॄः ॥ द्यौर्गोवत् ॥ राः पुंवत् ॥ नौर्ग्लौवत् ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

त्वात् 'लुक्तद्धितलुकि १९६५' इति ङीषो लुकि स्त्रीप्रत्ययपरत्वाभावात् ॥ (४२६) **ऋन्नेभ्यो—**। ऋत् ऋकारः, नो नकारः, प्रयोगापेक्षं बहुत्वम् । प्रातिपदिकविशेषणात्तदन्तविधिः, स्त्रियामिति चाधिक्रियते तदाह—**ऋदन्तेभ्य इत्यादि**॥ **क्रोष्ट्रीति**। 'स्त्रियां च ४२५' इत्येतस्याङ्गत्वादङ्गेन प्रत्ययस्याक्षेपाद्विभक्तौ परत एवेह तृज्वद्भावस्ततो ङीबिति बोध्यम् । **भ्रूरिति** । भ्रमतीति भ्रूः । 'भ्रमेश्च डूः ४४२९' इति भ्रमतेर्डूप्रत्ययः । डित्त्वाट्टिलोपः ॥ **हे सुभ्रूरिति** । डूप्रत्ययस्यास्त्रीप्रत्ययत्वात् 'गोस्त्रियोः—९५७' इति ह्रस्वो न भवति । 'नेयङुवङ्स्थानौ—४२३' इति नदीसंज्ञानिषेधात्संबुद्धिह्रस्वोऽपि नेति भावः ॥ ह्रस्वोऽत्रानुपपन्न इत्याक्षिपति—**कथं तर्हीति** । 'विमानना सुभ्रु पितुर्गृहे कुतः' इति कालिदासप्रयोगोऽप्यनुपपन्न इति बोध्यम् ॥ **बहव इति**। केचित्तु 'नेयङुवङ्—४२३' इति सूत्रे 'वाऽऽमि ४२४' इत्यतो वाग्रहणमपकृष्य व्यवस्थितविभाषां चाश्रित्य समादधिरे । तदसत्, तथा सतीह नञ्ग्रहणं 'वाऽऽमि ४२४' इत्युत्तरसूत्रं च व्यर्थं स्यात् । 'वेयङुवङ्स्थानौ' इत्येव वक्तुं शक्यत्वात् ॥ अन्ये तु—'सामान्ये नपुंसकम् ११८२' इति कथंचित्समादधुः ॥ (४२७) **एकाच्—**। एकोऽच् यस्मिंस्तद् एकाच्, तदुत्तरपदं यस्य स एकाजुत्तरपद इति बहुव्रीहिगर्भो बहुव्रीहिः ॥ उत्तरपदशब्दः समासावयवे रूढस्तेनाक्षिप्तसमासोऽनेन विशेष्यत इत्याह—**तस्मिन्समास इति** । 'रषाभ्यां नो णः—२३६' इत्यतो ण इत्यनुवर्तमानेऽपि णग्रहणमिह नित्यार्थमावश्यकमित्याशङ्क्याह—**आरम्भसामर्थ्यादिति** । 'प्रातिपदिकान्तनुम्विभक्तिषु च १५१२' इति विकल्पेन सिद्धावेतदारम्भसामर्थ्यादित्यर्थः॥ **स्वयंभूः पुंवदिति**। मतद्वयेऽपि नदीसंज्ञाया अभावात् 'ङिति ह्रस्वश्च ४१४' इत्यादि न प्रवर्तते इति भावः ॥ (४२८) **न षट्स्वस्रादिभ्यः**। स्त्रियां यदुक्तं तन्न भवतीति व्याख्यानादनन्तरो ङीबिव व्यवहितष्टाबपि निषिध्यत इत्याशयेनाह—**ङीप्टापौ नेति** । स्वस्रादीनां ङीप् प्राप्तः । षट्संज्ञकानां तूभौ ॥ **स्वसा तिस्र इति** । 'न तिसृचतसृ ४१८' इति नामि दीर्घत्वप्रतिषेधाज्ज्ञापकादेव ङीबभावे सिद्धे स्वस्रादिषु तिसृचतसृशब्दपाठो न कर्तव्य इति 'कृन्मेजन्तः' इति सूत्रे कैयटः ॥ **स्वसेति** । 'सावसेर्ऋन् ४४३६' । 'ऋदुशन—३८७' इत्यनङ् । 'ननान्दा तु स्वसा पत्युः'। 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्'॥ **द्यौर्गोवदिति** । 'गमेर्डोः ४४२८' बाहुलकाद्द्युतेरपि । डित्त्वाट्टिलोपः । 'ओतो णित् ४००' इति णिद्वद्भावाद्वृद्धिः ॥ **राः पुंवदिति** । यद्यपि पुंल्लिङ्ग एवायम् 'अर्थरैविभवा अपि' इत्यमरोक्तेर्भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्, तथापि 'रात्येनं राः स्त्रीत्येके' इति क्षीरस्वामिना स्त्रीलिङ्गतायाः अप्यभ्युपगमादेवमुक्तम् ॥ **नौर्ग्लौवदिति** । 'ग्लानुदिभ्यां डौः ४४२५' डित्त्वाट्टिलोपः । 'स्त्रियां नौस्तरणिस्तरीः' इत्यमरः ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

1 **हापित इति** । 'हापितः क्वासि हे सुभ्रु बह्वेवं विललाप सः ।' इत्येवं पद्यार्धम् । 'विधिना त्वयाऽहं हापितस्त्याजितः हे सुभ्रु त्वं क्वासि' इत्येवं स रामो बहु विललाप इत्यर्थः ॥ 2 **प्रमाद इति** । विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः । स च विरहपोषकत्वात्काव्ये गुण इति केचित् ॥ 3 **मातेतीति** । अत्र मातृशब्दो ङीप्प्रतिषेधाय जननीवाच्येव गृहीतः प्रसिद्धतरत्वान्ननान्द्रादिसाहचर्याच्च । तेन परिच्छेत्र्यां 'मात्री' इति ङीब् भवत्येवेति बोध्यम् ॥ 4 'नञ्घटितमनित्यम्' इति तु प्राञ्चः । भाष्याऽनुक्तत्वात्तन्न लक्ष्यसंस्कारोपयोगीति नव्याः ॥

## अथाजन्तनपुंसकलिङ्गाः।

(४२९) (सू) अतोऽम्।७।१।२४।अतोऽङ्गात् क्लीबात्स्वमोरम् स्यात्। अमि पूर्वः। ज्ञानम्। एङ्ह्रस्वादिति हल्मात्रलोपः। हे ज्ञान॥(४३०) (सू) नपुंसकाच्च।७।१।१९।क्लीबात्परस्यौङः शी स्यात्। भसंज्ञायाम्॥(४३१) (सू) यस्येति च।६।४।१८४। भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे।इत्यकारलोपे प्राप्ते-॥(४३२) (वा) औङः श्यां प्रतिषेधो वाच्यः॥ज्ञाने॥ (४३३) (सू) जश्शसोः शिः।७।१।२०।क्लीबादनयोः शिः स्यात्।(४३४) (सू) शि सर्वनामस्थानम्।१।१।४२। शि इत्येतदुक्तसंज्ञं स्यात्॥(४३५) (सू) नपुंसकस्य झलचः।७।१।७२।झलन्तस्याऽजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं रामवत्। एवं धनवनफलादयः॥(४३६) (सू) अद्ड्डतरादिभ्यः पञ्चभ्यः। ७। १।२५। एभ्यः क्लीबेभ्यः स्वमोरद्ड्डादेशः स्यात्॥(४३७) (सू) टेः।६।४।१४३। डिति परे भस्य टेर्लोपः स्यात्।वाऽवसाने। कतरत्। कतरद्। कतरे। कतराणि। भस्येति किम्। पञ्चमः। टेर्लुप्तत्वात्प्रथमयोरिति पूर्वसवर्णदीर्घः,एङ्ह्रस्वादिति

---

(४२९) **अतोऽम्**। अत इत्येतदधिकृतस्याङ्गस्य विशेषणम्, 'स्वमोर्नपुंसकात् ४४१' इति चानुवर्तत इत्याशयेनाह—**अतोऽङ्गादित्यादि**। अदन्तादङ्गादित्यर्थः॥ **स्वमोरिति**। अमोऽम्विधानं 'स्वमोर्नपुंसकात् ४४१' इति प्राप्तस्य लुको बाधनार्थम्॥ **अम् स्यादिति**। यद्यपि 'म्' इत्येव च्छित्त्वा सोर्मे कृते सन्निपातपरिभाषया 'सुपि च २७७' इति दीर्घत्वाप्रसक्त्या ज्ञानमिति रूपं सिध्यति। द्वितीयैकवचने तु-'आदेः परस्य' इत्यकारस्य मकारे कृतेऽन्त्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टम्, तथापि 'संयोगान्तलोपो झलः' इत्यभिप्रायेणेदं व्याख्यातम्॥ यत्त्वाहुः—अमिति पदच्छेदाऽकरणे अतिजरसमिति न सिध्येदिति। तद्भसात्, सोरमि कृते सन्निपातपरिभाषया जरसादेशस्याप्रवृत्त्या अतिजरमिति रूपस्यैवेष्यमाणत्वात्। द्वितीयैकवचने तु 'अतोऽम् ४२९' इति बाधित्वा परत्वाज्जरासि कृते सन्निपातपरिभाषया लुकोऽप्रवृत्तावतिजरसमिति रूपसिद्धेश्चेति दिक्॥ **ज्ञानमिति**। ज्ञप्तिर्ज्ञानम्। ल्युडन्तः। 'युवोरनाकौ १७६१'। 'कृत्तद्धित-२६३' इति प्रातिपदिकत्वात्स्वाद्युत्पत्तिः॥ **हल्मात्रेति**। हे ज्ञान सु इति स्थिते संबुद्धिलोपात्परत्वादमादेशे कृते, अमि[273] पूर्वत्वे च, तस्यान्तवद्भावाद्ध्रस्वान्तमङ्गं न भवतीति ततः परस्य संबुद्धिसंबन्धिनो मकारस्य लोप इत्यर्थः॥(४३०)**नपुंसकाच्च**।'जसः शी ३००' 'औङ आपः ४०३'इत्यतः शी औङ इति चानुवर्तत इत्यभिप्रेत्याह-**क्लीबात्परस्येत्यादि**॥ **भसंज्ञायामिति**। 'सुडनपुंसकस्य ३३०' इति पर्युदासेनासर्वनामस्थानत्वादौङि 'यचि भम् ३३२'इति प्रवर्तते इति भावः॥(४३१)**यस्येति**-। इश्च अश्च यं तस्य यस्य। तदाह-**इवर्णावर्णयोरिति**। ईति चेति चकारेण 'नस्तद्धिते ९८६' इत्यतस्तद्धितेऽनुकृष्यते, तदाह—**ईकारे तद्धिते चेति**॥(४३२) **औङः श्यामिति**। विभक्त्यपेक्षया स्त्रीलिङ्गनिर्देशः। नेदं वचनं कर्तव्यम्, 'विभाषा ङिश्योः ३४०' इत्यतः श्यामिति प्रकृतं, 'न संयोगात्-४८२'इत्यतो नेति च, तत्रापि संबन्धमात्रं कर्तव्यं यस्य ईकारे तद्धिते च लोपो भवति श्यां नेत्याकरः॥ (४३३) **जश्शसोः**—। जसा साहचर्यादिह सुबेव शस् गृह्यते। तेनेह न, कुण्डशो ददाति॥ (४३४) **शि सर्वनामस्थानम्**। महासंज्ञाकरणं पूर्वाचार्यानुरोधेन॥ (४३५) **नपुंसकस्य**-। 'इदितो नुम् धातोः ३०२६' इत्यतो नुमनुवर्तते। 'उगिदचाम्-३९९' इत्यतः सर्वनामस्थाने इति च। 'अङ्गस्य २७५' इति चाधिकृतम्। तथा च-झलज्भ्यां नपुंसकमङ्गं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह-**झलन्तस्येत्यादि**॥(४३६)**अद्ड्डतरादिभ्यः**—। पञ्चभ्य इति किम्, नेमं तिष्ठति। नेमं पश्य। डतरादयो डतरडतमेतरान्यान्यतरेति सर्वादिषु पठिताः॥**अद्ड्डादेशः स्यादिति**। जिघृक्षितादेशस्वरूपप्रतिपादनाय ष्टुत्वं न कृतम्॥ (४३७) **टेः**। 'ति विंशतेः-१२१६' इत्यतो डितीत्यनुवर्तते 'भस्य ३३४' इति चाधिकृतं तदाह-**डिति परे भस्येति**। भस्य किम्, पञ्चमः।अत्र डटो मडागमे भत्वाभावाट्टिलोपो न भवति।किन्तु पदत्वान्नलोप एव॥ अद्ड्डो डित्करणस्य प्रयोजनमाह-**टेर्लुप्तत्वादित्यादि**।ननु पूर्वसवर्णदीर्घाभावाय दादेश एव क्रियतां,किमद्ड्डादेशेनेत्याशङ्क्याह-**एङ्ह्रस्वादित्यादि**।दादेशे तु हे कतरेति स्यादि-

---

१ 'एङ्ह्रस्वात्-' इति सूत्रभाष्ये तु 'म्' इति च्छेदे 'सुपि च' इति दीर्घापत्तिरेवोक्ता। सन्निपातपरिभाषा तु 'सुपि च' इति दीर्घविषये न प्रवर्तत इति सामान्यापेक्षज्ञापनान्नात्र प्रवर्तत इति तदाशयः॥ २ **संयोगान्तलोपो झल इति**। मकारस्य संयोगान्तलोपमभिप्रेत्य 'द्विमकारको निर्देशः करिष्यते' इत्यमो महासूत्रे भाष्येण क्वचिदझलोऽपि संयोगान्तलोपाङ्गीकारात्सकलेष्टसिद्धौ चिन्त्यम्॥ ३ **रूपसिद्धेश्चेति**। जरसादेशाद् विभक्तिसंबन्धिकार्याणां प्राक् करणे संनिपातपरिभाषया जरसादेशाप्राप्तौ स्वमोर्द्वयोरपि 'अतिजरम्' इति रूपस्यैव भाष्यकृता स्वेष्टत्वकथनेन चिन्त्यमेवेति बोध्यम्॥ ४ **ष्टुत्वमिति**। जश् झशीत्यत्र जश्त्वमिवेति भावः। संयोगान्तलोपस्याप्युपलक्षणमिदमिति बोध्यम्॥ ५ **भत्वाभावादिति**। मडागमेऽजादित्वाऽभावेनेत्याशयः॥

संबुद्धिलोपश्च न भवति। हे कतरत्। पुनस्तद्वत्। शेषं पुंवत्। कतमत्। अन्यत्। अन्यतरत्। इतरत्। अन्यतमशब्दस्य तु अन्यतममित्येव॥ (४३८) वा॰ एकतरात्प्रतिषेधो वक्तव्यः॥ एकतरम्॥ सोरमादेशे कृते सन्निपातपरिभाषया न जरस्। अजरम्। अजरसी, अजरे। परत्वाज्जरसि कृते झलन्तत्वान्नुम्॥ (४३९) सू॰ सान्त महतः संयोगस्य।६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे। अजरांसि, अजराणि। अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस्। ततः सन्निपातपरिभाषया न लुक्। अजरसम्, अजरम्। अजरसी, अजरे। अजरांसि, अजराणि। शेषं पुंवत्॥ पद्दन्न इति हृदयोदकास्यानां हृद् उदन् आसन्। हृन्दि। हृदा। हृद्भ्यामित्यादि॥ उदानि। उद्ना। उदभ्यामित्यादि॥ आसानि। आस्ना। आसभ्यामित्यादि॥ मांसि। मांसा। मान्भ्यामित्यादि॥ वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमित्युक्तम्। अत एव भाष्ये मांसपचन्या उखाया इत्युदाहृतम्। अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न। पद्दन्न इत्यत्र हि छन्दसीत्यनुवर्तितं वृत्तौ तथाप्येपो भीत्यत्र मासश्छन्दसीति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचिदिति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम्॥ (४४०) सू॰ ह्रस्वो नपुंसके प्रातिपदिकस्य।१।२।४७। क्लीबे प्रातिपदिकस्याऽजन्तस्य ह्रस्वः स्यात्। श्रीपम्। ज्ञानवत्। श्रीपाय। अत्र सन्निपातपरिभाषया आतो धातोरित्याकारलोपो न।

---

ति भावः॥ **अन्यतमशब्दस्य त्विति**। एवं च 'सामान्यादिष्वन्यतमत्तमः' इत्यादिप्रयोगाः प्रामादिका एवेति भावः॥ **अजरमिति**। अविद्यमाना जरा यस्य तत्। 'गोस्त्रियोः-९५७' इत्युपसर्जनह्रस्वे 'अतोऽम् ४२९'॥ **परत्वादिति**। अजर शि इति स्थिते यद्यपि जरसादेशात्प्रागेव 'नपुंसकस्य झलचः ४३५' इत्यजन्तलक्षणो नुमागमः स्यात्स चाङ्गभक्तोऽङ्गमेव न व्यवदध्यात्। अवयवस्य तु जराशब्दस्य व्यवधायक एवेति निर्दिश्यमानस्यादेशो विधीयमानो न प्राप्नोति, तथापि 'यस्मादन्त्यादचः परस्तस्यैवान्तावयवो मित्स्यात्' इति स्वमते तु-'अवयवावयवः समुदायस्याप्यवयवः' इत्यभ्युपगमेन कथंचिज्जरसादेशे जातेऽपि सान्तत्वाभावात् 'सान्त महतः-४३९' इति दीर्घो न स्यादिति भावः॥ **(४३९) सान्त महतः**—। अत्र 'नोपधायाः ५०१' 'सर्वनामस्थाने चासंबुद्धौ ३५४' इत्यनुवर्तते। सान्तेति लुप्तषष्ठीकं संयोगान्तस्येत्यनेन समानाधिकरणमिति व्याचष्टे—**सान्तसंयोगस्येत्यादि**॥ **तस्योपधाया इति**। तत्पूर्वस्येत्यर्थः॥ **अमि लुकोऽपवादमित्यादि**। एतेन स्वमोरमादेशे कृते वा जरसिति प्राचो ग्रन्थः प्रत्युक्तः॥ **मांसपचन्या इति**। पच्यतेऽस्यामिति पचनी 'करणाधिकरणयोश्च ५१०९' इति ल्युट्। टित्त्वान्ङीप्। मांसस्य पचनी मांस्पचनी। अत्र ङसो लुका लुप्तत्वात्प्रत्यलक्षणं नेति प्रभृतिग्रहणस्य प्रकारार्थत्वं विना मांसशब्दस्य मांसित्यादेशो न सिध्येदिति भावः। ननु पृषोदरादिसूत्रे 'मांसस्य पचि युड्घञोः' इति वक्ष्यमाणत्वादन्तलोपेनाप्येतद्रूपं सिद्धमिति चेत्। अत्राहुः-'पृषोदरादीनि यथोपदिष्टम् १४८३' इत्यस्योत्तरपदाधिकारस्थत्वाल्ल्युडन्तं यदुत्तरपदं मांसपचनमित्यादि तत्रैवान्तलोपः स्यात्। अत्र हि ङीबन्तमुत्तरपदं, न तु युडन्तमिति नास्त्येवान्तलोप इति॥ **मासश्छन्दसीति**। मास्शब्दस्य तकारः स्याद्भादौ प्रत्यये छन्दसीति वार्तिकार्थः। 'माद्भिः शरद्भिः दुरोदरं तव' इत्युदाहरणम्॥ **(४४०) ह्रस्वो नपुंसके**—। इह ह्रस्वश्रुत्योपस्थितेनाच इत्यनेन प्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**अदन्तस्येति**। प्रातिपदिकस्याच इति वैयधिकरण्येन व्याख्यायां तु सुवाग् ब्राह्मणकुलमित्यत्रातिप्रसङ्गः स्यात्। एतच्च 'अचश्च ५८' इति सूत्र एवास्माभिः स्पष्टीकृतम्। प्रातिपदिकस्येति किम्, काण्डे। कुड्ये॥ **ज्ञानवदिति**। श्रीपाणीत्यादौ 'एकाजुत्तरपदे णः ४२७' इति णत्वं तु विशेषः। श्रीपेणेत्यत्रापीनादेशेन सहाद्गुणे कृते एकादेशस्य पूर्वान्तत्वेन ग्रहणात्, 'अचः परस्मिन्-७७' इति सूत्रे पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षाश्रयेण स्थानिवत्त्वाद्वा एकाजुत्तरपदत्वमस्तीति स्यादेव णत्वम्॥ **सन्निपातेति**। अवर्णमाश्रित्य कृतो यादेशः कथमवर्णलोपे निमित्तं स्यात्। न च 'सुपि च २८७' इति दीर्घार्थं सन्निपातपरिभाषाया अनित्यत्वाभ्युपगम आवश्यक एवेति वाच्यम्, 'कष्टाय-३५५३' इति निर्देशेन दीर्घविधौ अनित्यत्वाभ्युपगमेऽप्यवर्णलोपे कार्ये तदनभ्युपगमात्। कृतेऽपि दीर्घे ह्रस्वव्यत्तयपायेऽप्यत्वजातेरनपायादिति दिक्। एतेन श्रीपशब्दान्ङयि श्रीप्येति केषांचिद्व्याख्यानं

---

१ **अन्यतमशब्दस्य त्विति**। अन्यतरान्यतमशब्दयोरव्युत्पन्नत्वस्यैव प्रागुक्तत्वेन डतमान्तत्वाभावात्पञ्चत्वपरिगणनाच्चेति भावः॥ २ सर्वनामस्थानाव्यवहितपूर्वो यः सान्तसंयोगस्तस्य यो नकारस्तस्योपधाया इति वास्तवोऽर्थः। तेन हंसशिरांसीत्यत्र न हकाराकारदीर्घापत्तिः॥ ३ **परत्वाज्जरसिति**। विभक्तिसंबन्धिकार्याणां जरसादेशात्प्रबलत्वस्यैव 'जराया जरस्-' इति सूत्रे भाष्यकृता ध्वनितत्वेन, 'गोनर्दीयस्त्वाह-इष्टमेवैतत्संगृहीतं भवति-अतिजरम्, अतिजरैरिति' इति स्पष्टमुक्तत्वेन च चिन्त्यमिदमिति प्रथमावदेव रूपाणीति बोध्यम्॥ ४ **प्रातिपदिकस्येति**। क्लीबवदर्थे वर्तमानस्याजन्तस्येत्येव सामर्थ्यात्प्रातिपदिकलाभे प्रातिपदिकग्रहणं सत्त्वप्रधानप्रातिपदिकस्यैव ग्रहणार्थम्। तेन काण्डे, कुड्य इत्यादावेकादेशस्यान्तवद्भावेन प्रातिपदिकत्वेऽपि न ह्रस्वापत्तिरिति बोध्यम्॥

(४४१) स्वमोर्नपुंसकात् ।७।१।२३। क्लीबादङ्गात्स्वमोर्लुक् स्यात् । वारि ॥ (४४२) इकोऽचि विभक्तौ ।७।१।७३। इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ । वारिणी । वारीणि । न लुमतेति निषेधस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः । हे वारे, हे वारि । आङो ना । वारिणा । घेर्ङितीति गुणे प्राप्ते- ॥ (४४३) वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ॥ वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । नामीति दीर्घः । वारीणाम् । वारिणि । वारिणोः । हलादौ हरिवत् ॥ (४४४) तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ।७।१।७४। प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि । अनादये, अनादिने-इत्यादि । शेषं वारिवत् ॥ पीलुर्वृक्षस्तत्फलं पीलु तस्मै पीलुने । अत्र न पुंवत्, प्रवृत्तिनिमित्तभेदात् ॥ (४४५) अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ।७।१।७५। एषामनङ् स्याट्टादावचि स चोदात्तः । अल्लोपोऽनः । दध्ना । दध्ने । दध्नः २ । दध्नोः २ । दध्नि, दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षि । तदन्तस्याप्यनङ् । अतिदध्ना ॥ सुधि । सुधिनी । सुधीनि । हे सुधे, हे सुधि । सुधिया,

---

परास्तम् ॥ ( ४४१ ) **स्वमोर्नपुंसकात्** । अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य किमः कादेशस्य च बाधकः । परत्वाद्धि त्यदाद्यत्वे 'तदोः-५१७' इति सत्वे सोरम्भावे च सं कुलमिति स्यात् । इष्यते तु तत्कुलमिति ॥ ( ४४२ ) **इकोऽचि**—। विभक्तौ किम्, मधु मद्यं तस्येदं माधवम् । अत्र नुमि सति टिलोपः स्यात् ॥ ( ४४३ ) **वृद्ध्यौत्त्वेति** । अतिसखिनी इत्यत्र 'सख्युरसंबुद्धौ ३५८' इति णिद्वद्भावाद्वृद्धिः प्राप्ता, वारिणी इत्यत्र तु 'अच्च घेः ३५१' इत्यौत्त्वम् । प्रियक्रोष्टुनी इत्यादौ तृज्वद्भावः प्राप्तः ॥ ननु नुम्नुटोः को विशेषस्तत्राह—**नामीति दीर्घ इति** । नुमस्त्वङ्गभक्तत्वात्तस्मिन्सति दीर्घो न स्यादिति भावः ॥ ( ४४४ ) **तृतीयादिषु**—। यद्यत्र भाषितः पुमान् येन शब्देन स भाषितपुंस्कः शब्द इति विज्ञायेत, तदा पीलुने इत्यादावतिप्रसङ्गः स्यात्, अतो व्याचष्टे—**प्रवृत्तिनिमित्तैक्य इति** । अयं भावः-भाषितः पुमान् यस्मिन्नर्थे तद् भाषितपुंस्कं प्रवृत्तिनिमित्तं, तदस्यास्तीति अर्शआदित्वादच् । तेनैकस्मिन्प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दस्वरूपं तल्लभ्यत इति ॥ 'इकोऽचि विभक्तौ ४४२' इत्यतोऽचीत्यनुवर्तनादाह—**टादावचीति** । इगन्तं किम्, सोमपेन कुलेन । अचि किम्, ग्रामणिभ्यां कुलाभ्याम् । टादौ किम्, अनादिनी । अनादीनि ॥ **तत्फलमिति** । पीलोः फलं पीलु । 'फले लुक् २११६' इति ओरञो लुक् ॥ **प्रवृत्तिनिमित्तभेदादिति** । पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तम्, फले तु फलत्वव्याप्यजातिर्वृक्षविशेषप्रभवत्वं वा । उभयथापि पुंनपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भावः ॥ ( ४४५ ) **अस्थिदधि**—। 'इकोऽचि—४४२' इति नुमि प्राप्ते विधिरयम्, नकारादकार उच्चारणार्थः । नकारस्त्वन्तादेशार्थः । 'नब्विषयस्यानिसन्तस्य ५६०८' इति फिट्सूत्रेणास्थ्यादय एते आद्युदात्ताः । तत्रान्तस्यानुदात्तेकारस्य विधीयमानोऽनङ् 'स्थानेऽन्तरतमः ६२' इत्यनुदात्तः स्यादित्युदात्त उच्यते, तच्चोदात्तत्वमस्थनि दधनि इत्यादावल्लोपाभावपक्षे स्फुटम् । दध्ना दध्ने इत्यादावनङोऽकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः ५५१७' इत्युदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं प्रयोजनमिति बोध्यम् ॥ तृतीयादिष्वित्यनुवर्तते, अचीति च, तदाह—**टादावचीति** । टादौ किम्, दधिनी । दधीनि । अचि किम्, दधिभ्याम् ॥ **तदन्तस्यापीति** । अङ्गत्वादिति भावः ॥ **अतिदध्नेति** । दधि अतिक्रान्तेनेत्यर्थः । स्त्रियामतिदध्नेत्येव । सन्निपातपरिभाषया बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः । प्राचा तु—प्रियदध्ना ब्राह्मणेनेत्युक्तम् । स्त्रियां तु प्रियदध्न्या प्रियदध्न्यै इत्याद्यपि कैश्चिदुक्तम् । तदसत्, उरःप्रभृतिषु दधिशब्दस्य पाठाद्बहुव्रीहौ नित्यं कप्यनङः प्रसक्त्यभावात् । उक्तपरिभाषाभ्यां ङीपः प्रवृत्तेर्दूरादपास्तत्वाच्चेति दिक् ॥ **सुधिनी इति** । परत्वान्नुमा इयङ् बाध्यते ॥ **सुधियेति** । शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात् 'तृतीयादिषु—४४४' इति पुंवत्पक्षे नुमभावात् 'न भूसुधियोः ३८३' इति

---

१ **विभक्ताविति** । 'सुपि' इत्येव सिद्धे विभक्तिग्रहणं 'संज्ञाशब्दानां सर्वेषामर्थमात्रत्वम्' इति सूचनायेति परे ॥ २ **पक्षे इति** । 'इह किंचित् त्रपो' इति वार्तिकात्, 'एङ्ह्रस्वाद्—' इति सूत्रस्थात् 'हे त्रपु' इति भाष्याच्च रूपद्वयावगतिरिति भावः ॥ ३ **वृद्ध्यौत्त्वेति** । सखायौ, हरौ, क्रोष्ट्रोः, हरये इति वृद्ध्यादीनामवकाशः । नुमो वारिणी इति । न चौकारग्रहणं व्यर्थम्, तस्य वृद्धिपदेनैव संग्रहादिति वाच्यम्, गुणवृद्धिशब्दोपदानेन विहितादेशस्यैवात्र ग्रहणे तात्पर्यसूचकत्वात् । तेन तानि द्वयोः फलयोरित्यादौ त्यदाद्यत्वं बाधित्वा न नुम् ॥ ४ **पुंवदिति** । पुंसीव पुंवत् । तेन पुंसि यत्कार्यं जायते तज्जायते, यन्न जायते तन्नैव जायते, इति भावाभावयोरुभयोरप्यतिदेशात् पुंसि अभवतोर्ह्रस्वनुमोरभावस्यैवेहाप्यतिदेशेन न ह्रस्वनुमागमाविति बोध्यम् ॥ ५ **पूर्वविप्रतिषेधेनेति** । वस्तुतस्तु 'प्रत्ययोत्तरपदयोश्च' इत्येतज्ज्ञापकसिद्धस्य 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति न्यायस्य लुक्सामान्यविषयत्वे न कोऽपि दोषः । पूर्वविप्रतिषेधविषयस्य तत्र तत्र भाष्यवार्तिकयोः परिगणितत्वादिति बोध्यम् ॥

सुधिना ॥ प्रध्या, प्रधिना ॥ मधु । मधुनी । मधूनि । हे मधो, हे मधु । एवमम्ब्वादयः ॥ सानुशब्दस्य स्नुर्वा । स्नूनि । सानूनि ॥ प्रियक्रोष्टु । प्रियक्रोष्टुनी । तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम् । प्रियक्रोष्टूनि । टादौ पुंवत्पक्षे प्रियक्रोष्ट्रा, प्रियक्रोष्टुना । प्रियक्रोष्ट्रे, प्रियक्रोष्टवे । अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रियक्रोष्टुने । नुमचिरेति नुट् । प्रियक्रोष्टूनाम् ॥ सुलु । सुलुनी । सुलूनि । पुनस्तद्वत् । सुल्वा, सुलुना ॥ धातृ । धातृणी । धातृणि । हे धातः, हे धातृ । धात्रा, धातृणा । एवं ज्ञातृकर्त्रादयः ॥ (४४६) एच इग्घ्रस्वादेशे । १।१।४८। आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात् । प्रद्यु । प्रद्युनी । प्रद्यूनि । प्रद्युनेत्यादि । इह न पुंवत्, यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वा-

---

यणुनिषेधाच्चेयङ् ॥ प्रध्येति । अत्रापि प्रकृष्टज्ञानवत्त्वं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात् 'तृतीयादिषु—४४४' इति पुंवत्पक्षे यण् । नपुंसकपक्षे तु नुमिति बोध्यम् ॥ बह्वयः श्रेयस्यो यस्य तद्बहुश्रेयसी कुलमित्यत्र नपुंसकह्रस्वत्वं न, 'ईयसो बहुव्रीहेर्न१२७८' इति ह्रस्वमात्रस्य प्रतिषेधादित्येके ॥ अन्ये तूपसर्जनह्रस्व एव निषिध्यते । नपुंसकह्रस्वत्वं तु स्यादेव । बहुश्रेयसि बहुश्रेयसिनी इत्याहुः ॥ मध्विति । 'मधु मद्ये पुष्परसे' 'मधुर्वसन्ते चैत्रे च ।' इह पुंनपुंसकयोरेकं प्रवृत्तिनिमित्तं नास्ति, किन्तु मद्यत्ववसन्तत्वादिरूपं भिन्नभिन्नमेव । तथा च भाषितपुंस्कत्वाभावान्मधुने, मधुनः, मधुनोरित्येव भवति, न तु मधवे, मधोरित्यादीति दिक् ॥ स्नुर्वेति । 'मांसपृतनासानूनाम्—४१३' इति वार्तिककारोक्त्येति भावः । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्युभयलिङ्गः सानुशब्दः, तस्य नपुंसकत्वे रूपमाह—स्नूनि । सानूनीति । पुंसि तु स्नून् । सानून्—इत्यादि ॥ सुल्वेति । शोभनलवनकर्तृत्वं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात्पुंवत्पक्षे नुमभावात् 'ओः सुपि ३९३' इति यण् ॥ सुलुनेति । यणं बाधित्वा परत्वान्नुम् ॥ धात्रेति । धारणपोषणकर्तृत्वं पुंनपुंसकयोरेकमेवेति पुंवत्पक्षे यण् ॥ ( ४४६ ) एचः— । आदिश्यत इत्यादेशः ह्रस्वश्चासावादेशश्च ह्रस्वादेशः, निर्धारणे सप्तमी, जातावेकवचनमतो व्याचष्टे—आदिश्यमानेषु ह्रस्वेष्विति । एचां पूर्वभागोऽकारसदृशः उत्तरस्तु इवर्णोवर्णसदृशस्तत्रोभयान्तरतमस्य ह्रस्वस्याभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्याताम्, तथा च मा कदाप्यकारो भूदिति नियमार्थेयं परिभाषेत्यभिप्रेत्याह—इगेव स्यादिति । आन्तरतम्यादेकारैकारयोरिकारः । ओकारौकारयोस्तु उकारः । एकारान्तस्योदाहरणं तु—इः स्मृतो येन सः स्मृतेः, शोभनः स्मृतेः यस्य तत् सुस्मृतीत्यादि । एतच्च परिभाषासूत्रमपार्थकम् । तथा च वार्तिककृतोक्तं 'सिद्धमेङः सस्थानत्वात्' 'ऐचोश्चोत्तरभूयस्त्वात्' इति । अस्यार्थः—शब्दपरविप्रतिषेधेन एङ उत्तरभागान्तरतमौ इउवर्णावेवेति सिद्धम् । ऐचोश्चेति चकारो भिन्नक्रमः उत्तरभूयस्त्वाच्चेति हेतोरनन्तरं बोध्यः । अर्धमात्रा अवर्णस्य, अध्यर्धमात्रा इवर्णोवर्णयोरित्युत्तरभागाधिक्यान्मल्लग्रामादिवद्भूयसा व्यपदेशेनापि इकारोकारौ भविष्यत इति ॥ प्रद्युनेति । ननु प्रकृष्टस्वर्गवत्त्वादिकं यत्प्रवृत्तिनिमित्तं तत्पुंनपुंसकयोः समानमिति भाषितपुंस्कत्वात्पक्षे पुंवद्भावोऽत्र स्यादेवेत्याशङ्कायामाह—यदिगन्तमिति । एतच्च 'रा दाने' इति धातौ अतिरि ब्राह्मणकुलमिति प्रक्रम्य माधवेन स्पष्टीकृतम् । कथं तर्हि प्राचा—प्रद्युवा, प्रराया, सुनावेत्युदाहृतमिति चेदत्राहुः—प्रकृष्टस्वर्गवत्त्वादिप्रवृत्तिनिमित्तैक्यात्प्रद्योशब्दो भाषितपुंस्कः स एव इदानीमिगन्तस्तथा च प्रद्युशब्दोऽपि भाषितपुंस्क एव, एकदेशविकृतस्यानन्यत्वादतः पुंवद्भावो भवतीति । इत्थं च पुंवद्भाव

---

१ एच इगिति । 'एचो यु ह्रस्वादेशे' 'ध्वेचो ह्रस्वादेशे' 'ध्वेज्झस्वादेशे' इत्येव वा वक्तव्ये ज्ञानगुरुभूतम् इग्ग्रहणं स्वरूपोच्चारणतः प्रत्याहारनिर्देशे लाघवं सूचयति । 'एच इण्' इत्येव सिद्धे इग्ग्रहणम् 'इण् परेणैव' इति ज्ञापयति । इत्यपि कश्चित् ॥ २ अत्रारुचिबीजं तु 'गोस्त्रियोः—'इति सूत्रे, 'ईयसश्च' इति सूत्रे च, 'ईयसो बहुव्रीहौ पुंवद्वचनम्' इति पाठाद्, 'यथा पुंविषयकस्येकारस्य ह्रस्वो न भवति एवमीयसः परस्य' इति कैयटाच्च, पुंवत्त्वातिदेशविधानाच्च ह्रस्व इव शिशीनुमोऽपि निवर्तन्ते । तस्मात्पुंसीव क्लीबेऽपि बहुश्रेयस्यावित्यादीन्येव रूपाणीत्यवधेयम् ॥ ३ एचामिति । 'एकारादीनि संध्यक्षराणि' इति व्याकरणान्तराभिप्रायेणेदम् । वस्तुतस्तु—एङोरकारस्य प्रश्लिष्टत्वात् स्फुटावभासाभावान्न तदापत्तिः । अत एव प्रकृतसूत्रे वार्तिकेन एङंशे ह्रस्वसवर्णनिवृत्त्यर्थमैजंशेऽकारनिवृत्त्यर्थमित्येवेदं सूत्रं व्याख्यातम् ॥ ४ नियमार्थेयमिति । यथाप्राप्तमेव नियम्यते । तेन यथासंख्यं न ॥ परे तु—स्थानेऽन्तरतमपरिभाषा यथासंख्यपरिभाषाबाधिकेत्यत्रापीत्थं निर्देश एव ज्ञापक इति वदन्ति ॥ ५ शब्दपरेति । लक्ष्यगतपूर्वत्वपरत्वयोर्विप्रतिषेधसूत्रप्रवृत्तिनियामकत्वाभावस्यैव स्थानिवत्प्रकरणभाष्यसंमतत्वाच्चिन्त्यमिदम् । तस्मादत्र 'इकार इव तालव्य एकारः, उकार इवौष्ठ्य ओकारः' इति शिक्षान्तरमतमेव संमतं प्रत्याख्यातुरिति बोध्यम् ॥ ६ यद्यप्यत्र 'सवर्णनिवृत्त्यर्थेन तावन्नार्थः—' इत्यादिनोपसंहारभाष्येण सूत्रमफलमिति प्रतीयते, तथापि नैतत्सिद्धान्तभूतम्—एकारैकारयोरोकारौकारयोश्च तुल्यस्थानत्वस्यापाणिनीयत्वात् । भूयस्त्वस्याप्यनियतत्वात् । तथा हि 'प्लुतावैच इदुतौ' इत्यत्र भाष्यम्—यदि समः प्रविभागः—मात्राऽवर्णस्य मात्रेवर्णोवर्णयोः । अथ हि अर्धमात्रा अवर्णस्य, अध्यर्धमात्रा इवर्णोवर्णयोः । अथ हि—अध्यर्धमात्रा अवर्णस्य, अर्धमात्रा इवर्णोवर्णयोः' इति । एवं च वैपरीत्यस्याप्युपलम्भेनाकारनिवृत्तेर्दुःशकत्वात्सूत्रं नियमार्थमावश्यकमेवेति सूत्रकृत आशयः । यथोत्तरं मुनीनां प्रामाण्यस्योक्तत्वेन वार्तिककारोक्तं प्रत्याख्यानमेवाश्रयणीयमिति बोध्यम् ॥ ७ पुंवद्भाव इति । तेन सुन्दरभार्य इत्यादौ जातनिवृत्तेपि दृष्टत्वेनात्रापि तेन जातह्रस्वनिवृत्तिरिति प्राञ्चः । परे तु—न ह्रस्वनिवृत्तिः, पुंवद्भावोपजीव्येगन्तत्वविघातकत्वसंभवादित्याहुः ॥

भावात् । एवमग्रेऽपि ॥ प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतस्यानन्यत्वाद्रायो हलीत्यात्वम् । प्रराभ्याम् । प्रराभिः । नुमचिरेति नुड्यात्वे प्रराणामिति माधवः । वस्तुतस्तु–सन्निपातपरिभाषया नुटयात्वं न । नामीति दीर्घस्वारम्भसामर्थ्यात्परिभाषां बाधत इत्युक्तम् । प्ररीणाम् । सुनु । सुनुनी । सुनूनि । सुनुना । सुनुने–इत्यादि ॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

---

## अथ हलन्तपुँल्लिङ्गप्रकरणम् ।

(४४७) हो ढः ।८।२।३१। हस्य ढः स्याज्झलि पदान्ते च । हल्ङ्याबिति सुलोपः । पदान्तत्वाद्धस्य ढः । जश्त्वचर्त्वे । लिट्, लिड् । लिहौ । लिहः । लिहम् । लिहौ । लिहः । लिहा । लिड्भ्याम् । लिट्सु, लिट्त्सु ॥ (४४८) दादेर्धातोर्घः ।८।२।३२। उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । उपदेशे किम् । अधोगित्यत्र यथा स्यात् । दामलिहमात्मन इच्छति दामलिह्यति । ततः क्विपि दामलिट् । अत्र मा भूत् ॥ (४४९) एकाचो बशो भष् झषन्तस्य स्ध्वोः ।८।२।३७। धातोरवयवो य एकाच् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च । एकाचो धातोरिति सामानाधिकरण्येनान्वये त्विह न स्यात्-गर्दभमाचष्टे गर्दभयति । ततः क्विप् । णिलोपः । गर्धप् । झलीति निवृत्तम्, स्ध्वोर्ग्रहणसामर्थ्यात् । तेनेह न, दुग्धम् । दोग्धा । (४५०) व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः । जश्त्वचर्त्वे ।

---

एजन्तेषु क्लीबेषु माधवमते नास्ति, मतान्तरे त्वस्तीति बोध्यम् ॥ प्ररीति । प्रकृष्टो रा यस्य तत् प्ररीति । शोभना नौर्यस्य तत् सुनु ॥ इति तत्त्वबोधिन्यामजन्ता नपुंसकलिङ्गाः ॥

---

(४४७) हो ढः । 'झलो झलि ३०४८' 'पदस्य ५३९' 'स्कोः संयोगाद्योरन्ते च ५१६' इत्यतो झलीति पदस्यान्त इति चानुवर्तते । तदाह—**झलीत्यादि** । झलि परतः पदान्ते वा विद्यमानस्य हस्येत्यर्थः ॥ **लिडिति** । 'लिह आस्वादने' क्विप् ॥ **लिट्स्विति** । ढस्य जश्त्वेन डः, तस्य 'खरि च १८६' इति चर्त्वेन टः । तस्यासिद्धत्वात् 'चयो द्वितीयाः–१९८' इति पक्षे टस्य ठो न । सस्य ष्टुत्वं तु न भवति । 'न पदान्ताट्टोः–१७७' इति निषेधात् ॥ **लिट्त्स्विति** । ढस्य जश्त्वेन डकारे कृते चर्त्वस्यासिद्धत्वात्ततः प्रागेव 'डः सि–१९९' इति पक्षे धुट् । तस्य चर्त्वेन तकारः, ततो डस्य चर्त्वेन टः । धुटश्चर्त्वस्यासिद्धत्वात्पक्षे 'चयो द्वितीयाः–१९८' इति तस्य थो न । ष्टुत्वं तु तकारस्य न शङ्क्यमेव । 'न पदान्तात्–१७७' इति निषेधस्याधुनैवोक्तत्वादिति ॥ (४४८) **दादेर्धातोर्घः** । धातोरित्यावर्तते । तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह—**उपदेश इति** । उपदेशग्रहणस्याव्याप्त्यतिव्याप्तिपरिहारः फलमित्याह—**अधोगित्यादिना-अत्र मा भूदित्यन्तेन** ॥ (४४९) **एकाचो बशो-॥ झलीति निवृत्तमिति** । धुग्भ्यां धुक्ष्वित्यादौ पदान्त इत्येव भष्भावसिद्धेरिति भावः । प्राचा तु प्रातिपदिकस्य तु झलि पदान्ते चेति व्याख्यातम् । तत्प्रामादिकमेव, अधोक् अधोग्-इत्याद्यसिद्ध्यापत्तेः । प्रातिपदिकग्रहणस्याप्रकृतत्वाच्च ॥ (४५०)ननु धातोरवयव इति वैयधिकरण्येनान्वये क्विबन्तस्य दुहेः 'दादेः-४४८' इति घत्वेन झषन्तत्वेऽपि भष्भावो न स्यात् । दुघिति समुदायस्य यः पूर्वावयवो दु इत्येकाच् तस्य झषन्तत्वाभावात् । उघ् इत्युत्तरावयवे तु बशोऽभावादित्यत आह—**व्यपदेशिवद्भावेनेति** । न च धात्ववयवो धातुरित्येव व्यपदिश्यतां तथा च गर्धबिति सिध्येदिति वाच्यम्, अर्थवतां हि व्यपदेशिवद्भावः, न चावयवोऽर्थवानिति तस्य धातुत्वव्यपदेशासंभवात् ॥ **भष्भाव इति** । क्विपः प्राक्प्रवृत्ताया धातुसंज्ञाया निरपवादत्वे-

---

१ **ढ इति** । जश्त्वेन डकारस्य पुनरवश्यकरणीयत्वेऽपि ढविधानं लीढ इत्यादौ धत्वदीर्घार्थम्, धुडित्यादौ भष्भावार्थं चेति बोध्यम् ॥ २ **व्यपदेशिवदिति** । विशिष्टोऽपदेशो व्यपदेशो मुख्यव्यवहारः, सोऽस्त्यस्येति व्यपदेशी मुख्यव्यवहारवान् तेन तुल्यमित्यर्थः ॥ ३ **त्वस्तीतीति** । परे तु–'यस्मिन्नर्थे यादृगानुपूर्वीविशिष्टस्य पुंवृत्तित्वं तस्मिन्नेवार्थे तादृशानुपूर्वीविशिष्टस्यैव क्लीबवृत्तित्वे पुंवद्भावः' इति प्रत्यासत्त्या लब्धे नास्त्येतादृग्विषये पुंवद्भाव इत्याद्यवगत्यैव मनोरमायां भट्टोजिदीक्षितैः 'नातीव दुष्यति' इत्युपसंहारे 'अतीव' इत्युक्तमिति वदन्ति ॥ ४ **धातोरित्येति** । इदं चिन्त्यम्, धातोरित्यावृत्त्यौपदेशिकधातुलाभेन दामलिडित्यस्य व्यावृत्तौ सिद्धायामपि अधोगित्यस्य संग्रहो नैव स्याद् । अतो यथावृत्त्यैवेष्टसिद्धिकथनाग्रहस्तर्हि 'दादेः–' इत्यस्यावृत्त्यौपदेशिकदादिलाभः कार्यः । भाष्यकृता तु दुहादौ घत्वस्यासिद्धत्वेन प्राक् प्राप्तस्य ढत्वस्य सामान्यविहितस्य विशेषविहितेन घत्वेन बाधमङ्गीकृत्य ढत्वापत्तिं समाधाय 'अथ वा–एवं वक्ष्यामि–' 'हो ढोऽदादेः' इति । ततो 'धातोः' इति । दादेरित्यनुवर्तते, नेति निवृत्तम् इत्युक्तम् । तत्र धातोरिति सूत्रे दादिपदानुवृत्तौ फलाभावेन तदौपदेशिकदादिलक्षकं सामर्थ्यात् । अर्थाधिकारानुरोधाच्च पूर्वसूत्रे 'अदादेः' इत्यत्राप्युपदेशवद्दादिपरमेवेति दामलिडादौ ढत्वसिद्धिः । 'औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम्' इति परिभाषा तु नैव प्रामाणिकीति घसंज्ञासूत्रे भाष्ये ध्वनितम् ॥ ५ **उपदेशकालमिति** । औपदेशकालिकदादिमित्यर्थः ॥ ६ **अव्याप्त्येति** । अधोगित्यत्राव्याप्तिः, दामलिडित्यत्रातिव्याप्तिश्च स्यादौपदेशिकग्रहणाभावे इति भावः ॥

धुक्, धुग्। दुहौ। दुहः। षत्वचर्त्वे। धुक्षु॥ (४५१) वा द्रुहमुहष्णुहष्णिहाम्। ८। २। ३३। एषां हस्य वा घः स्याज्झलि पदान्ते च। पक्षे ढः। ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्, ध्रुड्भ्याम्। ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु। एवं मुहष्णुहष्णिहाम्॥ विश्ववाट्, विश्ववाड्। विश्ववाहौ। विश्ववाहः। विश्ववाहम्। विश्ववाहौ॥ (४५२) इग्यणः संप्रसारणम्।१।१।४५। यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात्॥(४५३) वाह ऊठ्। ६। ४।१३३। भस्य वाहः संप्रसारणमूठ् स्यात्॥ (४५४) संप्रसारणाच्च। ६।१।१०८। संप्रसारणादचि परे पूर्वरूपमेकादेशः स्यात्। एत्येधत्यूठ्सु। विश्वौहः। विश्वौहेत्यादि। छन्दस्येव ण्विरिति पक्षे णिजन्ताद्विच्॥

---

नावस्थितत्वात् 'दादेर्धातोः–४४८'इति घत्वे कृते झषन्तत्वादिति भावः॥धुगिति। 'दुह प्रपूरणे' क्विप्॥(४५१) वा द्रुह–। 'द्रुह जिघांसायाम्', 'मुह वैचित्त्ये', 'ष्णुह उद्गिरणे','ष्णिह प्रीतौ'।द्रुहेर्दादित्वान्नित्यं प्राप्तेऽन्येषामप्राप्ते उभयत्रविभाषेयम्। ननु द्रुहादयो दिवादिष्वेनैव क्रमेण पठ्यन्ते, तत्र 'वा द्रुहादीनाम्' इत्येवास्तु दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिस्तदन्तर्गणो द्रुहादिरस्तु। रधादिगणसमाप्तये स्निहधातोरनन्तरं वृत्करणस्य कृतत्वेनातिप्रसङ्गशङ्काया निरवकाशत्वात्। मैवं, तथाहि सति यङ्लुकि दोध्रुग् दोध्रुड्–इत्यादि न सिध्येत् 'निर्दिष्टं यद्गणेन च' इति निषेधात्॥ (४५२) इग्यणः–॥ यणः स्थाने इति। विधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाश्रयणान्नान्योन्याश्रयः॥ ननु यण्स्थानिकस्येकः संप्रसारणत्वे अदुहितरामित्यत्र लङो लकारस्य स्थाने उत्तमपुरुषैकवचनमिट्, तस्य यण्स्थानिकत्वेन संप्रसारणसंज्ञायां सत्यां 'हलः ३३९०' इति दीर्घः स्यात्। तरपं प्रति लङन्तस्याङ्गत्वादिति चेत्। अत्र कैयटः–यथासंख्यसंबन्धात्संप्रसारणसंज्ञाऽत्र न भवतीति। नन्वनुवादे परिभाषाणामनुपस्थानात्कथमिह यथासंख्यत्वलाभः। न चैवं स्थानेयोगोऽपि न लभ्येतेति वाच्यम्, 'षष्ठी स्थानेयोगा ६१' इत्यत्रैतत्सूत्रमनुवर्त्य व्याख्यायां तल्लाभात्। अत्राहुः–तन्त्रावृत्त्याद्याश्रयणेन 'संप्रसारणस्य १४४०' इति सूत्रे तद्भावितग्रहणाददुहितरामित्यत्र 'हलः ३३९०' इति लङ्स्थानिकस्येटः संप्रसारणस्य दीर्घो न भवति, लङ्स्थानिकस्येटः संप्रसारणशब्देनाभावितत्वात्। नन्वेवमप्यक्षद्युवौ, अक्षद्युव इत्यादौ ऊठः संप्रसारणसंज्ञायां 'संप्रसारणाच्च ४५४' इति पूर्वरूपं स्यादिति चेत् न, 'संप्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्तव्यम्' इति वार्तिककृतोक्तत्वात्, वार्णादाङ्गस्यं बलीयस्त्वाद्वा, उवङेव स्यात्। अत्र नव्याः–'ष्यङः संप्रसारणम्–१४३९' इत्यादिविधिप्रदेशेष्वेव 'यण इग्' इति पठित्वा संप्रसारणसूत्रं त्यक्तुं शक्यमित्याहुः॥ (४५३) वाह ऊठ्। 'एत्येधत्यूठ्सु १०८' इति विशेषणार्थष्ठकारो 'हलन्त्यम् ५' इतीत्संज्ञकः। अत्र 'भस्य ३३४' इत्यधिक्रियते, 'वसोः संप्रसारणम् ५८२' इत्यतोऽनुवृत्तं संप्रसारणमूठो विशेषणं तेनात्र 'अलोऽन्त्यस्य ६६' इति न भवति तदेतदाह—भस्य वाह इत्यादि। प्राचा तु–वाहो वाशब्दस्य संप्रसारणं स्यादित्युक्तं, तच्च फलितार्थकथनपरतया कथंचिन्नेयमित्याहुः॥ (४५४) संप्रसारणाच्च। 'अमि पूर्वः २७९' इत्यतः पूर्व इत्यनुवर्तते 'इको यणचि ७४' इत्यतोऽचीति च, 'एकः पूर्वपरयोः

---

१ धुगिति। 'अत्वसन्तस्य–'इति सूत्रेऽधातोरिति निषेधसामर्थ्यात् कारकं प्रत्यप्रधानभूतक्रियावाचकस्यापि धातुसंज्ञत्वाक्षतिरिति भावः॥ २ ध्रुगिति। धातोः स्वरूपग्रहणेन कार्यमुच्यमानं धातुविहितप्रत्यय एवेत्यर्थकेन 'धातोरुच्यमानं कार्यं तत्प्रत्यये भवति' इति परिभाषणेन तु प्रत्ययनिमित्तककार्य एव नियम इति प्रकृते पदान्तनिमित्तककार्ये नैव नियमप्रवृत्तिरिति प्रातिपदिकप्रत्ययेऽपि प्रवृत्तिरिति भावः॥ ३ वाह ऊठ् इति। अत्र 'वाह ऊट्' इति टवर्गप्रथमान्त एव 'एत्येधत्यूट्सु' इत्यत्रैव पाठः। अत एव प्रकृतसूत्रे 'ऊडादिः कस्मान्न भवति। आदिष्टिद् भवतीत्यादि प्राप्नोति' इति भाष्यं संगच्छते। 'च्छ्वोः शूड्–' इत्यत्र भाष्ये ठित्वमस्य सिद्धान्तितम्, तथापि 'वाह ऊट् श्वयुवमघोनाम्'–इति संहितापाठे 'खरि च' इति चर्त्वेन व्यस्तपाठे जश्त्वचर्त्वाभ्यां टकारस्यैव साधुत्वान्वाख्यानात्॥ एवं टकारपाठस्य भाष्यसंमतत्वे सौत्रत्वेन चर्त्वाभावकथनं त्वाग्रहग्रहाकुलचेतस्त्वसूचनायैवेति केचित्॥ परे तु—संहितापाठे टित्त्वपक्षे 'चयो द्वितीयाः' इत्यनेन ठकारश्रवणम्। ठित्त्वपक्षेऽविकृतश्रवणाय 'झलां जश् झशि' जश्त्वमिव न चर्त्वमिति। एवमेव 'एत्येधत्यूठ्सु' इत्यत्रापीत्येवं द्वितीयवर्णपाठं समर्थयन्तीति शम्॥ ४ णिजन्ताद्विजिति। इदं च विचो वेदविषयत्वमनभ्युपगच्छतां मतेन बोध्यम्। वस्तुतस्तु—'नैतेभ्यो विज् दृश्यते'इत्येवं यत्र तत्र वदता कैयटेनापि विचो दृष्टानुविधिकवेदविषयत्वस्यैव सूचितत्वान्नात्र विच्कल्पने दृढतरं मानमिति चेत्। अत्र विच्पदं क्विप उपलक्षणम्। न चैवं क्विपः कित्त्वेन 'वचिस्वपि--' इति संप्रसारणे वाह ऊडिति सूत्रमेव व्यर्थं स्यात्सर्वनामस्थानेऽपि संप्रसारणापत्तिश्चेति वाच्यम्, 'यजादीनां विहिते किति' इत्येवं व्याख्यानस्य 'अचः परस्मिन्–' इति सूत्रे भाष्यकृतोक्तत्वेन तद्वारणस्य सूपपादत्वात्। 'क्नौ विधिं प्रति–' इत्यस्य न प्राप्तिः, प्रतिपदोक्ततया क्विशब्दमुच्चार्य विहितनिधेरेव तत्र ग्रहणात्। 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति सूत्रभाष्ये 'प्रष्ठौह आगतम्' इति लौकिकविग्रहदर्शनेनान्यत्रापि 'ण्विः' इति कथनं तु 'अस्त्यप्रयुक्तः' इत्यधिकरणस्थभाष्यविरुद्धमेव। 'अभ्यन्तरोऽहं लोके, न त्वहं लोकः' इत्युपसंहारेण स्वोक्तेर्लौकभिन्नत्वस्य तत्र प्रतिपादनात्, वेदाङ्गत्वेन त्रिमुनिवाक्यानां छन्दोवत्त्वकल्पनस्यैव कर्तुं शक्यत्वाच्च॥ ५ निषेधादिति। अजर्घा इति भाष्योदाहरणेनोक्तपरिभाषायाः प्रामाणिकत्वे 'एकाच उपदेशे–' इत्यत्रत्यैकाज्ग्रहणज्ञापितत्वेन सपादसप्ताध्यायीस्थत्वेन तद्दृष्ट्या त्रैपादिकस्यासिद्धत्वेन न व्यावृत्तिरिति विभाव्यते, तर्हि पूर्वपरावरदक्षिणादिपाठवत् स्पष्टार्थमेव स्वरूपेण निर्देश इति बोध्यम्॥ ६ लाभ इति। किंचेह यथासंख्यस्याभीष्टत्वे यथासंख्यार्थम् लृकारोपदेशस्याप्यावश्यकत्वे तत्प्रत्याख्यानपरभाष्यवार्तिकविरोधः इत्यपि बोध्यम्॥ ७ त्यक्तुं शक्यमिति। अत एव व्यर्थं सत्तद्बोधयति संप्रसारणशब्देन विहितानामेव संप्रसारणसंज्ञेति। तेन न काप्यनुपपत्तिरिति॥

( ४५५ ) सू **चतुरनडुहोरामुदात्तः** । ७ । १ । ९८ । अनयोराम् स्यात्सर्वनामस्थाने स चोदात्तः ॥ ( ४५६ ) सू **सावनडुहः** । ७ । १ । ८२ । अस्य नुम् स्यात्सौ परे । आदित्यधिकारादवर्णात्परोऽयं नुम् । अतो विशेषविहितेनापि नुमाऽऽम्न बाध्यते । अमा च नुम् न बाध्यते । सोर्लोपः । नुम्विधिसामर्थ्याद्वसुस्रंस्विति[2] दत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो[1] न । अनड्वान् ॥ ( ४५७ ) सू **अम् संबुद्धौ** । ७ । १ । ९९ । चतुरनडुहोरम् स्यात्संबुद्धौ । आमोऽपवादः । हे अनड्वन् । अनड्वाहौ । अनड्वाहः । अनडुहा ॥ ( ४५८ ) सू **वसुस्रंसुध्वंस्वनडुहां दः** । ८।२।७२। सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम् । विद्वान् । पदान्ते इति किम् । स्रस्तम् । ध्वस्तम् ॥ (४५९) सू **सहेः साडः सः** ।८।३।५६। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् । तुराषाट्,तुराषाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यामित्यादि । तुरं सहत इत्यर्थे छन्दसि सह इति ण्विः । लोके तु साहयतेः क्विप् ।अन्येषामपीति पूर्वपदस्य दीर्घः ॥(४६०) सू **दिव औत्** ।७।१।८४। दिविति प्रातिपदिकस्य

---

१०३' इति चाधिक्रियते । तदाह—**संप्रसारणादचीत्यादिना** ॥ **छन्दस्येव ण्विरिति** । 'वहश्च ५२३८' इति सूत्रे 'भजो ण्विः ३९७६' 'छन्दसि सहः ५२३७' इत्यतो ण्विप्रत्ययस्य छन्दसीत्यस्य चानुवृत्तेरिति भावः ॥ स्यादेतत् । 'वाहः' इत्येव सूत्रमस्तु संप्रसारणमेवात्र विधीयतां, तस्य लघूपधगुणे कृते 'वृद्धिरेचि १०७' इति वृद्धौ सिद्धं विश्वौह इत्यादि, किमूठ्ग्रहणेन । सत्यम् । एवं स्थिते क्रियमाणमूठ्ग्रहणं बहिरङ्गपरिभाषां ज्ञापयति । तस्यां हि सत्यां जातस्य बहिरङ्गस्य संप्रसारणस्यासिद्धत्वादन्तरङ्गो गुणो न स्यादिति भाष्ये स्थितम् । न चानकारान्तोपपदेऽकारान्तोपसर्गोपपदे च रूपे विशेषः स्यादिति कथमूठ्ग्रहणं ज्ञापकमिति चेत् । अत्राहुः कैयटादयः—भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले[4] ण्विप्रत्ययाभावोऽनुमीयत इति । एतेन भुवं वहतीति भूवाट् । भूहः । भूहा । प्रौहः । प्रौहेत्यादिप्रयोगाः परास्ताः ॥ (४५५) **चतुरनडुहोः**—। 'इतोऽत्सर्वनामस्थाने ४९६' इत्यतोऽनुवर्तनादाह—सर्वनामस्थान इति ॥ ( ४५६ ) **सावनडुहः** । 'आच्छीनद्योः—५९९' इत्यतो नुममनुवर्त्याह—**नुम् स्यादिति** । विशेषविहितेन यासुटा सामान्यविहितः सीयुडिव नुमा आम् बाध्यतामित्याशङ्कां निराकरोति—**अवर्णात्परोऽयमित्यादिना** । उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभावो नेति भावः ॥ **अमा चेति** । विशेषविहितेनापीत्यनुषज्यते । 'आमा च नुम्न बाध्यते' इति केचित्पठन्ति । तस्यायमर्थः—बह्वनड्वांहीत्यत्र परत्वादामि कृते पुनःप्रसङ्गविज्ञानात् 'नपुंसकस्य झलचः ४३५' इति नुम् भवत्येव, न तु बाध्यत इति ॥ नुमो दत्वमाशङ्क्याह—**नुम्विधिसामर्थ्यादित्यादि** । विधानसामर्थ्यात्सर्वत्राविकृतेन नुमा भवितव्यमिति भावः । नन्वेवमनड्वांस्तत्रेत्यत्र 'नश्छवि—२१३' इति रुत्वमपि न स्यादिति चेत् । अत्राहुर्भाष्यकाराः—यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यत इति । भवति हि दत्वं प्रति नुमो विधिरनर्थकः, रुत्वं प्रति तु निमित्तमेवेति ॥ **अनड्वानिति** । अनः शकटं वहतीति विग्रहे अनसि वहेः क्विप्, अनसो डश्च । यजादित्वात्संप्रसारणम् । अनडुह् स् इति स्थिते आम्नुम्सुलोपेषु कृतेषु संयोगान्तलोपेन हकारलोपः ॥ ( ४५८ ) **वसुस्रंसु**—। वस्विति प्रत्ययः, तेन तदन्तं ग्राह्यम् ॥ 'ससजुषोः—३४२' इति सूत्रात्सेत्यनुवर्तते, तच्च वसोरेव विशेषणं, न तु स्रंसुध्वंसोरव्यभिचारात्[6] । नाप्यनडुहः, असंभवादित्यभिप्रेत्याह—**सान्तवस्वन्तस्येति** ॥ ( ३५९ ) **सहेः साडः सः** । सहेरिति किम्, सह डेन वर्तते सडः । यस्य नाम्नि डशब्दोऽस्ति यथा मृड इति । सडस्यापत्यं साडिः ॥ इति हान्ताः ॥ ( ४६० ) **दिव औत्** । तकार उच्चारणार्थः[7] ॥ **प्रातिपदिकस्येति** । अव्युत्पन्नस्य 'दिवेर्डिविः' इति न्यासोहितसूत्रेण व्युत्पन्नस्य वा ग्रहणं, न तु 'दिवु क्रीडादौ'

---

१ **संयोगान्तलोपस्येति** । हस्थानिकस्येत्यादिः । आसिद्धत्वादिति । नकारस्य प्रातिपदिकसंज्ञकपदान्तत्वाभावादिति शेषः ॥ २ 'दुः' इति पाठे उकारस्येत्संज्ञायामुगित्त्वेनैव अनड्वान् अनड्वन् इत्यत्र नुमि सिद्धे '**सावनडुहः**' इति व्यर्थमिति तु न शंक्यम्, अस्य द्वादेशस्य त्रैपादिकत्वेनासिद्धत्वादेतद्विषये नुमोऽप्राप्तेः ॥ स्रत् ध्वदित्यादौ नुमापत्तिस्तु 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति नियमाद्वारणीया । यदि तु—अयं धातोरुगित्त्वेन न क्रियते, किन्तु आदेशोगित्त्वेन—इति विभाव्यते, तर्हि उखास्रदित्यादौ ङीबापत्तिरपि दुर्वारा स्यादिति सारम् ॥ ३ न च '**ऊडिदम्**—'इत्यत्रोठो ग्रहणार्थमावश्यकमिति वाच्यम्, तत्र वाहग्रहणे कृते '**ऊठ्युपधाग्रहणम्**' इति वार्तिकस्याप्यनावश्यकत्वेन लाघवात् सर्वेष्टसिद्धेः । ४ **तादृशस्थल इति** । वेदादृष्टप्रयोगविषय इत्यर्थः । 'दित्यवाट् च मे दित्यौही च मे, प्रष्ठवाट् च मे, प्रष्ठौही च मे' इति वेदे दृष्टस्यैव प्रष्ठवाट्शब्दस्य कृतौठः प्रष्ठौह आगतामित्युदाहरणदानात्, विश्ववाड्भारवाट्शब्दादीनामपि प्रयोगे प्रमाणभूतं क्वाचित्कं छान्दसं प्रयोगमन्वेषयन्तु धीमन्तो भाष्यानुयायिनः ॥ ५ **प्रत्यय इति** । व्याख्यानादिति भावः ॥ ६ **अव्यभिचारादिति** । न च स्रंसुध्वंस्वोर्विचि संयोगान्तलोपे व्यभिचार इति वाच्यम्, विचो दृष्टानुविधिच्छन्दोविषयत्वेन वेदे दर्शनमन्तराऽन्यत्रानभिधानात् ॥ ७ **उच्चारणार्थ इति** । इत्संज्ञायामपि लोपातिरिक्तस्वरितत्वादिफलाभावार्थः । 'तिति प्रत्ययग्रहणम्' इति वार्तिकेन स्वरिताप्राप्तेः । उच्चारणार्थानामपि लोपप्रयोजकेत्संज्ञामन्तरेण निवृत्तेर्दुःशकत्वम्, अनुबन्धानामेकान्तत्वपक्षे 'दिव औत्' इत्यादीनां सर्वादेशत्वापादनस्य द्युभ्यामित्यादौ तित्त्वप्रयुक्तस्वरितापादनस्य चासंगतत्वापत्तिश्च स्यादिति लोपार्थमित्संज्ञाऽवश्यमङ्गीकरणीयेति भावः ॥

औत्स्यात्सौ परे। अल्विधित्वेन स्थानिवत्त्वाभावाद्धल्ङ्याबिति सुलोपो न। सुद्यौः। सुदिवौ। सुदिवः। सुदिवम्। सुदिवौ॥ (४६१) (सू) दिव उत्।६।१।१३१। दिवोऽन्तादेश उकारः स्यात्पदान्ते। सुद्युभ्याम्। सुद्युभिः॥चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः २॥(४६२) (सू) षट्चतुर्भ्यश्च।७।१।५५। षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यात्। णत्वम्। द्वित्वम्। चतुर्ण्णाम्॥ (४६३) (सू) रोः सुपि।८।३।१६। सप्तमीबहुवचने परे रोरेव विसर्जनीयो नान्यरेफस्य। षत्वम्। षस्य द्वित्वे प्राप्ते-।(४६४) (सू) शरोऽचि।८।४।४९। अचि परे शरो न द्वे स्तः। चतुर्षु। प्रियचत्वाः। हे प्रियचत्वः। प्रियचत्वारौ। प्रियचत्वारः। गौणत्वे तु नुट् नेष्यते। प्रियचतुराम्। प्राधान्ये तु स्यादेव। परमचतुर्ण्णाम्। कमलं कमलां वा आचक्षाणः कमल्। कमलौ। कमलः। षत्वम्। कमल्षु॥(४६५) (सू) मो नो धातोः।८।२।६४। धातोर्मस्य नः स्यात्पदान्ते। नत्वस्यासिद्धत्वान्नलोपो न। प्रशाम्यतीति प्रशान्। प्रशामौ। प्रशामः। प्रशान्भ्यामित्यादि॥(४६६) (सू) किमः कः।

---

इति धातोः, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया। तेनाक्षद्यूरित्यादौ न भवति। न च तत्रान्तरङ्गत्वादूठेव स्यान्न तु औत्वप्रसक्तिरिति वाच्यम्, ऊठि कृतेऽप्येकदेशविकृतन्यायेन 'दिव औत् ४६०' इत्यस्यापि प्रसक्तिसंभवादिति दिक्॥ (४६१) **दिव उत्**। तपरकरणमिह द्युभ्यामित्यादावुकारस्य संप्रसारणत्वात् 'हलः ३३९०' इति दीर्घे प्राप्ते तन्निवारणायेत्याहुः॥ इति वान्ताः॥**चत्वार इति**।'चतेरुरन् ४९४२' इत्युरन्प्रत्ययान्तश्चतुर्शब्दः।ततो जसि 'चतुरनडुहोः-४५५' इत्याम्॥ (४६२) **षट्चतुर्भ्यश्च**। बहुवचननिर्देशादर्थस्य प्राधान्यं विवक्षितम्। अर्थाच्चामः परत्वं शब्दद्वारकं, तेन तदन्तविधौ सत्यपि परमचतुर्ण्णामित्यादावेव भवति न तु बहुव्रीहौ, तदेतद्वक्ष्यति-'गौणत्वे तु नुट् नेष्यते' इत्यादिना॥ **द्वित्वमिति**।'अचो रहाभ्याम्-९०' इत्यनेन॥ (४६३) **रोः सुपि**। सुपीति न प्रत्याहारः, खरीत्यनुवृत्तेः। तेन पयोभ्यामित्यादौ विध्यर्थमेतन्न भवति। 'खरवसानयोः-११८' इत्येव सिद्धेऽयमारम्भो नियमार्थमित्याह--**रोरेवेति**।'रोः सुप्येव विसर्जनीयः' इति विपरीतनियमस्त्विह न भवति, 'हलोऽनन्तराः संयोगः ५३' इत्यादिनिर्देशात्॥ (४६४)**शरोऽचि**। 'अचो रहाभ्याम्-९०' इत्यतो द्वे इति 'नादिन्याक्रोशे-८४'इत्यतो नेति चानुवर्तत इत्याह—**न द्वे स्त इति**। नन्वस्तु द्वित्वमेकस्य 'झरो झरि सवर्णे १०६' इति लोपे सिद्धमिष्टम्। मैवम्, लोपस्य वैकल्पिकत्वेन पक्षे द्वयोः श्रवणप्रसङ्गात्। प्रियाः चत्वारश्चत्वारि वा यस्य स प्रियचत्वाः। आङ्गत्वात्तदन्तस्यापि 'चतुरनडुहोः-४५५' इत्याम्। हे प्रियचत्व इत्यत्र तु 'अम् संबुद्धौ ४५७' इत्यम्॥इति रान्ताः॥ **कमलामिति**। 'कमला श्रीर्हरिप्रिया' इत्यमरः॥ **कमलिति**।'तत्करोति तदाचष्टे३४१७'इति णिचि इष्ठवद्भावाट्टिलोपः।णिजन्तात्क्विपि 'णेरनिटि३०८८'इति णिलोपः। एवं सलिलमाचक्षाणः सलिल् सलिलौ सलिल इत्यादि बोध्यम्। नन्वेवं तोयमाचक्षाणस्तोय् तोयौ तोय इति यान्ता अपि सुसाधाः। न च 'वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन'इति यलोपः शङ्क्यः, 'लोपो व्योर्वलि१२५४'इति लोपे कर्तव्ये णिलोपस्य टिलोपस्य वा स्थानिवद्भावेन यकारस्य वल्परत्वाभावादिति चेन्मैवम्,'न पदान्त-७८' इति सूत्रेण यलोपे स्थानिवद्भावनिषेधात्। तस्मात् 'लोपो व्योर्वलि १२५४' इति यलोपः स्यादेवेति यान्ता नोक्ताः॥ इति लान्ताः॥(४६५) **पदान्त इति**। प्राचा तु झलीत्यप्युक्तं, तन्निष्फलत्वादुपेक्ष्यम्॥ **प्रशानिति**।'शम उपशमे' क्विप्। 'अनुनासिकस्य क्वि-३५४५' इति दीर्घः॥ (४६६) **किमः कः**। 'कायतेर्डिमिः ४८०३' इति डिमिप्रत्यये निष्पन्नः

---

१ **चतुरिति**। न च षकारनकारान्तयोरिव रेफान्तस्यापि षट्संज्ञायां नुट्, किं चतुर्ग्रहणेनेति वाच्यम्, चत्वारः चतुर इत्यत्र जश्शसोर्लुगापत्तेः। 'षड्भ्यो लुगरः' इत्येवं करणेऽपि पदलाघवाभाव एव, नुड्विधौ 'षट्त्रिचतुर्भ्यः' इति स्वरविधौ च चतुरोऽग्रहणे पदद्वयाकरणेन षट्संज्ञासूत्रे रकारोच्चारणे लुग्विधौ 'अरः' इति 'रो न' इति वा कृते पदत्रयकरणेन पदाधिक्येन गौरवापत्तेरिति बोध्यम्॥ २ **णत्वं द्वित्वमिति**। 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्य तु 'द्वित्वदृष्ट्याऽन्यदसिद्धं न' इत्येवार्थो न तु द्वित्वस्यासिद्धत्वं नेति। ततश्च णत्वदृष्ट्या द्वित्वस्यासिद्धत्वात्पूर्वं णत्वम्, तदुत्तरमेव द्वित्वमिति भावः॥ ३ **षत्वमिति**। रेफरूपेणः परत्वादिति भावः॥ ४ **द्वित्वे प्राप्त इति**। अचो रहाभ्यामित्यनेन॥ ५ **नेष्यते इति**। वस्तुतस्तु-अत्र नुटोऽप्रवृत्तौ न दृढतरं प्रमाणमस्ति। बहुवचनस्य 'तिसृभ्यो जसः' इत्यादाविवोपपत्तिरिति बोध्यम्॥ ६ **कमलिति**। न च 'न हि पदान्ताः परेऽणः सन्ति' इति लण्सूत्रभाष्यविरोध इति वाच्यम्। 'ननु चायमस्ति कर्तृ, हर्तृ, इत्युक्त्या 'हरौ, भानौ' इत्यनुक्त्या तस्य भाष्यस्य 'सर्वनामस्थाने चासंबुद्धौ' इत्यादिसौत्रनिर्देशस्य 'न य्वाभ्यां पदान्ताभ्यां—' 'यणः प्रतिषेधः-' इत्यादीनामनुपपत्त्या बाधितत्वात्। अबाधितत्वाग्रहे तु 'अवसाने प्रतिपदोक्ताः' इत्यध्याहारेण लाक्षणिकानां पदान्ते सत्त्वेऽपि विरोधाभावात्। 'पदान्ता ऐचो यो रेफो वा न संभवन्ति' इत्यभिप्रायवर्णनं तु 'भानौ दध्यत्र चतुर्भिः' इत्यादौ पदान्त ऐचो यकाररेफयोश्च सत्त्वस्य सर्वसंमतत्वेनासंगतमेवेति वदन्ति॥ ७ **प्राप्त इति**। संप्रसरणशब्दे तद्भावितग्रहणस्यैव सिद्धान्तितत्वान्न दीर्घप्राप्तिः। दीर्घस्य बहिरङ्गासिद्धत्वेन चिकीर्षतीत्यादौ त्रैपादिकासिद्धस्य दीर्घस्येव न व्यावृत्तिः। अत एव द्यूच इत्यादौ 'चौ' इति दीर्घः सिद्ध इति बोध्यम्॥ ८ **शब्दद्वारकमिति**। प्रधानीभूतषडर्थवाचकशब्दात्परत्वमेवात्राभिप्रेतमिति भावः। वस्तुतस्तु-द्विवचननिर्देशे गौरवात्, समाहारेण सर्वत्र सूत्रेषु निर्देशादर्शनाच्च, षट्संज्ञकानां बहुत्वाच्च बहुवचनोपपत्तिः। 'तिसृभ्यो जसः' इतिवत्॥

७।२।१०३। किमः कः स्याद्विभक्तौ। अकच्सहितस्याप्ययमादेशः। कः। कौ। के। कम्। कौ। कान्-इत्यादि सर्ववत्॥ (४६७) इदमो मः।७।२।१०८।इदमो मः स्यात्सौ परे। त्यदाद्यत्वापवादः॥(४६८) इदोऽय् पुंसि।७।२।१११। इदम इदोऽय् स्यात्सौ पुंसि। सोर्लोपः। अयम्। त्यदाद्यत्वं पररूपत्वं च॥(४६९) दश्च।७।२।१०९।इदमो दस्य मः स्याद्विभक्तौ। इमौ। इमे। त्यदादेः संबोधनं नास्तीत्युत्सर्गः॥(४७०) अनाप्यकः।७।२।११२। अककारस्येदम इदोऽन् स्यादापि विभक्तौ।आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः।अनेन॥(४७१) हलि लोपः।७।२।११३।अककारस्येदम इदो लोपः स्यादापि हलादौ ॥(४७२) नाऽनर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे॥(४७३) आद्यन्तवदेकस्मिन्।१।१।२१।एकस्मिन् क्रियमाणं कार्यमादाविवाऽन्त इव स्यात्।आभ्याम्॥(४७४) नेदमदसोरकोः।७।१।११।

---

किमूशब्दः ॥ विभक्ताविति। 'अष्टन आ विभक्तौ ५०२' इत्यतोऽनुवर्तत इति भावः। नन्वत्र 'इमः' इत्येव सूत्र्यताम्। तेन तिमष्टिमादीनां क्विवन्तानामतिप्रसङ्गवारणाय त्यदादीनामित्यनुवर्त्य त्यदादीनामिमः अः स्यादिति व्याख्यास्यते, [ तदा ] द्विशब्दात्प्राक् किमूशब्दस्य पाठः कर्तव्यः। 'नाऽनर्थके-४७२' इति निषेधादारम्भसामर्थ्याच्चालोऽन्त्यविधिर्न भविष्यति, तत्किं कादेशेनेत्यत आह—अकच्सहितस्यापीति। इमोऽकारविधौ तु साकच्कस्य कर्के इति रूपं स्यादिति भावः॥ नन्वेवं गणकार्यत्वाभावादुपसर्जनेऽपि स्यात्। नैवम्, त्यदादीनामित्यनुवर्त्य त्यदादीनां किम इति व्याख्यानात्॥ ( ४६७ ) इदमो मः। 'इन्देः कमिर्नलोपश्च ४८०२' इदम्॥ 'तदोः सः सौ-५१७' इत्यतोऽनुवर्तनादाह—सौ पर इति॥ ( ४६८ ) इदोऽय्-। पुंसीति किम्, इयं स्त्री॥ त्यदादेः संबोधनं नास्तीति। प्रचुरप्रयोगादर्शनमेवात्र मूलम्॥ उत्सर्ग इति। तेन 'तदोः सः सौ-५१७' इति सूत्रे 'अनन्त्ययोरिति किं हे स' इति भाष्यं, भो अच्युत भवन्नच्युतेत्यादिप्रयोगाश्च न विरुध्यन्त इति भावः॥ ( ४७० ) अनाप्यकः। आबिति प्रत्याहारो न तु टाप्, विभक्ताविति विशेषणादतो व्याचष्टे—टा इत्यारभ्य सुपः पकारेणेति॥ ( ४७२ ) नाऽनर्थकेऽलोऽन्त्यविधिरिति। नन्वेवं बिभर्ति पिपर्तीत्यादौ 'भृञा-मित् ३३१४' 'अर्तिपिपर्त्योश्च ३३११' इतीत्वं सर्वस्याभ्यासस्य स्यात्। द्वित्वाभावे केवलस्यार्थवत्त्वेऽपि द्वित्वे सति समुदायस्यैवार्थवत्त्वादित्याशङ्कायामाह—अनभ्यासविकार इति। ( ४७३ ) आद्यन्तवत्—। 'सत्यन्यस्मिन् यस्य पूर्वो नास्ति स आदिः' 'सत्यन्यस्मिन्यस्य परो नास्ति सोऽन्तः' इति लोके प्रसिद्धम्, तदुभयमेकस्मिन्नसहाये न संभवतीति तत्राद्यन्तव्यपदिष्टानि कार्याणि न स्युरतोऽयमतिदेश आरभ्यते। न च परत्वात् 'सुपि च २७७' इति दीर्घे पश्चाद्धलि[४७] लोपे सत्याभ्यामित्यादि सिध्यतीति किमत्राद्यन्तवत्सूत्रोपन्यासेनेति शङ्क्यम्, नित्यत्वात् 'हलि लोपः४७१' इत्यस्य दीर्घात्पूर्वमेव प्रवृत्तेः॥ एकस्मिन्नित्युपमेये सप्तमीदर्शनात्सप्तम्यर्थ एव वतिरित्यभिप्रेत्याह—आदाविवान्त इवेति। आदिवत् किम्। औपगवः। अत्राण आद्युदात्तत्वं यथा स्यात्। भाष्ये त्वाद्यन्तवदित्यपनीय 'व्यपदेशिवदेकस्मिन्' इति सूत्रमूहितम्। विशिष्टोऽपदेशो व्यपदेशः। मुख्यो व्यवहारः सोऽस्यास्तीति व्यपदेशी मुख्य इति यावत्। तेन तुल्यमेकस्मिन्नसहायेऽपि कार्यं स्यादित्यर्थः। तेन इयाय आरेत्यादौ 'एकाचः-२९२९' इति द्वित्वं सिध्यति। अन्यथा आद्यन्तोपदिष्टत्वाभावाद् द्वित्वं न स्यादिति दिक्॥ ( ४७४ ) नेदमदसोः—। भाष्ये तु-'इदमदसोः कात्। नियमार्थमिदम्, इदमदसोः कादेव भिस ऐस्

---

१ लोप इति। 'अत्र हल्यश्' इत्युक्तौ पदलाघवाभाव एव। न च द्वितीये-'इदमो हल्यश् तृतीयादौ' 'अन्वादेशेऽनुदात्तः' इत्येवं करणे पदलाघवमिति वाच्यम्, अनन्वादेशे साकच्कस्य इमकाभ्यामिति, अन्वादेशे त्वाभ्यामितीति वैलक्षण्याय अक इत्यस्य संबन्धासंबन्धसूचनार्थं प्रकरणद्वय एव कर्तव्यत्वात्॥ २ त्यदादीनामिति। 'त्यदादीनामः' इत्यनुवर्तत इति भावः॥ ३ आरम्भसामर्थ्यादिति। 'त्यदादीनामः' इत्यनेनैवाकारादेशसिद्धौ 'इमः' इति सूत्रारम्भसामर्थ्यादित्यर्थः। 'नाऽनर्थकेऽलोऽन्त्यविधिः-' इति परिभाषा तु भाष्ये प्रयोजनानामन्यथासिद्धत्वोक्त्या प्रत्याख्यातैव॥ ४ कक इति रूपं स्यादिति। मम तु 'तन्मध्यपतितः-' इति न्यायेन साकच्कस्य किंशब्दत्वात्सिद्धम्। निर्दिश्यमानपरिभाषा तु कादेशविधानसामर्थ्यादनित्यत्वाद्वा नात्र प्रवर्तते। अङ्गानपेक्षत्वेनान्तरङ्गत्वादादेशात्पूर्वमेवाकच्। 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्य' इति तु युष्मदस्मद्विषयमेवेति व्यक्तं भविष्यत्येवेति भावः॥ ५ अनुवृत्तिसामर्थ्याच्चेह सूत्रे 'द्विपर्यन्तानाम्-' इति नियमस्य त्यागाद्-इति मनोरमायाम्॥ ६ 'इदोऽय्-पुंसि' इत्येवमसंहितया निर्देशेन यकारस्य वलव्यपहितपूर्वत्वाभावेन 'लोपो व्योः-' इति लोपो न 'श्युकः किति' इति सूत्रे गकारे पर उत्वमिवेति भावः॥ ७ समुदायस्यैवेति। एवकारेण अभ्यासस्यार्थकत्वव्यवच्छेदेनानर्थकत्वमिति भावः॥८ विकार इति। न चैवं 'देहि पित्सति' इत्यादौ लोपोऽन्त्यस्यादेशः स्यादिति वाच्यम्, 'लोपागमवर्णविकारज्ञो हि-' इति लोपविकारयोः पृथगुपादानादत्र विकारशब्देन लोपस्याग्रहणादिति भावः। अस्याः परिभाषाया अनाश्रयणे तु 'हलि लोपः' इति सूत्रे 'अनाप्यकः' इति सूत्रान्नपुंसकमनुपदं षष्ठीविपरिणतमनुवर्त्य 'इदम इदः स्थाने योऽन् तस्य लोपः' इत्यर्थकरणेनालोऽन्त्यस्येत्यनो नकारलोपे पररूपे चेष्टसिद्धिरुपधासंज्ञासूत्रे भाष्ये प्रतिपादिता स्मर्तव्या॥

अककारयोरिदमदसोर्भिस ऐस् न स्यात्। एत्वम्। एभिः। अत्वम्। नित्यत्वान्ङेः स्मै। पञ्चाद्धलि लोपः। अस्मै। आभ्याम्। एभ्यः। अस्मात्। आभ्याम्। एभ्यः। अस्य। अनयोः। एषाम्। अस्मिन्। एषु। ककारयोगे तु अयकम्। इमकौ। इमके। इमकम्। इमकौ। इमकान्। इमकेन। इमकाभ्याम्। इमकैः॥ (४७५) सू॰ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ। २।४।३२। अन्वादेशविषयस्येदमोऽनुदात्तोऽश् आदेशः स्यात्तृतीयादौ। अश्वचनं साकंच्कार्थम्[1]॥ (४७६) सू॰ द्वितीयाटौस्स्वेनः[2]। २।४।३४। द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे। किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। यथाऽनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति। अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति। एनम्। एनौ। एनान्। एनेन। एनयोः। गणयतेर्विच्[3]। सुगण्। सुगणौ। सुगणः। सुगण्ट्सु, सुगण्ट्सु, सुगण्सु॥ क्विप्। अनुनासिकस्य[३५४५] क्विझलोरिति दीर्घः। सुगाण्। सुगाणौ। सुगाणः। सुगाण्ट्सु, सुगाण्ट्सु, सुगाण्सु। परत्वादुपधादीर्घः। हल्ङ्याब्[२६६]भ्यादिलोपः। ततो नलोपः[4]। राजा॥ (४७७) सू॰ न ङिसंबुद्ध्योः। ८।२।८। नस्य लोपो न स्यान्ङौ संबुद्धौ च। हे राजन्। ङौ तु छन्दस्युदाहरणम्[5]। सुपां सुलुगिति[५४१३] ङेर्लुक्। निषेधसामर्थ्यात्प्रत्ययलक्षणम्। परमे व्योमन्॥ (४७८) वा॰ ङावुत्तरपदे प्रतिषेधो वक्तव्यः॥ चर्मणि तिला अस्य चर्मतिलः। ब्रह्मणि निष्ठा अस्य ब्रह्मनिष्ठः। राजानौ। राजानः। राजानम्। राजानौ। अल्लोपोऽनः[३३५]। श्चुत्वम्। न चाल्लोपः स्थानिवत्, पूर्वत्रा-

---

नान्यतः' इति स्थितम्॥ नव्यास्तु–'इदमदसोः कात्' इति सूत्रिते तु काद्भिस ऐस् इदमदसोरेव' इति विपरीतनियमोऽपि संभाव्येत। तथा च–पाचकैरित्यादि न सिध्येत्। किन्तु 'इदमदसोः काद्भिस ऐस्' 'अतः' इत्येव सूत्रद्वयं सुवचमित्याहुः॥ स्माद्यादेशात्परत्वादनादेशः स्यादित्याशङ्कायामाह–**नित्यत्वान्ङेः स्मै इति**॥ (४७५) **इदमोऽन्वादेशे**–। नन्विदमोऽनुदात्तमात्रविधावपि हलि[४७१] लोपेन आभ्यामित्यादि समीहितरूपं सिध्यति, एनेन एनयोरित्यत्र तु विशिष्यैनादेशो विहितः किमनेनाश्वचनेनेत्यत आह–**साकच्कार्थमिति**। यद्यपीह शित्करणं व्यर्थम्, अकारस्याऽकारविधानसामर्थ्यादेव सर्वादेशसिद्धेः, तथाप्यनुदात्तत्वार्थमेवाकारविधानमित्याशङ्का स्यात्तन्निवारणाय शित्करणमित्याहुः॥ अ अ इति प्रश्लिष्य निर्देशे त्वनेकाल्त्वादेव सर्वादेशसिद्धेः शिद्ग्रहणं त्यक्तुं शक्यमित्याकरः॥ (४७६) **द्वितीयाटौस्सु**–। 'इदमोऽन्वादेशे-४७५' इत्यतः इदम इत्यनुवर्तते, अन्वादेश इति च। 'एतदस्त्रतसोः-२६६३' इत्यत एतद इत्यपि, तदाह–**इदमेतदोरेनादेश इत्यादि**। अनुदात्त इत्यनुवर्तनादेनादेशोऽनुदात्त इति ज्ञेयः॥ **कार्यं विधातुमिति**। अपूर्वं बोधयितुमित्यर्थः। 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्यात्' इत्यत्र तु ईषदर्थादयो न विधीयन्ते किन्त्वनूद्यन्त इति न तत्रैनादेशः। एतेन 'नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय' इत्यपि व्याख्यातम्। भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वात्॥ इति मान्ताः॥ **सुगाणिति**। क्विप्। न च 'अनुनासिकस्य क्वि-३५४५' इति दीर्घे कर्तव्ये अल्लोपणिलोपयोः स्थानिवद्भावः शङ्क्यः, दीर्घविधौ तन्निषेधात्। क्वौ विधिं प्रति निषेधाच्च॥ इति णान्ताः॥ (४७७) **निषेधसामर्थ्यादिति**। यदा तु 'न ङिसंबुद्ध्योः ४७७' इत्यत्र षष्ठ्यन्ततामाश्रित्य ङ्यन्तस्य संबुद्ध्यन्तस्य च पदस्य लोपो नेति व्याख्यायते, तदा प्रत्ययलक्षणं सुलभमिति तदर्थं निषेधसा-

---

१ **साकच्कार्थमिति**। 'विचित्रास्तद्धितवृत्तयः नान्वादेशेऽकजुत्पद्यते' इति भाष्योक्त्याऽन्वादेशेऽकजभावे व्यर्थमेवाश्विधानमिति विभाव्यते, तदोत्तरत्रावश्यकरणीयं स्पष्टार्थमिहैव कृतमिति बोध्यम्। संज्ञोपसर्जनयोश्च नेदम्, 'एतदस्त्रतसोः-' इत्युत्तरसूत्रसाहचर्यात्॥ २ **द्वितीयाटौस्स्वेन इति**। अत्र मूर्धन्यषकारद्वयवानेव विसर्गमूर्धन्यषकारवानेव वा पाठ उचितः। 'नुम्विसर्जनीयशर्व्यवायेऽपि' इत्यनेन प्राप्तमूर्धन्यस्य वारयितुमशक्यत्वात्। न च सौत्रत्वादेव न ष इति वाच्यम्, भाष्यकृताऽन्यत्रेवात्र अयुक्तोऽयं निर्देश इति शङ्कायाः, सौत्रो निर्देश इत्युत्तरस्य चादानेन शास्त्रसिद्धप्रयोगसत्त्वस्यैवात्र सूचनात्। केचित्तु–औजसादौ यदीयसकारस्य षत्वं दृश्यते यथा पिपठिषौ पिपठिष इति, तद्व्यवधान एव षत्वं यथा पिपठीष्षु पिपठीःषु इति, 'ओसि च' इत्यत्र षत्वादर्शनेन नात्र षत्वमिति समादधिरे। तत् सुपिसौ सुपिसः सुपीःषु सुपीष्षु इत्येतदननुकूलत्वाच्चिन्त्यमेवेति बोध्यम्॥ परे तु 'यचि भम्' इत्यत्रेव समाहारद्वन्द्वात्सप्तम्येकवचनाङ्गीकारेण '**द्वितीयाटौस्येनः**' इत्येवं पाठसत्त्वे तु न काप्यनुपपत्तिः। आधुनिकानां वकारपाठस्तु चिरन्तनलेखकप्रमादजो गतानुगतिकतयैवेति वदन्ति॥ ३ **विजिति**। विचश्छान्दसत्वात्, छन्दसि यथादर्शनमेवान्वाख्यानाद्, विचो यथेष्टमनन्वाख्यानाल्लोकेऽभावाच्च चिन्त्यमेवेदमिति तत्त्वम्॥ ४ **नलोप इति**। नन्वत्र प्रत्ययान्तत्वादप्रत्यय इति निषेधेन प्रातिपदिकत्वाभावात्कथं न लोप इति चेत्, शृणु–किं कनिन्-प्रत्ययान्ततयेति ब्रूषे, उत प्रत्ययलक्षणेन सुप्प्रत्ययान्ततयेति। आद्ये उणादीनामव्युत्पन्नत्वे प्रत्ययान्तत्वस्यासंमतत्वात्, व्युत्पत्तिपक्षे 'कृत्तद्धित-' इति प्रातिपदिकत्वेन सकलदोषापहारः। द्वितीये 'न ङिसंबुद्ध्योः' इति ज्ञापकेन प्रत्ययलक्षणेन प्रत्ययान्तत्वेऽपि निषेधाप्रवृत्तिसूचनेन दोषापहारः॥ ५ **छन्दसीति**। लोके ङिप्रत्ययसत्त्वे भसंज्ञायां नलोपाप्राप्त्येति भावः। राजनीवाचरतीत्यर्थे 'अधिकरणाच्च' इति वार्तिकेन क्यचोऽनभिधानमेव, परमे व्योमन् इत्यादावयस्मयादित्वेन भत्वेन नलोपाभावं संसाध्य, ङिग्रहणप्रत्याख्यानपरभाष्येण सूचितामिति भावः॥

सिद्धे तन्निषेधात् । नापि बहिरङ्गतयाऽसिद्धः, (४७९) यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतयाऽन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेः । ज्ञ्जोर्ज्ञः । राज्ञः । राज्ञा ॥ (४८०) ॐ नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।८।१।२। सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ । इत्यासिद्धत्वादात्वमेत्वमैस्त्वं च न । राजभ्याम् । राजभिः । राज्ञे । राजभ्यः । राज्ञः । राज्ञोः । राज्ञाम् । राज्ञि, राजनि ॥ प्रतिदीव्यतीति प्रतिदिवा । प्रतिदि-

---

सर्थ्यानुसरणक्लेशो न कर्तव्य इत्याहुः[३] ॥ पूर्वस्मादपि विधौ स्थानिवत्त्वमाशङ्क्याह--न चेति ॥ (४७९) षाष्ठीं परिभाषामिति । 'वाह ऊठ्' इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः॥ (४८०) नलोपः सुप्स्वर—।'पूर्वत्रासिद्धम् ३५' इत्यनेनैव सिद्धे नियमार्थोऽयमारम्भ इत्याह—नान्यत्रेत्यादि । तेन राजाश्व इत्यादौ सवर्णदीर्घे कर्तव्ये नलोपोऽसिद्धो न भवतीति भावः ॥ सुब्विधिमुदाहरति--आत्वमित्यादिना । सुबाश्रितो[४] विधिः सुब्विधिः । स्वरविधौ तु-पञ्चार्मम् 'दिक्संख्ये संज्ञायाम् १०५१' इति समासे नलोपे कृते अवर्णान्तं पूर्वपदं जातमिति 'अर्मे चावर्णं द्व्यच्त्र्यच् ५७९४' इति पूर्वपदाद्युदात्तत्वं प्राप्तं, नलोपस्यासिद्धत्वान्न[५] भवति । संज्ञाविधौ–'पञ्चेत्यत्र नलोपे कृतेऽपि' इत्यादिना स्त्रीप्रत्ययेषु वक्ष्यति । अन्ये तु दण्डिगुप्तौ गुप्तदण्डिनावित्यप्युदाहरन्ति । अत्र नलोपस्यासिद्धत्वाद् घिसंज्ञा नास्तीति 'द्वन्द्वे घि १२९५' इति पूर्वनिपातनियमो[६] न भवतीत्याहुः । कृति तुग्विधौ तु-वृत्रहभ्याम् । अत्र 'ब्रह्मभ्रूण-४००४' इति विहितं क्विपमाश्रित्य 'ह्रस्वस्य-३८०६' इति तुग्न । कृति तुग्विधाविति किम्, वृत्रहच्छत्रम् । इह स्यादेव 'छे च २२०' इति तुक् । यद्यपि वृत्रहभ्यामित्यत्र 'असिद्धं बहिरङ्गमन्तरङ्गे ७२' इत्यनेनैव नलोपस्यासिद्धत्वं सिध्यति, तथाप्यस्याः परिभाषाया अनित्यत्वज्ञापनार्थं कृति तुग्ग्रहणं[७], तेन या सा इत्यादि सिध्यति । अन्यथा विभक्त्याश्रयस्यात्वस्य बहिरङ्गत्वेनासिद्धत्वाट्टाब् न स्यात् । एतच्च, 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इत्यत्र यत्रान्तरङ्गे बहिरङ्गे वा अचोरानन्तर्यमिति[८] हरदत्तादिमतेन कैश्चिदुक्तम् । उत्तरकार्ये[९] अच आनन्तर्यमिति कैयटमते तु नात्र बहिरङ्गपरिभाषा प्रवर्तते । या सेत्यत्र टाप् तु सन्निपातपरिभाषामपि बाधित्वा 'न

---

१ यथोद्देशपक्षे इति । विधिसूत्राणि पतिस्थानीयानि संज्ञापरिभाषासूत्राणि भार्यास्थानीयानि । तत्र यथाऽऽधुनिकसमृद्धतरपुत्री पतिगृहे नैव निवसति किंतु पतिमेव स्वपितृगृहे वासयति तथा संज्ञापरिभाषोपदेशदेश एव विधिसूत्राणामुपस्थितिर्न तु विधिप्रदेशे संज्ञापरिभाषासूत्राणामुपस्थितिः इति यथोद्देशपक्षोपपत्तिः । पतिगृहे भार्याणां निवास इव विधिप्रदेश एव संज्ञापरिभाषोपस्थितिरिति कार्यकालपक्षोपपादनम् ॥ व्यवस्थितपक्षद्वयमध्ये एकतरपक्षेण लक्ष्यासिद्धौ पक्षान्तरेण दोषदानस्य क्वाप्यस्वीकारादिति स्पष्टं "किं न एतेन यत्नेन 'कार्यकालं संज्ञापरिभाषम्' इति, यथोद्देशमेव संज्ञापरिभाषम्" इति प्रगृह्यसंज्ञाप्रकरणे भाष्ये । इदं च 'कार्यकालपक्षे त्रिपाद्यामप्युपस्थितिः' इत्याभिप्रेत्य ॥ वस्तुतस्तु–कार्यकालपक्षेऽपि बहिरङ्गपरिभाषा त्रिपाद्यां नोपतिष्ठते इति स्पष्टीकृतम् **"अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वात्"** इति वदता भाष्यकृता इति नागेशभट्टसिद्धान्तः ॥ बहुत्र त्रैपादिककार्याणां बहिरङ्गपरिभाषया वारणस्य कृतत्वेन एकत्रैव **'अयुक्तोऽयं परिहारः-'** इत्यस्य कथनेन 'अयुक्तोऽयं परिहारः' इति भाष्यस्यैकदेशित्वमेवेति दाधिमथानां सिद्धान्तः ॥ २ **ज्ञ्जोर्ज्ञ इति** । संयुक्तक्रमलिपिविशेषस्यानुवादकमिदम् । अत एव शिक्षायां विशिष्य नोक्तम् । परं तु व्यर्थमेव तत्तद्देशेषु लिपेरेकाकारत्वाभावात् । नापि ध्वनिविशेषानुवादकम्, तस्याप्यनियतत्वात् । एवमेव कैश्चिदन्यत्र लिखितं 'कषसंयोगे क्षः' इत्यपीति बोध्यम् ॥ ३ **इत्याहुरिति** । अनेनारुचिः सूचिता । तथाहि--सप्तम्यन्तपाठे 'न ङिसम्बुद्ध्योः' इति निषेधस्यानित्यत्वज्ञापनेन 'संबुद्धौ नपुंसकानां नलोपो वा' इत्यस्य सिद्धिरिति लाघवम् । षष्ठ्यन्तपाठे तु तदपूर्वं कार्यमिति गौरवमिति भावः ॥ ४ **सुबाश्रित इति** । सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यक इत्यर्थः । अत एव दण्डिषु इत्यादौ षत्वस्य सुप्स्थानिकत्वेऽपि नासिद्धत्वं नलोपस्येति षत्वसिद्धिः, प्रत्ययत्वस्य सुप्त्वव्याप्यत्वाभावात् ॥ ५ **नलोपस्यासिद्धत्वान्नेति** । 'स्वरविधौ व्यञ्जनमविद्यमानवद्' इति तु नात्र प्रवर्तते, तस्य स्वरोद्देश्यकविधावेव प्रवृत्तेः । 'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु-' इति सूत्रे देवताद्वन्द्वे उत्तरपदप्रकृतिस्वरनिषेधके पृथिव्यादिपर्युदासरूपधर्मिग्राहकस्य तथैव सत्त्वात् ॥ ६ **पूर्वनिपातेति** । न च पूर्वनिपाते नलोपः, नलोपे घित्वे पूर्वनिपात इत्ययुक्तमेव, यस्य पूर्वपदत्वे घित्वं भवति तत् पूर्वमेव प्रयोक्तव्यमिति सूत्रार्थे दोषाभावात् ॥ ७ **तुग्ग्रहणमिति** । भाष्ये तु संनिपातपरिभाषया वृत्रहभिरित्यत्र तुकं व्यावर्त्य तुग्ग्रहणं प्रत्याख्यातम् । तुग्ग्रहणाभावे कृतीत्यपि व्यर्थमेवेति बोध्यम् ॥ ८ **अचोरानन्तर्येति** । अचोऽजानन्तर्यनिमित्तमित्यर्थः ॥ ९ **उत्तरकार्य इति** । पश्चात्प्रवर्तमाने अन्तरङ्गकार्ये इत्यर्थः । अत्र च 'षत्वतुकोः-' इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् । अन्यथाऽधीत्येत्यादौ ल्यप्प्रवृत्तेः पूर्वं तत्र समासे जाते संहिताया नित्यत्वेन ल्यबुत्पत्तिपर्यन्तमसंहितयाऽवस्थानासंभवेन पूर्वमेकादेशे, ल्यपि, तुगपेक्षया पदद्वयसंबन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयाऽसिद्धत्वेन ह्रस्वनिमित्तकतुक्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । तत्र पश्चात्प्रवर्तमाने तुकि अचोऽन्यानन्तर्यनिमित्तककार्यत्वाद्बहिरङ्गपरिभाषाप्रवृत्तिनिषेधे दीर्घत्वस्य प्रतीयमानत्वात् तुकोऽप्राप्त्या तुग्ग्रहणावश्यकत्वमेवेति स्वांशे चारितार्थ्यमिति स्पष्टमन्यत्र । अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये कृते च तस्मिन् जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिर्बहिरङ्गत्वकल्पनाऽसिद्धत्वं नेति परिभाषार्थः । अस्याश्च परिभाषाया भाष्येऽन्यत्र क्वाप्यव्यवहारादियमेकदेश्युक्तिः । एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यमिति तत्त्वम् ॥

वानौ। प्रतिदिवानः। अस्य भविषयेऽल्लोपे कृते-॥ (४८१) (सू.) हलि च ।८।२।७७। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि। न चाल्लोपस्य स्थानिवत्त्वम्, दीर्घविधौ तन्निषेधात्। बहिरङ्गपरिभाषा तूक्तन्यायेन न प्रवर्तते। प्रतिदीव्नः। प्रतिदीव्नेत्यादि॥ यज्वा। यज्वानौ। यज्वानः॥ (४८२) (सू.) न संयोगाद्वमन्तात्[1] ।६।४।१३७। वकारमकारान्तसंयोगात्परस्यानोऽकारस्य लोपो न स्यात्। यज्वनः। यज्वना। यज्वभ्यामित्यादि॥ ब्रह्मणः। ब्रह्मणा। ब्रह्मभ्यामित्यादि॥ (४८३) (सू.) इन्हन्पूषार्यम्णां शौ ।६।४।१२। एषां शावेवोपधाया दीर्घो नान्यत्र। इति निषेधे[2] प्राप्ते-॥ (४८४) (सू.) सौ च ।६।४।१३। इन्नादीनामुपधाया दीर्घः स्यादसंबुद्धौ सौ परे। वृत्रहा। हे वृत्रहन्। एकाजुत्तरपदे इति णत्वम्। वृत्रहणौ। वृत्रहणः। वृत्रहणम्। वृत्रहणौ॥ (४८५) (सू.) हो हन्तेर्ञ्णिन्नेषु ।७।३।५४। ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात्॥ (४८६) (सू.) हन्तेः ।८।४।२२। उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं स्यात्। प्रहण्यात्॥ (४८७) (सू.) अत्पूर्वस्य[3] ।८।४।२२। हन्तेरत्पूर्वस्यैव नस्य णत्वं नान्यस्य। प्रघ्नन्ति। योगविभागसामर्थ्याद् (४८८) (प.) अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा-इति न्यायं बाधित्वा एकाजुत्तरपदे[4] इति णत्वमपि निवर्त्यते। नकारे परे कुत्वविधिसामर्थ्यादल्लोपो न स्थानिवत्। वृत्रघ्नः। वृत्रघ्ना।

---

यासयोः ६३३' इति निर्देशादेव सिध्यतीति ज्ञेयम्॥ **प्रतिदिव्नेति**। 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ४३५६' इति कनिन्॥ (४८१) **हलि च**। 'र्वोरुपधाया दीर्घ इकः ५८०' इत्यनुवर्तते 'सिपि धातोः-३३०३' इत्यतो धातोरिति च, तच्च धातुग्रहणं र्वोरित्यनेन विशेष्यते, विशेषणेन तदन्तविधिस्तदाह--**रेफवान्तस्य धातोरित्यादि**। रेफान्तस्य तु-गीर्यति, पूर्यति, गीर्णं, पूर्णमित्याद्युदाहरणानि। धातोः किम्, रेफान्तस्य पदस्य मा भूत्। अग्निः करोति। वायुः करोति॥ नन्वस्तु धातोरनुवर्तनं परं तु र्वोरित्यनेन धातुर्न विशेष्यते रेफवान्तस्य धातोरिति, किन्तु इग्विशेष्यते रेफवान्तस्य इको दीर्घः स्यात्तौ च रेफवकारौ धातोश्चेत्, अन्तशब्दोऽत्र समीपवाची। **तथा च**-'उपधायां च ३०२९' इति सूत्रं त्यक्तुं शक्यम्, अनेनैव मूर्छति हूर्छतीत्यादिरूपसिद्धेरिति चेत्। मैवम्, कुर्कुरीयतीत्यादावतिप्रसङ्गः स्यात्तस्माद् र्वोरित्यनेन धातुरेव विशेष्यः। एतच्चाकरे स्पष्टम्॥ यत्तु 'उपधायां च' इति कैश्चिदुपन्यस्तम्। तन्न, द्विर्वकारस्यानुपधात्वात्[5]॥ **उक्तन्यायेनेति**। यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति दीर्घस्यासिद्धतयेत्यर्थः॥ **प्रतिदीव्न इति**। 'न भकुर्छुराम् २२२३' इत्यत्र र्वोरित्यनुवर्तनाद्रेफवान्तस्यैव भस्य निषेध इति न दीर्घनिषेधः शङ्क्यः, नान्तस्येह भत्वात्॥ (४८२) **यज्वेति**। इष्टवान्यज्वा 'सुयजोर्ङ्वनिप् ४१०९'॥ **ब्रह्मण इति**। 'सर्वधातुभ्यो मनिन् ४७९०' इति प्रक्रम्य 'बृंहेर्नोऽच्च ४७९१' इति नस्यात्वविधानाद् ब्रह्मन्शब्दोऽयं निष्पन्नः॥ (४८३) **इन्हन्**—। 'सर्वनामस्थाने चासंबुद्धौ ३५४' इत्यनेनैव सिद्धे नियमार्थमिदं तदाह—**शावेवोपधाया इति**। उपधादीर्घमात्रस्यायं नियमः। तेन वृत्रहायत इत्यत्र 'अकृत्सार्वधातुकयोः-३०७१' इति दीर्घो भवत्येव। वृत्रहणी इत्यत्र 'अनुनासिकस्य क्विझलोः-३५४५' इति यो दीर्घः सोऽपि नियमेन व्यावर्त्यते, उपधादीर्घमात्रापेक्षया नियमविज्ञानादिति तु मनोरमायां स्थितम्॥ (४८४) शावेवेति नियमाद्दीर्घस्याप्राप्तावाह—**सौ चेति**। 'शिस्वोः' इति वक्तव्ये योगविभाग उत्तरार्थः॥ **वृत्रहेति**। वृत्रं हतवान् 'ब्रह्मभ्रूण-४००४' इति क्विप्॥ (४८५) **हन्तेर्हकारस्येति**। ञिति णितीत्येतद्धन्तेर्विशेषणम्, नकारे इति तु हस्येति यथासंभवं बोध्यम्। यद्वा-ञिण्णिन्नाः सर्वेऽपि हस्यैव विशेषणं ञिति णितीत्यंशे येन नाव्यवधानन्यायेन द्वाभ्यां व्यवधानं स्वीक्रियते। तेन घातः घातक इत्यत्र कुत्वं भवति। इह तु न भवति, हननमात्मन इच्छति हननीयति हननीयतेर्ण्वुल् हननीयक[6] इति। एतच्च भाष्यकैयटादौ स्पष्टम्॥ (४८६) 'हन्तेरत्पूर्वस्य' इति सूत्रं योगविभागेन व्याचष्टे—**हन्तेरिति**। प्रसङ्गादस्योदाहरणमाह-**प्रहण्यादिति**॥ (४८७) प्रकृतोपयुक्तमंशमाह-**अत्पूर्वस्येति**॥ **एकाजुत्तरे इति**। न चाल्लोपे कृते एकाच्त्वं नास्तीति वाच्यम्, पूर्वस्मादपि विधौ स्थानिवद्भावात्। न च 'पूर्वत्रासिद्धे न स्थानिवत् ३३८' इति वाच्यम्, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु ३३९' इत्युक्तेः॥ **निवर्त्यत इति**। 'कुमति च १५१५' इति णत्वमपि निवर्त्यत एवेति बोध्यम्। भाष्ये तु—"कुव्यवाये हादेशेषु[7] प्रतिषेधो वक्तव्यः। किं प्रयोजनम्। वृत्रघ्नः,

---

१ **वमन्तादिति**। अन्तग्रहणं स्पष्टार्थम्। संयोगस्य वमाभ्यां विशेषणेन तदन्तलाभात्॥ २ **इति निषेध इति**। परिसंख्यावाक्यानां तदितरनिषेधविधान एव तात्पर्यात्। तत एव "पञ्च पञ्चनखा भक्ष्याः" इति वाक्येनापि शशादिपञ्चकेतरभक्षणनिषेधमात्रविधाने तात्पर्यात् रागप्राप्तशशादिभक्षणे प्रायश्चित्तसिद्धिः॥ ३ **अत्पूर्वस्येति**। अत इति सिद्धे पूर्वग्रहणं स्पष्टार्थम्॥ ४ **एकाजुत्तरेति**। अत्रोपसर्गादिति निवृत्तमिति णत्वमात्रस्यैवायं नियम इति भावः॥ ५ **अनुपधात्वादिति**। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोरिति तदर्थादिति भावः॥ ६ **हननीयक इति**। वृत्रहणमाचष्टे वृत्रहयतीत्यादौ तु "धातोः कार्यमुच्यमानं धातुसंशब्दनेन विहितप्रत्यय एव भवति" इति परिभाषया न भवति, 'तदाचष्टे' इति णिचो धातुसंशब्दनेन विधानाभावात्। नकारे तु परे वृत्रघ्न इत्यादावेव स्थानिवत्त्वकृतव्यवधानेऽपि श्रौताव्यवधानसत्त्वात्। न तु हननमित्यादौ श्रौतव्यवधाने इति स्पष्टं भाष्ये॥ ७ **हादेशेष्विति**। हादेशकवर्गव्यवाय इत्यर्थः। आर्षत्वाद्वार्तिके समासः। हादेश इत्युक्तेर्हुघण इत्यादौ 'पूर्वपदाद्-' इति णत्वं सिध्यति। तत्र हि हन्तेरप्प्रत्ययो घनादेशश्च। एतत्साधकमेव 'अगारैकदेशे प्रघणः प्रघाणश्च' इति कृतणत्वोच्चारणम्, तत्रापि हन्तेरेव घनघानादेशविधानात्॥

इत्यादि। यत्तु वृत्रघ्न इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तं तद्भाष्यवार्तिकविरुद्धम्। एवं शार्ङ्गिन्यशस्विन्नर्यमन्पूषन्। यशस्विन्निति विन्प्रत्यये इनोऽनर्थकत्वेऽपि इन्हन्निति अत्र ग्रहणं भवत्येव॥ (४८९) (प) अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति-इति वचनात्। अर्यम्णि, अर्यमणि। पूष्णि, पूषणि॥ (४९०) (सू) मघवा बहुलम्।६।४।१२८। मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात्। ऋ इत्[1]॥ (४९१) (सू) उगिदचां सर्वनामस्थानेऽधातोः।

---

सुग्घ्नः[2], प्राघानि। 'हन्तेरत्पूर्वस्य' इत्यत्पूर्वग्रहणं न कर्तव्यं भवति" इत्युक्तम्। एतच्च वार्तिकाशयवर्णनमात्रं, न तु वस्तुस्थितिः वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोपसंग्रहस्यैव न्याय्यत्वादिति[3] तु मनोरमायां स्थितम्॥ ननु 'अत्पूर्वस्य ४८७' इत्यत्र तपरो विवक्षितो, न वा। यदि विवक्षितस्तर्हि बहुवृत्रहाणीति न सिध्येत्। यद्यविवक्षितस्तदा प्राघानीति चिणन्तेऽपि णत्वं स्यात्। ततश्च 'कुव्यवाये हादेशेषु प्रतिषेधः' इति वचनं स्वीकर्तव्यमेवेति किमनेन योगविभागेन। अत्राहुः-तपरोऽत्र विवक्षित एव। न च बहुवृत्रहाणीत्यत्र णत्वासिद्धिः, णत्वस्यान्तरङ्गत्वेन तत्कार्यं प्रति दीर्घस्यासिद्धत्वात्। न च त्रैपादिकेऽन्तरङ्गे षाष्ठी परिभाषा न प्रवर्तत इति वाच्यम्, कार्यकालपक्षाभ्युपगमात्। न चैवमन्तरङ्गं णत्वं प्राघानीत्यत्रापि स्यादिति वाच्यम्, 'पूर्वं धातुः साधनेन युज्यते' इति पक्षे णत्वस्य बहिरङ्गत्वात्। इष्टानुरोधेन 'पूर्वं धातुरुपसर्गेण-' इति पक्षस्यानभ्युपगमादिति। अन्ये तु-'हन्तेरत्पूर्वस्य' इत्यत्र उपसर्गादित्यस्यानुवृत्तिस्वीकाराद् योगविभागसामर्थ्येन भ्रूणघ्न इत्यत्र 'एकाजुत्तर-४२७' इत्यादिना णत्वाभावेऽपि वृत्रघ्नः सुग्घ्न इत्यत्र णत्वं दुर्वारमिति 'कुव्यवाये-' इति वार्तिकं स्वीकर्तव्यमेव। योगविभागस्यानन्तरस्येति न्यायबाधेनापि चरितार्थत्वादुपसर्गसंबन्धस्यापि बाधे सामर्थ्याभावात्। न च ब्रह्मादिषु कर्मसूपपदेषु विधीयमानः क्विप्प्रत्ययः केवलधातोरेव स्यान्न तु सोपसर्गादिति ब्रह्मप्रहा भ्रूणप्रहेत्यादि रूपमेव दुर्लभमिति वाच्यम्, 'आतोऽनुपसर्गे कः ३८८३' इत्यत्रानुपसर्गे इति सामान्यापेक्षज्ञापकात्सोपसर्गाद्धन्तेरपि 'ब्रह्मभ्रूण-४००४' इति क्विप्संभवात्। अनुपसर्गग्रहणस्य सामान्यापेक्षज्ञापकत्वे तूक्तवार्तिकमेव प्रमाणम्। तस्माद् 'हन्तेः ४८६' इति योगविभागोऽत्र निरर्थक एवेत्याहुः॥ **माधवेनोक्तमिति**। इत्थं हि तदीयो ग्रन्थः-'भसंज्ञायामल्लोपे उत्तरपदमनच्कं स्थानिवद्भावश्चाल्विधित्वान्नेत्येकाजुत्तरपदत्वाभावात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पो भवति-वृत्रघ्नो, वृत्रघ्णः' इति॥ **तद्भाष्येति**। किञ्च, अल्विधित्वान्नेत्यसंगतम्, अल्विध्यर्थमेव 'अचः परस्मिन्-७७' इत्यस्यारम्भात्। तस्याप्रवृत्तौ युक्त्यन्तरस्यैव वाच्यत्वात्। 'एकाजुत्तर-४२७' इत्यस्याप्रवृत्तावपि 'कुमति च १५१५' इति सूत्रस्य दुर्वारत्वाद्वैकल्पिकत्वं णत्वस्यासंगतमेव। न च त्रिपाद्यामपि पूर्वं प्रत्युत्तरशास्त्रस्यासिद्धत्वात् 'एकाजुत्तरपदे णः ४२७' 'कुमति च १५१५' इत्यस्याप्रवृत्त्या 'प्रातिपदिकान्त-१५१२' इति वैकल्पिकमेव णत्वं भवतीति वाच्यम्, न हि योगे योगोऽसिद्धः किन्तु प्रकरणे प्रकरणमिति भाष्यादौ स्पष्टत्वादिति दिक्॥ (४८९) **अनिनस्मन्ग्रहणानीति**। अन्-राज्ञेत्यर्थवता, साम्ना इत्यनर्थकेन। इन्-दण्डीत्यर्थवता, वाग्मीत्यनर्थकेन। अस्-सुपया इत्यर्थवता, सुस्रोता इत्यनर्थकेन। इह 'सुरीभ्यां तुट् च ४८४७' इत्यसुनस्तुट्। मन्-सुशर्मेत्यर्थवता, सुप्रथिमा इत्यनर्थकेन। एतच्च 'इणः षीध्वम्-३००९' इति सूत्रे अङ्गग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात्सिद्धम्। वेविषीध्वमित्यत्र षीध्वंशब्दस्य ग्रहणं मा भूदिति हि तत्राङ्गग्रहणं कृतम्। तच्चापार्थकम्, अनर्थकत्वादेव तद्ग्रहणासिद्धेः। अतो ज्ञायते अर्थवद्ग्रहणपरिभाषा अनित्येति॥ (४९०) **मघवा बहुलम्**। 'अर्वणस्त्रसौ-४९४' इत्यतस्तृ इत्यनुवर्तते, तदपेक्षा च 'मघवा' इति षष्ठ्यर्थे प्रथमा, तदाह—**मघवन्शब्दस्येति**॥ (४९१) **अधातोरिति**। अधातुभूतपूर्वस्यापीत्यर्थः। अञ्चतिग्रहणं हि नियमार्थम्-'उगितो धातोश्चेद्भवति तर्ह्यञ्चतेरेव' इति। एवं च गोमानिवाचरति गोमान् इत्यादौ संप्रति धातुत्वेऽपि विध्यर्थमधातुग्रहणम्। एतच्च मूल एव स्फुटीभविष्यति। नन्वञ्चतिग्रहणम् 'औपदेशिकधातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति व्याख्यायाधातुग्रहणं त्यज्यतामिति चेत्। अत्र नव्याः-नुम्मात्रविषयको नायं नियमः, 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यते। तेनेह न उखास्रत्' इति 'उगितश्च ६१०' इति सूत्रे वक्ष्यमाणत्वात्। ततश्च यद्यौपदेशिकधातोश्चेदुगित्कार्यमिति व्याख्यायेत, तर्हि पूर्वोक्ते गोमानित्यादौ स्त्रियाम् 'उगितश्च ६१९' इति ङीप् प्रसज्येत, आचारक्विबन्तस्यौपदेशिकधातुत्वाभावात्। न चेष्टापत्तिः, अधातोर्ग्रहणादेव सूत्रकृता तत्र ङीब्नेष्यत इत्यनुमानादिति दिक्॥ ननु 'नलोपिनोऽञ्चतेरेव नुमागमः स्यान्न तु पूजार्थस्य नकारवतोऽञ्चतेः' इत्येवमर्थम् 'अचाम्' इति ग्रहणस्य सार्थकत्वात्कथमेतस्य सामान्यनियमार्थतेति चेत्। उच्यते-अचामित्यत्र नलोपोऽविवक्षितः।

---

१ **ऋ इदिति**। तथा च 'नानुबन्धकृतमनेकाल्त्वम्' इत्यनेकाल्त्वाभावान्न सर्वादेश इति भावः॥ २ **सुग्घ्न इति**। स्रुचो हन्यन्तेऽस्मिन्निति 'घञर्थे कविधानम्' इति कः प्रत्यय इति कैयटः॥ ३ **न्याय्यत्वादिति**। न च वार्तिकरीत्या बहुवृत्रहाणीति णत्वमायाति, सूत्रारम्भे तु नेति वार्तिकारम्भस्यैव ज्यायस्त्वात् कथं न्याय्यत्वम्। बहिरङ्गत्वेन दीर्घस्यासिद्धत्वे तु प्राघानीत्यत्र दोषः। तथा सूत्रारम्भे प्रघनाघन इत्यत्र णत्वं प्राप्नोति वार्तिकरीत्या तु नेति वाच्यम्, अत्पूर्वस्येत्यनेन ह्रस्थानिककवर्गाभाववद्धन्तेरेवोपलक्षणेनादोषात्। उक्तार्थोपलक्षणत्वे मानं तु 'अगारैकदेशे-' इति सूत्रे कृतणत्वोच्चारणमेव, णत्वनिपातनकल्पनापेक्षयोक्तार्थग्राहकत्वौचित्यादिति भावः॥

७।१।७०। अधातोरुगितो[1] नलोपिनोऽञ्चतेश्च[2] नुमागमः स्यात्सर्वनामस्थाने परे। उपधादीर्घः[3]। मघवान्। इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति, बहुलग्रहणात्। तथा च–(उ.) [४३५९] श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रं प्रत्याख्यातमाकरे। 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति भट्टिः[4]। मघवन्तौ। मघवन्तः। हे मघवन्। मघवन्तम्। मघवन्तौ। मघवतः। मघवता। मघवद्भ्यामित्यादि। तृत्वाभावे। मघवा। [६३४२] छन्दसीवनिपौ चेति वनिबन्तं मध्योदात्तं छन्दस्येव। अन्तोदात्तं तु लोकेऽपीति विशेषः। मघवानौ। मघवानः। सुटि राजवत्॥ (४९२) (सू.) श्वयुवमघोनामतद्धिते। ६।४।१३३। अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे संप्रसारणं स्यात्। संप्रसारणाच्च[5] [४१४]। आद्गुणः। मघोनः। अन्नन्तानां किम्। मघवतः। मघवता। स्त्रियां[6] मघवती। अतद्धिते किम्। माघवनम्। मघोना। मघवभ्यामित्यादि॥ शुनः[7]। शुना। श्वभ्यामित्यादि॥ युवन्शब्दे वस्योत्वे

---

तथा च–पूर्वोक्तनियमार्थता भाष्यकैयटाद्युक्ता संगच्छत एव। पूजार्थस्याञ्चतेर्नुमि[8] सत्यपि 'नश्चापदान्तस्य–१८९' इति सूत्रे जातिपक्षमाश्रित्य नत्वजातेरनुस्वारविधानेन समीहितरूपसिद्धेः। व्यक्तिपक्षे त्वनुस्वारस्य शर्षु पठितत्वादनुस्वारे परे नुमोऽनुस्वारे सत्यनुस्वारद्वयवद्रूपमिष्यते। 'अनचि च ७५' इति द्वित्वेन तद्रूपस्य तवापि मते दुर्वारत्वात्। न च भवन्मते द्वित्वेनानुस्वारत्रयं स्यादिति शङ्क्यम्, 'झरो झरि–१०६' इति लोपेन निवारयितुं शक्यत्वात्। लोपाभावपक्षे त्रयाणां श्रवणं स्यादिति चेत्, भाष्यकैयटाद्युक्तनियमानुरोधेन तत्स्वीकारे बाधकाभावात्। इष्टानुरोधेन जातिपक्ष एवात्राश्रयणीयः॥ **नुमागमः स्यादिति**। 'इदितो नुम् धातोः ३०२६' इत्यतो नुमनुवर्तत इति भावः॥ ननु कुर्वन्नित्यादाविव संयोगान्तलोपस्यासिद्धत्वेन नान्तस्याभावाद्दीर्घत्वं न स्यादित्याशङ्क्याह–**इह दीर्घे कर्तव्य इति**॥ **बहुलग्रहणादिति**। क्वचिदन्यदेवेत्यर्थकादित्यर्थः। बहूनर्थान् लातीति बहुलम्। 'आतोऽनुपसर्गे–२८८३' इति कर्मण्युपपदे कः॥ **श्वन्नुक्षन्निति**। 'श्वन्-नुक्षन्-पूषन्-प्लीहन्-क्लेदन्-स्नेहन्-मूर्धन्-मज्जन्-अर्यमन्–विश्वप्सन्–परिज्मन्-मातरिश्वन्-मघवन्–४३५९' इत्युणादिसूत्रेणेत्यर्थः॥ **निपातनादिति**। महेर्हकारस्य घकारः, अवुगागमः, कनिप्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः॥ **प्रत्याख्यातमाकर इति**। एवं च फलभेदे त्रादेशस्य प्रत्याख्यानासंभवादादेशपक्षेऽपि दीर्घो भाष्यादिसंमत एवेति बहुलग्रहणात्संयोगान्तलोपस्य नासिद्धत्वमित्युक्तम्॥ यत्त्वाहुः–मतुप्पक्षेऽपि छान्दसत्वान्न दीर्घ इत्येव भाष्याशय इति। तन्न, मतुबन्तस्य छान्दसत्वे मानाभावात्, उदाहृतभट्टिप्रयोगविरोधाच्चेति दिक्॥ **छन्दसीवनिपाविति**। मत्वर्थे ईवनिपौ स्तः छन्दसीति वार्तिकार्थः। 'सुमङ्गलीरियं वधूः' 'मघवानमीमहे' इत्युदाहरिष्यति वैदिकप्रक्रियायाम्॥ **अन्तोदात्तं त्विति**। यद्यपि 'श्वन्नुक्षन्–४३५९' इत्यत्र कनिन्नन्ता एते इत्युज्ज्वलदत्तादिग्रन्थपर्यालोचनयाऽऽद्युदात्तत्वं लभ्यते, तथापि 'उक्षा समुद्रो अरुणः सुपर्णः' 'पूषा त्वेतो नयतु' 'अग्निर्मूर्धा दिवः' इत्यादौ तत्सूत्रोपात्तानामुक्षादीनामन्तोदात्तत्वस्य निर्विवादतया कनिप्रत्यय एवोचित इति भावः॥ (४९२) **श्वयुव**—। 'अल्लोपोऽनः ३३५' इत्यतोऽन इत्यपकृष्य व्याचष्टे—**अन्नन्तानामिति**॥ **अन्नन्तानां किम्। मघवत इति**। यद्यपि नस्य तादेशेऽप्येकदेशविकृतस्यानन्यत्वादन्नन्तताऽत्रास्त्येव, तथापि विशेषणसामर्थ्याच्छ्रूयमाणनकारान्तस्यैव संप्रसारणं न त्वत्रेत्याहुः। वार्तिककृता तु–'श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्' इत्युक्तम्॥ नन्वेवम् 'अल्लोपोऽनः ३३५' इत्यल्लोपो दुर्वार इति चेन्मैवम्, भाष्यकृता पूर्वोक्तवार्तिकमत्रानुवर्त्य 'अल्लोपोऽनः ३३५' नकारान्तस्यैव इति व्याख्यातत्वात्। एतच्च 'ऋत्व्यक्' इति सूत्रे भाष्ये स्पष्टम्। एतेन बहुधीवरी

---

१ **उगित इति**। अत्रोगिज् झलन्त एव व्याख्यानात्। तेन शमी शमिनावित्यादौ नातिप्रसङ्ग इति 'युवोरनाकौ' इत्यत्र भाष्ये स्पष्टम्॥ २ **नलोपिनोऽञ्चतेरिति**। अकारलोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वादिति भावः। 'नपुंसकस्य झलचः' इत्यत्र पुनरज्ग्रहणादजिति प्रत्याहारो न गृह्यते, नाप्यच् धातुर्व्याख्यानात्। प्रकृतसूत्रे 'नुम्विधौ झल्ग्रहणम्' इति वार्तिकप्रत्याख्यानाय 'नपुंसकस्य झलचः' इति सूत्रस्थस्य झल इत्यस्योभयशेषत्वमङ्गीकृतं भाष्यकृता। नपुंसकस्येति सूत्रे च झल् अचः पर एव ग्राह्य इति निर्णीतं 'बहूर्जि नुम्प्रतिषेधः' वार्तिकप्रत्याख्यानायेति तत्र निर्णीतस्यैव उगिदंशशेषत्वे नलोपिन एवाञ्चतेर्नुम्प्राप्तिर्न तु पूजार्थस्याञ्चतेः। नन्वेवं श्रेयांसि भूयांसीत्यादौ कथं नुम्द्वयापादनं भाष्योक्तं संगच्छते, उगिल्लक्षणे नुमि जाते झलोऽचः परत्वाभावात्। झल्लक्षणे नुमि जाते अचः परस्य झलोऽसंभवादिति चेत्। 'श्रेयस्–शि' इत्येवं सर्वनामस्थानोपदेशे झलः अचः परत्वसत्त्वेन द्वयोरपि प्राप्तेस्सत्त्वाद्वार्तिकभाष्यसंयोजने व्याघाताभावादिति भावः॥ ३ **उपधादीर्घ इति**। 'सर्वनामस्थाने चासंबुद्धौ' इत्यनेन नान्ताङ्गप्रयुक्त इत्यर्थः॥ ४ **भट्टिरिति**। 'मघवानृजीषि' इत्यादौ वेदेऽपि दीर्घस्य दर्शनाद्वेदस्याप्युपलक्षणम्॥ ५ **संप्रसारणाच्चेति**। 'संप्रसारणं तदाश्रयं च कार्यं बलवद्' इति परिभाषया पूर्वरूपेणाल्लोपोऽन इति बाध्यते इति भावः। यदि तु उक्तपरिभाषा उभयेषांग्रहणवैयर्थ्यवारणाय प्रत्याख्यातेति विभाव्यते, तदा वार्णादाङ्गमित्यस्यानित्यत्वेनाप्रवृत्तावन्तरङ्गत्वात्पूर्वरूपमित्यवधेयम्॥ ६ **स्त्रियां मघवतीति**। पुंयोगेन स्त्रियां वृत्तौ 'उगितश्च' इति ङीप् विभक्तौ लिङ्गविशिष्टाग्रहणान्न नुम्॥ ७ **शुन इति**। 'असिद्धवदत्राभात्' इति संप्रसारणस्यासिद्धत्वाद् 'न संयोगात्–' इति निषेधाद् 'अल्लोपोऽनः' इत्यस्य निषेधः॥ ८ **पूजार्थस्याञ्चतेर्नुमीति**। एतत् 'नपुंसकस्य झलचः' 'उगिदचाम्–' इति सूत्रद्वयभाष्यसंवादविरुद्धत्वाच्चिन्त्यमेवेति बोध्यम्॥

कृते ॥ (४९३) सू॰ नं संप्रसारणे संप्रसारणम् । ६ । १ । ३७ । संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् । यूनः । यूना । युवभ्यामित्यादि ॥ अर्वा । हे अर्वन् ॥(४९४) सू॰ अर्वणस्त्रसावनञः ।६।४।१२७। नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशः स्यान्न तु सौ । उगि-

---

राजकीयमित्यत्राप्यल्लोपाभावः सिद्धः । 'वनो र च ६२०' 'राज्ञः क च १६१५' इत्यादेशे कृते नकारान्तत्वाभावात् ॥ **स्त्रियां मघवतीति** । मघवत्यौ मघवत्य इत्यत्र लिङ्गविशिष्टपरिभाषया[२६] ' उगिदचाम्-४९१' इति नुम् न शङ्क्यः, विभक्तौ लिङ्गविशिष्टाग्रहणादित्याहुः ॥ ( ४९३ ) **न संप्रसारणे**— । 'ह्वः संप्रसारणम् ३४३९' इत्यतः संप्रसारणमित्यनुवर्तमानेऽपि पुनः संप्रसारणग्रहणात्प्रदेशान्तरस्थं ' श्वयुवमघोनाम्-४९२' इत्यपि संप्रसारणं निषिध्यते तदाह—**इति यकारस्य नेत्वमिति** ॥ **यून इति** । ननूकारेण व्यवधानात्कथमत्र निषेधः विव्याध विव्यथे इत्यादावव्यवधानेऽपि निषेधस्य चरितार्थत्वात् । न च सवर्णदीर्घे कृते नास्ति व्यवधानमिति वाच्यम् , 'अचः परस्मिन्-७४' इति स्थानिवत्त्वात् । अत्राहुः-विदेशस्थनिषेधार्थात्पुनः संप्रसारणग्रहणादेव व्यवधानेऽप्यत्र निषेधो भविष्यतीत्यदोषः । न च 'व्यथो लिटि ३१३४' इति विदेशस्थेन यकारस्य संप्रसारणे कृते वकारस्य तदभावाय ' न संप्रसारणे-४९३' इति सूत्रं प्रवर्त्य पुनः संप्रसारणग्रहणं चरितार्थमिति व्यवधाने निषेधो न भविष्यतीति शङ्क्यम् 'व्यथो लिटि ३१३४' इत्येतद्धलादिःशेषापवाद इत्याकरे स्पष्टत्वात् । उत्सर्गसदेशश्चापवाद इति परस्यैव संप्रसारणं भवति, न पूर्वस्येति[३] कैयटेन व्याख्यातत्वाच्चेति ॥ ( ४९४ ) **अर्वणस्तृ**— । अङ्गस्येति वर्तते, तच्चार्वणा विशेष्यते, अनञ इत्यनेनापि, तदाह—**नञा रहितस्येत्यादि** । असाविति पर्युदासे विभक्तौ परत एव स्यात्ततश्चार्वतीत्यादौ न स्यादित्याशयेनाह--**न तु साविति** । न चैवमर्वाप्रिय इत्यादावतिप्रसङ्गः । अङ्गेन स्वानिमित्तस्य प्रत्ययस्याक्षेपाल्लुका लुप्तत्वेनात्र प्रत्ययलक्षणाभावात् । एतेन ' वाहैरलुप्यत सहस्रदृगर्वगर्वः' इति श्रीहर्षप्रयोगो व्याख्यातः ॥ नन्वेवं 'स्थानिवदादेशः-' इति सूत्रे 'धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः स्थानिवत् स्युः' इति प्राचो ग्रन्थमनूद्य-तत् किं परिगणनम्-उदाहरणमात्रं वेति विकल्प्य, नान्त्यः, अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यादिति मनोरमायां यदुक्तं तत्कथं संगच्छेत, अव्ययस्योक्तरीत्याऽनङ्गत्वात् । न च ' न लुमता-३६८' इत्यनेनाङ्गकार्यनिषेधेऽप्यङ्गसंज्ञाया अनिषेधान्नोक्तदोष इति वाच्यम् , 'प्रत्यये परतः पूर्वस्य यत्कार्यमाङ्गमनाङ्गं वा तत्सर्वं ' न लुमता-३६८' इत्यनेन निषिध्यते' इति 'यङोऽचि च' इति सूत्रस्थमनोरमाग्रन्थपर्यालोचनया लुमता शब्देन लुप्ते अङ्गसंज्ञाया अप्यस्वीकार्यत्वात् । तस्या अपि प्रत्यये परतः पूर्वस्य कार्यत्वात् । यदि लुका लुप्तेऽप्यङ्गत्वं स्वीक्रियते, तदाऽयं ग्रन्थो 'यचि भम् २३२' 'वृषण्वस्वश्वयोः ५२१३' इत्यत्र 'वृष वर्षुकं वसु धनं यस्य वृषण्वसु, वृषा अश्वो यस्य वृषणश्वः' इत्युदाहृत्य 'भत्वादिह नलोपो न भवति, अल्लोपस्तु अनङ्गत्वान्न' इति मूले वैदिकप्रक्रियायां वक्ष्यमाणग्रन्थेन सह विरुध्यते । न च 'अल्लोपोऽनः २३५' इत्यत्राङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽनिति व्याख्यानादल्लोपस्य तत्र प्राप्त्यभावादनङ्गत्वादिति समाधानं व्यर्थमिति भ्रमितव्यम् , भसंज्ञयैव यजादिस्वादिपरो योऽनिति व्याख्यानाद्वृस्वश्वयोः परतो योऽनिति व्याख्यानस्यापि लाभात् । तस्मात्पदात्पृथगित्येव वक्तव्ये अङ्गपदाभ्यामित्यङ्गग्रहणं रभसकृतमेवेति चेत् । अत्राहुः-, 'न लुमता-३६८' इति सूत्रे ' लुमता लुप्ते तन्निमित्ताङ्गस्याङ्गसंज्ञकस्य कार्यं न स्यात् ' इति व्याख्यायते, तदा ' अर्वणस्तृ-४९४' इत्याद्यङ्गकार्याप्रवृत्तावप्यङ्गसंज्ञाया निर्बाधत्वादङ्गग्रहणं तत्रत्यं सम्यगेव । यदा त्वाङ्गमनाङ्गं वेत्यादिमनोरमाग्रन्थस्यानङ्गत्वादिति मूलग्रन्थस्य च स्वारस्यपर्यालोचनया लाघवादव्ययस्याङ्गत्वे फलाभावाच्च प्रत्यये परतः पूर्वस्य कार्यं निषिध्यते, तदा त्वविशेषेण अङ्गसंज्ञाया अपि निषेधादङ्गग्रहणं तत्र रभसकृतमेव । न च ' न लुमता-३६८' इत्यनेन अङ्गसंज्ञानिषेधे 'युवोरनाकौ' इति सूत्रस्थभाष्यकैयटाभ्यां विरोधः स्यादिति वाच्यम् , तयोस्तत्र प्रौढिवादेन प्रवृत्तत्वात् । तथा च ' न लुमता तस्मिन् ' इति सिद्धान्तेऽयं निषिध्यत इति मनोरमाग्रन्थश्च स्वरसतः संगच्छत इति ॥ ननु ऋधातोर्विचि[४] गुणे च आरिति रूपं, तस्मान्मतुपि अर्वन्तावित्यादि सेत्स्यति । ' छन्दसीवनिपौ-५३४२' इति वनिपि वेदे अर्वेति सेत्स्यति, ऋधातोरेव 'स्नामदिपद्यर्ति-४७५८' इत्यादिना वनिपि तु लोकेऽप्यर्वेति सेत्स्यति । रूढिशब्दश्चायं

---

१ **न सम्प्रसारणे सम्प्रसारणमिति** । ननु ' सम्प्रसारणाच्च ' इत्युत्तरं ' न सम्प्रसारणे ' ' लिटि वयो यः ' इति प्रकरणं कृत्वा ' सम्प्रसारणात् सम्प्रसारणे पूर्वरूपं न ' इत्याद्यर्थकरणेन पूर्वयणादेः सम्प्रसारणे कृतेऽपि पूर्वरूपे निषिद्धे पुनर्यणादेशेन सकलरूपसिद्धावत्र सम्प्रसारणपदं व्यर्थमेवेति चेत् न, सम्प्रसारणनिषेधाऽपेक्षया सम्प्रसारणपूर्वरूपतन्निषेधयण्विधिप्रवर्त्तने प्रक्रियागौरवस्याव्याघातात् ॥ पूर्वसूत्रतः सम्प्रसारणपदानुवृत्त्यैव सिद्धावत्र संप्रसारणपदं स्पष्टार्थमिति केचित् ॥
२ **नञा रहितस्येति** । अनञ इति बहुव्रीहिः । नञ्तत्पुरुषे तु नञ्भिन्नात्परस्येत्यर्थेऽसमस्ते 'वाजमर्वत्सु' इत्यादौ न स्यादिति भावः ॥ ३ **न पूर्वस्येतीति** । 'यूनास्तिः' इति निर्देशोऽपि व्यवहितेऽपि निषेधप्रवृत्तौ 'नित्यः परयणादेशः परत्वासौ व्यवस्थया' इति भाष्यसंमते पूर्वं परस्यैव संप्रसारणे च्चानुकूल इति सकृत्प्रवृत्त्यैव नोभयोर्युगपदेव संप्रसारणमिति भावः । 'लक्ष्ये लक्षणम्-' इति न्यायेन तु न पूर्वस्य संप्रसारणव्यावृत्तिः, यं धर्मं लक्ष्यतावच्छेदकीकृत्य शास्त्रं प्रवृत्तं तदेव लक्ष्यतावच्छेदकीकृत्य पुनर्न प्रवर्तते इत्येव तस्यार्थाङ्गीकरणेनात्र लक्ष्यतावच्छेदकभेदात् । ईदृशार्थाङ्गीकारे चेदमेव सूत्रं प्रमाणमित्यवधेयम् ॥
४ **विचीति** । छन्दस्युभयदर्शनादिति वार्तिकेन च्छन्दसि दर्शनसूचनादिति भावः ॥

र्वान्नुम्। अर्वन्तौ। अर्वन्तः। अर्वन्तम्। अर्वन्तौ। अर्वतः। अर्वता। अर्वद्भ्यामित्यादि। अनञः किम्[1]। अनर्वा यज्ववत्॥(४९५) (सू) पथिमथ्यृभुक्षामात्।७।१।८५। एषामाकारोऽन्तादेशः स्यात्सौ परे। आ आदिति[2] प्रश्लेषेण[3] शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः॥(४९६) (सू) इतोऽत्सर्वनामस्थाने।७।१।८६। पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे॥ (४९७) (सू) थो[4] न्थः।७।१।८७। पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे। पन्थाः। पन्थानौ। पन्थानः। पन्थानम्। पन्थानौ॥ (४९८) भस्य टेर्लोपः।७।१।८८। भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात्[5]। पथः। पथा। पथिभ्यामित्यादि। एवं मन्थाः। ऋभुक्षाः। स्त्रियां नान्तलक्षणे[6] ङीपि भत्वाट्टिलोपः। सुपथी नगरी। अनृभुक्षी सेना। आत्वं नपुंसके

---

'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरकोशात्, ततश्चार्थोऽपि न भिद्यत इति किमनेन सूत्रेणेति चेत्। अत्राहुः- नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञ्पूर्वपदे च नान्तस्य प्रयोगो भवत्यन्यत्र तु नान्तस्य प्रयोगो न भवतीति व्यवस्थार्थमिदं 'तृज्वत्क्रोष्टुः ३८५' इति त्रिसूत्रीवदिति॥ यत्तु कैश्चिदुक्तम्-अर्वन्मघवन्शब्दयोरपि भाषायामसाधुत्वमेव। 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्' इति वार्तिकादिति। तदापाततः, वार्तिकस्य वनिबन्तमध्योदात्तपरत्वात्, छन्दस्येव वनिब्विधानात्। तथा च श्रीहर्षः—'वाहैरलुप्यत सहस्रहगर्वगर्वः' इति प्रायुङ्क्त॥ अर्वन्तौ। अर्वन्त इति। व्यपदेशिवद्भावेनार्वन्नन्तत्वात्त्रादेशः। न च व्यपदेशिवद्भावोऽप्रातिपदिकेनेति वाच्यम्, तस्य प्रत्ययविधिविषयत्वात्॥ (४९५) पथिमथि—। 'गमेरिनिः ४६४९' इत्यत इनिरिति 'परमे कित् ४६५३' इत्यतः किदित्यनुवर्तमाने 'मन्थः ४६५४' इत्यनेन निष्पन्नो मथिन्शब्दः। 'पतः स्थ च ४६५५' चादिनिः। पथिन्। 'ऋभुक्षः स्वर्गवज्रयोः'। ततो मत्वर्थीयेनिना ऋभुक्षिन्निति बोध्यम्॥ ननु 'अस्थिदधि-४४५' इति सूत्रे उदात्ततया पठितेऽप्यनङीष्टसिद्धौ 'अनङुदात्तः' इत्युदात्तग्रहणं 'गुणा अभेदकाः' इति पक्षं ज्ञापयतीति निर्विवादम्। तथा च तस्मिन्पक्षे सूत्रेऽननुनासिकोच्चारणेऽप्यान्तरतम्यादनुनासिकाकारः स्यादत आह--आ आदिति॥(४९६) इतोऽत्सर्वनाम—। आदिति वर्तमाने पुनरद्वचनं किमर्थं, कृतेऽप्यद्वचने पन्था इत्यत्र सवर्णदीर्घेण भाव्यमन्यत्र तूपधाया दीर्घेणेति चेत् मैवम्, ऋभुक्षणमित्यत्र 'वा षपूर्वस्य निगमे ५३९२' इति दीर्घविकल्पे सति पक्षे ह्रस्वश्रवणार्थमद्वचनस्यावश्यकत्वात्॥ (४९७) थो न्थः। स्थान्यादेशौ द्वावप्यनच्कौ 'थेन्थः' इत्येव सिद्धे 'इतोऽत्सर्वनामस्थाने ४९६' इत्येतदृभुक्षिन्नर्थम्। त्रयाणामनुवृत्तावपि ऋभुक्षस्थो न संभवतीत्याशयेनाह--पथिमथोरिति। प्रसङ्गादाह--स्त्रियामिति। नान्तलक्षण इति। 'न पूजनात् १३६९' इति निषेधात् 'ऋक्पूरब्धूः-१३५०' इत्यप्रत्ययो नेति भावः॥ सुपथीति। 'इनः स्त्रियाम् १२७३' इति कप्तु न कृतः, समासान्तविधेरनित्यत्वात्। 'युवोरनाकौ' इति सूत्रे 'सुपथी' इति भाष्याच्च। 'न पूजनात् १३६९' इति निषेधस्य तु नायं विषयः, 'षचः प्राचीनेष्वेव सः' इति वक्ष्यमाणत्वात्। 'पथिमथि-४९५' इत्यात्वं थो न्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं विभक्तौ लिङ्गविशिष्टाग्रहणान्न भवति। अत्रेदं बोध्यम्-पन्थानमात्मन इच्छति पथीयति। ततः क्विप्। अल्लोपयलोपौ। एकदेशविकृतस्यानन्यत्वात् 'पथिमथि-४९५' इत्यात्वम्, 'थो न्थः ४९७'। पन्थाः। 'इतोऽत्सर्वनामस्थाने ४०६' इत्यत्वं न भवति, इत इति तपरकरणात्। 'एरनेकाचः-३८०' इति यणं बाधित्वा परत्वान्नित्यत्वाच्च 'थो न्थः ४९७'। संयोगपूर्वकत्वान्न यण्। पन्थियौ। पन्थियः। पन्थियम्। पन्थियौ॥ 'भस्य टेर्लोपः ४९८'। पथः। पथा। पथीभ्याम्। पथीभिरित्यादि। एवं मन्थीयतेः क्विपि तु

---

१ अनञः किमिति। सामान्ये नपुंसकत्वमाश्रित्य प्रयोगात्, अनञ इत्यस्य व्यावर्त्यः कः शब्द इति प्रश्नस्योत्तरम्- अनर्वा यज्ववदिति। यज्वशब्दतुल्योऽनर्वशब्दो व्यावर्त्य इति तस्यार्थ इति बोध्यम्॥ २ आदिति। नन्वनेन सूत्रेणापि ह्रस्वाकार एव नकारस्यापि विधीयताम्। उत्तरत्र च तदेवानुवर्तनीयम्। न चैवं पररूपे सौ दीर्घश्रवणानुपपत्तिरिति वाच्यम्। 'पथिमथ्यृभुक्षां लोपः' 'भस्य टेः' 'इतोऽत्सर्वनामस्थाने' इत्येवं न्यासेन सकललक्ष्यसिद्धावप्यकारविधानसामर्थ्यादिति चेत् न-ज्ञानगौरवपरिहाराय स्पष्टार्थमाकारस्योच्चारणादिति भावः॥ ३ प्रश्लेषेणेति। 'इदमोऽन्वादेशेऽश्-' 'लुटः प्रथमस्य डा—' 'परस्मैपदानां णल्—' इत्यत्र सर्वत्र प्रश्लेषेण सर्वादेशत्वसाधनादत्र भाष्यानुक्तप्रश्लेषेऽपि सर्वादेशत्वं नेत्यत्र मानाभावेन चिन्त्यमिदम्। तस्माद् 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषया 'तद्वानासाम्' इत्यत्रेव नानुनासिकापत्तिरिति तत्त्वम्॥ ४ थो न्थ इति। इत्संज्ञालोपशास्त्रयोराद्यन्तावीति शास्त्रस्य चानुसंधानेन प्रक्रियागौरवभिया थो नुड् न विहित इति बोध्यम्॥ ५ पथ्यादेरिति। 'भस्य टेर्लोपः' इति सूत्रे 'पथिमथ्यृभुक्षामात्' इत्यतोऽनुवृत्तस्य षष्ठ्यन्तस्यार्थमाह-पथ्यादेरिति॥ ६ इदं चिन्त्यम्। 'न शिष्यं छान्दसं हि तद्' इति सामान्यप्रवृत्तवार्तिकस्य संकोचे मानाभावात्। कविप्रयोगाणां प्रायशः प्रामादिकानां दर्शनेन तेषामार्षवचनसंकोचकत्वे न मानत्वमिति शब्दरत्ने॥ ७ प्राप्तमिति। प्राप्तं च प्राप्तश्चेति, 'नपुंसकमनपुंसकेन—' इत्येकशेषः॥ ८ न यणिति। न च तदभावेऽपीयङ् दुर्लभः सुब्विधावन्तर्वर्तिविभक्त्याश्रयनलोपस्यासिद्धत्वेनेवर्णान्ताङ्गत्वाभावादिति वाच्यम्। सुप्वतद्वाप्यधर्मनिमित्तकसुब्विधेरेव ग्रहणात्। अत एव पथिष्वित्यादौ षत्वे नलोपस्यासिद्धत्वं न। न च न्थादेशे कृतेऽङ्गवृत्तपरिभाषया नेयङ्, तस्या अनित्यत्वादनाश्रयणाद्वा। न चेयङि कृतेऽत्वं दुर्वारम्, संनिपातपरिभाषया स्वातिरिक्तताद्विघातकस्य बाधेनादोषादिति भावः॥

न भवति, न लुमतेति[३६८] प्रत्ययलक्षणनिषेधात्। सुपथि वनम्॥ (४९९) (वा) संबुद्धौ नपुंसकानां नलोपो वा वाच्यः॥ हे सुपथिन्, हे सुपथि। नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वाद्ध्रस्वस्य[३४६] गुणो न। द्विवचने भत्वाट्टिलोपः। सुपथी। शौ सर्वनामस्थानत्वात् सुपन्थानि। पुनरपि सुपथि। सुपथी। सुपन्थानि। सुपथा। सुपथे। सुपथिभ्यामित्यादि॥ (५००) (सू) ष्णान्ता षट्।१।१।२४। षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। षड्भ्यो[३६६] लुक्। पञ्च२।संख्या किम्।विप्रुषः। पामानः।शतानि सहस्राणीत्यत्र सन्निपातपरिभाषया[१] न लुक्। सर्वनामस्थानसन्निपातेन कृतस्य नुमस्तदविघातकत्वात्। पञ्चभिः। पञ्चभ्यः २। षट्चतुर्भ्यश्चेति[४६२] नुट्॥(५०१) (सू) नोपधायाः।६।४।७। नान्तस्योपधाया दीर्घः स्यान्नामि परे। नलोपः। पञ्चानाम्। पञ्चसु। परमपञ्च। परमपञ्चानाम्। गौणत्वे[२] तु न लुग्नुटौ।प्रियपञ्चा। प्रियपञ्चानौ। प्रियपञ्चानः। प्रियपञ्चानाम्।एवं सप्तन् नवन् दशन्[३]॥(५०२)(सू)अष्टन आ विभक्तौ।७।२।८४। अष्टन आत्वं[४] स्याद्धलादौ विभक्तौ॥

---

मन्थाः। मन्थियौ। मन्थियः। ऋभुक्षाः। ऋभुक्षियौ। ऋभुक्षियः। इत्यादि। एतेन 'इतोऽत्सर्वनामस्थाने ४९६' इत्यत्र स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमिति हरदत्तः प्रत्युक्तः। आदेशे तपरकरणस्यानावश्यकत्वेऽपि स्थानिनि तु पन्थियौ इत्यादिसिद्धये तस्यावश्यकत्वात्॥ ननु नलोपस्यासिद्धत्वात् 'पथिमथ्यृभुक्षाम्-४९५' इति नस्यात्वे पन्थ्याः, ऋभुक्ष्याः, इत्येव भवितव्यम्, न तु पन्था इत्यादि इति चेत्। अत्राहुः-। नलोपस्यान्तर्वर्ती सुन्निमित्तम्, आत्वस्य तु बहिर्वर्ती सुप्। प्रत्यासत्त्या हि यत्रैक एव सुब् निमित्तभूतस्तत्रैव 'नलोपः सुप्स्वर-४८०' इति नलोपस्यासिद्धत्वं नान्यत्रेति नात्र नकारस्यात्वं किं त्वीकारस्येति॥ (५००) ष्णान्ता षट्। स्त्रीलिङ्गनिर्देशः संख्यां विशेषयितुम्, तत्सामर्थ्याच्च पूर्वत्र संज्ञापरमपि संख्याग्रहणमिह संज्ञिपरं संपद्यत इत्याशयेनाह--संख्येति। प्राचा तूपदेशकाले षान्ता नान्ता चेत्युक्तम्, तत् 'पञ्चेत्यत्र नलोपे कृतेऽपि-' इत्यादिवक्ष्यमाणस्वग्रन्थविरुद्धम्। संप्रत्यनान्तत्वेऽप्युपदेशे नान्तत्वमासीदिति किमासिद्धत्वेनेति दिक्॥ सन्निपातेति। तथा चोपदेशकाले इति व्याख्यानं निष्फलमपीति भावः। यत्त्वाहुः-परिभाषाया अनित्यत्वाल्लुक् स्यादिति, तत्साहसमात्रम्, इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया अकिंचित्करत्वापत्तेः। यदप्याहुः-उपदेशग्रहणमिह कुतः समागतमित्याशङ्क्य 'ष्णान्ता-' इत्यन्तग्रहणसामर्थ्यादौपदेशिकत्वं लभ्यत इति। तदपि न, संख्येत्यस्याकर्षणेन संज्ञिपरत्वसंपादनेन च सामर्थ्योपक्षयात्॥ (५०१) नोपधायाः। नेति लुप्तषष्ठीकमङ्गस्य विशेषणम्। नलोपस्यासिद्धत्वात् 'नामि २९५' इति दीर्घो न प्रवर्तत इत्ययमारम्भः॥ गौणत्वे त्विति। बहुवचननिर्देशस्यार्थप्राधान्यार्थत्वादिति भावः॥ प्रियपञ्चन्आमिति। पद्वयमध्ये चकारः॥ (५०२) अष्टन आ विभक्तौ। सौत्रत्वादिहाल्लोपो न कृतः। 'कनिन्युवृषितक्षि—४३५६' इत्यतः कनिन्नित्यनुवर्तमाने 'सप्यशूभ्यां तुट् च ४३५७' इत्यनेन सप्तन्--अष्टन्शब्दौ निष्पन्नौ॥ 'रायो हलि ४०२' इत्युत्तरसूत्राद्धलीत्यपकृष्यते। तच्च विभक्तेर्विशेषणमित्यभिप्रेत्य व्याचष्टे--हलादाविति। हलीत्यस्यानपकर्षणे त्वष्टानामिति न सिध्येत्। परत्वान्नित्यत्वाच्च नुटः प्रागात्वे कृते अनान्तत्वेन षट्संज्ञाभावान्नुटोऽप्रवृत्तेः। न च यथोद्देशपक्षेऽन्तरङ्गत्वात्प्रागेव कृता षट्संज्ञैकदेशविकृतन्यायेन[२५५] कृतात्वेऽपि सुलभेति वाच्यम्, अल्विधौ उक्तन्यायायोगात्। किञ्च, प्रियाष्टानौ, प्रियाष्टानः, प्रियाष्ट्नः, प्रियाष्ट्नेत्याद्यपि न सिध्येत्। उक्तरीत्या तत्राप्यात्वप्रवृत्तेरिति बोध्यम्॥

---

१ नलोप इति। 'श्रुवः पञ्चानां-' 'शमामष्टानाम्-'इति निर्देशेन सन्निपातपरिभाषाविरोधोऽकिंचित्कर इति भावः॥
२ गौणत्वे त्विति। प्रियपञ्चादिशब्दानां लोके संख्यावाचित्वेन प्रसिद्ध्यभावात्षट्संज्ञाया एवाभावादिति भावः॥
३ दशन्निति। एवमेव एकादशन्द्वादशन्प्रभृतयोऽपीति। 'पतिमेकादशं कृधि' इति मन्त्रे तु नैकादशन् संख्यावाची, अपि तु पूरणार्थकडप्रत्ययान्त एवेत्येकवचनं संगच्छते। एवं च दशभिः पुत्रैरेकेन पत्या चैकादशवीरवतीत्वमेव प्रार्थ्यते न त्वेकादशपतिवत्नीत्वमिति बोध्यम्॥ दशास्यां पुत्रानाधेहीति तृतीयपादसंवादेन 'उत यत् पतयो दश स्त्रियाः' इत्याथर्वणश्रुतौ पतिशब्दः पालकपर एव, न तु पाणिग्रहीतृपरः इति सर्वमनवद्यम्॥ ४ आत्वमिति। 'भाव्यमानेन सवर्णानां ग्रहणं न' इति नैवानुनासिकापत्तिर्जातिपक्षेऽपीति बोध्यम्॥ ५ संज्ञिपरत्वेति। संख्यापदस्येत्यादिः। अन्तग्रहणं समाससंपादनद्वाराऽन्यपदार्थबोधकत्वेन तत्संपादकमिति भावः॥ ६ बहुवचनेति। वस्तुतस्तु बहुवचनान्तस्यैव संज्ञात्वम् अन्तःस्थाभिश्चेत्यत्रेवेति कथं तन्निर्देशस्यार्थप्राधान्यार्थत्वमिति चिन्त्यमेतत्॥ ७ सौत्रत्वादिति। छन्दोवत्सूत्राणि भवन्तीति सूत्रेषु छन्दस्त्वातिदेशे 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति विकल्पनादिति भावः। सूत्रवार्तिकभाष्येषु नकारात्प्रागकारदर्शनान्निपातनाल्लोपाभावः। सौत्रत्वस्यैव मानत्वे तु वृत्तौ लोपापत्तिः। प्रियाष्टशब्दस्य तु नाभिधानमिति तत्त्वम्॥ ८ अल्विधाविति। षट्संज्ञाया अल्विधित्वेन तन्मूलककार्याणामपि अल्विधित्वमित्यभिमानः। यदि तु नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यल्धर्मत्वाभावेन तत्प्रयुक्तकार्यस्य नुडादेरपि नाल्विधित्वमिति स्थानिवत्त्वेनैकदेशविकृतन्यायेन च नुट् सुलभ एवेति विभाव्यते। तदा मुख्ये कार्यकालपक्षे तत्सिद्धिरेव हलीत्यनुवृत्तेः फलमिति बोध्यम्॥ ९ न सिध्येदिति। एषामनभिधानस्यैव षट्संज्ञासूत्रे भाष्यकृतोक्तत्वेनाकिंचित्करमिदम्॥

( ५०३ ) (सू.) अष्टाभ्य औश्[1] । ७ । १ । २१ । कृताकारादष्टनः परयोर्जस्शसोरौश् स्यात् । ( ५०४ ) अष्टभ्य[2] इति वक्तव्ये कृतात्वनिर्देशो जस्शसोर्विषये आत्वं ज्ञापयति । ( ५०५ ) वैकल्पिकं चेदमष्टन आत्वम् । अष्टनो दीर्घादिति सूत्रे दीर्घग्रहणाज्ज्ञापकात् । अष्टौ २ । परमाष्टौ २ । अष्टाभिः । अष्टाभ्यः २ । अष्टानाम् । अष्टासु ॥ आत्वाभावे अष्ट । अष्ट । इत्यादि पञ्चवत् । गौणत्वे त्वात्वाभावे राजवत् । शासि प्रियाष्टनः । इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वम् । ( ५०६ ) कार्यकालपक्षे बहिरङ्गस्याऽल्लोपस्यासिद्धत्वाद्वा । प्रियाष्टना—इत्यादि । जश्शसोरनुमीयमानमात्वं प्राधान्य एव न[3] तु गौणतायाम् । तेन प्रियाष्टनो हलादावेव वैकल्पिकमात्वम् । प्रियाष्टाभ्याम् ३ । प्रियाष्टाभिः । प्रियाष्टाभ्यः २ । प्रियाष्टासु । 'प्रियाष्टनो राजवत्सर्वं हाहावच्चापरं हलि' ॥ भष्भावः । जश्त्वचर्त्वे । भुत् , भुद् । बुधौ । बुधः । बुधा । भुद्भ्याम् ३ । भुत्सु ॥ ( ५०७ ) (सू.) ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । ३ । २ । ५९ । एभ्यः किन्[4] स्यात् ॥ ( ५०८ ) अलाक्षणिकमपि किंचित्कार्यं निपातनाल्लभ्यते । निरुपपदाद्युजेः क्विन् । कनावितौ ॥ ( ५०९ ) (सू.) कृदतिङ् । ३ । १ । ९३ । सन्निहिते[5] धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ।

---

( ५०३ ) **अष्टाभ्य औश्** । शित्त्वात्सर्वादेशः । ननु 'अनेकाल् शित्सर्वस्य ६९' इति सूत्रे शिद्ग्रहणं प्रत्याख्यायानेकाल्त्वादेव सर्वादेश इति सुवचम् । न च शस्येत्संज्ञायामनेकाल्त्वं नास्तीति वाच्यम्, अत्र भूतपूर्वगत्याश्रयणात् । न चैवम्—'अर्वणस्त्रसौ–४९४' इति त्रादेशस्यापि सर्वादेशता स्यादिति वाच्यम्, ऋकारस्योगित्कार्यार्थत्वेन तत्र सामर्थ्योपक्षयात् । न चैवमौशित्यादौ शकारः श्रवणार्थ एव स्यादिति शङ्क्यम्, अनुशतिकादिषु 'ऐहलौकिकम्' इति निर्देशेन शकारस्येत्संज्ञाभ्युपगमादिति दिक् ॥ **कृताकारादिति** । ( ५०४ ) ननु हलीत्यपकृष्यत इत्युक्तं, तत्कथं कृताकारतेत्याह—**अष्टभ्य इतीति** ॥ अष्टाभ्य इति कृतात्वस्येदमनुकरणम्, न तु लक्षणवशसंपन्नमात्वं, तथा हि सति वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवार्थम् 'अष्टभ्य औश्' इत्येव ब्रूयादिति भावः ॥ ( ५०५ ) **इदमिति** । श्रुतमनुमितं चेत्यर्थः ॥ **अष्टनो दीर्घादिति** । दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यात् । अष्टाभिः । दीर्घात्किम्, अष्टभिः । मध्योदात्तमिदम् । 'षट्त्रिचतुर्भ्यो हलादिः ५६९०' इति बाधित्वा 'झल्युपोत्तमम् ५५५८' इत्यस्य प्रवृत्तेः । षट्त्रिचतुर्भ्यो या झलादिविभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यादिति तदर्थः ॥ ननु प्रियाष्टन्नित्यादौ विभक्तेरुदात्तत्वनिवारणाय दीर्घग्रहणमिहावश्यकमिति कथमस्यात्वविकल्पज्ञापकतेति चेत् । अत्राहुः–'अष्टनो दीर्घात् ५६८२' इत्यत्रान्तोदात्तादित्यनुवर्त्यान्तोदात्तादष्टनः परेत्यादिव्याख्यानादष्टाभिरित्यादौ विभक्तेरुदात्तत्वं सिध्यति, घृतादित्वेनाष्टनोऽन्तोदात्तत्वात् । प्रियाष्टनः इत्यादिबहुव्रीहौ तु पूर्वपदप्रकृतिस्वराभ्युपगमेनाष्टनोऽन्तोदात्तत्वाभावाद्विभक्त्युदात्तत्वं न प्रवर्तत इति दीर्घग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमेवेति ॥ **अष्टानामिति** । नुटः पश्चादेव सन्निपातपरिभाषायाँ अनित्यत्वादात्वं, न तु ततः प्रागिति तु मनोरमायां स्थितम् ॥ अत्र नव्याः–सन्निपातपरिभाषया आत्वाभावेऽप्यत्र न क्षतिः, 'नोपधायाः ५०१' इति दीर्घे नलोपे पञ्चानां सप्तानामितिवद्रूपसिद्धेः । न च 'अष्टनो दीर्घात् ५६८२' इति विभक्त्युदात्तत्वमात्वविधेः प्रयोजनमिति वाच्यम्, 'षट्त्रिचतुर्भ्यो हलादिः ५६९०' इत्यनेनैव तत्सिद्धेरिति ॥ **पूर्वस्मादपीति** । न चात्र 'पूर्वत्रासिद्धीये न स्थानिवत् ३३८' इति निषेधः शङ्क्यः, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु ३३९' इत्युक्तत्वादिति दिक् ॥ **प्राधान्य एवेति** । औश्त्वं हि लुग्नुटाविव प्राधान्य एव भवति, न तु गौणत्वे । अष्टाभ्य इति बहुवचन[6]निर्देशात् । अन्यथा हि कृतात्वानुकरणेऽप्येकवचनेनैव निर्दिशेत् । 'अष्टा औश्' इति 'अष्ट' इति वा । एतच्च 'ष्णान्ता षट्' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । तथा चौश्त्वविधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वं प्राधान्य एवोचितमिति भावः ॥ प्रियाष्टा इति प्रथमैकवचनम् ॥ उक्तार्थं संगृह्णाति–**प्रियाष्टनो राजवदिति** ॥ इति नान्ताः ॥ **भुदिति** । बुध्यतेः क्विप् ॥ इति धान्ताः ॥ ( ५०७ ) **ऋत्विग्दधृक्–** । ( ५०८ ) **किंचिदिति** । ऋतावुपपदे यजेः क्विन् । धृष्णोतेर्द्वित्वमन्तोदात्तत्वं च । सृजेः कर्मणि क्विन्, अमागमश्च । दिशेः कर्माणि क्विन् । उत्पूर्वात् स्निहेः क्विन्, उपसर्गान्तलोपः, षत्वं च । अञ्चेः

---

१ **औशिति** । स्यादेतत्–अष्टाभ्यः परयोर्जश्शसोः स्थाने उङ्डेव विधीयताम् । तथा च ङिच्चेत्यनेन सकारस्य उङि जाते 'अष्टा अ उ' इति स्थिते आद्गुण इत्यनेन गुणे 'अष्टा ओ' इति स्थिते वृद्धौ रूपसिद्धिरप्यव्याहतेति किमौश्विधानेन इति चेत् । उच्यते–'अष्टा अ उ' इत्यत्रान्तरङ्गत्वात्पूर्वं सवर्णदीर्घे जाते ततो गुणेऽनिष्टरूपापत्तेः । स्फुटा चेयं रीतिः 'इणुङ्शीनामाद्गुणः सवर्णदीर्घत्वाद्' इति वार्तिकभाष्ये । किं च उङ्ङिति न्यासे नैव पदलाघवम् । नापि प्रक्रियालाघवम्, प्रत्युत प्रक्रियागौरवमेवेति बोध्यम् ॥ २ **अष्टभ्य इतीति** । भाष्ये तु "आत्वं यत्र तु तत्रौश्त्वं तथा ह्यस्य ग्रहः कृतः" इति वार्तिकव्याख्यायाम् "ननु च नित्यमात्वम्" इति शङ्कायाम्, एतदेव ज्ञापयत्याचार्यः–'विभाषा आत्वम्–' इति । यदयमात्वभूतस्य ग्रहणं करोति—'अष्टाभ्यः' इति । इतरथा हि–'अष्टनः' इत्येव वदेत्" इत्येवमुपलभ्यते ॥ ३ **न तु गौणतायामिति**। गौणानां प्रियाष्टादीनामनभिधानस्यैव षट्संज्ञासूत्रे भाष्ये उक्तत्वादिति भावः ॥ ४ **क्विन्निति**। 'स्पृशोऽनुदके–' इति सूत्रात् 'क्विन्' इत्यनुवर्तत इति भावः ॥ ५ **सन्निहित इति**। अत एव णिजादिव्यावृत्तिः ॥ ६ **बहुवचनेति** । चिन्त्यमिदम् । 'इतरथा ह्यष्टन इत्येव ब्रूयात्' इति भाष्यविरुद्धसूत्राशयकल्पनाया अनुचितत्वात् । 'तिसृभ्यो जसः' इत्यत्रेव शब्दबाहुल्येन बहुवचनस्यापि न्यायप्राप्तत्वाच्च ॥

( ५१० ) (सू) **वेरपृक्तस्य**[१] ।६।१।६७। अपृक्तस्य वस्य लोपः स्यात् । कृत्तद्धितेति प्रातिपदिकत्वात्स्वादयः ॥ ( ५११ ) (सू) **युजेरसमासे** ।७।१।७१। युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः । संयोगान्तस्य लोपः ॥ ( ५१२ ) (सू) **क्विन्प्रत्ययस्य कुः** ।८।२।६२। क्विन्प्रत्ययो यस्मात्[२] तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते । नस्य कुत्वेनानुनासिको ङकारः । युङ् । नश्चापदान्तस्येति नुमोऽनुस्वारः । परसवर्णः । तस्याऽसिद्धत्वाच्चोः कुरिति कुत्वं न । युञ्जौ । युञ्जः । युञ्जम् । युजौ । युजः । युजा । युग्भ्यामित्यादि । असमासे किम्–( ५१३ ) (सू) **चोः कुः** ।८।२।३०। चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । इति कुत्वम्, क्विन्प्रत्ययस्येति कुत्वस्यासिद्धत्वात् । सुयुक्, सुयुग् । सुयुजौ । सुयुजः । युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं न त्विका[३] निर्देशः । तेनेह न, युज्यते समाधत्ते इति युक्[४] । युज समाधौ दैवादिक आत्मनेपदी । संयोगान्तलोपः । खन् । खञ्जौ । खञ्जः—इत्यादि ॥ व्रश्चेति षत्वम् । जश्त्वचर्त्वे । राट्, राड् । राजौ । राजः । राड्सु । राट्त्सु । एवं विभ्राट् । देवेट् । देवेजौ । देवेजः ॥ विश्वसृट्, विश्वसृड् । विश्वसृजौ । विश्वसृजः । इहं[५] सृजियुज्योः कुत्वं नेति क्लीबे वक्ष्यते । परिमृट्[६] । षत्वविधौ राजिसाहचर्यात् टुभ्राजृ दीप्ताविति फणादिरेव गृह्यते । यस्तु एजृ भ्राजृ दीप्ताविति तस्य कुत्वमेव । विभ्राक्, विभ्राग् । विभ्राग्भ्यामित्यादि ॥ ( ५१४ ) (सू) **परौ व्रजेः षः पदान्ते** ॥ परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्तविषये षत्वं च । परित्यज्य सर्वं व्रजतीति परिव्राट् । परिव्राजौ । परिव्राजः ॥ ( ५१५ ) (सू) **विश्वस्य वसुराटोः**[७] ।६।३।१२८। विश्वशब्दस्य दीर्घः स्याद्वसौ

---

सुप्युपपदे क्विन् इत्यर्थः ॥ **निरुपपदाद्युजेरिति** । क्रुञ्चेरप्येवम् । नलोपाभावस्त्वधिकः ॥ **कनावित्ताविति** । इकारस्तूच्चारणार्थ इति भावः ॥ ( ५०९ ) **सन्निहित इति** । प्राचा तु 'तृतीये धात्वधिकारे' इत्युक्तम् । तदसत्, 'धातोः कर्मणः–३४६५' इति सन्विधौ धातुग्रहणस्योत्तरत्रानुवृत्तेरभावेनाधिकारत्रयाभावात् ॥ ( ५११ ) **युजेरसमासे** । 'उगिदचाम्–४९१' इत्यतः सर्वनामस्थान इत्यनुवर्तते । 'इदितो नुम् धातोः ३०२६' इत्यतो नुम् चेत्याशयेनाह–**सर्वनामस्थाने नुम् स्यादिति** ॥ ( ५१२ ) **क्विन्प्रत्ययस्य**—। 'क्विनः कुः' इत्युक्तेऽपि प्रत्ययग्रहणे तदन्तग्रहणात् क्विन्नन्तस्य ग्रहणे सिद्धे प्रत्ययग्रहणं बहुव्रीहिविज्ञानार्थमित्याशयेन व्याचष्टे––**क्विन् प्रत्ययो यस्मादिति** । बहुव्रीह्याश्रयणफलं तु स्पृगित्यादि स्फुटीभविष्यति ॥ ( ५१३ ) **सुयुगिति** । सुष्ठु युनक्तीति विग्रहे 'सत्सूद्विष–२९७४' इति क्विप् ॥ **तेनेह नेति** । नुम्नेत्यर्थः । क्विन्प्रत्ययस्तु स्यादेव 'ऋत्विग्–५७७' इत्यादिसूत्रे युजीति इका निर्देशात् ॥ **खन्निति** । खञ्जतीति खन् । 'खजि गतिवैकल्ये' ॥ **एवं विभ्राडिति** । फणादिरयम् । विशेषेण भ्राजत इति विभ्राट् ॥ देवान् यजतीति देवेट् । क्विपि वचिस्वपियजादित्वात्संप्रसारणे आद्गुणः । विश्वं सृजतीति विश्वसृट् । क्विबन्तः । क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात्कुत्वं कस्मान्न भवतीत्याशङ्क्याह—**नेति क्लीबे वक्ष्यत इति** । "रज्जुसृड्भ्याम्' इति भाष्यकारप्रयोगात् । यद्वा–व्रश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः" इति वक्ष्यत इत्यर्थः ॥ परिमार्ष्टीति परिमृट् ॥ ( ५१४ ) **परौ व्रजेः**–। 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च ४४१८ इत्यौणादिकात्पूर्वसूत्रादिह क्विब्दीर्घावनुवर्तेते, तदाह—**क्विप् स्याद्दीर्घश्चेति** ॥ ( ५१५ ) **विश्वस्य वसु**—। 'ढ्रलोपे–२५८' इत्यतोऽनुवर्तनादाह—**विश्वशब्दस्य**

---

१ **वेरपृक्तस्येति** । चिकीर्ष्वोरित्यादौ वकारस्यापृक्तस्य लोपापत्तिवारणाय इकारोपश्लिष्टोपदिष्टवकारस्यैव संग्रहार्थमिकारोच्चारणम् । तेन विजृण्विण्विन्विड्क्विन्क्विपामेव ग्रहणम्, न तु युवोरनुनासिकान्तपक्षे लोपशङ्कापि । एवं च क्विनादिष्वपीकार एतदर्थ एवेति बोध्यम् ॥ २ **यस्मादिति** । दृष्ट इति शेषः ॥ ३ **न त्विकेति** । व्याख्यानादिति भावः ॥ ४ **युगिति** । 'क्विप् च' इति क्विप् । क्विन्विधावपि नेका निर्देश इति भावः । कुत्वं तु 'चोः कुः' इत्यनेनैव, 'क्विन्प्रत्ययस्य–' इत्यस्यासिद्धत्वादिति बोध्यम् ॥ ५ **इहेति** । क्विन्प्रत्ययप्रकृतित्वेऽपि चवर्गेऽपीत्यर्थः । 'सृजिदृशोः–' इति सूत्रभाष्ये 'रज्जुसृड्भ्याम्' इति काम्यच्–सूत्रे 'उपयट्काम्यति' इति भाष्यप्रयोगादिति भावः ॥ ६ **परिमृडिति** । 'मृजेर्वृद्धिः' इति वृद्धिः क्विङ्निमित्तिका 'क्ङिति च' इति निषिध्यते । सुब्निमित्तिका तु भ्रौणहत्येति तत्त्वनिपातनज्ञापितया 'धातोः स्वरूपेणोच्यमानं कार्यं धातुविहितप्रत्यय एव भवति' इति परिभाषया न भवति ॥ ७ **वसुराटोरिति** । 'आदित्या विश्ववसवः' इत्यत्र तु न दीर्घः । 'नरे संज्ञायाम्' इत्यतः संज्ञापदापकर्षात् । राडिति राजधातोरेव ग्रहणं व्याख्यानात् । तेन णिजन्तराट्धातौ नापत्तिरिति बोध्यम् ॥ ८ **नलोपाभावस्त्विति** । निपातनादित्यादिः । 'परेश्च घाङ्कयोः' इति सूत्रे भाष्ये– 'क्रुञ्चेत्यत्र 'चोः कुः झलि' इति कुत्वं प्राप्नोति–" इत्याक्षिप्य "निपातनात्सिद्धम् । किं निपातनम् । ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाम् इति ।" इति भाषितम् । तेन क्रुञ्चधातोश्चवर्गपञ्चमोपधत्वं निपात्यत इति नकारोपधत्वाभावान्नैव लोपापत्तिरित्यभिसंधिं सूचयन्नाह–अधिक इति । अनुपयुक्त इत्यर्थः । व्यर्थ इति यावत् । 'नकारजावनुस्वारपञ्चमौ–' इति तूपदेशपरमिति भावः ॥ ९ **उच्चारणार्थ इति** । ककारे गुणप्रतिषेधार्थत्वस्येव नकारे प्रकृत्याद्युदात्तत्वार्थत्वस्येव न किमपि प्रयोजनमित्संज्ञकत्वेऽपि लोपवर्जमिकारस्येत्युच्चारणार्थत्वमेवेति भावः ॥ १० **बहुव्रीहीति** । अतद्गुणसंविज्ञानेत्यादिः ॥

राट्शब्दे च परे । विश्वं वसु यस्य स विश्वावसुः । राडिति पदान्तोपलक्षणार्थम् । चर्त्वमविवक्षितम् । विश्वाराट्, विश्वाराड् । विश्वराजौ । विश्वराजः । विश्वाराड्भ्यामित्यादि ॥ (५१६) (सू) **स्कोः संयोगाद्योरन्ते च** ।८।२।२९। पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात् । भृट्, भृड् । सस्य श्चुत्वेन शः । तस्य जश्त्वेन जः । भृज्जौ । भृज्जः । 'ऋत्विगित्यादिना ऋतावुपपदे यजेः क्विन् । क्विन्नन्तत्वात्कुत्वम् । ऋत्विक्, ऋत्विग् । ऋत्विजौ । ऋत्विजः ॥ रात्सस्येति नियमान्न संयोगान्तलोपः । ऊर्क्, ऊर्ग् । ऊर्जौ । ऊर्जः ॥ त्यदाद्यत्वं पररूपत्वं च॥ (५१७) (सू) **तदोः सः सावनन्त्ययोः**।७।२।१०६। त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ परे । स्यः । त्यौ । त्ये । त्यम् । त्यौ । त्यान् ॥ सः । तौ । ते । परमसः । परमतौ । परमते ॥ द्विपर्यन्तानामित्येव ॥ नेह । त्वम् । न च तकारोच्चारणसामर्थ्यान्नेति वाच्यम्, अतित्वमिति गौणे चरितार्थत्वात् ॥ संज्ञायां गौणत्वे चात्वसत्वे न । त्यद् । त्यदौ । त्यदः । अतित्यद् । अतित्यदौ । अतित्यदः ॥ यः । यौ । ये ॥ एषः । एतौ । एते । अन्वादेशे तु एनम् । एनौ । एनान् । एनेन । एनयोः २॥ (५१८) (सू) **ङे प्रथमयोरम्** । ७।१।२८। युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात् ॥ (५१९) (सू) **मपर्यन्तस्य** । ७।२।९१। इत्यधिकृत्य ॥ (५२०) (सू) **त्वाहौ सौ**।७।२।९४। युष्मदस्मदोर्मपर्यन्तस्य

---

दीर्घः स्यादिति । (५१६) **स्कोः**—। पदस्येत्यनुवर्तते 'झलो झलि ३०४८' इत्यतो झलीति च, संयोगेति लुप्तषष्ठीकं झलन्ताभ्यां विशेष्यते, तदेतदाह-**पदान्ते झलि च परे इति** । झलि किम् । भ्रष्टा, भृज्जतीति भृट् । क्विप् । 'ग्रहिज्या-३२१६' इति संप्रसारणम् । 'व्रश्च-४१७' इति षत्वम् ॥ **ऊर्गिति** । 'ऊर्ज बलप्राणनयोः' । अस्माच्चुरादिण्यन्तात् 'भ्राज-भास-४१८३' इत्यादिना क्विपि णिलोपः, स च चोः 'कुत्वे न स्थानिवत्, पदान्तविधित्वात् पूर्वत्रासिद्धत्वाच्च । इह जान्तेषु अवयाः । अवयाजौ । अवयाज इति नोदाहृतं 'मन्त्रे श्वेतवहोक्थ-५२४२' इति प्रकृत्य 'अवे यजः ५२४४' इति विहितस्य ण्विनस्तदपवादस्य पदान्ते डसश्छान्दसत्वेन वैदिकप्रक्रियायामेव वक्तुमुचितत्वात् ॥ (५१७) **तदोः सः सावनन्त्ययोः** । 'त्यदादीनामः ३७०' इत्यतोऽनुवर्तनादाह—**त्यदादीनामिति** । त्यदादीनामिति किम्, आतपः । तारकः । तदोरिति किम्, यः । अनन्त्ययोः किम्, हे स । अत्र परत्वात्त्यदाद्यत्वं बाधित्वा दस्य सकारे सस् इति हल्ङ्याब्भ्यो इत्यादिना सुलोपे रुत्वविसर्गौ स्याताम्, तथा च हे सः इति रूपं स्यात् । किञ्च, स्त्रियां सेति रूपं न स्यात् । यदा त्वन्त्यस्य सकारे जातेऽपि पुनःप्रसङ्गविज्ञानात्त्यदाद्यत्वं सकारस्य स्वीक्रियते, तदा न किंचिदनिष्टमित्यनन्त्ययोरिति त्यक्तुं शक्यम् । यदि तु-'तदोः सः सौ५१७' इत्यस्यानन्तरम् 'अदस औ सुलोपश्च ५८५' इत्यत्र 'अदसः' इति योगं विभज्यादस एव दकारस्य सत्वं नान्यस्य दस्येति नियमः क्रियते, तदा 'सकृद्गतौ-' इति न्यायेनाप्यनन्त्ययोरिति त्यक्तुं शक्यम् । न चैवं द्वावात्मन इच्छति द्वीयति ततः क्विपि स्व इति रूपं न स्यात्, किं तु द्व इति रूपं स्यादिति फलभेदान्नियमपक्षो न संभवतीति वाच्यम्, गौणेऽत्वसत्वयोरसंभवेन द्वीरित्यस्यैव रूपस्य न्याय्यत्वादिति मनोरमायामुक्तत्वात् ॥ सौ किम्, तौ ते तौ तान् ॥ ननु 'तोः सः सौ' इत्येव सूत्रमस्तु, किमनेन तदोरिति पृथग्ग्रहणेनेति । मैवम्, अनेष इत्यत्र नकारस्य सत्वप्रसङ्गात् 'नलोपो नञः १०९१' 'तस्मान्नुडचि १०९२' इत्यजाद्युत्तरपदस्य एष इत्यस्य नुड्विधानेन त्यदादितवर्गत्वान्नकारस्य । न च सत्वे सति नुड्विधानं व्यर्थमिति वाच्यम्, अनश्व इत्यादौ सावकाशत्वात् । तथा च 'तदोः' इत्येव सूत्रं युक्तम् । ननु 'तस्मान्नुडचि १०९२' इति सूत्रे 'तस्मात्' इति पदं परित्यज्य लाघवात् 'नुगचि' इत्येवोच्यतां तथा च अजाद्युत्तरपदे परे नञ एव नुगागम इत्यनेष इत्यत्र नोक्तदोष इति चेत् । एवं तर्हि 'नलोपः प्रातिपदिकान्तस्य ३३९' इति नलोपः स्यात् । विधानसामर्थ्यान्न भवतीति चेदेवमपि 'ङमो ह्रस्वादचि-२०२' इति ङमुट् दुर्वार एव । ततश्च 'तस्मान्नुडचि १०९२' इति सूत्रे पञ्चम्यन्तमावश्यकमेव टिदनुबन्धश्चेति 'तदोः-५१७' इति सूत्रे तोरिति वक्तुमशक्यमनेष इत्यत्रोक्तदोषात् । अत्र कैयटः-तोरित्युक्तेऽप्यनेष इत्यत्र सत्वं न भवेत्, नुडागमस्य पदद्वयाश्रितत्वेन बहिरङ्गत्वादन्तरङ्गसत्वदृष्ट्याऽसिद्धत्वादिति । उत्तरपदाधिकारस्थकार्ये बहिरङ्गपरिभाषाभावस्य 'इच एकाचोऽम्-' इत्यत्र भाष्ये उक्तत्वादयं कैयटश्चिन्त्यः ॥ **गौणे चरितार्थत्वादिति** । गौणे ह्यन्तर्गणकार्यत्वात्सत्वं न प्रवर्तते । 'त्वाहौ सौ' इत्युक्ते तु अतित्वमिति स्यादिति भावः ॥ **अत्वसत्वे नेति** । तयोः सर्वाद्यन्तर्गणकार्यत्वादिति भावः ॥ **अतित्यदिति** । त्यमतिक्रान्तोऽतित्यद् ॥ (५१८) **ङे प्रथमयोरम्** । 'युष्मदस्मद्भ्यां ङसोऽश् ५३७' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते । ङे इति पृथक् पदं लुप्तषष्ठीकम् । प्रथमयोरिति द्विवचनबलेन प्रथमाशब्दः प्रथमाद्वितीयोभयार्थक इत्याशयेन व्याचष्टे—**युष्मदस्मद्भ्यां परस्य ङे इत्यस्येत्यादिना** । 'ङेसुटोः' इति सुवचम् ॥ (५२०) **त्वाहौ सौ** । यद्यपि युष्मदः 'त्वमावेकवचने

---

१ **मपर्यन्तस्येति** । परिग्रहणाभावे मान्तयोर्युष्मदस्मदोरिति सामानाधिकरण्यसंभवे युष्मदस्मदोर्मपर्यन्तभागस्येति वैयधिकरण्येनान्वयासंभवे दान्तयोर्न स्यात्, युष्मान् अस्मान् वाऽऽचष्ट इति युष्मयतेरस्मयतेश्चाप्रत्यये मान्तयोर्युष्मदस्मदोः सूत्रस्य चरितार्थत्वात् । न चावध्यर्थत्वेन मपर्यन्तेति बहुव्रीहेरतद्गुणत्वापत्तिः, अवयवस्य तत्त्वे तद्गुणताङ्गीकारात् । अत एव द्विपर्यन्तानामित्यादौ न दोष इति भावः ॥ २ **न स्यादिति** । 'न यासयोः' इति लिङ्गेन टाब्विषये त्यदाद्यत्वापवादत्वेन सत्वाप्रवृत्त्या चिन्त्यमेतदिति रत्नाकरः ॥ ३ **न्याय्यत्वादिति** । वस्तुतस्तु-एतदाशङ्क्य "यथालक्षणमप्रयुक्ते" इति भाष्यकृता समाहितत्वेनैषामनभिधानमेव । 'अप्रयुक्ते लक्षणप्रवृत्त्यभावः' इति तस्यार्थ इति बोध्यम् ॥

त्व अह इत्येतावादेशौ स्तः सौ परे ॥ (५२१) शेषे लोपः ।७।२।९०। आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात् । अतो[२७६] गुणे । अमि[२७१] पूर्वः । त्वम् । अहम् । ननु त्वं स्त्री, अहं स्त्री इत्यत्र त्व अम् अह अम् इति स्थिते अमि पूर्वरूपं परमपि बाधित्वाऽन्तरङ्गत्वाट्टाप् प्राप्नोति । सत्यम्॥ (५२२) अलिङ्गे युष्मदस्मदी । तेन स्त्रीत्वाभावान्न टाप् ॥ यद्वा–शेष इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया । तेन मपर्यन्ताच्छेषस्य अद् इत्यस्य लोपः । स च परोऽप्यन्तरङ्गे अतो[२७६] गुणे कृते प्रवर्तते । तेनादन्तत्वाभावान्न टाप् ॥ परमत्वम् । परमाहम् । अतित्वम् । अत्यहम् ॥ (५२३) युवावौ द्विवचने ।७।२।९२। द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ (५२४) प्रथमायाश्च द्विवचने भाषायाम् । ७ । २ । ८८ । इह युष्मदस्मदोराकारोऽन्तादेशः स्यात् । [औङीत्येव सुवचम् ]॥भाषायां किम् । युवं वस्त्राणि ॥ ऋ०सं० १।१५२।१। युवाम् । आवाम् ।

---

५२७' इत्येव त्वादेशः, तथाप्यस्मदोऽहादेशार्थमिदम् । किञ्च, 'त्वमौ–५२७' इति सूत्रेण युवां युष्मान् वाऽतिक्रान्तोऽतित्वमिति न सिध्यति, एकार्थवाचित्वाभावाद्युष्मद इति भावः ॥ **युष्मदस्मदोरिति** । एतच्च 'युष्मदस्मदोरनादेशे ५३१' इत्यतो लभ्यते ॥ (५२१) **शेषे**–। उक्तादन्यः शेषः, आत्वं यत्वं च प्रागुक्तम्, तद्विषयादन्यविभक्तिरिति शेषशब्दार्थस्तदेतद्व्याचष्टे— **आत्वयत्वनिमित्तेतरेति** ॥ **अन्त्यस्येति** । अलोऽन्त्यपरिभाषयेति भावः ॥ **अतो गुण इति** । नव्यास्तु–'त्वाहौ सौ ५२०' इत्यत्र त्वाहादेशयोरन्त्याकार उच्चारणार्थं एवास्तु किमनेन पररूपकरणप्रयासेनेत्याहुः ॥ **त्वम्** । **अहमिति** । ननु युष्मानतिक्रान्तः अतित्वमित्यादौ 'त्वाहौ सौ ५२०' इत्यस्यावकाशोऽस्ति, त्वामतिक्रान्तेनातित्वयेत्यादौ 'त्वमावेकवचने ५२७' इत्यस्यावकाशः, त्वमहमित्यत्र तूभयोः प्रसङ्गे 'त्वमावेकवचने५२७' इत्यनेन परत्वाद्भाव्यम् । नैष दोषः । 'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः' इति वक्ष्यमाणत्वात् ॥ **अधिकरणत्वविवक्षयेति** । यदि तु 'शेषे' इति विभक्तिविशेषणं स्यात्तर्हि व्यर्थमेतत्, आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसंभवात् । न चैवमन्त्यलोप इति पक्षस्य निरालम्बनतापत्त्या युष्मदस्मदोरन्त्यलोपः स्यादिति ग्रन्थोऽयुक्त इति वाच्यम्, 'साम आकम् ५३८' इति ससुट्कनिर्देशेन तस्यापि पक्षस्य ज्ञापितत्वादिति भावः ॥ **अतो गुणे कृते प्रवर्तत इति** । 'वार्णादाङ्गं बलीयः ३०६०' इति तु समानाश्रय एव भवति, न तु व्याश्रये । इह तु शेषे लोपस्य[२२१] विभक्तिनिमित्तम्, पररूपस्य त्वकार इति व्याश्रयत्वमिति भावः ॥ समानाश्रये उदाहरणं तु कारक इत्यादि बोध्यम । तत्र हि यण्वृद्ध्योः प्राप्तयोर्वृद्धिरेव भवति । आङ्गत्वात्तदन्तविधिरित्याह—**परमत्वमित्यादि** ॥ (५२३) **युवावौ द्विवचने** । उक्तिर्वचनं, द्वयोर्वचनं द्विवचनं, तदेतदाह—**द्वयोरुक्ताविति** । न चात्र कृत्रिमन्यायविरोधः शङ्क्यः, वचनग्रहणसामर्थ्यादेव तद्बाधात् । अन्यथा द्वित्वे इत्येव ब्रूयात् । 'अष्टन आ विभक्तौ ५०२' इत्यतो विभक्तावित्यधिकाराद् द्वित्वे या विभक्तिस्तस्यां परत इति व्याख्यानसंभवात् ॥ (५२४) **युवं वस्त्राणीति** । शेषे[५२१] लोपः ॥

---

१ **अन्तरङ्गत्वादिति** । 'प्रत्यङ्गवर्ती लोको लक्ष्यते' इति भाष्यप्रामाण्येन लोकन्यायसिद्धया 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमेणैवोपस्थितेर्न्याय्यत्वात् । संख्याकारकापेक्षाविभक्तिनिमित्तकपूर्वरूपापेक्षया लिङ्गापेक्षटापोऽन्तरङ्गत्वमेवेति भावः । इदं च पदसंस्कारपक्ष एव बोध्यम् ॥ २ **अलिङ्गे इति** । तथा च 'साम आकम्' इति सूत्रे वार्तिकम्–"लिङ्गाभावाट्टिलोपवचनानर्थक्यम्" इति । अत्र भाष्यम्–'अलिङ्गे युष्मदस्मदी' इति । इदमुपलक्षणं सन्निपातपरिभाषया बुद्धावित्यत्र टाबभावस्य क्न्मेजन्तसूत्रभाष्योक्तस्यापीति बोध्यम् ॥ ३ **यद्वा शेष इति** । तथा च 'साम आकम्' इति सूत्र एव वार्तिकम्–"टिलोपवचनादादेशे टाप्प्रतिषेधार्थम्" इति । 'त्यदादीनामः' इति सूत्रे च वार्तिकम्–"टिलोपष्टाबभावार्थः कर्तव्य इति तत्स्मृतम्" इति । अत्रेदं बोध्यम्—"नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन" इति 'नेतराच्छन्दसि' इति सूत्रे–वार्तिकेन लिङ्गप्रतीत्यभ्युपगमेऽपि न टाबापत्तिरिति समाधानमात्रम् । सिद्धान्तस्त्वलिङ्गतैवेत्यन्यत्र स्पष्टमिति ॥ ४ **अतित्वमिति** । आङ्गत्वात्तदन्तविधौ गौणेऽप्रवृत्तौ विनिगमकाभावादिति भावः ॥ ५ "प्रथमायाश्च द्विवचने भाषायाम्" इति सूत्रस्थाने "औङीत्येव सुवचम्" इति दीक्षितैरुक्तम् । तत्तु दीक्षितानाम् अदृष्टवेदत्वव्यञ्जकम् । यतः औङिति प्रथमाद्वितीयाद्विवचनबोधकम् इति "औङ आपः" इत्यत्र सर्वैः स्वीकृतम् । तच्चात्र नोचितम् । यतः—द्वितीयाद्विवचने वेदे आकारादेशस्य बहुत्र दर्शनात् । तथा हि–"युवां गोतमः पुरुमीढ" ऋ० सं० ।२। ४ । २९ इत्यादिषु ॥ ६ इह प्रथमाद्विवचने । चस्त्वर्थे ॥ ७ अत्र **[ औङीत्येव सुवचम् ]** इत्ययं पाठः केवलवैयाकरणेनानधीतऋक्संहितेन पाणिनितोऽप्यधिकप्रज्ञाप्रतिभेन विद्वद्वरेण वर्धित इति ज्ञेयम् । काशिकादिष्वप्यदर्शनात् । दशतय्यामधिकविंश १।५७।४४ प्रभृतिमन्त्रेषु 'युवाम्' इति कृतात्वप्रयोगस्य दर्शनात् ॥ **'औङ आपः'** इति सूत्रभाष्ये 'ङकार उभयोः सामान्यग्रहणार्थः' इति निर्णीतत्वाच्च ॥ तस्मात्प्रथमाद्विवचने लोक एव 'युवाम्' इति आत्वघटितः प्रयोगो, न वेदे पदपाठे क्रमपाठादिषु च ॥ द्वितीयाद्विवचने तु लोके पदादिपाठेषु मन्त्रब्राह्मणादिषु च 'युवाम्' इति कृतात्वप्रयोगो भवत्येव । यत्र क्वापि वेदेऽपि आत्वरहितः प्रयोगो दृश्येत तत्र **'सर्वे विधयश्छन्दसि विकल्प्यन्ते'** इत्यनेन निर्वाहः करणीय इति दाधिमथैकपारिशीलितः पन्थाः ॥

---

१ प्रातिपदिकमात्रस्यार्थपञ्चकवत्त्वनियमेन लिङ्गाभावपदस्य लिङ्गविशेषाभावपरत्वेन लिङ्गसामान्यवाचकत्वस्य स्वीकारे तत्रैव नपुंसकलिङ्गविधानान्नपुंसकपदस्यापि लिङ्गाभावसमानार्थत्वमेवेति न पक्षभेदकल्पनेति भावः ॥

मपर्यन्तस्य किम्। साकच्कस्य मा भूत्। युवकाम्। आवकाम्। त्वया मयेत्यत्र त्व्या म्येति मा भूत्। युवकाभ्यामावकाभ्यामिति च न सिध्येत्॥ (५२५) (सू) यूयवयौ जसि।७।२।९३। स्पष्टम्। यूयम्। वयम्। परमयूयम्। परमवयम्। अतियूयम्। अतिवयम्। इह शेषे लोपोऽन्त्यलोप इति पक्षे जसः शी प्राप्तः॥ (५२६) अङ्गकार्ये कृते पुनर्नाङ्गकार्यमिति न भवति। ङे प्रथमयोरित्यत्र मकारान्तरं प्रश्लिष्य अम् मान्त एवावशिष्यते न तु विक्रियत इति व्याख्यानाद्वा॥ (५२७) (सू) त्वमावेकवचने।७।२।९७। एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ॥ (५२८) (सू) द्वितीयायां च।७।२।८७। युष्मदस्मदोराकारः स्यात्। त्वाम्। माम्। युवाम्। आवाम्॥ (५२९) (सू) शसो न।७।१।२९। नेत्यविभक्तिकम्। युष्मदस्मद्भ्यां परस्य शसो नकारः स्याद्, अमोऽपवादः। आदेः परस्य। संयोगान्तस्य लोपः। युष्मान्। अस्मान्॥ (५३०) (सू) योऽचि।७।२।८९। अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः। त्वया। मया॥ (५३१) (सू) युष्मदस्मदोरनादेशे।७।२।८६। अनयोराकारः स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः॥ (५३२) (सू) तुभ्यमह्यौ ङयि।७।२।९५। अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि। अमादेशः। शेषे लोपः। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्। युवाभ्याम्। आवाभ्याम्॥ (५३३) (सू) भ्यसोऽभ्यम्।७।१।३०। भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात्। आद्यः शेषे लोपस्यान्त्यलोपत्व एव। तत्राङ्गवृत्तपरिभाषया एत्वं न। अभ्यम् तु पक्षद्वयेऽपि साधुः। युष्मभ्यम्। अस्मभ्यम्॥ (५३४) (सू) एकवचनस्य च।७।१।३२। आभ्यां पञ्चम्येकवचनस्य अत् स्यात्। त्वत्। मत्। [ ङसेश्चेति सुवचम् ]। युवाभ्याम्। आवाभ्याम्॥ (५३५)

---

**मपर्यन्तस्य किमिति।** अधिकारसूत्रं किमर्थमिति प्रश्नः॥ **युवकाम्। आवकामिति।** ननु युवावयोः समुदायादेशत्वेऽपि युवकामित्यादि सिध्यति, 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्य टेः प्राक् २७४३' इति युष्मदस्मद्विषये व्यवस्थायास्त्वयका मयकेत्यादिसिद्धये वक्ष्यमाणत्वात्, किमनेन 'मपर्यन्तस्य ५१९' इत्यधिकारेणेत्यपरितोषादाह—**त्वया मयेत्यत्रेति।** ननु त्वमादेशयोरपि समुदायादेशत्वे त्वयेत्यादि साधयितुं शक्यत एव 'योऽचि ५३०' इति सूत्रं परित्यज्य 'अच्ये' इति सूत्रे कृते अजादौ विभक्तौ परतोऽन्त्यस्य एकारादेशे सत्ययादेशप्रवृत्तेरिति पुनरपरितोषादाह—**युवकाभ्यामित्यादि॥** (५२६) **अङ्गकार्य इति।** एतेन 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषा अर्थत उपनिबद्धा। 'अङ्गे अङ्गाधिकारे वृत्तं वर्तनं यस्य तदङ्गवृत्तं शास्त्रं तस्मिन्प्रवृत्ते सति पुनरन्यस्याङ्गवृत्तशास्त्रस्य प्रवृत्तौ प्राप्तायामविधिः' इति तत्परिभाषाया अर्थः। एषा च परिभाषा 'ज्ञाजनोर्जा ३३३०' इत्यनेन ज्ञापिता। उपपत्तिस्तु मनोरमातोऽवगन्तव्या। न चैवं द्वाभ्यामित्यत्र त्यदाद्यत्वे कृते, 'सुपि च २८७' इति दीर्घो न स्यादिति वाच्यम्, 'द्वयोरेकस्य' इत्यादिनिर्देशेन उक्तपरिभाषाया अनित्यत्वज्ञापनादिति दिक्॥ मकारान्तरमित्युपलक्षणं, 'जसश्शी ३००' इत्यत्र जसः स् इति सकारं प्रश्लिष्य सान्तस्य जस इति व्याख्यानात्, 'अतोऽम् ४२९' इति सूत्रादम्ग्रहणमनुवर्त्य अम् अमेवेति व्याख्यानाद्वेति बोध्यम्॥(५२७) **एकस्योक्ताविति।** 'त्वमावेकत्वे' इति वक्तव्ये वचनग्रहणादयमर्थो लभ्यत इति भावः॥ (५२९) **अविभक्तिकमिति।** तथा च 'ङे प्रथमयोः-५१८' इति पूर्वसूत्रेण प्राप्तस्यामः प्रतिषेधोऽयमिति भाष्ये शङ्कितम्। न च तथैव किं न स्यात्, 'द्वितीयायां च ५२८' इत्यात्वे पूर्वसवर्णदीर्घे 'तस्माच्छसः-२८१' इति नत्वे चेष्टसिद्धेरिति वाच्यम्, स्त्रीनपुंसकयोर्नत्वाप्राप्त्या युष्मान्ब्राह्मणीः, युष्मान्कुलानीत्यसिद्धिप्रसङ्गात्। अलिङ्गत्वपक्षे तु युष्मान् ब्राह्मणानित्यादेरप्यसिद्धिप्रसङ्गाच्च॥ (५३०) **योऽचि।** अचि किम्, युवाभ्याम्। यदि तु 'युष्मदस्मदोरनादेशे ५३१' इत्यत्र 'रायो हलि ४०२' इत्यतो हलीत्यनुवर्तते तदेहाचीति माऽस्तु, परिशेषादेव सिद्धेः॥ (५३१) **युष्मदस्मदोरनादेशे।** अनादेशे किम्, युष्मभ्यम्। न चाभ्यम्पक्षे आदेशो हलादिर्नेत्यनादेशग्रहणं त्यक्तुं शक्यमिति वाच्यम्, 'योऽचि ५३०' इत्यत्रानुवृत्त्यर्थं तस्यावश्यकत्वात्॥ **हलादौ विभक्ताविति।** 'योऽचि ५३०' इत्यज्ग्रहणात्परिशेषसिद्धमिदम्, 'रायो हलि ४०२' इत्यतोऽनुवृत्त्या लब्धं वा॥ (५३३) **पक्षद्वयेऽपि साधुरिति।** नन्वन्त्यलोपपक्षे पररूपं बाधित्वा सवर्णदीर्घः स्यादकारोच्चारणसामर्थ्यादिति चेत्।

---

१ **ङे प्रथमयोरित्यत्रेति।** 'अङ्गवृत्ते-' इति परिभाषाया अन्यथासिद्धप्रयोजनकथनेन वैयर्थ्यमेवेति विभावने शोभावारणायेदं यत्नान्तरमिति भावः॥ २ **विभक्ताविति।** 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्तते। अत एव 'प्रत्ययोत्तरपदयोश्च' इति सार्थकम्। तत्र विभक्तेर्लुका लुप्तत्वेन विभक्तिपरत्वाभावात्। एवं च त्वं सुन्दरः पुत्रो यस्येति त्रिपदे बहुव्रीहौ युष्मत्सुन्दरपुत्र इत्यत्रोत्तरपदपरत्वाभावे न त्वादेशः॥ ३ ऋ० (म० १ सू० २ ऋचा० २) (२-१-८) (३-८-१) इत्यादिषु। अथ० (२-६-३) (५-१४-९) (६-६२-२) इत्यादिषु॥ ४ ऋ० (१-१५२-४) (४-२७-२) इत्यादिषु। अथ० (१-३४-४-५) (२-७-४) (३-६-१) इत्यादिषु॥ ५ ऋ० (१-४७-४) (२-४१-२९) (४-४१-७) इत्यादिषु॥ ६ ऋ० (१-१६१-१४) (४-२-३) इत्यादिषु। अथ० (१८-४-८६) (२०-१३५-१०) इत्यादिषु॥ ७ ऋ० (१-९-६) (२-१-१६) इत्यादिषु। अथ० (१-१-४) (२-११-३) इत्यादिषु॥ ८ अत्र [ **ङसेश्चेति सुवचम्** ] इत्ययं न्यासः केनचिद् वर्धितः '**संज्ञाशब्दानामर्थमात्रत्वम्**' इति सिद्धान्तं **सर्वनामस्थानादि**बह्वक्षरसंज्ञाकरणेन सूचितमनाश्रित्यैवेति बोध्यम्॥

पञ्चम्या अत् । ७ । १ । ३१ । आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ॥ ( ५३६ ) तवममौ ङसि । ७ । २ । ९६ । अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ॥ ( ५३७ ) युष्मदस्मद्भ्यां ङसोऽश् । ७ । १ । २७ । स्पष्टम् । तव । मम । युवयोः । आवयोः ॥ ( ५३८ ) साम आकम् । ७।१।३३। आभ्यां परस्य साम आकम् स्यात् । भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी । समासार्थोऽन्यसंख्यश्चेत्स्तो युवावौ त्वमावपि ॥ १ ॥
सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते । त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥

---

अत्राहुः-'बहुवचने झल्येत् २९१' इत्येत्वनिवृत्त्यर्थाऽकारोच्चारणस्य चरितार्थत्वादिति । यद्यप्यङ्गवृत्तपरिभाषया एवं सुपरिहरं, तथापि तस्या अनित्यत्वे इदमप्यकारोच्चारणं ज्ञापकमिति तत्त्वम् ॥ ( ५३७ ) युष्मदस्मद्भ्यां ङसोऽश् । शित्त्वं सर्वादेशार्थम् । अन्यथा हि 'आदेः परस्य ६८' इति स्यात् । न चाकारस्य अकारविधानवैयर्थ्यम्, आदेशव्यपदेशेन यत्वनिवृत्त्यर्थत्वात् । न चावयवस्यादेशे सत्यपि विभक्तेरनादेशताऽस्त्येवेति वाच्यम् 'सर्वे सर्वपदादेशाः' इति सिद्धान्तात् । इदमेव शित्त्वं ज्ञापयति 'सर्वे सर्वपदादेशाः' इति । अर्थवत्येव स्थान्यादेशभावविश्रान्तिरित्यर्थः । सिचङादयस्तु वचनसामर्थ्यादनर्थकस्यापि भवन्तीति मनोरमायां स्थितम् ॥ तव ममेति । ननु-अत्रान्त्यलोपपक्षे अशः स्यादेशः स्यात्, यत्वनिवृत्त्यर्थतया अश्वचनस्य चरितार्थत्वात् । न च स्यादेशस्यापवादोऽशिति वाच्यम्, अशादेशप्रवृत्तिकाले शेषे लोपाभावेन स्यादेशस्याप्रवृत्तेः । अत्राहुः-अङ्गवृत्तपरिभाषया स्यादेशो वारणीयः । यदि तु अङ्गस्य यत्कार्यं तद्विषयिण्येव सा परिभाषा, न त्वङ्गाधिकारपरेति दुराग्रहः, तर्ह्यशित्यत्र 'अतो गुणे २७६' इति पररूपेणाकारान्तरं प्रश्लिष्य अकाररूप एवाश् भवति, न तु विक्रियत इति व्याख्येयमिति ॥ ( ५३८ ) नन्वाकमादेशात्पूर्वमनादेशत्वात् 'योऽचि ५३०' इति यत्वेन भाव्यं, ततश्च शेषे लोपाभावादवर्णान्तादिति विधीयमानस्य सुडागमस्याप्रसक्त्या साम इति ससुट्कनिर्देशो व्यर्थ इत्यत आह—भाविन इति । कृते हि शेषे लोपे अकारान्तत्वात्प्राप्तः सुट् ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्यान्निवर्तत इति भावः । 'शेषे लोपष्टिलोपः' इति पक्षे तु सुड्ग्रहणं व्यर्थमेव । आकमिति दीर्घोच्चारणं सवर्णदीर्घार्थम् । अन्यथा पररूपं स्यात् । न चाकारोच्चारणसामर्थ्यम्, एत्वनिवृत्त्याऽभ्यम इव चरितार्थत्वात् ॥ इह 'युवावौ द्विवचने ५२३' 'त्वमावेकवचने ५२७' इति सूत्रद्वयेऽपि द्विवचनैकवचनशब्दावर्थपरौ, न तु प्रत्ययपराविति व्याख्यातं, तत्फलं दर्शयति—समस्यमाने इत्यादिना ॥ द्व्येकत्ववाचिनी इति । पञ्चकं प्रातिपदिकार्थ इति पक्षाभिप्रायेणेदमुक्तम् । अस्मिंस्तु पक्षे संख्याया अपि प्रातिपदिकार्थत्वात् । त्रिकपक्षे तु द्व्येकार्थवाचिनी इति पाठ्यम्, संख्याया विभक्त्यर्थत्वेऽपि संख्येयस्य प्रातिपदिकार्थत्वानपायात् ॥ अन्यसंख्यश्चेदिति । युष्मदस्मदर्थगतसंख्येतरसंख्यायुक्तश्चेदित्यर्थः ॥ स्त इति । अर्थपरत्वाश्रयणसामर्थ्यादेव भूतगतेरपि स्वीकाराद्युवावौ त्वमावपि स्तः । प्रत्ययपरत्वे तु न स्यातामित्यव्याप्तिः स्यादिति भावः । एवं चतुर्थश्लोकेऽपि न युवावौ त्वमौ न चेत्युक्त्या प्रत्ययपरत्वेऽतिव्याप्तिर्ध्वनिता । एवं चाव्याप्त्यतिव्याप्तिपरिहारायार्थपरत्वमाश्रितमिति फलितम् ॥ नन्वेवं सुजस्ङेङस्स्वपि युष्मदस्मदोर्द्व्यर्थत्वे युवावौ स्यातामेकार्थत्वे तु त्वमावित्याशङ्कायामाह—सुजस्ङेङस्सु परत इति ॥ के ते आदेशा इत्यत आह—त्वाहौ यूयवयावित्यादि । अस्त्वेवं त्वाहादिभिर्युवावयोर्बाधस्त्वमौ तु तेभ्यः परौ कथं तैर्बाध्येतामित्यत

---

१ चरितार्थत्वादिति । एवं च 'अतो गुणे' इत्यस्य दीर्घबाधकत्वमन्यत्रेवात्रापि निर्बाधमेवेति भावः ॥ २ अनित्यत्व इति । अन्यथासिद्धप्रयोजनप्रदर्शनेन भाष्यकृता सूचिते लक्ष्यसंस्कारानुपयुक्तत्वे इति भावः ॥ ३ वैयर्थ्यमिति । अकारस्याकारविधानवैयर्थ्येनान्त्यस्यैवाकारादेशे 'अतो गुणे' इति पररूपे सिद्धमेव तवेत्यादीति व्यर्थमेव शित्त्वमित्यर्थः ॥ ४ आदेशेति । आदेविधानेऽप्यादेशत्वसंपादनेन यत्वनिवृत्त्या शेषे लोपार्थं चाकारविधानं चरितार्थमिति 'आदेः परस्य' इत्यस्य बाधे मानाभावेन सर्वादेशार्थं शित्त्वमिति भावः ॥ ५ अनादेशतेति । अनादेश इति हि तत्पुरुष एव, निषादस्थपतिन्यायेन लाघवादिति त्वमहमित्यादौ संपूर्णविभक्त्यादेशो यत्वाभावसंपादकमेव तादिति प्रकृतेऽवयवादेशसत्त्वेन यत्वं स्यादेवेति भावः ॥ ६ अनर्थकेति । इदं च प्रत्ययानां द्योतकतापक्षमनभ्युपगम्य । वस्तुतस्तु—पञ्चकपक्षे विभक्तीनामिव विकरणानामपि द्योत्यार्थेनैवार्थवत्त्वम् । अत एव तेषां प्रत्ययत्वं प्रकृत्यर्थान्वितस्वार्थबोधकत्वरूपं सर्वैः स्वीकृतम् । अन्यथा जोषिषदित्यादौ सिबादीनां प्रत्ययत्वनिमित्तकमूर्धन्यादेशासिद्धिः ॥ ७ दुराग्रह इति । 'ज्यादादीयसः' इत्यस्य ज्ञापकत्वपरभाष्यविरोधाच्चास्य दुराग्रहत्वमिति भावः ॥ ८ प्राप्त इति । ससुट्कानिर्देशाभाव इति शेषः ॥ ९ स्थानित्वेनेति । अयमाशयः—'सामः प्रसङ्गे आकम्' इति सूत्रार्थः । तेन अस्तेर्भूविषये रोपध्योरिव आकम्विषये सुडामोरत्यन्तमप्रयोग एव बोध्यते, न तु सतो निवृत्तिः, शब्दानित्यत्वप्रसङ्गात् । किं तु प्रसक्तबुद्धेरेव निवृत्तिः । तत्र सकारबुद्धेः प्रकृते सांप्रतिक्या अभावेन भूतपूर्वगतेश्चासंभवाद् भाविन्या ग्रहणं सकारोच्चारणसामर्थ्यादिति भाष्ये स्पष्टम् । तत्र सकारनिवृत्तिस्त्वप्राप्तिरूपैव, आमोऽभावात् । आकमः स्थानिवत्त्वेन तु साम्त्वमेव न त्वाम्त्वम्, साम एव स्थानित्वेन निर्देशात् । अत एव 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्योदाहृते अतित्वाकम् इत्यादौ आकमादेशो नुडागमाभावश्चोपलभ्यते । स्थानिवत्त्वेनापि साम्त्वस्यैवागमनात् । आकमादेशस्तु—आम्येव साम्त्वस्याहार्यारोपेण बुधाद्य इति दिक् ॥

एते परत्वाद्बाधन्ते युवावौ विषये स्वके । त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥ ३ ॥
द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी। तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च ॥ ४ ॥

त्वां मां वा अतिक्रान्त इति विग्रहे–अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम् २ । अतिमाम् २ । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वभ्यम् । अतिमभ्यम् । ङसिभ्यसोः–अतित्वत् २ । अतिमत् २ । भ्यामि प्राग्वत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वयोः । अतिमयोः । अतित्वासु । अतिमासु ॥ युवाम् आवां वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअमौट्सु–अतियुवाम् ३ । अत्यावाम् ३ । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् ३ । अत्यावाभ्याम् ३ । अतियुवाभिः । अत्यावाभिः । भ्यसि–अतियुवभ्यम् । अत्यावभ्यम् । ङसिभ्यसोः–अतियुवत् २ । अत्यावत् २ । ओसि–अतियुवयोः २ । अत्यावयोः २ । अतियुवाकम् । अत्यावाकम् । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु ॥ युष्मानस्मान्वेति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअमौट्सु–अतियुष्माम् ३ । अत्यस्माम् ३ । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् ३ । अत्यस्माभ्याम् ३ । अतियुष्माभिः । अत्यस्माभिः । भ्यसि अतियुष्मभ्यम् । अत्यस्मभ्यम् । ङसिभ्यसोः–अतियुष्मत् २ । अत्यस्मत् २ । ओसि–अतियुष्मयोः२। अत्यस्मयोः२ । अतियुष्माकम् । अत्यस्माकम् । अतियुष्मयि । अत्यस्मयि । अतियुष्मासु । अत्यस्मासु ॥ (५३९) सू० पदस्य ।

---

आह–त्वमावपीति । 'विप्रतिषेधे परम्–२५९' इत्यत्र परशब्दस्येष्टवाचित्वादिति भावः ॥ **अतित्वामिति** । त्वां मां वा अतिक्रान्ताविति विग्रहः ॥ **अतियूयम् । अतिवयमिति** । त्वां मां वा अतिक्रान्ता इति विग्रहः । एवमग्रेऽप्यूह्यम् ॥ **अतित्वाकम् । अतिमाकमिति** । अत्रान्त्यलोपपक्षे [५२६]त्वेङ्गवृत्तपरिभाषया नुडागमो निवार्यः। 'ह्रस्वनद्यापः–२९४'इत्यत्र ह्रस्वान्ताद्विहितस्यामो नुडिति व्याख्यानाद्वा ॥ नन्वेवं भिन्नविषयतया सुटो नुडपवादत्वाभावेनावर्णान्तसर्वनामभ्यो विहितस्यामो नुडेव परत्वात्स्यात् , न तु सुडागमस्तस्य येषां केषामित्यादौ सावकाशत्वादिति चेत् । अत्राहुः–'त्यदादेरामि सुट्' इति वक्तव्ये 'आमि सर्वनाम्नः–३०४' इति सर्वनामग्रहणसामर्थ्यात् 'हलि सर्वेषाम् २५२' इत्यादिनिर्देशाच्चावर्णान्तसर्वनामभ्योऽप्यामः सुडेव भवति न तु नुट् । 'शस्प्रभृतिषु' इति च विषयसप्तमी, तेन पदादिष्वप्यामि न नुडिति । एवं च 'सामः' इति ससुट्कनिर्देशेन युष्माकमस्माकमित्यत्र सुडागमाभावेऽपि नुडागमो दुर्वार इत्याशङ्काया अपि निरवकाश एवेति बोध्यम्॥यत्तु वदन्ति–'साम आकम् २३८' इत्यत्र यद्यपि सुड्ग्रहणं न स्थानिविशेषणं बाधात् , तथाप्युपलक्षणं तु भवति तेन यस्यामः सुडग्रे भावी तस्यैवाम आकमा भवितव्यं, न चैतद्गौणत्वे संभवतीत्याकम्न प्रवर्तते, तथा च–अतित्वयामतिमयामित्येव रूपं, न त्वतित्वाकमतिमाकमिति । तदसत्, आकमाऽपहृतस्यामः सुडन्वयाभावात् । आकमः सुड् भावीति चेत्तर्हि तमेवोपलक्षयेत् । आदेशद्वारकेण परम्परासंबन्धेन स्थानिनमुपलक्षयति चेदेवं तर्हि युष्माकमित्यादौ सुट् श्रूयेत।।'सामः' इति निर्देशसामर्थ्यान्न श्रूयेतेति चेन्न,निर्देशस्य गौणव्यावृत्त्या चरितार्थत्वेन सामर्थ्याभावादित्यन्यत्र विस्तरः । गुणभूतयोर्युष्मदस्मदोरेकार्थत्वे उदाहरणान्युक्त्वा संप्रति द्व्यर्थवाचित्वे उदाहरति––**युवामावां वा अतिक्रान्त इत्यादिना** ॥ बह्वर्थयोस्तूदाहरति—**युष्मानस्मान्वेति** । (५३९) ॥**पदस्य** । 'अपदान्तस्य मूर्धन्यः २९६' इति विरोधनिर्देशात्प्राक् पदस्येत्ययमधिकारः । तेन राजा राजभ्यामित्यादौ 'न लोपः प्रातिपदिकान्तस्य ३३९' इति नलोपः सिध्यति । न तु राजानौ राजान इत्यत्र । तथा गोमान् यवमानित्यादौ संयोगान्तलोपो, न तु गोमन्तौ यवमन्तावित्यादौ । तथा 'मो नो धातोः४६५'इति नत्वं प्रशान्भ्यामित्यादौ भवति, न तु प्रशामौ प्रशाम इत्यत्र । तथा हरिं वन्दे इत्यादौ 'मोऽनुस्वारः १८८' प्रवर्तते, न तु गम्यत इत्यादौ । न च 'ञमि च पदे २५०' इत्यतः पदे इत्यधिकारात्पदे परतो मस्यानुस्वारः स्यात् , न तु गम्यत इत्यत्रेति किमिह पदस्येत्यधिकारेणेति वाच्यम्, पुंस्विति रूपासिद्धिप्रसङ्गात् । तस्मात् 'मोऽनुस्वारः १८८' इत्यत्र पदस्येत्यनुवर्तनीयमेव पदे इत्यस्योत्तरसूत्रेऽप्युपयोगो नास्तीति 'ञमि च पदे २५०' इत्यत्रावोचाम । इह पदस्येति संबन्धसामान्ये षष्ठी, सा तूत्तरेषु यथायोगं संबन्धविशेषेऽवतिष्ठते। क्वचित् स्थाने षष्ठी, क्वचिदवयवषष्ठीति। तत्र 'संयोगान्तस्य लोपः ८१' 'मो नो धातोः ४६५' 'मोऽनुस्वारः १८८' इत्यादौ पदस्येति स्थानषष्ठी, अवयवषष्ठ्यां तूक्तातिप्रसङ्गात् । 'मादुपधायाः–२५६२' इत्यादौ त्ववयवषष्ठी । अन्यथा वृक्षवानित्यत्रैव मतुपो मस्य वत्वं स्यान्न तु वृक्षवन्तौ वृक्षवन्त इत्यत्र । एतच्चानुपदमेवोपपादयिष्यते । यद्यपि 'षष्ठी स्थानेयोगा ६१' इति परिभाषया 'पदस्य५३९' इत्यत्र स्थानषष्ठ्येव लभ्यते न त्ववयवषष्ठी, तथापि नलोपसूत्रेऽन्तस्येति ग्रहणाज्ज्ञापकादवयवषष्ठ्यपि लभ्यते । यदि पदस्येति स्थानषष्ठ्येव स्यात्तर्हि नान्तस्य पदस्य लोपो भवन्नलोऽन्त्यस्य स्यादिति अन्तग्रहणमनर्थकं स्यात् । अवयवषष्ठ्यङ्गीकारे तु अन्तस्येति ग्रहणं

---

१ **सामर्थ्याभावादिति** । गौणव्यावृत्त्या चरितार्थत्वादिति भावः ॥ २ **न त्विति** । संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वेन प्रातिपदिकसंज्ञकं यत्पदमित्यर्थाङ्गीकारेण राजानावित्यत्र नकारान्तस्य प्रातिपदिकत्वेऽपि सुबन्तत्वाभावेन पदत्वाभावात् । राजेत्यत्र तु नान्तं प्रातिपदिकमेव प्रत्ययलक्षणेन सुबन्तमिति पदसंज्ञमपीति भावः ॥

८।१।१६।॥ (५४०) सू पदात्।८।१।१७।॥ (५४१) सू अनुदात्तं सर्वमपादादौ।८।१।१८। इत्यधिकृत्य॥ (५४२) सू युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ। ८। १। २०। पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वा नावित्यादेशौ स्तस्तौ चानुदात्तौ ॥ (५४३) सू बहुवचनस्य वस्नसौ।८।१।२१। उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः। वान्नावोरपवादः॥ (५४४) सू तेमयावेकवचनस्य।८।१। २२। उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः॥ (५४५) सू त्वामौ द्वितीयायाः।८। १।२३। द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः॥

श्रीशस्त्वाऽवतु माऽपीह दत्तात्ते मेऽपि शर्म सः। स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः॥ १॥

सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः। सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः॥ २॥

पदात्परयोः किम्। वाक्यादौ मा भूत्। त्वां पातु मां पातु ॥ अपादादौ किम्। 'वेदैरशेषैः संवेद्योऽस्मान्कृष्णः

---

सार्थकम्। तद्यथा। नलोपसूत्रे प्रातिपदिकान्तस्येत्यसमासनिर्देशः। प्रातिपदिकसंज्ञकस्य पदस्य अन्तावयवो यो नकारस्तस्य लोप इति सूत्रार्थ इति॥ नन्वेवमन्तस्येति ग्रहणमवयवषष्ठीत्वज्ञापनार्थमिति स्वीकारात्पदस्येत्यत्र कथं नाम स्थानषष्ठीलाभः संबन्धविशेषस्य निर्धारितत्वेन स्थानषष्ठीपरिभाषाया अनुपस्थितेः। अत्राहुः–प्रयोगमूलत्वाद्व्याकरणस्मृतेर्लक्ष्यानुरोधेन स्थानषष्ठ्यपि स्वीक्रियते, ज्ञापकसिद्धाऽवयवषष्ठी न सर्वत्र स्वीक्रियते, इति नलोपसूत्रे मनोरमायामन्तग्रहणं त्यक्तुं शक्यमित्युक्तम्॥ भाष्यादौ तु–'पदस्य ५३९' इत्यधिकृतस्यावयवषष्ठ्यन्तत्वमप्यभ्युपगम्यते, न तु स्थानषष्ठ्यन्तत्वमेवेति ज्ञापनार्थमन्तग्रहणम्। तेन वृक्षवन्तौ वृक्षवन्त इत्यत्र 'मादुपधायाः–२५६२' इति वत्वं सिध्यति पदावयवस्य मतुपः सत्त्वात्। अन्यथा पदस्येत्यस्य विशेष्यत्वे मतुपा तदन्तविधौ मत्वन्तं यत्पदं तदवयवस्य मतुपो मादुपधायाः परस्य मस्य वत्वं भवतीत्यर्थः स्यात्। तथा च–वृक्षवानित्यत्रैव स्यात्, न तु वृक्षवन्तौ वृक्षवन्त इत्यत्रेति स्थितम्॥ (५४०) **पदात्**। 'कुत्सने च सुप्यगोत्रादौ ५९५४' इत्यतः प्रागयमधिकारः। यदि तु 'कुत्सने च सुपि–५९५४' इत्यत्रापि पदादित्यनुवर्तते, तदा देवदत्तः पचति पूतीत्यत्रैव निघातः स्यान्न तु पचति पूतीत्यत्र॥ (५४१) **अनुदात्तं सर्वमपादादौ**। इदं पदत्रयमापादपरिसमाप्तेरधिक्रियते॥ (५४२) **षष्ठीचतुर्थीति**। 'अल्पाच्तरम् १२९९' इति षष्ठीत्यस्य पूर्वनिपातः॥ **षष्ठ्यादिविशिष्टयोरिति**। ननु युष्मदस्मदोरित्युक्तत्वात्तयोरेव वांनावादय आदेशाः स्युः। न च 'पदस्य ५३९' इत्यधिकाराद्विभक्त्यन्तस्यैव पदत्वात्षष्ठ्यादिविशिष्टयोरेव स्युरिति वाच्यम्, उक्तरीत्या वस्नसादौ दोषाभावेऽपि भ्यामादौ परतो युष्मदस्मदोः पदत्वात्केवलयोर्वांनावादेशप्रसङ्गस्य दुर्वारत्वात्। तथा च–'सुखं वां नौ ददात्वीशः' इति प्रयोगो न संगच्छेत। नापि 'द्वितीयास्थयोः' इति स्थग्रहणसामर्थ्याद्विभक्तिविशिष्टयोरेव आदेशा भवेयुरिति वाच्यम्, 'स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव' इति वक्ष्यमाणतया तत्सामर्थ्यस्योपक्षयात्। मैवम्, 'अनुदात्तं सर्वम्–५४१' इति सर्वग्रहणाधिकारात्सर्वस्यैव विभक्तिविशिष्टस्यादेशा भवन्तीत्याकरे स्पष्टत्वात्। यदि तु–'सर्वस्य द्वे २८८२' इत्यतः सर्वस्येति पदमनुवर्तते, तदा सर्वग्रहणमिह त्यक्तुं शक्यमित्याहुः। उक्तानादेशान्वचनक्रमेणोदाहरति—**श्रीश इत्यादिना॥ स्वामी ते मेऽपीति**। 'स्वामीश्वराधिपति–९३४' इति षष्ठीसप्तम्योर्विधानादिह षष्ठी॥ द्विवचनान्तयोरुदाहरणमाह—**पातु वामित्यादिना॥** बहुवचनान्तयोस्तु—**सोऽव्याद्वो न इत्यादि॥ सेव्योऽत्र वः स न इति**। 'अर्हे कृत्यतृचश्च ३७६०' इति

---

१ **संवेद्योऽस्मानिति**। नन्वत्र संध्यभावे नवाक्षरपादत्वेनानुष्टुप्पादत्वानुपपत्तिः। संधौ तु लोकन्यायसिद्धेन 'उभयत आश्रयणे नान्तादिवत्' इति न्यायेन पूर्वान्तपरादिवद्भावाभावेन कथमादेशप्राप्तिरिति चेत्। शृणु–न ह्यनुष्टुप्पाद एव ग्राह्य इत्यत्र किंचिद्विनिगमकमस्ति 'यशःशरीरे भव मे दयालुः' 'सर्वत्र नो वार्तमेवेहि राजन्' इत्यादावप्यादेशदर्शनात्। नापि विषमपादच्छन्दसि न प्रवर्तते इत्यत्र विनिगमकमस्ति॥ एतेन 'ग्रामे कम्बलस्ते स्वम्' 'अथो ग्रामे कम्बलो मे स्वम्' 'ओदनं पच तव भविष्यति' इत्युदाहरणप्रत्युदाहरणदर्शनेन च्छन्दोविहीनवाक्यस्थस्यापि ग्रहणमिति परास्तम्। एषामपि प्रस्तारादिसाधने कस्मिंश्चिच्छन्दस्यन्तर्भावसंभवात्। किं च 'पादादौ वांनावादय आदेशा असाधवः' इत्येतदेव व्याकरणेन बोध्यत इति यदि कश्चिद् 'वेदैरशेषैः संवेद्यो नः कृष्णः सर्वदाऽवतु' इति प्रयुञ्जीत तदा आदेशस्य पादादिस्थत्वसंभावनायामसाधुः स्यादित्यभिप्रायः। यद्वा संधौ कृतेऽन्तादिवद्भावेनैव दोषो दीयते। लोकन्यायसिद्धम् 'उभयत आश्रयणे नान्तादिवद्' इति तु 'क्वचित् लौकिकं चातिवर्तते' इत्युक्त्या नाश्रयणीयम्। अत एवान्तादिवत्सूत्रे–'अभ्यासादीनां ह्रस्वत्वे नान्तादिवत्' के पुनरभ्यासादयः। अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनह्रस्वत्वानि। उपेयाय, प्रोह्यते, अम्बाऽत्र इत्याद्युदाहृत्य 'न वा बहिरङ्गलक्षणत्वात्' अन्तरङ्गं ह्रस्वत्वम्, 'बहिरङ्गा एते विधयः' इत्यनेनैव प्रत्याख्यातम्' न त्वनेन उदाहरणदानसूचितानाश्रयणेन लोकसिद्धन्यायेन॥ २ **वस्नसादाविति**। आदिना तेमेत्वामादेशाः। भ्यसोऽभ्यमि कृते पदत्वाभाव इति भावः। परं तु यदि विभक्त्यादेशोत्तरमेव कार्यकालपक्षेण भसंज्ञा चेद् द्वितीयायां शसो नकारे कृते पदत्वसंभवेन दोष एवेति 'वस्नसादौ' इति पाठोऽविकृतबुद्धिशोधितः प्रतीयते। तस्मात् 'सुडजाद्योः' इति पाठो भवेत्। परत्वाच्चाङ्गादेशेष्वकृतेष्वेवाद्यमिकादेशा भवन्तीति भ्यामभ्यसोः पूर्वस्य पदत्वाद्दोष इति बोध्यम्॥

सर्वदाऽवतु' । स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव । नेह—इति युष्मत्पुत्रो ब्रवीति । इत्यस्मत्पुत्रो ब्रवीति ॥ ( ५४६ ) समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ॥ ( ५४७ ) एकतिङ् वाक्यम् । तेनेह न—ओदनं पच तव भविष्यति । इह तु स्यादेव—शालीनां ते ओदनं दास्यामीति ॥ ( ५४८ ) एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः ॥ अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्तीति वा ।

---

ण्यत्, 'कृत्यानां कर्तरि वा ९२१' इति षष्ठी ॥ वेदैरशेषैरिति । 'युष्मान् रक्षतु गोविन्दः' इति प्राचः पाठस्तूपेक्षितः, युष्मानित्यस्य तु पदात्परत्वाभावादेवाप्राप्तेः । अस्मानित्यस्य तु पदात्परत्वेऽपि समानवाक्यस्थपदात्परत्वाभावात् ॥ ननु 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयानाम्' इति सूत्र्यतां, विशेषणेन तदन्तविधौ षष्ठ्याद्यन्तयोर्युष्मदस्मदोः पर्यवस्यति । न च स्थग्रहणाभावे युष्मदस्मदोः संबन्धिनीनां षष्ठीचतुर्थीद्वितीयानामित्यर्थः स्यादिति वाच्यम्, 'सर्वस्य २८८१' 'पदस्य ५३९' इत्यनुवर्तनादतो व्याचष्टे—स्थग्रहणादिति । तिष्ठतिरिहाहानौ वर्तते । यथा 'समये तिष्ठ सुग्रीव' इति समयं मा हासीरिति गम्यते । तेन षष्ठ्यादीनविजहतोरेव युष्मदस्मदोरादेशा इत्यर्थः ॥ इति युष्मत्पुत्र इति । युवयोः पुत्रो युष्माकं पुत्र इति वा विग्रहः, न तु तव पुत्र इति । तथा हि सति त्वत्पुत्र इत्येव स्यात् । एवमस्मत्पुत्र इत्यत्राप्यूह्यम् । पदात्परत्वं संपादयितुमितिशब्दः ॥ ननु राज्ञोः पुरुषो राज्ञां पुरुष इति विग्रहे राजपुरुष इति नेष्यत इति सिद्धान्तविरोधाद्युष्मत्पुत्रोऽस्मत्पुत्र इत्यत्र युवयोर्युष्माकमित्यादिविग्रहो न संभवतीति चेत् । अत्राहुः—यत्र वृत्तौ संख्याविशेषबोधकं प्रमाणं नास्ति तत्रैवैकत्वसंख्याऽऽश्रीयते यथा राजपुरुष इति । न हि राजपुरुष इत्यत्र विभक्तौ निवृत्तायां राजपदार्थे द्वित्वादिप्रत्यायकं किंचिदस्ति । यत्र पुनः संख्याभेदगमकमर्थप्रकरणाद्यस्ति, भवति तत्र द्विवचनबहुवचनयोरपि वृत्तिः । प्रकृते त्वेकवचनान्तेन विग्रहे 'प्रत्ययोत्तरपदयोश्च १३२४' इति त्वमादेशप्रसङ्गाद्दर्थाद्द्विवचनबहुवचनान्तेनेति विग्रहे वृत्तिर्भविष्यतीति । अर्थः सामर्थ्यम् । अर्थाद्यथा मुद्गैः क्रीतो मौद्गिकः । न ह्येकेन मुद्गेन द्वाभ्यां वा मुद्गाभ्यां क्रयणं संभवति । प्रकरणाद्यथा—'भवद्गिरामवसरप्रदानाय वचांसि नः' भवतोर्गिरामिति तत्र ह्यर्थः ॥ ( ५४६ ) समानवाक्य इति । 'देवदत्त अस्त्ययं दण्डो—देवदत्त हरानेन' इत्यत्र दण्ड इत्येतत्पूर्ववाक्यस्थमिति समानवाक्यस्थत्वाभावादामन्त्रितनिघातो न भवति ॥ ( ५४७ ) एकतिङिति । एकं तिङन्तं यत्रेति बहुव्रीहिः । ननु ओदनस्त्वया पक्तव्यस्तव भविष्यतीत्यत्रातिप्रसङ्गः, पक्तव्योऽस्तीत्यध्याहारेण भिन्नवाक्यतासमर्थनेऽपि पश्य मृगो धावतीत्यादावेकवाक्यत्वव्यवहारो न स्यात् । सत्यम्, प्रकृतोपयोगित्वेनेदमुक्तं, पश्य मृग इत्यादौ तु 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति शास्त्रान्तरप्रसिद्धमेवेत्येके ॥ अन्ये तु—'आख्यातं सविशेषणं वाक्यम्' इति वार्तिककारवचनपर्यालोचनया 'एकतिङ्—५४७' इत्यत्र तिङन्तं विशेष्यसमर्पकं विवक्षितं, ततश्च पश्य मृगो धावतीत्यत्र तिङन्तद्वये सत्यपि पश्येत्यस्यैव विशेष्यसमर्पकत्वान्नोक्तदोष इत्याहुः ॥ एकशब्दः समानवचनो न तु संख्यावाची बहुव्रीहिश्चायम् । तेन 'ब्रूहि ब्रूहि देवदत्त' इत्यत्र वाक्यत्वादामन्त्रितानिघातः सिध्यतीति समर्थसूत्रे कैयटः ॥ ( ५४८ ) 'युष्मदस्मदोर्विभाषा अनन्वादेशे' इति वार्तिकमर्थतः पठति—एते वांनावादय इति । यद्यपि 'सपूर्वायाः प्रथमाया विभाषा ५५१' इत्यत्रैतत्पठ्यते, तथाप्यविशेषेण विकल्पोयं विधीयत इत्याशयेन सपूर्वत्वाभावेऽपि विकल्पमुदाहरति—धाता ते भक्त इति ॥

---

१ समानवाक्य इति । 'निमित्तनिमित्तिनोरेकवाक्यस्थत्वे' इत्यर्थकं समानवाक्य इति प्रकृत्य विधेया इत्यर्थः । निघातो नामाऽनुदात्तः ॥ २ नेष्यत इति । वृत्त्यर्थावबोधकवाक्यस्यैव विग्रहत्वेन संख्याविशेषानवबोधकत्वस्यैव वृत्तावङ्गीकारेण संख्याविशेषबोधकस्य विग्रहत्वमेव न स्यादिति भावः ॥ ३ एकत्वसंख्येति । संख्याविशेषानवगतिरेवेहैकत्वसंख्यापदेनोच्यते । भेदसहचारितद्वित्वादेरेकत्वस्य चाभानमिति तदर्थः । तदुक्तं हरिणा—'वाचिका द्योतिका वापि संख्यानां या विभक्तयः । तल्लुक्यवयवे वृत्तौ संख्याभेदो निवर्तते' इति ॥ ४ बहुव्रीहिरिति । तेन पचतीत्येतन्मात्रस्य न वाक्यत्वम् ॥ ५ प्रकृतोपेति । स्वशास्त्रकार्योपयोगित्वेनेत्यर्थः ॥ ६ इत्याहुरिति । अत्रेदमवधेयम्—'आख्यातं सविशेषणम्' इति लक्षणं तु 'वाक्यस्य टेः—' इत्येतच्छास्त्रलोकसाधारणम् । अत एव 'पच पश्य च देवदत्त' इत्यत्र प्लुतो भवत्येव । 'एकतिङ्' इत्येतन्मात्रोक्तौ तत्रापीदमेवेति भ्रमः स्यात्तदर्थमिदम् । 'समानवाक्ये—' इत्येतद्विषयं क्वचित् प्लुतविषयं च 'एकतिङ्' इति । अत एव 'ब्रूहि ब्रूहि' इत्युदाहरणसंगतिः । अत एव 'तिङ्ङतिङः' इति सूत्रभाष्ये 'समानवाक्याधिकारादतिङ्ग्रहणानर्थक्यम्' इति वार्तिकव्याख्यावसरे 'न च समानवाक्ये द्वे तिङन्ते स्तः' इति भाष्ये उक्तम् । तेनैव 'एकतिङ्' इति बहुव्रीहिरिति च सूचितम् ॥ ७ कैयट इति । 'ब्रूहि ब्रूहि' इति भाष्यं 'देवदत्त' इति शेषपूरणेन व्याख्यातवान् इति शेषः । तन्न समञ्जसम् । 'आख्यातं सविशेषणम्—' इति लक्षणेनैव सिद्धेः 'एकतिङ्' इति लक्षणान्तरकरणस्य व्यर्थत्वापत्तेः । द्विःप्रयोगस्य भाष्ये व्यर्थत्वापत्तेश्च । एतेन 'आख्यातं सविशेषणम्—' इति लक्षणे एकत्वाविवक्षाशङ्कावारणेनैकत्वविवक्षाबोधनार्थमिदं लक्षणान्तरमुक्तमित्यष्टमे कैयटोक्तमपास्तम् । यद्यप्यग्नेऽग्ने इत्यादौ पूर्वरूपाय द्वित्वेऽवान्तरपदत्वमप्यस्ति । एवं च 'ब्रूहि ब्रूहि' इत्यत्र कथमेकतिङ्त्वम् । तथाप्येकानुपूर्वीकतिङन्तवत्समुदायो वाक्यमित्यर्थः । बहुव्रीहित्वबलात् । तेन पचतीत्येतन्मात्रस्य न वाक्यत्वम् । एतल्लक्षणानुसारेणैव वार्तिक इति प्रत्याख्यातमित्यन्यत् ॥

तस्मै ते नम इत्येव ॥ (५४९) न चवाहाऽहैवयुक्ते । ८ । १ । २४ । चादिपञ्चकयोगे नैते आदेशाः स्युः । हरिस्त्वां मां च रक्षतु । कथं त्वां मां वा न रक्षेदित्यादि । युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः । परम्परासंबन्धे तु आदेशः स्यादेव । हरो हरिश्च मे स्वामी ॥ (५५०) पश्यार्थैश्चानालोचने । ८ । १ । २५ । अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः । चेतसा त्वां समीक्षते । परम्परासंबन्धेऽप्ययं निषेधः । भक्तस्तव रूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा ॥ (५५१) सपूर्वायाः प्रथमाया विभाषा ।८।१।२६। विद्यमानपूर्वात्प्रथमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा स्युः । 'भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्' । त्वा मेति वा ॥ (५५२) साऽऽमन्त्रितम् ।२।३।४८। संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् ॥ (५५३) आमन्त्रितं पूर्वमविद्यमानवत् ।८।१।७२। स्पष्टम् । अग्ने तव । देवास्मान्पाहि । अग्ने नय । ( ऋ. सं. १।१८९।१) 'अग्न इन्द्र वरुण मित्र-' ( ऋ. सं. ५।४६।२ ) इह युष्मदस्मदोरादेशास्तिङन्तनिघात आमन्त्रितनिघातश्च न । 'सर्वदा रक्ष देव नः' इत्यत्र तु देवेत्यस्याविद्यमानवद्भावेऽपि ततः प्राचीनं रक्षेत्येतदाश्रित्यादेशः । एवम् 'इमं मे गङ्गे

---

अन्वादेशे तु नित्यमुदाहरति—**तस्मै ते नम इत्येवेति**॥ (५४९) 'तुल्यार्थैः-९२३' इत्यादिवत् 'न चवाहाऽहैवैः' इति तृतीयानिर्देशेनापि युक्तार्थलाभे युक्तग्रहणमनर्थकमित्यत आह—**युक्तग्रहणादिति** । यत्र युष्मदस्मदर्थगतान्समुच्चयादींश्चादयो द्योतयन्ति तदा चादिभिः सहार्थद्वारा युष्मदस्मदोः साक्षाद्योगः, तत्रायं निषेध इत्यर्थः ॥ **हरो हरिश्चेति** । अत्र चशब्दो हरहरिगतसमुच्चयमाह, हरिहराभ्यां त्वस्मदः संबन्धो, न तु समुच्चयेनेति न साक्षाद्योगः, किं तु परम्परायोग इति न निषेध इति भावः ॥ (५५०) **पश्यार्थैश्चाना—**। अत एव निपातनाद्घ्राधे 'पाघ्राध्माधेट्-३१५३' इति शः । दर्शनं पश्यः तच्चेह ज्ञानमात्रम् 'अदर्शनं लोपः ८०' इत्यत्र यथा, न तु चाक्षुषज्ञानमेव 'अनालोचने' इति निषेधात्, तदेतदाह—**अचाक्षुषज्ञानार्थैरिति ॥ परम्परासंबन्धेऽपीति** । पूर्वसूत्रस्थयुक्तग्रहणेन ज्ञापितमेतद्भवत्यन्यत्र परम्परासंबन्धेऽपि निषेध इति ॥ (५५१) **सपूर्वायाः—**। सहशब्दोऽत्र सलोमक इत्यत्रेव विद्यमानवचनः 'तेन सहेति-१२२१' इत्यत्र तुल्ययोगवचनं प्रायिकमिति वक्ष्यमाणत्वाद्विद्यमानवचनस्यापि सहस्य समासः । 'वोपसर्जनस्य १२२२' इति सभावः ॥ प्रथमाया इति च प्रत्ययग्रहणात्तदन्तविधिरित्यालोच्याह—**विद्यमानपूर्वादित्यादि** ॥ 'एते वांनावाद्य आदेशाः-५४८' इत्यविशेषोक्त्यैव विभाषया सिद्धेः किमर्थमिदं वचनमित्याशङ्कां परिहरन्नाह—**अन्वादेशेऽपीति । भक्तस्त्वमित्यादि** । त्वं भक्तोऽहमपि तेन हरिस्त्वां मां च त्रायत इति संबन्धः । एवं च प्रक्रान्तत्वान्न यच्छब्दापेक्षा । येन कारणेन हरेस्त्वं भक्तस्तेनैव कारणेनाहमपीति व्याचक्षाणानां यच्छब्दाध्याहारक्लेश इति बोध्यम् । अत्र तेनेति पूर्वविद्यमानं पदं, ततो हरिरिति प्रथमान्तं, ततः परस्य युष्मच्छब्दस्यादेशः । तथा-त्रायत इत्यस्मात्परं स इति प्रथमान्तं, ततः परस्यास्मच्छब्दस्यादेशः ॥ (५५२) **साऽऽमन्त्रितम्** । 'संबोधने च ७६६' इत्यतः संबोधने इत्यनुवर्तते । सा इत्यनेन प्रथमा निर्दिश्यते । महासंज्ञाकरणसामर्थ्यात्संज्ञाविधावपि तदन्तग्रहणम् ॥ आमन्त्रणमामन्त्रितमुपचारात्तत्साधने वृत्तिः विभक्त्यन्तेन चामन्त्र्यते न तु केवलया विभक्त्येत्याशयेनाह—**तदन्तमिति** ॥ (५५३) **इहेति** । 'अग्ने तव' 'देवास्मान्' इत्यत्र युष्मदस्मदोर्न भवत्यादेशः 'अग्ने नय' इत्यत्र 'तिङ्ङतिङः ५९११' इति न

---

१ **चादीति** । समुच्चयविकल्पाद्भुतखेदावधारणार्थानां चादीनामन्यतमेन योग इत्यर्थः ॥ २ **साक्षादिति** । युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्व इत्यर्थः ॥ ३ **परम्परेति** । स्वार्थाश्रयान्वय्यन्वयित्वादिरूप इत्यर्थः ॥ ४ **चेतसेति** । अनालोचनार्थैरित्येव पर्युदासेन सिद्धे पश्यार्थैरित्येतदिन्द्रियजन्यसकलज्ञानसंग्रहार्थमिति भावः ॥ ५ **परम्परेति** । स्वान्विता-न्वयित्वादिरूप इत्यर्थः । तदुक्तं भाष्ये—'पश्यार्थैश्च प्रतिषेधः समानवाक्य इति प्रकृत्य वक्तव्यः । इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं तत्रैव प्रतिषेधः स्यात्—ग्रामस्त्वां संप्रेक्ष्य गत इति । इह न स्यात्—ग्रामस्तव स्वं संप्रेक्ष्य गत इति ।' इति । समानवाक्य इति करणेन समानवाक्ये पश्यार्थैर्युक्ते युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेध इति कैयटः । एवं च 'न चवाहा-' इति सूत्रे युक्तग्रहणं स्पष्टार्थमेव तदभावेऽपि प्रकृतसूत्रस्येव तस्यापि साक्षात्संबन्ध एव प्रवृत्तिः स्यात् । समानवाक्ये इत्येतत्संबन्धात्तु अस्य युक्तयुक्तेऽपि प्रवृत्तिरित्यन्यत् ॥ ६ **भक्तस्तवेति** । अत्र तवेत्यस्य रूपेण संबन्धो न तु साक्षाद् ध्यायतिनेति भावः ॥ ७ **तदन्तमिति** । अत एव हे हे भो इत्यादीनामपि संज्ञासिद्धिः । अन्यथा 'अन्तरङ्गानपि विधीन्-' इति न्यायेन पूर्वं सुब्लुकि प्रथमाया अभावेन संज्ञा न स्याद् । यद्यप्येषां संबोधने शक्तिस्वीकारात् प्रातिपदिकार्थकोट्यैव प्रथमाविधानात् 'संबोधने च' इत्यनेन प्रथमाया अविधानम् । तथापि संबोधनविषयबोधजनकप्रथमासत्त्वान्न दोषः । एतदर्थमेव प्रथमेत्यनुवर्तमानेऽपि सेति पदम् । अन्ये तु—तिङ्कृत्तद्धितसमासैरिति परिगणनेन प्रातिपदिकोक्तत्वस्याव्यावर्तकत्वेन संबोधनार्थस्य प्रातिपदिकार्थत्वेऽपि 'संबोधने वर्तमानाद्' इत्यर्थकेन 'संबोधने च' इत्यनेनैवात्र प्रथमा । तथा च 'अनन्तरस्य-' इति न्यायाङ्गीकारेऽपि न दोषः । 'सा' इति तु विधेयसमर्पिकाया अनुवादत्वाय स्पष्टार्थमेवेति वदन्ति॥

यमुने'—इति मन्त्रे यमुन इत्यादिभ्यः प्राचीनामन्त्रिताविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां[1] निघातः ॥ ( ५५४ ) (सू) नामन्त्रिते समानाधिकरणे[2] सामान्यवचनम् ।८।१।७३। विशेष्यं समानाधिकरणे आमन्त्रिते परे नाविद्यमानवत्स्यात् । हरे दयालो नः पाहि । अग्ने तेजस्विन् ॥ ( ५५५ ) (सू) विभाषितं विशेषवचने ।८।१।७४। अत्र भाष्यम्—बहुवचनमिति वक्ष्यामीति । बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे परेऽविद्यमानवद्वा । यूयं प्रभवः । देवाः शरण्याः। युष्मान्भजे । वो भजे इति वा । इहान्वादेशेऽपि वैकल्पिका आदेशाः॥ सुपात्, सुपाद् । सुपादौ । सुपादः । सुपादम् । सुपादौ ॥ ( ५५६ ) (सू) पादः[3] पत् ।६।४।१३०। पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । सुपदः । सुपदा । सुपाद्भ्यामित्यादि ॥ अग्निं मन्थतीत्यग्निमत्, अग्निमद् । अग्निमथौ । अग्निमथः । अग्निमद्भ्यामित्यादि ॥ 'ऋत्विगित्यादिसूत्रेणाञ्चेः सुप्युपपदे क्विन् ॥ ( ५५७ ) (सू) अनिदितां हल उपधायाः क्ङिति ।६।४।२४। हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च । उगिदचामिति नुम् । संयोगान्तस्य लोपः । नुमो नकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वेन ङकारः । प्राङ् । अनुस्वारपरसवर्णौ । प्राञ्चौ । प्राञ्चः । प्राञ्चम् । प्राञ्चौ ॥ ( ५५८ ) (सू) अचः[4] ।६।४।१३८। लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् ॥ (५५९) (सू) चौ ।६।३।१३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो[5] दीर्घः स्यात् । प्राचः । प्राचा । प्राग्भ्यामित्यादि॥

---

तिङन्तनिघातः, अग्न इन्द्र वरुणेत्यत्र तु 'आमन्त्रितस्य च ५५२१' इत्यामन्त्रितनिघातो नेति विवेकः ॥ **सर्वेषां निघात इति** । अयं च निघातः पदकाले श्रूयते न तु संहिताकाले । 'स्वरितात्संहितायामनुदात्तानाम् ५५४३' इति संहितायामेकश्रुतिविधानात् ॥ **( ५५४ ) अग्ने तेजस्विन्निति** । इह पदात्परत्वात्तेजस्विन्नित्यस्य 'आमन्त्रितस्य च ५५२१' इत्याष्टमिकनिघातः सर्वानुदात्तः ॥ **सुपादिति** । शोभनौ पादौ यस्योति बहुव्रीहिः । 'संख्यासुपूर्वस्य १२६१' इति पादस्यान्तलोपः ॥ **( ५५६ ) पादः पत् । तदवयवस्येति** । एतच्च 'निर्दिश्यमानस्यादेशा भवन्ति ३२७' इति परिभाषया लभ्यते । इयं च परिभाषा 'षष्ठी स्थानेयोगा ६१' इत्यनेन ज्ञापिता । तथाहि 'अस्तेर्भूः ३२८३' 'इको यणचि ७४' इत्यादौ सामीप्यादिसंबन्धप्रसङ्गेऽपि लक्ष्यानुरोधेन व्याख्यानादन्तरङ्गत्वात् 'स्थानिवदादेशः—७६' इति ज्ञापकाच्च स्थानेयोगत्वे सिद्धेऽप्यारभ्यमाणेन 'षष्ठी स्थानेयोगा ६१' इत्यनेन षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न तु प्रतीयमानमित्यर्थो लभ्यते । तथा च 'निर्दिश्यमानस्यादेशा भवन्ति ३२७' इति सिद्धम् ॥ 'अलोऽन्त्यस्य ६६' 'आदेः परस्य ६८' इति योगौ तु आरम्भसामर्थ्यान्निर्दिश्यमानपरिभाषाया बाधकौ, तेन 'पुमः खय्यम्परे २११' 'उदः स्थास्तम्भोः—१८३' इत्यादौ न दोष इति दिक् ॥ इति दान्ताः॥ **अग्निमदिति** । मथ्नातेर्मन्थतेश्च क्विप्येतदेव रूपम् ॥ इदितस्तु नलोपाभावादग्निमन् । अग्निमन्थौ । अग्निमन्थः ॥ इति थान्ताः ॥ **(५५७) अनिदिताम्**–। इद् ह्रस्वेकार इत्संज्ञको येषां तानि इदिन्ति न इदिन्ति अनिदिन्ति तेषामनिदिताम् । एतच्चाङ्गस्य विशेषणं, हल इत्यपि, तदाह—**हलन्तानामनिदितामिति । उपधाया नस्येति** । 'श्नान्नलोपः २३७४' इति सूत्रान्नेति लुप्तषष्ठीकं पदमनुवर्तते, तच्चोपधाग्रहणेन विशेष्यत इति भावः ॥ अनिदितामिति किम्, नन्द्यते । हलः किम्, नीयते । उपधायाः किम्, हन्यते ॥ **( ५५८ ) अचः** । 'अल्लोपोऽनः ३३५' इत्यतोऽल्लोप इत्यनुवर्तते 'भस्य ३३४' इति च । तदाह—**भस्याकारस्य लोपः स्यादिति** । अत्र नव्याः—यद्यत्र 'अञ्चतेर्भस्य' इति सामानाधिकरण्येनान्वयः स्वीक्रियते, तर्हि प्रतीचः प्रतीचेत्यादि न सिध्येत् । उपसर्गसहितस्यैव भत्वेन केवलस्याञ्चतेर्भत्वाभावात् । 'भस्यावयवस्याञ्चतेः' इति वैयधिकरण्येनान्वये तु प्रत्यगात्मनेत्यादावञ्चतेरकारस्य लोपः स्यात् । 'अञ्चत्यन्तस्य भस्याकारलोपः' इति व्याख्यायां प्राचः प्राचेति प्रशब्दाकारस्यापि लोपः स्यात् । तन्त्रावृत्त्यादिना 'अञ्चत्यन्तस्य भस्याञ्चतेरकारस्य' इति व्याख्यानेऽपि प्रत्यञ्चमञ्चति प्रत्यङ्ङ्, ततः शसादिषु प्रत्यङ्चः प्रत्यङ्चेत्यादावतिप्रसङ्ग एव । तस्मात् 'अल्लोपोऽनः ३३५' इत्यत्रेवात्राप्यङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽञ्चतिस्तस्याकारस्य लोपः स्यादिति व्याख्येयम् । 'द्युप्रागपागुदक्प्रतीचः—१८५९' इति निर्देशश्चेह व्याख्याने लिङ्गमित्याहुः ॥ **( ५५९ ) चौ** । 'चजोः—३८१४' इति निर्देशाच्चवर्गग्रहणं न भवतीत्याह—**लुप्ताकारनकारेऽञ्चताविति** । अत्राकारलोपेन नकारलोपस्याक्षिप्तत्वात्तत्कथनं व्यर्थमेव, किन्तु लुप्ताकारेऽञ्चतावित्येव सुवचमित्याहुः ॥ 'ढ्लोपे—२५८' इति सूत्रादणो दीर्घ इत्यस्य चानुवर्तनादाह—**अणो दीर्घः स्यादिति ॥ प्राचः प्राचेति** । प्रतीच इत्याद्यर्थमवश्यस्वीकार्येऽतो

---

१ **सर्वेषां निघात इति** । प्राप्त इति शेषः । तथा च यमुने सरस्वतीत्यनयोर्बाधकाभावाद्भवति । 'शुतुद्रि' इत्यस्य तु पादादिस्थत्वान्न भवति किं तु 'आमन्त्रितस्य च' इति षाष्ठेनादिरुदात्तः । तं निमित्तीकृत्य 'उदात्तस्वरितपरस्य सन्नतरः' इत्यनेन सरस्वतीतीकारस्यानुदात्ततरत्वम् ॥ २ **समानाधिकरण इति** । सामानाधिकरण्यं चैकार्थविशेष्यकबोधजनकत्वमेव न तु प्रवृत्तिनिमित्तभेदगर्भमिति "अघ्न्ये देवि सरस्वति इडे काव्ये" इत्यादौ पर्यायेषु परेषु निषेधो मा भूदिति सामान्यवचनग्रहणमिति भावः ॥ ३ **पाद इति** । अत्र कृतसमासान्तलोपस्य ण्यन्तपदधातुप्रकृतिकाश्रूयमाणप्रत्ययान्तस्य चानुकरणमिति बोध्यम् ॥ ४ **अच इति** । लुप्तनकारस्याञ्चतेरेव ग्रहणं व्याख्यानात् प्रतीच इति निर्देशाद् इति बोध्यम् ॥ ५ **अण इति** । कर्तॄच इत्यादीनां त्वनभिधानमेवेति भावः । तृतीयेति निर्देशज्ञापिते 'संप्रसारणस्य च' इत्यत्रावश्यानुवर्त्तने, अण इत्यस्यात्रापि न्याय्यत्वात्संबन्ध इति बोध्यम् ॥

प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । अँर्चे इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्तते, अकृतंव्यूहाँ इति परिभाषया । प्रतीचः । प्रतीचा ॥ अमुमञ्चतीति विग्रहे–अदस् अञ्च् इति स्थिते–॥(५६०) (सू) विष्वग्देवयोश्च टेरद्र्यञ्चता-वप्रत्यये ।६।३।९२। अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययान्तेऽञ्चतौ परे । अदद्रि अञ्च् इति स्थिते यण् ॥ (५६१) (सू) अदसोऽसेर्दादु दो मः ।८।२।८०। अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य च मः । उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः । आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घः । अमुमुयङ् । अमुमुयञ्चौ । अमुमुयञ्चः । अमुमुयञ्चम् । अमुमुयञ्चौ । अमुमुईचः । अमुमुईचा । मुत्वस्यासिद्धत्वान्न यण् । अमुमुयग्भ्यामित्यादि ॥ (५६२) अन्त्यबाधेऽन्त्य-सदेशस्येति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते अदमुयङ् । अः सेः सकारस्य स्थाने यस्य सोऽसिरिति व्याख्यानात् त्यदाद्यत्वविषय एव मुत्वं नान्यत्रेति पक्षे अदद्र्यङ् । उक्तं च—

"अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् । केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥" इति ॥

विष्वग्देवयोः किम् । अश्वाची । अञ्चतौ किम् । विष्वग्युक् । अप्रत्यये किम् । विष्वगञ्चनम् । अप्रत्ययग्रहणं ज्ञापयति अन्यत्र (५६३) धातुग्रहणे तदादिविधिरिति । तेनाऽयस्कारः । अतः कृकमीति सः ॥ उदङ् । उदञ्चौ । उदञ्चः । शसादावचि–॥ (५६४) (सू) उद ईत् ।६।४।१३९। उच्छब्दात्परस्य लुप्तनकारस्याञ्चते-

लोपे कृते, अनेन दीर्घो विधीयत इति भावः ॥ **प्राग्भ्यामिति** । 'चोः कुः ५१३' इति कुत्वं, न तु 'क्विन्प्रत्ययस्य–५१२' इत्यनेन, तस्यासिद्धत्वात् ॥ (५६०) **विष्वग्देवयोश्च**–। चकारेण 'आ सर्वनाम्नः ५७६' इत्यतः सर्वनाम्न इति लभ्यत इत्याह—**अनयोः सर्वनाम्नश्चेति** ॥ **अप्रत्ययान्तेऽञ्चताविति** । अविद्यमानः प्रत्ययोऽप्रत्ययः क्विन्क्विबादिः । 'अञ्चतौ वप्रत्यये' इति पाठे तु 'वप्रत्ययान्तेऽञ्चतौ' इति व्याख्येयम् । विष्वग्देवयोस्तूदाहरणं–विष्वगञ्चतीति विष्वद्र्यङ् इति बोध्यम् ॥ (५६१) **अदसोऽसेः**–। असेरितीकार उच्चारणार्थस्तदाह—**अदसोऽसान्तस्येति** । असान्तस्येति किम्, अमुमात्मन इच्छति अदस्यति । दात्परस्य किम्, अमुया अमुयोरित्यत्रान्त्ययकारस्य मा भूत् ॥ **ह्रस्वव्यञ्जनयोरिति** । व्यञ्जनस्य हि ह्रस्व ईषत्सदृशो दीर्घस्तु विसदृश इति भावः ॥ प्राञ्चस्तु–ह्रस्वदीर्घयोः समाहारद्वन्द्वमकृत्वैव 'विधीयँमानोऽप्यण् कांश्चित्सवर्णान्गृह्णाति' इति स्वीकृत्य आन्तरतम्याद् ह्रस्वव्यञ्जनयोर्ह्रस्वः दीर्घस्य दीर्घ इति व्याचक्षते ॥ (५६२) **अन्त्य-बाध इति** । सूत्रे अदस इति नावयवषष्ठी, किं तु स्थानेषष्ठी, एवं हि अलोऽन्त्यपरिभाषोपतिष्ठते । तथा च–अदसो योऽन्त्यः स दात्परो न भवति, दात्परो यः सोऽदसोऽन्त्यो न भवतीत्येवमन्त्यबाधेऽन्त्यसमीपस्य भवतीति तेषामाशयः॥ **उक्तं चेति** । वार्तिककृतेति शेषः । एवं च अमुद्र्यङ् इति केषांचिदुदाहरणं भाष्यानुक्तत्वादुपेक्ष्यमिति भावः ॥ **लत्ववदिति** । चलीक्लृप्यत इत्यत्र 'कृपो रो लः ३१३१' इत्युभयोर्यथा लत्वं तथेत्यर्थः ॥ नन्वप्रत्ययग्रहणाभावेऽप्युत्तरपदाधिकारस्थत्वाद्विष्व-द्र्यङ् देवद्र्यङ् इत्यञ्चत्युत्तरपदेष्वेवाद्र्यादेशः स्यान्न तु विष्वगञ्चनमित्यत्रातो व्याचष्टे–**अप्रत्ययग्रहणं ज्ञापयतीति** ॥ **अन्य-त्रेति** । 'अतः कृकमि–२४०' इत्यादौ ॥ (५६३) **तेनेति** । अन्यथा 'नित्यं समासे–२३९' इत्यतोऽनुवृत्तेन समासग्रहणे-नोत्तरपदस्याक्षेपात् 'अतः कृकमि–२४०' इति कृधातुग्रहणे कृधातूत्तरपदक एवायस्कृदित्यादौ सत्वं स्यात्, न त्वणन्तोत्तरप-दकेऽयस्कार इत्यत्रेति भावः ॥ (५६४) **उद ईत्** । 'अचः ५५८' इत्यस्यापवादः ॥ इह अच इत्यनुवर्तते भस्येति च

१ **अकृतेति** । यदि तु भाष्यानुक्तत्वादप्रामाणिकत्वमस्या इत्युच्यते । तर्हि पदस्य विभज्यान्वाख्यानपक्षे प्रति अच् अस् इति स्थितेऽन्तर्भूतनिमित्तकत्वेनान्तरङ्गमपि यणं बाधित्वा प्रतिपदविधित्वाल्लोप एव प्रवर्तते । तथा चोक्तम्–'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते, तेषां मिथः प्रसङ्गे परबलीयस्त्वम्' इति ॥ २ **सर्वनाम्नश्चेति** । विधानसामर्थ्यादुपसर्जनत्वे सर्वनामत्वं भवतीति बोध्यम् ॥ ३ **असान्तस्येति** । अत्र भाष्ये–अविभक्तिको निर्देशः–'अदस् ओ असे र्' इति इत्येवं विभागनिर्देशेन अदोऽत्र अदस्यति अदः इत्यादौ मुत्वाभावाय कृतस्य "अदसोऽनोस्रेः" इति वार्तिकस्य प्रत्याख्यानकथनेन असे इत्यत्रोपात्तस्य निषेधार्थाकारस्य यथेष्टमभिसंबन्धेन ओकारान्तसकारान्तरेफान्ताभिन्नस्या-दसो मुत्वविधानमिति बोध्यम् ॥ ४ **मुत्वस्यासिद्धत्वादिति** । उकारस्येति शेषः । इकारस्य तु प्रतिपदविधित्वेन लोपस्य प्रबलत्वादिति प्रागुक्तमेवेति भावः ॥ ५ **अन्त्यबाध इति** । अन्त्यस्य विकाराप्राप्तावनेकस्यानन्त्यस्य प्राप्तावन्त्यसदे-शस्यैवेति परिभाषार्थः । 'अन्त्यबाधेऽन्त्यसमीपस्यैव' इत्यर्थाङ्गीकारे तु 'णो नः' इति नत्वं नेतेत्यत्रैव स्यात् न तु नमतीत्यादा-विति बोध्यम् । अन्त्यसदेशस्येति । अन्त्येन समानो देशो यस्येत्यर्थः । तत्त्वं चान्त्यवर्णतद्वर्णयोरितराव्यवधाने भवतीति बोध्यम् ॥ ६ **अदद्र्यङिति** । भाष्ये—'अः अस्य सकारस्य सोऽयमासिः असेरिति' इत्येवम् "अदसोऽनोस्रेः" इति वार्तिक-प्रत्या ख्यानायव्याख्यान्तरमभिधाय–'यद्येवम्–, अमुमुयङ्ङिति न सिध्यति, अदद्र्यङ्ङिति प्राप्नोति । अदमुयङ्ङिति भवितव्यम् अनन्त्यविकार इति ।' इत्युक्तम् । तत्र 'अमुमुयङ्ङिति न सिध्यति' इत्युक्त्येष्टानुपपत्तिः सूचिता । वार्तिकस्य पूर्वप्रत्याख्यान-प्रकारस्य स्वीकारे तस्य सिद्धेरिष्टत्वमवसीयते । 'अदद्र्यङ्ङिति प्राप्नोति' इत्युक्त्या तत्रासंमतिरुक्ता । 'इति भवितव्यम्' इत्यु-क्त्या अदमुयङ्ङित्यत्राप्रयुक्तत्वं दर्शितम् ॥ ७ 'दिव उत्' इत्यादिसूत्रस्थ 'उद्' इति तपरकरणज्ञापितया 'भाव्यमानो-ऽप्युकारः सवर्णान्गृह्णाति' इति परिभाषया इति तु तत्त्वम् ॥

अस्याकारस्य ईः स्यात्। उदीचः। उदीचा। उदग्भ्यामित्यादि॥ (५६५) समः समि। ६। ३। ९३। वप्रत्ययान्तेऽञ्चतौ परे। सम्यङ्। सम्यञ्चौ। सम्यञ्चः। समीचः। समीचा॥ (५६६) सहस्य सध्रिः। ६। ३। ९५। वप्रत्ययान्तेऽञ्चतौ परे। सध्र्यङ्॥(५६७) तिरसस्तिर्यलोपे।६। ३। ९४। अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात्। तिर्यङ्। तिर्यञ्चौ। तिर्यञ्चः। तिर्यञ्चम्। तिर्यञ्चौ। तिरश्चः। तिरश्चा। तिर्यग्भ्यामित्यादि॥ (५६८) नाञ्चेः पूजायाम्। ६। ४। ३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात्। अलुप्तनकारत्वान्न नुम्। प्राङ्। प्राञ्चौ। प्राञ्चः। नलोपाभावादकारलोपो न। प्राञ्चः। प्राञ्चा। प्राङ्भ्याम्। प्राङ्क्षु, प्राङ्षु। एवं पूजार्थे प्रत्यङ्ङादयः॥ क्रुञ्च कौटिल्याल्पीभावयोः। अस्य ऋत्विगादिना नलोपाभावोऽपि निपात्यते। क्रुङ्। क्रुञ्चौ। क्रुञ्चः। क्रुङ्भ्यामित्यादि॥ चोः कुः। पयोमुक्, पयोमुग्। पयोमुचौ। पयोमुचः॥ व्रश्चेति षत्वम्। स्कोरिति सलोपः। जश्त्वचर्त्वे। सुवृट्, सुवृड्। सुवृश्चौ। सुवृश्चः। सुवृट्सु, सुवृट्त्सु॥ (५६९) वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च॥ एते निपात्यन्ते शतृवच्चैषां कार्यं स्यात्। उगित्वान्नुम्। सान्तमहत इति दीर्घः। मह्यते पूज्यत इति महान्। महान्तौ। महान्तः। हे महन्। महतः। महता। महद्भ्यामित्यादि॥ (५७०) अत्वसन्तस्य चाधातोः। ६। ४। १४। अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य चासंबुद्धौ सौ परे। परं नित्यं

---

तदाह—उच्छब्दात्परस्य लुप्तनकारस्येत्यादि। अस्येति किम्, उदञ्चौ। उदञ्चः। उदग्भ्याम्॥ लुप्तनकारस्येति किम्, पूजायाम्—उदञ्चः, उदञ्चेति यथा स्यादिति॥ (५६५) समः समि। समीत्यविभक्तिको निर्देशः। एवं 'तिरसस्तिरि-५६७' इत्यपि। संगतमञ्चतीति सम्यङ्॥ समीच इति। अल्लोपे 'चौ ५५९' इति दीर्घः॥ (५६६) सह अञ्चतीति सध्र्यङ्। भविषये—अल्लोपदीर्घौ। सध्रीच इत्यादि॥ (५६७) तिरसः—। न विद्यते लोपो यस्य सः अलोप इति बहुव्रीहिः। अञ्चतावित्यनुवर्तमानमन्यपदार्थः। अवयवद्वारकश्च लोपः समुदाये उपचर्यत इत्यभिप्रेत्याह—अलुप्ताकार इत्यादि। अकारलोपे सतीति नोक्तं, व्याख्यानात्। अप्रत्ययान्ते किम्, तिरोऽञ्चनमित्यादौ मा भूत्॥ तिरश्च इति। लुप्ताकारत्वात्तिर्यादेशाभावे सस्य श्चुत्वेन शः। न चाल्लोपस्य स्थानिवत्त्वात् श्चुत्वं न स्यादिति वाच्यम्, पूर्वत्रासिद्धे तदभावात्पदान्तविधित्वाच्च॥ (५६८) नाञ्चेः—। नुमैव सिद्धे प्राञ्चः प्राञ्चेत्यादौ नुमोऽभावेऽपि नकारश्रवणार्थः॥ प्राङिति। प्रकर्षेणाञ्चति पूजयतीति पूजार्थादञ्चेः क्विन्। प्राङ्क्ष्विति। 'ङ्णोः कुक्टुक्—१९७' इति वा कुक्, 'चयो द्वितीयाः—१९८' इति पक्षे खकारोऽपि बोध्यः॥ एवमिति। शसादिषु प्रत्यञ्चः। प्रत्यङ्भ्याम्॥ अमुमुयञ्चः। अमुमुयङ्भ्याम्॥ उदञ्चः। उदङ्भ्यामित्यादि ज्ञेयम्॥ क्रुञ्चतीति क्रुङ्॥ सलोप इति। श्चुत्वस्यासिद्धत्वादिति भावः। सुष्ठु वृश्चतीति सुवृट्। क्विपि 'ग्रहिज्या—२२१६' इति संप्रसारणम्॥ सुवृट्त्स्विति। चर्त्वस्यासिद्धत्वात्पूर्वं 'डः सि—१९९' इति वा धुट्, ततश्चर्त्वम्॥ इति चान्ताः॥ (५६९) निपात्यन्त इति। 'पृषु सेचने' 'बृह वृद्धौ' अत्र गुणाभावः॥ महेः कर्मणि प्रत्ययः। अत एव मह्यते पूज्यते स महानिति व्याचष्टे॥ गमेस्तु जगादेशः। चत्वारोऽप्यतिप्रत्ययान्ताः। एतच्चोणादिषु स्फुटीकरिष्यते॥ (५७०) अत्वसन्तस्य चाधातोः। 'ढ्रलोपे—२५८' सूत्राद्दीर्घस्य 'नोपधायाः ५०१' इत्युपधा-

---

१ समः समि। 'समो मिङ्' इति 'सम इक्' इति वा न सूत्रितम्—परिभाषाज्ञानकृतगौरवापत्तेरिति तु न सम्यक् यथाश्रुतन्यासेऽपि सर्वस्येति परिभाषाज्ञानस्यावश्यकत्वात्। तस्मात् प्रायः सर्वादेशप्रकरणविरोधोऽत्र दूषणमिति केचित्। स्वतन्त्रेच्छस्यानुयोगपर्यनुयोगायोग्यत्वमिति परे॥ २ पूजार्थस्येति। गम्यमानत्वे इति शेषः। प्रकाशितं समाहितं वाऽव्याकुलं वा गच्छतीत्यर्थे 'अञ्चितं गच्छति' इति प्रयोगे नलोपादर्शनादिति बोध्यम्॥ ३ नलोपाभाव इति। नोपधत्वबोधनद्वारेत्यादिः। अपिना चकारसमवधाने तस्य कुत्वाभावः, निरुपपदात् क्विन् इति च निपात्यत इति बोध्यम्॥ ४ सलोप इति। 'नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः॥' इत्युक्त्या चकारप्राग्वर्तिशकारस्य चयोगनिमित्तकश्चुत्वजन्यत्वादिति भावः॥ ५ शतृवदिति। प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः। तेन समुदायस्यैवोगित्वमतिदिश्यते सर्वत्र 'उगिदचाम्' इति नुमर्थम्। न प्रत्यये शतृप्रत्ययत्वम्। अत एव महतीत्यादौ 'शप्श्यनोः—' इति नुम्न। बृहन्महतोरुपसंख्यानमिति तु नियमार्थमिति न पृषज्जगतोः 'शतुरनुमो नद्यजादी' इति प्रवर्तत इति बोध्यम्॥ ६ अत्वसन्तस्येति। 'अतु' इति लुप्तषष्ठीकं पृथक् पदम्। चकारस्त्वर्थे। तत्सामर्थ्याद् 'अधातोः' इति 'असन्तस्य' इत्यनेनैव संबध्यते। अत एव 'गोमत्यतेः प्रत्यये गोमान्' इति 'उगिदचाम्—' इति सूत्रे भाष्योदाहृतं संगच्छते। अन्तग्रहणं तु तदन्तविध्यनुवादकमेवेति बोध्यम्॥ ७ 'तिर्यच्यपवर्गे' इति निर्देशरूपादित्यर्थः। अवयवद्वारकलोपस्य समुदाये उपचाराङ्गीकारे तु गतौ नकारलोपसत्त्वेनादेशानुपपत्तिः। न ह्यकार एवावयवो, न नकारः, इति केषामपि संमतम्। तस्माल्लघुकौमुदीव्याख्याने प्रक्रियाप्रपञ्चप्रकाशे च प्रपञ्चितैव रीतिरनुसरणीया॥

च नुमं बाधित्वा वचनसामर्थ्यादादौ[1] दीर्घः ततो नुम् । धीमान्[2] । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् ॥ धातोरप्यत्वन्तस्य दीर्घः । गोमन्तमिच्छति, गोमानिवाचरतीति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् उगिदचा-मिति सूत्रेऽजग्रहणं नियमार्थम्[3] ।(५७१)[धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति[4]।] तेन स्रत् ध्वत् इत्यादौ नं[5] । अधातोरिति तु अधातुभूतपूर्वस्यापि नुमर्थम् । गोमान्[6] । गोमन्तौ । गोमन्तः । इत्यादि ॥ भातेर्डवतुः[१४२६२] । भवान् । भवन्तौ । भवन्तः । शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः । भवतीति भवन् ॥ ( ५७२ ) (सू.) उभे अभ्यस्तम्[7] ।६।१।५। षाष्ठद्वित्व-प्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥ ( ५७३ ) (सू.) नाभ्यस्ताच्छतुः ।७। १।७८ । अभ्यस्ता-त्परस्य शतुर्नुम्न स्यात् । ददत्, ददद् । ददतौ । ददतः ॥ ( ५७४ ) (सू.) जक्षित्यादयः षट् । ६ । १ । ६ । षड् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः । जक्षत्, जक्षद् । जक्षतौ । जक्षतः । एवं जाग्रत् । दरिद्रत् । शासत् । चकासत् । दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद्व्यत्ययेन परस्मैपदम् । दीध्यत् । वेव्यत् ॥ गुप्, गुब् । गुपौ । गुपः । गुब्भ्यामित्यादि ॥ ( ५७५ ) (सू.) त्यदादिषु दृशोऽनालोचने कञ्च । ३ । २ । ६० । त्यदादि-षूपपदेष्वज्ञानार्थाद्दृशेर्धातोः कञ् स्याच्चात्क्विन् ॥ ( ५७६ ) (सू.) आ सर्वनाम्नः । ६ । ३ । ९१ । सर्वनाम्न आका-

---

ग्रहणस्य चानुवर्तनादाह—**उपधाया दीर्घः स्यादिति** । इह अधातोरिति योगो विभज्यते, तत्सामर्थ्यादनन्तरस्यासन्त-स्यैव प्रतिषेधः, न त्वत्वन्तस्येति कैयटादयस्तदेतद्दर्शयति—**धातुभिन्नासन्तस्य चेति** । धात्ववयवाभिन्नो योऽस तदन्त-स्येत्यर्थः । तेन उखास्रत् पर्णध्वद् इत्यादि सिद्धम् । धातुभिन्नो योऽसन्तस्तस्येति व्याख्यायां स्रत् ध्वत्—इत्यत्र सिद्धान्ते दीर्घाभावेऽप्यत्र तु स्यादेवेति दिक् ॥ अत्र ' सर्वनामस्थाने च–३५४' इति सूत्रादसंबुद्धावित्यनुवर्तते ' सौ च ४८४' इत्यतः साविति च तदाह—**असंबुद्धौ सौ पर इति** ॥ **अत्वन्तत्वाभावादिति** । अतु इत्युकारानुबन्धस्यानुकरणाच्छत्रन्तस्य न भवतीत्यर्थः ॥ **( ५७२ ) उभे**—। शब्दरूपापेक्षया नपुंसकनिर्देशः ॥ **षाष्ठद्वित्वेति** । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ४८८ ' इति न्यायादिति भावः ॥ द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं समुदायप्रतिपत्त्यर्थमिति व्याचष्टे—**उभे समु-दिते इति** । अन्यथा नेनिजतीत्यत्र 'अभ्यस्तानामादिः–५५४८' इत्याद्युदात्तत्वं प्रत्येकं पर्यायेण स्यात् ॥ **( ५७३ ) नाभ्यस्ताच्छतुः** । व्यवहितोऽपि नुमेवात्र निषिध्यते अन्येषामप्रसक्तेरित्यभिप्रेत्याह—**नुम्न स्यादिति** ॥ **ददिति** । ददातीति ददत् । दाञो लटः शत्रादेशः, शपः श्लुः, 'श्लौ ३३०८' इति द्वित्वमभ्यासस्य ह्रस्वः । 'श्नाभ्यस्तयोरातः ३२९८' इत्यालोपः ॥ **( ५७४ ) जक्षित्यादयः षट्** । जक्षिति पृथक् पदम् । इतिशब्देन जक्षिरेव परामृश्यते । इति आदिर्येषा-मित्यतद्गुणसंविज्ञानबहुव्रीहिस्तदेतदाह—**षड् धातवोऽन्ये इति** । इति तान्ताः ॥ गोपायतीति गुप् । क्विपि विवक्षिते 'आयादय आर्धधातुके वा ३०७८' इति वैकल्पिकत्वादिहायप्रत्ययाभावः । आयप्रत्ययपक्षे त्वतो लोपे यलोपे च गोपा इति रूपं बोध्यम् ॥ इति पान्ताः ॥ **( ५७५ ) त्यदादिषु**—। कञन्तस्य तूदाहरणं—तादृशो यादृश इत्यादि । तच्चात्र नोक्तं, हलन्ते-ष्वनुपयोगात् । अनालोचने किम्, तं पश्यतीति तद्दर्शः । कर्मण्यण् । तादृशादयस्तु रूढिशब्दत्वादसताऽप्यवयवार्थेन व्युत्पाद्यन्ते । अत एवाज्ञानार्थाद् दृशेरिति संगच्छते । भाष्ये तु–कर्मकर्तरि व्युत्पत्तिर्दर्शिता—तमिवेमं पश्यन्ति जनाः, 'स इवायं पश्यति' ज्ञानविषयो भवतीत्यर्थादज्ञानार्थादिति तु संगच्छते । तत्र दृशेर्ज्ञानविषयत्वापत्तिमात्रवृत्तित्वेऽपि विषयीकरणावृत्तित्वात् ॥

---

१ **सामर्थ्यादिति** । उपधाया दीर्घविधानसामर्थ्यादित्यर्थः । नुमि सति नुम एवोपधात्वं स्यादिति अच उपधात्वा-भावाद्दीर्घो न स्यात् । ' सान्त महतः–' इत्यत्रेव नोपधाया इत्येतदनुवर्तने तु वेधा इत्यादौ दीर्घो न स्यादिति भावः । विभक्ते 'अतु ' इति योगे एव नोपधाया इति संबध्यत इति यदि विभाव्यते तर्हि पूर्वं नुमेवास्तु न कश्चिद्दोष इत्यन्ये ॥ २ **धीमानिति** । न च 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इत्यर्थिकया 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया एकानुबन्धके सर्वनामभवतुशब्दे चरितार्थस्यास्य द्व्यनुबन्धके क्तवतौ मतुपि च प्रवृत्त्यनुपपत्तिरिति वाच्यम् । 'अनुबन्धानां समुदायाङ्गत्वस्यैव बोधने तात्पर्येण तन्निरूपितमनुबन्धत्वमेव नावयवनिरूपितमिति सिद्धान्ते सर्वत्रैवातुरूपावय-वस्य निरनुबन्धकत्वेनाविशेषादिति भावः ॥ ३ **नियमार्थमिति** । 'धातोश्चेदुगित्कार्यम्, तर्हि नलोपिनोऽञ्चतेरेव' इति नियम इति बोध्यम् । न्यायप्राप्तालोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वमिति भावः ॥ ४ कोष्ठकान्तर्गतः पाठो न कौमुदी-स्थः, शेखरे तस्योपलम्भादिति बोध्यम् । यद्यपि–'अञ्चतेश्चेन्नलोपिन एव' इति नियमेऽप्यञ्चतिग्रहणं चरितार्थम् । तथापि भाष्यप्रामाण्येन सामान्यापेक्ष उक्तनियमो युक्त इति बोध्यम् ॥ ५ **नेति** । नुमिति शेषः ॥ ६ **गोमानिति** । गोमन्तमिच्छति गोमत्यति । गोमत्यतेरप्रत्यय इत्यादिः ॥ ७ **उभे इति** । द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं स्पष्टार्थम् । यत्तु—उभेग्रहणं सामर्थ्यात् सहभावोपसर्जनद्वित्वविशिष्टार्थकम्, तेन समुदित इत्यर्थलाभः—इति । तन्न, सूत्रशेषे भाष्ये गर्गदण्डनन्यायेनैव समुदितार्थसिद्धिमाश्रित्य सहग्रहणवार्तिकप्रत्याख्यानेन तत्तुल्यन्यायात्तदर्थकत्वेन पराभिमतस्योभेग्रहणस्यापि प्रत्याख्यातप्रायत्वात् ॥ ८ **अधातोरिति** । ' अतु ' इति, इति सूचितम् । अधातोरित्यस्य योगविभागेऽपि ' अत्वसन्तस्य ' इत्यस्य समस्तत्वे पदार्थैकदेशान्वयदोषः 'नित्यस्य घटघटत्वस्य ' इति प्रयोगे निवारको दुष्परिहर एव स्यादिति बोध्यम् ॥

रोऽन्तादेशः स्याद् दृगृदृशवतुषु । कुत्वस्यासिद्धत्वाद्व्रश्चेति[४११] षः । तस्य जश्त्वेन डः । तस्य कुत्वेन गः । तस्य चर्त्वेन पक्षे कः । तादृक्, तादृग् । तादृशौ । तादृशः । षत्वापवादत्वात्[१]कुत्वेन खकार इति कैयटहरदत्तादिमते तु चर्त्वाभावपक्षे तु ख एव श्रूयते न तु गः, जश्त्वं प्रति कुत्वस्यासिद्धत्वात् । दिगादिभ्यो यदिति निर्देशान्[२]नासिद्धत्वमिति वा बोध्यम् ॥ [४११]व्रश्चेति षत्वम् । जश्त्वचर्त्वे । विट्, विड् । विशौ । विशः । विशम् ॥ ( ५७७ ) (सू) **नशेर्वा** । ८ । २ । ६३ । नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते । नक्, नग् । नट्, नड् । नशौ । नशः । नग्भ्याम् । नड्भ्यामित्यादि ॥ ( ५७८ ) (सू) **स्पृशोऽनुदके क्विन्** । ३ । २ । ५८ । अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात् । घृतस्पृक् । घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः ॥ ( ५७९ ) क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम् । स्पृक् । षडगकाः प्राग्वत् ॥ ञिधृषा प्रागल्भ्ये । अस्माद्दधृर्[३७०]विगादिना क्विन् द्वित्वमन्तोदात्तत्वं च निपात्यते । कुत्वात्पूर्वं जश्त्वेन डः । गः । कः । धृष्णोतीति दधृक्, दधृग् । दधृषौ । दधृषः । दधृग्भ्यामित्यादि ॥ रत्नानि मुष्णातीति रत्नमुट्, रत्नमुड् । रत्नमुषौ । रत्नमुषः । [३६६]षड्भ्यो लुक् । षट्, षड् । षड्भिः । षड्भ्यः२। [४६२]षट्चतुर्भ्यश्चेति नुट् । अनामिति पर्युदासान्न ष्टुत्वनिषेधः । यरोऽनु[१४१]नासिक इति विकल्पं बाधित्वा प्रत्यये भाषायां[१] नित्यमिति वचनान्नित्यमनुनासिकः । षण्णाम् । षट्त्सु, षट्सु ॥ तदन्तविधिः । परमषट् । परमषण्णाम् । गौणत्वे तु प्रियषषः । प्रियषषाम् । रुत्वं[३] प्रति षत्वस्यासिद्धत्वात्ससजु[२४२]षो रुरिति रुत्वम् ॥(५८०) (सू) **र्वोरुपधाया दीर्घ इकः** । ८ । २ । ७६ । रेफवान्तस्य[४] धातोरुपधाया इको दीर्घः स्यात्पदान्ते । पिपठीः । पिपठिषौ । पिपठिषः । पिपठीर्भ्याम् । वा शरीति[२२५] वा विसर्जनीयः ॥ ( ५८१ ) (सू) **नुम्विसर्जनीयशर्व्यवायेऽपि** । ८ । ३ । ५८ । एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् । ष्टुत्वेन पूर्वस्य षत्वम् । पिपठीष्षु, पिपठीःषु । प्रत्येकमिति[५] व्याख्यानादनेकव्यवधाने षत्वं न ।

---

**( ५७६ ) आकारोऽन्तादेश इति** । अकारादेशे सति त्वतो गुणः[२७४] स्यात् । न चाकारोच्चारणसामर्थ्याद्दीर्घः स्यादेवेति वाच्यम्, अकारस्याविधौ हल एव श्रवणप्रसङ्गात् ॥ **विडिति** । 'विश प्रवेशने' इत्यस्मात् क्विप् ॥ ( ५७७ ) **नशेर्वा** । केचिदिह झलीत्यनुवर्त्य झलि पदान्ते चेति व्याचक्षते । तन्न, नष्टमित्यादावतिप्रसङ्गात् ॥ **नगिति** । षडगकाः प्राग्वत् ॥ **( ५७८ ) स्पृशोऽनुदके क्विन्** । ककारो गुणाभावार्थः । नकारस्तु 'क्विन्प्रत्ययस्य कुः ५१२' इति विशेषणार्थः । वस्तुतस्तु व्यर्थ एव सः 'क्विप्रत्ययस्य कुः' इत्युक्तेऽपि तदनुबन्धपरिभाषया क्विबन्तस्य कुत्वाप्रसक्तेः । न चाद्युदात्तत्वं प्रयोजनं, क्विनः प्रकृतीनामेकाच्त्वाद्धातुस्वरेणापि तत्सिद्धेः । दधृगित्यत्र त्वन्तोदात्तत्वनिपातनादाद्युदात्तत्वं नापेक्षितमेवेति दिक् ॥ अत्र सुपीत्यनुवर्तते, कर्मणीति तु निवृत्तमित्याशयेनाह—**अनुदके सुप्युपपदे इति** ॥ **घृतस्पृगिति** । घृतं घृतेन वा स्पृशतीति विग्रहः । अनुदके किम्, उदकं स्पृशतीति उदकस्पर्शः । निषेधसामर्थ्यादिह क्विबपि न भवति । तस्मिन्हि सति क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणेन कुत्वस्यावर्जनीयतया 'अनुदके' इति निषेधस्य फलाभावात् ॥ केचित्तु—उदकस्पृडिति प्रत्युदाहरन्ति । निषेधसामर्थ्यात्कुत्वं माऽस्तु क्विप् स्यादेवेति तेषामाशयः ॥ इति शान्ताः ॥ **गौणत्वे त्विति** । 'षड्भ्यो लुक् ३६६' 'षट्चतुर्भ्यश्च ४६२' इति बहुवचननिर्देशात्षडर्थ[६]प्राधान्ये एव लुग्नुटौ भवत इति भावः ॥ पिपठिषतेः क्विप्यतो लोपे कृदन्तत्वात्स्वाद्युत्पत्तौ पिपठिष् सु इति स्थिते—सोर्हल्ङ्[३५६]यादिलोपे प्रत्ययलक्षणेन पदान्तत्वात्सस्य रुर्भवति । न च रुत्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वं शङ्क्यम्, पूर्वत्रासिद्धे तन्निषेधात् ॥ **( ५८१ ) नुम्विसर्जनीय—** । 'इण्कोः २९७' इति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनम् ॥ **ष्टुत्वेन पूर्वस्येति** । सनः सस्य रुत्वविसर्गयोः कृतयोः 'वा शरि २२५' इति विकल्पात्पक्षे सकारस्तेन शर्व्यवाये सुपः सस्य षत्वं, पूर्वस्य ष्टुत्वम् । न तु 'आदेशप्रत्यययोः २९८' इति षः,

---

१ **षत्वापवादेति** । तादृशादिक्विन्नन्तविषयस्य 'क्विन्प्रत्ययस्य–' इत्यस्य षत्वाप्राप्तियोग्येऽचारितार्थ्यादिति भावः ॥ २ **निर्देशादिति** । सामान्यापेक्षज्ञापकादिति भावः ॥ ३ **रुत्वं प्रतीति** । पठधातोः सनि इडागमे जाते षत्वे कृते धातुसंज्ञायां क्विबादि–इति क्रमिकाख्यानपक्षमभिप्रेत्येदमिति भावः ॥ वस्तुतस्तु पदविभज्यान्वाख्यानपक्षे षत्वस्य त्रैपादिकत्वेन धातुक्विबल्लोपप्रातिपदिकसंज्ञास्वादिप्रत्ययहल्ङ्यादिलोपपदसंज्ञाः प्रत्यासिद्धत्वेन प्रागप्राप्त्या पदसंज्ञोत्तरं पदान्तत्वेनापदान्तत्वाभावात् षत्वस्य प्राप्तिरेव नेति व्यर्थ एवायं षत्वस्यासिद्धत्वप्रदर्शको ग्रन्थ इति बोध्यम् ॥ न चान्तरङ्गत्वात्पूर्वमिडागमोत्तरमेव प्राप्तं षत्वं कथं पदसंज्ञां प्रतक्षिेतेति वाच्यम् । तथा सति सेदुष इत्यादावपि संप्रसारणमिडागमो नैव प्रतीक्षेतेति प्राचां मते अकृतव्यूहपरिभाषया, नवीनानां मते '**उपजनिष्यमाणनिमित्तोऽप्यपवादः उपसंजातनिमित्तमप्युत्सर्गं बाधते**' इति परिभाषया षत्वस्य प्रागजायमानत्वादिति चेत् शृणु–'**रुत्वं प्रति**' इत्यत्र प्रतिशब्दस्य भागार्थकत्वाद् 'रुत्वभागे=रुत्वप्राप्तिकाले सकारस्य पदान्तत्वे जाते **रुत्वप्राप्तिसंभावनायाम्** उक्तन्यायेन वा **षत्वस्य असिद्धत्वाद्** अप्राप्तत्वाद्' इत्यर्थे न कापि क्षतिरिति दाधिमथाः ॥ ४ **रेफवान्तस्येति** । 'सिपि धातोः–' इत्यतो धातोरिति वर्तते । तच्च र्वोभ्यां विशेष्यत इति तदन्तविधिरिति भावः ॥ ५ **प्रत्येकमिति** । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति प्रत्येकमन्वयेन फलितामिति–भावः ॥ ६ **षडर्थेति** । संख्योपसर्जनसंख्येयार्थविशेष्यकत्व एव षट्संज्ञाप्रवृत्तेः । बहुवचनान्तस्यैव संज्ञात्वेन बहुवचननिर्देशादिति चिन्त्यम् ॥

निंस्स्व । निंस्से । नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं व्याख्यानात् । तेनेह न, सुहिन्सु । पुंसु । अत एव न शर्ग्रहणेन गतार्थता ॥ रात्सस्येति[३११] सलोपे विसर्गः । चिकीः । चिकीर्षौ । चिकीर्षः । रोः सुपीति[४६३] नियमान्न विसर्गः । चिकीर्षु ॥ दमेर्डोस्[४४३०] । डित्वसामर्थ्याट्टिलोपः । षत्वस्यासिद्धत्वाद्रुत्वविसर्गौ । दोः । दोषौ । दोषः ॥ पद्दन्[३२८] इति वा दोषन् । दोष्णः । दोष्णा । दोषः । दोषा ॥ विश प्रवेशने । सन्नन्तात् क्विप् । षत्वस्यासिद्धत्वात्संयोगान्तलोपः[१] । व्रश्चेति[४११] षः । जश्त्वचर्त्वे । विविट्, विविड् । विविक्षौ । विविक्षः ॥ स्कोरिति[५१६] कलोपः[२] । तट्, तड् । तक्षौ । तक्षः ॥ गोरट्, गोरड् । गोरक्षौ । गोरक्षः ॥ तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु स्कोरिति[५१६] न प्रवर्तते, णिलोपस्य स्थानिवद्भावात् । पूर्वत्रासिद्धे न स्थानिवदिति[३३८] तु इह नास्ति । तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति[३३०] निषेधात् । तस्मात्संयोगान्तलोप एव । तक्, तग् । गोरक्, गोरग् । स्कोरिति लोपं प्रति कुत्वस्याऽसिद्धत्वात्[३] संयोगान्तलोपः । पिपक्, पिपग् । एवं विवक् । दिधक् ॥ पिस गतौ । सुष्ठु पेसतीति सुपीः । सुपिसौ । सुपिसः । सुपिसा । सुपीर्भ्याम् । सुपीःषु, सुपीष्षु । एवं सुतूः । तुस खण्डने ॥ विद्वान् । विद्वांसौ । विद्वांसः । हे विद्वन् । विद्वांसम् । विद्वांसौ ॥ ( ५८२ ) **वसोः संप्रसारणम्** ।६।४।१३१। वस्वन्तस्य भस्य संप्रसारणं स्यात् । पूर्वरूपत्वं षत्वम् । विदुषः[४] । विदुषा । वसुस्रंस्विति[५] दत्वम् । विद्वद्भ्यामित्यादि । सेदिवान् । सेदिवांसौ । सेदिवांसः । सेदिवांसम् । अन्तरङ्गोऽपीडागमः संप्रसारणविषये न प्रवर्तते । अकृतव्यूहा[६] इति परिभाषया । सेदुषः । सेदुषा । सेदिवद्भ्यामित्यादि । सान्त[४३८] महत इत्यत्र सान्तसंयोगोऽपि

---

'पदान्तस्य २८३' इति निषेधादिति भावः । एवं स्थिते शर्ग्रहणेन न प्रयोजनं, किन्तु 'नुम्विसर्जनीयव्यवायेऽपि' इत्येव सूत्रं युक्तमित्येके ॥ 'नुम्शर्व्यवायेऽपि' इत्येव युक्तं सूत्रयितुं, शर्ग्रहणेन विसर्जनीयस्य लाभादित्यन्ये ॥ **निंस्स्वेति** । आद्यसकारस्य प्रत्येकं व्यवधानेऽपि आदेशप्रत्ययावयवत्वाभावात्षत्वं न भवति । न चात्र 'आदेशप्रत्यययोः २९८' इत्यनुवृत्त्यभावात् 'नुम्विसर्जनीय-५८१' इत्यनेन धातुसकारस्य षत्वं स्यादिति वाच्यम्, तस्य स्वातन्त्र्येण विधायकत्वानङ्गीकारात् । 'अपदान्तस्य मूर्धन्यः २९६' 'इण्कोः २९७' इतिवत् 'नुम्विसर्जनीय-५८१' इत्यस्याप्यधिकारसूत्रत्वात् ॥ कर्तुमिच्छति चिकीर्षति । चिकीर्षतेः क्विप्प्रत्ययः । चिकीः । 'एकाच उपदेशे-३००६' इति 'सनि ग्रहगुहोश्च ३४६७' इति वा सन इडभावे 'इको झल् २४६९' इति कित्त्वाद्गुणाभावे 'अज्झनगमां सनि ३४७२' इति दीर्घे 'ॠत इत्-३१८३' इतीत्त्वे रपरत्वं, ततो द्वित्वं, 'हलादिः शेषः २९३३' 'कुहोश्चुः ३००' अल्लोपः, सोर्हल्ङ्यादिलोपे पदान्तत्वात् 'र्वोरुपधायाः-५८०' इति दीर्घः ॥ **दोरिति** । दाम्यतीति दोः ॥ **संयोगान्तलोप इति** । न चास्मिन्कर्तव्ये बहिरङ्गत्वेनातो लोपस्यासिद्धत्वं शङ्क्यम्, बहिर्निमित्तापेक्षपदसंज्ञासापेक्षत्वेन संयोगान्तलोपस्यैव बहिरङ्गत्वादिति दिक् ॥ **विविडिति** । विशेः सन् 'एकाचः-३००६' इतीण्निषेधे 'हलन्ताच्च ३४७०' इति कित्त्वाद्गुणाभावः । द्वित्वाभ्यासकार्ये ॥ **तडिति** । 'तक्षू त्वक्षू तनूकरणे' इत्यस्मात्क्विप् । गां रक्षतीति गोरट् । कर्मण्युपपदे वाऽसरूपन्यायेन क्विप् ॥ **कुत्वस्यासिद्धत्वादिति** । इतरथा 'स्कोः-५१६' इति कलोपः स्यादिति भावः ॥ **पिपगिति** । पक्तुमिच्छति पिपक् ॥ वक्तुमिच्छति विवक् ॥ 'दादेः-४४८' इति घः । 'एकाचो बशो-४४९' इति भष्भावः । दग्धुमिच्छति दिधक् ॥ इति षान्ताः ॥ **सुतूरिति** । सुष्ठु तोसतीति सुतूः ॥ वेत्तीति विद्वान् । 'विदेः शतुर्वसुः ४१२५' । अदादिभ्यश्शपो लुक् । 'सार्वधातुकमपित् २९९३' इति ङित्त्वान्नोपधागुणः । उगित्त्वान्नुम् । 'सान्त महतः-४३८' इति दीर्घः । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न ॥ ( ५८२ ) **वसोः**—। प्रत्ययग्रहणे तदन्तग्रहणमित्याह—**वस्वन्तस्येति** ॥ **सेदिवानिति** । 'भाषायां सदवसश्रुवः ४११५' इति लिटः क्वसुः, 'लिटि धातोः-२९३१' इति द्वित्वम्, 'हलादिः शेषः २९३३' 'अत एकहल्मध्ये-२०२४' इत्येत्वाभ्यासलोपौ, 'वस्वेकाजाद्घसाम् ४११४' इतीट्, नुम्, 'सान्त-४३८' इति दीर्घः ॥ **सेदुष इति** । ननु 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य'

---

१ **संयोगान्तलोप इति** । विविश् इत्यवस्थायां षत्वसंयोगान्तलोपयोः प्राप्तौ षत्वस्यासिद्धत्वात्पूर्वं संयोगान्तलोप इत्यर्थः ॥ २ **कलोप इति** । पदान्तसंयोगादिलोपस्य संयोगान्तलोपापवादत्वादिति भावः ॥ ३ **कुत्वस्यासिद्धत्वादिति** । सनोऽल्लोपस्य स्थानिवत्त्वेन संयोगादिलोपवारणसंभवाद् इति तु न सम्यक्, 'क्वौ लुप्तं न स्थानिवत्' इति निषेधात् । तस्य काचित्कत्वेनानाश्रयणेऽपि कुत्वस्यासिद्धत्वेन प्राप्तिरेव व्याहन्यते । किमिति स्थानिवत्त्वपर्यन्तानुसरणेनेति दिक् । ४ **विदुष इति** । नन्वत्र 'संप्रसारणाच्च' इति जातस्य पूर्वरूपस्य 'षत्वतुकोरसिद्धः' इत्यसिद्धत्वात् 'कोऽसिचद्' इत्यत्रेव षत्वानुपपत्तिः-इति चेत् न, पदान्तपदाद्योरेकादेशस्यैव तेनासिद्धत्वविधानात् ॥ ५ **सेदिवानिति** । षद्लृधातोः 'भाषायां सदवस-' इति लिटः क्वसौ, द्वित्वे, 'अत एक-' इत्येत्वाभ्यासलोपयोः 'वस्वेकाजाद्-' इतीट् ॥ ६ **अकृतेति** । यदि तु 'भाष्याऽदृष्टत्वादप्रामाणिक्येषा' इति विभाव्यते तर्हि 'पपुषः, तस्थुषः' इति भाष्ये संप्रसारणविषये इटोऽप्रदर्शनेन लक्ष्यानुरोधाद् वसोः संप्रसारणविषये पदावधिकस्यैवान्वाख्यानस्य स्वीकारेण 'सेद् वस् अस्' इत्यवस्थायाम् इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वाद् अन्तरङ्गपरिभाषाया अनित्यत्वेन प्रतिपदविधिविषये तदप्रवृत्तेश्च पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति बोध्यम् ॥

प्रातिपदिकस्यैव गृह्यते न तु धातोः, महच्छब्दसाहचर्यात् ॥ सुष्ठु हिनस्तीति सुहिन् । सुहिंसौ । सुहिंसः । सुहिन्भ्याम् । सुहिन्त्सु ॥ ध्वत्, ध्वद् । ध्वसौ । ध्वसः । ध्वद्भ्याम् । एवं स्रत ॥ (५८३) पुंसोऽसुङ् ।७।१।८९। सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । उकार उच्चारणार्थः । बहुपुंसी[1] इत्यत्र उगितश्चेति ङीबर्थं कृतेन ॐ पूजो डुम्सुन्निति प्रत्ययस्योगित्त्वेनैव नुम्सिद्धः । पुमान् । हे पुमन् । पुमांसौ । पुमांसः । पुंसः । पुंसा । पुंभ्याम् । पुंभिः । पुंसु ॥ ऋदुशनेत्यनङ् । उशना । उशनसौ । उशनसः ॥ (५८४) अस्य[2] संबुद्धौ वाऽनङ् नलोपश्च वा वाच्यः ॥ हे उशनन्, हे उशन, हे उशनः । उशनोभ्यामित्यादि ॥ अनेहा । अनेहसौ । अनेहसः । हे अनेहः । अनेहोभ्यामित्यादि ॥ वेधाः । वेधसौ । वेधसः । हे वेधः । वेधोभ्यामित्यादि ॥ अधातोरित्युक्तेर्न दीर्घः । सुष्ठु वस्ते सुवः । सुवसौ । सुवसः ॥ पिण्डं ग्रसते पिण्डग्रः । पिण्डग्लः । ग्रसु ग्लसु अदने ॥ ( ५८५ ) अदस[3] औ सुलोपश्च ।७।२।१०७। अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च । [५१७] तदोः सः साविति दस्य सः। असौ ॥(५८६) (वा॰) औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च ॥ (५८७) प्रतिषेधसन्नियोगशिष्टमुत्वं तदभावे न प्रवर्तते । असकौ। असुकः । त्यदाद्यत्वं पररूपत्वम् । वृद्धिः। अदसोऽसेरिति मत्वोत्वे । अमू । जसः शी। आद्गुणः ॥ ( ५८८ )एत ईद्बहुवचने ।८।२।८१ ।

---

इति परिभाषया 'विदेः शतुर्वसुः ४१२५' इत्यस्यैव वसोः संप्रसारणं युक्तं, न तु क्वसोः । सत्यम्[4] । वसोरुकारानुबन्धकरणं क्वसो सामान्यग्रहणार्थम् । उगित्त्वस्य स्थानिवद्भावेनापि सिद्धेः । इह गमिप्रभृतिभ्यः क्वसुर्नोदाहृतः, छान्दसत्वात् । अत एव वैदिकप्रक्रियायां तस्थिवान् जग्मिवान् इत्याद्युदाहर्तव्यं नात्रेत्याहुः ॥ कवयस्तु प्रयुञ्जते--'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' । 'तं तस्थिवांसं नगरोपकण्ठे' इत्यादि ॥ अत्र वदन्ति—छान्दसा अप्येते पद्दन्नसादय इव क्वचिद्भाषायां भवन्ति, 'मासश्छन्दसि ५४५३' इत्यस्य सामान्यापेक्षज्ञापकत्वाश्रयणात्कथंचित्[5]समाधेयमिति ॥ **सुहिनिति** । संयोगान्तलोपस्यासिद्धत्वान्नोपधादीर्घः ॥ **सुहिन्त्स्विति** । 'नश्च २००' इति सस्य वा धुट् ॥ ध्वंसत इति ध्वत् । स्रंसत इति स्रत् । 'स्रंसु ध्वंसु अवस्रंसने' 'ध्वंसु गतौ च' इत्याभ्यां क्विप् । 'अनिदिताम्-५५७' इति नलोपः, 'वसुस्रंसु-४५८' इति दत्वम् ॥ ( ५८३ ) **पुंसोऽसुङ्** ॥ 'इतोऽत्सर्वनामस्थाने ४९६' इत्यतोऽनुवर्तनादाह—**सर्वनामस्थान इति** ॥ **विवक्षित इति** । तेन परमपुमानित्यत्र परत्वादसुङि कृते समासान्तोदात्तत्वं भवदसुङ एवाकारस्य भवति । परसप्तम्यां तु नैतत्सिध्येत् । सर्वनामस्थानोत्पत्तेः प्रागेव पुम्शब्दोकारस्योदात्तत्वे कृते स्रंसनधर्मिणो हलः स्थाने तद्धर्मणोऽनुदात्तस्यैवादेशस्य प्रसङ्गात् । न चोकारस्य कृतोऽपि स्वरोऽनन्त्यत्वान्निवर्तयिष्यतेऽसुङश्चान्त्यत्वात्करिष्यत इति वाच्यम् , अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वादिति भावः॥ वस्तुतस्तु-अकृतव्यूहपरिभाषार्थां[6] अन्तरङ्गपरिभाषापवादत्वात्परसप्तमीपक्षोऽपि सूपपादः । एतच्च मनोरमायां स्पष्टम् ॥ **पूञ इति** । यद्यप्युणादिषु 'पातेर्डुम्सुन् ४८२३' इति वक्ष्यति, तथापि पाठान्तरमनुसृत्यात्रोक्तमिति बोध्यम् ॥ **हे पुमन्निति** । असंबुद्धावित्युक्तेः 'सान्त-४३८' इति न दीर्घः ॥ **पुंस्विति** । संयोगान्तलोपे 'मोऽनुस्वारः १८८' । नुम्स्थानिकस्यैवानुस्वारस्योपलक्षणात् 'नुम्विसर्जनीय-५८१' इति न षत्वम् ॥ **उशनेति** । 'वशेः कनसिः ४८८४' 'ग्रहिज्या-३२१६' इति संप्रसारणम् ॥ **( ५८४ ) अस्य संबुद्धाविति** । एतच्च वाचनिकम् । हरदत्तादयस्त्वाहुः-'सोर्डा' इति वाच्ये 'अनङ् सौ ३५२' वचनेन क्वचिदनङ एव श्रवणस्य ज्ञापितत्वादेतत्सिद्धमिति ॥ यद्यपि सोर्डे कृते डित्त्वसामर्थ्याट्टिलोपे 'सर्वनामस्थाने चासंबुद्धौ ३५४' इति दीर्घे 'उशाना' इत्यनिष्टरूपं प्रसज्यते, तथाप्यङ्गवृत्तपरिभाषया दीर्घो नेति कृत्वा ज्ञापकत्वं संगच्छत इति तेषामाशयः ॥ **अनेहा** ॥ **वेधा इति** । असुन्प्रकरणे 'नञि हन एह च ४८६९' 'विधाञो वेध च ४८७०' इति व्युत्पादनादसन्तत्वेन दीर्घः । अनेहा कालः । वेधाः विश्वसृट् ॥ **( ५८५ ) अदस औ सुलोपश्च** । अदस इति षष्ठी । 'तदोः सः सौ-५१७' इत्यतः सावित्यनुवर्तते तदाह—**औकारोऽन्तादेशः स्यात्सौ पर इति** । नन्वदस इति पञ्चम्येवास्तु, ततः परस्य सोरेवौकारो विधीयतां, त्यदाद्यत्वेन असाविति रूपं सिध्यति किं सुलोपविधानेन । न च स्वरे भेद उदात्तेन सहैकादेशे औकारस्योदात्तत्वात् । मैवम् , असकौ स्त्री इत्यत्र टापि 'प्रत्ययस्थात्-६३०' इतीत्वप्रसङ्गात् ॥ **( ५८६ ) असुक इति** । औत्वाभावे त्यदाद्यत्वे सादुत्वम् । स्त्रियां तु असुकौ असुका इति ॥ अमुकी असुकी इति च प्रयोगोऽसाधुरेव । एवममुकशर्मेत्यादिरपि । अदकःशर्मेत्यादेरेव न्याय्यत्वात्[7] ॥ **( ५८८ ) एत ईद्बहुवचने** । पारिभाषिकस्य बहुवचनस्य ग्रहणे अमीभिरित्यादिसिद्धावपि

---

१ **बहुपुंसीति** । विभक्तौ लिङ्गविशिष्टाग्रहणान्नासुङ् । विभक्तिनिमित्तभूतानां संख्याकारकार्थानां विवक्षातः प्रागेव लिङ्गविवक्षासत्त्वान्न ङीपः प्रागसुङिति भावः ॥२ **अस्येति** । भाष्येऽदर्शनादप्रमाणमिति प्रामाणिकाः ॥ ३ **अदस औ इति** । 'सोर्डौ' इति तु न सुवचम् , असावित्यत्र डित्त्वाट्टिलोपे कृते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वेऽसावित्यसिद्ध्यापत्तेरिति बोध्यम् ॥ ४ **सत्यमिति** । 'विदेः शतुः-' इति विहितस्य 'वसुस्' इत्येवं द्व्यनुबन्धकत्वेनैकानुबन्धकत्वस्य कुत्राप्यलाभात्क्वसोरपि संग्रहादिति तत्त्वम् ॥ ५ **कथंचिदिति** । तेन 'पद्दन्नः-' इति सूत्रे छन्दसीति निवृत्तिकल्पनया तस्य चारितार्थ्ये नैतदर्थज्ञापकत्वासम्भव इति सूचितम् ॥ ६ **अकृतेति** । भाष्यमते तु 'असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात्' इति वार्तिकेनैव स्वरसिद्धिरिति बोध्यम् ॥ ७ **न्याय्यत्वादिति** । अदःशब्दपर्यायस्याव्युत्पन्नस्यामुकशब्दस्याङ्गीकारे तु न कोऽपि दोष इति बोध्यम् ॥

अदसो दात्परस्यैत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ । अमी । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे । अमुम् । अमू । अमून् मुत्वे कृत घिसंज्ञायां नाभावः ॥ (५८९) सू० न मु ने । ८ । २ । ३ । नाभावे कर्तव्ये कृते च मुभावो नासिद्धः स्यात् । अमुना । अमूभ्याम् ३ । अमीभिः । अमुष्मै । अमीभ्यः २ । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु ॥ इति हलन्ताः पुँल्लिङ्गाः ॥

---

## अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।

(५९०) सू० नहो धः ।८।२।३४। नहो हस्य धः स्याज्झलि पदान्ते च । उपानत्, उपानद् । उपानहौ । उपानहः । उपानद्भ्याम् । उपानत्सु ॥ उत्पूर्वात् ष्णिह प्रीतावित्यस्मादृत्विगादिना क्विन् । निपातनाद्दलोपषत्वे[1] । क्विन्नन्तत्वात्कुत्वेन[2] हस्य घः । जश्त्वचर्त्वे । उष्णिक्, उष्णिग् । उष्णिहौ । उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु ॥ द्यौः[3] । दिवौ । दिवः । द्युषु ॥ गीः । गिरौ । गिरः । एवं पूः ॥ चतुरश्चतस्रादेशः । चतस्रः २ । चतसृणाम् ॥ किमः कादेशे टाप् । का । के ।

---

जसि अमी इति न सिध्येत् । न ह्यत्र एकारस्य बहुवचनपरताऽस्त्यतो व्याचष्टे—**बह्वर्थोक्ताविति**॥ **विभक्तिकार्यं प्रागिति**। 'त्यदादीनामः ३७०' इत्यादिसपादसप्ताध्यायीं प्रति 'अदसोऽसेः—५६१' इति त्रैपादिकशास्त्रस्यासिद्धत्वादिति । अकृते तु विभक्तिकार्ये सान्तत्वादुत्वमत्वयोरप्रवृत्तेश्चेति भावः । यदि तु 'पूर्वत्रासिद्धम् २५ ' इत्यत्र कार्यासिद्धत्वमिष्येत तर्हि अमू अमुमित्यादि न सिध्येत् । त्यदाद्यत्वे कृते पररूपात्प्रागेवोत्वमत्वयोः कृतयोः पश्चान्मुत्वकार्यस्यासिद्धतया 'अतो गुणे २७६' इति पररूपे अमो इत्यादिरूपसिद्धिप्रसङ्गात् । किञ्च, चर्म वस्ते चर्मवः । सुष्ठु वस्ते सुवः । अत्र परत्वात् 'स्कोः—५१६' इति सलोपे तस्यासिद्धत्वाद्धल्ङ्याब्भ्यो दीर्घात्—हल्ङ्यादिलोपे उक्तरूपं न सिध्यतीति कार्यासिद्धिपक्षो हेय एव ॥ अत्र वदन्ति—सपादसप्ताध्याय्यां विहितं कार्यं प्रति त्रिपाद्यां विहितमसिद्धमिति प्रक्रियाग्रन्थोक्तकार्यासिद्धिपक्षे मनोरथः, अमुमित्यादि न सिध्यतीति केचित् तन्न, प्रक्रियाग्रन्थोक्तेर्हि कार्यं प्रति कार्ये कर्तव्ये, असिद्धं पूर्वमेव न जातमित्यर्थः । शास्त्रासिद्धत्वेऽप्येवमेव फलितोऽर्थः ॥ तदुक्तं कैयटेन—'यच्छास्त्रमुचारितं तस्यासिद्धत्वमशक्यं कर्तुमित्यसिद्धवचनातिदेश आश्रीयते' इति । तथा चातिदेशेन कार्याप्रवर्तकत्वरूपोऽसिद्धधर्मः शास्त्रेऽतिदिश्यमानः कार्यासिद्धत्व एव फलति । एवं च मनोरथ इत्यत्रोत्वे कर्तव्ये रेफलोपस्य पूर्वमेवाप्रवृत्तौ रोरुत्वस्याप्रतीघातान्मनोरथासिद्धिरप्रत्यूहा । तथा च—अमुमित्यादिसिद्धिरिति कार्यासिद्धिपक्षे न काप्यनुपपत्तिरिति ॥ (५८९) **न मु ने** । ने इति विषयसप्तमीत्याह—**नाभावे कर्तव्य इति**। अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे 'सुपि च २८७' इति दीर्घः स्यात् दीर्घं प्रति मुत्वस्यासिद्धत्वादत आह—**कृते चेति** । एतच्च ने इत्यस्यावृत्त्या लभ्यते । एकत्र विषयसप्तम्यपरत्र परसप्तमीत्याश्रयणात् ॥ वस्तुतस्तु कृते चेति व्याख्यानं व्यर्थं, सन्निपातपरिभाषयैव 'सुपि च २८७' इति दीर्घस्य सुसमाधेयत्वात् । ननु 'अधुना २६६८' इतिवत् 'अमुना' इत्येवोच्यतां किमनेनासिद्धत्वनिषेधेनेति चेत् । अत्राहुः—न मु ने इत्युक्तिः 'न' इति योगविभागार्थः, तेन रामः रामेभ्य इत्यादि सिध्यति । अन्यथा हि रोरसिद्धतयोकारस्येत्संज्ञालोपौ कथं स्याताम् । न चानुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रति रुत्वं नासिद्धमिति वाच्यम् , तरुमूलं देवरुहीत्यादौ 'हशि च २४६' इत्यस्य व्यावृत्तये 'अतो रोः—२४३' इत्यत्रानुनासिकस्यैव निर्देशेन तत्रैव चरितार्थत्वात् । एवं च स्थानिवत्सूत्रस्यापि प्रवृत्तौ पदत्वाद्विसर्गो लभ्यते । 'प्रत्ययः २६४' 'परश्च २६५' इत्यादिनिर्देशाश्चेह लिङ्गमिति दिक् ॥ इति हलन्ताः पुँल्लिङ्गाः ॥

---

(५९०) **नहो धः** । द इत्येव तु नोक्तं, तथा हि सति नद्धमित्यत्र 'रदाभ्याम्—४०२४' इति नत्वं स्यात, 'झषस्तथोः—३०४७' इति च न स्यात् ॥ **नहो हस्येति** । 'हो ढः ४४७' इत्यतोऽनुवृत्तेः 'अलोऽन्त्यस्य ६६' इत्यनेन वा हस्यैवादेश इति भावः॥'झलो झलि ३०४८' 'पदस्य ५३९' 'स्कोः संयोगाद्योरन्ते च ५१६' इत्यतो झल्पदान्तग्रहणान्यनुवर्तन्ते तदाह—झलीत्यादि । झलि परतः पदान्ते वा विद्यमानस्येत्यर्थः ॥ **उपानदिति** । उपपूर्वान्नहेः संपदादित्वात्क्विपि 'नहिवृति—१४८९' इति पूर्वपदस्य दीर्घः, सोर्हल्ङ्यादिलोपे धत्वं जश्त्वचर्त्वे । अत्रेदं बोध्यम्—सुष्ठु अनड्वाहो यस्यामिति बहुव्रीहौ स्वनड्वानिति पुंवदेव रूपम् । केचित्तु—गौरादिङीषं कृत्वा स्वनड्वाही इत्युदाजहुः । तदसत्, अनुपसर्जनाधिकारविरोधात् ॥ **गीरिति** । 'गॄ निगरणे' 'गॄ शब्दे' इत्यस्माद्वा क्विप् 'ॠत इद्धातोः ३१८३' इतीत्वे रपरत्वम् । 'र्वोरुपधाया दीर्घः—५८०' इति दीर्घः ॥ **पूरिति** । 'पॄ पालनपूरणयोः' 'उदोष्ठ्यपूर्वस्य ३३१२' इत्युत्त्वम् ॥ **चतस्र इति** । इह 'चतुरनडुहोः—४५५' इत्याम्न भवति, परत्वादामं बाधित्वा चतस्रादेशे कृते सकृद्गतिन्यायेन पुनस्तस्याप्रवृत्तेः ॥ **चतसृणामिति** । 'न तिसृचतसृ

---

१ **दलोपषत्वे इति** । उपसर्गस्यान्त्यस्य दकारस्य लोपः, धात्वादेः सस्य षत्वमित्यर्थः ॥ २ उष्णिहविषयक्विन्प्रत्ययनिमित्तकस्य 'क्विन्प्रत्ययस्य—' इति कुत्वस्य ढत्वाप्राप्तियोग्येऽचारितार्थ्याद् ढत्वं बाधित्वेति शेषः॥ 'षडगकाः प्राग्वत्' इत्युक्तदिशा तु 'ढडगकाः' इत्येवोचितमिति बोध्यम् ॥ ३ **द्यौरिति** । 'दिव औत्' इत्यौकारे 'इको यण्—' इति यण् । न चान्तरङ्गेषणि बहिरङ्गत्वेनौदादेशस्यासिद्धत्वं शङ्क्यम्, 'षत्वतुकोरसिद्धः' इति ज्ञापितेन 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति प्रतिषेधेन बहिरङ्गपरिभाषाया अनित्यत्वेन वा दोषाभावात् । एवमेव द्युभ्यामित्यादावपि ॥

काः। सर्वावत्॥ (५९१) सू० यः सौ। ७।२।११०। इदमो दस्य यः स्यात्सौ। इदमो[४६०] मः। इयम्। त्यदाद्यत्वं[२] टाप्। दश्चेति[४६०] मः। इमे। इमाः। इमाम्। इमे। इमाः। अनया॥ हलि[४७१] लोपः॥ आभ्याम् ३। आभिः। अस्यै। अस्याः २। अनयोः २। आसाम्। अस्याम्। आसु। अन्वादेशे तु–एनाम्। एने। एनाः। एनया। एनयोः २॥ ऋत्विगादिना सृजेः क्विन् अमागमश्च निपातितः। स्रक्, स्रग्। स्रजौ। स्रजः। स्रग्भ्याम्। स्रक्षु॥ त्यदाद्यत्वं[२] टाप्। स्या। त्ये। त्याः। एवं–तद्, यद्, एतद्॥ वाक्, वाग्। वाचौ। वाचः। वाग्भ्याम्। वाक्षु॥ अप्शब्दो नित्यं बहुवचनान्तः। अप्तृन्निति[१] दीर्घः। आपः। अपः॥ (५९२) सू० अपो[२] भि। ७।४।४८। अपस्तकारः स्याद्भादौ प्रत्यये परे। अद्भिः। अद्भ्यः २। अपाम्। अप्सु॥ दिक्, दिग्। दिशौ। दिशः। दिग्भ्याम्। दिक्षु॥ त्यदादिष्विति[३] दृशेः क्विन्विधानादन्यत्रापि कुत्वम्। दृक्, दृग्। दृशौ। दृशः॥ त्विट्, त्विड्। त्विषौ। त्विषः। त्विड्भ्याम्। त्विट्त्सु, त्विट्सु॥ सह जुषते इति सजूः। सजुषौ। सजुषः। सजूर्भ्याम्। सजूष्षु, सजूःषु॥ षत्वस्यासिद्धत्वाद्रुत्वम्। आशीः। आशिषौ। आशिषः। आशीर्भ्याम्॥ असौ। त्यदाद्यत्वं[३] टाप्। औङः शी। उत्वमत्वे। अमू। अमूः। अमूम्। अमू। अमूः। अमुया। अमूभ्याम्। अमूभिः। अमुष्यै। अमूभ्याम्। अमूभ्यः। अमुष्याः २। अमुयोः २। अमूषाम्। अमुष्याम्। अमूषु॥ इति हलन्ताः स्त्रीलिङ्गाः॥

---

## अथ हलन्तनपुंसकलिङ्गप्रकरणम्।

स्वमोर्लुक्। दत्वम्। स्वनडुत्, स्वनडुद्। स्वनडुही। चतुरनडुहोरित्याम्[४५५]। स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत्॥ दिव उत्[४३१]॥ विमलद्यु अहः। अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्यैवोत्तरखण्डस्यापि पदसंज्ञायां[३] प्राप्तायाम्–॥ (५९३) वा० उत्तरपदत्वे चापदादिविधौ प्रतिषेधः॥ इति प्रत्ययलक्षणं न। विमलदिवी। विमलदिवि। अपदादिविधौ[४] किम्। दधिसेचौ। इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव। कुत्वे तु न॥ वाः। वारी। अझलन्तत्वान्न नुम्। वारि॥ चत्वारि॥ न लुमतेति[३६८] कादेशो न। किम्। के। कानि॥ इदम्। इमे। इमानि॥ (५९४) वा० अन्वादेशे नपुंसके एनद्वक्तव्यः॥

---

४१८' इति न दीर्घः॥ **सर्वावदिति**। 'तेन तुल्यम्–२४०९' इति वतिः। 'सर्वनाम्नो वृत्तिमात्रे–१०५३' इति पुंवद्भावः॥ (५९१) **यः सौ**। यत्वमिदं स्त्रियामेव परिशेषात्। 'इदोऽय् पुंसि ४६८' इति पुंस्ययो वचनात्, क्लीबे सोर्लुका लुप्तत्वाच्च॥ **एवमिति**। सा। ते। ताः॥ या। ये। याः॥ एषा। एते। एताः। इत्यादीत्यर्थः॥ **वागिति**। वचेः 'क्विब्वचि–४१८५' इत्यादिना क्विप्, दीर्घोऽसंप्रसारणं च। 'चोः कुः ५१३'॥ **अप्शब्द इति**। 'आप्नोतेर्ह्रस्वश्च ४२७३' इति ह्रस्वश्चकारात्क्विप्॥ (५९२) **अपो भि**। 'अच उपसर्गात्तः ४०९५' इत्यतोऽनुवर्तनादाह—**तकारः स्यादिति**॥ **दिगिति**॥ क्विन्नन्तत्वात्कुत्वम्। षडगकाः प्राग्वदूह्याः॥ **अन्यत्रापीति**। त्यदाद्युपपदत्वाभावेऽपीत्यर्थः॥ **त्विडिति**। 'त्विष दीप्तौ' इत्यस्मात्क्विप्। जश्त्वचर्त्वे॥ **सजूरिति**। 'जुषी प्रीतिसेवनयोः' इत्यस्मात् क्विप्। 'ससजुषोः–२४१' इति षस्य रुत्वम्। 'र्वोः–५८०' इति दीर्घः॥ **आशिषाविति**। 'आशासः क्वावुपसंख्यानम् ३९८५' इत्युपधाया इत्वम्, 'शासिवसि–३२१४' इति षत्वम्॥ **असाविति**। अदसस्त्यदाद्यत्वं[३७] पररूपत्वं टाप्। एकादेशस्य पूर्वान्तत्वेन ग्रहणात् 'अदस औ सुलोपश्च ५८५' 'तदोः–५१७' इति सत्वमित्येके॥ अन्ये तु–परत्वाद्विशेषविधेश्च पूर्वमौत्वं ततोऽत्र नात्वटापावित्याहुः॥ इति हलन्ताः स्त्रीलिङ्गाः॥

---

**दत्वमिति**। 'वसुस्रंसु–४५८' इति दत्वमनडुच्छब्दान्तेऽपि प्रवर्तते, पदाधिकारस्थत्वादिति भावः॥ **पूर्वपदस्यैवेति**। अन्यथा राजपुरुषो वागाशीरित्यादौ नलोपकुत्वादिकं यथासंभवं न स्यादिति भावः॥ (५९३) **उत्तरपदत्वे चेति**। उत्तरशब्देनोत्तरपदमुच्यते। उत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः। एतेन सुधियौ सुधिय इत्यत्रान्तर्वर्तिसुपा पदत्वात्पक्षे शाकलप्रसङ्ग इत्याशङ्का परास्ता, उक्तरीत्या प्रत्ययलक्षणनिषेधात्। उत्तरपदत्वे किम्, राजपुरुष इत्यादौ नलोपो यथा स्यात्। पश्यति दधीत्यादावपि दधिशब्दस्य पदत्वे प्रत्ययलक्षणं भवत्येव, उत्तरपदस्य समासावयवे[५] रूढत्वात्॥ **दधिसेचाविति**। सिञ्चत इति सेचौ 'अन्येभ्योऽपि दृश्यन्ते ३९८०' इति विच्। दध्नः सेचाविति षष्ठीसमासः। उपपदसमासे तु प्राक् सुबुत्पत्तेः[११२८] समासविधानात्सेच्शब्दस्य पदसंज्ञा नास्तीति पदादित्वं सकारस्य न स्यात्। नन्वेवमुपपदसमासे षत्वं दुर्वारमिति चेत्। अत्राह कैयटः–'अनभिधानात्सोपपदाद्विजभावः दधिसेचाविति प्रयोगाभावात्' इति॥ वस्तुतस्तु–पदादादिः पदादिरिति पक्षे तूपपदसमासेऽपि षत्वं सुपरिहरम्॥ (५९४) **अन्वादेश इति**। अम्येवेदं विधीयते न त्वौट्शसादिषु,

---

१ **सर्वावदिति**। सर्वाशब्दवदित्यर्थः। शब्दपरनिर्देशेन संज्ञाभूतस्यैव सर्वार्थवाचकत्वाभावान्न सर्वनामसंज्ञेति 'सर्वनाम्नो वृत्तिमात्रे–' इति पुंवत्त्वाप्राप्तिः। शब्दपरनिर्देशेऽपि संज्ञाप्रवृत्तौ 'एतदस्त्रतसोः–' 'इदमोऽन्वादेशे–' इत्याद्यसाधुत्वापत्तिरिति तत्त्वबोधिनीकारोक्तिश्चिन्त्यैवेति बोध्यम्॥ २ **अपो भि**। अप इति नेदं प्रत्ययग्रहणम्, व्याख्यानात्॥ ३ **पदसंज्ञायामिति**। प्रत्ययलक्षणेनेत्यादिः॥ ४ **अपदादिविधाविति**। पदादिविधिश्च पदादिशब्दोच्चारणेन विहितः 'सात्पदाद्योः' इति षत्वनिषेधविधिरेव तेन परमबुधावित्यादौ भष्भावो नोत्तरपदादिः। बहुसेचावित्येतदर्थं तु 'बहुचूपूर्वस्य' च इति वचनान्तरेण षत्वकुत्वाभावाविति बोध्यम्॥ ५ **समासावयव इति**। मध्यमपदत्वानाक्रान्तेत्यादिः। तेन पूर्वदण्डिप्रिय इत्यादौ दण्डिन्शब्दस्याऽवान्तरतत्पुरुषोत्तरपदत्वेऽपि नलोपसिद्धिः॥

एनत् । एने । एनानि । एनेन । एनयोः २ ॥ ब्रह्म । ब्रह्मणी । ब्रह्माणि । हे ब्रह्मन्, हे ब्रह्म ॥ रोऽसुपि ॥ अहर्भाति विभाषा[३४०] ङिश्योः ॥ अह्नी, अहनी । अहानि ॥ ( ५९५ ) सू० अहन् । ८ । २ । ६८ । अहन्नित्यस्य रुः स्यात्पदान्ते । अहोभ्याम् । अहोभिः । इह अहः अहोभ्यामित्यादौ रुत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते—अहन्नित्यावर्त्य[१] नलोपाभावं निपात्य द्वितीयेन रुर्विधेयः । तदन्तस्यापि[२] रुत्वरत्वे । दीर्घाण्यहानि यस्मिन्स दीर्घाहा निदाघः । इह हल्ङ्याब्[३०६]आदिलोपे प्रत्ययलक्षणेनाऽसुपीति निषेधाद्रुत्वाभावे रुः । तस्यासिद्धत्वान्नान्तलक्षण उपधादीर्घः । संबुद्धौ तु हे दीर्घाहो निदाघ । दीर्घाहानौ । दीर्घाहानः । दीर्घाह्ना । दीर्घाहोभ्याम् ॥ दण्डि । दण्डिनी । दण्डीनि । स्रग्वि । स्रग्विणी । स्रग्वीणि ॥ वाग्ग्मि । वाग्ग्मिनी । वाग्ग्मीनि ॥ बहुवृत्रहाणि ॥ बहुपूषाणि ॥ बह्वर्यमाणि ॥ असृजः पदान्ते[३] कुत्वम्, सृजेः क्विनो विधानात् । विश्वसृडादौ तु न, सृजिदृशोरिति सूत्रे रज्जुसृड्भ्यामिति भाष्य[४]प्रयोगात् । यद्वा-व्रश्च[२९४]आदिसूत्रेण सृजियज्योः पदान्ते षत्वं कुत्वापवादः । स्रगृत्विक्शब्दयोस्तु निपातनादेव[५] कुत्वम् । असृक्शब्दस्तु अस्यतेरौणादिके ऋजन्प्रत्यये बोध्यः । असृक्, असृग् । असृजी । असृञ्जि । पद्दन्[२२८] इति वा असन् । असानि । असृजा । अस्ना । असृ-

---

फलाभावात् । 'स्वमोर्नपुंसकात् ४४१' इत्यमो लुका लुप्तत्वेऽपि प्रत्ययलक्षणमिह प्रवर्तते, वचनसामर्थ्यादित्याहुः ॥ वस्तुतस्तु- 'द्वितीयाटौस्सु-४७६' इति सूत्र एव एनद्वक्तव्यः । एनम् । एनौ । एनानित्यादि तु त्यदाद्य[१]त्वेन सिद्धम् । क्लीबे आमि लुका लुप्तत्वेऽपि तकारोच्चारणसामर्थ्यादेनदादेशः । न चैवमेतच्छ्रितमित्यत्राप्येनदादेशापत्तिः, 'द्वितीयाश्रिता-९९३' इति समासे कृते सुपो लुकि द्वितीयादिविभक्तिपरत्वाभावात् । न च तकारोच्चारणसामर्थ्यादेनदादेश इत्युक्तमिति वाच्यम् । एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि चरितार्थत्वेन बहिरङ्गे सामासिके लुकि तदप्रवृत्तेरिति मनोरमायां[६] स्थितम् ॥ **ब्रह्मणी इति** । इह 'विभाषा ङिश्योः ३४०' इत्यल्लोपो न, 'न संयोगाद्वमन्तात् ४८२' इति निषेधात् ॥ **रोऽसुपि । अहर्भातीति** । 'अहन् ५९५' इति रुत्वे कृते तु 'हशि च २४६' इत्युत्वप्रवृत्त्या अहो भातीति स्यादिति भावः ॥ ( ५९५ ) **नलोपाभावं निपात्येति** । 'अहन् ५९५' इत्यत्र नकारान्तरं प्रश्लिष्य नान्तस्य अहन्शब्दस्य रुरिति व्याख्यायामपि रुत्वरत्वयोर्नकारस्थानिकत्वं सेत्स्यतीति बोध्यम् ॥ **तदन्तस्यापीति** । पदाधिकारस्थत्वादिति भावः । न चात्र प्रत्ययलक्षणन्यायेनाऽन्तवर्तिनीं विभक्तिमाश्रित्य समासैकदेशस्याप्यहन्शब्दस्य पदत्वाद्रुत्वं स्यादेव, किमनेन तदन्तविध्याश्रयणेनेति शङ्क्यम्, 'उत्तरपदत्वे चापदादिविधौ-५९३' इति प्रतिषेधेन प्रत्ययलक्षणाप्रवृत्तेः ॥ **सृजिदृशोरिति सूत्र इति** । एतच्चोपलक्षणम्[७]-'मृजेर्वृद्धिः' इति सूत्रेऽपि तत्प्रयोगात् ॥ **रज्जुसृड्भ्यामिति** । ननु भ्यामूप्रत्ययो झलादिरकिद्भवतीति 'सृजिदृशोः-३२०८' इत्यमागमः स्यात् । मैवम्, धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । न चैवमपि 'अनुदात्तस्य चर्दुपधस्य-३२०५' इति वैकल्पिकः प्राप्नोति, तद्विधौ धातोः स्वरूपेणानुपादानादिति शङ्क्यम्, धातोरुच्यमानं कार्यं तत्प्रत्यय एवेति परिष्कारात् । एवं च प्रसृड्भ्यां, प्रसृड्भिरित्यादौ नायं दोषः प्रसज्यते । एतच्च 'मृजेर्वृद्धिः' इति सूत्रे भाष्ये स्पष्टम् । ननु धातोरुच्यमानं कार्यं तत्प्रत्यय एवेति चेत् । धियौ धियः, भुवौ भुवः इत्यादावियङुवङौ न स्यातां, किन्तु चिक्षियतुः लुलुवतुरित्यादावेव स्याताम् । सत्यम्, वस्तुगत्या धातोरेवोच्यमानं कार्यमियङादिकं न भवति, किं त्वङ्गस्योच्यमानमिति वैषम्यात् ॥ **कुत्वापवाद इति** । षत्वसूत्रे सृजमृजयजेति विशिष्य[८] ग्रहणादिति भावः ॥ **असृक्शब्दस्त्विति** । एतच्च क्षीरस्वामिग्रन्थे स्पष्टम् ॥ **ऋजन्प्रत्यये बोध्य इति** । यद्यप्यस्मिन्पक्षे स्वरो

---

१ **आवर्त्येति** । नलोपाभावसाधकावृत्तिसूचकं मानं 'रूपरात्रिरथंतरेषु-' इति वार्तिकमेव । अन्यथा नलोपे जाते अकारस्य रौ वा रेफे वा कृते विशेषाभावाद्व्यर्थमेव वार्तिकं स्यात् । नलोपाभावे तु नकारस्य रौ अतः परस्य रोरुकारादेशे अहोरूपमित्यादयः सिध्यन्ति, रेफादेशे तूकाराप्राप्त्योक्तरूपासिद्धिरिति वार्तिकस्य स्वांशे चारितार्थ्यमिति भावः ॥ २ **तदन्तस्यापीति** । 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तु प्रत्ययविधिविषयक एवेति स्पष्टम् 'असमासे निष्कादिभ्यः' इति सूत्रे भाष्यकैयटयोरिति भावः ॥ ३ **पदान्ते कुत्वमिति** । 'क्विन्प्रत्ययस्य-' इत्यस्यासिद्धत्वात्पूर्वं 'व्रश्चभ्रस्ज-' इति षत्वे कुत्वमित्यर्थः ॥ ४ **भाष्यप्रयोगादिति** । अनेन भाष्यप्रयोगेणानव्ययपूर्वपदे कुत्वाभावो बोध्यते । तेनासृगित्यत्र न दोष इति भावः ॥ ५ **निपातनादेवेति** । अत्र निपातनेनापवादत्वमेव नाङ्गीक्रियते इति षत्वोत्तरं 'क्विन्प्रत्ययस्य-' इति शास्त्रेण कुत्वमिति बोध्यम् । विश्वसृडादौ तु स्वीक्रियतेऽपवादत्वमिति तक्रदानोत्तरं दधिदानस्येव संभवेऽपि न कुत्वप्रवृत्तिरिति भावः ॥ ६ **मनोरमायामिति** । वस्तुत एतत्सर्वं कैयटानुरोधेन । तकारोच्चारणसामर्थ्येन नपुंसकलुकीव सामासिकलुक्यप्येतत्प्रवृत्तेः । न च बहिरङ्गत्वम् । लुग्विषये बहिरङ्गपरिभाषाया अप्रवृत्तेः । अत एव-'एनदादेशे एतच्छ्रितक इति न सिध्यति, एनच्छ्रितक इति प्राप्नोति' इति भाष्यं संगच्छते । एनद्विधानेनैतद्विषये 'न लुमता-' इत्यस्याप्रवृत्तिरिति तदाशयः । वस्तुतस्त्वेषामनभिधानमेव, अस्यां शङ्कायां 'यथालक्षणमप्रयुक्ते' इति भाष्योक्तेः । इति शब्दरत्नम् ॥ ७ **उपलक्षणमिति** । काम्यच्सूत्रे 'उपयट्काम्यति' इति भाष्यप्रयोगस्यापीति भावः ॥ ८ **विशिष्येति** । 'रज्जुसृड्भ्याम्' 'उपयट्काम्यति' इति भाष्यप्रयोगाच्चेति बोध्यम् ॥

ग्भ्याम् । असभ्यामित्यादि ॥ ऊर्क् , ऊर्ग् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः॥(५९६) **वा॰ बहूर्जि नुम्प्रतिषेधः॥** ( ५९७ ) **वा॰ अन्त्यात्पूर्वो वा नुम्** ॥ बहूर्जि बहूर्ञ्जि वा कुलानि ॥ स्यत् , स्यद् । स्ये। स्यानि॥ तत् , तद् । ते। तानि ॥ यत्, यद् । ये । यानि ॥ एतत्, एतद् । एते । एतानि । अन्वादेशे तु एनत् ॥ बेभिद्यतेः क्विप् । बेभित् । बेभिद् । बेभिदी । शाबल्लोपस्य स्थानिवत्त्वादझलन्तत्वान्न नुम् । अजन्तलक्षणस्तु नुम्न, स्वविधौ स्थानिवत्त्वाभावात् । बेभिदि ब्राह्मणकुलानि । चेच्छिदि ॥

गवाक्छब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः । असंध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥

स्वमुसुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः । चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥

तथाहि-गामञ्चतीति विग्रहे ऋत्विगादिना क्विन् । गतौ नलोपः। अवङ् । स्फोटायनस्येत्यवङ्[१४३] । गवाक्, गवाग् । सर्वत्र विभाषेति[१४२] प्रकृतिभावे-गोअक्, गोअग् । पूर्वरूपे -गोऽक्, गोऽग् । पूजायां नस्य कुत्वेन ङः । गवाङ्, गोअङ्, गोऽङ् । अस्यप्येतान्येव नव । औङः शी । भत्वादचः इत्यल्लोपः। गोची । पूजायां तु गवाञ्ची, गोअञ्ची गोऽञ्ची । जश्शसोः शिः[४३३] । शेः सर्वनामस्थानत्वान्नुम् । गवाञ्चि, गोअञ्चि, गोऽञ्चि । गतिपूजनयोस्त्रीण्येव । गोचा । गवाञ्चा, गोअञ्चा, गोऽञ्चा । गवाग्भ्याम् , गोअग्भ्याम् , गोऽग्भ्याम् । गवाङ्भ्याम् , गोअङ्भ्याम् , गोऽङ्भ्याम् । इत्यादि ॥ सुपि तु ङान्तानां पक्षे ङ्णोः कुक्टुगिति कुक् । गवाङ्क्षु, गोअङ्क्षु, गोऽङ्क्षु । गवाङ्षु, गोअङ्षु, गोऽङ्षु । गवाक्षु, गोअक्षु, गोक्षु । न चेह चयो द्वितीया इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम् , चर्त्वस्यासिद्धत्वात् । कुक्पक्षे तु तस्यासिद्धत्वाज्ज्श्त्वाभावे पक्षे द्वितीयादेशात्त्रीणि रूपाणि वर्धन्त एव ॥

ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात् । रूपाण्यश्वाक्षिभूतानि ५२७ भवन्तीति मनीषिभिः ॥ १ ॥

---

भिद्यते, तथापि लोके स्वरस्यानादराद्वेदे तु बाहुलकादिष्टस्वरः सिध्यतीति भावः॥ (५९६) **बहूर्जीति** । इदमन्त्यादिति[१] च वाचनिकम् । तथा च वार्तिकम् 'बहूर्जि प्रतिषेधः, अन्त्यात्पूर्वं नुममेके' इति । भाष्ये तु-अचः परो यो झल् तदन्तस्य[२] नुमि' त्याश्रित्य प्रथमवार्तिकं प्रत्याख्यातम् । एवं च ऊन्र्जीत्यत्र नुम् दुर्लभः । किञ्च, 'उर्द माने क्रीडायां च,' 'गर्ह गर्हायाम्' इत्यादीनां क्विबन्तानां भाष्यमते नुमा न भाव्यमेवेति बोध्यम् ॥ **अल्लोपस्य स्थानिवत्त्वादिति** । 'क्वौ लुप्तं न स्थानिवत् ३८४' इति तु नेहाश्रीयते, तस्य क्वाचित्कत्वात् । 'क्वौ विधिं प्रति न स्थानिवत्' इत्यस्यैव सार्वत्रिकत्वादिति भावः॥ "जायन्ते नव सौ, तथाऽमि च नव, भ्यांभिस्भ्यसां संगमे षट्संख्यानि, नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि । चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि तज्जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥" इति नरपतिसभायां क्वचित्केनचित्प्राचीनेन कृतस्याक्षेपस्य प्राचीनैरेव पण्डितैः कैश्चित् 'गवाक्शब्दस्य' इत्यादिना 'विभावय' इत्यन्तेन श्लोकद्वयेन समाधानमुक्तम् । तदेव श्लोकद्वयं प्रकृतोपयोगादाह—**गवाक्शब्दस्य रूपाणीति** । अञ्चतेर्गतौ नलोपः पूजायां तु नेत्याशयेनाह—**अर्चागतिभेदत इति** । आद्यादित्वात्तसिः[३८४१] । पूजागत्यर्थभेदेनासन्ध्यवङादिभिर्नवाधिकशतं रूपाणि बोध्यानीत्यर्थः ॥ उक्तसंख्यामेव व्यवस्थापयति—**स्वमुसुप्स्विति** । प्रत्येकमिति शेषः । एवमग्रेऽपि षट् त्रीणि चत्वारीत्यत्रापि बोध्यम् । **रूपाणीति** । संकलनया नवाधिकशतं रूपाणीत्यर्थः॥ इह 'चयो द्वितीयाः-१९८' इति वार्तिकमनाश्रित्य नवाधिकशतमित्युक्तमिति बोध्यम् । तदाश्रयणे तु त्रीणि रूपाणि वर्धन्त इत्यनुपदमेव वक्ष्यमाणत्वात् ॥ **इत्यादीति** । आदिशब्देनान्यान्यपि ज्ञेयानि । तद्यथा-गवाग्भिः, गोअग्भिः, गोग्भिः । गवाङ्भिः, गोअङ्भिः, गोऽङ्भिः॥ ङयि—गोचे, गवाञ्चे, गोअञ्चे, गोऽञ्चे ॥ भ्यामि प्राग्वत् ॥ भ्यसि । गवाग्भ्यः, गोअग्भ्यः, गोग्भ्यः । गवाङ्भ्यः । गोअङ्भ्यः, गोऽङ्भ्यः ॥ ङसौ—गोचः, गवाञ्चः, गोअञ्चः, गोऽञ्चः॥ भ्यामि भ्यसि च प्राग्वत् । ङसि पञ्चम्येकवचनवत्॥ ओसि—गोचोः, गवाञ्चोः, गोअञ्चोः,गोऽञ्चोः। आमि । गोचाम् , गवाञ्चाम् , गोअञ्चाम् , गोऽञ्चाम् ॥ ङौ तु—गोचि, गवाञ्चि, गोअञ्चि, गोऽञ्चि ॥ ओसि प्राग्वत् ॥ सुपि तु—गवाङ्क्षु, गवाङ्षु, गोअङ्क्षु, गोअङ्षु, गोङ्क्षु, गोऽङ्षु, गवाक्षु, गोअक्षु, गोक्षु॥ ननु भ्यामुत्रये भ्यसुद्वये ङसिङसोरोसुद्वये च समानरूपत्वात् कथमिह नवाधिकशतमित्युक्तमिति चेत् । अत्राहुः-अर्थभेदेन रूपभेदमाश्रित्य तथोक्तमिति ॥ **षण्णामाधिक्यं शङ्क्यमिति** । नवसु मध्ये ककारस्थाने पाक्षिकखकारप्रवृत्त्या रूपषट्काधिक्यं न शङ्क्यमित्यर्थः ॥ **चर्त्वस्यासिद्धत्वादिति** । तथा च शास्त्रदृष्ट्या ककारो नास्त्येव किंतु गकार एवास्तीति भावः॥ **तस्यासिद्धत्वादिति** । कुकोऽसिद्धत्वादित्यर्थः ॥ **वर्धन्त एवेति** । एवं च त्रयाणामाधिक्यसंभवात्सुपि द्वादश रूपाणि भवन्तीति संकलनया द्वादशाधिकशतं मतं न तु नवाधिकशतमिति भावः ॥ **अश्वाक्षिभूतानीति** । सप्तविंशत्यधिका पञ्चशतीत्यर्थः । सौ नवानामन्त्यस्य द्वित्वेऽष्टादश ॥ औङि चतुर्णां मध्ये पूजार्थानां त्रयाणां ञद्वित्वे सप्त । अणोऽप्रगृह्यस्येत्यनुनासिकस्तु नास्ति प्रगृह्यत्वात् । जसि ञद्वित्वस्यानुनासिकस्य च विकल्पाद् द्वादश । संकलनया सप्तत्रिंशत् । एवं द्वितीयायामपि विभक्तौ सप्तत्रिंशत् । तथा च संकलनया

---

१ **अन्त्यादिति** । इदं वचनं बहूर्ज्शब्दमात्रविषयं ' बहूर्जि ' इत्यनुवृत्तेरिति बोध्यम् ॥ २ **तदन्तस्येति** । न चैवं कुलानीत्यत्र नुमनुपपत्तिरिति वाच्यम् । 'हिरण्मयानि' इति निर्देशेन अच इत्यस्यावृत्त्या वाक्यभेदेनाजन्तेभ्योऽपि नुम्विधानात् । 'काष्ठतक्षि' इत्यादौ तु अचः पराया झल्जातेराश्रयणान्न नुमनुपपत्तिः ॥

तिर्यक् । तिरश्ची । तिर्यञ्चि । पूजायां तु तिर्यङ् । तिर्यञ्ची । तिर्यञ्चि ॥ यकृत् । यकृती । यकृन्ति । पद्दन्निति वा यकन् । यकानि । यक्ना । यकृता ॥ शकृत् । शकृती । शकृन्ति । शकानि । शक्ना । शकृता ॥ ददत् । ददती ॥ ( ५९८ ) **सू. वा नपुंसकस्य । ७ । १ । ७९ ।** अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य नुम् वा स्यात्सर्वनामस्थाने परे । ददन्ति, ददाति ॥ तुदत् ॥ ( ५९९ ) **सू. आच्छीनद्योर्नुम् ।७।१।८०।** अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः परतः । तुदन्ती, तुदती । तुदन्ति ॥ भात् । भान्ती, भाती । भान्ति ॥ पचत् ॥ (६००) **सू. शप्श्यनोर्नित्यम् ।७।१।८१ ।** श्यप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः परतः । पचन्ती । पचन्ति ॥ दीव्यत् । दीव्यन्ती । दीव्यन्ति ॥ स्वप्, स्वब् । स्वपी । नित्यात्परादपि नुमः प्राक् अप्तृन्निति दीर्घः । प्रतिपदोक्तत्वात् । स्वाम्पि । निरवकाशत्वं प्रतिपदोक्तत्वमिति पक्षे तु प्रकृते तद्विरहान्नुमेव । स्वम्पि । स्वपा ॥ अपो भि ॥ स्वद्भ्याम् । स्वद्भिः॥ **उ. अर्तिपृवपीत्यादिना** धनेरुस् । धनुः । धनुः । धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षत्वम् । धनूंषि । धनुषा । धनुर्भ्याम् । एवं चक्षुर्हविरादयः ॥ पिपठिषतेः क्विप् । वोरिति दीर्घः । पिपठीः । पिपाठिषी । अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम्न । स्वविधौ स्थानि-

---

चतुःसप्ततिः ॥ टायां चतुर्णां मध्ये पूजार्थानां त्रयाणां जद्वित्वे सप्त । तेषां च सप्तानामनुनासिकविकल्पे चतुर्दश । संकलनया अष्टाशीतिः भ्यामि षट्सु रूपेषु भात्पूर्वस्य द्वित्वे द्वादश, तेषां द्वादशानामपि 'यणो मयः-८३' इति यद्वित्वे चतुर्विंशतिः, तेषामपि मकारस्य द्वित्वेऽष्टचत्वारिंशत् । संकलनया षट्त्रिंशदधिकं शतम् ॥ भिसि चतुर्विंशतिः । भात्पूर्वस्य विसर्गस्य च द्वित्वात् संकलनया षष्ट्युत्तरशतम् ॥ ङयि चतुर्णां मध्ये पूजार्थानां त्रयाणां जद्वित्वे सप्त । अनुनासिकस्तु नास्ति, एकारस्यानण्त्वात् । संकलनया सप्तोत्तरषष्ट्यधिकं शतम् ॥ भ्यामि प्राग्वदेवाष्टचत्वारिंशत् । तथैव भ्यासि भात्पूर्वस्य यविसर्गयोश्च द्वित्वात् । संकलनया त्रिषष्ट्यधिकं शतद्वयम् । ङसौ चतुर्णां मध्ये जद्वित्वे सप्त । तेषां तु सप्तानां विसर्गद्वित्वे चतुर्दश। संकलनया सप्तोत्तरसप्तत्यधिकं शतद्वयम् । भ्यांभ्यसोः प्राग्वदेव प्रत्येकमष्टचत्वारिंशत् । संकलनया त्रिसप्तत्यधिकं शतत्रयम् ॥ ङसाविव ङस् ओस् आम् ङि ओस् इत्यत्रापि प्रत्येकं चतुर्दश ॥ चतुर्षु रूपेषु मध्ये जद्वित्वे सप्तानामप्यन्त्यस्य द्वित्वात् । ङौ तु सप्तानामप्यन्त्यस्य 'अणोऽप्रगृह्यस्य-१७३' इति वैकल्पिकानुनासिकप्रवृत्तेः । संकलनया त्रिचत्वारिंशदधिकं शतचतुष्टयम् ॥ सुपि गत्यर्थे त्रयाणां कद्वित्वे षट् । तेषां तु 'शरः खयः २१०' इति षद्वित्वे द्वादश । उकारस्यानुनासिके चतुर्विंशतिः । संकलनया सप्तोत्तरषष्ट्यधिकं शतचतुष्टयम् । पूजायां तु कुगभावे त्रयाणां ङकारद्वित्वेऽनुनासिके च द्वादश। कुक्पक्षे तु चयो द्वितीयादेशे षट् । षण्णां ङषयोर्द्वित्वेऽननुनासिके चाष्टचत्वारिंशत् । संकलनया सप्तविंशत्याधिका पञ्चशतीत्यर्थः ॥ **तिरश्ची इति** । भत्वात् 'अचः५५८' इत्यल्लोपः । 'अलोपे' इति वचनात्तिर्यादेशाभावः ॥ **ददिति** । पुँल्लिङ्गेऽप्ययं व्युत्पादितः ॥ ( ५९८ ) **शतेति** । 'ऋदुशन-३८७' इत्यनङ् । शतृप्रत्यय इत्यर्थः ॥ ( ५९९ ) **आच्छीनद्योः—** । नुम्ग्रहणमिह चिन्त्यप्रयोजनं 'नाभ्यस्ताच्छतुः५७३' 'वा नपुंसकस्य ५९८' इत्यत्र 'इदितो नुम् धातोः ३०२६' इत्यतोऽनुवृत्तेरावश्यकतया तदुत्तरत्रापि तत एवानुवर्तते बाधकाभावात् ॥ **शतुरवयव इति** । तुदादेः शस्यान्तरङ्गत्वाच्छत्रादेशाकारेण सहैकादेशे कृतेऽवर्णान्तात्परस्य शतुरिति न भवति, 'उभयत आश्रयणे नान्तादिवत्' इति वक्ष्यमाणत्वादिति भावः ॥ **भादिति** । 'भा दीप्तौ' । लटः शतर्यदादित्वाच्छपो लुक् ॥( ६०० ) **शप्श्यनोर्नित्यम्** । आरम्भसामर्थ्यान्नित्यत्वे सिद्धेऽपि नित्यग्रहणमिह वेत्यधिकारनिवृत्त्यर्थम् । अन्यथा ह्यारम्भसामर्थ्यादिह नित्यमुत्तरत्र विकल्प इत्याशङ्क्येत ॥ **पचन्ती इति** । कर्तरि शपि नित्यं नुम् ॥ **दीव्यन्ती इति** । दिवादिभ्यः श्यनि नित्यं नुम् । पचन्तीति दीव्यन्तीति बहुवचने तु 'नपुंसकस्य झलचः ४३५' इति नुम् बोध्यः ॥ **स्वबिति** । शोभना आपो यस्मिन्सरसीति बहुव्रीहिः । 'ऋक्पूरब्-१३५०' इति समासान्ते प्राप्ते 'न पूजनात् १३६९' इति निषेधः । 'द्व्यन्तरुपसर्गेभ्यः-१३५२' इति ईन्न भवति, तत्र 'अप इति कृतसमासान्तस्यानुकरणम्' इति वक्ष्यमाणत्वात् ॥ **निरवकाशत्वं प्रतिपदोक्तत्वमिति** । अयमेव पक्षः प्रबल इति 'छदिरुपधिबलेर्ढञ्' इति सूत्रे मनोरमायां स्थितम् ॥ **धनेरुसिति** । 'जनेरुसिः ४४७५' इत्यत उसिरित्यनुवर्तमाने 'अर्तिपृवपियजितनिधनितपिभ्यो नित् ४४७७' इत्यौणादिकेनेत्यर्थः ॥ **धनुर्भ्यामिति** । इह 'वोरुपधायाः-५८०' इत्यादिना दीर्घो न शङ्क्यः, रेफान्तस्याधातुत्वात् ॥ **एवमिति** । 'चक्षेः शिच्च ४४७९' । चादुसिः । चक्षुः । 'आर्चिशुचि-

---

१ **निरवकाशत्वमिति** । परे तु निरवकाशत्वस्य बाधकताबीजत्वेन प्रतिपदविधेः सर्वतो बलीयस्त्वात्पूर्वं दीर्घे नुमि च 'स्वाम्पि' इत्येवेति वदन्ति ॥ २ एतच्च 'निक्षेपन्यासीकृतद्रव्यमिव कार्यानर्हम्' इत्यर्थेन '**तदेतन्नित्यग्रहणं सान्यासिकं तिष्ठतु तावत्**' इति भाष्येण विरुद्धम् । तथाहि-'इको यणचि' इत्यादाविव विनापि नित्यग्रहणं 'वा' इत्यस्य निवृत्तौ स्वरितबलेन सिद्धायामपि कृतं नित्यग्रहणं नित्य-प्रहसितो नित्यप्रजल्पित इत्यादाविव प्रायःसमानार्थकमेव ॥ अत एव व्याकरणोपज्ञात्रैव पाणिनिना 'अपश्यती वत्सामिवेन्दुबिम्बम्' इत्यत्र स्वकीये जाम्बवतीविजयकाव्ये नुम् न कृतः ॥ एतदजानानेन नमिसाधुना तु रुद्रटालंकारव्याख्यायामस्य प्रयोगस्यासाधुत्वं स्पष्टीकुर्वता स्वस्य व्याकरणमर्मानभिज्ञत्वमेव दर्शितम् ॥

वत्त्वाभावादजन्तलक्षणोऽपि नुम्न । पिपठिषि । पिपठीर्भ्यामित्यादि । पयः । पयसी । पयांसि । पयसा । पयोभ्यामित्यादि ॥ सुपुम् । सुपुंसी । सुपुमांसि ॥ अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । शेषं पुंवत् ॥ इति हलन्ता नपुंसकलिङ्गाः ॥

---

## अथाव्ययप्रकरणम् ।

( ६०१ ) (सू) स्वरादिनिपातमव्ययम् । १ । १ । ३७ । स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर्, अन्तर्, प्रातर्, पुनर् , सनुतर् , उच्चैस् , नीचैस् , शनैस्, ऋधक्, ऋते, युगपत् , आरात् , पृथक्, ह्यस्, श्वस्, दिवा, रात्रौ, सायम् , चिरम् , मनाक् , ईषत् , जोषम्, तूष्णीम्, बहिस्, अवस् , समया, निकषा, स्वयम्, वृथा, नक्तम्, नञ् , हेतौ, इद्धा, अद्धा, सामि । ( ६०२ ) वत्, ब्राह्मणवत् । क्षत्रियवत् । सना, सनत्, सनात्, उपधा, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, श्रौषट्, वौषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा,

---

हुश्नुपि-४४६८' इत्यादिना जुहोतेरिसिः । आदिशब्देन सर्पिरर्चिरादयो ग्राह्याः ॥ सुपुमांसीति । 'पुंसोऽसुङ् ५८३' इति सूत्रे सुटीति व्याचक्षाणस्य प्राचो मते जसीष्टसिद्धावपि शसि नैतत्सिध्येत् । औङि चातिप्रसङ्गः । 'इतोऽत्सर्वनामस्थाने ४९६' इत्यतोऽनुवृत्तिं पर्यालोच्य सर्वनामस्थान इति यथाश्रुतं ब्रुवतां तु सर्वेष्टसिद्धिः ॥ इति हलन्ता नपुंसकलिङ्गाः ॥

---

( ६०१ ) स्वरादिनिपातमव्ययम् ॥ स्वरादयश्च निपाताश्चेति समाहारद्वन्द्वः ॥ ननु चादिष्वेव स्वरादीन्पठित्वा प्रकृतसूत्रं परित्यज्य 'तद्धितश्चासर्व-६०४-६०७' इत्यादि सूत्रचतुष्टयमपि 'चादयोऽसत्त्वे४१' इत्यस्मादूर्ध्वं कृत्वाऽव्ययप्रदेशेषु निपातशब्देनैव व्यवह्रियतामिति चेन्न, स्वस्ति वाचयति, स्वः पश्यति, स्वः पततीत्यादौ कर्मादिकारकयोगेन सत्त्ववाचकत्वात्तेषां निपातसंज्ञानापत्तेः । चादीनां ह्यसत्त्ववाचिनामेव निपातसंज्ञा, न तु सत्त्ववाचिनाम् । स्वरादीनां तु सत्त्ववाचिनामसत्त्ववाचिनां चाव्ययसंज्ञेष्यत इति व्यवस्थानापत्तेश्च ॥ अथ 'प्राग्रीश्वरान्निपाताः' 'स्वरादिनि-' 'चादयोऽसत्त्वे' इति सूत्र्यतां, तथा हि सति स्वरादीनां सत्त्ववचनानामपि निपातसंज्ञा सेत्स्यतीति चेन्न, एवं हि 'निपात एकाजनाङ् १६५' इति प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां प्रसज्येत । स्तो हि स्वरादिषु 'किमोऽत् २६६०' 'दक्षिणादाच् २६९६' इत्यादावेकाचौ तद्धितौ, कन्प्रभृतय एकाचः कृत्प्रत्ययाश्च सन्ति । 'तासिलादिस्तद्धित एधाच्पर्यन्तः' इति सूत्रस्य 'कृन्मकारसन्ध्यक्षरान्तः' इति सूत्रस्य च स्वरादिगणपठितत्वात् । यद्यप्यत्र मूले स्वरादिषु गणसूत्रद्वयमिदं न पठितं, तथापि प्राचां पाठे स्वस्तीत्यनुपदमेव स्फुटीकरिष्यते । स्वरादीनुदाहरति—**स्वरित्यादिना** । **स्व**रिति स्वर्गे परलोके च । **अन्त**रिति मध्ये । **प्रात**रिति प्रत्यूषे । **पुन**रित्यप्रथमे विशेषे च । **सनुत**रित्यन्तर्धाने । स्वराद्याः पञ्च रेफान्ताः । तेन स्वर्यातिं प्रातरत्रेत्यादावुत्वं न भवति । सान्तत्वे हि स्यादेव दोषः । **उच्चैस्** महति । **नीचैस्** अल्पे । **शनैस्** क्रियामान्द्ये । **ऋधक्** सत्येऽपि । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये । **ऋते** वर्जने । **युगप**दित्येककाले । **आरा**द्दूरसमीपयोः । **पृथक्** भिन्ने । **ह्यस्** अतीतेऽह्नि । **श्वो**ऽनागतेऽह्नि । **दिवा** दिवसे । **रात्रा**विति निशि । **साय**मिति निशामुखे । **चिर**मिति बहुकाले । **मनाक्, ईषत** इमावल्पे । **जोषं** सुखे मौने च । **तूष्णी**मिति मौने । **बहिस् अवस्** इमौ बाह्ये । **समये**ति समीपे मध्ये च । **निकषे**त्यन्तिके । **स्वय**मिति आत्मनेत्यर्थे । **वृथे**ति व्यर्थे । **नक्त**मिति रात्रौ । **नञ्** इति निषेधे । **हेता**विति निमित्ते । **इद्धे**ति प्राकाश्ये । **अद्धे**ति स्फुटावधारणयोः । तत्त्वातिशययोरित्यन्ये । **सामी**त्यर्धजुगुप्सितयोः ॥ ( ६०२ ) **वत्** । 'तेन तुल्यम्-२४०९-२४११' इत्यादिभिर्विहितो यो वतिप्रत्ययः स इह गृह्यते । तदाह—**ब्राह्मणवत्** । **क्षत्रियवत् इति** । प्रत्ययमात्रस्य संज्ञाप्रयोजनाभावात्प्रत्ययान्तमुदाहृतम् । यस्तु 'उपसर्गाच्छन्दसि धात्वर्थे ५३३८' इति विहितः, स इह न गृह्यते, 'यदुद्वतो निवतो यासि' इत्यत्र सत्त्वधर्मस्य लिङ्गसंख्यान्वयस्य दर्शनात् ॥ अत्र वदन्ति-'तद्धितश्चासर्वविभक्तिः ६०४' इत्यत्र 'तासिवती' इति वतिप्रत्ययोऽपि परिगण्यते, तच्च न कर्तव्यं स्वरादिपाठेनैव गतार्थत्वात् स्वरादिषु वा वदिति नैव पठनीयमिति ॥ **सना, सनत्, सनात्** एते नित्ये । **उपधे**ति भेदे । **तिरस्** अन्तर्धौ तिर्यगर्थे परिभवे च । **अन्तरे**ति मध्ये विनार्थे च । **अन्तरेणे**ति वर्जने । **ज्योगि**ति कालभूयस्त्वे प्रश्ने शीघ्रार्थे संप्रत्यर्थे च । **क**मिति वारिमूर्धनिन्दासुखेषु । **श**मिति सुखे । **सहसे**त्याकस्मिकाविमर्शयोः । **विने**ति वर्जने । **नाने**त्यनेकाविनार्थयोः । **स्वस्ती**ति मङ्गले ।

---

१ **सुपुमांसीति** । अत्र झलन्तलक्षण एव नुम् , नोगित्त्वलक्षणोऽपि, 'झलचोर्नुम्विधावुगिति प्रतिषेधः' इति वार्तिकात् । सूत्रमतेऽपि 'मिदचः-' इत्युक्तेरेकस्मादचः पर एक एव मित्प्रयोक्तव्य इति निर्णये विप्रतिषेधाज्झल्लक्षणे नुमि कृते नोगिल्लक्षण इति तत्त्वम् । यद्वा नुमद्वयेऽपि परस्य पूर्वं झल्परत्वेनानुस्वारे तस्य शर्षु पाठेन झल्त्वात्पूर्वस्याप्यनुस्वारेऽनुस्वारद्वयेऽपि 'न व्यञ्जनपरस्यैकस्यानेकस्य वा श्रवणं प्रति विशेषोऽस्ति' इत्युक्तेर्न कोऽपि दोष इति बोध्यम् ॥ २ **चिरमिति** । 'सायंचिरम्-' इति सूत्रभाष्यप्रामाण्येन 'चिरम्' इत्यस्याऽव्ययत्वमप्रामाणिकमिति ल० श० शेखरे ॥ ३ **नेति** । 'तद्धितश्चा-' इत्येव सिद्धेर्वद्ग्रहणं व्यर्थम्-इति ल० श० शेखरे ॥ ४ **अन्तरेति** । 'अन्तराऽन्तरेणयुक्ते' इति सूत्रे भाष्ये 'अन्तराशब्दोऽदृष्टापचारो निपात एव' इत्युक्तेरत्रास्य पाठो भ्रममूलकः ॥ ५ अन्तराशब्दसाहचर्येणान्तरेणशब्देऽपि निपातत्वमङ्गीकृतं भाष्यकृता ॥

**दोषा, मृषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रवाहुकम्, प्रवाहिका, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्धम्, नमस्, हिरुक्, धिक्, अम्, आम्, प्रताम्, प्रशान्, प्रतान्, मा, माङ्** । आकृतिगणोऽयम् ॥ **च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, कुवित्, नेत्, चेत्, चण्, कच्चित्, किंचित्, यत्र, नह, हन्त, माकिः, माकिम्, नकिः, नकिम्, माङ्, नञ्, यावत्, तावत्, त्वै, द्वै, न्वै, रै, श्रौषट्, वौषट्, स्वाहा,**

---

**स्वधा** पितृदाने। **अलं** भूषणपर्याप्तिशक्तिवारणनिषेधेषु । **वषट्, श्रौषट्, वौषट्** एते हविर्दाने । **अन्यदन्यार्थे**। **अस्तीति** सत्तायाम् । **उपांश्वित्यप्रकाशोच्चारणरहस्ययोः** । **क्षमेति** क्षान्तौ । **विहायसेति** वियदर्थे । **दोषेति** रात्रौ । **मृषा, मिथ्येत्येतौ** वितथे । **मुधेति** व्यर्थे । इत ऊर्ध्वं 'क्त्वातोसुन्कसुनः' 'कृन्मकारसन्ध्यक्षरान्तः' 'अव्ययीभावश्च' इति गणसूत्रत्रयमष्टाध्यायीस्थसूत्र्या समानार्थकमिह न पठितं चेदपि प्राचीनगणपाठे तदस्तीति बोध्यम्। वैयर्थ्यं तु परिहरिष्यते। **पुरेत्यविरते** चिरातीते भविष्यदासन्ने च। **मिथो, मिथस्** एतौ रहःसहार्थयोः । **प्रायसिति** बाहुल्ये। **मुहुसिति** पुनरर्थे। **प्रवाहुकमिति** समानकाले ऊर्ध्वार्थे च । **प्रवाहिकेति** पाठान्तरम् । **आर्यहलमिति** बलात्कारे। शाकटायनस्तु **आर्येति** प्रतिबन्धे । **हलमिति** प्रतिषेधविवादयोरित्याह । **अभीक्ष्णमिति** पौनःपुन्ये। **साकं सार्धमेतौ** सहार्थे। **नमस्** नतौ। **हिरुक्** वर्जने। **धिङ्निन्दाभर्त्सनयोः** । इत ऊर्ध्वं 'तसिलादयस्तद्धिता एधाच्पर्यन्ताः' 'शसूतसी' 'कृत्वसुच्' 'सुच्' 'आस्थालौ' 'च्व्यर्थाश्च' इति प्राचीनगणपाठेऽस्तीति बोध्यम् ॥ तसिलादीत्यादेरयमर्थः—पञ्चम्यास्तसिल् २६५३' इत्यारभ्य 'एधाच २७०४' इत्येतदन्तैः सूत्रैरुक्ता ये तद्धितास्तदन्ताः स्वरादिषु बोद्धव्याः । तथा-'बह्वल्पार्थाच्छस्-२८४५' 'प्रतियोगे पञ्चम्यास्तसिः २८४८' 'तेनैकदिक् २०५६' 'तसिश्च २०५७' इत्ययमपि तसिः । '-क्रियाभ्यावृत्तिगणने कृत्वसुच् २८१४'। 'द्वित्रिचतुर्भ्यः सुच् २८१५' । 'इण आसिः ४८६७' इत्युणादिसूत्रेण विहित आसिः । 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ५३४६'। '-संपद्यकर्तरि च्विः२८५५'। 'विभाषा साति कार्त्स्न्ये २८६२'। 'देये त्रा च २८६६' इत्येतदन्ता अपि ग्राह्या इति । **अम्** शैघ्र्येऽल्पे च। **आम्** अङ्गीकारे। 'अमु च च्छन्दसि ५३४७' 'किमेत्तिङव्यय-२७१८' इति 'कास्प्रत्ययात्-३०७९' इत्यादिभिश्च विहिता अपि अमामौ गृह्येते ईत्येके ॥ प्र तं नय प्रतरम्, ययाचतराम्, कारयामास । **प्रताम्** ग्लानौ । **प्रशान्** समानार्थे । **प्रतान्** विस्तारे । **माँ, माङ्** एतौ निषेधाशङ्कयोः। **आकृतिगण इति** । तेनान्येऽपि ज्ञेयाः । तथाहि-**कामम्** स्वाच्छन्द्ये । **प्रकाममित्यतिशये**। **भूय इति** पुनरर्थे । **साम्प्रतमिति** न्याय्ये । **परमिति** किंत्वर्थे । **साक्षात्** प्रत्यक्षे । **साचीति** तिर्यगर्थे। **सत्यमित्यर्धाङ्गीकारे** । **मङ्क्षु, आशु** एतौ शैघ्र्ये। **संवत्** वर्षे। **अवश्यं** निश्चये। **उषेति** रात्रौ। **ओमित्यङ्गीकारे** ब्रह्मणि च। **भूरिति** पृथिव्याम् । **भुवरित्यन्तरिक्षे**। **झटिति, झगिति, तरसा** एते शैघ्र्ये। **सुष्ठु** प्रशंसायाम्। **दुष्ठु** निकृष्टे। **सु** पूजायाम्। **कु** इति कुत्सितेषदर्थयोः । **अञ्जसेति** तत्त्वशीघ्रार्थयोः । **मिथु** इति द्वावित्यर्थे। **अस्तमिति** विनाशे। **स्थाने** इति युक्ते । **वरामिति** ईषदुत्कर्षे । **सुदि** शुक्लपक्षे । **वदि** कृष्णपक्षे इत्यादि ॥ चादीनुदाहरति—**चेत्यादिना** । **चेति** समुच्चयान्वाचयेतरेतरयोगसमाहारेषु । **वा** स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये । **हेति** प्रसिद्धौ । **अहेति** पूजायाम्। **एवेत्यवधारणेऽनवक्लृप्तौ** च। **एवमित्युक्तपरामर्शे**। **नूनमिति** निश्चये तर्के च। **शश्वदिति** पौनःपुन्ये नित्ये सहार्थे च । **युगपदित्येककाले**। **भूयस्** पुनरर्थे आधिक्ये च । **कूपदिति** प्रश्ने प्रशंसायां च। **कुविदिति** भूर्यर्थे प्रशंसायां च । **नेदिति** शङ्कायां प्रतिषेधविचारसमुच्चयेषु च। **चेदिति** यद्यर्थे । **चण्** अयं चेदर्थे । णानुबन्धस्तु 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्-' इति विशेषणार्थः। समुच्चयादौ त्वननुबन्धकः। **कच्चिदितीष्टप्रश्ने**। **यत्रेति** अनवक्लृप्त्यमर्षगर्हाश्चर्येषु। नावकल्पयामि न मर्षये, गर्हे आश्चर्यं वा यत्र भवान् वृषलं याजयेत् । **नहेति** प्रत्यारम्भे । **हन्तेति** हर्षे विषादेऽनुकम्पायां वाक्यारम्भे च । **माकिः माकि नकिरिति** त्रयोऽपि वर्जने । **माङ्नञौ** स्वरादिषूक्तौ । इह पाठस्तु निपातत्वार्थः, तेनाद्युदात्तत्वं फलं सिध्यतीति केचित् । तदसत्, फिट्स्वरेणापीष्टसिद्धेः ॥ अन्ये त्वाहुः—सत्त्ववचनानामप्यव्ययसंज्ञार्थं स्वरादिपाठ इति । तदप्यसत्, लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः । तस्मादुभयत्र पाठश्चिन्त्यप्रयोजनः । **यावत्तावदेतौ** साकल्यावधिमानावधारणेषु । साकल्ये—यावत्कार्यं तावत्कृतम् । अवधौ यावद्गन्तव्यं तावत्तिष्ठ । माने--यावद्दत्तं तावद्भुक्तम्। अवधा-

---

१ **नञिति**। अत्र 'ञ्ज्' 'सुञ्' इति द्वावपि ञकारानुबन्धौ पठनीयौ । यतः 'द्वा उकाराविमौ । एकोऽननुबन्धकः । अपरः सानुबन्धकः' इति 'उञ ऊँ' इति सूत्रे भाष्योक्तेः साऽनुबन्धकपाठोऽत्रावश्यकः । 'सु' इति निपातोऽपि सानुबन्धकनिरनुबन्धकभेदेन द्विविधः। अत एव 'सुञिति निपातस्य ग्रहणम् । तस्य च ञकारोऽत्रैव विशेषणार्थः' इति 'इकः सुञि' इति सूत्रमनोरमापदमञ्जर्योरुक्तं सङ्गच्छते ॥ २ **अस्तीति**। विभक्तिप्रतिरूपकत्वस्य विनिगमनाविरहेण शब्दतोऽर्थतश्च गृह्यमाणत्वात्तेन सिद्धे 'अस्ति'इत्यस्याप्रामाणिकः पाठः इति ल० श० शेखरे॥ ३ **इत्येक इति**। अत्रारुचिबीजं तु 'किमेत्तिङ-' इति विहितस्य'तद्धितश्च-'इत्यनेन सिद्धया 'कास्प्रत्ययाद्-'इति विहितात्परस्य'आमः' इत्यनेन लुक्सिद्धया तस्य तत्त्वे फलाभाव इति शब्दरत्ने ॥ ४ निरनुबन्धकमाशब्दस्य निषेधार्थकत्वे 'आङ्माङोश्च'इति सूत्रभाष्यविरोधाच्चिन्त्यमेतदिति ल० श० शेखरे॥

स्वधा, तुम्, तथाहि, खलु, किल, अथो, अथ, सुष्ठु, स्म, आदह। (६०३) उपसर्गविभक्तिस्वरप्रतिरूपकाश्च॥ अवदत्तम्, अहंयुः, अस्तिक्षीरा॥ अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ,॥ पशु, शुकम्, यथाकथाच, पाट्, प्याट्, अङ्ग, है, हे, भोः, अये, द्य, विषु, एकपदे, युत्, आतः। चादिरप्याकृतिगणः॥ (६०४) तद्धितश्चासर्वविभक्तिः। १।१।३८। यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात्। परिगणनं कर्तव्यम्। तसिलादयः प्राक् पाशपः। शस्प्रभृतयः प्राक् समासान्तेभ्यः। अम्। आम्। कृत्वोऽर्थाः। तसिवती। नानाञाविति। तेनेह न। पचतिकल्पम्। पचतिरूपम्॥ (६०५) कृन्मेजन्तः। १।१।३९। कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात्।

---

रणे—यावदत्र तावद् ब्राह्मणानामन्त्रयस्व। स्वै विशेषवितर्कयोः। द्वै वितर्के। न्वै इति पाठान्तरम्। रै दाने अनादरे च। रै करोति ददातीत्यर्थः। त्वं रै किं करिष्यसि। श्रौषट्, वौषट् एतौ हविर्दाने। स्वाहा देवताभ्यो दाने। स्वधेति पितृभ्यः। श्रौषडादीनामनेकाचामुभयत्र पाठः स्वरभेदार्थः। तुमिति तुंकारे। 'गुरुं तुंकृत्य हुंकृत्य'। तथाहीति निदर्शने। खलु इति निषेधवाक्यालंकारनिश्चयेषु। किलेति वार्तायामलीके च। अथो, अथेति मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अयं स्वरादावपि, तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिध्यति। अत एव श्रीहर्षः—"उद्दस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे। यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयांबभूव ताम्" इति। अत्र हि अथ स्नपयांबभूवेत्यस्य मङ्गलरूपत्वं चकारेत्यर्थः। निपातस्तु स्वरूपेणैव मङ्गलं मृदङ्गध्वनिवत्॥ सुष्ठु स्वरभेदार्थं पाठः। स्मेत्यतीते पादपूरणे च। आदहेत्युपक्रमहिंसाकुत्सनेषु। 'आदह स्वधामनु' इत्यत्र तु पदकारा आदिति पृथक् पदं पठन्ति॥ (६०३) अवदत्तमिति। इहावस्यानुपसर्गत्वात् 'अच उपसर्गात्तः ४०९५' इति न भवति॥ अहमिति सुबन्तप्रतिरूपकमहंकारे। एवं 'गेये केन विनीतौ वाम्' इति। युवामित्यर्थः। सुबन्तप्रतिरूपकमव्ययम्। अस्तीति तु तिङन्तप्रतिरूपकम्। एवं 'त्वामस्मि वच्मि-' इत्यत्रास्मीत्यहमर्थे तिङन्तप्रतिरूपकम्। आहेत्युवाचेत्यर्थे। आसेति बभूवेत्यर्थे इत्यादि बोध्यम्॥ अहंयुरिति। 'अहंशुभमोर्युस् २६४६'। यदि तु 'त्वाहौ सौ ५२०' इति मपर्यन्तस्याहादेशे शेषे लोपे च कृते निष्पन्नो योऽहंशब्दस्तस्माद्युस्प्रत्ययः क्रियेत तर्हि सुपो लुपि अस्मद्युसिति स्थिते मदीय इत्यत्रेव मपर्यन्तस्य मादेशे सति मद्युरिति स्यादिति भावः॥ अस्तिक्षीरेति। तिङन्तत्वे तु बहुव्रीहिसमासोऽयं नोपपद्यत इति भावः॥ अ इति संबोधनेऽधिक्षेपे निषेधे च। आ इति वाक्यस्मरणयोः। इ संबोधनजुगुप्साविस्मयेषु। ई उ ऊ ए ऐ ओ औ संबोधने। पशु सम्यगर्थे। पशु मन्यमानाः। शुकं शैघ्र्ये। यथाकथाचेत्यनादरे। पाट्प्रभृतयः सप्त संबोधने। द्येति हिंसाप्रातिलोम्यपादपूरणेषु। विषु नानार्थे। एकपदे इत्यकस्मादित्यर्थे। युत् कुत्सायाम्। आत इति इतोऽपीत्यर्थे॥ आकृतिगण इति। तद्यथा—यत्तदिति हेतौ। आहोस्विद्विकल्पे। सीम सर्वतोभावे। शुकमतिशये। अनुकं वितर्के। शंवद् अन्तःकरणे आभिमुख्ये च। व पादपूरणे इवार्थे च। दिष्ट्येत्यानन्दे। चटु चाटु प्रियवाक्ये। हुमिति भर्त्सने। इवेति सादृश्ये। अद्यत्वे इति इदानीमित्यर्थे इत्यादि॥ अत्र स्वरादिचाद्योराकृतिगणत्वाविशेषेऽपि येषां निपातस्वर इष्टस्ते चादिषु। अन्ये तु स्वरादिषु। स्वरद्वयभाजस्तूभयत्र बोध्याः॥ (६०४) तद्धितश्चासर्वविभक्तिः— सर्वेति। वचनत्रयात्मिकेत्यर्थः॥ नोत्पद्यत इति। किंत्वेकवचनमेवोत्पद्यत इति भावः। तद्धितः किम्, एकः। द्वौ। त्रयः। असर्वेत्यादि किम्, औपगवः॥ ननु पञ्चालाः गोदौ वरणा इत्यादावतिप्रसङ्गः। न च 'लुब्योगाप्रख्यानात् १८२७' इति वदता नैषां तद्धितान्तत्वमङ्गीकृतमिति नातिप्रसङ्ग इति वाच्यम्, एवमपि पचतिकल्पं पचतिरूपमित्यादावतिव्याप्तेर्दुर्वारत्वादित्याशङ्क्याह— परिगणनं कर्तव्यमिति। तसिलादय इति। 'पञ्चम्यास्तसिल् २६५३' इति विहितो यस्तसिल् तदादयो 'याप्ये पाशप् २७०५' इति विहितपाशप्प्रत्ययपर्यन्ता इत्यर्थः॥ शस्प्रभृतय इति। 'बह्वल्पार्थात्–२८४५' इति विहितो यः शस्तदादयः 'समासान्ताः ९८१' इति सूत्रपर्यन्ताः॥ कृत्वोऽर्था इति। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् २८१४' इति विहिताः कृत्वसुजादयस्त्रयः॥ तसिवती इति। न च तसेः परिगणनं व्यर्थं, शस्प्रभृतित्वादेव 'प्रतियोगे पञ्चम्यास्तसिः २८४८' इत्यस्य लाभादिति वाच्यम्, 'तेनैकदिक् २०५७' 'तसिश्च २०५६' इत्येतदर्थं तस्यावश्यकत्वात्। 'तेन तुल्यम्–२४०९' इति वतिः॥ नानाञाविति। 'विनञ्भ्यां नानाञौ न सह २४६९' इति विहितौ॥ पचतिकल्पमिति। अव्ययसंज्ञायां हि सत्यां सुपो लुक् स्यादिति भावः॥ (६०५) कृन्मेजन्तः। अत्र मेजन्त इत्येतच्छ्रुतत्वात् कृत एव विशेषणं न तु कृदन्तस्याश्रुतस्य। अन्यथा प्रतामौ प्रतामः। लवमाचष्टे णौ क्विपि णिलोपे वस्योठि वृद्धौ च लौः। अत्रापि प्रसज्येतेति भावः॥ भवति ह्येतत्प्रत्ययलक्षणेन कृदन्तमेजन्तं च श्रूयते इति तदाह—

---

१ विभक्तीति। तथा च त्रिकाण्डशेषे–'अस्त्याह कालसामान्ये तिङन्तप्रतिरूपकम्। विभाषाऽन्यतरस्यां वा विकल्पार्थाः प्रकीर्तिताः। ते इति स्यात् त्वयेत्यर्थे, मयेत्यर्थे च मे इति॥' केशवीयकल्पतरौ—'द्वितीयादिविभक्त्येकवचनप्रतिरूपकम्। चिराद्यं चिररात्राद्यं चिरार्थप्रतिपादकम्। अङ्गीकारे तु परमं (वरमं) प्रमाणं बाढमेव च। अवश्यम्' इति॥ एवं च 'वेदाः प्रमाणम्' इति वाक्यस्य सरलतयैव साधुत्वे सिद्धे तत्र सामानाधिकरण्योपपत्तये कोलाहलकरणं गदाधरभट्टाचार्याणां स्वामिन् वावदूकत्वप्रदर्शनायैव॥

स्मारंस्मारम् । जीवसे । पिबध्यै ॥ ( ६०६ ) क्त्वातोसुन्कसुनः ।१ । १ । ४० । एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः ॥ (६०७) अव्ययीभावश्च ।१।१।४१। अधिहरि ॥ ( ६०८ ) अव्ययादाप्सुपः । २।४।८२। अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् । तत्र–शालायाम् । विहितं[1]विशेषणान्नेह, अत्युच्चैसौ । ( ६०९ ) अव्ययसंज्ञायां यद्यपि तदन्तविधि[2]रस्ति तथापि न गौणे[3] । ( ६१० ) आब्ग्रहणं व्यर्थमलिङ्गत्वात् ॥

---

**कृद्यो मान्त एजन्त इति ॥ स्मारंस्मारमिति** । स्मरतेः 'आभीक्ष्ण्ये णमुल् च ५१६५' इति णमुल् । वृद्धिः । रपरत्वम् । 'नित्यवीप्सयोः २८८३' इति द्वित्वम् ॥ **जीवसे इति** । 'तुमर्थे सेसेन्–५२७१' इत्यसेप्रत्ययः॥ **पिबध्यै इति** । 'तुमर्थे–५२७१' इत्यनेनैव शध्यैप्रत्ययः । 'पाघ्रा–२१५३' इति पिबादेशः । 'येन विधिस्तदन्तस्य ४७' इत्यनेनैव सिद्धे सूत्रेऽन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम् । तेनेह न, आधये, चिकीर्षवे । 'लक्षणप्रतिपदोक्तसंनिपातपरिभाषाभ्यां सिद्धे तयोरनित्यत्वज्ञापनायेदमिति मनोरमायां स्थितम् । एतच्च 'अव्ययादाप्सुपः ६०८' इत्यत्राव्ययात्परस्य सुपो लुगिति यथाश्रुतव्याख्यानमभिप्रेत्योक्तम् । अव्ययाद्विहितस्येति व्याख्याने त्वाधये इत्यादौ अव्ययसंज्ञायामनिष्टान्तरमूह्यम् ॥ ( ६०६ ) **क्त्वातोसुन्कसुनः ॥ कृत्वेति** । 'समानकर्तृकयोः–५१४१' इत्यादिना क्त्वा ॥ **उदेतोरिति** । उत्पूर्वादिणो 'भावलक्षणे स्थेण्–५२७८' इत्यादिना तोसुन् ॥ **विसृप इति** । 'सृपितृदोः कसुन् ५२७९' ॥ ( ६०७ ) **अव्ययीभावश्च** । अव्ययसंज्ञः स्यात् । इह लुकि मुखस्वरोपचारयोर्निवृत्तौ चेति परिगणनं कर्तव्यम् । लुक्युदाहरणम् । उपाग्नि । 'अव्ययाद्–६०८' इति सुपो लुक् । मुखस्वरनिवृत्तौ उदाहरणम् । उपाग्निमुखः प्रत्यग्निमुखः 'मुखं स्वाङ्गम् ५८७४' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नाव्ययदिक्शब्द–५८७५' इत्यादिना प्रतिषेधः । तथा च 'बहुव्रीहौ प्रकृत्या–५७०१' इति पूर्वशब्दप्रकृतिस्वर एव भवति, पूर्वपदं च समासस्वरेणान्तोदात्तम् । विसर्गस्थानिकस्य सकारस्य उपचार इति प्राचां संज्ञा । तन्निवृत्तावुदाहरणम् । उपपयःकारः । उपपयःकामः । इह 'अतः कृकमि–२४०' इति प्राप्तं सत्वम् 'अनव्ययस्य' इति पर्युदस्यते ॥ परिगणनं किम्, उपाग्न्यधीयान । इह 'सुबामन्त्रिते–५५२३' इति पराङ्गवद्भावेन षाष्ठम् 'आमन्त्रितस्य च ५५२०' इत्याद्युदात्तत्वं यथा स्यात् । पराङ्गवद्भावे हि अव्ययानां प्रतिषेध उपसंख्यातः, उपाग्न्यधीयानेत्यादौ मा भूदिति । तथा उपाग्निकमित्यादौ 'अव्ययसर्वनाम्नाम्–२०४०' इत्यकच्च न । उपकुम्भंमन्यः 'खित्यनव्ययस्य ३९२४' इति वर्तमाने 'अरुर्द्विषदजन्तस्य–३९२२' इति विहितो यो मुम् तस्येह प्रतिषेधो न । उपकुम्भीभूतः । इह 'अस्य च्वौ २८५७' इतीत्वस्य प्रतिषेधो न, इत्वविधौ हि 'अव्ययस्य च्वावीत्वं न २८५८' इति प्रतिषेध उच्यते । दोषाभूतमहः दिवाभूता रात्रिरित्यत्र मा भूदिति । स्यादेतत्, स्वरादित्वेनैव सिद्धत्वात् 'तद्धितश्च–६०४–६०७' इत्यादिचतुःसूत्री व्यर्था । तत्र हि 'तसिलादिस्तद्धित एधाच्पर्यन्तः' इत्यादिना 'च्व्यर्थाश्च' इत्यन्तेनाऽसिप्रत्ययमौणादिकं वर्जयित्वा 'तद्धितश्चासर्वविभक्तिः ६०४' इत्यस्यार्थः संगृह्यते । 'कृन्मकारसंध्यक्षरान्तः' इत्यनेन 'कृन्मेजन्तः ६०५' इत्यस्यार्थः संगृह्यते । 'क्त्वातोसुन्कसुनः ६०६' 'अव्ययीभावश्च६०७' इति सूत्रद्वयं तु स्वरूपेणैव पठ्यत इति । अत्राहुः–पुनर्वचनमनित्यत्वज्ञापनार्थं तेन प्रागुक्तं 'लुङ्मुखस्वरोपचाराः' इति परिगणनं लभ्यते । पुरा सूर्यस्योदेतोराधेयः । पुरा क्रूरस्य विसृपो विरप्शिन्नित्यादिसिद्धये, 'न लोकाव्यय–९१५' इत्यत्र 'अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः' इति वक्ष्यते तदप्यनेनैव लभ्यत इति॥ (६०८) **अव्ययादाप्सुपः**। 'ण्यक्षत्रियार्ष–१८०६' इति सूत्राल्लुगत्रानुवर्तत इत्याह–**लुक् स्यादिति**। अव्ययमिति महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम् । न व्येति विविधं विकारं न गच्छति । सत्त्वधर्मान् लिङ्गसंख्यादींश्च गृह्णातीति यावत् । तेनात्युच्चैसौ अत्युच्चैसः इत्यादिसिद्धिः । अतिक्रान्तप्रधानत्वेन सत्त्वधर्मपरिग्रहादव्ययसंज्ञाया अत्राभावात् । नन्वेमप्युच्चैःशब्दस्याव्ययत्वानपायात् सुपो लुक् दुर्वार इत्यत आह—**विहितविशेषणादिति ॥ अत्युच्चैसाविति** । ननु अत्यादयः क्रान्ताद्यर्थे द्वितीयान्तेन समस्यन्ते, उच्चैःशब्दस्त्वधिकरणशक्तिप्रधान इति कर्मत्वायोगान्न तस्य द्वितीयान्तता । सत्यम्, शक्तिप्रधानान्यपि कानिचिदव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि क्वचिद् भवन्ति । यथा दोषामन्यमहः । दिवामन्या रात्रिरिति । ततश्च प्रक्रियादशायामुच्चैःशब्दस्य द्वितीयान्तत्वं संभवतीति दिक् ॥ ( ६०९ ) ननु स्वरादिषु उच्चैःशब्दः पठ्यते तत्र कथं तदन्तस्य प्रसङ्ग इति चेन्न, अन्वर्थसंज्ञयैव तदन्तविधेरपि ज्ञापनात् । अन्यथा उपसर्जने प्रसङ्गाभावेन तन्निवृत्त्यर्थाया अन्वर्थसंज्ञाया वैयर्थ्यापत्तेः । तेन परमस्वः परमोच्चैरित्यादौ सत्त्वधर्मापरिग्रहादव्ययत्वं सिद्धम्, तदेतदाह–**अव्ययसंज्ञायां यद्यपीत्यादि**॥

---

१ **विहितेति** । आप्सुब्भ्यामाक्षिप्ताङ्गस्याऽव्ययरूपस्यैव ग्रहणेनाङ्गसंज्ञायां विहितत्वांशप्रवेशेन विहितप्रत्ययनिरूपिताङ्गविशेषणादित्यर्थः॥२ **तदन्तविधिरिति** । शब्दस्य विशेष्यत्वात् 'प्रयोजनं सर्वनामाऽव्ययसंज्ञायाम्' इति वाचनिकस्तदन्तविधिरिति भावः॥३ **न गौण इति** । अव्ययमिति महासंज्ञाकरणाल्लिङ्गाद्यनन्वय्यर्थानामेव गणेऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति भावः । वस्तुतोऽत्रार्थस्य प्रधानाऽप्रधानन्यायेन सर्वनामसंज्ञासाहचर्याच्च प्रसिद्धाऽन्तरङ्गपदान्तरानपेक्षाऽनुपसर्जनीभूतस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन न समुदायस्य नाप्यवयवस्य संज्ञा । अत एव भाष्ये सर्वनामसंज्ञासूत्रस्थोपसर्जनप्रतिषेधाऽनुवृत्त्याऽत्युच्चैसावित्यादावव्ययत्वाभावमुपपाद्य तन्मत्याख्यानरीत्यैवात्राप्येतन्मत्याख्यातम् । एवं च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एवेति शेखरे ॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥
इति श्रुतिर्लिङ्गकारकसंख्याऽभावपरा ॥

( ६११ ) वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥
वगाहः । अवगाहः । पिधानम् । अपिधानम् ॥ इत्यव्ययानि ॥

## अथ स्त्रीप्रत्ययप्रकरणम् ।

(६१२) स्त्रियाम् ।४।१।३। अधिकारोऽयम् । समर्थानामिति यावत् ॥ (६१३) अजाद्यतष्टाप् ।४।१।४। अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजाद्युक्तिर्ङीषो ङीपश्च बाधनाय । अजा । अतः । खट्वा । (६१४) अजादिभिः

---

(६१०) 'अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात्' इति वार्तिकं मनसि निधायाह—**आब्ग्रहणं व्यर्थमिति**। सूत्रस्योक्तिसंभवस्तु 'स्त्रियाम् ६१२' इति सूत्रे स्त्रीसमानाधिकरणादिति पक्षं गृहीत्वेति बोध्यः । स च न स्थितः, भूतमियं ब्राह्मणीत्यादावतिव्याप्तेः ॥ यदि तु 'आमः २९९७' इति सूत्रानन्तरं 'सुपो धातुप्रातिपदिकयोः ९५०' 'अव्ययात् ६०८' इति सूत्र्यते तदा सुब्ग्रहणमपि व्यर्थं, सुप इत्यनुवृत्तिसंभवादिति नव्याः ॥ अलिङ्गत्वे आथर्वणप्रणवविद्यागतश्रुतिविरोधमाशङ्क्याह—**सदृशमिति** । एतेषु यन्न व्येति किन्तु सदृशम् एकप्रकारं तदव्ययमिति योजना । यद्वा—यस्मान्न व्येति तदव्ययम् ॥ **लिङ्गकारकेति** । विभक्तिवचनशब्दौ कारकसंख्यापराविति भावः ॥ यद्यप्यव्ययीभावस्य लिङ्गसंख्याकारकयोगोऽस्ति तथापि वचनादव्ययत्वम् ॥ ( ६११ ) अव्ययविशेषे कार्यान्तरमाह—**वष्टीति** । भागुरिराचार्यः ॥ **आपं चैवेति** । वष्टीत्यनुषज्यते ॥ **यथा वाचेति** । परिगणनमिदमित्येके । अन्ये तूदाहरणमात्रमित्याहुः ॥ **वगाह इति** । अपिना साहचर्यादादेरेवाकारो लुप्यते नान्त्य इति भावः ॥ इत्यव्ययानि ॥

---

( ६१३ ) **अजाद्यतः**—। अजशब्दः आदिर्यस्येति बहुव्रीहिः । अच् आदिर्यस्येति तु नार्थः, '-क्राचि ६२५' इति निर्देशात्, गणपाठसामर्थ्याच्च । अदिति न स्वरूपग्रहणम्, 'संख्याया-२६९९' इति लिङ्गात्, अजादिभ्यः पृथक्पाठसामर्थ्याच्च॥ इह 'ङ्याप्प्रातिपदिकात् १६६' इत्यधिकारेऽपि ङ्यापौ न संबध्येते, इहैव तयोर्विधेयत्वात्, अपि तु प्रातिपदिकमेव । तच्चाकारेण विशिष्यते, विशेषणेन च तदन्तत्वलाभः, तदाह—**अजादीनामकारान्तस्य चेति** । सूत्रे 'अतः' इति षष्ठी तदर्थश्च वाच्यवाचकभावः ॥ स्त्रियामिति तु धर्मप्रधानो निर्देश इत्याशयेनाह—**वाच्यं यत्स्त्रीत्वमिति** । एतच्च लिङ्गं प्रातिपदिकार्थ इति पक्षाभिप्रायेणोक्तम् । कस्माद्भवतीत्याकाङ्क्षायां सन्निधानादजादिभ्योऽकारान्ताच्चेति बोध्यम् । 'इको यणचि ७४' इत्यत्र कस्मादचि पर इत्याकाङ्क्षायामिक इति यथा । टापः पकारः स्वरार्थः 'औङ आपः ४०३', 'याडापः ४०६' 'आङि चापः ४०५' इत्यादौ सामान्यग्रहणार्थश्च । तद्विधानार्थष्टकारः । आबित्युक्ते हि तदनुबन्धपरिभाषया 'औङ आपः ४०३' इत्यादावयमेव गृह्येत डाप्चापोस्तु ग्रहणं न स्यात् ॥ नन्वत इत्येव सिद्धे अजादिग्रहणं व्यर्थम् । न च क्रुञ्चा

---

१ **लिङ्गेत्यादि** । अयं भावः—यथोपक्रमोपसंहाराभ्यां ब्रह्मपराया अपि श्रुतेर्भाष्यप्रामाण्यादत्रोपसंहारः । तथा च तत्प्रामाण्यादेव लिङ्गाद्यभावपरताऽपीति विभक्तिवचनशब्दौ कारकसंख्यापरौ प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः । लिङ्गाद्यभावेन सादृश्यमव्ययीभावातिरिक्तविषयम् । तस्य लिङ्गकारकयोगसत्त्वात् । संख्याभावस्तु सर्वसाधारणः ॥ २ '**तत्रभवन्तः शिष्टाः शब्देषु प्रमाणम्**' इति पृषोदरादिसूत्रे भाष्यकृतां सिद्धान्तेन वगाह—वाग—वापिष—वोज्झप्रभृतिशब्दानां पृषोदरादित्वमेव कल्पनीयम् । टाप् प्रकृतिहलन्तानाम् अजादिगणे पाठः कल्पनीयः ॥ '**यस्तर्हि अनकारान्ताद् ( आप् ) क्रुञ्चा देवविशा**' इति 'ङ्याप्प्रातिपदिकात्' इति सूत्रे भाष्यसंवादेन तथा कल्पनस्यात्यावश्यकत्वात् '**अनाप्यकारान्ताद्**—'इत्याद्यग्रिमभाष्यं तु, '**यत्रैकादेशो न क्रुञ्चा उष्णिहा देवविशा**' इति अन्तादिवत्सूत्रभाष्यविरोधादेकदेशिनः प्रौढिवादेनेति सर्वं समञ्जसमेव ॥ ३ **द्योत्ये इति** । एवं च न लिङ्गस्य शाब्दबोधे प्राधान्यापत्तिः, ब्रूत इत्युपादानेन प्रत्ययार्थप्राधान्यव्युत्पत्तेर्वाच्यविषयतया द्योत्यविषयेऽप्रवृत्तेरिति भावः ॥ ४ **अजादिभिरिति** । अयं भावः—'अजाद्यतः' इत्यस्य पञ्चम्यन्तत्वे अमहत्पूर्वग्रहणेन तदन्तविधिज्ञापने अनुपसर्जनाधिकारेण तदन्तग्रहणस्यैव स्त्रियामित्यस्यापि 'श्रुतानुमितयोः श्रुतसंबन्धो बलीयान्' इति परिभाषाबाधपूर्वकतदन्तविशेषणत्वज्ञापने च 'अजाद्यन्तगतस्त्रीत्वेऽजाद्यन्ताट्टाप्' इत्यर्थाङ्गीकारेण पञ्चाजगत स्त्रीत्वे पञ्चाजशब्दाट्टाबापत्तिवारणायैवात्र 'अजाद्यतः' इति षष्ठ्यङ्गीकृता । तथा च षष्ठ्यन्तत्वाङ्गीकारसामर्थ्येन स्त्रियामित्यस्य गृह्यमाणविशेषणत्वमेवाङ्गीक्रियत इति पञ्चाजगतस्त्रीत्वस्य प्रकृते सत्त्वेऽपि गृह्यमाणाजगतस्त्रीत्वस्याभावान्न टाबापत्तिरिति ॥ ५ **प्रातिपदिकार्थ इति** । न तु प्रत्ययार्थः । 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इति व्युत्पत्तेर्लिङ्गस्य शाब्दबोधे प्राधान्यापत्तेः । वागादिशब्देभ्यो विनापि प्रत्ययं लिङ्गबोधाच्च लिङ्गानुशासनस्य प्रकृतावेव दर्शनाच्च । अत एव 'स्वमोर्नपुंसकात्' 'ह्रस्वो नपुंसके' 'नपुंसकस्य झलचः' इत्यादिसूत्राणि संगच्छन्ते । 'तस्माच्छसः-' इत्यत्र पुंसीत्यस्य पुँल्लिङ्गशब्दस्य प्रकृतित्व इत्येवार्थः । प्रातिपदिकार्थसूत्रे लिङ्गेत्यस्यापि तत्र वर्तमानादित्यर्थः । प्रथमाया लिङ्गार्थकताया अभ्युपगमे तु घटेनेत्यादौ लिङ्गप्रतीत्यनुपपत्तिरिति भावः ॥

---

१ विशेषलिङ्गाभावेन लिङ्गसामान्यस्य प्रातिपदिकमात्रनियतत्वेन नपुंसकलिङ्गस्य लिङ्गविशेषाभावपर्यायत्वेन संख्याविशेषाभावनिमित्तकौत्सर्गिकैकवचनस्य संख्याभावपर्यायत्वे कारकविशेषाभावसमानियतप्रातिपदिकार्थमात्रविवक्षायां प्रथमायाः अन्वयमात्रतोऽङ्गीकारस्यावश्यकत्वमिति बोध्यम् ॥

स्त्रीत्वस्य विशेषणान्नेह । पञ्चाजी । अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् । अजा । एडका । अश्वा । चटका । मूषिका । एषु जातिलक्षणो (५४३) ङीष् प्राप्तः । बाला । वत्सा । होडा । मन्दा । विलाता । एषु वयसि प्रथमे (६६५) इति ङीप् प्राप्तः ॥ (६१५) सू० संभस्त्राजिनशणपिण्डेभ्यः फलात् ॥ संफला । भस्त्रफला । ङ्यापोरिति (१४३७) ह्रस्वः ॥ (६१६) सू० सदच्-काण्डप्रान्तशतैकेभ्यः पुष्पात् ॥ सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा ॥ (६१७) सू० शूद्रा चामहत्पूर्वा जातिः ॥ पुंयोगे तु

---

उष्णिहा देवविशा इत्यादिषु हलन्तत्वादप्राप्ते विध्यर्थं तदिति वाच्यम्, तथा सति क्रुञ्चेत्यादिरेव गृह्येत, न त्वजादिरतो व्याचष्टे—**अजाद्युक्तिर्ङीषो ङीपश्चेति** ॥ **खट्वेति** । 'खट काङ्क्षायाम्' 'अशूप्रुषिलटिखटिकणिविशिभ्यः क्वन् ४३५१' ॥ नन्वचेतनानां खट्वादिशब्दानां कथं लिङ्गव्यवस्थेति चेत् । उच्यते–लोकप्रसिद्धं स्तनाद्यवयव-संस्थानविशेषात्मकं लिङ्गं न व्याकरणे आश्रीयते, दारानित्यादौ नत्वाभावप्रसङ्गात्, तटस्तटी तटमित्यादौ यथायथं लिङ्गत्रितयनिबन्धनकार्याणामसिद्धिप्रसङ्गाच्च, किन्तु पारिभाषिकमेव लिङ्गत्रयम् । तच्च केवलान्वयि । अयमर्थ इयं व्यक्तिरिदं वस्त्विति शब्दानां सर्वत्राप्रतिबद्धप्रसरत्वात् । तत्र कश्चिच्छब्द एकस्मिँल्लिङ्गे शक्तः कश्चिद् द्वयोः कश्चित् त्रिषु इति लिङ्गानुशासनादिभ्यो निर्णेयम् । कुमारब्राह्मणादिशब्दास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः । लौकिकस्त्रीत्वविशिष्टे च शास्त्रीयस्त्रीत्वे । कथमन्यथा कुमारी कुमार इत्यादयः प्रयोगा व्यवतिष्ठेरन् । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरस्याप्ययमेवार्थः । नन्वेवं पशुनेति पुंस्त्वं विवक्षितमिति मीमांसकोद्घोषः कथं योज्यः । पारिभाषिकस्याव्यावर्तकतया तद्विवक्षाया अकिंचित्क-रत्वात् । लौकिकस्य तु लिङ्गस्य पशुशब्दादप्रतीतेरिति चेत् । अत्राहुः–'छागो वा मन्त्रवर्णात्' इति षष्ठान्त्याधिकरणन्या-येन पुंस्त्वस्य नियमो बोध्यश्छागशब्दस्य लौकिकपुंस्त्वविशिष्टपारिभाषिके शक्तत्वादिति । तच्च जातित्रयमित्येके । उक्तं च हरिणा—"तिस्रो जातय एवैताः केषांचित्समवस्थिताः । अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिः" । भाष्ये तु प्रकारान्तरमुक्तम् ,—"संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः । संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान् ॥ उभयोरन्तरं यच्च तदभावे नपुंसकम्" इति । अस्यायमर्थः–संस्त्यानं स्त्री सत्त्वरजस्तमोलक्षणानां गुणानामपचयः । प्रसवो गुणानामुपचयः । सप् पुमान् । सूतेर्धातोः सप् सकारस्य पकारादेश इत्यर्थः । औणादिकोमुसुन्प्रत्ययो ह्रस्वश्च बाहुलका-दिति कैयटः । 'पूञो डुमुसुन्' इति माधवः । तयोरुपचयापचययोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकं 'नभ्रा-ण्नपात्–१०९५' इति निपातनादिति भावः ॥ तथाऽवस्थितिसाम्यं नपुंसकम् । अत एवाविर्भावतिरोभावयोरपि स्थि-तिसामान्यविवक्षासंभवान्नपुंसकं लिङ्गसर्वनामेति सिद्धान्तः । स्त्री पुमान्नपुंसकमिति शब्दाश्च शुक्लादिशब्दवद्धर्मे धर्मिणि च वर्तन्ते । स्वकृतान्तत इति–वैयाकरणसिद्धान्तत इत्यर्थः । 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः ॥ **पञ्चाजीति** । पञ्चानामजानां समाहार इति 'तद्धितार्थ–१०५२' इत्यादिना द्विगुः । 'अकारान्तोत्तरपदः–११७६' इति स्त्रीत्वे 'द्विगोः ६६८' इति ङीप् । न चात्र प्रत्ययविधौ तदन्तविधिविरहादेव टापोऽप्रवृत्तौ ङीबेव स्यादिति वाच्यम् , अमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च स्त्रीप्रत्य-येषु तदन्तविधिज्ञापनाट्टाप्प्राप्तेः सत्त्वात् ॥ **समासार्थसमाहारनिष्ठमिति** । नन्वजहत्स्वार्थायां वृत्तौ समाहारोऽप्य-जाद्यर्थ एवेति चेत् मैवम् , तथापि तस्य पदान्तरसमभिव्याहारापेक्षया बहिरङ्गत्वात्, टाब्विधेस्त्वन्तरङ्गे चरितार्थत्वात् । कथं तर्हि परमाजेति चेत् , प्रागुत्पन्नस्यैव टापस्तत्र श्रवणात् । अत्यजा निरजेत्यत्र त्वदन्तत्वप्रयुक्तष्टाबित्यवेहि । न च पञ्चाजी-त्यत्रापि तथाऽस्त्विति वाच्यम् , 'द्विगोः ६६८' इति ङीपा बाधितत्वात् ॥ **चटकेति** । न चात्र 'प्रत्ययस्थात्–६३०' इती-कारः शङ्क्यः, 'चटकाया ऐरक् १६१२' इति लिङ्गादिहैव निपातनाद्वा तदप्रवृत्तेः । एवं च क्षिपकादिषु चटकेति पठनं नाती-वावश्यकमिति नव्याः ॥ **मूषिकेति** । 'वृश्चिकृषोः किकन् ४४०१' इत्यधिकारे 'मुषेर्दीर्घश्च ४४०३' इति किकनि इकारमध्यो मूषिकाशब्दः । यस्तु 'मूष स्तेये' इति दीर्घोपधात्संज्ञायां क्वुनि मूषकशब्दो माधवेनोक्तस्ततोऽप्ययं टाप् । प्रत्ययस्थादितीत्वं (६३०) तु विशेषः ॥ केचित्तु–क्वुन्नन्तोऽसावजादिगणे पाठं न प्रयुङ्क्ते, गणे तत्पाठस्य जातिलक्षणङीष्बाधनार्थत्वात्संज्ञाया अजाति-त्वात् । तथा चादन्तत्वादेव क्वुन्नन्ताट्टाप् सिध्यतीत्याहुः । तच्चिन्त्यम् , व्याघ्रीत्यादिवत्संज्ञात्वेऽपि जातित्वानपायात्[1] ॥ (६१५) **भस्त्रफलेति** । भस्त्रेव फलानि यस्या इति विग्रहः ॥ **ङ्यापोरिति** । एतच्च 'फल निष्पत्तौ' इति धातौ माधवग्रन्थे स्थितम् । 'पाककर्ण–' इत्यत्र भाष्ये तु दीर्घ एव दृश्यते ॥ ( ६१६ ) **सदच्काण्डेति** । सत्प्राक्काण्डेति पाठो नादर्तव्य इति ध्वनयन्नुदाहरति—**प्रत्यक्पुष्पेति** । अत्र नव्याः–'सम्भस्त्रा–६१५–६१६' इत्यादि वचनद्वयं 'मूलान्नञः ६१८' इति वक्ष्य-माणं च 'पाककर्ण–७४८' इत्यनेन प्राप्तस्य ङीषो निषेधार्थं तत्रैव सूत्रे भाष्ये पठितमपि फले विशेषाभावादिहैव ग्रन्थकारैः पठि-तम् । न चैतावताऽजाद्यन्तर्गणसूत्राणीति भ्रमः कार्यः । तथात्वे मानाभावात् । किन्तु वार्तिकान्येवेमानीत्याहुः ॥ (६१७) **शूद्रा चेति** । शूद्रशब्दष्टापमुत्पादयति जातिश्चेत् , महत्पूर्वस्तु न जातिश्चेदितीहापि संबध्यते । तेन महती शूद्रा महाशूद्रेति भवत्येव ॥ **पुंयोगे त्विति** । पुंयोगश्च दाम्पत्यरूप एवेति न नियमः, किन्तु जन्यजनकभावोऽपि गृह्यते । तथा च स्मृतिः–'वैश्या-

---

१ **जातित्वानपायादिति** । क्वुनादिविधौ संज्ञापदेन रूढिरेव गृह्यते, न तु शब्दप्रवृत्तिनिमित्तं संज्ञात्वम् । अत एव 'घ्रः संज्ञायाम्' इत्यादिना व्याघ्रादिसिद्धिरिति भावः ॥

शूद्री। अमहत्पूर्वा किम्। महाशूद्री। क्रुञ्चा। उष्णिहा। देवविशा। ज्येष्ठा। कनिष्ठा। मध्यमेति पुंयोगेऽपि। कोकिला जातावपि॥(६१८) वा० मूलान्नञः॥ अमूला। ऋन्नेभ्यो ङीप्। कर्त्री। दण्डिनी॥(६१९) सू० उगितश्च[1]॥४।१।६॥ उगिदन्तात्प्रातिपदिकात् स्त्रियां ङीप् स्यात्। भवती पचन्ती। दीव्यन्ती। शप्श्यनोरिति नित्यो[2] नुम्॥ उगिदचामिति सूत्रेऽञ्ज्ग्रहणेन धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यते। तेनेह न, उखास्रत्। क्विप्। अनिदितामिति नलोपः। पर्णध्वत्॥ अञ्चतेस्तु स्यादेव। प्राची। प्रतीची॥(६२०) सू० वनो र च[3]॥४।१।७॥ वन्नन्तात्तदन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् स्याद् रश्चान्तादेशः। वन्निति क्वनिप्क्वनिब्वनिपां सामान्यग्रहणम्[4]॥(६२१) प० प्रत्ययग्रहणे यस्मात्स विहितस्तदादे-

---

शूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ' इति॥ **महाशूद्रीति**। 'आभीरी तु महाशूद्री जातिपुंयोगयोः समा' इत्यमरः। इह 'अमहत्पूर्वा' इति व्यर्थम्, महाशूद्रशब्दो हि समुदित एवाभीरत्वजातौ वर्तते। तत्रावयवस्यानर्थकतया[5] शूद्रशब्दार्थसमवेतस्त्रीत्वाभावेन टापः प्रसक्त्यभावात्। न च तदन्तविधिज्ञापनाय तदिति वाच्यम्, अनुपसर्जनाधिकारेणैव तदन्तविधिज्ञापनादिति दिक्॥ अत्र नव्याः—'शूद्रा च-६१७' इत्यादिवचनम् 'अजाद्यतः-६१३' इति सूत्रस्थं वार्तिकमेव न त्विदं गणसूत्रमित्याहुः॥ **क्रुञ्चेत्यादि**। त्रयोऽमी हलन्ता इत्येके। भाष्ये तु 'क्रुञ्चानालभेत' 'उष्णिहककुभौ' इत्यादिप्रयोगमुदाहृत्याऽदन्ता अपि स्वीकृताः, पचाद्यचा इगुपधलक्षणेन कप्रत्ययेन च यथासंभवमदन्तत्वात्॥ **पुंयोगेऽपीति**। यदा ज्येष्ठादयः प्रथमजातादौ वर्तन्ते तदाऽदन्तत्वादेव टाप् सिद्धः। यदा तु ज्येष्ठस्य स्त्रीत्वादिविवक्षा तदा पुंयोगलक्षणो ङीष् प्राप्तः सोऽप्यनेन बाध्यत इति सूचयितुमपिशब्दः॥ (६१८) **मूलान्नञः**। नञः किम्, शतमूली॥ **अमूलेति**। ओषधिजातिरियम्॥ (६१९) **उगितश्च**। उगिच्छब्देन प्रातिपदिकं विशेष्यते, विशेषणेन तदन्तविधिः। न च प्रत्ययविधौ प्रतिषेधः शङ्क्यः, अनुपसर्जनादित्यनेन स्त्रीप्रत्ययेषु तदन्तविधिरस्तीति ज्ञापनात्, 'उगिद्वर्णग्रहणवर्जम् ४९' इति 'येन विधिः-४७' इति सूत्र एवोक्तत्वाच्चेत्याशयेनाह—**उगिदन्तादिति**। तत्रोगित्प्रातिपदिकं प्रत्ययश्चेति द्विविधं संभवति। आद्ये उगिदन्ते—भवन्तं महान्तं चातिक्रान्ता अतिभवती अतिमहतीत्युदाहरणम्। सर्वादिगणे 'भवतु' इति पाठाद्भवच्छब्दस्योगित्त्वव्यपदेशः महच्छब्दस्य तु शतृवद्भावात्। न चैवं 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधात्केवलाभ्यां भवन्महच्छब्दाभ्यां ङीब् न स्यादिति वाच्यम्, प्रातिपदिकाप्रातिपदिकसाधारणेन शब्दमात्रमुगित्पदाभिधेयमित्युक्तनिषेधाप्रवृत्तेरित्याशयेनोदाहरति—**भवतीति**। द्वितीयमुगिदन्तमुदाहरति—**पचन्तीति**। पचेर्लटः शतरि 'कर्तरि शप् २९२१'। यदि तु सर्वादिगणे भवतु इति उगित्पठितः सः 'भातेर्डवतुः ४२६२' इति व्युत्पाद्यते, तदा भवतीति द्वितीयोगिदन्तस्याप्युदाहरणं भवत्येव। शत्रन्तात्तु भवतेर्ङीपि 'शप्श्यनोः-६००' इति नित्यो नुम्। भवन्ती॥ **उखास्रदित्यादि**। उखायाः स्रंसते पर्णेभ्यो ध्वंसते। 'स्रंसु ध्वंसु अवस्रंसने' 'वसुस्रंसु-४५८' इति दत्वम्॥ (६२०) **वनो र च**। वन्निति प्रत्ययेन तदन्तं प्रातिपदिकं गृह्यते। वन्नन्तेन त्वधिकृतप्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**वन्नन्तात्तदन्ताच्चेति**। 'येन विधिस्तदन्तस्य ४७' इत्यत्र 'स्वं रूपम्-४६' इति सूत्रात्स्वमित्यनुवर्त्य स्वस्य चेति व्याख्यानादुभयं लभ्यत इति भावः। यदि तु वन्नन्तमेव व्यपदेशिवद्भावेन वन्नन्तान्तमित्युच्यते, तर्हि 'येन विधिः-४७' इत्यत्र स्वमित्यनुवर्त्य स्वस्य चेति न व्याख्येयम्। न चात्र 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधः[6] शङ्क्यः, तस्य प्रातिपदिकमात्रविधिविषयत्वात्, वन्नन्तस्य वस्तुतः प्रातिपदिकत्वेऽपि सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वाभावाच्चेत्याहुः[7]॥ **सामान्यग्रहणमिति**। सूत्रे वन इत्यनुबन्धरहितस्य ग्रहणात्तदनुबन्धपरिभाषा नोपतिष्ठत इति भावः॥ (६२१) वन्ग्रहणे वन्नन्तं वन्नन्तान्तं च कथं लभ्यत इत्याशङ्कायामाह—**प्रत्ययग्रहणे इत्यादि**॥

---

१ **उगितश्च**। भवतु इत्यादेरुगितः प्रातिपदिकस्यापि सत्त्वात् प्रत्ययमात्रग्रहणाभावेन 'प्रत्ययग्रहणे-' इति परिभाषाया अप्रवृत्त्या निर्गोमतीत्यादौ न ङीबनुपपत्तिः॥ २ **नित्य इति**। प्रायिक इत्यर्थः। न सार्वदिकः सार्वत्रिकश्चेति कुत्राचित्तदभावोऽपीति भावः। अत एव '**अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुंकरोति**' इति स्वोपज्ञे पातालविजयापरनाम्नि जाम्बवतीविजयकाव्ये नुमोऽभावं कृतवान् भगवान्पाणिनिः॥ अस्य प्रयोगस्यासाधुत्वं लिखन् रुद्रटालंकारव्याख्याता नमिसाधुस्तूक्तरीतिज्ञानाभावाद् व्याकरणमर्मानभिज्ञ एवेति बोध्यम्॥ तुदती तुदन्ती, भाती भान्ती, 'आच्छीनद्योः' इति नुम्विकल्पः॥ ३ **वनो र चेति**। इदं सूत्रं न ङीब्विधायकम्, किंतु 'ऋन्नेभ्यः-' इति सूत्रविहितङीबनुवादेन तत्संनियोगशिष्टरभावमात्रविधायकम्, उभयविधौ गौरवादिति बोध्यम्॥ ४ **सामान्येति**। निरनुबन्धकस्य वनोऽभावात्सानुबन्धकनिर्देशाभावेन तदनुबन्धकपरिभाषाया अप्यप्रवृत्तेश्चेति भावः॥ ५ **अनर्थकतयेति**। ब्राह्मणादुग्रकन्यायामाभीरः। नृपाच्छूद्रायामुत्पन्नोग्रजातिकन्या। अत्रानुलोमसंकराणां मातृजातिवृत्तित्वात्तत्र तां जातिमारोप्य शूद्रशब्दप्रयोग इत्ययं शूद्रशब्दोऽर्थवानेवेति शूद्रशब्दार्थसमवेतस्त्रीत्वमप्यत्रास्तीति तदर्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप् स्यान्न तदन्तात् 'ग्रहणवता-' इति निषेधादिति तदन्तविधिज्ञापकता भाष्योक्ता नासंगतेति बोध्यम्॥ ६ **निषेधेति**। 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधस्तु सूत्रोपात्तान्तादिशब्दविषयः एवेत्यपि बोध्यम्॥ ७ **आहुरिति**। सूत्रोपात्तान्तादिविषयकत्वनिर्णयेनैव दोषोद्धारोऽत्राऽरुचिः॥

स्तदन्तस्य ग्रहणम् ॥ तेन प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते । सुत्वानमतिक्रान्ता अतिसुत्वरी । अतिधीवरी । शर्वरी ॥ ( ६२२ ) वनो न हश इति वक्तव्यम् ॥ हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकान्ङीप् रश्च नेत्यर्थः । ओणृ अपनयने । वनिप् । विड्वनोरित्यात्वम् । अवावा ब्राह्मणी । राजयुध्वा ॥ (६२३) बहुव्रीहौ वा ॥ बहुधीवरी । बहुधीवा । पक्षे डाब्वक्ष्यते ॥ ( ६२४ ) पादोऽन्यतरस्याम् । ४ । १ । ८ । पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकान्ङीब्वा स्यात् । द्विपदी । द्विपात् ॥ ( ६२५ ) टाबृचि । ४ । १ । ९ । ऋचि वाच्यायां पादन्ताट्टाप् स्यात् । द्विपदा ऋक् । एकपदा ॥ न षट्स्वस्रादिभ्यः । पञ्च । चतस्रः । पञ्चेत्यत्र नलोपे कृतेऽपि ष्णान्ता षडिति षट्संज्ञां प्रति नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वान्न षट्स्वस्रादिभ्य इति न टाप् ॥ ( ६२६ ) मनः । ४ । १ । ११ । मन्नन्तान्न ङीप् । सीमा । सीमानौ ॥ ( ६२७ ) अनो बहुव्रीहेः । ४ । १ । १२ ।

तेनेति । वन्नन्तेनेत्यर्थः ॥ तदन्तान्तमपि लभ्यत इति । 'स्त्रियाम् ६१२' इत्यधिकारे 'ग्रहणवता प्रातिपदिकेन–' इति निषेधो न प्रवर्तते, 'असहत्पूर्वा' इत्यादिज्ञापकादिति भावः । अन्ये त्वाहुः–वन्नन्तस्य वस्तुतः प्रातिपदिकत्वेऽपि सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वं नास्तीत्युक्तत्वात् 'ग्रहणवता–' इति निषेधशङ्कैव नास्तीति ॥ सुत्वानमिति । 'सुयजोर्ङ्वनिप् ४१०९' । 'अत्यादयः क्रान्ताद्यर्थे–११२०' इति समासः ॥ अतिधीवरीति । दधातेः 'अन्येभ्योऽपि दृश्यते ३९८०' इति क्वनिप् । 'घुमास्था–३२७४' इतीत्वम् ॥ भाष्ये तु–ध्यायतेः क्वनिपि संप्रसारणमिति स्थितम् । नस्य रेफादेशे कृतेऽप्येकदेशविकृतस्यानन्यत्वात् 'अल्लोपोऽनः ३३५' इति प्राप्नोत्यनो नकारान्तविशेषणात्तु न भवतीति 'श्वयुवमघोनाम्–४९२' इत्यत्रैव व्युत्पादितम् ॥ शर्वरीति । शृधातोः 'अन्येभ्योऽपि–३९८०' इत्यनेनैव वनिप् गुणे कृते रपरत्वे च हशन्तात्परत्वेऽपि हशन्ताद्विहितत्वाभावान्ङीब्रयोरत्र निषेधो न ॥ ( ६२२ ) वनो न हश इति । अबहुव्रीह्यर्थोऽयमारम्भः । बहुयज्वेत्यादौ तु 'अनो बहुव्रीहेः ६२७' इति ङीपो निषेधे रेफस्याप्यप्रवृत्तेः ॥ राजयुध्वेति । राजानं योधितवती 'राजनि युधिकृञः ४००२' इति क्वनिप् ॥ ( ६२३ ) बहुव्रीहौ वेति । 'अन्यतरस्याम्' इति योगविभागादिदं लभ्यते, न त्वपूर्वं वचनमिति वक्ष्यते ॥ बहुधीवरीति । बहवो धीवानो यस्यां नगर्यामिति विग्रहः ॥ पक्षे डाबिति । 'डाबुभाभ्याम्–६२८' इति सूत्रेण । तथा च द्विवचने बहुधीवर्यौ बहुधीवानौ बहुधीवे इति रूपत्रयं भवतीति भावः ॥ ( ६२४ ) द्विपादिति । द्वौ पादौ यस्या इति बहुव्रीहौ 'संख्यासुपूर्वस्य १२६१' इति पादशब्दस्यान्तलोपः, ङीपि भत्वात् 'पादः पत् ५५६' ॥ ( ६२५ ) टाबृचि । पूर्वेण प्राप्तस्य ङीपोऽपवादः । यद्यपि 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति कोशात् पादसमानार्थकः पदशब्दोऽस्तीति तेनैव द्विपदा एकपदेति रूपं सिध्यति, तथापि ऋचि वाच्यायां द्विपदी द्विपादिति प्रयोगनिवृत्तये सूत्रारम्भोऽयमावश्यकः ॥ असिद्धत्वादिति । एतच्चासिद्धत्वोपवर्णनं कार्यकालपक्ष एवोपयुज्यते, न तु यथोद्देशपक्षे, सकृत्कृतायाः संज्ञायाः सर्वार्थत्वेन तस्याः पुनरपेक्षाभावात् । न च पञ्चनिति नान्तस्य कृतायामपि संज्ञायां पञ्चेत्यदन्तस्य न कृतेति शङ्क्यम्, एकदेशविकृतस्यानन्यत्वादित्याहुः । तदसत्, एकदेशविकृतस्योपसंख्यानं हि 'स्थानिवदादेशोऽनल्विधौ' इत्यत्र पठ्यते, तच्चाल्विधौ न प्रवर्तत एवेति यथोद्देशपक्षेऽप्यसिद्धत्ववर्णनस्य युक्तत्वात् ॥ ( ६२६ ) न ङीबिति । पूर्वसूत्रान्नेत्यनुवर्तत इति भावः ॥ ( ६२७ ) अनो बहुव्रीहेः । ननु राजयुध्वेत्यादिसिद्धये अवश्यं वक्तव्येन 'वनो न हशः

---

१ वन्निति । अर्थवत एव वनो वार्तिके सूत्रे च ग्रहणमिति महेः कनिप्रत्यये धातोर्घान्तादेशेऽवुगागमे निष्पन्ने मघवन्शब्दे वनोऽनर्थकत्वान्न ङीबनुपपत्तिः, रेफापत्तिश्चेति मघोनीति सिद्धमिति भावः ॥ २ बहुव्रीहौ वेति । 'अनो बहुव्रीहेः' इति प्रतिषेधे प्राप्त इदम् । एतच्च वार्तिकम् 'अन उपधालोपिनः–' इति विहितङीबनुवादेन रादेशमात्रविधायकम् । अत एवेदम् अनुपधालोपिनि सुपर्वेत्यादौ नेति विकल्पोऽर्थसिद्ध एव । 'वनो र च' इत्येतत्तु 'ऋन्नेभ्यः–' इति विहितङीबनुवादेन रादेशविधायकमित्युक्तमेवेति बोध्यम् ॥ ३ कृतसमासान्त इति । 'टाबृचि' इत्युत्तरसूत्रे ऋच्यभिधेयायां तस्यैव संभवादिति भावः ॥ ४ पञ्चेत्यत्रेति । अत्रेत्थं योजना—'न षट्–' इत्यत्र केवलस्य ङीप एव 'अनन्तरस्य–' इति प्रतिषेधे नान्तस्य ङीपि प्रतिषिद्धे नकारलोपे बहुचर्मिका इत्यादावपि नलोपस्यासिद्धत्वेनेत्त्वानुपपत्तिभिया 'नलोपः सुब्–' इति सूत्रे सुप्पदेन सुमारभ्य चापः पकारपर्यन्तं प्रत्याहाराश्रयणस्य कर्तुमशक्यत्वेन परिगणितेषु टापोऽनन्तर्भावाद् नलोपस्यासिद्धत्वाभावेन अकारान्तत्वाट्टाप् प्राप्तोऽपि 'स्त्रियाम्' इत्यनुवर्त्य 'स्त्रियां यत्प्राप्तं तन्न' इत्यर्थाङ्गीकारेण टापोऽपि प्रतिषेधाङ्गीकारेण तत्प्रतिषेधोपपत्तयेऽपेक्षितां षट्संज्ञां प्रति नलोपोऽसिद्ध एवेति प्रतिषिध्यत इति । वस्तुतस्तु–षट्संज्ञायां नलोपासिद्धत्वप्रयोजनानां भाष्यकृता प्रत्याख्यानात् 'स्त्रियां यत्प्राप्तम्' इत्यर्थाङ्गीकारसामर्थ्याद् भूतपूर्वषट्त्वाश्रयो निषेध इति बोध्यम् ॥ ५ मन इति । अयम् 'अनो बहुव्रीहेः' इति च पूर्वसूत्रवत् 'स्त्रियां यत् प्राप्तं तन्न' इति व्याख्यानेन टाब्ङीपोर्निषेध इति सीमभ्यां बहुयज्वभ्यामित्यत्र नलोपोत्तरं प्राप्तष्टबपि नेति बोध्यम् ॥ ६ आवश्यक इति । ङ्याप्प्रातिपदिकादिति सूत्रभाष्ये तु–पदशब्दः पादशब्दसमानार्थोऽकारान्तश्छन्दसि दृश्यते–'तस्याः सप्ताक्षरमेकं पदम्' एकः पाद इत्यर्थः । तस्मात्सिद्धमुत्पत्तिर्भविष्यति' इति ग्रन्थेनैतत्सूत्रं प्रत्याख्यातमेव । तथा च ऋच्यपि एकपदी एकपादित्यिष्यत एव । एवं च 'एकपाद्दृग्' इत्यस्य सूत्रमते सिद्धये 'टाबृचि' इत्यत्राप्यन्यतरस्यांग्रहणमनुवर्त्यम् ॥ ७ युक्तत्वादिति । षट्त्वं नाल्धर्म इति तदाश्रयविधीनां नाल्विधित्वमिति चिन्त्यमेवेदमिति बोध्यम् ॥

अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा । बहुयज्वानौ ॥ ( ६२८ ) (सू.) **डाबुभाभ्यामन्यतरस्याम्** । ४ । १ । १३ । सूत्रद्वयोपात्ताभ्यां डाब् वा स्यात् । सीमा । सीमे । सीमानौ । दामा । दामे । दामानौ । 'न पुंसि दाम' इत्यमरः । बहुयज्वा । बहुयज्वे । बहुयज्वानौ ॥ ( ६२९ ) (सू.) **अन उपधालोपिनोऽन्यतरस्याम्** । ४ । १ । २८ । अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् स्यात् । पक्षे डाब्निषेधौ । बहुराज्ञी । बहुराज्ञ्यौ । बहुराजे । बहुराजानौ ॥ ( ६३० ) (सू.) **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः** । ७ । ३ । ४४ । प्रत्ययस्थात्ककारात्पूर्वस्याऽकारस्येकारः स्यादापि परे, स आप् सुपः परो न चेत् । सर्विका । कारिका । अतः किम् । नौका । प्रत्ययस्थात्किम् । शक्नोतीति

---

६२२' इत्यनेनैवेष्टसिद्धेः किमनेन सूत्रेण । मैवम् , अन्नन्ताद्बहुव्रीहेः 'डाबुभाभ्याम्-६२८' इति डाब्विधानार्थमेतत्सूत्रस्यावश्यारब्धव्यत्वात् । तथा चानेन ङीपि निषिद्धे तत्संनियोगेन प्राप्तो 'वनो र च ६२०' इति यो रेफः सोऽपि दुर्लभ एवेति 'वनो न हशः-६२२' इति वार्तिकमबहुव्रीह्यर्थमिति फलितम् ॥ **बहुयज्वानाविति** । 'न संयोगात्-४८२' इति निषेधान्नायमुपधालोपी । तेनात्र 'अन उपधालोपिनः-६२९' इति वक्ष्यमाणविकल्पो न प्रवर्तते ॥ ( ६२८ ) **डाबुभाभ्याम्**—। उभाभ्यां ग्रहणं व्यर्थं, मन्नन्तानन्तयोरनुवृत्त्यैव तत्फलसिद्धेरित्येके ॥ उभयोरप्यनुवृत्तिसूचनाय तद्ग्रहणमावश्यकमन्यथा सन्निहितस्यान्नन्तस्यैवानुवृत्तिरिति शङ्का स्यादित्यन्ये ॥ ननु निषेधडापोर्वचनसामर्थ्यात्पर्यायः सिध्यति तत्किमन्यतरस्यांग्रहणेन । सत्यम् , अन्यतरस्यामिति योगो विभज्यते तत्र 'मनः ६२०' इति निवृत्तम् । अनो बहुव्रीहेर्डाब्वा स्यात् । पूर्वेणैव डापि सिद्धे पुनर्विधानमिदम् 'ऋन्नेभ्यः-४२६' इति ङीपा सह विकल्पार्थम् । 'अन उपधालोपिनः-६२९' इति सूत्रं तु नियमार्थम्-अनो योऽसौ विकल्पः स उपधालोपिन एवेति । एवं च बहुधीवर्यौ बहुधीवानौ बहुधीवेत्युक्तरूपत्रयं सिद्धमिति 'बहुव्रीहौ वा ६२३' इत्येतन्नोपूर्वं वचनमिति बोध्यम् । उपधालोपिन एवेति नियमात्तु सुपर्वा चारुपवा इत्यादावनुपधालोपिनि ङीप् न भवति, किं तु डाब्निषेधावेव भवतः । अयं च योगविभागोऽवश्यमभ्युपेयः । अन्यथा बहुधीवरीत्यत्र प्रकरणान्तरस्थेन 'अन उपधालोपिनः-६२९' इति वक्ष्यमाणेन पाक्षिके ङीपि कृतेऽपि 'ऋन्नेभ्यः-४२६' इति प्राप्तं ङीपमनूद्य तत्सन्नियोगेन हि विधीयमानो यो 'वनो र च ६२०' इति रेफः स न सिध्येत् । ननु 'वनो र च ६२०' इति सूत्रमेव ङीब्रौ विधत्तामिति चेन्न, उभयविधौ गौरवात् । किञ्च, उभयविधायकत्वेऽपि 'अनो बहुव्रीहेः ६२७' इत्यनेन ङीपि निषिद्धे रोऽपि दुर्लभः, संनियोगशिष्टत्वात् ॥ भाष्ये तु-'अनो बहुव्रीहेः' इत्यस्यानन्तरम् 'उपधालोपिनो वा' इति सूत्रमस्तु, 'अन उपधा-' इत्यादि प्रदेशान्तरस्थं सूत्रं डाप्सूत्रेऽन्यतरस्यांग्रहणं च माऽस्त्वित्युक्तम् ॥ ( ६२९ ) **अन उपधा**—। 'बहुव्रीहेरूधसो ङीष् ६७२' इत्यतो बहुव्रीहिग्रहणं 'संख्याव्ययादेर्ङीप् ६७४' इत्यतो ङीप् चानुवर्तत इत्याशयेनाह—**अन्नन्तादित्यादि** । नियमार्थमिदमित्युक्तम् । न चैवं पूर्वेणैव विकल्पसिद्धाविहान्यतरस्यांग्रहणं व्यर्थमिति वाच्यम् , असति ह्यन्यतरस्यांग्रहणे नित्यार्थो विधिरेवायं स्यान्न तु नियम इति ॥ ( ६३० ) **प्रत्ययस्थात्कात्पूर्वस्य**—। कादित्यकार उच्चारणार्थः । व्यञ्जनमात्रं विवक्षितम् । अन्यथा एतिकाश्चरन्तीत्यादावकचि इत्वं न स्यात् । तत्र हि अकारविशिष्टककारस्य प्रत्ययस्थत्वाभावात् । न चाकच्यकारान्तककार एव प्रत्ययस्थो भवतु 'अतो गुणे २७६' इति पररूपे सत्येतिका इत्यादिरूपासिद्धेरिति वाच्यम् , पचतकीत्यदिवक्ष्यमाणरूपासिद्धिप्रसङ्गादित्याशयेनाह—**ककारादिति** । वर्णनिर्देशे हि कारप्रत्ययो विहितः । क्वाचित्कसमुदायात्प्रयोगस्तु 'उच्चैस्तरां वा वषट्कारः ५५३५' इत्यादि निर्देशरूपयत्नसाध्य इति भावः ॥ **आपि पर इति** । एतच्चाकारविशेषणम् । तत्सामर्थ्यात्ककाराकाराभ्यां व्यवायेऽपि भवति,न तु पुत्रकाम्या रथकट्येत्यादौ त्रिचतुरादिव्यवाये । अत एव सर्विकेत्यादावाद्याकारस्य न भवति, तदेतदुक्तम्—**अकारस्येकारः स्यादापि परत इति** । यदि त्वापीति ककारविशेषणं स्यात्तर्हि रथकट्येत्यादावतिप्रसङ्गः, व्यवहितस्यापि परत्वानपायात् । न च निर्दिष्टपरिभाषया निस्तारः, अनुवादे परिभाषाणामनुपस्थितेः । न चापीत्यस्याकारविशेषणत्वेऽपि तद्दोषतादवस्थ्यमिति वाच्यम्, अनुवादे परिभाषाणामित्यत्रानुवाद इत्यस्यानूद्यमानविशेषणेष्वित्यर्थाभ्युपगमात् । कात्पूर्वस्यात इदित्यत्र हि अत इत्यनूद्येत्त्वविधानादनुवाद्यत्वमेवात इत्यस्य, न त्वनूद्यमानविशेषणत्वम् । कादित्यस्य त्वनूद्यमानविशेषणत्वं स्पष्टमेवेति न तत्र निर्दिष्टपरिभाषोपतिष्ठत इति वैषम्यात् । अनूद्यमानविशेषणे परिभाषा नोपतिष्ठत इत्येतत् 'उदीचामातः-६४३' इति सूत्रस्थस्थानेग्रहणेन ज्ञापयिष्यते ॥ यदि 'असुपः' इति पर्युदासः स्यात्तर्हि बहुपरिव्राजका नगरीत्यत्रापि स्यादेव, उत्तरपदस्य सुबन्तत्वेऽपि समुदायस्यासुबन्तत्वात् ततः परष्टाबिति । तेनात्र प्रसज्यप्रतिषेध इत्याह—**स आप् सुपः परो न चेदिति** । सुबन्तात्परो न चोदित्यर्थः ॥ **सर्विकेति** ।

---

१ **बहुव्रीहेरिति** । बहुव्रीहेरन्यपदार्थप्रधानत्वेनान्नन्तस्योपसर्जनत्वावश्यकत्वेन गृह्यमाणविशेषणताविशिष्टम् 'अनुपसर्जनात्' इत्यधिकृतमपि न संबध्यतेऽन्नन्तस्य बहुव्रीहावनुपसर्जनस्यासंभवादिति भावः ॥ २ **प्रत्ययस्थादिति** । स्थग्रहणं स्पष्टार्थमेव, ककारस्य केवलस्य प्रत्ययत्वाभावात् । कान्तात् प्रत्ययादिति तु नार्थः, 'क्षिपकादीनां च' इति निषेधस्य वैयर्थ्यापत्तेः ॥ ३ **सुपः परो न चेदिति** । असुप इति बहुव्रीहिणा नाङ्गविशेषणम् , बहुचर्मिकेत्यत्रेत्त्वानुपपत्तेः । लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्ये प्रत्ययलक्षणनिषेधप्रवृत्तेरस्य टाप्यङ्गत्वेन सुप्यङ्गस्य कार्याभावान्निषेधाप्रवृत्त्या प्रत्ययलक्षणेनाङ्गस्य सुबन्तत्वादिति प्रसज्यप्रतिषेधोऽङ्गीकृतः । पर्युदासे तु बहुपरिव्राजकेत्यत्र टापः प्राग्वर्तिभागस्य सुब्भिन्नत्वात्सुबन्ताभिन्नत्वाच्चेत्त्वं दुर्वारमेवेति भावः ॥ ४ **नापूर्वमिति** । अस्यापूर्वत्वे सुपर्वन्शब्दे ङीब्रयोरापत्तिः । सिद्धान्ते तु 'अन उपधा-' इत्येतत्प्रापितङीबनुवादेन रभावस्य तेन विधानान्न दोषः ॥

शका । असुपः किम् । बहुपरिव्राजका नगरी । कात्किम् । नन्दना । पूर्वस्य किम् । परस्य मा भूत् । कटुका । तपरः किम् । राका । आपि किम् । कारकः ॥ ( ६३१ ) (वा) **मामकनरकयोरुपसंख्यानम्** ॥ मामिका । नरान् कायतीति नरिका ॥ ( ६३२ ) (वा) **त्यक्त्यपोश्च** ॥ दाक्षिणात्यिका । इहत्यिका ॥ ( ६३३ ) (सू) **न यासयोः**।७।३।४५। यत्तदोरस्येन्न स्यात् । यका । सका । यकाम् । तकाम् ॥ ( ६३४ ) (वा) **त्यकनश्च निषेधः** ॥ अधित्यका । उपत्यका ॥ ( ६३५ ) (वा) **आशिषि वुनश्च न** ॥ जीवका । भवका ॥ ( ६३६ ) (वा) **उत्तरपदलोपे न** ॥ देवदत्तिका ।

---

'अव्ययसर्वनाम्नाम्–२७४०' इत्यज्ञातार्थेऽकच् ॥ **कारिकेति** । करोतेर्ण्वुल् । णित्त्वाद्वृद्धिः ॥ **नौकेति** । नौशब्दात्स्वार्थे कः, ततष्टाप् ॥ **शकेति** । शक्नोतीति विग्रहः । पचाद्यच् , ततष्टाप् ॥ **बहुपरिव्राजकेति** । परिपूर्वाद् व्रजेर्ण्वुल् । बहवः परिव्राजका यस्यामिति बहुव्रीहौ तदवयवस्य सुपो लुकि कृतेऽपि प्रत्ययलक्षणेनोत्तरपदस्य सुबन्तत्वाट्टापः सुबन्तात्परत्वमस्तीतीत्त्वमत्र न भवति ॥ **नन्दनेति** । 'नन्दिग्रहि–३८५३' इति ल्युः ॥ **पूर्वस्य किमिति** । अर्थादेवेदं लभ्यते। टाबेकादेशे कृते परत्र ह्रस्वाकाराभावादिति प्रश्नः । इतरो निर्दिष्टेपरिभाषया कात्पूर्वस्येति न लभ्येत, किं तु टाबेकादेशं बाधित्वा कात्परस्यैवाकारस्य स्यादित्याशयेनाह––**परस्येत्यादि** । **कटुकेति** । कटुरत्र कटुरसवति । अज्ञातादौ कः ॥ वस्तुतस्तु सूत्रे 'प्रत्ययस्थे कि' इति सप्तमीनिर्देशमेव कृत्वा पूर्वस्येति ग्रहणं सुत्यजमित्याहुः ॥ **राकेति** । 'कृदाधारार्चिकलिभ्यः कः ४५२३' । बाहुलकादित्संज्ञाभावः । संज्ञापूर्वकविधेरनित्यत्वात् 'केऽणः ११९९' इति ह्रस्वो न ॥ ( ६३१ ) **मामकनरकयोरिति** । ककारस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् ॥ **मामिकेति** । ममेयं मामिका । 'युष्मदस्मदोरन्यतरस्यां खञ्च १९२१' इत्यण् , 'तवकममकावेकवचने १९२३' इति ममकादेशः, आदिवृद्धिः । 'केवलमामक–६७९' इत्यादिना संज्ञाछन्दसोरेवेति नियमान्न ङीप् ॥ **नरिकेति** । 'कै शब्दे' 'आदेच उपदेशे–३१६३' इत्यात्वम्, 'आतोऽनुपसर्गे कः ३८८३' 'आतो लोप इटि च ३१६५' इत्यालोपः, टाप्, इत्त्वम् ॥ ( ६३२ ) **त्यक्त्यपोश्च** । उपसंख्यानमित्यनुषज्यते । 'उदीचामातः–६४३' इति विकल्पापवादः ॥ **दाक्षिणात्यिकेति** । दक्षिणस्यामदूरे दाक्षिणा 'दक्षिणादाच् २६९६' दक्षिणा भवेति विग्रहे 'दक्षिणापश्चात्पुरसस्त्यक् २८५६' 'किति च १५२८' इत्यादिना वृद्धिः, टाप् । ततोऽज्ञातार्थे कः, 'केऽणः ११९९' इति ह्रस्वः, टाप् । प्राचा तु दक्षिणस्यां दिशि भवेति विगृहीतं तच्च मनोरमायां दूषितम्,त्यग्विधावव्ययसाहचर्यादाजन्तस्यैव दक्षिणाशब्दस्य ग्रहणात् । अन्यथा सर्वनाम्नो वृत्तिमात्रे पुंवद्भावोपपत्तेश्चेति ॥ **इहत्यिकेति** । 'अव्ययात्त्यप् १८६२' ॥ ( ६३३ ) **न यासयोः** । 'प्रत्ययस्थात् ६३०' इति प्राप्ते निषेधोऽयम् , या सेति यत्तदोरुपलक्षणमित्याशयेनाह––**यत्तदोरिति** ॥ **यका सकेति** । यत्तदोरकच् । त्यदाद्यत्वे टाप् ॥ स्वरूपस्याविवक्षायां फलमाह––**यकां तकामिति** । यद्यपि 'न यत्तदोः' इत्येव सूत्रयितुमुचितं, तथापि संनिपातपरिभाषाया अनित्यत्वज्ञापनार्थं 'न यासयोः ६३३' इत्युक्तमित्याहुः ॥ वस्तुतस्तु–'न यत्तदोः' इत्युक्तेऽप्यनित्यत्वं सिध्यत्येव । अन्यथा अनयोरकारस्यापरत्वं दुर्लभमिति किमनेन निषेधेनेति ॥ ( ६३४ ) **त्यकनश्च निषेध इति** । ननु 'मृदस्तिकन् २८४३' इतिवत् प्रक्रियालाघवाय त्यिकन्निति वक्तव्ये त्यकन्नित्यकारनिर्देशसामर्थ्यादित्त्वाभावे सिद्धे किमनेन निषेधवचनेन । मैवम् । पञ्चभिरुपत्यकाभिः क्रीतः पञ्चोपत्यक इत्यादौ तद्धितलुकि स्त्रीप्रत्ययस्यापि लुक्यकारस्य श्रवणार्थत्वात्तस्य त्यिकन्नित्युक्ते हि पञ्चोपत्यिक इति स्यात्, इष्यते तु पञ्चोपत्यक इति । तस्मादावश्यकमेव निषेधवचनम् । 'मृदस्तिकन् २८४३' इत्यत्रापीकारोच्चारणं तद्धितलुकि श्रवणार्थम्, न तु प्रक्रियालाघवार्थम् । अन्यथा पञ्चभिर्मृत्तिकाभिः क्रीत इति 'आर्हात्–२२८८' इति ठकः 'अध्यर्ध–२३०५' इति लुकि कृते 'लुक् तद्धितलुकि १९६५' इति टापो लुकि निमित्ताभावात् 'प्रत्ययस्थात्–६३०' इतीत्त्वं न स्यात् पञ्चमृत्तिक इत्यत्र । न च लुकः प्रागेवान्तरङ्गत्वात् 'प्रत्ययस्थात्–६३०' इतीत्त्वं सिध्यत्येवेति वाच्यम्, 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ५१५६' इत्यभ्युपगमात् । अत एव सनीस्रंसत इत्यादौ नलोपाभावः सिध्यति । पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादौ टापा सहैकादेशोऽपि न भवति । अन्यथा एकादेशस्यादिवद्भावाट्टाब्ग्रहणेन ग्रहणात् 'लुक्तद्धितलुकि १९६५' इत्यनुपसर्जनस्त्रीप्रत्ययस्य लुकि कृते अकारस्य श्रवणं न स्यात् । एतच्च भाष्यकैयटयोः स्पष्टम् ॥ **उपत्यकेति** । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः २४८७' ॥ ( ६३५ ) **आशिषीति** । आशीरर्थे विहितस्य वुन्प्रत्ययस्यात इत्त्वं न भवतीति वक्तव्यमित्यर्थः ॥ **जीवका** । **भवकेति** ।

---

१ **कटुकेति** । आपा सह सवर्णदीर्घात्पूर्वं वार्णादाङ्गस्य बलीयस्त्वादपवादत्वाच्चान्त्यककारादुत्तरस्याकारस्येत्त्वं स्यादिति भावः ॥ २ **त्यकनश्चेति** । ' मृदस्तिकन् ' इति सेत्त्वनिर्देशेन ज्ञापकेन ' व्यञ्जनादीनामनेकाचां प्रत्ययानां ककारात्पूर्वस्येत् । तिकन एव' इति नियमपरेण त्यकन इत्ववारणे वार्तिकमिदं व्यर्थमेवेति भाष्यकृतः ॥ ३ **निर्दिष्टेति** । 'तस्मादित्युत्तरस्य' इति परिभाषयेत्यर्थः ॥ ४ **'प्रत्ययस्थे कि' इतीति** । 'प्रत्यये कि' इत्येव सुवचम् 'न यासयोः' इति ज्ञापकात् ' कादौ प्रत्यये ' इति नार्थ इति बोध्यम् । एवं च 'आप्परस्य प्रत्ययस्थककारपरस्य चात इत्' इत्यर्थः । तत्र सामर्थ्यादाप्परत्वांशे ककारव्यवधानं सोढव्यमेवेति भावः ॥ ५ **भाष्येति** । भाष्यकृतस्तूक्तज्ञापकेन वार्तिकमिदं प्रत्याख्यातवन्तः । कैयटेन तु केवलमुक्तमेवम् । तत्र भाष्यप्रामाण्यादेतद्विषये ज्ञापकसिद्धस्य 'अन्तरङ्गानपि––' इत्यस्यासार्वत्रिकत्वाङ्गीकारेणाऽनभिधानेन वा न दोष इति तत्त्वम् ॥

देवका ॥ ( ६३७ ) (वा०) **क्षिपकादीनां च** ॥ क्षिपका । ध्रुवका । कन्यका । चटका ॥ ( ६३८ ) (वा०) **तारका ज्योतिषि** ॥ अन्यत्र तारिका ॥ ( ६३९ ) (वा०) **वर्णका तान्तवे** ॥ अन्यत्र वर्णिका ॥ ( ६४० ) (वा०) **वर्तका शकुनौ प्राचाम्** ॥ उदीचां तु वर्तिका ॥ ( ६४१ ) (वा०) **अष्टका पितृदेवत्ये** ॥ अष्टिकाऽन्या ॥ ( ६४२ ) (वा०) **सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्** ॥ इह वा अ इति च्छेदः । कात्पूर्वस्याकारादेशो वेत्यर्थः । तेन पुत्रिकाशब्दे ङीन इवर्णस्य पक्षेऽकारः । अन्यत्रेत्त्वबाधनार्थमकारस्यैव पक्षेऽकारः । सूतका । सूतिकेत्यादि ॥ ( ६४३ ) (सू०) **उदीचामातः स्थाने यकपूर्वायाः** । ७ । ३ । ४६ । यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे । केऽण इति ह्रस्वः । आर्यका, आर्यिका । चटकका, चटकिका । आतः किम् । सांकाश्ये भवा सांकाश्यिका । यकेति किम् । अश्विका । स्त्रीप्रत्ययेति

---

जीवताद्भवतादित्यर्थे जीवतिभवतिभ्याम् 'आशिषि च ३८७८' इति वुन्, तस्याकादेशे कृते टाप् ॥ ( ६३६ ) **देवकेति** । देवदत्तशब्दात्स्वार्थिकः कः । 'अनजादौ च विभाषा लोपो वक्तव्यः २७५४' इति प्रागिवीयेषु वक्ष्यमाणत्वाद् द्वितीयादच ऊर्ध्वस्य दत्तशब्दस्य लोपः । देवदत्तिकाशब्दस्योपन्यासस्तु दत्तलोपमभिव्यक्तुं, तदभावे इत्त्वनिषेधाभावं च दर्शयितुम् ॥ ( ६३७ ) **क्षिपकादीनां चेति** । नेत्यनुषज्यते । **क्षिपकेत्यादि** । क्षिपेरिगुपधलक्षणः कः । एवं 'ध्रुव स्थैर्ये' इत्यस्मादपि । यद्वा–'ध्रु गतिस्थैर्ययोः' पचाद्यच् । कुटादित्वान्ङित्त्वेन गुणाभावे उवङ् । 'चट भेदने' । पचाद्यच् । ततष्टाप् । अज्ञातादौ कः 'केऽणः ११९९' इति ह्रस्वः । पुनष्टाप् ॥ ( ६३८ ) **तारकेति** । तरतेर्ण्वुल् । अकादेशः । नक्षत्रं नेत्रकनीनिका च ज्योतिः ॥ ( ६३९ ) **वर्णकेति** । प्रावारविशेषः । 'वर्णवर्णक्रियाविस्तारगुणवचनेषु' इति चौरादिकात् ण्वुल् । तन्तूनां विकारस्तान्तवम् ॥ **अन्यत्र वर्णिकेति** । ग्रन्थविशेषस्य व्याख्या स्तोत्रकर्त्री च ॥ ( ६४० ) **वर्तकेति** । वर्तयतीति वर्तका । शकुनावेव वाच्येऽयं विकल्पः, अन्यत्र नित्यमेवेत्त्वमिति बोध्यम् ॥ ( ६४१ ) **अष्टकेति** । पितरश्च ताः देवताश्च पितृदेवताः । तदर्थं कर्म पितृदेवत्यम् । 'देवतान्तात्तादर्थ्ये यत् २८२१' । अश्नन्ति ब्राह्मणा यस्यां सा अष्टका 'इष्यशिभ्यां तकन् ४६३१' ॥ **अष्टिकाऽन्येति** । अष्टौ परिमाणमस्याः 'संख्याया अतिशदन्तायाः कन् २६९६' ॥ ( ६४२ ) **सूतकेति** । सूतशब्दात्स्वार्थे कन् । वृन्दमस्यास्तीति मत्वर्थे 'शृङ्गवृन्दाभ्याम्–२६१२' इत्यारकन् । देवतावाचिवृन्दारकशब्दस्य पुंल्लिङ्गत्वेऽपि रूपिमुख्यवाचिनोः स्त्रीलिङ्गत्वं संभवत्येव । अत एव 'त्रिषूत्तरे' इत्युपक्रम्य 'वृन्दारकौ रूपिमुख्यौ' इत्यमरेणोक्तम् ॥ ( ६४३ ) **उदीचाम्**—। यकौ पूर्वौ यस्याः सा । अर्थगतं स्त्रीत्वमाकारे आरोप्य यकपूर्वाया इति स्त्रीलिङ्गनिर्देशस्तेन स्त्रीप्रत्ययो लभ्यत इत्याह—**स्त्रीप्रत्ययाकारस्येति** । अत्र 'न यासयोः ६३३' इत्यतो नेति वर्तते । यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्योदीचां मते इत्त्वं नेत्यक्षरार्थः । एवं स्थिते फलितमाह–**इद्वा स्यादिति** । एवमग्रेऽप्यूह्यम् । 'षष्ठी स्थानेयोगा ६१' इत्यनेनैव लब्धे सूत्रे स्थानग्रहणमनूद्यमानविशेषणेषु परिभाषा नोपतिष्ठत इति ज्ञापनार्थम्, फलं तु वृद्धसंज्ञायामिक्परिभाषानुपस्थानाच्छालीयादिसिद्धिः । यदि तु तत्रेक्परिभाषोपतिष्ठेत, तदा औपगवीय इत्यादावेव 'वृद्धाच्छः १८८०' स्यात्, न तु शालीयो मालीय इत्यादौ । तत्र ह्याकारवृद्धेरिक्स्थानिकत्वाभावात् । तथा 'अतो गुणे २७६' इत्यत्रेक्परिभाषोपस्थितौ–एधे पचे यजे–इत्यादावेव पररूपं स्यात् । 'टित आत्मनेपदानाम्–२९९२' इति इट एत्वे कृते इक्स्थानिकत्वादेकारगुणस्य । भवन्ती पचन्तीत्यादौ तु न स्यात्, तत्रेक्स्थानिकत्वाभावादकारगुणस्येत्यपि बोध्यम् ॥ नव्यास्तु वृद्धाच्छं बाधित्वा 'अणृगयनादिभ्यः २०१५' इत्यण् प्रत्ययो यथा स्यादित्येतदर्थमृगयनादिगणे व्याकरणशब्दः पठ्यते । यद्यनूद्यमानविशेषणेषु परिभाषा उपतिष्ठेरन्, तर्हि तत्पठनं व्यर्थं स्यात् । आकारवृद्धेरिक्स्थानिकत्वाभावेन वृद्धसंज्ञाया अभावाच्छस्याप्रवृत्तेः । तथा च तस्मादेव पाठादुक्तार्थज्ञापनसंभवे स्थानेग्रहणमिह स्पष्टार्थमित्याहुः ॥ **सांकाश्यिकेति** । संकाशेन निर्वृत्तं नगरं सांकाश्यं, 'वुञ् छण्–१८२२' आदिसूत्रेण 'संकाशादिभ्यो ण्यः' । ततो भवार्थे 'धन्वयोपधाद्वुञ् १८९०' अकादेशः । स च सांकाश्यभवां स्त्रियामाहेति तदकारस्यापि वैकल्पिकमित्त्वं स्यात्तस्मादात इत्युक्तम् ॥ अत्र वदन्ति—यथाऽयमकारो नाकारस्थानिकः, एवं स्त्रीप्रत्ययस्थानिकोऽपि नेति द्व्यङ्गविकलमेतत् । अकेति समुदायस्य स्त्रीवाचकवुन्स्थानिकत्वेऽप्यकारमात्रस्या-

---

१ **क्षिपकादीनामिति** । वार्तिकोक्ता गणा आकृतिगणाः । तेन कन्यका ध्रुवका अलका इष्टकादयः साधवः ॥
२ **ध्रुवका कन्यका इति** । अनयोर्मूले पाठः केनचित्प्रक्षिप्तः । मनोरमायां क्षिपकाचटकयोरेव साधनस्य दर्शितत्वात् । शेखरे आकृतिगणत्वफलनिर्देशाच्च । परं च ध्रुवकेति प्रतीकमपि दृश्यते । तत्तु तत्त्वबोधिन्यनुरोधेनेति बोध्यम् ॥
३ **तारिकेति** । दासीत्यर्थो भाष्ये दर्शितः ॥ ४ **यकपूर्वस्येति** । यकपूर्वत्वं चाव्यवहितमेव, 'उदात्तस्वरितयोः–' इत्यादाविवानुवादेऽपि निर्दिष्टपरिभाषाप्रवृत्तेः, तेन कृशराशब्दात्के ह्रस्वे इत्त्वविकल्पो न । एवमेव प्रत्ययस्थात्सूत्रे कात्पूर्वत्वमपि॥
५ **"किमर्थं स्त्रीलिङ्गनिर्देशः क्रियते, न 'यकपूर्वस्य' इत्येवोच्येत ? स्त्रीविषयो य आकारस्तस्य स्थाने योऽकारस्तस्य प्रतिषेधो ( पाक्षिकः ) यथा स्यात्–( आर्यका चटकका ) । इह मा भूत् ( पाक्षिकः प्रतिषेधः ) शुभंयिका"** इति भाष्यप्रामाण्येन लिङ्गविशेषस्त्रीत्वनिमित्तकटापूकरणसामर्थ्यात् **'सूत्रे लिङ्ग-वचनमतन्त्रम्'** इति परिभाषा न प्रवर्तत इति भावः ॥

किम् । शुभं यातीति शुभंयाः । अज्ञाता शुभंयाः शुभंयिका ॥ ( ६४४ ) **वा० धात्वन्तयकोस्तु नित्यम्** ॥ सुनयिका । सुपाकिका ॥ ( ६४५ ) **सू० भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि** ।७।३।४७। स्वेत्यन्तं लुप्तषष्ठीकं पदम् । एषामत इद्वा स्यात् । तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम् । भस्त्राग्रहणमुपसर्जनार्थम् । अन्यस्य तूत्तरसूत्रेण[1] सिद्धम्, एषा द्वा एतयोस्तु सपूर्वयोर्नेत्वम्, अन्तर्वर्तिनीं विभक्तिमाश्रित्याऽसुप इति प्रतिषेधात् । अनेषका । परमेषका । अद्वके । परमद्वके । स्वशब्दग्रहणं संज्ञोपसर्जनार्थम् । इह हि आतः स्थाने इत्यनुवृत्तं स्वशब्दस्यातो विशेषणम् । न तु द्वैषयोरसंभवात् । नाप्यन्येषामव्यभिचारात् । स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः[2] । अर्थान्तरे तु न स्त्री[3] । संज्ञोपसर्जनीभूतस्तु[4] कप्रत्ययान्तत्वाद्भवत्युदाहरणम् । एवं चात्मीयायां स्विका परमस्विकेति नित्यमेवेत्त्वम् । निर्भस्त्रका, निर्भस्त्रिका । एषका, एषिका । कृतषत्वनिर्देशान्नेह विकल्पः । एतिके, एतिकाः । अजका, अजिका । ज्ञका, ज्ञिका । द्वके, द्विके । निःस्वका, निःस्विका ॥ ( ६४६ ) **सू० अभाषितपुंस्काच्च** ।७।३।४८। एत-

---

तथात्वात् । तस्मादात इति स्पष्टार्थमेवेति ॥ **शुभंया इति** । 'अन्येभ्योऽपि दृश्यते ३९८०' इति विच् । शुभमिति मान्तो निपातः ॥ ( ६४४ ) **सुनयिकेति** । सुष्ठु नयो यस्याः सा सुनया ततः कः । 'केऽणः ११९९' इति ह्रस्वः । एवं सुष्ठु पाको यस्याः सा सुपाकिका ॥ ( ६४५ ) **भस्त्रैषा—। लुप्तषष्ठीकमिति** । केचिदिह 'स्वाः' इति च्छित्त्वा षष्ठ्याः स्थाने सौत्रत्वाद्व्यत्ययेन जसिति[5] व्याचक्षते ॥ 'प्रत्ययस्थात्–६३०' इत्यतोऽनुवर्तनादाह—**अत इद्वा स्यादिति** । ननु नञ्पूर्वाणामपीत्यपिशब्देन केवलानां संग्रहः क्रियते, न तु नञ्भिन्नपूर्वाणामपि । तथा च निर्भस्त्रिकेत्यादि न सिध्येदतस्तदन्तविधिराव-श्यक इत्याशयेनाह—**तदन्तविधिनैवेत्यादि** । आङ्गत्वादिति भावः । एवं च नञ्पूर्वाणामित्यस्य नियमार्थत्वशङ्का निरस्ता, निर्भस्त्रिकेत्यादावव्याप्तिप्रसङ्गात् ॥ **अन्यस्य त्विति** । अनुपसर्जनस्य तु 'अभाषितपुंस्काच्च ६४६' इत्यनेन सिद्धमित्यर्थः ॥ **एतयोस्त्विति** । भस्त्राजाज्ञास्वानां तु सपूर्वाणामपीत्वं भवत्येव । तत्र टापः कप्रत्ययात्परत्वेन सुपः परत्वाभावात् 'असुपः' इति निषेधाप्रवृत्तेरिति भावः ॥ **सपूर्वयोरिति** । पूर्वावयवसहितयोर्विद्यमानपूर्वपदयोरिति यावत् ॥ **अन्तर्वर्तिनीमित्यादि** । न सु–एतद् सु इति स्थितेऽकाचि कृतेऽकचः प्रागेव वा नञ्तत्पुरुषे कृते 'अन्तरङ्गानपि–५१५६' इति न्यायेन त्यदाद्यत्वप्रवृत्तेः प्रागेव सामासिके लुकि विशिष्टात्पुनः सुपि त्यदाद्यत्वे पररूपे च कृते ततष्टाप् । स च आद्यसुपः पर इति भावः ॥ **अनेषकेति** । अज्ञाता एषा एषका, न एषका अनेषका । अज्ञाता अनेषा अनेषकेति वा लौकिकविग्रहोऽत्र बोध्यः । एवमग्रेऽप्यूह्यम् ॥ **स्वशब्दस्यातो विशेषणमिति** । यद्यपि हरदत्तग्रन्थे अत्रातः स्थान इत्येतत्स्वशब्दस्य विशेषणमित्युक्तम्, तथापि तत्र स्वशब्दस्येत्यनन्तरमत इति शेषो बोध्य इति भावः ॥ **अर्थान्तरे त्विति** । आत्मज्ञातिधनेष्वित्यर्थः ॥ **नित्यमेवेति** । स्विकेत्यादावकचि कृते आतःस्थानिकोऽकारोऽत्र दुर्लभ इति प्रकृतसूत्रस्याविषयत्वात् 'प्रत्ययस्थात्–६३०' इति नित्यमेवेत्त्व-प्रवृत्तेः । एवं च 'हंसं तनौ संनिहितं चरन्तं मुनेर्मनोवृत्तिमिव स्विकायाम्' इति श्रीहर्षश्लोके 'भस्त्रैषा–६४५' इति वैकल्पिक-मित्त्वमिति केषांचिद्व्याख्यानं नादर्तव्यमिति भावः । वस्तुतो 'हंसं तनौ–' इति श्लोके स्विकायामिति प्रयोगोऽसाधुरेव । आत्मी-यायां स्वशब्दस्य सर्वनामत्वात्स्याडागमप्रवृत्तेरिति[6] नव्याः ॥ प्रत्युदाहरणान्युक्त्वोदाहरणान्याह—**निर्भस्त्रिरित्यादि** । निष्क्रान्ता भस्त्रायाः निर्भस्त्रा, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या ११२३' इति समासः । उपसर्जनह्रस्वष्टाप् । ततोऽज्ञातादौ कः । 'केऽणः ११९९' इति ह्रस्वः । पुनष्टाप् ॥ सूत्रे एषेति विकृतनिर्देशो विवक्षितविषयो, न तु '–व्यासयोः ६३३' इतिवदुपलक्षण-मित्यभिप्रेत्याह—**कृतषत्वनिर्देशादिति** । इहाजाज्ञेति स्त्रीलिङ्गनिर्देशादजादयः स्त्रीलिङ्गा एव गृह्यन्ते, तेनेह विकल्पो न–शुभ्रोऽजो यस्याः सा शुभ्राजिका । जानातीति ज्ञः 'इगुपध–३८५७' इति कः । प्रियो ज्ञो यस्याः सा प्रियज्ञिकेति ॥ **निःस्वकेति** । स्वस्याः निष्क्रान्तेति विग्रहो, न त्विह स्विकस्या निष्क्रान्तेति, तथात्वे ह्युपसर्जनेऽपि निःस्विकेत्येकमेव रूपं

---

१ **उत्तरसूत्रेणेति** । 'आदाचार्याणाम्' इत्यस्य पाक्षिकत्वेनादादेशाभाव इति शेषः । तथा च भस्त्राका भस्त्रिका भस्त्रका इति रूपत्रयं सिध्यति ॥ २ **अकजर्ह इति** । एवं च तत्र कात्पूर्वाकारस्याऽऽकारस्थानिकत्वाभावान्नोदाहरणमिति भावः । एवमर्थान्तरेऽपि स्त्रीत्वाभावाट्टापः प्राप्तिरेव नेति नोदाहरणमिति बोध्यम् ॥ ३ **नस्त्रीति** । 'स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इति कोशात् । तथा च नोदाहरणम्, टापः प्राप्त्यभावादिति भावः ॥ ४ **संज्ञोपेति** । आत्मीयत्वपुरस्कारेणैव संज्ञाकरणात्संज्ञाया अपि भाषितपुंस्कत्वेन नात्र 'अभाषितपुंस्काच्च' इत्यनेन सिद्धिः । 'संज्ञापूरण्योश्च' इति पुंवत्त्वनिषेधेन 'संज्ञाया अपि भाषितपुंस्कत्वम्' इति सामान्यतो ज्ञापनं तु गङ्गाकेत्याद्यनुपपादक-मिति बोध्यम् ॥ ५ **जसितीति** । 'अतो येयः' इत्यत्रेव संधिरित्यपि बोध्यम् इति तु न सम्यक्, 'अनञ्पूर्वाणाम्' इति च्छेदस्याभावात् ॥ ६ स्वाशब्दादत्यन्तस्वार्थिककप्रत्यये 'केऽणः' इति ह्रस्वे आत्स्थानिकस्याकारस्य संभवात्संज्ञोपसर्जनीभूतवदत्र भवत्येव वैकल्पिकमित्त्वम् । कप्रत्ययान्तत्वादेव सर्वनामपरत्वाभावान्न स्याडाद्यापत्तिः । तथा च स्विकायामिति प्रयोगे न किमपि बाधकमिति प्रपञ्चितं प्रक्रियाप्रपञ्चप्रकाशे ॥

स्माद्विहितस्यातः स्थानेऽत इद्वा स्यात् । गङ्गका, गङ्गिका । बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यम् । अज्ञाता अखट्वा अखट्विका । ( ६४७ ) [१२७४] शैषिके कपि तु विकल्प एव ॥ (६४८) (सू) आदाचार्याणाम् ।७।३।४९। पूर्वसूत्रविषये आद्वा स्यात् । गङ्गाका, गङ्गिका । उक्तपुंस्कात्तु शुभ्रिका ॥ ( ६४९ ) (सू) अनुपसर्जनात् ।७।१।१४। अधिकारोऽयं यूनस्तिरित्यभिव्याप्य । अयमेव ( ६५० ) स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति ॥ ( ६५१ ) (सू) टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।४।१।१५। अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात् । कुरुचरी । उपसर्जनत्वान्नेह । बहुकुरुचरा । नदट् ,नदी । वक्ष्यमाणेत्यत्र टित्वादुगित्वाच्च

---

स्यात्, आतः स्थानिकाकारस्य दुर्लभत्वेन प्रकृतसूत्राविषयत्वात् ॥(६४६)**अभाषित–। एतस्मादिति**। नित्यंस्त्रीलिङ्गादित्यर्थः। विहितविशेषणतया व्याख्यानस्य फलमाह—**बहुव्रीहेरिति ॥ ततो विहितस्य नित्यमिति** । अविद्यमाना खट्वा यस्याः साऽखट्वेत्यत्र 'शेषाद्विभाषा १२७४' इति समासान्तस्य कपो वैकल्पिकत्वात्कबभावपक्षे 'गोस्त्रियोः–९५७' इत्युपसर्जनह्रस्वे कृते पुनरखट्वशब्दाद्भाषितपुंस्काट्टापि सत्यज्ञातादौ कप्रत्यये 'केऽणः ११९९' इति ह्रस्वेऽस्य विकल्पस्याप्रवृत्तेः 'प्रत्ययस्थात्–६३०' इत्युत्सर्ग एव प्रवर्तते । परविशेषणत्वे त्वयं विकल्पः स्यादेवेति भावः । बहुव्रीहेरित्युपसर्जनोपलक्षणं, तेनातिखट्विकेत्यादावपि नित्यमेव ॥ ( ६४७ ) **विकल्प एवेति** । अखट्वेति बहुव्रीहौ न सु खट्वा सु इति स्थिते 'सुपो धातु–९५०' इति सोर्लुक्युपसर्जनह्रस्वत्वं बाधित्वा 'शेषाद्विभाषा १२७४' इति समासान्ते कपि परत्वात्कृते स्त्रीप्रत्ययान्तत्वाभावादुपसर्जनह्रस्वो न प्रवर्तते, किन्तु 'केऽणः ११९९' इति ह्रस्वस्य 'न कपि १२००' 'आपोऽन्यतरस्याम् १२७५' इति वैकल्पिकनिषेधात्पाक्षिकह्रस्वे सति 'अभाषितपुंस्काच्च ६४६' इति विकल्पः प्रवर्तते, तत्र हि खट्वशब्दात्परस्य टापोऽभाषितपुंस्काद्विहितत्वादिति भावः ॥ ह्रस्वाभावपक्षे त्वखट्वाकेत्येतद्रूपान्तरम् ॥ ( ६४९ ) **अधिकारोऽयमिति** । स्वरितत्वप्रतिज्ञानादिति भावः ॥ **अभिव्याप्येति** । अत एव बहुयुवा शालेत्यत्र 'यूनस्तिः ७६४' इति न प्रवर्तत इति प्राञ्चः ॥ न चात्र नलोपस्यासिद्धत्वान्नान्तलक्षणो ङीप् स्यादिति शङ्क्यं, 'नलोपः सुप्स्वर–४८०' इति नियमेन ङीपं प्रत्यसिद्धत्वाभावादित्येके ॥ अन्ये तु–'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः ५१३' इति प्रत्ययलक्षणनिषेधेनान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाभावान्नलोपस्याप्रसक्त्या ङीप् स्यादेव । परं तु 'अनो बहुव्रीहेः ६२७' इति निषेधान्ङीबभावे डाब्निषेधाविह भवत इत्याहुः ॥ **अयमेवेति** । अनुपसर्जनाधिकार एवेत्यर्थः ॥ ( ६५१ ) **टिड्ढाणञ्–** । टिड्ढादयः प्रत्ययास्तेन तदन्ता गृह्यन्ते, तच्चानुवर्तमानस्य प्रातिपदिकस्य विशेषणम् 'अजाद्यतः–६१३' इति सूत्रादनुवर्तमानमप्यत इत्येतत्प्रातिपदिकविशेषणमतो च तदन्तविधिरतो व्याचष्टे—**यट्टिदादि तदन्तं यददन्तं प्रातिपदिकमिति** । नदट् देवट् इत्यादौ प्रत्ययस्यैव टित्त्वमिति टिदन्तं प्रातिपदिकमिति व्याख्यानं संगच्छत एव । स्तनंधयीत्यत्र तु प्रत्ययस्य टित्त्वाभावेऽपि धातोष्टित्त्वस्याचरितार्थत्वात्समुदायात्स्यादेव ङीबिति वक्ष्यति ॥ अन्ये तु–ढादय एव प्रत्ययाः । टिदिति तु प्रत्ययाप्रत्ययसाधारणं, तेन टित्प्रातिपदिकं ढाद्यन्तं च यत्प्रातिपदिकमित्यर्थः । टित्त्वं तु प्रातिपदिकस्य क्वचित्प्रत्ययकृतं क्वचित्स्वतः क्वचित् प्रकृतिकृतं भवत्यवयवधर्मस्य समुदाये उपचारात् । तत्र आद्यस्योदाहरणम्—**कुरुचरीति** । द्वितीयस्योदाहरणं **नदडिति** । पचादिषु टितोऽस्य पाठात्स्वत एव टित्त्वम् । तृतीयं तु धेटष्टित्त्वात्स्तनं धयतीति कृदन्ते उदाहरिष्यतीत्याहुः ॥ **कुरुचरीति** । कुरुषु चरतीत्यधिकरणोपपदे 'चरेष्टः २९०८' इति कर्तरि टः ॥ **उपसर्जनत्वान्नेहेति** । बहवः कुरुचरा यस्यां सा बहुकुरुचरेति बहुव्रीहिरन्यपदार्थप्रधान-

---

१ **शैषिके कपीति** । अयं भावः–'न सु खट्वा सु' इत्यवस्थायामेव 'समासान्ताः' इत्यत्रत्यसमासपदस्य 'तादर्थ्यात्ताच्छब्द्यं भविष्यति । येषां पदानां समासः, न तावत्तेषामन्यद् भवति कपं तावत् प्रतीक्षते' इति भाष्येण 'कपः प्रथममन्यत्समासशास्त्रं न प्रवर्तते । कब्भवनकालं प्रतीक्षते' इत्यर्थकेन समासयोग्यालौकिकप्रक्रियावाक्यपरत्वेन प्रकृते बहुव्रीहिसमासयोग्यालौकिकप्रक्रियावाक्यस्य 'न सु खट्वा सु' इत्यस्यैवान्तोऽवयवभूतः कब् जात इति कब्विशिष्टस्य समासत्वात्तद्धितान्तत्वाद्वा कबन्तस्य प्रातिपदिकसंज्ञायां सुपो लुकि कपस्तद्वाक्यान्तावयवत्वेन समासप्रातिपदिकावयवत्वात् स्त्रीप्रत्ययस्य समासप्रातिपदिकान्तत्वाभावेन खट्वाशब्दाकारस्य 'गोस्त्रियोः–' इति ह्रस्वाप्राप्त्या 'केऽणः' इति प्राप्तह्रस्वस्य 'न कपि' इति निषेधे 'आपोऽन्यतरस्याम्' इति सूत्रेण अभाषितपुंस्काद्विहितस्य टाबाकारस्य स्थाने जातस्य ह्रस्वाकारस्य विकल्पेनैवेत्त्वं भवतीति ॥ २ **तदन्तविधिमिति** । स्वस्य गृह्यमाणविशेषणतां चेति शेषः । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तानामनभिधानमेव स्त्रियामेतद्भाष्यप्रामाण्यादिति बोध्यम् ॥ ३ **नित्यस्त्रीलिङ्गादित्यर्थ इति** । 'स्त्रीविषयाच्च' इति लघीयसा न्यासेनैव सिद्धे गुरुभूतन्यासकरणाविरोधाच्चिन्त्यमेतत् । तस्मात् स्त्रीनपुंसकदामशब्दाड् डापि अज्ञातादौ के 'दामाका दामिका दामका' इति रूपत्रयं सिध्यतीति बोध्यम् ॥ ४ **तदन्ता इति** । प्रत्ययग्रहणे तदन्तग्रहणमित्युक्तेरिति भावः ॥ ५ **विशेषणमिति** । तथा च 'येन विधिः–' इति प्राप्तस्य तदन्तविधेः 'समासप्रत्ययविधौ प्रतिषेधः' इति प्रतिषेधे प्राप्तेऽनुपसर्जनाधिकारेण तदन्तविधिर्ज्ञाप्यत इति बोध्यम् ॥ ६ **अतो न तदन्तविधिरिति** । 'उगिद्वर्णग्रहणवर्जम्' इति वर्णग्रहणे 'समासप्रत्ययविधौ–' इति प्रतिषेधाप्रवृत्त्या विशेषणे तदन्तविधिरिति भावः ॥

ङीप् प्राप्तः। याडुटो ङित्त्वेन (६५२) लाश्रयमनुबन्धकार्यं नादेशानामिति ज्ञापनान्न भवति। श्नः शानचः शित्त्वेन (६५३)क्वचिदनुबन्धकार्येऽप्यनल्विधाविति—निषेधज्ञापनाद्वा। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरु-

---

स्तथा च टिदन्तस्योपसर्जनत्वान् ङीन्नेत्यर्थः॥ **वक्ष्यमाणेति**। ब्रुवो लटि 'लटः सद्वा ४१२७' इति शानच्। 'ब्रुवो वचिः ३२६४' इति वाच्यादेशः 'वच परिभाषणे' इत्यस्मात्कर्मणि वा लटः शानच्। 'स्यतासी-२९४१' इति स्यः। कुत्वषत्वे। 'आने मुक् ४१२०' इति मुक्॥ **टित्वादुगित्वाच्चेति**। स्थानिवद्भावेनेत्यर्थः। न चाल्विधित्वात्कथमिह स्थानिवद्भाव इति शङ्क्यम्, 'न ल्यपि ५१५७' इति ज्ञापकादनुबन्धकार्येषु 'अनल्विधौ' इति निषेधस्याप्रवृत्तेः। अत एव रमायामित्यादौ परत्वान्ङेरामि कृते स्थानिवद्भावेनामो ङित्त्वात् 'याडापः ४०६' इति याडागमः सिध्यति॥ **( ६५२ ) ज्ञापनान्न भवतीति**। लिङादेशपरस्मैपदानां स्थानिवद्भावेनैव ङित्त्वलाभात्तदागमस्य याडुटो ङित्त्वं व्यर्थं सत् 'लाश्रयानुबन्धकार्यमादेशानां न ६५२' इति सामान्यतो ज्ञापयतीति भावः॥(६५३) 'पिच्च ङिन्न' इत्यदादिगणे वक्ष्यमाणत्वात्तिबादिष्वौपदेशिकेन पित्त्वेनातिदेशिकं ङित्त्वं बाध्यत इति याडुटो ङित्त्वस्य वैयर्थ्याभावान्न तज्ज्ञापयतीति शङ्कमान प्रत्याह—**श्नः शानचः शित्त्वेनेत्यादि**॥ **सौपर्णेयीति**। 'कद्रूश्च वै सुपर्णी' इति श्रुतिः। सुपर्णीशब्दादपत्येऽर्थे 'स्त्रीभ्यो ढक् १६०१'। 'आयनेयी-६६१' इत्येयादेशः। नन्वत्र निरनुबन्धपरिभाषया 'शिलाया ढः २७८३' यश्च 'तत्र साधुः २२४४' इत्यधिकारे 'सभाया यः २२५१' 'ढश्छन्दसि ५२९३' इति विहितस्तयोरेव ढयोर्ग्रहणेन भवितव्यं न तु ढकः। सत्यम्, शिलाया ढस्य स्वभावान्नपुंसक एव प्रवृत्तेः स्त्रियामसंभवात्। सभाया ढस्य च सभेयीति स्त्रियां ( छन्दसि ) प्रयोगा³दर्शनादन्यस्य हि निरनुबन्धस्यासंभवादगत्या सानुबन्धको गृह्यते॥ **ऐन्द्रीति**। इन्द्रो देवता अस्याः। 'साऽस्य देवता १७३०' इत्यण्। इन्द्रस्येयमिति वा विग्रहः। 'तस्येदम् २०६४' इत्यण्। अत्र व्याचक्षते—'कृद्ग्रहणे गतिकारकपूर्वस्य १००५' इत्यस्य प्रवृत्त्यभावेऽपि अण्णन्तस्य प्रातिपदिकविशेषणात्तदन्तान्तमपि गृह्यत इति कुम्भकारशब्दान्ङीप् स्यादेव। अस्तु वा कारशब्दादेव ङीप्, तथापि कुम्भकारीति रूपं सिध्यत्येव। न च कारशब्दान्ङीपि तदन्तात् 'स्त्रीभ्यो ढक् १६०१' इति ढक्प्रत्यये कौम्भकारेयो न सिध्येदिति वाच्यम्, अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावात्तत्सिद्धेः। नापि नियमाभावे कारीशब्दात्कदाचिद् ढकि कुम्भकारेय इति रूपं स्यादिति शङ्क्यम्, 'समर्थः पदविधिः ९४७' इति वक्ष्यमाणत्वेनासमर्थात्तद्धितानुत्पत्तेरिति। मनोरमायां तु इह सूत्रे अनेकं वाक्यं तत्रानुपसर्जनमण् तस्य योऽकारस्तदन्तादिति व्याख्यानान्नेह, आपिशलमधीते आपिशला ब्राह्मणीति। अत्र हि प्रोक्तार्थे योऽण् श्रूयमाणः स उपसर्जनम्। यस्तु प्रधानोऽध्येत्रण् 'प्रोक्ताल्लुक् १८०४' इति स लुप्तः वर्णप्राधान्यान्न प्रत्ययलक्षणमतष्टाबेव भवतीति स्थि⁴तम्। नन्वेवमापिशलेति रूपसिद्ध्यर्थमनुपसर्जनग्रहणस्यावश्यकत्वेन सामर्थ्योपक्षयात् कथमेतस्य तदन्तविधिज्ञापकतेति चेत्। अत्राहुः—स्वरितत्वप्रतिज्ञायाः 'अधिकारोऽयम्' इत्यधिकारत्वाश्रयणादनुपसर्जनग्रहणस्य ज्ञापकत्वं संभवत्येवेति॥ **औत्सीति**। उत्से भवा 'उत्सादिभ्योऽञ् १५४८'। नन्वनेनैव सिद्धे 'शार्ङ्गरवाद्यञः-७५९' इत्यत्राणग्रहणं व्यर्थम्। अनन्तस्याद्युदात्तत्वेन ङीप्ङीनोः स्वरे विशेषाभावात्। मैवम्, उत्सस्यापत्यं स्त्री औत्सीत्यत्रानन्तलक्षणं ङीपं बाधित्वा परत्वाज्जातिलक्षणे ङीषि प्राप्ते तद्बाधनार्थं तस्यावश्यकत्वात्। न चैवं 'शार्ङ्गरवाद्यञः-७५९' इति ङीना सिद्धमिदं रूपमित्यञ्ग्रहणमिह न कर्तव्यमिति वाच्यम्, तत्र 'जातेः' इत्यनुवृत्तेः। अन्यथा शार्ङ्गरवस्य स्त्री शार्ङ्गरवी औत्सस्य स्त्री औत्सीत्यादौ पुंयोगेऽपि परत्वान्ङीन् स्यान्न तु ङीष्। इष्यते तु पुंयोगे ङीषेव। तस्माद् भवाद्यर्थस्य जातित्वेनापरिभाषणाद्भवाद्यर्थे ङीबर्थसिद्धाप्यञ्ग्रहणमावश्यकमेवेति दिक्॥ **ऊरुद्वयसीत्यादि**। ऊरू प्रमाणमस्याः सा। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः २४९०'। यद्यत्र 'न लोका-९१५' इति सूत्रे तृन्नितिवद् द्वयसजिति मात्रचश्चकारेण प्रत्याहारो गृह्यते, तदा दघ्नञ्मात्रज्ग्रहणमिहाकर्तुं

---

१ **ज्ञापनादिति**। यदि तु शानचः शित्त्वं तत्रैव भाष्ये प्रत्याख्यातम्। ज्ञापने हेरपित्त्वस्य वैयर्थ्यापत्तिरिति दूषणमप्युक्तमिति विभाव्यते तदा वक्ष्यमाणेत्यादिप्रयोगाणां सत्यभिधानेऽजादिगणे पाठः कल्पनीय इति बोध्यम्॥ २ **ज्ञापकादिति**। अनुबन्धानामनेकान्तत्वाच्च। एकान्तत्वेऽपि शिद्ग्रहणेनाऽनुबन्धानामल्व्यवहाराभावज्ञापनाच्चेति भावः॥ ३ **प्रयोगादर्शनादिति**। तथा च भाष्ये—'अयं तर्हि 'सभाया यः' 'ढश्छन्दसि' इति' इत्याक्षिप्य 'एषोऽपि न स्त्रियां वर्तते किं कारणम्? 'तत्र साधुः' इति वर्तते। कथं च स्त्री नाम सभायां साध्वी स्यात्' इति सिद्धान्तितम्। सभायां गतायाः स्त्रिया निर्लज्जत्वे साधुत्वप्रयोजकलज्जाया असंभवात्। लोकनिन्द्यत्वरूपासाधुत्वमेव स्यादिति भाष्याशयः॥ ४ **स्थितमिति**। काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते या सा काशकृत्स्ना ब्राह्मणीत्यत्रापि प्रधानस्याध्येत्रणः 'प्रोक्ताल्लुग्' इति लुकि तन्निमित्तके प्रोक्तार्थकाणन्ताज्जातस्य ङीप्प्रत्ययस्य लुकि प्रोक्तार्थकाणन्त एव शिष्यते। ततश्च 'लक्ष्ये लक्षणम्—' इति न्यायेन पुनर्न प्रवर्तते ङीब् इति टाबेवेति भाष्ये स्पष्टम्। एवं च मीमांसाध्ययनस्य वेदाध्ययनपूर्वकत्वाद्वेदाध्ययने स्त्रीणामधिकारो ध्वनितः। अन्यथा सभागमनेन स्त्रीष्वसाधुत्वस्येव वेदाध्ययनेन नञ्यक्लसपातित्यस्य संभवे तदपि सूचितव्यं स्यात्॥

माश्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी ॥ (६५४) (फ) ताच्छीलिके णेऽपि ॥ चौरी ॥ (६५५) (वा) नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ॥ स्रैणी । पौंस्नी । शाक्तीकी । आढ्यङ्करणी । तरुणी । तलुनी ॥ (६५६) (सू) यञश्च ।४।१।१६। यञन्तात्स्त्रियां ङीप्स्यात् । अकारलोपे कृते -॥ (६५७) (सू) हलस्तद्धितस्य ।६।४।१५०। हल उत्तरस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे । गार्गी ॥ (६५८) (वा) अनपत्याधिकारस्थान्न ङीप् । द्वीपे भवा

---

शर्क्यम्[1] ॥ **पञ्चतयीति** । पञ्च अवयवा अस्याः, 'संख्याया अवयवे तयप् २४९९' ॥ **आक्षिकीति** । 'तेन दीव्यति-२१३१' इति ठक् ॥ **लावणिकीति** । लवणं पण्यमस्याः । 'लवणाट्ठञ् २१९४' ॥ ठक्ठञोर्भेदेनोपादानं ठन्निवृत्त्यर्थम् । तेनेह न, दण्डोऽस्त्यस्याः दण्डिका । 'अत इनि-२६००' इति ठन् । अत एव ञिठन्तेऽपि न ङीप् । काशिषु भवा काशिका । 'काश्यादिभ्यष्ठञ्ञिठौ १८८४' ॥ **यादृशीति** । 'त्यदादिषु दृशः-५७५' इति कञ् । 'आ सर्वनाम्नः ५७६' इत्याकारः ॥ **इत्वरीति** । एति तच्छीला । 'इण्नशजिसर्तिभ्यः क्वरप् ४१६५' 'ह्रस्वस्य पिति कृति तुक् ३८०६' । क्वरपोऽन्यतरानुबन्धोपादानं स्पष्टार्थम् । एकेनैव वरचो व्यावृत्तिसिद्धेः । 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः । तत्र 'स्थेशभास-४१८१' इति वरच् । ईश्वरीति तु त्रेधा-पुंयोगलक्षणे ङीष्यन्तोदात्तमेकम्, 'इच्चोपधायाः' इत्यनुवृत्तौ 'अश्नोतेराशुकर्मणि वरट् ४९४१' इत्यौणादिके वरटि टित्त्वान्ङीपि मध्योदात्तमपरम्, ईशेः क्वनिपि वनिपि वा ङीब्रयोराद्युदात्तमन्यत् ॥ (६५४) **ताच्छीलिके इति** । अयं भावः-'शीलम् २२०३' 'छत्रादिभ्यो णः २२०४' इति विहितो यो णस्तस्मिन्नण्कार्यं भवति 'कार्मस्ताच्छील्ये २२०५' इति ज्ञापकात् । तत्र हि 'अन् १६३७' इत्याणि विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते, यदि तु णप्रत्यये अण्कार्यं न स्यात्तर्हि किं तेन । ताच्छीलिके एव अण्कार्यज्ञापनान्नेह । दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । 'तदस्यां प्रहरणम्-१७८८' इति णः । 'छत्रादिभ्योऽण् २२०४' इत्येव सूत्रमस्तु किमनया कुसृष्ट्येति तु बहवः ॥ **चौरीति** । चुरा शीलमस्याः ॥ (६५५) **नञ्स्नञ्**—वृत्तिकृता त्वत्रत्यख्युन्ग्रहणं सूत्रे प्रक्षिप्य 'क्वरप्ख्युनाम्' इति पठितम्, तच्च भाष्यविरुद्धमित्युत्तरत्र स्फुटीभविष्यति ॥ **स्रैणी पौंस्नीति** । 'स्त्रीपुंसाभ्याम्-१५५०' इति नञ्स्नञौ ॥ **शाक्तीकीति** । शक्तिः प्रहरणमस्याः, 'शक्तियष्ट्योरीकक् २२०१' ॥ **आढ्यंकरणीति** । अनाढ्यः आढ्यः क्रियते अनयेत्यर्थे 'आढ्यसुभग-२९७०' इत्यादिना कृञः ख्युन् । 'युवोः-१७६१' इत्यनादेशः । 'अरुर्द्विषत्-२९२२' इति मुम् ॥ **तरुणी । तलुनीति** । तरुणतलुनयोर्गौरादिषु पाठान्ङीब्ङीषोः पर्यायो बोध्यः । स्वरे विशेषः । 'कॄवृदारिभ्य उनन् ४५२६' 'त्रोरश्च लो वा ४५३७' इति तरुणतलुनयोरुनन्प्रत्ययान्तत्वेन नित्त्वादाद्युदात्तता । सैव ङीपि । ङीषि त्वन्तोदात्ततेति ॥ (६५६) **यञश्च** । योगविभाग उत्तरार्थः । 'प्राचां ष्फ तद्धितः ६५९' इत्यत्र यञ एवानुवृत्तिर्यथा स्यात् ॥ (६५७) **हलस्तद्धितस्य** । हल इति पञ्चमी । 'यस्येति च ४३१' इति सूत्रादीतीत्यनुवर्तते । 'नस्तद्धिते ९८६' इत्यतस्तद्धित इति नानुवर्तते, 'आपत्यस्य च-१५५३' इत्युत्तरसूत्रे पुनस्तद्धितग्रहणात्तदाह-**हल उत्तरस्येत्यादि** । 'तद्धिते' इत्यनुवृत्तौ त्विहापि स्यात् । सांकाश्यकः । काम्पिल्यकः । 'संकाशादिभ्यो ण्यः १८२२' ततो 'धन्वयोपधात्-१८९०' इति वुञ् ॥ **उपधाभूतस्येति** । 'सूर्यतिष्या-६९५' इत्यत उपधाया इत्यनुवर्तत इति भावः । ननु 'यस्येति च ४३१' इति यञोऽकारलोपे कृते यकारस्य ईकारपरत्वमस्त्येव किमुपधाग्रहणानुवृत्त्या । न चाल्लोपस्य स्थानिवद्भावः, यलोपे तन्निषेधात् । अत्राहुः-यलोपे कर्तव्येऽल्लोपस्याभीयत्वेनासिद्धत्वादुपधाग्रहणानुवृत्तिरभ्युपगन्तव्येति ॥ अन्ये त्वाहुः-सूत्रारम्भसामर्थ्यादल्लोपस्यासिद्धत्वं न भवति तथा चोपधाग्रहणं विनापि नात्र क्षतिः । एवं च 'सूर्यतिष्या-६९५' इति सूत्रेऽप्युपधाग्रहणं त्यक्तुं शक्यमुक्तयुक्तेरिति ॥ **गार्गीति** । गोत्रप्रत्ययान्तस्य जातित्वेऽपि योपधत्वादत्र 'जातेः-७४३' इति ङीष् न भवति । तथा चाद्युदात्तमेवेदं पदम् ॥ (६५८) **अनपत्याधिकारेति** । यद्यपि 'आपत्यग्रहणं कर्तव्यम्' इत्येव वार्तिकम्, तथाप्यपत्याधिकाराविहितपरं तत् । तादृशश्च गर्गादियञेव न तु देवायञ् । तस्यापत्याधिकारात्प्रागेव पाठात् । अत एव भाष्यकृता 'यञश्च ६५६' इत्यत्र 'कञ्क्वरपोऽयञश्च' इति 'गर्गादिभ्योऽयञ्' इत्यत्र 'अयञ्' इति चाकारः प्रश्लिष्टः । एवं च 'यञञोश्च १५८४' इति सूत्रेऽपि 'यस्कादिभ्यो गोत्रे अयञञोश्च' इत्यकारः प्रश्लिष्टः । एतच्च मनोरमाग्रन्थानुरोधेनोक्तम् ॥ नव्यास्त्वधिकारग्रहणमिहानर्थकं यथाश्रुतवार्तिकेनैव द्वीपे भवा द्वैप्येति रूपासिद्धेः । न च देवस्यापत्यं स्त्री दैव्येति रूपासिद्धिः शङ्क्या, 'अयञश्च' इति भाष्यकारीयनिष्कर्षात्तत्सिद्धेः । न हि 'देवाद्यञञौ १५४१' इत्यत्रायञित्यकारः प्रश्लेष्टुं शक्यते ।

---

[1] **शक्यमिति** । स्थानिवत्सूत्रे भाष्यकृता तु 'मात्रजिति नेदं प्रत्ययग्रहणं किं तर्हि प्रत्याहारग्रहणम् । क्व सन्निविष्टानां प्रत्याहारः मात्रशब्दादारभ्य आ अयचश्चकारात्' इत्युक्तम् । 'संख्याया अवयवे तयप्' इति सूत्रं तु 'उभादुदात्तो नित्यम्' इति सूत्रादुत्तरत्र पठितमिति पश्चाद्विधास्यमानस्यापि पूर्वमादेशविधानस्य 'लुटः प्रथमस्य डारौरसः' इत्यादावनेकत्रान्यत्रापि दृष्टत्वान्न कोऽपि दोषः, इत्येतदजानानेन तयब्विधिसूत्रं प्राक् प्रमादेन प्रक्षिप्तमिति बोध्यम् । उपायस्योपायान्तरादूषकत्वं वाऽऽश्रित्य तयपो ग्रहणं कृतमिति बोध्यम् ॥

दैव्या । अधिकारग्रहणान्नेह, देवस्यापत्यं दैव्या । देवाद्यञञाविति हि यञ् प्राग्दीव्यतीयो न त्वपत्याधिकारपठितः ॥ ( ६५९ ) **प्राचां ष्फ[1] तद्धितः । ४ । १ । १७ ।** यञन्तात्ष्फो वा स्यात् स्त्रियां स च तद्धितः ॥ ( ६६० ) **षः प्रत्य[3]यस्य । १ । ३ । ६ ।** प्रत्ययस्यादिः ष इत्स्यात् ॥ ( ६६१ ) **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् । ७ । १ । २ ।** प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः । तद्धितान्तत्वात्प्रातिपदिकत्वम् । षित्वसामर्थ्यात् ष्फेणोक्तेऽपि स्त्रीत्वे षिद्गौरेति वक्ष्यमाणो ङीष् । गार्ग्यायणी ॥ ( ६६२ ) **सर्वत्र लोहितादिकतन्तेभ्यः । ४ । १ । १८ ।** लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात् । लौहित्यायनी ।

---

स्त्र्यधिकारग्रहणे अभिजितोऽपत्यं स्त्रीत्यणन्तात्स्वार्थे 'अभिजिद्विदभृत्-२७९८' इत्यादिना यञि आभिजितीति रूपं न सिध्येत् । 'श्रुमदणो यञ्' इत्यकारप्रश्लेषेण भाष्यकाररीत्याऽपीह ङीप्संभवादित्याहुः । स्यादेतत्, अकारं प्रश्लिष्य "गर्गादिभ्यो यञि कृते गार्ग्यं इति रूपं न सिध्येत् । मैवम्, वार्तिकप्रत्याख्यानाय भाष्यकृताऽकारप्रश्लेषे कृतेऽपि तस्येत्संज्ञकत्वेन लुप्तत्वादिष्टसिद्धेः । एवं च 'करप्ष्युनाम्' इति पाठः 'करपोऽयञश्च' इति भाष्यविरुद्ध इति स्पष्टमेव ॥ ( ६५९ ) **प्राचांष्फ तद्धितः** । तद्धितग्रहणं फप्रत्ययान्तस्य प्रातिपदिकसंज्ञार्थम् । तेन 'षिद्गौरा-६९३' इति ङीष् सिध्यति । ननु प्रातिपदिकसंज्ञां विनापि षित्करणसामर्थ्यादेव ङीष् भविष्यति किमनेन तद्धितग्रहणेन । न च यञन्ते 'यस्येति च ४३१' इति लोपार्थं तदिति वाच्यम्, सवर्णदीर्घेणापि रूपसिद्धेर्लोपस्यानावश्यकत्वात् । एवं तर्हि तद्धितग्रहणमिञन्तादपि क्वचित् ष्फो भवतीति ज्ञापनार्थम् । तेन 'आसुरेरुपसंख्यानम् ६६४' इति वक्ष्यमाणं सिध्यति ॥ (६६०) **षः प्रत्ययस्य** । 'आदिर्ञिटुडवः ३०५६' इत्यत आदिरित्यनुवर्तत इत्यभिप्रेत्याह-**प्रत्ययस्यादिरिति** । प्रत्ययस्य किम्, षोडश । 'षष उत्वम्-११६२' इत्यत्र उपदेशस्थोऽयं षकारः । एतच्च कौस्तुभे स्थितम् । आदिः किम्, अविषः । महिषः । 'अविमह्योष्टिषच् ४२४४' । नन्वत्र प्रयोजनाभावादेव षकारस्येत्संज्ञा न भविष्यति टित्त्वादेवाविषी महिषीति रूपसिद्धेः । न च पक्षे ङीष्यन्तोदात्तः प्रयोजनमिति वाच्यम्, 'अनुदात्तस्य च यत्रोदात्तलोपः ५५१७' इत्युदात्तनिवृत्तिस्वरेण टितः परस्य ङीपोऽप्युदात्तत्वात् । अत्राहुः-विनिगमनाभावेन पक्षे टकारस्यापि श्रवणं स्यात् । तथा च षित्वान्ङीषि अविषीत्यादिरूपासिद्धिः स्यात् । अतः षकारस्यैव श्रवणं भवतु मा कदाचिट्टकारस्य श्रवणं भूदित्येतदर्थमादिग्रहणानुवृत्तिरिति ॥ ( ६६१ ) **आयने**—। आयनीनोर्नकारस्य नेत्त्वम्, फिनो नित्करणसामर्थ्यात् । फकारादिष्वकार उच्चारणार्थः । तेन ढ्क्फिनादीनामादेशः सिध्यति । आदिग्रहणं किम्, ऊरुदघ्नमित्यादौ मा भूत् । प्रत्ययेति किम्, धातोरादीनां मा भूत् । फक्कति । ढौकते । खनाति । छादयति । घूर्णते । घञादिषु तु 'चजोः कु घिण्ण्यतोः ३८१४' इत्यादिनिर्देशेनेत्संज्ञया भाव्यमित्यादेशाभावः । 'शमेर्ढः' षण्ढ इत्येवमादीनामेते आदेशा न भवन्ति, 'उणादयो बहुलम् ४९५५' इति बहुलवचनादिति दिक् ॥ **क्रमादिति** । फ—आयन् । ढ—एय् । ख—ईन् । छ—इय् । घ—ईय् इत्यर्थः । स्त्रियामेव ष्फप्रत्ययविधानादत्र ङीष् न स्यादित्याशङ्क्याह—**षित्वसामर्थ्यादिति** । एकमेव स्त्रीत्वमुभाभ्यामुच्यत इति भावः ॥ सर्वत्रग्रहणमुत्तरसूत्रादिहापकृष्यते बाधकबाधनार्थम् । तेन 'आवट्याच्च ७६२' इति वक्ष्यमाणं परमपि चापं बाधित्वा प्राचां मते आवट्यशब्दादपि ष्फ एव भवति । चाब्विधेस्तूदीचां मते सावकाशत्वात् । आवट्यायनी । एवं षाद्यञश्चाब्विषयेऽपि प्राचां ष्फ एव, शार्कराक्ष्यायणीति यथा ॥ ( ६६२ ) **सर्वत्र**—। सर्वेषां मत इत्यर्थः । तदेतत्फलितमाह—**नित्यं ष्फः स्यादिति** । नन्वारम्भसामर्थ्यान्नित्यत्वे सिद्धे सर्वत्रग्रहणं व्यर्थमिति चेत् । अत्राहुः-पूर्वसूत्रे बाधकबाधनोपयुक्तस्य तस्येह स्पष्टार्थमभ्युपगमान्न वैयर्थ्यमिति ॥ यञ इत्यनुवर्तनादाह—**यञन्तेभ्य इति** । लोहितादिर्गर्गाद्यन्तर्गण इति भावः ॥ **लौहित्यायनीति** । सांशित्यायनी बाभ्रव्यायणीत्यादयोऽपि ज्ञेयाः । ननु गर्गादौ कतकण्वशकलेति पठ्यते, तथा च शाकल्यायनीति रूपं न सिध्येत् । यदि तु लोहितादिकार्यार्थं कतशब्दात्प्रागेव शकलशब्दः पठ्येत तर्हि शाकल्यस्य छात्राः शाकला इत्यत्र 'कण्वादिभ्यो गोत्रे १८७५' इति कण्वादिकार्यमण् न सिध्येत् । उच्यते-कतकण्वशकलेति गणपाठे कण्वशब्दात्पूर्वं शकलशब्दः पठितव्यः । कतन्तेभ्य इत्यत्र कतस्यान्तः कतन्तः कतोऽन्तो येषां ते कतन्ताः । शकन्ध्वा-

---

१ **ष्फेति** । निर्विभक्तिक एव सौत्रो निर्देशः-'पथामानक्षे' इत्यादिवदिति भावः ॥ २ **यञान्तादिति** । यञ इति वर्तते । अत इति च । यञो योऽकारस्तदन्तादित्येवार्थः । तेन वतण्डीत्यत्र प्राचां मते प्राप्तोऽपि ष्फो न 'वतण्डाच्च' इति विहितस्य यञो 'लुक् स्त्रियाम्' इति लुकि वर्णाश्रयत्वेन प्रत्ययलक्षणाप्राप्तेः ॥ ३ **प्रत्ययस्येति** । उपदेशपदेऽस्वरितत्वादेव हलन्त्यसूत्रे व्यवसितग्रहणं कृतम्, प्रत्याख्यातं वा अन्त्यग्रहणसामर्थ्यादेव व्यवसितलाभात् । एवं च प्रातिपदिकस्यापि व्यवसितत्वोक्त्या षष्शब्दस्यादिभूतषकारस्येत्त्वापत्त्या प्रत्ययग्रहणम् । उत्तरार्थं वा योग्यत्वादिहैव कृतमिति बोध्यम् ॥ ४ 'अभिजिद्विदभृत्-' इत्यादिसूत्रेषु 'व्रातच्फञोः-' इत्यतः 'अस्त्रियाम्' इत्यनुवृत्तेस्तदन्तस्य स्त्रियामप्रवृत्त्या चिन्त्यम् ॥ ५ **नेति** । 'उक्तार्थानामप्रयोगः' इति न्यायादिति भावः ॥ ६ **उभाभ्यामुच्यत इति** । द्योतकसमुच्चयस्य वाचकद्योतकसमुच्चयस्य च दृष्टत्वात् 'द्विर्बद्धं सुबद्धं भवति' इति न्यायाश्रयणे मानमिदमेव षित्करणमिति भावः ॥

कात्यायनी ॥ ( ६६३ ) सू. कौरव्यमाण्डूकाभ्यां च । ४ । १ । १९ । आभ्यां ष्फः स्यात् । टाब्ङीषोरपवादः । '[१]कुर्वादिभ्यो ण्यः । कौरव्यायणी । ढक् च मण्डूकादित्यण् । माण्डूकायनी ॥ ( ६६४ ) वा. आसुरेरुपसंख्यानम् । आसुरायणी ॥ ( ६६५ ) सू. वयसि प्रथमे ।४।१।२० । प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप् स्यात् । कुमारी ॥ ( ६६६ ) वा. वयस्यचरम इति वाच्यम् ॥ वधूटी । चिरण्टी । वधूटचिरण्टशब्दौ यौवनवाचिनौ । अतः किम् । शिशुः ।( ६६७ ) कन्याया न । कन्यायाः कनीन चेति निर्देशात् ॥( ६६८ ) सू. द्विगोः ।४।१।२१। अदन्ताद् द्विगोर्ङीप् स्यात् । त्रिलोकी । अजादित्वात्त्रिफला । त्र्यनीका सेना ॥ ( ६६९ ) सू. अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि । ४ । १ । २२ । अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्ङीप् न स्यात्तद्धितलुकि सति । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आर्हीयष्ठक् । अध्यर्धेति लुक् । द्वौ बिस्तौ पचति द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । परिमाणान्तात्तु-द्व्याढकी । तद्धितलुकि किम् । समाहारे पञ्चाश्वी ॥ ( ६७० ) सू. काण्डान्तात्क्षेत्रे ।४।१।२३ । क्षेत्रे यः

---

दित्वात्पररूपम् । कतन्तश्च कतन्ताश्चेति बहुव्रीहितत्पुरुषयोरेकशेषोऽभ्युपेयः तथा कण्वादिभ्य इत्यत्रापि कण्वस्यादिः कण्वादिः, कण्व आदिर्येषामिति बहुव्रीहितत्पुरुषयोरेकशेषस्तथा च सर्वेष्टसिद्धिरिति ॥ ( ६६३ ) **कौरव्य—**॥ **टाब्ङीषोरिति**। योपधत्वेन 'जातेः-७४३' इति ङीषः प्राप्त्यभावात्कौरव्यशब्दाट्टाप्, माण्डूकात्तु ङीषिति भावः । यद्यपीह टाब्ङीपोरिति पाठः प्रायेण दृश्यते तथापि तत्र ङीबिति लेखकप्रमाद एव । पारिभाषिकस्य पौत्रप्रभृतिगोत्रस्यैव जातित्वान्ङीषः प्राप्तिर्नेति मतान्तराभिप्रायेण वा तथोक्तामिति बोध्यम् । कौरव्यसाहचर्यान्माण्डूकशब्दोऽप्यपत्यप्रत्ययान्त एवेह गृह्यते, न तु 'तस्येदम् २०६४' इत्यणन्तस्तेन 'यद्यसौ कूपमाण्डूकि तव' इति भट्टिप्रयोगः सिद्धः । तत्र हि मण्डूकस्येयं भार्येति विवक्षया 'तस्येदम् २०६४' इत्यण् ॥ ( ६६५ ) **वयसि-**। कालकृता शरीरावस्था वयः । यस्त्वर्थप्रकरणादिकमनपेक्ष्य श्रवणमात्रेण वयः प्रतिपादयति स वयोवाचीत्युच्यतेऽन्तरङ्गत्वात् । तेनेह न, उत्तानशया । लोहितपादा । इह प्रकरणादिना वयसः प्रतीतावपि शब्दादप्रतीतेः । अबलाऽपि हि व्याध्यादिवशादुत्ताना शेते, अलक्तकेन च रक्तचरणा भवति । प्रथमेति किम्, वृद्धा ॥ **कुमारीति**। प्रथमवयोवचन एवायं शब्दो न त्वनूढत्वप्रयुक्तः । पुंस्यापि कुमार इति प्रयोगात् ॥ वृद्धकुमारीति तु गौणप्रयोगः ॥( ६६६ ) **वयस्यचरम इति-**। यौवनं न प्रथमवयः किंतु द्वितीयमिति वार्तिकारम्भः । उपचयाऽपचयलक्षणे द्वे एव वयसी इति पक्षे यौवनस्यापि प्राथम्यात् सूत्रेणैव सिध्यतीति बोध्यम् । वयांसि चत्वारीत्येके । यदाहुः—"आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् । तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसि" इति ॥ त्रीणीत्यन्ये । यदाहुः—"पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति" इति ॥ ( ६६८ ) **त्रिलोकीति** । त्रयाणां लोकानां समाहारे 'तद्धितार्थो-१०५२' इति द्विगुः । 'अकारान्तोत्तरपदो द्विगुः-११७६' इति स्त्रीत्वम् ॥ **त्रिफलेति** । अत्र 'द्विगोः ६६८' इति ङीप् प्राप्नोति न तु 'पाककर्ण-७४८' इति ङीष् । तत्र 'जातेः' इत्यनुवृत्तेः ॥ **त्र्यनीकेति** । अनीकमग्रता । त्रयाणामनीकानां समाहारः । अजादेराकृतिगणत्वाट्टाबिति त्र्यनीकाधिकरणे मीमांसकाः ॥ ( ६६९ ) **पञ्चाश्वेति** । नन्वत्र 'द्विगोः ६६८' इति ङीब् मा भूत् । ठगन्तत्वात्तु स्यादेव । न च 'अपरिमाण-६६९' इति निषेधस्य निरवकाशतेति वाच्यम्, पञ्चानामजानां निमित्तं धनपतिसंयुक्तिः पञ्चाजा पञ्चोष्ट्रीत्यादौ सावकाशत्वात् । तत्र हि-गोद्व्यचोऽसंख्या-२३२१' इति यत्प्रत्ययस्य 'अध्यर्धपूर्व-२३०५' इत्यादिना लुगिति चेत् । अत्राहुः-ठको योऽकार इति व्याख्यानाट्ठगन्तलक्षणो ङीन्नेति॥**द्विबिस्तेति** । 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरः । 'आचितो दश भाराः स्युः' ॥ **द्विकम्बल्येति** । द्वाभ्यां कम्बलाभ्यां क्रीता । कम्बल्यमूर्णापलशतम्, 'कम्बलाच्च संज्ञायाम् २२६०' इति यत् । ततः क्रीतार्थस्य ठञो लुक् ॥ **द्व्याढकीति** । द्वावाढकौ पचतीति विग्रहे 'आढकाचितपात्रात्खोऽन्यतरस्याम् २३३७', 'द्विगोष्ठंश्च २३३८' इति खठनौ विहितौ ताभ्यां मुक्ते प्राग्वतीयष्ठञ् । तस्य 'अध्यर्ध-२३०५' इति लुक् । एतेन द्व्याचिता व्याख्याता । स्यादेतत्, 'काण्डान्तात्-६७०'

---

१ **प्रथमवयोवाचिन इति** । द्विवर्षेत्यादिस्तु न वयोवाची, शालादावपि प्रयोगात् ॥ २ **गौणप्रयोग इति**। कुमारशब्दो भाष्यकृता पुंसा सहासंप्रयोगप्रवृत्तिनिमित्तक एवाङ्गीकृतः । स चासंप्रयोगो विवाहाभावेन संप्रयोगयोग्यस्य '**ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् । यद्याधत्ते पुमान्गर्भं कुक्षिस्थः स विपद्यते । जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः । तस्मादत्यन्तबालाया गर्भाधानं न कारयेत् ॥ पञ्चविंशे ततो वर्षे पुमान्नारी तु षोडशे । समत्वागतवीर्यौ तु जानीयान्निपुणो भिषक् ॥**' इति शारीरस्थाने **सुश्रुताचार्येण** लक्षितस्य वयसोऽप्राप्त्या वा भवति । तथा च कुमारीशब्दो द्विधा-एको वयोवचनः । अपरो जातिवचनः । तथा च 'वृद्धकुमारी' इत्यत्र जातिलक्षणो ङीषिति कथं गौणप्रयोग इति चिन्त्यम् ॥ ३ इदं तु 'त्रेश्च । त्रेश्च ( ङीषः ) प्रतिषेधो वक्तव्यः । त्रिफला ' इति तत्सूत्रस्थवार्तिकभाष्यविस्मरणमूलकम् । एवं च त्रिफलाशब्दस्याजादित्वकल्पनमनार्षम् ॥ 'ङीषूनिषेधसामर्थ्यान्ङीबपि न भवति तयोरत्र विशेषाभावादिति कैयटः ॥

काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे प्रमाणमस्याः सा द्विकाण्डा क्षेत्रभक्तिः । प्रमाणे द्वयसजिति विहितस्य मात्रचः प्रमाणे[२४९१] लो द्विगोर्नित्यमिति[२४९२] लुक् । क्षेत्रे किम् । द्विकाण्डी रज्जुः ॥ ( ६७१ ) (सू) **पुरुषात्प्रमाणेऽन्यतरस्याम्** । ४ । १ । २४ । प्रमाणे यः पुरुषस्तदन्ताद् द्विगोर्ङीब्वा स्यात्तद्धितलुकि । द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी द्विपुरुषा वा परिखा ॥ ( ६७२ ) (सू) **ऊधसोऽनङ्** । ५ । ४ । १३१ । ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात् स्त्रियाम् । इत्यनङि[१] कृते डाब्ङीब्निषेधेषु प्राप्तेषु-॥ ( ६७३ ) (सू) **बहुव्रीहेरूधसो ङीष्** ।४।१।२५। ऊधोऽन्ताद्बहुव्रीहेर्ङीष् स्यात् स्त्रियाम् । कुण्डोध्नी । स्त्रियां किम् । कुण्डोधो धैनुकम् । इहानङपि न, तद्विधौ स्त्रियामित्युपसंख्यानात् ॥ ( ६७४ ) (सू) **संख्याऽव्ययादेर्ङीप्** ।४।१।२६। ङीषोऽपवादः ।

---

इत्युत्तरसूत्रे 'परितः सर्वतो येन मीयते तत्परिमाणमाढककुडवादि न तु परिच्छेदकमात्रम्' इति मनोरमायां स्थितम् । तथा चापरिमाणत्वादेव सिद्धे बिस्तादिग्रहणमिह व्यर्थं स्यात् । अत्राहुः-उन्मानस्य निषेधे बिस्तादीनामेवेति नियमार्थं तद्ग्रहणं, तेन द्विकार्षापणी द्व्यक्षीत्यादि सिध्यतीति ॥ ( ६७० ) **काण्डान्तात्**-। षोडशहस्तप्रमाणो दण्डः काण्डम् । यद्यपि विशेषणेन तदन्तविधिः सिद्धः, तथाप्यसत्यन्तग्रहणे 'क्षेत्रे' इत्येतच्छ्रुतत्वात्काण्डस्यैव विशेषणं स्यान्न तु काण्डान्तस्य । ततश्च द्वाभ्यां काण्डाभ्यां काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेत्यत्र निषेधः स्यात् । इह तु निषेधो न स्याद्-द्विकाण्डा क्षेत्रभक्तिरिति । अत्र हि काण्डं प्रमाणे वर्तते, काण्डान्तस्तु क्षेत्रे । अतोऽन्तग्रहणं कृतम् ॥ इह 'द्विगोः ६६८' इत्यनुवर्तते 'न तद्धितलुकि ६६९' इति च तदाह—**द्विगुस्ततो न ङीबित्यादि** ॥ **मात्रच इति** । द्वयसचो लुगिति प्राचोक्तं नादर्तव्यम् । 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति सिद्धान्तादिति भावः ॥ **द्विकाण्डी रज्जुरिति** । द्वे काण्डे प्रमाणमस्याः । पूर्ववत्तद्धितलुक् 'द्विगोः ६६८' इति ङीप् ॥ नन्विहापरिमाणान्तादिति[६६९] पूर्वेण निषेधः स्यात्, काण्डशब्दस्यायामपरतया परिमाणार्थत्वात्, परितः सर्वत आरोहतः परिणाहतश्च येन मीयते तद्धि परिमाणम्-आढककुडवादि, न तु यथाकथंचित्परिच्छेदकमात्रम् । यदाहुः-"ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः" इति । अत एव द्विहस्ता भित्तिरित्यत्र ङीब् न भवतीति चेत् ॥ अत्राहुः-नियमार्थमिदं क्षेत्र एव निषेधो यथा स्यादिति । तथा च द्विकाण्डी रज्जुरित्यत्र ङीबेव सूत्रारम्भफलमिति ॥ ( ६७१ ) **पुरुषात्प्रमाणे**—। अपरिमाणान्तत्वान्निषेधे प्राप्ते विकल्पार्थं वचनम् । पुरुषशब्दो यद्यपि लोके जातिवचनस्तथापि द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणशब्दसामानाधिकरण्यात्प्रमाणे वर्तत एव । वृत्तौ तु शब्दशक्तिस्वाभाव्यादेव । तथा च शुल्बसूत्रम्-'पञ्चारत्निः पुरुषः' इति ॥ **द्विपुरुषीति** । अत्र 'प्रमाणे लो द्विगोर्नित्यम् २४९१-२४९२' इति द्वयसचो लुगिति न्यासकारः ॥ नन्विह तद्धितलुग्दुर्लभः । पुरुषशब्दस्य प्रमाणवाचित्वाभावेन 'प्रमाणे लः-२४९१-२४९२' इति श्लोकवार्तिकस्याप्रवृत्तेः । ये हि शमादिवत्प्रमाणत्वेन प्रसिद्धास्तत्रैव तत्प्रवर्तते, न तु पुरुषशब्देऽपि । अन्यथा पुरुषद्वयसमित्यत्रापि लुक् स्यात् । न चैवं द्वयसच्दघ्नचावपि नास्मात्स्यातामिति वाच्यम्, 'ऊर्ध्वमाने मतौ मम' इति वचनात् । एवं 'पुरुषात्प्रमाणे-६७१' इति वैकल्पिकस्यापि ङीपः सामर्थ्यादेव प्रवृत्तिः । किन्तु तद्धितलुगेव दुर्लभ इति चेत् । अत्राहुः-अस्त्विह 'प्रमाणे लः २४९१' इत्यस्याप्रवृत्तिस्तथापि सुलभ एव लुक् 'पुरुषात्प्रमाणे-६७१' इति सूत्रे हि 'द्विगोस्तद्धितलुकि' इत्यनुवर्तते तत्सामर्थ्याल्लुगप्याक्षिप्यत इति सुवचत्वादिति । प्रमाणे किम्, द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा गौः । तद्धितलुकीत्येव । समाहारे पञ्चपुरुषी । नन्विहः पुरुषशब्दः प्रमाणे न वर्तते इति द्व्यङ्गविकलमेतदिति चेत् । अत्राहुः-प्रमाणार्थवृत्तीनामेव पुरुषाणामत्र समाहारान्न द्व्यङ्गविकलता । ततश्च तद्धितलुकीत्यनुक्तौ पञ्चपुरुषशब्दाद्विकल्पः स्यात्, इष्यते तु 'द्विगोः ६६८' इति नित्यं ङीबिति ॥ ( ६७२ ) **ऊधसोऽनङ्** । नादेशेनैव सिद्धेऽनङ्करणं 'धनुषश्च १२५१' इत्युत्तरार्थमन्यथा शार्ङ्गधन्वेति न सिध्येदित्याहुः ॥ वस्तुतस्तु-इहार्थमप्यावश्यकमेव, अन्यथाऽनो लाक्षणिकत्वेनाल्लोपाप्रसङ्गादित्यन्ये ॥ इह 'बहुव्रीहौ सक्थ्यक्ष्णोः-१२२७' इत्यतो बहुव्रीहावित्यनुवर्तत इत्याह—**ऊधोऽन्तस्य बहुव्रीहेरिति** । समासान्तप्रकरणस्थत्वेऽप्यनङो न प्रत्ययत्वमन्यथा ङित्त्ववैयर्थ्यापत्तोरिति प्राञ्चः ॥ वस्तुतस्तु ष्यङ इव प्रत्ययत्वेऽप्यादेशत्वमविरुद्धं कुण्डोध्नीत्यत्र ङीषि कृते स्वरेऽपि विशेषाभावादिति बोध्यम् ॥ **स्त्रियामिति** । उपसंख्यानालभ्यमेतत् ॥ **डाब्ङीन्निषेधेष्विति** । 'डाबुभाभ्याम्-६२८' इति वैकल्पिको डाप् । 'अन उपधालोपिनोऽन्यतरस्याम् ६२९' इति विकल्पेन ङीप् । 'अनो बहुव्रीहेः ६२७' इत्यनेन 'ऋन्नेभ्यः-४२६' इति प्राप्तस्य ङीपो निषेध इति विवेकः ॥ ( ६७३ ) **ङीष् स्यादिति** । प्रकृतो ङीबेव तु न विहितः स्वरे[२] विशेषात् ॥ **कुण्डोध्नीति** । कुण्डमिव ऊधो यस्याः सा । बहुव्रीहेः किम्, प्राप्ता ऊधः प्राप्तोधाः । 'प्राप्तापन्ने-१०३६' इति समासः ॥ **धैनुकमिति** । 'अचित्तहस्ति-१७७६' इति समूहार्थे ठक् । 'इसुसुक्तान्तात्कः १७२४' ॥ **स्त्रियामित्युपसंख्यानादिति** । नन्विहैव लाघवार्थं 'बहुव्रीहेरूधसो ङीष् ६७३' 'नश्च' इति सूत्र्यताम् 'अनङ् च' इति वा समासान्तेषु 'ऊधसोऽनङ् ६७२' इति च त्यक्त्वा 'धनुषोऽनङ्' इत्येव पठ्यताम् । मैवम्, कब्भावे सावकाशस्यास्य पक्षे कपा बाधापत्तेः । सिद्धान्ते तु अनङः समासान्ततया शेषत्वमेवेह नास्तीति

---

१ **इत्यनङीति** । समासान्तानामलौकिके वाक्य एव प्रवृत्त्या पूर्वमनङ्येषां प्राप्तिरिति भावः ॥ २ **स्वरे इति** । ङीपि तु कुण्डोधनूशब्दे पूर्वपदप्रकृतिस्वरेण धकारकारस्योदात्तत्वादुदात्तनिवृत्तिस्वराप्राप्त्याऽन्तोदात्तत्वं न सिध्येदिति भावः ॥

द्व्यूध्नी । अत्यूध्नी । बहुव्रीहेरित्येव । ऊधोऽतिक्रान्ता अत्यूधाः ॥ ( ६७५ ) सू॰ दामहायनान्ताच्च ।४।१।२७। संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप् स्यात् । दामान्ते डाप्प्रतिषेधयोः प्राप्तयोर्हायनान्ते टापि प्राप्ते वचनम् । द्विदाम्नी । अव्ययग्रहणाऽननुवृत्तेरुद्दामा वडवेत्यत्र डान्निषेधावपि पक्षे स्तः । द्विहायनी बाला ॥ ( ६७६ ) वा॰ त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् ॥ ( ६७७ ) वा॰ वयोवाचकस्यैव हायनस्य ङीब् णत्वं चेष्यते ॥ त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र–त्रिहायना । चतुर्हायना शाला ॥ ( ६७८ ) सू॰ नित्यं संज्ञाछन्दसोः । ४ । १ । २९ । अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप् । सुराज्ञी नाम नगरी । अन्यत्र पूर्वेण विकल्प एव । वेदे तु शतमूर्ध्नी ॥ ( ६७९ ) सू॰ केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ।४।१।३०। एभ्यो नवभ्यो नित्यं ङीप् स्यात्संज्ञाछन्दसोः । अथो' त इन्द्रः केवलीर्विशः ( ऋ॰ सं॰ १०।१७३।६। ) मामकी । भागधेयी । पापी । अपरी । समानी । आर्यकृती । सुमङ्गली ( : ) ( ऋ॰ सं॰ १०।८५।३३। ) भेषजी । अन्यत्र केवला इत्यादि । मामकग्रहणं नियमार्थम् । अणन्तत्वादेव सिद्धेः । तेन लोकेऽसंज्ञायां मामिका ॥ ( ६८० ) सू॰ अन्तर्वत्पतिवतोर्नुक् ।४।१।३२। एतयोः स्त्रियां नुक् स्यात् । [३]एभ्यो ङीप् । गर्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागौ निपात्येते । तत्रान्तरस्त्यस्यां गर्भ इति विग्रहे अन्तःशब्दस्याधिकरणशक्तिप्रधानतयाऽस्तिसामानाधिकरण्याभावादप्राप्तो मतुब् निपात्यते । पतिवत्नीत्यत्र तु वत्वं निपात्यते । अन्तर्वत्नी । पतिवत्नी । प्रत्युदाहरणं तु–अन्तरस्त्यस्यां शालायां घटः । पतिमती पृथिवी ॥ ( ६८१ ) सू॰ पत्युर्नो यज्ञसंयोगे । ४।१।३३। पतिशब्दस्य नकारादेशः स्याद्यज्ञेन संबन्धे । वसिष्ठस्य पत्नी । तत्कर्तृकयज्ञस्य फलभोक्त्रीत्यर्थः । दम्पत्योः सहाधिकारात् ॥ ( ६८२ ) सू॰ विभाषा सपूर्वस्य ।४।१।३४। पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो

---

न कप् ॥ ( ६७४ ) संख्याऽव्यया—। आदिग्रहणात्पदान्तरव्यवधानेऽपि स्यादेव । द्विविधोध्नी ॥ ( ६७५ ) दाम—। बहुव्रीहिविशेषणत्वादेव सिद्धेऽन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् ॥ संख्यादेरिति । समासनिर्देशेऽपि स्वरितत्वबलादेकदेश एवानुवर्तत इति भावः ॥ अननुवृत्तेरिति । भाष्यकृताऽननुवर्तितत्वादिति भावः ॥ एवं चोद्दामेत्यत्र 'दामहायनान्ताच्च ६७५' इत्यस्याप्रवृत्त्या पूर्वोक्तेषु डाब्ङीन्निषेधेषु प्राप्तेषु बहुराज्ञीवद्रूपत्रयं भवत्यतो व्याचष्टे—डान्निषेधावपीति [१] ॥ ( ६७८ ) नित्यं संज्ञाछन्दसोः । 'अन उपधालोपिनः–६२९' इति विकल्पस्यापवादः । आरम्भसामर्थ्यात्सिद्धेऽपि नित्यत्वे नित्यग्रहणमुत्तरत्र विकल्पाननुवृत्तिसूचनाय कृतमित्याहुः । शतमूर्ध्नीति । इह पञ्चदाम्नीति क्वचित्पाठः, स [३] चायुक्तः 'दामहायनान्ताच्च ६७५' इत्यनेनैव सिद्धत्वात् ॥ ( ६७९ ) केवल—। छन्दसि 'मामकी तनू' । 'मित्रावरुणयोर्भागधेयी' । 'तन्वः सन्तु पापीः' । 'उतापरीभ्यः' । 'समानी व आकूतिः' । आर्यकृती । सुमङ्गली । 'सुमङ्गलीरियं वधूः' इत्यत्र तु 'छन्दसीवनिपौ–५३४२' इति मत्वर्थे ईप्रत्ययो बोध्यः । 'शिवा रुद्रस्य भेषजी' ॥ अन्यत्र केवलेत्यादीति । मामकनरकयोरुपसंख्यानादित्त्वम् । मामिका । भागशब्दात्पुँल्लिङ्गात्स्वार्थे धेयप्रत्ययः । 'स्वार्थिकाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति स्त्रीत्वम् । भागधेयी । अभेदोपचारात्तद्वति वर्तमानः पापशब्दो विशेष्यनिघ्नः । पापा । अपरा । समाना । आर्येण कृतेति प्राक् सुबुत्पत्तेः कृदन्तेन समासः । टाप् । आर्यकृता । भिषज इयमित्यणि आदिवृद्धेरपवादोऽस्मादेव निपातनादेकारः । संज्ञाछन्दसोरिति नियमादन्यत्र भेषजा ॥ ( ६८० ) प्रत्युदाहरणं त्विति । अन्तर्वती पतिवतीति प्राचोक्तं प्रत्युदाहरणमयुक्तमिति भावः । आद्ये, अस्तिसामानाधिकरण्याभावान्मतुपोऽसंभवात् । द्वितीये तु वत्वासंभवादिति भावः ॥ ( ६८२ ) विभाषा सपूर्वस्य । अप्राप्तविभाषेयम्, अयज्ञसंयोगत्वात् । पूर्वेण सहितः सपूर्वस्तस्य । यस्य समुदायस्य पूर्वावयवो विद्यते तस्येत्यर्थः । स च समुदायः पतिशब्दस्तु न भवतीति पतिशब्देन तदन्तविधिरित्याह—पतिशब्दान्तस्येति ।

---

१ निषेधावपीति । अपिना 'अन उपधा–' इति ङीप्, अनुग्रहणेऽनर्थकस्यापि ग्रहणात् ॥ २ सहाधिकारादिति । भार्याविरहे भीष्मकण्वविभाण्डकादीनामिव केवलानां पुंसामप्यधिकारः । एवं पतिविरहे केवलस्त्रिया अपीति 'लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः' ( ६ । १ । ६ ) इति पूर्वपक्षे 'जातिं तु बादरायणोऽविशेषात्तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्' ( ६ । १ । ८ ) इति सूत्रेण जैमिनिना 'स्वर्गकामो यजेत' इत्यत्र स्त्रीणामप्यधिकारः सिद्धान्तितः । दम्पत्योरुभयोः सत्त्वे द्वयोरेकस्मिन्नेव यज्ञे स्वामित्वेनाधिकारः न पृथक्पृथगिति निर्णीतं पूर्वमीमांसायां षष्ठप्रथमचतुर्थाधिकरणे जैमिनिना "स्ववतोस्तु वचनादैककर्म्यं स्यात्" "लिङ्गदर्शनाच्च" ( ६ । १ । १७–१८ ) इति सूत्राभ्याम् । 'क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते' ( ६ । १ । १९ ) इति पूर्वपक्ष्याशयस्य "फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः" ( ६ । १ । २० ) इति सूत्रेण यज्ञफलकामित्वस्यैव स्वामित्वकथनेन दूषितत्वान्न कोऽपि दोषः । राजसंनिधानेऽमात्यादेरिव पतिसंनिधाने स्त्रीणां नास्ति प्राधान्यम् । इदमेवातुल्यत्वं 'तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वाद्' ( ६।१।२४ ) इति जैमिनिसूत्रे ग्राह्यम् । न तु 'अध्ययनाभावेन स्त्रीणां न पतितुल्यत्वम्' । ऋत्विगादिभिर्यज्ञे संस्कृतेनैव वक्तव्यतया यजमानपत्न्या अनध्ययने तत्प्रोक्तकार्यस्याज्ञाने कथं यजमानपत्नी कुर्यादिति बोध्यम् ॥ ३ स चायुक्त इति । संज्ञाशब्दानां नियतानुपूर्वीकानामेवानादित्वात्, छन्दसि च दृष्टानुविधित्वेन ङीबभावविशिष्टस्य तत्र प्रयोगासंभवाद् 'अन उपधा–' इत्येव सिद्धे व्यर्थमिदमिति चेत्, 'केवलमामक–' इत्युत्तरार्थत्वेऽपि योगविभागो व्यर्थ एवेति ध्वनयितुमेव सूत्रान्तरसिद्धस्योदाहरणदाने तात्पर्याद् भयुक्तत्वोक्तिश्चिन्त्यैव ॥

वा स्यात् । गृहस्य पतिः गृहपतिः । गृहपत्नी । अनुपसर्जनस्येतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणं किन्तु तदन्तस्य । तेन बहुव्रीहावपि[2] दृढपत्नी । दृढपतिः । वृषलपत्नी । वृषलपतिः । अथ वृषलस्य पत्नीति व्यस्ते कथमिति चेत् । पत्नीव पत्नीत्युपचारात् । यद्वा—आचारक्विबन्तात्कर्तरि क्विप् । अस्मिंश्च पक्षे पत्यियौ । पत्नियः। इतीयङ्विषये विशेषः। सपूर्वस्य किम् । गवां पतिः स्त्री ॥ ( ६८३ ) (सू॰) **नित्यं सपत्न्यादिषु** । ४ । १ । ३५ । पूर्वविकल्पापवादः । समानस्य सभावोऽपि निपात्यते । समानः पतिर्यस्याः सा सपत्नी । एकपत्नी । वीरपत्नी ॥ ( ६८४ ) (सू॰) **पूतक्रतोरै च** । ४ । १ । ३६ । इयं त्रिसूत्री पुंयोग एवेष्यते ॥ पूतक्रतोः स्त्री पूतक्रतायी । 'यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा' ॥ ( ६८५ ) (सू॰) **वृषाकप्यग्निकुसितकुसिदानामुदात्तः** । ४ । १ । ३७ । एषामुदात्त ऐ आदेशः स्यान्ङीप् च । वृषाकपेः स्त्री वृषाकपायी । 'हरविष्णू वृषाकपी' इत्यमरः । 'वृषाकपायी श्रीगौर्योः' इति च । अग्नायी । कुसितायी । कुसिदायी । कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः ॥ ( ६८६ ) (सू॰) **मनोरौ वा** । ४ । १ । ३८ । मनुशब्दस्यौकारादेशः स्यादुदात्त ऐकारश्च वा, ताभ्यां सन्नियोगशिष्टो ङीप् च । मनोः स्त्री—मनावी, मनायी, मनुः ॥ ( ६८७ ) (सू॰) **वर्णादनुदात्तात्तोपधात्तो नः** । ४ । १ । ३९ । वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् स्यात्तकारस्य नकारादेशश्च । एनी, एता । रोहिणी, रोहिता । वर्णानां तणतिनितान्तानामिति फिट्सूत्रेणाद्युदात्तः ॥ श्येण्या च शलल्येति गृह्यम् । त्रीण्येतान्यस्या इति बहुव्रीहिः[3] । अनुदात्तात्किम् । श्वेता । घृतादीनां चेत्यन्तोदात्तोऽयम् । अत इत्येव । शितिः स्त्री॥(६८८) (वा॰) **पिशङ्गादुपसंख्यानम्** ॥ पिशङ्गी । पिशङ्गा ॥

---

ननु पत्युरिति प्रातिपदिकविशेषणेन तदन्तलाभात्पत्यन्तस्येत्येवास्तु किमनेन सपूर्वग्रहणेन । अत्राहुः—केवलपतिशब्दस्यापि व्यपदेशिवद्भावेन पत्यन्तत्वादतिप्रसङ्गः स्यात् , तद्वारणाय सपूर्वग्रहणमिति । अत्र पूर्वशब्दः पूर्वावयवपर इति ध्वनयन्प्रत्युदाहरति—**गवां पतिः स्त्रीति** । पातीति पतिरिति क्रियाशब्दस्य[4] त्रिलिङ्गत्वादिह स्त्रीत्वम् । तथा च तैत्तिरीयैर्नपुंसकेऽपि प्रयुज्यते—'अन्नं साम्राज्यानामधिपति तन्माऽवतु' इति ॥ **व्यस्ते कथमिति** । प्राचा तु समस्तेऽप्युपचार इत्युक्तं तद्वृथैवेति भावः ॥ ( ६८३ ) **नित्यं सपत्न्यादिषु** । आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम् ॥ **निपात्यत इति** । इह गणे 'समान, एक, वीर, भ्रातृ, पुत्रेति समानादय एव पठ्यन्ते, ततश्च 'समानादिषु' इति वक्तव्ये सपत्न्यादिष्वित्युक्तिः सभावनिपातनार्थेति भावः॥ सपत्न्यादिषु बहुव्रीहिराश्रीयत इत्याशयेनाह—**समानः पतिर्यस्याः सेति** ॥(६८४) **पूतक्रतोरै च** ।ऐकार आदेशो न तु प्रत्ययः । उत्तरसूत्रे उदात्तग्रहणात्॥(६८५)**न त्विति** । अन्यथा 'लघावन्ते-५६२४' इति मध्योदात्तो वृषाकपिशब्द उदात्तत्वं प्रयोजयति, अग्न्यादिषु त्रिषु 'स्थानेऽन्तरतमः ६२' इत्येव सिद्धमिति वृत्त्यादिग्रन्था विरुध्येरन्निति भावः ॥ ( ६८६ ) **उदात्त ऐकार इति** । 'शॄस्वृस्निहि-४२०८' इत्यादिना मनेरुप्रत्ययविधौ 'धान्ये नित्-४२०७'इत्यधिकारान्मनुशब्द आद्युदात्तः । समासनिर्देशेनैतद्दर्शयति—उदात्त इत्यनुवर्तमानं संबन्धानुवृत्तेरैकारेणैव संबध्यते न त्वौकारेणापीति । ततश्चैकारौकारावुदात्तौ स्त इति प्राचोक्तं वृत्तिपदमञ्जर्यादिविरोधादुपेक्ष्यमिति भावः ॥ **मनायीति** । मध्योदात्तमिदम् । इतरत्पदद्वयमाद्युदात्तम् ॥ ( ६८७ ) एता । कर्बुरा ॥ **वर्णानामिति** । एतः । शोणः । शितिः । पृश्निः । पृषदिति क्रमेणोदाहरणानि ॥ **आद्युदात्त इति** । 'अनुदात्तं पदमेकवर्जम् ५५१५' इति शेषनिघातेनानुदात्तान्त एतशब्द इति भावः ॥ **श्येण्येति** । अत्रैतशब्दस्योपसर्जनत्वेऽपि तदन्तसमासस्यानुपसर्जनत्वमिति भावः ॥ 'पूर्वपदात्संज्ञायाम्-१२३३' इति णत्वम्[5] ॥ **गृह्यमिति** । 'गृहू ग्रहणे' 'ऋदुपधाच्चाक्लृपिचृतेः ३८०९' इति क्यप् ॥ **त्रीण्येतान्यस्या इति** । ननु 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इति चित्रपर्याय एतशब्दः । तथा च शलल्यां चित्रत्रयाभावादर्थासंगतिरित्याशङ्क्य केचिदिह व्याचक्षते । एतशब्दोऽत्र एतावयवपर इति नास्त्यत्रार्थासंगतिः । न चैवमपि गुणविषये नपुंसकप्रयोगो न संगच्छते 'गुणे शुक्लादयः पुंसि' इत्युक्तेरिति वाच्यम्, एतान्येतावयवाधिकरणानीति व्याख्यया गुणिलिङ्गपरत्वादेतशब्दस्य नपुंसकत्वमप्युपपद्यत इति ॥ (६८८) **पिशङ्गादिति** । 'लघावन्ते-५६२४' इति पिशङ्गशब्दस्य मध्योदात्तत्वात् 'अन्यतो ङीष् ६९२' इति ङीषि

---

१ **तदन्तस्येति** । 'सपूर्वस्य' इत्यनेन पत्यन्तस्य गृह्यमाणत्वात् । बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ वारणायेहार्थोऽप्यनुपसर्जनपदसंबन्ध इत्यन्ये ॥ २ **बहुव्रीहावपीति** । अपिना—उपसर्जनमात्रोपलक्षणम्—तेन पतिमतिक्रान्ताऽतिपत्नीत्यपि सिद्धम् ॥ ३ **बहुव्रीहिरिति** । 'अनुपसर्जनाधिकारस्य गृह्यमाणविशेषणतैव' इति 'उपमानानि—' इति सूत्रभाष्यसंमतपक्षोऽत्र कथं त्यक्त इति शङ्कायां गृह्यप्रयोगः प्रमाणत्वेनोपन्यस्तः । तत्र वृत्तिकृता नारायणेन बहुव्रीहेर्दर्शितत्वाद् गृह्यमाणस्यानुपसर्जनत्वासंभवेऽपि ङीब्दर्शनात्तदन्तविशेषणताङ्गीकृतेति भावः । वस्तुतस्तु—तत्र त्रिषु स्थानेष्वेनीत्यर्थो बोध्यः ॥ ४ **क्रियाशब्दस्येति** । तथा चोक्तं भाष्यकृता—'पतिशब्दोऽयमैश्वर्यवाची । सर्वेण गृहस्थेन पञ्चमहायज्ञा निर्वर्त्याः' इति अनेन भाष्येण पतिगृहस्थशब्दयोः स्पष्टमेव क्रियाशब्दत्वमपि सूचितमेव । एवं च 'जाति तु–' इति सूत्रे जातिपदमपि जातिगुणक्रियापरमेवेत्यपि सूचितमिति दिक् ॥ ५ **णत्वमिति** । 'आर्षमत्र णत्वम्' इति शेखरकृत । श्येनीशब्दस्य पंक्तौ शलल्यां **ख**लकीपदोपादानं व्यर्थं स्यात् ॥

(६८९) [वा] **असितपलितयोर्न** ॥ असिता। पलिता॥ (६९०) [वा] **छन्दसि क्नमेके** ॥ असिक्नी। पलिक्नी। (६९१) अवदातशब्दस्तु न वर्णवाची किंतु विशुद्धवाची। तेन अवदाता इत्येव॥ (६९२) [सू] **अन्यतो ङीष्** ।४।१।४०। तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात् स्त्रियां ङीष् स्यात्। कल्माषी। सारङ्गी। लघाव-न्ते द्वयोश्च बहुषो गुरुरिति मध्योदात्तावेतौ। अनुदात्तान्तात्किम्। कृष्णा। कपिला॥ (६९३) [सू] **षिद्गौ-रादिभ्यश्च** ।४।१।४१। षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात्। नर्तकी। गौरी। अनड्वाही, अनडुही॥ (६९४) [ग] **पिप्पल्यादयश्च** । आकृतिगणोऽयम्॥ (६९५) [सू] **सूर्यतिष्यागस्त्यमत्स्यानां य उप-धायाः** ।६।४।१४९। अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः॥ (६९६) [वा] **मत्स्यस्य ङ्याम्**॥ (६९७) [वा] **सूर्यागस्त्ययोश्छे च ङ्यां च** ॥ (६९८) [वा] **तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्**॥ मत्सी।

---

प्राप्ते ङीबुपसंख्यायते। स्वरे विशेषः॥ (६९०) **क्नमेक इति**। असितपलितयोस्तकारस्य 'वर्णादनुदात्तात्-६८७' इति नकारे प्राप्ते तं बाधित्वा तकारस्थाने क्नमादेशं तत्सन्नियोगेन ङीपं चेच्छन्त्येके आचार्या इत्यर्थः। अत्र 'छन्दस्येके' इत्यन्व-थाद्भाषायां क्नो भवत्येव। छन्दस्येवैके इच्छन्त्यन्ये तु भाषायामपीत्यर्थपर्यवसानात्। अन्यथैकग्रहणं भाष्यकारो न कुर्यात्। न हि छन्दसि 'पलिक्नीरिद्युवतयः' इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते। एवं च 'गतो गणस्तूर्णमसिक्निकानाम्' इति प्रयोगो नानुपपन्नः॥ (६९१) **विशुद्धवाचीति**। 'दैप् शोधने' इत्युक्तेः। अमरेण तु विशुद्धत्वसाधर्म्यात् 'अवदातः सितो गौरः' इत्युक्तमिति भावः॥ (६९२) **लघावन्त इति**। अन्ते नाम एकस्मिन् लघौ द्वयोश्च लघ्वोः परतः बहुषो बह्-च्कस्य गुरुरुदात्तः स्यात्। अषिटयचः प्राचां संज्ञा॥ **कृष्णेत्यादि**। 'कृषेश्च ४४८७' इति नक्प्रत्यये 'कपेश्च' इति सौत्रा-द्धातोरौणादिके इलचि च कृष्णकपिलावन्तोदात्तौ॥ (६९३) **षिद्गौरादि-**॥ **नर्तकीति**। नृतुधातोः 'शिल्पिनि ष्वुन् ३८७१'। ष्वुनः षित्त्वमवयवेऽचरितार्थत्वात्तदन्तस्य प्रातिपदिकस्य विशेषणम्। त्रपूषः षित्त्वस्याङ्विधौ चरितार्थत्वात्त्रपेत्यत्र तु न ङीष्। मृजेः षित्त्वमनार्षं भिदादौ मृजेति पाठादित्याहुः॥ मृजेः षित्त्वादेवाङ्, भिदादौ मृजेति पाठस्त्वनार्ष इत्यन्ये॥ **गौरीति**। गौरशब्दस्य वर्णवाचित्वेऽपि प्रातिपदिकस्वरेणान्तोदात्तत्वात् 'अन्यतो ङीष् ६९२' इति ङीष् न प्राप्नोतीतीह गणे पाठः॥ **अनड्वाही, अनडुहीति**। अनकारान्तत्वाज्जातिलक्षणस्य पुंयोगलक्षणस्य वा ङीषोऽप्राप्ततया गणेऽस्मिन्पठ्यते। प्रत्ययसहितपाठस्तु ङीषि परे आम्विकल्पार्थः। गौर, मत्स्य, मनुष्य, शृङ्ग, गवय, हय, मुकय इत्यादि। यत्तु प्राचा 'ऋन्नेभ्यो ङीप् ४२६' इत्यत्र शुनीत्युदाहृतं, तत्तु गौरादिगणे श्वन्शब्दपाठादर्शनप्रयुक्तमित्याहुः॥ (६९४) अत्र केचित्-नित्यस्त्रीत्वात् 'जातेरस्त्रीविषयात्-७४३' इत्यप्राप्ते ङीषि पिप्पल्यादयो गौरादिषु पठ्यन्ते ङीषन्तपाठस्तु चिन्त्यप्रयोजनः। न च पिप्पली भार्या यस्य स पिप्पलीभार्य इत्यादौ पुंवद्भावं बाधित्वा ङीषः श्रवणं यथा स्यादित्येतदर्थः स इति वाच्यम्, भाषितपुंस्कत्वा-भावादेव पुंवद्भावनिषेधसिद्धेः। किञ्चावान्तरगणत्वाभ्युपगमोऽपि पिप्पल्यादेर्व्यर्थ एव। न चैवं जाताधिकारे 'चित्रा-रेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् १९६६' इत्यत्र पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीषिति वक्ष्यमाणग्रन्थो विरुध्यत इति वाच्यम्, गौरादेराकृतिगणत्वादित्यपि वक्तुं शक्यत्वादित्याहुः॥ (६९५) **सूर्यतिष्य-**। अत्र भस्येत्यनुवर्तमानमपि न संबध्यते। विषयपरिगणनेनैवातिप्रसङ्गनिवारणात्॥ (६९६) **मत्स्यस्य ङ्यामिति**। नेह, मत्स्यस्येदं मात्स्यम्॥ (६९७) **छे च ङ्यां चेति**। सूरीयः। सूरी। अगस्तीयः। अगस्ती। नेह। सौर्यं चरुम्। आगस्त्यम्॥ (६९८) **नक्षत्राणीति**। नक्षत्रसंबन्धी योऽण् 'नक्षत्रेण युक्तः कालः १७०३' इति 'संधिवेलाद्यृतुनक्षत्रेभ्योऽण् १९३८' इति च विहितस्तस्मिन्नित्यर्थः। तत्र तिष्यस्य यलोपो नियम्यते। पुष्यस्य त्वप्राप्ते विधीयते। तिष्येण युक्तः कालस्तैषः। पुष्येण युक्तः पौषः। तथा तिष्ये भवस्तैषः। पुष्ये भवः पौषः। नेह-तिष्यस्यापत्यं तैष्यः॥ **मत्सीति**। योपधत्वात् 'जातेरस्त्रीविषयात्-७४३'

---

१ **अवदातेति**। तथा च भाष्यम्-"अवदातायां ङीप्प्रसङ्गः। अवदातायां ङीप् प्राप्नोति-'अवदाता ब्राह्मणी-'वर्णादनु-दात्तात्तोपधात्तो नः' इति।" इति पूर्वपक्षे-'नैष वर्णवाची। किं तर्हि विशुद्धवाची। आतश्च विशुद्धवाची। एवं ह्याह-"त्रीणि यस्यावदातानि योनिर्विद्या च कर्म च। एतच्छिवे विजानीहि ब्राह्मणाग्र्यस्य लक्षणम्॥" इति' इति। एतद्भाष्यप्रामा-ण्याद् योनिरेव ब्राह्मण्यकारणम्। अर्थात्-ब्राह्मणाद् ब्राह्मण्यामुत्पन्नस्यैव ब्राह्मणत्वमिति दर्शितम्। विद्याकर्मणी तु तत्प्राश-स्त्याधायके 'तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः' इति नञ्सूत्रभाष्यस्थस्मृतिसंवादात्॥ २ **गौरादीति**। गौरशब्दो वर्णवाच्यप्यन्तोदात्त इतीह पठित इति बोध्यम्॥ ३ **प्रत्ययसहितेति**। गौरादिषु-अनडुही अनड्वाही-इति पाठोऽपौराणिकः। अनडुह्शब्द एव ङीषर्थः पठित इति मत्वा वार्तिकमारब्धम् 'आमनडुहः स्त्रियां वा' इति-इति कैयटः॥ ४ नियमफलं दर्शयति-**नेहेति**। 'सूर्यतिष्य-' इति सूत्रेण प्राप्तोऽपि लोपोऽपत्याणि नेत्यर्थः।

'मातरि षिच्चेति षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठाद्(६९९)अनित्यः षितां ङीष्। दंष्ट्रा॥(७००)सू॰ जानपद-कुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छाद-नायोविकारमैथुनेच्छाकेशवेशेषु ।४।१।४२। एभ्य एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद्वृत्त्यादिष्वर्थेषु ङीष् स्यात्। जानपदी वृत्तिश्चेत्। अन्या तु जानपदा। उत्सादित्वादञन्तत्वे टिड्ढेति ङीप्याद्युदात्तः। कुण्डी अमत्रं चेत्। कुण्डाऽन्या। कुडि दाहे। गुरोश्च हलः इत्यप्रत्ययः। यस्तु 'अमृते जारजः कुण्डः' इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव। अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते न तु नियम्यते। गोणी आवपनं चेत्। गोणाऽन्या। स्थली अकृत्रिमा चेत्। स्थलाऽन्या। भाजी श्राणा चेत्। भाजाऽन्या। नागी स्थूला चेत्। नागाऽन्या। गजवाची नाग-शब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम्। सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम्। काली वर्णश्चेत्। कालाऽन्या। नीली अनाच्छादनं चेत्। नीलाऽन्या। नील्या रक्ता शाटीत्यर्थः॥ वा॰ नील्या अन्वक्तव्यः इत्यन्। अनाच्छादनेऽपि न सर्वत्र किन्तु-॥ ( ७०१ ) वा॰ नीलादौषधौ ॥ नीली ॥ ( ७०२ ) वा॰ प्राणिनि च ॥ नीली गौः ॥ ( ७०३ ) वा॰ संज्ञायां वा ॥ नीली, नीला। कुशी अयोविकारश्चेत्। कुशाऽन्या। कामुकी मैथुनेच्छा चेत्। कामुकाऽन्या। कबरी केशानां सन्निवेशविशेषः। कबराऽन्या। चित्रेत्यर्थः ॥ ( ७०४ ) सू॰ शोणात्प्राचाम्। ४।१।४३। शोणी, शोणा॥ ( ७०५ ) सू॰ वोतो गुणवचनात् ।४।१।४४। उदन्ताद्गुणवाचिनो वा ङीष् स्यात्। मृद्वी, मृदुः। उतः किम्। शुचिः। गुणेति किम्। आखुः॥ ( ७०६ ) सू॰ खरुसंयोगोपधान्न ॥ खरुः पतिंवरा

---

इत्यप्राप्ते गौरादिपाठान्ङीष्॥ ( ६९९ ) **मातरि षिच्चेति**। 'पितृव्यमातुलमातामह-१७४९' इति सूत्रस्थमिदं वचनं, तच्च पितामहीति रूपसिद्ध्यर्थमवश्यं वक्तव्यमिति न वार्तिकस्य वैयर्थ्यम्। ये तु-पितामहशब्दमपि गौरादिषु पठन्ति, तन्मते वचन-मिदं स्वरसतो न संगच्छते। यदि त्वनित्यत्वज्ञापनमेव वचनस्य फलमिति ब्रूषे, तर्हि 'षिद्गौरा-६९३' इति सूत्र एव 'अनित्यं षितः' इति वक्तव्यं किमनेन वक्रमार्गेणेति दिक्॥ दश्यतेऽनयेति दंष्ट्रा। 'दाम्नीशस-४१९३' इत्यादिना करणे ष्ट्रन्॥ ( ७०० ) **जानपदीति**। जनपदे भवा॥ **वृत्तिश्चेदिति**। वर्ततेऽनयेति वृत्तिर्जीविका॥ **कुण्डीति**। 'अम्रो कमण्डलुः कुण्डी' इत्यमरः॥ **कुण्डाऽन्येति**। क्रियाशब्दोऽयम्। अत एवाह—**कुडि दाह इत्यादि**। यस्तु घटपर्यायः कुण्डशब्दः स न प्रत्युदाहरणम्। 'पिठरः स्थाल्युखा कुण्डम्' इति तस्य नपुंसकत्वात्। अग्न्यालयादिपर्यायोऽपि कुण्डशब्दो नपुंसकलिङ्गे नियतः। 'कुण्डमग्न्यालये मानभेदे देवजलाशये' इति मेदिनीकोशात्॥ **आवपनं चेदिति**। आङ्पूर्वाद्वपेरधिकरणे ल्युट्। ओप्यते निक्षिप्यते धान्यं यस्मिन्॥ **गोणाऽन्येति**। यस्या यादृच्छिकं नाम॥ **अकृत्रिमेति**। यथा 'सेषा स्थली यत्र विचिन्वता त्वाम्' इति॥ **स्थलाऽन्येति**। कृत्रिमा पुरुषेण संस्कृता। श्राणा पक्वा॥ **अयोविकार इति**। फाल इति प्रसिद्धा॥ **कुशाऽन्येति**। छन्दोगाः स्तोत्रीयागणनार्थानौदुम्बरान् शङ्कून् 'कुशा' इति व्यवहरन्ति। 'अतः कृकमि-२४०' इति सूत्रे प्रसिद्ध एवायम्॥ **कामुकाऽन्येति**। मैथुनादन्यद्धनादिकं कामयितुं यस्याः शीलं सेत्यर्थः। 'लषपत-४१५५' इत्युकञ्॥ ( ७०४ ) **शोणात्**—। 'शोणः कोकनदच्छविः' इति कोशाच्छोणशब्दस्य वर्णवाचित्वात् 'वर्णानां तण-५६१५' इत्याद्युदा-त्ततया 'अन्यतो ङीष् ६९२' इति सिद्धेऽपि प्राचामेव ङीष् नान्येषाम् इति नियमार्थमिदम्॥ ( ७०५ ) **वोतो गुणवचनात्**। गुणो नाम नेह-अदेङ्रूपः 'उतः' इति विशेषणाद्वचनग्रहणाच्च, नापि विशेषणमात्रमिदमाखुद्रव्यमित्यादावतिप्रसङ्गादिति चेत्। अत्राहुः-'संज्ञाजातिक्रियाशब्दान्हित्वाऽन्ये गुणवाचिनः'। चतुष्टयीशब्दानां प्रवृत्तिरित्याकरग्रन्थनिष्कर्षादेव निर्णय इति॥ भाष्ये तु-"सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" इति स्थितम्। सत्त्वं द्रव्यम्। सत्त्व एव निविशत इति सावधारणं व्याख्येयम्। एतेन सत्ता व्यावर्त्यते। सा हि न केवलं द्रव्ये वर्तते किन्तु द्रव्यगुणकर्मसु। ननु द्रव्य एव द्रव्यत्वं वर्तत इति तत्रातिव्याप्तिरत आह-अपैतीति। अपगच्छतीत्यर्थः। अर्थात्सत्त्वादेव। यथा पीततायां जातायां फलादेर्नीलताऽपैति, नैवं द्रव्यत्वं द्रव्यादपैति॥ एवमपि गोत्वं गोषु वर्तते अश्वादेश्चापैति तत्रातिव्याप्तिरत आह-'पृथग्जातिषु दृश्यते' इति। गोत्वं हि द्रव्यत्वावान्तरनानाजातिषु न दृश्यते। गुणस्तु दृश्यते। यथा अभ्रे दृष्टा नीलता तृणादिष्वपि दृश्यते। एतेन पूर्वार्धेन सकलजातेर्व्यवच्छेदः॥ एवं तर्हि कर्म द्रव्ये वर्तते ततोऽपैति पृथग् जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह—

---

१ **दंष्ट्रेति**। अयमजादिषु पठ्यते। गौरादिषु मातामहीशब्दपाठोऽनार्ष इत्यन्ये। इति शेखरे॥ २ **स्त्रीविषयत्वादिति**। 'कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्' इति मेदिनीकोशात् कमण्डलुरूपेऽमत्रे नित्यस्त्रीलिङ्ग इति भावः। यदि तु 'पिठरं तु न ना कुण्डम्' इति कोशे तस्य नपुंसकत्वमप्युक्तम्, तदाऽनेकविधसंस्थानेष्वमत्रेषु कुण्डव्यवहारेण कुण्डत्वे जातित्वा-भावादित्यवगन्तव्यम्। स्त्रीविषयत्वादित्युपलक्षणमिति बहवः॥ ३ **आखुरिति**। जातिसंज्ञया गुणसंज्ञाया बाधान्नैष गुणवचन इति भावः॥ ४ **अप्राप्त इति**। 'योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः' इति वार्तिकविस्मरणमूलकत्वाच्चि-न्त्यमेतत्। अत एव 'गौरादिष्विदानींतनैर्गवयादयः प्रक्षिप्ता इति वार्तिकारम्भाद्विज्ञायते' इति तत्र वार्तिकव्याख्यानावसरे प्रदीपे कैयटेनोक्तम्॥ ५ **स्थितमिति**। एतत्सूत्रभाष्योक्तं 'सत्त्वे निविशतेऽपैति-' इति गुणलक्षणं त्वेकदेशयुक्तिर्बहुविशेषणानां वैयर्थ्यात्। भाष्यकृताऽव्याख्यातत्वाच्च। तस्मात्-'कृदन्ततद्धितान्तसर्वनामसमस्तजातिसंख्यासंज्ञाशब्दातिरिक्तः शब्दो गुण-वचनः' इति 'आकडार-' सूत्रोक्तमेव भाष्यसंमतम्॥

कन्या। पाण्डुः॥ (७०७) (सू) **बह्वादिभ्यश्च** ।४।१।४५। एभ्यो वा ङीष् स्यात्। बह्वी, बहुः। (७०८-१) (ग) **कृदिकारादक्तिनः** ॥ रात्रिः, रात्री॥ (७०८-२) (ग) **सर्वतोऽक्तिन्नर्थादित्येके**[1] ॥ शकटिः, शकटी। अक्तिन्नर्थात्किम्। अजननिः। क्तिन्नन्तत्वादप्राप्ते विध्यर्थं पद्धतिशब्दो गणे पठ्यते। हिमकाषिहतिषु चेति पद्भावः। पद्धतिः, पद्धती॥ (७०९) (सू) **पुंयोगादाख्यायाम्** ।४।१।४८। या पुमाख्या[2] पुंयोगात् स्त्रियां वर्तते ततो ङीष् स्यात्। गोपस्य स्त्री गोपी॥ (७१०) (वा) **पालकान्तान्न** ॥ गोपालिका[3]। अश्वपालिका॥ (७११) (वा) **सूर्याद्देवतायां चाब्वाच्यः** ॥ सूर्यस्य स्त्री देवता सूर्या। देवतायां किम्। सूरी कुन्ती। मानुषीयम्॥ (७१२) (सू) **इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्** ।४।१।४९। एषामानुगागमः स्यान्ङीष् च। इन्द्रादीनां षण्णां मातुलाचार्ययोश्च पुंयोग एवेष्यते॥ तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते। इतरेषां चतुर्णामुभयम्। इन्द्राणी॥ (७१३) (वा) **हिमारण्ययो**-

---

आधेयश्चाक्रियाजश्चेति। उत्पाद्योऽनुत्पाद्य इत्यर्थः। उत्पाद्यो यथा—घटादेः पाकजो रूपादिः। अक्रियाजोऽनुत्पाद्यः। स यथा आकाशादेर्महत्त्वादिः। क्रिया तु सर्वाऽप्युत्पाद्यैव न नित्येति तस्या द्वैविध्याभावाद्गुणत्वाभावः। एवमपि द्रव्यस्य गुणत्वं प्राप्नोति॥ अवयवि द्रव्यं ह्यवयवद्रव्येषु निविशते। असमवायिकारणसंयोगनिवृत्तौ विनाशात्ततोऽपैति भिन्नजातीयेषु च हस्तपादादिषु दृश्यते। द्विविधं च भवति। नित्यानित्यभेदेन निरवयवस्याऽऽत्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्य तु घटादेरनित्यत्वादत आह—असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः॥ (७०६) **पतिंवरेति**। एवं च पाणिग्रहणोत्कंठाभिधायित्वाद्गुणवचनोऽयमिति भावः॥ (७०७) **बह्वादिभ्यश्च**। बहुशब्दस्य गुणवाचित्वात्। पूर्वेण सिद्धेऽप्युत्तरार्थं ग्रहणम् 'नित्यं छन्दसि' इत्युत्तरसूत्रेण बहुशब्दादपि छन्दसि नित्यं यथा स्यादिति। वस्तुतस्तु बहुशब्दो[4] 'नित्यं छन्दसि' इति सूत्रं च व्यर्थमेव सर्वविकल्पानां छन्दसि व्यवस्थितत्वात्॥ (७०८-१) गणसूत्रमाह—**कृदिकारादिति**॥ (७०८-२) '**सर्वतोऽक्तिन्नर्थात्**' इत्यपि गणसूत्रमेव। व्यवस्थितविभाषात्वादिह न, सुगन्धिः। प्रियपतिर्वेश्या॥ **अजननिरिति**। 'आक्रोशे नञ्यनिः ५१०५' इति जनेरनिप्रत्ययः। इहान्यान्यपि गणसूत्राणि सन्ति—'शक्तिः शस्त्रे'। शक्तिः, शक्ती। शस्त्रे किम्, शक्तिः सामर्थ्यम्। शक्तिः शस्त्रीति पाठे तु शब्दद्वयम्। शस्त्रिः, शस्त्री। 'इतः प्राण्यङ्गात्'। धमनिः, धमनी॥ 'चन्द्रभागा नद्याम्'। चन्द्रभागी, चन्द्रभागा। अहन्शब्दोऽत्र पठ्यते। सामर्थ्यात्तदन्तबहुव्रीहिरुदाहार्यः। अनुपसर्जनाधिकारबाधश्च। दीर्घाह्नी प्रावृट्। पक्षे डाब्ङीब्निषेधाः। बहु पद्धति यष्टि विकट विशाल कल्याण पुराण चण्ड कृपाण अहन्—इत्यादि॥ (७०९) **पुंयोगादाख्यायाम्**। इह पुमिति लुप्तषष्ठीकं पृथक् पदं, तच्चावर्तते 'पुंयोगात्' इति हेतौ पञ्चमी 'आख्यायाम्' इति तु पञ्चम्यर्थे सप्तमीत्याशयेनाह—**या पुमाख्येत्यादि**। पुमाख्या पुंवाचकः शब्दः। पुंयोगात् स्त्रियां वर्तते इत्यनेन गौणी वृत्तिरुक्ता। यदा तु मुख्यार्थात् 'तस्येदम् २०६४' इत्यण्, तदा गौपीत्येव भवति। योगः संबन्धः। स चेह दम्पतिभाव एवेति नाग्रहः, किंतु जन्यजनकभावोऽपि गृह्यते, संकोचे मानाभावात्। तेन 'कौसल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत्' इति भट्टिप्रयोगः संगच्छते। केकयस्य दुहिता केकयी। 'जनपदशब्दात्क्षत्रियादञ् १६७५' इत्यपत्यप्रत्यये तु कैकयीति स्यात्। न चेह 'अतश्च १६८९' इति तद्राजाकारलुक् शङ्क्यः, 'न प्राच्यभर्गादि-१६९०' इति प्रतिषेधात्। तथा च कालिदासः—'कैकेयि कामाः फलितास्तव' इति। एतेन देवकी व्याख्याता। पुंयोगात् किम्, देवदत्ता। अयं हि संज्ञाशब्दः स्वभावात् स्त्रियमाह, न तु पुंवाचकशब्दयोगात्। आख्यायां किम्, प्रसूता। अयं हि जातप्रसवामाह। स च प्रसवो गर्भधारणद्वारा पुंयोगनिमित्तक इत्यस्तीह पुंयोगः, किन्तु नायं पुंसो वाचक इति न ङीष्॥ (७११) **सूर्याद्देवतायामिति**। ङीषोऽपवादः॥ **सूरीति**। 'सूर्यतिष्य-६९५' इति यलोपः॥ (७१२) **आनुगिति**। ननु ह्रस्वादिरेव लाघवादनुग्वक्तव्यः किमनेन दीर्घोच्चारणेन। अत्राहुः—अनुकि कृते 'अतो गुणे २७६' इति पररूपं स्यात्। न चाकारोच्चारणसामर्थ्याद्दीर्घो भविष्यत्यन्यथा हि नुकमेव कुर्यादिति वाच्यम्, 'अल्लोपोऽनः ३३५' इत्यस्य बाधेन चरितार्थत्वात्। 'पत्युर्नः-६८१' इतिवदादेशे कर्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेवाल्लोपो न भविष्यतीति चेन्न, शर्वशब्दे ककारस्य चारितार्थ्यात्। न हि तत्र लोपोऽस्ति 'न संयोगात्-४८२' इति निषेधात्। तस्मात्ककाराकारयोः सामर्थ्यविरहे पररूपबाधनार्थं दीर्घोच्चारणमावश्यकमिति॥ केचित्तु—नुकि कृते लाक्षणिकत्वात् 'अल्लोपोऽनः ३३५' इत्यस्याप्रवृत्त्या सवर्णदीर्घ एव अनुकि कृते भविष्यत्यकारोच्चारण-

---

१ **सर्वत इति**। अकृतोऽपीत्यर्थः॥ २ **या पुमाख्येति**। यः पुंवाचकः शब्दः पुंयोगात्पुंवाचकप्रवृत्तिनिमित्तारोपात् स्त्रियां वर्तते ततो ङीष् स्यादित्यर्थः। प्रवृत्तिनिमित्तारोपश्च चतुर्भिः प्रकारैर्भवतीति भाष्यकृता 'कथं पुनरतस्मिन् स इत्येतद् भवति? चतुर्भिः प्रकारैस्तस्मिन् स इत्येतद् भवति। तात्स्थ्यात् ताद्धर्म्यात् तत्सामीप्यात् तत्साहचर्यात् इति' इति ग्रन्थेन प्रदर्शितः। तथा च तत्साहचर्यतः प्रवृत्तिनिमित्तारोपेण गोपशब्दः स्त्रियां वर्तत इति भावः॥ ३ **गोपालिकेति**। 'तत्प्रयोजकः' इत्यादिनिर्देशैः 'तृजकाभ्यां कर्तरि' इति निषेधस्यानित्यत्वज्ञापनात् 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति कारकषष्ठ्याः सुबुत्पत्तेः पूर्वं समासेनापः सुपः परत्वाभावादित्त्वं सुलभमिति भाष्ये सेकारोदाहरणदर्शनाद्बोध्यम्॥ ४ **बहुशब्द इति**। बहुशब्दस्य गुणवचनत्वं न संख्यासंज्ञया बाधादिति गणे उपात्तः॥

महत्त्वे ॥ महद्धिमं हिमानी । महदरण्यम् अरण्यानी ॥ ( ७१४ ) (वा) यवाद्दोषे ॥ दुष्टो यवो यवानी ॥ ( ७१५ ) (वा) यवनाल्लिप्याम् ॥ यवनानां लिपिर्यवनानी ॥ (७१६) (वा) मातुलोपाध्याययोरानुग्वा ॥ मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी ॥ ( ७१७ ) (वा) या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः ॥ उपाध्यायी, उपाध्याया ॥ ( ७१८ ) (वा) आचार्यादणत्वं च ॥ आचार्यस्य स्त्री आचार्यानी । पुंयोग इत्येव । आचार्या स्वयं व्याख्यात्री ॥ ( ७१९ ) (वा) अर्यक्षत्त्रियाभ्यां वा स्वार्थे ॥ अर्याणी । अर्या । स्वामिनी वैश्या वेत्यर्थः । क्षत्त्रियाणी । क्षत्त्रिया । पुंयोगे तु अर्यी । क्षत्त्रियी । कथं ब्रह्माणीति । ब्रह्माणमानयति जीवयतीति कर्मण्यण् ॥ ( ७२० ) (सू) क्रीतात्करणपूर्वात् । ४ । १ । ५० । क्रीतान्तादद‍न्तात्करणादेः स्त्रियां ङीष् स्यात् । वस्त्रक्रीती । क्वचिन्न । धनक्रीता ॥ ( ७२१ ) (सू) क्तादल्पाख्यायाम् । ४ । १ । ५१ । करणादेः क्तान्तात्स्त्रियां ङीष् स्यादल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः ॥ ( ७२२ ) (सू) बहुव्रीहेश्चान्तोदात्तात् । ४ । १ । ५२ । बहुव्रीहेः क्तान्तादन्तोदात्तादद‍न्तात् स्त्रियां ङीष् स्यात् ॥(७२३) (वा) जातिपूर्वादिति वक्तव्यम् ॥ तेन बहुनञ्सुकालसुखादिपूर्वान्न । ऊरुभिन्नी । नेह, बहुकृता ॥(७२४) (वा) जातान्तान्न ॥ दन्तजाता ॥ (७२५) (वा) पाणिगृहीती भार्यायाम् ॥

---

सामर्थ्यात् । एवं सत्यानुगिति दीर्घोच्चारणसामर्थ्यात् आ अनुगिति पदं विभज्यते । तत्रेन्द्रादीनामनुकैव सिद्धे आकारादेशविधानसामर्थ्यात्क्वचिदन्यतोऽपि विधानमनुमीयते, तेन ब्रह्मणः स्त्री ब्रह्माणीति सिध्यतीत्याहुः ॥ अत्र नव्याः—अस्तूक्तरीत्या दीर्घोच्चारणमन्यतोऽपि विधानार्थमेव परंतु आ अनुगिति पदं विभज्य नकारस्याकारादेशे कृते दीर्घग्रहणसामर्थ्यादनजन्तस्याप्यनुकि कृते ब्रह्माणीति सिध्यतीति न व्याख्येयम् । उभयविधौ वाक्यभेदापत्तेः किन्तु इन्द्रमाचक्षाणः इन्द्रः 'तत्करोति तदाचष्टे २४१७' इति ण्यन्तात्क्विप् । तस्य स्त्री इन्द्राणीति सिध्यतीत्येवेति व्याख्येयम् । दीर्घोच्चारणसामर्थ्यात् 'अतः' इत्यधिकारोऽनुपसर्जनाधिकारश्च बाध्यत इति सुवचत्वात् । न चोभयबाधाभ्युपगमापेक्षयाऽत इत्यधिकारबाधमात्राभ्युपगमेन ब्रह्मणः स्त्री ब्रह्माणीति रूपसिद्धये आकारादेशोऽनुक् च भवतीत्येव व्याख्यायतामिति वाच्यम्, वाक्यभेदापत्त्यपेक्षया उभयबाधनगौरवस्य सुसहत्वात् । एवं च ब्रह्माणमानयति जीवयतीत्यादिवक्ष्यमाणग्रन्थोऽपि स्वरसतः संगच्छत इत्याहुः ॥ ( ७१३ ) **हिमानीति** । महत्त्वयोगे हिमारण्ययोः स्त्रीत्वम् ॥ (७१४) **दुष्टो यवो यवानीति** । जात्यन्तरमेवानेनाभिधीयते । अयमेव चास्य दोषो यस्माद्धि यवत्वजातेरभावेऽपि तदाकारानुकृतिः ॥ ( ७१५ ) **यवनानीति** । तस्येदमित्यणो बाधको ङीष् ॥ ( ७१७ ) **वा ङीष्वाच्य इति** । इदं च 'इङश्च ४९८०' इति घञ्विधायकसूत्रस्थं वार्तिकम् । वक्ष्यति च तत्र 'अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् ४१८१' इति ॥ **उपाध्यायी, उपाध्यायेति** । उपेत्य अस्या अधीयत इति विग्रहः ॥ ( ७१९ ) **स्वार्थ इति** । यदि तु पुंयोग एवायं विधिः स्यात् शूद्राऽपि क्षत्त्रियस्य भार्या क्षत्त्रियाणी स्यात् । ब्राह्मणभार्या च क्षत्त्रिया क्षत्त्रियाणी न स्यादिति भावः ॥ **वैश्या वेत्यर्थ इति** । 'अर्यः स्वामिवैश्ययोः ३७९९' इत्यर्थद्वये निपातनादिति भावः । अत्रामरस्य सग्रहः—"अर्याणी स्वयमर्या स्यात्क्षत्त्रिया क्षत्त्रियाण्यपि । उपाध्यायाऽप्युपाध्यायी स्यादाचार्याऽपि च स्वतः ॥ आचार्यानी तु पुंयोगे स्यादर्यी क्षत्त्रियी तथा । उपाध्यायाऽप्युपाध्यायी" इति ॥ **कथमिति** । सूत्रे ब्रह्मन्शब्दस्याग्रहणादानुगनुपपन्न एव इति प्रश्नः । उत्तरं तु—**ब्रह्माणमानयतीत्यादि** । ण्यन्तात् 'अन प्राणने' इत्यस्मात्कर्मण्याणि 'णेरनिटि ३०८८' इति णिलोपे 'टिड्ढाणञ्-६५१' इति ङीपि 'पूर्वपदात्संज्ञायाम्-१२३३' इति णत्वे च ब्रह्माणीति रूपसिद्धेरिति भावः ॥ (७२०) **क्रीतात्**—। इह प्रकरणे 'अतः' इत्यनुवर्तते 'प्रातिपदिकात्' इति च तदाह—**अदन्तादिति** । प्रातिपदिकादिति शेषः ॥ **वस्त्रक्रीतीति** । वस्त्र भिस्-क्रीत इति स्थिते प्राक् सुबुत्पत्तेः 'कर्तृकरणे-१००४' इति समासेऽदन्तत्वान्ङीष् ॥ **क्वचिन्नेति** । 'कर्तृकरणे कृता बहुलम् १००४' इति बहुलग्रहणात् 'गतिकारकोपपद-११२८' इति वक्ष्यमाणस्य क्वचिदप्रवृत्तौ सुबन्तेन समासः । तत्र सुपः प्रागेवान्तरङ्गत्वाट्टाप् । ततोऽदन्तत्वाभावान्न ङीषिति भावः । करणपूर्वादिति किम्, गवा क्रीता, अश्वेन क्रीता-इत्यादिविग्रहे मा भूत् । पूर्वशब्दो ह्यवयववचनः, समासप्रातिपदिकं चान्यपदार्थः । करणं पूर्वं यस्मिन् प्रातिपदिके तदिदं करणपूर्वं तस्मादित्यर्थः ॥ (७२१) **क्तादल्पाख्यायाम्** । अत्र व्याचख्युः—अल्पाख्यायामिति समुदायोपाधिः । अल्पैरभ्रैर्लिप्ता । अभ्रलिप्ती । 'क्तग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् १००५' इति समुदायस्यापि क्तान्तत्वान्ङीष् । यद्यपि पूर्वपदार्थस्य अभ्राणामेवाल्पत्वं गम्यते, तथापि तदल्पत्वे सति तद्विलेपनस्याप्यल्पत्वमवश्यं भवतीति समुदायोपाधित्वमल्पत्वस्य संगच्छत इति ॥ (७२३) **तेन बह्विति** । अयं भावः—'बहोर्नञ्वदुत्तरपदभूम्नि ५८८२' 'नञ्सुभ्याम् ५८७९' 'जातिकालसुखादिभ्योऽनाच्छादनात् ५८७७' 'क्तोऽकृतमितप्रतिपन्नाः ५८७७' इति ह्यन्तोदात्तविधायकानि । तत्र जातिपूर्वादित्युक्ते बह्वादिपूर्वकस्यार्थाद्व्युदास इति ॥ **सुखादिपूर्वान्नेति** । 'सुखादिभ्यः कर्तृवेदनायाम् ३५६२' इत्यत्र ये पठिताः सुखदुःखकृच्छ्रादयस्तेऽत्र गृह्यन्ते । सुखयाता, दुःखयाता, सुखं दुःखं वा यातं प्राप्तमनयेति विग्रहः । 'अस्वाङ्गपूर्वपदाद्वा ७२६' इति विकल्पस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपद एवोदाहरणमाह—**ऊरुभिन्नीति** । भिन्नौ ऊरू यस्या इति बहुव्रीहौ भिन्नशब्दस्य 'निष्ठा १२८८' इति पूर्वनिपाते प्राप्ते 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या १२८९' इति परनिपातः ॥ **बहुकृतेति** । बहूनि कृतानि यया सा ॥ (७२४) **जातान्तान्नेति** । 'वर्णादनुदात्तात्—६८७' इतिवत् 'बहुव्रीहेरुदात्तात्' इत्येव सिद्धेऽन्तग्रहणं नित्यत्वप्रतिपत्त्यर्थम् । 'वा जाते ५८७८' इति तु वैकल्पिक उदात्तो न तु नित्य इति भावः ॥ ( ७२५ ) **पाणिगृहीतीति** ।

पाणिगृहीताऽन्या । ( ७२६ ) सू॰ अस्वाङ्गपूर्वपदाद्वा । ४ । १ । ५३ । पूर्वेण नित्यं प्राप्ते विकल्पोऽयम्। सुरापीती, सुरापीता । अन्तोदात्तात्किम् । वस्त्रच्छन्ना । अनाच्छादनात्[४८७७] इत्युदात्तनिषेधः । अतः एव पूर्वेणापि न ङीष् ॥ ( ७२७ ) सू॰ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् । ४ । १ । ५४ । असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्तादन्तात्प्रातिपदिकाद्वा ङीष् । केशानतिक्रान्ता अतिकेशी, अतिकेशा । चन्द्रमुखी, चन्द्रमुखा । संयोगोपधात्तु सुगुल्फा । उपसर्जनात्किम् । शिखा॥ स्वाङ्गं त्रिधा-॥(७२८) अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्॥ सुस्वेदा द्रवत्वात् । सुज्ञाना अमूर्तत्वात् । सुमुखा शाला अप्राणिस्थत्वात् । सुशोफा विकारजत्वात् ॥ ( ७२९ ) अतत्स्थं तत्र दृष्टं च-॥ सुकेशी सुकेशा वा रथ्या । अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ॥ ( ७३० ) तेन चेत्तत्तथा युतम् ॥ सुस्तनी सुस्तना वा प्रतिमा । प्राणिवत्प्राणिसदृशे स्थितत्वात् ॥ (७३१) सू॰ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च । ४ । १ ।५५ । एभ्यो वा ङीष् स्यात् । आद्ययोर्बह्वज्लक्षणो[७३७] निषेधो बाध्यते,पुरस्तादपवादन्यायात् । ओष्ठादीनां पञ्चानां तु-असंयोगोपधात्[७२७] इति पर्युदासे प्राप्ते वचनम्, ( ७३२ ) मध्येऽपवादन्यायात् । सहनञ्लक्षण[७३८]स्तु प्रतिषेधः परत्वादस्य बाधकः । तुङ्गनासिकी, तुङ्गनासिका-इत्यादि । नेह, सहनासिका । अनासिका । अत्र वृत्तिः ॥ (७३३) अङ्गगात्रकण्ठेभ्यो वक्तव्यम् ॥ स्वङ्गी, स्वङ्गेत्यादि । एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित् । भाष्याद्यनुक्तत्वादप्रमाणमिति प्रामाणिकाः ॥ अत्र वार्तिकानि-॥ ( ७३४ ) वा॰ पुच्छाच्च॥सुपुच्छी, सुपुच्छा ॥ (७३५) वा॰ कबरमणिविषशरेभ्यो नित्यम्॥कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरी-इत्यादि॥(७३६) वा॰ उपमानात्पक्षाच्च पुच्छाच्च॥ नित्यमित्येव।उलूकपक्षी शाला।उलूकपुच्छी सेना॥(७३७) सू॰ न क्रोडादिबह्वचः।४।१।५६। क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । अश्वानामुरः क्रोडा । आकृतिगणोऽयम् । सुजघना॥(७३८) सू॰ सहनञ्-

---

यस्याः पाणिरग्निसाक्षिकं गृह्यते तस्यां वाच्यायां पाणिगृहीतशब्दान्ङीष् वक्तव्य इत्यर्थः ॥ अन्येति । कौतुकादिना पाणिर्गृहीतो यस्याः दास्यादेः सा पाणिगृहीता॥(७२६)पूर्वेण नित्यं प्राप्त इति । एतेन विकल्पोऽप्ययं जातिपूर्वादेवेति ध्वनितम् ॥ कथं तर्हि पुत्रहतीत्यत्र 'अस्वाङ्गपूर्वपदात्-७२६' इति वा ङीषिति कैयटः, पुत्रशब्दस्याजातिवाचकत्वात् । अन्यथा पुत्रादिनीत्यत्र 'सुप्यजातौ-२९९१' इति णिनिर्न स्यात्॥ यदि त्वदनमादः सोऽस्या अस्तीति आदिनी पुत्राणामादिनीति विगृह्य कथंचित्साध्यते, तर्ह्यपि 'जातिकालसुखादिभ्यः-१२८९' इत्यन्तोदात्तविधायकसूत्रे 'जातेः किं, पुत्रजातः' इति वक्ष्यमाणमूलग्रन्थो विरुध्यत एवेति चेदुच्यते-"प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असत्त्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥" इति भाष्ये लक्षणान्तरमुक्तम् । सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां प्रादुर्भावतिरोभावौ या प्राप्नोति, यावद्द्रव्यभाविनीत्यर्थः । गुणैर्युगपद् द्रव्येण संबध्यते । बह्वर्थां सर्वव्यक्तिव्यापिनीमित्यर्थः । तां जातिमित्यादि कैयटेन व्याख्यातम् । एवं च पुत्रत्वस्य यावद्द्रव्यभावित्वेनोक्तलक्षणलक्षितत्वाज्जातिवाचक एव पुत्रशब्द इति 'अस्वाङ्ग-७२६' इति वा ङीषिति ग्रन्थस्तत्र न विरुध्यते । 'आकृतिग्रहणा जातिः ७४४' इत्यादिमुख्यपक्षाश्रयणे तु पुत्रत्वस्याजातित्वाज्जातेः किं-पुत्रजात इति ग्रन्थोऽपि संगच्छत इति दिक्॥ केचिदर्वाचीनास्तु-पुत्रहती पुत्रजग्धीत्यत्र 'क्तादल्पाख्यायाम् ७२१' इत्यनेन ङीषमाहुः ॥ सुरापीतीति । पीता सुरा यया सा । 'जातिकाल-५८७७—१२८९' इति सूत्रवार्तिकाभ्यां निष्ठाया अन्तोदात्तत्वपरनिपातौ ॥ वस्त्रच्छन्नेति । बहुव्रीहिस्वरेण पूर्वपदप्रकृतिस्वरे शेषनिघाते च कृते अनुदात्तान्तोऽयम् ॥ ( ७२७ ) स्वाङ्गाच्चो— । इह बहुव्रीहिरिति नानुवर्तते इति ध्वनयन्नुदाहरति—अतिकेशीति ॥ शिखेति । 'शीङः खो ह्रस्वश्च ४९०८' इति खस्तदन्ताट्टाप् । अन्यथा टापं बाधित्वा ङीष् स्यादिति भावः ॥ केचित्तु-सुशिखेत्यपि प्रत्युदाहरन्ति । तच्चिन्त्यम्, टाबन्तेन समासे अनदन्तत्वेन ङीषः प्राप्त्यभावात् । न च टापः प्रागेव कृदन्तेनैव समासाददन्तत्वमस्तीति वाच्यम्, तथा हि सति शोभना शिखा सुशिखेत्यर्थस्यालाभादिति नव्याः। (७२८)यद्यत्र स्वमङ्गं गृह्येत तर्हि सुमुखा शालेत्यत्रापि स्यात् । मुखस्य शालाङ्गत्वात् । सुकेशी रथ्येत्यत्र च न स्यात् । केशानां रथ्याङ्गत्वाभावात् । अतोऽव्याप्त्यतिव्याप्तिपरिहारार्थमाह-स्वाङ्गं त्रिधेति ॥ मूर्तिमदिति । स्पर्शवद्द्रव्यपरिमाणं मूर्तिः । प्राणीति । मुखनासिकासंचारी वायुः प्राणः ॥ सुमुखा शालेति । एवं च 'फलमुखी कारणमुखी चानवस्था' इत्यादिप्रयोगाः प्रामादिका इति भावः ॥ ( ७३० ) प्रतिमादिगतस्तनस्य प्राणिन्यदृष्टत्वात् स्वाङ्गत्वं न प्राप्नोतीति तृतीयलक्षणमाह-तेन चेदिति । येनाङ्गेन प्राणिरूपं वस्तु यथा युतं तेन तत्सदृशेनाङ्गेन तद् अप्राणिरूपं वस्तु तथा प्राणिवद्युतं युक्तं चेत् तदप्यप्राणिनि दृष्टं स्वाङ्गमित्यर्थः ॥ ( ७३२ ) मध्येऽपवादेति । 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्' इति न्यायादित्यर्थः॥ (७३७) उरः क्रोडेति । स्त्रीलिङ्गोऽयमिति हरदत्तादयः । तत्रोपसर्जनह्रस्वत्वे कृते अदन्तत्वान् ङीषः प्राप्तिः । अमरस्तु-'ना क्रोडं भुजान्तरम्' इत्याह । रत्नपतिस्तु पुँल्लिङ्गतामाह ॥ गणे च क्रोडेति प्रातिपदिकमात्रं पठ्यते न तु टाबन्तमिति गणरत्नमहोदधिकारः ॥ एवं चाविशेषाल्लिङ्गत्रयेऽप्युदाहरणं बोध्यम् ॥ माधवस्तु-तुदादिगणे 'कुड निमज्जने' इति धातावाह-

---

१ स्वाङ्गमिति । अस्वाङ्गपूर्वपदादित्यनुवर्त्य-'अस्वाङ्गपूर्वपदम्' इत्यादौ पूरणीयम् । तेन 'कल्याणपाणिपादा' 'करमुखा' इत्यत्र न ङीष् इति बोध्यम् ॥ २ अन्यथा । उपसर्जनग्रहणाभावेऽधिकृताननुपसर्जनपदस्य गृह्यमाणविशेषणतायामङ्गीकृतायामित्यर्थः ॥

**विद्यमानपूर्वाच्च** ।४।१।५७। सहेत्यादित्रिकपूर्वान्न ङीष् । सकेशा । अकेशा । विद्यमाननासिका ॥ (७३९) सू. **नखमुखात्संज्ञायाम्** ।४।१।५८। ङीष् न स्यात् । शूर्पणखा । गौरमुखा । संज्ञायां किम् । ताम्रमुखी कन्या ॥ (७४०) सू. **दिक्पूर्वपदान्ङीप्** ।४।१।६०। दिक्पूर्वपदात्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीबादेशः स्यात् । प्राङ्मुखी । आद्युदात्तं पदम् ॥ (७४१) सू. **वाहः** ।४।१।६१। वाहन्तात्प्रातिपदिकान्ङीष् स्यात् । ङीषेवानुवर्तते न ङीप् । दित्यवाट् चं मे दित्यौही चं मे (वा. सं. १८।२६) ॥ (७४२) सू. **सख्यशिश्वीति भाषायाम्** ।४।१।६२। इतिशब्दः प्रकारे भाषायामित्यस्यानन्तरं द्रष्टव्यः । तेन छन्दस्यपि क्वचित् । सखी । अशिश्वी । आ धेनवो धुनयन्तामशिश्वीः ( ऋ. सं. ३।५५।१६ ) ॥ (७४३) सू. **जातेरस्त्रीविषयादयोपधात्** ।४।१।६३। जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् ॥ (७४४) **आकृतिग्रहणा जातिः**-अनुगतसंस्थानव्यङ्ग्येत्यर्थः । तटी ॥ (७४५) **लिङ्गानां च न सर्वभाक्** । **सकृदाख्यातनिर्ग्राह्या**-असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम् । वृषली । सत्यन्तं किम् । शुक्ला । सकृदित्यादि किम् । देवदत्ता ॥ (७४६)-**गोत्रं च चरणैः सह** ॥ अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः । औपगवी । कठी । बह्वृची ।

---

क्रोडः । घञ् । क्रोडा अश्वानामुरः । टाबन्तोऽयं स्वभावतो विशेषविषयः । क्रोडादिषु टाबन्तमात्रस्य पाठात् । भुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वाङ्गलक्षणो ङीष्विकल्पो भवत्येव । कल्याणक्रोडी कल्याणक्रोडा मयूरीति ॥ (७३८) केशैः सह वर्तत इति-**सकेशा** । अविद्यमानाः केशा यस्याः सा-**अकेशा** ॥ (७३९) **शूर्पणखेति** । 'पूर्वपदात्संज्ञायाम्-१२३३' इति णत्वम् । यदा तु शूर्पवन्नखानि यस्या इति योगमात्रं विवक्ष्यते, न तु संज्ञा ततोऽसंज्ञात्वान्न ङीष्निषेधो न वा णत्वं, तेन राक्षस्यपि योगवृत्त्या शूर्पनखीति भवतीत्याहुः ॥ (७४०) **ङीषो ङीबादेश इति** । 'अन्यतो ङीष् ६९२' इत्यतो ङीषित्यनुवर्तते । 'दिक्पूर्वपदात्' इति पञ्चम्या ङीषिति प्रथमायाः षष्ठी कल्प्यत इति भावः ॥ यदि तु स्वतन्त्रो ङीप् स्यात्तर्हि प्राग्गुल्फा प्राक्क्रोडेत्यत्रापि प्रसज्ज्येत । पूर्वोक्तासंयोगोपधादित्यस्य निषेधानां चानुवृत्तौ प्रतिपत्तिगौरवमिति भावः ॥ (७४१) **वाहः** । ण्विप्रत्ययान्तस्य वहेरनुकरणमिदम् 'वहश्च ५२३८' इत्यनेन कर्मण्युपपद एव वहेर्ण्विप्रत्ययविधानात्केवलस्य संभवो नास्तीति सामर्थ्यात्तदन्तविधिरित्यभिप्रेत्याह—**वाहन्तादिति** ॥ **न ङीबिति** । अस्वरितत्वादिति भावः ॥ **दित्यौहीति** । ङीषि भसंज्ञायां 'वाह ऊठ् ४५३', 'संप्रसारणाच्च ४५४' इति पूर्वरूपम् । 'एत्येधत्यूठ्सु १०८' इति वृद्धिः ॥ (७४२) **सख्यशिश्वीति** । सखिशब्दादशिशुशब्दाच्च ङीष् निपात्यते । न विद्यते शिशुर्यस्याः साऽशिश्वी । भाषायां किम्, सखा सप्तपदी भव ॥ (७४३) **जातेरस्त्री**—। जात्या स्ववाचकशब्दो लक्ष्यते, अर्थे कार्यासंभवात्, स्वरूपं तु न गृह्यते अस्त्रीविषयादित्यादेर्वैयर्थ्यापत्तेरित्याशयेनाह—**जातिवाचि यदिति** ॥ (७४४) **आकृतिग्रहणेति** । ग्रहणमिति करणे ल्युट् ॥ सामान्ये नपुंसकम् । आकृतिर्ग्रहणं यस्या इति बहुव्रीहिस्तदेतत्फलितमाह—**अनुगतसंस्थानेत्यादि** । (७४५) वृषले ब्राह्मणादिव्यावृत्तसंस्थानाभावादव्याप्तिरिति लक्षणान्तरमाह—**लिङ्गानां चेत्यादि** । चकारो भिन्नक्रमः निर्ग्राह्येत्यस्यानन्तरं बोध्यः । लिङ्गानामिति कर्मणि षष्ठी ॥ **न सर्वभागिति** । सर्वाणि लिङ्गानि न भजतीत्यर्थः । सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वाद्वृद्धिजो ण्विः समासश्च भवत्येवेति नात्र सामर्थ्याभावः शङ्क्यः ॥ **वृषलीति** । एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विनापि तस्य सुग्रहत्वादिति भावः ॥ **देवदत्तेति** । नन्वत्र परिणामभेदेन द्रव्यभेदाभ्युपगमे स्यादेवातिप्रसङ्गः । एकस्यां व्यक्तौ देवदत्तत्वे कथिते व्यक्त्यन्तरे कथनं विनापि तस्य सुग्रहत्वात् । मैवम्, परिणामभेदेन द्रव्यभेदस्य प्रामाणिकैरनभ्युपगमात् । अभ्युपगमे वा समानकालतया व्यक्त्यन्तरस्य विशेषणात्, तथा च यस्यां व्यक्तौ देवदत्तत्वं कथ्यते तत्समकालमन्या देवदत्तव्यक्तिरप्रसिद्धेति न देवदत्तत्वं जातिः । वृषलत्वादिस्तु भवत्येव तदीयपितृभ्रात्रादिषु तस्य सुग्रहत्वादिति दिक् ॥ (७४६) उक्तलक्षणद्वयानाक्रान्तत्वात्तृतीयं लक्षणमाह—**गोत्रं च चरणैः सहेति** । अपत्याधिकारादन्यत्र लौकिकं गोत्रम् । चरणः शाखाध्येता । तदेतत्फलितमाह—**अपत्यप्रत्ययान्त इति** । अत्र व्याचख्युः-नाडायनं बह्वृचमिदमिति नपुंसकप्रयोगदर्शनात् सर्वलिङ्गौ गोत्रचरणौ, अतः पृथग्लक्षणं कृतम् । तेनात्र 'लिङ्गानां च न सर्वभाक्-७४५' इति द्वितीयलक्षणेन गतार्थता न शङ्क्येति ॥ **औपगवीति** । अणन्तलक्षणं ङीपं परत्वादयं बाधते । एवं चापत्याधिकारे औपगवीति प्रतीकमुपादाय 'टिड्ढाणञ्-६५१' इत्यादिना ङीबिति व्याचक्षणा उपेक्ष्या इति भावः ॥ केचित्तु-अपत्याधिकारादुत्तरत्रैव लौकिकं गोत्रं गोत्रशब्देन गृह्यते नान्यत्रेति पारिभाषिकगोत्रप्रत्ययान्त एव जातिकार्यं लभते न त्वपत्यप्रत्ययान्तः । 'गोत्रं च चरणैः सह ७४६' इति वचनस्यापत्याधिकारात्पूर्वभावित्वात् । तथा चापत्यार्थे औपगवीति ङीबन्त इति प्राचामुक्तिः सम्यगेवेत्याहुः ॥ **कठीति** । कठेन प्रोक्तमधीयाना वा 'कलापिवैशम्पायनान्तेवासिभ्यश्च २०४७' इति वैशम्पायनान्तेवासित्वाणिनिस्तस्य 'कठचरकाल्लुक् २०५०' इति लुक् । अध्येत्रणस्तु 'प्रोक्ताल्लुक् १८०४' इत्यनेन ॥ **बह्वृचीति** । बह्वय ऋचोऽध्येतव्या यया सेति बहुव्रीहिः । 'अनृचबह्वृचावध्येतर्येव १३५१' इति वचनात् 'ऋक्पूरब्धूः-१३५०' इति अप्रत्ययः

---

१ दित्यौही चं म इति । वाहन्तस्य वेदविषयत्वेनान्यत्र तत्कल्पनमसंगतमेवेति ध्वनयन्वेदमन्त्रमुदाहृतवानिति बोध्यम् ॥
२ अपत्येति । अपत्याधिकारादन्यत्रापत्यमात्रं गोत्रशब्देन गृह्यते इति कैयटस्वरस इति रत्नाकरः ॥

ब्राह्मणीत्यत्र तु ⁷⁶¹शाङ्गरवादिपाठान्ङीना ङीष् बाध्यते। जातेः किम्। मुण्डा। अस्त्रीविषयात्किम्। बलाका। अयोपधात्किम्। क्षत्त्रिया॥ (७४७) **वा॰ योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः॥** हयी। गवयी। मुकयी। हलस्तद्धितस्येति यलोपः। मनुषी॥ मत्स्यस्य ङ्याम्॥ मत्सी॥ (७४८) **सू॰ पाककर्णपर्णपुष्पफल-**

---

समासान्तः॥ यद्यपि स्त्रीणामध्ययनं प्रतिषिद्धम्, तथापि पुराकल्पे ह्येतदासीत्। तदाह यमः—'पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्रीवाचनं तथा' इति। यद्वा मा नामाधिगीष्ट तद्वंश्यत्वात्ताच्छब्द्यं भविष्यति, यथाऽनधीयानेऽपि माणवके॥ **ब्राह्मणीत्यत्रेति।** एवं च प्राचो ङीबुदाहरणं प्रामादिकमिति भावः॥ **मुण्डेति।** मुण्डगुणयोगान्मुण्डा। 'बलाका बिसकण्ठिका'॥ **क्षत्त्रियेति।** 'क्षत्राद्घः १६४४' इत्यपत्ये घविधानाद्गोत्रलक्षणा 'लिङ्गानां च न सर्व-७४५' इत्यादिलक्षणा वा जातिः॥ **(७४७) योपधप्रतिषेध इत्यादि।** गौरादिषु गवयादय इदानींतनैः प्रक्षिप्ता इत्यस्मादेव वार्तिकाद्विज्ञायत इति कैयटादयः॥ **(७४८) पाककर्ण—।** जातेरित्यनुवृत्तेर्नेह। बहुपुष्पा। बहुफला शाखा। एवं हि पूर्वेणैव

---

१ **प्रतिषिद्धमिति।** आधुनिकानामैतिह्यमेवात्र प्रमाणम्। पूर्वोत्तरमीमांसयोस्तु केवलं शूद्राणामध्ययनप्रतिषेध उपलभ्यते। तथा च जैमिनिः—'**अवैद्यत्वादभावः कर्मणि स्यात्**' '**तथा चान्यार्थदर्शनम्**' (६।१।३७-३८) इति। व्यासदेवोऽपि—'**श्रवणाध्ययनार्थप्रतिषेधात्**' '**स्मृतेश्च**' (१।३।३८-३९) इति॥ प्रत्युत स्त्रीणां '**जातिं तु बादरायणोऽविशेषात्तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्**' '**फलोत्साहाविशेषात्**' '**अर्थेन च समवेतत्वात्**' '**फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः**' (६।१।८-२०) इति सूत्रैर्वैदिके कर्मणि पुंस इवाधिकारो वर्णितः। '**तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्**' (६।१।२४) इति सूत्रेऽतुल्यत्वं न विद्याभावेन किंतु राजसंनिधानेऽमात्यस्येव गुरुसंनिधाने शिष्यस्येव पतिसन्निधानेऽस्वतन्त्रत्वरूपाप्राधान्येनैव। स्त्रीशूद्रयोः समानत्वे शूद्राणामधिकाराभावः स्त्रीणां त्वधिकार इति वैषम्यं कथमुपपद्येत। आर्षग्रन्थेषु तु न क्वापि स्त्रीणामध्ययनाभाव उपलभ्यते। प्रत्युत 'काशकृत्स्निना प्रोक्तां मीमांसामधीते काशकृत्स्ना ब्राह्मणी' इत्युदाहरणेन सूचितस्य मीमांसाध्ययनस्य '**इङश्चेत्यपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्**' इति (३।३।२१ सू.) वार्तिकस्य 'उपेत्याधीयतेऽस्याः—उपाध्यायी उपाध्याया' इत्युदाहरणेन सूचितस्य वेदैकदेशाध्यापनस्य "**कथं हि स्त्री नाम सभायां साध्वी स्यात्**" इति ग्रन्थेन स्त्रीणां सभागमनस्यैव निन्दाया असूचनात्स्वसंमतत्वमेव दर्शितम्। किं च तद्वंश्यत्वेन ताच्छब्द्ये तु केकयीत्यादाविव पुंयोगविवक्षायाम् 'उपाध्यायी' इति प्रयोगसिद्धौ वार्तिकेन ङीष्विधानं व्यर्थं स्यात्। गृह्यसूत्रेषु कुमारपदमपि जातिपरमेव, न पुंव्यक्तिमात्रपरम्। अत एव "कुमारा विशिखा इव" इति श्रुतिसूचितचौलकर्म कुमारीणामपि स्वीकृतम्। तथा चोक्तं प्रकृतसूत्रभाष्ये—जातेर्लक्षणद्वयमभिधाय'**कः पुनरेतयोर्जातिलक्षणयोर्विशेषः**' इति पूर्वपक्षस्य "**यथा पूर्वं** (आकृतिग्रहणा) **जातिलक्षणम्, तथा 'कुमारीभार्यः' इति भवितव्यम्। यथोत्तरम्** (प्रादुर्भाव-) **तथा 'कुमारीभार्यः' इति भवितव्यम्**" इति समाधानम्। आकडारसूत्रभाष्यशेषेऽपि प्रथमलक्षणस्यैव कथनात्तदेव संमतमिति 'कुमारी' इति प्रयोगो द्विधा साधनीयः 'वयसि प्रथमे' इति ङीप्येकः। 'जातेः—' इति ङीष्यपरः। तथा च 'वृद्धकुमारी' इति प्रयोगोऽपि मुख्येऽर्थे सुसाध एवेति न गौणत्वावश्यकतेति बोध्यम्॥ २ **कल्प इति।** कल्पपदमत्र न ब्राह्माहोरात्रपरम्, यतः—अस्मिन्नपि कल्पे सीतादेव्याः सन्ध्योपासनं रामायणे गार्गीमैत्रेयीप्रभृतीनां ब्रह्मपरायणत्वं बृहदारण्यकादौ स्पष्टं प्रतीयते। किन्तु षडङ्गान्तर्गतवैदिककर्मप्रक्रियाप्रदर्शकसूत्रपरम्। अत एव '**प्रावृतां यज्ञोपवीतिनीमभ्युदानयन्**' इति गोभिलीयगृह्यसूत्रे 'यज्ञोपवीतिनीम्' इति पदं '**द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च।** तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्या। **सद्योवधूनां तूपनयनं कृत्वा विवाहः कार्यः**' इति हारीतवाक्यं च संगच्छते। एतदेवाभिप्रेत्य "**वैवाहिको विधिः स्त्रीणामौपनायनिकः परः**" इत्यनेन विवाहमुहूर्त एवोपनयनं कार्यम्, इत्युक्तम्। स्त्रीणां पतिव्यतिरिक्तगुरोरभावादुपनयनतः परं गुरूपासनस्यावश्यकत्वादेव 'पतिसेवा गुरौ वासः' इत्युक्तम्। ततश्च कन्यादानतः पश्चात् 'सोमोऽददत्' इति पाठतः प्रागेवोपनयनेन यज्ञोपवीतादिधारणम्। तत्र स्त्रीणामजिनादिधारणं तु '**वर्जयेदजिनं चीरम्—**' इति निषिद्धम् इति त्वन्यत्। इतोऽप्याधिकं सकलार्षवचनानामविरोधेन भाष्यालोचने निरूपयिष्यामः॥ ३ **वाचनमिति।** कुत्रचित्पुस्तके 'वचनम्' इत्येवं पाठ उपलभ्यते परं तु सोऽपपाठः। "मनसा भर्तुरतिचारे त्रिरात्रं यावकं क्षीरौदनं वा भुञ्जानाऽधः शयीत, ऊर्ध्वं त्रिरात्रादप्सु निमग्नायाः सावित्र्याऽष्टशतेन शिरोभिर्जुहुयात् पूता भवति" इति (अ॰ २१ ख॰ ५) वसिष्ठस्मृतौ तत्प्रायश्चित्तार्थं स्त्रीणामपि गायत्रीजपहोमविधानस्यान्यथाऽनुपपत्त्या गायत्रीवचनस्यावश्यकत्वात्। तस्मात् 'वाचनम्' इति पाठस्यैव प्रामाणिकत्वे 'अध्यापनं' 'वाचनम्' इत्युभयत्रापि णिजर्थप्रयोजकत्वस्यास्मिन्कल्पे निषेधेऽपि धात्वर्थव्यापाराश्रयत्वरूपप्रयोज्यत्वस्य निषेधे मानाभावः॥ ४ **माणवक इति।** करिष्यमाणमध्ययनं विषयीकृत्य 'अस्य सूत्रस्य शाटकं वय' इत्यत्रेव तद्योग्यत्वारोपेण तथा प्रयोग इति स्त्रीष्वपि तद्योग्यतास्वीकारेण ईषदुद्भूतपक्षेऽपि पक्षीति व्यवहारवत्सर्वेष्टासिद्धिः। तद्वंश्यत्वेनैव तथाप्रयोगाङ्गीकारे तु शूद्रापुत्रेऽपि कठादिप्रयोगापत्तिरिति बोध्यम्॥ ५ **बिसकण्ठिकेति।** बिसकण्ठिकापदवाच्यजातिविशेष इत्यर्थः। एवं च 'अस्त्रीविषयात्' इत्यस्य 'प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्नात्' इत्यर्थः॥

मूलवालोत्तरपदाच्च । ४ । १ । ६४ । पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् स्यात् । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओषधिविशेषे रूढा एते ॥ ( ७४९ ) (सू) **इतो मनुष्यजातेः** । ४ । १ । ६५ । ङीष् स्यात् । दाक्षी । योपधादपि । उदमेयस्यापत्यम् औदमेयी । मनुष्येति किम् । तित्तिरिः ॥ ( ७५० ) (सू) **ऊङुतः** । ४ । १ । ६६ । उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः । कुरुनादिभ्यो ण्यः । तस्य स्त्रियामवन्तीत्यादिना लुक् । अयोपधात्किम् । अध्वर्युः ॥ ( ७५१ ) (वा) **अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्** ॥ रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव । अलाब्वा । कर्कन्ध्वा । अनयोर्दीर्घान्तत्वेऽपि नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम् । प्राणिजातेस्तु कृकवाकुः । रज्ज्वादेस्तु रज्जुः । हनुः ॥ ( ७५२ ) (सू) **बाह्वन्तात्संज्ञायाम्** । ४ । १ । ६७ । स्त्रियामूङ् स्यात् । भद्रबाहूः । संज्ञायां किम् । वृत्तबाहुः ॥ ( ७५३ ) (सू) **पङ्गोश्च** । ४ । १ । ६८ । पङ्गूः ॥ ( ७५४ ) (वा) **श्वशुरस्योकाराकारलोपश्च** ॥ चादूङ् । पुंयोगलक्षणस्य ङीषोऽपवादः । लिङ्गविशिष्टपरिभाषया स्वादयः । श्वश्रूः । ( ७५५ ) (सू) **ऊरूत्तरपदादौपम्ये** । ४ । १ । ६९ । उपमानवाचिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । करभोरूः ॥ ( ७५६ ) (सू) **संहितशफलक्षणवामादेश्च** । ४ । १ । ७० । अनौपम्यार्थं सूत्रम् । संहितोरूः । सैव शफोरूः । शफौ खुरौ ताविव संश्लिष्टत्वादुपचारात् । लक्षणशब्दादर्शआद्यच् । लक्षणोरूः । वामोरूः ॥ ( ७५७ ) (वा) **सहितसहाभ्यां चेति**

---

सिद्धे किमनेन सूत्रेणेत्याशङ्क्याह—**स्त्रीविषयादपीति** ॥ ( ७४९ ) **इतो मनुष्य—**। इतः किम् , विट् । दरद् । विट्शब्दात् ' जनपदशब्दात् क्षत्रियादञ् १६७५' इत्यञ्, दरच्छब्दात्तु ' द्व्यञ्मगध–१६८०' इत्यण् । तयोः ' अतश्च १६८९' इति लुक् । यस्तु वैश्यपर्यायो विट्शब्दः सोऽपि प्रत्युदाहरणमित्याहुः ॥ **दाक्षीति** । 'अत इञ् १५७१' गोत्रलक्षणा जातिः । अदन्तत्वाभावादप्राप्तो ङीष् विधीयते ॥ **योपधादपीति** । ' जातेः ' इत्यनुवर्तमाने पुनर्जातिग्रहणादिति भावः ॥ **उदमेयस्येति** । उदकं मेयं यस्य उदमेयः ' उदकस्योदः संज्ञायाम् १४२८' इत्युदादेशः ॥ इञ उपसंख्यानमजात्यर्थम् । सौतंगमी । निर्वृत्ताद्यर्थे ' वुञ्छण्–१८२२' आदिसूत्रेण सुतंगमादिभ्य इञ्, न चायमिञन्तो जातिः ॥ ( ७५० ) **ऊङुतः** । ङकारो ' नोङ्धात्वोः–५६८५' इति विशेषणार्थः । अन्यथा यवाग्वा यवाग्वै इत्यत्रापि स निषेधः स्यात् । दीर्घोच्चारणं[1] तु श्वश्रूशब्दार्थम् । अन्यत्र सवर्णदीर्घेणापि सिद्धेः ॥ **कुरूरिति** । लिङ्गविशिष्टपरिभाषया स्वादयः । अत्र व्याचक्षते—यद्येकादेशस्य पूर्वान्तत्वेन ग्रहणात्स्वादय इति व्याख्यायेत तर्हि काण्डे कुड्ये इत्यादावपि ' एकवचनमुत्सर्गतः' इति सुः प्रवर्तेत तद्वारणाय ' अप्रत्ययः ' इति प्रसज्यप्रतिषेधाभ्युपगमे तु प्रकृते दोषः । श्वश्रूरित्यत्रैकादेशाभावाल्लिङ्गविशिष्टपरिभाषाया आवश्यकत्वाच्च । अत एव रमा इत्यत्र ' एकादेशस्य पूर्वान्तत्वेन ग्रहणात् स्वादयः ' इति मनोरमादौ[2] न व्याख्यातमिति ॥ **अध्वर्युरिति** । अध्वर्युशाखाध्येत्री अध्वर्युशाखाध्यायिवंशोद्भवेति वाऽर्थः । चरणलक्षणेयं जातिः । अध्वरं यातीति विग्रहे 'मृगय्वादयश्च ४२३६' इत्यौणादिकेन अध्वरशब्दस्यान्तलोपः, याधातोः कुप्रत्ययश्च ॥ ( ७५१ ) **पर्युदासादिति** । यदि सूत्रादुत इति गृह्यते तर्हि अलाब्वादावूङः संभवो नेति भावः ॥ **अलाब्वेत्यादि** । प्रथमान्तं द्वितीयान्तं वा नोदाहृतम् , वक्ष्यमाणप्रयोजनस्य तत्रासंभवात् ॥ **नोङ्धात्वोरिति** । ऊङ्धात्वोर्यणः परे शसादय उदात्ता न स्युरिति सूत्रार्थः ॥ ( ७५३ ) **पङ्गोश्च** । अजात्यर्थमिदम् । पङ्गुशब्दो हि गुणवाची ॥ ( ७५४ ) **श्वशुरस्येति** । पुंयोगलक्षणे ङीषि प्राप्ते ऊङ् तत्सन्नियोगेन च विधीयमानो लोपः संनिहितत्वादन्तस्यैवाकारस्य न त्वादेः । एतच्च वचनं[3] ' श्वशुरः श्वश्र्वा १३४२' इति निर्देशसिद्धार्थकथनपरम् । अतोऽपि प्रथमाकारस्य लोपो न शङ्क्यः ॥ ( ७५५ ) **ऊरूत्तरपदा—**। उपमीयतेऽनयेत्युपमा तस्या भाव औपम्यम् । उत्तरपदेन पूर्वपदमिहाक्षिप्यते तदेतत्फलितमाह—**उपमानवाचिपूर्वपदमिति** ॥ **करभोरूरिति** । ' मणिबन्धादाकनिष्ठं करस्य करभो बहिः' तद्वदूरू यस्याः सा ॥ ' धात्रीकराभ्यां करभोपमोरुः ' इत्यत्र तूङ् न, करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात् ॥ औपम्ये किम् । वृत्तोरूः । ऊर्वन्तादिति वक्तव्ये उत्तरपदग्रहणं हस्तिस्वाम्यूरुरित्यत्र मा भूदित्येवमर्थम् । अत्र हि हस्तिन इव स्वाम्यूरू अस्या इति विग्रहः । तथा चोर्वन्तत्वेऽपि ऊरूत्तरपदत्वमिह नास्ति । स्वाम्यूरुशब्दस्यैवोत्तरपदत्वात् ॥ ( ७५६ ) **संहित—**। संहितादिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् ॥ **शफाविति** । यद्यप्यमरेण ' शफं क्लीबे खुरः पुमान् ' इति नपुंसकतोक्ता, तथापि शफशब्दस्य पुंस्त्वमपि प्रामाणिकमेव । ' शफाविव जर्भुराणा ' इति श्रुतेः । 'शफः खुरे गवादीनां मूले विटपिनामपि ' इति हेमचन्द्रकोशाच्च ॥ **वामोरूरिति** । वामौ सुन्दरौ ऊरू यस्या इति विग्रहः ॥ कथं तर्हि 'पीवरोरु पिबतीव बर्हिणः' इति कुमारः । ऊङभावे हि ' पीवरोरो ' इति स्यात् । ऊङश्चेह विधायकं नास्ति । अत्राहुः—

---

१ **दीर्घोच्चारणमिति** । प्रश्लेषेणोकारद्वयविधानद्वारा 'ब्रह्मबन्धूः' इति बहुव्रीहौ परत्वाद्बाधकस्य शेषलक्षणस्य कपो निवृत्त्यर्थमिति तु भाष्ये स्पष्टम् ॥ २ **मनोरमादौ नेति** । भाष्ये तु ' आबपि अकारान्ताद्विधीयते । तत्रैकादेशः । एकादेशे कृतेऽन्तादिवद्भावात् प्रातिपदिकसंज्ञा भविष्यति ' इत्येव सिद्धान्तितम् ॥ ३ **वचनमिति** । 'ङ्याप्प्रातिपदिकात् ' इति सूत्रभाष्ये 'उवर्णान्तादूङ् विधीयते तत्रैकादेशः एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति' इति ग्रन्थेन तु श्वश्रूशब्देऽव्युत्पन्नत्वं ध्वन्यते ॥

वक्तव्यम् । हितेन सह सहितौ ऊरू यस्याः सा सहितोरूः । सहेते इति सहौ ऊरू यस्याः सा सहोरूः । यद्वा-विद्यमानवचनस्य सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः ॥ (७५८) (सू) **संज्ञायाम्** । ४ । १ । ७२ । कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात् । कद्रूः । कमण्डलूः । संज्ञायां किम् । कद्रुः । कमण्डलुः । अच्छन्दोऽर्थं वचनम्॥ (७५९-१) (सू) **शार्ङ्गरवाद्यञो ङीन्** । ४ । १ । ७३ । शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् । शार्ङ्गरवी । बैदी । जातेरित्यनुवृत्तेः पुंयोगे ङीषेव॥(७५९-२) (ग) **नृनरयोर्वृद्धिश्च** । इति गणसूत्रम् । नारी॥

---

संज्ञापूर्वकविधेरनित्यत्वात्तया संबुद्धिगुणाभाव इति स्थितस्य गतिरुन्नेयेति ॥ (७५७) **हितेन सहेति** । 'समो वा हिततत्तयोः' इति व्युत्पादितः सहितशब्दस्तु नेह गृह्यते, एकदेशविकृततया संहितग्रहणादेव तत्सिद्धेरिति भावः ॥ (७५८) **कमण्डलुरिति** । चतुष्पाज्जातिवाचकोऽयम् । अत एव 'चतुष्पाद्भ्यो ढञ् १६२२' इत्यत्र कामण्डलेय इत्युदाहरिष्यते । पात्रपर्यायस्तु न प्रत्युदाहरणं, तस्य स्त्रीलिङ्गाभावात् ॥ **अच्छन्दोऽर्थमिति** । वेदे तु 'कद्रुकमण्डल्वोश्छन्दसि ५२८५' इत्यनेन संज्ञायामसंज्ञायां चोङ् सिध्यतीति भावः ॥ (७५९-१) **अञो योऽकार इति** । अञा अकारविशेषणं किम्, शूरसेनी । 'जनपदशब्दात्-१६७५' इत्यञ्, 'अतश्च १६८९' इति लुकि जातिलक्षणोऽत्र ङीष् ॥ **शार्ङ्गरवीति** । शृङ्गरुशब्दादपत्येऽण् आदिवृद्धिः 'ओर्गुणः १२१९', 'टिड्ढाणञ्-६५१' इति ङीपं बाधित्वा परत्वात् 'जातेः-७४३' इति ङीषि प्राप्ते ङीन् विधीयते । तेन नित्त्वादाद्युदात्तः । ङीषि तु प्रत्ययस्वरेणान्तोदात्तः स्यात् ॥ **बैदीति** । बिदस्यापत्यं स्त्री 'अनृष्यानन्तर्ये बिदादिभ्योऽञ् १५८२' । पूर्ववज्जातिलक्षणे ङीषि प्राप्ते ङीन् विधीयते । शार्ङ्गरव, कापटव, ब्राह्मण, गौग्गुलव, गौतम-इत्यादि, शृङ्गरु-कपटु-ब्रह्मन्-गुग्गुलु-शब्देभ्यः 'प्राग्दीव्यतोऽण् १५३५' । गौतमशब्दः ऋष्यणन्तः । अयं गौरादिष्वपि पठित इति पक्षे अत्र ङीषपि भवति ॥ **ङीषेवेति** । जातेरित्यननुवृत्तौ तु शार्ङ्गरवस्य स्त्री बिदस्य स्त्रीति पुंयोगविवक्षायामपि परत्वान्ङीनेव स्यादिति भावः॥(७५९-२) **नृनरयोरिति** । नृशब्दात् 'ऋन्नेभ्यः-४२६' इति ङीपि नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनं वृद्धिविधानार्थम् ॥ ननु नरशब्दे 'अलोऽन्त्यस्य ६६' वृद्धिः स्यात् । अत्राहुः-'वार्णादाङ्गं बलीयः ३०६०' इत्यकारस्य 'यस्येति च ४३१' इति लोपेनापहारादनन्त्यस्याप्यकारस्य वृद्धिर्भवतीति । यद्वा-नरस्य अः नरः । कतन्तवत् पररूपम् । ना च नरश्च तयोर्नृनरयोः । परस्य च प्रथम एवाकारो गृह्यते न तु द्वितीयः, प्रश्लेषसामर्थ्यादिति । इह नरस्येत्यर्थवतो ग्रहणाद्वानरशब्दे नातिप्रसङ्ग इति बोध्यम् । यद्यप्यन्यतरोपादानेनापि नारीति रूपं सिध्यति, तथाप्यन्यतरस्यानिष्टरूपनिवृत्त्यर्थं द्वयोरुपादानम् । कथं तर्हि 'किन्नरीणां नरीणाम्' इत्यादिप्रयोगः । अत्राहुः-नरस्य स्त्री नरी । पुंयोगलक्षणो ङीष् । एवं च किंनरीत्यपि सिद्धम् । किंचिन्नरीति विग्रहादिति ॥ केचित्त्वनिर्दिष्टस्थानिकत्वादिक्परिभाषोपस्थितौ नृशब्दस्यैव वृद्धेर्नारीति भवति । नरशब्दस्य ग्रहणं तु ङीनर्थमेव । तत्रानिको वृद्ध्यभावान्नरीत्येव भवितव्यमित्याहुः ॥ तदपरे न क्षमन्ते-यदि ङीनर्थमेव नरशब्दग्रहणं स्यात्तर्हि शार्ङ्गरवादिगणे पृथगेव पठेत् । वृद्धिविधायके तद्गणसूत्रे तत्पाठस्य वैयर्थ्यापत्तेरिति ॥ पुत्रशब्दोऽत्र गणे पठ्यते । ततः स्त्रियां ङीन् । पुत्री । न च पुत्रशब्दः कन्यायां नास्तीति शङ्क्यम्, 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वे' इत्यमरोक्तेः । तेन 'पुत्रीव हर्षं हृदये तनोति' 'कुर्वे तदुर्वीपतिपुत्रि सर्वम्' इत्यादिप्रयोगा निर्बाधा एव ॥ यत्त्वत्र हरदत्तेनोक्तम्—केवलः पुत्रशब्दः स्त्रियां नास्तीति । तदुपेक्ष्यम्, उदाहृतकोशविरोधात् । 'सूतिकापुत्रिका-६४२' इत्यत्र स्वग्रन्थविरोधाच्च । एवं च 'सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा' इति 'कारे

---

१ **गतिरिति** । 'सहितसहाभ्यां-' 'किमः क्षेपे' इत्यादाविव विनाप्यादिपदं सकलेष्टसिद्धावादिपदं 'शे तृम्फादीनाम्' इत्यत्रेव प्रकारार्थम् । सादृश्यं चोर्वोः प्रशंसावाचकत्वेन । एवं च पीवरवरादिशब्दानामपि संग्रहेणोङ् निर्बाधः । प्रपञ्चितं चैतत्प्राक्रियाप्रपञ्चप्रकाशे ॥ २ **तदुपेक्ष्यमिति** । 'पुन्नरकम्, ततस्त्रायत इति वा' इति निरुक्ते व्युत्पत्तिदर्शनात् पाचकादिवत् क्रियाशब्दत्वेन त्रिलिङ्गत्वसंभवात् । अत एव 'पुमांसं पुत्रमाधेहि' इत्यादौ '**यज्ञेन देवेभ्यः, प्रजया पितृभ्यः, स्वाध्यायेन ऋषिभ्यः**' इति श्रुत्या पितृऋणापाकरणाय प्रजोत्पादनसमर्थस्यैव कामनाविषयत्वेन क्लीबस्य तदभावादेव व्यावृत्तौ स्त्रीव्यावृत्तय एव पुंस्त्वेन विशेषणं संगच्छते । एवं च स्वर्गकामादिक्रियाशब्दानामपि जातिशब्दत्वाङ्गीकारेणास्यापि तथात्वसंभवेन सौत्रजातिपदस्य जातिगुणक्रियापरत्वाङ्गीकारेण वा 'य इच्छेत्-पुत्रो मे जायेत सर्वमायुरियात्-' इति बृहदारण्यकोपान्त्यश्रुतिस्थकामनाविषयत्वं कन्यानामपि सिध्यतीति सर्वं समञ्जसम् ॥

---

१ एवं च जोरू-पीवरोरू-वरोरूप्रभृतिशब्देषूङ् दृश्यते त एव वामादिषु ग्राह्याः । येषु च '**परिस्फुरन्मीनविघट्टितोरवः**' इत्यादिषूङ् नोपलभ्यते तेषां ग्रहणं न इत्यत्र लक्ष्यानुसारिव्याख्यानमेव शरणम् । इत्येतत् '**अविहितषत्वलक्षणः सुषामादिषु द्रष्टव्यः**' '**अविहितणत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः**' इति वदता भाष्यकृता ध्वनितमिति न कोऽपि दोषः इति दाधिमथाः ॥

( ७६० ) (सू) यङश्चाप् । ४ । १ । ७४ । यङन्तात् स्त्रियां चाप् स्यात् । यङ इति ञ्यङ्ष्यङोः सामान्यग्रहणम् । आम्बष्ठ्या । कारीषगन्ध्या ॥ ( ७६१ ) (वा) षाद्यञश्चाब्वाच्यः । पौतिमाष्या ॥ ( ७६२ ) (सू) आवट्याच्च । ४ । १ । ७५ । अस्माचाप् स्यात् , यञश्चेति ङीपोऽपवादः । अवटशब्दो गर्गादिः । आवट्या ॥ (७६३) (सू) तद्धिताः । ४ । १ । ७६ । आ पञ्चमसमाप्तेरधिकारोऽयम् ॥ ( ७६४ ) (सू) यूनस्तिः । ४ । १ । ७७ । युवन्शब्दात्तिप्रत्ययः स्यात्स च तद्धितः । लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः । युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां सा बहुयुवा । युवतीति तु यौतेः शत्रन्तान्ङीपि बोध्यम् ॥ इति स्त्रीप्रत्ययाः ॥

---

## अथ कारकप्रकरणम् ।

( ७६५ ) (सू) प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । २ । ३ । ४६ । नियततोपस्थितिकः प्रातिपदिकार्थः ।

---

सत्यागदस्य १४४५' इति सूत्रस्थवार्तिकं व्यर्थमिति मनोरमायां स्थितम् ॥ ( ७६० ) **यङश्चाप्** । पकारोऽत्र 'हल्ङ्याप्-३५६' इति सामान्यग्रहणार्थः । चकारस्य तदविघातेन चरितार्थत्वेऽपि परत्वाच्चित्स्वरः पित्स्वरं बाधते ॥ **आम्बष्ठ्येति** । आम्बष्ठस्यापत्यं स्त्री 'वृद्धेत्कोसला-१६८१' इति ञ्यङ् ॥ **कारीषगन्ध्येति** । करीषस्येव गन्धोऽस्य करीषगन्धिः । 'उपमानाच्च १२५८' इति गन्धस्येदन्तादेशः तस्य गोत्रापत्यं स्त्री-अण् । 'अणिञोरनार्षयोः—१६९१' इति ष्यङादेशः । स च यद्यपि स्त्रियामेव विहितस्तथापि ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप् ॥ ( ७६१ ) **षाद्यञ इति** । एतच्च 'आवट्याच्च ७६२' इति चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यत इत्याहुः ॥ **पौतिमाष्येति** । पूतिमाषशब्दो गर्गादिः ॥ ( ७६३ ) **तद्धिताः** । बहुवचनमनुक्तानामुपसंख्येयानां संग्रहार्थम् । महासंज्ञाकरणं तु तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इत्यन्वर्थलाभाय । तेन यथाप्रयोगमेव स्युः ॥ ननु टापः[3] प्रागेवायमधिकारोऽस्तु ष्फविधौ तद्धितग्रहणं 'यस्येति-४३१' लोपे ईद्ग्रहणं च माऽस्त्विति चेन्मैवम्, पट्वी मृद्वीत्यादावोर्गुणप्रसङ्गात् । यदि तु 'यस्येति च ४३१' इत्यत्र ईद्ग्रहणमेव ङीपि तद्धितकार्याभावं ज्ञापयतीति स्वीक्रियेत, तर्हि टापः प्राक् तद्धिताधिकारेऽपि न कश्चिद्दोष इति केचित् । तच्चिन्त्यम्, कुरूरित्यादौ ओर्गुणादतिप्रसङ्गादिति नव्याः ॥ ( ७६४ ) **यूनस्तिः** । 'क्तेभ्यः-४२६' इति ङीपोऽपवादः ॥ **युवतिरिति** । 'स्वादिषु-३३१' इति पदत्वान्नलोपः । कथं तर्हि 'युवतीकरनिर्मथितम्' इति प्रयोगः, अत्र केचित् 'सर्वतोऽक्तिन्नर्थात्-७०८' इति बह्वादिगणसूत्रादिकल्पिको ङीष् । न च तिप्रत्ययेनैव स्त्रीत्वस्योक्तत्वान्ङीष् न भविष्यतीति शङ्क्यम्, 'उक्तेऽपि भवन्त्येते' इति भाष्यात्[4] । न चैवमपि युवतीनां समूहो यौवतमिति न सिध्येत् । किन्तु 'तस्य समूहः १७५७' इत्यणि 'भस्याढे तद्धिते १२०४' इति पुंवद्भावेन यौवनमित्येव स्यादिति वाच्यम् , बाहुलकाद्यौतेरौणादिके क्तिप्रत्यये सति युवतिशब्दस्तमादाय तत्सिद्धेरिति ॥ इमं क्लेशं परिहरन्नाह—**शत्रन्तादिति** । यौति मिश्रीकरोति पत्येति विग्रहे 'लटः शतृशानचौ ४११९' इति शतरि 'उगितश्च ६१९' इति ङीप्, एवं हि यौवतमिति प्रयोगोऽपि सुलभः । त्यन्तादणि तु पुंवद्भावाद्यौवनमित्येव । भिक्षादिपाठसामर्थ्यान्न पुंवदिति वृत्तिकारोक्तिरयुक्तेति 'भिक्षादिभ्योऽण् १७५८' इतीत्यत्रैवोपपादयिष्यामः ॥ इति स्त्रीप्रत्ययाः ॥

---

( ७६५ ) 'स्वौजसमौट्-२६८' इत्यादिना तावत् स्वादयो ङ्याप्प्रातिपदिकाद्दर्शिताः । तेषामर्थविशेषे व्यवस्थां दर्शयितुमारभते—**प्रातिपदिकार्थेत्यादिना** । प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहार इति 'स्वौजसमौट्-२६८' इति सूत्रे मूलकृतोक्तम् ॥ कौस्तुभे तु—इह प्रथमादयः शब्दाः सुपां त्रिकेषु वर्तन्ते 'समं स्यादश्रुतत्वात्' इति न्यायादित्युक्तम् । तथा च न्यायसिद्धत्वादस्मिञ्शास्त्रे प्रथमादिसंज्ञानामकरणेऽपि न क्षतिरिति ज्ञेयम् ॥ यदा हि 'पञ्चकं प्रातिपदिकार्थः' इति गृह्येत ततो लिङ्गवचनग्रहणमनर्थकम् 'प्रातिपदिकार्थे' इत्येव सिद्धेः, मात्रग्रहणाच्च कर्मादिव्यवच्छेदो न स्यात्, प्रातिपदिकार्थादनतिरिक्तत्वात् ॥ त्रिकपक्षेऽपि लिङ्गग्रहणमनर्थकमेवेत्याशङ्क्य विवक्षितं दर्शयति—**नियतोपस्थितिक इति**[1] । यस्मिन्प्रातिपदिके

---

१ **नियतेति** । नियतोपस्थितिर्यस्य सोऽर्थात् 'यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेन भानं स प्रातिपदिकार्थः । स च प्रवृत्तिनिमित्तं तदाश्रयश्चेति तावेवात्र प्रातिपदिकार्थपदेन गृह्येते, लिङ्गपदोपादानात् । लिङ्गपरिमाणपदाभ्यां च तदाधिक्यं गृह्यते । एवं च-अव्ययानि पुमान् स्त्री नपुंसकम् इति चास्योदाहरणानि । कृष्णः श्रीः ज्ञानम् तटस्तटी तटम् इति लिङ्गाधिक्यस्य । द्रोणः खारी आढकम् इति परिमाणाधिक्यस्य । प्रातिपदिकार्थादधिकस्य लिङ्गस्य परिमाणरूपार्थस्य चोपस्थितेः । द्रोणो व्रीहिरिति तु सिंहो माणवक इतिवत्स्वार्थे संस्कृतयोः पदयोः पश्चात्सम्बन्धे मुख्यार्थबाधादिना लक्षणया शाब्दबोधं जनयतीति भाष्यसम्मतमिति मञ्जूषायां विस्तरः ॥ २ **तदविघातेनेति** । घ्यनुबन्धकत्वसंपादनद्वारा सामान्यग्रहणार्थत्वाविघातेनेत्यर्थः ॥ ३ **टापः प्रागिति** । ङीबादिषु ङस्येत्संज्ञा 'चुटू-ङाः' इति सूत्रकरणेन सेत्स्यति । टीबादय एव वा ते सन्तु । तद्धितान्तत्वात्प्रातिपदिकत्वेऽपि फिट्स्वरो न, प्रकृतिप्रत्ययविभागशून्येष्वेव तत्प्रवृत्तेः । पकारपकारभिन्नानुबन्धवैयर्थ्यापत्तेश्च ॥ ४ **भाष्यादिति** । द्वौ ब्राह्मणौ व्यतिघ्नीते गार्ग्यायणीत्यादौ द्योतकवाचकसमुच्चयस्यापि इष्टत्वाचेत्यपि बोध्यम् ॥

**मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात् । उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम् । अनियतलिङ्गास्तु लिङ्गमात्राद्याधिक्यस्य । तटः । तटी । तटम् । परिमाणमात्रे द्रोणो व्रीहिः । द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम् । प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः । वचनं संख्या । एकः । द्वौ । बहवः । इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ॥**

---

उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः । शक्य इति यावत् ॥ नन्वेवं सिंहो माणवक इत्यादौ प्रथमा न स्यात् । अत्राहुः—शक्यार्थमादाय प्रथमाविभक्तेरुत्पत्तौ सत्यां पश्चात् पदान्तरसमभिव्याहारे लक्ष्यार्थबोधेऽपि क्षत्यभावादिति ॥ **मात्रशब्दस्येति** । तस्य चात्रावधारणमर्थः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः ॥ प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रमित्येवकारेणास्वपदविग्रहः । समासस्तु मयूरव्यंसकादित्वाद्बोध्यः ॥ **प्रत्येकमिति** । द्वन्द्वान्ते श्रूयमाणत्वादिति भावः । ननु वीरः पुरुष इत्यादावभेदसंसर्गस्याधिकस्य भानात्प्रथमा न स्यात् । न च 'पूर्वापर-१०६३' इत्यादिना वीरशब्दस्य समासविधानं प्रथमोत्पत्तौ लिङ्गमिति वाच्यम्, द्वितीयान्तानामपि वीरं पुरुषमानयेत्यादौ तद्विधानस्य चरितार्थत्वादिति चेन्न, संसर्गस्य वाक्यार्थत्वेन बहिरङ्गत्वात्प्रथमप्रवृत्तसंस्कारबाधानुपपत्तेः पदसंस्कारपक्षस्यैवेहाभ्युपगमात् ॥ मात्रपदेन कर्माद्याधिक्ये प्रथमा न भवेत्तथापि लिङ्गपरिमाणग्रहणाल्लिङ्गाधिक्ये परिमाणाधिक्ये च भवेदेवेत्याह—**लिङ्गमात्राद्याधिक्ये इति** । यद्यपि लिङ्गमात्रे परिमाणमात्र इत्येवाक्षरार्थस्तथापि प्रातिपदिकार्थं विना लिङ्गादिप्रतीतेरसंभवादिति तदाधिक्य इत्युक्तम् ॥ **उच्चैरिति** । पदत्वादिह रुत्वविसर्गौ भवतः । किं च, अस्य प्रथमान्तत्वाद् ग्राम उच्चैस्तव स्वं, ग्राम उच्चैस्ते स्वमिति, 'सपूर्वायाः-५५१' इति सूत्रेण तेमयादेशयोर्विकल्पसिद्धिरपि फलम् ॥ **कृष्ण इति** । यद्यपि नीलद्रव्येऽयमनियतलिङ्गः, तथापि वासुदेवे भगवति नियतपुँल्लिङ्ग इति भावः ॥ **ज्ञानमिति** ॥ भावे ल्युट् ॥ **तटः । तटीति** । द्विकपक्षे नियतलिङ्गं न प्रकृत्यर्थः, त्रिकपक्षे तु यद्यपि प्रकृत्यर्थः, तथापि तत्तल्लिङ्गस्य पाक्षिकोपस्थितिकत्वान्न 'प्रातिपदिकार्थे' इत्यनेन गतार्थता ॥ **द्रोण इति** । न चेह प्रातिपदिकार्थमात्र इत्येव प्रथमाऽस्त्विति वाच्यम्, तथा सति परिच्छेद्यपरिच्छेदकभावस्य संसर्गविधया भानायोगात् । नामार्थयोरभेदसंसर्गस्य व्युत्पन्नत्वात् ॥ **व्रीहिरिति** । जातावेकवचनम् । व्यक्तिविवक्षायां तु द्रोणो व्रीहय इति भवत्येव ॥ **अभेदेनेति** । न च प्रकृतिप्रत्ययार्थयोरभेदान्वयो दुर्लभः, पचति पाचकः औपगव इत्यादौ सर्वत्र भेदान्वयस्यैव दृष्टत्वादिति वाच्यम्, देवतार्थकताद्धितादावभेदान्वयस्य दृष्टत्वात् । ऐन्द्रं हविरित्यत्र हि इन्द्रदेवताकं हविरिति बोधः सर्वैरेवाभ्युपगम्यत इति नास्ति शङ्कावसर इति भावः ॥ **वचनं संख्येति** । वाच्यवाचकयोरभेदाध्यवसायेन तथैव पूर्वाचार्याणां व्यवहारादिति भावः ॥ **अप्राप्तौ वचनमिति** । सूत्रे वचनग्रहणमित्यर्थः । वस्तुतस्तु—सूत्रे मात्रग्रहणं व्यर्थम्, विशेषविहितैः 'कर्मणि द्वितीया ७७१' इत्यादिभिर्बाधितत्वेन कर्मादौ प्रथमाया अप्रवृत्तेः । 'कर्मणि द्वितीया ७७१' इत्यादिषु कर्मणि द्वितीयैव, कर्तृकरणयोस्तृतीयैव, नान्या विभक्तिरित्येवमर्थनियमाभ्युपगमात् । न च 'कर्मण्येव द्वितीया, कर्तृकरणयोरेव तृतीया, नान्यत्र' इति प्रत्ययनियमपक्षे प्रथमाया अपि कर्मादौ प्रवृत्तिसंभवान्मात्रग्रहणमावश्यकमेवेति वाच्यम्, प्रत्ययनियमपक्षे हि प्रातिपदिकार्थ एव प्रथमा नान्यत्रेत्यर्थपर्यवसानात्कर्मादौ प्रथमाया अप्रवृत्तौ वचनग्रहणमपि व्यर्थम् । 'न केवला प्रकृतिः प्रयोक्तव्या' इति निषेधादेव प्रथमोत्पत्तिसिद्धेः । न चैवं 'द्विशब्दाद्बहुशब्दाच्चैकवचनम्, एकशब्दाद् द्विवचनम्' इत्येवमव्यवस्था स्यादिति वाच्यम्, अनन्वितार्थकविभक्तिप्रयोगापेक्षया अनुवादकविभक्तिप्रयोगस्य न्याय्यत्वात् । गौर्वाहीक इतिवत् द्रोणशब्दस्य तत्परिमिते उपचाराद् द्रोणो व्रीहिरित्यपि सिद्धमिति मनोरमायां परिमाणग्रहणमपि प्रत्याख्यातम् ॥ नन्वस्मिन्पक्षे द्रोणपरिच्छिन्नाभिन्नो व्रीहिरित्यभेदान्वयः, नामार्थयोरभेदान्वयात्, 'परिमाणं प्रत्ययार्थः' इति पक्षे तु द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति प्रत्ययार्थनामार्थयोरभेदान्वयस्तथा च फलभेदे कथं प्रत्याख्यानमिति चेत् । अत्राहुः—शाब्दबोधप्रयुक्तं वैलक्षण्यमिहानादृत्य परिमाणग्रहणं प्रत्याख्यातम् । अत एव औपगवादौ 'तस्येदम् २०६४' इत्यनेनैवाण्प्रत्ययसिद्धेः 'तस्यापत्यम् १५६०' इति सूत्रं किमर्थमित्याक्षेपः, मत्वर्थीयेनिनैव सिद्धेः 'परिवृतो रथः १७१४' इत्यधिकारे 'पाण्डुकम्बलादिनिः १७१५' इतीनिप्रत्ययविधानं किमर्थमित्याक्षेपश्च वक्ष्यमाणः संगच्छते । यदि तु सर्वत्रैव शाब्दबोधप्रयुक्तं वैलक्षण्यं स्वीक्रियते, तर्हि 'बाधनार्थं कृतं भवेत्' इति समाधानस्याणो बाधनार्थमिनिप्रत्ययविधानमिति समाधानस्य च वैयर्थ्यापत्तेरिति ॥ ननु क्वचित् पञ्चकं प्रातिपदिकार्थः, क्वचित् त्रिकं, क्वचिद् द्विकं प्रातिपदि-

---

१ **परिच्छेद्येति** । न चैवं 'द्रोणो व्रीहिमानय' इत्यस्यापि साधुत्वं स्याद्—इति वाच्यम् । 'तिङ्समानाधिकरणे प्रथमा' इति लक्षणेन तिङ्सामानाधिकरण्याभावात्प्रथमाया अनापत्तेः ॥ २ **क्वचिद्द्विकमिति** । यद्यपि क्वचिद् 'एकम्' इति पक्षोऽपि श्रूयते । तत्र च 'आकृतिं वाजप्यायनः' इति सरूपसूत्रभाष्यात् 'जातिरेव प्रातिपदिकार्थः । लाघवेन तस्या एव वाच्यत्वौचित्यात् । अनेकव्यक्तीनां वाच्यत्वे गौरवात् । व्यक्तिबोधस्तु लक्षणया । एवं च तत्र विभक्त्यर्थान्वयोऽप्युपपद्यते । उपपत्तिश्चेत्थं सरूपसूत्रभाष्य उक्ता—'आकृतावारम्भणादीनां संभवो नास्तीति कृत्वा आकृतिसहचरिते द्रव्ये आरम्भणादीनि भविष्यन्ति' इति । 'द्रव्याभिधानं व्याडिः' इति व्यक्तिरेव प्रातिपदिकार्थः ।—

(७६६) संबोधने च । २ । ३ । ४७ । इह प्रथमा स्यात् । हे राम ॥ ( ७६७ ) कारके । १ । ४ । २३ ।

---

कार्थ इत्यादि व्यवह्रियते। त एते पक्षाः केषामभिमताः। कथं वाऽमीषामुपपत्तिरिति चेत् । अत्र व्याचख्युः—स्वार्थद्रव्यलिङ्गसंख्याकारकात्मकः पञ्चकं प्रातिपदिकार्थः, दधि मध्वित्यादौ विनाऽपि विभक्तिं प्रातिपदिकादेव तावतामर्थानां प्रतीतेः । वृक्षौ वृक्षाः वृक्षं वृक्षेणेत्यादौ यद्यपि विभक्त्याऽन्वयेऽपि प्रतीयन्ते न इयता प्रकृत्यर्थत्वहानिर्द्योतकत्वेनैवोपयोगादिति भाष्यकारा मन्यन्ते ॥ आदितश्चतुष्कमिति कैयटः । 'तत्रोपपदं सप्तमीस्थम्' इत्यत्र 'चतुष्कपक्षे पञ्चकपक्षे वा कारकं प्रातिपादिकार्थः' इत्यभिधानात् ॥ आदितस्त्रिकमिति वृत्तिकारः । अन्वयव्यतिरेकाभ्यां संख्याकारकादेर्विभक्त्यर्थत्वनिश्चयात् । यद्यपि दधि मधु इत्यादौ विनाऽपि विभक्तिं संख्या कारकं च प्रतीयते, नेयता वृक्षौ वृक्षा इत्यादावपि विभक्त्यर्थत्वं हीयते । न हि गर्गा इत्यादौ विनाऽपि यञा अपत्यं गम्यत इति तदपि प्रकृत्यर्थः । न चाबिभरित्यादौ अन्तरेणापि प्रत्ययं कर्ता प्रतीयत इति भेत्तेत्यादावपि कर्ता प्रकृत्यर्थ एवेति युज्यते वक्तुम् । अतस्त्रिकमेव प्रातिपदिकार्थः, संख्याकर्मादयस्तु विभक्त्यर्था इति ॥ लिङ्गं टाबादिवाच्यमिति पक्षे आदितो द्विकमेवेत्यन्ये । तत्र स्वार्थो विशेषणम् । द्रव्यं विशेष्यम् । लिङ्गं स्त्रीत्वादि । संख्या एकत्वादिः । कारकं कर्मादि ॥ (७६६)संबोधने च । मात्रग्रहणात्तत्प्रत्याख्यानपक्षेऽपि प्रातिपदिकार्थ एव प्रथमेति नियमाद्वा संबोधनाधिक्येऽप्राप्तावस्यारम्भः । इह संबोधनं प्रकृत्यर्थं प्रति विशेष्यं, क्रियां प्रति विशेषणम् । तथा च—'व्रजानि देवदत्त' इत्यादौ 'एकतिङ्वाक्यम् ५४७' इति वाक्यत्वे सिद्धे 'आमन्त्रितस्य च ५५२१' इति निघातो भवति । क्रियां प्रत्यविशेषणत्वे तु भिन्नवाक्यत्वान्नैतत्सिध्येत्,'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः५४६' इति वार्तिकात् । तथा चोक्तम्—"संबोधनपदं यच्च तत् क्रियायां विशेषणम्। व्रजानि देवदत्तेति निघातोऽत्र तथा सति" इति । एवं च राम मां पाहीति वाक्यस्य रामसंबन्धिसंबोधन-

---

—एतत्पक्षे 'जातेरुपलक्षणत्वेनाश्रयणात्परित्यक्तभेदद्रव्यमात्रं विशिष्टजातियुक्तं शब्देनोच्यते' इत्याद्युपपत्तिराकरे स्पष्टा । तथापि "न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वा आकृतिर्न पदार्थः । उभयोरुभयं पदार्थः।कस्यचित् किंचित्प्रधानभूतं किंचिद्गुणभूतम् । आकृतिपदार्थकस्य आकृतिः प्रधानभूता द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतम्,आकृतिर्गुणभूता" इति भाष्यसिद्धान्तालोचने तु स्वार्थः प्रवृत्तिनिमित्तम्, तदाश्रयो द्रव्यं चेति द्विकमेव प्रातिपदिकार्थ इति भावः॥

---

१ **कारक इति** । कारकत्वं क्रियाजनकत्वम् । भाष्ये-'करोति क्रियां निर्वर्तयति' इति व्युत्पत्तिदर्शनात् । ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वम् , पुत्रेणान्यथासिद्ध्या तत्त्वाभावात् । अत एवैषां क्रियायामेवान्वयः । क्रियाजनकत्वज्ञाने च क्रियान्वयज्ञानं कारणम् । क्रियाजनकमिति ज्ञाते 'का सा क्रिया' इत्याकाङ्क्षोदयेन क्रियाया जनकाकाङ्क्षया च तत्रैवान्वयस्यौचित्यात् । सर्वेषां च कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वम् । असंनिहितसंप्रदानस्यापि दातृबुद्धिस्थत्वे सति दातृज्ञानपूर्वकालत्वेनैव जनकत्वम्, तावतैव दानक्रियानिष्पत्तेः । घटं स्मरति घटं करोतीत्यादौ बौद्धघटादेः पूर्वकालत्वात् स्मृत्यादिनिष्पादकत्वमित्याद्यूह्यम् । न चैवं कारकशब्दस्य कर्तृपर्यायत्वेन 'कारकं करणम्' इत्यादि विरुद्धम्, 'कारकं कर्ता' इति च पुनरुक्तं स्यादिति वाच्यम् , 'निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके । व्यापारभेदापेक्षायां करणादित्वसंभवः ।' इति हरिणैव समाधानात् । अस्यार्थः—सर्वेषां स्वस्वव्यापारद्वारा स्वातन्त्र्येणैव क्रियाजनकत्वात्कर्तृत्वेन कारकत्वम् । ततः कः केन किं पचतीति विवक्षायां स्वस्वव्यापारवशेन करणादित्वम् । तत्र साधनान्तरनियोगव्यापारः कर्ता । तद्व्यापार एव सर्वत्र प्रधानधात्वर्थः । कर्तुः क्रिययेप्सिततमव्यापारं कर्म । कारकान्तरसाध्यव्यापारं करणम् । प्रेरणानुमतिव्यापारं संप्रदानम् । अवधिभावोपगमव्यापारमपादानम् । कर्त्रादिव्यवहितक्रियाधारोऽधिकरणम् । स्वतन्त्रं प्रेरयन् हेतुः । तत्र विशेषस्य सामान्यपूर्वकत्वात्कारकत्वमनुवृत्तमिति करणं कारकमित्याद्युपपत्तिः । 'क्रियान्वयित्वं कारकत्वम्' इति तु न सम्यक् 'कारकाणां क्रियान्वयः' इति वाक्यस्य 'क्रियान्वयिनां क्रियान्वयः' इत्यर्थापत्त्योद्देश्यतावच्छेदकविधेययोरैक्येनासंगत्यापत्तेः ॥ २ **संबोधनमिति** । "सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुः । प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥ संबोधनं न वाक्यार्थ इति वृद्धेभ्य आगमः ।" इति हर्युक्तेः 'क्रियासु विनियोगफलकोऽभिमुखीभावः संबोधनम्' इति सूचितम् । अत्र सिद्धस्येत्यनेन तस्यानुवाद्यत्वम् , विनियुज्यत इत्यनेन प्रवर्तनाविषयक्रियासंबन्धस्तस्येति बोधितम् । एवं च संबोधनविभक्तेरनुवाद्यविषयतयाऽनुवाद्यस्य च विधेय एवान्वयेन विधेयतायाश्च क्रियानिष्ठत्वेन तस्यामेवान्वय इति युक्तम् । संबोध्यतावच्छेदकरूपेण संबोध्यस्य सिद्धिं विनाऽनुवाद्यत्वासंभवेन राजा भव युध्यस्व इन्द्रशत्रुर्वर्धस्वेत्यादौ न संबोधनविभक्तिः । अत एव राजन्युध्यस्वेत्यस्य कुमारावस्थायां, राजा भव युध्यस्वेत्यस्य राजावस्थायां न प्रयोगः ॥ व्रजानि देवदत्तेत्यादावपि जानीहीत्यध्याहारो वाक्यैकदेशन्यायेन वा । तत्र व्रजनस्य कर्मत्वाद् देवदत्तस्योद्देश्यत्वाद् उभयोः समानवाक्यस्थत्वम् । उद्देश्यविधेयभावो वाक्यार्थः । अभिमुखीभवनानुकूलस्य संबोधनविभक्त्यन्तशब्दप्रयोगरूपस्य व्यापारस्येतरनैरपेक्ष्येणैव प्रतीतिस्तन्न वाक्यार्थ इति तदर्थ इति बोध्यम् । तत्र वाक्यैकदेशन्यायेन, अध्याहारेण वा व्रजानि देवदत्तेत्यनेनैव जानीहीत्येतद्घटितवाक्यार्थबोध इति 'एकतिङ् वाक्यम्' इति वाक्यलक्षणमपि श्रूयमाणैकतिङन्तपदवत्त्वमित्यर्थकं तत्रास्त्येवेति निघातसिद्धिः । एतन्मूलक एव संबोधनस्य कर्तृकारकत्वव्यवहारो वृद्धानाम् । तस्यैव त्वंपदार्थत्वेन विनियोज्यक्रियाकर्तृत्वात्। अत एव 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकमते प्रथमासिद्धिः संबोधने ॥ ३ **एवं चेति** । 'अभिमुखीभवद्रामोद्देश्यकप्रवर्तनाविषयो मत्कर्मकं रक्षणम्' इति, 'अभिमुखीभवद्देवदत्तोद्देश्यकप्रवर्तनाविषयो मत्कर्तृकगमनकर्मकं ज्ञानमित्यर्थः ॥

इत्यधिकृत्य ॥ (७६८) (सू) **कर्तुरीप्सिततमं कर्म** । १ । ४ । ४९ । कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् । कर्तुः किम् । माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषा न तु कर्तुः । तमब्ग्रहणं किम् । पयसा ओदनं भुङ्क्ते । (७६९) कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । अन्यथा गेहं प्रविशतीत्यत्रैव स्यात् ॥ (७७०) (सू) **अनभिहिते** ।२।३।१। इत्यधिकृत्य ॥ (७७१) (सू) **कर्मणि द्वितीया**।२।३।२।अनुक्ते कर्मणि द्वितीया स्यात् ।

---

विषयो मत्कर्मकं रक्षणमर्थः । व्रजानि देवदत्तेत्यत्र तु देवदत्तसंबन्धिसंबोधनविषयो मत्कर्तृकं गमनमर्थ इति प्रथमा ॥

(७६८) **कर्तुरीप्सिततमं कर्म** । कर्तुरिति 'क्तस्य च वर्तमाने ९१३' इति कर्तरि षष्ठी । आप्नोतेः सन्, द्वित्वम्, 'आप्ज्ञप्यृधामीत् ३४७८' 'अत्र लोपोऽभ्यासस्य ३४७९' इत्यभ्यासलोपः, 'मतिबुद्धिपूजार्थेभ्यश्च ४१०७' इति वर्तमाने क्तः । मतिरिहेच्छा न तु बुद्धिः, पुनर्बुद्धिग्रहणात् । ततः 'अतिशायने तमबिष्ठनौ २७१५' इत्यतिशये तमप् । एवं च कर्त्राऽऽप्तुमिष्यमाणतमं कर्मेत्यर्थः । कर्ता च धातूपात्तव्यापाराश्रयः स च केनाप्तुमिच्छतीति करणाकाङ्क्षायां विशेषणीभूतेन व्यापारेणेत्यर्थाल्लभ्यते, तदाह—**क्रिययेति** । क्तप्रत्ययेनोपस्थितं वर्तमानत्वं चेह न विवक्षितं, तेन कटं कृतवान् करिष्यतीत्यादि सिद्धम् ॥ **कारकमिति** । एतच्च 'कारके ७६७' इत्यधिकाराल्लभ्यते । तत्र हि व्यत्ययेन प्रथमार्थे सप्तमी । प्रतिसूत्रं वाक्यं भित्त्वा कारकसंज्ञाऽनेन विधीयते । तद्यथा-अपाये ध्रुवं कारकसंज्ञं स्यात् । ततोऽपादानम् । उक्तं कारकमपादानं स्यात् । पुनः कारकशब्दानुवृत्तिसामर्थ्याद्विशेषसंज्ञाभिः सह समावेशासिद्धिः । तेन स्तम्बेरम इत्यत्राधिकरणत्वात्सप्तमी । कारकत्वाद् 'गतिकारकोपपदात्कृत् ५८४५' इति कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति । अन्यथा 'तत्पुरुषे तुल्यार्थ-५७०२' इत्यादिना पूर्वपदप्रकृतिस्वरः स्यात् । न चात्रोपपदस्वरेणान्यथासिद्धिः शङ्क्या, 'स्तम्बकर्णयोः-३९०१' इति निर्देशात् प्रातिपदिकस्योपपदत्वेऽपि सप्तम्यन्तस्यातथात्वात् । यद्यपि थाथादिस्वरेणैवान्तोदात्तत्वं सिध्यति तथाप्यप्रत्ययसाहचर्येण एरच एव तत्रोपादानान्नास्ति थाथादिस्वरेण तत्सिद्धिरित्याहुः ॥ अन्वर्था चेयं संज्ञा-करोतीति कारकमिति, तेन ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र क्रियानन्वयिनो न भवति ब्राह्मणो ह्यत्र पुत्रविशेषणं न तु क्रियान्वयीति ॥ **पयसेति** । भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वेऽपि ओदन एवात्र ईप्सिततमः, पयस्तु संस्कारकत्वात्करणम् । न ह्यसौ केवलपयसः पानेन संतुष्यति किन्तु तत्संस्कृतेनौदनेन। यदा तु पय एव ईप्सिततममस्य भवति, तदा कर्मत्वं भवत्येव-पयः पिबतीति ॥ (७६९) **कर्मेत्यनुवृत्ताविति** । 'अधिशीङ्स्थासां कर्म ७९१' इति सूत्रात् ॥ (७७०) **अनभिहिते** । ननु बहुपटुरित्यादौ बहुच्प्रत्ययेनोक्तार्थत्वात्कल्पबादयो यथा न प्रवर्तन्ते, तथा क्रियते कट इत्यादावपि तिङादिभिरुक्तार्थत्वाद् द्वितीया न भविष्यति । किञ्च, कटं करोतीत्यादौ सावकाशा द्वितीया कृतः कट इत्यादौ निरवकाशया प्रथमया बाधिष्यते । न च वृक्षः प्लक्ष इत्यादौ प्रथमाया अवकाशः, तत्रापि प्रतीयमानामास्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात् । अथोच्यते—नीलमिदं न तु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यके अस्तिक्रियाया अनावश्यकत्वात्प्रथमाया अस्त्येवावकाश इति, तर्हि उभयोः सावकाशत्वे परत्वात्प्रथमैव स्यात् । तथा चानभिहिताधिकारो वृथैवेति चेत् । अत्राहुः—'संख्या विभक्त्यर्थः' इति पक्षे सूत्रारम्भ आवश्यकः । तथाहि सूत्रारम्भे 'कर्मणि द्वितीया ७७१' इत्यस्यानभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्यर्थः । सूत्रानारम्भे च कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति हि वाक्यार्थः । तथा च सति कृतः कट इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्ततया अम् दुर्वारः स्यात् न च परत्वात्प्रथमैव स्यादिति वाच्यम्, कर्तव्यः

---

१ **कर्तुः किमिति** । सनर्थेच्छायाः कर्तृनिष्ठत्वेनैव कारकाधिकारेण वा कर्तृलाभसंभवेन कर्तृपदं व्यर्थमेवेति प्रश्नः ॥ २ **माषेष्विति** । प्रसक्तमन्यत्रेति अश्वपदाद्यन्तयोः शेषः ॥ कर्तृपदाभावे यत्किंचिद्व्यापारप्रयोज्यव्यापारव्यधिकरणफलाश्रयत्वेनेच्छाविषयत्वस्यैव लक्षणत्वे माषेष्वश्वं बध्नातीत्यत्राश्वनिष्ठगलाधःसंयोगानुकूलव्यापारजन्यगलाधःसंयोगरूपफलाश्रयत्वेन माषाणामिच्छाविषयत्वेन कर्मत्वं स्यादतः कर्तृपदमुपात्तम् । तत्सामर्थ्याच्च व्यापारफलयोरुभयोरपि प्रकृतधात्वर्थेति विशेषणलाभे 'प्रकृतधात्वर्थप्रधानव्यापारप्रयोज्यव्यापारव्यधिकरणप्रकृतधात्वर्थफलाश्रयत्वम्' इति लक्षणे माषाणां प्रकृतधात्वर्थदेशान्तरसंयोगनिरोधरूपफलानाश्रयत्वेन न कर्मत्वापत्तिरिति भावः ॥ ३ **तमब्ग्रहणं किमिति** । तमपो ग्रहणं यत्रेति बहुव्रीहिणा समुदायाक्षेपः । 'अग्नेर्माणवकं वारयतीत्यादौ माणवकस्येप्सिततमत्वविवक्षया कर्मसंज्ञा, ईप्सितमात्रविवक्षयाऽग्नेरपादानसंज्ञा' इति व्यवस्थासिद्ध्यर्थं तमपोऽत्यावश्यकत्वात् । तथा च 'कर्तुरुद्देश्यं कर्म' इत्येव सूत्रं कुतो न कृतमिति प्रष्टुराशय इति भावः ॥ ४ **पयसेति** । यदा कृतभोजनोऽपि पयोलाभेनौदनभोजने प्रवर्तते तत्क्रियाया पयउद्देश्यकत्वात्पयसः कर्मसंज्ञा स्यादितीप्सिततमग्रहणं कृतम् । कृते च तस्मिन् 'तस्याप्योदन एवेप्सिततमः न तु गुणेष्वस्यानुरोधः' इति भाष्येण व्यञ्जनसंस्कारकयोरुद्देश्यत्वेऽपि नेप्सिततमत्वविवक्षा । अतस्तत्र 'अन्नेन व्यञ्जनम्' 'भक्ष्येण मिश्रीकरणम्' इति तृतीयासमाससूत्रसंगतये संस्कारकत्वमात्रविवक्षया करणत्वमेव ॥ तत्रेप्सिततमत्वस्यापि विवक्षायां तु कर्मसंज्ञा भवत्येवेति 'पय ओदनं भुङ्क्ते' इति 'विनापि चकारं चार्थस्यावगत्या भवत्येवेति बोध्यम् ॥ ५ **अनावश्यकेति**। इदं तु प्रौढिवादमात्रम् 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकानुरोधात् तिङर्थाऽन्वयमन्तरा प्रथमाया अप्राप्तेः । 'त्रयः कालाः' इत्यत्रापि 'सन्ति' इत्येव तिङन्तमध्याहार्यम् इति 'अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्' इति सूत्रे भाष्ये स्पष्टम् । इति वैयाकरणसिद्धान्तचन्द्रोदये प्रपञ्चितम् ॥

हरिं भजति। अभिहिते तु कर्मणि प्रातिपदिकार्थमात्रे इति प्रथमैव। (७७२) अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्-हरिः सेव्यते। कृत्-लक्ष्म्या सेवितः। तद्धितः-शतेन क्रीतः शत्यः। समासः-प्राप्त आनन्दो यं स प्राप्तानन्दः। (७७३) क्वचिन्निपातेनाभिधानम्। यथा-'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्'। सांप्रतमित्यस्य हि युज्यत इत्यर्थः॥ (७७४) (सू.) **तथायुक्तं चानीप्सितम्**। १।४।५०। ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि

---

कट इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात्। 'कारकं विभक्त्यर्थः' इति पक्षे तु कारकस्य क्तप्रत्ययादिनैवोक्तत्वात् प्रातिपदिकार्थे प्रवृत्तायाः प्रथमाया एकत्वादिबोधनसंभवाच्चामादिविभक्तेरप्रवृत्तौ 'अनभिहिते ७७०' इति सूत्रं प्रत्याख्यातमाकरे इति। 'कारकं प्रातिपदिकार्थः' इति पक्षे तु 'अनभिहिते ७७०' इत्यस्य 'अद्योत्ये' इत्यर्थः। तथा च क्तप्रत्ययादिभिरद्योत्ये कर्मणि द्वितीयेत्यादिवाक्यार्थः। तत्राप्येकेन द्योतिते द्योतकान्तरं न प्रवर्तत इत्यभ्युपगमे त्वनभिहिताऽधिकारो नातीवोपयुज्यत इति दिक्॥ (७७१) **हरिं भजतीति**। भजनक्रियया हरौ प्रीतेरुत्पादात्प्रीतिविशिष्टतया क्रियाव्याप्यत्वेन हरिः कर्म तद्विशिष्टं भजनं वाक्यार्थः। हरिनिष्ठप्रीत्यनुकूल एकदेवदत्तादिनिष्ठो वर्तमानो व्यापार इति निष्कृष्टोऽर्थः। हरिः सेव्यत इत्यत्राप्येवमेव॥ 'क्रियाप्रधानमाख्यातम्' इति सिद्धान्तात्। धातूपस्थिता क्रिया तिङर्थं प्रति विशेष्या न तु कृदर्थं प्रतीव विशेषणमिति हि तस्यार्थः। अत एव पाचको व्रजतीतिवत्पचति व्रजतीति नैकं वाक्यम्। पाककर्तृकर्तृकं गमनं हि पाचको व्रजतीत्यस्यार्थः। एककर्तृका पचिक्रिया, एककर्तृका गमिक्रियेति पचतिव्रजत्योः पृथगेवार्थः। एवं च प्रथमान्तविशेष्यको बोध इति नैयायिकोद्घोषो भाष्याद्यनुसारिभिर्नादर्तव्यः। तन्मते हि पाककर्ता व्रजनानुकूलकृतिमानिति पाचको व्रजतीत्यस्यार्थः। पचतिव्रजत्योस्तु पाकानुकूला कृतिर्व्रजतीत्यर्थः। एवंरूपेण वाक्यार्थपर्यवसानात्, तस्य च भाष्यादिग्रन्थविरोधात्॥ किञ्च, हरिं भजति देवदत्तः, हरिः सेव्यते देवदत्तेनेत्यत्र चैकरूप एव शाब्दबोध इत्युक्तम्। नैयायिकानां मते तु भिद्यत एव हरिनिष्ठप्रीत्यनुकूलकृत्याश्रयो देवदत्तः, देवदत्तनिष्ठकृतिजन्यप्रीत्याश्रयो हरिरित्युभयत्र भेदेन वाक्यार्थपर्यवसानात्। तस्मात्प्रथमान्तविशेष्यकबोधो भाष्याद्यनुसारिभिर्नादर्तव्य एव। यास्कोऽप्याह—'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति॥ पश्य मृगो धावतीत्यादौ तु मृगकर्तृकं गमनं दृशिक्रियायां कर्म, प्रधानं तु दृशिक्रियैव उक्तं च-"सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम्। तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्" इति। न च लौकिकप्रयोगेषु तिङन्तस्य तिङन्तविशेषणत्वं दुर्लभमिति मन्तव्यम्, 'पुरीमवस्कन्द लुनीहि नन्दनम्' इति माघश्लोकस्य पुर्यवस्कन्दननन्दनलवनादिरूपास्वास्थ्यक्रियेत्यर्थ इति 'समुच्चयेऽन्यतरस्याम् ३७६४' इति सूत्रे मूले स्फुटीभविष्यमाणत्वात्। एवं च पचति भवतीत्यस्य पचिक्रिया भवतीत्यर्थो भाष्यमते बोध्य इति दिक्॥ **अभिहिते त्विति**। नन्वेवं 'पक्वमोदनं भुङ्क्ते' इत्यत्रापि द्वितीया न स्यादिति चेत्। मैवम्, इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती, तत्र प्रधानीभूतभुजिक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः। अत एव आसने आस्त इत्यत्र सप्तमी संगच्छते। ल्युटाऽधिकरणस्योक्तत्वेऽपि तिङन्तोपस्थाप्यक्रियानिरूपिताधिकरणत्वस्यानुक्तत्वात्॥ (७७२) **शत्य इति**। 'शताच्च ठन्यतावशते २२९५' इति यत्॥ **प्राप्तानन्द इति**। इह 'गत्यर्थाकर्मक-४१०४' इति कर्तरि क्तः। आनन्दकर्तृकप्राप्तिकर्मीभूत इत्यर्थः॥ (७७३) यदुक्तं प्रायेणेति तस्य फलमाह—**क्वचिन्निपातेनेति**॥ **विषवृक्ष इति**। संवर्ध्येत्यत्र छेत्तुमित्यत्र चार्थाद्विषवृक्षमिति गम्यत इति ध्येयम्॥ **युज्यत इत्यर्थ इति**। एतेन निपातानां द्योतकत्वमेवेति नियमो नास्तीति ध्वनितम्॥ (७७४) **तथायुक्तम्**—। तथेत्युक्ते कथं युक्तमिति जिज्ञासायामाह—**ईप्सिततमवदिति**।

---

१ **शत्य इति**। शत्य इत्यादौ तद्धितोपस्थितायाः क्रियायाः कारकान्वययोग्यतावच्छेदकसाध्यत्वेन न भानम्, धातूपस्थितत्वाभावात्। अत एव न तत्रेतरकारकान्वय इति 'शत्योऽश्वो देवदत्तेन, काषायं वस्त्रं देवदत्तेन, आक्षिको राज्यं दुर्योधनः' इत्यादयोऽसाधव एवेति बोध्यम्। 'शत्यः ! शतिकः' इत्यपि पाठः॥ २ **क्वचिदिति**। वस्तुतस्तु विषवृक्षोऽपीत्यत्र क्रियार्थक्रियोपपदत्वाभावेऽपि शकादियोगाभावेऽपि च्छेत्तुमिति तुमुन उपपत्तये इष्यते इति तिङन्तक्रियाध्याहारे तेन कर्मण उक्तत्वात् 'इष्यते ग्रामो गन्तुम्' इत्यत्रेव न द्वितीयापत्तिः। 'क्रमादमुं नारद इत्यबोधि सः' इत्यत्र तु 'नारद इति' इति श्रीकृष्णीयज्ञानानुकरणम्। तेन प्रथमान्तस्यानुकरणस्य प्रातिपदिकत्वाभावेन न द्वितीयापत्तिः॥ ३ **तथायुक्तमिति**। विषेणौदनं भुङ्क्ते इत्यादौ करणत्वमात्रविवक्षायां विषस्य, 'प्रयागात्काशीं गच्छति' इत्यत्र प्रयागस्य, कर्मत्ववारणाय तथायुक्तमिति। तथा च प्रकृतधात्वर्थप्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वरूपतत्त्वाभावान्न दोषः॥ ४ **एवमेवेति**। धात्वर्थविशेष्यक एवेत्यर्थः। इयांस्तु विशेषः-कर्मणि प्रत्यये फलांशो विशेष्यः, कर्तरि तु व्यापारांश इति अत एव 'सुप आत्मनः-' इति सूत्रभाष्ये-'इष्यते पुत्र इत्यर्थे पुत्रीयतीति न प्रयोगो भिन्नार्थत्वात्' इत्युक्तम्॥ एवं च-एकदेवदत्तादिनिष्ठवर्तमानव्यापारजन्या हरिनिष्ठा प्रीतिः-इति रीत्या फलप्रधानः शाब्दबोधो बोध्यः॥ ५ **भावप्रधानमिति**। 'भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्य, तत्र भावः प्रधानम्' इति तदर्थं तद्भाष्यकार आह। किं चैतान्निरुक्तोत्तरम्-'यत्रोभे भावप्रधाने भवतः' इति निरुक्ते उक्तम्। 'यत्रोभे नामाख्याते भवतो वाक्ये तत्र ते भावप्रधाने' क्रियाप्रधाने इत्यर्थस्तद्भाष्य उक्तः॥ ६ **भाष्येति**। तथा च भूवादिसूत्रे भाष्यम्-'पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति' इति॥ ७ **द्वितीयोत्पत्तेरिति**। उक्तं च हरिणा-"प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्। शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥ प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते। यदा गुणे तदा तद्वदनुक्तापि प्रतीयते॥" इति॥

कारकं कर्मसंज्ञं स्यात् । ग्रामं गच्छंस्तृणं स्पृशति । ओदनं भुञ्जानो विषं भुङ्क्ते ॥ (७७५) 🞋 अकथितं च । १ । ४ । ५१ । अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ॥ ( ७७६ ) दुह्याच्पच्दण्ड्रुधिप्रच्छि-चिब्रूशासुजिमथ्मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्मेति परिगणनं कर्तव्यमित्यर्थः । गां दोग्धि पयः ।

---

सूत्रे चशब्दोऽपिशब्दार्थे वर्तत इति ध्वनयन्नाह—**अनीप्सितमपीति** । ईप्सितादन्यदनीप्सितमिति पर्युदासोऽयं, तेन यदुपेक्ष्यं, यच्च द्वेष्यं तद् द्वयमपीह गृह्यत इत्याशयेनाद्यमुदाहरति—**ग्रामं गच्छन्-तृणं स्पृशतीति** । यथा स्पृश्यमानस्य ग्रामादेरीप्सितस्य क्रियायोगस्तज्जन्यसंयोगादिफलाधारत्वात् । तथैवानीप्सितस्य तृणादेरपीति भावः ॥ इह हि ग्रामं गच्छतस्तृणस्पर्शनं नान्तरीयकं, तृणस्यानीप्सितत्वात् । यदा तु तृणमपीप्सिततमं भवति तदा पूर्वेणैव सिद्धम् । उपेक्ष्यं च नोपेक्षाबुद्धिविषयः, नदी कूलं कषतीत्यचेतने तदसंभवात् । किन्तु यत्रेप्साद्वेषयोरभावस्तदुपेक्ष्यमिति विवक्षितम् ॥ **विषमिति** । अत्र विषं हेयमप्योदनवद्भोजिना संबन्धात्कर्म । ननु य एव पुरुषो व्याध्यादिना पीड्यमानो मरणमेव श्रेयो मन्यते तस्य विषमीप्सितमेव ॥ योऽपि भ्रान्त्या भुङ्क्ते तस्यापि गुडादिवद् बुद्ध्या व्यवसीयमानं विषमपीप्सितमेव । कथमन्यथा प्रवर्तेत । तस्मादिदमुदाहरणमयुक्तमेवेति चेत् । अत्राहुः—यदा कश्चिन्मरणकातरोऽपि वैरिणा निगृह्यमाणो विषं भुङ्क्ते तदेदमुदाहरणमिति । अनीप्सितग्रहणं स्पष्टप्रतिपत्त्यर्थं 'तथायुक्तम्-७७४' इत्यस्यारम्भादेवेष्टसिद्धेः । स्यादेतत् । 'धातूपस्थाप्यफलाश्रयः कर्म' इत्येवास्तु किमनेन 'कर्तुरीप्सिततमम्-७६८' इत्यादिसूत्रद्वयकथनेनेति चेत् । अत्राहुः—अग्नेर्माणवकं वारयतीत्यत्र 'वारणार्थानामीप्सितः ८६१' इति सूत्रेण माणवकस्याप्यपादानत्वं प्राप्तं तद्बाधनाय 'कर्तुरीप्सिततमम्-७६८' इति वक्तव्यमेव । एवं च द्वेष्योदासीनयोः संग्रहार्थं 'तथायुक्तम्-७७४' इत्यप्यावश्यकमेवेति॥(७७५) **अकथितं च** । केनाकथितमित्याकाङ्क्षायामाह—**अपादानादिविशेषैरिति** । अपादानं संप्रदानमधिकरणं कर्म करणं कर्ता हेतुरित्येतैर्विशेषैरित्यर्थः ॥ **अविवक्षितमिति** । अपादानादिविशेषविवक्षायां तु गोर्दोग्धि पयः । बलेर्याचते वसुधाम् । व्रजेऽवरुणाद्धि गाम् । इत्येवं पञ्चम्यादय एव भवन्तीति भावः ॥ एतेन—पाणिना कांस्यपात्र्यां दोग्धीत्यत्र करणाधिकरणयोरतिप्रसङ्गः । तयोस्तु दण्डेन करोति, कटे तिष्ठतीत्यादिरवकाशो दुहादिपरिगणनादित्याक्षेपो निरस्तः । करणाधिकरणसंज्ञयोरिह विवक्षितत्वात् ॥ यदि तु सूत्रेऽकथितशब्दोऽप्रधानपर्यायो न त्वनुक्तपर्याय इत्यभ्युपगम्येत, तदा स्यादेवायमाक्षेपो न त्वन्यथा ॥ **कारकमिति** । । ततश्च ब्राह्मणस्य पुत्रं पृच्छतीत्यत्र नातिप्रसङ्गः ॥ (७७६) **दुह्याजिति** । 'दण्ड दण्डनिपातने' चुरादिः । इह तु दण्डिर्ग्रहणार्थो न तु निग्रहार्थः । प्रच्छीत्यागन्तुकेनेकारेण निर्देशो न त्विका 'ग्रहिज्या-३२१६' इति संप्रसारणप्रसङ्गात् ॥ **कर्मयुगिति** । कर्मणा युज्यते कर्मयुक् । 'सत्सूद्विष-३९७४' इत्यादिना क्विप् ॥ **कर्मणा यद्युज्यत इति** । मुख्यकर्मणा सह क्रियया संबध्यमानं कारकमेवापादानादिविशेषैरकथितं सत्कर्मसंज्ञकं भवतीत्यर्थः । एतेन दुहादीनां द्विकर्मकत्वं स्फोरितम् ॥ अन्ये त्वाहुः—कर्मयुगित्यत्र कर्मशब्देन क्रियोच्यत इति तेन क्रियान्वयीत्यर्थः ॥ **परिगणनमिति** । तेन नटस्य शृणोति गाथामित्यादौ नातिप्रसङ्ग इति भावः । इह हि गाथाकर्मकं नटसंबन्धि श्रवणं वाक्यार्थः । तेन क्रियान्वयित्वान्नटस्य कारकत्वमस्त्येव ॥ **गां दोग्धीति** । पयःकर्मकं गोसंबन्धि दोहनमर्थः । पयोऽत्र मुख्यं कर्म कर्तुरीप्सिततमत्वात्, गौस्तु पयसो निमित्ततामात्रेणोपात्ता

---

१ **अविवक्षितमिति** । 'किंतु कर्मत्वेन विवक्षितम्' इति शेषः । अत एव कर्मत्वेनैव बोधः ॥ २ **कर्मयुगिति** । कर्मयुक्तत्वं च ब्रुविशास्यतिरिक्तधातुयोगे धात्वर्थव्यापारात्प्रागेव कर्मसंबद्धत्वम् । तेन 'पाणिना कांस्यपात्र्यां दोग्धि' इत्यत्र करणाधिकरणयोरविवक्षायामपि न कर्मसंज्ञापत्तिः ॥ ३ **स्पष्टेति** । अनीप्सितपदाभावे ईप्सितस्य प्रकर्षहीनस्याप्यनेन संज्ञाप्राप्तौ 'वारणार्थानाम्-' इत्यनवकाशं स्यादिति तदुपात्तम् ॥ ४ **तेन नटस्येति** । अपादानादिविशेषैरविवक्षा च प्रसक्तस्य बुद्धिपूर्वमविवक्षा, सर्वथाऽप्रसक्तस्याविवक्षा वेत्युभयविधाऽपि गृह्यते । प्रकृते चान्त्या । गीताद्वारा च तस्य 'आख्यातोपयोगे' इति शास्त्रक्लृप्तक्रियाजनकत्वम् । न च तस्य कर्मयुक्त्वाभावः, तदंशस्य परिगणनलभ्यत्वादिति प्राञ्चः । नव्यास्तु—नटान्निस्सरन्तीं गाथां शृणोतीति प्रतीतेर्नटस्य गाथायुक्तत्वाक्षतिरिति वदन्ति ॥ ५ **गोसंबन्धीति** । "इह 'राज्ञः पुरुषः' इत्युक्ते राजा पुरुषमपेक्षते—'ममायम्' इति, पुरुषोऽपि राजानमपेक्षते 'अहमस्य' इति तयोरभिसंबन्धस्य षष्ठी वाचिका, तथा 'कष्टं श्रितः' इति क्रियाकारकयोरभिसंबन्धस्य द्वितीया वाचिका भविष्यति" इति समर्थसूत्रभाष्यानुरोधेनात्र क्रियाकर्मभाव एव संबन्धो ग्राह्य इति 'गोकर्मकम्' इत्येव बोधोऽङ्गीकार्यः । अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । पयसः कर्मता तु 'कर्तुरीप्सिततमम्-' इत्यनेनेति तदेव मुख्यं कर्म । गौस्तु दोहनतः प्राक्पयसा युक्तत्वेन कर्मयुक्त्वादप्रधानं कर्मेति तत्रैव 'अप्रधाने दुहादीनाम्' इति लादयः । यदा तु—अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारानुकूलव्यापारो दुहेरर्थः तदा 'कर्तुरीप्सित-' इत्यनेनैवोभयोः कर्मत्वे प्रधानव्यापारजन्यव्यापाररूपफलाश्रयत्वेन गोः कर्मत्वं मुख्यम्, विभागाश्रयत्वेन पयसो गौणं कर्मत्वमिति 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति प्रधानकर्मणि गवि लादयः । प्रधानकर्मत्वं च कर्तृप्रत्ययसमभिव्याहारे प्रकृतधात्वर्थप्रधानव्यापारजन्यफलाश्रयत्वम् ॥

बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां

---

न तु वस्तुसताऽप्यवधिभावेनेत्यपादानसंज्ञाया अप्रवृत्तेरनेन कर्मसंज्ञिका भवति । तदुक्तं हरदत्तेन–'यद्यपि गोरवधिभावो विद्यते तथाप्यविवक्षिते तस्मिन्निमित्तमात्रविवक्षायामुदाहरणोपपत्तिः' इति । एतेनावधित्वविवक्षायां गोरिति पञ्चम्येवेति स्पष्टम्, यदा तु गोरित्येतत्पयसा संबध्यते तदा गोशब्दात्षष्ठ्येव भवतीत्यपि बोध्यम् ॥ यत्तु प्राचा "दुह्याच्यर्थरुधिप्राच्छिचिब्रूशासुजिकर्मयुक् । नीहृकृष्मन्थवहृदण्डग्रहमुष्पचिकर्मभाक् " इति पठितं तत्र ग्रहेः पाठोऽप्रामाणिकः । इतरेषां तु द्विकर्मकत्वं यद्यपि प्रामाणिकं तथापि संदर्भाशुद्धिः । तथा हि दुह्यादीन्न्यादींश्च द्वैराश्येन पठित्वा भावकर्मप्रक्रियाशेषे 'लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गौणे वा' इत्याशङ्कायां स्वयमेव पठितं–"न्यादयो ण्यन्तानिष्कर्मगत्यर्था मुख्यकर्मणि । प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥" इति । एवं च दण्डिमन्थिभ्यामपि मुख्ये स्यात् । न चेष्टापत्तिः, गर्गाः शतं दण्ड्यन्तामिति भाष्यविरोधात् । शतं ह्यत्र प्रधानं न तु गर्गाः, 'अर्थिनश्च राजानो हिरण्येन भवन्ति' इति वाक्यशेषात् । दण्डिरत्र ग्रहणार्थः, न तु निग्रहार्थ इत्युक्तम् । अत एवात्र समुदाये वाक्यपरिसमाप्तिः, गुणानुरोधेन प्रधानावृत्तेरसंभवात् । तथा मन्थेरपि प्रधाने स्यादिष्यते तु गौणे । तथा च भारविः–'येनापविद्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे' इति । अत्रामृतं मुख्यमुद्देश्यत्वात्, अम्बुनिधिस्तु गौणः ॥ **बलिं याचत इति** । अत्र प्रार्थनार्थस्य याचेर्वसुधा मुख्यं कर्म, तेन युक्तो बलिर्वस्तुतोऽवधिरपि तदविवक्षायामनेन कर्म भवति ॥ **अविनीतमिति** । अनुनयार्थस्य याचेरविनीतो मुख्यं कर्म, अविनीतं विनयायानुनयतीत्यर्थः । विनयस्य तादर्थ्याविवक्षायाम् 'अकथितं च ७७५' इति कर्मसंज्ञा ॥ **तण्डुलानिति** । निर्वर्तनार्थस्य पचेरोदनो मुख्यं कर्म, ओदनं निर्वर्तयतीत्यर्थः । तण्डुलास्तु करणत्वाविवक्षायामकथितं कर्म ॥ अन्ये त्वाहुः–'द्व्यर्थः पचिः' इति भाष्यपर्यालोचनया तण्डुलानोदनं पचतीत्यस्य तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः । दुह्यादिषु पचेः परिगणनमप्रामाणिकं भाष्यकैयटयोरनुक्तत्वादिति ॥ **गर्गानिति** । ग्रहणार्थस्य दण्डेः शतं मुख्यं कर्म, गर्गास्त्वपादानत्वाविवक्षायामकथितं कर्म ॥ **व्रजमिति** । अत्र गौर्मुख्यं कर्म व्रजेत्याधिकरणत्वाविवक्षायाम् 'अकथितं च ७७५' इति कर्म भवति ॥

---

१ **पृच्छतीति** । जिज्ञासाविषयार्थज्ञानानुकूलव्यापारस्य प्रच्छिधात्वर्थत्वे विषयतासंबन्धेन जिज्ञासाविषयार्थज्ञानरूपफलाश्रयस्य पथः प्रधानकर्मत्वम् । ज्ञानाश्रयस्य माणवकस्य कर्मयुक्त्वेनाप्रधानकर्मत्वम् ॥ २ **अवचिनोतीति** । विभागपूर्वकादानानुकूलव्यापारार्थाचिञः फलानामादानाश्रयत्वेन प्रधानकर्मत्वम्, व्यापारात्प्राक् फलसंबन्धिनो वृक्षस्याप्रधानकर्मत्वम् । आदानानुकूलविभागानुकूलव्यापारानुकूलव्यापारार्थत्वे 'कर्तुः–' इत्येव द्वयोरपि कर्मत्वे विभागानुकूलव्यापाराश्रयत्वेन वृक्षस्य प्रधानकर्मत्वम्, विभागाश्रयत्वेन फलानामप्रधानकर्मत्वम्, इति बोध्यम् ॥ ३ **ब्रूते शास्तीति** । ज्ञानानुकूलः शब्दप्रयोगरूपो ब्रूञोऽर्थः । प्रवृत्तिपर्यवसायी स शासेरर्थः । फलतावच्छेदकविषयतासंबन्धेन ज्ञानाश्रयतया धर्मस्य प्रधानकर्मत्वम् । वचनादिकर्मणा धर्मेण माणवकस्याभिप्रेयमाणत्वात्प्राप्तायाः संप्रदानसंज्ञाया अविवक्षायां कर्तृव्यापारोत्तरं तज्ज्ञानाश्रयत्वेन कर्मयुक्त्वादप्रधानकर्मत्वम् । ज्ञानानुकूलव्यापारानुकूलव्यापारार्थत्वेन 'कर्तुः–' इत्येव द्वयोः कर्मत्वे तु ज्ञानानुकूलव्यापाराश्रयत्वेन पुत्रस्य प्रधान्कर्मत्वम् । विषयतया ज्ञानाश्रयत्वेन धर्मस्याप्रधानकर्मत्वम् ॥ ४ **जयतीति** । स्वस्वत्वोत्पत्त्यनुकूलव्यापारानुकूलव्यापारार्थकजयतेः प्रयोगे 'कर्तुः–' इत्येव द्वयोरपि कर्मत्वे स्वस्वत्वोत्पत्त्याश्रयत्वेन शतस्याप्रधानकर्मत्वम् । स्वस्वत्वोत्पत्त्यनुकूलव्यापाराश्रयत्वेन देवदत्तस्य प्रधानकर्मत्वमिति परिगणने जिधातोः पाठोऽप्रामाणिक इति बोध्यम् ॥ ५ **प्रार्थनार्थस्येति** । परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापारस्यैव याच्यर्थत्वेन स्वस्वत्वोत्पत्तिरूपफलाश्रयत्वेन वसुधाया मुख्यं कर्मत्वम् । बलौ वसुधास्वामित्वसंबन्धात्कर्मयुक्त्वमिति गौणकर्मत्वमिति भावः ॥ ६ **अनुनयार्थस्येति** । अत्र स्वीकारानुकूलव्यापारार्थत्वाद्याचेः स्वीकाररूपफलाश्रयत्वाद्विनयस्य मुख्यं कर्मत्वम् । अविनीते विनयस्य स्वविषयकज्ञानवत्त्वेन वृत्तित्वात्कर्मयुक्त्वेन गौणकर्मत्वमिति भावः ॥ ७ **ग्रहणार्थस्येति** । स्वसंप्रदानकदानानुकूलव्यापारानुकूलशासनरूपव्यापारार्थत्वेन दण्डेर्द्विकर्मकत्वे स्वसंप्रदानकदानानुकूलव्यापाररूपफलाश्रयत्वेन गर्गा मुख्यं कर्म स्वसंप्रदानकदानाश्रयत्वेन शतं गौणं कर्मेति सकलेष्टसिद्धौ परिगणनेऽस्य पाठोऽप्रामाणिक इति बोध्यम् ॥ उद्देश्यतालक्षणं प्राधान्यं तु शतस्यैवेति अनुद्देश्यगर्गानुरोधान्नोद्देश्यशतावृत्तिरिति न वृद्धिसंज्ञासूत्रस्थभाष्यविरोधः ॥ ८ **मुख्यं कर्मेति** । निर्गमप्रतिबन्धपूर्वकचिरस्थित्यनुकूलव्यापारस्य रुधेरर्थत्वे चिरस्थित्याश्रयत्वेन गौर्मुख्यं कर्म । व्यापारद्वयार्थत्वेन 'कर्तुः–' इत्येवोभयोः कर्मत्वे सस्यसौलभ्येन चिरस्थित्यनुकूलव्यापाराश्रयत्वेन व्रजे मुख्यकर्मता गोरप्रधानकर्मतेति बोध्यम् ॥

क्षीरनिधिं मथ्नाति। देवदत्तं शतं मुष्णाति। ग्राममजां नयति हरति कर्षति वहति वा।(७७७) अर्थनिबन्धनेयं संज्ञा। बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते। अभिधत्ते। वक्तीत्यादि। कारकं किम्। माणवकस्य पितरं पन्थानं पृच्छति॥ (७७८) **वा॰ अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्॥**

---

एवमग्रेऽप्यूह्यम्॥ (७७७) **अर्थनिबन्धनेति**। न तु स्वरूपाश्रया। 'अहमपीदमचोद्यं चोद्ये' इति 'तद्राज–' सूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनादिति भावः। अत एव 'स्थातुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम्' इति भट्टिः प्रायुङ्क्त। एवं च नाथत्यादयो बहवो द्विकर्मका ज्ञेयाः। स्यादेतत्, यद्यर्थनिबन्धनेयं संज्ञा तर्हि नीवह्योरन्यतरो न पठनीयः,उभयोरप्येकार्थत्वादिति चेत्सत्यम्, भारं वहति भारं नयतीत्यत्र यदि विलक्षणोऽर्थोऽनुभूयते,तदा द्वयमपि पठनीयमेव, यदि तु नानुभूयते तर्ह्यन्यतरो न पठनीयः, उभयथापि लक्ष्यस्य निर्बाधत्वात्॥ अत्र वदन्ति–'जग्राह द्युतरुं शक्रम्' इत्युदाहरणमप्ययुक्तमिति मनोरमोक्तं चिन्त्यमेव। संज्ञाया अर्थनिबन्धनत्वाद्दण्डेर्ग्रहणार्थत्वाच्चेति॥ **बलिं भिक्षत इति**। 'भिक्ष भिक्षायामलाभे लाभे च' भिक्षते याचत इत्यर्थः॥ (७७८) **देश इति**। कुरुपञ्चालादिरेवेह गृह्यते। तेन 'अधिशीङ्स्थासां कर्म ७९१' इत्यस्य न वैयर्थ्यम्, आधिपूर्वाणामेषामाधारः कर्मेति नियमार्थत्वाभ्युपगमेऽपि

---

१ **मथ्नातीति**। अन्तःस्थितद्रव्यप्रकाशनानुकूलव्यापारानुकूलव्यापारार्थकमन्थतेः प्रयोगे 'कर्तुः–' इत्येव द्वयोरपि कर्मत्वे प्रकाशाश्रयत्वेनामृतस्याप्रधानकर्मत्वम्। प्रकाशानुकूलव्यापाराश्रयत्वेन क्षीरनिधेः प्रधानकर्मत्वमिति परिगणने मन्थधातोः पाठोऽप्रामाणिक इति बोध्यम्॥ २ **मुष्णातीति**। स्वस्वत्वोत्पत्त्यनुकूलाज्ञानानुकूलव्यापारस्य मुष्धात्वर्थत्वे'कर्तुः–' इत्येव द्वयोरपि कर्मत्वे स्वस्वत्वोत्पत्त्याश्रयत्वेन शतस्याप्रधानकर्मत्वम्। अज्ञानाश्रयत्वेन देवदत्तस्य प्रधानकर्मत्वमिति परिगणने मुष्धातोः पाठोऽप्रामाणिक इति बोध्यम्॥ ३ **नयतीति**। संयोगानुकूलव्यापारानुकूलव्यापारस्य नयत्यर्थत्वेन 'कर्तुः–' इत्येव द्वयोरपि कर्मत्वे संयोगाश्रयत्वेन ग्रामस्याप्रधानकर्मत्वम्। संयोगानुकूलव्यापाराश्रयत्वेनाजायाः प्रधानकर्मत्वमिति परिगणने पाठोऽप्रामाणिक इति बोध्यम्॥ ४ **हरतीति**। बलाद्ग्रहणपूर्वकदेशान्तरसंयोगानुकूलव्यापारानुकूलव्यापारस्य हरत्यर्थत्वे 'कर्तुः–' इत्येव द्वयोः कर्मत्वे उक्तसंयोगाश्रयत्वेन ग्रामस्याप्रधानकर्मत्वम्। उक्तसंयोगानुकूलव्यापाराश्रयत्वेनाजायाः प्रधानकर्मत्वामिति परिगणने पाठोऽप्रामाणिक इति बोध्यम्॥ ५ **कर्षतीति**। संयोगानुकूलव्यापारानुकूलव्यापारविशेषस्य कृष्यर्थत्वे 'कर्तुः–' इत्येव द्वयोरपि कर्मत्वे संयोगाश्रयत्वेन ग्रामस्याप्रधानकर्मत्वम्, संयोगानुकूलव्यापाराश्रयत्वेनाजायाः प्रधानकर्मत्वामिति परिगणने पाठोऽप्रामाणिक इति बोध्यम्॥ ६ **वहतीति**। संयोगानुकूलव्यापारानुकूलस्कन्धग्रहणादिव्यापारस्य वहेरर्थत्वे 'कर्तुः–' इत्येव द्वयोरपि कर्मत्वे संयोगाश्रयत्वेन ग्रामस्याप्रधानकर्मत्वम्, संयोगानुकूलव्यापाराश्रयत्वेनाजायाः प्रधानकर्मत्वमिति परिगणने पाठोऽप्रामाणिक इति बोध्यम्॥ ७ **अर्थनिबन्धनेयमिति**। 'शकारमसि चोदितः' 'अहमपीदमचोद्यं चोद्ये' इति भाष्यप्रयोगे युष्मदस्मदोः प्रत्ययान्यथानुपपत्त्या परिगणनमर्थानामिति प्राचामाशयः, नव्यानां त्वयं भावः—'आख्यातोपयोगे' इति सूत्रभाष्ये–"दुहियाचिरुधिप्रछिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना॥" इति प्रकृतसूत्रभाष्योक्तोदाहरणानां परिगणनत्वोक्त्या तत्रापि 'तस्मात् त्रीण्येवोदाहरणानि—पौरवं गां याचते, माणवकं पन्थानं पृच्छति, पौरवं गां भिक्षते' इति। इत्युक्तौ कारिकायां च याचिभिक्ष्योः पृथग्ग्रहणसामर्थ्यात् 'स्वं रूपम्–'इत्यस्याप्रवृत्तौ मानाभावाच्च शब्दपराणामेव परिगणनत्वावगत्या–एतत्त्रिकव्यतिरिक्तेषु परिगणितेष्वपि व्यापारद्वयार्थत्वेनैव कर्मसंज्ञा साधनीया। तथैव यत्रयत्र द्विकर्मकत्वमिष्टं तत्र तत्र व्यापारद्वयार्थकत्वेनैव तत्साध्यम्। 'अप्रधाने दुहादीनाम्' इत्यत्रापि याचप्रच्छभिक्षीणामेव ग्रहणम्। अन्येषां तु 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति प्रधानकर्मण्येव। वार्तिके 'दुहादीनाम्' इत्युक्तिस्तु यथाश्रुतपरिगणनाशयेनैव–इति॥ ८ **इति वाच्यमिति**। एतच्चेदमपूर्वं विधायकमित्यभिप्रायवतां मतेन। वस्तुतस्तु 'कालाध्वनोरत्यन्त–' इति सूत्रे भाष्ये 'कालाध्वानौ कर्मवद्' इति वार्तिकप्रत्याख्यानाय "प्राकृतमेवैतत्कर्म यथा 'कटं करोति, शकटं करोति' इति" इत्युक्तौ दृष्टान्तेनात्र प्राकृतं 'कर्तुरीप्सित–' इति सूत्रेणैव कर्मसंज्ञेति स्पष्टं प्रतीयते। तदुपपत्त्यर्थं चात्र "कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते॥" इति हर्युक्तप्रकारेण सकर्मकधात्वर्थान्तर्भूतार्थ आसनकरणकव्यापनादावास्यादीनां वृत्तिकल्पनया मासमासनेन व्याप्नोतीत्याद्यर्थावगतावासनव्यापारजन्यव्याप्त्याश्रयत्वेन मासादीनां कर्मसंज्ञा एवं च 'आस्यते मासः' 'शय्यते मासः' इति कर्मणि लकारसिद्धिः। परं तु 'अकर्मक' व्यवहारस्य नोच्छेदः, द्रव्यरूपकर्माभावात्। अत एव 'मासमास्यते देवदत्तेन' इति भावेऽपि लकारो भवति। तथा चोक्तं हरिणा–"अतस्तैः कर्मभिर्युक्तो धातुर्द्रव्यैरकर्मकः। लस्य कर्मणि भावे च निमित्तत्वाय कल्पते॥" इति। इत्थं चेयं कर्मसंज्ञा मासं पचत्योदनमित्येव सकर्मकयोगेऽपि भवति तुल्यन्यायात्। परं तु तत्र कालादिकर्माप्रधानम्, द्रव्यकर्म तु प्रधानमिति द्रव्यकर्मण्येव 'मासं पच्यते ओदनः' इति लादयो भवन्ति इति बोध्यम्॥ ९ **दण्डेर्ग्रहणार्थत्वाच्चेति**। 'करं गृह्णाति' 'राजा दण्डयति' इत्यनयोर्वैलक्षण्याय निग्रहानिग्रहयोर्बोधस्यापि सकलजनानुभवसिद्धत्वादनयोर्ब्रुविशास्योरिव समानार्थत्वाभावाच्चिन्त्यमिदमिति बोध्यम्। पराक्रमातिशयद्योतनाय 'जहार द्युतरुं शक्रम्' इत्यस्यैवोचितत्वाच्चेति मनोरमाकृतामाशयस्य शब्दरत्ने प्रकाशितत्वाच्च॥

कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ॥ ( ७७९ ) **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ । १ । ४ । ५२ ।** गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ॥ शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् । आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥ १ ॥ आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥ गतीत्यादि किम् । पाचयत्योदनं देवदत्तेन । अण्यन्तानां किम् । गमयति देवदत्तो

---

वैकुण्ठे वर्तते इत्यादिष्वतिप्रसङ्गः स्यादेवेत्याशयेन तथैवोदाहरति–**कुरूनिति** ॥ **गोदोहमिति** । न चेह कालत्वासिद्धिः, लोके कालत्वेन प्रसिद्धस्य मासादेरेव कालशब्देन ग्रहणात् । तेन घटमास्ते इत्यादि न भवति, जन्यमात्रं कालोपाधिरिति घटादेरपि कालत्वात् ॥ यत्तु प्राचा–'अकर्मकधातुभिर्योगे देशकालाध्वभावेभ्यो द्वितीया' इति केचिदित्युक्त्वा नदीमास्त इत्युदाहृतम् । तदसंगतम्, ग्रामसमूहः कुर्वादिरेव देशो गृह्यते, न तु प्रदेशमात्रम् , तेन ग्रामं स्वपितीति न भवतीत्याकरात् । अध्वेति च न्यूनम्, अध्वानं स्वपितीत्यस्यापि प्रसङ्गात् । अत एव आकरेऽध्वा गन्तव्यत्वेन विशेषितः गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरिति च व्याख्यातम् । द्वितीयेत्यप्यसङ्गतम्, कर्मसंज्ञाया अविहितत्वात्कर्मणि लादयो न स्युरित्यास्यते मास इत्यादिप्रयोगाभावप्रसङ्गात् ॥ केचिदित्युक्तिस्तन्मतदौर्बल्यसूचनायेति कथंचिद्व्याख्याय पूर्वोक्तदोषपरिहारेऽपि नदीमास्त इत्युदाहरणस्यासांगत्यदोषस्तदवस्थ एवेति ध्येयम् ॥ ( ७७९ ) **गतिबुद्धि**—। प्रत्यवसानं भक्षणम् ॥ **शब्दकर्मकाणामिति** । शब्दः कर्म कारकं येषां तेषामित्यर्थः । कर्मशब्दोऽत्र कारकपरः न तु 'कर्तरि कर्मव्यतिहारे ३५७८' इत्यत्रेव क्रियापरः, कृत्रिमे कार्यसंप्रत्ययात् कर्मग्रहणसामर्थ्याच्च । अन्यथा हि 'गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणाम्' इत्येव ब्रूयात् ॥ **अणौ यः कर्तेति** । अनुत्पन्ने णिचि शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स ण्यन्तधातुवाच्यां क्रियां प्रति कर्मसंज्ञः स्यादित्यर्थः ॥ नियमार्थमेतत्सूत्रमिति प्राञ्चः[1] । णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्यर्थादीनामेव कर्तुरिति । तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये कर्तरि प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात्तृतीया सिध्यति । उक्तं च "गुणक्रियायां[2] स्वातन्त्र्यात्प्रेषणे कर्मतां गतः । नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते" इति । कर्तुः स्वधर्मेण तृतीययेत्यर्थः ॥ ननु णिजर्थं प्रति कर्तृत्वं बाधित्वा प्रकृत्यर्थं प्रति कर्तृत्वं परत्वादेव सिद्धम् । अन्तरङ्गत्वाच्च स्वकारकविशिष्टा हि क्रिया णिजर्थेन संबध्यते, हेतुमति णिज्विधानात् । कर्तृप्रयोजकस्य हेतुत्वात् । अत एव उपजीव्याऽपि कर्तृसंज्ञा । एवं च–"परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च । प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता" । यद्यपि विधिपक्षेऽपि लक्ष्यं निर्बाधमेव, तथापि नियमसूत्रमिति प्राचां ग्रन्थो विरुध्यत इति चेत् । अत्राहुः–णिजर्थस्य शाब्दं प्राधान्यं पुरस्कृत्य प्रधानानुरोधिन्याः कर्मसंज्ञायाः प्राबल्याद्विप्रतिषेध एव नास्तीति परत्वात्कर्तृत्वासिद्धिरित्येतन्न संगच्छते । अन्तरङ्गत्वोपजीव्यत्वे अपि प्रधानं प्रति न प्राबल्यं प्रयोजयतः, ततश्च नियमार्थत्वोक्तिः प्राचां निर्बाधैवेति[3] ॥ गत्यादिण्यन्तान् क्रमेणोदाहरति–**शत्रूनिति** । शत्रवः स्वर्गमगच्छन्, तान् श्रीहरिः स्वर्गमगमयत् । गमेरण्यन्तावस्थायां शत्रवः कर्तारस्ते ण्यन्तावस्थायां कर्म अभवन् । स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरिति वाक्यार्थः । एवमग्रेऽप्यूह्यम् । **वेदार्थमिति** । स्वे स्वकीया वेदार्थमविदुस्तान् श्रीहरिर्वेदार्थमवेदयत् । तथा देवा अमृतम् आश्नन् तानाशयत् । विधिः वेदमध्यैत तं ब्रह्माणं वेदमध्यापयद् अपाठयत् । सलिले पृथ्वी आस्त तां यो हरिरासयत् स्थापयति स्म स हरिर्मे गतिरित्यन्वयः ॥ ननु शत्रूणामनेन कर्मत्वे कृते कर्मण ईप्सिततमः स्वर्गो, न तु कर्तुरिति कर्तुरीप्सिततमत्वाभावात् स्वर्गस्य कर्मत्वं[4] न स्यात् । अत्र केचित्–'गतिबुद्धि–७७९' इति कर्मत्वस्य बहिरङ्गत्वेन ततः पूर्वमेव धात्वर्थव्यापारप्रयुक्तं[5] कर्मत्वं स्वर्गस्य निर्बाधमित्यदोष इति ॥ अन्ये तु–'कर्तुरीप्सिततमम्–७६८' इत्यत्र कर्तृग्रहणं स्वतन्त्रस्योपलक्षणम् । स्वातन्त्र्यं च धातूपात्तव्यापाराश्रयत्वमेव । तच्च प्रयोजकसंनिधानेऽपि प्रयोज्यस्यास्त्येवेति न काप्यनुपपत्तिः, न च स्वतन्त्रे संकेतितस्य कर्तृपदस्य तत्रैव लक्षणा न संगच्छते, एकस्यैकस्मिन्नेवार्थे शक्तिलक्षणोभयाभ्युपगमस्य शास्त्रकारासंमतत्वादिति वाच्यम्, संज्ञान्तरानुपहितस्वतन्त्रे संकेतितस्य संज्ञान्तरोपहितानुपहितसाधारणे स्वतन्त्रे लक्षणाभ्युपगमे बाधकाभावात्[6] । अत एव जिधातोर्जये शक्तिः प्रकृष्टजये लक्षणा । 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति । तेन प्रजयतीत्यत्र प्रशब्दो द्योतकः, प्रकृष्टजयस्तु जिधातोरेवार्थ इति नैयायिकोक्तिः संगच्छते । नापि कर्तृपदस्य स्वतन्त्रलक्षणायां प्रमाणाभावः शङ्क्यः, 'प्रधानकर्मण्या-

---

१ प्राञ्च इति । 'हेतुमति च' इत्यत्र भाष्यकृत इत्यर्थः ॥ २ **गुणक्रियायामिति** । णिच्प्रकृतिधात्वर्थक्रियायां स्वातन्त्र्यात् धात्वर्थव्यापाराश्रयत्वात् प्रेषणे ण्यर्थे धात्वर्थव्यापारानुकूलव्यापाररूपे कर्मतां प्रधानण्यन्तधात्वर्थव्यापारजन्यधात्वर्थव्यापाररूपफलाश्रयतया कर्मसंज्ञां प्राप्तोऽपि कर्मसंज्ञाया नियमात् ' णिजर्थव्यापारजन्यधात्वर्थव्यापाररूपफलाश्रयत्वेन कर्मसंज्ञा चेत् गत्याद्यर्थधातूपात्तव्यापाराश्रयाणामेव नान्यधातूपात्तव्यापाराश्रयाणाम् ' इति निषेधमुखेन प्रवर्तनात्स्वधर्मेण कर्तृसंज्ञाकार्येण तृतीययैव अभिधीयत इति कारिकार्थः ॥ ३ **निर्बाधैवेति** । अन्यानधीनत्वलक्षणार्थप्राधान्यशाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन प्रयोज्ये प्रधानानुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद् बलवत्त्वेन कर्मत्वस्यैव न्याय्यत्वम् । किं च 'कर्तुः प्रयोजकः ' इत्यत्र कर्तृग्रहणस्य धात्वर्थप्रधानीभूतव्यापाराश्रयरूपस्वतन्त्रोपलक्षणत्वान्न कर्तृसंज्ञाया हेतुसंज्ञोपजीव्यत्वं सूपपादमिति भावः ॥ ४ **कर्मत्वं नेति** । 'तथा युक्तम्–' इत्यनेनापि न, तस्यानीप्सितत्वाभावात् । तत्रापि कर्तुरित्यनुवृत्तेश्च ॥ ५ **व्यापारेति** । प्रधानीभूतव्यापारेत्यर्थः ॥ ६ **बाधकाभावादिति** । शक्यतावच्छेदकलक्ष्यतावच्छेदकयोरैक्यमेव हि बाधकम् । तस्याभावादित्यर्थः ॥

यज्ञदत्तं-तमपरः प्रयुङ्क्ते-गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः ॥ (७८०) **वा॰ नीवह्योर्न** ॥ नाययति वाहयति वा भारं भृत्येन ॥ (७८१) **वा॰ नियन्तृकर्तृकस्य वहेरनिषेधः** ॥ वाहयति रथं वाहान् सूतः ॥ (७८२) **वा॰ आदिखाद्योर्न** ॥ आदयति खादयति वाऽन्नं बटुना ॥ (७८३) **वा॰ भक्षेरहिंसार्थस्य न** ॥ भक्षयत्यन्नं बटुना । अहिंसार्थस्य किम् । भक्षयति बलीवर्दान् सस्यम् ॥ (७८४) **वा॰ जल्पतिप्रभृतीनामुपसंख्यानम्** ॥ जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः ॥

ण्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनाम्' इत्युक्त्वा 'ण्यन्ते कर्तुश्च कर्मणः' इति वदतो भाष्यकारस्यैव प्रमाणत्वात् । न हि लक्षणां विना णिजन्तानां द्विकर्मकता लभ्यते, येन 'ण्यन्ते कर्तुः' इति वचनं सावकाशं स्यादित्याहुः ॥ (७८०) **नीवह्योरिति** । यद्यप्यनयोः प्रापणमर्थो न गतिः, तथापि गतिरपि विशेषणीभूय प्रापणमध्ये प्रविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा प्रतिषेध उक्तः ॥ (७८१) **नियन्त्रिति** । नियन्ता पशुप्रेरकः न तु सारथिरेवेति । तेन वाहयति बलीवर्दान् यवानिति सिध्यति । अस्मादेव भाष्योदाहरणात् 'रूढिर्योगमपहरति' इति न्यायोऽत्र न स्वीक्रियते ॥ **अनिषेध इति** । प्रयोज्यः कर्मेति वक्तव्यमिति फलितोऽर्थः । यैस्तु प्रापणं गतिशब्देन गृह्यते यैर्वा न गृह्यते उभयेषामपीदं वचनमावश्यकम् । नीवह्योर्नेति वचनं तु यैः प्रापणं गतिशब्देन न गृह्यते तेषामनावश्यकमिति बोध्यम् ॥ **सूत इति** । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः । (७८२) प्रत्यवसानार्थत्वात्कर्मत्वे प्राप्ते निषेधमाह—**आदिखाद्योरिति** । 'अद भक्षणे' 'खाद भक्षणे' । प्राचा तु-आदीति पठ्यते तत्तु ण्यन्तानुकरणमिति बोध्यम् ॥ **आदयतीति** । इह 'निगरणचलनार्थेभ्यश्च ३६७५' इति परस्मैपदानियमो न प्रवर्तते, 'अदेः प्रतिषेधः ३६७६' इति तस्य निषिद्धत्वात् । तेनाकर्त्रभिप्राये क्रियाफले 'शेषात्कर्तरि-२९१३' इति परस्मैपदम्, कर्त्रभिप्राये तु 'णिचश्च ३३९७' इत्यात्मनेपदं भवत्येवेति बोध्यम् ॥ (७८३) **भक्षेरिति** । ननु 'गतिबुद्धि-७७९' इति सूत्रेणाणौ कर्तुर्णौ कर्मत्वं विधीयते न तु णौ कर्तुरिति प्राप्तेरेवाभावान्निषेधोऽयं व्यर्थ इति चेत् । अत्राहुः-हेतुमण्णिजन्ते विधिरिति निषेधोऽप्यणावित्ययं सन्निधानाद्धेतुमण्णिज्विषय एव, तेन चुरादिणिजन्तेऽपि भक्षयतौ प्राप्तिसत्त्वात्तन्निषेध उपसंख्यात इति ॥ **भक्षयतीति** । बलीवर्दाः सस्यं भक्षयन्ति । तान् भक्षयतीत्यर्थः । क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा ज्ञेया, तस्यामवस्थायां तेषां चेतनत्वात् ॥ (७८४) **जल्पतिप्रभृतीनामिति** । 'जप जल्प व्यक्तायां वाचि' । पुत्रो धर्मं जल्पति तं देवदत्तो जल्पयतीत्यण्यन्तावस्थायां पुत्रः कर्ता ण्यन्तावस्थायां कर्म अभवत् । तथा पुत्रो धर्मं भाषते तं भाषयति देवदत्तः । न च जल्पतिभाषत्योः शब्दक्रियत्वेन 'गतिबुद्धि-७७९' सूत्रेणैव सिद्धे उपसंख्यानमिदं व्यर्थमिति भ्रमितव्यम्, शब्दकर्मणामित्यस्य शब्दः कर्म कारकं येषामित्यर्थात् । अन्यथा 'वेदमध्यापयद्विधिम्' इत्यादे-

१ **गमयतीति** । विष्णुमित्रकर्तृको यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो वर्तमानो व्यापार इति बोधः ॥ २ **नियन्त्रिति** ॥ 'विनापि प्रत्ययं पूर्वोत्तरपदलोपः' इति नियन्तृनियम्यशब्द उत्तरपदभूतस्य नियम्यशब्दस्य लोपोत्तरं 'नियन्ता अर्थाद् नियन्तृनियम्यः पशुः कर्ता यस्य' इति बहुव्रीहौ नियन्तृनियम्यपशुकर्तृकस्येत्यर्थः ॥ अन्यथा यथाश्रुते णिजन्तस्य नियन्तृकर्तृकत्वेन शुद्धस्य वहेः पशुप्रेरककर्तृकत्वाभावादसंगतिराबाधैव स्यादिति बोध्यम् ॥ ३ **धर्मः** नामैकदेशेन नामग्रहणे धर्मदत्तो धर्मचन्द्रो वा कश्चित् पुरुषः पुत्रं जल्पति भाषते वा पुत्रं जल्पन्तं भाषमाणं वा धर्मं प्रेरयति देवदत्तः-देवदत्तः धर्मं पुत्रं जल्पयति भाषयति इत्येवमेव विवक्षा बोध्या ॥ धर्मशब्दस्य श्रुतिस्मृत्युदितपरत्वे तस्य श्रोत्रग्राह्यत्वेन शब्दत्वात् शब्दकर्मत्वेन 'वेदमध्यापयद् विधिम्' इत्यतो वैलक्षण्याभावाद् "जल्पतिप्रभृतीनाम्-" इति वार्तिकवैयर्थ्यापत्तिरव्याहता स्यादिति दाधिमथाः ॥ ४ **प्रमाणत्वादिति** । आकडाराधिकारस्थकर्तृकर्मसंज्ञयोः समावेशाभावेऽपि चकारेण सूचितस्य समावेशस्य लक्षणां विनाऽनुपपत्तेरिति भावः ॥ ५ **लक्षणां विनेति** । कर्तृपदस्य स्वतन्त्रे लक्षणां विनेत्यर्थः । अत एव 'सार्थाद्धीयते' इत्यत्र 'सार्थेन त्यज्यते' इत्यर्थके प्रधानव्यापाराश्रयत्वेऽपि कर्मणि लकारोत्पत्तौ कर्मप्रत्ययान्तहाधातुयोगे 'अपादाने चाहीयरुहोः' इति सूत्रेणापादानत्वज्ञापनात्पञ्चमी सिध्यतीति भावः ॥ ६ **प्राप्तिं मत्वेति** । "न वहिर्गत्यर्थः" इति 'न गतिहिंसा-' इति सूत्रे भाष्यात् न वहेर्गत्यर्थत्वं प्रतीयत इति वहेर्ग्रहणं कर्मसंज्ञाप्राप्त्यभावानुवादकमेवेति "नेमौ रहौ" इत्यत्र हकारस्येव दृष्टान्तार्थं कृतमिति बोध्यम् ॥ ७ **अनावश्यकमितीति** । वहेर्गत्यर्थत्वाभावस्य 'न गतिहिंसा-' इत्यत्रोक्तत्वेन तद्ग्रहणवैयर्थ्येऽपि नयतेर्गत्यर्थत्वाभावे मानानुपलम्भात्तद्ग्रहणमावश्यकमेवेति केचित् ॥ प्राप्त्यर्थाविशेषेऽपि वाहयति देवदत्तेनेतिवत् 'प्रापयति देवदत्तेन' इत्यत्रापि न प्राप्नोति कर्मसंज्ञा, 'यापयति ग्रामं देवदत्तम्' इत्यत्र तु भवत्येव कर्मसंज्ञा इत्यत्र तु शब्दतत्त्वविदां शिष्टानामाचार एव प्रमाणम् ॥ ८ **हेतुमण्णिजन्त इति** । पाचयत्योदनं देवदत्तेनेत्यत्र प्रयोज्ये कर्मसंज्ञावारणाय "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि-इत्येतन्नियमार्थं भविष्यति" इति भाष्योक्त्या 'ण्यन्ते कर्तुश्च कर्मणः' इत्युक्तेरन्यथानुपपत्त्या च हेतुमण्णिज्विषयकत्वस्यैव नियमविधौ स्पष्टप्रतीतेरिति भावः ॥ ९ **तस्यामवस्थायामिति** । सस्यावस्थायाम् 'आपोमयः प्राणः' इति श्रुतेः अद्भिर्विना ग्लायमानत्वरूपप्राणत्वसत्त्वेन प्राणवियोगानुकूलव्यापारस्यैव सत्त्वेन हिंसात्वाव्याघात् ॥ 'चेतनत्वात्' इति तु न सम्यक् स्तुतिनिन्दाभ्यां हर्षशोकानुद्भवात् 'चेतनं सेन्द्रियं द्रव्यं निरिन्द्रियमचेतनम्' इति चरकाच्च अनुद्भूतेन्द्रियाणां तेषां चेतनत्वानभ्युपगमात् । यद्वा 'द्रव्यं बहिश्चराः प्राणाः' इति स्मरणात् सस्यभक्षणेन सस्यस्वामिनो हिंसा भवतीति बोध्यम् ॥

(७८५) वा॰ दृशेश्च ॥ दर्शयति हरिं भक्तान् । (७८६) सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते । तेन स्मरति जिघ्रतीत्यादीनां न । स्मारयति घ्रापयति वा देवदत्तेन ॥ (७८७) वा॰ शब्दायतेर्न ॥ शब्दाययति देवदत्तेन । धात्वर्थसंगृहीतकर्मत्वेनाकर्मकत्वात्प्राप्तिः । (७८८) येषां देशकालादिभिन्नं कर्म न संभवति तेऽत्राकर्मकाः । न त्वविवक्षितकर्माणोऽपि । तेन मासमासयति देवदत्तमित्यादौ कर्मत्वं भवत्येव । देवदत्तेन पाचयतीत्यादौ तु न ॥ (७८९) हृक्रोरन्यतरस्याम् ।१।४।५३। हृक्रोरणौ यः कर्ता स णौ वा कर्म स्यात् । हारयति कारयति वा भृत्यं भृत्येन वा

---

रसिद्धिप्रसङ्गात् । एवं पुत्रो यत्किंचिद्विलपति तं विलापयतीत्याद्यप्यूह्यम् ॥ ( ७८६ ) स्मारयतीति । आध्यानार्थकस्यैव स्मरतेः 'घटादयो मितः' इति मित्त्वं, न चिन्तार्थकस्येति भावः ॥ देवदत्तेनेति । स्मारयत्येनं वनगुल्म इत्यत्र तु 'णेरणौ–२६६०' इति सूत्रे भाष्ये प्रयोगादेव कर्मत्वं[१] बोध्यम् ॥ ( ७८७ ) शब्दाययतीति । शब्दं करोतीत्यर्थे 'शब्दवैर–३५६०' इत्यादिना क्यङ् । ततो हेतुमण्णिच्[३४२६] ॥ धात्वर्थसंगृहीतेति । एतेन शब्दाययति सैनिके रिपूनिति कर्म प्रयुञ्जानाः परास्ताः[२] ॥ ( ७८८ ) न त्वविवक्षितकर्माणोऽपीति । यथा 'लः कर्मणि च–२९०६' इति सूत्रेऽविवक्षितकर्माणोऽप्यकर्मका इति गृह्यन्ते[३], तथैवेहापि यदि गृह्येरन् तदा ओदनादिकर्मणोऽविवक्षायां पाचयति देवदत्तमिति स्यात्, न तु देवदत्तेन पाचयतीति । एवं 'गत्यर्थाकर्मक–४१०४' इति सूत्रेऽप्यविवक्षितकर्माणोऽकर्मका इति न गृह्यते । दत्तवान् पक्ववान् इत्यर्थे दत्तः पक्व इत्यापत्तेः[४] ॥ यत्तु प्राचा–'अयक्रन्दशब्दायह्वेञां न' इत्युक्तम् । तदयुक्तम्, अयतेर्निषेधस्य निर्मूलत्वेन अणौ कर्तुर्णौ कर्मत्वस्य तत्रेष्टत्वात् । क्रन्दह्वेञोस्तु शब्दक्रियत्वेऽपि शब्दः कर्म कारकं नेति प्राप्तेरेवाभावाच्चेति स्थितं मनोरमायाम् ॥ यद्यपि–'श्रुग्रहदृशाम्' इति कर्मत्वमुक्तं, तत्र दृशिग्रहणं प्रामाणिकमेव । शृणोतेस्तु शब्दकर्मत्वात्सिद्धम् । ग्राहेर्द्विकर्मकत्वं यद्यपि 'अजिग्रहत्तं जनको धनुस्तत्' इति भट्टिप्रयोगस्य, 'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इति कालिदासप्रयोगस्य चानुगुणम् । तथापि बहूनामसंमतमेव । अत एव 'तं धनुरजिग्रहद्बोधितवान्' 'सुतां ग्राहयितुमुद्वाह्यत्वेन बोधयितुम्' इत्येवमुक्तप्रयोगं समर्थयांचक्रिरे । न च बुद्ध्यर्थत्वं विनापि यथाश्रुतार्थे एव ग्राहेर्द्विकर्मकत्वमस्त्विति वाच्यम्, तथा हि सति 'जायाप्रतिग्राहितगन्धमाल्याम्' इत्यत्र क्तप्रत्ययेनाभिधानं प्रयोज्यकर्मीभूतधेनोः स्यात्, न तु गन्धमाल्यकर्मणः, 'ण्यन्ते कर्तुश्च कर्मणः' इत्युक्तेः । जायाप्रेरिता हि धेनुर्गन्धमाल्ये प्रतिगृह्णातीति भवत्येव धेनुः प्रयोज्यकर्म । ततश्च जायया गन्धमाल्ये प्रतिग्राहितामिति स्यात् । क्तप्रत्ययानभिहितत्वेन गन्धमाल्यकर्मणि द्वितीयायाः प्रवृत्तेः ॥ सिद्धान्ते तु जायया प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहः । द्विकर्मकत्वाभावेन गन्धमाल्यस्यैव क्तप्रत्ययेनाभिहितत्वात् । ययेति तृतीया तु णिजर्थं प्रति जायायाः कर्तृत्वेऽपि णिच्प्रकृत्यर्थं प्रति धेनोः कर्तृत्वादुपपद्यते । एवं चेह जायानिष्ठप्रेरणविषयीभूतं गन्धमाल्यकर्मकं यत् प्रतिग्रहणं तत्कर्त्रीमिति वृत्त्यर्थः । यद्यपि धेनुकर्तृकं जायानिष्ठप्रेरणाविषयीभूतं यत्प्रतिग्रहणं तत्कर्मीभूते गन्धमाल्ये इति विग्रहार्थः, तथाप्यन्यपदार्थान्तर्भावेणैव विशेषणविशेष्यभाववैपरीत्येन एकार्थीभावः कल्प्यत इति नास्त्यत्रानुपपत्तिरिति दिक् ॥ ( ७८९ ) हृक्रो– । हा च का च हृकरौ तयोरिति विग्रहः, हृश्च कृश्च हृक्रोरिति वा । प्रथमान्तेन परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धान्तात् । 'गतिबुद्धि–७७९' इत्यादीह नानुवर्तते, तेन उभयत्र विभाषेयम् । अभ्यवपूर्वस्य हरतेर्भक्षणार्थकत्वात् विकारार्थस्य करोतेश्चाकर्मकत्वात् 'गतिबुद्धि–७७९' इत्यादिना अणौ कर्तुः कर्मत्वे प्राप्ते, अर्थान्तरे चानयोः सकर्मकत्वादप्राप्ते, अस्यारम्भात् । अप्राप्तावुदाहरणमाह–हारयतीति । हरति करोति वा कटं भृत्य इत्यण्यन्तावस्थायां भृत्यः कर्ता, स एव ण्यन्तावस्थायां कर्मीभूत् । प्राप्ते तूदाहरणम्–तृणमभ्यवहारयति सैन्धवान् तृणमभ्यवहारयति सैन्धवैः, विकारयति सैन्धवान् विकारयति सैन्धवैरिति बोध्यम् ॥ ननु यदि 'गतिबुद्धि–७७९' इत्यादिरिह नानुवर्तेत तदैतदेवं स्यात् । तत्रैव मानं न पश्याम इति चेन्मैवम् । 'न वेति विभाषा' इति सूत्रे उभयत्र विभाषासु भाष्यकृताऽस्यापि

---

१ कर्मत्वमिति । आध्यानार्थकघटादिभिन्नस्मरतेरेव योगे कर्मत्वाभावो घटादेस्तु भवत्येव कर्मत्वमिति भावः ॥ २ परास्ता इति । इदं च कैयटानुरोधेन । वस्तुतः शब्दक्रियाणामिति पक्षे ह्वयतिक्रन्दशब्दायप्रतिषेध उक्तः तस्य 'हेञ् स्पर्धायां शब्दे च' इति ह्वेञ्धात्वर्थकोटौ शिष्टोपदिष्टशब्दशब्दात् क्यङि निष्पन्नस्य शब्दायधातोर्ह्वयतेरिव पुत्रादिकर्मयोगेऽपि प्राप्तस्य कर्मत्वस्य वारणायोपयोगेन भाष्यसामञ्जस्येऽन्यादृशशब्दायतेर्धात्वर्थसंगृहीतकर्मत्वेनाकर्मकत्वात्प्राप्तस्य निषेधे न मानम् । अत एव 'शब्दकर्मकाणाम्' इति पक्षेऽयं निषेधो नोक्त इति शब्दस्य धात्वर्थेनोपसंगृहीतत्वेऽपि ह्वयताविव बहिर्भूतपुत्रादिकर्माभावे न मानमिति बोध्यम् ॥ ३ गृह्यन्त इति । अत एव 'अधीगर्थ–' इति सूत्रे भाष्ये–कर्मणः शेषत्वविवक्षायामकर्मकत्वेन 'मातुः स्मर्यते' इत्यत्र भावे लकार उदाहृतः । एवमेव 'तयोरेव–' इत्यत्रापि ग्रहणेन 'कृतपूर्वी' इत्यादिष्वपि भावे क्तसिद्धिरिति भावः ॥ ४ इत्यापत्तेरिति । अयं भावः–कालादेरपि प्रतियोगिभूतकर्मपदेन ग्रहणेऽकर्मको धातुरसंभवीति सामर्थ्याद् द्रव्यकर्मण एव प्रतियोगित्वेन ग्रहणमित्यकर्मकपदेन सर्वथा द्रव्यकर्माभाववन्त एधत्यादयोऽविवक्षितकर्माणश्चेत्युभयेऽपि गृह्यन्ते प्रयोगानुसारित्वाच्चाविवक्षायाः पचादिष्वविवक्षया नाकर्मकत्वनिबन्धनकार्याणि । सकर्मकपदघटितकर्मपदेन कालादिकर्मणोऽपि ग्रहणमिति तत्र लकारादिसिद्धिः–इति ॥

कटम् ॥ ( ७९० ) (वा) अभिवादिदृशोरात्मनेपदे वेति वाच्यम् ॥ अभिवादयते दर्शयते देवं भक्तं भक्तेन वा ॥ ( ७९१ ) (सू) **अधिशीङ्स्थासां कर्म** । १ । ४ । ४६ । अधिपूर्वाणामेषामाधारः कर्म स्यात् । अधिशेते, अधितिष्ठति, अध्यास्ते वा वैकुण्ठं हरिः ॥ ( ७९२ ) (सू) **अभिनिविशश्च** । १ । ४ । ४७ । अभिनीत्येतत्संघातपूर्वस्य विशतेराधारः कर्म स्यात् । अभिनिविशते[1] सन्मार्गम् । [ परिक्रयणे संप्रदानमिति[2] सूत्रादिह मण्डूकप्लुत्याऽन्यतरस्यांग्रहणमनुवर्त्य ] ( ७९३ ) व्यवस्थित[3]विभाषाश्रयणात्क्वचिन्न । पापेऽभिनिवेशः ॥ ( ७९४ ) (सू) **उपान्वध्याङ्वसः** ।१।४।४८। उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः॥(७९५)(वा) **अभुक्त्यर्थस्य न**॥वने उपवसति॥(७९६)(वा) **उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते** ॥ उभयतः कृष्णं गोपाः॥ सर्वतः कृष्णम् । धिक् कृष्णाभक्तम् । उपर्युपरि[4]

---

सूत्रस्य गणितत्वेनोक्तशङ्काया अनवतारात् ॥ (७९०) **अभिवादीति** । 'वद संदेशवचने' चुरादिराधृषीयः । अभिपूर्वकत्वान्नमस्कारार्थता । अभिवादयतेरप्राप्तौ दृशेस्तु प्राप्तावयं विकल्पः । अभिवदति देवं भक्तस्तं प्रेरयत्यन्यः अभिवादयते । 'णिचश्च ३३९०' इत्यात्मनेपदम् । परस्मैपदे तु अभिवादयति देवं भक्तेनेत्येव । तथा पश्यति देवं भक्तो दर्शयते देवं भक्तमित्यादि ॥ ( ७९२ ) **अभिनिवि—**। नेरल्पाच्तरत्वेन पूर्वनिपाते कर्तव्ये विपरीतोच्चारणमीदृशसंघातविवक्षार्थमित्याह—**संघातपूर्वस्येति** । तेनेह न, 'निविशते यदि शूकशिखा पदे' इति ॥ ( ७९३ ) **क्वचिन्नेति** । 'एष्वर्थेष्वभिनिविष्टानाम् ' इति समर्थसूत्रस्थभाष्यप्रयोगोऽत्र मानमिति भावः ॥ ( ७९४ ) **उपान्व—**। लुग्विकरणा[३११३]दलुग्विकरणं बलीय इति 'वस निवासे' इति भौवादिक एव गृह्यते, न तु 'वस आच्छादने' इत्यादादिक इत्यभिप्रेत्य शपा निर्देशमाह—**उपादिपूर्वस्य वसतेरिति** । ( ७९५ ) 'वसेरश्यर्थस्य प्रतिषेधः' इति वार्तिकमर्थतो व्याचष्टे—**अभुक्त्यर्थस्य नेति** । वार्तिकेऽर्थशब्दो निवृत्तिवचनः । भोजननिवृत्तिवाचकस्य वसेराधारः कर्म नेत्यर्थः ॥ **वने उपवसतीति** । कथं तर्हि 'गत्यर्थाकर्मक–४१०४' इति सूत्रे 'हरिदिनमुपोषितः' इत्युदाहरणं संगच्छत इति चेत् । अत्राहुः–वसेरत्र स्थितिरर्थः भोजननिवृत्तिस्त्वार्थिकीति न दोष इति ॥ ( ७९६ ) उपपदविभक्तिमाह—**उभसर्वतसोरित्यादिना** । उभसर्वयोस्तसौ उभसर्वतसौ तदन्तयोर्योगे द्वितीयेत्यर्थः । प्रकृतिद्वित्वेन तसोरिति द्वित्वनिर्देशः । अत्र उभशब्दादयच् न कृतः अनुकरणशब्दत्वेनासंख्यावाचित्वात् । तथा चोभशब्देन उभयशब्दो गृह्यते केवलात् परत्र तसिलोऽसंभवादित्येके ॥ वस्तुतस्तु—वृत्तिविषये अयच्प्रवृत्तावपि उभशब्दाद्विहितो यस्तस् तदन्तमस्त्येवेति यथाश्रुतं साधु इति तु मनोरमायां स्थितम् । **धिगिति** । धिक्शब्दयोगेऽपि द्वितीया कार्येत्यर्थः ॥ अत्र प्राञ्चः–धिगित्यविभक्तिको निर्देशो गवित्ययमाहेतिवदित्याहुः । तन्न, तथा सत्यपदान्ततया दृष्टान्ते 'लोपः शाकल्यस्य १०१' इत्यस्येव दार्ष्टान्तिके जश्त्वस्याप्यप्रवृत्तिप्रसङ्गात् । न चायं गकारान्त एवास्त्विति शङ्क्यम् । 'कस्य च दः' इति सूत्रे 'धकित् ' इत्युदाहरणस्यासंगतिप्रसङ्गात् । 'कस्य च दः २७४१' इत्यनेन हि कान्ताव्ययस्याकच्संनियोगेन दत्वं विधीयते । तस्माद्धिगिति विभक्त्यन्तमेव । परं तु 'प्रकृतिवदनुकरणम्' इत्यतिदेशेनाव्ययत्वात्सुपो लुक् । यदि तु धिगित्यविभक्तिको निर्देश इत्येतावानेव प्राचां ग्रन्थस्तदा सम्यगेव । अव्ययत्वात्सुपो लुक्यविभक्तिको निर्देश इति वक्तुं शक्यत्वात् ॥ **उभयतः कृष्णमिति** । कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः । आद्या[२८४९]दित्वात्तसिः, षष्ठ्यर्थे द्वितीया । एवमुपपदविभक्तौ सर्वत्र बोध्यम् ॥ अत्र व्याचक्षते—उभसर्वतसोरित्यत्र उभसर्वयोर्गणे परस्परसाहचर्यात्तसिलेव गृह्यते,

---

१ **अभिनिविशत इति** । आग्रहानुकूलज्ञानानुकूलव्यापार एवाभिनिवेशः । सन्मार्गविषयकाग्रहानुकूलज्ञानानुकूलो व्यापार इति बोधः ॥ २ **परि**–इत्यादिकोष्ठकान्तर्गतः पाठो न कौमुदीस्थः शेखरेऽस्यार्थस्योपलम्भादिति बोध्यम् ॥ ३ **व्यवस्थितेति** । 'सत्त्वे निविशते' 'एष्वर्थेष्वभिनिविष्टानाम् ' इति भाष्यप्रयोगेण 'अभिनिविश्' इत्येवमानुपूर्व्या अविकृताया यत्र योग्यता तत्रैव कर्मसंज्ञासूचनादिति तत्त्वम् । व्यवस्थितविभाषाणां परिगणनादिति बोध्यम् ॥ ४ **उपर्युपरीति** । 'उपर्युपरि–अधोधः–अध्यधि' इति द्विरुक्तोपर्यादेः समीपोर्ध्वभाग–समीपाधस्तनभाग–समीपदेशवृत्तित्वानि क्रमेणार्थः । सामीप्यरूपः संबन्धः षष्ठ्यर्थः ॥ 'सामीप्यं न षष्ठ्यर्थः' इति त्वन्वयिपदावाच्यं सामीप्यं न षष्ठ्यर्थ इत्येवंपरम् ॥ तथा च लोकसमीपोर्ध्वभागवृत्तिरित्यादिक्रमेण बोधः ॥ ५ **उपपदेति** । कारकविभक्तेरुपपदविभक्तितो बलवत्त्वात्पूर्वं कर्मकारकविभक्तिमुक्त्वेत्यादि । इत्थं च कर्म सप्तविधमवगन्तव्यम्—तदाह हरिः—'निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् । तच्चेप्सिततमं कर्म चतुर्धाऽन्यत्तु कल्पितम् ॥ औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् । संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥' तथा तत्तल्लक्षणानि तु–'यदसज्जायते सद्वा जन्मना यत्प्रकाश्यते । तन्निर्वर्त्यं, विकार्यं तु कर्म द्वेधा व्यवस्थितम् ॥ प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादिभस्मवत् । किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥' इति ॥ **निर्वर्त्यं**–प्रकृतेरप्रयोगे घटं करोति, ओदनं पचतीत्यादि । **विकार्यं**–प्रकृतिप्रयोगे काष्ठानि भस्म करोति, सुवर्णं कुण्डलं करोति इत्यादि । **प्राप्यम्**–'आदित्यं पश्यति' इत्यादि । औदासीन्यप्राप्यम्–तृणं स्पृशति । अनीप्सितम्–विषं भुङ्क्ते । संज्ञान्तरैरनाख्यातम्–'बलिं भिक्षते वसुधाम्' इत्यादि 'अकथितम्–' इति सूत्रविहितकर्मत्वम् । अन्यपूर्वकं संज्ञान्तरसमुच्चितम्–गमयति देवदत्तम् । वैकुण्ठमध्यास्ते क्रूरमभिक्रुध्यति इत्यादि ॥ ६ **कृष्णस्येति** । कृष्णसंबन्धिपार्श्वद्वयवर्तिन इति बोधः । सर्वत इत्यत्र सर्वदिग्वर्तिन इति बोधः ॥

लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् ॥ ( ७९७ ) वा॰ अभित[1]:परितःसमयानिकषाहाप्रतियोगेऽपि ॥ अभितः[2] कृष्णम् । परितः कृष्णम् । ग्रामं[3] समया । निकषा लङ्काम् । हा कृष्णाभक्तम् । तस्य शोच्यतेत्यर्थः । बुभुक्षितं[4] न प्रतिभाति किंचित् ॥ (७९८) सू॰ अन्तरान्तरेणयुक्ते ।२।३।४। आभ्यां योगे द्वितीया स्यात् । अन्तरा त्वां मां हरिः । अन्तरेण हरिं न सुखम् ॥ ( ७९९ ) सू॰ कर्मप्रवचनीयाः ।१।४।८३। इत्यधिकृत्य ॥ ( ८०० ) सू॰ अनुर्लक्षणे । १ । ४ । ८४ । लक्षणे[5] द्योत्येऽनुरुक्तसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः ॥

---

न र्वाद्यादिभ्य इति तसिः । तथा चोभयत इत्यादौ 'तसेश्च २६५५' इत्यनेन तसिलादेशोऽवगन्तव्यस्तेन यत्र संज्ञायां तसेस्तसिलादेशाभावस्तत्र न द्वितीया किंतु षष्ठ्येवेति । तसिलभावस्तु 'तसेश्च २६५५' इत्यत्र 'किंसर्वनामबहुभ्यः-२६४८' इत्यनुवर्तनादिति ॥ **धिक् कृष्णाभक्तमिति** । तस्य निन्द्यतेत्यर्थः । षष्ठ्यर्थे द्वितीया । स निन्द्य इत्यर्थः । प्रथमार्थे द्वितीयेत्येके । कथं धिङ् मूर्खेति । संबोधनपदस्य क्रियान्वय इति प्रागेवोक्ततया धिक्शब्दयोगाभावाद् द्वितीया न प्रवर्तत इति 'संबोधने च ७६६' इति प्रथमैव भवतीति । क्रियापदं क्वचिच्छ्रुतं क्वचिदाक्षिप्तम् । तथा च धिङ् मूर्ख निषिद्धाचरणमिदमित्येतदिह कल्प्यम् । मूर्खसंबोध्यकानिषिद्धाचरणस्य निन्द्यतेति तु वाक्यार्थः । प्रथमार्थे धिग्योगे द्वितीयेति वादिमते तु मूर्खसंबोध्यकं निषिद्धाचरणं निन्द्यमिति वाक्यार्थः ॥ यत्तु 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी ८५०' इति संबोधने प्रथमैव भवति संबोधनपदस्य कर्तृकारकवाचित्वादित्याहुः । तच्चिन्त्यम् । संबोधनस्य कर्तृकारकत्वे उक्तिसंभवाभावात् । न च देव प्रसीदेत्यादौ वस्तुगत्या देव एव कर्तेत्यस्त्येवोक्तिसंभव इति वाच्यम्, वास्तवकर्तृत्वेऽपि कारकविभक्तित्वस्य अलाभात् । किं च देव त्वां भजे, त्वां भजन्ति भक्ता इत्यादौ संबोध्यदेवस्य वास्तवमपि कर्तृत्वं नास्तीत्यास्तां तावत् ॥ **उपर्युपरीति** । कथं तर्हि 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः' इति । अत्राहुः-उपरिबुद्धीनामुत्तानबुद्धीनामुपरि चरन्तीत्यर्थः । तेनात्राऽऽम्रेडितत्वाभावान्न द्वितीया । यद्वा-प्रतिदोक्तस्य 'उपर्यध्यधसः सामीप्ये २८८६' इति कृतद्वित्वस्य वार्तिके ग्रहणादिह च वीप्साद्विवचनत्वान्नास्ति द्वितीयाप्रसक्तिरिति ॥ ( ७९७ ) **अभितःपरित इति** । एतच्च 'अन्यत्रापि दृश्यते ७९६' इति पूर्वोक्तस्यैव प्रपञ्चभूतमिति व्याचख्युः ॥ **अभितः कृष्णमिति** । 'पर्यभिभ्यां च २६५६' इति तसिल् । समयानिकषाशब्दौ सामीप्यवचनावव्यये । 'विलङ्घ्य लङ्कां निकषा हनिष्यति' इति माघः ॥ हेति खेदे, तदेतदाह-**तस्य शोच्यतेति** ॥ **बुभुक्षितमिति** । बुभुक्षितस्येत्यर्थः । एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गः, न तु कर्मप्रवचनीयः । तेनात्र 'कर्मप्रवचनीययुक्ते-८०१' इत्यनेन गतार्थता न शङ्क्या ॥ ( ७९८ ) **अन्तरान्तरेण**—। प्रतिपदोक्तत्वान्निपातयोरेव ग्रहणं न तु टाबन्ततृतीयान्तयोः, परस्परसाहचर्याच्च । तद्यथा-गुरुभार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्न त्वाचार्यपरशुरामयोः । तेन किमनयोरन्तरेणावगतेनेति सिद्धम् । किमनयोर्विशेषेण ज्ञातेनेत्यर्थः ॥ **अन्तरा त्वां मामिति** । तव मम च मध्ये इत्यर्थः ॥ हरिशब्दात्तु द्वितीया न भवति, अन्तरङ्गतया प्रथमाया एवोत्पत्तेः ॥ **अन्तरेण हरिमिति** । हरिं विनेत्यर्थः । मध्ये इत्यर्थेऽप्यन्तरेणशब्दो वर्तते 'मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः' इति । चलच्चामरयोर्द्वयस्य मध्ये इत्यर्थः । युक्तग्रहणान्नेह—अन्तरा त्वां मां कृष्णस्य मूर्तिः । इह कृष्णान्न द्वितीया अन्तराशब्दप्रयोगेऽपि अन्तरेत्यनेनानन्वयात् ॥ ( ७९९ ) **कर्मप्रवचनीयाः** ॥ **इत्यधिकृत्येति** ।

---

१ **अभित इति** । 'समयानिकषाहायोगेषूपसंख्यानम्' 'अभितःपरितः॰' इति वार्तिकद्वयेन 'ततोऽन्यत्रापि दृश्यते' इत्यस्योदाहरणपरभाष्येण च सिद्धमेतदिति बोध्यम् ॥ २ **अभितः कृष्णमिति** । अभित इत्याभिमुख्ये । कृष्णसंबन्धिसंमुखवर्तिनो गोपा इत्यर्थः । अभितः परित इत्यनयोः 'समीपसर्वदेशावच्छेदेन' इत्यर्थः । सामीप्यरूपसंबन्धो द्वितीयार्थः । कृष्णसमीपसर्वदेशावच्छेदेन गोपा इत्यर्थः ॥ ३ **ग्रामं समयेति** । समया-निकषा-इत्यव्यये अधिकरणशक्तिप्रधाने 'समीपे' इत्यर्थके । द्वितीयार्थः सामीप्यरूपः संबन्धः । ग्रामसमीपदेश इत्यर्थः ॥ ४ **बुभुक्षितमिति** । बुभुक्षितसंबन्धी यत्किंचिद्विषयकप्रतिभाभावानुकूलो व्यापार इत्यर्थः । झटिति स्फूर्तिः प्रतिभा ॥ ५ **लक्षण इति** । लक्षणपदार्थलक्षणं तु हरिणैवमुक्तम्-'आश्रितावधिभावं तु लक्षणे लक्षणं विदुः' इति। 'लक्षणे लक्ष्यवस्तुप्रकाशने आश्रितावधिभावमाश्रितमर्यादारूपं लक्षणं विदुः' इति कारिकार्थः ॥ तथाच-लक्ष्यत्वं ज्ञानजन्यज्ञानविषयत्वम्, जपज्ञानेन हि जपकालज्ञानद्वारा तदुत्तरकालवैशिष्ट्येन वृष्टिर्ज्ञाप्यते । अत एव 'कदा वृष्टः' इति प्रश्ने 'जपमनुप्रावर्षत्' इत्युत्तरम् । 'जपाभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणम्' इति ततो बोधो ज्ञेयः ॥ ६ **तस्येति** । धिगर्थो निन्दा । कृष्णाभक्तसंबन्धिनी निन्देति बोधः ॥ ७ **उक्तिसम्भवाभावादिति** । सम्बोधनस्य कर्तृकारकत्वं यथा भाष्यसंमतं तथा मञ्जूषातोऽवगन्तव्यम् ॥ ८ **आस्तां तावदिति** । 'प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते' इत्युक्त्यनुसारेण प्रवर्तनाविषयक्रियाध्याहारमन्तरा संबोधनत्वस्यैवाभावेन तत्संपत्तये 'देव त्वां भजे' इत्यादावपि जानीहीत्यस्याध्याहारावश्यकत्वे तत्कर्तरि युष्मदर्थे अभेदान्वयस्याव्याघाताच्चिन्त्यमेतादृशमिति बोध्यम् ॥ ९ **इत्यर्थ इति** । त्वन्मदवधिकमध्यवृत्तिहरिरित्यर्थः ॥ १० **अन्तरङ्गतयेति** । अस्तीति क्रियाध्याहारस्य 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति सिद्धान्तानुसारेणावश्यकतया तन्निमित्तकप्रातिपदिकार्थकारकविभक्तित्वं प्रथमायाः । उपपदविभक्तेर्द्वितीयायाः क्रियाद्वारकसमभिव्याहृतपदान्तरनिमित्तकत्वेन बहिरङ्गत्वमिति भावः ॥ वाचनिक्येव 'उपपदविभक्तेः-' इति परिभाषेति सर्वं निरवद्यम् ॥ ११ **विनेत्यर्थ इति** । हरिशब्दस्तद्भक्तिलाक्षणिकः । द्वितीयार्थः प्रतियोगित्वम् । हरिभक्तिप्रतियोगिकाभाववद्वृत्तिः सुखसत्ताभाव इत्यर्थः ॥ १२ **युक्तेति** । युक्तग्रहणं विना प्रयोगे समभिव्याहारे इति बाऽवगते कृष्णशब्दादपि द्वितीयापत्तिः।—

(८०१) (सू) कर्मप्रवचनीययुक्ते द्वितीया।२।३।८। एतेन योगे द्वितीया स्यात्। जपमनु प्रावर्षत्। हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः। पराऽपि हेताविति तृतीयाऽनेन बाध्यते, लक्षणेत्थंभूतेत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात्॥ (८०२) (सू) तृतीयार्थे।१।४।८५। अस्मिन् द्योत्येऽनुरुक्तसंज्ञः स्यात्। नदीमन्ववसिता सेना। नद्या सह संबद्धेत्यर्थः। षिञ् बन्धने क्तः॥ (८०३) (सू) हीने।१।४।८६। हीने द्योत्येऽनुः प्राग्वत्। अनु हरिं सुराः। हरेर्हीना इत्यर्थः॥ (८०४) (सू) उपोऽधिके च।१।४।८७। अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात्। अधिके सप्तमी वक्ष्यते। हीने–उप हरिं सुराः॥ (८०५) (सू) लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः।१।४।९०। एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः। लक्षणे–वृक्षं प्रति पर्यनु वा विद्योतते विद्युत्। इत्थम्भूताख्याने–भक्तो विष्णुं प्रति पर्यनु वा। भागे–लक्ष्मीर्हरिं प्रति पर्यनु वा। हरेर्भाग इत्यर्थः। वीप्सायां–

---

रीश्वरात्प्रागिति बोध्यम्। गुरुसंज्ञाकरणमन्वर्थत्वाय। कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः बाहुलकाद्भूते कर्तर्यनीयर्। तेन संप्रति क्रियां न द्योतयन्तीति लभ्यते। तथा च हरिः—"क्रियाया द्योतको नायं संबन्धस्य न वाचकः। नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः॥" इति। तथाहि—जपमनु प्रावर्षत्—इत्यत्र अनुना न क्रियाविशेषो द्योत्यते। अनुभूयते सुखमित्यादौ यथा। नापि षष्ठ्येव संबन्ध उच्यते, द्वितीययैव तस्योक्तत्वात्। नापि प्रादेशं विपरिलिखति, विमाय परिलिखतीत्यत्र विशब्देन मानक्रियैव क्रियान्तरमाक्षिप्यते, कारकविभक्तिप्रसङ्गात्। किन्तु जपसंबन्धि वर्षणमिति द्वितीययाऽवगतः सम्बन्धो लक्ष्यलक्षणभाव एवेत्यवगमात् संबन्ध एवानुना विशेषेऽवस्थाप्यते। क्वचित्तु–क्रियागताविशेषद्योतकेऽपीयं संज्ञा वचनात्प्रवर्तते। 'सुः पूजायाम् ८०८' 'अतिरतिक्रमणे च ८०९' इति यथा॥ (८००) **उक्तसंज्ञ इति**। कर्मप्रवचनीय इत्यर्थः॥ **गत्युपसर्गसंज्ञापवाद इति**। (८०१) ननु जपमनु प्रावर्षदित्यत्र वृष्टि प्रत्यनोर्योगाभावेन क्रियायोगाभावादेतयोः संज्ञयोः प्राप्त्यभावात् कथं तदपवादत्वमस्याः संज्ञाया इति चेत्। अत्राहुः–गम्यमाननिशमनक्रियामपेक्ष्य तयोः प्राप्तिरस्तीति संभावनामात्रेण मूलस्य निर्बाधत्वात्। न चैवं कर्मत्वादेव द्वितीयासिद्धौ किमनया संज्ञयेति वाच्यम्, जपस्य निशमनप्रयुक्तहेतुत्वाख्यसंबन्धविवक्षया कर्मत्वाभावेन तृतीयायां प्राप्तायां तदारम्भात्। न चैवमपि 'जपमनु निशम्य देवः प्रावर्षत्'इत्यर्थावगमाल्ल्यबन्तलोपे पञ्चम्यपवादार्थैवेयं संज्ञाऽस्त्विति वाच्यम्, ल्यबन्तलोपे हि कर्मणि अधिकरणे च पञ्चमी, जपस्य तु कर्मत्वादिना विवक्षाभावादिति॥ **पराऽपि हेतौ तृतीयेत्यादि**। अयं भावः–लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशः यो न हेतुः वृक्षमनु विद्योतते विद्युदिति, हेतुतृतीयाया अवकाशो धनेन कुलमित्यादि। जपमनु प्रावर्षदित्यत्र तु हेतुभूते लक्षणे परत्वात्तृतीया स्यात्तां बाधित्वा 'अनुर्लक्षणे ८००' इति पुनः संज्ञाऽविधानसामर्थ्याद् द्वितीयैव भवतीति। न च 'तृतीयार्थे ८०२' इति सूत्रेणेह गतार्थता शङ्क्या तस्य पुरस्तादपवादन्यायेन 'सहयुक्तेऽप्रधाने ८१८'इत्येतावन्मात्रबाधकत्वात्॥ **सामर्थ्यादिति**। अत एव हेतुत्वपर्यन्तमपि शाब्दबोधे विषय इति स्वीक्रियते इति भावः॥ (८०२) **नदीमन्विति**। द्वितीयायाः संबन्धोऽर्थः षष्ठ्यपवादत्वादेतद्द्वितीयायाः। स चेह संबन्धः साहित्यरूप एवेत्यनुना द्योत्यते॥ (८०३) **हीने**। उत्कृष्टादेव द्वितीया, न त्वपकृष्टाच्छक्तिस्वभावादित्याशयेनोदाहरति–**अनु हरिमिति**॥ (८०४) **उपोऽधिके च**। चकारेण हीने इत्यनुकृष्यते तदाह–**अधिके हीने चेति**। अधिके संज्ञाविधानं न द्वितीयार्थमित्याह–**सप्तमी वक्ष्यत इति**। 'यस्मादधिकम्–९४५' इत्यनेनेति भावः। तस्मिन्नपि सूत्रे 'कर्मप्रवचनीययुक्ते' इत्यनुवृत्तेरधिके संज्ञाविधानमावश्यकमेवेति ज्ञेयम्॥ **उप हरिमिति**। पूर्ववदुत्कृष्टादेव द्वितीया॥ (८०५) **लक्षणेत्थम्—। वृक्षं प्रतीति**। वृक्षसंबन्धिद्योतनमर्थः। संबन्धश्च लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति॥ **भक्तो विष्णुं प्रतीति**। विष्णोर्भक्तेश्च विषयविषयि–

---

–प्रसितोत्सुकाभ्यामित्यादौ तु मण्डूकप्लुत्या युक्तपदानुवृत्तिः करणीयैवेति भावः॥ युक्तग्रहणं तु स्पष्टार्थमिति शेखरे। तस्यायं भावः–'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' 'तुल्यार्थैरतुलोपमाभ्याम्–' इति सूत्रेषु विनाऽपि तद्ग्रहणं व्याख्यानत एव यन्निरूपितं मध्यत्वं तत्रैव द्वितीयायाः स्वीकारात् सकलेष्टसिद्धेरिति॥

---

१ **पराऽपीति**। कर्मप्रवचनीयसंज्ञावकाशो हेतुत्वाविवक्षायाम्, हेतुतृतीयावकाशो धनेन कुलमिति, प्रकृते च हेतुत्वविवक्षायां परत्वात्तृतीयाप्राप्तिरिति भावः॥ २ **तृतीयार्थे इति**। तृतीयाशब्देन तन्निमित्तशब्दः 'सहयुक्ते–' इत्यत्रोपात्तोऽनन्तरोक्तत्वात् सहशब्दो लक्ष्यते 'तदर्थे साहित्ये द्योत्ये' इत्यर्थः॥ ३ **इत्यर्थ इति**। नदीप्रतियोगिकसाहित्यसंबन्धविशिष्टा सेनेत्यर्थः॥ ४ **हरेर्हीना इति**। स्वावधिकापकर्षरूपहीनत्वसंबन्धोऽनुद्योत्यो द्वितीयार्थः। हरिप्रतियोगिकापकर्षवन्त इत्यर्थः॥ ५ **वृक्षं प्रतीति**। लक्ष्यलक्षणभावः प्रत्यादिद्योत्यः। वृक्षप्रकाशेन हि तत्समीपदेशविशेषावच्छिन्ना विद्युज्ज्ञायते इति वृक्षो लक्षणम्॥ ६ **इत्थंभूतेति**। इत्थं कंचित् प्रकारं भूतः प्राप्तः स आख्यायतेऽनेनेति इत्थंभूताख्यानं भक्तत्वादिप्रकारविशेषरूपः संबन्धः प्रत्यादिद्योत्यः। भक्तपदार्थे विशेषणस्यापि तस्य संबन्धत्वम्। एवञ्च हरिनिरूपितभक्तत्ववानित्यर्थः। स्वनिरूपितभक्तिमत्त्वसंबन्धेन हरिविशिष्टो भक्त इति वाऽर्थः॥ ७ **हरेर्भाग इति**। हरिस्वामिकेति बोधः। स्वनिष्ठस्वामित्वनिरूपितस्वत्वसंबन्धेन हरिविशिष्टा लक्ष्मीरिति वा बोधः॥ ८ **संबन्ध एवेति**। अप्रयुज्यमानक्रियाद्वारक इति भावः॥

वृक्षंवृक्षं प्रति पर्यनु वा सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । एषु किम् । परिषिञ्चति ॥ (८०६) सू॰ अभिरभागे । १।४।९१। भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभि वर्तते। भक्तो हरिमभि । देवंदेवमभिसिञ्चति। अभागे किम्। यदत्र ममाभिष्यात्तद्दीयताम् ॥ (८०७) सू॰ अधिपरी अनर्थकौ ।१।४।९३। उक्तसंज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । गतिसंज्ञाबाधाद्गतिर्गताविति निघातो न ॥ (८०८) सू॰ सुः पूजायाम् ।१।४।९४। सुसिक्तम् । सुस्तुतम् । अनुपसर्गत्वान्न षः । पूजायां किम् । सुषिक्तं किं तवाऽत्र । क्षेपोऽयम् ॥(८०९) सू॰ अतिरतिक्रमणे च ।१।४।९५। अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात् । अति देवान् कृष्णः ॥(८१०) सू॰ अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु ।१।४।९६। एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात्। सर्पिषोऽपि स्यात्। अनुपसर्गत्वान्न षः। संभावनायां लिङ्। तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन संबध्यते । सर्पिष इति षष्ठी तु अपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसंबन्धे । इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम । द्वितीया तु

---

भावः प्रत्यादिद्योत्यः । भक्तः कंचित् प्रकारं प्राप्त इत्यर्थः ॥ **लक्ष्मीर्हरिं प्रतीति** । लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः संबन्धः ॥ **वृक्षंवृक्षमिति** । इह वीप्सा द्विर्वचनेनैव द्योत्यते, प्रत्यादिशब्दस्तु क्रियया संबध्यते । कर्मण्येव द्वितीया । कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न, एतदर्थमेव लक्षणादयो विषयतयोपात्ता इति व्याख्यातमाकरे । 'पञ्चम्यपाङ्परिभिः ८७९' इति तु न भवति, वर्जनार्थेनापेत्यनेन साहचर्यात् ॥ **परिषिञ्चतीति** । सर्वतः सिञ्चतीत्यर्थः । 'उपसर्गात्सुनोति-३०३७' इति षत्वम् ॥ ( ८०६ ) **ममाभिष्यादिति** । मम भागः स्यादित्यर्थः । प्राञ्चस्तु-मामाभिष्यादिति प्रत्युदाहरन्ति, तत्र मां प्राप्नुयादित्यर्थः । उपसर्गवशेनास्तेः सकर्मकत्वान्मामिति द्वितीया । अत्र च मम भाग इत्यर्थतः पर्यवसानात् 'अभागे' इति कर्मप्रवचनीयत्वे निषिद्धे 'उपसर्गप्रादुर्भ्याम्-३२८२' इति षत्वम् ॥ (८०७) **कुतोऽध्यागच्छतीति** । इह प्रजयति, पराभवति, वृक्षं प्रति विद्योतते, इत्यत्र प्रादेर्विशेषद्योतकत्ववदधिपर्योरिह विशेषद्योतकत्वाभावादानर्थक्यं धात्वर्थमात्रद्योतकत्वेन त्वर्थवत्ताऽस्त्येवेति बोध्यम् । 'गतिर्गतौ ५९५८' इत्यत्र 'पदात् ५४०' इत्यधिक्रियत इति पदात्परत्वसंपत्तये कुत इत्युक्तम् ॥ ( ८०९ ) **अतिरतिक्रमणे च** । चकारेण पूजायामित्यनुकृष्यत इत्याह—**पूजायां चेति** । अतिक्रमणमुचितादधिकस्यानुष्ठानम् । अर्थद्वयेऽप्येकमेवोदाहरति—**अति देवान् कृष्ण इति** । अन्ये तूदाहरन्ति—अतिसिक्तम् , अतिस्तुतमिति बहुतरं समीचीनं सिक्तं स्तुतं चेत्यर्थः । बहुतरार्थे अतिक्रमणं, समीचीने पूजेति विवेकः ॥ ( ८१० ) **अपिः पदार्थ—॥ सर्पिषोऽपि स्यादिति** । सर्पिर्बिन्दुः स्यादित्यर्थः ॥ अपेः कर्मप्रवचनीयत्वे फलमाह—**अनुपसर्गत्वान्न ष इति** । उपसर्गसंज्ञाभावात् 'उपसर्गप्रादुर्भ्यामस्ति-३२८२' इतीह न प्रवर्तत इति भावः॥ **संभावनायामिति** । संभाव्यत इति संभावना । 'ण्यासश्रन्थो युच् ५०८९' ॥ भवनक्रियासंभावनायां भवनस्य विषयत्वमाह—**तस्या एवेति** । संभावनाया एवेत्यर्थः ॥ **कर्तृदौर्लभ्येत्यादि** । कर्तृदौर्लभ्याद्भवनक्रियाया दौर्लभ्यं द्योतयन्नपिशब्दो भवनक्रियावाचिना स्यादित्यनेन संबध्यत इत्यर्थः ॥ **अवयवावयविभावेति** । सर्पिरवयवी बिन्दुरवयवः ॥ **इयमेवेति** । बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यद्योतकतैवेत्यर्थः ॥ **द्वितीयेति** । 'कर्मप्रवचनीययुक्ते-८०१' इत्यनेन विहिता ॥

---

१ **वृक्षंवृक्षमिति** । अत्र वीप्साविषयो व्याप्यत्वं द्विर्वचनद्योत्यम् । व्याप्यत्वविशिष्टवृक्षादीनां प्रत्यादिद्योत्येन व्यापकतासंबन्धेन सेचनेऽन्वयः । सेचने वृक्षादीनां कर्मत्वेऽपि तत्त्वेनाविवक्षायां कर्मप्रवचनीययुक्तत्वाद् द्वितीयार्थमिदमिति भाष्ये सिद्धान्तितम् ॥ अत एव 'प्रत्यर्थं शब्दनिवेशः' इत्यादावर्थस्य निवेशनक्रियाधिकरणत्वेऽपि 'अर्थमर्थं प्रति' इत्येव विग्रहो भाष्ये दर्शितः ॥ २ **यदत्रेति** । यच्छब्दोऽत्र भागवाची । मत्संबन्धियद्भागकर्तृकैतदधिकरणिका सत्ता प्रेरणाविषयस्तत्कर्मकं दानमिति बोधः ॥ ३ **अनर्थकाविति** । आगच्छतीत्यर्थापेक्षयाऽधिकोऽर्थो नानयोर्द्योत्यः । नापि प्रकरणादिनाऽध्यागच्छतीत्यस्योपरिभावार्थकत्वम् । किन्तु अध्यागच्छतीत्याद्यपि आगमनमात्रार्थकमेव । बोद्धुस्ततो मिलितादेवार्थबोधेन तस्यापि अनुवादकत्वेन धात्वर्थद्योतकतेति व्यवहारः ॥ ४ **कुत इति** । पञ्चमी तु—अपादाने। द्वितीया तु न, कर्मप्रवचनीयद्योत्यसंबन्धप्रतियोगित्वरूपस्य कर्मप्रवचनीययुक्तत्वस्याभावात् ॥ ५ **सुसिक्तमिति** । सेकगतपूज्यत्वद्योतकः सुः । क्रियापूज्यत्वे कृते तत्तत्क्रियाकर्तुः पूज्यत्वे गम्ये एवैषा संज्ञेति भावः ॥ ६ **अति देवानिति** । अतिक्रमणमुचितादधिकानुष्ठानम् । देवेभ्योऽधिको देवपूज्य इति वाऽर्थः॥ ७ **पदार्थेति** । पदस्याप्रयुज्यमानपदान्तरस्यार्थः पदार्थः । एवञ्च—यत्पदप्रयोगं विनाऽपि येनापिना तदर्थो द्योत्यते तादृशापेः कर्मप्रवचनीयत्वमित्यर्थः ॥ ८ **सर्पिषोऽपि स्यादिति** । अत्रापिशब्दबलाद्बिन्द्वध्याहारेणापेः पदार्थद्योतकता। बिन्दौ सर्पिष इत्यस्यावयवावयविभावेनान्वयः । बिन्दुश्चाख्यातार्थकर्तर्यन्वेति । अपिः क्रियायां स्वद्योत्यबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यस्यापि द्योतकः । एवञ्च सर्पिरवयवबिन्दुकर्तृका तद्बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती संभावनाविषयः सत्तेति बोधः॥ ९ **कर्मण्येवेति** । कर्मणि द्वितीयाङ्गीकारे प्रतिना वृक्षस्य सामर्थ्याभावात् 'प्रतिवृक्षम्' इति समासानुपपत्तिः । किञ्च, प्रत्यादेः क्रियान्वये क्रियाविशेषकत्वेनान्वर्थकर्मप्रवचनीयसंज्ञानुपपत्त्या भाष्यविरोधापत्तिः 'क्रियाया द्योतको नायम्' इत्युक्तहरिकारिकाविरोधश्च॥ १० **विषयतयेति** । अन्यद्योत्याया अपि वीप्सायाः संज्ञां प्रति निमित्तत्वात् । इतरे लक्षणादयस्तु द्योत्या एवेति भावः ॥ 'अपूपौ द्वावानय' 'व्यतिलुनते' इत्यादौ द्योतकवाचकानुवादसमुच्चयस्यापि दृष्टत्वाद् वीप्साया द्योत्यत्वेऽपि न दोष इति केचित् ॥

नेह प्रवर्तते, सर्पिषो बिन्दुना योगो न त्वपिनेत्युक्तत्वात्॥ अपि स्तुयाद्विष्णुम्। संभावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः॥ अपि स्तुहि। अन्ववसर्गः कामचारानुज्ञा॥ धिग्देवदत्तमपि स्तुयाद्वृषलम्। गर्हा। अपि सिञ्च। अपि स्तुहि। समुच्चये॥ (८११) कालाध्वनोरत्यन्तसंयोगे। २। ३। ५। इह द्वितीया स्यात्। मासं कल्याणी। मासमधीते। मासं गुडधानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम्। मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः॥ (८१२) स्वतन्त्रः कर्ता। १। ४। ५४। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः

---

**न त्वपिनेति**। न च बिन्दुना योगे तद्द्योतकापिशब्देनापि योगो जात एवार्थद्वारा शब्दानां योगस्याभ्युपगमादिति शङ्क्यम्, अपिशब्दस्य बिन्दुद्योतकत्वाभावात्। कथं तर्हि बिन्दुप्रतीतिरिति चेत्। शृणु—अपिना द्योत्यं भवनदौर्लभ्यमेव कर्तृदौर्लभ्यमाक्षिपति। कर्ता त्विह बिन्दुरेवेति स प्रतीयते। अत एवापिशब्दबलेन गम्यमानस्येत्युक्तं, न त्वपिना गम्यमानस्येति॥ **उक्तत्वादिति**। उक्तप्रायत्वादित्यर्थः। अपिशब्दः स्यादित्यनेन संबध्यत इत्युक्ते स्यादित्यस्यापिना योगो न तु सर्पिषा इत्यर्थपर्यवसानात्॥ **अपि स्तुयादिति**। अवाङ्मनसगोचरं विष्णुमपि स्तुयादित्यधिकोक्तिः॥ एतादृशस्यान्यदीयस्तवने सामर्थ्यमस्तीत्यत्र किं वक्तव्यमिति भावः॥ इह संभावनाद्योतकोऽपिशब्दः, पूर्वत्र तु संभावनाविषयदौर्लभ्यद्योतक इति महान् भेदः। 'उपसर्गात्सुनोति-२०३७' इत्यादिना षत्वं न भवति।कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात्। एमुत्तरत्रापि बोध्यम्॥ **अपि सिञ्च, अपि स्तुहीति**। सिञ्च स्तुहि चेत्यर्थः॥ (८११) **कालाध्वनोः**—। अन्तं विराममतिक्रान्तोऽत्यन्तः, स चासौ संयोगश्चात्यन्तसंयोगः, निरन्तरसंनिकर्ष इत्यर्थः। केनेत्याकाङ्क्षायां गुणक्रियाद्रव्यैरित्यौचित्याद्बोध्यम्॥ **द्वितीया स्यादिति**। श्रुतत्वात्कालाध्ववृत्तिभ्यामेव। स्वरूपग्रहणं त्विह न भवति, 'कालाः ९९८' 'अत्यन्तसंयोगे च ९९९' इति समासविधायके 'कालाः' इति बहुवचननिर्देशेन द्वितीयाविधौ स्वरूपविधिर्नेति ज्ञापनात्। अत एव मासप्रमितः मुहूर्तसुखमिति द्वितीयासमासविधावुदाहरिष्यति॥ **मासं कल्याणीत्यादि**। अकर्मकधातुभिर्योग एव देशकालादीनां कर्मसंज्ञाविधानान्नेह 'कर्मणि द्वितीया ७७१' इति द्वितीया प्राप्नोतीति भावः॥ **मासस्य द्विरिति**। 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ९०६' इत्यनेन षष्ठीति प्राञ्चः तन्न, तत्र शेषग्रहणानुवृत्त्या द्विरह्नो भोजनमिति कृदन्तेन सह समासनिवृत्तेरेव फलत्वात्। तस्मादिह 'षष्ठी शेषे ८८७' इति सूत्रेणैव षष्ठी भवत्यन्तरङ्गत्वादित्याहुः। अन्यार्थमारब्धस्यापि 'कृत्वोऽर्थप्रयोगे-९०६' इति सूत्रस्य द्विरह्नो भुङ्क्त इत्यत्र विशेषविहितत्वात्प्रवृत्तौ बाधकं नास्तीति केचित्॥ इति द्वितीया॥

(८१२) **स्वतन्त्रः कर्ता**। प्रधानीभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यम्। आह च—"धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते" इति। स्थाल्यादीनां वस्तुतः स्वातन्त्र्याभावेऽपि स्थाली पचति काष्ठानि पचन्तीत्यादिप्रयोगोऽपि साध्वेवेति ध्वनयति—**विव-**

---

१ **इत्युक्तत्वादिति**।कर्मप्रवचनीयद्योत्यसंबन्धप्रतियोगित्वस्य बिन्दौ सत्त्वात्तस्यैव कर्मप्रवचनीययुक्तत्वम्, न सर्पिष इतीति॥ इदं तु बोध्यम्—यदा स्पष्टप्रतिपत्तये बिन्दुशब्दोऽपि प्रयुज्यते तदा तु द्वितीयां बाधित्वा 'उपपदविभक्तेः—' इति प्रथमैव भवति॥ २ **अत्युक्तिरिति**। असंभाव्यार्थसंभावनमेवात्युक्तिः। संभावनपदस्योक्तार्थकत्वे व्याख्यानमेव शरणम्॥विष्णुविषयायाः शक्यत्वसंभावने चान्यविषया निश्चयेन शक्या कर्तुमिति फलति॥ शक्त्युत्कर्षमित्यस्यौचित्योत्कर्षादेरप्युपलक्षणत्वाद् 'अपि वेदान्तपारगं हन्यात्'इत्यादौ हननक्रियायां सम्भावनाविषयौचित्योत्कर्षद्योतनात् सम्भावितौचित्यस्य चानुष्ठानमयुक्तमिति स्वार्थे तात्पर्याभावो धर्मशास्त्रोक्तः संगच्छते॥ ३ **कामचारेति**। कामचारो यथेष्टं प्रवृत्तिः। स्तुहि मा वा, यथेष्टं कुर्वित्यर्थः। 'प्रैषातिसर्ग-' इति लिङ्॥ ४ **समुच्चय इति**।अपिद्वयेन मिलितेन समुच्चयद्योतनात्प्रत्येकं संज्ञायामुभयत्रापि षत्वाभावः॥ ५ **कालाध्वेति**। येन कालेनाध्वना वा गुणक्रियाद्रव्यैरभावेन चावयवानतिरेकेण निरन्तरसंनिकर्षस्तद्वृत्तिभ्यामेव प्रत्यासत्त्या द्वितीयेति सूत्रार्थः। तेन मासं भोजनाभाव इत्यपि सिद्धम्॥ ६ **मासमिति**। मासपदेनावयवानतिरेकेण त्रिंशद्दिनसमूह उच्यते। व्यापकत्वं द्वितीयार्थः। तत्त्वं च त्रिंशत्त्वनिष्ठप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वम्। प्रतियोगिव्यधिकरणेत्युक्तेर्दिनावान्तरदण्डादावध्ययनाभावेऽपि न दोषः। एकदिनाध्ययने च न तथा प्रयोगः॥ ७ **स्वातन्त्र्येणेति**। स्वातन्त्र्यं च कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम्। पच्यते ओदनो देवदत्तेनेत्यादौ कर्मप्रत्ययसमभिव्याहारे व्यापारस्याप्रधानत्वेऽपि देवदत्तस्य कर्तृत्वसिद्धये कर्तृप्रत्ययेत्यादि॥ कर्मकर्तृप्रत्ययसमभिव्याहारे फलाश्रयस्यैव कर्तृत्वसिद्धये व्यापारपदं विहाय धात्वर्थमात्रोपादानम्॥ णिजन्तस्थले णिच्प्रकृतिधात्वर्थफलनिरूपितप्राधान्यस्य प्रयोज्यव्यापारे प्रयोज्यव्यापारनिरूपितप्राधान्यस्य प्रयोजकव्यापारे सत्त्वेन द्वयोरपि व्यापारयोः प्राधान्येन तदाश्रययोर्द्वयोरपि कर्तृसंज्ञा 'गतिबुद्धि-' इति सूत्रस्य नियमार्थत्वेन गत्यादिव्यतिरिक्तार्थधातुयोगे सिद्धा। तत्तद्धात्वर्थायिककारकचक्रप्रयोक्तृत्वं स्वातन्त्र्यम्॥ स्वेच्छाधीनप्रवृत्तिनिवृत्तिकत्वं वा स्वातन्त्र्यम्। तच्च प्रयोजकसंनिधानेऽपि प्रयोज्यस्य। तत्संनिधानेऽपि स्वार्थसत्त्वे प्रवृत्तेस्तदभावेऽप्रवृत्तेश्च "निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये। अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये॥" इति। तच्चारोपितमनारोपितं च संज्ञानिमित्तम्। आद्यं स्थाल्यादौ। अन्त्यं पुरुषे। यस्य च स्वातन्त्र्यविवक्षा तद्व्यापार एव धातुना प्राधान्येनोच्यते। इति स्पष्टं प्रकृतसूत्रभाष्ये। स च कर्ता त्रिविधः—शुद्धो हेतुः कर्मकर्ता चेति॥

**कर्ता स्यात् ॥ ( ८१३ ) ⦾ साधकतमं करणम् । १ । ४ । ४२ । क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् । तमब्ग्रहणं किम् । गङ्गायां घोषः ॥ ( ८१४ ) ⦾ कर्तृकरणयोस्तृतीया । २।३।१८ । अनभिहिते कर्तरि**

---

क्षितोऽर्थ इति ॥ (८१३) **साधकतमं करणम्**—। **प्रकृष्टेति** । यद्व्यापारानन्तरं फलनिष्पत्तिस्तत्प्रकृष्टम् । उक्तं च—"क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्" इति । विवक्ष्यत इत्यनेन स्थाल्यादीनामपि करणत्वमस्तीति सूचितम् । आह च—"वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् । स्थाल्या पचत इत्येषा विवक्षा दृश्यते यतः" इति। अयं भावः—कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कं च वस्तुविशेषे विशेषणविशेष्यभाववन्न नियतम्, किन्तु वैवक्षिकम् । न हि " गौः सर्वं प्रति गौरेव न तु कंचित् प्रत्यगौः' इतिवद्विशेषणं सर्वं प्रति विशेषणमेवेति वक्तुं शक्यम् । तथा च—कया धातुव्यक्त्या उपस्थापितेऽर्थे किं कर्त्रादिकमिति प्रश्ने 'प्रकृतधातुव्यक्त्युपात्तव्यापाराश्रयतया विवक्षितः कर्ता, व्यापारव्यधिकरणफलाश्रयः कर्म, कर्तृकर्मद्वारकसंबन्धेन व्यापारस्य फलस्य वा आश्रयोऽधिकरणम् ' इति स्थितम् । पच्यर्थौ व्यापारश्चानेकधा । एवं च पचेरधिश्रयणतण्डुलावपनैधोपकर्षणादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्ता, ज्वलनतात्पर्यकत्वे एधाः कर्तारः, तण्डुलधारणादिपरत्वे स्थाली कर्त्री, अवयवविभागादिपरत्वे तण्डुलाः कर्तारः, स्थाल्या पचतीत्यत्र तृतीयोपात्तव्यापाराश्रयोऽपि स्थाली करणमेव न तु कर्त्री, देवदत्तादिव्यापारस्यैव तद्धातूपात्तत्वात्, तथा आदिखादिभ्यामुपात्तेऽर्थे प्रयोज्यः कर्ता, तस्मिन्नेवार्थे भक्षयतिनोपात्ते प्रयोज्यः कर्म, अधिपूर्वैः शीङादिभिरुपात्तेऽर्थे आधारः कर्म, केवलैरुपात्ते अधिकरणमित्यादि ज्ञेयम् । एतेन ज्ञानस्य स्वप्रकाशत्वे कर्तृकर्मविरोध इति केषांचिदुक्तिः परास्ता । यद्धातूपात्तक्रियायां यदा यस्य स्वातन्त्र्यं विवक्ष्यते तदा तत्क्रियायां स कर्ता, यदुपात्तया कर्तुः क्रियया यदा आप्तुमिष्टतमत्वेन यद्विवक्ष्यते तदा तत् कारकं तत्क्रियायां कर्मेत्येवं शब्दविशेषोपाधिकस्य कर्तृत्वादेः प्रत्यक्षे उक्तिसम्भवाभावात् ॥ यत्तु केचित्परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वं चेद् वृक्षात्पर्णं पततीत्यादौ स्वसमवेतक्रियाजन्यविभागादिफलशालिनि कर्तर्यतिव्याप्त्यभावेऽप्यपादानेऽतिव्याप्तिः स्यादेव । अतश्च धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्येवाभ्युपगन्तव्यम् । एवं च सति ग्रामं गच्छतीत्यादिसकर्मकेषु गमनजन्यसंयोगादाविष्टानुरोधेन धात्वर्थतावच्छेदकत्वेऽभ्युपगतेऽपि वृक्षात्पततीत्याद्यकर्मकेषु पतनादिजन्यविभागादौ तदवच्छेदकत्वाकल्पनान्नापादानेऽतिव्याप्तिः, न वा—ग्रामं गच्छतीत्यादौ कर्तर्यतिव्याप्तिः, संयोगादिफलजनकीभूतधात्वर्थस्य परसमवेतत्वविशेषणात्कर्मत्वेनाभिमतं यत्तद्भिन्नस्य परशब्देनात्र विवक्षितत्वादित्याहुः । तदप्येतेन प्रत्युक्तम् । ग्रामं गमयति देवदत्तमित्यादौ गन्तर्यव्याप्तेः । णिजर्थप्रेरणाजन्यप्रयोज्यव्यापारे गमनादौ धात्वर्थतावच्छेदकत्वाभावात् । तत्त्वाभ्युपगमे तु देवदत्तेन पाचयतीत्यादौ प्रयोज्यकर्तर्यतिव्याप्तेः । 'गतिबुद्धि—७७९' इत्यादिशास्त्राभ्युपगमं विना क्वचित् प्रयोज्यकर्तरि कर्मत्वं, क्वचित्तु कर्तृत्वमिति निर्धारयितुमशक्यत्वात् । 'हृक्रोरन्यतरस्याम् ७८९' इति शास्त्रमन्तरेण हारयति कारयति वा कटं भृत्येन भृत्यमित्यत्र वैकल्पिककर्मत्वस्य दुरुपपादत्वाच्च । एतादृशेषु वैयाकरणोक्त्यैव निर्वाह इति चेत् । तर्हि 'आकडारादेका संज्ञा २२३' 'या पराऽनवकाशा च' इत्युक्तत्वान्निरवकाशया अपादानसंज्ञया सावकाशायाः कर्मसंज्ञाया बाधान्नोक्तातिव्याप्तिरिति किमनेन धात्वर्थतावच्छेदकेत्यादिपरिश्रमेण । स्यादेतत् , 'आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना' इत्यादिप्रयोगाः कथं संगच्छन्ते, एकस्यैव वस्तुनो युगपदेकक्रियानिरूपितकर्तृत्वकर्मत्वादेरसंभवात्, परया कर्तृसंज्ञया कर्मकरणादिसंज्ञाया बाधात् । नैष दोषः, अहंकाराद्युपाधिभेदेनात्मनोऽपि भेदमाश्रित्य 'आत्मानमात्मना हन्ति' इत्यादिप्रयोगस्याकरे समर्थितत्वात् ॥ ननु 'साधकं करणम्' इत्येवास्तु, कारकाधिकारादिह कारकमिति वर्तते, साधकं कारकं हि पर्यायः, तथा चोभयोपादानेन प्रकर्षो लभ्यत इत्याशयेन पृच्छति—**तमब्ग्रहणं किमिति** ॥ इतरस्तु कारकप्रकरणे गौणमुख्यन्याय

---

१ **तमब्ग्रेति** । करणमिति महासंज्ञया 'क्रियतेऽनेन' इत्यन्वर्थत्वबोधनेन क्रियासिद्धिसाधकस्यैव करणसंज्ञासिद्धौ साधकपदमेव साधकतमार्थं भविष्यतीति किं तमब्ग्रहणेनेत्यर्थः प्रश्नग्रन्थस्य ॥ २ उक्तरीत्या व्यर्थं सत् तमब्ग्रहणम् 'अस्मिन् कारकाधिकारे शब्दसामर्थ्यगम्यस्तरतमयोगो न भवति' इति ज्ञापयति । तत्फलमाह—गङ्गायामिति । अन्यथा तुल्यन्यायेन 'अधिकरणम्' इत्यपि महासंज्ञया ' अधिक्रियतेऽस्मिन् ' इत्यन्वर्थत्वेनैव आधारलाभे आधारपदमप्याधारतमार्थं भविष्यति । तथा च—'सर्वावयवव्याप्त्या य आधारस्तस्याधिकरणसंज्ञाप्राप्तौ 'तिलेषु तैलम्, दधनि सर्पिः, सर्वस्मिन्नात्माऽस्ति' इत्यादावेवाधिकरणसंज्ञा स्यात्, न तु 'गङ्गायां घोषः, गङ्गायां गावः, कटे आस्ते ' इत्यादाविति । एवं प्रकृतेऽपि साधकमात्रस्यैव करणसंज्ञा स्यादिति तद्वारणाय तमब्ग्रहणमावश्यकमिति स्वांशे चारितार्थ्यमिति भावः ॥ इति प्रकृतसूत्रे भाष्ये स्पष्टम् ॥ 'स्वरितेनाधिकारः इत्यत्र भाष्ये तु—'स्वरितेन अधिकं कार्यं भवति ' इत्यर्थं दर्शयित्वा 'अधिकरणमाचार्यः किं न्याय्यं मन्यते । यत्र कृत्स्न आधारात्मा व्याप्तो भवति । तेनेहैव स्यात्—'तिलेषु तैलम्, दध्नि सर्पिः' इति । 'गङ्गायां गावः, कूपे गर्गकुलम् ' इत्यत्र न स्यात् । स्वरितेनाधिकं कार्यं भवति इत्यत्रापि सिद्धं भवति ' इत्युक्तम् । एवञ्च ' गङ्गायां गावः ' इत्यत्राव्यापकेऽप्यधिकरणसंज्ञावद् व्यवहितकार्यसाधकेऽपि करणसंज्ञापत्तिवारणाय तमब्ग्रहणमावश्यकम् इति ध्वनितम् ॥ ३ **धारणादीति** । आदिना आपाकसमाप्ति धारणमिति शब्दरत्ने ॥ ४ **अवयववि-भागादीति** । अवयवविभागोऽत्र श्लथीभवनं मृदुश्लक्ष्णीभवनम् । आदिना रोटिकादाववयवमेलनम् ॥ ५ **अहङ्का-रेति** । तथा चोक्तं हरिणा—"एकस्य बुद्ध्यवस्थाभिर्भेदेन परिकल्पने । कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते ॥" इति । बुद्ध्यवस्थाभिः बुद्धिकल्पिताभिरवस्थाभिरित्यर्थः ॥

**करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली ॥ (८१५) वा॰ प्रकृत्यादिभ्य उपसंख्यानम्। प्रकृत्या चारुः।**

---

एतत्सूत्रादन्यत्र न प्रवर्तत इति ज्ञापनाय तमब्ग्रहणमित्याशयेन ज्ञापनफलमुदाहरति—**गङ्गायां घोष इति**। उक्तज्ञापनानङ्गीकारे त्विहाधिकरणसंज्ञा न स्यात्। तिलेषु तैलं, दधनि सर्पिरित्यादौ मुख्याधारे तस्याश्वरितार्थत्वादिति भावः ॥ अत्र व्याचख्युः—यदा च तीरधर्म आधारत्वं सामीप्यात् प्रवाहे उपचर्यते तदेदं प्रयोजनं, यदा तु गङ्गाशब्द एव तीरे वर्तते तदा तु न प्रयोजनं, तीरस्य मुख्याधारत्वात्। तत्राद्यपक्षे विभक्तिर्लाक्षणिकी, द्वितीये तु प्रकृतिर्लाक्षणिकीत्यादि ॥ **रामेणेति**। यद्यपि विभक्त्युपस्थितानां कारकाणां क्रियां प्रति विशेषणतैव, तथापि कृदुपस्थितानां विशेष्यतैव, 'सत्त्वप्रधानानि नामानि' इत्युक्तेः। धातूपस्थाप्ययोः फलव्यापारयोर्हन्यत इत्यादिकर्माख्यातसमभिव्याहारे विशेषणविशेष्यभावव्यत्यासाभावेऽपि[2] हत इत्यादिकर्मकृत्समभिव्याहारे व्यत्यासोऽस्त्येव। तथा च रामनिष्ठो यो व्यापारो धनुराकर्षणादिस्तद्विषयीभूतो यो बाणव्यापारः शरीरभेदनादिस्तत्साध्यप्राणवियोगाश्रयो वालीति वाक्यार्थः। वालिनं हन्ति, वाली हन्यत, इत्यादौ तु वालिनिष्ठप्राणवियोगानुकूलो यः शरीरभेदनादिर्बाणव्यापारस्तद्विषयको रामनिष्ठधनुराकर्षणादिर्व्यापार[3] इत्यर्थो बोध्यः॥ अत्रेदमवधेयम्—"फलव्यापारयोर्धातुराश्रये तु तिङः स्मृतः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥" इह धातुः स्मृत[4] इत्यन्वयः। वाचकत्वेनेति शेषः। 'आश्रये तु तिङः' इत्यत्र विभक्तिविपरिणामेन स्मृता इति संबध्यते। वाचकत्वेनेति पूर्ववत्। तिङ इत्युपलक्षणं[6] द्वितीया ( तृतीया ) दीनामपि केषांचिदाश्रयमात्रार्थकत्वात् ॥ नन्वेवमाधारार्थकत्वे द्वितीयातृतीयासप्तमीनां साङ्कर्यं स्यात्। मैवम्, निरूपकभेदेनाधारभेदात् फलनिरूपिताधारभेदो द्वितीयार्थः। व्यापारनिरूपितस्तु[7] तृतीयार्थः। स्वाश्रयद्वारा व्यापारनिरूपितः फलनिरूपितश्च सप्तम्यर्थ इति ह्यभ्युपगम्यते। फले प्रधानमिति। एतच्च प्रायिकम्, कर्मकृत्समभिव्याहारे तु व्यत्यासोऽस्त्येवेति उक्तत्वात्। 'हरिं भजति देवदत्तः' इत्यादौ तु व्यापारस्य प्राधान्यमस्त्येव। प्रकृतिप्रत्ययार्थयोर्हर्याधारयोर्देवदत्ततिङ्वाच्याधारयोश्चाभेद इह संसर्गः। तथा च हर्याधारिका या प्रीतिस्तदनुकूल एकदेवदत्ताधारको वर्तमानो यो व्यापार इति वाक्यार्थः। न चाधारतैव वाच्येति मन्तव्यम्, तन्निष्ठधर्मस्याधारत्वस्य वाच्यतावच्छेदकत्वापत्त्याऽतिगौरवात्। 'कर्मणि द्वितीया ७७१' इत्यादिसूत्रस्वरसभङ्गापत्तेश्च[8]। अत एव भाष्यकारोऽप्याह—'सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्' इति। अनभिहिते किम्, हरिः करोति। पाचकः। कर्तरि ण्वुल्। शाब्दिकः। 'शब्ददर्दुरं करोति २१७०' इति ठक्। कृतं विश्वं येन कृतविश्वः, विश्वकर्मककृत्याश्रय इत्यर्थः। जीवन्त्यनेन जीवनः। करणे ल्युट् ॥ (८१५) **प्रकृत्यादिभ्य इति**। आकृतिगणोऽयम्। तेन 'नाम्ना सुतीक्ष्णश्चरितेन दान्तः' इत्यादि सिद्धम् ॥ **चारुरिति**। अभिरूप इत्यर्थः। क्रियाया अश्रवणात् कर्तृकरणयोरभावात् षष्ठीह प्राप्ता। एतच्च गम्यमानकरोतिक्रियाकरणत्वात्सिद्धं, करणान्तरव्युदासाय हि प्रकृतेरेव करणत्वं

---

१ **प्रकृत्येति**। प्रकृतिर्यावदाश्रयभावी धर्मविशेषः। तथा च—यावदाश्रयभाविधर्मविशेषसंबन्धिचारुत्ववानिति बोधः ॥ २ **व्यत्यासाभावेऽपीति**। इदं च 'सर्वत्र फलानुकूलव्यापारे धातोः शक्तिः। कर्माख्यातस्थलेऽपि व्यापारप्रधान एव शाब्दबोधः' इति 'भावक्रियापदयोर्व्यापारार्थकतैव' इति च वदतां प्राचां मतेन। नव्यास्तु—फलजनकव्यापारे व्यापारजन्यफले च धातूनां शक्तिः। कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामकः। प्राचां तु—कर्माख्याते कर्तृप्रत्ययतुल्यत्वम्, कर्मकृति न, एकस्मिन्नेवार्थे वैलक्षण्यापत्तिः। 'भावक्रियापदयोर्धात्वर्थमात्रपरत्वम्' इति वदतां नव्यानां कर्मकृतीव कर्माख्यातेऽपि व्यापारजन्यफलमेव धात्वर्थ इति न वैलक्षण्यापत्तिदोषः ॥ ३ **व्यापार इति**। इदं प्राचां मतेन। 'कर्मप्रत्ययसमभिव्याहारे व्यापारजन्यफलार्थकता धातूनाम्' इति वदतां नव्यानां मते तु 'रामनिष्ठधनुराकर्षणादिव्यापारसाध्यो बाणनिष्ठशरीरभेदनादिव्यापारजन्यो वालिप्राणवियोगः' इत्येव वाली हन्यत इत्यतो बोध इति बोध्यम् ॥ ४ **स्मृत इत्यन्वय इति**। भूषणे तु 'स्मृताः' इति बहुवचनान्तमुपलभ्यते। युज्यते चैतत्, बहुवचनान्तस्यैव तिङः इत्यस्य संनिहितत्वात्। तथा च धातुः इत्यत्र वचनविपरिणामेनान्वय उक्त इति बोध्यम् ॥ ५ **आश्रये त्विति**। यद्यपि 'लः कर्मणि च—' इति सूत्रेण व्यापाराश्रये कर्तरि फलाश्रये कर्मणि शक्तिर्दर्शिता, तथापि व्यापारस्य फलस्य च धात्वर्थत्वेनान्यलभ्यत्वादनन्यलभ्यस्याश्रयस्यैव परिशेषात्तिङर्थत्वमिति भावः ॥ कर्तृत्वेन कर्मत्वेनैव बोधसंपादकशक्तिग्राहकं सूत्रमिति तत्त्वम् ॥ ६ **उपलक्षणमिति**। तिङन्तार्थबोधप्रक्रियाबोधकेऽत्र पद्ये द्वितीयादिविभक्तीनामप्रकृतत्वात् 'आश्रयोऽवधिरुद्देश्यः' इति सुबर्थनिर्णये वक्ष्यमाणत्वाच्च चिन्त्यमिदमिति बोध्यम् ॥ ७ **व्यापारेति**। स्वेच्छाधीनप्रवृत्तिरूपव्यापारनिरूपितः कर्तृतृतीयार्थः। स्वाव्यवधानफलजनकव्यापारनिरूपितः करणतृतीयार्थ इत्यवसेयम् ॥ ८ **स्वरसेति**। सूत्रभाष्यस्वरसस्तु—कर्मत्वादिना कर्मादीनां वाच्यतया शाब्दबोधे भानमित्येव विनाऽऽयासं लभ्यते। तथा च—'हर्यभिन्नैककर्मकप्रीत्यनुकूलो देवदत्ताभिन्नैककर्तृको वर्तमानकालको व्यापारः' इति 'हरिं भजति देवदत्तः' इत्यतो बोधः। 'देवदत्ताभिन्नैककर्तृकवर्तमानकालकव्यापारजन्या हर्यभिन्नैककर्मिका प्रीतिः' इति 'हरिर्भज्यते देवदत्तेन' इत्यतो बोधः इति बोध्यम् ॥

प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । सुखेन दुःखेन वा यातीत्यादि ॥ ( ८१६ ) ॐ दिवः कर्म च । १ । ४ । ४३ । दिवः साधकतमं कारकं कर्मसंज्ञं स्याच्चात्करणसंज्ञम् । अक्षैरक्षान्वा दीव्यति ॥ ( ८१७ ) ॐ अपवर्गे तृतीया । २ । ३ । ६ । अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वाऽनुवाकोऽधीतः । अपवर्गे किम् । मासमधीतो नायातः ॥ ( ८१८ ) ॐ सहयुक्तेऽप्रधाने । २ । ३ । १९ । सहार्थेन युक्ते अप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता । एवं

---

विवक्षितम् । स्वभावेनायमभिरूपः कृतो न त्वलंकारादिनेत्यर्थात् ॥ **प्रायेण याज्ञिक इति** । एतदपि गम्यमानज्ञानाक्रियां प्रति करणत्वात्सिद्धम् । आचारादिबाहुल्येन याज्ञिकोऽयमिति जनैर्ज्ञायत इत्यर्थात् ॥ **गोत्रेण गार्ग्य इति** । गार्ग्योऽस्य गोत्रमित्यर्थः । प्रथमाऽत्र प्राप्ता, गोत्रेणाहं गार्ग्य इति ज्ञाये इत्यर्थादिहापि तृतीया सिद्धा ॥ **समेनैतीत्यादि** । सममेतीत्याद्यर्थे समविषमाभ्यां कर्मणि द्वितीया प्राप्ता । इहापि तृतीया सिद्धा, पथोऽपि गमने करणत्वाभ्युपगमात् ॥ **द्विद्रोणेनेति** । द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । 'पात्रादित्वात् स्त्रीत्वाभावः । द्रोणद्वयसंबन्धि धान्यामित्यर्थः । इह षष्ठी प्राप्ता । द्विद्रोणपरिमितधान्यार्थे मूल्ये द्विद्रोणशब्दः, तस्य च क्रियां प्रति करणत्वमितीहापि तृतीया सिद्धेति दिक् ॥ **( ८१६ ) चादिति** । करणशब्दानुवृत्त्या 'परिक्रयणे संप्रदानमन्यतरस्याम् ८४२' इत्युत्तरसूत्रस्थान्यतरस्यांग्रहणापकर्षणेन वा संज्ञयोः पर्यायत्वे लब्धे चग्रहणं समुच्चयार्थम् । तेन मनसा दीव्यतीति मनसादेव इत्यत्र कर्मण्यण् करणे तृतीया चोभयं युगपत्सिध्यति । 'मनसः संज्ञायाम् १३८०' इत्यलुक् । किंचै अक्षैर्देवयते देवदत्तो यज्ञदत्तेनेत्यत्र सकर्मत्वाद् अणिकर्तुर्णौ 'गतिबुद्धि–७७९' इत्यनेन कर्मत्वं न, 'अणावकर्मका–३६७७' इति परस्मैपदमपि न भवति । ननु कर्मकरणसंज्ञासमावेशस्य मनसादेव इत्यत्र कृतार्थत्वादक्षान्दीव्यतीत्यत्र परत्वात्तृतीयैव स्यान्न तु द्वितीयेति चेत् । अत्राहुः—कार्यकालपक्षे 'कर्मणि द्वितीया ७७१' इत्यत्र यदस्योपस्थानं तस्यानवकाशत्वाद् द्वितीयेति । स्यादेतत्, 'दीव्यन्ते अक्षाः' इत्यत्राभिहितेऽपि कर्मणि करणत्वस्यानभिधानात्तृतीया स्यात्, तथा 'देवना अक्षाः' इत्यत्र ल्युटा करणत्वस्याभिधानेऽपि कर्मणोऽनभिधानाद् द्वितीया स्यात् । मैवम्, एकैवँ ह्यत्र शक्तिः संज्ञाद्वययोगिनी, तथा चैकस्यां शक्तावभिहितायामन्यस्या अप्यभिधानादुभयत्राप्यभिधानमेव, न त्वनभिहितत्वम् ॥ **( ८१८ ) सहयुक्ते—** । 'सहेनाप्रधाने' इत्येव वाच्ये युक्तग्रहणादर्थग्रहणमित्याह—**सहार्थेनेति** । सहार्थकशब्देन सहसाकंसार्धमित्यनेनेत्यर्थः ॥ **पुत्रेणेति** । पितुरेवागमनक्रियासंबन्धः शाब्दः पुत्रस्य त्वार्थ इत्येतावतैव तस्याप्राधान्यमुच्यते ॥

---

१ **प्रायेणेति** । बह्वाचारज्ञाप्ययाज्ञिकत्ववानिति बोधः । यद्वा—प्रायशब्दः संभावनार्थः । संभावनाविषययाज्ञिकत्ववानिति बोधः । प्रायेण याज्ञिका इत्यत्र तु बहवो याज्ञिका इति बोधः ॥ २ **फलप्राप्तिरिति** । तस्यां सत्यां प्रयोजनाभावादेव न क्रियाप्रवृत्तिरिति फलप्राप्तिशब्देन तत्पूर्वकस्त्याग उच्यते ॥ ३ **अह्ना क्रोशेन वेति** । तृतीयार्थः संबन्धः । क्तप्रत्ययार्थातीतत्वयङ्गये क्रियात्यागे फलप्राप्तिपूर्वकत्वं च तृतीयाद्योत्यम् । एवञ्च–'अनुवाकविषयकमहःसंबन्धि अतीतमध्ययनम्'–इति बोधः ॥ ४ **नायात इति** । अनेन फलप्राप्त्यभावः स्फुटमुच्यते ॥ ५ **पुत्रेणेति** । एकमेव द्रव्यगुणक्रियापदं 'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्' इति काव्यप्रकाशानुसारेण अप्रधाने आक्षेपेण प्रधाने वाचकत्वेनेति द्विः स्वार्थं विशेष्यतयाऽन्वयायोपस्थापयति । तृतीयार्थश्च क्रियासमभिव्याहारे समभिव्याहृतपदार्थसमानकालिकत्वरूपसाहित्यरूपसहार्थबलात् प्रतीयमानतत्तत्क्रियाकर्तृत्वादिकमेव, द्रव्यगुणसमभिव्याहारे तु प्रतीयमानस्तत्तत्पदार्थसंबन्ध एव । एवञ्च 'पुत्रेण सहागतः' इत्यादौ 'पुत्रकर्तृकागमनसमानकालिकागमनवान् पिता' इति, 'पुत्रेण सह पितुर्गौः' इत्यादौ 'पुत्रस्वामिकत्वसमानकालिकपितृस्वामिकत्ववती गौः' इति, 'पुत्रेण सह पिता स्थूलः' इत्यादौ 'पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवान् पिता' इति रीत्या बोधः । क्वचित्तु–समानदेशत्वरूपं साहित्यं तदर्थः । यथा माषवापाय परिष्कृते क्षेत्र एव माषवापानन्तरं 'यदि भविष्यति भविष्यति' इत्यनास्थया प्राक् पश्चाद्वा तिलवापेऽपि 'तिलैः सह माषान् वपति' इत्यत्र तृतीयायां 'तिलकर्मकवापसमानदेशो माषकर्मको वापः' इति बोधः ॥ ६ ननु मनसादेव इत्यसंगतम्, कृद्योगलक्षणषष्ठीप्राप्तेः । न च कर्तृसाहचर्यान्मुख्यव्यवहारेण धात्वर्थाश्रयस्यैव कर्मणो ग्रहणम् । अतः 'स्तोकं पाकः' इत्यादौ षष्ठी नेति वाच्यम्, धात्वर्थे भेदेनान्वयिकर्मग्रहणेनैव तदुपपत्तावत्राप्रवृत्तौ मानाभावात् । अतोऽत्र हेतुतृतीयैवाङ्गीकरणीयेति नैतत् समुच्चयफलमित्यभिप्रेत्याह–किंचेति ॥ ७ **एकैवेति** । दिव्धात्वर्थनिरूपितसाधकतमत्वशक्तिरित्यर्थः । आश्रयत्वशक्तिरित्यर्थस्तु चिन्त्य एव कर्मादिपदानां कर्मत्वादितत्तच्छक्तिरूपेण बोधकतया भेदस्यैवौचित्यादित्यन्यत्र विस्तरः ॥ ८ **न त्विति** । अत एव 'अपादानमुत्तराणि' इति द्वयोरपि विवक्षायां कर्मसंज्ञायां जातायां 'गौर्दुह्यते पयः' इत्यत्र कर्मणि लकारे अपादानस्यानभिहितत्वेन पञ्चमीवारणं भवति ॥ ९ **युक्तग्रहणादिति** । 'वृद्धो यूना–' इत्यादिनिर्देशैः 'सहप्रयोगमन्तरेणापि सहार्थप्रतीतौ तृतीया' इति ज्ञापनरूपाद् व्याख्यानादिति बोध्यम् । युक्तग्रहणेनार्थग्रहणमिति तु चिन्त्यमेव तथा सति 'कर्मप्रवचनीय–' 'अन्तरान्तरेण–' इत्यत्रापि तथापत्तिः । अत एव 'अन्याराद्–' इत्यत्रेतरग्रहणं चरितार्थम् ॥

साकंसार्धंसमंयोगेऽपि । ( ८१९ ) विनाऽपि तद्योगं तृतीया, 'वृद्धो यूनेत्यादिनिर्देशात् ॥ ( ८२० ) (सू) येनाङ्गविकारः ।२।३।२०। येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् । अक्ष्णा काणः । अक्षिसंबन्धिकाणत्वविशिष्ट इत्यर्थः । अङ्गविकारः किम् । अक्षि काणमस्य ॥ ( ८२१ ) (सू) इत्थंभूतलक्षणे । २ । ३ । २१। कंचित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ॥ ( ८२२ ) (सू) संज्ञोऽन्यतरस्यां कर्मणि ।२।३।२२। संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा संजानीते ॥ ( ८२३ ) (सू) हेतौ ।२।३।२३। हेत्वर्थे तृतीया स्यात् । द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम् । करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च । दण्डेन घटः । पुण्येन दृष्टो हरिः । ( ८२४ ) फलमपीह हेतुः । अध्ययनेन वसति ।

---

अप्रधानग्रहणं त्यक्तुं शक्यम् । न चैवं पितुरपि तृतीयापत्तिः, तत्र प्रातिपदिकार्थमात्रे अन्तरङ्गत्वात्प्रथमोपपत्तेः । न च यत्र प्रथमा न प्राप्नोति पुत्रेण सह पितुरागमनमित्यादौ तत्र प्रधानात् पितुरपि तृतीया स्यादतस्तद्वारणायाप्रधानग्रहणमावश्यकमिति वाच्यम्, कारकविभक्तेर्बलीयस्त्वात् 'कर्तृकर्मणोः कृति ९०७' इति षष्ठ्या एव तत्र प्रवृत्तेरिति दिक् ॥ (८२०) **येनाङ्गेति**—। येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयव एव गृह्यते, संनिधानात् । स चार्थाद्विकृत एव । न ह्यविकृतेनावयवेन शरीरस्य विकारः संभवति तदेतदाह—**येनाङ्गेन विकृतेनेति** ॥ **अङ्गिन इति** । सूत्रेऽङ्गशब्दः अर्शआद्यजन्त इति भावः॥ ( ८२१ ) जटानामित्थंभूतलक्षणत्वमुपपादयति—**जटाज्ञाप्येति** । जटाभिर्ज्ञाप्यं यत्तापसत्वं तद्विशिष्ट इत्यर्थः ॥ ( ८२२ ) **संज्ञो**—। 'ज्ञा अवबोधने' इत्ययमेव गृह्यते न तु 'जनी प्रादुर्भावे' इति, तस्याकर्मकत्वात् । ङसः प्राग्भागस्य ज्ञ इत्यस्य 'अल्लोपोऽनः ३३५' इत्यल्लोपेन निष्पन्नतया लाक्षणिकत्वाच्चेत्याशयेनाह—**जानातेरिति** ॥ **संजानीत इति** । 'संप्रतिभ्यामनाध्याने ३६४०' इति तङ् । कृद्योगे परत्वात् 'कर्तृकर्मणोः–९०७' इति षष्ठ्येव, पितुः संज्ञाता । आध्याने तु पित्रा पितरं वा संजानाति ॥ हरदत्तस्त्वाह—आध्याने तु परत्वात् 'अधीगर्थ–८९६' इति षष्ठी मातुः संजानातीति । तन्न, तत्र शेषाधिकारादिति मनोरमायां स्थितम् ॥ ( ८२३ ) **हेतौ** ॥ हेतुरिह लौकिकः फलसाधनीभूतो गृह्यते न तु 'तत्प्रयोजको हेतुश्च ३४२५' इति कृत्रिमः, तस्य चकारेण कर्तृसंज्ञाविधानात् कर्तृत्वादेव तृतीयासिद्धेरत आह—**हेत्वर्थ इत्यादि** । ननु लौकिकहेतोरपि करणत्वादेव तृतीयासिद्धौ किमनेनेत्याशङ्क्य हेतुत्वकरणत्वयोर्भेदमाह—**द्रव्यादीति** । आदिशब्देन गुणक्रिये ग्राह्ये । द्रव्यगुणक्रियानिरूपितं निर्व्यापारसव्यापारवृत्ति च यत्तद्धेतुत्वमित्यर्थः ॥ **करणत्वं त्विति** । क्रियामात्रनिरूपितं व्यापारवद्वृत्ति च यत्तत्करणत्वमित्यर्थः । एवं च हेतुकरणयोर्भेदादन्यतरेणान्यस्यान्यथासिद्धिर्न शङ्क्येति भावः ॥ उक्तं च—"द्रव्यादिविषयो हेतुः कारकं नियतक्रियम् । अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते ॥" इति । द्रव्यविषये हेतुत्वमुदाहरति—**दण्डेन घट इति** । दण्डहेतुको घट इत्यर्थः । अत्र हि व्यापारोऽस्तु वा माऽस्तु साक्षात् क्रियान्वयित्वाभावात् करणत्वं नास्तीति भावः ॥ क्रियाविषये उदाहरणमाह—**पुण्येन दृष्ट इति** । पुण्यशब्देनेह परमापूर्वमुच्यते, तस्य च हरिदर्शनरूपक्रियान्वयित्वसंभवेऽपि व्यापारवत्त्वाभावान्न करणत्वमिति भावः । यदा तु यागादिकमेव पुण्यशब्देन विवक्ष्यते, तदा तस्य व्यापारवत्त्वमस्त्येवेति 'कर्तृकरणयोः–८१४' इत्यनेनैव तृतीया सिद्धा । गुणविषये तु पुण्येन गौरवर्ण इत्याद्युदाहार्यम् । जटाभिस्तापस इत्यादौ तु लक्ष्यलक्षणभावविवक्षायां हेतुत्वाविवक्षणादनेनाऽप्राप्ता तृतीयेति 'इत्थंभूतलक्षणे ८२१' इत्यारब्धमित्याहुः ॥ अत्र केचिदुत्प्रेक्षन्ते—द्रव्यादिसाधारणत्वाद् हेतुत्वस्य 'हेतौ ८२३' इत्यनेनैव बाणेन हत इत्यादिप्रयोगासिद्धेः 'कर्तृकरणयोः–८१४' इति सूत्रे

---

१ **अक्ष्णा काण इति** । यद्यपि लेशतोऽपि दर्शनसामर्थ्यहीनत्वस्यैव काणत्वेन काणशब्दोऽक्षिगतविकारवाचक एव तथापि द्वौ ब्राह्मणावितिवदक्ष्णेति प्रयोगस्य साधुत्वम् । अवयवधर्मस्य काणत्वस्य समुदाय आरोपाच्छरीरे तदवच्छिन्ने च व्यवहारो निरूढ इति बोध्यम् ॥ 'गोलकविकारप्रयुक्तदर्शनसामर्थ्यहीनः पुरुषः' इति बोधः ॥ २ **अङ्गविकारः किमिति** । अर्शआद्यजन्ताङ्गशब्दप्रयोजनप्रश्नः ॥ ३ **इत्थंभूतेति** । इत्थंशब्दः प्रकारमात्रवाची । प्राप्त्यर्थाद्भुवः कर्तरि क्तः, कर्मषष्ठ्यन्तेनेत्थंशब्देन भूतशब्दस्य समासः । लक्षणशब्दः करणसाधनः, तस्य कर्मषष्ठ्यन्तेनेत्थंभूतशब्देन समासः । अत्रेदं बोध्यम्—यत्र लक्षणभूतस्य प्रकारं प्राप्तात्पृथगुपस्थितिस्तत्रैव तृतीया, न तु बहुव्रीह्यादिना तत्समानाधिकरणविशेषणे । तेन कमण्डलुपाणिं छात्रं पश्यतीत्यादौ लक्षणस्य कमण्डलुपाणिपदस्य बहुव्रीहिणा छात्रत्वविशिष्टवाचकच्छात्रपदेन समानाधिकरणत्वान्न तृतीयेति । करणत्वाविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थमिदमिति भावः ॥ ४ **त्यक्तुमिति** । 'पुत्रेण सह स्थूलः, पुत्रेण सह पिङ्गलः' इत्यादौ मुख्योदाहरणे स्थूलत्वादिगुणसंबन्धपरत्वात् श्रूयमाणक्रियाभावात् पुत्रस्य कर्तृत्वाभावेऽपि तृतीयार्थमावश्यकमिति चिन्त्यमिति केचित् ॥ विशेषणविशेष्यभावस्थले 'कटं भीष्मं कुरु' इत्यत्रेव प्रथमार्थं स्थूलस्य पितुश्चाध्याहृतक्रियान्वयमाश्रित्य कारकत्वमङ्गीकरणीयमेवेति परे ॥ ५ **लाक्षणिकत्वादिति** । 'ज्ञः' इति भागस्य ज्ञाधातोरपि 'आतो धातोः' इति लोपनिष्पन्नत्वेन लाक्षणिकत्वाविशेषाच्चिन्त्यमिदमिति बोध्यम् ॥

(८२५)गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका । अलं श्रमेण । श्रमेण साध्यं नास्तीत्यर्थः।इह साधनक्रियां प्रति श्रमः करणम् । शतेन शतेन वत्सान्पाययति पयः । शतेन परिच्छिद्येत्यर्थः ॥ (८२६) (वा॰) **अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया** ॥ दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति ॥ (८२७) (सू॰) **कर्मणा यमभिप्रैति स संप्रदानम्** ।१।४।३२। दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः स्यात्॥ (८२८) (सू॰) **चतुर्थी संप्रदाने।**

---

करणग्रहणं त्यक्तुं शक्यम् , करणसंज्ञा तु आवश्यकी 'करणाधिकरणयोश्च ५१०९' इत्याद्यर्थमिति ॥ अन्ये तु-क्रियासाधकतमं यत्तद्व्यापारवत्त्वेन विवक्षितं चेत् करणं, नो चेद्धेतुः । द्रव्यसाधकतमस्य दण्डादेस्तु व्यापारवत्त्वेऽपि हेतुत्वमेव । एवं च रामेण बाणेन हत इत्यादौ हनने बाणादिर्निमित्तमित्येतावदेव यदा विवक्ष्यते, तदा 'हेतौ ८२३' इत्यनेनैव तृतीया । 'बाणव्यापारसाध्यप्राणवियोगाश्रयः' इत्येवं व्यापाराविष्टत्वेन विवक्षायां तु हेतुत्वाविवक्षणात् 'कर्तृकरणयोः-८१४' इति करणे तृतीया आरब्धेत्याहुः ॥ ( ८२४ ) **फलमपीति** । एतच्च 'प्रत्ययः' इति सूत्रे कैयटे स्पष्टम् ॥ **अध्ययनेनेति** । तादर्थ्याविवक्षायां चतुर्थ्यपि भवतीति चतुर्थ्या सहेयं तृतीया विकल्प्यते । अध्ययनाय वसति ॥ अत्र केचित् परिष्कुर्वन्ति-अध्ययनेन वसतीत्यत्र दण्डहेतुको घट इतिवदध्ययनहेतुको निवास इत्यर्थस्वीकारेऽप्ययं विशेषः । अध्ययनस्य फलेन सहाभेदः संसर्गः, उपकारकत्वेन सह निरूपकता । ततश्च 'फलाभिन्नाध्ययननिरूपितोपकारकत्वाश्रयानिवसनानुकूलो व्यापारः' इत्यर्थः । 'दण्डेन घटः' इत्यत्र तु 'दण्डानिष्ठोपकारकत्वनिरूपितोपकार्यत्वाश्रयो घटः' इत्यर्थः । उपकार्यं हि साध्यम् । फलमपि तदेवेति ॥ ( ८२५ ) **गम्यमानाऽपीति** । अपिशब्देन श्रूयमाणाक्रिया समुच्चीयते । न केवलं श्रूयमाणैव क्रिया विभक्तौ प्रयोजिका, किन्तु गम्यमानाऽपीति भावः ॥ **साधनेति** । साध्यामित्यत्र प्रकृतिभूतो यो धातुस्तदर्थं प्रतीति भावः॥ (८२६) **अशिष्टेति** । एतच्च 'दाणश्च सा चेच्चतुर्थ्यर्थे ३६४९' इत्यनेन ज्ञाप्यत इति मनोरमायां स्थितम् ॥ केचिदिह परिष्कुर्वन्ति-'अशिष्टव्यवहार इत्यंशो वाचनिक एव । अन्यांशस्तु ज्ञापकासिद्धः' इति ॥ **दास्या संयच्छते इति** । 'दाणश्च सा चेत्-३६४९' इति तङ् । 'पाघ्राध्मा-३१५३' इति यच्छादेशः ॥ **कामुक इति** । 'लषपतपद-४१५५' इत्यादिना कमेरुकञ् ॥ इति तृतीया ॥

( ८२७ ) **कर्मणा**—। महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थम् । सम्यक् प्रदीयतेऽस्मै तत्संप्रदानमिति । अत एवाह—**दानस्येति** । दानक्रियाकर्मणा कर्ता यमभिप्रैति संबध्नाति संबन्धुमीप्सति वा तत् कारकं संप्रदानसंज्ञकमित्यर्थः । तेन 'अजां नयति ग्रामम् , हस्तं निदधाति वृक्षे' इत्यादौ नातिप्रसङ्गः । दानं चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनम् । अत एव रजकस्य वस्त्रं ददातीत्यादौ न भवति, तत्र हि ददातिर्भाक्तः । एतच्च वृत्तिमतम् ॥ भाष्यमते तु-नान्वर्थताया-माग्रहः 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इत्यादिप्रयोगात् । रजकस्य ददातीति प्रयोगस्तु शेषत्वविवक्षायां भविष्यति। न चैवमजां नयति ग्राममित्यादावतिप्रसङ्गः शङ्क्यः, अजां प्रति ग्रामस्य शेषित्वाभावात् । यमभिप्रैतीत्युक्त्या हि यमिति निर्दि-

---

१ **गम्यमानेति** । वाक्येषु वाक्यैकदेशप्रयोगाङ्गीकारासिद्धामिति 'अलं श्रमेण' इत्यतो हि-अलमित्यस्य निषेधार्थकत्वे तत्प्रतियोगिभूता योग्यतया साधनक्रिया गम्यते । तत्र करणतया श्रमेणेति तृतीयेति 'श्रमेण साध्यं नास्ति' इति फलितमिति भावः ॥ २ **साधनेति** । योग्यतयाऽध्याह्रियमाणामित्यादिः ॥ ३ **अशिष्टेति** । अशिष्टानां निषिद्धाचरणानां व्यवहारे दर्शनीये प्रत्यासत्त्या यत्संबन्धेन व्यवहारे संकीर्णाचारत्वं तद्वाचकादित्यर्थः फलितः ॥ ४ **दास्येति** । दासीसंप्रदानकं रतिफलकं दानमिति बोधः ॥ ५ **संप्रदान इति** । एतत् संप्रदानमनिराकर्तृप्रेरकानुमन्तृभेदात्त्रिविधम् । तथा चोक्तम्-"अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते संप्रदानताम् ॥" इति ॥ तत्राद्यं यथा-'सूर्यायार्घ्यं प्रयच्छति' 'पितृभ्यः पिण्डं दद्यात्' इत्यादि । अत्र स्वत्वे उद्देश्यानिरूपितत्वस्य बाधेऽपि स्वस्वत्वनिवृत्तिपूर्वकपरमापूर्वजननानुकूलवैधसंकल्पादिपूर्वकत्यागरूपदाधात्वर्थकर्मणा संबन्धकरणाय सूर्यादीनां प्रेरकत्वानुमन्तृत्वाभावेऽपि निराकर्तृत्वाभावात्प्रथमं संप्रदानत्वम् । प्रतिग्रहोऽपि प्रेरणानुमतिभ्यामदृष्टार्थदत्तस्वीकार एव गुणदोषाधायकः, अत एव पारितोषिकदत्ततिलतुरगादिस्वीकारेऽपि न दोषः । "दूरस्थं पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् । दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक् ॥" इति च संगच्छते ॥ प्रेरकम्-याचकाय गां ददाति । अनुमन्तृ-उपाध्यायाय गां ददाति-इति ॥ ६ **तेनेति** । 'दाधात्वर्थकर्मणा' इत्यर्थाङ्गीकारेणेत्यर्थः । अन्यथा अजाहस्ताभ्यां संबन्धुमीप्सितयोर्ग्रामवृक्षयोः संप्रदानत्वापत्तेरिति भावः ॥ ७ **भाक्त इति** । अधीनीकरणरूपेऽर्थे इत्यादिः ॥ 'न शूद्राय मतिं दद्यात्' इत्यत्र मतिं तज्जनकं शास्त्रं नोपदिशेदित्यर्थ इति भावः ॥ ८ **आग्रह इति** । अत एव 'क्रियाग्रहणं कर्तव्यम्' इति वार्तिकं भाष्ये प्रत्याख्यातम् ॥ ९ **शेषत्वेति** । संप्रदानत्वाविवक्षायामित्यादिः ॥

२।३।१३। विप्राय गां ददाति। अनभिहित इत्येव। दानीयो विप्रः॥ (८२९) वा॰ क्रियया यमभिप्रैति सोऽपि संप्रदानम्॥ पत्ये शेते॥ (८३०) वा॰ कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा॥ पशुना रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः। (८३१) सू॰ रुच्यर्थानां प्रीयमाणः। १।४।३३। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः संप्रदानं स्यात्। हरये रोचते भक्तिः। अ (न्ये) न्यकर्तृकोऽभिलाषो रुचिः। हरिनिष्ठप्रीतेर्भक्तिः कर्त्री। प्रीयमाणः किम्। देवदत्ताय रोचते मोदकः पथि॥ (८३२) सू॰ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः। १।४।३४। एषां प्रयोगे बोधयितुमिष्टः संप्रदानं स्यात्। गोपी स्मरात्कृष्णाय

---

द्दस्य शेषित्वं कर्मणश्च शेषत्वं लभ्यते, गां प्रति तु विप्रस्य शेषित्वमस्तीति भवति तस्य संप्रदानसंज्ञा॥ अत्र अभि प्र एतीत्येतत्पदत्रयं, न तु समासः। 'उदात्तवता गतिमता च तिङा गतेः समासो वक्तव्यः' इति वार्तिकस्य छन्दोविषयत्वादिति हरदत्तः। भाषाविषयत्वे तु यत् प्रकुरुते इत्यादौ समासत्वात्सोरुत्पत्तिः स्यात्। लिङ्गसर्वनामनपुंसकतामभ्युपेत्य 'स्वमोर्नपुंसकात् ४४१' इति लुकि कृतेऽपि 'ह्रस्वो नपुंसके-४४०' इति ह्रस्वः स्यात्, यत् प्रकुर्वीरन्नित्यत्र तु नलोपः स्यात्, तस्मादुक्तवार्तिकस्य च्छन्दोविषयत्वं युक्तमेव॥ (८२८) **दानीय इति**। बाहुलकात्संप्रदाने अनीयर्॥ (८२९) **क्रिययेति**। क्रियायाः कृत्रिमकर्मत्वाभावात् तया अभिप्रेयमाणस्य सूत्रेण संज्ञा न प्राप्नोतीति वचनम्। एतच्च 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः-८४७' इत्यनेन सिद्धम्। पत्ये शेते इत्यादौ पतिमनुकूलयितुं शेते इत्याद्यर्थाभ्युपगमे बाधकाभावात्। भाष्यकारमते तु—'कर्मणा यमभिप्रैति-८२७' इति सूत्रेणैव सिद्धम् 'संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियाऽपि कृत्रिमं कर्म' इति तैरुक्तत्वात्। न चैवमपि ददातिकर्मत्वाभावात् 'क्रियया यमभिप्रैति-८२९' इत्येतद्वचनं कर्तव्यमेवेति वाच्यम्, भाष्ये अन्वर्थसंज्ञात्वास्वीकारात्॥ नन्वेवं कटं करोति, ओदनं पचतीत्यादावपि संप्रदानत्वप्रसङ्गस्तथा च वचनद्वयबलात् कर्मसंप्रदानयोः पर्यायत्वे कटाय करोतीत्याद्यनिष्टप्रयोगोऽपि स्यादिति चेत्। अत्राहुः—पत्ये शेते इत्यकर्मकस्थले सावकाशायाः संप्रदानसंज्ञायाः निरवकाशया कर्मसंज्ञया बाधितत्वान्नैवानिष्टप्रसक्तिः। न चैवं 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ-८५५' इति सूत्रमावश्यकमेवेति तत्प्रत्याख्यानं भाष्यस्थं न संगच्छत इति वाच्यम्, भाष्ये तत्प्रत्याख्यानस्य प्रौढिवादमात्रत्वादिति दिक्॥ स्यादेतद्, दानस्य तदर्थत्वात्तादर्थ्ये चतुर्थी सिद्धैव किमनया संप्रदानसंज्ञया। मैवम्, दानक्रियार्थं हि संप्रदानं, न तु दानक्रिया तदर्था। कारकाणां क्रियार्थत्वात्॥ (८३०) **कर्मणः करणसंज्ञेत्यादि**। छान्दसमेतत्। अत एवेदं सुब्व्यत्ययेन सिद्धत्वादिति प्रत्याख्यायते॥ (८३१) **रुच्यर्थानाम्**—। रुचिरर्थो येषां ते रुच्यर्थास्तेषाम्॥ **प्रीयमाण इति**। 'प्रीञ् तर्पणे' अस्मात् कर्मणि लट्॥ **हरये रोचत इति**। हरिं प्रीणयतीत्यर्थः। कर्मसंज्ञायां प्राप्तायां वचनम्। यद्यपि रुचिर्दीप्तावपि पठ्यते, तथापीह दीप्तिर्न विवक्षितेत्याह—**अन्यकर्तृकोऽभिलाष इति**। अत एवादित्यो रोचते दिक्षु इत्यत्र दीप्त्यर्थे संज्ञा न भवति॥ **हरिनिष्ठप्रीतेरिति**। एतेन अन्यकर्तृकत्वमिह प्रीत्याश्रयान्यकर्तृकत्वमित्युक्तं भवति॥ **मोदकः पथीति**। देवदत्तस्यैव प्रीयमाणत्वं न तु पथ इति न तस्य संप्रदानत्वं प्रीयमाणपदाभावे तु पथोऽपि स्यादिति भावः॥ (८३२) **श्लाघह्नुङ्**—। 'श्लाघृ कत्थने' 'ह्नुङ्

---

१ **विप्रायेति**। विप्राभिन्नैकसंप्रदानको गवाभिन्नैककर्मको देवदत्ताभिन्नैककर्तृको वर्तमानकालिकोऽपूर्वजनकस्वस्वत्वनिवृत्तिपूर्वकसंप्रदानस्वत्वोत्पत्त्यनुकूलो व्यापार इति बोधः॥ २ **पत्ये शेत इति**। 'पतिसंप्रदानकं शयनम्' इति वार्तिकारम्भे बोधः॥ भाष्यमते वार्तिकप्रत्याख्याने शयनक्रियाया अपि संदर्शनप्रार्थनव्यवसायजन्यारम्भक्रियानिरूपितकर्मत्वाङ्गीकारेण 'पतिसंप्रदानकमारम्भादिकर्मभूतं पत्नीकर्तृकं शयनम्' इति बोधः॥ ३ **पशुनेति**। पशुकरणको रुद्रकर्मको याग इति बोधः॥ ४ **हरय इति**। विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलस्तत्समानाधिकरणो व्यापारो रुचेरर्थः। तत्फलप्रीतेः समवायेनाश्रयो हरिः संप्रदानत्वशक्तिमान्। तथा च—हरिसंप्रदानिका भक्तिकर्तृका रुचिरित्यर्थः। हरिनिष्ठा या भक्तिविषया प्रीतिस्तदनुकूलो भक्तिनिष्ठो व्यापार इति यावत्। एवं च हरौ शेषषष्ठी कारकत्वविवक्षायां कर्मसंज्ञा वा प्राप्नोतीति तद्वारणाय संप्रदानत्वमनेन क्रियते॥ प्रीणयतेस्तु समवायसंबन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारः प्रख्यातोऽर्थः। अत एव 'हरिं प्रीणयति भक्तिः' इत्यादौ प्रीधात्वर्थयोगे न संप्रदानसंज्ञा॥ ५ **अनन्यकर्तृक इति**। विषयतया प्रीत्याश्रयाभिन्नकर्तृक इत्यर्थः। विषयतासंबन्धेन प्रीतिसमानाधिकरणो व्यापारो रुचेरर्थः। एवञ्च—प्रीतिसमानाधिकरणव्यापाररूपरुच्यर्थापेक्षयाऽन्य एव विषयतासंबन्धावच्छिन्नप्रीतिव्यधिकरणव्यापाररूपोऽभिलष्यतेरर्थ इति नाभिलष्यते रुच्यर्थतेति न 'हरिर्भक्तिमभिलष्यति' इत्यत्र संप्रदानसंज्ञापत्तिरिति भावः॥ ६ **हरिनिष्ठेति**। समवायसम्बन्धेन हरिनिष्ठा या प्रीतिस्तस्या विषयतासंबन्धेनाश्रयभूता भक्तिरेव कर्त्री तदनुकूलव्यापाराश्रयः। एवञ्च—प्रीतिसमानाधिकरणव्यापारार्थत्वं रुचेः कथितम्॥ ७ **शेषित्वमिति**। शेषित्वमुद्देश्यत्वम्। शेषत्वमप्रधानत्वं तदुद्देश्यकेच्छाविषयत्वमिति यावत्॥

श्लाघते[1] ह्नुते[2] तिष्ठते[3] शपते[4] वा । ज्ञीप्स्यमानः किम् । देवदत्ताय श्लाघते पथि॥(८३३) (सू) धारेरुत्तमर्णः ।१।४।३५। धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् । भक्ताय[5] धारयति मोक्षं हरिः । उत्तमर्णः किम् । देवदत्ताय शतं धारयति ग्रामे ॥ (८३४) (सू) स्पृहेरीप्सितः ।१।४।३६। स्पृहयतेः प्रयोगे इष्टः संप्रदानं स्यात् । पुष्पेभ्यः[6] स्पृहयति । ईप्सितः किम् । पुष्पेभ्यो वने स्पृहयति ।(८३५) ईप्सितमात्रे[7] इयं संज्ञा । प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञा । पुष्पाणि स्पृहयति॥(८३६) (सू) क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।१।४।३७। क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् । हरये[8] क्रुध्यति। द्रुह्यति[9] । ईर्ष्यति[10] । असूयति[11] । यं प्रति कोपः किम् । भार्यामीर्ष्यति मैनामन्यो[12] द्राक्षीदिति ॥[13] क्रोधोऽमर्षः।

---

अपनयने' 'ष्ठा गतिनिवृत्तौ' 'शप उपालम्भे' ॥ **कृष्णाय श्लाघत इति** । कृष्णं स्तौतीत्यर्थः । कर्मत्वे प्राप्ते वचनमिदम् ॥ अन्ये त्वाहुः-कृष्णाय आत्मानं परं वा श्लाघ्यं कथयतीत्यर्थ इति । अस्मिंस्तु पक्षे शेषषष्ठ्यां प्राप्तायां वचनम् ॥ **ह्नुत इति**। सपत्नीभ्यः कृष्णं ह्नुवाना तमेवार्थं कृष्णं बोधयतीत्यर्थः । यस्य कस्यचित् ह्नुते बोधयतीति वा ॥ **तिष्ठत इति**। स्थित्या स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः । 'प्रकाशनस्थेयाख्ययोश्च ३६०२' इति तङ् ॥ **शपत इति** । उपालम्भेन स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः । 'शप उपालम्भे' इत्यतः तङ् ॥ (८३३) **धारेरुत्तमर्णः** । 'धृङ् अवस्थाने' । हेतुमण्ण्यन्तः । उत्तमर्णो धनस्वामी । अर्तेः क्तः । ऋणम् । 'ऋणमाधमर्ण्ये ४०५६' इत्यत्र व्यवहारविशेषोपलक्षणार्थमाधमर्ण्यग्रहणमिति व्याख्यानादुत्तमर्णेऽपि निष्ठानत्वं भवति । अस्मादेव निपातनादत्र बहुव्रीहौ निष्ठान्तस्य परनिपातो बोध्यः ॥ **भक्तायेत्यादि** । इह भक्त उत्तमर्णो हरिरधमर्णः । धृङोऽकर्मत्वादणौ कर्तुर्मोक्षस्य णौ कर्मत्वम् । **शतं धारयति ग्राम इति** । परत्वादिहाधिकरणसंज्ञा भविष्यतीति चेदुत्तमर्णेऽपि तर्हि हेतुसंज्ञा स्यादिति हरदत्तः । ततश्चोत्तमर्णग्रहणाभावे हेतुसंज्ञाया इवाधिकरणसंज्ञाया अप्ययमपवादः स्यात्तद्वारणाय उत्तमर्णग्रहणमिति भावः ॥ एवं च कृतेऽप्युत्तमर्णग्रहणे 'तत्प्रयोजको हेतुश्च ३४२५' इति हेतुसंज्ञायां प्राप्तायां तद्बाधनार्थमिदं संप्रदानसंज्ञावचनमिति निष्कर्षमाहुः ॥ मनोरमायां तु षष्ठ्यां प्राप्तायामिदं वचनमिति स्थितम् ॥ ( ८३४ ) **स्पृहेरीप्सितः** । 'स्पृह ईप्सायाम् ' चुरादावदन्तः।तेन स्पृहयतीत्यत्र लघूपधगुणो न॥(८३५) **परत्वादिति** । तेन 'परस्परेण स्पृहणीयशोभम्' 'स्पृहणीयगुणैर्महात्मभिः' इत्यादौ कर्मण्यनीयर् सिध्यति। शेषत्वविवक्षायां तु'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' इत्यत्र षष्ठ्यपि सिध्यतीति हरदत्तादयः ॥ वाक्यपदीयहेलाराजीग्रन्थयोस्तु स्पृहयतियोगे कर्मसंज्ञायाः शेषषष्ठ्याश्च बाधिकेयं संप्रदानसंज्ञेति स्थितम् ॥ युक्तं चैतत्-'क्रियया यमभिप्रैति-८२९' इत्यनेनैवेष्टसिद्धेः'स्पृहेरीप्सितः ८३४' इत्येतत्सूत्रस्य हरदत्तादिमते वैयर्थ्यप्रसङ्गात् । तस्माद्वाक्यपदीयादिग्रन्थानुरोधेन 'परस्परेण स्पृहणीयशोभम्' इत्यादौ'दानीयो विप्रः' इतिवत् बाहुलकात्संप्रदाने अनीयर् इति व्याख्येयम् ।'कुमार्य इव कान्तस्य' इत्यत्र तु त्रस्यन्तीत्येतदर्थतया कृतार्थस्य कान्तस्येति षष्ठ्यन्तस्य विभक्तिविपरिणामेन कान्ताय स्पृहयतीति व्याख्येयमिति केचित् ॥ (८३६) **क्रुधद्रुह--**। 'क्रुध क्रोधे' 'द्रुह जिघांसायाम्' 'ईर्ष्य ईर्ष्यायाम्'

---

१ **श्लाघत इति** । श्लाघतेर्बोधविषया स्तुतिरर्थः । बोधस्य फलतावच्छेदकः संबन्धो वृत्तिता । स्तुतिश्च गुणवत्त्वप्रतिपादकशब्दप्रयोगादिः । स्मरादिति हेतौ पञ्चमी । बोधाश्रयस्य ज्ञीप्स्यमान इति संप्रदानत्वम् ॥ तथा च-'गोपीकर्तृका स्मरहेतुका कृष्णसंप्रदानिकाऽर्थात्-कृष्णवृत्तिबोधविषया स्तुतिरिति बोधः ॥ २ **ह्नुते इति** । ह्नुतेर्बोधविषयमितरादर्शनयोग्यदेशस्थापनमर्थः ॥ आत्मानमित्यादेरध्याहारः । सपत्नीभिया चात्मादेस्तथा स्थापनं बोध्यम् । एवञ्च गोपीकर्तृका स्मरहेतुका कृष्णसंप्रदानिका अर्थात्-कृष्णवृत्तिबोधविषया आत्मकर्मकतथास्थापनानुकूला क्रियेति बोधः ॥ ३ **तिष्ठत इति** । गोपीकर्तृका स्मरहेतुका कृष्णसंप्रदानिका स्वाभिप्रायबोधानुकूला स्थितिरिति बोधः ॥ ४ **शपत इति** । गोपीकर्तृका स्मरहेतुका कृष्णसंप्रदानिका स्वाभिप्रायबोधानुकूला शपथक्रियेति बोधः ॥ ५ **भक्तायेति** । 'धृङ् अवस्थाने' इत्यतो णिचि अवस्थानाकूलो व्यापारो धारेरर्थः । धार्यर्थावस्थित्याश्रयसंबन्धिन एव संप्रदानत्वम् । तथा च-भक्तसंप्रदानको हरिकर्तृको मोक्षकर्मकावस्थित्यनुकूलो व्यापार इति बोधः । ननु ऋणं नाम सजातीयद्रव्यान्तरदानमङ्गीकृत्य परदत्तपरकीयद्रव्यादानम् , तज्जन्योऽधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो वा । उभयथाऽपि नेह प्राप्तिः, मोक्षस्योक्तरूपऋणत्वाभावेन भक्तस्योत्तमर्णत्वाभावाद्-इति चेत् । न, अवश्यदेयत्वमात्रेण तत्रापि ऋणव्यवहारात् ॥ ६ **पुष्पेभ्य इति** । स्पृहयतिरिच्छामात्रवाची । यद्वा--इच्छानुकूलमनःसंयोगादिव्यापारवाची । फलावच्छिन्नेच्छावाची च । आद्ये संप्रदानत्वम् । पुष्पसंप्रदानिकेच्छेति बोधः ॥ ७ **ईप्सितमात्र इति** । ईप्सितत्वं धात्वर्थव्यापारजन्यफलाश्रयत्वमेव, न तु फले धात्वर्थत्वाग्रहः ॥ कर्मसंज्ञा तु प्रकृतधात्वर्थफलाश्रयस्यैवेति प्रकर्षविवक्षायां तु विशेषविहितत्वात् कर्मसंज्ञैव भवतीति भावः ॥ ८ **हरये क्रुध्यतीति** । वधाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषः क्रुधेरर्थः । हरिसंप्रदानकः क्रोध इति बोधः ॥ ९ **द्रुह्यतीति** । दुःखजनकक्रियारूपापकारजनकश्चित्तवृत्तिविशेषो द्रुहेरर्थः । हरिसंप्रदानको द्रोह इति बोधः ॥ १० **ईर्ष्यतीति** । उत्कर्षविरोधिधर्मारोपानुकूलव्यापारजनकश्चित्तवृत्तिविशेष ईर्ष्या । हरिसंप्रदानिकेर्ष्येति बोधः ॥ ११ **असूयतीति** । शौचाचारादिगुणविषये दम्भादिकृतत्वरूपदोषारोपानुकूलश्चित्तवृत्तिविशेषोऽसूया । हरिसंप्रदानिकाऽसूयेति बोधः ॥ १२ **मैनामिति** । एवं चात्र न कोपजन्येर्ष्या किंत्वन्यपुरुषजन्येति नात्र भार्यां प्रति कोपः किंत्वन्यपुरुषैर्दृश्यमानां न सहत इति भावः ॥ १३ मनोरमास्थ एवायं पाठः कैश्चिदत्र प्रक्षिप्तः ॥

द्रोहोऽपकारः। ईर्ष्याऽक्षमा । असूया गुणेषु दोषाविष्करणम् ]( ८३७ ) द्रोहादयोऽपि कोप[1]प्रभवा एव गृह्यन्ते । अतो विशेषणं सामान्येन यं प्रति कोप इति ॥ ( ८३८ ) सू. क्रुधद्रुहोरुपसृष्टयोः कर्म ।१।४।३८। सोप[2]सर्गयोरनयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात् । क्रूर[3]मभिक्रुध्यति । अभिद्रुह्यति ॥ ( ८३९ ) सू. राधीक्ष्योर्यस्य विप्रश्नः ।१।४।३९। एतयोः कारकं संप्रदानं स्यात्, यदीयो विविधः प्रश्नः क्रियते । कृ[4]ष्णाय राध्यति ईक्षते वा, पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः । ( ८४० ) सू. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ।१।४।४०। आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनरूपव्यापारस्य कर्ता संप्रदानं स्यात् । विप्राय गां प्र[5]तिशृणोति आशृणोति वा । विप्रेण मह्यं देहीति प्रवर्तितः प्रतिजानीत इत्यर्थः ॥ ( ८४१ ) सू. अनुप्र[6]ति गृणश्च ।१।४।४१। आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात् । होत्रेऽनुगृणाति प्रतिगृणाति । होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः ॥(८४२) सू. परिक्रयणे संप्रदानमन्यतरस्याम् ।१।४।४४। नियतकालं भृत्या स्वीकरणं परिक्रयणं तस्मिन् साधकतमं कारकं संप्रदानसंज्ञं वा स्यात् । शतेन शताय वा परिक्रीतः ॥(८४३) वा. तादर्थ्ये[7]

---

'असूयतिः कण्ड्वादियगन्तः' एषामर्थ इवार्थो येषां धातूनामित्यर्थः ॥ **द्रोहोऽपकार इति** । 'द्रुह द्रोहे' इति पाठाभिप्रायेणोक्तं जिघांसा द्रोह एवेत्यर्थतोऽनुभाषणं वा ॥ **अक्षमेति** । परसंपत्त्यसहनमित्यर्थः ॥ क्रुधद्रुहोरकर्मकत्वात्तद्योगे षष्ठी प्राप्ता । अन्ययोस्तु सकर्मकत्वाद् द्वितीया प्राप्ता ॥ ननु चित्तदोषार्थानामित्येवास्तु किं क्रोधादीनां विशिष्योपादानेनेति चेत् । अत्राहुः—द्वेषादावतिप्रसङ्गवारणाय विशिष्योपादानम् । तेन 'योऽस्मान्द्वेष्टि यं च वयं द्विष्मः' इत्यत्र चतुर्थी न भवति । तत्र ह्यनभिनन्दनं द्विषेरर्थः । अत एवाचेतनेष्वपि द्विषधातुः प्रयुज्यते । औषधं द्वेष्टीति ॥ ( ८३७ ) **कोपप्रभवा एवेति** । कथं तर्हि 'कुप्यसि कस्मैचित्' इति । न हि कोपः कोपप्रभवः ॥ अत्र व्याचख्युः—कुपिरत्र द्रोहा[8]र्थ इति पत्ये शेते इतिवत् 'क्रियया यम्–८२९' इत्येव सिद्धे क्रुधद्रुहोर्ग्रहणं चिन्त्य[9]प्रयोजनमित्याहुः ॥ ( ८३९ ) **राधीक्ष्योः**—। 'राध संसिद्धौ' 'ईक्ष दर्शने' । अनयोस्त्विह शुभाशुभपर्यालोचनमर्थस्तच्च प्रश्नपूर्वकमित्याशयेन विवृणोति—**पृष्टो गर्ग इति** । शुभाशुभरूपयोः कर्मणोर्धात्वर्थेनोपसंग्रहादकर्मकावेतौ । अत एव राध्यतीति श्यन् 'राधोऽकर्मकाद्वृद्धावेव' इति दिवादिषु वक्ष्यमाणेन गणसूत्रेणाकर्मकादेव तद्विधानात् । कृष्णसंबन्धि शुभाशुभमित्यर्थाभ्युपगमात् षष्ठ्यां प्राप्तायां वचनमिदम् ॥ ( ८४१ ) **अनुप्रति**—। गृण इति श्नान्तस्यानुकरणशब्दात् षष्ठी । 'प्रत्याङ्भ्याम्–८४०' इति पूर्वसूत्रे द्विवचननिर्देशात् प्रत्येकमेव धातुसंबन्ध इति निर्धारिते तत्साहचर्यादिहापि प्रत्येकमेव धातुसंबन्ध इति सूचयन्नाह—**आभ्यां गृणातेरिति** ॥ **होत्रे इति** । कर्मत्वे प्राप्ते वचनम् ॥ ( ८४२ ) **परिक्रयणे**—। द्रव्यदानेनात्यन्तस्वीकारः क्रयः, तस्य समीपं परिशब्द आचष्टे ॥ अनियतकालात् क्रयणात् परिक्रयणस्य न्यूनकालत्वादित्याशयेनाह—**नियतेति** । भृत्या वेतनादिना ॥ ( ८४३ ) **तादर्थ्य इति** । तस्मै कार्यायेदं तदर्थं कारणं तस्य भावस्तादर्थ्यम् । ब्राह्मणादित्वात् ष्यञ् । 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन' इति सिद्धान्तात् ष्यञा संबन्धोऽभिधीयते स च संबन्धोऽनेकविधो, न तु कार्यकारणभाव एव, तेन ब्राह्मणाय दधीत्याद्यपि सिद्धम् । ब्राह्मणस्य दध्यजन्यत्वेऽपि तत्संस्कार्यत्वात् । न चैवं दधिशब्दादपि चतुर्थी स्यादिति शङ्क्यं, संबन्धस्य द्विष्ठत्वेऽपि षष्ठीवद्विशेषणादेव भवतीत्याकरे अभ्युपगमात् । एवं यूपाय दारु इत्यत्र दारुशब्दादपि न भवति 'हेतौ ८२३' इति तृतीयाऽपि षष्ठीविषय एव भवतीति साऽपीह न भवति, किन्तु प्रातिपदिकार्थे प्रथमैव । न चैतद्वार्तिकस्यावश्यकत्वे 'चतुर्थी

---

१ **कोपप्रभवा इति** । अत एव भाष्येऽपि—'न ह्यकुपितः क्रुध्यति' इत्यादि सामान्येनोक्तम् ॥ २ **सोपसर्गयोरिति** । वैयाकरणनिकाये सोपसर्गार्थकम् उपसृष्टपदमिति भावः ॥ ३ **क्रूरमभीति** । क्रूरकर्मकोऽभिक्रोध इति बोधः ॥ ४ **कृष्णाय राध्यतीति** । प्रश्नविषयशुभाशुभपर्यालोचनं धात्वोरर्थः । तथा च–कृष्णसप्रदानकम् अर्थात्–कृष्णसंबन्धिप्रश्नविषयशुभाशुभपर्यालोचनमिति बोधः ॥ ५ **प्रतिशृणोतीति** । व्याख्यानात् प्रत्येकमेतयोरुपसर्गयोर्निमित्तत्वमिति प्रवर्तनापूर्वकोऽभ्युपगमोऽनयोः सोपसर्गयोरर्थ इति विप्रसंप्रदानको 'गां तुभ्यं दास्यामि' इति प्रतिज्ञारूपो गोकर्मकदानप्रवर्तनाभ्युपगम इति बोधः ॥ ६ **अनुप्रतीति** । भिन्नमेव लुप्तपञ्चमीद्विवचनान्तपदमिति बोध्यम् । शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनमनयोरर्थः । होतृसंप्रदानकोऽध्वर्युकर्तृकः शंसनविषयहर्षानुकूलो व्यापार इति बोधः ॥ ७ **तादर्थ्य इति** । तादर्थ्यमुपकार्योपकारकभावसंबन्धः । तादर्थ्यस्य हेतुत्वाऽनुगतत्वेऽपि कारणवाचकान्न तृतीया कुण्डलाय हिरण्यमित्यादौ कार्यवाचकादुपपद्यमानचतुर्थ्यैव कारणगतसंबन्धस्य बोधनात् ॥ ८ **द्रोहार्थ इति** । प्ररूढकोपस्यैव क्रोधपदार्थत्वेन कुपेः क्रुध्यतिसमानार्थत्वाभावेन न तद्योगे संप्रदानत्वम् । एवं च 'कुप्यति कस्मैचित्' इत्याद्यसाध्वेव । 'कुप क्रोधे' इति निर्देशस्तु तद्वृत्तिकोपत्वसामान्यमादायैवेति बोध्यम्। द्रोहार्थत्वं तु शिष्टनिर्दिष्टार्थनिर्देशविरुद्धमेव ॥ ९ **चिन्त्यप्रयोजनमिति** । हरेः क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् 'क्रियया यम्–' इत्यनेन न सिद्धिरिति शेखरकृत् । पत्ये शेत इत्यादौ त्विच्छाविषयत्वम्, 'हरये कुप्यति' इत्यादौ नेत्यत्र विनिगमकं स एव प्रष्टव्यः ॥

चतुर्थी वाच्या ॥ मुक्तये[1] हरिं भजति ॥ ( ८४४ ) वा॰ क्लृपि संपद्यमाने च ॥ भक्तिर्ज्ञानाय कल्पते, संपद्यते, जायत इत्यादि ॥ ( ८४५ ) वा॰ उत्पातेन ज्ञापिते च ॥ वाताय कपिला विद्युत् ॥ ( ८४६ ) वा॰ हितयोगे च ॥ ब्राह्मणाय हितम्[2] ॥ ( ८४७ ) सू॰ क्रियार्थोपपदस्य च कर्मणि स्थानिनः । २ । ३ । १४ । क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात् । फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः[3] । नमस्कुर्मो नृसिंहाय । नृसिंहमनुकूलयितुमित्यर्थः । एवं स्वयंभुवे नमस्कृत्येत्यादावपि ॥ ( ८४८ ) सू॰ तुमर्थाच्च भाववचनात् ।२।३।१५। भाववचनाश्चेति सूत्रेण यो विहि-

---

सम्प्रदाने ८२८’इति सूत्रं व्यर्थमिति भ्रमितव्यम् , हरये रोचते इत्याद्यर्थं तस्याप्यावश्यकत्वात्[4] । विप्राय गामित्यत्रापि तादर्थ्ये चतुर्थ्याः प्राप्तिर्नास्तीति[5] प्रागेवोक्तत्वाच्चेति दिक् ॥ ( ८४४ ) क्लृपीति । संपदादित्वाद्भावे क्विपि तदन्तात्सप्तमी । संपत्तिरिहाऽभूतप्रादुर्भावः, क्लृप्त्यर्थकधातुप्रयोगे यः संपद्यते तत्र चतुर्थी, विकारवाचकाच्चतुर्थीत्यर्थः । स हि संपद्यते प्रादुर्भवति । तदुदाहरति—भक्तिर्ज्ञानायेति । ज्ञानात्मना[6] परिणमत इत्यर्थः । प्रकृतिविकृत्योर्भेदविवक्षायां विकृतिवाचकाच्चतुर्थी । अभेदविवक्षायां तु परत्वात् प्रथमैव भक्तिर्ज्ञानं कल्पते । यदा तु—‘जनिकर्तुः—८६४’ इति भक्तेरपादानत्वं विवक्ष्यते, तदाऽपि ज्ञानस्याभिहितकर्तृत्वात् प्रथमैव[7] ‘भक्तेर्ज्ञानं कल्पते’ ॥ क्लृपीत्यर्थग्रहणमित्याशयेनाह—संपद्यत इत्यादि । यद्यपि तादर्थ्ये चतुर्थ्यैव भक्तिर्ज्ञानायेत्यादिप्रयोगाः सिध्यन्ति, तथाऽपि परिणामत्वप्रकारकबोधार्थमिदं वचनमित्याहुः ॥ ( ८४५ ) उत्पातेनेति । प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः, तेन ज्ञापितेऽर्थे वर्तमानाच्चतुर्थी वाच्येत्यर्थः ॥ वातायेति । वातस्य[8] ज्ञापिकेत्यर्थः ॥ ( ८४६ ) हितेति । चतुर्थीसमासविधानाज्ज्ञापकादेतल्लब्धमिति भावः ॥ एवं[9] सुखयोगेऽपि चतुर्थी बोध्या ॥ ( ८४७ ) क्रियार्थोपपद—। क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था, सा क्रियार्था क्रिया उपपदं यस्य । यद्यपि क्रियाया उपपदत्वं न संभवति, तथाऽपीह स्ववाचकशब्दद्वारा तद्बोध्यम् । क्रियाफलकं क्रियावाचकमित्यर्थः । क्रियावाचकस्यापि धातोरुपोच्चारितपदरूपोपपदत्वं यद्यपि न संभवति सुप्तिङन्तस्यैव पदत्वात्, तथाऽपीह क्रियावाचकप्रकृतिकमित्यर्थो विवक्षितः, तादृशमुपपदं यस्य तुमुनन्तस्य तस्य कर्मणि चतुर्थी भवतीति निष्कृष्टोऽर्थः । ‘तुमुन्ण्वुलौ क्रियायाम्—४९६२’ इति सूत्रमाहिम्ना क्रियार्थकमुपपदं क्रियावाच्येव फलतीत्याशयेनाह—क्रियार्था क्रियेति । स्थानिन इत्यस्यैवार्थकथनमप्रयुज्यमानस्येति ॥ तुमुन इति । ण्वुलोऽप्युपलक्षणम् । फलेभ्यो यातीत्यस्य फलान्याहारक इति विवरणे बाधकाभावात् ॥ कर्मणीति । तथा च द्वितीयाऽपवादोऽयमिति भावः ॥ यत्तु प्रसादकृता व्याख्यातम्—अप्रयुज्यमानस्यैव कर्मणि यथा स्यात् । प्रयुज्यमानस्य कर्मणि मा भूदिति नियमार्थं सूत्रमिति । तदसत्, अप्राप्तस्य नियमायोगात् । न चेह ‘तादर्थ्ये—८४३’ इति प्राप्तिः शङ्क्या, यानक्रियायाः फलार्थत्वाभावात् आहरणार्था हि यानक्रिया, आहरणं तु फलकर्मकमित्यन्यदेतत् ॥ क्रियार्थोपपदस्य किम् , प्रविश पिण्डीम् । गृहप्रवेशनं यद्यपि भक्षणार्थं, तथाऽपि भक्षिं प्रति कृत्रिमोपपदत्वं नास्ति । न च तुमुनः कर्मणीत्युक्तत्वाद् भक्षिकर्मणि चतुर्थ्याः प्रसक्तिरेव नास्तीति प्रत्युदाहरणमिदं न संगच्छते इति वाच्यम् , सति तु ‘क्रियार्थोपपदस्य’ इति पदे ‘तुमुन्ण्वुलौ क्रियायाम्—४९६२’ इत्येतद्विषयकमेवेदं सूत्रमिति ‘तुमुनः’ इति लभ्यते नान्यथेति प्रत्युदाहरणस्यासंगतत्वाभावात्॥ (८४८) तुमर्थात्—।

---

१ मुक्तये हरिमिति । मुक्तिरूपोपकार्योपकारकं हरिकर्मकं भजनमिति बोध इति भावः ॥ २ हितमिति । इष्टसाधनं हितशब्दार्थः । सम्बन्धश्चतुर्थ्यर्थः । ब्राह्मणसम्बन्धीष्टसाधनमिति बोधः ॥ ३ इत्यर्थ इति । फलकर्मकाहरणफलकं यानमिति बोधः ॥ ४ आवश्यकत्वादिति । न च ‘रुच्यर्थानां प्रीयमाणाच्चतुर्थी’ इत्येवं चतुर्थीविधानमेवास्तु किं संप्रदानसंज्ञयेति वाच्यम्, ‘दाशगोघ्नौ संप्रदाने’ इत्येतदर्थं संज्ञाया अप्यावश्यकत्वात् ॥ ५ प्राप्तिर्नास्तीति । एतच्च “यदि तादर्थ्ये उपसंख्यानं क्रियते नार्थः संप्रदानग्रहणेन । या ह्युपाध्यायाय गौर्दीयते उपाध्यायार्थं स भवति । तत्र तादर्थ्य इत्येव सिद्धम्” इति भाष्यविरोधाच्चिन्त्यमेवेति बोध्यम् । वस्तुतस्तु—‘तादर्थ्ये—’ इति वार्तिकमपि यूपाय दारु, कुण्डलाय हिरण्यम् इत्यादिषु प्रकृतिविकृतिभावापन्नेष्वेव प्रवर्तते । भाष्ये तथैवोदाहृतत्वात् । ‘चतुर्थी तदर्था—’ इति समासविधानेन चतुर्थीं ज्ञापयित्वाऽस्य वार्तिकस्य भाष्यकृता प्रत्याख्यातत्वाच्च । ‘मुक्तये हरिं भजति, विप्राय दधि’ इत्यादौ वार्तिकेनैव चतुर्थ्यां तु प्रत्याख्यानस्यैवासंभवः स्यादिति मुक्तये इत्यादौ चतुर्थ्यर्थं तु ‘क्रियार्थोपपदस्य—’ इत्येवोपायान्तरं कल्पनीयम् । विप्राय गामित्यादौ संप्रदानस्य शाब्दबोधे भानाय संप्रदाने चतुर्थी विधातव्यैवेति बोध्यम् ॥ ६ ज्ञानात्मनेति । आत्मशब्दस्तद्वृत्तिधर्मपरः । रूपान्तरप्राप्तिर्हि परिणामः । एवं च ज्ञानत्वविशिष्टरूपान्तरप्राप्तिर्भक्तिकर्तृकेति बोधः । अत्र प्रकृतिविकृतिभावाप्रतीतेर्न चतुर्थी किन्तु प्रकृत्यादित्वात्तृतीयेति भावः ॥ ७ प्रथमैवेति । भक्त्यपादानको ज्ञानरूपः परिणाम इति बोधः ॥ ८ वातस्येति । ज्ञाप्यज्ञापकभावश्चतुर्थ्यर्थः । वातरूपज्ञाप्यज्ञापिका कपिला विद्युदिति बोधः ॥ ९ समासेति । ‘चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः’ इति हितसुखयोगे समासविधानेत्यर्थः ॥ १० एवमिति । वृत्तावाशीरर्थाप्रतीतेर्न ‘चतुर्थी चाशिष्या—’ इति चतुर्थ्या हितयोगे निर्वाहः । आशीरर्थयोगे आशीर्विषयस्य विधेयत्वं तदाश्रयस्य चोद्देश्यत्वं प्रतीयते, न च वृत्तौ तथाऽन्वयो व्युत्पन्न इति भावः ॥

स्तस्तदन्ताच्चतुर्थी स्यात् । यागाय[१] याति । यष्टुं यातीत्यर्थः ॥ ( ८४९ ) (सू) नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ।२।३।१६। एभिर्योगे चतुर्थी स्यात् । हरये[२] नमः । (८५०) (प) उपपदविभक्तेः कारकविभक्तिर्बलीयसी । नमस्करोति देवान्[३] । प्रजाभ्यः[४] स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । ( ८५१ ) अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं, प्रभुः, समर्थः, शक्त इत्यादि । ( ८५२ ) प्रभ्वादियोगे षष्ठ्यपि साधुः, तस्मै प्रभवति, स एषां ग्रामणीरिति निर्देशात् । तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम् । वषडिन्द्राय । चकारः पुनर्विधानार्थः । तेनाशीर्विवक्षायां[५] परामपि चतुर्थी चाशिषीति षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् ॥(८५३)(सू)मन्यकर्मण्यनादरे विभाषाऽप्राणिषु।२।३।१७।प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे[६]॥ न त्वां तृणं मन्ये तृणाय[७] वा॥

---

'अव्ययकृतो भावे'इति तुमुनो भावे एव विधानात् तदर्थस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणमत्र विशेषपरिग्रहार्थमित्याह—**भाववचनाश्चेतीति** । न च 'तादर्थ्ये–८४३' इत्येव गतार्थता शङ्क्या, क्रियार्थक्रियोपपदकेन 'भाववचनाश्च ४९६७' इति घञा तुमुनेव तादर्थ्यस्य द्योतितत्वात्प्रातिपदिकार्थमात्रे प्रथमाप्राप्तावेतत्सूत्रारम्भात् ॥ यत्तु प्रसादकृतोक्तम्—भाववचनादेव यथा स्यात्, पाचको व्रजतीति ण्वुलन्तान्मा भूदिति नियमार्थमिदं सूत्रमिति । तन्न, ण्वुलः कर्तृवाचकतया तुमर्थकत्वाभावेन नियमार्थत्वायोगात् ण्वुलन्ते कर्तुः प्राधान्यात् कर्तारं प्रति च तादर्थ्याभावात्, गुणीभूततया पाकं प्रति तादर्थ्यसंभवेऽपि पाकवाचकधातोश्चतुर्थ्ययोगाच्च । तुमर्थात् किम्, पचनं वर्तते ॥ भाववचनात् किम्, पाकः । त्यागः॥अत्र वदन्ति–'क्रियार्थोपपदस्य' इत्यनुवर्त्य पञ्चम्या विपरिणमय्य व्याख्याने बाधकाभावाद् भाववचनादिति त्यक्तुं शक्यम् । न चैवं 'तुमर्थात्–' इत्येव वक्तव्यमिति वाच्यम्, वर्णलाघवसंभवे गौरवाश्रयणाऽयोगादिति ॥ ( ८५० ) **बलीयसीति** । हरये नम इत्यत्र तूद्देशनक्रियाद्वारा हरिनमस्कारयोः संबन्धः हर्युद्देश्यको नमस्कार इति । एवं चोद्देशनाक्रियाऽवगतो विलम्ब इति कारकविभक्तेर्बलीयस्त्वमित्येके॥ अन्ये तूपपदविभक्त्या संबन्धसामान्यमवगम्यते तद्विशेषावगमस्त्वर्थप्रकरणादिपर्यालोचनाधीनः । कारकविभक्त्या तु कर्मत्वादिसंबन्धविशेषो झटित्येवावगम्यत इति तस्या बलीयस्त्वमित्याहुः ॥ ( ८५२ ) **षष्ठ्यपीति** । ननु प्रभ्वादियोगे षष्ठ्येवास्तु, अलंशब्दस्तु पर्याप्तीतरार्थक एव गृह्यतामित्याशङ्क्याह—**तस्मै प्रभवतीति** ॥ ( ८५३ ) **न त्वां तृणमित्यादि** । ननु तृणादिवद् युष्मच्छब्दादपि पक्षे चतुर्थ्या भाव्यम् । मैवम्, 'अनादरे' इत्यस्य कर्मविशेषणत्वेन अनादरद्योतकं यत् कर्म तत्र चतुर्थीति व्याख्यानात् । तृणं ह्यत्राऽनादरद्योतकं न तु युष्मदर्थः। स्यादेतत्, त्वां तृणं मन्ये तृणाय वेत्युदाह्रियतां किमनेन नञः

---

१ **यागायेति** । अयं घञ् तुमुना समानार्थक इति 'यागफलकं यानम्' इति बोधः ॥ २ **हरये नम इति** । अपकृष्टत्वज्ञानबोधनानुकूलो व्यापारो नमःपदार्थः । तत्रापकर्षः प्रयोक्तृपुरुषविशेषनिष्ठो नमस्कार्याऽवधिक एव प्रतीयते, व्यापारश्च करशिरःसंयोगादिरीदृशशब्दप्रयोगरूपः प्रयोक्तृनिष्ठः प्रतीयते शब्दशक्तिस्वभावात् । चतुर्थ्यर्थ उद्देश्यत्वम् । एवञ्च हर्युद्देश्यको हर्यवधिकापकृष्टत्वप्रकारज्ञानबोधनानुकूलो व्यापार इति बोधः ॥ एषोऽर्घः शिवाय नमः इत्यादौ त्यागो नमःशब्दार्थः । त्यागश्च स्वस्वत्वनिवृत्त्यनुकूलः वेदबोधितोद्देश्यकत्वस्वप्रयोगकर्तृकर्तृकत्वोपरक्त एव प्रतीयते शब्दशक्तिस्वभावात् ! अन्योच्चारितनमःशब्देनान्यदीयद्रव्यत्यागाप्रतीतेः । ऋत्विग्भिश्च यजमानीयतत्तद्द्रव्ये स्वीयत्वमारोप्यैव नमः–शब्दः प्रयुज्यते । वेदबोधितेत्युक्तेर्न नीचोद्देश्यके त्यागे नमःशब्दप्रयोगः । अहं ममेत्यभिमानरहितानां शिवादीनां द्रव्ये स्वत्वाभावेऽपि 'शिवस्वं न प्रतिगृह्णीयात्' इत्यादेः शिवोद्देशेन त्यक्तमित्यर्थो बोध्यः ॥ ३ **देवानिति** । अत्र नमःशब्दो निपातो द्योतकः । उक्तो नमःपदार्थोऽत्र कृधातोरेवार्थः । स्वविषयविषयाऽवधित्वसमानाधिकरणसमवायरूपेण फलतावच्छेदकसंबन्धेन स्वनिष्ठापकृष्टत्वज्ञानबोधरूपफलाश्रयतया देवानां कर्मत्वम् । स्वविषयेत्यत्र स्वशब्देनापकृष्टत्वज्ञानबोधरूपं फलम् । नमःशब्दद्योत्यार्थान्वयमात्रेण चात्र 'नमःस्वस्ति–' इति सूत्रेण चतुर्थ्या अपि प्राप्तिरिति भावः ॥ यदा त्वत्रापि नमःशब्दस्य वाचकत्वम्, तदा चतुर्थ्येव । तेन 'नमस्कुर्मो नृसिंहाय' इत्यादिसिद्धिरिति बोध्यम् ॥ ४ **प्रजाभ्यः स्वस्तीति** । स्वस्तिशब्दो मङ्गलार्थः । संबन्धश्चतुर्थ्यर्थः । प्रजासंबन्धि मङ्गलमित्यर्थः ॥ अनव्ययस्याऽपि स्वस्तिशब्दस्य योगे 'स्वस्तिर्भवतु ते दाश' इत्यादौ चतुर्थी दृश्यते ॥ ५ **आशीर्विवेति** । आशंसाविषयस्थले गोसंबन्धिमङ्गलकर्तृकमाशंसाविषयो भवनमिति बोधविवक्षायामित्यर्थः॥'प्रत्यभिवादे-'इति सूत्रभाष्यसूचिताशीःप्रयोगाऽयोग्यविषये स्वस्ति जाल्मायाऽस्तीति तत्त्वकथने चतुर्थ्या अवकाशः, स्वस्तिभिन्नकुशलार्थयोगे षष्ठ्या अवकाशः । 'स्वस्ति गोभ्यो भूयात्' इति मङ्गलाशंसाविषये द्वयोः प्राप्तौ परां षष्ठीं बाधितुं पुनश्चतुर्थीविधानाय चकार इति भावः ॥ ६ **तिरस्कार इति** । अनादरो नादराभावमात्रम्, अपि तु नञोऽधर्मादाविव विरुद्धवाचित्वेन तिरस्कारार्थकत्वमिति तिरस्कारद्योतकं यद् मन्यधातोः कर्म तस्माच्चतुर्थीति फलितम् । तेन न युष्मच्छब्दाच्चतुर्थी । तिरस्कारश्च व्याख्यानाद् अपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेये गृह्यते, न स्वपकृष्टसादृश्यरूपः । तत्प्रतीतिश्च नञ्समभिव्याहार एव । तृणतुल्यमपि न मन्ये इति विवक्षायामेव तिरस्काराधिक्यप्रतीतिरिति भावः ॥ ७ **तृणाय वेति** । अत्र कर्म द्वितीयाचतुर्थ्योरर्थः । तृणपदं तृणसदृशपरम् । त्वत्कर्मकतृणसदृशकर्मकमद्वृत्तिज्ञानाभाव इति, तृणसदृशकर्मकं मद्वृत्त्यभावप्रतियोगि ज्ञानमिति वा बोधः ॥ ८ **आहुरिति** । वाचनिकयेवैषेति वृथाऽयं प्रयास इत्येवाऽऽशयः ॥

श्यना निर्देशात्तानादिकयोगे न–न त्वां तृणं मन्वे ॥ अप्राणिष्वित्यपनीय—॥ ( ८५४ ) **वा॰ नौकाकान्नशुकशृगालवर्ज्येष्विति वाच्यम्** ॥ तेन 'न त्वां नावमन्नं वा मन्ये' इत्यत्राऽप्राणित्वेऽपि चतुर्थी न । 'न त्वां शुने श्वानं वा मन्ये' इत्यत्र प्राणित्वेऽपि भवत्येव ॥ ( ८५५ ) **सू॰ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि** ।२।३।१२। अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायाम् । ग्रामं ग्रामाय वा गच्छति । चेष्टायां किम् । मनसा हरिं व्रजति । अनध्वनीति किम् । पन्थानं गच्छति । गन्त्राऽधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव । उत्पथेन पथे गच्छति ॥ ( ८५६ ) **सू॰ ध्रुवमपायेऽपादानम्** ।१।४।२४। अपायो विश्लेषस्तस्मिन्साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात् ॥ (८५७) **सू॰ अपादाने पञ्चमी** । २ । ३ ।२८ । ग्रामादायाति । धावतोऽश्वात्पतति । कारकं किम् । वृक्षस्य पर्णं पतति ॥ ( ८५८ ) **वा॰ जुगुप्साविरामप्रमादा-**

---

प्रयोगेण । अत्राहुः–'प्रकृष्य कुत्सितग्रहणं कर्तव्यम्' इति वार्तिकमस्ति, तेन यद्वाचिनश्चतुर्थी विधीयते ततो निकृष्टत्वेन यदि कुत्सा प्रतिपाद्यते, तदा चतुर्थी भवति न तु साम्यविवक्षायाम् । तादृशी च कुत्साप्रतीतिर्नञः प्रयोगे झटित्येव भवतीति न त्वामित्युक्तमिति ॥ **श्यना निर्देशादिति** । न च मन्य इति यका निर्देशः किं न स्यादिति वाच्यम्, अनभिहित इत्यधिकारात् । न हि यका योगे अनभिहितं कर्म संभवति । श्यन्नपि दैवादिकधातूपलक्षणमात्रं, न तु स्वयं विवक्षितः । तेन 'तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्थत्' इति भट्टिप्रयोगः संगच्छते ॥ **(८५४) नौकाकान्नेति** । व्यवस्थितविभाषा विज्ञातव्येति भावः ॥ **(८५५) गत्यर्थकर्मणि—**। गत्यर्थेति किम्, ओदनं पचति । कर्मणीति किम्, अश्वेन व्रजति ॥ 'अनध्वनि' इत्यत्राध्वनीति न स्वरूपग्रहणम् । तथा हि सति–'अनध्वनः' इत्येवाऽवक्ष्यत् । किं त्वर्थग्रहणं सप्तमीनिर्देशात्, कर्मणीत्यनेन सामानाधिकरण्यात् । अर्थस्यैव हि कर्मत्वं संभवति न शब्दस्वरूपस्य, तेनाऽध्ववाचिनां सर्वेषामेव निषेधः । तथा च वार्तिकम्—**'अध्वन्यर्थग्रहणम्–'** इति । **गन्त्राऽधिष्ठित एवेति** । **'आस्थितप्रतिषेधो वक्तव्यः'** इति वार्तिकादिति भावः । आस्थितः संप्राप्तः । पन्थानं गच्छतीत्यत्र हि पन्थाः प्राप्त एवेति न पक्षे चतुर्थी । यदा त्वप्राप्तत्वेन विवक्षा तदा पक्षे भवत्येव सा । इह अनध्वनीत्यपनीय 'असंप्राप्ते' इति पूर्यते, तेन स्त्रियं गच्छतीत्यत्र स्त्री प्राप्तैवेति न चतुर्थी ॥ अत्र व्याचक्षते–अजां नयति ग्राममित्यत्र तु न भवत्येव चतुर्थी, अगत्यर्थत्वात् । आक्षेपादिना ह्यत्र प्रतीयते गतिर्न त्वसौ नयतेरर्थः, प्रापणवाचित्वादिति ॥ 'गत्यर्थकर्मणि चतुर्थी वा' इति वक्तव्ये द्वितीयाग्रहणमपवादविषयेऽपि द्वितीया यथा स्यादित्येतदर्थं, तेन ग्रामं गन्तेत्यत्र कृद्योगलक्षणा षष्ठी न भवतीति वृत्तिकृतोक्तम् ॥ इति चतुर्थी ॥

**(८५६) ध्रुवमपाये—**। 'ध्रु गतिस्थैर्ययोः' अस्मात् पचाद्यचि कुटादित्वान्ङित्त्वे उवङ् ॥ 'ध्रुव स्थैर्ये' इति केचित् । तत्र 'इगुप॰ ३।१।१३५' इति कः । ध्रुवं स्थिरम् ॥ अपायशब्देन विवक्षितमाह—**विश्लेष इति** । एवं च प्रकृतधात्वर्थाऽनाश्रयत्वे सति तज्जन्यविभागाश्रयो ध्रुवमिति फलितम् ॥ तच्चाऽर्थादवधिरेवेत्याह—**अवधिभूतमिति** ॥ **( ८५७ ) धावत इति** । इह धावनक्रियाविशिष्टस्याप्यश्वस्य प्रकृतपतनधातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते । 'परस्परस्मान्मेषावपसरतः' इत्यत्र तु सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठां गतिं प्रति इतरस्याप्यपादानत्वं न विरुध्यते । उक्तं च हरिणा–"अपाये

---

१ **नौकाकेति**। भाष्ये तु–"येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्ति" इत्येव "यदेतद् 'अप्राणिषु' इति, एतद् 'अनावादिषु' इति वक्ष्यामि" इत्युक्त्युत्तरमुपसंहृतम् । तथापि वृत्त्युदाहरणबलेन चेष्टानिष्टनिर्णय इति भावः ॥ २ **ग्रामाय वेति** । सूत्रमते द्वितीयाचतुर्थ्यौः कर्ममात्रमर्थः। ग्रामकर्मकं गमनमिति बोधः॥ भाष्यमते–'क्रियया यम्–' इति संप्रदानसंज्ञायां चतुर्थीति ग्रामसंप्रदानकोत्तरदेशसंयोगानुकूलव्यापारविषयक आरम्भ इति बोधः॥ ३ **चेष्टायां किमिति**। गतेः क्रियारूपत्वादिति प्रश्नः । शारीरव्यापारस्यैवात्र ग्रहणमित्युत्तरम् ॥ ४ **विश्लेष इति** । विभागजनको व्यापारः । विभागश्च न वास्तवसंबन्धपूर्वको वास्तव एव किंतु बुद्धिपरिकल्पितसंबन्धपूर्वको बुद्धिकल्पितोऽपीति माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिकल्पितापायाश्रयणेनैव पञ्चमी साधिता भाष्ये । प्रकृतधातूपात्तविभागजनकव्यापाराऽनाश्रयत्वे सति प्रकृतधात्वर्थविभागाश्रयत्वमपादानत्वमिति निष्कर्षः॥ ५ **अपादान इति** । तच्चापादानं "निर्दिष्टविषयं किंचिदुपात्तविषयं तथा । अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते ॥" इति हर्युक्तदिशा त्रिविधम् । यत्रोपात्तधातुनाऽपायलक्षणः संज्ञाविषयो निर्दिश्यते तन्निर्दिष्टविषयं प्रथमम् । यथा–'ग्रामादागच्छति' इति ॥ यत्र धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह **तदुपात्तविषयं** द्वितीयम् । यथा 'बलाहकाद् विद्योतते विद्युत्' इति । अत्र हि निःसरणाङ्गे विद्योतने विपूर्वो द्युतिर्वर्तते 'बलाहकान्निस्सृत्य विद्योतते' इति प्रतीतेः । एवं 'कुसूलात्पचति' इत्यत्रापादानाऽङ्गे पाके पचिर्वर्तते 'कुसूलादादाय पचति' इति प्रत्ययात् ॥ यत्र क्रिया न श्रूयते प्रमाणान्तरेण तु प्रतीयते तद् **अपेक्षितक्रियम्** ॥ यथा–आगच्छन्तं पुरुषं प्रत्यक्षेण पश्यन्नाह–'कुतो भवान्' इति । सोऽपि तदेव प्रत्यक्षमागमनमुपजीवन्नाह–'पाटलिपुत्रात्' इति ॥ ६ **तृणायेति** । इदं च **'मन्यकर्मणि प्रकृष्य कुत्सितग्रहणम्'** मन्यकर्मणि प्रकृष्य कुत्सितग्रहणं कर्तव्यम्, इह मा भूत्–'त्वां तृणं मन्ये' इति भाष्यविरुद्धम् । नञः प्रयोग एव चतुर्थ्या भाष्यकृत इष्टत्वात् ॥ तथा च 'तृणं न मत्वा रघुनन्दनोऽपि' इति 'तृणाय मत्वा रघुनन्दनो न' इति वा पाठो भवेत् ॥ ७ **प्राप्तैवेतीति** । यदा तु स्त्री न प्राप्ता किंतु प्राप्तव्या तदा तु चतुर्थी स्त्रियै गच्छतीति भवत्येवेति बोध्यम् ॥

र्थानामुपसंख्यानम् ॥ पापाज्जुगुप्सते । विरमति । धर्मात्प्रमाद्यति ॥ (८५९) Ⓢ भीत्रार्थानां भयहेतुः । १।४।२५। भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात् । चौराद्बिभेति[4]। चोरात्त्रायते[5]। भयहेतुः किम्। अरण्ये बिभेति

---

यदुदासीनं चलं वा यदि वाऽचलम् । ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥ पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ । तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ॥ मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् । मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥'' इति । पर्वतात्पततोऽश्वात्पततीत्यत्र तु पर्वतावधिकपतनाश्रयो योऽश्वस्तदवधिकं देवदत्तादिनिष्ठं पतनमर्थः, पञ्चम्यर्थेऽवधौ अभेदेन संसर्गेण प्रकृत्यर्थः पर्वतादिर्विशेषणम्, प्रत्ययार्थस्तु पतनक्रियायाम्, स चावधिरूपो धर्मी, न तु धर्ममात्रम् । उद्धृतौदना स्थालीत्यत्रौदनकर्मकोद्धरणाऽवधिभूता स्थालीति सामानाधिकरण्यदर्शनात् । एतच्च मनोरमायां स्थितम् ॥ नन्विह ध्रुवग्रहणं किमर्थम् । न च ग्रामादागच्छति शकटेनेत्यत्र शकटेऽतिव्याप्तिवारणाय तदिति वाच्यम्, परत्वात्तत्र करणसंज्ञाप्रवृत्तेः । न च संज्ञिनिर्देशार्थं ध्रुवग्रहणम्, कारकाऽधिकारात्कारकमिति लभ्यत इति ध्रुवग्रहणं चिन्त्यप्रयोजनमिति चेत् ! अत्र वदन्ति—कारकत्वरूपव्यापकधर्ममात्रविवक्षायां साधकतमत्वेन विवक्षाभावदशायां करणसंज्ञाप्रसङ्गेन शकटस्याऽपादानत्वं स्यात्तन्मा भूदित्येतदर्थं ध्रुवग्रहणमिति ॥ ( ८५८ ) जुगुप्सेति । जुगुप्सा निन्दा, विरामो विरतिः, प्रमादोऽनवधानता, एतदर्थकानां धातूनां कारकमपादानसंज्ञं स्यादित्यर्थः ॥ संयोगपूर्वको विश्लेषो विभागः, स चेह नास्ति, बुद्धिकृतस्तु गौणत्वान्नेह गृह्यत इति सूत्रेणाऽप्राप्तौ वार्तिकारम्भः ॥ भाष्यकारस्तु—कारकप्रकरणे गौणमुख्यन्यायो नाश्रीयत इति तमब्ग्रहणेन ज्ञापितत्वात् जुगुप्सादीनां तत्पूर्वकनिवृत्तिवाचित्वमाश्रित्येदं वार्तिकं 'भीत्रार्थानाम्—८५९' इत्यादिसूत्राणि च प्रत्याचख्यौ । पूर्वं हि बुद्ध्याऽपायं संप्राप्य ततो दोषदर्शनान्निवर्तत इत्यस्त्येवात्र बुद्धिकृतोऽपायः ॥ ( ८५९ ) भीत्रा—। 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ' इति रामायणे तु कस्येत्यस्य संयुगेनाऽन्वयान्नास्ति भयहेतुत्वमिति षष्ठीप्रयोगः संगच्छत एव ।

---

१ जुगुप्सत इति । अनिष्टसाधनताज्ञानरूपा निन्दा जुगुप्सतेरर्थः। पापापादानिकाऽनिष्टसाधनतेति बोधः।''अधर्माज्जुगुप्सते अधर्माद्बीभत्सते इति य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति दुःखोऽधर्मो नाऽनेन कृत्यमस्ति इति । स बुद्ध्या संप्राप्य निवर्तते'' इति भाष्यमते तु—अनिष्टसाधनताज्ञानपूर्विका निवृत्तिरर्थ इति पापापादानकाऽनिष्टसाधनताज्ञानपूर्वकपरावृत्त्यनुकूलो व्यापार इति बोधः ॥ २ विरमतीति । प्रागभावसाधारणकृत्यभावानुकूलो व्यापारो विरमतेरर्थः । स च व्यापारोऽधर्मविषयोपेक्षाविशेष एव । पापविषयकोपेक्षेति बोधः ॥ पापापादानकानिष्टसाधनताज्ञानजन्योपेक्षापूर्वकनिवृत्तिजनको व्यापार इति भाष्यमते शाब्दबोधः । 'य एष मनुष्यः संभिन्नबुद्धिर्भवति स पश्यति नेदं किंचिद्धर्मो नाम नैनं करिष्यामीति स बुद्ध्या संप्राप्य निवर्तते' इति भाष्यात्॥ ३ प्रमाद्यतीति। इष्टसाधने वस्तुनि समानदेशत्वसमानकालत्वोभयसंबन्धेनाधिकारविशिष्टेष्टसाधनत्वाभावज्ञानम् अनिष्टसाधनत्वज्ञानं वा धात्वर्थः ॥ धर्मापादानकम् उक्तोभयसंबन्धेनाधिकारविशिष्टेष्टसाधनत्वाभावज्ञानमिति बोधो वार्तिकमते ॥ भाष्यमते तु धर्मापादानिका उक्तोभयसंबन्धेनाधिकारविशिष्टेष्टसाधनत्वाभावज्ञानपूर्विका निवृत्तिरिति बोधः ॥ ४ बिभेतीति । अनिष्टज्ञानं भयम् । चौरापादानकमनिष्टज्ञानमिति बोधः ॥ भाष्यमते—चौरापादानिका तद्भयपूर्विका निवृत्तिरिति बोधः ॥ चौरमध्यगतोऽपि तत्संपर्कफलवधादिनिवर्तनात्तेभ्यो निवर्तत इत्युच्यते॥एतद्विषयेऽपि हेतुत्वापादानत्वाविवक्षायां षष्ठी भवत्येवेति बोध्यम् ॥ ५ त्रायत इति । अनिष्टपरिहारस्त्राणम् । चोरापादानकानिष्टपरित्राणमिति बोधः ॥ भाष्यमते तु—चोरापादानिकाऽनिष्टपरित्राणपूर्विका निवर्तनेति बोधः । 'य एष मनुष्यः प्रेक्षापूर्वकारी सुहृद् भवति स पश्यति 'यदीमं चोराः पश्यन्ति ध्रुवमेवास्य वधबन्धनादिपरिक्लेशाः' इति, स बुद्ध्या संप्राप्य निवर्तयति' इति भाष्यात्॥ ६ अतदावेशादिति । अध्रौव्यस्याविवक्षितत्वादित्यर्थः । तथा चोक्तं भाष्ये—'गतियुक्तेष्वपादानसंज्ञा नोपपद्यते अध्रुवत्वात् ' इत्याक्षेपस्य समाधानाय ''न वाऽध्रौव्यस्याविवक्षितत्वात् '' इति ॥ अस्यायमर्थः 'अध्रौव्यसूचकस्य विशेषणस्य न विवक्षितत्वम् , किन्तु विशेष्यगतधर्मस्यैव ध्रुवत्वेन तस्यैव विवक्षितत्वम् । ' इति ॥ तथा चोक्तं भाष्ये—''इह तावद् 'अश्वात्त्रस्तात् पतितः ' इति यत्तदश्वेऽश्वत्वमाशुगामित्वं तद् ध्रुवं तच्च विवक्षितम् । 'रथात् प्रवीतात् पतितः' इति यत्तद्रथे रथत्वं रमन्तेऽस्मिन् रथ इति तद् ध्रुवं तच्च विवक्षितम् । 'सार्थाद् गच्छतो हीनः ' इति यत्तत्सार्थे सार्थत्वं सहार्थीभावः तद् ध्रुवम् , तच्च विवक्षितम्'' इति॥ विशेष्यानुपादाने 'धावतः पतितः' इत्यादौ तु सतोऽप्यध्रौव्यस्य 'अनुदरा कन्या' इत्यत्रेव विवक्षा नास्ति ॥ ७ पर्वतावधिकेति । पर्वताभिन्नैकापादानकेति रीत्या शाब्दबोधे भानमिति बोध्यम् ॥ ८ ध्रुवग्रहेति । अपायजनकं यद् ध्रुवमवधित्वोपयोगिचेष्टानाश्रयस्तदेवापादानमिति सूत्रार्थेऽपादानस्यावधिभावोपगमातिरिक्तव्यापाराभावबोधनाय ध्रुवग्रहणम् । करणादीनां तु तत्त्वोपगमातिरिक्तोऽपि स्वव्यापारोऽस्तीति नागेशः ॥ ९ कारकमिति । यद्विषयकत्वेन जुगुप्सादीनां विवक्षा तत्कारकमित्यर्थः ॥ कारकत्वेनाविवक्षायां संबन्धित्वेन विवक्षायां तु 'पापस्य जुगुप्सते' इति षष्ठी भवत्येव सत्यभिधाने ॥ १० तमब्ग्रहणेनेति । 'स्वरितेनाधिकारः' इत्यस्य 'अधिकः कारोऽधिकारः' इत्यर्थाश्रयणेन बुद्धिपरिकल्पितविभागस्याप्याश्रयणाद्वेति बोध्यम् ॥

त्रायते इति वा ॥ (८६०) (सू) **पराजेरसोढः** । १।४।२६ । पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् । अध्ययनात्पराजयते । ग्लायतीत्यर्थः । असोढः किम् । शत्रून्पराजयते । अभिभवतीत्यर्थः ॥ (८६१) (सू) **वारणार्थानामीप्सितः** १।४।२७ प्रवृत्तिविघातो वारणम् । वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् । यवेभ्यो गां वारयति । ईप्सितः किम् । यवेभ्यो गां वारयति क्षेत्रे ॥ (८६२) (सू) **अन्तर्धौ येनादर्शनमिच्छति** । १।४।२८ । व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः । अन्तर्धौ किम् । चौरान्न दिदृक्षते । इच्छतिग्रहणं किम् । अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् ॥ (८६३) (सू) आख्याती-

---

न चैवं संयुगस्यापादानत्वापत्तिरिति वाच्यम्, परया अधिकरणसंज्ञया अपादानसंज्ञाबाधात् । अधिकरणत्वाविवक्षायां तु इष्टापत्तेः। भीत्रार्थेति किम्, व्याघ्रं पश्यति । न च कर्मत्वेन बाधः शङ्कयः, कर्मत्वाविवक्षायां शेषषष्ठीं बाधित्वा पञ्चमीप्रसङ्गादित्याहुः ॥ भयहेतुग्रहणं चिन्त्यप्रयोजनम् । अरण्ये बिभेतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेरिति चेत् । अत्र वदन्ति—भयहेतुग्रहणाभावे कारकशेषत्वविवक्षायामतिप्रसङ्गः स्यात् । तथा च अरण्यस्य चोराद्बिभेतीति प्रयोगो न स्यादिति ॥ (८६०) **पराजेः**—। **अध्ययनादिति** । अध्ययनसंबन्धिनी ग्लानिरित्यर्थः । कारकशेषत्वेन षष्ठ्यां प्राप्तायामिदम् ॥ **पराजयत इति** । 'विपराभ्यां जेः ३५८६' इति तङ् । असोढ इति क्तार्थो भूतकालो न विवक्षितः । तेनाध्ययनात् पराजेष्यत इत्यादि सिद्धम् । न चासोढग्रहणं व्यर्थं, शत्रून् पराजयत इत्यत्र परत्वात् कर्मसंज्ञासिद्धेः ॥ अत्रापि वदन्ति—कर्मत्वाविवक्षायां शेषषष्ठीं बाधित्वा पञ्चमी स्यात्, सा मा भूदिति कर्तव्यमेवासोढग्रहणम् ॥ (८६१) **वारणार्था**—। **यवेभ्य इति** । यवसंयोगात् प्रागेव गां निवारयतीति 'ध्रुवमपाये-८५६' इत्यनेनासिद्धावयमारम्भः । बुद्धिपरिकल्पितापायमङ्गीकुर्वतो भाष्यकारस्य मते तु वैयर्थ्यमेतस्य स्फुटमेव ॥ **गां वारयतीति** । 'वृञ् वरणे' चुरादिः । गामित्यत्र ईप्सितत्वप्रयुक्तापादानसंज्ञा न भवति । ईप्सिततमत्वविवक्षायां परत्वात् कर्मसंज्ञाप्रवृत्तेः ॥ नन्वेवमीप्सितग्रहणमेव व्यर्थं, क्षेत्रे वारयतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेः । सत्यम्, अधिकरणस्य शेषत्वविवक्षायामिदं प्रत्युदाहरणमिति पूर्वोक्तरीत्या पदप्रयोजनस्येहापि कल्पयितुं शक्यत्वात् ॥ (८६२) **अन्तर्धौ**—। येनेति कर्तरि तृतीया । न च कृद्योगषष्ठीप्रसङ्गः, उभयप्राप्तौ कर्मण्येवेति नियमात् । अत्र आत्मन इति गम्यमानत्वादस्त्युभयोः प्राप्तिः ॥ **निलीयत इति** । 'लीङ् श्लेषणे' दैवादिकः । नन्वन्तर्धाविति व्यर्थं, न दिदृक्षते चोरानित्यत्र परत्वात्कर्मसंज्ञासिद्धेः । अत्राहुः—चोराः आत्मानं मा द्राक्षुरिति बुद्ध्या चोरान्न दिदृक्षत इत्ययमर्थोऽत्र विवक्षितस्तत्र कर्मणः शेषत्वविवक्षायामिदं पूर्ववत् प्रत्युदाहरणमिति ॥ शब्दकौस्तुभे तु—'अन्तर्धौ' इत्येतच्चिन्त्यप्रयो-

---

१ **अध्ययनात्पराजयत इति** । कृत्यसाध्यत्वज्ञानसमानाधिकरणस्तद्विषयकोत्साहाभावो धातोरर्थः । विषयोऽत्रापादानम् ॥ देवदत्तकर्तृकोऽध्ययनापादान उत्साहाभाव इति बोधः ॥ 'य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति दुःखमध्ययनं दुर्धरं च गुरवश्च दुरुपचारा इति स बुद्ध्या संप्राप्य निवर्तते' इति भाष्यमते—अध्ययनापादानिका उत्साहाभावपूर्विका निवृत्तिरिति बोधः ॥ २ शत्रून् पराजयते इत्यत्र तिरस्कारानुकूलो व्यापारो धात्वर्थः ॥ ३ **वारयतीति** । भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्यापारो धात्वर्थः । अभावप्रतियोगिव्यापारजन्यफलाश्रयोऽत्रापादानम् । यवापादानकं गोकर्मकं वारणम् अर्थात् यवभक्षणजनकगोनिष्ठव्यापाराभावानुकूलो देवदत्तकर्तृको व्यापार इति बोधः ॥ 'पश्यत्ययं यदीमा गावस्तत्र गच्छन्ति ध्रुवः सस्यविनाशः सस्यविनाशे चाधर्मश्च राजभयं च । स बुद्ध्या संप्राप्य निवर्तयति' इति भाष्यमते भक्षणादिजनकव्यापाराभावानुकूलव्यापारपूर्विका निवर्तना धातोरर्थः ॥ यवापादानिका गोकर्मिका भक्षणादिजनकव्यापाराभावानुकूलव्यापारपूर्विका निवर्तनेति बोधः ॥ ४ **यत्कर्तृकेति** । एतदभावे इच्छाकर्तुरेवापादानत्वापत्तिरिति भावः ॥ ५ **निलीयत इति** । स्वकर्मकदर्शनाभावप्रयोजकदेशविशेषस्थितिर्निलीयतेरर्थः । धात्वर्थदर्शनकर्ताऽत्रापादानम् । तथा च कृष्णकर्तृका मात्रपादानिका अर्थाद् मातृकर्तृकस्वकर्मकदर्शनाभावप्रयोजिका देशविशेषस्थितिरिति बोधः ॥ "पश्यत्ययं यदि मामुपाध्यायः पश्यति ध्रुवं मे प्रेषणमुपालम्भो वेति स बुद्ध्या संप्राप्य निवर्तते" इति भाष्यमते तु मात्रपादानिका अर्थात् मातृकर्तृकस्वकर्मकदर्शनाभावप्रयोजिका कृष्णकर्तृका देशविशेषस्थितिपूर्विका निवृत्तिरिति बोधः ॥ ६ **इच्छतिग्रहणमिति** । अन्तर्धौ यत्कर्तृकदर्शनस्याभावस्तदपादानमित्येवार्थोऽस्त्विति भावः ॥ ७ **सत्यपीति**। अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः ॥ इच्छतिग्रहणाभावे तु यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः ॥ ८ **ईप्सिततमत्वेति**। प्रकृतधात्वर्थप्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयाविवक्षायामित्यर्थः । ईप्सितपदेन तु फले प्रकृतधात्वर्थेति विशेषणाभावसूचनाद् भक्षणादीनां वारयत्यर्थत्वाभावेऽपि तदाश्रयभूतानां यवादीनामपादानत्वमव्याहतमेव । न तु कर्मत्वम्, तमपा तल्लक्षणे फलेऽपि प्रकृतधात्वर्थविशेषणसूचनादिति भावः ॥ ९ **उभयोः प्राप्तिरिति** । 'उभयोः प्रयोग एवोभयोः प्राप्तिर्गृह्यते, न त्वेकस्य गम्यमानत्वेऽपि' इति सूचितमेव भाष्यकृता "मान इत्यकारो भावे । आत्मन इति कर्मणि षष्ठी । कथम् । 'कर्तृकर्मणोः कृति' इति ।" इति ग्रन्थेनेति चिन्त्यमेवेदमिति सौत्रत्वादेवात्र षष्ठी नेति बोध्यम् ॥

पयोगे। १।४।२९। नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्यायादधीते। उपयोगे किम्। नटस्य गाथां शृणोति॥ (८६४) जनिकर्तुः प्रकृतिः। १।४।३०। जायमानस्य हेतुरपादानं स्यात्। ब्रह्मणः प्रजाः प्रजायन्ते॥ (८६५) भुवः प्रभवः। १।४।३१। भवनं भूः। भूकर्तुः प्रभवस्तथा। हिमवतो गङ्गा प्रभवति। तत्र प्रकाशत इत्यर्थः॥

---

जनमिति स्थितम्॥ (८६३) **आख्यातोप-।** **नियमपूर्वकेति।** तत्रैवोपयोगशब्दो रूढ इति भावः॥ आख्यातेत्येतत् तृजन्तमित्याह—**वक्तेति॥** **उपाध्यायादिति।** उपेत्य अस्मादधीयत इति उपाध्यायः, 'इङश्च ४९८०' इति घञ्। अध्ययनं तु गुरूच्चारणोत्तरोच्चारणं नियमपूर्वकम्॥ **नटस्येति।** गाथाकर्मकं नटसंबन्धि श्रवणमित्यर्थः। नटस्य गाथाऽन्वये तु कारकत्वाभावादेवाप्राप्तेरुपयोगग्रहणं समर्थितं न स्यात्॥ (८६४) **जनिकर्तुः-।** जननं जनिरुत्पत्तिः। 'इणजादिभ्यः ५०९९' इति जनेर्भावे इण्। 'जनिवध्योश्च ३३३१' इति वृद्धिप्रतिषेधः। तस्याः कर्तेति शेषषष्ठ्या समासो, न तु कारकषष्ठ्या 'तृजकाभ्याम्-१०२७' इति निषेधात्। एवं चोत्पत्त्याश्रयस्य यो हेतुस्तदपादानमित्यर्थाद्धात्वन्तरयोगेऽप्यपादानत्वं भवत्येव। 'अङ्गादङ्गात्संभवसि-' इति यथा। तदेतदाह-**जायमानस्येति।** एतेन 'इक्श्तिपौ धातुनिर्देशे ५०९५' इति इका निर्देशोऽयं जनिरित्याश्रित्य 'गमहन-३१५६' इत्युपधालोपमर्थासंगतिं समासानुपपत्तिं चोद्भाव्य व्याकरणाधिकरणे गर्जन्तो मीमांसकाः समाहिता इति भावः॥ इह प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतम्। पुत्रात् प्रमोदो जायते इत्युदाहरणात्। उपादानमात्रपरमिति तु भाष्यकैयटमतं तदुभयसाधारणमुदाहरणमाह—**ब्रह्मण इति।** ब्रह्मा हिरण्यगर्भः। स च हेतुरेव न तूपादानम्। किञ्च, मायोपहितं चैतन्यं ब्रह्म, तद्धि सर्वकार्योपादानमिति वेदान्तसिद्धान्तः॥ (८६५) **भुवः-।** **भवनं भूरिति।** संपदादित्वाद्भावे क्विप्। पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमनुवर्तते स्वरितत्वादित्याह—**भूकर्तुरिति।** प्रभवत्यस्मादिति प्रभवः, 'अकर्तरि च कारके-४९७६' इत्यधिकारादपादानार्थे 'ऋदोरप् ५०२४'॥ जनिकर्तुरित्येव सिद्धे निरर्थकमिदमित्याशङ्कां परिहरन्नाह—**तत्र प्रकाशत इति।** प्रथमं दृश्यत इत्यर्थः। एष चार्थो धातूनामनेकार्थत्वाल्लभ्यते। तथा चाभूतप्रादुर्भावो जनिः। अन्यतः सिद्धस्य प्रथममुपलम्भः प्रभव इत्यर्थभेदोऽस्तीति भावः॥ 'भीत्रार्थानाम्-८५९' इत्यारभ्येयं सप्तसूत्री भाष्ये प्रत्याख्याता। तत्रेत्थमुपपत्तिसंभवः-'चौरेभ्यो बिभेति' भयान्निवर्तत इत्यर्थः, त्रायते रक्षणेन चौरेभ्यो निवर्तयतीत्यर्थः, पराजयते ग्लान्या निवर्तत इत्यर्थः, वारयतीति प्रवृत्तिं प्रतिबन्धान् निवर्तयतीत्यर्थः, निलीयते निलयनेन वर्तते इत्यर्थः, अधीते उपाध्यायान्निःसरन्तं शब्दं गृह्णातीत्यर्थः। ब्रह्मणः प्रपञ्चो जायत इत्यत्रापि ततोऽपक्रामन्निर्गच्छतीत्यर्थः, प्रभवतीत्यत्रापि भवनपूर्वकं निःसरणमर्थः, तथा च 'ध्रुवमपाये-८५६' इत्यनेनैवेष्टरूपसिद्धिरिति॥ वस्तुतस्तु निवृत्तिविस्मरणादिधात्वन्तरार्थविशिष्टे स्वार्थे वृत्तिमाश्रित्य यथाकथंचिदुक्तप्रयोगाणां समर्थनेऽपि मुख्यार्थपुरस्कारेण षष्ठीप्रयोगो दुर्वारः, नटस्य शृणोतीतिवत्। न ह्युपाध्यायनटयोः क्रियानुकूलव्यापारांशे विशेषो वक्तुं शक्यः। अनभिधानब्रह्मास्त्रमाश्रित्य,

---

१ **नियमेति।** उपयोगशब्दस्य तत्रैव रूढेः। नियमो ब्रह्मचर्यादिः॥ २ **उपाध्यायेति।** उपाध्यायापादानकमध्ययनम् अर्थाद् उपाध्यायापादानकोच्चारणोत्तरकालिको नियमपूर्वको ग्रन्थस्वीकारानुकूलो व्यापारो देवदत्तकर्तृक इति बोधः॥ "अपक्रामति तत्तस्मादध्ययनम्" इति भाष्यमते तु "उपाध्यायादपक्रान्तं शब्दजातमुपादत्ते" इति प्रतीतेः 'उपाध्यायापादानकापक्रमणकर्तृशब्दजातकर्मकोपादानमिति बोधः॥ ३ **प्रकृतिरिति।** उपादानकारणमित्यर्थः॥ निमित्तकारणपर्यायहेतुपरत्वे 'दण्डाद् घटो जायते, तुरीवेमादितः पटो जायते' इत्यस्याप्यापत्तिः स्यात्॥ 'पुत्रात्प्रमोदो जायते' इत्यस्य प्रामाणिकत्वे द्वेधा निर्वाहः-'बाहुलकं प्रकृतेस्तनुदृष्टेः' इति वार्तिकप्रयोगात् "विभाषा गुणेऽस्त्रियाम्" इत्यत्र 'गुणेऽस्त्रियाम्' इत्यस्य प्रायिकत्वेन दण्डादित्यादौ पञ्चमीत्येकः। स्वरूपसतः पुत्रस्य प्रमोदहेतुत्वे मूर्खपतितादिपुत्रतोऽपि प्रमोदोत्पत्त्यापत्तिस्तस्मात् अत्र पुत्रपदं पुत्रनिष्ठसौशील्यादिसद्गुणज्ञानपरमेवेति पितृनिष्ठं पुत्रवृत्तिसौशील्यादिसद्गुणविषयकज्ञानमेव प्रमोदरूपत्वेन परिणमते इत्यङ्गीकारेणात्राप्युपादानकारणत्वेनैवापादानसंज्ञेति द्वितीयः। ज्ञाने प्रमोदस्य समवायिकारणत्वाभावेऽप्यसमवायिकारणत्वसत्त्वेनोपादानकारणत्वाक्षतेः। क्वचित्समवायिकारणनाशेनेव क्वचिदसमवायिकारणनाशेनापि कार्यनाशान्न कोऽपि दोष इति॥ किंच "हेतौ" "जनिकर्तुः पञ्चमी" "अकर्तर्यृणे" "विभाषा गुणेऽस्त्रियाम्" इत्येवं पाठेन सकलेष्टसिद्धौ "जनिकर्तुः प्रकृतिः" इति प्रकृतिपदोपादानेनापादानसंज्ञाकरणसामर्थ्यात् 'जायमानस्य विकृतिवाचकस्य प्रकृतिरपादानम्' इत्येवार्थः कल्पनीय इति 'ब्रह्मणः प्रजाः प्रजायन्ते' 'पितुः पुत्रो जायते' इत्यादौ तु तदैक्षत 'एकोऽहं बहु स्यां प्रजायेय' इति 'आत्मा वै जायते पुत्रः' इति श्रुतिस्मृतिभ्यां स्फुट एव प्रकृतिविकृतिभावपर्यायपरिणामः इति दिक्॥ ४ **ब्रह्मण इति।** ब्रह्मापादानिका प्रजाकर्तृकोत्पत्तिरिति बोधः॥ "अपक्रामन्ति तास्तस्मात्" इति भाष्यमते तु ब्रह्मापादानकनिस्सरणकर्तृप्रजाकर्तृकाभिव्यक्तिरिति बोधः॥ ५ **प्रभवतीति।** नहि केवलस्य भवत्यर्थस्य प्रभवेन योगः किंतु सोपसर्गस्य भुव इति प्रोपसृष्टः प्रयुक्तः। एवं च सूत्रेऽप्युपादानमुपलक्षणमेवेति कल्पनायां 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे' इत्यत्र पूर्वेणैव साधनीयाऽपादानसंज्ञेति बोध्यम्॥ गङ्गायां हिमवत्परिणामत्वाभावादनेनापादानसंज्ञा। हिमवदपादानको गङ्गाकर्तृकः प्रथमप्रकाश इति बोधः॥ "अपक्रामन्ति तास्तस्मादापः" इति भाष्यमते तु हिमवदपादानापक्रमणकर्तृगङ्गाकर्तृकः प्रथमप्रकाश इति बोधः॥ ६ **सिद्ध इति।** परिमाणमस्थल एव 'जनिकर्तुः' इत्यस्य प्रवृत्त्या चिन्त्यमिदम्॥

( ८६६ ) वा० ल्यब्लोपे कर्म[1]ण्यधिकरणे च ॥ प्रासादात्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः[2] । श्वशुराज्जिह्रेति । श्वशुरं[3] वीक्ष्येत्यर्थः । ( ८६७ ) गम्यमाना[4]ऽपि क्रिया कारकविभक्तीनां निमित्तम् इत्युक्तम् । कस्मात्त्वं नद्याः ॥ ( ८६८ ) वा० यतश्चाध्वकालनिर्माणं तत्र पञ्चमी ॥ ( ८६९ ) वा० तद्युक्तादध्वनः प्रथमासप्तम्यौ ॥ ( ८७० ) वा० कालात्सप्तमी च वक्तव्या ॥ वना[5]द्ग्रामो योजनं योजने वा । कार्ति[6]क्या आग्रहायणी मासे ॥ ( ८७१ ) अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ।२।३।२९। एतैर्योगे पञ्चमी स्यात् । (८७२) अन्य इत्यर्थ[7]ग्रहणम् । इतरग्रहणं प्रपञ्चार्थम् । अन्यो[8] भिन्न इतरो वा कृष्णात् । आराद्वनात् । ऋते[9] कृष्णात् । पूर्वो[10] ग्रामात् । दिशि दृष्टः[11] शब्दो दिक्शब्दः । तेन (७७३ ) संप्रति देश-

---

प्रत्याख्यानं तु नातीव मनो[12]रमम् । एवं ' जुगुप्साविराम-८५८' इत्यादिवार्तिकमप्यारम्भणीयम् । तथा च सूत्रवार्तिकमतमेवेह प्रबलम् । तथा ' ध्रुवं ' ' भयहेतुः ' ' असोढः' इत्यादिसंज्ञिनिर्देशोऽपि सार्थकः । परत्वात्तत्तत्संज्ञाप्राप्तावपि शेषत्वविवक्षायां ' न माषाणामश्नीयात् ' इत्यादाविव षष्ठ्या इष्टतया तत्रापादानसंज्ञाया वारणीयत्वात् । एतच्च शब्दकौस्तुभे स्पष्टम् ॥ ( ८६६ ) ल्यब्लोप इति । ल्यबन्तस्य गम्यमानार्थत्वाद[13]प्रयोग इत्यर्थः । ल्यब्ग्रहणमिह ल्यबर्थपरं, तेन क्त्वो[14]ऽपि लोपे सिध्यति आसने स्थित्वा प्रेक्षते आसनात्प्रेक्षत इति ॥ ( ८६८ ) यतश्चेति । यदवधित्वेनाश्रित्याध्वनः कालस्य वा निर्माणं परिच्छेदः प्रतिपाद्यते ततः पञ्चमीत्यर्थः । तेन पञ्चम्यन्तार्थेनार्थद्वारा युक्तान्निर्मीयमाणाध्ववाचिनः प्रथमासप्तम्यौ स्तः ॥ ( ८७० ) कालादिति । इहापि तद्युक्तादित्यपेक्षते ॥ आग्रहायणीति । अग्रे हायनमस्याः सा । [२८४३] प्रज्ञादेराकृतिगणत्वात् स्वार्थिकोऽण् । 'पूर्वपदात्संज्ञायाम्-१२३३' इति णत्वम् ॥ ( ८७१ ) अन्यारा— । ( ८७२ ) अर्थग्रहणमिति । व्याख्यानादिति भावः ॥ प्रपञ्चार्थमिति । न च 'इतरस्त्वन्यनीचयोः' इत्यमरोक्तेर्नीचार्थस्येदं ग्रहणमस्तीति वाच्यम् , 'अस्मात्तारो मन्द्रो वा' इतिवत् 'पञ्चमी विभक्ते ९३७' इत्यनेनैव सिद्धत्वात् ॥ अन्यो भिन्न इतरो वेति । न चैवं घटः पटो नेत्यत्रातिप्रसङ्गः नञोऽपि भेदे शक्तत्वादिति वाच्यम् , निपातानां द्योतकत्वमेव न तु वाचकत्वमित्यभ्युपगमात् ॥ आराद्वनादिति । इह 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ८९४' इति प्राप्ता ॥ ऋते

---

१ कर्मणीति । प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः ॥ २ इत्यर्थ इति । पूर्वकालकं प्रासादकर्मकारोहणकर्तृदेवदत्तकर्तृकं प्रेक्षणम् पूर्वकालकासनाधिकरणकोपवेशनकर्तृदेवदत्तकर्तृकं प्रेक्षणम् इति क्रमेण बोधः ॥ ३ श्वशुरमिति । पूर्वकालकश्वशुरकर्मकवीक्षणकर्तृकर्तृका लज्जेति बोधः ॥ ४ गम्यमानेति । विशिष्य तद्वाचकपदानुपात्ताऽपीत्यर्थः ॥ ५ वनादिति । अत्राव्यवहितोत्तरत्वं पञ्चम्यर्थः । स्वाव्यहितोत्तरवृत्तित्वं प्रथमासप्तम्योरर्थः । एवञ्च 'वनाव्यवहितोत्तरयोजनाव्यवहितोत्तरदेशवृत्तिर्ग्रामः' इति बोधः ॥ “इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते—'गवीधुमतो निःसृत्य यदा चत्वारि योजनानि गतानि भवन्ति ततः सांकाश्यम् , चतुर्षु योजनेषु गतेषु ततः सांकाश्यम् ' इति” इति भाष्यमते तु वनावधिकविभागानुकूलव्यापारसंबद्धयोजनगमनज्ञाप्यप्राप्यताविशिष्टो ग्राम इति सप्तमीपक्षे बोधः, प्रथमापक्षे—वनावधिकविभागानुकूलव्यापारसंबद्धयोजनगमनसंभावना प्राप्यताविशिष्टो ग्राम इति बोधः ॥ ६ कार्त्तिक्या इति । स्वावयवकत्वं पञ्चम्यर्थः । स्वाव्यवहितोत्तरकालवृत्तित्वं सप्तम्यर्थः । कार्त्तिक्यवधिकत्रिंशत्तिथ्यात्मकमासाव्यवहितोत्तरकालवृत्तिराग्रहायणीति बोधः ॥ 'कार्त्तिक्याः प्रभृति आग्रहायणी गते मासे' इति भाष्यमते प्रभृतिशब्दयोगे जातायाः पञ्चम्या अवधित्वमेवार्थः । कार्त्तिक्यवधिकत्रिंशत्तिथ्यात्मकमासगमनज्ञाप्यप्राप्यताविशिष्टाग्रहायणीति बोधः ॥ ७ अर्थग्रहणमिति । भाष्ये तु न दृश्यते । अत एव 'घटादेकः' इत्यस्यासाधुत्वमेव । 'घटः पटो न' इत्यादौ पञ्चमी च न । नञो भेदवदर्थकत्वेऽपि तद्वाच्यस्याक्रियात्वेन कारकत्वानुपयोजकत्वात् ॥ भिन्नशब्दयोगे पञ्चमी तु 'भिदिर् विदारणे' इत्यत्र भेदज्ञानविषयत्वमपि विदारणमेकत्वेन गृहीतस्येति तथा बोधे बुद्धिविदारणस्य तत्रापि सत्त्वात्तद्योगेऽप्यपादानत्वात् । अत एव 'घटाद् भेदः' इति सिद्धम् । तथा चेतरग्रहणमपि स्वार्थमेवेति ॥ ८ अन्य इति । स्वप्रतियोगिकभेदसंबन्धः पञ्चम्यर्थः । तेन प्रकृत्यर्थस्यान्यस्मिन्नन्वयः । कृष्णप्रतियोगिकभेदाविशिष्ट इति बोधः ॥ एवमेव 'कृष्णादितरः' इत्यत्रापि ॥ ९ ऋते कृष्णादिति । 'न सुखम्' इति शेषः । ऋतेशब्दार्थः संसर्गाभावः । पञ्चम्यर्थः प्रतियोगित्वम् । कृष्णशब्दस्तद्भक्तिलाक्षणिकः । कृष्णभक्तिप्रतियोगिकाभावप्रयोज्यः सुखकर्तृकोत्पत्त्यभाव इति बोधः ॥ ' कृष्णादृते दुःखम् ' इत्यत्र तु ऋतेशब्दार्थस्य सामानाधिकरण्येनेतरत्रान्वयः । 'कृष्णभक्तिप्रतियोगिकाभावसमानाधिकरणं दुःखम्' इति बोधः ॥ 'कृष्णादृते नरः शोच्यः' इत्यत्राभावस्याश्रयतयाऽन्यत्रान्वयः । कृष्णभक्तिप्रतियोगिकाभाववान्नरः शोच्य इति बोधः ॥ 'कृष्णादृते न धनुर्धरः' इत्यत्र भेदवांस्तदर्थः । 'कृष्णभिन्नो न धनुर्धरः' इति बोधः ॥ १० पूर्वो ग्रामादिति । उदयाचलसंनिहितदेशः प्राक्-पूर्वशब्दार्थः । अस्ताचलसंनिकृष्टदेशः प्रत्यक्-पश्चिमशब्दार्थः । मेरुसंनिकृष्टदेशः उदग्-उत्तरशब्दार्थः । मेरुविप्रकृष्टदेशोऽवाग्-दक्षिणशब्दार्थः ॥ ग्रामावधिक उदयाचलसंनिकृष्टदेश इति बोधः ॥ ११ दृष्ट इति । लोके सर्वैः प्रयुक्तत्वेनेत्यादिः ॥ १२ मनोरममिति । 'वचिरन्तिपरो न प्रयुज्यते' इत्यत्र न किमपि विनिगमकमनभिधानमन्तरेणेतितस्यानुसरणस्य सर्वैरेव करणीय इति चिन्त्यमेतत् ॥ यथोत्तरं मुनीनां प्रामाण्यस्य सर्वैरेवाङ्गीकरणीयतया भाष्यमतमेवानुसरणीयमिति बोध्यम् ॥ १३ अप्रयोग इति । तदन्तशब्दाप्रयोगेऽपि तदर्थज्ञान इत्यर्थः । यथा 'प्रविश, पिण्डीम् ' इत्यादौ ' इग्यणः-' इति सूत्रभाष्योक्तरीत्या वाक्यैकदेशप्रयोगे प्रयुक्तस्यैव पदस्य वृत्त्या संपूर्णवाक्यार्थबोधकता तथा प्रकृतेऽपीति बोध्यम् ॥ १४ क्त्वोऽपीति । गम्यमानार्थत्वात्समानार्थकानामप्रयोगरूपलोपे वैलक्षण्याभावाच्चिन्त्य एवास्य लेखस्योपयोग इति बोध्यम् ॥

कालवृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः । ( ८७४ ) अवयववाचियोगे तु न, तस्य परैमाम्रेडितमिति निर्देशात् । पूर्वं कायस्य । अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि पष्ठ्यतसर्थेति षष्ठीं बाधितुं पृथग्ग्रहणम् । प्राक् प्रत्यग्वा ग्रामात् । आच्–दक्षिणा ग्रामात् । आहि–दक्षिणाहि ग्रामात् । ( ८७५ ) अपादाने पञ्चमीति सूत्रे कार्त्तिक्याः प्रभृतीति भाष्यप्रयोगात्प्रभृतियोगे पञ्चमी । भवात्प्रभृति आरभ्य वा सेव्यो हरिः । ( ८७६ ) अपपरिबहिरिति समासविधानाज्ज्ञापकाद्बहिर्योगे पञ्चमी–ग्रामाद्बहिः ॥ ( ८७७ ) (सू) **अपपरी वर्जने** । १ । ४ । ८८ । एतौ वर्जने कर्मप्रवचनीयौ स्तः ॥ ( ८७८ ) **आङ् मर्यादावचने** । १ । ४ । ८९ । आङ् मर्यादायामुक्तसंज्ञः स्यात् । वचनग्रहणादभिविधावपि ॥ ( ८७९ ) (सू) **पञ्चम्यपाङ्परिभिः** । २ । ३ । १० । एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । अप हरेः, परि हरेः संसारः । परिरत्र वर्जने । लक्षणादौ तु–हरिं परि ॥ आ मुक्तेः संसारः । आ सकलाद्ब्रह्म ॥ ( ८८० )

---

**कृष्णादिति** । कथं तर्हि 'फलति पुरुषाराधनमृते' इति प्रयोग इति चेत् । प्रमादोऽयमिति हरदत्तः । अन्ये तु–'ततोऽन्यत्रापि दृश्यते ७९६' इति दृशिग्रहणाच्चैत्रं यावच्छीतमित्यादाविव ऋतेयोगे द्वितीयाऽपि साधुरित्याहुः ॥ अस्मिन् व्याख्याने 'ऋते द्वितीया च' इति चान्द्रसूत्रमनुकूलम् ॥ **दिशि दृष्ट इति** । रूढयेति शेषः । तेनैन्द्र्यादयो नात्र गृह्यन्ते ॥ नन्वेवं ककुबादिग्रहणप्रसङ्ग इति चेत् । अत्राहुः—अन्यतरसाहचर्याद्व्याख्यानाद्वा दिग्भिन्नेऽर्थे यो न दृष्टः सोऽत्र गृह्यत इति ॥ **दिक्शब्दत्वेऽपीति** । यद्यप्यदिक्शब्दोऽप्यञ्चूत्तरपदमस्ति सध्र्यङ्ङित्यादिः, तथापि दिक्शब्दसाहचर्यादञ्चूत्तरपदेन प्रागित्यादिदिक्शब्द एव गृह्यते । तेन सध्र्यङ् देवदत्तेनेत्यत्र नातिप्रसङ्ग इति भावः ॥ **दक्षिणा ग्रामादिति** । दिक्शब्दत्वेनैव सिद्धे आजाहिग्रहणं चिन्त्यप्रयोजनमित्याहुः ॥ (८७५) **प्रभृतियोग इति** । प्रभृत्यर्थैर्योग इत्यर्थः । तथा च 'कार्त्तिक्याः प्रभृति' इति भाष्यं विवृण्वता कैयटेन 'तत आरभ्य' इत्यर्थः, इति प्रयुक्तम् ॥ ( ८७६ ) **ग्रामाद्बहिरिति** । 'ज्ञापकसिद्धं न सर्वत्र' । तेन 'करस्य करभो बहिः' इति सिद्धम् ॥ (८७७) **अपपरी**—। वर्जने किम्, परिषिञ्चति । सर्वत्र इत्यर्थः । अत्रोपसर्गत्वात् षत्वम् ॥ ( ८७८ ) **वचनग्रहणादिति** । विना तेनेति मर्यादा, सह तेनेत्यभिविधिः, इत्यत्र य उपात्तो विशेषो विशेषणांशरूपः सोऽत्र न गृह्यते वचनग्रहणसामर्थ्यात्, किन्तु अवधिमात्रं विवक्ष्यते इत्यर्थद्वयसंग्रहः॥ यद्वा मर्यादाशब्दो यस्मिन्नुच्यते तत् मर्यादावचनं, तद्धि 'आङ्मर्यादाभिविध्योः ९७०' इति सूत्रं तत्र य आङ् दृष्टः स उक्तसंज्ञ इत्यर्थः ॥(८७९) **परि हरेरिति** । हरिं वर्जयित्वेत्यर्थः । 'परेर्वर्जने वा वचनम् २८८५' इति वार्तिकात् पक्षे द्विर्वचनाभावः ॥ **परिरत्रेति** । अत्र पञ्चमीविधौ वर्जनार्थेनापेन साहचर्यादिति भावः ॥ **आ मुक्तेरिति** । मुक्तिं मर्यादीकृत्येत्यर्थः ॥ **आ सकलादिति** । सकल-

---

१ **चैत्रात्पूर्व इति** । प्रतियोगितद्ध्वंसानधिकरणकालभवः पूर्वपदार्थः । तत्तदवधिबोधकपदसमभिव्याहारवशाच्च तद्रूपप्रतियोगितद्ध्वंसानधिकरणकालस्य तत्त्वेन भानम् । चैत्रावधिकपूर्वकालभवः फाल्गुन इति बोधः । 'चैत्रानधिकरणचैत्रध्वंसानधिकरणकालभवः फाल्गुनः' इति यावत् ॥ चैत्रात्पर इत्यत्र चैत्रावधिकपदकालभव इति बोधः । चैत्रानधिकरणचैत्रध्वंसाधिकरणकालभव इति यावत् ॥ कालस्य क्रियामात्रपरिच्छेदकत्वात्तत्तद्भवपर्यन्तं पूर्वादिशब्दानामीदृशे लक्षणा । लक्षणाभावे तु 'चैत्रात्पूर्वं फाल्गुनः' इत्येव प्रयोगः ॥ 'गृहान्मम परा गङ्गा काश्याः सैवापरा मता ।' इत्यत्र तु विप्रकृष्टदेशस्थः संनिकृष्टदेशस्थश्च परापरशब्दार्थः । अवधिः पञ्चम्यर्थः । मत्संबन्धिकगृहावधिकपरत्ववती गङ्गेत्यादिरीत्या बोधः॥ २ **आरभ्येति** । 'मेरुपृष्ठादारभ्य ध्रुवपर्यन्तं ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोकः' इति पातञ्जलभाष्यप्रयोगाद् अवधिमादायेत्यर्थे 'आरभ्य' इत्येतद्योगे पञ्चमीसाधुत्वमवसीयते ॥ 'अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोकः' इति तन्नत्यप्रयोगात् गृहीत्वेत्यर्थे 'आरभ्य' इत्येतद्योगे द्वितीयाऽपि साधुरिति बोध्यम् । यत्र पञ्चमी तत्र गम्यमानविश्लेषावधित्वेनापादानत्वमवगम्य पञ्चमी साधनीयेति तत्त्वम् । 'आरभ्य तस्यां दशमीं तु यावत्' इत्यादौ प्रारम्भं कृत्वेत्यर्थे सप्तम्यपि दृश्यते ॥ ३ **समासेति** । 'पञ्चम्या' इत्यादिः ॥ ४ **ग्रामाद्बहिरिति** । समभिव्याहृतपदार्थतावच्छेदकानाधिकरणस्तत्संनिहितदेशः, तत्स्थं वस्तु च बहिष्ट्वेनोच्यते । अवधित्वं पञ्चम्यर्थः । ग्रामावधिकसंनिहितदेश इति बोधः ॥ ५ **मर्यादेति** । मर्यादा द्विविधा–कालकृता देशकृता च ॥ अभिविधिरपि द्विविधः–कालिको दैशिकश्च ॥ ६ **अप हरेरिति** । ऋतेसमानार्थावपपरी । हरिशब्दस्तद्भक्तिलाक्षणिकः । हरिभक्तिप्रतियोगिकाभावप्रयोज्यः संसार इति बोधः ॥ ७ **आ मुक्तेरिति** । अत्राङ्द्योत्यो मर्यादामर्यादिभावसंबन्धः पञ्चम्यर्थः । मुक्तिमर्यादकः संसार इति बोधः । संसारे मुक्तिकालप्रागभावाधिकरणनिरूपिततद्भिन्नकालवृत्तित्वविशिष्टव्यापकताबोधस्त्वार्थ इति ध्येयम् । एतदर्थद्योतकयावच्छब्दयोगे तु 'ततोऽन्यत्रापि दृश्यते' इति द्वितीया 'कार्त्तिक्यावैशाखीं यावच्छीतम्' इति यथा । प्रभृत्यर्थयोगे पञ्चमी । कार्त्तिकीप्रभृतिवैशाखीमर्यादकं शीतमित्यर्थः ॥ शीते कार्त्तिक्यादिवैशाखीपूर्वतिथ्यन्तकालनिरूपिततद्भिन्नकालावृत्तित्वसमानाधिकरणव्यापकताबोधस्त्वार्थः ॥ 'प्रयागात्प्रभृति आ काश्या वृष्टो देवः' इत्यादौ दैशी मर्यादा । प्रयागादिकाशीमर्यादकवृष्टिकर्ता देवः इति बोधः । वृष्टौ प्रयागादिकाशीपश्चिमदेशनिरूपितस्वभिन्नावृत्तित्वसमानाधिकरणव्यापकताबोधस्त्वार्थः ॥ ८ **आ सकलादिति** । आङ्द्योत्योऽभिविधिरूपः संबन्धः पञ्चम्यर्थः ॥ सकलव्यापकं ब्रह्मेति बोधः । कालिकोऽभिविधिर्यथा–'कार्त्तिक्याश्चैत्रं यावच्छीतम्' कार्त्तिकीप्रभृतिचैत्रान्त्यकालव्यापकं शीतमिति बोधः ॥ चैत्रपदं तदन्त्यकालपरम् । 'काशीतः पाटलिपुत्रं यावद् वृष्टो देवः' इत्यत्र काशीप्रभृतिपाटलिपुत्रान्तदेशव्यापकत्वं वृष्टौ प्रतीयते ॥

(सू) प्रतिः प्रतिनिधिप्रतिदानयोः ।१।४।९२। एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् ॥(८८१) (सू) प्रतिनिधिप्रतिदाने च यस्मात् ।२।३।११। अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । प्रद्युम्न[1]ः कृष्णात्प्रति । तिलेभ्य[2]ः प्रतियच्छति माषान् । (८८२) (सू) अकर्तर्यृणे पञ्चमी ।२।३।२४। कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात् । शताद्[3]बद्धः । अकर्तरि किम् । शतेन[4] बन्धितः ॥(८८३) (सू) विभाषा गुणेऽस्त्रियाम् ।२।३।२५। गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्या[5]ज्जाड्येन वा बद्धः । गुणे किम् । धनेन कुलम् । अस्त्रियां किम् । बुद्ध्या मुक्तः । विभाषेति योगविभागादगुणे स्त्रियां च क्वचित्- धूमा[6]दग्निमान् । नास्ति[7] घटोऽनुपलब्धेः ॥ (८८४) (सू) पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ।२।३।३२। एभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये च ॥ अन्यतरस्यांग्रहणं समुच्चया[8]र्थम् । पञ्चमीद्वितीये चानुवर्तेते । पृथग्[9] रामेण रामात् रामं वा । एवं विना नाना ॥ (८८५) (सू) करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य । २।३।३३। एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः । स्तोके[10]न स्तोकाद्वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः ॥

---

समभिव्याप्येत्यर्थः ॥ (८८१) **प्रतिनिधिप्रतिदाने**—। अस्मादेव निर्देशाल्लिङ्गादाभ्यां योगे पञ्चमी। 'ज्ञापकसिद्धं न सर्वत्र' इति कृष्णस्य प्रतिनिधिरित्यपि सिद्धमित्या[11]हुः ॥ मुख्यस्याभावे सति तत्स[12]दृश उपादीयते स प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं प्रतिदानम् ॥ ( ८८२) **अकर्तरि**-। **हेतुभूतमिति** । 'हेतौ' इत्यनुवर्तते इति भावः ॥ **पञ्चमी स्यादिति** । तृतीयापवादोऽयम् ॥ **शतेनेति** । शतमिह उत्तमर्णाय धार्यमाणत्वादृणं 'तत्प्रयोजको हेतुश्च ३४९५' इति चकारात् कर्तृसंज्ञं च ॥ **बन्धित इति** । ण्यन्ते प्रयोजककर्तुः शतस्य हेतुसंज्ञाऽप्यस्तीति पञ्चम्यत्र स्यादेवातोऽकर्तरीत्युक्तमिति भावः ॥ ( ८८३ ) **योगविभागादिति** । एतच्च 'हेतुमनुष्येभ्यः-' इति सूत्रे पदमञ्जर्यां स्पष्टम् ॥ **स्त्रियां चेति** । 'बाहुलकं प्रकृतेस्तनुदृष्टेः' । इति वार्त्तिकनिर्देशोऽपीह ज्ञापकः ॥ ( ८८४ ) **पृथग्विना**—। ननु तृतीयाभावपक्षे 'एनपा द्वितीया ८९३' इति प्रकृता द्वितीयैव स्यात् । यदि तु द्वितीया विकल्पेन भवेत्, तदा पञ्चम्यपि स्यात् । सा तु नित्यैव तस्माद्विभक्तित्रयसमावेशो दुरुपपाद इत्यत आह—**अन्यतरस्यांग्रहणं समुच्चयार्थमिति** । निपातानामनेकार्थत्वादिति भावः ॥ **पञ्चमीति** । तत्र मण्डूकप्लुत्या पञ्चमी, द्वितीया तु संनिहितैव । इह पृथगर्थैरिति सूत्रयितव्ये पर्यायत्रयोपादानं पर्यायान्तरनिवृत्त्यर्थम्, तेन हिरुग् देवदत्तस्येत्यत्र नेत्याहुः ॥ 'पृथङ्नानाञ्भिस्तृतीयाऽन्यतरस्याम्' इति सुवचम् । नानाञिति प्रत्ययग्रहणे तदन्तयोर्विनानानाशब्दयोर्लाभात् ॥ **नानेति** । 'हिरुङ् नाना च वर्जने' इत्यमरः । 'नाना नारीं निष्फला लोकयात्रा' इति प्रयोगः ॥ ( ८८५ ) **करणे च**—। अन्यतरस्यामिति वर्तते पञ्चमीति च, तेन करणे तृतीयायां प्राप्तायां पक्षे पञ्चमी विधीयते, तया मुक्ते करणत्वादेव

---

१ **प्रद्युम्न इति** । कृष्णशक्यकार्यकरणसमर्थः प्रद्युम्न इति बोधः ॥ २ **तिलेभ्य इति** । तिलग्रहणपूर्वकं तत्समानमूल्यकमाषप्रत्यर्पणमिति बोधः ॥ ३ **शतादिति** । ऋणभूतशतहेतुकबन्धनकर्मेति बोधः ॥ ४ **शतेनेति** । शतहेतुकर्तृकपुरुषकर्तृकबन्धनकर्मेति बोधः । शतप्रत्यर्पणाभावेन बन्धनमिति शते बन्धनहेतुत्वं प्रयोजकत्वविवक्षया कर्तृसंज्ञा चेति भावः । शास्त्रीयहेतुसंज्ञकस्य तु नात्रातीवोपयोगः, धनेन कुलं जाड्याद्बद्ध इत्यादौ तदनङ्गीकारादिति बोध्यम् ॥ ५ **जाड्यादिति** । जाड्यहेतुकबन्धनकर्मेति बोधः ॥ ६ **धूमादिति** । ज्ञाननिष्ठजन्यजनकभावस्य विषय आरोपो बोध्यः । धूमज्ञानजन्यं वह्निज्ञानमिति बोधः ॥ ७ **नास्ति घट इति** । अनुपलब्धिहेतुकं घटसत्ताभावज्ञानमिति बोधः ॥ ८ **समुच्चयार्थमिति** । परे तु-द्वितीयासमुच्चये न फलम्, 'विना वर्षं विना वातम्' इत्यादौ कृतेशब्दयोग इव 'ततोऽन्यत्रापि दृश्यते' इत्यनेन द्वितीयासिद्धेः । अत एव भाष्ये द्वितीयासमुच्चयो नोक्तः । "पञ्चम्या अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः 'दक्षिणेन ग्रामम्, दक्षिणतो ग्रामस्य' इति" इति भाष्ये द्वितीयायाः पूर्वोपादानेन द्वितीयाविधायकम् 'एनपा द्वितीया' इति सूत्रं षष्ठीविधायकात् 'षष्ठ्यतसर्थ-' इत्यतः प्रागेव इति सूचितम् । अन्यथा सौत्रक्रमत्यागे न्यायप्राप्तपूर्वनिपाताकरणे च बीजानुपपत्तिः । संबन्धानुवृत्तिदर्शने च तथा क्रमानिर्देशश्च केनचिच्छोधितो भवेदित्याहुः ॥ दाधिमथास्तु-'तन्न समीचीनम्, 'षष्ठीचतुर्थीद्वितीयास्थयोः' 'सप्तमीपञ्चम्यौ' इत्यत्रेवात्रापि 'स्वौजसमौट्' इति सौत्रक्रमत्यागे स्वतन्त्राणामाचार्याणामिच्छाया एव नियामकत्वात् । 'द्व्येकयोः' 'लक्षणहेत्वोः' इत्यादिनिर्देशैः पूर्वनिपातप्रकरणस्यानित्यत्वसूचनात्' इति वदन्ति ॥ ९ **पृथगिति** । तृतीयादीनां प्रतियोगित्वरूपसंबन्धोऽर्थः । पृथक्त्वं भेदः । रामप्रतियोगिको भेद इति बोधः ॥ १० **स्तोकेनेति** । करणमत्र विभक्त्यर्थः । स्तोकशब्दः स्वप्रवृत्तिनिमित्ताल्पत्वधर्मपरः । शुक्लादिवदेते केवलधर्मपरा अपि ॥ अत एवासत्त्ववचनता । सत्त्वत्वं च सर्वनामपरामर्शयोग्यत्वम् । करणत्वं च तस्य परम्परया करणे इत्यस्याभावे 'स्तोकं पचति' इत्यत्रासत्त्वरूपफलसमानाधिकरणविशेषणत्वात् कर्मभूतस्तोकशब्दस्यासत्त्ववचनत्वेन तृतीयापत्तिरिति बोध्यम् ॥ ११ **आहुरिति** । षष्ठ्याः सार्वत्रिकत्वम्, पञ्चम्या इतोऽन्यत्रानुपलम्भश्चात्रारुचिः । तस्मादत्रैव निपातनात्सौत्रत्वात्पञ्चमीति बोध्यम् ॥ १२ **तत्सदृश इति** । तच्छक्यकार्यशक्त इत्यर्थः । दत्तस्य तत्तुल्यमूल्यादेः । प्रतिनिर्यातनं तत्सदृशमूल्यकवस्तु परावृत्य दानम् ॥

(८८६) **दूरान्तिकार्थेभ्यो द्वितीया च** ।२।३।३५। एभ्यो द्वितीया स्याच्चात्पञ्चमीतृतीये। प्रातिपदिकार्थमात्रे विधिरयम्॥ ग्रामस्य दूरं दूरात् दूरेण वा। अन्तिकम् अन्तिकात् अन्तिकेन वा। असत्त्ववचनस्येत्यनुवृत्तेर्नेह-दूरः पन्थाः। (८८७) **षष्ठी शेषे** ।२।३।५०। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः शेषस्तत्र षष्ठी स्यात्। राज्ञः पुरुषः। (८८८) कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते। मातुः स्मरति।

---

तृतीया सिद्धेत्याशयेनाह—**तृतीयापञ्चम्यौ स्त इति**॥ **स्तोकेनेति**। अनायासेन मुक्त इत्यर्थः॥ (८८६) **दूरं दूराद्दूरेण वेति**। इह सप्तम्यपि वक्ष्यते। किंच, 'दूरान्तिकार्थेभ्यः-८८६' इति सूत्रस्य 'सप्तम्यधिकरणे च ९२७' इत्युत्तरसूत्रेऽप्यनुवर्तनादधिकरणेऽप्येभ्यो विभक्तिचतुष्टयं बोध्यम्। तथा च प्रयुज्यते-'दूरादावसथान्मूत्रं दूरात्पादावसेचनम्' इति। आवसथस्य दूरे इत्यर्थः॥ **असत्त्ववचनस्येति**। सत्त्ववचनत्वमिह सत्त्वविशेषकत्वम्। एवं च सामानाधिकरण्येन प्रातिपदिकार्थविशेषकं व्युदस्यते तदाह—**दूरः पन्था इति**। एतेन 'करणे च स्तोका-८८५' इति सूत्रे 'करणे किम्, क्रियाविशेषणे कर्मणि मा भूत्। स्तोकं पचति। क्रिया न द्रव्यम्' इति प्राचां ग्रन्थोऽपि व्याख्यातः। न च क्रियाया विशेष्यत्वेन द्रव्यत्वावश्यंभावात् नैतत् प्रत्युदाहरणं युक्तमिति वाच्यम्। धातुवाच्यायाः क्रियायाः असत्त्वरूपत्वस्याकरे प्रसिद्धत्वात्। न च विशेष्यत्वे तदनुपपत्तिः, कर्तृकर्मेतरकारकलिङ्गानन्वयित्वमात्रेणासत्त्वरूपत्वोपपत्तेः। उक्तं च—"क्रिया न युज्यते लिङ्गैः क्रियाऽनाधारकारकैः[1]। असत्त्वरूपता तस्या इयमेवावधार्यताम्" इति। फलं व्यापारश्च क्रिया, फलाधारकारकं कर्म, व्यापाराधारकारकं कर्तेति विवेकः॥ इति पञ्चमी॥

(८८७) **षष्ठी शेषे**। उपयुक्तादन्यः शेषः, कर्मादयश्च प्रातिपदिकार्थपर्यन्ता उपयुक्तास्तत्र द्वितीयादीनां विधानादतो व्याचष्टे—**कारकप्रातिपदिकार्थव्यतिरिक्त इति**॥ **राज्ञः पुरुष इति**। प्रत्ययार्थस्य[2] प्रकृत्यर्थं प्रति प्राधान्यादप्रधानादेव षष्ठी। प्रत्ययार्थस्त्विह[3] पुरुषविशेषणम्। राजनिरूपितसेवकत्वसंबन्धवान् पुरुष इत्यर्थविवक्षायां प्रधानात् पुरुषशब्दान्न षष्ठी, उक्तन्यायविरोधात् शेषत्वाभावाच्च[4] राज्ञः पुरुषस्तिष्ठतीत्यादौ पुरुषशब्दो हि प्रातिपदिकार्थमात्रवृत्तिः। पुरुषेण कृतमित्यादौ कारकार्थः। यदा तु पुरुषनिरूपितसेव्यत्वसंबन्धवान् राजेत्यर्थविवक्षा तदा पुरुषशब्दादपि षष्ठी भवत्येव पुरुषस्य राजेति॥ यत्तु अप्रधानं शेष इति केश्चिदुक्तम्। तन्न, प्रातिपदिकार्थमात्रे शुक्लः पटः श्यामो घट इत्यादौ विशेषणे षष्ठीप्रसङ्गात्[5]। न च प्रथमया बाधः। तस्याः प्रधाने[6] चरितार्थत्वात्॥ (८८८) **कर्मादीनामपीति**। यथा विशेषाविवक्षायां रूपवानिति प्रयुज्यते, विशेषविवक्षायां तु नीलः पीत इत्यादि, तथेदमपि न्यायसिद्धमिति भावः॥ **सतां गतमिति**। सत्पुरुषसंबन्धि गमनमित्यर्थः। सन्तो गच्छन्तीत्यत्र त्वाख्यातेन कर्तृत्वसंबन्धस्योक्तत्वात् संबन्धमात्रविवक्षा कर्तुं न शक्यत इति षष्ठीह न भवति, किं तु प्रातिपदिकार्थमात्रे प्रथमैवेत्याहुः॥ **सर्पिषो जानीते इति**। वस्तुतः करणस्य संबन्धमात्रविवक्षायां षष्ठी। सर्पिःसंबन्धि प्रवर्तनामित्यर्थः। 'अकर्मकाच्च ३६३९' 'अनुपसर्गाज्ज्ञः ३६६५' इत्यनेन वा जानातेस्तङ्॥ अन्ये तु व्याचख्युः—कर्मणः शेषत्वविव-

---

१ **क्रियाऽनाधारेति**। धात्वर्थानाधारेत्यर्थः। करणत्वादिभिरिति यावत्। स्वातिरिक्तपदान्तरवाच्यक्रियानिरूपितकरणत्वादिभिर्न युज्यत इत्यर्थः। इयमेव लिङ्गकरणत्वादिभिरसंबन्धरूपैव। असत्त्वरूपतेत्येतदपेक्षः स्त्रीलिङ्गनिर्देशः॥ २ **प्रत्ययार्थस्य**। संबन्धस्य॥ प्रकृत्यर्थं राजार्थम्। प्राधान्यादिति। संसर्गविशेष्योभयनिरूपितत्वस्य प्रकारतायां स्वीकारादिति भावः॥ ३ **प्रत्ययार्थ इति**। षष्ठ्यर्थ इत्यर्थः॥ परं त्विदं चिन्त्यम्। "राज्ञः पुरुषः इत्यत्र राजा विशेषणं पुरुषो विशेष्यः" इति प्रकृतसूत्रभाष्यतः षष्ठीप्रकृत्यर्थस्यैव विशेषणतायाः प्रतीतेः। तस्मादन्यविभक्त्यर्थस्येव षष्ठ्यर्थस्यापि संसर्गविधयैव भानमङ्गीकरणीयमित्येव सिद्धान्तः॥ ४ **शेषत्वाभावादिति**। गुणत्वाभावादित्यर्थः। उक्तं च हरिणा—"द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते। तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते॥" इति॥ अयं भावः—भेदे सति विशेषणतया विवक्षितस्य संबन्धं विना विशेषणत्वासंभवेन तदाकाङ्क्षितत्वात्तत्र संबन्धो व्यतिरिच्यते उद्भूततया प्रतीयत इति तत्रैव षष्ठी। विशेष्यस्य तु पदान्तरासमभिव्याहारे स्वार्थनिरूपितविशेष्यत्वेन भासमानत्वरूपस्वनिष्ठत्वादेव न विशेष्यतानियामकसंबन्धाकाङ्क्षा। तत्र विशेषणे शब्देन षष्ठ्यादिनांशतः प्रतीयमानः प्रधानेऽप्युपयुज्यते। तस्य द्विष्ठस्वभावत्वाद् राजादिनिरूपितविशेष्यताया राजादिपदसंनिधाने प्रतीयमानाया उपकारको भवति। राज्ञ इत्यादेस्तु पदान्तरसमभिव्याहारं विनाऽप्यध्याहृतसंबन्धिसामान्यनिरूपितविशेषणत्वप्रतीतिरिति विशेषः। राज्ञ इति हि स्वामित्वमवगम्यमानमन्यथाऽनुपपत्त्यैव पुरुषे स्वत्वमवगमयति। अतः संबन्धस्य बहिरङ्गत्वात्पुरुषादन्तरङ्गा प्रथमैवेति॥ ५ **षष्ठीप्रसङ्गादिति**। इदं च 'भेदे सति विशेषणात् षष्ठी' इत्यङ्गीकारेण प्रकृते भेदाभावात् षष्ठ्यनापत्तेश्चिन्त्यम्॥ 'गुणे षष्ठी' इति व्याकरणान्तरसूत्रे 'गुणेषु व्यतिरिच्यते' इति हरिकारिकायां चोक्तस्य गुणपदस्यैव व्याख्यानम्-'अप्रधानम्' इत्यस्यापि संभवे दोषाभावात्॥ ६ **प्रधाने इति**। 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकानुरोधेन प्रथमार्थे तिङध्याहारस्यावश्यकत्वे 'कटं भीष्मं कुरु' इत्यत्र कटोऽपि कर्म भीष्मादयोऽपि तत्र कर्मणीत्येव द्वितीया भविष्यतीत्युक्तदिशोभयत्रापि तिङ्समानाधिकरणत्वादेव प्रथमाया अङ्गीकरणीयत्वेन अप्रधानेऽपि प्रथमायाः प्रबलत्वम्॥ 'कट एव कर्म तत्सामानाधिकरण्याद्भीष्मादिभ्योऽपि द्वितीया भविष्याति' इति पक्षान्तरेऽपि विरुद्धविभक्तिसत्त्वे सामानाधिकरण्यस्यासंभवात् 'समानविभक्तित्वं समानाधिकरणविशेषणविशेष्ययोः' इति भाष्योक्तेः सामानाधिकरण्यार्थमप्रधानेऽपि प्रधानसमानविभक्तिकत्वस्यैव न्याय्यत्वाच्च प्रथमाया एव प्राबल्यमिति चिन्त्यमेवेदमिति बोध्यम्॥

एधोदकस्योपस्कुरुते । भजे शंभोश्चरणयोः । फलानां तृप्तः ॥ (८८९) **षष्ठी हेतुप्रयोगे** ।२।३।२६। हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति ॥ (८९०) **सर्वनाम्नस्तृतीया च** । २।३।२७। सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात्षष्ठी च । केन हेतुना वसति । कस्य हेतोः ॥ (८९१) **निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्** ॥ किं निमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि । एवं किं कारणम्, को हेतुः, किं प्रयोजनमित्यादि । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः । ज्ञानाय निमित्तायेत्यादि ॥ (८९२) **षष्ठ्यतसर्थप्रत्ययेन** ।२।३।३०। एतद्योगे षष्ठी स्यात् । दिक्शब्देति पञ्चम्या अपवादः । ग्रामस्य दक्षिणतः । पुरः पुरस्तात् । उपरि उपरिष्टात् ॥ (८९३) **एनपा द्वितीया** ।२।३।३१।

---

क्षया षष्ठी । सर्पिःसंबन्धि ज्ञानमित्यर्थ इति ॥ **एधोदकस्येति** । एधाश्च उदकं चैषां समाहार एधोदकम् । 'जातिरप्राणिनाम् १३१०' इत्यकवद्भावः । यद्वा एधांसि च दकं चेति विग्रहे पूर्ववदेकवद्भावः । उदकपर्यायो दकशब्दोऽप्यस्ति । तथा च हलायुधः—'भुवनममृतं जीवनं दकं च' इति ॥ **उपस्कुरुत इति** । गन्धनादिसूत्रेणात्मनेपदम् । 'उपात्प्रतियत्न-३३८२' इति सुट् ॥ न चैवं 'ज्ञोऽविदर्थस्य करणे ८९५' 'अधीगर्थदयेशां कर्मणि ८९६' 'कृञः प्रतियत्ने ८९७' 'रुजार्थानां भाववचनानामज्वरेः ८९८' 'आशिषि नाथः ९००' 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ९०१' 'व्यवहृपणोः समर्थयोः ९०२' 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ९०६' इति शेषषष्ठीविधानार्थेयमष्टसूत्री निष्फला स्यादिति वाच्यम्, सर्पिषो ज्ञानमित्यादौ तस्याः समासनिवृत्तिफलकत्वात् । तथाहि-'ज्ञोऽविदर्थस्य-८९५'इत्यादौ शेष इत्यनुवर्तते । शेषत्वेन विवक्षिते तु करणादौ षष्ठी सिद्धैव । तदयमर्थः—इह षष्ठ्येव न तु तल्लुक् । तथा च लुकः प्रयोजकीभूतः समास एव न भवतीति । न चाष्टसूत्र्या लुङ्मात्रनिवृत्तिफलकत्वमेवास्तु, समासस्तु स्वीक्रियतामिति वाच्यम्, इष्टानुरोधेन समास एव न भवतीति व्याख्यानस्योचितत्वात् । तथा च वार्तिकं-'प्रतिपदविधाना षष्ठी न समस्यते' इति ॥ हरिश्चाह "कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः । प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये" इति ॥ एवं च शेषत्वविवक्षायां सर्पिषो ज्ञानं, मातुः स्मरणमित्यादीन्यसमस्तान्येव साधूनि । हरिस्मरणमित्यादीनि तु शेषत्वाविवक्षायां कृद्योगषष्ठ्याः समासे बोध्यानि । तत्र च कारकपूर्वकत्वात् 'गतिकारक-५८४५' इत्यादिना कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तत्वं भवति । शेषषष्ठ्या समासे तु अन्तोदात्तत्वं स्यात्तच्चानिष्टम् । तथा च स्वरार्थेयमष्टसूत्रीति निष्कर्षः । किंच, मातुः स्मृतमित्यादौ समासाभावोऽपि फलं, न हि तत्र कारकषष्ठी लभ्यते, 'न लोका-९१५' इति निषेधात् । आह च-"निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते । शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते" इति । एतच्च मनोरमायां स्थितम् ॥ (८८९) **षष्ठी हेतु—** । अत्र 'हेतौ' इत्यनुवर्तते तदाह—**हेतौ द्योत्य इति** ॥ **अन्नस्येति** । 'हेतौ ८२३' इति तृतीयायां प्राप्तायामनेन षष्ठी । हेतुप्रयोगे किम्, अन्नेन वसति । हेतौ द्योत्ये किम्, अन्नशब्दात् षष्ठी यथा स्यादित्येके । अन्नस्य हेतोस्तुभ्यं नम इत्यत्र युष्मच्छब्दान्मा भूदित्यन्ये ॥ (८९०) **सर्वनाम्नस्तृतीया च** । इह सर्वनाम्न इति प्रयोगापेक्षया षष्ठी । पञ्चम्यां तु हेतुशब्दात् षष्ठीतृतीये न स्यातामित्याशयेनाह—**सर्वनाम्नो हेतुशब्दस्य चेति** । कस्माद् भवतीत्यपेक्षायाम् अर्थात् सर्वनामहेतुभ्यामिति संबद्ध्यते ॥ अत्र व्याचख्युः-यद्यपि सर्वनाम्न इति पदस्य पञ्चम्यन्तत्वेऽपि हेतुशब्दस्य विशेषणत्वे सामानाधिकरण्यादप्युपपद्यत इति न क्षतिः, तथापि विशेष्यत्वे त्वयं विधिर्न स्यादिति बोध्यमिति ॥ (८९१) **निमित्तपर्यायेति** । पर्यायग्रहणस्य फलमाह—**एवमित्यादिना** । एतद्वार्तिकेन 'षष्ठी हेतुप्रयोगे ८८९' 'सर्वनाम्नस्तृतीया च ८९०' इति सूत्रद्वयं गतार्थमिति बोध्यम् ॥ (८९२) **षष्ठ्यतस-** । 'दक्षिणोत्तराभ्यामतसुच् २६८९' इत्यस्य योऽर्थो दिग्देशकालरूपः सोऽर्थो यस्य प्रत्ययस्य सोऽतसर्थप्रत्ययः, अस्तातिप्रभृतयः पञ्च, तदन्तेन योगे इत्यर्थः । अतसुचोऽस्तात्यनन्तरत्वेऽपि लाघवानुरोधेन अस्तात्यर्थेति नोक्तमित्याहुः ॥ **पञ्चम्या अपवाद इति** । 'ततः पश्चात् संस्यते ध्वंस्यते च' इति भाष्यप्रयोगात् पश्चाच्छब्दयोगे तु पञ्चम्यपि साधुः । अस्मादेव भाष्यप्रयोगात् पश्चाच्छब्देनाव्ययीभावो न भवतीति वक्ष्यते ॥ प्रत्ययग्रहणं किम्, इह मा भूत्-, प्राग् ग्रामात्, प्रत्यग् ग्रामात् ॥ कृतेऽपि प्रत्ययग्रहणे कुतो नेति चेत् । अत्राहुः कैयटादयः—प्रत्ययग्रहणमधिकं क्रियमाणं श्रूयमाणप्रत्ययग्रहणार्थं विज्ञास्यत इति लुप्ते अस्तातौ षष्ठ्यभावः 'अन्यारात्-८७१' इत्यत्राञ्चूत्तरपदस्यापीदं प्रयोजनमुक्तम् । तत्रान्यतरच्छक्यमवक्तुमेकप्रयोजनत्वादिति प्रत्ययग्रहणं चिन्त्यप्रयोजनमिति तु मनोरमायां स्थितम् ॥ **पुर इति** । 'पूर्वाधरावराणाम्—२६८६' इत्यसिप्रत्यये पुरादेशः ॥ **पुरस्ता-**

---

१ **एधोदकस्येति** । 'कारके' इति सूत्रे भाष्ये 'एधाः' पक्ष्यन्ति' प्रयोगे कोशेऽप्यदन्तपुँल्लिङ्गैधशब्दस्योपलम्भादन्तपुँल्लिङ्गोऽत्र कर्ता । 'इध्ममेधः समित् स्त्रियाम्' इत्यमरे इध्मसाहचर्यान्नपुंसकसान्तमप्येधोऽस्ति ॥ द्वन्द्वे तु कर्तृपदमध्याहार्यं स्यात् ॥ एधःकर्तृकं दकसंबन्धि गुणाधानमिति बोधः ॥ २ **चरणयोरिति** । शंभुसंबन्धिचरणसंबन्धि भजनमिति बोधः ॥ ३ **फलानामिति** । फलसंबन्धितृप्त्याश्रय इति बोधः ॥ ४ **किं निमित्तमिति** । प्रथमाद्वितीययोः समानमिदम् ॥ ५ **अष्टसूत्रीति** । 'कृत्वोऽर्थप्रयोगे-' इति सूत्रं वृत्तिरीत्या धृतम् । वस्तुतस्तत्र शेषग्रहणं नानुवर्तते, मध्ये विच्छेदादित्यन्ये । तेषां सप्तसूत्रीति बोध्यम् ॥

एनबन्तेन योगे द्वितीया स्यात् । एनपेति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण ॥ (८९४) (सू.) **दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्** ।२।३।३४। एतैर्योगे षष्ठी स्यात्पञ्चमी च । दूरं निकटं ग्रामस्य ग्रामाद्वा ॥ ( ८९५ ) (सू.) **ज्ञोऽविदर्थस्य करणे** ।२।३।५१। जानातेरज्ञानार्थस्य करणे [४]शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो ज्ञानम् ॥ ( ८९६ ) (सू.) **अधीगर्थदयेशां कर्मणि** ।२ । ३ । ५२। एषां कर्मणि शेषे षष्ठी स्यात् । मातुः स्मरणम् । सर्पिषो दयनम् , ईशनं वा ॥ ( ८९७ ) (सू.) **कृञः प्रतियत्ने** । २ । ३ । ५३ । कृञः कर्मणि शेषे षष्ठी स्याद्गुणाधाने । एधो [५]दकस्योपस्करणम्॥(८९८)(सू.)**रुजार्थानां भाववचनानामज्वरेः** ।२।३।५४। भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् । चौरस्य रोगस्य रुजा ॥ ( ८९९ ) (वा.) **अज्वरिसंताप्योरिति वाच्यम्** ॥ रोगस्य चौरज्वरः चौरसंतापो वा । रोगकर्तृकं चौरसंबन्धि ज्वरादिकमित्यर्थः ॥(९००) (सू.) **आशिषि नाथः**।२।३।५५। आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात् । सर्पिषो नाथनम् । आशिषीति किम् । माणवकनाथनम् । तत्संबन्धिनी याच्ञेत्यर्थः॥

---

दिति । 'दिक्शब्देभ्यः-२६८५'इत्यादिनाऽस्ताति:'अस्ताति च २६८७'इति पूर्वस्य पुरादेशः ।। (८९३)**एनपा**–। कथं तर्हि 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्' इति । उत्तरेणेत्येतद् 'दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ' इति तोरणसमानाधिकरणं [६]तृतीयान्तं न त्वेनबन्तमित्याहुः ।। 'धनपतिगृहादुत्तरेणास्मदीयम् ' इति कैश्चित् पठ्यते, तदा तु सम्यगेव ॥ **दक्षिणेनेति** । दक्षिणस्यामदूर इत्यर्थे 'एनबन्यतरस्याम्-२६९५' इत्यादिना एनप् ॥ ( ८९४ ) **दूरान्तिकार्थैः**—। षष्ठ्यां प्राप्तायां पक्षे पञ्चम्यर्थं वचनम् । इहान्यतरस्यांग्रहणं समुच्चयार्थं,तेन,विप्रकृष्टाऽपि पञ्चमी समुच्चीयते व्याख्यानात्,न तु संनिहिते अपि द्वितीयातृतीये तदाह--**पञ्चमी चेति** ॥ ( ८९५ ) **सर्पिषो ज्ञानमिति** । वस्तुतः करणीभूतं यत्सर्पिः तत्संबन्धिनी प्रवृत्तिरित्यर्थः। ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणा ।। ( ८९६) **अधीगर्थ**--। अधिशब्दोच्चारणम् 'इङिकावध्युपसर्गं न व्यभिचरतः' इति ज्ञापनार्थम् । अन्यथा 'स्मृत्यर्थदयेशाम्–'इत्येव ब्रूयात्, 'इगर्थ–' इति वा । इङंशे नेदं ज्ञापकमिति चेत्तर्हि तदंशे ' णेरध्ययने वृत्तम् ४०८१' इत्यत्राधिशब्दोच्चारणं ज्ञापकमस्तु ॥ अत्र व्याचख्युः कर्मणि किम्, करणे शेषत्वाविवक्षायां मा भूत् । मातुर्गुणस्मरणम् । अत्र माता कर्म, गुणास्तु करणम् ।। उभयत्र शेषत्वविवक्षायामपि मातृशब्दादेवानेन सूत्रेण षष्ठी गुणशब्दात्तु 'षष्ठी शेषे ८८७' इत्यनेन । तेन गुणस्मरणमिति समासो भवतीति ॥ ( ८९८ ) **रुजार्थानाम्**--। 'रुजो भङ्गे' भिदादिपाठादत एव निपातनाद्वा अङि टाप् । रुजा व्याधिरर्थो येषां तेषां रुजार्थानां, धातूनां भाववाचकत्वाव्यभिचाराद् भावशब्देनात्र घञादिवाच्यः सिद्धरूपो भाव उच्यते । वक्तीति वचनः । बाहुलकात्कर्तरि ल्युट् । प्रकृत्यर्थस्तु न विवक्षितः । न हि भावो वक्ता संभवति । तस्मात् प्रत्ययस्य साधुत्वनिर्वाहायैव वचिरिति बोध्यम् । तथा चायमर्थः। भावो वचनः कर्ता येषां तेषां भाववचनानामिति,तदेतद्व्याचष्टे--**भावकर्तृकाणामिति** । 'रुजार्थानां भावकर्तृकाणाम्' इत्येव सूत्रयितुं युक्तम् ॥ **चौरस्येति** । चुरा शीलमस्य चौरः । अत्र कर्मणि शेषत्वविवक्षायामनेन षष्ठी ॥ **रोगस्येति** । 'पदरुज--४९६९' इति घञा रोगो भावोऽभिधीयते, स च रुजायां कर्ता 'कर्तृकर्मणोः-९०७' इति रोगशब्दात् षष्ठी ॥ भावकर्तृकाणां किम्, श्लेष्मणश्चौररुजा । 'मायुः पित्तं कफः श्लेष्मा' इत्यमरः ॥ ( ८९९ ) **चौरज्वर इति** । इह चौरशब्दाद् 'रुजार्थानां-८९८' इति षष्ठ्या अप्रवृत्तौ 'षष्ठी शेषे ८८७' इत्यनेन षष्ठ्यां 'षष्ठी १०१६' इति समासो भवत्येवेति भावः ॥ ( ९०० ) **सर्पिषो नाथनमिति** । सर्पिर्मे भूयादित्याशासनमित्यर्थः ॥ **माणवकनाथनमिति** । यद्यपि कर्मत्व-

---

१ **षष्ठ्यपीति** । वृत्त्यनुरोधेनेदम् । भाष्ये तु न दृश्यते । विपरीतं 'षष्ठ्यतसर्थ–' इति सूत्रात्पूर्वम् 'एनपा–' इत्यस्य पाठ इति लभ्यते इति शेखरकृत् ॥ अत्र दाधिमथाः—**'एनपा द्वितीया' 'षष्ठ्यतसर्थ–'** इत्येवमष्टाध्यायीपाठकल्पने **'अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधः'** इति वार्तिके सूत्रपाठक्रमेणैव निर्देशः इत्यभिमानमात्रं बीजमङ्गीकरणीयम् । तदेव न समञ्जसम् । अग्रे सम्बन्धानुवर्तनप्रदर्शनाय भाष्यकृता **'षष्ठ्यतसर्थ–'** इति सूत्रात्परत्रैव **'एनपा–'** इति सूत्रस्य निर्दिष्टत्वात् ॥ वार्तिकनिर्देशक्रमेणैव सूत्रपाठक्रमनिर्णयस्य करणीयत्वे **'कर्मप्रवचनीययुक्ते द्वितीया'** इति सूत्रे **'सप्तमीपञ्चम्योः प्रतिषेधार्थम्'** इति वार्तिकव्याख्यानावसरे भाष्यकृता **'सप्तमीपञ्चम्यौ मा भूताम्—'साधुनिपुणाभ्यामर्चायां सप्तमी ( २ । ३ । ४३ )' इति सप्तमी** । **'पञ्चम्यपाङ्परिभिः ( २ । ३ । १० )' इति पञ्चमी'** इत्येवं व्याख्यातसूत्रयोरपि वार्तिकनिर्दिष्टक्रमेणैवाष्टाध्याय्यां पाठस्य करणीयत्वापत्तेर्भवता मौनमेवाश्रयणीयम् ॥ **'द्वितीयाषष्ठीविषये–'** इति वार्तिके निर्देशस्तु **'स्वौजसमौट्–'** सूत्रक्रमेणैवेति सर्वमनवद्यम्॥ परंच तदीयक्रमेऽपि नाभिनिवेश इति 'सप्तमीपञ्चम्यौ–' इत्येवमपि पठता सूत्रकृतैव सूचितमिति वदन्ति ॥ २ **षष्ठीति** । यदपेक्षं दूरत्वादिकं तत त्यादिः ॥ ३ **ज्ञोऽविदेति** । 'अविदर्थस्य' इत्येवात्र च्छेदो व्याख्यानात् ॥ ४ **शेषत्वेनेति** । परे तु–नात्र शेष इति संबध्यते । 'अधीगर्थ–' इति सूत्रे 'यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति स्मराम्यहं मातरम् इति ' इति भाष्ये केवलकर्मपदोपादानेन करणाधिकरणघटितसूत्रयोः शेषपदसंबन्धासूचनात् । 'अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः' इति कैयटाच्च ॥ एवं चैतद्योगे तृतीया कदाऽपि न भवतीति वदन्ति ॥ ५ **एधो दकस्येति** । एध इति कर्तृपदं भिन्नम् । 'दकस्योपस्करणम्' इत्युदाहरणम् । 'करोति' इति शेषः ॥ ६ **तृतीयान्तमिति** ॥ 'तस्यास्माद् भारतवर्षादुत्तरेणानन्तरे किंपुरुषनाम्नि वर्षे' इति कादम्बर्यामपि 'उत्तरेण' इति तृतीयान्तमेव 'अनन्तरे' इत्यनेनादूरार्थस्योक्तत्वात् तदर्थप्रतिपादकस्य एनपोऽप्राप्तेः ॥ अत एव **'भारतवर्षात्' इति पञ्चमी ' दूरान्तिकार्थैः–'** इत्यनेन सिद्धा तत्रैव **'भारतवर्षात्' इत्यस्य शाब्दान्वयस्वीकारात् इति बोध्यम्** ॥

( ९०१ ) जासिनिप्रहणनाटक्राथपिषां हिंसायाम् । २ । ३ । ५६ । हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात् । चौरस्योज्जासनम् । निप्रौ संहतौ व्यस्तौ विपर्यस्तौ वा । चौरस्य निप्रहणनम् । प्रणिहननम् । निहननम् । प्रहणनं वा । नट अवस्यन्दने चुरादिः । चौरस्योन्नाटनम् । चौरस्य क्राथनम् । वृषलस्य पेषणम् । हिंसायां किम् । धानापेषणम् । ( ९०२ ) व्यवहृपणोः समर्थयोः । २।३।५७। शेषे कर्मणि षष्ठी स्यात् । द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता । शतस्य व्यवहरणं पणनं वा । समर्थयोः किम् । शलाकाव्यवहारः । गणनेत्यर्थः । ब्राह्मणपणनं-स्तुतिरित्यर्थः ॥ (९०३) दिवस्तदर्थस्य । २।३।५८। द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात् । शतस्य दीव्यति । तदर्थस्य किम् । ब्राह्मणं दीव्यति । स्तौतीत्यर्थः ॥ (९०४) विभाषोपसर्गे । २।३।५९। पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ॥ ( ९०५ ) प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने । २।३।६१। देवतासंप्रदानेऽर्थे वर्त-

---

विवक्षायां 'कर्तृकर्मणोः-९०७' इति यदा षष्ठी, तदा आशिष्यपि समासोऽस्त्येव । तथापि तत्र 'गतिकारकोपपदात् कृत् ५८४५' इति कृदुत्तरपदप्रकृतिस्वरः, समासान्तोदात्तत्वं तु याच्ञादावेव न त्वाशिषीति निष्कर्ष इति कौस्तुभे स्थितम् ॥ ( ९०१ ) जासि—। 'जसु ताडने', 'जसु हिंसायाम्' इति च चुरादिस्तस्येदं ग्रहणं न तु दैवादिकस्य 'जसु मोक्षणे' इत्यस्य, जासीति निर्देशात् 'हिंसायाम्' इति वचनाच्च ॥ **निप्रहणनमिति** । 'हन्तेरत्पूर्वस्य ४८६' इति णत्वम् ॥ **प्रणीति** । 'नेर्गद-३०५२' इति णत्वम् ॥ **चुरादिरिति** । 'नट नृत्तौ' इति तु न गृह्यते, दीर्घनिर्देशादिति भावः ॥ **क्राथनमिति** । 'क्रथ हिंसायाम्' इति घटादौ पठ्यते, तस्य मित्त्वेऽपि इह निपातनाद्वृद्धिः । मित्त्वफलं तु निपातनात्परत्वात् 'चिण्णमुलोः-३६८७' इति दीर्घे चरितार्थमिति घटादौ वक्ष्यति ॥ यत्तु हरदत्तेनोक्तम्, 'घटादिपाठो 'घटादयः षितः' इत्यातिदेशिकाषित्त्वे अङ् यथा स्यादित्येतदर्थः' इति । तन्मन्दम्, 'घटादयः षितः' इति हि मध्ये सूत्रितम् । तेन पूर्वेषां त्वरत्यन्तानामेव षित्त्वं, न तु ज्वरादीनां परेषामिति । अत एव त्वरत्यन्तास्त्रयोदशानुदात्तेतः 'षितश्च' इति घटादौ वक्ष्यति ॥ ( ९०२ ) **पणनमिति** । 'स्तुतावेव' इति वक्ष्यमाणत्वादायस्याभावः ॥ **ब्राह्मणपणनमिति** । 'आयादय आर्धधातुके वा ३०७८' इत्यायस्य विकल्पः ॥ ( ९०३ ) **दिवस्तद**—। तच्छब्देन व्यवहृपणौ परामृश्येते तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे गृहीतावित्याशयेनाह—**द्यूतेति** । पूर्वसूत्रे एव दिवेः पाठे तदर्थस्येति न कर्तव्यमिति यद्यपि लाघवं, तथापि योगविभाग उत्तरार्थः ॥ **कर्मणीति** । इह शेष इति न संबध्यते, [२]उत्तरसूत्रे विकल्पारम्भसामर्थ्यात् । अन्यथा षष्ठ्यां विकल्पितायां तया मुक्ते शेषे विभक्त्यन्तरस्याप्राप्त्या वृथैव विकल्पारम्भः स्यादिति भावः ॥ अन्ये त्वाहुः, लाघवात् पूर्वसूत्रे एव दिवोग्रहणे कर्तव्ये पृथग्योगकरणसामर्थ्यादत्र शेष इति न संबध्यते । न चोक्तार्थत्वात्पृथग्योगस्य नोक्तार्थज्ञापकत्वमिति वाच्यम्, संकोचे मानाभावेन फलद्वयस्यापि सुवचत्वादिति ॥ शेष इत्यस्यासंबन्धादिह त्रिसूत्र्यां तिङन्तमुदाहरति—**शतस्य दीव्यतीति** ॥ (९०५) **प्रेष्यब्रुवोः**— । इष्यतेर्दैवादिकस्य लोटो मध्यमपुरुषैकवचनं प्रेष्येति । तत्साहचर्याद् ब्रुविरपि तथाभूत एव गृह्यते । अत एवेह शेषग्रहणं [३]न संबध्यते तिङन्तेन सह समा-

---

१ **समर्थयोरिति** । शकन्ध्वादित्वात् कतन्तवत् पररूपमिति बोध्यम् ॥ २ **उत्तरसूत्र इति** । अयं भावः । अत्र शेष इत्यस्य संबन्धे 'विभाषोपसर्गे' इत्यत्र शेष इति संबध्यते, उत न । नाद्यः, 'दिवस्तदर्थस्य' इत्यनेनैव समासाभावस्य सिद्धत्वेन सूत्रवैयर्थ्यापत्तेः । न च पक्षे 'षष्ठी शेषे' इत्यस्य प्रवृत्त्या पक्षे समासनिवृत्तिः फलम्, 'नोपसर्गे' इति न्यासेन दिव इत्यस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धतया विभाषाग्रहणस्य तथापि वैयर्थ्यात् । न द्वितीयः, वेदेऽपि 'विभाषोपसर्गे' इति सूत्रेण कर्मणि द्वितीयायाः सिद्धत्वादापाद्यमानरूपस्य तत्राभावाच्च 'द्वितीया ब्राह्मणे' इत्यस्य वैयर्थ्यापत्तेः । न च तन्निरुपसर्गे द्वितीयार्थमिति वाच्यम्, कर्मत्वाविवक्षायां 'दिवः-' इत्यस्याऽप्रवृत्त्या 'कर्मणि द्वितीया' इत्येव सिद्धत्वेन वैयर्थ्यस्य तदवस्थत्वात् । न च 'द्वितीया ब्राह्मणे' इति सूत्रे 'शेषे' इत्यनुवर्तते तेन कर्मत्वाविवक्षायां द्वितीयार्थमिति वाच्यम्, विच्छिन्नत्वेनानुवृत्तेरयुक्तत्वात् । वक्ष्यमाणोदाहरणे कर्मत्वस्यैव प्रतीतेश्च । न च समासाभावाय पुनर्विधानमिति वाच्यम्, कृति तस्याप्रवृत्तेः । अत एव 'द्वितीया ब्राह्मणे' इति सूत्रे भाष्यम्-"किमुदाहरणम् । गां प्राति दीव्यान्ति । पूर्वेणाप्येतत् सिद्धम् ॥ इदं तर्हि 'गामस्य तदहः समायां दीव्येयुः' इति" इति ॥ परे तु-प्रागुक्तभाष्येण कर्मपदघटितसूत्रेषु सर्वत्रैव शेषविवक्षासूचनेन प्रकृतसूत्रेऽपि शेषपदसंबन्ध एव । अन्यथा 'कर्मादिष्वकर्मकवद्वचनम्' इति वार्तिकसूचितस्य 'मातुः स्मर्यते' इतिवत् 'शतस्य दीव्यते' इति भावे इष्टस्य प्रयोगस्यानुपपत्तिः । 'आदिशब्दोऽत्राश्रयवाची 'विष्णुरादिः पृथासूनोर्भीष्मादिश्च सुयोधनः । ते जयन्ति रणे शत्रून् येषां विष्णुः सदाश्रयः ॥' इत्यत्र तथा दृष्टत्वात् । तेन कर्माश्रया द्वितीयाविधिनिमित्तभावेनोपात्ताः सकर्मका अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्मादिशब्देनोच्यन्ते' इति कैयटेनापि 'शतस्य दीव्यते' इति प्रयोगस्येष्टत्वसूचनात् । एवं च शेषपदानुवृत्त्योक्तवार्तिकप्रत्याख्यानवद् 'विभाषोपसर्गे' 'द्वितीया ब्राह्मणे' इति सूत्रद्वयस्यापि प्रत्याख्यान एव भाष्यतात्पर्यम् । 'द्वितीया ब्राह्मणे' इति सूत्रभाष्यं वार्तिकरीत्यैव-इत्याहुः ॥ ३ **शेषग्रहणं नेति** । इदं तु चिन्त्यम् 'मन्यकर्मणि-' इत्यत्र तानादिकन्याबृत्तये—

मानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्य वाचकाच्छब्दात्षष्ठी स्यात् । अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा॥(९०६) कृत्वोऽर्थप्रयोगे कालेऽधिकरणे।२।३।६४।कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् । शेषे किम् । द्विरहन्यध्ययनम् ॥( ९०७ ) कर्तृकर्मणोः कृति ।२।३।६५। कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृतिः । जगतः कर्ता कृष्णः ॥ ( ९०८ ) गुणकर्मणि वेष्यते ॥ नेताऽश्वस्य स्रुघ्नं स्रुघ्नस्य वा । कृति किम् । तद्धिते मा भूत् । कृतपूर्वी कटम् ॥

सत्याप्रसक्तत्वात् । प्रेष्यब्रुवोः किम् , अग्नये छागस्य हविर्वपां मेदो जुहुधि । हविषः किम् , अग्नये गोमयानि प्रेष्य । देवतासंप्रदाने किम् , माणवकाय पुरोडाशान् प्रेष्य ॥ ' हविषः प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः ' ॥ इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्य ॥ ( ९०६ ) कृत्वोऽर्थ—। कृत्वसुचोऽर्थ इवार्थो येषां प्रत्ययानां ते कृत्वोऽर्थाः ॥ शेषे इति । इह ' दिवस्तदर्थस्य ९०३–९०५' इत्यादिसूत्रषट्के विच्छिन्नमपि शेषग्रहणमनुवर्तते व्याख्यानात् ॥ पञ्चकृत्व इति । ' संख्यायाः क्रिया–२८१४ ' इत्यादिना कृत्वसुच् ॥ द्विरिति । ' द्वित्रिचतुर्भ्यः सुच् २८१५' ॥ ( ९०७ ) कर्तृकर्मणोः कृति । शेष इति निवृत्तं, ' कर्तरि च कृति' इति सूत्रे कृतेन चकारेण ' अधीगर्थ–८९६' इति सूत्रात् ' चतुर्थ्यर्थे बहुलं छन्दसि ५२२२' इति पर्यन्तमनुवर्तमानस्य कर्मणीत्यस्यानुकर्षणसंभवेऽपि पुनरत्र कर्मग्रहणादित्याहुः । तन्मन्दम्, सन्निहितस्याधिकरणस्यानुकर्षणप्रसङ्गेन तन्निवृत्तये कर्मग्रहणसंभवात् । तस्मात् व्याख्यानमेवात्र शरणमित्यपरे । कर्तृकर्मणोः किम् । शस्त्रेण भेत्ता ॥ कृतिरिति । करणं कृतिः ' स्त्रियां क्तिन् ५०६७ ' कृष्णोऽत्र कर्ता ॥ कर्मण्युदाहरति––जगत इति कृष्णस्य तृचाऽभिहितत्वात् ततः षष्ठी न भवति ॥ कृति किमिति । नन्विह कर्तृकर्मभ्यां क्रिया आक्षिप्यते, तद्वाची तु धातुरेव । धातोश्च द्विविधाः प्रत्ययाः–कृतस्तिङश्च । तत्र तिङ्प्रयोगे कटं करोतीत्यादौ ' न लोका–९१५' इति प्रतिषेधेन भाव्यम् । ततश्च परिशेषात् कृद्योगे एव षष्ठी भविष्यति, तस्मात्किं कृद्ग्रहणेनेति प्रश्नः ॥ कृतपूर्वी कटमिति । अत्र करोतिक्रियापेक्षमनभिहितकर्मत्वं कटस्यास्त्येवेति षष्ठी स्यात्तद्धिताधिक्ये तु सा मा भूदित्येतदर्थं कृद्ग्रहणमिति भावः । ननु कृतः कटः पूर्वमनेनेत्यस्मिन् विग्रहे क्तस्य कर्मणि विधानात्तेनैवाभिहितं कर्मेति नैव द्वितीया प्राप्नोति, नापि तदपवादभूता षष्ठी, इहाप्यनभिहिताधिकारात् । किञ्च, कृतशब्दस्य कटसापेक्षतया समासो दुर्लभ एव, एवं तद्धितोऽपीति चेत् । अत्राहुः–पूर्वं कृतमनेनेति विग्रहे अविवक्षितकर्मतया भावे क्तप्रत्यये कृतशब्दस्य कटसापेक्षत्वाभावात् समासतद्धितौ

—इत्यनिर्देशस्येवात्रापि तौदादिककैयादिकयोर्व्यावृत्तये इयन्पर्यन्तनिर्देशस्यैव विवक्षाविषयत्वेन लोट्पर्यन्तविवक्षायां मानाभावात् ' प्रेष्यब्रूपर्यन्ताः ' इति कैयटेनात्रापि शेषग्रहणसंबन्धस्य सूचितत्वाच्च । एवं चात्र 'अग्नये च्छागस्य हविषो वपाया मेदसः प्रेष्यति अनुब्रवीति वा ' इत्यस्यापि सिद्धिः । भावे ' मेदसः प्रेष्यते अनूच्यते ' इत्यस्यापि सिद्धिः । 'मेदसः प्रेषणम् अनूक्तिः ' इत्यत्र समासाभावस्य च सिद्धिः । कर्मणो विवक्षायां द्वितीया च सिध्यति ॥

१ शेष इति ।'कर्मादीनामविवक्षा शेषः'इति भाष्य आदिपदस्य प्रकृत्यर्थकत्वेनाधिकरणस्यापि संग्रहादिति भावः ॥ परे तु–भावे लकारार्थ कृतस्य'कर्मादिस्सकर्मकवद्वचनम् ' इति वार्तिकस्य प्रत्याख्यानाय वार्तिकस्थादिपदस्याश्रयवाचित्वमङ्गीकृत्य शेषपदानुवृत्तिकथनेन यत्र शेषत्वेन विवक्षायामेवाकर्मकत्वम् , शेषत्वेनाविवक्षायां सकर्मकत्वमेवेति संभाव्यते तत्रैव शेषत्वविवक्षासूचनेन कर्मपदघटितसूत्रेष्वेव शेषपदानुवृत्तिसूचनेन प्रकृतेऽधिकरणे शेषत्वेन विवक्षितेऽपि नाकर्मकत्वसंभावनेति नात्र शेषपदानुवृत्तिरिति कदापि न सप्तमीति वदन्ति॥२कर्मणीति । कर्म चात्र कर्तृसाहचर्याद्धात्वर्थे भेदेनान्वय्येव गृह्यते । तेन' स्तोकं पाकः' इत्यादौ न क्रियाविशेषणात् षष्ठी । किञ्च,क्रियाविशेषणेन स्तोकं पाचक इत्यादौ न समानाधिकरणसमासो नापि'सुप् सुपा'इत्यादिः, सुबन्तार्थविशेष्येणान्वयेनासामर्थ्यात् । 'द्वितीया श्रिता–'इत्यादेस्तु सामर्थ्यादवयवद्वारके सामर्थ्ये प्रवृत्तिरित्यग्रे वक्ष्यते॥३ तद्धित इति । तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्तरि कर्मणि च मा भूदित्यर्थः । उदाहरणे सकर्मकप्रकृतिकभावक्तान्तस्यैदशवृत्तिमात्रविषयताया भाष्यसंमतत्वेन तस्य केवलस्य क्वाप्यप्रयोगेण तद्धितान्तसमुदायशक्त्यैव क्रियोपस्थापकत्वात् । कृद्ग्रहणात् कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोर्ग्रहणम् , न चात्र तथा । तण्डुलानां पाचकतर इत्यादौ तु पाचकादेः पृथक्प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियाया अस्त्येवेति भवत्येव षष्ठी । अत एव ' तद्धिते मा भूत् ' इत्येवोक्तम् , न तु 'तद्धिताधिक्येऽपि ' इति । भाष्येऽपि ' कृतो ये कर्तृकर्मणी तत्रैव यथा स्यात् , तद्धितस्य ये कर्तृकर्मणी तत्र मा भूत् ' इत्येवोक्तम् ॥ ४ धातुरेवेति । कारकान्वययोग्यतावच्छेदकरूपेण साध्यत्वेन धातुभिरेव तदुपस्थितेः । 'शत्योऽश्व आश्विकः ' इत्यादौ तद्धितान्न तेन रूपेणोपस्थितिरिति न तत्र कारकान्वयः । अत एव हिरुगादियोगे न कर्मादिसंज्ञा । ' आधिका खारी द्रोणेन ' इत्यत्र हेतौ तृतीया क्रियायोगाभावात्कर्तुः कर्तृत्वाभावेऽपि जनकत्वरूपहेतुत्वसत्त्वादिति भावः ॥ ५ अविवक्षितकर्मतयेति । तत्तद्रूपेण कर्मविशेषस्यान्वयाविवक्षायामिति भावः । तथा चोक्तं हरिणा–"विशेषकर्मसंबन्धे निर्भुक्तेऽपि कृतादिभिः । विशेषनिरपेक्षोऽन्यः कृतशब्दः प्रवर्तते ॥ अकर्मकत्वे सत्येवं क्तान्ते भावाभिधायिनि । ततः क्रियावता कर्त्रा योगो भवति कर्मणाम् ॥ अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः । संबध्यते क्रिया तद्वत्कृतपूर्व्यादिषु स्थितिः ॥" इति ॥ निर्भुक्ते प्राप्ते 'वाक्ये' इति शेषः । विशेषकर्मनिरपेक्षोऽन्यो भावक्तान्तः कृतशब्दः प्रवर्तते वृत्तिघटको भवति । सामान्यकर्म तु नान्तरीयकत्वात्तैव विवक्षितम् । अत एवाह–अकर्मकत्व इति ॥ ततः–

(९०९) **सू० उभयप्राप्तौ कर्मणि** । २ । ३ । ६६ । उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन ॥ (९१०) स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः ॥ भेदिका बिभित्सा वा रुद्रस्य जगतः ॥ (९११) **सू० शेषे विभाषा** ॥ स्त्रीप्रत्यय इत्येके ॥ विचित्रा जगतः कृतिर्हरेर्हरिणा वा । (९१२) केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येणाचार्यस्य वा ॥ (९१३) **सू० क्तस्य च वर्तमाने** ।२।३।६७। वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । न लोकेति निषेधस्याऽपवादः । राज्ञां मतो बुद्धः पूजितो वा ॥ (९१४) **सू० अधिकरणवाचिनश्च** ।२।३।६८। क्तस्य योगे षष्ठी स्यात् । इदमेषामासितं शयितं गतं भुक्तं वा ॥ (९१५) **सू० न लोकाव्ययनिष्ठाखलर्थ-**

---

भवत एव । तथा च-'कृतपूर्वं यं पूर्वं कृतवान्' इत्यनेन समासार्थः संपद्यते, गुणभूतयाऽपि क्रियया कारकाणां संबन्धस्य कटं कृतवानित्यादौ दर्शनादत्रापि करोतिक्रियापेक्षं कर्मत्वं कटस्याभ्युपगम्यते । तच्च कर्मत्वं न केनाप्यभिहितम् । भावे क्तस्य, कर्तरि इनिप्रत्ययस्य च विधानात् । अतोऽसति कृद्ग्रहणे षष्ठी स्यादेवेति । एवं च ओदनस्य पाचकतम इत्यत्र षष्ठ्या असाधुत्वे इष्टापत्तिरेव शरणम् । कृतपूर्वीत्यत्र समासतद्धितौ भवत एवेत्युक्तम् । तत्र समासः 'सुप्सुपा ९४९-२' इति बोध्यः । तद्धितस्तु 'पूर्वादिनिः २५४७' 'सपूर्वाच्च २५४८' इति कर्तरि इनिः । तद्विधौ 'श्राद्धमनेन-२४५६' इति सूत्रादनेनेत्यनुवृत्तेः । स्यादेतत्, भिदेर्ण्यन्तात 'पर्यायार्हर्णोत्पत्तिषु-५१०४' इति ण्वुचि भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामित्युभाभ्यामप्यनेन कृद्योगषष्ठी जायते, तत्र मुख्यामुख्यसंनिधौ मुख्यस्यैव कार्यसंप्रत्ययात् प्रयोजककर्तृवाचकादेव स्यात् । अन्यथा पाचयत्योदनं देवदत्तेन यज्ञदत्त इत्यत्र प्रयोज्यप्रयोजकयोरुभयोरपि लकारवाच्यत्वे उभाभ्यामपि कर्तृवाचकाभ्यां प्रथमा स्यात् । मैवम्, प्रयोज्यप्रयोजकवाचकाभ्यां भेदेन षष्ठी जायते न त्वेकैवेति नेह मुख्यामुख्यन्यायप्रवृत्तिः । तत्र तु लकारस्यैकत्वात् कर्तुस्तद्वाच्यत्वकल्पनायामुक्तन्यायः प्रवर्तत इति वैषम्यात् । एवं च ओदनः पाच्यते देवदत्तेन यज्ञदत्तेनेत्यादावुभाभ्यामपि तृतीया स्यादेवेति बोध्यम् । अत्र व्याचक्षते 'तदर्हम् २४११' इति निर्देशात् 'कर्तृकर्मणोः कृति ९०७' इत्येतदनित्यम् । तथा च-'धार्यैरामोदमुत्तमम्' इति भट्टिप्रयोगः[3] संगच्छत इति ॥ (९०९) **उभयप्राप्तौ**—। कृतीत्यनुवर्तते । तेनान्यपदार्थत्वाद्बहुव्रीहिरित्याह—**उभयोः प्राप्तिर्यस्मिन्निति** । उभयशब्देन कर्तृकर्मणी परामृश्येते । तेनैकस्मिन् कृति कर्तृकर्मणोः प्राप्तिलाभादाश्चर्यमिदमोदनस्य पाको ब्राह्मणानां च प्रादुर्भाव इत्यत्र नायं नियमः प्रवर्तते । तत्पुरुषे तु स्यादेवात्रातिप्रसङ्ग इति भावः ॥ पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमिति ध्वनयति—**कर्मण्येवेति** । एवं च कर्तरि षष्ठीप्रतिषेधोऽस्य सूत्रस्य फलं, न तु कर्मणि षष्ठीविधानमिति स्थितम् ॥ (९१०) **स्त्रीप्रत्यययोरिति** । 'स्त्रियां क्तिन् ५०६७' इत्यधिकारे विहितयोरित्यर्थः ॥ **नायं नियम इति** । अकाकारयोः प्रयोगे कर्मण्येव षष्ठी न तु कर्तरीति यो नियम उक्तः स न प्रवर्तते, किंतु कर्तर्यपि षष्ठी प्रवर्तत इति फलितोऽर्थः ॥ कथं तर्हि 'सुट् तिथोः २९६५' इति सूत्रे 'सुटा सीयुटो बाधो न' इति वृत्तिः । अत्राहुः—कर्तुः करणत्वविवक्षया तृतीया बोध्येति ॥ **भेदिकेति** । भेदनं भेदिका 'पर्यायार्हर्णोत्पत्तिषु-५१०४' इति ण्वुच् । 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः ५०९४' इत्यनेन ण्वुलित्येके । 'युवोरनाकौ १७६१' स्त्रियां टापि 'प्रत्ययस्थात्-६३०' इति इत्त्वम् ॥ (९११) **बिभित्सेति** । भेत्तुमिच्छा । भिदेः सनि 'हलन्ताच्च ३४७०' इति कित्त्वाद् गुणाभावः । 'अ प्रत्ययात् ५०८२' इत्यकारप्रत्यये टाप् ॥ **शेषे इति** । अकाऽकाराभ्यामन्यस्मिन् क्तिनादावित्यर्थः ॥ कर्तरि षष्ठीनिषेधफलकस्य 'उभयप्राप्तौ-९०९' इति सूत्रस्य तत्रैव कर्तरि षष्ठीसंपादनफलकस्य 'स्त्रीप्रत्यययोरकाकारयोः-९१०' इति वचनस्य च प्राक् स्थितत्वात् कर्तर्येव विभाषा अनेन शेषवचनेन क्रियते, न तु कर्मणीत्याशयेनोदाहरति—**जगतः कृतिर्हरेर्हरिणा वेति** ॥ (९१२) **अविशेषेणेति** । अकाऽकारभिन्ने कृन्मात्रे इत्यर्थः ॥ **अनुशासनमिति** । अनुशिष्यते असाधुशब्देभ्यः प्रविभज्य बोध्यते येनेति करणे ल्युट् ॥ (९१३) **राज्ञां मत इत्यादि** । 'मतिबुद्धिपूजार्थेभ्यश्च ४१०७' इति वर्तमाने क्तः । 'पूजितो यः सुरासुरैः' इत्यादौ तु भूते क्तो, न तु वर्तमाने । तेन तृतीया तत्रोपपद्यते । न च 'मतिबुद्धि-४१०७' इति सूत्रेण बाधः शङ्क्यः, 'तेन' इत्यधिकारे 'उपज्ञाते २०५९' इति लिङ्गेनाबाधज्ञापनात् ॥ (९१४) **अधिकरण**—। अयमपि निषेधापवादः ॥ **आसितमिति** । आस्यते अस्मिन्नित्यासितं 'क्तोऽधिकरणे च-४१०५' इत्यधिकरणे क्तः ॥ **इदमेषामिति** । कर्तरि षष्ठीयम् । सकर्मकेभ्यस्त्वधिकरणे क्ते, कर्तृकर्मणोर्द्वयोरपि

---

—वृत्तेरनन्तरं क्रियाद्वारकसंबन्धेन तद्धितार्थकर्त्रा कटमित्यादिकर्मणां संबन्धः । प्रकारान्तरमाह—अविग्रहेति । कर्तुः पृथग्ग्रहणरहितेत्यर्थः । एवं च प्रधानार्थकर्त्रा संसृष्टयाऽपि क्रियया कारकाणामन्वय इति तदर्थः । न चाविवक्षितकर्मतया भावे क्तसाधनयत्नो व्यर्थः, 'नपुंसके भावे-' इत्यनेन भावे क्तस्य सकर्मकेभ्योऽपि सिद्धेरिति वाच्यम्, तस्याप्यकर्मकेभ्य एवेष्टत्वात् । अत्र चात्रत्यं भाष्यमेव मानम् ॥

---

१ **प्राप्ताविति** । प्राप्तिपदेन चोभयोः प्रयोग एवायं निषेध इति ध्वनितम् । २ **असाधुत्व इति** । चिन्त्यमिदम् । अत्र षष्ठ्याः साधुत्वं यथा तथाऽनुपदमेवोक्तं न विस्मर्तव्यम् ॥ ३ **भट्टिप्रयोग इति** । उत्तमपुष्पादिसंबन्ध्यामोदं धारयद्भिरित्यर्थाभिमानेनेदम् । यदि तु 'आमोदं गृहीत्वा मादृशां दुःखस्य पोषकैः' इत्यर्थो जयमङ्गलाव्याख्यातरीत्या स्वीक्रियते तदा तु न काऽप्यनुपपत्तिरिति भाष्यवार्त्तिकानित्यत्वकल्पनं वृथैवेति बोध्यम् ॥

तृनाम् ।२।३।६९। एषां प्रयोगे षष्ठी न स्यात् । लादेशाः—कुर्वन् कुर्वाणो वा सृष्टिं हरिः । उः—हरिं दिदृक्षुः । अलंकरिष्णुर्वा । उक—दैत्यान् घातुको हरिः ॥ ( ९१६ ) (वा॰) कमेरनिषेधः ॥ लक्ष्म्याः कामुको हरिः । अव्ययम्—जगत् सृष्ट्वा । सुखं कर्तुम् । निष्ठा—विष्णुना हता दैत्याः । दैत्यान् हतवान् विष्णुः । खलर्थः—ईषत्करः प्रपञ्चो हरिणा । ( ९१७ ) तृन्निति प्रत्याहारः—शतृशानचाविति तृशब्दादारभ्या तृनो नकारात् । शानन्—सोमं पवमानः । चानश्—आत्मानं मण्डयमानः । शतृ—वेदमधीयन् । तृन्—कर्ता लोकान् ॥ ( ९१८ ) (वा॰) द्विषः शतुर्वा । मुरस्य मुरं वा द्विषन् ॥ ( ९१९ ) सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः । शेषे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ॥ ( ९२० ) (सू॰) अकेनोर्भविष्यदाधमर्ण्ययोः । २ । ३ । ७० । भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । सतः पालकोऽवतरति । व्रजं गामी । शतं दायी ॥ (९२१) (सू॰) कृत्यानां कर्तरि वा

---

षष्ठी, अनभिहितत्वाविशेषात् । इदमेषां भुक्तमोदनस्य । 'उभयप्राप्तौ कर्मणि ९०९' इत्ययं नियमस्तु नेह प्रवर्तते॰ 'कर्तृकर्मणोः कृति ९०७' इत्यनन्तरस्या एव षष्ठ्यास्तन्नियमाभ्युपगमात् । एतच्च कौस्तुभे स्पष्टम् ॥ **( ९१५ ) न लोका—**। जिघृक्षितरूपविनाशप्रसङ्गात् तृनामित्यत्र णत्वं न कृतम् । उश्च उकश्च ऊकौ लश्च ऊकौ चेति विग्रहः ॥ ल इति लडादीनां सामान्यग्रहणं, तेषां च साक्षात्प्रयोगो न संभवतीति तदादेशा गृह्यन्त इत्याह—**लादेशा इति** । उदाह्रियन्त इति शेषः । कटं कारयांचकारेत्यत्र कृत्संज्ञकलिडन्तामन्तेन योगेऽपि कटस्य 'कर्तृकर्मणोः कृति ९०७' इति षष्ठी न भवति 'आमः २९९७' इति लुकोऽपि लादेशत्वादित्याहुः ॥ नन्वेवमपि 'बभ्रिर्वज्रं पपिः सोमं ददिर्गाः' इत्यत्र 'न लोका—९१५' इति निषेधाप्रवृत्तेः षष्ठी दुर्वारैव, न हि किकिनौ लकारौ, नापि तदादेशौ । नैष दोषः, '—किकिनौ लिट् च ४१७३' इत्यनेन लिट्कार्यातिदेशः क्रियते, न तु लिट्संज्ञा । तथा च विशेषातिदेशे च सामान्यमप्यतिदिश्यत इति नानुपपत्तिः ॥ **दिदृक्षुरिति** । 'सनाशंसभिक्ष उः ४१७०' ॥ उकारेण कृतो विशेषणात्तदन्तमपि लभ्यत इत्याशयेनाह—**अलंकरिष्णुरिति** । 'अलंकृञ्निराकृञ्—४१३६' इत्यादिना इष्णुच् ॥ **घातुक इति** । 'लषपत—४१५५' इत्यादिना उकञ् ॥ **ईषत्कर इति** । 'ईषद्दुस्सुषु—५१२३' इत्यादिना खल् । अर्थग्रहणादीषत्पानः सोमो भवतेत्यप्युदाहार्यम् ॥ ( ९१७ ) अव्याप्तिं परिहर्तुमाह—**प्रत्याहार इति** ॥ **पवमान इति** । 'पूङ्यजोः शानन् ४१२८' ॥ **मण्डयमान इति** । 'मडि भूषायाम्' इदित्त्वान्नुम् 'ताच्छील्यवयोवचन—४१२९' इति चानश् ॥ **अधीयन्निति** । 'इङ्धार्योः—४१३०' इति शता । शाननादिषु 'लटः' इत्यननुवृत्त्या लादेश इत्यसिद्धेः प्रत्याहारग्रहणमाश्रीयत इति भावः ॥ **तृन्निति** । तच्छीलादिषु 'तृन् ४१३५' इति विहितस्तृन्प्रत्ययः । तृन्निति प्रत्याहारग्रहणान्नित्यं निषेधे प्राप्ते विकल्पमाह—**द्विष इति** । 'द्विष अप्रीतौ' इत्यस्मात् द्विषोऽमित्रे ४१३१' इति विहितो यः शतृप्रत्ययस्तत्प्रयोगे वा षष्ठीनिषेध इत्यर्थः ॥ ( ९१९ ) **सर्वोऽयमिति** । 'अनन्तरस्य—४८८' इति न्यायादिति शेषः ॥ **शेषे षष्ठी त्विति** । शाब्दबोधे वैलक्षण्यमस्तीति भावः । एवं चाश्चर्यो गवां दोहोऽगोपेनेत्यत्र शेषत्वविवक्षायां कर्तर्यपि षष्ठी भवत्येवेति बोध्यम् ( ९२० ) **अकेनोः—**। आधमर्ण्ये अकस्यासंभवादाह—**भविष्यत्यकस्येति** । इनस्तु उभयोः संभवादाह—**भविष्यदाधमर्ण्यार्थेनश्च योग इति** । यथासंख्यं तु न भवति, भाष्ये 'अकस्य भविष्यति' 'इन आधमर्ण्ये च' इति योगं विभज्य व्याख्यानात् । इह भविष्यदिति स्वर्यते तेन 'भविष्यति गम्यादयः ४९५८' इत्यधिकारे विहितः 'तुमुन्ण्वुलौ—४९६२' इति ण्वुलेव गृह्यत इत्याशयेनोदाहरति—**सतः पालक इति** । सत इति शत्रन्तम् ॥ यस्तु कालसामान्ये 'ण्वुल्तृचौ ३८५१' इति ण्वुलुक्तस्तत्र न निषेधः । ओदनस्य पाचकः, पुत्रपौत्राणां दर्शक इतीति भावः ॥ **व्रजं गामीति** । 'आवश्यकाधमर्ण्ययोर्णिनिः ५१३२' इत्यावश्यके णिनिः । यद्यप्ययं कालसामान्ये विहितस्तथापि 'भविष्यति गम्यादयः ४९५८' इत्युक्तेर्भविष्यदर्थकः । गम्यादयः केचिदुणादयः केचिदष्टाध्यायीगता इति हरदत्तः ॥ ननु 'गत्यर्थकर्मणि चतुर्थी च' इत्येव सिद्धे द्वितीयाग्रहणमपवादविषयेऽपि द्वितीयाप्रवृत्त्यर्थमिति व्रजं गामीति सिध्यत्येवाति चेत् । अत्राहुः—इहैव सूत्रे 'ग्रामं गमी' इति भाष्योदाहरणात्तत्सूत्रं नाङ्गीक्रियते । तेन ग्रामस्य गन्तेति षष्ठ्येव साध्वी, न तु ग्रामं गन्तेति द्वितीयेति । **शतं दायीति** । 'आवश्यका—५१३२' इत्याधमर्ण्ये णिनिः । भविष्यदाधमर्ण्यार्थेनश्च योग इत्युक्तत्वान्नेह निषेधः । अवश्यं

---

१ **कमेरिति** । 'उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः' इति वार्तिके 'भाषायाम्' इत्युक्तत्वाद् भाषायामेवायमप्रतिषेधः ॥
२ **तृशब्दादिति** । कुर्वन्नित्यादौ शत्रादेशावयवतृशब्दस्य प्रत्याहारान्तर्गतत्वेऽपि शतुस्तदघटकत्वान्नानेन निर्वाह इति ध्वनयितुमेव लादेशाङ्गीकारेण षष्ठीनिषेधो दर्शित इति भावः ॥ ३ **स्यादेवेति** । इदं तु चिन्त्यम् । 'क्तस्य च वर्तमाने नपुंसके भाव उपसंख्यानम्' 'छात्रस्य हसितम्—' इति वार्तिकारम्भात् कारकषष्ठीनिषेधविषये शेषत्वविवक्षा न । शेषविज्ञानाद्वा सिद्धम् । इति तद्वार्तिकप्रत्याख्यानेऽपि क्तातिरिक्तविषयकारकषष्ठीनिषेधविषये शेषत्वविवक्षायां मानाभावः । अत एव 'पुरणगुण—' इति सूत्रे ''सति किमुदाहरणम् ? 'ब्राह्मणस्य पश्यन् ब्राह्मणस्य पश्यमाणः' इति । नैतदस्ति, प्रतिषिध्यतेऽत्र षष्ठी 'लप्रयोगे न' इति । [ या च श्रूयते । एषा बाह्यमर्थमपेक्ष्य भवति तत्रासामर्थ्यान्न भविष्यति । कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति । द्रव्यमत्रापेक्ष्यते ओदनः, इदं तर्हि चोरस्य द्विषन् । ननु चात्रापि प्रतिषिध्यते । वक्ष्यत्येतद्—'द्विषः शतुर्वा वचनम्' इति ]'' इति भाष्ये लादेशविषयकं सद्ग्रहणं प्रत्याख्यातम् ॥ ४ **गमीति** । 'गमेरिनिः' इत्यौणादिक इनिः । 'गामी' इति दीर्घाकारपाठे बाहुलकाद् वृद्धिः—इति शेखरे ॥

।२।३।७१। षष्ठी वा स्यात्। मया मम वा सेव्यो हरिः। कर्तरीति किम्। गेयो माणवकः साम्नाम्। भव्यगेयेति कर्तरि यद्विधानादनभिहितं कर्म। ( ९२२ ) अत्र योगो विभज्यते॥ कृत्यानाम्॥ उभयप्राप्ताविति नेति चानुवर्तते। तेन नेतव्या व्रजं गावः कृष्णेन। ततः कर्तरि वा॥ उक्तोऽर्थः॥ ( ९२३ ) (सू) तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ।२।३।७२। तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी। तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा। अतुलोपमाभ्यां किम्। तुला उपमा वा कृष्णस्य नास्ति॥ ( ९२४ ) (सू) चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ।२।३।७३। एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी। आशिषि आयुष्यं चिरंजीवितं कृष्णाय कृष्णस्य वा भूयात्। एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं वा भूयात्। आशिषि किम्। देवदत्तस्यायुष्यमस्ति। ( ९२५ ) व्याख्यानात्सर्वत्रार्थग्रहणम्। मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः॥ ( ९२६ ) (सू) आधारोऽधिकरणम्। १। ४। ४५। कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात्॥ ( ९२७ ) (सू) सप्तम्यधिकरणे च। २। ३। ३६। अधिकरणे सप्तमी स्यात् चकाराद्दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा।

---

करोत्यवश्यंकारी कटस्य। गम्यादित्वाभावाद्वर्तमानेऽप्ययम्॥ (९२१) कृत्यानाम्—। 'कर्तृकर्मणोः-९०७' इति नित्ये प्राप्ते विभाषेयम्॥ सेव्य इति। 'षेवृ सेवायाम्' 'ऋहलोः-३८२४' इति कर्मणि ण्यत्॥ (९२२) योगो विभज्यत इति। भाष्यकारैरिति शेषः। 'उभयप्राप्तौ-९०९' इत्यनेन कर्तरि निषेधे सिद्धे कर्मणि निषेधार्थमिदम्। 'गुणकर्मणि वेष्यते ९०८ इति तूभयप्राप्तिरहितस्थले नेताऽश्वस्येत्यादौ चरितार्थमिति दिक्॥ (९२३) तुल्यार्थैः—। शेषषष्ठ्यां प्राप्तायां विकल्पेन तृतीया अनेन विधीयते, तया मुक्ते षष्ठ्येव भवेत्तदाह—पक्षे षष्ठीति। बहुवचननिर्देशादेव पर्यायग्रहणे सिद्धे 'तुल्यार्थैः' इत्यर्थग्रहणं पदान्तरसापेक्ष्येण ये तुल्यार्थास्तेषां ग्रहणार्थं, तेन गौरिव गवय इत्यादौ नेत्याहुः। कथं तर्हि 'तुलां यदारोहति दन्तवाससा' इति कालिदासः, 'स्फुटोपमं भूतिसितेन शंभुना' इति माघश्च। उच्यते-'सहयुक्तेऽप्रधाने ८१८' इति तृतीया। न चात्र सहशब्दयोगो नेति शङ्क्यम्, विनाऽपि तद्योगं तृतीयेत्यभ्युपगमात्। वेति वर्तमानेऽन्यतरस्यांग्रहणमुत्तरसूत्रे चकारेण स्वस्यानुकर्षणार्थम्। अन्यथा हि तृतीयैवानुकृष्येत संनिहितत्वात्॥ तुल्य इति। तुलया संमितस्तुल्यः। 'नौवयोधर्म-२२३७' इत्यादिना यत्॥ तुला उपमा वेति। तोलनं तुला अस्मिन्नेव सूत्रे णिलुगङोर्निपातनात्साधुरिति माधवः। उपमितिरुपमा। 'आतश्चोपसर्गे ५०६८' इत्यङ्॥(९२४) हितमिति। 'हितयोगे च ८४६' इत्यनाशिषि चरितार्थमित्याशिष्ययं विकल्प इति भावः॥(९२५) व्याख्यानादिति। सूत्रेऽर्थशब्दोऽपि पृथङ् निमित्तं, तथा च द्वन्द्व एवायं, न त्वर्थशब्देन बहुव्रीहिरिति भावः॥ इति षष्ठी॥

---

१ चतुर्थीति। आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकात् तद्द्वारके आयुष्यादियोगे चतुर्थीषष्ठ्यावित्यर्थः। अत एव तदर्थकचतुर्थ्याद्यन्तेन सुखहितादिभिर्न समासः। उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात्॥ २ औपश्लेषिक इति। उप समीपे श्लेषः संबन्धः उपश्लेषः तत्कृत औपश्लेषिक इत्यर्थः। 'यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमाधिकरणम्' इति 'तत्र च दीयते-' इति सूत्रे भाष्योक्तेः। अत एव 'इको यणचि' इत्यत्र 'अचि' इति सप्तमी औपश्लेषिकाधारे "संहितायाम्" सूत्रे भाष्ये उक्ता। एवं च 'अव्यवहितसामीप्यमेवाधारत्वनियामकं न तु व्यवहितम्' इत्यपि ध्वनितम्। यत्किंचिदवयवावच्छेदेनाधारस्याधेयेन व्याप्तिरप्युपश्लेष एव। यथा 'कटे आस्ते' इति। एवमेव गङ्गैकदेशे तरन्तीषु गोषु 'गङ्गायां गावः' कूपैकदेशस्थिते गर्गकुले 'कूपे गर्गकुलम्' इति। व्यवहितसामीप्ये 'गङ्गायां घोषः' इत्यादौ गङ्गापदस्य तीरे लक्षणा। तदाऽपि गौणमेवाधारत्वं सर्वावयवावच्छेदेन तीरस्य घोषसंबन्धाभावात्॥ ३ वैषयिक इति। अप्राप्तिपूर्वकप्राप्तिरूपसंयोगसमवायातिरिक्तसंबन्धेन यदधिकरणं तद् वैषयिकं, यथा 'खे शकुनयः' इति॥ ४ अभिव्यापक इति। यत्र सर्वावयवावच्छेदेन व्याप्तिस्तदभिव्यापकम्, यथा-तिलेषु तैलमित्यादि। इदमेव मुख्यमाधिकरणम् 'आचार्यः किमधिकरणं न्याय्यं मन्यते। यत्र कृत्स्न आधारात्मा व्याप्तः' इति 'स्वरितेनाधिकारः' इति सूत्रे भाष्योक्तेः। एवं चौपश्लेषिकवैषयिकयोर्गौणमेवाधारत्वमिति बोध्यम्॥ अत्रेदं बोध्यम्-यथा विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु विधिरेवानुस्यूतः, तथात्रापि त्रिष्वपि उपश्लेष एवास्ति, संबन्धभेदात्तु त्रिधेति व्यवहारः। तदुक्तं हरिणा-''उपश्लेषस्यास्त्यभेदास्तिलाकाशकटादिषु। उपकारास्तु भिद्यन्ते संयोगिसमवायिनाम्॥ अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता। दिग्विशेषादवच्छेद इत्याद्या भेदहेतवः॥'' इति॥ अत्र हेलाराजः—औपश्लेषिकवैषयिकाभिव्यापकेषु त्रिष्वप्युपश्लेषोऽस्त्येव। उपकारः संबन्धः। तद्भेदात्तु त्रित्वेन व्यवहारः। कटे आस्ते इत्यादौ संयोगिन्याधारे कतिपयावयवव्याप्त्यैव संबन्धः। 'तिलेषु तैलम्' इत्यादौ समवायिनि समस्तावयवव्याप्त्या सः। खे शकुनय इत्यादावाकाशस्य तात्त्विकावयवाभावेन कल्पितदेशत्वाद्वैषयिकम्। कल्पितदेशापेक्षया चात्राप्युक्तान्यतर उपश्लेषः। गुरौ वसतीत्यत्र शिष्यस्य गुर्वधीनायां वृत्तौ वैषयिकमधिकरणं गुरुः। उपश्लेषोऽत्र बौद्धः। युद्धे संनह्यतीत्यत्र युद्धोद्देशेन कवचादिसंनहनप्रवृत्तेर्युद्धं विषयः। 'शत्रोरभावे सुखम्' इत्यादौ बौद्धमेव तत्। उपकारानाह—अविनाश इति। अविनाशस्तिलकृत उपकारस्तैलस्य तिलविनाशे हि तैलं विशीर्णं नश्येत्। पर्यङ्के शेत इत्यादौ शयितृगुरुत्वस्य (पतनासमवायिकारणस्य) प्रतिबन्धे पर्यङ्कस्य स्वतन्त्रतोपकारः। खे शकुनय इत्यादौ दिग्विशेषसंबन्धात्स्वापरिवर्तनमुपकारः। गुरुणा शिष्यस्य संस्कारा इत्येवमाद्य उपकारा ऊह्या इति॥ ५ पृथङ् निमित्तमिति। भाष्ये तु नैतद् दृश्यते इति शेखरे॥

कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छाऽस्ति । सर्वस्मिन्नात्माऽऽस्ति । वनस्य दूरे अन्तिके वा ॥ दूरान्तिकार्थेभ्य इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः ॥ (९२८) वा॰ क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ॥ अधीती व्याकरणे । अधीतमनेनेति विग्रहे इष्टादिभ्यश्चेति कर्तरीनिः ॥ (९२९) वा॰ साध्वसाधुप्रयोगे च ॥ साधुः कृष्णो मातरि । असाधुर्मातुले ॥ ( ९३० ) वा॰ निमित्तात्कर्मयोगे ॥ निमित्तमिह फलम् । योगः संयोगसमवायात्मकः ॥

---

( ९२६ ) आधारः—। आध्रियतेऽस्मिन्नित्याधारः । 'अध्यायन्याय-५११७' इति सूत्रे 'अवहाराधार-५११८' इत्युपसंख्यानादधिकरणे घञ् । स चाधारः कस्येत्याकाङ्क्षायां कारकाधिकारात्क्रियाया इति लभ्यते । इयं च संज्ञा साक्षात् क्रियाधारयोर्न संभवति पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधितत्वात् । अतो व्याचष्टे—**कर्तृकर्मद्वारेति** । एवं च भूतले घट इत्यादौ अस्तीति क्रियाध्याहारो बोध्यः ॥ ( ९२७ ) **त्रिधेति** । एतच्च 'संहितायाम्' इति सूत्रे भाष्ये स्पष्टम् । नद्यामास्त इत्याद्यर्थे सामीपिकमधिकरणं चतुर्थमपि केचिदिच्छन्ति ॥ **कटे आस्त इति** । कर्तृद्वारा क्रियाधारस्योदाहरणमिदम्, कर्मद्वारा क्रियाधारस्य तु **स्थाल्यां पचतीति** । वैषयिकाधारमुदाहरति—**मोक्षे इति** । अभिव्यापकस्य तु—**सर्वस्मिन्निति** । तिलेषु तैलमित्याद्यप्यभिव्यापकस्योदाहरणमाहुः ॥ **चतस्र इति** । प्रातिपदिकार्थमात्र इत्यर्थः । 'दूरान्तिकार्थेभ्यः-८८६' इत्यस्येहानुवर्तनादधिकरणेऽप्येते बोध्याः ॥ ( ९२८ ) **क्तस्येन्विषयस्येति** । इन् इन्नन्तः शब्दो विषयो वर्तनभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः ॥ अन्ये त्वाहुः–इनो विषय इति षष्ठीसमासः । विषयशब्देनेह प्रकृतिरुच्यते । क्तान्तस्येनः प्रकृतित्वादिति ॥ **अधीती व्याकरणे इति** । भावे क्तप्रत्यये तत 'इष्टादिभ्यश्च २५४९' इति कर्तरीनौ कृते पश्चाद्गुणभूतक्रियया संबध्यमानं व्याकरणमनभिहितं कर्मेति कृतपूर्वी कटमितिवद् द्वितीयाऽत्र प्राप्ता । मासमधीती व्याकरणे इत्यादौ त्वकर्मकैर्धातुभिर्योगनिमित्तकस्य कालकर्मणो बहिरङ्गत्वादिहाग्रहणमिति सप्तम्यभावः । न चैवं तत्र द्वितीयाऽपि न स्यादिति वाच्यम्, लक्ष्यानुरोधेन द्वितीयाविधाने व्यक्तिपक्षाश्रयणात् । एतच्च कौस्तुभे स्थितम् ॥ (९२९) **साध्वसाधुप्रयोगे च** । यत्रार्चा न विवक्षिता, किन्तु तत्त्वकथनमात्रं तत्रापि सप्तम्यर्थं वार्तिकेऽस्मिन् साधुग्रहणं साधुर्भृत्यो राज्ञीत्यादि यथा । 'साधुनिपुणाभ्याम् ९३८' इति सूत्रे साधुग्रहणं त्वर्चायां विवक्षितायां प्रतियोगे सप्तमीनिवृत्त्यर्थमिति विवेकः ॥ (९३०) **निमित्तमिह फलमिति** । यदि तु कारण-

---

१ **कटे आस्त इति** । कटाश्रयकमासनमिति प्राचां मते बोधः । नवीनानां तु–कटाधिकरणकमासनमिति बोधः । वस्तुतस्तु—'कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम् । उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥' इति हरिकारिकयाऽधिकरणस्य कर्तृकर्मान्तरायेणैव क्रियाधारत्वकथनेन अन्वयस्यापि कर्तृकर्मद्वारैव क्रियायां सूचितत्वात् 'कटाधिकरणकं चैत्रकर्तृकमासनम्' इत्येवं रीत्यैव शाब्दबोधः ॥ २ **स्थाल्यामिति** । मतभेदेन स्थाल्याश्रयकः, स्थाल्यधिकरणकः। स्थाल्यधिकरणकौदनकर्मकः पाक इति बोधः ॥ ३ **मोक्षे इच्छेति** । अत्र 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इत्युक्त्या कृत्प्रत्ययवाच्यसिद्धभूतेच्छाद्वाराऽस्तिक्रियायामन्वयस्याविवक्षितत्वेनाधिकरणत्वम् । प्रकृत्यर्थसाध्यभूतेच्छाद्वारा तत्रान्वये तु मोक्षस्य कृदन्तकर्मत्वात् 'मोक्षस्येच्छाऽस्ति' इति षष्ठ्येव भवति ॥ ४ **सर्वस्मिन्निति** । सर्वव्यापकाधिकरणकात्मकर्तृका सत्तेति बोधः ॥ ५ **अधीतीति** । व्याकरणकर्मकाध्ययनकर्तेति बोधः ॥ ६ **साध्वसेति** । यन्निरूपितं साध्वसाधुत्वं विवक्षितं ततः सप्तमीति वार्तिकार्थः ॥ ७ **निमित्तादिति** । निमित्तवाचकात् प्रवृत्तिप्रयोजनवाचकात् सप्तमी भवति, तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा कर्तुरीप्सिततमेन योग इत्यर्थः । कर्मसंबन्धश्च स्वरूपसन्नेव हेतुरिति । फलं निमित्तं वा सप्तम्यर्थः ॥ ८ **संयोगेति** । संयोगसमवायान्यतरमूलक आधाराधेयभाव इत्यर्थः । संयोगस्य तु न संबन्धत्वम्, पर्वतस्य वृक्षा इत्यापत्तेः । न चेष्टापत्तिः, 'वृक्षवान् पर्वतः' इत्याद्यर्थे मतुप्सूत्रे सप्तम्युपादानेन संयोगस्य षष्ठ्यर्थत्वव्याप्यसंबन्धत्वाभावसूचनात् । स्वतः पदार्थत्वाभावे सति पदार्थयोजनामात्रहेतुत्वस्यैव संबन्धत्वात् । संयोगस्य स्वतः पदार्थत्वात् विषयतादीनामिव न पदार्थत्वम् । एवं समवायस्यापि न स्वतः पदार्थत्वात्संबन्धत्वम् । प्रपञ्चस्तु मञ्जूषायां नागेशेन कृत इति धीमद्भिस्तत एव ग्राह्य इति बोध्यम् ॥ ९ **क्तान्तस्येति** । क्तान्तनिरूपितपरार्थाभिधानाश्रय इन्नतः इत्यर्थः ॥ 'कृतपूर्वी कटम्' इत्यत्र तु विद्यमानपूर्वकपूर्वशब्द एव प्रकृतिः, न तु क्तान्तमात्रमिति न सप्तम्यापत्तिरिति भावः ॥ १० **बहिरङ्गत्वादिति** । साधारणत्वेनाव्यावर्तकत्वादित्यर्थः । अयं भावः–यत् कर्म क्वचित् संभवति व्यभिचरति च तादृगेव कर्म 'लः कर्मणि च–' इत्यत्रेवात्रापि गृह्यते न सर्वसाधारणं कालादीति भावः ॥ ११ **व्यक्तीति** । यावदित्यादिः । यावद्व्यक्तिपरिग्रहणाश्रयणादित्यर्थः । 'लः कर्मणि च' इत्यत्र त्वकर्मकग्रहणसामर्थ्यान्न कर्मत्वावच्छिन्नयावद्व्यक्तिग्रहणम्, तथात्रापि कर्मणोऽनुक्ततासाधकभावप्रत्ययोपयोग्यकर्मकत्वसंपत्तये न कर्मत्वावच्छिन्नयावद्व्यक्तिग्रहणमिति भावः । 'व्यक्तिपक्षे सर्वं लक्ष्यं व्याप्नोति न जातिपक्षे' इति तु न केषामपि धीमतां संमतं, सरूपसूत्रभाष्यविरोधादिति प्रागेव निरूपितम् ॥ १२ **राज्ञीति** । 'साधू राज्ञो भृत्यः' इत्येवं प्रयोगस्य प्रामाणिकत्वे तु राज्ञो भृत्येन सह शाब्दोऽन्वयो न तु साधुना, राज्ञो यो भृत्यः स साधुरिति तत्र राजनि वाऽन्यत्र वेति नैतच्छब्देन स्पृश्यते । प्रत्यासत्त्या तु राजविषयमेव साधुत्वं गम्यत इत्येतावता तत्प्रयोग इति बोध्यम् ॥

[1]चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

हेतौ तृतीयाऽत्र प्राप्ता तन्निवारणार्थमिदम् । सीमाऽण्डकोशः । पुष्कलको गन्धमृगः । योगविशेषे किम् । वेतनेन धान्यं लुनाति ॥ (९३१) **सू॰ यस्य च भावेन भावलक्षणम् । २ । ३ । ३७** । यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । [2]गोषु दुह्यमानासु गतः ॥ (९३२) **वा॰ अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च ॥** सत्सु तरत्सु असन्त आसते । असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु असन्तस्तरन्ति । असत्सु तरत्सु सन्तस्तिष्ठन्ति ॥ (९३३) **सू॰ षष्ठी चानादरे । २ । ३ । ३८** । अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । [3]रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ॥ (९३४) **सू॰ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । २ । ३ । ३९** । एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थ-

---

मित्युच्येत, तर्हि जाड्येन बद्ध इत्यादावतिप्रसङ्गः स्यादिति भावः ॥ **चर्मणीति** । [4]चर्मद्वीप्यादीनां समवायः संबन्धः ॥ **हेतुतृतीयेति** । तादर्थ्ये चतुर्थीत्यपि बोध्यम् ॥ **सीमाऽण्डकोश इति** । तथा च मेदिनीकारः—'सीमा घाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम्' इति । 'अथ पुष्कलको गन्धमृगे क्षपणकीलयोः' इति च ॥ हरदत्तस्तु पुष्कलकः शंकुः । सीम्नि सीमज्ञानार्थं हतो निहतः निखात इत्याह । अस्मिंस्तु पक्षे सीमपुष्कलकयोः संयोगसंबन्धः ॥ (९३१) **यस्य च—** । [5]निर्ज्ञातकाला हि क्रिया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षणं, तत्र प्रसिद्धक्रियाश्रययोः कर्तृकर्मणोर्वाचकात् ब्राह्मणादिशब्दाल्लक्ष्यलक्षणभावसंबन्धषष्ठ्यां प्राप्तायामियं सप्तमी । लक्षकत्वं क्रियायाः साक्षात्, आश्रयस्य तु ब्राह्मणादेः क्रियाद्वारेणेति बोध्यम् । ब्राह्मणेष्वधीयानेषु गत इति कर्तर्युदाहरणम् ॥ कर्मण्याह—**गोष्विति** ॥ (९३२) **अर्हाणामित्यादि** । यस्यां क्रियायां ये उचितास्ते अर्हाः । तेषां कर्तृत्वे विवक्षिते सति तत्र सप्तमी वाच्या । तथा यस्यां क्रियायां येषां कर्तृत्वमनुचितं तेषामकर्तृत्वे विवक्षिते च सप्तमी वाच्या । तथा तद्वैपरीत्ये येषां कर्तृत्वमुचितं तेषामकर्तृत्वे येषां तु नोचितं तेषां कर्तृत्वे च सप्तमी वाच्येत्यर्थः ॥ आद्यमुदाहरति—**सत्सु तरत्स्विति** । सन्तो हि तरणक्रियार्हाः कर्तारश्च ॥ द्वितीयमुदाहरति—**असत्सु तिष्ठत्स्विति** । अत्र तरणक्रियायामसतामनर्हत्वमकर्तृत्वं च तिष्ठत्स्वित्यनेन प्रतीयते । तद्वैपरीत्ये प्रथममुदाहरति—**सत्सु तिष्ठत्स्विति** । सतां हि तरणमुचितं तेषां चाकर्तृत्वं तिष्ठत्स्वित्यनेन द्योत्यते । द्वितीयमुदाहरति—**असत्सु तरत्स्विति** । असतां हि तरणमनुचितं तेषां च कर्तृत्वं तरत्सु इत्यनेन गम्यते ॥ यद्यपीदं 'यस्य च भावेन—९३१' इत्येव सिद्धं,तथापि लक्ष्यलक्षणभावाविवक्षायां सप्तम्यर्थमिदमिति कैयटादयः ॥ तत्त्वतस्तु व्यर्थमेवेदमित्यन्ये ॥ (९३३) **षष्ठी चानादरे** । **अनादर इति** । 'यस्य च भावेन—९३१' इत्यनेन सप्तमी । अनादरे सति यो भावं लक्षयतीति ॥ तदेतत्फलितमाह—**अनादराधिक्य इति** । केवलभावलक्षणे सप्तम्येव अनादराधिक्ये तु षष्ठीसप्तम्याविति निष्कर्षः ॥ (९३४) **स्वामीश्वर—** । 'स्वाम्यर्थ—' इति वक्तव्ये स्वाम्यादित्रयग्रहणं पर्यायान्तरनिवृत्त्यर्थम् । 'विरूपाणामपि समानार्थानाम्—१३३५' इत्येकशेषोऽत्र न भवति स्वरूपपरत्वेन समानार्थकत्वाभावात् ॥ **दायाद—इति** । दायमादत्ते इति दायादः । सोपसर्गाद्दा-

---

१ **चर्मणीति** । चर्मादीनां फलत्वं च हननस्य तल्लाभेच्छाधीनत्वात् । चर्मनिमित्तकं द्वीपिकर्मकं हननमिति बोधः ॥ २ **गोष्विति** । ज्ञाप्यज्ञापकभावः सप्तम्यर्थः । तस्य च 'भावलक्षणम्' इत्युक्तेः क्रियायामेवान्वयः ॥ वर्तमानकालिकगोकर्मकदोहनज्ञाप्यगमनाश्रय इति बोधः । 'विवाहे नान्दीमुखं कुर्यात्, गवां दोह आगतः' इत्यादौ तु क्रमेण तत्प्राक्कालः, तदाश्रयकाल एव लक्ष्यते इत्यधिकरण एव सप्तमी । 'राहूपरागे स्नायात्' इत्यत्रापि तदाश्रयः काल उच्यत इत्यधिकरण एव सप्तमी । अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वाद् राहूपरागकालावच्छेदेन स्नानविधाने तस्य निमित्तत्वं फलति । यत्र मानान्तरसिद्धस्यार्थस्य कालदेशविशेषसंबन्धादिप्रतिपादनाय प्रयोगस्तत्रैवैतत्सूत्रप्रवृत्तेर्भाष्यस्वरससिद्धत्वेन स्नानस्य मानान्तरादप्राप्तेरेतत्सूत्राप्राप्तेः । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥" इत्यत्र परं हिरण्यगर्भादि अवरं यस्य तद् ब्रह्माणि दृष्टे तद्विषये दर्शने दर्शनोत्तरकाले कर्मादिक्षय इत्यधिकरण एव सप्तमी ॥ ३ **रुदति रुदतो वेति** । ज्ञाप्यज्ञापकभावः षष्ठीसप्तम्योरर्थः धातोश्चानादरविशिष्टं प्रव्रजनमर्थः ॥ रोदनकर्तृपुत्रादिज्ञाप्यमनादरविशिष्टं प्रव्रजनमिति बोधः ॥ ४ **चर्मद्वीप्यादीनामिति** । चर्माण्डकोशयोः समवायः, दन्तकेशानां संयोग इति बोध्यम् ॥ ५ **निर्ज्ञातेति** । एतेन 'भूयोदर्शनाश्रयत्वेन ज्ञाप्यज्ञापकभावस्य 'उदित आदित्ये तमो नष्टम्' इत्यादावेव स्यात्, न त्वत्र कदाचिद्धि गोषु दुह्यमानास्वसौ गतः' इत्यपास्तम् । तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति यथा—'गोषु दुह्यमानासु गतः' इति । काचित् स्वाधारकालाव्यवहितपूर्वकालेन, यथा—गोषु धोक्ष्यमाणास्वित्यादौ । काचित् स्वाधारकालाव्यवहितोत्तरकालेन, यथा—गोषु दुग्धास्वित्यादौ । कालपदं देशस्याप्युपलक्षणम् । तदुदाहरणम्—'सति गुणे द्रव्यत्वम्' इति । ज्ञापकत्वं च तत्तच्छब्दबोध्यत्वेन विवक्षितमेवैतच्छास्त्रप्रवृत्तौ निमित्तम्, न तु तस्य मानान्तरेण नियमतो ग्रहणापेक्षेति नेदं भूयोदर्शनाश्रयमिति बोध्यम् ॥ ६ **इत्यर्थ इति** । वाक्यचतुष्टयमेतदिति फलितम् । कर्तृसमर्पकात्सप्तम्यां तदन्वयिक्रियावाचकाद्धातोरप्रथमासामानाधिकरण्याच्छतृशानचावेवेति बोध्यम् ॥

वचनम् । गवां गोषु वा स्वामी । गवां गोषु वा प्रसूतः । गा एवानुभवितुं जात इत्यर्थः ॥ ( ९३५ ) सू आयुक्तकुशलाभ्यां चासेवायाम् । २ । ३ । ४० । आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे । आयुक्तो व्यापारितः । आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा । आसेवायां किम् । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ॥ ( ९३६ ) सू यतश्च निर्धारणम् । २ । ३ । ४१ । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः । नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा । गच्छतां गच्छत्सु वा धावञ्छीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः ॥ ( ९३७ ) सू पञ्चमी विभक्ते ।२।३।४२। विभागो विभक्तम् । निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ॥ ( ९३८ ) सू साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । २ । ३ । ४३ । आभ्यां योगे सप्तमी स्यादर्चायां न तु प्रतेः प्रयोगे । मातरि साधुर्निपुणो वा । अर्चायां किम् । निपुणो राज्ञो भृत्यः । इह तत्त्वकथने तात्पर्यम् ॥ ( ९३९ ) वा अप्रत्यादिभिरिति वक्तव्यम् ॥ साधुर्निपुणो वा मातरं प्रति पर्यनु वा ॥ ( ९४० ) सू प्रसितोत्सुकाभ्यां तृतीया च ।२। ३।४४। आभ्यां योगे तृतीया स्याच्चात्सप्तमी । प्रसित उत्सुको वा हरिणा हरौ वा ॥ ( ९४१ ) सू नक्षत्रे च लुपि । २ । ३ । ४५ । नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे । मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् । मूले श्रवणे इति वा । लुपि किम् । पुष्ये शनिः ॥ ( ९४२ ) सू सप्तमीपञ्चम्यौ कारकमध्ये ।२।३।७। शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः । अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता ।

---

दन्ताद् अत एव निपातनात्कः । गवां गोषु वा दायाद इत्यत्र यद्यपि गवामित्येतत्समुदायस्य विशेषणं, तथापि दीयतेऽसौ दाय इति व्युत्पत्त्या अवयवार्थभूतमंशं स्पृशत्येव, तथा चात्र गवात्मकस्यांशस्य आदातेति फलितोऽर्थः ॥ ( ९३७ ) **पञ्चमी विभक्ते** ॥ **भेद एवेति** । न तु शब्दान्तरोपात्तसामान्याक्रान्ततेति भावः ॥ **तत्र पञ्चमी स्यादिति** । नन्वेवं माथुरा इत्यत्रापि पञ्चमी स्यात् । मैवम्, पूर्वसूत्रमिहानुवर्तते, तेन यतो निर्धार्यते तत एवेत्यर्थात् निर्धारणावधेरेव पञ्चमीप्रवृत्तेः । अनभिहिताधिकारान्माथुरा इत्यत्र नातिप्रसङ्ग इत्यन्ये ॥ **माथुरा इति** । न ह्यत्र निर्धारणावधेर्निर्धार्यमाणस्य गवां कृष्णेत्यादाविव सामान्यविशेषभावोऽस्ति किन्तु शब्दोपात्तयोर्धर्मयोर्विरोध एव ॥ इदं च सूत्रं बुद्धिपरिकल्पितापायमाश्रित्यापादानप्रकरणे भाष्ये प्रत्याख्यातम् ॥ ( ९३८ ) **साधुनिपुणाभ्यामर्चायाम्**—। 'पुण कर्मणि शुभे' अस्मान्निपूर्वादिगुपधलक्षणः कः । 'अर्च पूजायाम्' अस्माद्भौवादिकात् 'गुरोश्च हलः ५०८३' इत्यप्रत्यये टाप् । चौरादिकात् 'ण्यासश्रन्थः–५०८९' इति युच्यर्चनेति स्यात् ॥ **निपुणो राज्ञ इति** । साधुशब्दप्रयोगे त्वर्चां विना सप्तमी भवत्येव, 'साध्वसाधुप्रयोगे च ९२९' इति वार्तिकात् ॥ ( ९३९ ) **अप्रत्यादिभिरिति** । 'लक्षणेत्थम्–८०५' इति सूत्रोपात्ताः प्रत्यादयः ॥ ( ९४० ) **प्रसितोत्सुकाभ्याम्**—। 'तत्परे प्रसितासक्तौ' इत्यमरः । उत्सुकसाहचर्यात् प्रसितोऽपि तत्पर एवेह गृह्यते रूढ्या च । तेन प्रकर्षेण सितः शुक्लः इत्यर्थे न भवति ॥ ( ९४१ ) **नक्षत्रे च लुपि** । लुप्शब्दोऽत्रार्थविशेषे लाक्षणिक इत्याशयेनाह— **यो लुप्संज्ञयेत्यादि** । **अधिकरण इति** । एतच्च 'सप्तम्यधिकरणे च ९२७' इत्यतो मण्डूकप्लुत्याऽनुवर्तत इति भावः । अधिकरणे किम्, मूलं प्रतीक्षते, मूलाय स्पृहयति ॥ **मूलेनेति** । 'नक्षत्रेण युक्तः कालः १७०३' इत्यणो 'लुबविशेषे १७०४' इति लुप् । नक्षत्र इति किम्, पञ्चालेषु तिष्ठति । इह 'जनपदे लुप् १८२४' इति लुप् ॥ ( ९४२ ) **सप्तमीपञ्चम्यौ**—। 'कालाध्वनोरत्यन्तसंयोगे ८११' इत्यतः कालाध्वनोरित्यनुवर्तते, तच्च पञ्चम्या विपरिणम्यते तदाह—**यौ कालाध्वानौ ताभ्यामिति** । इह कालाध्वभ्यां विभक्त्योर्यथासंख्यं न भवत्यस्वरितत्वात् ॥ **अद्य भुक्त्वाऽयमिति** । नन्वत्र कर्ता एक एव तत्कथं कारकयोर्मध्ये कालः । सत्यम्, नात्र शक्त्याश्रयं

---

१ **स्वामीति** । गोसम्बन्धी स्वामीति बोधः ॥ २ **यतश्चेति** । यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मेण स्वस्य समुदायघटकैकदेशस्य जातिगुणक्रियासंज्ञाविशिष्टस्य पृथक्करणरूपं निर्धारणं ततः षष्ठीसप्तम्यावित्यर्थः । यत इति किम् । यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मबोधनं तत एव मा भूत् । षष्ठ्यपवादत्ववत् प्रथमापवादत्वस्यापि संभवात् ॥ ३ **नृणामिति** । उद्भूतावयवभेदविवक्षया बहुवचनम् । तिरोहितावयवभेदविवक्षया निर्धारणविषय एकवचनं त्वसाध्विति बोध्यम् । 'मिदचोऽन्त्यात्–' इत्यादि तु सौत्रो निर्देशः ॥ स्वघटितसमुदायावधिकस्वेतरसमुदायघटकव्यावृत्तधर्मकरणकपृथक्करणनिर्धारणविषयत्वरूपोऽवयवावयविभावरूपश्च संबन्धो विभक्त्यर्थः । नृसमुदायावधिकद्विजेतरनरव्यावृत्तश्रेष्ठत्वकरणकपृथक्करणरूपनिर्धारणविषयो नृसमुदायावयवो द्विजः श्रेष्ठ इति बोधः ॥ ४ **माथुरा इति** । अत्र निर्धारणावधिव्यावृत्तकरणकनिर्धारणविषयिविषयभावरूपः संबन्धः पञ्चम्यर्थः । पाटलिपुत्रकावधिकतद्व्यावृत्ताढ्यतरत्वकरणकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः । भाष्यकृतस्तु––माथुरपाटलिपुत्रकयोराढ्यत्वेन साम्यं ज्ञातवान् ह्येतत् प्रयुङ्क्ते । तत्र बुद्धिकृतभेदरूपविश्लेषसत्त्वेन 'विभक्ताः' इत्यध्याहारेणापादान एव पञ्चमी । पाटलिपुत्रकावधिकभेदवन्तो माथुरा आढ्यतरा इति बोधः । भेदप्रयोजकं चाढ्यतरत्वमेवोपस्थितेः । 'गवां कृष्णा ' इत्यादौ तु संपन्नक्षीरत्वे ज्ञातेऽपि गोत्ववत्ताबुद्ध्यनिवृत्तेर्न विश्लेषप्रतीतिः ॥ ५ **मूलेनेति** । मूलनक्षत्रयुक्तचन्द्रकालाधिकरणकं देवीकर्मकमावाहनमिति बोधः ॥ ६ **अद्येति** । अत्र विभक्त्यर्थः स्वानन्तरकालवृत्तित्वम् । एतद्दिवसाधिकरणकभोजनोत्तरकालिकमेतद्दिवसानन्तरद्व्यहानन्तरकालवृत्तिभोजनकर्तेति बोधः ॥

कर्तृशक्त्योर्मध्येऽयं कालः । इहस्थो[1]ऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृकर्मशक्त्योर्मध्येऽयं देशः । ( ९४३ ) अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते । तदस्मिन्न[2]धिकमिति यस्मादधिकमिति च सूत्रनिर्देशात् । लोके लोकाद्वाऽधिको हरिः ॥ ( ९४४ ) (सू) अधिरीश्वरे । १ । ४ । ९७ । स्वस्वामिभावसंबन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यात् ॥ ( ९४५ ) (सू) यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी । २ । ३ । ९ । अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् । उप[3] परार्धे हरेर्गुणाः।परार्धादधिका इत्यर्थः।ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी। अधि भुवि रामः। अधि रामे भूः । सप्तमी शौण्डैरिति समासपक्षे तु रामाधीना । अषडक्षेत्यादिना खः ॥ (९४६) (सू) विभाषा कृञि । १ । ४ । ९८ । अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे । यदत्र मामधिकरिष्यति । विनियोक्ष्यत इत्यर्थः । इह विनियोक्तुरीश्वरत्वं गम्यते । अगतित्वात्तिङि चोदात्तवतीति निघातो न ॥ इति विभक्त्यर्थाः ॥

---

अथ समासप्रकरणम् ।

( ९४७ ) (सू) समर्थः पदविधिः । २ । १ । १ । पदसंबन्धी[4] यो विधिः स समर्थाश्रितो बोध्यः ॥

---

द्रव्यं कारकमिति व्यवह्रियते, किंतु शक्तिरेव । सा च कालभेदाद् भिद्यत एव । एका हि अद्य भुजेः साधनमपरा द्व्यहेऽतीते भुजेस्तदेतद्द्व्याचष्टे-**कर्तृशक्त्योर्मध्येऽयं काल इति** ॥ ( ९४५ ) **यस्मादधिकम्**--॥ **उप परार्ध इति** । 'उपोऽधिके च ८०४' इत्यनेन उपेत्यस्य कर्मप्रवचनीयसंज्ञा । 'यस्य चेश्वरवचनम्' इत्यस्य तन्त्रादिना अर्थद्वयं विवक्षितम् । तथा हि--यस्येत्यनेन स्वं निर्दिश्यते, यस्य स्वस्य संबन्धी ईश्वर उच्यते, ततः सप्तमीति व्याख्याने स्ववाचकात् सप्तमीत्येकोऽर्थः । ईश्वरशब्दो भावप्रधानः । यन्निष्ठमीश्वरत्वमुच्यते, ततः सप्तमीति व्याख्याने स्वामिवाचकात् सप्तमीत्यपरः । एवं स्थिते फलितमाह--**स्वस्वामिभ्यां पर्यायेणेति** । अन्यतरस्मादुत्पन्नयैव सप्तम्या इतरनिष्ठसंबन्धस्याप्युक्तत्वाद्युगपदुभाभ्यां न सप्तमी स्यादिति भावः ॥ विभक्त्यर्थेऽव्ययीभावे त्वधिरामम् ॥ ( ९४६ ) **यदत्रेति** । यो मामाधिकारिष्यति विनियोक्ष्यते तस्य मद्विनियोक्तुरीश्वरत्वं गम्यते इत्यर्थः ॥ **तिङि चोदात्तेति** । उदात्तवति तिङि परे गतिर्निहन्यत इति सूत्रार्थः । अत्र करिष्यतीति तिङन्त उदात्तवान् 'तिङ्ङतिङः ५९११' इति 'निघातस्य निपातैर्यद्यदि-५९१३' इत्यादिना निषेधात्॥**निघातो नेति** । मामिति द्वितीया तु 'कर्मणि द्वितीया ७७१' इत्यनेनैव सिध्यतीति भावः ॥ इति सप्तमी ॥ इति विभक्त्यर्थाः ॥

---

( ९४७ ) **समर्थः पदविधिः** ॥ सामर्थ्यं च द्विविधं व्यपेक्षालक्षणमेकार्थीभावलक्षणं चेति । तत्र स्वार्थपर्यवसायिनां पदानामाकांक्षादिवशाद्यः परस्परसंबन्धः सा व्यपेक्षा । सैव वाक्ये राज्ञः पुरुष इत्यादौ । तत्र ह्यपेक्षायां सत्यां यो यः सन्निहितो योग्यश्च तेन तेन संबन्धोऽभ्युपेयते। यथा राज्ञः पुरुषोऽश्वश्च राज्ञो देवदत्तस्य च पुरुष इति॥एकार्थीभावस्तु--राजपुरुष इत्यादिवृत्तावेव । स[5] च प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थस्वरूपः । अत एव राजपुरुष इत्यत्र राज्ञि ऋद्धस्येति विशेषणं नान्वेति, पदार्थैकदेशत्वात् । न चैवं देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः, तत्रापि देवदत्तोत्तरषष्ठ्यर्थस्य गुरुणाऽन्वयादिति वाच्यम्, देवदत्तस्य प्रधानीभूतकुलेनैवान्वयात् । संबन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थे, न तु तदितरः । उक्तं च--"समुदायेन संबन्धो येषां गुरुकुलादिना । संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥" इति । यद्वा-ससंबन्धिकपदार्थस्यैक-

---

१ **इहस्थ इति** । एतद्देशाधिकरणकस्थित्याश्रयकर्तृकमेतद्देशानन्तरक्रोशानन्तरास्थितलक्ष्यकर्मकं व्यधनमिति बोधः ॥ २ **तदस्मिन्निति** । एतत्सूत्रभाष्ये तु-उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमीत्युक्तम् ॥ ३ **उपेति** । उपः स्वावधिकाधिकत्वसंबन्धस्य द्योतकः । परार्धावधिकाधिक्यवन्त इति बोधः ॥ ४ **पदसंबन्धीति** । पदविधिसहचरितोऽपि पदविधिशब्देन गृह्यते । अतः सन्नन्तादावेकार्थीभाव एव ॥ ५ **स चेति** । एकार्थीभावश्चेत्यर्थः । 'पृथगर्थानामेकार्थीभावः सामर्थ्यम् । वाक्ये पृथगर्थानि--राज्ञः पुरुष इति । समासे पुनरेकार्थानि राजपुरुष इति' भाष्यात्--'यत् किंचित्पदजन्यपृथगुपस्थितिविषयकत्वेन लोकदृष्टानां विशिष्टविषयकैकशक्त्यैकोपस्थितिजनकत्वमेकार्थीभावः' इति फलितम् । तेषां तत्त्वं तु समानानुपूर्वीकत्वेन सादृश्याद् बोध्यम् । एकार्थीभाव इति च्विप्रत्ययनिर्देशो गौणमेकार्थत्वं समासघटकपदानां बोधयितुम्। यथा पदानामसत्त्वात्तत्सत्ताव्यवहारो गौणः, तथा तेषामेकार्थत्वव्यवहारोऽपीति बोध्यम् ॥ विभक्त्यन्ते एतद्वारणाय 'दृष्टानाम्' इत्यन्तम् । तेषां लोके तत्त्वेनादृष्टत्वात् । औपगवादौ प्रत्ययानां तथा दृष्टत्वाभावेन यत्किंचित्पदजन्येत्युपस्थितिविशेषणम् अपत्यरूपार्थस्य 'उपगोरपत्यमस्ति' इत्यादौ तथा दर्शनसत्त्वात् । विभक्त्यर्थस्य तु न तथात्वम्, तद्वाच्यार्थवाचकस्य शब्दान्तरस्याभावादिति बोध्यम् । विशिष्टविषयकैकशक्त्येति हेतुवचनम् । अयं भावः--वाक्ये यथा पदैः पृथक्पदार्थानां बोधेऽप्याकाङ्क्षामूलकवाक्यशक्तिवशाद्विशेष्यविशेषणभावापन्नविशिष्टार्थप्रतीतिः, नैवं वृत्तौ, किन्त्ववयवशक्तिभ्यामाकाङ्क्षामूलकसमुदायशक्तिसहकृताभ्यां नियतोद्बोधकवशात्पदार्थबोध एव जायमानो विशेष्यविशेषणभावापन्नविशिष्टविषयो भवति । तत्र विशिष्टशक्तिग्रह इत्थम्-'राजपुरुषादिपदं राजसंबन्धवत्पुरुषादौ शक्तम्-' इति। आकाङ्क्षामूलकेतिविशेषणाद् नित्यघट इत्यादेर्नैकार्थीभावेन साधुत्वम् । विशेषणत्वेनोपस्थितघटत्वादेः स्वविशेषणाकाङ्क्षाभावात् । अतो नित्यो घट इत्यादि वाक्यमपि न-इति ॥

(९४८)(सू) प्राक्कडारात्समासः ।२।१।३। कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥ (९४९-१) (सू) सह सुपा[1] । २ । १ । ४ । सहेति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते । योगविभागस्येष्टसिद्धयर्थत्वात्कतिपयतिङन्तोत्तरपदोऽयं समासः । स च छन्दस्येव । पर्यभूषत् । अनुव्यचलत् ॥ ( ९४९-२ ) (सू) सुपा । २ । १ । ४ । सुप्सुपा सह समस्यते । समासत्वात्प्रातिपदिकत्वम् ॥ ( ९५० ) (सू) सुपो धातुप्रातिपदिकयोः[2] । २ । ४ । ७१ । एतयोरवयवस्य सुपो लुक् स्यात् । भूतपूर्वे[3] चरडिति निर्देशाद्भूतशब्दस्य पूर्वनिपातः । पूर्वं भूतो भूतपूर्वः ॥ ( ९५१ ) (वा) इवेन समासो विभक्त्यलोपश्च ॥ जीमूतस्येव[4] ॥

---

देशत्वेऽपि भवत्येव विशेषणान्वयः । उक्तं च—"संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते" इति । नन्वेवं राज्ञोऽपि नित्यसापेक्षत्वादेकदेशत्वेऽपि ऋद्धस्येति विशेषणेनान्वयोऽस्तु । मैवम्, राज्ञ ईशितुरीशितव्यं प्रति साकाङ्क्षत्वेऽपि ऋद्धं प्रत्यनाकाङ्क्षत्वात् । ननु वाक्ये क्लृप्तयैवावयवशक्त्योपपत्तौ विशिष्टार्थविषयशक्त्यन्तरमेव माऽस्तु । सत्यम्, "बहूनां वृत्तिधर्माणां वचनैरेव साधने । स्यान्महद्गौरवं तस्मादेकार्थीभाव आस्थितः ॥ चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् । कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितम् " ॥ तथाहि—धवखदिराविति वृत्त्यैव क्रोडीकृतार्थत्वाच्चकारो न प्रयुज्यते, तथा चित्रगवादौ यत्पदम् । त्वया तु वचनं कर्तव्यम् । निरूढलक्षणा तु शक्तितो नातीव भिद्यते । किंच, प्राप्तमुदकं यमिति व्यस्ते समीचीनमुदकमिति विशेषणवत्समस्तेऽपि उदकविशेषणप्रयोगः प्राप्तः, स च 'वृत्तस्य विशेषणयोगो न ' इति वचनेनैव वारणीयः, ' नामार्थयोरभेदान्वयः ' ' प्रत्ययार्थः प्रधानम् ' इति व्युत्पत्तित्यागश्च । प्राप्तोदक इत्यादौ उदककर्तृकप्राप्तिकर्मेत्याद्यर्थाभ्युपगमात् । एकार्थीभावे तु लाघवमिति दिक् ॥ पदग्रहणं किम्, वर्णविधौ समर्थपरिभाषा मा भूत् । तिष्ठतु दध्यानय तक्रम्, इह स्यादेव यण् ॥ विधिग्रहणं तु पदस्य विधिः, पदयोर्विधिः, पदानां विधिरित्यनेकविभक्त्यन्तसमासलाभार्थम् । पदस्येत्युक्तौ तु 'उपपदमतिङ् ११२६'इत्यादावेवास्योपस्थितिः स्यादित्याहुः ॥ सूत्रे समर्थशब्दो लाक्षणिक इति ध्वनयन्नाह—**समर्थाश्रित इति** । समर्थेति किम्, पश्यति कृष्णं श्रितो देवदत्तमित्यादौ कृष्णाश्रित इत्यादि समासो मा भूत् । तथा वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र 'तस्यापत्यम् १५६०'इत्युपगुशब्दादण् मा भूदिति । क्वचित्तु सापेक्षत्वेऽपि भाष्यप्रामाण्याद्वृत्तिरङ्गीक्रियते । तद्यथा–किमोदनं शालीनाम् । केषां शालीनामोदनमित्यर्थः।'सक्तवाढकमापणीयानाम्'।आपणीयानां सक्तूनामाढकमित्यर्थः । कुतो भवान्पाटलिपुत्रकः । द्वे पाटलिपुत्रे तत्र कस्मात्पाटलिपुत्राद्भवानागत इत्यर्थः । 'रोपधेतोः प्राचाम् १८९२' इति वुञ् ॥ (९४८) **प्राक्कडारात्समासः** । प्राग्ग्रहणमावर्तते, तेन पूर्वं समाससंज्ञा, ततः संज्ञान्तरमपीति लभ्यते । तेनाव्ययीभावादिभिः समावेशः सिध्यति । अन्यथा पर्यायः स्यात् ॥ समसनं समासः । भावे घञ् । अनेकस्य पदस्य एकपदीभवनमित्यर्थ इत्येके ॥ वस्तुतस्तु ' अकर्तरि च कारके–४९७६ ' इति कर्मणि घञ् । अन्यथा सुबन्तं समस्यत इत्युत्तरग्रन्थो न संगच्छेत । ( ९४९-१ ) नन्वन्वर्थत्वात्समाससंज्ञायाः प्रत्येकमप्रसङ्गात्सहग्रहणं व्यर्थमित्याशङ्क्याह—**योगो विभज्यत इति** । ' सुबामन्त्रिते–५५२३' इत्यतः सुबित्यनुवर्तते तदाह—**सुबन्तमिति** ॥ **समस्यत इति** । संपूर्वादस्यतेः कर्मणि तङ् । आचार्येणेति शेषः । समर्थेनेति तु सहयोगे तृतीया । समसनक्रियां प्रति सुबन्तं कर्म, न तु कर्तृ । यद्यपि सुबन्तस्य कर्तृत्वाभ्युपगमेऽपि 'उपसर्गादस्यत्यूह्योः–३६२१' इति वार्तिकेन समस्यत इत्यत्रात्मनेपदं लभ्यते, तथापि समास इति व्याख्येयग्रन्थे कर्तरि घञ् दुर्लभः । बाहुलकं तु अगतिकगतिरिति कर्मत्वाभ्युपगम एव ज्यायान् ॥ **स चेति** । एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते ॥ **छन्दस्येवेति** । यदि लोकेऽपि स्यात्तर्हि यत्प्रकुरुते इत्यादौ स्वाद्युत्पत्तिः स्यात् । लिङ्गसर्वनामतामभ्युपेत्य ' स्वमोर्नपुंसकात् ४४१' इति लुकि कृतेऽपि 'ह्रस्वो नपुंसके–४४० ' इति ह्रस्वः स्यादित्यादि दूषणं 'कर्मणा यमभिप्रैति–८२७' इति सूत्रेऽस्माभिरुद्भावितम् ॥ **अनुव्यचलदिति** । सुबित्येकत्वस्य विवक्षितत्वात्पर्यायेण समासो बोध्यः । समासान्तोदात्तत्वे शेषनिघात इति 'कुगति–' इति सूत्रे कैयटः॥ (९५०) **सुपोधातु**—। सुप इति प्रत्याहारस्य ग्रहणं 'पञ्चम्याः स्तोकादिभ्यः१३७५' इत्याद्यलुक्समासविधानाज्ज्ञापकात् ॥ **निर्देशादिति** । अन्यथा हि प्रथमानिर्दिष्टत्वाविशेषेऽपि उपसर्जनसंज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः ॥ ( ९५१ ) **इवेनेति** । अयमपि समासः पूर्ववत् क्वाचित्क एव । तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां

---

१ **सुपेति** । इदं लक्षणमधिकारश्च । अधिकारफलं तु रामः पचति मातुर्दयते इत्यादौ विशेषणसमासषष्ठीसमासयोरभावः ॥ २ **सुपो धात्विति** । 'सुपोऽङ्गस्य' इति तु न सूत्रितम् 'अङ्गसंज्ञानिमित्तस्य सुपः' इत्यर्थसंभवात् ॥ ३ **पूर्वमिति** । पूर्वमिति क्रियाविशेषणं पूर्वकालवृत्तिपरम् । भूधातोः सत्तोत्पत्तिर्वार्थः । पूर्वकालवृत्तिसत्ताश्रय इति बोधः ॥ ४ **जीमूतस्येवेति** । अत्र यथार्थत्वादिप्रयुक्तोऽव्ययीभावस्तु न 'तत्र तस्येव' इति निर्देशात् । 'हरीतकी भुङ्क्ष्व राजन् मातेव हितकारिणीम्' इति तूपमानोपमेययोः समानविभक्तिकत्वनियमादसमासे समासे वा भिन्नविभक्तिकत्वादसाध्वेव । मातेवेति समस्तस्य हितकारिणीमित्यनेन समासे 'मातेव हितकारिणीम्' इति साध्वेवेति केचित् ॥ ५ **पूर्वशब्दस्यैवेति** । पूर्वशब्दस्य कालवाचित्वात् ' क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका ।' इति वचनात् क्रियायां विशेषणत्वादिति भावः ॥

## अथाऽव्ययीभावप्रकरणम् ।

( ९५२ ) **अव्ययीभावः** ।२।१।५। अधिकारोऽयम् ॥ ( ९५३ ) **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु** । २ । १ । ६ । अव्ययमिति योगो विभज्यते । अव्ययं समर्थेन सह समस्यते सोऽव्ययीभावः ॥ ( ९५४ ) **प्रथमानिर्दिष्टं समास उपसर्जनम्** ।१।२।४३। समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ ( ९५५ ) **उपसर्जनं पूर्वम्** । २ । २ । ३० । समासे उपसर्जनं प्राक्प्रयोज्यम् ॥ ( ९५६ ) **एकविभक्ति चापूर्वनिपाते** । १ । २ । ४४ । विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥ ( ९५७ ) **गोस्त्रियोरुपसर्जनस्य** । १ । २ । ४८ । उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अव्ययीभावश्चेत्यव्ययत्वम् ॥ ( ९५८ ) **नाव्ययीभावादतोऽम् त्वपञ्चम्याः** । २ । ४ । ८३ । अदन्तादव्ययी-

---

पृथक्पदत्वेन पाठः 'उद्बाहुरिव वामनः' इत्यादौ व्यस्तप्रयोगश्च संगच्छत इति मनोरमायां स्थितम् ॥ **विभक्त्यलोपश्चेति** । समासावयवस्य सुपोऽलुग्विधानेऽपि समासादुत्पन्नस्य सोः 'अव्ययात्' इति लुक् भवत्येवानुपसर्जने तदन्तस्याप्यव्ययत्वादिति बोध्यम् ॥

( ९५३ ) **अव्ययं विभक्ति-**। विभक्तिरिह कारकशक्तिः, विभज्यते अनया प्रातिपदिकार्थ इति व्युत्पत्तेः । अत एव वक्ष्यति-'विभक्त्यर्थादिषु विद्यमानमव्ययम्' इति ॥ ( ९५४ ) **प्रथमानिर्दिष्टम्**—। अत्र समासपदं तद्विधायके लाक्षणिकम् । अन्यथा चिकीर्षिते समासे यत्प्रथमान्तमिति व्याख्यानप्रसक्त्यां कृष्णं श्रित इत्यादौ श्रितादिष्वतिप्रसङ्ग इत्याशयेनाह—**समासशास्त्र इति** ॥( ९५६) **विग्रह इति**। अनुवर्तमानेन समासग्रहणेन विग्रहो लक्ष्यत इति भावः ॥ **न तु तस्येति** । 'अनन्तरस्य-४८८' इति न्यायात्पूर्वसूत्रेण विहितस्य पूर्वनिपातत्वं न निषिध्यते । तेन कुमारीश्रित इत्यादौ न दोषः ॥ ( ९५७ ) **गोस्त्रियोः**—। उपसर्जनस्येति गोस्त्रियोर्विशेषणम् । एकवचनं तु प्रत्येकाभिप्रायेण । गोस्त्रीभ्यां तु प्रातिपदिकं विशेष्यते । विशेषणेन तदन्तविधिरित्याशयेनाह--**उपसर्जनं य इति** । उपसर्जनमिह शास्त्रीयं गृह्यते, न त्वप्रधानलक्षणम् । तेन कुमारीवाचरन्ब्राह्मणः कुमारीत्यत्र न दोष इत्युक्तम् ॥ **स्त्रीप्रत्ययान्तमिति** । स्त्र्यधिकारोक्तटाबाद्यन्तामित्यर्थः । तेनातिलक्ष्मीरित्यादौ नातिप्रसङ्गः ॥ नन्वेवमपि राजकुमारीपुत्र इत्यादावतिप्रसङ्ग इति चेत् । अत्राहुः—उपसर्जनस्य ससंबन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते, तदर्थं प्रति यद्युत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावः,तदैव ह्रस्वत्वमिति भाष्यादावुक्तत्वान्न दोषः। भाष्यादावपि उत्तरपदभूतयोरित्यर्थलाभस्तु 'कृत्तद्धित-२६३' इत्यतः समासपदानुवर्तनादिति बोध्यमिति ॥ ( ९५८ ) **नाव्ययी**--। अत्र 'अपञ्चम्याः' इति प्रतिषेधः अनन्तरत्वादम एव, न तु व्यवहितस्यालुकोऽपि । अमुमेवार्थं द्योतयितुं सूत्रे

---

१ **अव्ययीभाव इति** । अनव्ययमव्ययं भवतीति 'भवतेर्णस्योपसंख्यानम्' इति कर्तरि णः । महासंज्ञा प्राचामनुरोधेनेति केचित् ॥ २ **विभज्यत इति** । भाष्ये त्वेतन्न दृश्यते । अपदिशमिति मान्तानां स्वरादिपाठादव्ययत्वम् । अपदिशेनेत्यादि तु चिन्त्यमेवेति शेखरकृत् ॥ ३ **समासशास्त्र इति** । समाससंज्ञाविधायके शास्त्रे इत्यर्थः । ननु राज्ञः कुमारीं श्रितो राजकुमारी श्रित इत्यत्र 'द्वितीया श्रिता-' इति समासविधायके 'द्वितीया' इत्यस्य प्रथमानिर्दिष्टत्वेन द्वितीयान्तस्योपसर्जनसंज्ञायां पूर्वनिपातापत्तिः-इति चेत् । शृणु-'महासंज्ञाकरणसामर्थ्याद् 'अप्रधानम्-उपसर्जनम्' इत्यन्वर्थसंज्ञाविज्ञानात् ' यं प्रति यदप्रधानं तं प्रति तदुपसर्जनसंज्ञं भवति इति' इति भाष्यकृतैव समासशास्त्रे प्रथमानिर्दिष्टम् अप्रधानत्वसमानाधिकरणमुपसर्जनसंज्ञम्' इत्यर्थस्यैव सूचितत्वान्न काप्यापत्तिरिति ॥ श्रितादिभिः समासविधौ द्वितीयान्तस्य प्रथमानिर्दिष्टत्वेन श्रितादिनिरूपितोपसर्जनत्वेऽपि 'षष्ठीसमासविधौ षष्ठ्यन्तस्यैव प्रथमानिर्दिष्टत्वेनोपसर्जनत्वमव्याहतम् ॥ पूर्वकाय इत्यादौ तु 'पूर्वापराधरोत्तरम्' इत्यस्य प्रथमान्तत्वेन पूर्वादिशब्दानामेव प्रथमानिर्दिष्टत्वादुपसर्जनसंज्ञा सिद्धा ॥ ४ 'समासः' इत्यधिकृतं सप्तम्या विपरिणम्यते योग्यताबलादित्याह-समास इति । न च 'राज्ञः कुमार्याः' इति परिनिष्ठितविभक्त्या समासे कुमार्या अपि पूर्वनिपातापत्तिरिति वाच्यम् । "षष्ठ्यन्तयोः समासेऽर्थाभेदादप्रधानस्यापूर्वनिपातः " इति वार्तिकेन 'वृत्तिविग्रहयोरर्थाभेदात् समानार्थकत्वनियमाद् विग्रहप्रधानस्य वृत्तावुपसर्जनत्वाभावान्न पूर्वनिपातापत्तिः' इत्यर्थकेन समाधानस्योक्तत्वात् ॥ ५ **नियतविभक्तिकमिति** । परिनिष्ठितविभक्त्या समासे 'खट्वाम् अतिक्रान्तेन अतिक्रान्ताय अतिक्रान्तात् अतिक्रान्तस्य' इत्यादिक्रमेण विग्रहे अतिक्रान्तशब्दस्यानियतविभक्तिकत्वेन खट्वाशब्दस्यैव नियतविभक्तिकत्वादुपसर्जनसंज्ञा न त्वतिक्रान्तार्थकातिशब्दस्य । प्रथमानिर्दिष्टत्वप्रयोज्योपसर्जनसंज्ञा पूर्वनिपातोपयोगिनी तु भवत्येवेति बोध्यम् ॥ ६ **उत्तरपदभूतयोरिति** । "स्त्र्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते । अप्रधानमुपसर्जनमिति संबन्धिशब्दावेतौ तत्र संबन्धादेतद् गन्तव्यम्—यं प्रति यदप्रधानं तस्य चेत्सोऽन्त्यो भवतीति" इति फलितमेवैतत् ॥

भावात्सुपो न लुक् किन्तु तस्य पञ्चमीं विना अमादेशः। दिशयोर्मध्यमपदिशम्। क्लीबाऽव्ययं त्वपदिशं दिशोर्मध्ये विदिक्स्त्रियामित्यमरः॥ (९५९) ⊛ तृतीयासप्तम्योर्बहुलम्।२।४।८४। अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात्। अपदिशम्। अपदिशेन। अपदिशम्। अपदिशे। बहुलग्रहणात्सुमद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमम्भावः॥ विभक्तीत्यादेरयमर्थः-विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह समस्यते सोऽव्ययीभावः। विभक्तौ तावत्-हरौ इत्यधिहरि। सप्तम्यर्थस्यैवात्र द्योतकोऽधिः। हरि ङि अधि इत्यलौकिकं विग्रहवाक्यम्। अत्र निपातेनाभिहितेऽप्यधिकरणे वचनसामर्थ्यात्सप्तमी॥ (९६०) ⊛ अव्ययीभावश्च।२।४।१८।अयं नपुंसकं स्यात्॥ ह्रस्वो नपुंसके प्रातिपदिकस्य॥ गोपायतीति गाः पातीति वा गोपाः। तस्मिन्नित्यधिगोपम्। समीपे-कृष्णस्य समीपमुपकृष्णम्। समया ग्रामम्, निकषा लङ्काम्, आराद्वनादित्यत्र तु नाव्ययीभावः, अभितः-

---

तुशब्दः॥ तस्य पञ्चमीं विनेति। एवं चादन्तादव्ययीभावात्परस्य पञ्चमीभिन्नसुपो लुङ् न, किन्त्वमादेशः। पञ्चम्यास्तु लुगमादेशावुभावपि न भवत इति स्थितम्। अतः किम्, अधिहरि॥ दिशयोरिति। दिशा हलन्तेन विग्रहेऽपि एतदेव रूपम्। दिशशब्दस्य शरदादिषु पाठाच्च॥(९५९) अपदिशमिति। पञ्चमीव्यतिरिक्तविभक्तीनामुदाहरणमिदम्। पञ्चम्यास्तु अपदिशादित्युदाहार्यम्॥ विभक्तौ तावदिति। तावच्छब्दः क्रमार्थः॥ लौकिकविग्रहवाक्यं प्रदर्शयति—हराविति। प्राचा तु हरौ अधिकृत्येति विगृहीतम्। तदसत्, अधिहरीत्यत्र अधिकृत्येत्यर्थस्याप्रतीतेः॥ हरि ङीति। अलौकिके ङिशब्दस्यैव प्रवेश उचितः 'अन्तरङ्गानपि-' इति न्यायात्। अन्यथा ङेरौत्त्वे कृते अधिहरीति समासे हरिशब्देकारो दुर्लभः स्यादिति भावः। इह हरावधीति स्थिते इति प्राचोक्तमुपेक्षितं, नित्यसमासेषु अस्वपदविग्रहस्यैवोचितत्वात्॥ अभिहितेऽपीति। द्योतितेऽपीत्यर्थः॥ वचनसामर्थ्यादिति। सुपेत्यनुवर्त्य सुबन्तेन समासविधानसामर्थ्यात्सप्तमी स्यादेवेति भावः॥ नन्वभिहितेऽधिकरणे प्रातिपदिकार्थमात्र इति प्रथमैव स्यान्न तु सप्तमीति चेत्। अत्राहुः-अधीत्यस्य सुबन्तेन समासस्यावश्यकत्वेऽधिशब्दद्योत्याधिकरणार्थवाचकविभक्तेरेवेह स्वीकर्तुमुचितत्वादिति॥ यत्तु प्रसादकृता व्याख्यातम्—तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाऽभिहितेऽपि सप्तमी स्यादेवेति। तन्न, परिगणनस्याकरे प्रत्याख्यातत्वात् 'कर्मणि द्वितीया' इति सूत्रे स्वयमपि तथैवोक्तत्वात्, 'क्रमादमुं नारद इत्यबोधि सः' इति प्रयोगविरोधाच्च। अत्र व्याचक्षते-वचनग्रहणं विभक्त्यादिभिः प्रत्येकं संबध्यते साकल्यान्तेषु' इत्येव वक्तव्ये वचनग्रहणात्। एवं च तत्सामर्थ्याद्विभक्त्यर्थमात्रवृत्तेरव्ययस्येह ग्रहणम्। तेन वृक्षस्योपरि वृक्षस्य पुर इत्यत्र समासो न भवति। उपर्यादयो हि दिग्देशकालेष्वपि वर्तन्ते, न तु विभक्त्यर्थमात्रे। अत एव 'क्रमादमुं नारद इत्यबोधि सः' इत्यादौ नातिप्रसङ्गः, इतिशब्दस्य सर्वनामवत्प्रकृतपरामर्शकत्वेन कर्मत्वमात्रानभिधायकत्वात्। एवं च विभक्तिशब्दः सप्तम्यां पर्यवस्यति। अत एव परिशिष्टे 'अधिकरणे' इत्येव सूत्रितम्। पाणिनिस्तु मात्रालाघवमभिप्रेत्य विभक्तिशब्दं प्रायुङ्क्तेति। अन्ये तु लाघवात्'ङिसमीपसमृद्धि-' इति वक्तव्ये विभक्तिग्रहणाद्विभक्तिशब्दो न सप्तम्यां पर्यवस्यति। ततश्च कर्मत्वमात्रद्योतकतायाम् 'इति नारदम्' इति समासो भवत्येवेत्याहुः॥ (९६०) नपुंसकं स्यादिति। एतच्च 'स नपुंसकम् ११७५'इत्यतो लभ्यते॥समीप इति। अव्ययीभाव इत्यन्वर्थसंज्ञाश्रयणात्सप्तमीरूपाव्ययार्थप्राधान्य एवायं समासः,समीपवर्तिप्राधान्ये तु 'संख्ययाऽव्ययासन्ना-१२१५'

---

१ इत्यादाविति। आदिना एकविंशतिभारद्वाजम्, सप्तगङ्गमित्यादिसंग्रहः। तथा च वार्तिकम्-'सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यम्' इति॥ २ विभक्त्यर्थादीति। विभक्तिशब्देन तदर्थो लक्ष्यते। वचनशब्दः कर्मसाधनः प्रत्येकं संबध्यते। विभक्त्यादयश्च श्रुतत्वादव्ययस्यैव विशेषणानीति भावः॥ ३ द्योतक इति। इदं च प्राचामनुरोधेन। वस्तुतस्तु वाचकत्वमेवात्र न्याय्यम्। अत एव 'अव्ययार्था इमे निर्दिश्यन्ते' इति भाष्ये उक्तम्। स्वयमपि 'निपातेनाभिहिते' इति वक्ष्यति। अत एव "पूर्वपदार्थप्रधानोऽव्ययीभावः' इत्युत्सर्गस्य निर्वाहः। द्योत्यार्थस्य विशेष्यत्वं "स्त्रियाम्" इति सूत्रभाष्यविरोधादुपेक्ष्यमेवेति बोध्यम्॥ ४ नाव्ययीभाव इति। वायुभक्षन्यायेन विभक्त्यर्थसमीपादिमात्रवृत्तेरेवाव्ययस्यानेन समासविधानेन समयाशब्दे मध्यार्थकत्वस्याराच्छब्दे दूरार्थकत्वस्यापि संभवेन समयानिकषाराद्व्ययानां समीपाधिकरणशक्तिप्रधानत्वेन च समीपमात्रवृत्तित्वाभावेन समासाप्राप्तेः॥ द्वितीयापञ्चम्योर्विधानं तु समीपार्थातिरिक्तार्थकयोगे चरितार्थमेवेति न तस्य सामर्थ्यमिति बोध्यम्॥ ५ हरिशब्देकार इति। हराविति परिनिष्ठितरूपसिद्ध्युत्तरं समासे औकारे परादिवद्भावेन सुप्त्वाल्लुकि समासोत्तरं रेफात् परीभूतस्येकारस्य दुर्लभत्वमिति भावः॥ ६ विभक्तेरेवेति। यद्विभक्त्यर्थवाचकाव्ययेन सुबन्तस्य समासस्तद्विभक्त्यैव यत्सुबन्तं तस्यैव प्रत्यासत्त्या ग्रहणमिति भावः॥ ७ प्रत्याख्यातत्वादिति। तत्साध्यप्रयोजनस्यान्यथासिद्धिकथनेनोपायस्योपायान्तरादूषकत्वेन परिगणनाङ्गीकारे दूषणाकथनादङ्गीकारस्यापि सूचनेन प्रत्याख्यानस्य केवलं पाणिन्युक्तौ न्यूनतापरिहारमात्रप्रयोजनेन फलभेदे प्रत्याख्यानस्यानङ्गीकाराच्च नान्याभिहिते विभक्तिव्यावृत्तिरिति चिन्त्यमेवेदमिति बोध्यम्॥ ८ विरोधाच्चेति। अत्र "नारद इति" इति श्रीकण्ठीयज्ञानानुकरणम्। नारद इत्येतच्छब्दाभिलप्यमानाकारो बोधः।

परितः अन्यारादिति द्वितीयापञ्चम्योर्विधानसामर्थ्यात् । मद्राणां समृद्धिः सुमद्रम् । यवनानां व्यृद्धिर्दुर्यवनम् । विगता ऋद्धिर्व्यृद्धिः । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । अत्ययो ध्वंसः । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । पश्चाच्छब्दस्य तु नायं समासः, ततः पश्चात्स्यंस्यते इति भाष्यप्रयोगात् । (९६१) योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । अनुरूपम् । रूपस्य योग्यमित्यर्थः । अर्थमर्थं प्रति प्रत्यर्थम् । प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्योगे द्वितीया-

---

इति बहुव्रीहिं वक्ष्यति 'उपदशाः' इति यथा॥ **विधानसामर्थ्यादिति** । ननु समया ग्राममित्यादौ द्वितीयाविधानसामर्थ्यान्मा-ऽस्त्वव्ययीभावः, आराद्वनादित्यत्र तु भवेदेव । 'अन्यारात्–८७१' इति पञ्चमीविधानस्य दूरार्थकाराच्छब्दयोगे सावकाशत्वादिति चेत् । अत्र केचिदुत्प्रेक्षयन्ति–'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ८९४' इति षष्ठीपञ्चम्योः प्राप्तयोस्तदपवादतया पञ्चम्येव तेन विधीयते । तथा चान्तिकार्थकाराच्छब्दयोगे षष्ठ्यपवादतया पञ्चमीविधानं निरवकाशमेवेति तत्सामर्थ्यादव्ययीभावो नेत्युक्तिः सम्यगेवेति । तदपरे न क्षमन्ते–अन्तिकार्थाराच्छब्दयोगे विशिष्य पञ्चमीविधानाभावात्, 'अन्यारात्–८७१' इति सूत्रस्य त्वन्यत्र कृतार्थत्वाच्च, सामीप्ये आराद्वनमित्यव्ययीभावो दुर्वार एवेति । एवं हि व्याकुर्वतां पदस्येत्यपकर्षाभावे भृशार्थे साव-काशोऽयं यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्येतेति 'नित्यवीप्सयोः' इति सूत्रस्थमनोरमाग्रन्थोऽनुकूल इति दिक् ॥ **सुमद्र-मिति** । उत्तरपदार्थप्राधान्ये तु 'कुगति–१०९७' इति तत्पुरुषः । समृद्धाः मद्राः सुमद्राः ॥ **दुर्यवनमिति** । न चार्था-भावेनेह सिद्धिः, येन समस्यते तदीयार्थाभावेऽत्र समासस्वीकारात् । न चेह यवनानामभावो, येनार्थाभावे समासः स्यात् । किन्तु तदीयाया ऋद्धेरभाव इति ॥ **निर्मक्षिकमिति** । संसर्गाभावेऽयं समासो न त्वन्योऽन्याभावेऽपि, अर्थग्रहणसामर्थ्येन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधिन एवाभावस्य ग्रहणात् । अन्योऽन्याभावस्य तु प्रतियोगितावच्छेदकेनैव विरोधात्तस्य च प्रकारत्वेऽप्यविशेष्यत्वात् । ये तु वदन्ति–घटः पटो नेत्यत्रापि पटत्वात्यन्ताभाव एवार्थः, आकृत्यधिकरणन्यायेन जातेः पदार्थत्वादिति, तेषामपि मते अर्थग्रहणसामर्थ्यादेवाक्षिप्तधर्म्यभावे अयं समासो न तु धर्माभाव इति न दोषः॥ **अत्यय इति**। स्पष्टार्थमेतत्, अर्थाभावेन गतार्थत्वात् । अर्थाभावेन संसर्गाभावो विवक्षितो न त्वन्योऽन्याभावः, घटः पटो नेत्यत्रातिप्रसङ्गा-दिति निष्कर्षात् ॥ **संप्रति नेति** । संप्रतीत्यव्ययमिदानीमित्यर्थे । 'एतर्हि संप्रतीदानीम्' इत्यमरोक्तेः । तच्चाधिकरण-शक्तिप्रधानत्वात्क्रियापदेनैवान्वयार्हम् । निषेधोऽपि क्रियाया एवोचितः, तदेतदाह—**युज्यत इति** । असंप्रतीति सौत्रप्रयोगे तु युजिक्रियान्तर्भावेण नञ्समास इति बोध्यम् ॥ यत्तु प्रसादकृतोक्तम्—असंप्रतीति संप्रत्यभाव इत्यर्थः । अनेन उपभोग्य-वस्तुनो यो वर्तमानः कालः स निषिध्यत इति । तन्न, अधिकरणशक्तिप्रधानस्य क्रिययैवान्वयार्हस्य निषेधप्रतियोगित्वेनान्वय-स्यायुक्तत्वात् । न हि भूतले घटो नास्तीत्यनेन भूतलं निषिध्यत इति कश्चिदभ्युपैति, येनात्र वर्तमानकालनिषेधो युक्त्यर्हः स्यात् ॥ **इतिहरीति** । स्वरूपपरेण षष्ठ्यन्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः ॥ **ततः पश्चादिति** । सति चात्राव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपातः स्यादिति भावः ॥ **भाष्यप्रयोगादिति** । 'अनेकमन्यपदार्थे' इति सूत्रे 'सर्व-पश्चात्' इति भाष्यप्रयोगाच्चेत्यपि बोध्यम् ॥ (९६१) **प्रत्यर्थमिति** । वृत्तौ वीप्सान्तर्भावान्न द्विर्वचनम् ॥ **प्रतिशब्दस्येति** । यत्त्वाहुः–ग्रामस्य वृक्षं वृक्षं प्रतीत्यत्र सापेक्षत्वेन समासाभावे द्वितीयाविधानं सावकाशमिति । तन्न, नित्यसमासेषु

---

१ **निर्मक्षिकमिति** । मक्षिकाप्रतियोगिकोऽभाव इति बोधः । नञ् नात्र समस्यते, अर्थाभावशब्दे नञ उपादानेन सूत्र-गृहीताव्ययत्वेनानेन समासाप्राप्तेः ॥ २ **अतिहिममिति** । अत्र 'निर्हिमम्' इत्येवोदाहरणं युक्तम् अतः 'अत्यय' शब्दान्तर्ग-तत्वेन सूत्रगृहीताव्ययत्वात् समासाप्राप्तेः । 'अतिहिमम्' इत्यतो हिमातिशयस्यैव प्रतीतेश्च । हिमप्रतियोगिको ध्वंस इति बोधः॥ ३ **अतिनिद्रमिति** । निद्राकर्तृकवर्तमानयुक्तत्वाभाव इति बोधः ॥ अतिनिद्रमासीदित्यत्र तथा व्यवहारविषये लक्षणेति भावः ॥ ४ **यथार्था इति** । अत्रेदं बोध्यम्–'यथाशब्दो द्विविधः'–अव्युत्पन्नमव्ययं योग्यतावीप्सापदार्थानतिवृत्त्यभिधायि, सादृश्याभिधायि थालन्तं व्युत्पन्नं च । तत्र सादृश्याभिधायिनस्तु समासो भवत्येव न उत्तरसूत्रे 'असादृश्ये' इति प्रतिषेधात् । योग्यताद्यर्थत्रितयाभिधायिनोऽव्युत्पन्नस्य तु नानेन समासः 'यथा' इत्यस्य सूत्रगृहीताव्ययत्वात् । किन्तु 'यथाऽसादृश्ये' इत्यने-नैव विधीयते इति ॥ ५ **स्वीकारादिति** । अर्थाभावशब्देन समस्यमानपदार्थाभावस्यैव ग्रहणमिति भावः ॥ ६ **युक्त्यर्ह इति** । अत्यन्ताभावार्थकनञः क्रियान्वयित्वव्युत्पत्तेः कालनिषेधो न युक्तिसह इति भावः । ततो भूतलाधारकघटाभाव-प्रतीतिरप्यार्थिकयेव, शाब्दी तु भूतलाधारकघटकर्तृकसत्ताभावप्रतीतिरेवेति बोध्यम् ॥ ७ **भाष्यप्रयोगादिति** । एतद्भाष्य-प्रयोगद्वयादेव 'एतत्सूत्रे तत्तदर्थबोधकपदघटकतया गृहीताव्ययेन तत्तदर्थकेन नायं समासः' इति ध्वन्यते । अत एव 'यथाऽसादृश्ये' इति सूत्रभाष्ये 'पूर्वेण प्राप्नोति 'सादृश्यसंपत्ति–इति ।' इत्येवोक्तम् । अन्यथा यथाशब्दस्य समासाय शीघ्रो-पस्थितत्वाद् 'यथार्थ' इत्येव वक्तव्यं स्यात् ॥

गर्भे वाक्यमपि[1] । शक्तिमनतिक्रम्य यथाशक्ति[2] । हरेः सादृश्यं सहरि । वक्ष्यमाणेन सहस्य सः । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपदिति विग्रहे-॥ ( ९६२ ) ⁂ अव्ययीभावे चाकाले ।६।३।८१। सहस्य सः स्यादव्ययीभावे न तु काले । सचक्रम् । काले तु सहपूर्वाह्णम् । सदृशः सख्या ससखि । यथार्थत्वेनैव[3] सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम् । क्षत्त्राणां संपत्तिः सक्षत्त्रम् । ऋद्धेराधिक्यं समृद्धिः,[4] अनुरूपमात्मभावः[5] संपत्तिरिति भेदः । तृणमप्यपरित्यज्य सतृणमत्ति[6] । साकल्येनेत्यर्थः । न त्वत्र तृणभक्षणे तात्पर्यम् । अन्ते-अग्निग्रन्थपर्यन्तमधीते साग्नि ॥ (९६३) ⁂ यथाऽसादृश्ये ।२।१।७। असादृश्ये एव यथाशब्दः समस्यते । तेनेह न, यथा हरिस्तथा हरः । हरेरुपमानत्वं यथाशब्दो द्योतयति । तेन सादृश्य इति वा यथार्थ इति वा प्राप्तं निषिध्यते[7] ॥ (९६४) ⁂ यावदवधारणे[8] ।२।१।८। यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम् ॥ (९६५) ⁂ सुप् प्रतिना मात्रार्थे ।२।१।९। शाकस्य

---

'सविशेषणानां वृत्तिर्न' इत्यस्याप्रवृत्तेः ॥ **आनुपूर्व्येणेति** । अनुपूर्वस्य भाव आनुपूर्व्यं, व्रीह्यादित्वात् ष्यञ् ॥ **चक्रेण युगपदिति** । अत्र केचित्-युगपच्चक्रमिति समासेनैव भवितव्यं युगपच्छब्दस्याप्यव्ययत्वात् । किन्तु चक्रेणैककाले इत्यादि विग्रहितुमुचितमित्याहुः[9] ॥ ( ९६२ ) **सहपूर्वाह्णमिति** । साकल्येऽव्ययीभावः ॥ **गुणभूतेऽपीति** । यदि सादृश्य इति नोच्यते,तर्हि यत्र सादृश्यं प्रधानमवगम्यते तत्रैव स्यादव्ययार्थप्राधान्यस्याव्ययीभावे औत्सर्गिकत्वादिति भावः ॥ **अन्त इति** । इदानीमेतावान् प्रदेशोऽध्येतव्य इति यावतो ग्रन्थप्रदेशस्य परिग्रहः कृतस्तदपेक्षा समाप्तिरिहान्तशब्देन विवक्षिता । सा चासकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते ॥ **साग्नीति** । अग्निशब्दस्तत्प्रतिपादकग्रन्थे वर्तते । स च तृतीयान्तो नित्यं समस्यते । न चैवमग्निना सहेति प्रयोगो दुर्लभ इति वाच्यम् , साहित्यमात्रस्य विवक्षायां तत्प्रयोगस्योपपत्तेः । अन्तत्वविवक्षायां तु समासस्य नित्यत्वादग्निग्रन्थपर्यन्तमित्यस्वपदविग्रहो दर्शितः ॥ यत्तु केचित्-अग्निरन्तोऽस्येति प्रथमान्तेनाग्नेरन्तत्वमिति षष्ठ्यन्तेन वा विग्रहः, समासोऽपि प्रथमान्तेन षष्ठ्यन्तेन वेत्याहुः । तन्न, सहशब्दस्यान्तवाचकत्वाभावादन्तत्वस्य तु सुतरामलाभात, सहयुक्ते तृतीयाया न्याय्यत्वाच्च सतृणमत्तीत्यत्र साकल्यस्येव साग्नीत्यत्रान्तत्वस्यापि साहित्यद्योत्यतया तत्र तृतीयान्तेन समासं स्वीकृत्य इह तत्परित्यागस्य निष्प्रमाणत्वाच्च । अत्रेदं बोध्यम्-'तदधीते-१७९१' इत्यध्येतृप्रत्ययस्य वैकल्पिकत्वात्साग्नीत्यत्राण् नोक्तः । कृतेऽप्यध्येत्रणि 'सर्वादेः सादेश्च लुग्वक्तव्यः १७९८' इति वक्ष्यमाणत्वात्साग्नीत्येव रूपमिति ॥ ( ९६३ ) **यथाऽसा--** । निःसंदेहाय ' सादृश्ये यथा ' इत्येव वक्तव्ये विपरीतोच्चारणं नञः श्लेषलाभार्थमिति व्याचष्टे—**असादृश्य इति** । ( ९६४ ) **यावन्त इति** । यत्परिमाणमेषां ते । 'यत्तदेतेभ्यः-२४९६' इति वतुप् । **यावच्छ्लोकमिति**। यावदित्यव्ययं समस्यते,विग्रहस्तु तद्धितान्तेनेत्यस्वपदविग्रहत्वमस्त्येव । अवधारणे किम् ,यावद्दत्तं तावद्भुक्तम् । कियद्भुक्तं वा नावधारयतीत्यर्थः ॥(९६५) **सुप्प्रतिना--** । सुबित्यनुवर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थमिति ध्वनयन्नु-

---

१ **वाक्यमपीति** । 'वर्णं वर्णं प्रति प्रतिवर्णम्' इति प्रत्याहाराह्निकभाष्ये विग्रहप्रदर्शनात् 'यदा द्विर्वचनं तदा प्रतिशब्दस्य वीप्सावृत्तित्वाभावात् समासाप्राप्त्या वाक्यमपि साध्वेव ' इति सूच्यते । कर्मप्रवचनीयसंज्ञा तु ' प्रतिस्थानम्' इत्यत्र षत्वनिषेधाय चरितार्थेति तत्सामर्थ्यवर्णनमयुक्तमेवेति बोध्यम् ॥ २ **यथाशक्तीति** । यथाशब्दस्य सूत्रगृहीताव्ययत्वेन नेदमस्योदाहरणमिति बोध्यम् ॥ ३ **यथार्थत्वेनेति** । सादृश्यस्याव्युत्पन्नयथाशब्दार्थत्वे न मानम् । अत एव 'यथाऽसादृश्ये' इति सूत्रे भाष्यकृत्-'अथ यः प्रकारवचने थाल् तस्य ग्रहणं कस्मान्न भवति पूर्वेण प्राप्नोति 'सादृश्यसंपत्ति' इति' इति वक्ष्यति । यथार्थत्वे तु 'यथेति प्राप्नोति' इत्येव वक्तव्यं स्यात् । संपत्तिपदोपादानेन तत्संनिकृष्टोच्चारितमेव विवक्षितमित्यपि ध्येयम् ॥ योग्यताया यथार्थत्वेऽपि रूपस्य योग्यमनुरूपमिति गुणभूताया अपि ग्रहणेन समासवत्सादृश्यपदोच्चारणेऽपि गुणभूतप्रधानभूतयोर्द्वयोरपि सादृश्ययोर्ग्रहणं लक्ष्यानुरोधाद्भविष्यतीति ध्येयम् ॥ ४ **ऋद्धेरिति** । धनधान्यादेरित्यर्थः । सुमद्रमित्यतो मद्राणां धनधान्यादिप्राचुर्यमिति बोधात् ॥ ५ **अनुरूपमिति** । अनुरूपं योग्यम् आत्मनः समस्यमानोत्तरपदस्य भावः प्रवृत्तिनिमित्तं क्षत्त्रत्वादिः संपत्तिरित्यर्थः । क्षत्त्रियाणां योग्यं क्षात्त्रमिति बोधः ॥ ६ **सतृणमिति** । 'तृण टा×सह सु' इत्यलौकिकं विग्रहवाक्यम् । एवमेव सर्वत्र सहशब्दप्रयोगे तृतीयैव बोध्या ॥ ७ **निषिध्यत इति** । नियमद्वारेति भावः । भाष्यानुसारिणस्तु यथार्थकोटौ यथाशब्दस्य प्रविष्टत्वेन तदर्थे सूत्रगृहीताव्ययत्वेन समासो न प्राप्नोतीति यथाशब्दस्य समासविध्यर्थं सूत्रमिति वीप्सावाचिनोऽव्युत्पन्नस्य यथाशब्दस्यानेन समासो विधीयते । अत एव भाष्ये-'असादृश्य इत्युच्यते तत्रेदं न सिध्यति 'यथाशक्ति यथाबलम् ' इति । किं कारणम् ? । यथेत्ययं प्रकारवचने थाल् । स च सादृश्ये वर्तते ' इति पूर्वपक्षे 'नैष दोषः । अयं यथाशब्दोऽस्त्येवाव्युत्पन्नः प्रातिपदिकं वीप्सावाचि ॥ अस्ति च प्रकारवचने थाल् । तत्र यदव्युत्पन्नं प्रातिपदिकं वीप्सावाचि तस्येदं ग्रहणम् ' इति समाहितम् ॥ 'यश्च प्रकारवचने थाल् तस्य ग्रहणं कस्मान्न भवति पूर्वेण प्राप्नोति 'सादृश्यसंपत्ति' इति ।' इति पूर्वपक्षे " प्रतिषेधसामर्थ्यान्न भविष्यति " इति भाष्यानुसारेण 'यथा हरिः ' इत्यत्र पूर्वेणापि न समास इति बोध्यम् ॥ तथा हर इत्यत्र तु नैव समासः प्राप्नोति सादृश्यप्रतियोगिनैव समासविधानादिति तत्त्वम् ॥ ८ **अवधारण इति** । संख्यादिनेयत्तापरिच्छेदोऽवधारणम् । तद्बोधकं यावादित्यव्ययं समस्यत इत्यर्थः । श्लोकपरिमाणसंख्यापरिच्छिन्नाः प्रणामा इति बोधः ॥ ९ **इत्याहुरिति** । यौगपद्ये युगपद् इत्यस्यान्तर्गतत्वेन सूत्रगृहीताव्ययत्वेन समासप्राप्तिरेवात्रारुचिरिति बोध्यम् ॥

लेशः शाकप्रति । मात्रार्थे किम् । वृक्षं वृक्षं प्रति विद्योतते विद्युत् ॥ ( ९६६ ) **अक्षशलाकासंख्याः परिणा ।२।१।१०।** ( ९६७ ) द्यूतव्यवहारे पराजय[1] एवायं समासः । अक्षेण[2] विपरीतं वृत्तम् अक्षपरि । शलाकापरि । एकपरि ॥ ( ९६८ ) **विभाषा ।२।१।११।** अधिकारोऽयम् । एतत्[3]सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम् । सुप्सुपेति तु न नित्यसमासः, अव्ययमित्यादिसमासविधानाज्ज्ञापकात् ॥ ( ९६९ ) **अपपरिबहिरञ्चवः पञ्चम्या ।२।१।१२।** अपविष्णु संसारः । अप विष्णोः । परिविष्णु । परिविष्णोः । बहिर्वनम् । बहिर्वनात् । प्राग्वनम् । प्राग्वनात् ॥ ( ९७० ) **आङ् मर्यादाभिविध्योः ।२।१।१३।** एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः । आमुक्ति संसारः । आ मुक्तेः । आबालं हरिभक्तिः । आ बालेभ्यः ॥ ( ९७१ ) **लक्षणेनाभिप्रती आभिमुख्ये ।२।१।१४।** आभिमुख्यद्योतकावभिप्रती चिह्नवाचिना सह प्राग्वत् । अभ्यग्नि शलभाः पतन्ति । अग्निमभि । प्रत्यग्नि ।

---

दाहरति-**शाकप्रतीति** । नन्वारम्भसामर्थ्यादव्ययभिन्नमेव सुप्समस्यत इति चेत् । अत्राहुः-पुनः सुब्ग्रहणाभावे दोषामन्यमहर्दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाव्ययान्येव मात्रार्थे प्रतिना समस्येरन्, तथा च-दिवसस्य लेशः दिवाप्रति दोषप्रतीत्यादीनामेवोदाहरणत्वं संभाव्येतेति ॥ **वृक्षं प्रतीति** । ननु लक्षणादौ प्रतेः कर्मप्रवचनीयसंज्ञाविधानसामर्थ्याद् द्वितीयागर्भं वाक्यमेव स्यात्, न तु समासस्तस्य लेशार्थे सावकाशत्वादिति चेत् । मैवम्, वृक्षं प्रति सिञ्चन्तीत्यादौ षत्वनिवारकत्वेन कर्मप्रवचनीयसंज्ञाविधानस्य चरितार्थत्वान्मात्रार्थग्रहणाल्लक्षणादावप्यनेन समासप्रसङ्गात् । वीप्सायामव्ययीभावे तु प्रत्यादेः पूर्वनिपातत्वे प्रत्यर्थं सिञ्चन्तीत्यादौ षत्वाप्रसक्त्या कर्मप्रवचनीयविधानस्याचरितार्थतया तत्सामर्थ्याद् द्वितीयागर्भं वाक्यमपीत्युक्तं मूलकृता 'अव्ययं विभक्ति-९५३' इति सूत्रे ॥ अत्र नव्याः-प्रत्यर्थमित्यव्ययीभावे वीप्सायां द्योतकत्वेन विद्यमानमव्ययं समस्यते । वीप्साद्योतकस्य यदि कर्मप्रवचनीयसंज्ञाविधिः स्वीक्रियते, तदापि प्रतिस्तवनं प्रतिस्थानमित्यादौ षत्वनिवारणाय प्रतीत्यस्य कर्मप्रवचनीयसंज्ञया चरितार्थैव । वस्तुतस्तु-वीप्सायां विषयभूतायां प्रत्यादेः कर्मप्रवचनीयसंज्ञा, न तु वीप्साद्योतकस्यैव । अन्यथा 'वृक्षंवृक्षं प्रति सिंचतीत्यत्र द्विर्वचनेनैव वीप्सा द्योत्यते, प्रतिशब्दस्तु क्रियया संबध्यते । कर्मणि द्वितीया । कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न' इत्यादिमनोरमाग्रन्थस्य 'लक्षणेत्थंभूता-' इति सूत्रस्थस्य दत्तजलाञ्जलिः स्यात्, ततश्च संज्ञाविधानसामर्थ्यस्योपक्षीणत्वाद् अर्थमर्थं प्रतीत्यादिभाष्यप्रयोगादेव द्वितीयागर्भं वाक्यमपि भवतीत्येवं व्याख्येयमित्याहुः ॥ ( ९६७ ) पराजयं द्योतयितुमाह--**विपरीतं वृत्तमिति** । पूर्वं जये यथा वृत्तं तथा न वृत्तमित्यर्थः ॥ **एकपरीति** । एकेन विपरीतं वृत्तमित्यर्थः । एवं द्विपरीत्यादि ॥ ( ९६८ ) 'विभाषाऽपपरिबहिर्-' इति योगं विभज्य व्याचष्टे--**विभाषेति** । इतः प्राचीनानां समासानां टिघुभादिसंज्ञानामिव वाग्रहणाभावान्नित्यत्वं न्यायत एव सिद्धं तच्च लिङ्गेनापि द्रढयति--**एतदिति** । नन्वेवं 'सुप्सुपा ९४९-२' इत्यपि नित्यः स्यात्, इष्टापत्तौ तु 'पूर्वं भूतो भूतपूर्वः सुप्सुपेति समासः' इति वृत्तिग्रन्थो विरुध्येत । तथा शाकलसूत्रे 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इत्यत्र 'नित्यग्रहणेन नार्थः इदमपि सिद्धं भवति वाप्यामश्वो वाप्यश्वः' इति भाष्यं कैयटो व्याख्यत्--'वाप्यश्वः' इति 'सुप्सुपा-९४९-२' इति समासः 'संज्ञायाम् १०४५' इति सप्तमीसमासस्य तु नित्यत्वात्सिद्धः प्रतिषेधः--इति सोऽपि ग्रन्थो विरुध्येतेत्याशङ्कायामाह--**सुप्सुपेति त्विति** । नन्वत्र किं प्रमाणमित्यत आह--**अव्ययमित्यादीति** । सुप्सुपेत्यनेनैव सिद्धे समासे 'अव्ययम् ९४९-२' इत्यादिसूत्रैः पुनः समासविधानं प्राचीनस्य काचित्कतां ज्ञापयतीत्यर्थः । एवं च इवेन समासस्यापि काचित्कत्वात् 'उद्बाहुरिव वामनः' इत्यादि सिद्धम् । 'इवेन-९५१' इति वार्तिकं तु यद्यपि 'कुगति-' इत्यत्र पठ्यते । तथापि 'सुप्सुपा ९४९-२' इत्यत्रत्यमेव नित्याधिकारे स्मारितमिति कैयटः । एवं स्थिते 'उद्बाहुरिव वामनः' इत्यादिलोकप्रयोगसिद्धये इवेन समासस्य छन्दोविषयकत्वं कल्पयन्तः प्रत्युक्ताः । छन्दस्यपि तत्समासस्य नित्यत्वानभ्युपगमात् । जीमूतस्येवेत्यत्र हि बह्वृचैः समासाभ्युपगमेऽपि तैत्तिरीयैर्व्यस्तस्यैव पाठात् । एतच्च मनोरमायां स्थितम् । ( ९६९ ) **अपपरिबहि-** । अपपरियोगे 'पञ्चम्यपाङ्परिभिः ८७९' इति पञ्चमी विहिता अञ्चूत्तरपदयोगेऽपि 'अन्यारात्-८७१' इत्यादिना विहितैव । तेनात्र 'पञ्चम्या' इति ग्रहणं 'बहिर्योगे पञ्चमी भवति' इति ज्ञापनार्थम् । 'ज्ञापकसिद्धं न सर्वत्र' इति 'करस्य करभो बहिः' इत्यपि सिद्धम् ॥ ( ९७० ) **आबालमिति** । 'आ परमाणोरा च भूगोलकम्' इति किरणावलीप्रयोगस्तु प्रामादिकः, समासमध्ये चशब्दप्रयोगासंभवात् । 'आ च भूगोलकात्' इति पाठस्तूचितः ॥ ( ९७१ )--**लक्षणेना--** । चिह्नं लक्ष्म

---

१ **पराजय इति** । अयं भावः-पञ्चिका नाम द्यूतम्, पञ्चभिः कपर्दैर्भवति । तत्र यदि पञ्चैव उत्ताना अवाञ्चो वा पतन्ति तदा पातयिता जयति अन्यथा जीयते ॥ इति लोकव्यवहारः । इति ॥ २ **अक्षेणेति** । विपरीतवर्तने कर्तृत्वेनाक्षादेस्तृतीया । वृत्तौ परेस्तदर्थः । अक्ष ङस्-परि इत्यलौकिकम् । 'अक्षशलाकयोश्चैकवचनान्तयोः' इति वार्तिकोक्तेरेकवचनान्तेनैव विग्रहे समासो भवतीति भावः ॥ ३ **एतदिति** । अधिकारार्थयोगविभागसामर्थ्यादित्यर्थः । अयं भावः, एकार्थीभावे राजपुरुषः इति समासः, व्यपेक्षायां 'राज्ञः पुरुषः' इति वाक्यमिति सकलेष्टरूपद्वयसिद्धौ व्यर्थोऽयमत्र कृतोऽधिकारः 'इत उत्तरमेव व्यपेक्षायाः संभवो न पूर्वत्र' इति ज्ञापनेन पूर्वत्रैकार्थीभावस्यैव ध्वननेन नित्यसमासतैवेति ॥ ४ **अभ्यग्नीति** । अभिमुखाग्निकर्मकमाभिज्ञाप्यं शलभकर्तृकं पतनमिति बोधः ॥ ५ **विहितैवेति** । एवकारो भिन्नक्रमः । पञ्चम्येव विहितेत्यर्थः । तथा च पञ्चम्यन्तसुबन्तस्यैतद्योगेऽव्यभिचारात्पञ्चमीग्रहणं व्यर्थमेवेति भावः ॥

अग्निं प्रति ॥ ( ९७२ ) (सू) **अनुर्यत्समया** ।२।१।१५। यं पदार्थं समया द्योत्यते तेन लक्षणभूतेनानुः समस्यते सोऽव्ययीभावः । अनुवनमशनिर्गतः । वनस्य समीपं गत इत्यर्थः ॥ ( ९७३ ) (सू) **यस्य चायामः** ।२।१।१६। यस्य दैर्घ्यमनुना द्योत्यते तेन लक्षणभूतेनानुः समस्यते । अनुगङ्गं वाराणसी । गङ्गाया अनु । गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः ॥(९७४) (सू) **तिष्ठद्गुप्रभृतीनि च** ।२।१।१७। एतानि निपात्यन्ते । तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गु दोहनकालः । आयतीगवम् । इह [१]शत्रादेशः [२]पुंवद्भावविरहः समासान्तश्च निपात्यते । इत्यादि ॥(९७५) (सू) **पारे मध्ये षष्ठ्या वा** ।२।१।१८। पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते । एदन्तत्वं चानयोर्निपात्यते । पक्षे षष्ठीतत्पुरुषः ॥ पारेगङ्गादानय,

---

च लक्षणम्' इत्यमरस्तदाह--**चिह्नवाचिनेति** । इहाभिप्रती लक्ष्यलक्षणभावम्, आभिमुख्यं चेत्युभयं द्योतयत इति फलितम् । **अग्निमभि । अग्निं प्रतीति** । 'अभिरभागे ८०६' 'लक्षणेत्थंभूता-८०५' इत्यनेन च अभिप्रत्योः कर्मप्रवचनीयत्वाद् द्वितीया । लक्षणेनेति किम्, । स्रुघ्नं प्रतिगतः । स्रुघ्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः । अत्र हि स्रुघ्नः कर्म, न तु लक्षणम् । अभिप्रती इति किम्, येनाग्निस्तेन गतः । येन पथा अग्निर्गतस्तेन गत इति प्रतीतेर्भवति गमनस्याग्निर्लक्षणम्, आभिमुख्यमप्यस्तीति येनतेनशब्दयोरग्निशब्देन समासः स्यात् । आभिमुख्ये किम्, अभ्यङ्का गावः । प्रत्यङ्काः । अभिनवः प्रतिनवश्चाङ्क आसामिति बहुव्रीहिः । अङ्को ह्यत्र भवति गवां लक्षणम्, आभिमुख्यं तु नास्ति । ननूत्सर्गत अव्ययार्थप्राधान्येऽव्ययीभावस्वीकारात्कथमिह प्रसङ्गः । अत्राहुः—इह प्रकरणे बहुव्रीहिविषये अव्ययीभावो भवतीति ज्ञापनार्थमिदम् । तेन 'सख्या वंश्येन ९७७' द्विमुनि व्याकरणमित्यादि सिद्धमिति ॥ ( ९७२ ) **अनुर्यत्स**—। यदिति समयायोगे द्वितीयेति ध्वनयति—**यं पदार्थमिति** । यस्य पदार्थस्य समीपामित्यर्थः ॥ लक्षणेनेत्यनुवर्तत इत्याह—**लक्षणभूतेनेति** । चिह्नवाचिनेत्यर्थः । 'अव्ययं विभक्ति-९५३' इत्यनेन सिद्धे विभाषार्थं सूत्रम् । तेन पक्षे 'वनस्यानु' इत्युदाहार्यमिति मनोरमायां स्थितम् ॥ अत्र वदन्ति वनस्येति षष्ठीह दुर्लभा, कर्मप्रवचनीययुक्ते द्वितीयाया दुर्वारत्वात् । तत्सामर्थ्यात्समया लङ्कामितिवत्समासबाधे प्रसक्ते अस्य विध्यर्थत्वात् । न चायमनुः सामीप्यमात्रद्योतको, न लक्ष्यलक्षणभावद्योतकश्चेति वाच्यम्, लक्षणेनेत्यनुवृत्तिवैयर्थ्यात् । न चैवमपि लक्षणमात्रद्योतकत्वं नास्तीति वाच्यम्, 'लक्षणेत्थम्-८०५' इत्यत्र मात्रपदाभावाद् अग्निमभि, अग्निं प्रतीति पूर्वसूत्रस्योदाहरणप्रत्युदाहरणविरोधाच्च । अतोऽत्र पक्षे वनमनु इत्युदा[३]हार्यम् । वनस्य समीपं गत इति मूलस्थं विवरणवाक्यं तु लक्षणभूतस्य वनस्य समीपं गत इति व्याख्येयमिति ॥ अन्विति किम्, ग्रामं समया ॥ यत्समयेति किम्, वृक्षमनु विद्योतते विद्युत् । लक्षणेन किम्, अनुवचनम् । उपकृष्णमितिवदत्र नित्यमव्ययीभावः ॥ ( ९७३ ) **यस्य च**—। इहानुरित्यनुवर्त्य आवृत्त्यैकं तृतीयान्तत्वेन विपरिणमय्य व्याचष्टे—**अनुनेति** ॥ **लक्षणभूतेनेति** । लक्षणेनेत्यनुवर्तत इति भावः ॥ **अनुगङ्गमिति** । इहायामोपलक्षणत्वं चानुना द्योत्यते, लक्ष्यं तु समासार्थः । अत एव वाराणस्या सामानाधिकरण्यम् । एवं स्थिते फलितमाह—**गङ्गादैर्घ्येति** ॥ **वाराणसीति** । वरं च तदनश्च वरानः श्रेष्ठोदकम् 'अनः क्लीबं जले शोके मातृस्यन्दनयोर्द्वयोः' इति रुद्रभसौ । तस्यादूरे भवा 'अदूरभवश्च १८१२' इत्यण् । आदिवृद्धिः 'पूर्वपदात्संज्ञायाम्-१२३३' इति णत्वम् ॥ **गङ्गाया अन्विति** । समासाभावपक्षे प्रागुक्तरीत्या गङ्गा[४]मन्वित्युदाहार्यमित्याहुः ॥ ( ९७४ ) **तिष्ठद्गुप्रभृतीनि च** । चकार एवकारार्थे । तेनैषां वृत्त्यन्तरं न भवति,परमतिष्ठद्गु इत्यादि न भवतीत्यर्थः ॥ **तिष्ठ[५]द्गुरिति** । 'गोस्त्रियोः-९५७' इति ह्रस्वः । प्रथमासमानाधिकरणे शत्रादेशस्यासंभवादाह—**इह शत्रादेश इति** ॥ **इत्यादीति** । आदिशब्देन ख[६]लेयवं, खलेबुसम् । सप्तम्या अलुक् । लूनयवम् । लूयमानयवमित्यादि ग्राह्यम् ॥ ( ९७५ ) **पारे मध्ये**—। **निपात्यत इति** । यत्र सप्तम्यर्थो न संभवति तदर्थमेकारान्तत्वनिपातनम् । सप्तम्यर्थसंभवे तु 'तत्पुरुषे कृति बहुलम् १३२४' इति बहुलग्रहणादलुका सिद्धेः, अतोऽत्र सप्तम्यर्थाभावसूचनाय पञ्चम्यन्तमुदाहरति—**पारेगङ्गादिति** ।

---

१ **शत्रादेश इति** । इदं तु द्वयोरपि । तत्र यद्यपि 'पचन् पुरुषः' इत्यादाविव प्रथमासामानाधिकरण्येऽपि शत्रादेशेन सिध्यति तथाप्युपायान्तरदूषकत्वं नोपायस्येति निपातनमाश्रितम् ॥ २ **पुंवद्भावेति** । इदं द्वयं त्वन्तिम एवेति बोध्यम् । चेनान्यपदार्थेऽव्ययीभाव उभयोरेव ॥ ३ **इत्युदाहार्यमिति** । अत्रेदं बोध्यम्—वनस्य समीपमित्येव बोधाद् अनुद्योत्येन लक्ष्यलक्षणभावेनेतरत्रान्वयाभावात् कर्मप्रवचनीयसंज्ञाया अभाव इति यदि विभाव्यते, तदा 'वनस्यानु' इत्येव भवति । यदि तु तेन संबन्धेनान्वयविवक्षा तर्हि 'वनमनु' इत्येव बोध्यम् । 'अग्निमभि' इतिवत्, इति ॥ ४ **गङ्गामन्विति** । 'निवेश्य गङ्गामनु तां महानदीं चमूम्' इति रामायणस्थमिति भावः ॥ ५ **तिष्ठद्गुरितीति** । इदं च 'सः' 'दोहनकालः' इत्यनयोः पुँल्लिङ्गयोर्विशेष्यत्वाद्विशेषणेऽपि पुँल्लिङ्गत्वमेवेति मन्यमानेन शोधितं भवेत् । वस्तुतस्तु—'अव्ययीभावश्च' इत्याभ्यां सूत्राभ्यामव्ययत्वक्लीबत्वाभ्यां विभक्त्यभावह्रस्वत्वे निश्चिते 'तिष्ठद्गु' इति निर्विभक्तिक एव पाठ इति बोध्यम् । कालविशेष एवान्यपदार्थेऽयमव्ययीभावः, 'तिष्ठद्गु कालविशेषे' इति वार्तिकात् ॥ ६ **खलेयवमिति** । 'खलेयवादीनि प्रथमान्तान्यपदार्थे' इति वार्तिकेनान्यपदार्थमात्र एवायामिति बोध्यम् ॥

गङ्गापारात् । मध्येगङ्गात्, गङ्गामध्यात् । ( ९७६ ) महाविभाषया वाक्यमपि । गङ्गायाः पारात् । गङ्गाया मध्यात् ॥ ( ९७७ ) (सू०) **संख्या वंश्येन** ।२।१।१९। वंशो द्विधा विद्यया जन्मना च । तत्र भवो वंश्यः । तद्वाचिना सह संख्या वा समस्यते । द्वौ मुनी वंश्यौ द्विमुनि । व्याकरणस्य त्रिमुनि । विद्यातद्वतामभेदविवक्षायां त्रिमुनि व्याकरणम् । एकविंशतिभारद्वाजम् ॥ ( ९७८ ) (सू०) **नदीभिश्च** । २ । १ । २० । नदीभिः संख्या प्राग्वत् ॥ (९७९) (वा०) **समाहारे चायमिष्यते** ॥ सप्तगङ्गम् । द्वियमुनम् ॥ ( ९८० ) (सू०) **अन्यपदार्थे च संज्ञायाम्** । २ । १ । २१ । अन्यपदार्थे [ विद्यमानं ] सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम् । विभाषाधिकारेऽपि वाक्येन संज्ञानवगमादिह नित्यसमासः । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् ॥ ( ९८१ ) (सू०) **समासान्ताः** । ५ । ४ । ६८ । इत्यधिकृत्य-॥ ( ९८२ ) (सू०) **अव्ययीभावे शरत्प्रभृतिभ्यः** । ५ । ४ । १०७ । शरदादिभ्यष्टच् स्यात्समासान्तो-

---

( ९७६ ) **महाविभाषयेति** । नन्वपवादेऽव्ययीभावे महाविभाषया विकल्पिते, पक्षे तदुत्सर्गः षष्ठीतत्पुरुषः प्रवर्तते तस्यापि विभाषाधिकारस्थत्वेन वैकल्पिकत्वात्पक्षे वाक्यमपि सिध्यतीति सूत्रे वाग्रहणं व्यर्थमेवेति चेत् । अत्राहुः-महाविभाषया एकार्थीभावस्य पाक्षिकत्वे विवक्षिते यदा एकार्थीभावस्तदा षष्ठीसमासं बाधित्वा नित्यमव्ययीभावे प्राप्ते पक्षे षष्ठीसमाससमावेशार्थमिह वाग्रहणम् । 'व्यपेक्षा सामर्थ्यमेके' इति पक्षे तु वृत्तावपि व्यपेक्षालक्षणमेव सामर्थ्यमिति वाक्यस्य नित्यं बाधे प्रसक्ते तया वृत्तिर्विकल्प्यते । तथा चाव्ययीभावे विकल्पिते पूर्वोक्तरीत्या पक्षे तत्पुरुषस्तस्यापि वैकल्पिकत्वाद्वाक्यमपि सिध्यत्येव, तथापि 'यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते' इति ज्ञापनायेदम् । तेन पूर्वं कायस्येत्येकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति, दक्षस्यापत्यं दाक्षिरित्यत्र अत इञा मुक्ते अण् न भवति किंतूभयत्र वाक्यमेवेति ॥ ( ९७७ ) **संख्या वंश्येन** । वंशः संतानस्तत्र भवो वंश्यः । दिगादित्वाद्यत् ॥ **द्विमुनीति** । पाणिनिकात्यायनौ ॥ **त्रिमुनीति** । तौ द्वौ पतञ्जलिश्चेति त्रयो वंश्याः, व्याकरणस्येति संबन्धे षष्ठी । स्वपदार्थप्राधान्य एवायं समासः । यदा त्वन्यपदार्थप्राधान्यविवक्षा त्रयो मुनयो वंश्याः यस्येति तदा बहुव्रीहिरेवेत्याहुः ॥ **त्रिमुनि व्याकरणमिति** । यद्यप्येतद्बहुव्रीहिणाऽप्युपपन्नं, तथापि विभक्त्यन्तरे रूपेऽपि विशेषोऽस्त्येवेति भावः ॥ वस्तुतस्तु 'लक्षणेनाभिप्रती-९७१' इति सूत्रे आभिमुख्यग्रहणाद्बहुव्रीहिविषयेऽप्यव्ययीभावो भवतीति द्विमुनि व्याकरणमित्यादि सिद्धमित्यवोचाम ॥ जन्मनोदाहरति—**एकविंशतिभारद्वाजमिति** । एकविंशतिर्भारद्वाजा वंश्या इति विग्रहः ॥ ननु भरद्वाजाद्विदादित्वादञो 'यञञोश्च १५८४' इति लुक् प्राप्नोति । न च वर्तिपदानां स्वार्थोपसर्जनैकत्वविशिष्टार्थान्तरोपसंक्रमाल्लुगभाव इति कैयटोक्तमादर्तव्यम्, वृत्तिप्रवेशात्प्रागेव प्राप्नुवतोऽन्तरङ्गस्य लुको दुर्वारत्वात् । अन्यथा गर्गाणां कुलं गर्गकुलमित्यपि न स्यात् । अत्राहुः-भाष्यकारप्रयोगादेव लुगभावोऽत्र बोध्य इति । एतच्च 'तृतीयासप्तम्योः-' इति सूत्रे शब्दकौस्तुभे स्पष्टम् ॥ ( ९७८ ) **नदीभिश्च**-। स्वरूपस्य संज्ञानद्याश्च नेह ग्रहणं बहुवचननिर्देशात् कित्वर्थस्य । न च तस्य समासः संभवति, अतस्तद्वाचिनामयं समासस्ते च न केवलं विशेषशब्दा एव, किन्तु सामान्यशब्दा अपि । तेन पञ्चनदं सप्तगोदावरमिति सिद्धम् । 'गोदावर्याश्च नद्याश्च' इति वक्ष्यमाणेन समासान्तोऽच् ॥ चकारेण संख्येत्यनुकृष्यत इत्याह—**संख्येति** । ( ९७९ ) स्यादेतत्, पुरस्तादपवादन्यायेन 'पूर्वकालैक-१०५०' इत्यस्यैवेदं बाधकं स्यात्ततश्चैकनदीत्यत्राव्ययीभावे तन्निबन्धनस्य 'नदीपौर्णमास्या-९८८' इति टचः प्रसङ्गः । समाहारे तु परत्वाद् द्विगुरेव स्यादित्यत आह—**समाहारे चायमिति** । एवकारार्थश्चकारः । एवं च द्विगोरपवादोऽयमव्ययीभाव इति फलितम् ॥ ( ९८० ) **अन्यपदार्थे च**—। संख्येति निवृत्तम् ॥ नदीग्रहणमनुवर्तते । तदाह—**सुबन्तं नदीभिः सहेति** । अन्यपदार्थ इति किम्, कृष्णवेणी ॥ **संज्ञानवगमादिति** । सम्यक् ज्ञायते इति संज्ञा 'आतश्चोपसर्गे ५०८८' इति कर्मण्यङ् । संज्ञिनो देशविशेषस्यानवगमादित्यर्थः । अन्यपदार्थानवगमादिति तु नोक्तं, यस्येत्यादिपदान्तरसमभिव्याहारेणान्यपदार्थप्रतीतेः । अत एव बहुव्रीहिर्न नित्यसमास इति भावः । संज्ञायां किम्, शीघ्रगङ्गो देशः ॥ ( ९८२ ) अथाव्ययीभावेऽसाधारणान् समासान्तानाह—**अव्ययी**—। शरदादिभ्य इति वक्तव्ये 'पर्यायेषु लाघवचिन्ता नाद्रियते' इति प्रभृतिग्रहणं कृतम् ॥

---

१ **संख्येति** । एतदादित्रिसूत्री स्वभावात्समानाधिकरणविषया ॥ २ **त्रिमुनीति** । परे तु-विद्यावंशो नाम गुरुशिष्यपरम्परा, न चैतस्य मुनित्रयस्य तत्त्वे मानमस्ति 'त्रिमुनि व्याकरणस्य' इत्यस्येष्टत्वे तिष्ठद्गुप्रभृतिषु पाठं कल्पयित्वा साधनीयमिति वदन्ति ॥ ३ **समाहार इति** । चकारोऽवधारणार्थः । समाहार एवेत्यर्थः । तेन समाहाराविवक्षायां 'पूर्वकालैक-' इति समास एकनदीतरः सिद्धो भवति । अन्यथा समानाधिकरणतत्पुरुषं बाधित्वाऽव्ययीभावे नपुंसकह्रस्वापत्तिः । 'गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि' इत्यच् तु न, तस्य भाष्यकृताऽनुक्तत्वात् । 'अच् प्रत्यन्वव-' इत्यत्र 'अच्' योगविभागसिद्धत्वेऽपि तस्येष्टसिद्ध्यर्थत्वादानिष्टस्थलेऽप्रवृत्तेश्च ॥ ४ अत्र **'विद्यमानम्'** इति 'अनेकमन्यपदार्थे' इति सूत्रवृत्तौ दृष्टं केनचिद् विद्वद्वरेण वर्धितम्, परंतु तस्य 'सुवचम्' इत्येतद्विशेषणत्वं प्रतीयमानं नैव संगच्छते समासस्यान्यपदार्थवृत्तित्वेऽपि पूर्वपदस्य तदवृत्तित्वात् । इति केचित् ॥ 'अन्यपदार्थे विद्यमानं यथा स्यात् तथा समस्यते' इत्येवं क्रियाविशेषणतया योज्यम्' इति दाधिमथाः ॥ ५ **वाग्रहणमिति** । अयं भावः—महाविभाषैवैकार्थीभावस्य विकल्पबोधिका, वृत्तिश्चैकार्थीभावे नित्यैवेति येननाप्राप्तिन्यायेनाव्ययीभावस्तत्पुरुषं बाधेत यथैकदेशिसमासः षष्ठीतत्पुरुषमिति पक्षे तल्लाभाय पुनर्वाग्रहणम्—इति ॥ ६ **रूपेऽपीति** । अपिना स्वरे इति भावः ॥ ७ **स्वरूपस्येति** । न ग्रहणमिति संबध्यते शब्दसंज्ञात्वादित्यपि बोध्यम् ॥ ८ **संज्ञानद्याश्चेति** । नदीसंज्ञकानामित्यर्थः । तेन गौर्यादिशब्दानां न ग्रहणमिति भावः ॥

ऽव्ययीभावे। शरदःसमीपमुपशरदम्। प्रतिविपाशम्। शरद्। विपाश्। अनस्। मनस्। उपानह्। दिव्। हिमवत्। अनडुह्। दिश्। दृश्। विश्। चेतस्। चतुर्। त्यद्। तद्। यद्। कियत्॥(९८३) ग. जराया जरस् च ॥ उपजरसम्॥(९८४) ग. प्रतिपरसमनुभ्योऽक्ष्णः ॥ [४३१]यस्येति च ॥ प्रत्यक्षम्। अक्ष्णः परमिति विग्रहे समासान्तविधानसामर्थ्यादव्ययीभावः। [२९२८]परोक्षे लिडिति निपातनात्परस्यौकारादेशः। परोक्षम्। परोक्षा क्रियेत्यादि तु [२६२८]अर्शआद्यचि। समक्षम्। अन्वक्षम् ॥ (९८५) सू. अनश्च । ५ । ४ । १०८। अन्नन्तादव्ययीभावाट्टच् स्यात् ॥ (९८६) सू. नस्तद्धिते। ६।४।१४४। नान्तस्य भस्य टेर्लोपः स्यात्तद्धिते। उपराजम्। अध्यात्मम् ॥ (९८७) सू. नपुंसकादन्यतरस्याम्। ५।४।१०९। अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाट्टच् वा स्यात्। उपचर्मम्, उपचर्म ॥ (९८८) सू. नदीपौर्णमास्याग्रहायणीभ्यः ।५।४।११०। वा टच् स्यात्। उपनदम्, उपनदि। उपपौर्णमासम्। उपपौर्णमासि। उपाग्रहायणम्, उपाग्रहायणि ॥ (९८९) सू. झयः ।५।४।१११। झयन्तादव्ययीभावाट्टज्वा। उपसमिधम्, उपसमित् ॥ (९९०) सू. गिरेश्च सेनकस्य ।५।४।११२। गिर्यन्तादव्ययीभावाट्टज्वा स्यात्। सेनकग्रहणं पूजार्थम्। उपगिरम्। उपगिरि ॥

इत्यव्ययीभावः ॥

---

**टच् स्यादिति**। 'राजाहःसखिभ्यः–११३४' इत्यतष्टजनुवर्तत इति भावः ॥ **समासान्त इति**। समासस्य समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थः। तेनोपशरदमित्यत्र 'नाव्ययीभावात्–९५८' इत्यम् सिध्यत्यव्ययीभावस्यादन्तत्वात्, द्विपुरीत्यादौ तु 'ऋक्पूरब्धूः–१३५०' इत्यप्रत्यय उत्तरपदस्यावयव इति 'अकारान्तोत्तरपदो द्विगुः स्त्रियाम्–११७६' इति स्त्रीत्वे 'द्विगोः ६६८' इति ङीप्सिध्यतीति बोध्यम् ॥ **प्रतिविपाशमिति**। 'लक्षणेनाभिप्रती–९७१' इति समासः। 'विपाशा तु विपाट् स्त्रियाम्' इत्यमरः ॥ गणं पठति–**शरदित्यादिना**। अत्र ये झयन्तास्तेषां 'झयः ९८९' इति विकल्पे प्राप्ते नित्यार्थः पाठः। (९९३)इह 'जराया जरस्–' 'प्रतिपर–९८४' इति च द्वयं गणसूत्रम् ॥ **उपजरसमिति**। जरायाः समीप इत्यर्थः ॥ **यस्येति चेति**। टचस्तद्धितत्वात्तस्मिन्परे इकारलोप इति भावः ॥ **प्रत्यक्षमिति**। वीप्सायां यथार्थत्वेन समासः। अक्ष्णोराभिमुख्यमित्यर्थे 'लक्षणेनाभिप्रती–९७१' इति वा समासः ॥ **अक्ष्णः परमिति**। अविषय इत्यर्थः। वृत्तिविषये अक्षिशब्द इन्द्रियमात्रपरः ॥ अव्ययाघटितसमुदायस्य कथमिहाव्ययीभावो विधायकसूत्राभावादित्याशङ्क्याह—**विधानसामर्थ्यादिति**॥ **समक्षमिति**। अक्ष्णो योग्यम् ॥ **अन्वक्षमिति**। अक्ष्णः पश्चादित्यर्थेऽव्ययीभावः ॥ (९८६) **नस्तद्धिते**। न इत्यनेन भस्येत्यधिकृतं विशिष्यते, विशेषणेन तदन्तविधिरत आह—**नान्तस्य भस्येति**। ननूपराजमित्यत्र 'नस्तद्धिते ९८६' इति व्यर्थम्, 'अव्ययानां भमात्रे–१८६४' इति टिलोपेनैव सिद्धेः। न चाव्ययत्वं टज्विशिष्टे पर्याप्तमिति वाच्यम्, अव्ययीभावसंज्ञाया उपजीव्यत्वेन टचः पूर्वभागस्याप्यव्ययत्वानपायात्। अत्राहुः–भाष्ये लुङ्मुखस्वरोपचारेषु त्रिष्वेव कार्येषु अव्ययीभावस्याव्ययसंज्ञाविधानान्न दोष इति। युक्तं चैतत्, अन्यथा उपशरदमित्यादौ टिलोपः प्रसज्येत ॥ **अध्यात्ममिति**। आत्मनीत्यध्यात्मम्। विभक्त्यर्थेऽव्ययीभावः ॥ (९८७) **नपुंसकादन्य—**। नपुंसकग्रहणमन्नन्तस्य विशेषणं नाव्ययीभावस्य अव्यभिचारादित्याह—**अन्नन्तं यत्क्लीबमिति**। अन्नन्तेन चाव्ययीभावविशेषणात्तदन्तविधिरित्याह—**तदन्तादिति** ॥ **उपचर्ममिति**। टाचि टिलोपोऽदन्तत्वादम्भावश्च ॥ (९८८) **नदीपौर्ण—**। इह स्वरूपस्यैव ग्रहणं न संज्ञायाः, पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात् ॥ **उपनदीति**। टजभावे नपुंसकह्रस्वः। अत्र व्याचक्षते–'वृत्तिग्रन्थमनुरुध्येदं विकल्पकथनम्। परमार्थतस्तु नेहान्यतरस्यामित्यनुवर्तते, 'बहुगण–' इति सूत्रस्थभाष्यविरोधात्। तत्र हि नदीशब्देन नदीविशेषाणां गङ्गायमुनादीनां ग्रहणमाशङ्क्य शरत्प्रभृतिषु विपाट्शब्दपाठान्नेति समाहितम्। न चेदं भाष्यं 'नदीपौर्णमासी–९८८' इत्यत्र टचः पाक्षिकत्वे संगच्छते, नित्यार्थतया तत्पाठस्योपपत्तेः। अत एव सेनकग्रहणमुत्तरत्रार्थवत्। कैयटस्तु–व्यवस्थितविभाषामाश्रित्य वृत्तिग्रन्थं कथंचित्समर्थितवानिति ॥ (९९०) **गिरेश्च सेनकस्य**। **पूजार्थमिति**। अन्यतरस्यामित्यनुवृत्त्या विकल्पसिद्धेरिति भावः ॥

इत्यव्ययीभावः ॥

---

१ **अव्ययीभाव इति**। अव्ययीभावयोग्यालौकिकविग्रहवाक्यान्तावयवः शरदादिप्रातिपदिकप्रकृतिकसुबन्तोत्तरपदात्परोऽच् प्रत्ययः स्यादित्यर्थो बोध्यः ॥ २ **समासस्येति**। समासयोग्यालौकिकप्रक्रियावाक्यस्येत्यर्थः। तथा च 'गोस्त्रियोः–' इति सूत्रे भाष्ये 'ननु चायं कप् समासान्त इत्युच्यते' इति पूर्वपक्षे 'तादर्थ्यात्ताच्छब्द्यं भविष्यति येषां पदानां समासः न तावत्तेषामन्यद्भवति कपं तावत् प्रतीक्षते' इति स्पष्टमेवाभिहितम् ॥ ३ **उत्तरपदस्य वेति**। इदं तु चिन्त्यम्, समासपदस्य तदर्थोत्तरपदलक्षणायां मानाभावात्। तदर्थवाक्यस्योपचारेण समासपदेन ग्रहणमित्यर्थस्यैव 'गोस्त्रियोः–' इति सूत्रे भाष्य उक्तत्वाच्च। 'अन्तः' इति सूत्रे भाष्ये 'समासस्यान्तोदात्तत्वमुत्तरपदस्य वा' इति विकल्प आद्ये इदंप्रथमका इत्यत्र कपोऽन्तोदात्तत्वापत्तिमुक्त्वा 'अस्तु तर्ह्युत्तरपदस्य' इत्युक्त्वा तत्र 'तृच' इत्यत्रान्तोदात्तत्वासिद्धिरुक्ता। एवं चोत्तरपदस्यान्तावयव इत्यस्य भाष्यविरुद्धत्वात्॥ ४ **अत एवेति** ॥ अन्यतरस्यामित्यस्यासंबन्धेन नित्यत्वादेवेत्यर्थः॥ अत एव शरदादीनां झयन्तानां नित्यार्थो गणे पाठश्चरितार्थः ॥ शेखरकृता तु 'तत्र झयन्तपाठस्तु प्रपञ्चार्थः' इत्युक्तम्। 'पूजार्थम्' इति पदं च 'पूजार्थमपि' इति व्याख्यातम् ॥ वस्तुतस्तु—'**नदीपौर्णमास्याग्रहायणीभ्यः**' इति सूत्रमेव '**अनश्च**' इति सूत्रात् प्राक् पठितम् इत्येव भाष्यसंमतं भवेत् ॥ भाष्यसंमतसूत्रपाठतो बहुत्र काशिकासंमताधुनिकाष्टाध्यायीपाठे विसंवादस्य जातस्योपलभ्यमानत्वात् ॥

## अथ तत्पुरुषप्रकरणम्

( ९९१ ) (सू) तत्पुरुषः ।२।१।२२। अधिकारोऽयं प्राग्बहुव्रीहेः ॥ ( ९९२ ) (सू) द्विगुश्च ।२।१।२३। द्विगुरपि तत्पुरुषसंज्ञः स्यात् । इदं सूत्रं त्यक्तुं शक्यम् , संख्यापूर्वो द्विगुश्चेति पठित्वा चकारबलेन संज्ञाद्वयसमावेशस्य सुवचत्वात् । समासान्तः प्रयोजनम् । पञ्चराजम् ॥(९९३) (सू) द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ।२।१।२४। द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स तत्पुरुषः।कृष्णं श्रितः—कृष्णश्रितः । दुःखमतीतो—दुःखातीतः॥

---

( ९९२ ) **द्विगुश्च** ॥ **चकारबलेन संज्ञाद्वयसमावेशस्येति** । न चैवं द्विगुतत्पुरुषयोः पर्यायता स्यादिति शङ्क्यम्, योगं विभज्य संख्यापूर्वस्य तत्पुरुषसंज्ञां विधाय पश्चाद् द्विगुसंज्ञाविधानेन चकारपठनमन्तरेणापि पर्यायत्वासिद्धेः । नापि द्वौ अन्यौ यस्य द्व्यन्य इत्यत्रातिप्रसङ्गः शङ्क्यः, 'तद्धितार्थोत्तरपद-१०५२' इति सूत्रमनुवर्त्य 'तद्धितार्थ-' इत्यत्र 'उक्तत्रिविधः संख्यापूर्वः' इति व्याख्यानात् ॥ द्विगोस्तत्पुरुषत्वे फलमाह—**समासान्त इति** । टजचावित्यर्थः । अचि तूदाहरणम्—'तत्पुरुषस्याङ्गुलेः-११३२' इत्यचि द्व्यङ्गुलमिति बोध्यम् ॥ **पञ्चराजमिति** । समाहाराद्विगौ 'राजाहःसखिभ्यः-११३४' इति टच् समासस्यैवायमन्तावयव इति उत्तरपदस्यानकारान्तत्वात् स्त्रीत्वाभावः । 'समासार्थोत्तरपदान्ताः समासान्ताः' इति पक्षे तु अकारान्तोत्तरपदत्वेऽपि 'पात्रादित्वान्नेति बोध्यम् ॥ काशिकायां तु--पञ्चराजीत्युदाहृतम् । स क्वाचित्कोऽपपाठ इति हरदत्तः ॥ अत्र केचित्--पात्रादित्वकल्पने मानाभावात्पञ्चराजीति काशिकोक्तोदाहरणमपि सम्यगेवेत्याहुः ॥ ( ९९३ ) **द्वितीया श्रितातीत—**। श्र्यादीनां गतिविशेषवाचित्वात् 'गत्यर्थाकर्मक-४१०४' इति कर्तरि क्तः ॥ 'प्रत्ययग्रहणे तदन्तग्रहणम् ६२१' इत्याशयेनाह—**द्वितीयान्तमिति** ॥ **श्रितादिप्रकृतिकैरिति** । यद्यपि संबोधने सुबन्तत्वं संभवति तथाप्यन्यत्रापि समासस्येष्टत्वात् श्रितादयस्तद्घटितसमुदाये लाक्षणिका इह गृह्यन्त इति भावः । एवं 'खट्वा क्षेपे ९९६' 'गर्गादिभ्यो यञ् १५८३' इत्यादावप्यूह्यम् । न हि खट्वेत्यस्य द्वितीयान्तत्वं, गर्गादीनां षष्ठ्यन्तत्वं वा संभवति । स्यादेतत्, द्वितीयान्तस्य श्रितप्रकृतिकसुबन्तेन समासे काष्ठश्रितेयो न सिध्येत्[1] । श्रितशब्दाट्टापि ततः सुपि काष्ठ श्रिता काष्ठश्रितेति समासे श्रिताशब्दस्यैव टाबन्तत्वात् ततः 'स्त्रीभ्यो ढक् १६०१' इति ढकि काष्ठश्रैतेय इति स्यात् । 'गतिकारकोपपदानाम्-११२८' इति सुबुत्पत्तेः प्राक् कृदन्तेन समासे तु श्रितान्तस्य टाबन्तत्वादिष्टं सिध्यतीति चेत् । मैवम्, प्रधानस्त्रीप्रत्यये तदादिनियमाभावेन काष्ठश्रितेयस्य[2] निर्बाधत्वात् । न च कदाचित् श्रिताशब्दादपि ढक् स्यादिति वाच्यम्, जहत्स्वार्थायां वृत्तौ श्रिताशब्दस्यानर्थकत्वेनापत्ययोगासंभवात् । अजहत्स्वार्थायामपि न दोषः, समुदायावयवसंनिधौ समुदायस्यैव कार्यप्रयोजकत्वात् । अन्यथा सुन्दरदुहितुरपत्यं सुन्दरदौहित्र इत्यापत्तेरिति दिक् ॥ **कृष्णं श्रित इति** । 'न लोका-९१५' इति षष्ठीनिषेधः ॥ **कृष्णश्रित इति** । 'प्रथमानिर्दिष्टम्-९५४' इति द्वितीयान्तस्य पूर्वनिपातः । यद्यपीह श्रितशब्दोऽपि प्रथमानिर्दिष्टस्तथापि 'समासविधायके प्रथमानिर्दिष्टमुपसर्जनम्' इत्युक्तमिति नास्त्यतिप्रसङ्गः । नन्वेवमव्ययादीनामुपसर्जनसंज्ञार्थम् 'अव्ययं विभक्ति-९५३' इत्यादिना समासविधानस्यावश्यकत्वात् 'सुप्सुपा ९४९-२' इति समासस्यानित्यत्वे प्रागुक्तज्ञापकं न संभवत्येव , तथा चाव्ययीभावतत्पुरुषादिसमासाभावपक्षे 'सुप्सुपा ९४९-२' इति समासप्रवृत्त्या अप विष्णोः, परि विष्णोः, कृष्णं श्रितः, राज्ञः पुरुष इत्यादिविग्रहवाक्यानि न सिध्येरन्निति चेत् । अत्राहुः--पुनः समासविधानं न केवलमुपसर्जनसंज्ञार्थं, तस्याः प्रकारान्तरेणापि सिद्धेः । तथाहि-'प्राक्कडारात्समासः ९४८' इत्यनन्तरं 'प्रथमानिर्दिष्टमुपसर्जनम्' 'एकविभक्ति चापूर्वनिपाते ९५५' इति पठित्वा समासाधिकारे प्रथमानिर्दिष्टमिति व्याख्यायामुपसर्जनसंज्ञा सिध्यत्येव, विभक्त्यर्थादिषु विद्यमानमव्ययं सुबन्तेन चेत् समस्यते स समासोऽव्ययीभावः स्यात्, द्वितीयान्तं चेत्समासस्तत्पुरुषः, इत्येवं व्याख्यानादव्ययीभावतत्पुरुषादिसंज्ञाऽपि सिध्यतीति पुनः समासविधानं व्यर्थं सज्ज्ञापयतीति ॥ ननु 'अव्ययं विभक्ति-९५३' इत्यादीनां समासविधायकत्वे सिद्धे भवदुक्तमेतत्स्यात् । तत्रैव मानं न पश्याम इति चेत् । अत्र केचित्-उक्तरीत्यैवोपसर्जनसंज्ञायां सिद्धायां 'प्रथमानिर्दिष्टम्-९५४' इति सूत्रे समासग्रहणं व्यर्थं सत्समासविधायके प्रथमानिर्दिष्टमित्यर्थलाभार्थं तेनामीषां समासविधायकत्वं सिध्यतीति । अथवा-'सुप्सुपा ९४९-२' इति समासस्यानित्यत्वे आकरग्रन्थ एव प्रमाणम्, अन्यथा 'सिन्नित्यसमासयोः' इति वार्तिके 'नित्यग्रहणे नार्थः । इदमपि सिद्धं भवति वाप्यामश्वो वाप्यश्वः' इत्यादिप्रागुक्तभाष्यकैयटग्रन्थस्यासामञ्जस्यापत्तेरिति दिक् ॥ ननु कृष्णश्रित इत्यस्य कृष्णकर्मकश्रयणकर्तेति ह्यर्थः, स च कृष्णः श्रितो येनेति कर्मणि क्तान्तेन बहुव्रीहिणाऽपि सुलभ इति किमनेन समासारम्भेण । मैवम् , बहुव्रीहौ श्रितकृष्ण इति निष्ठान्तस्य पूर्वनिपातप्रसङ्गात् । 'शेषाद्विभाषा १२७४' इति समासान्तः कप् प्रसज्येतेति दिक् ॥ **दुःखातीत इति** । अतिपूर्वकादिणः कर्तरि क्तः । अवशिष्टान्यप्युदाहरणान्यूह्यानि--।

---

१ **न सिध्येदिति** । श्रितशब्देन समासे ततष्टापि समुदायस्य स्त्रीप्रत्ययान्तत्वाद् ढक्सिद्धिः । श्रिताशब्देन समासे तु समुदायस्य टाबन्तत्वाभाव इति भावः ॥ २ **काष्ठश्रितेयस्येति** । 'स्त्रीप्रत्यये चानुपसर्जने न' इति परिभाषयाऽनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन काष्ठश्रितेतिसमुदायस्यैव स्त्रीप्रत्ययान्तत्वेन समुदायादेव ढकि समुदायस्यैवाङ्गत्वेन समुदायादेरेव वृद्धिरिति काष्ठश्रितेयस्य सिद्धिर्निर्बाधैवेति भावः ॥

(९९४) (वा) गम्यादीनामुपसंख्यानम् ॥ ग्रामं गमी–ग्रामगमी । अन्नं बुभुक्षुः–अन्नबुभुक्षुः ॥ (९९५) (सू) स्वयं क्तेन । २ । १ । २५ । द्वितीयेति न संबध्यते, अयोग्यत्वात् । स्वयंकृतस्यापत्यं स्वायंकृतिः ॥ (९९६) (सू) खट्वा क्षेपे । २ । १ । २६ । खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन समस्यते निन्दायाम् । खट्वारूढो जाल्मः । नित्यसमासोऽयम् । नहि वाक्येन निन्दा गम्यते ॥ (९९७) (सू) सामि । २ । १ । २७ । सामिकृतम् (९९८) (सू) कालाः । २ । १ । २८ । क्तेनेत्येव । अनत्यन्तसंयोगार्थं वचनम् । मासप्रमितः प्रतिपच्चन्द्रः । मासं परिच्छेत्तुमारब्धवानित्यर्थः॥(९९९)(सू)अत्यन्तसंयोगे च ।२।१।२९। काला इत्येव । अक्तान्तार्थं वचनम् । मुहूर्तं सुखं-मुहूर्तसुखम् ॥(१०००) (सू) तृतीया तत्कृतार्थेन गुणवचनेन।२।१।३०। तत्कृतेति लुप्ततृतीयाकम् । तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थशब्देन च सह प्राग्वत् । शंकुलया खण्डः-शंकुलाखण्डः । धान्येनार्थो-धान्यार्थः । तत्कृतेति किम् । अक्ष्णा काणः॥(१००१)(सू)पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः।२।१।३१। तृतीयान्तमेतैः प्राग्वत् ।

---

कूपपतितः । यद्यपि 'तनिपतिदरिद्रातिभ्यः–३४८२' इति विकल्पितेट्त्वात् 'यस्य विभाषा ४०३६' इतीण्निषेधेन भाव्यम्, तथाप्यत एव निपातनादिडित्याहुः ॥ वस्तुतस्तु–चुरादावदन्तेषु पठितस्य 'पत गतौ च' इत्यस्याश्रयणेन पतितः सिध्यति, 'यस्य विभाषा ४०३६' इत्यत्रैकाच इत्यनुवृत्तेः सर्वसंमतत्वात् । ग्रामगतः । तुहिनात्ययः । अत्यासो व्यतिक्रमः । सोऽपि गतिविशेष एवेति कर्तरि क्तः, आदिकर्मणि क्तो वाऽत्राभ्युपेयः । सुखप्राप्तः । दुःखापन्नः॥ (९९४) गम्यादीनामिति । गम्यादयश्च प्रयोगतो ज्ञेयाः ॥ ग्रामगमीति । 'गमेरिनिः४६४९' इत्यौणादिक इनिः । स च 'भविष्यति गम्यादयः ४९५८' इति भविष्यत्काले । 'अकेनोः–९२०' इति षष्ठीनिषेधात्कर्मणि द्वितीया ॥ (९९५) स्वयं क्तेन । अयोग्यत्वादिति । स्वयमित्यस्यात्मनेत्यर्थकस्य कर्त्रर्थतया द्वितीयान्तत्वानुपपत्तिरिति भावः ॥ स्वायंकृतिरिति । असति समासे कार्तिरिति स्यादिति भावः ॥ खट्वारूढ इति । 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः । वेदं व्रतानि च समाप्य समावृत्तेन हि खट्वाऽऽरोढव्या । ब्रह्मचर्य एव भूमिशयनार्होऽपि यः खट्वामारोहति स जाल्मः । रूढश्चायम् । तेन खट्वामारोहतु मा वा, निषिद्धानुष्ठानपरः सर्वोऽपि खट्वारूढ इत्युच्यते । अत एवाह—नित्येति ।(९९७) सामि । सामीत्येतदव्ययमर्धशब्दपर्यायः ॥ (९९८) कालाः । बहुवचननिर्देशः स्वरूपनिरासार्थः कालवाचिनो द्वितीयान्ताः क्तान्तेन सह वा समस्यन्त इति सूत्रार्थः । ननु 'काला अत्यन्तसंयोगे' इत्येवास्तु, क्तेनेति निवृत्तम्, नार्थो योगविभागेनेत्यत आह—अनत्यन्तेति । मासप्रमित इति । 'माङ् माने' । 'आदिकर्मणि क्तः कर्तरि च ४०६७' । इह प्रतिपच्चन्द्रेण नास्त्यत्यन्तसंयोगः ॥ (९९९) अत्यन्तसंयोगे च । मुहूर्त्तमिति । मुहूर्तव्यापीत्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे ८११' इति द्वितीया (१०००) तृतीया तत्कृता-। लुप्तेति । सौत्रत्वादिति भावः । तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते तदर्थकृतत्वं च गुणवाचकस्यार्थद्वारा विशेषणम् । तृतीयान्तार्थकृतो यो गुणस्तद्वचनेनेति । तदेतद्व्याचष्टे—तृतीयान्तान्तार्थेत्यादिना ॥ अर्थशब्देन चेति । सोऽपि स्वतन्त्रं निमित्तमिति भावः ॥ नन्वर्थेन समासासंभवात्तद्वाची शब्दो ग्रहीष्यते किमत्र वचनग्रहणेन । अत्राहुः–गुणमुक्तवान् गुणवचनः । 'कृत्यल्युटो बहुलम् ३७८६' इति भूते कर्तरि ल्युट् । [1]गुणमुक्त्वा यो द्रव्यमुक्तवान् स गुणवचनस्तेन घृतेन पाटवमिति गुणमात्रनिष्ठेन समासो न भवति । गुणश्चात्र'सत्त्वे निविशतेऽपैति–' इत्यादिलक्षणलक्षितो गृह्यते, न तु प्रवृत्तिनिमित्तं घटत्वादिस्तत्कृतत्वासंभवादिति ॥ शङ्कुलया खण्ड इति । करणेऽत्र तृतीया । 'खडि भेदने' इत्यस्माद्भावे घञि व्युत्पादितः खण्डशब्दः क्रियारूपापन्ने गुणे वर्तित्वा पश्चान्मत्वर्थलक्षणया तद्वति द्रव्ये वर्तत इति गुणवचनो भवति ॥ धान्येनेति । करणे तृतीया । अर्थ्यत इत्यर्थः प्रयोजनम् । कर्मणि घञ् । अर्थनमर्थः अभिलाषो वा । भावे घञ् । अर्थशब्दस्य रूढत्वे तु धान्येनेति हेतौ तृतीया, 'कर्तृकरणे कृता–१००४' इत्यनेन गतार्थत्वशङ्कैवात्र नेति रूढत्वाभ्युपगमपक्ष एव श्रेयान् ॥ तत्कृतेति किमिति । 'कर्तृकरणे कृता–१००४' इति सिद्धमिति प्रश्नः । इतरो गुणवचनेन चेत्तत्कृतेनैवेति नियमार्थमिदमित्याशयेन प्रत्युदाहरति—अक्ष्णेति । न ह्यक्ष्णा काणत्वं कृतं किन्तु कर्मादिनैवेति भावः ॥ तृतीया त्विह 'येनाङ्गविकारः ८२७' इत्यनेन ॥ काण इति । 'कण निमीलने' इत्यस्माद्धञ् गुणवचनत्वं तूक्तरीत्या खण्डशब्दस्येवास्यापि बोध्यम् । गुणवचनेनेति किम्, गोभिर्वपावान् । गोसंबन्धिदध्यादिभोजनेन देवदत्तस्य वपावत्त्वमित्यस्ति तत्कृतत्वं, न त्वसौ गुणवचनः ॥ (१००१) पूर्वसदृश—। इह समसदृशाभ्यां योगे 'तुल्यार्थैः–९२३'इति तृतीया । अन्यैर्योगे त्वत एव वचनात्, 'हेतौ ८२३' इति वा तृतीया । इह सदृशग्रहणं व्यर्थं षष्ठीसमासेन गतार्थत्वात्। न च 'तत्पुरुषे तुल्यार्थतृतीया–५७०२'इति पूर्वपदप्रकृतिस्वरार्थमिदमिति वाच्यम्, 'सदृशप्रतिरूपयोःसादृश्ये५७१२'

---

१ गुणमुक्त्वेति । गुणपदेन धर्ममात्रमत्र गृह्यते । तेन खण्डशब्दस्य क्रियावचनत्वेऽपि न दोषः । 'कथं पुनरयं गुणवचनः सन् द्रव्यवचनः संपद्यते इति पूर्वपक्षे 'आरभ्यते तत्र मतुब्लोपः—गुणवचनेभ्यो मतुपो लुग्–इति' इति भाष्यसमाधानानुसारेण गुणोपसर्जनद्रव्यवचन एवात्र गुणवचनशब्देन गृह्यते, यौगिकत्वाच्च न पारिभाषिकगुणवचनस्य ग्रहणमिति भावः ॥

मासपूर्वः । मातृसदृशः । पितृसमः । ऊनार्थे-माषोनं कार्षापणम् । माषविकलम् । वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः । ( १००२ ) मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्, मिश्रं चानुपसर्गमसन्धाविस्यत्रानुपसर्गग्रहणात् । गुडसंमिश्राः धानाः ॥ ( १००३ ) (वा) **अवरस्योपसंख्यानम्** ॥ मासेनावरो-मासावरः ॥ ( १००४ ) (सू) **कर्तृकरणे कृता बहुलम्** ।२।१।३२। कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो-हरित्रातः । नखैर्भिन्नो-नखभिन्नः ॥ ( १००५ ) (प) **कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्** । नखनिर्भिन्नः । कर्तृकरणे इति किम् । भिक्षाभिरुषितः । हेतावेषा तृतीया । बहुलग्रहणं सर्वोपाधिव्यभिचारार्थम् । तेन दात्रेण लूनवानित्यादौ न । कृता किम् । काष्ठैः पचतितराम् ॥ ( १००६ ) (सू) **कृत्यैरधिकार्थवचने** । २।१।३३। स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनं तत्र कर्तरि करणे च तृतीया कृत्यैः सह प्राग्वत् । काकपेया नदी । वातच्छेद्यं तृणम् ॥ ( १००७ ) (सू) **अन्नेन व्यञ्जनम्** । २ । १ । ३४। संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन प्राग्वत् । दध्ना ओदनो-दध्योदनः । इहान्तर्भूतोपसेकक्रियाद्वारा सामर्थ्यम् ॥ ( १००८ ) (सू) **भक्ष्येण मिश्रीकरणम्** ।२।१।३५। गुडेन धानाः-गुडधानाः । मिश्रणक्रियाद्वारा सामर्थ्यम् ॥ (१००९) (सू) **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** ।२।१।३६। चतुर्थ्यन्तार्थाय यत्तद्वाचिनाऽर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् ॥ (१०१०) तदर्थेन प्रकृतिविकृतिभाव एव गृह्यते। बलिरक्षितग्रहणाज्ज्ञापकात् ।

---

इति सूत्रेण तत्सिद्धेरिति मनोरमायां स्थितम् । विद्यया सदृशो विद्यासदृश इत्यादौ हेतुत्वप्रकारकबोधार्थं तृतीयासमासोऽप्यावश्यक इति त्वन्ये ॥ पूर्वसूत्रेणैव तत्कृतत्वात्तृतीयासमासोऽपि सिध्यतीत्यपरे ॥ **ऊनार्थ इति** । पूर्वसूत्रेऽर्थशब्देन समासस्योक्तत्वादिहार्थग्रहणमभिधेयपरम् । तच्चोनशब्देनैव संबध्यते, न तु पूर्वादिभिः । समसदृशयोः पृथग्ग्रहणादिति भावः ॥ ( १००२ ) **मिश्रं चेति** । 'पणबन्धेनैकार्थ्ये संधिस्तत्राप्रयुज्यमानो मिश्रशब्द उपसर्गरहितोऽन्तोदात्तः' इति सूत्रार्थः ॥ ( १००३ ) **अवरस्येति** । अत्र व्याचक्षते ऊनार्थेत्येव सिद्धत्वादिदं सुत्यजमेव । न चावरशब्दस्योनार्थकत्वमप्रसिद्धमिति वाच्यम्, 'सप्तदशावराः सत्रमासीरन्' इति श्रुतौ 'अव्यक्तानुकरणाद् द्व्यजवरार्धात्-२८६८' इति सूत्रे च तत्प्रसिद्धेरिति ॥ ( १००४ ) **कर्तृकरणे**—। समाहारद्वन्द्वात्सप्तमीत्याशयेनाह—**कर्तरि करणे चेति** । अत्र केचित्-कर्तृकरणे इति प्रथमाद्विवचनं तृतीयया विशेष्यते, विशेषणेन च तदन्तविधिस्तेन तृतीयान्ते कर्तृकरणे कृदन्तेन समस्येते इति व्याख्यान्तरमित्याहुः ॥ **सर्वोपाधीति** । कर्तरि करणे च या तृतीया तदन्तमपि बहुलग्रहणात् क्वचिन्न समस्यते । क्वचित्तु विभक्त्यन्तरमपि समस्यते बहुलग्रहणादेवेत्यर्थः ॥ समासाभावं प्रदर्शयति—**दात्रेण लूनवानित्यादाविति** । आदिशब्देन दात्रेण छिन्नवान्, हस्तेन कुर्वन् इत्यादि ग्राह्यम् । विभक्त्यन्तरमपि समस्यत इत्यस्योदाहरणं तु पादहारकः । गलेचोपकः । ह्रियत इति हारकः । बाहुलकात्कर्मणि ण्वुल् । पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः 'चुप मन्दायां गतौ' हेतुमण्णिजन्तात्कर्मणि ण्वुल् । 'अमूर्धमस्तकात्-१३९२' इत्यलुक् कर्तृत्वकरणत्वयोः क्रियानिरूपितत्वेन क्रियासमर्पककृदन्तेनैव भवेत्समासः, 'सुपा' इत्यधिकारात्तिङन्तेन तु नातिप्रसङ्ग इत्याशयेन पृच्छति-**कृता किमिति** । इतरस्तु तिङन्तप्रकृतिकसुबन्तेनासमासस्तत्फलमित्याशयेन प्रत्युदाहरति—**काष्ठैरिति** ॥ ( १००६ ) **कृत्यैरधिकार्थ**—। पूर्वसूत्रस्यैव प्रपञ्चोऽयं, न तु नियमार्थमित्याहुः ॥ **काकपेयेति** । 'शकि लिङ् च ३७६१' इति शक्यार्थे कृत्यः । पूर्णतोयत्वात्तटस्थैः काकैरपि पातुं शक्येति स्तुतिः। अल्पतोयत्वेन निन्दा वा ॥ **वातच्छेद्यमिति** । पूर्ववत् कृत्यः । कोमलत्वाद्वातेनापि छेत्तुं शक्यत इति स्तुतिः । वातेनापि छेत्तुं शक्यते निर्बलत्वादिति निन्दा वा ( १००७ ) **अन्नेन**-। 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री' इत्यमरः॥ व्याख्यानान्नेह स्वरूपग्रहणं तदाह—**संस्कारकेत्यादि** ॥ ( १००८ ) **भक्ष्येण** । खरविशदमभ्यवहार्यं भक्ष्यम् । खरं कठिनं विशदं विविक्तावयवं खाद्यं भक्ष्यमित्यर्थः । यत्प्रत्ययान्तस्य एरजन्तस्य च भक्षयतेस्तत्रैव प्रयोगात् । अब्भक्ष इत्यादिप्रयोगस्तु भाक्तः ॥ **गुडधाना इति** । ननु धानानां प्रत्येकं विभक्तावयवत्वाभावात् कथमेतदुदाहरणं संगच्छत इति चेत् । मैवम्, भृष्टयवसमुदायस्य धानात्वात्समुदायं प्रति समुदायिनामवयवत्वाच्च तदुपपत्तेः ॥ (१००९) **चतुर्थी तदर्थार्थ**-। तच्छब्देन प्रकृता चतुर्थी परामृश्यते, प्रत्ययग्रहणात्तदन्तग्रहणम्, चतुर्थ्यन्तेन सामर्थ्यात्तदर्थो लक्ष्यत इत्याशयेनाह—**चतुर्थ्यन्तार्थाय यदिति**। चतुर्थ्यन्तवाच्याय

---

१ **अनुपसर्गेति** । 'समासप्रत्ययविधौ प्रतिषेधः' इति तदन्तविधिप्रतिषेधात् सोपसर्गेण समासाप्राप्तावनुपसर्गग्रहणं व्यर्थं सत् सोपसर्गस्यापि ग्रहणं ज्ञापयतीति भावः ॥ २ **कृद्ग्रहण इति** । यत्र गतिकारकसमभिव्याहृतं कृदन्तम्, तत्र गतिकारकविशिष्टस्यैव कृदन्तस्य ग्रहणम् । अपिशब्दात्तदसमभिव्याहारे केवलस्यापि इत्यर्थः ॥ ३ **अन्नेनेति** । उत्तरत्र 'भक्ष्येण' इत्युक्तेरत्र न योगोऽङ्गीक्रियते किन्तु रूढिरेव । तथाचान्नशब्द ओदनपर एव, तथैव भाष्य उदाहृतत्वात् ॥ ४ **इहान्तरिति** । उपसेकक्रियां विना दध्नः संस्कारकत्वम् ओदनस्य संस्कार्यत्वं च न प्रतीयेतेति भावः ॥ ५ **सुत्यजमेवेति** । इदं तु चिन्त्यम् । व्यवस्थाविषयावरशब्दार्थमस्यावश्यकत्वात् । "तृतीया तत्कृतार्थेन" इत्यत्रत्यार्थग्रहणस्य योगविभागेनार्थशब्देन समासविधानफलप्रदर्शकस्य 'पूर्वसदृशसमोनार्थ-' इत्यर्थग्रहणं न कर्तव्यं भवति, इति भाष्यस्य तु अर्थशब्दस्य समासार्थयोगाङ्गत्वप्रत्याख्याने तात्पर्येण न ऊनपर्यायग्रहणप्रत्याख्याने तात्पर्यम् । अत एव 'एकादिश्चादुक्' इति संगच्छते इति ध्येयम् ॥ ६ **अल्पतोयत्वेनेति** । इतरपानयोग्यत्वाभावेन काकैरेवात्यल्पजलत्वेन पेयेति निन्देति भावः ॥ ७ **निर्बलत्वादिति** । निःसारत्वादिति तूचितम् ॥

यूपाय दारु यूपदारु। नेह। रन्धनाय स्थाली। अश्वघासादयस्तु षष्ठीसमासाः ॥ ( १०११ ) वा० अर्थेन नित्यसमासो विशेष्य[1]लिङ्गता चेति वक्तव्यम् ॥ द्विजायायं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम् ॥(१०१२) सू० पञ्चमी भयेन।२।१।३७। चोराद्भयं चोरभयम् ॥(१०१३) वा० भयभीतभीतिभीभिरिति वाच्यम्॥ वृकभीतः। वृकभीतिः। वृकभीः॥(१०१४) सू० अपेतापोढमुक्तपतितापत्रस्तैरल्पशः।२।१।३८। एतैः सहाल्पं पञ्चम्यन्तं समस्यते स तत्पुरुषः। सुखापेतः। कल्पनापोढः। चक्रमुक्तः। स्वर्गपतितः। तरङ्गापत्रस्तः। अल्पशः किम्। प्रासादात्पतितः ॥ (१०१५) सू० स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन।२।१।३९। स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छ्रादागतः। पञ्चम्याः स्तोकादिभ्य इत्यलुक् ॥(१०१६) सू० षष्ठी।२।२।८। राज्ञः पुरुषो-राजपुरुषः ॥ (१०१७) सू० याजकादिभिश्च।२।२।९। एभिः षष्ठ्यन्तं समस्यते। तृजकाभ्यां कर्तरीत्यस्य प्रतिप्रसवोऽयम्। ब्राह्मणयाजकः॥ देवपूजकः (१०१८) वा० गुणात्तरेण तरलोपश्चेति वक्तव्यम् ॥ तरबन्तं यद्गुणवाचि तेन सह समासस्तरप्प्रत्ययलोपश्च। न निर्धारणे इति पूरणगुणेति च निषेधस्य प्रतिप्रसवोऽयम्। सर्वेषां श्वेततरः-सर्वश्वेतः। सर्वेषां महत्तरः-सर्वमहान्॥(१०१९) वा० कृद्योगा षष्ठी समस्यत

---

यूपाय यद्दार्वादि तद्वाचिना चतुर्थ्यन्तं समस्यत इत्यर्थः ॥ ( १०१० ) **बलिरक्षितग्रहणादिति**। हितसुखग्रहणं तु न ज्ञापकं तद्योगे 'चतुर्थी चाशिषि-९२४' इति अतादर्थ्येऽपि चतुर्थीसंभवादिति भावः ॥ ननु 'चतुर्थी चाशिषि-९२४' इति विहिता या चतुर्थी तदन्तस्य समासो न भवति, समासादाशिषोऽनवगमादिति केचिदाहुरिति कैयटेनोक्तम्। ततश्च तत्पक्षे हितसुखग्रहणमपि बलिरक्षितग्रहणवज्ज्ञापकमेवेति चेत्। अत्र नव्याः ब्राह्मणाय हितं ब्राह्मणहितम्। गोहितम्। गोसुखमित्यतादर्थ्यचतुर्थ्यन्तेनापि समासः स्वीक्रियते। सा चातादर्थ्यचतुर्थी 'हितयोगे च ८४६' इति वार्तिकात्, 'चतुर्थी तदर्था-१००९' इत्यादिना हितसुखशब्दाभ्यां समासविधानाज्ज्ञापकाद्वा संभवतीति हितसुखग्रहणं न ज्ञापकमिति सम्यगेवेत्याहुः ॥ **यूपायेति**। तादर्थ्ये चतुर्थी। एवमग्रेऽपि यथासंभवमूह्यम् ॥ **अश्वघासादय इति**। एतच्च भाष्यकृतोक्तम् ॥ नन्वेवं रन्धनाय स्थालीत्यत्रापि षष्ठीसमासः स्यादेवेति प्रकृतिविकृतिभाव एवेति नियमो निष्फल एव। न च स्वरे विशेषः, 'चतुर्थी तदर्थे ५७४६' इति पूर्वपदप्रकृतिस्वरस्यापि प्रकृतिविकृतिभाव एवेष्यमाणत्वात्। अत्राहुः—'संबन्धत्वतादर्थ्यत्वकृतवैलक्षण्येनोक्तानियमसाफल्यान्न दोषः। अत्र च मानमेतदेव भाष्यम्। न माषाणामश्नीयात् 'दाशरथाय मैथिली' इत्यादिप्रयोगा अपि इत्थमेव विवक्षाभेदेन निर्वाह्याः। एवं च 'पूर्वसदृश-१००१' इति सूत्रे सदृशग्रहणं व्यर्थमिति कैयटहरदत्तादीनामुक्तिः प्रामादिकीत्यवधेयम्। शाब्दबोधकृतवैलक्षण्यस्य तत्रापि सत्त्वादिति ॥ ( १०११ ) **अर्थेन नित्येति**। अन्यथा विभाषाधिकारात्पक्षे द्विजायार्थ इति प्रयोगः स्यादिति भावः ॥ **विशेष्यलिङ्गता चेति**। वचनाभावे त्वर्थशब्दस्य नित्यपुंस्त्वात् 'परवल्लिङ्गम्-११६३' इति सर्वत्र पुँल्लिङ्गप्रयोग एव स्यादिति भावः ॥ ( १०१२ ) **पञ्चमी भयेन**। भयेति स्वरूपग्रहणं नार्थस्य, प्रमाणाभावात्, 'भयभीत—१०१३' इति वार्तिकारम्भाच्च। तेन वृकात्त्रास इत्यादौ समासो न। कथं तर्हि 'भोगोपरतो ग्राम[3]निर्गतः' इत्यादिप्रयोगाः। अत्राहुः—बहुलग्रहणात् 'क्वचिद्विभक्त्यन्तरमपि कृता समस्यते' इति प्रागेवोक्तत्वात्। 'सुप्सुपा ९४९-२' इत्यनेन वा तदुपपत्तिरिति ॥ ( १०१४ ) **अपेतापोढ--**। पञ्चमीति वर्तते, प्रत्ययग्रहणात्तदन्तग्रहणम्। अल्पश इत्यत्र 'बह्वल्पार्थाच्छस्कारकात्-२८४५' इति शस्। यद्यपि 'बह्वल्पार्थान्मङ्गलामङ्गलवचनम् २८४६' इति वक्ष्यति, तथाप्यत एव निपातनाच्छसिति बोध्यम् ॥ कारकत्वं तु समसनक्रियां प्रति पञ्चम्यन्तस्य कर्मत्वात्तदविधायित्वाच्चाल्पशब्दस्य तदेतदाह—**अल्पं पञ्चम्यन्तमिति** ॥ ( १०१५ ) **स्तोकान्तिक-**। **स्तोकान्मुक्त इत्यादि**। 'करणे च स्तोकाल्प-८८५' इति पञ्चमी। दूरादागत इत्यादौ तु 'दूरान्तिकार्थेभ्यः-८८६' इत्यनेन ॥ ( १०१६ ) **षष्ठी**। **राजपुरुष इति**। राजन् अस्-पुरुष सु इत्यलौकिकविग्रहे समासे कृते सुपो लुक्यन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपः ॥ ( १०१७ ) **याजकादिभिश्च**। याजक। पूजक। परिचारक। परिवेषक। स्नातक। अध्यापक। उत्पादक। होतृ। पोतृ। भर्तृ। रथगणक। पत्तिगणक। वृत्॥ (१०१८) **गुणात्तरेणेति**। एतच्च वार्तिकं 'सर्वं गुणकार्त्स्न्ये' इत्यत्र पठि[4]तम् ॥ (१०१९) **कृद्योगा षष्ठीति**। 'कर्तृकर्मणोः कृति ९०७' इति कृत्संनियोगेन कृतेत्यर्थः। यदा तु 'प्रतिपदविधाना-१०२१' इत्यादिनिषेधवचनमारभ्यते, तदेदं तद्बाधनायारब्धव्यम्। तस्यै-

---

१ **विशेष्यलिङ्गतेति**। एतदेवात्र विधेयम्। समासनित्यत्वं तु चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहाप्राप्त्या न्यायसिद्धमेवेति बोध्यम् ॥ २ **अल्पमिति**। कतिपयान्येव पञ्चम्यन्तानि समस्यन्ते न सर्वाणीत्यर्थः। सर्वत्रैव लक्ष्यानुसारेणैव व्यवस्थायाः कर्तव्यत्वेन चिन्त्यमेवेदमिति ध्येयम् ॥ ३ **ग्रामनिर्गत इति**। अत्रास्योपन्यासः 'अपर आह—भयनिर्गतजुगुप्सुभिरिति वक्तव्यम्। वृकभयम्। ग्रामनिर्गतः। अधर्मजुगुप्सुः ॥' इति भाष्यादर्शनमूलक इति ध्येयम् ॥ ४ **पठितमिति**। तेन ततः सर्वपदानुवृत्तेः सर्वशब्द एवेदमिति गुणबोधकाद्विहितो यस्तरप् तदन्तेन सर्वशब्दस्य समास इति बाच्योऽर्थः ॥

इति वाच्यम् ॥ इध्मस्य व्रश्चनः-इध्मव्रश्चनः ॥ ( १०२० ) (सू.) न निर्धारणे । २ । २ । १० । निर्धारणे या षष्ठी सा न समस्यते । नृणां द्विजः श्रेष्ठः ॥ (१०२१) (वा.) प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम् ॥ सर्पिषो ज्ञानम् ॥ ( १०२२ ) (सू.) पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन । २ । २ । ११ । पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते । पूरणे-सतां षष्ठः । गुणे-काकस्य कार्ष्ण्यम् । ब्राह्मणस्य शुक्लाः । यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणम् । अनित्योऽयं गुणेन[1] निषेधः, तदशिष्यं संज्ञाप्रमाणत्वादित्यादिनिर्देशात् । तेनानारभ्यत्वपदं वक्ष्यामः ॥

---

इध्मव्रश्चन इति । वृश्च्यते छिद्यतेऽनेनेति व्रश्चनः कुठारादिः, करणे ल्युट् । इध्मानामिति कर्मषष्ठ्यन्तस्यानेन समासः ॥ (१०२०) न निर्धारणे । नृणामिति । 'यतश्च निर्धारणम् ९३७' इति षष्ठी । द्विजशब्देनात्र समासप्रसङ्गस्तदपेक्षया हि षष्ठी । श्रेष्ठत्वं द्विजेतरमनुष्येभ्यः, तेषां सामान्यशब्देनोपस्थितया तान्विहायानुपस्थितकल्पनाया अन्याय्यत्वात् । अथ कथं पुरुषोत्तम इति । यस्मान्निर्धार्यते, यश्चैकदेशो निर्धार्यते, यश्च निर्धारणहेतुः, एतात्रितयसंनिधाने सत्येवायं निषेध इति 'द्विचनाविभज्योप-' इति सूत्रे कैयटः ॥ अन्ये तु-पुरुषेषूत्तम इति निर्धारणसप्तम्याः 'संज्ञायाम् १०४५' इति समासः । न चैवं 'न निर्धारणे १०२०' इति व्यर्थम्, स्वरे भेदात् । सप्तमीसमासे हि 'तत्पुरुषे तुल्यार्थ-५७०२' इत्यादिना पूर्वपदप्रकृतिस्वरः, षष्ठीसमासे तु 'समासस्य ५७००' इत्यन्तोदात्तत्वं स्यात्तच्चानिष्टमित्याहुः । तन्मन्दम्, 'संज्ञायाम् १०४५' इति समासस्य नित्यत्वेन स्वपदविग्रहासंगतिप्रसङ्गात् । तस्मात्कैयटोक्तसमाधानमेव समीचीनमिति नव्याः[2] ॥ ( १०२१ ) प्रतिपदविधानेति । पदं पदं प्रति विहिता प्रतिपदविधाना । 'षष्ठी शेषे ८८७' इति विहायान्येन 'ज्ञोऽविदर्थस्य-८९५' इत्यादिना विहिता सर्वैव षष्ठीत्यर्थः । धातुकारकविशेषं गृहीत्वैव 'ज्ञोऽविदर्थस्य-८९५' इत्यादिना षष्ठी विधीयते इति भवति तस्याः प्रतिपदविधानत्वम् ॥ नन्वनेनैव गतार्थत्वात् 'न निर्धारणे १०२०' इति व्यर्थमिति चेत् । अत्राहुः—'यतश्च निर्धारणम् ९३७' इति सूत्रं न षष्ठीं विधत्ते, किं तु सप्तमीमेव । षष्ठी तु तया मा बाधीति प्रतिप्रसूयते इत्यन्यदेतत् । एवं 'स्वामीश्वराधिपति-९३४' इत्यादिष्वपि । तेन गृहस्वामी । सर्वेश्वरः । निषादाधिपतिरित्यादि सिद्धमिति ॥ वस्तुतस्तु 'ज्ञोऽविदर्थस्य-८९५' इत्यादिचतुर्दशसूत्रीमध्ये 'दिवस्तदर्थस्य ९०३' इत्यादिषट्सूत्रीं विहायावशिष्टायामष्टसूत्र्यां 'शेषे' इति वर्तते, तथा च 'न माषाणामश्नीयात्' इत्यादाविव 'षष्ठी शेषे ८८७' इत्येव सिद्धे नियमार्थं प्रकरणम्, 'इह षष्ठ्येव न तु तल्लुक्' इति । तथा च लुकः प्रयोजकीभूतः समास एव नेति फलितोऽर्थः । ततश्च 'प्रतिपदविधाना-१०२१' इति वचनं न[3] कर्तव्यम् । एवं स्थिते 'कृद्योगा षष्ठी-१०१९' इति वचनमपि माऽस्तु 'कर्तृकर्मणोः कृति ९०७' इत्यत्र हि 'शेषे' इति निवृत्तम् । तथा चाप्राप्तषष्ठीविधानार्थमेव तदिति समासनिवृत्तिप्रसङ्गाभावात् 'षष्ठी १०१६' इत्यनेनैव समाससिद्धेः ॥ सर्पिषो ज्ञानमिति । वस्तुतः करणस्य संबन्धमात्र[4]विवक्षया 'ज्ञोऽविदर्थस्य-८९५' इति षष्ठी । सर्पिःसंबन्धि प्रवर्तनमित्यर्थः ॥ ( १०२२ ) पूरणगुण—। अर्थशब्दस्य त्रिषु संबन्धादाह—पूरणाद्यर्थैरिति । अत्र प्राचोक्तम्-'एतदर्थैः षष्ठी न समस्यते' इति । तन्न्यूनम्, तथा हि सति सुहितान्तानामेव ग्रहणं स्यात्, तावतामेवार्थशब्देन समस्तत्वादिति ध्वनयन्नाह—सदादिभिश्चेति ॥ षष्ठी इति । षण्णां पूरणः षष्ठः । 'तस्य पूरणे डट् २५०७' 'षट्कतिकतिपयचतुरां थुक् २५०९' ॥ कथं तर्हि 'तान्युञ्छषष्ठाङ्कितसैकतानि' इति । प्रमाद एवायमित्येके । उञ्छेषु षष्ठः उञ्छात्मकः षष्ठ इति वा व्याख्येयमिति मनोरमायां स्थितम् ॥ गुण इति । 'सत्त्वे निविशतेऽपैति-' इत्यादिलक्षणलक्षितो गुणोऽत्र गृह्यते, न त्वदेङ्लक्षणः, अर्थग्रहणात् । नापि संख्या, 'क्रोशशतयोजनशतयोः-२३६१' इति वार्तिके निर्देशात् ॥ काकस्य कार्ष्ण्यम् । ब्राह्मणस्य शुक्ला इति । व्याप्तिन्यायात्केवलगुणवाची गुणोपसर्जनद्रव्यवाची च गुणशब्देन गृह्यत इति भावः । ननु ब्राह्मणस्य शुक्ला इत्यत्र समासप्रसङ्ग एव नास्ति, ब्राह्मणशब्दस्य दन्तैरेवान्वयात्-ब्राह्मणस्य ये दन्तास्ते शुक्ला इत्यर्थादत आह—यदेति । शुक्लशब्द एवेह विशेष्यसमर्पक इति भावः ॥

---

१ गुणेनेति । इदमुपलक्षणम्-'पादपूरणम्' इति निर्देशेन पूरणार्थेन समासानित्यत्वस्यापि । तेन 'कुम्भपूरणभवः पटुरुच्चैः' इति 'उञ्छषष्ठादिप्रयोगाणां च सिद्धिरित्यन्ये ॥ २ नव्या इति । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति गीतासंवादादत्र कर्मधारय एवेति लभ्यते राजदन्तादित्वात्परनिपात इति नव्यतराः ॥ ३ न कर्तव्यमिति । तत्तद्धातुयोगे उपात्तकारकातिरिक्तकारकाणां शेषत्वविवक्षाभावज्ञापनेनापि तत्तत्सूत्राणां चारितार्थ्येन नियमार्थत्वासंभवान्नेदं मनोरमम् । अत एव भाष्यकृता नेदं वार्तिकं प्रत्याख्यातम् । 'क्तस्य च वर्तमाने' 'अधिकरणवाचिनश्च' इत्यनयोरपि नियमार्थत्वे 'क्तेन च पूजायाम्', 'अधिकरणवाचिना च' इति सूत्रद्वयस्यापि वैयर्थ्यं स्यात् । भाष्यकृता तु शेषमात्रलक्षणा कारकशेषलक्षणा कृद्योगा चेति त्रिविधा षष्ठी प्रदर्शिता 'का पुनः षष्ठी प्रतिपदविधाना, का च कृद्योगा' इति प्रश्ने 'सर्वा षष्ठी प्रतिपदविधाना शेषलक्षणां वर्जयित्वा, 'कर्तृकर्मणोः कृति' इति या षष्ठी सा कृद्योगा' इति समाधानभाष्येण । तत्र शेषलक्षणामित्यस्य शेषमात्रलक्षणामित्यर्थः । प्रतिपदविधानेत्यस्य कारकविशेषोपादानेन विहितेत्यर्थः ॥ ४ सम्बन्धमात्रेति । वस्तुतः कर्मपदघटितसूत्रेष्वेव शेषपदस्य पूर्वमुपपादितत्वाच्चिन्त्यमिदमिति बोध्यम् ॥

र्थगौरवं बुद्धिमान्द्यमित्यादि सिद्धम्[1] । सुहितार्थास्तृप्त्यर्थाः । फलानां सुहितः । तृतीयासमासस्तु स्यादेव[2] । स्वरे विशेषः । सत्-द्विजस्य कुर्वन्कुर्वाणो वा । किंकर इत्यर्थः[3]।अव्ययम्-ब्राह्मणस्य कृत्वा[4] । पूर्वोत्तरसाहचर्यात्कृदव्ययमेव गृह्यते । तेन तदुपरीत्यादि सिद्धमिति रक्षितः । तव्ये-ब्राह्मणस्य कर्तव्यम् । तव्यता तु भवत्येव । स्वकर्तव्यम् । स्वरे भेदः । समानाधिकरणे-तक्षकस्य सर्पस्य । विशेषणसमासास्त्विह बहुलग्रहणान्न । गोर्धेनोरित्यादिषु पोटायुवतीत्यादीनां विभक्त्यन्तरे चरितार्थानां परत्वाद्बाधकः षष्ठीसमासः प्राप्तः सोऽप्यनेन वार्यते ॥ ( १०२४ ) (सू) क्तेन च पूजायाम् ।२।२।१२। [41] मतिबुद्धीति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते । राज्ञां मतो बुद्धः पूजितो वा । राजपूजित

---

चन्दनगन्धः घटरूपमित्यादावनेन निषेधे प्राप्ते 'तत्स्थैश्च गुणैः समासो वक्तव्यः' इति वार्तिकेन समासः प्रतिप्रसूयते । गन्धत्वेन प्रतीयमानो गन्धो न कदापि गुणिसमानाधिकरणः किंतु स्वप्रधानः । इदमेव हि तात्स्थ्यं नाम ॥ ननु 'पिनष्टि गन्धान्' इति प्रयोगदर्शनाच्छुक्लादिशब्दादितुल्य एव गन्धशब्दो न तत्स्थगुणवचन इति चेत् । न, पिनष्टीति प्रयोगे हि गन्धानिति न गुणशब्दः, मालतीकुसुमादिषु गन्धशब्दप्रयोगादर्शनात् । किन्तु चन्दनत्वादिजातिनिमित्तकोऽन्य एव सः । तस्माच्चन्दनगन्ध इत्यादौ तत्स्थत्वं सुस्थमेव । एवं घटरूपमित्यादावपि ॥ नन्वेवमपि 'बलाकायाः शौक्ल्यम्' 'केशस्य नैल्यम्' इत्यादावतिप्रसङ्ग इति चेत् । अत्राहुः-गुणिवचनादुत्पन्नष्यञा शुक्लादिगुणस्यैवाभिधानात्तद्वाचकपदानां गुणिसामानाधिकरण्यसत्त्वान्न दोषः । तथा च 'प्राधान्येनाप्राधान्येन वा द्रव्याप्रतिपादकत्वे सति गुणप्रतिपादकत्वं तत्स्थगुणवाचित्वम्' इत्यर्थ इति ॥ **फलानामिति** । करणस्य शेषत्वविवक्षायां षष्ठी ॥ **स्वरे विशेष इति** । 'तत्पुरुषे तुल्यार्थ-५७०२' इति पूर्वपदप्रकृतिस्वरं बाधित्वा 'थाथ-५८५०' इत्यादिसूत्रेणान्तोदात्तत्वे प्राप्ते तदपवादेन 'तृतीया कर्मणि ५७५२' इत्यनेन पूर्वपदप्रकृतिस्वरे सत्याद्युदात्त इष्टः, षष्ठीसमासे तु अन्तोदात्तत्वं स्यात्तच्च नेष्यत इति भावः । तृपिश्च सकर्मकोऽप्यस्ति 'पितॄनताप्सीत्सममंस्त बन्धून्' इति भट्टिप्रयोगात् । तेनास्मात् कर्मणि क्तो नास्तीति न शङ्कनीयम् ॥ **द्विजस्य कुर्वन् कुर्वाण इति** । नेयं घटाद्यपेक्षया षष्ठी द्विजस्य घटं कुर्वन्निति । तथा हि सत्यसामर्थ्यादेव समासाप्रसक्तौ निषेधोऽयं व्यर्थः[5] स्यादतो व्याचष्टे—**किंकर इत्यर्थ इति** ॥ **ब्राह्मणस्य कृत्वेति** । तादर्थ्यरूपसंबन्धस्य सामान्यरूपेण विवक्षायां षष्ठी । ब्राह्मणसंबन्धिनी या क्रिया तदनन्तरमित्यर्थः ॥ **कृदव्ययमेवेति** । 'अनेकमन्यपदार्थे' इति सूत्रे 'सर्वपश्चात्-' इति भाष्यप्रयोगादिति भावः ॥ **इत्यादीति** । यथा च भट्टिः प्रायुङ्क्त--'यत्कृते[6]ऽरीन्निगृह्णीमः । आदेयाः किंकृते भोगाः कुम्भकर्ण त्वया विना' इति ॥ **रक्षित इति** । कैयटहरदत्तौ तु-अव्ययप्रतिषेधे 'वृक्षस्योपरि' इत्युदाहरन्तौ अकृदव्ययेनापि निषेधं मन्येते । तौ च प्रागुक्तभाष्यप्रयोगविरोधादुपेक्ष्याविति भावः ॥ **तव्यता तु भवत्येवेति** । सूत्रे निरनुबन्धग्रहणादिति भावः ॥ **स्वकर्तव्यमिति** । कर्तृषष्ठ्या समासः ॥ **स्वरे भेद इति** । कृदुत्तरपदप्रकृतिस्वरेण तित्स्वरस्यावस्थानादन्तस्वरित इष्टः । तव्येन तु समासे मध्योदात्तत्वं स्यात्, तच्च नेष्यते इति भावः ॥ **सोऽप्यनेनेति** । षष्ठीसमासेन 'पोटायुवति-१०७३' इति समासो वारितः । सोऽपि षष्ठीसमासः 'पूरणगुण-१०२२' इत्यनेन वार्यते इत्यर्थः ॥ (१०२४) **क्तेन च पूजायाम्** । सूत्रोपलक्षणं पूजाग्रहणं, व्याख्यानादित्याह—**मतिबुद्धीति** ॥ **राज्ञामिति** । 'क्तस्य च वर्त-

---

१ **सिद्धमिति** । परे तु 'अर्थसम्बन्धिगौरवम्' 'बुद्धिसंबन्धिमान्द्यम्' इत्येवं मध्यमपदलोपिसमासकल्पनेनैषां साधुत्वम् । अनित्यत्वं भाष्ये नं दृश्यते । अत एव सर्वश्वेत इत्यादौ 'गुणेन न' इत्यनेन निषेधात्कथं समास इत्याशङ्क्य 'गुणात्तरेण समासस्तरलोपश्च' इति वचनमारब्धम् । एवमेव 'चैत्रधनं, चैत्रापत्यानि' इत्यत्रापि मध्यमपदलोपिसमास एव । अन्यथा 'धनमेको गुणः, अपत्यमेको गुणः' इति 'पङ्क्तिविंशति-' इति सूत्रभाष्ये धनापत्ययोरपि गुणत्वोक्तेरत्र समासो न स्याद्-इति वदन्ति ॥ २ **तृतीयेति** । तत्र करणत्वेन भानम्, षष्ठीसमासे संबन्धत्वेनेति भावः ॥ ३ **किंकर इति** । एवं च स्वस्वामिभावसंबन्धरूपे शेषे षष्ठीति भावः । परे तु-सदुदाहरणे "इदं तर्हि 'चोरस्य द्विषन्' इत्युदाहृत्य 'ननु चात्रापि प्रतिषिध्यते' इत्यनेन 'ब्राह्मणस्य पश्यन्' इत्युदाहरणस्य 'नैतदस्ति' प्रतिषिध्यतेऽत्र षष्ठी 'लप्रयोगे न' इति" इत्युक्तरीत्या खण्डनसंस्मारणेनोदाहरणत्वस्य पूर्वपक्षिणा खण्डने कृते "वक्ष्यत्येतत्'-द्विषः शतुर्वावचनम्' इति" इति सिद्धान्तसमाधाने द्विष्धातुपर्यन्तधावनं तदर्थं वार्तिकरचनं च व्यर्थमेव स्यादीदृशेऽपि शेषत्वविवक्षायां षष्ठीसिद्धौ । तस्मान्नेदृशे शेषविवक्षा भाष्यसंमतेति वदन्ति ॥ ४ **ब्राह्मणस्य कृत्वेति** । इदमुदाहरणं न योग्यम्, भाष्यविरोधात् । तथाहि-'ब्राह्मणस्योच्चैः' इत्युदाहरणं 'सापेक्षमसमर्थं भवति द्रव्यमत्रापेक्ष्यते आसनम्' इत्यनेन संखण्ड्य "इदं तर्हि-'ब्राह्मणस्य कृत्वा' इत्युदाहरणमपि 'एतदपि नास्ति' । प्रतिषिध्यते तत्र षष्ठी-'अव्यययोगे न' इति ।" या च श्रूयते एषा बाह्यार्थमपेक्ष्य भवति तत्रासामर्थ्यान्न भविष्यति । कथमसामर्थ्यम्? "सापेक्षमसमर्थं भवतीति । द्रव्यमत्रापेक्ष्यते कटः" इति खण्डनमुपलभ्यते ॥ अत्र शेषषष्ठ्याः कल्पनेन समाधानसंभवेऽपि "इदं तर्हि पुरा सूर्यस्योदेतोराधेयः' 'पुरा वत्सानामपाकर्तोः" इति मुख्योदाहरणस्यापि वादिना 'ननु चात्रापि प्रतिषिध्यतेऽव्ययमिति कृत्वा' इत्युक्तस्याक्षेपस्य "वक्ष्यत्येतत् 'अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः' इति" इति तिरस्कारस्य च वैयर्थ्यं स्यात् ॥ ५ **व्यर्थः स्यादिति** । नापि कुर्वन्नित्यपेक्षया कर्मणि, 'न लोका-' इति षष्ठीनिषेधादित्यपि बोध्यम् ॥ ६ **यत्कृत इति** । 'कृते' इति निमित्तार्थकं विभक्तिप्रतिरूपकमव्ययम् । तथा च 'यत्कार्यनिमित्तम्' इत्यर्थः ॥

इत्यादौ तु भूते क्तान्तेन सह तृतीयान्तस्य समासः ॥ (१०२५) (सू) **अधिकरणवाचिना च** ।२।२।१३। क्तेन षष्ठी न समस्यते । इदमेषामासितं गतं भुक्तं वा ॥(१०२६) (सू) **कर्मणि च** ।२।२।१४ । उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते । आश्चर्यो गवां दोहोऽगोपेन ॥(१०२७) (सू) **तृजकाभ्यां कर्तरि** ।२।२।१५। कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । वज्रस्य भर्ता । ओदनस्य पाचकः । कर्तरि किम् । इक्षूणां भक्षणमिक्षुभक्षिका । पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः । भूभर्ता । कथं तर्हि-घटानां निर्मातुस्त्रिभुवनविधातुश्च कलह इति । शेषषष्ठ्याः समासः इति कैयटः॥(१०२८) (सू) **कर्तरि च** ।२।२।१६। कर्तरि षष्ठ्या अकेन न समासः । भवतः शायिका । नेह तृजनुवर्तते,तद्योगे

---

माने ९१३' इति कर्तरि षष्ठी ॥ **भूत इति** । न च तक्रकौण्डिन्यन्यायेन मत्यादिभ्यः क्तस्य वर्तमानकालो भूतकालतां बाधत इति वाच्यम्, । 'तेनैकदिक् २०५६' इत्यतः 'तेन' इत्यधिकारे 'उपज्ञाते २०५९' इति निर्देशेन भूतकालस्या[1]बाधज्ञापनात् । 'उपज्ञाते २०६९' इत्यत्र हि भूते क्तो, न तु वर्तमाने । अन्यथा 'क्तस्य च वर्तमाने ९१३' इति षष्ठीविधानादुपज्ञातशब्दस्य तेनेति तृतीयायोगो न स्यात् । न चैवमपि ज्ञानार्थेष्वेव ज्ञापकमास्त्विति वाच्यम्, 'पूजितो यः सुरासुरैः' इति प्रयोगानुरोधेन सामान्यविषयकज्ञापकत्वस्यैव न्याय्यत्वात् । अन्ये तु-कारकषष्ठ्या एव समासनिषेधोऽयम्, शेषषष्ठ्या तु समासः स्यादेवेत्याहुः ॥ एतेन 'कलहं स राममहितः कृतवान्' इति भट्टिप्रयोगो व्याख्यातः । राममहितः सः कलहं कृतवानित्यन्वयः ॥ ( १०२५ ) **अधिकरणवाचिना च** । वाचिग्रहणं चिन्त्यप्रयोजनमिति हरदत्तादयः ॥ **इदमेषामिति** । 'क्तोऽधिकरणे च-४१०५' इति क्तः । 'अधिकरणवाचिनश्च ९१४' इति कर्तरि षष्ठी ॥ 'अधिकरणे च' इत्येव सिद्धे सूत्रद्वयेऽपि वाचिग्रहणं स्पष्टार्थमित्याहुः ॥ ननु किंवृत्तं यद्वृत्तमित्यत्र न कर्मणि क्तः, वृत्तेरकर्मकत्वात् । तथा चाधिकरणक्तान्तेन कथमिह समास इति चेत् । मैवम्, नायमधिकरणे क्तः किन्तु ' गत्यर्थाकर्मक-४१०४ ' इति कर्तरि । किमा वृत्तं निष्पन्नमित्यर्थः ॥ ( १०२६ ) **कर्मणि च** । क्तेनेति नानुवर्तते, 'क्तेन च पूजायाम् १०२४' इति निषेधवैयर्थ्यप्रसङ्गात् । षष्ठीत्यनुवर्तते, किं ( परं ) तु साऽपि या काचित्कर्मणि षष्ठी न गृह्यते । 'अपां स्रष्टा' इत्यादावनेनैव सिद्धौ 'तृजकाभ्यां कर्तरि १०२७' इति निषेधवैयर्थ्या[2]पत्तेः । किञ्च, 'इध्मव्रश्चनः' इत्यादौ समाससिद्धये वचनं कर्तव्यं स्यात् । न च 'कृद्योगलक्षणा षष्ठी समस्यते १०१९' इति वार्तिकमस्त्येवेति वाच्यम्, तस्य सिद्धान्ते प्रत्याख्यानात् । ततश्च निपातानामनेकार्थत्वादितीत्यर्थे चशब्दोऽयम् । तदाह— **कर्मणीति । या षष्ठीति** । सप्तम्येकवचनान्तमुच्चार्य या षष्ठी विहिता परि[3]शेषिता वेत्यर्थः । नियमसूत्राणां विधिमुखेन निषेधमुखेन वेति द्वेधा प्रवृत्तेः स्वीकृतत्वात् ॥ **गवां दोह इति** । अगोपेनेत्युपन्यासास्त्विह उभयप्राप्तिप्रदर्शनार्थः । ननु कथम् 'अथ शब्दानुशासनम्' इति । अत्र व्याचख्युः-शब्दानामितीयं षष्ठी 'कर्तृकर्मणोः-९०७' इति विहिता, न तु 'उभयप्राप्तौ-९०९' इत्यनेन, आचार्यस्य कर्तुः वस्तुतः सत्त्वेऽपि इहानुपादानात् । 'कृत्वोऽर्थप्रयोगे-९०६' इत्यतः 'प्रयोगे' इत्यनुवर्तनात्कर्तृकर्मणोरुभयोरुपादान एवायं नियम इति स्वीकारात् । आश्चर्यो गवां दोह इत्यत्र हि आश्चर्यं प्रतिपाद्यम्, तच्च यद्यशिक्षितो दोग्धा दुर्दोहा गावश्च दोग्धव्यास्तदैव निर्वहति न त्वन्यथा । अतः कर्तृकर्मणोर्विशिष्योपादानादस्त्युभयप्राप्तिः । इह तु 'शब्दानामिदमनुशासनं न त्वर्थानाम्' इत्यर्थनिवृत्तिपरं वाक्यं, न तु कर्तृविशेषनिवृत्तिपरमतो नास्त्युभयप्राप्तिः । अस्तु वा यथाकथंचिदुभयप्राप्तिः, तथापि न क्षतिः, 'उभयप्राप्तौ-९०९' इति सूत्रे 'अविशेषेण विभाषा' इति पक्षस्यापि विद्यमानतया नियमाप्रवृत्तिपक्षे 'आचार्यस्य शब्दानुशासनम्' इति प्रयोगसंभवात् । यदि वा शेषलक्षणा षष्ठीति व्याख्यायते, तदा तु समासनिषेधशङ्कैवात्र नास्तीति ॥ ( १०२७ ) **तृजकाभ्याम्**— । इह 'कर्तृषष्ठ्या तृजकाभ्याम्' इति वृत्तिकारव्याख्यानमयुक्तमिति ध्वनयन्नाह—**कर्त्रर्थतृजकाभ्यामिति** । कर्तृग्रहणं तृजकयोरेव विशेषणमिति युक्तं, तयोः श्रुतत्वात् । न तु षष्ठ्या इति भावः ॥ यद्यपि कर्तरीति तृचो न विशेषणमव्यभिचारात्, तथाप्यकस्य विशेषणत्वेन तदावश्यकमित्याह—**इक्षुभक्षिकेति** । 'पर्यायार्हर्णो-५१०४'इति भावे ण्वुच् । कर्मणि षष्ठ्याः समासः ॥ ननु वज्रस्य भर्तेत्युदाहरणमयुक्तम्, भर्तृशब्दस्य याजकादित्वेन समासावश्यंभावादित्याशङ्क्याह—**पत्यर्थभर्तृशब्दस्येति** । यद्यपि याजकादिष्वर्थविशेषविशिष्टतया भर्तृशब्दो न पठितः, तथापि रूढेर्बलीयस्त्वात्पतिपर्यायस्यैव तत्र ग्रहणम्, न तु यौगिकस्येति भावः ॥ **शेषषष्ठ्या इति** । न्यासकारस्तु तृन्नन्तमेतत् । ' न लोका-९१५ ' इति निषेधस्त्वनित्यः, 'त्रकाभ्याम्-' इति वक्तव्ये तृचः सानुबन्धग्रहणाज्ज्ञापकादित्याह ॥ केचित्तु—' जनिकर्तुः-८६४ ' ' तत्प्रयोजको हेतुश्च ३४२५ ' इति निर्देशादनित्योऽयं समासनिषेध इत्याहुः । तन्मन्दम्, शेषषष्ठीसमासेनोक्तनिर्देशोपपत्तेः ॥ ( १०२८ ) **कर्तरि च** ॥ **नेह तृजिति** । न चोत्तरार्थत्वं शङ्क्यम् । तृच् क्रीडाजीविकयोर्नास्तीति जयादित्येनोक्तत्वादिति भावः ॥ वामनस्तु-'अके जीविकार्थे ५७७७' इत्यत्र 'अक इति किम्,

---

१ **स्याबाधज्ञापनादिति** । परे त्वाहुः-"तक्रकौण्डिन्यन्यायेन वर्तमाने क्तेन भूते क्तो बाध्यते " इति वक्तुमयोग्यम् । यतस्तक्रकौण्डिन्यन्यायो येननाप्राप्तन्यायेन समानविषयः । नाप्राप्ते दधिदाने तक्रदानमारभ्यते इति तेन युक्तो दधिबाधः । प्रकृते तु न सः अप्राप्तायामन्त्योपधावृद्धौ अचामादिवृद्धिरारभ्यते सौश्रुत इत्यादौ, अतो न तक्रकौण्डिन्यन्यायेन तया तयोर्बाध इति 'तद्धितेष्वचाम्—इति सूत्रभाष्योक्तेः । अतो वर्तमानक्तस्य भूतक्ते नाप्राप्तेऽनारम्भाद् वर्तमानभूतत्वयोर्युगपद् विवक्षाया असंभवात् । यदीदं न स्यात्, तर्हि वर्तमाने लट् स्यादिति तस्यैवायमपवादो न्याय्यो न तु भूते क्तस्य इति ॥ २ **वैयर्थ्येति** । कर्त्रर्थतृजकाभ्यां कर्मषष्ठ्यैव समासनिषेधात्तेनेति भावः ॥ ३ **परिशेषितेति** । कर्मातिरिक्ते निषेधेन कर्मणि परिशेषितेत्यर्थः ॥

कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात् ॥ (१०२९) सू **नित्यं क्रीडाजीविकयोः** ।२।२।१७। एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते । उद्दालकपुष्पभञ्जिका । क्रीडाविशेषस्य संज्ञा । संज्ञायामिति भावे ण्वुल् । जीविकायां—दन्तलेखकः । तत्र क्रीडायां विकल्पे जीविकायां तृजकाभ्यां कर्तरीति निषेधे प्राप्ते वचनम् ॥ (१०३०) सू **पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे** ।२।२।१। अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकदेशिना किम् । पूर्वं नाभेः कायस्य । एकाधिकरणे किम् । पूर्वश्छात्राणाम् ।(१०३१) सर्वोऽप्येकदेशोऽह्ना समस्यते,संख्याविसायेति ज्ञापकात् । मध्याह्नः। सायाह्नः॥(१०३२)केचित्तु सर्व एकदेशः कालेन समस्यते न त्वह्नैव, ज्ञापकस्य सामान्यापेक्षत्वात् । तेन मध्यरात्रः । उपारताः पश्चिमरात्रगोचरात्–इत्यादि सिद्धमित्याहुः ॥ ( १०३३ ) सू **अर्धं नपुंसकम्** ।२।२।२। समांशवाच्यर्धशब्दो नित्यं क्लीबे स प्राग्वत् ॥ ( १०३४ ) वा **एकविभक्तावषष्ठ्यन्तवचनम्** ॥ एकदेशिसमासविषयकोऽयमुपसर्जनसंज्ञानिषेधः । तेन पञ्चखट्वी इत्यादि सिद्ध्यति । अर्धं पिप्पल्याः अर्धपिप्पली । क्लीबे किम् । ग्रामार्धः। द्रव्यैक्य एव । अर्धं पिप्पलीनाम्॥

---

रमणीयकर्ता' इति प्रत्युदाहरञ्जीविकायां तृचमिच्छति ॥ ( १०२९ ) **नित्यं क्री–। भावे ण्वुलिति** । भञ्जनं भञ्जिका । पुष्पाणामिति कर्मणि षष्ठी । 'भावे' इत्युपलक्षणमधिकरणे ण्वुल्यपि बाधकाभावादिति मत्वा 'संज्ञायाम्' इति सूत्रे कृदन्ते मनोरमायामुक्तम् 'उद्दालकः श्लेष्मातकस्तस्य पुष्पाणि भज्यन्ते यस्यां क्रीडायां सा उद्दालकपुष्पभञ्जिका' इति ॥ ( १०३० ) **पूर्वापर–**। एकदेशशब्दोऽवयवे रूढः । अत एव तस्य कर्मधारयत्वेऽपि ततो मत्वर्थीयः । 'कृष्णसर्पवान्' इत्यत्रेव 'न कर्मधारयान्मत्वर्थीयः' इति निषेधस्य रूढेष्वप्रवृत्तेः ॥ यद्यपीह 'एकगोपूर्वात्–२६०६' इति ठञ् प्राप्तः, तथाप्यत एव निर्देशादिनिस्तदेतदाह––**अवयविनेति** । नन्विदं सूत्रं व्यर्थम्, पूर्वकाय इत्यादिप्रयोगाणां कर्मधारयेणैव सिद्धेः । ऊर्ध्वकाय इतिवत् 'समुदाये हि वृत्ताः शब्दा अवयवेष्वपि प्रवर्तन्ते' इति न्यायादत आह––**षष्ठीसमासापवाद इति** । तथा च कायपूर्व इत्याद्यनिष्टप्रयोगानिवृत्तये सूत्रमिति भावः ॥ **पूर्वं कायस्येति** । यद्यपि 'अन्यारात्–८७१' इति सूत्रे दिशि दृष्टः शब्दो दिक्शब्द इति व्याख्यानेन संप्रत्यदिग्वृत्तिनाऽपि योगे पञ्चमी स्वीकृतेति षष्ठीह दुर्लभा, तथापि 'तस्य परमाम्रेडितम् १३४' इति लिङ्गात् 'अवयववाचिदिक्शब्दयोगे पञ्चमी न' इत्युक्तत्वात् षष्ठ्येव भवतीति भावः ॥ **पूर्वं नाभेरिति** । नाभेर्यः पूर्वो भागः, स कायस्यावयव इत्यर्थः । नाभेरिति दिग्योगलक्षणा पञ्चमी । तेनात्र पूर्वस्य भागस्य नाभिरवधिः, न त्वेकदेशीति नाभ्या सह समासो नेत्यर्थः । कायेन तु स्यादेव 'पूर्वकायो नाभेः' इति पूर्वशब्दस्य नित्यसापेक्षत्वात् प्रधानत्वाच्च ॥ **पूर्वश्छात्राणामिति** । नासौ निर्धारणे षष्ठी, किंतु समुदायसमुदायिसंबन्धे । बहुवचनं तूद्भूतावयवभेदसमुदायविवक्षया । ततश्छात्राणामेकदेशित्वे सत्यप्येकत्ववैशिष्ट्याभावान्न समासः ॥ ( १०३१ ) **सर्वोऽपीति** । पूर्वादिभिन्नोऽपीत्यर्थः ॥ **ज्ञापकादिति** । अन्यथा अह्नस्य सायपूर्वत्वं न स्यादिति भावः ॥**मध्याह्न इति** । 'राजाहःसखिभ्यः–११३४' इति टच् । 'अह्नोऽह्नः–११३६' इत्यह्नादेशः । अयं चादेशो मध्याह्नसायाह्नशब्दयोरूर्ध्वकायवत्कर्मधारयेण न निर्वहति, तस्यैकदेशिसमासप्रयुक्तत्वात्, अतोऽत्र ज्ञापकाश्रयणं युक्तमेवेति बोध्यम् ॥ ( १०३२ ) **इत्याहुरिति** । न चैवं दिनमध्यो रात्रिमध्य इत्यादि न सिध्येदिति वाच्यम्, ज्ञापकसिद्धस्यासार्वत्रिकत्वात् ॥ ( १०३३ ) **अर्धं नपुंसकम्** । खण्डवाच्यर्धशब्दो न नित्यनपुंसकः । ग्रामार्धो नगरार्ध इति यथा । समांशवाची तु नित्यनपुंसकः, स एवेह गृह्यते, 'पूर्वापरा–१०३०' इति पूर्वसूत्र एवार्धशब्दे पठनीये 'अर्धम्' इति योगविभागेन निर्देशान्नपुंसकत्वे लब्धे, पुनर्नपुंसकग्रहणादित्याशयेन व्याचष्टे––**नित्यं क्लीबे स इति** । यो नित्यनपुंसकलिङ्गः, स इत्यर्थः॥**प्राग्वदिति** । एकत्वविशिष्टेनावयविना समस्यत इत्यर्थः ॥ अन्ये तु व्याचख्युः–'अर्धम्' इति निर्देशादेव नपुंसकत्वे सिद्धे नपुंसकग्रहणं 'सूत्रेषु लिङ्गनिर्देशो न विवक्षितः' इति ज्ञापयितुम् । तेन 'तस्येदम् २०६४' इत्यादि लिङ्गत्रयेऽपि भवतीति ॥ (१०३४) अर्धपिप्पलीत्यत्र 'एकविभक्ति चापूर्वनिपाते ९५६' इत्युपसर्जनसंज्ञायां 'गोस्त्रियोः–९५७' इति ह्रस्वः स्यादित्याशङ्क्य समाधत्ते––**अषष्ठ्यन्तवचनमिति** । तेन पिप्पलीशब्दस्यानुपसर्जनत्वान्न दोष इति भावः ॥ नन्वेवं पञ्चानां खट्वानां समाहारः पञ्चखट्वीति न सिध्येत्, उपसर्जनसंज्ञानिषेधेन खट्वेत्याकारे ह्रस्वाप्रवृत्तेरदन्तत्वाभावेन 'द्विगोः ६६८' इति ङीपोऽप्रवृत्तेरत आह––**एकदेशिसमासविषयकोऽयमिति** । 'पञ्चखट्वी' इति भाष्योदाहरणमेव 'अषष्ठ्यन्त–१०३४' इत्यस्य संकोचे लिङ्गमिति भावः ॥ **अर्धपिप्पलीति** । परवल्लिङ्गत्वात् स्त्रीत्वम् ॥ **अर्धं पिप्पलीनामिति** । षति समासे अर्धपिप्पलीत्येव स्यात्, विशेष्यैक्यात् । 'परवल्लिङ्गमिति लिङ्गातिदेशेऽपि वचनातिदेशाभावाच्चेति भावः । 'अर्धपिप्पल्यः' इति प्रयोगस्तु 'अर्धानि पिप्पलीनाम्' इति विग्रहे असाधुश्चेदपि खण्डसमुच्चये साधुरेव, अर्धं पिप्पल्या अर्धपिप्पली अर्धपिप्पली च अर्धपिप्पली चेत्यादिविग्रहात् । एकदेशिना किम्, अर्धं पशोर्देवदत्तस्य । अत्र देवदत्तः स्वामी, न त्ववयवीति न तेन समासः । इदं सूत्रं 'परवल्लिङ्गम्–' इत्यत्र भाष्ये प्रत्याख्यातम् । तद्यथा अर्धपिप्पलीति हि कर्मधारयेण सिद्धम् । 'समुदाये दृष्टाः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायात् । समप्रविभागादन्यत्र तवाप्येषैव

---

१ **पूर्वकाय इति** । कायसंबन्धी पूर्वो भाग इति बोधः । एकदेशिसमासप्रत्याख्यातृभाष्यमते कायादिशब्दानां तदवयवपरतया कायावयवरूपः पूर्वो भाग इति बोधः । एवमग्रेऽपि ॥

(१०३५) **द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्** ।२।२।३। एतान्येकदेशिना सह प्राग्वद्वा । द्वितीयं भिक्षाया द्वितीयभिक्षा । एकदेशिना किम् । द्वितीयं भिक्षाया भिक्षुकस्य । अन्यतरस्यांग्रहणसामर्थ्यात्पूरणगुणेति निषेधं बाधित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयम् ॥ (१०३६) **प्राप्तापन्ने च द्वितीयया** ।२।२।४। पक्षे द्वितीया श्रितेति समासः । प्राप्तो जीविकां प्राप्तजीविकः । जीविकाप्राप्तः । आपन्नजीविकः । जीविकापन्नः । इह सूत्रे द्वितीयया अ इति छित्त्वा अकारोऽपि विधीयते । तेन जीविकां प्राप्ता स्त्री-प्राप्तजीविका । आपन्नजीविका ॥ ( १०३७ ) **कालाः परिमाणिना** । २ । २ । ५ । परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते । मासो जातस्य यस्य स मासजातः । द्व्यहजातः । द्वयोरह्नोः समाहारो द्व्यहः । द्व्यहो जातस्य यस्य स इति विग्रहः ॥(१०३८) **उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम्** । द्वे अहनी जातस्य यस्य स द्व्यहजातः । अह्नोऽह्न इति वक्ष्यमाणोऽह्नादेशः । पूर्वत्र तु न संख्यादेः समाहार इति निषेधः ॥ (१०३९) **सप्तमी शौण्डैः** ।

---

गतिः । 'अर्धाहारः' 'अर्धोक्तम्' 'अर्धविलोकितम्' इत्यादिप्रयोगदर्शनात् ॥ न च समप्रविभागे षष्ठीसमासं बाधितुमिदं सूत्रमिति वाच्यम् । षष्ठीसमासस्यापीष्टत्वात् । अत एव कालिदासः प्रायुङ्क्त—'प्रेम्णा शरीरार्धहरा हरस्य' इति ॥ ( १०३५ ) **द्वितीयतृतीय**—। 'षष्ठीसमासापवादोऽयं योगः' इति वृत्तिकृतोक्तमयुक्तमिति ध्वनयन्नाह—**निषेधं बाधित्वेति** ॥ ( १०३६ ) **प्राप्तजीविक इति** । 'गोस्त्रियोः—९५७' इत्युपसर्जनह्रस्वः । 'द्विगुप्राप्तापन्ना—११६४' इति वक्ष्यमाणेन परवल्लिङ्गनिषेधः ॥ न चेदं बहुव्रीहिणा गतार्थमिति शङ्क्यम्, स्वरे विशेषात् । प्राप्तसुख इत्यादौ निष्ठान्तस्य 'जातिकालसुखादिभ्यः—१२८९' इति परनिपातापत्तेश्च । 'प्राप्तापन्ने च–१०२६' इति चकारेण विधेयसमुच्चयार्थेनाकारप्रश्लेषानुमानात् । प्राप्तापन्ने समस्येते अ च अत्वं च तयोः स्यादिति भाष्ये स्थितम् । तत्र चकारात्पूर्वमेवाकारं छित्त्वा सौत्रत्वात्प्रकृतिभावो नेति प्राञ्चः । इमं क्लेशं परिहरन्नाह—**द्वितीयया अ इति । प्राप्ता स्त्रीति** । एकदेशस्य पूर्वान्तत्वेन ग्रहणाल्लिङ्गविशिष्टपरिभाषया वा टाबन्तयोरपि प्राप्तापन्नयोः समासः । ( १०३७ ) **कालाः परिमाणिना** । परिमीयते परिच्छिद्यते येन तत्परिमाणं परिच्छेदकं तद्वान्परिमाणी, तदाह—**परिच्छेद्यवाचिनेति** ॥ **काला इति** । कालविशेषवाचका इत्यर्थः । सूत्रे बहुवचननिर्देशात्कालसामान्यस्यापरिच्छेदकत्वाच्च ॥ **मासो जातस्येति** । षष्ठीसमासे प्राप्ते वचनम् ॥ ननु जातः पुरुषस्तस्य तु हस्तवितस्त्यादिकं परिच्छेदकम्, न तु कालः । तस्य क्रियामात्रपरिच्छेदकत्वादिति चेत् । अत्राहुः—साक्षात्क्रियां परिच्छिन्दन्नपि कालस्तद्द्वारा देवदत्तं परिच्छिनत्ति यस्य हि जननादूर्ध्वं मासो गतः स मासजात इति व्यवह्रियते । तत्र व्यवहारकालजननक्षणयोरन्तरालभावी मासो जननद्वारा जातमपि परिच्छिनत्त्येवेति । इह विग्रहे षष्ठीनिर्दिष्टस्यापि वृत्तौ प्राधान्यं द्योतयितुं 'यस्य सः' इत्युक्तम् । अलौकिके तु प्रक्रियावाक्ये नास्य प्रवेशः । एवं बहुव्रीहावपीति बोध्यम् । ननु 'जातस्य मासः' इति विग्रहे वृत्तौ मासशब्दस्य पूर्वनिपातार्थमेतत्सूत्रारम्भस्यावश्यकत्वेऽपि मासविशेष्यकबोध एवात्रोचित इति किमनेन 'जातस्य यस्य सः' इति कथनेनेति चेत् । अत्राहुः—'मासजातो मृतः' इत्यादिप्रयोगानुरोधेन विग्रहे 'यस्य सः' इति स्वीक्रियत इति ॥ **मासजात इति** । यद्यपि मासो जातो यस्येति बहुव्रीहिणाऽपीदं सिध्यति 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या १२८९' इति वचनात् । न च स्वरे विशेषः, 'वा जाते ५८७८' इत्यन्तोदात्तत्वस्यापि सिद्धेः, तथापि षष्ठीसमासापवादार्थमिदमारम्भणीयमेव । किञ्च, मासो जातवतो यस्य स मासजातवानित्येतदर्थमपीदमवश्यारम्भणीयमिति दिक् ॥ ( १०३८ ) **उत्तरपदेनेति** । परिमाण्युत्तरपदहेतुकद्विगुसिद्धये त्रिपदतत्पुरुषो वक्तव्य इत्यर्थः । 'सुप्सुपा ९४९—२' इत्येकत्वस्य विवक्षितत्वादप्राप्ते वचनम् । अस्मादेव वार्तिकारम्भात् 'सुप्सुपा ९४९–२' इत्येकत्वं विवक्षितमिति ज्ञायते ॥ **अह्नादेश इति** । त्रिपदतत्पुरुषे सत्युत्तरपदे परत 'तद्धितार्थ—१०५२' इत्यवान्तरद्विगौ सतीति भावः ॥ **पूर्वत्रेति** । द्व्यहजात इत्यत्रेत्यर्थः ॥ ( १०३९ ) **सप्तमी शौण्डैः** ।

---

१ **तेनेति** । पूर्वं निपतितयोः प्राप्तापन्नाशब्दयोः 'एकविभक्तित्वाभावेनोपसर्जनत्वाभावाद् प्रथमानिर्दिष्टत्वेनोपसर्जनत्वेऽपि समासान्तत्वाभावाच्च ह्रस्वानुपपत्तिरन्यथा स्यादिति भावः । जीविकाशब्दस्यैवैकविभक्तित्वादुपसर्जनत्वेन 'गोस्त्रियोः' इति ह्रस्वत्वे टाबिति बोध्यम् ॥ २ **विग्रह इति** । पूर्वोक्तस्य द्व्यहजात इत्यस्येति भावः ॥ ३ **उपसंख्यानमिति** । यद्यपीदं वार्तिकं 'तद्धितार्थोत्तरपद–'इति सूत्रे पठितं तथापि भाष्यकृद्दत्तोदाहरणैः 'कालाः परिमाणिना' इत्येतद्विषयकमेव ज्ञातव्यम् ॥ ४ **सौत्रत्वादिति** । "अयं खल्वपि नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्तते । किं तर्हि आभीक्ष्ण्येऽपि तद्यथा नित्यप्रहसितो नित्यप्रजल्पित इति" इति पस्पशाह्निकभाष्यसूचितेन 'नित्यवीप्सयोः' इत्यत्रेव'प्लुतप्रगृह्याः–' इत्यत्रापि नित्यग्रहणस्य 'प्रायेण' इत्येतत्पर्यायत्वेनैव सकलेष्टसिद्धावगतिकगतिसौत्रत्वकल्पनमन्याय्यमेवेति दाधिमथाः ॥ ५ **यस्य स इति** । गुणीभूतमपि यच्छब्दार्थं तच्छब्देन परामृश्य तस्य मासजातपदप्रतिपाद्यताप्रदर्शनेन द्योतनमिति भावः । यस्य मासो जातस्य स मासजातपदार्थ इति हि विग्रहवाक्याद् बोधः । मासजातो दृश्यतामित्यादौ जातस्यैव कर्मताप्रतीतेः । न चैतावताऽन्यपदार्थप्रधानोऽयमिति भ्रमः कार्य इति बोध्यम् । मासपरिच्छेद्यो जात इति बोधः । जातस्य परिच्छेद्यत्वं तु परिच्छेद्यजननाश्रयत्वेन । अस्य जातस्य कियान् काल इति प्रश्ने मासजात इत्यस्यार्थमुत्तरत्वं बोध्यम् ॥

२ । १ । ४० । सप्तम्यन्तं शौण्डादिभिः प्राग्वद्वा । अक्षेषु शौण्डः अक्षशौण्डः । अधिशब्दोऽत्र पठ्यते । अध्युत्तरपदादिति खः । ईश्वराधीनः ॥ ( १०४० ) (सू) सिद्धशुष्कपक्वबन्धैश्च । २ । १ । ४१ । एतैः सप्तम्यन्तं प्राग्वत् । सांकाश्यसिद्धः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः॥(१०४१) (सू) ध्वाङ्क्षेण क्षेपे ।२।१ । ४२ । (१०४२) (वा) ध्वाङ्क्षेणेत्यर्थग्रहणम् । ध्वाङ्क्षवाचिना[1] सह सप्तम्यन्तं समस्यते निन्दायाम् । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः । तीर्थकाकः [इत्यर्थः][2] ॥ ( १०४३ ) (सू) कृत्यैर्ऋणे । २।१।४३ । ( १०४४ ) ऋणग्रहणं नियोगोपलक्षणार्थम् ॥ सप्तम्यन्तं कृत्प्रत्ययान्तैः सह प्राग्वदावश्यके । मासेदेयमृणम् । पूर्वाह्णे गेयं साम ॥ ( १०४५ ) (सू) संज्ञायाम् । २।१।४४। सप्तम्यन्तं सुपा प्राग्वत् संज्ञायाम् । वाक्येन संज्ञानवगमान्नित्यसमासोऽयम् । अरण्येतिलकाः । वनेकसेरुकाः । हलदन्तात्[१२८६]सप्तम्या इत्यलुक्(१०४६) (सू) क्तेनाहोरात्रावयवाः ।२।१।४५। अह्नो रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत् । पूर्वाह्णकृतम् । अपररात्रकृतम् । अवयवग्रहणं किम् । अह्नि दृष्टम्॥(१०४७) (सू) तत्र । २।१।४६। तत्रेत्येतत्सप्तम्यन्तं सह क्तान्तेन सह प्राग्वत् । तत्रभुक्तम्॥ (१०४८) (सू) क्षेपे।२।१।४७। सप्तम्यन्तं क्तान्तेन सह प्राग्वन्निन्दायाम् । अवतप्तेनकुलस्थितं त एतत्॥(१०४९) (सू) पात्रेसमितादयश्च।२।१।४८।एते निपात्यन्ते क्षेपे। पात्रेसमिताः। भोजनसमये एव संगता न तु कार्ये । गेहेशूरः । गेहेनर्दी । आकृतिगणोऽयम् । चकारोऽवधारणार्थः । तेनैषां समासान्तरे घटकतया प्रवेशो न । परमाः पात्रेसमिताः॥(१०५०) (सू) **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** ।२।१।४९। विशेषणं विशेष्येणेति सिद्धे पूर्वनिपातनियमार्थं सूत्रम्। एकशब्दस्य दिक्संख्ये संज्ञायामिति नियमबाधनार्थं च । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । एकनाथः[3] । सर्वयाज्ञिकाः । जरन्नैयायिकाः । पुराणमीमांसकाः ।

---

बहुवचननिर्देशाद्गणपाठसामर्थ्याच्च आद्यर्थावगतिरित्यभिप्रेत्याह—**शौण्डादिभिरिति** ॥ **अक्षशौण्ड इति** । शौण्डः प्रवीणः । इह आसक्तिरूपा क्रिया वृत्तावन्तर्भवतीति तद्द्वारकं च सामर्थ्यम् । यथा दध्योदनगुडधानादौ उपसेचनमिश्रीकरणादिद्वारा सामर्थ्यम् । तेन कारकाणां क्रिययैव संबन्ध इति नियमस्य[4] न व्यभिचारः ॥ **अधिशब्द इति** । आधेयप्रधान इति शेषः । अधिकरणप्रधानस्य त्वव्ययीभाव एव । अधिहरीति यथा ॥ **ख इति** । नित्यमिति शेषः । 'विभाषाञ्चेः—२८०९' इति विभाषाग्रहणसामर्थ्यादिति वक्ष्यमाणत्वात् । अन्तःशब्दोऽत्र पठ्यते, स चाधिकरणप्रधानः, मध्ये इत्यर्थात् । तद्योगे अवयविन आधारत्वविवक्षायां सप्तमी, यथा वृक्षे शाखेति । वने अन्तर्वनान्तर्वसति । यस्त्वधिकरणत्वमात्रवृत्तिरन्तःशब्दस्तस्य तु 'विभक्त्यर्थे ९५३' इति नित्यमव्ययीभावः । 'प्रनिरन्तःशर—१५०४' इति णत्वम् । वने इति अन्तर्वणम् ॥ यत्तु तत्पुरुषस्य वैकल्पिकत्वात्पक्षे अव्ययीभावः । इति हरदत्तेनोक्तम् । तच्चिन्त्यम्, तत्पुरुषस्य वैकल्पिकत्वेऽपि अव्ययीभावस्य नित्यत्वाद्वने अन्तरिति तदुक्तस्वपदविग्रहस्यायोगात् । किञ्च विभक्त्यर्थमात्रवृत्तेरव्ययीभावः, वचनग्रहणसामर्थ्यात् । अन्यथा वृक्षस्योपरीत्यादावतिप्रसङ्गः स्यात् । ततश्च मध्यवाचिनः प्रसङ्ग एव नास्तीति दिक् ॥ शौण्ड । धूर्त । कितव । व्याज । प्रवीण । संवीत । अन्तर् । अधि । पटु । पण्डित । कुशल । चपल । निपुण ॥ वृत् ॥ ( १०४३ ) **कृत्यैः**—। ( १०४४ ) यत्प्रत्ययान्तेनैव समास इष्यते, 'अल्पशः' इत्यनुवृत्तेः । बहुवचनं तु प्रकृतिभेदाभिप्रायम् । तथैवोदाहरति—**मासेदेयमिति** । 'तत्पुरुषे कृति—१३९४' इत्यलुक् । नेह मासे दातव्यम् ॥ **नियोगोपलक्षणार्थमिति** । नियोगो निर्धाग्गम् । आवश्यकोपलक्षणार्थमित्यर्थः ॥ ( १०४५ ) **संज्ञायाम्** । **नित्यसमासोऽयमिति** । अत एव 'पुरुषेषूत्तमः' इति स्वपदविग्रहोऽसंगत इत्यवोचाम ॥ ( १०४८ ) **अवतप्त इति** । नकुलेन स्थितं नकुलस्थितम्, 'कर्तृकरणे कृता—१००४' इति समासः । कृद्ग्रहणपरिभाषया नकुलस्थितशब्दोऽपि क्तान्त इति तेन सह सप्तम्यन्तस्य समासः, 'तत्पुरुषे कृति—१३९४' इति सप्तम्या अलुक् । अव्यवस्थितत्वप्रतिपत्त्याऽत्र निन्दाऽवगम्यते ॥ ( १०४९ ) **पात्रेसमितादयश्च** ॥ **पात्रेसमिता इति** । संपूर्वादिणः क्तः ॥ **गेहेनर्दीति** । 'नर्द शब्दे' इत्यस्मात् 'सुप्यजातौ—२९९१' इति णिनिः ॥ **घटकतया प्रवेशो नेति** । 'परमाः पात्रेसमिताः' इति वाक्यमेव भवति । न तु 'सन्महत्—१०६९' इत्यादिना समासान्तरमिति भावः ॥ एतच्च शब्दकौस्तुभे स्थितम् ॥ अन्ये तु 'केवलाः पात्रेसमिताः' इति वाक्यमेव, न तु 'पूर्वकालैक—१०५०' इत्यादिना समासान्तरमित्याहुः ॥ ( १०५० ) **पूर्वकालैक**—। पूर्वकाल[5] इत्यर्थनिर्देशः । इतरेषां तु षण्णां स्वरूपग्रहणम् । पूर्वत्वस्य ससंबन्धिकत्वात्पूर्वकालोऽपरकालेन समस्यते । तथैवोदाहरति—**स्नातानुलिप्त इति** । अत्र क्रियाशब्दत्वात्पाचकपाठकवत् पर्यायः प्राप्तः ॥ **याज्ञिक इत्यादि** । यज्ञमधीयते विदन्ति वा याज्ञिकाः । 'क्रतूक्थादि—१७९२' इति ठक् ।

---

१ **वाचिनेति** । तथा च प्रकृतसूत्रे वार्तिकम्—'ध्वाङ्क्षेणेत्यर्थग्रहणम्' इति ॥ २ इत्यर्थ इत्यपपाठः 'वाचिना' इत्यस्य वैयर्थ्यापत्तेः ॥ अयं कोष्ठकान्तर्गतः पाठः केन चिद्विद्वद्वरेणानधीतभाष्येण वर्धितः इति बोध्यम् ॥ ३ **एकनाथ इति** । एकशब्दोऽत्र संख्यावाच्येव गृह्यते प्रसिद्धतरत्वादिति बोध्यम् ॥ ४ **नियमस्येति** । वस्तुतस्तु—कर्तृकर्मद्वारा क्रियाश्रयस्यैवाधिकरणसंज्ञाऽङ्गीकारादधिकरणस्य क्रियान्वयोऽपि कर्तृकर्मद्वारैवाङ्गीकरणीय इति प्रथमोपपत्तयेऽध्याह्रियमाणायामस्तिक्रियायामेव कर्तृभूतशौण्डादिद्वाराऽन्वयाङ्गीकारे अक्षविषयाधिकरणप्रावीण्यकर्तृका सत्तेति बोधः । आसक्तिरूपक्रियायास्तु न शाब्दी प्रतीतिः 'अक्षकुशलः' इत्यादौ तदासक्तत्वाप्रतीतेः ॥ ५ **पूर्वकाल इति**। पूर्वकालवाचकः परकालवाचकेन समस्यते' इत्यर्थ इति भावः॥

नवपाठकाः । केवलवैयाकरणाः॥ (१०५१) सू॰ **दिक्संख्ये संज्ञायाम्** ।२।१।५०। समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकारः । संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषुकामशमी । सप्तर्षयः । नेह, उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥ (१०५२) सू॰ **तद्धितार्थोत्तरपदसमाहारे च** । २ । १ । ५१ । तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वद्वा । पूर्वस्यां शालायां भवः-पौर्वशालः । समासे कृते दिक्पूर्वपदादसंज्ञायां ञ इति ञः ॥ (१०५३) वा॰ **सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः** ॥ आपरशालः ॥ पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः । तेन शालाशब्दे आकार उदात्तः । पूर्वशालाप्रियः । दिक्षु समाहारो नास्त्यनभिधानात् । संख्यायास्तद्धितार्थे-षण्णां मातॄणामपत्यं षाण्मातुरः । पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहाववान्तरतत्पुरुषस्य विकल्पे प्राप्ते--॥ (१०५४) वा॰ **द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्** ॥ (१०५५) सू॰ **गोरतद्धित-**

---

एवं जरन्नैयायिकाः । 'जीर्यतेरतृन्४११०' इति भूतेऽर्थे तृन् । जरन्तश्च ते नैयायिकाश्च । जीर्णनैयायिका इत्यर्थः । मीमांसामधीयते विदन्ति वा मीमांसकाः।'क्रमादिभ्यो वुन्१८०१'॥**नवपाठका इति**। पठन्तीति पाठकाः।'ण्वुल्तृचौ-३८५१'इति ण्वुल्। संख्यावाची नवशब्दोऽत्र न गृह्यते 'दिक्संख्ये संज्ञायाम् १०५१' इति नियमात् । समानाधिकरणेनेति किम्, एकस्याः शौक्ल्यम् । षष्ठीसमासोऽपि इह न भवति, 'पूरणगुण-१०२२' इति निषेधात् ॥ ( १०५१ ) **दिक्संख्ये संज्ञायाम्** । **नियमार्थमिति** । 'तत्पुरुषसंज्ञायामेव दिक्संख्ये समस्येते' इति नियमशरीरम् । तेन पञ्चगुरित्यादि सिद्ध्यति । कथं तर्हि 'त्रिलोकनाथः पितृसद्मगोचरः' इति कालिदासः, त्रिलोकशब्दस्यासंज्ञात्वात् । न च समाहारे द्विगुः, 'द्विगोः ६६८' इति ङीप्प्रसङ्गात् । न च पात्रादित्वं कल्प्यम्, 'यदि त्रिलोकी गणनापरा स्यात्' इत्यादिप्रयोगाणामसंगत्यापत्तेः । न च 'उत्तरपदे' इति समासः, त्रिपदतत्पुरुषस्य इह दुर्लभत्वात् । अत्राहुः-लोकशब्दोऽत्र लोकसमुदायपरः । त्र्यवयवो लोकस्त्रिलोकः । शाकपार्थिवादित्वादुत्तरपदलोपः' इति ॥ **पञ्च ब्राह्मणा इति** । यद्यप्यत्र कृतेऽपि समासे रूपे विशेषो नास्ति, तथापि विभक्त्यन्तरे पञ्चभिर्ब्राह्मणैरित्यादौ विशेषो बोध्यः ॥ ( १०५२ ) **तद्धितार्थो**--। असंज्ञार्थं वचनम् । एकाऽपि सप्तमी विषयभेदाद्भिद्यत इत्याशयेनाह--**तद्धितार्थे विषये इत्यादि** । यदि तु 'तद्धितार्थे वाच्ये' इति व्याख्यायेत, तर्हि पौर्वशाल इत्यादौ तद्धितो न स्यात् । तदर्थस्य समासेनैवोक्तत्वात् । 'द्विगोर्लुगनपत्ये १५५१' इति ज्ञापकादुक्तेऽपि तद्धितार्थे तद्धितो भवतीति कल्पनायां प्रतिपत्तिगौरवमिति भावः ॥ 'तद्धिते परे' इति तु न व्याख्येयमेव । तद्धिते परतः समासः, समासे कृते 'दिक्पूर्वपदात्-१८७१' इत्यादिना तद्धित इत्यन्योऽन्याश्रयप्रसङ्गात् ॥ **समाहारे च वाच्ये इति** । तेन पञ्चगवमित्यादौ समासेनैव समाहारस्योक्तत्वात्समूहार्थप्रत्ययो नोत्पद्यते । अन्यथा तत्र 'गोरतद्धितलुकि १०५५' इति टच् न स्यात्, सामूहिकप्रत्ययस्य 'द्विगोर्लुगनपत्ये १५५१' इति लुकः प्रवृत्तेरिति भावः । ( १०५३ ) **सर्वनाम्न इति** । एतच्च पूर्वापरोदाहरणान्वयि । यद्यपि 'स्त्रियाः पुंवत्-११९६' इत्यनेनापि प्रकृतरूपसिद्धिः, तथाऽप्युत्तरपूर्वेत्याद्यर्थं 'सर्वनाम्नः-१०५३' इति वचनमावश्यकं प्रतिपदोक्तत्वादिहापि तदुपन्यासो न्याय्य इति भावः ॥ **वृत्तिमात्रे इति** । तद्धितवृत्तौ समासवृत्तौ चेति कैयटः ॥ **आकार उदात्त इति** । असति त्वत्रान्तरे तत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमेव स्यादिति भावः ॥ **षाण्मातुर इति** । 'मातुरुत्संख्यासंभद्रपूर्वायाः १५९६' इत्युदादेशः । 'अनपत्ये' इत्युक्ते 'द्विगोर्लुग्-१५५१' इति लुग् न ॥ **विकल्पे प्राप्त इति** । महाविभाषयेति शेषः । ततश्च तत्पुरुषप्रयुक्तटजभावे पञ्चगोधन इत्यपि स्यादिति भावः ॥ ( १०५४ ) मनोरमायां तु-विकल्पे प्राप्ते नित्यसमासार्थं 'द्वन्द्वतत्पुरुषयोः-१०५४' इत्येतद्वचनमिति प्राचां[2] ग्रन्थमनुसृत्योक्तम् । वस्तुतस्तु त्रयाणां समासे कृते अन्यपदार्थोपसंक्रमेण परस्परसंबन्धाभावात्[3] द्वन्द्वतत्पुरुषयोरप्राप्तौ सत्यां वचनमिदमित्यादि स्थितम्[4] । द्वन्द्वस्योदाहरणं तु वाक् च दृषच्च प्रिये अस्य वाग्दृषदप्रियः । । छत्रोपानहप्रियः । इह त्रिपदे बहुव्रीहौ कृते पूर्वयोर्नित्यं द्वन्द्वः । तेन 'द्वन्द्वाच्चुदषहान्तात्-१३३४' इति समासान्तष्टजपि नित्य एव ॥ ( १०५५ ) **गोरतद्धित**--।

---

१ **संख्यावाचीति** । पुराणशब्दसाहचर्यादिति भावः ॥ २ **प्राचां ग्रन्थमिति** । भाष्यग्रन्थमित्यर्थः इति शब्दरत्ने । अत एवैतद्वार्तिकमुक्त्वा 'किं प्रयोजनम् । समुदायवृत्तावयवानां कदाचिदप्यवृत्तिर्मा भूत्' इत्येव प्रयोजनमुक्तं भाष्ये ॥ ३ **परस्परसंबन्धाभावादिति** । निष्कृष्य पञ्चगोपदमात्रयोः परस्परं सामानाधिकरण्याभावाच्छत्रोपानहस्य चार्थमात्रवृत्त्यसंभवादित्यर्थः । अन्यथा पञ्चगोधनपदानां परस्परं विशेष्यविशेषणभावपूर्वकमेवान्यपदार्थोपसंक्रमाच्छत्रोपानहप्रिय इत्यत्र समूहबोधपूर्वकमेव तदुपक्रमात्तदसंगतिः स्पष्टैवेति भावः ॥ ४ **स्थितमिति** । तत्र तत्पुरुषो बहुव्रीह्यवयवोत्तरपद इव तत्पुरुषावयवोत्तरपदेऽपि । अत एव 'उत्तरपदेन परिमाणिना द्विगोः सिद्धये' इत्युक्तम् । द्वन्द्वस्तु बहुव्रीह्यवयवोत्तरपद एव । वाग्दृषदप्रिय इत्यादौ प्रियशब्देनोभयोः सामानाधिकरण्यं न द्वन्द्वावयवोत्तरपदे । चतुर्णां द्वन्द्वे होतृपोतृनेष्टोद्गातार इति प्रयोगेण तदनभिधानात् । पदयोर्निष्कृष्यैकार्थीभावाभावेऽपि समासादिप्रवृत्तिरस्तीति तयोर्निष्कृष्य सामानाधिकरण्याभावेऽपि यथाकथंचित्सामानाधिकरण्यमादायैव तत्प्रवृत्तिः, अत एव पश्चिमशालाप्रिय इत्यादौ पुंवत्त्वसिद्धिः । 'पुंवत्त्वे यथाकथंचित्सामानाधिकरण्यं नियामकं समासे तु निष्कृष्यैव' इत्यत्र न विनिगमकम् । अस्य प्रत्याख्यानपक्षे एकविंशतिर्भारद्वाजा वंश्याः प्रिया यस्येति बहुव्रीहौ अव्ययीभावादि तु नानभिधानात् । वस्तुतो नित्यत्वांशोऽपि न्यायसिद्धः । त्रयाणामेकार्थीभावे द्वयोर्व्यपेक्षाया दुरुपपादत्वादिति बोध्यम् ॥

लुकि ।५।४।९२। गोन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि । पञ्चगवधनः ॥ (१०५६) ॐ संख्यापूर्वो द्विगुः ।२।१।५२। तद्धितार्थेत्यत्रोक्तः संख्यापूर्वो द्विगुः स्यात् ॥ (१०५७) ॐ द्विगुरेकवचनम् । २।४।१। द्विग्वर्थः समाहार एकवत्स्यात् । 'स' नपुंसकमिति नपुंसकत्वम् । पञ्चानां गवां समाहारः—पञ्चगवम् ॥ (१०५८) ॐ कुत्सितानि कुत्सनैः । २।१।५३। कुत्स्यमानानि कुत्सनैः सह प्राग्वत् । वैयाकरणखसूचिः । मीमांसकदुर्दुरूटः ॥ (१०५९) ॐ पापाणके कुत्सितैः । २ । १ ।५४। पूर्वसूत्रापवादः । पापनापितः । अणककुलालः । ( १०६० ) ॐ उपमानानि

---

'तत्पुरुषस्य' इत्यनुवर्तते, टच्, तदाह—**गोन्तादित्यादि** । ननु ग्रहणवता प्रातिपदिकेन तदन्तविधेरभावात्तत्पुरुषस्यावयवो यो गोशब्दस्तस्माट्टजित्यर्थः स्यात् । तथा च गोमूत्रमित्यादावतिप्रसङ्गः स्यादत आह—**समासान्त इति** । अयं भावः । 'समासान्ताः ९८१' इत्यधिकाराट्टचा समासान्तेन भवितव्यम् । गोरिति पञ्चमीश्रवणात्ततः परेणापि । न चैतत्तदन्तविधिमन्तरेणोपपद्यत इति सामर्थ्यात्तदन्तविधिलाभः, ततश्च तत्पुरुषस्येति षष्ठ्यन्तं पञ्चम्यन्तेन विपरिणम्यत इति ॥ **न तु तद्धितलुकीति** । लुग्विषय इत्यर्थो, न तु तद्धितलुकि सतीति । समासान्तानामन्तरङ्गत्वात् । अतद्धितलुकीति किम् । पञ्चभिर्गोभिः क्रीतः पञ्चगुः । अत्र तद्धितस्य ठकः 'अध्यर्धपूर्व–२३०५' इति लुक् ॥ ( १०५६ ) **संख्यापूर्वो द्विगुः** ॥ **तद्धितार्थेत्यत्रोक्त इति** । अयं भावः—पूर्वसूत्रविषयैवेयं संज्ञा । 'अनन्तरस्य–४८८' इति न्यायात् एतदर्थमेव हि सूत्रद्वयं कृतम् । अन्यथा 'दिक्संख्ये संज्ञातद्धितार्थोत्तरपदसमाहारेषु' इत्येव ब्रूयात् । तेन सप्तर्षय इत्यत्र 'इगन्तकालकपाल–५७३०' इत्यादिना पूर्वपदप्रकृतिस्वरो न[1] भवति । किन्तु, समासान्तोदात्त एव । तथा च लक्ष्यम्—'सप्त ऋषयस्तपसे ये निषेदुः' । 'सप्तऋषीणां सुकृताय[2] लोकः' इत्यादि ॥ **त्रिविधः संख्यापूर्व इति** । 'तद्धितार्थे विषये, उत्तरपदे च परतः, समाहारे च वाच्ये, संख्यापूर्वो यः समासः सः' इत्यर्थः । तद्धितार्थे यथा—पञ्चकपालः । 'संस्कृतं भक्षाः १७२०' इत्यणो 'द्विगोर्लुगनपत्ये १५५१' इति लुक् । उत्तरपदे यथा—पञ्चनावप्रियः । 'नावो द्विगोः ११४७' इति समासान्तष्टच् । समाहारे—पञ्चमूली । 'द्विगोः ६६८' इति ङीप् ॥ ( १०५७ ) **द्विगुरेकवचनम्** । वक्तीति वचनम्, बाहुलकात्कर्तरि ल्युट् । 'सामान्ये नपुंसकम् ११८२' । द्विगुः समास एकार्थप्रतिपादको भवतीत्यर्थः ॥ न च वस्तुतोऽनेकार्थस्यैकार्थ्यं कथंचिदुपपद्यते इति सामर्थ्यादतिदेशः संपद्यत इत्याह—**एकवत्स्यादिति** । समाहारे इति तूपसंख्यानाल्लभ्यते । समाहारे यो द्विगुस्तदर्थ एकवदित्यन्वयः । समाहारे किम्, तद्धितार्थे मा भूत् । पञ्चसु कपालेषु संस्कृताः पञ्चकपालाः पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटाः । पञ्चगवे पञ्चगवानीत्यत्र तु प्रथमद्विग्वर्थस्यैकवद्भावे कृते योऽयमेकशेषे कृते द्विग्वर्थसमुदायस्तस्याद्विग्वर्थत्वाद्बहिरङ्गत्वादेकवद्भावो न भवतीति स्थितमाकरे । यदा 'तद्धितार्थ–१०५२' इति सूत्रे 'समाहारे' इति कर्मसाधनः, तदा समाहृतप्रधानो द्विगुरिति बहुत्वे प्राप्ते अनेन एकवद्भावः क्रियते । यदा तु भावसाधन एव समाहारस्तदा समूहप्रधानत्वाद् द्विगोः समूहस्य चैकत्वात्सिद्धमेकत्वमिति नास्य प्रयोजनम् । न च 'स नपुंसकम् ११७५' इति नपुंसकत्वार्थमेकत्वविधानमिति वाच्यम् । समुदायवाचकेषु 'सामान्ये नपुंसकम् ११८२' इत्यभ्युपगमे बाधकाभावादित्याहुः ॥ वस्तुतस्तु—'तद्धितार्थ–१०५२' इति सूत्रे समाहार इति भावे घञ्, न तु कर्मणि । पञ्चगवमित्यत्र पञ्च गावः समाहृता इत्यर्थाभ्युपगमे समाह्रियमाणानां बहुत्वेन एकवचनानुपपत्तेः । न च 'द्विगुरेकवचनम् १०५७' इति सूत्रान्नैवमिति वाच्यम्, पञ्चखट्वीत्यसिद्धेः । तत्र हि पञ्च खट्वाः समाहृताः, पञ्चसु खट्वासु समाहृतास्वित्येवं विग्रहसंभवेन नियतविभक्तित्वाभावात् 'एकविभक्ति चापूर्वनिपाते ९५६' इत्युपसर्जनत्वाभावे 'गोस्त्रियोः–९५७' इति ह्रस्वो न स्यात् । ततश्च 'आबन्तो वा ११७७' इति स्त्रीत्वपक्षे 'द्विगोः ६६८' इत्यदन्तलक्षणो ङीन्न स्यात् । भावसाधनत्वे त्वेकविभक्तित्वादुपसर्जनत्वमव्याहतमेव । समाहारापेक्षया नियमेन वर्तिपदानां षष्ठ्यन्तत्वात्तथा च पञ्चखट्वीत्यादिरूपं निर्बाधमेवेति दिक् ॥ **स नपुंसकमिति** । एतस्यार्थो मूल एव स्फुटीभविष्यति ॥ ( १०५८ ) **कुत्सितानि**— । 'कुत्स अवक्षेपणे' कर्मणि क्तः । स च 'मतिबुद्धि–४१०७' इति सूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने विहित इत्याशयेनाह—**कुत्स्यमानानीति** । तत्प्रतिपादकानीत्यर्थः । उभयत्र बहुवचननिर्देशः स्वरूपविधिनिरासार्थः ॥ **वैयाकरणखसूचिरिति** । सूचयतेः 'अच इः ४७८४' यः पृष्टः सन् प्रश्नं विस्मारयितुं खं सूचयत्यभ्यासवैधुर्यात्स एवमुच्यते । न तु वस्तुतो व्याकरणं तदध्ययनं वा कुत्सितम्, वेदाङ्गत्वेन तस्य प्रशस्तत्वात् । तथाऽपि प्रतिभानाभावेन निष्फलत्वात्कुत्स्यते ॥ **दुर्दुरूट इति** । 'दुल उत्क्षेपे' दुर्पूर्वः । औणादिकः कूटप्रत्ययः । 'बहुलमन्यत्रापि ४३८३' इति णेर्लुक् । रलयोरेकत्वस्मरणाल्लस्य रः । विशेष्यस्य पूर्वनिपातनियमार्थं सूत्रम् । शब्दप्रवृत्तिनिमित्तकुत्सायामेवायं संनिधानात् । तेनेह न—नैयायिको दुराचारः ॥ ( १०५९ ) **पापाणके**— । एतौ कुत्सनाभिधायिनौ । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः । ततश्चानयोः पूर्वसूत्रेण समासे परनिपातः स्यात्, तस्मात्पूर्वनिपातनियमार्थमिदं सूत्रमित्याशयेनाह—**पूर्वसूत्रापवाद इति** ॥ ( १०६० ) **उपमानानि**— । उपमीयते येन तदुपमानम् । उपपूर्वान्माङः करणे ल्युट् । प्रादिसमासः । उपपूर्वको माङ् सादृश्यवाचके परिच्छेदे रूढः । येन वस्त्वन्तरं सादृश्येन परिच्छिद्यते तदुपमानमित्यर्थः । यथा गौरिव गवयः । इह हि गौः करणं सादृश्ये हेतुः, पुरुषः परिच्छेत्ता । स हि गौः सादृ-

---

१ **न भवतीति** । तत्र 'दिक्संख्ये संज्ञायाम्' इति समासेन द्विगुत्वाभावादिति भावः ॥ २ **सुकृतायेति**— । 'सुकृतां यत्र लोकः' इति मनोरमायां पाठः ॥

सामान्यवचनैः ।२।१।५५। घन इव श्यामो-घनश्यामः[1]। इह पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते। पूर्वनिपातनियमार्थं सूत्रम्॥ (१०६१) (सू) उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ।२।१।५६। उपमेयं व्याघ्रादिभिः सह प्राग्वत्साधारणधर्मस्याप्रयोगे सति। विशेष्यस्य पूर्वनिपातार्थं सूत्रम्। पुरुषव्याघ्रः। नृसोमः। व्याघ्रादिराकृतिगणः। सामान्याप्रयोगे किम्। पुरुषो व्याघ्र इव शूरः॥ (१०६२) (सू) विशेषणं विशेष्येण बहुलम्। २। १। ५७। भेदकं समानाधिकरणेन भेद्येन बहुलं प्राग्वत्। नीलमुत्पलं-नीलोत्पलम्। बहुलग्रहणात्क्वचिन्नित्यम्। कृष्णसर्पः। क्वचिन्न, रामो जामदग्न्यः॥ (१०६३) (सू) पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च। २। १। ५८। पूर्वनिपातनियमार्थमिदम्। पूर्ववैयाकरणः। अपराध्यापकः॥ (१०६४) (वा) अपरस्यार्धे पश्चभावो वक्तव्यः॥ अपरश्चासावर्धश्च पश्चार्धः। कथमेकवीर इति। पूर्वकालैकेति बाधित्वा परत्वादनेन समासे वीरैक इति हि स्यात्। बहुलग्रहणाद्भविष्यति॥ (१०६५) (सू) श्रेण्यादयः कृता-

---

द्येन गवयं परिच्छिनत्ति॥ **सामान्यवचनैरिति**। समानो धर्मः सामान्यम्। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। उपमानोपमेयसाधारणो यो धर्मस्तद्विशिष्टवचनैरित्यर्थः। न तु साधारणधर्ममात्रवचनैरिति। एतच्च वचनग्रहणाल्लभ्यते। सामान्यमुक्तवन्तः सामान्यवचनाः। बाहुलकात्कर्तरि भूते ल्युट्। ये पूर्वं सामान्यमुक्त्वा तद्वति द्रव्ये पर्यवस्यन्ति ते तथोक्ताः। तच्च सामान्यविशिष्टमुपमानशब्दस्य संबन्धिशब्दत्वादाक्षिप्तमुपमेयमेव विज्ञायते॥ **लाक्षणिकमिति**। अत[3] एव सामानाधिकरण्यान्मृगीव चपला मृगचपलेत्यादौ पुंवद्भावः। उत्तरपदोपस्थितश्यामत्वचपलत्वादिद्वारकमेवेह सादृश्यं गृह्यते सांनिधानात्। कथं तर्हि उपमानपरेति चेत्, भूत[4]पूर्वगत्या शक्यार्थमादाय तत्परतेत्यवेहि॥ **पूर्वनिपातेति**। अन्यथाऽनियमः स्यात् खञ्जकुब्जवदिति भावः। किंच, 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय-५७०२' इति सूत्रे प्रतिपदोक्तस्यास्यैवोपमानग्रहणेन ग्रहणार्थमपीदं सूत्रम्। अत एव मयूरव्यंसकादित्वात्समासे उपमानस्वरो न प्रवर्तते इति सिद्धान्तः॥ (१०६१) **उपमितम्**—। उपमेयमुपमितम्। भूतकालोऽत्र न विवक्षितः। तच्च संबन्धिशब्दत्वादुपमानमाक्षिपति। तथा चोपमानभूतैर्व्याघ्रादिभिरित्यर्थः॥ **पुरुषो व्याघ्र इव शूर इति**। तत्र हि शूरसापेक्षस्यापि पुरुषस्य प्रधानत्वात् 'राजपुरुषः सुन्दरः' इति वदत्रापि समासः स्यात्स मा भूदिति 'सामान्याप्रयोगे' इत्युक्तमिति भावः। कथं तर्हि 'भाष्याब्धिः क्वातिगम्भीरः' इति कैयटः। सामान्यप्रयोगसत्त्वेनास्याप्राप्तेः। अत्र केचित् प्रमाद एवायमित्याहुः। इह गाम्भीर्येण सादृश्यं न विवक्षितं, किं तु विततदुरवगाहत्वादिना। तस्य हि विततत्वादेरप्रयोगोऽस्त्येवेति निर्बाधः समास इति मनो[5]रमायां स्थितम्॥ (१०६२) **विशेषणम्**—। विशिष्यते येन तद्विशेषणं, कर्तुः करणत्वविवक्षायां ल्युट्, तदाह—**भेदकमिति**। व्यावर्तकमित्यर्थः। विशेषणविशेष्ययोः ससंबन्धिकतया अन्यतरोपादानमात्रेणेतराक्षेपसंभवे उभयोरुपादानं स्पष्टार्थमिति कैयटः। एतच्च 'कुत्सितानि कुत्सनैः १०५८' इत्यत्रापि तुल्यम्। हरदत्तस्त्वाह—समस्यमानपदद्वयजन्यबोधप्रकारकयोर्विशेषणविशेष्यधर्मयोर्यत्र परस्परव्यभिचारस्तत्रैव समासो यथा स्यात्। नान्यत्रेत्येतदर्थमुभयोपादानम्। तथा च नीलोत्पलादौ समासो भवति, न तु 'तक्षकः सर्पः' इत्यादौ। न हि तक्षकत्वं सर्पत्वं व्यभिचरतीति। तन्मन्दम् कैलासाद्रिः, मन्दराद्रिः, भावपदार्थः, तर्कविद्या, व्याकरणशास्त्रं, भोजराजः,इत्यादिप्रयोगाणामसंगत्यापत्तेः। ननु विशेषणविशेष्यभावे कामचारात्पाचकपाठकादाविव नीलोत्पलादावप्यव्यवस्थितः पूर्वनिपातः स्यात्, इति चेदत्राहुः। जातिशब्दस्य गुणक्रियाशब्दसमभिव्याहारे विशेष्यसमर्पकतैव। तेन नीलोत्पलं पाचकब्राह्मण इति व्यवस्थित एव प्रयोगः। गुणशब्दयोः, क्रियाशब्दयोः, गुणक्रियाशब्दयोश्चानियम एव। खञ्जकुब्जः कुब्जखञ्जः। पाचकपाठकः पाठकपाचकः। खञ्जपाचकः पाचकखञ्ज इति। अत्र मूलमुपसर्जनमिति महासंज्ञा। अप्रधानं ह्युपसर्जनम्। [6]गुणक्रिययोश्च द्रव्यं प्रत्यप्राधान्यं स्पष्टमेवेति॥ (१०६३) **पूर्वापर**—(१०६४) **अपरस्यार्ध इति**। एतच्च 'पश्चात्' इति सूत्रे भाष्ये स्थितम्॥ **बाहुलकादिति**। एकेषु मुख्येषु वीरयते पराक्रमते इति वा बोध्यम्॥ (१०६५) **श्रेण्यादयः**—। आद्य आदिशब्दो व्यवस्थावाची, द्वितीयस्तु प्रकारवाची। 'श्रेण्यादयः पठ्यन्ते, 'कृतादिराकृतिगणः' इति भाष्यात्। श्रेणि, एक, पूग,

---

१ **घनश्याम इति**। स्वसमभिव्याहृतनिष्ठमुपमानत्वमिवादिद्योत्यम्। साधारणधर्मसंबन्धस्योभयत्र बोधे तात्पर्यग्राहकता च। एवं चोपमानश्यामघनाभिन्नः श्याम उपमेय इति बोधः। अत एवोपमानोपमेययोः समानविभक्तिकत्वनियमः। २ **बहुलग्रहणादिति**। अत एव गुणक्रियाशब्दैरेतेषां न समास इति 'अपराध्यापकः' इत्युदाहरणं चिन्त्यम्॥ ३ **अत एवेति**। पूर्वपदस्य सदृशलाक्षणिकत्वादेवेत्यर्थः। न च दर्शनीयाया माता दर्शनीयमातेत्यत्रापि द्वयोरेकविशेष्यकप्रतीतिजनकत्वेन सामानाधिकरण्यात्पुंवत्त्वापत्तिः, वृत्तौ वृत्तेः प्राक् च सामानाधिकरण्य एव तत्प्रवृत्तेः। इवशब्दस्य द्योतकत्वाच्च वृत्तेः प्रागपि सामानाधिकरण्यमत्रेति बोध्यम्॥ ४ **भूतपूर्वगत्येति**। घनेन तुल्यः श्याम इति वाक्ये तच्छब्दार्थस्य सादृश्ये प्रतियोगित्वेनान्वयादुपमानत्वमिति भावः॥ ५ **मनोरमायामिति**। उपात्तधर्मसत्त्वे तेनैव साम्यप्रतीतेरनुभवात्, 'सकलकलः पुरचन्द्रो राजते' इत्यादावुपात्तधर्मातिरिक्तधर्मस्य साम्यप्रयोजकस्याभावाच्च, चिन्त्यमेतत्। तस्मान्मयूरव्यंसकादित्वात्समास इति बोध्यम्॥ ६ **गुणक्रिययोश्चेति**। 'अप्रधानमुपसर्जनम्' इति महासंज्ञया 'अनेकस्य प्रथमानिर्दिष्टत्वेऽप्रधानस्यैव संज्ञा न प्रधानस्य' इति बोधयितुं शक्यम्। 'न त्वप्राधान्यं कस्य' इत्यत्रास्य नियामकतेति केचित्॥

दिभिः । २ । १ । ५९ ॥ (१०६६) वा॰ श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम् ॥ अश्रेणयः श्रेणयः कृताः श्रेणीकृताः ॥ (१०६७) सू॰ क्तेन नञ्विशिष्टेनानञ् । २ ।१। ६० । नञ्विशिष्टेन क्तान्तेनानञ् क्तान्तं समस्यते । कृतं च तदकृतं च कृताकृतम् ॥ (१०६८) वा॰ शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् ॥ शाकप्रियः पार्थिवः-शाकपार्थिवः । देवब्राह्मणः ॥ (१०६९) सू॰ सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः । २ । १ । ६१ । सद्वैद्यः । वक्ष्यमाणेन महत आकारः । महावैयाकरणः । पूज्यमानैः किम् । उत्कृष्टो गौः । पङ्कादुद्धृत इत्यर्थः ॥ (१०७०) सू॰ वृन्दारकनागकुञ्जरैः पूज्यमानम् । २ । १ । ६२ । गोवृन्दारकः ॥ व्याघ्रादेराकृतिगणत्वादेव सिद्धे सामान्यप्रयोगार्थं वचनम् ॥ (१०७१) सू॰ कतरकतमौ जातिपरिप्रश्ने । २ । १ । ६३ । कतरकठः । कतमकलापः । गोत्रं च चरणैः सहेति जातित्वम् ॥ (१०७२) सू॰ किं क्षेपे । २ । १। ६४ । कुत्सितो राजा-किंराजा । यो न रक्षति ॥ (१०७३) सू॰ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः २।१।६५। (१०७४) सू॰ तत्पुरुषः समानाधिकरणः कर्मधारयः ।१।२।४२॥ (१०७५) सू॰ पुंवत्कर्मधारयजातीयदेशीयेषु । ६ । ३ । ४२ । कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात्पर ऊङभावो यस्मिंस्तथाभूतं पूर्वं पुंवत् ।

---

मुकुन्द, शशि, विशिख, निचय, विषय, निधनादिः श्रेण्यादिः ॥ कृत, मत, मित, भूतादिः कृतादिः ॥ (१०६६) यदा तु सिद्धा एव श्रेणयः सम्यक् कृतास्तदा समासो नेष्यत इत्याशयेनाह—**अश्रेणयः श्रेणय इति** । एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणिः । च्व्यन्तानां तु ' कुगति-१०९७' इति नित्यसमासः, परत्वात् । श्रेणीकृतम् । इह तु ' च्वौ च २८६०' इति दीर्घः ॥ (१०६७) **क्तेन**—। विशिष्टशब्दोऽवधारणार्थः । नञ्मात्राधिकेन नञ्रहितं समस्यत इति सूत्रार्थः । तेनेह न, सिद्धं चाभुक्तं च ॥ नुडिडधिकेनापीति वाच्यम् ॥ अशितं चानाशितं च आशितानाशितम् । क्लिष्टाक्लिशितम् । 'क्लिशः क्त्वानिष्ठयोः ४०६२' इति वेट् ॥ **कृताकृतमिति** । एकदेशकरणात्कृतम् । एकदेशान्तरस्याकरणात्तदेवाकृतम् ॥ (१०६८) **शाकपार्थिव इति** । पृथिव्या ईश्वरः पार्थिवः । ' तस्येश्वरः २३२५' इत्यण् । शाकप्रिय इति बहुव्रीहिः, तस्य पार्थिवशब्देन समासे कृते पूर्वसमासे यदुत्तरपदं प्रिय इति तस्य लोपः । तथा देवब्राह्मण इत्यत्र देवस्य पूजको देवपूजक इति पूर्वस्मिन् षष्ठीसमासे यदुत्तरपदं पूजक इति तस्य लोपो ज्ञेयः ॥ (१०६९) **सन्महत्**—। गुणक्रियाशब्दैः सह समासे सदादीनां पूर्वनिपातनियमार्थं सूत्रम् ॥ (१०७१) **कतरकतमौ**—। जातिपरिप्रश्ने किम् , कतरो देवदत्तः । ' वा बहूनां जातिपरिप्रश्ने डतमच् ३७७४' इति व्युत्पादितकतमशब्दसाहचर्यात्तादृशस्यैव कतरशब्दस्यापि ग्रहणे सिद्धे जातिपरिप्रश्नग्रहणं ज्ञापयति-'कतमशब्दोऽर्थान्तरेऽपि साधुः' इति । तथा च प्रत्युदाहृतं प्राचीनवृत्तिषु-'कतरो भवतोर्देवदत्तः । कतमो भवतां देवदत्तः' इति॥ (१०७२) **किं क्षेपे** ॥ **किंराजेति** । 'किमः क्षेपे १३७१' इति समासान्तनिषेधः । क्षेपे किम्, को राजा पाटलिपुत्रे । [ एवं किंसखा यो द्रुह्यति' । 'किंगौः यो न वहति' इत्यप्युदाहरणं बोध्यम् ] ॥ (१०७४) **तत्पुरुषः**—। समानाधिकरणशब्दः अर्शआद्यजन्तः । समानाधिकरणपदक इत्यर्थः॥(१०७५) **पुंवत्कर्म**—। **भाषितपुंस्कादित्यादि** । एतच्च 'स्त्रियाः पुंवत्-११९६' इति सूत्रे स्फुटीकरिष्यते । ननु तेनैव कर्मधारयेऽपि सिद्धं, जातीयदेशीययोस्तु 'तसिलादिषु-१२०१' इति सिद्धं, तत्किमनेन

---

१ **नञिति**।अत्र नञ्पदं क्रियाऽसमाप्तिद्योतकाव्ययोपलक्षणम् । तेन कृतापकृतम् । भुक्तविभुक्तम् इत्यादिसिद्धिः॥ "गतप्रत्यागतादीनामुपसंख्यानम् " ॥ गतप्रत्यागतम् । यातानुयातम् । पुटापुटिका । क्रयाक्रयिका । फलाफलिका । मानोन्मानिका । इति तु भाष्येऽधिकं दृश्यते । अत्र कैयटः-'क्रयिकेत्यादौ'अल्पे'इति कप्रत्ययः । तदन्तश्च स्वभावात् स्त्रियां वर्तते । 'क्रयाक्रयिका' इत्यादौ ' अन्येषामपि इति दीर्घः ॥' इति॥२ **शाकपार्थिव इति** । यद्यपि पूर्वपदस्यैव तत्तदर्थे लक्षणायां 'विशेषणं विशेष्येण-' इति समासेन सिद्धम् । तथापि मुख्यार्थे ' शाकप्रियपार्थिवः ' इत्यादिनिवृत्त्यर्थमिदम् ॥ ३ **सदिति** । अत्र ' सत् ' इति स्वरूपग्रहणम् , न सत्संज्ञकयोः, न हि तौ पूजामाहतुः ॥ एवं 'महत्' शब्दोऽपि '**शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे । यात्रायां पथि निद्रायां महच्छब्दो न दीयते** ॥ '' इत्यभियुक्तोक्तपदानि विहायैव पूज्यमानत्वबोधकः । एवं च महाशङ्खः, महातैलम्, महामांसम् , महावैद्यः, महाज्यौतिषिकः, महाब्राह्मणः, महायात्रा, महापथः, महानिद्रा, इत्येतेषूत्तरपदस्य प्रशंसा महच्छब्देन नैव द्योत्यते किन्तु निन्दैव ॥ ४ **सामान्यप्रेति** । गोवृन्दारकः पूज्य इत्यादौ पूज्य इत्यादेः प्रयोगे " उपमितं व्याघ्रादिभिः " इति समासो न प्राप्नोतीति समासविध्यर्थं सूत्रमिति भावः ॥ ५ **तत्पुरुष इति** । तत्पुरुषाधिकारे एव'समानाधिकरणः कर्मधारयः' इत्येतत्करणे त्वेकसंज्ञाधिकारात्तस्या अनया बाधः स्यात् । चकारकरणे अनुवादकल्पने च गौरवमेवेति भावः ॥ ६ **इहेति** । च्व्यन्तेषु त्वित्यर्थः ॥ ७ **जातिपरिप्रश्नेति** । ' द्वयोरेकस्य-' ' वा बहूनाम्' इति सूत्रयोरुपाधिप्रत्याख्यानात् 'कतमो भवतां पण्डितः' इत्यादौ समासाभावाय जातिपरिप्रश्न इति । यथान्यासे कतरार्थं तत् ॥ ८ अयं कोष्ठकान्तर्गतः पाठः ' क्षेपे किम् ' इत्यतः प्रागेव बोध्यः ॥

पूरणीप्रियादिष्वप्राप्तः पुंवद्भावोऽनेन विधीयते । महानवमी । कृष्णचतुर्दशी । महाप्रिया । तथा कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते । पाचकस्त्री । दत्तभार्या । पञ्चमभार्या । स्नौघ्नभार्या । सुकेशभार्या । ब्राह्मणभार्या । एवं पाचकजातीया । पाचकदेशीयेत्यादि । इभपोटा[1] । पोटा स्त्रीपुंसलक्षणा । इभयुवतिः । अग्निस्तोकः । उदश्वित्कतिपयम् । गृष्टिः सकृत्प्रसूता, गोगृष्टिः । धेनुर्नवप्रसूतिका, गोधेनुः । वशा वन्ध्या, गोवशा । वेहत् गर्भघातिनी, गोवेहत् । बष्कयणी तरुणवत्सा, गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्तः ॥ ( १०७६ ) सू॰ **प्रशंसावचनैश्च** ।२।१।६६। एतैः सह जातिः प्राग्वत् । गोमतल्लिका । गोमचर्चिका । गोप्रकाण्डम् । गवोद्धः । गोतल्लजः । प्रशस्ता गौरित्यर्थः । मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः । जातिः किम् । कुमारी मतल्लिका ॥ ( १०७७ ) सू॰ **युवा खलतिपलितवलिनजरतीभिः** । २।१।६७। पूर्वनिपातनियमार्थं सूत्रम् । लिङ्गविशिष्टपरिभाषया युवतिशब्दोऽपि समस्यते । युवा खलतिः—युवखलतिः । युवतिः खलती—युवखलती । युवजरती । युवत्यामेव[2] जरतीधर्मोपलम्भेन तद्रूपारोपात्सामानाधिकरण्यम् ॥ ( १०७८ ) सू॰ **कृत्यतुल्याख्या अजात्या**[3] । २।१।६८। भोज्योष्णम् । तुल्यश्वेतः । सदृशश्वेतः । अजात्या किम् । भोज्य ओदनः । प्रतिषेधसामर्थ्याद्विशेषणसमासोऽपि न ॥ ( १०७९ ) सू॰ **वर्णो वर्णेन** ।२।१।६९। समानाधिकरणेन सह प्राग्वत् । कृष्णसारङ्गः ॥ ( १०८० ) सू॰

सूत्रेणेत्यत आह[4]—**पूरणीप्रियादिष्विति** । **तथेति च** ॥ **महानवमीति** । नवानां पूरणी 'तस्य पूरणे डट् २५०७', 'नान्तादसंख्यादेर्मट् २५०८', टित्त्वान्ङीप् । महती चासौ नवमी चेति विग्रहः । पुंवद्भावे कृते वक्ष्यमाणेन महत आकारः ॥ **कोपधादेरिति** । 'न कोपधायाः १२०८' 'संज्ञापूरण्योश्च १२१०' 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे १२११' 'स्वाङ्गाच्चेतः १२१२' 'जातेश्च १२१४' इति पञ्चसूत्र्या प्रतिषिद्ध इत्यर्थः । क्रमेणोदाहरति—**पाचकस्त्रीति** । जातीयदेशीययोरपि प्रतिप्रसवमुदाहरति—**एवमिति** । पाचिकाप्रकारवती पाचकजातीया । 'प्रकारवचने जातीयर् २७३८' ॥ **पाचकदेशीयेति** । 'ईषदसमाप्तौ–२७३६' इति देशीयर् । उभयत्र 'तसिलादिषु–१२०१, इति पुंवद्भावस्य 'न कोपधायाः १२०८' इति निषेधः प्राप्तः, पटुजातीया, पटुदेशीयेत्यादौ तस्य चरितार्थत्वात् ॥ **इत्यादीति** । आदिपदात् दत्तजातीया, पञ्चमजातीया, स्रौघ्नजातीया, सुकेशजातीया, ब्राह्मणजातीया । एवं दत्तदेशीयेत्याद्युदाहार्यम् ॥ **स्त्रीपुंसलक्षणेति** । स्तनश्मश्र्वादियुक्ता[5] स्त्रीत्यर्थः ॥ **उदश्विदिति** । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इत्यमरः ॥ **कठधूर्त इति** । नात्र कठत्वं कुत्स्यते । अतः 'कुत्सितानि कुत्सनैः १०५८' इति गतार्थता न शङ्क्या, प्रवृत्तिनिमित्तकुत्सायामेव तस्य प्रवृत्तेः । 'जनयति कुमुदभ्रान्तिं धूर्तबको बालमत्स्यानाम्' इत्यत्र धूर्तबक इत्यसाधुरेव ॥ ( १०७६ ) **प्रशंसावचनैश्च** । वचनग्रहणं रूढिशब्दपरिग्रहार्थम् । तेन ये यौगिकाः प्रशस्तशोभनरमणीयादयः, ये च विशेषवचनाः शुचिमृद्वादयः, ये तु गौण्या वृत्त्या प्रशंसां गमयन्ति 'सिंहो माणवकः' इत्यादयस्ते सर्वे व्युदस्यन्ते ॥ **गवोद्ध इति** । 'अवङ् स्फोटायनस्य १४३' इत्यवङि 'आद्गुणः १०४' ॥ 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि'[6] इत्यमरः । 'प्रशंसावचनपोटायुवति–' इत्येकयोगसंभवे पृथग्योगकरणं चिन्त्यफलम् ॥ ( १०७७ ) **युवा**—। **खलतीति** । 'कृदिकारादक्तिनः ७०८-१' इति ङीष् । 'पुंवत्कर्मधारय–१०७५' इति युवतिशब्दस्य पुंवद्भावः ॥ **जरतीति** । 'जीर्यतेरतृन् ४११०' 'उगितश्च ६१९' इति ङीप् । एवं युवपलितः युववलिन इत्युदाहार्यम् । वलिनशब्दः पामादिः ॥ ( १०७८ ) **कृत्यतुल्याख्या**—। तुल्यमहान् सदृशमहानित्यादौ तु परत्वादनेन 'सन्महत्–१०६९' इति बाध्यते । 'तस्य सत्कृत्यशालिनः' इति भट्टिप्रयोगे तु 'सतां कृत्यं सत्कृत्यम्' इति षष्ठीसमासो बोध्यः । एवं 'परमपूज्यः' इत्यादिष्वपि ॥ ( १०७९ ) **वर्णो**—। समानाधिकरणेन वर्णवाचिना वर्णवाचि समस्यत इत्यर्थः । विशेष्येणेत्यनेनैव सिद्धेः पृथग्विधानं 'वर्णो वर्णेष्वनेते ५७०४' इति पूर्वपदप्रकृतिस्वरो विधीयमानः प्रतिपदोक्तत्वादेतत्समासपूर्वपदस्यैव भवतु नान्यस्येत्येतदर्थम् ॥ **कृष्णसारङ्ग इति** । सारङ्गश्चित्रपर्यायः, स च गुणोपसर्जनद्रव्यपरः । कृष्णशब्दोऽपि कृष्णावयवके भाक्तः । एवं च गौणे सामानाधिकरण्ये 'विशेषणं विशेष्येण–१०६२' इत्यप्रवृत्तौ समासार्थमपीदमारब्धव्यमित्याहुः ॥ ननु 'तृतीया तत्कृता–१००७' इत्यनेनैवायं समासः सिध्यति । सारङ्गत्वस्य कृष्णादिकृतत्वात् । नापि स्वरे भेदः । 'तत्पुरुषे तुल्यार्थतृतीया–५७०२' इत्यनेनैव पूर्वपदप्रकृतिस्वरसिद्धेरिति चेत् । अत्राहुः—कृष्णशुक्लो हरितशुक्ल इत्याद्यर्थं समासोऽनेनैवावश्यं विधेयः । न हीह तत्कृतत्वमस्ति ॥ यद्यपीह 'विशेषणं विशेष्येण–१०६२'

---

[1] **इभपोटेति** । इभशब्दस्य 'जातेरस्त्रीविषयात्–' इति ङीषि 'इभी पोटा' इति विग्रहे समासे च 'पुंवत् कर्मधारय–' इति पुंवद्भाव इति भावः ॥ [2] **युवत्यामेवेति** । जरत्यां युवतीधर्मारोपे तु युवतीशब्दस्य विशेषणत्वे 'विशेषणम्–' इति समासेऽपि पूर्वनिपातनियमसिद्ध्या जरतीग्रहणस्य वैयर्थ्यमेव स्यादिति भावः–इति शेखरकृत् ॥ [3] **कृत्यतुल्याख्या इति** । कृत्यसंज्ञकप्रत्ययान्तास्तुल्यवाचकाश्च जातिभिन्नवाचिना समस्यन्त इत्यर्थः । पण्यकम्बलः पण्यहस्तीत्यत्र 'विशेषणं विशेष्येण–' इति समाससिद्धिः । भोज्य ओदन इत्यत्रासमासस्येष्टत्वे स बाहुलकाद् बोध्यः ॥ [4] **आहेति** । विभक्तिप्रतिरूपकमव्ययं कालसामान्ये । तेन वर्तमानार्थकं 'पूरणी' इत्यस्यावतरणम् । भविष्यत्कालार्थकं 'तथेति' इत्यस्यावतरणं बोध्यम् ॥ [5] **स्तनश्मश्र्वादीति** । इदं च मनुष्यजातिषु, गजादिजातिषु तत्तज्जातिनियतसंस्थानं भिन्नं भिन्नमेवावगन्तव्यम् ॥ [6] 'मतल्लिकोद्घ–मिश्राः स्युः प्रकाण्ड–स्थल–भित्तयः । हस्त–पाश–तटाः पादः पाली मचर्चिकादयः ॥' इति गणरत्नमहोदधिः ॥

कडाराः कर्मधारये ।२।२।३८। कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः । कडारजैमिनिः । जैमिनिकडारः ॥ (१०८१) सू० कुमारः श्रमणादिभिः ।२।१।७०। कुमारी श्रमणा–कुमारश्रमणा । इह गणे श्रमणा, प्रव्राजिता, गर्भिणीत्यादयः स्त्रीलिङ्गाः पठ्यन्ते । लिङ्गविशिष्टपरिभाषाया एतदेव ज्ञापकं बोध्यम् ॥ (१०८२) सू० चतुष्पादो गर्भिण्या । २।१।७१। चतुष्पाज्जातिवाचिनो गर्भिणीशब्देन सह प्राग्वत् । गोगर्भिणी ॥ (१०८३) सू० मयूरव्यंसकादयश्च ।२।१। ७२। एते निपात्यन्ते । मयूरो व्यंसको–मयूरव्यंसकः । व्यंसको धूर्तः । उदक्चावाक् च-उच्चावचम् । निश्चितं च प्रचितं च–निश्चप्रचम् । नास्ति किंचन यस्य सः–अकिंचनः । नास्ति कुतो भयं यस्य सः–अकुतोभयः । अन्यो राजा राजान्तरम् । चिन्मात्रम् । ( १०८४ ) ग० आख्यातमाख्यातेन क्रियासातत्ये ॥ अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा–अश्नीतपिबता । पचतभृज्जता । खादतमोदता ॥ (१०८५) ग० एहीडादयोऽन्यपदार्थे ॥ एहीड इति यस्मिन्कर्मणि तदेहीडम् । एहियवम् । उद्धर कोष्ठादुत्सृज देहीति यस्यां क्रियायां सा–उद्धरोत्सृजा । उद्धमविधमा । असातत्यार्थमिह पाठः ॥ ( १०८६ ) ग० जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति ॥ जहीत्येतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये समासेन चेत्कर्ताऽभिधीयत इत्यर्थः ॥ जहिजोडः । जहिस्तम्बः ॥ ( १०८७ ) अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादौ द्रष्टव्यः ॥ ( १०८८ ) सू० ईषदकृता ।२।२।७। ईषत्पिङ्गलः ॥ ( १०८९ ) वा० ईषद्गुणवचनेनेति वाच्यम् ॥ ईषद्रक्तम् ॥ (१०९०) सू० नञ् ।२।२।६। नञ् सुपा सह समस्यते ॥(१०९१) सू०

---

इत्यनेन समासः सिध्यति, तथाऽपीष्टः स्वरो न सिध्यति । न च प्रतिपदोक्तसमासोऽकिंचित्करो व्यावर्त्यालाभादिति वाच्यम् । कृष्णशुक्लौ इत्यादेर्व्यावर्त्यस्य संभवादिति ॥ ( १०८० ) **कडाराः क—। कडारादय इति** । बहुवचननिर्देशादिति भावः । आदिशब्देन गडुलशाण्डिल्यः, शाण्डिल्यगडुलः, इत्यादि । एतच्च भाष्ये स्पष्टम् ॥ ( १०८१ ) **कुमा—। एतदेवेति** । एवकारः स्फुटसिद्धत्वद्योतनार्थो, न त्ववधारणार्थः । 'युवा खलति–१०७७' इति सूत्रे जरतीग्रहणस्यापि ज्ञापकत्वसंभवात् । नहि युवन्शब्दस्य पुंस्त्वे जरतीसामानाधिकरण्यं संगच्छते ॥ ( १०८२ ) **चतुष्पादो**— । मण्डूकप्लुत्या अत्र 'जातिः' इत्यनुवर्तत इत्याह—**जातिवाचीति** । जातिः किम्, कालाक्षी गर्भिणी । चतुष्पात्किम्, ब्राह्मणी गर्भिणी । प्रत्युदाहरणे 'विशेषणम्–१०६२' इति समासः स्यादेव । गर्भिणीकालाक्षीत्यादिपूर्वनिपाते विशेषः ॥ ( १०८३ ) **मयूर—**। चकारोऽत्रावधारणार्थः । तेन 'परममयूरव्यंसकः' इत्यादि समासान्तरं न भवति ॥ **धूर्त इति** । एवं च गुणवचनत्वात्पूर्वनिपाते प्राप्ते इदं वचनमारब्धमिति भावः ॥ अन्ये तु–मयूर इव व्यंसको मयूरव्यंसक इत्यादौ 'उपमानानि सामान्यवचनैः १०६०' इति समासस्यापवादोऽयम् । तेन 'समासस्य ५७००' इत्यन्तोदात्तत्वमिह सिध्यति । 'तत्पुरुषे तुल्यार्थ–५७०२'इत्युपमानपूर्वपदप्रकृतिस्वरस्योपमानसंशब्देनेन विहिते प्रतिपदोक्तसमासे चरितार्थत्वादित्याहुः ॥ **राजान्तरमिति** । अन्तरशब्दोऽत्र भिन्नवाची ॥ **चिन्मात्रमिति** । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । अन्तरमात्रशब्दाभ्यां सह नित्यसमास इत्युभयत्र अस्वपदविग्रहो दर्शितः । नित्यसमासत्वं तु अवधारणार्थकचकारेण लब्धमित्याहुः ॥ (१०८४) **अश्नीतपिबतेति** । इह क्रियारूपस्यान्यपदार्थस्य प्राधान्यात् स्त्रीत्वाट्टाप् । एवमग्रेऽपि ॥(१०८५) **उद्धर कोष्ठादित्यादि** । उद्धर उत्सृजेत्येतावानेव विग्रहः । उत्सृजेत्यस्य विवरणं देहीति । कोष्ठादिति तूद्धरेत्यस्याकाङ्क्षापूरणार्थमुक्तम् ॥ ( १०८६ ) **समासेन चेत्कर्तेति** । जहि जोडमिति आभीक्ष्ण्येन य आह स जहिजोडः । एवं जहि स्तम्बमिति य आह स जहिस्तम्बः ॥ ( १०९० ) **नञ्—**। इह 'नलोपो नञः १०२१' इत्यत्र विशेषणार्थो ञकारः । तत्फलं च नैकधेत्यत्रालोपः ॥ 'अव्यये नञ्कुनिपातानाम् ५७०३' इत्यव्ययपूर्वपदप्रकृतिस्वरार्थं ञकारो-

---

१ **कर्मधारय इति** किम् ? कडारपुरुषको ग्रामः॥ २ **आख्यातमिति** । अन्तर्गणसूत्राणीमानि । अत्र 'एहीडादयः' इत्यतः 'अन्यपदार्थे' इत्यनुवर्तते गणपाठे तस्येतः पूर्वं पाठात् । इह तु तस्यासातत्यतार्थतां ध्वनयितुं व्युत्क्रमेण पाठः । तदाह–यत्राभिधीयत इति–इति शेखरकृत् । इदं व्युत्क्रमप्रयोजनमस्मभ्यं न रोचते सातत्यपदघटितसूत्रस्य परत्वेन पूर्वसूत्रेषु तदप्राप्तेः । प्रत्युत व्युत्क्रमत्वमजानतां तयोरपि सातत्यपदसंबन्धभ्रमसंभव एव॥ ३ **खादतमोदतेति** । मोदध्वमित्यस्य स्थाने मोदतेत्यादेशः मोदन्तामित्यस्येति नागेशस्तु मध्यमस्यैव न्याय्यतां न मेने ॥ ४ **एहीड एतीति** । 'एहि ईडे' इति लडुत्तमपुरुषैकवचनस्य 'ईडे' इत्यस्य ईड इत्यादेशः । 'एहियवम्' इत्यत्र 'यौमि' इत्यस्य यवादेशः ॥ ५ **व्यावर्त्यस्येति** । 'विशेषणम्' इत्येव सिद्धे इदं व्यर्थम् । न च 'वर्णो वर्णेष्वनेते' इति स्वरविधायके प्रतिपदोक्तस्यास्यैव ग्रहणार्थमिदम् । अत एव सारङ्गस्यावयवः कृष्णः सारङ्गकृष्ण इत्यत्र तेन पूर्वपदप्रकृतिस्वरो नेति वाच्यम्, कर्मधारयप्रकरणे तत्पाठेन सिद्धेरिति शेखरकृत् ॥ ६ **संगच्छत इति** न च युवत्वारोपवत् पुंस्त्वस्यारोपेण सामानाधिकरण्यम्, उभयारोपापेक्षयालक्ष्यानुसारेण परिभाषाज्ञापनस्यैवौचित्यात ॥ ७ **पूर्वनिपाते विशेष इति** । गुणवचनत्वाद् गर्भिणीशब्दस्य पूर्वनिपातः स्यादिति भावः ॥ ८ **ञकार इति**।अव्ययेषु निरनुबन्धको नकारो नास्त्येव । अत एव 'नलोपो नञः' इति सूत्रे 'नञः सानुबन्धकस्य ग्रहणं व्यर्थम् 'नस्य' इत्येव सिद्धम् । न च प्रश्नपुत्रे दोषः, सानुबन्धकत्वात् । अव्ययेष्वपि 'न' इत्येव पाठ्यमित्याशयः । वामनपुत्र इत्यत्रैतद्वारणाय तु सानुबन्धकः पठितः' इति भाष्योक्तं संगच्छते । तथा च 'नैकधा' इत्यादि 'नान्तरीयकम्' इति च पृषोदरादित्वात्साधु ॥

नलोपो नञः । ६ । ३ । ७३ । नञो नस्य लोपः स्यादुत्तरपदे । न ब्राह्मणः—अब्राह्मणः ॥ (१०९२) तस्मान्नुडचि । ६ । ३ । ७४ । लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । (१०९३) अर्थाभावेऽव्ययीभावेन सहायं विकल्प्यते । रक्षोहागमलघ्वसंदेहाः प्रयोजनमिति अद्रुतायामसंहितमिति च भाष्यवार्तिकप्रयोगात् । तेनानुपलब्धिर-विवादोऽविघ्नमित्यादि सिद्धम् ॥ ( १०९४ ) नञो नलोपस्तिङि क्षेपे ॥ अपचसि त्वं जाल्म ॥ नैकधेत्यादौ

---

धारणमित्यन्ये ॥ सुपा समस्यत इति । उत्तरपदार्थप्रधानोऽयं समासः । तथाहि आरोपितत्वं नञा द्योत्यते । तथा च अब्राह्मणशब्दात् 'आरोपितो ब्राह्मणः' इति बोधे अर्थात् 'ब्राह्मणभिन्नः' इत्यर्थः पर्यवस्यति । अत एवानुपसर्जनत्वादतस्मिन् अस इत्यादौ सर्वनामकार्यं सिध्यति ॥ तत्पुरुषस्यौत्सर्गिकमुत्तरपदार्थप्राधान्यमप्येवं सति निर्बाधम् । 'एतत्तदोः—२६०' इति सूत्रे अनञ्समासग्रहणं चेह लिङ्गमित्यादि मनोरमायामनुसन्धेयम् ॥ ( १०९१ ) नलोपो नञः । 'नञोऽश्' इति वक्तव्ये नलोपवचनं साकच्कार्थम् । तेन नञोऽकचि अकब्राह्मणः अकनश्व इत्यादि सिद्धमित्याहुः॥ उत्तरपदे इति । 'अलुगुत्तरपदे १३७४' इत्यधिकारादिति भावः । उत्तरपदे किम्? घटो नास्ति पटो नास्ति ॥ नन्वेवमपि 'स्त्रैणार्थः' इत्यत्र नलोपः स्यादिति चेत् । अत्राहुः—उत्तरपदाक्षिप्तपूर्वपदेन नञं विशिष्य 'पूर्वपदभूतस्य नञः' इति व्याख्यानान्न भवति । 'स्त्रीपुंसाभ्याम्—१५५०' इति विहितस्य नञ्प्रत्ययस्यापूर्वपदत्वात् । अत एव अत्र ' प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति परिभाषा नोपतिष्ठते । न च प्रत्ययग्रहणे तदन्तग्रहणान्नञ्प्रत्ययान्तस्य पूर्वपदत्वं संभवत्येवेति 'प्रत्ययाप्रत्यययोः—' इत्येतदुपतिष्ठत एवेति वाच्यम्, 'हृदयस्य हृल्लेख—१४१८' इति सूत्रे अण्ग्रहणात्पृथक् लेखग्रहणेन 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापनात् । यद्वा—'अमूर्धमस्तकात्—१३९२' 'विभक्तावप्रथमायाम्' इत्यादिज्ञापकात् 'नलोपो नञः १०९१' इत्यत्राव्ययमेव नञ् गृह्यते, न तु प्रत्यय इति ॥ ( १०९२ ) तस्मान्नुडचि । 'ङः सि धुट् १९९' इत्यत्रेवाचीति सप्तम्याः षष्ठी प्रकल्प्यत इत्याह—अजादेरिति । अचा उत्तरपदविशेषणात् 'यस्मिन्विधिः—' इति तदादिविधिर्लभ्यत इति भावः ॥ अनश्व इति । नुटः परादित्वेन अपदान्तत्वात् 'ङमो ह्रस्वात्—२०२' इति ङमुण्न भवति ॥ ( १०९३ ) ननु विघ्नानामभावोऽविघ्नमित्यत्रापि पर-त्वात्तत्पुरुषः स्यादव्ययीभावस्य निर्मक्षिकादौ सावकाशत्वात् । अन्यथा अनुपलब्धिरविवाद इति न सिद्ध्येदित्याशङ्क्याह—अर्थाभावेऽव्ययीभावेन सहेत्यादि ॥ अविघ्नमित्यादीति । यद्यप्यविद्यमाना विघ्ना यस्मिन्निति बहुव्रीहिणा अविघ्नं कर्मेत्यादिप्रयोगः सिध्यति, तथाऽपि 'उत्तरे कर्मण्यविघ्नमस्तु' इत्यादिप्रयोगा अव्ययीभावं विना स्वरसतो न सिध्यन्तीति भावः ॥ ( १०९४ ) नञो नलोप इति । तिङन्तेन समासाभावादप्राप्ते वचनम् ॥ अपचसीति । कुत्सितं पचसीत्यर्थः ॥

---

१ लुप्तनकारादिति । नञो नुडभावाय नाकनासत्ययोर्नलोपाभावे नुड्वारणाय च 'तस्माद्' इतीति भावः ॥ २ विकल्प्यत इति । पूर्वपदार्थप्राधान्यविवक्षायामव्ययीभावः, उत्तरपदार्थप्राधान्यविवक्षायां तत्पुरुष इति भावः ॥ ३ भाष्य-वार्तिकेति । ' रक्षोहागमलघ्वसंदेहाः ' इति भाष्यप्रयोगस्य द्वन्द्वे ' परवल्लिङ्गम् ' इति नियमेनोत्तरपदार्थप्रधानतत्पु-रुषमन्तरेणासंभाव्यमानपुँल्लिङ्गासंदेहशब्दघटितस्य तत्पुरुषज्ञापकत्वम् । एवम् 'असंहितम्' इति वार्तिककारप्रयोगस्य संहिताशब्द-स्य स्त्रीलिङ्गत्वेनाव्ययीभावमन्तरेणासंभाव्यमानह्रस्वघटितस्याव्ययीभावे ज्ञापकत्वमिति भावः । वस्तुतः नञाऽव्ययीभावे प्रमाणा-भावः, अभावपदघटकत्वेनार्थाभावे सूत्रगृहीताव्ययत्वात्समासाप्राप्तेः । वार्तिके 'असंहितम्' इति तु प्रातिशाख्ये 'संहितवत्' इत्यत्र दृष्टेन क्लीबलिङ्गसंहितशब्देन तत्पुरुष एव साधु। 'अविघ्नम्' इत्यपि 'शेषं पुंवत्' इतिवत् । 'घञजपः पुंसि' इत्यस्य प्रायि-कत्वेनैव साधनीयम् ॥ ४ नलोप इति । एतेन—'अ, मा, नो, नाः, प्रतिषेधे—'इति नञ्समानार्थकस्याकारमात्राव्ययस्य कल्प-नमप्रामाणिकम् इति सूचितमिति बोध्यम् ॥ ५ नैकधेत्यादाविति । आदिना नमेरु—नाराच—नान्तरीयकादयः । तथा च 'नैकरूपो बृहद्भानुः' इति विष्णुसहस्रनामापि साधितप्रायम् ॥ ६ उत्तरपदार्थेति । 'इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये संगृहीतं भवति । किम् ? अनेकमिति । किमत्र संगृहीतम् । एकवचनम् । कथं पुनरेकस्य प्रतिषेधे द्विबहूनां संप्रत्ययः स्यात् । प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति ।'आनय आसय शायय भोजय अनेकम्' इति भाष्यविरोधात्'पतन्त्यनेके जलधौ महोर्मयः' इत्यादावनेकशब्दस्य बहुवचनान्तत्वमशुद्धमेव केनचिच्छोधितम् । अनेकशब्दस्य दारादिशब्दानामिव नित्यवचनत्वेन 'अनेको जनास्तिष्ठन्ति' इत्यस्यैव 'मैथिली तस्य दाराः' इत्यस्येव साधुत्वम् ॥ ७ आरोपितत्वं नञा द्योत्यत इति । अरोपितब्राह्मणत्वं ब्राह्मणपदप्रवृत्तिनिमित्तमित्यब्राह्मण इत्यत्र नञा द्योत्यत इत्यर्थः॥ ८ आरोपित इति।अरोपितब्राह्मणत्ववानित्येव प्रदर्शनीयम् मुख्यसंबन्धेन ब्राह्मणत्ववत इवारोपितसंबन्धेन ब्राह्मणत्ववतोऽपि तदर्थत्वात्।नञ् तु स्वविशिष्टस्य तदर्थकत्वतात्पर्यग्राहकः॥ ९ लिङ्ग-मिति । अन्यथोपसर्जनत्वादत्वाप्राप्तौ हल्ङ्यादिलोपस्य दुर्वारत्वेन तद्वैयर्थ्यं स्पष्टमेव । न च वचनसामर्थ्यादुपसर्जनत्वेऽप्यत्वमिति वाच्यम् । लाघवेनोत्तरपदार्थप्राधान्यस्यैव ज्ञापयितुं युक्तत्वात् ॥ १० उत्तरपद इति । उत्तरपदशब्दस्य मुख्यसमासचरमावयव एव रूढेः 'नन' इत्यादौ द्वित्वे बहुव्रीहिवद्भावेऽपि नानेन नलोपः ॥ 'रात्रेः कृति विभाषा' इत्यतो विभाषापदानुवृत्तेर्वा ॥ 'अनेन सामर्थ्यादाक्षिप्तं पूर्वपदं नञा विशेष्यते' । तेन 'इष्टकेषीका—' इत्यत्रेवात्रापि तदन्तविधौ 'नाप्राप्ते' इत्यत्र नलोपः । अत एव 'एकादिश्च—' इत्यस्य चारितार्थ्यम् ॥ ११ अचा उत्तरपदेति । सप्तमीनिर्दिष्टेनाचा सप्तमीनिर्दिष्टोत्तरपदविशेषणादित्यर्थः । एतदर्थमेव सप्तमीनिर्देश इति भावः ॥ १२ ङमुट् न भवतीति । अत एव नुग् नुम् वा पूर्वस्य न कृत इति भावः ॥

तु नशब्देन सह सुप्सुपेति समासः ॥ ( १०९५ ) (सू) नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । ६ । ३ । ७६ । पादिति शत्रन्तः । वेदा इत्यसुन्नन्तः । न सत्या असत्याः, न असत्याः नासत्याः । न मुञ्चतीति–नमुचिः । न कुलमस्य–नकुलम् । न खमस्य–नखम् । न स्त्री पुमान्–नपुंसकम् । स्त्रीपुंसयोः पुंसकभावो निपातनात् । न क्षरतीति–नक्षत्रम् । क्षरतेः क्षियतेर्वा क्षत्रमिति निपात्यते । न क्रामतीति–नक्रः । क्रमेर्डः । न अकमस्मिन्नितिति–नाकः ॥ (१०९६) (सू) नगोऽप्राणिष्वन्यतरस्याम् । ६ । ३ । ७७ । नग इत्यत्र नञ् प्रकृत्या वा । नगाः, अगाः–पर्वताः । अप्राणिष्विति किम् । अगो वृषलः शीतेन । नित्यं क्रीडेत्यं तो नित्यमित्यनुवर्तमाने–॥ ( १०९७ ) (सू) कुगतिप्रादयः । २ । २ । १८ । एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः । गतिश्चेत्यनुवर्तमाने–॥ ( १०९८ ) (सू) ऊर्यादिच्विडाचश्च । १ । ४ । ६१ । एते क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य ॥ ( १०९९ ) (वा) कारिकाशब्दस्योपसंख्यानम् ॥ कारिका क्रिया । कारिकाकृत्य ॥ ( ११०० ) (सू) अनुकरणं चानितिपरम् । १ । ४ । ६२ । खाट्कृत्य । अनितिपरं किम् । खाडिति कृत्वा निरष्ठी-

---

नशब्देनेति । नञा समासे त्वनेकधेत्येव स्यादिति भावः ॥ ( १०९५ ) नभ्राट्—। सत्सु साधवः सत्याः 'तत्र साधुः २२४४' इति यत् । न सत्याः असत्याः । न असत्या नासत्याः । इह बहुवचनमविवक्षितम् । तेन 'नासत्यावश्विनौ दस्रौ' इति सिद्धम् ॥ नमुचिरिति । 'सर्वधातुभ्य इन् ४७६३' । 'इगुपधात्कित् ४७६५' इति कित्त्वान्न गुणः ॥ 'क्षरतेः क्षियतेर्वेति । 'क्षर संचलने' भ्वादिः । 'क्षि निवासगत्योः' तुदादिः ॥ ( १०९७ ) कुगति—। कुशब्दोऽत्राव्ययं गृह्यते, न तु पृथिवीवाचकः । गत्यादिसाहचर्यात् ॥ ( १०९८ ) ऊर्यादिच्विडाचश्च । 'उपसर्गाः क्रियायोगे ४३' इत्यतोऽनुवर्तनादाह—क्रियायोग इति । च्विडाचौ कृभ्वस्तियोगे विहितौ तत्साहचर्यादूर्यादीनामपि तत्रैव गतिसंज्ञा । तेनेह न, ऊरी पक्त्वा ॥ माधवादिग्रन्थे तु–'आविःप्रादुःशब्दौ मुक्त्वा अन्येषां करोतिनैव योगे गतिसंज्ञा' इति स्थितम् । तथैवोदाहरति–ऊरीकृत्येति । एतच्च मनोरमाऽनुसारेणोक्तम् ॥ वस्तुतस्तु–ऊरीभूयेति भाष्योदाहरणाद्दिङ्मात्रमुदाहरति, ऊरीकृत्येत्यवतरितुं युक्तम् । संज्ञाफलं समासस्तत्फलं च ल्यबिति बोध्यम् । ऊरी उररी एतावङ्गीकारे । आविःशब्दस्य तु साक्षात्प्रभृतिषु पाठात् कृञो योगे गतिसंज्ञाविकल्पः, भ्वस्तियोगे त्वनेन नित्यमिति बोध्यम् ॥ कथं तर्हि 'वारुणीमदविशङ्कयमथाविश्चक्षुषो भवदसाविव रागः' इति माघ इति चेत्।अत्राहुः–'ते प्राग् धातोः २९६५'इति सूत्रस्य प्रयोगनियमार्थत्वपक्षे प्रकृते अनुपपत्तावपि संज्ञानियमार्थत्वपक्षे दोषलेशोऽपि नास्तीति ॥ शुक्लीति । 'कृभ्वस्तियोगे संपद्यकर्तरि च्विः २८५५' । 'अस्य च्वौ २८५७' इतीकारः ॥ पटपटाकृत्येति । 'डाचि बहुलं द्वे भवतः १३३' इति पटच्छब्दस्य द्वित्वम् । 'अव्यक्तानुकरणाद् द्व्यजवरार्धात् २८६८' इति डाचि टिलोपः । 'नित्यमाम्रेडिते डाचि २८७०' इति तकारपकारयोः पकार एकादेशः । निपातसंज्ञायाः समावेशार्थं सूत्रे चकारः । तेन ऊरीकृतमित्यत्र 'गतिरनन्तरः ५७५३' इति पूर्वपदप्रकृतिस्वरे क्रियमाणे निपातप्रयुक्तमाद्युदात्तत्वं भवति ॥ ( १०९९ ) कारिकेति । भावे 'पर्यायार्हर्ण–५१०४' इति ण्वुच् तदाह—क्रियेति । 'क्रियायोगे' इत्यनेन कारिकाशब्दस्य विशेषणात् श्लोकवाची कारिकाशब्दोऽत्र न गृह्यत इति भावः । क्रियाशब्दस्यात्र मर्यादास्थितिरर्थः । यत्न इत्यन्ये ॥ (११००) अनुकरणं चा—। 'ते प्राग् धातोः २९६५' इत्यस्य संज्ञानियमपक्षेऽनितीति व्यर्थमिति मत्वा पृच्छति—अनितिपरं किमिति । इतरस्तु प्रयोगनियमपक्षे खाडित्यनुकरणस्येतिशब्दे परे गतिसंज्ञाया निवारणायानितिपरमित्यावश्यकमिति प्रत्युदाहरति—खाडिति कृत्वेति । सत्यां संज्ञायाम् एष प्रयोगो नैव स्यात् । किन्तु 'इति खाट्कृत्य' इत्येव स्यादिति भावः । न च 'इति खाट्कृत्य' इति न भवति, इतेः परस्यानुकरणस्य गतिसंज्ञानिषेधादिति वाच्यम्, 'अनितिपरम्' इत्यत्र इतिः

---

१ नासत्या इति । एतदन्तानि चत्वारि पृथक्पदानि । समासे हि 'नवेदोनासत्या' इति स्यात् ॥ नासत्या इति बहुवचनमविवक्षितम् 'नासत्यावश्विनौ दस्रौ' इत्यमरे दर्शनात् ॥ २ क्षियतेरिति । क्षीयतेरिति पाठे 'क्षीष् हिंसायाम्' इति दिवादिः,तस्याकृतिगणत्वात्–इति शेखरकृत् ॥ ३ गतिसंज्ञा इति । ऊर्यादयो निपाता भवन्ति निपाताः सन्तः क्रियायोगे गतिसंज्ञा इत्यर्थः । तेन गतिनिपातसंज्ञयोः समावेश इति बोध्यम् ॥ ४ अनितिपरमिति । 'अनितौ' इति वक्तव्ये परग्रहणं तु अनुकरणाकृतावनितिपरत्वविवक्षार्थम् । तेन श्रौषड्वौषडिति कृत्वेत्यादौ व्यवहितेऽपि निषेधसिद्धिः । एतद्बलादेव 'ते प्राग्–' इत्यादावपि गत्याकृतिनिर्देशः । अत एव 'अभ्युद्धरति' इत्यादावुभयोरपि पूर्वप्रयोगः ॥ ५ कथमिति । गतित्वे 'ते प्राग्धातोः' इति धातोः प्रागेव प्रयोगः स्यादिति भावः ॥ ६ प्रयोगनियमेति । 'गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः' इति तस्यार्थः॥ ७ संज्ञानियमेति । 'गत्युपसर्गसंज्ञा धातोः प्राक् चाप्राक् च प्रयोक्तव्याः, तत्र धातोः प्राक् प्रयुक्तानामेव गत्यादिसंज्ञा नान्येषाम्' इति तदर्थः । अयमेव युक्तो लाघवाद् भाष्यसंमतश्च । अत एव 'सुखेन कटाः क्रियन्ते' इत्यर्थे 'सुकटंकराणि वीरणानि' इत्यादिप्रयोगसिद्धिः ॥ अस्मिन् पक्षे 'छन्दसि परेऽपि' 'व्यवहिताश्च' इति सूत्रद्वयमपि न कर्तव्यमिति भावः ॥ ८ डाचीति । विवक्षित इति शेषः ॥ ९ चकार इति । समावेशस्य 'प्राग्रीश्वरात्' इत्यत्रत्यप्राग्ग्रहणप्रयोजनत्वस्यैव भाष्यकृतोक्तत्वेन चिन्त्यमिदमिति बोध्यम् ॥ १० श्लोकेति । दासीवाचिनोऽप्युपलक्षणम् ॥

वत् ॥ ( ११०१ ) (सू) **आदरानादरयोः सदसती** । १ । ४ । ६३ । सत्कृत्य । असत्कृत्य ॥ (११०२) (सू) **भूषणेऽलम्** । १ । ४ । ६४ । अलंकृत्य । भूषणे किम् । अलं कृत्वौदनं गतः । पर्याप्तमित्यर्थः । अनुकरणमित्यादित्रिसूत्री स्वभावात्कृञ्विषया ॥ ( ११०३ ) (सू) **अन्तरपरिग्रहे** । १ । ४ । ६५ । अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् । अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः ॥ ( ११०४) (सू) **कणेमनसी श्रद्धाप्रतीघाते** । १ । ४ । ६६ । कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते । मनःशब्दोऽप्यत्रैव ॥ ( ११०५ ) (सू) **पुरोऽव्ययम्** । १ । ४ । ६७ । पुरस्कृत्य ॥ ( ११०६ ) (सू) **अस्तं च** । १ । ४ । ६८ । अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात् ॥ अस्तंगत्य ॥ ( ११०७ ) (सू) **अच्छगत्यर्थवदेषु** । १ । ४ । ६९ । अव्ययमित्येव । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वा उक्त्वा चेत्यर्थः । अव्ययं किम् । जलमच्छं गच्छति ॥ ( ११०८ ) (सू) **अदोऽनुपदेशे** । १ । ४ । ७० । 'अदःकृत्य' अदःकृतम् । परं प्रत्युपदेशे प्रत्युदाहरणम्—अदः कृत्वा—अदः कुरु ॥ (११०९) (सू) **तिरोऽन्तर्धौ** । १ । ४ । ७१ । तिरोभूय ॥ ( १११० ) (सू) **विभाषा कृञि** । १ । ४ । ७२ । तिरःकृत्य । तिरस्कृत्य । तिरः कृत्वा ॥ (११११) (सू) **उपाजेऽन्वाजे** । १ । ४ । ७३ । एतौ कृञि वा गतिसंज्ञौ स्तः । उपाजेकृत्य, उपाजे कृत्वा । अन्वाजेकृत्य, अन्वाजे कृत्वा । दुर्बलस्य बलमाधायेत्यर्थः ॥ (१११२) (सू) **साक्षात्प्रभृतीनि च** ।१।४।७४। कृञि वा गतिसंज्ञानि स्युः ॥ (१११३) (वा) **च्व्यर्थ इति वाच्यम्** ॥ साक्षात्कृत्य, साक्षात्कृत्वा । लवणंकृत्य, लवणं कृत्वा । मान्तत्वं निपातनात् ॥ ( १११४ ) (सू) **अनत्याधान उरसिमनसी** । १ । ४ । ७५ । उरसिकृत्य, उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य, मनसि कृत्वा । निश्चित्येत्यर्थः । अत्याधानमुपश्लेषणं तत्र न । उरसि कृत्वा पाणिं शेते ॥ ( १११५ ) (सू) **मध्ये पदे निवचने च** । १ । ४ । ७६ । एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने । मध्येकृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनेकृत्य, निवचने कृत्वा । वाचं नियम्येत्यर्थः ॥ ( १११६ ) (सू) **नित्यं हस्ते पाणावुपयमने** । १ । ४ । ७७ । कृञि । उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौ-

---

परो यस्मात् इतिपरम् , न इतिपरमनितिपरमिति बहुव्रीहिघटितनञ्तत्पुरुषाश्रयणात् । स्यादेतत् , अनुकरणस्येतिशब्दपरत्वे क्रियायोगाभावाद्गतिसंज्ञा नास्तीति खाडिति कृत्वेति रूपं निर्बाधं, किमनेनानितिपरग्रहणेनेति चेत् । अत्राहुः—इति कृत्वेति समुदाय एवायं कृत्वेत्यर्थे वर्तते । तथा च इतिशब्दः क्रियाविशेषकः इति तद्घटितसमुदायस्य क्रियावाचकत्वादस्त्येव क्रियायोग इति ॥ ( ११०३ ) **अन्तरपरिग्रहे । हतं परिगृह्येति** । हत्वा गमनं द्विधा—हतं त्यक्त्वा, परिगृह्य चेति । आद्यमुदाहरणं, द्वितीयं तु प्रत्युदाहरणम् । अपरिग्रहे इति च प्रयोगोपाधिः, न तु वाच्यकोटिनिविष्टमिति भावः ॥ ( ११०४ ) **कणे-। कणेहत्येति** । अत्यन्तमभिलष्य तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः । तथा च श्रद्धाया अपगमात्तत्प्रतिघातो गम्यते । प्रत्युदाहरणं तु कणे हत्वा गतः । सूक्ष्मस्तण्डुलावयवः कणस्तस्मिन् हत्वेत्यर्थः ॥ ( ११०५ ) **पुरस्कृत्येति** । 'पूर्वाधरावराणाम्—२६८६' इत्यसिप्रत्ययान्तोऽयमव्ययम् । 'नमस्पुरसोः—२३२' इति विसर्गस्य सः । 'अमुं पुरः पश्यसि' इत्यत्र तु स्थितमित्यध्याहारेण दर्शि प्रत्यगतित्वात्सत्वाभावः । अव्ययं किम् , पुरं पुरौ पुरः कृत्वा गतः ॥ ( ११०६ ) **अस्तं च** । अव्ययमिति किम् , अस्तं कृत्वा काण्डं गतः । क्षिप्तमित्यर्थः ॥ ( ११०७ ) **अच्छग-। अच्छमिति** । सत्यां हि गतिसंज्ञायां निपातसंज्ञावत्त्वेनाव्ययत्वात्सुब्लुक् स्यादिति भावः ॥ ( ११०८ ) **अदोऽनु-। अदःकृत्येति** । यदा स्वयमेव पर्यालोचयति अदः कृतमिति । तदेदमुदाहरणम् ॥ 'गतिरनन्तरः ५७५३' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् ॥ **प्रत्युदाहरणमिति** । अदः कृत्वा अदः कुर्वित्यादीत्यर्थः ॥ ( ११०९ ) **तिरोऽन्तर्धौ** ॥ अन्तर्धौ किम्, तिरो भूत्वा स्थितः । पार्श्वतो भूत्वेत्यर्थः ॥ ( १११० ) **विभाषा कृञि ॥ तिरः कृत्वेति** । गतित्वाभावपक्षे 'तिरसोऽन्यतरस्याम् २३६' इति सत्वमपि न भवति । तद्विधौ गतिग्रहणानुवृत्तेः । माधवस्तु—पराभवे तिरस्कारप्रयोगदर्शनात्सत्वविधौ गतिग्रहणानुवृत्तिं केचिन्नेच्छन्तीत्याह ( ११११ ) **उपाजेऽन्वाजे** । एतौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते । तदाह—**दुर्बलस्येति** ॥ ( १११२ ) **साक्षात्प्रभृ—**। साक्षात् । मिथ्या । आम् । श्रद्धा । लवणम् । उष्णम् । शीतम् । उदकम् । आर्द्रम् । गतिसंज्ञासंनियोगेन लवणादीनां पञ्चानां मकारान्तत्वं निपात्यते । प्रादुस् । नमस् । आविस् इत्यादि । आकृतिगणोऽयम् ॥ ( १११३ ) **साक्षात्कृत्येति** । असाक्षाद्भूतं यथा साक्षाद्भवति तथा कृत्वेत्यर्थः । च्व्यन्तेषु तु पूर्वविप्रतिषेधात् 'ऊर्यादिच्विडाचश्च १०९८' इति नित्यैव संज्ञा । तेन लवणीकृत्येत्यत्र मान्तत्वं न भवति । तद्धि पाक्षिकगतिसंज्ञासंनियोगेनेह गणे निपातनात् । भाष्यकृता—'लवणशब्दस्य लवणीशब्दस्य वा विकल्पेन लवणंशब्द आदिश्यते, तस्य च संज्ञाविकल्पः' इत्युक्तम् । उभयथाऽपि त्रैरूप्यं निर्बाधम् ॥ ( १११४ ) **अनत्या—**। उरसिमनसी विभक्तिप्रतिरूपकौ ॥ ( १११५ ) **मध्ये पदे—**। 'विभाषा कृञि १११०' इति वर्तते । चकारात् 'अनत्याधाने' इति च । एषामनत्याधानरूपार्थविशेषे एदन्तत्वमविशेषेण निपात्यते, न तु गतिसंज्ञासंनियोगेन । अनत्याधाने किम् , पदे कृत्वा शिरो नमति ॥ **वाचं नियम्येति** । निवचनं हि वचनाभावः । अर्थाभावेऽव्ययीभावः ॥ ( १११६ ) **नित्यं हस्ते—**। उपयमनरूपार्थ एवैतयोरेदन्तत्वमौदन्तत्वं च निपा-

कृत्य ॥ ( १११७ ) सू **प्राध्वं बन्धने** । १ । ४ । ७८ । प्राध्वमित्यव्ययम् । प्राध्वंकृत्य । बन्धनेनानुकूलं कृत्वेत्यर्थः । प्रार्थमादिना त्वानुकूल्यकरणे–प्राध्वं कृत्वा ॥ ( १११८ ) सू **जीविकोपनिषदावौपम्ये** । १ । ४ । ७९ । जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । औपम्ये किम् जीविकां कृत्वा । प्रादिग्रहणमगत्यर्थम् । सुपुरुषः । अत्र वार्तिकानि ॥ ( १११९ ) वा **प्रादयो गताद्यर्थे प्रथमया** ॥ प्रगत आचार्यः–प्राचार्यः ॥ ( ११२० ) वा **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** ॥ अतिक्रान्तो मालामतिमालः ॥ ( ११२१ ) वा **अवादयः क्रुष्टाद्यर्थे तृतीयया** ॥ अवक्रुष्टः कोकिलया–अवकोकिलः ॥ (११२२) वा **पर्यादयो ग्लानाद्यर्थे चतुर्थ्या** ॥ परिग्लानोऽध्ययनाय–पर्यध्ययनः ॥ ( ११२३ ) वा **निरादयः क्रान्ताद्यर्थे पञ्चम्या** ॥ निष्क्रान्तः कौशाम्ब्याः–निष्कौशाम्बिः ॥ (११२४) वा **कर्मप्रवचनीयानां प्रतिषेधः** ॥ वृक्षं प्रति ॥ ( ११२५ ) सू **तत्रोपपदं सप्तमीस्थम्** । ३।१।९२। सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्, तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात् ॥ ( ११२६ ) सू **उपपदमतिङ्** ।२।२।१९। उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भं करोतीति कुम्भकारः । इह कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम् । अतिङ् किम् ।

---

स्यते ॥ **हस्तेकृत्य** । परिणीयेत्यर्थः । उपयमने किम्, हस्ते कृत्वा कार्षापणं गतः । स्वीकारमात्रमिति पक्षे तु नालमिति बुद्ध्या परावृत्य दानार्थं गत इति योज्यम् ॥ एवं तावद्गतिसमासानुदाहृत्य प्रादिसमासान्वक्तुमारभते—**प्रादिग्रहणमिति** । **सुपुरुष इति** । क्रियायोगाभावाद्गतित्वाभावः । ( १११९ ) अव्यवस्थया समासप्रसक्तौ व्यवस्थार्थं वचनानि पठ्यन्ते—**प्रादय इति** । आदिशब्द उभयत्र प्रकारे । तेन दुराचारः पुरुषो दुष्पुरुष इत्यादि सिद्धम् ॥ **प्रगत आचार्य इति** । अनेन गतार्थे वृत्तिमस्वपदविग्रहेण नित्यसमासतां च दर्शयति । एवं प्रगतः पितामहः प्रपितामहः प्रमातामह इत्यादि ॥ ( ११२० ) **अत्यादय इति** । आदिपदादभिगतो मुखमभिमुखः । उद्गतो वेलामुद्वेलः । प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि सिद्धम् ॥ **अतिमाल इति** । 'गोस्त्रियोः–९५७' इति ह्रस्वः ॥ ( ११२१ ) **अवादय इति** । आदिपदात्परिणद्धो वीरुधा परिवीरुत् । संनद्धो वर्मणा संवर्मेति ॥ (११२२) **पर्यादय इति** । आदिपदादुद्युक्तः संग्रामाय उत्संग्रामः ॥ **अध्ययनायेति** । तादर्थ्ये चतुर्थी । गुरुकुलवासादिना परिग्लानोऽध्ययनार्थमित्यर्थः ॥ ( ११२३ ) **निरादय इति** । आदिपदादुत्क्रान्तः कुलादुत्कुलः । निर्गतमङ्गुलिभ्यो निरंगुलम् ॥ ( ११२४ ) **प्रतिषेध इति** । 'कुगतिप्रादयः १०९७' इति प्रसक्तसमासस्य वक्तव्यः प्रतिषेधः, स च 'सुराजा, अतिसखा' इति भाष्यादिप्रयोगात्स्वतिभिन्नानामेव कर्मप्रवचनीयानामित्यर्थः ॥ **वृक्षं प्रतीति** । 'लक्षणेत्थंभूत–८०५' इति कर्मप्रवचनीयत्वविधिसामर्थ्यादिह समासो नेति चेत् । तर्हि अपि स्तुतामित्युदाहार्यम् । 'अपि स्तुयाद्विष्णुम्' इत्यादौ 'अपिः पदार्थसंभावना–८१०' इत्यस्य सावकाशत्वात्स्वरे विशेषसत्त्वाच्चेत्याहुः ॥ ( ११२५ ) **तत्रोपपदम्** । सप्तमीस्थमित्येतद्व्याचष्टे—**सप्तम्यन्त इत्यादिना** ॥ **यद्वाचकं पदमिति** । एतच्चोपपदमित्यन्वर्थसंज्ञाबलाल्लभ्यते । अत एव संज्ञाविधावपि सप्तमीग्रहणेन सप्तम्यन्तं गृह्यते । 'धातोः ३७६८' इति पृथगधिकारबलात् 'संनिहिते धात्वधिकारे' इति लभ्यते । तेन 'च्लि लुङि २९७६' इत्यस्य लुङन्ते अभूदित्यादावुपपदे धातोश्च्लिरित्यर्थो न भवति ॥ तत्रग्रहणं व्याचष्टे—**तस्मिन् सत्येवेति** । उपपदे सत्येवेत्यर्थः । तत्रग्रहणाभावे तु 'धः कर्मणि ष्ट्रन् ४१९२' इत्यादाविव 'कर्मण्यण् ३८७९' इत्यादावपि कर्मण्यभिधेये अणित्याद्यर्थः स्यात् । तथा च–कर्तर्यण् प्रत्ययो न स्यात् । किञ्च सप्तम्यन्तनिर्देशस्योपपदसंज्ञार्थतया चरितार्थत्वात्केवलादपि धातोः कर्तर्यण्प्रत्ययः संभाव्येत, कृते तु तत्रग्रहणे कुम्भाद्युपपदस्य प्रत्ययोत्पत्तौ निमित्तत्वप्रतीत्या केवलादण्प्रत्ययशङ्कैव नास्ति । एवं स्थिते 'धः कर्मणि–४१९२' इत्यादौ क्वचिदर्थग्रहणं व्याख्यानादित्याहुः ॥ अन्ये तु–'तत्रोपपदम्–११३५' इत्यस्य 'कर्मण्यण् ३८७९' इत्यादेश्चैकवाक्यतया प्रवृत्तावुपपदसंज्ञाया निर्विषयत्वापत्तेस्तत्रग्रहणं विनाऽपीष्टं सिध्यत्येवेत्याहुः ॥ (११२६) **उपपदमतिङ्** । **समर्थेनेति** । तेन महान्तं कुम्भं करोतीत्यादौ नातिप्रसङ्गः ॥ **अतिङन्तश्चेति** । सुबिति तु अनुवर्तत एवेति, अतिङन्तमिति नोक्तमित्ति

---

१ **तत्रोपपदम्** । अयमधिकारः । अत एव 'अमैव तुल्यविधानमुपपदम्' इति संगच्छते । 'येन अमैव विधीयते तेन यस्योपपदसंज्ञा विधीयते' इति तदर्थात् । 'कर्मण्यण्' इत्यादौ 'कर्मणि' इत्यादिः सौत्री प्रथमार्थे सप्तमी । 'धातोरण् भवति कर्म चोपपदसंज्ञं भवति' इति तदर्थः ॥ अत्र सूत्रे सप्तमीपदं तदन्तपरम् । तत्स्थं तद्वाच्यम् । तदाह—**सप्तम्यन्ते पद इति** । महासंज्ञया प्रथमार्थे सप्तमी बलेन च लब्धमर्थमाह–**तद्वाचकमिति** ॥ पदमत्र विभक्त्यन्तम् । स्तम्बकर्णयोरित्यादौ सुपीत्यधिकारात् तत्प्रकृतिके सुबन्ते लक्षणा । अन्यथा 'उपपदम्' इति महासंज्ञालब्धोपपदसंज्ञकस्य सुबन्तत्वाभावात् स्तम्बेरम इत्यादौ समासानापत्तिः । समासविधायके उपपदप्रकृतिकसुबन्तग्रहणे 'सुप्यजातौ' इति णिनौ राजदर्शीत्यादौ समासानापत्तिः । तत्रहि सुबन्तमेवोत्तरपदम्, नतु तत्प्रकृतिकम् । 'विभाषाग्रे प्रथम–' इत्यादौ सुपीत्यधिकाराभावेऽपि महासंज्ञाबलेन तेषां तत्प्रकृतिकसुबन्ते लक्षणा बोध्या ॥ उप समीप उच्चरितं पदम् उपपदम् । सामीप्यं च सप्तम्यन्तपदघटितसूत्रविधेयप्रत्ययप्रकृत्यव्यवहितत्वमेव । 'आतोऽनुपसर्गे' इत्यत्रानुपसर्गग्रहणादुपसर्गव्यवधानेऽपि नोपपदत्वहानिः । अत एव 'कर्मण्यण्' सूत्रे भाष्ये–'उष्ट्रप्रणायः' इत्युदाहृतं संगच्छते ॥ अडादिव्यवस्थार्थमेव धातूपसर्गयोः पार्थक्यकल्पनेनान्यत्रैक्यस्यैव स्वीकारात् ॥

मा भवान् भूत् । [1]माङि लुङिति सप्तमीनिर्देशान्माङुपपदम् । ( ११२७ ) अतिङ्ग्रहणं ज्ञापयति सुपेत्येतन्नेहानुवर्तत इति । पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्यातिङ्ग्रहणं तत्रापकृष्यते । सुपेति च निवृत्तम् । तथा च-॥ ( ११२८ ) (प) **गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः** । इति सिद्धम् । व्याघ्री । अश्वक्रीती । कच्छपी ॥

---

भावः ॥ **कुम्भ असिति** । असिति तु नोक्तं कृयोगे षष्ठीविधानात् ॥ **अतिङ् किमिति** । 'सुपा ९४९-२' इत्यधिकारात्किमनेनेति प्रश्नः ॥ इतरो वक्ष्यमाणं ज्ञापकं मनसि निधाय प्रत्युदाहरति—**मा भवानिति** । ( ११२८ ) समासाभावसूचनाय भवानिति मध्ये प्रयुक्तम् ॥ ( ११२७ ) **पूर्वसूत्र इति** । 'कुप्रादयः' 'गतिः' इति योगं विभज्य 'कुप्रादयः सुबन्ताः सुबन्तेन समस्यन्ते, गतिश्च सुबन्तोऽतिङन्तेन समस्यत' इति व्याख्येयमित्यर्थः ॥ **तथा चेति** । यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः तथाऽपि त्रितयविषयिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्यत इति भावः । कारकांशे तु 'कर्तृकरणे कृता-१००४' इति सूत्रस्थबहुलग्रहणमुक्तार्थे साधकमित्यपि मनोरमायां स्थितम् ॥ **प्रागिति** । कृदन्ताच्चरमपदात्सुबुत्पत्तेः पूर्वं समास इत्यर्थः ॥ प्रथमान्तसुब्ग्रहणं त्विहानुवर्तत एव । तेन राजदर्शीत्यादौ पूर्वपदे नलोपादि कार्यं सिध्यति ॥ परिभाषाफलं दर्शयन् गतिमुदाहरति—**व्याघ्रीति** । व्याजिघ्रतीति व्याघ्री 'आतश्चोपसर्गे ३८५८' इति कः । 'पाघ्राध्माधेट्-३८५९' इति शस्तु संज्ञायां न भवति, व्याघ्रादिभिरिति निर्देशादिति वक्ष्यते । व्याङोर्घ्रशब्देन गतिसमासः । स यदि घ्रशब्दस्य सुबन्ततामपेक्षेत, तर्हि सुबुत्पत्तये संख्याद्यपेक्षेत । ततः प्रागेव लिङ्गयोग इति लिङ्गनिमित्तप्रत्ययेन टापा भाव्यं, न तु ङीपा । घ्रशब्दमात्रस्य जातिवाचित्वाभावात्, ततो घ्राशब्देन समास इत्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादिति भावः ॥ यद्यप्युपपदत्वेनाप्येतत्सिद्धं, तथाऽपि गतिग्रहणमाङो घ्रशब्देन समासे पश्चादाघ्रशब्देन विशब्दस्य समासार्थमावश्यकमेव । आङ्पूर्वाद्धातोः कप्रत्ययविधानादाङ्युपपदसंज्ञाऽभ्युपगमेऽपि विशब्दे तदनभ्युपगमादिति बोध्यम् ॥ कारकमुदाहरति—**अश्वक्रीतीति** । अश्वेन क्रीता 'कर्तृकरणे कृता-१००४' इति समासः । 'क्रीतात्करणपूर्वात् ७२०' इति ङीष् । सुबन्तेन समासे तु टापा भाव्यमित्यदन्तत्वाभावात् 'क्रीतात्करण-७२०' इत्ययं ङीष् न स्यादिति ज्ञेयम् ॥ उपपदमुदाहरति—**कच्छपीति** । कच्छेन पिबतीति कच्छपी । 'सुपि ३८८५-१' इति योगविभागात्कः । इहापि समासस्य सुबन्ततापेक्षायां टाबेव स्यान्न ङीषित्यादि व्याघ्रीत्यत्रेव बोध्यम् ॥ प्राचा तु-'उपपदमतिङन्तं समस्यते' इत्युक्तम् । तदसत्, तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्यापत्त्या राजदर्शी चर्मकार इत्यादौ नलोपो न स्यादपदान्तत्वात् । प्राटितेत्यादौ 'अतो गुणे २७६' इति पररूपं च स्यात् । स्यादेतत्, कच्छेन साधनेन पिबतीत्यर्थाभ्युपगमे कच्छस्य कारकत्वेन कच्छपीति रूपसिद्धौ नेदमुपपदस्यासाधारणोदाहरणमिति चेत् । एवं तर्हि, माषवापिणीत्युदाहर्तव्यम् । 'सुप्यजातौ-२९९१' इति णिनौ कृते माषोपपदस्य कृदन्तेन समासे 'प्रातिपदिकान्त-१५१२' इत्यादिना पूर्वपदस्थान्निमित्तात्परस्य समासप्रातिपदिकान्तनकारस्य णत्वं सिध्यति । सुबन्तेन समासे त्वन्तरङ्गत्वान्नान्तलक्षणे ङीपि पश्चाद्वापिनीशब्देन समासे गर्गभगिनीत्यत्रेव णत्वं न स्यादित्येके ॥ अन्ये तु-कच्छेन हेतुना पिबतीत्यर्थ-

---

१ **माङुपपदमिति** । माङो नोपपदत्वम्, लुङ्विधौ 'माङि' इति सप्तम्याः सतिसप्तमीत्वेन प्रथमार्थत्वे मानाभावात् । तस्योपपदसंज्ञायां फलाभावाच्च । किंच माङ उपपदत्वे 'मा वा पूर्वपदस्य भूत्' 'मा कदाचिदप्यवृत्तिर्भूत्' इति वार्तिके भाष्ये च व्यवहितप्रयोगो न संगच्छेत । तस्मात् 'कारको व्रजाति हारको व्रजति' इति भाष्ये प्रत्युदाहृतमेव प्रत्युदाहर्तव्यम् । तुमुन्विधौ तु 'क्रियार्थोपपदस्य च-' इत्यस्य प्रवृत्ते उपपदसंज्ञाऽऽवश्यिकैवेति बोध्यम् ॥ २ **षष्ठीविधानादिति** । अत्र षष्ठीसमासस्तु न, उत्तरपदे विभक्त्युत्पत्तेः पूर्वमेवास्य प्रवृत्त्याऽन्तरङ्गत्वात् ॥ कारकषष्ठीत्वेन षष्ठीसमासस्यापि ततः पूर्वं प्रवृत्तौ तु अस्तु सः । अस्य नित्यत्वेन तत्कृततत्पुरुषसंज्ञाप्रयुक्तैकार्थीभावाभावेऽप्येतत्कृततत्संज्ञाप्रयुक्तस्य तस्यानपगमेनादोषात् । एकस्या एव संज्ञाया उभाभ्यामपि प्रवृत्त्या अविरोधेन युगपदेवोभाभ्यां सेति स्पष्टं '* षष्ठीसमासादुपपदसमासो विप्रतिषेधेन *' इति वार्तिकव्याख्याप्रघट्टके भाष्ये ॥ ३ **एकदेशेति** । स्थालीपुलाकन्यायेन परिभाषार्थस्य स्वेष्टत्वमत्रातिङ्ग्रहणेन बोध्यत इत्यर्थः ॥ ४ **सुबुत्पत्तेरिति** । स्त्रीप्रत्ययोत्पत्तेरप्युपलक्षणम् ॥ ५ **गतिसमास इति** । गत्याकृतेर्विवक्षितत्वादिति केचित् ॥ अन्ये तु आङो घ्रशब्देन समासे विशब्दस्याघ्रशब्देन समास इति वदन्ति ॥ ६ **उपपदेति** । आङोपपदसमास एव 'आतश्चोपसर्गे' इत्यत्र 'उपसर्गे' इति सप्तमीनिर्देशात् । इति भावः ॥ एषां मते 'अनुपपदस्यावकाशः सुग्लः सुम्लः' इति भाष्यं प्रतिकूलं स्यादिति चिन्त्यमेवेदम् ॥ ७ **ङीष् न स्यादिति** । 'सा हि तस्य धनक्रीता' इत्यत्र तु सति प्रामाणिकत्वे 'कर्तृकरणे-' इत्यत्र बहुलग्रहणात्सुबन्तेनैव समास इति बोध्यम् ॥ ८ **प्रथमान्तेति** । अत्र 'आपत्त्या' इत्युक्त्या 'प्रथमान्तसुप्पदानुवर्तनमेवेष्टम्' इति सूच्यते तन्न युक्तम्, 'अनयोर्योगयोर्निवृत्तम्-'सुप्सुपा' इति' इति भाष्येण प्रथमान्तस्यापि निवृत्तेः स्पष्टं सूचितत्वात् ॥ 'सुप्सुपा' इत्यनुवृत्त्यैव कारको व्रजति इत्यादिव्यावृत्तिसिद्धावतिङ्ग्रहणमुभयोरेव निवृत्तौ ज्ञापकम् । महासंज्ञाकरणाच्च राजदर्शीत्यादौ न दोषः । 'सुप्यजातौ-' इति णिनेः सुबुत्पत्तिं विनाऽसंभवेन तं विनोपपदत्वाभावेनादोषश्च ॥ निर्गत इत्यादौ शब्दान्तरसंबन्धात्पूर्वं सुबुत्पत्तौ लुकि च पदत्वोत्तरं पदान्तरसंबन्धेन समासे न क्षतिः ॥

( ११२९ ) (सू) **अमैवाव्ययेन** । २ । २ । २० । अमैव[1] तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुंकारम् । नेह, कालसमयवेलासु तुमुन् । कालः समयो वेला वा भोक्तुम् । अमैवेति किम् । अग्रे भोजम्, अग्रे भुक्त्वा । विभाषाग्रेप्रथमपूर्वेष्विति क्त्वाणमुलौ । अमा चान्येन च तुल्यविधानमेतत् ॥ ( ११३० ) (सू) **तृतीयाप्रभृतीन्यन्यतरस्याम्** । २ । २ । २१ । उपदंशस्तृतीयायामित्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते । मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशम् ॥ ( ११३१ ) (सू) **क्त्वा च** । २ । २ । २२ । तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । उच्चैःकृत्य, उच्चैः कृत्वा । अव्ययेऽयथाभिप्रेतेति क्त्वा । तृतीयाप्रभृतीनीति किम् । अलं कृत्वा । खलु कृत्वा ॥ ( ११३२ ) (सू) **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः** । ५ । ४ । ८६ । संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥ ( ११३३ ) (सू) **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः** ।५।४।८७। एभ्यो रात्रेरच् स्याचात्संख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम् । अहश्च रात्रिश्चाहोरात्रः । सर्वा रात्रिः–सर्वरात्रः । पूर्वं रात्रेः पूर्वरात्रः ।

---

विवक्षायां कच्छस्याकारकत्वात्कच्छपीत्युपपदस्योदाहरणं सम्यगेवेत्याहुः ॥ ( ११२९ ) **अमैवाव्ययेन** । पूर्वेण सिद्धे नियमार्थमिदम् ॥ **तुल्यविधानमिति** । एतचाध्याहारेण लभ्यम् ॥ **तदेवेति** । यस्मिन्नुपपदे येन वाक्येन अमेव विहितस्तदेवोपपदमव्ययेन समस्यते, नान्यदित्यर्थः । नियमबललभ्योऽयमेवकारो न तु सूत्रस्थः ॥ **स्वादुंकारमिति** । 'स्वादुमि णमुल् ५१६९' । अव्ययेनेति किम्, कुम्भकारः । असति ह्यव्ययग्रहणे अमैव यत्तुल्यविधानं तदेव केनचित्समर्थेन समस्यते । तथा सति 'स्वादुंकारः' इत्यत्रैव समासः स्यान्न तु कुम्भकार इत्यत्र ॥ अथ पूर्वसूत्रवैयर्थ्यभीत्या अव्ययविषयकनियम इति चेत् । तर्हि अमन्तविषयक एव किं न स्यात् 'अमन्तेन यः समासः सोऽमैव तुल्यविधानस्य' इति । तथा चाग्रेभोजमित्यत्र समासो मा[2] भूत्, अग्रे भुक्त्वा, कालो भोक्तुमित्यत्र तु स्यादेवेति भावः । तदेवेति किम्, कालो भोक्तुम् । समयो भोक्तुम् । अमैवेत्येवकारेणामा चान्येन च तुल्यविधानस्योपपदस्य समासनिवारणेऽपि तुमुना तुल्यविधानस्य स्यादेवातस्तन्निवारणाय तदेवेत्युक्तम् ॥ (११३०) **तृतीयाप्रभृतीन्यन्यतरस्याम्** । उभयत्रविभाषेयम् । अमैव तुल्यविधानस्य प्राप्तेऽमा चान्येन तुल्यविधानस्याप्राप्ते चारम्भात् । प्राप्ते यथा–'उपदंशस्तृतीयायाम् ५१९०' मूलकेनोपदंशम् मूलकोपदंशम् । अप्राप्ते यथा-'अव्ययेऽयथाभिप्रेताख्याने–५०२६' इति क्त्वाणमुलौ । उच्चैःकारम् । इह समासपक्षे कृदुत्तरपदप्रकृतिस्वरः 'आदिर्णमुल्यन्यतरस्याम् ५५५२' इत्याद्युदात्तत्वम् । असमासे तु उच्चैरित्यन्तोदात्तत्वम् । 'उदि चेडैसिः ४८९६' इति व्युत्पत्तिपक्षे प्रत्यय.स्वरस्य, अव्युत्पत्तिपक्षे तु 'फिषः–५५८३' इत्यस्य च प्रवृत्तेरित्याहुः ॥ मनोरमायां तु–उच्चैरित्यन्तोदात्तः स्वरादिषु तथा पाठादिति स्थितम् ॥ अमेत्यनुवर्तत इत्याह–**अमन्तेनेति** । तेनेह न, पर्याप्तो भोक्तुम् । 'पर्याप्तिवचनेषु–४९६७' इति तुमुन् ॥ (११३१) **क्त्वा च** । क्त्वेति तृतीयान्तम् । 'आतः ३४४' इति योगविभागादालोपः 'क्त्वि स्कन्दिस्यन्दोः ५१४२' इतिवदिति हरदत्तः । तन्न, सवर्णदीर्घेणापि तृतीयान्तत्वोपपत्तेः ॥ **अलं कृत्वेति** 'अलंखल्वोः प्रतिषेधयोः–५१३७' इति सूत्रस्य 'उपदंशस्तृतीयायाम् ५१९०' इत्यस्मात्पूर्वत्वान्नेह समासः ॥ ( ११३२ ) **तत्पुरुषस्याङ्गु–** । तत्पुरुषे असाधारणान्समासान्तानाह–**तत्पुरुषस्येति** । अलोऽन्त्यात्रिधिं बाधित्वा 'प्रत्ययः २६४' 'परश्च २६५' इति परत्वात्तत्पुरुषात्पर एवाच्प्रत्ययो भवति । यथा गोपोष्टकः किन्त्वेऽपि गापाभ्यां पर एव टग् भवति, न त्वन्तावयवः । श्नमस्तु अनुबन्धकरणसामर्थ्यात्परविधिर्बाध्यते । एवं च लाघवात् 'तत्पुरुषादङ्गुलेः–' इति वक्तव्ये 'तत्पुरुषस्याङ्गुलेः–' इति तु समासान्तापेक्षया[3] अवयवषष्ठीत्याहुः ॥ **द्व्यङ्गुलमिति** । 'तद्धितार्थ–१०५२' इति समासः । 'द्विगोर्नित्यम् २४९२' इति मात्रचो[4] लोप इति वृत्तिकृत् ॥ मनोरमायां तु द्वयसचो[5] लुगिति स्थितम् ॥ ( ११३३ ) **अहः—** । **द्वन्द्वार्थमिति** । अह्नो रात्रिरिति षष्ठीतत्पुरुषस्यासंभवादिति[6] भावः ॥ ननु अहःशब्दस्याहस्तुल्यतायां रात्रिशब्दस्य वा रात्रितुल्यतायां गौणत्वसंभवादहश्चासौ रात्रिश्चेति कर्मधारयोऽस्त्विति चेन्न, मुख्यसंभवे गौणग्रहणायोगात् । 'हेमन्तशिशिरावहोरात्रे च–५२२६' इत्यत्र द्वन्द्वे समासान्तदर्शनाच्च ॥ **अहोरात्र इति** । 'जातिरप्राणिनाम् १३१०' इत्येकवद्भावः । 'स नपुंसकम् ११७५' इत्येतद्बाधित्वा परत्वात् 'रात्राह्नाहाः–११६६' इति पुंस्त्वम् । एतेन 'एकवद्भावात् क्लीबता' इति प्राचो ग्रन्थः परास्तः । 'मासेन स्यादहोरात्रः' इत्यादिग्रन्थविरोधाच्च ॥ **सर्वरात्र इति** । 'पूर्वकालैक–१०५०' इति समासः ॥ **पूर्वरात्र इति** । 'पूर्वापराधरोत्तरम्–१०३०'

---

१ **अमैवेति** । अमिति णमुल्कमुलोः सामान्यग्रहणम्, तेन 'चोरकारम्' इत्यादिसिद्धिः ॥ 'येन अमेव विधीयते तेन यस्योपपदसंज्ञा विधीयते तदुपपदमव्ययेन समस्यते नान्येन तुल्यविधानम्' इत्यर्थः ॥ संज्ञायास्तुल्यविधानत्वमाश्रित्य तत्संज्ञकस्य तुल्यविधानत्वमुक्तमिति भावः ॥ २ **मा भूदिति** । न स्यादित्यर्थः ॥ अग्रेभोजमिति 'विभाषाऽग्रेप्रथम–' इति सूत्रेण क्त्वोऽपि विधानान्नास्यामैव तुल्यविधानता 'अग्रे भुक्त्वा' इत्यादावमन्तेन समासाभावान्न तस्य नियमविषयतेति भावः ॥ ३ **समासान्तापेक्षयेति** । तत्पुरुषस्य समासस्यान्तावयव इत्यर्थः । 'समासान्ताः' इत्यत्र 'समास' इति लुप्तषष्ठीकं बोध्यम् । एवं च 'अव्ययीभावे' 'बहुव्रीहौ' 'द्वन्द्वात्' इत्यपि षष्ठ्यर्थे विभक्तिरिति भावः ॥ ४ **मात्रच इति** । प्रमाणविवक्षायामिति भावः ॥ ५ **द्वयसच इति** । ऊर्ध्वमानविवक्षायामिति भावः ॥ ६ **षष्ठीतत्पुरुषेति** । 'ब्राह्मदैवपैत्रान्यतमस्याहोऽवयवभूता मानुषी रात्रिः' इत्यर्थस्य कष्टसाध्यत्वेन सर्वानुभवसिद्धत्वाभावात् । अत एव 'अहःपूर्विका रात्रिः' इति शाकपार्थिवादिकल्पनापि नेति भावः ॥

संख्यातरात्रः । पुण्यरात्रः । द्वयो रात्र्योः समाहारो-द्विरात्रम् । अतिक्रान्तो रात्रिमतिरात्रः ॥ (११३४) **राजाहःसखिभ्यष्टच्** ।५।४।९१। एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः । अतिराजी । कृष्णसखः ॥( ११३५ ) **अह्नष्टखोरेव** ।६।४।१४५। टिलोपः स्यान्नान्यत्र । उत्तमाहः । द्वे अहनी भृतो-द्व्यहीनः क्रतुः । तद्धितार्थे द्विगुः । तमधीष्ट इत्यधिकारे द्विगोर्वेत्यनुवृत्तौ रात्र्यहःसंवत्सराच्चेति खः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह। मद्राणां राज्ञी-मद्रराज्ञी॥ (११३६) **अह्नोऽह्न एतेभ्यः** ।५।४।८८। सर्वादिभ्यः परस्याहन्शब्दस्याह्नादेशः स्यात्समासान्ते परे ॥ (११३७) **अह्नोऽदन्तात्** ।८।४।७। अदन्तपूर्वपदस्थाद्रेफात्परस्याऽह्नादेशस्य नस्य णः स्यात् । सर्वाह्णः । पूर्वाह्णः । संख्याताह्नः । द्वयोरह्नोर्भवः । कालाट्ठञ् । द्विगोर्लुगनपत्ये इति ठञो लुक् । द्व्यहः । स्त्रियामदन्तत्वाट्टाप् । द्व्यहा । द्व्यहप्रियः । अत्यह्नः ॥ (११३८) **क्षुभ्नादिषु च** ।८।४।३९। एषु णत्वं न स्यात् । दीर्घाह्नी प्रावृट् । एवं चैतदर्थमह्न इत्यदन्तानुकरणे क्लेशो न कर्तव्यः । प्रातिपदिकान्तेति णत्ववारणाय क्षुभ्नादिषु पाठस्यावश्यकत्वात् । अदन्तादिति तपरकरणान्नेह । परागतमहः-पराह्नः ॥ ( ११३९ ) **न संख्यादेः समाहारे** ।५।४।८९। समाहारे वर्तमानस्य संख्यादेरह्नादेशो न स्यात् । संख्यादेरिति स्पष्टार्थम् । द्वयोरह्नोः समाहारो-द्व्यहः । त्र्यहः ॥ (११४०) **उत्तमैकाभ्यां च** । ५ । ४ । ९० । आभ्यामह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह । पुण्यैकाभ्यामित्येव सूत्रयितुमुचितम् ।

---

इत्येकदेशिसमासः । यदा तु रात्रिशब्दस्यैकदेशे लक्षणां स्वीकृत्य कर्मधारयोऽभ्युपगम्यते, तदा पूर्वरात्रिरित्येव भवति ॥ **द्विरात्रमिति** । 'संख्यापूर्वं रात्रं क्लीबम् ११६७' इति वक्ष्यते ॥ ( ११३५ ) **अह्नष्टखोरेव** । 'नस्तद्धिते ९८६' इत्येव सिद्धे नियमार्थमिदम् । एवकारस्त्वह्न एव टखयोरिति विपरीतनियमशङ्कानिरासार्थः । 'आत्माध्वानौ खे२२७०' इति प्रकृतिभावविधानेन तन्निरासे प्रतिपत्तिगौरवं स्यादिति भावः । टखोरेवेति किम्, अह्ना निर्वृत्तमाह्निकम् । 'कालात् २३६७' इत्यधिकारे 'तेन निर्वृत्तम् २३६८' इति ठञ् । टिलोपाभावात् 'अल्लोपोऽनः ३३५' इत्यकारलोपः ॥ **उत्तमाह इति** । '-सर्वैकदेशसंख्यात-११३३' इत्यत्र उत्तमशब्दस्यापाठादह्नादेशो न ॥ **द्व्यहीन इति** । समासान्तविधेरनित्यत्वान्न टच् । सति तु तस्मिन्नह्नादेशः प्रसज्येत । न च नान्तस्य खे परे टिलोपविधिसामर्थ्यान्न टजिति वाच्यम् अहीन इत्यत्र तस्य सावकाशत्वात् ॥ **अनित्यत्वादिति** । अत्र च लिङ्गं 'शक्तिलाङ्गलाङ्कुश-२८९६' इत्यत्र घटीग्रहणम् ॥ **मद्रराज्ञीति** । यद्यत्र टच् स्यात्तदा 'भस्याढे-१२०४' इति पुंवद्भावे टिलोपे च मद्रराजीत्यनिष्टरूपं स्यादिति भावः ॥ (११३६) **अह्नोऽह्न एतेभ्यः** । एतच्छब्देन 'अहःसर्वैकदेश-११३३' इति सूत्रस्थाः परामृश्यन्ते । सूत्रे तु तस्मिन्नहरादयो निर्दिष्टाश्चकारेण संख्याव्यये अनुकृष्टे तत्र सर्वेषां बुद्धिस्थत्वाविशेषेऽप्यहःशब्द इह न गृह्यते असंभवादित्याशयेनाह--**सर्वादिभ्य इति** । **समासान्ते पर इति** । एतच्च प्रकरणाल्लब्धम् ॥ भाष्ये तु-अह्नादेशः प्रत्याख्यातः । 'अह्न एभ्यः अच् स्याट्टचोऽपवादः' इति व्याख्यायाम् 'अह्नष्टखोरेव ११३५' इति नियमाट्टिलोपाभावे 'अल्लोपोऽनः ३३५' इत्यकारलोपात्सर्वाह्णः इत्यादिरूपसिद्धेः ॥ (११३७) **अह्नोऽदन्तात्** । **रेफादिति** । यदि तु लक्षे अहस्सु भव इत्यादिव्युत्पत्त्या लाक्षाह्ण इत्यपि प्रयोगोऽस्ति, तर्हि षादित्यपि बोध्यम्, 'रषाभ्याम्-२३६' इत्यधिकारात् ॥ **ठञो लुगिति** । अणो लुगिति वृत्तिकाराद्युक्तमयुक्तमिति भावः ॥ प्रसङ्गादाह—**स्त्रियामिति** । नन्विह स्त्रीत्वं दुर्लभं 'रात्राह्नाहाः पुंसि ११६६' इति वचनादिति चेत् । मैवम्, सर्वमहस्सर्वाह्ण इत्यादावुपक्षीणस्य तद्वचनस्य लुप्ततद्धितायामप्रवृत्तेः । 'लुपि युक्तवत्-१८२५' इति लिङ्गातिदेशो ह्यत्र प्रमाणम् । प्राकृतलिङ्गानुशासनानां लुप्तप्रत्ययेषु प्रवृत्तौ तद्वैयर्थ्यापत्तेः । अत एव लवणः सूपः लवणा यवागूरित्यादौ न क्लीबत्वम् । किञ्च, 'द्विगुप्राप्तापन्ना-११६४' इत्यादिना परवल्लिङ्गत्वे प्रतिषिद्धे तदपवादस्य 'रात्राह्नाहाः-११६६' इत्यस्याप्राप्तिरेवेति द्व्यह्नशब्दोऽयं विशेष्यनिघ्न एव, न तु नियतपुंलिङ्गः । एवं चात्र भवार्थकतद्धिते लुप्तेऽपि 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन भवार्थवत्तन्निष्ठस्त्रीत्वाभिधानमपि न्याय्यमेवेति दिक् ॥ **टाबिति** । न चेह ठञन्तत्वान् ङीप् स्यादिति शङ्क्यम्, ठञो लुप्तत्वात् । न च प्रत्ययलक्षणम्, वर्णाश्रयत्वात् । ठञो योऽकारस्तदन्तान्ङीबिति तत्र व्याख्यातत्वात् । अत एव वृत्तिकाराद्युक्ताणो लुक्पक्षेऽपि न ङीप् 'अण्योऽकारः' इति तत्र व्याख्यातत्वात् । न चैवमपि टजन्तत्वान्ङीप् स्यादेवेति वाच्यम्, टचः समासान्ततया तदन्तस्य तद्धितार्थे प्रत्युपसर्जनत्वात् । अत एव हि आपिशलिना प्रोक्तमधीयाना ब्राह्मणी आपिशलेत्युदाहृतं भाष्ये ॥ 'द्विगोः ६६८' इति ङीप्तु न शङ्क्य एव । 'अपरिमाण-६६९' इति निषेधात् । अतष्टाबेवात्र युक्तस्तथैवोदाहरति—**द्व्यह्नेति** । 'अह्नोऽह्नः-११३६' इति सूत्रे अह्नादेशं प्रत्याख्याय 'अच्प्रत्यन्वव-१३५५' इत्यतोऽचमनुवर्त्य 'टजपवादोऽच्' इति व्याचक्षाणस्य भाष्यकारस्य मते तु निर्विवाद एवात्र टाप् ॥ कथं तर्हि कालनिर्णयदीपिकायां द्व्यह्नीति प्रयोग इति चेत् । अत्राहुः-द्वे अहनी यस्यां तिथाविति बहुव्रीहौ नान्तलक्षणो ङीब् बोध्यः । द्वयोरह्नोर्भव इति व्याख्यानग्रन्थस्तु फलितार्थकथनपरतया ज्ञेय इति ॥ (११३९) संख्यादिभिन्नस्य तत्पुरुषस्य समाहारे वृत्त्यसंभवादाह—**स्पष्टार्थमिति** ॥ (११४०) **उत्तमैकाभ्यां च** ।

---

१ अदन्तादिति ।'अत'इत्येव पूर्वपदविशेषणतया सामानाधिकरण्येनान्वये'अदन्तपूर्वपदे-'इत्यर्थलाभेऽन्तग्रहणं स्पष्टार्थम् ॥

पुण्याहम्[1] । एकाहः । उत्तमग्रहणमुपान्त्यस्यापि संग्रहार्थमित्येके । संख्याताहः ॥(११४१) (सू) अग्राख्यायामुरसः[2] ।५।४।९३। टच् स्यात् । अश्वानामुर इव-अश्वोरसम् । मुख्योऽश्व इत्यर्थः ॥ ( ११४२ ) (सू) अनोऽश्मायःसरसां जातिसंज्ञयोः ।५।४।९४। टच्स्याजातौ संज्ञायां च । उपानसम् । अमृताश्मः । कालायसम् । मण्डूकसरसमिति जातिः । महानसम् । पिण्डाश्मः । लोहितायसम् । जलसरसमिति संज्ञा ॥ ( ११४३ ) (सू) ग्रामकौटाभ्यां च तक्ष्णः ।५।४।९५। ग्रामस्य तक्षा-ग्रामतक्षः । साधारण इत्यर्थः । कुट्यां भवः कौटः स्वतन्त्रः । स चासौ तक्षा च कौटतक्षः ॥ ( ११४४ ) (सू) अतेः शुनः ।५।४।९६। अतिश्वो वराहः । अतिश्वी सेवा[3] ॥ ( ११४५ ) (सू) उपमानादप्राणिषु ।५।४।९७। अप्राणिविषयकोपमानवाचिनः शुनष्टच्स्यात् । आकर्षः श्वेव-आकर्षश्वः । अप्राणिषु किम् । वानरः श्वेव-वानरश्वा ॥ ( ११४६ ) (सू) उत्तरमृगपूर्वाच्च सक्थ्नः ।५।४।९८। चादुपमानात् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि-फलकसक्थम् ॥ ( ११४७ ) (सू) नावो द्विगोः ।५।४।९९। नौशब्दान्ताद् द्विगोष्टच् स्यान्न तु तद्धितलुकि । द्वाभ्यां नौभ्यामागतः द्विनावरूप्यः । द्विगोर्लुगनपत्ये इत्यत्र अचीत्यस्यापकर्षणाद्धलादेर्न लुक् । पञ्चनावप्रियः । द्विनावम् । त्रिनावम् । अतद्धितलुकीति किम् । पञ्चभिर्नौभिः क्रीतः-पञ्चनौः ॥ ( ११४८ ) (सू) अर्धाच्च ।५।४।१००। अर्धान्नावष्टच् स्यात् । नावोऽर्धम्-अर्धनावम् । क्लीबत्वं लोकात् ॥ ( ११४९ ) (सू) खार्याः प्राचाम् ।५।४।१०१। द्विगोरर्धाच्च खार्याष्टज्वा स्यात् । द्विखारम्, द्विखारि । अर्धखारम्, अर्धखारी[4] ॥ (११५०) (सू) द्वित्रिभ्यामञ्जलेः ।५।४।१०२। टज्वा स्यात् द्विगौ । द्व्यञ्जलम्, द्व्यञ्जलि । अतद्धितलुकीत्येव । द्वाभ्यामञ्जलिभ्यां क्रीतो-द्व्यञ्जलिः ॥ ( ११५१ ) (सू) ब्रह्मणो जानपदाख्यायाम् ।५।४।१०४। ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात्समासेन जानपदत्वमाख्यायते चेत् । सुराष्ट्रे ब्रह्मा-सुराष्ट्रब्रह्मः ॥ ( ११५२ ) (सू) कुमहद्भ्यामन्यतरस्याम् ।५।४।१०५। आभ्यां ब्रह्मणो वा टच् स्यात् तत्पुरुषे । कुत्सितो ब्रह्मा-कुब्रह्मः, कुब्रह्मा ॥ ( ११५३-१ ) (सू) आन्महतः समानाधिकरणजातीययोः ।६।३।४६। महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे

---

पुण्याहमिति । 'पुण्यसुदिनाभ्याम्-११८०' इति क्लीबत्वं वक्ष्यति ॥ उपान्त्यस्यापीति । यथा 'प्रथमयोः-२४४' इति प्रथमाद्वितीययोर्ग्रहणं द्विवचननिर्देशात्, तथेहापि उत्तमग्रहणसामर्थ्यादन्त्ययोर्द्वयोर्ग्रहणम् । उत्तमौ चैकश्चेति विग्रहे सौत्रं द्विवचनमिति तेषामाशयः ॥ (११४१) अग्राख्यायाम्—। पञ्चम्यर्थे सप्तमी । अग्रं प्रधानम् । अग्रवाची य उरःशब्दस्तदन्तात्तत्पुरुषाट्टच् स्यात् । अग्राख्यायां किम्, देवदत्तस्योरो देवदत्तोरः ॥ ( ११४२ ) ग्रामकौटाभ्याम्—। 'जातिसंज्ञयोः' इति नानुवर्तते । ग्रामेति किम्, राज्ञस्तक्षा राजतक्षा ॥ ( ११४४ ) अतेः शुनः । अतिश्व इति । श्वानमतिक्रान्तो जवेनेत्यर्थः ॥ अतिश्वीति । नीचेत्यर्थः ॥ (११४५) उपमानाद्–। आकर्षः श्वेति । उपमितं व्याघ्रादि–१०६१' इति समासः । आकृष्यतेऽनेन खलादिगतं धान्यमित्याकर्षः काष्ठविशेषः । उपमानात्किम्, निष्क्रान्तः शुनो निःश्वा ॥ ( ११४६ ) उत्तर-फलकसक्थमिति । अत एव ज्ञापकादसामान्यवचनेनाप्युपमानस्य समास इति माधवः ॥ (११४७) नावो–। द्विनावरूप्य इति । 'हेतुमनुष्येभ्यः-२०२४' इति रूप्यः ॥ पञ्चनौरिति । आर्हीयष्ठक्[२२८८] । 'अध्यर्धपूर्व-२३०५' इति लुक् ॥ ( ११४९ ) खार्याः–। द्विगोरिति । खारीशब्दान्ताद् द्विगोरित्यर्थः ॥ अर्धखारमिति । अर्धनावमिव क्लीबत्वं लोकात् ॥ अर्धखारीति । 'परवल्लिङ्गम्-११६३' इति स्त्रीत्वम् ॥ ( ११५० ) द्वित्रि–। टज्वा स्याद् द्विगाविति । द्विगाविति किम्, द्वयोरञ्जलिः द्व्यञ्जलिः ॥ द्व्यञ्जलमिति । समाहारे द्विगुः ॥ अतद्धितलुकीत्येवेति । एतच्च पूर्वसूत्रेऽपि बोध्यम् ॥ अञ्जलिभ्यां क्रीत इति । नात्राञ्जलिः पाणिद्वयं तस्य मूल्यत्वासंभवात्, किन्तु अञ्जलिपरिमितो व्रीह्यादिर्विवक्षितः, ततश्च परिमाणत्वाद् द्व्यञ्जलिरित्यत्र ठञ् । तस्य तु 'अध्यर्धपूर्व २३०५' इति लुक् ॥ ( ११५१ ) ब्रह्मणो—। जनपदे भवो जानपदः । 'द्व्येकयोः-२७१' इतिवद्भावप्रधानो निर्देशस्तस्याख्यायां प्रत्यासत्त्या समासेनेत्येतल्लभ्यते तदाह—समासेन जानपदत्वमिति । कस्येत्याकाङ्क्षायां संनिधानाद् ब्रह्मण इति लभ्यते ॥ सुराष्ट्रब्रह्म इति । 'सप्तमी' इति योगविभागात्समासः[5] । जानपदेति किम्, देवब्रह्मा नारदः ( ११५२ ) कुम—। कुब्रह्म इति । ब्राह्मणपर्यायो ब्रह्मन्शब्दः ॥ ( ११५३-१ ) आन्महतः—। तकार उच्चारणार्थो[6], न तु सर्वादेशार्थ इत्याह—आकारोऽन्तादेशः स्यादिति । इहोत्तरपदाधिकारे पूर्वपदमाक्षिप्यते । तच्च महता विशेषितमिति तदन्तविधिर्लभ्यते । 'ग्रहणवता-' इति निषेधस्तु प्रत्ययविधिविषय इत्युक्तत्वात् । तेन

---

१ इत उत्तरम् (सुदिनाहम् । सुदिनशब्दः प्रशस्तवाची ) इति कोष्ठकान्तर्गतो लेखः केनाचित् प्रमादेन प्रक्षिप्तः अग्रे उदाहरिष्यमाणत्वात् अत्र प्रकरणाभावाच्च ॥ २ अग्र्याख्यायामिति । अग्रे भावोऽग्र्यो मुख्य इति शेखरकृत् ॥ ३ सेवेति । "ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन च । सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ।" इत्यभिधाय "ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् । मृतं तु याचितं भैक्षं प्रमृतं कर्षणं मतम् ॥ सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते । सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥" इति मनुना सेवायाः प्रतिषिद्धत्वात् ॥ ४ अर्धखारीति । 'एकविभक्तावषष्ठ्यन्त-' इति वचनादुपसर्जनसंज्ञाया अभावेन ह्रस्वो नेति भावः, ह्रस्वपाठे तु लोकतो नपुंसकत्वे ह्रस्वत्वमिति केचित् ॥ ५ योगविभागादिति । योगविभागस्य भाष्यानारूढत्वेनाधिकरणे शेषत्वविवक्षया षष्ठ्यां षष्ठीसमासो बोध्यः ॥ ६ उच्चारणार्थ इति । उच्चारणार्थ एवेत्यर्थः । इत्संज्ञाया लोपमन्तरेण नान्यत्फलमिति भावः । एवं च 'नानुबन्धकृतमनेकाल्त्वम्' इति सर्वादेशो नेति बोध्यम् ॥

जातीये च परे । महाब्रह्मः, महाब्रह्मा । महादेवः । महाजातीयः । समानाधिकरणे किम् । महतः सेवा--महत्सेवा । लाक्षणिकं विहाय प्रतिपदोक्तः सन्महदिति समासोऽत्र ग्रहीष्यते इति चेत् , महाबाहुर्न स्यात् । तस्मात्(११५३-२) लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैति परिभाषा नेह प्रवर्तते, समानाधिकरणग्रहणसामर्थ्यात् । आदिति योगविभागादात्वम् , प्रागेकादशभ्य इति निर्देशाद्वा । एकादश । महतीशब्दस्य पुंवत्कर्मधारयेति पुंवद्भावे कृते आत्वम् । महाजातीया ॥ (११५४) महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च ॥ असामानाधिकरण्यार्थमिदम् । महतो महत्या वा घासो-महाघासः । महाकरः । महाविशिष्टः ॥ ( ११५५ ) अष्टनः कपाले हविषि ॥ अष्टाकपालः ॥ ( ११५६ ) गवि च युक्ते ॥ गोशब्दे परे युक्त इत्यर्थे गम्येऽष्टन आत्वं वक्तव्यमित्यर्थः ॥ अष्टागवं शकटम् । अच्प्रत्ययन्ववेत्यत्राजिति योगविभागाद्बहुव्रीहावप्यच् । अष्टानां गवां समाहारः-अष्टगवम् । तद्युक्तत्वाच्छकटमष्टागवमिति वा ॥ (११५७ ) द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । ६ । ३ । ४७ । आत्स्यात् । द्वौ च दश च-द्वादश । द्व्यधिका दशेति वा । द्वाविंशतिः । अष्टादश । अष्टाविंशतिः । अबहुव्रीह्यशीत्योः किम् । द्वित्राः । द्व्यशीतिः॥ ( ११५८ ) प्राक् शतादिति वक्तव्यम् ॥ नेह, द्विशतम् । द्विसहस्रम् ॥(११५९) त्रेस्त्रयः । ६ । ३ । ४८ । त्रिशब्दस्य त्रयस् स्यात्पूर्वविषये । त्रयोदश । त्रयोविंशतिः । बहुव्रीहौ तु त्रिदश-त्रिदशाः । सुजर्थे बहुव्रीहिः । अशीतौ तु-त्र्यशीतिः। प्राक् शतादित्येव । त्रिशतम् । त्रिसहस्रम् ॥ (११६०) विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । ६ । । ३।४९ । द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे । द्विचत्वारिंशत् , द्वाचत्वारिंशत् । अष्टचत्वारिंशत्, अष्टाचत्वारिंशत् । त्रिचत्वारिंशत्, त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु ॥ ( ११६१ ) एकादिश्चैकस्य चादुक् । ६ । ३ । ७६ । एकादिर्नञ् प्रकृत्या स्यादेकस्य च अदुगागमश्च । नञो विंशत्या सह समासे कृते एकशब्देन सह तृतीयेति योगविभागात्समासः । अनुनासिकविकल्पः । एकेन न विंशतिः-एकान्नविंशतिः, एकाद्

---

महाबाहुवदतिमहाबाहुरिति प्रयोगो भवति । परममहत्परिमाणमित्यत्र तु परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषोऽभ्युपगम्यत इति न तत्रात्वप्रसक्तिरिति वृद्धाः ॥ यत्तु वर्धमानेनोक्तम् 'इष्टकेषीकामालानाम्-१४४४' इत्यत्र तदन्तविध्युपसंख्यानसामर्थ्यादुत्तरपदाधिकारे तदन्तविधिर्नास्ति, तेन परममहत आत्वं नेति । तद्भाष्यकैयटविरुद्धम् । तथाहि--'येन विधिः' इति सूत्रे पदाधिकारे प्रयोजनमिष्टकचितं पक्वेष्टकचितमिति भाष्ये उदाहृतं, कैयटेन च पदशब्देन उत्तरपदं गृह्यत इति व्याख्यातम् । एतदेवार्थतः काशिकायामुपनिबद्धं न तु 'इष्टकेषीका-' इत्यत्र कात्यायनोक्तमुपसंख्यानमस्ति ॥ ननु प्रतिपदोक्तसमासे यदुत्तरपदं तस्मिन्नेव परे आत्वं स्यान्नान्यत्रेति किमनेन समानाधिकरणग्रहणेनेत्यत आह--**महाबाहुरिति** । बहुव्रीहिरयम् , स च सामान्यशास्त्रनिर्वृत्तत्वाल्लाक्षणिक इति भावः ॥ ( ११५५ ) **अष्टनः कपाल इति** । कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः ॥ **अष्टाकपाल इति** । 'संस्कृतं भक्षाः १७२०' इत्यणः 'द्विगोर्लुगनपत्ये १५५१' इति लुक् ॥ अध्यर्धपूर्व-२३०५' इत्यणो लुगिति केषांचिद्व्याख्यानं तु प्रामादिकं, 'संस्कृतम्-१७२०'इत्यणोऽनार्हीयत्वात् ॥ (११५९)**त्रेस्त्रयः**। संधिवेलादिषु त्रयोदशीति पाठात्सान्तोऽयमादेश इति ध्वनयन्नाह--**त्रयस् स्यादिति** ॥ **सुजर्थे बहुव्रीहिरिति** । 'संख्ययाऽव्यया-१२१५' इत्यादिनेति शेषः ॥ (११६१) **एकादिरिति** । अदुगिति छेदः । पररूपं त्वकारोच्चारणसामर्थ्यान्न भवति॥

---

१ **निर्देशाद्वेति** । 'अन्येषामपि दृश्यते' इति दीर्घत्वमिति परे ॥ २ **कृत इति** । न तु परत्वात्पुंवद्भावं बाधित्वाऽऽत्वम्, लिङ्गविशिष्टपरिभाषायाः' आन्महतः-' इत्यत्राप्रवृत्तेः ' ङ्याप्प्रातिपदिकात् ' इति सूत्रे भाष्य उक्तमिति भावः । ३ **महतो महत्या वेति** । 'पुंवद्भावश्च' इति चोऽन्वाचय इति भावः। समुच्चय एवायं चशब्दः । पुंवत्त्वसंनियोगेनैव चात्वं विधीयते । अत एव भाष्ये स्त्रियामेवोदाहृतमिति तत्त्वम्॥ ४ **बहुव्रीहावपीति** । यतोऽयमच् न तत्पुरुष एव नियतस्ततो बहुव्रीहावपि सुलभ इति भावः ॥ ५ **अष्टगवमिति** । 'गोरतद्धितलुकि' इति टजिति भावः । ततश्च शकटे वाच्ये 'अर्शआदिभ्योऽच्' इति बोध्यम्॥६ **द्व्यधिका दशेति वेति** । द्वन्द्वसमासे 'द्वाविंशतिः' इत्यादौ बहुवचनापत्तिदोषेण दूषिते * सिद्धं त्वधिकान्ता संख्या संख्यया समानाधिकरणाधिकारेऽधिकलोपश्च * इति वार्तिकेनायमेव विग्रहः सिद्धान्तित इति भावः ॥ ७ **द्वाविंशतिरिति** । एकादीनां वृत्तिविषये विंशत्यादीनां सर्वत्र संख्यापरत्वस्यापि सत्त्वाद् द्वाविंशतिर्गावः, द्वाविंशतिर्गवाम् इत्युभयथापि प्रयोगसिद्धिः ॥ परे तु-'द्वाविंशतिः' इत्यादौ 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्येकवचनस्य "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति नपुंसकत्वाभावस्य सिद्धिरिति स्पष्टं 'चार्थे द्वन्द्वः' इत्यत्र भाष्ये इति वदन्ति ॥ परन्तु पक्षे बहुवचनापत्तिवारणाय यत्नान्तरस्य कर्तव्यतायां गौरवापत्त्याऽधिकलोपिसमानाधिकरणसमासे स्वरस्य च्छन्दसि दृष्टानुविधित्वाद्व्यत्ययेनेष्टस्य सिद्धिरिति तत्त्वम्॥८**योगविभागादिति** । उक्तयोगविभागस्य भाष्येऽदर्शनात् 'सह' इति योगविभागाद् मयूरव्यंसकादित्वाद्वा समास इति न्याय्यमिति शेखरकृत् ॥ वस्तुतस्तु-नञो विंशत्या समासे नञ एकादित्वाभावेन प्रकृतिभावाप्राप्त्या नलोपापत्तिर्दुर्वारैव । अकृतव्यूहपरिभाषा तु भाष्यादावदृष्टत्वादप्रामाणिकैव । 'एकादिश्च' इत्यस्यारम्भसामर्थ्यकल्पने वा गौरवं स्यात् । तस्मात् पूर्वम् 'एकेन न' इत्येवं विग्रहे 'पूर्वसदृश-' इति सूत्रेण नञ्शब्देनोनार्थकेन तृतीयान्तैकशब्दस्य विना कष्टं समासे 'एकन' इत्यस्य 'एकोना' इत्यर्थकस्य विंशत्या समानाधिकरणसमासे 'एकनविंशतिः' इत्यत्र 'नलोपो नञः' इति नलोपे प्राप्ते नञ एकादित्वात्प्रकृतिभावोऽपि विना गुरुकल्पनां निर्बहतीति तत्त्वम् ॥

नविंशतिः । एकोनविंशतिरित्यर्थः ॥ (११६२) वा० षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यम् ॥ षोडन् । षोडश । षोढा, षड्धा ॥ (११६३) सू० परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।२।४।२६। एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली ॥ ( ११६४ ) वा० द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः ॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः । प्राप्तो जीविकां–प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै–अलंकुमारिः । अत एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥ ( ११६५ ) सू० पूर्ववदश्ववडवौ । २ । ४ ।२७। द्विवचनमतन्त्रम् । अश्ववडवौ । अश्ववडवान् । अश्ववडवैः ॥ (११६६) सू० रात्राह्नाहाः पुंसि ।२।४।२९। एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अनन्तरत्वात्परवल्लिङ्गतापवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते । अहोरात्रः । रात्रेः पूर्वभागः–पूर्वरात्रः । पूर्वाह्णः । द्व्यहः ॥ ( ११६७ ) वा० संख्यापूर्वं रात्रं क्लीबम् ॥ द्विरात्रम् । त्रिरात्रम् । गणरात्रम् ॥ ( ११६८ ) सू० अपथं नपुंसकम् । २ । ४ । ३० । तत्पुरुष इत्येव । अन्यत्र तु अपथो

---

( ११६२ ) **धासु वेति** । 'संख्याया विधार्थे–२६९९' इत्यादिना विहितस्य धाप्रत्ययस्यैवेह ग्रहणम् 'प्रत्ययाप्रत्यययोः–' इति परिभाषया । तेनेह न, षट् दधातीति षड्धा । 'आतोऽनुपसर्गे कः ३८८३' । टाप् ॥ **षोडन्निति** । षड् दन्ता अस्य षोडन् । 'वयसि दन्तस्य–१२६२' इति दत्रादेशः ॥ ( ११६३ ) **परवल्लिङ्गम्**— । इतरेतरयोगे द्वन्द्वोऽत्र गृह्यते न समाहारे द्वन्द्वः, 'स नपुंसकम् ११७५' इत्यपवादस्य वक्ष्यमाणत्वात् ॥ सूत्रे 'द्वन्द्वतत्पुरुषयोः' इति न सप्तमीद्विवचनम् । तथात्वे द्वन्द्वे तत्पुरुषे सति यत्परपदं तद्वल्लिङ्गं पूर्वपदस्यातिदिश्येत, परपदस्य संबन्धिशब्दत्वेन पूर्वपदाक्षेपकत्वात् , ततश्च मयूरीकुक्कुटावित्यत्र पूर्वपदे ईकारनिवृत्तिप्रसङ्गः, कुक्कुटमयूर्यौ अर्धपिप्पलीत्यादौ तु पूर्वपदे स्त्रीप्रत्यय उत्पद्येत । किन्तु, षष्ठीद्विवचनमित्याशयेनाह— **एतयोरिति** । द्वन्द्वतत्पुरुषार्थयोरित्यर्थः । एवं चानुप्रयोगेऽपि तदेव लिङ्गं सिद्धम् ॥ उपमेये षष्ठ्यभ्युपगमाद्वतिरपि षष्ठ्यन्तादेवेत्याशयेनाह—**परपदस्येवेति** । भाष्ये तु–'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति प्रत्याख्यातमिदं सूत्रम् । अस्मिंश्च प्रत्याख्याते तुल्यन्यायत्वाल्लिङ्गानुशासनं सर्वमेव प्रत्याख्यातम् , तथापि तत्प्रौढिवादमात्रम् । अन्यथा व्याकरणस्यैव वैयर्थ्यप्रसङ्गात् ॥ ( ११६४ ) **गतिसमासेष्विति** । गतिग्रहणं प्रादीनामुपलक्षणं मुख्यस्य गतेरसंभवादित्याशयेनोदाहरति—**निष्कौशाम्बिरिति** ॥ ( ११६५ ) **पूर्वव-।अतन्त्रमिति** । अत्र च लिङ्गं पूर्ववद्ग्रहणम् । अन्यथा निपातनादेव सिद्धे किं तेनेति भावः ॥ इह समासार्थस्य वा पूर्ववल्लिङ्गातिदेशः, उत्तरपदार्थस्य वा । उभयथाऽप्यश्ववडवौ शोभनावित्यनुप्रयोगेऽपि पुंस्त्वं सिध्यति ॥ ननु समासार्थस्य पुंस्त्वेऽपि स्वाश्रयस्त्रीत्वस्यानिवर्तनाट्टापः श्रवणप्रसङ्गः । न चातिदेशवैयर्थ्यम्, शसि नत्वप्रवृत्त्या अनुप्रयोगे पुँल्लिङ्गत्वभावेन च तत्सार्थक्यादिति चेदत्राहुः– इहैव निपातनात् '–अश्ववडवपूर्वापराधरोत्तराणाम् १३१६' इत्यत्र निपातनाद्वा टापो निवृत्तिरिति ॥ ( ११६६ ) **रात्राह्ना-। अहोरात्र इति** । प्राचा तु अहोरात्रमित्युदाहृतम् । तन्नेति प्रागेवोक्तम् ॥ अत्र वदन्ति–'रात्राह्नाहाः–११६६' इत्यनेन रात्रादीनामेव पुंस्त्वं विधीयते, तदन्तस्य तु 'परवल्लिङ्गम्–११६३' इत्येव सिध्यति । अत एव भिन्नविषयत्वात् 'विप्रतिषेधे परं कार्यम् २५०' इति न प्रवर्तते । एवं च 'रात्राह्नाहाः–११६६' इति पुंस्त्वाप्रवृत्त्या समाहारे 'स नपुंसकम् ११७५' इत्येव भवति परवल्लिङ्गापवादत्वादिति । तन्न, उक्तरीत्या द्व्यहत्र्यहादावपि नपुंसकत्वप्रसङ्गात् । न चेष्टापत्तिः, द्व्यहत्र्यह इति प्राचाऽप्युदाहृतत्वेन स्वमूलग्रन्थेन सह विरोधापत्तेः, 'ते तु त्रिंशदहोरात्रः' इत्यादिकोशविरोधाच्च । तस्माद्रात्राद्यन्तस्यैवायं पुंस्त्वविधिः । 'द्वन्द्वतत्पुरुषयोः' इति प्रक्रमणात्, तथा च भिन्नविषयत्वाद्यभावात् 'रात्राह्नाहाः–११६६' इति पुंस्त्वं समाहारनपुंसकतां परत्वेन बाधत एव ॥ ( ११६७ ) **संख्यापूर्वमिति** । अत्र च 'अपथपुण्याहौ नपुंसकौ' । 'संख्यापूर्वा रात्रिः' इति लिङ्गानुशासनसूत्रं मूलम् । संख्याग्रहणेषु कृत्रिमाकृत्रिमन्यायो न प्रवर्तते 'द्व्यष्टनः संख्यायाम्–११५७' इति सूत्रे अशीतिपर्युदासादित्याशयेनोदाहरति—**द्विरात्रम्, त्रिरात्रम्, गणरात्रमिति** । गणानां बहूनां रात्रीणां समाहार इति विग्रहः ॥ ( ११६८ ) **अपथं नपुंसकम्** । **तत्पुरुष इत्येवेति** । द्वन्द्वग्रहणं

---

१ **षड्धेति** । 'उत्वपक्षे नित्यं ष्टुत्वम् , तेनोत्वाभावे ष्टुत्वं न' इति हरदत्तमतेनेदम् । वस्तुतस्तु–'धासु वा' इत्यनेनोत्वमेव विकल्प्यते । तेन ष्टुत्वं नित्यमेवेत्युत्वाभावेऽपि ष्टुत्वं भवत्येवेति कैयटोक्तमेव युक्तम् । भाष्येऽपि 'षड्ढा' इति पाठस्यैव प्रायेणोपलम्भात् ॥ २ **तत्पुरुषेति** । 'तत्पुरुषश्चापि कः प्रयोजयति ? यः पूर्वपदार्थप्रधान एकदेशिसमासोऽर्धपिप्पलीति । यो ह्युत्तरपदार्थप्रधानः दैवकृतं तस्य परवल्लिङ्गम् ॥' इति हि भाष्यम् ॥ ३ **द्विगुप्राप्तेति** । द्विगुग्रहणम् 'एकविभक्ति–' इति सूत्रस्थकैयटानुरोधेन । भाष्ये तु न दृश्यते । व्यर्थं च पूर्वपदप्रयुक्तलिङ्गमात्रबाधनस्यैव 'परवत्' इत्यस्य संबन्धिशब्दत्वेन प्रतीत्या तद्धितार्थप्रयुक्तलिङ्गस्य दैवकृतस्य बाधनेऽस्वारस्यात् ॥ किञ्च 'अर्धपिप्पली' इत्याद्येकदेशिसमासस्य समानाधिकरणतत्पुरुषाङ्गीकारेण प्रत्याख्याने तत्पुरुषग्रहणस्य 'परवत्' इति सूत्रस्थस्यापि प्रत्याख्यानेन 'परवल्लिङ्गं द्वन्द्वे' इति सूत्रेण द्विगौ प्राप्त्यभावेनापि प्रतिषेधवार्तिकस्यैव वैयर्थ्याच्च ॥ ४ **क्लीबमिति** । समाहारद्विगावेव प्रवर्तते व्याख्यानात् । 'भविष्यति मर्यादा–' इति सूत्रस्थे 'त्रिंशद्रात्रः पञ्चदशरात्रः' इति भाष्यप्रयोगे तु बहुव्रीहिः पृषोदरादित्वाद्वर्णव्यत्ययश्छान्दसो वेति बोध्यम् ॥ ५ **प्रादीनामिति** । गतिसमासपदेन 'गतेः समासो येन' इति बहुव्रीहिणा 'कुगति–' इति सूत्रस्यैव बोधनेऽन्यत्र फलाभावेन प्रादिसमास एव बोध्यत इति भावः ॥ ६ **पुँल्लिङ्गत्वभावेनेति** । पुँल्लिङ्गत्वसंपादनेनेत्यर्थः ॥ ७ **इहैव निपातनादिति** । इदं तु चिन्त्यम्, 'अश्ववडवा' इति समुदायरूपस्याङ्गस्याबन्तत्वाभावाच्छीभावाप्राप्त्या 'विश्वपौ' इतिवदाकारान्तत्वेऽपि वृद्ध्या रूपसिद्धेः ॥

देशः । कृतसमासान्तनिर्देशान्नेह–अपन्थाः ॥ (११६९) **अर्धर्चाः पुंसि च** । २ । ४ । ३१ । अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चः, अर्धर्चम् । ध्वजः, ध्वजम् । एवं–तीर्थ, शरीर, मण्ड, पीयूष, देह, अङ्कुश, कलश । इत्यादि॥(११७०) **जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्** । १ । २ । ५८ । एकोऽप्यर्थो वा बहुवद्भवति । ब्राह्मणाः पूज्याः । ब्राह्मणः पूज्यः ॥ (११७१) **अस्मदो द्वयोश्च** ।१।२।५९। एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात् । वयं ब्रूमः । पक्षे अहं ब्रवीमि आवां ब्रूव इति वा ॥ (११७२) **वा॰ सविशेषणस्य प्रतिषेधः** ॥ पटुरहं ब्रवीमि ॥ (११७३) **फल्गुनीप्रोष्ठपदानां च नक्षत्रे** ।१।२।६०। द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात् । पूर्वे फल्गुन्यौ,

---

तु नानुवर्तते अयोग्यत्वादिति भावः ॥ **अपन्था इति** । 'पथो विभाषा १३७३' इति समासान्तविकल्पः । इदं सूत्रं शक्यमकर्तुम्, 'पथः संख्याव्ययादेः ११८१' इति वक्ष्यमाणवार्तिकेन गतार्थत्वात् ॥ ( ११६९ ) प्रसङ्गादाह—**अर्धर्चा इति** । इह केषांचिदर्थभेदेन व्यवस्थेष्यते। सा च व्यवस्था–मद्यमकरन्दमाक्षिकाणां वाची मधुशब्दो द्विलिङ्गः चैत्रादिवाची तु पुँल्लिङ्गः, क्रियावचनस्तु विशेष्यलिङ्ग इत्येवं यथायथं ज्ञेयम् ॥ (११७०) **जात्या**—। 'अर्धर्चाः पुंसि च ११६९' 'स नपुंसकम्' इत्यनयोर्मध्ये 'जात्याख्यायाम्–११७०–११७४' इति चतुःसूत्र्याः संगतिरिह चिन्त्या ॥ बहूनां वचनं प्रतिपादनमिति व्याख्यानात्फलितोऽत्रातिदेश इत्याशयेनाह—**एकोऽप्यर्थो वा बहुवदिति** । एवं च विशेषणादपि सिद्धमिति ध्वनयन्नुदाहरति—**ब्राह्मणाः पूज्या इति** । जात्याख्यायां किम्, देवदत्तो यज्ञदत्तः । एकस्मिन्किम्, व्रीहियवौ ॥ ( ११७१ ) **अस्मदो द्वयोश्च** । चात् 'एकस्मिन् बहुवचनमन्यतरस्याम्' इति च वर्तते तदेतदाह—**एकत्वे द्वित्वे च विवक्षित इत्यादि**॥ (११७३) **फल्गुनी-**

---

१ **वेति**। इदं सूत्रं भाष्ये प्रत्याख्यातम् । जातेरेकत्वात्तत्र संख्याऽन्वये एकवचनस्य तदाश्रयव्यक्तीनां बहुत्वात्तत्र संख्यान्वये बहुवचनस्य सिद्धत्वादिति ॥ २ जातिगुणक्रियासंज्ञाशब्देषु मध्ये जातिवाचिभ्यः एकत्वेऽपि बहुवचनं वा स्यादिति सूत्रार्थे जातिशब्दाद् ब्राह्मणशब्दादेव एकत्वसंख्यायामपि बहुवचनं जातमिति ब्राह्मणशब्दादुत्पन्नस्य बहुवचनस्याप्येकत्वसंख्याभिधायित्वात् पूज्य इत्येकवचनान्तेन सामानाधिकरण्यमुपपद्यत एव, एवमेव 'गावो धनम्' 'पितरो देवताः' 'वेदाः प्रमाणम्' इत्यत्रापि ज्ञेयम् ॥ एवं च 'वेदाः प्रमाणम्' इत्यत्र सामानाधिकरण्योपपत्तये व्युत्पत्तिवादे गदाधरभट्टाचार्याणां कोलाहलकरणं तु स्वस्य वैतण्डिकत्ववावदूकत्वख्यापनायेति बोध्यम् । उभयत्रापि बहुवचनं तु एकशेषाङ्गीकारपक्ष एवेति दाधिमथाः ॥ ३ **अस्मद इति** । इदमपि सूत्रं प्रत्याख्यातम् । इन्द्रियाद्यवयवगतबहुत्वस्यास्मच्छब्दार्थे समारोपाद्बहुवचनस्य सिद्धिरिति भाष्यादौ स्पष्टम् ॥ ४ "**अस्मदो द्वयोश्च**" इत्येतत्सूत्रविषये जातस्य बहुवचनस्य एकत्वं द्वित्वं वा अर्थः । तथाचैकत्वस्य विवक्षायां जातस्यास्मदो बहुवचनस्याप्येकत्वमेवार्थो वाच्य इति 'वयम्' इत्यस्यैकत्ववाचित्वादस्मदर्थैकत्वसंख्यासमानसंख्यावाचिन एव तिङः उचितत्वेन '**वयं ब्रवीमि**' इत्येव साधु ॥ एवं द्वित्वस्य विवक्षायां जातस्यास्मदो बहुवचनस्य द्वित्वसंख्याभिधायित्वाद् द्विवचनमेव तिङ उचितमिति '**वयं ब्रूवः**' इति साधु । एकशेषेणास्मदर्थस्य बहुत्वसंख्याङ्गीकारे तु '**वयं ब्रूमः**' इत्येव भवति ॥ एकत्वद्वित्वाभिधायित्वेऽप्यस्मदः क्रियायां हठेन बहुवचनाङ्गीकारे कर्तृगतसंख्याविशेषस्याप्रतीत्यापत्तिः स्यात्, तस्मादत्र क्रियासंख्यानुसारेणैव कर्तृगतसंख्याप्रतीतये कर्तरि बहुवचनस्य वास्तविकसंख्याभिधायित्वदर्शनाय क्रियायामेकवचनद्विवचने एव ॥ न च "**ऋषिसहस्रमेकां गामेकैकशः सहस्रकृत्वो दत्त्वा सर्वे ते सहस्रदक्षिणाः संपन्नाः**" इति श्रौतस्मार्तान्यतरदृष्टान्तेन '**गौणी मुख्या वोत्तरा संख्या पूर्वां संख्यां बाधते**' इति ध्वननेन बहुत्वसंख्यया एकत्वसंख्याया बाधात् बहुत्वसंख्यानिमित्तकं बहुवचनमेव क्रियायामुचितम् इति वाच्यम् । तत्र क्रयविक्रयावृत्त्यैव मूल्ये सहस्रगुणत्वस्य जातत्वेऽपि सहस्रगवीदर्शनस्यासंभवेन दृष्टान्तस्यात्राविषयात् ॥ एवं चात्र '**वयम् अहं वा ब्रवीमि**' '**वयम् आवां वा ब्रूवः**' इत्येव पाठ उचित इति मात्सर्यमुत्सार्य विचार्यमार्यैरिति दाधिमथाः ॥ ५ **फल्गुनीति** । इदमपि सूत्रं प्रत्याख्यातम् । तत्तन्नक्षत्रयुक्तचन्द्रमसा युक्ते काले स्वावयवगतबहुत्वस्य समारोपाद्बहुवचनसिद्धिः । एकस्यां च तारायां फल्गुनीशब्दप्रयोगाभावान्नैकवचनमिति वक्ष्यमाणकर्मप्रदीपतोऽवसेयम् ॥ ६ **द्वित्व इति** । तत्तन्नक्षत्राणां वचननियामकेन " आग्नेयाद्येऽथ सार्पाद्ये विशाखाद्ये तथैव च । आषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च ॥ द्वन्द्वान्येतानि बहुवदृक्षाणां जुहुयात्सदा । द्वन्द्वद्वयं द्विवच्छेषमवशिष्टान्यथैकवत् ॥ " इति कर्मप्रदीपेन 'अश्विनी भरणी कृत्तिका रोहिणी आश्लेषा मघा विशाखाऽनुराधा पूर्वाषाढ उत्तराषाढा धनिष्ठा शतभिषक्, एतेषाम् 'अश्विनीभ्यः स्वाहा' इत्येवं बहुवचनान्तत्वमेव । पूर्वाफल्गुन्युत्तराफल्गुनीपूर्वाभाद्रपदोत्तराभाद्रपदानां 'पूर्वाभ्यां फल्गुनीभ्यां स्वाहा' इति द्विवचनान्तत्वमेव । 'मृगशिरआर्द्रापुनर्वसुपुष्यहस्तचित्रास्वातिज्येष्ठामूलश्रवणरेवतीशब्दानामेकवचनान्तत्वमेव ' इत्यर्थकेन फल्गुनीप्रोष्ठपदाशब्दयोर्द्विवचननियमस्य प्राप्तौ बहुवचनान्तत्वमपि विधीयते । परंतु होमीयप्रयोगो—हेतुद्विवचनप्रयोग एव कर्तव्यः,कर्मप्रदीपस्य विशेषशास्त्रत्वात्, एवं 'विशाखाभ्यः स्वाहा' इत्येवमेव प्रयोक्तव्यम् । 'विशाखयोश्च' इति पाणिनिसूत्रस्य च्छन्दसि दृष्टानुविधायकत्वान्न विरोधः ॥ कर्मप्रदीपग्रन्थस्य छन्दोगविषयत्वमेव कल्पनीयं 'विशाखाभ्यां स्वाहा' इति प्रयोगस्य दर्शने इति तत्त्वम् ॥ इति भावः ॥ लिङ्गनिर्णयस्त्वित्थमन्यत्रोक्तः—'हस्तः स्वातिः श्रवणा अक्लीबे मृगशिरो न पुंसि स्यात् । पुंसि पुनर्वसुपुष्यौ, मूलं त्वस्त्री, स्त्रियः शेषाः॥' इति ॥ ७ **चिन्त्येति** । लिङ्गप्रकरणस्यास्य 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति प्रत्याख्यातत्वात्तत्प्रसङ्गेन लौकिकव्यवहारप्रत्याख्याता चतुःसूत्र्युपन्यस्तेति नासंगतिरिति भावः ॥

पूर्वाः फल्गुन्यः ॥ पूर्वे प्रोष्ठपदे, पूर्वाः प्रोष्ठपदाः । नक्षत्रे किम् । फल्गुन्यौ माणविके ॥ (११७४) **सू॰ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्** । १ । २ । ६३ । बहुत्वं द्वित्ववद्भवति । तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू । तिष्येति किम् । विशाखानुराधाः । नक्षत्रेति किम् । तिष्यपुनर्वसवो माणवकाः ॥ (११७५) **सू॰ स नपुंसकम्** । २ । ४ । १७ । समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । परवल्लिङ्गापवादः । पञ्चगवम् । दन्तोष्ठम् ॥ ( ११७६ ) **वा॰ अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः** ॥ पञ्चमूली ॥ ( ११७७ ) **वा॰ आबन्तो वा** ॥ पञ्चखट्वी, पञ्चखट्वम् ॥ ( ११७८ ) **वा॰ अनो नलोपश्च वा द्विगुः स्त्रियाम्** ॥ पञ्चतक्षी, पञ्चतक्षम् ॥ ( ११७९ ) **वा॰ पात्राद्यन्तस्य न** ॥ पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् ॥ ( ११८० ) **वा॰ पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा** ॥ पुण्याहम् । सुदिनाहम् ॥ ( ११८१ ) **वा॰ पथः संख्याव्ययादेः** ॥ संख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः । त्रयाणां पन्थास्त्रिपथम् ।

---

**प्रोष्ठपदानां च** । चकारेण द्वयोरनुकर्षणादाह—**द्वित्व इति** ॥ **फल्गुन्यौ माणविके इति** । फल्गुनीशब्दात् 'नक्षत्रेण युक्तः कालः १७०३' इत्यण्, तस्य 'लुबविशेषे १७०४' इति लुप् । ततो जातार्थे 'फल्गुन्यषाढाभ्यां टानौ १९६७' इति टः, टित्त्वान् ङीप् । न चायं गौणः, यौगिकत्वात् । तथा च—गौणमुख्यन्यायाप्रवृत्त्या नक्षत्रग्रहणमावश्यकमिति भावः ॥ (११७४) **तिष्यपुनर्वस्वोः**—। **विशाखानुराधा इति** । विशाखे चानुराधाश्चेति विग्रहः ॥ **तिष्यपुनर्वसव इति** । तिष्यपुनर्वसुशब्दाभ्यां पूर्ववत् 'नक्षत्रेण युक्तः कालः १७०३' इत्यण् 'लुबविशेषे १७०४' इति च लुप् । ततो जातार्थे ' संधिवेला—१९३८ ' इत्यादिसूत्रेण अण्, तस्य तु 'श्रविष्ठाफल्गुन्यनुराधा-१९६४' इत्यादिना लुक् । नक्षत्र इत्यनुवर्तमाने पुनर्नक्षत्रग्रहणं पर्यायाणामपि यथा स्यादित्येतदर्थमित्याकरः, एवं च 'सिध्यपुनर्वसू' इत्यपि सिध्यतीति दिक् । बहुवचनस्य किम्, इदं तिष्यपुनर्वसु । चार्थे द्वन्द्वोऽयम् ॥ (११७५) **स नपुंसकम्** । 'अनन्तरस्य—४४८' इति न्यायोऽत्र नाश्रीयते, तथात्वे द्विगुसंग्रहो न स्यादित्याशयेनाह—**द्विगुर्द्वन्द्वश्चेति**—। अत्र व्याचक्षते—प्रकरणादेवानुवाद्यलाभे 'स'—ग्रहणमेतत्प्रकरणानुपात्तस्यापि समाहारद्वन्द्वस्य संग्रहार्थम्, तेन संज्ञापरिभाषमित्यादि सिद्धमिति ॥ **पञ्चगवमिति** । 'तद्धितार्थ—१०५२' इत्यादिना समाहारे द्विगुः ॥ **दन्तोष्ठमिति** । 'द्वन्द्वश्च प्राणि—१३०५' इत्यादिना समाहारे द्वन्द्वः ॥ ( ११७७ ) **पञ्चखट्वीति** । उपसर्जनह्रस्वत्वे सत्यदन्तत्वात् 'द्विगोः ६६८' इति स्त्रीत्वपक्षे ङीप् ॥ **पञ्चखट्वमिति** । नपुंसकह्रस्वः ॥ ( ११७८ ) **अनो नलोपश्चेति** । 'उत्तरपदत्वे चापदादिविधौ—५९३' इति प्रत्ययलक्षणप्रतिषेधादप्राप्तो नलोप इति भावः ॥ इह वाशब्दः स्त्रियामित्यनेन संबध्यते, न तु पूर्वेण तेन नित्यो नलोप इत्याह—**पञ्चतक्षमित्यादि** ॥ ( ११७९ ) **पात्राद्यन्तस्य नेति** । स्त्रीत्वमिति शेषः । आकृतिगणोऽयम् ॥ ( ११८० ) **सुदिनाहमिति** । प्रशस्तपर्यायः सुदिनशब्दः 'सुदिनासु सभासु कार्यमेतत्प्रतिचिन्वीत विशेषतः स्वयं च' इत्यादिप्रयोगात् ॥ (११८१) **पथः संख्याव्ययेति** । संख्याव्ययरूपो य आदिस्तस्मादित्यर्थः ॥ **त्रिपथं विपथमिति** । 'ऋक्पूरब्धूः—१३५०' इत्यप्रत्ययः ॥ **सुपन्थाः । अतिपन्था इति** । 'न पूजनात् १३६९' इति समासान्तनिषेधः । कथं तर्हि 'व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः' इत्यमरः इति चेत् । प्रमाद एवायमिति बहवः ॥ मनोरमायां तु—'पथे गतौ' इत्यस्मात्पचाद्यचि पथति व्याप्नोतीति व्युत्पादितः पथशब्दोऽस्ति । तथा च त्रिकाण्डशेषः—'वाटः पथश्च मार्गश्च' इति । तेन पथशब्देन समासे पुंस्त्वमुपपन्नम् । न चैवं विपथसिद्धावपि कापथो न स्यात्कादेशस्य दुर्लभत्वादिति वाच्यम्, 'ईषदर्थे १४८०' इति तत्संभवात्कुत्सायामर्थतः पर्यवसानादिति स्थितम् ॥ केचित्तु—'पथः संख्या—११८१ ' इति वार्तिके कृतसमासान्तस्यैव ग्रहणं, न तु पचाद्यजन्तस्येत्यत्र बीजाभावाद्विपथः कापथ इति प्रयोगो दुरुपपाद एवेत्याहुः ॥ अत्र माधवः परवल्लिङ्गापवादत्वात्तत्पुरुष एवेदं

---

१ **नक्षत्रे किमिति** । 'नक्षत्रेऽभिधेये' इत्यर्थकं 'नक्षत्रे' इति पदं किमर्थमिति प्रश्नार्थः ॥ २ **पुनर्वसू इति** । छन्दसि पुनर्वस्वोरिति सूत्रे ' पुनर्वस्वोः ' इति द्विवचननिपातनाद् द्विवचनान्तमेव प्रयोक्तव्यमिति भावः । 'पुनर्वसू द्वे तारे' इति तु न सम्यक् पुनर्वसौ तारकाचतुष्टयप्रदर्शकमुहूर्तचिन्तामण्यादिज्यौतिषग्रन्थविरोधात् । इति केचित् ॥ "कुम्भकर्णशिरो भाति कुण्डलालंकृतं महत् । आदित्येऽभ्युदिते रात्रौ मध्यस्थ इव चन्द्रमाः ॥" इति रामचरिते आदित्यस्य कुण्डलसादृश्यप्रतिपादनेन तारकाद्वयमेव प्रतीयते इति न वाच्यम्, रामचरितस्य स्थूलयोगताराप्रदर्शनपरत्वेनाविरोधात् ॥ ३ **नक्षत्रेतीति** । नक्षत्राभिधायिनां द्वन्द्व इत्याद्यर्थकं किमर्थमिति प्रश्नार्थः ॥ ४ **माणवका इति** । 'नक्षत्रनाम च निर्दिशति ' इति गृह्यानुसारेण तिष्यनामकमाणवकस्य पुनर्वसुनामकमाणवकयोश्च द्वन्द्व इति भावः ॥ ५ **द्विगुरिति** । समाहारद्विगुरेव न तु तद्धितार्थद्विगुर्लोकसिद्धानुवादकत्वादस्य प्रकरणस्येति बोध्यम् ॥ ६ **विशाखे इति** । 'विशाखयोश्च' इति निपातनाद् द्विवचनान्तत्वमेवेति भावः ॥ ७ **चार्थ इति** । समाहार इति भावः ॥ अत एव ' समाहारद्वन्द्वः प्राण्यङ्गादीनामेव ' इति नियमो न "द्वन्द्वश्च प्राणितूर्य—" इत्यादीनामर्थ इति बोध्यम् ॥ ८ **न स्यादिति** । एतच्च ' अपथं नपुंसकम् ' इति सूत्रस्थस्य * द्विगुश्च * द्विगुसमासो नपुंसकलिङ्गो भवतीति वक्तव्यम् । 'पञ्चगवम्, दशगवम्' इति वार्तिकभाष्यस्यादर्शनमूलकत्वादुपेक्ष्यमेवेति बोध्यम् ॥ तथा चोक्तं कैयटेन—'स नपुंसकम्' इत्यस्यानन्तरं प्रक्रान्तो द्वन्द्व एव 'सः' इत्यनेन परामृश्यते इति 'द्विगोरप्राप्तं नपुंसकत्वमिति ( द्विगुश्चेति ) वचनम्' इति ॥ ९ **माधव इति** । अनेनारुचिः सूचिता । तथाहि—पथ इत्यस्य परवल्लिङ्गापवादत्वात्तत्पुरुष एव प्रवृत्तिः, तत्रैव प्रवृत्तौ च परवल्लिङ्गापवादत्वमित्यन्योऽन्याश्रयः । तस्माद् विपथाऽतिपथेत्यादावर्धनावमितिवत् 'लोकाश्रयत्वाल्लिङ्गस्य लिङ्गमाशिष्यम्' इति न्यायेन सिद्धमिति बोध्यम् । एवं च ' व्यध्वौ विपथकापथौ ' इत्यपि समञ्जसमेव, आवश्यकत्वादनेन वार्तिकेनैव सिद्धौ 'अपथं नपुंसकम्' इति सूत्रमदृष्टार्थमेवेति बोध्यम् ॥

विरूपः पन्थाः-विपथम् । कृतसमासान्तनिर्देशान्नेह, सुपन्थाः । अतिपन्थाः ॥ ( ११८२ ) 🔅 सामान्ये[1] नपुंसकम् ॥ मृदु पचति । प्रातः कमनीयम् ॥ ( ११८३ ) 🔅 तत्पुरुषोऽनञ्[2]कर्मधारयः । २ । ४ । १९ । अधिकारो[3]ऽयम् ॥ ( ११८४ ) 🔅 संज्ञायां कन्थोशीनरेषु । २ । ४ । २० । कथान्तस्तत्पुरुषः क्लीबं स्यात्सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा । सुशमस्यापत्यानि सौशमयः, तेषां कन्था—सौशमिकन्थम् । संज्ञायां किम् । वीरणकन्था । उशीनरेषु किम् । दाक्षिकन्था ॥ ( ११८५ ) 🔅 उपज्ञोपक्रमं तदाद्याचिख्यासायाम् । १ । ४ । २१ । उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् । तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते । पाणिनेरुपज्ञा—पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः ॥ ( ११८६ ) 🔅 छाया बाहुल्ये । २ । ४ । २२ । छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्वपदार्थबाहुल्ये । इक्षूणां छाया—इक्षुच्छायम् । विभाषा[4] सेनेति विकल्पस्यायमपवादः । इक्षुच्छायानिषादिन्य इति तु आ समन्तान्निषादिन्य इत्याङ्प्रश्लेषो बोध्यः ॥ ( ११८७ ) 🔅 सभा राजाऽमनुष्यपूर्वा । २ । ४ । २३ । राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम् । ईश्वरसभम् ॥ ( ११८८ ) वा॰ पर्यायस्यैवेष्यते ॥ नेह । राजसभा । चन्द्रगुप्तसभा । अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षःसभम् । पिशाचसभम् ॥ ( ११८९ ) 🔅 अशाला च । २ । ४ । २४ । संघातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात् । स्त्रीसभम् । स्त्रीसंघात इत्यर्थः । अशाला किम् । धर्मसभा । धर्मशालेत्यर्थः ॥ ( ११९० ) 🔅 विभाषा सेनासुराच्छायाशालानिशानाम् । २ । ४ । २५ । एतदन्तस्तत्पुरुषः क्लीबं वा स्यात् । ब्राह्मणसेनम्, ब्राह्मणसेना । यवसुरम्, यवसुरा । कुड्यच्छायम्, कुड्यच्छाया । गोशालम्, गोशाला । श्वनिशम्, श्वनिशा । तत्पुरुषोऽनञ्कर्मधारय इत्यनुवृत्तेर्नेह । दृढसेनो राजा । असेना । परमसेना ॥ इति तत्पुरुषः ॥

---

प्रवर्तते, नान्यत्र । विपथा नगरी, बहुव्रीहिरयम् । पन्थानमतिक्रान्ता अतिपन्था । इहापि नं, 'द्विगुप्राप्ता-११६४' इत्यादिना परवल्लिङ्गतायाः प्रतिषेधादिति ॥ ( ११८२ ) **सामान्ये नपुंसकमिति** । अनियतलिङ्गविषयकमिदम् । तेनादिं पचति, प्रातरादिरिति पुंस्त्वमेव ॥ **मृदु पचतीति** । क्रियाविशेषणत्वाद् द्वितीयान्तम् । धातूपात्तभावनां प्रति हि फलांशः कर्मीभूतः । तथा च फलसामानाधिकरण्ये द्वितीया । अत एव सक्तल्वावित्यादौ कारकपूर्वकत्वाद्यण् । यत्र तु भावनां प्रति करणतया धात्वर्थविशेषोऽन्वेति तत्र तद्विशेषणानां तृतीयान्ततैव, ज्योतिष्टोमेन यजेतेत्यत्र यथा । एतच्च 'करणे यजः' इति सूत्रे वृत्तिपदमञ्जर्योः स्पष्टम् ॥ ( ११८३ ) **तत्पुरुषोऽनञ्**—। नञ्समासकर्मधारयाभिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभाग्भवतीति सूत्रार्थः ॥ ( ११८५ ) **उपज्ञो**—। उपज्ञायत इत्युपज्ञा 'आतश्चोपसर्गे ५०८८' इति कर्मण्यङ् । उपक्रम्यत इत्युपक्रमः कर्मणि घञ् 'नोदात्तोपदेशस्य-३६८८' इति वृद्धिप्रतिषेधः । उपज्ञा च उपक्रमश्चेति समाहारद्वन्द्वः । स चानुवर्तमानस्य तत्पुरुषस्य विशेषणम् । तच्छब्देन उपज्ञोपक्रमौ परामृश्येते । तदेतत्सकलमभिप्रेत्याह—**उपज्ञान्त इत्यादि** । आख्यातुमिच्छा आचिख्यासेतीच्छासना इह विवक्षैव शब्दप्रवृत्तौ नियामिका, न तु वस्तुस्थितिरिति ज्ञाप्यते । तेन 'त्वदुपक्रमसौजन्यम्' इत्याद्यपि सिध्यति ॥ **पाणिनेरिति** । कर्तरि षष्ठी ॥ **नन्दोपक्रममिति** । नन्दस्योपक्रम इति विग्रहः ॥ ( ११८६ ) **छाया**—। बाहुल्ये सति या छाया तद्वाची यश्छायान्तस्तत्पुरुष इत्यर्थः । इह कस्य बाहुल्य इत्यपेक्षायामावरकद्रव्यानिमित्तत्वाच्छायायास्तद्बाहुल्य इति गम्यते । तच्चावरकं पूर्वपदार्थभूतमेवेत्याशयेनाह—**पूर्वपदार्थबाहुल्ये इति** । पूर्वपदार्थबाहुल्ये किम् । कुड्यस्य छाया कुड्यच्छाया ॥ **प्रश्लेषो बोध्य इति** । केचित्तु 'इक्षुच्छायनिषादिन्यः' इत्येव पठन्ति ॥ ( ११८७ ) **सभा**—। **इनसभमित्यादि** । इनशब्दोऽत्र राजपर्यायः । ईश्वरशब्दश्च । ( ११८८ ) ननु 'स्वं रूपम्-४६' इति वचनाद्राजशब्दस्यैव ग्रहणं युक्तं, न पर्यायस्येत्यत आह—**पर्यायस्यैवेष्यत इति** । एवकारेण स्वरूपस्य विशेषाणां च निरासः । कथं तर्हि 'नृपतिसभामगमत्र वेपमानः' इति कीचकवधे ॥ अत्र केचित्—ना पतिर्यस्यां सभायामिति बहुव्रीहौ कृते पश्चात्कर्मधारयः । 'अनञ्कर्मधारयः' इत्युक्तेर्न क्लीबत्वमित्याहुः ॥ रक्षितस्त्वाह—गजपतिवन्नृपतिरपि राजविशेषस्तेनात्र नानुपपत्तिरिति ॥ ( ११८९ ) **अशाला च** । शालावाची संघातवाची च सभाशब्दस्तत्र राजमनुष्यपूर्वत्वे शालावाचिनः क्लीबत्वमुक्तम् । अनेन तु संघातवाचिनो विधीयत इत्याह—**संघातार्थेति** ॥ ( ११९० ) **विभाषा सेना**—। प्रथमार्थे षष्ठीति । सेनादिभिस्तत्पुरुषो विशेष्यते । विशेषणेन तदन्तविधिस्तदाह—**एतदन्त इति** ॥ **श्वनिशमिति** । कृष्णचतुर्दशी । तस्यां किल केचिच्छ्वान उपवसन्ति । एतच्च शाबरभाष्ये तिर्यगधिकरणे स्पष्टम् ॥ 'तत्पुरुष-११८३' इत्याद्यधिकारसूत्रस्यात्रैव प्रयोजनं, न तु 'संज्ञायां कन्थोशीनरेषु

---

१ **सामान्ये नपुंसकमिति** । न्यायसिद्धमेतत् विशेष्यविशेषासंनिधाने लिङ्गसर्वनाम्नो नपुंसकस्यैव न्याय्यत्वात् । 'लिङ्गसर्वनाम नपुंसकम्' इति दाण्डिनायनसूत्रे भाष्ये स्पष्टम् ॥ २ **अनञिति** । कर्मधारयात्पृथग् नञ उपादानान्नञ्समासे कर्मधारयत्वाभावो ध्वन्यते । पृथगुपस्थितयोर्हि सामानाधिकरण्यव्यवहारः ॥ नञ्समासे हि आरोपितोत्तरपदार्थे आरोपितधर्मके वाऽर्थे उत्तरपदस्य शक्तिः नञ् तु द्योतक इति भावः ॥ ३ **अधिकारोऽयमिति** । 'परवल्लिङ्गम्' इति यावदिति बोध्यम् ॥ ४ **इहापि नेति** । नपुंसकत्वमिति शेषः ॥ ५ **आदिं पचतीति** । आदिशब्दस्य नित्यपुंल्लिङ्गत्वेन न नपुंसकत्वम् । क्रियाविशेषणत्वेन कर्मसंज्ञायां द्वितीया तु भवत्येवेति भावः ॥

## अथ बहुव्रीहिप्रकरणम् ।

( ११९१ ) ⊛ **शेषो बहुव्रीहिः** । २ । २ । २३ । अधिकारोऽयम् । द्वितीयाश्रितेत्यादिना[1] यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः, प्रथमान्तमित्यर्थः ॥ ( ११९२ ) ⊛ **अनेकमन्यपदार्थे** । २ । २ । २४ । अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः । ( ११९३ ) अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च फलितम् । प्राप्तमुदकं यं-प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः । प्रथमार्थे तु न । वृष्टे देवे गतः । व्यधिकरणानामपि न । पञ्चभिर्भुक्तमस्य ॥

---

११८४' इत्यादिपञ्चसूत्र्याम् । अतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य च तत्रासंभवादित्याकरे स्थितम् । तथैव प्रत्युदाहरति—**दृढसेन इत्यादि** । ननु बहुव्रीहौ विशेष्यनिघ्नता न्याय्यैवेति किमनेन तत्पुरुषग्रहणेन । मैवम्, न्यायापेक्षया वचनस्य बलीयस्त्वात् । किञ्चासति तद्ग्रहणे द्वन्द्वे नपुंसकता स्यात्परवल्लिङ्गापवादत्वादस्य प्रकरणस्येति दिक् ॥ इति तत्पुरुषः ॥

---

( ११९१ ) **शेषो बहुव्रीहिः** । 'शिष असर्वोपयोगे' कर्मणि घञ् । अत्र वृत्तिकृत्—यत्रान्यः समासो नोक्तः सः शेष इत्याह । येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिसंज्ञकः समासो न विहितः स शेष इत्यर्थ इति हरदत्तो व्याख्यत् । एतच्च 'प्राक्कडारात्परं कार्यम्' इति पाठाभिप्रायेण बोध्यम् । अस्मिंस्तु पक्षे शेषग्रहणाभावे उन्मत्तगङ्गमित्यत्र परत्वाद्बहुव्रीहिः स्यात् । निरवकाशत्वाच्चाव्ययीभाव इत्युन्मत्तगङ्ग इत्याद्यनिष्टं पक्षे प्रसज्येत । 'आकडारादेका—३३३' इति पाठाभ्युपगमपक्षे त्वेकसंज्ञाधिकारेणैवोन्मत्तगङ्गमित्यादिसिद्धेः शेषग्रहणं व्यर्थम् । निरवकाशतयाऽव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधात् । अतस्तत्रापि प्रयोजनमाह—**द्वितीया श्रितेत्यादिनेति** । शेषाधिकारस्थबहुव्रीहेरेव 'शेषाद्विभाषा १२७४' इति कप्प्रत्ययो नान्यस्माद्बहुव्रीहेरित्येतल्लाभार्थमपि शेषग्रहणमावश्यकमिति बोध्यम् ॥ **यस्य त्रिकस्येति** । यद्यपि 'प्रादयो गताद्यर्थे प्रथमया १११९' इत्युक्तम्, तथापि 'द्वितीया श्रितादिभिः' इतिवत् 'प्रथमा केनचित्सह समस्यते' इति नोक्तमित्यर्थः । वार्तिककृता प्रथमयेत्युक्तावपि सूत्रकृता नोक्तमिति वा ॥ **(११९२) अनेकमन्य—। प्रथमान्तमिति** । कण्ठेकाल इत्यादिबहुव्रीहिस्तु ज्ञापकसाध्य इति भावः ॥ **अन्यस्य पदस्यार्थ इति** । समस्यमानपदातिरिक्तस्य पदस्यार्थ इत्यर्थः । पदेन हि प्रकृत्यर्थोपसर्जनकः (प्रत्ययार्थः) कर्मकर्त्रादिरभिधीयते । प्रथमान्तेन तु प्रातिपदिकार्थमात्रम् ॥ ( ११९३ ) यद्यपि त्रिकपक्षे संख्या प्रत्ययार्थः, तथापि तस्याः प्रकृत्यर्थं प्रति विशेषणत्वान्न प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः प्रथमान्तस्यास्ति । एवञ्च-'द्वितीयान्ताद्यर्थे' इति फलितम् ॥ तदाह-**अप्रथमाविभक्त्यर्थ इति** ॥ **समानेति** । एतच्च शेषग्रहणाल्लब्धम् । अनेकं किम्, बहूनामपि यथा स्यात् । एतच्च मूल एव स्फुटीभविष्यति । अनिज्वधौ केवलग्रहणं ज्ञापकीकृत्यानेकग्रहणमिह सुत्यजमित्याहुः ॥ अन्यग्रहणं किम्, बहुव्रीहितत्पुरुषयोर्विषयविभागो यथा विज्ञायेत, स्वपदार्थे हि सावकाशं तत्पुरुषं परत्वादन्यपदार्थे बहुव्रीहिर्बाधते । असति त्वन्यग्रहणे कण्ठेकाल इत्यादौ व्यधिकरणपदे बहूनां समुदाये च सावकाशं बहुव्रीहिं स्वपदार्थ इवान्यपदार्थेऽपि नीलोत्पलं सर इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत । पदग्रहणं किम्, वाक्यार्थे मा भूत् । प्राहवती नदी । इह मा स्नासीरिति वाक्यार्थो गम्यते । अर्थग्रहणं किम्, यावता पदे पदान्तरस्य वृत्त्यसंभवादेव पदार्थे भविष्यति । अत्राहुः—प्रकृत्यर्थविशिष्टप्रत्ययार्थाभिधानं यथा स्यात् । अन्यथा प्राधान्यात् प्रत्ययार्थमात्रं गृह्येत । इष्टापत्तौ तु चित्रगुरित्येतत् षष्ठ्यर्थसंबन्धमात्रपरं स्यात् । तथा च देवदत्तादेः सामानाधिकरण्यं न स्यादिति । अत्रेदमवधेयम्-'सुपा-९४९-२' इत्येतन्नानुवर्तते । तेनात्रानेकं प्रथमान्तं मिथः समस्यते इति पर्यवसन्नोऽर्थः । एवं च द्विपदबहुव्रीहिरबाध एव । ये तु 'सुप्सुपा ९४९' इत्यनुवर्त्य 'अनेकं सुबन्तं सुपा सह—' इति व्याचक्षते, तेषां तु द्विपदबहुव्रीहिर्दुर्लभ एवेति द्वितीयादिविभक्त्यर्थे क्रमेणोदाहरति—**प्राप्तमित्यादि** । ग्रामकर्मकप्राप्तिकर्तृ उदकमिति विग्रहार्थः । उदककर्तृकप्राप्तिकर्मेति समासार्थः । विग्रहवाक्ये स इति प्रयोगे तु तस्यापि[1] अयमेवार्थः । अनडुत्कर्तृकोद्वहनकर्मीभूतो रथः । रथकर्मकोद्वहनकर्ता तु समासार्थः । रुद्रसंप्रदानकोपहरणकर्मीभूतः, पशुः । पशुकर्मकोपहरणसंप्रदानं तु समासार्थः । स्थाल्यवधिकोद्धरणकर्म ओदनः । ओदनकर्मकोद्धरणावधिः स्थाली समासार्थ इत्यादि । इह कर्मादीनां समासेनाभिहितत्वादप्रथमा ॥ ननु वाक्ये धात्वर्थं प्रति क्तप्रत्ययार्थस्य कर्तुः कर्मणो वा विशेष्यत्वाद्वृत्तावपि तथैवोचितेति प्राप्तोदकोढरथादौ उदककर्तृकप्राप्तीत्यादिवर्णनं तु न युज्यते इति चेत् । उच्यते—एकार्थीभावादिभिर्वृत्तौ विशिष्टार्थविषयकं शक्त्यन्तरमेव स्वीक्रियते, न त्ववयवशक्तिः, इति नानुपपत्तिः । व्यपेक्षावादिभिस्त्वगत्या भिन्नैव व्युत्पत्तिः स्वीकार्या । किञ्च, कर्तृविशिष्टप्राप्तेः पदार्थत्वे तस्यैव नामार्थत्वादुदकस्य तदभेदो वाच्यः, स च बाधितः, न हि कर्तृविशिष्टा प्राप्तिरुदकमिति संभवति । अत एव 'बहूनां वृत्तिधर्माणां वचनैरेव साधने । स्यान्महद्गौरवम्—' इत्यादिना समर्थसूत्रे एकार्थीभावपक्ष एव प्रबल इत्यवोचाम ॥ **प्रथमार्थे तु नेति** । शेषपदेन वा अन्यपदार्थ इत्यनेन वा अतिप्रसङ्गवारणात् 'अप्रथमाविभक्त्यर्थे ११९३' इति वचनं न कर्तव्यमिति भावः ॥ **व्यधिकरणानामित्यादि** । इह शेषपदेनैव वारितोऽतिप्रसङ्ग इति 'समानाधिकरणानां बहुव्रीहिः' इत्यपि न कर्तव्यमिति भावः ॥ 'यत्रान्यसमासो नोक्तः स शेषः' इति वृत्तिकारादीनां मते तु 'प्रथमान्तानामेव बहुव्रीहिः' इत्यलाभात्कर्तव्यमेवेदं वच-

---

१ तस्यापि । स इत्यस्यापि । अयमेवेति—उदककर्तृकप्राप्तिकर्मग्राम एवेत्यर्थ इति चन्द्ररत्ने ॥

( ११९४ ) वा० **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** ॥ प्रपतितपर्णः प्रपर्णः ॥ ( ११९५ ) वा० **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** ॥ अविद्यमानपुत्रः अपुत्रः । अस्तीति विभक्तिप्रतिरूपकमव्ययम् । अस्तिक्षीरा गौः ॥ ( ११९६ ) सू० **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** । ६ । ३ । ३४ । भाषितपुंस्कादनूङ् ऊङोऽभावो यस्यामिति बहुव्रीहिः । निपातनात्पञ्चम्या अलुक् । षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकस्य शब्दस्य पुंवाचकस्येव रूपं स्यात्समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः । गोस्त्रियोरिति ह्रस्वः । चित्रा गावो

---

नमिति बोध्यम् ॥ ( ११९४ ) **प्रादिभ्य इति** । प्रादिभ्यः परं यद्धातुजं तदन्तस्य पदान्तरेण बहुव्रीहिर्व्याख्येय इति सूत्रसिद्धानुवादः ॥ **वा चेति** । इदं तु वाचनिकम् । पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य लोपो वाच्य इत्यर्थः । एतच्च प्रादीनामेव वृत्तौ विशिष्टार्थवृत्तितामाश्रित्य सुत्यजम् ॥ ( ११९५ ) **नञोऽस्त्यर्थानामिति** । नञः परेषामस्त्यर्थवाचिनां पदान्तरेण बहुव्रीहिर्व्याख्येयः, अस्त्यर्थवाचिनां तु लोप इत्यर्थः । अस्त्यर्थानां किम्, अनुपनीतपुत्रः । नञः किम्, निर्विद्यमानपुत्रः ॥ नन्विह 'सुपा९४९-२' इत्यननुवृत्तावपि सुबित्येतदनुवर्तते । तथा चास्तिक्षीरेति प्रयोगो दुर्लभ इत्याशङ्क्य तं साधयति—**विभक्तिप्रतिरूपकमिति** ॥ ( ११९६ ) **स्त्रियाः पुंवत्—निपातनादिति** । एतच्च पूर्वत्रापि योज्यम् । अन्यथा व्यधिकरणानां बहुव्रीहिः स्वरसतो न सिध्येत् ॥ **लुगिति** । अनूङिति प्रथमान्तम् । षष्ठ्यर्थे प्रथमेति हरदत्तः । एवं च सूत्रे केषांचित् 'अनूङ्समानाधिकरणे' इति षष्ठ्यन्तपाठोऽसांप्रदायिक इति भावः॥ **तुल्ये इत्यादि** । 'भाषितः पुमान् यस्मिन्' इत्यादिव्याख्यानादयमर्थो लभ्यते इति 'तृतीयादिषु भाषितपुंस्कम्-४४४' इत्यत्रोपपादितम् । यद्यत्र 'भाषितः पुमान्येन तद्भाषितपुंस्कम्' इत्युच्येत, तर्हि कुटीभार्यः द्रोणीभार्य इत्यादावतिप्रसङ्गः स्यात् । भवति हि कुटशब्दो घटे पुँल्लिङ्गो, गेहे तु स्त्रीलिङ्गः । द्रोणशब्दस्तु परिमाणविशेषे पुँल्लिङ्गो, गवादन्यां तु स्त्रीलिङ्ग इति ॥ **ऊङोऽभावो यत्रेति** । यदि तु ऊङन्योऽनूङिति पर्युदासः स्यात् तर्हि टाबाद्यन्तमेव गृह्येत । ततः किमिति चेत् , दरदोऽपत्यं दारदः । 'द्व्यञ्मगध-१६८०' इत्यण्, तस्य स्त्रियाम् 'अतश्च१६८९' इति लुक् । दरद्, सा चासौ वृन्दारिका च दारदवृन्दारिकेत्यादि न सिध्येत् । न ह्यत्र दर्शनीया भार्या यस्य दर्शनीयभार्य इत्यादाविव स्त्रीप्रत्ययः कश्चिदस्तीति भावः । ननु 'न कोपधायाः १२०८' 'ऊङश्च' इत्येव सूत्र्यतामिति चेत् । न, बाधकबाधनार्थेन 'पुंवत्कर्मधारय-१०७५' इत्यनेन वामोरूभार्येति कर्मधारये पुंवद्भावापत्तेः । पृथक्प्रतिषेधसामर्थ्यात्सिद्धान्ते तु न दोषः ॥ स्त्रिया इत्यस्य स्त्रीप्रत्ययपरतां वारयति—**स्त्रीवाचकस्येति** । 'स्त्रीप्रत्ययस्य पुंवद्भावः' इत्युक्ते तु स्त्रीप्रत्ययलोप इत्येवार्थः पर्यवस्यतीति दारदवृन्दारिकेति न सिध्येत् । किञ्च, पटुभार्य इत्यत्र उत्तरपदनिमित्ताया ङीषो निवृत्तेः 'अचः परस्मिन्-७७' इति स्थानिवद्भावाद्यण् स्यात् । अपि च वतण्डस्यापत्यं स्त्री वतण्डी 'वतण्डाच्च १५८८' इति यञ् , 'लुक् स्त्रियाम् १५८९' इति तस्य लुक् । शार्ङ्गरवादित्वान् ङीन् । वतण्डी चासौ वृन्दारिका च वातण्ड्यवृन्दारिका । अत्र पुंवद्भावेन ङीनो निवृत्तावपि अर्थगतस्य स्त्रीत्वस्यानिवृत्तत्वात् 'लुक् स्त्रियाम् १५८९' इति यञो लुक् प्रसज्येतेति भावः ॥ **ह्रस्व इति** । अनेकमिति प्रथमा-

---

१ **तुल्ये प्रवृत्तिनिमित्त इति** । गर्भिभार्यः प्रसूतभार्य इत्यत्रापि नानुपपत्तिः,गर्भप्रसवसंबन्धस्य स्त्रीष्विव पुंस्यपि "पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवात्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनं जनयति तदस्य प्रथमं जन्म ॥ १ ॥ तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति सास्यैतमात्मानमत्र गतं भावयति ॥ २ ॥ सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति तं सोऽग्र एव कुमारं जन्मनोऽधिभावयति स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद् भावयत्येषां लोकानां संतत्या, एवं संतता हीमे लोकाः,तदस्य द्वितीयं जन्म ॥ ३ ॥" इत्यैतरेयोपनिषदि चतुर्थखण्डे स्पष्टं, प्रतिपादनात् ॥ २ **पुंवाचकस्येव रूपमिति** । प्रयोगान्तरे पुमांसमाचक्षाणस्य यद्रूपं तदेव रूपं पुंवद्भावभाजः शब्दस्य प्रत्यासत्त्याऽतिदिश्यते । तेन जरती गौर्यस्येति विग्रहे जरद्गुरित्येव भवति, न तु 'वृद्धगुः' इति । वरटा भार्या यस्येति विग्रहे वरटाभार्य इत्येव भवति न तु हंसभार्य इति ॥ ३ **सुत्यजमिति** । मुख्यार्थे तु न समासोऽनभिधानादिति भावः ॥ अत एव 'प्रादिभ्यः' इत्येतद्वार्तिकात् प्रागन्यान्यपि वार्तिकानि सोदाहरणानि यद्यपि भाष्ये समुपलभ्यन्ते * **अव्ययानां च** * अव्ययानां च बहुव्रीहिर्वक्तव्यः । उच्चैर्मुखस्येति उच्चैर्मुखः, नीचैर्मुखः ॥ * **सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च** * सप्तमीपूर्वस्योपमानपूर्वस्य च बहुव्रीहिर्वक्तव्यः, उत्तरपदस्य च लोपो वक्तव्यः । कण्ठेस्थः कालो यस्य कण्ठेकालः उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः खरमुखः ॥ * **समुदायविकारषष्ठ्याश्च** * समुदायविकारषष्ठ्याश्च बहुव्रीहिर्वक्तव्यः, उत्तरपदस्य च लोपो वक्तव्यः । केशसमाहारश्चूडा अस्य केशचूडः । सुवर्णविकारोऽलंकारोऽस्य सुवर्णालंकारः । प्रयोगसाधनाय समुपन्यस्यन्ते च प्राचीनैः काव्यव्याख्यातृभिः । तथापि वृत्त्युपलभ्यमानपूर्वपदस्यैव लुप्यमानोत्तरपदार्थविशिष्टार्थे लक्षणामाश्रित्य समासे उत्तरपदलोपो वृथैवेति मनसि निधाय कौमुद्यां न व्याख्यातानीति बोध्यम् ॥ वस्तुतस्तु वचनारम्भ एव ज्यायान् विनिगमकान्वेषणाभावेन लाघवादिति बोध्यम् ॥ ४ **न सिध्येदिति** । 'जातेश्च' इति निषेधस्तु नात्र, निषेधविषय एव 'पुंवत् कर्मधारय-' इत्यस्य प्रवृत्तेः ॥ किञ्च, तत्र जातेरिति पञ्चमीनिर्देशात् ततः परो यः प्रत्ययस्तदन्ते स निषेधो नात्र तथा । एवं च सत्यभिधाने बहुव्रीहावपि ऐडविडभार्य इत्येव ॥

यस्येति लौकिकविग्रहे, चित्रा अस् गो अस् इत्यलौकिकविग्रहे चित्रगुः । रूपवद्भार्यः । चित्रा जरती गौर्यस्येति विग्रहे अनेकोक्तेर्बहूनामपि बहुव्रीहिः । अत्र केचित्–। चित्राजरतीगुः । जरतीचित्रागुर्वा । एवं दीर्घातन्वीजङ्घः । तन्वीदीर्घाजङ्घः । त्रिपदे बहुव्रीहौ प्रथमं न पुंवत्, उत्तरपदस्य मध्यमेन व्यवधानात् । द्वितीयमपि न पुंवत्, पूर्वपदत्वाभावात् । उत्तरपदशब्दो हि समासस्य चरमावयवे रूढः । पूर्वपदशब्दस्तु प्रथमावयव इति वदन्ति । वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते । आनङ् ऋत इत्यत्र यथा । तेनोपान्त्यस्य पुंवदेव । चित्राजरद्गुरित्यादि । अत एव चित्राजरत्यौ गावौ यस्येति द्वन्द्वगर्भेऽपि चित्राजरद्गुरिति भाष्यम् । कर्मधारयपूर्वपदे तु द्वयोरपि पुंवत् । जरच्चित्रगुः । कर्मधारयोत्तरपदे तु चित्रजरद्गवीकः । स्त्रियाः किम् । ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः । भाषितपुंस्कात्किम् । गङ्गाभार्यः । अनूङ्किम् । वामोरूभार्यः । समानाधिकरणे किम् । कल्याण्याः माता कल्याणीमाता । स्त्रियां किम् । कल्याणी प्रधानं यस्य स कल्याणीप्रधानः । पूरण्यां तु । ( ११९७ ) (सू) अप्पूरणीप्रमाण्योः । ५ । ४ । ११६ । पूरणार्थप्रत्ययान्तं यत् स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः [ स्त्री[1] प्रमाणी यस्य स स्त्रीप्रमाणः ] । पुंवद्भावप्रतिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव । रात्रिः पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या[2] । अन्यत्र तु ( ११९८ ) (सू) नद्यृतश्च । ५ । ४ । १५३ । नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप्स्यात् । पुंवद्भावः ॥ ( ११९९ ) (सू) केऽणः । ७ । ४ । १३ । के परेऽणो ह्रस्वः स्यात् । इति प्राप्ते ( १२०० ) (सू) न कपि । ७ । ४ । १४ । कपि परे ह्रस्वो न स्यात् । कल्याणपञ्चमीकः पक्षः । अत्र तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतया रात्रिरप्रधानम् । बहुकर्तृकः । अप्रियादिषु किम् । कल्याणीप्रियः । प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । स्वसा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वामा । अबला । तनया ॥ सामान्ये नपुंसकम् । दृढं भक्तिर्यस्य स

---

निर्दिष्टत्वात् 'प्रथमानिर्दिष्टम्–९५४' इति 'एकविभक्ति च–९५६' इति वा गोशब्दस्योपसर्जनत्वादिति भावः ॥ **चित्रा असिति** । 'अन्तरङ्गानपि–५१५६' इति न्यायादिह पूर्वं सवर्णदीर्घो न प्रवर्तते । अन्यथा एकादेशस्य परादिवत्वेन सुपो लुकि चित्रगुरित्यत्र अकारो न लभ्येतेति भावः ॥ **नेहेति** । अत्रैव सूत्रे पट्वीमृद्व्यौ भार्ये अस्येति द्वन्द्वगर्भबहुव्रीहौ पट्वीमृदुभार्य इति भाष्योदाहरणादिति भावः ॥ **आनङिति** । तथा च 'समर्थ–' सूत्रे भाष्ये होतृपोतृनेष्टोद्गातार इत्यत्र चतुर्णां द्वन्द्वे तृतीयस्यानङ् उदाहृतः । पूर्वपदाक्षेपे तु न सिध्येत् । न ह्यत्र नेष्टा पूर्वपदं, होतुरेव पूर्वपदत्वादिति भावः ॥ **अत एवेति** । पूर्वपदानाक्षेपादेवेत्यर्थः ॥ **चित्राजरदिति** । द्वन्द्वान्तर्गतजरच्छब्दस्योत्तरपदत्वेऽप्यसामानाधिकरण्यान्न टापो निवृत्तिः । न चैवमपि द्वन्द्वात्मकस्य पूर्वपदस्य समानाधिकरणोत्तरपदपरत्वात्पुंवद्भावे टान्निवृत्तिर्दुर्वारेति वाच्यम्, द्वन्द्वान्तर्गतचित्राजरच्छब्दयोः स्त्रीप्रत्ययप्रकृत्योः प्रत्येकं भाषितपुंस्कत्वेऽपि द्वन्द्वात्मकस्य पूर्वपदस्यातथात्वात् ॥ **द्वयोरपीति** । पूर्वपदान्तर्गतमुत्तरपदमाश्रित्य प्रथमस्यापि पुंवद्भाव इति भावः ॥ **जरच्चित्रेति** । 'पूर्वकालैक–१०५०' इति समासः । लिङ्गविशिष्टपरिभाषया जरद्ग्रहणेन जरतीशब्दस्यापि ग्रहणात् ॥ **चित्रजरद्गवीक इति** । जरती चासौ गौश्च जरद्गवी 'गोरतद्धित–१०५५' इति टचि टित्वान् ङीप् । चित्रा जरद्गवी यस्येति बहुव्रीहौ 'नद्यृतश्च ११९८' इति वक्ष्यमाणः कप् ॥ **वामोरूभार्य इति** । 'संहितशफलक्षणवामादेश्च ७५६' इत्यूङ् ॥ **प्रधानमिति** । भावल्युडन्तं नित्यनपुंसकम् ( ११९७ ) **अप्पूरणी—। पञ्चमीति** । 'तस्य पूरणे–२५०७' इति डट् 'नान्तादसंख्यादेः–२५०८' इति डटो मडागमः ॥ 'टिड्ढा–६५१' इति ङीप् ॥ **प्रमाणीति** । करणे ल्युट्, तदन्तस्य विशेष्यनिघ्नत्वात् स्त्रियां ङीप् ॥ कथं तर्हि 'प्रमाणायां स्मृतौ' इति शाबरभाष्यमिति चेत् । अत्र भट्टाः—"प्रमाणमयते याति मूलभूतां श्रुतिं यतः । क्विबन्तादयतेस्तस्मात्प्रमाणा स्मृतिरुच्यते" इत्याहुः । तत्रायेतेः क्विपि 'ह्रस्वस्य पिति कृति–३८०६' इति तुकि टापू दुर्लभः । तथाप्यागमशास्त्रस्यानित्यत्वात्तुङ्नेति बोध्यम् । क्विबिवाचरति क्विप्–विजितयर्थ इति वा व्याख्येयम् ॥ अन्ये तु–प्रमाणं वेदस्तद्वदाचरतीत्याचारक्विबन्तात्प्रमाणशब्दात्पचाद्यचि टाबित्याहुः ॥ **प्रधानपूरण्यामेवेति** । प्रधाने कार्यसंप्रत्ययान्न्यायसिद्धमिदम् ॥ ( ११९८ ) **नद्यृतः—**। तपरत्वं स्पष्टार्थम् ॥ **नद्युत्तरपदादिति** । नद्यन्तादिति नोक्तं, कप्प्रत्ययेन सह समासे कृते बहुव्रीहेरनद्यन्तत्वात् । उत्तरपदं तु नद्यन्तं भवत्येव, 'समासे अन्तः समासान्तः' इति पक्षाश्रयणादिति

---

१ **स्त्रीप्रमाणीति** । अयं कोष्ठकान्तर्गतः पाठः समासान्तसूत्रोपात्तक्रमानुरोधेनैवात्र निर्दिष्टः ॥ उचितस्तु पूरण्याप्रधानाप्रधानविषयप्रदर्शनोत्तरमेव बहुकर्तृक इत्युत्तरमेवेति बोध्यम् ॥ २ **मुख्येति** । अन्यपदार्थरात्रिसमूहस्योद्भूतावयवभेदस्यैव वाच्यत्वेन तद्घटकतया यथा प्रथमाया रात्रयः प्रधानत्वेन समासाभिधेया एवं पञ्चम्यपीति वर्तिपदार्थस्यान्यपदार्थेऽनुप्रवेशात्प्राधान्यमिति भावः ॥ ३ **पूर्वमिति** । सानुस्वार एव पाठः । निरनुस्वारपाठे 'प्रथमयोः पूर्वसवर्णः' इत्यतत्प्रत्यये 'दीर्घाज्जसि च' इति निषेधादयुक्तत्वमेव स्यादिति बोध्यम् । एवं पाठे समासात्प्राक् सवर्णदीर्घो नेत्यर्थः ॥ ४ **पट्वीमृदुभार्य इतीति** । तत्र हि यत् पूर्वपदं द्वन्द्वः, न स भाषितपुंस्कः । मृद्वीशब्दस्य केवलस्य भाषितपुंस्कत्वेऽपि न पूर्वपदत्वमिति तदाक्षेपे नैतत् सिध्येदिति भावः ॥ ५ भट्टोक्तसाधनं दूषयति—**तत्रेति** । ६ दूषणं परिहरति—**तथापीति** । ७ भाष्यानुक्तत्वेन परिहारस्यासंगतौ सिद्ध्यन्तरमाह—**क्विबिवेति** । ८ विचो दृष्टानुविधिच्छन्दोविषयत्वमभिप्रेत्याह—**अन्ये त्विति** । ९ **इति पक्षेति** । समासयोग्यालौकिकविग्रहवाक्यस्यान्त इति मुख्यपक्षेऽपि स्वनिमित्तभूतत्वेन कपः पूर्वं प्राग्भागे नदीत्वस्यैव दृष्टत्वमिति नद्युत्तरपदत्वमबसेयमिति भावः ॥

दृढभक्तिः । स्त्रीत्वविवक्षायां तु दृढाभक्तिः ॥ ( १२०१ (सू) तसिलादिष्वाकृत्वसुचः । ६ । ३ । ३५ । तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत्स्यात् । परिगणनं कर्तव्यम् । अव्याप्त्यतिव्याप्तिपरिहाराय । त्रतसौ । तरप्तमपौ । चरड्जातीयरौ । कल्पब्देशीयरौ रूपप्पाशपौ । थाल् । तिल्थ्यनौ । बह्वीषु बहुत्र । बहुतः । दर्शनीयतरा । दर्शनीयतमा । [१]घरूपेति वक्ष्यमाणो ह्रस्वः परत्वात्पुंवद्भावं बाधते । पट्वितरा । पट्वितमा । पटुचरी । पटुजातीया । दर्शनीयकल्पा । दर्शनीयदेशीया । दर्शनीयरूपा । दर्शनीयपाशा । बहुथा । प्रशस्ता वृकी वृकतिः । अजाभ्यो हिता अजथ्या ॥ ( १२०२ ) (वा) शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः ॥ बह्वीभ्यो देहि बहुशः।अल्पाभ्यो देहि अल्पशः॥ ( १२०३ ) (वा) त्वतलोर्गुणवचनस्य ॥ शुक्लाया भावः [१]शुक्लत्वम् । शुक्लता । गुणवचनस्य किम् । कर्त्र्या भावः [२]कर्त्रीत्वम् । शरदः कृतार्थतेत्यादौ तु सामान्ये नपुंसकम् ॥ ( १२०४ ) (वा) भस्याढे तद्धिते ॥ हस्तिनीनां समूहो हास्तिकम् ॥ अढे किम् । रौहिणेयः । स्त्रीभ्यो ढगिति ढोऽत्र गृह्यते । [१७४१]अग्नेर्ढगिति ढकि तु पुंवदेव । अग्नायी देवताऽस्य स्थालीपाकस्याग्नेयः ॥ सपत्नीशब्दस्त्रिधा-। शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादित्वात् ङीन्[३]येकः । समानः पतिर्यस्या इति विग्रहे विवाहनिबन्धनं पतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः । स्वामिपर्यायपतिशब्देन भाषितपुंस्क-

---

बोध्यम् ॥ **दृढमिति** । अदार्ढ्यनिवृत्तिमात्रपरत्वेनात्र दृढशब्दप्रयोगान्न लिङ्गविशेषविवक्षेति भावः । लिङ्गविशेषविवक्षायां तु दृढाभक्तिरित्यादिसिद्धये प्रियादिषु भक्तिशब्दपाठः ॥ ( १२०१ ) **तसिलादिषु कृत्वसुजन्तेष्विति** । 'पञ्चम्यास्तसिल् २६५३' इत्यारभ्य 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् २८१४' इत्येतत्पर्यन्तेष्वित्यर्थः ॥ **अव्याप्त्यतिव्याप्तिपरिहारायेति** । वृकतिः, अजथ्या, बहुशः इत्यत्राव्याप्तिः, तसिलादिकृत्वसुच्पर्यन्तेषु तिल्थ्यन्शसां पाठाभावात् । पट्वीदेश्या शुभ्ररूप्य इत्यत्रातिव्याप्तिः, 'ईषदसमाप्तौ-२७३६' इति देश्यस्य 'षष्ठ्या रूप्य च २७१४' इति रूप्यस्य च तत्र पाठात् । अतस्तन्निवारणाय परिगणनमित्यर्थः ॥ परिगणितान् त्रतसादीन् क्रमेणोदाहरति—**बह्वीष्विति** । यद्यपि बह्वादिषु ङीषो वैकल्पिकत्वात्तदभावे बहुत्रेत्यादि सिध्यति, तथापि पक्षे बह्वीत्रेत्याद्यनिष्टवारणायेदम् । ततस्तत्रेति प्राचोक्तमुदाहरणमत्रोपेक्षितम् । 'सर्वनाम्नो वृत्तिमात्रे-१०५३' इत्यनेन गतार्थत्वादिति मनोरमायां स्थितम् ॥ **पट्वितरेति** । प्राचा तु पटुतरेत्युदाहृतं, तत्प्रामादिकमिति भावः॥ **पटुचरीति** । 'भूतपूर्वे चरट् २७१३'॥ **पटुजातीयेति** । 'प्रकारवचने जातीयर् २७३८'॥ **दर्शनीयरूपेत्यादि** । 'प्रशंसायां रूपप्२७३५' 'याप्ये पाशप् २७०५'॥ **बहुथेति** । प्रकारवचने थाल् २६८१' तत्र हि 'किंसर्वनामबहुभ्यः-२६४८' इत्यधिकृतम् ॥ **वृकतिरिति** । 'वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि ५२४८' इति तिल् ॥ **अजथ्येति** । 'अजाविभ्यां थ्यन् २२६८' ॥ ( १२०२ ) **शसीति** । 'बह्वल्पार्थात्-२८४५' इति यश्शस् स तसिलादिषु ज्ञातव्य इत्यर्थः । त्रतसादिषु परिगणनं कर्तव्यमिति यावत् ॥ (१२०३) **त्वतलोर्गुणवचनस्य** । 'गुणस्य' इति वक्तव्ये वचनग्रहणं प्रसिद्धगुणपरिग्रहार्थम् । अतस्तथैवोदाहरति-**शुक्लत्वम्, शुक्लतेति** । नन्विह जातिसंज्ञाव्यतिरिक्तं धर्ममात्रं गुण इति यत्प्राचीनैरुक्तं, तत्स्वीकर्तव्यम् । अन्यथा 'निरीक्ष्य मेने शरदः कृतार्थता' 'सा मुमोच रतिदुःखशीलताम्' इत्यादिषु पुंवद्भावाप्रवृत्त्या दीर्घश्रवणं स्यादित्यत आह-**सामान्ये नपुंसकमिति** । एवं च 'नेष्टं पुरो द्वारवतीत्वमासीत्' इत्यादिप्रयोगो निर्बाध इति भावः ॥ (१२०४) **हास्तिकमिति** । 'अचित्तहस्तिधेनोः-१७७६' इति ठक् । न चात्र 'यस्येति—४३१' लोपेन निर्वाहः, तस्य 'असिद्धवदत्रा-२९३७' इत्यसिद्धत्वात् 'अचः परस्मिन्-७७' इति स्थानिवद्भावाच्च 'नस्तद्धिते ९८६' इति टिलोपानापत्तेः । न च 'ठक्छसोश्च१२०५' इत्यनेनैवात्र पुंवद्भावसिद्धिः शङ्क्या, छसा साहचर्यात् 'भवतष्ठक्छसौ १८८३' इत्यस्यैव ठकस्तत्र ग्रहणात् । नापि 'जातेश्च

---

१ **शुक्लत्वमिति** । शुक्लशब्दस्यौणादिकत्वेनाव्युत्पन्नत्वान्न कृदन्तशब्दत्वमिति भावः ॥ २ **कर्त्रीत्वमिति** । कर्तृशब्दस्य तृच्कृदन्तशब्दत्वेन न गुणवचनत्वमिति भावः ॥ ३ **ङीन्येक इति** । अयं भाषितपुंस्क इति भावः ॥ ४ **विवाहेति** । परे त्वयं नास्त्येव 'भस्याढे तद्धिते' इत्यत्र-'अढे' इत्युच्यते तत्र सापत्ने पुंवत्त्वं प्राप्नोति' इत्याशङ्क्य 'सापत्नः प्रकृत्यन्तरत्वात् सपत्नशब्दः प्रकृत्यन्तरमस्ति' इति भाष्येण सपत्नीशब्दद्वयस्य लाभेऽप्यस्यालाभात् । 'सपत्नशब्दः प्रकृत्यन्तरमस्ति' इत्यस्य सिद्धान्तभाष्यत्वेन प्राक् तदजानानस्यैव 'सापत्ने पुंवत्त्वं प्राप्नोति' इति शङ्काया वक्तव्यत्वेन 'विवाहनिबन्धनसत्त्वे तस्याभाषितपुंस्कतया पुंवत्त्वानापत्तौ शङ्काया एवोच्छेदापत्तिः स्यात् । अत्राणूनिरूपितमेव प्रकृत्यन्तरत्वं सपत्नशब्दस्य शब्दमर्यादया लभ्यते, न तु ङीनिरूपितम् । लक्षणया तथा व्याख्याने च न मानम् । एवं च शिवादिगणे सपत्नप्रकृतिकसपत्नीशब्दादणि सापत्नासिद्धावपि स्वामिपर्यायपतिशब्दघटितसपत्नीशब्दादणि सापतोऽपि प्राप्नोति' इति पूर्वपक्षाशयः । 'सापत्न' इत्युत्तरग्रन्थाशयस्तु-'त्वत्संमता प्रकृतिर्न पठ्यते किन्तु सपत्न इति' एवं च ततोऽणः प्राप्तिरेव नेति न सापतप्राप्तिरिति । सपत्नशब्दपाठे लिङ्गविशिष्टपरिभाषया ङीनन्तादप्यणेव न तु स्त्रीभ्यो ढगपि बाध्यसामान्यचिन्तयाऽस्याणो ढापेक्षया प्रबलत्वादिति वदन्ति ॥ ५ **प्रसिद्धेति** । आकडारसूत्रभाष्योक्तेत्यादिः । तत्र हि संज्ञाकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दातिरिक्तः शब्दो गुणवचनशब्देनोक्तः । अत एव 'एकतद्धिते च' इति सूत्रभाष्ये—'एकता एकत्वम् इन्यत्र 'पुंवत्त्वात् सिद्धम्' इत्याशङ्क्य 'न सिध्यति । उक्तमेतत्-'त्वतलोर्गुणवचनस्य' इति' इत्युक्तम् ॥ एकशब्दे सर्वनामसंज्ञया गुणवचनसंज्ञाया बाध इति भाष्याशयः आकडारसूत्रभाष्याविरोधेन कल्पनीयः ॥ ६ **द्वारवतीत्वमिति** । द्वारवच्छब्दस्य तद्धितान्तत्वेन न गुणवचनत्वमिति भावः ॥ ७ **लोपेनेति** । ङीप्प्रत्ययस्य ङीप इति भावः ॥

स्तृतीयः । आद्ययोः शिवाद्यण् । सपत्न्या अपत्यं सापत्नः । तृतीयात्तु लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणो ण्य एव । न त्वण् । शिवादौ रूढयोरेव ग्रहणात् । सापत्यः ॥ ( १२०५ ) वा॰ ठक्छसोश्च ॥ भवत्याश्छात्रा भावत्काः । भवदीयाः । एतद्वार्तिकमेकतद्धिते चेति सूत्रं च न कर्तव्यम्, सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति भाष्यकारेष्ट्या गतार्थत्वात् । सर्वमयः । सर्वकाम्यति । सर्विका भार्या यस्य स सर्वकभार्यः । सर्वप्रिय इत्यादि । पूर्वस्यैवेदम् । भस्यैषाद्वेति लिङ्गात् । तेनाकचि एकशेषवृत्तौ च न । सर्विका । सर्वाः ॥ ( १२०६ ) वा॰ कुक्कुट्यादीनामण्डादिषु ॥ कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं मृगपदम् । मृगक्षीरम् । काकशावः ॥ (१२०७) सू॰ क्यङ्मानिनोश्च । ६ । ३ । ३६ । एतयोः परतः पुंवत् । एनीवाचरति एतायते । श्येनीवाचरति श्येतायते । स्वभिन्नां कांचिद्दर्शनीयां मन्यते दर्शनीयमानिनी । दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी चैत्रः ॥ ( १२०८ ) सू॰ न कोपधायाः । ६ । ३ ।

---

१२१४' इति पुंवद्भावनिषेधः शङ्क्यः, अस्मादेव भाष्योदाहरणात 'सौत्रस्यैव निषेधो, न त्वौपसंख्यानिकस्य' इति ज्ञापनात् ॥ **रौहिणेय इति** । रोहितशब्दात् 'वर्णादनुदात्तात्-६८७' इति ङीन्नकारौ । सति तु पुंवद्भावे तयोर्निवृत्तौ रौहितेय इति स्यादिति भावः ॥ **गृह्यत इति** । व्याख्यानादिति शेषः ॥ **अग्नायीति** । अग्निशब्दात् 'वृषाकप्यग्नि-६८५' इति स्त्रियां ङीबैकारादेशौ ॥ **आग्नेय इति** । पुंवद्भावाभावे तु आग्नायेय इति स्यादिति भावः ॥ **शत्रुपर्यायादिति** । अत्र च 'व्यन् सपत्ने १६५२' इति निर्देशो लिङ्गम् । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः ॥ **विवाहनिबन्धनमिति** । तज्जन्यसंस्कारविशेषविशिष्टे रूढमित्यर्थः ॥ **सापत्न इति** । अभाषितपुंस्कत्वात् द्वितीयस्य पुंवद्भावो न भवति । सति च पुंवद्भावे नकारादेशाभावात्सापत इति स्यात् । आद्यस्य तु पुंवद्भावेऽपि सापत्न इत्येव भवतीति भावः ॥ **रूढयोरेवेति** । आद्यः शब्दो रूढः, द्वितीयस्तु योगरूढः, तेन 'समानः पतिर्यस्याः' इति विग्रहो न विरुध्यत इति दिक् ॥ **( १२०५ ) ठक्छसोश्च** । अभत्वार्थ आरम्भः ॥ **भावत्का इति** । 'भवतष्ठक्छसौ १८८३' ठावस्थायामेव पुंवद्भावे कृते 'ठस्येकः १६५४' इति इकादेशं बाधित्वा तान्तलक्षणः कादेशः ॥ नन्विकादेशे भत्वात् 'भस्याढे-१२४०' इति पुंवद्भावे सति कादेशप्रवृत्त्या रूपसिद्धौ किमत्र ठग्ग्रहणेन । मैवम्, मथितं पण्यमस्य माथितिक इत्यत्रेवाल्विधित्वेन स्थानिवद्भावायोगात्सन्निपातपरिभाषया वा कादेशप्रवृत्तेर्दुर्लभत्वात् । अतः 'ठक्छसोः-१२०५' इति ठग्ग्रहणं कर्तव्यमेव ॥ **भवदीया इति** । छसः सित्करणात् 'सिति च १७७२' इति पदसंज्ञा । तेनात्र जश्त्वं भवति । एवं च पदसंज्ञया भसंज्ञाया बाधात् 'भस्याढे-१२०४' इत्यस्याप्रवृत्त्या वार्तिके छसग्रहणं कृतम् ॥ **भाष्यकारेष्ट्येति** । अनेन सूत्रवार्तिकयोरुक्तिसंभवो ध्वनितः । उत्तरं दृष्ट्वा पूर्वस्याप्रवृत्तत्वात् । निष्कर्षे तु व्यर्थमेवेत्याह—**गतार्थत्वादिति** । इष्टेरुदाहरणान्याह—**सर्वमय इत्यादिना** । 'तत आगतः २०१६' इत्यर्थे 'मयड्वा-२०९६' इति मयट् । तसिलादिषु मयडादेरपरिगणितत्वात्तेनेदं न सिध्यतीति भावः ॥ **सर्वकभार्य इति** । न च 'स्त्रियाः पुंवत्-११९६' इति सूत्रेण गतार्थता, 'न कोपधायाः १२०८' इति निषेधात् । न चास्यापि तेन निषेधः शङ्क्यः, 'स्त्रियाः पुंवत्-११९६' इत्यादिप्रकरणोक्तस्यैव तेन निषेधात् । अस्या इष्टेस्तु तस्मिन् प्रकरणे असमाविष्टत्वात् । न च वृत्त्यन्तर्गतस्य सर्वनामत्वाभावात्पुंवद्भावो न भवेदिति वाच्यम्, वचनारम्भसामर्थ्यान्मात्रग्रहणाद्वा क्वचित्सर्वनामत्वेन दृष्टानां संप्रति संज्ञाभावेऽपि पुंवद्भावाभ्युपगमात् । अत एवोत्तरपूर्वायै इत्यत्र संज्ञाभावेऽपि पुंवद्भावः । सर्वा नाम काचित्तस्याः पुत्रः सर्वापुत्र इत्यत्र तु नातिप्रसङ्गः, संज्ञोपसर्जनयोः सर्वादिगणबहिर्भूतत्वेन वृत्तेः पूर्वमप्यसर्वनामत्वात् ॥ **सर्वप्रिय इति** । 'स्त्रियाः पुंवत्-११९६' इत्यत्र प्रियादिपर्युदासो रूपवतीप्रिय इत्यादावुपयुज्यत इति भावः ॥ तदितरा तदन्येत्यादावुत्तरपदेऽतिप्रसङ्गमाशङ्क्याह—**पूर्वस्यैवेति** । वृत्तिघटकानेकभागमध्ये किंचिदपेक्षया पूर्वस्येत्यर्थः ॥ **लिङ्गादिति** । अन्यथा एषा द्वा एतयोः कात्पूर्वस्य आपि विधीयमानमित्वं निर्विषयं स्यादिति भावः । 'दक्षिणपूर्वा दिक्' इति भाष्योदाहरणमपीह लिङ्गमिति बोध्यम् । यत्तु प्राचा 'सर्वनाम्नः समासे पुंवत्' इत्युक्तम् । यच्च व्याचख्युः—'वार्तिकार्थमनुवदति सर्वनाम्न इत्यादिना' इति । तत्प्रामादिकम्, 'वृत्तिमात्रे' इति पाठस्यैव भाष्यारूढत्वात् । सर्वमयः सर्वकाम्यतीत्युक्तोदाहरणासिद्धिप्रसङ्गाच्च । वार्तिकार्थमित्याद्यपि प्रामादिकमेव, वार्तिकग्रन्थे एतदभावात् । न च 'सर्वनाम्नो वृत्तिमात्रे-१०५३' इत्येतद्वार्तिकमेव न तु भाष्यकारेष्टिरिति शङ्क्यम्, 'ठक्छसोः-१२०५' इति वार्तिकस्य निरालम्बनत्वापत्तेः । भाष्यकारेष्टित्वे तु वार्तिकस्योक्तिसंभव उक्त एव प्राक् ॥ **( १२०७ ) क्यङ्मा—। एतायत इत्यादि** । 'कर्तुः क्यङ् सलोपश्च ३५४१' इति क्यङि पुंवद्भावे कृत एतश्येतयोः 'अकृत्सार्व-३०७१' इति दीर्घः ॥ मानिन्ग्रहणमसमानाधिकरणार्थमन्यार्थं चेत्याशयेन यथाक्रममुदाहरति—**स्वभिन्नामित्यादिना** । **दर्शनीयमानिनीति** । मनः ३९९८' इति णिनिः । नान्तत्वान् ङीप् । या त्वात्मानमेव दर्शनीयां मन्यते तत्र 'स्त्रियाः पुंवत्-११९६' इत्येव सिद्धम् । एकस्या अपि ईप्सिततमत्वव्यापाराश्रयत्व-

---

१ **रूढयोरेवेति** । सपत्नशब्दस्य पाठे लिङ्गविशिष्टपरिभाषया सपत्नीशब्दस्य चेत्यर्थः ॥ २ **कुक्कुट्यादीनामिति** । एतच्च भाष्यकृता जात्यन्तरनिवृत्तिपरत्वाज्जातिपरायां नोदनायां कुक्कुटादिशब्दैरेव समासेन सिद्धिमाश्रित्य प्रत्याख्यातम् । एवं च कुक्कुट्यादिशब्दैर्न समासोऽनभिधानादिति बोध्यम् ॥ ३ **क्यङिति** । क्यङः प्रत्ययस्य निमित्तत्वेन पूर्वो यस्मात्स विधिस्तदाद्येव गृह्यते इति पट्वीमृद्वीयते इत्यत्र मृद्वीशब्दस्य प्रकृतित्वाभावाद् द्वन्द्वस्याभाषितपुंस्कत्वात् पुंवद्भावो नैव भ[illegible] बोध्यम् ॥ ४ **कादेशेति** । इकादेशस्य स्थानिवद्भावेनेत्यादिः ॥ ५ **अल्विधित्वेनेति** । स्थान्यादेशयोर[illegible] [illegible]रस्योच्चारणार्थत्वादित्यादिः ॥ ६ **निर्विषयमिति** । पुंवद्भावेनापो निवृत्तेरिति भावः ॥

३७। कोपधायाः स्त्रियाः न पुंवत् ॥ पाचिकाभार्यः । रसिकाभार्यः । मद्रिकायते मद्रिकामानिनी ॥ ( १२०९ ) (वा॰) **कोपधप्रतिषेधे तद्धितवुग्रहणम्** ॥ नेह पाका भार्या यस्य स पाकभार्यः ॥ ( १२१० ) (सू॰) **संज्ञापूरण्योश्च** । ६ । ३ । ३८ । अनयोर्न पुंवत् । दत्ताभार्यः । दत्तामानिनी । दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति । पञ्चमीभार्यः । पञ्चमीपाशा ॥ ( १२११ ) (सू॰) **वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे** । ६ । ३ । ३९ । वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् । स्रौघ्नीभार्यः । माथुरीयते । माथुरीमानिनी । वृद्धिनिमित्तस्य किम् । मध्यमभार्यः । तद्धितस्य किम् । काण्डलावभार्यः । वृद्धिशब्देन किम् । तावद्भार्यः । रक्ते तु—काषायी कन्था यस्य स काषायकन्थः । विकारे तु—हैमी मुद्रिका यस्येति हैममुद्रिकः । वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावादिह पुंवत् । वैयाकरणभार्यः । सौवश्वभार्यः ॥ ( १२१२ ) (सू॰) **स्वाङ्गाच्चेतः** । ६ । ३ । ४० । स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत् । सुकेशीभार्यः । स्वाङ्गात्किम् । पटुभार्यः । ईतः किम् । अकेशभार्यः ॥ (१२१३) (वा॰) **अमानिनीति वक्तव्यम्** ॥ सुकेशमानिनी ॥ (१२१४) (सू॰) **जातेश्च** । ६ । ३ । ४१ । जातेः परो यः स्त्रीप्रत्ययः

---

विवक्षाभेदेन कर्मत्वकर्तृत्वयोः सत्त्वेऽपि वास्तवाभेदेन सामानाधिकरण्याविघातादिति भावः ॥ ( १२०८ ) **न कोपधायाः** । **पाचिकाभार्य इति** । पचतीति पाचिका ण्वुल् । 'युवोः–१७६१' इत्यकादेशे टापि 'प्रत्ययस्थात्–६३०' इतीत्त्वम् ॥ **रसिकाभार्य इति** । रसोऽस्त्यस्या इति रसिका । 'अत इनिठनौ २६००' इति ठन् ॥ **मद्रिकायत इति** । मद्रेषु भवा मद्रिका । 'मद्रवृज्योः कन् १९०२' । 'क्यङ्मानिनोश्च १२०७' इति पुंवत्त्वप्राप्तिः । सति तु पुंवद्भावे इत्वं न श्रूयेतेति भावः ॥ ( १२०९ ) **तद्धितवुग्रहणमिति** । द्वन्द्वान्ते श्रूयमाणः ( शब्दः ) प्रत्येकं संबन्ध्यते, तद्धितग्रहणं वुग्रहणं चेत्यर्थः ॥ **पाकाभार्येति** । 'अर्भकपृथुकपाका वयसि ४९३७' इति कप्रत्ययान्तोऽयमुणादिषु निपातितः । न चायं तद्धितस्य ककारो, नापि वोः । 'वयसि प्रथमे ६६५' इति ङीपं बाधित्वा अजादित्वाट्टाप् ॥ ( १२१० ) **संज्ञापूरण्योश्च** । यत्तु दत्तायते इति क्यङन्तमपि वृत्त्यादिषूदाहृतम्, तत्तु विशेषाभावादिहोपेक्षितम् ॥ **पञ्चमीपाशेति** । 'याप्ये पाशप् २७०५' । 'तसिलादिषु–१२०१' इति प्राप्तिः ॥ **वृद्धिनिमित्तस्य**—। (१२११) **स्रौघ्नीति** । स्रुघ्ने भवा । 'तत्र भवः १९८९' इत्यणि 'टिड्ढा–६५१' इति ङीप् ॥ **माथुरीयत इति** । मथुरायां भवा माथुरी । सेवाचरतीत्यर्थे 'कर्तुः क्यङ्–३५४१' इति क्यङ् ॥ **मध्यमेति** । मध्ये भवा मध्यमा । 'मध्यान्मः १९२९' इति मः ॥ **काण्डलावेति** । काण्डं लुनातीति काण्डलावी 'कर्मण्यण् ३८७९' । कृदयम् ॥ **तावदिति** । तत्परिमाणमस्यास्तावती 'यत्तदेतेभ्यः–२४९६' इति वतुपि 'आ सर्वनाम्नः ५७६' इत्याकारो न वृद्धिशब्देन विहित इति भावः ॥ **काषायीति** । कषायेण रक्तेत्यर्थे 'तेन रक्तं रागात् १६९७' इत्यणि ङीप् ॥ **हैमीति** । हेम्नो विकार इत्यर्थे 'अनुदात्तादेश्च–२०९३' इत्यञ् ॥ **फलोपधानेति**[1] । मिमित्तशब्दः फलोपहितरः । स्वरूपयोग्यपरत्वे तु वैयाकरणभार्य इत्यत्र पुंवद्भावो न सिध्येदिति भावः ॥ व्याकरणमधीते वेत्ति वा वैयाकरणी । 'तदधीते तद्वेद १७९१' इत्यण् । स्वश्वस्यापत्यं स्त्री सौवश्वी 'तस्यापत्यम् १५६०' इत्यण् । उभयत्र णित्त्वात्प्राप्ता आदिवृद्धिः 'न य्वाभ्याम्–१५७४' इत्यनेन प्रतिषिध्यत इति नायं वृद्धिं प्रति फलोपहितः, किन्तु स्वरूपयोग्यः ॥ यद्यप्यैजागमनिमित्तत्वाद्वृद्धिं प्रति फलोपहितोऽपि भवत्ययं तद्धितः, तथापि वृद्धिशब्देन विहितां वृद्धिं प्रति न भवतीति भावः ॥ अत्र व्याचक्षते—सूत्रे निमित्तशब्दः फलोपहितपरः, अन्यथा निमित्तग्रहणमनर्थकं स्यात् । वृद्धेस्तद्धितस्येत्युक्तेऽपि निमित्तत्वमेव संबन्ध इति वृद्धिनिमित्तं यस्तद्धित इत्यर्थलाभात् । तेन वृद्धिशब्देन विहिता वृद्धिरित्ययमर्थो लभ्यते । अन्यथा फलोपहितपरत्वलाभात् निष्फलः स्यादुक्तदोषतावदवस्थ्यादिति ॥ ( १२१२ ) **स्वाङ्गा-**[2] **सुकेशीति** । 'स्वाङ्गाच्चोपसर्जनात्–७२७' इति ङीष् ॥ **अकेशेति** । 'सहनञ्विद्यमान ७२८' इति निषेधान्ङीषभावः ॥ ( १२१४ ) **जातेश्च** । यद्यत्र 'जातेरित्येव विहितः' इति व्याख्यायेत तर्हि हास्तिकमित्युदाहरणे औपसंख्यानिकस्य नायं निषेध इति भाष्योक्तिर्न संगच्छेत । हस्तिन्शब्दात् 'जातेः–७४३' इति ङीष् न विहितः, अदन्तत्वाभावात् । किन्तु 'ऋन्नेभ्यः–४२६' इति ङीब्विहित इति पुंवद्भावनिषेधस्याप्रसक्तेरत आह—**जातेः पर इति** । एवं च हस्तिनीभार्यः, शुनीभार्य इत्यादावपि निषेधः सिध्यतीति भावः ॥ **यः स्त्रीप्रत्यय इति** । टाबादिः ॥

---

१ **फलोपधानेति** । परे तु—आदैज्मात्रस्य वृद्धिसंज्ञेति पक्षे तावद्भार्य इव वैयाकरणभार्ये पुंवत्त्वनिषेधानापादनेन निषेधप्रवृत्तिरेवेष्टा । किञ्चात्र सूत्रे पूर्वस्मिन् 'देविका–' इति सूत्रे आदंश इव ऐजंशेऽपि वृद्धिपदसंबन्धेन 'तद्भावितानामेव संज्ञा' इति पक्षेऽपि निषेधप्रवृत्तिर्भवत्येव ॥ किञ्चैवं सति तावद्भार्ये दोषप्राप्त्या तद्वारणाय व्यधिकरणबहुव्रीहिपर्यन्तं भाष्यकृतो धावनं व्यर्थं स्यात् । तस्माद् दाविकीभार्य इव वृद्धिनिमित्तनकाराद्यन्यतमसद्भावाद् वैयाकरणीभार्य इत्येव प्रयोगो भाष्यकृतोऽभिमतः । अत एव प्रवाहणेयीभार्य इत्यत्र वृद्ध्यभावपक्षेऽपि वृद्धिनिमित्तञणकान्यतमसत्त्वेनैव पुंवत्त्वप्रतिषेधोऽङ्गीकृतो भाष्यकृता । कैयटेन च—'असत्यामपि वृद्धौ वृद्धिनिमित्तव्यपदेशसद्भावात् पुंवद्भावप्रतिषेधो भविष्यति । नैतदस्ति—'ञणकानां वृद्धिमुत्पादयतामेव वृद्धिं प्रति निमित्तत्वम्, नान्यदा' इति । इति स्पष्टमेवोक्तम् । इति वदन्ति ॥ २ **तदन्ता स्त्रीति** । तदन्तस्य स्त्रीवाचकस्येत्यर्थः । स्त्रिया इति षष्ठ्यन्तस्यैवानुवृत्तेरिति बोध्यम् ॥ ३ 'अमानिनि' इत्यनेन प्रतिषेधोऽपि 'क्यङ्मानिनोश्च' इत्यनेन विधिरिव लिङ्गविशिष्टपरिभाषया मानिन्शब्द इव मानिनीशब्देऽपि भवतीति ध्वनयन्नाह—**सुकेशमानिनीति** ॥

तदन्तं न पुंवत् । शूद्राभार्यः । ब्राह्मणीभार्यः ॥ सौत्रस्यैवायं निषेधः । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र भस्याढे इति तु भवत्येव ॥ (१२१५) **सू० संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये । २ । २ । २५ ।** संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः । दशानां समीपे ये सन्ति ते उपदशाः । नव एकादश वेत्यर्थः । बहुव्रीहौ संख्येये इति वक्ष्यमाणो डच् ॥ (१२१६) **सू० ति विंशतेर्डिति । ६ । ४ । १४२ ।** विंशतेर्भस्य तिशब्दस्य लोपः स्याड्डिति । आसन्नविंशाः । विंशतेरासन्ना इत्यर्थः । अदूरत्रिंशाः । अधिकचत्वारिंशाः । द्वौ वा त्रयो वा द्वित्राः । द्विरावृत्ता दश द्विदशाः । विंशतिरित्यर्थः ॥ ( १२१७ ) **सू० दिङ्नामान्यन्तराले[1] । २ । २ । २६ ।** दिशो नामान्यन्तराले वाच्ये प्राग्वत् । दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा[2] । नामग्रहणाद्यौगिकानां न । ऐन्द्र्याश्च कौबेर्याश्चान्तरालं दिक् ॥ ( १२१८ ) **सू० तत्र तेनेदमिति सरूपे । २ । २ । २७ ।** सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं[3] प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये स बहुव्रीहिः । इतिशब्दादयं

---

प्राचा तु ङीषेवोपात्तस्तदयुक्तमिति ध्वनयन्नुदाहरति—**शूद्राभार्य इति** ॥ **ब्राह्मणीति** । शार्ङ्गरवादित्वान्ङीन् ॥ प्राचा तु ङीन्न पुंवदिति व्याख्याय ब्राह्मणीभार्य इत्युदाहृतं, तद्भ्रमसात् ॥ **सौत्रस्यैवेति** । व्याख्यानादिति भावः ॥ 'नकोपधायाः १२०८' इति निषेधस्तु 'भस्याढे–१२०४' इति प्राप्तस्यापि भवत्यव । तेन विलेपिकायाः धर्म्यं वैलेपिकमिति सिद्धम् । यदि 'अण्महिष्यादिभ्यः२१८७' इत्यणि पुंवद्भावः स्यादिकारोऽत्र न श्रूयेत । एतच्च 'न कोपधायाः' इति सूत्रे भाष्ये स्पष्टम् ॥ ( १२१५ ) प्रासङ्गिकं समाप्य प्रकृतमनुसरति—**संख्ययेति** । सामानाधिकरण्यस्यान्यपदार्थवृत्तेश्च विरहात्पूर्वेणाप्राप्तौ वचनम् ॥ **दशानामिति** । उपगता दश येषामिति न विगृहीतम् , पूर्वेणैव सिद्धेः ॥ **उपदशा इति** । उपशब्दः समीपे समीपिनि च वर्तते । आद्ये अव्ययीभावः, द्वितीये तु बहुव्रीहिरिति विवेकः ॥ **नव एकादश वेत्यर्थ इति** । संख्याद्वारकसंबन्धस्यान्तरङ्गत्वादिति भावः । तेन दशानां वृक्षादीनां समीपे ये सन्ति गवादयस्ते उपदशा इति न प्रयुज्यन्ते ॥ ( १२१६ ) **तिविंश–** । सूत्रे तीति लुप्तषष्ठीकमित्याशयेनाह—**तिशब्दस्येति** ॥ **आसन्नविंशा इति** । इह तिलोपोत्तरम् 'अतो गुणे २७६' इति पररूपमेव, न तु टिलोपः, तिलोपस्याभीयत्वेनासिद्धत्वात् । न चात्र पररूपमपि न स्यात्तिलोपस्य स्थानिवत्त्वादिति शङ्क्यम् , अज्झलादेशोऽजादेशो न भवतीति 'अचः परस्मिन्–७७' इत्यस्याप्रवृत्तेः । 'स्थानिवदादेशः–७६' इति तु न प्रवर्तत एव, शास्त्रीये कार्ये हि कर्तव्ये तत्प्रवृत्तिः, न तु विघातार्थमिति सिद्धान्तात् ॥ **विंशतेरिति** । इहापि आसन्ना विंशतिर्येषामिति न विगृहीतमुक्तयुक्तेः ॥ **अदूरेत्यादि** । अदूरास्त्रिंशतः, अधिकाश्चत्वारिंशत इति विग्रहौ बोध्यौ ॥ **द्वित्रा इति** । वार्थेऽयं बहुव्रीहिः स च वार्थो न विकल्पः, पक्षे द्विवचनस्याप्यापत्तेः, किन्तु संशयः । स चानियतसंख्यावमर्शी । तत्र च त्रयोऽपि सर्वदा भासन्त इति तदपेक्षं[4] बहुवचनमेव । आनयनादिक्रियान्वयस्तु द्वयोस्त्रयाणां वेत्यनियत एवेत्याहुः ॥ **द्विरावृत्ता इति** । सुजर्थे बहुव्रीहिरित्यर्थः ॥ वृत्तौ तु सुजर्थान्तर्भावेणैवैकार्थीभावाश्रयणात्सुचोऽप्रयोगः ॥ संख्ययेति किम् , चत्वारो ब्राह्मणाः । अव्ययेत्यादि किम् , ब्राह्मणाः पञ्च । संख्येयेति किम्, अधिका विंशतिर्गवाम् । संख्यार्थेयं संख्येति न समासः । आ[5] दशतः संख्याः संख्येये वर्तन्ते न तु संख्यायाम् । विंशत्याद्याः, संख्यास्तु संख्येयसंख्ययोर्वर्तन्ते । यदा तु संख्येये विंशतिशब्दस्तदा भवत्येव समासः । अधिकविंशा इति ॥ ( १२१८ ) **तत्र तेनेदम्—** । **ग्रहणविषय इति** । गृह्यते इति ग्रहणं केशादि तद्विषयो वाच्यो ययोस्ते सरूपे । प्रहियते अनेनेति प्रहरणं दण्डादि तद्विषयो वाच्यो ययोरिति प्राग्वत् । कर्मव्यतिहारः परस्परग्रहणं परस्परप्रहरणं च । ननु 'ग्रहणविषये सप्तम्यन्ते समस्यते प्रहरणविषये तृतीयान्ते च' इत्यादिविषयविशेषः सूत्राक्षरैः कथं लभ्यते इत्यत आह—**इतिशब्दादिति** । स हि लौकिकीं[6] विवक्षां दर्शयति । लोके

---

१ **अन्तराल इति** । अन्तरालशब्देनापि प्रत्यासत्त्या दिगेव गृह्यते । तेन समासस्य नित्यस्त्रीलिङ्गता । इदं सूत्रमसामानाधिकरण्यार्थं कबभावार्थं च ॥ २ **दक्षिणपूर्वेति** । 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावः ॥ ३ **युद्धं प्रवृत्तमिति** । तत्र विशेष्य इत्यर्थः । यत्र न तदुपादानं तत्राध्याहारः । क्रियामात्रोपलक्षणम् , भाष्ये 'क्रियाभिधानात्' इत्युक्तेः । ग्रहणप्रहरणेऽप्येवमेव ॥ ४ **तदपेक्षमिति** । अयं भावः–अनियतसंख्याप्रश्ने 'कति भवतः पुत्राः, कति भवतो भार्याः' इत्यत्र बहुवचनस्यैव दृष्टत्वाद्बहुवचनमेव । यद्वा–'द्वौ वा' इत्युक्ते 'त्रयो वा' इति गम्यते, 'त्रयो वा' इत्युक्ते 'द्वौ वा' इति गम्यते सैषा पञ्चाभिष्ठाना वाक् । 'तत्र युक्तं बहुवचनम्' इति भाष्यकृतैव स्पष्टमभिहिता युक्तिः–इति ॥ ५ **आदशत इति** । नवदशपर्यन्तमित्यर्थः । अत एव 'नवदश ब्राह्मणाः' इति सामानाधिकरण्येनैव प्रयोगः, न तु 'ब्राह्मणानां नवदश इति वैयधिकरण्येन । अस्मिन्नेवार्थे एकान्नविंशत्यादिविंशतिशब्दघटितशब्देनाभिधेये 'एकोनविंशतिर्ब्राह्मणाः' इति संख्येयपरत्वेन 'एकोनविंशतिर्ब्राह्मणानाम्' इति संख्यापरत्वेन प्रयोगो भवत्येव । वेदे तु 'नवदश च मे' इत्यादौ नवदशशब्दस्य प्रयोगो दृश्यते, लोके तु एकोनविंशत्यादिशब्दानामित्यत्र तु न किमपि विनिगमकमिति बोध्यम् ॥ ६ **लौकिकीमिति** । तथा च 'कर्णयोः कर्णयोः कथयित्वेदं प्रथितम्' इत्यर्थे 'कर्णाभ्यां कर्णाभ्यामाकर्ण्येदं प्रथितम्' इत्याद्यर्थे वा '**कर्णाकर्णि प्रथितमयशः**' इत्यादि प्रयोगाणां निराबाधसिद्धये 'जायमानक्रियाधिकरणे जायमानक्रियाकरणे च सरूपे पदे 'इदं कर्म प्रवृत्तम्' इत्यर्थे समस्यते' इति क्रियासामान्यप्राधान्ये विवक्षिते समासोऽङ्गीकार्यः, नतु युद्धरूपे क्रियाविशेष एवेति बोध्यम् ॥

विषयविशेषो लभ्यते ॥ (सू) अन्येषामपि दृश्यते[1] । ६ । ३ । १३७ । दीर्घ इत्यनुवर्तते । इचि कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घः । इच् समासान्तो वक्ष्यते[1247] । तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वं च । केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं केशाकेशि । दण्डैर्दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुष्टीमुष्टि ॥ ( १२१९ ) (सू) ओर्गुणः । ६ । ४ । १४६ । उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते । अवादेशः । बाहूबाहवि । ओरोदिति वक्तव्ये गुणोक्तिः ॥ ( १२२० ) (प) संज्ञापूर्वको विधिरनित्य इति ज्ञापयितुम् । तेन स्वायम्भुवमित्यादि सिद्धम्[2] । सरूपे इति किम् । हलेन मुसलेन ॥ ( १२२१ ) (सू) तेन सहेति तुल्ययोगे । २ । २ । २८ । तुल्ययोगे वर्तमानं सहेत्येतत्तृतीयान्तेन प्राग्वत् ॥ ( १२२२ ) (सू) वोपसर्जनस्य । ६ । ३ । ८२ । बहुव्रीह्यवयवस्य सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः सहपुत्रो वा आगतः । तुल्ययोगवचनं प्रायिकम् । सकर्मकः । सलोमकः ॥ ( १२२३) (सू) प्रकृत्याऽऽशिषि । ६ । ३ । ८३ । सहशब्दः प्रकृत्या स्यादाशिषि । स्वस्ति राज्ञे सहपुत्राय सहामात्याय ॥ ( १२२४ ) (वा) अगोवत्सहलेष्विति वाच्यम् ॥ सगवे । सवत्साय । सहलाय ॥ ( १२२५ ) (सू) बहुव्रीहौ संख्येये डजबहुगणात् । ५ । ४ । ७३ । संख्येये यो बहुव्रीहिस्तस्माड्डच् स्यात् । उपदशाः ।

---

केशाकेशीत्यादिप्रयोगे यावानर्थः प्रतीयते तावत्यर्थे बहुव्रीहिर्भवतीत्यर्थः ॥ **अन्येषामपि दृश्यते** । अत्र प्राचा दृशिग्रहणात्कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घत्वम्, 'आत्वं वाऽनचि' इत्युक्तम् । तत्र 'आत्वं वा' इत्यपाणिनीयम् । अत एव मुष्टामुष्टीत्युदाहरणमप्यप्रामाणिकमेव । एतच्च मनोरमायां स्पष्टम् ॥ ( १२१९ ) **ओर्गुणः** । ताद्धिते किम्, पट्वी । वाभ्वोः ॥ **गुणोक्तिरिति** । यद्यपि 'ओरोत्' इति सूत्रितेऽपि 'भस्य तद्धिते' इत्येवंरूपसंज्ञापूर्वकत्वमस्त्येव, तथापि विधेयसमर्पकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वको विधिरिति भावः । यद्यपि ओदिति तपरस्तत्कालस्य संज्ञैव, तथापि इह तकार उच्चारणार्थः तपरत्वे फलाभावात् । 'ओरो' इत्येवास्तु । 'स्वं रूपं शब्दस्य-४६' इति तु प्रत्याख्यातमिति भावः । स्यादेतत्, तपरस्तत्कालस्य संज्ञा भवतीति ' गुरोरनृतः-१५८' इति प्लुतनिषेधस्यापि संज्ञापूर्वकत्वेनानित्यत्वात् क्लृ ३ प्तशिखेत्यत्र प्लुतासिद्धये 'ऌलक्' सूत्रे ऋकारात्पृथक् ऌकारोपदेशो व्यर्थः । सावर्ण्ये सत्यप्युक्तरीत्या ऌकारस्य प्लुतासिद्धेरनित्यत्वज्ञापनस्य निष्फलत्वात् । न चैवमपि ऋदितां ऌदित्कार्यं ऌदितामृदित्कार्यं च वारयितुमनित्यत्वज्ञापनमावश्यकमिति वाच्यम्, राजृ-भ्राजृ-गम्लृ-शक्लृ-इति पृथगनुबन्धकरणसामर्थ्यात् 'नाग्लोपिशास्वृदिताम्-२४१२' '-ऌदितः परस्मैपदेषु २१२४' इति पृथगनुवादसामर्थ्याच्च तत्कार्याणामसांकर्यसिद्धेरिति चेत् । अत्राहुः-'गुरोरनृतः-१५८' इत्यनेन ऋद्भिन्नस्य गुरोः प्लुतविधानात् 'अनृतः' इत्येतदनूद्यमानगुरुविशेषणत्वेनानुवादरूपमेव, न तु विधेयसमर्पकसंज्ञारूपं पदमिति ऋस्थानिकप्लुतनिषेधस्यानित्यत्वासिद्ध्या क्लृ ३ प्तशिखेत्यत्र प्लुतो न सिध्यति । ततश्च तत्सिद्ध्यर्थमुक्तज्ञापनायोभयोपदेश आवश्यक इति ॥ अन्ये तु-ऋकारात्पृथग् ऌकार उपदेष्टव्य एव, ऋकारोपदेशेन ऌकारस्यालाभात् । न च'ऋऌवर्णयोर्मिथः सावर्ण्यम्-३१'इति वचनात्तल्लाभः शङ्क्यः। वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेरित्याहुः ॥( १२२१ ) **तेन सहेति-** । तुल्ययोगे किम्, 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इह सहशब्दो न तुल्ययोगवचनः । भारकर्मवहनक्रियायां तु पुत्राणामनन्वयात्, किन्तु विद्यमानवचनः । दशसु पुत्रेषु विद्यमानेष्वित्यर्थः । एतच्च सहशब्दस्य विद्यमानार्थत्वमप्यस्तीति वक्तुमुक्तम् । प्रत्युदाहरणशरीरं तु सह पुत्रैरित्येवेति बोध्यम् । तृतीया तु'सहयुक्ते-८१८' इत्यनेनैव ॥ ( १२२२ ) **वोपसर्जनस्य** । उपसर्जनस्येति न सहस्य विशेषणम्, अव्यभिचारात्[3] । किन्तूत्तरपदेन संनिधापितस्य समासस्य । तच्चावयवद्वारकम्[4] उपसर्जनसर्वावयवकस्य[5] समासस्येत्यर्थः । तदेतत्फलितमाह--**बहुव्रीहेरिति** । तेनेह न, सहयुध्वा । सहकृत्वा । 'राजनि युधिकृञः ४०१२' 'सहे च ४०१३' इति क्वनिपि उपपदसमासाविमौ ॥ 'सहस्य सः संज्ञायाम् १४५५' इत्यतोऽनुवर्तनादाह-**सहस्य सः स्यादिति** ॥ **प्रायिकमिति** । 'विभाषा सपूर्वस्य ६८२' इत्यादिनिर्देशादिति भावः॥ **सकर्मक इति** । विद्यमानकर्मक[6] इत्यर्थः ॥ ( १२२३ ) **प्रकृत्याशिषि** । कथं तर्हि 'यजमानस्य सपुत्रस्य सभ्रातृकस्य सपरिवारस्यायुरारोग्यैश्वर्याभिवृद्धिरस्तु' इत्यादिप्रयोगाः संगच्छन्त इति चेत्, उच्यते—'ऐश्वर्याभिवृद्धिरास्त्विति भवन्तोऽनुब्रुवन्तु' इत्येतत्प्रार्थनावाक्यं न त्वाशीर्वचनम् यच्चाशीर्वचनम् 'तथास्तु'इति तत्र हि सपुत्रकेत्यादि न प्रयुज्यत एवेति न काऽप्यनुपपत्तिः ॥ ( १२२५ ) **बहुव्रीहौ संख्येये-** । व्यत्ययेन पञ्चम्यर्थे सप्तमीत्याह-**यो बहुव्रीहिस्तस्मादिति** ।

---

१ **अव्ययीभावत्वमिति** । स्वरादिष्विच्प्रत्ययस्य पाठादव्ययत्वम् । अव्ययीभावत्वफलांशे तु न दृढतरं मानम्, नापि तत्प्रयोगः प्रतीत इति केचित् ॥ २ **सिद्धमिति** । भाष्ये त्वेषा कल्पना न दृश्यते । भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात् । स्वायंभुवो लोकेऽसाधुरेव । भाष्यविचारितप्रयोजनकानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् । ३ **अव्यभिचारादिति** । पूर्वाह्णस्य सादृश्यं सहपूर्वाह्णमित्यत्राप्यव्ययस्य प्रथमानिर्दिष्टत्वेनोपसर्जनत्वमस्त्येवेति भावः ॥ ४ **द्वारकमिति** । समासस्योपसर्जनत्वासंभवाल्लक्ष्यानुसारादिति भावः । ५ **सर्वावयवकस्येति** । कश्चिदवयवः सर्वत्रोपसर्जनमेवेति विशेषणसामर्थ्यादेतल्लाभः । तादृशश्च बहुव्रीहिरेवेति भावः ॥ व्याख्यानाच्चात्रोपसर्जनपदेन लौकिकं शास्त्रीयं च तद् गृह्यते । तेन सपुत्र इत्यादावप्युपसर्जनसर्वावयकत्वं बोध्यम् ॥ ६ **विद्यमानेति** । एवं चात्र कर्मादिसमानाधिकरणः सहशब्दः । तथा च षष्ठ्यपवादतृतीयाया असंभवादनेन समासाप्राप्तौ 'अनेकमन्य-, इत्यनेनैव समासः । 'सपूर्वायाः-' इत्यादिनिर्देशैः 'वोपसर्जनस्य' इत्यत्र प्रतिपदोक्तपारिभाषाया अप्रवृत्त्या सादेशः सुलभः । 'सपूर्वा' इत्यत्र 'सर्वनामसंख्ययोः-' इत्यस्याप्रवृत्तिस्तु पूर्वनिपातप्रकरणस्यानित्यत्वादिति बोध्यम् ॥

अबहुगणात्किम् । उपबहवः । उपगणाः । अत्र स्वरे विशेषः ॥ ( १२२६ ) (वा॰) **संख्यायास्तत्पुरुषस्य वाच्यः** ॥ निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ॥ ( १२२७ ) (सू॰) **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्** । ५ । ४ । ११३ । व्यत्ययेन षष्ठी । स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घे सक्थिनी यस्य स दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् । दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः ॥ [1]अक्ष्णोऽदर्शनादित्यच् ॥ ( १२२८ ) (सू॰) **अङ्गुलेर्दारुणि** । ५ । ४ । ११४ । अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दार्वर्थे । पञ्चाङ्गुलयो यस्य तत्पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते । बहुव्रीहेः किम् । द्वे अङ्गुली प्रमाणमस्या द्व्यङ्गुला यष्टिः । तद्धितार्थे तत्पुरुषे तत्पुरुषस्याङ्गुलेरित्यच् । दारुणि किम् । पञ्चाङ्गुलिर्हस्तः ॥ (१२२९) (सू॰) **द्वित्रिभ्यां ष मूर्ध्नः** । ५ । ४ । ११५ । आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ॥ (१२३०) (वा॰) **नेतुर्नक्षत्रे अब्वक्तव्यः** ॥ मृगो नेता यासां रात्रीणां ताः मृगनेत्राः रात्रयः । पुष्यनेत्राः ॥ ( १२३१ ) (सू॰) **अन्तर्बहिर्भ्यां च लोम्नः** । ५ । ७ । ११७ । आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ॥ ( १२३२ ) (सू॰) **अञ् नासिकायाः संज्ञायां नसं चास्थूलात्** । ५ । ४ । ११८ । नासिकान्ताद्बहुव्रीहेरच् स्यात् नासिकाशब्दश्च नसं प्राप्नोति न तु स्थूलपूर्वात् ॥ ( १२३३ ) (सू॰) **पूर्वपदात्संज्ञायामगः** । ८ । ४ । ३ । पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्संज्ञायां न तु गकारव्यवधाने । द्रुरिव नासिकाऽस्य द्रुणसः । अगः किम् । ऋचामयनं ऋगयनम् । अणृगयनादिभ्य इति निपातनाण्णत्वाभावमाश्रित्य अग इति प्रत्याख्यातं भाष्ये । अस्थूलात्किम् । स्थूलनासिकः ॥ ( १२३४ ) (वा॰) **खुरखराभ्यां वा नस्** ॥ खुरणाः । खरणाः ॥ ( १२३५ ) **पक्षे अजपीष्यते** ॥ खुरणसः । खरणसः ॥ (१२३६) (सू॰) **उपसर्गाच्च** । ५ । ४ । ११९ । प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच् नासिकाया नसादेशश्च । असंज्ञार्थं वचनम् । उन्नता नासिका यस्य स उन्नसः ॥ ( १२३७ ) (सू॰) **उपसर्गादनोत्परः** । ८ । ४ । २८ । इति सूत्रम् । तद्भङ्क्त्वा

---

उपगणा इत्यत्र डचि सत्यसति च रूपे विशेषो नास्तीत्यत आह—**स्वरे विशेष इति** । डचि सति 'चितः ५६७२' इत्यन्तोदात्तत्वं स्यात्, असति तु पूर्वपदप्रकृतिस्वर इत्यर्थः ॥ न च सत्यपि डचि परत्वात्पूर्वपदप्रकृतिस्वर एव स्यादिति शङ्क्यम्, 'चितः ५६७२' इति स्वरस्य सतिशिष्टत्वात, डचश्चित्करणस्य वैयर्थ्यापत्तेश्च ॥ (१२२६) **संख्याया इति** । संख्यान्तस्य तत्पुरुषस्य चरमावयवो डज्वक्तव्य इत्यर्थः ॥ एकविंशतिरित्यादौ तु न भवति, 'अन्यत्राधिकलोपात्' इति वार्तिककारोक्तेः ॥ ( १२२७ ) **व्यत्ययेन षष्ठीति** । एतच्चोपलक्षणं सप्तम्यपि व्यत्ययेनैव । तदाह—**स्वाङ्गवाचीत्यादि** । 'अद्रवं मूर्तिमत्–७२८' इत्यादिलक्षणलक्षितं स्वाङ्गं गृह्यते । तेन शोभनाक्षी प्रतिमेत्यादिप्रयोगो निर्बाध एवेत्याहुः ॥ **षच् स्यादिति** । षो ङीषर्थः । चस्तु 'चितः ५६७२' इत्यन्तोदात्तार्थः । तेनात्र पूर्वपदप्रकृतिस्वरो न भवति ॥ **स्थूलाक्षेति** । स्थूलानि अक्षीणि पर्वाङ्कुराणि यस्याः सा ॥ प्राचा तु—स्थूलाक्षिरिक्षुरिति प्रत्युदाहृतम् । तन्न, 'अक्ष्णोऽदर्शनात् १३५७' इत्यचो दुर्वारत्वात् ॥ यदपि समासान्तविधेरनित्यत्वात्स न कृत इति कैश्चिद्व्याख्यातम् । तदसारम्, एवं हि षजपि तथैव न भविष्यतीति प्रत्युदाहरणस्यासंगतिप्रसङ्गात् ॥ ( १२२८ ) **अङ्गुले-** । **द्व्यङ्गुलेति** । मात्रचो 'द्विगोर्नित्यम् २४९२' इति लुक् ॥ ( १२३० ) **नेतुरिति** । नेता नायकः । नक्षत्रे यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरित्यर्थः ॥ **मृगनेत्रा इति** । मृगो मृगशीर्षनक्षत्रम् । चन्द्रो नेता यस्य मृगनक्षत्रस्य चन्द्रनेता मृग इत्यत्र तु न भवति । इह हि नेतृशब्दान्तो बहुव्रीहिर्नक्षत्रे वर्तते न तु नेतृशब्द इति ॥ ( १२३४ ) **खुरखराभ्यामिति** । 'नासिकायाः' इति वर्तते । केवलादेशवचनं प्रत्ययनिवृत्त्यर्थम् ॥ **खुरणा इति** । 'अत्वसन्तस्य–५७०' इति दीर्घः ॥ ( १२३६ ) **उपसर्गाच्च** । उपसर्गग्रहणं प्रादीनामुपलक्षणं, नासिकाशब्दस्याक्रियार्थत्वेन तं प्रत्युपसर्गत्वायोगात् । न च क्रियायोगाभावेऽप्युपसर्गत्वमस्त्विति शङ्क्यम्, सावके अधिसावकमित्यव्ययीभावे 'उपसर्गात्सुनोति–२०३७' इति सस्य षत्वप्रसङ्गात्तदाह—**प्रादेरिति** ॥ ( १२३७ ) **उपसर्गादनोत्परः** । अनोत्परः किम्, प्रनो मुञ्चतमित्यत्र णत्वं मा भूत् ॥ **तद्भङ्क्त्वेति** । 'अनोत्परः' इत्यपनीय बहुलग्रहणं च कृत्वेत्यर्थः । अन्यथा प्रणो नयेत्यादावव्याप्तिः, प्रनः पूषेत्यादौ त्वति-

---

१ ष इति । षचि प्रकृते षविधानं द्विमूर्ध इत्यादौ 'द्वित्रिभ्यां पाद्दन्मूर्धसु–' इति पाक्षिकान्तोदात्तत्वाभावे पूर्वपदप्रकृतिस्वरार्थम् । षचि हि सति चित्त्वसामर्थ्यात्पूर्वपदप्रकृतिस्वरं बाधित्वा नित्यमन्तोदात्तं स्याद् । विकल्पस्त्वनित्यतया समासान्ताभावे चरितार्थः ॥ अनित्यत्वं च 'मूर्धसु' इति निर्देशादेव ज्ञायते, अन्यथा प्रक्रमाभेदाय 'मूर्धेषु' इत्येव वदेत् ॥ २ **संज्ञायामिति** । 'प्रत्ययान्तेन चेत् संज्ञा गम्यते' इति 'भ्रूणोऽसंज्ञायाम्' इति सूत्रभाष्ये 'प्रत्ययान्तेन' । इत्यस्य तत्तच्छास्त्रविधेयकार्योपलक्षणत्वेन कृतणत्वेन चेत् संज्ञा रूढ्यर्थो गम्यत इत्यर्थः ॥ एतन्मूलकमेवाम्नायतेऽभियुक्तैः—'संज्ञाशब्दा अनादिप्रयुक्तनियतानुपूर्विका एव सिद्धास्तत्रेदानीं कस्तद्विपरीतं प्रयोक्तुमर्हतीति ॥ एवं च रघुनाथादिशब्देषु णत्वे संज्ञात्वभङ्गापत्तेर्न णत्वमिति भावः ॥ ३ भाष्य इति । प्रागयनम् । ऋग्भवनमित्यादिषु त्वनभिधानान्न णत्वमिति भावः ॥

भाष्यकार आह-॥ **उपसर्गाद्बहुलम्** । उपसर्गस्थान्निमित्तात्परस्य नसो नस्य णः स्याद्बहुलम् । प्रणसः ॥ ( १२३८ ) (वा) **वेर्ग्रो वक्तव्यः** ॥ विगता नासिकाऽस्य विग्रः ॥ ( १२३९ ) (वा) **ख्यश्च** ॥ विख्यः । कथं तर्हि विनसा हतबान्धवेति भट्टिः ॥ विगतया नासिकयोपलक्षितेति व्याख्येयम् ॥ ( १२४० ) (सू) **सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः** । ५ । ४ । १२० । एते बहुव्रीहयोऽच्प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवाऽस्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयोऽस्य चतुरश्रः । एण्या इव पादावस्य एणीपदः । अजपदः । प्रोष्ठो गौः, तस्येव पादावस्य प्रोष्ठपदः ॥ ( १२४१ ) (सू) **नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्** । ५ । ४ । १२१ । अच् स्यात् । अहलः, अहलिः । असक्थः, असक्थिः । एवं दुःसुभ्याम् ॥ ( १२४२ ) [ शक्त्योरिति पाठान्तरम् । अशक्तः । अशक्तिः ] ॥ ( १२४३ ) (सू) **नित्यमसिच् प्रजामेधयोः** । ५ । ४ । १२२ । नञ्दुःसुभ्य इत्येव । अप्रजाः । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः ॥ ( १२४४ ) (सू) **धर्मादनिच्केवलात्** ।५।४।१२४। केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् स्यात् । कल्याणधर्मा । केवलात्किम् । परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत् । स्वशब्दो हीह न केवलं पूर्वपदं किन्तु मध्यमत्वादापेक्षिकम् । संदिग्धसाध्य-

---

व्याप्तिः प्रसज्येतेति भावः ॥ **प्रणस इति** । प्रगता नासिका अस्येति विग्रहः ॥ ( १२३९ ) **कथं तर्हीति** । ख्यख्ययोरन्यतरेण भाव्यमिति प्रश्नः ॥ **नासिकयेति** । तथा च विनसेति न प्रथमान्तं, किं तु 'पद्दन्ः-३२८' इति नसादेशे तृतीयान्तमिति भावः ॥ ( १२४० ) **शोभनं प्रातरस्येति** । अधिकरणशक्तिप्रधानस्य सामानाधिकरण्यासंभवात्प्रातःशब्देन प्रातस्तनं कर्म लक्ष्यत इत्याहुः ॥ प्रातःकल्पमित्यत्रेव प्रातःशब्दो वृत्तिविषये शक्तिमत्पर इति न सामानाधिकरण्यानुपपत्तिरित्यन्ये ॥ एणीपदादिषु निपातनात्पद्भावः ॥ ( १२४१ ) **नञ्दुःसुभ्यो-** । नन्वत्र हलिग्रहणं व्यर्थं हलशब्दमादायाहल इति प्रयोगसंभवात् । न च महद्धलं हलिः, तद्रहितोऽहलिस्तत्रैवार्थेऽहल इति प्रयोगार्थं तद्ग्रहणमिति वाच्यम्, अहल इत्यत्र महद्धलरहित इत्यर्थाप्रतीतेः ॥ न चैवमप्यन्तोदात्तार्थमच्प्रत्ययविधानमावश्यकम्, अन्यथाऽहल इत्यत्र पूर्वपदप्रकृतिस्वरः स्यादिति शङ्क्यम्, 'नञ्सुभ्याम् ५८७९' इत्यनेनान्तोदात्तत्वविधानात् । अत्राहुः-शैषिकस्य कपो निवृत्त्यर्थं, 'दुर्हलैः' इत्यत्रान्तोदात्तत्वार्थं च तदिति ॥ (१२४२) **शक्त्योरिति** । आचार्येण केचिच्छात्रा हलिशक्त्योरिति पाठिता इति भावः ॥ (१२४३) **नित्यमसिच्-** । अकारोच्चारणं भत्वसंपादनार्थम्, तेन सुप्रजसावित्यादौ 'यस्येति च ४३१' इत्याकारलोपः सिध्यति । अस्वरितत्वादेव अन्यतरस्यांग्रहणाननुवृत्तिसिद्धौ नित्यग्रहणमन्यतो विधानार्थम् । तेनाल्पमेधसः' इति सिध्यतीति वृत्तिकारादयः ॥ (१२४४) **धर्मादनिच्-** । अनिचोऽकारश्चिन्त्यप्रयोजन इत्येके ॥ अन्ये तु-धर्मं करोत्याचष्टे वा 'तत्करोति-३४१७' इति ण्यन्तात् क्विपि धर्म् परमो धर्म् यस्य सः परमधर्म् । एकदेशविकृतस्यानन्यत्वाद्धर्मशब्दोऽयमित्यकारोच्चारणमिह सप्रयोजनमेवेत्याहुः ॥ बहुव्रीहिणाऽत्र पूर्वपदमाक्षिप्यत इत्यनुपदमेव वक्ष्यति । तच्च 'केवलात्' इत्यनेन विशेष्यत इत्याह--**केवलात्पूर्वपदादिति** । प्राचा तूत्तरपदमपि विशेषितम् । प्रसादकृताऽपि केवलादिति धर्मशब्दस्य पूर्वपदस्य च विशेषणमिति व्याख्यातम् । तदुभयमपि चिन्त्यम्, आवृत्तौ मानाभावात्, धर्मपदविशेषणे प्रयोजनाभावाच्च । न च धर्मशब्दान्तं यत्रोत्तरपदं तद्व्यावृत्तिः फलमिति वाच्यम्, तत्र बहुव्रीह्यवयवीभूतपूर्वपदात्परत्वस्य धर्मपदे असंभवादेवादोषत्वात् ॥ **मध्यमत्वादिति** । न च ' सर्वनामसंख्ययोः १२८३ ' इति स्वशब्दस्य पूर्वनिपातः शङ्क्यः, आहिताग्न्यादेराकृतिगणत्वादिति हरदत्तादिभिः समाहितत्वात् ॥ **आपेक्षिकमिति** । नन्वत एव केवल-

---

१ **नस इति** । एतद् नासिकादेशस्य अस्मच्छब्दादेशस्य च 'नस्' इत्येनस्य तन्त्रेणानुकरणमिति बोध्यम् ॥ २ **सुप्रातेति** । सुप्रातादिषु 'अव्ययानाम्-' इति टिलोपः । शारिकुक्षे 'यस्येति च' इतीकारलोपः । 'चतुरश्रेऽप्येवम्' एणीपदादिषु पद्भावो निपातनात् ॥ ३ **अहलिरिति** । समासान्ताभावपक्षेऽपि न कप् अनुक्तसमासान्तप्रकृतिरूपशेषत्वाभावादिति भावः ॥ ४ **शक्त्योरितीत्यादि**कोष्ठकान्तर्गतः पाठोऽपपाठः, एवं पाठे-'असक्थः' इति रूपासिद्ध्यापत्तिः स्यात् । 'अशक्तः' इति तु भावक्तान्तोत्तरपदबहुव्रीहिणा सिध्यत्येवेति न काप्यनुपपत्तिः ॥ नञ्तत्पुरुषे वा स्वरस्य दृष्टानुविधिच्छन्दोविषयत्वेन व्यत्ययेनैवेष्टस्य सिद्धिरित्यपि केचित् ॥ ५ **असिजिति** । सस्येत्त्ववारणाय चस् न कृतः ॥ ६ **केवलादिति** । कैवल्यं च सजातीयान्याभाववत्त्वमेव 'न सुदुर्भ्यां केवलाभ्याम्' इत्यादौ शास्त्रे लोके च प्रसिद्धमेव ग्राह्यमिति भावः ॥ ७ **तृतीयान्तमिति** । तथा च तत्पुरुषत्वेन बहुव्रीहित्वाभावेन नाच्प्रत्ययापत्तिरिति भावः ॥ ८ **केचिच्छात्रा इति** । आचार्यस्य वाक्ये छात्रभेदेन भिन्नानुपूर्वीपाठकल्पनमतीव श्रेयोहरम् । तस्मात्सति सप्रमाणप्रयोजने तथा पाठे 'दूरस्थितैः कैश्चिच्छात्रैः स्वल्पान्तरत्वात् तथा पाठोऽवगतः' इति कल्पना तु संभवतीति बोध्यम् ॥ काशिकायां तु-" **केचिद् 'हलिशक्त्योः'** इति पठन्ति" इत्युपलभ्यते ॥ पदमञ्जर्यां तु-"**-शुक्त्योः**" इति **केचित्पठन्ति । अस्थिपर्यायः शुक्तिशब्दः-**" इत्युपलभ्यते ॥ एवं च 'किं पाणिनिकृत एवं त्रिधा पाठ इति मनोरमम् । आचार्यभेदेन वा पाठभेद इति विचारे काशिकापदमञ्जर्योः-'**केचित् पठन्ति**' इत्युक्तिस्वारस्येन पाठभेद आचार्यभेदज एव प्रतीयते ॥ तस्मादत्र 'केनचिच्छात्राः' इति पाठो योग्यः ॥ एवं च-'आकडार-' सूत्रे भाष्येऽपि-" **उभयथा ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः-केचित् 'आकडारादेका संज्ञा' इति । केचित्-'आकडारात् परं कार्यम्'** इति पाठेऽपि '**केनचित्**' इत्यस्य स्थाने '**केचित्**' इति शोधितं भवेत् ॥ इत्येव युक्ततरं प्रतीमः ॥ ९ **विधानार्थमिति** । स्पष्टार्थमिति भाष्यस्वरसः इति शेखरकृत् ॥

धर्मेत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः । एवं तु परमस्वधर्मेत्यपि साध्वेव निवृत्तिधर्मा अनुच्छित्तिधर्मेत्यादिवत् । पूर्वपदं तु बहुव्रीहिणाऽऽक्षिप्यते ॥ (१२४५) सू **जम्भासुहरिततृणसोमेभ्यः** ।५।४।१२५। जम्भेति कृतसमासान्तं[1] निपात्यते। जम्भो भक्ष्ये दन्ते च। शोभनो जम्भोऽस्य सुजम्भा। हरितजम्भा। तृणं भक्ष्यं यस्य तृणमिव दन्ता यस्येति वा तृणजम्भा । सोमजम्भा । स्वादिभ्यः किम् । पतितजम्भः ॥ (१२४६) सू **दक्षिणेर्मा लुब्धयोगे** ।५।४।१२६। दक्षिणे ईर्मं व्रणं यस्य दक्षिणेर्मा मृगः । व्याधेन कृतव्रण इत्यर्थः ( १२४७ ) सू **इच् कर्मव्यतिहारे** ।५।४।१२७। कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात्समासान्तः । केशाकेशि । मुसलामुसलि ॥ ( १२४८ ) सू **द्विदण्ड्यादिभ्यश्च** । ५ । ४ । १२८ । तादर्थ्ये चतुर्थ्येषा । एषां सिद्ध्यर्थमिच् प्रत्ययः स्यात् । द्वौ दण्डौ यस्मिन्प्रहरणे तद् द्विदण्डि प्रहरणम् । द्विमुसलि । उभाहस्ति । उभयाहस्ति ॥ ( १२४९ ) सू **प्रसंभ्यां जानुनोर्ज्ञुः** । ५ । ४ ।१२९। आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः[2] स्याद्बहुव्रीहौ । प्रगते जानुनी यस्य प्रज्ञुः । संज्ञुः ॥ ( १२५० ) सू **ऊर्ध्वाद्विभाषा** । ५ । ४ । १३० । ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ॥ ( १२५१ ) सू **धनुषश्च** । ५ । ४ । १३२ । धनुरन्तस्य बहुव्रीहेरनङादेशः[3] स्यात् । शार्ङ्गधन्वा ॥ ( १२५२ ) सू **वा संज्ञायाम्** । ५ । ४ । १३३ । शतधन्वा । शतधनुः ॥ ( १२५३ ) सू **जायाया निङ्** । ५ । ४ । १३४ । जायान्तस्य बहुव्रीहेर्निङादेशः स्यात् ॥ ( १२५४ ) सू **लोपो व्योर्वलि** । ६ । १ । ६६ । वकारयकारयोर्लोपः स्याद्वलि । पुंवद्भावः । युवतिर्जाया यस्य–युवजानिः ॥ ( १२५५ ) सू **गन्धस्येदुत्पूतिसुसुरभिभ्यः** ।५।४।१३५। एभ्यो गन्धस्य इकारोऽन्तादेशः स्यात् । उद्गन्धिः । पूतिगन्धिः। सुगन्धिः । सुरभिगन्धिः ॥ ( १२५६ ) वा **गन्धस्येत्त्वे तदेकान्तग्रहणम्** ॥ एकान्त एकदेश इव अविभागेन लक्ष्य-

---

ग्रहणं व्यर्थं, पूर्वशब्दस्य समासप्रथमावयवे रूढत्वेनैव मध्यमपदव्यावृत्तिसंभवादिति चेत् । अत्राहुः–पूर्वपदाक्षेपे तात्पर्यग्राहकत्वेन केवलपदस्य सार्थकत्वादिति ॥ **कर्मधारयपूर्वपद इति** । नन्वत्रानिच् दुर्लभः, 'केवलात्' इत्यस्य समासानात्मकत्वादित्यर्थादिति चेत् मैवम्, केवलग्रहणस्य समासानात्मकपूर्वपदपरत्वे मानाभावात् । निवृत्तिधर्मा हि स्थानीभवतीत्यादिप्रयोगविरोधाच्च। अस्मदुक्तार्थस्तु 'धृञ् धारणे' इति धातौ माधवग्रन्थे स्पष्टः । एतेन साध्यो धर्मोऽस्येति साध्यधर्मा संदिग्धश्चासौ साध्य धर्मा चेति विग्रहः । स च संदेहः साध्यधर्मद्वारक एव पर्यवस्यतीति केषांचिद्व्याख्यानं परास्तम् । उक्तरीत्यैव साध्यस्य साक्षात् संदिग्धत्वलाभे तत्समर्थनप्रयासस्य व्यर्थत्वात् ॥ **साध्वेवेति** । परमश्चासौ स्वश्च परमस्वः स धर्मो यस्येति यदा विगृह्यते तदेत्यर्थः ॥ (१२४६) **दक्षिणेर्मा**—। लुब्धो व्याधः । तद्योगादेवेर्मनिष्पत्ताविदं निपातनं नान्यदेत्यर्थस्तदेतदाह—**व्याधेनेति** । 'वाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा' इति प्रयोगस्त्वौपचारिक इति कथंचिन्नेयः ॥ ( १२४७ ) **केशाकेशीति** । 'तत्र तेनेदम्–१२१८' इति कर्मव्यतिहारे बहुव्रीहिः । इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वेऽव्ययत्वम् । नन्वेवमिचश्चित्करणं व्यर्थम्, अव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाबाधात्समासस्वरेणान्तोदात्तत्वसिद्धेः । अत्राहुः–विशेषणार्थं तदावश्यकमेव । तिष्ठद्गुप्रभृतिषु इकारमात्रपाठे हि सुगन्धिरित्यादावतिव्याप्तिप्रसङ्गात् । किंचात्राव्ययीभावसंज्ञया बहुव्रीहिसंज्ञा न बाध्यते, किन्तु द्वयोः समावेश एव उपजीव्यविरोधस्यान्याय्यत्वात् । एवं च स्वरार्थमपि[4] चित्त्वं कर्तव्यमेवेति । ( १२४८ ) **द्विदण्ड्यादिभ्यश्च** । **द्विदण्डीति** । समुदायनिपातनस्य विषयविशेषपरिग्रहार्थत्वाद् द्विदण्डा शालेत्यत्र त्विज् न भवति ॥ **उभाहस्तीत्यादि** । इह निपातनादेवायचः पाक्षिकत्वम् ॥ (१२४९) **प्रसंभ्याम्**–। जानुशब्दस्यैकत्वेऽप्युपपदनिबन्धनं[5] द्वित्वमाश्रित्य जानुनोरिति द्विवचननिर्देशः; तत्फलं तु स्थानषष्ठीत्वस्फुटीकरणम् ॥ 'जानुनः' इत्युक्ते तु किमियं पञ्चमी प्रत्ययाधिकारात् ज्ञुरपि प्रत्यय इत्येवं संदेहः स्यात् तदेतद् ध्वनयन्नाह—**जानुशब्दयोर्ज्ञुरादेश इति** ॥ ( १२५१ ) **शार्ङ्गधन्वेति** । कथं तर्हि 'स्वलावण्याशंसाधृतधनुषमह्नाय तृणवत्' इति पुष्पदन्तप्रयोग इति चेत् । अत्राहुः–समासान्तविधेरनित्यत्वान्नात्रानुपपत्तिः । अनित्यत्वे प्रमाणं च अश्वादिगणे राजन्शब्दपाठः । स हि 'प्रतेरंश्वादयस्तत्पुरुषे ५९०१' इत्यन्तोदात्तार्थः । 'राजाहःसखि–११३४' इति टचो नित्यत्वे तु किं तेनेति ॥ (१२५४) **लोपो व्योर्वलि** । 'व्योर्लोपः' इति वक्तव्ये 'वेरपृक्तलोपाद्वलिलोपः पूर्वविप्रतिषेधेन इति ज्ञापयितुमादौ विधेयनिर्देशः कृतः । तेन सुखीयतेः क्विपि सुखीरिति सिद्धम् ॥ ( १२५५ ) **गन्धस्येत्**—। तकार उच्चारणार्थ इत्याशयेनाह—**इकारोऽन्तादेश इति** । 'आदेः परस्य––६८' इतीह न भवति 'समासान्ताः ९८१' इत्यधिकारात् । अत्र केचिदाहुः–इकारस्य प्रत्ययत्वेऽपि न क्षतिः 'यस्येति च ४३१' इति लोपे-

---

१ **कृतसमासान्तमिति** । कृतानिच्प्रत्ययान्तामित्यर्थः ॥ २ **आदेश इति** । 'उपज्ञु बाधो नमसा सदेम' इति वेदे तु स्वतन्त्रोऽपि ज्ञुशब्दो दृश्यते ॥ वस्तुतस्तु वेदे 'याचामि' इत्यत्र वर्णद्वयलोपेन यामीतिवदत्रापि जकारोत्तरस्याकारस्यालोपेन 'उपज्ञु' इति प्रयोगनिर्वाहे स्वतन्त्रकल्पनमन्याय्यमेव ॥ ३ **अनङादेश इति** । ङित्त्वसामर्थ्यात्साहचर्याच्चादेशत्वावगतिरिति भावः ॥ ४ **स्वरार्थमिति** । इदं सतिशिष्टस्वरबलीयस्त्वानाश्रयणेन । यदि तु–उपजीव्यत्वेन बहुव्रीहिणा समावेशेऽपि सतिशिष्टस्वरबलीयस्त्वेनाव्ययीभावत्वप्रयुक्तसमासान्तोदात्तत्वेन सिद्धिरित्युच्यते तदाद्यमेव प्रयोजनमिति बोध्यम् । समावेशफलं त्विच्प्रत्ययाव्ययत्वयोः सिद्धिः । अव्ययीभावप्रकरणे 'तत्र तेनेदमिति' इति तत्समासान्तप्रकरणे एव, इच् तु न कृतः, 'द्विदण्ड्यादिभ्यश्च' इत्यत्रेचपदस्य कर्तव्यत्वापत्तेः ॥ ५ **उपपदेति** । शीघ्रोपस्थितविषयार्थगतं द्वित्वमारोप्येत्यर्थः ॥

माण इत्यर्थः । सुगन्धि पुष्पं सलिलं च । सुगन्धिर्वायुः । नेह, शोभना गन्धाः–द्रव्याण्यस्य सुगन्ध आपणिकः ॥ ( १२५७ ) सू० अल्पाख्यायाम् । ५ । ४ । १३६ । सूपस्य गन्धो लेशो यस्मिंस्तत्–सूपगन्धि भोजनम् । घृतगन्धि । गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोरिति विश्वः ॥ ( १२५८ ) सू० उपमानाच्च । ५ । ४ । १३७ । पद्मस्येव गन्धोऽस्य पद्मगन्धि ॥ ( १२५९ ) सू० पादस्य लोपोऽहस्त्यादिभ्यः । ५ । ४ । १३८ । हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । स्थानिद्वारेणायं समासान्तः । व्याघ्रस्येव पादावस्य–व्याघ्रपात् । अहस्त्यादिभ्यः किम् । हस्तिपादः । कुसूलपादः ॥ ( १२६० ) सू० कुम्भपदीषु च । ५ । ४ । १३९ । कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम् । पादः पत् । कुम्भपदी । स्त्रियां किम् । कुम्भपादः ॥ ( १२६१ ) सू० संख्यासुपूर्वस्य । ५ । ४ । १४० । पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् । सुपात् ॥ ( १२६२ ) सू० वयसि दन्तस्य दतृ । ५ । ४ । १४१ । संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद्वयसि । द्विदन् । चतुर्दन् । षट् दन्ता अस्य–षोडन् । सुदन् । सुदती । वयसि किम् । द्विदन्तः करी । सुदन्तः ॥ ( १२६३ ) सू० स्त्रियां संज्ञायाम् । ५।४।१४३ । दन्तस्य दतृ स्यात्समासान्तो बहुव्रीहौ । अयोदती । फालदती । संज्ञायां किम् । समदन्ती ॥ ( १२६४ ) सू० विभाषा श्यावारोकाभ्याम् । ५ । ४ । १४४ । दन्तस्य दतृ वा स्यात्समासान्तो बहुव्रीहौ । श्यावदन्, श्यावदन्तः अरोकदन् । अरोकदन्तः ( १२६५ ) सू० अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । ५ । ४ । १४५ । एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन् कुड्मलाग्रदन्तः ॥ ( १२६६ ) सू० ककुदस्यावस्थायां लोपः । ५ । ४ । १४६ । अजातककुत् । पूर्णककुत् ॥ ( १२६७ ) सू० त्रिककुत्पर्वते । ५ । ४ । १४७ । त्रीणि ककुदान्यस्य त्रिककुत् । संज्ञैषा पर्वतविशेषस्य । त्रिककुदोऽन्यः ॥ ( १२६८ ) सू० उद्विभ्यां काकुदस्य । ५ । ४ । १४८ । लोपः स्यात् । उत्काकुत् । विकाकुत् । काकुदं तालु ।

---

नोद्गन्धिरित्यादिरूपसिद्धेः । न च 'तित्स्वरितम् ५६९४' इत्यन्तस्वरितत्वापत्तिः शङ्क्या, तकारस्योच्चारणार्थत्वाभ्युपगमात् । नापि षष्ठीनिर्देशादादेशत्वमेव न प्रत्ययत्वमिति वाच्यम्, 'गापोष्टक् ३८९३' इत्यादिप्रत्ययविधिष्वपि षष्ठीदर्शनादिति ॥ (१२५६) अविभागेनेति । एवं च गुणवाचिन एव ग्रहणं, न तु द्रव्यवाचिन इति फलितोऽर्थः ॥ द्रव्याणीति । अस्ति च गन्धशब्दो द्रव्यवचनः 'वहति जलमियं पिनष्टि गन्धान्' इति प्रयोगात् । "गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः ।" इति कोशाच्च ॥ केचित्तु 'गन्धस्येत्वे–१२५६' इति वार्तिके तदेकान्तशब्देन स्वाभाविकत्वं विवक्षितं, तेनागन्तुकस्य नेत्याहुः ॥ तथा च भट्टिः–'आघ्रायिवान् गन्धवहः सुगन्धः' इति । व्याख्यातं च जयमङ्गलायाम्–'गन्धस्य–१२५६' इत्यादिनेकारः समासान्तो न, 'तदेकान्तग्रहणम्' इति वचनात् । सुगन्ध आपणिक इति यथेति । अत एव 'भग्नबालसहकारसुगन्धौ' इत्यादीनां प्रामादिकत्वं दुर्घटवृत्तिकृतोक्तम् ॥ ( १२५७ ) अल्पाख्यायाम् । अल्पवाचिनो गन्धस्येकारोऽन्तादेशः स्यात् बहुव्रीहौ ॥ सूपस्य गन्ध इति । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । यद्वा–फलितार्थकथनमेतत्, सूपो गन्धो यस्मिन्नित्येव विग्रहः । गन्धशब्दस्य विशेषणत्वेऽप्यस्मादेव ज्ञापकात् परनिपातः ॥ (१२५९) पादस्य—। यद्ययं लोपः समासान्तो न स्यात् 'आदेः परस्य ६८' इत्यादेः स्यात् । शैषिकः कप् च प्रसज्येत ॥ 'शेषाद्विभाषा १२७४' इत्यत्र समासान्तापेक्षस्य शेषस्याश्रयणादत आह—समासान्त इति ॥ कथं पुनरभावो भावस्यावयवः स्यात्तत्राह—स्थानिद्वारेणेति । वचनबलादौपचारिकमवयवत्वं गृह्यत इति भावः ॥ ( १२६० ) कुम्भपदीषु च । बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाप्यर्थावगतिरित्यभिप्रेत्याह—कुम्भपद्यादिष्विति । इह गणे कुम्भपदी एकपदी जानपदीत्येवं समुदाया एव पठ्यन्ते, तस्य च प्रयोजनं विषयविशेषपरिग्रह इत्याशयेनाह—स्त्रियामिति । यच्चेहोपमानपूर्वं संख्यापूर्वं च पठ्यते, तस्य सिद्धे लोपे नित्यङीबर्थं वचनं, तेन 'पादोऽन्यतरस्याम्–६७' इति विकल्पो न भवति ॥ ( १२६२ ) द्विदन्निति । द्वौ दन्तावस्य जातौ । शिशुत्वावस्था त्विह गम्यते । 'उगिदचाम्–३९१' इति नुम् । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न ॥ षोडन्निति । 'षष उत्वं दतृदशधा–११६२' इत्यनेनोत्वष्टुत्वे ॥ सुदतीति । 'उगितश्च ६१९' इति ङीप् ॥ ( १२६३ ) समदन्तीति । 'नासिकोदर–७२१' इत्यादिना ङीष् ॥ ( १२६४ ) श्यावदन्निति । 'श्यावः स्यात्कपिशः' इत्यमरः ॥ अरोकदन्निति । अरोका अच्छिद्रा दन्ता यस्य सः ॥ ( १२६५ ) अग्रान्त—। इहानुक्तसमुच्चयार्थश्चकारस्तेन मूषिकदन्निति सिद्ध्यतीत्याहुरिति ॥

---

१ सुगन्धिर्वायुरिति । गन्धाश्रयाणां तत्संसृष्टानां परमाणूनां वाऽविभागापन्नानामेव ग्रहणमिति भावः । एवमेव सुगन्धि जलमित्यत्रापि द्रष्टव्यम् ॥ २ लोप इति । 'पाद्' इति तु न विहितम्, तथा सति प्रतिपदोक्तत्वादस्यैव 'पादः पद्' इत्यत्र ग्रहणापत्तौ पादयतेरप्रत्यये पद इत्यत्राप्रवृत्त्यापत्तेरिति बोध्यम् ॥ ३ अवस्थायामिति । अहरादिकालकृता अवयवोपचयादयो वस्तुधर्मा अवस्थाशब्देनोच्यन्ते ॥ अवस्थायां किम् । श्वेतककुदः ॥ ४—अभ्युपगमादिति । उच्चारणार्थानामपीत्संज्ञालोपौ विना निवृत्त्यसंभवाच्चिन्त्यमेतत् । तस्माद् दकाराभ्युपगमेन सर्वानिष्टनिवृत्तेरङ्गीकरणमावश्यकम् ॥ ५ एवं च गुणेति । गुणोपसर्जनद्रव्यवाचिन इत्यर्थः । एतदेवाभिप्रेत्य–'कुंकुमाद्यनुलेपनमपि देवदत्तादावविभागापन्नं मिलितं यदि विवक्षितम् तदा 'सुगन्धिर्देवदत्तः' इति, विभागेनावस्थाने तु 'सुगन्धः' इति । इति भाष्यकैयटयोरुक्तम् ॥ ६ द्रव्येति । गुणोपसर्जनद्रव्योपसर्जनद्रव्यवाचिन इत्यर्थः ॥ ७ आघ्रायीति । तान् वहन् वायुः आघ्रात इत्यर्थ इति शब्दरत्ने ॥

(१२६९) (सू.) **पूर्णाद्विभाषा**।५।४।१४९।पूर्णकाकुत्।पूर्णकाकुदः॥(१२७०) (सू.) **सुहृद्दुर्हृदौ मित्रामित्रयोः**।५।४।१५०। सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते।सुहृन्मित्रम्।दुर्हृदमित्रः।अन्यत्र सुहृदयः।दुर्हृदयः॥ (१२७१) (सू.) **उरःप्रभृतिभ्यः कप्** ।५।४।१५१। व्यूढोरस्कः। प्रियसर्पिष्कः । इह पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीरिति एकवचनान्तानि पठ्यन्ते । द्विवचनबहुवचनान्तेभ्यस्तु शेषाद्विभाषेति विकल्पेन कप् । द्विपुमान्, द्विपुंस्कः ॥ ( १२७२ ) (ग.) **अर्थान्नञः**। अनर्थकम्। नञः किम् । अपार्थम्, अपार्थकम् ॥ ( १२७३ ) (सू.) **इनः स्त्रियाम्** । ५ । ४ । १५२ । बहुदण्डिका नगरी ॥ (प.) **अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति** ॥ बहुवाग्मिका । स्त्रियां किम्। बहुदण्डी, बहुदण्डिको ग्रामः ॥ ( १२७४) (सू.) **शेषाद्विभाषा** । ५ । ४ । १५४ । अनुक्तसमासान्ताच्छेषाधिकारस्थाद्बहुव्रीहेः कप् वा स्यात् । महायशस्कः, महायशाः । अनुक्तेत्यादि किम् । व्याघ्रपात् । सुगन्धिः । प्रियपथः । शेषाधिकारस्थात्किम् । उपबहवः । उत्तरपूर्वा । सपुत्रः । तन्त्रादिना शेषशब्दोऽर्थद्वयपरः ॥ ( १२७५ ) (सू.) **आपोऽन्यतरस्याम्**।७।४।१५। कप्याबन्तस्य ह्रस्वो वा स्यात्।बहुमालाकः, बहुमालकः । कबभावे बहुमालः॥(१२७६) (सू.) **न संज्ञायाम्** । ५। ४। १५३। शेषादिति[1] प्राप्तः कप् न स्यात्संज्ञायाम् । विश्वे देवा अस्य-विश्वदेवः॥(१२७७) (सू.) **ईयसश्च** ।५। ४ । १५६। ईयसन्तोत्तरपदान्न कप् । बहवः श्रेयांसोऽस्य-बहुश्रेयान् । गोस्त्रियोरिति ह्रस्वे प्राप्ते-॥ ( १२७८ ) (वा.) **ईयसो[2] बहुव्रीहेर्नेति वाच्यम्** ॥ बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी। बहुव्रीहेः किम्। अतिश्रेयसिः॥

---

( १२६६ ) **अजातेति** । अजातं ककुदमस्येति विग्रहः । इह हि बाल्यावस्था गम्यते ॥ ( १२७१ ) **उरः प्रभृतिभ्यः कप्** । ( उरः प्रभृत्यन्ताद्बहुव्रीहेः कप् स्यात् ) 'समासार्थोत्तरपदान्ताः समासान्ताः' इति पक्षे तु बहुव्रीहेश्चरमावयवेभ्य उरःप्रभृतिभ्यः कबिति व्याख्येयम् । तद्धितत्वात्कस्य नेत्वम् ॥ **व्यूढोरस्क इति** । व्यूढं विशालमुरो यस्य सः 'सोऽपदादौ २२८' इति विसर्जनीयस्य सः ॥ **प्रियसर्पिष्क इति** । 'इणः षः २३१' इति विसर्गस्य षत्वम् ॥ **एकवचनान्तानीति** । 'नद्यृतश्च ११९८ ' इति सिद्धे लक्ष्मीशब्दपाठस्त्विह एकवचनान्तलक्ष्मीशब्दावयवकबहुव्रीहेरेव नित्यं कप् । अन्यत्र 'शेषात्-१२७४' इति विकल्प एवेति नियमार्थः । तेन ' अकृशमकृशलक्ष्मीश्चेतसा शंसितं सः' इति भारविप्रयोगः सिद्धः । अकृशा लक्ष्म्यो यस्येति विग्रहः ॥ यत्तु प्राचोक्तं 'नद्यृतश्च ११९८' इति कप् बहुलक्ष्मीक इति । तदयुक्तम्, संख्यावाचिबहुशब्दस्यैकवचनान्तत्वाभावात्प्रकृतनियमेन वारितत्वात् । बह्वी अधिका लक्ष्मीर्यस्येति विग्रहे वैपुल्यवाचिन एकवचनान्तत्वसंभवेऽपि विशेषविधेर्बलीयस्त्वेन 'उरःप्रभृतिभ्यः कप् १२७१' इत्येव वक्तुमुचितत्वात् ॥ यदा तु 'नियमशास्त्राणां निषेधमुखेन प्रवृत्तिः' इत्याश्रीयते, तदा प्राचोक्तमपि सम्यगेवेति ज्ञेयम् ॥ ( १२७२ ) **अर्थान्नञः** । गणसूत्रमिदम् ॥ **अनर्थकेन चेति** । कथं तर्हि 'सुपथी नगरी' इति हलन्तेषूक्तं कपोऽत्र दुर्वारत्वात् । न च 'न पूजनात् १३६९' इत्यनेन 'ऋक्पूरब्धूः-१३५० ' इत्यस्येव कपोऽपि निषेधः शङ्क्यः, षचः प्राचीनानामेव स निषेध इति वक्ष्यमाणत्वात् । कप्प्रत्ययस्य षच उत्तरत्वात् । सत्यम्, समासान्तविधेरनित्यत्वात्साधुरिति समाधेयम् । 'युवोरनाकौ' इति सूत्रे सुपथीति भाष्याच्चेत्युक्तम् ॥ ( १२७३ ) **बहुवाग्मिकेति** । 'वाचो ग्मिनिः २६२१ ' ॥ ( १२७४ ) **शेषाद्वि—**। यद्यत्र प्रागुक्तकब्मात्रापेक्षः शेषः स्यात् तर्हि व्याघ्रपात्सुगन्धिरित्यादावपि स्यात् । अतः समासान्तापेक्षः शेष इह गृह्यत इत्याह—**अनुक्तसमासान्तादिति** । **व्याघ्रपादिति** । स्थानिद्वारा लोपोऽपि समासान्त इत्युक्तम् ॥ **सुगन्धिरिति**। 'गन्धस्येत्-१२५५' इत्यादिना इत्समासान्तः॥ **प्रियपथ इति**। 'ऋक्पूः-१३५०' इत्यप्प्रत्ययः समासान्तः ॥ **उपबहव इति** । 'संख्ययाऽव्यया-१२१५ ' इत्यादिना समासः ॥ **उत्तरपूर्वेति** । 'दिङ्नामा-१२१७' इत्यादिना समासः ॥ **सपुत्र इति**। 'तेन सहेति-१२२१' इत्यादिना समासः । अयं भावः—'शेषो बहुव्रीहिः ११९१' इत्यतः शेषपदम् 'अनेकमन्यपदार्थे ११९२' इत्येतस्मिन्नेव सूत्रेऽनुवर्तते, 'संख्ययाऽव्ययासन्ना-१२१५' इत्यादिषु च निवर्तते । तथा च शेषाधिकारस्थत्वाभावादुपबहव इत्यादिषु कप्प्रत्ययो नेति॥ एवं च 'अनेकमन्यपदार्थे ११९२' इति सूत्रात्पृथक् 'संख्ययाऽव्ययासन्ना-१२१५' इत्यादीनामारम्भः कबभावार्थमप्यावश्यक इति स्थितम् ॥ ननु सकृदुच्चरितस्य शेषशब्दस्यानुक्तसमासान्तपरत्वं शेषाधिकारस्थपरत्वं च कथमित्यत आह—**तन्त्रादिनेति** । 'अर्थभेदेन शब्दभेदः, सत्यप्यर्थभेदे शब्दस्याभेदः' इति मतद्वयम्। आद्ये आवृत्तिः । द्वितीये तन्त्रमिति विवेकः ॥ यत्तु वदन्ति 'प्रतिपदोक्ताः समासान्ताः स्वविषये बाधका भवन्ति' तत्किमनुक्तसमासान्तपरेण शेषग्रहणेनेति । तन्न, 'ऋक्पूः-१३५०' इत्यादीनां समासान्तरे चरितार्थतया प्रियपथ इत्यादौ परेण कपा बाधापत्तेः[3] ॥ ( १२७७) **ईयसश्च** । नित्यो वैकल्पिकश्च कप्सर्वोऽपि[4] निषिध्यते॥ **बहुश्रेयानिति**।अतिशयेन प्रशस्यः श्रेयान्। 'द्विवचनविभज्योप-२७१९' इतीयसुन्। 'प्रशस्यस्य श्रः २७२३'। 'शेषाद्विभाषा १२७४'

---

१ **शेषादितीति** । 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायादिति भावः ॥ २ **ईयस इति** । * ईयसो बहुव्रीहौ पुंवत् * इति वार्तिकमर्थतोऽनूदितमिति भावः ॥ ३ **बाधापत्तेरिति** । वस्तुतस्तु "नैव कबपेक्षं शेषग्रहणम् नापि समासान्तापेक्षम्, किं तर्हि ? अनन्तरो बहुव्रीह्यधिकारः सोऽपेक्ष्यते" इति भाष्योक्तेस्तदपेक्षयैव शेषो ग्राह्यः । न च समासान्तैः स्वस्वविषये कपो बाधेनोपपत्तौ शेषग्रहणमेव व्यर्थमिति वाच्यम्, कबभावे समासान्तानां सावकाशत्वात् ॥ एवं च प्रियपथिक इत्यपि भवत्येवेति बोध्यम् ॥ ४ **सर्वोऽपीति** । 'न संज्ञेयसोः' इत्येव सिद्धे योगविभागसामर्थ्यादिति भावः ॥

( १२७९ ) (सू) **वन्दिते भ्रातुः** । ५ । ४ । १५७ । पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात् । प्रशस्तो भ्राता यस्य-प्रशस्तभ्राता । न पूजनादिति[१] निषेधस्तु बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः[१२२७] प्रागेवेति वक्ष्यते । वन्दिते किम् । मूर्खभ्रातृकः ॥ ( १२८० ) (सू) **नाडीतन्त्र्योः स्वाङ्गे** । ५ । ४ । १५९ । स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात्कप् न स्यात् । बहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा । तन्त्रीधमनी । स्त्रीप्रत्ययान्तत्वाभावाद्ध्रस्वो न । स्वाङ्गे किम् । बहुनाडीकः स्तम्भः । बहुतन्त्रीका वीणा ॥ ( १२८१ ) (सू) **निष्प्रवाणिश्च** । ५ । ४ । १६० । कबभावोऽत्र निपात्यते । प्रपूर्वाद्वयतेर्ल्युट् । प्रवाणी तन्तुवायशलाका । निर्गता प्रवाण्यस्य निष्प्रवाणिः पटः । समाप्तवानः, नव इत्यर्थः ॥ ( १२८२ ) (सू) **सप्तमीविशेषणे बहुव्रीहौ** । २ । २ । ३५ । सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम् । कण्ठेकालः । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । चित्रगुः ॥ ( १२८३ ) (वा) **सर्वनामसंख्ययोरुपसंख्यानम्** ॥ सर्वश्वेतः । द्विशुक्लः । ( १२८४ ) (वा) **मिथोऽनयोः समासे संख्या पूर्वम्** ॥ शब्दपरविप्रतिषेधात् । द्व्यन्यः ॥ ( १२८५-१ ) (वा) **संख्याया अल्पीयस्याः** ॥ द्वित्राः ॥ ( १२८५-२ ) (वा) **द्वन्द्वेऽपि**[२] । द्वादश ॥ ( १२८६ ) (वा) **वा प्रियस्य**[३] ॥ गुडप्रियः । प्रियगुडः ॥ ( १२८७ ) (वा) **गड्वादेः परा सप्तमी** ॥ गडुकण्ठः । क्वचिन्न । वहेगडुः ॥ ( १२८८ ) (सू) **निष्ठा** । २ । २ । ३६ । निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः ॥ ( १२८९ ) (वा) **जातिकालसुखादिभ्यः परा निष्ठा वाच्या** ॥ सारङ्गजग्धी । मासजाता । सुखजाता । प्रायिकं चेदम् । कृतकटः । पीतोदकः ॥ ( १२९० ) (सू) **वाऽऽहिताग्न्यादिषु** । २ । २ । ३७ । आहिताग्निः । अग्न्याहितः । आकृतिगणोऽयम् ॥ ( १२९१ ) (वा) **प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ** ॥ अस्युद्यतः । दण्डपाणिः ॥ क्वचिन्न । विवृतासिः ॥ इति बहुव्रीहिः ॥

---

## अथ द्वन्द्वप्रकरणम् ।

( १२९२ ) (सू) **चार्थे द्वन्द्वः** । २ । २ । २९ । अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चया-

---

इति कप्प्रत्ययः ॥ ( १२७८ ) **बहुश्रेयसीति** । 'नद्यृतश्च ११९८' इति नित्यं प्राप्तः कप् लिङ्गविशिष्टपरिभाषया[२६] 'ईयसश्च १२७७' इति प्रतिषिध्यते ॥ ( १२८० ) **बहुनाडिरिति** । उपसर्जनह्रस्वः ॥ **स्त्रीप्रत्ययान्तत्वाभावादिति** । 'अवितृस्तृतन्त्रिभ्यः ईः ४६४१' इतीप्रत्ययस्य 'स्त्रियाम्-५०६७' इत्यधिकारे अविहितत्वादिति भावः ॥ ( १२८२ ) **सप्तमीविशेषणे**— । यदा कण्ठे किंचिदस्तीति ज्ञायते तस्य विशेषणं काल इति, तदेदं सप्तमीग्रहणम् । अन्यदा तु तेन विनापि विशेषणत्वादेव सिद्धम् । **चित्रगुरिति** । न च 'उपसर्जनं पूर्वम् ९५५' इत्येवेदं सिध्यतीति वाच्यम्, 'बहुव्रीहौ सप्तमी, इत्युक्ते तक्रकौण्डिन्यन्यायेनोपसर्जनपूर्वत्वस्य बाधापत्तेरतो विशेषणग्रहणं कृतम् ॥ ( १२८३ ) **सर्वनामेति** । कथं तर्हि 'तः परो यस्मात्स तपरः' इति । कथं च 'जहत्स्वार्था वृत्तिः' इति । इह हि जहत्स्वं पदं यं स जहत्स्वः सोऽर्थो यस्यामिति बहुव्रीहिगर्भो बहुव्रीहिस्तथा च स्वपरशब्दयोः सर्वनामत्वात्पूर्वनिपातेन भाव्यमिति चेत् । अत्राहुः—सूत्रभाष्यप्रयोगात्स्वरपरशब्दयोर्न पूर्वनिपातः । राजदन्तादित्वाद्वा सिद्धमिति ॥ **द्विशुक्ल इति** । यद्यपि सर्वनामत्वेनैव द्विशब्दस्य पूर्वनिपातत्वं सिध्यति, तथापि त्रिशुक्ल इत्यादिसिद्धये वार्तिके संख्याग्रहणं कृतम् । ( १२८४ ) ननु संख्याया अल्पाच्तरत्वेन 'संख्यासर्वनाम्नोः' इति वाच्ये विपरीतोच्चारणमयुक्तमित्याशङ्क्याह—**मिथोऽनयोरिति** । विपरीतोच्चारणमेवात्र लिङ्गमिति भावः ॥ ( १२८५-१ ) **अल्पीयस्या इति** । अल्पार्थवाचिकायाः इत्यर्थः ॥ ( १२८७ ) **गड्वादेरिति** । आदिशब्दः प्रकारवाची । तेन पद्मं नाभौ यस्य पद्मनाभः । ऊर्णा नाभौ यस्य । 'ङ्यापोः-१४३७' इति ह्रस्वः । ऊर्णनाभ इति सिध्यतीत्याहुः ॥ ( १२८९ ) **जातिकालेति** । एतच्च 'जातिकालसुखादिभ्योऽनाच्छादनात् ५८७०' इत्यनेन ज्ञापितमिति भावः ॥ **सारङ्गजग्धीति** । सारङ्गो जग्धो यया सा । 'अस्वाङ्गपूर्वपदाद्वा ७२६' इति ङीप् । कथं तर्हि 'चारुस्मितश्चारुहासितः' इत्यादि । अत्राहुः—'नपुंसके भावे क्तः ४१०८' इति क्तस्य न पूर्वनिपातः, निष्ठाशब्देन विहितस्यैवेह ग्रहणादिति ॥ ( १२९१ ) **प्रहरणा—क्वचिन्नेति** ॥ आहिताग्न्यादित्वकल्पनादनभिधानाद्वेति भावः ॥ इति बहुव्रीहिः ॥

---

( १२९२ ) **चार्थे द्वन्द्वः** । 'अनेकमन्यपदार्थे ११९२' इत्यतोऽनेकमित्यनुवर्तते 'सुबामन्त्रिते-५५२३' इत्यस्मात्सुबपि, 'समासः' इति, 'विभाषा' इति चाधिक्रियत एव तदाह—**अनेकं सुबन्तमित्यादि** ॥

---

१ **पूजित इति** । 'वदि—अभिवादनस्तुत्योः' इत्युभयार्थकवदिधातुप्रयोगेणोभयसाधारणपूजा लक्ष्यत इति भावः ॥ २ **द्वन्द्वेऽपीति** । द्वन्द्वाधिकारे पठितमपि 'संख्याया अल्पीयस्याः' इति वार्तिकं द्वन्द्वाद्वन्द्वसाधारणमिति भावः ॥ ३ **वा प्रियस्येति** । इदं च 'सप्तमीविशेषणे' इत्यत्रोपसंख्यातत्वाद् 'अनेकम्' इति विहितबहुव्रीहावेव । 'तेन सहेति' इत्यादिविहिते सहप्रिय इत्यादौ न प्रवर्तते ॥

ऽन्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्परनिरपेक्षस्यानेकस्य एकस्मिन्नन्वयः समुच्चयः । अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः । मिलितानामन्वय इतरेतरयोगः । समूहः समाहारः । तत्रेश्वरं गुरुं च भजस्वेति समुच्चये, भिक्षामट गां चानयेत्यन्वाचये च न समासोऽसामर्थ्यात् । धवखदिरौ । संज्ञापरिभाषम् । अनेकोक्तेर्होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु होतापोतानेष्टोद्गातारः ॥ ( १२९३ ) (सू) **राजदन्तादिषु परम्** । २ । २ । ३१ । एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजानो-राजदन्ताः ॥ ( ११९४ ) (वा) **धर्मादिष्वनियमः** ॥ अर्थधर्मौ । धर्मार्थौ । दम्पती । जम्पती । जायापती । जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते । आकृतिगणोऽयम् ॥ (१२९५) (सू) **द्वन्द्वे घि** । २ । २ । ३२ । द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च-हरिहरौ ॥ ( १२९६ ) (वा) **अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे** ॥ हरिगुरुहराः । हरिहरगुरवः ॥ ( १२९७ ) (सू) **अजाद्यदन्तम्** । २ । २ । ३३ । इदं द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ । बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्राश्वरथाः ॥ ( १२९८ ) (वा) **घ्यन्तादजाद्यदन्तं विप्रतिषेधेन** । इन्द्राग्नी ॥ ( १२९९ ) (सू) **अल्पाच्तरम्** । २ । २ । ३४ । शिवकेशवौ ॥ ( १३०० ) (वा) **ऋतुनक्षत्राणां**

---

**चार्था इति** । चशब्दद्योत्या इत्यर्थः ॥ **एकस्मिन्निति** । भजनादावित्यर्थः ॥ **ईश्वरं गुरुं च भजस्वेति** । क्रियायां द्रव्ययोः समुच्चयोऽयम् । तथा राज्ञो गजश्चाश्वश्चेति द्रव्ये द्रव्ययोः समुच्चयः । पटः शुक्लो रक्तश्चेति द्रव्ये गुणयोः । रक्तः पटः कुण्डलं चेति गुणे द्रव्ययोरित्यूह्यम् ॥ **भिक्षामट गां चानयेति** । अत्र ह्यदर्शनाद्गामनानयन्नपि भिक्षामटत्येव । अनटंस्तु भिक्षां न गामानयति । तथा अटन्नपि नान्विष्य गामानयति । अतो भिक्षाटनस्यैव प्राधान्यं, गवानयनस्य त्वानुषङ्गिकता ॥ **असामर्थ्यादिति** । एकार्थीभावाभावादित्यर्थः । तथाहि बहुव्रीहिघटकपदानां कर्माद्यन्तर्भावेणेव द्वन्द्वघटकपदानां चार्थान्तर्भावेण एकार्थीभाव आवश्यकः । 'समर्थः पदविधिः ९४७' इति परिभाषितत्वात् 'चार्थे द्वन्द्वः १२९२' इत्युक्तेश्च । न चेतरेतरान्वये परस्परनिरपेक्षाणामेकार्थीभावः संभवति, येन समुच्चयान्वाचयावेकार्थीभावान्तर्भूतौ स्याताम् । अतश्चेतरेतरयोगे समाहारे च परस्परसाहित्यसत्त्वात्समासो भवति, न तु समुच्चयान्वाचययोः । परं त्वितरेतरयोगे साहित्यं विशेषणं द्रव्यं तु विशेष्यं, समाहारे तु साहित्यं प्रधानं द्रव्यं विशेषणमिति विवेक्तव्यम् । ननु नीलोत्पलमित्यादौ चशब्दान्तर्भावेण विग्रहदर्शनादेकार्थीभावसत्त्वाच्च द्वन्द्वो दुर्वारः स्यात् । मैवम्, 'विशेषणं विशेष्येण-१०६२' इति सामानाधिकरण्ये विहितया तत्पुरुषसंज्ञया द्वन्द्वसंज्ञाया बाधात् । तस्यास्त्वसामानाधिकरण्ये सावकाशत्वात् । सामानाधिकरण्याभावविवक्षायां तु 'प्रमाणप्रमेय-' इत्यादाविव नीलोत्पलादावपि द्वन्द्वे इष्टापत्तिरेव ॥ **होतृपोत्रिति** । उत्तरपदपरत्वाभावादनयोरानङ् न ॥ (१२९३) **राजदन्तादिषु**—। इह द्वन्द्वतत्पुरुषयोः पाठेऽपि 'अर्थधर्मौ' इत्याद्यभिप्रायेणास्य द्वन्द्वेषूपन्यासः ॥ ( १२९५ ) **द्वन्द्वे घि** । 'अनेकम्' इति सर्वेषामेव प्रथमानिर्दिष्टत्वेनोपसर्जनत्वाविशेषादनियमप्राप्तावयमारम्भः । ( १२९६ ) यत्र त्वनेकं घ्यन्तं, तत्र द्वयोरपि पूर्वनिपातनियमः स्यादत आह—**अनेकप्राप्तावेकत्रेति** । अत्र व्याचख्युः-आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तते, न प्रतिव्यक्त्यावृत्त्या । तत्रैकस्य पूर्वनिपाते सति जातौ लक्षणं प्रवृत्तमेवेति न पुनः प्रवर्तते । व्यक्तिपक्षस्त्विह नाश्रीयते लक्ष्यानुरोधादिति ॥ **हरिहरगुरव इति** । हरगुरुशब्दयोर्न नियमः प्रवर्तत इति भावः ॥ ( १२९७ ) **अजाद्यदन्तम्** । 'समुद्राभ्राद्घः ५३०२' 'लक्षणहेत्वोः क्रियायाः ४१२३' इत्यादिनिर्देशादनित्यमिदं प्रकरणम् । तेन 'स सौष्ठवौदार्यविशेषशालिनीम्' इति भारविप्रयोगः संगच्छते ॥ (१२९९) **अल्पाच्तरम्** । अत एव निपातनात् स्वार्थे तरप्, कुत्वचुत्वयोरभावश्च । यदि तु प्रकर्षे तरप् स्यात् तदा द्वयोरेव नियमः स्यात् । द्विवचनान्तोपपदत्वविषय एव तरपो विधानात् । ततश्च धवखदिरपलाशा इत्यादौ बहुषु नियमो न स्यात् ॥ (१३००)

---

१ **परस्परेति** । तत्त्वं चैकस्य क्रियायामन्वयोत्तरमपरस्यावृत्त्या तदन्वयात् ॥ अनेकस्येति । तेनैकस्य सापेक्षत्वेऽपि न दोषः । समुच्चये चशब्देन स्वसमभिव्याहृतपदार्थे इतरसापेक्षत्वं बुध्यते तदसमभिव्याहृते तु न । अत एवात्रैकचशब्दप्रयोग एव । अन्वय इति । यत्रैवमन्वयस्तत्र समुच्चयश्चार्थ इत्यन्वयः । न त्वन्वय एव समुच्चय इति भ्रमितव्यम् । अन्वयश्च विशेष्यतया विशेषणतया वा । तत्राद्यो देवदत्तः पचति हसति चेति क्रियासमुच्चये, अन्त्यस्तु वक्ष्यत एव ॥ २ **आनुषङ्गिकत्व इति** । आनुषङ्गिकत्वमनुद्देश्यत्वम् । अन्यस्य प्राधान्यं च स्वसंबन्धिक्रियाया अवश्यकर्तव्यत्वरूपम् । अन्वाचय आनुषङ्गिकत्वं, व्याप्यत्वं च समभिव्याहृतक्रियागतं चार्थः ॥ ३ **मिलितानामिति** । परस्परापेक्षाणामुद्भूतावयवभेदसमूहरूपाणामित्यर्थः ॥ **अन्वय इति** । एकधर्मावच्छिन्नत्वेनान्वय इत्यर्थः । तेन नीधातोः संयोगजनकव्यापारानुकूलव्यापारार्थत्वेन द्विकर्मत्वेऽपि 'ग्राममजां नयति' इत्यत्र न चकारप्रयोगो नापि समासः, ग्रामस्य संयोगेऽजायाः संयोगजनकव्यापारेऽन्वयाङ्गीकारेणैकधर्मावच्छिन्नेऽन्वयाभावात् । अत एवानेकचकारप्रयोगोऽत्रेति बोध्यम् ॥ ४ **समूह इति** । अनुद्भूतावयवभेदः समूह इत्यर्थः । तत्रेतरेतयोगे उद्भूतावयवभेदसमूहस्य प्रतीत्या प्रत्येकवृत्तिधर्मरूपमेव प्रवृत्तिनिमित्तम् । समाहारे त्वतिरिक्तत्वेनैव समूहस्य भानेन समूहत्वमेव प्रवृत्तिनिमित्तमिति विवेकः ॥ ५ **राजदन्ता इति** । '**राजदन्तास्तु** चत्वारो दशनानां पुरःस्थिताः ॥' इति त्रिकाण्डशेषः ॥ हैमे तु-'**राजदन्तौ** तु मध्यस्थावुपरिश्रेणिकौ क्वचित ॥' इत्युपलभ्यते ॥ ६ **विप्रतिषेधेनेति** । एवमेव *उभाभ्यामल्पाच्तरम्* 'द्वन्द्वे घि' 'अजाद्यदन्तम्' इत्येताभ्याम् 'अल्पाच्तरम्' भवति विप्रतिषेधेन'-इति भाष्योक्तम्,-'लघ्वक्षरम्' 'ऋतुनक्षत्राणाम्' इति 'अभ्यर्हितं च' इति 'भ्रातुर्ज्यायसः' इति च विप्रतिषेधेन-इति शेखरोक्तं च स्मर्तव्यम् ॥ ७ **इष्टापत्तिरेवेति** । अत एव 'प्राच्यभरतेषु' इति निर्देशः संगच्छते । उक्तनिर्देशात्सामान्यशब्दस्योपात्तविशेषातिरिक्तपरत्वाङ्गीकारेण वा सहविवक्षासंभवेन द्वन्द्वो भवत्येवेति भावः ॥ ८ **न प्रतिव्यक्तीति** । इदं बहुशः प्राक् खण्डितमेव, भाष्यमीमांसाविरोधात् ॥

समाक्षराणामानुपूर्व्येण ॥ हेमन्तशिशिरवसन्ताः । कृत्तिकारोहिण्यौ । समाक्षराणां किम् । ग्रीष्मवसन्तौ ॥ (१३०१) वा लघ्वक्षरं पूर्वम् ॥ कुशकाशम् ॥ ( १३०२ ) वा अभ्यर्हितं च ॥ तापसपर्वतौ ॥ (१३०३) वा वर्णानामानुपूर्व्येण ॥ ब्राह्मणक्षत्रियविट्शूद्राः ॥ ( १३०४ ) वा भ्रातुर्ज्यायसः ॥ युधिष्ठिरार्जुनौ ॥ ( १३०५) सू द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । २ । ४ । २ । एषां द्वन्द्व एकवत्स्यात् । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् । समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थं प्रकरणम् । प्राण्यङ्गादीनां समाहार एव यथा स्यात् ॥ ( १३०६ ) सू अनुवादे चरणानाम् । २ । ४ । ३ । चरणानां द्वन्द्व एकवत्स्यात्सिद्धस्योपन्यासे ॥ ( १३०७ ) वा स्थेणोर्लुङीति वक्तव्यम् ॥ उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् ॥ (१३०८) सू अध्वर्युक्रतुरनपुंसकम् । २ । ४ । ४ । यजुर्वेदे विहितो यः क्रतुस्तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत्स्यात् । अर्काश्वमेधम् । अध्वर्युक्रतुः किम् । इषुवज्रौ सामवेदे विहितौ । अनपुंसकं किम् । राजसूयवाजपेये । अर्धर्चादी ॥ (१३०९) सू अध्ययनतोऽविप्रकृष्टाख्यानाम् । २ । ४ । ५ । अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत् । पदकक्रमकम् ॥ (१३१०) सू जातिरप्राणिनाम् । २ । ४ । ६ । प्राणिवर्ज[1]जातिवाचिनां द्वन्द्व एकवत् । धानाशष्कुलि । प्राणिनां तु विट्शूद्राः । द्रव्यजातीनामेव । नेह । रूपरसौ । गमना-

---

**ऋतुनक्षत्राणामिति** । ऋतूनामानुपूर्व्यं प्रादुर्भावकृतं नक्षत्राणां तूदयकृतं च ॥ ( १३०२ ) **अभ्यर्हितं च** । 'वासुदेवार्जुनाभ्यां वुन् २०४१' इति निर्देशेनेदं ज्ञाप्यत इति चतुर्थे भाष्यम् । 'अल्पाच्तरम् १२९९' 'अजाद्यदन्तम् १२९७' इति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तमकुर्वन् ज्ञापयति सर्वतोऽभ्यर्हितं पूर्वमिति तत्रैव सूत्रे वक्ष्यते ॥ ( १३०४ ) **युधिष्ठिरार्जुनाविति** । इन्द्रपुत्रत्वाद्विष्णोरंशत्वाच्छूरत्वाद्वा अभ्यर्हितत्वमर्जुनेऽप्यस्तीति न तेन नियमः सिध्यतीति भावः ॥ ( १३०५ ) **द्वन्द्वश्च प्राणि—**। प्राणितूर्यसेनानामङ्गानीति बहुवचनान्तेनाङ्गशब्देन षष्ठीसमासः । अङ्गशब्दश्च प्रत्येकमन्वेति । तेन प्राण्यङ्गानां प्राण्यङ्गैरेव, तूर्याङ्गानां तूर्याङ्गैरेव, सेनाङ्गानां सेनाङ्गैरेव यो द्वन्द्वः स एकवद्भवति न तु व्यतिरेकेण । तेनेह न, मार्दङ्गिकाश्वारोहौ । अत्र प्राणिसेनयोरङ्गं नामावयवः ॥ तूर्यस्य त्वङ्गं नामोपकारकं बोध्यम् ॥ **एषां द्वन्द्व इति** । प्राण्यङ्गानां द्वन्द्वः, तूर्याङ्गानां द्वन्द्वः, सेनाऽङ्गानां द्वन्द्वः, इत्यर्थः । 'द्विगुरेकवचनम् १०५७' इत्यत एकवचनं वर्तते । तत्रैकं वक्तीति व्युत्पत्त्या एकत्वविशिष्टः समाहाररूपो योऽर्थस्तत्प्रतिपादकः स्यादित्यर्थं मन्वानः फलितमाह—**एकवत्स्यादिति** ॥ **पाणिपादमिति** । यद्यप्यत्र 'जातिरप्राणिनाम् १३१०' इत्येव सिद्धम्, तथापि द्रव्यप्राधान्येऽपि भवत्विति प्राणिग्रहणमित्येके । पाणिपणवाविति व्यतिकरे मा भूदिति नियमार्थं वचनमित्यन्ये ॥ **मार्दङ्गिकेति** । मृदङ्गवादनं शिल्पमस्येत्यर्थे 'शिल्पम् २१९७' इति ठक् । एवं पाणविक इत्यपि ॥ **रथिकाश्वारोहमिति** । रथेन चरन्तीति रथिकाः । 'पर्पादिभ्यः ष्ठन् २१३९' इति ष्ठन् । ते चाश्वारोहाश्च तेषां समाहारः ॥ ननु 'चार्थे द्वन्द्वः १२९२' इत्यनेन समाहारद्वन्द्वः सिद्धः, तस्य चैकत्वादेकवचनमपि सिद्धमिति किमनेनेत्याशङ्क्याह—**नियमार्थमिति** । **समाहार एवेति** । समाहारे प्राण्यङ्गादीनामेवेति विपरीतनियमोऽत्र न भवति 'तिष्यपुनर्वस्वोः ११७४' इति सूत्रे बहुवचनग्रहणात् । तद्धि समाहारे एकवचनस्य द्विवचनं मा भूदिति कृतम् । अन्यथा तिष्यपुनर्वस्विति न स्यादिति । एवं च—'द्वन्द्वश्च प्राणितूर्य—१३०५' इति प्रकरणबहिर्भूतानामपि समाहारद्वन्द्वो भवत्येव, तेन 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इति पठ्यमानं नापूर्वं वचनमिति ज्ञेयम् ॥ ( १३०६ ) **अनुवादे—। चरणानामिति** । शाखाध्येतृवाचिनामित्यर्थः ॥ ( १३०७ ) **स्थेणोरिति** । 'ष्ठा गतिनिवृत्तौ' । 'इण् गतौ' । स्थाप्रकृतिकइण्प्रकृतिकलुङन्ते उपपदे सतीत्यर्थः । स्थेणोः किम्, अभूवन् कठकालापाः । लुङि किम्, तिष्ठन्तु कठकालापाः ॥ **उदगादिति** । इह यदा कठेषु कालापेषु चोदितेषु कठेषु कौथुमेषु च प्रतिष्ठितेषु चावाभ्यां तत्र गन्तव्यमिति संकेतयित्वा तत्संकेतं विस्मृत्यासीनं प्रतीदमुच्यते । कठेन प्रोक्तमधीयते कठाः वैशंपायनान्तेवासित्वाण्णिनिः । तस्य 'कठचरकात्—२०५०' इति लुक् । अध्येत्रणस्तु 'प्रोक्ताल्लुक् १८०४' इति लुक् । 'कलापिनोऽण् २०५१' 'सब्रह्मचारि—२०५२' इत्याद्युपसंख्यानाट्टिलोपः ॥ ( १३०८ ) **अध्वर्यु—। यजुरिति** । सूत्रे अध्वर्युशब्दो यजुर्वेदलक्षक इति भावः ॥ ( १३०९ ) **अध्यय—। पदकेति** । पदान्यधीते पदकः । 'क्रमादिभ्यो वुन् १८०१' । एवं क्रमकोऽपि । पदान्यधीत्य क्रमोऽध्येतव्य इति स्पष्टा प्रत्यासत्तिः । अध्ययनतः किम्, पितापुत्रौ । अविप्रकृष्टेति किम्, याज्ञिकनैयायिकौ ॥ ( १३१० ) **जातिर—**। जातिवाच्यवयवकद्वन्द्वोऽपि जातिरित्युपचर्यत इत्याशयेनाह—**जातिवाचिनामिति** ॥ **विट्शूद्रा इति** । जातिप्राधान्येऽपि बहुवचनमुपपद्यते 'जात्याख्यायामेकस्मिन्—११७०' इति विधानात् । तेनात्र द्व्यङ्गविकलं नेति भावः ॥ **द्रव्यजातीनामेवेति** । 'अप्राणिनाम्' इति पर्युदासात् 'नञिवयुक्त—' न्यायेन द्रव्यजातीयानामेकवद्भावो, न तु गुणक्रियाजातीयानामिति भावः ॥ जातिः किम्, नन्दकपाञ्चजन्यौ ।

---

१ **प्राणिवर्जेति** । यद्यपि क्षतप्ररोहादिना वृक्षादीनामपि प्राणित्वम् 'अद्भिर्विना ग्लायमानत्वस्यैव प्राणित्वस्य 'आपोमयः प्राणः' इति श्रुत्या सूचितत्वात्, तथापि लोकप्रसिद्धमनुष्यादय एवेह प्राणिशब्देन गृह्यन्त इति न 'विभाषावृक्ष—' इति सूत्रविरोधः ॥

कुञ्चने । जातिप्राधान्य एवायमेकवद्भावः । द्रव्यविशेषविवक्षायां तु बदरामलकानि ॥ ( १३११ ) (सू) **विशिष्टलिङ्गो नदीदेशोऽग्रामाः । २ । ४ । ७ ।** ग्रामवर्ज्यनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्व एकवत्स्यात् । उद्ध्यश्च इरावती च-उद्ध्येरावति । गङ्गा च शोणश्च–गङ्गाशोणम् । कुरवश्च कुरुक्षेत्रं च–कुरुकुरुक्षेत्रम् । भिन्नलिङ्गानां किम् । गङ्गायमुने । मद्रकेकयाः । अग्रामाः किम् । जाम्बवं नगरम् । शालूकिनी ग्रामः । जाम्बवशालूकिन्यौ ॥ ( १३१२ ) (सू) **क्षुद्रजन्तवः । २ । ४ । ८ ।** एषां समाहारे द्वन्द्व एकवत्स्यात् । यूकालिक्षम् । आ नकुलात्क्षुद्रजन्तवः ॥ ( १३१३ ) (सू) **येषां च विरोधः शाश्वतिकः । २ । ४ । ९ ।** एषां प्राग्वत् । अहिनकुलम् ॥ गोव्याघ्रम् । काकोलूकमित्यादौ परत्वाद् विभाषा[१३१६] वृक्षमृगेति प्राप्तं चकारेण बाध्यते ॥ ( १३१४ ) (सू) **शूद्राणामनिरवसितानाम् । २ । ४ । १० ।** अबहिष्कृतानां शूद्राणां प्राग्वत् । तक्षायस्कारम् । पात्राद्बहिष्कृतानां तु चाण्डालमृतपाः ॥ ( १३१५ ) (सू) **गवाश्वप्रभृतीनि च । २ । ४ । ११ ।** यथोच्चारितानि साधूनि स्युः । गवाश्वम् । दासीदासमित्यादि ॥ (१३१६) (सू) **विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।**

---

संज्ञाशब्दावेतौ ॥ **जातिप्राधान्य एवेति** । एतच्च जातिग्रहणाल्लब्धम् । अन्यथा पर्युदासेनैव जात्युपसर्जनद्रव्यवाचिनोऽपि ग्रहणोपपत्तौ किं तेनेति भावः ॥ **द्रव्यविशेषेति**। नन्वेवं 'रञ्जिता नु विविधास्तरुशैलाः' इति भारविप्रयोगः संगच्छत एवेति किमिति तरुसहिताः शैला इति मनोरमायां समर्थितमिति चेत् । अत्राहुः–सकलतरुशैलरञ्जनं तत्र विवक्षितं, न तु केषांचित्तरुशैलविशेषाणामिति जातिप्राधान्यादेकवद्भावमाशङ्क्य तथोक्तमिति ॥ **बदरामलकानीति** । 'फले लुक् २११६' इति लुक्, 'लुक्तद्धितलुकि १९६५' इति स्त्रीप्रत्ययस्यापि लुकि फलत्वजात्युपसर्जनद्रव्यवचनावेतौ । 'विभाषा वृक्षमृग–१३१६' इति सूत्रे बदराणि चामलकानि च बदरामलकम् । 'जातिरप्राणिनाम् १३१०' इत्येकवद्भाव इति वक्ष्यति, तत्तु नानेन ग्रन्थेन विरुध्यते । फलत्वजातिवाचिनां बहुवचनान्तानामेव द्वन्द्व एकवद्भवति, न त्वेकवचनान्तानां द्वन्द्व इति 'फलसेनावनस्पति–१३१८' इति वार्तिकोक्तनियममुपेत्य तत्प्रवृत्तेः ( १३११ ) **विशिष्टलिङ्गो–** । सूत्रे चत्वारोऽपि[१] शब्दा अवयवधर्मेणावयविद्वन्द्वे वर्तन्त इत्याशयेनाह—**ग्रामेत्यादि** । इह नदीवाचिनां द्वन्द्वः, देशवाचिनां द्वन्द्व इति वाक्यभेदेन व्याख्येयम् । तेन गङ्गाकुरुक्षेत्रे इत्यत्र न भवति । देशशब्देनात्र प्रसिद्ध एव जनपदो गृह्यते, नद्याः पृथग् ग्रहणात् । तेन पर्वतानां न, कैलासश्च गन्धमादनं च कैलासगन्धमादने । नदीदेश इति किम्, कुक्कुटमयूर्यौ ॥ विशिष्टपदस्यार्थमाह—**भिन्नलिङ्गानामिति** । विपूर्वो हि शिषिर्भेदार्थः । अत एव 'विशेषणं विशेष्येण–१०६२'इति सूत्रे भेदकं भेद्येनेति व्याख्यातम् ॥ **समाहारे द्वन्द्वः स्यादिति**। निष्कर्षाभिप्रायेणेयमुक्तिः । यथाश्रुताभिप्रायेण तु 'द्वन्द्व एकवत्स्यात्' इति केषुचित्सूत्रेषु व्याख्यायत इति ज्ञेयम् ॥ **उद्ध्येरावतीति** । उद्ध्यो नदः, सोऽपि नदीविशेषत्वान्नदीशब्देन गृहीतः । एवं शोणोऽपि ॥ **'अग्रामा इत्यत्र नगरप्रतिषेधो वक्तव्यः'** । तेन मथुरापाटलिपुत्रम् इत्यत्र निषेधो न भवति उभयोरपि[२] नगरत्वात् ॥ ( १३१२ ) **क्षुद्र–**। अपचितपरिमाणत्वं क्षुद्रत्वम् । तच्चापेक्षिकत्वादनवस्थितम् । यच्च स्मर्यते–"क्षुद्रजन्तुरनास्थिः स्यादथ वा क्षुद्र एव यः शतं वा प्रसृतौ येषां केचिदानकुलादपि" इति । तत्र सर्वपक्षसाधारण्येनोदाहरति–**यूकालिक्षमिति** ॥ **आ नकुलादिति** ॥ नकुलपर्यन्ता इत्यर्थः ॥ ( १३१३ ) **येषां च विरोधः–**। विरोधो वैरं, न तु सहानवस्थानम् । तेनेह न । छायातपौ ॥ शश्वदित्यव्ययं त्रैकाल्ये वर्तते, तत्र भवः शाश्वतिकः 'कालाट्ठञ् १९३२' । अत एव निपानात् 'इसुसुक्तान्तात्–१७२४' इति कादेशः, 'अव्ययानां भमात्रे–१८६४' इति टिलोपश्च न । शाश्वतिकः किम् , 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' तेषां ह्यमृतादिप्रयुक्तः कादाचित्को विरोधो न तु नित्यः, मन्थनप्रवृत्तिकाले तद्विरहात् ॥ **परत्वादिति** । पशुशकुनिद्वन्द्वस्यावकाशो गोमहिषं, गोमहिषाः । हंसचक्रवाकं, हंसचक्रवाकाः । 'येषां च–१३१३' इत्यस्यावकाशः मार्जारमूषकं श्रमणब्राह्मणमित्यादौ ज्ञेयः ॥ **चकारेण बाध्यत इति** । चकारः पुनर्विधायक इति भावः ॥ ( १३१४ ) **शूद्राणाम्–**। त्रैवर्णिकेतरमनुष्यपरः शूद्रशब्दो न तु शूद्रत्वजातिपरः[३], 'अनिरवसितानाम्' इति निषेधात् ॥ **पात्रादिति** । यैर्भुक्ते 'भस्मना शुध्यते कांस्यम्' इत्यादिस्मृत्युक्तसंस्कारेणापि पात्रं न शुध्यति तेषामित्यर्थः ॥ ( १३१५ ) **गवाश्व–**। **यथोच्चारितानीति** । गणपाठे पाणिनिना यथा पठितानि तथैव साधूनीत्यर्थः । तेनावङः पाक्षिकत्वाद्यदा नावङ् तदा उत्तरसूत्रेण विकल्पो[४] भवति । गोअश्वम् । गोऽश्वाः 'अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गोअश्वाः' ॥ **गवाश्वमिति** । इह पशुद्वन्द्वे विभाषा प्राप्ता ॥ **दासीदासमिति** ।

---

१ **चत्वारोऽपीति** । नदी देश इति भिन्ने पदे, द्वन्द्वे द्विवचननपुंसकत्वान्यतरापत्तेरिति भावः ॥ २ **उभयोरिति** । अन्यतरस्य ग्रामत्वे तु 'अग्रामाः' इति प्रतिषेधो भवत्येवेति भावः ॥ ३ **शूद्रेति** । वृषलपर्याय इत्यर्थः । तस्य "वृषो हि भगवान्धर्मस्तस्य यः कुरुते ह्यलम् । वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥ ८ । १६ ॥ 'नाऽज्ञातेन समं गच्छेन्नैको न वृषलैः सह " इति मनुना पात्राद्बहिष्कारस्य ध्वनितत्वेनाबहिष्काराभावादिति भावः ॥ ४ **विकल्पो भवतीति** । 'विभाषा वृक्ष–'इति सूत्रेण विहितस्य विकल्पस्य कृतावङि त्वनेन बाधः, अवङोऽकरणे तु पूर्वरूपे प्रकृतिभावे विकल्पो भवत्येवेति भावः ॥

। २ । ४ । १२ ! वृक्षादीनां सप्तानां द्वन्द्वः, अश्ववडवेत्यादिद्वन्द्वत्रयं च प्राग्वद्वा । ( १३१७ ) वृक्षादौ विशेषाणामेव ग्रहणम् । प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः । रुरुपृषतम्, रुरुपृषताः । कुशकाशम् , कुशकाशाः । व्रीहियवम् , व्रीहियवाः । दधिघृतम्, दधिघृते । गोमहिषम्, गोमहिषाः । शुकबकम् ,शुकबकाः । अश्ववडवम् । अश्ववडवौ । पूर्वापरम्,पूर्वापरे । अधरोत्तरम्, अधरोत्तरे ॥ (१३१८) **(वा०) फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्** ॥ बदराणि चामलकानि च-बदरामलकम् । जातिरप्राणिनामित्येकवद्भावः । नेह, बदरामलके । रथिकाश्वारोहौ । प्लक्षन्यग्रोधौ इत्यादि । विभाषावृक्षेति सूत्रे येऽप्राणिनस्तेषां ग्रहणं जातिरप्राणिनामिति नित्ये प्राप्ते विकल्पार्थम् । पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते-मृगाणां मृगैरेव शकुनीनां तैरेवोभयत्र द्वन्द्वः । अन्यैस्तु सहेतरेतरयोग एवेति नियमार्थं मृगशकुनिग्रहणम् । एवं पूर्वापरमधरोत्तरमित्यपि । अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थम् । अन्यथा परत्वात्पूर्ववदश्ववडवाविति स्यात् ॥ ( १३१९ ) **(सू०) विप्रतिषिद्धं चानधिकरणवाचि । २ । ४ । १३ ।** विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात् । शीतोष्णम् । शीतोष्णे । वैकल्पिकः समाहारद्वन्द्वश्चार्थे इति सूत्रेण प्राप्तः स विरुद्धार्थानां यदि भवति तर्हि अद्रव्यवाचिनामेवेति नियमार्थमिदम् । तेन द्रव्यवाचिनामितरेतरयोग एव । शीतोष्णे उदके स्तः । विप्रतिषिद्धं किम् । नन्दकपाञ्चजन्यौ । इह पाक्षिकः समाहारद्वन्द्वो भवत्येव (१३२०) **(सू०) न दधिपयआदीनि । २ । ४ । १४ ।** एतानि नैकवत्स्युः । दधिपयसी । इध्माबर्हिषी । निपातनाद्दीर्घः । ऋक्सामे । वाङ्मनसे । (१३२१) **(सू०) अधिकरणैतावत्त्वे च । २ । ४ । १५ ।** द्रव्यसंख्यावगमे एकवदेवेति नियमो न स्यात् । दश

---

अत्र 'पुमान् स्त्रिया १३३८' इत्येकशेषो बाध्यते ॥ (१३१६) **विभाषा**—। (१३१७) **विशेषाणामेवेति** । अयं भावः-वृक्षादिशब्दैः प्रत्येकं द्वन्द्वो विशेष्यते, न चैको वृक्षशब्दो द्वन्द्वः न च द्वयोः सह प्रयोगः, 'सरूपाणाम्-२७३' इत्येकशेषात् । नापि पर्यायाणां 'विरूपाणामपि समानार्थानाम् १३३५' इत्येकशेषात् । नापि वृक्षश्च धवश्चेत्यादिसामान्यविशेषयोः, अनभिधानात्तत्र द्वन्द्वस्यैवाभावादिति ॥ (१३१८) सर्वप्रकरणशेषतया नियममाह—**फलसेनेत्यादि** । फलसेनादीनां द्वन्द्वो 'विभाषा वृक्षमृग-१३१६' इत्यनेन लक्षणान्तरेण वा एकवद्भवन्बहुप्रकृतिरेव एकवद्भवतीत्यर्थः । बहवो वर्तिपदार्थाः बहुवचनान्ता वा प्रकृतिः कारणं यस्य स बहुप्रकृतिः ॥ **बदराणि चामलकानि चेति** । 'जात्याख्यायामेकस्मिन्-११७०' इति वैकल्पिकं बहुवचनम् ॥ **बदरामलके इति** । जातिप्राधान्येऽप्येकवचनान्तयोर्द्वन्द्व इति नास्त्येकवद्भाव इति भावः॥ **पशुग्रहणमिति** । विकल्पार्थमित्यनुषज्यते । 'चार्थे द्वन्द्वः १२९२' इत्यनेनैव सिद्धे मृगशकुनिग्रहणं व्यर्थमित्याशङ्क्याह—**मृगाणां मृगैरेवेत्यादि** ॥ **नपुंसकत्वार्थमिति** । अयं भावः-पशुत्वाद्विकल्पे सिद्धे अश्ववडवग्रहणं प्रतिपदविधानार्थम् । तेनाश्ववडवामित्येकवद्भावपक्षे 'पूर्ववदश्ववडवौ ११६५' इत्येतद्बाधित्वा 'स नपुंसकम् ११७५' इत्येतदेव भवति । स इति तच्छब्देन ह्येकवद्भावभाजं परामृश्य विधीयमानं नपुंसकत्वम् एकवद्भाववदेव प्रतिपदविहितं भवति । तथा च प्रतिपदोक्तस्य बलीयस्त्वान्नपुंसकत्वं सिध्यतीति ॥ ( १३१९ ) **विप्रतिषिद्धम्**—। अधिकरणमिह द्रव्यम् । चकारो विभाषानुकर्षणार्थस्तदेतद्व्याचष्टे—**विरुद्धार्थानामित्यादि** । उदाहरणं तु शीतोष्णं शीतोष्णे सुखदुःखं सुखदुःखे इत्यादि । विरोधोऽत्र सहानवस्थानलक्षणः ॥ **भवत्येवेति** । विप्रतिषिद्धग्रहणाभावे तु स न स्यात् , अद्रव्यवाचिनामेवेति नियमादिति भावः ॥ अनधिकरणवाचीति किम् , शीतोष्णे उदके स्तः । इह पाक्षिकः समाहारद्वन्द्वोऽपि स्यादिति दिक् ॥ ( १३२० ) **न दधिपय**—। **दधिपयसी इति** । व्यञ्जनत्वाद्विकल्पः[1] प्राप्तः । एवं 'मधुसर्पिषी, सर्पिर्मधुनी' इत्यत्रापि बोध्यम् । इह 'ब्रह्मप्रजापती' 'शिववैश्रवणौ' इत्यादौ समाहारद्वन्द्वनिषेधमुखेनेतरेतरयोगद्वन्द्वोऽनेन व्यवस्थाप्यते । तत्साहचर्याद्दधिपयस इत्यादावपि तथैव । तेन तत्र व्यञ्जनत्वप्रयुक्तविकल्पे निषिद्धेऽपि जातिलक्षणो नित्यमेकवद्भावोऽस्त्विति न शङ्कनीयम् ॥ किं च नेह लक्षणविशेषे आग्रहः । 'एतानि नैकवत्स्युः' इत्येकवद्भावमात्रस्य निषेधात् । यथा-'न षट्स्वस्रादिभ्यः ४२८' इत्यत्र ङीप्टापोरुभयोरपि निषेधसिद्धये 'स्त्रियां यदुक्तं तन्न' इति सामान्यतो निषिध्यत इति दिक् ॥ **ऋक्सामे । वाङ्मनसे इति** । 'अचतुर-१३५८' इत्यादिनाऽत्र समासान्तोऽच् निपात्यते॥ ( १३२१ ) **अधिकरणै**—। समासार्थस्याश्रयोऽधिकरणं वार्तिपदार्थः, तस्यैतावत्त्वं परिगणननियमः, तस्मिन् गम्यमाने इति व्याचष्टे-**द्रव्यसंख्यावगमे इति** ॥ **नियमो न स्यादिति** । न चेह प्राण्यङ्गत्वात्प्राप्तस्य 'एकवचनमेव' इति नियमस्य प्रतिषेधेऽपि 'चार्थे द्वन्द्वः १२९२' इति समाहारद्वन्द्वः स्यादिति वाच्यम् , 'सविशेषणानां वृत्तिर्न' इत्युभ्युपगमेन समाहारद्वन्द्वस्य प्राप्त्यभावात् । न चोक्तन्यायेनेतरेतरयोगद्वन्द्वोऽपि न स्यादिति वाच्यम् 'सामान्याप्रयोगे' इति लिङ्गात् प्रधानस्य सापेक्षत्वेऽपि तदभ्युपगमात् । उक्तं हि भाष्ये-'भवति वै प्रधानस्य सापेक्षस्यापि वृत्तिः' इति । स्यादेतत् , समाहारद्वन्द्वस्यात्र प्राप्त्यभावे 'द्वन्द्वश्च प्राणितूर्य-' इति नियमाप्रवृत्त्या इतरेतरयोगद्वन्द्वो निर्बाध एवेति सूत्रमिदमकिंचित्करमिति चेत् । अत्राहुः-'नियमसूत्राणां निषेधमुखेन प्रवृत्तिः' इति पक्षे 'द्वन्द्वश्च प्राणितूर्य-१३०५' इति सूत्रं केवलमितरेतरयोगद्वन्द्वनिषेधपरम् । तथा चेतरे-

---

१ विकल्प इति । 'जातिरप्राणिनाम्' इत्यपि न, 'चार्थे द्वन्द्वः' इत्येतद्विहितसमाहारद्वन्द्वस्य नियममात्रस्य च बाध्यसामान्यचिन्तयाऽनेन निषेधात् ॥

दन्तोष्ठाः ( १३२२ ) सू विभाषा समीपे । २ । ४ । १६ । अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे समाहार एवेत्येवंरूपो नियमो वा स्यात् । उपदशं दन्तोष्ठम् । उपदशाः दन्तोष्ठाः ॥ ( १३२३ ) सू आनङ् ऋतो द्वन्द्वे ।६।३।२५ । विद्यायोनिसंबन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे परे । होतापोतारौ । होतृपोतृनेष्टोद्गातारः । मातापितरौ । पुत्रेऽन्यतरस्यामित्यतो मण्डूकप्लुत्या पुत्र इत्यनुवृत्तेः पितापुत्रौ ॥ (१३२४) सू देवताद्वन्द्वे च ।६।३।२६ । इहोत्तरपदे परे आनङ् । मित्रावरुणौ ॥ ( १३२५ ) वा वायुशब्दप्रयोगे प्रतिषेधः । अग्निवायू । वाय्वग्नी । पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थम् । तेन ब्रह्मप्रजापती इत्यादौ नानङ् । एताद्धि नैकहविर्भागित्वेन श्रुतं नापि लोके प्रसिद्धं साहचर्यम् ॥ ( १३२६ ) सू ईदग्नेः सोमवरुणयोः । ६ । ३ । २७ । देवताद्वन्द्वे इत्येव ॥ ( १३२७ ) सू अग्नेः स्तुत्स्तोमसोमाः । ८ । ३ । ८२ । अग्नेः परेषामेषां सस्य षः स्यात्समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ । अग्नीवरुणौ ( १३२८ ) सू इद्वृद्धौ । ६ । ३ । २८ । वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे । अग्नामरुतौ देवते अस्य—आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य—आग्निवारुणम् । देवताद्वन्द्वे[७४] चेत्युभयपदवृद्धिः । अलौकिकवाक्ये आनङमीत्वं च बाधित्वा इत् । वृद्धौ किम् । आग्नेन्द्रः । नेन्द्रस्य[७५] परस्येत्युत्तरपदवृद्धिप्रतिषेधः ॥

---

तरयोगनिषेधस्य निषेधद्वारा इतरेतरयोगद्वन्द्वप्रापणार्थमिदमिति । एवं च निषेधमुखप्रवृत्तिपक्षस्य ज्ञापनार्थेदमिति फलितमिति दिक्[१] ॥ ( १३२२ ) **विभाषा समीपे** । यद्यपीह 'समाहारद्वन्द्व एव' इति व्याख्यानेऽपि न क्षतिः, तथापि पूर्वसूत्रे नियमनिषेधस्योक्तत्वात्तदनुरोधेनाह—**नियमो वा स्यादिति** । **उपदशं दन्तोष्ठमिति** । एकवद्भावपक्षे अव्ययीभावस्यैवानुप्रयोगः । यदि तु बहुव्रीहेः, तदा 'उपदशस्य दन्तोष्ठस्य' इति षष्ठी स्यात् , 'उपदशं दन्तोष्ठस्य' इत्येवेष्यत इत्याकरः॥ दन्तोष्ठस्य दर्शनमित्यभिप्रायेण षष्ठ्यां कृतायामपि उपदशशब्दे षष्ठी नेष्यते । अतो बहुव्रीहेर्नानुप्रयोगः किं त्वव्ययीभावस्यैवेति तदाशयः[२] ( १३२३ ) **आनङ्**— । ऋत इति षष्ठ्यन्तं जातावेकवचनम् । 'ऋतो विद्यायोनिसंबन्धेभ्यः १४०९' इति त्वनुवर्तते, तच्चात्र षष्ठ्या विपरिणम्यते, तदाह—**विद्यायोनिसंबन्धवाचिनामिति** । ननु 'ऋतः' इत्यनुवर्तनादेव सिद्धे किमनेन ऋतोग्रहणेन । अत्राहुः—'ऋतः' इति श्रूयमाणद्वन्द्वविशेषणम्[३] । अनुवृत्तं तूत्तरपदे परतो यत्पूर्वं तस्य विशेषणं पुत्रशब्दे परे आनङ् विधास्यते तत्र कार्यिनिर्देशार्थम् । अन्यथा तत्पुत्रावित्यत्रापि स्यादिति ॥ **उत्तरपदे इति** । एतच्च 'अलुगुत्तरपदे १३७४' इत्यधिकाराल्लभ्यते । उत्तरपदे परतः पूर्वं यदृदन्तं तस्यानङित्यर्थः ॥ **होतापोताराविति** । आनङो ङित्त्वात्पूर्वान्त्यस्य ऋकारस्यादेशे सति नलोपः । न चाकारमात्रमेव विधीयतामिति वाच्यम् , 'उरण् रपरः १०५' इति रपरप्रसङ्गात् । नन्विहोत्तरपदेन पूर्वपदं नाक्षिप्यते, अन्यथा होतृपोतृनेष्टोद्गातार इत्यत्र मध्यमस्यानङ् न स्यात् । ततश्च विशेष्यासन्निधानात् ऋत एव स्थाने आदेशेन भवितव्यं, न तु ऋदन्तपदस्य स्थाने इति किमनेनानङो ङित्करणेन । सत्यम् , ङित्करणाभावे मित्रावरुणावित्यादौ देवताद्वन्द्वे च १३२४' इत्युत्तरपदे परे विधीयमान 'आदेशः पूर्वस्याक्षरस्य पदस्य वा स्यात्' पूर्वस्याल एवेत्यत्र नियामकाभावात् । एतेन 'ऋत इति कार्यिनिर्देशार्थम्' इत्युक्तत्वान्निर्दिश्यमानस्य ऋकारस्यैवादेशः स्यादिति ङित्वकरणं व्यर्थमित्याशङ्काऽपि परास्ता ॥ **नेष्टोद्गातार इति** । न ह्यत्र नेष्टा पूर्वपदं, आद्यवयवस्यैव पूर्वपदत्वात् ॥ **मातापितराविति** । पुत्रोत्पादने अनयोर्योनिकृतः संबन्धः । पूर्वत्र तु हौत्रादिरूपविद्याकृतः संबन्ध एकस्मिन्यज्ञे आर्त्विज्यरूप इति विवेकः ॥ **मण्डूकप्लुत्येति** । तेन 'विभाषा स्वसृपत्योः १४११' इत्यत्र न संबध्यत इति भावः॥ **पितापुत्राविति** । अनयोरपि योनिकृतः संबन्धो जन्यजनकभावलक्षणः ॥ ( १३२४ ) **देवता**— । अनृकारान्तार्थमविद्यायोनिसंबन्धार्थं च वचनम् ॥ ( १३२६ ) **ईदग्नेः**— । आनङोऽपवादोऽयम् ॥ **देवताद्वन्द्व इत्येवेति** । इदं च वृत्तिग्रन्थे स्थितम् । ज्योतिर्लतयोरदेवताद्वन्द्वेऽपि 'अग्नीषोमौ प्रणेष्यामि' इत्याश्वलायनप्रयोगस्त्वार्षत्वात्साधुः । यद्वा—माऽस्तु तदनुवृत्तिः । अग्निसोमौ माणवकावित्यत्र 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः' इति न्यायेनादोषत्वात् ॥ ( १३२७ ) **अग्नेः**— । 'सात्पदाद्योः २८६३' इति निषेधेऽयमारम्भः ॥ **अग्निष्टुदिति** । अग्निः स्तूयतेऽस्मिन् सः क्रतुविशेषः । संपदादित्वाद्धिकरणे क्विप् ॥ **अग्निष्टोम इति** । अग्नीनां स्तोमोऽग्निष्टोमः । सोमयागस्य संस्थास्वाद्या संस्था उच्यते ॥ ( १३२८ ) **इद्वृद्धौ** । तकार उच्चारणार्थः । इकारस्येकारविधानं तु बाधकबाधनार्थम् ॥ वृद्धिशब्देनात्र वृद्धिमदुच्यते । वृद्धिमात्रस्योत्तरपदस्यासंभवादतो व्याचष्टे—**वृद्धिमत्युत्तरपद इति** ॥ **आनङमीत्त्वं च बाधित्वेति** । यद्यपि वृद्धेः प्रागेव आनङीत्वयोरन्तरङ्गत्वात्प्रवृत्तिरस्ति, तथापि 'परित्यज्यापवादविषय-

---

१ दिगिति । दिगर्थस्तु—इतरेतरयोगेऽप्युद्भूतावयवभेदसमूहस्यैव भाष्यरीत्या समासार्थत्वेन तस्यापि सापेक्षत्वादप्राप्तिः । किञ्च, यदा दन्तोष्ठद्वारकसंबन्धेन समाहार एव दशत्वान्वयविवक्षा, तदाऽस्त्येव समाहारे द्वन्द्वप्राप्तिः । प्रधानस्यैव सापेक्षत्वाद्, द्रव्यसंख्यावगमाच्च । किं चात्र समाहाराप्राप्तावपि नियमाभावेन नियमाप्राप्त्या कस्यानेन निषेधः स्यात् । तस्मात् पूर्वसूत्रवदयमप्युभयोर्निषेधः । अत एवोत्तरसूत्रविषये समाहारसिद्धिः । सामर्थ्येनासमासकल्पनापेक्षयैवमन्वयकल्पनस्यैवौचित्यादिति ॥ २ **तदाशय इति** । अव्ययीभावानुप्रयोगे तु 'नाव्ययीभावाद्–'इत्यादिना नोक्तदोष इति भावः । अव्ययीभावानुप्रयोगे सामानाधिकरण्यं तु समीपसमीपिनोरभेदविवक्षया बोद्धव्यम् । इतरेतरयोगे तु बहुव्रीहेरेवानुप्रयोगः, तस्य समीपिप्रधानत्वात् , समानलिङ्गवचनत्वाच्च । अत एव तत्र नाव्ययीभावानुप्रयोगः ॥ ३ **श्रूयमाणेति** । तेन पितृपितामहावित्यादौ नानङ् ॥

(१३२९) सू **विष्णौ न** ॥ आग्नावैष्णवम् ॥ (१३३०) सू **दिवो द्यावा** । ६ । ३ । २९ । देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षामा ॥ (१३३१) सू **दिवसश्च पृथिव्याम्** । ६ । ३ । ३० । दिव इत्येव चाद् द्यावा । आदेशे अकारोच्चारणं सकारस्य रुत्वं मा भूदित्येतदर्थम् । द्यौश्च पृथिवी च-दिवस्पृथिव्यौ द्यावापृथिव्यौ ॥ छन्दसि दृष्टानुविधिः । द्यावा चिदस्मै पृथिवी । दिवस्पृथिव्योररतिमित्यत्र पदकारा विसर्गं पठन्ति ॥ (१३३२) सू **उषासोषसः** ६ । ३ । ३१ । उषस्शब्दस्योषासादेशो देवताद्वन्द्वे उषासासूर्यम् (१३३३) सू **मातरपितरावुदीचाम्** । ६ । ३ । ३२ । मातरपितरौ । उदीचां किम् । मातापितरौ ॥ (१३३४) सू **द्वन्द्वाच्चुदषहान्तात्समाहारे** । ५ । ४ । १०६ । चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक् च त्वक् च-वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् । प्रावृट्शरदौ ॥ इति द्वन्द्वः ॥

---

## अथैकशेषप्रकरणम् ।

अथैकशेषः । सरूपाणाम् । रामौ । रामाः ॥ (१३३५) वा **विरूपाणामपि समानार्थानाम्** ॥ वक्रदण्डश्च कुटिलदण्डश्च-वक्रदण्डौ । कुटिलदण्डौ ॥ (१३३६) सू **वृद्धो यूना तल्लक्षणश्चेदेव विशेषः** । १ । २ । ६५ । यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । गार्ग्यश्च गार्ग्यायणश्च-गार्ग्यौ । वृद्धः किम् । गर्गगार्ग्यायणौ । यूना किम् । गर्गगार्ग्यौ । तल्लक्षणः किम् । भागवित्तिभागवित्तिकौ । कृत्स्नं किम् । गार्ग्यवात्स्यायनौ ॥ (१३३७) सू **स्त्री पुंवच्च** । १ । २ । ६६ । यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् । गार्गी च गार्ग्यायणश्च-गर्गाः । अस्त्रियामित्यनुवर्तमाने यञञोश्चेति लुक् । दाक्षी च दाक्षायणश्च-दाक्षी ॥ (१३३८) सू **पुमान् स्त्रिया** । १ । २ । ६७ । स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत् । हंसी च हंसश्च-हंसौ ॥ (१३३९) सू **भ्रातृपुत्रौ स्वसृ-**

---

-मुत्सर्गोऽभिनिविशते' इति न्यायादानङीत्वे न भवत इति भावः ॥ (१३२९) **विष्णौ न** । **आग्नावैष्णवमिति** । इत्वाभावादानङेव भवति ॥ (१३३१) **दिव-** । **रुत्वं मा भूदिति** । अकारे सति सकारस्य श्रवणं भवति, तेन प्रयोगे विकाराभावोऽनुमीयत इति भावः ॥ **विसर्गमिति** । तथा च 'क्वचिद्विकारो न' इत्येवानुमेयं, लक्ष्यानुरोधादिति भावः ॥ (१३३२) **उषासासूर्यमिति** । उषाश्च सूर्यश्च तयोः समाहारः ॥ (१३३३) **मातरपितरौ--** । मातृशब्दस्यारङादेशो निपात्यते ॥ (१३३४) **द्वन्द्वात्-** । अन्तग्रहणं विस्पष्टार्थं, चु इति वर्गग्रहणस्य प्रयोजनं ध्वनयति--**त्वक्स्रजमिति** । बहूनां द्वन्द्वे तु वाक्त्वक्स्रजम् । द्वन्द्वगर्भे द्वन्द्वे तु वाक्त्वचस्रजम् ॥ इति द्वन्द्वः ॥

---

द्वन्द्वापवादत्वेनाह--**अथैकशेष इति** ॥ (१३३५) **विरूपाणामिति** । रूप्यते बोध्यते इति व्युत्पत्त्या सौत्रस्य रूपशब्दस्यार्थपरतयाऽपि व्याख्यानात्सूत्राक्षरैरेव लब्धुं शक्यत इति प्रागेव व्याख्यातम् ॥ (१३३६) **वृद्धो यूना-** । 'अपत्यमन्तर्हितं वृद्धम्' इति पूर्वाचार्यैः परिभाषितस्य पाणिन्युक्तगोत्रापरपर्यायस्येह ग्रहणम्, कृत्रिमेण यूना साहचर्यात्तदाह--**गोत्रं शिष्यत इति** । 'गोत्रं यूना' इत्येव तु न सूत्रितम् । 'अपत्याधिकारादन्यत्र लौकिकं गोत्रग्रहणम्' इति सिद्धान्तेन औपगवश्चानन्तरः औपगविश्च युवेत्यत्र नैकशेषः ॥ **भागवित्तीति** । भागवित्तस्य गोत्रापत्यं भागवित्तिरित्यस्माद्यूनि 'वृद्धाट्ठक् सौवीरेषु बहुलम् १६५६' इति कुत्सायां ठक् । इह कुत्सा सौवीरत्वं चाधिकमपेक्ष्यते । न तु युवत्वमात्रकृतं वैरूप्यम् ॥ **गार्ग्यवात्स्यायनाविति** । इह प्रकृत्यंशे वैरूप्यं न गोत्रादिकृतम् ॥ (१३३७) **स्त्रीपुंवच्च** । **वृद्धा स्त्रीति** । गोत्रप्रत्ययान्तं स्त्रीवाचकमित्यर्थः ॥ पुंवद्भावकृतवैलक्षण्यं स्फुटीकर्तुं द्विवचनान्तेन विग्रहमाह—**गार्ग्यायणाविति** ॥ **अनुवर्तमान इति** । 'तद्राजस्य बहुषु—' इत्यतः । 'पुंवत्' इत्यर्थातिदेशस्य फलमनेन दर्शितम् । अन्यथा स्त्रीत्वस्यानिवर्तनाल्लुङ् न स्यात् । 'गर्गान्पश्य' इत्यत्र नत्वं च सिद्धम् । रूपातिदेशे तु नैतत्सिध्येत् । सामान्यातिदेशे विशेषानतिदेशादित्याहुः । 'वृद्धो यूना-१३३६' इत्याद्यनुवर्तनान्नेह । गार्गी च वात्स्यायनौ च ॥ (१३३८) **पुमान् स्त्रिया** । 'वृद्धो यूना-' इति निवृत्तम् । 'सरूपाणाम्-२७३' इति त्वनुवर्तते 'भ्रातृपुत्रौ-१३३९' इत्युत्तरसूत्रारम्भात् । तेन 'हंसश्च वरटा च' इत्यत्र न भवति । अन्यथा स्यादेवातिप्रसङ्गः । हंसत्वजातिसाम्येन शब्दवैलक्षण्यस्य स्त्रीत्वपुंस्त्वमात्रप्रयुक्तत्वात् । स्यादेतत्, गौरियं गौश्चायं तयोः सहोक्तौ 'एतौ गावौ' इति नियमतो न स्यात्, तल्लक्षणविशेषाभावात् । किन्तु स्त्रीवाचकस्य पुंवाचकस्य वा 'सरूपाणाम् २७३' इत्येकशेषोऽनियमेन स्यात् ॥ अत्राहुः—तदितरकृतविशेषाभावे तात्पर्यान्न दोष इति । 'इन्द्रेन्द्राण्यौ' इत्यादौ त्वेकशेषो न भवति, स्त्रीत्वपुंस्त्वेतरपुंयोगकृतविशेषस्य सद्भावात् । स्यादेतत्, 'एतौ गावौ' इति नियमतो न स्यादिति मनोरमादौ यदुक्तं, तत्कथं संगच्छताम् । 'त्यदादितः शेषे

---

१ **मातरेति** । 'पिता मात्रा' इत्येकशेषस्य वैकल्पिकत्वात्पक्षे इदमिति भावः ॥ २ **प्रत्ययमात्रेति** । गोत्रयुवत्वप्रतीतिमात्रेत्यर्थः । तेन गर्गाश्च गार्ग्यायणाश्च गर्गा इति सिध्यति । मात्रपदेन प्रत्ययार्थकुत्सनादेः प्रकृत्यर्थस्य च प्रतीतेर्व्यवच्छेदः कृत्स्नमिति । एतदेवकारलभ्यम्—तत्कृत एव विशेषश्चेत् न तु तत्कृतातिरिक्त इत्यर्थात् ॥ ३ **अपत्यमिति** । 'पौत्रप्रभृत्यपत्यमित्यर्थः' इति शब्दरत्ने ॥ ४ **तदितरेति** । ताभ्यां स्त्रीत्वपुंस्त्वाभ्यामितरः पुंयोगादिः । तत्कृतविशेषादिविरहेत्यर्थः—इति शब्दरत्ने ॥ ५ **सद्भावादिति** । अत एव जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्नैकशेषः, औजसादौ विभक्तौ दीर्घकृतविशेषसद्भावात् ॥

दुहितृभ्याम् । १ । २ । ६८ । भ्राता च स्वसा च–भ्रातरौ । पुत्रश्च दुहिता च–पुत्रौ ॥ ( १३४० ) (सू) **नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्** । १ । २ । ६९ । अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत्स्यात्तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः । शुक्ला शाटी । शुक्लं वस्त्रम् । तदिदं शुक्लम् । तानीमानि शुक्लानि ॥ ( १३४१ ) (सू) **पिता मात्रा** । १ । २ । ७० । मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च–पितरौ, मातापितरौ ॥ ( १३४२ ) (सू) **श्वशुरः श्वश्र्वा** । १ । २ । ७१ । श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षण एव विशेषश्चेत् । श्वश्रूश्च श्वशुरश्च–श्वशुरौ, श्वश्रूश्वशुरौ ॥ ( १३४३ ) (सू) **त्यदादीनि सर्वैर्नित्यम्** । १ । २ । ७२ । सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । स च देवदत्तश्च–तौ ॥ (१३४४) (वा) **त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते** ॥ स च यश्च यौ । पूर्वशेषोऽपि दृश्यत इति भाष्यम् । स च यश्च–तौ ॥ ( १३४५ ) (वा) **त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि** ॥ सा च देवदत्तश्च–तौ । तच्च देवदत्तश्च यज्ञदत्ता च–तानि । (१३४६) पुंनपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते । तच्च देवदत्तश्च ते ॥ ( १३४७ ) (वा) **अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्** ॥ कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तच्च सा च अर्धपिप्पल्यौ–ते ॥ ( १३४८ ) (सू) **ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री** । १ । २ । ७३ । एषु सहविवक्षायां स्त्री शिष्यते । पुमान्[1338] स्त्रियेत्यस्यापवादः । गावः इमाः । ग्राम्येति किम् । रुरव इमे । पशुग्रहणं किम् ।

---

पुंनपुंसकतः ' इति नियमप्रवृत्त्या स्त्रीवाचिगोशब्दस्य शेषेऽपि ' एतौ गावौ ' इति नियमतः प्रयोगः सिद्ध्यत्येवेति चेत् । अत्र केचित्–दिक्प्रदर्शनमात्रमिदम् । 'नीलौ गावौ' 'सुन्दरौ गावौ ' इति नियमतो न स्यादित्युदाहर्तव्यम् ॥ अथवा–एतशब्दोऽत्रादन्तः कर्बुरवाची । एतश्च एता च एतौ गावौ, 'सरूपाणाम्–' इत्यनेन स्त्रीलिङ्गशेषे तु 'एते गावौ'इत्यपि स्यादिति यथाश्रुतमेव समर्थनीयमित्याहुः । तदपरे न क्षमन्ते–'त्यदादितः शेषे–१३४५' इति नियमाप्रवृत्तावपि 'पुमान् स्त्रिया १३३८' इति नियमप्रवृत्त्या 'नीलौ गावौ' 'एतौ गावौ' इति नियमतः सिद्ध्यत्येवेति । अत्र वदन्ति–'अद्वन्द्वतत्पुरुषविशेषणानाम्' इत्येतन्न्यायसिद्धमेव वचनम् । ' विशेष्ये यल्लिङ्गं तदेव विशेषणेष्वपि ' इति सर्वसंमतत्वात् । एवं च द्वन्द्वतत्पुरुषविशेषणेष्विव एकशेषविशेषणेऽपि 'एतौ' इत्यत्र ' त्यदादितः शेषे–१३४५ ' इत्यादिनियमाप्रवृत्त्या विशेष्यगतमेव लिङ्गं भवतीति स्त्रीवाचिगोशब्दस्य शेषे 'एते' इति स्यादेवेति 'एतौ गावौ' इति नियमतो न स्यादित्याक्षेपः संगच्छत एवेति दिक् ॥ (१३४०)**नपुंसकमन**—। अन्यतरस्यांग्रहणम् ' एकवच्च ' इत्यनेनैवानन्तर्यात्संबध्यते, न त्वेकशेषेणत्याशयेनाह—**क्लीबं शिष्यते तच्च वा एकवदिति** । अनपुंसकेनेति किम्, शुक्लं च शुक्लं च शुक्ले । अत्र 'एकवच्च' इति न भवति ॥ ' अस्य ' ग्रहणम् ' अस्यैवैकशेषस्य एकवद्भावो यथा विज्ञायेत' इत्येवमर्थम् । अन्यथा उत्तरत्राप्येकवदित्यस्यानुवृत्तिः शङ्क्येत ॥ **शुक्लः पट इत्यादि** । ' शुक्लः शुक्ला शुक्लम् ' इत्येव विग्रहः, ' पटः पटी ' इत्यादिप्रदर्शनं शुक्लशब्दस्य गुणिलिङ्गत्वस्फोरणाय ॥ ( १३४१ ) **पिता मात्रा** ॥ ( १३४३ ) **श्वशुरः श्वश्र्वा** । नन्वेतत्सूत्रद्वयं व्यर्थं पितृशब्देन मातापित्रोः श्वशुरशब्देन श्वश्रूश्वशुरयोर्लक्षणया बोधसंभवात् । न च 'सरूपाणाम्–२७३' इत्यादिसूत्रसमूहवदिदमपि सूत्रद्वयं द्वन्द्वनिवृत्त्यर्थमावश्यकमिति वाच्यम्, पक्षे तस्यापीष्टत्वादिति चेत् । अत्राहुः–पितृश्वशुरशब्दयोरिव मातृश्वश्रूशब्दयोः केवलयोरुक्तविषये प्रयोगं वारयितुमारम्भणीयमेव सूत्रद्वयम् । अनभिधानमाश्रित्य प्रत्याख्यानस्यानुचितत्वादिति ॥ **मातापितरावति** । 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति स्मृतेर्मातुरभ्यर्हितत्वात्पूर्वनिपातः । 'आनङ्[333] ऋतः' इत्यानङ् ॥ **श्वश्रूश्वशुरावति** । 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता' इति स्मृतेः श्वश्र्वा अभ्यर्हितत्वात्पूर्वनिपातः ॥ (१३४३) **त्यदादीनि सर्वैः**—। सर्वैः किम् । त्यदादिभिन्नैरपि सहोक्तौ यथा स्यात् । प्रत्यासत्त्या 'त्यदादिभिरेव सहोक्तौ' इत्यर्थो मा भूत् ॥ **यत्परमिति** । शब्दपरविप्रतिषेधादिति[1] भावः ॥ ( १३४५ ) **त्यदादित इति** । आद्यादित्वात्तसिः । 'त्यदादीनां शेषे सह विवक्षिते यः पुमान्, यच्च नपुंसकं, तद्वशेन लिङ्गप्रतिपादकानि भवन्ति, इति वाच्यमित्यर्थः । कानीत्याकाङ्क्षायामर्थात्त्यदादीन्येव ॥ (१३४७) अस्यापवादमाह—**अद्वन्द्वेति** । द्वन्द्वादिविशेषणानां पूर्वोक्तं नास्ति, किं तु विशेष्यनिघ्नतैवेत्यर्थः ॥ नन्वेवं'कुक्कुटमयूर्यौ' इत्यत्र द्वन्द्वस्य उभयपदार्थप्रधानत्वेन उभयोरपि विशेष्यत्वात् विशेष्यनिघ्नतायामपि ' कुक्कुटमयूर्याविमे' इति नियमतो न स्यादिति चेत् । अत्र नव्याः–'परवल्लिङ्गम्–११६३' इत्यनेन द्वन्द्वतत्पुरुषयोरुत्तरपदलिङ्गत्वादुत्तरपदलिङ्गस्यैव द्वन्द्वतत्पुरुषप्रतिपाद्यत्वेन तल्लिङ्गाधीनतैवानुप्रयोगस्येति न काचिदनुपपत्तिरिति ॥ **मयूरीकुक्कुटाविमाविति** । प्रकृतानुपयुक्तमप्येतत्प्रसङ्गादुक्तम् ॥ **तच्चेति** । पिप्पल्यर्धम् ॥ **सा चेति** । अर्धपिप्पली ॥ तत्पुरुषविशेषणमुदाहरति—**अर्धपिप्पल्यौ ते इति** । यद्यपि स्त्रीनपुंसकसाधारणः 'ते' इति प्रयोगः, तथापि 'तच्च, तच्च, सा च, अर्धपिप्पल्यस्ताः' इत्याद्युदाहरणमूह्यम् ॥ ( १३४८ ) **ग्राम्य**—। ग्रामे भवा ग्राम्याः । 'ग्रामाद्यखञौ १८५२' इति यः । लिङ्गद्वयेऽपि 'गावः' इति रूपस्य समानत्वात् स्त्रीलिङ्गशेषस्य फलमाह—**इमा इति** । एवं च 'इमे च, इमाश्च, इमाः' इति स्त्रीलिङ्गशेष एव भवति, न त्वत्र '[1345]त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि' इति पुँल्लिङ्गशेषः ॥ 'गाव इमाः' इति भाष्यो-

---

१ **शब्दपरेति** । गणपाठीयेत्यादिः । अत्र 'द्विपर्यन्तानाम्' इति न प्रवर्तते 'अहं च भवांश्च आवाम् ' इति भाष्यप्रयोगात् ॥ त्यदाद्यन्तर्गतयोरपि एकद्विशब्दयोर्नैकशेषः, अनभिधानात् । ध्वनितं चेदं सरूपसूत्रभाष्ये । द्वन्द्वोऽप्येतयोर्न एकादिनवान्तानां द्वन्द्वाभावस्य 'चार्थे' इति सूत्रशेषे भाष्ये ध्वनितत्वात् ॥

ब्राह्मणाः । सङ्घेषु किम् । एतौ गावौ । अतरुणेषु किम् । वत्सा इमे ॥ ( १३४९ ) वा० अनेकशफेष्विति वाच्यम् ॥ अश्वा इमे । इह सर्वत्र एकशेषे कृतेऽनेकसुबन्ताभावाद् द्वन्द्वो न । तेन शिरसी शिरांसीत्यादौ समासस्येत्यन्तोदात्तः प्राण्यङ्गत्वादेकवद्भावश्च न । पन्थानौ पन्थान इत्यादौ समासान्तो न ॥ इत्येकशेषः ॥

---

## अथ सर्वसमासशेषप्रकरणम् ।

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । परार्थाभिधानं वृत्तिः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स द्विविधः । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः । प्रयोगानर्होऽसाधुरलौकिकः यथा–राज्ञः पुरुषः । राजन् अस् पुरुष सु इति । अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा । समासश्चतुर्विध इति तु प्रायोवादः । अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि सहसुपेति समासविधानात् । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्वः । इत्यपि प्राचां वादः प्रायोऽभिप्रायः । सूपप्रति उन्मत्तगङ्गमित्याद्यव्ययीभावे, अतिमालादौ तत्पुरुषे, द्वित्राः इत्यादिबहुव्रीहौ, दन्तोष्ठमित्यादिद्वन्द्वे चाभावात् । तत्पुरुषविशेषः कर्मधारयः । तद्विशेषो द्विगुः । अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव । तत्पुरुषस्य क्वचिदेवेत्युक्तम् । किंच–सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा । सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥ १ ॥ सुपां सुपा–राजपुरुषः । तिङा–पर्यभूषत् । नाम्ना–कुम्भकारः । धातुना–कटप्रूः । अजा-

---

दाहरणादित्येके ॥ अन्ये तु–ग्राम्यपशुसङ्घविषयत्वाविशेषात् 'गावः' इतिवत् 'इमाः' इति च स्त्रीलिङ्गशेष एव स्यादिति नास्ति शङ्कावकाश इत्याहुः॥ **एतौ गावाविति** । एकशेषस्यानेकविषयत्वादेवानेकपरिग्रहे सिद्धे सङ्घग्रहणसामर्थ्याद्बहूनां समुदायोऽत्र गृह्यत इति भावः ॥ ( १३४९ ) **अनेकश–। एकशेषे कृते इति** । विभक्त्युत्पत्त्यनपेक्षत्वेनान्तरङ्गत्वादिति भावः ॥ नन्वेवं विषयभेदात्'द्वन्द्वापवाद एकशेषः' इत्युद्घोषः कथं प्रवर्तत इति चेत् । अत्राहुः–यद्यकेशेषे न स्यात्, तर्हि विभक्त्यावुत्पद्यमानायां द्वन्द्वः स्यात्, कृते त्वेकशेषे स न भवतीति तात्त्विकीं प्राप्तिमादायापवादोद्घोष इति ॥ **द्वन्द्वो नेति** । एतेन 'कृतद्वन्द्वानामेकशेषः' इति भ्रमो निरस्तः । न च तथैवास्तु, फले विशेषाभावादिति वाच्यमित्याह—**तेनेति** ॥ **पन्थानाविति** । न चात्र 'इतोऽत्सर्वनामस्थाने' इति लिङ्गात्समासान्तः सुपरिहरः 'इतोऽत्' इत्युक्तेऽपि 'सौ' इत्यनुवृत्त्या 'पन्थाः' इति सिद्धेरिति वाच्यम्, 'पथो विभाषा १३१३' इति समासान्ताभावे 'अपन्थानौ' इत्यादौ 'इतोऽत्–४९६' इति सूत्रस्य सावकाशत्वात् ॥ इत्येकशेषः ॥

---

प्रसङ्गादाह—**कृत्तद्धितेत्यादि** ॥ **पञ्च वृत्तय इति** । पञ्चानां 'वृत्तिः' इति पूर्वाचार्याणां संज्ञा इहाप्याश्रीयत इति भावः ॥ तल्लक्षणमाह—**परार्थेति** । प्रत्ययान्तर्भावेणापरपदार्थान्तर्भावेन वा यो विशिष्टोऽर्थः स परार्थः । स चाभिधीयते येन तत्परार्थाभिधानम् । अत एव तिङन्तं वृत्तिर्न भवति । तत्रैकार्थीभावानभ्युपगमात् । अन्यथा 'मृदु पचति' इत्यादौ फले मृदुत्वान्वयो न स्यात् 'सविशेषणानां वृत्तिर्न भवति, वृत्तस्य च विशेषणयोगो न' इत्यभ्युपगमादित्येके ॥ समर्थसूत्रे कैयटस्त्वाह–'परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः । यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते' इति ॥ **अविग्रह इति** । लौकिकविग्रहरहित इत्यर्थः ॥ **अस्वपदेति** । समस्यमानयावत्पदाघटित इत्यर्थः ॥ **द्वन्द्वबहुव्रीह्योरेवेति** । अनेकग्रहणतदनुवृत्तिभ्यां तद्विधानाद्बहुपदसमासत्वं तयोरेव संभवतीति भावः ॥ **क्वचिदेवेति**–द्व्यहजात इत्यादौ ॥ **नाम्नेति** । प्रातिपदिकेनेत्यर्थः ॥ **कुम्भकार इति** । अत्र हि सुबुत्पत्तेः प्रागेवोपपदसमासः ॥

---

१ **कृत्** कृदन्तः । **तद्धितस्ताद्धितघटितसमुदायपरः** । अत एव बहुजकचोर्न दोषः । **एकशेषेऽपि** द्वन्द्व इत्यनुवृत्त्या तद्विषये एतद्विधानेनैकार्थीभाव आवश्यकश्चार्थान्तर्भावेण बोधार्थ इत्यभिमानः । वस्तुतस्तु–समर्थसूत्रस्याधिकारत्वपक्षे एकशेषासंग्रहो भाष्ये नोक्त इति तस्य वृत्तित्वे न मानम्, शिष्टादेन स्ववृत्त्यैव तत्तत्समूहरूपार्थोपस्थानस्य भाष्ये स्पष्टमुक्तत्वेनैकशेषे परार्थान्वितस्वार्थोपस्थापकत्वाभावाद्वृत्तित्वे न मानमिति बोध्यम् ॥ २ **वृत्त्यर्थेति** । 'य एवार्थो 'रथं वहति' स एवार्थो 'रथस्य वोढा' इति' इति "तद्वहति रथ–" इति सूत्रभाष्योक्तेः "आख्यातं तद्धितान्तस्य यत्किंचिदुपदर्शकम् । गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥" इति हरिकारिकोक्तन्यायेन सर्वत्रैव विग्रहे वृत्तिसमान एव विशेषणविशेष्यभावः । आख्याते तु 'क्रियाप्रधानमाख्यातम्' इति निरुक्तात् क्रियाप्रधानशाब्दबोधस्य कृदन्ततद्धितान्तयोः 'सत्त्वप्रधानानि नामानि' इति निरुक्तादिप्रामाण्यात्सत्त्वप्रधानबोधस्य जायमानत्वेन वृत्तिविग्रहयोर्विशेषणविशेष्यभावव्यत्यासस्य दर्शनाद्वृत्त्यर्थावबोधकत्वाभावेन विग्रहत्वं न स्यादित्यरुच्यैवोक्तम्–यत्किंचिदिति । इति भावः ॥ परे तु 'यादृशो गुणप्रधानभावो लोकेऽर्थानां दृष्टः । स क्वचिद् विवक्षितः । तद्धितार्थविग्रहवाक्ये तिङन्ते लोकदृष्टस्य क्रियाप्राधान्यस्य वैपरीत्यं कर्तृप्रधानत्वं दृश्यते' इति हरिश्लोकार्थः । अत एवोक्तभाष्य एवकारार्थः स्वरसतः संगच्छते इति वदन्ति । हरिकारिकायां तद्धितपदं वृत्तिमात्रोपलक्षणम् ॥ **वाक्यमिति** । तत्तत्समासघटकत्वेनाभिमतानां पदानां तत्तत्समासप्रत्तियोग्यविभक्त्यन्तानां पृथक्प्रयोगरूपमित्यर्थः । संज्ञाविषयसमासे वाक्येन संज्ञानवगमेऽपि वृत्तिघटकपदज्ञापनाय समस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव । नित्यसमासत्वव्यवहारस्तु तस्य वाक्यस्य वृत्तिसमानार्थत्वाभावे न गौणो बोध्यः ॥

नम् । तिङां[1] तिङा—पिबतखादता । खादतमोदता । तिङां सुपा—कृन्त विचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा । एहीडादयोऽन्यपदार्थे इति मयूरव्यंसकादौ पाठात्समासः ॥　　॥ इति सर्वसमासशेषः ॥

---

अथ समासान्तप्रकरणम् ।

( १३५० ) सू॰ ऋक्पूरब्धूःपथामानक्षे । ५ । ४ । ७४ । अ अनक्ष इति च्छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः स्यात् । अक्षे या धूस्तदन्तस्य तु न । अर्धर्चः ॥ (१३५१) वा॰ अनृचबह्वृचावध्येतर्येव[2] ॥ नेह, अनृक्साम । बह्वृक् सूक्तम् । विष्णोः पूः—विष्णुपुरम् । क्लीबत्वं लोकात् । विमलापं सरः ॥ ( १३५२ ) सू॰ द्व्यन्तरुपसर्गेभ्योऽप ईत् । । ६ । ३ । ९७ । अप इति कृतसमासान्तस्यानुकरणम् । षष्ठ्यर्थे प्रथमा । एभ्योऽपस्य ईत्स्यात् । द्विर्गता आपो यस्मिन्निति—द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् । समापो[3] देवयजनमिति तु समा आपो यस्मिन्निति बोध्यम् । कृतसमासान्तग्रहणान्नेह । स्वप् स्वपी ॥ ( १३५३ ) वा॰ अवर्णान्ताद्वा ॥ प्रेपम् । परेपम् । प्रापम् । परापम् ॥ ( १३५४ ) सू॰ ऊदनोर्देशे । ६ । ३ । ९८ । अनोः परस्यापस्य ऊत्स्याद्देशे । अनूपो देशः । राजधुरा । अक्षे तु अक्षधूः । दृढधूरक्षः । सखिपथः । रम्यपथो देशः ॥ ( १३५५–१ ) सू॰ अच् प्रत्यन्ववपूर्वात्सामलोम्नः । ५ । ४ । ७५ । एतत्पूर्वात्सामलोमान्तात्समासादच् स्यात् । प्रतिसामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् ॥ ( १३५५–२ ) वा॰ कृष्णोदक्[4]पाण्डुसंख्यापूर्वाया भूमेरजिष्यते ॥ कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । द्विभूमः । प्रासादः ॥ ( १३५६ ) वा॰ संख्याया नदीगोदावरीभ्यां च ॥ पञ्चनदम् । सप्त-

---

कटप्रूः । अजस्रमिति । 'क्विब्वचिप्रच्छि–' इति वार्तिके 'नमिकम्पि–' इति सूत्रे च 'कटप्रूः' 'अजस्रम्' इति निपातनाद्धातुना समासः ॥ पिबतखादतेति । 'आख्यातमाख्यातेन–' इति मयूरव्यंसकादौ पाठात्समासः ॥ इति सर्वसमासशेषः ॥

---

(१३५०) ऋक्पूरब्धूः—। 'अ' इति लुप्तप्रथमैकवचनान्तं, 'समासान्ताः' इति त्वधिक्रियते तदाह—समासस्याप्रत्ययोऽन्तावयव इति । 'अनक्षे' इत्येतत् सामान्यतः श्रुतमपि धुरैव संबध्यते सामर्थ्यात्, नान्यैरित्याशयेन व्याचष्टे—अक्षे या धूरिति ॥ तदन्तस्य तु नेति । सूत्रे संबन्धिनोऽधिकरणत्वाविवक्षया सप्तमी । तेन 'अक्षसंबन्धिनी या धूस्तदन्तस्य न' इत्यर्थः । यद्यत्र 'अक्षे पूर्वपदे न' इति व्याख्यायेत, तर्हि 'दृढधूरक्षः' इत्यत्र निषेधो न स्यात् । यदि तु 'अक्षे समासार्थे न' इति व्याख्यायेत, तदा 'अक्षधूः' इत्यत्र न स्यात् । तस्मादुभयसंग्रहार्थमुक्तव्याख्यानमेव ज्यायः ॥ अर्धर्च इति । 'अर्धं नपुंसकम् १०३३' इति समासः । 'अर्धर्चाः पुंसि च १०६९' इति पुंस्त्वम् ॥ ( १३५१ ) अनृगित्यादि । अनुक्तसमासान्तत्वात् 'शेषाद्विभाषा' इति कप्प्रत्यये 'अनृक्कम्, बह्वृक्कम्' इत्यपि बोध्यम् ॥ (१३५२) विष्णुपुरमिति । यद्यपि पुरशब्देन समासेऽप्येतत्सिध्यति तथापि 'विष्णुपूः' इत्यनिष्टवारणाय सूत्रे पूर्ग्रहणम् ॥ द्व्यन्त–। कृतसमासान्तस्येति । 'येन विधिः–' इति सूत्रे 'आपस्तिष्ठन्ति स्वापस्तिष्ठन्ति' इति भाष्यादिति भावः ॥ अन्तरीपमित्यादि । अन्तर्गताः प्रतिकूलाः, संगताश्चापो अस्मिन्निति विग्रहः । उपसर्गग्रहणं प्रादेरुपलक्षणार्थम् ॥ समाप इति । अनुपसर्गत्वान्नेत्वमिति भावः । भाष्ये तु 'समाप ईत्त्वप्रतिषेधो वक्तव्यः' इत्युक्तम् । स च देवयजनरूपविशेषार्थपरः 'समीपसमृद्धि–' इति निर्देशात् 'समीपम्' इति भाष्योदाहरणाच्चेति ज्ञेयम् ॥ देवयजनमिति । देवा इज्यन्ते यस्मिन्निति व्युत्पत्त्या यज्ञभूमिः ॥ स्वबिति । 'न पूजनात् १३६९' इति समासान्ताभावः ॥ ( १३५३ ) अवर्णान्ताद्वेति । 'द्व्यन्तर्–' इति सूत्रे 'ईत्त्वमनवर्णात्' इति वक्तव्यम् । इह माभूत् 'प्रापं परापम्' इति भाष्योक्तेः, 'गतिश्च' इति सूत्रे 'प्रेपं परेपम्' इति भाष्योक्तेश्चेति भावः ॥ ( १३५४ ) ऊदनोः–। दीर्घोच्चारणं क्वचिच्छाखायामवग्रहार्थम्[6] । बह्वृचास्तु 'अनूपे गोमान् गोभिः' इत्यत्रानूपशब्दं नावगृह्णन्ति ॥ अनूप इति । अनुगता आपोऽस्मिन्नित्यनूपो देशः । 'जलप्रायमनूपं स्यात्' इत्यमरः ॥ (१३५५–१) अच्प्रत्य–। प्रतिसाममिति । अव्ययीभावः प्रादिसमासो बहुव्रीहिर्वा । एवमनुसामादावप्यूह्यम् ॥ (१३५५–२) कृष्णोदगिति । 'अच्' इति योगविभागेन गतार्थमिदम् । एवमुत्तरवार्तिकमपि ॥ कृष्णभूमः । इत्यादयो बहुव्रीहयः ॥

---

१ तिङां सुपेति । तिङन्तपूर्वपदकसुबन्तोत्तरपदकमित्यर्थः । 'अत्र 'सुपां तिङा' इत्यनेनैव 'तिङां सुपा' इत्यस्य संग्रहात्पञ्चविधत्वमेव युक्तम्' इति तु न सम्यक् । 'सुपां तिङा' इत्यस्य सुबन्तपूर्वपदकतिङन्तोत्तरपदसमासप्रदर्शकत्वेन 'तिङां सुपा' इत्यस्यार्थस्योक्तत्वेन भेदस्य स्पष्टमुपलभ्यमानत्वात् । अन्यथा छन्दः प्रस्तारेष्वपि गुरुलघुसंनिवेशानादरेण केवलं गुरुलघुगणनामात्राश्रयणेऽभीष्टसंख्यानुपपत्तिः स्यात् । किञ्च १२३ संख्याङ्कानामेव १३२–२१३–३२१–२३१–३१२ संख्यासु वर्तमानत्वेन पृथक् संख्यात्वानुपपत्तिः स्यादिति भावः॥ २ अध्येतर्यैवेति । तथा चोक्तं भाष्यकृता–'वक्तव्यमेवैतत्–'अनृचो माणवे बह्वृचश्चरणाख्यायाम्' इति ॥ ३ समापं नाम देवयजनम्' इति भाष्ये नपुंसकदर्शनात्समापशब्दस्य पुंस्त्वमसाध्विति बोध्यम् ॥ ४ कृष्णोदगिति–। संख्याया इति च । 'अच् प्रत्यन्वव–' इत्यत्र 'अच्' इति योगविभागसिद्धाभियुक्तोक्तिरिति बोध्यम् ॥ योगविभागस्य भाष्यानारूढत्वेनाप्रामाणिकत्वे पृषोदरादित्वेनैतानि साध्यानीति बोध्यम् ॥ ५ भाव इति । अवादिपूर्वपदकापूशब्दान्ताद्वा तु अनभिधानमेव कल्प्यम् ॥ ६ अवग्रहेति । अवग्रहे दीर्घश्रवणार्थमित्यर्थः ॥

गोदावरम् । अजिति योगविभागादन्यत्रापि । पद्मनाभः । (१३५७) ॥ अक्ष्णोऽदर्शनात् ।५।४।७६। अचक्षुःपर्यायाद- क्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव गवाक्षः॥ (१३५८) ॥ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः।५।४।७७। एते पञ्चविंशतिरजन्ता निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः। अविद्यमानानि चत्वार्यस्य अचतुरः। विचतुरः। सुचतुरः ॥ (१३५९) ॥ त्र्युपाभ्यां चतुरोऽजिष्यते ॥ त्रिचतुराः। चतुर्णां समीपे ये सन्ति ते-उपचतुराः ॥ तत एकादश द्वन्द्वाः। स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ च–अक्षिभ्रुवम् । दाराश्च गावश्च–दारगवम् । ऊरू च अष्ठीवन्तौ च–ऊर्वष्ठीवम् । निपातनाट्टिलोपः । पदष्ठीवम् । निपातनात्पादशब्दस्य पद्भावश्च । नक्तं च दिवा च–नक्तन्दिवम् । रात्रौ च दिवा च–रात्रिन्दिवम् । रात्रेर्मान्तत्वं निपात्यते । अहनि च दिवा च–अहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः ॥ सरजसमिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु सरजः पङ्कजम् ॥ निश्चितं श्रेयो-निःश्रेयसम् । तत्पुरुष एव । नेह। निःश्रेयान् पुरुषः । पुरुषस्यायुः-पुरुषायुषम् ॥ ततो द्विगू । द्व्यायुषम् । त्र्यायुषम् ॥ ततो द्वन्द्वः । ऋग्यजुषम् ॥ ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः ॥ शुनः समीपम्–उपशुनम् । टिलोपाभावः सम्प्रसारणं च निपात्यते ॥ गोष्ठे श्वा गोष्ठश्वः ॥ ( १३६० ) ॥ ब्रह्महस्तिभ्यां वर्चसः । ५ । ४ । ७८ । अच् स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् ॥ ( १३६१ ) ॥ पल्यराजभ्यां चेति वक्तव्यम् ॥ पल्यवर्चसम् । राजवर्चसम् ॥ ( १३६२ ) ॥ अवसमन्धेभ्यस्तमसः । ५ । ४ । ७९ । अवतमसम् । संतमसम् । अन्धयतीत्यन्धं पचाद्यच् । अन्धं तमः अन्धतमसम् ॥ ( १३६३ ) ॥ श्वसो वसीयःश्रेयसः । ५ । ४ । ८० । वसुशब्दः प्रशस्तवाची ततः ईयसुनि वसीयः । श्वस्शब्द उत्तरपदार्थप्रशंसामाशीर्विषयमाह । मयूरव्यंसकादित्वात्समासः । श्वोवसीयसम् । श्वः श्रेयसं ते भूयात् ॥ ( १३६४ ) ॥ अन्ववतप्ताद्रहसः ।५।४।८१। अनुरहसम् । अवरहसम् । तप्तरहसम् ॥ ( १३६५) ॥ प्रतेरुरसः सप्तमीस्थात् ।५।४।८२। उरसि इति–प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः ॥ ( १३६६ ) ॥ अनुगवमायामे । ५ । ४ । ८३ । एतन्निपात्यते दीर्घत्वे । अनुगवं यानम् । यस्य[३] चायाम इति समासः ॥ ( १३६७ ) ॥ द्विस्तावा त्रिस्तावा वेदिः । ५ । ४ । ८४ । अच्प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वाऽश्वमेधादौ तत्रेदं निपातनम् । वेदिरिति किम् । द्विस्तावती त्रिस्तावती रज्जुः ॥ ( १३६८ ) ॥ उपसर्गादध्वनः । ५ । ४ । ८५ । प्रगतोऽध्वानं

---

पद्मनाभ इति । ‘ पद्मं नाभावस्य ’ इति विग्रहः । गड्वादित्वात्सप्तम्यन्तस्य परनिपातः। ‘ पद्माकारा नाभिरस्य ’ इति वा। एवमूर्णनाभोऽपि ज्ञेयः । तत्र तु ‘ङ्यापोः संज्ञाछन्दसोः–’ इति ह्रस्वो विशेषः ॥(१३५७) अक्ष्णो–। दृश्यतेऽनेनेति दर्शनं चक्षुः, तद्वाचिनोऽक्षिशब्दस्य पर्युदासादमुख्यस्य ग्रहणमित्याशयेनाह—अचक्षुःपर्यायादिति । गवाक्ष इति । गावः किरणाः । अक्षिशब्दो रन्ध्रवाची, षष्ठीसमासः ॥ ( १३५८ ) अचतुर—। निपात्यन्त इति । निपातनफलं तु समासविशेषनियमः, टिलोपादिकं च तदाह––आद्या इति । बहुव्रीहय इति । बहुव्रीहय एवेत्यर्थः । तेन तत्पुरुषे अचत्वारो विचत्वार इत्येव भवतीति भावः । एवमुत्तरत्राप्यवधारणमूह्यम् ॥ ( १३५९ ) त्र्युपा–। त्रिचतुरा इति । त्रयश्चत्वारो वेति विग्रहः । ‘संख्ययाऽव्ययासन्ना–१२१५’ इति बहुव्रीहिः । ‘बहुव्रीहौ संख्येये–१२२५’ इति डचोऽपवादोऽच्॥अक्षिभ्रुवमिति । प्राण्यङ्गत्वादेकवत् ॥ ऊरू चाष्ठीवन्तौ चेति । ‘सक्थिः क्लीबे पुमानूरुः’ इत्यमरः। ‘जानूरुपर्वाष्ठीवदस्त्रियाम्’ इति च ॥ ऊर्वष्ठीवम् । पदष्ठीवमिति । प्राण्यङ्गत्वादेकवद्भावः॥ द्वन्द्वो निपात्यत इति । ‘विरूपाणामपि–१३३५’ इत्येकशेषं बाधित्वेति शेषः ॥ सरजसमिति । ‘अव्ययीभावे चाकाले ९६२’ इति सहस्य सभावः ॥ सरजः पङ्कजमिति । ‘ सरजसमकरन्दनिर्भरासु ’ इति माघप्रयोगस्तु चिन्त्य इति भावः ॥ निःश्रेयानिति । ‘निश्चितं श्रेयो येन’ इति विग्रहः । ‘निश्रेयस्कम्’ इति केषांचित्प्रत्युदाहरणमशुद्धम्, ‘ईयसश्च’ इति कपो निषेधात् ॥ गोष्ठे श्वेति । एतेन ‘सप्तमीतत्पुरुष एव’ इति नियमो दर्शितः । तेन षष्ठीतत्पुरुषे ‘ गोष्ठश्वा ’ इत्येव ॥ ( १३६० ) ब्रह्मवर्चसमिति । षष्ठीतत्पुरुषः । एवं हस्तिवर्चसमपि ॥ ( १३६१ ) पल्येति । ‘पलं मांसमर्हति’ इति पल्यो मांसभोजी तदीयं वर्चः पल्यवर्चसम् ॥ ( १३६२ ) अवसमन्धेभ्यः–। अवतमसमित्यादि । ‘ अवहीनं संततं च तमः ’ इति विग्रहः ॥ अन्धयतीति । ‘ अन्ध दृष्ट्युपघाते ’ चुरादिः ॥ अन्धमिति । गाढमित्यर्थः ॥ (१३६३) श्वसो–। ‘अवसुशब्दात्प्रशस्तवचनादीयसुन्’ इत्याकरविरुद्धं व्याचक्षाणा उपेक्ष्या इति ध्वनयति–वसुशब्द इति ॥ वसीय इति । ‘यः कामयेत वसीयान् स्याम्’ इति श्रौतप्रयोगोऽप्यत्रानुकूल इति भावः ॥ श्वस्शब्द इति । कालवाच्यप्ययं, प्रकृते त्वर्थविशेषपरः शक्तिस्वभावात्तमेवाह—उत्तरपदार्थप्रशंसामिति । उत्तरपदार्थभूतां प्रशंसामित्यर्थः ॥ आशीर्विषयमिति । षष्ठीसमासः । विषयशब्दस्याजहल्लिङ्गत्वात्पुँल्लिङ्गनिर्देशः ॥ ‘उत्तरपदार्थप्रशंसाया आशीर्विषयतामाह’ इति पाठान्तरं क्वचिदस्ति । उभयथाऽपि आशीर्विषयताया द्योतकोऽयमिति फलितोऽर्थः ॥ (१३६४) अन्वव—। ‘रहः’ इत्यप्रकाशमुच्यते । ‘अनुगतमवहीनं च रहः’ इति प्रादिसमासः । ‘अनुगतं रहोऽस्मिन्’ इत्यादिबहुव्रीहिर्वा ॥

---

१ स्वस्थानस्थः परान् द्वेष्टि यः स गोष्ठश्व उच्यते ॥

प्राध्वो रथः ॥ ( १३६९ ) (सू) न पूजनात् । ५ । ४ । ६९ । पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा ॥ ( १३७० ) (वा) स्वतिभ्यामेव ॥ नेह परमराजः । पूजनात्किम् । गामतिक्रान्तोऽतिगवः । बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवायं निषेधः । नेह । सुसक्थः । स्वक्षः ॥ ( १३७१ ) (सू) किमः क्षेपे । ५ । ४ । ७० । क्षेपे यः किंशब्दस्ततः परं यत्तदन्तात्समासान्ता न स्युः । कुत्सितो राजा—किंराजा । किंसखा । किंगौः ॥ क्षेपे किम् । किंराजः । किंसखः । किंगवः ॥ ( १३७२ ) (सू) नञस्तत्पुरुषात् ।५।४।७१ । समासान्तो न । अराजा । असखा ॥ तत्पुरुषात्किम् । अधुरं शकटम् ॥ ( १३७३ ) (सू) पथो विभाषा । ५ । ४ । ७२ । नञ्पूर्वात्पथो वा समासान्तः । अपथम् । अपन्थाः । तत्पुरुषादित्येव । अपथो देशः । अपथं वर्तते ॥ इति समासान्ताः ॥

---

## अथालुक्समासः ।

( १३७४ ) (सू) अलुगुत्तरपदे । ६ । ३ । १ । अलुगधिकारः प्रागानङः, उत्तरपदाधिकारस्त्वापादसमाप्तेः ॥ ( १३७५ ) (सू) पञ्चम्याः स्तोकादिभ्यः । ६ । ३ । २ । एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे । स्तोकान्मुक्तः । एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः । उत्तरपदे किम् । निष्क्रान्तः स्तोकान्निस्तोकः ॥ ( १३७६ ) (वा) ब्राह्मणाच्छंसिन उपसंख्यानम् ॥ ब्राह्मणे विहितानि शस्त्राणि उपचाराद् ब्राह्मणानि तानि शंसतीति ब्राह्मणाच्छंसी ऋत्विग्विशेषः । द्वितीयार्थे पञ्चम्युपसंख्यानादेव ॥ ( १३७७ ) (सू) ओजःसहोऽम्भस्तमसस्तृतीयायाः । ६ । ३ । ३ । ओजसाकृतमित्यादि ॥ ( १३७८ ) (वा) अञ्जस उपसंख्यानम् ॥ अञ्जसाकृतम् । आर्जवेन कृतमित्यर्थः ॥ ( १३७९ ) (वा) पुंसानुजो जनुषान्ध इति च ॥ यस्याग्रजः पुमान् स पुंसानुजः । जनुषान्धो जात्यन्धः ॥ ( १३८० ) (सू) मनसः संज्ञायाम् । ६ । ३ । ४ । मनसागुप्ता ॥ ( १३८१ ) (सू) आज्ञायिनि च । ६ । ३ । ५ । मनस इत्येव । मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ॥ ( १३८२ ) (सू) आत्मनश्च ।६।३।६ । आत्मनस्तृतीयाया अलुक् स्यात् ॥ (१३८३) (वा) पूरण इति वक्तव्यम्॥ पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः। आत्मनापञ्चमः। जनार्दनस्त्वात्मचतुर्थ एवेति बहुव्रीहिर्बोध्यः।

---

तमरहसमिति । 'तमं च तद्रहश्च' इति विग्रहः । 'परेणानधिगम्यम्' इत्यर्थः ॥ ( १३६९ ) न पूजनात् । इत्यतः प्रागिति । 'प्राग्बहुव्रीहिग्रहणं कर्तव्यम्' इति वार्तिकोक्तेरिति भावः ॥ ( १३७१ ) किमः क्षेपे । क्षेपग्रहणमिह शक्यमवक्तुम्, प्रतिपदोक्तपरिभाषया 'किं क्षेपे १०७२' इति विहितसमासस्यैव ग्रहणात् ॥ किंराज इत्यादि । किमत्र प्रश्ने । षष्ठीसमासः कर्मधारयो वा ॥ ( १३७२ ) नञस्तत्पुरुषात् । 'नञः' इति षष्ठी, 'नञः संबन्धी यस्तत्पुरुषो नञवयवकस्तस्मात्' इत्यर्थः ॥ ( १३७३ ) पथो विभाषा । अपथमिति । 'नस्तद्धिते ९८६' इति टिलोपः । 'अपथं नपुंसकम् ११६७' इति क्लीबत्वम् ॥ अपथं वर्तत इति । अर्थाभावेऽव्ययीभावः[2] ॥ इति ( सकलसमाससाधारणाः ) समासान्ताः ।

---

(१३७५) पञ्चम्याः स्तोकादिभ्यः । अलुक् स्यादिति । प्रसज्यप्रतिषेधोऽयम्, 'सुपो धातु—९५०'इत्यादिना प्राप्तो लुङ्न भवतीत्यर्थः ॥ स्तोकान्मुक्त इति । समासप्रयोजनमैकपद्यमैकस्वर्यं विशेषणयोगाभावश्च । किं च 'स्तोकान्मुक्तस्यापत्यं स्तौकामुक्तिः' 'स्तोकान्मुक्तायाः स्तौकान्मुक्तेयः' इति समुदायात्तद्धितोत्पत्तिरपि प्रयोजनम् । न च प्राथमिकसामासिकलुको निषेधेन चरितार्थत्वाद्वाह्यस्ताद्धितनिमित्तो लुग् दुर्वार इति शङ्क्यम्, 'सुपो धातु—९५०'इति शास्त्रस्यैकत्वादविशेषेण लुग्द्वयस्यापि निषेधाभ्युपगमात् । इह 'स्तोकान्तिक—१०१५' इति समासशास्त्रपठिता एव स्तोकादयो गृह्यन्ते, न तु 'करणे च स्तोकाल्पकृच्छ्र—८८५' इति सूत्रपठिताः ॥ समासे सुपो लुकि प्रसक्ते विधीयमानेनालुक्शास्त्रेण समासशास्त्रपठितानामाविलम्बेनोपस्थितेर्व्याप्तिन्यायाच्च । 'स्तोकान्तिक—१०१५' इत्यत्र ह्यर्थग्रहणादन्यान्यपि बहूनि गृह्यन्ते तदेतन्मनसि निधायाह—एवमिति । द्विवचनबहुवचनान्तानां तु समासो नेष्यते, अनभिधानात् । तेन 'स्तोकाभ्यां मुक्तः' इत्यादौ वाक्यमेव॥(१३७६)ब्राह्मणा—। शस्त्राणीति । 'प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्, अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्' इति याज्ञिकानां, व्यवहारः ॥ ( १३७७ ) ओजःस—। ओजसाकृतमिति । 'कर्तृकरणे कृता—१००४' इति समासः । कथं तर्हि 'सततनैशतमोवृतमन्यतः' इति भारविः । अत्राहुः 'वृतु वर्तने' इत्यस्मात् 'घञर्थे कविधानम्' इति भावे कप्रत्यये तदन्तेन षष्ठीसमासाश्रयणान्न दोष इति । यत्तु केवलपदाधिकार एव तदन्तविधिर्न तूत्तरपदाधिकारे । तथा च 'नैशतमसा' इति तृतीयाया अलुङ्न भवतीति दुर्घटवृत्त्यादावुक्तम् । तन्न, 'पदाङ्गाधिकारे' इत्यत्र 'इष्टकचितं, पक्वेष्टकाचितम्' इति भाष्योदाहरणादुत्तरपदाधिकारेऽपि तदन्तविधिप्रवृत्तेः ॥ ( १३७९) जनुषेति । 'जनुर्जननजन्मानि' इत्यमरः ॥ ( १३८२ ) आत्मनश्च । आत्मनापञ्चम इति । 'तृतीया' इति योगविभागात् समासः ॥ इह प्रकृत्यादित्वात्प्रथमार्थे तृतीयेत्येके ॥ 'आत्मना कृतः पञ्चमः' इति करोतिक्रियापेक्षा सेत्यन्ये ॥ बहुव्रीहिर्बोध्य इति । एकस्याप्यौपाधिकभेदं परिकल्प्य वर्ति-

---

१ 'आत्मनश्च पूरणे' इति समुदितस्यैव वार्तिकत्वमिति भाष्याक्षरस्वारस्यम् । 'वैयाकरणाख्यायां चतुर्थ्याः'इत्यत्र वार्तिकस्थस्यैव 'आत्मनः' इत्यस्य 'काम्ये रोरेव' इति वार्तिकस्य 'इणः षः' इत्यत्रेवानुवृत्तिर्बोध्या । वस्तुतस्तु, आत्मनेपदम् परस्मैपदम् इति निपातनादेव समासालुकोः साधनेन 'वैयाकरणाख्यायां परस्य च' इति सूत्रद्वयस्य प्रत्याख्यातत्वेन नानुवृत्त्यावश्यकतेति बोध्यम् ॥ २ अव्ययीभाव इति । नञाऽव्ययीभावं स्वीकुर्वतां मते इदम् ॥

पूरणे किम् । आत्मकृतम् ॥ (१३८४) (सू) **वैयाकरणाख्यायां चतुर्थ्याः** । ६ । ३ । ७ । आत्मन इत्येव । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थी । चतुर्थीति योगविभागात्समासः (१३८५) (सू) **परस्य च** । ६ । ३ । ८ । परस्मैपदम् । परस्मैभाषा ॥ ( १३८६ ) (सू) **हलदन्तात्सप्तम्याः संज्ञायाम्** । ६ । ३ । ९ । हलन्तादन्ताच्च सप्तम्या अलुक् संज्ञायाम् । त्वचिसारः ॥ ( १३८७ ) (सू) **गवियुधिभ्यां स्थिरः** । ८ । ३ । ९५ । आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । अत्र गवीति वचनादेवालुक् । युधिष्ठिरः । अरण्येतिलकः । अत्र संज्ञायामिति सप्तमीसमासः ॥ (१३८८) (वा) **हृद्द्युभ्यां च** ॥ हृदिस्पृक् । दिविस्पृक् ॥ ( १३८९ ) (सू) **कारनाम्नि च प्राचां हलादौ** । ६ । ३ । १० । प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक् । मुकुटेकार्षापणम् । दृषदिमाषकः । पूर्वेण सिद्धे नियमार्थम् । कारनाम्न्येव, प्राचामेव, हलादावेवेति । कारनाम्नि किम् । अभ्यर्हितपशुः । कारादन्यस्यैतद्देयस्य नाम । प्राचां किम् । यूथपशुः । हलादौ किम् । अविकटोरणः । हलदन्तात्किम् । नद्यां दोहो-नदीदोहः ॥ ( १३९० ) (सू) **मध्याद्गुरौ** । ६ । ३ । ११ । मध्येगुरुः ॥ ( १३९१ ) (वा) **अन्ताच्च** ॥ अन्तेगुरुः ( १३९२ ) (सू) **अमूर्धमस्तकात्स्वाङ्गादकामे** । ६ । ३ । १२ । कण्ठेकालः । उरसिलोमा । अमूर्धमस्तकात्किम् । मूर्धशिखः । मस्तकशिखः । अकामे किम् । मुखे कामोऽस्य-मुखकामः ( १३९३ ) (सू) **बन्धे च विभाषा** । ६ । ३ । १३ । हलदन्तात्सप्तम्या अलुक् । हस्ते बन्धः हस्तबन्धः । हलदन्तेति किम् । गुप्तिबन्धः ॥ (१३९४) (सू) **तत्पुरुषे कृति बहुलम्** । ६ । ३ । १४ । स्तम्बेरमः, स्तम्बरमः । कर्णेजपः, कर्णजपः । क्वचिन्न । कुरुचरः ॥ ( १३९५ ) (सू) **प्रावृट्शरत्कालदिवां जे** । ६ । ३ । १५ । प्रावृषिजः । शरदिजः । कालेजः । दिवेजः । पूर्वस्यायं प्रपञ्चः ॥ ( १३९६ ) (सू) **विभाषा वर्षक्षरशरवरात्** । ६ । ३ । १६ । एभ्यः सप्तम्या अलुग् जे । वर्षेजः, वर्षजः । क्षरेजः, क्षरजः । शरेजः, शरजः । वरेजः, वरजः ॥ ( १३९७ ) (सू) **घकालतनेषु कालनाम्नः** । ६ । ३ । १७ । सप्तम्या विभाषाऽलुक् स्यात् । घे-पूर्वाह्णेतरे, पूर्वाह्णतरे । पूर्वाह्णेतमे, पूर्वाह्णतमे । काले-पूर्वाह्णेकाले, पूर्वाह्णकाले । तने-पूर्वाह्णेतने, पूर्वाह्णतने ॥ (१३९८) (सू) **शयवासवासिष्वकालात्** । ६ । ३ । १८ । खेशयः, खशयः । ग्रामेवासः, ग्रामवासः । ग्रामेवासी, ग्रामवासी । हलदन्तादित्येव । भूमिशयः ॥ ( १३९९ ) (वा) **अपो योनियन्मतुषु** ॥ अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः । अप्सु भवोऽप्सव्यः । अप्सुमन्तावाज्यभागौ ॥ ( १४०० ) (सू) **नेन्सिद्धबध्नातिषु च** । ६ । ३ ।

---

( पदार्थ ) त्वमन्यपदार्थत्वं च विवक्षणीयमिति भावः ॥ ( १३८४ ) **वैयाकरणा-** । व्याकरणे भवा वैयाकरणी । 'अणृगयनादिभ्यः २०१५' इत्यण् । सा चासावाख्या चेति कर्मधारयः ॥ **आत्मन इत्येवेति** । इह 'आत्मनः' इत्यननुवर्त्य 'वैयाकरणाख्यायां चतुर्थ्या अलुक्' इति व्याख्याने तु 'परस्य च १३८५' इत्युत्तरसूत्रं त्यक्तुं शक्यमित्याहुः ॥ **आत्मनेभाषेति** । यद्यपीयमाख्या अष्टाध्याय्यां नास्ति, तथापि धातुपाठेऽस्तीति[3] भावः ॥ प्रकृतिविकृतिभावविरहात् 'रन्धनाय स्थाली' इतिवत्समासाभावमाशङ्क्याह—**योगविभागादिति** । इहालुग्विधिसामर्थ्यादपि समासः सुवचः ॥ ( १३८५ ) **परस्य च** । परशब्दस्य च या चतुर्थी तस्या अलुक् स्याद्वैयाकरणाख्यायाम् ॥ ( १३८७ ) **गवियुधि--** । स्थिरशब्दोऽयम् 'अजिरशिशिर-४२५२' इत्यौणादिकः किरच्प्रत्ययान्तस्तिष्ठतेर्निष्पन्नः । 'सात्पदाद्योः २८६३' इति निषिधे प्राप्ते वचनारम्भः॥ **वचनादेवेति** । न च लुकं बाधित्वा परत्वादन्तरङ्गत्वाच्चावादेशे 'हलदन्तात्सप्तम्याः-१३८६' इत्येवालुक् सिध्यतीति वाच्यम्, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति लुको बलीयस्त्वादिति भावः ॥ ( १३८८ ) **हृदिस्पृक् दिविस्पृगिति** । हृदयं दिवं च स्पृशतीति विग्रहः । अलुग्विधिसामर्थ्यात्कर्मणि सप्तमी, कर्मणोऽधिकरणत्वविवक्षया वा ॥ (१३८९) **कारना-** । **अविकटोरण इति** । 'संघाते कटच् २४७४' इति कटच्प्रत्ययान्तः । उरणो मेषः ॥ ( १३९३ ) **बन्धे च विभाषा** । बन्ध इति घञन्तः ॥ **हस्तेबन्ध इति** । बहुव्रीहिरयम् । तत्पुरुषे तु 'नेन्सिद्धबध्नातिषु च १४००' इति वक्ष्यमाणेन निषेध एवेत्याहुः ॥ ( १३९९ ) **अपो यो-** । **अप्सव्य इति** । दिगादित्वाद्यति ओर्गुणे वान्तादेशः ॥ प्राचा तु यतः स्थाने जं पठित्वा 'अप्सुजः' इत्युदाहृतं तदाकरविरुद्धम् । **"जे चरे च वक्तव्यम्"** । 'अप्सुजः । अप्सुचरः' इति भाष्ये वचनान्तरदर्शनाच्च ॥ केचित्तु 'अप्सुजः' इत्युक्तोदाहरणद्वयेऽपि 'हलदन्तात्-१३८६' इत्यलुकमाहुः ॥ **अप्सुमन्ताविति** । कारीर्याम् 'अप्स्वग्ने सधिष्टव' 'अप्सु मे सोमो अब्रवीत्' इत्याज्यभागमन्त्रौ स्तः । तत्र ह्यप्सुशब्दोऽस्तीति तद्द्वारा आज्यभागयोरप्यप्सुमत्त्वम् ॥ प्राचा तु 'मतिषु' इति पठित्वा 'अप्सुमतिः' इत्युदाहृतम् ॥ अत्र केचित्—अप्स्वित्येतदनुकरणशब्दः, सप्तम्यन्तो वा । अन्त्ये सप्तम्यन्तात्प्रथमाया अभावेन मतुबेव दुर्लभः । आद्ये तु लुकः प्राप्तिरेव नास्ति, सप्तम्यभावात् । तथा च-'मतिषु' इति प्राचोक्तः पाठ एव युक्तः । न च स पाठो भाष्यादौ न दृष्ट इति वाच्यम्, 'मतिषु' इति पाठस्य 'अप्सुमतिः' इत्युदाहरणस्य च भाष्यवृत्त्यादिपुस्तकेषु दृश्यमानत्वेन मतुष्विति पाठस्यैव क्वाप्यदर्शनाद् व्यर्थत्वाच्च । 'अस्यवामीयम्' 'कथाशुभीयम्' इत्या-

---

१ **कारेति** । वणिक्पशुपालकर्षकेभ्यो राजग्राह्यो भागः करः स एव कारः । हले । द्विपदिकादयोऽविकटोरणश्च प्राग्देशे कारः । यूथपश्वादय उदग्देशे ॥ २ **अभ्यर्हितेति** । 'षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातकः' इति सूत्रेण राज्ञोऽर्हणीयत्वेन मधुपर्के पशोर्ग्राह्यत्वेऽपि न तत् करत्वेन, आचार्यादीनामपि मधुपर्केऽर्हणीयत्वादिति भावः ॥ ३ **धातुपाठ इति** । धातुसूत्रगणोणादिवाक्यात्मकं पञ्चप्रस्थानं व्याकरणमिति स्वीकाराद् धातुपाठस्यापि व्याकरणत्वमिति भावः ॥

१९ । हलन्तादिषु सप्तम्या अलुङ्न स्थण्डिलशायी । साङ्काश्यसिद्धः । चक्रबद्धः ॥ ( १४०१ ) (सू) स्थे च भाषायाम् । ६ । ३ । २० । सप्तम्या अलुङ्न । समस्थः । भाषायां किम् । कृष्णोऽस्याखरेष्ठः ॥ ( १४०२ ) (सू) षष्ठ्या आक्रोशे । ६ । ३ । २१ । चौरस्य कुलम् । आक्रोशे किम् । ब्राह्मणकुलम् ॥ ( १४०३ ) (वा) वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ॥ वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ॥ ( १४०४ ) (वा) आमुष्यायणाऽऽमुष्यपुत्रिकाऽऽमुष्यकुलिकेति च ॥ अमुष्यापत्यम्–आमुष्यायणः । नडादित्वात्फक् । अमुष्य पुत्रस्य भावः–आमुष्यपुत्रिका । मनोज्ञादित्वाद्वुञ् । एवमामुष्यकुलिका ॥ ( १४०५ ) (वा) देवानांप्रिय इति च [ मूर्खे ][1] ॥ अन्यत्र देवप्रियः ॥ ( १४०६ ) (वा) शेपपुच्छलाङ्गूलेषु शुनः ॥ शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः ॥ ( १४०७ ) (वा) दिवश्च दासे ॥ दिवोदासः ॥ (१४०८) (सू) पुत्रेऽन्यतरस्याम् । ६ । ३ । २२ । षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायाम् । दास्याःपुत्रः, दासीपुत्रः । निन्दायां किम् । ब्राह्मणीपुत्रः ॥ ( १४०९ ) (सू) ऋतो विद्यायोनिसंबन्धेभ्यः । ६ । ३ । २३ । विद्यासंबन्धयोनिसंबन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः ॥ ( १४१० ) (वा) विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् ॥ नेह । होतृधनम् ॥ ( १४११ ) (सू) विभाषा स्वसृपत्योः । ६ । ३ । २४ । ऋदन्तात्षष्ठ्या अलुग् वा स्वसृपत्योः परयोः ॥ ( १४१२ ) (सू) मातुःपितुर्भ्यामन्यतरस्याम् । ८ । ३ । ८५ । आभ्यां स्वसुः सस्य षो वा स्यात् समासे । मातुःस्वसा, मातुःष्वसा । पितुःस्वसा, पितुःष्वसा । लुक्पक्षे तु–॥ ( १४१३ ) (सू) मातृपितृभ्यां स्वसा । ८ । ३ । ८४ । आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे । मातृष्वसा । पितृष्वसा । असमासे तु–मातुः स्वसा । पितुः स्वसा ॥ इत्यलुक्समासः ॥

---

## अथ समासाश्रयविधयः ।

( १४१४ ) (सू) घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । ६ । ३ । ४३ । भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूपकल्पप्प्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु । ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रेत्यादि । ब्रुवः पचाद्यचि वच्यादेशगुणयोरभावोऽपि निपात्यते । चेलडादीनि वृत्तिविषये कुत्सनवाचीनि तैः कुत्सितानि कुत्सनैरिति समासः । ङ्यः किम् । दत्तातरा । भाषितपुंस्कात्किम् । आमलकीतरा । कुवलीतरा (१४१५) (सू) नद्याः शेषस्यान्यतरस्याम् । ६ । ३ । ४४ । अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात् । ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । स्त्रितरा । स्त्रीतरा ॥ ( १४१६ ) (वा) कृन्नद्या

---

दाविव लुकि कर्तव्ये 'प्रकृतिवदनुकरणम्' इत्यतिदेशाप्रवृत्त्यैवेष्टसिद्धेरित्याहुः॥ (१४००) नेन्सिद्ध–। चक्रबन्ध इति। 'तत्पुरुषे' इत्यनुवृत्तेस्तत्पुरुष एवायं निषेधः । बहुव्रीहौ तु 'बन्धे च विभाषा १३९३' इति विकल्प एव ॥ (१४०३) वाग्दि–। पश्यतोहर इति । 'पश्यन्तमनादृत्य हरति' इत्यर्थः । 'षष्ठी चानादरे ९३३' इति षष्ठी ॥ ( १४०५ ) देवानामिति । 'मूर्खा हि देवानां प्रीतिं जनयन्तीति देवपशुत्वादिति' मनोरमाया भावः । ब्रह्मज्ञानरहितत्वात्संसारिणो मूर्खाः । ते तु यागादिकर्माण्यनुतिष्ठन्तः पुरोडाशादिप्रदानद्वारा देवानामत्यन्तं प्रीतिं जनयन्ति । ब्रह्मज्ञानिनस्तु न तथा, तेषां यागाद्यनुष्ठानाभावात् । अतो गवादिस्थानापन्नत्वान्मूर्खा एव देवपशव इति ॥ ( १४०६ ) शेपपुच्छेति । शुन इव शेपमस्य शुनःशेपः । यद्यपि शेपस्शब्दः सकारान्तः 'गौर्लिङ्गं चिह्नशेपसोः' इत्यमरप्रयोगात् । तथापि शीङो निपातनादौणादिके पप्रत्यये अकारान्तोऽप्यस्त्येव । तथा च मन्त्रः 'यस्यामुशन्तः प्रहराम शेपम्' इति । 'चिह्नशेफयोः' इति पाठे तु शेफशब्दस्य सकारान्तत्वशङ्कैव नास्तीति बोध्यम् । शुनःपुच्छ इत्यादावपि बहुव्रीहिः त्रयोऽप्यमी ऋषिविशेषाणां संज्ञाः ॥ ( १४११ ) 'मातुःपितुर्भ्याम्' इति सूत्रे 'समासेऽङ्गुलेः सङ्गः १४६६' इत्यतः समास इत्यनुवर्तितम् । तत्फलं दर्शयति–असमासे त्विति । वाक्ये वैकल्पिकमपि षत्वं नेत्यर्थः ॥ इत्यलुक्समासः ॥

---

( १४१४ ) घरूपकल्प–। 'तरप्तमपौ घः २७१७' 'प्रशंसायां रूपप् २७३५' 'चिल वसने' 'चेलट्' इति पचादौ टित्पठ्यते, ङीबर्थम्॥ प्रत्ययेष्विति। लेखग्रहणेन 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापयिष्यत इति भावः॥ ब्राह्मणितरेति । 'जातेश्च १२१४' इति निषेधात् 'तसिलादिषु–१२०१' इति न पुंवद्भावः ॥ चेलीति । पचादौ 'चेलट्' इति पाठात् 'टिड्ढा–६५१' इति ङीप् ॥ आमलकीति । आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिङ्गौ ॥ (१४१५) नद्याः–। उक्तादन्यः शेषः, स च द्विधेत्याह–अङ्यन्तेति । उपलक्षणमेतत् । 'भाषितपुंस्क' इत्यपि नेह संबध्यते इत्याशयेनाह—

---

[1] भाष्ये तु–'मूर्खे' इति न दृश्यते । तथाप्यस्य वार्तिकस्य "षष्ठ्या आक्रोशे" इति सूत्रप्रपञ्चत्वेन 'आक्रोशे' इत्यस्यैव प्रपञ्चार्थमेव वर्धितं भवेत् ॥ अत एव 'स्याद् देवानांप्रियः क्षेपे' इति त्रिकाण्डशेषे समुपलभ्यते ॥

श्च॥ लक्ष्मीतरा॥ (१४१७) (सू) उगितश्च ।६।३।४५। उगितः परा[1] या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् । विदुषितरा । ह्रस्वाभावपक्षे तु तसिलादिष्विति पुंवत् । विद्वत्तरा । वृत्त्यादिषु विदुषीतरेत्यप्युदाहृतं तन्निर्मूलम्[2]॥ (१४१८) (सू) हृदयस्य हृल्लेखयदण्लासेषु।६।३।५०।हृदयं लिखतीति हृल्लेखः। हृदयस्य प्रियं हृद्यम्।हृदयस्येदं हार्दम्।हृल्लासः।लेखेत्यणन्तस्य ग्रहणम् । घञि तु हृदयलेखः । लेखग्रहणमेव ज्ञापकम् ॥ (१४१९) (प) उत्तरपदाधिकारे तदन्तविधिर्नास्तीति॥ ( १४२० ) (सू) वा शोकष्यञ्रोगेषु । ६ । ३ । ५१ । हृच्छोकः, हृदयशोकः । सौहार्द्यम् , सौहृदय्यम् । हृद्रोगः, हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति । तेन सिद्धे प्रपञ्चार्थमिदम्[3] ॥ ( १४२१ ) (सू) पादस्य पदाज्यातिगोपहतेषु । ६ । ३ । ५२ । एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः । अज्यतिभ्यां पादे चेतीण् प्रत्ययः । अजेर्व्यभावो निपातनात् । पदगः । पदोपहतः ॥ ( १४२२ ) (सू) पद्यत्यतदर्थे । ६ । ३ । ५३ । पादस्य पत्स्यादतदर्थे यति परे । पादौ विध्यन्ति—पद्याः शर्कराः । अतदर्थे किम् । पादार्थमुदकं पाद्यम् । पादार्घाभ्यां चेति यत् ॥ ( १४२३ ) (वा) इके चरतावुपसंख्यानम् ॥ पादाभ्यां चरति पदिकः । पर्पादिभ्यः ष्ठन् ॥ ( १४२४ ) (सू) हिमकाषिहतिषु च । ६ । ३ । ५४ । पद्धिमम् । पत्काषी । पद्धतिः ॥ ( १४२५ ) (सू) ऋचः शे । ६ । ३ । ५५ । ऋचः पादस्य पत्स्याच्छे परे । गायत्रीं पच्छः शंसति । पादंपादमित्यर्थः । ऋचः किम् । पादशः कार्षापणं ददाति ॥ ( १४२६ ) (सू) वा घोषमिश्रशब्देषु । ६ । ३ । ५६ । पादस्य पत् । पद्घोषः, पादघोषः । पन्मिश्रः पादमिश्रः, । पच्छब्दः, पादशब्दः॥ ( १४२७ ) (वा) निष्के चेति वाच्यम् ॥ पन्निष्कः, पादनिष्कः ॥ ( १४२८ ) (सू) उदकस्योदः[4] संज्ञायाम् । ६ । ३ । ५७ । उदमेघः ॥ ( १४२९ ) (वा) उत्तरपदस्य चेति वक्तव्यम् ॥ क्षीरोदः ॥ ( १४३० ) (सू) पेषंवासवाहनधिषु च । ६ । ३ । ५८ । उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः । समुद्रे तु पूर्वेण सिद्धम् ॥ (१४३१) (सू) एकहलादौ पूरयितव्येऽन्यतरस्याम् । ६ । ३ । ५९ । उदकुम्भः । उदककुम्भः । एकेति किम् । उदकस्थाली । पूरयितव्ये किम् । उदकपर्वतः ॥ ( १४३२) (सू) मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च । ६ । ३ । ६० । उदमन्थः, उदकमन्थः । उदौदनः, उदकौदनः ॥ (१४३३) (सू) इको ह्रस्वोऽङ्यो गालवस्य ।६।३।६१ । इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः, ग्रामणीपुत्रः । इकः किम् । रमापतिः। अङ्य इति किम् । गौरीपतिः । गालवग्रहणं पूजार्थम् । अन्यतरस्यामित्यनुवृत्तेः॥ ( १४३४ ) (वा) इयङुवङ्भाविनामव्ययानां च नेति वाच्यम् ॥ श्रीमदः । भ्रूभङ्गः । शुक्लीभावः ॥ ( १४३५ )

---

क्ष्मीतरेति ॥ (१४१७) उगितः परा या नदीति । ईदूतोः केवलयोरपि नदीसंज्ञेत्याश्रित्येदमुक्तम्॥ विदुषितरेति । 'उगितश्च ६१९' इति ङीपि 'वसोः संप्रसारणम् ५८२' वृत्त्यादिष्विति । प्रक्रियातद्व्याख्यानानि चादिशब्दग्राह्याणि ॥ अणन्तस्य ग्रहणमिति । अण्प्रत्ययसाहचर्याल्लेखशब्दोऽणन्त एव निर्दिष्ट इति भावः ॥ नन्वेवं लेखग्रहणमेव व्यर्थं स्यादण्ग्रहणेनैव सिद्धेरत आह—ज्ञापकमिति । अत एव 'घंरूपंकल्पेषु तदन्तग्रहणं न' इति व्याख्यातम् ॥ ( १४२० ) सौहार्द्यमिति । ब्राह्मणादित्वात् ष्यञ्, 'हृद्भगसिन्ध्वन्ते—१६११' इत्युभयपदवृद्धिः ॥ ( १४२१ ) पादस्य पदा—। उत्तरसूत्रे पद्ग्रहणात्पदेत्ययमदन्तः, सौत्रो विभक्तिलुक् । तदाह—पद इत्यदन्त आदेश इति । तेन 'पदगः' इत्यादि सिद्धम् ॥ ( १४२२ ) पद्या इति । 'विध्यत्यधनुषा—२२२९' इति यत् ॥ पाद्यमिति । 'पादार्घाभ्यां च—२८२२' इति यत् । पूर्वसूत्रे आज्यात्यादिषु प्राण्यङ्गस्यैव करणत्वसंभवादिहापि तद्वचन एव पादशब्दो गृह्यते, न परिमाणवचनः । तेन 'द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यं, त्रिपाद्यम्' इत्यत्र 'पणपादमाष—२३१३' इति यति पदादेशो न भवति । एतच्च वृत्तिहरदत्तग्रन्थयोः स्पष्टम् ॥ ( १४२४ ) पत्काशीति । 'सुप्यजातौ—३९३१' इति णिनिः ॥ पद्धतिरिति । कर्मणि क्तिन् ॥ ( १४२५ ) ऋचः । 'शे' इति शस्प्रत्ययस्येदमनुकरणम्, लोमादिषु पादशब्दस्य पाठाभावान्मत्वर्थे शो न संभवतीति भावः ॥ पच्छ इति । 'संख्यैकवचनाच्च वीप्सायाम्—२८४७' इति शस्॥ (१४२८) उदमेघ इति । सादृश्यात्पुरुषस्येयं संज्ञा ॥ (१४३०) पेषंवास—। उदपेषमिति । 'स्नेहने पिषः—५१८१' इति णमुल् ॥ उदधिरिति । उदकं धीयतेऽस्मिन्निति विग्रहः । 'कर्मण्यधिकरणे च—५०६६' इति किप्रत्ययः॥ (१४३२) मन्थौद—। उदमन्थ इति । द्रवद्रव्यसंस्कृताः सक्तवो मन्थः । 'उदकेन मन्थः' इति विग्रहे 'तृतीया' इति योगविभागात्समास इति हरदत्तः ॥ ( १४३४ ) इयङु—। शुक्लीभाव इति । 'ऊर्यादिच्विडाचश्च—

---

[1] परेति । विहितेत्यर्थः । तेनेषुमतोऽपत्यमैषुमती ततस्तरे एषुमतितरेत्यत्र नित्यं ह्रस्व इति 'धुषोरनाकौ' इति सूत्रभाष्ये स्पष्टम् ॥ [2] तन्निर्मूलमिति । न हि स्वयमप्रवर्तमानोऽपि ह्रस्वः पुंवत्त्वं बाधत इति न्याय्यमिति भावः ॥ शमिनीतरेति घिनुणसूत्रभाष्यप्रयोगे तु ताच्छीलिकानां रूढिशब्दतया संज्ञाशब्दत्वेन 'संज्ञापूरण्योश्च' इति निषेधान्न दोषः ॥ [3] प्रपञ्चार्थमिति । प्रयोगद्वयमेष्वेव, अन्यत्र तु हृदयशब्दस्यैव प्रयोग इति व्यवस्थार्थमिति भावः ॥ [4] उदकस्योद इति । प्रसन्नोदं सर इति त्वसाध्वेव उदकपर्यायोदशब्दाङ्गीकारे 'एकहलादौ' इति व्यर्थमेव स्यात् । प्रपञ्चार्थमित्यत्रेव व्याख्याङ्गीकारेणोदशब्दाङ्गीकारेऽपि 'प्रसन्नोदम्' इत्यत्रोदशब्दप्रयोगव्यवस्थापकाभाव एवेति बोध्यम् ॥

(वा॰) **अभ्रुकुंसादीनामिति वक्तव्यम्** ॥ भ्रुकुंसः। भ्रुकुटिः। भ्रूकुंसः। भ्रूकुटिः। अकारोऽनेन विधीयत इति व्याख्यान्तरम्। भ्रकुंसः। भ्रकुटिः। भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्त्रीवेषधारी नर्तकः। भ्रुवः कुटिः कौटिल्यम्। (१४३६) (सू॰) **एकतद्धिते च**। ६। ३। ६२। एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च। एकस्या आगतम्—एकरूप्यम्। एकक्षीरम् ॥ (१४३७) (सू॰) **ङ्यापोः संज्ञाछन्दसोर्बहुलम्**। ६। ३। ६३। रेवतिपुत्रः। अजक्षीरम् ॥ (१४३८) (सू॰) **त्वे च**। ६। ३। ६४। त्वप्रत्यये ङ्यापोर्वा ह्रस्वः। अजत्वम्, अजात्वम्। रोहिणित्वम्, रोहिणीत्वम् ॥ (१४३९) (सू॰) **ष्यङः[1] संप्रसारणं पुत्रपत्योस्तत्पुरुषे**। ६। १। १३। ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे ॥ (१४४०) (सू॰) **संप्रसारणस्य**। ६। ३। ३९। संप्रसारणस्य दीर्घः स्यादुत्तरपदे। कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। व्यवस्थितविभाषया ह्रस्वो न ॥ (१४४१) (प॰) **स्त्रीप्रत्यये चानुपसर्जने न** इति तदादिनियमप्रतिषेधात्। परमकारीषगन्धीपुत्रः। उपसर्जने तु तदादिनियमान्नेह—अतिकारीषगन्ध्यापुत्रः ॥ (१४४२) (सू॰) **बन्धुनि बहुव्रीहौ**। ६। १। १४। बन्धुशब्दे उत्तरपदे ष्यङः संप्रसारणं स्याद्बहुव्रीहौ। कारीषगन्ध्या बन्धुरस्येति—कारीषगन्धीबन्धुः। बहुव्रीहाविति किम्। कारीषगन्ध्याया बन्धुः—कारीषगन्ध्याबन्धुः। क्लीबनिर्देशस्तु शब्दस्वरूपापेक्षया ॥ (१४४३) (वा॰) **मातच्मातृकमातृषु वा** ॥ कारीषगन्धीमातः, कारीषगन्ध्यामातः। कारीषगन्धीमातृकः, कारीषगन्ध्यामातृकः। कारीषगन्धीमाता, कारीषगन्ध्यामाता। अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः कच्चिकल्पश्च। बहुव्रीहावेवेदम्। नेह, कारीषगन्ध्याया माता—कारीषगन्ध्यामाता। चित्त्वसामर्थ्याच्चित्स्वरो बहुव्रीहिस्वरं बाधते ॥ (१४४४) (सू॰) **इष्टकेषीकामालानां चिततूलभारिषु**। ६। ३। ६५। इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात्। इष्टकचितम्, पक्वेष्टकचितम्। इषीकतूलम्, मुञ्जेषीकतूलम्। मालभारी, उत्पलमालभारी ॥ (१४४५) (सू॰) **कारे सत्यागदस्य**।६।३।७०। मुम् स्यात्। सत्यङ्कारः। अगदङ्कारः ॥ (१४४६) (वा॰) **अस्तोश्चेति वक्तव्यम्** ॥ अस्तुङ्कारः ॥ (१४४७) (वा॰) **धेनोर्भव्यायाम्** ॥ धेनुम्भव्या ॥ (१४४८) (वा॰) **लोकस्य पृणे** ॥ लोकम्पृणः। पृण इति मूलविभुजादित्वात्कः ॥ (१४४९) (वा॰) **इत्येऽनभ्याशस्य** ॥ अनभ्याशमित्यः। दूरतः परिहर्तव्य इत्यर्थः ॥ (१४५०) (वा॰) **भ्राष्ट्राग्न्योरिन्धे** ॥ भ्राष्ट्रमिन्धः। अग्निमिन्धः ॥ (१४५१) (वा॰) **गिलेऽगिलस्य** ॥ तिमिङ्गिलः। अगिलस्य किम्। गिल-

---

१०९८' इति च्व्यन्तत्वान्निपातत्वेऽव्ययत्वम् ॥ (१४३५) **भ्रूकुंस इत्यादि**। 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः' इत्यमरः। 'तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्' इति च ॥ (१४३६) **एकतद्धिते**—। 'एक' इति लुप्तषष्ठीकं तदाह—**एकशब्दस्येति**। ह्रस्वविधानमस्य टाबन्ते एवोपयुज्यते। न तु केवले, स्वभावत एव ह्रस्वत्वादतो व्याचष्टे—**एकस्या आगतमित्यादि** ॥ (१४३९) **ष्यङः**—। इह तत्पुरुषपदेन पूर्वपदमुत्तरपदं चाक्षिप्यते, तत्र ष्यङा पूर्वपदस्य विशेषणात्तदन्तं गृह्यत इत्याह—**ष्यङन्तस्येति** ॥ **पुत्रपत्योरुत्तरपदयोरिति**। 'पुत्रपत्यन्तयोः' इति व्याख्याने तु 'कारीषगन्ध्यापरमपुत्रः' इत्यादावतिप्रसङ्गः स्यादिति भावः ॥ (१४४०) **संप्रसारणस्य**। 'उत्तरपदे' इत्यधिक्रियते 'ढ्रलोपे—' इत्यतो दीर्घ इत्यनुवर्तते तदाह—**दीर्घः स्यादुत्तरपद इति**। 'हलः—३३९०' इति दीर्घोऽत्र न प्रवर्तते, प्रत्ययस्य लुका लुप्तत्वेनाङ्गसंज्ञाया अप्रवृत्तेः ॥ **कौमुदगन्ध्याया इति**। कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या। 'तस्यापत्यम्—१५६०' इत्यणि कृत 'अणिञोः—१६९१' इति ष्यङादेशः, 'यङश्चाप्—७६०'। ननु 'कौमुदगन्धीपुत्रः' इत्यादौ 'इको ह्रस्वोऽङ्यो गालवस्य—१४३३' इति ह्रस्वेन भाव्यम्, दीर्घविधानं तु पक्षे सावकाशमित्यत आह—**व्यवस्थितविभाषयेति** ॥ (१४४२) **नेहेति**। संप्रसारणमिह नेत्यर्थः ॥ **अतिकारीषेति**। कारीषगन्ध्यामतिक्रान्तोऽतिकारीषगन्ध्यः, तस्य पुत्रः ॥ (१४४४) **इष्टकेषी**। **इष्टकचितमिति**। 'कर्तृकरणे कृता—१००४' इति तृतीयासमासः ॥ **पक्वेष्टकचितमिति**। पदाधिकारात्तदन्तविधिः प्रवर्तत इति भावः ॥ **मालभारीति**। 'मालां बिभर्ति' इत्यर्थः। 'सुप्यजातौ—' इति णिनिः। 'हारिषु' इति पाठान्तरम् ॥ (१४४५) **कारे सत्या**—। 'अरुर्द्विषत्—३९९२' इत्यतोऽनुवर्तनादाह—**मुम् स्यादिति**। सत्यंकारः शपथकरणम्। अशपथेऽपि 'सत्यादशपथे' इति डाचं बाधित्वा परत्वान्मुमेव। अगदंकारो वैद्यः। अस्तुकारोऽभ्युपगमः। अस्त्विति तिङन्तप्रतिरूपकमव्ययम् ॥ (१४४७) **धेनुंभव्येति**। भविष्यन्ती धेनुरित्यर्थः ॥ 'भव्यगेय—३८५०' इति निपातनात्कर्तरि कृत्यः। 'धेनुश्चासौ भव्या चेति विग्रहः' ॥ गौतमस्मृतौ तु 'अधेनुंधेनुभव्या' इत्यत्र 'आर्षत्वान्मुम्' इति बोध्यम् ॥ (१४४८) **लोकंपृण इति**। पृणधातुः प्रीणनार्थः। 'पृणतिः पूरणकर्मा' इति तु हरदत्तः ॥ (१४४९) **अनभ्याशमित्य इति**। अभ्याशं समीपं तद्भिन्नमनभ्याशम्। 'एतिस्तुशास्वृदृजुषः' इति इणः क्यप् ॥ (१४५०) **भ्राष्ट्रमिन्ध इति**। कर्मण्यणि उपपदसमासः ॥ एवमग्निमिन्धोऽपि ॥ (१४५१) **गिलेऽगिलस्य**। 'गिलशब्दे उत्तरपदे अगिलस्य मुम्' इत्यर्थः ॥ **तिमिंगिल इति**। मत्स्य-

---

[1] ष्यङ इति। अनुबन्धद्वयोच्चारणं पाशादिभ्यो यस्य ष्यनो ष्यङश्च व्यावृत्त्यर्थम् ॥

गिलः ॥ ( १४५२ ) वा० गिलगिले च ॥ तिमिङ्गिलगिलः ॥ ( १४५३ ) वा० उष्णभद्रयोः करणे ॥ उष्णङ्करणम् । भद्रङ्करणम् ॥ ( १४५४ ) सू० रात्रेः कृति विभाषा । ६ । ३ । ७२ । रात्रिञ्चरः, रात्रिचरः । रात्रिमटः, रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु [१]अरुर्द्विषदिति नित्यमेव वक्ष्यते । रात्रिंमन्यः ॥ ( १४५५ ) सू० सहस्य सः संज्ञायाम् । ६ । ३ । ७८ । उत्तरपदे । सपलाशम् । संज्ञायां किम् । सहयुध्वा ॥ ( १४५६ ) सू० ग्रन्थान्ताधिके च । ६ । ३ । ७९ । अनयोरर्थयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तं ज्योतिषमधीते । सद्रोणा खारी ॥ ( १४५७ ) सू० द्वितीये चानुपाख्ये । ६ । ३ । ८० । अनुमेये द्वितीये सहस्य सः स्यात् । सराक्षसीका निशा । राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते ॥ (१४५८) सू० समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु ।६।३।८४। समानस्य सः स्यादुत्तरपदे न तु मूर्धादिषु । अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः । योनः सनुत्यः । तत्र भव इत्यर्थे सगर्भसयूथसनुताद्यत् । अमूर्धादिषु किम् । समानमूर्धा । समानप्रभृतयः । समानोदर्काः । समानस्येति योगो विभज्यते । तेन सपक्षः साधर्म्यं सजातीयमित्यादि सिद्धमिति काशिका । अथवा सहशब्दः सदृशवचनोऽप्यस्ति । सदृशः सख्या-ससखीति यथा । तेनायमस्वपदविग्रहो बहुव्रीहिः समानः पक्षोऽस्येत्यादि ॥ ( १४५९ ) सू० ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु । ६ । ३ । ८५ । एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् । सज्योतिः । सजनपद इत्यादि ॥ ( १४६० ) सू० चरणे ब्रह्मचारिणि । ६ । ३ । ८६ । ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने । चरणः शाखा । ब्रह्म वेदः, तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति ब्रह्मचारी । समानः सः-सब्रह्मचारी ॥ ( १४६१ ) सू० तीर्थे ये । ६ । ३ । ८७ । तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् । सतीर्थ्यः, एकगुरुकः । समानतीर्थे वासीति यत्प्रत्ययः ॥ (१४६२) सू० विभाषोदरे । ६ । ३ । ८८ । यादौ प्रत्यये विवक्षिते इत्येव । सोदर्यः । समानोदर्यः ॥ ( १४६३ ) सू० दृग्दृशवतुषु । ६ । ३ । ८९ । सदृक् । सदृशः ॥ ( १४६४ ) वा० दृक्षे चेति वक्तव्यम् ॥ सदृक्षः । वतुरुत्तरार्थः ॥ ( १४६५ ) सू० इदंकिमोरीश्की । ६ । ३ । ९० । दृग्दृशवतुषु इदम ईश् किमः की स्यात् । ईदृक् । ईदृशः । कीदृक् । कीदृशः । वतूदाहरणं वक्ष्यते । दृक्षे च । ईदृक्षः । कीदृक्षः । आ सर्वनाम्नः । दृक्षे च । तादृक् । तादृशः । तावान् । तादृक्षः । दीर्घः । मत्वोत्वे । अमूदृक् । अमूदृशः । अमूदृक्षः ॥ ( १४६६ ) सू० समासेऽङ्गुलेः सङ्गः । ८ । ३ । ८० । अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्धन्यः स्यात्समासे । अङ्गुलिषङ्गः । समासे किम् । अङ्गुलेः सङ्गः ॥ ( १४६७ ) सू०

---

विशेषः । गिरतेर्मूलविभुजादित्वात्कः । 'अचि विभाषा' इति लत्वम् ॥(१४५२)गिलगिले चेति । 'गिलं गिलति इति गिलगिलः, तिमीनां गिलगिलः' इति विग्रहे इदमारब्धम् ॥(१४५४)रात्रेः कृति । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाभावेऽपि रात्रिशब्दात्परत्र कृतोऽसंभवात्कृदन्त उत्तरपदे अयं विधिरित्याशयेनोदाहरति-रात्रिचर इति । यद्यप्याचारक्विबन्तात् ण्वुलादिः संभवति । तथापि विलम्बितोपस्थितिकत्वात्स न गृह्यत इति भावः ॥ नित्यमेवेति । पूर्वविप्रतिषेधेनेति भावः ॥ रात्रिमन्य इति । 'आत्ममाने खश्च' इति खश् सार्वधातुकत्वात्तस्मिन्परे श्यन् ॥ ( १४५५ ) सहस्य सः सं-। सहयुध्वेति । 'सहे च' इति क्वनिप् । स्त्रियामपि 'वनो न हशः' इति निषेधात् ङीब्रौ न ॥ ( १४५६ ) ग्रन्था-। समहूर्तमिति । अन्तवचनेऽव्ययीभावः । 'अव्ययीभावे चाकाले ९६२' इत्यत्र कालपर्युदासादप्राप्ते सभावे ग्रन्थान्तग्रहणम् ॥ ( १४५७ ) द्वितीये-। 'अप्रधानो यः स द्वितीयः' इति लोकप्रसिद्धम्, उपाख्यं प्रत्यक्षं तद्भिन्नमनुमेयं तदाह-अनुमेये इति ॥ सराक्षसीकेति । 'नद्यृतश्च' इति कप् ॥ ( १४५८ ) समा-। योगो विभज्यत इति । एतदर्थमेव च्छान्दसमपि 'समानस्य च्छन्दसि १४५८' इति सूत्रमिहोपन्यस्तमिति भावः ॥ बहुव्रीहिरिति । तेन 'वोपसर्जनस्य १२२२' इति सहस्य सभावः प्राप्नोतीति भावः ॥ ( १४५९ ) ज्योति-। सज्योतिरिति । समानं ज्योतिरस्येति बहुव्रीहिः । यस्मिन् ज्योतिषि आदित्ये नक्षत्रे वा संजातं तदस्तमयपर्यन्तमनुवर्तमानमाशौचं सज्योतिः इत्युच्यते ॥ इह "समानमध्यमध्यमवीराश्च १०६३" इति प्रतिपदोक्त एव समासो न गृह्यते, 'सरूपाणामेकशेषः २७३' इति लिङ्गात् । किन्तु बहुव्रीहिरपि इति हरदत्तः ॥ ( १४६० ) ब्रह्मचारीति । 'व्रते ३९९६' इति णिनिः ॥ सब्रह्मचारीति । समानो ब्रह्मचारी इत्यर्थः । ब्रह्मचारिणश्च समानत्वं ब्रह्मणः समानत्वात् । ततश्च 'समाने ब्रह्मणि व्रतचारी' इति फलितोऽर्थः ॥ ( १४६७ ) तीर्थे ये इति । अकारो न विवक्षितः । प्रत्यये इति विशेष्यं तु व्याख्यानाल्लभ्यते । तेन 'यचिनिन्विधिः' इति तदादिविधिरित्याह-यादौ प्रत्यय इति ॥ विवक्षित इति । उत्तरपदमात्रनिमित्तः समासोऽन्तरङ्गः, समासप्रकृतिकसुबन्तात्तु यत्प्रत्ययः, अतस्तस्य परत्वं न संभवतीत्याशयेनेदमुक्तम् ॥ ( १४६२ ) विभा-। सोदर्य इति । 'समानोदरे शयितः' इत्यर्थे प्रत्ययात्प्राक् समानस्य सभावे कृते 'सोदराद्यः २२५४' इति यः । सभावाभावपक्षे तु 'समानोदरे शयित ओ चोदात्तः २२५३' इति यति समानोदर्यः ॥ ( १४६३ ) सदृक् । सदृश इति । 'समानान्ययोश्चेति वक्तव्यम् ३९७२' इति दृशेः क्विन्कञौ ॥ दीर्घ इति । अदस आत्वे कृते

---

[१] दीर्घ इति । अन्त्यस्य आकारे कृते सवर्णदीर्घ इत्यर्थः ॥ इदं पूर्वान्वय्यपि ॥

भीरोः स्थानम् । ८ । ३ । ८१ । भीरुशब्दात्स्थानस्य सस्य मूर्धन्यः स्यात्समासे । भीरुष्ठानम् । असमासे तु-भीरोः स्थानम् ॥ ( १४६८ ) सू० ज्योतिरायुषः स्तोमः । ८ । ३ । ८३ । आभ्यां स्तोमस्य सस्य मूर्धन्यः स्यात्समासे । ज्योतिष्टोमः । आयुष्टोमः । समासे किम् । ज्योतिषः स्तोमः ॥ ( १४६९ ) सू० सुषामादिषु च । ८ । ३ । ९८ । सस्य मूर्धन्यः । शोभनं साम यस्य सुषामा । सुषन्धिः ॥ ( १४७० ) ग० एति संज्ञायामगात् । ८ । ३ । ९९ । सस्य मूर्धन्यः । हरिषेणः । एति किम् । हरिसक्थम् । संज्ञायां किम् । पृथुसेनः । अगकारात्किम् । विष्वक्सेनः । इर्णुकोरित्येव सर्वसेनः ॥ ( १४७१ ) ग० नक्षत्राद्वा । ८ । ३ । १०० । एति सस्य संज्ञायामगकारान्मूर्धन्यो वा । रोहिणीषेणः । रोहिणीसेनः । अगकारात्किम् । शतभिषक्सेनः । आकृतिगणोऽयम् ॥ ( १४७२ ) सू० अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । ६ । ३ । ९९ । अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अन्यदीयः । अषष्ठीत्यादि किम् । अन्यस्याऽन्येन वाशीः अन्याशीः । ( १४७३ ) कारके छे च नायं निषेधः । अन्यस्य कारकः अन्यत्कारकः । अन्यस्यायमन्यदीयः । गहादेराकृतिगणत्वाच्छः ॥ ( १४७४ ) सू० अर्थे विभाषा । ६ । ३ । १०० । अन्यदर्थः । अन्यार्थः ॥ ( १४७५ ) सू० कोः कत्तत्पुरुषेऽचि । ६ । ३ । १०१ । अजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः । कदन्नम् । तत्पुरुषे किम् । कूष्ट्रो राजा ॥ ( १४७६ ) वा० त्रौ च ॥ कुत्सितास्त्रयः-कत्त्रयः ॥ ( १४७७ ) सू० रथवदयोश्च । ६ । ३ । १०२ । कद्रथः । कद्वदः ॥ ( १४७८ ) सू० तृणे च जातौ । । ६ । ३ । १०३ । कत्तृणम् ॥ ( १४७९ ) सू० का पथ्यक्षयोः । ६ । ३ । १०४ । कापथम् । काक्षः । अक्षशब्देन तत्पुरुषः । अक्षिशब्देन बहुव्रीहिर्वा ॥ ( १४८० ) सू० ईषदर्थे । ६ । ३ । १०५ । ईषज्जलं काजलम् । अजादावपि परत्वात्कादेशः । काम्लः ॥ ( १४८१ ) सू० विभाषा पुरुषे । ६ । ३ । १०६ । कापुरुषः । कुपुरुषः । अप्राप्तविभाषेयम् । ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव । ईषत्पुरुषः-कापुरुषः ॥ ( १४८२ ) सू० कवं चोष्णे । ६ । ३ । १०७ । उष्णशब्दे उत्तरपदे कोः कवं का च वा स्यात् । कवोष्णम् । कोष्णम् । कदुष्णम् ॥ ( १४८३ ) सू० पृषोदरादीनि यथोपदिष्टम् । ६ । ३ । १०९ । पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । पृषतः उदरं-पृषोदरम् तलोपः । वारिवाहको-बलाहकः । पूर्वपदस्य बः उत्तरपदादेश्च लत्वम् ॥ ( १४८४ ) भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥ ( १४८५ ) वा० दिक्शब्देभ्यस्तीरस्य तारभावो वा ॥ दक्षिणतारम् । दक्षिणतीरम् । उत्तरतारम् । उत्तरतीरम् ॥ ( १४८६ ) वा० दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च ॥ दुःखेन दाश्यते-दूडाशः । दुःखेन नाश्यते-दूणाशः । दुःखेन दभ्यते-दूडभः । खल् त्रिभ्यः । दम्भेर्न-

---

सवर्णदीर्घ इत्यर्थः ॥ एतच्च पूर्वोत्तरोदाहरणान्वयि ॥ ( १४६७ ) भीरोः स्थानमिति । विसर्जनीयव्यवधानेऽपि षत्वप्राप्तिरस्ति ॥ ( १४६८ ) ज्योतिषः स्तोम इति । 'इदं ज्योतिः स्तोमोऽयम्' इति प्रत्युदाहर्तुमुचितम् ॥ ( १४६९ ) एति संज्ञायामिति । सुषामाद्यन्तर्गणसूत्रमेतत् ॥ एवं 'नक्षत्राद्वा १४७१' इत्यपि ॥ विष्वक्सेन इति । चर्त्वस्यासिद्धत्वाद्ककारेण व्यवधानमस्तीति भावः ॥ ( १४७२ ) अषष्ठ्य— । अन्यदाशीरित्यादयः कर्मधारयाः ॥ ( १४७३ ) नायं निषेध इति । एतच्च 'अषष्ठीतृतीयास्थ-' इत्येव सिद्धे निषेधानित्यत्वज्ञापनार्थाद् द्विर्नञ उपादानाल्लभ्यत इत्याहुः ॥ त्रौ च । अनजाद्यर्थमिदं वार्तिकं 'कत्र्यादिभ्यो ढकञ्' इति निर्देशेनैव सिद्धम् ॥ ( १४७९ ) कापथमिति । कुत्सितः पन्थाः । 'ऋक्पूरब्धूः-१३५०' इति समासान्तः । 'पथः संख्याव्ययादेः ११८१' इति नपुंसकत्वम् ॥ ( १४८१ ) विभा-।अप्राप्तविभाषेति । 'ईषदर्थे' इत्यस्यानुवृत्तेरिति भावः ॥ ( १४८३ ) पृषोदरप्रकाराणीति । आदिशब्दो हि न व्यवस्थावचनः, यथोपदिष्टपदानर्थक्यादिति भावः ॥ शिष्टैरिति । अध्याहारलभ्यमिदम् । 'यथोपदिष्टम्' इत्यत्र यथार्थेऽव्ययीभावः । उपदिशिश्चोच्चारणक्रियः । 'यानि यानि शिष्टैरुपदिष्टानि' इत्यर्थः ॥ एवं स्थिते फलितमाह—यथोच्चारितानीति ॥ तथैवेति । समासपदविषयकमिदम् । उत्तरपदाधिकारात् । निरुक्तादिशास्त्रसिद्धानामसमासपदानाम् 'उणादयो बहुलम् ४९५५' इत्येव सिद्धेश्च ॥ यद्यपि समासविषयकमेवेति नियमो न युज्यते, हंससिंहशब्दयोरपि प्राचां कारिकायामुदाहृतत्वात्, तथापि तत्कारिकायां यथाशब्दाध्याहारेण दृष्टान्तप्रदर्शनार्थं तयोरुपन्यासः कृतो, न तु प्रकृतसूत्रोदाहरणत्वेनेति नियमोक्तिः सम्यगेवेत्याहुः ॥ ( १४८४ ) वर्णागमादिति । हन्तेः पचाद्यचि समागमः ॥ विपर्ययादिति । हिंसेस्तु पचाद्यचि हकारसकारयोः स्थानव्यत्ययः ॥ ( १४८५ ) दिक्शब्देभ्य इति । वार्तिकमिदम् । 'दुरो दाशनाश-' इत्यप्येवम् ॥ ( १४८६ ) खल् त्रिभ्य इति । दाश-

---

१ तत्पुरुष इति । इदमेव तत्पुरुष-ग्रहणम् 'अत्र प्रकरणेऽप्रतिपदोक्तस्यापि समासस्य ग्रहणम्' इति ज्ञापयति । एतदेव ध्वनयितुं वक्ष्यति-अक्षिशब्देन बहुव्रीहिर्वेति ॥ २ शिष्टैरिति । एतच्च आर्यम्लेच्छाधिकरणसिद्धान्तस्याश्रयणेन भाष्यकृतोपस्कृतमिति भावः ॥ ३ द्विर्नञ उपादानादिति । भाष्यकृतैतत्प्रयोजनानुक्तेः स्पष्टार्थमेव, उक्तार्थसिद्धिस्तु "एवं तर्हि अविशेषेण 'अन्यस्य दुक्छकारकयोः, इत्युक्त्वा ततो वक्ष्यामि 'अषष्ठ्यतृतीयास्थस्याशीरास्थास्थितोत्सुकोतिरागेषु' इति" इत्येवं छकारकयोरषष्ठ्यतृतीयास्थस्येत्यस्यासंबन्धसूचनेनैव कृतेति बोध्यम् ॥ ४ इत्याहुरिति । अनेनारुचिः सूचिता । पृषोदरशब्देऽनेन तलोपं वदता कैयटादिना तद्धितविषयत्वस्याप्यभ्युपगमादिति बोध्यम् ॥

लोपो निपात्यते । दुःखेन ध्यायतीति-दूढ्यः । आर्तश्चेति कः । ब्रुवन्तोऽस्यां सीदन्तीति-बृसी । ब्रुवच्छब्दस्य बृआदेशः, सदेरधिकरणे डट् । आकृतिगणोऽयम् ॥ ( १४८७ ) (सू०) संहितायाम् । ६ । ३ । ११४ । अधिकारोऽयम् ॥ ( १४८८ ) (सू०) **कर्णे लक्षणस्याऽविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य** । ६ । ३ । ११५ । कर्णशब्दे परे लक्षणवाचकस्य दीर्घः । द्विगुणाकर्णः । लक्षणस्य किम् । शोभनकर्णः । अविष्टादीनां किम् । विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ॥ ( १४८९ ) (सू०) **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** । ६ । ३ । ११६ । क्विबन्तेषु एषु परेषु पूर्वपदस्य दीर्घः । उपानत् । नीवृत् । प्रावृट् । मर्मावित् । नीरुक् । अभीरुक् । ऋतीषट् । परीतत् । क्वाविति किम् । परिणहनम् । विभाषा पुरुष इत्यतो मण्डूकप्लुत्या विभाषानुवर्तते सा च व्यवस्थिता । तेन गतिकारकयोरेव । नेह । पटुरुक् । तिग्मरुक् ॥ ( १४९० ) (सू०) **वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्** । ६ । ३ । ११७ । कोटरादीनां वने परे, किंशुलुकादीनां गिरौ परे दीर्घः स्यात्संज्ञायाम् ॥ ( १४९१ ) (सू०) **वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः** । ८ । ४ । ४ । वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः । इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः । तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः । अग्रेशब्दस्य तु विध्यर्थः । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । सारिकावणम् । कोटरावणम् ॥ वनस्याग्रे-अग्रेवणम् । राजदन्तादिषु निपातनात्सप्तम्या अलुक् । प्रातिपदिकार्थमात्रे प्रथमा ॥ एभ्य एवेति किम् । असिपत्रवनम् । किंशुलुकागिरिः ॥ ( १४९२ ) (सू०) **वले** । ६ । ३ । ११८ । वलप्रत्यये[1] परे दीर्घः स्यात्संज्ञायाम् । कृषीवलः ॥ ( १४९३ ) (सू०) **मतौ बह्वचोऽन-**

---

नाशदभेति त्रयोऽपि 'ईषद्दुःसुषु-५१२३' इति खल्प्रत्ययान्ता इत्यर्थः ॥ **बृसीति** । 'मुनीनामासनं बृसी ॥ **आकृतिगणोऽयमिति** । तेन "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥" इत्यपि संगृहीतम् ॥ कृत्यान्ते उत्तरपदे अवश्यमः अन्तं लुम्पेत् । अवश्यगन्तव्यः, अवश्यसेव्यः । तथा तुमः काममनसोः परतः अन्तं लुम्पेत् । गन्तुकामः, गन्तुमनाः ॥ समो हिततयोः अन्तं वा लुम्पेत् । सहितः संहितः । सततः, संततः । युट् घञ् च एतयोः परो यः पच् धातुः तस्मिन्परे मांसस्यान्तं लुम्पेत् । मांस्पचनी । मांस्पाकः । इह संयोगान्तलोपोऽपि शिष्टोच्चारणान्नेति बोध्यम् ॥ ( १४८७ ) **संहितायामिति** । तेन 'द्विगुणाकर्णः' इत्यादौ अवग्रहे दीर्घो न भवतीति सूत्राशयमुत्प्रेक्षयन्ति-**अधिकारोऽयमिति** । तेन 'विद्माहि त्वा' इत्यादौ पदकाले 'द्व्यचोऽतस्तिङः ५३८८' इति दीर्घो नेत्यादिप्रयोजना यूह्यानीति ॥ ( १४८९ ) **नहिवृति-** । 'णह बन्धने', 'वृतु वर्तने', 'वृषु सेचने', 'व्यध ताडने', 'रुच दीप्तौ', 'षह मर्षणे', 'तनु विस्तारे' ॥ **क्विबन्तेष्विति** । उत्तरपदेषु इति शेषः । तेन 'दिवसेषु रुक्' इत्यादौ नातिप्रसङ्गः ॥ **उपानदिति** । संपदादित्वात्कर्मणि क्विप् । निवर्तते इति-नीवृत् । प्रवर्षतीति प्रावृट् । मर्माणि विध्यतीति मर्मावित् । व्यधेः 'ग्रहिज्या-३२१६' इति संप्रसारणम् । निरोचते इति नीरुक् । ऋतिं सहते-ऋतीषट् । 'पूर्वपदात्-' इति षत्वमिति हरदत्तः । 'सहेः पृतनर्ताभ्यां च ५५११' इत्यत्र 'सहेः' इति योगविभागाच्चकारस्यानुक्तसमुच्चयाद्वेत्यन्ये । सुषामादेराकृतिगणत्वादित्यपरे । 'परितनोति' इति परीतत् । 'गमः क्वौ ३२८७' इत्यत्र 'गमादीनामिति वाच्यम् ३९८८' इत्युक्तेर्नलोपः ॥ ( १४९१ ) **वनं पुरगा-** । 'व्यत्ययेन षष्ठ्यर्थे प्रथमा' इत्याह-**वनशब्दस्येति** । **एभ्य एवेति** । कृतदीर्घेभ्यः पुरगादिभ्यः एव परस्य णत्वमित्यर्थः । 'एभ्यो वनस्यैव णत्वं नान्येषाम्' इति विपरीतनियमशङ्का तु न भवति, वनादन्यस्मिन्नुत्तरपदे पुरगादीनां दीर्घान्तत्वासंभवात् ॥ **नियमार्थ इति** । अयं भावः-'पुरगामिश्रका-' इति दीर्घनिर्देशादसंज्ञायां दीर्घाभावेन संज्ञायामेव णत्वमिति फलितम् । एवं च 'पूर्वपदात् संज्ञायाम्-१२३३' इत्यनेनैव वनस्य णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधौ निर्देशो नियमार्थ एवेति ॥ **विध्यर्थ इति** । असंज्ञात्वेन 'पूर्वपदात्संज्ञायाम्-१२३३' इत्यस्याप्रवृत्तेरिति भावः । न च पुरगाग्रहणमपि विध्यर्थमेव, गकारव्यवधानेन 'पूर्वपदात्संज्ञायाम्-१२३३' इत्यस्य प्राप्त्यभावादिति वाच्यम्, 'अगः' इत्यस्य पञ्चम्यन्तत्वं स्वीकृत्य 'गान्तात्पूर्वपदात्परस्य णत्वं न' इति व्याख्यानात् । पुरगाशब्दस्य त्वकारान्तत्वात् 'अगः' इति निषेधस्याप्रवृत्तेः । अत एव 'अगः' इत्यस्य 'ऋगयनम्' इत्येकमेवोदाहरणमिति 'अणृगयनादिभ्यः २०१५' इति निर्देशाश्रयेण तत्प्रत्याख्यातमाकरे ॥ **पुरगावणमित्यादि** । नरकविशेषस्य संज्ञा ॥ सप्तम्यर्थस्य प्रातिपदिकार्थे अन्तर्भावादाह-**प्रथमेति** । **असिपत्रवनमिति** । 'एभ्यो वनस्यैव' इति विपरीतनियमे तु णत्वमत्र दुर्वारमिति भावः ॥ किंशुलुकादीनामुदाहरणमाह-**किंशुलुकागिरिरिति** । आदिशब्दग्राह्यास्तु 'अञ्जनागिरिः' इत्यादयः ॥ किंशुलुकेति किम् । कृष्णगिरिः । रामगिरिः ॥ ( १४९२ ) **कृषीवल इति** । 'रजः कृष्यासुति-२५९६' इत्यादिना मत्वर्थे

---

१ **वलप्रत्यय इति** । तेनाजन्ते वलधातौ न ॥ 'अणः' इत्यनुवृत्तेर्भ्रातृवल इत्यादौ न, 'अन्येभ्योऽपि दृश्यते' इत्यनेनात्र वलच् ॥ संज्ञायामेव । तेन पुत्रवल इत्यादौ न ॥ २ **कामेति** । '**तुं काम-**' इत्यत्र 'तुम्' इति समोऽप्युपलक्षणम् । तेन सकामः, 'समनाः-' इत्यपि सिद्धमिति शब्दरत्ने ॥ ३ **मांसस्यैति** । अयमंशः 'पद्दन्नः' इत्येतत्सूत्रस्थेन 'मांसपृतना-' इति वार्तिकेन सिद्धार्थस्यैवानुवादरूप इति बोध्यम् ॥ ४ **इत्यादाविति** । संहितायामेव 'विद्म, हि, त्वा, इति' इति शेषः ॥

जिरादीनाम् । ६ । ३ । ११९ । अमरावती । अनजिरादीनां किम् । अजिरवती । बह्वचः किम् । व्रीहिमती । संज्ञायामित्येव । नेह । वलयवती ॥ ( १४९४ ) (सू) **शरादीनां च** । ६ । ३ । १२० । शरावती ॥ ( १४९५ ) (सू) **इको वहेऽपीलोः** । ६ । ३ । १२१ । इगन्तस्य दीर्घः स्याद्वहे । ऋषीवहम् । कपीवहम् । इकः किम् । पिण्डवहम् । अपीलोः किम् । पीलुवहम् ॥ ( १४९६ ) (वा) **अपील्वादीनामिति वाच्यम्** ॥ दारुवहम् ॥ ( १४९७ ) (सू) **उपसर्गस्य घञ्यमनुष्ये बहुलम्** । ६ । ३ । १२२ । उपसर्गस्य बहुलं दीर्घः स्याद्घञन्ते परे न तु मनुष्ये । परिपाकः । परीपाकः । अमनुष्ये किम् । निषादः ॥ ( १४९८ ) (सू) **इकः काशे** । ६ । ३ । १२३ । इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे । वीकाशः । नीकाशः । इकः किम् । प्रकाशः ॥ ( १४९९ ) (सू) **अष्टनः संज्ञायाम्** । ६ । ३ । १२५ । उत्तरपदे दीर्घः । अष्टापदम् । संज्ञायां किम् । अष्टपुत्रः ॥ ( १५०० ) (सू) **चितेः कपि** । ६ । ३ । १२७ । एकचितीकः ॥ ( १५०१ ) (सू) **नरे संज्ञायाम्** । ६ । ३ । १२९ । विश्वानरः ॥ ( १५०२ ) (सू) **मित्रे चर्षौ** । ६ । ३ । १३० । विश्वामित्रः । ऋषौ किम् । विश्वमित्रो माणवकः ॥ ( १५०३ ) (वा) **शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः** ॥ श्वादन्तः इत्यादि ॥ ( १५०४ ) (सू) **प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि** । ८ । ४ । ५ । एभ्यो वनस्य णत्वं स्यात् । प्रवणम् । कार्ष्यवणम् । इह षात्परत्वाण्णत्वम् ॥ ( १५०५ ) (सू) **विभाषौषधिवनस्पतिभ्यः** । ८ । ४ । ६ । एभ्यो वनस्य णत्वं वा स्यात् । दूर्वावणम्, दूर्वावनम् । शिरीषवणम्, शिरीषवनम् ॥ ( १५०६ ) (वा) **द्व्यच्त्र्यज्भ्यामेव** ॥ नेह । देवदारुवनम् ॥ ( १५०७ ) (वा) **इरिकादिभ्यः प्रतिषेधो वक्तव्यः** ॥ इरिकावनम् । सिरिकावनम् ॥ ( १५०८ ) (सू) **वाहनमाहितात्** । ८ । ४ । ८ । आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात् । इक्षुवाहणम् । आहितात्किम् । इन्द्रवाहनम् । इन्द्रस्वामिकं वाहनमित्यर्थः । वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात् ॥ ( १५०९ ) (सू) **पानं देशे** । ८ । ४ । ९ । पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं स्याद्देशे गम्ये । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः । पीयते इति पानम् । कर्मणि ल्युट् ॥ ( १५१० ) (सू) **वा भावकरणयोः** । ८ । ४ । १० । पानस्येत्येव । क्षीरपाणम्, क्षीरपानम्[1] ॥ ( १५११ ) (वा) **गिरिनद्यादीनां वा** ॥ गिरिणदी, गिरिनदी । चक्रणितम्बा, चक्रनितम्बा ॥ ( १५१२ ) (सू) **प्रातिपदिकान्तनुम्विभक्तिषु च** । ८ । ४ । ११ । पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा स्यात् । प्रातिपदिकान्ते—माषवापिणौ । नुमि—व्रीहिवापाणि । विभक्तौ—माषवापेण । पक्षे माषवापिनावित्यादि । ( १५१३ ) उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वम् । नेह । गर्गाणां भगिनी गर्गभगिनी[2] । अत एव नुम्ग्रहणं कृतम् । अङ्गस्य नुम्विधा-

---

वलच् ॥ ( १४९३ ) **मतौ व—।अमरावतीति** । 'मादुपधायाश्च—२५६२' इति, 'संज्ञायाम् २५६४' इति वा मतोर्मस्य वः ॥ ( १४९७ ) **उपस—**। घञ्मात्रस्योत्तरपदत्वासंभवादाह—**घञन्त इति** ॥ **निषाद इति** । पुलिन्दो मनुष्यजातिः । 'निषीदत्यस्मिन्पापम्' इति निषादः, 'हलश्च ५११६' इत्यधिकरणे घञ् ॥ कथं तर्हि दौवारिके प्रतीहारशब्दप्रयोग इति चेत् । अत्राहुः—प्रतिहारो द्वारम् । तात्स्थ्यात्ताच्छब्द्यमिति ॥ ( १५०० ) **चितेः कपि—। एकचितीक इति** । 'शेषाद्विभाषा १२७४' इति कप् ॥ ( १५०३ ) **शुनो—**। 'दंष्ट्रा' इति वार्तिके दीर्घान्तः पठ्यते ॥ केचित्तु ह्रस्वान्तं पठित्वा 'श्वादंष्ट्रः' इति बहुव्रीहौ दीर्घमाहुः, न तु तत्पुरुषे ॥ ( १५०४ ) **प्रनि—। इह षादिति** । 'कार्श्य' इति तालव्यपाठस्त्वनार्ष इति भावः ॥ ( १५०५ ) वनस्पतिभ्यो वनस्य णत्वमुदाहरति—**शिरीषवणमिति** । ननु 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः—' इत्यमरकोशाद्यस्य पुष्पं विनैव फलप्रादुर्भावः स वनस्पतिः, स चोदुम्बरादिः । शिरीषस्तु न तथा, तस्य पुष्पफलोभयसत्त्वादतो णत्वमिह कथमिति चेत् । अत्राहुः—वनस्पतिशब्देनात्र वृक्षमात्रमुपलक्ष्यते । अत्र च 'लुपि युक्तवत्' इति सूत्रस्थं भाष्यं लिङ्गम् । तत्र हि—'व्यक्तिवचने किम्, शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवणमित्यत्र णत्वे कर्तव्ये वनस्पतित्वमप्यतिदिश्येत' इत्युक्तम् । तच्च शिरीषाणां वनस्पतित्वे संगच्छते नान्यथेति दिक् ॥ ( १५०६ ) **द्व्यच्त्र्यज्भ्यामेवेति** । व्यवस्थितविभाषाश्रयणादिति भावः ॥ ( १५०७ ) ओषधित्वात्प्राप्ते प्रतिषेधमाह—**इरिकादिभ्य इति** । एतदपि व्यवस्थितविभाषाज्ञानादेव सिद्धम् ॥ ( १५०९ ) **उशीनरा इति** । इह उशीनरशब्दस्तद्देशवासिषु भाक्तः ॥ **कर्मणि ल्युट् इति** । 'कृत्यल्युटो बहुलम् ३७८६' इत्यनेन ॥ ( १५१० ) **वा भाव—**। आदेशार्थ आरम्भ इत्यप्राप्तविभाषा ॥ **क्षीरपाणमिति** । पीतिः पानं 'ल्युट् च ५१०६' इति नपुंसके भावे ल्युट् । पीयते अनेनेति पानं, करणे ल्युट् । क्षीरस्य पानं क्षीरपाणम् ॥ ( १५११ ) **गिरिनद्यादीनां वेति** । वक्तव्यमिति शेषः ॥ संज्ञायां प्राप्ते, असंज्ञायामप्राप्ते उभयतश्च विभाषेत्याहुः ॥ ( १५१२ ) **माषवापिणाविति** । 'बहुलमाभीक्ष्ण्ये ३९९७' इति णिनिः ॥ **व्रीहिवापाणीति** । 'कर्मण्यण्' ॥ ( १५१३ ) **उत्तरपदं यदिति** । इष्टानुरोधेन तथा व्याख्यायत इति भावः ॥ **गर्गभगिनीति** । इह भगिनीशब्द उत्तरपदं, न तु भगिन्शब्द इति भावः । अत्र च व्याख्याने नुम्प्र-

---

1 **क्षीरपानमिति** । सर्पिष्पानमित्यत्र तु 'षात्पदान्तात्' इति निषेधेन णत्वं न भवतीत्युत्तरकृदन्ते वक्ष्यते ॥ 2 **भगिनीति** । यदा तु गर्गाणां भगो गर्गभगः गर्गभगोऽस्या अस्तीति विगृह्यते, तदा तु गर्गभगिणीति भवत्येवेति बोध्यम् ॥

नात्तद्भक्तो हि नुम् न तूत्तरपदस्य । किञ्च, प्रहिण्वन्तीत्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणम् । प्रेन्वनमित्यादौ[1] तु क्षुभ्नादित्वान्न ॥ ( १५१४ ) (वा॰) युवादेर्न[2] ॥ रम्ययूना । परिपकानि । एकाजुत्तरपदे णः । नित्यमित्युक्तम् । वृत्रहणौ । हरिं मानयतीति-हरिमाणी । नुमि-क्षीरपाणि । विभक्तौ क्षीरपेण रम्यविणा ॥ (१५१५) (सू॰) कुमति च । ८ । ४ । १३ । कवर्गवत्युत्तरपदे प्राग्वत् । हरिकामिणौ । हरिकामाणि । हरिकामेण ॥ ( १५१६ ) (सू॰) पदव्यवायेऽपि । ८ । ४ । ३८ । पदेन व्यवधानेऽपि णत्वं न स्यात् । माषकुम्भवापेन । चतुरङ्गयोगेन ॥ ( १५१७ ) (वा॰) अतद्धित इति वाच्यम्[3] ॥ आर्द्रगोमयेण । शुष्कगोमयेण ॥ ( १५१८ ) (सू॰) कुस्तुम्बुरूणि जातिः । ६ । १ । १४३ । अत्र सुण्निपात्यते । कुस्तुम्बुरुः धान्याकम् । क्लीबत्वमतन्त्रम्[4] । जातिः किम् । कुतुम्बुरूणि । कुत्सितानि तिन्दुकीफलानीत्यर्थः ॥ (१५१९) (सू॰) अपरस्पराः क्रियासातत्ये । ६ । १ । १४४ । सुण्निपात्यते । अपरस्पराः सार्था गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः । क्रियेति किम् । अपरपरा गच्छन्ति । अपरे च परे च सकृदेव गच्छन्तीत्यर्थः ॥ (१५२०) (सू॰) गोष्पदं सेवितासेवितप्रमाणेषु । ६ । १ । १४५ । सुट् सस्य षत्वं च निपात्यते । गावः पद्यन्तेऽस्मिन्देशे स गोभिः सेवितो

---

ह्णमेव ज्ञापकमिति ॥ प्राचां मतमाह—अत एवेति । तदुक्तं ज्ञापकं विघटयति-किंचेति ॥ ( १५१४ ) परिपक्कानीति । 'कुमति च १५१५' इति नित्यं णत्वं प्राप्तम् ॥ एकाजुत्तर— । प्राग् व्याख्यातमपि प्रकरणानुरोधेन स्मर्यते ॥ वृत्रहणाविति । वृत्रं हतवन्तौ 'ब्रह्मभ्रूण-४००४' इति क्विप् ॥ हरिमाणीति । मनेर्ण्यन्तात् 'क्विप् च ३९८३' इति क्विप् । 'गतिकारकोपपदानाम्-११२८' इत्यादिना सुबुत्पत्तेः प्राक् समासान्नकारान्तमुत्तरपदम्, नान्तत्वान्ङीप् ॥ क्षीरपाणीति । पिबतेः कर्मण्युपपदे 'आतोऽनुपसर्गे-३८८३' इति कः । 'आतो लोप इटि च ३१६५' इत्यालोपः ॥ रम्यविणेति । रम्यश्चासौ विश्चेति विग्रहः । तत 'आङो नाऽस्त्रियाम् ३४८' ॥ ननु अन्तर्वर्तिनीं विभक्तिमाश्रित्य विशब्दस्य पदत्वात् 'पदव्यवायेऽपि १५१६' इति णत्वनिषेधः स्यात् । मैवम्[5], 'उत्तरपदत्वे चापदादिविधौ-५९३' इति प्रत्ययलक्षणप्रतिषेधेन विशब्दस्य पदत्वाभावात् ॥ 'स्वादिषु-३३१' इत्यनेन तु रम्यविशब्दस्यैव पदत्वं न तु विशब्दस्य । यस्मात्स्वादिविधिस्तस्यैव पदत्वाभ्युपगमात् । एवं च पुनर्भूणामित्यत्र णत्वं निर्बाधमेव, नामि परतो भूशब्दस्य पदत्वाभावात् ॥ ( १५१५ ) कुमति च । अनेकाजुत्तरपदार्थ आरम्भः ॥ 'कौ' इत्येव तु न सूत्रितम् । 'यस्मिन्विधिः-' इति तदादिविधौ कवर्गाद्युत्तरपद एव हरिकामाणीत्यादावयं विधिः स्यात्, न तु वक्त्रयुगेणेत्यादौ, तथा च-मतुबन्तनिर्देशः आवश्यक इत्याह-कवर्गवतीति ॥ ( १५१६ ) पदेन व्यवधान इति । निमित्तनिमित्तिनोर्मध्ये पदे सति णत्वं नेत्यर्थः ॥ माषकुम्भवापेनेति । माषकुम्भं वपतीति 'कर्मण्यण् ३८७९' उपपदसमासः ॥ चतुरङ्गयोगेनेति । 'चत्वार्यङ्गान्यस्य । तेन योगः' इति मनोरमायां विगृहीतम् । तदयुक्तम्, 'उत्तरपदत्वे चापदादिविधौ-५९३' इति प्रत्ययलक्षणप्रतिषेधादङ्गशब्दस्यापदत्वात् । तस्मात् 'अङ्गानां योगोऽङ्गयोगश्चतुर्णामङ्गयोगः' इत्येव विग्रहीतव्यम् । न च 'चतुरङ्गेन योगः' इति विग्रहेऽप्यङ्गशब्द उत्तरपदं नेति प्रत्ययलक्षणप्रतिषेधो न प्रवर्तत इति शङ्क्यम्, तस्य पूर्वसमासस्योत्तरपदत्वात्, 'उत्तरपदत्वे च-५९३' इति प्रतिषेधवचनस्यापि 'उत्तरस्य समासचरमावयवस्य पदत्वे कर्तव्ये पदादिविधिभिन्ने प्रत्ययलक्षणं न प्रवर्तते' इत्यर्थाभ्युपगमाच्च । 'शाकपार्थिवादीनामुत्तरपदलोपः १०६८' 'प्रादिभ्यो धातुजस्य-११९४' इत्यादौ तूत्तरपदशब्देन समासचरमावयवमात्रं गृह्यत इति प्रत्ययलक्षणप्रवृत्त्यभावेऽपि न क्षतिः । इह तु पदत्वलाभाय प्रत्ययलक्षणप्रवृत्तिरपेक्षिता । एवं च-'माषकुम्भवापेन' इत्यत्रापि कुम्भस्य वापः कुम्भवापः । कुम्भशब्दः कुम्भपरिमितधान्ये भाक्तः । 'माषाणां कुम्भवापः' इति विग्रहीतव्यमिति नव्याः ॥ केचित्तु-'अपदादिविधौ इत्यत्र 'पदान्तविधौ' इत्यर्थं परिकल्प्य 'पदव्यवायेऽपि १५१६' इत्यस्य पदान्तविधित्वाभावान्नास्त्यत्र प्रत्ययलक्षणनिषेधः' इत्याहुः । तदपरे न क्षमन्ते-तथा हि सति लाघवात् 'पदान्तविधौ' इत्येव ब्रूयात्, न तु 'अपदादिविधौ' इति दिक् ॥ ( किञ्चोत्तरपदत्वे इति वचनस्य पदान्तविधौ कर्तव्ये प्रतिषेध इत्यर्थाभ्युपगमे परमदण्डिनाविति 'ङमो ह्रस्वादचि-' इति सूत्रस्थमनोरमाग्रन्थेनैव विरोध इत्यलमियता ) ॥ ( १५१७ ) अतद्धित इति । 'व्यवधायकपदस्य तद्धितश्चेत्परो न भवति तदा निषेधः' इत्यर्थः ॥ आर्द्रगोमयेणेति । इह गोशब्दः पदम् । 'उत्तरपदत्वे च-५९३' इति निषेधोऽत्र न शङ्क्यः, गोमयशब्दस्योत्तरपदत्वात् । गोशब्दस्य च 'स्वादिषु-३३१' इति पदत्वात् ॥ ( १५२० ) गोष्पदम् ॥ असेविते गोष्पदशब्दस्य

---

1 प्रेन्वनमित्यादाविति । प्रत्ययसंबन्धिनो नकारस्यैव धातुमध्यवर्तिनुमोऽपि नकारस्येत्यर्थः ॥ 2 युवादेरिति । समस्ताः शब्दा युवादिषु, असमस्ताः क्षुभ्नादिषु पठनीया इति भावः ॥ 3 अतद्धित इति । व्यवधायकस्य णत्वाश्रयातिरिक्ततद्धितभिन्नपरत्वे निषेध इत्यर्थः ॥ 4 क्लीबत्वमिति । बहुत्वं चेति शेषः ॥ 5 मैवमिति । वस्तुतस्तु 'पदव्यवाये-' इति सूत्रस्य 'पदे णत्वाश्रये परतो व्यवाये सति' इत्यर्थाङ्गीकारेण प्रकृते 'चतुरङ्गयोगेन' इत्यत्र अङ्गशब्दस्य णत्वाश्रययोगपदपरकत्वव्यवधायकत्वयोर्द्वयोः सत्त्वस्यैव विशब्दे व्यवधायकत्वसत्त्वेऽपि णत्वाश्रयपदपरकत्वाभाव इति भावः ॥ 6 प्रत्ययेति । प्रत्ययासत्त्योत्तरपदस्य कार्यित्व एव तत्प्रवृत्तेः प्रतिषेधाप्राप्त्या मनोरमोक्तविग्रहेऽपि दोषाभावः ॥

गोष्पदः । असेविते-अगोष्पदान्यरण्यानि । प्रमाणे-गोष्पदमात्रं क्षेत्रम् । सेवितेत्यादि किम् । गोः पदं गोपदम् ॥ ( १५२१ ) (सू०) **आस्पदं प्रतिष्ठायाम्** । ६ । १ । १४६ । आत्मयापनाय स्थाने सुट् निपात्यते । आस्पदम् । प्रतिष्ठायां किम् । आपदापदम् ॥ ( १५२२ ) (सू०) **आश्चर्यमनित्ये** । ६ । १ । १४७ । अद्भुते सुट् । आश्चर्यं यदि स भुञ्जीत । अनित्ये किम् । आचर्यं कर्म शोभनम् ॥ ( १५२३ ) (सू०) **वर्चस्केऽवस्करः** । ६ । १ । १४८ । कुत्सितं वर्चो वर्चस्कम् अन्नमलं, तस्मिन् सुट् । अवकीर्यत इत्यवस्करः । वर्चस्के किम् । अवकरः ॥ (१५२४) (सू०) **अपस्करो रथाङ्गम्** । ६ । १ । १४९ । अपकरोऽन्यः ॥ ( १५२५ ) (सू०) **विष्किरः शकुनौ ( विकिरो ) वा** । ६ । १ । १५० । पक्षे विकिरः । वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो मा भूदिति वृत्तिस्तन्न, भाष्यविरोधात् ॥ ( १५२६ ) (सू०) **प्रतिष्कशश्च कशेः** । ६ । १ । १५२ । कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वं च । सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते । कशेः किम् । प्रतिगतः कशां-प्रतिकशोऽश्वः । यद्यपि कशेरेव कशा तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम् । तेन धात्वन्तरोपसर्गान्न॥ ( १५२७ ) (सू०) **प्रस्कण्वहरिश्चन्द्रावृषी** । ६ । १ । १५३ । हरिश्चन्द्रग्रहणममन्त्रार्थम् । ऋषीति किम् । प्रकण्वो देशः । हरिचन्द्रो माणवकः ॥ ( १५२८ ) (सू०) **मस्करमस्करिणौ वेणुपरिव्राजकयोः** । ६ । १ । १५४ । मकरशब्दोऽव्युत्पन्नस्तस्य सुडिनिश्च निपात्यते । वेण्विति किम् । मकरो ग्राहः । मकरी समुद्रः ॥ ( १५२९ ) (सू०) **कास्तीराजस्तुन्दे नगरे** । ६ । १ । १५५ । ईषत्तीरमस्यास्तीति-कास्तीरं नाम नगरम् । अजस्येव तुन्दमस्येति-अजस्तुन्दं नाम नगरम् । नगरे किम् । कातीरम् । अजतुन्दम् ॥ ( १५३० ) (सू०) **कारस्करो वृक्षः** । ६ । १ । १५६ । कारं करोतीति-कारस्करो वृक्षः । अन्यत्र कारकरः । केचित्तु कस्कादिष्विदं पठन्ति, न सूत्रेषु ॥ ( १५३१ ) (सू०) **पारस्करप्रभृतीनि च संज्ञायाम्** । ६ । १ । १५७ । एतानि ससुट्कानि निपात्यन्ते नाम्नि । पारस्करः । किष्किन्धा ॥ (१५३२) (ग०) **तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च** ॥ तात्पूर्वं चर्त्वेन दकारोऽपि बोध्यः। तद्बृहतोर्दकारतकारौ लुप्येते । करपत्योस्तु सुट् । चोरदेवतयोरिति समुदायोपाधिः । तस्करः । बृहस्पतिः ॥ (१५३३) (ग०) **प्रायस्य चित्तिचित्तयोः** ॥ प्रायश्चित्तिः । प्रायश्चित्तम् । वनस्पतिरित्यादि । आकृतिगणोऽयम् ॥ इति **समासाश्रयविधयः** ॥

---

वृत्त्यसंभवान्नञ्पूर्वकमुदाहरति—**अगोष्पदानीति** । गवां संचारो यत्र नैव संभवति तत्रापि सुडागमार्थमसेवितग्रहणमित्याहुः ॥ (१५२१) **आस्पदं प्र**—। **आत्मयापनायेति** । कालक्षेपाय शरीरक्षेपणाय वेत्यर्थः ॥ ( १५२२) **आश्चर्यमिति**। आङः परस्य चरेः सुट् 'चरेराङि चागुरौ ३७९६' इति यत् ॥ (१५२५) **विष्किरः**—। 'कॄ विक्षेपे' इत्यस्मात् 'इगुपध-३८५७' इत्यादिना कप्रत्यये सुडागमोऽनेन निपात्यते । षत्वं तु 'परिनिविभ्यः-३०४२' इत्यनेन ॥ **विकिरग्रहणमिति**। 'विष्किरः शकुनौ विकिरो वा' इति वृत्तिग्रन्थे पाठः । सूत्रपाठे तु विकिरग्रहणं नास्त्येवेति बोध्यम् ॥ **तस्यापीति** । विकिरशब्दस्यापीत्यर्थः ॥ ( १५२६ ) **कशेरेव कशेति** । कशधातोरेव कशाशब्दो निष्पन्न इत्यर्थः ॥ **धात्वन्तरेति** । 'प्रतिकशः' इत्यत्र प्रतिर्गमेरुपसर्गो, न तु कशेः । 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव' इति न्यायादिति भावः ॥ ( १५२७ ) **प्रस्क**—। **अमन्त्रार्थमिति** । मन्त्रे तु 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ५३७७' इत्यनेनैव सिध्यतीति भावः ॥ ( १५२८ ) **मस्कर**—। मस्करशब्दादिनिना मत्वर्थीयेनेष्टसिद्धौ मस्करिग्रहणं 'परिव्राजक एवायं प्रयोगो यथा स्यात्' इत्येवमर्थमित्याहुः ॥ **कातीरमिति**। 'ईषदर्थे १४८०' इति कोः कादेशः ॥ ( १५३१ ) **पारस्कर इति** । 'पारं करोति' इति विग्रहः । 'कृञो हेतुताच्छील्य-२९१२' इति टः ॥ **किष्किन्धेति** । 'किमपि धत्ते' इति विग्रहे 'आतोऽनुपसर्गे कः ३८८३' । टाप् निपातनात् किमो द्वित्वं पूर्वस्य मलोपः सुट् षत्वं च । 'किं किं दधाति' इति विगृह्णतां मते तु वीप्सायां द्वित्वं सिद्धम् । अन्यत्र तु निपातनादेव । वस्तुतस्तु-रूढिशब्दा एते कथंचिद्व्युत्पाद्यन्त इत्यवयवार्थे नाग्रहः कार्यः ॥ (१५३२) **तद्बृहतोरिति** । गणसूत्रमेतत् । **तादिति** । 'तलोपश्च' इत्यत्रेति शेषः ॥ ( १५३३ ) **प्रायस्य**—। गणसूत्रमेतदपि । 'प्रायः पापं विजानीयाच्चित्तं तस्य

---

१ **भाष्येति** । 'विष्किरः शकुनौ वा' इत्युच्यमाने शकुनौ वा स्याद्, अन्यत्र नित्यम् । इत्यापत्तिनिवारणाय 'विष्किरः शकुनौ विकिरो वा' इत्येव न्यासः करणीयः इति वार्तिकमुपपाद्य तद्वार्तिकोक्तन्यासप्रत्याख्यानाय 'न वावचनेन शकुनिरभिसंबध्यते, किं तर्हि ? निपातनमभिसंबध्यते, विष्किर इत्येतन्निपातनम् । शकुनौ वा निपात्यते-इति' इति भाष्यतः ससुट्कस्यैव शकुनौ नियतत्वं प्रतीयते, न सुड्रहितस्य, इति सुड्रहितप्रयोगो 'विकिरं वैश्वदेविकम्' इत्यादावुपलभ्यमानो निराबाध एवेति भावः ॥ २ **कस्कादिष्विति** । 'पारस्करादिषु' इत्येवमेव पाठः । यथाश्रुतस्त्वपपाठः विसर्गस्य सकारविधायके कस्कादिगणे पाठस्य प्रकृते विसर्गाभावादनुपयोगात् । एवं चाष्टाध्याय्यामस्य पाठः प्रक्षिप्त एवेति भावः ॥ ३ **चर्त्वेनेति** । 'झरो झरि' इति लोपेनेति तूचिततरम् ॥ ४ इदं च "न वै मस्करो यस्यास्तीति—मस्करी—परिव्राजकः । किं तर्हि-'मा कृत कर्माणि, शान्तिर्वः श्रेयसी' इत्याह अतो—मस्करी—परिव्राजकः" इति भाष्येण "माङ्पूर्वात्करोतेरिनिः सुडागमो माङो ह्रस्वश्च निपात्यते" इति कैयटेन च विरोधादुपेक्ष्यम् ॥

## अथ तद्धितेष्वपत्याधिकारः ।

(१५३४) सू॰ समर्थानां प्रथमाद्वा । ४ । १ । ८२ । इदं पदत्रयमधिक्रियते । प्राग्दिशः[२६४७] इति यावत् । सामर्थ्यं परिनिष्ठितत्वम् । कृतसन्धिकार्यत्वमिति यावत् ॥ ( १५३५ ) सू॰ प्राग्दीव्यतोऽण् । ४ । १ । ८३ । तेन दीव्यतीत्यतः[२३३] प्रागणधिक्रियते ॥ ( १५३६ ) सू॰ अश्वपत्यादिभ्यश्च । ४ । १ । ८४ । एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु । वक्ष्यमाणस्य ण्यस्यापवादः ॥ (१५३७) सू॰ तद्धितेष्वचामादेः ।७।२।११७। ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात् ॥ ( १५३८ ) सू॰ किति च ।७।२।११८। किति तद्धिते च तथा । अश्वपतेरपत्यादि—आश्वपतम् । गाणपतम् । गाणपत्यो मन्त्र इति तु प्रामादिकमेव ॥ ( १५३९ ) सू॰ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ४ । १ । ८५ । दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यादणोऽपवादः । दैत्यः । अदितेरादित्यस्य वा—आदित्यः ।

---

विशोधनम् ' इति स्मृतिः ॥ आकृतिगणोऽयमिति । तेन शतात्पराणि परश्शतानि कार्याणीत्यादि सिद्धम् ॥ इह 'सुप्सुपा—९४९—२' इति 'पञ्चमी' इति योगविभागाद्वा समासः। राजदन्तादित्वाच्छतशब्दस्य परनिपातः, पारस्करादित्वात्सुट्[२]॥ इति समासाश्रयविधयः समाप्ताः ॥

---

( १५३४ ) अपवादसंगत्या तद्धितान्विवक्षुस्तदीयमधिकारसूत्रमाह—समर्थानामिति । 'अन्यतरस्यांग्रहणानुवृत्तेः समासोऽपि ' इति वक्ष्यमाणमूलग्रन्थेन समासापवादत्वं सूचितम् ॥ विधेयानिर्देशादुत्तरत्र प्रकृतिविशेषाकाङ्क्षासत्त्वाच्च नायं स्वतन्त्रो विधिरित्याह—अधिक्रियत इति । ' पदत्रयम् ' इत्यनेन प्रत्येकं स्वरितत्वप्रतिज्ञा सूचिता । तत्प्रयोजनं तु कस्यचिन्निवृत्तावप्यपरस्यानिवृत्तिः, तथा च—' प्राग्दिशः—२६४७' इति सूत्रे—समर्थानां प्रथमात्—इति निवृत्तम् , ' वा ' इति त्वनुवर्तत एव ' इति वक्ष्यमाणमूलग्रन्थः संगच्छते ॥ प्राग्दिश इतीति । तत उत्तरेषां प्रत्ययानां स्वार्थिकत्वेन ' समर्थानां प्रथमात्—' इति पदयोः प्रयोजनं नेति भावः ॥ ननु ' समर्थः पदविधिः ९४७' इति परिभाषया गतार्थत्वात् ' समर्थानाम् ' इत्येतद्व्यर्थम् । न च पदविधित्वं नेति शङ्क्यम् , ' घकालतनेषु १३९७' इत्यलुग्विधानात् ' सुबन्तात्तद्धितोत्पत्तिः ' इति सिद्धान्तस्य सकलसंमतत्वादत आह—सामर्थ्यमिति ॥ कृतसंधिकार्यत्वमिति[१] । अस्य फलं तु ' तस्यापत्यम् १५६० ' इति सूत्रे मूल एव स्फुटीभविष्यति । इह ' समर्थात्प्रथमाद्वा ' इति वक्तुं युक्तम् ॥ ( १५३५ ) महोत्सर्गमाह—प्राग्दीव्यत इत्यादिना । सूत्रे ' दीव्यत ' इत्येकदेशोऽनर्थकोऽप्यवधित्वेनोपात्तः ' प्राग्रीश्वरात्—४० ' इतिवदित्येके ॥ अन्ये त्वाहुः[३] ' दीव्यत् ' इति शत्रन्तम् । तेन देवनकर्ता अर्थ एवावधिरिति ॥ ( १५३६ ) अश्वप-प्राग्दीव्यतीयेष्विति । दीव्यतः प्राक् प्राग्दीव्यत् ' अपपरिबहिरञ्चवः पञ्चम्या ९६९' इत्यव्ययीभाव इति प्राञ्चः ॥ ' प्राग्दीव्यतम् ' इति तूचितम् । ' झयः ९८९' इति टच्प्रवृत्तेरिति केचित् । तन्न ' झयः ९८९' इति टचः पाक्षिकत्वात् । अन्यथा ' उपसमिधमुपसमित् ' इति तत्सूत्रस्थमूलोदाहरणस्यासंगत्यापत्तेः । न चात्र टचोऽभावे 'अव्ययानां भमात्रे—१८६४' इति टिलोपे 'प्राग्दीव्यतीये' इति रूपं न स्यादिति शङ्क्यम् , अव्ययीभावस्याव्ययत्वे ' प्रयोजनं लुङ्मुखस्वरोपचाराः ' इति परिगणनात्[४] । प्राग्दीव्यति भवः प्राग्दीव्यतीयः । ' वृद्धाच्छः १८८० ' त्यप् तु न शङ्कनीय एव । ' अमेहक्कतसित्रेभ्य एव १८६३' इति परिगणनात् । 'लुङ्मुखस्वरः' इत्यादिपरिगणनया अनव्ययत्वाच्च ॥ वक्ष्यमाणस्येति । ' पत्युत्तरपदाण्ण्यः[१५३९] ' इति वक्ष्यमाणस्य ॥ ( १५३७ ) तद्धितेष्व—। अचां मध्ये आदिरजेवेति ' अचो ञ्णिति ३५९' इति सूत्रादच इत्यनुवर्तत इत्याशयेन व्याचष्टे—अच इति वृद्धिः स्यादिति । 'मृजेर्वृद्धिः ३२८६' इत्यतोऽनुवर्तत इति भावः ॥ किति च । 'वाहीकः' इत्याद्यर्थमपीदं सुगमव्याख्यानायात्रैवोपन्यस्तम् ॥ 'अचामादेः' इति निर्दिष्टस्थानिकत्वादिक्परिभाषाऽत्र नोपतिष्ठत इत्याशयेनोदाहरति—आश्वपतमित्यादि ॥ प्रामादिकमेवेति । एतच्च हरदत्तग्रन्थे स्थितम् । यदि तु देवतार्थकाणन्ताच्चातुर्वर्ण्यादेराकृतिगणत्वात् ष्यञिति व्याख्यायते, तदा निर्दुष्ट एवायं प्रयोगः । अश्वपति, गणपति, राष्ट्रपति, कुलपति, गृहपति, पशुपति, क्षेत्रपतीत्यश्वपत्यादिः ॥ ( १५३९ ) दित्यदित्या—। पतिशब्दस्योत्तरपदशब्देन बहुव्रीहिं कृत्वा पश्चाद् द्वन्द्वः कार्यो, न तु द्वन्द्वोत्तरं बहुव्रीहिरित्याह—पत्युत्तरपदाच्चेति । 'पत्यन्तात्' इत्युच्यमाने बहुच्पूर्वादपि स्यादित्युत्तरपदग्रहणं कृतम् ॥ दैत्य इति । ननु दितेर्देवताद्यर्थे ण्यः सावकाशः, 'इतश्चानिञः १६०३' इत्यपत्ये ढक् दैतेय इत्यादौ सावकाशः, तथा च दितेरपत्यमित्यत्रोभयप्रसङ्गे परत्वाड्ढक् स्यात् । मैवम्, 'ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम्' इति भाष्ये पूर्वविप्रतिषेधाश्रयणात् । अर्थविशेषे इति किम्,

---

१ कृतसंधीति । 'किं पुनः समर्थम् ? अर्थाभिधाने शक्तम् । किं पुनस्तत् ? कृतवर्णानुपूर्वीकं पदम् ।'इति भाष्योक्तेरिति भावः ॥ २ सुडिति । एवं च सस्य परादित्वेन पदान्तत्वाभावान्न रुत्वविसर्गौ । ' परोरजसे ' इति तु च्छान्दसः प्रयोगः । एतदनुकारिणः कवयस्तु प्रत्यवयन्त्येव । अत एव ' परोक्षे लिट् ' इति सूत्रभाष्ये परोक्षपदसाधनाय निपातनमेवाङ्गीकृतम् ॥ एवं च परस्लक्ष—परसयुत—परस्कोटि—इत्येव रूपाणि भवन्ति न तु 'परोलक्ष—' इत्येवंरूपाणि इति सारम् ॥ ३ अन्ये त्विति। इदं च—"दीव्यतिशब्दे च दीव्यच्छब्दोऽस्ति । किं पुनः कारणं विकृतनिर्देशः क्रियते एतज्ज्ञापयत्याचार्यः—भवत्येषा परिभाषा ' एकदेशविकृतमनन्यवद्भवति' इति"इति भाष्याविरुद्धम् ॥ ४ परिगणनादिति । भाष्ये परिगणनस्य प्रत्याख्यातत्वादभ्युच्चयमात्रमेतत् । एवं च वैकल्पिकेष्वपि भावानुष्ठाने धर्माधिक्याद्वजेवोचितमिति सर्वं निरवद्यम् ॥

प्राजापत्यः ॥ **यमाच्चेति काशिकायाम्** ॥ याम्यः ॥ ( १५४० ) (वा) **पृथिव्या ञाञौ** ॥ पार्थिवा । पार्थिवी ॥ (१५४१) (वा) **देवाद्यञञौ** ॥ दैव्यम् । दैवम् ॥ (१५४२) (वा) **बहिषष्टिलोपो यञ्च** ॥ बाह्यः ॥ (१५४३) (वा) **ईकक्च** ॥ बाहीकः ॥ ( १५४४ ) (वा) **स्थाम्नोऽकारः** ॥ अश्वत्थामः । पृषोदरादित्वात्सस्य तः ॥ ( १५४५ ) **भवार्थे तु लुग्वक्ष्यते** ॥ अश्वत्थामा ॥ ( १५४६ ) (वा) **लोम्नोऽपत्येषु बहुषु** ॥ अकारः । बाह्वादीञोऽपवादः । उडुलोमाः । उडुलोमान् । बहुषु किम् । औडुलोमिः ॥ ( १५४७ ) (वा) **गोरजादिप्रसङ्गे यत्** ॥ गव्यम् । अजादिप्रसङ्गे किम् । गोभ्यो हेतुभ्य आगतं गोरूप्यम् । गोमयम् ॥ (१५४८) (सू) **उत्सादिभ्योऽञ्** ।४।१।८६। औत्सः ॥ (१५४९) (वा) **अग्निकलिभ्यां ढग्वक्तव्यः** ॥ अग्नेरपत्यादि–आग्नेयम् । कालेयम् ॥ इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ॥

---

(१५५०) (सू) **स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्** ।४।१।८७। धान्यानां भवने इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्-

---

'औष्ट्रपतम् । उष्ट्रपतिर्नाम पत्रम् । तस्येदम् २०६४' 'पत्राध्वर्युपरिषदश्च २०७०' इत्यञ् । इह पूर्वविप्रतिषेधेन 'तस्येदम्' इत्यर्थे ण्यो न भवति । इदमित्यस्य सामान्यार्थत्वात् । कथं तर्हि 'दैतेयः' इति । अत्राहुः–'कृदिकारात्–७०७' इति ङीषन्तात् 'स्त्रीभ्यो ढक् १६०१' । ण्यस्तु न भवति, लिङ्गविशिष्टपरिभाषाया अनित्यत्वात् । न च 'अन्तादिवच्च ११७' इति पूर्वस्यान्तवद्भावेन स्यादेव ण्य इति भ्रमितव्यम्, दितिशब्दान्ङीषि कृते 'यस्येति च ४३१' इति लोपेन सवर्णदीर्घाभावादिति । आदित्यशब्दाण्ण्यप्रत्यये 'यस्य–४३१' इति लोपे 'हलो यमां––९१' इति पाक्षिको यलोपः । न चाल्लोपस्य स्थानिवत्त्वम्, यलोपे–'न पदान्त–१७७' इति तन्निषेधात् 'पूर्वत्रासिद्धे न स्थानिवत् ३३८' इत्युक्तेश्च ॥ **काशिकायामिति** । भाष्ये तु न दृष्टमिति भावः ॥ अणन्तात् स्वार्थिकेन ष्यञा प्रयोगः सूपपादः । स्त्रियां ङीष् न भवति, षितां ङीषोऽनित्यत्वात् ॥ (१५४०) **पृथिव्याः**–ञाञोः फलभेदज्ञापनस्य स्त्रीलिङ्गमुदाहरति—**पार्थिवा । पार्थिवीति** ॥ (१५४२) **बहिषः**—। टिलोपवचनम् 'अव्ययानां भमात्रे–१८६४' इत्यस्यानित्यतां ज्ञापयितुम् । तेन आरातीय इति सिद्धम् ॥ (१५४४) **अश्वत्थाम इति** । भाष्योदाहरणात्तदन्तविधिः । न च बलवाचिनः स्थामन्शब्दस्यापत्येन योगासंभवाद्वचनारम्भसामर्थ्यात्तदन्तविधिः स्यादिति वाच्यम्, जाताद्यर्थेन तत्संभवेन सामर्थ्योपक्षयात् । अश्वस्येव स्थाम यस्येति बहुव्रीहिः ॥ ( १५४६ ) **उडुलोमा इति** । उडूनि नक्षत्राणीव लोमान्यस्येति विग्रहः । केवलस्यापत्येन योगासंभवात्तदन्तविधिस्ततोऽकाराट्टिलोपः ॥ ( १५४७ ) **गोरिति** । न केवलमपत्य एवायं, किंतु प्राग्दीव्यतीयेषु सर्वेष्वर्थेष्विति ज्ञेयम् ॥ **गव्यमिति** । गवि भवं गौर्देवता अस्य, गोरिदमित्यादिरर्थः ॥ केचित्तु–भाष्ये सर्वत्रग्रहणात्प्राग्दीव्यतीयेभ्योऽन्यस्मिन्नर्थेऽप्ययं यत् । तेन गवा चरति गव्य इत्याद्यपि भवतीत्याहुः ॥ **गोरूप्यमित्यादि** । 'हेतुहेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः २०२४' 'मयड्वा—२०९६' इति रूप्यमयटौ ॥ (१५४८) **उत्सादिभ्योऽञ्** । अणस्तदपवादानामिञादीनां चायमपवादः ॥ इह 'बष्कयासे' इति गणसूत्रम् । असे असमासे, पूर्वाचार्यसंज्ञेयम् । बष्कयस्यापत्यादि बाष्कयः । असे किम्, गौबष्कयिः ॥ 'असे' इति निषेधाल्लिङ्गादिह तदन्तविधिः, तेन धेनुशब्दस्येह पाठाद्धेनूनां समूह आधेनवमिति सिद्धम् ॥ नन्वेवं धैनुकं गौधेनुकमित्यत्राञ् प्रवर्तेत, 'अचित्तहस्तिधेनोः–१७७६' इति सूत्रे धेनुशब्दग्रहणाद्धैनुकमिति सिद्धावपि गौधेनुकं न सिध्येदिति चेत् । न, 'धेनुरनञ् इकमुत्पादयति' इति विशेषवचनस्य भाष्ये स्थितत्वात् । इकं, ठकमित्यर्थः ॥ ( १५४९ ) **अग्निकलिभ्यामिति** । अयं भावः–'साऽस्य देवता १७३०' इत्यधिकारे 'अग्नेर्ढक् १७४१' इति सूत्रं 'दृष्टं साम १७०९' इत्यधिकारे 'कलेर्ढक् १७११' इति वार्तिकं चापनीय प्राग्दीव्यतीयेष्विदमेव पठनीयम् । तेनाग्नेरपत्यम् , अग्निना दृष्टं साम, अग्नेरिदम् , अग्नौ भवम्, अग्नेरागतमाग्नेयमिति सिध्यति । तथा कलेरपत्यमित्याद्यर्थे कालेयमपि सिध्यतीति । एतेन 'यदकालयत्तत्कालेयस्य कालेयत्वम् ' इति श्रुतावर्थान्तरेऽपि ढको दर्शनात् 'कलेर्ढक् १७११' इति सूत्रमपार्थकमिति मीमांसकोक्तिः परास्ता । वार्तिके सूत्रत्वोक्तिरप्यवैयाकरणमीमांसकप्रतारणार्थेति दिक् ॥ इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ॥

---

( १५५० ) **स्त्रीपुंसाभ्याम्**—। प्रागित्यनुवर्तते तदाह––**प्रागर्थेष्विति** ॥ **पौंस्न इति** । इह ' स्वादिषु–३३१' इति पदत्वात्संयोगान्तलोपेन पुंसः सस्य निवृत्तावपि प्रत्ययसकारः श्रूयत एव । अत एवोभाभ्यां परतो नञेव न विहितः, पौंस्नमिति रूपाऽसिद्धिप्रसङ्गात् । स्यादेतत् , उभाभ्यामपि प्रकृतोऽञेवास्तु, तत्संनियोगेन ' स्त्रीपुंसयोर्नुक् च' इति नुगेव विधेय-

---

१ **वक्ष्यत इति** । 'अन्तः पूर्वपदात्'––इति सूत्रे * स्थाम्नो लुक् * इति वार्तिकेनेति भावः ॥ क्वचित्तु 'वाच्य' इत्येव पाठ उपलभ्यते ॥ २ **अपत्येष्विति** । अपत्यार्थकस्यापि साधारणार्थप्रत्ययेषूल्लेखोऽकारप्रत्ययानुवृत्त्यर्थम् ॥ ३ **केवलस्येति** संज्ञाभूतस्य तु "अभिव्यक्त–" इति न्यायविरोधान्न ग्रहणमिति भावः ॥ ४ **टिलोप इति** । 'नस्तद्धिते' इत्यनेनेति भावः । अश्वत्थाम इत्यत्रापीत्थमेवेति बोध्यम् ॥ ५ एतच्च स्वीयभाष्यविस्मरणमूलकम् पस्पशायां ' **भवे च तद्धितः** ' इति संदर्भे भाष्यकृता " **आचार्याः सूत्राणि कृत्वा** " इति वदता वार्तिकानामपि सूत्रत्वस्याङ्गीकृतत्वादिति बोध्यम् ॥ ६ **रूपासिद्धीति** । न च 'स्त्रिया नञ् भवनात् पुंसो भं च ' इति कार्यम्, लाघवाभावात् । आकडाराधिकारस्थत्वाभावेनानया पदसञ्ज्ञाया बाधस्य न्यायेनाप्राप्तेश्च । पदत्वात्संयोगान्तलोपः, भत्वान्नानुस्वार इत्येवमप्याप्तेश्च ॥

स्नञौ स्तः। स्त्रैणः। पौंस्नः। वत्यर्थे न, स्त्रीपुंवच्चेति ज्ञापकात्। स्त्रीवत्। पुंवत्॥ ( १५५१ ) (सू) **द्विगोर्लुगनपत्ये**।४।१।८८। द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात्। पञ्चसु कपालेषु संस्कृतः पुरोडाशः—पञ्चकपालः। द्विगोर्निमित्तमिति किम्। पञ्चकपालस्येदं खण्डं—पाञ्चकपालकम्॥ अजादिः किम्। पञ्चगर्गरूप्यम्। अनपत्ये किम्। द्वयोर्मित्रयोरपत्यं द्वैमित्रिः (१५५२) (सू) **गोत्रेऽलुगचि**।४।१।८९। अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात्। गर्गाणां छात्राः, वृद्धाच्छः॥ ( १५५३ ) (सू) **आपत्यस्य च तद्धितेऽनाति**।६।४।१५१। हलः परस्यापत्ययकारस्य लोपः स्यात्तद्धिते परे न त्वाकारे। गार्गीयाः। प्राग्दीव्यतीये किम्। गर्गेभ्यो हितं—गर्गीयम्। अचि किम्। गर्गेभ्य आगतं गर्गरूप्यम्॥ ( १५५४ ) (सू) **यूनि लुक्**।४।१।९०। प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात्। ग्लुचुकस्य गोत्रापत्यं—ग्लुचुकायनिः। वक्ष्यमाणः [१६७३] फिन्। ततो यून्यण्। ग्लौचुकायनः, तस्य छात्रोऽपि ग्लौचुकायनः। अणो लुकि वृद्धत्वाभावाच्छो न॥ ( १५५५ ) (सू) **पैलादिभ्यश्च**।२।४।५९। एभ्यो युवप्रत्ययस्य लुक्। पीलायाः [१६६८] वेत्यण्। तस्मादणो ऋच्छं [१६६८] इति फिञ्। तस्य लुक्। पैलः पिता पुत्रश्च॥ ( १५५६ ) (ग)

---

ताम्। न चैवं 'स्त्रैणाः, पौंस्नाः' इत्यत्र 'यञञोश्च १५८४' इति लुक्प्रसङ्गः, स्त्रैणानां संघ इत्यादौ 'संघाङ्कलक्षणेषु–२०७७' इत्यणप्रसङ्गश्च स्यादिति वाच्यम्, उभयत्रापि 'गोत्रे' इत्यनुवृत्तेः, प्रवराध्यायप्रसिद्धं तत्र गोत्रम्। अन्यथा 'पौत्राः, दौहित्राः,' इत्यत्राप्यञो लुक् स्यात्। एवं च 'नञ्स्नञीकक्ख्युन्–६५५' इति वार्तिके नञ्स्नञ्ग्रहणं विना अञन्तत्वादेव ङीप् सिध्यतीत्यपरमप्यनुकूलमिति चेत्। अत्राहुः—नुकि 'नस्तद्धिते ९८६' इति टिलोपः स्यात्। न चैवं नुगानर्थक्यम्, टिलोपप्रवृत्त्यैव नुकः सार्थकत्वात्। यद्यपि स्त्रीशब्दे तस्य सार्थक्यं नास्ति, 'यस्येति च–४३१' इत्यनेनापीकारलोपसंभवात्। तथापि 'श्रीर्देवताऽस्य श्रायं हविः' इत्यत्रेव लोपात्परत्वाद्वृद्धिः स्यात्, नुकि तु टिलोपः प्रवर्तते इति स्त्रीशब्देऽपि नुकः सार्थक्यमस्तु। तस्मान्नञ्स्नञाविति यथान्यासमेव स्वीकर्तव्यमिति॥ अन्ये तु 'स्त्रीपुंसयोर्नुक् च' इत्यस्तु, आगमे अकारो विवक्षितः। तस्य च 'यस्येति च ४३१' इति लोपे कृतेऽपि स्थानिवत्त्वाट्टिलोपो न भविष्यति। एवं च 'टिड्ढाणञ्–६५१' इति सूत्रेणैव ङीप्सिद्धौ नञ्स्नञोरुपसंख्यानं माऽस्त्विति महदेव लाघवमित्याहुः॥ **वत्यर्थे नेति**। स्त्रीपुंसाभ्यां नञ्स्नञौ वत्यर्थे न प्रवर्तेते इति सामान्यापेक्षं ज्ञापकमिति भावः॥ अत एवोदाहरति—**स्त्रीवदिति**। 'आ च त्वात्–२४१३' इति चकारो नञ्स्नञ्भ्यां त्वतलोः समावेशार्थ इति वक्ष्यति। तेन स्त्रीत्वं स्त्रीता, पुंस्त्वं पुंस्तेति सिद्धम्॥ **( १५५१ ) द्विगोर्लुगनपत्ये**। द्विगोरिति षष्ठी, तदर्थश्च हेतुत्वं, तच्च भाविनोऽप्युपपद्यते, बुद्ध्याऽध्यवसायादित्याशयेनाह—**द्विगोर्निमित्तमिति**॥ **अजादिरिति**। एतच्चोत्तरसूत्रात् 'अचि' इत्यपकर्षाल्लभ्यते, वाग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणेन वा॥ प्राग्दीव्यतीयः किम्, पञ्चभ्यः कपालेभ्यो हितं पञ्चकपालीयम्॥ **( १५५२ ) गोत्रेऽलुगचि**। गोत्रे किम्, गोत्रार्थकप्रत्ययस्यैवालुग्यथा स्यात्। नेह, कुवलस्येदं कौवलं, बदरस्येदं बादरम्। कुवलीबदरीशब्दौ हि गौरादिङीषन्तौ ताभ्यां फलरूपे विकारे 'अनुदात्तादेश्च २०९३' इत्यञ्। तस्य 'फले लुक् २११६' इति लुक्, तत इदमर्थे अजादिप्राग्दीव्यतीये विवक्षितेऽनेनालुङ्न भवतीत्यवृद्धत्वाच्छो नेति भावः॥ **विवक्षित इति**। अचीति विषयसप्तमी। परसप्तमीत्वे तु अवृद्धत्वाच्छस्याप्राप्तौ अणेव स्यादिति भावः॥ **गर्गाणामिति**। अपत्यबहुत्वविवक्षायां 'यञञोश्च १५८४' इति लुक्॥ स चाजादिप्रत्यये चिकीर्षिते अनेन प्रतिषिद्ध इति गार्ग्यशब्दाच्छे कृते तस्य ईयादेशः॥ 'यस्येति च ४३१' इत्यकारलोपे यलोपार्थमाह—**आपत्यस्य चेति**। 'ढे लोपो कद्र्वाः १६२३' इत्यतो लोप इत्यनुवर्तते, 'सूर्यतिष्य–६९५' इत्यतो य इति, 'हलस्तद्धितस्य ६५८' इत्यतो हल इति च तदाह—**हलः परस्येत्यादि**। आभीयत्वेऽप्यल्लोपो नासिद्धः, आरम्भसामर्थ्यात्। अत एवोपधाया इति नानुवर्तितमिति व्याचष्टे—**यकारस्येति**। आपत्यस्येति किम्, सांकाश्यकः। काम्पिल्यकः। 'संकाशादिभ्यो ण्यः १८२२' ततो 'धन्वयोपधात्–१८९०' इति वुञ्। तद्धिते इति किम्, गार्ग्यौ गार्ग्ययोः। अनातीति किम्, गार्ग्यायणः॥ **गार्गीयमिति**। 'तस्मै हितम् २२६२' इति छः **( १५५४ ) यूनि लुक्**। प्राग्दीव्यतीय इति वर्तते, अचीति च, प्रत्ययाधिकाराच्च प्रत्यय इति लभ्यते तदाह—**प्राग्दीव्यतीयेऽजादौ प्रत्यय इति**। 'प्रत्ययस्य लुक्–३६५' इति संज्ञाकरणाल्लब्धो यः प्रत्ययः स 'यूनि' इत्यनेन विशेष्यते। तथा च—'यूनि यः प्रत्ययस्तस्य लुक्' इत्यर्थस्तदाह—**युवप्रत्ययस्येति**॥ **वक्ष्यमाण इति**। 'प्राचामवृद्धात्फिन्बहुलम् १६७३' इति वक्ष्यमाणः। अजादौ किम्, ग्लौचुकायनरूप्यम्॥ प्राग्दीव्यतीये किम्, ग्लौचुकायनीयम्। 'तस्मै हितम् २२६२' इति छः॥ इह 'द्विगोर्लुगनपत्येऽचि' 'यूनि' 'गोत्रे न' इत्येव सूत्रयितव्यम्। तथा च 'लुगलुग्ग्रहणं शक्यमकर्तुम्' इति मनोरमायां स्थितम्। तत्र 'फक्फिञोः–१५५९' इति सूत्रे 'यूनि' इत्यस्य [२] मण्डूकप्लुतिराश्रयणीयेति क्लेशोऽयं लाघवानुरोधेन सोढव्य इति भावः॥ **(१५५५) पैलादिभ्यश्च**। 'ण्यक्षत्रियार्ष–१८०६' इत्यतो 'यूनि लुक्' इति वर्तते तदाह—**युवप्रत्ययस्य लुगिति**॥ **पीलाया वेत्यादि**। अपत्येऽणि विहिते गोत्रापत्येऽप्यणेव 'एको गोत्रे १५६९' इति वक्ष्यमाणत्वात्। ततोऽणन्तात्पैलशब्दादपत्येऽपि विधीयमानः फिञ् युवापत्ये पर्यवस्यति। तस्य च फिञोऽनेन लुगित्यर्थः॥ एवं च पीलाया अपत्ये गोत्रापत्ये

---

१ विवक्षितान्त्याकारविशिष्टागमस्याप्रसिद्धेश्चिन्त्यमेतत् इति ल० श० शेखरे॥ २–'यूनि' 'गोत्रे न' इत्यनयोर्मध्ये 'फक्फिञोः–' इति यथान्याससूत्रकरणे तु नायं क्लेशः॥

तद्राजाच्चाणः ॥ अङ्गमगधेत्यणन्तादाङ्गशब्दादणो द्व्यचः इति फिञो लुक् । आङ्गः । पिता पुत्रश्च ॥ ( १५५७ ) **इञः प्राचाम्** । २ । ४ । ६० । गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात् तच्चेद्गोत्रं प्राचां भवति । पन्नागारस्यापत्यम् अत इञ् । यञिञोश्चेति फक् । पान्नागारिः पिता पुत्रश्च । प्राचां किम् । दाक्षिः पिता । दाक्षायणः पुत्रः ॥ ( १५५८ ) **न तौल्वलिभ्यः** । २ । ४ । ६१ । तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुक् न स्यात् । पूर्वेण प्राप्तः । तुल्वलः । तत इञि फक् । तौल्वलिः पिता । तौल्वलायनः पुत्रः ॥ (१५५९) **फक्फिञोरन्यतरस्याम्** ४ । १ । ९१ । यूनि लुगिति नित्ये लुकि प्राप्ते विकल्पार्थं सूत्रम् । कात्यायनस्य छात्राः कातीयाः । कात्यायनीयाः । यस्कस्यापत्यं यास्कः । शिवाद्यण् । तस्यापत्यं युवा—यास्कायनिः । अणो द्व्यचः इति फिञ् तस्य छात्राः यास्कीयाः । यास्कायनीयाः ॥ ( १५६० ) **तस्यापत्यम्** । ४ । १ । ९२ । षष्ठ्यन्तात् कृतसन्धेः प्रथमादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः । उपगोरपत्यम्—औपगवः ॥ ( १५६१ ) आदिवृद्धिरन्त्योपधावृद्धी बाधते ॥ (१५६२) तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् । उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥ योगविभागस्तु, भानोरपत्यं भानवः । कृतसन्धेः किम् । सौत्थितिः । अकृतव्यूहपरिभाषया सावुत्थितिर्मा भूत् ॥ समर्थपरिभाषया नेह—वस्त्रमुपगोरपत्यं

---

युवापत्ये चावैरूप्येण पैलशब्दः प्रयुज्यत इत्याह—**पैलः पिता पुत्रश्चेति** । पैलादिषु ये इञन्ताः शालङ्किसात्यकिऔदमेयिपैङ्गलिप्रभृतयस्तेभ्यः ‘इञः प्राचाम् १५५७’ इति लुकि सिद्धे अप्राचामर्थः पाठ इति ज्ञेयम् ॥ ( १५५६ ) **तद्राजाच्चाणः** ॥ **गणसूत्रमिदम्** । तद्राजसंज्ञकात्परस्य युवप्रत्ययस्य लुगित्यर्थः ॥ ( १५५७ ) **इञः**—। **तच्चेद्गोत्रं प्राचां भवतीति** । इह प्राचांग्रहणं गोत्रविशेषणं न तु ‘प्राचामवृद्धात्—१६७३’ इत्यादिवद्विकल्पार्थमित्यत्र व्याख्यानं शरणम् ॥ **दाक्षिः पितेत्यादि** । दक्षस्यापत्यं गोत्रापत्यं च पुमान्दाक्षिः । युवापत्यं तु दाक्षायण इति भावः ॥ ( १५५८ ) **न तौल्वलि**—। बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाद्यर्थावगतिरित्यभिप्रेत्याह—**तौल्वल्यादिभ्य इति** । दैवमित्रि । दैवयज्ञि । प्राफालि । आसुरि । निमेषि । पौष्करसादि । वैकर्णीत्यादितौल्वल्यादिः ॥ ( १५५९ ) **फक्**—। **कात्यायनस्येति** । कतस्य गोत्रापत्यं कात्यः । गर्गादित्वाद्यञ् । ततो यूनि ‘यञिञोश्च १५७९’ इति फक् ॥ **कातीया इति** । ‘आपत्यस्य च—१५५३’ इति यलोपः ॥ ( १५६० ) **तस्यापत्यम्** । ‘तस्य’ इति न स्वरूपग्रहणं, किन्तु षष्ठ्यन्तमात्रोपलक्षणमित्याशयेनाह—**षष्ठ्यन्तादिति** । पञ्चम्यर्थोऽध्याहारलभ्यः । अनुकरणात्पञ्चम्याः सौत्रो लुग्वा ॥ **उक्ता इति** । अण्यादय उक्ताः ॥ **वक्ष्यमाणा इति** । इञादयः॥(१५६१)ननु ‘उपगु अ’ इति स्थिते ओर्गुणात्परत्वात् ‘अचो ञ्णिति ३५९’ इति वृद्ध्या भाव्यम् । गुणस्तु पिचव्यादौ सावकाशः । कृते च गुणे अवादेशे च ‘अत उपधायाः ३०४९’ इति वृद्ध्या भाव्यमत आह—**आदिवृद्धिरिति** । परत्वादिति भावः । अन्त्योपधावृद्ध्योरवकाशः—गौः, पाचकः । आदिवृद्धेस्तु—सुश्रुत् सौश्रुतः । ‘त्वाष्ट्रो जाग्रतः’ इत्यादौ तूभयप्रसङ्गे परत्वादादिवृद्धिरेव भवति । लक्ष्यानुरोधेनात्र सकृद्गतिन्यायस्यैवाश्रयणात् । अनुशतिकादिषु पुष्करसच्छब्दपाठोऽप्यत्र लिङ्गम् । अन्यथा आद्युपधावृद्धिभ्यां पौष्करसादेः सिद्धत्वात्तेषु पाठोऽनर्थकः स्यात् । न च ‘पुष्करसदा चरति’इत्यर्थे ठकि पौष्करसादिकः’ इत्येतदर्थमनुशतिकादिपाठ आवश्यकः ञिति णित्येव उपधावृद्धेः स्वीकारान्न तु कितीति वाच्यम्, अनभिधानाट्ठगत्र न भवतीत्यादिसमाधानस्य कैयटे स्थितत्वात् । एतेन भिन्नविषये बाध्यबाधकभावो नोपपद्यत इति शङ्का निरस्ता । उक्तज्ञापकेन ‘सत्यपि संभवे बाधनं भवति’ इत्यवश्याश्रयणीयत्वात् ॥ नन्वेवमपि ‘जाग्रतः’ इत्यादावुपधावृद्धिर्बाध्यताम् । औपगव इत्यत्र त्वादिवृद्धिप्रवृत्तिवेलायामुपधावृद्धेरप्राप्त्या कथं बाधः स्यादिति चेत् । अत्राहुः—जाग्रत इत्यादावुपधावृद्धेर्बाध्यत्वे निर्णीते कचित्कालान्तरप्राप्ताया अपि तस्या बाध्यत्वौचित्यादिति । स्यादेतत्, यत्रादिवृद्धिर्न जाता तत्रान्त्योपधालक्षणा वृद्धिः कस्मान्न भवति । व्यासोर्भावो वैयसवम्‘इगन्ताच्च—२४३५’इत्यण् । व्यापदि भवं वैयापदम् । ‘तत्र भवः १९८९’इत्यण् । अत्र कैयटः—तत्राप्यैचौ परत्वात्तद्बाधकाविति सर्वेष्टसिद्धिरिति॥(१५६२)शाब्दबोधे वैलक्षण्यसत्त्वेऽपि तदनादरेणाक्षिपति—**तस्येदमित्यपत्येऽपीति** । इदमर्थे अपत्यसमूहविकारादीनामन्तर्भावादपत्येऽपि ‘तस्येदम् २०६४’ इत्यण् प्रवर्तत इति किमनेन ‘तस्यापत्यम् १५६०’ इति सूत्रेणेत्यर्थः । यद्यपि ‘अत इञ् १५७१’ इत्याद्यर्थं ‘तस्यापत्यम् १५६०’ इत्येतद्वक्तव्यम्, तथापि योगविभागः किमर्थ इत्याक्षेपोऽत्र बोध्यः ॥ समाधत्ते—**बाधनार्थमिति** । ‘तस्येदम् २९०६४’ इत्यस्य यद्बाधकं ‘वृद्धाच्छः १८८०’ इति तद्बाधनार्थं पृथक् सूत्रं कृतं भवेदित्यर्थः ॥ ननु ‘तस्येदम् २०६४’ इत्यणस्तदपवादस्य वृद्धाच्छस्य च शैषिकत्वादपत्यार्थे प्रसक्तिरेव नास्ति, ‘अपत्यादिचतुरर्थीपर्यन्तेभ्यो योऽन्योऽर्थः स शेषः’ इत्यभ्युपगमादत आह—**उत्सर्गः शेष एवासाविति** । असौ अपत्यार्थः । अयं भावः—असति योगविभागे अदन्तबाह्वादिप्रकृतिसंबन्धस्यैवापत्यार्थस्योपयोगादुपग्वादिप्रकृतिसंबद्धोऽपत्यार्थः शेष एव स्यात् । तथा चाणं बाधित्वा भान्वादिभ्यो वृद्धाच्छः प्रसज्येत । योगविभागे तु कृते प्रकृतिसामान्यसंबद्धस्याप्यपत्यार्थस्योपयोगाच्छेषत्वाभावेन छस्य प्राप्तिरेव नास्तीति ॥ ननु उपग्वादेरवृद्धत्वेन छस्य प्रसक्त्यभावान्निष्फलो योगविभाग इत्यत आह—**वृद्धानीति** । प्रातिपदिकानीति शेषः ॥ **कृतसंधेः किमिति** । अन्तरङ्गत्वात् संधौ कृतायां तदुत्तरमेव प्रत्ययो भविष्यतीत्यधिकारसूत्रस्थं समर्थपदग्रहणं किमर्थमिति प्रश्नः ॥ **अकृतेति** । इयं च परिभाषा समर्थग्रहणेन ज्ञापितेति हरदत्तादयः,

चैत्रस्य । प्रथमात्किम् । अपत्यवाचकात्षष्ठ्यर्थे मा भूत् । वाग्रहणाद्वाक्यमपि । दैवयज्ञीति सूत्रादन्यतरस्यांग्रहणानुवृत्तेः समासोऽपि—उपग्वपत्यम् । जातित्वान् ङीष्—औपगवी । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ॥

( १५६३ ) ॐ अपत्यं पौत्रप्रभृति गोत्रम् । ४ । १ । १६२ । अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥

( १५६४ ) ॐ जीवति तु वंश्ये युवा । ४ । १ । १६३ । वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युव-

---

लोकतः सिद्धेत्यन्ये ॥ **स्त्रावुत्थितिर्मा भूदिति** । अन्तरङ्गपरिभाषाया अपवादभूतया 'अकृत-७३' इत्यनया अकृतसंधेरेव प्रत्ययः स्यात् । तन्निवारणाय समर्थग्रहणमधिकारसूत्रस्थमावश्यकमिति भावः । यद्यपि तत्र 'सामर्थ्यं परिनिष्ठितत्वम्, इत्यविशेषणोक्तं, तथापि ङ्याप्प्रातिपदिकांशे एव परिनिष्ठितत्वं न तु सुब्विशिष्टे इत्यवधेयम् । तेन औपगवः दण्डिमानित्यादि सिद्धम् । अन्यथा 'औपैगदण्डीमान्' इत्यादि स्यात् 'अश्विमानण् ५३१०' इत्यादिनिर्देशश्चेह लिङ्गम् ॥ यदि तु पामादिगणे 'विष्वगित्युत्तरपदलोपश्च २५७६' इत्यत्राकृतसंधिग्रहणेन 'परिनिष्ठितात् तद्धितोत्पत्तिः' इत्यभ्युपगम्यते । तर्हि व्यर्थमेव समर्थग्रहणमित्याहुः ॥ **प्रथमात्किमिति** । 'तस्यापत्यम् १५६०' इत्यत्र निर्दिष्टपदद्वयमध्ये प्राथमिकमेव प्रकृतिसमर्थकं, न त्वपत्यम् । तथा च-प्रकृत्याकाङ्क्षायां तदेव ग्रहीष्यत इति किं तेन 'प्रथमात्' इत्यनेनेति प्रश्नः ॥ **अपत्यवाचकादिति** । 'तस्यापत्यम् १५६०' इत्यादिना विहितः प्रत्ययो यथा षष्ठ्यन्तोपग्वादिशब्दादभ्युपगम्यते, तथा अपत्यवाचकदेवदत्तादिशब्दात्प्रत्ययो भवत्विति शङ्का स्यात्, तद्वारणार्थं प्रथमाद्ग्रहणमावश्यकमिति भावः ॥ ननु 'उपगोरपत्यम्' इति विग्रहवाक्येऽपत्यवाचकस्याप्राथम्येऽपि 'अपत्यमुपगोः' इति वाक्ये प्राथम्यात्स्यादेवापत्यवाचकात्प्रत्यय इति चेत् । मैवम्, लक्षणापेक्षं प्राथम्यं नियतत्वादत्राश्रीयते, न तु विग्रहापेक्षमनियतम् । अन्यथा 'प्रथमात्' इत्येतन्निरर्थकं स्यादिति ॥ **षष्ठ्यर्थे मा भूदिति** । अयमर्थः-यथा इन्द्रो देवता अस्य हविष इति ऐन्द्रं हविरिति प्रथमान्तात्प्रत्ययो भवति, तथा उपगुरपत्यमस्य देवदत्तस्य 'औपगवो देवदत्तः' देवदत्तोऽपत्यमस्योपगोः 'दैवदत्तिरुपगुः' इति मा भूदिति । एतच्च कैयटे स्पष्टम् । नन्वपवादत्वात्तद्धितः समासं नित्यं बाधेत । न च तद्धितस्य वैकल्पिकत्वात्पक्षे सोऽपि भविष्यतीति वाच्यम् । यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते, तत्रापवादेन विनिर्मुक्ते उत्सर्गो न प्रवर्तते' इति 'पारेमध्ये-९७५' इत्यत्र वाग्रहणेन ज्ञापितत्वादित्याशङ्क्याह—**अन्यतरस्यांग्रहणानुवृत्तेरिति** ॥ **जातित्वादिति** । 'गोत्रं च चरणैः सह-' इत्यनेनेति शेषः । प्राचा तु-'अणन्तत्वान्ङीप्' इत्युक्तम् । तद्व्याख्यातृभिश्च 'टिड्ढाणञ्-' इत्यनेनेत्युक्तम् । तदुभयमपि 'गोत्राचून्यस्त्रियाम्' इति सूत्रस्थभाष्यानुरोधेन । 'गोत्रं च चरणैः-७४६' इत्यत्र कृत्रिमं गोत्रमेव गृह्यते न त्वपत्यमात्रमित्याशयेन प्रवृत्तमिति बोध्यमित्याहुः ॥ सूत्रस्थान्महोत्सर्गान् क्रमेणोदाहरति—**आश्वपत इत्यादि** ॥ **औत्स इति** । 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमरः । तस्य चापत्येन योगस्तु 'गाङ्गेयो भीष्मः' इतिवत् ॥ **( १५६३ ) अपत्यं पौत्र—**। नन्वपत्यग्रहणं व्यर्थं, पौत्रादेरपत्यत्वाव्यभिचारादित्यत आह—**अपत्यत्वेन विवक्षितमिति**। विवक्षितमिति किं, वस्तुतः पौत्रप्रभृत्येव यदा शेषत्वेन विवक्ष्यते 'गर्गस्येदम्' इति, तदा मा भूदित्याहुः ॥ अन्ये तु-वस्तुतः पौत्रादीनामेव तत्त्वेन विवक्षायां संज्ञा मा भूत्, अपत्यत्वेन विवक्षायामेव यथा स्यादित्येवमर्थं तत् । तेन औपगव इत्यादावप्यणर्थस्य गोत्रसंज्ञा सिध्यति । न ह्यणः पौत्रत्वादिकं शक्यतावच्छेदकं किं त्वपत्यत्वमेव । अन्यथा गोत्राधिकारस्थयञाद्यर्थस्यैव गोत्रसंज्ञा स्यादिति । नन्वपत्याधिकारे गोत्रयुवसंज्ञाकरणसामर्थ्यादपत्यमिति लभ्यत एवेति तेनैवोक्तप्रयोजनसिद्धौ किमनेनात्रापत्यग्रहणेनेति चेत् । अत्राहुः—'ते तद्राजाः १६८४' इत्यत्र तच्छब्देन 'जनपदशब्दात् क्षत्रियादञ् १६७५' इत्यादिना विहिता ये अञादयस्त एव गृह्यन्ते, न तु ततः प्राक्तनप्रत्ययाः, गोत्रयुवसंज्ञाकाण्डेन विच्छिन्नत्वादिति वक्ष्यते । तथा चापत्याधिकारपठनसामर्थ्यस्योपक्षयादपत्यस्यासंबन्धशङ्कानिराकरणाय पुनरपत्यग्रहणमिह कृतमिति । पौत्रप्रभृतीति किम्, अनन्तरापत्ये मा भूत् । कौञ्जिः, गार्गिः । न चैवमप्याङ्गिरसः पौत्रे गर्गस्यानन्तरे अतिप्रसङ्ग इति वाच्यम्, 'यस्य पौत्रादि तं प्रत्येव गोत्रसंज्ञा' इति स्वीकारात् । एवं च गार्गिं प्रत्यनन्तरापत्यत्वेन विवक्षायामपि गर्गं प्रति गोत्रत्वं निष्प्रत्यूहमिति स्यादेव गर्गाद्यञिति दिक् ॥ **( १५६४) जीवति तु वंश्ये-**। पितृपितामहाद्युत्पादकप्रबन्धो वंशः, तत्र भवो वंश्यः । दिगादित्वाद्यत् । 'पौत्रप्रभृति' इत्यनुवृत्तं षष्ठ्या विपरिणम्यते व्याख्यानात्,

---

१ **अपत्यमिति** । प्रवराध्यायाप्रसिद्धस्यापि संज्ञार्थमिदमिति बोध्यम् ॥ २ **इत्यनयेति** । यद्यप्यत्रैकादेशप्रवृत्तिसमये न वृद्धेः प्राप्तिः, कृते त्वेकादेशे जायमानया वृद्ध्या च न तन्निमित्तविनाशः, तथापि निमित्तविनाशसंभावनैव तत्परिभाषाप्रवृत्तौ निमित्तम् । सा चात्रास्त्येव-'यदि दीर्घो न स्यात्तदा वृद्ध्या निमित्तविनाशः स्याद्' इतीति भावः ॥ वस्तुतस्तु-विप्रतिषेधसूत्रभाष्ये 'अन्तरङ्गं बलीयः' इत्यस्य सौरिथतिर्वैक्षमाणिरित्युदाहरणदानेन वार्णादाङ्गन्यायाप्रवृत्तिपूर्वकान्तरङ्गन्यायसिद्धार्थानुवादक एव समर्थानामिति । अकृतव्यूहपरिभाषा तु भाष्ये क्वापि न व्यवहृतेति बोध्यम् ॥ ३ **औपग इति** । उपगोरित्यत्र गुणपूर्वरूपोत्तरं लोपे 'ओस्' इत्यस्य निवृत्तौ 'औपगः' इत्यापत्तिः ॥ ४ **स्वीकारादिति** । 'समर्थानां प्रथमात्' इत्यनुवर्त्य 'समर्थानां प्रथमस्य प्रकरणादपत्यप्रत्ययप्रकृतित्वेन विवक्षितस्य यत् पौत्रप्रभृति-अर्थात्-तत्प्रत्ययवाच्यतयाऽपत्यत्वेन विवक्षितं तद् गोत्रम्' इत्यर्थस्यैव भाष्यकृतोक्तत्वादिति भावः ॥

संज्ञमेव न गोत्रसंज्ञम् ॥ ( १५६५ ) (सू) भ्रातरि च ज्यायसि । ४ । १ । १६४ । ज्येष्ठे भ्रातरि जीवति कनीयां-श्चतुर्थादिर्युवा स्यात् ॥ ( १५६६ ) (सू) वाऽन्यस्मिन्सपिण्डे स्थविरतरे जीवति । ४ । १ । १६५ । भ्रातुरन्य-स्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यात् । एकं जीवतिग्रहणमपत्यस्य विशेषणम् । द्वितीयं सपिण्डस्य । तरबनिर्देश उभयोरुत्कर्षार्थः । स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहे भ्रातरि वा जीवति । गार्ग्य-स्यापत्यं गार्ग्यायणः । गार्ग्यो वा । स्थविरेति किम् । स्थानवयोन्यूने गार्ग्य एव । जीवतीति किम् । मृते मृतो वा गार्ग्य एव ॥ ( १५६७ ) (वा) वृद्धस्य च पूजायामिति वाच्यम् ॥ गोत्रस्यैव वृद्धसंज्ञा प्राचाम् । गोत्रस्य युवसंज्ञा पूजायां गम्यमानायाम् । तत्रभवान् गार्ग्यायणः । पूजेति किम् । गार्ग्यः ॥ ( १५६८ ) (वा) यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम् ॥ गार्ग्यो जाल्मः । कुत्सेति किम् । गार्ग्यायणः ॥ ( १५६९ ) (सू) एको गोत्रे । ४ । १ । ९३ । गोत्रे एक एवापत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यम् औपगवः । गार्ग्यः । नाडायनः । गोत्रे स्वैकोनसंख्यानां प्रत्ययानां परम्परा ॥

---

'गोत्राद्यून्यस्त्रियाम् १५७०' इति लिङ्गाच्चेत्याह—**पौत्रादेरिति** । तुशब्दो भिन्नक्रमो युवेत्यस्मात्परो बोध्यः । स च एवकारार्थ इति व्याचष्टे—**युवसंज्ञमेवेति** । तेन एकसंज्ञाधिकारबहिर्भूतयोरपि गोत्रयुवसंज्ञयोर्न समावेश इति भावः । नन्वस्तु संज्ञाद्वयस्य समावेशः को दोष इति चेत् । मैवम्, शालङ्काः पैलीया इत्यसिद्धिप्रसङ्गात् । तथाहि—शलङ्कोरपत्यं शालङ्किः । पैलादिषु पाठा-दिञ्शलङ्कादेशौ । शालङ्केरपत्यम्—। शालङ्केर्युवापत्यं 'यञिञोश्च १५७९' इति फक्, तस्य 'पैलादिभ्यश्च १५५५' इति लुक्, ततः शालङ्केर्यूनश्छात्रा इत्यर्थविवक्षायाम् 'इञश्च १८७६' इत्यणि शालङ्का इति भवति । तथा पीलाया अपत्यं—गोत्रापत्यं वा 'पीलाया वा १५९९' इत्यणि पैलः । तस्यापत्यं युवा 'अणो द्व्यचः १६६८' इति फिञ्, तस्य 'पैलादिभ्यश्च १५५५' इति लुक् । ततः पैलस्य यूनश्छात्राः पैलीया इति भवति । तत्र गोत्रयूनोः समावेशे तु 'गोत्रेऽलुगचि १५५२' इति फक्फिञोरलुक् प्रसज्येत । न च परत्वाद्यूनि लुग्भविष्यतीति सिद्धमिष्टमिति वाच्यम्, ततोऽपि परत्वात् 'फक्फिञोरन्यतरस्याम् १५५९' इति विकल्पापत्तेः । न च सिद्धान्तेऽपि विकल्पः शङ्क्यः, 'फक्फिञोः—१५५९' इत्ययं यूनि लुक एवापवादो, न तु 'पैलादिभ्यश्च १५५५' इत्यस्य, 'अनन्तरस्य—४८८' इति न्यायात् ॥ यद्यपि यूनि लुगपवादोऽपि 'फक्फिञोः—१५५९' इति विकल्पः परत्वात् 'पैलादिभ्यश्च १५५५' इति लुकमपि बाधेतेति वक्तुं शक्यम्, तथापि परादप्यन्तरङ्गस्य बलीयस्त्वात् 'पैलादिभ्यश्च १५५५' इति नित्य एव लुगित्याहुः॥(१५६५)**भ्रातरि च**—। अवंश्यार्थोऽयमारम्भः । भ्राता तु न वंश्यः 'उत्पादकप्रबन्धो वंशः' इत्यभ्युपगमात् । 'अपत्यं पौत्रप्रभृति' इत्यनुवर्त्य 'पौत्रप्रभृतेः' इति षष्ठ्या विपरिणम्य व्याख्यानात्फलितमाह—**चतुर्थादि-रिति** । अत्रायमर्थः, गर्गादिषु मृतेष्वपि जीवत्यग्रजे अनुजो युवसंज्ञक इति ॥ ( १५६६ ) **वाऽन्यस्मिन्**—। इहत्यं जीव-तिपदं तिङन्तं, न तु सप्तम्यन्तमिति व्याचष्टे—**जीवदेवेति** । यो जीवति स युवसंज्ञकः, मृतस्तु स्थविरतरे जीवत्यपि गार्ग्य एव भवति, न तु गार्ग्यायण इति भावः ॥ **एकमिति** । इहत्यमित्यर्थः ॥ **द्वितीयमिति** । अनुवर्तमानं सप्तम्यन्तमित्यर्थः । यदुक्तमुभयोरिति तदेव विवृणोति—**स्थानेन वयसा चेति** ॥ **मातामहे भ्रातरि वेति** । संनिहितत्वात् 'भ्रातरि' इत्य-स्य 'मातामहभ्रातरि' इत्येवार्थ इत्येके ॥ 'पितृव्यपुत्रे' इत्यन्ये ॥ वृत्तौ तु—'पितृव्ये पितामहे भ्रातरि वा' इति पाठः ॥ **जीव-तीति किमिति** । जीवतिद्वयं किमर्थमिति प्रश्नः । अत एव 'मृते मृतो वा' इत्युत्तरं संगच्छते । अन्यस्मिन् किम्, भ्रातरि जीवति जीवतो विकल्पो मा भूत् । पूर्वसूत्रं तु भ्रातरि जीवति मृतस्य कनीयसो युवसंज्ञार्थमिति सावकाशम् ॥(१५६७)**वृद्धस्य चेति** । वार्तिकमिदम् । तथा 'यूनश्च १५६८' इत्यग्रिममपि॥(१५६९)**एको गोत्रे** । 'गोत्रे' इति जात्यपेक्षया एकवचनम् । एकशब्दः संख्यावाची । 'गोत्रेऽभिधित्सिते अपत्यत्वबोधकप्रत्यय एक एव स्यात्' इत्युक्ते गोत्रापत्ये प्रथम एव शब्दः प्रत्ययं लभते नान्यः । यदि त्वनन्तरापत्यप्रत्ययान्तादपि स्यात्, तर्हि गोत्रापत्ये एक एव प्रत्ययो न कृतः स्यात्॥ इत्थं च 'अपत्यप्र-त्ययान्तात्प्रतिषेधो वाच्यः' इति वार्तिकार्थोऽप्यनेन संगृहीत इत्याशयेन व्याचष्टे—**गोत्रे एक एवेति** ॥ **अपत्यप्रत्यय इति** । एतच्चाधिकाराल्लब्धम् ॥ अन्ये तु एकशब्दः प्रथमपर्यायः । प्रथमश्चापत्यप्रत्ययशून्यः, तथा च—'प्रथमा प्रकृतिर्गोत्रे अप-त्यप्रत्ययं लभते' इति सूत्रार्थं व्याचक्षते । तत्क्लिष्टम्, 'अस्यां पङ्क्तावेकमानय' इत्युक्ते 'प्रथमम्' इति प्राथम्यार्थस्याप्रतीतेः ॥ वस्तुतस्तु—'प्रथमात्—इत्यधिकाराद्गोत्रे प्रथमादेव प्रातिपदिकादपत्यप्रत्ययः' इति व्याख्यायैकग्रहणमिह त्यक्तुं शक्यमित्याहुः ॥ **औपगव इति** । 'उपगुशब्द एव प्रत्ययं लभते, न त्वौपगवशब्दः' इति गोत्रापत्येऽप्यनन्तरापत्य इवाणेव भवति, न त्विञ् ॥ **गार्ग्य इति** । गोत्रापत्ये 'गर्गादिभ्यो यञ् १५८३' इति विशिष्य विधानादनन्तरापत्य इवात्र 'अत इञ् १५७१' न भवति, किंतु यञेव । स च गार्ग्यस्यापत्येऽपि भवति, न त्वत्र यञन्तात्फक् 'एको गोत्रे १५६९' इति नियमात् ॥ **नाडायन इति** ।

---

१ **सपिण्ड इति** । सपिण्डता तु "पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् । सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः ॥ अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम् । प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामहः ॥" इत्याद्युक्तदिशा विचारणीया ॥ २ **पूजायामिति** । 'का पुनरिह पूजा ? । युवत्वं लोक ईप्सितं पूजेत्युच्यते । तत्र भवन्तश्च युवत्वेनोपचर्यमाणाः पूजिता भवन्ति' इति भाष्येण पूज्येषु मान्येषु सत्सु तत्परतन्त्रत्वमेवेति तत्सत्कारकरणमेव पूजेति भावः ॥ ३ **कुत्सायामिति** । जीव-त्स्वपि पित्रादिषु मान्येषु ताननादृत्य स्वतन्त्रत्वमेवेति तदनादरकरणमेव कुत्सेति भावः ॥

यद्वा स्ववृद्ध्यूनसंख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते ॥ १ ॥ अपत्यं पितुरेव स्यात्ततः प्राचामपीति च ॥ मतभेदेन तद्धान्यै सूत्रमेतत्तथोत्तरम् ॥ २ ॥ पितुरेवापत्यमिति पक्षे हि उपगोस्तृतीये वाच्ये औपगवादिञ् स्यात् । चतुर्थे त्वजीवज्ज्येष्ठे मृतवंश्ये औपगवेः फक् । इत्थं फगिञोः परम्परायां मूलाच्छततमे गोत्रे एकोनशतं प्रत्ययाः स्युः । पितामहादीनामपीति मुख्यपक्षे तु तृतीये वाच्ये उपगोरणा इष्टे सिद्धेऽपि अणन्तादिञपि स्यात् । चतुर्थे फगिति फगिञोः परम्परायां शततमे गोत्रेऽष्टनवतिरनिष्टप्रत्ययाः स्युः । अतो नियमार्थमिदं सूत्रम् । एवमुत्तरसूत्रेऽप्यूह्यम् ॥ ( १५७० ) **गोत्राद्यून्यस्त्रियाम् । ४ । १ । ९४ ।** यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । स्त्रियां तु न युवसंज्ञा ॥ गर्गस्य युवापत्यं

---

'नडादिभ्यः फक् १५७७' इति गोत्रापत्ये विधानादत्रापि 'अत इञ् १५७१' न भवति, किन्तु फगेव, स च नाडायनस्यापत्येऽपि भवति न तु फगन्तादिञ्, उक्तनियमात् ॥ नन्वेकस्मिन् गोत्रे युगपदनेकप्रत्ययाप्रसक्तेर्व्यर्थमिदं सूत्रमित्याशङ्क्य सूत्रारम्भफलं मतभेदेन व्यवस्थापयति--**गोत्रे स्वैकोनेति** । 'स्वं गोत्रं तदपेक्षया एकोनसंख्यानां, तृतीये द्वयोः परम्परा, चतुर्थे त्रयाणां, पञ्चमे तु चतुर्णाम्' इत्यादिपरम्परा प्रसज्यत इत्यर्थः । तथाहि उपगोस्तृतीये अणिञोः परम्परा, चतुर्थे त्वणिञ्फकां, पञ्चमे त्वणिञ्फगिञाम् । यद्यप्यत्र 'यस्येति च ४३१' इति लोपेनाणादेरसत्त्वात् 'अणिञादीनां परम्परा' इत्युक्तिर्न संगच्छते, तथापि 'अणन्तादिञुत्पद्यते, इञन्तात्फक्' इत्युत्पत्तिमात्राभिप्रायेण प्रत्ययपरम्पराऽभिधानं बोध्यम् ॥ **स्ववृद्ध्यूनसंख्येभ्य इति** । स्वं गोत्रं तदपेक्षया द्व्यूनसंख्येभ्यः प्रातिपदिकेभ्यः तृतीये एकस्मादनिष्टोत्पत्तिः, चतुर्थे द्वाभ्यां, पञ्चमे त्रिभ्यः, इत्यादीत्यर्थः ॥ **अपत्यं पितुरेवेति** । तथा चामरः "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥" इति ॥ मुख्यमतमाह—**ततः प्राचामिति** । पित्रपेक्षया ये प्राञ्चः पितामहप्रपितामहादयस्तेषामपीत्यर्थः । अत्रायमाशयः—अपत्यशब्दः क्रियानिमित्तो न त्वात्मजपर्यायः । 'न पतन्त्यनेनेत्यपत्यम्' इति व्युत्पत्तेः 'पङ्क्तिविंशति-' इति सूत्रे भाष्यकृता दर्शितत्वात्, बाहुलकात्करणे यत्प्रत्ययः 'यन्निमित्तं यस्यापतनं, तत्तस्यापत्यम्' इति फलितोऽर्थः । तथा च—'पौत्रादिरपि पितामहादीनामपतने हेतुः' इति तेषामपत्यत्वं भवति । प्रसिद्धं च व्यवहितोऽपि पितामहादीनामुद्धर्तेति जरत्कार्वाद्युपाख्यानेषु । 'अपत्यं पौत्रप्रभृति-१५६३' इति सूत्रमप्यत्रानुगुणम् । आद्यपक्षे हि 'अपत्यमिवापत्यम्' इति गौणी वृत्तिराश्रयणीया स्यात् । अमरस्तु सूत्रभाष्यादिविरोधादुपेक्ष्य इति ॥ **तद्धान्यै इति** । आद्यपक्षे प्रत्ययमालानिवृत्तये, अन्त्ये तु स्ववृद्ध्यूनसंख्येभ्योऽनिष्टोत्पत्तिनिवृत्तये इत्यर्थः ॥ **औपगवादिञ् स्यादिति** । तृतीयस्य उपगुं प्रति अनपत्यत्वादिति भावः । एवं चासति सूत्रे अस्मिन् पक्षे औपगविरित्यनिष्टमेव स्यात्, औपगव इतीष्टं तु न सिध्यतीति बोध्यम् ॥ **अजीवज्ज्येष्ठे इति** । जीवज्ज्येष्ठे जीवद्वंश्ये वा युवसंज्ञायां सत्यां गोत्रसंज्ञा नेति भावः ॥ **इष्टे सिद्धेऽपीति** । अस्मिंश्च पक्षे औपगवस्य यदपत्यं तदुपगोरप्यपत्यमिति उपगोर्यदा प्रत्ययः तदा 'औपगवः' इतीष्टं यद्यपि सिध्यति, तथाप्यौपगविरित्यनिष्टं प्राप्नोतीत्यर्थः ॥ **तत इति** । इञन्तादित्यर्थः ॥ **फगिञोरिति** । फगन्तादिञ्, इञन्तात्फक्, तदन्तात्पुनरिञ् इत्यादिपरम्परायां सत्यामित्यर्थः ॥ **नियमार्थमिति** । नन्वाद्यपक्षे तत्तत्पितृवाचकादेव प्रत्ययो 'न तु मूलभूतात्स्यात्, अनन्तरापत्ये मुख्यसंबन्धे चरितार्थस्याणादेर्गौणसंबन्धेऽपि प्रवृत्तेरन्याय्यत्वात् । तथा चौपगवापत्येन उपगोर्मुख्यसंबन्धाभावात्तत्राप्राप्ते विध्यर्थमेवेदं सूत्रं, न तु नियमार्थमिति औपगवशब्दादपि प्रत्ययो दुर्वार इति चेत् । अत्राहुः-गोत्रे बोधनीये क्रमेणानेकप्रत्ययप्रसङ्गे एक एवापत्यप्रत्ययः स्यादिति सूत्रार्थे कृते औपगवशब्दस्यापत्यप्रत्ययान्तत्वात्पुनरपत्यप्रत्ययस्ततो नोपपद्यते इत्यगत्या परम्परासंबन्धाभ्युपगमेनोपगोरेव तदुत्पत्तिः, न त्वौपगवशब्दादिति सिद्धमिष्टमिति । अत्र केचिद्व्याचक्षते--आद्यपक्षे प्रत्ययपरम्परायां प्राप्तायाम् 'एको गोत्रे १५६९' इत्यनेनैकः प्रत्ययो विधीयते । तथा चैको नामैकजातीय इत्यर्थपर्यवसानान्मूलप्रकृतेर्योऽपत्यप्रत्ययोऽणादिस्तज्जातीय एव गोत्रे बोधनीये तत्तत्पितृवाचकाद्भवति--'अणन्तादण्, इञन्तादिञ्, यञन्ताद्यञ्' इति । न चैवमणिञोः परम्परायां निवर्तितायामप्यौपगव इत्यत्राण्प्रत्ययपरम्परा स्यात् । तथा गार्ग्य इत्यादौ यञन्तादिपरम्परेति वाच्यम्, सत्यामपि तस्यामनिष्टाभावादिति । तच्चिन्त्यम्, फगन्तात्फकि नाडायन इत्यादावनिष्टप्रसङ्गादिति दिक् ॥ **ऊह्यमिति** । 'अपत्य पितुरेव' इति पक्षे चतुर्थापत्यरूपे यूनि विवक्षिते 'गोत्राद्यूनि-१५७०' इति नियमसूत्रे सत्यसति च गोत्रप्रत्ययान्तादेव युवप्रत्यय इति द्वयोः परम्परा, सा चेष्टत्वान्न नियमेन व्यावर्त्यते । पञ्चमे तु यूनि नियमाभावे त्रयाणां परम्परा प्रसज्यते । षष्ठे तु चतुर्णामित्यादि । 'ततः प्राचामपि' इति द्वितीयपक्षे तु-गर्गाच्चतुर्थे यूनि मूलप्रकृत्यनन्तराभ्यामनिष्टोत्पत्तिः प्रसज्यते । पञ्चमे तु-मूलप्रकृत्यनन्तरयुवभ्यः । तथा नडाच्चतुर्थे यूनि पूर्ववद् द्वाभ्यामनिष्टोत्पत्तिः । पञ्चमे-तु त्रिभ्यः । उपगोश्चतुर्थे वाच्ये तु मूलप्रकृतेरेकस्मादेवानिष्टोत्पत्तिः । न त्वनन्तरापत्यवाचकात् । ततो जातेऽप्यत इञि रूपानिष्टाभावादित्यादि यथासंभवं तत्रोह्यमित्यर्थः ॥ ( १५७० ) **गोत्राद्यूनि**--। असत्यस्मिन् सूत्रे मुख्यमते पञ्चमादौ यूनि विवक्षिते गोत्रप्रत्ययान्ताद् युवप्रत्ययोत्पत्ताविष्टे सिद्धेऽपि मूलप्रकृत्यनन्तरयुवभ्योऽपि स्यादिति पाक्षिकानिष्टे प्राप्ते नियमार्थमिदमित्याशयेनाह--**गोत्रप्रत्ययान्तादेवेति** । न तु मूलप्रकृत्यनन्तरयुवभ्य इत्यर्थः ॥ मनोरमायां तु-न तु युवप्रत्ययान्तादिति प्रथमपक्षेऽर्थ इत्यपि स्थितम् । अत्र वदन्ति-पञ्चमादौ यूनि विवक्षिते तस्य पुनस्तृतीयं प्रत्ययमपत्यत्वादप्राप्तौ विध्यर्थमेवेदं स्यात्, न तु नियमार्थमिति

गार्ग्यायणः । स्त्रियां गोत्रत्वादेक एव प्रत्ययः ॥ ( १५७१ ) (सू) **अत इञ्** । ४ । १ । ९५ । अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठ्यन्तादिञ् स्यादपत्येऽर्थे । दाक्षिः ॥ ( १५७२ ) (सू) **बाह्वादिभ्यश्च** । ४ । १ । ९६ । बाहविः । औडुलोमिः । आकृतिगणोऽयम् ॥ ( १५७३-१ ) (सू) **सुधातुरकङ् च** । ४ । १ । ९७ । चादिञ् । सुधातुरपत्यं सौधातकिः ॥ ( १५७३-२ ) (वा) **व्यासवरुडनिषादचण्डालबिम्बानां चेति वक्तव्यम्** ॥ ( १५७४ ) (सू) **न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्** । ७ । ३ । ३ । पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किन्तु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः । वैयासकिः । वारुडकिरित्यादि ॥ ( १५७५ ) (सू) **गोत्रे कुञ्जादिभ्यश्च्फञ्** । ४ । १ । ९८ ।

---

युवप्रत्ययान्तात्प्रत्ययो दुर्वारः स्यात् । तस्मादिह ' पितुरेवापत्यम् ' इति पक्षो नाश्रयणीय इति ॥ अन्ये त्वाहुः-आद्यपक्षे ' गोत्राद्यूनि-' इत्यावर्त्य एकेनाप्राप्तप्रत्ययं विधाय द्वितीयेन नियम्यते ' यूनि गोत्रादेव ' इति । एवं च ' ततः प्राचामपि ' इति पक्षेण सहास्यैकरूपता भवतीति । ' गोत्राच्चेद्यून्येव ' इति विपरीतनियमस्त्विह न कृतः, व्यावर्त्यालाभात् । न च शैषिकाच्छादयो व्यावर्त्या इति वाच्यम्, ' गोत्रेऽलुगचि ' इति लिङ्गात् ॥ **स्त्रियां त्विति** । यद्यत्र ' अस्त्रियाम् ' इत्यस्यैकवाक्यतया 'स्त्रीभिन्ने यूनि गोत्रादेव' इत्यर्थः क्रियते, तर्हि स्त्रीषु युवसंज्ञाया अनिषेधाद् युवतिषु प्रत्ययानां परम्परा प्रसज्येत । न च ' एको गोत्रे १५६९' इत्यनेन निस्तारः, युवसंज्ञया गोत्रसंज्ञाया बाधात् । अथ ' स्त्रियां न युवप्रत्ययः ' इति वाक्यभेदेनार्थः क्रियते, तदा गोत्रप्रत्यये युवतिर्नाभिधीयेत किन्तु वाक्यमेव स्यात् । ततश्च गार्ग्यस्यापत्यं स्त्री गार्गी न स्यात् । अतो ' युवसंज्ञानिषेधपरमेवेदम् ' इत्याशयेन व्याचष्टे—**न युवसंज्ञेति** । अत्रायमाशयः-' अस्त्रियाम् ' इति योगो विभज्यते । 'यूनि' इति शब्दस्वरूपमनुवर्तते । परिभाषा चेयम् । यत्र युवसंज्ञाविधानं तत्र ' अस्त्रियाम् ' इत्युपतिष्ठत इति सिद्धस्य गतिरियम् । 'जीवति तु वंश्ये युवाऽस्त्रियाम्' इत्येव सूत्रयितुं युक्तम् ॥ (१५७१) **अत इञ्** । 'घकालतनेषु-१३९७' इति ज्ञापकात्सुबन्तादेव तद्धितोत्पत्तिरित्यभ्युपगमेऽप्यधिकृतप्रातिपदिकस्य न वैयर्थ्यं, किन्तु प्रयोजनमस्तीति ध्वनयति—**अदन्तं यत्प्रातिपदिकमिति** । अत इत्यस्य सुबन्तविशेषणत्वे तु दक्षयोरपत्यमित्यादिविवक्षायां दाक्षिरित्यादि न सिद्ध्येदिति भावः । तपरः किम्, विश्वपः अपत्यं-वैश्वपः । ' प्रदीयतां दाशरथाय-' इत्यत्र तु ' तस्येदम् २०६४' इत्यण् । अपत्यत्वविवक्षायां त्विञेव ॥ (१५७२) **बाह्वादिभ्यश्च** । ' बाधृ लोडने ' इति धातौ ' केवलस्य बाहोरपत्ययोगासंभवात्सामर्थ्यात्तदन्तविधौ सौबाहविः' इति माधवोक्तं चिन्त्यमिति ध्वनयन्नाह—**बाहविरिति** । ' जानन्ति बाहविगार्ग्यगौतम-' इत्याश्वलायनसूत्रप्रयोगाद्भाष्यवृत्त्याद्युदाहरणाच्च बाहुशब्दः संज्ञारूपोऽस्तीति भावः ॥ **औडुलोमिरिति** । यद्यपि गणे बाहु कृष्ण युधिष्ठिर अर्जुन प्रद्युम्नेत्यादिषु केवलो लोमन्शब्दः पठितः तथापि सामर्थ्यात्तदन्तग्रहणम् । ' तारकाऽप्युडु वाऽस्त्रियाम् ' इत्यमरोक्त्या नक्षत्रवाच्युडुशब्दः । उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः । शरा इव लोमानि यस्य तस्यापत्यं शारलोमिः । बहुत्वे तु इञपवादोऽकारः प्रागेवाजन्तेषूक्तः । उडुलोमाः । शरलोमाः । इह प्रतिपदविधानेषु पुराणसिद्धाः संज्ञाशब्दा एव गृह्यन्ते, शीघ्रोपस्थितिकत्वात् । तेन इदानींतनो यो बाहुस्तस्यापत्ये बाहव इत्यणेव, न त्विञ् । उक्तं च हरिणा-"अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥" अनर्थकं संदिग्धार्थकमप्रयुक्तं च क्रमेण विशेषणत्रयव्यावर्त्यम् । तदुक्तिषु-तत्सदृशेष्वित्यर्थः । अत एव संज्ञा श्वशुरस्यापत्यं श्वाशुरिरित्यत्र ' राजश्वशुरात्-१६३४' इति यन्न । मिमीते माता, तस्याः स्वसा मातृस्वसा । इह ' मातृपितृभ्यां स्वसा १४१३' इति षत्वं न । नन्वेवं बाहवः श्वाशुरिरिति पूर्वोक्तौ न सिध्यत इति चेत् । नैवम्, अणिञोर्विधौ शब्दविशेषानुपादानादप्रतिषिद्धेष्वपि तत्प्रवृत्तेः ॥ ( १५७३-२ ) **व्यासेति** । वेदान् व्यसतीति वेदव्यासः ' कर्मण्यण् ३८७९' भीमो भीमसेन इतिवदेकदेशग्रहणम् ॥ ( १५७४ ) **न य्वाभ्याम्**-। य्वाभ्यां किम्, न अर्थो यस्य नार्थः, तस्यापत्यं नार्थिः । पदान्ताभ्यां किम्, याज्ञिकः । ऐचो विषयप्रदर्शनाय नेति निषेधोक्तिः । तेनेह न-दाध्यश्विर्माध्वश्विः । न ह्यत्र य्वाभ्यां परस्य वृद्धिप्रसक्तिरस्ति ॥ क्वचित्तु वृद्धिप्रसक्तिसत्त्वेऽपि नेष्यते । द्वे अशीती भृतो भूतो भावी वा द्वाशीतिकः ॥ **वारुडकिरिति** । वरुडादयो जातिविशेषाः । वकारस्यापदान्तत्वात् 'न य्वाभ्याम्-१५७४ ' इत्यैच् न ॥ **इत्यादीति** । नैषादकिः, चाण्डालकिः, बैम्बकिः ॥ (१५७५) **गोत्रे कुञ्जा**-। इतः प्राक् 'एको गोत्रे१५६९' इत्यादि सूत्रद्वयं चेत्पठ्यते तर्ह्यत्रत्यं गोत्रग्रहणं त्यक्तुं शक्यमित्याहुः ॥ च्फञो ञकारो वृद्ध्यर्थः । कौञ्जायनाः । चकारस्तु 'व्रातच्फञोः-१५७६' इत्यत्र विशेषणार्थः । तेन ' अश्वादिभ्यः फञ् १५९०' आश्वायन इत्यत्र ञ्यो न भवति । अत्रेदमवधेयम्-कौञ्जायन्य इत्यादावेकवचने द्विवचने च ञ्यस्य ञित्त्वादाद्युदात्तत्वमेव । बहुत्वे तु ञ्यस्य लुकि च्फञश्चकारञकारयोस्तुल्यबलयोर्विरोधे सति परत्वात् ञित्स्वरेणाद्युदात्तत्वे प्राप्ते भाष्यादौ ' तद्धितस्य कितः१५७४' इत्यत्र योगं विभज्य ' चितः ' इत्यनुवर्त्य ' तद्धितस्य चितोऽन्तोदात्तत्वम् ' इति व्याख्यानात् 'कौञ्जायनाः' इत्यत्रान्तोदात्ततैव भवति । न चैव हि फगेवात्रास्तु किमनेन गुरुनिर्देशे-

---

१ **अदन्तमिति** । ' समासप्रत्ययविधौ प्रतिषेधः ' इत्यस्य तु ' उगिद्वर्णग्रहणवर्जम् ' इति प्रतिप्रसवोऽस्ति । तथा च 'अततेर्डः अः तस्यापत्यमत इञ् ' इः' इत्यत्र तु व्यपदेशिवद्भावेनैव सिद्धिरिति भावः ॥ २ **न वृद्धिरिति** । अयं च निषेधः ' तद्धितेष्वचामादेः' इति वृद्धेरेव, न तु ' संख्यायाः संवत्सरसंख्यस्य च ' इति वृद्धेरपि येननाप्राप्तिन्यायात् । अत एव 'क्वचित्तु वृद्धिप्रसक्तिसत्त्वेऽपि नेष्यते' इति वक्ष्यति टीकाकारः ॥

( १५७६ ) सू व्रातच्फञोरस्त्रियाम् । ५ । ३ । ११३ । व्रातवाचिभ्यः च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यान्न तु स्त्रियाम् । कौञ्जायन्यः । बहुत्वे तद्राजत्वाल्लुग्वक्ष्यते । ब्राध्नायन्यः । स्त्रियां कौञ्जायनी । गोत्रत्वेन जातित्वान्ङीष् । अनन्तरापत्ये कौञ्जिः ॥ ( १५७७ ) सू नडादिभ्यः फक् । ४ । १ । ९९ । गोत्र इत्येव । नाडायनः । चारायणः । अनन्तरो नाडिः ॥ ( १५७८ ) सू हरितादिभ्योऽञः । ४ । १ । १०० । एभ्योऽञन्तेभ्यो यूनि फक् । हारितायनः । इह गोत्राधिकारेऽपि सामर्थ्याद्यून्ययम् । न हि गोत्रादपरो गोत्रप्रत्ययः । बिदाद्यन्तर्गणो हरितादिः ॥ (१५७९) सू यञिञोश्च । ४ । १ । १०१ । गोत्रे यौ यञिञौ तदन्तात् फक् स्यात् । अनातीत्युक्तेरांपत्यस्येति यलोपो न । गार्ग्यायणः । दाक्षायणः ॥ (१५८०) सू शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु । ४ । १ । १०२ । गोत्रे फक् । अञिञोरपवादः । आद्यौ बिदादी । शारद्वतायनो भार्गवश्चेत् । शारद्वतोऽन्यः । शौनकायनो वात्स्यश्चेत् । शौनकोऽन्यः । दार्भायण आग्रायणश्चेत् । दार्भिरन्यः ॥ (१५८१) सू द्रोणपर्वतजीवन्तादन्यतरस्याम् । ४।१।१०३ । एभ्यो गोत्रे फग् वा । द्रौणायनः, द्रौणिः । पार्वतायनः, पार्वतिः । जैवन्तायनः, जैवन्तिः । अनादिरिह द्रोणः । अश्वत्थाम्न्यनन्तरे तूपचारात् ॥ ( १५८२ ) सू अनृष्यानन्तर्ये बिदादिभ्योऽञ् । ४ । १ । १०४ । एभ्योऽञ् गोत्रे ये त्वत्रानृषयस्तेभ्य अनन्तरे । सूत्रे स्वार्थे ष्यञ् । बिदस्य गोत्रापत्यं बैदः, अनन्तरो बैदिः । बाह्वादेराकृतिगणत्वादिञ् । पुत्रस्यापत्यं पौत्रः । दौहित्रः ॥ ( १५८३ ) सू गर्गादिभ्यो यञ् । ४ । १ । १०५ । गोत्र इत्येव । गार्ग्यः । वात्स्यः ॥ ( १५८४ ) सू यञञोश्च । २ । ४ । ६४ । गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक्स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः । बिदाः । उर्वाः । तत्कृते इति किम् । प्रियगार्ग्याः । स्त्रियां तु गार्ग्यः स्त्रियः । गोत्रे किम् । द्वैप्याः । औत्साः । ( १५८५ ) प्रवराध्यायप्रसिद्धमिह गोत्रम् । तेनेह न । पौत्राः, दौहित्राः ॥ ( १५८६ ) सू मधुबभ्र्वोर्ब्राह्मणकौशिकयोः । ४ । १ । १०६ । गोत्रे यञ् । माधव्यो ब्राह्मणः । माधवोऽन्यः । बाभ्रव्यः कौशिक ऋषिः । बाभ्रवोऽन्यः । बभ्रुशब्दस्य गर्गादिपाठात्सिद्धे नियमार्थमिदम् । गर्गादिपाठफलं तु लोहितादिकार्यम् । बाभ्रव्यायणी॥

---

नेति वाच्यम्, तथा हि सति 'व्रातच्फञोरस्त्रियाम् १५७६' इति सूत्रप्रणयनापत्त्या नाडायनादिभ्योऽपि ञ्यः स्यादिति । कुञ्ज, ब्रध्न, शङ्ख, शकटेत्यादि ॥ ( १५७६ ) व्रातच्फञो-। 'पूगाञ्ञ्योऽग्रामणी-२७९२' इत्यतोऽनुवर्तनादाह—ञ्यः स्यादिति । व्रातवाचिभ्यः 'कापोतपाक्यः' इत्युदाहरिष्यति । अस्त्रियां किम्, कपोतपाका स्त्री ॥ तद्राजत्वादिति । 'ञ्यादयस्तद्राजाः २७९९' इति सूत्रेणेति शेषः ॥ लुग्वक्ष्यत इति । 'तद्राजस्य बहुषु-१६८५' इत्यनेनेति शेषः ॥ कौञ्जायनीति । इह सति ञ्यप्रत्यये योपधत्वात् 'जातेः-७४३' इति ङीषभावे टापि रूपे स्वरे च विशेषो बोध्य इत्याहुः ॥ ( १५७९ ) यञिञोश्च । अधिकारप्राप्तं गोत्रग्रहणं यञिञोर्विशेषणं न तु विधेयस्य फकः, व्याख्यानात्तदेतदाह—गोत्रे याविति । गोत्रे किम्, 'द्वीपादनुसमुद्रं यञ् १९३१' द्वीपे भवो द्वैप्यः । सुतंगमादिभ्यश्चातुरर्थिक इञ् । सौतंगमिः, तदपत्ये फक् मा भूत् ॥ फक् स्यादिति । सामर्थ्याद्यून्ययम् ॥ ( १५८० ) शरद्वच्छुनक-। भृगुः शरद्वतोऽपत्यं न भवति, पूर्वभावित्वात् । एवं शुनकस्यापत्यं न भवति वत्सः । अतोऽत्र भार्गवश्च वात्स्यश्चाग्रायणश्चेति द्वन्द्वे 'अत्रिभृगु-१६२८' इति 'यञिञोश्च १५७९' इति च यथासभवं लुग् बोध्यः ॥ यद्यप्यत्र बहुत्वाभावात् 'अत्रिभृगु-१६२८' इत्यादिना लुग् दुर्लभः । तथापि युगपदधिकरणवचनतायां वर्तिपदानां बह्वर्थत्वात्सौत्रत्वाद्वा स्यादेव लुक् । अतो व्याचष्टे—भार्गवश्चेदिति ॥ वात्स्यश्चेदिति च ॥ ( १५८१ ) द्रोणप-। अनादिरिति । अश्वत्थाम्नः पिता यो महाभारते प्रसिद्धः, तदपेक्षयाऽन्य एवायं द्रोण इत्यर्थः ॥ अश्वत्थाम्नीत्यादि । 'द्रोणाचार्यस्यानन्तरापत्ये अश्वत्थाम्नि द्रौणायन इति प्रयोगो भाक्त इत्यर्थः ॥ ( १५८२ ) अनृष्या—। 'अनृषि' इति पञ्चम्याः सौत्रो लुक् । 'अनृषिभ्य इत्यर्थः ॥ सूत्रे इति । आनन्तर्य इत्यत्रेत्यर्थः ॥ स्वार्थ इति । '[२४२३८]चातुर्वर्ण्यादेराकृतिगणत्वादिति भावः । बैदिरित्यत्र ऋष्यणमाशङ्क्याह—बाह्वादेरिति । बिद, उर्व, कश्यप, कुशिक, भरद्वाज, उपमन्यु, विश्वानर, । 'परस्त्री परशु च' इत्यादि ॥ ( १५८३ ) गर्गादिभ्यो-। गर्ग, वत्स, व्याघ्र, पाद, पुलस्ति, बभ्रु, मण्ड, वतण्ड, कपि, कत, शकल, कण्व, अगस्ति, कुण्डिनी, यज्ञवल्क, पराशर, जमदग्नि इत्यादि॥ कथं तर्हि 'रामो जामदग्न्यः' इति । अनन्तरापत्ये ह्ययम् । सत्यम्, अनन्तरेऽपि गोत्रत्वारोपाद्बोध्यः ॥ ( १५८४ ) यञञोश्च । 'ण्यक्षत्रियार्ष-१८०६' इत्यतो लुगिति, 'तद्राजस्य-१५८५' इति सूत्राद्बहुषु तेनैवास्त्रियामिति चानुवर्तते 'यस्कादिभ्यो गोत्रे १६२७' इत्यतो गोत्र इति च तदाह—गोत्रे यद्यञन्तमित्यादि । प्रवराध्यायप्रसिद्धगोत्रवाचिनौ केवलौ यञञौ न भवत इति गोत्र इत्यनेन तदन्तं विशेषितम् ॥ तदवयवयोरिति । 'निर्दिश्यमानस्यादेशा भवन्ति ३२७' इति भावः ॥ ( १५८५ ) प्रवराध्यायेति । एतच्च 'स्त्रीपुंसाभ्याम्-' इति सूत्रे 'लौकिकस्य गोत्रस्य ग्रहणम्' इति भाष्यमुपादाय कैयटेनोक्तमिति भावः ॥ तेनेह नेति । यद्यलौकिकं[1] गोत्रमपत्यमात्रं गृह्येत, तदा स्यादेवातिप्रसङ्ग इति भावः ॥ ( १५८६ ) मधुब-। लोहितादीति । 'सर्वत्र लोहितादि-३२८' इत्यादिना ष्फः ॥ ष्फेणोक्तेऽपि स्त्रीत्वे षित्त्वसामर्थ्यात् ङीषित्याशयेनाह—बाभ्रव्यायणीति । गर्गादिगण

---

१ अलौकिकमिति । प्रवराध्यायप्रसिद्धमेव लौकिकम्, तद्भिन्नमलौकिकमेतच्छास्त्रसंकेतितम् 'अपत्यं पौत्रप्रभृति' इति । तथा च पौत्रदौहित्रशब्दयोः प्रवराध्यायप्रसिद्धगोत्रत्वाभावादत्रो लुग् नेति भावः ॥

( १५८७ ) (सू) **कपिबोधादाङ्गिरसे** । ४ । १ । १०७ । गोत्रे यञ् स्यात् । काप्यः।बौध्यः । आङ्गिरसे किम् । कापेयः। बौधिः ॥ ( १५८८ ) (सू) **वतण्डाच्च** । ४ । १ । १०८ । आङ्गिरस इत्येव । वातण्ड्यः । अनाङ्गिरसे तु गर्गादौ शिवादौ च पाठाद्यञणौ । वातण्ड्यः । वातण्डः ॥ ( १५८९ ) (सू) **लुक् स्त्रियाम्** । ४ । १ । १०९ । वतण्डाच्चेति विहितस्य लुक् स्यात् स्त्रियाम् । शार्ङ्गरवादित्वान् ङीन् । वतण्डी । अनाङ्गिरसे तु वातण्ड्यायनी । लोहितादित्वात् ष्फः । अणि तु वातण्डी । ऋषित्वाद्वक्ष्यमाणः ष्यङ् न ॥ ( १५९० ) (सू) **अश्वादिभ्यः फञ्** । ४ । १ ।११० । गोत्रे । आश्वायनः॥ ( १५९१ ) (ग) **पुंसि जाते** ॥ पुंसीति तु प्रकृतिविशेषणम् । जातस्य गोत्रापत्यं–जातायनः । पुंसीति किम् । जाताया अपत्यं–जातेयः ॥ ( १५९२ ) (सू) **भर्गात्त्रैगर्ते** । ४ । १ । १११ । गोत्रे फञ् । भार्गायणस्त्रैगर्तः । भार्गिरन्यः ॥ ( १५९३ ) (सू) **शिवादिभ्योऽण्** । ४ । १ । ११२ । गोत्र इति निवृत्तम् । शिवस्यापत्यं शैवः। गाङ्गः। पक्षे तिकादित्वात् फिञ्–गाङ्गायनिः । शुभ्रादित्वाड् ढक् । गाङ्गेयः ॥ ( १५९४ ) (सू) **अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः** । ४ । १ । ११३ । अवृद्धेभ्यो नदीमानुषीनामभ्योऽण् स्यात् । ढकोऽपवादः । यामुनः । नार्मदः । चिन्तिताया अपत्यं–चैन्तितः । अवृद्धेभ्यः किम् । वासवदत्तेयः । नदीत्यादि किम् । वैनतेयः । तन्नामिकाभ्यः किम् । शोभनाया अपत्यं शौभनेयः ॥ ( १५९५ ) (सू) **ऋष्यन्धकवृष्णिकुरुभ्यश्च** । ४ । १ । ११४ । ऋषयो मन्त्रद्रष्टारः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः–श्वाफल्कः । वृष्णिभ्यः–वासुदेवः । आनिरुद्धः । शौरिरिति तु बाह्वादित्वादिञ् । कुरुभ्यः–नाकुलः । साहदेवः । इञ एवायमपवादो मध्येऽपवादन्यायात् । अत्रिशब्दात्तु परत्वाड् ढक् । आत्रेयः ॥ ( १५९६ ) (सू) **मातुरुत्संख्यासंभद्रपूर्वायाः** ।४।१।११५। संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः ।षाण्मातुरः। सांमातुरः । भाद्रमातुरः । आदेशार्थं वचनं प्रत्ययस्तूत्सर्गेण सिद्धः । स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः । तेन धान्यमातुर्न ।

---

एव 'बभ्रुः कौशिके' इति पाठ्यम् । एवं हि द्विर्बभ्रुग्रहणं न कर्तव्यं भवतीति हरदत्तादयः ॥ ( १५८७ ) **कपिबो–। कापेय इति** । 'इतश्चानिञः १६०३' इति ढक् । कपेर्गर्गादिगणपाठो लोहितादिकार्यार्थः । तेन काप्यायनीति सिध्यति ॥ **बौधिरिति** । अनृषित्वादिञ् बाह्वादित्वाद्वा ॥ ( १५८८ ) **वतण्डाच्च** । यञणोः प्राप्तयोराङ्गिरसे यञेवेति नियमार्थं सूत्रम् ॥ ( १५८९ ) **लुक् स्त्रियाम्** ॥ **विहितस्यैति** । 'परिशेषितस्य वा' इति बोध्यम् । एतच्च 'आङ्गिरसे' इत्यनुवृत्त्या लभ्यते । यद्यपि 'वतण्डाल्लुक् स्त्रियाम्' इत्येकसूत्रकरणेऽपि 'आङ्गिरसे' इत्यनुवृत्त्या अनाङ्गिरसे यञणोर्लुगभावाद् स्त्रियामिष्टं सिध्यति, तथापि पुंस्याङ्गिरसे यञणोरुभयोः प्राप्तिरनिष्टेति । तद्वारणाय पृथक् सूत्रं कृतम् ॥ **ऋषित्वादिति** । न चैवं 'ऋष्यन्धक–१५९५' इत्यणि सिद्धे शिवादिगणे वतण्डपाठो व्यर्थ इति शङ्क्यम्, गर्गादिपाठेन यञा बाधात्तन्निवृत्तये तत्पाठस्यावश्यकत्वात् ॥ **ष्यङ् नेति** । 'अणिञोरनार्षयोः–१६९१' इति सूत्रेणेति भावः ॥ ( १५९० ) **अश्वादिभ्यः–।गोत्र इति** । इह गणे वैल्य, आनडुह्य, आत्रेय, इति गोत्रप्रत्ययान्तास्त्रयः पठ्यन्ते, तेभ्यस्तु यून्येव , 'एको गोत्रे १५६९' 'गोत्राद्यूनि–१५७०' इति वचनात् । तत्र विलिर्नाम राजर्षिस्ततो 'वृद्धेत्कोसला–१६८१' इति ञ्यङ् । आनडुह्यशब्दो गर्गादियञन्तः । आत्रेयशब्दो ढगन्त इति ज्ञेयः ॥ ( १५९१ ) **पुंसि जात इति** । गणसूत्रमिदम् । जातशब्दे पुंसि विद्यमाने फञ् इत्यर्थः। कस्मादित्याकाङ्क्षायामर्थाज्जातशब्दादिति लभ्यते ॥ **जाताया इति** । लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तिः ॥ ( १५९३ ) **शिवादिभ्योऽण्** । ननु विशेषविहितानिञादीन् बाधित्वा अणेवारम्भसामर्थ्याद्भविष्यति किमनेनाण्ग्रहणेन । अत्राहुः–ऋष्टिषेणशब्दोऽत्र गणे पठ्यते, ततः प्राप्तमिञं बाधित्वा परत्वात् 'सेनान्तलक्षण–१६६१' इति ण्ये प्राप्ते इह पाठसामर्थ्याद्यथाप्राप्तप्रत्यय इञेव स्यान्न त्वण् । तथा चात्राण्ग्रहणमावश्यकमित्येके ॥ अणधिकारादणेव स्यान्नान्य इत्यण्ग्रहणं स्पष्टप्रतिपत्त्यर्थमित्यन्ये ॥ शिव, ककुत्स्थ, वतण्ड, जरत्कारु, विपाट्, तक्षन्, विश्रवण, रवण, ऋष्टिषेण, विरूपाक्षेत्यादि ॥ **गोत्र इति निवृत्तमिति** । एतच्च वृत्तौ कैयटे च स्पष्टम् । यद्यपि 'गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारः' इति 'यूनि लुक्' इति सूत्रस्थभाष्यकैयटाभ्यां लभ्यते, तथापि तन्मतान्तरमिति[1] भावः । एवं चेत्ततः प्रभृत्यपत्यसामान्ये प्रत्यया भवन्तीति स्थितम् । शुभ्रादित्वान्नित्यं ढकि प्राप्ते जरत्कारुशब्दोऽत्राणर्थं पठ्यते । जारत्कारवः । ढकि तु 'ढे लोपोऽकद्र्वाः १६२३' इत्युलोपः । जारत्कारेयः । कुञ्जादित्वात् 'गोत्रे कुञ्जादिभ्यः–१५७५' इति नित्यं च्फञि प्राप्ते विपाट्शब्दोऽत्राणर्थं पठ्यते । वैपाशः, वैपाशायन्यः । 'सेनान्तलक्षण–१६६१' इति ण्यप्रत्यये 'उदीचाम्–१६६२' इतीञि च प्राप्ते तक्षन्शब्दोऽत्राणर्थं पठ्यते, ण्यप्रत्ययेन समावेशोऽत्रेष्यते, न त्विञा । ताक्ष्णः ताक्षण्यः । विश्रवणरवणशब्दावत्र पठ्येते तौ च विश्रवःशब्दस्यादेशौ । विश्रवसोऽपत्यं वैश्रवणः, रावणः ॥ ( १५९४ ) **अवृद्धाभ्यो–**। 'अवृद्धेभ्यो नदीमानुषीनामभ्यः' इत्येव सूत्रयितुं युक्तमित्याशयेन व्याचष्टे–**अवृद्धेभ्य इत्यादिना** ॥ ( १५९६ ) **मातुरु–। द्वैमातुर इति** । 'तद्धितार्थ–१०५२' इत्यादिना समासः । अत्र 'द्वयोर्मात्रोरपत्यम्' इति विग्रहो, न तु 'द्विमात्रोरपत्यम्' इति । 'दिक्संख्ये संज्ञायाम् १०५१' इति नियमेनासंज्ञायां समासासंभवात् ॥ **धान्यमातुर्नेति** । 'अभिव्यक्तपदार्थाः–' इत्यनेन जनीवानित एव ग्रहणे सिद्धेऽपि तस्य

---

1 मतान्तरमिति । 'विशिष्टं मतम्' इत्यर्थः, इति शब्दरत्ने ॥

संख्येति किम् । सौमात्रः । शुभ्रादित्वाद्वैमात्रेयः ॥ ( १५९७ ) सू कन्यायाः कनीन च । ४ । १ । ११६ । ढकोऽपवादोऽण् तत्सन्नियोगेन कनीनादेशश्च । कानीनो व्यासः कर्णश्च । अनूढाया एवापत्यमित्यर्थः ॥ (१५९८) सू विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु । ४ । १ । ११७ । अपत्येऽण् । वैकर्णो वात्स्यः । वैकर्णिरन्यः । शौङ्गो भारद्वाजः । शौङ्गिरन्यः । छागल आत्रेयः । छागलिरन्यः । केचित्तु शुङ्गेत्याबन्तं पठन्ति, तेषां ढक् प्रत्युदाहरणम् । शौङ्गेयः ॥ ( १५९९ ) सू पीलाया वा । ४ ।१।११८ । तन्नामिकाणं बाधित्वा [१६०२]'द्व्यचः' इति ढकि प्राप्ते पक्षेऽण् विधीयते । पीलाया अपत्यं-पैलः । पैलेयः ॥ (१६००) सू ढक् च मण्डूकात् ।४।१।११९। चादण् । पक्षे इञ् । माण्डूकेयः, माण्डूकः, माण्डूकिः ॥ (१६०१) सू स्त्रीभ्यो ढक् ।४।१।१२०। स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् । वैनतेयः । बाह्वादित्वात्सौमित्रिः । शिवादित्वात्सापत्नः॥ (१६०२) सू द्व्यचः ।४।१।१२१। द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् । तन्नामिकाणोऽपवादः । दात्तेयः । पार्थ इत्यत्र तु तस्येदमित्यण् ॥ (१६०३) सू इतश्चानिञः ।४ । १ । १२२ । इकारान्ताद् द्व्यचोऽपत्ये ढक् स्यात् न त्विञन्तात् । दौलेयः । नैधेयः॥ (१६०४) सू शुभ्रादिभ्यश्च । ४ । १ । १२३ । ढक् स्यात् । शुभ्रस्यापत्यं शौभ्रेयः ॥ (१६०५) सू प्रवाहणस्य ढे । ७ । ३ । २८ । प्रवाहणशब्दस्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्य तु वा ढे परे । प्रवाहणस्यापत्यं प्रावाहणेयः, प्रवाहणेयः ॥ ( १६०६ ) सू तत्प्रत्ययस्य च । ७।३।२९ । ढान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा । प्रवाहणेयस्यापत्यं प्रावाहणेयिः, प्रवाहणेयिः । बाह्यतद्धितनिमित्ता वृद्धिर्द्वाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः ॥ ( १६०७ ) सू विकर्णकुषीतकात्काश्यपे । ४ । १ । १२४ । अपत्ये ढक् । वैकर्णेयः । कौषीतकेयः । अन्यो वैकर्णिः । कौषीतकिः ॥ ( १६०८ ) सू भ्रुवो वुक् च । ४ । १ । १२५ । चाड्ढक् । भ्रौवेयः ॥ ( १६०९ ) सू कल्याण्यादीनामिनङ् । ४ । १ । १२६ । एषामिनङादेशः स्यात्

---

स्पष्टप्रतिपत्त्यर्थः स्त्रीलिङ्गनिर्देश इति भावः॥'अभिव्यक्त-' इत्यस्यानित्यताया ज्ञापनार्थ इति त्वन्ये॥ (१५९७) **कन्यायाः-**। ननु कन्या ह्यक्षतयोनिः, तस्याश्चापत्यसंभव एव नास्तीत्याशङ्क्याह—**अनूढाया इति** । अविवाहितायां इत्यर्थः॥ (१५९८) **विकर्ण—**। वात्स्यादीनामपत्यप्रत्ययान्तानां द्वन्द्वे 'यञञोश्च १५८४' 'अत्रिभृगुकुत्स-१६२८' इति सूत्राभ्यामपत्यप्रत्ययस्य लुक् । न चात्र वत्सादीनामेव द्वन्द्वोऽस्त्विति शंक्यम् , मूलभूतानां तेषां विकर्णादीनां प्रत्यपत्यत्वाभावादतो व्याचष्टे-**वात्स्य इत्यादि** । '[१]युगपदधिकरणवचनताया बहुत्वमस्ति ' इति ' शरद्वच्छुनक-१५८० ' सूत्र एवोक्तम् ॥ ( १६०० ) **ढक् च म-। पक्षे इञिति** । पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः ॥ ( १६०१ ) **स्त्रीभ्यो ढक्** । बहुवचननिर्देशान्न स्वरूपस्य ग्रहणम् , नाप्यर्थस्य । ढगर्थतया शुभ्रादिषु विमातृशब्दपाठात् । किन्तु स्त्र्यधिकारोक्तटाबादेर्ग्रहणम् । न तु विप्रकृष्टक्तिन्नादेरित्याशयेनाह—**स्त्रीप्रत्ययान्तेभ्य इति** । तेन ' दरदोऽपत्यं दारदः ' इत्यत्र ढक् न भवति । स्त्र्यर्थग्रहणे तु स्यादेवात्र ढक् । दरच्छब्दो हि जनपदक्षत्रियवाचीति ततोऽपत्यार्थे 'द्व्यञ्मगध-१६८०' इत्यणि तस्य स्त्रियाम् ' अतश्च १६८९' इति लुकि दरच्छब्दस्य स्त्र्यर्थवाचित्वात् । ' ढक् च इति वर्तमाने पुनरिह ढग्ग्रहणमण्संबद्धस्य ढको निवृत्त्यर्थम् । यद्यपि ' चानुकृष्टं नोत्तरत्र ' इति परिभाषया अणिह न प्रवर्तते तथापि तस्या अनित्यत्वज्ञापनाय ढग्ग्रहणमित्याहुः ॥ **तस्येदमिति** । शिवादित्वादपत्य एवाणित्यन्ये ॥ ( १६०३ ) **इतश्च—**। इतः किम् , दाक्षिः । अनिञः किम् , दाक्षायणः । द्व्यचः किम् , उदधेरपत्यमौदधः ॥ काशिकायां तु ' मरीचेर्मारीचः ' इत्युदाहृतम् । तदसत् , बाह्वादित्वेनेञ्प्रवृत्तेः । न चास्य बाह्वादित्वमविवक्षितम् , ' मरीचिशब्दो बाह्वादिषु पठ्यते ' इति ' मिदचोऽन्त्यात्परः ' इति सूत्रे भाष्ये स्थितत्वात् ॥ **आत्रेय इति** । परत्वादयमृष्यणं बाधत इति भावः ॥ ( १६०४ ) **शुभ्रादिभ्यश्च** । चकारस्त्वाकृतिगणत्वद्योतनार्थ इत्याहुः ॥ [२]मृकण्डशब्दोऽत्र पठ्यते, मार्कण्डेयः । शुभ्र, मृकण्ड, अघ, विमातृ, विधवा, गोधा, प्रवाहणेत्यादि । आकृतिगणोऽयम् । तेन पाण्डवेय इत्यादि सिद्धम् । इहादन्तेषु इञ् प्राप्तः, विधवाशब्दात्क्षुद्रालक्षणो ढक्, चतुष्पाज्जातिवाचिषु ढञ् गोधाशब्दाद् द्व्यचनात्सोऽपि भवति, क्वचिदौत्सर्गिकोऽण् प्राप्त इति बोध्यम् ॥ ( १६०५ ) **प्रवाहणस्य ढे** । उत्तरपदस्येत्यधिक्रियते । 'अर्धात्परिमाण-२२९३' इत्यतः 'पूर्वस्य तु वा' इति अनुवर्तते तदाह—**उत्तरपदस्याचामादेरित्यादि** । नित्यमुत्तरपदवृद्धेः फलं तु 'प्रवाहणेयीभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य-१२११' इति पुंवद्भावप्रतिषेधः ॥ ( १६०६ ) **तत्प्रत्ययस्य च** । 'प्रवाहणस्य' इत्यनुवर्तते, तच्छब्देन ढप्रत्ययः परामृश्यते तदाह—**ढान्तस्येत्यादि** ॥ **बाह्यतद्धितनिमित्तेति** । ढक्प्रत्ययान्ताद्बहिर्भूतो य इञ् तन्निमित्तेत्यर्थः ॥ ( १६०९ ) **कल्याण्यादीनामि-**। इह परस्त्रीशब्दः पठ्यते । 'परस्य स्त्री परस्त्री' इति षष्ठीसमासः । पारस्त्रैणेयः । परभार्यायामुत्पन्न इत्यर्थः । [३]अनुशतिकादित्वादुभयपदवृद्धिः । बिदादिगणे तु-'परस्त्री परशुं च' इति पठ्यते । प्राप्नोतीति शेषः । तत्र परा चासौ स्त्री चेति कर्मधारयः । परस्त्रिया

---

१ **युगपदिति** । ' सेयं युगपदधिकरणवचनता दुःखा दुरुपपादा च ' इति भाष्ये प्रागुक्तम् ॥ २ **मृकण्डेति** । स चादन्तः । ' मृकण्डस्य मुनेस्तीर्थं तत्राम्यामतिनिर्मलम्' इति स्कान्दे । उकारान्तपाठे तु 'ढे लोपोऽकद्र्वाः' इति लोपो बोध्यः इति मनोरमायाम् ॥ ३ **शेष इति** । उक्तगणसूत्रे इति बोध्यम् । तथा च 'परस्त्री परशुमादेशं प्राप्नोति, चकारादण्' इत्यर्थः ॥

ढक् च । काल्याणिनेयः । बान्धकिनेयः ॥ (१६१०) (सू) कुलटाया वा । ४।१।१२७ । इनङ्मात्रं विकल्प्यते ढक् तु नित्यः पूर्वेणैव । कौलटिनेयः, कौलटेयः । सती भिक्षुक्यत्र कुलटा । या तु व्यभिचारार्थं कुलान्यटति तस्याः क्षुद्राभ्यो वेति पक्षे ढ्रक् । कौलटेरः ॥(१६११)(सू) हृद्भगसिन्ध्वन्ते पूर्वपदस्य च।७।३।१९। हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च । सुहृदोऽपत्यं सौहार्दः । सुभगाया अपत्यं–सौभागिनेयः । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः । तेषु भवः–साक्तुसैन्धवः॥ (१६१२) (सू) चटकाया ऐरक् । ४ । १ । १२८ । (१६१३) (वा) चटकस्येति वाच्यम् ॥ लिङ्गविशिष्टपरिभाषया स्त्रिया अपि । चटकस्य चटकाया वा अपत्यं–चाटकैरः ॥ ( १६१४ ) (वा) स्त्रियामपत्ये लुग्वक्तव्यः ॥ तयोरेव स्त्र्यपत्यं चटका । अजादित्वाट्टाप् ॥ ( १६१५ ) (सू) गोधाया ढ्रक् । ४ । १ । १२९ । गौधेरः । शुभ्रादित्वात्पक्षे ढक्–गौधेयः ॥ ( १६१६ ) (सू) आरगुदीचाम् । ४ । १ । १३० । गौधारः । ( १६१७ ) रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम् । जडस्यापत्यं जाडारः । पण्डस्यापत्यं पाण्डारः ॥ (१६१८)(सू)क्षुद्राभ्यो वा ।४।१।१३१। अङ्गहीनाः शीलहीनाश्च क्षुद्रास्ताभ्यो वा ढ्रक् । पक्षे ढक् । काणेरः । काणेयः । दासेरः । दासेयः ॥ (१६१९)(सू) पितृष्वसुश्छण् ।४।१।१३२ । अणोऽपवादः । पैतृष्वस्रीयः ॥(१६२०) (सू) ढकि लोपः।४।१।१३३।पितृष्वसुरन्त्यलोपः स्याड् ढकि । अत एव ज्ञापकाड् ढक् । पैतृष्वसेयः॥(१६२१)(सू)मातृष्वसुश्च। ४।१।१३४ । पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः, मातृष्वसेयः ॥( १६२२ ) (सू) चतुष्पाद्भ्यो ढञ् । ४।१।१३५। (१६२३)(सू) ढे लोपोऽकद्र्वाः ।६।४।१४७ । कद्रूभिन्नस्योवर्णान्तस्य भस्य लोपः स्यात् ढे परे । कामण्डलेयः । कमण्डलुशब्दश्चतुष्पाज्जातिविशेषे ॥ ( १६२४ ) (सू) गृष्ट्यादिभ्यश्च । ४ । १ । १३६ । एभ्यो ढञ् स्यात् । अण्ढकोरपवादः । गार्ष्टेयः । मित्रयोरपत्यम्–। ऋष्यणि प्राप्ते ढञ् ॥ ( १६२५ ) (सू) केकयमित्रयुप्रलयानां यादेरियः । ७ । ३ । २ । एषां यकारादेरिय् आदेशः स्यात् ञिति णिति किति च तद्धिते परे । इति इयादेशे प्राप्ते–॥ ( १६२६ ) (सू) दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाक-

---

अपत्यं पारशवः । ब्राह्मणाच्छूद्रायां तेनैवोढायामुत्पन्नः । सा च जात्यन्तरयोगात्परस्त्री । न च परश्वादेशस्य स्थानिवद्भावात्पारशवेऽपि 'अनुशतिकादीनां च २००१' इत्युभयपदवृद्धिः स्यादिति वाच्यम्, सत्यादेशे पूर्वोत्तरपदसंप्रमोहात्तदप्रवृत्तेः । इह गणे स्त्रीप्रत्ययान्तानां ढकः सिद्धत्वादिनङर्थं ग्रहणम् । अन्येषां तूभयार्थम् । कल्याणी, सुभगा, दुर्भगा, बन्धकी, परस्त्रीत्यादि ॥ ( १६१० ) कुलटाया वा । शकन्ध्वादित्वात्पररूपमत एव निपातनाद्वा ॥ सती भिक्षुक्यत्रेति । अत्र इनङ्विधौ । तथा चोक्तममरेण—"अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः । कौलटेरः कौलटेयो भिक्षुकी तु सती यदि ॥ तदा कौलटिनेयः स्यात्कौलटेयोऽपि चात्मजः" इति ॥ केचित्तु–क्षुद्राया अपि इनङा तृतीयं रूपं कौलटिनेय इतीच्छन्ति ॥ पक्षे ढ्रगिति । ढगपि पक्षे भवत्येवेति भावः ॥ ( १६११ ) हृद्भग—। 'पूर्वपदस्य च' इति चकारेण 'उत्तरपदस्य' इत्यनुकृष्यते तदाह—पूर्वोत्तरपदयोरिति । 'महते सौभगाय' इत्यत्र तूद्गात्रादित्वादञ् छान्दसत्वान्नोत्तरपदवृद्धिरित्याशयः ॥ ( १६१२ ) चटकाया ऐरक् । ( १६१३ ) 'चटकायाः' इति स्त्रीलिङ्गनिर्देशात्पुंसि न स्यादित्याशङ्क्याह–चटकस्येति वाच्यमिति । एवं च 'चटकादैरक्' इत्येव सांप्रदायिकः पाठः इति न्यासकृदुक्तिर्वार्तिकविरोधादुपेक्ष्या ॥ ( १६१४ ) तयोरेवेति । तत्र टाबन्तात्तद्धितलुकि 'लुक्तद्धितलुकि १९६५' इति टापो लुकि जातिलक्षणङीषं बाधित्वा अजादिलक्षणष्टाबिति भावः ॥ ( १६१५ ) गोधा–। गौधेर इति । ढस्य एयादेशे कृते 'लोपो व्योः–१२५४' इति यलोपः ॥ ( १६१६ ) आरगुदीचाम् । वचनादेव ढ्रग्ढगारकां पर्याये सिद्धे उदीचांग्रहणं पूजार्थम् ॥ 'अरक्' इति न सूत्रितं 'यस्येति च ४३१' इत्याकारलोपे 'गौधरः' इत्यनिष्टप्रसङ्गात् ॥ ( १६१७ ) अन्यत इति । अनाकारान्ताल्लक्ष्यानुरोधेन कुतश्चिदित्यर्थः ॥ पण्डस्येति । पण्डो नपुंसकः, तस्यापत्यं तु कृत्रिमादिरिति ॥ ( १६१८ ) क्षुद्राभ्यः–। अर्थगतं स्त्रीत्वं शब्दे आरोप्य स्त्रीलिङ्गनिर्देशः ॥ ( १६२४ ) गृष्ट्यादिभ्यश्च । गृष्टि, हलि, बलि, कुद्रि, अजव ( ग ) स्ति, मित्रयु ॥ अण्ढकोरपवाद इति । इहान्त्ययोर्द्वयोर्ऋषित्वादण् प्राप्तः, अन्येभ्यस्तु 'इतश्चानिञः १६०३' इति ढक् इति विवेकः ॥ गार्ष्टेय इति । सकृत्प्रसूता सर्वाऽपि गृष्टिः, न तु गौरेव । अतोऽत्र न 'चतुष्पाद्भ्यः–१६२२' इत्यनेन ढञ्सिद्धिः ॥ ( १६२५ ) केकय–। केकयस्यापत्यं स्त्री कैकयी । 'जनपदशब्दात्क्षत्रियादञ् १६७५' । मैत्रेयिकया श्लाघ्यते । मित्रयूणां भावेनेत्यर्थः । 'गोत्रचरणाच्छ्लाघात्याकार–२४३९' इति वुञ् । तत्र हि लौकिकं गोत्रं गृह्यते, लोके च 'ऋषिशब्दो गोत्रम्' इति प्रसिद्धम् इति काशिका । एतच्च यदा मित्रयुशब्देऽभेदोपचारात्तदपत्यसंताने वर्तते, तदा बोध्यम् । अन्यथा 'मित्रयूणाम्' इति बहुवचनान्तेन विग्रहो न स्यात् ॥ प्रलयादागतं प्रालेयम् । इयादेशो वृद्धिं न बाधते 'अचामादेरचो वृद्धिः, यादेरियादेशः' इति भिन्नविषयत्वात् । अङ्गं तूभयोर्विशेषणं, न तु कार्यीति हरदत्तः ॥ आदिवृद्धेरपीदमेव सूत्रं विधायकमस्तु । किमनेन विषयभेदविचारेणेत्यन्ये ॥ ( १६२६ )

---

१ न 'चतुष्पाद्भ्यः' इति । 'सं गार्ष्टेयो वृषभो गोभिरानट्' इति मन्त्रे गार्ष्टेयशब्दस्यान्तोदात्ततायै शुभ्रादिगणे पाठे शुभ्रादिढका चतुष्पाद्ञो बाधो भवेदिति पाक्षिकाद्युदात्तत्वसिद्धये चात्र गृष्टिग्रहणमित्यपि ज्ञेयम् ॥

**मैत्रेयहिरण्मयानि** ।६।४।१७४। एतानि निपात्यन्ते । इति युलापः । मैत्रेयः । मैत्रेयौ ॥ (१६२७) (सू) **यस्कादिभ्यो गोत्रे** ।२।४।६३। एभ्योऽपत्यप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । मित्रयवः ॥ (१६२८) (सू) **अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च** ।२।४।६५। एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे न तु स्त्रियाम् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः ॥ अङ्गिरसः ॥ ( १६२९ ) (सू) **बह्वच इञः प्राच्यभरतेषु** ।२।४।६६। बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्तस्य लुक् स्यात् । पन्नागाराः । युधिष्ठिराः ॥ (१६३०) (सू) **न गोपवनादिभ्यः** । २ । ४ । ६७ । एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात् । बिदाद्यन्तर्गणोऽयम् । गौपवनाः । शैग्रवाः ॥ (१६३१) (सू) **तिककितवादिभ्यो द्वन्द्वे** ।२।४।६८। एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् स्यात् द्वन्द्वे । तैकायनयश्च कैतवायनयश्च-। तिकादि[1564]भ्यः फिञ्, तस्य लुक् । तिककितवाः ॥ (१६३२) (सू) **उपकादिभ्योऽन्यतरस्यामद्वन्द्वे** । २ । ४ । ६९ । एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुग्वा स्याद् द्वन्द्वे चाद्वन्द्वे च । औपकायनाश्च लामकायनाश्च, '[1577]नडादिभ्यः फक्, तस्य लुक् । उपकलमकाः । औपकायनलामकायनाः । भ्राष्ट्रककपिष्ठलाः । भ्राष्ट्रकिकापिष्ठलयः । लमकाः । लामकायनाः ॥ ( १६३३ ) (सू) **आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्** । २ । ४ । ७० । एतयोरवयवस्य गोत्रप्रत्ययस्याऽणो यञश्च बहुषु लुक् स्यादवशिष्टस्य प्रकृतिभागस्य यथासंख्यमगस्ति कुण्डिनच् एतावादेशौ स्तः ।

---

**दाण्डिनायन—।निपात्यन्त इति** । दण्डिन् हस्तिन् आभ्यां नडादित्वात्फक्, निपातनाट्टिलोपाभावः । वसन्तादिषु 'अथर्वन्' इति पठ्यते । अथर्वणा प्रोक्तो ग्रन्थ उपचारादथर्वा तमधीते आथर्वणिकः । शुभ्रादिषु 'जिह्माशिन्' इति पठ्यते तस्यापत्यं जैह्माशिनेयः । वाशिनोऽपत्यं वाशिनायनिः । 'उदीचां वृद्धात्-१६७०' इति फिञ् । भ्रूणहन्, धीवन्, अनयोः ष्यञि तकारोऽन्तादेशो निपात्यते । भ्रूणघ्नो भावो भ्रौणहत्यम् । धैवत्यम् । 'हनस्तोऽचिण्णलोः ३४२९' इत्यनेनैव हन्तेस्तत्वे सिद्धे तकारनिपातनं ज्ञापयति-'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति । तेन वार्त्रघ्नमित्यत्र तत्वं न ॥ नन्वेवं 'प्रसङ्ग्भ्याम्' इत्यादौ 'अनुदात्तस्य च-३२०५' इत्यम् दुर्वारः स्यात् । अम्विधौ धातोः स्वरूपग्रहणाभावात् । अत्राहुः-'मृजेर्वृद्धिः' इति सूत्रस्थभाष्यपर्यालोचनया 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति ज्ञापनार्थं तकारनिपातनमिति व्याख्येयम् । तेन न कोऽपि दोष इति ॥ सरयू इत्यस्याणि परे य्वादेर्वो निपात्यते । सरय्वां भवं सारवमुदकम् ॥ इक्ष्वाकोरपत्यं ऐक्ष्वाकः । 'जनपदशब्दात्क्षत्रियादञ् १६७५' उलोपो निपातनात् । इक्ष्वाकुषु जनपदेषु भवः 'कोपधादण् १९०३' ऐक्ष्वाकः । अत्राप्युलोपो निपातनादेव । अञणन्तयोर्द्वयोरप्येकश्रुत्या पाठात् । बहुत्वे तु 'अञस्तद्राजत्वाल्लुक्' अणस्तु 'न' इति विशेषः । तथा च रघुः-'इक्ष्वाकूणां दुरापेऽर्थे' इति । मुरारिस्त्वाह-'ऐक्ष्वाकेषु च मैथिलेषु च फलन्त्वस्माकमथाशिषः' इति । हिरण्यस्य विकारो हिरण्मयः । मयटि यादेर्लोपोऽत्र निपात्यते ॥ ( १६२७ ) **यस्कादिभ्यो**—। अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इत्याशयेनाह—**अपत्यप्रत्ययस्येति** । 'ण्यक्षत्रियार्ष-१८०६ इत्यतो लुगित्यनुवर्तते, 'तद्राजस्य-१६८५' इति सूत्रात् 'बहुषु तेनैवास्त्रियाम्' इति च, तदाह—**लुक् स्यादित्यादि** । तत्कृतेति किम्, प्रिययास्काः । बहुत्वे किम्, यास्कः । शिवाद्यण् । यस्क, लुह्य, द्रुह्य, कर्णाढक, वस्ति, कुद्रि, मित्रयु-इत्यादि ॥ ( १६२८ ) **अत्रि—। गोत्रप्रत्ययस्येति** । अत्रिशब्दात् 'इतश्चानिञः १६०३' इति ढक् । इतरेभ्यस्तु ऋष्यणिति बोध्यम् ॥ ( १६२९ ) **बह्वचः**—। भरतगोत्रे उदाहरति—**युधिष्ठिरा इति** । बहुष्वेव लुक् । नेह, यौधिष्ठिरिः । कुरुलक्षणाणं बाधित्वा बाह्वादित्वादिञ् ॥ ( १६३० ) **न गोप—। बिदाद्यन्तर्गणोऽयमिति** । 'यञञोश्च १५८४' इति लुगत्र प्राप्नोतीति भावः ॥ ( १६३१ ) **तिककितवादिभ्यो**—। यद्यपि द्वन्द्वरूपाण्येव गणे पठ्यन्ते तिकादीनि पूर्वपदानि, कितवादीन्युत्तरपदानि, तथापि 'तिकादिभ्यः' इत्युक्ते पूर्वपदेष्वेव लुगाशङ्क्येत, इष्यते तूत्तरपदेष्वपि, अतः 'तिककितवादिभ्यः' इत्युक्तम् ॥ **तिककितवा इति** । अन्येऽप्यत्रोदाहर्तव्याः—औपकायनाश्च लामकायनाश्च 'नडादिभ्यः फक् १५७७' तस्य लुक् । उपकलमकाः । भ्राष्ट्रकयश्च कापिष्ठलयश्च 'अत इञ् १५७१' तस्य लुक् भ्राष्ट्रककपिष्ठलाः । कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च 'अत इञ् १५७१' तस्य लुक् कृष्णाजिनकृष्णसुन्दरा इत्यादि ॥ ( १६३२ ) **उपकादिभ्यो**—। अद्वन्द्वग्रहणं 'द्वन्द्वे' इत्येतन्नाधिक्रियते इति स्फुटीकरणार्थम् । उपकादीनां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते 'उपकलमकाः' इत्यादयः । तेषां पूर्वेण नित्यमेव लुक्, अद्वन्द्वे त्वनेन विकल्प इति ज्ञेयम् ॥ भाष्ये 'भ्राष्ट्रकिकापिष्ठलयः' इत्युदाहरणात्तिककितवादिष्वस्य पाठोऽनार्ष इति कैयटः । तेनात्र द्वन्द्वेऽपि विकल्प एवोचित इत्याशयेनोदाहरति—**भ्राष्ट्रककपिष्ठला इत्यादि**॥ तिककितवादिषु पठितानामनेनाद्वन्द्व एव विकल्प इत्याशयेनोदाहरति—**लमकाः, लामकायना इति** । एवमन्येऽप्युदाहर्तव्याः । उपकाः, औपकायनाः। भ्राष्ट्रकाः, भ्राष्ट्रकायनाः इत्यादि ॥ ( १६३३ ) **आगस्त्य**—। अगस्त्यशब्दादृष्यण्, कुण्डिनीशब्दात्तु गर्गादियञ् ॥ ननु कुण्डिनीशब्दस्य यञि 'भस्याढे-१२०४' इति पुंवद्भावे 'नस्तद्धिते ९८६' इति टिलोपः प्राप्नोति । न च 'संयोगादिश्च १६३८' इति प्रकृतिभावः शङ्क्यः, 'अणि' इति तत्रानुवर्तनात् । मैवम्, अस्मादेव निपातनात् तस्याप्रवृत्तेः[1] कौण्डिन्यः सिध्यति ॥ चकारस्त्वन्तोदात्तार्थः । मध्योदात्तः कुण्डिनीशब्दः । कुण्डमस्त्यस्या इति मत्वर्थीयस्येनेरुदात्तत्वादादेशस्यापि कुण्डिनशब्दस्यान्तरतम्यान्मध्योदात्तत्वात् ॥ **अवशिष्टस्य**

---

१ तस्याप्रवृत्तेरिति । 'नस्तद्धिते' इत्यस्येत्यर्थः ॥

अगस्तयः । कुण्डिनाः ॥ ( १६३४ ) (सू.) राजश्वशुराद्यत् । ४ । १ । १३७ । ( १६३५ ) (वा.) राज्ञो जातावेवेति वाच्यम् ॥ ( १६३६ ) (सू.) ये चाभावकर्मणोः । ६ । ४ । १६८ । यादौ तद्धिते परे अन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । अभावकर्मणोः किम् । राज्ञः कर्म भावो वा राज्यम् ॥ जातिग्रहणाच्छूद्रादावुत्पन्नः ॥ ( १६३७ ) (सू.) अन् । ६ । ४ । १६७ । अणि अन्प्रकृत्या स्यादिति टिलोपो न ॥ राजनः श्वशुर्यः ॥ ( १६३८ ) (सू.) संयोगादिश्च । ६ । ४ । १६६ । इन्प्रकृत्या स्यादणि परे । चक्रिणोऽपत्यं चाक्रिणः ॥ ( १६३९ ) (सू.) न मपूर्वोऽपत्येऽवर्मणः । ६ । ४ । १७० । मपूर्वोऽन्प्रकृत्या न स्यादपत्येऽणि । भाद्रसामः । मपूर्वः किम् । सौत्वनः । अपत्ये किम् । चर्मणा परिवृतश्चार्मणो रथः । अवर्मणः किम् । चक्रवर्मणोऽपत्यं चाक्रवर्मणः ॥ ( १६४० ) (वा.) वा हितनाम्न इति वाच्यम् ॥ हितनाम्नोऽपत्यं हैतनामः । हैतनामनः ॥ ( १६४१ ) (सू.) ब्राह्मोऽजातौ । ६ । ४ । १७१ । योगविभागोऽत्र कर्तव्यः । ब्राह्म इति निपात्यतेऽनपत्येऽणि । ब्राह्मं हविः ॥ ततोऽजातौ । अपत्ये जातावणि ब्रह्मणष्टिलोपो न स्यात् । ब्रह्मणोऽपत्यं ब्राह्मणः । अपत्ये किम् । ब्राह्मी औषधिः ॥ ( १६४२ ) (सू.) औक्षमनपत्ये । ६ । ४ । १७३ । अणि टिलोपो निपात्यते । औक्षं पदम् । अनपत्ये किम् । उक्ष्णोऽपत्यम्–॥ ( १६४३ ) (सू.) षपूर्वहन्धृतराज्ञामणि । ६ । ४ । १३५ । षपूर्वो योऽन् तस्य हनादेश्च भस्यातो लोपोऽणि । औक्ष्णः । ताक्ष्णः । भ्रौणघ्नः । धृतराज्ञोऽपत्यं धार्तराज्ञः ॥ षपूर्वेति किम् । साम्नोऽयं सामनः ॥ अणि किम् । ताक्षण्यः ॥ ( १६४४ ) (सू.) क्षत्त्राद्घः । ४ । १ । १३८ । क्षत्त्रियः । जातावित्येव । क्षात्त्रिरन्यः ॥ ( १६४५ ) (सू.) कुलात्खः । ४ । १ । १३९ । कुलीनः । ( १६४६ ) तदन्तादपि । उत्तरसूत्रेऽपूर्वपदादिति लिङ्गात् । आढ्यकुलीनः ॥ ( १६४७ ) (सू.) अपूर्वपदादन्यतरस्यां यड्ढकञौ । ४ । १ । १४० । कुलादित्येव । पक्षे खः । कुल्यः । कौलेयकः । कुलीनः । पदग्रहणं किम् । बहुकुल्यः । बाहुकुलेयकः । बहुकुलीनः ॥ ( १६४८ ) (सू.) महाकुलादञ्खञौ । ४ । १ । १४१ । अन्यतरस्यामित्यनुवर्तते । पक्षे खः । माहाकुलः । माहाकुलीनः । महाकुलीनः ॥ ( १६४९ ) (सू.) दुष्कुलाड्ढक् । ४ । १ । १४२ । पूर्ववत्पक्षे खः । दौष्कुलेयः । दुष्कुलीनः ॥ ( १६५० ) (सू.) स्वसुश्छः । ४ । १ । १४३ । स्वस्रीयः ॥ ( १६५१ ) (सू.) भ्रातुर्व्यच्च । ४ । १ । १४४ । चाच्छः । अणोऽपवादः । भ्रातृव्यः । भ्रात्रीयः ॥ ( १६५२ ) (सू.) व्यन्सपत्ने । ४ । १ । १४५ । भ्रातुर्व्यन् स्यादपत्ये प्रकृतिप्रत्ययसमुदायेन

---

**प्रकृतिभागस्येति** । न च प्रत्ययविशिष्टस्यादेशमात्रं विधीयतां किं लुग्विधानेनेति वाच्यम्, आगस्तीयाश्छात्रा इत्यनापत्तेः, लुकि हि सति 'गोत्रेऽलुगचि १५५२' इति लुकि प्रतिषिद्धे वृद्धत्वाच्छः सिध्यति । प्रत्ययविशिष्टस्यादेशविधौ तु वृद्धत्वापगमे शैषिकोऽणेव स्यात् । कौण्डिनाश्छात्रा इति तूभयथाऽपि सिध्यत्येव । छापवादस्य 'कण्वादिभ्यो गोत्रे १८७५' इत्यण्प्रत्ययस्य प्रवृत्त्या तत्र विशेषाभावात् ॥ **( १६३४ ) राजश्वशुराद्यत्** । क्रमेणाणिञोरपवादः ॥ **( १६३५ ) जातावेवेति** । प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्येत्यर्थः । प्रत्ययस्त्वपत्य एव । एवं च पङ्कजादिवद्योगरूढ इति फलितोऽर्थः ॥ **( १६३७ ) अन् टिलोपो नेति** । 'नस्तद्धिते ९८६' इति प्राप्तष्टिलोपो नेत्यर्थः ॥ **( १६५१ ) ब्राह्मोऽजातौ** । **योगविभागोऽत्रेति** । एकयोगत्वे त्वारम्भसामर्थ्यादनपत्ये जातौ 'ब्राह्मी' इत्यत्र प्राप्तटिलोपसिद्धावपि ब्राह्मण इति न सिध्येत् । 'अन् १६३७' इति प्रकृतिभावस्य 'न मपूर्वोऽपत्ये–१५३९' इति निषेधाट्टिलोपस्य दुर्वारत्वात् । किंच, जातौ ब्राह्ममित्यादि न सिद्ध्येत्, 'अन् १६३७' इति प्रकृतिभावस्य दुर्वारत्वादिति भावः ॥ **ब्राह्म इति** । इह 'अपत्ये' इति न संबध्यते । अन्यथा निपातनमिदं व्यर्थं स्यात् 'न मपूर्व–१६३९' इति प्रकृतिभावनिषेधाट्टिलोपसिद्धेरित्याशयेनाह––**अनपत्येऽणीति** ॥ **ब्राह्ममिति** । 'ब्राह्मो मुहूर्तः' 'ब्राह्मः स्थालीपाकः' इत्याद्यप्युदाहरणम् ॥ नन्वेवमपि ब्राह्मणो न सिध्यति 'न मपूर्वः–१६३९' इति प्रकृतिभावानिषेधादपत्येऽणि 'नस्तद्धिते ९८६' इति टिलोपप्रवृत्तेरत आह––**जाताविति** । इह मण्डूकप्लुत्या 'अपत्ये' इत्यनुवर्तते, 'न' इत्यत्र, तदेतदाह––**अपत्ये जातावित्यादिना** । अयमत्रार्थः–'अपत्ये जातौ ब्राह्मणशब्दे टिलोपो न भवति' इति ॥ केचिदिह–'अजातौ' इति छित्त्वा 'जातौ न भवति' इति व्याचक्षते । तस्मिंस्तु व्याख्याने 'न' इति नानुवर्तनीयम् । जातौ किम्, ब्राह्मो नारदः ॥ **( १६४३ ) षपूर्व–। तीक्ष्ण इति** । शिवादित्वात्, 'तस्येदम् २०६४' इति वाऽण् ॥ **ताक्षण्य इति** । कारिलक्षणो ण्यः ॥ **( १६४५ ) कुलात्खः** । केवलात्कुलशब्दात् 'अपूर्वपदात्–१६४७' इत्यादिना विशेषविहिताभ्यामपि यड्ढकञ्भ्यां खो न बाध्यते, तद्विधान्यतरस्यांग्रहणादित्याशयेनाह––**कुलीन इति** । **( १६४६ ) लिङ्गादिति** । अन्यथा 'ग्रहणवता–' इति तदन्तविधिप्रतिषेधादपूर्वपदग्रहणं व्यर्थं स्यादिति भावः ॥ **आढ्यकुलीन इति** । आढ्यश्चासौ कुलीनश्चेति कुलीनविशेषणत्वे कुलस्याढ्यत्वं न प्रतीयते । किंच, ईकार उदात्त इति स्वरेऽपि विशेषोऽस्तीति भावः ॥ **( १६४७ ) अपूर्व–। बहुकुल्य इति** । 'विभाषा सुपः–२७३७' इति बहुच्प्रत्ययो न पदमिति अपूर्वपदत्वात्प्रत्ययत्रयं भवत्येवेति भावः ॥ **( १६५२ ) व्यन्स–। व्यन्स्यादिति** । भ्रातुरपत्यं यदि शत्रुः तदा भ्रातृशब्दात् व्यन्नेव स्यात् । न तु व्यच्छौ इत्यर्थः ॥ **समुदायेनेति** । तद्धितप्रत्ययेन शत्रुरूपेऽपत्ये वा वाच्य इत्यर्थः ॥ यत्तु वृत्तिकृतोक्तम् 'अपत्यार्थोऽत्र नास्त्येव' इति तदुपेक्ष्यं भाष्यविरोधादिति

---

१ **अयमिति** । अपत्यमिति त्वपपाठः । अपत्ये 'न मपूर्वोऽपत्ये' इति प्रकृतिभावनिषेधे सामन इति रूपानुपपत्तेः ॥
२ **क्षत्त्रादिति** । अत्र न पर्यायग्रहणम्, किन्तु स्वरूपस्यैवेति भावः ॥

शत्रौ वाच्ये । भ्रातृव्यः शत्रुः । पाप्मना भ्रातृव्येणेति तूपचारात् ॥ ( १६५३ ) (सू.) **रेवत्यादिभ्यष्ठक्** । ४ । १ । १४६ । ( १६५४ ) (सू.) **ठस्येकः** । ७ । ३ । ५० । अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः ॥ ( १६५५ ) (सू.) **गोत्रस्त्रियाः कुत्सने ण च** । ४ । १ । १४७ । गोत्रं या स्त्री तद्वाचकाच्छब्दात् णठकौ स्तः कुत्सायाम् । सामर्थ्याद्यूनि । गार्ग्या अपत्यं—गार्गो गार्गिको वा जाल्मः । भस्याढे तद्धिते इति पुंवद्भावाद्गार्ग्यशब्दाण्णठकौ । यस्येति लोपः । आपत्यस्येति यलोपः ॥ ( १६५६ ) (सू.) **वृद्धाट्ठक् सौवीरेषु बहुलम्** । ४ । १ । १४८ । सुवीरदेशोद्भवाः सौवीराः । वृद्धात्सौवीरगोत्राद्यूनि बहुलं ठक् स्यात् कुत्सायाम् । भागवित्तेर्भागवित्तिकः । पक्षे फक् । भागवित्तायनः ॥ ( १६५७ ) (सू.) **फेश्छ च** । ४ । १ । १४९ । फिञन्तात्सौवीरगोत्रादपत्ये छः ठक् च कुत्सने गम्ये । यमुन्दस्यापत्यं—यामुन्दायनिः । तिकादित्वात् फिञ् । तस्यापत्यं—यामुन्दायनीयः । यामुन्दायनिकः । कुत्सने किम् । यामुन्दायनिः । औत्सर्गिकस्याणो ण्यक्षत्रियेति लुक् । सौवीरेति किम् । तैकायनिः ॥ ( १६५८ ) (सू.) **फाण्टाहृतिमिमताभ्यां णफिञौ** । ४ । १ । १५० । सौवीरेषु । नेह यथासंख्यम्—अल्पाच्तरस्य परनिपातालिङ्गादिति वृत्तिकारः । फाण्टाहृतः । फाण्टाहृतायनिः । मैमतः । मैमतायनिः । भाष्ये तु यथासंख्यमेवेति स्थितम् ॥ (१६५९) (सू.) **कुर्वादिभ्यो ण्यः** । ४ । १ । १५१ । अपत्ये । कौरव्या ब्राह्मणाः । वावदूक्याः ॥ ( १६६० ) (ग.) **सम्राजः क्षत्त्रिये** ॥ साम्राज्यः । साम्राजोऽन्यः ॥ ( १६६१ ) (सू.) **सेनान्तलक्षणकारिभ्यश्च** । ४ । १ । १५२ । एभ्यो ण्यः । एति संज्ञायामिति सस्य षः । हारिषेण्यः । लाक्षण्यः । कारिः शिल्पी तस्मात् । तान्तुवाय्यः । कौम्भकार्यः । नापित्यः ॥ ( १६६२ ) (सू.) **उदीचामिञ्** । ४ । १ । १५३ । हारिषेणिः । लाक्षणिः । तान्तुवायिः । कौम्भकारिः । नापितात्तु परत्वात् फिञेव । नापितायनिः ॥ ( १६६३ ) (वा.) **तक्ष्णोऽण उपसंख्यानम्** ॥ ताक्ष्णः । पक्षे ताक्षण्यः ॥ ( १६६४ ) (सू.) **तिकादिभ्यः फिञ्** । ४ । १ । १५४ । तैकायनिः । ( १६६५ ) (सू.) **कौसल्यकार्माार्याभ्यां च** । ४ । १ । १५५ । अपत्ये फिञ् । इञोऽपवादः ॥ ( १६६६ ) (वा.) **परमप्रकृतेरेवायमिष्यते** ॥ प्रत्ययसंनियोगेन प्रकृतिरूपं निपात्यते । कोसलस्यापत्यं कौसल्यायनिः । कर्मारस्यापत्यं कार्मार्यायणिः ॥ ( १६६७ ) (वा.) **छागवृषयोरपि** ॥ छाग्यायनिः । वार्ष्यायणिः ॥

---

मनसि निधायाह—**पाप्मनेति** । श्रुतिगतभ्रातृव्यशब्दस्य गतिं वदति—**उपचारादिति** । 'अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम्' इत्यमरः । न हि पापं भ्रातुरपत्यं भवतीत्यतो भाक्त एवायं प्रयोग इति भावः ॥ ( १६५३ ) **रेवत्या**—। रेवती, अश्वपाली, मणिपाली, द्वारपाली, इत्यादि ॥ ( १६५४ ) **ठस्येकः** । 'अङ्गस्य २८५' इत्यनुवर्तनादाह—**अङ्गात्परस्येति** । 'अङ्गात्' इति ठकारविशेषणादठचष्ठकारस्य न भवति । कर्मठः ॥ ( १६५५ ) **गोत्रस्त्रियाः**—। णित्त्वं तु 'ग्लुचुकायन्या अपत्यं ग्लौचुकायनो जाल्मः' इत्यत्र फिञन्ताण्णे वृद्ध्यर्थमिति बोध्यम् ॥ **सामर्थ्याद्यूनीति** । 'गोत्रादपरो गोत्रप्रत्ययो न' इत्युक्तत्वादिति भावः ॥ **गार्ग्या अपत्यमिति** । पितुरसंविज्ञाने मात्रा व्यपदेशात् कुत्सा । गोत्रेति किम्, कारिकेयो जाल्मः । स्त्रियाः किम्, औपगवस्यापत्यम् औपगविर्जाल्मः । कुत्सनेति किम्, गार्गेयो माणवकः ॥ ( १६५८ ) **फाण्टाहृति**—। 'कुत्सने' इति निवृत्तम् ॥ वृत्तिमते णित्त्वस्य फलमस्तीति ध्वनयन्नुदाहरति—**मैमत इति** । न च भाष्यमतेऽपि ' फाण्टाहृताभार्यः ' इत्यत्र 'वृद्धिनिमित्तस्य—१२११' इति पुंवद्भावनिवृत्तिर्णित्त्वफलमस्तीति वाच्यम्, ' अस्त्रियाम् ' इति युवसंज्ञानिषेधाद्गोत्रसंज्ञासद्भावात् 'एको गोत्रे १५६९ ' इति नियमादिञन्तात्फाण्टाहृतिशब्दादन्यस्यापत्यप्रत्ययस्याभावात्फाण्टाहृताशब्दस्यैवासत्त्वादिति भावः ॥ ( १६५९ ) **कुर्वादिभ्यो**—। ' सौवीरेषु ' इत्यपि निवृत्तम् ॥ **कौरव्या ब्राह्मणा इति** । यत्तु 'कुरुनादिभ्यो ण्यः १६८२' इति वक्ष्यति, तस्य तद्राजत्वाद्बहुषु लुकि 'कुरवः क्षत्त्रियाः' इति भवति, न तु ' कौरव्याः ' इति भावः ॥ **वावदूक्या इति** । वदेर्यङन्तादूकप्रत्ययः । स चात्रैव गणे निपातनादित्याहुः ॥ कुरु गर्ग, वावदूक ॥ ( १६६० ) **सम्राजः क्षत्त्रिये** । सम्राट्शब्दात् ण्य इत्यर्थः ॥ " **वामरथस्य कण्वादिवत्स्वरवर्जम्** " । यञन्तस्य कण्वशब्दस्य यत्कार्यं तत् ण्यप्रत्ययान्तस्य वामरथ्यशब्दस्य स्यात् , आद्युदात्तं विनेत्यर्थः । बहुत्वे ' यञञोश्च १५८४ ' इति लुक् । वामरथाश्छात्राः[1] । ' कण्वादिभ्यो गोत्रे १८७५' इति छापवादोऽण् । वामरथी । वामरथ्यायनी स्त्री । 'यञश्च ६५६ ' । 'प्राचां ष्फ तद्धितः ६५९' इति ङीप्ष्फौ । वामरथानि सङ्घाङ्कलक्षणानि 'सङ्घाङ्कलक्षणेषु—२०७७' इति च्छापवादोऽण् । सत्यंकार, वलभीकार, बुद्धिकारेत्यादि ॥ (१६६१) **सेनान्त**—। **हारिषेण्य इति** । 'एति संज्ञायाम्—१४७०' इति षत्वस्यासिद्धत्वात्सेनान्तोऽयम् ॥ (१६६३) **ताक्ष्ण इति** । उदीचामिञोऽपवादोऽयमण् । अस्मादुपसंख्यानाच्छिवादिषु[2] तक्षन्शब्दपाठोऽनार्ष इति गम्यते ॥ वृत्तिकारस्तु ' तक्षन्शब्दं शिवादिषु पठित्वा ' कारिलक्षणमुदीचामिञमयमण् बाधते ण्यस्य तु बाधो नेष्यते ' इत्याह तदनुरोधेनास्माभिरपि तत्र तथैव व्याख्यातम् । फले विशेषाभावात् ॥ ( १६६५ ) **कौसल्य**—। ( १६६६ ) **परमप्रकृतेरेवायमिति** । यदि तु 'वृद्धेत्कोसला—१६८१' इति ञ्यङन्तात्कोसलशब्दात्, कारिलक्षणण्यान्तात्कर्मारशब्दाच्चायं विधिः स्यात् , तदा यून्येव प्रसज्येतेति भावः ॥ ( १६६७ ) **छागेति** । दगुशब्दस्याप्युपलक्षणमेतत् । फिञ्प्रकरणे—"**दगुकोसलकर्मारच्छागवृषाणां युट्**

---

१ 'वामरथ्यस्य छात्राः' इति विग्रहेऽणि 'आपत्यस्य—' इति यलोपः इति कैयटः ॥ २ **उपसंख्यानादिति** । 'यदि पुनरयं तक्षन्शब्दः शिवादिषु पठ्येत'इति भाष्ये ' यदि पठ्येत' इति पदाभ्यामपि तथैव प्रतीतेः ॥

(१६६८) सू० **अणो द्व्यचः** ।४।१।१५६। अपत्ये फिञ् । इञोऽपवादः । कार्त्रायणिः । अण इति किम् । दाक्षायणः । द्व्यचः किम् । औपगविः ॥ [ ( १६६९ ) वा० **त्यदादीनां फिञ् वा वाच्यः** ॥ त्यादायनिः । त्यादः ॥ ] (१६७०) सू० **उदीचां वृद्धादगोत्रात्** । ४ । १ । १५७ । आम्रगुप्तायनिः । प्राचां तु—आम्रगुप्तिः । वृद्धात्किम् । दाक्षिः । अगोत्रात्किम् । औपगविः ॥ ( १६७१ ) सू० **वाकिनादीनां कुक् च** । ४ । १ । १५८ । अपत्ये फिञ् वा । वाकिनस्यापत्यं वाकिनकायनिः, वाकिनिः ॥ ( १६७२ ) सू० **पुत्रान्तादन्यतरस्याम्** । ४ । १ । १५९ । अस्माद्वा फिञ् सिद्धस्तस्मिन्परे पुत्रान्तस्य वा कुक् विधीयते । गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः । गार्गीपुत्रिः ॥ (१६७३) सू० **प्राचामवृद्धात्फिन्बहुलम्** । ४ । १ । १६० । ग्लुचुकायनिः ॥ ( १६७४ ) सू० **मनोर्जातावञ्यतौ षुक् च** । ४ । १ । १६१ । समुदायार्थो जातिः । मानुषः, मनुष्यः ॥ ( १६७५ ) सू० **जनपदशब्दात्क्षत्रियादञ्** । ४ । १ । १६८ । जनपदक्षत्रिययोर्वाचकादञ् स्यादपत्ये । दाण्डिनायनेति सूत्रे निपातनाट्टिलोपः । ऐक्ष्वाकः । ऐक्ष्वाकौ । ( १६७६ ) वा० **क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्** । तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात् । पञ्चालानां राजा पाञ्चालः ॥ (१६७७) वा० **पूरोरण् वक्तव्यः** ॥ पौरवः । (१६७८) वा० **पाण्डोर्ड्यण्** ॥ पाण्ड्यः ॥ (१६७९) सू० **साल्वेयगान्धारिभ्यां च** । ४ । १ । १६९ । आभ्यामपत्येऽञ् । वृद्धेदिति ञ्यङोऽपवादः । साल्वेयः । गान्धारः । तस्य राजन्यप्येवम् ॥ (१६८०) सू० **द्व्यञ्मगधकलिङ्गसूरमसादण्** । ४ । १ । १७० । अञोऽपवादः । द्व्यच् । आङ्गः । वाङ्गः । सौह्मः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यप्येवम् ॥ ( १६८१ ) सू० **वृद्धेत्को-**

---

**चादिष्टस्य**" इति वार्तिकात् । आदिष्टस्य आयन्नादेशस्येत्यर्थः । अन्यथा प्रतिपदोक्ते युटि कृते प्रत्ययादित्वाभावात् कौसल्यायनिरित्यादौ फस्यायन्नादेशो न स्यात्, युकि कृते तु 'दागव्यायनिः' इत्यत्र ओर्गुणः, अन्यत्राल्लोपश्च न स्यादिति भावः ॥ ( १६६८ ) **कार्त्रायणिरिति** । कर्तुरपत्यं कार्त्रस्तस्यापत्यं तु कार्त्रायणिः ॥ अत्र व्याचक्षते—कर्तृशब्दः कुर्वादिषु पठ्यते । तथा च—'कार्त्र्यः' इति वर्धमानेनोदाहृतम् । तस्मादिह भर्तृहर्त्राद्युदाहार्यमिति ॥ ( १६७० ) **उदीचां वृ—। दाक्षिरिति** । 'वा नामधेयस्य १८८२' इति वृद्धसंज्ञाभावपक्षे प्रत्युदाहरणमिदम् । पक्षान्तरे तु फिञ् भवत्येव । 'दाक्षायण्योऽश्विनीत्यादि ताराः' इत्यमरः ॥ ( १६७१ ) **वाकिनादीनाम्—**। यदि हि वृद्धसगोत्रं शब्दरूपं, तत्रागमार्थमेवेदं वचनमन्येषां तूभयार्थम् ॥ 'उदीचाम्' इत्यनुवर्तनाद्विकल्पः फलित इत्याह—**फिञ्वा स्यादिति वाकिनकायनिरिति** । वचनं वाकः, सोऽस्यास्तीति वाकिनः । अत एव निपातनादिनन् । अगारे एधत इति गारेधः । पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात्पररूपम् । गारेधकायनिः । चर्मिवर्म्यादौ तूभयार्थम् । चर्मवर्मशब्दाभ्यां व्रीह्यादित्वादिनिः । "**चर्मिवर्मिणोर्नलोपश्च**" इति गणसूत्रम् । चार्मिकायणिः । वार्मिकायणिः । कुकि कृते नकारस्यानन्त्यत्वान्नलोपाप्राप्तौ वचनम् । न च कुक्परादिरस्त्विति वाच्यम्, फस्यानादित्वादायनादेशाभावप्रसङ्गात् ॥ **वाकिनिरिति** । 'अत इञ् १५७१' । फिञभावे तत्संनियोगशिष्टः कुगत्र न भवति । एवं गारेधिः, चार्मिण इत्याद्यूह्यम् ॥ ( १६७२ ) **पुत्रान्तात्—**। 'उदीचां वृद्धात्' इत्यनुवर्तत इत्याशयेनाह—**वा फिञ् सिद्ध इति** । तेनैव सूत्रेण फिञि सिद्धे अनेन कुगेव वा विधीयते इति भावः ॥ ( १६७३ ) **प्राचामवृद्धात्—**। प्राचांग्रहणं पूजार्थम् । अवृद्धादिति किम्, राजदन्तिः । बहुलग्रहणान्नेह । दाक्षिः ॥ (१६७४) **मनोर्जा—। मानुषः, मनुष्य इति** । जातिशब्दावेतौ ॥ "**अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः** ॥" णत्वविधानार्थमिदम् । अणः सिद्धत्वात् । अनधीतवेदत्वान्मूढत्वं विहिताननुष्ठानाच्च कुत्सितत्वम् ॥ इदं च वचनं 'ब्राह्मणमाणव—१७६६' इति णत्वनिपातनाल्लब्धमित्याहुः ॥ ( १६७५ ) **जनपद—जनपदक्षत्रिययोरिति** । जनपदवाची सन् यः क्षत्रियवाचीत्यर्थः । यद्यपि पञ्चालादयो जनपदे बहुवचनान्ताः, क्षत्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्योभयवाचित्वमक्षतमेवेति बोध्यम् । जनपदशब्दात्किम्, द्रुह्योरपत्यं द्रौह्यवः, केवलक्षत्रियवाच्ययम् ॥ क्षत्रियादिति किम्, ब्राह्मणस्य पञ्चालस्यापत्ये पाञ्चालिरिति वृत्तिकारादयः ॥ बाह्वादिष्वस्य पाठादिदं प्रत्युदाहरणं चिन्त्यमित्यन्ये ॥ ( १६७६ ) **क्षत्रियसमानशब्दादिति** । समानः शब्दो यस्य जनपदस्य सोऽयं समानशब्दो जनपदः । क्षत्रियेण समानशब्दः क्षत्रियसमानशब्दस्तस्मात् 'तस्य' इति षष्ठीसमर्थाद्राजनि वाच्ये अपत्यवत्प्रत्ययो भवतीत्यर्थः ॥ **पञ्चालानां राजेति** । इह 'अवृद्धादपि बहुवचनविषयात् १८९४' इति प्राप्तो वुञ् बाध्यते ॥ (१६७७) **पूरोरिति** । पूरुशब्दो न जनपदवाचीति प्राग्दीव्यतीये अणि सिद्धे तद्राजसंज्ञार्थं वचनम् । जनपदवाचित्वे तु 'द्व्यञ्मगध—१६८०' इत्येव सिद्धम् ॥ ( १६७८ ) **पाण्डोर्ड्यण्** । णित्करणं तु 'पाण्ड्याभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य—१२११' इति पुंवद्भावप्रतिषेधार्थम् । युधिष्ठिरपितृवाचिनो गुणवाचिनश्च पाण्डोर्नेह ग्रहणं, 'जनपदशब्दात्—१६७५' इत्युक्ते तदधिपतिवाचिन एवोपस्थानात् ॥

---

१ **कार्त्रायणिरिति** । कर्तुश्छात्रः कार्त्रस्तस्यापत्यामिति विग्रहः । कर्तुरपत्ये तु कर्तृहर्तृशब्दयोः कुर्वादिगणे पाठाद् ण्य एव ॥ २ **त्यदादीनामित्यादि—त्यादः** इत्यन्तः कोष्ठकान्तर्गतः पाठोऽपपाठ एव, त्यदादीनां वृद्धसंज्ञकत्वेन 'उदीचां वृद्धाद्—' इत्यनेनैव सिद्धेर्वार्तिकरचने प्रयोजनाभावात् ॥ ३ **अन्वर्थेति** । भाष्ये तु नैतद्दृश्यते इति शेखरः ॥ ४ **औत्सर्गिक** इति । 'तस्यापत्यम्' इत्येनाणित्यर्थः ॥

सलाजादाञ् ञ्यङ् । ४ । १ । १७१ । वृद्धात् । आम्बष्ठ्यः । सौवीर्यः । इत् । आवन्त्यः । कौसल्यः । अजादस्या-पत्यम् आजाद्यः ॥ ( १६८२ ) (सू) **कुरुनादिभ्यो ण्यः** । ४ । १ । १७२ । कौरव्यः । नैषध्यः । स नैषधस्यार्थपते-रित्यादौ तु शैषिकोऽण् ॥ (१६८३) (सू) **साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्** । ४ । १ । १७३ । साल्वो जन-पदस्तदवयवा उदुम्बरादयस्तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ् । अञोऽपवादः । औदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । राजन्यष्वेवम् ॥ ( १६८४ ) (सू) **ते तद्राजाः** । ४ । १ । १७४ । अञादय एतत्संज्ञाः स्युः ॥ (१६८५) (सू) **तद्राजस्य बहुषु तेनैवास्त्रियाम्** ।२ । ४ ।६२। बहुष्वर्थेषु तद्राजस्य लुक् स्यात्तदर्थकृते बहुत्वे न तु स्त्रियाम्। इक्ष्वाकवः । पञ्चाला इत्यादि । कथं तर्हि कौरव्याः पशवः । तस्यामेव रघोः पाण्ड्या इति च । कौरव्ये पाण्ड्ये च साधव इति समाधेयम् । रघूणामन्वयं वक्ष्ये, निरुध्यमाना यदुभिः कथंचिदिति तु रघुयदुशब्दयोस्तदपत्ये लक्षणया॥ (१६८६) (सू) **कम्बोजाल्लुक्** ।४।१।१७५। अस्मात्तद्राजस्य लुक् । कम्बोजः । कम्बोजौ ॥ (१६८७) (वा) **कम्बोजा-दिभ्य इति वक्तव्यम्**॥चोलः।शकः।द्व्यञ्[१६६२]लक्षणस्याणो लुक्। केरलः।यवनः।अञो लुक्।कम्बोजाः समरे इति पाठःसुगमः। दीर्घपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः। सिन्धुतक्षशिलादिभ्योऽणञावित्यण्॥ (१६८८) (सू) **स्त्रियामवन्तिकुन्ति-कुरुभ्यश्च**।४।१।१७६। तद्राजस्य लुक् स्यात्।अवन्ती।कुन्ती।कुरूः॥(१६८९)(सू)**अतश्च**।४।१।१७७। तद्राजस्याकारस्य स्त्रियां लुक् स्यात् । शूरसेनी । मद्री ॥ कथं माद्रीसुताविति । ह्रस्व एव पाठ इति हरदत्तः। भर्गादित्वं वा कल्प्यम् ॥ (१६९०) (सू) **न प्राच्यभर्गादियौधेयादिभ्यः** ।४।१।१७८। एभ्यस्तद्राजस्य न लुक्। पाञ्चाली। वैदर्भी। आङ्गी। वाङ्गी। मागधी । एते प्राच्याः ॥ भार्गी। कारूशी। कैकेयी। केकयीत्यत्र तु जन्यजनकभावलक्षणे पुंयोगे ङीष् ॥ युधा । शुक्रा। आभ्यां [१६६२]'द्व्यचश्च' इति ढक्। ततः स्वार्थे पर्श्वादियौधेयादिभ्योऽणञावित्यञ् । शार्ङ्गरवाद्यञ[७५३]इति ङीन्। [१६८९]अतश्चेति लुकि तु

---

(१६८१)**वृद्धेत्**–। तपरकरणं किम्, कौमारः । कुमारिशब्दो हि जनपदक्षत्त्रियवचनः॥(१६८२)**कुरुना**—।नकार आदिर्येषां ते नादयः कुरुशब्दाद् द्व्यज्लक्षणे अणि प्राप्ते, नादिभ्यस्त्वञि प्राप्ते च वचनम् ॥ ( १६८३ ) **साल्वा**–। **उदुम्बरादय इति** । " उदुम्बरास्तिलखला मद्रकारा युगंधराः । भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिकाः॥" इति वृत्तिः ॥ **औदुम्बरि-रिति** । तैलखलिः । माद्रकारिः । यौगन्धरिरित्यादीन्युदाहर्तव्यानि ॥ ( १६८४ ) **ते तद्राजाः** ॥ **अञादय इति**। ततः प्राचीनास्तु तच्छब्देन न परामृश्यन्ते, गोत्रयुवसंज्ञाकाण्डेन विच्छेदात् ॥ एतदर्थमेवेदं न तत्काण्डमध्ये कृतमाचार्येणेत्याहुः ॥ वस्तुतस्तु 'तद्राज' इत्यधिकृत्य 'जनपदशब्दात्क्षत्त्रियादञ् १६७५' इत्यादिसूत्राणामारम्भे गोत्रयुवसंज्ञाकाण्डस्य मध्ये पाठाभावे-ऽपि न क्षतिरित्यन्ये ॥ ( १६८५ ) **तद्राजस्य**—। **तदर्थेति** । [१]तद्राजप्रत्ययार्थेन कृत इत्यर्थः । तेनैवेति किम्, प्रियपा-ञ्चालाः ॥ **साधव इतीति** । तथा च ' तत्र साधुः २२४४' इति यत्प्रत्ययस्य तद्राजत्वाभावाल्लुङ् नेति भावः ॥ रघुयदुश-ब्दयोर्जनपदवाचित्वाभावादाभ्यां परस्य तद्राजसंज्ञा नेति लुकोऽप्रवृत्त्या राघवाणां यादवैरित्येव भवितव्यमित्याशङ्क्याह—**रघु-यदुशब्दयोरिति** ॥ **लक्षणयेति** । ततश्चोक्तार्थत्वादपत्यप्रत्ययो नात्रोत्पन्न इति भावः ॥ ( १६८६ ) **कम्बोजाल्लुक्**। ' तद्राजस्य बहुषु–१६८५' इति प्रकरण एवेदं न कृतं, द्व्येकार्थवाचकस्याञो लुगभावप्रसङ्गात् । यद्यपि लुगधिकारे पुनर्लुग्वि-धानसामर्थ्याद् द्व्येकयोरप्यञो लुग्भविष्यत्येवेति वक्तुं शक्यम्, तथाप्यतद्राजस्यापि लुक्प्रसङ्गशङ्कापत्तेर्लाघवाभावाच्च तत्प्रकरणे न कृतमित्याहुः ॥ न चात्र अपत्ये लक्षणयैव ' कम्बोजः, कम्बोजौ' इत्यादिरूपासिद्धौ किमनेन सूत्रेणेति शङ्क्यम्, काम्बोज इत्यादिपाक्षिकानिष्टवारणाय सूत्रस्यावश्यकत्वात्॥ **सिन्धुतक्षेति** । कम्बोजशब्दस्य सिन्ध्वादित्वादण् । तस्य तु तद्राजत्वाभावा-ल्लुङ् नेति भावः ॥ ( १६८८ ) **स्त्रियाम्**–। **अवन्ती** । **कुन्तीति**। 'वृद्धेत्–१६८१' इति ञ्यङो लुकि 'इतो मनुष्यजातेः ७४९' इति ङीष् ॥ **कुरूरिति** । ण्यस्य लुक् 'ऊङुतः ७५०' इत्यूङ् ॥ (१६८९) **अतश्च** । इह तद्राजेन अकारो विशेष्यते, न त्वकारेण तद्राजः । विशेषणेन तदन्तविधौ ञ्यङ्ण्यादीनामप्यदन्ततद्राजत्वादनेनैव लुकि सिद्धे अवन्तिकुन्तिकुरुभ्यो लुग्वि-धायकस्य 'स्त्रियामवन्ति–१६८८' इति सूत्रस्य वैयर्थ्यापत्तेः । न चेष्टापत्तिः, कौसल्येति रूपासिद्धिप्रसङ्गादतो व्याचष्टे—**तद्रा-जस्याकारस्येति** । सूत्रे तपरकरणं विस्पष्टार्थमिति भावः ॥ **शूरसेनीति** । अञो लुकि 'जातेः–७५०' इति ङीष् । न त्वञ् ( अन्त ) लक्षणो ङीन्, अञो योऽकारस्तदन्तात् इति व्याख्यानात् ॥ ( १६९० ) **न प्राच्य**–। **कारूशीति**। कुत्सितः करुः, तं वष्टि करूशः । 'वश कान्तौ' मूलविभुजादि[३१५४]त्वात्कः । 'ग्रहिज्या–२२१६' इति संप्रसारणम् । तस्यापत्यं राजा वा कारूशः । स्त्रियां कारूशी । एतेन मूर्धन्योपधः पाठो निरस्तः ॥ यौधेयादिभ्यो लुक्प्रतिषेधमुदाहर्तुमाह—**युधा** । **शुक्रे-त्यादि** ॥ **अतश्चेति लुकि त्विति** । ' ञ्यादयस्तद्राजाः २७९९ ' इति वक्ष्यमाणत्वादञोऽस्य तद्राजत्वमस्तीति भावः ।

---

१ **तद्राजप्रत्ययेति** । आङ्गचैत्रमैत्रा इत्यादौ तु न लुग् , तत्र बहुत्वस्य चैत्रमैत्रार्थान्वयित्वस्यापि सत्त्वेन तद्राजप्रत्य-यान्तमात्राश्रितत्वाभावात् । अत एव 'गार्ग्यकाश्यपगालवानाम् ' इति निर्देशः संगच्छते । द्वन्द्वकृतबहुत्वाश्रयणे ' यञञोश्च ' इति लुगापत्तिरिति बोध्यम् ॥

ढगन्तत्वात् ङीप्युदात्तनिवृत्तिस्वरः स्यात् । यौधेयी । शौक्रेयी ॥ ( १६९१ ) (सू) **अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे । ४ । १ । ७८ ।** त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम् । गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात्॥ (प) 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यणिञोरेव । षडावितौ । यङश्चाप् । कुमुदगन्धेरपत्यं स्त्री–कौमुदगन्ध्या । वाराह्या । अनार्षयोः किम् । वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोः किम् । औपगवी । जातिलक्षणो ङीष् । गोत्रे किम् । अहिच्छत्रे जाता–आहिच्छत्री ॥ ( १६९२ ) (सू) **गोत्रावयवात् । ४ । १ । ७९ ।** गोत्रावयवा गोत्राभिमताः कुलाख्यास्ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशः स्यात् ।

---

योपधत्वान् ङीषः प्राप्तिर्नेत्याशयेनाह—**ङीपीति ॥ उदात्तनिवृत्तिस्वर इति ।** 'अनुदात्तस्य च यत्रोदात्तलोपः ५५१७' इत्यनेन ङीबुदात्तः स्यादित्यर्थः । सिद्धान्ते त्वञो लुगभावान् ङीन्याद्युदात्तत्वमिति ज्ञेयम् । स्यादेतत्, ' अतश्च १६८९ ' इति सूत्रेण विधीयमानो लुक् चातुरर्थिकानामेव तद्राजानां भवतु संनिधानात, न तु ' ञ्यादयस्तद्राजाः २७९९' इति पाञ्चमिकानामपि तद्राजानामिति किमनेन यौधेयादिग्रहणेन । सत्यम्, 'व्याप्तिन्यायेन पाञ्चमिकस्यापीह ग्रहणम्' इति ज्ञापयितुं यौधेयादिग्रहणम् । तेन पार्श्वायणः स्त्रियां लुक् सिध्यति । तथाहि पर्शुः क्षत्रियो जनपदेन समानशब्दः । तस्यापत्यं स्त्री 'द्व्यञ्मगध–१६८०' इत्यण्, तस्य 'अतश्च १६८९' इति लुक्, पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण् । तस्यापि लुकि 'ऊङुतः ७५०' पर्शूः । एवं रक्षसः क्षत्रियस्यापत्यं स्त्री रक्षाः । पूर्ववदण्द्वयस्यापि लुकि ' अत्वसन्तस्य–५७० ' इति दीर्घः । उक्तं च वार्तिककृता–'पार्श्वादिभ्यो लुग्वक्तव्यः । यौधेयादिप्रतिषेधो वा ज्ञापकः पार्श्वादिलुकः ' इति ॥ **यौधेयीत्यादि ।** युधायाः, शुक्राया अपत्यं स्त्रीति विग्रहः ॥ **( १६९१ ) अणिञोः—। उत्तममिति ।** अव्युत्पन्नप्रातिपदिकमिदम्, न तूच्छब्दात्तमप् । तेन 'किमेत्तिङव्ययघात्–२७१८' इत्याम् न शङ्क्यः ॥ **गोत्रे याविति ।** 'अपत्याधिकारादन्यत्र लौकिकं गोत्रम्' इति नेह शास्त्रीयं गृह्यते । तथा च 'अनार्षयोः' इति पर्युदासादेव सिद्धे गोत्रग्रहणमिह त्यक्तुं शक्यम् । न चात्र गोत्रग्रहणसामर्थ्यात् शास्त्रीयमेव गोत्रं गृह्यत इति वाच्यम्, दैवदत्त्या याज्ञदत्त्येत्यादीनामनन्तरापत्येऽपीष्यमाणत्वात् । अत एवानुपदं वक्ष्यति 'कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या' इति । इदं च कौस्तुभानुसारि व्याख्यानमत्रत्यमूलानुगुणमपि 'दैवयज्ञि–१६९६' सूत्रस्थेन 'अगोत्रार्थमिदम्' इत्यादिमूलग्रन्थेन सह विरुध्यत इति तत्रैव स्फुटीभविष्यति ॥ यद्यपि स्त्रीप्रत्ययाः प्रकृताः तथापि 'पत्युर्नो यज्ञसंयोगे ६८१' इति नकारस्येव ष्यङ आदेशत्वमेवोचितम्[1] ' अणिञोः ' इति षष्ठीस्वरसादित्यभिप्रेत्याह–**ष्यङादेशः स्यादिति ।** ष्यङः प्रत्ययत्वेऽपि लक्ष्यसिद्धिरप्रत्यूहेति मनोरमायां स्थितम् ॥ नन्वयं 'ङिच्च ६७' इत्यन्तादेशं बाधित्वा परत्वात्सर्वादेशः स्यात् । ' ङिच्च ६७ ' इत्यस्यानन्यार्थङित्त्वेष्वनङादिषु चरितार्थत्वात् । ष्यङोऽनुबन्धस्य 'यङश्चाप् ७६० ' इति विशेषणार्थतया सप्रयोजनत्वादित्याशङ्क्याह—**निर्दिश्यमानस्येति । षङावितावविति ।** अनुबन्धद्वयकरणं ञ्यङ इव ष्यङोऽपि 'यङश्चाप् ७६०' इत्यत्र सामान्यग्रहणार्थम् । न च 'ष्यङः संप्रसारणम्–१४३९' इत्यत्र विशेषणार्थं तयोरुपयोगोऽस्ति । अन्यथा पाश्यापुत्रः पाश्यापतिरित्यत्र 'पाशादिभ्यो यः१७७८' इति यप्रत्ययेऽपि संप्रसारणप्रसङ्ग इति वाच्यम्, 'यङः संप्रसारणम्–' इत्येकानुबन्धेनापि तद्वारणात् । लोलूयापतिरित्यत्र त्वकारप्रत्ययेन व्यवधानात्संप्रसारणाभावः । कौमुदगन्धीपुत्र इत्यत्र त्वेकादेशस्य पूर्वान्तत्वेन ग्रहणान्नास्ति व्यवधानमिति संप्रसारणं सिध्यति॥ **कौमुदगन्ध्येति ।** अणः ष्यङ् ॥ **वाराह्येति ।** इञः ष्यङ् । अणिञोः किम्, ऋतभागस्यापत्यमार्तभागी । बिदादित्वादञ् 'शार्ङ्गरवाद्यञः–७५९' इति ङीन् ॥ 'टिड्ढा–६५१ ' इत्यादिना ङीबिति तु वृत्तिकारः ॥ 'अणिञोः–१६९१' इत्यत्र तु लौकिकं गोत्रं गृह्यते । 'गोत्रं च चरणैः–७४६ ' इत्यत्र तु पारिभाषिकमेव गृह्यते । तेन जातित्वाभावान्ङीनः प्राप्तिर्नास्तीति स्थितस्य गतिमाहुः ॥ **( १६९२ ) गोत्रावयवात् ।** अवयवशब्दोऽप्रधानवाची, अवयवश्चासौ गोत्रं चेति कर्मधारयः, निपातनाद्गोत्रशब्दस्य पूर्वनिपातः ॥ **गोत्राभिमता इति ।** गोत्रमित्येवमभिमताः । गोत्रवाचित्वेन देशविशेषे प्रसिद्धाः, न तु प्रवराध्याये पठिता इत्यर्थः ॥ प्रवराध्यायेऽपाठाच्चाप्राधान्यम्[2] ॥ **कुलाख्या इति ।** कुलमाख्यायते

---

१ **आदेशत्वमेवेति ।** अत एव औदमेध्याया अपत्ये'स्त्रीभ्यो ढक्' इति ढकि औदमेध्याया अपत्यम्–औदमेधेय इत्यत्र 'अढे' इति पुंवद्भावनिषेधे स्थानिवद्भावेनापत्यत्वाद्यकारस्य'आपत्यस्य च–'इति यलोपः सिद्धः॥प्रत्ययत्वे तु ष्यङः आपत्यत्वं न स्यादिति भावः॥२ **अप्राधान्यमिति ।** अत एव 'सिद्धं तु कुलाख्याभ्यो लोके गोत्राभिमताभ्यः 'इति भारद्वाजवाक्येन चिरंतनत्वसूचनेऽपि संकल्पादौ नैवास्योपयोगं कुर्वन्ति । 'असपिण्डा च या मातुरसगोत्रा च या पितुः ।' इत्यत्र विचारणीये गोत्रे तु अप्रधानस्यापि कुलाख्यगोत्रस्यैव प्राधान्यमाचरन्ति देशविशेषेषु ॥ न च तेषां पातित्यापत्तिः मातुलकन्यापरिणयवादिभिः 'असपिण्डाम्' इत्यस्य संकोचे प्रमाणभूतोपन्यस्तश्रुतिदृष्टान्तेन परस्सहस्रवत्सरप्रचरितसगोत्रसंकोचेन तन्मूलभूतश्रुतेरप्यनुमेयत्वेन तस्यापि धर्मत्वात् । मातुलकन्यापरिणयनप्रकरणे निर्दिष्टाः "मा नः पथः पित्र्यात्परावत" इति श्रुतिमूलकाः "येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यति॥ यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् । नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रतीयते ॥" इत्यादिस्मृतयोऽपि सापिण्ड्यसंकोच इव सगोत्रसंकोचेऽपि समाना एव । 'येषां कुले देशेऽनुकल्पत्वेन (सापिण्ड्य) संकोचः परम्परया समागतः, तेषां तादृशसंकोचेन विवाहे न दोषः । अस्ति च भार्यात्वोपपत्तिः । अन्येषां तैः सह व्यवहारे नैव दोषः ॥ हेमाद्र्यादौ श्राद्धे निषेधोऽपि स्वकुलदेशे परम्परयाऽनागत (सापिण्ड्य) संकोचेन कृतविवाहविषय एवेति बोध्यम्'–

अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । भौणिक्या ॥ ( १६९३ ) (सू) क्रौड्यादिभ्यश्च । ४ । १ । ८० । स्त्रियां ष्यङ् प्रत्ययः स्यात् । अगुरूपोत्तमार्थोऽनणिञर्थश्चारम्भः । क्रौड्या । व्याड्या ॥ ( १६९४ ) (ग) सूत युवत्याम् ॥ सूत्या ॥ (१६९५) (ग) भोज क्षत्त्रिये ॥ भोज्या ॥ (१६९६) (सू) दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्यो-ऽन्यतरस्याम् । ४ । १ । ८१ । एभ्यश्चतुर्भ्यः ष्यङ् । अगोत्रार्थमिदं गोत्रेऽपि परत्वात्प्रवर्तते । पक्षे इतो मनुष्येति ङीष् । दैवयज्ञ्या । दैवयज्ञी–इत्यादि ॥ इत्यपत्याधिकारः ॥

---

## अथ तद्धितेषु रक्ताद्यर्थकाः ।

(१६९७) (सू) तेन रक्तं रागात् ।४।२।१ । रज्यतेऽनेनेति रागः। कषायेण रक्तं वस्त्रं–काषायम् । माञ्जिष्ठम् । रागात्किम् । देवदत्तेन रक्तं वस्त्रम् ॥ ( १६९८) (सू) लाक्षारोचनाट्ठक् । ४ । २ । २ । लाक्षिकः । रौचनिकः॥ (१६९९) (वा) शकलकर्दमाभ्यामुपसंख्यानम् ॥ शाकलिकः । कार्दमिकः । आभ्यामणपीति वृत्तिकारः । शाकलः । कार्दमः॥ ( १७०० ) (वा) नील्या अन् ॥ नील्या रक्तं–नीलम् ॥ ( १७०१ ) (वा) पीतात्कन् ॥ पीतकम् ॥ ( १७०२ ) (वा) हरिद्रामहारजनाभ्यामञ् ॥ हारिद्रम् । माहारजनम् ॥( १७०३ ) (सू) नक्षत्रेण[1] युक्तः कालः । ४ । २ । ३ । पुष्येण युक्तं पौषमहः । पौषी रात्रिः ॥ ( १७०४ ) (सू) लुबविशेषे । ४ । २ । ४ । पूर्वेण विहितस्य लुप्स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य[2] पुष्यः । कथं तर्हि पुष्ययुक्ता पौर्णमासी पौषीति । विभाषा

---

येरिति कुलाख्याः । पुणिकभुणिकमुखरप्रभृतयः । तर्हि कुलमाख्यायते 'पुणिका वयं गोत्रेण' 'भुणिका वयं गोत्रेण' इति ॥ **तत इति** । गोत्रावयवादित्यर्थः ॥ (१६९३) **क्रौड्यादिभ्यश्च** । पञ्चमीनिर्देशात्प्रत्ययत्वमेवेहाश्रीयत इत्याह—**ष्यङ् प्रत्यय इति** । क्रौडि, व्याडि, आपिशलि, गौकक्ष्य, इत्यादि । गौकक्ष्यशब्दो गर्गादियञन्तस्तदर्थमाह—**अनणिञर्थश्चेति** ॥ ( १६९४ ) **सूतेति** । गणसूत्रम् । सूतशब्दः ष्यङं लभते युवत्यां वाच्यायामित्यर्थः ॥ **सूत्येति** । ष्यङि 'यङश्चाप् ७६०' । अन्यत्र तु क्रियाशब्दाट्टाप् । सूतजातिवाचिनस्तु ङीष् । सूती ॥ ( १६९५ ) **भोजेति** । इदमपि गणसूत्रम् । जातिलक्षणङीषोऽपवादः ष्यङ्, क्रियाशब्दात्तु टाबेव । भोजयतीति भोज्या ॥ ( १६९६ ) **दैवयज्ञि—। चतुर्भ्य इति** । इञन्तेभ्य इति शेषः । देवा यज्ञा यष्टव्या यस्य स देवयज्ञः । शुचिर्वृक्षो यस्य शुचिवृक्षः । सत्यमुग्रं यस्य सत्यमुग्रः । निपातनाद्विशेष्यस्य पूर्वनिपातः मुमागमश्च । काण्डेन विद्धः काण्डेविद्धः । 'कर्तृकरणे कृता–१००४' इति समासः । निपातनात्काण्डशब्दस्य एकारः । पाठान्तरे कण्ठे विद्धमस्य, कण्ठे वा विद्धः कण्ठेविद्धः 'अमूर्धमस्तकात्–१३९२' इत्यलुक् । एभ्यः सर्वेभ्योऽपत्ये 'अत इञ् १५७१' ॥ **गोत्रेऽपि परत्वादिति** । तथा चोभयत्रविभाषेति भावः ॥ अत्रेदमवधेयम्–'अणिञोः–१६९१' इति सूत्रे यदि शास्त्रीयं गोत्रं गृह्यते, तदा 'अगोत्रार्थमिदम्' इत्यादिग्रन्थः स्वरसतः संगच्छते । यदि तु लौकिकं गोत्रमेव तत्र गृह्यते तदा 'अणिञोः–१६९१' इति नित्ये प्राप्ते विकल्पार्थमिदमित्येव व्याख्यातुमुचितमिति ॥ इत्यपत्याधिकारः ॥

---

( १६९७ ) **तेन रक्तम्—**। तृतीयान्तात्समर्थाद्यथाविहितं प्रत्ययाः स्युः ॥ **रज्यते अनेनेतीति** । बाहुलकात्करणे घञ् ॥ **राग इति** । रञ्जकद्रव्यमित्यर्थः । शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः ॥ (१६९८) **लाक्षारोचनात्–**। ( १६९९ ) वृत्तिकृता तु वार्तिकस्थौ शकलकर्दमौ सूत्रे प्रक्षिप्तौ ॥ 'शकलं त्वचि खण्डे च रागवस्तुनि वल्कले' इति विश्वः ॥ **वृत्तिकार इति** । भाष्ये तु नैतद् दृष्टमिति भावः ॥ ( १७०० ) **नील्येति** । नीली ओषधिविशेषः । अणपवादोऽयम् ॥ ( १७०३ ) **नक्षत्रेण—**। नक्षत्रवाचकाः शब्दा वृत्तिविषये तद्युक्तं चन्द्रमसमभिदधानाः प्रत्ययं लभन्ते ॥ **पुष्येणेति** । पुष्यसमीपस्थेन चन्द्रमसेत्यर्थः । एवं च 'पौषमहः' इत्यादिव्यवहारः संगच्छते । सर्वेषामप्यह्नां पुष्ययोगसत्त्वेऽपि तत्समीपस्थचन्द्रमसा योगस्यासार्वत्रिकत्वात् । नक्षत्रेणेति किम्, चन्द्रेण युक्ता रात्रिः । कालः किम्, पुष्येण युक्तश्चन्द्रः ॥ ( १७०४ ) **लुबविशेषे** । पूर्वसूत्रस्यानुवर्तनादिह[3] 'नक्षत्रेण युक्तस्य कालस्याविशेषे गम्ये' इत्यर्थ उपलभ्यते तदाह—**षष्टिदण्डेति** । 'अद्य

---

–इति संस्कारकौस्तुभः । न हि ऋषयः सर्वेऽपि समाननामान एकैकगोत्रा एव, 'शैव्यः सत्यकामः' 'सत्यकामो जाबालः' इति श्रुतिभ्यां सत्यकामस्य, शैव्यत्वजाबालत्ववर्णनेन 'दध्यङ्ङाथर्वणः' "दध्यङाङ्गिरसः" इति श्रुतिभ्यां दधीच आथर्वणत्वाङ्गिरसत्ववर्णनेन द्विविधत्वदर्शनात् । अत एव 'कपिबोधादाङ्गिरसे' 'शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु इत्यादिसूत्रेषु सत्यम्यन्तग्रहणसार्थक्यम् । एवं च कौत्सशाण्डिल्यादीनां भिन्नभिन्नमूलगोत्राणामपि सत्त्वे विवाहं को निवारयेत् । अत एव निर्णयसिंधौ—'द्वौ देवरातौ एक आङ्गिरसः शुनःशेपः, अन्यो भार्गवः । तयोः कल्पभेदेऽप्याङ्गिरसेन ( सस्य ) देवरातेन ( तस्य ) जामदग्न्यदेवरातैर्भवत्येव विवाहः' इत्युपसंहृतम् । अधिकं भाष्यालोचने वक्ष्यामः ॥

---

१ **नक्षत्रेणेति** । 'अद्य किं नक्षत्रम्' इति प्रश्नस्य यन्नक्षत्रयुक्तश्चन्द्रो भवति तेनैवोत्तरदानस्य लोके दृष्टत्वादत्र नक्षत्रपदं नक्षत्रयुतचन्द्रपरमेवेति 'नक्षत्रयुक्तचन्द्रेण युक्तः' इत्यर्थे प्रथमात् ( अर्थात् नक्षत्रवाचकशब्दात् ) प्रत्ययो भवति यो युक्तः स कालश्चेत्' इति सूत्रार्थः ॥ २ **अद्येति** । व्यपदेशिवद्भावेनाधाराधेयभावोऽवगन्तव्यः ॥ ३ **पूर्वसूत्रस्येति** । तेन प्रत्यासत्त्या नक्षत्रस्य यावन्तं कालं चन्द्रेण योग औत्सर्गिकस्तावत्कालसंबन्धविशेषो गृह्यते । स च मध्यममानेन षष्टिदण्डात्मक इति भावः॥

फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य इति निर्देशेन ( १७०५ ) पौर्णमास्यांमयं लुब् नेति ज्ञापितत्वात् । श्रवणशब्दात्तु अत एव लुप् युक्तवद्भावाभावश्च । (१७०६) अबाधकान्यपि निपातनानि । श्रावणी ॥ (१७०७) (सू) संज्ञायां श्रवणाश्वत्थाभ्याम् । ४ । २ । ५ । विशेषार्थोऽयमारम्भः । श्रवणा रात्रिः । अश्वत्थो मुहूर्तः । संज्ञायां किम् । श्रावणी । आश्वत्थी ॥ ( १७०८ ) (सू) द्वन्द्वाच्छः । ४ । २ । ६ । नक्षत्रद्वन्द्वाद्युक्ते काले छः स्यात् विशेषे सत्यसति च । तिष्यपुनर्वसवीयमहः । राधानुराधीया रात्रिः ॥ ( १७०९ ) (सू) दृष्टं साम । ४ । २ । ७ । तेनेत्येव । वसिष्ठेन दृष्टं–वासिष्ठं साम ॥ ( १७१० ) (वा) अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः॥ उशनसा दृष्टमौशनम् । औशनसम्॥ (१७११) (सू) कलेर्ढक् ( । ४ । २ । ८ । ) कलिना दृष्टं कालेयं साम ॥ (१७१२) (सू) वामदेवाड्ड्यड्ड्यौ । ४ । २ । ९ । वामदेवेन दृष्टं साम वामदेव्यम् ॥ ( १७१३ ) (वा) सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ । ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥ ( १७१४ ) (सू) परिवृतो रथः । ४ । २ । १० । वस्त्रैः परिवृतो वास्त्रो रथः । रथः किम् । वस्त्रेण परिवृतः कायः । [ समन्ताद्वेष्टितः परिवृत उच्यते । तेनेह न, छात्रैः परिवृतो रथः ॥ ] (१७१५) (सू) पाण्डुकम्बलादिनिः । ४ । २ । ११ । पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली । पाण्डुकम्बलशब्दो राजास्तरणवर्णकम्बलस्य वाचकः । मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम् ॥ (१७१६) (सू) द्वैपवैयाघ्रादञ् । ४ ।२ । १२ । द्वीपिनो विकारो द्वैपम् । तेन परिवृतो–द्वैपो रथः । एवं वैयाघ्रः ॥ (१७१७) (सू) कौमाराऽपूर्ववचने । ४ ।२। १३। कौमारेत्यविभक्तिको निर्देशः । अपूर्वत्वे निपातनमिदम् । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । यद्वा–अपूर्व-

---

पुष्यः' इत्युक्त्या 'न ह्यो न श्वः' इति विशेषे गम्यमानेऽपि अहोरात्रात्मककालस्यावान्तरविशेषानवगमाल्लुब् भवत्येवेति भावः ॥ 'अविशेषे' इत्यत्र प्रसज्यप्रतिषेधाश्रयणात् 'पौषोऽहोरात्रः' इत्यत्र लुब् न भवति, षष्टिदण्डसमुदायरूपकालस्य प्रतीतावप्यवयवद्वयात्मकस्य विशेषस्य प्रतीतेरित्याशयेनाह—**विशेषश्चेन्नेति** ॥ **अद्य पुष्य इति** । 'मूलेनावाहयेद्देवीं श्रवणेन–' इत्यप्युदाहरणं बोध्यम् ॥ ( १७०८ ) **द्वन्द्वाच्छः** । विशेषे उदाहरणमाह—**तिष्येत्यादि** । अविशेषे तूदाहर्तव्यम्–'अद्य राधानुराधीयम्' इति । न चात्र 'लुबविशेषे १७०४' इति अण इव छस्यापि लुप्स्यादिति वाच्यम्, मध्येऽपवादन्यायरीत्या पूर्वोपस्थितस्याण एव तत्प्रवृत्तेः ॥ यत्तु लुपं परत्वाद्बाधते इति वृत्तिकृतोक्तम् । तन्न, द्वयोर्युगपत्प्राप्त्यभावात् ॥ (१७०९) **दृष्टं साम** । तृतीयान्ताद् दृष्टमित्यर्थेऽणादयः स्युर्यद् दृष्टं तच्चेत्साम ॥ ( १७१० ) **अस्मिन्नर्थे इति** । तथा च श्लोकवार्तिकम्–"दृष्टे सामनि जाते चाऽप्यण् डिद् द्विर्वा विधीयते । तीयादीकग् न विद्याया गोत्रादङ्कवदिष्यते ॥" इति जातेऽर्थे यो द्विरण् स च वा डिदित्यन्वयः । शतभिषजि जातः शातभिषः, शातभिषजः । इह हि 'प्राग्दीव्यतः–१५३५'इति प्राप्तोऽण् कालाट्ठञा बाधितः' स च 'सन्धिवेलादि–१९३८' सूत्रेण प्रतिप्रसूयत इत्ययं द्विरुक्तोऽण् ॥ **तीयादिति** । तीयादीकक् स्वार्थे भवतीत्यर्थः । द्वैतीयीकः, तार्तीयीकः ॥ **न विद्याया इति** । विद्यावाचकात्तीयान्तादीकङ् न भवतीत्यर्थः। द्वितीया विद्या॥ **गोत्रादङ्कवदिति** । गोत्रप्रत्ययान्तादङ्के यः प्रत्ययः स दृष्टे सामन्यपि भवति । औपगवेन दृष्टमौपगवकम् । इह 'गोत्रचरणाद्वुञ् २०७५' इति वुञ् ॥ ( १७१२ ) **वामदेवात्**—। ( १७१३ ) **ग्रहणं माऽतदर्थे इत्यादि** । अतदर्थे 'ययतोश्चातदर्थे ५८६२' इति विहिते नञ्स्वरे नञाश्रितस्वरे ड्यड्ड्यतोर्ग्रहणं मा भूदित्यर्थः । 'ययतोश्च–५८६२' इति सूत्रेण विधीयमानं नञः परस्य ययदन्तस्योत्तरपदस्यान्तोदात्तत्वं वामदेव्यशब्दे मा भूत् । किन्तु अव्ययपूर्वपदस्वर एव यथा स्यादित्येतदर्थं डित्करणमिति फलितोऽर्थः । न च कृतेऽपि डित्त्वे 'ययतोः–५८६२' इत्यस्य प्रवृत्तिः कुतो नेति शङ्क्यम्, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषयोः सत्त्वात् । इमे च परिभाषे इहैव डित्त्वेन ज्ञाप्येते।तत्राद्यायाः प्रयोजनं 'पूरणगुण–१०२२' इति सूत्रे तव्यग्रहणे तव्यतोऽग्रहणम् । द्वितीयस्यास्तु अङ्ग्रहणे चङोऽग्रहणम् । 'श्वयतेरः ३२२६' अङि परे इति शेषः । अश्वत् । चङि परे तु न, अशिश्वियत् ॥ (१७१४) **परिवृतो**—। तृतीयान्तात्परिवृत इत्यर्थेऽणादयः स्युर्यः परिवृतः स चेद्रथो भवति॥ रथाच्छादनार्थं यद्वस्त्रकम्बलादिकं तत एव सर्ववेष्टनं भवति, न तु च्छत्रादिभ्यः इत्याशयेनाह—**समन्ताद्वेष्टित इति** । परिः सर्वतोभावे वर्तत इति भावः ॥ ( १७१७ ) **कौमारा**—। तेनेति निवृत्तम् ॥ 'अपूर्व' इति भावप्रधानो निर्देश इत्याह—**अपूर्वत्वे इति** । अपूर्वत्वं तु स्त्रिया एवेष्यते, पुरुषस्तु अपूर्वभार्योऽस्तु वा मा वेत्यनाग्रहः ॥ **अपूर्वपतिमिति** । न पूर्वः पतिर्य-

---

१ **पौर्णमास्यामिति** । अन्यत्र तु'पुष्यः पञ्चमी' इत्येव ॥ २ **अबाधकान्यपीति** । इदं च 'बाधकान्येव निपातनानि' इति सर्वनामसंज्ञासूत्रभाष्यविरुद्धम् । श्रावणीति तु 'पौर्णमास्यां लुब् न' इत्यस्यानित्यत्वस्य 'श्रवणा' इति निर्देशेन ज्ञापितत्वात्साधनीयम् ॥ ३ **श्रवणेति** । 'श्रवणशब्दे युक्तवद्भावो न' इति सामान्यविषयज्ञापनात् ॥ ४ '**कलेर्ढक्** ' इति वार्तिकं सूत्रपाठे प्रक्षिप्तम्॥५ **समन्तादिति** । अयं कोष्ठकान्तर्गतोऽपपाठः, भाष्योपलब्धस्य 'तदेकान्तग्रहणम्' इति पाठस्य मनोरमायां वृतस्य वैयर्थ्यापत्तेरिति बोध्यम् ॥ ६ **अणो निवृत्त्यर्थमिति** । अण् चानभिधानान्न भवतीति तद्बाधनार्थमपीदं न वाच्यमिति प्रत्याख्यातृभाष्यकाराशयः ॥ ७ **अपूर्वत्व इति** । अपूर्वपतिपरोऽयमपूर्वशब्दः । 'विनाऽपि प्रत्ययम्–' इति पतिशब्दलोपात् । अपूर्व उच्यते येन प्रवृत्तिनिमित्तेन तदपूर्ववचनं तन्नेत्यक्षरार्थः ॥

पतिः कुमारी पतिमुपपन्ना कौमारी भार्या॥(१७१८) (सू) **तत्रोद्धृतममत्रेभ्यः** ।४।२।१४।शराव उद्धृतः-शाराव ओदनः। उद्धरतिरिहोद्धरणपूर्वके निधाने वर्तते । तेन सप्तमी । उद्धृत्य[1] निहित इत्यर्थः ॥ ( १७१९ ) (सू) **स्थण्डिलाच्छयितरि व्रते** । ४ । २ । १५ । तत्रेत्येव । समुदायेन चेद्व्रतं गम्यते । स्थण्डिले शेते-स्थाण्डिलो भिक्षुः ॥ ( १७२० ) (सू) **संस्कृतं[2] भक्षाः** । ४ । २ । १६ । सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रे संस्कृताः-भ्राष्ट्रा यवाः । अष्टसु कपालेषु संस्कृतोऽष्टाकपालः पुरोडाशः ॥ ( १७२१ ) (सू) **शूलोखाद्यत्** । ४ । २ । १७ । अणोऽपवादः । शूले संस्कृतं-शूल्यं मांसम् । उखा पात्रविशेषः । तस्यां संस्कृतम्-उख्यम् ॥(१७२२ ) (सू) **दध्नष्ठक्** ।४।२ ।१८। दध्नि संस्कृतं दाधिकम्॥(१७२३) (सू) **उदश्वितोऽन्यतरस्याम्**।४।२।१९।ठक् स्यात्पक्षेऽण्॥(१७२४) (सू) **इसुसुक्तान्तात्कः** ।७।३।५१।इस् उस् उक् त एतदन्तात्परस्य ठस्य कः स्यात्।उदकेन श्वयति वर्धते इत्युदश्वित्।तत्र संस्कृतः-औदश्वित्कः । औदश्वितः । इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह । आशिषा चरति-आशिषिकः । उषां[3] चरति-औषिकः ॥ ( १७२५ ) (वा) **दोष उपसंख्यानम्** ॥ दोर्भ्यां चरति-दौष्कः ॥ ( १७२६ ) (सू) **क्षीराड्ढञ्** । ४ । २ । २० । अत्र संस्कृतमित्येव संबध्यते न तु भक्षा इति । तेन यवाग्वामपि भवति । क्षैरेयी ॥ ( १७२७ ) (सू) **साऽस्मिन्पौर्णमासीति** । ४ । २ । २१ । इतिशब्दात्संज्ञायामिति लभ्यते । पौषी पौर्णमासी अस्मिन्-पौषो मासः ॥ ( १७२८ ) (सू) **आग्रहायण्यश्वत्थाट्ठक्** । ४ । २ । २२ । अग्रे हायनमस्या इत्याग्रहायणी । प्रज्ञादेराकृतिगणत्वादण् । [1238]पूर्वपदात्संज्ञायामिति णत्वम् । आग्रहायणी पौर्णमासी अस्मिन्-आग्रहायणिको मासः । अश्वत्थेन युक्ता पौर्णमासी-अश्वत्थः । निपातनात्पौर्णमास्यामपि लुप् । आश्वत्थिकः ॥ ( १७२९ ) (सू) **विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः** । ४ । २ । २३ । एभ्यष्ठग्वा । पक्षेऽण् । फाल्गुनिकः, फाल्गुनो मासः । श्रावणिकः, श्रावणः । कार्त्तिकिकः, कार्त्तिकः । चैत्रिकः, चैत्रः ॥ (१७३०) (सू) **साऽस्य देवता** । ४ । २ । २४ । इन्द्रो देवताऽस्येति ऐन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता, मन्त्रस्तुत्या च । ऐन्द्रो मन्त्रः । आग्नेयो वै ब्राह्मणो देवतयेति तु शैषिकेऽर्थे [1540]सर्वत्राग्नीति ढक् ॥ ( १७३१ ) (सू) **कस्येत्** ।४।२।२५। कशब्दस्य इदादेशः

---

स्या इति बहुव्रीहिः ॥ **कौमारः पतिरिति** । द्वितीयान्तात्कुमारीशब्दादुपयन्तारि प्रत्ययः ॥ **कौमारीति** । इह कुमारीशब्दात्प्रथमान्तात्स्वार्थे प्रत्ययः, 'टिड्ढाण-६५१' इति ङीप् ॥ ( १७१८ ) **तत्रोद्धृत-**। 'साऽस्मिन्पौर्णमासी-१७२७' इति सूत्रात्प्राक् 'तत्र' इत्यधिकारः । पात्रवाचिभ्यः सप्तम्यन्तेभ्य उद्धृतमित्यर्थे यथाविहितं प्रत्ययाः स्युः ॥ **शाराव इति** ।'भुक्तोच्छिष्टे' इति वृत्तिकृत् । अवशिष्ट इति तदर्थः । 'उच्छिनष्टि, न सर्वं जुहोति' इति कल्पसूत्रव्यवहारात् ॥ **सप्तमीति** । निधानक्रियापेक्षया अधिकरणत्वादिति भावः ॥ ( १७१९ ) **स्थण्डिलात्--**। व्रतं शास्त्रेण विहितो नियमः, तस्मिन्समुदायेन गम्ये सप्तम्यन्ताद्यथाविहितः प्रत्ययो भवति शयितर्यर्थे ॥ ( १७२० ) **संस्कृ--**। **अष्टाकपाल इति** । 'द्विगोर्लुगनपत्ये १५५१' इत्यणो लुक् ॥ ( १७२१ ) **शूलोखा-**। 'संस्कृतं भक्षाः १७२०' इत्यनुवर्तते । कथम् 'उख्योऽग्निः' इति । न ह्यसौ भक्ष इति चेत् । अत्राहुः-दिगादित्वाद्भवार्थे यदिति ॥ ( १७२२ ) **दध्नष्ठक्** । **दध्नीति** । संस्कारस्त्विह लवणादिना, दधि त्वधिकरणमात्रम् । यस्तु 'प्राग्वहतेः-२१२५' इत्यत्र 'संस्कृतम् २१३२' इति ठग्वक्ष्यते स तृतीयान्ताद्बोध्यः । तेन दध्ना संस्कृतमपि दाधिकमेव ॥ ( १७२४ ) **इसुसुक्तान्तात्कः** । 'तात्' इत्युक्तेऽप्यङ्गविशेषणेनैव तान्तादिति लब्धे अन्तग्रहणं प्रत्ययोपदेशकाले यस्तान्तस्तस्मात्परस्य ठस्येकादेशो यथा स्यादित्येवमर्थम् । तेन 'माथितिकः' इत्यत्र ठस्य इकादेशे 'यस्य-४३१' इति लोपे च कृते तान्तत्वेऽपि इकस्य कादेशो न भवतीति 'ठस्येकः' इति सूत्रे कैयटः ॥ संनिपातपरिभाषयैव इकस्य कादेशो न स्यादित्यन्तग्रहणं त्यक्तुं शक्यमित्यन्ये ॥ **उदश्विदिति** । श्वयतेः क्विपि तुक् 'उदकस्योदः-१४२८' इत्युदादेशः । इहैव निपातनात्संप्रसारणाभावः॥ ( १७२७ ) **साऽस्मिन्--**। सेति प्रथमान्तादस्मिन्निति सप्तमम्यन्तार्थे प्रत्ययः स्याद्यः प्रथमान्तार्थः स चेत्पौर्णमासी भवति ॥ **इतिशब्दादिति** । स लौकिकीं[4] विवक्षामनुसारयति ॥ वृत्तिकृता तु सूत्रे एव 'संज्ञायाम्' इति प्रक्षिप्तम् ॥ **पौर्णमासीति** । पूर्णो मासोऽस्यां तिथाविति बहुव्रीहौ प्रज्ञादित्वात्स्वार्थिकोऽणिति हरदत्तादयः । 'तदस्मिन्वर्तते-१७४७' इत्यधिकारे 'पूर्णमासादण् वक्तव्यः १७४८' इति वार्तिकं न कर्तव्यमिति तदाशयः ॥ ( १७३० ) **साऽस्य-**। 'सेति प्रकृतं संज्ञासंबद्धम्' इति पुनः साग्रहणं कृतमित्याहुः । इहैव सूत्रे निपातनाद्देवशब्दात्स्वार्थे तल् ॥ **मन्त्रस्तुत्येति** । मन्त्रेण स्तुत्या । 'एतिस्तुशास्-३८०५' इत्यादिना क्यपि तुक्, टाप् ॥ **आग्नेयो वै ब्राह्मण इति** । इहाग्न्युद्देशेन ब्राह्मणो न त्यज्यत इति कथमयं प्रयोग इति न शङ्क्यमिति भावः ॥

---

१ **उद्धृत्येति** । उद्धरणावधिस्तु स्थाल्येवेति बोध्यम् ॥ २ **संस्कृतमिति** । संस्कारश्चात्र भोजनादिरूपोपयोगफला क्रिया । न तु गुणाधानमात्रम्॥ ३ **उषेति** । वसेः क्विपि संप्रसारणे'शासिवसि-'इति षत्वम् । तृतीयान्तमेतत् ॥ ४ **लौकिकीमिति** । तेनामान्तपूर्णिमान्तचान्द्रमास एवानेन प्रत्ययः । तत्रामान्तमासस्तु दाक्षिणात्यानां प्रसिद्धः, वत्सरप्रवेशस्य चैत्रशुद्धप्रतिपदि वत्सरावसानस्य फाल्गुनामायामेवाङ्गीकारात् । केचित्तु-वत्सरावसानं चैत्रकृष्णपक्षामायां वदन्ति ते सृष्ट्यादिसृष्ट्यन्तयोरर्धमासे प्राह्यापत्त्या मूका एव सभायां स्युः । पूर्वपक्षापरपक्षयोः शुक्लकृष्णपक्षयोर्निरूढलक्षणां वाऽऽश्रयन्तु ॥

स्यात्प्रत्ययसंनियोगेन । यँस्येति लोपात्परत्वादादिवृद्धिः । को ब्रह्मा देवताऽस्य-कायं हविः । श्रीर्देवताऽस्य-श्रायम् ॥ ( १७३२ ) सू० **शुक्राद्घन्** । ४ । २ । २६ । शुक्रियम् ॥ ( १७३३ ) सू० **अपोनप्त्रपान्नप्तृभ्यां घः** । ४ । २ । २७ । अपोनप्त्रियम् । अपान्नप्त्रियम् । अपोनपात् अपान्नपाच्च देवता । प्रत्ययसंनियोगेन तूक्तं रूपं निपात्यते । अत एवापोनपाते अपान्नपातेऽनुब्रूहीति प्रैषः ॥ ( १७३४ ) सू० **छ च** । ४ । २ । २८ । योगविभागो यथासंख्यनिवृत्त्यर्थः । अपोनप्त्रीयम् । अपांनप्त्रीयम् ॥ ( १७३५ ) वा० **शतरुद्राद्घश्च** ॥ चाच्छः । शतं रुद्रा देवता अस्य-शतरुद्रियम् । शतरुद्रीयम् । घच्छयोर्विधानसामर्थ्याद् द्विगोर्लुगनपत्ये इति न लुक् ॥ (१७३६) सू० **महेन्द्राद्घाणौ च** । ४ । २ । २९ । चाच्छः । महेन्द्रियं हविः । माहेन्द्रम् । महेन्द्रीयम् ॥ ( १७३७ ) सू० **सोमाट्ट्यण्** । ४ । २ । ३० । सौम्यम् । टित्वान् ङीप् । सौमी ऋक् ॥ ( १७३८ ) सू० **वाय्वृतुपित्रुषसो यत्** । ४ । २ । ३१ । वायव्यम् । ऋतव्यम् ॥ (१७३९) सू० **रीङ् ऋतः** । ७ । ४ । २७ । अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः स्यात् । यँस्येति च । पित्र्यम् । उषस्यम् ॥ ( १७४० ) सू० **द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च** । ४ । २ । ३२ । चाद्यत् । द्यावापृथिवीयम्, द्यावापृथिव्यम् । शुनासीरीयम्, शुनासीर्यम् ॥ ( १७४१ ) सू० **अग्नेर्ढक्** । ४ । २ । ३३ । आग्नेयम् ॥ ( १७४२ ) सू० **कालेभ्यो भववत्** । ४ । २ । ३४ । मासिकम् । प्रावृषेण्यम् ॥ ( १७४३ ) सू० **महाराजप्रोष्ठपदाट्ठञ्** । ४ । २ । ३५ । माहाराजिकम् । प्रौष्ठपदिकम् ॥ ( १७४४ ) सू० **देवताद्वन्द्वे च** । ७ । ३ । २१ । अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्यात् ञिति णिति किति च परे । आग्निमारुतम् ॥ ( १७४५ ) सू० **नेन्द्रस्य परस्य** । ७ । ३ । २२ । परस्येन्द्रस्य वृद्धिर्न स्यात् । सौमेन्द्रः । परस्य किम् । ऐन्द्राग्नः ॥ ( १७४६ ) सू० **दीर्घाच्च वरुणस्य** । ७ । ३ । २३ । दीर्घात्परस्य वरुणस्य न वृद्धिः । ऐन्द्रावरुणम् । दीर्घात्किम् । आग्निवारुणीमनड्वाहीमालभेत ॥ ( १७४७ ) वा० **तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम्** ॥ नावयज्ञिकः कालः । पाकयज्ञिकः ॥ (१७४८) वा० **पूर्णमासादण् वक्तव्यः** ॥ पूर्णो मासोऽस्यां वर्तते इति पौर्णमासी तिथिः ॥ ( १७४९ ) सू० **पितृव्यमातुलमातामहपितामहाः** । ४ । ३ । २६ ।

---

( १७३१ ) **कस्येत्** । **परत्वादादिवृद्धिरिति** । इदं च समाधानं-श्रायमित्यत्रावश्यकमिति तेनैव परिहारसंभवादित्वविधानसामर्थ्यमिह नाश्रितम् ॥ ( १७३३ ) **अपोन-** । **उक्तं रूपमिति** । 'नपात्' इत्यस्य 'नप्तृ' इति रूपमित्यर्थः ॥ ( १७३५ ) **शतं रुद्रा इति** । शतशब्दोऽनन्तवचनः ॥ ( १७३७ ) **सोमा-** । **सौमीति** । 'हलस्तद्धितस्य ६५७' इति यलोपः ॥ ( १७३९ ) **रीङ् ऋतः** । अङ्गवृत्तपरिभाषया 'अकृत्सार्व-३०७१' इति दीर्घो न प्रवर्तत इति दीर्घग्रहणमित्याहुः ॥ **यस्येति चेति** । पित्रीयतीत्यत्र रीङ्विधिः सावकाश इति भावः ॥ **उषस्यमिति** । उषस्शब्दः स्त्रीलिङ्गो दिवो दुहितरं ( देवतां ) ब्रवीति ॥ ( १७४० ) **द्यावापृ-** । अण्ण्ययोरपवादः ॥ **शुनासीरीयमिति** । शुनश्च सीरश्चेति द्वन्द्वे 'देवताद्वन्द्वे च १३२४' इत्यानङ् ॥ सूनो वायुः, सीर आदित्य इति वृत्तिकृत् ॥ हरदत्तस्तु शुनासीरशब्द इन्द्रस्य गुणवाचीत्यन्ये मन्यन्त इत्याह ॥ तथा च मन्त्रः 'इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे' इति । मरुतो यस्य सन्तीति मरुत्वानिन्द्रः, मरुत्वतीयं, मरुत्वत्यम् । अग्नीषोमीयम्, अग्नीषोम्यम् । 'ईदग्नेः सोमवरुणयोः १३३६' । वास्तुनः पतिः वास्तोष्पतिः । इहैव सूत्रे निपातनात्साधुः । 'वेश्म भूर्वास्तुरस्त्रियाम्' । वास्तोष्पतीयं, वास्तोष्पत्यम् । गृहमेधीयं, गृहमेध्यम् । गृहमेधशब्दोऽकारान्तः । तथा च आश्वलायनः-'मरुद्भ्यो गृहमेधेभ्यः' इति ॥ ( १७४२ ) **कालेभ्यो-** । कालवाचिभ्यो ये प्रत्यया भवार्थे वक्ष्यन्ते ते 'साऽस्य देवता १७३०' इत्यस्मिन्नर्थेऽनेनातिदिश्यन्ते ॥ वत्करणं सर्वसादृश्यार्थम् । तेन यस्माद्यो विहितस्तस्मात्स एव भवति,

---

१ **को ब्रह्मेति** । ब्रह्मरूढस्यैव कशब्दस्य प्रजापतिवाचिकिंशब्दस्य च तन्त्रेण निर्देशः । न च प्रजापतिवाचिनः किंशब्दस्य संज्ञात्वेन सर्वनामसंज्ञाऽनुपपत्तिरिति वाच्यम्, विश्वेदेवा इत्यादौ सर्वनामकार्यदर्शनेन संज्ञाप्रतिषेधस्याधुनिकसंज्ञापरत्वस्यैव शिष्टसंमतत्वात् । तथा च किमोऽप्यन्त्यस्य इकारादेशे सवर्णदीर्घे च वृद्धौ कृतायामायादेशे कायमिति सिध्यति । अत एव 'कायानुब्रूहि' 'कस्मा अनुब्रूहि' इत्युभयथाऽपि प्रैषो भगवता भाष्यकारेणाङ्गीकृत इति बोध्यम् ॥ २ अत्र '* छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानं कर्तव्यम् * ।' पैङ्गाक्षीपुत्रीयम् । तार्णबिन्दवीयम् ॥ इत्यपि बोध्यम् ॥ ३ **महाराजेति** । महाराजो वैश्रवणः ॥ ४ **नेन्द्रस्येति** । अनेन 'पूर्वोत्तरपदयोस्तावत्कार्यं नैकादेशः' इति ज्ञाप्यते । अन्यथाऽन्तरङ्गत्वादेकादेशे पूर्वान्तत्वेनैकादेशविशिष्टे पूर्वपदत्वे न्द्रशब्दस्यैकदेशविकृतन्यायेनोत्तरपदत्वेऽपि तस्यानच्कत्वाद् वृद्धेरप्राप्तौ निषेधवैयर्थ्यमेव स्यात् । मरुदादिभिरिन्द्रस्य द्वन्द्वे त्विन्द्रस्यैव पूर्वनिपात इति भाष्याशयः ॥ ५ 'माश्चन्द्रमासयोः पुंसि' इति त्रिकाण्डशेषे 'मास्तु मासे निशाकरे' इति हैमकोषेऽपि 'स्वान्तं हृन्मानसं मनः' 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यत्रेवादेशभूतो मास्शब्दः सकारान्तो निर्दिष्ट इत्यनेन वार्तिकेऽदन्तपाठेन ज्ञाप्यते । तथा च पूर्णो मासश्चन्द्रोऽस्यां वर्तते सा पौर्णमासीत्येवार्थः ॥ तेन सौरसावननाक्षत्रमासपूर्तिदिने न पौर्णमासीत्वापत्तिः ॥ यद्वा स्वार्थिकाणन्तमासशब्दश्चन्द्रवाची वार्तिके निर्दिष्टः ॥ माधवाचार्यस्तु सकारान्तो मास्शब्दश्चन्द्रवाची तस्यायं काल इति मास इति निर्वक्ति । तन्मते कालशब्देन सूर्याचन्द्रमसोः परमो व्यवधानकालो ग्राह्यः । तथा च पूर्णः सूर्याचन्द्रमसोः परमो व्यवधानकालः षड्राश्यन्तररूपो यस्यां तिथौ वर्तत इति व्याख्येयम् ॥

एते निपात्यन्ते ॥ ( १७५० ) वा॰ पितुर्भ्रातरि व्यत् ॥ पितुर्भ्राता-पितृव्यः ॥ ( १७५१ ) वा॰ मातुर्डुलच् ॥ मातुर्भ्राता-मातुलः ॥ ( १७५२ ) वा॰ मातृपितृभ्यां पितरि डामहच् ॥ मातुः पिता-मातामहः । पितुः पिता-पितामहः ॥ ( १७५३ ) वा॰ मातरि षिच्च ॥ मातामही । पितामही ॥ ( १७५४ ) वा॰ अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः ॥ सकारपाठसामर्थ्यान्न षः । अविसोढम् । अविदूसम् । अविमरीसम् ॥ ( १७५५ ) वा॰ तिलान्निष्फलात्पिञ्जपेजौ ॥ तिलपिञ्जः । तिलपेजः । वन्ध्यस्तिल इत्यर्थः ॥ ( १७५६ ) वा॰ पिञ्जश्छन्दसि डिच्च ॥ तिलिञ्जः ॥ ( १७५७ ) सू॰ तस्य समूहः । ४ । २ । ३७ । काकानां समूहः-काकम् । बाकम् ॥ ( १७५८ ) सू॰ भिक्षादिभ्योऽण् । ४ । २ । ३८ । भिक्षाणां समूहो-भैक्षम् । गर्भिणीनां समूहो-गार्भिणम् । इह भस्याढे इति पुंवद्भावे कृते-॥ ( १७५९ ) सू॰ इनण्यनपत्ये । ६ । ४ । १६४ । अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात् । तेन नस्तद्धित इति टिलोपो न । युवतीनां समूहो-यौवनम् । शत्रन्तादनुदात्तादेरञ्[1] यौवतम् ॥ ( १७६० ) सू॰ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् । ४ । २ । ३९ । एभ्यः समूहे वुञ् स्यात् । लौकिकमिह गोत्रं तच्चापत्यमात्रम् ॥ ( १७६१ ) सू॰ युवोरनाकौ । ७ । १ । १ । यु वु एतयोरनुनासिकयोः क्रमादन अक एतावादेशौ स्तः । ग्लुचुकायनीनां समूहो-ग्लौचुकायनकम् । औक्षकमित्यादि । आपत्यस्य चेति यलोपे प्राप्ते-॥ ( १७६२ ) वा॰ प्रकृत्याऽके राजन्यमनुष्ययुवानः ॥ राजन्यकम् । मानुष्यकम् ॥ ( १७६३ ) वा॰ वृद्धाच्चेति वक्तव्यम् ॥ वार्धकम् ॥ ( १७६४-१ ) सू॰ केदाराद्यञ्च । ४ । २ । ४० । चाद्वुञ् । कैदार्यम् । कैदारकम् ॥ ( १७६४-२ ) वा॰ गणिकाया यञिति वक्तव्यम् ॥ गाणिक्यम् ॥ ( १७६५ ) सू॰ ठञ्कवचिनश्च । ४ । २ । ४१ । चात्केदारादपि । कवचिनां समूहः-कावचिकम् । कैदारिकम् ॥ ( १७६६ ) सू॰ ब्राह्मणमाणववाडवाद्यत् । ४ । २ । ४२ । ब्राह्मण्यम् । माणव्यम् ।

---

मान्यः । तथैवोदाहरति—**मासिकं प्रावृषेण्यमिति** ॥ 'कालाट्ठञ् १९३२' । 'प्रावृष एण्यः १९४०' ॥ ( १७५२ ) **मातृ-। डामहजिति** । एतच्च वृत्त्याद्यनुरोधेनोक्तम् ॥ भाष्ये तु आनङादेशो महच् प्रत्ययश्च निपात्यते । तेनावग्रहः सिध्यतीत्युक्तम् ॥ ( १७५४ ) **अवेः-। सकारपाठेति** । अन्यथा प्रक्रियालाघवाय षकारमेव पठेदिति भावः । एतच्च मनोरमायां स्थितम् ॥ अन्ये तूक्तरीत्या 'अविसोढम्' इत्यत्र षत्वनिवारणेऽपि 'अविदूसम्' इत्यादौ स्यादेव षत्वम् । तत्र हि ण्यन्तात्क्विपि 'अविदूः' इत्यादिरूपसिद्धये सकारपाठसामर्थ्यस्योपक्षीणत्वात् । तस्मात् 'अविसोढम्' इत्यादिभाष्यकृदुदाहरणेषु सकारपाठसामर्थ्यादिति व्याख्येयमित्याहुः ॥ ( १७५७ ) **तस्य समूहः** । इह 'अचित्ताट्ठक् १७७६' 'अनुदात्तादेरञ् १७७३' 'गोत्रान्ताद्वुञ् १७६०' 'केदाराद्यञ्च १७६४' इत्यादिना प्रतिपदं यञादींश्च वक्ष्यति । तथा च चित्तवदाद्युदात्तमगोत्रान्तं प्रतिपदोक्तप्रत्ययरहितमिहोदाहरणमित्याशयेनोदाहरति—**काकं, बाकमिति** । एवं वार्कम् । काकबकवृकशब्दाः 'प्राणिनां कुपूर्वाणाम् ५६१२'[4] इति फिट्सूत्रेणाद्युदात्ताः । प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे तेषामुदात्तः स्यादिति सूत्रार्थः । 'अथादिः प्राक् शकटेः ५६०६' इत्यधिकारात् । यत्तु वृत्तिन्यासयोः शौकमित्युदाहृतं तदुपेक्ष्यम् । खण्डिकादिषु शुकशब्दस्य पाठात्तत्राञा भाव्यमिति हरदत्तादयः ॥ ( १७५८ ) **भिक्षादिभ्योऽण्** ॥ **भैक्षमिति** । अचित्तत्वाट्ठक् प्राप्तः ॥ **गार्भिणमिति** । अनुदात्तादित्वादञ् प्राप्तः । सति हि तस्मिन्नाद्युदात्तटिलोपौ स्याताम् । न च 'भस्याढे-१२०४' इति पुंवाचकरूपातिदेशान्न टिलोपः स्यादिति वाच्यम्, हस्तिनीनां समूहो हास्तिकमित्यत्रापि टिलोपानापत्तेः । तस्मात् स्त्रीप्रत्ययनिवृत्तिमात्रपरं तत्, न तु रूपातिदेशकमिति बोध्यम् ॥ ( १७५९ ) **इनण्य-। यौवनमिति** । युवतिशब्दस्यानुदात्तादित्वादञि प्राप्ते अणर्थमिह पाठः । पुंवद्भावात्तिप्रत्ययनिवृत्तिः । 'अन् १६३७' इति प्रकृतिभावः । ननु 'भस्याढे-१२०४' इत्यत्र 'अढे तद्धिते विवक्षिते पुंवद्भावः' इत्यभ्युपगमात्तद्धितोत्पत्तेः प्रागेव प्रत्ययनिवृत्तौ सत्यां 'कनिन् युवृषि-४३५६' इति कनिनन्ततया आद्युदात्तत्वादण् सिद्ध एवेति चेत् । सत्यम्, अत एव भाष्ये भिक्षादिषु युवतिशब्दपाठः प्रत्याख्यातः । 'इह युवतिशब्दपाठसामर्थ्यात्पुंवद्भावो न' इति वृत्तिकारोक्तिरप्यत एव निरस्ता ॥ नन्वेवं 'गार्भिणं यौवतं गणे' इत्यादिप्रयोगा भाष्यमते न संगच्छेरन्नित्याशङ्क्याह—**शत्रन्तादिति** ॥ ( १७६१ ) **युवोः-।** समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । उकारस्तूच्चारणार्थो, नेत्संज्ञकः । तेन नन्दनः, कारकः, नन्दना, कारिका इत्यत्रोगिल्लक्षणौ नुमृङीपौ न स्तः । अनुनासिकयोरिति किम्, ऊर्णायुः ॥ ( १७६२ ) **प्रकृत्याऽक इति** । इह राजन्यमनुष्यग्रहणं व्यर्थम्, रूढिशब्दत्वेन 'आपत्यस्य च-१५५३' इति यलोपस्य प्राप्त्यभावात् । अत एव 'गोत्रोक्षोष्ट्र-१७६०' इत्यत्र तयोर्ग्रहणं सार्थकम् । अन्यथा गोत्रग्रहणेनैव सिद्धे तयोर्ग्रहणं न कुर्यादित्याहुः । यूनो भावो यौवनिका । मनोज्ञादित्वाद्वुञ् ॥ ( १७६३ ) **वृद्धा-। वार्धकमिति** । यदि वृद्धत्वेऽपि वार्धकमिति प्रयोगोऽस्ति, तर्हि

---

१ **व्यदिति** । प्रत्ययो नित्, तिद् वेति बहुश्रुतैर्विचार्यमिति नागेशभट्टाः ॥ २ **मातुरिति** । भ्रातरीति वर्तते ॥ ३ **षिच्चेति** । एतेन 'गौरादिषु मातामह्यादिपाठोऽनार्षः' इति सूच्यते ॥ ४ **कुपूर्वाणामिति** । सूत्रे वृत्तौ च कुपूर्वमिति पाठः । अर्थाभिप्रायेणैवमुक्तिः। अथवा तत्रैवं पाठः प्राचीन इति भाति ॥

वाडव्यम् ॥ ( १७६७ ) (वा०) पृष्ठादुपसंख्यानम् ॥ पृष्ठ्यम् । ( १७६८ ) (वा०) ग्रामजनबन्धुभ्यस्तल् । ४ । २ । ४३ । ग्रामता । जनता । बन्धुता ॥ ( १७६९ ) (वा०) गजसहायाभ्यां चेति वक्तव्यम् । गजता । सहायता ॥ ( १७७० ) (वा०) अह्नः खः क्रतौ । अहीनः । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । क्रतौ किम् । आह्नः । इह खण्डिकादित्वादञ् । अह्नष्टखोरेवेति नियमाट्टिलोपो न ॥ ( १७७१ ) (वा०) पर्श्वा णस् वक्तव्यः ॥ (१७७२) (सू०) सिति च । १ । ४ । १६ । सिति परे पूर्वं पदसंज्ञं स्यात् । अभत्वादोर्गुणो न । पर्शूनां समूहः—पार्श्वम् ॥ ( १७७३ ) (सू०) अनुदात्तादेरञ् । ४ । २ । ४४ । कापोतम् । मायूरम् ॥ ( १७७४ ) (सू०) खण्डिकादिभ्यश्च । ४ । २ । ४५ । अञ् स्यात् । खण्डिकानां समूहः खाण्डिकम् ॥ ( १७७५ ) (सू०) चरणेभ्यो धर्मवत् । ४ । २ । ४६ । काठकम् । छान्दोग्यम् ॥ ( १७७६ ) (सू०) अचित्तहस्तिधेनोष्ठक् । ४ । २ । ४७ । साक्तुकम् । हास्तिकम् । धैनुकम् ॥ ( १७७७ ) (सू०) केशाश्वाभ्यां यञ्छावन्यतरस्याम् । ४ । २ । ४८ । पक्षे ठगणौ । कैश्यम्, कैशिकम् । अश्वीयम्, आश्वम् ॥ ( १७७८ ) (सू०) पाशादिभ्यो यः । ४ । २ । ४९ । पाश्या । तृण्या । धूम्या । वन्या । वात्या[1] ॥ ( १७७९ ) (सू०) खलगोरथात् । ४ । २ । ५० । खल्या । गव्या । रथ्या ॥ ( १७८० ) (सू०) इनित्रकट्यचश्च[2] । ४ । २ । ५१ । खलादिभ्यः क्रमात्स्युः । खलिनी । गोत्रा । रथकट्या ॥ ( १७८१ ) (वा०) खलादिभ्य इनिर्वक्तव्यः ॥ डाकिनी । कुटुम्बिनी । आकृतिगणोऽयम् ॥ (१७८२) (सू०) विषयो देशे[3] । २ । ४ । ५२ । षष्ठ्यन्तादणादयः स्युरत्यन्तपरिशीलितेऽर्थे स चेद्देशः । शिबीनां विषयो देशः—शैबः । देशे किम् । देवदत्तस्य विषयोऽनुवाकः ॥ (१७८३) (सू०) राजन्यादिभ्यो वुञ् । ४ । २ । ५३ । राजन्यकः ॥ ( १७८४ ) (सू०) भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ । ४ । २ । ५४ । भौरिकीणां विषयो देशः भौरिकिविधम् । भौलिकिविधम् । ऐषुकारिभक्तम् । सारसायनभक्तम् ॥ ( १७८५ ) (सू०) सोऽस्यादिरिति च्छन्दसः प्रगाथेषु । ४ । २ । ५५ । अण् । पङ्क्तिरादिरस्येति—पाङ्क्तः प्रगाथः ॥ ( १७८६ ) (वा०) स्वार्थ उपसंख्यानम् ॥ त्रिष्टुबेव त्रैष्टुभम् ॥ ( १७८७ ) (सू०) संग्रामे प्रयोजन[4]योद्धृभ्यः । ४ । २ । ५६ । सोऽस्येत्यनुवर्तते । सुभद्रा प्रयोजनमस्य संग्रामस्येति—सौभद्रः । भरताः योद्धारोऽस्य संग्रामस्य—भारतः ॥

---

मनोज्ञादित्वं कल्पनीयमित्याहुः ॥ (१७६६) **ब्राह्मणमाणव-**। (१७६७) ननु त्रयोऽप्यमी वृद्धाः तेभ्यः प्रकृतो यञेवास्तु । वृद्धाद्यति यञि वा रूपे विशेषाभावात् । नापि स्वरे विशेषः उभयथाऽप्याद्युदात्तत्वात् । स्त्रियां विशेषस्तु न शङ्क्य एव, नपुंसकत्वात् । 'यञश्च ६५६' इत्यत्रापत्यग्रहणाच्च । ठञ् तु नानुवर्तिष्यते अस्वरितत्वादिति चेत् । सत्यम्, अवृद्धादपि कुतश्चिद्विधानार्थं यद्वचनं तत्सिद्धार्थानुवादकं वार्तिकमाह—**पृष्ठादिति** । पृष्ठं स्तोत्रविशेषः ॥ **पृष्ठ्य इति** । पृष्ठानां समूहः पृष्ठ्यः, षडह इति तु मत्वर्थलक्षणया बोध्यम् ॥ ( १७६८ ) **ग्रामजन**—। वृत्तिकृता तु वार्तिकस्थसहायशब्दोऽपि सूत्रे प्रक्षिप्तः । ( १७७३ ) **अनुदात्तादेरञ्**। आपूपिकं शाष्कुलिकमित्यादौ परत्वात् 'अचित्तहस्तिधेनोः—१७७६' इति ठगेवेत्याशयेनेह सूत्रे चित्तवन्तमुदाहरति—**कापोतमिति**॥ 'लघावन्ते—५६२४' इति फिट्सूत्रेण कपोतमयूरशब्दौ मध्योदात्तौ । न च 'शकुनीनां च लघुपूर्वम् ५६२६' इत्याद्युदात्ताविमाविति शङ्क्यम्, 'अन्त्यात्पूर्वं लघूदात्तम्' इति तत्र व्याख्यानादित्याहुः ॥ ( १७७४ ) **खण्डिका**—। आद्युदात्तार्थमाचित्ताट्ठको बाधनार्थं च वचनम् ॥ (१७७५) **चरणेभ्यः**—। यस्याः प्रकृतेर्यः प्रत्ययो धर्मे वक्ष्यते, स तस्याः प्रकृतेः समूहेऽपि स्यादित्यर्थः। वुञादयो हि चरणेभ्यो वक्ष्यन्ते । तत्र 'चरणाद्धर्माम्नाययोः २०७६' इति तु वार्तिकम् । तदप्यनेनैवातिदेशसूत्रेण ज्ञाप्यते ॥ **काठकमित्यादि** । 'गोत्रचरणाद्वुञ् २०७५'। **छान्दोग्यमिति** । 'छन्दोगौक्थिक—२०८०' इति ञ्यः ॥ (१७७७) **केशा**—। **यञ्छाविति** । यथासंख्यं स्तः ॥ **ठगणाविति** । केशशब्दादचित्तत्वेन ठक् ॥ ( १७८२ ) **विषयो देशे** । 'तस्य' इत्यनुवर्तत इत्याह—**षष्ठ्यन्तादिति** । विषयशब्दार्थमाह—**अत्यन्तेति** ॥ (१७८४) **भौरिक्या**—। आभ्यां गणाभ्यां यथासंख्यमेतौ प्रत्ययौ स्तः॥ **भौरिकिविधमित्यादि**। क्लीबत्वं लोकात्॥(१७८५) **सोऽस्यादिरिति**—। छन्दो नामाक्षरेयत्तानिबन्धनपङ्क्त्यादिरिह विवक्षितः । तद्वाचकात् प्रथमान्तादस्येत्यादिमति प्रत्ययः स्यात्, य आदिमान्स प्रगाथश्चेत् । प्रग्रथ्यत इति प्रगाथः । 'ग्रन्थ संदर्भे' इत्यस्मात् 'अकर्तरि च कारके—४९७६' इति कर्मणि घञ् । पृषोदरादित्वाद्रेफनकारयोर्लोपः॥ अन्ये तु—प्रगीयत इति प्रगाथः 'गै शब्दे' इत्यतः 'उषिकुषिगार्तिभ्यः स्थन् ४३६३' इत्याहुः । यत्र द्वे ऋचावावृत्त्या तिस्रः क्रियन्ते, स प्रगाथः॥ (१७८६) **त्रैष्टुभमिति** । 'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति न्यायेन क्लीबतेति भावः॥ ( १७८७ ) **संग्रामे**—। ननु 'प्रथमात्' इत्यधिकारात्प्रथमोच्चारितसंग्रामवाचिन एव प्रत्ययः प्राप्नोति, न प्रयोजनयोद्धृभ्य इत्यत आह—**सोऽस्येतीति** । एवं च प्रथमान्तविशेषणद्वारा प्रयोजनयोद्धॄणां प्रकृतित्वम् 'अस्य' इति प्रत्ययार्थविशेषणद्वारा संग्रामस्य प्रत्ययार्थत्वं वक्तुं शक्यमिति भावः । तथा चायमिह सूत्रार्थः—प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्योऽस्येति षष्ठ्यन्तार्थेऽण् स्यात्, स च षष्ठ्यन्तार्थः संग्रामश्चेदिति ॥

---

१ **वात्येति** । 'पूर्वो वातः, उत्तरो वातः, सर्वतो वातः' "वाता वान्तु दिशो दश" इत्येवं व्यवहारेण वातानामपि नानात्वेन समूहोपपत्तिः ॥ २ **इनित्र**—। यथासंख्यमिष्यते ॥ ३ **देश इति** । अत्र विषयशब्दो ग्रामसमुदायवाची देशग्रहणादिति वृत्तिः । विषयः स्वस्वामिभाववान्, निवासस्तु तद्रहितोऽपीति भेदः । प्रकृतिप्रत्ययसमुदाये शक्यतया प्रत्ययोपाधिरत्र देशः॥ ४ **प्रयोजनेति** । तेन 'सुभद्रा प्रेक्षिकाऽस्य संग्रामस्य' इत्यत्र न प्रत्ययः ॥

(१७८८) (सू) **तदस्यां प्रहरणमिति क्रीडायां णः** ।४।२।५७। दण्डः प्रहरणमस्यां क्रीडायां–दाण्डा । मौष्टा ॥ (१७८९) (सू) **घञः साऽस्यां क्रियेति ञः** । ४ । २ । ५८ । घञन्तात्क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः स्यात् । घञ इति कृद्ग्रहणाद्गतिकारकपूर्वस्यापि ग्रहणम् ॥ ( १७९० ) (सू) **श्येनतिलस्य पाते ञे** । ६ । ३ । ७१ । श्येन तिल एतयोर्मुमागमः स्यात् ञप्रत्यये परे पातशब्दे उत्तरपदे । श्येनपातोऽस्यां वर्तते–श्यैनंपाता मृगया । तिलपातोऽस्यां वर्तते–तैलंपाता स्वधा । श्येनतिलस्य किम् । दण्डपातोऽस्यां तिथौ वर्तते–दाण्डपाता तिथिः॥ (१७९१) (सू) **तदधीते तद्वेद** ।४।२।५९। व्याकरणमधीते वेद वा–वैयाकरणः । (१७९२) (सू) **क्रतूक्थादिसूत्रान्ताट्ठक्** । ४ । २ । ६० । क्रतुविशेषवाचिनामेवेह ग्रहणम् । तेभ्यो मुख्यार्थेभ्यो वेदितरि तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि । आग्निष्टोमिकः । वाजपेयिकः । उक्थं सामविशेषस्तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थम् । तदधीते वेद वा—औक्थिकः ॥ (१७९३) (वा) **मुख्यार्थान्नूक्थशब्दाट्ठगणौ नेष्येते** ॥ न्यायम्, नैयायिकः । वृत्तिम्, वार्त्तिकः । लोकायतम्, लौकायतिकः–इत्यादि ॥ ( १७९४ ) (वा) **सूत्रान्तात्त्वकल्पादेरेवेष्यते** ॥ सांग्रहसूत्रिकः । अकल्पादेः किम् । काल्पसूत्रः॥(१७९५) (वा) **विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्** ॥ वायसविद्यिकः। गौलक्षणिकः।आश्वलक्षणिकः । पाराशरकल्पिकः ॥ ( १७९६ ) (वा) **अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्** ॥आङ्गविद्यः।क्षात्त्रविद्यः। धार्मविद्यः । त्रिविधा विद्या त्रिविद्या, तामधीते वेद वा–त्रैविद्यः ॥ (१७९७) (वा) **आख्यानाख्यायिकेतिहासपुराणेभ्यश्च** ॥ यवक्रीतमधिकृत्य कृतमाख्यानमुपचाराद्यवक्रीतं, तदधीते वेत्ति वा–यावक्रीतिकः। वासवदत्तामधिकृत्य कृता आख्यायिका–वासवदत्ता । अधिकृत्य कृते ग्रन्थे इत्यर्थे वृद्धाच्छः । तस्य (वा) **लुबाख्यायिकाभ्यो बहुलमिति** लुप् । ततोऽनेन ठक् । वासवदत्तिकः । ऐतिहासिकः । पौराणिकः॥ (१७९८) (वा) **सर्वादेः सादेश्च लुग्वक्तव्यः**॥ सर्ववेदानधीते सर्ववेदः । सर्वतन्त्रः । सवार्तिकः । द्विगोर्लुगिति लुक् । द्वितन्त्रः ॥ (१७९९) (वा) **इकन्पदोत्तरपदात्** । पूर्वपदिकः । उत्तरपदिकः॥(१८००) (वा) **शतषष्टेः षिकन् पथः**॥ शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टिपथिकी॥ (१८०१) (सू) **क्रमादिभ्यो वुन्** । ४ । २ । ६१ । क्रमकः । क्रम, पद, शिक्षा, मीमांसा, क्रमादिः ॥ ( १८०२ ) (सू) **अनुब्राह्मणादिनिः** । ४ । २ । ६२ । तदधीते तद्वेदेत्यर्थे । ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणं तदधीते–अनुब्राह्मणी । मत्वर्थीयेनैव सिद्धे अण्बाधनार्थमिदम् ॥ ( १८०३ ) (सू) **वसन्तादिभ्यष्ठक्** । ४ । २ । ६३ । वासन्तिकः । अथर्वाणम-

---

( १७८८ ) **तदस्याम्**—। प्रथमान्तात्प्रहरणोपाधि (णवाच) कात्सप्तम्यन्तार्थेऽण् स्यात्, स चेत्सप्तम्यन्तार्थः क्रीडा भवति॥ प्रहरणं किम्, माला भूषणमस्याम् । क्रीडायां किम् , खड्गः प्रहरणमस्यां सेनायाम् ॥ ( १७८८ ) **घञः**–। कृद्ग्रहणादिति । तेन 'श्यैनंपाता' इत्यत्र 'ञ्णिति' इत्यङ्गस्य विधीयमाना वृद्धिः सिद्धा । श्येनपातस्यापि घञन्तत्वादिति भावः । घञः किम् , श्येनपतनमस्यां वर्तते । क्रिया किम् , प्राकारोऽस्यां वर्तते ॥ 'तदस्याम्' इति प्रकृते पुनः ' साऽस्याम् ' इत्युक्तिः 'क्रीडायाम्' इत्यस्य निवृत्तिर्यथा स्यादिति । अत एवाह–**दण्डपातोऽस्यां तिथाविति** ॥ (१७९१) **तदधीते**—। द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यात्। द्विस्तद्ग्रहणमधीयाने विदुषि च प्रत्येकं विधानार्थम् । तेनोत्तरत्र क्रतुवसन्तादयः शब्दास्तत्प्रतिपादकग्रन्थे गौणा अप्यधीयानेऽपि प्रत्ययं प्राप्नुवन्ति । अन्यथा तेषामध्ययनासंभवेन वेदितर्येव प्रत्ययः स्यादिति भावः ॥ ( १७९२ ) **क्रतूक्थादि**—। **क्रतुविशेषेति** । स्वरूपस्य तु न ग्रहणम्। तथात्वे सत्युक्थादिष्वेव क्रतुशब्दः पठ्येत, नापि क्रतुपर्यायाणामुक्थादिगणे यज्ञशब्दपाठादिति भावः ॥ **अध्येतरीति** । अध्येतर्यपीत्यर्थः ॥ **आग्निष्टोमिक इति** । संस्थाविशेषवाचकस्याप्यग्निष्टोमशब्दस्य तत्संस्थाके क्रतौ निरूढप्रयोगः॥ **तल्लक्षणेत्यादि** । तत्प्रतिपादकप्रातिशाख्यमित्यर्थः॥ ( १७९३ ) **नेष्येते इति** ।अनभिधानादिति भावः ॥ (१७९६) **त्रिविधेति** । ' तिस्रो विद्या अधीते ' इति विग्रहे तु तद्धितार्थे द्विगौ 'त्रिविद्यः' इत्येव स्यात्, 'द्विगोर्लुगनपत्ये १५५१' इति लुक्प्रवृत्तेरिति भावः ॥ (१७९७) **आख्यायिकेति** । गद्यपद्यरूपो ग्रन्थविशेष इत्यर्थः ॥ ( १७९८ ) **सर्वादेरिति** । ' सादेः ' इत्येव सिद्धे सर्वादिग्रहणमर्थवत्परिभाषाज्ञापनार्थम् ॥ **सवार्त्तिक इति** । वार्त्तिकान्तमधीत इत्यर्थः। अन्तवचने अव्ययीभावः । 'अव्ययीभावे चाकाले ९६२' इति सहस्य सभावः ॥ ( १७९९ ) **इकन्निति**। पदशब्द उत्तरपदं यस्य तस्मादिकन् । ( १८०० ) शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात्तु षिकन् वाच्य इत्यर्थः ॥ **शतपथिक इति** । वृत्तिकृता तु वार्त्तिके 'बहुलम्' इति पूरयित्वा ' शातपथः ' इत्यणन्तमप्युदाहृतम् , तत्तु भाष्ये न दृष्टम् ॥ षित्त्वफलं दर्शयति—**शतपथिकीति** ॥ ( १८०२ ) **अण्बाधनार्थमिति** । भाष्ये तु प्रत्याख्यातमेवेदं सूत्रं तद्रीत्या त्वाणिष्यत इति, अनभिधानान्नेति वा बोध्यम् ॥ ( १८०३ ) **वसन्ता**—। उक्थादिष्वेव वसन्तादीन् पठित्वा, वसन्तादिषु वा उक्थादीन् पठित्वा, अन्यतरच्छक्यमवक्तुम ॥ **अथर्वाण**-

---

१ **तदधीते** । शब्दपाठोऽध्ययनम् । अर्थज्ञानं वेदनम् ॥ "प्रमादकृतमाचार्यस्य ( द्विस्तद्ग्रहणम् । एकं ) शक्यमकर्तुम्" इति " तदस्मिन्नस्तीति- " इति सूत्रे भाष्यम् ॥ २ **तत्प्रतिपादकेति** । उभयोः सहाधिकारेणोत्तरसूत्राणामर्थद्वयेऽपि प्रवृत्तिरिति भावः ॥ ३ **नेष्येते इति** । ठकोऽनभिधानमात्रे तात्पर्यं भाष्यस्वरसतः ॥ ४ **सर्वादेरिति** । 'अनुसूर्लक्ष्यलक्षणे' इत्यपि सर्वादेरित्याद्यर्थकश्लोकप्रथमचरणम् । तस्य 'अनुसूशब्दो लक्ष्यलक्षणशब्दौ च ठकं प्राप्नुतः' । अनुसूं ग्रन्थविशेषमधीते वेत्ति वा–आनुसुकः 'इसुसु–'इति ठस्य कादेशे 'केऽणः' इति ह्रस्वः । लक्ष्यमधीते लाक्ष्यिकः । लक्षणमधीते लाक्षणिकः ॥

धीते–आथर्वणिकः । दाण्डिनायनेति सूत्रे निपातनाट्टिलोपो न ॥ ( १८०४ ) (सू) प्रोक्ताल्लुक्[1] । ४ । २ । ६४ । प्रोक्तार्थकप्रत्ययात्परस्याध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । पणनं पणः । घञर्थे कविधानमिति कः । सोऽस्यास्तीति पणी, तस्य गोत्रापत्यं पाणिनः ॥ ( १८०५ ) (सू) गाथिविदथिकेशिगणिपणिनश्च । ६ । ४ । १६५ । एतेऽणि प्रकृत्या स्युः । इति टिलोपो न । ततो यूनि इञ् । पाणिनिः ॥ ( १८०६ ) (सू) ण्यक्षत्त्रियार्षञितो यूनि लुगणिञोः । २ । ४ । ५८ । ण्यप्रत्ययान्तात्क्षत्त्रियगोत्रप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्ताद् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक् स्यात् । [ कौरव्यः[2] पिता । कौरव्यः पुत्रः । श्वाफल्कः पिता । श्वाफल्कः पुत्रः । वासिष्ठः पिता । वासिष्ठः पुत्रः । तैकायनिः पिता । तैकायनिः पुत्रः । एभ्यः किम् । शिवाद्यण् । कौहडः पिता । तत इञ् । कौहडिः पुत्रः । यूनि किम् । वामरथ्यस्य छात्राः–वामरथाः । ] इति[3] [ अणो[4] ] लुक् तु न भवति । आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् । पाणिनिना प्रोक्तं पाणिनीयम् । वृद्धाच्छः । इञश्चेत्यण् तु न, गोत्रे य इञ् तदन्तादिति वक्ष्यमाणत्वात् । ततोऽध्येतृवेदित्रणो लुक् । स्वरे स्त्रियां च विशेषः । पाणिनीयः । पाणिनीया ॥ ( १८०७–१ ) (सू) सूत्राच्च कोपधात् ।४।२।६५। सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । अप्रोक्तार्थ आरम्भः । अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनेः सूत्रम् । तदधीते विदन्ति वा–अष्टकाः ॥ ( १८०७–२ ) (वा) संख्याप्रकृतिकादेव ॥ नेह कालापकः ॥

---

मिति । अथर्वणा प्रोक्त उपचारादथर्वा । यद्वा–'तेन प्रोक्तम् २०४४' इत्याधिकारे '**ऋषिभ्यो लुग्वक्तव्यः**' वसिष्ठो विश्वामित्रोऽनुवाक इत्युदाहृत्य '**अथर्वणो वा**' ' अथर्वा, आथर्वणः ' इति भाष्योक्तः साधुः ॥ ( १८०५ ) **गाथिविदथि–**। 'इनण्यनपत्ये १७५९' इति सिद्धे अपत्येऽप्याणि प्रकृतिभावार्थमयमारम्भः । गाथिनः । वैदथिनः । कैशिनः । गाणिनः । पाणिनः ॥ ( १८०६ ) **ण्यक्षत्त्रियार्ष–। कौरव्य इति** । 'कुर्वादिभ्यो ण्यः १६५९' तत इञो लुक् । कौरव्यः पुत्रः । ननु तिकादिषु कौरव्यशब्दः पठ्यते, तथा च कौरव्यायणिरिति फिञा भाव्यं, न त्विञेति चेत् सत्यम् , 'कुरुनादिभ्यो ण्यः १६८२' इति क्षत्त्रियगोत्रे विहितो यो ण्यस्तदन्तं तत्र पठ्यते । प्रकृते तु ब्राह्मणगोत्रप्रत्ययान्तमित्यवधेयम् ॥ **श्वाफल्क इति**। 'ऋष्यन्धक–१५९५' इत्यण् । तत इञो लुक् श्वाफल्कः पुत्रः ॥ **वासिष्ठ इति** । ऋष्यण् , तत इञो लुक् वासिष्ठः पुत्रः ॥ **तैकायनिरिति** । 'तिकादिभ्यः फिञ् १६६४' ततोऽणो लुक् । तैकायनिः पुत्रः ॥ **वामरथा इति** । कुर्वादित्वात् ण्यः । ततो वृद्धाच्छं बाधित्वा 'कण्वादिभ्यो गोत्रे १८७५' इति शैषिकोऽण् ॥ **इतीति** । 'ण्यक्षत्त्रियार्ष–१८०६' इत्युदाहृतसूत्रेणेत्यर्थः ॥ **ऋष्यण एवेति** । पाणिनशब्दे तु औत्सर्गिक एवाणिति भावः। नन्विदं ' वाऽन्यस्मिन् सपिण्डे ' इति सूत्रस्थभाष्यकैयटाभ्यां विरुध्यते 'अत्रेर्युवापत्यानि पुमांसोऽत्रयः, 'इतश्चानिञः १६०३' इति ढक्, तदन्ताद्यूनि'अत इञ् १५७१'तस्य 'ण्यक्षत्त्रिया–१८०६' इति लुक्, 'अत्रिभृगुकुत्स–१६२८' इति ढकोऽपि लुक्' इत्युक्तत्वात् । ' ऋष्यन्धक–१५९५ ' इत्यण एव ग्रहणे तु ढकोऽग्रहणात्ततः परस्येञो लुङ् न स्यादित्याहुः॥ वस्तुतस्तु–'दाक्षीपुत्रस्य पाणिनेः'इति भाष्यप्रयोगादस्य साधुत्वमिति ज्ञेयम् ॥ **इञश्चेतीति** । ' यूनि लुक् १५५४' इति लुक्यपि प्रत्ययलक्षणेन इञन्तमस्तीति भावः ॥ **गोत्रे य इति** । 'गोत्रमिह शास्त्रीयं, न तु लौकिकमिति तत्र वक्ष्यते' इति भावः ॥ **स्वरे इति** । लुगभावे प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप्स्यात् । लुकि सति त्वीकार उदात्तः, टाप् च सिद्ध्यतीति भावः ॥ **(१८०७–१) सूत्राच्च–। अष्टकमिति** । 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु २३४२' इति 'संख्याया अतिशदन्तायाः कन् २२९६' ॥ **( १८०७–२ ) संख्याप्रकृतिकादिति** । संख्या-

---

१ **प्रोक्तादिति** । 'प्रोक्तात्' इति वक्तव्ये 'प्रोक्ताद्' इति सौत्रो निर्देश इति भाष्ये स्पष्टम् ॥ २ **कौरव्य** इत्यादिः वामरथा इत्यन्तोऽपत्याधिकारे व्याख्यातव्योऽपि तत्राव्याख्यातत्वादत्र व्याख्यात इति बोध्यम् ॥ ३ **इतीति** । प्रकृते व्याख्याने हेतुरिति भावः । पाणिनिशब्दे प्रकृतसूत्रेण युवार्थकस्यापीञो लुक् कथं नेत्याशङ्कापनोदाय प्रकृतोपयोग इति भावः ॥ ४ **अण** इत्यपपाठः । अणो लुगप्राप्तेः, इञ एव लुक्प्राप्तेश्च ॥ तथापाठस्य प्रामाणिकत्वे तु ' अनन्तरस्येञः ' इति शेषो बोध्यः ॥ ५ **भाष्येति** । 'भगवतः पाणिनेः सिद्धम्' इति शास्त्रान्ते वार्तिकप्रयोगाच्चेति भावः॥ परे तु–अत्रत्यार्षपदे प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या ' रूढ्या ऋषिवाचिनो गोत्रप्रत्ययान्तात्परस्य ' इत्यर्थाङ्गीकारेण प्रकृते पाणिनशब्दस्य यौगिकत्वेन रूढऋषिवाचकत्वाभावादेव न लुगापत्तिरिति वदन्ति ॥ तन्न मनोरमम् , यौगिकानामग्रहणे वसिष्ठवासिष्ठादिशब्दानामपि यौगिकत्वेन तेषामपि त्वदुक्तरीत्या रूढऋषिवाचित्वाभावात्तत्राप्यप्रवृत्त्यापत्तेः ॥ पुराणभारतादिषु तु "**बभ्रवः पाणिनश्चैव ध्यानजप्यास्तथैव च**"इति वायुपुराणे चन्द्रवंशवर्णने २९ अध्याये ९५ श्लोके, '**पाणिनो बभ्रवश्चैव ध्यानजप्यास्तथैव च**' इति हरिवंशे कलिकात्तामुद्रितपुस्तके पृष्ठे ५१. श्लोके १४६४, ६१ पृष्ठे १७७० श्लोके, ' **पाणिनः** ' इत्यप्युपलभ्यते । तत्र बहुवचनप्रसङ्गे तु '**पणिनः**' इति ' **पाणिनाः** ' इति वा पाठो भवेदिति तु सुधीभिः शोधनीयम् ॥ मन्त्राणां विनियोगप्रकरणे सर्वानुक्रमाणिकायां निर्दिष्टानामेव ऋषीणां ग्रहणेन नैव दोषसंभावना इति दाधिमथाः ॥

( १८०८ ) ॐ छन्दोब्राह्मणानि च तद्विषयाणि । ४ । २ । ६६ । छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः । अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्यर्थः । कठेन प्रोक्तमधीयते-कठाः । वैशम्पायनान्तेवासित्वाणिनिः । तस्य कठचरकादिति लुक् । ततोऽण् , तस्य प्रोक्ताल्लुक् ॥ इति रक्ताद्यर्थकाः ॥

अथ तद्धितेषु चातुरर्थिकाः ।

( १८०९ ) ॐ तदस्मिन्नस्तीति देशे तन्नाम्नि । ४ । २ । ६७ । उदुम्बराः सन्त्यस्मिन्देशे-औदुम्बरः ॥ ( १८१० ) ॐ तेन निर्वृत्तम् । ४ । २ । ६८ । कुशाम्बेन निर्वृत्ता-कौशाम्बी नगरी ॥ ( १८११ ) ॐ तस्य निवासः । ४ । २ । ६९ । शिबीनां निवासो देशः-शैबः ॥ ( १८१२ ) ॐ अदूरभवश्च । ४ । २ । ७० । विदिशाया अदूरभवं नगरं वैदिशम् । चकारेण प्रागुक्तास्त्रयोऽर्थाः संनिधाप्यन्ते । तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्वं सिध्यति ॥ ( १८१३ ) ॐ ओरञ् । ४ । २ । ७१ । अणोऽपवादः । कक्षतु, काक्षतवम् । नद्यां तु परत्वान्मतुप् । इक्षुमती ॥ ( १८१४ ) ॐ मतोश्च बह्वजङ्गात् । ४ । २ । ७२ । बह्वच् अङ्गं यस्य मतुपस्तदन्तादञ् नाऽण् । सैध्रकावतम् । बह्वजिति किम् । आहिमतम् । अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं मा भूत् ॥ ( १८१५ ) ॐ बह्वचः कूपेषु । ४ । २ । ७३ । अणोऽपवादः । दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः ॥ ( १८१६ ) ॐ उदक्च विपाशः । ४ । २ । ७४ । विपाश उत्तरे कूले ये कूपास्तेष्वञ् । अबह्वजर्थ आरम्भः । दत्तेन निर्वृत्तो दात्तः कूपः ॥ उदक् किम् । दक्षिणतः कूपेष्वणेव ॥ ( १८१७ ) ॐ सङ्कलादिभ्यश्च । ४ । २ । ७५ । कूपेष्विति निवृत्तम् । सङ्कलेन निर्वृत्तं साङ्कलम् । पौष्कलम् ॥ ( १८१८ ) ॐ स्त्रीषु सौवीरसाल्वप्राक्षु । ४ । २ । ७६ । स्त्रीलिङ्गेषु एषु देशेषु वाच्येष्वञ् । सौवीरे-दत्तामित्रेण निर्वृत्ता दात्तामित्री नगरी । साल्वे-वैधूमाग्नी । प्राचि-माकन्दी ॥ ( १८१९ ) ॐ सुवास्त्वादिभ्योऽण् । ४ । २ । ७७ । अञोऽपवादः । सुवास्तोरदूरभवं-सौवास्तवम् । वर्णु-वार्णवम् । अण्ग्रहणं नद्यां मतुपो

---

प्रकृतिकप्रत्ययान्तादित्यर्थः ॥ कालापक इति । कलापिन्शब्दात्प्रोक्तार्थेऽण् 'सब्रह्मचारि-२०५२' इत्युपसंख्यानाट्टिलोपः । ततोऽध्येतर्यण्, तस्य 'प्रोक्ताल्लुक् १८०४' इति लुक् । कालापानामाम्नाय इत्यर्थे 'गोत्रचरणाद्वुञ् २०७५' वतोऽध्येतृवेदित्रणो लुक्, स्वरे स्त्रियां च विशेषः ॥(१८०८) छन्दोब्राह्मणानि—। इह मण्डूकप्लुत्याऽनुवृत्तं 'प्रोक्तात्' इति पञ्चम्यन्तं जसन्तत्वेन विपरिणम्यते, 'छन्दोब्राह्मणानि' इत्यनेन सामानाधिकरण्यात् । प्रोक्तशब्दश्च प्रोक्तार्थके प्रत्यये लाक्षणिक इत्याशयेनाह—प्रोक्तप्रत्ययान्तानीति ॥ तद्विषयाणीति । तच्छब्देन अध्येतृवेदितृप्रत्ययः परामृश्यते, विषयशब्दस्त्विहानन्यभाववाची,न तु देशवाचीत्यभिप्रेत्याह-प्रत्ययं विना न प्रयोज्यानीत्यर्थ इति।पाणिनीयं पाणिनीया इतिवदनियमेन प्रयोगे प्राप्ते नियमार्थमेतदिति भावः । छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहणं चिरंतनप्रोक्तब्राह्मणानामेव तद्विषयत्वार्थम् । तेनेह न, याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि । यञन्तात् 'कण्वादिभ्यो गोत्रे १८७५' इत्यण्, 'आपत्यस्य च-१५५३' इति यलोपः ॥ याज्ञवल्क्यादयो हि पाणिन्यपेक्षया नूतना इति वृत्तिकृतां व्यवहारः ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन काश्यपिनः, कौशिकिनः, इत्यत्र कल्पेऽपि तद्विषयत्वं सिद्धम् । 'काश्यपकौशिकाभ्यामृषिभ्याम्-२०४६' इति प्रोक्ते णिनिः, अध्येत्रणो लुक् । छन्दोब्राह्मणानीति किम्, पाणिनीयं व्याकरणम् ॥ इति रक्ताद्यर्थकाः ॥

---

अथ चातुरर्थिकाः । ( १८०९ ) तदस्मिन्—। अस्तीत्युपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहितं प्रत्ययः स्यात्प्रत्ययान्तानामादेशश्चेत् । तत् प्रत्ययान्तं नाम यस्येति बहुव्रीहिः । मतुपोऽयमपवादः । इतिशब्दस्तु सकललोकप्रसिद्धे देशे यथा स्यात्, न त्वाधुनिकसंकेतेऽपीत्येतदर्थः । उत्तरसूत्रत्रयेऽपि 'देशे तन्नाम्नि' इत्यनुवर्तते ॥ ( १८१० ) तेन निर्वृत्तम् । अन्तर्भावितण्यर्थवृतेः कर्मणि क्तः ॥ ( १८१२ ) अदूर—। अदूरसन्तिकम्, तत्र भवतीत्यदूरभवः । निपातनात्सप्तमीसमासः ॥ चातुरर्थिकत्वमिति । चतुर्णामर्थानां समाहारश्चतुर्थी । तत्र भवाश्चतुरर्थिकाः । अध्यात्मादित्वाट्ठञ् । चतुर्ष्वर्थेषु भवा इति तद्धितार्थे द्विगौ तु 'द्विगोर्लुगनपत्ये' इति ठञो लुक् स्यात् ॥ ( १८१४ ) मतोश्च—। ननु 'मतोर्बह्वचः' इत्येवास्तु । बह्वचो विहितो यो मतुप् तदन्तादिति वैयधिकरण्येन व्याख्यानादिष्टं सिध्यति किमङ्गग्रहणेनेत्याशङ्कां निवारयति-अङ्गग्रहणमिति । मत्वन्तविशेषणमिति ।

---

[१] कालापक इतीति । भाष्ये तु-'संख्याप्रकृतेरिति वक्तव्यम्' । इह मा भूत्-माहावार्तिकः, चान्दनगन्धिकः, कालापकः-' इति व्याख्यातम् । तेन च लुगभाव एव प्रतीयते । स च प्रकृतसूत्रस्य 'कोपधात्सूत्रवाचिनः परस्य लुक् चेत् संख्याप्रकृतिकादेव' इति नियमबलतः साधनीयः ॥ [२] वृत्तिकृतामिति । 'याज्ञवल्क्यादिभ्यः प्रतिषेधः, तुल्यकालत्वाद्' इति वार्तिकविरोधोऽनाशचिः । 'छन्दस्त्वं च मन्त्रेष्वेव इति च' इति शब्दरत्ने ॥ अयं भावः—छन्दःपदं बहुत्र मन्त्रब्राह्मणोभयपरमेव । अत एव तत्पदघटितसूत्राणामुभयत्रैव प्रवृत्तिर्दृश्यते । अत्र तु ब्राह्मणपदस्य पृथगुपादानात् 'विशेषवाचकपदसंनिधाने सामान्यवाचकपदानां तद्विशेषातिरिक्तपरत्वम्' इति लौकिकन्यायस्य शास्त्रेऽपि माननीयतां बोधयितुमेव ब्राह्मणपदम् इति ॥ [३] लुक् स्यादिति । इदं तु 'पञ्चकपाल्यां संस्कृतः पञ्चकपालः, इत्यत्र समाहारद्विगोर्जातस्यापि प्रत्ययस्य लुगर्थं कृतेन '* अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि *' इति वार्तिकेन विरोधादुपेक्ष्यम् । तस्मात्—चतुरवयवोऽर्थश्चतुरर्थः, तत्र भव इति न्याय्यम् ॥

बाधनार्थम् । सौवारतवी ॥ ( १८२० ) (सू) रोणी । ४ । २ । ७८ । रोणीशब्दात्तदन्ताच्च अण्, कूपाञोऽपवादः । रौणः । आजकरौणः ॥ ( १८२१ ) (सू) कोपधाच्च । ४ । २ । ७९ । अण् । अञोऽपवादः । कार्णच्छिद्रकः कूपः । कार्कवाकवम् । त्रैशङ्कवम् ॥ ( १८२२ ) (सू) वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यककठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः । ४ । २ । ८० । सप्तदशभ्यः सप्तदश क्रमात्स्युश्चतुरर्थ्याम् । अरीहणादिभ्यो वुञ्—अरीहणेन निर्वृत्तमारीहणकम् । कृशाश्वादिभ्यश्छण्—कार्शाश्वीयम् । ऋश्यादिभ्यः कः—ऋश्यकम् । कुमुदादिभ्यष्ठच्—कुमुदिकम् । काशादिभ्य इलः—काशिलः । तृणादिभ्यः सः—तृणसम् । प्रेक्षादिभ्य इनिः—प्रेक्षी । अश्मादिभ्यो रः—अश्मरः । सख्यादिभ्यो ढञ्—साखेयम् । सङ्काशादिभ्यो ण्यः—साङ्काश्यम् । बलादिभ्यो यः—बल्यम् । पक्षादिभ्यः फक्—पाक्षायणः ॥ ( १८२३ ) (ग) पथः पन्थ च । पान्थायनः । कर्णादिभ्यः फिञ्—कार्णायनिः । सुतङ्गमादिभ्य इञ्—सौतङ्गमिः । प्रगद्यादिभ्यो ञ्यः—प्रागद्यः । वराहादिभ्यः कक्—वाराहकः । कुमुदादिभ्यष्ठक्—कौमुदिकः ॥ ( १८२४ ) (सू) जनपदे लुप् । ४ । २ । ८१ । जनपदे वाच्ये चातुरर्थिकस्य लुप्स्यात् ॥ (१८२५) (सू) लुपि युक्तवद्व्यक्तिवचने । १ । २ । ५१ । लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः—पञ्चालाः । कुरवः । अङ्गाः । बङ्गाः । कलिङ्गाः ॥ ( १८२६ ) (सू) तदशिष्यं संज्ञाप्रमाणत्वात् । १ । २ । ५३ । युक्तवद्वचनं न कर्तव्यं, संज्ञानां प्रमाणत्वात् ॥ ( १८२७ ) (सू) लुब्योगाप्रख्यानात् । । १ । २ । ५४ । लुबपि न कर्तव्योऽवयवार्थस्येहाप्रतीतेः ॥ (१८२८ ) (सू) योगप्रमाणे च तदभावेऽदर्शनं स्यात् । १ । २ । ५५ । यदि हि योगस्यावयवार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत ॥ ( १८२९ ) (सू) प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् । १ । २ । ५६ । प्रत्ययार्थः प्रधानमित्येवंरूपं वचनमप्यशिष्यम् । कुतः, अर्थस्य लोकत एव सिद्धेः ॥ ( १८३० ) (सू) कालोपसर्जने च तुल्यम् । १ । २ । ५७ । अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः । विशेषणमुपसर्जनमित्यादिपूर्वाचार्यैः परिभाषितं तत्राप्यशिष्यत्वं समानम् , लोकप्रसिद्धेः ॥ ( १८३१ ) (सू) विशेषणानां चाजातेः । १ । २ । ५२ । लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा । पञ्चाला रमणीयाः । गोदौ रमणीयौ । अजातेः किम् । पञ्चाला जनपदः । गोदौ

---

संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादङ्गग्रहणाभावे मत्वन्तविशेषणं स्यादेव ततश्चाहिमतमित्यादावतिप्रसङ्गः स्यादिति भावः ॥ ( १८२० ) **रोणी** । रोणीशब्दः प्रत्ययमुत्पादयतीत्यर्थः । तथा च फलितमाह—**रोणीशब्दादिति** । पञ्चम्याः सौत्रो लुगित्यन्ये ॥ **तदन्तादिति** । 'येन विधिः—' इति सूत्रे भाष्यस्थविशेषवचनात् , विशेषणविशेष्ययोः कामचारमाश्रित्य 'समासप्रत्ययविधौ प्रतिषेधः ४८' इत्यस्य प्रत्याख्यानाद्वा तदन्तविधिरिति भावः ॥ ( १८२२ ) **वुञ्छण्**—। 'ठकः' इत्यन्तमेकं समस्तपदम् । अरीहणादि त्वपरम् । तत्र प्रथमतः कुमुदान्तानां चतुर्णां द्वन्द्वं विधाय, द्वितीयेन काशादिकुमुदान्तद्वन्द्वेन सह पुनर्द्वन्द्वो बोध्यः । तेन कुमुदशब्दस्य द्विः पाठेऽपि नैकशेषः । आदिशब्दः प्रत्येकं संबध्यत इत्याह—**अरीहणादिभ्य इति** । ( १८२३ ) पक्षाद्यन्तर्गणसूत्रमाह—**पथ इति** ॥ ( १८२४ ) **जनपदे लुप्** । तन्नाम्नीत्येव । नेह, उदुम्बराः सन्त्यस्मिन्नौदुम्बरो जनपदः । न ह्यत्र लुबन्तं नामधेयम् ॥ ( १८२५ ) जनपदस्यैकत्वादेकवचने प्राप्ते बहुवचनादिफलकमतिदेशमाह—**लुपि युक्तवदिति** । व्यक्तिवचने किम् , शिरीषाणामदूरभवो ग्रामः शिरीषाः 'वरणादिभ्यश्च १८३५' इति लुप् । तस्य वनं शिरीषवनम् । इह वनस्पतित्वमतिदिश्यते । ततश्च 'विभाषौषधिवनस्पतिभ्यः १५०५' इति णत्वं स्यात् । नन्वत्र शिरीषाणामिति षष्ठीबहुवचनं कुतो नातिदिश्यत इति चेत् । अत्राहुः—वचनमिह संख्या, न त्वेकवचनद्विवचनादिः । न चैवमपि संख्याबोधकत्वेन श्रुतैव षष्ठी परिगृह्यतामिति वाच्यम् , षष्ठ्यर्थस्य तद्धितवृत्त्यन्तर्गतत्वादुक्तार्थे प्रथमाया एव युक्तत्वादिति ॥ **पञ्चाला इत्यादि** । यद्यप्यत्राभिधेयलिङ्गवत्त्वेऽपीष्टसिद्धिः, तथापि कटुबदर्या अदूरभवो ग्रामः कटुबदरीत्यादिसिद्धये प्रकृतिलिङ्गातिदेश इति भावः ॥ ( १८२६ ) पूर्वाचार्यानुरोधेन कृतं सूत्रं संप्रति प्रत्याचष्टे—**तदशिष्यमिति** । 'पञ्चालाः, अङ्गाः, वङ्गाः, कलिङ्गाः' इत्यादयो जनपदस्य यथायथं बहुवचनाद्यन्ता एव संज्ञाः, न त्वत्र यत्नेन लिङ्गसंख्ये प्रतिपादनीये । आपो दारा इत्यादिषु यथा । न हि तत्र शास्त्रेण लिङ्गसंख्ये प्रतिपाद्येते इति भावः ॥ ( १८२७ ) उपजीवकं प्रत्याख्यायोपजीव्यं प्रत्याचष्टे—**लुब्योगेति** । 'जनपदे लुप् १८२४' 'वरणादिभ्यश्च १८३५' इति द्विसूत्री लुप्शब्देन विवक्षिता । 'अशिष्यम्' इति संबध्यत एव । तदाह—**लुबपीति** । प्रकृतिप्रत्ययार्थयोः संबन्धो योग इत्याशयेन फलितमाह—**अवयवार्थस्येति** । अप्रख्यानादिति व्याचष्टे—**अप्रतीतेरिति** । पञ्चालादयः शब्दाः क्षत्रियेषु यथा रूढास्तथा जनपदेऽपीति 'तस्य निवासः १८११' 'अदूरभवश्च १८१२' इति तद्धितो नैवोत्पद्यते किमनेन लुपो विधानेनेत्यर्थः ॥ ( १८२८ ) **योगप्र—। न दृश्येतेति** । विनापि क्षत्रियसंबन्धं पञ्चालादिशब्दो जनपदेषु प्रयुज्यते इति नार्थः सूत्रेणेत्यर्थः ॥ ( १८२९ ) प्रसङ्गात्पूर्वाचार्यपरिभाषितमन्यदपि प्रत्याचष्टे—**प्रधानेत्यादिना** । ( १८३१ ) **विशेषणानाम्**—। यद्यपि सूत्रपाठे 'लुपि युक्तवत्—१८२५' इति सूत्रादनन्तरमेतत्सूत्रं पठित्वा 'तदशिष्यम्—१८२६' इत्यारब्धत्वात्तत्रैवेदं व्याख्यातुमुचितम् । तथापि जातेः प्रतिषेधमात्रपरमिदं, न तु युक्तवद्भावपरमित्याशयेन तत्र नोक्तमित्याहुः ॥ **पञ्चाला रमणीया इति** । कथं

ग्रामः ॥ (१८३२) ॥ हरीतक्यादिषु व्यक्तिः ॥ हरीतक्याः फलानि हरीतक्यः (१८३३) ॥ खलतिकादिषु वचनम् ॥ खलतिकस्य पर्वतस्यादूरभवानि–खलतिकं वनानि ॥ ( १८३४ ) ॥ मनुष्यलुपि प्रतिषेधः । मनुष्यलक्षणे लुबर्थे विशेषणानां न, लुबन्तस्य तु भवतीत्यर्थः । चञ्चा अभिरूपः ॥ ( १८३५ ) ॥ वरणादिभ्यश्च । ४ । २ । ८२ । अजनपदार्थे आरम्भः । वरणानामदूरभवं नगरं वरणाः ॥ ( १८३६) ॥ शर्करायां वा ।४।२।८३। अस्माच्चातुरर्थिकस्य वा लुप्स्यात् ॥ ( १८३७ ) ॥ ठकछौ च । ४ । २ । ८४ । शर्कराया एतौ स्तः । कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्कको । वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण्, तस्य लुब्विकल्पः । षड् रूपाणि । शर्करा । शार्करम् । शार्करिकम् । शर्करीयम् । शर्करिकम् । शार्करकम् ॥ ( १८३८ ) ॥ नद्यां मतुप् । ४ । २ । ८५ । चातुरर्थिकः । इक्षुमती । ( १८३९ ) ॥ मध्वादिभ्यश्च । ४ । २ । ८६ । मतुप् स्याच्चातुरर्थिकः । अनद्यर्थ आरम्भः । मधुमान् ॥ ( १८४० ) ॥ कुमुदनडवेतसेभ्यो ड्मतुप् । ४ । २ । ८७ । कुमुद्वान् । नड्वान् । वेतस्वान् । झयः २५६३ इति अन्त्ये मादुपधाया इति वक्ष्यमाणेन वः ॥ ( १८४१ ) ॥ महिषाच्चेति वक्तव्यम् ॥ महिष्मान्नाम देशः ॥ ( १८४२ ) ॥ नडशादाड्ड्वलच् । ४ । २ । ८८ । नड्वलः । शादो जम्बालघासयोः । शाड्वलः ॥ (१८४३) ॥ शिखाया वलच् । ४ । २ । ८९ । शिखावलम् ॥ ( १८४४ ) ॥ उत्करादिभ्यश्छः । ४ । १ । ९० । उत्करीयः ॥ (१८४५) ॥ नडादीनां कुक् च । ४ । २ । ९१ । नडकीयम् ॥ (१८४६) ॥ कुञ्चा ह्रस्वत्वं च ॥ कुञ्चकीयः ॥ ( १८४७ ) ॥ तक्षन्नलोपश्च ॥ तक्षकीयः ॥ ( १८४८–१ ) ॥ बिल्वकादिभ्यश्छस्य लुक् ।६।४। १५३ । नडाद्यन्तर्गता बिल्वकादयस्तेभ्यश्छस्य लुक् तद्धिते परे । बिल्वा यस्यां सन्ति सा बिल्वकीया, तस्यां भवा बैल्वकाः । वेत्रकीयाः, वैत्रकाः । छस्य किम् । छमात्रस्य लुग्यथा स्यात्कुको निवृत्तिर्मा भूत् । अन्यथा ( १८४८–२ ) ॥ सन्नियोगशिष्टानामिति कुगपि निवर्तेत । लुग्ग्रहणं सर्वलोपार्थम् । लोपोऽपि यमात्रस्य स्यात् ॥

इति चातुरर्थिकाः ॥

---

तर्हि 'पञ्चालाः–जनपदः–सुभिक्षः–संपन्नपानीयः' इति प्रयोग इति चेत् । जनपदविशेषणत्वादित्यवेहि । पञ्चालविशेषणत्वाभ्युपगमे तु तद्वल्लिङ्गवचने स्त एव । पञ्चालाः ( जनपदाः ) सुभिक्षाः संपन्नपानीया इति ॥ (१८३२) **हरीतक्य इति** । 'हरीतक्यादिभ्यश्च २१२३' इत्यणो लुप् । तत्र हि 'लुप् च २१२०' इत्यतो लुबनुवर्तते ॥ (१८३३) **खलतिकमिति** । 'वरणादिभ्यश्च १८३५' इति लुप् ॥ ( १८३४ ) **मनुष्य–। चञ्चेति** । 'संज्ञायाम्–२७७८' इति कनो 'लुम्मनुष्ये २७७९' इति लुप् । चञ्चा तृणमयः पुमान् ॥ ( १८३५ ) **वरणादि–।** चकारोऽनुक्तसमुच्चयार्थः, तेनास्याकृतिगणत्वं सिद्धम् ॥ **वरणा इति** । एवं कटुवदरी, शिरीषाः, गोदौ, खलतिकमित्यादीन्युदाहर्तव्यानि ॥ ( १८४० ) **कुमुद–।** । वत्वस्यासिद्धत्वात्तस्मिन्कर्तव्ये टिलोपो न स्थानिवदित्याशयेनाह—**झय इति** । नड्वानित्यत्रापि परत्वात् 'झयः २५६३' इत्यनेनैव वकारो न तु 'मादुपधायाः–२५६२' इत्यनेनेति भावः ॥ न चासिद्धत्वात् 'मादुपधायाः–२५६२' इत्येव तत्र न्याय्यमिति वाच्यम्, 'प्रकरणे प्रकरणमसिद्धं, न तु योगे योगः' इति 'उपसर्गादसमासेऽपि–' इत्यत्र भाष्ये निर्णीतत्वात् ॥ ननु वेतस्वानित्यत्र वेतसशब्दस्य सुबन्तत्वेन पदत्वात् ड्मतुपो डित्त्वसामर्थ्याट्टिलोपे एकदेशविकृतन्यायेन पदत्वात्तस्य रुत्वं स्यात् । न च स्थानिवत्त्वेन निर्वाहः, पूर्वत्रासिद्धे तन्निषेधादिति चेत् । मैवम्, अन्तरङ्गं रुत्वं प्रति बहिरङ्गस्य टिलोपस्यासिद्धत्वात् । न च षाष्ठी बहिरङ्गपरिभाषा त्रैपादिकं न जानातीति वाच्यम्, कार्यकालपक्षाभ्युपगमात् ॥ नन्वेवमपि 'स्वादिषु–३३१' इति सान्तस्य पदत्वे तदाश्रयरुत्वस्यान्तरङ्गत्वाभावाद्बहिरङ्गपरिभाषा न प्रवर्तत इति रुत्वं दुर्वारमेव । न च 'नद्यां मतुप् १८३८' इति चतुरर्थ्यां मतुपो विधानाच्चातुरर्थिको ड्मतुप् मत्वर्थीय इति 'तसौ मत्वर्थे २५६०' इत्यनेन भत्वं शङ्क्यम्, टिलोपस्य स्थानिवत्त्वात् । न च पदत्वेऽप्येवम्, तस्य रुत्वविधिना सह कार्यकालतया 'पूर्वत्रासिद्धे न–३३८' इति निषेधादिति चेत् । अत्राहुः–पदसंज्ञायां यथोद्देशपक्षाश्रयणात् 'पूर्वत्रासिद्धे न–३३८' इति निषेधाप्रवर्तनात्स्थानिवत्त्वप्रवृत्त्या सान्तस्यापदत्वादिति ॥ एतेन घटी आमलकीत्यत्र 'स्वादिषु–३३१' इति पदत्वाज्जश्त्वं स्यात्, औत्सीत्यत्र तु संयोगान्तलोपः स्यादिति शङ्काऽपि परास्तेति दिक् ॥ ( १८४१ ) ननु प्रक्रियालाघवाय ड्वतुबेव विधीयताम्, अथवा 'कुमुदनडवेतसेभ्यो डित्' इति प्रकृतस्य मतुपो डित्त्वमतिदिश्यताम्, किमनेन ड्मतुब्विधानेन । सत्यम्, अन्यतो विधानार्थं तत् ॥ तत्सिद्ध्यर्थकथनपरं वार्तिकमाह—**महिषाच्चेति** ॥ ( १८४३ ) **शिखायाः–।** निर्वृत्ताद्यर्थे देशे तन्नाम्न्यणो बाधनार्थं चेदम् । 'दन्तशिखात्संज्ञायाम् २५९८' इति पञ्चमे वक्ष्यमाणं त्वदेशेऽपि शिखावल इति रूपसिद्ध्यर्थम् ॥ ( १८४५ ) **नडादीनाम्–।** नडप्लक्षबिल्ववेणुवेत्रवेतसादयो नडादयः । (१८४६) नडाद्यन्तर्गणसूत्रमाह–**कुञ्चेति** । एवं तक्षन्नित्यपि । उभयत्रापि षष्ठ्याः सौत्रो लुक् ॥ (१८४८–१) **बिल्वका–।**

---

१ महिष्मानिति । अनुनासिकविधौ सवर्णपदापकर्षेण 'यरः सवर्णोऽनुनासिकः स्यात्' इत्यर्थस्य भाष्यसंमतत्वेन षकारस्य सवर्णानुनासिकाभावान्नानुनासिकापत्तिरिति भावः ॥

अथ तद्धितेषु शैषिकाः ।

( १८४९ ) (सू) **शेषे** । ४ । २ । ९२ । अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः[1] शेषस्तत्राऽणादयः स्युः । चक्षुषा गृह्यते- चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टाः-दार्षदाः सक्तवः । उलूखले क्षुण्णः-औलूखलो यावकः । अश्वैरुह्यते-आश्वो रथः । चतुर्भिरुह्यते-चातुरं शकटम् । चतुर्दश्यां दृश्यते-चातुर्दशं रक्षः । शेष इति लक्षणं चाधिकारश्च । तस्य[२०६४] विकार इत्यतः प्राक् शेषाधिकारः ॥ ( १८५० ) (सू) **राष्ट्रावारपाराद्घखौ** । ४ । २ । ९३ । आभ्यां क्रमाद्घखौ स्तः शेषे । राष्ट्रियः । अवारपारीणः ॥ ( १८५१ ) (वा) **अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्** । अवारीणः । पारीणः । पारावारीणः । इह प्रकृतिविशेषाद्घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते ॥ ( १८५२ ) (सू) **ग्रामाद्यखञौ** । ४ । २ । ९४ । ग्राम्यः, ग्रामीणः ॥ ( १८५३ ) (सू) **कत्र्यादिभ्यो ढकञ्** । ४ । २ । ९५ । कुत्सितास्त्रयः कत्त्रयः । तत्र जातादिः-कात्त्रेयकः । नागरेयकः । ग्रामादित्यनुवृत्तेः ग्रामेयकः ॥ ( १८५४ ) (सू) **कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु** । ४ । २ । ९६ । कौलेयकः श्वा । कौलोऽन्यः । कौक्षेयकोऽसिः । कौक्षोऽन्यः । ग्रैवेयकोऽलङ्कारः । ग्रैवोऽन्यः ॥ ( १८५५ ) (सू) **नद्यादिभ्यो ढक्** । ४ । २ । ९७ । नादेयम् । माहेयम् । वाराणसेयम् ॥ ( १८५६ ) (सू) **दक्षिणापश्चात्पुरसस्त्यक्** । ४ । २ । ९८ । दक्षिणेत्याजन्तमव्ययम् । दाक्षिणात्यः । पाश्चात्त्यः । पौरस्त्यः ॥ ( १८५७ ) (सू) **कापिश्याः ष्फक्** । ४ । २ । ९९ । कापिश्यां जातादि-कापिशायनं मधु । कापिशायनी द्राक्षा ॥ ( १८५८ ) (सू) **रङ्कोरमनुष्येऽण् च** ।

---

'लोपः-१६२३' इत्यतो लोपेऽनुवर्तमाने लुग्ग्रहणं व्यर्थमित्याशङ्क्याह—**सर्वलोपार्थमिति** ॥ **यमात्रस्येति** । न च 'आदेः परस्य ६८' इतीकारस्य भाव्यमिति वाच्यम्, 'सूर्यतिष्य-६९५' इत्यतो यकारसंबद्धस्यैव लोपस्यानुवर्तनादिति भावः ॥ इति चातुरर्थिकाः ॥

---

( १८४९ ) **शेषे । लक्षणं चेति** । ग्रहणक्षुण्णादिष्वर्थेषूत्तरसूत्रानुपात्तेष्वेषु अणो विधायकमित्यर्थः॥ ननु लक्षणं तावद्व्यर्थम्, 'तस्येदम् २०६४' इत्यनेन चाक्षुषादीनाम् , 'संस्कृतं भक्षाः १७२०' इत्यनेन दार्षदादीनां सिद्धेः । तथाऽधिकारोऽपि व्यर्थः, तथाहि—अधिकारस्यापत्यादिचतुरथपर्यन्तेष्वर्थेषु घादीनां ट्युट्युलन्तानां निवृत्तिः, जाताद्यर्थसाकल्यं वा प्रयोजनम् । तत्र निवृत्तिस्तावन्न प्रयोजनम् । आर्द्रकशालादीनामुत्करादिपाठेन 'इतः प्राचीनेष्वर्थेषु घादयो न प्रवर्तन्ते' इति ज्ञापनात् । अन्यथा 'वृद्धाच्छः १८८०' इत्येव सिद्धे तत्पाठस्य वैयर्थ्यप्रसङ्गात् । नाप्यर्थसाकल्यं प्रयोजनम्, जाताधिकारात्प्राक्पाठसामर्थ्यादेव तल्लाभात् । यदि संनिहिते जातार्थ एव घादयः स्युः, तदुत्तरेषु भवाद्यर्थेषु 'प्राग्दीव्यतः-१५३५' इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमाना अणादय एव स्युः तदा जाताधिकारानन्तरमेव 'प्रावृषष्ठप् १९४९' इत्यादिभिः सह 'राष्ट्रावारपारा-१८५०' इत्यादयोऽपि पठयेरन् । तस्माद्व्यर्थमिदं सूत्रमिति चेत् । अत्रोच्यते—'शैषिकात्सरूपः शैषिको न' इति वक्ष्यमाणार्थस्य विषयलाभाय शेषाधिकारस्तावदावश्यकः । शैषिकत्वप्रयुक्तकार्यविशेषं ध्वनयितुं क्रियमाणः शेषाधिकार एव 'शैषिकान्मतुबर्थीयात्-' इत्यादिश्लोकं ज्ञापयति । एष च श्लोकः सन्विधौ मतुब्विधौ च भाष्ये पठितः । इह तु सन्नन्ते पठित इति तत्रैव व्याख्यास्यते ॥ अपत्यादिष्वर्थेषु घादीनां निवृत्त्यर्थमप्यधिकार आवश्यकः । न चोक्तज्ञापकेनैव तत्सिद्धिरिति वाच्यम्, ज्ञापकस्य विशेषापेक्षत्वे दोषतादवस्थ्यात् । 'आर्द्रकादिभ्यो यदि च्छः स्यात्तर्हि चतुरर्थ्यामेव' इति नियमस्यापि संभवाच्चेति । एवं स्थिते चाक्षुषमित्यादिषु गृह्यमाणत्वादिप्रकारकबोधनाय विधायकत्वमपि तस्य सुवचमिति दिक् ॥ ( १८५१ ) **अवार-। विगृहीतादपीत्यादि** । वचनमेवेदं, सूत्रे यथासंख्यप्रवृत्त्यर्थं विशिष्टोच्चारणात् ॥ ( १८५३ ) **कत्र्या—। कुत्सितास्त्रय इति** । इह बहुव्रीहिरपि सुवचः । इहैव निपातनात्कोः कद्भावः ॥ '**कद्भावे त्रावुपसंख्यानम्**' इति तु प्रत्याख्येयम् ॥ '**कुल्याया यलोपश्च**' इति गणसूत्रम् । कुल्यायां जातः-कौलेयकः । कत्त्रि, उम्भि, कुण्डिन, माहिष्मतीत्यादि ॥ ( १८५६ ) **दक्षिणापश्चात्-। अव्ययमिति** । साहचर्यादिति भावः । एवं च दाक्षिणात्य इत्यत्र 'सर्वनाम्नो वृत्तिमात्रे-१०५३' इति पुंवद्भावाशङ्कैव नास्तीति बोध्यम् ॥ **पाश्चात्त्य इति** । कथं तर्हि 'पश्चात्तनैः कश्चन नुद्यमानः' इति । न च दिग्देशवाचिनि पश्चाच्छब्दे सावकाशं त्यकं कालवाचकात् ट्युट्युलौ बाधेते परत्वादिति वाच्यम्, 'अग्रादिपश्चात्-१९४५' इति डिमचा ट्युट्युलोर्बाधस्य दुर्वारत्वात् । सत्यम्, पश्चात्तन्वन्ति पश्चात्तना इति कथंचित्समाधेयम् ॥ (१८५७) **कापिश्याः ष्फक्** । कापिशीशब्दात्ष्फक् स्यात् ॥ षित्त्वान्ङीष् तदाह—**कापिशायनीति**॥ (१८५८) **रङ्कोरमनुष्ये-।** रङ्कवो जनपदः, ततः 'प्राग्दीव्यतोऽण् १५३५' इत्यण् प्रत्ययः प्राप्तः । तद्बाधकत्वेन 'अवृद्धादपि-१८९४' इति वुञ् प्राप्तः, तमपि बाधित्वा 'ओर्देशे-

---

१ **अर्थ इति** । विशेषतया भासमान इत्यर्थः । अत एवापत्याद्यपि इदंत्वेन भासमानं न शेष इति 'तस्येदमित्यपत्येऽपि-' इति वार्तिकेन ध्वनितं संगच्छते ॥ २ **यकारेति** । उपधासंबद्धस्येत्यपि बोध्यम् । उपधापदासंबन्धे त्वीकारस्य स्यादिति बोध्यम् ॥ ३ **आर्द्रेति** । आर्द्रवृक्षस्योपलक्षणम् ॥

४ । २ । १०० । चात् ष्फक् । राङ्कवो गौः । राङ्कवायणः । अमनुष्य इति किम् । राङ्कवको मनुष्यः ॥ ( १८५९ ) (सू) द्युप्रागपागुदक्प्रतीचो यत् । ४।२।१०१। दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ॥ (१८६०) (सू) कन्थायाष्ठक् । ४ । २ । १०२ । कान्थिकः ॥ ( १८६१ ) (सू) वर्णौ वुक् । ४ । २ । १०३ । वर्णुर्नदस्तस्य समीपदेशो वर्णुः, तद्विषयार्थवाचिकन्थाशब्दाद्वुक् स्यात् । यथा हि जातं हिमवत्सु कान्थकम् ॥ ( १८६२ ) (सू) अव्ययात्त्यप् । ४ । २ । १०४ । ( १८६३ ) (वा) अमेहक्वतसित्रेभ्य एव ॥ अमाऽन्तिकसहार्थयोः ॥ अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । परिगणनं किम् । उपरिष्टाद्भव औपरिष्टः ॥ ( १८६४ ) (वा) अव्ययानां भमात्रे टिलोपः ॥ अनित्योऽयं, बहिषष्टिलोपविधानात् । तेनेह न, आरातीयः ॥ ( १८६५-१ ) (वा) त्यब्नेर्ध्रुव इति वक्तव्यम् ॥ नित्यः ॥ (१८६५-२) (वा) निसो गते ॥ ( १८६६ ) (सू) ह्रस्वात्तादौ तद्धिते । ८ । ३ । १०१ । ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते । निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः ॥ ( १८६७ ) (वा) अरण्याण्णः ॥ आरण्याः सुमनसः ॥ ( १८६८-१ ) (वा) दूरादेत्यः ॥ दूरेत्यः ॥ ( १८६८-२ ) (वा) उत्तरादाहञ् ॥ औत्तराहः ॥ ( १८६९ ) (सू) ऐषमोह्यःश्वसोऽन्यतरस्याम् । ४ । २ । १०५ । एभ्यस्त्यब्वा । पक्षे वक्ष्यमाणौ ट्युट्युलौ । ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । पक्षे शौवस्तिकं वक्ष्यते ॥ ( १८७० ) (सू) तीररूप्योत्तरपदादञ्ञौ । ४ । २ । १०६ । यथासंख्येन । काकतीरम् । पाल्वलतीरम् । शैवरूप्यम् । तीररूप्यान्तादिति नोक्तम् । बहुच्पूर्वान्मा भूत् । बाहुरूप्यम् ॥ ( १८७१ ) (सू) दिक्पूर्वपदादसंज्ञायां ञः । ४ । २ । १०७ । अणोऽपवादः । पौर्वशालः । असंज्ञायां किम् । संज्ञाभूतायाः प्रकृतेर्मा भूत् । पूर्वेषुकामशम्यां भवः-पूर्वैषुकामशमः । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः ॥ ( १८७२ ) (सू) मद्रेभ्योऽञ् । ४ । २ । १०८ । दिक्पूर्वपदादित्येव । दिशोऽमद्राणामिति मद्रपर्युदासादादिवृद्धिः । पौर्वमद्रः । आपरमद्रः ॥ (१८७३) (सू) उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् । ४ । २ । १०९ । अञ् स्यात् । शैवपुरम् ॥ ( १८७४ ) (सू) प्रस्थोत्तरपदपलद्यादिकोपधा-

---

१८८८' ठञ् प्राप्तः, तस्य तु 'कोपधादण् १९०३' बाधकः, ततोऽपि परत्वात्कच्छाद्यणि प्राप्तेऽनेन ष्फगणौ विधीयेते । कोपधत्वादेवाणि सिद्धे कच्छादिषु रङ्कुशब्दस्य पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थ इति कैयटः । अत एवाह—**राङ्कवको मनुष्य इति** । क्वचित्तु राङ्कव इति पठ्यते । स तु लेखकप्रमादः । स्यादेतत्, अमनुष्यग्रहणमिह व्यर्थम्, अपवादेन वुञा तत्र ष्फगणोर्बाधेनामनुष्य एव पर्यवसानात् । अण्ग्रहणमपि व्यर्थमेव, कच्छादित्वादेव तत्सिद्धेः ॥ अत्राह काशिकाकृत्-नायं प्रसज्यप्रतिषेधः किं तु पर्युदासः, तेन मनुष्यभिन्ने प्राणिन्येव ष्फग्विधीयत इति राङ्कवः कम्बल इत्यत्र न ष्फक् । विशेषविहितेन ष्फका अणो बाधा मा भूदित्यण्ग्रहणं च क्रियत इति ॥ भाष्ये तु अप्राणिन्यपि ष्फकमङ्गीकृत्येदं द्वयमपि प्रत्याख्यातम् ॥ ( १८५९ ) **द्युप्रागपा—। दिव्यमिति** । सूत्रे 'दिव उत् ४६१' इत्युत्वेन निर्देश इति भावः । अपाची दक्षिणा दिक् । द्वितीयो वर्णः पकारो, न तु दन्त्योष्ठ्यः, 'यदिन्द्र प्रागपागुदक्' इत्यादौ तथा दर्शनादिति स्थितं मनोरमायाम् ॥ केचित्तु 'प्राच्यवाचीप्रतीच्यस्ताः' इत्यमरकोशे अवाचीति दन्त्योष्ठ्यपाठं क्वाचित्कं पुरस्कृत्य सूत्रेऽपि 'अवाक्' इति पठित्वा अवाच्यमित्युदाहरन्ति । 'प्रागपाक्' इति वेदे तु व्यत्ययेन वकारस्य पकार इति तेषामाशयः । प्रागादयोऽस्तात्यन्ता अव्ययाः, तद्भिन्नास्त्वनव्ययाः । उभयेषामपीह ग्रहणमविशेषात् । कथं तर्हि 'संस्काराः प्राक्तना इव' इति । अत्राहुः—कालवाचिनः, प्राक्शब्दाद्यतं बाधित्वा परत्वात् ट्युट्युलौ बोध्याविति ॥ ( १८६१ ) **वर्णौ वुक् । वर्णुरिति** । 'अदूरभवश्च १८१२' इत्यर्थे सुवास्त्वादित्वादणि 'जनपदे लुप् १८२४' इति लुप् ॥ (१८६३) **अमेह—। अमात्य इति** । अमाशब्दः समीपवाची स्वरादिः । अमा समीपे भव इत्यर्थः ॥ ( १८६६ ) **ह्रस्वात्तादौ**—। पदान्तत्वात्षत्वस्याप्राप्तावयमारम्भः । आदिग्रहणं तु व्यर्थं 'यस्मिन्विधिः—' इत्येव सिद्धेः । ह्रस्वात्किम्, गीस्तराम् । धूस्तराम् । तादौ किम्, सर्पिःसाद्भवति । तद्धिते किम्, सर्पिस्तरति ॥ **'तिङन्तस्य प्रतिषेधो वाच्यः'** । भिन्द्युस्तराम् ॥ ( १८६८-१ ) **दूरेत्य इति** । दूरादागत इत्यादिरर्थः ॥ ( १८६८-२ ) **औत्तराह इति** । इहाद्युदात्तत्वं स्त्रियां टाप् च बोध्यः ॥ यदा तु 'उत्तराच्च २६९८' इत्याहिप्रत्यये ततोऽण् क्रियते 'अमेह-१८६३' इति परिगणनेन त्यपोऽभावात्, तदा औत्तराहशब्दोऽन्तोदात्तः, स्त्रियां ङीप् च विशेषः ॥ ( १८६९ ) **ऐष—। वक्ष्यमाणाविति** । 'सायंचिरम्-१९४३' इत्यादिनेति शेषः ॥ **वक्ष्यत इति** । 'श्वसस्तुट् च १९३७' इत्यत्र ( १८७१ ) **दिक्पूर्व**—। 'असंज्ञायाम्' इत्यत्र सौत्रत्वात्पञ्चम्यर्थे सप्तमीत्याशयेनाह—**संज्ञाभूताया इति** ॥ ( १८७२ ) **मद्रेभ्योऽञ्** । बहुवचननिर्देशाज्जनपदवाची गृह्यते, न तु भद्रपर्यायः ॥ **दिशोऽमद्राणामिति** । 'दिग्वाचकादुत्तरपदस्य जनपदवाचिनो मद्रभिन्नस्याचामादेर्वृद्धिः स्यात् ञिति णिति किति च तद्धिते' इति सूत्रार्थः ॥ **पौर्वमद्र इति** । मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्शब्देन सामानाधिकरण्यात् 'तद्धितार्थ-१०५२' इति समासः ॥ ( १८७३ ) **उदीच्य**—। दिग्ग्रहणं निवृत्तम् । उदीच्यग्रामात्किम्, माथुरः । बह्वचः किम्, ध्वाजः[1] ॥ पिप्पल्यादिङीषन्तो ध्वजीशब्दः ॥ अन्तोदात्तात्किम्, शार्कराधानम्, शर्कराधानशब्दे धाशब्दाकार उदात्तः । कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरस्यावस्थानात् ॥ **शैवपुरमिति** । 'प्रस्थपुरवहान्ताच्च १८९९' इति वुञ् न भवति, 'वृद्धात्' इति तत्रानुवृत्तेः ॥ ( १८७४ ) **प्रस्थोत्तर**—। उदी-

---

१ ध्वाञ्ज इति शेखरसंमतः पाठः । एवमेवाग्रे ध्वञ्जीति ॥

दण् । ४ । २ । ११० । माहिकिप्रस्थः । पालदः । नैलीनकः ॥ ( १८७५ ) (सू०) कण्वादिभ्यो गोत्रे । ४ । २ । १११ । एभ्यो गोत्रप्रत्ययान्तेभ्योऽण् स्यात् । कण्वो गर्गादिः । काण्व्यस्य छात्राः—काण्वाः[1] ॥ (१८७६) (सू०) इञश्च । ४ । २ । ११२ । गोत्रे य इञ् तदन्तादण् स्यात् । दाक्षाः । गोत्रे किम् । सौतङ्गमेरिदं सौतङ्गमीयम् । गोत्रमिह शास्त्रीयं न तु लौकिकम् । तेनेह न पाणिनीयम्[2] ॥ ( १८७७ ) (सू०) न द्व्यचः प्राच्यभरतेषु ।४।२। ११३। [१८७६]इञश्चेत्यणोऽपवादः । प्राष्ठीयाः। काशीयाः। भरतानां प्राच्यत्वेऽपि पृथगुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम् ॥ ( १८७८ ) (सू०) वृद्धिर्यस्याचामादिस्तद्वृद्धम् ।१।१ । ७३ । यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ॥ (१८७९ ) (सू०) त्यदादीनि च । १ । १ । ७४ । वृद्धसंज्ञानि स्युः ॥( १८८० ) (सू०) वृद्धाच्छः । ४ । २ । ११४ । शालीयः । मालीयः । तदीयः ॥ ( १८८१ ) (सू०) एङ् प्राचां देशे । १ । १ । ७५ । एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने । एणीपचनीयः । गोनर्दीयः । भोजकटीयः । पक्षे अणि—ऐणीपचनः । गौनर्दः । भौजकटः । एङ् किम् । आहिच्छत्रः । कान्यकुब्जः ॥ ( १८८२ ) (वा०) वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ॥ देवदत्तः । देवदत्तीयः ॥ ( १८८३ ) (सू०) भवतष्ठक्छसौ । ४ । २ । ११५ । वृद्धाद्भवत एतौ स्तः । भावत्कः । [3]जैस्वम् । भवदीयः । वृद्धादित्यनुवृत्तेः शत्रन्तादणेव । भावतः ॥ ( १८८४ ) (सू०) काश्यादिभ्यष्ठञ्ञिठौ । ४ । २ । ११६ । इकार उच्चारणार्थः । काशिकी, काशिका । वैदिकी, वैदिका ॥ ( १८८५ ) (ग०) आपदादिपूर्वपदात्कालान्तात् ॥ आपदादिराकृतिगणः । आपत्कालिकी । आपत्कालिका ॥ (१८८६) (सू०) वाहीकग्रामेभ्यश्च । ४।२।११७। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्तः । छस्यापवादः । कास्तीरं नाम वाहीकग्रामः । कास्तीरिकी । कास्तीरिका ॥(१८८७) (सू०) विभाषोशीनरेषु ।४।२।११८।एषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः । सौदर्शनिकी । सौदर्शनिका । सौदर्शनीया॥ (१८८८) (सू०) ओर्देशे ठञ् । ४ । २ । ११९ । उवर्णान्ताद्देशवाचिनष्ठञ् । निषादकर्षूः—नैषादकर्षुकः । केऽण इति ह्रस्वः। देशे किम् । पटोश्छात्राः—पाटवाः । ञिठं व्यावर्तयितुं ठञ्ग्रहणम् । वृद्धाच्छं परत्वादयं बाधते । दाक्षिकर्षुकः ॥ ( १८८९ ) (सू०) वृद्धात्प्राचाम् ।४।२।१२० । प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम् । आढकजम्बुकः । शाकजम्बुकः । नेह, मल्लवास्तु—माल्लवास्तवः ॥ ( १८९० ) (सू०) धन्वयोपधाद्वुञ् । ४ २ । १२१ । धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात् । ऐरावतं धन्व—ऐरावतकः । साङ्काश्यकाम्पिल्यशब्दौ [१२२]वुञ्छणादिसूत्रेण ण्यान्तौ । साङ्काश्यकः । काम्पिल्यकः ॥ (१८९१) (सू०) प्रस्थपुरवहान्ताच्च । ४ । २ । १२२ । एतदन्ताद्वृद्धाद्देशवाचिनो वुञ् स्यात् । छस्यापवादः । मालाप्रस्थकः । नान्दीपुरकः । पैलुवहकः । पुरान्तग्रहणमप्रागर्थम् । प्राग्देशे तूत्तरेण

---

च्यग्रामलक्षणस्याञोऽपवादः ॥ **पालद इति** । पलदीति ईकारान्त इत्येके । नान्त इत्यन्ये । नलोपे सति यणादेशात्संहिता तुल्यैव ॥ वाहीकशब्दः कोपधोऽपि पलद्यादिषु पठ्यते परं छं बाधितुम् । अन्यथा अणं बाधित्वा परत्वाच्छ एव स्यात्कोपधप्रयुक्तोऽण् अवृद्धे सावकाश इति ॥ यक्ल्लोमनि भवो याक्ल्लोमः ' अन् १६३७' इति प्रकृतिभावस्तु न, गणेऽस्मिन्नलोपनिपातनादिति हरदत्तादयः॥ ( १८७६ ) **इञश्च** । **सौतंगमेरिति** । सुतंगमादिभ्यश्चातुरर्थिक इञ् ॥ **शास्त्रीयमिति** । ननु 'अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते ' इति चेत् । अत्राहुः—पूर्वसूत्रे गोत्रग्रहणेन पौत्रप्रभृति गोत्रं गृह्यते, 'कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्यः—' इति गोत्रप्रत्ययानुवादेन तत्राण्विधानात् । कण्वादयश्च गर्गाद्यन्तर्गताः ॥ 'गर्गादिभ्यो यञ् १५८३' इत्यत्र तु 'गोत्रे कुञ्जादिभ्यः—१५७५' इत्यतो गोत्र इत्यनुवर्तते, तत्र शास्त्रीयगोत्रमेव गृह्यते, अपत्याधिकारस्थत्वात् , तदेव हि 'इञश्च १८७६' इति सूत्रेऽनुवर्तते इति॥ (१८७७) **न द्व्यचः—। अपवाद इति** । प्रतिषेध इत्यर्थः ॥ **भरतानामग्रहणस्येति** । तेन ' इञः प्राचाम् १५५७' इति भरतेभ्यो युवप्रत्ययस्य लुङ् न भवति । औद्दालकिः पिता, औद्दालकायनः पुत्र इति ' आर्हादगोपुच्छ—' इति सूत्रे कैयटः ॥ ( १८८३ ) **भवतः—**। छादिरयं प्रत्ययो न तु शादिः । पदसंज्ञार्थं सित्करणादित्याशयेनाह—**जश्त्वमिति** ॥ ( १८८४ ) **काश्यादिभ्यः—। इकार उच्चारणार्थ इति** । उभयत्र ञकार एवानुबन्धः, तस्य व्यत्यासपाठस्तु स्त्रीप्रत्यये विशेषार्थ इति भावः ॥ ( १८८५ ) **आपदादीति** । गणसूत्रमिदम् ॥ ( १८८९ ) **वृद्धात्प्रा—। वृद्धादेवेति** । 'वृद्धाच्चेत्प्राचामेव' इति विपरीतनियमस्तु न भवति, अप्राग्देशवाचिनो वृद्धस्य उवर्णान्तस्याभावात् ॥ ( १८९० ) **धन्वयोपधा—**। धन्वेति न स्वरूपपर्याययोर्ग्रहणं, वृद्धत्वासंभवादित्याशयेनाह—**धन्वविशेषेति** ॥ **ऐरावतं धन्वेति** । यद्यपि 'समानौ मरुधन्वानौ ' इत्यमरेण पुंस्त्वमुक्तम् , तथापि 'आष्टकं नाम धन्व ' इति भाष्ये ह्रस्वपाठान्नपुंसकोऽपि धन्वशब्दोऽस्त्येवेति बोध्यम् ॥ ( १८९१ ) **प्रस्थपुर—। उत्तरेणेति** ।

---

१ **काण्वा इति** । काण्व्यशब्दाच्छैषिकेऽणि ' आपत्यस्य—' इति यकारलोपः । बहुवचनोदाहरणमपत्यान्ते तु यञो लुकि नादिवृद्धिः । शैषिकप्रत्ययान्ते त्वादिवृद्धिरव्याहतैवेति सूचयितुमिति भावः ॥ २ **पाणिनीयमिति** । पाणिनिशब्दे हि न गोत्र इञ् , किन्तु यूनीति पारिभाषिकगोत्रग्रहणेन नैव दोष इति भावः ॥ ३ **जश्त्वमिति** । 'सिति च' इति पदसंज्ञायाम् ' इत्यादिः ॥

सिद्धम् ॥ ( १८९२ ) रोपधेतोः प्राचाम् । ४ । २ । १२३ । रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ् स्यात् । पाटलिपुत्रकः । ईतः–काकन्दकः ॥ ( १८९३ ) जनपदतदवध्योश्च । ४ । २ । १२४ । जनपदवाचिन-स्तदवधिवाचिनश्च वृद्धाद्वुञ् स्यात् । आदर्शकः । त्रैगर्तकः ॥ ( १८९४ ) अवृद्धादपि बहुवचनविषयात् । ४ । २ । १२५ । अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयात्प्रातिपदिकाद्वुञ् स्यात् । अवृद्धादणो वृद्धाच्छस्याप-वादः । अवृद्धाज्जनपदात्–,आङ्गकः । अवृद्धाजनपदावधेः,—आजमीढकः । वृद्धाजनपदात्,–दार्वकः । वृद्धाजनपदा-वधेः,–कालञ्जरकः । विषयग्रहणं किम् । एकशेषेण बहुत्वे मा भूत् । वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, तासु भवो–वार्तनः ॥ (१८९५) कच्छाग्निवक्त्रवर्तोत्तरपदात् ।४।२।१२६। देशवाचिनो वृद्धादवृद्धाच्च वुञ् स्यात् । दारुकच्छकः । काण्डाग्नकः । सैन्धुवक्रकः । बाहुवर्तकः ॥ ( १८९६ ) धूमादिभ्यश्च ।४।२।१२७। देशवाचिभ्यो वुञ् । धौमकः । तैर्थकः ॥ (१८९७) नगरात्कुत्सनप्रावीण्ययोः । ४ । २ । १२८ । नगरशब्दाद्वुञ् स्यात्कुत्सने प्रावीण्ये च गम्ये । नागरकश्चौरः शिल्पी वा । कुत्सनेति किम् । नागरा ब्राह्मणाः ॥ ( १८९८ ) अरण्यान्मनुष्ये । ४ । २ । १२९ । वुञ् । अरण्याण्ण इत्यस्यापवादः ॥ (१८९९) पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् ॥ आरण्यकः पन्थाः, अध्यायो, न्यायो, विहारो, मनुष्यो, हस्ती वा ॥ ( १९०० ) वा गोमयेषु ॥ आरण्यकाः आरण्या वा गोमयाः ॥ (१९०१) विभाषा कुरुयुगन्धराभ्याम् । ४ । २ । १३० । वुञ् । कौरवकः, कौरवः । यौगन्धरकः, यौगन्धरः ॥ (१९०२) मद्रवृज्योः कन् । ४ । २ । १३१ । जनपदवुञोऽपवादः । मद्रेषु जातो–मद्रकः । वृजिकः ॥ ( १९०३ ) कोपधादण् । ४ । २ । १३२ । माहिषिकः ॥ (१९०४) कच्छा-दिभ्यश्च । ४ । २ । १३३ । देशवाचिभ्योऽण् । वुञादेरपवादः । काच्छः । सैन्धवः । ( १९०५) मनुष्यतत्स्थ-योर्वुञ् । ४ । २ । १३४ । कच्छाद्यणोऽपवादः । कच्छे जातादिः—काच्छको मनुष्यः । काच्छकं हसितम् । मनुष्येति किम् । काच्छो गौः ॥ ( १९०६ ) अपदातौ साल्वात् । ४ । २ । १३५ । साल्वशब्दस्य कच्छादित्वाद्वुञि सिद्धे नियमार्थमिदम्–अपदातावेवेति । साल्वको ब्राह्मणः । अपदातौ किम् । साल्वः पदातिर्व्रजति ॥ ( १९०७ ) गोयवाग्वोश्च । ४ । २ । १३६ । साल्वाद्वुञ् । कच्छाद्यणोऽपवादः । साल्वको गौः । साल्विका यवागूः । साल्व-मन्यत् ॥ ( १९०८ ) गर्तोत्तरपदाच्छः । ४ । २ । १३७ । देशे । अणोऽपवादः । वृकगर्तीयम् । उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम् ॥ ( १९०९ ) गहादिभ्यश्च । ४ । २ । १३८ । छः स्यात् । गहीयः ॥ ( १९१० ) मुखपार्श्वतसोर्लोपश्च ॥ मुखतीयम् । पार्श्वतीयम् । अव्ययानां भमात्रे टिलोपस्यानित्यतां ज्ञापयितुमिदम् ॥ (१९११) कुग्जनस्य परस्य च ॥ जनकीयम् । परकीयम् ॥ (१९१२) देवस्य च ॥ देवकीयम् ॥ ( १९१३) वेणुकादिभ्यश्छण् ॥ वैणुकीयम् । वैत्रकीयम् । औत्तरपदकीयम् । स्वकीयम् ॥ (१९१४) प्राचां कटादेः । ४ । २ । १३९ । प्राग्देशवाचिनः कटादेश्छः स्यात् । अणोऽपवादः । कटनगरीयम् । कटघोषीयम् । कटपल्वलीयम् ॥ ( १९१५ ) राज्ञः क च । ४ । २ ।१४०। वृद्धत्वाच्छे सिद्धे तत्सन्नियोगेन कादेशमात्रं विधीयते । राजकीयम् ॥

---

रोपधत्वादिति भावः ॥ ( १८९३ ) जनपद–। स चासौ अवधिश्चेति कर्मधारयाज्जनपदरूप एवावधिर्लभ्यते । न च जन-पदत्वादेव सिद्धे अवधिग्रहणं व्यर्थम्, ‘ वुञेव यथा स्यान्नान्यत् ’ इत्येतदर्थं तस्यावश्यकत्वात् । अत एव जनपदावधिवाचिन-स्त्रिगर्तशब्दात् ‘ गर्तोत्तरपदात्–१९०८ ’ इति च्छो न भवति, किन्तु ‘ अवृद्धादपि बहुवचनविषयात् १८९४ ’ इत्युत्तरसूत्रेण वुञेव भवतीत्याशयेनोदाहरति—**त्रैगर्तक इति** । ‘ जनपदतदवध्योः–१८९३’ इति सूत्रे जनपदावधिवाचिन उदाहरणं तु ‘ श्यामायनकः’ इत्यादि बोध्यम् ॥ ( १८९७ ) **नगरा–। नागरा ब्राह्मणा इति** । कत्र्यादिषु माहिष्मतीति संज्ञाशब्द-साहचर्यात्संज्ञाभूतनगरशब्दस्यैव ढकञा नागरेयक इति भाव्यमिति भावः ॥ (१९०१) **विभाषा कुरु—**। कुरुशब्दः कच्छा-दिषु पठ्यते, तत्सामर्थ्यात्पक्षेऽण् सिद्ध इति परिशेषाद्विभाषाग्रहणं युगन्धरार्थमेव । ‘ अवृद्धादपि–१८९४’ इति नित्यप्राप्तौ वुञनेन विकल्प्यते । मनुष्यतत्स्थयोस्तु परत्वान्नित्य एव वुञ् । कौरवको मनुष्यः । कौरवकमस्य हसितम् । एतदर्थ-मेवास्य कच्छादौ पाठः । अन्यथा अनयैव विभाषया वुञणोः सिद्धौ किं तेनेति भावः ॥ ( १९०४ ) **कच्छा–। सैन्धव इति** । ‘ओर्देशे–१८८८’ इति ठञ् प्राप्तः ॥ ( १९०६ ) **अपदातौ–। वुञि सिद्धे इति** । ‘मनुष्यतत्स्थयोः–१९०५’ इत्यनेन ॥ ( १९०९ ) **गहादिभ्यश्च** । गहादिभ्यो देशवाचिभ्यश्छः स्यात् । पूर्वपक्षादिशब्देभ्यस्तु देशवाचित्वा-भावेऽपि पाठसामर्थ्याच्छः ॥ ( १९१० ) **मुखपार्श्वतसोरिति** । गणसूत्रमिदम् । सप्तम्यन्ताभ्यामाभ्यामाद्यादित्वात्तसिः ॥ **मुखतीयमिति** । मुखे जातमित्याद्यर्थे तसन्ताच्छः । ‘अलोऽन्त्यस्य ६६’ इति तसः सकारस्य लोपे ‘यस्येति च ४३१’ इत्य-कारलोपः ॥ ( १९११ ) **कुग् जनस्येति** । इदमपि गणसूत्रम् ॥ ( १९१३ ) **स्वकीयमिति** । स्वार्थिककन्नन्तात्स्व-शब्दाद्गहादेराकृतिगणत्वाच्छः देशवाचित्वाभावेऽपि पूर्वपक्षादिवद्बोध्यः । अत एव ‘ लुब्योगाप्रख्यानात् ’ इति सूत्रे ‘न हि स्वकीयस्यैव प्रत्याख्यानम् ’ इति न्यासकारोक्तिः संगच्छते । केवलात्स्वशब्दादणेव, सौवम् । एतच्च ‘द्वारादीनां च ’ इत्यत्र आकरे उदाहृतम् । स्वीयमित्यत्र तु ‘प्राक्क्रीताच्छः २२५५’ । अन्तरशब्दात्तु गहादित्वाच्छे तदन्तेन नञ्शब्दस्य समासे स्वार्थे कनि च

( १९१६ ) सू वृद्धादकेकान्तखोपधात् । ४ । २ । १४१ । अक इक एतदन्तात्खोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात् । ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनस्तत्र जातो-ब्राह्मणकीयः । शाल्मलिकीयः । आयोमुखीयः ॥ ( १९१७ ) सू कन्थापलदनगरग्रामह्रदोत्तरपदात् । ४ । २ । १४२ । कन्थादिपञ्चकोत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात् । ठञ्ञिठादेरपवादः । दाक्षिकन्थीयम् । दाक्षिपलदीयम् । दाक्षिनगरीयम् । दाक्षिग्रामीयम् । दाक्षिह्रदीयम् ॥ ( १९१८ ) सू पर्वताच्च । ४ । २ । १४३ । पर्वतीयः ॥ ( १९१९ ) सू विभाषाऽमनुष्ये । ४ । २ । १४४ । मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात्पक्षेऽण् । पर्वतीयानि, पार्वतानि वा फलानि । अमनुष्ये किम् । पर्वतीयो मनुष्यः ॥ (१९२०) सू कृकणपर्णाद्भारद्वाजे । ४ । २ । १४५ । भारद्वाजदेशवाचिभ्यामाभ्यां छः । कृकणीयम् । पर्णीयम् । भारद्वाजे किम् । कार्कणम् । पार्णम् ॥ ( १९२१ ) सू युष्मदस्मदोरन्यतरस्यां खञ्च । ४ । ३ । १ । चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वा अयं-युष्मदीयः । अस्मदीयः । ( १९२२ ) सू तस्मिन्नणि च युष्माकास्माकौ । ४ । ३ । २ । युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च । यौष्माकीणः, आस्माकीनः । यौष्माकः, आस्माकः ॥ ( १९२३ ) सू तवकममकावेकवचने । ४ । ३ । ३ । एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञ्यणि च । तावकीनः, तावकः । मामकीनः, मामकः । छे तु-॥ (१९२४) सू प्रत्ययोत्तरपदयोश्च । ७ । २ । ९८ । मैपर्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च । त्वदीयः । मदीयः ॥ ( १९२५ ) सू अर्धाद्यत् । ४ । ३ । ४ । अर्ध्यः ॥ ( १९२६ ) सू परावराधमोत्तमपूर्वाच्च । ४ । ३ । ५ । परार्ध्यम् । अवरार्ध्यम् ॥ अधमार्ध्यम् । उत्तमार्ध्यम् ॥ ( १९२७ ) सू दिक्पूर्वपदाट्ठञ्च । ४ । ३ । ६ । चाद्यत् । पौर्वार्धिकम् । पूर्वार्ध्यम् ॥ ( १९२८ ) सू ग्रामजनपदैकदेशादञ्ठञौ । ४ । ३ । ७ । ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः । इमेऽस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः । पौर्वार्धिकाः । ग्रामस्य पूर्वस्मिन्नर्धे भवा इति तद्धितार्थे समासः । ठञ्ग्रहणं स्पष्टार्थम् । अञ् चेत्युक्ते यतोऽप्यनुकर्षः संभाव्येत ॥ ( १९२९ ) सू मध्यान्मः । ४ । ३ । ८ । मध्यमः ॥ ( १९३० ) सू अ सांप्रतिके । ४ । ३ । ९ । मध्यशब्दादकारप्रत्ययः स्यात्सांप्रतिकेऽर्थे । उत्कर्षापकर्षहीनो मध्यो वैयाकरणः । मध्यं दारु ॥ नातिह्रस्वं नातिदीर्घमित्यर्थः ॥ ( १९३१ ) सू

---

'नान्तरीयकम्' इति भवति । अविनाभूतमित्यर्थः ॥ ( १९१६ ) **वृद्धादके—।** **ब्राह्मणकीय इति ।** 'कोपधादण् १९०३' इत्यण् प्राप्तः ॥ **आयोमुखीय इति ।** वाहीकग्रामलक्षणौ ठञ्ञिठाविह प्राप्तौ ॥ ( १९१७ ) **कन्था—।** **ठञ्ञिठादेरिति ।** आदिशब्देन 'रोपधेतोः-१८९२' इत्यादिना प्राप्तस्य वुञः ॥ ( १९१८ ) **पर्वतीय इति ।** 'तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूत्' इत्यत्र तु 'पर्वतीयस्य राज्ञ इमे' इत्यर्थे छान्तादण् ॥ ( १९२० ) **कृकण—।** भारद्वाजशब्दोऽत्र देशवचनः, स च न प्रत्ययार्थः, किन्तु प्रकृतिविशेषणमित्याह—**भारद्वाजदेशेत्यादिना ।** ( १९२१ ) **युष्मदस्मदोः—।** 'त्यदादीनि च १८७९' इति वृद्धत्वान्नित्ये छे प्राप्ते खञणोरपि विधानार्थमिदम् ॥ **पक्षे अणिति ।** अन्यतरस्यांग्रहणादिति भावः ॥ तथा चैते त्रयः प्रत्यया इति वैषम्याद्यथासंख्यं न भवन्तीति केचित् ॥ मनोरमायां तु यथासंख्य निवारणाय योगविभागः कृतः । तथाहि-'युष्मदस्मदोरन्यतरस्याम्' । आभ्यां छो वा स्यात् । 'त्यदादीनि च १८७९' इति वृद्धत्वान्नित्ये छे प्राप्ते विकल्पोऽयम् । ततः 'खञ्च' एवमुत्तरसूत्रेऽपि योगविभागो बोध्यः । तेन आदेशयोः खञण्भ्यां यथासंख्यं नेत्यादि ॥ **युवयोरित्यादि ।** एकवचने तवकममकादेशविधानादेकवचनान्तेन विग्रहोऽत्र न कृतः ॥ (१९२२) **तस्मिन्नणि च—।** तस्मिन्निति साक्षाद्विहितः खञ् निर्दिश्यते । न तु चानुकृष्टः ॥ निमित्तयोरादेशौ प्रति यथासंख्यं तु न भवति 'खञणोः-' इति वक्तव्ये पृथग्विभक्तिनिर्देशसामर्थ्यात् । स्थान्यादेशयोस्तु इष्यत एव तत् ॥ ( १९२३ ) **तवक—।** इह पूर्ववदेव निमित्तयोः खञणोरादेशौ प्रति यथासंख्यं न भवति, किन्तु स्थान्यादेशयोरेवेत्याशयेनोदाहरति—**तावकीनः । मामकीन इति ॥** ( १९२६ ) **परावरा—।** 'परावराधमोत्तमेभ्यः' इत्येव वक्तव्ये पूर्वग्रहणं पूर्वविप्रतिषेधसूचनार्थम् । तेन दिक्शब्दयोः परावरयोरर्धशब्देन समासे उत्तरसूत्रेण प्राप्तावपि ठञ्यतौ बाधित्वा यदेव भवति ॥ ( १९२७ ) **दिक्—।** पूर्वपदग्रहणं स्वरूपविधिनिरासार्थमित्याहुः ॥ ( १९३० ) **अ सांप्रतिके ।** संप्रतीत्यव्ययं न्याय्ये वर्तते 'अनाप्तश्चतूरात्रोऽतिरिक्तः, षड्रात्रोऽथ वा एष संप्रति यज्ञो यत्पञ्चरात्रः' इत्यत्र तथा दर्शनात् । न न्यूनो नातिरिक्तः सम इत्यर्थः । इदानीमित्यर्थे तु प्रसिद्धमेव । 'एतर्हि संप्रतीदानीम्' इत्यमरात् । ततः प्रज्ञादित्वात्स्वार्थेऽण् । विनयादित्वात्स्वार्थे ठगपि । तेन सांप्रतं सांप्रतिकमिति पर्यायौ ॥ उत्कर्ष-

---

१ **अमनुष्य इति ।** अयं च प्रसज्यप्रतिषेधः । तेन 'पर्वताच्छो वा' पक्षेऽण्, न तु मनुष्ये प्रकृतिप्रत्ययसमुदायेन वाच्ये इत्यर्थफलितमाह-मनुष्यभिन्न इति ॥ पर्युदासे तु 'सभा राजा-' इत्यत्रेव रक्षःपिशाचादिपरता स्यात् ॥ एवं च मनुष्यस्याभिधेयत्वे छ एव, तदतिरिक्तस्य वाच्यत्वे त्वणपीति विवेकः ॥ २ **'तस्मिन्नणि चाकञ्'** इत्येवाकञादेशविधानेन यौष्माकीणास्माकीनयोः सिद्धौ किं युष्माकास्माकादेशविधानेन इति चेत् । न, 'उत्सर्गसमानदेशा अपवादाः' इत्येतज्ज्ञापयितुमादेशविधानात् ॥ अमूबहुजकच्सु व्यभिचारोऽस्य ॥ ३ **मपर्यन्तेति ।** अन्तरङ्गत्वात्त्वाद्यादेशेषु जातेषु युष्मदस्मदोर्मपर्यन्तालाभाद्व्यर्थाऽनुवृत्तिः 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति परिभाषां ज्ञापयतीत्यन्यत्र विस्तरः ॥

**द्वीपादनुसमुद्रं यञ्** । ४ । ३ । १० । समुद्रस्य समीपे यो द्वीपस्तद्विषयाद् द्वीपशब्दाद्यञ् स्यात् । द्वैप्यम् । द्वैप्या ॥ ( १९३२ ) (सू) **कालाट्ठञ्** । ४ । ३ । ११ । कालवाचिभ्यष्ठञ् स्यात् । मासिकम् । सांवत्सरिकम् । सायंप्रातिकः । पौनःपुनिकः । कथं तर्हि शार्वरस्य तमसो निषिद्धये- इति कालिदासः, अनुदितौषसरागेति भारविः, समानकालीनं प्राक्कालीनमित्यादि च । अपभ्रंशा एवैते इति प्रामाणिकाः । 'तत्र जात इति यावत्कालाधिकारः ॥ ( १९३३ ) (सू) **श्राद्धे शरदः** । ४ । ३ । १२ । ठञ् स्यात् । ऋत्वणोऽपवादः । शारदिकं श्राद्धम् ॥ ( १९३४ ) (सू) **विभाषा रोगातपयोः** । ४ । ३ । १३ । शारदिकः शारदो वा रोग आतपो वा । एतयोः किम् । शारदं दधि ॥ ( १९३५ ) (सू) **निशाप्रदोषाभ्यां च** । ४ । ३ । १४ । वा ठञ् स्यात् । नैशिकम् । नैशम् । प्रादोषिकम् । प्रादोषम् ॥ ( १९३६ ) (सू) **श्वसस्तुट्** । ४ । ३ । १५ । श्वस्शब्दाट्ठञ् वा स्यात्तस्य तुडागमश्च ॥ ( १९३७ ) (सू) **द्वारादीनां च** । ७ । ३ । ४ । द्वार, स्वर, स्वग्राम, स्वाध्याय, व्यल्कश, स्वस्ति, स्वर, स्फ्यकृत, स्वादुमृदु, श्वस्, श्वन्, स्व एषां न वृद्धिरैजागमश्च । शौवस्तिकम् ॥ ( १९३८ ) (सू) **संधिवेलाद्यृतुनक्षत्रेभ्योऽण्** । ४ । ३ । १६ । संधिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् । सन्धिवेलायां भवं सान्धिवेलम् । ग्रैष्मम् । तैषम् । संधिवेला, संध्या, अमावास्या, त्रयोदशी, चतुर्दशी, पौर्णमासी, प्रतिपत् ॥ ( १९३९ ) (ग) [1]**संवत्सरात्फलपर्वणोः** ॥ सांवत्सरं फलं पर्व वा । सांवत्सरिकमन्यत् ॥ ( १९४० ) (सू) **प्रावृष एण्यः** । ४ । ३ । १७ । प्रावृषेण्यः ॥ ( १९४१ ) (सू) **वर्षाभ्यष्ठक्**

---

त्यादि । न्याय्ये विद्यमान एव संप्रतिशब्दोऽत्र गृह्यते इति भावः ॥ ( १९३१ ) **द्वीपादनु--** । समुद्रं समया अनुसमुद्रम् । 'अनुर्यत्समया ९७२' इत्यव्ययीभावः ॥ सप्तम्यन्तं चेदम् । विद्यमानक्रियाद्वारा द्वीपविशेषणमित्याशयेनाह--**समुद्रस्य समीपे यो द्वीप इति** । कच्छाद्यणो मनुष्यवुञश्चापवादोऽयम् ॥ अनुसमुद्रं किं, द्वैपमन्यत् । कच्छाद्यण् द्वैपको मनुष्यः । 'मनुष्यतत्स्थयोः-१९०५' इति वुञ् ॥ **द्वैप्येति** । 'यञश्च ६५६' इति ङीन्न भवति । 'अपत्याधिकारस्थादेव यञो ङीप् ६५८' इति प्रागेवोक्तत्वात् ॥ ( १९३२ ) **कालाट्ठञ्** । स्वरूपस्यैव न ग्रहणम्, 'संधिवेलादि-१९३८' सूत्रेण संधिवेलात्रयोदशीचतुर्दशीप्रभृतिभ्योऽवृद्धेभ्योऽपि ठञ्बाधनार्थमण्विधानात् । किन्तु सर्वेषामपि कालवाचिनां ग्रहणमित्याशयेनाह--**कालवाचिभ्य इति** । यत्तु स्वरूपस्य पर्यायाणां च न ग्रहणमिति पदमञ्जर्यादिषु स्थितम् । तदसत्, 'कालिकः संबन्धः कालिकी व्याप्तिः, इत्यादिप्रयोगानापत्तेः । न च विशेषाणामेव ग्रहणे ( सन्धिवेलादिसूत्रेण ) सन्धिवेलादिभ्योऽण्विधानं ज्ञापकमिति वाच्यम्, ( तस्य ) स्वरूपमात्रग्रहणनिरासकत्वेनापि साफल्यात् ॥ गौणमुख्यन्यायस्त्विह नाश्रीयते । तेन कदम्बपुष्पसाहचर्यात्कदम्बपुष्पः कालः, व्रीहिपलालसाहचर्याद्व्रीहिपलालः कालः, तत्र भवं कादम्बपुष्पिकं, व्रैहिपलालिकमित्याकरः । अत्र हि प्रमाणं संधिवेलादिसूत्रे अनेन कालग्रहणेन नक्षत्राणां विशेषणमेवेत्याहुः ॥ न च पुष्यादिशब्दानां कालो मुख्य एवार्थः, 'लुबविशेषे १७०४' इति व्युत्पादनात्, तथा च कालविशेषणमुक्तार्थे न प्रमाणमिति वाच्यम्, पुष्यादिसमीपस्थचन्द्रमसा युक्ते काले पुष्यादिशब्दानां गौणत्वात् । 'लुबविशेषे १७०४' इति शास्त्रमपि गौणवृत्तित्वान्वाख्यापकमेवेति दिक् ॥ एवं स्थिते 'कालवाचिभ्यः--' इति मूलस्य 'कालप्रतिपादकेभ्यः' इति फलितोऽर्थः ॥ ( १९३३ ) **श्राद्धे शरदः** । **श्राद्धमिति** । भक्त्या क्रियमाणं पित्र्यं कर्मेत्यर्थः । 'प्रज्ञाश्रद्धार्चाभ्यो णः २५७८' इति मत्वर्थीयेन व्युत्पादितः श्रद्धावान्पुरुषस्तु न गृह्यते, अनभिधनात् ॥ ( १९३६ ) **श्वसस्तुट् च** । विभाषेत्यनुवर्तनादाह--**ठञ् वा स्यादिति** । 'ऐषमोह्यः-१८६९' इत्यादिना त्यबपि विकल्पेन विहितः, आभ्यां मुक्ते ट्युट्युलावपि स्त एव ॥ ( १९३७ ) **शौवस्तिकमिति** । नन्वन्तरङ्गत्वात् तुटि ठस्य प्रत्ययादित्वाभावात्कर्मठ इत्यत्र ठच इवेकादेशो न स्यात् । न च परत्वादिकादेशे तस्य तुडिति वाच्यम्, आदेशात्प्रागेवान्तरङ्गत्वात्तुटः प्रवृत्तेः । इकादेशस्य त्वाङ्गत्वेन बहिरङ्गत्वात् । सूत्रभङ्गेन तुकि हि क्रियमाणे तु 'इसुसुक्तान्तात्-१७२४' इति कादेशप्रसङ्ग इति चेत् । सत्यम्, वुञ्छणादिषु ठचश्चित्त्वेन 'एकादेशोऽन्तरङ्गेभ्यो बलवान्' इति ज्ञापितत्वात् । अन्यथा प्रत्ययाद्युदात्तत्वे कृते एकादेशः स्यादिति किं ठचश्चित्त्वेन । कृते त्विकादेशे प्रत्ययस्वरबाधनाय चित्त्वं प्रयुज्यत इति मनोरमायां स्थितम् ॥ ( १९३८ ) **संधिवेला--** । अण्ग्रहणं तु छबाधनार्थम् । अन्यथा 'सान्धिवेलादिभ्यो यथाविहितं प्रत्ययाः स्युः' इत्युक्ते पौर्णमासीशब्दात् 'वृद्धाच्छः १८८०' स्यात् । वचनं तु ठञो बाधनाय स्यादिति भावः ॥ **तैषमिति** । तिष्याद्ध्वादावण् । जातार्थे तु 'श्रविष्ठाफल्गुनी-१९६४' इति लुक् स्यात् । 'सूर्यतिष्य-६९५' इत्यत्र 'तिष्यपुष्ययोर्नक्षत्राणि ६९८' इति वचनाद्यलोपः ॥ ( १९४० ) **प्रावृष एण्यः** ।

---

१ **संवत्सरादिति** । गणसूत्रमेतत् । एवमेव 'शश्वतो वा' इति गणसूत्रमप्युच्छिन्नं शाश्वतिकशाश्वतयोः साधकम् इति 'नस्तद्धिते' इति सूत्रभाष्यात्प्रतीयते । तत्र शाश्वतिके 'येषां च विरोधः शाश्वतिकः' इति निपातनाट्टिलोपकादेशयोरभावः । 'शाश्वते प्रतिषेधः' इति वचनं तु कर्तव्यमेवेति भाष्ये स्पष्टम् ॥ २ **कालप्रतिपादकेभ्य इति** । यथाकथंचिदित्यादिः । अत एव 'यो यः काले वर्तते स स कालशब्दः' इति 'संख्यायाः संज्ञासंघ-' इति सूत्रे भाष्योक्तं संगच्छते । रमणीयादिशब्दानां कालवाचकत्वेनातिप्रसङ्गस्त्वनभिधानाद्वारणीयः । अत एव कालसमुदायस्य कालवाचित्वं स्वाङ्गसमुदायस्य स्वाङ्गवाचित्वमिव मुख्यं यद्यपि न, तथापि यथाकथंचिदस्त्येवेति सायंप्रातिकादिकादिसिद्धिः ॥ ३ **भाष्ये तु** 'चेनादेशसन्नियोगः कर्तव्यः' इत्युक्तम् ॥

।४।३।१८। वर्षासु साधु-वार्षिकं वासः । कालात्साधुपुष्प्यत्पच्यमानेष्विति साध्वर्थे ॥(१९४२) (सू॰) **सर्वत्राण् च तलोपश्च** ।४।३।२२। हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः । चकारात्पक्षे ऋत्वण् । हैमनम् , हैमन्तम् ॥(१९४३) (सू॰) **सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** ।४।३।२३। सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । तुटः प्रागनादेशः, अनद्यतन इत्यादिनिर्देशात् । सायन्तनम् । चिरन्तनम् । प्राह्णप्रगयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् ॥ (१९४४) (वा॰) **चिरपरुत्परारिभ्यस्त्नो वक्तव्यः** ॥ चिरत्नम् । परुत्नम् । परारित्नम् ॥ (१९४५) (वा॰) **अग्रादिपश्चाड्डिमच्** ॥ अग्रिमम् । आदिमम् । पश्चिमम् ॥(१९४६) (वा॰) **अन्ताच्च** ॥ अन्तिमम् ॥ ( १९४७ ) (सू॰) **विभाषा पूर्वाह्णापराह्णाभ्याम्** । ४ । ३ । २४ । आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च । पक्षे ठञ् । पूर्वाह्णेतनम् । अपराह्णेतनम् । घकालतनेष्विति[१२९७]लुक् । पूर्वाह्णः सोढोऽस्येति विग्रहे तु-पूर्वाह्णतनम् । अपराह्णतनम् । पौर्वाह्णिकम् । आपराह्णिकम् ॥ (१९४८) (सू॰) **तत्र जातः** ।४।३।२५। सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः-स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीणः-इत्यादि ॥ ( १९४९ ) (सू॰) **प्रावृषष्ठप्** । ४ । ३ । २६ । एण्यस्यापवादः । प्रावृषि जातः-प्रावृषिकः ॥ ( १९५० ) (सू॰) **संज्ञायां शरदो वुञ्** । ४ । ३ । २७ । ऋत्वणोऽपवादः । शारदका दर्भविशेषा मुद्गविशेषाश्च ॥ (१९५१) (सू॰) **उत्तरपदस्य** ।७। ३ । १० ।

---

ऋत्वणोऽपवादः । प्रवर्षतीति प्रावृट्, ' नहिवृति-१४८९' इति दीर्घः । तत्र भवः । जाते तु ठञं वक्ष्यति । ' रषाभ्याम्-३३६' इति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणमित्याहुः ॥ किञ्च, प्रावृषेण्यमाचक्षाणः प्रावृषेण् इत्यत्र णकारश्रवणार्थमपि तत् । ण्यन्तात्क्विपि टिलोपणिलोपयलोपाः ॥ ( १९४२ ) **सर्वत्राण् च**—। **हेमन्तादिति** । एतच्च ' हेमन्ताच्च ५२९०' इत्यतोऽनुवृत्तमिति भावः ॥ **हैमनमिति** । अकारविशिष्टस्य तशब्दस्य लोपे ' अन् १६३७' इति प्रकृतिभावात् ' नस्तद्धिते ९८६ ' इति टिलोपो न । तकारस्यैव लोप इति पक्षे 'यस्येति च ४३१' इत्यल्लोपस्याभीयत्वेनासिद्धत्वात्स्थानिवद्भावाद्वा टिलोपो नेति बोध्यम् ॥ **हैमन्तमिति** । ऋत्वणि तकारलोपो न भवति, तस्य ' सर्वत्राण्-१९४२' इति प्रातिपदोक्तेन अणा संनियोगशिष्टत्वात् । एतच्च प्रत्याख्यातं भाष्ये । तथाहि-हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति ' हेमन्नागनीगन्ति कर्णौ' इत्यादिप्रयोगात् । ततश्च हेमन्हेमन्तशब्दाभ्यामृत्वणि हैमनं, हैमन्तमिति रूपद्वयं सिद्धम् । छन्दसि तु ' हेमन्ताच्च ५२९०' इति ठञा हैमन्तिकमिति तृतीयमपि रूपं सिध्यति । न च विशेषविहितेन ठञा अणो बाधः शङ्क्यः, छन्दसि सर्वविधीनां वैकल्पिकत्वात् । वृत्तिकृता तु-' हेमन्ताच्च ५२९०' इति सूत्रे सर्वत्रग्रहणमपकृष्य लोकेऽपि हैमन्तिकमिति स्वीकृतम् ॥ ( १९४३ ) **सायंचिरम्**—। नन्वन्तरङ्गत्वात्प्रथमं तुटि ' मृत्युः ' इत्यादाविव त्युशब्दस्य प्रत्ययतया अङ्गसंज्ञानिमित्तं यो युस्तस्य विधीयमानोऽनादेशो न स्यात् । न चैवं तुगेव क्रियतामिति वाच्यम् , तस्य पूर्वान्तत्वेन विसर्गाभावात्प्रातस्तनमित्यत्र सत्त्वाभावप्रसङ्गात् , अत आह—**तुटः प्रागिति** ॥ **इत्यादीति** । आदिशब्देन 'घकालतनेषु-१२९७' इति ग्राह्यम् ॥ **सायंतनमिति** । स्यतेर्घञि सायशब्दोऽकारान्तो दिवसावसाने रूढः, तस्य प्रत्ययसंनियोगेन मान्तत्वं निपात्यत इति वार्तिककृन्मतम् ॥ भाष्यकृता तु ' मान्ताव्ययम् ' इत्याश्रित्य सायंग्रहणं प्रत्याख्यातम् । न चैवं सायंशब्दात्कालाट्ठञि[१६३२] अनिष्टरूपप्रसङ्गः, तस्य कालवाचित्वाभावादनभिधानाद्वेत्याहुः ॥ **चिरंतनमिति** । चिरशब्दस्यापि प्रत्ययसंनियोगेन मान्तता निपात्यत इति भावः ॥ अत्र वदन्ति-स्वरादौ पाठादव्ययत्वादेव सिद्धे सूत्रे चिरमित्येतद्व्यर्थम् । न चादन्ताच्चिरशब्दाट्ठञ् स्यादिति वाच्यम् , त्नेन बाधादिति ॥ **एदन्तत्वमिति** । प्राह्णः सोढोऽस्य प्राह्णेतन इत्याद्यर्थम् । तत्र हि सप्तमी नास्ति । जातार्थे ' घकालतनेषु-१२९७' इत्यलुकाऽपि सिद्धेः ॥ ( १९४४ ) **चिरत्नमिति** । सूत्रे चिरशब्दस्योपादानात् ट्युट्युलावपि स्तः । न चैवं सूत्रे चिरशब्दस्य प्रत्याख्यानं न संभवतीति वाच्यम् , मान्ताव्ययादेव ट्युट्युल्विधौ तत्संभवात् । **परुत्** पूर्वस्मिन् वत्सरे । **परारि** पूर्वतरे ॥ ( १९४५ ) **अग्रादि**—। डिमचो डित्त्वं स्पष्टार्थम् ॥ ( १९४८ ) **तत्र जातः** । ननु ' शेषे १८४९' इत्यस्य लक्षणत्वोक्तेः ' चाक्षुषं रूपं श्रावणः शब्दः' इत्यादाविव जातादिष्वर्थेष्वणादयः सिद्धाः, अधिकाराच्च घादयोऽपि । न च 'जातादिष्वेवाणादयः ' इति नियमार्थं जाताद्यर्थनिर्देश आवश्यकः । अन्यथा 'तत्रास्ते, तत्र शेते' इत्याद्यर्थेऽपि प्रत्ययः स्यादिति वाच्यम् , चाक्षुषमित्याद्यसिद्ध्यापत्तेः । ' स्रुघ्ने आस्ते, स्रुघ्ने शेते ' इत्यादौ त्वनभिधानादेव तद्धितो न भविष्यति, अङ्गुल्या खनति, वृक्षमूलादागत इत्यादौ यथा । समर्थविभक्तयस्त्वाक्षेपादेव लक्ष्यन्ते । चाक्षुषमित्यत्र तृतीया यथा, तस्मात् ' तत्र जातः १९४८' इत्याद्यर्थनिर्देशो व्यर्थ इति चेत् । मैवम् , ' प्रावृषष्ठप् १९४९' इत्याद्यपवादार्थं तदावश्यकत्वात् । ये तु-निरपवादा अर्थनिर्देशाः ' कृतलब्धक्रीतकुशलाः १९७४' इत्यादयः, ते तु व्यर्था एवेति दिक् ॥ ( १९५० ) **संज्ञायां शरदः**—। समुदायेन चेत्संज्ञा गम्यत इत्यर्थः । संज्ञायां किम् , शारदं सस्यम् ।

---

१ हेमन्निति । सप्तम्येकवचनस्य ' सुपां सुलुक्-' इति लुगिति भावः ॥

अधिकारोऽयम्[1] । हैमनस्तं इत्यस्मात्प्राक् ॥ ( १९५२ ) सू अवयवादृतोः । ७ । ३ । ११ । अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे । पूर्ववार्षिकः । अपरहैमनः । अवयवात्किम् । पूर्वासु वर्षासु भवः-पौर्ववर्षिकः ॥ ( १९५३ ) वा सुसर्वार्धाज्जनपदस्य[2] इति तदन्तविधिः पूर्वत्र । इह तु न, अवयवत्वाभावात् ॥ ( १९५४ ) सू सुसर्वार्धाज्जनपदस्य । ७ । ३ । १२ । उत्तरपदस्य वृद्धिः । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः । जनपदतदवध्योरिति वुञ् ॥ ( १९५५ ) वा सुसर्वार्धदिक्शब्देभ्यो जनपदस्य । इति तदन्तविधिः ॥ ( १९५६ ) सू दिशोऽमद्राणाम् । ७ । ३ । १३ । दिग्वाचकाज्जनपदवाचिनो वृद्धिः । पूर्वपाञ्चालकः । दिशः किम् । पूर्वपञ्चालानामयं पौर्वपञ्चालः । अमद्राणां किम् । पौर्वमद्रः । योगविभाग उत्तरार्थः[3] ॥ ( १९५७ ) सू प्राचां ग्रामनगराणाम् ।७ । ३ । १४ । दिशः परेषां नगरवाचिनां ग्रामवाचिनांचाङ्गानामवयवस्य च वृद्धिः। पूर्वैषुकामशम्यां भवः-पूर्वैषुकामशमः । नगरे-पूर्वपाटलिपुत्रकः॥(१९५८) सू पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करादुवुन् । ४। ३। २८ । पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः ॥ (१९५९) सू पथः पन्थ च।४।३।२९। पथि जातः-पन्थकः॥(१९६०) सू अमावास्याया वा।४।३।३०।अमावास्यकः। आमावास्यः॥(१९६१) सू अ च।४।३।३१।अमावास्यः ॥(१९६२ ) सू सिन्ध्वपकराभ्यां कन् ।४।३।३२। सिन्धुकः । कच्छाद्यणि मनुष्यवुञि च प्राप्ते।अपकरकः।औत्सर्गिकेऽणि प्राप्ते ॥(१९६३) सू अणञौ च।४।३।३३।क्रमात् स्तः।सैन्धवः। आपकरः ॥ ( १९६४ ) सू श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् । ४ । ३ । ३४ । एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात् ॥ ( १९६५ ) सू लुक् तद्धितलुकि ।

---

'संज्ञायाम्' इत्येतत् 'कृतलब्ध-१९७४' इत्येतत्पर्यन्तं केचिदनुवर्तयन्तीति वृत्तिकृत् ॥ ( १९५२ ) **अवयवादृतोः । पूर्ववार्षिक इत्यादि** । वर्षाणां पूर्वः, हेमन्तस्यापर इति विग्रहे 'पूर्वापराधरोत्तरम्-१०३०' इत्येकदेशिसमासः ॥ **पूर्वास्विति** । तद्धितार्थे समासः ॥ ( १९५३ ) **ऋतोर्वृद्धिमद्विधाविति** । ऋतुवाचिनः शब्दाद्वृद्धिनिमित्तकप्रत्ययविधाने तदन्तविधिर्वाच्यः, स चेदृतुवाची शब्दोऽवयवेभ्यः पर इत्यर्थः ॥ **पूर्वत्रेति** । पूर्ववार्षिकः, अपरहैमन इत्यत्र । तथा च 'वर्षाभ्यष्ठक् १९४१' 'सर्वत्राण् च तलोपश्च १९४२' इत्याभ्यां क्रमेण ठगणौ भवतः । वृद्धिमद्विधौ किं, पूर्वप्रावृषम् । 'प्रावृष एण्यः १९४०' इत्यत्र तदन्तविध्यभावादिह कृत्वणेव ॥ **इह त्विति** । पौर्ववार्षिक इत्यत्र । तथा चेह 'कालाट्ठञ् १९३२' इति ठञेवेति भावः ॥ **अवयवत्वाभावादिति** । अन्यथा पूर्वासु वर्षास्विति सामानाधिकरण्यं न संगच्छेतेति भावः ॥ ( १९५४ ) **सुसर्वा-।जनपदतदवध्योरितीति** । तस्मिन्ननुवर्तमाने 'अवृद्धादपि बहुवचनविषयात् १८९४' इत्यनेनेत्यर्थः॥ ( १९५६ ) **दिशो-। पौर्वमद्र इति** । 'मद्रेभ्योऽञ् १८७२' इत्यञ् ॥ ( १९५८ ) **पूर्वाह्णाप-। पूर्वाह्णक इति** । 'विभाषा पूर्वाह्णापराह्णाभ्याम् १९४७' इत्यस्यापवादः ॥ **आर्द्रकः। मूलक इति** । नक्षत्राणोऽपवादः॥ **प्रदोषक इति** । 'निशाप्रदोषाभ्यां च १९३५' इत्यस्यापवादः ॥ **अवस्करक इति** । औत्सर्गिकस्याणोऽपवादः । ये तु-'संज्ञायाम्' इत्येतत् 'कृतलब्ध-१९७४' इत्येतत्पर्यन्तमनुवर्तयन्ति, तन्मते असंज्ञायां यथायथमणादयो घादयश्च बोध्याः ॥ ( १९६० ) **अमावास्याया वा** । सन्धिवेलाद्यणोऽपवादः ॥ 'अमावस्यदन्यतरस्याम् ३८२६' इति सूत्रेणामापूर्वाद्वसेर्ण्यति वृद्धौ पक्षे ह्रस्वत्वं निपात्यत इति ह्रस्वमध्यस्याप्यमावस्याशब्दस्येह ग्रहणम्, प्रकृतिग्रहणे विकृतेरपि ग्रहणात् । अमावस्यकः । अमावस्यः । ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधं पठन्ति, तेषां तु दीर्घोपधस्य न स्यात् विकृतिग्रहणेन प्रकृतेरग्रहणादिति हरदत्तादयः ॥ वस्तुतस्तु-वृद्धिप्रकृतिभूतस्यानुकरणमिदमित्याश्रित्य ह्रस्वोपधपाठोऽपि समर्थयितुं शक्यत इत्यन्ये ॥ ( १९६१ ) **अ च** । अमावास्याशब्दादकारप्रत्ययः स्यात् । अयमपि पूर्ववदुभाभ्यां बोध्यः ॥ **अमावास्य इति** । ह्रस्वमध्यात्तु अमावस्यः ॥ ( १९६३ ) **अणञौ च** । यथासंख्यार्थो योगविभागः ॥ ( १९६४ ) **श्रविष्ठा-**। इह सूत्रे स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तादयः ॥ माधवस्तु-'दीर्घान्तः' इति 'अत सातत्यगमने' इति धातावाह । एवं चात्र स्वातीतिष्येति ङीषन्तग्रहणादङीषन्तस्य सौवात इति रूपं भवार्थ इव जातार्थेऽपि माधवमते सिध्यत्येव ॥ कैयटादिमते तु जातार्थे न सिध्यति, लुग्विधायकेऽस्मिन् ङीषन्तग्रहणेऽपि लिङ्गविशिष्टपरिभाषया ङीषन्तादपि अणो लुकः

---

१ अधिकारोऽयमिति । अत एव 'उत्तरपदवृद्धौ सर्वं च' इत्यत्रोत्तरपदाधिकारविहितवृद्धिपरिग्रहः । अस्मिन्नधिकारे पूर्वपदादिवृद्धिस्तु 'सत्यपि संभवे बाधनम्' इत्यङ्गीकारेण बाध्यत एव । अत एवाग्रे 'पूर्वपदस्य च' इति संगच्छते ॥ २ **सुसर्वार्धेति** । जनपदवाचिनः शब्दस्यानन्तरे प्रत्यये विधीयमाने तदन्तविधिः सुप्रभृतिभ्यः परो यदि स संभवति- इत्यर्थः । अयं च पूर्ववद्वार्त्तिक एव तदन्तविधिः ॥ ३ **उत्तरार्थ इति** । 'प्राचां ग्रामनगराणाम्' इत्यत्र सूत्रे दिश एव संबन्धो यथा स्यादित्यर्थः । 'सुसर्वार्धदिशो जनपदस्यामद्राणाम्' इत्येकयोगत्वे स्वादिभ्यः परस्यापि मद्रस्य पर्युदासः संभाव्येतेतीहार्थोऽपि योगविभाग इति बोध्यम् ॥

४ । २ । ४९ । तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात् । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः—इत्यादि ॥ ( १९६६ ) (वा॰) चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ॥ चित्रायां जाता—चित्रा । रेवती । रोहिणी । आभ्यां लुक्[१] तद्धितलुकीति लुकि कृते पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीष् ॥ (१९६७) (वा॰) फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ ॥ स्त्रियामित्येव[२] । फल्गुनी । अषाढा ॥ ( १९६८ ) (वा॰) श्रविष्ठाषाढाभ्यां छण्वक्तव्यः ॥ अस्त्रियामपि[३] । श्राविष्ठीयः । आषाढीयः ॥ ( १९६९ ) (सू॰) जे प्रोष्ठपदानाम् । ७ । ३ । १८ । प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धिः स्याज्जातार्थे ञिति णिति किति च । प्रोष्ठपदासु जातः—प्रोष्ठपादो माणवकः । जे इति किम् । प्रोष्ठपदासु भवः—प्रौष्ठपदः । बहुवचननिर्देशात्पर्यायोऽपि गृह्यते । भाद्रपादः ॥ ( १९७० ) (सू॰) स्थानान्तगोशाल[४]खरशालाच्च । ४ । ३ । ३५ । एभ्यो जातार्थप्रत्ययस्य लुक् स्यात् । गोस्थानः । गोशालः । खरशालः । विभाषा सेनेति नपुंसकत्वे ह्रस्वत्वम्[५] ॥ ( १९७१ ) (सू॰) वत्सशालाभिजिदश्वयुक्छतभिषजो वा । ४ । ३ । ३६ । एभ्यो जातार्थस्य लुग्वा स्यात् । वत्सशाले जातो—वत्सशालः । वात्सशालः—इत्यादि ॥ ( १९७२ ) (वा॰) जातार्थे प्रतिप्रसूतोऽण्वा ङिद्वक्तव्यः ॥ शातभिषः । शातभिषजः । शतभिषक् ॥ ( १९७३ ) (सू॰) नक्षत्रेभ्यो बहुलम् । ४ । ३ । ३७ । जातार्थप्रत्ययस्य बहुलं लुक् स्यात् । रोहिणः । रौहिणः ॥ ( १९७४ ) (सू॰) कृतलब्धक्रीतकुशलाः । ४ । ३ । ३८ । तत्रेत्येव । स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा—स्रौघ्नः ॥ ( १९७५ ) (सू॰) प्रायभवः । ४ । ३ । ३९ । तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति—स्रौघ्नः ॥ ( १९७६ ) (सू॰) उपजानूपकर्णोपनीवेष्ठक् । ४ । ३ । ४० । औपजानुकः । औपकर्णिकः । औपनीविकः ॥ ( १९७७ ) (सू॰) संभूते । ४ । ३ । ४१ । स्रुघ्ने संभवति—स्रौघ्नः ॥ ( १९७८ ) (सू॰) कोशाड्ढञ् । ४ । ३ । ४२ । कौशेयं वस्त्रम् ॥ (१९७९) (सू॰) कालात्साधुपुष्प्यत्पच्यमानेषु । ४ । ३ । ४३ । हेमन्ते साधुर्हैमन्तः प्राकारः । वसन्ते पुष्प्यन्ति—वासन्त्यः कुन्दलताः । शरदि पच्यन्ते—शारदाः शालयः ॥ ( १९८० ) (सू॰) उप्ते च । ४ । ३ । ४४ । हेमन्ते उप्यन्ते—हैमन्ता यवाः ॥ ( १९८१ ) (सू॰) आश्वयुज्या

---

प्रवृत्तेः ॥ ( १९६५ ) **लुक्त—।** **उपसर्जनेति** । अप्रधानमिहोपसर्जनं गृह्यते, न शास्त्रीयमसंभवात् ॥ ननु 'गोस्त्रियोः—९५७' इति सूत्रेऽप्यप्रधानलक्षणमेवोपसर्जनं गृह्यताम् 'एकविभक्ति च—९५६' इति शास्त्रीयं न गृह्यताम् । मैवम्, हरीतक्याः फलानि हरीतक्य इत्यत्र ह्रस्वप्रसङ्गात् । उपसर्जनस्य किम्, अवन्ती, कुन्ती, कुरुः ॥ **श्रविष्ठास्विति** । श्रविष्ठा धनिष्ठा ॥ **इत्यादीति** । आदिशब्दादनुराधः, स्वातिः, तिष्यः, पुनर्वसुः, हस्तः, विशाखः, अषाढः, बहुलः । कृत्तिकावाची बहुलाशब्दष्टाबन्तः, तस्य समाहारद्वन्द्वेन ह्रस्वनिर्देशः सूत्रे ॥ ( १९६६ ) **उपसंख्यानमिति** । लुक इति शेषः ॥ **चित्रेति** । 'लुक्तद्धित—१९६५' इति लुकि पुनष्टाप् ॥ ( १९६७ ) **टानाविति** । विधानसामर्थ्यादेतयोर्न लुक् ॥ ( १९७० ) **स्थानान्त—।** गोशालेत्यत्र 'विभाषा सेना—११९०' इति नपुंसकत्वे ह्रस्वत्वं, तत्साहचर्यात्खरशालेऽप्येवमेव । न चैवं स्त्रीत्वपक्षे लुङ् न स्यादिति शङ्क्यम्, लिङ्गविशिष्टपरिभाषया[२६७] तत्रापि लुक्सिद्धेरित्याहुः ॥ यद्यपि टाबन्तयोः पाठेऽप्येकदेशविकृत[२६६]न्यायेन क्लीबेऽपीष्टं सिध्यति, तथापि लाघवार्थं ह्रस्वपाठः ॥ **नपुंसकत्वे ह्रस्वत्वमिति** । सूत्रे इति शेषः ॥ ( १९७१ ) **वत्सशालाभि—।** **वत्सशाले जात इति** । वत्सशालायामित्यपि बोध्यम् ॥ **इत्यादीति** । आदिशब्दादभिजित्, आभिजितः । अश्वयुक्, आश्वयुजः ॥ ( १९७२ ) **प्रतिप्रसूत इति** । कालाट्ठञा निवर्तमानो य औत्सर्गिकोऽण् 'सन्धिवेलादि—१९३८' सूत्रेण पुनरभ्यनुज्ञात इत्यर्थः ॥ ( १९७४ ) **कृतलब्ध—।** ननु कृतक्रीतत्वे जातलब्धत्वयोर्व्याप्ये इति किमनयोर्ग्रहणेन । सत्यम्, कृतत्वक्रीतत्वप्रकारकबोधेऽपि प्रत्ययार्थं तद्ग्रहणम् । अत एव जाते लुग्भाजामपि कृते न लुक् ॥ ( १९७५ ) **प्राय—।** कादाचित्कभवनाश्रयः प्रायभवः । तेन 'तत्र भवः १९८९' इत्यनेन न गतार्थतेत्याहुः ॥ भाष्ये तु—प्रत्याख्यातमेतत् **'प्रायभवग्रहणमनर्थकं, तत्र भवेन कृतत्वात्'** इति ॥ ( १९७६ ) **उपजानू—।** त्रयोऽप्यमी सामीप्येऽव्ययीभावाः । तेषां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् ॥ ( १९७७ ) **संभूते** । इह तन्त्रादिना संभावना, आधारपरिमाणादाधेयस्यानतिरेकश्चेति द्वयमप्याश्रीयते ॥ **स्रौघ्न इति** । स्रुघ्ने संभाव्यते तत्परिमाणानतिरिक्तो वा सेनादिरित्यर्थः ॥ ( १९७८ ) **कोशात्—।** **कौशेयमिति** । वस्त्रविशेषे योगरूढोऽयम् । कोशे संभवस्तु सत्कार्यवादाभिप्रायेण । मतान्तरे तु विकारप्रकरणे 'एण्या ढञ् २११२' इत्यस्यानन्तरं 'कोशाच्च' इति पठितव्यम् । तथा च—वार्तिकं 'विकारे कोशाड्ढञ्, संभूते ह्यर्थानुपपत्तिः' इति ॥ ( १९७९ ) **कालात्—।** पुष्प्यदिति दैवादिकः शत्रन्तस्तदाह—**पुष्प्यन्तीति** ॥ ( १९८० ) **उप्ते च** । कालादित्येव । योगविभाग उत्तरार्थः ॥ **उप्यन्त इति** । सूत्रे भूतकालोऽतन्त्रमिति भावः ॥ ( १९८१ ) **आश्वयुज्या**

---

१ चित्रा इत्यादि लुग्विधायकं वार्तिकं 'नक्षत्रेभ्यो बहुलम्' इत्येतदाश्रित्य प्रत्याख्यातम् ॥ २ **स्त्रियामित्येवेति** । भाष्ये तथैवोदाहरणादिति भावः ॥ ३ **अस्त्रियामपीति** । तथैव भाष्योदाहरणादिति भावः ॥ ४ **गोशालेति** । समाहारद्वन्द्वपूर्वकसमाहारद्वन्द्वः । तेन स्त्रीलिङ्गयोर्गोशालाखरशालाशब्दयोर्ग्रहणम् ॥ ५ **ह्रस्वत्वमिति** । यद्यपि तथापि एकदेशविकृतन्यायेन तस्यापि ग्रहणं भवत्येवेति शेषः—इति शेखरकृत ॥

वुञ् । ४ । ३ । ४५ । ठञोऽपवादः । आश्वयुज्यामुप्ताः–आश्वयुजका माषाः ॥ ( १९८२ ) (सू) **ग्रीष्मवसन्तादन्यतरस्याम्** । ४ । ३ । ४६ । पक्षे ऋत्वण् । ग्रैष्मकम्, ग्रैष्मम् । वासन्तकम्, वासन्तम् ॥ (१९८३) (सू) **देयमृणे** । ४ । ३ । ४७ । कालादित्येव । मासे देयमृणं–मासिकम् ॥ ( १९८४ ) (सू) **कलाप्यश्वत्थयवबुसाद्वुन्** । ४ । ३ । ४८ । यस्मिन् काले मयूराः कलापिनो भवन्ति स उपचारात्कलापी, तत्र देयमृणं–कलापकम् । अश्वत्थस्य फलमश्वत्थस्तद्युक्तः कालोऽप्यश्वत्थः । यस्मिन् कालेऽश्वत्थाः फलन्ति तत्र देयमश्वत्थकम् । यस्मिन् यवबुसमुत्पद्यते तत्र देयं यवबुसकम् ॥ ( १९८५ ) (सू) **ग्रीष्मावरसमाद्वुञ्** । ४ । ३ । ४९ । ग्रीष्मे देयमृणं–ग्रैष्मकम् । आवरसमकम् ॥ ( १९८६ ) (सू) **संवत्सराग्रहायणीभ्यां ठञ्च** । ४ । ३ । ५० । चाद्वुञ् । सांवत्सरिकम्, सांवत्सरकम् । आग्रहायणिकम्, आग्रहायणकम् ॥ ( १९८७ ) (सू) **व्याहरति मृगः** । ४ । ३ । ५१ । कालवाचिनः सप्तम्यन्ताच्छब्दायत इत्यर्थे अणादयः स्युः यो व्याहरति स मृगश्चेत् । निशायां व्याहरति–नैशो मृगः । नैशिकः ॥ ( १९८८ ) (सू) **तदस्य सोढम्** । ४ । ३ । ५२ । कालादित्येव । निशासहचरितमध्ययनं निशा, तत्सोढमस्य-नैशः । नैशिकः ॥ (१९८९) (सू) **तत्र भवः** । ४ । ३ । ५३ । सुघ्ने भवः–स्रौघ्नः । राष्ट्रियः ॥ ( १९९० ) (सू) **दिगादिभ्यो यत्** । ४ । ३ । ५४ । दिश्यम् । वर्ग्यम् ॥ ( १९९१ ) (सू) **शरीरावयवाच्च** । ४ । ३ । ५५ । दन्त्यम् । कर्ण्यम् ॥ ( १९९२ ) (सू) **प्राचां नगरान्ते** । ७ । ३ । २४ । प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्ञिति णिति किति च । सुह्मनगरे भवः–सौह्मनागरः । पौर्वनागरः । प्राचां किम् । मद्रनगरमुदक्षु तत्र भवो–माद्रनगरः ॥ (१९९३) (सू) **जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्**[1] । ७ । ३ । २५ । जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिरुत्तरपदस्य वा ञिति णिति किति च । कुरुजङ्गले भवं–कौरुजङ्गलम्, कौरुजाङ्गलम् । वैश्वधेनवम्, वैश्वधैनवम् । सौवर्णवलजम्, सौवर्णवालजम् ॥ ( १९९४ ) (सू) **दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्** ।४।३।५६। दार्तेयम् । कौक्षेयम् । कलशिर्घटः, तत्र भवं कालशेयम् । बास्तेयम् । आस्तेयम् । आहेयम् ॥ ( १९९५ ) (सू) **ग्रीवाभ्योऽण् च** । ४ । ३ । ५७ । चात् ढञ् । ग्रैवेयम् । ग्रैवम् ॥ ( १९९६ ) (सू) **गम्भीराञ् ञ्यः** । ४ । ३ । ५८ । गम्भीरे भवं–गाम्भीर्यम् ॥ ( १९९७ ) (सू)

---

वुञ् । ञकारः स्वरार्थः, उत्तरत्र वृद्ध्यर्थश्च ॥ **आश्वयुज्यामिति** । अश्विनीनक्षत्रपर्यायः अश्वयुक्, तद्युक्ता पौर्णमासी आश्वयुजी, तत्रेत्यर्थः ॥ ( १९८३ ) **देयमृणे** । ऋणे किम्, मासे देया भिक्षा ॥ (१९८४) **कलाप्य–।अश्वत्थ इति** । 'फले लुक् २११६' । इह पुंलिङ्गनिर्देशो यद्यप्ययुक्तः, तथापि फले अश्वत्थशब्द औपचारिक इत्याशयेन पुंलिङ्गप्रयोग इत्याहुः ॥ ( १९८६ ) **संवत्स–। ठञ्चेति** । 'संवत्सराग्रहायणीभ्यां वा' इत्येव सुवचम् ॥ न च 'वा' इति वक्तव्ये ठञ्ग्रहणं व्यर्थं, संधिवेलादिषु 'संवत्सरात्फलपर्वणोः १९३९' इति पठ्यते, तत्र फले ऋणत्वेन विवक्षिते अणं बाधित्वा ठञेव यथा स्यादिति काशिकादावुक्तमिति वाच्यम्, तस्मै हितास्तद्धिता इत्यन्वर्थसंज्ञाकरणबलेनात्राण् प्रत्ययो न भवेदिति वक्तुं शक्यत्वादिति नव्याः[3]॥ ( १९८८ ) **तदस्य––। नैशिक इति** । 'निशाप्रदोषाभ्यां च १९३५' इति वा ठञ् ॥ ( १९८९ ) **तत्र भवः** । 'कालात्' इति निवृत्तम् । कालसंबद्धस्य 'तत्र' इत्यस्य निवृत्तये पुनस्तत्रग्रहणात् । न च पूर्वसूत्रस्थस्य 'तत्' इत्यस्य व्यावृत्तये तत्रग्रहणमस्त्विति वाच्यम्, 'तदस्य–१९८८' इति सूत्रस्यैत उत्तरत्रापि सुपठत्वात् । यद्यपि भूधातुरुत्पत्तावपि वर्तते, तथापीह सत्तार्थ एव वर्तते, 'तत्र जातः १९४८' इति पृथग्ग्रहणादिति बोध्यम् ॥ (१९९०) **दिगादिभ्यो–**। दिश् , वर्ग, पूग, पक्ष, रहस् , उखा, साक्षिन्, आदि, अन्त, मुख, जघन, मेघ,यूथ, 'उदकात्संज्ञायाम्' न्याय,वंश, कालेत्यादि दिगादिः । मुखजघनयोः पाठोऽत्राशरीरावयवार्थः । सेनाया मुखे जघने च भवं मुख्यम् । जघन्यम् ॥ ( १९९२ ) **प्राचां नगरान्ते** । सप्तमीनिर्देशात् 'अङ्गस्य २८५' इत्यधिकृतमपि सप्तम्यन्तेन विपरिणम्यते तदाह––**नगरान्तेऽङ्गे इति** ॥ ( १९९४ ) **दृतिकुक्षि––**। दृतिश्चर्मविकारः, शरीरावयवविशेषश्च । कुक्षिशब्दो धूमादिस्ततो 'धूमादिभ्यश्च १८९६' इति वुञि प्राप्ते अनेन ढञ् । कलशिर्मन्थपात्रं 'कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति' इति माघः ॥ 'वस्तिर्नाभेरधो द्वयोः' इत्यमरः । तत्र भवं बास्तेयम् । 'अस्ति' इति तिङन्तप्रतिरूपको निपातः । स च तिङन्तेन समानार्थो भिन्नार्थश्च । आद्यो यथा–अस्तिक्षीरा गौः । द्वितीयो यथा अस्तिमान् । धनवानित्यर्थः । तदिहाविशेषादुभयोरपि ग्रहणमास्थेयमिति हरदत्तः ॥ अहौ भवमाहेयम् । 'त्रिष्वाहेयं विषास्थ्यादि' इत्यमरः ॥ ( १९९५ ) **ग्रीवाभ्योऽण् च** । 'शरीरावयवाच्च १९९१' इति यतोऽपवादः । ग्रीवाशब्दो धमनीसंघाते वर्तते तत्र उद्भूतावयवसंघातविवक्षया सूत्रे बहुवचनम् । तिरोहितावयवसंघातविवक्षायां त्वेकवचनान्तादप्यण्ढञौ स्त एव ॥ **ग्रैवेयमित्यादि** । ग्रीवासु भवं ग्रीवायामिति वा विग्रहः ॥ (१९९६) **गम्भीराञ् ञ्यः** ॥ " **पञ्चजनादुप-**

---

[1] **ग्रीष्मावरसमादिति** । समाहारद्वन्द्वः ॥ अवरशब्दश्चागामिनामाद्यवाचकः । अवरस्यां समायां देयम्–आवरसमकम् । आगामिनीनां समानामाद्यसमायां देयमित्यर्थः ॥ [2] **विभाषितमिति** । विभाषितवृद्धिकरणम् उत्तरपदलोपात् ॥
[3] 'न चेत्यादिः–इति नव्याः' इत्यन्तः पाठः क्वचिदेव ॥

अव्ययीभावाच्च । ४ । ३ । ५९ । परिमुखं भवं-पारिमुख्यम् ॥ ( १९९८ ) (वा) परिमुखादिभ्य एवेष्यते ॥ नेह औपकूलः ॥ (१९९९) (सू) अन्तःपूर्वपदाट्ठञ् । ४ । ३ । ६० । अव्ययीभावादित्येव । वेश्मनि इति-अन्तर्वेश्मम् । तत्र भवमान्तर्वेश्मिकम् । आन्तर्गणिकम् ॥ ( २००० ) (वा) अध्यात्मादेष्ठञिष्यते ॥ अध्यात्मं भवमाध्यात्मिकम् । ( २००१ ) (सू) अनुशतिकादीनां च । ७ । ३ । २० । एषामुभयपदवृद्धिः स्यात् ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । अध्यात्मादिराकृतिगणः ॥ ( २००२ ) (सू) देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् । ७ । ३ । १ । एषां पञ्चानां वृद्धिप्राप्तावादेरच आत् स्यात् ञिति णिति किति च । दाविकम् । देविकाकूले भवाः दाविकाकूलाः शालयः । शिंशपायाः विकारः-शांशपश्चमसः । पैलाशादिभ्यो वेत्यञ् । दित्यौह इदं-दात्यौहम् । दीर्घसत्रे भवं-दार्घसत्रम् । श्रेयसि भवं-श्रायसम् ॥ ( २००३ ) (सू) ग्रामात्पर्यनुपूर्वात् । ४ । ३ । ६१ । ठञ् स्यात् । अव्ययीभावादित्येव । पारिग्रामिकः । आनुग्रामिकः ॥ ( २००४ ) (सू) जिह्वामूलाङ्गुलेश्छः । ४ । ३ । ६२ । जिह्वामूलीयम् । अङ्गुलीयम् ॥ ( २००५ ) (सू) वर्गान्ताच्च । ४ । ३ । ६३ । कवर्गीयम् ॥ (२००६ ) (सू) अशब्दे यत्खावन्यतरस्याम् । ४ । ३ । ६४ । पक्षे पूर्वेण छः । मद्वर्ग्यः । मद्वर्गीणः । मद्वर्गीयः अशब्दे किम् । कवर्गीयो वर्णः ॥ ( २००७ ) (सू) कर्णललाटात्कनलंकारे । ४ । ३ । ६५ । कर्णिका । ललाटिका ॥ ( २००८ ) (सू) तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः । ४ । ३ । ६६ । सुपां व्याख्यानः-सौपो ग्रन्थः । तैङः । कार्तः । सुप्सु भवं-सौपम् ॥ ( २००९ ) (सू) बह्वचोऽन्तोदात्ताट्ठञ् । ४ । ३ । ६७ । षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वम् । तस्य व्याख्यानस्तत्र भवो वा-षात्वणत्विकः ॥ ( २०१० ) (सू) क्रतुयज्ञेभ्यश्च । ४ । ३ । ६८ । सोमसाध्येषु यागेष्वेतौ प्रसिद्धौ । तत्रान्यतरोपादानेन सिद्धे उभयोरुपादानसामर्थ्यादसोमका अपीह गृह्यन्ते । अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमिकः । वाजपेयिकः । पाकयज्ञिकः । नावयज्ञिकः । बहुवचनं स्वरूपविधिनिरासार्थम् । अनन्तोदात्तार्थं आरम्भः ॥ ( २०११ ) (सू) अध्यायेष्वेवर्षेः । ४ । ३ । ६९ । ऋषिशब्देभ्यो लक्षणया

---

संख्यानम् ।" पाञ्चजन्यम् ॥ ( १९९७ ) अव्य- । परिमुखमिति । यदि परिशब्दादिह वर्जनं गम्यते, तदा 'अपपरिबहिरञ्चवः पञ्चम्या ९६९' इत्यव्ययीभावः । यदि तु सर्वतोभावः, तदा त्वस्मादेव निपातनादव्ययीभाव इत्याहुः ॥ (१९९८) परिमुखादिभ्य एवेति । अयं भावः-दिगादिगणानन्तरं परिमुख, परिहनु, पर्योष्ठ, पर्यूलूखलेत्यादिपारिमुखादिगणः पठ्यते, तत्साहचर्यादिह सूत्रे अव्ययीभावशब्देन परिमुखादिरेव गृह्यते । तस्य गणस्य कार्यान्तराभावादिति ॥ नन्वेवं 'परिमुखादेः' इति सूत्रं विशिष्यैव क्रियताम्, किमनेन प्रयासेन । उत्तरत्र 'अव्ययीभावात्' इत्यस्यापेक्षायामपि तत्रैव तत्करणौचित्यादिति चेत् । अत्राह हरदत्तः—'परिमुखादेः' इत्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञ्यः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योऽनेव भवतीति । परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः । तथा च 'शाखृ व्याप्तौ' इति धातौ प्रतिशाखं भवं प्रातिशाख्यम् । 'अव्ययीभावाच्च १९९७' इति भवार्थे ञ्य इति माधवः ॥ ( १९९९ ) अन्तःपूर्वपदात्-। अन्तर्वेश्ममिति । 'नपुंसकादन्यतरस्याम् ९८७' इति समासान्तष्टच् ॥ ( २००० ) अध्यात्ममिति । 'अनश्च ९८५' इति टच् ॥ ( २००७ ) कर्णललाटात्-। यतोऽपवादः । अलंकारे किम्, कर्ण्यं, ललाट्यम् ॥ ( २००८ ) तस्य व्याख्यान इति च-। व्याख्यायते येन स व्याख्यानः करणे ल्युट् । इतिशब्दो वाक्यार्थं परामृशति । तत्समीपे श्रूयमाणश्चकारः 'तत्र भवः १९८९' इति वाक्यार्थमाक्षिपति । नाम प्रतिपादकं, तच्च शक्त्या लक्षणया वेत्यत्र नाग्रहः । तथा च-'षष्ठ्यन्ताद्व्याख्यानकरणार्थे, सप्तम्यन्तात्तु भवार्थे, व्याख्यातव्यस्य ग्रन्थस्य प्रतिपादकात्प्रत्ययाः स्युः' इति सूत्रार्थः । व्याख्यातव्यनाम्नः किम्, पाटलीपुत्रस्य व्याख्यानी सुकोसला । पाटलीपुत्रो हि तया व्याख्यायते 'ईदृक्संनिवेशविशिष्टम्' इति । न त्विदं व्याख्यातव्यस्य नाम । ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात् । नामग्रहणं हि प्रसिद्ध्युपसंग्रहार्थमेव सूत्रे कृतम् ॥ ( २००९ ) बह्वचो-। अणोऽपवादः । बह्वचः किम्, द्व्यच्षट्कं वक्ष्यतीत्येकाच् प्रत्युदाहार्यः । सौपम् । तैङम् । अन्तोदात्तात्किम्, संहितायाः सांहितम् । 'गतिरनन्तरः ५७५३' इत्याद्युदात्तोऽयम् । अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् । उदात्तादित्युक्तेऽपि वर्णग्रहणे तदन्तग्रहणात् 'वर्णादनुदात्तात्-६८७' इत्यत्र यथा ॥ ( २०१० ) क्रतुयज्ञेभ्यश्च । अग्निष्टोमस्य व्याख्यान इति । अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्तमाना अग्निष्टोमादिशब्दा इहोदाहरणं, ग्रन्थानामेव व्याख्येयताया उक्तत्वादित्याहुः ॥ स्तुतिः स्तोमः अग्नेः स्तोमोऽस्मिन्निति बहुव्रीहिः । 'परादिश्च परान्तश्च ५९०९' इत्यन्तोदात्तोऽयम् । पीयतेऽस्मिन्निति पेयः । 'कृत्यल्युटो बहुलम् ३७८६' इत्यधिकरणे यत् । वाजो नाम यवागूभेदस्तस्य पेयो वाजपेयः । अयं हि कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । पेयशब्दस्य 'यतोऽनावः ५५७६' इत्युदात्तत्वात् । राज्ञा क्षत्रियेण सूयते, राजा सोमः सूयते अत्रेति वा राजसूयः 'राजसूयसूर्य-३८१७' इति क्यप् । तत एव निपातनात्समासः, षष्ठीसमासो वा । अयमप्युत्तरपदप्रकृतिस्वरेण मध्योदात्त एव धातुस्वरेण सूयशब्दस्याद्युदात्तत्वात् ॥ असोमकेभ्य उदाहरति—पाकेति । अल्पपर्यायः पाकशब्दः । पाकश्चासौ यज्ञश्चेति कर्मधारयः । स च समासस्वरेणान्तोदात्तः । नवैर्व्रीहिभिर्यजनं नवयज्ञः । आग्रयणम् । 'यजयाचयतविच्छ-५०६३' इति नङ् । 'कर्तृकरणे कृता-१००४' इति समासः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः ॥ अनन्तोदात्तार्थ इति । वाजपेयराजसूयार्थं

व्याख्येयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाध्याये ठञ् स्यात्। वसिष्ठेन दृष्टो मन्त्रो वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वा-वासिष्ठकोऽध्यायः । अध्यायेषु किम् । वासिष्ठी ऋक् ॥ ( २०१२ ) (सू) **पौरोडाशपुरोडाशात्ष्ठन्** ।४।३।७०। पुरोडाशसहचरितो मन्त्रः पुरोडाशः स एव पौरोडाशः । ततः ष्ठन् । पौरोडाशिकः ॥ (२०१३) (सू) **छन्दसो यदणौ** ।४।३।७१। छन्दस्यः । छान्दसः ॥ (२०१४) (सू) **द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्** ।४।३।७२। द्व्यच्-ऐष्टिकः । पाशुकः । ऋत्-चातुर्होतृकः । ब्राह्मणिकः । आर्चिकः । इत्यादि ॥(२०१५) (सू) **अणृगयनादिभ्यः** । ४ । ३ । ७३ । ठञादेरपवादः । आर्गयनः । औपनिषदः । वैयाकरणः ॥ ( २०१६ ) (सू) **तत आगतः** । ४।३।७४। स्रुघ्नादागतः स्रौघ्नः॥ (२०१७) (सू) **ठगायस्थानेभ्यः** ।४।३।७५। शुल्कशालाया आगतः शौल्कशालिकः ॥ (२०१८) (सू) **शुण्डिकादिभ्योऽण्** । ४।३।७६। आयस्थानठकश्छादीनां चापवादः । शुण्डिकादागतः-शौण्डिकः । कार्कणः। तैर्थः॥ (२०१९) (सू) **विद्यायोनिसंबन्धेभ्यो वुञ्** ।४।३।७७। औपाध्यायकः । पैतामहकः॥ (२०२०) (सू) **ऋतष्ठञ्** ।४।३।७८। वुञोऽपवादः । हौतृकम् । भ्रातृकम् ॥(२०२१) (सू) **पितुर्यच्च** ।४।३।७९। चाट्ठञ् । रीङ् ऋतः । यस्येति लोपः। पित्र्यम् । पैतृकम् ॥ ( २०२२ ) (सू) **गोत्रादङ्कवत्** ।४। ३ । ८० । विदेभ्य आगतं-वैदम् । गार्गम् । दाक्षम् । औपगवकम् ॥ ( २०२३ ) (सू) **नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्** । ७ । ३ । ३० । नञः परेषां शुच्यादिपञ्चानामादेरचो

---

तथा आस्मिन्नारब्धे सत्यन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव भाव्यमित्याग्निष्टोमिक इत्याद्युदाहृतमिति भावः ॥ (२०११) **अध्यायेष्वेवर्षेः** । एवकारः स्पष्टप्रतिपत्त्यर्थः ॥ **वासिष्ठीति** । भवार्थेऽण् ॥ ( २०१२ ) **पौरोडाश-**। षित्वान्ङीष् । पौरोडाशिकी । पुरोडाशिकी । पुरो दाश्यते इति पुरोडाशः । ‘ दाशृ दाने’ कर्मणि घञ् । इहैव निपातनाड्डस्य डत्वम्॥(२०१३) **छन्दसो--**। छन्दःशब्दाद्भवव्याख्यानयोरर्थयोर्यदणौ स्तः । द्व्यज्लक्षणस्य ठकोऽपवादः ॥ **छन्दस्य इत्यादि** । इहार्थयोर्यदण्भ्यां यथासंख्यं न भवत्यस्वरितत्वादिति बोध्यम् ॥(२०१४) **द्व्यजृत-**। अणोऽपवादः॥ **चातुर्होतृक इति**। ‘पृथिवी होता । द्यौरध्वर्युः’ इत्यादिमन्त्रस्य चतुर्होतेति नामधेयम्॥ **इत्यादीति** । आदिशब्दात्प्राथमिकः । आध्वरिकः । पौरश्चरणिकः॥ **“नामाख्यातग्रहणं संघातविगृहीतार्थम्”** इति वार्तिकम् । तत्र नामशब्दाद् द्व्यच्त्वादेव सिद्धे विगृहीतग्रहणमाख्यातार्थमिति ज्ञेयम् । नामिकः । आख्यातिकः । नामाख्यातिकः॥ ( २०१५ ) **अणृगयना--**। ऋगयनादिभ्यो भवव्याख्यानयोरर्थयोरण् स्यात् ॥ **ठञादेरिति** । आदिशब्दाट्ठक्छयोः ॥ **आर्गयन इति** । अयनशब्दो भावसाधनः, तेन समासे ‘अनो भावकर्मवचनः ५८५६’ इत्यन्तोदात्तः । अभेदोपचाराद्भाववचनोऽपि ग्रन्थे वर्तते । इह ‘ बह्वचोऽन्तोदात्तात्-२००९’ इति ठञ् प्राप्तः । औपनिषद इत्यत्राप्येवम् । विद्यान्यायशिक्षाशब्देभ्यो ‘ द्व्यजृद्ब्राह्मण-२०१४’ इति ठक् प्राप्तः। व्याकरणशब्दात्तु ‘वृद्धाच्छः १८८०’ ॥ (२०१७) **ठगाय--**। एत्येनं स्वामी, स्वामिनमयमेतीति वाऽऽयः स्वामिग्राह्यो भागः । स यस्मिन्नुत्पद्यते तदायस्थानम् । बहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः । वृद्धाच्छं परत्वादयं बाधते । आपणिकः । आकरिकः ॥ ( २०१८ ) **शुण्डिका-**। **छादीनां चेति** । कार्कण इत्यत्र ‘ कृकणपर्णाद्भारद्वाजे १९२०’ इति छः प्राप्तः । तीर्थशब्दात्तु धूमादित्वाद्वुञ् प्राप्तः। उदपानशब्दस्योत्सादित्वादञ् प्राप्त इत्यर्थः ॥ ( २०१९ ) **विद्यायोनि-**। विद्यायोनिकृतः संबन्धो येषां तेभ्यो वुञ् स्यादणोऽपवादः । छं तु परत्वाद्बाधते । आचार्यकः । मातामहकः । मातुलकः ॥ ( २०२० ) **ऋतष्ठञ्** । ‘ विद्यायोनिसंबन्धेभ्यः ’ इति वर्तते तदाह—**वुञोऽपवाद इति** । ‘ उष्कञ् ’ इति वक्तव्ये तपरकरणं ठञ्ग्रहणं च चिन्त्यप्रयोजनमिति प्राञ्चः ॥ पैतृकी विद्येत्यत्र ङीबर्थं ठञ्ग्रहणमिति तत्त्वम् । न च ‘ टिड्ढा-६५१’ इति सूत्रे कञ्ग्रहणात् ङीप् सिध्यतीति वाच्यम् , यादृशीत्याद्यसिद्धेः । तदनुबन्धकग्रहणेऽतदनुबन्धकस्याऽग्रहणात् ‘ त्यदादिषु दृशः-५७५’ इति कञो द्व्यनुबन्धकत्वात् । तपरकरणं विहाय ‘ उष्ठञ् ’ इत्येव सुवचमित्याहुः ॥ ( २०२२ ) **गोत्रादङ्कवत्** । ‘ अपत्याधिकारादन्यत्र लौकिकं गोत्रम् ’ इत्युक्तम् । अपत्यप्रत्ययान्तात् ‘तत आगतः २०१६’ इत्यस्मिन्नर्थे अङ्कवत्प्रत्ययाः स्युः । अङ्के दृष्टस्य सर्वस्यायमतिदेशो न तु साक्षाद्विहितस्यैवेत्याग्रहः, तेन ‘ गोत्रचरणाद्वुञ् २०७५ ’ इति वुञपि लभ्यते । स हि ‘तस्येदम् २०६४’ इति सामान्येन विधीयमानोऽपि अञ्यञिजन्तादन्यत्र अङ्केऽपि दृष्टः॥ **वैदमित्यादि** । ‘सङ्घाङ्क-२०७७’ इत्यादिना अङ्कार्थेऽण् विहित इतीहाप्यञ्यञिजन्तादण् ॥ **औपगवकमिति** । ‘गोत्रचरणात्-२०७५’ इति वुञ्। अङ्के दृष्ट इतीहाप्यण-

---

१ **पौरोडाशिक इति** । अध्याय इत्यर्थः । पौरोडाशिकं काण्डम् इत्यत्र तु ‘पुरोडाशमधिकृत्य कृतं पौरोडाशम् , तदेव पौरोडाशिकम् , स्वार्थिको विनयादित्वाद् ठक् ’ इत्येव साधनीयम्॥ २ **अतदनुबन्धकस्याग्रहणादिति** । यद्यपि येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वं वा तदनुच्चारण एव तत्प्रवृत्तेरत्र न तत्प्राप्तिः। तदनुबन्धकेति शब्दमर्यादया तथैव लाभात्, स उच्चारित एवानुबन्धो यस्येति तदर्थात्। अत एव कञ्विधायके सूत्रे ‘नित्त्वेन स्वरसिद्धौ ञित्त्वं’ टिड्ढा-’ इति सूत्रे विशेषणार्थम् , अन्यथा ‘याविका-’ इत्यत्रापि प्रसज्येत’ इत्यपिगर्भं भाष्यं संगच्छते। सूत्रे च‘ककारनकारोभयानुबन्धोपलक्षितस्य ग्रहणम् ’ इति तदाशयः । तथाप्येतत्क्लेशपरिहारार्थमेव ठञ् कृत इति चिन्ताबीजमित्याशयः ॥

वृद्धिः पूर्वपदस्य तु वा भिदादौ परे । आंशौचम्, अशौचम् । आनैश्वर्यम्, अनैश्वर्यम् । आक्षैत्रज्ञम्, अक्षैत्रज्ञम् । आकौशलम्, अकौशलम् । आनैपुणम्, अनैपुणम् ॥ ( २०२४ ) ॐ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः । ४ । ३ । ८१ । समादागतं समरूप्यम् । विषमरूप्यम् । पक्षे गहादित्वाच्छः । समीयम् । विषमीयम् । देवदत्तरूप्यम् । दैवदत्तम् ॥ ( २०२५ ) ॐ मयट् च । ४ । ३ । ८२ । सममयम् । विषममयम् । देवदत्तमयम् ॥ ( २०२६ ) ॐ प्रभवति । ४ । ३ । ८३ । तत इत्येव । हिमवतः प्रभवति–हैमवती गङ्गा ॥ ( २०२७ ) ॐ विदूराञ्ञ्यः । ४ । ३ । ८४ । विदूरात्प्रभवति–वैदूर्यो मणिः ॥ ( २०२८ ) ॐ तद्गच्छति पथिदूतयोः । ४ । ३ । ८५ । स्रुघ्नं गच्छति–स्रौघ्नः पन्था दूतो वा ॥ ( २०२९ ) ॐ अभिनिष्क्रामति द्वारम् । ४ । ३ । ८६ । तदित्येव । स्रुघ्नमभिनिष्क्रामति–स्रौघ्नं कान्यकुब्जद्वारम् ॥ ( २०३० ) ॐ अधिकृत्य कृते ग्रन्थे । ४ । ३ । ८७ । तदित्येव । शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः । शारीरकं भाष्यमिति त्वभेदोपचारात् ॥ ( २०३१ ) ॐ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः । ४ । ३ । ८८ । शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमस्य सभा यमसभम् । क्लीबत्वं निपातनात् । यमसभीयः । किरातार्जुनीयम् । इन्द्रजननादिराकृतिगणः । इन्द्रजननीयम् । विरुद्धभोजनीयम् ॥ ( २०३२ ) ॐ सोऽस्य निवासः । ४ । ३ । ८९ । स्रुघ्नो निवासोऽस्य स्रौघ्नः ॥ ( २०३३ ) ॐ अभिजनश्च । ४ । ३ । ९० । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । यत्र स्वयं वसति स निवासः । यत्र पूर्वैरुषितं सोऽभि-

---

न्तादुञ् ॥ ( २०२४ ) **हेतुमनुष्येभ्यो**—। मनुष्यग्रहणमहेत्वर्थं, बहुवचनं तु स्वरूपविधिनिरासार्थम् ॥ **समरूप्यमिति** । 'विभाषा गुणे–८८३' इत्यत्र 'विभाषा' इति योगविभागादगुणवचनादपि पञ्चमी । योगविभागे तु 'बाहुलकं प्रकृतेस्तदनुदृष्टेः' इति लिङ्गम् ॥ ( २०२५ ) **मयट् च** । योगविभागो यथासंख्यनिरासार्थः । टो ङीबर्थः ॥ ( २०२६ ) **प्रभवति** । **हैमवतीति** । हिमवतः प्रकाशते । तत्र प्रथमं दृश्यत इत्यर्थः । उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते ' तत्र जातः १९४८ ' इत्यतो भेदेन निर्देशात् ॥ ( २०२७ ) **विदूराञ्ञ्यः** । **वैदूर्य इति** । दन्त्यमध्योऽयं शाद्वलवत्, न तु नड्वलवन्मूर्धन्यमध्यः । नन्वन्नार्थासंगतिः । बालवायपर्वतादसौ प्रभवति, विदूरनगरे तु संस्क्रियते । सत्यम्, अत एव समाहितं भाष्ये—"बालवायो विदूरं च प्रकृत्यन्तरमेव वा । न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत् ॥" इति । अस्यार्थः—बालवायशब्दः प्रत्ययं लभते विदूरादेशं च, सूत्रे पठितेनादेशेनानुरूपः स्थानी बालवायशब्द आक्षिप्यते । यथा शिवादिषु पठिताभ्यां विश्रवणरवणादेशाभ्यामनुरूपः स्थानी विश्रवस्शब्दः आक्षिप्यते, यथा वा 'पद्दन्–३२८' इत्यादौ पदाद्यादेशानुरूपः स्थानी पाददन्तादिराक्षिप्यते तद्वत् ॥ **प्रकृत्यन्तरमेवेति** । विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकोऽस्तीत्यर्थः । एवं चास्मिन्पक्षे 'बालवायात्प्रभवति' इति विग्रहे विदूरशब्दात्प्रत्यय इति व्याख्यानक्लेशो नेति भावः ॥ **न वा इति** । वैशब्दोऽक्षमां द्योतयति, तत्र पर्वते विदूरशब्दोऽप्रसिद्ध इति चेद् ब्रूयाज्जित्वरीवद्व्यवहरेत्, नियतपुरुषापेक्षो हि व्यवहारो दृश्यते, यथा वणिज एव वाराणसीं जित्वरीति व्यवहरन्ति, एवं वैयाकरणा एवाऽद्रिं विदूर इति ॥ ( २०२८ ) **तद्गच्छति**—। द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात्स चेद्गन्ता पन्था दूतो वेत्यर्थः । तत्र साध्वसिदिछनत्ति, काष्ठानि पचन्तीत्यादाविव करणस्य स्वातन्त्र्यविवक्षया पन्थाः कर्ता ॥ ( २०२९ ) **अभिनिष्क्रामति**—। द्वितीयान्तात्प्रत्ययः स्यादभिनिष्क्रामति तच्चेद् द्वारमित्यर्थः ॥ **स्रौघ्नं कान्यकुब्जद्वारमिति** । स्रुघ्नाभिमुखनिष्क्रमणे करणीभूतमिति फलितोऽर्थः । पूर्ववत्करणस्य कर्तृत्वम् ॥ ( २०३० ) **अधिकृत्य**—**तदित्येवेति** । ' अधिकृत्य ' इत्येतदपेक्ष्याऽत्र द्वितीया ॥ **शारीरकीय इति** । कुत्सितं शरीरं शरीरकं, तत्संबन्धी शारीरको जीवात्मा, तमधिकृत्य प्रस्तुत्य कृतो ग्रन्थः शारीरकीयः, चतुर्लक्षणीसूत्रसंदर्भः । वृद्धाच्छः । अत्र वार्तिकम्–'लुबाख्यायिकाभ्यो बहुलम्' इति । तादर्थ्ये एषा चतुर्थी । आख्यायिका नाम गद्यरूपो ग्रन्थविशेषः । अत एवाख्यानाख्यायिकयोस्तत्र तत्र भेदेनोपादानम् । आख्यायिकाभिधानाय यः प्रत्ययः उत्पन्नस्तस्य बहुलं लुगित्यर्थः । वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता । सुमनोहरा । क्वचिन्न, भैमरथी । अभेदोपचारेण गतार्थत्वान्नेदं वार्तिकमावश्यकमिति मूले नोक्तम् ॥ ( २०३१ ) **शिशुक्रन्द**—। अत्र वार्तिकं–'द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः' दैवासुरम् । राक्षोऽसुरम् ॥ **निपातनादिति** । 'सभा राजा–११८७ ' इति सूत्रे ' अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह ' इत्युक्तत्वात्तेन सूत्रेण क्लीबत्वं न सिद्ध्यतीति भावः ॥ ( २०३२ ) **सोऽस्य निवासः** । स इति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितः प्रत्ययः स्यात्, यः प्रथमान्तार्थः स निवासश्चेत् ॥ **स्रुघ्नो निवास इति** । निवासाधिकरणमित्यर्थः । नन्वस्येति कृद्योगे कर्तरि षष्ठी । तथा च विशेषणविशेष्यभावव्यत्यासात् स्रुघ्नाधिकरणवासकर्तेह वृत्त्यर्थः, तथा च–'तत्र भवः १९८९ ' इत्येव सिद्धं किमनेनेति चेत् अत्राहुः–वासस्य चेतनमात्रकर्तृकतया प्रसिद्धत्वात्प्रकारकृतो भेदोऽस्तीति नास्ति वैयर्थ्यम् । 'वसन्ति हि प्रेम्णि गुणा न वस्तुनि' इत्यादौ तूपचारो बोध्यः इति ॥ ( २०३३ ) **अभिजनश्च** । योगविभाग उत्तरार्थः । ' अभिजनाः पूर्वबान्धवाः ' इति वृत्तिः । अभिजायते येभ्य इति व्युत्पत्तेरिति भावः । पूर्वबान्धवाः पित्रादयः । बन्धुशब्दः प्रज्ञादिः । पूर्वसूत्रादिह 'निवासः' इत्यनुवृत्तम् । तत्सामानाधिकरण्यादभिजनशब्दस्य तत्संबन्धिनि लक्षणा ।

---

१ **आशौचमिति** । अशुचौ भवम् । अशुचेरागतमिति वा विग्रहः । एवमग्रेऽपि । अनैश्वर्यमित्यत्र तु चातुर्वर्ण्यादित्वं च कल्पनीयम् । भावार्थकप्रत्ययाङ्गीकारे तु प्रकरणविरुद्ध एवात्रास्योपन्यासः ॥

जन इति विवेकः ॥ ( २०३४ ) सू० आयुधजीविभ्यश्छः पर्वते । ४ । ३ । ९१ । पर्वतवाचिनः प्रथमान्तादभिजनशब्दादस्येत्यर्थे छः स्यात् । हृद्गोलः पर्वतोऽभिजनो येषामायुधजीविनां ते हृद्गोलीयाः । आयुधेति किम् । ऋक्षोदः पर्वतोऽभिजनो येषां ते-आर्क्षोदा द्विजाः ॥ ( २०३५ ) सू० शण्डिकादिभ्यो ञ्यः । ४ । ३ । ९२ । शण्डिकोऽभिजनोऽस्य-शाण्डिक्यः ॥ ( २०३६ ) सू० सिन्धुतक्षशिलादिभ्योऽणञौ । ४ । ३ । ९३ । सिन्ध्वादिभ्योऽण् तक्षशिलादिभ्योऽञ्, स्यादुक्तेऽर्थे । सैन्धवः । तक्षशिला नगरी अभिजनोऽस्य-ताक्षशिलः ॥ ( २०३७ ) सू० तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः । ४ । ३ । ९४ । तूदी अभिजनाऽस्य-तौदेयः । शालातुरीयः । वार्मतेयः । कौचवार्यः ॥ (२०३८) सू० भक्तिः । ४ । ३ । ९५ । सोऽस्येत्यनुवर्तते । भज्यते सेव्यत इति भक्तिः । स्रुघ्नो भक्तिरस्य स्रौघ्नः ॥ ( २०३९ ) सू० अचित्ताददेशकालाट्ठक् । ४ । ३ । ९६ । अपूपा भक्तिरस्य आपूपिकः । पायसिकः । अचित्तात्किम् । दैवदत्तः । अदेशात्किम् । स्रौघ्नः । अकालात्किम् । ग्रैष्मः ॥ (२०४०) सू० महाराजाट्ठञ् । ४ । ३ । ९७ । माहाराजिकः ॥ ( २०४१ ) सू० वासुदेवार्जुनाभ्यां वुन् । ४ । ३ । ९८ । वासुदेवकः । अर्जुनकः ॥ (२०४२) सू० गोत्रक्षत्त्रियाख्येभ्यो बहुलं वुञ् । ४ । ३ । ९९ । अणोऽपवादः । परत्वाद्वृद्धाच्छं बाधते । ग्लुचुकायनिर्भक्तिरस्य-ग्लौचुकायनकः । नाकुलकः । बहुलग्रहणान्नेह । पाणिनो भक्तिरस्य पाणिनीयः ॥ ( २०४३ ) सू० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने । ४ । ३ । १०० । जनपदस्वामिवाचिनां बहुवचने जनपदवाचिनां समानश्रुतीनां जनपदवत्सर्वं स्यात्प्रत्ययः प्रकृतिश्च । 'जनपदतदवध्योश्च' इति प्रकरणे ये प्रत्यया उक्तास्तेऽत्रातिदिश्यन्ते । अङ्गा जनपदो भक्तिरस्याङ्गकः । अङ्गाः क्षत्त्रिया भक्तिरस्याङ्गकः । जनपदिनां किम् । पञ्चाला ब्राह्मणा भक्तिरस्य-पाञ्चालः । जनपदेनेति किम् । पौरवो राजा भक्तिरस्य-पौरवीयः ॥ ( २०४४ ) सू० तेन प्रोक्तम् । ४ । ३ । १०१ । पाणि-

---

एवं स्थिते फलितमाह—**यत्र पूर्वैरिति** ॥ (२०३४) **आयुधजीविभ्यः**–। तादर्थ्ये एषा चतुर्थी । आयुधजीविभ्य आयुधजीव्यर्थम् आयुधजीविनोऽभिधातुं प्रत्ययः स्यादित्यर्थः ॥ 'सोऽस्याभिजनः' इत्यनुवर्तते पर्वत इति प्रकृतिविशेषणं तदाह—**पर्वतवाचिन इत्यादि** । पर्वत इति किम्, सांकाश्यका आयुधजीविनः । 'योपधात्–२४३६' इति वुञ् ॥ (२०३५) **शण्डिकादिभ्यो ञ्यः** । शण्डिका सर्वसेनशकेत्यादि ॥ ( २०३६ ) **सिन्धुतक्ष**–। सिन्धु, वर्णु, गन्धार, कम्बोजादयः सिन्ध्वादयः, ते तु प्रायेण कच्छादिष्वपि पठ्यन्ते । तेभ्योऽणि तत एव सिद्धे मनुष्यवुञो बाधनार्थं वचनम् । तक्षशिला, वत्सोद्धरणा, बर्बरेत्यादयस्तक्षशिलादयः ॥ ( २०४१ ) **वासुदेवार्जुनाभ्यां वुन्** । छाणोरपवादः । 'अजाद्यदन्तम् १२९७' 'अल्पाच्तरम् १२९९' इति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तस्याकरणं 'सर्वतोऽभ्यर्हितं पूर्वं निपतति १३०२' इति ज्ञापनार्थम् । ननु वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धक–१५९५' इत्यणि वासुदेवशब्दो निष्पन्नः । तथा च–तत्र 'गोत्रक्षत्त्रियाख्येभ्यः–२०४२' इत्युत्तरसूत्रेण वुञेवास्तु, किमनेन वुना । न ह्यत्र वृद्धौ विशेषः, प्रागेव वृद्धत्वात् । न च 'वृद्धिनिमित्तस्य–१२११' इति पुंवद्भावनिषेधो दोषः स्यादिति वाच्यम्, वुन्यपि 'न कोपधायाः १०२८' इति निषेधस्येष्यमाणत्वात् । न वा स्वरे विशेषः, 'ञ्नित्यादिर्नित्यम् ५५६१' इति तुल्यस्वरत्वात् । नापि 'अभ्यर्हितं पूर्वम् १३०२' इति ज्ञापनमेव तत्फलमिति वाच्यम्, तथात्वे हि पूर्वनिपातप्रकरणे 'अभ्यर्हितम्' इत्येव लाघवात्कुर्यादिति चेत् । अत्र भाष्यम्–'संज्ञैषा तत्र भगवतः' इति । अयं भावः– "सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते ॥" इति स्मृतेः परमात्मा इह वासुदेवः, सर्वत्रासौ वसति, सर्वमत्र वसतीति वा व्युत्पत्त्या वासुः, बाहुलकादुण् । वासुश्चासौ देवश्चेति विग्रहः । तथा च नेयं गोत्राख्या, नापि क्षत्त्रियाख्येति युक्त एव वुन्विधिः । 'अभ्यर्हितं पूर्वम् १३०२' इति तु प्रसङ्गाज्ज्ञापितं तदप्यनित्यं, 'श्वयुवमघोनाम्–४९२' इत्यादिलिङ्गादित्यवधेयम् ॥ ( २०४२ ) **गोत्रक्षत्त्रिया**–। **वृद्धाच्छं बाधत इति** । औपगवो भक्तिरस्य औपगवकः ॥ ( २०४३ ) **जनपदिनाम्**–। स्वस्वामिभावसंबन्धे मत्वर्थीयं दर्शयति—**जनपदस्वामिवाचिनामिति**–॥ **प्रत्ययः प्रकृतिश्चेति** । अनेन सर्वशब्दस्यार्थो दर्शितः । असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्यात्, न तु प्रकृतेरिति हरदत्तः ॥ अत्र वार्तिककारः सर्वशब्दस्य प्रयोजनमाह—'सर्ववचनं प्रकृतिनिर्ह्रासार्थम्, तच्च मद्रवृज्यर्थम्' इति । अयं भावः–वृद्धिनिमित्तेषु वुञादिष्वतिदिष्टेऽपि प्रकृतिरूपे पुनर्वृद्ध्या भाव्यमिति विशेषस्य तत्र दुर्लभत्वान्मद्रवृज्योः कनि विशेषो बोध्यः । सोऽप्यबहुत्व एवेति निर्ह्रासोऽपचयोऽल्पता । तथाहि–मद्राणां राजा 'द्व्यञ्मगध–१६८०' इत्यण् । माद्रः । वृजिशब्दात् 'वृद्धेत्कोसला–१६८१' इति । ञ्यङ् । वार्ज्यः । सम्भक्तिरस्येति प्रकृतिनिर्ह्रासे मद्रकः वृजिकः 'मद्रवृज्योः कन् १९०२' अन्यथा माद्रक, वार्ज्यक इति स्यात् ॥ **आङ्गक इति** । 'जनपदतदवध्योश्च १८९३' 'अवृद्धादपि–१८९४' इति वुञ् । अङ्गशब्दात्स्वामिवाचिनो बहुवचनान्तादणि प्राप्ते वुञतिदिश्यते ॥ **पञ्चाला ब्राह्मणा इति** । अभेदोपचाराद् ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः । बहुवचनग्रहणं किम्, एकवचनद्विवचनयोः सत्यपि शब्दभेदे अतिदेशो यथा स्यात् । आङ्ग आङ्गो वा भक्तिरस्य आङ्गकः । इह वृद्धाच्छे प्राप्ते वुञ् ॥ ( २०४४ ) **तेन प्रोक्तम्** । प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतं, 'कृते ग्रन्थे २०६०' इत्यनेन गतार्थत्वात् ॥ पाणि-

---

१ वासुरिति । 'कोकः पुराणपुरुषो नलिनेशयश्च वासुर्नारायणपुनर्वसुविश्वरूपाः' इति त्रिकाण्डशेषः ॥

निना प्रोक्तं-पाणिनीयम् ॥ ( २०४५ ) (सू) तित्तिरिवरतन्तुखण्डिकोखाच्छण् । ४ । ३ । १०२ । छन्दोब्राह्मणानीति तद्विषयता। तित्तिरिणा प्रोक्तमधीयते-तैत्तिरीयाः ॥ (२०४६) (सू) काश्यपकौशिकाभ्यामृषिभ्यां णिनिः । ४ । ३ । १०३ । काश्यपेन प्रोक्तमधीयते-काश्यपिनः ॥ (२०४७) (सू) कलापिवैशम्पायनान्तेवासिभ्यश्च । ४ । ३ । १०४ । कलाप्यन्तेवासिभ्यः-हरिद्रुणा प्रोक्तमधीयते-हारिद्रविणः ॥ वैशम्पायनान्तेवासिभ्यः-आलम्बिनः ॥ (२०४८) (सू) पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ।४।३।१०५। तृतीयान्तात्प्रोक्तार्थे णिनिः स्यात् यत्प्रोक्तं पुराणप्रोक्ताश्चेद्ब्राह्मणकल्पास्ते भवन्ति। पुराणेन चिरन्तनेन मुनिना प्रोक्ताः। भल्लु-भाल्लविनः। शाट्यायन-शाट्यायनिनः। कल्पे-पिङ्गेन प्रोक्तः-पैङ्गी कल्पः । पुराणेति किम् । याज्ञवल्कानि ब्राह्मणानि, आश्मरथः कल्पः। अणि आपत्यस्येति यलोपः॥ ( २०४९ ) (सू) शौनकादिभ्यश्छन्दसि । ४ । ३ । १०६ । छन्दस्यभिधेये एभ्यो णिनिः । शौनकेन प्रोक्तमधीयते-शौनकिनः ॥ (२०५०) (सू) कठचरकाल्लुक् । ४ । ३ । १०७ । आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात् । कठेन प्रोक्तमधीयते-कठाः । चरकाः ॥ ( २०५१ ) (सू) कलापिनोऽण् । ४ । ३ । १०८ । कलापिना प्रोक्तमधीयते-कालापाः ॥ नान्तस्य टिलोपे-॥ ( २०५२ ) (वा) सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानात्-टिलोपः ॥ ( २०५३ ) (सू) छगलिनो ढिनुक् । ४ । ३ । १०९ । छगलिना प्रोक्तमधीयते-छागलेयिनः ॥ ( २०५४ ) (सू) पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः । ४ । ३ । ११० । पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते-पाराशरिणो भिक्षवः । शैलालिनो नटाः ॥ ( २०५५ ) (सू) कर्मन्दकृशाश्वादिनिः । ४ । ३ । १११ । भिक्षुनटसूत्रयोरित्येव । कर्मन्देन प्रोक्तमधीयते-कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः ॥

---

**निना प्रोक्तमिति** । स्वयमन्येन वा कृतं व्याकरणमध्यापनेनार्थव्याख्यानेन वा प्रकाशितमित्यर्थः । प्रेति किम् , देवदत्तेनाध्यापितं, प्रख्यातस्यैव ग्रन्थस्याध्यापनमिति नेहानेन प्रत्ययः ॥ ( २०४५ ) **तित्तिरिव-**। अणोऽपवादः ॥ **तद्विषयतेति** । 'शौनकादिभ्यश्छन्दसि २०४९' इत्यत्रास्यानुवृत्तेस्तित्तिरिणा प्रोक्ताः श्लोका इत्यत्र न भवतीति भावः ॥ **तैत्तिरीया इति** । 'प्रोक्ताल्लुक् १८०४' इत्यध्येतृप्रत्ययस्य लुक् । एवमग्रेऽपि ॥ ( २०४६ ) **काश्यप--**। छस्यापवादः । णकार उत्तरत्र वृद्ध्यर्थः । ननु 'वृद्धिनिमित्तस्य-१२११' इति पुंवद्भावनिषेधोऽत्र फलमस्तीति चेत् । अत्राहुः-णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियामप्रवृत्तेः । प्रवृत्तावपि 'जातेश्च १२१४' इति सिद्धत्वात् । चरणत्वेन जातित्वादिति । ऋषिभ्यामिति किम्, इदानींतनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ॥ ( २०४७ ) **कलापिवैशंपायना--**। अणोऽपवादः । छं तु परत्वाद्बाधते । कलाप्यन्तेवासिनश्चत्वारः । हरिद्रुः, छगली, तुम्बुरुः, उलप इति । वैशंपायनान्तेवासिनस्तु नव-आलम्बि, कलिङ्ग, कमल, ऋचाभ, आरुणि, ताण्ड्य, श्यामायन, कठ, कलापी,-इति ॥ **हारिद्रविण इति** । एवं-तौम्बुरविणः, औलपिनः । छगलिनस्तु-ढिनुकं वक्ष्यति ॥ **आलम्बिन इति** । एवं कालिङ्गिनः, कामलिनः, आर्चाभिनः, आरुणिनः, ताण्डिनः, श्यामायनिनः । कठाल्लुकं वक्ष्यति, कलापिनश्चाणम् ॥ (२०४८) याज्ञवल्क्याश्मरथ्यशब्दौ कण्वादी, तेन ताभ्यां यञन्ताभ्यां वृद्धाच्छो न भवतीत्याशयेनाह-**अणि आपत्यस्येतीति** । 'याज्ञवल्क्यादयो ह्यचिरकालाः' इति भारतादिषु व्यवहारः, स एवानुसृतः सूत्रकृता ॥(२०५०) **कठचरकाल्लुक्** । कठशब्दस्य वैशंपायनान्तेवासित्वाण्णिनिः । चरकादण् । तयोर्लुक् । छन्दसीत्येव । काठाः चारकाः श्लोकाः ॥ ( २०५१ ) **कलापिनोऽण्** । वैशंपायनान्तेवासित्वात्प्राप्तस्य णिनेरपवादः ॥ ( २०५२ ) 'इनण्यनपत्ये १७५९' इति प्रकृतिभावे प्राप्ते आह--**नान्तस्य टिलोप इति** । 'कलापिनः' इत्युक्तेऽप्यौत्सर्गिकेऽणि सिद्धे पुनरण्ग्रहणमधिकविधानार्थं सद्बाधकबाधनार्थं भवति । तेन माथुरेण प्रोक्ता माथुरी वृत्तिः । मौदाः, पैप्पलादाः, शाकलाः, इति सिद्धम् । मुद, पिप्पलाद, शाकल्य एभ्यः 'पुराणप्रोक्तेषु-२०४८' इति णिनेरपवादोऽण् ॥ ( २०५३ ) **छगलिनो ढिनुक्** । कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादः ॥ ( २०५४ ) **पाराशर्य--**। मण्डूकप्लुत्या णिनिरिह संबध्यत इत्याह-**णिनिः स्यादिति** । तद्विषयताऽत्रेष्यते । तदर्थं छन्दोग्रहणमनुवर्त्यम् । सूत्रयोश्छन्दस्त्वं तु गौण्या वृत्त्या बोध्यम् ॥ **भिक्षुसूत्रमिति** । चतुर्लक्षणीरूपम् ॥ **पाराशरिण इति** । पाराशर्यो व्यासः । अनन्तरापत्येऽपि गोत्रत्वेनोपचारात् 'गर्गादिभ्यः-१५८३' इति यञ् 'आपत्यस्य च-१५५२' इति यलोपः। अध्येत्रणस्तु 'प्रोक्तात्-१८०४' इति लुक् । भिक्षुनटसूत्रयोः किम्, पाराशरम् । शैलालम् ॥ ( २०५५ ) **कर्मन्द--**। इहापि छन्दोऽनुवृत्त्यादि प्राग्वत् । भिक्षुनटसूत्रयोः किम्, कार्मन्दम् ।

---

१ **कलापीति** । कलापिनो वैशम्पायनशिष्यत्वात्कलापिशिष्याणां परम्परया वैशंपायनशिष्यत्वादेव सिद्धे कलापिग्रहणं ज्ञापयति-'नान्तेवास्यन्तेवासिनोऽन्तेवासिग्रहणेन गृह्यन्ते' इति ॥ २ **भिक्षुसूत्रमिति** । भिक्षुत्वसम्पादकं सूत्रं भिक्षुसूत्रम् 'वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः' । इति मनूक्तेः ॥ ३ **स्त्रियामप्रवृत्तेरिति** यदुक्तम्, तस्यायमाशयः-स्त्रीणां वेदाध्ययनज्ञानयोरिदानीन्तनैरनङ्गीकार इति । परं तु स 'काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, काशकृत्स्नीमधीते काशकृत्स्ना ब्राह्मणी । अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम्' इति भाष्यकारेण प्रवृत्त्यङ्गीकारादनुचितोऽत आह—**प्रवृत्तावपीति** । ४ **भाष्ये तु**-'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' 'याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वाद्' इति वचनमेवोपलभ्यते । तथा च याज्ञवल्क्यादीनामर्वाचीनत्वकथनं न सम्यक् ॥

( २०५६ ) (सू) तेनैकदिक् । ४ । ३ । ११२ । सुदाम्ना अद्रिणा एकदिक्-सौदामनी ॥ ( २०५७ ) (सू) तसिश्च । ४ । ३ । ११३ । स्वरादिपाठादव्ययत्वम् । पीलुमूलेन एकदिक्-पीलुमूलतः ॥ ( २०५८ ) (सू) उरसो यच्च । ४ । ३ । ११४ । चात्तसिः । अणोऽपवादः । उरसा एकदिक्-उरस्यः । उरस्तः ॥ ( २०५९ ) (सू) उपज्ञाते । ४ । ३ । ११५ । तेनेत्येव । पाणिनिना उपज्ञातं-पाणिनीयम् ॥ ( २०६० ) (सू) कृते ग्रन्थे । ४ । ३ । ११६ । वररुचिना कृतो-वाररुचो ग्रन्थः ॥ ( २०६१ ) (सू) संज्ञायाम् । ४ । ३ । ११७ । तेनेत्येव । अग्रन्थार्थमिदम् । मक्षिकाभिः कृतं-माक्षिकं मधु ॥ ( २०६२ ) (सू) कुलालादिभ्यो वुञ् । ४ । ३ । ११८ । तेन कृते संज्ञायाम् । कुलालेन कृतं कौलालकम् । वारुडकम् ॥ ( २०६३ ) (सू) क्षुद्राभ्रमरवटरपादपादञ् । ४ । ३ । ११९ । तेन कृते संज्ञायाम् । क्षुद्राभिः कृतं-क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् ॥ ( २०६४ ) (सू) तस्येदम् । ४ । ३ । १२० । उपगोरिदमौपगवम् ॥ ( २०६५ ) (वा) वहेस्तुरणिट् च ॥ संवोढुः स्वं-सांवहित्रम् ॥ ( २०६६ ) (वा) अग्नीधः शरणे रण् भं च ॥ अग्निमिन्धे अग्नीत्, तस्य स्थानमाग्नीध्रम् । तात्स्थ्यात्सोऽप्याग्नीध्रः ॥ ( २०६७ ) (वा) समिधामाधाने षेण्यण् ॥ सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ॥ ( २०६८ ) (सू) रथाद्यत् । ४ । ३ । १२१ । रथ्यं चक्रम् ॥ ( २०६९ ) (सू) पत्त्रपूर्वादञ् । ४ । ३ । १२२ । पत्त्रं वाहनम् । अश्वरथस्येदमाश्वरथम् ॥ ( २०७० ) (सू) पत्त्राध्वर्युपरिषदश्च । ४ । ३ । १२३ । अञ् ॥ ( २०७१ ) (वा) पत्त्राद्वाह्ये ॥ अश्वस्येदं वहनीयमाश्वम् । आध्वर्यवम् । पारिषदम् ॥ ( २०७२ ) (सू) हलसीराट्ठक् । ४ । ३ । १२४ । हालिकम् । सैरिकम् ॥ ( २०७३ ) (सू) द्वन्द्वाद्वुन्वैरमैथुनिकयोः । ४ । ३ । १२५ । काकोलूकिका । कुत्सकुशिकिका ॥ ( २०७४ ) (वा) वैरे देवासुरादिभ्यः प्रतिषेधः ॥

---

( २०५६ ) तेनैकदिक् । तृतीयान्तादेकदिगित्यर्थे अणादयः स्युः । एका दिक् समाना दिगित्यर्थः । पुनस्तेनेत्युक्तिश्छन्दोऽधिकारनिवृत्त्यर्था ॥ सौदामनीति । 'अन् १६३७' इति प्रकृतिभावान्न टिलोपः । 'तडित्सौदामनी विद्युत्' इत्यमरः ॥ ( २०५७ ) तसिश्च । पूर्वोक्तविषये ॥ ( २०५९ ) उपज्ञाते । विनोपदेशं ज्ञातमुपज्ञातम् ॥ ( २०६२ ) कुलालादिभ्यो—। कुलाल, वरुड, चण्डाल, निषाद, कुम्भकार, श्वपाकादयः कुलालादयः ॥ ( २०६३ ) क्षुद्राभ्रमर—। पादपशब्दाच्छे प्राप्ते, अन्येभ्योऽपि आणि अञ् विधीयते ॥ ( २०६४ ) तस्येदम्[1] । अणादयः पञ्च महोत्सर्गाः, घादयश्च षष्ठ्यन्तात्संबन्धिनि स्युः । अनन्तरादिष्वनभिधानान्न, देवदत्तस्यानन्तरमिति ॥ ( २०६५ ) वहेस्तु—। इडर्थमिदमुपसंख्यानम्, अण् तु सिद्ध एवानूद्यते । तुरिति तृन्तृचोः सामान्यग्रहणम् ॥ हत्वादीनामसिद्धत्वादलौकिके प्रक्रियावाक्ये पूर्वमिट् ततो निमित्ताभावान्न हत्वादीत्याशयेनोदाहरति—सांवहित्रमिति ॥ ( २०६६ ) अग्नीदिति । क्विप् । ऋत्विग्विशेषोऽयम् ॥ 'त्वमग्निद्तायते' इत्यत्र तु छान्दसं ह्रस्वत्वम् ॥ आग्नीध्रमिति । भत्वविधानाद्धस्य जश्त्वं नेति भावः ॥ सोऽपीति । अग्नीदपीत्यर्थः । ननु 'पिबाग्नीध्रात्तव' इत्यादावाद्युदात्तं प्रयुज्यते वार्तिके 'तुरण्' इति पाठादयमन्तोदात्त इति चेत् । अत्राहुः—'आग्नीध्रसाधारणादञ् २८२६' इति वार्तिकेन विहितो यः स्वार्थेऽञ् तत्पक्षे तत्राद्युदात्तत्वं बोध्यमिति ॥ ( २०६७ ) समिधाम्—। कर्मणि षष्ठीयम् । आधानमिति करणे ल्युट् । कर्मणि षष्ठ्यन्तादाधानकरणे षेण्यण् स्यात् ॥ सामिधेन्य इति । यया अग्निः समिध्यते सा समित्, संपदादित्वात्करणे क्विप् । तस्या आधान इति विग्रहः ॥ सामिधेनीति । षित्वान्ङीष् 'हलस्तद्धितस्य ६५७' इति यलोपः । यया ऋचा समिदाधीयते सा सामिधेनीत्यर्थः । 'प्र वो वाजा अभिद्यवः' इत्याद्याः 'आजुहोता दुवस्यत' इत्यन्ताः सामिधेन्य इति व्यवह्रियन्ते ॥ ( २०६८ ) रथाद्यत् । अणोऽपवादः ॥ 'रथाद्रथाङ्गे' इति वार्तिकमभिप्रेत्याह—रथ्यं चक्रमिति । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिरुपसंख्यायते । परमरथ्यम् । उत्तमरथ्यम् । द्वयो रथयोरङ्गं द्विरथम् । इह 'द्विगोर्लुगनपत्ये १५५१' इति यतो लुक् । ननु यत्प्रत्ययोऽत्र रथाङ्ग एव यदीष्यते, कथं तर्हि 'रथस्य वोढा रथ्यः' इति । 'तद्वहति—२२२१' इत्यनेनेति चेत् । एवं तर्हि अयमेव यद्रथाङ्ग एव वोढर्यपीष्यतां 'तद्वहति रथयुगप्रासङ्गम् २२२१' इत्यत्र रथग्रहणं त्यज्यतामिति चेत् । मैवम्, द्वौ रथौ वहति द्विरथ्य इत्यत्र 'द्विगोर्लुगनपत्ये १५५१' इति प्राग्दीव्यतीयस्य लुक्प्रसङ्गात् । 'तद्वहति—२२२१' इति यत्प्रत्ययस्य तु प्राग्दीव्यतीयत्वाभावान्न लुगिति द्विरथ्य इति सिध्यतीति । ननु 'द्विगोर्लुगनपत्ये १५५१' इत्यत्राचीत्यस्यापकर्षणात्कथमत्र यतो लुक्प्रसक्तिरिति चेत् । अत्राहुः—'तद्वहति—२२२१' इत्यत्र रथग्रहणमेव ज्ञापकम्—'एतस्य यतो हलादेरपि लुग् भवति' इति । अन्यथा तत्र रथग्रहणं व्यर्थमेव स्यात्तथा च द्वयो रथयोरङ्गमिति विग्रहे द्विरथमिति प्रयोगः शुद्ध इति ॥ ( २०६९ ) पत्त्रपूर्वादञ् । पूर्वस्य यतोऽपवादः ॥ पत्त्रमिति । पतन्त्यनेनेति विग्रहे 'दाम्नी—४११२' इत्यादिना ष्ट्रन् ॥ रथादित्येव संबध्यत इत्याह—अश्वरथस्येदमिति । अश्वयुक्तो रथोऽश्वरथस्तस्याङ्गमित्यर्थः ॥ ( २०७० ) पत्त्राध्वर्यु—। अणोऽपवादः ॥ ( २०७१ ) वार्तिकमाह—पत्त्राद्वाह्य इति । इह पत्त्रेत्यर्थग्रहणे, इतरयोस्तु स्वरूपग्रहणे व्याख्यानमेव शरणम् ॥ ( २०७३ ) द्वन्द्वाद्वुन् । अणोऽपवादः । छं तु परत्वादयं बाधते ॥ काकोलूकिकेति । काकोलूकस्य

---

१ तस्येदमिति । अनेनेदमर्थेन शेषभूतसर्वविशेषाणां सामान्यविशेषरूपेण प्रत्ययार्थत्वं बोधनीयम् । तत्र परोक्षापरोक्षत्वे न विवक्षिते तेन प्रकृत्यर्थसंबन्धिमात्रे रूपेऽर्थेऽनेन प्रत्ययविधानम् ॥ २ भं चेति । आकडारीयसंपत्त्या पदत्वबाधाय 'यचि भम्' इति प्रकरण एव 'रणि' इति पठनीयमिति बोध्यम् ॥ ३ देवासुरादिभ्य इति । 'द्वन्द्वे देवासुरादिभ्यः' इत्येवं पाठस्तु 'शिशुक्रन्द—' इति सूत्रवार्तिके एव । अत्र तु "वैरे"। इत्येव पाठः ॥

षेधः ॥ दैवासुरम् ॥ ( २०७५ ) (सू॰) गोत्रचरणाद्वुञ् । ४ । ३ । १२६ । औपगवकम् ॥ ( २०७६ ) (वा॰) चरणाद्धर्माम्नाययोरिति वक्तव्यम् ॥ काठकम् ॥ ( २०७७ ) (सू॰) सङ्घाङ्कलक्षणेष्वञ्यञिञामण् । ४ । ३ । १२७ । ( २०७८ ) (वा॰) घोषग्रहणमपि कर्तव्यम् ॥ अञ्-बैदः संघोऽङ्को घोषो वा । बैदं लक्षणम् । यञ्-गार्गः । गार्गम् । इञ्-दाक्षः । दाक्षम् । परम्परासंबन्धोऽङ्कः, साक्षात्तु लक्षणम् ॥ ( २०७९ ) (सू॰) शाकलाद्वा । ४ । ३ । १२८ । अण् वोक्तेऽर्थे । पक्षे चरणत्वाद्वुञ् । शाकलेन प्रोक्तमधीयते शाकलास्तेषां सङ्घोऽङ्को घोषो वा शाकलः । शाकलकः । लक्षणे क्लीबता[1] ॥ ( २०८० ) (सू॰) छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः । ४ । ३ । १२९ । छन्दोगानां धर्म आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् ॥ ( २०८१ ) चरणाद्धर्माम्नाययोरित्युक्तं तत्साहचर्यान्नटशब्दादपि तयोरेव ॥ ( २०८२ ) (सू॰) न दण्डमाणवान्तेवासिषु । ४ । ३ । १३० । दण्डप्रधाना माणवा दण्डमाणवास्तेषु शिष्येषु च वुञ् न स्यात् । दाक्षा दण्डमाणवाः शिष्या वा ॥ ( २०८३ ) (सू॰) रैवतिकादिभ्यश्छः । ४ । ३ । १३१ । तस्येदमित्यर्थे । वुञोऽपवादः । रैवतिकीयः । बैजवापीयः ॥ ( २०८४ ) (वा॰) कौपिञ्जलहास्तिपदादण्वाच्यः[2] ॥ कुपिञ्जलस्यापत्यम्-इहैव निपातनादण् । तदन्तात्पुनरण् । कौपिञ्जलः । गोत्रवुञोऽपवादः । हस्तिपादस्यापत्यं हास्तिपदस्तस्यायं हास्तिपदः ॥ ( २०८५ ) (वा॰) आथर्वणिकस्येकलोपश्च[3] ॥ चादण् । आथर्वणिकस्यायमाथर्वणः धर्म आम्नायो वा । चरणाद्वुञोऽपवादः ॥ समाप्ताः शैषिकाः ॥

---

अथ तद्धितेषु प्राग्दीव्यतीयाः ।

( २०८६ ) (सू॰) तस्य विकारः । ४ । ३ । १३४ । ( २०८७ ) (वा॰) अश्मनो[4] विकारे टिलोपो वक्तव्यः ॥ अश्मनो

---

वैरमित्यर्थः । वुन्नन्तं स्त्रियाम् 'वैरमैथुनिकादिवुन्' इति ह्यधिकारे अमरः ॥ **कुत्सकुशिकिकेति** । कुत्सकुशिकयोर्मैथुनिका विवाहरूपः संबन्ध इत्यर्थः । मिथुनं हि दंपती तस्य कर्म क्रियानिष्पादनं, मनोज्ञादित्वाद्वुञ्, वुन्नन्तं चेदं स्त्रियां स्वभावात् ॥ अत्र वदन्ति-कुत्साश्च कुशिकाश्च कुत्सकुशिकास्तेषां मैथुनिकेत्यपि विग्रहः । इह कुत्सश्च कुशिका चेति द्वयोरेव मैथुनिकायां वुनिति नाग्रहः कार्यः । 'यूनि लुक्' इति सूत्रे कैयटेन अत्रिभरद्वाजिकेत्यादिकं प्रसङ्गादुदाहृत्य बहुवचनान्तद्वन्द्वाद्वुञो व्याख्यातत्वादिति ॥ ( २०७७ ) **सङ्घाङ्क-** । पूर्ववद्वुञोऽपवादः ॥ ( २०७८ ) **घोषग्रहणमिति** । एवं च प्रकृतयस्तिस्रः प्रत्ययार्थविशेषणानि चत्वारीति वैषम्याद्यथासंख्यमपि न प्रवर्तते ॥ **गार्ग इति** । 'आपत्यस्य—१५५२' इति यलोपः ॥ यद्यप्यङ्कलक्षणयोः पर्यायत्वं प्रसिद्धं 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । तथापि पृथग्ग्रहणसामर्थ्यादिह विशेषपरतेत्याह—**परम्परासंबन्ध इति** । यथा गवादिनिष्ठः स्वामिना गोद्वारा संबन्धः ॥ **साक्षादिति** । यथा बिदानां विद्या । घोष आभीरस्थानम् । णित्त्वं ङीबर्थं, पुंवद्भावनिषेधार्थं च । बैदी विद्या यस्य बैदीविद्यः । बिदानामसाधारणी या विद्या तद्वानित्यर्थः ॥ ( २०८० ) **छन्दोगौक्थिक--** । सङ्घादयो निवृत्ताः, एभ्यो ञ्यः स्यात्तस्येदमित्यर्थे । चरणशब्देभ्यो वुञोऽपवादः, न त्वौत्सर्गिकस्याणः । धर्माम्नाययोरित्युक्तेर्नेह-छन्दोगं कुलमित्यादि ॥ ( २०८२ ) **न दण्ड-** । 'तस्येदम् २०६४' इत्यनुवर्तते तेषु शिष्येषु चेति प्रत्ययार्थविशेषणेष्विति शेषः ॥ **दाक्षा इति** । 'इञश्च १८७६' इत्यण् ॥ ( २०८३ ) **रैवतिकादिभ्यश्छः** । रैवतिकशब्दो 'रेवत्यादिभ्यष्ठक् १६५३' इति ठगन्तः । रैवतिक, औदमेधि, बैजवापीत्यादिरैवतिकादयोऽमी गोत्रप्रत्ययान्ताः, ततः पूर्वेण वुञि प्राप्ते छविधानार्थमिदमित्याह—**वुञोऽपवाद इति** ॥ ( २०८४ ) **कौपिञ्ज-** । 'अत' इत्यमाशङ्क्याह—**इहैव निपातनादिति** । हस्तिनः पाद इव पादो यस्य स हस्तिपादः । पादस्य लोपो न भवति 'अहस्त्यादिभ्यः' इति वचनात्तदाह—**हस्तिपादस्येति** ॥ **हास्तिपद इति** । अस्मादेव निपातनादण् पद्भावश्चेति भावः ॥ ( २०८५ ) **आथर्वणिकस्य--** । अथर्वणा प्रोक्तो वेदोऽथर्वा, अभेदोपचारात्, 'तदधीते-१७९१' 'वसन्तादिभ्यष्ठक् १८०३' 'दाण्डिनायन-१६२६' आदिसूत्रे निपातनाट्टिलोपाभावः । अन्ये त्वाहुः-अथर्वणा प्रोक्तमधीते आथर्वणिकः । इह प्रोक्तेऽण् ततः 'छन्दोब्राह्मणानि-१८०८' इति तद्विषयतयाऽथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात्प्रोक्तात्लुङ्नेति ॥ समाप्ताः शैषिकाः ॥

---

( २०८६ ) **तस्य विकारः** । षष्ठ्यन्ताद्विकारे अणादयः स्युः । घादिसंबद्धस्य तस्यग्रहणस्य निवृत्तये पुनस्तस्येत्युक्तम् । अणादयस्तु न निवर्तन्ते 'प्राग्दीव्यतः—१५३५' 'प्राग्भवनात्' इति विशिष्टावधिपरिच्छेदेनाधिकृतत्वात् । इह 'प्राणिरजतादिभ्योऽञ् २१०७', 'ओरञ् २०९२', 'अनुदात्तादेश्च २०९३', 'मयड्वैतयोः—२०९६', 'नित्यं वृद्धशरादिभ्यः २०९७', 'पिष्टाच्च २१००,' इत्यादिभिरपवादानां वक्ष्यमाणत्वादप्राणिषु आद्युदात्तम्, अवृद्धं प्रतिपदमवक्ष्यमाणप्रत्ययं चोदाहरणमिति

---

१ **क्लीबतेति** । प्रायिकं चेदम् । भाष्ये 'बैदी स्थूणा' इति प्रयोगात् ॥ २ **'कौपिञ्जल-'** इति, । ३ **'आथर्वणिकस्ये-'** इति च वार्तिके एव सूत्रपाठे प्रक्षिप्ते इति बोध्यम् ॥ ४ **अश्मन इति** । अत्र * चर्मणः कोशे * टिलोपो वाच्यः । चर्मणो विकारश्चार्मः कोश इत्यपि बोध्यम् ॥

विकारः आश्मः । भास्मनः । मार्त्तिकः ॥ (२०८८) (सू) अवयवे च प्राण्योषधिवृक्षेभ्यः । ४ । ३ । १३५ । चाद्विकारे । मयूरस्यावयवो विकारो वा-मायूरः । मौर्वं काण्डं भस्म वा । पैप्पलम् ॥ (२०८९) (सू) बिल्वादिभ्योऽण् । ४।३। । १३६ । बैल्वम् ॥ (२०९०) (सू) कोपधाच्च । ४ । ३ । १३७ । अण् । अञोऽपवादः । तर्कु-तार्कवम् । तैत्तिडीकम् ॥ ( २०९१ ) (सू) त्रपुजतुनोः षुक् । ४ । ३ । १३८ । आभ्यामण् स्याद्विकारे एतयोः षुगागमश्च । त्रापुषम् । जातुषम् ॥ ( २०९२ ) (सू) ओरञ् । ४ । ३ । १३९ । दैवदारवम् । भाद्रदारवम् ॥ (२०९३) (सू) अनुदात्तादेश्च । ४ । ।३।१४०। दाधित्थम् । कापित्थम् ॥(२०९४) (सू) पलाशादिभ्यो वा ।४।३।१४१। पालाशम् । कारीरम् ॥(२०९५) (सू) शम्याः ष्लञ् ।४।३।१४२। शामीलं भस्म । षित्वान्ङीष् । शामीली स्रुक् ॥ (२०९६) (सू) मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।४।३।१४३। प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः । अश्ममयम् । आश्मनम् । अभक्ष्येत्यादि किम् । मौद्गः सूपः । कार्पासमाच्छादनम् ॥ ( २०९७ ) (सू) नित्यं वृद्धशरादिभ्यः । ४ । ३ । १४४ । आम्रमयम् । शरमयम् ।

---

पर्यालोच्य तथैवोदाहरति—( २०८७ ) आश्म इत्यादि । अश्मन्भस्मन्शब्दौ मनिन्प्रत्ययान्तौ, 'मृदस्तिकन् २८४३' नित्स्वरेण त्रयोऽप्याद्युदात्ताः । प्राचीनस्य तस्येत्यस्य निवृत्तत्वादधिकारोक्तप्रत्यया न प्रवर्तन्त इति नेह ठक् । हालः, सैरः ॥ ( २०८८ ) चाद्विकार इति । तेन वक्ष्यमाणप्रत्ययाः प्राण्यादिभ्यस्त्रिभ्योऽर्थद्वये भवन्त्यन्येभ्यस्तु विकार एवेति फलितम् ॥ मायूर इति । 'प्राणिरजतादिभ्यः—२१०७' इत्यञ् । अनुदात्तादेरञः सिद्धत्वादुदात्ताद्यर्थं वृद्धेषु मयड्बाधनार्थं चावश्यकमिदं परत्वादनुदात्तादिष्वपि प्रवर्तते ॥ ओषधिभ्य उदाहरति—मौर्वमिति । मूर्वाशब्दः 'तृणधान्यानां च द्व्यषाम् ५६०९' इत्याद्युदात्तः । पिप्पलशब्दस्तु 'लघावन्ते–५६२४' इत्यनेनाद्युदात्तः ॥ ( २०८९ ) बिल्वादिभ्योऽण् । अञ्मयटोरपवादः । बिल्व, व्रीहि, काण्ड, मुद्ग, मसूर, गोधूम, इक्षु, कर्पासी, वेण्वादयो बिल्वादयः ॥ ( २०९१ ) त्रपुजतुनोः—। 'बिल्वादिभ्योऽण् २०८९' इत्यतोऽनुवर्तनादाह—अण् स्यादिति । 'ओरञ् २०९२' इत्यस्यायमपवादः ॥ अप्राण्यादित्वादवयवे न भवतीत्याशयेनाह—विकारे इति ॥ त्रापुषमिति । त्रपुणो विकारः । एवं जतुनो विकारो जातुषम् (२०९२)॥ ओरञ् । अनुदात्तादेरन्यदिहोदाहरणम् ॥ दैवदारवमिति । देवदारुभद्रदारुशब्दौ 'पीतद्र्वर्थानाम् ५६१९' इत्याद्युदात्तौ ॥ (२०९३) दाधित्थमिति । दधानि तिष्ठतीति 'सुपि स्थः ३८८५' इति कः । उपपदसमासः । पृषोदरादित्वात्सकारस्य तकारः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । एवं कपित्थेऽपि बोध्यम् ॥ (२०९४) पलाशादिभ्यो वा । उभयत्राविशेषयम् । पलाश–खदिर–शिंशपा–स्यन्दनानामनुदात्तादित्वान्नित्यं प्राप्ते, करीर–शिरीष–विकङ्कत–पूलाक–यवास—शब्दानामप्राप्ते विधानात् ॥ पालाशमिति । पलाशशब्दो घृतादित्वादन्तोदात्तः । खदिरशब्दः 'अजिरशिशिर–४२५२' इत्यादौ किरच्प्रत्ययान्तो निपातितः । शिंश ( शु ) पाशब्दः 'अथ द्वितीयं प्रागीषात् ५६३२' इति वर्तमाने 'पान्तानां गुर्वादीनाम् ५६३७' इति मध्योदात्तः । 'स्पदि किञ्चिच्चलने' 'अनुदात्तेतश्च हलादेः ४१५०' इति युच् ॥ कारीरमिति । 'किरतेरीरन्' । नित्स्वरेण करीरशब्दोऽयमाद्युदात्तः । 'कॄतॄभ्यामीषन् ४६६९' 'शॄपॄभ्यां किच्च ४६७०' पूर्ववच्छिरीषशब्दोऽप्याद्युदात्तः । विकङ्कतपूलाकयवासशब्दाः 'ग्रामादीनां च ५६२०' इत्याद्युदात्ताः ॥ ( २०९५ ) षित्त्वान्ङीषिति । टित्वान्ङीबिति तु माधवः[1] ॥(२०९६) मयड् वैतयोः—। भाषायां किम्, खादिरो यूप इति वृत्तिकारः ॥ ननु मयटो वैकल्पिकत्वात्सिद्धमिदमिति चेत् । अत्राहुः— वेदे बह्वचः परस्य मयटोऽर्थान्तरपरत्वमेवेति तात्पर्यग्रहणार्थमेवेदम् । 'द्व्यचश्छन्दसि ५२९१' इति सूत्रस्य 'द्व्यच एव' इति नियमार्थत्वे यद्यपीदं गतार्थम्, तथापि 'द्व्यचश्छन्दस्येव' इति विपरीतनियमशङ्कानिवृत्त्यर्थं भाषाग्रहणं कृतमिति ॥ अधिकारादेव विकारावयवयोर्लाभे एतयोरिति वचनं ये विशेषप्रत्ययाः 'प्राणिरजतादिभ्योऽञ् २१०७' इत्येवमादयस्ते तद्विषयेऽपि यथा स्युरित्येवमर्थम् । कपोतमयम्, लोहमयम् । इह विकारावयवाभ्यां सह प्रत्येकम् 'अभक्ष्याच्छादनयोः' इति संबध्यते समासनिर्देशादतो यथासंख्यं न ॥ आश्मनमिति । 'विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः २७५६' इति वचनादश्मभेदशब्दे भेदशब्दस्य लोपे अश्मन्निति नान्तमवशिष्यते, तथा कल्माषाङ्घ्रे राज्ञो भार्यायां मदयन्त्यां वसिष्ठेनोत्पादितः सुतोऽश्मको नाम, तत्र संज्ञात्वद्योतकस्य कप्रत्ययस्याभावे अश्मन्निति नाम भवति, तस्यावयवे आश्मनं विकारेऽप्याश्मनमित्येव भवति । न च 'अश्मनो विकारे–२०८७' इति टिलोपः स्यादिति वाच्यम्, प्रसिद्धतरत्वेन पाषाणवाचकस्यैव तत्र ग्रहीतुमुचितत्वात् । वस्तुतस्तु–'तस्येदम् २०६४' इति सामान्यविवक्षायां पाषाणवाचकस्याप्यश्मन्शब्दस्याश्मनमिति भविष्यति, पैष्टी सुरेतिवत् ॥ मौद्गः सूपः कार्पासमाच्छादनमिति । मुद्गशब्दः घृतादित्वादन्तोदात्तः । 'कृञः पासः ४९२९' इति पासप्रत्यये गुणे रपरे च कर्पासीशब्दो जातिलक्षणङीषन्तस्ताभ्याम् 'अनुदात्तादेश्च २०९३' इत्यञं बाधित्वा बिल्वादित्वादण् ॥ ( २०९७ ) नित्यं वृद्ध—। इह 'भाषायामभक्ष्याच्छादनयोः' इत्यनुवर्तते इति वृत्तिः ॥ नन्वेवमानन्दमयाधिकरणे शङ्कराचार्यैः 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति श्रुतौ 'आनन्दमय इति विकारे मयट्' इत्युक्तं

---

१ माधवेति । 'शम्याष्टलञ्' इति पाठे इति भावः । 'ञितश्च तत्प्रत्ययाद्' इति सूत्रभाष्यादपि टिदेवेति लभ्यत इति शब्दरत्ने । तत्र हि विकारविकारेऽपि विकारत्वमाश्रित्य तत्र सूत्रमञ्विधायकं प्रत्याख्यातम् । अन्यथा षित्त्वान्ङीषु तत्प्रत्याख्याने, आरम्भे तु अदन्तत्वान्ङीषिति फलभेदे प्रत्याख्यानासंगतिः ॥

( २०९८ ) (वा) **एकाचो नित्यम्** ॥ त्वङ्मयम् । वाङ्मयम् । कथं तर्हि आप्यमम्मयमिति । तस्येदमित्यणणन्तात्स्वार्थे ष्यञ् ॥ ( २०९९ ) (सू) **गोश्च पुरीषे** । ४ । ३ । १४५ । गोः पुरीषं–गोमयम् ॥ ( २१०० ) (सू) **पिष्टाच्च** । ४ । ३ । १४६ । मयट् स्याद्विकारे । पिष्टमयं भस्म । कथं पैष्टी सुरेति । सामान्यविवक्षायां तस्येदमित्यण् ॥ ( २१०१ ) (सू) **संज्ञायां कन्** । ४ । ३ । १४७ । पिष्टादित्येव । पिष्टस्य विकारविशेषः पिष्टकः । पूपोऽपूपः पिष्टकः स्यात् ॥ ( २१०२ ) (सू) **व्रीहेः पुरोडाशे** । ४ । ३ । १४८ । मयट् स्यात् । बिल्वाद्यणोऽपवादः । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् ॥ ( २१०३ ) (सू) **असंज्ञायां तिलयवाभ्याम्** । ४ । ३ । १४९ । तिलमयम् । यवमयम् । संज्ञायां तु तैलम् । यावकः ॥ ( २१०४ ) (सू) **तालादिभ्योऽण्** । ४ । ३ । १५२ । अञ्मयटोरपवादः । ( २१०५ ) (वा) **तालाद्धनुषि** ॥ तालं धनुः । अन्यत्तालमयम् । ऐन्द्रायुधम् ॥ ( २१०६ ) (सू) **जातरूपेभ्यः परिमाणे** । ४ । ३ । १५३ । अण् । बहुवचनात्पर्यायग्रहणम् । हाटकः तापनीयः सौवर्णो वा निष्कः । परिमाणे किम् । हाटकमयी यष्टिः ॥ ( २१०७ ) (सू) **प्राणिरजतादिभ्योऽञ्** । ४ । ३ । १५४ । शौकम् । बाकम् । राजतम् ॥ ( २१०८ ) (सू) **ञितश्च तत्प्रत्ययात्** । ४ । ३ । १५५ । ञितो विकारावयवप्रत्ययस्तदन्तादञ् स्यात्तयोरेवार्थयोः । मयटोऽपवादः । शामीलस्य–शामीलम् । दाधित्थस्य–दाधित्थम् । कापित्थम् । ञितः किम् । बैल्वमयम् ॥ ( २१०९ ) (सू) **क्रीतवत्परिमाणात्**[1] । ४ । ३ । १५६ । प्राग्वतेष्ठञित्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते । अणादीनामपवादः । निष्केण क्रीतं–नैष्किकम् । एवं निष्कस्य विकारोऽपि–नैष्किकः । शतस्य विकारः शत्यः । शतिकः ॥ ( २११० ) (सू) **उष्ट्राद्वुञ्** । ४ । ३ । १५७ । प्रत्ययोऽपवादः । औष्ट्रकः ॥ ( २१११ ) (सू) **उमोर्ण-**

---

तत्कथं संगच्छताम् ' प्राचुर्ये मयट् ' इति तु वक्तुमुचितमिति चेत् । अत्राहुः–प्राचुर्ये मयटचपि प्रकृत्यर्थविरोधिनो दुःखस्य लेशतोऽनुवृत्तिलाभात्प्रकृते विकारार्थः पर्यवस्यतीति तेषामाशयः । यद्वा–'नित्यं वृद्ध–२०९७' इत्यत्र भाषाग्रहणं नानुवर्तते अनुवृत्तावपि 'भाषायां नित्यम्, अन्यत्र कादाचित्कः' इत्याश्रित्य मयट् सुसाधः[2] । अथवा–' हेतुमनुष्येभ्यः–२०२४ ' इत्यनुवर्तमाने ' मयट् च २०२५' इति सूत्रेण आगतार्थे मयट् । विकार इति त्वार्थिकार्थकथनमेवातः शङ्करभगवत्पादोक्तिरनवद्यैवेति ॥ **शरमयमिति** । शर, दर्भ, मृत् , कुटी, तृण, सोम, बिल्वज, शरादिः ॥ **(२०९८) एकाचो नित्यमिति** । आरम्भसामर्थ्यादेव सिद्धे ' नित्यं वृद्ध–२०९७' इति नित्यग्रहणं योगविभागेनान्यत्रापि क्वचिद्विधानार्थं, तेनैतल्लभ्यत इति भावः ॥ एकाच्त्वादेव सिद्धे शरादिषु मृच्छब्दपठनं विस्पष्टार्थमित्याहुः ॥ **( २०९९ ) गोश्च पुरीषे** । पुरीषं न विकारो, नाप्यवयवः । तथापि[3]'तस्येदम् २०६४' इत्यर्थेऽयं प्रत्ययः । विकारावयवयोस्तु गोपयसोर्यत् वक्ष्यति । पुरीषे किम् । गव्यं पयः । **( २१०३ ) असञ्ज्ञायां ति–। यावक इति** । यवशब्दाद्विकारेऽण् , तदन्तात् 'यावादिभ्यः–२८३०' इति स्वार्थे कन् ॥ **(२१०४) तालादिभ्योण् । अञ्मयटोरिति** । तालश्यामाकशब्दाभ्यां वृद्धत्वान्मयट् प्राप्तः । बर्हिणां विकारो बार्हिणम् । ' प्राणिरजतादिभ्योऽञ् २१०७' ततो 'ञितश्च तत्प्रत्ययात् २१०८' इत्यञ् प्राप्तः शेषेभ्यस्त्वनुदात्तादित्वादञ् प्राप्तः । तथाहि विशिदाशिभ्यामिन्द्रशब्द उपपदे मूलविभुजादित्वात्कः । 'अन्येषामपि–५३९०' इति दीर्घः । इन्द्राविशः, इन्द्रादशः । 'चप सान्त्वने ' पचादित्वादच् । चपापीयूक्षाशब्दो 'लघावन्ते–५६२४'इति मध्योदात्तः 'फिषः–५५८३' इत्यधिकारादापः प्रागेव स्वरप्रवृत्तेः । इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः । अण्ग्रहणं बाधकबाधनार्थं यथाविहितप्रत्ययाविधौ बार्हिणशब्दाद् वृद्धलक्षणो मयट् स्यात् ' ञितश्च तत्प्रत्ययात् २१०८' इत्यञो बाधनेन वचनस्य चारितार्थ्यत्वामित्याहुः ॥ **(२१०५) तालाद्धनुषीति** । गणसूत्रमिदम् ॥ **( २१०६ ) हाटक इति** । इह वृद्धलक्षणो मयट् प्राप्तः, तपनीयादेः 'अनुदात्तादेश्च २०९३' इत्यञ् प्राप्तः **( २१०७ ) प्राणि–**। अनुदात्तादेरञः सिद्धत्वात्परिशिष्टमिहोदाहरणं तदाह—**शौकं, बाकमिति** । शुकबकशब्दौ 'प्राणिनां कुपूर्वम् ५६१२ ' इत्याद्युदात्तौ ॥ **राजतमिति** । रजत, सीस, लोह, उदुम्बर, कण्टकार–इत्यादयो रजताद्यस्तेषु अनुदात्तादीनां पुनः पाठो मयड्बाधनार्थः । अन्यथा हि परत्वान्मयट् स्यादेव ॥ **( २१०८ ) ञितश्च तत्प्रत्ययात्** । **शामीलमिति** । शामीलशब्दः ' शम्याः ष्लञ् २०९५ ' इति ष्लञन्तः । दधित्थात् ' अनुदात्तादेश्च २०९३ ' इत्यञ् । दधित्थस्य दाधित्थम् ॥ **बैल्वमयमिति** । बिल्वशब्दोऽणन्तः ॥ **( २१०९ ) क्रीतव–। नैष्किकमिति** । ' तेन क्रीतम् २३१६ ' इति ठक्[4] ॥ **शत्यः शतिक इति** । ' शताच्च ठन्यतौ–२२९५ ' ॥ **( २१११ ) उमोर्ण–**।

---

१ **परिमाणादिति** । परिच्छेदकमात्रं परिमाणशब्देन गृह्यतेऽत्र सूत्रे इति 'आर्हादगोपुच्छ–' इति सूत्रभाष्यतः प्रतीयते । तथापि ' संख्या इति च तत्र वक्तव्यम्' इत्युपसंहारेण संख्यापरिमाणयोः पार्थक्यमेव सिद्धान्तितमिति बोध्यम् । २ **सुसाध इति** । अत एव शरादिषु मृच्छब्दपाठोऽप्यर्थवान् । 'मोषु वरुण मृन्मयं गृहं राजन्नहं गमम् ' इति मन्त्रे दर्शनात्–इति मनोरमा ॥ प्राचुर्य एवायं मयट्–इति तु शेखरे ॥ ३ **तथापीति** । 'ञितश्च तत्प्रत्ययात्' इति सूत्रभाष्ये गोभुक्ताहारविकारेषु गोविकारत्वस्य ध्वननान्न प्रकरणबाध इति बोध्यम् ॥ ४ **ठगिति** । 'असमासे निष्कादिभ्यः' इत्यनेनेति भावः ॥

योर्वा । ४ । ३ । १५८ । औमम् । औमकम् । और्णम् । और्णकम् । वुञभावे यथाक्रममणञौ ॥ ( २११२ ) (सू) **एण्या ढञ्** । ४ । ३ । १५९ । ऐणेयम् । एणस्य तु ऐणम् ॥ ( २११३ ) (सू) **गोपयसोर्यत्** । ४ । ३ । १६० । गव्यम् । पयस्यम् ॥ ( २११४ ) (सू) **द्रोश्च** । ४ । ३ । १६१ । द्रुर्वृक्षस्तस्य विकारोऽवयवो वा द्रव्यम् ॥ ( २११५ ) (सू) **माने वयः** । ४ । ३ । १६२ । द्रोरित्येव । द्रुवयम् । यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ॥ ( २११६ ) (सू) **फले लुक्** । ४ । ३ । १६३ । विकारावयवप्रत्ययस्य लुक् स्यात् फले । आमलक्याः फलमामलकम् । ( २११७ ) (सू) **प्लक्षादिभ्योऽण्** । ४ । ३ । १६४ । विधानसामर्थ्यान्न लुक् । प्लाक्षम् ॥ ( २११८ ) (सू) **न्यग्रोधस्य च केवलस्य** । ७ । ३ । ५ । अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् ॥ ( २११९ ) (सू) **जम्ब्वा वा** । ४ । ३ । १६५ । जम्बूशब्दात्फलेऽण् वा स्यात् । जाम्बवम् । पक्षे ओरञ्, तस्य लुक् जम्बु ॥ ( २१२० ) (सू) **लुप् च** । ४ । ३ । १६६ । जम्ब्वाः फलप्रत्ययस्य लुप् वा स्यात् । लुपि युक्तवत् । जम्ब्वाः फलं जम्बूः ॥ ( २१२१ ) (वा) **फलपाकशुषामुपसंख्यानम्** ॥ व्रीहयः । मुद्गाः ॥ ( २१२२ ) (वा) **पुष्पमूलेषु बहुलम्** ॥ मल्लिकायाः पुष्पं—मल्लिका । जात्याः पुष्पं—जाती । विदार्या मूलं—विदारी । बहुलग्रहणान्नेह । पाटलानि पुष्पाणि[1] । साल्वानि मूलानि । बाहुलकात्क्वचिल्लुक् । अशोकम् । करवीरम् ॥ ( २१२३ ) (सू) **हरीतक्यादिभ्यश्च** । ४ । ३ । १६७ । एभ्यः फलप्रत्ययस्य लुप्स्यात् । हरीतक्यादीनां लिङ्गमेव प्रकृतिवत् । हरीतक्याः फलानि—हरीतक्यः ॥ ( २१२४ ) (सू) **कंसीयपरशव्ययोर्यञञौ लुक् च** । ४ । ३ । १६८ । कंसीयपरशव्यशब्दाभ्यां यञञौ स्तश्छयतोश्च लुक् । कंसाय हितं कंसीयम्, तस्य विकारः—कांस्यम् । परशवे हितं परशव्यम्, तस्य विकारः—पारशवः ॥ इति प्राग्दीव्यतीयाः ॥

---

**अणञाविति** । उमाशब्दः 'तृणधान्यानां च ५६०९' इत्याद्युदात्तः । ऊर्णाशब्दस्तु प्रातिपदिकस्वरेणान्तोदात्त इति भावः ॥ (२११२) **एण्या ढञ्** । प्राण्यञोऽपवादः । स्त्रीलिङ्गनिर्देशादाह—**एणस्य त्विति** ॥ (२११३) **गोपयसोः**— । यद्यपि सर्वत्र गोरजादिप्रसङ्गे यदुक्तस्तथापि 'मयड्वैतयोः–२०९६' इति पक्षे प्राप्तं मयटं बाधितुं पुनरयं यद्विधिः ॥ (२११४) **द्रोश्च** । ओरञः, 'एकाचो नित्यम् २०९८' इति मयटश्चापवादोऽयम् ॥ **द्रव्यमिति** । 'ओर्गुणः १२१९' 'वान्तो यि प्रत्यये ९४' । 'द्रव्यगुणकर्म-' इत्यादिषु प्रयुज्यमानद्रव्यशब्दस्तु गुणैर्द्रूयते आश्रीयते इति द्रुधातोः 'अचो यत् ३७८७' इति यत्प्रत्ययान्तः ॥ (२११५) **माने वयः** । यतोऽपवादः ॥ **द्रुवयमिति** । द्रोर्विकारभूतं प्रस्थादिपरिमाणमित्यर्थः ॥ (२११६) **फले लुक्** । **विकारावयवेति** । फलितस्य वृक्षस्य फलमवयवो विकारश्च तेनान्यतरस्मिन् प्रत्ययः ॥ **आमलकमिति** । मयटो लुक् 'लुक्तद्धितलुकि १९६५' इति ङीषो लुक् । न चात्र स्थानिवद्भावेन 'यस्येति च ४३१' इति लोपः शङ्क्यः, 'लुका लुप्तं न स्थानिवत्' इत्यभ्युपगमात् । अत एव पञ्चभिः पट्वीभिः क्रीतः—पञ्चपटुरित्यत्र 'अध्यर्धपूर्व–२३०५' इति ठञो लुकि कृते 'लुक्तद्धित–१९६५' इति ङीषो लुका लुप्तत्वेन स्थानिवत्त्वाभावादुकारस्य यणादेशो न भवति ॥ (२११७) **प्लक्षादिभ्योऽण्** । अञोऽपवादः । शिग्रुकर्कन्धूशब्दाभ्याम् 'ओरञ् २०९२' इति, अन्येभ्यस्त्वनुदात्तादित्वादञः प्राप्तिः । प्लक्ष, न्यग्रोध, अश्वत्थ, इङ्गुदी, शिग्रु, कर्कन्धु, बृहती । तत्र प्लक्षशब्दः 'फिषः–५५८३' इत्यन्तोदात्तः । न्यग्रोधशब्दो 'लघावन्ते–५६२४' इति मध्योदात्तः । अश्वत्थशब्दस्तु घृतादित्वादन्तोदात्तः । इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ । 'आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले' इत्यमरः ॥ (२११८) **न्यग्रोधस्य च**– । केवलस्येति किम्, न्यग्रोधमूले भवाः न्यग्रोधमूलाः शालयः । न्यक् रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे तु विध्यर्थम् ॥ (२११९) **जम्ब्वा वा** । **जम्ब्विति** । नपुंसकह्रस्वः । 'फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्' ॥ (२१२१) **फलपाकेति** । फलपाकेन शुष्यन्तीति फलपाकशुषः ॥ **व्रीहयः** । **मुद्गा इति** । बिल्वाद्यणो लुक् ॥ (२१२२) **मल्लिकेति** । अनुदात्तलक्षणस्याञो लुप् । 'मादीनां च ५६३५' इति फिट्सूत्रान्मल्लिकाशब्दे द्वितीयमुदात्तम् । जातीविदारीशब्दौ गौरादिङीषन्तौ ॥ **पाटलानीति** । बिल्वादित्वादण् । साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ॥ (२१२३) **हरीतक्यादिभ्यश्च** । इह द्राक्षाप्रभृतिभ्यो 'नित्यं वृद्ध–२०९७' इति प्राप्तस्य मयटो लुप्, अनुदात्तादिभ्योऽञः, इतरेभ्यस्त्वणः ॥ **लिङ्गमेवेति** । वचनं तु विशेष्यवदेव, 'हरीतक्यादिषु व्यक्तिः १८३२' इत्युक्तत्वादिति भावः ॥ (२१२४) **कंसीयमिति** । 'प्राक्क्रीताच्छः २२५५' इत्यधिकारे 'तस्मै हितम् २२६२' इति छः । तस्यैव छस्यापवादतया 'उगवादिभ्यो यत् २२५६' परशव्यं दारु । परशव्यशब्दस्यानुदात्तादित्वादञि सिद्धे तत्संनियोगेन यतो लुगर्थं वचनम् । न च 'यस्येति–४३१' इलोपे कृते 'हलस्तद्धितस्य ६५७' इति यलोपेन सिद्धमिष्टमिति भ्रमितव्यम्, ईतीत्यनुवृत्तेः ॥

इति प्राग्दीव्यतीयाः समाप्ताः ॥

---

[1] पुष्पाणीति । 'मूलानि' इति भाष्ये पाठः ॥

अथ ठगधिकारः ।

( २१२५ ) (सू) **प्राग्वहतेष्ठक्** । ४ । ४ । १ । तद्वहतीत्यतः प्राक् ठगधिक्रियते ॥ ( २१२६ ) (वा) **तदाहेति माशब्दादिभ्य उपसंख्यानम्** ॥ मा शब्दः कारि इति य आह स—माशब्दिकः ॥ ( २१२७ ) (सू) **स्वागतादीनां च** । ७ । ३ । ७ । ऐज् न स्यात् । स्वागतमित्याह—स्वागतिकः । स्वाध्वरिकः । स्वङ्गस्यापत्यं—स्वाङ्गिः । व्यङ्गस्यापत्यं—व्याङ्गिः । व्यडस्यापत्यं—व्याडिः ॥ व्यवहारेण चरति—व्यावहारिकः । स्वपतौ साधु—स्वापतेयम् ॥ ( २१२८ ) (वा) **आहौ प्रभूतादिभ्यः** ॥ प्रभूतमाह—प्राभूतिकः । पार्याप्तिकः ॥ ( २१२९ ) (वा) **पृच्छतौ सुस्नातादिभ्यः** ॥ सुस्नातं पृच्छति—सौस्नातिकः । सौखशायनिकः । आनुशतिकादिः ॥ ( २१३० ) (वा) **गच्छतौ परदारादिभ्यः** ॥ पारदारिकः । गौरुतल्पिकः ॥ ( २१३१ ) (सू) **तेन दीव्यति खनति जयति जितम्** । ४ । ४ । २ । अक्षैर्दीव्यति—आक्षिकः । अभ्र्या खनति—आभ्रिकः । अक्षैर्जयति—आक्षिकः । अक्षैर्जितमाक्षिकम् ॥ ( २१३२ ) (सू) **संस्कृतम्** । ४ । ४ । ३ । दध्ना संस्कृतं—दाधिकम् । मारीचिकम् ॥ ( २१३३ ) (सू) **कुलत्थकोपधादण्** । ४ । ४ । ४ । ठकोऽपवादः । कुलत्थैः संस्कृतं—कौलत्थम् । तैत्तिडीकम् ॥ ( २१३४ ) (सू) **तरति** । ४ । ४ । ५ । उडुपेन तरति—औडुपिकः ॥ ( २१३५ ) (सू) **गोपुच्छाट्ठञ्** । ४ । ४ । ६ । गौपुच्छिकः ॥ ( २१३६ ) (सू) **नौद्व्यचष्ठन्** । ४ । ४ । ७ । नाविकः । घटिकः । बाहुभ्यां तरति—बाहुका स्त्री ॥ ( २१३७ ) (सू) **चरति** । ४ । ४ । ८ । तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति—हास्तिकः । शाकटिकः । दध्ना भक्षयति—दाधिकः ॥ ( २१३८ ) (सू) **आकर्षात् ष्ठल्** । ४ । ४ । ९ । आकर्षो निकषोपलः । आकषादिति पाठान्तरम् । तेन चरति—आकर्षिकः । षित्वान्ङीष् । आकर्षिकी ॥ ( २१३९ ) (सू) **पर्पादिभ्यः ष्ठन्** । ४ । ४ । १० । पर्पेण चरति—पर्पिकः । पर्पिकी । येन पीठेन पङ्गवश्चरन्ति स पर्पः । अश्विकः । रथिकः ॥ ( २१४० ) (सू) **श्वगणाट्ठञ्च** । ४ । ४ । ११ । चात् ष्ठन् ॥ ( २१४१ ) (सू) **श्वादेरिञि** । ७ । ३ । ८ । ऐच् न । श्वभस्त्रस्यापत्यं—श्वाभस्त्रिः । श्वादंष्ट्रिः । ( २१४२ ) तदादिविधौ चेदमेव ज्ञापकम् ॥ ( २१४३ ) (वा) **इकारादाविति वाच्यम्** ॥ श्वगणेन चरति—श्वागणिकः । श्वागणिकी । श्वगणिकः । श्वगणिकी ॥ ( २१४४ ) (सू)

---

( २१२६ ) **तदाहेतीति** । वाक्यादयं प्रत्ययविधिः, शब्दो मा कारीति यो निषेधति स माशब्दिक इत्युच्यते । तथा नित्यः शब्द इति य आह स नैत्यशब्दिकः । कार्यशब्दिकः । इह वाक्याद् द्वितीया न संभवत्यप्रातिपदिकत्वात् । तेन तच्छब्देन कर्ममात्रं निर्दिश्यते । तच्च वाक्यार्थरूपमित्याहुः ॥ ( २१२७ ) **स्वागतादीनां च** । **ऐज् न स्यादिति** । 'न य्वाभ्याम्—१५७४' इति प्राप्त ऐजागमोऽनेन निषिध्यते । 'न कर्म—५००८' इत्यतो नञनुवर्तनादिति भावः ॥ **स्वापतेयमिति** । 'पथ्यतिथिवसतिस्वपतेर्ढञ् २२५०' स्वशब्दस्य द्वारादित्वादैजागमस्य प्राप्तिः । द्वारादिफलं तु स्वस्येदं सौवमिति ज्ञेयम् ॥ ( २१२८ ) **आहाविति** । उपसंख्यानमित्यनुषज्यते । आहेति पदे एकदेशस्य प्रकृतिभागस्यागन्तुकेनेकारेण आहावित्यनुकरणम् ॥ **प्राभूतिक इति** । क्रियाविशेषणाद्धक्तरि प्रत्ययः ॥ ( २१३१ ) **तेन दीव्यति—** । इह कालपुरुषसंख्या न विवक्षिताः । तेनाक्षैरदेवीत् देविष्यति वा आक्षिक इति भवति । एवमक्षैर्देविष्यसि देविष्यामि वा आक्षिकः, दीव्यन्ति दीव्यथ दीव्यामो वा आक्षिकाः । कारकं तु विवक्षितमेव 'जयति, जितम्' इति कर्तृकर्मणोः पृथगुपादानात् । तेनाक्षैर्द्यूतः, अक्षैः खातः, इति कर्माद्यर्थे आक्षिक इति न भवति ॥ **अभ्र्येति** । 'अभ्रिः स्त्री काष्ठकुद्दालः' इत्यमरः ॥ ( २१३२ ) **संस्कृतम्** । योगविभाग उत्तरार्थः ॥ ( २१३६ ) **नौद्व्य—** । **बाहुकेति** । सूत्रे षकारः सांहितिको, न त्वनुबन्ध इति न ङीष् । तथा च 'आकर्षात् पर्पादेः—२२१९' इत्यादिश्लोकवार्तिकं षित्त्वविवेचनाय प्रकरणान्ते पठिष्यति ॥ ( २१३७ ) **आकर्षा—** । **निकषोपल इति** । सुवर्णपरीक्षार्थः ॥ **पाठान्तरमिति** । एतच्च भ्वादौ 'कषखष—' इत्यादिदण्डके 'आकषात्ष्ठल्' इति माधवेनोपन्यस्तम् । किन्तु 'आकर्षात्पर्पादेः—२२१९' इति वार्तिकस्याननुगुणम् । तत्र हि नीरेफपाठे वृत्तासंगतिप्रसङ्गात् ॥ ( २१३९ ) **पर्प इति** । 'पर्प गतौ' । 'हलश्च ५११६' इति करणे घञ् । इहान्तर्गणसूत्रं 'पादः पच्च' इति । पादाभ्यां चरति पादिकः ॥ यत्तु वार्तिकं 'पद्भाव इके चरतावुपसंख्यानम् १४२३' इति सोऽस्यैव प्रपञ्चः । पर्प, अश्व, अश्वत्थ, रथ, जाल, न्याय, व्याल, 'पादः पच्च' ॥ ( २१४० ) **श्वगणाट्ठञ्च** । ठकोऽपवादः ॥ ( २१४२ ) **इदमेव ज्ञापकमिति** । द्वारादिगणे श्वन्शब्दः पठ्यते, न तु श्वभस्त्रश्वदंष्ट्रेत्यादिः । तथा च—'श्वादेरिञि २१४१' इति निषेधसूत्रमेव व्यर्थं सद् द्वारादिषु तदादिविधिं ज्ञापयतीत्यर्थः । फलं तु द्वारपालस्यायं दौवारपाल इत्यादावैजागमस्य प्रवृत्तिः ॥ ( २१४३ ) **इकारादाविति** । सूत्रे 'इञि' इत्यपनीय इकारादाविति पठनीयमित्यर्थः । अन्ये तु—इञीति स्थाने इतीति पठनीयम् । तथा चाङ्गाक्षिप्तप्रत्ययस्य विशेष्यत्वाद् 'यस्मिन्विधिस्तदादौ—'

---

१ **तदाहेतीति** । 'आहौ प्रभूतादिभ्यः' इति वार्तिकारम्भसामर्थ्याद् 'मा शब्दः' इति समुदायादेवायं प्रत्ययः । तथा च समुदायस्य द्वितीयान्तत्वासंभवात् कर्ममात्रमवसेयम् ॥ २ **स्वपताविति** । अत्र स्वपतिशब्दपाठो व्यर्थः । 'स्वशब्दादेवेत् स्वाध्यायस्वग्रामयोरेव' इति नियमेन स्वाराज्यादिवदैचोऽप्राप्तेः ॥ ३ **इञीति** । परे इति शेषः । तेन 'श्वाभस्त्रेरिदं श्वाभस्त्रम्' इत्यत्र प्रत्ययलक्षणेनेञ्परत्वमाश्रित्यैचूप्रतिषेधः ॥

पदान्तस्यान्यतरस्याम् । ७ । ३ । ९ । श्वादेरङ्गस्य पदशब्दान्तस्यैज्वा । श्वापदस्येदं-श्वापदम् । शौवापदम् ॥
( २१४५ ) सू वेतनादिभ्यो जीवति । ४ । ४ । १२ । वेतनेन जीवति-वैतनिकः । धानुष्कः ॥ ( २१४६ ) सू
वस्नक्रयविक्रयाट्ठन् । ४ । ४ । १३ । वस्नेन मूल्येन जीवति-वस्निकः । ( २१४७ ) क्रयविक्रयग्रहणं संघातविगृ-
हीतार्थम् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ॥ ( २१४८ ) सू आयुधाच्छ च । ४ । ४ । १४ । चाट्ठन् ।
आयुधेन जीवति-आयुधीयः । आयुधिकः॥ (२१४९) सू हरत्युत्सङ्गादिभ्यः ।४।४।१५। उत्सङ्गेन हरत्यौत्साङ्गिकः॥
(२१५०) सू भस्त्रादिभ्यः ष्ठन् ।४।४।१६ । भस्त्रया हरति-भस्त्रिकः । षित्वान्ङीष् । भस्त्रिकी ॥ ( २१५१ ) सू
विभाषा विवधात् । ४। ४। १७ । विवधेन हरति-विवधिकः । पक्षे ठक् । वैवधिकः । एकदेशविकृतस्यानन्यत्वाद्वी-
वधादपि ष्ठन् । वीवधिकः । वीवधिकी । विवधवीवधशब्दौ उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते ॥ (२१५२) सू
अण् कुटिलिकायाः ।४।४। १८ । कुटिलिका व्याधानां गतिविशेषः, कर्मारोपकरभूतं लोहं च । कुटिलिकया हरति
मृगानङ्गारान्वा कौटिलिको व्याधः कर्मारश्च ॥ (२१५३) सू निर्वृत्तेऽक्षद्यूतादिभ्यः ।४।४। १९ । अक्षद्यूतेन निर्वृत्त-
माक्षद्यूतिकं वैरम् ॥ (२१५४) सू त्रेर्मम्नित्यम् । ४।४ । २० । क्त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप्स्यान्नि-
त्यम् । कृत्या निर्वृत्तं कृत्रिमम् । पक्त्रिमम् ॥ ( २१५५ ) सू भावप्रत्ययान्तादिमप् वक्तव्यः ॥ पाकेन निर्वृत्तं-
पाकिमम् । त्यागिमम् ॥ ( २१५६ ) सू अपमित्ययाचिताभ्यां कक्कनौ । ४ । ४ । २१ । अपमित्येति ल्यब-
न्तम् । अपमित्य निर्वृत्तम्-आपमित्यकम् । याचितेन निर्वृत्तं-याचितकम् ॥ ( २१५७ ) सू संसृष्टे । ४ । ४ । २२ ।
दध्ना संसृष्टं-दाधिकम् ॥ ( २१५८ ) सू चूर्णादिनिः । ४ । ४ । २३ । चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः ॥
( २१५९ ) सू लवणाल्लुक् । ४ । ४ । २४ । लवणेन संसृष्टो-लवणः सूपः । लवणं शाकम् ॥ ( २१६० )
सू मुद्गादण् । ४ । ४ । २५ । मौद्ग ओदनः ॥ ( २१६१ ) सू व्यञ्जनैरुपसिक्ते । ४ । ४ । २६ । ठक् । दध्ना
उपसिक्तं-दाधिकम् ॥ ( २१६२ ) सू ओजःसहोऽम्भसा वर्तते । ४।४।२७। ओजसा वर्तते-औजसिकः शूरः ।
साहसिकश्चौरः । आम्भसिको मत्स्यः ॥ ( २१६३ ) सू तत्प्रत्यनुपूर्वमीपलोमकूलम् ।४।४।२८। द्वितीयान्ताद-

---

इत्यनेन इकारादिर्लभ्यते इत्याहुः ॥ श्वगणिकीति । ष्ठनः षित्त्वान्ङीष् ॥ (२१४४) श्वापदस्येति । 'अन्येषामपि दृश्यते
५३९०' इति दीर्घः ॥ ( २१४५ ) धानुष्क इति । वेतनादिगणे धनुर्दण्डेति पठ्यते, तच्च संघातविगृहीतार्थम् । तथा च-
धानुर्दण्डिकः, दाण्डिक इत्यप्युदाहार्यम् ॥ ( २१४८ ) आयुधाच्छ च । आयुध्यन्ते अनेनेति आयुधं 'घञर्थे कविधानम्
५०२८' इति कः ॥ ( २१४९ ) हरत्युत्सङ्गादिभ्यः । एभ्यस्तृतीयान्तेभ्यष्ठक् स्यादुपादत्ते नयति वेत्यर्थे । उत्सङ्ग, उडुप,
उत्थित, पिटक, पिटाक ॥ ( २१५० ) भस्त्रादिभ्यः ष्ठन् । भस्त्रा चर्मविकारः । शीर्षभारशब्दोऽत्र पठ्यते निपातनाच्छीर्ष-
भावः सप्तमीसमासश्च, 'तत्पुरुषे कृति-१३९४' इति वा अलुक् । पक्षे शीर्षभारः ॥ ( २१५१ ) एकदेशविकृतस्येति ।
'वीवधाच्चेति वक्तव्यम्' इति वार्तिकं न्यायसिद्धार्थकथनपरमिति भावः ॥ वृत्तिकृत्तु सूत्रे विवधशब्दं प्रक्षिप्य 'विभाषा विवध-
वीवधात्' इति पपाठ ॥ ( २१५४ ) त्रेर्मम्नित्यम् । नित्यग्रहणं स्वातन्त्र्येण प्रयोगं वारयितुम् । अत एव लौकिके विग्रह-
वाक्ये क्तिन्नादीनां प्रयोगो, न तु क्त्रेः, तदाह—कृत्या निर्वृत्तमिति । एवमग्रेऽपि पाकेन निर्वृत्तमिति विग्रहो बोध्यः । संख्या-
वाची त्रिशब्दो नेह गृह्यते, प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणात् 'निजां त्रयाणाम्-२३२०' इति लिङ्गाच्च । ननु नित्यग्रहणेन
निर्वृत्तार्थविवक्षायां मपं विना त्रिप्रत्ययान्तस्य प्रयोगनिवारणेऽपि तदविवक्षायां तस्य स्वातन्त्र्येण प्रयोगो दुर्वार इति चेत् । न,
नित्यमिति योगं विभज्य तत्सामर्थ्यादर्थविशेषानादरेणैव स्वातन्त्र्यवारणात् ॥ ( २१५५ ) भाव-। इमबिति । एवं च मप्
न कर्तव्यः । तथाहि-'भावप्रत्ययान्तादिमप्-२१५५' । ततः 'त्रेः' पूर्वेण सिद्धे नियमार्थमिदं-त्रिप्रत्ययान्त इमब्विषय
एवेति । तेन त्रिप्रत्ययान्तप्रयोगो निवर्तितः । ततो 'नित्यम्' अनेन निर्वृत्तार्थाविवक्षायामपि त्र्यन्तस्य स्वातन्त्र्यं वार्यते ।
एवं च-संख्यावाचित्रिशब्दस्य ग्रहणशङ्कैव नास्ति, भावप्रत्ययान्तादित्यनुवृत्तेः । स्वरेऽपि विशेषो नास्ति, उदात्तनिवृत्तिस्वरेण
इमप इकारस्योदात्तत्वात् ॥ ( २१५६ ) अपमित्येति । 'उदीचां माङः-५१२८' इति क्त्वाप्रत्यये अपेत्यनेन
सह गतिसमासः, क्त्वो ल्यप् । 'मयतेरिदन्यतरस्याम् ५१३९' इति इत्त्वम् 'ह्रस्वस्य-२८०६' इति तुक् । ल्यब-
न्तादस्मात्तृतीयान्तात्प्रत्ययो न भवति, किन्तु वचनात्प्रथमान्तादेवेति बोध्यम् ॥ ( २१६१ ) व्यञ्जनैरुप—। व्यज्यते अनेन
ओदनादिरस इति व्यञ्जनं तद्वाचिभ्यः उपसिक्त इत्यर्थे ठक् स्यात् ॥ ( २१६३ ) तत्प्रत्यनु—। वृतेरकर्मकत्वात्कथं तस्य

---

१ चूर्णादिनिरिति । मत्वर्थीयमिनिमाश्रित्य प्रत्याख्यातमिदं सूत्रं भाष्ये ॥ २ लवणाल्लुगिति । इदमपि सूत्रं भाष्ये
प्रत्याख्यातमेव शुक्लः पट इत्यादिवद् गुणगुणिनोरभेदोपचारादसंसृष्टेऽपि 'लवणं क्षीरं लवणं पानीयम्' इति व्यवहारात् सर्वेष्ट-
सिद्धेः ॥ ३ उपसिक्तमिति । मृदूकरणाय सिक्तमित्यर्थः ॥ ४ न्यायेति । मनुष्यग्रहणेन कस्यचित्षडङ्गुलेरपि ग्रह-
णमूलकन्यायेत्यर्थः ॥ परे तु-एवं न्यायसिद्धार्थकल्पने 'सुदिन-' इतिवार्तिकेन सुदीनशब्दादपि प्रत्ययापत्तिः । तस्मादपूर्वमेव
वार्तिकमिति वदन्ति ॥ ५ स्वातन्त्र्येति । तथा च भाष्यम्-त्र्यन्तमिमब्विषयमेव यथा स्यात् केवलस्य प्रयोगो मा भूत् इति ॥

स्माद्वर्तत इत्यस्मिन्नर्थे ठक् स्यात्। क्रियाविशेषणत्वाद् द्वितीया। प्रतीपं वर्तते—प्रातीपिकः। आन्वीपिकः। प्रातिलोमिकः। आनुलोमिकः। प्रातिकूलिकः। आनुकूलिकः॥ (२१६४) सू० **परिमुखं च**।४।४।२९। परिमुखं वर्तते—पारिमुखिकः। चात्पारिपार्श्विकः॥ (२१६५) सू० **प्रयच्छति गर्ह्यम्** ।४।४।३०। द्विगुणार्थं द्विगुणं तत्प्रयच्छति—द्वैगुणिकः। त्रैगुणिकः॥ (२१६६) वा० **वृद्धेर्वृधुषिभावो वक्तव्यः**॥ वार्धुषिकः॥ (२१६७) सू० **कुसीददशैकादशात् ष्ठन्ष्ठचौ** ।४।४।३१। गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छतीत्यर्थे। कुसीदं वृद्धिः, तदर्थं द्रव्यं कुसीदं तत्प्रयच्छति कुसीदिकः। कुसीदिकी। एकादशार्थत्वादेकादश ते च ते वस्तुतो दश चेति विग्रहेऽकारः समासान्त इहैव सूत्रे निपात्यते। दशैकादशिकः। दशैकादशिकी। दशैकादशान्प्रयच्छतीत्युत्तमर्ण एवेहापि तद्धितार्थः॥ (२१६८) सू० **उञ्छति** ।४।४।३२। बदराण्युञ्छति बादरिकः॥ (२१६९) सू० **रक्षति** ।४।४।३३। समाजं रक्षति—सामाजिकः॥ (२१७०) सू० **शब्ददर्दुरं करोति** ।४।४।३४। शब्दं करोति—शाब्दिकः। दार्दुरिकः॥ (२१७१) सू० **पक्षिमत्स्यमृगान्हन्ति** ।४।४।३५। (२१७२) स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम्। (२१७३) मत्स्यपर्यायेषु मीनस्यैव। पक्षिणो हन्ति—पाक्षिकः। शाकुनिकः। मायूरिकः। मात्स्यिकः। मैनिकः। शाकुलिकः। मार्गिकः। हारिणिकः। सारङ्गिकः॥ (२१७४) सू० **परिपन्थं च तिष्ठति** ।४।४।३६। अस्माद् द्वितीयान्तात्तिष्ठति हन्ति चेत्यर्थे ठक् स्यात्। पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति—पारिपन्थिकश्चौरः। परिपन्थं हन्ति—पारिपन्थिकः॥ (२१७५) सू० **माथोत्तरपदपदव्यनुपदं धावति** ।४।४।३७। दण्डाकारो माथः पन्थाः दण्डमाथः। दण्डमाथं धावति—दाण्डमाथिकः। पादविकः। आनुपदिकः॥ (२१७६) सू० **आक्रन्दाट्ठञ्च** ।४।४।३८। अस्माट्ठञ् स्याच्चाट्ठक् धावतीत्यर्थे। आक्रन्दं दुःखिनां रोदनस्थानं धावति—आक्रान्दिकः॥ (२१७७) सू० **पदोत्तरपदं गृह्णाति** ।४।४।३९। पूर्वपदं गृह्णाति पौर्वपदिकः। औत्तरपदिकः॥ (२१७८) सू० **प्रतिकण्ठार्थललामं च** ।४।४।४०। एभ्यो गृह्णात्यर्थे ठक्

---

द्वितीयान्तेन प्रतीपमित्यादिना संबन्ध इत्याशङ्कायामाह—**क्रियाविशेषणत्वादिति**[1] ॥ **प्रतीपमिति**। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः। 'ऋक्पूः—१३५०' इत्यकारः समासान्तः। 'द्व्यन्तरुपसर्गेभ्यः—१३५२' इति ईत्त्वम्। व्युत्पत्तिमात्रमिदम्। प्रतिकूलानुकूलपर्याया हीमे रूढिशब्दाः॥ **आन्वीपिक इति**। अन्वीपमित्यत्र 'ऊदनोर्देशे १३५४' इत्यूत्त्वं तु न भवत्यदेशत्वात्॥ (२१६४) **परिमुखमिति**। 'अपपरी वर्जने ८७७' इति परेः कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः ८७९' इति पञ्चमी, 'अपपरिबहिरञ्चवः पञ्चम्या ९६९' इत्यव्ययीभावः। ततष्ठक्। स्वामिनो मुखं वर्जयित्वा यः सेवको वर्तते स पारिमुखिकः। यदा तु सर्वतोभावे परिशब्दः प्रादिसमासश्च, तदा यतो यतः स्वामिनो मुखं ततस्ततो यो वर्तते स एवमुच्यते। एवं पारिपार्श्विकोऽप्यर्थद्वये बोध्यः॥ (२१६५) **प्रयच्छति—**। द्वितीयान्तात्प्रयच्छत्यर्थे ठक् स्यात् यत्प्रयच्छति गर्ह्यं चेत्तत्॥ **द्विगुणार्थं द्विगुणमिति**। तादर्थ्यात्ताच्छब्द्यमिति भावः। बहुवृद्ध्युद्देश्यकदानकर्मतयाऽस्य द्रव्यस्य गर्ह्यत्वम्॥ (२१६६) **वार्धुषिक इति**। वृद्ध्यर्था वृद्धिः, तां प्रयच्छतीति विग्रहः॥ अथ कथं 'वृद्ध्याजीवश्च वार्धुषिः' इत्यमरः। ठक्संनियोगेनैव वृधुषिभावस्वीकारात्। अत्राहुः—निरङ्कुशाः कवय इति। गर्ह्यमिति किम्, द्विगुणं त्रिगुणं वा वृद्धिं प्रयच्छत्यधमर्ण इत्यर्थे द्वैगुणिक इत्यादि मा भूत्॥ (२१६७) **कुसीद—**। **निपात्यत इति**[2]। अत एव व्याख्यातृप्रयोगोऽप्युपपद्यत इत्याशयेनोदाहरति—**दशैकादशानिति**। 'संख्याया अल्पीयस्याः १२८५' इति पूर्वनिपातः॥ **उत्तमर्ण एवेति**। दश दत्त्वा एकादश गृह्णातीति तस्यैव गर्ह्यत्वादिति भावः॥ (२१६८) **उञ्छति**। भूमौ पतितस्यैकैकस्योपादानमुञ्छः॥ (२१६९) **रक्षति**। **सामाजिक इति**। समजन्ति अस्मिन्निति समाजः समूहः॥ (२१७०) **शब्ददर्दुरं—**। **शब्दं करोतीति**। प्रकृतिप्रत्ययविभागेन व्युत्पादयतीत्यर्थः। अभिधानस्वाभाव्याद् व्युत्पादन एवायं प्रत्ययः। नेह, शब्दं करोतीति बर्बरः खरो वा॥ **दार्दुरिक इति**। कुलालः। वाद्यभाण्डवाचीह दर्दुरशब्दः॥ (२१७१) **पक्षिम—**। **मात्स्यिक इति**। 'मत्स्यस्य ङ्याम् ६९६' इति परिगणनात् 'सूर्यतिष्या—६९५' इति यलोपाभावः॥ (२१७२) **हारिणिक इति**। नन्विदं पर्यायस्योदाहरणं न भवति, हरिणस्य मृगविशेषत्वात्तथा चात्र पर्यायस्योदाहरणं किमिति न प्रदर्शितमिति चेत्। अत्राहुः—आरण्यकचतुष्पात्सु हरिणे च मृगशब्दो वर्तते। यदा हरिणवाची मृगशब्दः, तदा मृगपर्यायस्योदाहरणं भवत्येवेति॥ (२१७४) **परिपन्थं च—**। परिमुखवदयमव्ययीभावस्तत्पुरुषो वा। क्रियाविशेषणत्वात्तिष्ठतेरकर्मकत्वेऽपि परिपन्थस्य कर्मत्वमस्त्येवेत्याह—**द्वितीयान्तादिति** ॥ चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोतीत्याह—**तिष्ठति हन्ति चेति**॥ (२१७५) **माथ इति**। मथ्यते गन्तृभिरिति माथः 'मथे विलोडने' कर्मणि घञ्॥ (२१७७) **पदोत्तरपदम्—**। पदशब्द उत्तरपदं यस्य तत्पदोत्तरपदम्। पदान्तामिति तु नोक्तम्, बहुच्पूर्वान्मा भूदिति॥ (२१७८) प्रति-

---

१ **क्रियाविशेषणत्वादिति**। फलव्यापारयोरुभयोरपि धात्वर्थत्वेन क्रियात्वात् अभेदसंबन्धेन फलाश्रयत्वेन कर्मसंज्ञके फले विशेषणत्वादित्यर्थः॥ अयं भावः—फलाश्रयत्वेन फलस्य कर्मसंज्ञायामपि तस्याप्रातिपदिकत्वाद् द्वितीयाया असंभवेऽपि तद्विशेषणप्रातिपदिकाद् द्वितीया भवत्येवेति भावः॥ २ **निपात्यत इति**। 'संख्यायास्तत्पुरुषस्य' इति तु अव्ययादावेवेति भावः—इति शेखरकृत्॥

स्यात् । प्रतिकण्ठं गृह्णाति-प्रातिकण्ठिकः । आर्थिकः । लालामिकः ॥ ( २१७९ ) धर्मं चरति । ४ । ४ । ४१ । धार्मिकः ॥ ( २१८० ) अधर्माच्चेति वक्तव्यम् ॥ आधर्मिकः ॥ ( २१८१ ) प्रतिपथमेति ठंश्च । ४ । ४ । ४२ । प्रतिपथमेति-प्रातिपथिकः ॥ ( २१८२ ) समवायान्समवैति । ४ । ४ । ४३ । सामवायिकः । सामूहिकः ॥ ( २१८३ ) परिषदो ण्यः । ४ । ४ । ४४ । परिषदं समवैति-पारिषद्यः ॥ ( २१८४ ) सेनाया वा । ४ । ४ । ४५ । ण्यः स्यात्पक्षे ठक् । सैन्याः । सैनिकाः ॥ ( २१८५ ) संज्ञायां ललाटकुक्कुट्यौ पश्यति । ४ । ४ । ४६ । ललाटं पश्यति लालाटिकः सेवकः । कुक्कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते । कौक्कुटिको भिक्षुः ॥ ( २१८६ ) तस्य धर्म्यम् । ४ । ४ । ४७ । आपणस्य धर्म्यमापणिकम् ॥ ( २१८७ ) अण् महिष्यादिभ्यः । ४ । ४ । ४८ । महिष्या धर्म्यं-माहिषम् । याजमानम् ॥ ( २१८८ ) ऋतोऽञ् । ४ । ४ । ४९ । यातुर्धर्म्यं-यात्रम् ॥ ( २१८९ ) नराच्चेति वक्तव्यम् ॥ नरस्य धर्म्या-नारी ॥ ( २१९० ) विशसितुरिड्लोपश्चाञ् वक्तव्यः ॥ विशसितुर्धर्म्यं-वैशसम् ॥ ( २१९१ ) विभाजयितुर्णिलोपश्चाञ् वाच्यः ॥ विभाजयितुर्धर्म्यं-वैभाजित्रम् ॥ ( २१९२ ) अवक्रयः । ४ । ४ । ५० । षष्ठ्यन्तात् ठक् स्यादवक्रयेऽर्थे । आपणस्यावक्रयः-आपणिकः । राजग्राह्यं द्रव्यमवक्रयः ॥ ( २१९३ ) तदस्य पण्यम् । ४ । ४ । ५१ । अपूपाः पण्यमस्य-आपूपिकः ॥ ( २१९४ ) लवणाट्ठञ् । ४ । ४ । ५२ । लावणिकः ॥ ( २१९५ ) किसरादिभ्यः ष्ठन् । ४ । ४ । ५३ । किसरं पण्यमस्य-किसरिकः । षित्त्वान्ङीष् । किसरिकी । किसर, उशीर, नलद-इत्यादि । किसरादयः सर्वे सुगन्धिद्रव्यविशेषवाचिनः ॥ ( २१९६ ) शलालुनोऽन्यतरस्याम् । ४ । ४ । ५४ । ष्ठन्स्यात् पक्षे ठक् । शलालुकः । शलालुकी । शालालुकः । शालालुकी । शलालुः सुगन्धिद्रव्यविशेषः ॥ ( २१९७ ) शिल्पम् । ४ । ४ । ५५ । मृदङ्गवादनं शिल्पमस्य-मार्दङ्गिकः ॥ ( २१९८ ) मड्डुकझर्झरादणन्यतरस्याम् । ४ । ४ । ५६ । मड्डुकवादनं शिल्पमस्य-माड्डुकः माड्डुकिकः । झार्झरः, झार्झरिकः ॥ ( २१९९ ) प्रहरणम् । ४ । ४ । ५७ । तदस्येत्येव । असिः प्रहरणमस्य-आसिकः । धानुष्कः ॥ ( २२०० ) परश्वधाट्ठञ्च । ४ । ४ । ५८ । पारश्वधिकः ( २२०१ ) शक्तियष्ट्योरीकक् । ४ । ४ । ५९ । शाक्तीकः । याष्टीकः ॥ ( २२०२ ) अस्ति नास्ति दिष्टं मतिः । ४ । ४ । ६० । तदस्येत्येव । अस्ति परलोक इत्येवं मतिर्यस्य स-आस्तिकः । नास्तीति मतिर्यस्य स—

---

कण्ठा—। प्रतिकण्ठमिति । कण्ठं कण्ठं प्रतीति यथार्थेऽव्ययीभावः ' लक्षणेनाभिप्रती आभिमुख्ये ९७१' इत्यनेन वा । यत्तु प्रतिगतः कण्ठः प्रतिकण्ठ इति प्रादिसमासः, तस्येह न ग्रहणं व्याख्यानादित्याहुः ॥ ( २१७९ ) धर्मं चरति । चरतिरिहासेवायां, न त्वनुष्ठानमात्रे । तेन दैववशाद्धर्मे प्रवृत्तो दुर्वृत्तो धार्मिक इति नोच्यते । आसेवा हि स्वारसिकी प्रवृत्तिः । एवं दैववशादधर्मे प्रवृत्तः सद्वृत्त अधार्मिक इति, आधर्मिक इति वा नोच्यते ॥ ( २१८१ ) प्रतिपथमिति । वीप्सायामाभिमुख्ये वा अव्ययीभावः । ' ऋक्पूः-१२५० ' इति समासान्तः ॥ ( २१८२ ) समवायान्—। समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक् स्यात्समवैतीत्यर्थे ॥ इह समवपूर्वस्येणोऽर्थः प्रविश्यैकदेशीभवनम् । तत्र गुणभूतप्रवेशापेक्षया समवायानिति द्वितीयानिर्देशः, विशेष्यापेक्षया तु लोके सप्तमी प्रायेण प्रयुज्यते ' कुरुक्षेत्रे समवेताः ' इति यथा । 'एत्येधति-१०८' इति वृद्धिरिह न भवति, एजादित्वाभावात् ॥ ( २१८४ ) सेनाया वा । सैन्याः । सैनिका इति । द्वितीयान्ताण्ण्यठकौ । यत्तु ' सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ' इति निघण्टूक्तं तत्फलितार्थकथनपरं बोध्यम् ॥ ( २१८५ ) संज्ञायाम्—। ललाटकुक्कुटीशब्दाभ्यां द्वितीया । ताभ्यां पश्यतीत्यर्थे ठक् स्यात्सम्यग्ज्ञानं संज्ञा प्रसिद्धिस्तस्याः प्रसिद्धविषयभूतेऽर्थे इत्यर्थः ॥ लालाटिक इति । दूरे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषूपतिष्ठत इत्यर्थः । 'लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ' ॥ कौक्कुटिको भिक्षुरिति । संन्यासी हि पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छतीति भावः ॥ ( २१८६ ) तस्य ध—। धर्म्यमिति । धर्मादनपेतं धर्म्यम् । ' धर्मपथ्यर्थन्यायादनपेते २२३८ ' इति यत् ॥ ( २१९२ ) अवक्रयः । अवक्रीयते अनेनेति करणे ' एरच्-५०२२ ' ॥ ( २१९३ ) तदस्य प—। पण्यमिति । पणितव्येऽर्थे ' अवद्यपण्य-३७९७' इति यदन्तो निपातितः ॥ ( २१९६ ) शलालुनोऽ—। शलालुक इति । ' इसुसुक्तान्तात्कः १७२४ ' । ठक्पक्षे त्वादिवृद्धिः । शालालुकः ॥ ( २१९७ ) शिल्पम् । मार्दङ्गिक इति । मृदङ्गशब्देन मृदङ्गवादनं लक्ष्यते । मुख्यार्थे तु प्रयोगो न भवति, अनभिधानादिति भावः । शिल्पं कौशलम् । तच्च मृदङ्गवादनविषयकम्, तेन मृदङ्गवादनविषयके मृदङ्गशब्दस्य लक्षणेति निष्कर्षः ॥ ( २१९९ ) प्रहरणम् । प्रह्रियते अनेनेति प्रहरणमायुधम् ॥ धानुष्क इति । ' इसुसुक्तान्तात्कः-१७२४ ' । ' इणः षः-२३१ ' इति विसर्गस्य षः ॥ ( २२०० ) परश्वधात्—। चाट्ठक् । ' द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ' ॥ ( २२०२ ) अस्ति ना—। परलोक इति ।

---

१ अधर्मादिति । अधर्मो धर्मविरोधिगुणविशेषजनकं कर्म ॥ २ ईकगिति । ककप्रत्ययेनैव शाक्तिकादिसिद्धावीकारोच्चारणसामर्थ्याद् ' यस्येति च ' इत्यस्य बाधे सवर्णदीर्घेण दीर्घसिद्धौ दीर्घोच्चारणं प्रत्यये स्पष्टार्थमेवेति बोध्यम् ॥

नास्तिकः । दिष्टमिति मतिर्यस्य स–दैष्टिकः ॥ ( २२०३ ) (सू) शीलम् । ४ । ४ । ६१ । अपूपभक्षणं शीलमस्य–आपूपिकः ॥ ( २२०४ ) (सू) छत्त्रादिभ्यो णः । ४ । ४ । ६२ । गुरोर्दोषाणामावरणं छत्त्रं, तच्छीलमस्य–छात्त्रः ॥ (२२०५) (सू) कार्मस्ताच्छील्ये । ४ । ४ । १७२ । कार्म इति ताच्छीलिके णे टिलोपो निपात्यते । कर्मशीलः–कार्मः । नस्तद्धित इत्येव सिद्धे–(२२०६) (प) अण्कार्यं ताच्छीलिके णेऽपि । तेन चौरी तापसीत्यादि सिद्धम् । ताच्छील्ये किम् । कार्मणः ॥ ( २२०७ ) (सू) कर्माध्ययने वृत्तम् । ४ । ४ । ६३ । प्रथमान्तात्षष्ठ्यर्थे ठक् स्यादध्ययने वृत्ता या क्रिया सा चेत्प्रथमान्तस्यार्थः । ऐकान्यिकः । यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातं सः ॥ ( २२०८ ) (सू) बह्वच्पूर्वपदाट्ठच् । ४ । ४ । ६४ । प्राग्विषये । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य–द्वादशान्यिकः । द्वादशापपाठा अस्य जाता इत्यर्थः ॥ ( २२०९ ) (सू) हितं भक्षाः । ४ । ४ । ६५ । अपूपभक्षणं हितमस्मै–आपूपिकः ॥ ( २२१० ) (सू) तदस्मै दीयते नियुक्तम् । ४ । ४ । ६६ । अग्रभोजनं नियतं दीयते अस्मै–आग्रभोजनिकः ॥ ( २२११ ) (सू) श्राणामांसौदनाट्टिठन् । ४ । ४ । ६७ । श्राणा नियुक्तं दीयतेऽस्मै–श्राणिकः । श्राणिकी । मांसौदनग्रहणं संघातविगृहीतार्थम् । मांसौदनिकः । मांसिकः । ओदनिकः ॥ ( २२१२ ) (सू) भक्तादणन्यतरस्याम् । ४ । ४ । ६८ । पक्षे ठक् । भक्तमस्मै नियुक्तं दीयते–भाक्तः । भाक्तिकः ॥ ( २२१३ ) (सू) तत्र नियुक्तः । ४ । ४ । ६९ । आकरे नियुक्तः–आकरिकः ॥ ( २२१४ ) (सू) अगारान्ताट्ठन् । ४ । ४ । ७० । देवागारे नियुक्तो–देवागारिकः ॥ ( २२१५ ) (सू) अध्यायिन्यदेशकालात् । ४ । ४ । ७१ । निषिद्धदेशकालवाचकाट्ठक् स्यादध्येतरि । श्मशानेऽधीते–श्माशानिकः । चतुर्दश्यामधीते–चातुर्दशिकः ॥ ( २२१६ ) (सू) कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति । ४ । ४ । ७२ । तत्रेत्येव । वंशकठिने व्यवहरति–वांशकठिनिकः । वंशा वेणवः कठिना यस्मिन्देशे स वंशकठिनस्तस्मिन्देशे या क्रिया यथाऽनुष्ठेया तां तथैवानुतिष्ठतीत्यर्थः । प्रास्तारिकः सांस्थानिकः ॥ ( २२१७ ) (सू) निकटे वसति । ४।४।७३। नैकटिको भिक्षुः ॥ ( २२१८ ) (सू) आवसथात् ष्ठल् । ४ । ४ । ७४ । आवसथे वसति–आवसथिकः । षित्त्वान्ङीष् । आवसथिकी ॥ ( २२१९ ) आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च । आवसथात्किसरादेः षितः षडेते ठगधिकारे ॥ षडिति सूत्रषट्केन विहिता इत्यर्थः । प्रत्ययास्तु सप्त ॥

इति ठकोऽवधिः समाप्तः ॥

---

## अथ प्राग्घितीयाः ।

( २२२० ) (सू) प्राग्घिताद्यत् । ४ । ४ । ७५ । तस्मै हितमित्यतः प्राक् यदधिक्रियते ॥ ( २२२१ ) (सू) तद्वहति रथयुगप्रासङ्गम् । ४ । ४ । ७६ । रथं वहति–रथ्यः । युग्यः । वत्सानां दमनकाले स्कन्धे काष्ठमासज्यते

---

एतच्चाभिधानशक्तिस्वाभाव्याल्लभ्यते ॥ आस्तिक इति । अस्तिनास्तिशब्दौ निपातौ । यद्वा––वचनसामर्थ्यादस्तीत्याख्यातात्, नास्तीति निपाताख्यातसमुदायाच्च प्रत्ययः ॥ दिष्टमिति । 'दैवं दिष्टं भागधेयम्' इत्यमरः । 'नालम्बते दैष्टिकताम्' इति माघः । 'प्रमाणानुगा मतिर्दिष्टा' इति प्राचोक्तिस्तूपेक्ष्या, दिष्टशब्दस्य स्त्रीत्वे प्रमाणानुगमतिवाचकत्वे चोक्तकोशविरोधादिति दिक् ॥ ( २२०४ ) छत्त्रादिभ्यो णः । 'छत्त्रादिभ्योऽण्' इत्येव सुवचमिति 'कार्मस्ताच्छील्ये' इति सूत्रे कैयटः ॥ ( २२०५ ) कार्मस्ता–। ताच्छीलिके णे इति । कर्मन्शब्दस्य छत्त्रादित्वादिति भावः ॥ (२२०६) चौरीत्यादि । चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे णप्रत्यये सति तदन्तान्ङीप् सिध्यतीत्यर्थः ॥ ( २२०७ ) कर्माध्यय––। 'तदस्य' इत्यनुवर्तते, ठगिहाधिक्रियत एव तदाह–प्रथमान्तादित्यादि ॥ ऐकान्यिक इति । एकमन्यदिति विगृह्य 'तद्धितार्थ–१०५२' इति समासः, ततष्ठक् । एवं द्वैयन्यिकः, त्रैयन्यिक इत्युदाहार्यम् । इह तु वृद्धिं बाधित्वा 'न य्वाभ्याम्–१५७४' इत्यैच् ॥ ( २२०९ ) हितं भक्षाः 'अस्य' इति प्रकृतमपीह हितयोगाच्चतुर्थ्या विपरिणम्यते, 'तदस्मै' इत्यस्यापकर्षो वेत्याशयेनाह––अपूपभक्षणं हितमस्मा इति । अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः ॥ ( २२११ ) श्राणा––। 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः ॥ टिठनिति । इकार उच्चारणार्थः । टो ङीबर्थः ॥ संघातविगृहीतार्थमिति । ओदनिक इत्यत्र हि वृद्धिनिवारणाय टिठन्नारब्धः । अन्यथा लाघवाट्ठनमेव ब्रूयादिति भावः ॥ ( २२१३ ) तत्र नियुक्तः । आकरिक इति । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः ॥ ( २२१५ ) अध्यायिन्य––। अदेशकालात् किम्, काश्यामधीते, पूर्वाह्णे अधीते ॥ कठिनान्त–। प्रस्तारसंस्थानशब्दौ संनिवेशपर्यायाविति बहवः । प्रस्तारो यज्ञः 'प्रे स्त्रोऽयज्ञे ४९९४' इति घञ् । संस्थानं संनिवेश इत्येके ॥ (२२१७) निकटे व–। नैकटिको भिक्षुरिति । संन्यासी हि ग्रामस्य निकटे वसन् भिक्षार्थमेव ग्रामे प्रविशति न तु तत्र वसतीति भावः ॥ (२२१८) आवसथात्––। लकारः स्वरार्थः । आवसन्त्यस्मिन्नित्यावसथः । 'उपसर्गे वसेः ४५९९' इत्यथप्रत्ययः ॥ ( २२१९ ) कुसीदसूत्रादिति । 'कुसीददशैकादशात्–२१६७' इति सूत्रोपात्ताभ्यां प्रकृतिभ्यामित्यर्थः । इह 'नौद्व्यचष्ठन् २१३६' इत्यत्रैव येषां षकारः सांहितिक इति संभाव्यते, तेषामेव गणने ष्ठजादेः षित्त्वमनार्षमिति भ्रमः स्यादतः श्लोकवार्तिककारः षित्प्रत्ययान्सर्वानपि पर्यजीगणत् ॥ इति ठकोऽवधिः समाप्तः ॥

स प्रासङ्गः । तं वहति-प्रासङ्ग्यः ॥( २२२२ ) (सू) धुरो यड्ढकौ । ४ । ४ । ७७ । हलि चेति दीर्घे प्राप्ते-॥ ( २२२३ ) (सू) न भकुर्छुराम् । ८ । २ । ७९ । भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् । धुर्यः । धौरेयः॥(२२२४) (सू) खः सर्वधुरात् । ४ । ४ । ७८ । सर्वधुरां वहतीति-सर्वधुरीणः ॥( २२२५ ) (सू) एकधुराल्लुक्च । ४ । ४ । ७९ । एकधुरां वहति-एकधुरीणः, एकधुरः ॥ ( २२२६ ) (सू) शकटादण् । ४ । ४ । ८० । शकटं वहति-शाकटो गौः । (२२२७) (सू) हलसीराट्ठक् । ४ । ४ । ८१ । हलं वहति-हालिकः । सैरिकः ॥ (२२२८) (सू) संज्ञायां जन्या । ४ । ४ । ८२ । जनी वधूः, तां वहति प्रापयति-जन्या ॥ ( २२२९ ) (सू) विध्यत्यधनुषा । ४ । ४ । ८३ । द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यान्न चेत्तत्र धनुः[१] करणम् । पादौ विध्यन्ति पद्याः शर्कराः ॥ ( २२३० ) (सू) धनगणं लब्धा । ४ । ४ । ८४ । तृन्नन्तमेतत् । धनं लब्धा-धन्यः।गणं लब्धा-गण्यः ॥ (२२३१) (सू) अन्नाण्णः ।४।४।८५। अन्नं लब्धा-आन्नः ॥ ( २२३२ ) (सू) वशं गतः ।४।४।८६। वश्यः परेच्छानुचारी ॥(२२३३) (सू) पदमस्मिन्दृश्यम् ।४। ४ । ८७ । पद्यः कर्दमः । नातिशुष्क इत्यर्थः ॥ (२२३४) (सू) मूलमस्यावर्हि ।४।४।८८ । आवर्हणमावर्हं उत्पाटनम्, तदस्यास्तीत्यावर्हि । मूलमावर्हि येषां ते-मूल्या मुद्गाः ॥ ( २२३५ ) (सू) संज्ञायां धेनुष्या । ४ । ४ । ८९ । धेनुशब्दस्य षुगागमो यप्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम् । धेनुष्या बन्धके स्थिता ॥ ( २२३६ ) (सू) गृहपतिना संयुक्ते ञ्यः । ४ । ४ । ९० । गृहपतिर्यजमानस्तेन संयुक्तो-गार्हपत्योऽग्निः ॥ ( २२३७ ) (सू) नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु । ४ । ४ । ९१ ।

---

( २२२१ ) युग्य इति । युगं रथाङ्गं वहतीत्यर्थः ॥ प्रासङ्ग इति । प्रासज्यते असाविति कर्मणि घञ् ॥ ( २२२२ ) धुरो--। 'धुरो ढक् च' इत्येव सुवचम् ॥(२२२३) न भ--। उपधाया इति । 'उपधायां च ३०२९' इति पूर्वसूत्रादेतल्लभ्यत इति भावः । उपधायाः किम्, प्रतिदीव्नः । इह नान्तस्य भत्वेऽपीकारस्यानुपधात्वान्निषेधो न प्रवर्तते ॥ (२२२४) खः सर्वधुरात् । 'सर्वधुरायाः' इति वक्तव्ये नपुंसकनिर्देशः शब्दस्वरूपापेक्षया 'बन्धुनि बहुव्रीहौ १४४२' इतिवत् ॥ सर्वधुरामिति । 'पूर्वकालैक-१०५०' इति समासः । 'ऋक्पूरब्धूः-१३५०' इति समासान्ते अप्रत्यये टाप् ॥ (२२२५) एकधुराल्लुक् च । चात्खः । एवं च प्राकरणिकस्य यतो लुक्, खस्य तु विधानसामर्थ्याच्छ्रवणमिति फलितं, तदाह--एकधुरीण इत्यादि ॥ (२२२६) शकटादण् । शाकटो गौरिति । ननु 'तस्येदम् २०६४' इत्यणा सिद्धम् । यो हि शकटं वहति शकटस्यासौ भवति । अत्राहुः-आरम्भसामर्थ्यादत्र तदन्तविधिः । तेन द्वे शकटे वहति द्वैशकट इत्यत्र 'द्विगोर्लुगनपत्ये १५५१' इति प्राग्[२]दीव्यतीयो लुङ् न भवति, 'तस्येदम्-२०६४' इत्यणि तु स्यादेव लुगिति ॥ (२२२७) हलसीरात्--। ननु 'तस्येदम् २०६४' इत्युपक्रमे 'हलसीराट्ठक्-२०७२' इति पठितम् । तथा च तेनैव शैषिकेण हालिकः सैरिक इति सिद्धौ किमनेनेति चेत् । सत्यम्, आरम्भसामर्थ्यादत्रापि तदन्तविधिः। तेन द्वैहलिको द्वैसीरिक इति भवति, शैषिके ठकि तु प्राग्दीव्यतीयो लुक् स्यात्॥(२२२८) सञ्ज्ञायां जन्या । जायते अस्यां गर्भ इति व्युत्पत्तिमाश्रित्य आह-जनी वधूरिति ।'जनिघसिभ्यामिण् ४७७५' 'जनिवध्योश्च ३३३१' इति न वृद्धिः । 'कृदिकारात्-७०८' इति ङीष् । ततोऽनेन सूत्रेण यति-जन्या मा[३]तुर्वयस्या । सा हि विवाहादिषु वधूं जामातृसमीपं प्रापयति । कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्त--'यातेति जन्यानवदत्कुमारी' इति । जनीं वहन्तीति जन्यास्तानित्यर्थः ॥ (२२२९) विध्यत्यधनुषा । पद्या इति । 'पद्यत्यतदर्थे १४२२' इति पद्भावः। अधनुषा किम्, चोरं विध्यति । संभाव्यते हि चोरव्यधने धनुषः करणता । यदा तु धनुषेति प्रयुज्यते, तदा सापेक्षत्वादेव न भवति । एवं च 'न चेत्तत्र धनुः करणम्' इत्यत्र 'संभाव्यते' इति शेषो बोध्यः ॥ (२२३०) धनगणं लब्धा । तृन्नन्तमिति । एवं च 'न लोका-९१५' इत्यादिना कृद्योगषष्ठ्या निषेधात् 'धनगणम्-' इति प्रयोगो निर्बाध इति भावः ॥ (२२३२) वशं गतः । वशनं वश इच्छा । 'वशिरण्योरुपसंख्यानम्-५०२७' इत्यप् ॥ (२२३४) मूलमस्यावर्हि । प्रथमान्ताद् आवर्हि इत्युपाधिकान्मूलशब्दादस्येति षष्ठ्यर्थे यत्स्यात् ॥ आवर्ह इति । 'वृह उद्यमने' दन्त्योष्ठ्यादिरयम्, न तु पवर्गादिः 'उद्वृह रक्षः सहमूलमिन्द्र' इत्यादिप्रयोगदर्शनात् ॥ मूल्या मुद्गा इति । मूलोत्पाटनं विना संग्रहीतुमशक्याः, मध्यतो लूयमानेषु कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ताः । सुष्ठु शुष्का इति यावत् ॥ (२२३५) संज्ञायां धेनुष्या । यप्रत्यय इति । तेन धेनुष्याशब्दोऽन्तोदात्तः । यति तु तित्स्वरः स्यादिति भावः ॥ संज्ञायामिति । ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयम् ॥ (२२३६) गृहप-। गार्हपत्य इति । 'गृहपतिना' इति निर्देशादेव तृतीयान्तात्प्रत्ययः । 'संज्ञायाम्' इत्यनुवृत्तेराहवनीयादौ नातिप्रसङ्गः ॥ (२२३७) नौवयोधर्म--। नावादिभ्योऽष्टभ्यो यथासंख्यं तार्यादिष्वष्टस्वर्थेषु यत्स्यात् । इह तार्यादियोगे यथासंभवं-करणे, कर्तरि, हेतौ, तुल्यार्थयोगे च तृतीया भवतीति सैवेह समर्थविभक्तिरर्थाल्लभ्यते । अत्र प्रथमं मूलान्तानां पञ्चानां द्वन्द्वं कृत्वा द्वितीयमूलादि-

---

१ धनुः करणमिति । धनुःपदं करणमात्रपरमिति वाच्यवाचकोभयनिर्देश एवायम् । अत एव 'विध्यत्यकरणेन' इति वार्तिकं सूत्रार्थान्तर्गतं भवति । अत एव 'चोरं विध्यति खड्गेन' इत्यत्रापि नेति भावः ॥ २ प्राग्दीव्यतीय इति । प्राग्दीव्यतीयस्थानिक इत्यर्थः ॥ ३ मातुरिति । जामातुरिति मनोरमायां पाठः ॥ इह तु 'जन्या मातृवयस्या स्यात्' इति धरणिकोशानुसारेणोक्तम् ॥

नावा तार्यं—नाव्यम् । वयसा तुल्यो—वयस्यः । धर्मेण प्राप्यं—धर्म्यम् । विषेण वध्यो—विष्यः । मूलेन आनाम्यं—मूल्यम् । मूलेन समो—मूल्यः । सीतया समितं—सीत्यं क्षेत्रम् । तुलया सम्मितं—तुल्यम् ॥ ( २२३८ ) (सू) धर्मपथ्यर्थन्यायादनपेते । ४ । ४ । ९२ । धर्मादनपेतं—धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् ॥ ( २२३९ ) (सू) छन्दसो निर्मिते । ४ । ४ । ९३ । छन्दसा निर्मितं—छन्दस्यम् । इच्छया कृतमित्यर्थः ॥ (२२४०) (सू) उरसोऽण् च । ४ । ४ । ९४ । चाद्यत् । उरसा निर्मितः पुत्रः—औरसः । उरस्यः॥ (२२४१) (सू) हृदयस्य प्रियः । ४ । ४ । ९५ । हृद्यो देशः । हृदयस्य हृल्लेखेति हृदादेशः ॥ ( २२४२ ) (सू) बन्धने चर्षौ । ४ । ४ । ९६ । हृदयशब्दात् षष्ठ्यन्ताद्बन्धने यत्स्याद्वेदेऽभिधेये । हृदयस्य बन्धनं—हृद्यो वशीकरणमन्त्रः ॥ ( २२४३ ) (सू) मतजनहलात्करणजल्पकर्षेषु । ४ । ४ । ९७ । मतं ज्ञानं, तस्य करणं भावः साधनं वा—मत्यम् । जनस्य जल्पो—जन्यः । हलस्य कर्षो—हल्यः ॥ ( २२४४ ) (सू) तत्र साधुः । ४ । ४ । ९८ । अग्रे साधुः—अग्र्यः । सामसु साधुः—सामन्यः । ये[१८३६] चाभावकर्मणोरिति प्रकृतिभावः । कर्मण्यः । शरण्यः॥(२२४५) (सू) प्रतिजनादिभ्यः खञ् ।४।४।९९। प्रतिजनं साधुः—प्रातिजनीनः । सांयुगीनः । सार्वजनीनः । वैश्वजनीनः ॥(२२४६) (सू) भक्ताण्णः ।४।४।१०० । भक्ते साधवो—भाक्ताः[१] शालयः ॥ (२२४७) (सू) परिषदो ण्यः । ४ । ४ । १०१ । पारिषद्यः । परिषद इति योगविभागाण्णोऽपि । पारिषदः[२] ॥(२२४८)(सू) कथादिभ्यष्ठक् ।४।४।१०२ । कथायां साधुः—काथिकः ॥ (२२४९)(सू) गुडादिभ्यष्ठञ् ।

---

द्वन्द्वेन सह समाहारद्वन्द्वः, मूलान्तानां द्वित्राणां वा मूलादीनामेव वा द्वन्द्वं कृत्वा नावादिषु द्वन्द्वः । तेन सारूप्याभावादेकशेषो न भवति ॥ **नावा तार्यमिति** । शक्यार्थे 'ऋहलोर्ण्यत् ३८२४ ' करणे तृतीया ॥ **वयस्य इति** । 'स्निग्धो वयस्यः सवयाः ' इत्यमरः । ' वयसा तुल्यः शत्रुः ' इत्यत्र तु न भवति, संज्ञाधिकारात् ॥ **विषेण वध्य इति** । विषेण वधमर्हतीत्यर्थः ।'दण्डादिभ्यः—२३५२' इति सूत्रेण वधशब्दादर्हार्थे यद्विधानात् ॥ **मूलेनानाम्यमिति** । मूलं नाम पण्यादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यम् । तेन स्वस्मादतिरिक्तं लाभाख्यं यद् द्रव्यमात्मानं प्रति शेषीक्रियते आत्मन उपकारकं क्रियते तत् आनाम्यम् ॥ आङ्पूर्वको नमिरभिभवे वर्तते, तस्मात् ' पोरदुपधात् ३७९१' इति यति प्राप्ते अत एव निपातनाण्ण्यत् , तथा चानाम्यमभिभवनीयम् आत्मानं प्रति शेषीकर्तव्यं स च लाभाख्यो भाग एव । लोके तु यावता द्रव्येण पण्यादिकं विक्रीयते तत्रैव समुदाये मूल्यशब्दः प्रसिद्धो, न तु मूलातिरिक्तभागमात्रे व्युत्पादितः । एवं च लाभमात्रे व्युत्पादितस्य मूल्यशब्दस्य तद्घटिते संघाते निरूढलक्षणा बोध्या ॥ **सीतेति** । सीता हलाग्रं, संपूर्वादिणः क्तः । समितं निम्नोन्नतादिरहितं कृतमित्यर्थः । समीकृतमिति यावत् । 'रथसीताहलेभ्यो यद्विधौ ' इति तदन्तविधिः । परमसीत्यम् । द्वाभ्यां सीताभ्यां समितमिति तद्धितार्थे समासस्ततो यत् । द्विसीत्यम् ॥ **तुलया संमितमिति** । संमितं परिच्छिन्नम् । रूढिशब्दोऽयं ' संज्ञायाम्—२२३५' इत्यधिकारात् । अत एव 'तुल्यम्' इति सदृशमात्रे प्रयुज्यते, न तुलायामाग्रहः क्रियते ॥ (२२३८) **धर्मप—। पथ्यमिति** । संज्ञाधिकारादभिधेयनियमः, तेन शास्त्रीयात्पथोऽनपेतमेव पथ्यम् । न तु मार्गादनपेतश्चोरोऽपि ॥ **( २२३९ ) छन्दसो—** । ' छदि संवरणे ' इति चुरादिरिच्छायामपि वर्तते, धातूनामनेकार्थत्वात् । ततो घञि इच्छापर्यायश्छन्दशब्दः प्रसिद्ध एव ' स्वच्छन्दोच्छलदच्छकच्छ—' इत्यादौ । असुनि तु यः सान्तः सोऽत्र प्रकृतिस्तत्र निर्माणे इच्छायाः करणत्वात्सामर्थ्यात्तृतीयान्तात्प्रत्ययः ॥ **इच्छया कृतमिति** । यद्यपि वेदे त्रिष्टुबादिषु च सान्तश्छन्दःशब्दोऽस्ति, तथापि इह न गृह्यते, संज्ञाधिकारात्, किंत्विच्छापर्याय एव गृह्यते इति भावः ॥ **( २२४० ) उरसोऽण् च । पुत्र इति** । संज्ञाधिकारान्नेह । उरसा निर्मितं सुखम् ॥ **( २२४१ ) हृदयस्य—** । प्रीणातीति प्रियः ' इगुपध—३८५७' इति कः । कृद्योगात्कर्मणि षष्ठी, अलौकिके तद्धितप्रकृतिभागे तु वचनसामर्थ्यादेव । एवमन्यत्रापि बोध्यम् ॥ **(२२४२) बन्धने—** । बध्यतेऽनेनेति बन्धनः । करणे ल्युट् ॥ **वशीकरणमन्त्र इति** । तेन हि परहृदयं वशीक्रियते । संज्ञाधिकाराद्वासिष्ठादावृषौ नायं यत् ॥ **( २२४३ ) मत—। तस्य करणमिति** । कर्मणि षष्ठी । कृतिः करणं, क्रियतेऽनेनेति वा करणमित्याशयेनाह—**भावः साधनं वेति** । जल्पशब्दो भावसाधनः । कर्तरि षष्ठी ॥ **हलस्येति** । कर्षणं कर्षस्तद्योगात्कर्मणि षष्ठी । करणस्य कर्तृत्वविवक्षायां कर्तरि षष्ठी वा ॥ ' रथसीता—' इति तदन्तविधिः । द्विहल्यः । त्रिहल्यः ॥ **( २२४४ ) तत्र साधुः** । साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकर्ता । तत्र हि परत्वात् ' तस्मै हितम् २२६२' इत्यनेन भाव्यम् । संज्ञाधिकारादुपकर्ता न गृह्यत इत्यन्ये ॥ **( २२४५ ) प्रतिजना—। प्रतिजनमिति** । ' जनो जनः '[३] इति प्रतिजनम् । वीप्सायामव्ययीभावः । प्रतिजन, इदंयुग, संयुग, पापकुल, परस्यकुल, अमुष्यकुल, सर्वजन, विश्वजन, पञ्चजन । ' परस्यामुष्य ' इति षष्ठ्योर्निपातनादलुक्॥ **( २२४६ ) भक्ताण्णः । भक्त इति** । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः ॥**( २२४९ ) गुडादिभ्यष्ठञ्** ।

---

१ **भाक्ता इति** । त्रिष्पूतीकृता इत्यर्थः ॥ २ **पारिषद इति** । 'सर्ववेदपारिषदम् ' इति भाष्यप्रयोग इति भावः । ' स पार्षदैरम्बरमापुपूरे ' इति पाणिनिप्रयोगस्तु पृषोदरादित्वात्साधुः ॥ ३ ' **जनो जनः** ' इति विग्रहे प्रतिशब्दाप्रयोगेण कर्मप्रवचनीययुक्तत्वाभावान्न द्वितीया । न चास्वपदविग्रहत्वे नित्यसमासत्वापत्तिः, अस्वपदविग्रहत्वस्य नित्यत्वे प्रयोजकत्वाभावात् । ' नित्यसमासत्वं क्वचिदस्वपदविग्रहत्वे प्रयोजकम् ' इत्यन्यदिति शब्दरत्ने ॥

४।४।१०३। गुडे साधुर्गौडिक इक्षुः। साक्तुका यवाः॥ (२२५०) (सू.) पथ्यतिथिवसतिस्वपतेर्ढञ् ।४।४।१०४। पथि साधु-पाथेयम्। आतिथेयम् । वसनं वसतिस्तत्र साधुर्वासतेयी रात्रिः। स्वापतेयं धनम्॥ (२२५१) (सू.) **सभाया यः**।४।४।१०५। सभ्यः॥ (२२५२) (सू.) **समानतीर्थे वासी**।४।४।१०७। साधुरिति निवृत्तम्॥ वसतीति वासी। समाने तीर्थे गुरौ वसतीति-सतीर्थ्यः॥ (२२५३) (सू.) **समानोदरे शयित ओ चोदात्तः**।४।४।१०८। समाने उदरे शयितः स्थितः-समानोदर्यो भ्राता॥ (२२५४) (सू.) **सोदराद्यः**।४।४।१०९। सोदर्यः। अर्थः प्राग्वत्॥ इति प्राग्घितीयाः॥

---

### अथ छयतोरधिकारः।

(२२५५) (सू.) **प्राक् क्रीताच्छः**।५।१।१। तेन क्रीतमित्यतः[१] प्राक् छोऽधिक्रियते॥ (२२५६) (सू.) **उगवादिभ्यो यत्**।५।१।२। प्राक् क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत्स्याच्छस्यापवादः॥ (२२५७) (ग.) **नाभि नभं च**॥ नभ्योऽक्षः। नभ्यमञ्जनम्। रथनाभावेवेदम्॥ (२२५८) (ग.) **शुनः संप्रसारणं वा च दीर्घत्वम्**। शून्यम्। शुन्यम्॥ (२२५९) (ग.) **ऊधसोऽनङ् च**॥ ऊधन्यः॥ (२२६०) (सू.) **कम्बलाच्च संज्ञायाम्**।

---

गुड, कुल्माष, सक्तु, अपूप, मांस, ओदन, मांस, इक्षु, वेणु, संग्राम, संघात, प्रवास, निवास, वृत्॥ (२२५०) **पथ्य-। वसतिरिति**। 'वसेश्च४५५४'इत्यतिप्रत्ययः। स्वस्य पतिः स्वपतिराढ्यस्तस्मिन्स्वापतेयम्॥ (२२५१) **सभाया यः**। यति तु तित्स्वरः स्यात् 'क्रतुर्भवत्युक्थ्यः' इतिवत्। न च 'यतोऽनावः ५५७६' इत्याद्युदात्तता शङ्क्या। 'यदुत्पत्तिवेलायां द्व्यच्कस्य यदन्तस्यादिरुदात्तः' इति वेदभाष्ये स्थापितत्वात्। पक्षान्तरे तु 'नमः शष्प्याय च फेन्याय च' इत्यादिवदाद्युदात्तः स्यात्। एवं च व्याख्यानद्वयस्याप्यावश्यकत्वे लक्ष्यानुरोधेन क्वचित्किञ्चिद्व्याख्येयमिति तत्त्वम्॥ (२२५२) **समानतीर्थे वासी**। निपातनाण्णिनिः, ग्रहादेराकृतिगणत्वात् 'नन्दिग्रहि-२८५३' इत्यनेन वा॥ **सतीर्थ्य इति**। 'तीर्थे ये १४६१' इति समानस्य सभावः। तरन्त्यनेनेति तीर्थम्। 'तरतेस्थक्' "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। योनौ जलावतारे च" इति विश्वः। इह तूपाध्यायवाचिन एव ग्रहणं नान्यस्य, संज्ञाधिकारात्॥ (२२५३) **समानोद-। शयितः स्थित इति**। शीधातुः स्थित्यर्थे वर्तते। 'जलाशयः' 'कुशेशयम्' इति प्रयोगादिति भावः॥ **समानमुदरमिति**। 'पूर्वापरप्रथम-१०६३' इत्यादिना तत्पुरुषः, ततो यत्, तित्स्वरापवाद ओकारस्योदात्तः॥ (२२५४) **सोदराद्यः**। 'ओ चोदात्तः' इति नानुवर्तते। 'विभाषोदरे १४६२' इति समानस्य सभावः। तत्र 'तीर्थे ये १४६१' इत्यतोऽनुवृत्तं ये इत्येतद्विषयसप्तमी। तेन सोदर इत्यस्माद्यः प्रत्ययः॥ **प्राग्वदिति**। 'समानोदरे शयित इत्येवार्थः' इत्यर्थः। कथं तर्हि 'अपभ्यानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' इति मुरारिरिति चेत्। अत्राहुः-सह समानमुदरं यस्य सोदरः। 'वोपसर्जनस्य१२२२' इति सहस्य सभावः। तस्य च वैकल्पिकत्वात् 'यत्र भ्राता सहोदरः' इत्याद्यपि सिद्धमिति॥ इति प्राग्घितीयाः॥

समाप्ताश्चातुर्थिकाः॥

---

(२२५५) **प्राक् क्रीताच्छः। इत्यतः प्रागिति**। इहार्थोऽवधित्वेन गृह्यते, न तु प्रत्ययः प्रकृतिर्वा। तेनार्था एवावधिमन्त इति प्राक्क्रीताद्येऽर्था हितादयस्तेष्वस्योपस्थानम्। अवधिसजातीयो ह्यवधिमान् भवति। यथा 'मासान्त्यः' इति कालः प्रतीयते, 'ग्रामात्पूर्वः' इति देशः, 'अलोऽन्त्यात्पूर्व-३५३' इत्यलेव। एवं च समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यदादिः प्रकृत्यन्तरे सावकाशं छं तक्रकौण्डिन्यन्यायेन बाधते। अन्यथा छस्य यदादेश्च संनिधानाविशेषात्तव्यत्तव्यानीयरामिव पर्यायः स्यात्। अतोऽत्रार्थोऽवधित्वेन गृह्यते। ननु यदादिविषये छो न भविष्यति 'विभाषा हविरपूपादिभ्यः २२६१' इति विभाषाग्रहणाल्लिङ्गात्। तथा च प्रत्ययस्य प्रकृतेर्वा अवधित्वस्वीकारेऽपि न क्षतिः। उक्तज्ञापकेनोगवादिप्रभृतिभ्यश्छस्यातिप्रसङ्गनिरसनादिति चेत्। अत्राहुः-एवं सति 'छः' इत्येवाधिकारोऽस्तु नार्थोऽवधिनिर्देशेन॥ 'प्राग्वहतेष्ठक् २१२५' इत्यादिके तु प्रकरणे नास्याधिकारः, अधिकारान्तरेणोपद्दष्टत्वात्। स्पष्टप्रतिपत्त्यर्थमवधिनिर्देशः। अन्यथा प्रतिपत्तिगौरवं स्यादिति चेत्। तर्हि 'विभाषा हवि-२२६१' इत्यादिज्ञापकाश्रयणे प्रतिपत्तिगौरवादर्थ एवावधित्वेन निर्देष्टुमुचित इति॥ (२२५६) **उगवादिभ्यो-**। उवर्णादेर्गशब्दादर्वशब्दादेश्च यत्स्यादित्यर्थो न भवति, गवादिगणपाठात्॥ (२२५७) गवाद्यन्तर्गणसूत्राण्याह—**नाभि नभं चेति**। नाभिशब्दो यतं लभते नभादेशं चेत्यर्थः॥ **नभ्योऽक्ष इति**। रथाङ्गं सच्छिद्रं नाभिः। तदनुप्रविष्टः काष्ठविशेषोऽक्षः। स च तदनुगुणत्वात्तस्मै हितः। अञ्जनं तैलाभ्यङ्गः, तदपि स्नेहनत्वान्नाभये हितम्॥ **रथनाभावेवेति**। शरीरावयवे तु नाभ्यमित्येव, परेण 'शरीरावयवाद्यत् २२६३' इत्यनेनास्य बाधादिति भावः॥ (२२५८) **शुनः सं-। शून्यमिति**। चकारस्यानुक्तसमुच्चयार्थत्वात् 'नस्तद्धिते ९८६' इति टिलोपो न भवति, 'ये चाभावकर्मणोः १६३६' इति प्रकृतिभावस्तु दुर्लभः, संप्रसारणे पूर्वरूपे च कृते अनूरूपाभावात्। दीर्घपक्षे तु तद्विधानसामर्थ्यादपि टिलोपाभावः सुपरिहरः॥ (२२५९) **ऊधसोऽनङ् चेति**। चाद्यत्। 'नश्च' इति सुवचमिति मनोरमा॥

---

१ इमौ द्वौ शब्दौ क्वचिन्न दृश्येते॥

।५।१।३। यत्स्यात् । कम्बल्यमूर्णापलशतम् । संज्ञायां किम् । कम्बलीया ऊर्णा ॥ ( २२६१ ) (सू) **विभाषा हविरपूपादिभ्यः** । ५ । १ । ४ । आमिक्ष्यं दधि । आमिक्षीयम् । पुरोडाश्यास्तण्डुलाः । पुरोडाशीयाः । अपूप्यम् । अपूपीयम् ॥ ( २२६२ ) (सू) **तस्मै हितम्** ।५ । १। ५ । वत्सेभ्यो हितो-वत्सीयो गोधुक् । शङ्कवे हितं-शङ्कव्यं दारु । गव्यम् । हविष्यम् ॥ ( २२६३-१ ) (सू) **शरीरावयवाद्यत्** । ५ । १ । ६ । दन्त्यम् । कण्ठ्यम् ॥ ( २२६३-२ ) (वा) **नस्[1] नासिकायाः** ॥ नस्यम् । नाभ्यम् ॥ ( २२६४ ) (सू) **ये च तद्धिते** । ६ । १ । ६१ । यादौ तद्धिते परे शिरश्शब्दस्य शीर्षन्नादेशः स्यात् । शीर्षण्यः । तद्धिते किम् । शिर इच्छति-शिरस्यति ॥ ( २२६५ ) (वा) **वा केशेषु** ॥ शीर्षण्याः शिरस्या वा केशाः ॥ ( २२६६ ) (वा) **अचि शीर्ष इति वाच्यम्** ॥ अजादौ तद्धिते शिरसः शीर्षादेशः । स्थूलशिरस इदं-स्थौलशीर्षम् ॥ ( २२६७ ) (सू) **खलयवमाषतिलवृषब्रह्मणश्च** ।५। १। ७। खलाय हितं--खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । चाद्रथ्या ॥ ( २२६८ ) (सू) **अजाविभ्यां थ्यन्** । ५ । १ । ८ । अजथ्या यूथिः । अविथ्या ॥ ( २२६९ ) (सू) **आत्मन्विश्वजनभोगोत्तरपदात्खः** । ५ । १ । ९ । ( २२७० ) (सू) **आत्माध्वानौ खे** । ६ । ४ । १६९ । एतौ खे प्रकृत्या स्तः । आत्मने हितमात्मनीनम् । विश्वजनीनम् ॥ ( २२७१ ) ( इ० ) **कर्मधारयादेवेष्यते** ॥ षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छ एव । विश्वजनीयम् ॥ ( २२७२ ) (वा) **पञ्चजनादुपसंख्यानम्** ॥ पञ्चजनीनम् ॥

---

अन्ये त्वाहुः-ऊधन्यशब्दात् 'तत्करोति तदाचष्टे ३४१७' इति णिचि 'णाविष्ठवत् ३४१६' इति टिलोपे णिजन्तात्कर्तरि क्विपि णिलोपयलोपयोः कृतयोः ' अनुनासिकस्य क्वि-३५४५ ' इति दीर्घे ततः क्विबन्तादाचारक्विपि ऊधानते इत्यादावात्मनेपदार्थं नडो ङित्करणमावश्यकमिति ॥ **ऊधन्य इति** । ' ये चा-१६३६' इति प्रकृतिभावः ॥ ( २२६० ) **कम्बलाच्च संज्ञायाम्** प्राक्क्रीतीयेष्वर्थेषु यत्स्यात् । छस्यापवादः ॥ ( २२६१ ) **विभाषा हविरपूपादिभ्यः** । गवादिषु हविःशब्दस्य पाठादिह हविर्विशेषाणां ग्रहणम्, न च गवादिष्वेव हविर्विशेषाणां ग्रहणं किं स्यादिति वाच्यम्, असंजातविरोधित्वेन तत्र स्वरूपग्रहणस्य न्याय्यत्वात् ॥ **अपूप्यमिति** । अपूपेभ्यो हितं चूर्णमित्यर्थः । अपूप, तण्डुल, पृथुक, मुसल, कर्णवेष्टकेत्याद्यपूपादिगणे ' अन्नविकारेभ्यश्च ' इति पठ्यते । अन्नविकारा अन्नप्रकारा अदनीयविशेषास्तेभ्यो यद्वा स्यादिति तदर्थः । ओदन्या ओदनीयास्तण्डुलाः । एवं चानेनैव गणसूत्रेण सिद्धे अपूपादीनां केषांचिद्गणे पाठः प्रपञ्चार्थः । 'हविरपूपादिभ्यो विभाषया उगवादिभ्यो यत्पूर्वविप्रतिषेधेन ' सक्तव्या धानाः, चरव्यास्तण्डुलाः । चरुर्नाम हविरिति काशिका ॥ स्थालीवचनस्य चरुशब्दस्य तत्रत्ये हविषि उपचाराद्वृत्तिरिति कैयटादयः ॥ ( २२६३-१ ) **शरीरा-** । ( २२६३-२ ) **नस्यमिति** । नासिकायै हितम् । 'नासिकायां भवम्' इति विग्रहे तु 'शरीरावयवाच्च १९९१' इति यत् । नस्यम् । तस्युदाहरणं नस्तः 'अपादाने चाहीयरुहोः २८५०' इति तसिः । क्षुद्रे तु नासिकायाः क्षुद्रो नःक्षुद्रः । 'सुप्सुपा ९४९-२' इति समासः ॥ **नाभ्यमिति** । 'नाभि नभं च २२५७' इति नभादेशो रथनाभावेव प्रवर्तते । तस्य गवादियता संनियोगशिष्टत्वादिति भावः ॥ ( २२६४ ) **ये च त-** । 'शीर्षश्छन्दसि ५३६१' इत्यतोऽनुवर्तनादाह-**शीर्षन्नादेश इति** । **शीर्षण्य इति** । 'ये चाभाव-१६३६' इति प्रकृतिभावः ॥ **शिरस्यतीति** । 'नः क्ये ३५३०' इति नियमेन पदत्वाभावाद्रुत्वाभावः ॥ ( २२६७ ) **खलयव-** । अत्र वृषशब्दोऽकारान्तो गृह्यते न नकारान्तः । अन्यथा ह्यसंदेहार्थं नलोपमकृत्वैव निर्दिशेत् । 'आत्मन्विश्वजन-२२६९' इतिवत् । वृषाय हितं वृष्यम्, नान्तायाति तु वृषण्यमिति स्यात् ॥ **ब्रह्मण्यमिति** । ब्रह्मन्शब्दो ब्राह्मणपर्यायः । प्रकृतिभावस्तु 'ये चा-१६३६ ' इत्यनेन पूर्ववत् । इह वृषन्शब्दाद् ब्राह्मणशब्दाच्च यतः प्राप्तिरेव नास्ति । छोऽप्यनभिधानान्नेत्याकरः । तेन वृष्णे हितं ब्राह्मणेभ्यो हितमिति वाक्यमेव ॥ **चाद्रथ्येति** । गवादिषु रथशब्दो न पठितः । हितार्थ एव रथ्येति यथा स्यात् । अर्थान्तरे मा भूदिति ॥ ( २२६८ ) **अजाविभ्याम्--** । अजशब्द इह पुँल्लिङ्ग उपात्तः । अत एव ' द्वन्द्वे घि १२९५ ' इत्यविशब्दस्य पूर्वनिपातं बाधित्वा 'अजाद्यदन्तम् १२९७ ' इति अजशब्दस्य पूर्वनिपातः कृतः । ' प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि-२६७ ' इति स्त्रीलिङ्गादपि थ्यन् । तसिलादिषु थ्यनः परिगणनात्पुंवद्भावे रूपं तुल्यम् ॥ **अजथ्येति** । अजेभ्योऽजाभ्यो वा हितेति विग्रहः ॥ ( २२७० ) **आत्माध्वा—** । ( २२७१ ) **कर्मधारयादेवेति** । व्याख्यानादिति भावः ॥ **विश्वजनीयमिति** । विश्वस्य जनः सर्वसाधारणो वे ( वै ) य्यादिः, विश्वो जनोऽस्येति बहुव्रीहावपि स एवान्यपदार्थस्तस्मै हितमिति विग्रहः ॥ ( २२७२ ) **पञ्चजना-** । **पञ्चजनीनमिति** । रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनास्तेभ्यो हितं ' दिक्संख्ये संज्ञायाम् १०५१ ' इति समासः । 'पञ्चजनात्-२२७२ ' इत्येतत्प्रभृति वार्तिकत्रयमपि कर्मधारयविषयमेव । तेन षष्ठीसमासाद्बहुव्रीहेश्च छ एव । पञ्च-

---

१ **नस् नासिकायाः**-इति वार्तिकं ' यत्तस्क्षुद्रेषु ' इति शेषो भाष्ये दृश्यते, तथापि प्रभृतिग्रहणस्य प्रकारार्थतया संगृहीतमिति नातीवोपयुज्यत इति भावः ॥ २. **अत्रेदमरुचिबीजम्**-'अवयवे कृतं लिङ्गं तस्य समुदायस्य विशेषकं भवति यं समुदायं योऽवयवो न व्यभिचरति' इति 'गुप्तिज्किद्भ्यः सन्' इति सूत्रभाष्येण जुगुप्सयाति मीमांसयतीत्यत्रैव स्पष्टमेव ङकारस्यात्मनेपदार्थत्वाभावध्वननादित्याद्यर्थश्शब्दरत्ने ॥

(२२७३) (वा०) **सर्वजनाट्ठञ् खश्च** ॥ सार्वजनिकः । सर्वजनीनः ॥ ( २२७४ ) (वा०) **महाजनाट्ठञ्** ॥ माहाजनिकः । मातृभोगीणः । पितृभोगीणः । राजभोगीनः । (२२७५) (वा०) **आचार्यादणत्वं च** ॥ आचार्यभोगीनः ॥ (२२७६) (सू०) **सर्वपुरुषाभ्यां णढञौ** । ५ । १ । १० । ( २२७७ ) (वा०) **सर्वाण्णो वेति वक्तव्यम्** ॥ सर्वस्मै हितं-सार्वम् । सर्वीयम् ॥ ( २२७८ ) (वा०) **पुरुषाद्वधविकारसमूहतेनकृतेषु** ॥ भाष्यकारप्रयोगात्तेनेत्यस्य द्वन्द्वमध्ये निवेशः । पुरुषस्य वधः-पौरुषेयः । [२०६४]तस्येदमित्यणि प्राप्ते । पुरुषस्य विकारः-पौरुषेयः । प्राणिरजतादिभ्योऽञ्[२९०७] इत्यञि प्राप्ते, समूहेऽप्यणि प्राप्ते । एकाकिनोऽपि परितः पौरुषेयवृता इवेति माघः । तेन कृते ग्रन्थेऽणि प्राप्ते । अग्रन्थे तु प्रासादादावप्राप्त एवेति विवेकः ॥ ( २२७९ ) (सू०) **माणवचरकाभ्यां खञ्** । ५ । १ । ११ । माणवाय हितं-माणवीनम् । चारकीणम् । (२२८० ) (सू०) **तदर्थं विकृतेः प्रकृतौ** । ५ । १ । १२ । विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां छप्रत्ययः स्यात् । अङ्गारेभ्य एतानि-अङ्गारीयाणि काष्ठानि । प्राकारीया इष्टकाः । शङ्कव्यं दारु ॥ (२२८१) (सू०) **छदिरुपधिबलेर्ढञ्** । ५ । १ । १३ । छादिषेयाणि तृणानि । बालेयास्तण्डुलाः ॥ ( २२८२ ) ( इ० ) **उपधिशब्दात्स्वार्थे इष्यते** ॥ उपधीयत इत्युपधी रथाङ्गं तदेव-औपधेयम् ॥ ( २२८३ ) (सू०) **ऋषभोपानहोर्ञ्यः** । ५ । १ । १४ । छस्यापवादः । आर्षभ्यो वत्सः । औपानह्यो मुञ्जः । चर्मण्यप्ययमेव पूर्वविप्रतिषेधेन । औपानह्यं चर्म ॥ (२२८४) (सू०) **चर्मणोऽञ्** । ५ । १ । १५ । चर्मणो या विकृतिस्तद्वाचकादञ् स्यात् । वार्ध्र्यै इदं वार्ध्रं चर्म । वारत्रं चर्म ॥

---

जनीयः ॥ (२२७३) **सर्वजना-** । **सर्वजनीन इति** । सर्वो जनः सर्वजनः । 'पूर्वकालैक-१०५०' इति तत्पुरुषः । तस्मै हितमिति विग्रहः । साध्वर्थे तु 'प्रतिजनादिभ्यः खञ् २२४५' इति खञि सार्वजनीनवैश्वजनीनशब्दौ व्युत्पादितौ ॥ **मातृभोगीण इति** । इहाखण्डपदत्वाभावेऽपि 'अट्कुप्वाङ्-२८२' इत्यनेन यथा णत्वं भवति तथा प्रागेवोपपादितम् । मातुर्भोगः शरीरं तस्मै हित इति विग्रहः । यद्यपि ' भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ' इत्यमरेण अहेरित्युक्तम्, तथापि प्रयोगबाहुल्याभिप्रायं तत् । शक्तिस्तु शरीरमात्रे इत्याकरः । मातृपितृशब्दाभ्यामौत्सर्गिकश्छ एव । मात्रीयः । पित्रीयः । राजाचार्याभ्यां त्वौत्सर्गिकः छोऽपि न भवत्यनभिधानात्किंतु राज्ञे हितमाचार्याय हितमिति वाक्यमेवेत्याकरः ॥ (२२७६) **सर्वपुरुषाभ्याम्-** । आभ्यां शब्दाभ्यां यथासंख्यं णढञौ स्तस्तस्मै हितमित्यर्थे 'प्राक् क्रीतात्-२२५५' इति छस्यापवादादिति सूत्रार्थः ॥ (२२७७) **सर्वादिति** । अनुकरणत्वात्सर्वनामकार्याभावः ॥ ( २२७८ ) **पुरुषाद्वधविकारेति** । योग्यताबलादिह षष्ठी समर्थविभक्तिर्लभ्यते, 'तेन कृते' इत्यत्र तु उपात्तैव तृतीया तदाह—**पुरुषस्य वध इति**॥ **समूहेऽप्यणीति**। 'तस्य समूहः१७५७' इत्यनेन ॥ **ग्रन्थेऽणीति** । 'कृते ग्रन्थे २०६० ' इत्यनेन ॥ **अप्राप्त इति** । पौरुषेयः प्रासाद इत्यादौ न कस्याप्यपवादोऽयं ढञिति भावः ॥ ( २२७९ ) **माणव-** । खञो ञित्करणं वृद्ध्यर्थं स्वरार्थं च । यद्यपि माणवे वृद्धिः स्वतः सिद्धैव, तथापि माणवीनाभार्य इत्यत्र 'वृद्धिनिमित्तस्य च-१२११' इति पुंवद्भावप्रतिषेधार्थमिति ज्ञेयम् ॥ **माणवायेति** । मनोः कुत्सितमपत्यं माणवः । "अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिद्ध्यति माणवः ॥" इत्यपत्याधिकारस्थवार्तिकाण्णत्वं, तच्च वार्तिकमेतत्सूत्रस्थनिर्देशासिद्धार्थकथनपरमित्याहुः ॥ **चारकीणमिति** । चरतीति पचाद्यच् । 'चरिचलिपतिवदीनाम्-३८५४ ' इति द्विर्वचनं विकल्पितत्वादिह न भवतीति । ततः संज्ञायां कनि चरकः ॥ ( २२८० ) **तदर्थं विकृतेः-** । 'तस्मै हितम् २२६३' इत्यतस्तस्मा इत्यनुवर्तते तदाह—**चतुर्थ्यन्तादिति** । 'तदर्थम्' इति 'सामान्ये नपुंसकम् ११८२' व्यत्ययेन सप्तमीस्थाने प्रथमेत्याशयेनाह—**तदर्थायामिति** । विकृत्यर्थायामित्यर्थः । तदिति सर्वनाम्ना हि विकृतिः परामृश्यते । एवं च विकृतिरेव प्रथमानिर्दिष्टेति 'समर्थानां प्रथमात्-१५३४' इत्यधिकारोऽप्यत्र निर्बाध एव ॥ **शङ्कव्यमिति** । ' उगवादिभ्यः-२२५६ ' इति यत् ॥ (२२८१ ) **छदिरुपधि-** । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । छस्यापवादोऽयम् ॥ **छादिषेयाणीति** । छाद्यतेऽनेनेति छदिः । 'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः ४४६८' । 'इस्मन्त्रन्क्विषु च ३९८६' इति ह्रस्वत्वम् । यदा तु चर्मविकारः छदिस्तदा परत्वात् 'चर्मणोऽञ् २२८४' इत्यञ् प्राप्नोति । पूर्वविप्रतिषेधेन तु ढञेवेष्यते । छादिषेयं चर्म । आह च-'यञ्ञ्यावञः पूर्वविप्रतिषिद्धम्' 'ढञ् च' इति । यत उदाहरणं सनङ्गव्यं, सनङ्गुश्चर्मविकारस्तदर्थं चर्म 'उगवादिभ्यः-२२५६ ' इति यत् । ञ्यस्योदाहरणमौपानह्यमिति अनुपदं वक्ष्यति ॥ **बालेया इति** । ' करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' इत्यमरः ॥ ( २२८२ ) **उपधिरिति** । ' उपसर्गे घोः किः ५०६५ ' इति धाञः किः । 'आतो लोप इटि च ३१६५' इत्यालोपः ॥ ( २२८३ ) **ऋषभो-** । **विप्रतिषेधेनेति**। 'यञ्ञ्यावञः-' इत्यादिवार्तिकेनेत्यर्थः । ननु ढञ्विधौ छदिरित्यस्य, ञ्यविधौ उपानहश्च विशिष्य ग्रहणेन 'प्रतिपदोक्तं बलीयः ' इति सिद्धे किमनेन पूर्वविप्रतिषेधेन । अत्राहुः-निरवकाशत्वे सत्येव प्रतिपदविधित्वं बलीयस्त्वे प्रयोजकं, न तु सावकाशत्वे इत्यनेन मुनिवचनेनानुमीयते । तेन 'स्वम्पि तडागानि' इत्येव युक्तं, परत्वान्नुम्प्रवृत्तेः । प्रतिपदोक्तत्वाद्दीर्घमाश्रित्य स्वाम्पि तडागानीति मतं दुर्बलम् । 'अप्तृन्-३८८' इति दीर्घस्य आपस्तिष्ठन्तीत्युदाहरणे सावकाशतया प्रतिपदोक्तत्वस्याबलीयस्त्वादिति ॥ ( २२८४ ) **चर्मणोऽञ्** । ' तदर्थम्-' इत्यादिपूर्वोक्तेऽर्थे अञ् स्यात् छस्यापवादः । 'चर्मणः ' इति षष्ठी न तु पञ्चमी । पञ्चम्यां तु चर्मशब्दाच्चर्मार्थायां प्रकृतौ प्रत्ययः स्यात् 'चार्मणो द्वीपी-' इत्यादौ, न चेष्यते चार्मणो द्वीपीति तदाह—**चर्मणो या विकृतिरिति** ॥ वार्ध्र्यै

( २२८५ ) (सू॰) तदस्य तदस्मिन् स्यादिति । ५ । १ । १६ । प्राकार आसामिष्टकानां स्यात्प्राकारीया इष्टकाः । प्रासादीयं दारु । प्राकारोऽस्मिन् स्यात् प्राकारीयो देशः । इतिशब्दो लौकिकीं[1] विवक्षामनुसारयति । तेनेह न । प्रासादो देवदत्तस्य स्यादिति ॥ ( २२८६ ) (सू॰) परिखाया ढञ् । ५ । १ । १७ । पारिखेयी भूमिः ॥

इति छयतोः पूर्णोऽवधिः ॥

---

अथ तद्धितेष्वार्हीयाः ।

( २२८७ ) (सू॰) प्राग्वतेष्ठञ् । ५ । १ । १८ । तेन तुल्यमिति[२४०] वतिं[2] वक्ष्यति ततः प्राक् ठञधिक्रियते ॥ (२२८८) (सू॰) आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् । ५ । १ । १९ । [२३४]तदर्हतीत्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते गोपुच्छादीन्वर्जयित्वा ॥ ( २२८९ ) (सू॰) असमासे निष्कादिभ्यः । ५ । १ । २० । आर्हादित्येतत्तेन

---

इति । 'वृधिवपिभ्याम्–४३८८' इति रन्प्रत्यये वर्ध्रशब्द आद्युदात्तश्चर्मवाची, 'तस्य विकारः २०८६' इत्यण् 'टिड्ढा–६५१' इति ङीप् । वार्ध्री रज्जुः तस्यै ॥ वधेरौणादिके ष्ट्रनि तु वध्रीति भवति ततोऽञि तु वाध्रम् । 'नध्री वध्री वरत्रा स्यात्' इत्यमरः । 'चम्राः पश्य, वध्रिकाः पश्य' इति भाष्यम् ॥ ( २२८५ ) तदस्य– । प्रथमासमर्थात्प्रातिपदिकात्षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययः स्यात् । इति 'संभावनेऽलमिति च–३७४७' इत्यादिना संभावने लिङ् । इष्टकानां बहुत्वेन प्राकारः आसां स्यादिति तत्संभाव्यते । देशस्य हि गुणेन प्राकारोऽस्मिन्स्यादिति संभाव्यते । इह प्रकृतिविकारभावस्तादर्थ्यं च न विवक्षितं किंतु योग्यतामात्रम् । तेन पूर्वस्यायमविषयः । द्विस्तच्छब्दस्य ग्रहणं स्पष्टप्रतिपत्त्यर्थम् । 'तदस्यास्त्यस्मिन्–२५५५' इतिवत्सकृत्तच्छब्दग्रहणेनैवेष्टसिद्धेः ॥ इति छयतोः पूर्णोऽवधिः ॥

---

( २२८७ ) प्राग्वतेष्ठञ् । 'ठञ्' इत्येव वक्तव्ये 'प्राग्वतेः' इति वचनं मध्ये योऽधिकारवानपवादः 'सर्वभूमिपृथिवीभ्यामणञौ २३२४' 'शीर्षच्छेदाद्यच्च २३५३' इत्येवमादिः, तेन विच्छेदेऽपि 'पारायण–२३५८' इत्यादौ ठञेव यथा स्यात् इत्येवमर्थम् । न चैवं 'पारायण–२३५८' आदिसूत्र एव ठञ् निर्दिश्यतामिति वाच्यम्, उत्तरसूत्रे येषां पर्युदासः क्रियते गोपुच्छादीनां तेभ्यष्ठञः प्रकृतसूत्रं विनाऽलाभात् । तथा च गौपुच्छिकः साप्ततिक इत्यादौ ठञर्थमिदं सूत्रमत्र प्रदेशे आरब्धमिति बोध्यम् ॥ ( २२८८ ) आर्हादगोपुच्छ— । तदर्हतीति । इह 'तदर्हम् २४११' इति सूत्रान्तर्गतमच्प्रत्ययान्तं नानुक्रियते किन्तु तिङन्तस्यैकदेशः शबन्त एव व्याख्यानादिति भावः ॥ अभिव्याप्येति । तेन श्वैतच्छत्रिक इत्यत्रार्हत्यर्थे ठग् भवतीति भावः । ननु परिमाणात्पृथक्संख्याग्रहणं व्यर्थं, परिमीयते परिच्छिद्यते येन तत्परिमाणं संख्ययाऽपि च परिच्छिद्यत इति साऽपि परिमाणमेवेति चेत् । अत्र श्लोकवार्तिकम्–"ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः" ॥ अस्यार्थः–तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेर्गुरुत्वमुन्मीयते तदुन्मानम् । आरोह उच्छ्रायः । परिणाहो विस्तारः । ताभ्यामारोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन व्रीह्यादिः परिमीयते तत्परिमाणं प्रस्थादि, परिः सर्वतोभावे । आयामो दैर्घ्यं स येन मीयते तत्प्रमाणं, तच्च क्वचित्तिर्यगवस्थितस्य वस्तुनो भवति । यथा वस्त्रादेर्हस्तादिः । क्वचिदूर्ध्वाधोभागावस्थितस्य भवति । यथा हास्तिनमुदकम् । ऊरुद्वयसमुदकमिति[3] संख्या तु उन्मानपरिमाणप्रमाणेभ्यः पलादिप्रस्थादिहस्तादिभ्यस्त्रिभ्यो[4] बहिर्भूता एकत्वद्वित्वादिरिति । इह संख्यापरिमाणयोरेव प्रकृतत्वेऽप्युन्मानप्रमाणयोर्विवेचनं प्रसङ्गात्कृतमिति बोध्यम् ॥ ( २२८९ ) असमासे निष्कादिभ्यः । निष्क, पण, पाद, माष, वाह, द्रोण षष्टि, इति सप्त निष्कादयः । तत्र द्रोणशब्दः परिमाणवाची, षष्टिशब्दः संख्यावाची, ताभ्यां ठञि प्राप्ते वचनम् । इतरेषां तु पञ्चानामुन्मानवाचित्वेन पूर्वसूत्रेणैव ठकि सिद्धे समासप्रतिषेधार्थं वचनमित्येके । अन्ये त्वाहुः–पूर्वसूत्रे परिच्छेदकमात्रं संख्याभिन्नं परिमाणशब्देन गृह्यते । तेन सर्वेभ्यष्ठञि प्राप्ते ठग्विधानार्थं वचनम् । न चैवं 'परिमाणं तु सर्वतः' इति भेदेन व्युत्पा-

---

१ लौकिकीमिति । 'लौकिकी विवक्षा च यत्र प्रायस्य संप्रत्ययः, प्राय इति लोको व्यपदिश्यते ।' इति भाष्यतो नैकाकी कश्चिल्लोकशब्देन व्यवह्रियते किन्तु सर्वजनसाधारण इति शिष्टो जनोऽत्र लोकशब्देनाङ्गीक्रियते ॥ २ वतेरिति । अत्र वतिशब्देन तदर्थो लक्ष्यते । अत एव 'प्राग्दीव्यतः' इत्यादिनैकरूप्यम् । तेनार्थबोधकेष्वेवास्योपस्थानसत्त्वेनापवादविषये नोपस्थानमिति शेखरकृत् ॥ ३ ऊरुद्वयसमिति । यदि तु तस्य प्रमाणत्वमेव स्यात्, तदा 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इत्युक्तेरत्र द्वयसज् दुर्लभः स्यात् । न चात्र प्रमाणत्वस्यापि सत्त्वे 'प्रमाणे लः' इति लुगापत्तिरिति वाच्यम्, 'आयामविवक्षायां प्रमाणमित्येतद्भवति' इत्यत्रत्यभाष्येण विद्यमानस्याप्यूर्ध्वाधरभावकृतायामस्याविवक्षया तदप्रसङ्गात् । विवक्षा च प्रयोगानुसारिणीत्यदोषः । संभवमात्रेण तु प्रमाणत्वं तस्योक्तम् । तिर्यगवस्थितवस्तुपरिच्छेदके तु प्रमाणत्वं निर्विवादमेव ॥ ४ त्रिभ्यो बहिर्भूतेति । अनेन संख्यायाः सर्वथा बाह्यत्वं वदतेतरेषां परस्परग्रहणं सूचितम् । तेनोन्मानस्य परिमाणग्रहणेन ग्रहणम् । अत एव 'अपरिमाणबिस्ताचित–' इति सूत्रे बिस्ताचितग्रहणम्, 'परिमाणान्तस्य–' इति सूत्रे शाणपर्युदासश्च चरितार्थ इत्यलम् ॥

क्रीतमिति यावत्सप्तदशसूत्र्यामनुवर्तते । निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेषु । नैष्किकम् । समासे तु ठञ् ॥ ( २२९० ) (सू॰) परिमाणान्तस्यासंज्ञाशाणयोः । ७ । ३ । १७ । उत्तरपदवृद्धिः स्यात् ञिदादौ ॥ परमनैष्किकः । ( २२९१ ) असमासग्रहणं ज्ञापकं भवति । इतः[2] प्राक् तदन्तविधिरिति । तेन–सुगव्यम् । यवापूप्यमित्यादि ॥ ( २२९२ ) (वा॰) इत[3] ऊर्ध्वं तु संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि । पारायणिकः । द्वैपारायणिकः । अलुकीति किम् । द्वाभ्यां शूर्पाभ्यां क्रीतं–द्विशूर्पम् । द्विशूर्पेण क्रीते शूर्पादञ् मा भूत् किंतु ठञ् । द्विशौर्पिकम् ॥ ( २२९३ ) (सू॰) अर्धात्परिमाणस्य पूर्वस्य तु वा । ७ । ३ । २६ । अर्धात्परिमाणवाचकस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा ञिति णिति किति च । अर्धद्रोणेन क्रीतम्–आर्धद्रौणिकम् । अर्धद्रौणिकम् ॥ ( २२९४ ) (सू॰) नातः परस्य । ७ । ३ । २७ । अर्धात्परस्य परिमाणाकारस्य वृद्धिर्न पूर्वपदस्य तु वा ञिदादौ । अर्धप्रस्थिकम् । आर्धप्रस्थिकम् । अतः किम् । आर्धकौडविकम् । तपरः किम् । अर्धखार्यां भवा–अर्धखारी । अर्धखारीभार्य इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावनिषेधो न स्यात् ॥ ( २२९५ ) (सू॰) शताच्च ठन्यतावशते । ५ । १ । २१ । शतेन क्रीतं–शतिकम् । शत्यम् । अशते किम् । शतं परिमाणमस्य शतकः सङ्घः । इह प्रत्ययार्थो वस्तुतः प्रकृत्यर्थान्न भिद्यते । तेन ठन्यतौ न किन्तु कनेव । असमास इत्येव । द्विशतेन क्रीतं–द्विशतकम् ॥ ( २२९६ ) (सू॰) संख्याया अतिशदन्तायाः कन् । ५ । १ । २२ । संख्यायाः कन् स्यादार्हीयेऽर्थे न तु त्यन्तशदन्तायाः । पञ्चभिः क्रीतः–पञ्चकः । बहुकः । त्यन्तायास्तु–साप्ततिकः । शदन्तायाः–चात्वारिंशत्कः । ( २२९७ ) (सू॰) वतोरिड्वा । ५ । १ । २३ । वत्वन्तात्कन इड्वा स्यात् । तावतिकः, तावत्कः ॥ ( २२९८ ) (सू॰) विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् । ५ । १ । २४ ।

---

दनं व्यर्थमिति वाच्यम्, 'प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये' इत्यादावस्योपयागादिति पक्षद्वयमप्येतत्पदमञ्जर्यां स्पष्टम् ॥ ( २२९० ) **परिमा–** । ( २२९१ ) अथ किमर्थम् 'असमासे' इत्युच्यते, प्रातिपदिकग्रहणे तदन्तग्रहणाभावादेवेष्टसिद्धेरत आह–**असमासग्रहणमिति** ॥ **सुगव्यमिति** । 'उगवादिभ्यो यत् २२५६' ॥ **यवापूप्यमिति** । 'विभाषा हविरपूपादिभ्यः २२६१' इति यत् । अन्नविकारत्वादेव सिद्धे अपूपादीनां प्रतिपदपाठसामर्थ्यात्तदन्तविधिर्नेति न्यासग्रन्थस्तूपेक्ष्यः, वृत्त्यादिग्रन्थविरोधादिति भावः । अत एव तत्सूत्रे 'अपूपादीनां केषांचित्पाठः प्रपञ्चार्थः' इत्यवोचाम ॥ ( २२९२ ) **इत ऊर्ध्वमिति** । ज्ञापकेन तदन्तविधौ लब्धेऽपि विशेषव्यवस्थार्थमिदम् । संख्यापूर्वपदानामिति किम् । इह मा भूत् परमपरायणं वर्तयति ॥ **द्विशूर्पमिति** । तद्धितार्थे द्विगुरयम् । एषा हि प्रकृतिर्लुगन्ता न भवति इति संख्यापूर्वपदादप्यस्मात् 'शूर्पादञन्यतरस्याम् २३०३ इति प्राप्तस्याञष्ठञो वा 'अध्यर्धपूर्व–२३०५' इति लुक् ॥ **द्विशौर्पिकमिति** । 'परिमाणान्तस्य–२२९०' इत्युत्तरपदवृद्धिः । ठञो द्विगुं प्रति निमित्तत्वाभावाल्लुगभावः । यद्यपि 'अध्यर्ध–२३०५' इति सूत्रे द्विगोः परस्यार्हीयस्य लुगित्येव मूले व्याख्यायते । तथापि द्विगोर्निमित्तस्येति व्याख्येयमेव । अन्यथा अत्रैव ठञो लुक् स्यात् । एतच्च 'अध्यर्ध–२३०५' इति सूत्रे स्फुटीकरिष्यते ॥ ( २२९४ ) **नातः परस्य** । **तपरः किमिति** । दीर्घाकारस्य वृद्धौ कृतायामपि रूपे विशेषो नास्तीति प्रश्नः ॥ **निषेधो न स्यादिति** । तथा च वृद्धिनिषेधाभावाय तपरकरणमावश्यकमिति भावः ॥ इदं च पुंवद्भावनिषेधाभावापादनं पूर्वपदस्य वृद्ध्यभावपक्षे क्रियते । यदा तु पूर्वपदस्य पाक्षिकी वृद्धिः क्रियते, तदा फलोपधानवृद्धिनिमित्तं तद्धित इत्युत्तरपदाकारस्य वृद्धिनिषेधेऽपि स्यादेव पुंवद्भावनिषेध इति बोध्यम् ॥ ( २२९५ ) **शताच्च**– । अशतेऽभिधेये आर्हीयेष्वर्थेषु ठन्यतौ स्तः । उत्तरसूत्रेण प्राप्तस्य कनोऽपवादः । चकारः 'असमासे' इत्यस्यानुकर्षणार्थः ॥ **द्विशतकमिति** । द्वौ च शतं च तेषां समाहारो द्विशतम् । ततः कन् 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि २२९२' इत्यनया इष्ट्या समासादपि प्राप्नोतीति 'असमासे' इत्येतस्यानयनमुचितमिति भावः ॥ ( २२९६ ) **संख्या**– । **त्यन्तशदन्ताया इति** । त्यन्तसहिता शदन्तेत्युत्तरपदलोपी समासः ॥ **पञ्चक इति** । लौकिक्याः संख्याया उदाहरणम् ॥ **बहुक इति** तु पारिभाषिक्याः ॥ **साप्ततिक इति** । ठञो ञित्त्वादादिवृद्धिः, ठस्येकादेशे 'यस्येति च ४३१' इतीकारलोपः ॥ अर्थवतस्तिशब्दस्य ग्रहणाद् डत्यवयवस्य तिशब्दस्य पर्युदासो न भवति । कतिकः ॥ **चात्वारिंशत्क इति** । 'इसुसुक्तान्तात्कः १७२४' ( २२९७ ) **वतोरिड्वा** । 'वतोः' इति पञ्चमी, सा च 'कन्' इति प्रथमायाः षष्ठीं कल्पयतीत्याह–**वत्वन्तात्कन इति** । **तावतिक इति** । 'यत्तदेतेभ्यः–२४९६' इति वतुप् । 'आ सर्वनाम्नः ५७६' इत्यात्वम् ॥ ( २२९८ ) **विंशति**– ।

---

१ **परिमाणान्तस्येति** । कालस्य परिच्छेदकत्वेऽपि न परिमाणग्रहणेन ग्रहणम्, 'संख्यायाः संवत्सरसंख्यस्य च' इति सूत्रे संवत्सरग्रहणात् । तथा वार्तिककृता 'संवत्सरग्रहणमनर्थकं परिमाणान्तस्येति कृतत्वात्' इति पूर्वपक्षिणोक्तस्य 'ज्ञापकं तु कालपरिमाणानां परिमाणाग्रहणस्य' इति समाधानं कृतम् ॥ २ **इतः प्रागिति** । प्रत्यासत्त्या पाञ्चमिकेष्वेवेदम् । अन्यथा प्रत्ययविधित्वात्तन्निषेधः स्यात् । इदमुपलक्षणं व्यपदेशिवद्भावस्यापि । तेन गव्यासिद्धिः । व्यपदेशिवद्भावप्रतिषेधस्य सूत्रगृहीतान्तादिशब्दविषयकत्वाच्च ॥ ३ **इत ऊर्ध्वमिति** । वाचनिकमेवेदम् । 'असमासे' इति सूत्रादूर्ध्वमार्हीयेऽनार्हीये चेत्यर्थः ॥

(२२९९)योगविभागः कर्तव्यः । आभ्यां कन् स्यात् । असंज्ञायां इवुन् स्यात्कनोऽपवादः । विंशकः । त्रिंशकः । संज्ञायां तु–विंशतिकः । त्रिंशत्कः ॥(२३००) (सू) **कंसाट्टिठन्** । ५ । १ । २५ । टो ङीबर्थः इकार उच्चारणार्थः । कंसिकः । कंसिकी ॥ ( २३०१ ) (वा) **अर्धाच्चेति वक्तव्यम्** ॥ अर्धिकः । अर्धिकी ॥ ( २३०२ ) (वा) **कार्षापणाट्टिठन्वक्तव्यः; प्रतिरादेशश्च वा** ॥ कार्षापणिकः, कार्षापणिकी । प्रतिकः, प्रतिकी ॥ ( २३०३ ) (सू) **शूर्पादञन्यतरस्याम्** । ५ । १ । २६ । शौर्पम् । शौर्पिकम् ॥ ( २३०४ ) (सू) **शतमानविंशतिकसहस्रवसनादण्** ।५।१।२७। एभ्योऽण् स्याट्ठञ्ठक्कनामपवादः । शतमानेन क्रीतं–शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् ॥ ( २३०५ ) (सू) **अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्** । ५ । १ । २८ । अध्यर्धपूर्वाद् द्विगोश्च परस्यार्हीयस्य लुक् स्यात् । अध्यर्धकंसम् । द्विकंसम् । संज्ञायां तु पाञ्चकलायिकम् ॥ ( २३०६ ) (सू) **विभाषा कार्षापणसहस्राभ्याम्** । ५ । १ । २९ । लुग्वा स्यात् । अध्यर्धकार्षापणम् । अध्यर्धकार्षापणिकम् । द्विकार्षापणम् । द्विकार्षापणिकम् । औपसंख्यानिकस्य टिठनो लुक् । पक्षे अध्यर्धप्रतिकम् । द्विप्रतिकम् । अध्यर्धसहस्रम् । अध्यर्धसाहस्रम् । द्विसहस्रम् । द्विसाहस्रम् ॥

---

(२२९९) **कर्तव्य इति** । अन्यथा त्यन्तशदन्तयोः पर्युदासाद्विंशतित्रिंशद्भ्यां कन् दुर्लभ इति भावः ॥ **विंशक इति** । 'ति विंशतेर्डिति १२१६' इति तिशब्दलोपः ॥ ( २३०१ ) **अर्धाच्चेति** । **अर्धिक इति** । अर्धशब्दस्य कार्षापणार्धे रूढत्वाद्भागवदपेक्षयाऽत्रासामर्थ्यं न शङ्क्यम् । प्रकरणादिवशेन भागविशेषे विज्ञाते सति नास्त्यस्यासामर्थ्यमिति बोध्यम् । एतेनार्धशब्दस्य सापेक्षत्वात्तदन्तादेव टिठन् द्रोणार्धिकः प्रस्थार्धिक इति केषांचिदुक्तिः परास्ता ॥ ( २३०३ ) **शूर्पा—**। शूर्पशब्दस्य परिमाणवाचित्वाट्ठञि प्राप्ते तदपवादत्वेनाञ् पक्षे विधीयते ॥ ( २३०४ ) **शतमान—**। **ठञ्ठक्कनामिति** । शतमानं परिमाणं ततष्ठञ् प्राप्तः, विंशत्या क्रीतं विंशतिकं संज्ञाशब्दोऽयम् । असंज्ञायां हि 'विंशतित्रिंशद्भ्याम्–२२९८' इति ड्वुन् स्यात् । संज्ञा च यदि परिमाणस्य, तदा ठञ् प्राप्तः । अर्थान्तरस्य चेत्तर्हि ठक् प्राप्तः । वसनशब्दात्तु ठगेव, सहस्रशब्दस्य संख्यावाचित्वात्ततः 'संख्याया अतिशदन्तायाः–२२९६' इति कन्प्राप्त इति विवेकः ॥ ( २३०५ ) **अध्यर्धपूर्व—**।अध्यारूढमर्धं यस्मिन् तदध्यर्धम् 'प्रादिभ्यो धातुजस्य–११९४' इत्युत्तरपदलोपः । अध्यर्धशब्दः पूर्वो यस्मिन्निति बहुव्रीहिगर्भबहुव्रीहौ कृते अध्यर्धपूर्वं च द्विगुश्चेति द्वन्द्वः । सौत्रं पुंस्त्वम् । द्विगोरिति पञ्चमी न तु षष्ठीत्याशयेन व्याचष्टे—**अध्यर्धपूर्वादित्यादि** । एतच्च वृत्तिकाररीत्या व्याख्यातम्॥अत्र वार्तिकम् 'द्विगोर्लुकि तन्निमित्तग्रहणम्' द्विगोर्निमित्तं यस्तद्धितस्तस्य लुगिति वक्तव्यम् । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्[1] । द्विशूर्पेण क्रीतं द्विशौर्पिकमिति ॥ पूर्वोक्तोदाहरणे तु ठञो लुङ् मा भूदिति ॥ ननु द्वयोः शूर्पयोः समाहारो द्विशूर्पी तया क्रीतामिति विग्रहे द्विशूर्पमिति रूपं न स्यात् । तद्धितस्यात्र द्विगोरनिमित्ततया 'अध्यर्ध–२३०५' इति लुकोऽप्रवृत्तेः । द्विगोः परस्येति व्याख्यायां तु नः सिद्धमिष्टमिति चेत् । मैवम्, 'अर्थविशेषासंप्रत्यये अतन्निमित्तादपि' इति वचनान्तरस्य वार्तिककृतैवोक्तत्वात् । यत्र तद्धितार्थद्विगुना सह अर्थो न भिद्यते तत्र स तद्धितो यस्य निमित्तं न भवति तस्मादपि द्विगोः परस्य लुगिति वक्तव्यमिति तस्यार्थः ॥ एवं च द्विशूर्पमिति तद्धितार्थद्विगुना सह द्विशूर्प्या क्रीतमित्यस्यार्थो न भिद्यते इति समाहाराद् द्विगोः परस्य तद्धितस्य लुग् भवत्येवेति न काऽप्यनुपपत्तिः ॥ वस्तुतस्तु सूत्रे द्विगोरिति षष्ठीमाश्रित्य 'द्विगोर्निमित्तं यस्तद्धितः' इति व्याख्याय प्रथमं वार्तिकं प्रत्याख्यातुं शक्यम् । 'द्विशूर्प्या क्रीतम्' इति विग्रहे तु द्विशूर्पादेव प्रत्ययो भवति । अव्ययिकन्यायात्, न तु द्विशूर्पीशब्दात्, इत्याश्रित्य द्वितीयमपि प्रत्याख्यातुं शक्यम् । नन्वध्यर्धशब्दः संख्यावाच्येव । तथा च लोके गण्यते 'एकोऽध्यर्धो द्वौ' इति अत एव अध्यर्धकमिति कन्, अध्यर्धकंसमिति तद्धितार्थे द्विगुः, अध्यर्धसांवत्सरिकमित्यादौ 'संख्यायाः संवत्सरसंख्यस्य च २३७७' इत्युत्तरपदवृद्धिश्च[2] भवति । तत्किमध्यर्धपूर्वग्रहणेनेति चेत् । अत्राहुः–'संख्याकार्यमेतस्य किंचिन्न' इति ज्ञापनार्थमिदम् । तेन कन्द्विगुसमासवृद्धिभ्योऽन्यन्न भवति । तद्यथा अध्यर्धं करोति । नेह कृत्वसुच् । यः सकृत्फलान्तां क्रियामभिनिर्वर्त्य पुनस्तामेव कुर्वन् मध्ये निवर्तते स एवमुच्यते इति ॥ **पाञ्चकलायिकमिति** । पञ्च कलायाः परिमाणमस्येति विग्रहे 'तद्धितार्थ––१०५२' इति समासः । 'तदस्य परिमाणम् २३४१'इति ठञ् । एवं पाञ्चलोहितिकमपि बोध्यम् । पञ्च लोहिन्यो गुञ्जाः परिमाणमस्येति विग्रहे पूर्ववत्समासतद्धितौ।'भस्याढे तद्धिते १२०४' इति पुंवद्भावाल्लोहिनीशब्दस्येकारनकारयोरभावः । परिमाणविशेषस्य नामधेये एते । असंज्ञाग्रहणं प्रत्ययान्तस्य विशेषणं न तु द्विगोः । एतच्च वृत्तिकृता सूत्राशयमनुरुध्य वर्णितमिति इहापि तथैवोक्तम् । भाष्यवार्तिकयोस्त्वसंज्ञाग्रहणं प्रत्याख्यातम् । तथाहि–द्विगुविशेषणमसंज्ञाग्रहणम् । पञ्चकलायपञ्चलोहितशब्दौ च द्विगू कृततद्धितलुकावेव संज्ञे । यस्तु ताभ्यामुत्पद्यते ठक् स श्रूयते एव इति द्विगोरनिमित्तत्वेन तस्य लुगभावादिति ॥ ( २३०६ ) **विभाषा–**। **टिठनो लुगिति** । प्रत्यादेशपक्षे तु लुङ् न भवति प्रत्यादेशस्य प्रत्ययसंनियोगशिष्टत्वादिति बोध्यम् ॥ **अध्यर्धसहस्रमिति** । 'शतमानविंशतिक–२३०४' इति विहितस्याणो लुक् । तदभावपक्षे तु 'संख्यायाः संवत्सरसंख्यस्य–२३७७' इत्युत्तरपदवृद्धिः । अध्यर्ध-

---

१ 'द्वाभ्यां शूर्पाभ्यां क्रीतम्' इति तद्धितार्थे द्विगोर्जायमानत्वेन द्विगुनिमित्तस्य तद्धितस्य लुकि द्विशूर्पशब्दो निष्पन्नः। तस्मात्क्रीतार्थे जायमानस्य तद्धितस्य द्विगोर्निमित्तत्वाभावेन लुक् न भवति ॥ २ वृद्धिश्चात्रोत्तरपदवृद्धिर्विवक्षिता ॥

( २३०७ ) (सू) द्वित्रिपूर्वान्निष्कात् । ५ । १ । ३० । लुग्वा स्यात् । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् ॥ ( २३०८ ) (वा) बहुपूर्वाच्चेति वक्तव्यम् ॥ बहुनिष्कम् । बहुनैष्किकम् ॥ (२३०९) (सू) बिस्ताच्च । ५ । १ । ३१ । द्वित्रिबहुपूर्वाद्बिस्तादार्हीयस्य लुग्वा स्यात् । द्विबिस्तम् । द्विबैस्तिकमित्यादि ॥ ( २३१० ) (सू) विंशतिकात्खः । ५ । १ । ३२ । अध्यर्धपूर्वाद्द्विगोरित्येव । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् ॥ ( २३११ ) (सू) खार्या ईकन् । ५ । १ । ३३ । अध्यर्धखारीकम् । द्विखारीकम् ॥ ( २३१२ ) (वा) केवलायाश्चेति वक्तव्यम् ॥ खारीकम् ॥ ( २३१३ ) (सू) पणपादमाषशताद्यत् । ५ । १ । ३४ । अध्यर्धपण्यम् । द्विपण्यम् । अध्यर्धपाद्यम् । द्विपाद्यम् । इह पादः[६०६] पदिति न, यस्येति[४३१] लोपस्य स्थानिवद्भावात् । पद्यत्यतदर्थे[१४२२] इत्यपि न, प्राण्यङ्गार्थस्यैव तत्र ग्रहणात् ॥ ( २३१४ ) (सू) शाणाद्वा । ५ । १ । ३५ । यत्स्यात्पक्षे ठञ् तस्य लुक् । अध्यर्धशाण्यम्, अध्यर्धशाणम् ॥ (२३१५) (वा) द्वित्रिपूर्वादण् च ॥ शाणादित्येव । चाद्यत् । तेन त्रैरूप्यम् । परिमाणान्तस्यासंज्ञाशाणयोरिति[२२९०] पर्युदासादादिवृद्धिरेव । द्वैशाणम् । द्विशाण्यम् । द्विशाणम् ॥ इह ठञादयस्त्रयोदश प्रत्ययाः प्रकृतास्तेषां समर्थ-

---

शब्दः संख्यावाचीत्यधुनैवोक्तत्वात् ॥ (२३०७) **द्वित्रिपूर्वान्नि--** । अध्यर्धग्रहणमुत्तरार्थमनुवृत्तमपीह न संबध्यते । 'द्विगोः' इति तु संबध्यत एव षष्ठीसमासं व्यावर्तयितुम् । अत्र च व्याख्यानमेव शरणम् ॥ ' द्वित्रिभ्यां निष्कात् ' इत्येव सिद्धे पूर्वग्रहणं चिन्त्यप्रयोजनमिति हरदत्तः ॥ **द्विनैष्किकमिति** । ' प्राग्वतेष्ठञ् ' मतान्तरे तु ठगिति मनोरमायाम् । निष्कादिभ्यः समासे ठगभावात् । ' परिच्छेदकमात्रं गृह्यते ' इति मतान्तरेऽपि ठञेव भवति, तन्मते उन्मानस्यापि परिमाणत्वात् '-असमासे-निष्कादिभ्यः' ... पुच्छ-२२८८' इत्यादिना पर्युदस्तत्वाट्ठगभावे निष्कादिभ्यष्ठञि प्राप्ते असमासे ठग्विधानेऽपि समासे ठञ एव प्राप्तत्वादित्यन्ये ॥ ' परिमाणान्तस्य-२२९०' इत्युत्तरपदवृद्धिः । ' द्विगोः ' इति संबन्धान्नेह लुक् । द्वयोर्निष्को द्विनिष्कस्तेन क्रीतं द्विनैष्किकम् । 'अध्यर्धपूर्व-२३०५' इत्यसंबन्धादध्यर्धनैष्किकमित्यत्राप्यनेन लुङ् न भवति ॥ ( २३०९ ) **बिस्ताच्च** । चकारेण ' द्वित्रिपूर्वात् ' इत्यनुकृष्यते, तत्फलं तु ' चानुकृष्टं नोत्तरत्र ' इत्युत्तरत्रानुवृत्त्यभावः ॥ ( २३१० ) **विंशतिकात्खः** । ' शतमानविंशतिक-२३०४ ' इत्यणि प्राप्ते तस्य च लुकि प्राप्ते खोऽत्र विधीयते ॥ ( २३११ ) **खार्याः--** । 'तदस्य परिमाणम् २३४१' इति ठञि प्राप्ते तस्य च लुकि प्राप्ते ईकन् विधीयते । कन्विधौ ' केऽणः ११९९' इति ह्रस्वः स्यात् । इकन्विधावपि ' यस्येति च ४३१' इति लोपादिष्टं न सिध्यतीति भावः ॥ ( २३१३ ) **पणपाद-** । **प्राण्यङ्गार्थस्यैवेति** । अयं भावः । ' पादस्य पदाज्यातिगोपहतेषु १४२१' इत्यत्र प्राण्यङ्गस्यैव हि पादस्य ग्रहणं, तस्यैवाज्यातिभिर्गतिवचनैः संबन्धसंभवात् । तथा च ' पद्यति-१४२२' इत्यादावपि तस्यैवानुवृत्तिः । इह तु पणमाषाभ्यां साहचर्यात्परिमाणवाचिनो ग्रहणमिति ॥ ( २३१४ ) **शाणाद्वा** । **पक्षे ठञिति** । यद्यपि शाण उन्मानम् । तथापि ' आर्हात्-२२८८' इति सूत्रे परिमाणग्रहणेन परिमीयते परिच्छिद्यते अनेनेति योगवृत्त्या परिच्छेदकमात्रं गृह्यते इति वादिनां मते अस्यापि पर्युदासाट्ठगभावे ठञिति भावः । मुख्यमते तु ठगेव बोध्यः । ' शाणाद्वा २३१४' इति सूत्रे ' **शताच्चेति वक्तव्यम्** ' पूर्वेण नित्यं प्राप्ते विकल्पार्थम् । एवं च पूर्वसूत्रे शतग्रहणमकृत्वा शतशाणाभ्यां वेत्येव वक्तुं युक्तमित्याहुः । अध्यर्धशत्यम् । अध्यर्धशतम् । पञ्चशत्यम् । पञ्चशतम् । यदभावे संख्यालक्षणस्य कनो लुक् । ' शताच्च ठन्यतौ-२२९५' इति तु न प्रवर्तते, तत्रासमासग्रहणस्यानुवर्तनात् ॥ (२३१५ ) **द्वित्रिपूर्वादण् च** । वार्तिकमिदं वृत्तिकृता सूत्रेषु प्रक्षिप्तम् । भाष्यादिप्रामाण्याच्छतग्रहणमिह न संबध्यत इत्याशयेनाह—**शाणादित्येवेति** । न्यासकृता त्वण्विधायके वार्तिके सूत्रत्वभ्रमेण व्याख्यातम्—'शतशाणाभ्यां वा ' इति सूत्रयितव्ये ' पणपाद-२३१३' इति पूर्वसूत्रे शतग्रहणं क्रियते तस्येदं फलं शतशब्दः स्वरितत्वेनानुवर्तमानोऽपि 'शाणाद्वा २३१४' इत्यत्रैव संबध्यते, तदुत्तरसूत्रे ' द्वित्रिपूर्वादण् च २३१५ ' इत्यत्र तु न संबध्यते, तेन शतशब्दादण् न-इति ॥ तदिदं सामर्थ्यवर्णनमण्विधायकं यदि सूत्रं स्यात् तदा संगच्छते नान्यथेत्यास्तां तावत् ॥ **त्रैरूप्यमिति** । तदेतद्दर्शयति—**द्वैशाणमित्यादिना** । अण्येकं, ठञो लुकि द्वितीयं, यति तृतीयम् ॥ **ठञादयस्त्रयोदशेति** । ननु एकादशैव प्रत्ययाः प्रकृताः सूत्रभेदेन विहितत्वाद्यत्प्रत्ययस्य द्विर्गणने तु द्वादशेति त्रयोदशेत्येतदुरुपपादमेव । न च 'शूर्पादञन्यतरस्याम् २३०३' इत्यन्यतरस्यांग्रहणलभ्यठञमादाय त्रयोदशत्वं सूपपादमिति वाच्यम् । तुल्यन्यायेन ' शाणाद्वा २३१४' इति सूत्रलभ्ययद्ठञोर्ग्रहणेन पञ्चदशत्वप्रसङ्गात् । नापि सूत्रोपात्तैर्द्वादशभिः सह ' द्वित्रिपूर्वादण् च २३१५ ' इति वार्तिकोपात्ताण्प्रत्ययस्य गणनेन निर्वाहः । उक्तरीत्या ' कंसाट्टिठन् २३०० ' इति सूत्रे ' अर्धाच्चेति वक्तव्यम् २३०१ ' ' कार्षापणाट्टिठन् वक्तव्यः-२३०२ ' इत्यादिवार्तिकोक्तटिठन्प्रत्ययस्यापि ग्रहणप्रसङ्गादिति

---

१ खार्या इति । * काकिण्याश्चोपसंख्यानम् * अध्यर्धकाकिणीकम् । द्विकाकिणीकम् । काकिणीकम् । इत्यपि भाष्ये ॥ प्रत्यये दीर्घेकारादित्वं 'भस्याढे तद्धिते ' इति पुंवत्त्वेऽपि दीर्घश्रवणार्थम् ॥ अन्यथा ' यस्येति च ' इति खारशब्दान्याकारलोपे ह्रस्वश्रवणं स्यात् ॥ २ त्रयोदशेति । ठञ् १, ठक् २, ठन् ३, यत् ४, कन् ५, ड्वुन् ६, टिठन् ७, अञ् ८, शतमानाद्यण् ९, ख १० ईकन् ११, पणादियत् १२, द्वित्रीति वार्तिकोक्तोऽण् १३, इत्येवं त्रयोदशेत्यर्थः ॥

विभक्तयोऽर्थाश्चाकाङ्क्षितास्त इदानीमुच्यन्ते ॥ (२३१६) (सू) **तेन क्रीतम्** । ५।१।३७। ठञ् । गोपुच्छेन क्रीतं-गौपुच्छिकम् । साप्ततिकम् । प्रास्थिकम् । ठक् । नैष्किकम् ॥ ( २३१७ ) (सू) **इद्गोण्याः** । १ । २ । ५० । गोण्या इत्स्यात्तद्धितलुकि । लुकोऽपवादः । पञ्चभिर्गोणीभिः क्रीतः पटः-पञ्चगोणिः ॥ ( २३१८ ) (सू) **तस्य निमित्तं संयोगोत्पातौ** । ५ । १ । ३८ । संयोगः [2]संबन्धः । उत्पातः [3]शुभाशुभसूचकः । शतिकः शत्यो वा धनपतिसंयोगः । शतिकं शत्यं वा दक्षिणाक्षिस्पन्दनम् । शतस्य निमित्तमित्यर्थः ॥ ( २३१९ ) (वा) **वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्** ॥ वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् ॥ (२३२०) (वा) **सन्निपाताच्चेति वक्तव्यम्** ॥ सान्निपातिकम् ॥(२३२१) (सू) **गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्** ।५।१।३९। गोर्निमित्तं संयोग उत्पातो वा गव्यः । द्व्यचः-धन्यः । यशस्यः । स्वर्ग्यः । गोद्व्यचः किम् । विजयस्य वैजयिकः । असंख्येत्यादि किम् । पञ्चानां पञ्चकम् । सप्तकम् । प्रास्थिकम् । खारीकम् । अश्वादि-आश्विकम् । आश्मिकम् ॥ ( २३२२ ) (वा) **ब्रह्मवर्चसादुपसंख्यानम्** ॥ ब्रह्मवर्चस्यम् ॥ ( २३२३ ) (सू) **पुत्राच्छ च** । ५ । १ । ४० । चाद्यत् । पुत्रीयः । पुत्र्यः ॥(२३२४) (सू) **सर्वभूमिपृथिवीभ्यामणञौ** । ५ । १ । ४१ । सर्वभूमेर्निमित्तं संयोग उत्पातो वा-सार्वभौमः । पार्थिवः । सर्वभूमिशब्दोऽनुशतिकादिषु पठ्यते ॥ ( २३२५ ) (सू) **तस्येश्वरः** ।५ । १ । ४२ । ( २३२६ ) (सू) **तत्र विदित इति च** । ५ । १ । ४३ । सर्वभूमेरीश्वरः सर्वभूमौ विदितो वा-सार्वभौमः पार्थिवः ॥ ( २३२७ ) (सू) **लोकसर्वलोकाट्ठञ्** । ५ । १ । ४४ । तत्र विदित इत्यर्थे । लौकिकः । अनुशतिकादित्वादुभयपदवृद्धिः । सार्वलौकिकः ॥ ( २३२८ ) (सू) **तस्य वापः** । ५ । १ । ४५ । उप्यते अस्मिन्निति वापः क्षेत्रम् । प्रस्थस्य वापः-प्रास्थिकम् । द्रौणिकम् । खारीकम्॥ (२३२९) (सू) **पात्रात् ष्ठन्** । ५ । १ । ४६ । पात्रस्य वापः क्षेत्रं-पात्रिकम् । पात्रिकी क्षेत्रभक्तिः ॥ (२३३०-१) (सू) **तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते** । ५ । १ । ४७ । वृद्धिर्दीयत इत्यादि क्रमेण प्रत्येकं संबन्धादेकवचनम् । पञ्चास्मिन् वृद्धिः, आयः, लाभः, शुल्कः, उपदा वा दीयते-पञ्चकः । शतिकः । शत्यः । साहस्रः । उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः । ग्रामादिषु स्वामिग्राह्यो भागः-आयः । विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः । रक्षानिर्वेशो राजभागः शुल्कः । उत्कोच उपदा ॥(२३३०-२) (वा) **चतुर्थ्यर्थ उपसंख्यानम्** ॥ पञ्चास्मै वृद्ध्यादिर्दीयते-पञ्चको देव-

---

चेत् । अत्राहुः-' कंसाट्टिठन् २३०० ' इति सूत्रस्थ एव टिठन् अर्धकार्षापणशब्दाभ्यां परामृष्ट इति स न भिद्यते । ' द्वित्रिपूर्वादण् च २३१५ ' इति वार्तिकस्थोऽण् तु भिद्यते, 'शतमानविंशतिक-२३०४' इत्यणो दूरस्थत्वेन परामर्ष्टुमशक्यत्वादिति ॥ ( २३१६ ) **तेन क्रीतम्** । तेनेति तृतीयान्तात्क्रीतार्थे यथाविहितं प्रत्ययाः स्युः ॥ **ठञिति** । ' आर्हात्-२२८८ ' इति सूत्रे ' अगोपुच्छ-' इत्यादिपर्युदासाट्ठगभावे गोपुच्छससतिप्रस्थेभ्यष्ठञ् भवतीत्यर्थः । ननु देवदत्तेन क्रीतं पाणिना क्रीतं संतोषेण क्रीतमित्यादावतिप्रसङ्ग इति चेत् । अत्राहुः—करणे तृतीयैवेह समर्थविभक्तिः, साऽपि मूल्यद्रव्यसमर्पकाच्छब्दादुत्पन्ना, न त्वन्याऽपि, अन्यत्र त्वनभिधानान्न प्रत्ययः । एतच्च ' तद्धिताः ' इति महासंज्ञाकरणाल्लभ्यते तेभ्यः प्रयोगेभ्यो हिता इति व्याख्यानादिति ॥ ( २३१७ ) **इद्गोण्याः** । **लुकोऽपवाद इति** । ' लुक्तद्धितलुकि १९६५ ' इति प्राप्तस्य स्त्रीप्रत्ययस्य लुकोऽपवाद इत्यर्थः ॥ ( २३२१ ) **गोद्व्यचो—** । **पञ्चकमिति** । संख्यालक्षणः कन् ॥ **आश्मिकमिति** । अश्मनो निमित्तमित्यर्थे ठक् ' नस्तद्धिते ९८६ ' इति टिलोपः ॥ ( २३२३ ) **पुत्राच्छ च** । ' गोद्व्यचः-२३३१ ' इति नित्यं यति प्राप्ते वचनम् । कथं पुत्रीयः क्रतुरिति । नहि क्रतुः संयोगो नाप्युत्पात इति चेत् । अत्राह हरदत्तः-संयुज्यतेऽनेनेति व्युत्पत्त्या क्रतुरपि संयोग एव, यागकरणेन हि पुरुषः फलेन संयुज्यते, अतो यागादिरपि संयोगो, न केवलं संबन्ध एवेत्याग्रह इति ॥ ( २३२४ ) **सर्वभूमि—** । आभ्यां यथासंख्यमणञौ स्तः ॥ ( २३२५ ) **तस्येश्वरः** । 'तस्य निमित्तम्-२३१८' इत्यतोऽनुवृत्त्यैव सिद्धे पुनः ' तस्य ' इति निर्देशो निमित्तरूपप्रत्ययार्थस्य निवृत्तये । अन्यथा हि संयोगोत्पाताविवेश्वरोऽपि प्रत्ययार्थस्य विशेषणं संभाव्येत ॥ ( २३२६ ) **तत्र विदित इति च** । योगविभाग उत्तरार्थो यथासंख्यनिवृत्त्यर्थश्च ॥ (२३२८) **तस्य वापः** । ' तस्य ' इति वापापेक्षया कर्मणि षष्ठीत्याह—**प्रस्थस्येति** । कर्तरि षष्ठ्यां तु देवदत्तस्य वापः क्षेत्रमित्यादौ स्यादिति भावः ॥ **खारीकमिति** । ' खार्या ईकन् २३११ ' ॥ ( २३३०-१ ) **तदस्मिन्—** । प्रथमासमर्थात् ' अस्मिन् ' इति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति । शुल्कग्रहणं प्रपञ्चार्थं, तस्याप्यायविशेषत्वात् । तथा च ' ठगायस्थानेभ्यः२०१७ ' इति ठग् भवति शौल्कशालिक इति हरदत्तः ॥ **उपदा दीयत इति** । जसः सस्य रुत्वे यत्वे च यलोपः ॥ **साहस्र इति** । ' शतमान-२३०४ ' इत्यादिनाऽण् ॥ **रक्षानिर्वेश इति** । निर्वेशो भृतिः । रक्षानिमित्तको निर्वेशो रक्षानिर्वेशः । संबन्धषष्ठ्या समासः ॥ (२३३०-२ ) **चतुर्थ्यर्थ उपसमित्यादि** । एवं च संप्रदानस्यैवाधिकरणत्वविवक्षयेष्टसिद्धौ उपसंख्यानं

---

१ **तेनेति** । अनेन प्रत्यासत्त्या द्रव्यदानपूर्वकवस्त्वन्तरग्रहणस्यैव क्रयपदार्थत्वेन तद्घटकं द्रव्यमेव गृह्यते ॥ २ **सम्बन्ध इति** । 'इदं कृत्वेदमवाप्यते' इति भाष्येण काम्यकर्मकामनयानिश्चितकार्यकारणककार्य इत्यर्थः ॥ ३ **शुभाशुभेति** । 'यादृच्छिको भेदो वा छेदो वा ' इति भाष्येणातर्कितोपनत इति शेष इति भावः ॥

दत्तः । समब्राह्मणे दानमितिवदधिकरणत्वविवक्षा वा ॥ ( २३३१ ) (सू०) पूरणार्धाट्ठन् । ५ । १ । ४८ । यथा-क्रमं ठक्ठिठनोरपवादः । द्वितीयो वृद्ध्यादिरस्मिन् दीयते—द्वितीयिकः । तृतीयिकः। अर्धिकः । अर्धशब्दो रूपकस्यार्धे रूढः ॥ ( २३३२ ) (सू०) भागाद्यच्च । ५ । १ । ४९ । चाट्ठन् । भागशब्दोऽपि रूपकस्यार्धे रूढः । भागो वृद्ध्यादि-रस्मिन् दीयते भाग्यं भागिकं शतम् । भाग्या भागिका विंशतिः ॥ ( २३३३ ) (सू०) तद्धरति वहत्यावहति भारा-द्वंशादिभ्यः । ५ । १ । ५० । वंशादिभ्यः परो यो भारशब्दस्तदन्तं यत्प्रातिपदिकं तत्प्रकृतिकाद् द्वितीयान्तादित्यर्थः। वंशभारं हरति वहत्यावहति वा—वांशभारिकः । ऐक्षुभारिकः । भाराद्वंशादिभ्य इत्यस्य व्याख्यान्तरं—भारभूतेभ्यो वंशादिभ्य इति । भारभूतान्वंशान् हरति—वांशिकः । ऐक्षुकः ॥ ( २३३४ ) (सू०) वस्नद्रव्याभ्यां ठन्कनौ । ५ । १ । ५१ । यथासंख्यं स्तः । वस्नं हरति वहत्यावहति वा—वस्निकः । द्रव्यकः ॥ ( २३३५ ) (सू०) संभवत्यवह-रति पचति । ५ । १ । ५२ । प्रस्थं संभवति—प्रास्थिकः कटाहः । प्रस्थं स्वस्मिन्समावेशयतीत्यर्थः। प्रास्थिकी ब्राह्मणी प्रस्थमुपसंहरति पचति वेत्यर्थः ॥ ( २३३६ ) (वा०) तत्पचतीति द्रोणादण् च ॥ चाट्ठञ् । द्रोणं पचतीति—द्रौणी । द्रौणिकी ॥ (२३३७) (सू०) आढकाचितपात्रात्खोऽन्यतरस्याम् । ५ । १ । ५३ । पक्षे ठञ् । आढकं संभवति अवहरति पचति वा—आढकीना, आढकिकी । आचितीना, आचितिकी । पात्रीणा, पात्रिकी ॥ ( २३३८ ) (सू०) द्विगोः ष्ठंश्च । ५ । १ । ५४ । आढकाचितपात्रादित्येव । आढकाद्यन्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन्खौ वा स्तः । पक्षे ठञ्, तस्यां[२३०८]-ध्यर्धेति लुक् । षित्त्वान्ङीष् । द्व्याढकिकी, द्व्याढकीना । द्विगोरिति ङीप् । द्व्याढकी । द्व्याचितिकी, द्व्याचितीना । अपरि[६६०]-माणेति ङीब्निषेधात्—द्व्याचिता । द्विपात्रिकी । द्विपात्रीणा । द्विपात्री ॥ (२३३९) (सू०) कुलिजाल्लुक्खौ च । ५ । १ । ५५ । कुलिजान्ताद् द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ वा स्तः।चात् ष्ठंश्च । लुगभावे[1] ठञः श्रवणम्। द्विकुलिजी । द्वैकुलिजिकी। द्विकुलिजीना, द्विकुलिजिकी ॥ ( २३४० ) (सू०) सोऽस्यांशवस्नभृतयः । ५ । १ । ५६ । अंशो भागः । वस्नं मूल्यम् । भृतिर्वेतनम् । पञ्च अंशो वस्नो भृतिर्वाऽस्य—पञ्चकः ॥ (२३४१) (सू०) तदस्य परिमाणम् । ५ । १ । ५७ । प्रस्थं परिमाणमस्य-प्रास्थिको राशिः ॥ (२३४२) (सू०) संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु । ५ । १ । ५८ । पूर्वसूत्रमनुवर्तते । (२३४३) तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः । यद्वा—द्व्येकयोरितिवत्संख्यामात्रवृत्तेः परिमाणिनि प्रत्ययः । पञ्चैव पञ्चकाः शकुनयः । पञ्च परिमाणमेषामिति वा । सङ्घे—पञ्चकः । सूत्रे—अष्टकं पाणिनीयम् । सङ्घशब्दस्य प्राणिसमूहे रूढत्वात्सूत्रं पृथगु-

---

नादर्तव्यमिति भावः ॥ ( २३३१ ) पूरणार्धाट्ठन् । पूर्यतेऽनेनेति पूरणोऽर्थस्तद्वाचिनोऽर्धशब्दाच्च ठन् स्यात् ॥ अर्धिक-मिति । 'अर्धाच्चेति वक्तव्यम् २३०१' इति ठिठन् प्राप्तः, सति च तस्मिन् स्त्रियां ङीप् स्यात् । इष्यते तु टाप् ॥ (२३३२) भागाद्यच्च । रूपकस्येति । रूपकं कार्षापणम् ॥ रूढ इति । तथा च भागवद् द्रव्यसापेक्षत्वेनासामर्थ्यमिह नोद्भावनी[2]-यमिति भावः ॥ ( २३३३ ) तद्धरति—। भारभूतेभ्यो वंशादिभ्य इतीति । ननु वंशादयः शब्दास्ते कथं भारभूता इत्यत आह—भारभूतानिति । भारशब्दोऽर्थद्वारा वंशादीनां विशेषणमिति भावः । 'भारेभ्यः' इति वक्तव्ये प्रत्येकं संब-न्धविवक्षया सूत्रे 'भारात्' इति निर्देशः ॥ ( २३३४ ) वस्नद्रव्या—। वस्निक इति । वस्नं मूल्यम् ॥ ( २३३५ ) संभवत्यवहरति—। आधारप्रमाणादाधेयप्रमाणस्य यदनाधिक्यं तदुपसर्जनं धारणं संभवतेरर्थः । तेन सकर्मकत्वात्तदिति द्वितीयान्तानुवृत्तिर्न विरुध्यते तदाह—प्रस्थं स्वस्मिन्निति ॥ प्रास्थिकीति । ठञन्तत्वान्ङीप् । अवहरतीत्येतद्व्याचष्टे—उपसंहरतीति ॥ ( २३३६ ) तत्पचतीति—। वार्तिकेऽस्मिन्पचातिग्रहणं संभवत्यवहरतिनिवृत्त्यर्थम् । द्रोणपरिमित-व्रीह्यादौ द्रोणशब्दो लाक्षणिकः ॥ ( २३३७ ) आढका—। पक्षे ठञिति । आढकादीनां परिमाणत्वाट्ठङ् नेति भावः ॥ ( २३३८ ) द्विगोः ष्ठंश्च । ष्ठनिति च्छेदः, तदाह—षित्त्वादिति ॥ द्व्याढकिकीति । 'न य्वाभ्याम्—१५७४' इत्यैजागमो न शङ्क्यः, वृद्धिनिषेधसंनियोगेन तद्विधानाद्वृद्धेश्च प्राप्त्यभावात् ॥ अपरिमाणेति । आचितस्य परिमाणत्वे-ऽपि तस्मिन् सूत्रे विशिष्य ग्रहणादिति भावः ॥ ( २३३९ ) कुलिजा—। द्वैकुलिजिकीति । 'असंज्ञाशाणयोः' इत्यत्र कुलिजशब्दोऽपि इष्यते, तेनोत्तरपदवृद्धिर्नेत्याहुः ॥ ( २३४१ ) तदस्य परिमाणम् । इह परिमाणशब्देन परिच्छेदकमात्रं गृह्यते, न तु सर्वतोमानमेव, उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणात् । षष्टिजीवितं परिमाणमस्य षाष्टिकः । 'सोऽस्य' इति वर्तमाने पुनः 'तदस्य' इति ग्रहणात् 'द्वे षष्टी जीवितं परिमाणमस्य द्विषाष्टिकस्त्रिषाष्टिकः' इत्यादौ 'अध्यर्ध—२३०५' इति लुङ् न भवति । स्पष्टं चेदं काशिकादौ॥(२३४२) संख्या—। पूर्वसूत्रमिति । तेन पञ्च गावः परिमाणमस्य पञ्चको गोसंघ इत्यादि सिध्यति। यदा तु प्रकृत्यर्थस्यैव परिच्छेदिका संख्या पञ्च गावोऽस्य संघस्येति,तदा तु प्रत्ययो न भवति,परिमाणस्य प्रत्ययार्थत्वा-

---

१ लुगभाव इति। अन्यतरस्यांग्रहणानुवृत्तिपरवृत्तिग्रन्थानुरोधेनेदम् । वस्तुतस्तु 'कुलिजाच्चेति सिद्धे लुक्खग्रहणानर्थ-क्यं पूर्वस्मिंस्त्रिकभावात्' इति लुक्खप्रत्याख्यानपरभाष्येण 'न च ठञः पक्षे लुगभावेन चतुर्थं (द्वैकुलिजिकी) रूपमिष्यते' इति कैयटेन च तस्यानुवृत्त्यभावसूचनाच्चिन्त्यमेतत् ॥ २ नोद्भावनीयमिति । ये त्वेनं नित्यसापेक्षं ब्रुवते तेषामपि रूढत्वाद-स्यैव ग्रहणं न्याय्यमिति तात्पर्यम् ॥

पात्तम् । पञ्चकमध्ययनम् ॥ ( २३४४ ) वा० स्तोमे डविधिः ॥ पञ्चदश मन्त्राः परिमाणमस्य—पञ्चदशः सप्तदशः । एकविंशः । सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठयादिसंज्ञिका स्तुतिः स्तोमः ॥ ( २३४५ ) सू० पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ।५।१।५९। एते रूढिशब्दा निपात्यन्ते ॥ (२३४६) सू० पञ्चद्दशतौ वर्गे वा ।५।१।६०। पञ्च परिमाणमस्य पञ्चद्वर्गः । दशत् । पक्षे पञ्चकः । दशकः ॥ (२३४७) सू० त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ।५।१।६२। त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां—त्रैंशानि । चात्वारिंशानि ब्राह्मणानि ॥ ( २३४८ ) सू० तदर्हति ।५।१।६३। लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः । श्वेतच्छत्रमर्हति—श्वैतच्छत्रिकः ॥ ( २३४९ ) सू० छेदादिभ्यो नित्यम् ।५।१।६४। नित्यमाभीक्ष्ण्यम् । छेदं नित्यमर्हति—छैदिको वेतसः । छिन्नप्ररूढत्वात् ॥ ( २३५० ) ग० विराग विरङ्गं च ॥ विरागं नित्यमर्हति—वैरागिकः, वैरङ्गिकः ॥ ( २३५१ ) सू० शीर्षच्छेदाद्यच्च ।५।१।६५। शीर्षच्छेदं नित्यमर्हति—शीर्षच्छेद्यः । शैर्षच्छेदिकः । यट्ठकोः संनियोगेन शिरसः शीर्षभावो निपात्यते ॥ ( २३५२ ) सू० दण्डादिभ्यः[3] ।५।१।६६॥

---

भावात् । एतच्च 'आर्हादगोपुच्छ–' इति सूत्रे कैयटे स्पष्टम् ॥ ( २३४३ ) स्वार्थे उदाहरति—**पञ्चैवेति** ॥ ( २३४४ ) **स्तोमे डविधिरिति** । डित्करणमेकविंश इत्यत्र टिलोपार्थम् । त्रयस्त्रिंशादौ टिलोपार्थं च ॥ **पञ्चदश मन्त्रा इति** । 'साम्ना स्तुवीत' 'एकं साम त्र्यृचे क्रियते' इति हि श्रुतिः । तत्र त्र्यृचस्य पञ्चकृत्व आवृत्त्या पञ्चदश मन्त्राः । सप्तदशे स्तोमे अन्त्याया ऋचः सप्तकृत्व आवृत्तिः । प्रथममध्यमयोस्तु पञ्चकृत्व एव । एकविंशे स्तोमे तु त्र्यृचस्य सप्तकृत्व आवृत्तिरिति ज्ञेयम् ॥ **छन्दोगैरिति** । सामगैरित्यर्थः ॥ ( २३४५ ) **पङ्क्तिविंशति[1]**—। 'तदस्य परिमाणम् २३४१' इति वर्तते पञ्चन्शब्दस्य टिलोपः, तिप्रत्ययः, 'चोः कुः ५१३' इति कुत्वम् । पञ्च पदानि परिमाणमस्य पंक्तिश्छन्द इति काशिका, पदशब्दोऽत्र पादपर्याय इति हरदत्तः ॥ **रूढिशब्दा इति** । तथा चात्र नावयवार्थेऽभिनिवेष्टव्यम् । पङ्क्तिशब्दो हि नानार्थः । अस्ति क्रमसंनिवेशे ब्राह्मणपङ्क्तिः पिपीलिकापङ्क्तिरिति । अस्ति च दशसंख्यायां पङ्क्तिरथ इति दशरथः इत्यर्थः । अस्ति हि छन्दोविशेषे यस्य पञ्चाक्षराः पञ्च पादाः । तथा च छन्दोविशेषे एवावयवार्थो नान्यत्रेति बोध्यम् । द्वयोर्दशतोर्विन्भावः शतिश्च प्रत्ययः अपदत्वं च । द्वौ दशतौ परिमाणमस्य विंशतिः । अपदत्वनिपातनान्नकारस्यानुस्वारः । केचित्तु विन्भावमुक्त्वा अपदत्वं चेति न पठन्ति । त्रयाणां दशतां त्रिन्भावः, शच्च प्रत्ययः । मतान्तरे तु त्रिन्भावः । त्रयो दशतः परिमाणमस्य त्रिंशत् । एवं चतुर्णां चत्वारि, पञ्चानां पञ्चा । आभ्यामपि शत्प्रत्ययः ॥ षण्णां दशतां षष्, तिश्च प्रत्ययः अपदत्वं च, षट् दशतः परिमाणमस्याः षष्टिः ॥ ततस्त्रिभ्योऽपि तिप्रत्यय एव । सप्तानां दशतां सप्त, अष्टानां दशतामशी, नवानां दशतां नव, ॥ दशानां दशतां शभावः तश्च प्रत्ययः । दश दशतः परिमाणमस्य शतम् ॥ ( २३४६ ) **पञ्चद्दशतौ**—। इमौ डत्यन्तत्वेन निपात्येते वर्गेऽभिधेये । 'तदस्य परिमाणम् २३४१' इत्यनुवर्तत एव ॥ **दशदिति** । दश परिमाणमस्य ॥ **पक्षे इति** । वाग्रहणात् 'संख्यायाः–२२९६' इति कन्नपि भवतीति भावः ॥ ( २३४७ ) **त्रिंशच्चत्वारिंशतोः**—। व्यत्ययेन पञ्चम्यर्थे षष्ठीद्विवचनम् । '**चत्वारिंशतो ब्राह्मणे**' इति पाठे तु समाहारद्वन्द्वात्पञ्चम्येकवचनम् । इह 'ब्राह्मणसंज्ञायाम्' इति षष्ठीसमासेन निर्देष्टुमुचितम् । तथा हि सति 'ब्राह्मणस्य चेत्संज्ञा' इति स्फुटीभवति । अन्यथा तु यस्य कस्यचित्संज्ञायां ब्राह्मणस्थे च प्रयोगे इत्यनिष्टोऽर्थः संभाव्येत । ततश्च मन्त्रे भाषायां च डण् न सिध्येत् । इष्यते च सः । तस्मादिष्टानुरोधेन षष्ठ्यर्थे सप्तमीति व्याख्येयम् 'ब्राह्मणेऽभिधेये' इति तु काशिकायां व्याख्यातम् ॥ ( २३४८ ) **तदर्हति** । **ठञादय इति** । ठञ उदाहरणं तु प्रस्थमर्हति प्रास्थिकः, द्रौणिकः इत्याद्यूह्यम् । आदिशब्दग्राह्यस्य ठक उदाहरणमाह—**श्वैतच्छत्रिक इति** । एवं खारीकः, शत्यः, शतिकः, साहस्रः, इत्यादीन्युदाहर्तव्यानि ॥ ( २३४९ ) **छेदादिभ्यो[2]**—। नित्यग्रहणमिह 'नित्यं क्रीडाजाविकयोः १०२९' इत्यत्रेव महाविभाषया प्राप्तस्य वाक्यस्य निवृत्त्यर्थं न भवति, आरम्भसामर्थ्यादेव तन्निवृत्तिसिद्धेः । किन्तु प्रत्ययार्थविशेषणमिति ध्वनयति—**छेदं नित्यमर्हतीति** । भाष्ये तु नित्यग्रहणं प्रत्याख्यातं सूत्रमेव माऽस्त्विति तदाशय इति मनोरमा ॥ अयं भावः—नित्यग्रहणमिह प्रत्ययार्थविशेषणं न संभवति, नित्यं छेदमर्हतीत्यस्यार्थस्यासंभवात् । न हि कश्चित्पदार्थो नित्यं छेदमर्हति । सोऽपि वेतसादिरर्धश्छिन्नः प्ररोहति, सोऽपि न नित्यं छेदमर्हति । कालान्तर एव तस्य च्छेदप्रवर्तनात् । न चात्र नित्यग्रहणत्यागेऽपि छेदमर्हतीत्यादिविग्रहवाक्यनिवृत्तये सूत्रस्यावश्यकत्वात्तत्प्रत्याख्यानं न युज्यत इति शङ्क्यम् । विग्रहवाक्यस्य भाष्यादिसंमतत्वादिति दिक् ॥ छेद, भेद, द्रोह, दोषेत्यादयश्छेदादयः ॥ ( २३५० ) गणसूत्रमाह—**विरागेति** ॥ ( २३५२ ) **दण्डादिभ्यः** । पूर्व-

---

१ **विंशतीति** । विंशत्याद्याः संख्यायां संख्येये चैकवचनान्ता एव । तेन विंशतिर्गावः, विंशतिर्गवाम् इत्यादि सिद्धम् । संख्यावाचिनामेकशेषे तु द्विवचनाद्यपि भवत्येव द्वे गवां विंशती बहवो गवां विंशतयः शतानि सहस्राणि ॥ २ **छेदादिभ्य इति** । पाणिनिना तु 'तदर्हति च्छेदादिभ्यो नित्यम्' इत्येकमेव सूत्रं कृतमासीत् । अत एव 'आर्हादगोपुच्छ–' इति सूत्रे भाष्यकृता 'योगविभागः कर्तव्यः–'तदर्हति' ततः 'छेदादिभ्यो नित्यम्' इति' योगविभागे कर्तव्यतोक्ता संगच्छते ॥ प्रकृतसूत्रव्याख्यायां 'तदर्हति' इत्यस्यानुल्लेखस्तु विग्रहेण स्पष्टीकृतार्थत्वाद्, लेखकप्रमादाद्वा भवेत् ॥ ३ **दण्डादिभ्य इति** । इह–'दण्डादिभ्यः' इत्येतावदेव सूत्रम् । अनन्तरश्च यत्प्रत्ययो विधीयते–इति पदमञ्जरी ॥

एभ्यो यत् स्यात् । दण्डमर्हति–दण्ड्यः । अर्घ्यः । वध्यः ॥ ( २३५३ ) (सू.) **पात्राद् घंश्च** । ५ । १ । ६८ । चाद्यत् तदर्हतीत्यर्थे । पात्रियः । पात्र्यः ॥ ( २३५४ ) (सू.) **कडङ्करदक्षिणाच्छ च** । ५ । १ । ६९ । चाद्यत् । कडं करोतीति विग्रहे अत एव निपातनात् खच । कडङ्करं माषमुद्गादिकाष्ठमर्हतीति-कडङ्करीयो गौः । कडङ्कर्यः । दक्षिणामर्हतीति दक्षिणीयः । दक्षिण्यः ॥ ( २३५५ ) (सू.) **स्थालीबिलात्** । ५ । १ । ७० । स्थालीबिलमर्हन्ति–स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः । पाकयोग्या इत्यर्थः ॥ ( २३५६ ) (सू.) **यज्ञर्त्विग्भ्यां घखञौ** । ५ । १ । ७१ । यथासंख्यं स्तः । यज्ञमृत्विजं वाऽर्हति–यज्ञियः । आर्त्विजीनो यजमानः ॥ ( २३५७ ) (वा.) **यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम्** ॥ यज्ञियो देशः । आर्त्विजीन ऋत्विक् ॥ इत्यार्हीयाणां ठगादीनां द्वादशानां पूर्णोऽवधिः ॥

---

### अथ तद्धितेषु ठञधिकारे कालाधिकारः ।

अतः परं ठञेव ॥ ( २३५८ ) (सू.) **पारायणतुरायणचान्द्रायणं वर्तयति** । ५ । १ । ७२ । पारायणं वर्तयति–पारायणिकश्छात्रः । तुरायणं यज्ञविशेषः, तं वर्तयति–तौरायणिको यजमानः । चान्द्रायणिकः ॥ ( २३५९ ) (सू.) **संशयमापन्नः** । ५ । १ । ७३ । संशयविषयीभूतोऽर्थः सांशयिकः ॥ ( २३६० ) (सू.) **योजनं गच्छति** । ५ । १ । ७४ । यौजनिकः ॥ ( २३६१ ) (वा.) **क्रोशशतयोजनशतयोरुपसंख्यानम्** ॥ क्रोशशतं गच्छति–क्रौशशतिकः । यौजनशतिकः ॥ ( २३६२ ) (वा.) **ततोऽभिगमनमर्हतीति च वक्तव्यम्** ॥ क्रोशशतादभिगमनमर्हतीति क्रौशशतिको भिक्षुः । यौजनशतिक आचार्यः ॥ ( २३६३ ) (सू.) **पथः ष्कन्** । ५ । १ । ७५ । षो ङीषर्थः । पन्थानं गच्छति–पथिकः । पथिकी ॥ ( २३६४ ) (सू.) **पन्थो ण नित्यम्** । ५ । १ । ७६ । पन्थानं नित्यं गच्छति–पान्थः । पान्था ॥ ( २३६५ ) (सू.) **उत्तरपथेनाहृतं च** । ५ । १ । ७७ । उत्तरपथेनाहृतम्–औत्तरपथिकम् । उत्तरपथेन गच्छति–औत्तरपथिकः ॥ ( २३६६ ) (वा.) **आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम्** । वारिपथिकम् ॥ ( २३६७ ) (सू.) **कालात्** । ५ । १ । ७८ । व्युष्टादिभ्योऽणित्यतः प्रागधिकारोऽयम् ॥ ( २३६८ ) (सू.) **तेन निर्वृ-**

---

सूत्राद्यदनुवर्तत इत्याह—**यत्स्यादिति** । केचित्तु 'दण्डादिभ्यो यः' इति पठन्ति स चापपाठ एव, भाष्यादिविरोधादित्याहुः॥ तथा हि—'अचो यत्' इति सूत्रे भाष्ये उक्तं "हनो वा यत् वधादेशश्च ३७९०" वध्यः घात्यः "तद्धितो वा" । वधमर्हति वध्य इति यदि चेह यद्विधीयेत तदैवैतदुपपद्यते, पक्षद्वयेऽपि 'यतोऽनावः ५५७६' इत्याद्युदात्तत्वात् । यदि त्वत्र यो विधीयेत तदा स्वरो भिद्येत॥ मनोरमायां तु 'क्यब्विधौ हनो वा वधस्तद्धितो वा' इति भाष्यम् । यदि चेह यद्विधीयेत तदैव तदुपपद्यते । क्यप्याद्युदात्तत्वं यत्यपि तद्धिते 'यतोऽनावः ५५७६' इत्याद्युदात्तत्वमित्यादि स्थितम् ॥ **( २३५४ ) कडंकरदक्षिणाच्छ च** । 'कडंगर–' इति पाठस्तूपेक्ष्य इति ध्वनयति—**कडं करोतीति** । 'कड मदे' कडतीति कडः ॥ **माषमुद्गादिकाष्ठमिति** । अमरश्चाह 'कडंकरो बुसं क्लीबे' इति ॥ **गौरिति** । 'नीवारपाकादिकडंकरीयैः' इति रघुः ॥ **( २३५५ ) स्थालीबिलात्** । छयतावनुवर्तेते । अस्माच्छयतौ स्तः । ठकोऽपवादः ॥ **पाकयोग्या इति** । त्रिष्फलीकृता[1] इति यावत् ॥ **( २३५६ ) यज्ञर्त्वि–। यज्ञम् ऋत्विजं वाऽर्हतीति** । अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्त इत्यर्थः ॥ (२३५७) देशस्यानेवंविधत्वादुपसंख्यानम् । **यज्ञियो देश इति** । यज्ञानुष्ठाने योग्य इत्यर्थः ॥ **ऋत्विगिति** । स तु ऋत्विक्त्वमर्हति, न तु ऋत्विजमिति सूत्रेण खञोऽप्राप्तावुपसंख्यानम् ॥ आर्हीयाणां ठगादीनां द्वादशानां गतोऽवधिः ॥

---

**( २३५८ ) पारायण–**। आदित आरभ्य आन्तादविच्छेदेन वेदस्याध्ययनं पारायणम् । तच्च गुरुणा शिष्येण च निर्वर्त्यते, अन्यतरासंनिधौ अध्ययनक्रियाया अनिष्पादनात् । तथापि शिष्य एव प्रत्यय इष्यते न तु गुरावित्याकरे स्थितम् । तदाह–**छात्त्र इति** ॥ **यजमान इति** । यद्यपि पुरोडाशादिनिर्वर्तनेन ऋत्विगपि यज्ञं निर्वर्तयति, तथापि तत्र तौरायणिक इति न प्रयुज्यते, अनभिधानादिति भावः । चान्द्रायणं तपोविशेषः ॥ **(२३५९) संशय–। विषयीभूतोऽर्थ इति** । 'स्थाणुर्वा पुरुषो वा' इति संशयविषयीभूते स्थाण्वादावेव प्रत्यय इष्यते, न तु संदेग्धरि इति भावः । कथं तर्हि 'सांशयिकः संशयापन्नमानसः' इति चेत् । अत्राहुः—संशयापन्नं मानसं यस्मिन्विषये स विषयः संशयापन्नमानस इति ॥ **( २३६० ) योजनं–। (२३६२) ततोऽभिगमनमिति** । अत्र पञ्चम्यन्तात्प्रत्ययः ॥ **(२३६४) पन्थो ण–**। पथः पन्थ इत्ययमादेशः, णश्च प्रत्ययः॥ नित्यग्रहणमिह प्रत्ययार्थविशेषणं, न तु वाक्यनिवृत्त्यर्थमित्याशयेनाह–**नित्यं गच्छतीति** । नित्यमिति किम्, पथिकः । भाष्ये तु नित्यग्रहणं प्रत्याख्यातम् । अयं हि भाष्याशयः–नित्यं पन्थानं गच्छतीत्यर्थोऽत्र यद्यपि संभवति, तथापि नात्रैवार्थे पान्थशब्दस्य प्रयोग इष्यते । कदाचिद्गच्छत्यपि तत्प्रयोगात् । न चैवमपि विग्रहवाक्यनिवृत्त्यर्थं नित्यग्रहणमस्त्विति शङ्क्यम्, शिष्टप्रयोगे विग्रहवाक्यस्य दर्शनादिति ॥ **( २३६५ ) उत्तरपथेन–**। चकारेण गच्छतीति प्रत्ययार्थः समुच्चीयते । तदाह–**उत्तरपथेन गच्छतीति** ॥ **(२३६६) वारिपथिकमिति** । वारिपथेन गच्छतीति वारिपथेनाहृतमिति वा विग्रहः ॥ **(२३६७) कालात्** ।

---

1 त्रिष्फलीकृता इति । त्रिः कण्डनैः संस्कृता इत्यर्थः ॥

त्तम् । ५ । १ । ७९ । अह्ना निर्वृत्तमाह्निकम् ॥ ( २३६९ ) (सू) **तमधीष्टो भृतो भूतो भावी** । ५ । १ । ८० । अधीष्टः सत्कृत्य व्यापारितः । भृतो वेतनेन क्रीतः । भूतः स्वसत्तया व्याप्तकालः । भावी तादृश एवानागतकालः । मासमधीष्टो–मासिकोऽध्यापकः । मासं भृतो–मासिकः कर्मकरः । मासं भूतो–मासिको व्याधिः । मासं भावी–मासिक उत्सवः ॥ ( २३७० ) (सू) **मासाद्वयसि यत्खञौ** । ५ । १ । ८१ । मासं भूतो–मास्यः । मासीनः ॥ ( २३७१ ) (सू) **द्विगोर्यप्** । ५ । १ । ८२ । मासाद्वयसीत्यनुवर्तते । द्वौ मासौ भूतो–द्विमास्यः ॥ ( २३७२ ) (सू) **षण्मासाण्ण्यच्च** । ५ । १ । ८३ । वयसीत्येव । यबप्यनुवर्तते । चाट्ठञ् । षाण्मास्यः । षण्मास्यः । षाण्मासिकः ॥ ( २३७३ ) (सू) **अवयसि ठंश्च** । ५ । १ । ८४ । चाण्ण्यत् । षण्मासिको व्याधिः । षाण्मास्यः ॥ ( २३७४ ) (सू) **समायाः खः** । ५ । १ । ८५ । समामधीष्टो भृतो भूतो भावी वा–समीनः ॥ ( २३७५ ) (सू) **द्विगोर्वा** । ५ । १ । ८६ । समायाः ख इत्येव । तेन परिजय्येत्यर्तैः प्राङ्निर्वृत्तादिषु पञ्चस्वर्थेषु प्रत्ययाः । द्विसमीनः । द्वैसमिकः ॥ ( २३७६ ) (सू) **रात्र्यहःसंवत्सराच्च** । ५ । १ । ८७ । द्विगोरित्येव । द्विरात्रीणः । द्वैरात्रिकः । द्व्यहीनः । द्वैयह्निकः । समासान्तविधेरनित्यत्वान्न टच् । द्विसंवत्सरीणः ॥ ( २३७७ ) (सू) **संख्यायाः संवत्सरसंख्यस्य च** । ७ । ३ । १५ । संख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ । द्विसांवत्सरिकः । द्वे षष्टी भृतो–द्विषाष्टिकः । परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिक इत्युत्तरपदवृद्धिर्न ॥ ( २३७८ ) (सू) **वर्षाल्लुक् च** । ५ । १ । ८८ । वर्षशब्दान्ताद् द्विगोर्वा खः । पक्षे ठञ् । वा च लुक् त्रीणि रूपाणि । द्विवर्षीणो व्याधिः । द्विवार्षिकः । द्विवर्षः ॥ ( २३७९ ) (सू) **वर्षस्याभविष्यति** । ७ । ३ । १६ । उत्तरपदस्य वृद्धिः स्यात् । द्विवार्षिको मनुष्यः । भविष्यति तु–द्वैवर्षिकः । अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न । गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति–द्विवार्षिको मनुष्यः ॥ परिमाणान्तस्यासंज्ञाशाणयोः[1] । द्वौ कुडवौ प्रयोजनमस्य–द्विकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । द्विनैष्किकम् । असंज्ञेति किम् । पञ्च कलायाः परिमाणमस्य पाञ्चकलायिकम् । तद्धितान्तः संज्ञा । द्वैशाणम् । कुलिजशब्दमपि केचित्[2] पठन्ति । द्वैकुलि-

---

स्वरूपग्रहणमिह न भवति, 'तमधीष्टो भृतो भूतो भावी–२३६९' इत्यत्यन्तसंयोगे द्वितीयानिर्देशात् । 'मासाद्वयसि–२३७०' इत्यादौ मासादीनां काले विशेषणाच्च ॥ ( २३६८ ) **तेन निर्वृत्तम्** । तृतीयान्तात्कालवाचिनष्ठञ् स्यात् । तेनेति करणे तृतीया । चतुरर्थ्यन्तर्गते 'तेन निर्वृत्तम् १८१०' इत्यत्र तु कर्तरि तृतीयेति विशेषः । उभयत्राप्यन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः ॥ **आह्निकमिति** । 'अह्नष्टखोरेव ११३५' इति नियमात् 'नस्तद्धिते ९८६' इति टिलोपो न ॥ ( २३७० ) **मासाद्वयसि–** । खञो ञित्करणं स्वरार्थं पुंवद्भावप्रतिषेधार्थं च । मासीनाभार्यः ॥ अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद् भूत इत्येतदेव संबध्यते । न हि मासमधीष्टो भृतो वेत्याद्युक्तौ काचित्कालकृता शरीरावस्था गम्यत इत्याशयेनाह— **मासं भूत इति** । एतच्च वृत्तिपदमञ्जर्योः स्पष्टम् ॥ **मासीन इति** । बालकः ॥ ( २३७१ ) **द्विगोर्यप्** । प्राग्वतः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात्पूर्वेण यत्खञोः प्राप्तयोर्यब् विधीयते । पित्त्वादनुदात्तः । तेन 'द्विमास्यः' इत्यादौ 'इगन्तकाल–५७३०' इत्यादिना पूर्वपदप्रकृतिस्वरो न तिष्ठते ॥ 'यः' इत्युक्ते तु प्रत्ययस्योदात्तत्वादन्तोदात्तो द्विमास्यः स्यात्, सति शिष्टस्वरबलीयस्त्वादिति भावः ॥ ( २३७२ ) **षण्मा–** । **यबप्यनुवर्तत इति** । व्याख्यानमेवात्र शरणम् ॥ ( २३७४ ) **समायाः खः** । 'हायनोऽस्त्री शरत्समाः' इत्यमरः ॥ **समामधीष्ट इत्यादि** । अधीष्टादयश्चत्वारोऽर्था अत्राप्यनुवर्तन्त इति भावः ॥ ( २३७५ ) **द्विगोर्वा** । 'संख्यापूर्वपदानां तदन्तग्रहणमलुकि' इत्यभ्युपगमात्पूर्वेण नित्ये प्राप्ते विकल्पः ॥ **द्वैसमिक इति** । खेन मुक्ते पक्षे ठञिति भावः ॥ ( २३७६ ) **रात्र्यहः–** । **द्वैयह्निक इति** । 'टखोरेव' इति नियमादिह टिलोपो न । 'अल्लोपोऽनः २३५' 'न य्वाभ्याम्–१५७४' इत्यैच् । ननु 'तद्धितार्थ–१०५२' इति द्विगुसमासानन्तरं 'रात्र्यहःसंवत्सराच्च २३७६' इत्येवं बाधित्वा परत्वाट्टचा भाव्यं, न च महाविभाषया टचो विकल्प इति वाच्यम्, 'बृहतीजात्यन्ताः समासान्ताश्च' इति नित्येषु परिगणनादत आह—**समासान्तविधेरिति** । यद्यपि टचि कृतेऽप्यह्नादेशेन द्वैयह्निकः इति रूपं सिध्यति, तथापि 'द्व्यहीनः' इति हि रूपं न सिध्यति टचि सत्यह्नादेशो तस्य स्थानिवत्त्वात्, 'राजाहः–११३४' इति समासान्तस्याहःशब्दान्तसमासग्रहणेनैव ग्रहणाच्च 'रात्र्यहःसंवत्सराच्च–२३७६' इति खप्रत्यये कृतेऽपि द्व्यह्नीन इति रूपप्रसङ्गादित्याहुः ॥ ( २३७७ ) **संख्यायाः सं–** । **उत्तरपदवृद्धिर्नेति** । एतच्चोपलक्षणम् 'द्विवर्षा' इत्यत्र 'द्विगोः ५६८' इति ङीन्न भवति, परिमाणपर्युदासेन पर्युदासाभावात् 'अपरिमाणबिस्ताचित–६६९' इतीह निषेधप्रवृत्तेः । द्विवर्षं भृते 'तमधीष्टः–२३६९' इति ठञ्, 'वर्षाल्लुक्च २३७८' इति लुक् ॥ ( २३७८ ) **वर्षा–** । 'चित्तवति नित्यम् २३८०' इति नित्यं लुको वक्ष्यमाणत्वादचित्तवानिह प्रत्ययार्थ इति प्रत्युदाहरति–**द्विवर्षीणो व्याधिरिति** ॥ ( २३७९ ) **वर्षस्या–** । **द्विवार्षिको मनुष्य इति** । अत्र वदन्ति—मनुष्ये 'चित्तवति–२३८०' इति

---

१ **परिमाणान्तेति** । प्राग्व्याख्यातम् । अत्रापि वृत्त्याद्युल्लेखस्तु प्रमादात्–इति शेखरकृत् ॥ वस्तुतस्तु–प्रत्युदाहरणानां प्रागनुपदर्शनादत्रोपन्यासोऽपि युक्त एव । पूर्वसूत्रप्रक्रमाच्च ॥ २ **केचिदिति** । अनेन सूचिताऽस्वरसः 'कुलिजाल्लुक्खौ च' इत्यत्र ल० श० शेखरे द्रष्टव्या ॥

णिकः ॥ ( २३८० ) सू चित्तवति नित्यम् । ५ । १ । ८९ । वर्षशब्दान्ताद् द्विगोः प्रत्ययस्य नित्यं लुक् स्यात् चेतने प्रत्ययार्थे । द्विवर्षो दारकः ॥ ( २३८१ ) सू षष्टिकाः षष्टिरात्रेण पच्यन्ते । ५ । १ । ९० । बहुवचनमतन्त्रम् । षष्टिको धान्यविशेषः । तृतीयान्तात्कन् रात्रशब्दलोपश्च निपात्यते ॥ ( २३८२ ) सू तेन परिजय्यलभ्यकार्यसुकरम् । ५ । १ । ९३ । मासेन परिजय्यो जेतुं शक्यो—मासिको व्याधिः । मासेन लभ्यं कार्यं सुकरं वा—मासिकम् ॥ ( २३८३ ) सू तदस्य ब्रह्मचर्यम् । ५ । १ । ९४ । द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे प्रत्ययः स्यात् । अत्यन्तसंयोगे द्वितीया । मासं ब्रह्मचर्यमस्य स—मासिको ब्रह्मचारी । आर्धमासिकः । यद्वा—प्रथमान्तादस्येत्यर्थे प्रत्ययः । मासोऽस्येति मासिकं ब्रह्मचर्यम् ॥ ( २३८४ ) वा महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् ॥ महानाम्न्यो नाम विदामघवन्नित्याद्याः ऋचः । तासां ब्रह्मचर्यमस्य माहानाम्निकः । हरदत्तस्तु—भस्याढे इति पुंवद्भावान्माहानामिक इत्याह ॥ ( २३८५ ) वा चतुर्मासाण्ण्यो यज्ञे तत्र भव इत्यर्थे ॥ चतुर्षु मासेषु भवन्ति—चातुर्मास्यानि यज्ञकर्माणि ॥ ( २३८६ ) वा संज्ञायामण् ॥ चतुर्षु मासेषु भवति—चातुर्मासी आषाढी । अण्णन्तत्वान्ङीप् ॥ ( २३८७ ) सू तस्य च दक्षिणा यज्ञाख्येभ्यः । ५ । १ । ९५ । द्वादशाहस्य दक्षिणा—द्वादशाहिकी । आख्याग्रहणादकालादपि । आग्निष्टोमिकी । वाजपेयिकी ॥ ( २३८८ ) सू तत्र च दीयते कार्यं भववत् । ५ । १ । ९६ । प्रावृषि दीयते कार्यं वा—प्रावृषेण्यम् । शारदम् ॥ कालाधिकारस्य पूर्णोऽवधिः ॥

## अथ तद्धितेषु ठञधिकारः ।

( २३८९ ) सू व्युष्टादिभ्योऽण् । ५ । १ । ९७ । व्युष्टे दीयते कार्यं वा वैयुष्टम् । व्युष्ट, तीर्थ, संग्राम, प्रवास—इत्यादि ॥ ( २३९० ) सू तेन यथाकथाचहस्ताभ्यां णयतौ । ५ । १ । ९८ । यथाकथाचेत्यव्ययसंघातात्तृतीयान्ताद्धस्तशब्दाच्च यथासंख्यं णयतौ स्तः ॥ ( २३९१ ) वा अर्थाभ्यां तु यथासंख्यं नेष्यते ॥ यथाकथाच दीयते कार्यं वा याथाकथाचम् । अनादरेण देयं कार्यं वेत्यर्थः । हस्तेन दीयते कार्यं वा—हस्त्यम् ॥ ( २३९२ ) सू संपादिनि । ५ । १ । ९९ । ठञ् । तेनेत्येव । कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकं मुखम् । कर्णालंकाराभ्यामवश्यं शोभत इत्यर्थः॥ ( २३९३ ) सू कर्मवेषाद्यत् । ५ । १ । १०० । कर्मणा संपादि कर्मण्यं शौर्यम् । वेषेण संपादी—वेष्यो नटः । वेषः कृत्रिम आकारः ॥ ( २३९४ ) सू तस्मै प्रभवति सन्तापादिभ्यः । ५ । १ । १०१ । सन्तापाय प्रभवति—सान्तापिकः । सांग्रामिकः ॥ ( २३९५ ) सू योगाद्यच्च । ५ । १ । १०२ । चाट्ठञ् । योगाय प्रभवति-योग्यः । यौगिकः ॥ ( २३९६ ) सू कर्मण उकञ् । ५ । १ । १०३ । कर्मणे प्रभवति-कार्मुकम् ॥ ( २३९७ ) सू समयस्तदस्य प्राप्तम् । ५ । १ । १०४ । समयः प्राप्तोऽस्य—सामयिकम् ॥ ( २३९८ ) सू ऋतोरण् । ५ । १ । १०५ । ऋतुः प्राप्तोऽस्य—आर्तवम् ॥

---

नित्यलुकप्रसङ्गात् 'मनुष्यो मनुष्यसदृशः प्रतिमादिः' इति व्याख्याय स्थितस्य गतिः समर्थनीयेति ॥ ( २३८० ) चित्तवति—। दारक इति । बालकः ॥ ( २३८२ ) तेन परि—। परिजय्यः इत्यस्य विवरणं ' जेतुं शक्यः ' इति । ' क्षय्यजय्यौ शक्यार्थे ९९ ' इत्ययादेशः ॥ ( २३८३ ) तदस्य ब्र—। ( २३८४ ) महानाम्न्यो नामेति । तथा चाभाषितपुंस्कत्वात्पुंवद्भावो नेति भावः ॥ हरदत्तस्त्विति । यौगिकोऽयं, न तु रूढ इति मन्यते ॥ माहानामिक इति । पुंवद्भावे कृते 'नस्तद्धिते ९८६' इति टिलोपः ॥ ( २३८५ ) चतुर्मासादिति । मासशब्दस्य कालवाचित्वात्कालाधिकारे वार्तिकारम्भः । न च विशिष्टस्य कालवाचित्वाभावादिह संगतिर्दुर्निरूपेति शङ्क्यम्, 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणम्' इत्यभ्युपगमादस्त्येव संगतिरिति ॥ ( २३८६ ) संज्ञायामणिति । 'तत्र भवः १९८९' इत्यनेनैव सिद्धे पुनरण्विधिः 'द्विगोर्लुगनपत्ये १५५१' इति लुङ् मा भूदित्येतदर्थमिदमत्रारब्धम् । एवं चास्मिन् वार्तिके 'चतुर्मासात्' इत्यस्यानुवृत्तये पूर्ववार्तिकमत्रैवारब्धमित्यपि ज्ञेयम् ॥ चातुर्मासीति । कस्य संज्ञेत्याकाङ्क्षायामाह—आषाढीति । अषाढानक्षत्रयुक्ता पौर्णमासीत्यर्थः ॥ ( २३८७ ) तस्य च दक्षिणा—। षष्ठ्यन्तेभ्यो यज्ञाख्येभ्यो दक्षिणेत्यस्मिन्नर्थे ठञ् स्यात् । कालाधिकारादेवेह द्वादशाहादिभ्यः सिद्धे आख्याग्रहणं व्यर्थमित्याशङ्क्य परिहरति—आख्याग्रहणादिति ॥ ( २३८८ ) तत्र च—। कालवाचिनः सप्तम्यन्ताद्दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्ययः स्यात् ॥ प्रावृषेण्यमिति । 'प्रावृष एण्यः १९४०' इति भवार्थे विहितः स इहाप्यतिदिश्यत इति भावः ॥ शारदमिति । 'संधिवेलाद्यृतुनक्षत्रेभ्योऽण् १९३८' ॥ कालाधिकारस्य पूर्णोऽवधिः ॥

---

( २३८९ ) व्युष्टादिभ्योऽण् । व्युष्टशब्दः कालवाची दिवसमुखे वर्तते ॥ ( २३९२ ) संपादिनि । गुणोत्कर्षः संपत्तिः । 'आवश्यके णिनिः' इति वृत्तिकृत् । एवं वस्त्रयुगेन संपादि वास्त्रयुगिकं शरीरमित्यप्युदाहार्यम् । वस्त्रयुगेन अवश्यं शोभत इत्यर्थः ॥ ( २३९४ ) तस्मै प्रभवति—। समर्थः शक्तः प्रभवतीत्युच्यते ॥ ( २३९८ ) ऋतोरण् । आर्तवमिति । पुष्पमित्यादि विशेष्यं

---

१ यद्वेति । इदमेव भाष्यसंमतम् । अत एव भाष्यकृता 'महानाम्नीनां ब्रह्मचर्यं माहानाम्निकम्' इति दर्शितम् । माहानाम्निक इत्यर्थे तु * तच्चरतीति च * इति वार्तिकान्तरमेवोपदर्शितम् ॥ २ इतः प्राक् वार्तिकद्वयं भाष्ये दृश्यते—अवान्तरदीक्षाभ्यो डिनिः * ॥ अवान्तरदीक्षी । तिलव्रती ॥ * अष्टाचत्वारिंशतो ड्वुंश्च * ॥ अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी ॥ ३ आषाढीति । भाष्ये तु 'पौर्णमासी' इत्येव पाठो दृश्यते ॥ ४ अत्र पक्षे 'माहानाम्निकः' इत्यकृतपुंवद्भावभाष्योदाहरणविरोधः ॥

(२३९९) कालाद्यत् ।५।१।१०७। कालः प्राप्तोऽस्य–काल्यं शीतम् ॥ (२४००) प्रकृष्टे ठञ् ।५।१।१०८। कालादित्येव । तदस्येति च । प्रकृष्टो दीर्घः कालोऽस्येति–कालिकं वैरम् ॥ ( २४०१ ) प्रयोजनम् । ५।१।१०९। तदस्येत्येव । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । प्रयोजनं फलं कारणं च ॥(२४०२) विशाखाषाढादण्मन्थ-दण्डयोः ।५।१।११० । आभ्यामण् स्यात्प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः । विशाखा प्रयोजनमस्य-वैशाखो मन्थः । आषाढो दण्डः ॥ (२४०३) चूडादिभ्य उपसंख्यानम् ॥ चूडा–चौडम् । श्रद्धा–श्राद्धम् ॥ ( २४०४ ) अनुप्रवचनादिभ्यश्छः ।५। १ । १११ । अनुप्रवचनं प्रयोजनमस्य–अनुप्रवचनीयम् ॥ (२४०५) समापनात्सपूर्वपदात् ।५।१।११२। व्याकरणसमापनं प्रयोजनमस्य–व्याकरणसमापनीयम् ॥ ( २४०६ ) ऐकागारिकट् चौरे । ५। १। ११३। एकमसहायमगारं प्रयोजनमस्य मुमुषिषोः स ऐकागारिकश्चौरः ॥ ( २४०७) आकालिकडाद्यन्तवचने ।५।१।११४ । समानकालावाद्यन्तौ यस्येत्याकालिकः । समानकालस्याऽऽकाल आदेशः । आशुविनाशीत्यर्थः । पूर्वदिने मध्याह्नादावुत्पद्य दिनान्तरे तत्रैव नश्वर इति वा ॥ ( २४०८ ) आकालाट्ठंश्च ॥ आकालिका विद्युत् ॥ ठञः पूर्णोऽवधिः ॥

---

अथ तद्धितेषु भावकर्मार्थाः ।

(२४०९ ) तेन तुल्यं क्रिया चेद्वतिः ।५ । १ । ११५ । ब्राह्मणेन तुल्यं ब्राह्मणवदधीते । क्रिया चेदिति किम् । गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ॥ ( २४१० ) तत्र तस्येव । ५ । १ । ११६ । मथुरायामिव–मथुरावत् सुघ्ने प्राकारः । चैत्रस्येव-चैत्रवन्मैत्रस्य गावः ॥ (२४११) तदर्हम् ।५।१।११७। विधिमर्हति-विधिवत्पू-

---

बोध्यम् ॥ (२३९९) काला–। काल्यमिति । 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः । तत्र प्रातःकाले कल्यशब्दस्य व्युत्पत्त्यन्तरं मृग्यम्॥ (२४००) प्रकृष्टे ठञ् । प्रकृष्यते अयमिति प्रकृष्टः । कर्मणि क्तः । तेन च प्रकर्षेण कालो विशेष्यते इत्याह–दीर्घः काल इति। ठञ्ग्रहणं विस्पष्टार्थम्। अन्यथा अनन्तरस्य यतोऽनुवृत्तिराशङ्क्येत॥ (२४०१) प्रयोजनम् । इन्द्रमह इति । मह उत्सवः ॥ (२४०२) विशाखाषाढा–। वैशाखो मन्थः । आषाढो दण्ड इति । वैशाखाषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्तेते। तयोस्तु यथाकथंचिद्व्युत्पत्तिः क्रियत इति हरदत्तः। विलोडनदण्डस्यैवाधारभूतः काष्ठविशेषो मन्थ इत्युच्यते॥ (२४०४) अनुप्रवचना–। अनुप्रवचनं नाम ब्रह्मौदनमुच्यते ॥ (२४०५) समाप–। सपूर्वपदादिति। विद्यमानपूर्वपदादित्यर्थः ॥ (२४०६) ऐकागारिकट्–। टो ङीबर्थः । ऐकागारिकी ॥ किमर्थमिदमुच्यते यावता 'प्रयोजनम् २४०१' इत्येव ठञि सिद्धम् । सत्यम् , चौरे नियमार्थमावश्यकमिदं सूत्रम् । अन्यथा एकागारं प्रयोजनं यस्य भिक्षोरित्यत्रापि स्यात् । नन्वेवमपि 'एकागाराच्चौरे' इति ठञेव नियम्यतां किमैकागारिक इति निपातनेन टित्करणेन च प्रयोजनमिति चेत् । अत्राहुः—टकारः कार्यावधारणार्थः । ङीबेव भवति न तित्स्वर इति । वृद्धिस्तु निपातनाद्भवत्येवेति ॥ ( २४०७ ) आकालिकडा–। आकाल आदेश इति । निपात्यत इति शेषः ॥ आद्यन्तौ यस्येत्यादि । अस्येत्यधिकारात्षष्ठ्यर्थे इकट् प्रत्ययो निपात्यत इति भावः ॥ (२४०८ ) आकालाट्ठंश्च । वार्तिकमिदम् ॥ ठञः पूर्णोऽवधिः ॥

---

(२४०९ ) तेन तुल्यं क्रिया चेद्वतिः ॥ तुल्यमिति सामान्ये नपुंसकम् । तृतीयान्तात्तुल्यमित्यर्थे वतिः स्यात्तुल्यं क्रिया चेत्सा ॥ ब्राह्मणेन तुल्यमिति । नन्वत्र 'ब्राह्मणो यथा वर्तते तथा क्षत्रियादिकर्तृकाध्ययनं वर्तते' इति वाक्यार्थोऽसंगत इति चेत् । अत्राहुः—ब्राह्मणशब्दस्तत्कर्तृकाध्ययने लक्षणया वर्तते, 'ब्राह्मणकर्तृकाध्ययनतुल्याध्ययनं वाक्यार्थः' इति न कोऽपि दोषः ॥ गुणतुल्ये इति । उपलक्षणमिदम् । अक्रियातुल्य इत्यर्थः । एवं च 'ब्राह्मणेन सदृशः क्षत्रियः' इत्यर्थे 'ब्राह्मणवत् क्षत्रियः' इति प्रयोगोऽसाधुरेव । अत एव 'पर्वतो वह्निमान् महानसवत्' इति वाक्ये 'महानससदृशः पर्वतः'इत्यर्थे वतेरसाधुत्वं मत्वा तस्य वतेः साधुत्वरक्षणार्थं 'पर्वतो वह्निमान् भवितुमर्हति' इत्यादिक्रियापदं प्रयुञ्जते वृद्धाः ॥ ( २४१० ) तत्र तस्येव । सप्तम्यन्तात् षष्ठ्यन्ताच्च इवार्थे प्रत्ययः ॥ 'क्रिया चेत्' इति नानुवर्तते इति द्रव्यादितुल्ये वत्प्रत्ययो भवति ॥ मथुरावत्सुघ्ने इति । मथुरायां यादृशः प्राकारः, तेन तुल्यः प्राकारः सुघ्ने इत्यर्थः ॥ ( २४११ ) तदर्हम् । अर्हतीत्यर्हं पचाद्यच् ॥ यद्यपि कृद्योगे कर्मणि षष्ठ्या भवितव्यम्, तथापि अत्र सौत्रो विभक्तिव्यत्यय इत्येके ॥ 'कर्तृकर्मणोः–९०७' इति षष्ठ्या अनित्यत्वज्ञापकमिदम् । तेन च 'धार्यैरामोदमुत्तमम्' इति भट्टिप्रयोगः संगच्छत इति तु कारकेष्ववोचाम ॥ द्वितीयान्तादेव प्रत्यय इति स्फुटीकर्तुं तिङन्तेन विग्रहाति—विधिमर्हतीति । कथं तर्हि 'ततो यथावद्विहिताध्वराय' इति अस-

---

१ क्रियेति । संनिहितत्वात्समानविभक्तित्वात् प्राधान्याच्च प्रत्ययार्थविशेषणम् 'यत्तुल्यं सा चेत्क्रिया' इत्यर्थः ॥ प्रकृत्यर्थविशेषणं तु न, ब्राह्मणादिपदानां लक्षणयाऽध्ययनपरत्वेन क्रियोपमानत्वयोग्यार्थकत्वेऽपि तत्र तृतीयार्थान्वयेन सत्त्वरूपतया क्रियात्वाभावात् ॥ २ तत्रेति । इवशब्दयोगे सप्तमीविधानेऽपीदमेव ज्ञापकमिति 'देवेष्विव नाम' इत्यादौ सप्तम्या उपपदविभक्त्याः षष्ठ्यर्थत्वमिति बोध्यम् ॥ ३ कल्यशब्दस्येति । पाठे तस्यैवेत्यर्थः । अहर्मुखवाची कल्यशब्दः 'कल्ये भुङ्क्ते, सायं भुङ्क्ते' इति 'संख्याया विधार्थे–' इति सूत्रे भाष्ये ॥ ४ मृग्यमिति । तदलाभात्तस्याव्युत्पन्नत्वमेवेति तात्पर्यम् ॥

इयते । क्रियाग्रहणं मण्डूकप्लुत्याऽनुवर्तते । तेनेह न । राजानमर्हति छत्रम् ॥ ( २४१२ ) (सू) **तस्य भावस्त्वतलौ** । ५ । १ । ११९ । प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम् । गोता । त्वान्तं क्लीबं, तलन्तं स्त्रियाम् ॥ ( २४१३ ) (सू) **आ च त्वात्** । ५ । १ । १२० । ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थं गुणवचनादिभ्यः कर्मणि विधानार्थं चेदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः—स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम् । पुंस्ता ॥ ( २४१४ ) (सू) **न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः** । ५ । १ । १२१ । इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन्वर्जयित्वा । अपतित्वम् । अपटुत्वम् । नञ्पूर्वात्किम् । बार्हस्पत्यम् । तत्पुरुषात्किम् । नास्य पटवः सन्तीत्यपटुस्तस्य भावः—आपटवम् । अचतुरेत्यादि किम् । आचतुर्यम् । आसङ्गत्यम् । आलवण्यम् । आवटयम् । आयुध्यम् । आकत्यम् । आरस्यम् । आलस्यम् ॥ ( २४१५ ) (सू) **पृथ्वादिभ्य इमनिज्वा** । ५ । १ । १२२ । वावचनमणादिसमावेशार्थम् । ( २४१६ ) (सू) **र ऋतो हलादेर्लघोः** । ६ । ४ । १६१ । हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेमेयस्सु ॥ ( २४१७ ) (सू) **टेः** । ६ । ४ । १५५ । भस्य टेर्लोपः स्यादिष्ठेमेयस्सु । पृथोर्भावः—प्रथिमा, पार्थवम् । म्रदिमा, मार्दवम् ॥ ( २४१८ ) (सू) **वर्णदृढादिभ्यः ष्यञ्च** । ५ । १ । १२३ । चादिमनिच् । शौक्ल्यम् ॥ शुक्लिमा । दार्ढ्यम् । ( २४१९ ) पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् । द्रढिमा । षो ङीषर्थः । औचिती । याथाकामी ॥ ( २४२० ) (सू) **गुणवचनब्राह्मणादिभ्यः कर्मणि च** । ५ । १ । १२४ । चाद्भावे । जडस्य कर्म भावो वा—जाड्यम् । मूढस्य भावः कर्म वा—मौढ्यम् । ब्राह्मण्यम् ॥ ( २४२१ ) (वा) **अर्हतो नुम् च** ॥ अर्हतो भावः कर्म वा—आर्हन्त्यम् । आर्हन्ती । ब्राह्मणादिराकृतिगणः ॥

---

स्वार्थकस्य कर्मत्वासंभवेन द्वितीयान्तत्वाभावादिति चेत् । अत्राहुः—यथाशब्दो वृत्तिविषये सत्त्वार्थकः, तथात्वमित्यादिषु त्वतलादिदर्शनात् । अन्यथा षष्ठ्यपि नास्तीति त्वतलौ न स्याताम् । तथा च द्वितीयान्ताद्यथाशब्दादर्हार्थे वतिः । योग्यतामर्हतीति विधानमित्यर्थात् क्रियायोगोऽपि सुलभ इति ॥ ( २४१२ ) **तस्य भावस्त्वतलौ** ॥ **प्रकृतीति** । न तु यः कश्चिद्धर्मः, घटत्वमित्यत्र द्रव्यत्वपृथिवीत्वादेरभानात् ॥ **गोर्भाव इति** । इह गोशब्दोऽर्थपरः, शब्दस्वरूपपरो वेति पक्षद्वयम् । यदाऽर्थपरः, तदा धर्मविशेषः प्रत्ययार्थः, स च धर्मत्वेनैव भासते । प्रकृतिजन्येत्यादिस्तु प्रयोगोपाधिः ॥ यदा तु शब्दपरस्तदा तज्जन्यबोधप्रकारः प्रत्ययार्थः । स च धर्मविशेष एव । पाचकत्वमित्यत्र तु कर्तृत्वरूपसंबन्धः प्रकारः । पच्यमानत्वमित्यत्र तु कर्मत्वरूपसंबन्धः । तथा औपगवत्वमित्यत्र जन्यत्वरूपसंबन्धः प्रकारः । राजपुरुषत्वमित्यत्र तु स्वरूपः संबन्धः इत्याद्यूह्यम् ॥ एवं स्थिते हरिटीकायां यदुक्तं 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन' इति । तत्र नापूर्वं शक्त्यन्तरं कल्प्यम् । उक्तरीत्यैव तत्राप्युपपत्तेरिति संक्षेपः ॥ ( २४१३ ) **आ च त्वात्** । **अपवादैः सहेति** । 'पृथ्वादिभ्य इमनिज्वा २४१५' इत्यादिभिः ॥ **चकार इति** । अन्यथा त्वतलौ स्त्रीपुंसाभ्यां न स्याताम्, अन्यत्र तयोः सावकाशत्वादिति भावः ॥ **पौंस्नं, पुंस्त्वमिति** । संयोगान्तलोपे[1] 'पुमः खयि—२११' इति रुत्वम् । पाक्षिकावनुनासिकानुस्वारौ, विसर्गे कृते सत्वम् ॥ ( २४१४ ) **न नञ्पू—** । **अपतित्वमिति** । इह 'पत्यन्त—२४३०' इति यक् न भवति ॥ **अपटुत्वमिति** । इह तु 'इगन्ताच्च लघुपूर्वात् २४३५' इत्यण् न भवति ॥ **आचतुर्यमित्यादि** । ब्राह्मणादित्वात् ष्यञ् ॥ ( २४१५ ) **पृथ्वादिभ्यः—** । **अणादीति** । इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिष्वणः समावेशः । चण्डखण्डादिषु गुणवचनेषु ष्यञः बालवत्सादिषु वयोवचनलक्षणस्याञ इति बोध्यम् । त्वतलौ तु पूर्वसूत्रेणैव लब्धौ ॥ ( २४१६ ) **र ऋतो—** । हलादेः किम्, ऋजिष्ठः । ऋजीयान् । लघोः किम्, कृष्णिमा । 'पृथुमृदुभृश—२४१९' इति परिगणने तु 'हलादेर्लघोः' इति त्यक्तुं शक्यम् ॥ ( २४१८ ) **वर्णदृढादिभ्यः—** । गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम् । 'पृथुमृदुभृश—२४१९' इति परिगणनादिह रभावो न भवति । कृतमाचष्टे कृतयति । णाविष्ठवद्भावः ॥ **औचितीति** । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । 'हलस्तद्धितस्य ६५७' इति यलोपः । एवं यथाकामी ॥ दृढ, वृढ, परिवृढ, भृश, कृश, इत्यादि । अत्र द्वे गणसूत्रे—**"वेर्यातलाभमतिमनःशारदानाम्"** । विशब्दादुत्तरे ये यातादयः पञ्च तदन्तानां समासानाम् अनन्तरः ष्यञ् भवतीत्यर्थः । वियातत्वम् । वियातता । वियातिमा । वैयात्यम् । विलाभिमा । वैलाभ्यम् । विमतिमा । वैमत्यम् । इगन्तत्वादणपि । वैमतम् । विमनिमा । वैमनस्यम् । विशारदिमा । वैशारद्यम् । त्वतलोः समावेशेन विलाभत्वम् । विलाभतेत्यादीन्यूह्यानि ॥ **"समो मतिमनसोः"** । समः परे ये मतिमनसी तदन्तयोः समासयोरनन्तरः ष्यञ् भवतीत्यर्थः । संमतित्वम् । संमतिता । संमतिमा । सांमत्यम् । इगन्तत्वादणि सांमतम् । संमनस्त्वम् । संमनस्ता । संमनिमा । सांमनस्यम् ॥ ( २४२० ) **गुणवचन—** । ष्यञनुवर्तते, कर्म क्रिया कार्यं च । 'शरीरायाससमात्रसाध्यं शौचादि क्रिया । शास्त्रेण विहितो यागादिः कार्यम्' इति तयोर्भेदमाहुः ॥ ( २४२१ ) **अर्हत इति** । 'अर्हः प्रशंसायाम्' इति शत्रन्तोऽर्हच्छब्दः पूजार्थाभिधायीति कैयटः ॥ **आकृतिगण इति** । केषांचित्पाठस्तु कार्यान्तराय । तथाहि—'अर्हतो नुम् च २४२१' इति नुमर्थः[2] पाठः ॥ एकभावः, त्रिभावः, अन्यभावः, एषां पाठः स्वार्थे

---

१ **संयोगान्तेति** । संयोगान्तलोपस्तु स्त्र्यपि । रुत्वादिकं तु त्वतलोरेवेति बोध्यम् ॥ २ **नुमर्थ इति** । वस्तुतस्तु वार्तिकमिदमपूर्वमुभयोर्विधायकम् । अत एव 'अर्हतो नुम् च ष्यञ् च वक्तव्यः' इति भाष्ये व्याख्यातम् । गणपाठे प्रक्षिप्तः पाठः ॥

( २४२२ ) (सू.) यथातथायथापुरयोः पर्यायेण । ७ । ३ । ३१ । नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेणादेरचो वृद्धिर्ञिदादौ । अयथातथाभावः–आयथातथ्यम्, अयाथातथ्यम् । आयथापुर्यम्, अयाथापुर्यम् । आ पादसमाप्तेः भावकर्माधिकारः ॥ ( २४२३ ) (वा.) चतुर्वर्णादीनां स्वार्थ उपसंख्यानम् ॥ चत्वारो वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैस्वर्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् । सामीप्यम् । औपम्यम् । त्रैलोक्यमित्यादि ॥ ( २४२४ ) (ग.) सर्ववेदादिभ्यः स्वार्थे ॥ सर्वे वेदाः सर्ववेदास्तानधीते–सर्ववेदः । 'सर्वादेरिति लुक् । स एव–सार्ववेद्यः ॥ (२४२५) (ग.) चतुर्वेदस्योभयपदवृद्धिश्च ॥ चतुरो वेदानधीते चतुर्वेदः, स एव–चातुर्वैद्यः । चतुर्विद्यस्येति पाठान्तरम् । चतुर्विद्य एव–चातुर्वैद्यः । ( २४२६ ) (सू.) स्तेनाद्यन्नलोपश्च । ५ । १ । १२५ । नेति संघातग्रहणम् । स्तेन चौर्ये पचाद्यच् । स्तेनस्य भावः कर्म वा–स्तेयम् ।–स्तेनादिति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छंति ॥ (२४२७) (सू.) सख्युर्यः । ५ । १ । १२६ । सख्युर्भावः कर्म वा–सख्यम् ॥ ( २४२८ ) (वा.) दूतवणिग्भ्यां च ॥ दूतस्य भावः कर्म वा दूत्यम् । वणिज्यमिति काशिका ॥ माधवस्तु वणिज्याशब्दः स्वभावात् स्त्रीलिङ्गः । भाव एव चात्र प्रत्ययो न तु कर्मणीत्याह । भाष्ये तु [२४२]दूतवणिग्भ्यां चेति नास्त्येव । ब्राह्मणादित्वाद्वाणिज्यमपि ॥ ( २४२९ ) (सू.) कपिज्ञात्योर्ढक् । ५ । १ । १२७ । कापेयम् । ज्ञातेयम् ॥ ( २४३० ) (सू.) पत्यन्तपुरोहितादिभ्यो यक् । ५ । १ । १८८ । सैनापत्यम् । पौरोहित्यम् ॥ (२४३१) (ग.) राजाऽसे ॥ राजशब्दोऽसमासे यकं लभत इत्यर्थः । राज्ञो भावः कर्म वा–राज्यम् । समासे तु ब्राह्मणादित्वात् ष्यञ् । आधिराज्यम् ॥ ( २४३२ ) (सू.) प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । ५ । १ । १२९ । प्राणभृज्जातिः–आश्वम् । औष्ट्रम् । वयोवचने–कौमारम् । कैशोरम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् । दौष्ठवम् ॥ ( २४३३ ) (सू.) हायनान्तयुवादिभ्योऽण् । ५ । १ । १३० । द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् ॥ ( २४३४ ) (वा.) श्रोत्रियस्य यलोपश्च ॥ श्रौत्रम् । कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यंते । कौशल्यम् । कौशलमित्यादि ॥ (२४३५) (सू.) इगन्ताच्च

---

विधानार्थः । तथा च प्रत्याहाराह्निके वार्तिके प्रयोगः–"आन्यभाव्यं तु कालशब्दव्यवायात्" इति । अन्यभाव एव आन्यभाव्यम् । अन्यत्वमित्यर्थः ॥ यत्तु व्याकरणाधिकरणे भट्टपादैरुक्तम्–'आन्यभाव्यमप्रयोगः' इति तत्त्ववैयाकरणमीमांसकसंतोषार्थमित्यवधेयम् ॥ ( २४२४ ) **सर्ववेदा इति** । 'पूर्वकालैक—१०५०' इति समासः ॥ ( २४२५ ) **चतुर्वेद इति** । तद्धितार्थे द्विगुः । 'द्विगोर्लुगनपत्ये १५५१' इत्यणो लुक् ॥ **चतुर्विद्य इति** । 'विद्यालक्षणसूत्रान्तात्–१७९५' ठक् । तस्य लुक् ॥ ( २४२६ ) **स्तेनाद्य—** । **संघातग्रहणमिति** । वर्णग्रहणे तु 'यस्येति च ४३१' इत्यकारलोपे सति ई न सिध्यति । 'अचः परस्मिन्—७७' इत्यल्लोपस्य स्थानिवद्भावादयादेशप्रसङ्गादिति भावः ॥ ननु संघातग्रहणेऽपि 'अलोऽन्त्यस्य ६६' इत्यकारस्यैव लोपः स्यान्न तु संघातग्रहणस्येति चेत् । मैवम्, आरम्भसामर्थ्यात् 'नानर्थकेऽलोऽन्त्यविधिः—४७२' इति निषेधाद्वा तत्सिद्धेः ॥ ( २४२९ ) **कपिज्ञात्योः–** । इह कपिज्ञाती द्वौ, भावकर्मणी अर्थावपि द्वौ, तयोर्यथासंख्यं न भवत्यस्वरितत्वप्रतिज्ञानात् । एवं 'पत्यन्तपुरोहितादिभ्यः–२४३०' 'द्वन्द्वमनोज्ञादिभ्यः—२४३८' इत्यत्रापि बोध्यम् ॥ ( २४३१ ) **ब्राह्मणादित्वादिति** । यद्यपि ब्राह्मणादिषु राजन्शब्दः केवलः पठितः, तथाप्ययमेव 'असे' इति प्रतिषेधो ज्ञापयति 'अस्त्यत्र प्रकरणे राजन्शब्देन तदन्तविधिः' इति । एवं च ब्राह्मणादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव भवति ॥ अन्ये तु ब्राह्मणादेराकृतिगणत्वादेव तदन्तात् कथंचित्ष्यञि सिद्धे राजन्शब्दस्य तत्र पाठो यका सह समावेशार्थ इति । तथा चावेष्ट्यधिकरणे शाबरभाष्ये उक्तं—'राज्ञः कर्म राज्यं ब्राह्मणादित्वात् ष्यञ्' इति ॥ पुरोहित, संग्रामिक, पथिक, सारथिकेत्यादयः पुरोहितादयः ॥ ( २४३२ ) **प्राणभृज्जाति–** । मुखनासासंचारी वायुः प्राणः । 'प्राणिजाति–' इत्येव सुवचम् । प्राणभृदिति किम्, तृणत्वम् । तृणता । जातीति किम्, देवदत्तत्वम् ॥ **औद्गात्रमिति** । उद्गात्रादिषु ये ऋत्विग्वचनास्तेभ्यो 'होत्राभ्यश्छः २४४०' इति छे प्राप्ते अञ् विधीयते । सुष्टु, दुष्टु, द्वाभ्यां गुणलक्षणे ष्यञि प्राप्ते, वधूशब्दादिगन्तलक्षणेऽणि, शेषेभ्यस्त्वतलोः प्राप्तयोः ॥ इह तु–"**सुभगं मन्त्रे**" पठ्यते । सुभगमित्येतच्छब्दरूपं मन्त्रविषये प्रयोगे अञमुत्पादयतीत्यर्थः । 'महते सौभगाय' सर्वविधीनां छन्दसि वैकल्पिकत्वादिह 'हृद्भगसिन्ध्वन्ते–१६११' इत्युत्तरपदवृद्धिर्न भवति । अत एव मन्त्रेऽपि क्वचिदञ् न भवति । 'सौभाग्यमस्यै दत्त्वाय' इह ष्यञ् ॥ ( २४३३ ) **हायनान्त—** । अस्मात्त्वतलोः प्राप्तयोरण्विधानम् । युवस्थविरशब्दाभ्यां वयोवचनलक्षणे अञि प्राप्ते ॥ **यौवनमिति** । अणि परतः 'अन् १६३७' इति प्रकृतिभावः । मनोज्ञादिपाठाद्वुञपि । यौवनकम् । 'प्रकृत्याऽके राजन्यमनुष्ययुवानः १७६२' इति प्रकृतिभावः ॥ ( २४३४ ) **श्रोत्रियस्येति** । 'श्रोत्रियंश्छन्दोऽधीते' इत्यत्र छन्दसः श्रोत्रभावः घंश्च प्रत्यय इति यदा व्याख्यानं, तदेह 'घलोपः' इति यथाश्रुतम् । यदा तु 'वाक्यार्थे पदवचनम्' इति पक्षः, तदा घशब्देन इय इति रूपं लक्ष्यते । क्वचित्तु 'यलोपश्च' इति पाठः, तत्र येति संघातग्रहणं व्याख्येयम् । वर्णग्रहणे त्विकारस्य यणादेशः स्यान्न तु 'यस्येति च ४३१' इति लोपः । अकारलोपस्य स्थानिवत्त्वेन इकारान्तस्य भत्वाभावात् । एतच्च हरदत्तग्रन्थे स्पष्टम् । मूल-

---

१ बहूनां पाठस्यैवं वैयर्थ्यमापततीत्यहस्यैव हरदत्तमाधवौ पक्षमिममेकीयत्वेनोपन्यस्तवन्तौ ॥ शाबरभाष्ये तु भट्टपादैर्दूषितमेव ॥

लघुपूर्वात् ।५।१।१३१।शुचेर्भावः कर्म वा शौचम् । मौनम् । कथं काव्यम् , कविशब्दस्य ब्राह्मणादित्वात्ष्यञ् ॥ ( २४३६)(सू) योपधाद्गुरूपोत्तमाद्वुञ् । ५ । १ । १३२ । रामणीयकम् । आभिधानीयकम् ॥ (२४३७)(सू) सहायाद्वा ॥ साहाय्यम् । साहायकम् ॥ ( २४३८ ) (सू) द्वन्द्वमनोज्ञादिभ्यश्च ।५।१ । १३३ । शैष्योपाध्यायिका । मानोज्ञकम् ॥ ( २४३९ ) (सू) गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु । ५ । १ । १३४ । अत्याकारोऽधिक्षेपः । तदवेतस्ते गोत्रचरणयोर्भावकर्मणी प्राप्त अवगतवान्वा । गार्गिकया श्लाघते । गार्ग्यत्वेन विकत्थत इत्यर्थः । गार्गिकयाऽत्याकुरुते । गार्गिकामवेतः ॥ ( २४४० ) (सू) होत्राभ्यश्छः । ५ । १ । १३५ । होत्राशब्द ऋत्विग्वाची स्त्रीलिङ्गः । बहुवचनाद्विशेषग्रहणम् । अच्छावाकस्य भावः कर्म वा-अच्छावाकीयम् । मैत्रावरुणीयम् ॥ ( २४४१ ) (सू) ब्रह्मणस्त्वः । ५ । १ । १३६ । होत्रावाचिनो ब्रह्मन्शब्दात्त्वः स्यात् । छस्यापवादः । ब्रह्मत्वम् । नेति वाच्ये त्ववचनं तलो बाधनार्थम् । ब्राह्मणपर्यायाद् ब्रह्मन्शब्दात्तु त्वतलौ । ब्रह्मत्वम् । ब्रह्मता ॥ नञ्स्नञोरधिकारः समाप्तः ॥

---

अथ तद्धितेषु पाञ्चमिकाः ।

(२४४२) धान्यानां भवने क्षेत्रे खञ् ।५।२।१। भवत्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं-मौद्गीनम् ॥ (२४४३) (सू) व्रीहिशाल्योर्ढक् ।५।२।२। व्रैहेयम् । शालेयम् ॥ (२४४४)(सू) यवयवकषष्टिकाद्यत् ।५।२।३। यवानां भवनं क्षेत्रं-यव्यम् । यवक्यम् । षष्टिक्यम् ॥ ( २४४५) (सू) विभाषा तिलमाषोमाभङ्गाणुभ्यः ।५।२।४। यत् वा स्यात् ,

---

पुस्तकेषु ' यलोपः ' इति मुख्यपाठ एव प्रायेण दृश्यते, न तु षलोप इति पाठः ॥ ( २४३५ ) इगन्ताच्च-। लघुः पूर्वोऽवयवो यस्येति प्रातिपदिकविशेषणम् । पूर्वत्वं च संनिधानदिगवधिकमेव । तेनातिपाण्डुशब्दान्न भवति ॥ 'लघुपूर्वकः' इत्येव सुवचम् । लघुपूर्वश्चासौ इक् च लघुपूर्वक् तस्य प्रातिपदिकविशेषणात्तदन्तलाभ इति नव्याः ॥ इगन्तात्किम् , घटत्वम् । लघुपूर्वात्किम् , पाण्डुत्वम् ॥ कथं काव्यमिति । कुधातोः 'ओरावश्यके ३८४२' इति रूपसिद्धावपि कवेः कर्मेत्यर्थे काव्यमिति स्यादिति प्रश्नः॥(२४३६) योपधात्-। गुरु उपोत्तमं यस्य प्रातिपदिकस्य तस्मादित्यर्थः । योपधात्किम् , विमानत्वम् । गुरूपोत्तमादिति किम् , क्षत्रियत्वम्॥ आभिधानीयकमिति । अत्र प्रकृतिरभेः परोऽनीयर्प्रत्ययान्तो दधातिः । आभिधेयस्य भावः कर्म वेत्यर्थः ॥ ( २४३७ ) सहायाद्वेति । सूत्रेण नित्ये प्राप्ते विकल्पार्थं वचनम् ॥ ( २४३८ ) द्वन्द्वमनोज्ञादिभ्यश्च । मनोज्ञ, प्रियरूप, बहुल, अवश्येत्यादिर्मनोज्ञादिः ॥ ( २४३९ ) गोत्रचरणात्—। गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद्वुञ् स्याद्भावकर्मणोः ॥ अपत्याधिकारादन्यत्र लौकिकं गोत्रम् । तेनापत्यप्रत्ययान्तेभ्य इत्यर्थः । प्रवराध्याये ये पठितास्तेभ्य इत्यपरे । ' गोत्रं च चरणैः सह ७४६' इति जातित्वात् ' प्राणभृज्जाति-२४३२' इत्यादिना अञि प्राप्ते वचनम् ॥ श्लाघेत्यादि । श्लाघादिषु विषयभूतेष्वित्यर्थः ॥ प्राप्त इति । इणः प्राप्त्यर्थत्वात् । अवपूर्वस्येणो ज्ञाने प्रसिद्धत्वादाह--अवगतवान्वेति ॥ गार्गिकयेति । ' आपत्यस्य-१५५३' इति यलोपः ॥ चरणाद्वुञ उदाहरणं तु काठिकया श्लाघते इत्यादि बोध्यम् ॥ श्लाघादिष्विति किम् , गार्ग्यत्वम् । कठत्वम् ॥( २४४० ) होत्राभ्यश्छः ॥ होत्राशब्द इति-। जुहोतेस्त्रन् ॥ ( २४४१ ) ब्रह्मणस्त्वः । नेति वाच्य इति । छप्रत्यये निषिद्धे ' तस्य भावस्त्वतलौ २४१२ ' इत्यनेनैव त्वप्रत्ययः सिध्यति । विभक्तेरनुच्चारणाल्लाघवं च भवतीति भावः ॥ ' होत्राभ्यः'इत्यनुवृत्तेः फलं दर्शयति-ब्राह्मणपर्यायादिति ॥ इति भावकर्मार्थकाः ॥ नञ्स्नञोरधिकारः समाप्तः ॥

---

( २४४२ ) धान्यानाम्—। 'धिवि प्रीणने ' इत्यस्मात् ' कृत्यल्युटो बहुलम् ३७८६ ' इति कर्तरि ण्यत् । अस्मादेव निपातनादन्त्यस्य लोप इकारस्य चात्वम् । धिनोतीति धान्यम् । मन्त्रश्च-'धान्यमसि धिनुहि देवान्' इति दृश्यते । धान्यानामिति भवनापेक्षया कर्तरि षष्ठी । सा च निर्देशादेव समर्थविभक्तिः । बहुवचनं तु स्वरूपविधिनिरासार्थम् । अलौकिके प्रक्रियावाक्ये तु षष्ठ्यन्तत्वानुवादेन तद्धितावधिसामर्थ्यादेवेति बोध्यम् ॥ भवतिरिहोत्पत्तिवचनः क्षेत्रग्रहणसामर्थ्यात् । सूत्रे हि सत्तावचनस्यापि भवतेर्ग्रहणं मा भूदिति क्षेत्रग्रहणं कृतम् । अन्यथा ' धान्यानां भवनं कुसूलः'इत्यत्रापि स्यादिति । धान्यानां किम् , तृणानां भवनं क्षेत्रम् ॥ (२४४३) व्रीहिशाल्योः—। अत्रापि निर्देशादेव षष्ठी समर्थविभक्तिः । सा च भवनापेक्षया कर्तरीत्यादि पूर्ववत् ॥ ( २४४४ ) यवयवक—। अत्र प्रत्ययार्थसामर्थ्याल्लभ्या षष्ठी समर्थविभक्तिः ॥(२४४५)विभाषा-।

---

१ सहायाद्वेति । भाष्येऽन्वेषणीयम् । २ विभक्तेरिति । विधेय इति भावः ॥ ३ ननु 'मुद्ग आम् ( खञ् ) अ' इत्यलौकिके प्रक्रियावाक्ये षष्ठी कथमित्याशङ्कायामाह-अलौकिक इति ॥ ४ भवतेरिति । गृहवाचकस्य भवनस्य ग्रहणे ' मुद्गानां गृहम् ' इत्यत्रैव प्रसङ्गः स्यादिति तद्ग्रहणं चेति शेषः ॥ यदि च क्षेत्रग्रहणमावश्यकम् , तदा धान्यसंबन्धादुत्पत्तिभूमिरेव गृह्यते इति न क्षेत्रशब्दस्य शरीरभार्याद्यनेकार्थत्वेऽपि दोषः इति भवनग्रहणं चिन्त्यप्रयोजनम् ॥

पक्षे खञ्। तिल्यम्। तैलीनम्। माष्यम्, माषीणम्। उम्यम्, औमीनम्। भङ्गयम्,भाङ्गीनम्। अणव्यम्,आणवीनम्॥ (२४४६) ॐ सर्वचर्मणः कृतः खखञौ।५।२।५। असामर्थ्येऽपि निपातनात्समासः। सर्वश्चर्मणा कृतः—सर्वचर्मीणः। सार्वचर्मीणः॥ (२४४७) ॐ यथामुखसंमुखस्य दर्शनः खः।५।२।६। मुखस्य सदृशं यथामुखं प्रतिबिम्बम्। निपातनात्सादृश्येऽव्ययीभावः। समं सर्वं मुखं-संमुखम्। समशब्दस्यान्तलोपो निपात्यते। यथामुखं दर्शनो यथामुखीनः। सर्वस्य मुखस्य दर्शनः—संमुखीनः॥ (२४४८) ॐ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति।५।२।७। सर्वादेः पथ्याद्यन्ताद् द्वितीयान्तात्खः स्यात्। सर्वपथान् व्याप्नोति—सर्वपथीनः। सर्वाङ्गीणः। सर्वकर्मीणः। सर्वपत्रीणः। सर्वपात्रीणः॥ (२४४९) ॐ आप्रपदं प्राप्नोति।५।२।८। पादस्याग्रं प्रपदं तन्मर्यादीकृत्य—आप्रपदम्। आप्रपदीनः पटः॥ (२४५०) ॐ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु।५।२।९। अनुरायामे सादृश्ये च। अनुपदं बद्धा—अनुपदीना उपानत्। सर्वान्नानि भक्षयति—सर्वान्नीनो भिक्षुः। अयानयः स्थलविशेषः। तं नेयः—अयानयीनः शारः॥ (२४५१) ॐ परोवरपरम्परपुत्रपौत्रमनुभवति।५।२।१०। परांश्चावरांश्चानुभवतीति—परोवरीणः। अवरस्योत्वं निपात्यते। परांश्च परतरांश्चानुभवति—परम्परीणः। प्रकृतेः परम्परभावो निपात्यते। पुत्रपौत्रानुनुभवति—पुत्रपौत्रीणः। परम्पराशब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गम्, तस्मादेव स्वार्थे ष्यञि पारम्पर्यम्। कथं पारोवर्यवदिति। असाधुरेव। खप्रत्ययसंनियोगेनैव परोवरेति निपातनात्॥ (२४५२) ॐ अवारपारात्यन्तानुकामं गामी।५।२।११। अवारपारं गामी—अवारपारीणः। अवारीणः।

---

खञि नित्ये प्राप्ते वचनम्॥ **औमीनं, भाङ्गीनमिति**। ननूमाभङ्गयोर्धान्यत्वाभावात्कथमिह खञ्। 'व्रीहयश्च मे यवाश्च मे' इति चमकानुवाके हि द्वादशैव धान्यानि पठितानि, न तूमाभङ्गौ पठितौ इति चेत्। मैवम्, 'शणसप्तदशानि धान्यानि' इति स्मरणात्। तत्र चोमाभङ्गयोरपि पाठाद्धान्यत्वमस्तीति भाष्यादौ स्थितत्वात्। न च चमकानुवाके धान्यपरिगणनेनार्थः, तत्राधान्यानामप्यश्मादीनां पाठात्। धान्यानामपि केषांचित् कोद्रवादीनामपाठात्। तस्मादन्यत एव धान्यनिर्णय इति पूर्वोक्तस्मृत्या तयोर्धान्यत्वमस्तीति ज्ञेयम्॥ **(२४४६) सर्वचर्मणः**—। 'खश्च' इत्येव तु नोक्तम्। यतोऽप्यनुकर्षः संभाव्येतेति। अत्र तृतीया समर्थविभक्तिः। कृत इति प्रत्ययार्थे चर्मणः करणत्वस्योचितत्वात्॥ **सर्वश्चर्मणेति**। सर्वेण चर्मणा कृत इत्यर्थे तद्धितो नेष्यत इति भावः॥**(२४४७) यथामुख**—। दृश्यतेऽस्मिन् दर्शनः॥ अधिकरणे ल्युट्। 'असादृश्ये' इति प्रतिषेधात्सादृश्ये यथाशब्दस्य कथं समासस्तत्राह—**निपातनादिति**। एतच्च वृत्तिग्रन्थमनुसृत्योक्तम्। भट्टिकाव्ये तु पदार्थानतिवृत्तौ यथाशब्द आश्रितः। तथा च मायामृगं प्रक्रम्योक्तम्—'यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्' इति॥ **यथामुखं दर्शन इति**। अव्ययीभावस्यापि यथामुखशब्दस्योन्मत्तगङ्गादिवत्सत्त्ववचनत्वात्कर्मशक्तियोगे सति कृद्योगलक्षणा षष्ठी। तस्याः 'नाव्ययीभावात्—९५८' इत्यमादेशः॥ **सर्वस्य मुखस्येति**। 'संमुखस्य' इति नोक्तम्। प्रत्ययसंनियोगेनैव समशब्दस्यान्त्यलोपनिपातनात्। संशब्दस्तु समशब्दार्थे न दृश्यते 'संमुखो भव' इत्यत्र 'अभिमुखः' इत्यर्थप्रतीतेः। तत्र च खप्रत्ययस्याऽनिष्यमाणत्वात्॥ कथं तर्हि—'संयुगे संमुखीनं तमुद्यन्तं प्रसहेत कः' इति भट्टिः। अभिमुखावस्थानात्सामर्थ्याद्दर्शनं गम्यत इति हरदत्तः॥ **(२४४८) तत्सर्वादेः**—। तदिति द्वितीया समर्थविभक्तिः। व्याप्नोतीति प्रत्ययार्थः। परिशिष्टं प्रकृतिविशेषणम्। तत्र केवलानां पथ्यादीनां सर्वादित्वासंभवात्प्रातिपदिकैरपि तैस्तदन्तविधिः। तदाह—**पथ्याद्यन्तादिति**। पथ्यङ्गकर्मपत्रपात्रान्तात्प्रातिपदिकादित्यर्थः॥ **सर्वपथीन इति**। 'पूर्वकालैक-१०५०' इति समासः। 'ऋक्पूः—१३५०' इति समासान्तः। तस्य पथ्यन्तसमासग्रहणेन ग्रहणाद्भवति खप्रत्ययः॥ **(२४५०) अनुपदसर्वान्नायानयम्**—। बद्धाभक्षयतीत्यत्र निपातनात्तिङन्तेन सह द्वन्द्वः, द्वितीयान्तेभ्योऽनुपदादिभ्यो यथासंख्यं बद्धादिष्वर्थेषु खः स्यात्॥ **अनुरायाम इत्यादि**। 'यस्य चायामः ९७३' इति यथार्थे 'अव्ययम्—९५३' इति वा अव्ययीभाव इत्यर्थः॥ **सर्वान्नीन इति**। प्रकारकात्स्न्र्ये सर्वशब्दः। यान्यन्नानि लभ्यन्ते उष्णानि शीतलानि सरसानि नीरसानि वा सर्वाणि भक्षयतीत्यर्थः॥ 'अयः प्रदक्षिणगमनम्। अनयः प्रसव्यगमनम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परैरसमावेशः सोऽयमयानयः' इति काशिका॥ **तन्नेय इति**। नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि द्वितीया॥ **अयानयीनः शार इति**। 'फलकशिरसि स्थित इत्यर्थः' इति काशिका॥ **(२४५१) परोवर**—। **अवरस्येति**। आदेरिति शेषः॥ उत्वे कृते 'आद्गुणः १०४'। केचित्तु ओत्वं परशब्दस्य निपात्यते तस्मात्परस्यातः 'एङः पदान्तात्—१४१' इति पूर्वरूपादेश इति पक्षान्तरमाहुः॥ **(२४५२) अवारपार**—। **गामीति**। 'गमेरिनिः ४६४९' 'आङि णिच ४६५०' इति बहुलवचनात्केवलादपि णिनिः 'भविष्यति गम्यादयः ४९५८' इति भविष्यत्कालता॥ न्यासकारस्तु—'आवश्यके णिनिः, सोऽपि भविष्यत्येव' इत्याह॥ **अवारपारमिति**। 'अकेनोर्भविष्यदाधमर्ण्ययोः ९२०' इति षष्ठीप्रतिषेधः॥ केचित्तु 'गत्यर्थकर्मणि—८५५' इति सूत्रे द्वितीयाग्रहणमपवादविषये विधानार्थम्। तेन कृद्योगषष्ठी न भवति 'ग्रामं गन्ता' इतिवदिति व्याचख्युः। तदसत्, 'अकेनोः—९२०' इति प्रतिषेधे षष्ठीप्रसङ्गस्यैवाभावात्॥

---

१ **असामर्थ्येऽपीति**। सर्वार्थस्य करणकर्मत्वेन कृधातावन्वयात् चर्मणा सामर्थ्यमिति भावः॥ २ **समासग्रहणेनेति**। समासान्तानां समासावयवत्वादिति भावः॥

पारीणः । पारावारीणः । अत्यन्तं गामी–अत्यन्तीनः । भृशं गन्तेत्यर्थः । अनुकामं गामी–अनुकामीनः । यथेष्टं गन्ते-त्यर्थः ॥ ( २४५३ ) सू० **समांसमां विजायते** । ५ । २ । १२ । यलोपोऽत्रशिष्टविभक्तेरलुक् च पूर्वपदे निपात्यते । समांसमीना गौः । समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ( २४५४ ) वा० **खप्रत्ययानुत्पत्तौ यलोपो वा वक्त-व्यः** ॥ समांसमां विजायते । समायां समायां वा ॥ ( २४५५ ) सू० **अद्यश्वीनावष्टब्धे** । ५ । २ । १३ । अद्य श्वो वा विजायते–अद्यश्वीना वडवा । आसन्नप्रसवेत्यर्थः । केचित्तु विजायत इति नानुवर्तयन्ति । अद्यश्वीनं मरणम् । आस-न्नमित्यर्थः ॥ ( २४५६ ) सू० **आगवीनः** । ५ । २ । १४ । आङ्पूर्वाद्गोः कर्मकरे खप्रत्ययो निपात्यते । गोः प्रत्यर्प-णपर्यन्तं यः कर्म करोति स–आगवीनः ॥ ( २४५७ ) सू० **अनुग्वलंगामी** । ५ । २ । १५ । अनुगु गोः पश्चात्पर्या-प्तं गच्छति–अनुगवीनो गोपालः ॥ ( २४५८ ) सू० **अध्वनो यत्खौ** । ५ । २ । १६ । अध्वानमलं गच्छति–अध्व-न्यः । अध्वनीनः । ये चाभावकर्मणोः । आत्माध्वानौ खे इति सूत्राभ्यां प्रकृतिभावः ॥ ( २४५९ ) सू० **अभ्य-मित्राच्छ च** । ५ । २ । १७ । चाद्यत्खौ । अभ्यमित्रीयः । अभ्यमित्र्यः । अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छ-तीत्यर्थः ॥ ( २४६० ) सू० **गोष्ठात्खञ् भूतपूर्वे** । ५ । २ । १८ । गोष्ठो भूतपूर्वः–गौष्ठीनो देशः ॥ ( २४६१ ) सू० **अश्व-स्यैकाहगमः** । ५ । २ । १९ । एकाहेन गम्यते इत्येकाहगमः । आश्वीनोऽध्वा ॥ ( २४६२ ) सू० **शालीनकौपीने**

---

**अवारीण इत्यादि** । 'विगृहीताद्विपरीतादपीष्यते' इति भावः ॥ **अत्यन्तमिति** । क्रियाविशेषणम् ॥ **अनुकाममिति** । काम इच्छा तस्य सदृशमनुकामम् । कामानुरूपमित्यर्थः । 'अव्ययं विभक्ति–९५३' इति यथार्थेऽव्ययीभावः ॥ ( २४५३ ) **समांसमाम्—** ॥ **यलोप इति** । 'समायाम्' इत्यत्र यकारलोप इत्यर्थः ॥ **पूर्वपदे निपात्यत इति** । अन्यथा तद्धिते ह्युत्पन्ने यथोत्तरपदे सुपो लुग् भवति 'सुपो धातुप्रातिपदिकयोः ९५०' इति, तथा पूर्वपदेऽपि स्यादिति भावः ॥ **समांसमी-नेति** । वीप्सायां द्विर्वचनम् । सुबन्तसमुदायः प्रकृतिः ॥ विजायत इत्येतद्व्याचष्टे—**प्रसूयत इति** । विपूर्वको जनिर्गर्भ-विमोचने वर्तत इति भावः । गर्भविमोचने कृत्स्नायाः समाया व्याप्त्यभावात् 'अत्यन्तसंयोगे च' इति द्वितीया न भवतीत्या-शयेनाह–**समायामित्यादि** ॥ ( २४५४ ) **खप्रत्ययानुत्पत्ताविति** ॥ पदद्वयेऽपीति शेषः ॥ वार्तिकेन समांसमा-मिति सौत्रप्रयोगस्तूपपन्न इति भावः ॥ ( २४५५ ) **अद्यश्वीना—** । अविभक्तिको निर्देशो न तु स्त्रीलिङ्गनिर्देशोऽयम् । अद्य-श्वीनो गोसमूहः । अद्यश्वीनं गोमण्डलमित्यादावपीष्टत्वात् ॥ **अद्य श्वो वेति** । निपातनाद् वार्थे समासोऽयमिति भावः ॥ 'अवा-च्चालम्बना–३०४०' इति सूत्रेण आविदूर्ये स्तम्भेः षत्वविधानादवष्टब्धशब्द आसन्नपरः ॥ 'विजायते' इति हि वर्तते । स च गर्भविमोचनार्थकस्तदाह—**आसन्नप्रसवेत्यर्थं इति** ॥ ( २४५६ ) **आगवीनः** । **कर्मकर इति** । यस्तु प्रातर्गां गृहीत्वा गच्छति गोपालस्तस्मिन्नित्यर्थः ॥ **गोः प्रत्यर्पणपर्यन्तमिति** । गोशब्दो लक्षणया गोः प्रतिदाने वर्तत इति भावः ॥ **आगवीन इति** । 'आङ् मर्यादाभिविध्योः ९७०' इत्यव्ययीभावे 'गोस्त्रियोः–९५७' इति ह्रस्वे कृते खप्रत्ययः । 'ओर्गुणः १२१९' ॥ ( २४५७ ) **अनुग्वलं—** । ख इत्यनुवर्तते । अनुगुशब्दात् 'अलंगामी' इत्यस्मिन्नर्थे खः स्यात् ॥ **गोः पश्चादिति** । पश्चादर्थेऽव्ययीभावः ॥ **पर्याप्तमिति** । क्रियाविशेषणम् ॥ अत्र हरदत्तः अनुग्वित्यस्य क्रियाविशेषणत्वाद् द्वितीयान्तादिह प्रत्ययः । न चालंगामीत्यस्य 'सुप्यजातौ–२९९१' इति णिनिप्रत्ययान्ततया कृद्योगलक्षणा षष्ठी स्यादिति वाच्यम्, क्रियाविशे-षणादतत्प्रवृत्तेः शोभनं पाचक इत्यादौ तथा दर्शनादित्याह ॥ अत्र केचित्–धातूपात्तव्यापारजन्यफलाश्रयत्वं यत्र तन्मुख्यं कर्म, यत्र तु व्यापारजन्यत्वमात्रं तदौपचारिकम् । ततश्च तण्डुलानां पाचक इत्यत्र मुख्ये कर्मणि कृद्योगलक्षणा षष्ठी भवति । मृदु पाचकः शोभनं पाचक इत्यत्र तु सा न भवति । फलव्यापारयोः क्रियाकर्मभावव्यवहारे सत्यपि फलस्यौपचारिककर्मत्वात्, तद्विशेषण-त्वाच्च मृद्वादेरिति तस्याशय इत्याहुः ॥ अन्ये त्वेवं तर्हि तुल्यन्यायेन क्रियाविशेषणात् द्वितीयाया अप्यप्रवृत्तिः स्यात् । तस्मात्, 'तदर्हम् २४११' इति निर्देशादनित्या कृद्योगषष्ठीति क्रियाविशेषणात्सा न स्वीक्रियत इति हरदत्ताशयः कथंचिद्वर्णनीय इत्याहुः ॥ वस्तुतस्तु पश्चादर्थेऽव्ययीभावोऽयमिति निर्विवादम्, पश्चादिति चास्तात्यर्थे निपातितम् । तच्च यद्यपि विभक्तित्रयसाधारणम्, तथापाह योग्यताबलात्सप्तम्यर्थवृत्तिः । अतस्तस्य कर्मत्वायोगात्प्रथमान्तादेवेह प्रत्यय इति वक्तुमुचितम्, कृद्योगलक्षणषष्ठीश-ङ्काऽप्यत एव नेति बोध्यम् ॥ ( २४५९ ) **अभ्यमित्रात्—** । अभ्यमित्रशब्दो 'लक्षणेनाभिप्रती आभिमुख्ये ९७१' इत्य-व्ययीभावः । क्रियाविशेषणत्वाद् द्वितीया समर्थविभक्तिः ॥ ( २४६० ) **गोष्ठात्खञ्—** । गावस्तिष्ठन्त्यस्मिन्निति गोष्ठः । 'घञर्थे कविधानम् ५०२८' इत्यधिकरणे कः । 'अम्बाम्बगोभूमि–३८८७' इति षत्वम्, पूर्वं भूतो भूतपूर्वः 'सुप्सुपा ९४९–२' इति समासः ॥ ( २४६१ ) **अश्वस्य—** । कर्तरि षष्ठीयं निर्देशादेव समर्थविभक्तिः ॥ **एकाहगम इति** । 'कर्तृकरणे कृता– १००४' इति समासः ॥ नन्विह 'ग्रहवृदृनिश्चिगमश्च ५०२६' इत्यपं बाधित्वा 'परिमाणाख्यायां सर्वेभ्यः ४९७८' इति घञ्

---

१ भूतपूर्व इति । 'भूतपूर्वे चरट्' 'षष्ठ्या रूप्य च' 'गोष्ठात्खञ्' इत्येवं सिद्धे भूतपूर्वग्रहणेन प्रकरणान्तरे तयोः कर-णेन च 'विशेषविहितेनापि खञा चरट्प्रत्ययस्य बाधो न' इति ज्ञाप्यते–इति तु भाष्ये न दृश्यते ॥ २ 'अत्यन्तसंयोगे च' इति सूत्रस्य द्वितीयाविधायकत्वाभावात् 'कालाध्वनोरत्यन्तसंयोगे' इत्युपन्यसनीयम् ॥ ३ कथंचिदिति । षष्ठीविधौ कर्तृसाहचर्येण धात्वर्थं प्रति भेदेनान्वयि यत्कर्म तदेव गृह्यते । क्रियाविशेषणस्तोकादीनां तु नैवंविधत्वमिति न ततः षष्ठी । द्वितीया तु भव-त्येव तद्विधायके साहचर्याभावादिति तदाशयवर्णने तु न काप्यनुपपत्तिरिति बोध्यम् ॥

अधृष्टाकार्ययोः । ५ । २ । २० । शालाप्रवेशमर्हति—शालीनः अधृष्टः । कूपपतनमर्हति कौपीनं पापम् । तत्साधनत्वात्तद्वद्गोप्यत्वाद्वा पुरुषलिङ्गमपि । तत्संबन्धात्तदाच्छादनमपि ॥ ( २४६३ ) (सू) व्रातेन जीवति । ५ । २ । २१ । व्रातेन शरीरायासेन जीवति न तु बुद्धिवैभवेन स—व्रातीनः ॥ ( २४६४ ) (सू) साप्तपदीनं सख्यम् । ५ । २ । २२ । सप्ताभिः पदैरवाप्यते साप्तपदीनम् ॥ ( २४७५ ) (सू) हैयङ्गवीनं संज्ञायाम् । ५ । २ । २३ । ह्योगोदोहस्य हियङ्गुरादेशः विकारार्थे खञ् च निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारो—हैयङ्गवीनं नवनीतम् ॥ ( २४६६ ) (सू) तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ । ५ । २ । २४ । पीलूनां पाकः—पीलुकुणः । कर्णस्य मूलं कर्णजाहम् ॥ ( २४६७ ) (सू) पक्षात्तिः । ५ । २ । २५ । मूलग्रहणमात्रमनुवर्तते । पक्षस्य मूलं—पक्षतिः ॥ ( २४६८ ) (सू) तेन वित्तश्चुञ्चुप्चणपौ । ५ । २ । २६ । यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टस्तेन चस्य नेत्संज्ञा । विद्यया वित्तो—विद्याचुञ्चुः । विद्याचणः ॥ ( २४६९ ) (सू) विनञ्भ्यां नानाञौ न सह । ५ । २ । २७ । असहार्थे पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौ । विना । नाना ॥ ( २४७० ) (सू) वेः शालच्छङ्कटचौ । ५ । २ । २८ । क्रियाविशिष्टसाधनवाचकात्स्वार्थे । विस्तृतं—विशालम् । विशङ्कटम् ॥ ( २४७१ ) (सू) संप्रोदश्च कटच् । ५ । २ । २९ । सङ्कटम् । प्रकटम् । उत्कटम् । चाद्विकटम् ॥ ( २४७२ ) (वा) अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् ॥ अलाबूनां रजः—अलाबूकटम् ॥ ( २४७३ ) (वा) गोष्ठजादयः स्थानादिषु

---

प्राप्नोति, अस्ति चात्र परिमाणाख्या 'एकाहेन गम्यते' इति परिच्छेदावगमात् । अत्राहुः—अस्मादेव निपातनादब् द्रष्टव्य इति ॥ ( २४६२ ) **शालीनकौपीने**—। इमौ खप्रत्ययान्तत्वेन निपात्येते । रूढिशब्दावेतौ कथंचिद्व्युत्पाद्याविति नात्रावयवार्थेऽभिनिवेशः कार्यः ॥ **शालाप्रवेशमिति** । अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालामेव प्रवेष्टुमर्हतीत्यर्थः ॥ **कूपपतनमिति** । यद् कार्यं तत्प्रच्छादनीयत्वात्कूपावतरणमर्हतीत्यर्थः ॥ **तदाच्छादनमिति** । वासःखण्ड इत्यर्थः ॥ अन्ये त्वाहुः—अकार्यशब्दे यः करोतिः स क्रियासामान्यवचनः, तेन लज्जाहेतुत्वेन अद्रष्टव्यत्वात्पुरुषलिङ्गं कौपीनम् । अस्पृश्यत्वात्तदाच्छादनमिति ॥ ( २४६३ ) **व्रातेन जीवति । शरीरायासेनेति** । भारवहनादिनेत्यर्थः । यद्यपि व्रातशब्दो लोके संघातवचनः, तथाप्यत्रत्यभाष्यादिग्रन्थपर्यालोचनया अयमेवार्थ इहोचित इति भावः ॥ ( २४६४ ) **साप्तपदीनम्**—। योग्यतया समर्थविभक्तिस्तृतीयेति दर्शयति—**सप्तभिः पदैरिति** । पदमिह संभाषणं पादविक्षेपो वा । तद्धितार्थे द्विगुः । अवाप्यत इत्यर्थे खञ् ॥ ( २४६५ ) **हैयंगवीनम्**—। **ह्योगोदोहस्येति** । गोदोंहो गोदोहः षष्ठीसमासः । तेन सह ह्यस्शब्दस्य 'सुप्सुपा ९४९-२' इति समासः । ततो विकारे अनुदात्तलक्षणस्याञोऽपवादः खञ् । अत्र ह्यःशब्देन कालप्रत्यासत्तिर्विवक्षिता ॥ **नवनीतमिति** । यद्यपि वृत्तौ घृतमित्युक्तं तथैव चामरेणापि—'तत्तु हैयंगवीनं, यद् ह्योगोदोहोद्भवं घृतम्' इत्युक्तम्, तथापि घृतशब्देन नवनीतमेव विवक्षितमिति हरदत्तग्रन्थानुरोधेनेदमुक्तम् ॥ ( २४६६ ) **तस्य पाक**—। पाकः परिणामः मूलमुपक्रमः । 'तस्येदम् २०६४' इत्यणादिषु प्राप्तेष्वयमारम्भः । जाहचो जकारस्य प्रयोजनाभावान्नेत्त्वम् । पीलु, कर्कन्धु, शमी, करीर, कुवल, बदर, अश्वत्थ, खदिर, पील्वादिः । कर्ण, अक्षि, नख, मुख, केश, पाद, गुल्फ, भ्रू, शृङ्ग, दन्त, ओष्ठ, पृष्ठ, कर्णादिः ॥ ( २४६७ ) **मूलग्रहणमात्रमिति** । एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः ॥ **पक्षतिरिति** । प्रतिपत, पक्षिणां पक्षमूलं च ॥ ( २४६८ ) **तेन**—। वित्तः प्रतीतः । 'वित्तो भोगप्रत्यययोः ४०५४' इति निपातनात् 'रदाभ्यां निष्ठातो नः—४०२४' इति नत्वं न ॥ **लुप्तनिर्दिष्ट इति** । 'चुटुषाः प्रत्ययस्य' इति वक्तव्ये पृथग्योगकरणात् 'चुटू २७४' इत्येतदनित्यमिति समाधानान्तरमप्याहुः ॥ ( २४६९ ) **नानाञाविति** । नाञो ञकारो वृद्ध्यर्थः स्वरार्थश्च । 'न सह' इति प्रकृतिविशेषणं, न प्रत्ययार्थ इत्याशयेनाह—**असहार्थ इत्यादि** । यदि प्रत्ययार्थः स्यात्ततो 'द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः' इति सहार्थो गम्येत 'न न सह' अपि तु सहैवेति । तस्मात्प्रकृतिविशेषणम् । एतच्च व्याख्यानाल्लभ्यते । यद्येवं सहेत्येव प्रत्ययोऽस्तु, विनञोः प्रतिषेधार्थत्वादिष्टसिद्धेः 'विगर्दभरथकः' इत्यादौ विशब्दस्यापि प्रतिषेधवृत्तिर्दृष्टैवेति । सत्यम्, क्रियावाचिनो विशब्दात्सहार्थे प्रत्ययो विज्ञायेत । विगतेन सह विकृतेन सहेति । तस्माद्यथोक्तमेव न्याय्यम् । एतच्च हरदत्तग्रन्थे स्पष्टम् ॥ ( २४७० ) **वेः शाल**—। **स्वार्थ इति** । अनिर्दिष्टार्थत्वादिति भावः ॥ ( २४७१ ) **संप्रोदश्च**—। क्रियाविशिष्टसाधनवाचकात्स्वार्थे प्रत्ययः । संकटं संहतम्, संबाध इत्यर्थः । प्रकटं प्रज्ञातम्, प्रकाशत इत्यर्थः । उत्कटम् उद्भूतं, विकटं विकृतं, रूढशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते ॥ ( २४७२ ) **अलाबूतिलोमा**—। **अलाबूतिलेत्यादि** । एभ्यः पञ्चभ्यो रजस्यभिधेये कटच् प्रत्ययो भवति । रजसो विकारत्वाद्विकारे प्रत्ययानामपवादोऽयम् ॥ **अलाबूकटमिति** । 'ओरञ् २०९२' 'मयड्वैतयोः—२०९६' इति मयडिह प्राप्तः ॥ **तिलकटमिति** । 'असंज्ञायां तिलयवाभ्याम् २१०३' इति मयट् प्राप्तः । उमाशब्दाद् घृतादित्वादन्तोदात्तात् 'अनुदात्तादेश्च २०९३' इत्यञ्, 'उमोर्णयोर्वा २१११' इति वुञ् प्राप्तः । भङ्गाशब्दात् 'तृणधान्यानां च द्व्यषाम् ५६०९' इत्याद्युदात्तत्वादण्मयड्वा प्राप्त इत्येवं यथासंभवं प्रत्ययप्राप्तिरूह्या ॥ हरदत्तस्तु—तिलशब्दस्य घृतादित्वादन्तोदात्तत्वमङ्गीकृत्य ततः 'अनुदात्तादेश्च २०९३' इत्यञ्, 'असंज्ञायां तिलयवाभ्याम् २१०३' इति मयड्वा प्राप्त इत्याह । तत्र तिलशब्दस्य घृतादित्वकल्पने बीजं चिन्त्यम्, 'तृणधान्यानां च द्व्यषाम् ५६०९' इति फिट्सूत्रेणाद्युदात्तस्यैव न्याय्यत्वात् । 'तिलाश्च मे' इत्यत्र तथैव वेदे पाठाच्च ॥ ( २४७३ ) **गोष्ठजादय इति** । 'संघाते कटच् २४७४' इत्यादी-

पशुनामभ्यः ॥ गवां स्थानं-गोगोष्ठम् ॥ (२४७४) वा॰ संघाते कटच् ॥ अवीनां सङ्घातोऽविकटः ॥ ( २४७५ ) वा॰ विस्तारे पटच् ॥ अविपटः ॥ (२४७६) वा॰ द्वित्वे गोयुगच् ॥ द्वावुष्ट्रौ-उष्ट्रगोयुगम् ॥ (२४७७) वा॰ षट्त्वे षड्गवच् ॥ अश्वषड्गवम् ॥ ( २४७८ ) वा॰ स्नेहे तैलच् ॥ तिलतैलम् । सर्षपतैलम् ॥ ( २४७९ ) वा॰ भवने क्षेत्रे शाकटशाकिनौ ॥ इक्षुशाकटम् । इक्षुशाकिनम् ॥ ( २४८० ) सू॰ अवात्कुटारच्च । ५ । २ । ३० । चात्कटच् । अवाचीनोऽवकुटारः । अवकटः ॥ (२४८१) सू॰ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः । ५ । २ । ३१ । अवादित्येव । नतं नमनम् । नासिकाया नतम्-अवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगान्नासिका अवटीटा । पुरुषोऽप्यवटीटः ॥ ( २४८२ ) सू॰ नेर्बिडज्बिरीसचौ । ५ । २ । ३२ । निबिडम् । निबिरीसम् ॥ ( २४८३ ) सू॰ इनच् पिटच्चिकचि च । ५ । २ । ३३ । नेरित्येव । नासिकाया नतेऽभिधेये इनच्पिटचौ प्रत्ययौ प्रकृतेश्चिक चि इत्यादेशौ च ॥ ( २४८४ ) वा॰ कप्रत्ययचिकादेशौ च वक्तव्यौ ॥ चिकिनम् ॥ चिपिटम् । चिक्कम् ॥ (२४८५) वा॰ क्लिन्नस्य चिल् पिल् लश्चास्य चक्षुषी ॥ क्लिन्ने चक्षुषी अस्य-चिल्लः । पिल्लः ॥ (२४८६) वा॰ चुल् च ॥ चुल्लः ॥ ( २४८७ ) सू॰ उपाधिभ्यां त्यकन्नासन्नारूढयोः । ५ । २ । ३४ । संज्ञायामित्यनुवर्तते । पर्वतस्यासन्नं स्थलमुपत्यका । आरूढं स्थलमधित्यका ॥ (२४८८) सू॰ कर्मणि घटोऽठच् । ५ । २ । ३५ । घटत इति घटः पचाद्यच् । कर्मणि घटते कर्मठः पुरुषः ॥ (२४८९) सू॰ तदस्य संजातं तारकादिभ्य इतच् । ५ । २ । ३६ । तारकाः संजाता अस्य-तारकितं नभः । आकृतिगणोऽयम् ॥ (२४९०) सू॰ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।५।२।३७। तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य-ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् ॥(२४९१) वा॰ प्रमाणे लः ॥ शमः ॥ दिष्टिः । वितस्तिः ॥

---

न्यस्यैव प्रपञ्चः । इहोभयत्रादिशब्दः प्रकारे ॥ **पशुनामभ्य इति** । 'पशुनामादिभ्यः' इति भाष्ये प्रचुरः पाठः ॥ **गवां स्थानमिति** । 'तस्येदम् २०६४' इत्यत्रार्थे 'सर्वत्र गोरजादिप्रसङ्गे-१५४७' इति यति प्राप्ते गोष्ठच् ॥ ( २४७४ ) **संघात इति** । अप्रसृतावयवः समूहः संघातः । प्रसृतावयवस्तु विस्तारः । कटच्पटचौ द्वावपि सामूहिकानामपवादौ ॥ ( २४७६ ) **द्वित्वे इति** । प्रकृत्यर्थस्य द्वित्वे द्योत्य इत्यर्थः ॥ **उष्ट्रगोयुगमिति** । द्वयं युगमित्यादिवद् द्व्यवयवसंघातप्राधान्यादेकवचनम् । एवमग्रेऽपि ॥ ( २४८१ ) **नते नासि-** । **नतमिति** । 'नपुंसके भावे क्तः ४१०८' ॥ **नमनमिति** । नीचैस्त्वमित्यर्थः ॥ **अवटीटमिति** । नासिकासाधनके नमने वर्तमानादवशब्दात्स्वार्थे प्रत्ययः ॥ कथं तर्हि नासिकायां चावटीटशब्दस्य प्रयोग इत्यत आह—**तद्योगादिति** ॥ ( २४८२ ) **नेर्बिडच्**—। 'नते नासिकायाः संज्ञायाम्' इति वर्तते निशब्दान्नासिकाया नतेऽभिधेये बिडज्बिरीसचौ स्तः ॥ **निबिडमिति** । तद्योगान्निबिडा नासिका, निबिरीसा ॥ कथं तर्हि 'निबिडाः केशाः, निबिडं वनम्' इति । उपमानाद्भविष्यति । एतच्च काशिकायां स्पष्टम् ॥ केचित्तु उक्तप्रयोगानुरोधेनेह सूत्रे 'नते नासिकायाः' इति नानुवर्तत इति व्याचक्षते ॥ ( २४८३ ) **इनच् पिट-** । **प्रकृतेरिति** । निशब्दस्येत्यर्थः ॥ **आदेशौ चेति** । प्रत्ययौ तत्संनियोगेन यथासंख्यमिमावादेशौ च स्त इत्यर्थः ॥ **चिकिनमिति** । इनच्प्रत्ययसंनियोगेन चिकादेशः ॥ **चिपिटमिति** । पिटच्प्रत्ययसंनियोगेन चि इत्यादेशः ॥ ( २४८५ ) **क्लिन्नस्येति** । चिल् पिल् इत्येतावादेशौ भवतो लश्च प्रत्ययः 'अस्य चक्षुषी' इत्येतस्मिन्नर्थे ॥ ( २४८६ ) **चुल् चेति** । चाल्लप्रत्ययः ॥ **चुल्ल इति** । क्लिन्ने अस्य चक्षुषी इति पूर्वोक्त एव विग्रहः ॥ कथं तर्हि 'स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्षिण चाप्यमी' इत्यमर इति चेत् । अत्राहुः—पुरुषे व्युत्पादितानां तदवयवे लक्षणा बोध्येति ॥ अन्ये त्वाहुः—अस्य चक्षुषी इत्यत्र 'अस्य' इति न वक्तव्यम् । क्लिन्ने चक्षुषी चिल्ले पिल्ले । पुरुषे तु मत्वर्थेऽच् । अर्शआदिषु 'स्वाङ्गाद्धीनात्' इति सूत्रितत्वादिति ॥ (२४८७) **उपाधिभ्याम्-** । संज्ञाधिकारादिह नियतविषयमासन्नारूढं गृह्यत इत्याशयेनाह—**पर्वतस्येति** । आसन्नं समीपम् । आरूढमुच्चस्थानम् ॥ **उपत्यकेति** । 'प्रत्ययस्थात्-६३०' इतीत्वं तु न भवति, 'त्यकनश्च निषेधः ६३४' इत्युक्तत्वात् ॥ (२४८८) **कर्मणि घटो-** । सप्तम्यन्तात्कर्मन्शब्दाद् 'घटते' इत्यर्थेऽठच् स्यात् ॥ **कर्मठ इति** । 'ठस्येकः १६५४' इतीह न भवति, अठचि ठस्याप्रत्ययत्वेनाङ्गसंज्ञानिमित्तत्वाभावात् ॥ ( २४८९ ) **तदस्य सं-** । **तारकितमिति** । एवं पुष्पितं फलितं पुलकितं रोमाञ्चितमित्याद्युदाहार्यम् ॥ ( २४९० ) **प्रमाणे द्वयसच्-** । प्रमाणे विद्यमानात्प्रथमान्तात् 'अस्य' इति निर्दिष्टे प्रमेयेऽर्थे त्रयः प्रत्ययाः स्युः । प्रमाणमिह परिच्छेदकमात्रम् । तत्र मात्रच् । द्वयसज्दघ्नचौ तूर्ध्वमान एव भवतः । 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति भाष्यात् । ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानम् ऊर्वादि । तेन तिर्यङ्मानादौ 'दण्डद्वयसं क्षेत्रम्' इत्यादि न प्रयुज्यते, यथोत्तरं मुनीनां प्रामाण्यात् ॥ अत एव 'द्विकाण्डा क्षेत्रभक्तिः' इत्यत्र 'द्वयसचो लुक्' इति प्राचोक्तं नादर्तव्यमित्यवोचाम ॥ ( २४९१ ) **प्रमाणे ल इति** । लुक एषा पूर्वाचार्यसंज्ञा । प्रमाणत्वेन ये प्रसिद्धास्ततः परस्यैवायं लुगित्युदाहरति—**शमो दिष्टिः वितस्तिरिति** । शमः प्रमाणमस्येत्यादिविग्रहः । एषु मात्रचो लुग्, इतरयो-

---

१ नियतविषयमिति । पर्वतातिरिक्तस्थले तु लाक्षणिकः प्रयोग इति भावः ॥

( २४९२ ) वा० द्विगोर्नित्यम् ॥ द्वौ शमौ प्रमाणमस्य-द्विशमम् ॥ ( २४९३ ) वा० प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः ॥ शममात्रम्। प्रस्थमात्रम्। पञ्चमात्रम् ॥ ( २४९४ ) वा० वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् ॥ तावदेव-तावद्द्वयसम्। तावन्मात्रम्॥(२४९५) सू० पुरुषहस्तिभ्यामण् च ।५।२।३८। पुरुषः प्रमाणमस्य-पौरुषम्, पुरुषद्वयसम्। हास्तिनम्, हस्तिद्वयसम् ॥(२४९६) सू० यत्तदेतेभ्यः परिमाणे वतुप् ।५।२।३९। यत्परिमाणमस्य-यावान्। तावान्। एतावान् ॥ ( २४९७ ) सू० किमिदंभ्यां वो घः ।५।२।४०। आभ्यां वतुप्स्याद्वस्य च घः। कियान्। इयान् ॥ ( २४९८ ) सू० किमः संख्यापरिमाणे डति च ।५।

---

रसंभवात्। शमादीनामनूर्ध्वमानत्वात् ॥ ( २४९२ ) **द्विगोर्नित्यमिति** । द्विगोरप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाप्राप्तो लुग्विधीयते । ननु विकल्पस्याप्रकृतत्वान्नित्यग्रहणमिह निरर्थकमिति चेत्। अत्राहुः-अनुपदं संशये वक्ष्यमाणो मात्रच शममात्रमित्यादौ यथा न लुप्यते, 'प्रमाणे लः २४९१' इत्यस्य 'प्रमाणे द्वयसच्-२४९०' इति यः पूर्वविधिस्त-द्विषयपरत्वात्, एवं द्विगोरपि न लुप्येत। इष्यते च लुक्। द्वौ शमौ स्यातां न वा द्विशम इति । तथा चाधिक-संग्रहार्थं नित्यग्रहणमिति ॥ अत्र केचिद्-'द्विगोर्लः' इत्युक्तेऽपि पुनर्लग्रहणं नित्यार्थमधिकसंग्रहार्थमिति व्याख्यातुं शक्यत इति वैचित्र्यार्थं नित्यग्रहणमित्याहुः ॥ ( २४९३ ) **शममात्रमित्यादि** । शमः स्यान्न वेत्यादिविग्रहः ॥ ( २४९५ ) **पुरुषहस्तिभ्यामण् च** । 'इनण्यनपत्ये १७५९' इति प्रकृतिभावः। हस्ती प्रमाणमस्य हास्तिनम् ॥ अत्र काशिकायामुक्तं-'द्विगोर्नित्यं लुक् द्विपुरुषमुदकम्' इत्यादि॥ व्याख्यातं च हरदत्तेन-यद्यपि 'प्रमाणे लो द्विगोर्नित्यम्२४९१-२४९२' इत्यस्य नायमनुवादः, पुरुषहास्तिनोः शमादिवत्प्रमाणत्वेनाप्रसिद्धत्वात्, अत एव हि पुरुषद्वयसमित्यादौ 'प्रमाणे लः २४९१' इति लुङ् न भवति । 'तथाप्यपूर्वोऽत्र लुग्विधीयते' इति । एतच्चासंगतम्, 'द्विगोर्नित्यं लुक्' इत्यपूर्ववच-नस्य मुनित्रयानुक्तत्वात् ॥ वस्तुतस्तु विधीयत इत्यस्यानुमीयत इत्यर्थः। अयं भावः-'द्विगोः' 'तद्धितलुकि' इत्यनुवर्तमाने 'पुरुषात्प्रमाणेऽन्यतरस्याम् ६७१' इति ङीब्विकल्प्यते तदेव लुकमनुमापयतीति ॥ ( २४९६ ) **यत्तदेतेभ्यः---। यावानि-त्यादि**। 'आ सर्वनाम्नः ५७६' इत्यात्वे 'उगिदचाम्-३९१' इति नुम्। 'अत्वसन्तस्य च-५७०' इति दीर्घः। हल्ङ्या-दिलोपसंयोगान्तलोपौ। 'प्रमाणे' इत्यनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात्कृतम्। तथा च वार्तिकम्-"**डावतो-ऽर्थवैशेष्यान्निर्देशः पृथगुच्यते। मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः**" इति। अस्यार्थः-इह शास्त्रे वतुपं विधाय तस्मिन् परे आत्वं विहितम्। पूर्वाचार्यास्तु डावतुं विदधिरे तद्रीत्या निर्देशोऽयं डावतोरिति। विशेष्यत इति विशे-षस्तस्य भावो वैशेष्यं तस्मात्, अर्थभेदादित्यर्थः। अर्थभेदस्तु 'परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्' इति प्रागेवोक्त इति भावः ॥ नन्वनयोरर्थभेदे सति यावानध्वा, यावती रज्जुरित्यादि न सिध्येत्, अत्र ह्यायाममात्रं गम्यते। यद्युपमानाद्भ-विष्यतीति ब्रूषे, तर्हि प्रमाणग्रहणमेवानुवर्त्यताम्, यावानध्वेत्यादिप्रयोगाश्च मुख्याः सन्तु। ये तु-परिमाणे प्रयोगाः 'यावान् धान्यराशिः' इत्यादयः, त एवोपमानाद्भवन्तु तत्राह-**मात्रादीति** । 'यत्तदेतेभ्यः-२४९६' इति विशेषविहितो हि वतुप् सामान्यविहितान् मात्रजादीन् बाधेत। तेन तन्मात्रमित्यादि न स्यात्। परिमाणग्रहणे सति तु भिन्नोपाधिकत्वाद्वतुपः प्रमाणे विहितमात्रजादिभिः सह बाध्यबाधकभावो नेति भावः ॥ नन्वेवमपि बाधः स्यादेव। 'प्रमाणे द्वयसच्-२४९०' इत्यत्र प्रस्थमात्रमित्यादिसिद्धये प्रमाणग्रहणस्य परिच्छेदकमात्रपरतया व्याख्यातत्वेन वतुपो यत्तदेतेभ्यो विहितत्वेन विशेषविहितत्वान-पायात्। तस्मात् 'यत्तदेतेभ्यो वतुप् च' इत्येव सूत्र्यताम्, माऽस्तु परिमाणग्रहणम्, अस्तु च प्रमाणे इत्यर्थाधिकारः, तेन यावती रज्जुर्यावान् धान्यराशिरित्यादिप्रयोगाः सर्वेऽप्युपचारं विनैव निर्वहन्तीत्यपरमनुकूलमत आह-**भावः सिद्धश्चेति**॥ डावतोरिति पञ्चम्यन्तम्। अर्थभेदे सति वत्वन्तान्मात्रजादीनामुत्पत्तिः सिध्यति। तत्परिमाणमस्य तावद्धान्यं राशीकृतम्। तावत्प्रमाणमस्य कुल्यादेः, तावन्मात्रम्। यादृग्राशीकृतस्य धान्यादेर्दैर्घ्यं तादृशं कुल्यादेरपीत्यर्थः। एकविषयत्वे तु वतुपैव विशि-ष्टस्य प्रमेयस्योक्तत्वाद्वतुबन्तान्मात्रजादयो न स्युः। यस्य हि तावत्प्रमाणं तस्य तदपि प्रमाणम्। जानुप्रमाणकं जलादि यस्य प्रमाणं तदपि जानुप्रमाणकमिति वक्तुं शक्यत्वात्। एवं च तावच्छब्द एव प्रयुज्येत, न तु तावन्मात्रमित्यादि। अन्यथा तत्प्रमाणमस्य तन्मात्रम्। तन्मात्रं प्रमाणमस्य तन्मात्रमात्रमित्येवं मात्रजादिभ्यः प्रत्ययमालाप्रसङ्गात् ॥ ( २४९७ ) **किमि-दंभ्याम्---। वतुप्स्यादिति** । वकारस्य घविधिसामर्थ्याद्वतुपमनुवर्त्य सोऽप्यत्र विधीयत इति भावः। 'आदेः परस्य६८' इत्येव सिद्धे 'वः' इति वचनमादेशप्रतिपत्त्यर्थम्। इतरथा घः प्रत्ययान्तरं विज्ञायेत ॥ **कियानिति** । 'इदंकिमोरीश्की

---

१ **शममात्रमिति**। शमः प्रमाणमस्य स्यान्न वेति संशय्यमानार्थवाचिनो मात्रजिति भावः। एवमेव प्रस्थः परिमाणमस्य स्यान्न वेति संशय्यमानेऽर्थे, पञ्च स्युर्वा न वेति संशय्यमानेऽर्थे प्रत्यय इति भावः ॥ २ **अर्थभेद इति**। 'अन्यत्प्रमाणम्, अन्यत्परिमाणम्' इत्यत्रत्यभाष्यात्। पूर्वसूत्रे प्रमाणपदेनायामपरिच्छेद एव ॥ प्रस्थमात्रमित्यादयश्चासाधव एवेति भावः ॥ 'न प्रमाण इति वर्तते' इति भाष्यस्यायमर्थः-'प्रमाणे' इत्येतदनुवर्त्य 'यावानध्वा' इत्यादिकमेव मुख्यमस्तु परिमाणप्रयो-गाश्चोपमानाद्भवन्त्विति भावः ॥

। २ । ४१ । चाद्वतुप् । तस्य च वस्य घः स्यात् । का संख्या येषां ते-कति । कियन्तः ॥ ( २४९९ ) (सू.) **संख्याया अवयवे तयप्** । ५ । २ । ४२ । पञ्चावयवा अस्य-पञ्चतयं दारु ॥ ( २५०० ) (सू.) **द्वित्रिभ्यां तयस्यायज्वा** । ५ । २ । ४३ । द्वयम् , द्वितयम् । त्रयम् , त्रितयम् ॥ ( २५०१ ) (सू.) **उभादुदात्तो नित्यम्** । ५ । २ । ४४ । उभशब्दात्तयपोऽयच् स्यात् स चाद्युदात्तः । उभयम् ॥ ( २५०२ ) (सू.) **तदस्मिन्नधिकमिति दशान्ताड्डः** ।५।२।४५। एकादश अधिका अस्मिन्नेकादशम् ॥ ( २५०३ ) ( इ. ) **शतसहस्रयोरेवेष्यते** । नेह । एकादश अधिका अस्यां विंशतौ ॥ ( २५०४ ) ( इ. ) **प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते** ॥ नेह । एकादश माषा अधिका अस्मिन् सुवर्णशते ॥ ( २५०५ ) (सू.) **शदन्तविंशतेश्च** । ५ । २ । ४६ । डः स्यादुक्तेऽर्थे । त्रिंशदधिका अस्मिन् त्रिंशं शतम् । विंशम् ॥ ( २५०६ ) (सू.) **संख्याया गुणस्य निमाने मयट्** । ५ । २ । ४७ । भागस्य मूल्ये वर्तमानात्प्रथमान्तात्संख्यावाचिनः[1] षष्ठ्यर्थे मयट् स्यात् । यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य-द्विमयमुदश्विद्यवानाम् । गुणस्येति किम् । द्वौ व्रीहियवौ निमानमस्योदश्वितः । निमाने किम् । द्वौ गुणौ

---

१४६५' । 'यस्येति च ४३१' इति लोपः ॥ **इयानिति** । ईशादेशस्य 'यस्य-४३१' इति लोपे प्रत्ययमात्रमवशिष्यते । पठन्ति च-"उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ गतवति विलयं च प्राकृतेऽपि प्रपञ्चे । सपदि पदमुदीतं केवलः प्रत्ययो यत् तदियदिति मिमीते को हृदा पण्डितोऽपि ॥" वैयाकरणानामौपनिषदानां च प्रक्रियामाश्रित्य प्रवृत्तो द्व्यर्थोऽयं श्लोकः ॥ ( २४९८ ) **किमः संख्या--** । 'तदस्य-' इत्यनुवर्तत एव । संख्यायाः परिमाणं परिच्छेदः, तस्मिन् कर्तव्ये यः प्रश्नस्तस्मिन्वर्तमानात्किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे डतिः स्यात् । संख्यापरिमाणे किम् , क्षेपे मा भूत् । का संख्या येषां दशानाम् । "अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥" इत्येवं संख्येयद्वारेणात्र संख्यायाः कुत्सा बोध्या ॥ ( २४९९ ) **संख्याया-** । अवयवे वर्तमाना या संख्या तद्वाचिनः प्रथमान्तात्षष्ठ्यर्थे तयप् स्यात् यं प्रत्यवयवः सोऽवयवी[2] प्रत्ययार्थः । 'अस्य' इत्यधिकारात् । यथा द्वयसजादिषु प्रमाणे प्रकृत्यर्थे प्रमेयं प्रत्ययार्थस्तद्वत् ॥ ( २५०० ) **द्वित्रिभ्यां त--** । **त्रयमिति** । ननु 'त्रयोऽवयवाः तन्तवो यस्य त्रयं सूत्रम्' इति प्रयोगे संभवत्यपि 'मुनित्रयम्' इति प्रयोगो न संगच्छते, अन्यपदार्थस्यावयविनोऽभावादिति चेत् । अत्राहुः-अवयवी त्वत्र समुदाय एव । स चातिरिक्तो वाऽनतिरिक्तो वेति विचारान्तरम् । एवं च-समुदायस्यातिरिक्तत्वपक्षेऽपि समुदायघटकत्वेन मुनीनां प्रत्यभिज्ञानान्मुनित्रयनमस्कारस्य विघ्नविघातकत्वमस्त्येवेति ॥ ( २५०१ ) **उभादुदात्तो नित्यम्** । इह 'चितः ५६७२' इत्यनेनैवान्तोदात्तत्वं सिद्धम् । सर्वोदात्तत्वं तु 'अनुदात्तं पदमेकवर्जम्' इति वचनाद्बाधितम् । न च हे उभयेति संबुद्ध्यन्ते आमन्त्रिताद्युदात्तत्वं बाधितुं वचनमिति शङ्क्यम् , पुरस्तादपवादन्यायेन चित्स्वरस्यैव बाध्यता, न त्वामन्त्रिताद्युदात्तत्वस्येति सुवचत्वात् । तस्माद्युदात्तवचनसामर्थ्यादादेरेवायम् । प्रयुज्यते च तथा 'उभयं शृणवच्च न' इति । तदेतत्सकलमभिप्रेत्याह---**स चेति** ॥ ( २५०२ ) **तदस्मिन्--** । पुनस्तद्ग्रहणम् 'अस्य' इति षष्ठ्यन्तसंबद्धतद्ग्रहणनिरासार्थम् ॥ प्रत्ययविधौ तदन्तविध्यभावादाह---**दशान्तादिति** । अन्तग्रहणं किम् , दश अधिका अस्मिन् शते । न चेह व्यपदेशिवद्भावेन दशान्तत्वमस्तीति वाच्यम् , 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यभ्युपगमात् ॥ ( २५०५ ) **शदन्त--** । प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य' इति परिभाषया तदादिनियमः स्यात् , तं वारयितुमन्तग्रहणम् । तेन एकत्रिंशम् , एकचत्वारिंशमित्यादि सिद्धम् । न चैवं गोत्रिंशदधिका अस्मिन् शते इत्यादावतिप्रसङ्गः शङ्क्यः, 'संख्याया अवयवे तयप् २४९९' इत्यतः संख्याग्रहणानुवृत्तेः । अन्तग्रहणमिह विंशतिशब्दानन्तरं कर्तव्यम् 'शद्विंशत्यन्ताच्च' इति । तेन एकविंशं शतमित्यादि सिध्यति । अन्यथा 'ग्रहणवता-' इति तदन्तविधिप्रतिषेधादिह न स्यात् ॥ ( २५०६ ) **संख्याया गुणस्य-** । गुणो भागः । निमीयते क्रीयतेऽनेनेति निमानं मूल्यम् । 'मेङ् प्रणिदाने' इत्यस्मान्निपूर्वात्करणे ल्युट् । तदाह---**भागस्य मूल्य इति** ॥ **षष्ठ्यर्थे इति** । यद्यपि 'तदस्मिन्नधिकम्---२५०२' इत्यतः 'तद्' इत्यनुवृत्तौ प्रथमान्तादित्ययमेवार्थो लभ्यते, तथापि मण्डूकप्लुत्या 'तदस्य संजातम्-२४८९' इत्यतः 'तदस्य' इत्यनुवर्तनात् 'षष्ठ्यर्थे' इत्येतदपि लभ्यत इति भावः ॥ **द्विमयमिति** । द्विशब्दस्य संबन्धिशब्दत्वेन नित्यसापेक्षत्वात् 'यवानाम्' इति पदे सत्यपि तद्धितोत्पत्तिरिहाविरुद्धेति ज्ञेयम् ॥ नन्वेवमपि प्रत्ययान्तस्योदश्विच्छब्देन सामानाधिकरण्यं दुर्लभम् । यावतोदश्विद्भागे प्रत्ययो विहितो, नोदश्विति । अत्राहुः-भागेति विधीयमानः प्रत्ययः अभिधानस्वाभाव्याद् भागवन्तमाचष्टे । तेन सामानाधिकरण्यं भवतीति । 'गुणनिमाने' इति वक्तव्ये व्यस्तोच्चारणात् 'एकत्वं गुणस्य' इत्यत्र विवक्षितम् । तेनेह न भवति यवानां द्वौ भागौ निमानमेषामुदश्वित्त्रयाणां भागानामिति । 'भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते' इह न भवति ।

---

१ **संख्यावाचिन इति** । गुणकर्मकनिमाने वर्तमानाद् गुणगतसंख्यावाचिन इत्यर्थः ॥ काकाक्षिगोलकन्यायेन गुणशब्दस्योभयत्र संबन्धात् ॥ २ **अवयवीति** । स चान्यत्रानुभूतावयवभेदोऽपि गृह्यते । तेन 'मुनित्रयम्' 'वृत्तयः पञ्चतय्यः' इति सिद्धम् ॥

क्षीरस्य एकस्तैलस्य द्विगुणं क्षीरं पच्यते तैलेन ॥ ( २५०७ ) (सू) **तस्य पूरणे डट्** । ५ । २ । ४८ । एकादशानां पूरणः—एकादशः ॥ ( २५०८ ) (सू) **नान्तादसंख्यादेर्मट्** ।५।२।४९। डटो मडागमः स्यात् । पञ्चानां पूरणः—पञ्चमः । नान्तात्किम् । विंशः । असंख्यादेः किम् । एकादशः ॥ ( २५०९ ) (सू) **षट्कतिकतिपयचतुरां थुक्** । ५ । २ । ५१ । एषां थुगागमः स्याड्डटि । षण्णां पूरणः—षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट् । कतिपयथः । चतुर्थः ॥ ( २५१० ) (सू) **चतुरश्छयतावाद्यक्षरलोपश्च** ॥ तुरीयः । तुर्यः ॥ ( २५११ ) (सू) **बहुपूगगणसङ्घस्य तिथुक्** । ५ । २ । ५२ । डटीत्येव । पूगसङ्घयोरसंख्यात्वेऽप्यत एव डट् । बहुतिथ इत्यादि ॥ ( २५१२ ) (सू) **वतोरिथुक्** । ५ । २ । ५३ । डटीत्येव । यावतिथः ॥ ( २५१३ ) (सू) **द्वेस्तीयः** । ५ । २ । ५४ । डटोऽपवादः । द्वयोः पूरणो—द्वितीयः ॥ ( २५१४ ) (सू) **त्रेः संप्रसारणं च** ।५ ।२ । ५५ । तृतीयः ॥ ( २५१५ ) (सू) **विंशत्यादिभ्यस्तमडन्यतरस्याम्** । ५ । २ । ५६ । एभ्यो डटस्तमडागमो वा स्यात् । विंशतितमः, विंशः । एकविंशतितमः, एकविंशः ॥ ( २५१६ ) (सू) **नित्यं शतादिमासार्धमाससंवत्सराच्च** । ५ । २ । ५७ । शतस्य

---

एको भागो निमानमस्येति । भूयस इति च प्रत्ययार्थादाधिक्यमात्रं प्रकृत्यर्थस्य विवक्षितं, न तु बहुत्वम् । तेन द्विशब्दादपि भवत्येव ॥ ( २५०७ ) **तस्य पूरणे**—। 'तस्य' इति षष्ठ्यन्तानुकरणम् । एकत्वमविवक्षितम्, एकस्य पूरणासंभवात् । पूर्यतेऽनेनेति पूरणः, ण्यन्तात्करणे ल्युट् ॥ **एकादशानामिति** । उद्भूतावयवभेदः समुच्चयः प्रकृत्यर्थः । अवयव इह प्रत्ययार्थः । यस्मात्संख्यावाचिनः प्रत्ययविधिस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्ययः । यथा 'अतिशायने-२७१५' 'याप्ये-२७०५' इत्यादिषु प्रवृत्तिनिमित्तस्यैवातिशयादिकं गृह्यते, अन्तरङ्गत्वात् । तथेहापि । तेन 'एकादशानां घटानां पूरणो जलादिः' इत्यत्र नातिप्रसङ्गशङ्कालेशोऽपीति भावः । ननु यदि प्रवृत्तिनिमित्तस्य पूरणे प्रत्ययः, तर्ह्यत्र एकादशत्वस्य पूरण इति विग्रहो वक्तुं युक्त इति चेत् । अत्राहुः—'वैयाकरणपाशः' इत्यत्र यथा 'याप्यो वैयाकरणः' इति विग्रहः । न तु 'याप्यं वैयाकरणत्वम्' इति, तथेहापि बोध्यमिति । एवं च व्युत्क्रमेणाध्यायेषु गम्यमानेषु 'वृद्धिरादैच् ३०' इत्यध्यायो यदा चरमं गण्यते तदा सोऽप्यष्टमो भवत्येव ॥ ( २५०८ ) **नान्तादसंख्यादेः**—। **डट इति** । 'डट्' इति प्रथमान्तस्यानुवृत्तस्य 'नान्तात्' इति पञ्चम्या षष्ठी कल्प्यत इति भावः । यद्यपीह मटः प्रत्ययत्वेऽपि न क्षतिः, तथाप्युत्तरत्र तमट आगमत्वमेवाभ्युपगन्तव्यम् । अनुदात्तता यथा स्यात् । प्रत्ययत्वे त्वाद्युदात्तः स्यात् । तथा चैकरूप्येणैव संदर्भव्याख्यानमुचितम् ॥ अन्येऽप्याहुः—मटः प्रत्ययत्वे अकारसहितो मकारो विधेयः । आगमत्वे तु मकारमात्रमिति लाघवमस्तीति ॥ **विंश इति** । विंशतेः पूरणः । 'ति विंशतेर्डिति १२१६' इति तिलोपः ॥ ( २५०९ ) **षट्कति**—। इह षष्ठीनिर्देशबलात् षडादीनामागमित्वं स्पष्टमिति तदानुकूल्येनानुवृत्तो डट् सप्तम्या विपरिणम्यते तदाह—**डटीति** । डट एव थुट् तु न कृतः, षष्ठे षकारस्य जश्त्वप्रसङ्गात् । चतुर्थे रेफस्य विसर्गप्रसङ्गाच्च । न चैवं 'नान्तात्-२५०८' इति सूत्रेऽपि डटि परे मुगेव विधीयतामिति वाच्यम्, पञ्चमः सप्तम इत्यादौ नलोपाभावापत्तेः ॥ ( २५१० ) **चतुरश्छयताविति** । विशेषविहिताभ्यामपि च्छयद्भ्यां डट्प्रत्ययो न बाध्यते, थुग्विधानसामर्थ्यात् । तेन चतुर्थ इति सिद्धः ॥ **आद्यक्षरेति** । अच्सहितं व्यञ्जनमक्षरशब्देनोच्यते । अच्सहितस्यादेर्व्यञ्जनस्येत्यर्थः । 'व्यञ्जनसहितस्यादेरचः' इति व्याख्याने तु द्विर्वचनन्यायेन तकारस्यापि लोपः स्यादिति हरदत्तः । 'आदेर्व्यञ्जनस्य' इति व्याख्याने प्रमाणं तु 'द्वितीयतृतीय-१०३५' इति सूत्रे 'तुर्याणि' इति निर्देशो बोध्यः ॥ ( २५१३ ) **द्वेस्तीयः** ॥ **डटोऽपवाद इति** । डट आदेशस्तु न भवति । टिति[2] 'टिड्ढा-६५१' इति ङीपः प्रसक्त्या 'द्वितीया श्रिता-९९३' इति निर्देशानुपपत्तेः । अत एव निर्देशाद् द्विशब्दस्याप्यादेशो न भवति ॥ ( २५१४ ) **त्रेः सं**—। **तृतीय इति** । रेफस्य ऋकारः संप्रसारणम् । 'हलः ३३९०' इति दीर्घस्तु न भवति, 'ढ्लोपे-२५८' इति सूत्रादण इत्यनुवृत्तेः । 'त्रेस्तृ च' इति नोक्तं, प्रत्ययो मा विज्ञायीति ॥ ( २५१५ ) **विंशत्यादिभ्य इति** । प्रत्यासत्त्या 'पङ्क्ति-२३४५' इत्यादिसूत्रेण निपातिता विंशत्यादयो गृह्यन्ते, न लोकप्रसिद्धाः, विप्रकृष्टत्वादिति भाष्यमतम् ॥ वृत्तिकृता तु विंशत्यादयो लौकिका एव संख्याशब्दा गृह्यन्ते, न 'पङ्क्ति-२३४५' इत्यादिसूत्रनिर्दिष्टाः । तद्ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यात् । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् । एवं च सति 'षष्ठ्यादेश्चासंख्यादेः २५१७' इति पर्युदासो युज्यत एवेत्युक्तम् ॥ **एकविंशतितम इति** । यद्यपि भाष्यमते तदन्तविधिर्दुर्लभः—तथापि षष्ठ्यादेश्च-२५१७' इति सूत्रे संख्यादिपर्युदासो ज्ञापयति—'इह प्रकरणे तदन्तानामपि ग्रहणम्' इति। एवं च सति एकान्नविंशतेः पूरण एकान्नविंशतितम इत्यपि सिध्यति । 'लौकिकानां ग्रहणम्'

---

१ **द्वितीय इति** । 'संकर्षणद्वितीयस्य बलं कृष्णस्य वर्धताम्' इत्यादौ सहायवाची द्वितीयशब्दस्त्वव्युत्पन्न एव ॥ 'न ह्यपूरणस्तीयशब्दोऽस्ति' इति 'पूरणाद् भागे-' इति सूत्रभाष्योक्तेः । 'अस्ति (तीयान्तः) सहायवाची' इति भाष्यं तु श्रुतसारूप्यपरम् ॥ २ 'डिति' इति लेखस्योपयोगश्चिन्त्यः ॥

पूरणः–शततमः । एकशततमः । मासादेरत एव डट् । मासतमः ॥ ( २५१७ ) षष्ट्यादेश्चाऽसंख्यादेः । ५ । २ । ५८ । षष्टितमः । संख्यादेस्तु विंशत्यादिभ्य इति विकल्प एव । एकषष्टः । एकषष्टितमः ॥ ( २५१८ ) मतौ छः सूक्तसाम्नोः । ५ । २ । ९ । मत्वर्थे छः स्यात् । अच्छावाकशब्दोऽस्मिन्नस्ति अच्छावाकीयं सूक्तम् । वारवन्तीयं साम ॥ ( २५१९ ) अध्यायानुवाकयोर्लुक् । ५ । २ । ६० । मत्वर्थस्य छस्य । अत एव ज्ञापकात्तत्र छः । विधानसामर्थ्याच्च विकल्पेन लुक् । गर्दभाण्डः । गर्दभाण्डीयः ॥ ( २५२० ) विमुक्तादिभ्योऽण् । ५ । २ । ६१ । मत्वर्थेऽण् स्यादध्यायानुवाकयोः । विमुक्तः शब्दोऽस्मिन्निति–वैमुक्तः । दैवासुरः ॥ ( २५२१ ) गोषदादिभ्यो वुन् । ५ । २ । ६२ । मत्वर्थेऽध्यायानुवाकयोः । गोषदकः । इषेत्वकः ॥ ( २५२२ ) तत्र कुशलः पथः । ५ । २ । ६३ । वुन् स्यात् । पथि कुशलः–पथकः ॥ ( २५२३ ) आकर्षादिभ्यः कन् । ५ । २ । ६४ । आकर्षे कुशलः आकर्षकः । आकषादिभ्य इति रेफरहितो मुख्यः पाठः । आकषो निकषः ॥ ( २५२४ ) धनहिरण्यात्कामे । ५ । २ । ६५ । काम इच्छा । धने कामो–धनको देवदत्तस्य । हिरण्यकः ॥ ( २५२५ ) स्वाङ्गेभ्यः प्रसिते । ५ । २ । ६६ । केशेषु प्रसितः–केशकः । तद्रचनायां तत्पर इत्यर्थः ॥ ( २५२६ ) उदराट्ठगाद्यूने । ५ । २ । ६७ । अविजिगीषौ ठक् स्यात् । कनोऽपवादः । बुभुक्षयाऽत्यन्तपीडित उदरे प्रसितः–औदरिकः । आद्यूने किम् । उदरकः । उदरपरिमार्जनादौ प्रसक्त इत्यर्थः ॥ ( २५२७ ) सस्येन परिजातः । ५ । २ । ६८ । कन् स्वर्यते न तु ठक् । सस्यशब्दो गुणवाची । न तु धान्यवाची । शस्येनेति पाठान्तरम् । सस्येन गुणेन परिजातः संबद्धः–सस्यकः साधुः ॥ ( २५२८ ) अंशं हारी । ५ । २ । ६९ । हारीत्यावश्यके णिनिः । अत एव तद्योगे षष्ठी न । अंशको दायादः ॥ ( २५२९ ) तन्त्रादचिरापहृते । ५ । २ । ७० । तन्त्रकः पटः । प्रत्यग्र इत्यर्थः ॥ ( २५३० ) ब्राह्मणकोष्णिके संज्ञायाम् । ५ । २ । ७१ । आयुधजीविनो ब्राह्मणा यस्मिन्देशे स–ब्राह्मणकः । अल्पमन्नं यस्यां सा–उष्णिका यवागूः । अन्नशब्दस्य उष्णादेशो निपात्यते ॥ ( २५३१ ) शीतोष्णाभ्यां कारिणि । ५ । २ । ७२ । शीतं करोतीति–शीतकोऽलसः । उष्णं करोतीति–उष्णकः शीघ्रकारी ॥ ( २५३२ ) अधिकम् । ५ । २ । ७३ । अध्यारूढशब्दात्कन्

---

इति वृत्तिमते तु नैतत्सिध्येत् विंशतिसंख्यातः प्राग्भावित्वादस्या संख्यायाः । एतच्च कैयटहरदत्तग्रन्थयोः स्पष्टम् ॥ ननु 'अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु' इति वदता कात्यायनेन 'पङ्क्ति–२३४५' इत्यादिसूत्रस्य प्रत्याख्यातत्वात् तत्सूत्रे निपातिताः विंशत्यादयो गृह्यन्ते, इति भाष्यमतमयुक्तमिति चेत् । अत्राहुः– यद्यपि प्रत्याख्यातं तथापीहार्थमावश्यकं तत् । अत एव तत्र भाष्यकृता 'नासूया कर्तव्या यत्रानुगमः क्रियते ' इत्युक्तम् । अतः कात्यायनोक्तप्रत्याख्यानं नादर्तव्यमिति ॥ ( २५१६ ) नित्यं श—। **शततम इति** । यद्यपीदं ' षष्ट्यादेश्च–२५१७ ' इत्युत्तरसूत्रेणैव सिध्यति, तथापि संख्याद्यर्थं 'नित्यं शतादि–२५१६' इत्यावश्यकमिति ध्वनयन्नुदाहरति— **एकशततम इति** ॥ **मासादेरिति** । संख्यावाचित्वाभावेऽपीति भावः ॥ ( २५१७ ) **षष्ट्यादेश्चेति** ॥ 'विंशत्यादिभ्यः–२५१५' इति विकल्पे प्राप्ते नित्यार्थोऽयमारम्भः ॥ **संख्यादेस्त्विति** । एतच्च प्राक् शताद्बोध्यम् 'नित्यं शतादि–२५१६' इत्युक्तत्वात् ॥ ( २५१८ ) **मतौ छः**—। **मत्वर्थ इति** । मतोर्विषय इत्यर्थः । तेन 'तद्' इति प्रथमा समर्थविभक्तिः, अस्यास्मिन्निति प्रत्ययार्थश्चेह लभ्यते ॥ ( २५१९ ) **अध्याया**–। **विधानसामर्थ्यादिति** । मतुप्प्रकरण एवास्मिन् सूत्रे कर्तव्ये यदत्रास्य लुग्विधानं तत्पाक्षिकं लुकमनुमापयतीति कैयटः[1] ॥ ( २५२२ ) **तत्र कुशलः**—। सप्तमीसमर्थात्पथिन्शब्दात्कुशल इत्यर्थे वुन्स्यात् ॥ ( २५२३ ) **आकर्षादिभ्यः कन्** । वुना सिद्धे कन्ग्रहणम् इदुदन्तार्थम् । अशनिकः, शकुनिकः, त्सरुकः ॥ **मुख्यः पाठ इति** । आकषन्त्यस्मिन् सुवर्णादिकमित्याकषः । 'पुंसि संज्ञायां घः–' इति व्याख्याय, ये तु–' आकर्षादिभ्यः ' इति सरेफं पठन्ति, तेषाम् ' आकर्ष इति घञि रूपम्' इति हरदत्तेनोक्तत्वादिति भावः ॥ ( २५२४ ) **धनहि**—। **धने काम इति** । 'तत्र ' इत्यनुवर्तनात्सप्तम्यन्तात्प्रत्यय इति भावः ॥ ( २५२६ ) **उदरात्**—। आद्यूनशब्दार्थमाह—**अविजिगीषाविति** । 'दिवोऽविजिगीषायाम् ४०४०' इति तत्रैव निष्ठानत्वविधानात् ॥ ( २५२७ ) **सस्येन**–। कर्मकर्तरि तृतीयेयम् । परितो जातः परिजातः ॥ फलितमाह–**संबद्ध इति** ॥ ( २५२८ ) **अंशं हारी** । **अत एवेति** । 'अकेनोः–९२०' इति निषेधादिति भावः ॥ ( २५२९ ) **तन्त्रात्**—। तन्यन्ते तन्तवोऽस्मिन्निति व्युत्पत्त्या तन्त्रं तन्तुवायशलाका, अचिरः कालोऽपहृतस्येत्यचिरापहृतस्तस्मिन् । 'कालाः परिमाणिना १०३७' इति समासः ॥ **प्रत्यग्र इति** । नूतन इत्यर्थः ॥ ( २५३० ) **ब्राह्मणकोष्णिके**–। ब्राह्मणशब्दादायुधजीवित्वोपाधिकात्प्रथमान्तात् सप्तम्यर्थे कन् प्रत्ययो निपात्यते । अन्नशब्दात्तु अल्पत्वोपाधिकात् । तदाह–**आयुधेत्यादि** ॥ ( २५३१ ) **शीतोष्णाभ्याम्**–। शीतमिव शीतम् । मन्दमित्यर्थः । शीते सति कार्यकरणे पाटवाभावात् । उष्णमिवोष्णम् । शीघ्रमित्यर्थः । क्रियाविशेषणाभ्यां द्वितीयाभ्यां प्रत्ययः । कृद्योगलक्षणा षष्ठी तु क्रियाविशेषणान्नेत्युक्तम् । मुख्यार्थवृत्तिभ्यां तु प्रत्ययो न भवत्यनभिधानात् ॥ ( २५३२ ) **अधिकम्** ॥ **अध्यारूढशब्दादिति** । 'गत्यर्थाकर्मक–४१०४' इत्यादिना रुहेः कर्तरि कर्मणि वा क्तो विहितः ।

---

1 कैयट इति । * अध्यायानुवाकाभ्यां लुक् * इति वाचनिकस्य लुग्विकल्पस्य युक्तिसिद्धत्वकथनाय कैयटप्रौढिरियमिति भावः ॥

उत्तरपदलोपश्च ॥ सू (२५३३) **अनुकाभिकाभीकः कमिता** । ५ । २ । ७४ । अन्वभिभ्यां कन् । अभेः पाक्षिको दीर्घश्च । अनुकामयते—अनुकः । अभिकामयते—अभिकः । अभीकः ॥ (२५३४) सू **पार्श्वेनान्विच्छति** ।५।२।७५। अनृजुरुपायः पार्श्वं तेनान्विच्छति—पार्श्वकः॥ (२५३५) सू **अयः शूलदण्डाजिनाभ्यां ठक्ठञौ** । ५ । २ । ७६ । तीक्ष्ण उपायोऽयःशूलं, तेनान्विच्छति—आयःशूलिकः साहसिकः । दण्डाजिनं दम्भः, तेनान्विच्छति—दाण्डाजिनिकः ॥ (२५३६) सू **तावतिथं ग्रहणमिति लुग्वा** ।५।२।७७। कन् स्यात्पूरणप्रत्ययस्य च लुग्वा । द्वितीयकं द्विकं वा ग्रहणं देवदत्तस्य । द्वितीयेन रूपेण ग्रहणमित्यर्थः॥ (२५३७) वा **तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यं च लुक्**॥ षष्ठेन रूपेण गृह्णाति—षट्को देवदत्तः । पञ्चकः ॥ (२५३८) सू **स एषां ग्रामणीः** । ५ । २ । ७८ । देवदत्तो मुख्योऽस्य देवदत्तकः । त्वत्कः । मत्कः ॥ (२५३९) सू **शृङ्खलमस्य बन्धनं करभे** । ५ । २ । ७९ । शृङ्खलकः करभः ॥ (२५४०) सू **उत्क उन्मनाः** । ५ । २ । ८० । उद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थे कन् । उत्क उत्कण्ठितः ॥ (२५४१) सू **कालप्रयोजनाद्रोगे** । ५ । २ । ८१ । कालवचनात्प्रयोजनवचनाच्च कन् स्याद्रोगे । द्वितीयेऽहनि भवो—द्वितीयको ज्वरः । प्रयोजनं कारणं रोगस्य फलं वा । विषपुष्पैर्जनितो—विषपुष्पकः । उष्णं कार्यमस्य—उष्णकः । रोगे किम् । द्वितीयो दिवसोऽस्य ॥ (२५४२) सू **तदस्मिन्नन्नं प्राये संज्ञायाम्** । ५ । २ । ८२ । प्रथमान्तात्सप्तम्यर्थे कन् स्यात् यत्प्रथमान्तमन्नं चेत्प्रायविषयं तत् । गुडापूपाः प्रायेणान्नमस्यां—गुडापूपिका पौर्णमासी ॥ (२५४३) वा **वटकेभ्य इनिर्वाच्यः** ॥ वटकिनी॥ (२५४४) सू **कुल्माषादञ्** । ५ । २ । ८३ । कुल्माषाः प्रायेणान्नमस्यां कौल्माषी ॥ (२५४५) सू **श्रोत्रियंश्छन्दोऽधीते** । ५ । २ । ८४ । श्रोत्रियः । वेत्यनुवृत्तेश्छान्दसः ॥ (२५४६) सू

---

आद्ये क्तप्रत्ययेन कर्मणोऽनभिहितत्वाद् अध्यारूढशब्दयोगे द्वितीया । अध्यारूढो द्रोणः खारीमिति ग्रामं गत इतिवत् । तथा अधिकशब्देनापि योगे द्वितीयायां प्राप्तायां ' यस्मादधिकं—९४५ ' 'तदस्मिन्नधिकम्—२५०२ ' इति च निर्देशद्वयात् पञ्चमीसप्तम्यौ भवतः । अधिको द्रोणः खार्याः । अधिको द्रोणः खार्यामिति । द्वितीये तु क्तेन कर्मणोऽभिहितत्वात्प्रथमा । अधिका खारी द्रोणेन । कर्मणोऽभिहितत्वादेव पञ्चमीसप्तम्याविह न शङ्कनीये॥ (२५३३) **अनुका—** । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । सौत्रत्वाल्लिङ्गव्यत्यय इति फलितोऽर्थः॥ **अन्वभिभ्यां कनिति** । क्रियाविशिष्टसाधनवाचिभ्यां स्वार्थे निपात्यत इत्यर्थः॥ (२५३४) **पार्श्वेनान्विच्छति** ।'आकर्षादिभ्यः कन् २५२३'इत्यतः कन्ननुवर्तते॥ **अनृजुरिति** । तिर्यगवस्थानात्पार्श्वमनृजु, तत्साधर्म्यादुपायोऽपि । इह शीतोष्णपार्श्वायःशूलदण्डाजिनशब्दा गौणा एव गृह्यन्ते । मुख्यार्थेभ्यस्तु प्रत्ययो न भवत्यनभिधानात् ॥ (२५३६) **तावतिथं ग्रहणमिति लुग्वा** । तावतां पूरणं तावतिथम् । 'वतोरिथुक् २५१२' यथा 'तस्यापत्यम् १५६०' इत्यत्र तस्येति षष्ठ्यन्तानां सामान्यनिर्देशस्तथाऽत्र 'तावतिथम्' इति पूरणप्रत्ययान्तानां सामान्यनिर्देशः ॥ अनन्तरावपि ठक्ठञौ नानुवर्तेते, अस्वरितत्वादित्यभिप्रेत्याह—**कन्स्यादिति** ॥ **पूरणप्रत्ययस्येति** । न तु कनो लुक् वाग्रहणानर्थक्यप्रसङ्गात् । पञ्चमं पञ्चमकमित्यादि रूपं हि तेन साध्यम् । तच्च महाविभाषाधिकाराद्विकल्पेन कन उत्पत्त्याऽपि सिद्धमेव, तस्मात्पूरणप्रत्ययस्यैव लुक्सूत्रकारस्याभिमत इति व्याचष्टे—**द्विकमिति** । वार्तिककारस्तु कन एव लुगिति व्याख्यामभिप्रेत्य 'तावतिथं ग्रहणमिति लुग्वा वचनानर्थक्यं विभाषाग्रहणात्' इत्याह । तन्मते द्वितीयकं द्वितीयमित्येव रूपं न तु द्विकमिति बोध्यम्॥ (२५३७) **तावतिथेनेति** । पूरणप्रत्ययान्ताद्ग्रहणोपाधिकात् स्वार्थे विधीयमानो ग्रहीतारि न प्राप्नोतीति वचनमिति कैयटः॥ (२५३८) **स एषां ग्रामणीः**।'ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु' इत्यमरः॥ (२५३९) **शृङ्खलम—**॥ **करभ इति** । उष्ट्रबालकः॥ (२५४१) **कालप्र—**। **द्वितीयेऽहनीति** । यद्यपि द्वितीयशब्दः कालवाची न भवति, तथाप्यर्थप्रकरणादिना वृत्तिविषये काले वर्तत इति भावः । ननु साक्षात्कालवाचिभ्यो मासादिभ्यो न भवति, द्वितीयादिभ्यस्तु भवतीत्यत्र किं मानमिति चेत् । अत्राहुः—उत्तरसूत्रस्थसंज्ञापकर्षणाच्छब्दस्वाभाव्याद्वा तद्बोध्यमिति ॥ (२५४२) **तदस्मि—**। (२५४३) **वटकेभ्य इति** । कनि प्राप्ते वचनम् । ननु संज्ञाग्रहणात्कन्न भविष्यतीति चेत् । किं ततः । इनेरप्राप्तत्वात्तदर्थं वचनमङ्गीकार्यमेव । 'अत इनिठनौ २६००'इत्येव कथंचिदिनिः सिध्यतीत्याशाऽत्र न कार्या । 'सप्तम्यां च न तौ स्मृतौ' इति वचनात्॥ (२५४५) **श्रोत्रियं—**। यश्छन्दोऽधीते स श्रोत्रियो भवति । अत्र भाष्ये 'छन्दोऽधीते इत्यस्य वाक्यस्यार्थे श्रोत्रियन्नित्येतत्पदं निपात्यते' इति वाक्यार्थे पदवचनपक्षः ' छन्दसो वा श्रोत्रभावो निपात्यते 'तदधीते' इत्येतस्मिन्नर्थे घश्च प्रत्ययः' इति पक्षान्तरं च स्थितम् । व्याख्यातं च कैयटेन—'वाक्यार्थस्य संबन्धरूपस्य क्रियारूपस्य वाऽसत्त्वभूतत्वात् । श्रोत्रियशब्दस्य च सत्त्वरूपार्थाभिधायित्वाद्वाक्यार्थग्रहणेन

---

१ शृङ्गलमिति भाष्ये क्वचित्पाठः । २ **कालवचनादिति** । कालवचनश्च पूरणप्रत्ययान्त एव गृह्यते । ततः सप्तम्यन्ताद् भवे प्रत्ययः । करणवाचकात्तृतीयान्तात् 'जनितः' इत्यर्थे फलबोधकात्प्रथमान्ताद् 'अस्य कार्यम्' इत्यर्थ एव प्रत्ययः, अभिधानस्वाभाव्यात् ॥ ३ **प्राय इति** । 'प्राये संज्ञायाम्' इत्येवं पाठो भाष्यकाशिकादिषूपलभ्यते । अष्टाध्यायीपुस्तकेषु 'प्रायेण सञ्ज्ञायाम्' इत्युपलभ्यते॥ ४ **द्वितीयायामिति** । अधिकशब्दस्य क्रियावाचकत्वाभावेन तदन्वयिनः कारकत्वासंभवाद् द्वितीयाया अप्राप्तौ षष्ठ्यामेव प्राप्तायामिति बोध्यम्॥ ५ **तन्मत इति** । अनेन 'भाष्यविरोधाद्वार्तिकमतमनुपादेयमेव' इति सूचितम्॥

**श्राद्धमनेन भुक्तमिनिठनौ** । ५ । २ । ८५ । श्राद्धी । श्राद्धिकः ॥ ( २५४७ ) सू **पूर्वादिनिः** । ५ । २ । ८६ । पूर्वं कृतमनेन-पूर्वी ॥ ( २५४८ ) सू **सपूर्वाच्च** । ५ । २ । ८७ । कृतपूर्वी ॥ ( २५४९ ) सू **इष्टादिभ्यश्च** । ५ । २ । ८८ । इष्टमनेन-इष्टी । अधीती ॥ ( २५५० ) सू **छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि** ।५।२।८९। लोके तु परिपन्थिशब्दो न न्याय्यः ॥ ( २५५१ ) सू **अनुपद्यन्वेष्टा** । ५ । २ । ९० । अनुपदमन्वेष्टा-अनुपदी गवाम् ॥ ( २५५२ ) सू **साक्षाद्द्रष्टरि संज्ञायाम्** । ५ । २ । ९१ । साक्षाद्द्रष्टा साक्षी ॥ ( २५५३ ) सू **क्षेत्रियच् परक्षेत्रे चिकित्स्यः** । ५ । २ । ९२ । क्षेत्रियो व्याधिः । शरीरान्तरे चिकित्स्यः । अप्रतीकार्य इत्यर्थः ॥ (२५५४) सू **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** ।५।२।९३। इन्द्र आत्मा तस्य लिङ्गं करणेन कर्तुरनुमानात्।इतिशब्दः प्रकारार्थः।इन्द्रेण दुर्जयमिन्द्रियम्॥(२५५५) सू **तदस्यास्त्यस्मिन्निति मतुप्**।५।२।९४। गावोऽस्यास्मिन्वा सन्ति-गोमान् ॥ ( २५५६ ) वा **भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ॥ संबन्धेऽस्ति-**

---

तदाश्रयच्छन्दोऽध्यायी अभिधीयते' इति । एकां शाखामधीत्य श्रोत्रियो भवतीति धर्मशास्त्रम् ॥ **वेत्यनुवृत्तेरिति** । 'ताव-तिथं ग्रहणमिति लुग्वा २५३६' इत्यतः ॥ ( २५४६ ) **श्राद्धमनेन--**। श्रद्धाऽस्मिन्नस्तीति श्राद्धम्-'प्रज्ञाश्रद्धार्चाभ्यो णः २५७८' यद्यपि पित्र्यं कर्म श्राद्धशब्देनोच्यते, तथापीह तत्साधनद्रव्यमुच्यते । मुख्यस्य श्राद्धस्य भोक्तुमशक्यत्वात् ॥ **श्राद्धी । श्राद्धिक इति** । 'अद्यतन एवेष्यते' अद्य भुक्ते श्वः श्राद्धिक इति मा भूत् ॥ (२५४७) **पूर्वादिनिः** । पूर्वमिति क्रियाविशेषणाद् द्वितीयान्तात्प्रत्ययः ॥ 'अनेन' इति कर्तृवाचकमनुवर्तते । न च क्रियामन्तरेण कर्ता संभवतीति कांचित्क्रियामध्याहृत्य प्रत्ययो विधेयस्तदाह--**पूर्वं कृतमनेनेति** ॥ (२५४८) **सपूर्वाच्च** । अनेन इति, पूर्वसूत्रं चानुवर्तते ॥ विद्यमानपूर्वकात् पूर्वशब्दादनेनेत्यस्मिन्नर्थे इनिः स्यात् । 'पूर्वान्ताच्च' इत्येतत्फलितम् ॥ **कृतपूर्वीति** । कृतपूर्वशब्दयोः 'सुप्सुपा ९४९-२' इति समासः । इह प्रातिपदिकाधिकारात् 'पूर्वादिनिः २५४७' इत्यनेनैव पूर्वशब्दान्तप्रातिपदिकात् कृतपूर्वशब्दादिनौ सिद्धे 'सपूर्वाच्च २५४८' इत्येतद् 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति परिभाषां ज्ञापयति । कृतपूर्वीत्येतत्सिद्धये 'पूर्वान्ताच्च' इति स्वीकृते तेनैव व्यपदेशिवद्भावेन पूर्वीत्यपि रूपे सिद्धे 'पूर्वादिनिः २५४७' इत्येतत् 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति परिभाषां ज्ञापयति ॥ ( २५५० ) **छन्दसि--**। पर्यवस्थातृशब्दाच्छत्रुपर्यायात्स्वार्थे इनिप्रत्ययः, अवस्थातृशब्दस्य च पन्थपर एतावादेशौ निपात्येते । 'अपत्यं परिपन्थिनम् ' 'मा त्वा परिपरिणो विदन्' उभयत्रापि परिशब्दे अवग्रहः ॥ **लोके त्विति** । 'अनुपस्थितपरिपन्थिभिः पार्थिवैः' इत्यादौ ॥ ( २५५१ ) **अनुपद्यन्वेष्टा** । अन्वेष्टरि इनिः प्रत्ययो निपात्यते ॥ **अनुपदमिति** । पदस्य पश्चात् । पश्चादर्थेऽव्ययीभावः ॥ **अनुपदी गवामिति** । पदापेक्षया षष्ठी । गोपदात्पश्चादन्वेषणं गवामेव । तेन हिरण्यादावन्वेष्ये न भवतीति हरदत्तः ॥ (२५५२) **साक्षाद्द्रष्टरि--**। द्रष्टर्यर्थे इनिः स्यात्। साक्षाच्छब्दोऽव्ययम्, तने 'प्रकृतिवदनुकरणम्'इत्यतिदेशादिह सूत्रे पञ्चम्या लुक्। 'उदः स्थास्तम्भोः-१८३' 'अवाच्चालम्बना-३०४०' इत्यादौ तु'प्रकृतिवत्-'इत्यतिदेशस्य वैकल्पिकत्वेनाव्ययत्वाभावात् पञ्चम्या लुङ् न भवतीति बोध्यम्॥ **साक्षीति** । 'अव्ययानां भमात्रे--१८६४' इति टिलोपः । यद्यपि साक्षाद्द्रष्टारस्त्रयो भवन्ति, दाता ग्रहीता उपद्रष्टा च, तथापीह संज्ञाग्रहणात् साक्षिशब्देनोपद्रष्टैवोच्यत इत्याहुः ॥ ( २५५३ ) **क्षेत्रियच्--**। 'परक्षेत्रशब्दात्सप्तम्यन्ताद्घच् परशब्दस्य लोपश्च निपात्यते' इति मनोरमा ॥ अन्ये तु-'परक्षेत्रे चिकित्स्यः' इत्यर्थे 'क्षेत्रियच्' इति निपात्यते । वाक्यार्थे पदवचनं श्रोत्रियवदित्यप्याहुः ॥ एवमन्यत्राप्यूह्यम् ॥ **क्षेत्रियो व्याधिरिति** । किञ्च, क्षेत्रियं विषम् । यत्परशरीरे संक्रमय्य चिकित्स्यते । अपि च क्षेत्रियाणि तृणानि । यानि सस्यानि सस्यार्थक्षेत्रे जातानि चिकित्स्यानि विनाशयितव्यानि । किञ्च, क्षेत्रियः पारदारिकः । परदाराः परक्षेत्रम् । तत्र चिकित्स्यो निग्रहीतव्यः । सर्वेऽप्येते पक्षा आकरे स्थिताः ॥ ( २५५४ ) **इन्द्रियमिन्द्र--**। इन्द्रशब्दाद्घच् । इन्द्रेण दृष्टं ज्ञातं 'मम चक्षुः, मम श्रोत्रम्' इत्यादिक्रमेण सृष्टमदृष्टद्वारा । जुष्टं प्रीणितं सेवितं वा । दत्तं यथायथं विषयेभ्यः । रूढिशब्दोऽयं यथाकथंचिद् व्युत्पादितः ॥

**अथ मत्वर्थीयप्रकरणम्** । **(२५५५) तदस्यास्त्यस्मिन्निति मतुप्** । तदिति प्रथमासमर्थात्प्रत्ययः अस्तीति पुरुषवचने अविवक्षिते,कालस्तु विवक्षितः,धने गते भाविनि वा'धनवानयम्'इति प्रतीत्यभावात्॥(२५५६) इतिशब्दो विषयविशेषलाभार्थः॥ तथाहि--' **भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः** ॥ अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्तिकार्थः ॥ **भूमा** बहुत्वम् । तच्चापेक्षिकम् । यस्य हि यावदुचितं तावदेव बहुत्वबोधकबहुशब्देनापि प्रतीयते । यथा पञ्चषाभिरपि गोभिर्देवदत्तस्य बह्वयो गाव इति व्यवहारः । राज्ञस्तु सहस्रगोरपि गावोऽल्पा इति व्यवहारः । गोमान् । यवमान् । यस्य खार्यादिभिः परिच्छिन्ना यवाः सन्ति स एवमुच्यते । न तु सहस्रेणापि यवैर्यवमानिति । कथं तर्हि 'यवमतीभिरद्भिर्यूपं प्रोक्षति' इति । अत्राहुः-जातिमात्रसंबन्धस्य विवक्षितत्वाद्भूमाभावेऽप्यत्र मतुप् । भूमादिग्रहणं तु प्रायेण भूमादयः प्रतीयन्त इत्येवम्परमिति ॥ **निन्दायां**-ककुदावर्तिनी कन्या ॥ **प्रशंसायां**-रूपवान् ॥ **नित्ययोगे**-क्षीरिणो वृक्षाः ॥ **अतिशायने**-उदरिणी कन्या ॥ **संसर्गे**-दण्डी । संसर्गः संयोगः । तेन संयुक्तदण्ड एवोच्यते, न तु गृहावस्थितदण्डोऽपि । इह दण्डपुरुषयोः संयोगे सत्यपि दण्डी पुरुष

विवक्षायां भवन्ति मतुबादयः ॥ १ ॥ ( २५५७ ) (सू) **रसादिभ्यश्च** । ५ । २ । ९५ । मतुप् । रसवान् । रूपवान् । अन्यमत्वर्थीयनिवृत्त्यर्थं वचनम् । रस, रूप, वर्ण, गन्ध, स्पर्श, शब्द, स्नेह, भाव ॥ ( २५५८ ) (ग) **गुणात्** ॥ गुणग्रहणं रसादीनां विशेषणम् ॥ ( २५५९ ) (ग) **एकाचः** ॥ स्ववान् ॥ ( २५६० ) (सू) **तसौ मत्वर्थे** । १ । ४ । १९ । तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । वसोः संप्रसारणम् । विदुष्मान् ॥ ( २५६१ ) ( इ० ) **गुणवचनेभ्यो मतुपो लुगिष्टः** ॥ शुक्लो गुणोऽस्यास्तीति–शुक्लः पटः । कृष्णः ॥ ( २५६२ ) (सू) **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** । ८ । २ । ९ । मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः स्यात् । किंवान् । ज्ञानवान् । विद्यावान् । लक्ष्मीवान् । यशस्वान् । भास्वान् । यवादेस्तु–यवमान् । भूमिमान् ॥ ( २५६३ ) (सू) **झयः** । ८ । २ । १० । झयन्तान्मतोर्मस्य वः स्यात् । अपदान्तत्वान्न जश्त्वम् । विद्युत्वान् ॥ ( २५६४ ) (सू) **संज्ञायाम्** । ८ । २ । ११ । मतोर्मस्य वः स्यात् । अहीवती । मुनीवती । शरादीनां चेति दीर्घः ॥ ( २५६५ ) (सू) **आसन्दीवदष्ठीवच्चक्री [ वत्कक्षी ] वद्रुमण्वच्चर्मण्वती** । ८ । २ । १२ । एते षट् संज्ञायां निपात्यन्ते । आसनशब्दस्यासन्दीभावः । आसन्दीवान् ग्रामः, अन्यत्रासनवान् । अस्थिशब्दस्याष्ठीभावः । अष्ठीवान् नाम ऋषिः, अस्थिमानन्यत्र । चक्रशब्दस्य चक्रीभावः । चक्रीवान्नाम राजा, चक्रवानन्यत्र । [ कक्ष्यायाः संप्रसारणम् । कक्षीवान्नाम ऋषिः, कक्ष्यावानन्यत्र ][1] । लवणशब्दस्य रुमण्भावः । रुमण्वान्नाम पर्वतः, लवणवानन्यत्र । चर्मणो नलोपाभावो णत्वं च । चर्मण्वती नाम नदी, चर्मवत्यन्यत्र ॥ ( २५६६ ) (सू) **उदन्वानुदधौ च** । ८ । २ । १३ । उदकस्य उदन्भावो मतौ उदधौ संज्ञायां च । उदन्वान् समुद्रः ऋषिश्च ॥ ( २५६७ ) (सू) **राजन्वान् सौराज्ये** । ८ । २ । १४ । राजन्वती भूः । राजवानन्यत्र ॥ ( २५६८ ) (सू) **प्राणिस्थादातो लजन्यतरस्याम्** । ५ । २ । ९६ । चूडालः । चूडावान् । प्राणिस्थात्किम् । शिखावान्दीपः । आतः किम् । हस्तवान् । ( २५६९ ) प्राण्यङ्गादेव । नेह । मेधावान् । प्रत्ययस्वरेणैव सिद्धे अन्तोदात्तत्वे चूडालोऽसीत्यादौ स्वरितो वाऽनुदात्ते पदादाविति स्वरितबाधनार्थश्चकारः ॥ ( २५७० ) (सू) **सिध्मादिभ्यश्च** । ५ । २ । ९७ । लज्वा स्यात् । सिध्मलः, सिध्मवान् । अन्यतरस्यां-

---

इत्यादिवत् 'पुरुषी दण्डः' 'पुरुषवान् दण्डः' इति न प्रयुज्यते ॥ वृत्तिनियामकस्य विलक्षणसंबन्धस्याभावात् । संयोगे समानेऽपि प्रतीतिबलाद्वैलक्षण्यं कल्प्यत इत्याहुः । एवं च यवसंसर्गमात्रेण यवमत्य आपो न भवन्ति, किन्तु यवमज्जलवच्च पात्रमेवेत्याशयेन 'कथं यवमतीभिरद्भिः' इत्याक्षेपो भूमादिग्रहणं प्रायिकमित्याद्युत्तरं च संगच्छत एव ॥ ( २५५७ ) **रसादिभ्यश्च । अन्यमत्वर्थीयेति** । कथं तर्हि 'रूपिणी कन्या' 'रसिको नटः' इति । अत्राहुः–रसादिगणे 'गुणात्' इति पठ्यते । तेन गुणवाचिभ्य एवान्यमत्वर्थीयस्य निषेधः, रूपिणीत्यत्र तु रूपशब्देन सौन्दर्यं गृह्यते । तच्च न गुणः । रसिक इत्यत्र तु रसशब्देन भावो गृह्यते । न तु रसनाग्राह्यो गुण इति ॥ ( २५६१ ) **गुणवचनेभ्य इति** । गुणे तद्वति च प्रसिद्धा ये शुक्लादयस्त एव गृह्यन्ते । न तु रूपादयोऽपि । तेन रूपं वस्त्रमित्यादिप्रयोगो न भवति ॥ ( २५६२ ) **मादुपधाया–** । म् च अश्च मं समाहारे द्वन्द्वः । तेन मतुप्प्रत्ययाक्षिप्तं प्रातिपदिकं विशेष्यते । तदाह––**मवर्णावर्णान्तादिति** । 'उपधायाश्च' इति वाक्यान्तरम् । उपधाभूतान्मात्परस्य मतोरित्यर्थः । 'येन नाव्यवधान–' न्यायेनान्त्याल्व्यवहितेऽपि भवतीति । एवमक्षरार्थे स्थिते फलितमाह—**मवर्णावर्णोपधादिति** । ( २५६३ ) **झयः** । इदमपि मतुबाक्षिप्तस्य प्रातिपदिकस्य विशेषणम् । तदाह––**झयन्तादिति** ॥ **विद्युत्वानिति** । एतेन 'वह्निमद्वान्' इति नैयायिकप्रयोगो निरस्तः । उक्तरीत्या जश्त्वस्याप्रवृत्तेः । मत्वन्तान्मतुपो निषेधाच्च ॥ ननु गोधुङ्मान् मधुलिण्मानित्यत्र हस्य घत्वे ढत्वे च कृते 'झयः २५६३' इति वत्वप्रवृत्त्याऽनुनासिकपरत्वाभावात् 'प्रत्यये भाषायां नित्यम् १८१' इत्यनेन घकारढकारयोरनुनासिकाप्रवृत्तेर्गोधुग्वान् मधुलिड्वानित्यनिष्टं प्रसज्येत । मैवम्, घत्वढत्वयोरसिद्धत्वेन 'झयः २५६३' इति वत्वाप्रवृत्तेः ॥ ( २५६८ ) **प्राणिस्थात्—** । **शिखावान्दीप इति** । प्रत्युदाहरणदिगियं दर्शिता । शिखाशब्दस्य व्रीह्यादिपाठेन लचोऽप्रसङ्गात् । 'चूडावान् वृक्षः' इति प्रत्युदाहार्यमिति हरदत्तः ॥ न च वृक्षस्य प्राणित्वमस्तीति शङ्क्यम् । मुखनासासंचारी वायुः प्राणः, तद्वानेव प्राणीति तदाशयात् ॥ ( २५६९ ) **प्राण्यङ्गादेवेति** । एतच्चेतिकरणानुवृत्त्या लभ्यते ॥ **चूडालोऽसीत्यादाविति** । असीत्यस्य 'तिङ्ङतिङः ५९११' इति निघातः । चूडालशब्दात्सोरुत्वे तस्य 'अतो रोरप्लुतात्–२४३' इत्युकारे कृते हलां स्रंसनधर्मत्वात्तत्स्थानिकोऽकारोऽनुदात्तः । सुप्स्थानिकस्यापि सुप्त्वात् 'अनुदात्तौ सुप्पितौ ५६७१' इत्यनुदात्त इत्यन्ये ॥ पूर्वेण सह अङ्गुणे सति 'एकादेश उदात्तेन–५५२९' इत्योकार उदात्तः । ततः 'एङः पदान्तादति १४१' इति पूर्वरूपमेकादेशस्तस्य 'स्वरितो वाऽनुदात्ते–५५३०' इत्यादिना स्वरिते प्राप्ते तद्बाधनाय चकार इत्यर्थः ॥ ( २५७० ) **सिध्मादिभ्यश्च** । सिध्म, गडु, मणि,

---

१ सूत्रे कक्षीवत्पदमप्रामाणिकमेव 'कक्ष्यायाः संज्ञायां मतौ संप्रसारणं कर्तव्यम् ।' इति 'न संप्रसारणे–' इति सूत्रभाष्ये वार्तिकभाष्योदाहरणदर्शनात् ॥ तथा चात्रोदाहरणप्रदर्शनमप्यनुचितमेवेति बोध्यम् ॥

ग्रहणं मतुप्समुच्चयार्थं न तु प्रत्ययविकल्पार्थम् । तेनाकारान्तेभ्य इनिठनौ न ॥ ( २५७१ ) ग॰ **वातदन्तबलललाटानामूङ् च** ॥ वातूलः ॥ ( २५७२ ) सू॰ **वत्सांसाभ्यां कामबले** । ५ । २ । ९८ । आभ्यां लज्वा स्याद्यथासंख्यं कामवति बलवति चार्थे । वत्सलः । अंसलः ॥ ( २५७३ ) सू॰ **फेनादिलच्च** । ५ । २ । ९९ । चाल्लच् । अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमनुवर्तते । फेनिलः । फेनलः । फेनवान् ॥ ( २५७४ ) सू॰ **लोमादिपामादिपिच्छादिभ्यः शनेलचः** । ५ । २ । १०० । लोमादिभ्यः शः । लोमशः, लोमवान् । रोमशः, रोमवान् । पामादिभ्यो नः । पामनः ॥ ( २५७५ ) ग॰ **अङ्गात्कल्याणे** । अङ्गना ॥ ( २५७६ ) ग॰ **लक्ष्म्या अच्च** । लक्ष्मणः ॥ ( २५७७ ) वा॰ **विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः** ॥ विषुणः । पिच्छादिभ्य इलच् । पिच्छिलः, पिच्छवान् । उरसिलः, उरस्वान् ॥ ( २५७८ ) सू॰ **प्रज्ञाश्रद्धार्चाभ्यो णः** । ५ । २ । १०१ । प्राज्ञो व्याकरणे । प्राज्ञा । श्राद्धः । आर्चः ॥ ( २५७९ ) वा॰ **वृत्तेश्च** ॥ वार्तः । ( २५८० ) सू॰ **तपःसहस्राभ्यां विनीनी** । ५ । २ । १०२ । विनीन्योरिकारो नकारपरित्राणार्थः । तपस्वी । सहस्री । असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा

---

विजय, निष्पाव, पांसु, हनु, पार्ष्ण्यादयः सिध्मादयः ॥ **समुच्चयार्थमिति** । निपातानामनेकार्थत्वादिति भावः । न च इनिठनावप्यन्यतरस्यांग्रहणेन समुच्चीयेतामिति शङ्क्यम्, तयोरप्रकृतत्वात् । मतुप्प्रत्ययस्तु समुच्चीयते, तस्य प्रकृतत्वात् । अस्ति चेह लिङ्गं 'केशाद्वः-२५९१' इत्यत्रान्यतरस्यांग्रहणम् । तद्धि इनिठनोः प्राप्त्यर्थं क्रियते । प्रकृतस्यान्यतरस्यांग्रहणस्य विकल्पार्थत्वे तदनुवृत्त्यैव सिद्धौ किं तेन । क्रियमाणं तु पूर्वस्यान्यतरस्यांग्रहणस्य समुच्चयार्थतां ज्ञापयत्येव । तथा च वार्तिकं,— **'लजन्यतरस्यामिति समुच्चयः'** इति । अयं भावः—'प्राणिस्थात्-२५६८' इति सूत्रेण लचि विकल्पिते पक्षे मतुबिति चूडालश्चूडावानिति रूपद्वयं यद्यपि सिद्ध्यति, तथापि सिध्मादिषु येऽदन्तास्तेषु इनिठनोः प्रवृत्त्या दोषः । समुच्चयार्थत्वे तु न दोष इति ॥ एवं च 'लज्वा स्यात्' इति वृत्तौ वाशब्दः समुच्चये बोध्यः । 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इत्यमरः ॥ **( २५७१ ) वातदन्तेत्यादि** । सिध्माद्यन्तर्गणसूत्रम् ॥ **ऊङ् चेति** । ङित्त्वादन्तादेशः । ऊकारमात्रोक्त्यावन्तादेशत्वसिद्धावपि प्रत्ययत्वशङ्कानिवारणाय ङोऽनुबन्धः कृतः । न च षष्ठ्यन्ताद्विहितस्य प्रत्ययत्वं नेति शङ्क्यम्, 'अहंशुभमोर्युस् २६४६' 'गोपयसोर्यत् २११३' इत्यादौ प्रत्ययत्वाभ्युपगमात् ॥ **वातूल इति** । अन्तोदात्तमिदम् । प्राचा तु 'बलादूलः' 'वाताच्च' इति पठित्वा वातूल इत्युक्तम् । तदुपेक्ष्यम्, प्रत्ययस्वरेण मध्योदात्तप्रसङ्गात् । गणसूत्रबलेनान्तोदात्तमेवेष्यत इत्याहुः ॥ **"पार्ष्णिधमन्योर्दीर्घश्च"** । **'क्षुद्रजन्तूपतापाच्च'** इत्यपि गणे पठ्यते । पार्ष्णीलः । धमनीलः । क्षुद्रजन्तुः—यूकालः । मक्षिकालः ॥ उपतापो रोगः । विपादिकालः ॥ **( २५७२ ) वत्सांसाभ्याम्—। कामवतीति** । कामबलशब्दौ सूत्रे अर्शआद्यजन्ताविति भावः ॥ **वत्सल इति** । स्नेहवानित्यर्थः । ननु वत्सांसशब्दौ वयोविशेषे प्राण्यङ्गविशेषे च रूढौ, न कामबलयोः । तत्कथं ताभ्यां लजन्ताभ्यां कामवान् बलवांश्चोच्यत इति चेत् । अत्राहुः—वृत्तिविषये वत्सांसशब्दौ स्नेहबलयोर्वर्तेते इति । अस्मिंस्तु प्रकरणे सर्वत्र समुच्चीयमानोऽपि मतुबिह नेष्यते । मतुबन्तेनोक्तार्थस्याप्रतीतेः । किन्त्वर्थान्तरमेव तेन प्रतीयते । वत्सवती गौः । अंसवान् दुर्बल इति ॥ **( २५७४ ) लोमादि—**। इह 'नन्दिग्रहिपचादिभ्यः-२८५३' इतिवत् 'लोमपामपिच्छादिभ्यः' इति सुपठम् । ( २५७५ ) **"अङ्ग कल्याणे"** इति गणसूत्रमर्थतः पठति—**अङ्गादिति** । **शाकीपलालीदद्र्वा ह्रस्वत्वं च** । चान्नप्रत्ययः । महच्छाकं शाकी, तद्वत् शाकिनम् । महत्पलालं पलाली, तद्वत्पलालिनम् ॥ 'दरिद्रातेरालोपश्च ४२८९' इत्युणादिसूत्रेण इकाराकारयोर्लोपश्चाद्रूप्रत्ययः । दद्रूस्त्वग्रोगविशेषः । तद्वान् दद्रुणः ॥ **( २५७७ ) विष्वगिति—**। 'समर्थानाम्-१५३४' इत्यस्यापवादोऽयम् । अकृतसन्धेरकृतयणादेशस्याञ्चतेर्लोपः । चकारान्नप्रत्यय इत्यर्थः । यदि तु कृते यणादेशे उत्तरपदलोपः स्यात्, तदा वलि लोपे सति विष्ण इति स्यात् ॥ **विषुण इति** । विषु नाना अञ्चन्तीति विष्वञ्चि, तान्यस्य सन्ति विषुणः विषुवदाख्यः कालः । तस्य हि नानागतानि[1] दिनानि सन्ति । दिनान्तराणां न्यूनाधिकभावस्य तन्मूलत्वात् । अयं भावः—विषुवति दिनानां समतायां जातायामग्रे न्यूनान्यधिकानि च दिनानि भवेयुरिति नानागतदिनवत्त्वं यद्यपि विषुवति नास्ति, तथापि नानागतदिनमूलभूतदिनानां सत्त्वात्तथोच्यत इति । तथा नानागमनवत्त्वान्मृत्युर्वायुरव्यवस्थितचित्तश्च विषुणशब्देनोच्यते ॥ **( २५७८ ) प्रज्ञाश्रद्धा— प्राज्ञो व्याकरणमिति** । गुणभूतया क्रियया कर्मत्वेन संबन्धः कृद्ग्रहणात्तद्धितप्रयोगे षष्ठी न कृतपूर्वी कटमितिवत्[2] ॥ ननु प्रकर्षेण जानातीति प्रज्ञः, स एव प्रज्ञावान् । तथा च—प्रज्ञ एव प्राज्ञ इत्यणि कृते सिद्धमिष्टं, किमत्र प्रज्ञाग्रहणेनेत्याशङ्कां निराकुर्वन्नाह—**प्राज्ञेति** । स्त्रियां टाप् । 'प्रज्ञादिभ्यश्च २८४२' इत्यणि तु ङीप् स्यादिति भावः ॥ **( २५७९ ) वृत्तेश्चेति** । वार्तिकमिदम् । काशिकाकृता तु वृत्तिशब्दः सूत्रे प्रक्षिप्तः । विच्छिन्नस्य प्रतिविधानं वृत्तिः ॥ **( २५८० ) तपःसहस्रा—। तपस्वी सहस्रीति** । असन्तत्वाददन्तत्वाच्च सिद्धे

---

१ नानाप्रकाराणीत्यर्थः ॥ २ यदि तु 'कृतपूर्वीत्यादौ कृदन्तमात्रशक्त्या नोपस्थितिः । इह तु अस्त्येव' इत्युच्यते—तदा षष्ठ्येवेति बोध्यम् ॥

बाधा मा भूदिति । सहस्रात्तु ठनोऽपि बाधनार्थम् ॥ ( २५८१ ) अण् च । ५ । २ । १०३ । योगविभाग उत्तरार्थः । तापसः । साहस्रः ॥ ( २५८२ ) ज्योत्स्नादिभ्य उपसंख्यानम् ॥ ज्यौत्स्नः । तामिस्रः ॥ ( २५८३ ) सिकताशर्कराभ्यां च । ५ । २ । १०४ । सैकतो घटः । शार्करः ॥ ( २५८४ ) देशे लुबिलचौ च । ५ । २ । १०५ । चादण् मतुप् च । सिकताः सन्त्यस्मिन्देशे-सिकताः । सिकतिलः । सैकतः । सिकतावान् । एवं शर्करा इत्यादि ॥ ( २५८५ ) दन्त उन्नत उरच् । ५ । २ । १०६ । उन्नता दन्ताः सन्त्यस्य-दन्तुरः ॥ ( २५८६ ) ऊषसुषिमुष्कमधो रः । ५ । २ । १०७ । ऊषरः । सुषिरः । मुष्कोऽण्डः, मुष्करः । मधु माधुर्यम्, मधुरः ॥ ( २५८७ ) रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ॥ खरः । मुखरः । कुञ्जो हस्तिहनुः । कुञ्जरः ॥ ( २५८८ ) नगपांसुपाण्डुभ्यश्च ॥ नगरम् । पांसुरः । पाण्डुरः । पाण्डरशब्दस्तु अव्युत्पन्न एव ॥ ( २५८९ ) कच्छ्वा ह्रस्वत्वं च । कच्छुरः ॥ ( २५९० ) द्युद्रुभ्यां मः । ५ । २ । १०८ । द्युमः । द्रुमः ॥ ( २५९१ ) केशाद्वोऽन्यतरस्याम् । ५ । २ । १०९ । प्रकृतेनान्यतरस्यांग्रहणेन मतुपि सिद्धे पुनर्ग्रहणमिनिठनोः समावेशार्थम् । केशवः । केशी । केशिकः । केशवान् ॥ ( २५९२ ) अन्येभ्योऽपि दृश्यते ॥ मणिवो नागविशेषः । हिरण्यवो निधिविशेषः ॥ ( २५९३ ) अर्णसो लोपश्च । अर्णवः ॥ ( २५९४ ) गाण्डयजगात्संज्ञायाम् । ५ । २ । ११० । ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः । गाण्डिवम्, गाण्डीवम् । अर्जुनस्य धनुः । अजगवं पिनाकः ॥ ( २५९५ ) काण्डाण्डादीरन्नीरचौ । ५ । २ । १११ । काण्डीरः । आण्डीरः ॥ ( २५९६ ) रजःकृष्यासुतिपरिषदो वलच् । ५ । २ । ११२ । रजस्वला स्त्री । कृषीवलः । 'वले' इति दीर्घः । आसुतीवलः शौण्डिकः । परिषद्वलः । पर्षदिति पाठान्तरम् । पर्षद्वलम् ॥ ( २५९७ ) अन्येभ्योऽपि दृश्यते ॥ भ्रातृवलः । पुत्रवलः ।

---

पुनर्वचनमणा बाधा मा भूदिति । सहस्रात्तु ठनोऽपि बाधनार्थम् । एतच्च समाधानं मूलपुस्तकेष्वपि क्वचिद्दृश्यते ॥ ( २५८१ ) अण् च । उत्तरार्थ इति । विनीन्योर्यथासंख्यप्रवृत्त्यर्थश्चेत्यपि बोध्यम् ॥ ( २५८२ ) ज्योत्स्नादि— । ज्यौत्स्न इति । शुक्लपक्षः ॥ तामिस्र इति । कृष्णपक्षः नरकविशेषश्च । तमःसमूहस्तमिस्रं 'ज्योत्स्नातमिस्रा—२५९९' इति निपातनान्मत्वर्थीयो रः । तत्र ह्यवयवभूतानि तमांसि विद्यन्ते । तदस्मिन्नस्तीति विग्रहे रान्तादण् । स्त्रियां तामिस्री । 'तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयाऽन्विता' इत्यमरोक्तौ तु तमिस्रेत्येतद्रान्तं न त्वणन्तमिति न विरोधः । एवं च तमिस्रा रात्रयः अस्मिन् सन्ति तामिस्रः पक्ष इत्यपि व्याख्यातुं शक्यम् ॥ ( २५८३ ) सिकताशर्करा— । देशे विशेषस्य वक्ष्यमाणत्वादाह—घट इति ॥ ( २५८४ ) देशे लु— । मतुप् चेति । अन्यतरस्यांग्रहणेन सर्वत्र मतुपः समुच्चयादिति भावः ॥ सिकता इति । लुपि युक्तवद्भावः । अत्र सूत्रद्वयस्योदाहरणान्यमरः संजग्राह—"स्त्री शर्करा शर्करिलः शार्करः शर्करावति । देश एवादिमावेवमुन्नेयाः सिकतावति" इति ॥ ( २५८५ ) दन्त उन्नत— । उन्नत इति किम्, दन्तवान् ॥ ( २५८६ ) ऊषसुषि— । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् ॥ 'स्यादूषः क्षारमृत्तिका । ऊषवानूषरः' इत्यमरः । सुषिश्छिद्रम् ॥ ( २५८७ ) रप्रकरणे ख— । खर इति । महत्कण्ठविवरं खं तद्वानित्यर्थः । गर्दभे रूढोऽयम् । मुखरो वाचाल इति हरदत्तः ॥( २५८८ ) नगपांसु— । नगरमिति । नगा वृक्षाः पर्वताश्च । जातिशब्दोऽयम् । तथा च—नगरीत्यत्र ङीष् भवति । नगरशब्दोऽयमश्मादिषु पठ्यते इति 'वुञ्छण्—१८२२' आदिसूत्रेणास्य सिद्धत्वादस्माद्रोऽयं न वक्तव्य इति हरदत्तः ॥ पाण्डुर इति । पाण्डुः शुक्लो वर्णस्तद्वान् ॥ अव्युत्पन्न एवेति । गुणमात्रे गुणिनि च वर्तते । 'हरिणः पाण्डरः पाण्डुः' इत्यमरः । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति च ॥ ( २५८९ ) कच्छ्वा— । कच्छूस्त्वग्रोगविशेषः ॥ ( २५९० ) द्युद्रुभ्यां मः ॥ द्युम इति । योरस्यास्ति 'दिव उत् ४६१' इत्युत्वम् । द्रुर्वृक्षः सोऽस्यास्ति जनकतयेति द्रुमोऽपि वृक्ष एव । 'पलाशी द्रुद्रुमागमाः' इत्यमरः।इह सर्वत्र समुच्चीयमानोऽपि मतुप् रूढशब्देषु नेष्यते । तदर्थस्य मतुपा अभिधातुमशक्यत्वात्॥( २५९१ ) केशाद्वो— । ( २५९२ ) दृश्यत इति । व इत्यनुवर्तते ॥ ( २५९३ ) अर्णसो लोपश्च ॥ अर्णव इति । अर्तेरसुन् नुट् च । अर्णः जलं तद्वान् ॥ ( २५९४ ) गाण्डयजगात्संज्ञायाम् । 'तदस्यास्ति—२५५५' इति सूत्रस्थेतिशब्दस्यैवायं प्रपञ्चः ॥ यणेति । 'इको यणचि—३६०' इतिवत्कृतयणादेशस्यानुकरणं न भवति, लक्ष्ये यणोऽभावात् । किन्तु सूत्रे सांहितिकोऽयं यणिति भावः । प्रयुज्यते चोभयथा । 'अधिरोहति गाण्डिवं महेषौ' । 'गाण्डीवी कनकशिलानिभभुजाभ्याम्' इति च ॥ ( २५९६ ) रजःकृ— । आसुतीवल इति । 'षुञ् अभिषवे' क्तिन् । आसुतिरभिषवः ॥ परिषदिति । परितः सीदतीति परिषत् 'सत्सूद्विष—२९७४' इत्यादिना क्विप् 'सदिरप्रतेः ३०३८' इति षत्वम् ॥ पाठान्तरमिति । 'शूद्रभसो-

---

१ पांस्विति । भाष्ये तु नगाच्च इत्येव दृश्यते ॥ २ कच्छ्वा इति । अत्र भाष्ये त्विदं न संदृश्यतेऽतोऽन्वेषणीयम् ॥ ३ यथासंख्येति । 'तपः सहस्राभ्यामण् विनीनी' इति न्यासे भिन्नविभक्त्युच्चारणसामर्थ्यादण उभयसंबन्धः, विनीन्योर्यथासंख्यश्चेति सिद्धम्—इति शेखरकृत् । अत्र वदन्ति—'अण् विनीनी' इत्यसमस्तोच्चारणेऽणपदेऽधिकारार्थं स्वरितत्वप्रतिज्ञा, न विनीन्योरित्यत्र विनिगमकान्वेषणे गौरवादिकं च स्यात्, लाघवाभावश्चेति यथाश्रुतमेव रमणीयमिति ॥ ४ अर्णस इति । नेदं भाष्ये दृश्यते इति ल० श० शेखरे ॥

शत्रुवलः । 'वले[१४९२] इत्यत्र संज्ञायामित्यनुवृत्तेर्नेह दीर्घः ॥ ( २५९८ ) **दन्तशिखात्संज्ञायाम्** । ५ । २ । ११३ । दन्तावलो हस्ती । शिखावलः केकी ॥ ( २५९९ ) **ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः** । ५ । २ । ११४ । मत्वर्थे निपात्यन्ते । ज्योतिष उपधालोपो नश्च प्रत्ययः । ज्योत्स्ना । तमस उपधाया इत्वं रश्च । तमिस्रा । स्त्रीत्वमतन्त्रम् । तमिस्रम् । शृङ्गादिनच् । शृङ्गिणः । ऊर्जसो वलच् । तेन बाधा मा भूदिति विनिरपि । ऊर्जस्वी । ऊर्जस्वलः । ऊर्जोऽसुगागम इति वृत्तिस्तु चिन्त्या । ऊर्जस्वतीतिवदसुन्नन्तेनैवोपपत्तेः । गोशब्दान्मिनिः । गोमी । मलशब्दादिनच् । मलिनः । ईमसश्च । मलीमसः ॥ ( २६०० ) **अत इनिठनौ** ।५।२।११५। दण्डी । दण्डिकः ॥ ( २६०१ ) **व्रीह्यादिभ्यश्च** । ५ । २ । ११६ । व्रीही । व्रीहिकः । न च सर्वेभ्यो व्रीह्यादिभ्य इनिठनाविष्येते । किं तर्हि ( २६०२ ) शिखामालसंज्ञादिभ्य इनिः[१] । ( २६०३ ) यवखदादिभ्य इकः । अन्येभ्य उभयम् ॥ ( २६०४ ) **तुन्दादिभ्य इलच्च** । ५ । २ । ११७ । चादिनिठनौ मतुप् च । तुन्दिलः । तुन्दी । तुन्दिकः । तुन्दवान् । उदर, पिचण्ड, यव, व्रीहि ॥ ( २६०५ ) **स्वाङ्गाद्विवृद्धौ** । विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयः स्युः । विवृद्धौ कर्णौ यस्य स–कर्णिलः । कर्णी । कर्णिकः । कर्णवान् ॥ ( २६०६ ) **एकगोपूर्वाट्ठञ् नित्यम्** । ५ । २ । ११८ । एकशतमस्यास्तीति–ऐकशतिकः[२] । ऐकसहस्रिकः । गौशतिकः । गौसहस्रिकः ॥ ( २६०७ ) **शतसहस्रान्ताच्च निष्कात्** । ५ । २ । ११९ । निष्कात्परौ यौ शतसहस्रशब्दौ तदन्तात्प्रातिपदिकाट्ठञ् स्यान्मत्वर्थे । नैष्कशतिकः । नैष्कसहस्रिकः ॥ ( २६०८ ) **रूपादाहतप्रशंसयोर्यप्** । ५ । २ । १२० । आहतं रूपमस्यास्तीति––रूप्यः कार्षापणः । प्रशस्तं रूपमस्यास्तीति–रूप्यो गौः । आहतेति किम् ॥ रूपवान् ॥ ( २६०९ ) **अन्येभ्योऽपि दृश्यते** ॥ हिम्याः पर्वताः । गुण्या ब्राह्मणाः ॥ ( २६१० ) **अस्मायामेधास्रजो विनिः** । ५ । २ । १२१ । यशस्वी, यशस्वान् । मायावी । व्रीह्यादिपाठादिनिठनौ । मायी ।

---

ऽदिः ४३२९' इत्यदिप्रत्ययो बाहुलकात् पृषेरपि भवति । तथा च भाष्यम्–'पार्षदकृतिरेषा तत्र भवताम्' 'सर्ववेदपार्षदं हीदं शास्त्रम्' इति च । भट्टिस्त्वाह–'पर्षद्वलान्महाब्रह्मैराटनैकटिकाश्रमान्' इति । 'पर्षदेषा दशावरा' इति मनुः[३] ॥ ( २५९७ ) **अन्येभ्यो–** । **भ्रातृवल इति** । 'वले १४९२' इत्यत्राण्ग्रहणानुवृत्तेर्नेह दीर्घः । पुत्रवलादौ तु स्यात्तत्राह––**संज्ञायामित्यनुवृत्तेरिति** । 'वनगिर्योः–१४९०' इति सूत्रादिति भावः ॥ ( २५९९ ) **ज्योत्स्ना–** । ज्योत्स्ना चन्द्रप्रभा । तत्रावयवीभूतं ज्योतिरस्तीति मत्वर्थीयोपपत्तिः । एतेन तमस्समूहे तमिस्राशब्दो व्याख्यातः । निघण्टुषु तमःपर्यायस्तमिस्रशब्दः पठितः । तत्र समूहसमूहिनोरभेदोपचार इति हरदत्तः ॥ **स्त्रीत्वमतन्त्रमिति** । व्याख्यानमत्र शरणम् । ऊर्जस्विन्गोमिन्नित्यत्र नान्तत्वाभिव्यक्तये नलोपो न कृतः ॥ ( २६०० ) **अत इनिठनौ** । तपरकरणं किम्, खट्वावान् । **"एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ"** । एकाक्षरात्––स्ववान् । कृतः––कारकवान् । जातेः––व्याघ्रवान् । सप्तम्याम्–दण्डाः अस्यां सन्ति दण्डवती शाला । 'तदस्यास्ति–२५५५' इति सूत्रस्थेतिकरणो विषयनियमार्थः सर्वत्रापि संबध्यत इति क्वचित्कृतोऽपि भवति । कार्यी, कार्यिकः । क्वचित्तु जातेरपि–तण्डुली तण्डुलिकः । एतच्च काशिकादौ स्पष्टम् ॥ ( २६०४ ) **तुन्दादिभ्य इलच्च** । अन्यतरस्यामित्यनुवर्तनादाह––**मतुप् चेति** । अत्र 'स्वाङ्गाद् विवृद्धौ २६०५' इति पठ्यते । विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयः स्युः । विवृद्धौ कर्णावस्य कर्णिलः, कर्णी, कर्णिकः, कर्णवान् ॥ ( २६०६ ) **एकगोपूर्वात्–** ॥ **ऐकशतिक इति** । एकं च तच्छतं चेति 'पूर्वकाल–१०५०' इत्यादिना कर्मधारयः । षष्ठीतत्पुरुषाद्बहुव्रीहेर्द्वन्द्वाच्च न भवत्यनभिधानादिति हरदत्तादयः ॥ अत इत्येव, नेह–एकविंशतिरस्यास्तीति । नित्यग्रहणं मतुपो बाधनार्थम्, अन्यथा ठञा इनिठनोर्बाधे कृतेऽप्यन्यतरस्यांग्रहणानुवृत्त्या मतुप् स्यादेवेत्याहुः ॥ कथम् एकद्रव्यवान् इति । असाधुरेवायम्, एकेन द्रव्यवानिति वा विग्रहीतव्यम् । कथम् एकदण्डी इति । '–एकदेशिनैकाधिकरणे १०३०' इति निर्देशो ज्ञापयति 'इनिरपि क्वचिद्भवति' इति ॥ ( २६०८ ) **रूपादाहत–** । आहतप्रशंसाविशिष्टेऽर्थे वर्तमानाद्रूपशब्दान्मत्वर्थे यप् स्यात् ॥ **आहतमिति** । आहननमाहतं ताडनमित्यर्थः । ततो निष्पन्नं यत्कार्षापणादिरूपं तदपि कार्ये कारणोपचारादाहतमित्युच्यते इत्याहतरूपयोः सामानाधिकरण्यमुपपद्यते ॥ ( २६०९ ) **अन्येभ्योऽपि–** । **हिम्या इति** । भूम्नि यप् ॥ **पर्वता इति** । हिमवान् तत्पर्यन्तवर्तिनश्च ॥ **गुण्या इति** । दृशिग्रहणादिनिरपि । तथा च माघः––'गुण्यगुण्य इति न व्यजीगणत्' । गुणी अगुण्य इति पदच्छेदः ॥ ( २६१० ) **अस्मायामेधा–** । **यशस्वीति** । 'तसौ मत्वर्थे २५६०' इति भत्वाद्रुत्वं न ॥ **यशस्वानिति** । नित्यग्रहणात् 'पूर्वत्रासंबद्धमप्यन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमिह संबध्यत एव । 'तसौ मत्वर्थे'

---

१ **शिखामालेति** । 'शिखादिभ्य इनिर्वाच्य इकन् यवखदादिषु' इत्येवमेव भाष्ये समुपलभ्यते ॥ २ **एकेति** । अत्र 'अतः' इति नानुवर्तते । अत एव 'गोशकटिरस्यास्तीति विग्रहेऽपि गौशकटिक इत्येव ॥ गोविंशतिरस्यास्तीत्यादौ त्वनभिधानादिति भाष्ये स्पष्टम् ॥ ३ 'स पार्षदैरम्बरमापुपूरे' इति पाणिनीयप्रयोगाच्च ॥

मायिकः। किन्नन्तत्वात्कुः ॥ स्रग्वी ॥ (२६११) (वा) आमयस्योपसंख्यानं दीर्घश्च ॥ आमयावी ॥ (२६१२) (वा) शृङ्गवृन्दाभ्यामारकन् ॥ शृङ्गारकः। वृन्दारकः ॥ (२६१३) (वा) फलबर्हाभ्यामिनच् ॥ फलिनः। बर्हिणः ॥ (२६१४) (वा) हृदयाच्चालुरन्यतरस्याम् ॥ इनिठनौ मतुप् च। हृदयालुः। हृदयी। हृदयिकः। हृदयवान् ॥ (२६१५) (वा) शीतोष्णतृप्रेभ्यस्तदसहने ॥ शीतं न सहते–शीतालुः। उष्णालुः। [४]स्फायितञ्चीति रक्। तृप्रः पुरोडाशः, तं न सहते तृप्रालुः। तृप्रं दुःखमिति माधवः ॥ (२६१६) (वा) हिमाच्चेलुः ॥ हिमं न सहते–हिमेलुः ॥ (२६१७) (वा) बलादूलः ॥ बलं न सहते–बलूलः ॥ (२६१८) (वा) वातात्समूहे च। वातं न सहते वातस्य समूहो वा–वातूलः ॥ (२६१९) (वा) तप्पर्वमरुद्भ्याम् ॥ पर्वतः। मरुत्तः ॥ (२६२०) (सू) ऊर्णाया युस्। ५। २। १२३। सित्त्वात्पदत्वम्। ऊर्णायुः। अत्र छन्दसीति केचिदनुवर्तयन्ति। युक्तं चैतत्। अन्यथा हि अहंशुभमोरित्यत्रैवोर्णाग्रहणं कुर्यात् ॥ (२६२१) (सू) वाचो ग्मिनिः। ५। २। १२४। वाग्मी ॥ (२६२२) (सू) आलजाटचौ बहुभाषिणि। ५। २। १२५। (२६२३) (वा) कुत्सित इति वक्तव्यम् ॥ कुत्सितं बहु भाषते–वाचालः। वाचाटः। यस्तु सम्यग्बहु भाषते स वाग्मीत्येव ॥ (२६२४) (सू) स्वामिन्नैश्वर्ये। ५। २। १२६। ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच्। स्वामी ॥ (२६२५) (सू) अर्शआदिभ्योऽच्। ५। २। १२७। अर्शांस्यस्य विद्यन्ते–अर्शसः। आकृतिगणोऽयम् ॥ (२६२६) (सू) द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः। ५। २। १२८। द्वन्द्वः–[१]कटकवलयिनी। शङ्खनूपुरिणी। उपतापो रोगः–कुष्ठी। किलासी। गर्ह्यम् निन्द्यम्–ककुदावर्ती। काकतालुकी। प्राणिस्थात्किम्। पुष्पफलवान्घटः ॥ (२६२७) (वा) प्राण्यङ्गान्न ॥ पाणिपादवती। [२]अत इत्येव। चित्रकललाटिकावती। सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम् ॥ (२६२८) (सू) वातातीसाराभ्यां कुक् च। ५। २। १२९। चादिनिः। वातकी। अतीसारकी ॥ (२६२९) (इ०) रोगे चायमिष्यते ॥ नेह वातवती गुहा ॥ (२६३०) (वा) पिशाचाच्च ॥ पिशाचकी ॥ (२६३१) (सू) वयसि पूरणात्। ५। २। १३०। पूरणप्रत्ययान्तान्मत्वर्थे इनिः स्याद्वयसि द्योत्ये। मासः संवत्सरो वा पञ्चमोऽस्यास्तीति–पञ्चमी उष्ट्रः। ठन्बाधनार्थमिदम्। वयसि किम्। पञ्चमवान् ग्रामः ॥ (२६३२) (सू) सुखादिभ्यश्च। ५। २। १३१। इनिर्मत्वर्थे। सुखी। दुःखी ॥ (२६३३) (ग) माला क्षेपे ॥ माली ॥ (२६३४) (सू) धर्मशीलवर्णान्ताच्च। ५। २। १३२। धर्माद्यन्तादिनिर्मत्वर्थे। ब्राह्मणधर्मी।

---

इति सूत्रे यशस्वानिति भाष्योदाहरणादिति भावः ॥ 'चोः कुः ५१३' इत्यनेन सिद्धे ब्रैध्र्वादिषत्वमाशङ्क्याह—**किन्नन्तत्वादिति** ॥ (२६१४) **हृदयाच्चालुरन्यतरस्याम्**। अन्यतरस्यांग्रहणम् इनिठनोः प्राप्त्यर्थम्। मतुप् सर्वत्र समुच्चयित एव। चकारस्य 'चुटू २७४' इतीत्संज्ञा। तेन हृदयालुशब्दोऽन्तोदात्त इत्याहुः ॥ (२६१५) **शीतोष्णेति**। इह चालुरनुवर्तते ॥ **पुरोडाश इति**। 'न तृप्रा उरुव्यचसम्' इति मन्त्रस्य भाष्ये तथा व्याख्यातत्वादिति भावः ॥ **माधव इति**। सुब्धातुवृत्तौ स्थितमिदम् ॥ (२६१६) **हिमाच्चेलुरिति**। एकारादिरयं प्रत्यय इति माधवः ॥ (२६१७) **बलादिति**। सिध्मादिषु बलूलवातूलशब्दौ मत्वर्थे प्रकारान्तरेण व्युत्पादितौ ॥ (२६१९) **तप्पर्वमरुद्भ्याम्**। पित्त्वमनुदात्तत्वार्थम्। काशिकायां तु–'पर्वमरुद्भ्यां तन्वक्तव्यः' इति स्थितम् ॥ हरदत्तेन तु तन्निति प्रतीकमुपादाय आद्युदात्तत्वार्थो नकार इत्युक्तम्। तच्च मनोरमायां महता प्रबन्धेन दीक्षितैर्[३]निराकृतम्। तत एव तदवधार्यम् ॥ (२६२०) **ऊर्णाया युस्**। **पदत्वमिति**। तेन 'यस्येति च ४३१' इति लोपो न प्रवर्तत इति भावः ॥ **अनुवर्तयन्तीति**। 'बहुलं छन्दसि ५३४०' इत्यतः ॥ (२६२१) **[४]वाचो ग्मिनिः**। इकारो नकारपरित्राणार्थः। चकारस्य कुत्वे जश्त्वे च कृते वाग्मी वाग्मिनावित्यादौ द्वयोर्गकारयोः श्रवणं भवति। द्वित्वे तु त्रयाणाम् ॥ 'मिनिः' इत्युक्ते तु द्वित्वे सति द्वयोर्गकारयोः श्रवणं, द्वित्वाभावे त्वेकस्यैव श्रवणं स्यात्। किं च यरोऽनुनासिके 'प्रत्यये भाषायां नित्यम् १८१' इति वाङ्मयमित्यत्रैव नित्यमनुनासिकः प्राप्नोति। तच्चानिष्टमिति ग्मिनिः कृतः ॥ (२६२४) **स्वामिन्नैश्वर्ये** ॥ **ऐश्वर्यवाचकादिति**। स्वशब्दस्यैश्वर्यवाचित्वमेतद्वृत्तिविषयकमेवेति बोध्यम्। ईशिता हि ईश्वरः, स तु स्वामीत्युच्यते। यथा वागीश एव वाचस्पतिर्वाचः स्वामीति। ऐश्वर्ये किम्, स्ववान् ॥ (२६२५) **अर्शआदिभ्यो**—। इह '**स्वाङ्गाद्धीनात्**' इति गणे पठ्यते। खञ्जः पादोऽस्यास्तीति खञ्जः। काणं चक्षुर्यस्यास्तीति काणः ॥

---

१ कटकवलययोः कथंचिद् भेदं परिकल्प्य द्वन्द्वः समर्थनीयः ॥ २ **अत इत्येवेति**। समासान्ता इति सूत्रभाष्यात्तथा प्रतीतेः ॥ ३ **निराकृतमिति**। शब्दरत्नशेखरयोस्तु नित्त्वमेवाङ्गीकृतम्। तथाहि–परे तु तत्त्वविधावेव मरुत उपसंख्यानेनैव तत्सिद्धौ प्रथमचतुर्थसंज्ञाप्रकरणे पाठोऽनेकसंज्ञालाभायेति निपातत्वमूलकमाद्युदात्तत्वं दुर्वारम्। ततश्च 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरेण मरुत्तस्याद्युदात्तत्वमेव प्रत्याख्यानपक्षे इति फलाभेदायाद्युदात्तत्वस्यैवेष्टत्वे नित्त्वमेवावश्यकम्। निपातादिसंज्ञाश्च तत्त्वविषय एवेति न 'मरुद्भिर्दत्तः' इति प्रयोगे सुब्लुगापत्तिरिति वदन्ति ॥ ४ **वाचो ग्मिनिः**। उत्तरसूत्रस्थस्य 'बहुभाषिणि' इत्यस्यात्रापि संबन्धात्सम्यग्बहुभाषिणि वाग्मीति बोध्यम्। वाचो गकारादेशो मिनिः प्रत्यय इत्यङ्गीकारे गकारादेशविधानसामर्थ्यादनुनासिको न भवतीति कल्पनायां लाघवाभावेन चकाराभावेन च एक एव विधेयोऽङ्गीकृत इति केचित् ॥

ब्राह्मणशीली । ब्राह्मणवर्णी ॥ ( २६३५ ) सू हस्ताज्जातौ । ५ । २ । १३३ । हस्ती । जातौ किम् । हस्तवान्पुरुषः ॥ ( २६३६ ) सू वर्णाद् ब्रह्मचारिणि । ५ । २ । १३४ । वर्णी[1] ॥ ( २६३७ ) सू पुष्करादिभ्यो देशे । ५ । २ । १३५ । पुष्करिणी । पद्मिनी । देशे किम् । पुष्करवान्करी ॥ ( २६३८ ) वा बाहूरुपूर्वपदाद्बलात् ॥ बाहुबली । ऊरुबली ॥ ( २६३९ ) वा सर्वादेश्च ॥ सर्वधनी । सर्वबीजी ॥ ( २६४० ) वा अर्थाच्चासन्निहिते ॥ अर्थी । संनिहिते तु अर्थवान् ॥ ( २६४१ ) वा तदन्ताच्च ॥ धान्यार्थी । हिरण्यार्थी ॥ ( २६४२ ) सू बलादिभ्यो मतुबन्यतरस्याम् । ५ । २ । १३६ । बलवान्, बली । उत्साहवान्, उत्साही ॥ ( २६४३ ) सू संज्ञायां मन्माभ्याम् । ५ । २ । १३७ । मन्नन्तान्मान्ताच्चेनिर्मत्वर्थे । प्रथिमिनी । दामिनी । होमिनी, सोमिनी । संज्ञायां किम् । सोमवान् ॥ ( २६४४ ) सू कंशंभ्यां बभयुस्तितुतयसः । ५ । २ । १३८ । कं शमिति मान्तौ । कमित्युदकसुखयोः । शमिति सुखे । आभ्यां सप्त प्रत्ययाः स्युः । युस्यसोः सकारः पदत्वार्थः । कँव्वः । कम्भः । कँय्युः । कन्तिः । कन्तुः । कन्तः । कँय्यः । शँव्वः । शम्भः । शँय्युः । शन्तिः । शन्तुः । शन्तः । शँय्यः । अनुस्वारस्य वैकल्पिकः परसवर्णः वकारयकारपरस्यानुनासिकौ वयौ ॥ ( २६४५ ) सू तुन्दिवलिवटेर्भः । ५ । २ । १३९ । वृद्धा नाभिस्तुन्दिः । मूर्धन्योपधोऽयमिति माधवः । तुन्दिभः । वलिभः । वटिभः । पामादित्वाद्वलिनोऽपि ॥ ( २६४६ ) सू अहंशुभमोर्युस् । ५ । २ । १४० । अहमिति मान्तमव्ययमहङ्कारे । शुभमिति शुभे । अहंयुः अहङ्कारवान् । शुभंयुः शुभान्वितः ॥ इति मत्वर्थीयाः ॥

---

## अथ तद्धितेषु प्राग्दिशीयाः ।

( २६४७ ) सू प्राग्दिशो विभक्तिः[2] । ५ । ३ । १ । दिक्शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञकाः स्युः ॥ अथ स्वार्थिकाः[3] प्रत्ययाः ॥ समर्थानामिति प्रथमादिति च निवृत्तम् । वेति त्वनुवर्तत एव ॥ ( २६४८ ) सू किंसर्वनामबहुभ्योऽद्व्यादिभ्यः । ५ । ३ । २ । किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियन्ते[4] ॥ ( २६४९ ) सू इदम इश् । ५ । ३ । ३ । प्राग्दिशीये परे ॥ ( २६५० ) सू एतेतौ रथोः । ५ । ३ । ४ । इदम्शब्दस्य एत इत इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । इशोऽपवादः ॥ ( २६५१ ) सू एतदोऽन् । ५ । ३ । ५ । योगविभागः कर्तव्यः । "एतदः" । एतेतौ स्तो रथोः ॥ "अन्" एतद इत्येव । अनेकाल्त्वात्सर्वादेशः । नलोपः प्रातिपदिकान्तस्य ॥ ( २६५२ ) सू सर्वस्य सोऽन्यतरस्यां दि । ५ । ३ । ६ । प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात् ॥ ( २६५३ ) सू पञ्चम्यास्तसिल् । ५ । ३ । ७ । पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् स्याद्वा ॥ ( २६५४ ) सू कु तिहोः । ७ । २ । १०४ । किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः । कुतः, कस्मात् । यतः । ततः । इतः । अतः । अमुतः । बहुतः । द्व्यादेस्तु-द्वाभ्याम् ॥ ( २६५५ ) सू तसेश्च । ५ । ३ । ८ ।

---

( २६४३ ) संज्ञायां म- । प्रथिमिनीति । 'पृथ्वादिभ्यः-२४१५' इतीमनिचि 'टेः २४१७' इति टिलोपः । 'र ऋतः-२४१६' इति रभावः । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ४८९' इति मन्नन्तादिनौ कृते 'नस्तद्धिते ९८६' इति टिलोपे नान्तत्वान्ङीप् ॥ दामिनीति । दाधातोर्मनिन् ॥ होमिनी । सोमिनीति । 'अर्तिस्तुसुहुसृधृक्षि-४३३९' इत्यौणादिकेन मनि निष्पन्नौ होमसोमशब्दौ मप्रत्ययान्तौ ॥ ( २६४४ ) कंशंभ्याम्-- । पदत्वार्थ इति । अन्यथा 'कम्युः, काम्यः, शम्युः, शाम्यः' इति स्यादिति भावः ॥ वकारयकारपरस्येति । बहुव्रीहिरयम् ॥ अनुनासिकौ वयाविति । एतेन प्रथमप्रत्ययः दन्त्योष्ठ्यादिः, न तु पवर्गतृतीय इति ध्वनितम् ॥ ( २६४५ ) तुन्दि- । माधव इति । 'तुडि तोडने' इति धातौ तेनोक्तम्-'वृद्धा नाभिस्तुण्डिः' । इन् । तुण्डिरस्यास्तीति तुण्डिलः । 'तुन्दादिभ्य इलच्च २६०४' इत्यत्र 'स्वाङ्गाद्विवृद्धौ २६०५' इति गणसूत्रेण इलच् । तुण्डिलः एव तुण्डिभः । 'तुण्डिवलिवटेर्भः' इति मत्वर्थीयो भ इति । 'वट वेष्टने' इन् । वटिशब्दः पामादिषु पठ्यते । तेन वटिन इत्यपि भवति ॥ ( २६४६ ) अहंशुभ- । अहंयुः । शुभंयुरिति । पूर्ववदनुस्वारपरसवर्णौ ॥ इति मत्वर्थीयाः ॥

---

( २६४८ ) किंसर्वनाम-- । द्व्यादिपर्युदासात्किमः पृथग्ग्रहणम् । द्व्यादिषु किंशब्दपाठे प्रयोजनं तु-त्वं च कश्च कौ । अहं च कश्च कौ इत्यत्र किमः शेषः ॥ 'त्यदादीनां मिथः सहोक्तौ यत् परं तच्छिष्यते १३४४' इत्युक्तत्वात् ॥ ( २६५१ ) एतदोऽन् । भाष्यारूढोऽयं पाठः ॥ वृत्तिकारस्तु 'एतदोऽश्' इति पठित्वा शकारः सर्वादेशार्थ इत्याह ॥ अनिति । प्राग्दिशीये परे अन्स्यात् ॥ अनेकाल्त्वादिति । नित्करणस्य प्रयोजनं नास्ति प्रत्ययनित्त्वस्यैव स्वरार्थत्वादिति भावः ॥ ( २६५४ ) कु तिहोः । तकारादिकार उच्चारणार्थः । वेत्यनुवृत्तेः फलं दर्शयति--कस्मादिति ॥ यतस्तत इति । कृत्तद्धित-१६३' इति प्रातिपदिकत्वात्सुपो लुकि त्यदाद्यत्वम् । पक्षे यस्मात् ॥ इत इति । 'इदम इश् २६४९' । पक्षे

---

१ वर्णीति- । वर्णोऽत्र वेदाध्ययनार्थं ब्रह्मचर्यम् ॥ २ विभक्तिरिति । संज्ञासूत्रमेवेदं व्याख्यानात् ॥ ३ स्वार्थिका इति । स्वीयप्रकृतेरर्थे भवा इत्यर्थः । प्रायेणेति शेषः ॥ ४ अधिक्रियन्त इति । विधेयानुपादानादिति भावः ॥

किंसर्वनामबहुभ्यः परस्य तसेस्तसिलादेशः स्यात् । स्वरार्थं विभक्त्यर्थं च वचनम् ॥ ( २६५६ ) (सू) पर्यभिभ्यां च । ५ । ३ । ९ । आभ्यां तसिल् स्यात् ॥ ( २६५७ ) (वा) सर्वोभयार्थाभ्यामेव॥परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः ॥ ( २६५८ ) (सू) सप्तम्यास्त्रल् । ५ । ३ । १० । कुत्र । यत्र । तत्र । बहुत्र ॥ ( २६५९ ) (सू) इदमो हः । ५ । ३ । ११ । त्रलोऽपवादः । इशादेशः । इह ॥ ( २६६० ) (सू) किमोऽत् । ५ । ३ । १२ । वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात्पक्षे त्रल् ॥ ( २६६१ ) (सू) क्वाति । ७ । २ । १०५ । किमः क्वादेशः स्यादति । क्व । कुत्र ॥ ( २६६२ ) (सू) वा ह च च्छन्दसि । ५ । ३ । १३ । कुह स्थः, कुह जग्मथुः । ( २६६३ ) (सू) एतदस्त्रतसोस्त्रतसौ चानुदात्तौ । २ । ४ । ३३ । अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतः तौ चानुदात्तौ स्तः । एतस्मिन् ग्रामे सुखं वसामः । अथाऽत्रा[1]धीमहे । अतो न गन्तास्मः ॥ ( २६६४ ) (सू) इतराभ्योऽपि दृश्यन्ते । ५ । ३ । १४ । पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते ॥ ( २६६५ ) दृशिग्रहणाद्भवदादियोग एव । स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । एवं दीर्घायुः । देवानांप्रियः । आयुष्मान् ॥ ( २६६६ ) (सू) सर्वैकान्यकियत्तदः काले दा । ५ । ३ । १५ । सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् । सर्वस्मिन्काले—सदा, सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम् । सर्वत्र देशे ॥ ( २६६७ ) (सू) इदमो र्हिल् । ५ । ३ । १६ । सप्तम्यन्तात्काले इत्येव । हस्यापवादः । अस्मिन्काले एतर्हि । काले किम् । इह देशे ॥ ( २६६८ ) (सू) अधुना । ५ । ३ । १७ । इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थेऽधुनाप्रत्ययः स्यात् । इश् । यस्येति लोपः । अधुना ॥ ( २६६९ ) (सू) दानीं च । ५ । ३ । १८ । इदानीम् ॥ ( २६७० ) (सू) तदो दा च । ५ । ३ । १९ । तदा । तदानीम् । ( २६७१ ) तदो दावचनमनर्थकं विहितत्वात् ॥ ( २६७२ ) (सू) अनद्यतने र्हिलन्यतरस्याम् । ५ । ३ । २१ । कर्हि, कदा । यर्हि, यदा । तर्हि, तदा । एतस्मिन्काले—एतर्हि । ( २६७३ ) (सू) सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः । ५ । ३ । २२ । एते निपात्यन्ते ॥

---

अस्मात् ॥ **अत इति** । एतदोऽनादेशः । पक्षे एतस्मात् ॥ **अमुत इति** । 'अदसोऽसेः—५६१' इति मुत्वम् । पक्षे अमुष्मात् ॥ **बहुत इति** । पक्षे बहुभ्यः ॥ **द्व्याभ्यामिति** । सर्वनामत्वात्प्राप्तोऽपि तासिल् 'अद्व्यादिभ्यः' इति पर्युदासान्न ॥ ( २६५५ ) **तसेरिति** । 'प्रतियोगे पञ्चम्यास्तसिः २८४८,' 'अपादाने चाहीयरुहोः २८५०' इति विहितस्य तसेस्तासिलादेश इत्यर्थः ॥ **विभक्त्यर्थं चेति** । अन्यथा परत्वात्तसौ कृते तस्याप्राग्दिशीयत्वाद्विभक्तिसंज्ञाया अभावात्त्यदाद्यत्वाभावे 'यतोऽवगच्छति' इत्यादि न सिध्येदिति भावः । न च तसेर्ग्रामत इत्यादौ चरितार्थत्वात्किमादिभ्यस्तासिलो बाध्यत्वेन तसिर्न प्रवर्तते । तस्य निरवकाशत्वात् । तथा च 'तसेश्च २६५५' इति विधानं व्यर्थमिति वाच्यम् , कुतोऽवहीयते कुतोऽवरोहतीत्यादौ तसिलः सावकाशत्वात् ॥ ( २६५६ ) **पर्यभिभ्याञ्च** । ( २६५७ ) **सर्वोभयार्थाभ्यामेवेति** । अत्र चाभिधानस्वाभाव्यं हेतुः । तेनेह न भवति, परिषिञ्चति अभिषिञ्चति । उपर्यर्थे परिः । आभिरत्वाभिमुख्ये ॥ नन्वोदनं परिषिञ्चतीत्यत्र सर्वतोभावे परिरिति तसिलभावः कथमिति चेत् । मैवम् , वावचनानुवृत्त्या तु तत्सिद्धेः ॥ ( २६५८ ) **सप्तम्यास्त्रल्** । इह त्रल्तसिलौ स्वतन्त्रौ प्रत्ययौ । न तु सप्तमीपञ्चम्योरादेशौ । तेन कुत्र, बहुत्र, कुतः, बहुतः, इत्यादौ 'अच्च घेः ३५१' 'घेर्ङिति ३४९' इत्यादिकं नेत्याहुः ॥ ( २६६० ) **किमोऽत्** । 'न विभक्तौ तुस्माः २७५' इति निषेधोऽत्र न प्रवर्तते । थमोरुकारेण मकारपरित्राणार्थेनानित्यताज्ञापनात् ॥ **वाग्रहणमिति** । 'किमोऽद्वा' इति सूत्रं पठित्वा 'ह च छन्दसि' इति सूत्रयितुं युक्तम् ॥ ( २६६१ ) **क्वाति** । **कुत्रेति** । यद्यपि भागवृत्तिकारो भाषायां त्रलं नेच्छति, तथापि बहुप्रयोगदर्शनादिह स्वीकृतम् । तथा च श्रीहर्षः—'नान्यत्र कुत्रापि च साभिलाषम्' ॥ अमरश्चाह—'साहचर्याच्च कुत्रचित्' इति ॥ ( २६६२ ) **वा ह च च्छन्दसि** । पूर्वोक्तस्य वाग्रहणापकर्षणस्य स्फुटीकरणार्थमिदमुपन्यस्तम् ॥ ( २६६३ ) **एतदस्त्र—** । **अत इति** । एतस्मात् ग्रामादित्यर्थः ॥ ( २६६४ ) **इतराभ्यो—** । ( २६६५ ) **तत्रभवन्तमिति** । ततोभवता तत्रभवता ततोभवते इत्यादि ॥ **एवमिति** । ततोदीर्घायुस्तत्रदीर्घायुरित्याद्यूह्यमित्यर्थः ॥ ( २६६६ ) **सर्वैका—** । **सदेति** । 'सर्वस्य सोऽन्यतरस्यां दि २६५२' इति सभावः ॥ **कदेति** । 'किमः कः ४६६' ॥ ( २६६७ ) **इदमो र्हिल्** । **एतर्हीति** । 'एतेतौ रथोः २६५०' इत्येतादेशः ॥ ( २६६८ ) **अधुनाप्रत्यय इति** । निपातनान्मध्योदात्तोऽयम् । भाष्यमतं चेदम् ॥ वृत्तिकारस्त्वाह—इदमोऽशभावः, धुना च प्रत्यय इति । तत्र 'ऊडिदम्—५६८०' इत्यादिना विभक्तिस्वरः, स च 'आदेः परस्य ६८' इत्यादेर्भवतीति हरदत्तः ॥ ( २६७० ) **तदो दा च** । ( २६७१ ) **दावचनमिति** । 'तदश्च' इत्येव सूत्रं पठनीयमिति भावः ॥ ( २६७२ ) **अनद्यतने—** । **एतस्मिन्काले एतर्हीति** । 'एतदः' इति योगविभागाद्रेफादावेतादेशः ॥ ( २६७३ ) **सद्यः परुत्—** ।

---

[1] अथाऽत्रेति । अत्राधीमहे चेत्यर्थः । 'अथो अत्र' इति पाठो वा । अस्मिन् पाठे 'ओत्' इति प्रगृह्यत्वम् ॥

(२६७४) (वा.) समानस्य सभावो द्यस् चाहनि ॥ समानेऽहनि-सद्यः ॥ (२६७५) (वा.) पूर्वपूर्वतरयोः परः, उदारी च संवत्सरे ॥ पूर्वस्मिन्वत्सरे-परुत् । पूर्वतरे वत्सरे-परारि ॥ (२६७६) (वा.) इदम इश् समसण् प्रत्ययश्च संवत्सरे । अस्मिन्संवत्सरे-ऐषमः ॥ (२६७७) (वा.) परस्माद‍ेद्यव्यहनि । परस्मिन्नहनि परेद्यवि ॥ (२६७८) (वा.) इदमोऽश् द्यश्च ॥ अस्मिन्नहनि अद्य ॥ (२६७९) (वा.) पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस् ॥ पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । उभयोरह्नोरुभयेद्युः ॥ (२६८०) (वा.) द्युश्चोभयाद्वक्तव्यः ॥ उभयद्युः ॥ (२६८१) (सू.) प्रकारवचने थाल् । ५ । ३ । २३ । प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात्स्वार्थे । तेन प्रकारेण तथा । यथा ॥ (२६८२) (सू.) इदमस्थमुः । ५ । ३ । २४ । थालोऽपवादः ॥ (२६८३) (वा.) एतदोऽपि वाच्यः ॥ अनेन एतेन वा प्रकारेण-इत्थम् ॥ (२६८४) (सू.) किमश्च । ५ । ३ । २५ । केन प्रकारेण-कथम् ॥ प्राग्दिशीयानां विभक्तिसंज्ञानां पूर्णोऽवधिः ॥

---

## अथ तद्धितेषु प्रागिवीयाः ।

(२६८५) (सू.) दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः । ५ । ३ । २७ । सप्तम्याद्यन्तेभ्यो दिशि रूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः प्रत्ययः स्यात् ॥ (२६८६) (सू.) पूर्वाधरावराणामसि पुरधवश्चैषाम् । ५ । ३ । ३९ । एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात्तद्योगे चैषां क्रमात् पुर्, अध्, अव्, इत्यादेशाः स्युः ॥ (२६८७) (सू.) अस्ताति च । ५ । ३ । ४० । अस्तातौ परे पूर्वादीनां पुरादयः स्युः । पूर्वस्यां पूर्वस्याः पूर्वा वा दिक्-पुरः, पुरस्तात् । अधः, अधस्तात् । अवः, अवस्तात् ॥ (२६८८) (सू.) विभाषाऽवरस्य । ५ । ३ । ४१ । अवरस्यास्तातौ परेऽवृस्याद्वा । अवस्तात् । अवरस्तात् । एवं देशे काले च । दिशि रूढेभ्यः किम् । ऐन्द्र्यां वसति । सप्तम्याद्यन्तेभ्यः किम् । पूर्वं ग्रामं गतः । दिगादिवृत्तिभ्यः किम् । पूर्वस्मिन् गिरौ वसति । अस्ताति चेति ज्ञापकादसिरस्तातिं न बाधते ॥ (२६८९) (सू.) दक्षिणोत्तराभ्यामतसुच् । ५ । ३ । २८ । अस्तातेरपवादः । दक्षिणतः । उत्तरतः ॥ (२६९०) (सू.) विभाषा परावराभ्याम् । ५ । ३ । २९ । परतः । अवरतः । परस्तात् । अवरस्तात् ॥ (२६९१) (सू.) अञ्चेर्लुक् । ५ । ३ । ३० । अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात् ॥ लुक्तद्धितलुकि ॥ प्राच्यां प्राच्याः प्राची वा दिक्-प्राक् । उदक् । एवं देशे काले च ॥ (२६९२) (सू.) उपर्युपरिष्टात् । ५ । ३ । ३१ । अस्तातेर्विषये ऊर्ध्वशब्दस्योपादेशः स्याद्रिल्रिष्टातिलौ च प्रत्ययौ । उपरि उपरिष्टाद्वा वसति आगतो रमणीयं वा ॥ (२६९३) (सू.) पश्चात् । ५ । ३ । ३२ । अपरस्य पश्चभाव आतिश्च प्रत्ययोऽस्तातेर्विषये ॥ (२६९४) (सू.) उत्तरा-

---

(२६७४) निपातनाद्विषयविशेषो लभ्यत इत्याह—अहनीति । सप्तम्यन्तस्याहन्शब्दस्यार्थे इत्यर्थः । तद्दर्शयति—समानेऽहनीति ॥ (२६७५) पर उदारी चेति । पर इत्यादेशः उदारी प्रत्ययौ ॥ (२६८१) प्रकारवचने थाल् । सामान्यस्य भेदको विशेषः प्रकारः । यथा ब्राह्मणसामान्यस्य माथुरकाठकादय इति हरदत्तः । यद्यपि 'प्रकारे गुणवचनस्य २८९२' इत्यत्र सादृश्यं प्रकारस्तथापि नेह सादृश्यं गृह्यते अनभिधानात् ॥ 'अव्ययं विभक्ति-९५३' इति सूत्रे सादृश्यमपि यथाशब्दार्थ इत्युक्तम्, इह तु केवलस्य थाल्प्रत्ययस्य सादृश्यं नार्थः, किन्तु प्रकार एवेत्युक्तमिति नास्ति पूर्वापरविरोध इति बोध्यम् ॥ तेन प्रकारेण तथेति । प्रथमान्तात्तु न भवति, स प्रकारस्तथेति अनभिधानादेवेति भावः । किंसर्वनामबहुभ्यो विशेषविहितेनापि थाला जातीयर् न बाध्यते,अर्थभेदात् । प्रकारे हि थाल् । जातीयर् तु तद्वति,स्वभावात् । एवं च कृत्वा प्रकारमात्रे थालं विधाय तदन्तात्प्रकारवति जातीयरं प्रयुञ्जते । तथाजातीयोऽन्यथाजातीय इति॥ (२६८२) इदमस्थमुः । (२६८३)एतद इति। अनेन एतेन वेति । द्वितीयान्तादपि थमुर्भवत्येव इममेतं वा प्रकारमापन्न इत्थंभूतः । अत्र च 'लक्षणेत्थंभूताख्यान-८०५' इत्यादिसौत्रप्रयोगो लिङ्गम् । एतेन कथंभूतो व्याख्यातः ॥ इत्थमिति । 'एतेतौ रथोः २६५०' इति इदम इतादेशः । 'एतदः' इति योगविभागादेतदोऽपि इतादेश इति भावः ॥ (२६८४) किमश्च । योगविभागः 'था हेतौ च छन्दसि-५३४४' इत्युत्तरसूत्रे किम एवानुवृत्तिर्यथा स्यादिदमो मा भूदिति ॥ प्राग्दिशीयानां पूर्णोऽवधिः॥

---

(२६८५) दिग्देशकालेष्विति । यथासंख्यमत्र नेष्यते, अस्वरितत्वात् ॥ (२६८७)अस्ताति च । पुरः पुरस्तादिति । कथं तर्हि 'पश्यामि तामित इतः पुरतश्च पश्चात्' इति भवभूतिः, 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः, 'पुरतः प्रथमेचाग्रे' इति विश्वश्च । समानकालीनं पूर्वकालीनमित्यादिवत्प्रामादिकमेवेति बहवः ॥ केचित्तु दक्षिणोत्तराभ्यां तसुज्विधिनैवेष्टसिद्धौ 'अतसुच्' इत्यकारोच्चारणमन्यतोऽपि विधानार्थम् । तेन पुरत इति सिध्यति । 'पुर अग्रगमने' क्विपि पुर् 'र्वो-५८०' इति दीर्घस्तु न भवति, भत्वात् । न चातसुचश्चित्त्वेऽप्यकारोच्चारणं पक्षे आद्युदात्तत्वार्थमिति वाच्यम्, बहूनां प्रयोगानुरोधेनान्यतो विधानार्थमिति कल्पनस्यैव न्याय्यत्वादित्याहुः ॥ यथासंख्यत्वानाश्रयणात् पुरस्ताद्वसति पुरस्तादागतः पुरस्ताद्रमणीयम् । अधस्ताद्वसति अधस्तादागत इत्यादि सिद्ध्यति ॥ (२६९१) अञ्चेर्लुक् । प्राच्यां प्राच्या इति । प्राच्यां

---

१ एद्युसिति । निपातनादन्तोदात्तोऽयम् । भाष्ये तु एद्युसुच् समुपलभ्यते ॥ २ एतद इति । एतच्च 'एतदोऽन्' इति सूत्रस्थभाष्यसमुपलभ्यमानवार्तिकार्थभूतमिति बोध्यम् ॥

धरदक्षिणादातिः।५।३।३४। उत्तरात् । अधरात् । दक्षिणात्॥(२६९५) एनबन्यतरस्यामदूरेऽपञ्चम्याः ।५।३।३५। उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये पञ्चम्यन्तं विना उत्तरेण । अधरेण। दक्षिणेन। पक्षे यथास्वं प्रत्ययाः । इह केचिदुत्तरादीननुवर्त्य दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् ॥ (२६९६) दक्षिणादाच् । ५ । ३ । ३६ । अस्तातेर्विषये । दक्षिणा वसति । अपञ्चम्या इत्येव । दक्षिणादागतः॥ (२६९७) आहि च दूरे । ५ । ३ । ३७ । दक्षिणाद् दूरे आहि स्यात्, चादाच् । दक्षिणाहि । दक्षिणा ॥ ( २६९८ ) उत्तराच्च । ५ । ३ । ३८ । उत्तराहि । उत्तरा ॥ ( २६९९ ) संख्याया विधार्थे धा । ५ । ३ । ४२ । क्रियाप्रकारार्थे वर्तमानात्संख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा । पञ्चधा ॥ ( २७०० ) अधिकरणविचाले च । ५ । ३ । ४३ । द्रव्यस्य संख्यान्तरापादने संख्याया धा स्यात् । एकं राशिं पञ्चधा कुरु ॥ ( २७०१ ) एकाद्धो ध्यमुञन्यतरस्याम् । ५ । ३ । ४४ । ऐकध्यम् । एकधा ॥ ( २७०२ ) द्वित्र्योश्च धमुञ् । ५ । ३ । ४५ । आभ्यां धा इत्यस्य धमुञ् स्याद्वा । द्वैधम् । द्विधा । त्रैधम् । त्रिधा ॥ ( २७०३ ) धमुञन्तात्स्वार्थे डदर्शनम् ॥ पथि द्वैधानि ॥ ( २७०४) एधाच्च । ५ । ३ । ४६ । द्वेधा । त्रेधा ॥ ( २७०५ ) याप्ये पाशप् । ५ । ३ । ४७ । कुत्सितो भिषक् भिषक्पाशः ॥ ( २७०६ ) पूरणाद्भागे तीयादन् । ५ । ३ । ४८ । द्वितीयो भागो द्वितीयः । तृतीयः । स्वरे विशेषः ॥ ( २७०७ ) तीयादीकक् स्वार्थे वा वाच्यः ॥ द्वैतीयीकः । द्वितीयः । तार्तीयीकः । तृतीयः ॥ ( २७०८ ) न विद्यायाः ॥ द्वितीया । तृतीया । विद्येत्येव ॥ ( २७०९ ) प्रागेकादशभ्योऽच्छन्दसि । ५ । ३ । ४९ । पूरणप्रत्ययान्ताद्भागेऽन् । चतुर्थः । पञ्चमः ॥ ( २७१० ) षष्ठाष्टमाभ्यां ञ च । ५ । ३ ।५०। चादन् । षष्ठो भागः षाष्ठः, षष्ठः । आष्टमः, अष्टमः ॥ ( २७११ ) मानपश्वङ्गयोः कन्लुकौ च । ५ । ३ । ५१ । षष्ठाष्टमशब्दाभ्यां क्रमेण कन्लुकौ स्तो माने पश्वङ्गे च वाच्ये । षष्ठको भागः । मानं चेत् । अष्टमो भागः । पश्वङ्गं चेत् । अस्य अनो वा लुक् । चकाराद्यथाप्राप्तम् । षष्ठः, षाष्ठः । अष्टमः, आष्टमः । महाविभाषया सिद्धे लुग्वचनं पूर्वत्र ञानौ नित्याविति ज्ञापयति ॥ ( २७१२ ) एकादाकिनिच्चासहाये । ५ । ३ । ५२ । चात्कन्लुकौ । एकः ।

---

दिशि वसति प्राग्वसति । प्राच्यां दिश आगतः प्रागागत इत्यादि योज्यम् ॥ ( २६९५ ) **एनब-। पञ्चम्यन्तं विनेति** । नेह उत्तरादागतः । अधरादागतः ॥ **उत्तरेणेत्यादि** । वसति रमणीयं वा ॥ **पक्षे यथास्वमिति** । दक्षिणतः । उत्तरतः । अधः । अधस्तात् । उत्तरात् । अधरात् । दक्षिणात् ॥ ( २६९९ ) **संख्याया विधार्थे धा** । विधाशब्दस्यार्थो विधार्थः ॥ यद्यप्योदनपिण्डोऽपि विधाशब्देनोच्यते, तथापीह न गृह्यते । तेन एका गोविधेत्यादौ न भवति । इह हि 'विधायाम्' इति वक्तव्ये अर्थग्रहणस्य प्रयोजनं विधाशब्दो यत्रार्थे प्रसिद्धस्तत्रैव यथा स्यात् । तादृशश्चार्थः प्रकार एव, स च क्रियाविषयक एव गृह्यते अभिधानस्वभावात्तदाह—**क्रियाप्रकारे वर्तमानादिति** । कथं तर्हि 'नवधा द्रव्यं, बहुधा गुणः' इत्यादि ॥ अत्रापि ह्यश्रुता क्रिया प्रतीयते 'उपदिश्यते', इति वा, 'भवति' इति वा इति हरदत्तः ॥ ( २७०० ) **अधिकरणविचाले च** । अधिकरणं द्रव्यं, विचलनं विचालोऽन्यथाकरणम् । णिजन्ताद् 'एरच् ५०२२' । तच्चेह संख्यासंनिधानात्संख्यान्तरापादनमिति व्याचष्टे—**द्रव्यस्येत्यादिना** । संख्यान्तरापादनं हि एकस्यानेकीकरणम्, अनेकस्य च एकीकरणम् । तत्राद्ये उदाहरणम्—**एकं राशिं पञ्चधेति** । पञ्च राशीन् कुर्वित्यर्थः ॥ द्वितीये तु, अनेकम् एकधा कुर्वित्युदाहर्तव्यम् । इह क्रियाविषयकप्रकारो न गम्यत इति सूत्रारम्भः ॥ (२७०१) **एकाद्धो**—। शब्दप्रधानत्वात्सर्वनामकार्याभावः । इह प्रकरणादेव सिद्धे पुनर्धाग्रहणं विधार्थे विहितस्यापि यथा स्यात् । 'अनन्तरस्य-४८८' इति न्यायेनाधिकरणविचाले विहितस्यैव हि प्राप्नोतीति वृत्तिपदमञ्जर्योः स्पष्टम्॥ एतेन स्वतन्त्र एव ध्यमुञ् प्रत्ययोऽस्त्वित्याशङ्का परास्ता ॥ **ऐकध्यमिति** । विधार्थे ऐकध्यं भुङ्क्ते । अधिकरणविचाले तु ऐकध्यं राशिं कुर्वित्यादि ज्ञेयम् । एवमग्रेऽपि द्वैधमित्यादौ योज्यम् ॥ ( २७०४ ) **एधाच्च** । द्वित्र्योः संबन्धिनो धाप्रत्ययस्य एधाच् स्यात् । योगविभागो यथासंख्यनिरासार्थः ॥ ( २७०५ ) **याप्ये पाशप्** । 'कुत्सिते २७४६' इत्यत्रैव नायं विहितः, तिङन्तादपि प्रसङ्गात् ॥ ( २७०६ ) **पूरणाद्भागे**—। पूरणार्थत्वात्तीयप्रत्ययः पूरणशब्देनोक्तः । पूरणग्रहणं चोत्तरार्थम् । न ह्यपूरणस्तीयप्रत्ययो भवति । मुखतीयः, पार्श्वतीय इत्यत्र त्वनर्थकत्वान्नातिप्रसङ्गः । भाग इति पुंस्त्वं विवक्षितम् । तेन समासेऽप्यर्थे विभक्तौ विवक्षितायां चतुर्थी पञ्चमीत्येव भवति । 'प्रागेकादशभ्यः-२७०९' इत्यनि सति तु टापि चतुर्था पञ्चमेति प्रसज्येत ॥ ( २७१२ ) **एकादाकिनिच्च**—। असहायवाचिन एकशब्दादाकिनिच् स्यात् ॥ **कन्लुकाविति** । आकिनिचः कनो वा पक्षे लुक् । तयोरेवानेन सूत्रेण विधानात् । असहायग्रहणं संख्याशब्दनिरासार्थम् । अन्यथा प्रसिद्धत्वात्संख्याप्रकरणाच्च तस्यैव ग्रहणं स्यात् । इष्टापत्तौ तु द्वित्वबहुत्वे च न स्यादेकाकिनौ एकाकिन इति । न हि द्वयोर्बहुषु वा एकत्वसंख्याऽस्ति । अस-

---

१ आजिति । अयं चकारः 'आजाहियुक्ते' इत्यत्रास्यैव ग्रहणार्थः ॥ २-३ इदं वचनद्वयम् 'दृष्टं साम' इत्यत्र भाष्ये समुपलभ्यते ॥

एकाकी । एककः ॥ ( २७१३ ) [सू] **भूतपूर्वे चरट्** । ५ । ३ । ५३ । आढ्यो भूतपूर्वः आढ्यचरः ॥ ( २७१४ ) [सू] **षष्ठ्या रूप्य च** । ५ । ३ । ५४ । षष्ठ्यन्ताद्भूतपूर्वेऽर्थे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः-। कृष्णचरः । तसिलादिषु रूप्यस्यापरिगणितत्वान्न पुंवत् । शुभ्राया भूतपूर्वः शुभ्रारूप्यः ॥ ( २७१५ ) [सू] **अतिशायने तमबिष्ठनौ** । ५ । ३ । ५५ । अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः । अयमेषामतिशयेनाढ्यः आढ्यतमः । लघुतमो, लघिष्ठः ॥ ( २७१६ ) [सू] **तिङश्च** । ५ । ३ । ५६ । तिङन्तादतिशये द्योत्ये तमप् स्यात् ॥ ( २७१७ ) [सू] **तरप्तमपौ घः** । १ । १ । २२ । एतौ घसंज्ञौ स्तः ॥ ( २७१८ ) [सू] **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** । ५ । ४ । ११ । किम एदन्तात्तिङन्तादव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किंतमाम् । प्राह्णेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे[1] तु उच्चैस्तमस्तरुः ॥ ( २७१९ ) [सू] **द्विवचनविभज्योपपदे तरबीय-**

---

द्वायत्वं तु परस्परातिरिक्तसहायाभावेन द्वयोर्बहूनामपि भवति । इह 'अकिनिच्' एवायं वक्तव्यः, सवर्णदीर्घेण सिद्धमिष्टम् । 'यस्येति च ४३१' इति लोपश्चाकारोच्चारणसामर्थ्यान्न भवतीत्यादि हरदत्तग्रन्थे स्थितम् ॥ ( २७१३ ) **भूतपूर्वे**—। अत्र वर्तमानाच्चरट् स्यात् ॥ 'गोष्ठात् खञ्-२४६०' इत्यत्रैव नोक्तम् । विशेषविहितेन खञा चरटो बाधा मा भूदिति । संनिधौ हि सामान्यविशेषभावः स्फुटीभवति । यद्यपि दूरस्थस्यापि बाधो न्याय्य एव, तथापीह गौरवं स्वीकृत्य दूरे पाठसामर्थ्याद्बाधो नेति भावः ॥ ( २७१४ ) **षष्ठ्या रूप्य च** । भूतपूर्व इत्यनुवर्तते । तच्च यद्यपि पूर्वत्र ङ्याप्प्रातिपदिकस्य विशेषणं तथापीह न तथा, षष्ठ्यन्तार्थस्य विशेषणत्वात्, तदाक्षिप्तस्य संबन्धिनो गवादेः प्रधानत्वात्, प्रधानेतरसंनिधौ च प्रधाने कार्यसंप्रत्ययस्य न्याय्यत्वात्तदेतदाह—**भूतपूर्वेऽर्थे रूप्यः स्यादिति** ॥ ( २७१५ ) **अतिशायने**—। अतिपूर्वाच्छेतेर्ल्युट् । अतिशयनमेवातिशायनम् । अस्मादेव निपातनाद्दीर्घः । न तु सौत्रः । तेन लोकेऽपि दीर्घः साधुः[2] । 'अबाधकान्यपि निपातनानि भवन्ति १७०६' । तेन ह्रस्वोऽपि साधुः । यद्यपि केवलः शेतिः स्वप्ने वर्तते तथाप्यतिपूर्वः प्रकर्षे । प्रकर्षश्चात्र नाधिक्यं, किं त्वभिभवः । 'पूर्वान् महाभागतयाऽतिशेषे' इति प्रयोगदर्शनात् ॥ न चैवं 'प्रकर्षे तमबिष्ठनौ' इत्येव कुतो न सूत्रितमिति शङ्क्यम् । अतिशायनमिति निपातनार्थमेव तथोक्तत्वात् । अतिशयो न प्रत्ययार्थः । तथा हि सति लघोरतिशायनं लघुतरमिति स्यात् । प्रत्ययार्थस्य प्राधान्यात् । नापि प्रकृत्यर्थः । तथा हि सति प्रकर्षातिशयातिशयनादिभ्य एव स्यात्, न त्वाढ्यादिभ्यः । किंतु प्रकृत्यर्थविशेषणम् । प्रत्ययस्तु द्योतकस्तदेतदाह—**अतिशयविशिष्टेत्यादि** ॥ **अयमेषामिति** । द्व्यवयवे समुदाये यदा एकस्यातिशयो विवक्ष्यते, तदा तरबीयसुनावपवादौ वक्ष्येते । तथा च परिशेषाद्बहूनां मध्ये यदा एकदेशस्य निर्धारणं सोऽस्य विषय इति भावः ॥ **आढ्यतम इति** । सुबन्तात्तमप् । 'सुपो धातु-९५०' इति लुक् । यद्यपि 'ङ्याप्प्रातिपदिकात् २६६' इत्येवानुवर्तते, तथापि सुबन्तपरतयैव व्याख्येयम् । अन्यथा हि पूर्वाह्णेतरां पूर्वाह्णेतमामित्यादौ 'घकालतनेषु कालनाम्नः १२९७' इति सप्तम्या अलुग्विधानं कथमुपपद्यताम् ॥ ( २७१६ ) **तिङश्च** । अस्मादिष्ठन्न भवति, 'अजादी गुणवचनादेव २७२०' इति नियमादित्याशयेनाह—**तमप् स्यादिति** ॥ ( २७१७ ) **तरप्तमपौ घः** । अस्मिन्नेवातिशायनिकप्रकरणे 'तादी घः' 'पितौ घः' इति वा वक्तव्ये प्रकरणान्तरे गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति । तेन 'अल्पाच्तरम् १२९९' 'लोपश्च बलवत्तरः' इत्यादि सिद्धम् । अल्पाजेव ह्यल्पाच्तरम् । न त्वत्र द्वयोरेकस्यातिशयविवक्षायां तरप् । अन्यथा 'शिवकेशवौ' इत्यादिसिद्धावपि 'शंखदुन्दुभिवीणाः' इत्यादि न सिध्येदित्याहुः ॥ ( २७१८ ) **किमेत्**—। आमोरुकारो यदि त्यज्येत, तर्हि पचतितरामित्यादौ 'ह्रस्वनद्यापः-२९४' इति नुटि पचतितराणामिति स्यात् । 'यस्येति च ४३१' लोपस्य परेण नुटा बाधात् । सिद्धान्ते तु 'निरनुबन्धकग्रहणे न सानुबन्धकस्य इति परिभाषया नुड्विधौ नास्य ग्रहणम् ॥ ( २७१९ ) **द्विवचनविभज्योपपदे**—। द्वयोरर्थयोर्वचनं द्विवचनम्[3] । करणे ल्युट् । कर्मणि षष्ठ्या समासः । येन पदेन द्वावर्थावुच्येते तद् द्विवचनम् । विभक्तव्यं विभज्यम् । 'ऋहलोः-३८२४' इति ण्यति प्राप्ते तदपवादो यत् निपात्यते । ण्यति तु 'चजोः-३८१४' इति कुत्वेन विभाग्यमिति स्यात् ॥ विभाज्यशब्दस्य स्मृतिषु प्रयुक्तस्य साधुत्वं चिन्त्य-

---

१ **द्रव्यप्रकर्षे त्विति** । द्रव्यस्य स्वतः प्रकर्षाभावेऽपि द्रव्यनिष्ठगुणादिप्रकर्ष एव द्रव्यप्रकर्ष इति बोध्यम् । द्रव्यसंनिधाने तूच्चत्वगुणवत्पर उच्चैःशब्दः । उच्चैस्तमामित्यत्र तु अधिकरणशक्तिप्रधान उच्चैःशब्द इति तत्रोच्चत्वप्रकर्षेण तदाश्रयस्य प्रकर्षेऽपि न तस्य द्रव्यत्वम् । क्रियाकारकभावरूपसंबन्धविशेषणत्वेनैव तस्य भानेनाप्रधानतया सर्वनामपरामर्शाऽयोग्यत्वात् ॥ २ **साधुरिति** । 'बाधकान्येव निपातनानि' इति सर्वनामसंज्ञासूत्रे भाष्य एवकारोपादानाद् ह्रस्वोऽसाधुरेवेति शब्दरत्ने ॥ परे तु स्वार्थणिजन्तात्प्रत्ययाङ्गीकारेण दीर्घस्य शुद्धात्प्रत्ययाङ्गीकारेण ह्रस्वस्य च साधुतेति वदन्ति ॥ ३ **तद्द्विवचनमिति** । न तु रूढो द्विवचनशब्द इति भावः । तेनास्माकं च देवदत्तस्य च देवदत्तोऽभिरूपतर इति सिद्धम् । 'अस्मदो द्वयोश्च' इत्यनेनैकस्मिन्नर्थे बहुत्ववद्भावविधानात् । स च स्वनिमित्तकशास्त्रीयकार्यप्रवर्तको न त्वेकत्वनिमित्तककार्यनिवर्तकः । नतरामित्यादौ प्रतियोग्यसमानाधिकरणत्वरूपात्यन्तिकत्वेऽभावगते प्रकर्षे तरप् । प्रकृत्यर्थप्रकर्षासंभवविषय एव प्रवृत्तिनिमित्तगते प्रकर्षे तरबादिरिति बोध्यम् । एवं द्योत्यार्थप्रकर्षे द्योतकादपि तरप् यथा 'नितरां गच्छति' इत्यादौ ॥

सुनौ । ५ । ३ । ५७ । द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुर्लघुतरः । लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः । पटीयांसः ॥ ( २७२० ) सू अजादी गुणवचनादेव । ५ । ३ । ५८ । इष्ठनीयसुनौ गुणवचनादेव स्तः । नेह । पाचकतरः । पाचकतमः ॥ ( २७२१ ) सू तुश्छन्दसि । ५ । ३ । ५९ । तृन्तृजन्तादिष्ठनीयसुनौ स्तः ॥ ( २७२२ ) सू तुरिष्ठेमेयःसु । ६ । ४ । १५४ । तृशब्दस्य लोपः स्यादिष्ठेमेयःसु परेषु । अतिशयेन कर्ता–करिष्ठः । दोहीयसी धेनुः ॥ ( २७२३ ) सू प्रशस्यस्य श्रः । ५ । ३ । ६० । अस्य श्रादेशः स्यादजाद्योः ॥ (२७२४) सू प्रकृत्यैकाच् । ६ । ४ । १६३ । इष्ठादिष्वेकाच् प्रकृत्या स्यात् ॥ श्रेष्ठः । श्रेयान् ॥ (२७२५) सू ज्य च । ५ । ३ । ६१ । प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । ज्येष्ठः ॥ ( २७२६ ) सू ज्यादादीयसः । ६ । ४ । १६० । आदेः परस्य । ज्यायान् ॥ ( २७२७ ) सू वृद्धस्य च । ५ । ३ । ६२ । ज्यादेशः स्यादजाद्योः । ज्येष्ठः । ज्यायान् ॥ ( २७२८ ) सू अन्तिकबाढयोर्नेदसाधौ ।५।३।६३। अजाद्योः । नेदिष्ठः । नेदीयान् । साधिष्ठः । साधीयान् ॥ ( २७२९ ) सू स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादि परं पूर्वस्य च गुणः । ६ । ४ । १५६ । एषां यणादि परं लुप्यते पूर्वस्य च गुण इष्ठादिषु । स्थविष्ठः । दविष्ठः ।

---

मिति हरदत्तोक्तिश्चिन्त्या । ण्यन्तात् 'अचो यत् २७८७' इति विभाज्यमिति रूपसिद्धेः । न चात्रार्थभेदः शङ्क्यः, 'निवृत्तप्रेषणात् धातोः प्राकृतेऽर्थे णिच्' इति 'णेरणौ–२६६०' इति सूत्रे व्युत्पादनादिति दिक् ॥ द्विवचनं च विभज्यं चेति द्वन्द्वः । तस्य उपपदेन कर्मधारयः । तथा च द्व्यर्थवाचके विभजनीये चोपपदे सतीत्यक्षरार्थः । द्विवचनान्ते उपपदे इति व्याख्यायां तु दन्तोष्ठस्य दन्ताः स्निग्धतरा इत्यादि न सिध्यति । ननु द्वयोर्वचनं द्विवचनमिति पक्षेऽपि नेदं सिध्यति समाहारस्यैकत्वात्, गुणभूतवर्तिपदार्थाश्रयणे तु द्वात्रिंशद्दन्ताः द्वावोष्ठाविति तेषां बहुत्वात्सुतरां न सिद्ध्येदिति चेत् । अत्राहुः—वृत्तावभेदैकत्वसंख्यामुपाददति वर्तिपदानि । ततश्च भेदस्य परित्यागादभेदैकत्वसंख्यायाश्चोपादानाद्दन्तोष्ठलक्षणार्थद्वयं दन्तोष्ठशब्देनोच्यत इति नास्ति 'द्वयोर्वचनं द्विवचनमित्येतदर्थकद्विवचनोपपदे' इति पक्षे दोष इति । विस्तरस्त्वाकरग्रन्थेभ्योऽवगन्तव्यः । अन्वर्थं चोपपदम् उपोच्चारितं पदमिति, न तु कृत्रिमम्, तद्धितविधौ तस्यासंभवात् । तच्च विग्रहवाक्य एव प्रयुज्यते । वृत्तौ तु गतार्थत्वान्नावश्यकम् ॥ एवं स्थिते उपपदग्रहणं स्पष्टार्थम् । इह द्वे उपपदे द्वे च सुबन्ततिङन्तरूपे प्रकृती द्वौ च प्रत्ययौ तथापि यथासंख्यं नेष्यते ॥ द्विवचनोपपदमुदाहरति–**अयमनयोरिति** ॥ **लघीयानिति** । 'टेः २४१७' इति लोपः । उगित्त्वान्नुम् । 'सान्तमहतः–४३९' इति दीर्घः । हल्ङ्याब्[३६६]यादिसंयोगान्तलोपौ ॥ विभज्योपपदमुदाहरति—**प्राच्येभ्य इति** । 'पञ्चमी विभक्ते ९३७' इति पञ्चमी ॥ कथं तर्हि 'परुद्भवान् पटुरासीत्, ऐषमस्तु पटुतरः' इति । अत्राहुः–एकस्यापि धर्मिणस्तत्कालस्थत्वादिरूपधर्मभेदेन भेदाध्यारोपात्प्रतियोग्यपेक्षस्तत्कालस्थप्रकर्षस्तदाश्रयश्चेह तरप्प्रत्यय इति । व्यपदिशन्ति च—'अन्य एवासि संवृत्तः', 'कच्चित्स एवासि धनंजयस्त्वम्' इति ॥ ( २७२० ) **अजादी गुणवचनादेव** । इष्टतोऽवधारणार्थ एवकारः । तेन प्रत्ययानियमोऽयम् । एवकाराभावे तु गुणवचनादजादिप्रत्ययावेवेति प्रकृतिनियमोऽपि संभाव्येत । तथा च पटुतरः, पटुतम इत्यादि न सिध्येत् ॥ ( २७२१ ) **तुश्छन्दसि** । पूर्वेण नियमेन व्यावर्तितयोः प्रतिप्रसवोऽयम्, न त्वपूर्वो विधिः । तेन उपाधिसंकरो न ॥ ( २७२२ ) **तुरिष्ठे–** । 'टेः २४१७' इत्यनेनान्त्यलोपे सिद्धेऽप्यारम्भसामर्थ्यात्सर्वस्य तृशब्दस्य लोपस्तदाह—**करिष्ठ इति** ॥ **दोहीयसीति** । इयमनयोरतिशयेन दोग्ध्री 'भस्याढे तद्धिते १२०४' 'सिद्धश्च प्रत्ययविधौ' इति वचनात् तद्धिते कर्तव्ये प्रागेव पुंवद्भाव इति ङीपि निवृत्ते दोग्धृशब्दात्प्रत्ययः, ततस्तृचि निवृत्ते निमित्ताभावाद् घत्वजश्त्वयोरपि निवृत्तिः ॥ अलौकिकविग्रहवाक्ये प्रागेव तयोरप्रवृत्तिः । 'अकृतव्यूह–७३' परिभाषयेति तु तत्त्वम्[१] ॥ गुणस्तु प्रवर्तते । लुप्तेऽपि तृचि प्रत्ययलक्षणध्रौव्यात् ॥ छान्दसमपि 'तुः–२७२१' इति सूत्रम्, 'तुरिष्ठेमेयःसु २७२२' इति च 'णाविष्ठवत् ३४१६' इत्यतिदेशेन लोकेऽपि कर्तारमाचष्टे कारयतीत्यादावुपयोक्ष्यमाणत्वादिहोपन्यस्तम् ॥ ( २७२३ ) **प्रशस्यस्य श्रः** । 'अजादी' इत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह–**अजाद्योरिति** । अजाद्योः किम्, प्रशस्यतरः । प्रशस्यतमः । ( २७२४ ) **प्रकृत्यैकाच्** । **श्रेष्ठ इति** । प्रकृतिभावादिह 'टेः २४१७' इति लोपो 'यस्येति–४३१' लोपश्च न भवति ॥ ( २७२६ ) **ज्यादात्**— । ज्यादुत्तरस्य ईयसुन आकारादेशः स्यात् ॥ ( २७२७ ) **वृद्धस्य च** । स्वरूपस्येह ग्रहणं, न तु 'वृद्धिर्यस्याचामादिः–१८७८' इति पारिभाषिकस्य, व्याख्यानात् । अस्य 'प्रियस्थिर–२७३०' इत्यादिना वर्षादेशोऽपि पक्षे भवति । न च तस्येमनिचि सावकाशता शङ्क्या, वृद्धशब्दादिमनिचोऽभावात् । यदि तु 'वृद्धस्य वर्षिश्च' इति सूत्रमिहैव क्रियेत, तदा द्विर्वृद्धग्रहणं न कर्तव्यमिति लाघवं भवतीत्याहुः ॥( २७२९ ) **स्थूलदूर–** । परग्रहणं यविष्ठो ह्रसिष्ठ इत्यत्र पूर्वयणादेर्लोपो मा भूदिति । पूर्वग्रहणं तु स्पष्टार्थम् । परस्मिन् लुप्ते सामर्थ्यात्पूर्वस्यैव गुणलाभात् ॥ **स्थविष्ठ इति** । न चात्र 'ओर्गुणः १२१९' इत्येव सिद्धे गुणग्रहणं व्यर्थमिति वाच्यम्, परयणादिलोपस्याभीयत्वे-

---

१ **तत्त्वमिति** । अकृतव्यूहपरिभाषाभावेऽपि पदावधिकान्वाख्याने 'दुह् तृ ईयसुन्' इत्यवस्थायां प्रतिपदविधित्वेन तृचो लोपे झल्परत्वाभावान्न घत्वादीति बोध्यम् ॥

यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवमीयस् । ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वाद्-ह्रसिमा । क्षेपिमा । क्षोदिमा ॥ ( २७३० ) **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** । ६ । ४ । १५७ । प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु । प्रेष्ठः । स्थेष्ठः। स्फेष्ठः। वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृन्दिष्ठः । एवमीयसुन्-प्रेयान् । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्प्रेमेत्यादि ॥ ( २७३१ ) **बहोर्लोपो भू च बहोः** । ६ । ४ । १५८ । बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः । भूमा । भूयान् ॥ ( २७३२ ) **इष्ठस्य यिट् च** । ६ । ४ । १५९ । बहोः परस्य इष्ठस्य लोपः स्यात् यिडागमश्च । भूयिष्ठः ॥ ( २७३३ ) **युवाल्पयोः कनन्यतरस्याम्** । ५ । ३ । ६४ । एतयोः कनादेशो वा स्यादिष्ठेयसोः । कनिष्ठः । कनीयान् । पक्षे । यविष्ठः । अल्पिष्ठ इत्यादि ॥ ( २७३४ ) **विन्मतोर्लुक्** । ५ । ३ । ६५ । विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः, स्रजीयान् । अतिशयेन त्वग्वान्-त्वचिष्ठः, त्वचीयान् ॥ ( २७३५ ) **प्रशंसायां रूपप्** । ५ । ३ । ६६ । सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः--पटुरूपः । प्रशस्तं पचति-पचतिरूपम् । ( २७३६ ) **ईषदसमाप्तौ कल्पब्देश्यदेशीयरः** । ५ । ३ । ६७ । ईषदूनो विद्वान् विद्वत्कल्पः । यशस्कल्पम् । यजुष्कल्पम् । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् ॥ ( २७३७ ) **विभाषा सुपो बहुच् पुरस्तात्तु** । ५ । ३ । ६८ : ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव न तु परतः। ईषदूनः पटुर्बहुपटुः । पटुकल्पः । सुपः किम् । यजतिकल्पम् ॥ ( २७३८ ) **प्रकारवचने जातीयर्** । ५ । ३ । ६९ । प्रकारवति चायम् । थाल् तु

---

नासिद्धत्वात् क्षिप्रक्षुद्रयोर्गुणस्य प्राप्त्यभावात्, क्षेपिष्ठः क्षोदिष्ठः, इत्यसिद्धिप्रसङ्गाच्च ॥ **एवमिति** । प्रेयान्, स्फेयान्, वरीयानित्यादि ॥ ( २७३१ ) **बहोर्लोपो--**। **इमेयसोर्लोप इति** । स च 'आदेः परस्य६८' इत्यादेरेव भवति॥ (२७३२) **इष्ठस्य यिट् च** । पूर्वसूत्रं संपूर्णमनुवर्तते तदाह--**बहोरित्यादि** । भूरादेशश्चेत्यपि ज्ञातव्यम् ॥ **भूयिष्ठ इति** । अत्र इष्ठस्यादिलोपे कृते यिशब्द आगमः । यद्वा-लोपापवादो यकार आगमः, इकारस्तूच्चारणार्थः । पक्षद्वयमपीदं भाष्यारूढम् ॥ ( २७३३ ) **युवाल्पयोः**—। युवेति स्वरूपग्रहणं, न तु युवापत्यस्य, अल्पसाहचर्याद्व्याख्यानाच्च । 'अजादी' इत्यनुवर्तनादजायोरेव पूर्वयोर्न तु तरप्तमपोरित्याशयेन व्याचष्टे—**इष्ठेयसोरिति** ॥ ( २७३४ ) **विन्मतोर्लुक्** । **स्रजिष्ठ इति** । विनो लुकि कृते भत्वात्पदकार्याभावः । अस्मादेव ज्ञापकादगुणवचनत्वेऽपि विन्मतोरजादी भवतः ॥ ( २७३५ ) **प्रशंसायां रूपप्** प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा न तु स्तुतिः । तेनेहापि भवति । चौररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति । गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते ॥ **पचतिरूपमिति** । 'क्रियाप्रधानमाख्यातम्' क्रियायाश्चासत्त्वरूपत्वेऽपि औत्सर्गिकमेकवचनं भवति । तेन पचतोरूपं पचन्तिरूपमित्यादि । इह प्रथमैव विभक्त्यन्तराणामप्राप्तेरिति बहवः । वस्तुतस्तु पश्येत्यादियोगे कर्मणि द्वितीयाऽपि सुलभा । क्लीबत्वं लोकात् । एवं पचतिकल्पमित्यादावपि बोध्यम् ॥ (२७३७) **विभाषा सुपः**—। सूत्रे 'सुपः' इति षष्ठ्यन्तम्। 'षष्ठ्यतसर्थप्रत्ययेन ८९२' इत्युक्तेः ॥ **सुबन्तादिति** । एतच्च पञ्चम्यन्तमुक्तमेव । पुरस्ताच्छब्दपर्यायस्य प्रागिति शब्दस्य वृत्तौ प्रयुक्तत्वात् । प्रागित्यपकृष्यत इति तु मनोरमायां स्थितम् । न च सूत्रस्थपुरस्ताच्छब्दसमानार्थकप्राक्शब्दयोगेऽपि 'षष्ठ्यतसर्थ-८९२' इति षष्ठी स्यादिति वाच्यम्, 'अन्यारात्-८७१' इति सूत्रेऽञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थप्रत्ययेन ८९२' इत्येतद्बाधनार्थं पृथग्ग्रहणमिति सिद्धान्तयित्वा प्राक् प्रत्यग्वा ग्रामादित्युदाहृतत्वात् । काशिकायां तु वृत्तावपि पुरस्ताच्छब्दः प्रयुक्तः, सुबन्तादिति च प्रयुक्तं, तदसमञ्जसमिति मत्वा हरदत्तेन कथंचित् समर्थितम् । ल्यब्लोप एषा पञ्चमी । एवंभूतं प्रकृतित्वेनाश्रित्येत्यर्थ इति ॥ **प्रागेवेति** । सौत्रस्तुशब्दोऽवधारणे वर्तते इति भावः । तेन च बहुजेव विकल्प्यते, न तु पूर्वत्वम् । तुशब्दाभावे तु प्राक्त्वं विकल्प्येत । तथा च पक्षे बहुच् परः स्यात् ॥ भाष्यकारस्य मते तु नेदं तुशब्दस्य फलम् । तथाहि—'उदश्वितोऽन्यतरस्याम् १७२३' इत्यादौ प्रधानत्वात्प्रत्यय एव विकल्प्यते, न तु परत्वं, प्रत्यय एव हि परत्वविशिष्टो विधीयत इति विशेषणं तु गुणत्वात् । 'गुणानां च परार्थत्वात्' इति न्यायात् । तद्वदिहापि विभाषाग्रहणेन बहुजेव संभत्स्यते, न पुरस्तादित्येतत् । तुशब्दस्य तु अवधारणार्थस्यान्यदेव प्रयोजनं पुरस्तादेष सर्वं यथा स्यादिति । तेन लिङ्गसंख्ये अपि प्राक् प्रत्ययोत्पत्तेः प्रकृत्यवस्थायां ये दृष्टे ते एव स्तः । बहुचः प्रयोगश्च प्राक् प्रकृतेरेव भवतीति । तेन बहुगुडो द्राक्षा 'लघुर्बहुतृणं नरः' इत्यादौ प्रकृतिवल्लिङ्गमेव भवति, न त्वभिधेयवल्लिङ्गम् । ननु 'स्वार्थिकाः प्रकृतितो लिङ्गवचनानि लभन्ते' इत्येव सिद्धमिति किमनेन तुशब्दग्रहणेनेति चेत् । अत्राहुः-एतदेव ज्ञापयति 'ईषदसमाप्तौ ये

---

१ अयं च लुक् तक्रकौण्डिन्यन्यायेन टिलोपस्य बाधकः । तथा च-'ओजस्विन्' शब्दादिष्ठनि विन्लुगुत्तरमपि न टिलोप इति ओजसिष्ठ इत्येव रूपम् ॥ ओजिष्ठ इति प्रयोगस्य प्रामाणिकत्वे तु वृत्तौ तद्वति वर्तमानाद् ओजस्शब्दादेवेष्ठन् प्रत्ययो बोध्यः ॥ बलीय इति भाष्यप्रयोगे मतुब्लोपोत्तरं टिलोपवद् अत्रापि विन्लुगुत्तरं टिलोपेन ओजिष्ठ इति सिध्यति-इति केचित् ॥ तन्न, तत्र मतुब्लोपोत्तरमबाधितेन 'यस्येति-' इति लोपेनैवेष्टसिद्धौ तस्य तत्र ज्ञापकत्वासंभवात् ॥ 'यथालक्षणमप्रयुक्ते' इति भाष्येण तु विन्नन्तादिष्ठेयसोरनभिधानकल्पनमेव वरम् ॥

प्रकारमात्रे । पटुप्रकारः पटुजातीयः ॥ ( २७३९ ) ॥ प्रागिवात्कः । ५ । ३ । ७० । इवे प्रतिकृतौविस्यतः प्राक् काधिकारः ॥ ( २७४० ) ॥ अव्ययसर्वनाम्नामकच् प्राक् टेः । ५ । ३ । ७१ । तिङश्चेत्यनुवर्तते ॥ ( २७४१ ) ॥ कस्य च दः ।५।३।७२। कान्ताव्ययस्य दकारोऽन्तादेशः स्यादकच ॥ (२७४२) ॥ अज्ञाते ।५।३।७३। कस्यायमश्वोऽश्वकः । उच्चकैः । नीचकैः । सर्वके । विश्वके ॥ ( २७४३ ) ॥ ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् ॥ युवकयोः । आवकयोः । युष्मकासु । अस्मकासु । युष्मकाभिः । अस्मकाभिः । ओकारेत्यादि किम् । त्वयका ॥ मयका ॥ ( २७४४ ) ॥ अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः ॥ मित्त्वादन्त्यादचः परः । तूष्णीकामास्ते ॥ ( २७४५ ) ॥ शीले को मलोपश्च ॥ तूष्णींशीलस्तूष्णीकः । पचतकि । जल्पतकि । धकित् । हिरकुत् ॥ (२७४६) ॥ कुत्सिते । ५ । ३ । ७४ । कुत्सितोऽश्वोऽश्वकः ॥ ( २७४७ ) ॥ संज्ञायां कन् । ५ । ३ । ७५ । कुत्सिते कन् स्यात्तदन्तेन चेत्संज्ञा गम्यते । शूद्रकः । राधकः । स्वरार्थं वचनम् ॥ ( २७४८ ) ॥ अनुकम्पायाम् । ५ । ३ । ७६ । पुत्रकः । अनुकम्पितः पुत्र इत्यर्थः ॥ ( २७४९ ) ॥ नीतौ च तद्युक्तात् । ५ । ३ । ७७ । सामदानादिरूपा नीतिस्तस्यां गम्यमानायामनुकम्पायुक्तात्कप्रत्ययः स्यात् । हन्त ते धानकाः । गुडकाः । एहकि । अद्धकि । पूर्वेणानुकम्प्यमानात्प्रत्ययः । अनेन तु परम्परासंबन्धेऽपीति विशेषः ॥ ( २७५० ) ॥ बह्वचो मनुष्यनाम्नष्ठज्वा । ५ । ३ । ७८ । पूर्वसूत्रद्वयविषये ॥ ( २७५१ ) ॥ घनिलचौ च । ५ । ३ । ७९ । तत्रैव ॥ ( २७५२ ) ॥ ठाजादावूर्ध्वं द्वितीयादचः । ५ । ३ । ८३ । अस्मिन्प्रकरणे यष्ठोऽजादिप्रत्ययश्च तस्मिन्प्रत्यये परे प्रकृतेर्द्वितीयादच ऊर्ध्वं सर्वं लुप्यते । अनुकम्पितो देवदत्तो-देविकः । देवियः । देविलः । देव-

---

स्वार्थिकास्तेष्वभिधेयवदेव लिङ्गवचने स्तः' इति । तेन गुडकल्पा द्राक्षा शर्कराकल्पो गुड इत्यादि सिद्धम् ॥ (२७३९) **प्रागिवात्कः** । 'सुपः' इत्यनुवर्तते तेन तिङन्तात्को न ॥ (२७४०) **अव्ययसर्वनाम्नाम्**—। **अनुवर्तते इति** । मण्डूकप्लुत्येति भावः । 'ङ्याप्प्रातिपदिकात् २६६' 'सुपः' इति चानुवर्तत एव ॥ (२७४१) **कस्य च दः** । **कान्ताव्ययस्येति** । सर्वनामग्रहणं तिङ्ग्रहणं च नेह संबध्यते, तयोः कान्तत्वासंभवात् । न चाधोक् अधोगित्यादौ संभवोऽस्तीति वाच्यम्, कत्वस्यासिद्धत्वात् । यद्यपि शक्नोतेर्यङ्लुकि लङि तिपि 'अशाशक्' इति संभवति, तथापि यङ्लुकोऽसार्वत्रिकत्वान्नेदं लक्ष्यमस्ति । छन्दसि कचिल्लक्ष्यसद्भावेऽपि 'सर्वे विधयश्छन्दसि वा विधीयन्ते' इति दत्वविधिर्न प्रवर्तत इति भावः ॥ ( २७४३ ) **ओकारेति** । अकज्विधौ सुपोऽप्यनुवृत्त्या सर्वनाम्ना सुपा च टेर्विशेषणे कामचाराद् अव्यवस्थाप्रसङ्गे भाष्यकारवचनाद् व्यवस्थाऽऽश्रीयते । ओकारसकार इत्यादिसंकोचश्च युष्मदस्मन्मात्रविषयकः, तथैव भाष्ये उदाहृतत्वात् । अन्येषां त्वविशेषेण प्रातिपदिकस्यैव टेः प्रागकच्, न सुबन्तस्य । तेन सर्वकेन इमकेण भवकन्तमित्यादि सिध्यति ॥ **त्वयका मयकेति** । नन्वत्र सुपः प्रागकचि कृते, प्रत्यये परतस्त्वमादेशयोः सतोरपि 'योऽचि ५३०' इति यत्वं न स्यात्, विभक्तिपरत्वाभावादिति चेत् । मैवम्—अकृतव्यूहपरिभाषायाँ अनित्यतामाश्रित्याकचः पूर्वमेव यत्वविधानात् । एवं युवकामावकामित्यत्राप्यकचः पूर्वमेव युवावादेशाविति बोध्यम् ॥ (२७४५) **शीले क इति** । शीलं स्वभावो नियमश्च ॥ **तूष्णीक इति** । 'केऽणः ११९९' इति ह्रस्वस्तु भाष्यकारप्रयोगात् 'न कपि १२००' इत्यत्र 'न' इति योगविभागाद्वा न भवतीत्याहुः ॥ अकचो द्वितीयोऽकार उच्चारणार्थ इति ध्वनयन्नुदाहरति—**पचतकीत्यादि** ॥ ( २७४८ ) **अनुकम्पायाम्** । 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः ॥ ( २७४९ ) **नीतौ च तद्युक्तात्** । **अनुकम्पायुक्तादिति** । यद्यपि पुत्रादिरेव साक्षादनुकम्पायुक्तो न तु धानादिः, तथापि तद्द्वारा धानादीनामप्यस्त्यनुकम्पासंबन्ध इति भावः ॥ **धानका इति** । धानाशब्दः स्त्रीलिङ्गः । ततः कः 'केऽणः ११९९' इति ह्रस्वः । कप्रत्ययान्ताट्टाप् ॥ अत्र 'प्रत्ययस्थात्–६३०' इतीत्वेन भाव्यम् । प्रायेण तु धानका इति पठ्यते ॥ तत्र लिङ्गातिवृत्तिर्द्रष्टव्येति हरदत्तः[1] ॥ 'कर्मव्यतिहारे णच् स्त्रियाम् ५००६' इति सिद्धे 'णचः स्त्रियामञ् ५००७' इति सूत्रे पुनः स्त्रीग्रहणेन ज्ञापितं—'स्वार्थिकाः प्रकृतिलिङ्गात्कचिदतिवर्तन्ते' इति । तेन धानका इत्यत्र पुंस्त्वमिति भावः ॥ (२७५१) **घनिलचौ च** । चकाराद्यथाप्राप्तमिति काशिका । इह पूर्वसूत्रेणैव ठन् विहितः । वावचनात्कोऽपि । चकारेण तु कस्याभ्यनुज्ञेति चिन्त्यम् । योगविभागे फलमपि चिन्त्यमिति हरदत्तः[2] ॥ ( २७५२ ) **ठाजादौ**—। समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । आदिग्रहणं चिन्त्यप्रयोजनं, 'यस्मिन्विधिस्तदादौ–'[3] इत्येव सिद्धमिति हरदत्तः ॥ **अस्मिन्प्रकरण इति** । अनुकम्पायां नीतौ चेत्यर्थद्वयस्यैव प्रत्यासत्त्या बुद्धौ सन्निधानादिति भावः ॥ ऊर्ध्वग्रहणमिह सर्वलोपार्थम् । अन्यथा 'आदेः परस्य ६८' इत्यादेरेव स्यादित्यभिप्रेत्याह—**द्वितीयादच ऊर्ध्वं सर्वमिति** । 'अजिनान्तस्य–२७६५' इत्यतो लोप इत्यनुवर्तनादाह—**लुप्यत इति** ।

---

१ **हरदत्त इति** । 'अभाषितपुंस्काच्च' इति विकल्पात्पक्षे इत्वाभावः सुलभ इत्येवात्रारुचिः ॥ २ **हरदत्त इति** । अत्रारुचिस्तु—योगविभागसामर्थ्याद् बह्वच इत्यस्यात्रासंबन्धेनाबह्वचोऽप्येतौ । ततः कठच्सिद्ध्यर्थश्चकार इति वृत्त्याशय इति ॥ ३ **यस्मिन्विधिरिति** । प्रत्यासत्त्योपस्थितप्रकृतप्रत्ययस्य विशेष्यस्य सत्त्वादिति भावः । औपदेशिकप्रतिपत्त्यर्थं तु नादिग्रहणम्, ऊग्रहणवैयर्थ्यशङ्कापरभाष्यासंगतिः ॥

दत्तकः । अनुकम्पितो वायुदत्तो--वायुकः [ ठग्रहणमुको द्वितीयत्वे कविधानार्थम् । वायुदत्तः । वायुकः । पितृकः ।] ( २७५३ ) वा० चतुर्थाद् ( अच ऊर्ध्वस्य लोपो वाच्यः ) ॥ अनुकम्पितो बृहस्पतिदत्तो–बृहस्पतिकः ॥ (२७५४) वा० अनजादौ च ( विभाषा लोपो वक्तव्यः ) ॥ देवदत्तकः ॥ देवकः ॥ ( २७५५ ) वा० लोपः पूर्वपदस्य च ॥ दत्तिकः ॥ दत्तियः । दत्तिलः । दत्तकः ॥ ( २७५६ ) वा० विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः ॥ देवदत्तः । दत्तः । देवः ॥ सत्यभामा । भामा । सत्या ॥ ( २७५७ ) वा० उवर्णाल्ल इलस्य च ॥ भानुदत्तः । भानुलः ॥ (२७५८) वा० ऋवर्णादपि । सवित्रियः । सवितृलः । चतुर्थादनजादौ च लोपः पूर्वपदस्य च । अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ॥ ( २७५९ ) सू० प्राचामुपादेरडज्वुचौ च । ५ । ३ । ८० । उपशब्दपूर्वात्प्रातिपदिकात्पूर्वविषये अडच् वुच् एतौ स्तः । चाद्यथाप्राप्तम् । प्राचांग्रहणं पूजार्थम् । अनुकम्पित उपेन्द्रदत्तः–उपडः । उपकः । उपिकः । उपियः । उपिलः । उपेन्द्रदत्तकः, षड् रूपाणि ॥ ( २७६० ) सू० जातिनाम्नः कन् । ५ । ३ । ८१ । मनुष्यनाम्न इत्येव । जातिशब्दो यो मनुष्यनामधेयस्तस्मात्कन् स्यादनुकम्पायां नीतौ च । सिंहकः । शरभकः । शासभकः ॥ ( २७६१ ) वा० द्वितीयं संध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः ॥ कहोडः--कहिकः ॥ ( २७६२ ) वा० एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः ॥ वागाशीर्दत्तः–वाचिकः । कथं षडङ्गुलिदत्तः--षडिक इति ॥ ( २७६३ ) वा० षषष्ठाजादिवचनात्सिद्धम् ॥ ( २७६४ ) सू० शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् । ५ । ३ । ८४ । एषां मनुष्यनाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात् । पूर्वस्यापवादः । अनुकम्पितः

---

ननु ठग्रहणं व्यर्थम्, इकादेशे कृते अजादावित्येव सिद्धत्वादत आह--ठग्रहणमुको द्वितीयत्व इति ॥ वायुक इति। वायुशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव लोपे 'इसुसुक्तान्तात्–१७२४' इति कः । किञ्च,पृथक् ठग्रहणस्य प्रयोजनान्तरमप्यस्ति। यदा तु चित्रगुप्तप्रभृतिभ्यष्ठच्,तदोगन्तत्वात् कादेशप्राप्त्या प्रथममिकादेशस्याऽसंभवेनाजादिलक्षणो लोपो न स्यादिति तदर्थमपि ठग्रहणम् । तेन ठावस्थायामुत्तरपदलोपे कादेशस्यासंभवादिकादेशे चित्रिक इति रूपं सिध्यतीति बोध्यम् ॥ (२७५३)'चतुर्थादनजादौ च-'इति वक्ष्यमाणमेव श्लोकं भङ्क्त्वा व्याचष्टे-चतुर्थादच ऊर्ध्वस्येति॥(२७५४) अनजादाविति । हलादावित्यर्थः । 'अस्मिन् प्रकरणे' इत्येव ॥ (२७५५) लोपः पूर्वपदस्य चेति । ठाजादावनजादौ चेति बोध्यः ॥ ( २७५६ ) 'अप्रत्यये तथैवेष्टः' इत्येतद्व्याचष्टे--विनाऽपि प्रत्ययमिति ॥ ( २७५७ ) ल इलस्य चेति। इलस्य लः लोप इत्यर्थस्तत्र 'आदेः परस्य ६८' इति इकारलोपो बोध्यः ॥ ( २७५९ ) प्राचामुपादेः--। 'बह्वचो मनुष्य –२७५०' इत्याद्यनुवर्तते ॥ उपेन्द्रदत्त इति । ननु कृतसंधेरुपेन्द्रशब्दादेकादेशस्य पूर्वान्ततया ग्रहणात् 'उपादेः' इति विधीयमानौ प्रत्ययौ स्तां नाम, लोपस्तु नकारादेरेव स्यात् । ततश्च उपक उपड इति रूपे न स्याताम् । किंतु उपयक उपयड इति रूपे स्याताम् एवं घनिलच्ठच्स्वपि दोष एव । तस्मादिहैव 'द्वितीयं संध्यक्षरं चेत्–२७६१' इति वार्तिकं कुतो नोक्तमिति चेत् । अत्राहुः–प्रकारान्तरेण निर्वाहसंभवान्नोक्तम् । तथाहि–आद्गुणे कृते 'द्वितीयं संध्यक्षरम्–२७६१' इत्यादिना अकारस्यापि लोपप्रसक्त्या गुणात्पूर्वमेवाकृतव्यूहपरिभाषया[3] प्रत्ययः । न च परिनिष्ठितत्वपरेण समर्थग्रहणेन सौस्थितिरित्यत्रेव परिभाषाबाधः शङ्क्यः, 'प्राग्दिशः–२६४७' इति सूत्रे 'समर्थग्रहणं निवृत्तम्' इत्युक्तत्वात् । 'अकृतसंधेः' इति प्रागुक्तज्ञापकबलेन समर्थग्रहणप्रत्याख्यानपक्षेऽपि ज्ञापकस्य विशेषपरत्वाश्रयणादिति ॥ उपेन्द्रः उपगुरुरुपकर्तेत्यादिषूपडादीनां पञ्चानां रूपाणां साम्येऽपि सैन्धवादिष्विव प्रकरणादिना विशेषोऽध्यवसेयः ॥ ( २७६० ) जातिनाम्नः--। ये शब्दा जात्यन्तरे प्रसिद्धाः, मनुष्येषु नामत्वेन विनियुक्तास्त इहोदाहरणम् ॥ ( २७६१ ) द्वितीयमित्यादि । एचः संध्यक्षरमिति प्राचां संज्ञा ॥ ( २७६२ ) वागाशीरिति । वाचि आशीर्यस्येति विग्रहः ॥ वाचिक इति । यद्यत्र द्वितीयादच ऊर्ध्वस्य लोपः स्यात् तदा 'वाच् आ इक' इति स्थिते 'यस्येति च ४३१' इत्याकारस्य लोपे तस्य स्थानिवत्त्वादाकारान्तस्य भत्वे अन्तर्वर्तिनीं विभक्तिमाश्रित्य चकारान्तस्य पदत्वेन कुत्वजश्त्वयोः सतोर्वागिक इति स्यात् । उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाभावात्तुल्यावधिकतया 'यचि भम् ३३२' इति भसंज्ञया 'सुप्तिङन्तम्–५२' इति पदसंज्ञा एकसंज्ञाधिकारात्परत्वाद्बाध्यते, 'स्वादिषु–२३१' इति पदसंज्ञा तु न शङ्कनीयैव 'यचि भम् ३३२' इति भसंज्ञायास्तदपवादत्वात् ॥ कथमिति। अत्राप्युत्तरपदलोपे जाते जश्त्वं दुर्लभमिति प्रश्नः॥(२७६३)षष इति।अत्र सौत्र एव लोप इष्यते,न त्वौपसंख्यानिक इत्यर्थः॥ (२७४)शेवलसुपरि-। शेवलिक इति। 'बह्वचो मनुष्यनाम्नः–२७५०'इति ठच् । घनिलचोस्तु शेवलियः । शेवलिलः ॥

---

१ अयं कोष्ठकान्तर्गतः पाठः पश्चात्केनचित्प्रक्षिप्तः ॥ 'ननु ठग्रहणं व्यर्थम् इकादेशे कृते 'अजादौ' इत्येव सिद्धत्वाद्–इति चेत् । न, उको द्वितीयत्वे ततः परस्य ठावस्थायामेव लोपे ठस्य कादेशार्थं ग्रहणात् । इदं ध्वनयन्नुदाहरति–'वायुक इति' इति मनोरमायामुक्तार्थस्य ध्वननरूपताया उक्तत्वात् ॥ २ विनाऽपीति । * अप्रत्यये तथैवेष्टः * इति वार्तिकार्थभूतमिदमिति भावः ॥ ३ ऋवर्णादपीति । भाष्ये त्वेतन्न दृश्यते ॥ ४ एकाक्षरेति । अक्षरशब्देन व्यञ्जनसहितोऽच्, 'चतुर्विंशत्यक्षरा गायत्री' इत्यादौ तथैवाङ्गीकारात् ॥

शेवलदत्तः-शेवलिकः। शेवलियः। शेवलिलः। सुपरिकः। विशालिकः। वरुणिकः। अर्यमिकः॥ (२७६५) सू अजिनान्तस्योत्तरपदलोपश्च।५।३।८२। अजिनान्तान्मनुष्यनाम्नोऽनुकम्पायां कन्, तस्य चोत्तरपदलोपः। अनुकम्पितो व्याघ्राजिनो-व्याघ्रकः। सिंहकः॥ (२७६६) सू अल्पे।५।३।८५। अल्पं तैलं--तैलकम्॥ (२७६७) सू ह्रस्वे।५।३।८६। ह्रस्वो वृक्षो-वृक्षकः॥ (२७६८) सू संज्ञायां कन्।५।३।८७। ह्रस्वहेतुका या संज्ञा तस्यां गम्यमानायां कन्। पूर्वस्यापवादः। वंशकः वेणुकः॥ (२७६९) सू कुटीशमीशुण्डाभ्यो रः।५।३।८८। ह्रस्वा कुटी-कुटीरः। शमीरः। शुण्डारः॥ (२७७०) सू कुत्वा डुपच्।५।३।८९। ह्रस्वा कुतूः-कुतुपः। 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्॥ (२७७१) सू कासूगोणीभ्यां ष्टरच्।५।३।९०। आयुधविशेषः कासूः। ह्रस्वा सा कासूतरी। गोणीतरी॥ (२७७२) सू वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे।५।३।९१। वत्सतरः। द्वितीयं वयः प्राप्तः। उक्षतरः। अश्वतरः। ऋषभतरः। प्रवृत्तिनिमित्ततनुत्व एवायम्॥ (२७७३) सू कियत्तदो निर्धारणे द्वयोरेकस्य डतरच्।५।३।९२। अनयोः कतरो वैष्णवः। यतरः। ततरः। महाविभाषया-कः। यः। सः॥ (२७७४-१) सू वा बहूनां जातिपरिप्रश्ने डतमच्।५।३।९३। बहूनां मध्ये एकस्य निर्धारणे डतमच् वा स्यात्। जातिपरिप्रश्न इति प्रत्याख्यातमाकरे। कतमो भवतां कठः। यतमः। ततमः। वाग्रहणमकजर्थम्। यकः। सकः। महाविभाषया-यः। सः॥ (२७७४-२) सू किमोऽस्मिन्विषये डतरजपि॥ कतरः॥ (२७७५) सू एकाच्च प्राचाम्।५।३।९४। डतरच् डतमच स्यात्। अनयोरेकतरो मैत्रः। एषामेकतमः॥ (२७७६) सू अवक्षेपणे कन्।५।३।९५। व्याकरणेन गर्वितः व्याकरणकः। येनेतरः कुत्स्यते तदिहोदाहरणम्। स्वतः कुत्सिते तु कुत्सित [२७४६] इत्यर्थस्य॥ प्रागिवीयानां पूर्णोऽवधिः॥

---

शेवलादीनां तृतीयाल्लोपो य उच्यते स च कृतसंधीनां वक्तव्यः॥ सुपर्याशीः सुपरिकः सुपरियः सुपरिल इति भाष्ये स्थितम्। कैयटेन तु सुपरिक इति प्रतीकमुपादाय संहिताकार्ये तु कृते लोपे सति सुपर्यिक इति स्यादिति व्याख्यातम्। अयं भावः-संहिताकार्ये यणि कृते तृतीयादच ऊर्ध्वलोपे सति शीर्दत्त इत्यस्यैव लोपः स्यात्। आकारस्य तु 'यस्येति च ४३१' इत्यनेन स्यात्, तथा च-स्थानिवद्भावाद्यणो निवृत्तिर्न भविष्यतीति॥ (२७६७) ह्रस्वे। तैलादौ ह्रस्वदीर्घादिव्यवहाराभावात् वृक्षक इत्युदाहृतम्। यद्यपि 'अल्पे २७६६' इत्यनेनैवेदं रूपं सिध्यति, तथापि शाब्दबोधे विशेषोऽस्तीत्याहुः॥ (२७६९) कुटीशमी-। कुटीर इति। 'स्वार्थिकाः प्रकृतितो लिङ्गमतिवर्तन्ते' इति पुँल्लिङ्गताऽत्र संगच्छते॥ (२७७२) वत्सोक्षाश्व—। तनुत्वं न्यूनता। सा च प्रवृत्तिनिमित्तस्य, प्रत्यासत्तेः। क्वचित्तु तत्सहचरितधर्मान्तराणाम्। तत्र वत्सः प्रथमवयाः॥ वयसश्च प्रथमस्य न्यूनत्वं नाम वयोऽन्तरप्राप्तिस्तदाह—द्वितीयमिति। तरुण उक्षा। तारुण्यस्य च तनुत्वं तृतीयवयःप्राप्तिः। अश्वायामश्वादुत्पन्नोऽश्वः। अश्वत्वं च जातिः। तत्सहचरितस्याश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यपितृकतात्वात्। तथा च गर्दभेनाश्वायामुत्पादितोऽश्वतरः॥ ऋषभो भारस्य वोढा। तस्य तनुत्वं भारोद्वहने मन्दशक्तिता। तद्वांस्तु ऋषभतरः॥ (२७७२) कियत्तदो—। कतरो वैष्णव इति। गुणेन निर्धारणमिदम्। क्रियासंज्ञाभ्यां निर्धारणे तु कतरोऽध्यापकः। कतरो देवदत्त इत्यादि ज्ञेयम्॥ ननु द्वयोरेकस्य निर्धारणे डतरच् भवति, तर्हि 'कयोरन्यतरो देवदत्तः' 'ययोरन्यतरः तयोरन्यतरः' इत्यत्रापि प्राप्नोति। अत्राहुः--निर्धार्यमाणवाचिभ्य एवायं प्रत्ययोऽभिधानस्वाभाव्यात्। तेनात्र नातिप्रसङ्ग इति। एकस्येति किम्, 'द्वयोः' इति कर्मणि षष्ठी मा भूत्। तथाहि सति 'अस्मिन् संघे कौ देवदत्तयज्ञदत्तौ' इत्यादावेव स्यात्॥ (२७७४-१) वा बहूनाम्—। 'कियत्तदः' इति वर्तते। जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः। अत्र जाताविति सर्वेषां विशेषणम्। षष्ठीसमासे तु गुणभूतस्य जातिग्रहणस्य निष्कृष्य संबन्धोऽनुपपन्नः स्यात्। परिप्रश्नग्रहणं तु किम एव विशेषणम्। तच्च क्षेपनिवृत्त्यर्थम्। तत्र जातिग्रहणं प्रायोऽभिप्रायम्। क्रियागुणसंज्ञाभिरपि निर्धारणे डतमच इष्टत्वात्। तथा पूर्वसूत्रे द्वयोरिति प्रायोऽभिप्रायम्। बहूनां निर्धारणेऽपि डतरच इष्टत्वात्। तथा च वार्तिकम्-* **किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम्।** इति॥ अत्र कैयटः- 'द्वयोः' इति, 'जातिपरिप्रश्ने' इति च न कर्तव्यमिति भाव इति। तदेतदाह--प्रत्याख्यातमाकर इति॥ कठ इति। कतमो भवतामध्यापकः शूरो देवदत्तो वेत्यप्युदाहर्तव्यम्॥ यकः सक इति। कक इति तु नोक्तम्, अकच्सहितस्यापि 'किमः कः ४६६' इत्ययमादेश इति व्याख्यातत्वात्॥ महाविभाषयेति। 'प्राग्दिशः-२६४७' इति सूत्रे समर्थप्रथमग्रहणयोर्निवृत्तत्वेऽपि वाग्रहणमनुवर्तते इत्युक्तत्वादिति भावः॥ (२७७४-२) 'कियत्तदः-२७७३' इति सूत्रे द्वयोरित्यस्य प्रत्याख्यानादाह--किमोऽस्मिन्निति॥ (२७७५) एकाच्च--। प्राचांग्रहणं पूजार्थम्। विकल्पोऽनुवर्तत एव॥ (२७७६) अवक्षेपणे कन्। कुत्सिते तु कः। स्वरे विशेषः॥ येनेतर इति। अवक्षिप्यते येनेत्यवक्षेपणशब्दः करणे ल्युडन्त इति भावः॥ प्रागिवीयानां पूर्णोऽवधिः॥

---

१ जातिपरिप्रश्न इतीति। जातिग्रहणाकर्तव्यत्वे तात्पर्यम्॥ परिप्रश्नग्रहणं तु क्षेपार्थनिवृत्तय आवश्यकमिति बोध्यम्॥

## अथ स्वार्थिकप्रकरणम् ।

( २७७७ ) (सू) **इवे प्रतिकृतौ** । ५ । ३ । ९६ । कन् स्यात् । अश्व इव प्रतिकृतिः अश्वकः । प्रतिकृतौ किम् । गौरिव-गवयः ॥ ( २७७८ ) (सू) **संज्ञायां च** । ५ । ३ । ९७ । इवार्थे कन् स्यात्समुदायश्चेत्संज्ञा । अप्रतिकृत्यर्थमारम्भः । अश्वसदृशस्य संज्ञा अश्वकः । उष्ट्रकः ॥ ( २७७९ ) (सू) **लुम्मनुष्ये** । ५ । ३ । ९८ । संज्ञायां विहितस्य कनो लुप्स्यान्मनुष्ये वाच्ये । चञ्चा तृणमयः पुमान् । चञ्चेव मनुष्यश्चञ्चा । वर्धिका ॥ ( २७८० ) (सू) **जीविकार्थे चापण्ये** । ५ । ३ । ९९ । जीविकार्थं यदविक्रीयमाणं तस्मिन्वाच्ये कनो लुप्स्यात् । वासुदेवः । शिवः । स्कन्दः । देवलकानां जीविकार्थासु देवप्रतिकृतिष्विदम् । अपण्ये किम् । हस्तिकान्विक्रीणीते ॥ ( २७८१ ) (सू) **देवपथादिभ्यश्च** । ५ । ३ । १०० । कनो लुप्स्यात् । देवपथः । हंसपथः । आकृतिगणोऽयम् ॥ (२७८२) (सू) **वस्तेर्ढञ्** । ५ । ३ । १०१ । इवेत्यनुवर्तत एव । प्रतिकृताविति निवृत्तम् । वस्तिरिव-वास्तेयम् । वास्तेयी ॥ ( २७८३ ) (सू) **शिलाया ढः** । ५ । ३ । १०२ । शिलाया इति योगविभागाड्ढञपीत्येके । शिलेव-शिलेयम् । शैलेयम् ॥ (२७८४) (सू) **शाखादिभ्यो यः** । ५ । ३ । १०३ । शाखेव-शाख्यः । मुख्यः । जघनमिव-जघन्यः । अग्र्यः । शरण्यः । ( २७८५ ) (सू) **द्रव्यं च भव्ये** । ५ । ३ । १०४ । द्रव्यम्-अयं ब्राह्मणः ॥ ( २७८६ ) (सू) **कुशाग्राच्छः** । ५ । ३ । १०५ । कुशाग्रमिव-कुशाग्रीया बुद्धिः ॥ ( २७८७ ) (सू) **समासाच्च तद्विषयात्** । ५ । ३ । १०६ । इवार्थविषयात्समासाच्छः स्यात् । काकतालीयो देवदत्तस्य वधः । इह काकतालसमागमसदृशश्चौरसमागम इति समासार्थः । तत्प्रयुक्तः काकमरणसदृशस्तु प्रत्ययार्थः । अजाकृपाणीयः । अतर्कितोपनत इति फलितोऽर्थः ॥ ( २७८८ ) (सू) **शर्करादिभ्योऽण्** । ५ । ३ । १०७ । शर्करेव शार्करम् ॥ ( २७८९ ) (सू) **अङ्गुल्यादिभ्यष्ठक्** । ५ । ३ । १०८ । अंगुलीव-आंगुलिकः भरुजेव-भारुजिकः ॥ (२७९०) (सू) **एकशालायाष्ठजन्यतरस्याम्** । ५ । ३ । १०९ । एकशालाशब्दादिवार्थे ठञ्वा पक्षे ठक् । एकशालेव-एकशालिकः । ऐकशालिकः ॥ ( २७९१ ) (सू) **कर्कलोहितादीकक्** । ५ । ३ । ११० । कर्कः शुक्लोऽश्वः, स इव-कार्कीकः । लौहितीकः स्फाटिकः ॥ (२७९२) (सू) **पूगाञ्ञ्योऽग्रामणीपूर्वात्**

---

(२७७७) इवे प्रति । **अश्वक इति** । अश्वशब्दोऽश्वे एव वर्तते, कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृश इति नायं स्वार्थिक इत्येके । अन्ये तु सादृश्यनिबन्धनादभेदोपचाराद्गौर्वाहीक इतिवदश्वशब्द एव प्रतिकृतौ वर्तते । प्रत्ययस्तु तस्यैवौपचारिकत्वस्य बोधक इत्याहुः । प्रतिकृतौ किम्, गौरिव गवयः । तृणचर्मकाष्ठादिनिर्मितं प्रतिमापरपर्यायं वस्तु प्रतिकृतिः । गवयस्तु नैवम् ॥ (२७७८) **सञ्ज्ञायाञ्च । समुदायश्चेदिति** । प्रकृतिप्रत्ययसमुदायश्चेदश्वसदृशस्य संज्ञेत्यर्थः ॥ ( २७७९ ) **लुम्मनुष्ये । चञ्चा । वर्धिकेति** । लुपि युक्तवद्भावात् स्त्रीलिङ्गता[1] ॥ ( २७८० ) **जीवि- । वासुदेवः । शिव इत्यादि** । याः प्रतिमाः प्रतिगृह्य गृहाद् गृहं भिक्षमाणा अटन्ति ता एवमुच्यन्ते । देवलका अपि । त एव भिक्षवोऽभिप्रेताः । यास्त्वायतनेषु प्रतिष्ठाप्यन्ते पूज्यन्ते च तासूत्तरसूत्रेण लुप् । तदुक्तम्—"अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिषु" इति । अर्चासु प्रतिमासु । प्रतिमासु कीदृशीषु । पूजनार्हासु गेहेष्वायतनेषु वा याः पूज्यन्ते तासु । चित्रकर्मध्वजाभ्यां तद्गताः प्रतिकृतयो लक्ष्यन्ते । अर्चासूदाहरणं—शिवः । विष्णुः । चित्रकर्माणि—अर्जुनः । दुर्योधनः । ध्वजेषु—कपिः । गरुडः । सिंहः । सुपर्णसिंहमकरादयो ध्वजेषु राज्ञां सन्ति ॥ **हस्तिकानिति** । ईदृशमेव विषयमभिप्रेत्य पठन्ति—"रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दं न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक्" इति । अयं भावः—अपण्ये, इत्युक्तत्वात्पण्ये हस्तिकानितिवत् रामकं सीतिकां लक्ष्मणकमिति प्रयोगा एव साधव इति ॥ (२७८१) **देवपथादिभ्यश्च । देवपथ इत्यादि** । देवपथ इव प्रतिकृतिः । हंसपथ इव प्रतिकृतिरिति विग्रहः ॥ ( २७८२ ) **वस्तिरिति** । 'वस्तिर्नाभेरधो द्वयोः' इत्यमरः ॥ (२७८५) **द्रव्यं च भव्ये** । द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते ॥ ( २७८७ ) **समासाच्च तद्विषयात्** । तच्छब्देन प्रकृत इवार्थो निर्दिश्यते इत्याह—**इवार्थविषयादिति** ॥ **छः स्यादिति** । इवार्थे इति बोध्यम् । 'पूगाञ्ञ्यः—२७९२' इत्यतः प्रागिवेत्यधिकारात् । शस्त्रीश्यामेत्यादौ तु एक एव इवार्थः । स च समासान्तर्भूत इति छो न भवत्युक्तार्थानामप्रयोगात् ॥ **काकतालीय इति** । प्रकृतसूत्रादेव ज्ञापकादिवार्थे समासः । "सुप्सुपेति वा । उभयथापि विशेषसंज्ञाविनिर्मुक्तः । स च छप्रत्ययविषय एव । तेन स्वातन्त्र्यमुपाध्यन्तरप्रयोगो[2] विग्रहश्च नेत्याकरः ॥ **इह काकतालेत्यादि** । आगच्छतः काकस्याऽकस्मात्तालफलपतनाद्यथा वधः, तथैव चाकस्मिकचोरसमागमाद्देवदत्तवधः । एवमजाया आगच्छन्त्याः कृपाणपतनाद् यथा वधः, तत्सदृशं मरण-

---

१ **स्त्रीलिङ्गतेति** । वचनं तु विशेष्यवदेव 'हरीतक्यादिषु व्यक्तिः' इति नियमात् । तेन 'चञ्चे मनुष्यौ' इत्येव ॥
२ **स्वातन्त्र्यम्** । काकताले । **उपाध्यन्तरप्रयोगः**—कालतालो महान् । **विग्रहः**—काकतालमिवेति ॥ विग्रहस्तु भाष्यकृतैव दर्शित इति तद्विषये चिन्त्यतैवास्येति परे ॥

।५।३।११२। इवार्थो निवृत्तः । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः संघाः पूगास्तद्वाचकात्स्वार्थे ञ्यः स्यात् । लौहितध्वज्यः ॥ व्रातच्फञोरस्त्रियाम् । व्रात—कापोतपाक्यः । च्फञ्—कौञ्जायन्यः । ब्राध्नायन्यः ॥ (२७९३) सू० **आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात्** ।५।३।११४। वाहीकेषु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट् । क्षौद्रक्यः । मालव्यः । टित्त्वान्ङीप् । क्षौद्रकी । आयुधेति किम् । मल्लाः । सङ्घेति किम् । सम्राट् । वाहीकेषु किम् । शबराः । अब्राह्मणेति किम् । गोपालकाः । शालङ्कायनाः । ब्राह्मणे तद्विशेषग्रहणम्, राजन्ये स्वरूपग्रहणम् ॥ (२७९४) सू० **वृकाट्टेण्यण्** । ५ । ३ । ११५ । आयुधजीविसङ्घवाचकात्स्वार्थे । वार्केण्यः । आयुधेति किम् । जातिशब्दान्मा भूत् ॥ ( २७९५ ) सू० **दामन्यादित्रिगर्तषष्ठाच्छः** । ५ । ३ । ११६ । दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यात् । त्रिगर्तः षष्ठो वर्गो येषां—त्रिगर्तषष्ठाः ॥ ( २७९६ ) आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी । क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः ॥ दामनीयः । दामनीयौ । दामनयः । औलपि—औलपीयः । त्रिगर्तः—कौण्डो परथीयः । दाण्डकीयः ॥ (२७९७) सू० **पर्श्वादियौधेयादिभ्योऽणञौ** ।५।३।११७। आयुधजीविसङ्घवाचिभ्य एभ्यः क्रमादणञौ स्तः स्वार्थे । पार्शवः । पार्शवौ । पर्शवः । यौधेयः । यौधेयौ । यौधेयाः ॥ ( २७९८ ) सू० **अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्** । ५ । ३ । ११८ । अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात् । अभिजितोऽपत्यमाभिजित्यः । वैदभृत्यः । शालावत्यः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः ॥ ( २७९९ ) सू० **ञ्यादयस्तद्राजाः** । ५ । ३ । ११९ । 'पूगाञ्ञ्यः—२७९२' इत्यारभ्य उक्ता एतत्संज्ञाः स्युः । तेनास्त्रियां बहुषु लुक् । लोहितध्वजाः । कपोतपाकाः । कौञ्जायनाः । ब्राध्नायना इत्यादि ॥ (२८००) सू० **पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च** । ५ । ४ । १ । लोपवचनमनैमित्तिकत्वार्थम् । अतो न स्थानिवत् । पादः पत् । तद्धितार्थ इति समासे कृते प्रत्ययः । वुन्नन्तं स्त्रियामेव । द्वौ द्वौ पादौ ददाति—द्विपादिकाम् । द्विश-

---

मिति फलितोऽर्थः[1] ॥ **अतर्कितोपनत इति** । अचिन्तितोपपन्नः । याद्दच्छिक इत्यर्थः ॥ ( २७९२ ) **पूगाञ्ञ्यो—** । स्वरूपग्रहणं तु न भवति, 'अग्रामणीपूर्वात्' इति वचनात् । पूर्वशब्दो ह्यवयववचनः । अग्रामणीपूर्वादिति किम्, देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः 'स एषां ग्रामणीः २५३८' इति कन् । अत्र समुदायः पूगवचनः ॥ **लौहितध्वज्य इति** । लोहितः ध्वजो यस्य संघस्य स लोहितध्वजः । स एव लौहितध्वज्यः ॥ [ १५७६ ] **व्रातच्फञोः—** । उत्सेधजीवित्वं व्रातस्य पूगाद्विशेषः । उत्सेधः शरीरायासः ॥ **कौञ्जायन्य इति** । 'गोत्रे कुञ्जादिभ्यः—१५७५' इति च्फञ् ॥ (२७९५) **दामन्यादित्रिगर्तषष्ठात्—** । समाहारद्वन्द्वात्पञ्चमी ॥ **त्रिगर्तषष्ठेभ्य इति** । येषामायुधजीविनां षडन्तर्वर्गाः, षष्ठवर्गस्तु त्रिगर्तस्तेभ्य इत्यर्थः ॥ ( २७९६ ) त्रिगर्तवर्गषष्ठकाः के इत्याकांक्षायामाह—**आहुस्त्रिगर्तषष्ठांश्चेति** । अत्र जानकयस्त्रिगर्तवर्गः[3] तेषु च त्रिगर्तषष्ठेषु प्रथमपञ्चमौ कौण्डोपरथब्राह्मणगुप्तशब्दौ शिवाद्यगन्तौ शेषास्त्विञन्ताः ॥ केचित्तु अतद्धितान्तमेव पञ्चमं ब्रह्मगुप्तशब्दं पठन्ति ॥ **कौण्डोपरथीय इति** । बहुवचने तु कौण्डोपरथाः । दाण्डकय इत्यादि ॥ (२७९७) **पर्श्वादियौ—** । **पार्शव इति** । पर्शुरिति जनपदशब्दस्ततोऽपत्ये 'द्व्यञ्मगध—१६८०' इत्यण् । बहुत्वे तद्राजत्वाल्लुक् । पुनः संघविवक्षायामनेनाण् । अस्याप्यणो बहुत्वे तद्राजत्वाल्लुक् । तदाह—**पर्शव इति** । ननु पर्शुरिति यो जनपदशब्दस्तस्मादेवानेन स्वार्थेऽण् विधीयतामपत्यवाचिपर्शुशब्दात्संघविवक्षायामण्विधौ तु स्वार्थिकत्वं न सिध्येदिति चेत् । अत्राहुः—केवलः पर्शुशब्द एव जनपदवाची, न त्वणन्त इति जनपदवाचिनः स्वार्थेऽण् न विधीयते, किंतु 'द्व्यञ्मगध—१६८०' इत्यणः 'तद्राजस्य बहुषु—१६८५' इत्यादिना लुकि बह्वपत्यवाचिपर्शुशब्दादेव स्वार्थे विधीयते । स्वार्थश्चात्र संघ एव । न च पर्शुशब्दस्य संघवाचित्वं नेति शङ्क्यम्, बह्वपत्यवाचित्वे संघवाचित्वध्रौव्यादिति न काप्यनुपपत्तिरिति ॥ **यौधेय इति** । युध्यतेऽसौ युधा । युधेरिगुपधलक्षणः कः । युधाया अपत्यं 'द्व्यचः १६०२' इति ढक् । तदन्तात्संघविवक्षायामनेनाञ् । तेन यौधेय इति आद्युदात्तं भवति । किञ्च, यौधेयस्याङ्को लक्षणं वा यौधेयः । 'संघाङ्कलक्षण—२०७७' इत्यञन्तादण् । एवं यौधेयादिषु ये ढगन्ताः शौकेयादयस्तेषु सर्वेषु प्रयोजनद्वयमूह्यम् ॥ **यौधेया इति** । अञो लुक्, अन्तोदात्तम् । न च 'न प्राच्यभर्गा—१६९०' इत्यादिना निषेधः शङ्क्यः, स्त्रियामेव तन्निषेधात् ॥ (२७९८) **अभिजिद्वि—** । **आभिजित्य इति** । आभिजितशब्दादणन्ताद्यञ् । एवं विदभृत्प्रभृतिभ्योऽणि तदन्तेभ्यो वैदभृत—शालावत—शैखावतादिभ्यो यञ् ॥ ( २८०० ) **पादशतस्य संख्यादेः—** । पादशतस्य किम्, द्वौ द्वौ माषौ ददाति । संख्यादेरिति किम्, पादं पादं ददाति ॥ वीप्सायामिति किम्, द्वौ पादौ ददाति ॥ **अनैमित्तिकत्वार्थमिति** । निमित्ते भवो नैमित्तिकः । अध्यात्मादित्वाट्ठञ् ॥ **तद्धितार्थ इति** । यद्यपि प्रकृत्युपाधिर्वीप्सा, तथापि वुना द्योत्येति तद्धि-

---

१ **फलितोऽर्थ इति** । शाब्दबोधप्रक्रिया तु—पूर्वपदस्योपमानकाकागमनपरत्वेन उत्तरपदस्योक्तपूर्वपदार्थसमानाधिकरणोपमानतालपतनपरत्वेन समुदायस्योपमेयदेवदत्तागमनसमानाधिकरणचौरपतनपरत्वेन उपमानकाकागमनसमानाधिकरणोपमानतालपतनोपमेयं देवदत्तागमनसमानाधिकरणं चोरपतनमिति समासात् तद्धितसमभिव्याहारे समासार्थोपमानप्रयोज्योपमानभूततालकृतकाकवधोपमेयः समासार्थोपमेयप्रयोज्यश्चोरकृतदेवदत्तवध इति बोध इति शेखरे स्पष्टमेवोक्तम् ॥ २ इदं व्याख्यानं मूलेऽपत्याधिकारे, प्रकरणानुसारेण त्वत्र स्मृतम् ॥ ३ जानकिस्त्रिगर्त इति ल० श० शेखरे ॥

तिकाम् ॥ ( २८०१ ) (वा.) पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् ॥ द्विमोदकिकाम् ॥ ( २८०२) (सू.) दण्डव्यवसर्गयोश्च । ५ । ४ । २ । वुन् स्यात् । अवीप्सार्थमिदम् । द्वौ पादौ दण्डितः-द्विपदिकाम् । द्विशतिकां-व्यवसृजति । ददातीत्यर्थः ॥ ( २८०३ ) (सू.) स्थूलादिभ्यः प्रकारवचने कन् । ५ । ४ । ३ । जातीयरोऽपवादः । स्थूलकः । अणुकः ॥ ( २८०४-१ ) (वा.) चञ्चद्बृहतोरुपसंख्यानम् ॥ चञ्चत्कः । बृहत्कः ॥ ( २८०४--२ ) (ग.) सुराया अहौ ॥ सुरावर्णोऽहिः सुरकः॥ ( २८०५ ) (सू.) अनत्यन्तगतौ क्तात् । ५।४।४ । छिन्नकम् । भिन्नकम् । अभिन्नकम् ॥ ( २८०६ ) (सू.) न सामिवचने ।५।४।५ । सामिपर्याये उपपदे क्तान्तान्न कन् । सामिकृतम् । अर्धकृतम् । अनत्यन्तगतेरिह प्रकृत्यैवाभिधानात्पूर्वेण कन् न प्राप्तः । इदमेव निषेधसूत्रमत्यन्तस्वार्थिकमपि कनं ज्ञापयति । बहुतरकम् ॥ (२८०७) (सू.) बृहत्या आच्छादने । ५ । ४ । ६ । कन् स्यात् ॥ द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ आच्छादने किम् । बृहती छन्दः॥ ( २८०८-१ ) (सू.) अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः । ५ । ४ । ७ । स्वार्थे । अषडक्षीणो मन्त्रः । द्वाभ्यामेव कृत इत्यर्थः । आशिता गावोऽस्मिन्नित्याशितङ्गवीनमरण्यम् । निपातनात्पूर्वस्य मुम् । अलं कर्मणे-अलंकर्मीणः । अलंपुरुषीणः । ईश्वराधीनः । नित्योऽयं खः, उत्तरसूत्रे विभाषाग्रहणात् ॥ ( २८०८-२ ) (इ.) अन्येऽपि केचित्स्वार्थिकाः प्रत्यया नित्यमिष्यन्ते ॥ तमबादयः प्राक्कनः । ञ्यादयः प्राग्वुनः । आमादयः प्राङ्मयटः।बृहतीजात्यन्ताः समासान्ताश्चेति ॥ (२८०९) (सू.) विभाषाऽञ्चेरदिक्स्त्रियाम्।

---

तार्थो भवत्येवेति भावः ॥ ददातीति । समर्पणमात्रमिह ददातेरर्थः, न तु परस्वत्वापादनपर्यन्तम् । तथात्वे हि उत्तरसूत्रविषयत्वं स्यात् ॥ केचित्तु व्यवसृजतेर्धातोः प्रयोगे सत्येव उत्तरसूत्रस्य प्रवृत्तिमाहुः ॥ ( २८०१ ) अन्यत्रापि दर्शनादिति । द्वौ द्वौ माषौ ददातीत्यादौ त्वनभिधानान्नातिप्रसङ्ग इति भावः ॥ ( २८०२ ) दण्डव्यवसर्ग-। दण्डनं दण्डश्चुरादित्वाद्भावे घञ्।अत्राप्युदाहरणे 'तद्धितार्थ-१०५२'इति समासः। स्त्रीलिङ्गं च तद्धितार्थः।यद्वा-प्रकृत्यर्थः एव तद्धितार्थः, स्वार्थिकत्वाद्वुनः॥द्वौ पादौ दण्डित इति । देवदत्तेन यज्ञदत्त इति शेषः। दण्डेरप्रधाने कर्मणि क्त इति यज्ञदत्त इत्यत्र प्रथमा । द्वौ पादावित्यत्र द्विपदिकामित्यत्र च द्वितीया भवति। 'दण्डग्रहणार्थे'इति द्विकर्मकेषूक्तम्। तथा च द्विपदिकाकर्मकग्रहणविषयीभूतो यज्ञदत्त इत्यादिरर्थ इति नव्याः ॥(२८०३)स्थूलादिभ्यः-।प्रकारो भेदः सादृश्यं च । उभयत्रापि यथासंभवं कन् ॥ जातीयरोऽपवाद इति[1] ।तेनायमपि तद्वदेव प्रकारवति(भवति)न तु प्रकारमात्रे इत्युक्तं भवति॥(२८०४-१)चञ्चद्बृहतोरिति।एतावपि स्थूलादिष्वेव पठितव्याविति भावः॥ चञ्चत्क इति । चञ्चतिश्चलनकर्मा । चञ्चन्नेव कश्चिच्चञ्चत्कः । एवं बृहद्विशेषो बृहत्कः । यद्वा-अचञ्चन्नबृहन्नपि प्रभाविशेषाच्चञ्चन्निव बृहन्निव मणिविशेषो लक्ष्यते स चञ्चत्कः । बृहत्कः ॥ (२८०४-२)सुरक इति । 'केऽणः ११९९' इति ह्रस्वः ॥ (२८०५) अनत्यन्त--[2]। छिन्नकमिति । ईषच्छिन्नमित्यर्थः । क्तप्रकृतिवाच्यया क्रियया क्तप्रत्ययवाच्यस्य साधनस्य व्याप्तिरत्यन्तगतिः। सेह नास्ति ॥ ( २८०६ ) न सामिवचने । 'सामि अर्थः उच्यते येन तत्सामिवचनमिति व्युत्पत्त्या वचनग्रहणं पर्यायार्थमित्याह—सामिपर्याये इति ॥ सामिकृतमिति । 'सामि ९९७' इति समासः ॥ अर्धकृतमिति । विशेषणसमासो बहुव्रीहिर्वा ॥ प्रकृत्यैवेति । सामिवचनेनैवेत्यर्थः ॥ ज्ञापयतीति । अयं भावः-' न सामिवचने २८०६' इत्यनेन 'अनत्यन्तगतौ—२८०५ ' इति कनो न निषेधः, सामिकृतादिभ्यस्तस्य प्राप्त्यभावात् । तेभ्योऽसमासे सामिपदेनैव अनत्यन्तगतेर्द्योतनात्, समासेभ्यस्तु क्तान्तत्वाभावाच्च । न च कृद्ग्रहणपरिभाषया समासस्य क्तान्तत्वमस्तीति शङ्क्यम्, सामिशब्दस्य गतिकारकत्वाभावात् । तस्मात् स्वार्थिक एव कन् निषिध्यत इति इदमेव[3] निषेधवचनं क्वचित्स्वार्थिकं कनं ज्ञापयतीति ॥ ( २८०८ ) अषडक्षाशि--। अषडक्षीण इति । अविद्यमानानि षडक्षीणि यस्मिन्निति बहुव्रीहिः । अक्षिशब्दोऽत्र श्रोत्रेन्द्रिये वर्तते । 'बहुव्रीहौ सक्थ्यक्ष्णोः-१२२७ ' इति षच् । तदन्तादनेन खः । मन्त्रो मन्त्रणम् ॥ आशितंगवीनमिति । आङ्पूर्वादश्नातेः 'आशितः कर्ता ५५७०' इति ज्ञापकात्कर्तरि क्तः। ण्यन्तात्कर्मणि वा । उभयथापि प्रभूतयवसमिति फलितोऽर्थः ॥ अलंकर्मीण इति । अलंकर्म अलंपुरुषेति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ११२२ ' इति समासः ॥ अलंपुरुषीण इति । प्रातिमल्लादिः ॥ ईश्वराधीन इति । अधिशब्दः शौण्डादिरित्युक्तम् ॥ ( २८०८-२ ) तमबादय इति । 'अतिशायने तमप्-२७१५' इत्यादयः ॥ प्राक्कन इति । 'अवक्षेपणे कन् २७७६ ' इति विहितात् ॥ ञ्यादय इति । 'पूगाञ्ञ्यो ग्रामणीपूर्वात् २७९२' इत्यादयः ॥ प्राग्वुन इति । 'पादशतस्य संख्यादेः-२८००' इति विहितात् ॥ आमादय इति । 'किमेत्तिङव्ययघादामु-२८१८' इत्यादयः ॥ प्राङ्मयट इति । 'तत्प्रकृतवचने मयट् २८१८' इत्यतः प्रागित्यर्थः ॥ बृहतीजात्यन्ता इति । बृहतीशब्देन 'बृहत्या आच्छादने

---

१ अपवाद इति । प्रकारो भेदः सादृश्यं चेत्युभयमपि जातीयर्विधौ गृह्यत इति वामनमतेनेदम् ॥ प्रकारो भेद एवेति जयादित्यमते तु परत्वाद्बाधक इत्यर्थो बोध्यः ॥ २ अनत्यन्तेति । अस्य 'यद्यपि' इत्यादिः ॥ ३ इदमेवेति । अस्य 'तथापि' इत्यादिर्बोध्यः ॥ ४ बहुतरकमिति । यदि तु बहुतरकं सुकरतरकमित्यादितमाद्यन्तात् * तमाद्यन्तात्स्वार्थे कन् वक्तव्यः * इति वचनेन यावादित्वात्स्वार्थे कना वा सिद्धमित्युच्यते, तदा नास्य प्रयोजनम् । एतदेवाभिप्रेत्येदं सूत्रं भाष्ये प्रत्याख्यातम् ॥ ५ विभाषेति । 'अञ्चतेः खस्य नित्यत्वाभावाय विभाषाग्रहणम् ' इति भाष्यसंमतः पन्थाः-इति शेखरे ॥

५।४।८। अदिक्स्त्रीवृत्तेरञ्चत्यन्तात्प्रातिपदिकात्खः स्याद्वा स्वार्थे। प्राक्-प्राचीनम्। प्रत्यक्-प्रतीचीनम्। अवाक्-अवाचीनम्। निकृष्टप्रतिकृष्टावरेफयाप्यावमाधमाः॥ अर्वन्तमञ्चतीति अर्वाक्, अर्वाचीनम्। अदिक्स्त्रियां किम्। प्राची[1] दिक्। उदीची दिक्। दिग्ग्रहणं किम्। प्राचीना ब्राह्मणी। स्त्रीग्रहणं किम्। प्राचीनं ग्रामादाम्राः। (२८१०) **(सू) जात्यन्ताच्छ बन्धुनि**।५।४।९। ब्राह्मणजातीयः। बन्धुनि किम्। ब्राह्मणजातिः शोभना। जातेर्व्यञ्जकं द्रव्यं बन्धु॥ (२८११) **(सू) स्थानान्ताद्विभाषा सस्थानेनेति चेत्**।५।४।१०। सस्थानेन तुल्येन चेत् स्थानान्तमर्थवदित्यर्थः। पितृस्थानीयः, पितृस्थानः। सस्थानेन किम्। गोः स्थानम्॥ (२८१२) **(सू) अनुगादिनष्ठक्**।५।४।१३। अनुगदतीत्यनुगादी, स एव-आनुगादिकः॥ (२८१३) **(सू) विसारिणो मत्स्ये**।५।४।१६। अण् स्यात्। वैसारिणः। मत्स्येति किम्। विसारी देवदत्तः॥ (२८१४) **(सू) संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्**।५।४।१७। अभ्यावृत्तिर्जन्म। क्रियाजन्मगणनवृत्तेः संख्याशब्दात्स्वार्थे कृत्वसुच् स्यात्। पञ्चकृत्वो भुङ्क्ते। संख्यायाः[2] किम्। भूरिवारान्भुङ्क्ते॥ (२८१५) **(सू) द्वित्रिचतुर्भ्यः सुच्**।५।४।१८। कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिः। रात्संस्य, चतुः॥ (२८१६) **(सू) एकस्य सकृच्च**।५।४।१९। सकृदित्यादेशः

---

२८०७' इति विहितः कन् उपलक्ष्यते। जात्यन्तशब्देन 'जात्यन्ताच्छ-२८१०' इति च्छः। बहुवचननिर्देशात्पाशबादयो गृह्यन्ते। यो हि वैयाकरणपाशादिशब्दैरर्थः प्रतीयते, नासौ प्रकृतिमात्रेण प्रतीयते इति तेऽपि तमबादिवन्नित्या एवेति स्थितमाकरे॥ कन्छौ मुक्त्वा मूले बृहतीमात्रप्रयोगो जात्यन्तमात्रप्रयोगश्च कृतः, स तु अवाचकोऽप्यार्षग्रन्थानुवादकत्वान्न दोषाय॥(२८०९) **विभाषाञ्चेर**-। दिक् चासौ स्त्री चेति दिक्स्त्री तत्र प्रतिषेधो, न तु दिशि स्त्रियां च, स्त्रीलिङ्गैकवचननिर्देशात्॥ **प्राचीनमिति**। 'अचः ५५८' इत्यकारलोपे कृते 'चौ ५५९' इति दीर्घः। एवमग्रे क्वचिदूह्यम्॥ **प्राचीना ब्राह्मणीति**। प्रकर्षेणाञ्चतीति प्राचीनेत्येवं क्रियानिमित्तको वा देशकालनिमित्तको वा अयं शब्दो ब्राह्मण्यां वर्तते, न तु दिशीति प्रतिषेधाभावः॥ **प्राचीनमिति**। प्राच्यां दिशीत्यर्थे 'दिक्शब्देभ्यः-२६८५' इत्यस्तातिः 'अञ्चेर्लुक् २६९१' इति लुक्। 'लुक्तद्धितलुकि १९६५' इति ङीपो लुक्। 'तद्धितश्चासर्वविभक्तिः ६०४' इत्यव्ययत्वात् स्त्रीत्वाभावः। खे तु कृते स्वभावान्नपुंसकत्वम्॥ (२८१०) **जात्यन्ताच्छ बन्धुनि**। **ब्राह्मणजातीय इति**। द्व्येकयोरितिवद्भावप्रधानो ब्राह्मणशब्दः, तस्य जातिशब्देन सह बहुव्रीहिः। ब्राह्मणत्वजात्याधारभूतः पिण्ड इत्यर्थः॥ **ब्राह्मणजातिरिति**। षष्ठीतत्पुरुषः। भावप्रधानेन सह कर्मधारयो वा॥ **जातेर्व्यञ्जकमिति**। बध्यते जातिरस्मिन्निति बन्धुः 'शॄस्वृस्निहि-४२०८' इत्यादिना अधिकरणे उप्रत्ययः। रूढोऽपि बन्धुशब्द आप्तपर्यायः पुंलिङ्गोऽस्ति, तथापि स नेह गृह्यते। 'बन्धुनि' इति नपुंसकनिर्देशादिति भावः॥ (२८११) **स्थानान्ता**-। सस्थानेनेत्यस्यैव व्याख्यानं--**तुल्येनेति**॥ **पितृस्थानीय इति**। स्थानमत्र (सं) बन्धविशेषः, पदमिति यस्य प्रसिद्धिः। पितुरिव स्थानमस्य पितृस्थानः। पितृतुल्य इत्यर्थः॥ **गोस्थानमिति**। तिष्ठन्त्यस्मिन्निति स्थानं देशः॥ इतिकरणं विवक्षार्थम्। तेन तत्पुरुषो बहुव्रीहिर्वा यस्तुल्यस्थानशब्दस्तस्माच्छो न भवति॥ (२८१२) **अनुगादिनः**—। प्रकृतिस्वरूपप्रदर्शनपरं चैतत्। न त्वयं केवलः प्रयोगार्हः, ठको नित्यत्वादिति हरदत्तः। 'सुप्यजातौ-३९९१' इति णिनिः॥ (२८१३) **विसारिणो**-। पूर्ववदिहापि णिनिः। हरदत्तस्तु-'सुप्यजातौ-३९९१' इति णिनिरुपसर्गभिन्न एव सुप्युपपदे भवतीत्याशयेन पूर्वसूत्रेऽस्मिंश्च अत एव निपातनात् णिनिरित्याह। तदयुक्तम्, 'स बभूवोपजीविनाम्', 'अनुयायिवर्गः', 'न वञ्चनीयाः प्रभवोऽनुजीविभिः' इत्यादिप्रयोगानुरोधेन उपसर्गे सुप्युपपदेऽपि णिनेरवश्यं स्वीकर्तव्यतया निपातनाश्रयणस्य व्यर्थत्वात्॥ 'अणिनुणः ५०१०' इत्यतोऽनुवर्तनादाह--**अण् स्यादिति**॥ **वैसारिण इति**। 'इनण्यनपत्ये १७५९' इति प्रकृतिभावः॥ (२८१४) **संख्यायाः**--। अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्यते, तदा षट्कृत्वः प्रवृत्तौ पञ्चकृत्व इति स्यात्। अतोऽत्र विवक्षितमर्थमाह—**अभ्यावृत्तिर्जन्मेति**॥ **भूरिवारानिति**। भूरिशब्दस्य लौकिकसंख्यावाचित्वेऽपि नेह ग्रहणम्। 'बहुगण-३६३' इति सूत्रे बहुग्रहणस्य नियमार्थत्वात्, 'अनियतसंख्यावाचिनां चेद्भवति तर्हि बहोरेव' इति नियमशरीरमिति मनोरमा॥ बहुगणयोरेवेति नियमशरीरमित्यन्ये॥ वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात् 'कालाध्वनोः-८११' इति द्वितीयेति हरदत्तः॥ ननु वारशब्दस्य कालवाचित्वे भूरिशब्दोऽपि तत्समानाधिकरणत्वात्काल एव वर्तते इति कथमत्र प्रसङ्ग इति चेत्। अत्राहुः—कालवाचित्वेऽपि क्रियाभ्यावृत्तेरपि गम्यमानत्वात्प्रसङ्ग इति। अभ्यावृत्तिगणने किम्, पञ्च पाकाः दश पाकाः इत्यत्र क्रियामात्रगणने मा भूत्। क्रियाग्रहणं किमर्थम्, यावताऽभ्यावृत्तिः क्रियाया एव भवति, साध्यार्थविषयत्वात्तस्याः, न द्रव्यगुणयोः। तयोस्तु सिद्धस्वभावतया शब्दाभिधानात्॥ पुनःपुनर्दण्डः पुनःपुनः स्थूल इत्यत्रापि गम्यमानाया भवतिक्रियाया एवाभ्यावृत्तिर्न तु द्रव्यगुणयोरिति चेत्। मैवम्, उत्तरार्थं क्रियाग्रहणस्यावश्यकत्वात्॥ (२८१६) **एकस्य सकृच्च**। अभ्यावृत्तिरिति न संबध्यते। एकशब्देन ह्येकैव क्रियाव्यक्तिराख्यायते, तस्यास्त्वावृत्तेरसंभवात्। क्रियाग्रहणमिहार्थमावश्यकम्। अन्यथा 'आ दशतः संख्याः संख्येये वर्तन्ते' इत्येको भुङ्क्ते इत्यत्रापि स्यादिति। इह साधु पचतीत्यादिवदेकं भुङ्क्ते इति प्रयोगे प्राप्ते सकृच्छब्दप्रयोगार्थमिदं सूत्रमिति कैयटः॥ एकः पाक इत्यत्र तु अनभिधा-

---

१ **प्राची दिगिति**। लिङ्गविशिष्टपरिभाषया प्राप्तिः॥ २ **संख्यायाः किमिति**। गणने संख्याया एवोपयोगात्प्रश्नः॥

स्याच्चास्सुच् । सकृद्भुङ्क्ते । संयोगान्तस्येति सुचो लोपः । न तु हल्ङ्याबिति, अभैत्सीदित्यत्र सिच इव सुचोऽपि तदयोगात् ॥ (२८१७) (सू) **विभाषा बहोर्धाऽविप्रकृष्टकाले** । ५ । ४ । २० । अविप्रकृष्ट आसन्नः । बहुधा दिवसस्य भुङ्क्ते । आसन्नकाले किम् । बहुकृत्वो मासस्य भुङ्क्ते ॥ ( २८१८ ) (सू) **तत्प्रकृतवचने मयट्** । ५ । ४ । २१ । प्राचुर्येण प्रस्तुतं प्रकृतं, तस्य वचनं प्रतिपादनम् । भावेऽधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नमन्नमयम् । अपूपमयम् । यवागूमयी । द्वितीये, अन्नमयो यज्ञः । अपूपमयं पर्व ॥ ( २८१९ ) (सू) **समूहवच्च बहुषु** । ५ । ४ । २२ । सामूहिकाः प्रत्यया अतिदिश्यन्ते चान्मयट् । मोदकाः प्रकृताः—मौदकिकम्, मोदकमयम् । शाष्कुलिकम्, शष्कुलीमयम् । द्वितीयेऽर्थे, मौदकिको यज्ञः । मोदकमयः ॥ ( २८२० ) (सू) **अनन्तावसथेतिहभेषजाञ्ञ्यः** । ५ । ४ । २३ । अनन्त एवानन्त्यम् । आवसथ एवावसथ्यम् । इतिहेति निपातसमुदायः, ऐतिह्यम् । भेषजमेव भैषज्यम् ॥ ( २८२१ ) (सू) **देवतान्तात्तादर्थ्ये यत्** । ५ । ४ । २४ । तदर्थ एव तादर्थ्यम्, स्वार्थे ष्यञ् । अग्निदेवतायै इदम्–अग्निदेवत्यम् । पितृदेवत्यम् ॥ (२८२२) (सू) **पादार्घाभ्यां च** । ५ । ४ । २५ । पादार्थमुदकं पाद्यम् । अर्घ्यम् ॥ ( २८२३ ) (वा) **नवस्य नू ( आदेशः ) त्नप्तनप्खाश्च ( प्रत्यया वक्तव्याः )** ॥ नूत्नम् । नूतनम् । नवीनम् ॥ ( २८२४ ) (वा) **नश्च पुराणे प्रात्** ॥ पुराणार्थे वर्तमानात्प्रशब्दान्नो वक्तव्यः ॥ चात्पूर्वोक्ताः । प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ॥ ( २८२५ ) (वा) **भागरूपनामभ्यो धेयः** ॥ भागधेयम् । रूपधेयम् । नामधेयम् ॥ ( २८२६ ) (वा) **आग्नीध्रसाधारणादञ्** ॥ आग्नीध्रम् । साधारणम् । स्त्रियां ङीप् । आग्नीध्री । साधारणी ॥ ( २८२७ ) (सू) **अतिथेर्ञ्यः** । ५ । ४ । २६ । तादर्थ्ये इत्येव । अतिथये इदमातिथ्यम् ॥ ( २८२८ ) (सू) **देवात्तल्** । ५ । ४ । २७ । देव एव–देवता ॥ ( २८२९ ) (सू) **अवेः कः** । ५ । ४ । २८ । अविरेवाविकः ॥ ( २८३० ) (सू) **यावादिभ्यः कन्** । ५ । ४ । २९ । याव एव–यावकः । मणिकः ॥ ( २८३१ ) (सू) **लोहितान्मणौ** । ५ । ४ । ३० । लोहित एव मणिर्लोहितकः ॥ ( २८३२ ) (सू) **वर्णे चानित्ये** । ५ । ४ । ३१ । लोहितकः कोपेन ॥

---

नान्येति काशिका ॥ **संयोगान्तस्येति** । हल्ङ्यादिना सुलोप इति प्राचो ग्रन्थोऽयुक्त इत्याह—**न त्विति** । सुतिसीति साहचर्याद्विभक्त्य एव तत्र गृह्यन्त इत्यभिप्रेत्याह–**सिच इवेति** ॥ ( २८१७ ) **विभाषा बहो—। बहुधा दिवसस्य भुङ्क्ते इति** । शेषत्वविवक्षायां षष्ठी । 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ९०६' इत्यनेन षष्ठीति हरदत्तोक्तिस्तु नादर्तव्या । शेषाधिकारबलेनाष्टसूत्र्याः समासनिवृत्तिफलकतया तिङन्तेनोदाहरणमिति प्रागुक्तनिष्कर्षविरोधादित्याहुः ॥ (२८१८) **तत्प्रकृत—। प्राचुर्येण प्रस्तुतमिति** । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढः, तथापि वचनग्रहणादयं विशेषो लभ्यते । वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयटा वचनं प्रत्यायनं तत्र यथा स्यादित्येवमर्थम् ॥ **आद्ये इति** । प्रथमान्तात्प्रकृते द्योत्ये प्रत्ययः । स्वार्थिकत्वात्प्रकृतितो लिङ्ग ( वचन ) म् । अपूपमयमित्यपि क्वचित्पठ्यते । प्रस्तुतोऽपूपोऽपूपमयम् । क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते । अस्मिन्पक्षे तद्ग्रहणं [2]व्यर्थम् । द्वितीये त्वावश्यकं प्रथमान्तादेव प्रत्ययलाभार्थम् ॥ **द्वितीये इति** । अस्मिन्पक्षे उच्यमानता प्रकृतता च प्रकृत्यर्थे विशेषणम् । ल्युटोक्तमधिकरणं तु मयडर्थः । अत एव विशेष्यनिघ्नता तदाह—**अन्नमयो यज्ञ इति** । अन्नं प्रकृतमुच्यते अस्मिन्नित्यर्थः ॥ ( २८१९ ) **समूहवच्च—। मौदकिकम्, शाष्कुलिकमिति** । 'अचित्तहस्तिधेनोष्ठक् १७७६' ॥ ( २८२० ) **अनन्ता—। आवसथ इति** । 'उपसर्गे वसः ४५९९' इत्यथप्रत्ययः ॥ **निपातसमुदाय इति** । उपदेशपारंपर्ये वर्तते वचनाच्चाप्रातिपदिकादेव प्रत्ययः ॥ **ऐतिह्यमिति** । 'इतिहाव्ययम्' इति कोशः ॥ **भेषजमिति** । भिषज्यतेः कण्ड्वादियगन्तात्क्विप् । भिषजामिदं भेषजम्, अस्मादेव निपातनादेकारः॥(२८२१)**देवता—। पितृदेवत्यमिति** । पितरश्च ता देवताश्च पितृदेवताः। पितृदेवताभ्य इदमिति विग्रहः॥(२८२२) **पादार्घा—। अर्घ्यमिति** । 'मूल्ये पूजाविधावर्घः' इत्यमरः ॥ ( २८२४ ) **नश्च पु—। पूर्वोक्ता इति** । त्नप्तनप्खप्रत्यया इत्यर्थः ॥ ( २८२६ ) **आग्नीध्रमिति** । 'अग्नीधः शरणे रण् भं च २०६६' इति शैषिकेषु व्युत्पादितं, तच्चान्तोदात्तम्, ततः स्वार्थेऽनेनाञ् । आद्युदात्तत्वं फलम् । फलान्तरमप्याह–**स्त्रियामिति** ॥ **आग्नीध्रीति** । शालेति विशेष्यम् ॥ समानं धारणमस्याः साधारणी । अनेकं प्रत्यविशिष्टसबन्धा भूम्यादिः । पृषोदरादित्वात्समानस्य सभावः । विभाषाप्रकरणादञभावे टाप् । आग्नीध्रा शाला । साधारणा भूमिः ॥ नन्वञभावपक्षे समानस्य सभावेऽपि सधारण इत्येव स्यान्न त्वत्रादिवृद्धिरिति चेत् । अत्राहुः–'साधारणादञ्' इत्यत एव निपातनात्समानस्य सा[3]भावविधानाद्वा इष्टसिद्धिरिति ॥ ( २८२८ ) **देवतेति** । तलन्तं स्त्रियाम् ॥ ( २८३२ ) **वर्णे चानित्ये** । अनित्ये किम् । लोहितं रुधिरम् । लोहिता लाक्षा । अनित्यत्वमिह समानाधिकरणध्वंसप्रतियोगित्वम् । अत एव 'रक्ते २८३४' इत्युत्तरसूत्रं सार्थकम् । लाक्षादिना रक्ते लौहित्यस्य यावदाश्रयमवस्थानेन नित्यतया पूर्वेणासिद्धेः ॥ **लोहितक इति** । कोपेन लोहितो यः पुरुषस्तास्मिन्नेव क्षणादूर्ध्वं कोपशान्तौ लोहितो नश्य-

---

१ इहान्यान्यपि वार्तिकानि भाष्ये दृश्यन्ते । **नवसूरमर्तयविष्ठेभ्यो यत्** । नव्यः, सूर्यः, मर्त्यः, यविष्ठ्यः॥ **क्षेमाद्यः** क्षेम्यः ॥ २ **व्यर्थमिति** । प्रकृतवचने वर्तमानस्य प्रथमान्ततैव संभवतीति भावः ॥ व्यर्थं सत्तद्ग्रहणं वाक्यभेदेन प्राचुर्याभावेऽप्यत्यन्तस्वार्थिकमयडर्थम् । तेन चिन्मयं ब्रह्मेत्याद्यपि सिद्धम् ॥ ३ **साभावेति** । सादेशस्य दीर्घ इति शेखरे ॥

( २८३३ ) (वा) **लोहिताल्लिङ्गबाधनं वा** ॥ लोहितिका, लोहिनिका कोपेन ॥ ( २८३४ ) (सू) **रक्ते** ।५।४।३२। लाक्षादिना रक्ते यो लोहितशब्दस्तस्मात्कन्स्यात् । ( २८३५ ) लिङ्गबाधनं वेत्येव । लोहितिका लोहिनिका शाटी ॥ ( २८३६ ) (सू) **कालाच्च** । ५ । ४ । ३३ । वर्णे चानित्ये रक्ते इति द्वयमनुवर्तते । कालकं मुखं वैलक्ष्यण । कालकः पटः । कालिका शाटी ॥ ( २८३७ ) (सू) **विनयादिभ्यष्ठक्** । ५ । ४ । ३४ । विनय एव–वैनयिकः । सामयिकः ॥ ( २८३८ ) (ग) **उपायो ह्रस्वत्वं च** ॥ औपयिकः ॥ ( २८३९ ) (सू) **वाचो व्याहृतार्थायाम्** । ५ । ४ । ३५ । संदिष्टार्थायां वाचि विद्यमानाद्वाक्शब्दात्स्वार्थे ठक् स्यात् । संदेशवाग् वाचिकं स्यात् ॥ ( २८४० ) (सू) **तद्युक्तात्कर्मणोऽण्** । ५ । ४ । ३६ । कर्मैव कार्मणम् । वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः ॥ ( २८४१ ) (सू) **ओषधेरजातौ** । ५ । ४ । ३७ । स्वार्थेऽण् । औषधं पिबति । अजातौ किम् । ओषधयः क्षेत्रे रूढाः ॥ ( २८४२ ) (सू) **प्रज्ञादिभ्यश्च** । ५ । ४ । ३८ । प्रज्ञ एव–प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः ॥ (२८४३) (सू) **मृदस्तिकन्** ।५।४।३९। मृदेव–मृत्तिका ॥ ( २८४४ ) (सू) **सस्नौ प्रशंसायाम्** । ५ । ४ । ४० । रूपपोऽपवादः । प्रशस्ता मृत्––मृत्स्ना । मृत्स्ना । उत्तरसूत्रेऽन्यतरस्यांग्रहणान्नित्योऽयम् ॥ ( २८४५ ) (सू) **बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्** । ५ । ४ । ४२ । बहूनि ददाति––बहुशः । अल्पानि–अल्पशः ॥ ( २८४६ ) (वा) **बह्वल्पार्थान्मङ्गलामङ्गलवचनम्** ॥ नेह । बहूनि ददात्यनिष्टेषु, अल्पं ददात्याभ्युदयिकेषु ॥ ( २८४७ ) (सू) **संख्यैकवचनाच्च वीप्सायाम्** ।५।४।४३। द्वौ द्वौ ददाति–द्विशः । माषं माषं–माषशः । प्रस्थशः । परिमाणशब्दा वृत्तावेकार्था एव । संख्यैकवचनात्किम् । घटं

---

तीति भवत्यत्रानित्यो वर्णः ॥ (२८३३) 'प्रातिपदिकात्तद्धितः' इति पक्षस्य प्रतिपदविधानमात्रेणापवादत्वमिति पक्षस्य चाश्रयणे 'वर्णादनुदात्तात्–६८७' इत्यतः प्रागेव कनि कृते लोहितिकेति रूपं न स्यादित्याशङ्कायामाह–**लिङ्गबाधनं वेति** । लोहितादित्युपलक्षणम्–एतिका एनिकेत्यादेरपि संग्राह्यत्वात् । 'सुबन्तात्तद्धिताः' इति पक्षस्य 'निरवकाशत्वमपवादत्वम्' इति पक्षस्य च मुख्यत्वात्तदाश्रयणे तु 'वर्णादनुदात्तात्–६८७' इत्यस्यानन्तरमेव कनः प्रवृत्तेः कन्प्रत्ययस्य पुँल्लिङ्गे सावकाशतया निरवकाशत्वाभावाच्च वार्तिकमिदं न कर्तव्यम् । अत एव ङ्याब्ग्रहणं व्यर्थमिति स्वाम्पीति रूपं प्रबलमिति च मनोरमादावुक्तमिति दिक् ॥ ( २८३७ ) **विनया–** । ( २८३८ ) **उपायेति** । उपायशब्दष्ठकं लभते ह्रस्वत्वं चेत्यर्थः । अकस्माच्छब्दोऽत्र पठ्यते स तु दान्तो न तु तान्तः । तेन कादेशो न ' अव्ययानां भमात्रे टिलोपः १८६४ ' आकस्मिकम् ॥ ( २८३९ ) **वाचो व्याहृता––** । व्याहृतार्थायां किम्, मधुरा वाग्देवदत्तस्य ॥ **वाचिकमिति** । ' अतिवर्तन्ते स्वार्थिकाः क्वचिल्लिङ्गम्' इति नपुंसकत्वम् ॥ ( २८४२ ) **प्रज्ञादि–** । **प्रज्ञ एवेति** । प्रजानातीति प्रज्ञः । 'इगुपधज्ञा–३८५७' इति कः । ततः स्वार्थेऽण् । प्राज्ञः ॥ **प्राज्ञीति** । 'टिड्ढा–६५१' इति ङीप् । प्रज्ञानं प्रज्ञा । 'आतश्चोपसर्गे–५०८८' इत्यङि टाप् । प्रज्ञा विद्यते यस्याः सा तु प्राज्ञा भवति । 'प्रज्ञाश्रद्धार्चाभ्यः–२५७८' इति णः ॥ ( २८४३ ) **मृदस्तिकन्** । 'प्रत्ययस्थात्—६३० ' इत्येव सिद्धे इकारोच्चारणं प्रक्रियालाघवार्थं, टापो लुक्यपि श्रवणार्थं च । पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिकः पटः ॥ (२८४४) **सस्नौ—** । इह 'प्रशंसायां रूपप् २७३५' इत्यस्यानन्तरं 'वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ५३४८' । 'मृदः सस्नौ' 'तिकंश्च' इति वक्तुमुचितम् । न चैवं सस्नाविव तिकन् प्रत्ययोऽपि प्रशंसायामेवेत्यभ्युपगन्तव्यम् । ' तिकंश्च ' इत्यत्र 'प्रशंसायाम् ' इति निवृत्तमिति कल्पनायां मानाभावादिति वाच्यम्, ' मृदः सस्नतिकनः ' इति वक्तव्ये तिकनः पृथक्करणस्यैव तत्र मानत्वात् ॥ **प्रशस्ता मृदिति** । 'मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका' इत्यमरः ॥ **नित्योऽयमिति** । मृदित्येतावदुक्ते प्रशस्तत्वानवगमाद्विभाषाऽत्र नानुवर्तत इति सस्नावित्ययं विधिर्नित्य एव । उत्तरसूत्रस्थान्यतरस्यांग्रहणात्तु सुतरामिति भावः ॥ ( २८४५ ) **बह्वल्पार्थात्––** । **बहुनीति** । बहुभ्यो ददाति बहुशः, अल्पेभ्यः अल्पश इत्याद्यपि बोध्यम् । बह्वल्पार्थात्किम्, गां ददाति । अश्वं ददाति । अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च । भूरिशो ददाति । त्रिशः । कारकात्किम्, बहूनां स्वामी, अल्पानां स्वामी ॥ ( २८४६ ) **मङ्गलवचनमिति** । 'बहुशो ददात्याभ्युदयिकेषु कर्मसु । अल्पशो ददात्यनिष्टेषु' । आभ्युदयिकेषु बहुदानम्, अनिष्टेष्वल्पदानं च मङ्गलम् । तद्विपरीत्येन दानं तु मङ्गलं न भवतीत्याशयेनाह–**नेहेति** ॥ **अनिष्टेष्विति** । भयादिनिमित्तेषु दानेषु ॥ **आभ्युदयिकेष्विति** । अभ्युदयप्रयोजनेष्वग्न्याधेयादिषु । मूलपुस्तके तु 'मङ्गलामङ्गलवचनम्' इति प्रायेण पठ्यते । तत्रामङ्गलग्रहणं वृथेत्याहुः । प्रायिकं चैतन्मङ्गलवचनम् । अन्यत्रापि हि दृश्यते—'अपेतापोढमुक्तपतितापत्रस्तैरल्पशः १०१४' इति । कारकत्वं तु समसनक्रियां प्रति पञ्चम्याः कर्मत्वात्तदभिधायकत्वाच्चाल्पशब्दस्य । तथा च व्याचक्षते । अल्पा पञ्चमी समस्यत इति । आचार्येणेति शेषः ॥ ( २८४७ ) **संख्यैकवचनाच्च–** । **परिमाणशब्दा इति** । तथा चैकवचनग्रहणेन एकोऽर्थ उच्यते येनेत्यर्थकेन वृत्तावेकार्थतानियताः परिमाणशब्दा एव गृह्यन्त इति भावः ॥

---

१ **अल्पार्थादिति** । अत्राल्पार्थशब्देन स्तोकादीनामेव ग्रहणम्, न तु तदर्थैकैकशब्दस्य, तत्सत्त्वे मानाभावात् । तत्रार्थे तस्याप्रसिद्धतरत्वाच्च ॥ २ **भयादीति** । भाष्ये तु–'श्राद्धादिषु' इत्युक्तम् । एवं च जीवत्पित्रादिसेवाया अमङ्गलत्वाभावेन तत्परत्वं श्राद्धशब्दस्य वदन्तो नवीना मौनमाश्रयन्तु ॥ ३ **मूलेति** । भाष्येऽपि 'मङ्गलामङ्गलवचनम् ' इत्येव दृश्यते । प्रायिकत्वं तु भाष्यानुक्तम् । 'अल्पशः' इत्यस्योपपत्तिरपि शेखरे व्यक्ता ॥

घटं ददाति । वीप्सायां किम् । द्वौ ददाति । कारकादित्येव । द्वयोर्द्वयोः स्वामी ॥ ( २८४८ ) (सू.) प्रतियोगे पञ्चम्यास्तसिः । ५ । ४ । ४४ । प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः स्यात् । प्रद्युम्नः कृष्णतः प्रति ॥ ( २८४९ ) (वा.) आद्यादिभ्य उपसंख्यानम् ॥ आदौ आदितः । मध्यतः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण स्वरतः । वर्णतः ॥ ( २८५० ) (सू.) अपादाने चाहीयरुहोः । ५ । ४ । ४५ । अपादाने या पञ्चमी तदन्तात्तसिः स्यात् । ग्रामादागच्छति-ग्रामतः । अहीयरुहोः किम् । स्वर्गाद्धीयते । पर्वतादवरोहति ॥ (२८५१) (सू.) अतिग्रहाऽव्यथनक्षेपेष्वकर्तरि तृतीयायाः । ५ । ४ । ४६ । अकर्तरि तृतीयान्ताद्वा तसिः स्यात् । अतिक्रम्य ग्रहोऽतिग्रहः । चारित्रेणातिगृह्यते-चारित्रतोऽतिगृह्यते । चारित्रेणान्यानतिक्रम्य वर्तत इत्यर्थः । अव्यथनमचलनम् । वृत्तेन न व्यथते । वृत्ततो न व्यथते । वृत्तेन न चलतीत्यर्थः । क्षेपे-वृत्तेन क्षिप्तः । वृत्ततः क्षिप्तः । वृत्तेन निन्दित इत्यर्थः । अकर्तरीति किम् । देवदत्तेन क्षिप्तः ॥ ( २८५२ ) (सू.) हीयमानपापयोगाच्च । ५ । ४ । ४७ । हीयमानपापयुक्तादकर्तरि तृतीयान्ताद्वा तसिः । वृत्तेन हीयते, वृत्तेन पापः-वृत्ततः । क्षेपस्याविवक्षायामिदम् । क्षेपे तु पूर्वेण सिद्धम् । अकर्तरि किम् । देवदत्तेन हीयते ॥ ( २८५३ ) (सू.) षष्ठ्या व्याश्रये । ५ । ४ । ४८ । षष्ठ्यन्ताद्वा तसिः स्यान्नानापक्षसमाश्रये । देवा अर्जुनतोऽभवन् । आदित्याः कर्णतोऽभवन् । अर्जुनस्य कर्णस्य पक्षे इत्यर्थः । व्याश्रये किम् । वृक्षस्य शाखा ॥ (२८५४) (सू.) रोगाच्चापनयने ।५।४।४९। रोगवाचिनः षष्ठ्यन्ताद्वा तसिश्चिकित्सायाम् । प्रवाहिकातः कुरु । प्रतीकारमस्याः कुर्वित्यर्थः । अपनयने किम् । प्रवाहिकायाः प्रकोपनं करोति ॥ (२८५५ ) (सू.) कृभ्वस्तियोगे संपद्यकर्तरि च्विः ।५।४।५० ॥ (२८५६) (वा.) अभूततद्भाव इति वक्तव्यम् ॥ विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे ॥ ( २८५७ ) (सू.) अस्य च्वौ । ७ । ४ । ३२ । अवर्णस्य ईत्स्यात् च्वौ । च्वेर्लोपः । च्व्यन्तत्वादव्ययत्वम् । अकृष्णः 'कृष्ण':-संपद्यते, तं करोति-कृष्णीकरोति । ब्रह्मी-

---

माषं माषमिति । माषदातेत्युक्ते माषमात्रस्य हिरण्यादेर्दातेति प्रतीयते, न तु माषाणामिति प्रतीतिरिति भवत्ययं वृत्तावेकार्थतानियमः । एवं प्रस्थादिरपि । घटादयस्तु नैवम्, घटदातेत्युक्ते तु घटानां दातेत्यर्थस्यापि प्रतीयमानत्वादत एव च प्रत्युदाहरति —घटं घटमिति । घटादयो हि जातिशब्दा नैकार्था भवन्ति जातियोगस्यैकानेकसाधारणत्वात्, किंत्वभेदैकत्वसंख्यामुपाददते । एतच्च सर्वं जयादित्यमतानुसारेणोक्तम् ॥ वामनमते जातिशब्देभ्योऽपि भवत्येव । तथा च ' जश्शसोः ' इति सूत्रे तेनोक्तम्-'जसा सहचरितस्य शसो ग्रहणादिह न भवति, । 'कुण्डशो ददाति वनशः प्रविशति' इति तस्यायमाशयः—जातिशब्दोऽपि यद्यर्थप्रकरणादिना वृत्तावेकार्थो भवति, तदा भवत्येव ततोऽपि शसिति । अथ कथम्-'एकैकशः पितृसंयुक्तान्' इति द्विर्वचनशसोः सह प्रयोगः इति चेत् । छन्दोवदृषयः कुर्वन्तीति हरदत्तः । अत एव 'सुपः' इति सूत्रे एकैकश इति प्राचो ग्रन्थः प्रामादिक इत्यवोचामेति मनोरमायां स्थितम् ॥ वस्तुतस्तु एकैकमेव एकैकशः । स्वार्थे शस्, न तु वीप्सायां 'एकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा' इति भाष्यादिति 'तान्येकवचनम्-२९१५' इत्यादिसूत्रे वक्ष्यामः ॥ द्वौ ददातीति । कथं तर्हि—" अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते " इति । न ह्यत्र वीप्साऽस्ति, नापि कारकत्वमिति चेत् । अत्राहुः-सहस्रं सहस्रं ये समेतास्तेषामपि परिषत्त्वं नेत्यर्थः । तथा च समवायक्रियां प्रति कर्तृत्वं वीप्सा चास्त्येवेति । एतेन 'एकश एकवचनादिसंज्ञानि स्युः' इति व्याख्यातम् । एकशब्दार्थस्यास्तिक्रियां प्रति कर्तृत्वात् ॥ ( २८४८ ) प्रतियोगे-। कृष्णतः प्रतीति । 'प्रतिः प्रतिनिधिप्रतिदानयोः ८८० ' इति कर्मप्रवचनीयसंज्ञायां ' प्रतिनिधिप्रतिदाने च यस्मात् ८८१' इति पञ्चमी ॥ ( २८४९ ) आद्यादिभ्य इति । 'तस्यादित उदात्तमर्धह्रस्वम् १४ ' इत्येतदत्र लिङ्गम् ॥ ( २८५० ) अपादाने-। ग्रामत इति । एवमध्ययनात्पराजयते अध्ययनत इत्याद्यपि बोध्यम् ॥ (२८५१) अतिगृह्यत इति । अन्यातिक्रमेण लोकैर्गृह्यत इत्यर्थः । फलितमाह-अन्याननतिक्रम्य वर्तत इति ॥ (२८५४) रोगाच्चाप-। प्रवाहिकात इति । प्रच्छर्दिकातः कुर्वित्याद्यप्युदाहरणम् । [ प्रवाहिका विसूचिका । प्रच्छर्दिका तु वमनव्याधिः ] ॥ (२८५५) कृभ्वस्तियोगे--। योग इति किम्, अशुक्लः शुक्लो जायते ॥ संपद्यकर्तरीति । संपद्यश्चासौ कर्ता चेति विग्रहः । 'पाघ्राध्माधेट्दृशः-३८५९' इति विहितः शप्रत्ययोऽस्मादेव निपातनात्संपदोऽपि भवति । दिवादित्वात् श्यनिति हरदत्तः ॥ (२८५६) वक्तव्यमिति । वृत्तिकारस्तु 'अभूततद्भावे' इति सूत्रमध्ये प्रचिक्षेप ॥ (२८५७) अस्य च्वौ । च्व्यन्तत्वादिति । तस्य

---

१ अभूतेति । गम्यमान इति शेषः । तद्भावेति करणतृतीयया समासः । अभूतपदेन कर्तृषष्ठ्यन्तेन तस्य समासः । अभूतत्वं च प्रत्यासत्त्या तद्भावशब्दघटकतच्छब्दार्थकरणकत्वेनैव ग्राह्यम् ॥ एवं च येन रूपेण प्रागभूतं तेन रूपेण तस्य भावे इति फलितम् । तथा च तत्रैवायं प्रत्ययः । यत्र विकाररूपतामापद्यमानं प्रकृतिरूपमेव विवक्ष्यते-इति निर्गलितोऽर्थः ॥ २ 'प्रथमद्वितीयपञ्चमषष्ठाः-जयादित्यकृतवृत्तयः । इतरे-'वामनकृतवृत्तयः' इत्यभियुक्ताः-इति शब्दरत्ने ॥ ३ शप्रत्यय इति । वस्तुतस्तु 'सन्योपपदे-' 'मन्यकर्मणि-' इत्यत्रेव श्तिप्प्राग्वर्तिश्यन्नन्तभागस्यैवानित्स्ववानुकरणं संपद्येति । निपातनेन भावे शस्य भावार्थकशे श्यनश्च कल्पने निपातयद्वयकल्पने गौरवमेवेति बोध्यम् । संपद्यस्य कर्तेति तत्पुरुषः । एवं च संपत्तिकर्तृबोधकाद् विकारवाचकशब्दात्प्रत्ययः । तस्य प्रकृतौ वर्तमानत्वं गौण्या वृत्त्या द्रष्टव्यम् ॥

भवति । गङ्गीस्यात् ॥ ( २८५८ ) (वा) अव्ययस्य च्वावीत्वं नेति वाच्यम् ॥ दोषाभूतमहः । दिवाभूता रात्रिः । एतच्चाव्ययीभावश्चेति सूत्रे भाष्ये उक्तम् ॥ ( २८५९ ) (सू) क्यच्व्योश्च । ६ । ४ । १५२ । हलः परस्यापत्ययकारस्य लोपः स्यात् क्ये च्वौ च परतः । गार्गीभवति ॥ (२८६०) (सू) च्वौ च । ७ । ४ । २६ । च्वौ परे पूर्वस्य दीर्घः स्यात् । शुचीभवति । पटूस्यात् । अव्ययस्य दीर्घत्वं नेति केचित्तन्निर्मूलम् । स्वस्ति स्यादिति तु महाविभाषया च्वेरभावात्सिद्धम् । स्वस्तीस्यादित्यपि पक्षे स्यादिति चेदस्तु । यदि नेष्यते तर्ह्यनभिधानात् च्विरेव नोत्पद्यते इत्यस्तु ॥ दीकृतः । मात्रीकरोति ॥ ( २८६१ ) (सू) अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च । ५ । ४ । ५१ । एषां लोपः स्यात् च्विश्च । अरूकरोति । उन्मनीस्यात् । उच्चक्षूकरोति । विचेतीकरोति । विरहीकरोति । विरजीकरोति ॥ (२८६२) (सू) विभाषा साति कार्त्स्न्ये । ५ । ४ । ५२ । च्विविषये सातिर्वा स्यात्साकल्ये ॥ ( २८६३ ) (सू) सात्पदाद्योः । ८ । ३ । १११ । सस्य षत्वं न स्यात् । दधि सिञ्चति । कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति । अग्नीभवति । महाविभाषया वाक्यमपि । कार्त्स्न्ये किम् । एकदेशेन शुक्लीभवति पटः ॥( २८६४ ) (सू) अभिविधौ संपदा च ।५।४। । ५३ । संपदा कृभ्वस्तिभिश्च योगे सातिर्वा स्याद्व्याप्तौ । पक्षे कृभ्वस्तियोगे च्विः । संपदा तु वाक्यमेव । अग्निसात्संपद्यते अग्निसाद्भवति शस्त्रम् । अग्नीभवति । जलसात्संपद्यते जलीभवति लवणम् । एकस्या व्यक्तेः सर्वावयवावच्छेदेनान्यथाभावः कार्त्स्न्यम् । बहूनां व्यक्तीनां किंचिदवयवावच्छेदेनान्यथात्वं त्वभिविधिः ॥ ( २८६५) (सू) तदधीनवचने । । ५ । ४ । ५४ । सातिः स्यात्कृभ्वस्तिभिः संपदा च योगे । राजसात्करोति । राजसात्संपद्यते । राजाधीनमित्यर्थः ॥ ( २८६६ ) (सू) देये त्रा च । ५ । ४ । ५५ । तदधीने देये त्रा स्यात्सातिश्च कृभ्वादियोगे । विप्राधीनं देयं करोति— विप्रत्रा करोति । विप्रत्रा संपद्यते । पक्षे विप्रसात्करोति । देये किम् । राजसाद्गच्छति राष्ट्रम् ॥ ( २८६७) (सू) देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् । ५ । ४ । ५६ । एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् । देवत्रा वन्दे रमे वा । बहुलोक्तेरन्यत्रापि । बहुत्रा जीवतो मनः ॥ ( २८६८ ) (सू) अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् । ५ । ४ । ५७ । द्व्यच् अवरं न्यूनं न तु ततो न्यूनम् । अनेकाजिति यावत् । तादृशमर्धं यस्य तस्माड्डाच् स्यात्कृभ्वस्तिभिर्योगे ॥ ( २८६९ ) (वा) डाचि विवक्षिते द्वे बहुलम् ॥ ( २८७० ) (वा) नित्यमाम्रेडिते डाचीति वक्तव्यम् । डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तकारपकारयोः पकारः । पटपटाकरोति । अव्यक्तानुकरणात्किम् । दृषत्करोति । द्व्यजवरार्धात्किम् । श्रत्करोति । अवरेति किम् । खरटखरटाकरोति । त्रपटत्रपटाकरोति । अनेकाच इत्येव सूत्रयितुमुचितम् । एवं हि डाचीति परसप्तम्यैव द्वित्वे सुवचेत्यवधेयम् । अनितौ किम् । पटिति करोति ॥ ( २८७१ ) (सू) कृञो द्वितीयतृतीयशम्बबीजात्कृषौ । ५ । । ४ । ५८ । द्वितीयादिभ्यो डाच् स्यात्कृञ एव योगे कर्षणेऽर्थे । बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । द्वितीयं तृतीयं कर्षणं करोति—द्वितीयाकरोति । तृतीयाकरोति । शम्बशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति——शम्बाकरोति । बीजेन सह कर्षति——बीजाकरोति ॥ ( २८७२ ) (सू) संख्यायाश्च गुणान्तायाः । ५ । ४ । ५९ । कृञो योगे कृषौ डाच् स्यात् । द्विगुणाकरोति क्षेत्रम् । क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः ॥

---

निपातत्वात् 'स्वरादिनिपातमव्ययम् ६०१' इत्यनेनेत्यर्थः ॥ ( २८५९ ) क्यच्व्योश्च । गार्गीभवतीति । इह यञन्तात् सुपि ततः च्विप्रत्यये कृते 'आपत्यस्य च तद्धितेऽनाति १५५३' इति यलोपो न भवति, ईकारेण व्यवधानादिति बोध्यम् ॥ (२८६१) अरुर्मनः—। च्विश्चेति । पूर्वेण सिद्धस्यापि च्वेरयमनुवादः । लोपस्तु तत्संनियोगशिष्टत्वार्थः॥ (२८६२) विभाषा साति—। विभाष्यते विकल्प्यते इति विभाषा । 'गुरोश्च हलः ५०८३' इत्यकारप्रत्ययः । ततः टाप् , न त्विदमव्ययं 'द्वयोर्विभाषयोर्मध्ये, पयसस्तु विभाषया' इत्यादौ विभक्तेर्दर्शनात् ॥(२८६३) सात्पदाद्योः । कृत्स्नमिति । सर्वावयवोपेतमित्यर्थः॥ (२८६४) अभिविधौ—। अग्निसाद्भवति शस्त्रमिति । जातावेकवचनम् । सर्वाणि शस्त्राणीत्यर्थः ॥ (२८६७) देवमनुष्य—। वन्दे रमे वेति । देवान् वन्दे देवत्रा वन्दे । देवेषु रमे देवत्रा रमे इत्यर्थोऽत्र पर्यवसन्नः। एवं मनुष्यान् गच्छति मनुष्यत्रा गच्छति । मनुष्येषु वसति मनुष्यत्रा वसति । पुरुषान् गच्छति पुरुषत्रा गच्छति । पुरुषेषु वसति पुरुषत्रा वसति । पुरुशब्दो बहुपर्यायः । पुरून् गच्छति पुरुषु वसति वा पुरुत्रा । मर्त्यान्मर्त्येषु वा मर्त्यत्रा॥(२८६८) अव्यक्तानु—। (२८६९) डाचि विवक्षित इति । परसप्तम्यां त्वन्योन्याश्रयः स्यात् । डाचि कृते द्वित्वे सति द्व्यजवरार्धता, तस्यां च सत्यां डाजिति भावः ॥ खरटखरटा करोतीति । द्वित्वपररूपादि प्राग्वत् । द्व्यजवरार्धादित्युक्ते त्वत्र डाच् न स्यात् । न ह्यत्रार्धं द्व्यच् , किं तु त्र्यच् ॥ अनेकाच इत्येवेति । 'द्व्यजवरार्धात्' इत्यपनीयेत्यर्थः॥ पटितीति । 'अव्यक्तानुकरणस्यात इतौ १३०' इति पररूपम् । नन्वत्र करोतिना योगो दुर्लभः, इतिशब्देन व्यवधानात् । तथा चानिताविति व्यर्थमिति चेत् । अत्राहुः—इतिशब्देन करोत्यर्थगतप्रकार एव परामृश्यते इत्येवं प्रकारेण करोतीति । तथा च पटच्छब्दस्यार्थद्वारा योगोऽस्त्येवेति॥ (२८७१) कृञो द्वि—। बीजेन सहेति । ननु बीजेन सह भूतलस्य कर्षणे बीजानामपि कर्षणप्रसङ्गाद्विवक्षितार्थो न सिध्यतीति चेत् । अत्राहुः—वृत्तिविषये बीजशब्दो

---

१ डाजिति । डाचश्चित्करणं 'लोहितादिडाज्भ्यः' इति विशेषणार्थम् । तेन सप्तम्यादेशडान्तान क्यष् ॥

( २८७३ ) सू. **समयाच्च यापनायाम्** । ५ । ४ । ६० । कृषाविति निवृत्तम् । कृञो योगे डाच् स्यात् । समयाकरोति कालं यापयतीत्यर्थः ॥ ( २८७४ ) सू. **सपत्त्रनिष्पत्त्रादतिव्यथने** । ५ । ४ । ६१ । सपत्त्राकरोति मृगम् सपुङ्खशरप्रवेशनेन सपत्त्रं करोतीत्यर्थः । निष्पत्त्राकरोति । सपुङ्खस्य शरस्यापरपार्श्वेन निर्गमनान्निष्पत्त्रं करोतीत्यर्थः । अतिव्यथने किम् । सपत्त्रं निष्पत्त्रं वा करोति भूतलम् ॥ ( २८७५ ) सू. **निष्कुलान्निष्कोषणे** । ५ । ४ । ६२ । निष्कुलाकरोति दाडिमम् । निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच् ॥ ( २८७६ ) सू. **सुखप्रियादानुलोम्ये** । ५ । ४ । ६३ । सुखाकरोति प्रियाकरोति गुरुम् । अनुकूलाचरणेनानन्दयतीत्यर्थः ॥ ( २८७७ ) सू. **दुःखात्प्रातिलोम्ये** । ५ । ४ । ६४ । दुःखाकरोति स्वामिनम् । पीडयतीत्यर्थः ॥ ( २८७८ ) सू. **शूलात्पाके** । ५ । ४ । ६५ । शूलाकरोति मांसम् । शूलेन पचतीत्यर्थः ॥ ( २८७९ ) सू. **सत्यादशपथे** । ५ । ४ । ६६ । सत्याकरोति भाण्डं वणिक् । क्रेतव्यमिति तथ्यं करोतीत्यर्थः । शपथे तु सत्यं करोति विप्रः ॥ ( २८८० ) सू. **मद्रात्परिवापणे** । ५ । ४ । ६७ । मद्रशब्दो मङ्गलार्थः । परिवापणं मुण्डनम् । मद्राकरोति । माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः ॥ ( २८८१ ) वा. **भद्राच्चेति वक्तव्यम्** ॥ भद्राकरोति । अर्थः प्राग्वत् । परिवापणे किम् । मद्रं करोति ॥

**इति तद्धितप्रकरणं समाप्तम् ॥**

---

## अथ द्विरुक्तप्रक्रिया ॥

(२८८२) सू. **सर्वस्य द्वे** । ८ । १ । १ । इत्यधिकृत्य ॥ (२८८३) सू. **नित्यवीप्सयोः** । ८ । १ । ४ । आभीक्ष्ण्ये वीप्सायां च

---

बीजावापसहिते विलेखने वर्तते । तथा च बीजावापसहितं विलेखनं करोतीत्यर्थ इति ॥ ( २८७३ ) **समयाच्च-** । **कालं यापयतीत्यर्थ इति** । 'कर्तव्यस्यावसरप्राप्तिः समयस्तस्यातिक्रमणं यापना ' इति वृत्तिग्रन्थमुपादाय हरदत्त आह-'अद्य मे पारवश्यं, श्वः परश्वो वा अस्य समय इत्येवं बहुषु दिवसेषु य आह स एवमुच्यते' इति ॥ (२८७४) **सपत्त्रनिष्पत्त्रात्-** । लक्ष्ये शराः पतन्त्यनेनेति पत्त्रम् । शराणां पुङ्खगता बर्हः ॥ **सपत्त्रं निष्पत्त्रं वा करोतीति** । पत्त्राणि पर्णानि तत्सहितं तद्रहितं वेति यथासंभवमर्थः ॥ ( २८७५ ) **निष्कुलात्—** । निष्कोषणमन्तरवयवानां बहिर्निष्कासनम् । निष्कोषणे किम् , निष्कुलं करोति शत्रुम् ॥ ( २८७८ ) **शूलात्पाके** । पाके किम् , शूलं करोति कदन्नं, शूलमुदररोगः ॥ ( २८७९ ) **सत्यादशपथे** । सत्सु साधु सत्यम् । 'तत्र साधुः २२४४' इति प्राग्घितीयत्वाद्यति प्राप्ते अत एव निपातनाद् यः । अन्तोदात्तोऽयम् । ' सत्येनोत्तभिता भूमिः' । ' ऋतं च सत्यं च ' इत्यत्र तथा दर्शनात् ॥ **सत्याकरोतीति** । भाण्डं रत्नादिद्रव्यजातम् ॥ **क्रेतव्यमिति** । मयैवैतद् ग्राह्यमिति बुद्धया परीक्षादिना सत्यंकारद्रव्यप्रदानेन च दृढं करोतीत्यर्थः ॥ **तथ्यमिति** । तथैव तथ्यम् । ' पादार्घाभ्यां च २८२२ ' इति चकारस्यानुक्तसमुच्चयार्थत्वात्स्वार्थे यत् ॥ ( २८८० ) **मद्रात्परिवा-** । **परिवापणमिति** । कर्मव्यापारमात्रवाचिनो वपेर्हेतुमण्णिचि ल्युडिति हरदत्तः ॥ कर्मव्यापारः फलं, तस्य कर्मनिष्ठत्वात् । तथा च फलमात्रवाचिन इत्यर्थः फलित इत्याहुः ॥ **माङ्गल्यमुण्डनेनेति** । (२८८१) चौलदीक्षादौ ॥ **भद्राच्चेति** । मद्रादित्यर्थग्रहणमिति व्याख्याने तु मङ्गलादिभ्योऽपि स्यादिति बोध्यम् ॥ इति तद्धितप्रकरणम् ॥

---

(२८८२) **सर्वस्य द्वे** । सर्वशब्दस्य द्वे भवत इति विधिस्तु न शङ्क्यः, किन्तु 'नित्यवीप्सयोः २८८३' इत्येवमादीनां विधेयकार्यिणोरनिर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधिकारोऽयं तदाह—**इत्यधिकृत्येति** । एतदर्थरूपमधिकृत्येत्यर्थः । स्वरूपग्रहणं तु न भवति 'नाम्रेडितस्यान्त्यस्य तु वा १३२' इति लिङ्गात् । स्वरूपग्रहणे हि सति द्विरुक्तसर्वशब्दस्यैव परमाम्रेडितं स्यात् । न तु द्विरुक्तस्याव्यक्तानुकरणशब्दस्य परमिति ' नाम्रेडितस्य-१३२ ' इति पररूपनिषेधोऽन्त्यस्य तकारस्य विकल्पविधिश्च कथं संगच्छते ॥ ननु 'नित्यवीप्सयोः २८८३' इत्यादौ 'पदस्य' इति वक्ष्यमाणमपकृष्य पदस्यैव द्वित्वं विधीयते इति किमनेन सर्वस्येति ग्रहणेनेति चेत् । अत्राहुः-' स्वादिषु-३३१' इति पदसंज्ञामादाय वृक्षाभ्यामित्यादौ प्रकृतिभागमात्रस्य द्विर्वचनं स्यात् । कृते तु ' सर्वस्य ' इति ग्रहणे 'सर्वशब्दोऽवयवकार्त्स्न्ये वर्तते ' इति 'सर्वावयवोपेतस्य द्वित्वं, न तु कश्चिदवयवो वर्ज्यते ' इत्यर्थलाभादिष्टसिद्धिरिति । इह ' द्वे ' इत्यस्य संख्येयापेक्षायां शब्दरूपे गृह्येते, शब्दानुशासनप्रस्तावात् । ' सर्वस्य' इति स्थानषष्ठी ॥ सोऽयं स्थाने द्विर्वचनः पक्षः ॥ यदि तु उच्चारणे संख्येये, तदा स्थान्यादेशभावो न संभवति, निवृत्तिधर्मा हि स्थानी भवति, सर्वं चेत् निवृत्तं कस्योच्चारणं स्यादतः ' सर्वस्य ' इत्यध्याहृतोच्चारणशब्दापेक्षया 'कर्तृकर्मणोः कृति ९०७ ' इति कर्मणि षष्ठी । ' सर्वं द्विरुच्चारयेत्' इति फलितोऽर्थः । सोऽयं ' द्विः प्रयोगो द्विर्वचनम् ' इति पक्षः ॥ ननु आद्यपक्षे स्थानिवद्भावेन समुदायस्यैव पदत्वं स्यात् । न त्ववयवयोस्ततश्च पदकार्याणि न स्युः । न चेष्टापत्तिः, ' अपचन्नपचन् ' इत्यत्र ङमुट् , ' वृक्षान् वृक्षान् ' इत्यत्र ' पदान्तस्य २८३ ' इति णत्वनिषेधः, ' अग्नेऽग्ने ' इत्यत्र 'एङः पदान्तात्-१४१' इति पूर्वरूपत्वं च न सिध्यत् । किं चापदान्तत्वप्रयुक्तकार्याणि स्युः । तद्यथा 'पयःपयः' इत्यत्र 'सोऽपदादौ २२७' इति सत्वं स्यात, 'पपीःपपीः' इत्यत्र 'इणः षः २३१' इति षत्वं स्यात् । 'पाशकल्पककाम्येषु-२२८' इति वृत्तिग्रन्थमवष्टभ्य कथंचित्सत्वषत्वपरिहारेऽपि 'अश्नीताश्नीत' इत्यत्र 'अतो गुणे २७६' इति पररूपं स्यादिति चेत् । अत्राहुः-

**द्योत्ये पदस्य द्विर्वचनं स्यात्। आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च। पचति पचति। भुक्त्वा भुक्त्वा। वीप्सायाम्-**

---

यदि प्रत्यस्तमितावयवभेदः समुदाय एक एवादेशः स्यात् द्वे इति ( द्वि ) वचनमनुपपन्नं स्यात् , अतो द्वे इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते, तत्र स्थनिवद्भावेन समुदायस्य पदत्वं, स्वत एव चावयवयोरपीति न कश्चिद्दोष इति। स्यादेतत्, द्विःप्रयोगपक्षे प्रत्येकं पदसंज्ञायां सिद्धायामपि समुदायस्य न सिध्यति। ततश्च देवदत्तः पचति-पचतीत्यादौ 'तिङ्ङतिङः ५९११' इति सर्वस्य पदस्य निघातो न सिध्यतीति चेत्। अत्राहुः-पचतिपचतीत्यादौ हि स एव धातुः प्रत्ययश्चात्र द्विः पठ्यते। ततश्च यो यस्मात् प्रत्ययो विहितस्तदादितदन्तामिति विधीयमाना पदसंज्ञा समुदायस्यापि प्रवर्तते। तेनावग्रहादिः सिध्यतीति ॥ ( २८८३ ) **नित्यवीप्सयोः**। नित्यमिह पौनःपुन्यमित्याह--**आभीक्ष्ण्य इति** ॥ **द्योत्य इति**। 'नपुंसकमनपुंसकेन-१३४०' इत्येकशेषः, एकवद्भावश्च बोध्यः ॥ **पदस्येति**। तेन नित्यतायां विधीयमानं द्विर्वचनं धातुमात्रस्य न भवति। किं च क्रियासमभिहारे धातोर्विहितो यङन्तरङ्गः, पदस्योच्यमानं द्विर्वचनं तु बहिरङ्गमिति यङं न बाधते। अन्यथा हि पौनःपुन्यं भृशार्थश्च क्रियासमभिहार इति भृशार्थे सावकाशोऽयं यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्येत। न च पदस्य द्विर्वचनाभ्युपगमे सगतिकस्य प्रपचति प्रपठतीत्यादेर्द्विर्वचनं न स्यादिति वाच्यम्, वार्तिककारवचनात्तत्सिद्धेः ॥ अत्र वदन्ति-सगतिकस्य द्वित्वे ऐकपद्यं नास्त्येव, स्थानिनः पदत्वाभावेन आदेशेऽपि तस्य दौर्लभ्यात्। द्विःप्रयोगपक्षे तु प्रथमगतिं विहायावशिष्टस्य समुदायस्य पदत्वं प्राप्तं तस्मिन् सत्यपि न क्षतिः। वस्तुतस्त्विह स्थाने द्विर्वचनपक्ष एव मुख्यः स्थानिनः सुबन्तत्वेनादेशस्यापि सुबन्तत्वात्सुबन्तात्तद्धित इति पक्षे समुदायात् ष्यञ्ठञोः संभवेन पौनःपुन्यं पौनःपुनिक इति रूपसिद्धेः। 'प्रातिपदिकात्तद्धितः' इति पक्षाभ्युपगमेऽपि श्रूयमाणप्रत्ययान्तस्यैव प्रातिपदिकत्वनिषेधात्पुनरित्यस्यैव प्रातिपदिकत्वेनादेशस्यापि प्रातिपदिकत्वात्पौनःपुन्यमित्यादि सिध्यत्येव। द्विःप्रयोगपक्षे त्वन्तरङ्गत्वादव्ययात्सुपो लुकि द्वित्वं प्रवर्तत इति समुदायस्य सुबन्तत्वाभावात् प्रातिपदिकत्वाभावाच्च ष्यञ्ठञौ न भवतः। न च 'अर्थवदधातुः-३६२' इत्यादिना समुदायस्य प्रातिपदिकत्वे सोरुत्पत्तौ तस्य लुकि च सुबन्तत्वं च प्रातिपदिकत्वं च संभवत्येवेति वाच्यम्। 'यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव' इति नियमेन प्रातिपदिकत्वासंभवेन सुबन्तत्वस्याप्यसंभवात्। न च द्विःप्रयोगपक्षे स एव धातुः प्रत्ययश्च द्विः पठ्यत इति समुदायस्यापि पदसंज्ञा प्रवर्तते इत्यधुनैवोक्तत्वात्पुनःपुनरिति समुदायस्य सुबन्तत्वमस्त्येवेति शङ्क्यम्, अन्तरङ्गत्वात्सोर्लुकि प्रकृतिभागस्य द्विर्वचने सति यस्मात्प्रत्ययो विहितस्तदादि तदन्तमिति विधीयमानायाः पदसंज्ञायाः समुदायस्य दुर्लभत्वात्। ततश्चैकपद्याभावे 'पुनःपुनर्जायमाना पुराणी' इत्यादाववग्रहोऽपि न सिध्येदिति ॥ **आभीक्ष्ण्यमिति**। तद्धि क्रियानिष्ठधर्मः। तेन तद्द्योतनार्थं द्वित्वं क्रियाप्रधानानामेव न्याय्यम्। क्रियाप्राधान्यं चाख्यातेऽस्ति, कृद्विशेषे च 'अव्ययकृतो भावे' इति वक्ष्यमाणत्वादिति भावः ॥ केचित्तु क्रियाप्रधानानामेव द्वित्वे परिगृहीतसाधनाया एव क्रियायाः व्यवहारोपयोगित्वात्तदभिधानाच्च धातुमात्रस्य द्वित्वं न भवति, किन्तु तादृशक्रियाभिधायिनः पदस्यैव स्यादिति पदस्यापकर्षणाभावेऽपि न क्षतिरित्याहुः। तच्चिन्त्यम्, उक्तरीत्या नानाकारकविशिष्टक्रियासमर्पकस्य वाक्यस्यैव द्वित्वापत्तेः। किञ्च, भावार्थकलकारान्तानामव्ययकृतां च भवदुक्तरीत्या द्वित्वं न स्यात् ॥ ननु तत्र नित्यतावगत्यनन्तरं पदान्तरैः साधनाकाङ्क्षा परिपूर्यत इति भूयते पक्त्रेत्यादिपदानां द्वित्वं स्यादेवेति चेत्। तर्हि तत्रैव धातुमात्रस्य द्वित्वं केन वार्यताम्। किञ्च, तद्वदेव कर्तृकर्मलकारस्थलेऽपि धातुमात्रद्वित्वं दुर्वारमिति पदस्येत्यपकर्षणमावश्यकमेवेति दिक् ॥ **वीप्सायामिति**। व्याप्तुमिच्छा वीप्सा। व्याप्तिप्रतिपिपादयिषेति यावत्। सा च प्रयोक्तुर्धर्मः आबाधवत्। 'गतगतः' इत्युक्ते प्रियस्य चिरगमनादिना पीडितो वाक्यं प्रयुङ्क्ते इति यथा प्रतीयते, तथा वृक्षंवृक्षं सिंचतीत्यादावपि व्याप्तिं बुबोधयिषोरिदं वाक्यमित्यवगमात् ॥ शाब्दबोधविषयस्तु व्याप्तिरेव। तथा च 'नित्यव्याप्त्योः' इत्येव सूत्रयितुं शक्यम्। व्याप्तिरिह कार्त्स्न्यं तच्चाधिकारिकम्। 'सर्वे च ब्राह्मणा आमन्त्रिताः' इत्यादौ यथा। न हि जगतीतले विद्यमाना ब्राह्मणाः सर्वेऽपि केनचिदामन्त्रयितुं शक्यन्ते इति स्वग्रामस्थस्वजातीयब्राह्मणपरतया तत्र संकोचो यथाभ्युपेयते, तथात्रापि सकलवृक्षसेचनसामर्थ्यं कस्यापि मनुष्यस्य नास्तीति यत्र वाटिकादौ वृक्षसेचनार्थमधिकारस्तद्वाटिकास्थवृक्षाणामेव कार्त्स्न्यं वृक्षंवृक्षं सिञ्चतीत्यादौ गम्यते इत्यभ्युपेयम्। यत्र तु संकोचे कारणं नास्ति, तत्रासंकोच इष्ट एव 'जातोजातो निधनमुपैति' इति यथा। न चैवं वृक्षंवृक्षमित्यादौ बहुवचनप्रसङ्गः, बहूनां भानेऽपि बहुत्वसंख्यायास्तत्राभानात्। 'प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासते' इत्यादि मनोरमायां स्थितम् ॥ वृक्षंवृक्षमिति समुदायस्य तु प्रातिपदिकत्वाभावाद्बहुवचनस्य प्रसङ्ग एव नास्ति। न च 'अर्थवदधातुः-३६२' इत्यनेन प्रातिपदिकत्वं शंक्यम्, 'यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव' इति नियमात्। न चाष्टमिकं द्विर्वचनमादेशरूपमिति संघातो न भवतीत्यपि शङ्क्यम्, द्वे इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते इति प्रागुक्तत्वात्। नन्वेवमपि 'सरित्सरित्' 'योषायोषा' इत्यादौ बहुवचनोत्पत्तिर्दुर्वारैव। सारिदिति स्थानिनः प्राति-

---

१ **योषायोषे**त्यादौ एकादेशस्य पूर्वान्तत्वेन स्थानिनः प्रातिपदिकत्वेन कृतद्वित्वे तत्सुलभमिति भावः ॥ २ **स्थानिन इति**। प्रत्ययलक्षणेन 'अप्रत्ययः' इति निषेधात्प्रवृत्तेरिति भावः ॥

वृक्षंवृक्षं सिञ्चति । ग्रामोग्रामो रमणीयः ॥ ( २८८४ ) सू **परेर्वर्जने** । ८ । १ । ५ । परिपरि वङ्गेभ्यो वृष्टो देवः । वङ्गान्परिहृत्येत्यर्थः ॥ ( २८८५ ) वा **परेर्वर्जने वावचनम्** । परि वङ्गेभ्यः ॥ ( २८८६ ) सू **उपर्यध्यधसः सामीप्ये** । ८ । १ । ७ । उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपे देश इत्यर्थः । अध्यधि सुखम् । सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधो लोकम् । लोकस्याधस्तात्समीपे देश इत्यर्थः ॥ ( २८८७ ) सू **वाक्यादेरामन्त्रितस्याऽसूयासंमतिकोपकुत्सनभर्त्सनेषु** । ८ । १ । ८ । असूयायाम्-सुन्दरसुन्दर वृथा ते सौन्दर्यम् । संमतौ-देवदेव वन्द्योऽसि । कोपे-दुर्विनीतदुर्विनीत इदानीं ज्ञास्यसि । कुत्सने-धानुष्कधानुष्क वृथा ते धनुः । भर्त्सने-चोरचोर घातयिष्यामि त्वाम् ॥ ( २८८८ ) सू **एकं बहुव्रीहिवत्** । ८ । १ । ९ । द्विरुक्त[1] एकशब्दो बहुव्रीहिवत्स्यात् । तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । इह द्वयोरपि सुपोर्लुकि कृते बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुप् । एकैकयाऽऽहुत्या । इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः । न बहुव्रीहावित्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम् । तेनातिदिष्टबहुव्रीहौ सर्वनामताऽस्त्येवेति प्राञ्चः । वस्तुतस्तु भाष्यमते प्रत्याख्यातमेतत् । सूत्रमतेऽपि बहुव्रीह्यर्थेऽलौकिके विग्रहे निषेधकं न तु बहुव्रीहावितीहातिदेशशङ्कैव नास्ति । एकैकस्मै देहि ॥ ( २८८९ ) सू **आबाधे च** । ५ । १ । १० । पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च । गतगतः । विरहात्पीड्यमानस्येयमुक्तिः । बहुव्रीहिवद्भावात्सुब्लुक् । गतगता । इह[2] पुंवद्भावः ॥ ( २८९० ) सू **कर्मधारयवदुत्तरेषु** । ८ ।

---

पदिकत्वसंभवेन तदादेशस्यापि सरित्सरिदित्यादेः स्थानिवद्भावेन प्रातिपदिकत्वसंभवादिति चेत् । अत्राहुः-अन्तरङ्गैकत्वसंख्यावरुद्धो द्विरुक्तार्थः संख्यान्तरे निराकाङ्क्ष एव । न हि वस्तुगत्या बहुत्वमस्तीत्येतावतैव तस्य शाब्दबोध आपादयितुं शक्यते, असत्त्वार्थकेष्वपि तदापत्तेः । न हि शयनबाहुल्याभिप्रायेण 'देवदत्तेन शय्यन्ते' इति भावे कश्चित्प्रयुङ्क्ते । तत्रायोग्यं तदिति चेत्, समं प्रकृतेऽपि । अत्र च लिङ्गम् '-एकैकस्य प्राचाम् १५८' इति निर्देश इति ॥ ( २८८४ ) **परेर्वर्जने** । अत्र वार्तिकं * **परेरसमासे** । नेह परित्रिगर्तं वृष्टो देवः ॥ **वेति च वक्तव्यम्** । तथा च अप हरेः परि हरेः संसार इति कारकेषूदाहृतम् ॥ **परिपरि वङ्गेभ्य इति** । 'अपपरी वर्जने ८७७' इति कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः ८७९' इति पञ्चमी ॥ ( २८८६ ) **उपर्यध्य—** । सामीप्यं प्रत्यासत्तिः । तच्च कालकृतं देशकृतं वा ॥ **अध्यधि सुखमिति** । कालकृतस्योदाहरणमिदम् । सामीप्य इति किम्, उपरि चन्द्रमाः । उपरि शिरसो घटं धारयतीत्यत्र तु वस्तुतो विद्यमानमपि सामीप्यं न विवक्षितं, किंत्वौत्तराधर्यमेव केवलं विवक्षितमिति द्विर्वचनं न भवति । विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणम् । अत्र च 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ११८५' इति सन्नन्तप्रयोगो ज्ञापक इत्याहुः ॥ ( २८८७ ) **वाक्यादेः—** । **सुन्दरसुन्दरेत्यादिः** । 'स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनभर्त्सनेषु ५४८४' 'आम्रेडितं भर्त्सने ५४७६' इति सूत्राभ्यां यथायथं प्राप्तः प्लुतो वैकल्पिकत्वान्नेह कृतः । उक्तं हि प्राक्-'सर्वः प्लुतो वैकल्पिकः' इति ॥ नन्वत्र कोपासूयाभ्यां पृथक्कुत्सनभर्त्सनग्रहणमपार्थकम् । न ह्यसूयां विना कुत्सयते, न वा अकुपितो भर्त्सयत इति चेत् । अत्राहुः-गुरवो हि हितैषित्वादकुपिता अपि भर्त्सनं कुर्वते, विनाऽप्यसूयां कुत्सां कुर्वन्तीति पृथक्तया निर्देशः सूत्रकारेण कृतः । "सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः । लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः" इति ॥ ( २८८८ ) **एकं बहुव्रीहिवत्** । द्वे इत्यनुवर्तते । तच्चानुवाद्यसमर्पकं, तदाह—**द्विरुक्त इति** ॥ **तेनेति** । यद्यप्येतौ बहुव्रीहौ विशिष्य न विहितौ, तथापि तत्र दृष्टावित्येतावतैवातिदिश्येते इति भावः ॥ **सुब्लोपपुंवद्भावाविति** पूर्वपदप्रकृतिस्वरश्च बोध्यः ॥ **समुदायात्सुबिति** । तच्चैकवचनमेवेति अन्तरङ्गैकसंख्यावरुद्धो द्विरुक्तार्थः । संख्यान्तरे निराकाङ्क्षतेति प्रागेवोक्तत्वात् ॥ **पूर्वभाग इति** । न तूत्तरभागेऽपि । तथाहि-द्विधाऽत्र पुंवद्भावः 'सर्वनाम्नो वृत्तिमात्रे-१०५३' इति वा 'स्त्रियाः पुंवत्-११९६' इति वा । तत्राद्यः पूर्वभागस्यैव 'भस्त्रैषा-६४५' इति ज्ञापकादित्युक्तम् । द्वितीयस्तु-समानाधिकरणे परे विधीयते, न चोत्तरभागस्य समानाधिकरणपरत्वमस्तीति भावः ॥ **अवग्रहे विशेष इति** । एकैकयेति एकऽएकयेति भवतीत्यर्थः ॥ **एकैकस्मै इति** । ननु सुब्लोपपुंवद्भावाविव बहुव्रीहौ सर्वनामसंज्ञाभावोऽपि दृष्ट इत्ययमपि बहुव्रीहिवद्भावेनातिदिश्यताम् । तथा च—स्मायादेशोऽत्र दुर्लभ इति चेत् । अत्राहुः-सुब्लोपपुंवद्भावाविव सर्वनामसंज्ञाभावः शास्त्रेण न दृष्टः, किन्तु, बहुव्रीहेर्गौणत्वात्सर्ववाचकत्वं न संभवतीति तदभावो दृष्ट इति नायमतिदिश्यते । 'न बहुव्रीहौ ३१८' इति शास्त्रं त्वलौकिकवाक्ये निषेधकं, न तु बहुव्रीहावित्युक्तत्वादिति ॥ ( २८८९ ) **आबाधे च** । **इहेति** । बहुव्रीहिवद्भावादित्यनुषज्यते । तथा च ' स्त्रियाः पुंवत्-११९६ '

---

1 **द्विरुक्त इति** । 'वीप्साविषये' इत्यादिः । वीप्साधिकारात्-' नित्यवीप्सयोरिति वर्तते' इति भाष्योक्तेः । एवं च-तेनैव द्वित्वस्य सिद्धत्वात्पुनरनेन विधानमफलं गुरु चेति भावः ॥ 2 **इह पुंवदिति** । बहुव्रीहिवत्त्वातिदेशेनोत्तरपदत्वस्य, ऐकार्थ्येन भिन्नार्थत्वाभावात्सामानाधिकरण्यस्य च सत्त्वात् 'स्त्रियाः पुंवत्-' इत्यनेनेति भावः ॥

१ । ११ । इह उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यम् ॥ ( २८९१ ) प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि ॥ ( २८९२ ) (सू.) **प्रकारे गुणवचनस्य** । ८ । १ । १२ । सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत् । कर्मधारयवदुत्तरेष्वित्यधिकारात् । तेन पूर्वभागस्य पुंवद्भावः । समासस्येत्यन्तोदात्तत्वं च । पटुपट्वी । पटुपटुः । पटुसदृशः । ईषत्पटुरिति यावत् । गुणोपसर्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह गृह्यन्ते । शुक्लशुक्लं रूपम् । शुक्लशुक्लः पटः ॥ ( २८९३ ) (वा.) **आनुपूर्व्ये द्वे वाच्ये** ॥ मूलेमूले स्थूलः ॥ ( २८९४ ) (वा.) **संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्या-**

---

इति प्रवर्तते । न च द्विरुक्तस्य परमुत्तरपदं नेति वाच्यम्, बहुव्रीहिवदित्यतिदेशबलेनैव उत्तरपदत्वस्यापि लाभात् । ननु बहुव्रीहिवद्भावेनोत्तरपदत्वलाभे सति ननेत्यत्र 'नलोपो नञः १०९१' इति कस्मान्न भवति । उच्यते–' नलोपो नञः १०९१ ' इत्यत्र उत्तरपदे इति प्रवर्तते, नञ इति च कार्यिणो निर्देशः, तत्र साक्षाच्छिष्टेन कार्यित्वेन नञो निमित्तभावो बाध्यते[1] । यथा भद्रहदो भद्रह्रद इति । अत्र रेफस्य 'अचो रहाभ्याम्––९०' इति द्वित्वप्रसङ्गे आकरे उक्तं 'नेमौ रहौ कार्यिणौ किंतु निमित्तमेतौ द्विर्वचनस्य' इति । नन्वेवमपि 'धूर्धूः' 'पन्थाः पन्थाः'[2] इत्यादौ ' ऋक्पूरब्धूः––१३५०' इति समासान्तः स्यादिति चेत् । न, ' समासाच्च तद्विषयात् २७८७ ' इत्यतः समासादित्यनुवर्तमाने ' समासान्ताः ९८१ ' इति पुनः समासग्रहणं हि समासाधिकारविहितो यः समासस्तत्परिग्रहार्थम् । तेनातिदेशिके समासे समासान्तानामप्रवृत्तिरिति दिक् ॥ ( २८९० ) **कर्मधारयवदुत्तरेषु** । अधिकारेणैव सिद्धे 'उत्तरेषु' इति वचनं विस्पष्टार्थमिति वृत्तिः ॥ ( २८९२ ) **प्रकारे गुणवचनस्य** । यद्यपि प्रकारशब्दो भेदे सादृश्ये च वर्तते । बहुभिः प्रकारैर्भुङ्क्ते, बहुभिर्भेदैर्विशेषैरित्यवगमात, ब्राह्मणप्रकारोऽयं माणवकः-ब्राह्मणसदृश इत्यवगमाच्च । तथापीह विवक्षितमाह–**सादृश्य इति** । व्याख्यानमेवात्र शरणम् ॥ **पुंवद्भाव इति** । ' पुंवत्कर्मधारय–१०७५ ' इति सूत्रात् । तच्च कोपधादिष्वपि कालककालिकेत्यादिषु प्रवर्तते । तेन बहुव्रीहिवद्भावे प्रकृते कर्मधारयवद्भावोक्तिर्व्यर्थेति शङ्काया निरवकाश इति बोध्यम् ॥ **पटुपटुरिति** । इह द्वित्वेन जातीयरो बाधो नेष्यते पटुजातीय इति वामनः । अन्यथा ब्राह्मणजातीय इत्यादावगुणवचनेऽपि भेदरूपेऽर्थे सावकाशो जातीयर् गुणवचनेषु सादृश्यपरेण द्वित्वेन बाध्येतेति भावः । गुणवचनस्येति किम् अग्निर्माणवकः । सिंहो माणवकः । यद्यपीहाग्निसिंहशब्दाभ्यां गौण्या वृत्त्या तैक्ष्ण्यक्रौर्यादिगुणो गम्यते, तथापि प्रकारे वर्तमानस्येत्येव सिद्धे गुणवचनग्रहणसामर्थ्यान्मुख्यवृत्त्या गुणपराणामेव द्वित्वं, न त्वन्येषामित्याकरः । 'नवंनवं प्रीतिरहो करोति' इत्यत्र वीप्सायां द्विर्वचनम् । अनेन तु द्विर्वचने सुब्लुक् स्यात् । 'नवनवा वनवायुभिरादृदे' इत्यत्र त्वनेनैव द्विर्वचनं, न तु वीप्सायामिति पुंवद्भावः । कथं ' भीतभीत इव शीतमयूखः ' इति भारविः । इवशब्देन सादृश्यस्योक्ततया इह प्रकारे द्वित्वायोगात् । सत्यम्, भीतेभ्यो भीत इति कथंचिद्व्याख्येयम् । तेनातिभीत इति फलितम् ॥ **आधिक्ये द्वे वाच्ये** इति वार्तिकेन भीतभीतादौ द्वित्वमिति दुर्घटादिभिरुक्तं समाधानं नादर्तव्यम् । तादृशस्य वार्तिकस्याप्रसिद्धत्वात् ॥ अथ कथं ' खिन्नःखिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र क्षीणःक्षीणः परिलघु पयः स्रोतसां चोपयुज्य' इति मेघदूतः । पदार्थभेदस्याभावेन वीप्सार्थस्यासंभवादिति चेत् । अत्राहुः––एकस्यापि खेदावस्थासु क्षयावस्थासु च भेदं परिकल्प्य वीप्सा बोध्येति ॥ अथ कथं 'मन्दंमन्दं नुदति पवनश्चानुकूलो यथा त्वाम्' इति मेघदूतः । वीप्सार्थस्यासंभवादनेनैव द्विर्वचने कृते 'मन्दमन्दमुदितः प्रययौ खम्' इतिवत्सुब्लुक् स्यादिति चेत् । सत्यम्, स्वतो मन्दगामिनं त्वां पवनो मन्दं नुदतीति कथंचिद्व्याख्येयम् । सिद्धस्य गतेश्चिन्तनीयत्वात् ॥ **शुक्लशुक्लमिति** । केवलगुणवाचिन उदाहरणमिति ध्वनयति––**रूपमिति** ॥ ( २८९२ ) **आनुपूर्व्ये इति** । वीप्साभावादयमारम्भः ॥ **मूलेमूले इति** । अग्रेअग्रे सूक्ष्मा इत्यप्युदाहर्तव्यम् ।

---

१ **बाध्यत इति** । नेह तद्दृष्टान्तेन सूचितस्य तक्रकौण्डिन्यन्यायस्य विषयता हर्यनुभव इत्यादौ यस्य रेफस्य 'अनचि च' इति द्वित्वकार्यिता तस्यैव 'अचो रहाभ्याम्' इति द्वित्वनिमित्ततेति एकस्मिन्नेव निमित्तत्वकार्यित्वयोः प्राप्तिरस्तीति तक्रकौण्डिन्यन्यायविषयताऽव्याहता, न तथा प्रकृते पूर्वपदनञ उत्तरपदनञोऽतिरिक्तत्वान्नास्ति एकस्मिन्नेव निमित्तत्वकार्यित्वप्राप्तिरिति यदि विभाव्यते, तर्हि 'रात्रेः कृति विभाषा' इति सूत्राद् विभाषापदमनुवर्त्य व्यवस्थितविभाषाश्रयणान्नलोपो वारणीय इति बोध्यम् ॥ परे तु व्यवस्थितविभाषाणां परिगणितानां मध्येऽस्यापाठात् ॥ 'नन' इति भाष्योदाहरणान्मुख्यसमासोत्तरपदमेव गृह्यते इत्यपि वदन्ति ॥ तत्रेदमवधेयम्—नान्तरीयकम् नैकधेत्यादौ नकारश्रवणोपपत्तये विभाषापदानुवृत्तिरेव करणीया । तथा च वैकल्पिकेषु भावकार्यानुष्ठानस्यैवोचितत्वात् 'नघटः' इत्यादेर्न प्रयोगः । विभाषापदानुवृत्तिसामर्थ्यात् क्वचिदभावानुष्ठाने नान्तरीयकमित्यादौ नलोपो न दृश्यते इति व्यवस्थाङ्गीकरणीया ॥ २ "पथिपन्थाः–इति पाठः" इति शब्दरत्ने ॥

यसिद्धः ॥ सर्पः सर्पः बुध्यस्व २ । सर्पः ३ बुध्यस्व ३ ॥ ( २८९५ ) (वा) **क्रियासमभिहारे च** ॥ लुनीहिलुनीहीत्येवायं लुनाति । नित्यं वीप्सयोरिति सिद्धे भृशार्थे द्वित्वार्थमिदम् । पौनःपुन्येऽपि लोटा सह समुचित्य द्योतकतां लब्धुं वा ॥ ( २८९६ ) (वा) **कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्** ॥ बहुलग्रहणादन्यपरयोर्न समासवत् । इतरशब्दस्य तु नित्यम् ॥ ( २८९७ ) (वा) **असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः** ॥ अन्योन्यं विप्रा नमन्ति । अन्योन्यौ । अन्योन्यान् । अन्योन्येन कृतम् । अन्योन्यस्मै दत्तमित्यादि । अन्योन्येषां पुष्करैरामृशन्त इति माघः । एवं परस्परम् । अत्र कस्कादित्वाद्विसर्गस्य सः । इतरेतरम् । इतरेतरेणेत्यादि ॥ ( २८९८ ) (वा) **स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः** ॥ अन्योन्याम्, अन्योन्यम् । परस्पराम्, परस्परम् । इतरेतराम्, इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः । अत्र केचित् । अमादेशो द्वितीयाया एव । भाष्यादौ तथैवोदाहृतत्वात् । तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः । अन्ये तूदाहरणस्य दिङ्मात्रत्वात्सर्वविभक्तीनामामादेशमाहुः ॥ ( २८९९ ) दलद्वये टाबभावः क्लीबे चाद्ड्विरहः स्वमोः ॥ समासे सोरलुक्चेति सिद्धं बाहुलकात्त्रयम् ॥ तथाहि—अन्योन्यं, परस्परमित्यत्र दलद्वयेऽपि टाप् प्राप्तः । न च सर्वनाम्नो वृत्तिमात्रे इति पुंवद्भावः । अन्यपरयोरसमासवद्भावात् । न च द्विर्वचनमेव वृत्तिः, 'यांयां प्रियः प्रैक्षत कातराक्षीं सासा' इत्यादावतिप्रसङ्गात् । अन्योन्यमितरेतरमित्यत्र चाद्डुतरादिभ्य इत्यद्ड् प्राप्तः । अन्योन्यसंसक्तमहस्त्रियामम् । अन्योन्याश्रयः । परस्पराक्षिसादृश्यम् । अदृष्टपरस्परैरित्यादौ सोर्लुक्च प्राप्तः, सर्वं बाहुलकबलेन समाधेयम् । प्रकृतवार्तिकभाष्योदाहरणं स्त्रियामिति सूत्रे-अन्योऽन्यसंश्रयत्वे तदिति भाष्यं चात्र प्रमाणमिति ॥ ( २९०० ) (सू) **अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्** । ८ । १ । १३ । प्रियप्रियेण ददाति । प्रियेण वा । सुखसुखेन ददाति । सुखेन वा । द्विर्वचने कर्मधारयवद्भावात्सुब्लुकि तदेव वचनम् । अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः ॥ ( २९०१ ) (सू) **यथास्वे यथायथम्** । ८ । १ । १४ । यथास्वमिति वीप्सायामव्ययीभावः । योऽयमात्मा यश्चात्मीयं तद्यथास्वम् । तस्मिन्यथाशब्दस्य द्वे क्लीबत्वं च निपात्यते । यथायथं ज्ञाता । यथास्वभावमित्यर्थः । यथात्मीयमिति वा ॥ ( २९०२ ) (सू) **द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** ।

---

एकस्य वस्तुनो वेणुदण्डादेरेकमेव मुख्यं मूलमग्रं च । इतरेषां भागानामापेक्षिकोऽग्रमूलव्यपदेशः । स्थौल्यसौक्ष्म्ये अपि नैकरूपे, किं तर्हि यथामूलमुपचीयते स्थौल्यं, यथा अग्रं सौक्ष्म्यं तथा नेतरे भागा इति ॥ 'मूलेमूले पथि विटपिनाम्' इत्यत्र तु वीप्सायां द्विर्वचनम् । एतच्च हरदत्तग्रन्थे स्पष्टम् ॥ ( २८९४ ) **न्यायसिद्ध इति** । यावद्भिः शब्दैः संबोध्योऽर्थमवगच्छति तावतां प्रयोक्तव्यत्वादिति भावः ॥ ( २८९४ ) **पौनःपुन्य इति** । पुनःपुनर्भवितारि विद्यमानात्पुनःपुनःशब्दात् भावे प्रत्ययः ॥ **लोटा सह समुच्चित्येति** । नन्वत्र लोटा सह समुचित्य यथा द्विर्वचनं भवति, तथा क्रियासमभिव्याहारे यङा सह समुचित्य द्विर्वचनं स्यात्, पापच्यतेपापच्यते बोभूयतेबोभूयते इति । अत्राहुः—लोट् क्रियासमभिहारं व्यभिचरति । समुच्चयेऽपि जायमानत्वात् । ततश्च लोड्द्विर्वचनयोरेव तद्द्योतकत्वं, न त्वेकैकस्येति युक्तं लोडन्तस्य द्विर्वचनम् । यङ् तु क्रियासमभिहारं न व्यभिचरतीति द्विर्वचनं विनैव तस्य द्योतकत्वम् । तेन तदन्तस्य न द्विर्वचनमिति ॥ ( २८९६ ) **कर्मव्यतिहार इति** । क्रियाविनिमय इत्यर्थः ॥ **द्वे इति** । नित्यमेवेदं द्वित्वम्, बाहुलकं तु समासवद्भावस्यैव ॥ ( २८९७ ) **सुपः सुर्वक्तव्य इति** । अत्र कैश्चिदुक्तं—द्वितीयादीनामेवेदं स्वादेशविधानम् । अस एवोत्तरदलेऽपि द्वितीयादय एव न तु प्रथमा, तत्राप्येकवचनमेव न तु वचनान्तरमिति । तदपाणिनीयम्, भाष्यादावनुक्तत्वात् । तदेतद् ध्वनयन् वचनान्तरमुदाहरति—**अन्योन्यावन्योन्यानिति** ॥ **माघ इति** । स च भाष्यानुगुण एवेति भावः ॥ एतेनार्वाचीनमतं कवयोऽपि नाद्रियन्त इत्युक्तं भवति ॥ भारविश्चाह—'क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैः' इति । अत्रादृष्टः परस्परो यैरिति विग्रहः ॥ यदि तु द्वितीयादीनामेव स्वादेशविधानं न तु प्रथमायाः, तर्ह्ययं प्रयोगो न सिध्येदिति दिक् ॥ ( २८९८ ) **अन्योन्यमिति** । न चात्र आमभावेऽपि टाप् स्यादिति शङ्क्यम्, 'बहुलग्रहणाट्टाबभावः' इत्यनुपदमेव वक्ष्यमाणत्वात् ॥ स्त्रीनपुंसकयोस्तृतीयादिषु पुंवदिति प्राचो ग्रन्थं परिष्कुर्वन्नाह—**अत्र केचिदिति** ॥ वस्तुस्थितिमाह—**अन्ये त्विति** ॥ ( २८९९ ) **अतिप्रसङ्गादिति** । तथा च एकशेषप्रतिबन्धाद् द्विवर्चनस्यापि वृत्तित्वमाश्रित्य तद्बलेन पुंवद्भावो न शङ्क्यः लक्ष्यविरोधात् । 'कारकं चेद्विजानीयाद्यांयां मन्येत सा भवेत्' इति 'अकथितं-' सूत्रस्थ 'यांयां' इति भाष्यप्रयोगविरोधाच्चेति भावः ॥ नव्यास्तु—'यांयां प्रियः प्रैक्षत' इत्यादिमाघप्रयोगे 'सासा' इति द्विर्वचनमयुक्तम् । द्विरुक्तार्थस्य सेत्यनेनैव परामृष्टुं शक्यत्वात् । अत एव भाष्ये 'यांयां मन्येत सा भवेत्' इत्येवोक्तमित्याहुः ॥ **सोर्लुक् च प्राप्त इति** । सुपः स्वादेशविधानस्यान्योन्यं परस्परमित्यत्र केवले चरितार्थत्वादिति भावः ॥ ( २९०१ ) **यथास्वे य-** । योऽयमात्मेत्यादि । आत्मात्मीययोरपि स्वशब्दवाच्यत्वात् ॥ **यथायथमिति** । 'न लोका-९१५' इत्यनेन कृद्योगषष्ठीनिषेधः ज्ञातेत्यस्य तृन्नन्तत्वात् ॥ 'योऽयमात्मा' इत्यर्थे विद्यमानयथाशब्दस्यार्थमाह—**यथास्वभावमिति** । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः ॥ ( २९०२ ) **द्वन्द्व**

८।१।१५। द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु। तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम्। इतरे विषयभूताः। द्वन्द्वं मन्त्रयते। रहस्यमित्यर्थः। मर्यादा स्थित्यनतिक्रमः। आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति। माता पुत्रेण मिथुनं गच्छति। पौत्रेण प्रपौत्रेणापीति मर्यादार्थः। व्युत्क्रमणं पृथगवस्थानम्। द्वन्द्वं व्युत्क्रान्ताः। द्विवर्गसंबन्धेन पृथगवस्थिताः। द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति। द्वन्द्वं संकर्षणवासुदेवौ। अभिव्यक्तौ साहचर्येणेत्यर्थः। योगविभागादन्यत्रापि द्वन्द्व इष्यते॥ इति द्विरुक्तप्रक्रिया॥

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पूर्वार्धं समाप्तम्॥

---

**रह-। पूर्वपदस्येति।** द्विऔ द्विऔ इति स्थिते कर्मधारयवद्भावात्सुब्लुकि कृते पूर्वपदावयवस्येकारस्येत्यर्थः॥ **अत्वं चोत्तरपदस्येति।** उत्तरपदावयवस्येकारस्येत्यर्थः॥ **नपुंसकत्वं चेति।** चकारादेकवद्भाव इत्यपि बोध्यम्। तेन 'अतोऽम् ४२९' इत्यमादेशे द्वन्द्वमिति सिध्यति॥ **रहस्यं द्वन्द्वशब्दवाच्यमिति।** द्वाभ्यां निर्वृत्ते रहस्ये योगरूढिरेवेत्यर्थः॥ **द्वन्द्वं मन्त्रयते इति।** द्वौ द्वौ भूत्वा मन्त्रयेते इत्यर्थः। एवं हि तद् रहस्यं भवति॥ **आचतुरमिति।** 'आङ् मर्यादाभिविध्योः ९७०' इत्यव्ययीभावः। 'अव्ययीभावे शरत्प्रभृतिभ्यः ९८२' इति टच्। चतुःशब्दोऽत्र चतुर्णां पूरणे द्रष्टव्यः। आ चतुर्थादित्यर्थः॥ **द्वन्द्वं यज्ञपात्राणीति।** 'स्फ्यश्च कपालानि च' इत्यादीनि पात्राणि द्वन्द्वं प्रयुनक्ति। आसादयतीत्यर्थः॥ **अभिव्यक्तौ साहचर्येणेत्यर्थ इति।** अत्र द्वन्द्वमित्यत्र स्वार्थे द्विर्वचनम्। एकवद्भावादिकं तु पूर्ववत्॥ **अन्यत्रापीति।** 'द्वन्द्वं युद्धं प्रवर्तते'। इह वीप्सायां द्विर्वचनम्। द्वयोर्द्वयोर्युद्धमित्यर्थः। 'द्वन्द्वानि सहते' शीतमुष्णमेकं द्वन्द्वं सुखदुःखे चापरं क्षुत्तृष्णे चापरम्। इह स्वार्थे द्विर्वचनम्, एकवद्भावादि पूर्ववत्। बहुत्वं त्वेकशेषवशात्॥

**सिद्धान्तकौमुदीव्याख्या या कृता तत्त्वबोधिनी। समाप्तं तत्र पूर्वार्धं तेन तुष्यतु शंकरः॥ १॥**

इति श्रीपरमहंसपरिव्राजकाचार्यवामनेन्द्रस्वामिचरणारविन्दसेवकज्ञानेन्द्रसरस्वतीकृतौ
सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां पूर्वार्धं संपूर्णम्॥



इति

## तत्त्वबोधिनीव्याख्योपेत-वैयाकरणसिद्धान्त-कौमुद्यां-पूर्वार्द्धं समाप्तम् ।

---

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बंबई.

॥ श्रीः ॥

# तत्त्वबोधिनीव्याख्योपेता

# वैयाकरणसिद्धान्तकौमुदी।

## तदुत्तरार्द्धम्।

॥ श्रीगणेशाय नमः ॥

**(२९०३)श्रौत्रार्हन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम् तोष्टूय्यमानोऽप्यगुणो विभुर्विजयतेतराम्॥१॥**
**पूर्वार्धे कथितास्तुर्यपञ्चमाध्यायवर्तिनः। प्रत्यया अथ कथ्यन्ते तृतीयाध्यायगोचराः ॥ २ ॥**

---

**अज्ञाननाशने दक्षं दीक्षितं भक्तरक्षणे। वटमूलाश्रयं त्र्यक्षं दक्षिणामूर्तिमाश्रये ॥ १ ॥**

**( २९०३ )** ग्रन्थमध्ये[1] विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति-**श्रौत्रेत्यादिना**। श्रोत्रियस्य भावः श्रौत्रम्, 'हायनान्तयुवादिभ्योऽण् २४३३' इति सूत्रे 'श्रोत्रियस्य यलोपश्च २४३४' इति वार्तिकाद्यलोपे अण्प्रत्यये च 'यस्येति च ४३१' इतीकारलोपः। अर्हतो भाव आर्हन्ती 'गुणवचनब्राह्मणादिभ्यः-२४२०' इति सूत्रे 'अर्हतो नुम् च २४२१' इत्युक्तेर्नुम् ष्यञ् च। षित्त्वान् ङीषि 'हलस्तद्धितस्य ६५७' इति यलोपः। ताभ्यां वित्तैः श्रौत्रार्हन्तीचणैः 'तेन वित्तः-२४६८' इति चणप्। श्रोत्रियत्वयोग्यताभ्यां[2] प्रसिद्धैरित्यर्थः। किञ्च, गुण्यैर्गुणवद्भिः। प्रशस्तगुणयुक्तैरिति यावत्। 'रूपादाहतप्रशंसयोः-२६०८' इति सूत्रे 'अन्येभ्योऽपि दृश्यते २६०९' इत्युक्त्वा 'गुण्या ब्राह्मणाः' इत्यस्य भाष्यादावुदाहृतत्वात्॥ **अहर्दिवमिति**। अहन्यहनि, प्रत्यहमित्यर्थः। 'अचतुर-१३५८' इत्यादिना निपातनात्साधुः ॥ **तोष्टूय्यमान इति**। स्तौतेर्यङन्तात्कर्मणि शानच्, 'सार्वधातुके यक् ३६८०' इति धातोर्यक्, 'आने मुक् ४१२०' इति मुक्। अपिशब्देन आपाततो विरोधं द्योतयति। वस्तुतस्तु न विरोधः, स्तुतिप्रयोजकीभूतानामनन्तकल्याणगुणानां श्रुतिस्मृतिसिद्धत्वेऽपि वियदादिवद्व्यावहारिकत्वात्तदभावस्य पारमार्थिकत्वात्। एतच्चोत्तरमीमांसायां स्पष्टमेव। विभुर्व्यापकः परमेश्वरः विजयते अतिशयेन विजयतेतराम्। सर्वोत्कर्षेण वर्तते इति फलितोऽर्थः। 'विपराभ्यां जेः ३५८६' इति तङ्। तदन्तात् 'द्विवचनविभज्य-२७१९' इत्यादिना तरपि 'किमेत्तिङव्ययघादामु-२७१८' इत्याम्। नन्विह तरप् दुर्लभ एव, विजयत इत्यस्य अप्रातिपदिकत्वादतिङन्तत्वाच्च। न च 'सह सुपा ९४९' इत्यत्र सहेति योगविभागात्तिङन्तेन विशब्दस्य समासे प्रातिपदिकत्वं स्यादेवेति वाच्यम्, स च छन्दस्येवेति तत्रत्यग्रन्थेन सह विरोधापत्तेः। किञ्च, प्रातिपदिकत्वाभ्युपगमे सोरुत्पत्तिः स्यात्, लिङ्गसर्वनामताभ्युपगमेन नपुंसकत्वात्सोर्लुक्यपि 'ह्रस्वो नपुंसके-४४०' इति ह्रस्वो दुर्वारः स्यात्। समुदायान्तर्गतस्य 'जयते' इत्यस्य तिङन्तत्वेऽपि विशब्देन साकाङ्क्षत्वेनासामर्थ्यात्ततोऽपि भवितुं नार्हति, 'समर्थः पदविधिः ९४७' इति परिभाषितत्वात्। 'आमन्तेन विशब्दो युज्यते' इति कल्पनायां त्वन्तरङ्गत्वात्परस्मैपदप्रवृत्तौ विजयतितरामिति स्यादिति चेत्। अत्राहुः-समुदायान्तर्गताज्जयत इत्यस्मादेव तरप्। न च तस्य विशब्देन सह साकाङ्क्षत्वेनासामर्थ्यं शङ्क्यम्, तिङन्तस्य प्रधानत्वेन सापेक्षत्वेऽपि दोषाभावात्, उपसर्गस्य द्योतकत्वेन प्रत्येकमर्थ एव नास्तीति साकाङ्क्षताया वक्तुमशक्यत्वाच्चेति। वृत्तकथनपूर्वकं वर्तिष्यमाणमाह-**पूर्वार्ध इति**। हलन्तेषु 'स्पृशोऽनुदके क्विन् ५७८' 'ऋत्विग्दधृक्स्रग्-५०७' इत्यादिना क्विन्नादिव्युत्पादनं प्रासङ्गिकमिति[3] भावः॥ तुर्यश्चतुर्थः, 'चतुरश्छयतावाद्यक्षरलोपश्च २५१०' इत्युक्तत्वात्॥ **अथेति**। इहापि कृत्सु 'णचः स्त्रियामञ् ५००७,' 'अणि-

---

१ **ग्रन्थमध्य इति**-"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते" इति भूवादिसूत्रभाष्योक्तेरिति भावः॥
२ **श्रोत्रियत्वेति**-वेदाध्ययनकर्तृत्वेन तदनुष्ठानकर्तृत्वेन च प्रसिद्धैरित्यर्थः॥ ३ **प्रासङ्गिकमिति**। तुर्यपञ्चमाध्यायस्थप्रत्ययकथनमेव प्रधानमिति भावः॥

(२९०४) तत्रादौ दश लकाराः प्रदर्श्यन्ते । लट् १ । लिट् २ । लुट् ३ । लृट् ४ । लेट् ५ । लोट् ६ । लङ् ७ । लिङ् ८ । लुङ् ९ । लृङ् १० । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ॥ ( २९०५ ) (सू) **वर्तमाने लट्** । ३ । २ । १२३ । वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ ॥ ( २९०६ ) (सू) **लः कर्मणि च भावे चाकर्मकेभ्यः** ।३।४।६९। लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥ (२९०७) (सू) **लस्य** ।३।४।७७। अधिकारो-

---

गुणः ५०१०' इत्यत्रादिव्युत्पादनं प्रासङ्गिकं बोध्यम् , प्राधान्येन तु तृतीयाध्यायस्था एवेहोच्यन्त इति भावः ॥ ( २९०४ ) अनुबन्धभेदेन भेदमाश्रित्याह—**दश लकारा इति** ॥ **प्रदर्श्यन्त इति** । यद्यपि पञ्चमलकाररूपाण्यधुना न व्युत्पाद्यन्ते तथापि लकारः स्वरूपेण प्रदर्श्यते 'लः कर्मणि च भावे चाकर्मकेभ्यः २९०६' 'लस्य २९०७' इत्यादिसूत्रविषयतां व्युत्पादयितुमिति भावः ॥ **पञ्चम इति** । लेडित्यर्थः । लट्लिडिति स्वोक्तमपेक्ष्यैव लेटः पञ्चमत्वं, न तु सूत्रोक्तक्रमेणेति बोध्यम् ॥ ( २९०५ ) **वर्तमाने लट्** । वर्तमान इत्येतत्प्रकृत्यर्थविशेषणमित्याह—**वर्तमानक्रियावृत्तेर्धातोरिति** । धातोरिति सूत्रमातृतीयाध्यायान्तमधिक्रियत इति भावः ॥ **लट् स्यादिति** । तस्य वाच्यं त्वनुपदमेव स्फुटीभविष्यति । वर्तमानकालस्तु न तद्वाच्यः, किन्तु द्योत्य एव । लिडादिष्वपि भूतादिकालो यथायथं द्योत्य एवेत्यवगन्तव्यम् । वस्तुतस्तु वाच्यत्वाभ्युपगमोऽपि सुगम इति विध्यादिसूत्रे[२९६३] वक्ष्यामः ॥ **अटाविताविति** । अकार उच्चारणार्थ इति तु नोक्तम्, लिडादिवैलक्षण्यसंपादनाय तस्यावश्यवक्तव्यत्वात् ॥ ( २९०६ ) **लः कर्मणि च**—। चकारात् 'कर्तरि कृत् २९७१' इत्यतः कर्तरीत्यनुकृष्यते, सकर्मकविषयं चेदम् । अकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात्, भावे चेत्युत्तरवाक्येन तत्र विशेषविधानाच्च । तदेतदाह—**सकर्मकेभ्य इति** । 'भावे च' इति चकारेण कर्तैवानुकृष्यते न तु कर्म, असंभवात्तदाह—**भावे कर्तरि चेति** ॥ ननु भावकर्मणोरात्मनेपदविधानात् 'शेषात्कर्तरि-२९१३' इति परस्मैपदविधानाच्च ज्ञापकाल्लकाराणां भावकर्मकर्तारोऽर्था अनुमातुं शक्यन्त इति किमनेन सूत्रेण । मैवम् , असत्यस्मिन्सूत्रे सकर्मकेभ्योऽपि घञादिवद्भावे लकारापत्तौ घटं क्रियते देवदत्तेनेत्यादिप्रयोगः प्रसज्येत, तन्मा भूदित्येतदर्थमेतत्सूत्रस्यावश्यकत्वात् । न चैवम् 'अकर्मकेभ्यो भावे लः' इत्येव सूत्र्यतां, भावे अकर्मकेभ्य एवेति नियमार्थमिति वाच्यम्, अकर्मकेभ्यो भाव एवेति विपरीतनियमापत्त्या कर्तरि तेभ्यो लकारानापत्तेः । तस्माद्भावे चेति चकारं आवश्यकः। न चैवं 'भावे चाकर्मकेभ्यः' इत्येवास्त्विति वाच्यम् , भावे ( इव ) कर्तरि चा ( र्यप्य ) कर्मकेभ्य एवेति नियमापत्तौ सकर्मकेभ्यो भाव इव कर्तर्यपि लकारानापत्तेः । नन्वेवमपि 'लश्च भावे चाकर्मकेभ्यः' इत्येवास्तु, चकारेण कर्तरीत्यनुकर्षणाल्लकाराः सकर्मकेभ्यः कर्तरि स्युरकर्मकेभ्यो भावे कर्तरि च स्युरित्यर्थे पर्यवसिते कर्मणि तूक्तज्ञापकाद्भविष्यन्तीति किमनेन कर्मणीत्यनेनेति चेत् । मैवम् उत्तरसूत्रे[३७७२] तयोरित्यनेन कर्मणोऽपि परामर्शार्थं तस्यावश्यकतया ज्ञापकानुसरणक्लेशस्य वैयर्थ्यात् । तस्माद्यथान्यासमेव रमणीयम् ॥ अत्र **नैयायिकाः**—'लकाराणां कृतावेव शक्तिर्लाघवान्न तु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात् , देवदत्त इत्यादिप्रथमान्तपदेन तल्लाभाच्च । देवदत्तः पचतीत्यत्र हि देवदत्तो विशेष्यः, यत्नो विशेषणम्, आश्रयत्वं तु संसर्गः । तथा च 'पाकानुकूलकृत्याश्रयो देवदत्तः' इत्यादिशाब्दबोधोऽपि सुष्ठूपपद्यत' इति । तन्न, पचतीत्युक्ते पाककर्ता क इत्याकाङ्क्षानुरोधेन लकाराणां कर्तरि शक्तिरित्यभ्युपगन्तुमुचितत्वात् । 'पाकानुकूला कृतिः' इति शाब्दबोधाभ्युपगमे तु कस्मिन्नित्याकाङ्क्षा स्यात्, कस्येति वा । न च 'एककर्तृका पचिक्रिया' इति शाब्दबोधाभ्युपगमेऽपि क इत्याकाङ्क्षा नोपपद्यत एवेति शङ्क्यम् , कर्तृसामान्यबोधे सति क इति कर्तृविशेषाकाङ्क्षायां बाधकाभावात् । नापि देवदत्तकर्तृका पचिक्रियेत्युक्तेऽपि कस्मिन्नस्ति कस्य वेत्याकाङ्क्षा दुर्वारैवेति शङ्क्यम्, विक्लित्त्यनुकूलव्यापारस्यैव पचिक्रियात्वात् तदाश्रयस्य देवदत्तस्य कर्तृत्वात् क्रियाश्रयत्वे निश्चिते 'कस्मिन्' इत्याकाङ्क्षाया अप्रवृत्तेः । किञ्च, 'पचन्तं देवदत्तं पश्य,' 'पचते देव-

---

१ **वर्तमानेति**—वर्तमानकालिकक्रियाकर्तुरित्यर्थः । यावच्चाभिमतफलप्रयोजकक्रियायाः समाप्तिर्न भवति तावद् वर्तमानत्वमिति अधिश्रयणाद्यधःश्रयणान्तव्यापारसमूहस्य पच्धात्वर्थत्वेनाधिश्रयणक्रियायाः परिसमाप्तत्वेऽपि अधःश्रयणक्रियाया असमाप्तत्वाद् वर्तमानत्वस्याव्याघाताद् अधःश्रयणपर्यन्तम् 'पचति' इत्येव प्रयोगः ॥ २ **ल इति** । लिडादिष्विकारादिविशिष्टेष्वपि प्रवृत्तये सर्वसाधारणं व्यञ्जनमात्रं बहुवचनान्तमिति बोध्यम् । लटः परस्मैपदानाम् 'लुटः प्रथमस्य—' इत्याद्यारम्भसामर्थ्यात् 'लस्य' इत्यत्राकारस्याविवक्षितत्वमिवात्राप्यकारस्याविवक्षितत्वाङ्गीकारे तु जातावेकवचनमिति भावः ॥ ३ **उच्चारणार्थ इति** । उच्चारणमात्रार्थः, इत्संज्ञालोपाऽतिरिक्तप्रयोजनशून्य इति यावत् । अनङादिष्विवेति भावः ॥ 'लटः शतृशानचा—' इत्यत्र विशेषणार्थस्याप्युच्चारणं भवतीत्युच्चारणार्थत्वं तु सर्वेषामेवास्तीति चिन्त्यमेवैतत् । विशेषणोपलक्षणयोरुभयोरपि व्यावर्तकत्वाऽविशेषात् लिडादिवैलक्षण्यसंपादनायेत्यपि चिन्त्यमेवेति दिक् ॥ ४ **अनुमातुं शक्यन्त इति** । 'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते' इति न्यायेन 'भावकर्मणोः कर्तरि' इति लविशेषणम् । 'तत्र वर्तमानस्य' इत्यर्थ इति भावः॥ 'तयोरेव' इत्येतस्य स्थाने 'कर्मणि कृत्यक्तखलर्था भावे चाकर्मकेभ्यः' इति न्यासः कार्यः । 'अनुदात्तङितः—' इति तु 'कर्तरि कर्मव्यतिहारे' इत्युत्तरमेव पठनीयमिति तात्पर्यम् ॥ ५ **चकार इति** । स च कर्मणोऽसंभवात्कर्तुरेव समुच्चायक इति नोक्त दोष इति भावः ॥

दत्ताय देहि' 'पचमानस्य देवदत्तस्य द्रव्यम्' इत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशत्वाविशेषेण तेभ्योऽपि कृतिमात्रबोधपत्तेः। न चेष्टापत्तिः 'आश्रयत्वं संसर्गः' इत्युक्तत्वेन पाकानुकूलकृत्याश्रयं देवदत्तं पश्येत्याद्यर्थस्वीकारे दोषाभावादिति वाच्यम्, नामार्थयोर्भेदान्वयस्य स्वपरसिद्धान्तविरुद्धत्वात्। न चैवं नामार्थयोरभेदसंसर्गव्युत्पत्त्यनुरोधेन शतृशानजादीनां कर्तरि शक्तिस्तिबादीनां तु कृतावेवेति वैषम्यं स्वीक्रियते,प्रामाणिकगौरवस्यादोषत्वादिति वाच्यम्, स्थान्येव वाचको लाघवान्न त्वादेशो गौरवादिति स्वसिद्धान्तस्य परित्यागापत्तेः। रामः, ज्ञानं, कतरत्, इत्यादौ सोर्विसर्गे सोरमि सोरद्डि च कृते लाघवात्सुत्वेनैव शक्तिर्न तु तत्तद्रूपेणेत्यादिभवदीयव्यवहारस्यासङ्गत्यापत्तेश्च। एवं च'तिबादीनां शत्रादीनां च स्मारकतया लिपिस्थानीयत्वं,बोधकस्तु लकार एव' इति स्थितम्। स च 'शत्राबन्ते कर्तरि शक्तः' इत्यभ्युपगमे तिङन्ते कथं कृतिं बोधयेत्? 'अन्यायश्चानेकार्थत्वम्' इति न्यायात्। यदि तु वैयाकरणरीतिमाश्रित्य 'सर्वत्रादेशा एव वाचकाः' इत्याद्यभ्युपगम्यते, तर्हि घटं, घटेन, हरेऽव, विष्णोऽवेत्यादिषु 'सर्वे सर्वपदादेशाः' इति न्यायेन[1] पदस्फोटो वाक्यस्फोटश्च[2] सिध्येदिति भवतां तन्महदनिष्टम्[3]। किञ्च, 'कर्तरि कृत्' इति यत्कर्तृग्रहणं तदेव 'लः कर्मणि-२९०६' इति सूत्रे चकारेणानुकृष्यत इति कथं[4] ण्वुलादीनां लकारादीनां च शक्तौ वैलक्षण्यम्। न च नामार्थयोरभेदान्वयसंसर्गाभ्युपगम एव ण्वुलादौ कर्तुर्वाच्यत्वे बीजमिति वाच्यम्, पचतिरूपं, पचतिकल्पं देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यतौचित्यात्। ननु समुदायस्य नामत्वेऽपि तिङ् प्रत्ययो न नामेति चेत्पाचक इत्यत्राप्यक इत्येतन्न नामेति तुल्यम्। अकान्तं नामेति चेत्, रूपबाद्यन्तमपि नामेति तुल्यम्। ततश्चात्र प्रशस्तपाककर्ता देवदत्त इत्याद्यभेदान्वयो भवद्भिरभ्युपगन्तव्य इति तिङ्क्ष्वपि कर्तुर्वाच्यता स्वीकर्तव्यैव। किंच, कर्तुर्वाच्यत्वानभ्युपगमे 'युष्मदि समानाधिकरणे मध्यमः', 'अस्मद्युत्तमः' इति सामानाधिकरण्यप्रयुक्ता पुरुषव्यवस्था, 'अभिहिते कर्तरि प्रथमा' इत्यादिकं च भवन्मते कथं[5] संगच्छताम्। यत्तु अनभिहित इत्यस्यानभिहितसंख्याक इत्यर्थवर्णनेन 'देवदत्तः पचत्योदनम्, ओदनः पच्यते देवदत्तेन' इत्यादौ प्रथमाद्वितीयाव्यवस्थापनमुक्तम्। तन्न, कृत्तद्धितसमासेषु संख्याभिधानस्याप्रसिद्धत्वात्। ततश्च पक्तव्यस्तण्डुलः, शत्यः शतिकोऽश्वः, प्राप्तोदको ग्रामः, इत्यादिषु 'कर्मणि द्वितीया ७७१' इत्यस्य प्रवृत्तौ प्रथमा न स्यात्। न च तिष्ठतीत्यध्याहारेण संख्याभिधानमिहाप्यस्तीति वाच्यम्, स्थित इत्याद्यध्याहारे तदभावात्। शाब्दिकोऽयं देवदत्तो न तु नैयायिक इत्यादिषु नीलमिदं न तु रक्तमित्येत्येव क्रियापदाध्याहारस्यानावश्यकतया आख्यातेन 'शब्ददर्दुरं करोति २१७०' इति ठक्प्रत्ययेन वा कर्तृसंख्याया अनुक्तत्वाद्देवदत्ते कर्तरि तृतीयोत्पत्तिप्रसङ्गाच्च। तस्मादनभिहिते कर्तरीत्यादिव्याख्यानमेवाभ्युपेतव्यम्। अपि च धातूपात्तव्यापाराश्रयः कर्ता, तत्राश्रयमात्रं कृतां लकाराणां चार्थः, न तु व्यापारोऽपि, तस्य धातुनैव लब्धत्वात्। अत एव कर्ता कारक इत्यादौ प्रकृतिप्रत्ययार्थयोर्नान्वयः, व्यापाराश्रयस्य प्रत्ययार्थत्वे तु तस्य प्रकृत्यर्थेन व्यापारेणान्वयः क्लिष्टः स्यात्। यस्तु वदति-'कृधातोः कृतिरर्थः' कृत्प्रत्ययस्यापि कृतावेव शक्तिर्न तु कर्तरि। 'कर्तरि कृत् ३७७१' इत्यत्र हि कर्तरीति भावप्रधानो निर्देशः। कर्तृत्वं कृतिमत्त्वम्। तच्च कृतिरेव। यत्र तु देवदत्तादिपदसमभिव्याहारस्तत्र तृजादौ कृतिमति लक्षणेत्यादि, तन्मते पूर्वोक्तकर्तेत्यादौ सुतरामनन्वयः। 'कर्मवत्कर्मणा-३६९३' इति सूत्रे करोतिरुत्पादनार्थः, उत्पत्तिश्च कर्मस्था, यत्नार्थकत्वे तु करिष्यते घट इत्यादि न सिध्येदिति वक्ष्यमाणदूषणं च दुरुद्धरम्। आश्रयमात्रस्य प्रत्ययार्थत्वे तु रथो गच्छतीत्यत्र रथस्याचेतनस्य यत्नाभावेऽपि गमनानुकूलचक्रभ्रमणादिव्यापाराश्रयत्वान्न काचिदनुपपत्तिः। एवं स्थिते कृतौ शक्तिरित्यस्योक्तिसंभव एव नास्ति, कृतेरपि व्यापारविशेषतया प्रायेण धातुत एव लाभात्, जानातीत्यादावाश्रयत्वं प्रत्ययस्यार्थ इति स्वीकृत्य यत्नार्थत्वस्य त्वयाऽपि त्यक्तव्यत्वात्। न हि यत्नमन्तरेण ज्ञानं नोदेतीति कश्चिदभ्युपैति। तस्मात्कृतां तिङां च वैलक्षण्यं दुर्लभमिति कर्त्रर्थकत्वमभ्युपेयम्। एतेन कर्त्रधिकरणे आख्यातवाच्यत्वं कर्तुर्निरस्य जञ्जभ्यमानाधि-

---

१ **न्यायेनेति**। तथा हरेऽवेत्यादौ पूर्वरूपादिस्थाने व्याकरणान्तरे पररूपादीनां विधानाद्व्याकरणानां कलहे संमोहेनार्थस्यापि संमोहाद् बोधानुपपत्तौ समुदाय एव शक्तिकल्पनापत्त्येत्यपि बोध्यम्॥ २ **वाक्यस्फोट इति**। राम, रामः, अश्वः, अजापयः, हरे इति तिङन्तसुबन्तसरूपेषु पदमात्रादर्थबोधासंभवेन क्रियाकारकप्रयोग एवार्थबोधोदयेन वाक्यस्फोट एवावश्यकः। तथा च भगवान् यास्कः 'नैकपदानि निर्ब्रूयात्' इति ग्रन्थेन, न्यायभाष्यकर्ता वात्स्यायनोऽपि "पदसमूहो वाक्यमर्थसमाप्तौ समर्थम्" इत्यर्थकेन वाक्यस्यैवार्थबोधकत्वमङ्गीचकारेति भावः॥ ३ **अनिष्टमिति**। निष्प्रमाणवागाडम्बरमात्राश्रयिणां मूलमहर्षिवाक्यानुसारित्वरूपदूषणापत्तेरिति भावः॥ ४ **कथमिति**-एवं च लाघवात्कृतामपि कृतिर्वाच्या स्यात्। न च केवलकृतौ प्रयोगाभावः, आख्यातेऽपि समत्वात्॥ ५ ननु भावांशे तवापि कृत्तिङोर्वैषम्यं दुर्वारम्, असत्त्वभूतो भाव आख्यातार्थः सत्त्वभूतश्च कृदर्थ इति। किञ्च, 'नामार्थयोः' इति व्युत्पत्तौ नामपदेन सत्त्वप्रधानस्य ग्रहणम्। किञ्च, 'नामार्थयोः' इत्यस्य 'नामजन्यप्रतीतिविशेष्ययोः' इत्यर्थ इति नैव दोषोऽत आह-**किञ्चेति**॥ ६ **कथमिति**। तथा च तत्प्रामाण्येन पाचको देवदत्त इत्यादाविव 'देवदत्तः पचति' इत्यादावपि 'युष्मद्युपपदे-' इति सूत्रानुवादबोधितकृष्यनुभवसिद्धसामानाधिकरण्यानुभवेन धर्मिणो वाच्यत्वमिति भावः। तिङर्थसंख्यान्वयिवाचकत्वरूपान्यादृशसामानाधिकरण्यं तु न शब्दार्थः। प्राधान्यानुरोधात् कृतेर्वाच्यतेति म युक्तम्, 'प्रत्ययार्थः प्रधानम्' इत्यस्याजेत्यादौ व्यभिचारात्॥

करणे यङन्ताद्विहितस्य जङ्गम्यमान इति शानचः कर्तृवाचकत्वं स्वीकुर्वन्तो मीमांसका अपि प्रत्युक्ताः। यत्तु तैरुक्तं शानजंशे 'कर्तरि कृत् ३७७१' इति व्याकरणं शक्तिग्राहकमस्तीति तन्न, कृद्वाक्यशेषो ह्ययमर्थाकाङ्क्षायामनिर्दिष्टार्थेषु ण्वुलादिष्वेवोपतिष्ठते 'आकाङ्क्षितविधानं ज्यायः' इति न्यायात्, न तु शत्रादिषु। स्थानिभूतलकारार्थेनैवैतेषां निराकाङ्क्षत्वात्, अन्यथा भावे कर्मणि च शानचो दौर्लभ्यापत्तेः। ततश्च शय्यमाने आस्यमाने चायं गत इत्यादिप्रयोगो भावे न स्यात्। कर्मणि तु क्रियमाण इत्यादिप्रयोगो न स्यात्। यत्तु **भट्टपादा** आहुः–कर्तरि यदेकत्वं तत्र तिप्, कर्तरि यद् द्वित्वं तत्र तस्, इत्यादिक्रमेण 'लः कर्मणि–२९०६' इत्यस्य 'द्व्येकयोः–२७१' इत्यादेश्चैकवाक्यतया व्याख्यानान्न कर्तृवाच्यता सूत्रादायातीति। तच्चिन्त्यम्, 'तान्येकवचनद्विवचन–२९१५' इति विहितद्विवचनादिसंज्ञा हि तिबाद्यादेशनिष्ठा। ततश्च द्विवचनादिसंज्ञकतिबादिविधिना 'द्व्येकयोः–२७१' इत्यस्यैकवाक्यताऽस्तु। न च तिबादिविधौ कर्तरीत्यस्ति, यद् द्वित्वैकत्वादिविशेषणतया कथं चिन्नीयेत। ननु 'लः कर्मणि–२९०६' इति सूत्रे 'कर्तरि कृत् ३७७१' इत्यतोऽनुवृत्तं कर्तृग्रहणं तिबादिविधावस्त्येव, लविधितिबादिविध्योरप्येकवाक्यतास्वीकारादिति चेत्। सत्यम्, वाक्यैकवाक्यता हि सा, न तु पदैकवाक्यता, 'लः कर्मणि–२९०६' इति विहितलकारानुवादेन तिबाद्यादेशविधेः प्रवृत्तत्वात्। तथा च लविधौ श्रूयमाणं कर्तृग्रहणं कथं संख्यां विशिनष्टु। न हि यत्र कर्तृग्रहणं तत्र संख्योपस्थापकमस्ति, लकारस्य द्विवचनादिसंज्ञाविनिर्मुक्तत्वात्। ततश्च 'कर्तरि यदेकत्वम्' इति व्याख्या कथमपि न संभवत्येव। स्यादेतत्, 'लः कर्मणि–२९०६' इति सूत्रे ल इत्यकारानुबन्धकयोर्लङ्लटोः सामान्यग्रहणं न भवति किंतूत्सृष्टानुबन्धकलकाराणां सामान्यग्रहणमिति निर्विवादम्। तत्र 'लः' इति जसन्तं मा भूत् किंतु ङसन्तमस्तु। 'लः परस्मैपदम् २९०९' इतिवदादेशापेक्षा चेयं षष्ठी, लस्य य आदेशः स कर्मणि चेत्यादि। न चाविहितस्य लस्यानुवादो न संभवतीति वाच्यम्, 'वर्तमाने लट् २९०५' इत्यादिभिरेव लविधानात्। तथा च लस्य स्थाने य आदेशः स सकर्मकात्कर्मणि कर्तरि च स्यादकर्मकाद्भावे कर्तरि चेत्यर्थः सुलभ इति भट्टपादोक्तयोजनिका निर्बाधैव चेत्। अत्राहुः–ल इत्यस्य षष्ठ्यन्तत्वे आदेशानामेवार्थ उक्तः स्यात्। सोऽपि तिबादीनामेव न तु शत्रादीनाम्, तेषां द्विवचनादिसंज्ञाविरहात्। 'द्व्येकयोः–२७१' इत्यादिनाऽस्यैकवाक्यताया भवद्भिरुक्तत्वात्। न च भवदुक्तरीत्या 'कर्तरि कृत् ३७७१' इत्यनेनैव निर्वाहः, भावे कर्मणि च शानचो दौर्लभ्यापत्तेरुक्तत्वात्। न च शानज्विधिना सहात्मनेपदव्यवस्थापकानामेकवाक्यतया 'भावकर्मणोः ३५७७' इत्यनेनेष्टसिद्धिः, सकर्मकादपि भावे शानजापत्तेः। किञ्च, जसन्तत्वे श्रुतेनैव संबन्धः, षष्ठ्यन्तत्वे त्वादेश इत्यध्याहाराद्गौरवमित्यादि। अत्रेदं बोध्यम्–'भावे चाकर्मकेभ्यः' इत्यकर्मकग्रहणेनाविवक्षितकर्माणोऽपि गृह्यन्ते। अत एव 'णेरणौ–' इति सूत्रे 'नेह पच्यते, नेह भुज्यते' इति भावे लकार इति हरदत्तः। अत्यन्ताविद्यमानकर्मकाणामेव ग्रहणं, 'नेह पच्यते' इत्यादौ तु कर्मण्येव लकारः। गम्यमानत्वाच्च कर्म न प्रयुज्यत इति मतान्तरम्। एतच्च 'गतिबुद्धि–' इत्यादिसूत्रे हरदत्तग्रन्थे स्पष्टम्। यत्तु कैश्चिदुक्तम्–'अविवक्षितकर्मणां भावे लकार इति प्रसादकृतोक्तं भाष्यादिविरोधादयुक्तम्' इति–तच्चिन्त्यम्, पक्षद्वयस्यापि भाष्यकैयटादिग्रन्थारूढत्वात्। प्रत्युत 'अविवक्षितकर्माणोऽप्यकर्मकाः' इति पक्ष एव प्रबलः। तथाहि–'समानकर्तृकेषु तुमुन्' इति सूत्रे इच्छता क्रियत इति भावे लडुक्तो हरदत्तेन, 'णेरध्ययने वृत्तम्' इति सूत्रे कैयटहरदत्तादिभिरपि नपुंसके भावे क्तोऽप्यकर्मकेभ्य एव, 'तयोरेव कृत्यक्त–३७७२' इत्यत्र क्तमात्रस्य ग्रहणात्तत्र भावे चाकर्मकेभ्य इत्यनुवर्तनात्, अन्यथा घटं कृतमिति प्रसज्येतेति सिद्धान्तितम्। एवं स्थिते यद्यविवक्षितकर्माणोऽपीह सूत्रेऽकर्मकग्रहणेन गृह्येरन्, तर्हि पीता गावो भुक्ता ब्राह्मणा इत्यादौ भावे क्तान्तादर्शआद्यजिति 'आदि कर्मणि क्तः–' इति सूत्रे हरदत्तेन वक्ष्यमाणं, कृतपूर्वीत्यत्र भावे क्त इति कैयटाद्युक्तं च कथं संगच्छेत, कथं च '[2]गतं तिरश्चीनम्' इत्यादिप्रयोगाः संगच्छेरन्। 'गतिबुद्धि–७७९' इति सूत्रे त्वकर्मकग्रहणेनाविवक्षितकर्माणो न गृह्यन्त इत्युक्तम्, तेनाणौ यः कर्ता स ण्यन्ते कर्म न भवतीति देवदत्तेन पाचयतीति सिद्धम्। 'गत्यर्थाकर्मक–४१०४' इति सूत्रे[3]ऽपि न गृह्यन्ते, तेन हि सूत्रेण कर्तर्यपि क्तो विधीयत इति 'दत्तवान्, पक्ववान्' इत्याद्यर्थे 'दत्तः पक्वः' इत्याद्यापत्तेः। इह सूत्रे त्वविवक्षितकर्मणामकर्मकत्वेन ग्रहणे न कोऽपि दोष इत्यास्तां तावत्॥ ( २९०७ ) **लस्य**। वर्णग्रहणे प्रत्ययग्रहणपरिभाषा, अर्थवद्ग्रहणपरिभाषा च न प्रवर्तत इति लुनाति, चूडालः, इत्यादौ तिबाद्यादेशः कुतो न भवतीति

---

१ **गृह्यन्त इति**। 'कृतपूर्वी कटम्' इत्यत्र भावे क्तस्य 'कर्तृकर्मणोः कृति' इति सूत्रे, 'मातुः स्मर्यते' इत्यादौ कर्मणोऽविवक्षया भावे लस्य 'अधीगर्थ–' इति सूत्रे भाष्य उदाहृतत्वादिति भावः। न च कृतपूर्वी कटमितिवत् पूर्वमविवक्षितकर्मतया भावे प्रत्यये पटं क्रियमाणं देवदत्तेनेत्यादिप्रयोगो दुर्वारः, विवक्षायाः प्रयोगाधीनत्वादीदृशी विवक्षा कृतपूर्वीत्यादिवृत्तिविशेषविषयेत्यर्थस्य 'कर्तृकर्मणोः' इति सूत्रे भाष्ये ध्वनितत्वाच्चेति शब्दरत्नम्॥ २ **गतं तिरश्चीनमिति**। अयमभ्युच्चयः 'गत्यर्थाकर्मक–' इत्यनेन तेभ्यो भावेऽपि क्तस्य विशेषतो विधानादित्यन्यत्र प्रपञ्चितमिति शब्दरत्नम्॥ ३ **सूत्रेऽपीति**। अत्र च 'आशितः कर्ता' इति सूत्रस्थं भाष्यं मानम्। तत्र हि–'आङ्पूर्वादश्नोः सकर्मकत्वात्कर्तर्यप्राप्तः क्तो निपात्यते' इत्युक्तम्। अन्यथा मातुः स्मर्यत इतिवदविवक्षितकर्मकत्वेनाकर्मकतायां सूत्रेणैव सिद्धे निपातनं व्यर्थं स्यादिति भावः॥

ऽयम् ॥ ( २९०८ ) (सू) तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् । ३ । ४ । ७८ । एतेऽष्टादश लादेशाः स्युः ॥ ( २९०९ ) (सू) लः परस्मैपदम् । १ । ४ । ९९ । लादेशाः परस्मैपदसंज्ञाः स्युः ॥ ( २९१० ) (सू) तङानावात्मनेपदम् । १ । ४ । १०० । तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञापवादः ॥ ( २९११ ) (सू) अनुदात्तङित आत्मनेपदम् । १ । ३ । १२ । अनुदात्तेत उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात् ॥ ( २९१२ ) (सू) स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ ।

---

चेत् । अत्राहुः—'लः कर्मणि–२९०६' इति सूत्रे निर्दिष्टानां कर्त्राद्यर्थानामनुवृत्तेः कर्त्राद्यर्थे विहितस्य लकारस्य ग्रहणमिति । अतोऽपि तिबाद्यादेशानुवादेन कर्त्राद्यर्थविधिरिति कल्पना निरस्ता । लस्थानिकतिबादीनां कर्त्राद्यर्थविधानं, कर्त्राद्यर्थे विहितस्य लस्य तिबादिविधानमित्यन्योन्याश्रयापत्तेः । यद्वा—धातोरित्यधिकाराद्धातोर्विहितस्यैव लस्येह ग्रहणमिति नोक्तातिप्रसङ्गः । लस्येत्संज्ञा तु न भवति, फलाभावात् । न च ल्तिस्वरः फलं, णलो लित्त्वेन तदभावस्य ज्ञापनात् । नाप्यश्रवणमेव फलं, तदुच्चारणस्यानर्थक्यापत्तेरादेशविधिनैवाश्रवणलाभाच्च । लस्य तिबादिस्थानित्वाभ्युपगमे तु 'लः परस्मैपदम् २९०९' इत्यादि स्वरसतः संगच्छत इति दिक् ॥ ( २९०८ ) तिप्तस्झि—। समाहारे द्वन्द्वः । इटष्टकार आगमलिङ्गं न भवति सप्तदशभिरादेशैः समभिव्याहारात्, किन्तु 'इटोऽत् ३०१९' इति विशेषणार्थः । 'एरत्' इत्युच्यमाने एधेवहि, एधेमहीत्यत्रापि स्यात्, वर्णग्रहणे प्रत्ययग्रहणार्थवद्ग्रहणपरिभाषयोरप्रवृत्तेः । केचित्तु–'इटोऽत् ३०१९' इत्यत्र लिङ इत्यनुवर्तनाल्लिङादेशस्येवर्णस्येति सामानाधिकरण्येन व्याख्याने एधेवहि, एधेमहीत्यादावतिप्रसङ्गो नास्त्येव । न हि तत्र इकारमात्रमादेशो भवति । तेन 'इटोऽत् ३०१९' इत्यत्र टकारः स्पष्टप्रतिपत्त्यर्थ एवेत्याहुः । तच्चिन्त्यम्, इकारस्य विशेषणत्वे विशेषणेन तदन्तग्रहणाद् 'इवर्णान्तस्य लिङोऽत्स्यात्' इत्यर्थप्रसक्त्या उक्तातिप्रसङ्गस्य तदवस्थत्वात् । वहिमहीत्यस्यापि स्थानिवत्त्वेन लिङ्त्वात् । महिङो ङकारस्तङ् तिङिति प्रत्याहारार्थः, स च समुदायानुबन्धो न त्ववयवानुबन्धो व्याख्यानात् । तेनेषेः कर्मणि आशीर्लिङि एषिषीमहीत्यत्र गुणनिषेधो न, तथा च वृश्चतेः पृच्छतेश्च कर्मणि लिटि च वव्रश्चिमहे, पप्रच्छिमहे, इत्यत्र 'ग्रहिज्या–३२१६' इति संप्रसारणं न ॥ (२९१०) तङानौ–। लस्येत्यस्यानुवृत्तेर्लादेश एवानो गृह्यत इत्याशयेनाह—शानच्कानचौ चेति । तेन परस्मैपदिभ्योऽपि 'ताच्छील्यवयोवचन–४१२९' इति चानश् भवत्येव । कतीह निघ्नानाः ॥ ( २९११ ) अनुदात्तङितः–। अनुदात्तश्च ङश्च अनुदात्तङौ, तौ इतौ यस्य सोऽनुदात्तङित् । द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं संबध्यते । तत्रानुदात्तांशे तदन्तविधेः फलाभावाद् अंशान्तर एव तदन्तग्रहणमित्याशयेनाह––अनुदात्तेत इत्यादि ॥ 'उपदेशेऽजनुनासिक–६' इत्यतोऽनुवृत्तमुपदेशग्रहणमपि ङिदंश एव संबध्यते नान्यत्र, अव्यभिचारात्तदाह–उपदेशे यो ङिदिति । विशेष्यमन्तरेण तदन्तविधिरिह दुर्लभ इत्यत आह––धातोरिति ॥ लस्येति । नन्विहानुवृत्तेरभावादुभयमपि दुर्लभं 'भूवादयः–३९' इति सूत्रान्मण्डूकप्लुत्याऽनुवृत्तस्य धातव इत्यस्य विभक्तिविपरिणामात्कथंचिद्धातोरिति पदे लब्धेऽपि लस्येत्येतन्न लभ्यत इति चेत् । अत्राहुः–'इको झल् ३४६९' इत्यत्र सना धातोरिवेहात्मनेपदेन लकारधात्वोराक्षेपो बोध्यः । तिङां लादेशत्वाल्लस्य च धातोर्विधानादिति । उपदेश इति किम्, चुकुटिषति । 'गाङ्कुटादिभ्यः–३२७३' इति सन आतिदेशिकं ङित्त्वम् । धातोः किम्, चङङ्भ्यां मा भूत् । अदुद्रुवत् । अवोचत् । ननु लावस्थायामेव वृतादिभ्यः 'स्यतासी–२९४१' इत्यादिना स्यप्रत्यये कृते व्यवधानादात्मनेपदपरस्मैपदरूपनियमाप्रवृत्तावपि लकारसामान्याश्रयत्वेनान्तरङ्गत्वात्स्यप्रत्ययात्पूर्वमेव लस्य तिबादिषु सत्सु पक्षे परस्मैपदं पक्षे चात्मनेपदं सिद्ध्यत्येवेति 'वृद्भ्यः स्यसनोः ३१२८' इति सूत्रे स्यग्रहणं व्यर्थं ( सत् ) तेनैव स्यग्रहणेन 'विकरणेभ्यो नियमो बलीयान्' इति ज्ञापितम् । तेनानुदात्तेत्त्वाद्वर्तिष्यत इत्येवं नित्यमात्मनेपदे प्राप्ते 'वृद्भ्यः स्यसनोः ३१२८' इति परस्मैपदमपि पक्षे भवति । तथा च विकरणेभ्यो नियमस्य बलीयस्त्वाच्चङङोर्न दोषः । विकरणात्प्रागेव परस्मैपदप्रवृत्तेरिति चेत् । सत्यम्, स्यग्रहणं विकरणव्यवधानेऽपि नियमप्रवृत्तिं ज्ञापयतीति पक्षे चङङोर्दोषः स्यादेव । अयं च पक्षः 'शदेः शितः' इति सूत्रे भाष्यकैयटयोः स्पष्टः । किञ्च, तदन्तविधिलाभार्थमपि धातुग्रहणमावश्यकम् [ तत्फलं तु ] 'धातोरेकाचः–३४९४' इत्यादिना यङि बोभूयते । ऋतेरीयङि ऋतीयते । शेते, ह्नुते इत्यत्र तु व्यपदेशिवद्भावेन ङिदन्तत्वम् । 'नमोवरिवश्चित्रङः–३५६३' इति क्यचि चित्रीयते इत्येतत्कथमिति चेत् । अत्राहुः–अवयवेऽचरितार्थो ङकारः क्यजन्तस्य विशेषणं भवति । तथा च समुदायानुबन्धो ङकारः इति व्यपदेशिवद्भावेनैव ङिदन्तत्वं बोध्यमिति ॥ ( २९१२ ) स्वरितञितः—। पूर्व-

---

१ लादेशा इति । सूत्रे 'लः' इति षष्ठ्यन्तम् । तेन लकारस्थाने जायमानानामेव परस्मैपदसंज्ञा, न तु लकारनिमित्तकानां सिजादीनामिति भावः॥ २ क्रियाफल इति। क्रियायाः फलं चात्र स्वर्गाद्येव,असाधारणत्वात्,न तु दक्षिणादि, तस्यान्यथाऽपि सिद्धत्वात् । तदुक्तं भाष्यकृता—"न चान्तरेण यजिं यजिफलं लभन्ते । याजकाः पुनरन्तरेणाऽपि यजिं गां लभन्ते" इति । हरिणाऽपि–"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥" इति ॥ ३ लस्येति । यथाश्रुतसूत्रस्य तृतीयाऽध्यायस्थत्वेन प्रथमाऽध्यायस्थे प्रकृतसूत्रेऽनुवर्तनाऽसम्भवाच्चिन्त्यमेतत्॥ 'लः'इत्यस्य–इति सूचितम् ॥ ४ "यदा त्विदं प्रकरणं तिबादिविधिना सहैकवाक्यतया 'अनुदात्तङितो धातोर्विहितस्य लस्य स्थाने एकत्वे गम्ये आत्मनेपदैकवचनं त' इत्यादिक्रमेण व्याख्यानाद्विधायकम्–इति पक्षः,तदा तल्लभः स्पष्ट एव" इति शब्दरत्नम् ॥

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥ ( २९१३ ) (सू) शेषात्कर्तरि परस्मैपदम् । १ । ३ । ७८ । आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥ ( २९१४ ) (सू) तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः । १ । ४ । १०१ । तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥ ( २९१५ ) (सू) तान्येकवचनद्विवचनबहुवचनान्येकशः । १ । ४ । १०२ । लब्धप्रथमादिसंज्ञानि तिङस्त्रीणित्रीणि वचनानि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥ ( २९१६ ) (सू) युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ । तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः स्यात् ॥ ( २९१७ ) (सू) प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च । १ । ४ । १०६ । मन्यधातुरुपपदं यस्य धातोस्तस्मिन्प्रकृतिभूते सति मध्यमः स्यात्परिहासे गम्यमाने मन्यतेस्तूत्तमः स्यात्स चैकार्थस्य वाचकः स्यात् ॥ ( २९१८ ) (सू) अस्मद्युत्तमः । १ । ४ । १०७ । तथाभूतेऽस्मद्युत्तमः स्यात् ॥ ( २९१९ ) (सू) शेषे प्रथमः । १ । ४ । १०८ । मध्यमोत्तमयोरविषये प्रथमः स्यात् ॥ भू सत्तायाम् ॥ कर्तृविवक्षायां भू ति इति स्थिते-॥ ( २९२० ) (सू) तिङ्शित्सार्वधातुकम् । ३ । ४ । ११३ । तिङः

---

दिच्छब्दः प्रत्येकं संबध्यते । कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायं, 'कर्मण्यण् ३८७९' ॥ धातोरिति । धातोर्लस्येत्यर्थः । लकारधात्वोराक्षेपः पूर्ववद्बोध्यः ॥ ( २९१४ ) तिङस्त्रीणित्रीणि--। तिङः षट् त्रिकाः, संज्ञास्तु तिस्र इति यथासंख्यं न प्राप्नोतीत्यत आह—उभयोरिति । परस्मैपदमात्मनेपदमिति चानुवर्तते । तेन पदद्वये प्रत्येकं त्रयस्त्रिका इति यथासंख्यं संज्ञाः प्रवर्तन्त इति भावः । ननु प्रथमश्च प्रथमश्च प्रथमौ, मध्यमश्च मध्यमश्च मध्यमावित्येवं कृतैकशेषाणां प्रथमादीनां प्रथमौ च मध्यमौ च उत्तमौ च प्रथममध्यमोत्तमा इति द्वन्द्वेऽभ्युपगते त्रिकद्वयस्य त्रिकद्वयस्य यथासंख्यं प्रथममध्यमोत्तमसंज्ञाः स्युर्न त्वेकैकस्येति 'णलुत्तमो वा ३०५०' इति सूत्रं विरुध्यते णल उत्तमसंज्ञकत्वालाभात्, ततश्च प्रथममध्यमोत्तमा इत्यत्र कृतद्वन्द्वानां प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्चेत्येकशेष आश्रीयताम्, तथाहि सति संज्ञा अपि षडिति परस्मैपदात्मनेपदग्रहणानुवृत्तिक्लेशं विनैवेष्टसिद्धिरिति चेत् । मैवम्, एकशेषाश्रयणे गौरवाद्वैयर्थ्याच्च त्वयाऽपि परस्मैपदात्मनेपदग्रहणमनुवर्त्यमेव । अन्यथा शतृक्वसोः सावकाशा परस्मैपदसंज्ञा प्रथमादिसंज्ञया बाध्येत । ततश्च क्राम्यति, क्रामतीत्यादौ 'क्रमः परस्मैपदेषु ३१०१' इति दीर्घो न स्यात्, आक्रामन्नित्यादौ तस्य सावकाशत्वात् । यदि तु 'परस्मैपदानाम्-२९२७' इति विहितस्य णलो 'णलुत्तमो वा ३०५०' इति णित्त्वविकल्पविधानाज्ज्ञापकात्परस्मैपदसंज्ञा प्रथमादिसंज्ञया न बाध्यत इति ब्रूषे, तर्हि सुतरां प्रतिपत्तिगौरवम् ॥ ( २९१५ ) तान्येकवचन-। तानीत्यस्य व्याख्यानं तु-लब्धेत्यादि । अन्यथैकसंज्ञाधिकारात्प्रथमादिसंज्ञानामेकवचनादिसंज्ञानां च पर्यायः स्यात् । इष्टापत्तौ तु अत्तेर्लोटः 'मेर्निः २९५८' इति कृते एकत्वविवक्षायामुत्तमसंज्ञाऽभावात् 'आडुत्तमस्य-२९५९' इत्यस्याप्रवृत्त्या अन्नीत्यादिप्रयोगोऽपि साधुः स्यादिति भावः ॥ प्रत्येकमिति । यत्तु प्राचा एकैकश इत्युक्तम् । तदयुक्तम्, शसैव वीप्साया उक्तत्वेन द्विर्वचनायोगात्, येन नाप्राप्तिन्यायेन द्विर्वचनापवादः शसिति सिद्धान्तात् । तथा 'सुपः' इति सूत्रेऽप्येकैकश इति प्राचोक्तमयुक्तमेव । एतच्च मनोरमाग्रन्थानुरोधेनोक्तम् । अन्ये तु-एकैकमेवैकैकशः । स्वार्थे शस्, न त्वत्र वीप्सायाम् । न च स्वार्थे यः शस् स आकरग्रन्थान्नावगम्यत इति वाच्यम्, "एकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा" इति भाष्यात्, शसन्तस्य प्रत्येकमित्यर्थकत्वेन कैयटेन व्याख्यातत्वाच्च स्वार्थिकस्यापि शसोऽवगम्यमानत्वात् । ततश्चैकैकश इति प्राचोक्तमयुक्तमिति यदुक्तं तदेवायुक्तमित्याहुः ॥ ( २९१६ ) युष्मदि-। समानाधिकरण इत्यस्य व्याख्यानम्--तिङ्वाच्यकारकवाचिनीति । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । स्थानिनीत्यस्य व्याख्यानम्-अप्रयुज्यमान इति । समानाधिकरणे किम्, त्वां पश्यति, त्वया क्रियते, तुभ्यं ददाति ॥ ( २९१७ ) प्रहासे-। मन्योपपद इति सप्तम्यन्तस्यानुगुणत्वेन व्याचष्टे-तस्मिन्प्रकृतिभूते सतीति । तस्माद्धातोर्लस्य स्थान इत्यर्थः ॥ ( २९१८ ) तथाभूत इति । तिङ्वाच्यकारकवाचिनि प्रयुज्यमानेऽप्रयुज्यमाने चेत्यर्थः ॥ ( २९२० ) तिङ्शित्-। धात्वधिकारोक्ता इति किम् । हरीन् । शसः 'सार्वधातुकमपित् २९९३' इति ङित्त्वे 'घेर्ङिति ३४९' इति गुणः स्यात्, लिहंश्रियः इत्यादिशसन्तेषु 'सार्वधातुके यक् ३६८०' इति यक् च स्यात् ॥ केचित्तु-वारिणीत्यत्र नुमि कृतेऽपि लघूपधगुणः

---

१ युष्मद्युपपद इति । उपोच्चारितं पदमुपपदं न तु कृत्रिमम्, तस्येहानुपयोगात् ॥ २ सामानाधिकरण्यमेकार्थबोधकत्वम् । तच्च प्रत्यासत्त्या लकारेणैवेत्याशयेनाह-तिङ्वाच्येति ॥ ३ भू सत्तायामिति । आत्मधारणमिह सत्ता, सत्तायामित्यादेर्वर्तत इति शेषः ॥ पूर्वं भूकथनं महाव्याहृतिस्मारकतया माङ्गलिकत्वात् । सत्तार्थनिर्देशोऽप्येवम्, सत्ताख्यस्य परब्रह्मणः स्मरणात् ॥ ४ कर्मणः कर्त्रधीनत्वेन पूर्वं कर्तृप्रत्ययानाह-कर्त्रीति ॥ ५ नन्वित्संज्ञकङकारादावित्यर्थेन गुणो वारयितुं शक्य इत्यरुचेराह-लिह इति ॥

शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥ (२९२१) (सू) **कर्तरि शप्** । ३ । १ । ६८ । कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् । शपावितौ ॥ ( २९२२ ) (सू) **सार्वधातुकार्धधातुकयोः** । ७ । ३ । ८४ । अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति[३] । भवतः ॥ ( २९२३ ) (सू) **झोऽन्तः** । ७ । २ । ३ । प्रत्ययावयवस्य झस्यान्तादेशः स्यात् । [२७६]अतो गुणे । भवन्ति[४] । भवसि । भवथः । भवथ ॥ ( २९२४ ) (सू) **अतो दीर्घो यञि** । ७ । ३ । १०१ । अतोऽङ्गस्य दीर्घः स्याद् यञादौ सार्वधातुके परे । भवामि । भवावः । भवामः । स भवति, तौ भवतः, ते भवन्ति । त्वं

---

स्यादित्याहुः ॥ तन्न, क्ङितीति निषेधात्, इगन्तत्वप्रयुक्तस्य नुमो गुणप्रयोजकत्वे सन्निपातपरिभाषाविरोधाच्च ॥ (२९२१) **कर्तरि शप्** । 'सार्वधातुके यक् ३६८०' इत्यतः सार्वधातुक इत्यनुवर्तते ' धातोरेकाचः–३४९४ ' इति सूत्राद्धातोरिति च, तदाह– **कर्त्रर्थ इत्यादि** ॥ ( २९२३ ) **झोऽन्तः** । तकारादकार उच्चारणार्थः । 'आयनेयीनी–६६१' इति सूत्रात्प्रत्ययग्रहणमनुवर्तते, न त्वादिग्रहणम्, एकदेशे स्वरितत्वप्रतिज्ञानात् । तस्याप्यनुवृत्तौ तु शयान्ते इति न सिध्येत् । शीङो 'लेटोऽडाटौ ५२५८' इत्यन्तरङ्गत्वादन्तादेशात्प्रागाटि कृते झस्यादित्वाभावात्, तदेतदाह––**प्रत्ययावयवस्येति** । प्राचा तु प्रत्ययादेर्झस्येत्युक्तं, तदनेन प्रत्युक्तम् । इह मनोरमायामादिग्रहणं निवृत्तमित्युक्तम् । तदापाततः, अन्यत्राप्रवृत्तस्यादिग्रहणस्य निवृत्तत्वायोगात्, निवृत्तमित्यस्यानुवृत्तमित्यर्थ इति वा कथंचिद्व्याख्येयम् । यत्तु–प्रत्ययादेरिति ग्रन्थसमर्थनाय व्याचक्षते–आडागमे कृते तत्सहितोऽपि प्रत्ययोऽस्तु नाम, न तु तत्सहित एव प्रत्यय इति नियमोऽस्तीति । तन्न, अवयवविनिर्मुक्तस्यावयवित्वायोगात् । अन्यथा भूयास्तामित्यादौ तामादीनामिडागमापत्तेः । ननु अङ्गात्परस्य प्रत्ययस्येट्, यासुडन्तं तु नाङ्गमिति चेत् । न, आगमविनिर्मुक्तस्यापि प्रत्ययत्वमिति वदतां मते भवामि भविष्यामीत्यादौ विकरणान्तस्येव तदादिग्रहणबलेन यासुडन्तस्याप्यङ्गताया दुर्वारत्वात् । किञ्च, लविषीयेत्यत्र विशेषविहितत्वात्सीयुटि कृते लिङः स्थाने इट् तस्यागमेनादित्वविघातात्प्रत्ययाद्युदात्तत्वं न प्राप्नोतीत्याशङ्क्य ' प्रत्ययस्वरे कर्तव्ये आगमा अविद्यमानवत् ' इत्यतिदेशः ' आद्युदात्तश्च ' इति सूत्रे भाष्यादौ स्वीकृतः । न चैतत्केवलस्यापि प्रत्ययत्वे युज्यते, न च तन्मते आगमसहितस्यापि प्रत्ययत्वादिकारस्याप्युदात्तः स्यात्, तद्वारणाय ' प्रत्ययस्वरे कर्तव्ये–' इत्यादिग्रन्थः स्वीकर्तव्य एवेति नास्त्येवाकरग्रन्थविरोध इति वाच्यम्, 'आगमा अनुदात्ताः ' इति विशेषवचनेनागमस्याप्यनुदात्तत्वे कृते आद्युदात्तत्वस्य तत्राप्रवृत्तेरिति दिक् ॥ **झस्येति** । झकारादकार उच्चारणार्थः ॥ **अतो गुण इति** । ' अतो दीर्घो यञि २९२४ ' इति तु न प्रवर्तते, स्थान्यलादेशविधौ स्थानिवत्त्वनिषेधादिति भावः ॥ ( २९२४ ) **अतो दीर्घो–** । 'तुरुस्तुशम्यमः–३२५३ ' इति सूत्रात्सार्वधातुक इत्यनुवर्तते । सार्वधातुके किम्, केशवः, अङ्गना । ' अत आत्' इति वक्तव्ये दीर्घग्रहणं दीर्घ एव यथा स्यादित्येवमर्थम् । अन्यथाऽपाक्षीरोदनं देवदत्त, ननु पचामि भोरित्यत्र ' अन-

---

१ **कर्तरि शबिति** । ननु कर्तरीति व्यर्थम्, भावकर्मणोस्तु शपः प्रवृत्तिर्न यका बाधात् । तद्विधौ हि ' भावकर्मणोः' इति वर्तते–इति चेन्न, 'दिवादिभ्यः–' इत्यादावनुवृत्त्यर्थत्वात् । ' कर्तरि शप्' इति सूत्रे कर्तरीत्यस्यानुपादाने तु शबुत्सर्गः, तस्य द्वावपवादौ यक्श्यनौ, तयोर्मध्ये श्यनपेक्षया यकः पूर्वत्वेन परत्वाद्दिवादिभ्यो भावे कर्मणि वा श्यन् स्यादतः 'कर्तरि' इत्युत्तरार्थम् । यग्विधायकशास्त्रस्यापवादतया शब्बाधकत्ववत् श्यन्बाधकत्वंतु न शङ्क्यम्, पुरस्तादपवादन्यायेन यक्प्रत्ययस्य शप एव बाधकत्वात् ॥ २ **सार्वधातुकेति** । नन्वत्र लाघवात् 'पिदार्धधातुकयोः' इति सूत्रमस्तु–सप्तमीबहुवचने हरिषु, भानुष्वित्यत्र नातिप्रसङ्गः, आर्द्धधातुकसाहचर्येण धातोर्विहिते प्रत्यये एवैतत्प्रवृत्तेः । 'णू–स्तुतौ' , 'धू–विधूनने ' इत्यादिभ्यः क्विबन्तेभ्यः सप्तमीबहुवचने गुणः स्यादित्यपि न शङ्क्यम्, धातोर्विहित इत्यस्य धातुसंशब्देन विहित इत्यर्थात् । न च 'पिदार्द्धधातुकयोः' इति न्यासे तसादावपि गुणो न प्राप्नोतीति 'सार्वधातुकमपित्' इति व्यर्थमिति वाच्यम्, उष्ट इत्यादौ सम्प्रसारणार्थं तस्यावश्यकत्वाद्–इति चेत् । न, साहचर्यपरिभाषाया अनित्यत्वस्य ज्ञापनार्थतया सार्वधातुकग्रहणस्यावश्यकत्वात् ॥ 'सङि धातोः' इत्येव सूत्रयितुं युक्तमित्यपि न वाच्यम्, सङीति सनः सकारमारभ्य महिङो ङकारेण प्रत्याहारे काम्याचि दोषापत्तेरित्यलम् ॥ ३ **भवतीति** । लावस्थायामिडागमस्तु न "नेड्वशि कृति" इति निषेधात् । तिपः स्थानिवत्त्वेनाऽऽर्धधातुकत्वमादायाऽपि नेट्, "आर्धधातुकं शेषः" इति शेषग्रहणेन "लिट् च" इति सूत्रे "लङः शाकटायनस्यैव " इति सूत्रादेवकारानुवर्तनेन च "लकारप्रयुक्तं कार्यं नादेशानाम्"इति ज्ञापनात् । अत एव "रुदादिभ्यः सार्वधातुके" इति सार्वधातुकस्येड्विधानं संगच्छते ॥ ४ **भवन्तीति** नन्वत्र शवकारान्त्यकारयोः पररूपे कृते ' सार्वधातुकमपित् ' इति ङित्त्वेन'क्ङिति च' इति निषेधाद् गुणो न स्याद्––इति चेत् । न, 'अचः परस्मिन्– ' इति स्थानिवत्त्वेन गुणप्रवृत्तेः ॥ ' वार्णादाङ्गम्– ' इति न्यायादेकादेशात्पूर्वमेव गुण इति तु वक्तुमशक्यम्, समानस्थानिकत्वे एव तत्प्रवृत्तेः ॥ ५ ननु ' विभाषोर्णोः ' इत्यादिपूर्वोत्तरसाहचर्येण धातोः परस्यैव ङित्त्वेऽप्याह–**इगन्तत्वेति** ॥ ६ **नियमोऽस्तीति**–एवं च तद्रहितस्याऽपि प्रत्ययत्वमर्थवत्त्वं चेत्यादिग्रहणाऽनुवृत्तावपि न दोष इति भावः ७ **सार्वधातुके किम्, केशवः–अङ्गनेति** । अङ्गशब्दात् पामादित्वान्नः, केशशब्दात् 'केशाद्वः–' इति वप्रत्ययः।न च 'शृङ्गवृन्दाभ्यामारकन्' 'हृदयाच्चालुरन्यतरस्याम्' इत्यनयोराकारोच्चारणं तद्धिते दीर्घाप्रवृत्तौ ज्ञापकं भविष्यतीति वाच्यम्, आकारोच्चारणेन तद्धिते परे दीर्घाऽप्रवृत्तिकल्पनापेक्षया क्लृप्तस्य सार्वधातुकपदस्य सम्बन्धकल्पने एव ज्ञापकं भविष्यतीत्याशयात् ।ननु'सुपि च'इति सूत्रमस्मिन् सूत्रे सार्वधातुकपदानुवृत्त्यभावे नियमार्थं भविष्यति–'अधातुप्रत्यये यदि दीर्घस्तर्हि सुप्येव' इति । तेनोक्तस्थले दीर्घाभावे सिद्धे सार्वधातुकपदानुवृत्तिर्व्यर्था इति चेद् । न, ' सुपि च ' इति सूत्राभावे यज्वभ्यां युवभ्यामित्यादौ 'अतो दीर्घो यञि ' इति दीर्घापत्तेः ॥

भवसि, युवां भवथः, यूयं भवथ । अहं भवामि, आवां भवावः, वयं भवामः । एहि मन्ये ओदनं भोक्ष्यसे इति भुक्तः सोऽतिथिभिः । एतमेत वा मन्ये ओदनं भोक्ष्येथे । भोक्ष्यध्वे ॥ भोक्ष्ये । भोक्ष्यावहे । भोक्ष्यामहे । मन्यसे । मन्येथे । मन्यध्वे इत्यादिरर्थः । युष्मद्युपपदे इत्याद्यनुवर्तते । तेनेह न, एतु भवान्मन्यते ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिः । प्रहासे किम् । यथार्थकथने मा भूत् । एहि मन्यसे ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिरित्यादि ॥ (२९२५) (सू०) परोक्षे लिट् । ३ । २ । ११५ । भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥ (२९२६) (सू०) लिट् च । ३।४।११५ । लिडादेशस्तिङार्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः । तेन शबादयो न ॥ (२९२७) (सू०) परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । ३ । ४ । ८२ । लिटस्तिबादीनां नवानां णलादयो नव स्युः । भू अ इति स्थिते- ॥ (२९२८) (सू०) भुवो वुग्लुङ्लिटोः । ६ । ४ । ८८ । भुवो वुगागमः स्यात् लुङ्लिटोरचि । नित्यत्वाद्वुग्गुणवृद्धी

---

न्त्यस्यापि प्रश्नाख्यानयोः ५४८६' इति प्लुतः स्यात् । केचित्तु 'अत आत्' इति सुवचं, तपरकरणसामर्थ्याद्विकारनिवृत्तिर्भवेदिति प्लुतस्याप्रसङ्गात्, 'उदात्तस्थाने उदात्त आकारः, अनुदात्तस्थानेऽनुदात्त आकारः' इत्यादि 'स्थानेऽन्तरतमः ६२' इत्यनेनैव सिद्धम् । अत एव 'वृषाकप्यग्नि-' इति सूत्रे वृषाकपिशब्दो मध्योदात्त एक एवोदात्तत्वं प्रयोजयति, अग्न्यादिषु तु 'स्थानेऽन्तरतमः ६२' इत्येव सिद्धमिति मनोरमादावुक्तम् । ततश्च प्रयोजनाभावात्तपरकरणमनाणि विध्यर्थामिति नाशङ्कनीयमेव । यदि तु 'हल्ङ्याब्भ्यः-३५६' इत्यत्र आ आबितिवदत आ इत्यत्रापि आ आ इति प्रश्लेषः क्रियते, तदा तपरकरणं विनाऽपीष्टसिद्धिरित्याहुः ॥ 'प्रहासे च-२९१७' इति सूत्रस्योदाहरणमाह-**एह मन्य इति** । ओदनं भोक्ष्ये इति त्वं मन्यस इत्यर्थः ॥ **एतमेत वेति** । एतं मन्ये ओदनं भोक्ष्येथे, एत मन्ये ओदनं भोक्ष्यध्वे इत्यन्वयः । भोक्ष्यावहे इति युवां मन्येथे, भोक्ष्यामह इति यूयं मन्यध्वे इति क्रमेणार्थः ॥ **( २९२५ ) परोक्षे लिट्** । यद्यप्यधिश्रयणादिव्यापाररूपा क्रिया सर्वा परोक्षैव । उक्तं हि भाष्ये—'क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्' इति, तथापि तदनुकूलशक्तिमतां व्यापाराविष्टानां साधनानां पारोक्ष्यमिह विवक्षितम्, तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेऽपि लिङ् भवत्येव, अयं पपाच, त्वं पेचिथ । ननु क्रियाशब्दवाच्याधिश्रयणाधःश्रयणादिव्यापाराणां युगपत्प्रत्यक्षाविषयत्वेऽपि क्रमशः प्रत्यक्षविषयत्वमस्ति, यत्र तु क्रमशोऽपि प्रत्यक्षविषयत्वं नास्ति तत्र हि पारोक्ष्यं क्रियायाः, ततश्च लिडुत्तमपुरुषो दुर्लभ इति चेत् । अत्राहुः-स्वव्यापारस्यापि वर्तमानतादशायां व्यासङ्गादिना स्वयमप्रतिसंधाने ततः कार्येणानुमितौ भवत्येव । 'बहु जगद पुरस्तात्तस्य मत्ता किलाहम्' इतिवदिति ॥ **( २९२६ ) लिट् च । आर्धधातुकसंज्ञ एवेति** । 'लङः शाकटायनस्य—६३२७६' इति सूत्रादेवकारोऽनुवर्तत इति भावः ॥ **( २९२७ ) परस्मैपदानाम्**—। अत्र थशब्दस्याऽकारो विधीयमानोऽन्तस्य प्राप्नोति । न चाकारस्याकारविधौ निरर्थकत्वमिति वाच्यम्, यथासंख्यसपादनेन कृतार्थत्वात् । अत्राहुः—धातोरित्यधिकारात् 'आदेः परस्य ६८' इति व्यञ्जनमात्रस्य कृते द्वयोः 'अतो गुणे २७६' इति पररूपम् । यद्वा—द्वयोरकारयोः पररूपेण सूत्रे निर्देशः, तथा चानेकाल्त्वात्सर्वादेशे सिद्धमिष्टमिति । ननु सुबन्तानामेव द्वन्द्वस्तत्र त्वकारद्वयकल्पनायां सवर्णदीर्घ एव स्यादिति चेत् । मैवम्, आदेशानां स्थान्यर्थेनैवार्थवत्त्वात थशब्दस्य विधीयमानमकारद्वयं प्रत्येकमर्थवन्न भवतीति समुदितस्य प्रातिपदिकत्वेन 'अतो गुणे २७६' इति पररूपस्यैव प्रवृत्तेः ॥ **( २९२८ ) भुवो वुक्**—। 'अचि श्नुधातु-३७९' इति सूत्रादचीत्यनुवर्तते तदाह-**लुङ्लिटोरचीति** । अचीति किम्, अभूत् अभूः इत्यत्र वुकि सति 'लोपो व्योः-१२५४-' इति लोपं बाधित्वा परत्वाद्धल्ङ्यादिलोपः स्यात् । ननु हल्ङ्यादिलोपादन्तरङ्गत्वात् 'लोपो व्योः-१२५४' इति लोप एव भविष्यति । तथा च मव्यतेर्यङ्लुङन्ताल्लङि तिप्सिपोः-अमामत्, अमाम इत्यत्र व्योर्लोप एव माधवादिभिः स्वीकृतः । एवं चाज्ग्रहणम् 'ऊदुपधायाः-३१५७' इत्युत्तरार्थमनुवर्तमानमिहाप्युपरञ्जकतया वृत्तिकारादिभिर्योजितं, न त्वावश्यकतयेत्येव निष्कर्ष उचित इति चेत् । अत्राहुः-'भुवो वुक्—२९२८' इत्यस्याङ्गत्वाद्बहिरपेक्षत्वेन हल्ङ्यादिलोपस्यैव वुकोऽपि बहिरङ्गतया असिद्धत्वे सति वलि लोपस्य प्राप्तेरेवाभावादज्ग्रहणमिहार्थमपीत्येव युक्त-

---

१ श्वशुरगृहे गतं पुरुषं प्रति सत्यप्योदने परिहासशीलश्यालकादेर्वाक्यमेतद्-**एहि मन्य इत्यादि** ॥ २ **प्लुतस्याप्रसङ्गादिति** । वस्तुतः प्लुतस्यासिद्धत्वात्तपरकरणेन तद्व्यावृत्तिर्नेति चिन्त्यमेतत् ॥ ३ **क्रियासर्वेति** । अवयवक्रिया, समूहरूपा चेत्यर्थः । एवञ्चाव्यावर्तकत्वात् 'परोक्षे' इति विशेषणमनुपपन्नमिति भावः ॥ ४ अत्र भाष्यं प्रमाणयति—**उक्तं हीति** ॥ ५ **अत्यन्तापरदृष्टेति** । अवयवशः समूहश्च अपरेण प्रमाणेन प्रत्यक्षेणादृष्टेत्यर्थ इति शब्दरत्नम् ॥ ६ **एवकार इति** । अन्यथा एकसंज्ञाधिकारादन्यत्र सत्त्वेन संज्ञासमावेशः स्यादिति भावः ॥ ७ ननु 'धातोः' इति सूत्रे भाष्ये 'तिप्तस्झि-' इत्यादौ 'धातोः' इत्यस्य विहितविशेषणताया उक्तत्वेन इहाप्यधिकारात्तथैवापत्तौ 'आदेः परस्य' इत्यस्याप्रवृत्तिरित्यरुचेराह—**यद्वेति** ॥ ८ **लोपः स्यादिति** । सन्निपातपरिभाषायास्तु नैतद्विषये प्रवृत्तिः, 'अबिभः' इत्याद्यसिद्ध्यापत्तेरिति भावः ॥ ९ 'वलि लोपे वग्रहणप्रत्याख्यानेन तदप्राप्तेश्च' इत्यपि बोध्यम्-इति शब्दरत्नम् ॥

बाधते ॥ ( २९२९ ) (सू) एकाचो द्वे प्रथमस्य । ६ । १ । १ । ( २९३० ) (सू) अजादेर्द्वितीयस्य । ६ । १ । २ । इत्यधिकृत्य ॥ ( २९३१ ) (सू) लिटि धातोरनभ्यासस्य । ६ । १ । ८ । लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते ॥ (२९३२) (सू) पूर्वोऽभ्यासः । ६ । १ । ४ । अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥ ( २९३३ ) (सू) हलादिः शेषः । ७ । ४ । ६० । अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः ॥ ( २९३४ ) (सू) ह्रस्वः । ७ । ४ । ५९ । अभ्यासस्याचो ह्रस्वः स्यात् ॥ ( २९३५ ) (सू) भवतेरः । ७ । ४ । ७३ । भवतेरभ्यासोकारस्य अः स्यात् लिटि ॥

---

मिति । अयं च शङ्काग्रन्थः समाधानग्रन्थश्च मनोरमायां स्थितः ॥ अत्र नव्याः—मव्यतेर्यङ्लुगन्त एव नास्ति,अमामदित्यादि रूपं तु दूरादपास्तमेव, 'यकारवकारान्तानामूठ्भाविनां यङ्लुग् नास्तीति 'च्छ्वोः शूड्–'इति सूत्रे भाष्ये ध्वनितम् । कैयटेन च स्पष्टीकृतम् । इदं च च्छ्वोरिति यत्रोठ् तद्विषयकं 'ज्वरत्वर–३५२५' इत्यूठ्भाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यं माधवादिसंमतं च, 'मव्य बन्धने' अयं यान्त ऊठ्भावी' इति मूले वक्ष्यमाणत्वात् । तथा च तद्ग्रन्थेन सहात्रत्यमनोरमाग्रन्थो विरुध्यत इत्याहुः । यदि तु मवतेर्यङ्लुगन्तादिति मनोरमायां पठ्येत, तदा तत्र पूर्वापरग्रन्थविरोधो नास्तीति दिक् ॥(२९३०) **अजादेरिति** । ( २९३१ ) यदि बहुव्रीहेः षष्ठी तदा इन्द्रमात्मन इच्छति इन्द्रीयति, इन्द्रीयितुमिच्छति इन्दिद्रीयिषति इत्यत्र दकारस्य 'न न्द्राः–३२५६' इति द्वित्वनिषेधः स्यात् , किन्तु अचासावादिश्चाजादिस्तस्मादिति कर्मधारयादेषा पञ्चमी तदाह—**आदिभूतादचः परस्य त्विति ॥ भूव् भूव् इति** । यद्यप्यत्र धात्ववयवत्वं प्राथम्यं च न संगच्छते, तथापि व्यपदेशिवद्भावेन तद्बोध्यम् । नन्विह चत्वार एकाचस्तत्रावयवास्त्रयः, तत्र भूऊ ऊव् इति भूविति समुदायश्चतुर्थः, तथा चानियमेन यस्य कस्यचिद् द्वित्वं स्यात् । मैवम्, समुदायस्यैकाच एव द्विर्वचनस्य न्याय्यत्वात् । तस्मिन्हि द्विरुच्यमाने अवयवा अपि द्विरुच्यन्त एव, वृक्षचलने सर्वावयवचलनवत् ॥ **(२९३२) अत्रेति** । एकाचो द्वे इति प्रकरणे ॥ (२९३३)**हलादिः**—। अभ्यासस्येति जातिपरो निर्देशस्तेन आततुः आटतुरित्यादौ तकारादिनिवृत्तिः सिद्ध्यति, क्वचिदभ्यासे आदेर्हलः सत्त्वमाश्रित्य सर्वत्रानादेर्लोपविधानात् ॥ **( २९३५ ) भवतेरः** । 'अत्र लोपोऽभ्यासस्य ३४७९' इति सूत्रादभ्यासपदमनुवर्तते । अत्र प्राचोक्तम्—भवतेरिति कर्तृनिर्देशाद् भावकर्मणोर्नात्वमिति, व्याख्यातं च तत्पौत्रेण कर्त्रर्थयोः श्तिप्श्पोर्निर्देशादित्यर्थ इति । तन्न, धातुनिर्देशमात्रे श्तिपो विधानात्, शपश्च विकरणत्वेनानर्थकत्वात् , कर्त्रर्थके परे विहितस्यापि तस्य श्तिपः शित्त्वसामर्थ्यादेवेह प्रवृत्तेः,अन्यथा त्वदुक्तरीत्या'उपसर्गात्सुनोतिसुवति–३०३७'इत्यादीनामपि भावकर्मणोरप्रवृत्तौ सर्वोपप्लव एव स्यात्, अपसिद्धान्तश्चायमिति स्पष्टमेवाकरदशाम् । प्रयुञ्जते च कर्मण्यप्यकारं कवयः—'तस्यातपत्रं बिभरांबभूवे' 'विभावरीभिर्बिभरांबभूविरे' इत्यादि । एतच्च प्रक्रियाप्रसादग्रन्थदूषणं मनोरमायां स्थितम् ॥ अत्र नव्याः—श्तिपः शित्त्वसामर्थ्यादेवेह शपः प्रवृत्तिरिति यदुक्तं तन्न, पिबतिः ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् । एवं च 'उपसर्गात्सुनोतिसुवति–३०३७' 'भवतेरः २९३५' 'ध्यायतेः संप्रसारणं च ४१८८'इत्यादिनिर्देशादकर्तृवाचिन्यपि परे शबादय इत्येव व्याख्येयम् । अन्यथा 'इकृश्तिपौ–५०९५' इति सूत्रे वक्ष्यमाणस्वग्रन्थेन सह विरोधापत्तेः ॥ केचित्तु शित्त्वात्तिपः सार्वधातुकत्वेन भवतिरित्यादौ 'आर्धधातुकस्येड् वलादेः २९३९' इतीडागमनिवृत्त्या, ब्रवीतिरित्यत्र 'ब्रुव ईट् ३२६३ इतीडागमप्रवृत्त्या च शित्त्वं चरितार्थमिति व्याचख्युः । तच्चिन्त्यम् , 'तितुत्र—४१९४' इत्यनेनेण्निषेधादार्धधातुकत्वेऽपि क्षत्यभावात् । 'ब्रुव ईट् ३२६३' इत्यत्र ब्रुवः परस्य हलादेः पित ईडागम इत्येतन्मात्रस्य मूले व्याख्यातत्वात्सार्वधातुकस्येति विशेषणाभावेऽपि क्षत्यभावात् । न च हलादेः पित्प्रत्ययस्य सार्वधातुकस्येति विशेषणाभावे ब्रुवो लिटि वच्यादेशे सिपस्थलि उवक्थेत्यत्रातिप्रसङ्गः

---

१ 'ह्रस्वो हलादिः शेषः ' इति संहितापाठे ' अहलादिः शेषः' इति च्छेदः । तथा च–'अभ्यासस्याहल् हलभावो भवति, यश्चादिः स तत्र शिष्यते' इत्यर्थाद् आट,आटतुरित्यादौ न दोष इति केचित्॥ २ इतरनिवृत्तिपूर्वकमवस्थानं शेषशब्दार्थ इत्याह—**अन्य इत्यादि**॥ ३ **इति वलोप इति**।'सर्वं वाक्यं सावधारणं भवति'इति न्यायाद् विनाप्येवकारं तदर्थप्रतीतिः । तद्यथा—"वायुं भक्षयति,—अपो भक्षयति, वायुमेव भक्षयति,—अप एव भक्षयति" इति भाष्याच्च 'इति वलोपः' इत्यस्य 'इत्यनेनैव वलोपः' इत्यर्थः । न तु 'लोपो व्योर्वलि' इत्यनेन 'वार्णादाङ्गम्' इति न्यायात्, वलि लोपे वग्रहणप्रत्याख्यानेन एतदप्राप्तेश्च॥ ४ **अभ्यासस्याच इति** । 'अभ्यासावयवस्याचः' इति तदर्थः । वैयधिकरण्यान्वयफलं तु चच्छाविति, अत्र हि सामानाधिकरण्येनान्वये 'अजन्तस्याभ्यासस्य ह्रस्वः' इत्यर्थे छो इत्यस्यात्वे लिटि छाशब्दस्य द्वित्वेऽन्तरङ्गत्वात्तुकि ह्रस्वो न स्यात् । अभ्यासस्यानजन्तत्वात्॥५ **कर्मधारयादिति** । राजदन्तादित्वात् सौत्रत्वाद्वा विशेषणस्याप्यादिशब्दस्य परनिपात इति भावः॥ ६ **चत्वार एकाच इति** । ' निजौ चत्वार एकाचः ' इति भाष्यस्थैकदेश्युक्तिरीत्येदम् । वस्तुतो व्यपदेशिवद्भावस्यासहाये एव प्रवृत्त्योकारे एकाच्त्वोपपत्त्यभावाच्चिन्त्यमेतत् । भाष्यं तु एकस्मिन्नित्यस्यापर्यालोचनयैव प्रवृत्तमिति दिक् ॥ ७ नारायणेन तु प्राचीनोक्तप्रकारेणाभ्यास उकार एव व्याख्याने समर्थितः । एवं च 'श्रीहर्षप्रयोगः कीदृशः' इति सन्दिग्ध एव॥ ८ 'वार्तिके' इति तूचितम् ॥

( २९३६ ) (सू) **अभ्यासे चर्च** । ८ । ४ । ५४ । अभ्यास झलां चरः स्युर्जशश्च । 'झशां जशः, खरां चरः । तत्रापि प्रकृतिजशां प्रकृतिजशः, 'प्रकृतिचरां' प्रकृतिचरः इति विवेक आन्तरतम्यात् ॥ ( २९३७ ) (सू) **असिद्ध-वदत्राभात्** । ६ । ४ । २२ । इत ऊर्ध्वमापादपरिसमाप्तेराभीयम् । समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात् । इति वुकोऽसिद्धत्वादुवङि प्राप्ते-॥ ( २९३८ ) (वा) **वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ** ॥ बभूव ।

---

स्यादिति वाच्यम् , थलोऽत्र पित्त्वाभावात् । न च स्थानिवद्भावेन पित्त्वं, श्नः शानचः शित्त्वेन लिङ्गेन कचिदनुबन्धकार्येऽप्य-नल्विधाविति तन्निषेधात् । तस्मात्पूर्वोक्तरीत्यैव श्तिपः शित्वसामर्थ्यादकर्तर्यपि शपः प्रवृत्तिरिति ग्रन्थो निराकर्तव्य इत्याहुः । तदपरे न क्षमन्ते-थलः पित्त्वाभावे हि 'असंयोगाल्लिट् कित् ३००२' इति कित्त्वात् 'वचिस्वपि-३२१३' इति संप्रसारणे सत्यु-वचिथ उवक्थेति न सिद्ध्येत् , किन्तु ऊचिथ ऊक्थेति स्यात् । तस्मात्स्थानिवत्त्वेन थलः कित्त्वेऽभ्युपगते उवक्थेत्यादावति-प्रसङ्गवारणाय पितः सार्वधातुकस्येडागम इति व्याख्यातव्यमेव । तथा च-ब्रवीतिरित्यत्र ईडागमप्रवृत्त्या शित्त्वं चरितार्थमिति कैश्चिद्यदुक्तं तदपि सम्यगेवेति ॥ ( २९३७ ) **असिद्धवदत्राभात्** । वत्करणं प्रतिपत्तिलाघवाय, अन्यथा सिद्धे असिद्ध इति प्रयुज्यमानमनुपपन्नं सत्सामर्थ्यादसिद्धवदिति कल्पनीयं स्यात् । यथा राजभिन्ने पुरोहिते राजाऽयमिति प्रयोगो राजवदिति कथं-चित्कल्पयति, राजवदयं पुरोहित इत्युक्ते तु लघुप्रतिपत्तिर्भवति, तथा चागत्या 'षत्वतुकोरसिद्धः—५१५४' इत्यत्रासिद्ध-वदिति कल्प्यते । 'असंयोगाल्लिट् कित् ३००२' इत्यत्रापि किद्वदित्यगत्यैव कल्प्यत इति ज्ञेयम् । आ भादित्यभिविधावाङ् । भाधि-कारमभिव्याप्येत्यर्थः । अधिकारश्चायम् । अत्रग्रहणं समानाश्रयप्रतिपत्त्यर्थम् । आभाद्ग्रहणं विषयनिर्देशार्थम् । भाधिकारस्या-वधिलाभस्तु 'अङ्गस्य २८५' 'प्रत्ययः २६४' 'परश्च २६५' इत्यादाविव व्याख्यानेनैव सिद्ध्यति । एवं चानुदात्तोपदेशेत्यत्रास्यो-पस्थाने सत्ययमर्थो भवति । एषामनुनासिकस्य लोपः स्याज्झलादौ क्ङिति परे स चासिद्धो भवति । अत्र झलादिकिदाश्रित्यैव यदाभीयं प्राप्नोति तस्मिन्कर्तव्ये इति जङ्गहि जङ्घहि 'अतो हेः २९५७' इति लुग् न भवति, अनुनासिकलोपस्य हिशब्दाश्रि-तत्वेनासिद्धत्वात् । नन्वस्याधिकारत्वे यत्रयत्रोपस्थानं तत एवारभ्य यदाभीयं, तस्मिन्नेव कर्तव्येऽसिद्धत्वं स्यान्न तु ततः पूर्व-स्मिन्नपि । ततश्च 'ध्वसोः-३२८४' इत्येवं पूर्वस्मिन्नपि धित्वे कर्तव्ये नासिद्धं स्यादिति चेत् । भवेदयं दोषः शब्दाधिकारे । अर्थाधिकारस्त्वयम् । ततश्चेह 'श्नान्नलोपः ३३७४' इत्यवधिर्निर्णीतः स एव प्रतिसूत्रमुपतिष्ठते, तदेतत्सकलमभिप्रेत्याह-**इत ऊर्ध्वमिति** । अत्रापि शास्त्रासिद्धत्वमेवाकरे स्थितम् । तेन एधि शाधीत्यत्र स्थानिनो झलन्तत्वबुद्धेरनिवर्तितत्वात्तन्नि-बन्धनं 'हुझल्भ्यो हेर्धिः ३२३१' इति धित्वं सिद्ध्यति । प्राचोक्तकार्यासिद्धत्वपक्षे तु न सिद्ध्यति । देवदत्तस्य हन्तरि हते देवदत्तस्य जीवनं नेति न्यायेन एत्वविधिना झल्बुद्धौ निवर्तितायां पश्चादेत्वबुद्धिनिवर्तनेऽपि धित्वकार्यस्याप्रवृत्तेरित्याहुः । समानाश्रये इति किम्, पपुषः । चिच्युषः । लुलुवुषः । इह पाधातोश्चिञो लूञश्च परस्य वसोर्यत्संप्रसारणं तत् 'आतो लोप इटि च ३१६५' इत्यालोपे 'एरनेकाचः-३८०' इति यण्युवङि च कर्तव्ये नासिद्धम्, आलोपादीनि हि क्वसौ, संप्रसारणं तु विभक्ताविति व्याश्रयत्वात् । न च बहिरङ्गत्वेनासिद्धताऽस्त्विति शङ्क्यम्, 'नाजानन्तर्ये-' इति निषेधात्, 'वाह ऊठ् ४५३' सूत्रस्थबहिरङ्गपरिभाषायाँ[2] अप्याभीयत्वेनाऽऽलोपादिषु कर्तव्येष्वसिद्धत्वाच्च । न चोक्तपरिभाषाया आलोपादीनां च समानाश्र-यत्वं नेति शङ्क्यम्, वसोः संप्रसारणे कृते ह्यजाद्याश्रयेणाऽऽलोपादीनि प्रवर्तन्ते, तेषु कर्तव्येषु संप्रसारणस्यासिद्धत्वाय तद्विषये बहिरङ्गपरिभाँषाऽपि प्रवर्तत इति तेषां तत्सत्त्वादिति दिक् ॥ विषयलाभार्थमाभाद्ग्रहणं किम्, आभीयं प्रत्येवाभीयमसिद्धं नान्यं प्रतीति यथा स्यादित्येवमर्थम् । तेन अभाजि राग इत्यत्र 'भञ्जेश्च चिणि ३६९०' 'रञ्जेश्च ३१९८', 'घञि च भावक-रणयोः ४९७७' इति नलोपे कृते तस्यासिद्धत्वाभावात् 'अत उपधायाः ३०४९' इति वृद्धिर्भवतीत्याहुः । स्यादेतत्, देभतुः देभुरित्यत्र 'श्रन्थिग्रन्थिदम्भि-३३५३' इति वक्ष्यमाणवचनेन लिटः कित्त्वान्नलोपेऽप्येत्वाभ्यासलोपौ न स्यातां नलोपस्या-सिद्धत्वात् । अत्राहुः-'श्नसोरल्लोपः ३२८२' इति तपरकरणाल्लिङ्गादाभीयासिद्धत्वमनित्यमिति नास्त्यत्र दोषः । तपरकरणं हि आस्तामित्यत्राडागमस्य लोपो मा भूदित्येतदर्थम् । यद्याडागमः श्नसोरल्लोपं प्रत्याभीयत्वेनासिद्धः स्यात्तर्हि किं तेन तपरकर-णेन । एवं च 'दम्भेश्च ५३५४' इति वक्ष्यमाणं नापूर्वं वार्तिकं किं त्वनित्यत्वबललभ्यमेवेति ॥ **वुकः** । वुक्शास्त्रस्य । एव-मग्रेऽपि । ( २९३८ ) युट उदाहरणं दिदीये ॥ **बभूवेति** । अत्र प्राचा-'इन्धिभवतिभ्यां च ५२१८' इति सूत्रं पितोऽपि लिटः कित्त्वार्थमिति व्याख्याय 'अचो ञ्णिति ३५९' इति वृद्धिप्राप्तौ 'क्ङिति च २९७२' इति निषेध इत्युक्तम् । तदुपेक्षि-तम्, इग्लक्षणयोरेव गुणवृद्ध्योर्निषेध इति सिद्धान्तात् । अन्यथा इक्स्थानिकयोर्निषेधे लैगवायन इत्यत्रापि वृद्धिर्न स्यात् । न चात्र कित्त्वसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेध इति वाच्यम्, थलि उत्तमे णलि च गुणनिषेधेन कित्त्वस्य चरितार्थत्वात् । सूत्रं तु प्रत्याख्यातमेवाकरे । तथा च वार्तिकम् * **इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्व-चनानर्थक्यम्** * इति । यद्यपीह शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्ति, तथापि कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यता स्वीक्रियत इति पक्षोऽप्यस्मादेव वार्तिकादवगम्यते, तेन रधेर्णिचि परामप्युपधावृद्धिं बाधित्वा नित्यत्वात् 'रधिजभोरचि ३०७५'

---

१ अत्रपदेन यत्रानुवृत्तिः तत्सूत्रस्थसप्तम्यन्तोल्लिखितो निमित्तसमुदायः परामृश्यते । सप्तमी च वैषयिकी । इदमे-वाऽभिप्रेत्य 'निमित्तत्वं यथाकथंचित्, न तु कार्यभिन्नत्वेनैव सप्तम्यन्तोल्लिखितत्वेनैवेत्याग्रहः' इति प्राञ्चः । तेन लुको द्विस्थानिकत्वेऽपि 'जहि' इत्यादावसिद्धत्वसिद्धिरिति शब्दरत्नम् ॥

बभूवतुः । बभूवुः ॥ ( २९३९ ) आर्धधातुकस्येड्वलादेः । ७ । २ । ३५ । वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ॥ ( २९४० ) अनद्यतने लुट् । ३ । ३ । १५ । भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ॥ ( २९४१ ) स्यतासी लृलुटोः । ३ । १ । ३३ । लृ इति लृङ्लृटोर्ग्रहणम्[1] । धातोः स्यतासी एतौ स्तो लृलुटोः परतः । शबाद्यपवादः[2] ॥ ( २९४२ ) आर्धधातुकं शेषः । ३ । ४ । ११४ । तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥ ( २९४३ ) लुटः प्रथमस्य

---

इति नुमि कृते रन्धयतीति सिद्धम् । नन्वेवमपि संयोगात्परस्य लिटः कित्त्वार्थमिन्धेश्चेत्यंशोऽपेक्षित एव, अन्यथा 'समीधे दस्युहन्तमम्' इत्यत्रेन्धेर्नलोपो न स्यात् । मैवम्, 'छन्दस्युभयथा ५२७०' इति सूत्रेण हि सार्वधातुकसंज्ञा आर्धधातुकसंज्ञा च विधीयते, तेन 'सार्वधातुकमपित् २९९३' इति ( लिटो ) ङित्त्वे स्यादेव नलोप इति वार्तिकाशयात् । अत्र नव्याः—बभूवेत्यत्र 'द्विर्वचनेऽचि ३००३' इत्यजादेशस्य निषेधाद्गुणवृद्धिभ्यां प्रागेव वुकः प्रवृत्त्या 'भुवो वुको नित्यत्वात्' इति वार्तिके नित्यत्वादिति हेतूपन्यासो निष्प्रयोजनः, शब्दान्तरस्य प्राप्त्या वुको नित्यत्वं नास्तीत्याशङ्क्य कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यत्वं स्वीक्रियत इत्यादिसमाधानमपि व्यर्थमेवेत्याक्षिप्य स्वयमेव समादधुः । षाष्ठद्वित्वप्रकरणान्ते हि वार्तिककृता पूर्वविप्रतिषेधः पठ्यते 'द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः' इति । तथा च—'द्विर्वचनेऽचि ३००३' इति सूत्रं नारम्भणीयमित्याशयेन नित्यत्वादिति हेतुरुपन्यस्त इति । 'द्विर्वचनेऽचि ३००३' इति सूत्रेणाजादेशस्य स्थानिवद्भावो विधीयत इति पक्षे तु द्वित्वात्प्रागेव वृद्ध्यायाद्यादेशस्य स्वीकृतत्वादादेशानन्तरमपि वुकः प्रवृत्तिरस्तीति भुवो वुको नित्यत्वादित्यादिग्रन्थः सम्यगेव । न चैवमपि नामधातुषु त्वापयति मापयतीत्यत्र 'मपर्यन्तस्य त्वमौ पररूपात्पूर्वं नित्यत्वाट्टिलोपः' इति ग्रन्थः कथं संगच्छेतेति वाच्यम्, 'प्रकृत्यैकाच् २७२४' इति सूत्रं भाष्ये प्रत्याख्यातमित्याशयेन तत्प्रवृत्तेः । अत एव त्वादयति मादयतीत्येव न्याय्यमिति तत्रोक्तमिति दिक् ॥ ( २९३९ ) **आर्धधातुकस्येड्वलादेः** । 'नेड्वशि कृति ३९८१' इत्यत इडित्यनुवर्तमाने पुनरिड्ग्रहणं निषेधसंबद्धस्येटो निवृत्त्यर्थम् । वस्तुतस्तु 'समर्थानां प्रथमाद्वा १५३४' इत्यनुवृत्तस्य पदत्रयस्य मध्ये 'प्रागूदिशः–२६४७' इत्यनन्तरं 'समर्थानां प्रथमात्–' इति निवृत्तं, 'वा' इति त्वनुवर्तत इति व्याख्यानमिव नेति निवृत्तम्, इडित्यनुवर्तत इति व्याख्यातुं शक्यत्वादिड्ग्रहणं त्यक्तुं शक्यं, तथापि स्पष्टप्रतिपत्त्यर्थं तत्स्वीकृतमिति बोध्यम् । आर्धधातुकस्येति किम्, आस्ते, शेते । वलादेः किम्, एधनीयम् । ननु 'रुदादिभ्यः सार्वधातुके ३२८८' इत्यनेन 'सार्वधातुकस्य यदीड् भवति, तर्हि रुदादिभ्य एव' इति नियमादास्ते शेत इत्यत्र इट् न भवेदित्यार्धधातुकस्येति ( ग्रहणं ) व्यर्थम् । न च 'रुदादिभ्यः सार्वधातुक एव' इति विपरीतनियमाद्रोदितेत्यत्र न स्यात्, आस्ते शेत इत्यत्र तु स्यादिति शङ्क्यम्, 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ३४६६' इति क्त्वासनोः कित्त्वस्य वैयर्थ्यप्रसङ्गात् । त्वदुक्तरीत्या रुदादेः क्त्वासनोरिडागमाभावेन 'न क्त्वा सेट् ५१४३' इति निषेधाप्रवृत्त्या क्त्वाप्रत्यये औपदेशिककित्त्वस्य सुस्थत्वात् । 'हलन्ताच्च ३४७०' इति झलादिसनः कित्त्वाच्च । तस्माद्विपरीतनियमासंभवेनार्धधातुकग्रहणं व्यर्थमेव । ननु तद्ग्रहणाभावे वलादेरित्यस्याङ्गस्येति यदधिकृतं तद्विशेष्यं स्यात्, ततश्च अडाटाविवेडागमोऽप्यङ्गस्य स्यात् । मैवम्, कृतेऽप्यार्धधातुकग्रहणे 'वलाद्यार्धधातुकस्य यदङ्गं तस्येडागमः, इति व्याख्यानापत्त्योक्तदोषतादवस्थ्यादकृतेऽपि तद्ग्रहणेऽङ्गस्य यो वलादिरङ्गनिमित्तं तस्येडिति व्याख्यानादिष्टसिद्धेश्च । तस्मादुभयथापि व्याख्याने शरणीकर्तव्ये 'आर्धधातुकस्य–' इत्यस्य त्याग एव श्रेयान् । नन्वेवं केशवः, अञ्जना, वृक्षत्वमित्यत्रेट् स्यात्, 'ऋत इद्धातोः ३१८३' इत्यतो धातोरित्यनुवर्तनादधातोः परस्य न भवतीति परिहारसंभवेऽपि लूभ्यां पूभ्यामित्यत्र दुर्वार एवेडागमो विहितविशेषणेनाप्ययं वारयितुमशक्यः, क्विबन्ताः धातुत्वं न जहतीति पूभ्यां पूभिरित्यत्र भ्यामादेर्धातोर्विहितत्वानपायात् । किञ्च, जुगुप्सते इत्यादौ 'गुप्तिज्किद्भ्यः–३१८७' इति धातोर्विहितस्य सन इट् दुर्वारः स्यात् । न चेह धातोः परत्र विहितस्य वलादेरिति व्याख्यानलाभाय धातोरिति पञ्चम्यन्तमपेक्षितं तच्च दुर्लभम्, 'ऋत इद्धातोः ३१८३' इत्यत्र ( धातोरिति ) षष्ठ्यन्तत्वात्, तथा च वृक्षत्वमित्यादावपीडागमप्रसङ्ग इति वाच्यम्, शब्दाधिकारपक्षे स्वरितत्वेन तत्सदृशशब्दोऽनुमीयत इति पञ्चम्यन्तलाभात् । अस्तु वा षष्ठ्यन्तत्वं, विहितत्वं षष्ठ्यर्थ इति व्याख्यायामिष्टसिद्धेः । तस्माज्जुगुप्सत इत्यादावतिप्रसङ्गवारणार्थमार्धधातुकस्येति ग्रहणम् ॥ केचित्तु धातोरित्यावर्त्य धातोरित्युच्चार्य विहितो यः प्रत्ययस्तस्येडिति यदि व्याख्यायेत, तदा लूभ्यां जुगुप्सत इत्यत्रातिप्रसङ्गाभावादार्धधातुकस्येति व्यर्थमित्याहुः॥ **बभूविवेति** । न चात्र 'श्र्युकः किति ३१७४' इतीण्निषेधे वुगागमोऽपि न स्यादिति शङ्क्यम्, क्रादिनियमादिटः प्रवृत्तेः॥ (२९४०) **अनद्यतने–**। अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन सहितो दिवसोऽद्यतन इति 'कालोपसर्जने च तुल्यम् १८३०' इत्यत्र स्थितम् ॥ ( २९४२ ) **आर्धधातुकम्—**। **धातोरिति** । 'धातोरेकाचः–३४९४' इत्यतः धातोरित्यनुवर्तमाने पुनर्धातोरित्यधिकारसूत्रारम्भादिदं लभ्यते । एतच्च तत्रैव मनोरमायां स्पष्टम् ॥ धातोरिति विहितेति किम्, लूभ्यां, जुगुप्सते ॥

---

१ **लृङ्लृटोर्ग्रहणमिति** । 'त्यक्तानुबन्धग्रहणे सामान्यस्य ग्रहणम्' इति परिभाषाप्रवृत्तेरिति भावः । नन्वेवं सति शब्दतः साम्याभावाद्यथासंख्यं न स्यादिति चेन्न, वाचकशब्दसाम्याद्यथासंख्यप्रवृत्तेः ॥ २ स्याद्यपेक्षया लादेशानां परत्वात् 'विकरणेभ्यो नियमो बलीयान्' इति न्यायाच्च तिबाद्युत्पत्तौ शबादयः प्राप्नुवन्तीत्यत आह—**शबाद्यपवाद इति** ॥

**डारौरसः** । २ । ४ । ८५ । डा रौ रस् एते क्रमात्स्युः । डित्वसामर्थ्यादभस्यापि टेर्लोपः ॥ (२९४४-१) (सू) **पुगन्तलघूपधस्य च** । ७ । ३ । ८६ । पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात्सार्वधातुकार्धधातुकयोः ॥ ( २९४४-२ ) (प) **येन नाव्यवधानं तेन व्यवहितेऽपि, वचनप्रामाण्यात्** । तेन भिनत्तीत्यादावनेकव्यवहितस्येको न गुणः । भवित् आ । अत्रेटो गुणे प्राप्ते-॥ ( २९४५ ) (सू) **दीधीवेवीटाम्** । १ । १ । ६ । दीधीवेव्योरिटश्च गुणवृद्धी न स्तः । भविता ॥ ( २९४६ ) (सू) **तासस्त्योर्लोपः** । ७ । ४ । ५० । तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे ॥ ( २९४७ ) (सू) **रि च** । ७ । ४ । ५१ । रादौ प्रत्यये प्राग्वत् । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ॥ (२९४८) (सू) **लृट् शेषे च** । ३ । ३ । १३ । भविष्यदर्थाद्धातोर्लृट् स्यात्क्रियार्थायां क्रियायामसत्यां सत्यां च । स्यः । इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः॥ ( २९४९ ) (सू) **लोट् च** । ३।३। । १६२ । विध्यादिष्वर्थेषु धातोर्लोट् स्यात् ॥ ( २९५० ) (सू) **आशिषि लिङ्लोटौ** । ३ । ३ । १७३ ॥ (२९५१ ) (सू) **एरुः** । ३ । ४ । ८६ । लोट इकारस्य उः स्यात् । भवतु ॥ ( २९५२ ) (सू) **तुह्योस्तातङाशि-**

---

( २९४४-२ ) **अनेकव्यवहितस्येति** । सार्वधातुकादिकमिको विशेषणं न त्वङ्गस्येति भावः ॥ ( २९४६ ) **तासस्त्योः**—। 'सः स्यार्धधातुके ३१२३' इत्यतः सीत्यनुवर्तते, अङ्गाक्षिप्तप्रत्ययस्य सीत्यनेन विशेषणात् 'यस्मिन्विधिः–' इति तदादिविधिस्तदिदमाह—**सादाविति** । एवं रादावित्यत्राप्यूह्यम् ॥ ( २९४७ ) **प्राग्वदिति** । तासेर्लोप इत्यर्थः । अस्तिस्तु नेह संबध्यते, ततो रादिप्रत्ययस्यासंभवात् ॥ (२९४८) **लृट् शेषे च** । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ४९६२' इति प्रागुक्तं ततोऽन्यः शेष इत्याह-**असत्यामिति** । चार्थमाह—**सत्यामिति** । हरदत्तस्त्वाह-अस्वरितत्वादेव क्रियार्थायां क्रियायामिति नानुवर्तते । एवं च शेषे चेति सुत्यजमिति । तच्चिन्त्यम् , शायिष्यत इति स्थीयत इत्यादौ तुमुना लृटो बाधापत्तेः । क्त्ल्युट्तुमुन्खलर्थेषु वासरूपविधेरभावात् । अत्र च ज्ञापकं 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३७५५' इत्यत्र लोटा बाधो मा भूदिति पुनः कृत्यविधिरित्यादि कृदन्ते वक्ष्यति । इदमपि ज्ञापकमित्यन्यदेतत् । यत्तु प्राचा–भविष्यतीति व्रजतीत्युदाहृतम् । तदापाततः, तुमुन्विषयेऽपि लृट् भवति तुमुना लृण्न बाध्यत इत्येतत्प्रतिपादनाय तस्यानुपयोगात् । न हि भविष्यतीत्यत्र कर्तरि तुमनः प्राप्तिरस्ति, भावे हि सः । समानकर्तृकेष्वेवेति च वक्ष्यते । लृडित्येतावत्सूत्रकरणेऽपि भविष्यतीति व्रजतीत्ययं सिध्यत्येवेत्यास्तां तावत् ॥ ( २९४९ ) **लोट् च** । 'विधिनिमन्त्रणा–२९६३' इत्याद्यनुवर्तते, तदाह—**विध्यादिष्विति** ॥ (२९५०) **आशिषि लिङ्लोटौ** । ननु विध्यादिसूत्र एव 'संप्रश्नप्रार्थनाशीःषु' इत्युच्यतां किमनेन पृथक्सूत्रकरणेनेति चेत् । अत्राहुः–इह हि 'क्तिच्क्तौ च–५१३४' इत्युत्तरसूत्रार्थमाशिषीति तावदावश्यकम् । लिङ्लोटावपीहैव विधेयौ। विध्यादिसूत्रे आशीर्ग्रहणे हि 'स्मे लोट् ३७५७' इत्यादिना स्वविषये परत्वाद्बाधः स्यात्। सिद्धान्ते तु परत्वादेष विधिः 'स्मे लोट् ३७५७' इत्यादेर्बाधक इति महान्विशेष इति ॥ ( २९५२ ) **तुह्योस्तातङ्**–। यद्यपि तिह्योस्तातङिति वक्तुं शक्यं, तथापि

---

१ **ङित्वसामर्थ्यादिति** । ननु डकारोच्चारणेन डादेशस्य सर्वादेशत्वं लभ्यते इति कथं ङित्वसामर्थ्यादित्युक्तम्, इति चेत् अनुबन्धान्तरेणापि सर्वादेशत्वं सिद्धमिति गृहाण । एतच्च 'उच्चरितप्रध्वंसो ह्यनुबन्धः' इति स्वीकुर्वतां प्राचां मतेन । वस्तुतस्तु, इत्संज्ञायोग्यस्यैवानुबन्धत्वस्वीकारेण सर्वादेशार्थं ङित्करणं नास्तीति 'डा आ' इति आकारस्य प्रश्लेषेण सर्वादेशत्वे सिद्धे डकारोच्चारणं टिलोपार्थमित्यभिप्रायः॥२ **येन नेति** । येनेति कर्तरि तृतीया, व्यवधानमिति भावे ल्युट्, भवतीत्यध्याहारः । एवं च'येन नाव्यवधानम्'इत्यस्य 'यत्कर्तृकावश्यकव्यवधानम्' इत्यर्थो नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् ॥ भाष्ये तु–पुकि अन्तः पुगन्तः, लघ्वी चासावुपधा लघूपधा, पुगन्तश्च लघूपधा चानयोः समाहारः पुगन्तलघूपधं तस्येति समाहारद्वन्द्व इत्याश्रितम् । सार्वधातुकादिकं चाङ्गविशेषणम्, तत्रैवोत्थिताकाङ्क्षत्वात् । एवं च 'सार्वधातुकार्धधातुकनिमित्तकाङ्गसंज्ञकस्यावयवभूतो यः पुगव्यवहितपूर्वोऽन्तस्तस्य अवयवभूता या लघ्वी उपधा तस्याश्च गुणः' इत्यर्थाङ्गीकारेण भिनत्तीत्यादौ गुणे जातेऽपि न रूपवैलक्षण्यमिति स्वीकृतम् ॥ ३ **इटश्चेति** । नन्वत्र साहचर्यपरिभाषया 'इटकिटकटी गतौ' इत्यत्र निर्दिष्टस्येड्धातोरेव ग्रहणं स्यात्–न पुनरागमस्येट इति चेन्न, 'नेड् वशि कृति' इत्यत इडित्यनुवर्तमाने पुनरिड्ग्रहणस्य 'इट् इडेव' इति नियमेन निर्वाह इत्यभिप्रायकेण "इटश्चापि ग्रहणं शक्यमकर्तुमिति" भाष्येण साहचर्यपरिभाषाया अप्रवृत्तिकल्पनात् ॥ 'नेड् वशि कृति' इति सूत्रभाष्ये 'आर्धधातुकस्येट्–' इति सूत्रस्थस्येड्ग्रहणस्य प्रत्याख्यातत्वेन 'इटश्चापि' इति भाष्यमेकदेश्युक्तिरिति यदि विभाव्यते तदा गुणनिवारणाय प्रकृतसूत्रे 'इटः' इत्यंश आवश्यक एवेति बोध्यम् ॥ सहचरितपरिभाषा तु क्त्वोऽर्थग्रहणेनानित्या । व्याख्यानाद्वाऽत्र न धातुसंज्ञकस्येटो ग्रहणमिति तत्त्वम् ॥ ४ **बाधापत्तेरिति** । तुमुन्विधौ 'भविष्यति गम्यादयः' इत्यतो भविष्यतीत्यनुवृत्तेः । शयिष्यत इत्यत्र भावे भविष्यति लः, एवं हरिष्यामीति व्रजतीत्यादौ ण्वुला बाधापत्तिरिति बोध्यम् । शेषे चेति सत्त्वे हि चकाराल्लृडपि तत्र विशेषविहित इति न दोष इति भावः ॥

ष्यन्यतरस्याम् । ७ । १ । ३५ । आशिषि तुह्योस्तातङ् वा स्यात् । अनेकाल्त्वात्सर्वादेशः । यद्यपि ङिच्चेत्ययमपवा- दस्तथाप्यनन्यार्थङित्वेष्नङादिषु चरितार्थ इति गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थतया संभवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तः परेण बाध्यते । इहोत्सर्गापवादयोरपि समबलत्वात् । भवतात् ॥ ( २९५३ ) लोटो लङ्वत् । ३ । ४ । ८५ । लोटो लङ इव कार्यं स्यात् । तेन तामादयः सलोपश्च । तथाहि–॥ ( २९५४ ) तस्थस्थमिपां तान्तन्तामः । ३ । ४ । १०१ । ङितश्चतुर्णां तामादयः क्रमात्स्युः ॥(२९५५) नित्यं ङितः । ३ । ४ । ९९ । सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् । अलोऽन्त्यस्येति सस्य लोपः । भवताम् । भवन्तु ॥ (२९५६) सेर्ह्यपिच्च । ३ । ४ । ८७ । लोटः सेर्हिः स्यात्सोऽपिच्च ॥ ( २९५७ ) अतो हेः । ६ । ४ । १०५ । अतः परस्य हेर्लुक् स्यात् । भव । भवतात् । भवतम् । भवत ॥ ( २९५८ ) मेर्निः । ३ । ४ । ८९ । लोटो मेर्निः स्यात् ॥ ( २९५९ )

---

लाघवाभावादतिप्रसङ्गवारणाय हिशब्दसाहचर्याश्रयणे लोट इत्यनुवर्तमाने वा गौरवाच्च तुह्योरित्युक्तम् ॥ ( २९५३ ) **लोटो लङ्वत्** । लोट इत्युपमेये षष्ठीदर्शनादुपमानादपि षष्ठ्यन्तादेव वतिस्तदाह—**तेनेति** । अडाटौ तु नातिदिश्येते । न हि तौ लङः क्रियेते, किं त्वङ्गस्येति भावः । नन्वेवमपि यान्तु वान्तु इत्यत्र 'लङः शाकटायनस्य–३२७६' इति जुस् स्यात् , जुहतु विदन्त्वित्यत्र तु 'सिजभ्यस्त–२९८१' इति जुस्स्यात् । अत्राहुः–'विदो लटो वा ३२७७' इति वाग्रहणमिहानुवर्त्य व्यवस्थि- तविभाषाश्रयणान्न जुस् । यद्वा–'लङः शाकटायनस्य–३२७६' इति सूत्रे 'नित्यं ङितः २९५५' ( इत्यतो ङितः ) इत्यनुवृत्त्यै- वेष्टसिद्धेर्लङ्ग्रहणमतिरिच्यते, लुङि सिचा लृङि स्यप्रत्ययेन च व्यवधानात् , लिङि तु 'झेर्जुस् २९६८' इति जुसो विहित- त्वाच्च ङित इत्यस्य लङ्येव पर्यवसानात्ततो लङ्ग्रहणं विभज्यते । नियमश्चायं–लङेव यो लङ् तस्यैव झेर्जुस्, न तु लङ्वद्भा- वेन यो लङ् तस्येत्यतो नोक्तदोष इति । तच्चिन्त्यम् , अदुरित्यत्र 'सिजभ्यस्त–२९८१' इति नित्यजुसं बाधित्वा परत्वा- च्छाकटायनस्येति विकल्पप्रसङ्गात् । तस्माल्लङ्ग्रहणं शाकटायनसूत्रे कर्तव्यमेव, न तु तदतिरिच्यते । न च 'आतः २९८२' इति सूत्रेणादुरित्यत्र नित्यं जुस्स्यादिति वाच्यम् , तस्य नियमार्थत्वेन विध्यर्थत्वायोगात् , अन्यथा अभूवन्नित्यत्र 'सिजभ्य- स्त–२९८१' इति जुस् दुर्वार एव स्यादिति नव्याः । यदि त्विह 'आतः २९८२' इति सूत्रमावर्त्य विध्यर्थता नियमार्थता च व्याख्यायेत, तदा तूक्तदोषाभावाद्वेति समाधानमपि सम्यगेव, शाकटायनस्येति जुसो वैकल्पिकत्वात् तदभावपक्षे पुनः प्रसङ्गविज्ञानात् । 'सिजभ्यस्त–२९८१' इति जुसि स्वीकृते तु सुतरां सम्यगेव, परं तु जुहतु विदन्त्वित्यत्र जुस्वारणाय व्यवस्थितविभाषा त्वाश्रयणीयैवेति दिक् ॥ ( २९५५ ) **सकारान्तस्येति** । ङित्सकारोत्तमसकारस्येति प्राचो व्याख्यानं त्वयुक्तं, भूयासमित्यादावतिप्रसङ्गः स्यादिति भावः ॥ **ङिदुत्तमस्येति** । ङिल्लकारोत्तमस्येत्यर्थः । तेन भवावः भवाम इत्यादौ नातिप्रसङ्गः ॥ ( २९५६ ) **सोऽपिच्चेति** । एवं च पित्त्वेनानुदात्तस्य सिपः स्थाने यो हिरादेशः स तु 'स्थानेऽन्तरतमः ६२'

---

१ न च 'सति सर्वादेशे गुणवृद्धिप्रतिषेधसंप्रसारणङ्नमकारलोपसंपादकत्वेन ङित्वस्य चारितार्थ्यम् , सति चारितार्थ्ये सर्वादेशसंपादकत्वम् ' इत्यन्योन्याश्रयापत्तिरिति वाच्यम् , प्रकरणान्तरे मात्राद्वयगुरुभूतन्यासेऽपि अपरनिमित्तकत्वेनान्तरङ्ग- तया तुह्योरादेशे तातङि पूर्वं कृतेऽपि अन्त्यादेशसंपादनेनावयवे चरितार्थस्य ङित्वस्य समुदायोपकारकत्वे मानाभावाद् गुणवृद्धिप्रतिषेधसंपादकत्वाभावात् तृतीयाध्याये **'एरुः'** इत्युत्तरमेव **'तिह्योस्तादाशिष्यन्यतरस्याम्'** इति मात्रा- द्वयलघुभूतन्यासेनैव भवदिष्टस्य तकारहकारश्रवणस्य सिद्धौ व्यर्थं ङित्वं गुणवृद्धिप्रतिषेधसंप्रसारणङ्नमकारलोपसर्वा- देशसाधकत्वमेव ज्ञापयति इत्येवमाशयात् ॥ न चैवं हेस्तादादेशापेक्षया विधौ चरितार्थस्य **'ध्वसोरेद्धौ'** इत्यस्य पर- त्वात्प्रवृत्तौ 'स्तात्' इत्यस्यानुपपत्तिः 'सकृद्गतौ–' इति न्यायात् । पुनःप्रसङ्गाङ्गीकारे तु 'एतात्' इत्यस्याप्यापत्तिरिति वाच्यम् , नित्यत्वादपरनिमित्तकत्वेनान्तरङ्गत्वाद्वा तादादेशस्यैवेष्टसाधकस्य पूर्वं प्रवृत्तेः ॥ नव्यबुद्धयस्तु—**'लोटो लङ्वत्'** इत्यादि नवसूत्र्यात्मकं लोट्प्रकरणं तृतीयाध्यायस्थमेव सप्तमाध्यायं नीत्वा तत्र सप्तमाध्याय एव **'लोटो लङ्वत्'** **'एरुः'** **'तिह्योस्तादाशिष्यन्यतरस्याम्'** **'सेर्ह्यपिच्च'** इत्येवमेवाचार्यः कुर्यात्–इत्यर्थं वदन्ति ॥ २ भाष्यप्रामाण्येन पूर्वविप्रतिषेधकल्पनेन दोषाभावात्–' लङः ' इति पदोच्चारणापेक्षया परशब्दस्येष्टवाचित्वाश्रयणे गौरवाभावादिति दिक्–इति शब्दरत्नम् ॥ ३ **व्यवस्थितविभाषा त्वाश्रयणीयैवेति** । वस्तुतस्तु **"देवत्रातो गलो ग्राह इतियोगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥"** इति व्यवस्थितविभाषापारिगण- नविरोधाच्चिन्त्यमेतत् ॥ न च व्यवस्थितविभाषानाश्रयणे यान्तु वान्तु जुहतुरित्यादौ दोष एवेति वाच्यम्–, हलोड्विधानेन सिद्धे 'लोटो लङ्वत्' इत्यतिदेशविधानं लङ्संबन्धिकार्यविधानस्यातिदेशिकत्वेनानित्यत्वज्ञापनार्थमित्यदोषात् । तदुक्तम्– 'वतिपदघटितमनित्यम्' इति ॥

---

१ लोड्विधाने तु 'टित आत्मनेपदानाम्–' इत्युत्तरं 'लोट आम्' इत्यस्य 'थासः से' इत्युत्तरम् 'लोटः स्व' इत्यस्य करणे पुनःपुनर्लोड् इति कर्तव्यत्वे गौरवं स्यात्–इति केचित् ॥

* क्ङित्यादित्यादौ लघूपधगुणनिषेधः । स्तात्– युतात्– इत्यादौ च 'इतो वृद्धिर्लुकि हलि' इति विहित वृद्धिनिषेधः । 'वचकात्' उच्यादित्यत्र ग्रहिज्येति संप्रसारणम् ॥ अदिपदेन मृजादित्यत्र 'मृज दृहे' इति–द्वितो... मम संग्रहः ॥

आडुत्तमस्य पिच्च । ३ । ४ । ९२ । लोडुत्तमस्याडागमः स्यात्स पिच्च । हिन्योरुत्वं न, इकारोच्चारणसामर्थ्यात्[1] । भवानि[2] । भवाव । भवाम ॥ ( २९६० ) (सू.) अनद्यतने लङ् । ३ । २ । १११ । अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् । ( २९६१ ) (सू.) लुङ्लङ्लृङ्क्ष्वडुदात्तः । ६ । ४ । ७१ । एषु परेष्वङ्गस्याडागमः स्यात्स चोदात्तः ॥ ( २९६२ ) (सू.) इतश्च । ३ । ४ । १०० । ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः स्यात् । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥ ( २९६३ ) (सू.) विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् । ३ । ३ । १६१ । एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात् । विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं नियोगकरणम् । आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टं सत्कारपूर्वको व्यापारः । 'प्रवर्तनायां लिङ्' इत्येव सुवचम् । चतुर्णां पृथगुपादानं प्रपञ्चार्थम् ॥ ( २९६४ ) (सू.)

---

इत्यनुदात्तो न भवति 'जहि शत्रून्' 'स्तुहि श्रुतम्' ॥ **भवतादिति** । लुगपेक्षया परत्वाद्धेस्तातङ्, अन्तरङ्गमेव[3] लुग् बाधते न तु परमिति भावः ॥ ( २९५९ ) **स पिच्चेति** । स इति तच्छब्देन यस्याडागमः स परामृश्यत इत्याहुः॥(२९६२) **इतश्च** । 'इतश्च लोपः-५२५७' इति सूत्रात्परस्मैपदेष्वित्यनुवृत्तं षष्ठ्येकवचनान्ततया विपरिणमय्य इत इत्यनेन विशेष्यते, तदाह—**परस्मैपदमिकारान्तं यत्तस्येति** । प्राचा तु परस्मैपदेष्विकारस्य लोप इत्युक्तम् । तदयुक्तम्, भवेदित्यादावतिव्याप्तेः । ननु 'अतो येयः २९६७' इत्यत्र इय् दीर्घादिरस्तु, एवं च नोक्तातिव्याप्तिः 'इतश्च २९६२' इति तपरकरणात् । अत एव अबोभवीदित्यादावपि न दोष इति चेत् । मैवम्, रुदेर्लङि अरुदितामित्यादौ दोषध्रौव्यादिति मनोरमायां स्थितम् ॥ (२९६३) **विधिनिमन्त्रणा-। द्योत्येषु वाच्येषु वेति** । पक्षद्वयस्याप्याकरे स्थितत्वादिति भावः । अत्राद्ये त्वित्थमुपपत्तिः विध्यादीनां प्रत्ययार्थत्वमनुचितम् । तथाहि सति कर्त्रादीनामर्थानां लकारान्तरे[4] चरितार्थानां विध्यादयोऽर्था बाधकाः स्युः, तथा च लिङः कर्त्राद्यभिधायकत्वं न स्यात्, ततश्च द्विवचनबहुवचने न स्याताम्, शबादयश्च[5] न स्युः, पुरुषव्यवस्था[6] च न स्यात्, अभिहितत्वप्रयुक्तस्तृतीयादिविरहश्च न सिध्येदिति । द्वितीये त्वित्थमुपपत्तिः—विध्यादिभिः कर्त्रादयो न बाध्यन्ते परस्परविरोधाभावात् । तथा च 'लः कर्मणि-२९०६' इत्यत्र ल इति बहुवचननिर्देशेन सर्वलकाराणां संग्रहाल्लिङादीनामपि कर्त्रादयोऽर्था भवेयुः । किञ्च, कर्त्रादयोऽपि निरवकाशाः । न च लडादयोऽवकाशाः, न्यायसाम्येन विध्यादिवद्वर्तमानत्वभूतत्वादेरपि तत्तल्लकारवाच्यत्वात् । न चैवं पचतीत्यादौ धात्वर्थं प्रति वर्तमानत्वादेः प्रत्ययार्थतया विशेष्यत्वं स्यात् । तथा चैककर्तृका वर्तमाना पचिक्रियेत्यादिशाब्दबोधवर्णनमयुक्तं स्यादिति वाच्यम्, प्रत्ययार्थतया विशेष्यत्वापादनस्य कर्त्रादावपि तुल्यत्वात् । ननु प्रत्ययार्थः प्रधानं प्रकृत्यर्थो विशेषणमित्यौत्सर्गिकमाख्याते त्यज्यते[7] 'भावप्रधानमाख्यातम्' इति सिद्धान्तानुरोधादिति चेत्तर्हि तत एव नोक्तदोष इति दिक् ॥ **प्रवर्तनायामिति** । प्रवर्तनात्वस्य विध्यादिषु चतुर्ष्वनुस्यूतत्वादिति भावः ॥ अत्र वदन्ति—प्रवृत्तिः प्रवर्तना चोभयमपि व्यापारः, स च धात्वर्थः, फलव्यापारयोर्धातुवाच्यत्वस्वीकारात् । तदाश्रयस्तु लकारार्थः, व्यापारत्वेन प्रवर्तनाया धात्वर्थत्वेऽपि ( प्रवृत्तत्वात् ) प्रवर्तना तु लिङ्त्वादिरूपेण लकारवाच्या द्योत्या चेति पक्षद्वयम् । प्रवृत्तिः पुरुषनिष्ठा आर्थी भावनेत्युच्यते । प्रवर्तना तु विधिः, मां प्रेरयतीत्यनुभवाल्लिङादिनिष्ठा शाब्दी भावनेत्युच्यते । वेद एव लिङादिनिष्ठा वक्तुरभावात्, लोके तु पुरुषनिष्ठेति केचिदभ्युपगच्छन्ति । प्रवर्तनाया अस्याः पुरुषप्रवृत्तिरेव भाव्या । पुरुषप्रवृत्तेस्तु यजनदानादि भाव्यम् । एवं च—धातूपात्तव्यापारस्य विषयविषयिभावेन द्वेधाऽन्वये तात्पर्यग्राहका लिङादय इति द्योतकतापक्ष एव ज्यायान् । लिङ्त्वादिरूपेण लकारस्य प्रवर्तनायां शक्त्यन्तरकल्पने गौरवात् । एवं णिच्यपि । इयांस्तु विशेषः—णिच्प्रत्ययद्योत्या प्रेरणा सर्वस्मिन्नपि मते पुरुषादिनिष्ठैव न तु णिज्निष्ठा, लिङादिद्योत्या तु मतभेदेन लिङ्निष्ठा वा पुरुषनिष्ठा वेति । स्यादेतत्, लिङादिद्योत्या प्रवर्तना लोके पुरुषनिष्ठेति मते पाचयत्योदनं देवदत्तेन यज्ञदत्त इतिवत् पचेदोदनं देवदत्तेन यज्ञदत्त इति प्रयोगः स्यात् । प्रवृत्त्याश्रयः प्रवर्तनाश्रयश्च लकारेणोक्त इति कर्तरि तृतीया न भवति किन्तु प्रथमैवेति चेत् । तर्हि ओदनं देवदत्तो यज्ञदत्तः पचेदिति प्रयोगः स्यात् । अत्राहुः—पुरुषनिष्ठेति मते प्रवर्तना लिङादिवाच्यैव, न तु धातुवाच्या । तथा च लिङुपात्तव्यापाराश्रयस्य पुरुषस्य कर्तृत्वाभावान्नोक्तदोषः । देवदत्तेन पाचयति यज्ञदत्त इत्यादौ तु

---

१ **इकारोच्चारणसामर्थ्यादिति** । अन्यथा प्रक्रियालाघवाय हुनू एव विदध्यादिति भावः ॥ २ **भवानीति** । लङ्वद्भावात् प्राप्तमपि 'इतश्च' इति न प्रवर्तते, 'मो नः' इति वक्तव्ये 'मेर्निः' इति सूत्रणात् । एवं हेरपि, अन्यथा 'सो–ह इत्येव वदेदिति बोध्यम् । न च 'मो नः' इति न्यासे भवाम इत्यत्र मसो मकारस्यापि नः स्यादिति वाच्यम्, 'एरुः' इत्यत एरित्यस्यानुवृत्त्या तस्य लोड्विशेषणत्वेनेवर्णान्तस्य लोटो मस्य न इत्यर्थेनादोषात् ॥ ३ । 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति न्यायस्तु 'ज्ञापकसिद्धं न सर्वत्र' इति न्यायेनानित्यत्वान्न—इति शेखरकृत् ॥ ४ **लकारान्तर इति** । लडादिष्वित्यर्थः । कालस्तु द्योत्य एवेति भावः ॥ ५ **शबादयश्चेति** । कर्त्रर्थसार्वधातुके परे तद्विधानादिति भावः ॥ ६ **पुरुषेति** । युष्मदादेस्तिङ्वाच्यकारकवाचित्वरूपसामानाधिकरण्याभावादिति भावः ॥ ७ वस्तुतस्तु तिङां द्योतकत्वेन 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तत्र प्रत्ययार्थः प्रधानम्' इति व्युत्पत्तेः 'ब्रूतः' इत्युपादानेन वाचकत्वविषय एव प्रत्ययानां प्रवृत्त्यङ्गीकारेण प्रकृतेऽप्रवृत्तेरेव प्राप्त्या 'त्यज्यते' इति व्यर्थमेव ॥

यासुट् परस्मैपदेषूदात्तो ङिच्च । ३ । ४ । १०३ । लिङः परस्मैपदानां यासुडागमः स्यात्स चोदात्तो ङिच्च। ङित्वो-क्तेर्ज्ञायते 'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेधः' इति । श्नादेशस्य शानचः शित्त्वमपीह लिङ्गम् ॥ ( २९६५ ) (सू॰) सुट् तिथोः । ३ । ४ । १०७ । लिङस्तकारथकारयोः सुट् स्यात् । सुटा यासुट् न बाध्यते, लिङो यासुट्, तका-रथकारयोः सुडिति विषयभेदात् ॥ ( २९६६ ) (सू॰) लिङः स लोपोऽनन्त्यस्य । ७ । २ । ७९ । सार्वधातुकलि-ङोऽनन्त्यस्य सस्य लोपः स्यात् । इति सकारद्वयस्यापि निवृत्तिः । सुटः श्रवणं त्वाशीर्लिङि । स्फुटतरं तु तत्रात्मने-पदे ॥ ( २९६७ ) (सू॰) अतो येयः । ७ । २ । ८० । अतः परस्य सार्वधातुकावयवस्य या इत्यस्य इय् स्यात् । गुणः । यँल्लोपः । भवेत् । सार्वधातुके किम् । चिकीर्ष्यात् । मध्येऽपवादन्यायेन हि अतो लोप एवं बाध्येत । भवेदि-त्यादौ तु परत्वाद्दीर्घः स्यात् । भवेताम् ॥ ( २९६८ ) (सू॰) झेर्जुस् । ३ । ४ । १०८ । लिङो झेर्जुस् स्यात् । ज इत् ॥ ( २९६९ ) (सू॰) उस्यपदान्तात् । ६ । १ । ९६ । अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात् । इति प्राप्ते— परत्वान्नित्यत्वाच्चातो येय इति प्राञ्चः । यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यं, तथापि यास् इत्येतस्य इय् इति व्याख्ये-यम् । एवं च सलोपस्यापवाद इय् । अतो येयँ इत्यत्र तु सन्धिरार्षः । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ॥ ( २९७० ) (सू॰) लिङाशिषि । ३ । ४ । ११६ । आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ॥ ( २९७१ ) (सू॰) किदाशिषि । ३ । ४ । १०४ । आशिषि लिङो यासुट् कित्स्यात् । स्कोरिति सलोपः ॥ ( २९७२ ) (सू॰)

---

णिजन्तस्य धातुत्वाद्धातूपात्तव्यापाराश्रयत्वेन प्रयोज्यप्रयोजकयोरुभयोरपि कर्तृत्वाल्लकारेणाऽनुक्ते प्रयोज्ये कर्तरि तृतीयेति वैष-म्यमिति । कौस्तुभादौ तु 'हेतुमति च ' इति सूत्रे प्रयोजकव्यापारस्य णिज्वाच्यत्वपक्ष एव मुख्यत्वेन स्थापितः । व्यापारद्वय-स्यापि णिच्प्रकृत्यर्थत्वे त्वभीत्यस्य णिजर्थविशेष्यकत्वे अभिसावयति, प्रकृत्यर्थविशेष्यकत्वे तु ' उपसर्गात्सुनोति–३०३७ ' इति षत्वमभिषावयतीति सिद्धान्तस्य स्वारस्यभङ्गापत्तेरिति । तथा–'गतिबुद्धि–७७९'इति सूत्रेऽणि कर्तेति विशेषणमव्यावर्तकं स्यात् । त्वन्मते प्रयोजकव्यापारस्यापि णिच्प्रकृत्यर्थत्वेन प्रयोजकस्याप्यणौ कर्तृत्वामिति दिक् ॥ प्रार्थनं याच्ञा ॥ (२९६४) **क्वचिदिति** । ज्ञापनफलं तु वक्ष्यमाणेत्यादौ टिदुगिल्लक्षणङीबभाव इति 'टिड्ढा–६५१'इति सूत्र एवोक्तम् । रुयादित्यादौ'उतो वृद्धिर्लुकि हलि ३२५२' इति न प्रवर्तते, भाष्ये 'पिच्च ङिन्न ङिच्च पिन्न' इति व्याख्यानाद्विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधा-दित्यदादौ वक्ष्यमाणतया यासुटो ङित्त्वं न ज्ञापकमित्यपरितोषादाह— **श्नःशानचः शित्त्वमिति** ॥ (२९६५) **सुट् तिथोः** । तकारादिकार उच्चारणार्थः ॥ ( २९६६ ) **लिङः स लोपो**—। ' रुदादिभ्यः–३२८८' इति सूत्रात्सार्वधातुक इत्यनुवर्तते, सेति लुप्तषष्ठीकमनन्त्यस्येत्यनेन विशेष्यते तदाह—**सार्वधातुकलिङोऽनन्त्यस्येति** ॥ **सकारद्वयस्यापीति** । अवे-यवावयवोऽपि समुदायं प्रत्यवयव इत्याश्रयणात्सुटोऽपि लिङ्भक्तत्वादिति भावः॥ **आशीर्लिङीति** । भूयास्तामित्यादौ । ननु सुटि कृते 'अनचि च ७५' इति द्वित्वस्यासिद्धत्वात्ततः प्रागेव 'स्कोः–५१६' इति यासुटः सकारो लुप्यते, झलि परे यः संयो-गस्तदादित्वात् । तथा चैकसकारकं रूपं तुल्यम् । सुडभावे यासुटः सकारस्य द्वित्वे कृते तु सुटि ' स्कोः–५१६ ' इति सलो-पात्सुट एव सकारस्य द्वित्वे च द्विसकारकमपि रूपं तुल्यमेवेति सुटो विधानं व्यर्थमित्यपरितोषादाह—**स्फुटतरं त्विति** । एधि-षीष्टेत्यादाविति भावः ॥ ( २९६७ ) **मध्येऽपवादन्यायेनेति** । 'रुदादिभ्यः–३२८८ इति सूत्रात्सार्वधातुक इत्यननुवृत्ता-वयं न्यायः प्रवर्तत इति भावः ॥ ( २९६९ ) **अन्तरङ्गत्वादिति** । प्रत्ययमात्रापेक्षत्वात्, ' अतो येयः २९६८' इत्यस्य त्वाङ्गत्वात्प्रकृतिप्रत्ययोभयसापेक्षत्वेन बहिरङ्गत्वादिति भावः । नन्वपदान्ताकारस्य जुसश्चाश्रयणात्पररूपस्याप्युभयसापेक्षत्वम-स्त्येवेति चेत् । मैवम्, अनेकाश्रयणेऽपि प्रत्ययमात्राश्रयतया प्रकृतेरनाश्रयणात् ॥ **व्याख्येयमिति** । एतच्च विप्रतिषेधसूत्रे भाष्ये स्पष्टम् ॥ ( २९७० ) **आर्धधातुकसंज्ञ इति** । ' लङः शाकटायनस्यैव ३२७६ ' इत्यत एवकारोऽनुवर्तनीयः । अन्यथा एकसंज्ञाधिकारबहिर्भूतत्वेन सार्वधातुकसंज्ञाऽपि स्यात्ततश्च पक्षे शबादिः स्यात् ॥ ( २९७१ ) **किदाशिषि** । ङित्वे-नैव गुणवृद्धिप्रतिषेधे सिद्धे किद्वचनमिज्यादित्यादौ संप्रसारणार्थं जागर्यादित्यत्र गुणार्थं च । जागर्तेर्गुणो हि ङिति पर्युदस्यते,

---

१ आत्मनेपदे सुटश्चारितार्थ्येऽपि परत्वाद् बाधः कुतो नेत्याशङ्क्याह–**सुटा यासुड् नेति** । तत्र हेतुमाह–**विषयभे-दादिति** । एवं च यौगपद्यासंभवरूपविप्रतिषेधाभावात् परत्वेन बाधो नेति भावः । 'विरोधे हि बलीयसा दुर्बलं बाध्यते ' न चेहास्ति कश्चिद् विरोधो भिन्नविषयत्वादिति निष्कर्षः ॥ २ **यल्लोप इति**। न च यल्लोपे कर्तव्ये संज्ञासापेक्षस्येयो बहिरङ्गतया-ऽसिद्धत्वमिति वाच्यम्, परिभाषायामङ्गशब्देन शब्दरूपस्य सप्तम्याद्यन्तोपात्तस्य निमित्तस्यैव ग्रहणम्, न तु संज्ञाया आर्थस्य चेत्यदोषात् । एवं चेयोऽपरनिमित्तकत्वेनान्तरङ्गत्वमिति शेखरकृत् ॥ ३ **परत्वादिति** । भवेदित्यादौ ' अतो येय ' इत्यस्य चारितार्थ्यम्, अपुरित्यादौ च पररूपविधायकस्येति भावः ॥ ४ **नित्यत्वाच्चेति** । ननु पररूपे कृते चेदियादेशस्य प्राप्तिस्त-दाऽस्य नित्यत्वं शक्यते वक्तुम्, सैव तु कथमिति चेद्–एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणादिति गृहाण ॥ ५ **अवयवावयवो-ऽपीति** । अङ्गुल्यादिवदिति भावः ॥ ६ **लिङ्भक्तत्वादिति**–लक्ष्यभेदाच्च शास्त्रस्य पुनः प्रवृत्तिरिति भावः ॥

क्क्ङिति च । १ । १ । ५ । गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ॥ ( २९७३ ) (सू) **लुङ्** । ३ । २ । ११० । भूतार्थवृत्तेर्धातो- र्लुङ् स्यात् ॥ ( २९७४ ) (सू) **माङि लुङ्** । ३ । ३ । १७५ । सर्वलकारापवादः ॥ (२९७५) (सू) **स्मोत्तरे लङ् च** । ३ । ३ । १७६ । स्मोत्तरे माङि लङ् स्याल्लुङ् च ॥ ( १९७६ ) (सू) **च्लि लुङि** । ३ । १ । ४३ । शबाद्यप- वादः ॥ ( २९७७ ) (सू) **च्लेः सिच्** । ३ । १ । ४४ । इचावितौ ॥ ( २९७८ ) (सू) **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु** । २ । ४ । ७७ । एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ॥ ( २९७९ ) (सू) **भूसु- वोस्तिङि** । ७ । ३ । ८८ । भू सू एतयोः सार्वधातुके तिङि परे गुणो न स्यात् ॥ ( २९८० ) (सू) **अस्तिसिचो-**

---

ङित्त्वं चेह विशेषविहितेन कित्त्वेन बाध्यते ॥ **सलोप इति** । झल्परसंयोगादित्वेन यासुटः सस्य लोपः सुटस्तु पदान्तसंयो- गादित्वेनेति भाव इति मनोरमायां स्थितं, तदसंबद्धमिति मत्वाऽत्र निष्कर्षमाहुः—भूयास्तां भूयास्तं भूयास्तेत्यत्र झल्परसंयो- गादित्वेन यासुटः सस्य लोपः, भूयादित्यत्र तु सुट इव यासुटोऽपि सस्य लोपः पदान्तसंयोगादित्वेनैव, अन्यथा झल्परसंयो- गादिलोपस्यासिद्धत्वात्संयोगान्तलोप एव स्यात् । मृष्ट इत्यादौ सावकाशस्य झल्परसंयोगादिलोपस्य संयोगादिलोपाबाधकत्वा- दिति ॥ **(२९७२) ङिन्निमित्ते इति** । 'गिति किति ङिति परे इको गुणवृद्धी न स्तः' इति न व्याख्यातम्, छिन्नं भिन्न- मित्यत्र लघूपधगुणस्यानिषेधप्रसङ्गात् । न चारम्भसामर्थ्यं शङ्क्यम्, चितं स्तुतमित्यादावव्यवहिते किति चरितार्थत्वादिति भावः । अन्ये तु—क्ङितीति प्रत्ययग्रहणात् प्रत्ययेन संनिधापितस्याङ्गस्य क्ङिति पर इति व्याख्याने तु छिन्नं भिन्नमित्यादि सिध्यत्येव । न चैवं भवावः भवाम इत्यादावतिप्रसङ्ग इति वाच्यम्, अन्तरङ्गगुणं प्रति बहिरङ्गनिषेधस्याप्रवृत्तेरित्याहुः ॥ 'क्क्ङिति च २९७२' इति सूत्रे चर्त्वेन गकारोऽपि प्रश्लिष्यत[1] इत्याशयेन गित्किन्ङिन्निमित्त इत्युक्तम् । गिति किम्, 'ग्लाजिस्थश्च ग्स्नुः ४१३९' जिष्णुः । किति त्वस्मिन्स्थास्नुरित्यत्र 'घुमास्था—३२७४' इतीत्वं प्रसज्येत । न च स्नोर्गित्त्वे भूष्णुरित्यत्रेण्निषेधो न स्यात् 'ग्लाजिस्थश्च—४१३९' इति चकाराद्भुवश्च ग्स्नुर्भवतीति स्वीकारादिति वाच्यम्, 'श्र्युकः क्किति ३१७४' इत्यत्रापि चर्त्वेन गकारं प्रश्लिष्य गित्कितोरिण्न स्यादिति व्याख्यानात् । न चैवं चर्त्वस्यासिद्धतया 'श्र्युकः—३१७४' इत्यत्र विसर्जनीयो न लभ्यत इति 'हशि च २४६' इत्युत्वमेव स्यादिति वाच्यम्, सौत्रत्वात्, 'न मु ने ५८९' इत्यत्र नेति योगविभागेनासिद्धत्वा- भावादिष्टसिद्धेः । वामनस्तु[2]—'ग्लाजिस्थ—४१३९' इति सूत्रे स्था आ इति प्रश्लेषात्स्थास्नुरित्यत्र 'घुमास्था—३२७४' इतीत्वं न भविष्यतीति गकारप्रश्लेषाभावान्न 'श्र्युकः क्किति ३१७४' इत्यत्र चर्त्वस्यासिद्धत्वाभावसमर्थनक्लेश इत्याह ॥ **इग्लक्षणे इति** । इक इत्येवं विहिते इत्यर्थः । इग्लक्षणे किम्, लैगवायनः । लिगोर्नडादित्वात्फक् । इहादिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानि- कत्वेऽपि न निषेधः । न चेक इत्युक्तेऽपि 'क्ङिति च १५३८' इत्यारम्भसामर्थ्यादत्र निषेधो न भवेदिति शङ्क्यम्, नाडायनादौ तस्य चरितार्थत्वात् ॥ **भूयादिति** । इह 'स्कोरिति[३१६] लोपस्यासिद्धत्वात्तकारस्य संयोगान्तलोपः प्राप्तः पदान्तसंयोगादिलोपे- नानवकाशेन बाध्यते । नन्वेवमपि संयोगादिलोपस्य 'पूर्वत्रासिद्धम् २५' इत्यसिद्धत्वाद्धल्ङ्याब्भ्यो[२५६]दिलोपः स्यात्, पदान्ते संयोगा- दिलोपस्य मृट् मृडित्यादौ सावकाशत्वादिति चेत् । अत्राहुः—सुड्यासुटोः सतोस्ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनापृक्तत्वाभावात्, हलन्तायाः प्रकृतेः परत्वाभावाच्चोक्तदोषशङ्कैव नास्तीति ॥ ( २९७४ ) **सर्वलकारापवाद इति** । माऽस्त्वित्यादौ निषेधा- र्थकमाशब्दोऽन्य एव न तु माङित्याहुः[3] ॥ ( २९७६ ) **च्लि लुङि** । इकार उच्चारणार्थ इति मनोरमा । न च 'मन्त्रे घस— ५९२२' इति सूत्रे लेरिति स्थाने ल इत्युच्यमाने च्लिभिन्नस्यापि लकारस्य लुक् स्यादिति शङ्क्यम्, 'गातिस्था—२९७८' इति सूत्रात्सिच इत्यनुवर्त्य सिच्स्थानिनः स्थान्यर्हस्य लस्य लुगिति व्याख्यायामतिप्रसङ्गाभावाद्विभाषानुवृत्तेर्लुको वैकल्पिकतया छन्दसि रूपान्तरस्यानापाद्यतया च सिजनुवृत्तिं विनाऽपि नातिप्रसङ्ग इत्याहुः ॥ **शबाद्यपवाद इति** । आदिशब्दात्तत्तद्गण- प्रयुक्तानां श्यन्नादीनां ग्रहणम् ॥ ( २९७७ ) **इचाविताविति** । तत्रेदित्त्वे प्रयोजनममंस्तेत्यत्र 'अनिदिताम्—५५७' इत्यु- पधालोपाभावः[4] ॥ ( २९७८ ) **गातिस्था—** । इह व्यवहितोऽपि लुगनुवर्तते न तु श्लुः, व्याख्यानादित्याशयेनाह—**लुगिति** ॥ **गापाविति** । गातीति श्तिपा विकरणशून्यस्य निर्देशाल्लुग्विकरण इणादेशो गृह्यते, 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्' इति परिभाषया पिबतिर्गृह्यते न तु पातिरित्यर्थः ॥ ( २९७९ ) **भूसुवोः—** । 'षूङ् प्राणिगर्भविमोचने'

---

१ **गकारोऽपि प्रश्लिष्यत इति** । ककारात्पूर्वमिति शेषः ॥ २ **वामन इति** । इयं रीतिः 'ग्लाजि—' इति सूत्रस्थ- भाष्यविरुद्धा, यथासंख्यसूत्रभाष्यविरुद्धा च ॥ ३ 'माङो विशिष्टस्य ग्रहणं प्रतिषेधार्थकसंप्रत्ययार्थम्, इह मा भूत् प्रमाच्छन्दः' इति 'आङ्माङोश्च' इति सूत्रस्थभाष्येण तदभावबोधनाच्चिन्त्यमेवेति शेखरकृत् ॥ ४ **उपधालोपाभाव इति—** । नुमः प्रवृत्तिस्तु न, 'गोः पादान्ते' इत्यतोऽन्त इत्यनुवर्त्य 'इदितः' इत्यस्य कर्मधारयत्वे विशेषणत्वे स्वीकृत्य वा 'अन्तेदित' इति व्याख्यानात् । वस्तुतस्तु सिच्तासावनिदितौ वक्तुं शक्यौ । अमंस्तेत्यादौ नलोपप्रवृत्तिस्तु 'हनः सिच्' इति कित्त्ववि- धानाज्ज्ञापकाद् वारयितुं शक्या ॥

ऽपृक्ते । ७ । ३ । ९६ । सिच् अस् चेति समाहारद्वन्द्वः । सिच्छब्दस्य सौत्रं भत्वम् । अस्तीत्यव्ययेन कर्मधारयः । ततः पञ्चम्याः सौत्रो लुक् । विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तहल ईडागमः स्यात् । इतीट् न, इह सिचो लुप्तत्वात् । अभूत् । हलः किम् । ऐधिषि । अपृक्तस्येति किम् । ऐधिष्ट । अभूताम् ॥ ( २९८१ ) सिजभ्यस्तविदिभ्यश्च । ३ । ४ । १०९ । सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् स्यात् । इति प्राप्ते-॥ ( २९८२ ) आतः । ३ । ४ । ११० । सिज्लुक्यादन्तादेव झेर्जुस् स्यात् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव ।

---

इत्यादादिकस्येह ग्रहणम्, सुवतिसूयत्योस्तु न ग्रहणं,तिङो विकरणेन व्यवधानात् ॥ (२९८०) **अस्तिसिचोऽपृक्ते** । अत्र प्राञ्चः—अस्तिश्च सिचेति समाहारद्वन्द्वे अस्तिसिच् तस्मादिति विग्रहं मत्वा अस्तेः सिचश्च परस्येति व्याचख्युः । तच्चिन्त्यम् , तत्र समासान्तस्यानित्यत्वाश्रयेण ‘ द्वन्द्वाच्चुदषहान्तात्–१३३४ ’ इति प्राप्तस्य टचः परिहारेऽपि ‘समुद्राभ्राद्घः ५३०२’ इति निर्देशात् ‘अल्पाच्तरम् १२९९’ इत्येतदनित्यमित्याश्रित्य सिच्छब्दस्य परत्वसमर्थनेऽपि ‘अस्तेर्भूः ३२८३’ इति भूभावस्य स्थानिवत्त्वेनास्तितया तत्रापृक्तस्य हल ईडागमस्य दुर्वारत्वात्, तथा गातिस्थाघुपाभूभ्यः सिचो लुक्यपि स्थानिवद्भावेन सिचः परत्वानपायादगादस्थादभूदित्यादावतिप्रसङ्गाच्च । तदेतद्ध्वनयन्व्याचष्टे—**सिच् अस् चेति** ॥ **सौत्रं भत्वमिति** । तेनात्र कुत्वजश्त्वे न भवत इति भावः ॥ **विद्यमानादिति** । सिचोऽस्तेश्च विद्यमानविशेषणेन लुप्तात्सिचः कृतभूभावादस्तेश्च नेति भावः । भाष्यकारास्त्वाहुः—‘ अस्तिसिचोऽपृक्ते ’ इति द्विसकारकोऽयं निर्देश इति । अत्र माधवः—अस् स् इति समुदायस्याधातुतया ‘इक्श्तिपौ धातुनिर्देशे ५०९५ ’ इति श्तिप् प्रत्ययो न स्यादिति । अत्र वदन्ति—द्विसकारकनिर्देशे श्तिप् न स्यादिति यदुक्तं तद्भ्रमसोक्तिमात्रम् । इत्थं हि भाष्याशयः—सिच इत्यस्यानन्तरं सकारः प्रश्लिष्यते, न तु श्तिपः प्राक् । अत एव ‘ सिचोऽपृक्ते ’ इति द्विसकारकोऽयं निर्देश इत्युक्तं भाष्ये । अन्यथा अस्तीति निर्देशो द्विसकारक इत्येव ब्रूयात्, एवं च सान्तादस्तेः सान्तात्सिच इति चार्थो निर्बाध एव । द्वितीयश्च सकारो लुप्यते ‘संयोगान्तस्य पदान्तस्य’ इति व्याख्यानात् व्यपदेशिवद्भावेन पदान्तत्वाद् द्वितीयसकारस्य । न च संयोगान्तलोपस्यासिद्धत्वात् ‘अतो रोः–२४३’ इत्युत्वं दुर्लभमिति वाच्यम्, ‘संयोगान्तलोपो रोरुत्वे’ इति वार्तिकेनासिद्धत्वनिषेधात् । संयोगान्तं यत्पदमिति व्याख्याने तु नेह संयोगान्तलोपः, किन्तु सकारद्वयस्यापि रुत्वे कृते ‘अतो रोः–२४३’ इत्यनेनैक एवोकारो भविष्यति, विधेयविशेषणस्यैकत्वस्य पश्वेकत्ववद्विवक्षितत्वात् । न च स्थानिभेदेन उकारद्वये सत्यपि न क्षतिः, सवर्णदीर्घानन्तरमाद्गुणे[4] सति समीहितरूपसिद्धेरिति वाच्यम्, एकपदाश्रयत्वेनान्तरङ्गत्वादाद्गुणे पश्चादवादेशप्रवृत्त्या ‘अस्तिसिचोऽपृक्ते’ इति रूपासिद्धेः, तस्मादुक्तरीत्या एक एवोकार इति स्वीकर्तव्यम् । अत एव विधेयगतैकत्वस्य विवक्षितत्वात् ‘एकः पूर्वपरयोः १०४’ इत्यत्रैकग्रहणं भाष्यादौ प्रत्याख्यातम् । नन्वति परे यो रुः स त्वतः परो न भवति, अतः परस्तु अतिपूर्वो न भवतीति रुद्वयस्थाने कथमुकारः स्यात् । मैवम्, ‘रोः’ इति जातिपरनिर्देशेनातः परत्वस्य पूर्वत्वस्य च संभवात् । न चैवमपि परत्वात् ‘हशि च२४६’इति प्रथमस्यैव रोरुः स्यादिति वाच्यम्, रुत्वस्यासिद्धतया हश्परत्वाभावात् । न चाश्रयासिद्धत्वमिति वाच्यम्, स्थान्यंशे तथात्वेऽपि निमित्तभूतहशंशे तदसंभवात् । यद्यपि सत्वजातेरेकत्वादुभयोरपि एक एव रुर्भवतीति व्याख्यायां नायं क्लेशस्तथापि रुत्वविधौ पदस्येत्यनुवर्तनादेकपदान्तत्वं न संभवति, द्वितीयसकारस्य पृथक्पदत्वादित्याहुः ॥ **अपृक्तहल इति** । अपृक्तसार्वधातुकस्येति प्राचोक्तं त्वयुक्तम्, ऐधिषि इत्यादावतिव्याप्तेः, सार्वधातुकग्रहणव्यावर्त्यालाभाच्च ॥ ( २९८२ ) **आतः** । सिज्ग्रहणमनुवर्तते, ‘झेर्जुस् २९६८’ इति च । सिच आकाराच्च परस्य झेर्जुस् । तत्र प्रत्ययलक्षणेन सिचः परत्वम्, आकारात्तु श्रुत्या । एवं स्थिते फलितमाह—**सिज्लुकीति** । ‘गातिस्था–२९७८’ इति सूत्रेणेत्यर्थः ।‘सिजभ्यस्त–२९८१’

---

१ भाष्यकृता प्रत्याख्यातेन ‘आहिभुवोरीट्प्रतिषेधः’ इति वार्तिकेनाऽत्रेटं वारयन्तो वेदाङ्गप्रकाशकर्तारो भाष्यमर्माऽनभिज्ञा एव, भाष्ये स्थानिवद्भावदूषणप्रकरणेऽस्य वार्तिकस्य पाठादादादिकेऽस्त्यादेशभूधातावेव स्थानिवद्भावेनास्तित्वात्प्राप्तस्येटो वारणायैव तद्वार्तिकवचनात् । सिज्निमित्तकवारणाय तदारम्भे तु ‘अगात् अपात्’ इत्यादावीटो दुर्वारत्वाऽऽपत्तेर्भाष्योक्तस्य विद्यमानादित्यर्थकसकारान्तादिति सिचो विशेषणस्यैवावश्यमङ्गीकारः करणीय आत्थ इत्यत्र दीक्षितोक्तेरेव स्वयमप्यङ्गीकृतत्वाद् ॥ ‘अभूत्’ इत्यत्र दीक्षितोपन्यस्तभाष्योक्तप्रत्याख्यानरीत्यनङ्गीकारः, ‘आत्थ’ इत्यत्र दीक्षितोपन्यस्तभाष्योक्तप्रत्याख्यानरीत्यङ्गीकार इत्यर्धजरतीयत्वाद्धेयैव वेदाङ्गप्रकाशरीतिरिति दिक् ॥ २ **इति प्राप्त इति** । प्रत्ययलक्षणेन च सिच्त्वनिमित्ता प्राप्तिरिति भावः ॥ ३ **व्यवधानादिति** । ननु यङ्लुकि विकरणस्य लुकाऽपहारेण व्यवधानाभावात्तयोर्ग्रहणं दुर्वारमिति चेन्न, यङ्लुकश्छान्दसत्वात् छन्दसि च दृष्टानुविधेः । तस्मात्साहचर्येण दीर्घान्तस्य षूङोऽदादेर्ग्रहणमिति भावः । ‘अभूत्’ इत्यत्र तु सिचो लुकि जाते ‘सार्वधातुका–’ इति प्राप्तस्य तिब्निमित्तकगुणस्य ॥ ४ ‘प्राश्लिष्टानिर्दिष्टः लुप्तनिर्दिष्टः’ इत्यनुक्त्वा ‘द्विसकारकोऽयं निर्देशः ’ इति वदतो भाष्यकृतः अस्स्तिसिचः इत्येव सूत्रपाठः संमतः इति लघुसिद्धान्तकौमुदीव्याख्याने महाभाष्यटिप्पण्यां च प्रपञ्चितम् ॥ ५ तत्र तु ‘पूर्वपरयोः ’ इत्येतत्सामर्थ्याद् द्वयोरेकादेशोऽपि प्रकृते स्थानिभेदेनादेशद्वयवारणे युक्त्यन्तरमन्वेषणीयम् ॥

अभूम ॥ ( २९८३ ) न माङ्योगे । ६ । ४ । ७४ । अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् । भूद्वा ॥ ( २९८४ ) लिङ्निमित्ते लृङ् क्रियातिपत्तौ । ३ । ३ । १३९ । हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम ॥ ( २९८५ ) ते प्राग्धातोः । १ । ४ । ८० । ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥ ( २९८६ ) आनि लोट् । ८ । ४ । १६ । उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि ॥ ( २९८७ ) दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः ॥ दुःस्थितिः । दुर्भवानि ॥ ( २९८८ ) अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ॥ अन्तर्धा । अन्तार्धिः । अन्तर्भवाणि ॥ ( २९८९ ) शेषे विभाषाऽकखादावषान्त उपदेशे । ८ । ४ । १८ । उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात् । प्रणिभवति । प्रनिभवति । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्—

( २९९० ) संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ इति । सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य

---

इति पूर्वसूत्रेणैवादन्तादपि ( झेः जुसि ) सिद्धे नियमार्थोऽयमित्याह—आदन्तादेवेति ॥ ( २९८४ ) हेतुहेतुमद्भादीति । अत्र केचित्–आदिशब्देनाशंसावचनं गृह्यत इति व्याख्याय आशंसावचने लिङो यन्निमित्तं तत्रापि क्रियातिपत्तौ भविष्यति लृङ्, गुरुश्चेदायास्यत् आशंसेऽहमध्यैष्ये–इत्याद्युदाहरन्ति । अन्ये तु–'भविष्यति मर्यादा–३७२९' इत्यादिना भविष्यतीत्युपक्रम्य यो यो लिङ् विहितस्तन्निमित्त एव क्रियातिपत्तौ लृङ् भवति नान्यत्रेत्याहुः ॥ लिङ्निमित्तमिति । 'हेतुहेतुमतोर्लिङ् ३७४९', 'इच्छार्थेषु लिङ्लोटौ ३७५१' इत्यादि लकारार्थप्रक्रियायां स्फुटीभविष्यति ॥ अनिष्पत्ताविति । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यदिति तत्रैवोदाहरिष्यति ॥ ( २९८५ ) प्रागेवेति । न परतः, नापि व्यवहिता इत्यर्थः । अत एव 'छन्दसि परेऽपि ५२१६' 'व्यवहिताश्च ५२१७' इति सूत्रितम् ॥ ( २९८६ ) आनि लोट् । 'नि लोट्' इत्येव वक्तव्ये आनिग्रहणमागमशास्त्रस्यानित्यतां ज्ञापयितुम् । तेन 'सागरं तर्तुकामस्य' 'जह्वा स्तोत्रम्' इत्यादि सिध्यति । लोट्ग्रहणं स्पष्टप्रतिपत्त्यर्थम् । न च प्रकृष्टा वपा येषां तानि प्रवपानि मांसानीत्यत्राप्यनेन नित्यं णत्वं स्यादिति वाच्यम्, उपसर्गग्रहणादर्थवद्ग्रहणाच्चास्याप्रवृत्तेः । 'प्रातिपदिकान्त–१५१२' इति वैकल्पिकणत्वं त्विष्यत एव ॥ ( २९८७ ) दुरः षत्वेति । 'दुरः परस्य णत्वं नेति केचित्' इति प्राचोक्तं त्वयुक्तम् । एवं हि सिद्धान्ते णत्वं स्यात्, तच्चाकरविरुद्धमिति भावः ॥ ( २९८८ ) अन्तर्धेति । 'आतश्चोपसर्गे ५०८८' इत्यङ्, टाप् ॥ अन्तार्धिरिति । 'उपसर्गे घोः किः ५०६५' अन्तःशब्दस्याङ्विधावुपसर्गत्वमुपसंख्यायते तत्तु प्रकृतानुपयोगादुपेक्षितम् । भिदादिपाठेन 'प्रज्ञाश्रद्धा–२५७८' इति निपातनेन वा गतार्थत्वाच्च ॥ ( २९८९ ) शेषे विभाषा—। 'नेर्गदनद–३०५२' इति सूत्रोक्तापेक्षया शेष इत्याह—गदनदादेरन्यस्मिन्निति । उपदेशे किम्, प्रनिचकार प्रनिचखादेत्यत्रापि निषेधो यथा स्यात् । अषान्तेति किम्, प्रनिपिनष्टि । उपदेशग्रहणात् प्रनिपेक्ष्यति । चक्षिङः ख्याञ् । प्रनिचक्शे इत्यत्रापि निषेधः । शेषग्रहणं स्पष्टार्थम् । णत्वशास्त्रे संहितायामित्यधिकारात् संहितायामविवक्षितायां णत्वाभावः संहितायां तु णत्वमिति विकल्पसिद्धेः किमनेन विभाषाग्रहणेनेत्याशङ्का न कार्येत्याह–इहोपसर्गाणामित्यादि । ( २९९० ) एकपद इत्यनेनैव सिद्धे समासग्रहणं गोबलीवर्दन्यायेनेति बोध्यम् ॥ वाक्ये त्विति । सा संहिता विवक्षाधीना न त्वत्र नित्येत्यर्थः ॥ उपलक्षणमिति । एतच्च सत्ताद्यर्थनिर्देशं कृतवतो भीमसेनस्यापि संमतमित्यत्र 'कुर्द खुर्द गुर्द गुद क्रीडायामेव' इत्येवकारो ज्ञापकः । 'सेधतेर्गतौ ३०४५' इति सूत्रे गतावित्येतदपि 'षिध गत्याम्' इत्याद्यर्थनिर्देशस्योपलक्षणत्व एव घटते नान्यथेति दिक् ॥ उत्पद्यत इत्याद्यर्थादिति । एवं च उपसर्गं विना-

---

१ धातूपसर्गयोरिति । धातूपसर्गयोः समाहारस्यैव वाचकत्वेन तयोः पार्थक्यस्य नियतविषय एव कल्पनेन संसृष्टयोरैक्यमेव । तथा चोक्तम्—'अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् । धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ॥' इति ॥ २ नि लोडित्येवेति । आड्विशिष्टस्य तु 'यदागमा–' इति न्यायेन सिद्धिः । ननूपसर्गस्य नेर्ग्रहणं कुतो नेति चेन्न,–'नेर्गद–' इति सूत्रे पुनर्निग्रहणात् ॥ ३ अनित्यतां ज्ञापयितुमिति । इदं भाष्ये क्वापि न दृश्यत इति चिन्त्यमेतत्, तर्तुकामस्येत्यादेश्चासाधुत्वमेव, भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे मानाभावात् । किञ्च, ज्ञापितेऽप्यानीत्यस्य न सार्थक्यम्, आडागमशून्यप्रयोगस्याप्रसिद्धेः, आग्रहणं तु लोड्ग्रहणवत्–इति बोध्यम् ॥ ४ स्पष्टप्रतिपत्त्यर्थमिति । न च लोड्ग्रहणाभावे निरसमेतां नयाति तत्कुलं निरानि इत्यादौ णत्वं स्यादिति वाच्यम्–, 'प्रत्ययाप्रत्यययोः' इति परिभाषया प्रत्ययस्यैव ग्रहणेनादोषात् ॥ ५ एकपद इति । एकपदशब्देन अखण्डपदं गृह्यते, अखण्डत्वञ्च पदत्वाभाववदुत्तरखण्डत्वम् । पदत्वाभाववान् उत्तरखण्डो यस्य तत्त्वमिति चास्यार्थः । अत एव समासग्रहणं चरितार्थम् । अन्यथा 'एकपदे' इत्यनेनैव सिद्धे समासग्रहणं निष्फलं स्यात् । गोबलीवर्दन्यायेनेत्युक्तिस्तु हेयैव, निरुक्तलक्षणस्य राजीयतीत्यादिसिद्धय आवश्यकत्वात् । अन्यथा तत्र पक्षे शवेकादेशोऽपि न स्यात् । अत एव च अग्रेअग्रे इत्यादौ पदद्वित्वे संहिता अनित्यैवेत्यलम् ॥

द्योतकाः । प्रभवति । पराभवति । संभवति । अनुभवति । अभिभवति । उद्भवति । परिभवतीत्यादौ विलक्षणार्थावगतेः । उक्तं च-(२९९१) उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते । प्रहाराहारसंहारविहारपरिहारवत् ॥ १ ॥ इति ॥

एधँ वृद्धौ । कत्थन्ताः षट्त्रिंशदनुदात्तेतः ॥ ( २९९२ ) टित आत्मनेपदानां टेरे । ३ । ४ । ७९ । टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । एधते ॥ ( २९९३ ) सार्वधातुकमपित् । १ । २ । ४ । अपित्सार्वधातुकं ङिद्वत्स्यात् ॥ ( २९९४ ) आतो ङितः । ७ । २ । ८१ । अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ॥ ( २९९५ ) थासः से । ३ । ४ । ८० । टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । अतो गुणे-एधे । एधावहे । एधामहे ॥ (२९९६) इजादेश्च गुरुमतोऽनृच्छः । ३ । १ । ३६ । इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि । आमो मकारस्य नेत्त्वम्, आस्कासोराम्विधानाज्ज्ञापकात् ॥ ( २९९७ ) आमः । २ । ४ । ८१ । आमः परस्य लुक् स्यात् ॥ ( २९९८ ) कृञ्चानुप्रयुज्यते लिटि । ३ । १ । ४० । आमन्ता-

---

प्युत्पत्त्यर्थप्रतीतेरुद्भवतीत्यादौ प्रयुज्यमानोऽप्युपसर्गो द्योतक एव न तु वाचक इति भावः ॥ (२९९१) **उपसर्गेण धात्वर्थ इति** । अत एवाऽमरेणाप्युक्तम्--"स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः । अनुलापो मुहुर्भाषा विलापः परिदेवनम् ॥ विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः । सुप्रलापः सुवचनमपलापस्तु निह्नवः" इति ॥ ( २९९२ ) **टित आत्मने-** । ननु शानचोऽपि लस्थानिकात्मनेपदत्वात्पचमानो यजमान इत्यत्र टेरेत्वेन भवितव्यमिति चेत् । अत्राहुः-प्रकृतेस्तिबादिभिरात्मनेपदानां विशेषणान्न दोषः । एवं च 'टितस्तङां टेरे' इत्येव वक्तुमुचितमिति ॥ ( २९९५ ) **थासः से** । एकारोच्चारणं ज्ञापनार्थमिति 'लिटस्तझयोः-३०००' इत्यत्र स्फुटीभविष्यति ॥ **अतो गुण इति** । इट एत्वे कृते आद्गुणं बाधित्वा वृद्धौ प्राप्तायामनेन पररूपमित्यर्थः ॥ ( २९९६ ) **इजादेश्च-** । 'धातोरेकाचः-३४९४' इत्यतो धातुग्रहणं, 'कास्प्रत्ययात्-३०७९' इत्यत आम् लिटीति चानुवर्तत इत्याह—**इजादिर्यो धातुरित्यादि** । गुरुमान् किम्, इयेष । ऋच्छेस्त्वानर्छ ॥ ( २९९७ ) **आमः** । 'लक्षणप्रतिपदोक्तपरिभाषया प्रत्ययग्रहणपरिभाषया च नेह-आम, आमतुः ॥ **परस्य लुगिति** । 'मन्त्रे घस-५२२९' इति सूत्राल्लेरित्यनुवर्त्य 'लेर्लुक्' इति काशिकादौ व्याख्यातम् । तदत्रोपेक्षितं, व्यावर्त्यालाभात् । तिङाद्यपवादत्वाल्लावस्थायामेवायं लुक् । तेन आमन्तस्याऽतिङन्तत्वाद्देवदत्तादिपदात्परत्वेऽपि 'तिङ्ङतिङः ५९११' इति न निघातः । आमन्तात्परस्य निघातश्च तिङन्तस्येत्यर्थः । नचातिङन्तत्वे पदत्वाभावादामन्तात्परस्य निघातो न सिध्यतीति शङ्क्यम्, लिटः कृत्त्वात्प्रत्ययलक्षणेन कृदन्ततया प्रातिपदिकत्वे सोरुत्पत्तावामन्तस्याव्ययत्वात्सुपो लुक्यपि प्रत्ययलक्षणेन सुबन्ततया पदत्वात् ॥ (२९९८) कृञ्चा-

---

१ **द्योतका इति** । न तु वाचकाः । तथाहि सति अनुभवरूपफलस्यान्वर्थत्वे धात्वर्थत्वाभावात् स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वाभावात् 'अनुभूयते' इत्यादौ कर्मणि लकाराद्यनुपपत्तिरिति भावः ॥ **उपसर्गा** इत्युक्त्या निपातानां तूभयमेवेति ध्वनितम् ॥ २ **धात्वर्थो बलादिति** । अबलादिति छेदः । बलाभावात् निर्बलत्वादित्यर्थः । अस्वतन्त्रत्वादिति यावत् । न तु बलादिति च्छेदः । तथा सति उपसर्गाणां द्योतकत्वं व्याहन्येत । अपि तु वाचकत्वमेव स्यादिति केचित् । अत्र वदन्ति-'उपसर्गेण नीयते' इति पाठे नयनकर्तृत्वस्योपसर्ग एवाङ्गीकारे बलाभावेऽस्वतन्त्रत्वे च कर्तृत्वं नैव दृष्टचरमिति नयनकर्मण एवास्वतन्त्रत्वस्य सर्वत्राङ्गीकाराद्धातावस्वतन्त्रत्वमुपसर्गेषु स्वतन्त्रत्वमिति विपरीतमेव स्यात् ॥ तस्मात् 'उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते' इत्येव पाठो भवेत् । 'उपसर्गेण, उपसर्गसंसर्गेण, बलात् शब्दशक्तिस्वभावात् अन्य एव धात्वर्थः प्रतीयते' इति च तदर्थः । 'अन्यत्र नीयते' इति पाठे उपसर्गेण कर्त्रा बलात्कारेण धात्वर्थोऽन्यत्र केवलस्य प्रसिद्धार्थाद् भिन्नेऽर्थे नीयते अर्थात् विलक्षणो धात्वर्थ एव प्रत्याय्यते न स्वार्थ इत्यनेनोपसर्गाणां द्योतकत्वमेव चेति सूचितम् । अधिकरणत्वविवक्षया कर्मत्वं नेति बोध्यम् ॥ ३ **एध वृद्धाविति** अकर्मकोऽयम्, 'फलव्यापारयोरेकनिष्ठतायामकर्मकः' इत्यभियुक्तोक्तेः 'स्वार्थफलसमानाधिकरणव्यापारवाचित्वमकर्मकत्वम्' इति लक्षणस्य प्रकृते समन्वयात् ॥ ४ **ज्ञापकादिति** । आम्प्रत्ययस्यादन्तत्वस्वीकारादित्संज्ञाप्रवृत्तिरेव नेति तु वक्तुमशक्यम्, 'आमः' इत्यत्रोत्सृष्टानुबन्धेन निर्देश इति कल्पनेन 'आममन्त्रे' इत्यत्र शकन्ध्वादित्वेन कतन्तवत् पररूपमिति कल्पनेन चातिगौरवात् । न च मित्त्वादन्त्यादचः परत्वसामर्थ्यादसंजातविरोधित्वन्यायेनात्र सवर्णदीर्घबाधोऽस्त्विति वाच्यम्, प्रधानसवर्णदीर्घबाधापेक्षया इत्संज्ञाबाधस्यैवौचित्यात्, तस्मादत्र ज्ञापकेनैव निर्वाह इति भावः ॥ भाष्ये तु "अथापि कथंचिदित्कार्यं स्यात्, एवमपि न दोषः क्रियते न्यास एव आममन्त्र इति । यद्येवम् 'आमामन्त्र' इति प्राप्नोति इत्याशङ्क्य शकन्ध्वन्यायेन निर्देशः" इति स्पष्टमेवोपलभ्यते । तेनादन्तपाठे सर्वदोषपरिहारः सूच्यते ॥ ५ अतद्गुणसंविज्ञानबहुव्रीहिणा तादिभिरित्यर्थः ॥ ६ **व्यावर्त्यालाभादिति** । प्रत्युत विदांकुर्वन्त्वित्यत्र लोटोऽपि लुक्सिद्धिरित्यपरं लाघवमिति भावः ॥

---

१ **सर्वदोषेति** । "तदेतदास्कासोराम्विधानं ज्ञापकमेव 'नायमचामन्त्यात्परो भवति' इति" भाष्यग्रन्थे 'श्नमो मित्त्वेन प्रत्ययपरत्वबाध इव आमो मित्त्वेन न प्रत्ययपरत्वबाधः' इत्येवमेव कल्पनयाऽपि सामञ्जस्येन 'कासाचक्रे' इत्यादिनिरनुस्वारप्रयोगं को वारयेत् । अचामन्त्यात्परशब्दस्य तत्साधकमकारेत्संज्ञापरत्वे तु लक्षणागौरवं स्यात्-इति अदन्तत्वेनेत्संज्ञावारणे तु प्रक्रियाज्ञानलाघवमेवेति । 'आम' इत्यादौ तु 'अचः' 'वनो र च' इत्यादाविवोत्सृष्टानुबन्धकस्यैव निर्देश इति बोध्यम् ॥

लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । आम्प्रत्ययवत्कृञोऽनुप्रयोगस्येति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते । तेन कृभ्वस्तियोग इत्यतः कृञो द्वितीयेति ञकारेण प्रत्याहाराश्रयणात्कृभ्वस्तिलाभः । तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः । संपदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्ययंनन्विताथत्वान्न प्रयुज्यते । कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते-॥ ( २९९९ ) आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । १ । ३ । ६३ । आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात् । इह पूर्ववदित्यनुवर्त्य वाक्यभेदेन संबध्यते । पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति । तेन कर्तृगेऽपि फले इन्दांचकारेत्यादौ न तङ् ॥ ( ३००० ) लिटस्तझयोरेशिरेच् । ३ । ४ । ८१ । लिडादेशयोस्तझयोरेश् इरेच् एतौ स्तः । एकारोच्चारणं ज्ञापकं, ( ३००१ ) तङादेशानां टेरेत्वं नेति । तेन डारौरसां न । कृ ए इति स्थिते-।

नुप्रयुज्यते-। कथं तर्हि 'तं पातयां प्रथममास पपात पश्चात्' 'प्रभ्रंशयां यो नहुषं चकार' इति । प्रमाद एवायम् । न च विपरीतप्रयोगनिवृत्तिमात्रे सूत्रस्य तात्पर्यात्पश्चात्प्रयोगो व्यवहितोऽपि न दुष्यतीति वाच्यम्, *विपर्यासनिवृत्त्यर्थं, व्यवहितनिवृत्त्यर्थं च* इति वार्तिकविरोधात्॥ अन्यस्यापीति । यदीह कृञ्शब्देन एक एव धातुर्गृह्येत, तदा धात्वन्तरस्य प्राप्त्यभावात् 'आम्प्रत्ययवत् २९९९' इति सूत्रेऽनुप्रयुज्यमानस्य कृञ इति विशेषणं व्यर्थं स्यादिति भावः । न चात्र 'कृञ् च' इति चकारेणैवानुप्रयोगोऽन्यस्यापीति ज्ञायत इति शङ्क्यम्, 'धातोराम् स्यात्, अनुप्रयुज्यते च लिट्परः कृञ्' इत्यर्थसमर्पकतया तस्योपक्षीणत्वात ॥ अभेदान्वय इति । सामान्यविशेषयोरभेदान्वयो लोकसिद्ध इति भावः।एवं च एधांचक्रे, एधांबभूवेत्यादौ एककर्तृकभूतानद्यतनपरोक्षा वृद्ध्यभिन्ना क्रियेति तुल्यो बोधः । ननु करोतिः सकर्मकः, भवतिस्त्वकर्मक इति कथमिह तुल्यतेति चेत् । अत्राहुः-यदा हि करोतिरुत्पादनार्थकः स्वातन्त्र्येण प्रयुज्यते घटं चक्रे राज्यं चकारेति तदा नियमेन सकर्मकत्वम् । यदा तु क्रियान्तरसमानाधिकरणः करोतिः प्रयुज्यते जुहवांचकारेत्यादौ तदा यत्समानाधिकरणः करोतिस्तस्य सकर्मकत्वाकर्मकत्वाभ्यां स्वयमपि तथाभावं भजते । एवं भ्वस्त्योरप्यामूप्रकृतिसामानाधिकरण्येन क्वचित्सकर्मकत्वं बोध्यम् । अत एवानुप्रयुज्यमानाद्भवतेः सकर्मकत्वात्कर्मणि लिट् । तथा च माघः-'तस्यातपत्रं बिभरांबभूवे' इति । श्रीहर्षश्च-'तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे' इति ॥ अत्रेदमवधेयम्-जुहाव, जुहवांचकार, जुहवांबभूव इत्यादौ केवलो होमो गम्यते, इतरत्र तु होमरूपा क्रियेति बोधः । फले तु न कश्चिद्विशेषः, घटमानय, द्रव्यं घटमानयेत्यत्र यथा । एवं चाम्प्रकृत्यर्थगतकारकसंख्याविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति ॥ अनन्वितेति । संपदर्थस्यामूप्रकृत्यर्थस्य चाभेदान्वयो न संभवति, उभयोरपि विशेषरूपत्वादिति भावः ॥ ( २९९९ ) आम्प्रत्ययवत्--। आम्प्रत्ययान्तस्यात्मनेपदाभावादाह--अतद्गुण इति ॥ आम्प्रकृत्या तुल्यमनुप्रयुज्यमानादिति । तृतीयान्ताद्वतिः । अनुप्रयोगस्येत्यत्र कर्मणि षष्ठीति भावः ॥ 'अनुदात्तङित-२९११' इत्यतोऽनुवर्तनादाह-आत्मनेपदं स्यादिति । एवमप्राप्तस्य विधानेऽपि प्राप्तस्य निवारणमनेनैव सूत्रेण न संभवतीत्यत आह--वाक्यभेदेनेति । अत्र च प्रमाणम् 'आम्प्रत्ययवत्-' इति वचनमेव । अन्यथा पूर्ववदित्यनुवृत्त्यैवानुप्रयोगस्य कृञः आमः पूर्वेण तुल्यमित्यर्थलाभादिष्टसिद्धेः किं तेन 'आम्प्रत्ययवत्' इत्यनेन ॥ ( ३००० ) लिटस्तझयोः--। एशिति

१ अनन्वितार्थत्वादिति । संपदेर्हि सिद्धवस्तुनो योग्यरूपान्तरापत्तिरूपार्थकत्वादिति भावः ॥ २ तेन डारौरसां नेति। वस्तुत 'एध तास् त' इति दशायां 'लुटः प्रथमस्य-' इति योगापेक्षया परत्वेन 'टित आत्मनेपदानाम्-' इति टेरेत्वे 'पुनःप्रसङ्गविज्ञानात्सिद्धम्' इति परिभाषया डादिषु कृतेषु पुनरेत्वस्य प्रवृत्तिरेव न, 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति परिभाषणादिति चिन्त्यमेतदिति केचित् । उदवोढामित्यादाविव स्थानिभेदेन लक्ष्यभेदाङ्गीकारेण प्राप्तं टेरेत्वं ज्ञापनेनैव वारणीयमिति तत्त्वम् ॥ ३ प्रमाद इति । 'पातयाम्' 'प्रभ्रंशयाम्' इत्यनयोरामन्तत्वमभिप्रेत्येदम् ॥ 'पातं याति' इति पातयाः 'प्रभ्रंशं याति' इति प्रमाणः इत्येवम् आकारान्तप्रातिपदिकस्य द्वितीयैकवचनान्तत्वेन कर्मद्वितीयान्ततच्छब्दार्थनहुषशब्दार्थे विधेयविशेषणत्वे तु न काप्यनुपपत्तिरिति बोध्यम् ॥ प्रादीनमुपसर्गाणां तु धातुस्वरूप एवात्तभावस्य 'अनुभूयते सुखम्' इत्यादौ सकर्मकत्वार्थमङ्गीकृतत्वेन केवलमडादिव्यवस्थार्थमेव पृथक्त्वाङ्गीकरणेन 'उक्षांप्रचक्रुर्नगरस्य मार्गान्' 'बिभयां प्रचक रासौ' इति भट्टिप्रयोगोऽपि नानुपपन्नः ॥ अत एव 'अन्वेव च प्रयोगो यथा स्यात्-ईहांचक्रे । व्यवहितस्य मा भूत्-ईहां देवदत्तश्चक्रे इति' 'इति' भाष्यकृता व्यावर्त्यत्वेन भिन्नार्थानामेव निर्देशः कृतः ॥ एतदजानानेन जयमङ्गलकृता 'उक्षान्प्रचक्रुः' 'प्रबिभयांचकारासौ' इति मूलपाठ एवान्यथा कल्पितः ॥ इति विवेचनीयं सुधीभिः ॥ नवीनास्तु-'कृञोऽनुप्रयोगवचनमस्तिभुवोः प्रतिषेधार्थम्' इति वार्तिकार्थे 'इष्टः सर्वानुप्रयोगः-' इत्यादिना भाष्यसंदर्भेणानवहितवचनत्वसूचनवद् 'विपर्यासनिवृत्त्यर्थं वा' 'व्यवहितनिवृत्त्यर्थं वा' इति वार्तिकोक्तार्थेऽपि अनवहितवाक्यत्वमेव दर्शयितुं 'कषादिषु यथाविध्यनुप्रयोगः' इत्येतद्विषये 'पाण्युपघातं वेदिं हन्ति' इति व्यवहितानुप्रयोगोऽपि 'करणे हनः' इति सूत्रे 'लुनीहि लुनीहीत्येवायं लुनातीति क्रियासमभिव्याहारे लोट् सूत्रभाष्ये च भाष्यकृता प्रदर्शितः । अत एव 'तान्ह राजा मदयामेव चकार' इति बह्वृचब्राह्मणे व्यवहितप्रयोगो दृश्यते ॥ एवं च 'अदीधेत् अदीधयुः' इति प्रयोगदर्शनेन 'दीधीवेवीग्रहण प्रत्याख्यानमिव बह्वृचब्राह्मणप्रयोगदर्शनादनयोर्वार्तिकयोरपि प्रत्याख्यानमेव भाष्यकृता ध्वनित इति पदमञ्जरीरहस्यमिति वदन्ति ॥

( ३००२ ) ॐ असंयोगाल्लिट्कित् । १ । २ । ५ । असंयोगात्परोऽपिलिट्कित्स्यात् । क्ङिति चेति निषेधात्सार्वधातुकार्धधातुकयोरिति गुणो न । द्वित्वात्परत्वाद्यणि प्राप्ते-॥ ( ३००३ ) ॐ द्विर्वचनेऽचि ।१।१।५९। द्वित्वनिमित्तेऽचि परे अच आदेशो न स्याद् द्वित्वे कर्तव्ये ॥ ( ३००४ ) ॐ उरत् । ७ । ४ । ६६ । अभ्यासऋवर्णस्य अत्स्यात्प्रत्यये परे । रपरत्वम् । हलादिः शेषः । प्रत्यये किम् । ववश्च ॥ ( ३००५ ) ॐ कुहोश्चुः । ७ । ४ । ६२ । अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात् । एधांचक्रे । एधांचक्राते । एधांचक्रिरे ॥ ( ३००६ ) ॐ एकाच उपदेशेऽनुदा-

---

ऋकारकरणमकारविशिष्टतकारस्यादेशत्वाय ॥ ( ३००२ ) **असंयोगात्**-। असंयोगादिति किम्, ममन्थे। अत्र नलोपो न ॥ ( ३००३ ) **द्विर्वचनेऽचि** । अचा सामानाधिकरण्यलाभाय द्विर्वचनशब्दस्य तन्निमित्ते लक्षणा स्वीक्रियते । यद्वा-उच्यत इति वचनं, द्विर्वचनं यस्मिन्नचि तद् द्विर्वचनम् । अथवा द्विर्वचनमस्मिन्नस्तीत्यर्शआद्यच् । तदेतदाह—**द्वित्वनिमित्तेऽचीति** । इह 'अचः परस्मिन्-७७' इत्यतोऽच इति, 'स्थानिवदादेशः-७६' इत्यस्मादादेश इति, 'न पदान्त-७८' इत्यतो नेति चानुवर्तते, तदाह—**अच आदेशो न स्यादिति** । यद्यपीह वृत्त्यादौ 'अजादेशः स्थानिवत्स्यात्' इति रूपातिदेशपक्षः स्वीकृतः, फलं चोभयत्र तुल्यम्, तथाप्यादेशनिषेधपक्षोऽपि भाष्यारूढ इति स एवात्र स्वीकृतः । किंच, आदेशमङ्गीकृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात् । 'न पदान्त-७८' इति निषेधानन्तरं पाठोऽप्येवं सत्यनुगृहीत इति श्रेयानयं पक्षः ॥ इष्टानुरोधेन द्विर्वचन इत्यावर्त्य कालावधारणपरतयाऽपि व्याचष्टे-**द्वित्वे कर्तव्ये इति** । कृते तु द्वित्वे यथायथमादेशः स्यादेवेति भावः । द्वित्वनिमित्ते किम्, दुद्यूषतीत्यत्र द्वित्वात्परत्वादूठि कृते यदि यणः पूर्वमेव द्वित्वं स्यात्, तदा दिद्यूषतीत्यनिष्टं रूपं स्यात्तन्मा भूदिति द्वित्वनिमित्त इत्युक्तम् । न ह्यूठ् द्वित्वनिमित्तम् । अचीति किम्, जेघ्रीयते । देध्मीयते । शाशय्यते । इह 'ई घ्राध्मोः ३५१७' इति ईकारः, 'अयङ् यि क्ङिति ३५१८' इत्ययङादेशश्च निषिध्येत, स मा भूदिति प्राञ्चः । अन्ये त्वाहुः-अचीति व्यर्थं, घ्रीयुध्मीयुशय्य इति द्वितीयाजवधिकस्यैकाचः कार्यितया यङो द्वित्वनिमित्तत्वाभावादिति । अचः किम्, असूषुपत् । इह 'स्वापेश्चङि ३४३७' इति यत्संप्रसारणं तस्मिन्निषिद्धेऽभ्यासे उवर्णो न श्रूयेत । न च द्वित्वे कृते पुनः संप्रसारणेन स्वापेरवयवत्वाविशेषादभ्यासे तदुत्तरखण्डे च उकारश्रवणं भवेदिति वाच्यम्, परस्य संप्रसारणे कृते यून इत्यत्रेव 'न संप्रसारणे-४९३' इति पूर्वस्य यणः संप्रसारणनिषेधात् । स्यादेतत्, चक्रतुरित्यत्र अच आदेशस्य निषेधाप्रवृत्त्या यण् स्यादेव । अतुसो द्वित्वनिमित्तत्वेऽप्यकारस्यातथात्वात् । न च 'द्विर्वचनेऽचि ३००३' इत्यस्य वैयर्थ्यम्, चक्रे इत्यादौ सावकाशत्वात् । तथा चैकाच्त्वाभावात् 'लिटि धातोः-२९३१' इतीह द्वित्वं न स्यादिति चेत् । मैवम्, इह द्वित्वनिमित्तशब्देन साक्षाद्वा समुदायघटकतया वा यद्द्वित्वप्रयोजकं लक्ष्यानुरोधेन तस्य सर्वस्य ग्रहणात्। एतच्च 'ठस्येकः' इति सूत्रे कैयटे स्पष्टम्। तथा च-ऊर्णोतेः सनि 'सनीवन्त-३४७७' इतीट्पक्षे 'विभाषोर्णोः ३२५८' इति ङित्त्वविरहे ऊर्णुनविषतीति सिद्धम् । सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकत्वेन तस्मिन्परे प्राप्तयोर्गुणावादेशयोर्द्वित्वे कर्तव्ये निषेधात् । अत एवाहुः-तद्भावभावितामात्रेणेह निमित्तत्वमिति । एवं च द्वित्वनिमित्तघटकतया सन इडागमः अतुसोऽकारश्च द्वित्वनिमित्तमिति स्थितम् । नन्वेवम्-ऋधातोः सनि 'स्मिपूङ्रञ्ज्वशां सनि ३४८९' इति इटि कृते इस्शब्दनिमित्तकस्य गुणस्य 'द्विर्वचनेऽचि ३००३' इति निषेधे 'अजादेर्द्वितीयस्य २९३०' इति द्वित्वप्रसङ्गादारिरिषतीति न सिध्येत् । रिस्शब्दस्य द्वित्वे तु यद्यपि सिध्यति, तथापि गुणनिषेधे रिस्शब्द एव दुर्लभ इति चेत् । अत्राहुः-गुणे रपरे कृते रिस्शब्दस्यैव द्वित्वम् । न च द्वित्वनिमित्ते ह्यचि गुणस्य निषेधः, इस्शब्दस्तु नेह निमित्तं कार्यित्वात् । न हि कार्यी निमित्ततयाऽऽश्रीयते, 'स्थण्डिलाच्छयितरि व्रते १७१९' इति ज्ञापकात् । अन्यथा शीङो ङित्त्वेन 'क्ङिति च२९७२' इति गुणनिषेधाच्छयितरीति रूपस्यासिद्धयापत्तेः । न च किति ङिति परे गुणवृद्धी नेति व्याख्यायामुक्तार्थे शयितरीति न ज्ञापकमिति वाच्यम्, तद्व्याख्यायां छिन्नं भिन्नमित्यत्र गुणनिषेधो न स्यादित्यादिदोषस्य 'क्ङिति च २९७२' इति

---

१ **प्रत्यये किमिति** । आ सप्तमसमाप्तेरङ्गाधिकारमाश्रित्याङ्गेन प्रत्ययाक्षेपः किमर्थ इति प्रश्नः॥ २ **ववश्चेति** । आ सप्तमपरिसमाप्तेरङ्गाधिकारानङ्गीकारे प्रत्ययाक्षेपाभावे 'उरत्' इति योगस्य परनिमित्तत्वाभावात् स्थानिवत्त्वाभावेन 'न संप्रसारणे-' इति निषेधाप्रवृत्तौ पुनरपि वकारस्य 'लिट्यभ्यासस्य-' इति सम्प्रसारणं स्यादिति भावः॥ अत एवासप्तमसमाप्तेरङ्गाधिकारोऽभ्युपधायि भगवता भाष्यकारेण, 'प्रागभ्यासविकारेभ्योऽङ्गाधिकारः' इति पक्षो ववश्चेत्यस्यासिद्ध्या दूषितश्चेति बोध्यम् ॥ ३ लक्षणाया जघन्यत्वादाह-**यद्वेति** । अधिकरणे ल्युडिति भावः ॥ ४ **अर्शआद्यजिति** । वृत्तिद्वयकल्पने गौरवाद्, द्विर्वचनं यस्मिन्निति मध्यमपक्ष एव युक्त इति बोध्यम् ॥ ५ **द्वितीयाजवधिकस्येति** । नटभार्यावद् व्यञ्जनानि भवन्तीति तदवधिकस्य द्वित्वमिति षाष्ठभाष्योक्तेरिति भावः ॥ "स्वरान्तरे व्यञ्जनान्युत्तरस्य" इति प्रातिशाख्यानुसारेण यकारस्य द्वितीयाजङ्गतया प्रथमैकाच्त्वं न यकारपर्यन्तस्येति न यकारस्य कार्यित्वमिति यङो निमित्तत्वमव्याहतमेवेति स्थानिरूपापत्तिवारणाय 'अचि' इत्यावश्यकमेव ॥ भवन्मतेऽपि 'अधिजगे' इत्यत्र गाङादेशस्य स्थानिरूपप्रत्यापत्तिवारणाय तदावश्यकमेवेति तत्त्वम् ॥

त्तात् । ७ । २ । १० । उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्येट् न स्यात् । उपदेशे इत्युभयान्वयि । एकाच इति किम् । यङ्लुग्व्यावृत्तिर्यथा स्यात् । स्मरन्ति हि-

( ३००७ ) श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ॥ यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १ ॥ इति ॥

एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते । (३००८) अचः इत्येवैकत्वविवक्षया तद्वतो ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते । तेन वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः, आदेशोपदेशेऽनेकाच्त्वात्। अनुदात्ताश्चानुपदमेव संग्रहीष्यन्ते । एधांचकृषे।एधांचकाथे।। (३००९)⊛ इणः षीध्वंलुङ्लिटां धोऽङ्गात् ।८।३।७८। इणन्तादङ्गात्परेषां

---

सूत्र एवोपपादितत्वात् । न चैवं कार्यिणो निमित्तत्वानाश्रयणे सन्नन्तस्य कार्यित्वात्सनि परतः प्राप्तयोर्गुणावादेशयोरनिषेधादूर्णुनविषतीत्यपि न स्यादिति वाच्यम्, मत्वर्थीयेनेनिना कार्यमनुभवत एव कार्यित्वलाभात् । ऊर्णोतेर्हि नुशब्द एव द्वित्वरूपं कार्यमनुभवति, न तु सन् । अरिरिषतीत्यत्र तु रिस्शब्दः कार्यभागिति वैषम्यादिति ॥ ( ३००६ ) उभयान्वयीति । मध्ये पाठाद्देहलीदीपन्यायेन पूर्वोत्तराभ्यां संबध्यत इत्यर्थः । तत्रोत्तरान्वयस्य कर्तुं गन्तुमित्यादाविण्निषेधः फलम्, नित्स्वरेण संप्रत्युदात्तत्वात् । पिपक्षति बिभित्सतीत्यादाविण्निषेधस्तु पूर्वान्वयस्य फलम्, द्वित्वे कृते अनेकाच्त्वात् ॥ नन्वेकाच इत्युक्ते ह्युपदेशपदेनाप्यन्वयः स्वीकर्तव्यस्तदेव माऽस्तु, 'उपदेशेऽनुदात्तात्' इत्यनेनैवेष्टसिद्धेरिति शङ्कते--**एकाचः किमिति** । पिपक्षतीत्यादाविव यङ्लुक्यपीण्निषेधः स्यादेवेत्याशङ्कायामाह-**स्मरन्ति हीति** ॥ ( ३००७ ) **श्तिपेत्यादि** । श्तिपा यथा- स्यतिहन्तियातिवातिद्रातीत्यादि । तेन प्रन्यजङ्घनीदित्यादौ 'नेर्गद-३०५२' इति णत्वं न । शपा यथा-भरेति । तेन बिभर्तेः भरतेः ( यङ्लुगन्तात्) सनि बर्भरिषतीत्यत्र 'सनीवन्तर्ध-३४७७' इतीड्विकल्पो न, किन्तु नित्यमेवेट् । 'एकाच-३००६' इति निषेधाप्रवृत्तेः । अनुबन्धेन निर्देशो द्विधा-स्वरूपेणेत्संज्ञकत्वेन च । स्वरूपेण यथा—'शीङः सार्वधातुके गुणः ३२५०' 'दीङो युडचि-३३२५' इति । शेशीतः । देदितः । तासि क्तप्रत्यये चेमे क्रमेणोदाहरणे । इत्संज्ञकत्वेन यथा-'अनुदात्तङितः- २९११', तेन स्पर्धशीङादिभ्यः, 'अनुदात्तङितः-२९११' इत्यात्मनेपदं न । पास्पर्धीति । शेशयीति । गणेन यथा-बेभिदीति । 'रुधादिभ्यः-३३७३' इति श्नम् न । एकाज्ग्रहणं प्रकृतसूत्रे । तेन बेभेदिता चेच्छेदितेत्यादाविण्निषेधो न ॥ **एतच्चेति** । न च श्तिपाशपाद्यंशे कथमिदं ज्ञापकमिति शङ्क्यम्, एकदेशानुमतिद्वारा सर्वत्र ज्ञापनस्य 'उपपदमतिङ् ११२६' इत्यादौ दृष्टत्वात् । अत एव तत्र 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ११२८' इति सिद्धमित्युक्तम् । अनन्यार्थैः स्यतिहन्तिभरेत्यादिभिः श्तिबादिभिरेव ज्ञापनसंभवाच्च । 'अपरस्पराः-१५१९' इति सूत्रे सातत्यग्रहणेन एकदेशानुमत्या 'लुम्पेदवश्यमः कृत्ये' इत्यादिपूर्वाचार्यश्लोको ज्ञापित इति तु तत्रैवावोचाम । मनोरमायां त्वेकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषाया ज्ञापनस्य 'गतिकारकोपपदानाम्-११२८' इत्यादौ दृष्टत्वादित्युक्तं, तदयुक्तमिति नव्याः । 'गतिकारकोपपदानाम्-११२८' इत्याद्येव हि पूर्वाचार्याणां परिभाषा । न च तज्ज्ञापनं तत्रैव दृष्टमिति युज्यते वक्तुमिति ॥ ( ३००८ ) **तद्वत इति** । न च मत्वर्थलक्षणायां मानाभावः, वसत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात् । न चेदानीमनुदात्तपाठः परिभ्रष्टः, आधुनिकानां वसतिशक्तित्यादिपाठस्त्वनार्षत्वान्न मानमिति शङ्क्यम्, पाणिनिना पठितानामेवानुदात्तधातूनामाधुनिकैर्व्याख्यातृपरम्परया संगृहीतत्वात् । अन्यथा एकः अच् यस्येति बहुव्रीहिलाभार्थमेकग्रहणे कृतेऽप्यनुदात्तपाठस्य परिभ्रष्टत्वात् वसतिशक्त्यादयोऽनुदात्ताः, न तु श्वेधादय इति निर्धारणं न स्यात् ॥ **एकग्रहणेति** । नन्वेकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमित्युक्त्वा पुनरेकग्रहणसामर्थ्यादित्युक्तौ परस्परव्याघातः स्यादिति चेत् । अत्राहुः-एकाच्शब्देनैकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति नार्थः, किन्तु वस्तुगत्यैवैकाज्ग्रहणं, तच्चैकग्रहणं विनैव लभ्यत इत्यदोष इति ॥ **वधेरिति** । यस्तु तद्व्यावृत्तयेऽनिट्कारिकास्वदन्तपर्युदास उक्तो व्याघ्रभूतिना स एव प्राचाऽनुसृतः । 'अदूदृदन्तरुस्नुक्ष्णुशीयुनुक्षुश्विडीङ्श्रिभिः । वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोऽनिटः' इति । स चादन्तपर्युदास इहोपेक्षितः, सूत्राननुगुणत्वात् । तथाहि—'सर्वे सर्वपदादेशाः' इति न्यायेन कृ इत्यादेः कर इत्यादिरादेशस्तस्य यथा स्थान्युपदेशं गृहीत्वा कर्ता हर्तेत्यादौ निषेधः प्रवर्तते, तथैव वधादेशेऽपि प्रवर्तमानः केन वार्यताम् । अदन्तपर्युदाससामर्थ्यादिति चेत् । न, सूत्रकारेणाऽपर्युदस्तत्वादिति भावः ॥ ( ३००९ ) **इणः षीध्वम्**—। 'इण्कोः २९७' इत्यधिकारेऽपि पुनरिण्ग्रहणं कवर्गात्परस्य मा भूदित्येतदर्थम् । तेनेह न, पक्षीध्वम् ॥ **अङ्गात्परेषामिति** । विहितानामित्युक्तौ तु दाञो लुङि आदिढ्वमित्यत्राव्याप्तिः स्यात्, लिहदुहनहां तु ढत्वघत्वधत्वेषु लिक्षीध्वं धुक्षीध्वं नत्सीध्वमित्यत्रातिव्याप्तिश्च स्यादिति बोध्यम् ॥ अङ्गात् किम्, वेविषीध्वम् । यद्यप्यर्थवतः षीध्वमित्यस्य ग्रहणात् कृषी-

---

१ इदं च '**सूत्रे लिङ्गवचनमतन्त्रम्**' इति परिभाषामनाश्रित्यैवोक्तम् । तदाश्रयणे तु 'वधेराद्युदात्तत्वनिपातनसामर्थ्येन तत्रोपदेशिवद्भावाङ्गीकारेणैव भाष्योक्तेन निर्वाहः करणीयः आर्धधातुकविवक्षायामेवादन्तादेशविधानाङ्गीकारेणैव वा ॥ २ **इणः षीध्वमिति** । ननु सीध्वमित्येवास्तु मूर्द्धन्योच्चारणं किमर्थमिति चेद्, ब्रुवीध्वमित्यादावेकदेशविकृतन्यायेन सीध्वमः सत्त्वेन प्राप्तढत्ववारणाय तदुच्चारणमिति गृहाण ॥ ३-'बिभर्तेः' इति पाठस्तु 'शपा' इत्युक्तिविरुद्धः ॥ ४ **विहितानामिति** । एवञ्चाङ्गादिति न कर्तव्यमिति लाघवमिति भावः ॥ ५ **वेविषीध्वमिति** । षान्तमिहाङ्गं, न त्विणन्तमिति भावः ॥

षीध्वलुङ्लिटां धस्य मूर्धन्यः स्यात् । एधांचकृढ्वे । एधांचक्रे । एधांचकृवहे । एधांचकृमहे । एधांबभूव । अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न । अन्यथा हि–कश् चानुप्रयुज्यत इति, कृञ्भ्विति वा ब्रूयात् ॥ (३०१०) सू० अत आदेः ।७।४।७०। अभ्यासस्यादेरतो दीर्घः स्यात् । पररूपापवादः[1] । एधामास । एधामासतुरित्यादि ॥ एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ॥ (३०११) सू० धि च ।८।२।२५। धादौ[2] प्रत्यये परे सलोपः स्यात् । एधिताध्वे ॥ (३०१२) सू० ह एति ।७।४।५२। तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । एधितास्वहे । एधितास्महे ॥ एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ॥ (३०१३) सू० आमेतः ।३।४।९०। लोट एकारस्याम् स्यात् । एधताम् । एधेताम् । एधन्ताम् ॥ (३०१४) सू० सवाभ्यां वामौ ।३।४।९१। सवाभ्यां परस्य लोडेतः क्रमाद्व अम् एतौ स्तः । एधस्व । एधेथाम् । एधध्वम् ॥ (३०१५) सू० एत ऐ ।३।४।९३। लोडुत्तमस्य एत ऐ स्यात् । आमोऽपवादः । एधै । एधावहै । एधामहै ॥ (३०१६) सू० आडजादीनाम् ।६।४।७२। अजादीनामाट् स्याल्लुङादिषु । अटोऽपवादः । आटश्च । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ॥ (३०१७) सू० लिङः सीयुट् ।

---

द्वमित्यादावेव भवेत्, न त्वत्र, तथाप्यर्थवद्ग्रहणपरिभाषा[3] क्वचिन्न प्रवर्तत इति ज्ञापनार्थमिदमुक्तम् । तेन 'अनिनस्मन्ग्रहणानि–४८९' इति सिद्धम् ॥ **एधांबभूवेत्यादि** । 'आम्प्रत्ययवत्–२९९९' इति सूत्रे कृञ्ग्रहणादनुप्रयोगान्तरे तङ् नेति 'शेषात् कर्तरि–२९१३' इति परस्मैपदमेव । भावकर्मणोस्तु स्यादेव–एधांबभूवे, ईक्षांबभूवे इति । अस्तेस्तु भावकर्मणोस्तङि कृते एशि इटि च रूपे विप्रतिपद्यते । तथाहि–उभयत्रापि 'ह एति ३०१२' इति हादेशे कृते एधामाहे ईक्षामाहे इति केचित् । तासिसाहचर्यादिटयेव हत्वं न त्वेशीत्यन्ये । तत्साहचर्यादेव सार्वधातुक एव एति हत्वम् । तथा च कर्मव्यतिहारे तङि व्यतिहे इत्यत्रैव भवति न तूक्तद्वयेऽपि । तेन एधामासे ईक्षामासे इत्येव रूपमित्यपरे ॥ **कृञ्भ्वितीति** । यद्यपि कृञ् इत्युक्तौ लाघवमस्ति, तथापि धातुद्वयस्यैव लाभार्थं प्रत्याहाराश्रयणे क्लेश इति भावः ॥ ( ३०१० ) **पररूपापवाद इति** । अपवाद इत्ययं ग्रन्थो नामधातुप्रक्रियास्थस्वग्रन्थेन सह विरुध्यते । तत्र हि–अ इवाचरति आति । प्रत्ययग्रहणमपनीय कास्यनेकाच इत्युक्तेर्नाम् । औ । अतुः । उः । द्वित्वम् 'अतो गुणे २७६' 'अत आदेः ३०१०' इति दीर्घः । णल औ वृद्धिरित्युक्तत्वात् । हलादिःशेषात् प्रागेव परत्वात् 'अत आदेः ३०१०' इति दीर्घे कृते तु पररूपशङ्काऽपि तत्र नास्तीति चिन्त्योऽयं ग्रन्थ इति नव्याः ॥ ( ३०१६ ) **आडजादीनाम्** । एतच्च '**अजादीनामटा सिद्धम्**' इति वार्तिककृता प्रत्याख्यातम् । ननु अटि सति 'वृद्धिरेचि १०७' इत्यनेन ऐधतेत्यादिसिद्धावपि ऐन्ददित्यादि न सिध्येत् । किञ्च, 'अतो गुणे २७६' इति पररूपप्रवृत्त्या ऐधतेत्याद्यपि न सिध्येत् । यदि तु 'आटश्च ३७७' इति सूत्रम् 'अटश्च' इति क्रियेत, तर्हि अस्वपोऽहसत् इत्यत्र वृद्धिः स्यात्, 'रुदश्च पञ्चभ्यः ३२८९' 'अड् गार्ग्यगालवयोः ३२९०' इति अडागमस्य सत्त्वात् 'अतो रोरप्लुतात्–२४३' इति रोरुत्वे सति अच्परत्वाच्चेति चेत् । न, 'उपसर्गादृति धातौ ११६' इत्यतो धातावित्यपकृष्याजादौ धाताविति व्याख्यानात् । न च अस्वपोऽस्तीत्यादावोकारस्यान्तवद्भावेनाट्त्वात्परत्राजादिधातुसत्त्वाच्चोक्तदोषस्तदवस्थ इति वाच्यम्, आदित्यनुवर्त्य अकाररूपादटोऽचि परे वृद्धिरिति व्याख्यानात् । एतेन अटश्चेत्युक्तौ 'अट गतौ' इत्यस्माल्लुटि अटनमित्यत्रातिप्रसङ्गः स्यादित्येतदपि निरस्तम् । न चैवमपि आतत् आतीत् इत्यादि न सिध्यति 'अटश्च' इत्यस्य ऐन्ददित्यादौ सावकाशतया परत्वादिह 'अतो गुणे २७६' इत्यस्यैव प्रवृत्तेरिति वाच्यम्, चकारोऽत्र पुनर्वृद्धिविधानार्थं इत्यभ्युपगमादन्तरङ्गत्वाद्वा 'अटश्च' इत्यस्यैव प्रवृत्तेः । स्यादेतत्, 'आडजादीनाम् ३०१६' इति सूत्राभावे आस्ताम् आसन् इति कथमटा सिध्यति, 'श्नसोः–३२८२' इत्यल्लोपेन 'अटश्च' इति तत्र वृद्ध्यप्रवृत्तेः । मैवम्, अन्तरङ्गत्वात्प्रागेवाडागमे कृते वृद्धौ च कृतायां पश्चात् श्नसोरल्लोपस्याप्रसक्तेः । न च 'वार्णादाङ्गं बलीयः ३०६०' इति वृद्धेः प्रागल्लोप एव स्यादिति शङ्क्यम्, व्याश्रयत्वात् । 'वार्णादाङ्गम्–३०६०' इति परिभाषाया अनित्यत्वाद्वा । तत्र हि 'श्नसोरल्लोपः ३२८२' इति तपरकरणमेव लिङ्गम्, यदि वृद्धेः प्रागेवाल्लोपः स्यात्तर्हि किं तेन तपरकरणेनेति । यद्यपि वैदिकप्रक्रियायामानट् आव् इत्यादौ 'छन्दस्यपि दृश्यते ५३९६' इत्याडागमस्य वक्ष्यमाणत्वात्तदर्थमाट्सूत्रं कर्तव्यं, तथाप्याटं विनैवाड्व्यत्ययेन आङ्पूर्वकत्वेन वा तत्र कथंचिद्व्याख्येयमिति स्थितस्य गतिमाहुः ॥

---

१ **पररूपापवाद इति** । पररूपपदमेकादेशोपलक्षणम्–'आनृजे' इत्यादौ गुणस्यैव प्राप्तेः । अभ्यासविकारेषु बाध्यबाधकभावाभावेन पूर्वोपस्थितहलादिःशेषोत्तरं दीर्घ इति भावः ॥ २ **धादौ प्रत्यय इति** । तेन पयो धावतीत्यादौ सकारलोपो न । अत्र भाष्यकृता 'सङि' इति वक्तव्यमित्युक्तम्–सङ् च, सनः सकारमारभ्य, महिङो ङकारेण प्रत्याहाराश्रयणात् प्रत्यय एवेति प्रत्यय इत्यस्य लाभः ॥ ३ **ज्ञापनार्थमिति** । 'विभाषेटः' इत्युत्तरसूत्रेऽनर्थकस्यैव षीध्वमः सम्भवात्प्रकृतसूत्रेऽपि, अनर्थकस्य ग्रहणसम्भवः स्यादिति तद्वारणाय 'अङ्गात्' इत्यस्य सार्थक्याच्चिन्त्यमेतत् । 'अनिनस्मन्' इति परिभाषा तु वाचनिक्येवेति दिक् ॥

। ३ । ४ । १०२ । सलोपः । एधेत । एधेयाताम् ॥ ( ३०१८ ) (सू) झस्य रन् । ३ । ४ । १०५ । लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ॥ ( ३०१९ ) (सू) इटोऽत् । ३ । ४ । १०६ । लिङादेशस्येटोऽत्स्यात् । एधेय । एधेवहि । एधेमहि । आशीर्लिङि आर्धधातुकत्वात् लिङः [२९६६] सलोपो न । सीयुट्सुटोः प्रत्ययावयवत्वात्षत्वम् । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि ॥ ऐधिष्ट । ऐधिषाताम् ॥ ( ३०२० ) (सू) आत्मनेपदेष्वनतः । ७ । १ । ५ । अनकारात्परस्यात्मनेपदेषु झस्य अत् इत्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । इणः षीध्वंलुङ्लिटां धोऽङ्गात् [१] । ऐधिढ्वम् । इङ्भिन्न एव इणिह गृह्यते इति मते तु-ऐधिध्वम् । ढधयोर्वस्य मस्य च द्वित्वविकल्पात्षोडश रूपाणि । ऐधिषि । ऐधिष्वहि । ऐधिष्महि ॥ ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि । उदात्तत्वाद्धलादेरिट् । प्रसङ्गादनुदात्ताः संगृह्यन्ते-

( ३०२१ ) ऊद्दृदन्तैर्यौति-रु-क्ष्णु-शीङ्-स्नु-नु-क्षु-श्वि-डीङ्-श्रिभिः ।
वृङ्-वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ १ ॥

---

सलोप इति । ' लिङः सलोपोऽनन्त्यस्य २९६६' इत्यनेन ॥ **एधेयातामिति** । सीयुटः सलोपे ' आद् गुणः १०४' ॥ **एधिषीध्वमिति** । इणः परत्वेऽपि इणन्तादङ्गात्परत्वाभावात् 'इणः षीध्वम्-३००९' इति ढत्वं न भवति ॥ ( ३०२० ) **आत्मने—** । ' झोऽन्तः २९२३' इत्यतो झ इति 'अदभ्यस्तात् ३२९३' इत्यस्मात् अदिति चानुवर्तते । तदाह—**झस्यात्स्यादिति** । आत्मनेपदेषु किम् , अदन्ति । सुन्वन्ति । अनतः किम् , एधन्ते । प्लवन्ते ॥ **इङ्भिन्न एवेणिति** । ' विभाषेटः ३१०४' इति इटो विशिष्यग्रहणाद्गोबलीवर्दन्यायेन कैश्चिदिङ्भिन्न एवेणिह गृह्यते इति भावः ॥ ( ३०२१ ) **ऊद्दृदन्तैरिति** । ऊद्दृदन्तैर्विना, यौत्यादिभिर्विना, वृङ्वृञ्भ्यां च विना अन्ये ये एकाचोऽजन्तास्ते निहताः । अनुदात्ता इत्यर्थः । तथा च दाता धाता चेता स्तोतेत्यादिषु इण् न भवति । ऊदन्ता भूलूप्रभृतयः । ॠदन्ताः कॄतॄप्रभृतयः । ' यु मिश्रणादौ ' । ' रु शब्दे' ' रुङ् गतिरेषणयोः ' इत्युभयोर्ग्रहणम् । निरनुबन्धपरिभाषया ' लुग्विकरणालुग्विकरणयोः ३१३६' इति परिभाषया च । न च साहचर्याल्लुग्विकरणस्यैव ग्रहणमिति शङ्क्यम् , तस्यानित्यत्वात् । **' क्ष्णु तेजने '** । **'शीङ् स्वप्ने '** । **' ष्णु प्रस्रवणे '** । **' णु स्तुतौ '** । **' टुक्षु शब्दे '** । **'टुओश्वि गतिवृद्ध्योः '** । **'डीङ् विहायसा गतौ '** । **' श्रिञ् सेवायाम् '** । **'वृङ् संभक्तौ '** । **' वृञ् वरणे '** । नन्वेतद्भिन्नानामेकाचामेवानुदात्तत्वे ऊर्णुतः ऊर्णुतवानित्यादि न सिध्येदिति चेत् । मैवम् , 'ऊर्णोतेर्णुवद्भावो वाच्यः ४०२३' इति वक्ष्यमाणवार्तिकेनेष्टसिद्धेः । तेन ऊर्णोनूयते इत्यत्र 'धातोरेकाच-३४९४' इति यङ् ऊर्णुनावेत्यत्रानेकाच्त्वेन प्रवृत्तस्याऽमोऽऽभावश्च सिध्यति । उक्तं च भाष्ये-"**वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्**" इति । 'विभाषा गुणेऽस्त्रियाम् ८८३ ' इति हेताविय पञ्चमी । हेतुरिह फलम् । एतच्च कैयटे स्पष्टम् । उपग्रहः प्रतिषेधः । इट्प्रतिषेधार्थमित्यर्थः । एवं च णुवद्भावेनैकाच्त्वात् 'श्र्युकः क्किति ३१७४ ' इति निषेधप्रवृत्तेः ऊर्णुत इत्यादि सिध्यति । ' एकाच उपदेशे-३००६' इतीण्निषेधस्तु न प्रवर्तते, णुवद्भावेनैकाच्त्वेऽप्यनुदात्तत्वाभावात् , ऊर्णुधातोर्णुधातोश्च उदात्तत्वात् , तथा चोर्णुविता और्णावीदि-

---

१ ऐधिढ्वम् इति-ऐध इस् ध्वम् इत्यत्र ध्वमः प्रत्ययस्य एधधातोर्विहितत्वेन एधादिसमुदायः 'ऐधिस् ' इति ध्वमि प्रत्यये परे अङ्गसंज्ञको जात इति ' धि च ' इति सलोपोत्तरमेकदेशविकृतन्यायेन ' ऐधि ' इति भागस्याङ्गत्वं वर्तत एवेति ढत्वं भवत्येवेति बोध्यम् । वेदाङ्गप्रकाशकर्त्रा तु सलोपस्य स्थानिवत्त्वेनाङ्गस्येणन्तत्वव्याघातान्नात्र ढत्वप्राप्तिः—इत्युक्तम् । तत्तु व्याकरणरहस्याऽनभिज्ञत्वसूचकम् 'स्थानिवत्-' इति सूत्रेण स्थानिवद्भावविषये आदेशप्रयुक्तवारणे तु नायक इत्यादावायाद्यादेशानुपपत्तिरिति भूयानुपप्लवः स्यात् । तस्मादत्र स्थानिवद्भावेनाऽपि आदेशप्रयुक्तकार्यस्यावारणाद् इणन्तत्वनिमित्तं ढत्वं भवत्येवेति बोध्यम् ॥ २ **इति मते त्विति** । 'विभाषेटः' इत्युत्तरसूत्रे, इणः परस्येटो ग्रहणेन तत्रानुवर्तमानमिणिति पदमवश्यमिडतिरिक्तपरमिति स्वीकार्यमिति पूर्वसूत्रेऽपि तथैव युक्तमिति तेषां भावः । 'अत्रारुचिबीजं तु भाष्येऽस्यादर्शनम् । सूत्रान्तरस्थेन गोबलीवर्दन्यायग्रहणे च न दृढतरं मानमिति-' इति शब्दरत्नम् ॥ ३ **इणन्तादङ्गात्परत्वाभावादिति** । षीध्वंभक्तस्येडागमस्य तद्ग्रहणेन ग्रहणादिति भावः ॥ ४-( निरनुबन्धकसहचरित- ) परिभाषाद्वयेन लुग्विकरणपरिभाषाबाधात् लुग्विकरणस्यैव ग्रहणम्-इति शब्दरत्नम् ॥ ५ चकारस्य '**कर्मणि च**' इत्यत्रेव स्वरूपार्थकतया उपसर्जनतयाऽनुपसर्जनत्वेन वा यत्रैकाच्पदं श्रूयते तेषु 'एकाचो द्वे प्रथमस्य ' ' धातोरेकाचो हलादेः ' 'श्र्युकः क्किति ' 'कास्यनेकाचः' इत्येतेषु विधिषु प्रवर्तनीयेषु ऊर्णोः णुवद्भावः 'ऊरीभागस्याविद्यमानत्वेन 'णु' धातुतुल्यत्वेन 'णु' धातौ यानि कार्याणि जायन्ते तानि जायन्ते, यानि न जायन्ते तानि न जायन्ते ' इति णुधातुवत्प्रयोगं साधयित्वा नुनाव नुनूषति इत्यादि प्रयोगसिध्युत्तरम् 'ऊर' भागस्य विद्यमानत्वमाश्रित्य णत्वे ऊर्णुनाव ऊर्णुनूषति ऊर्णोनूयते ऊर्णुत इत्यादि सिद्धिर्भवतीति रहस्यं सर्वैः प्राग्भिरनङ्गीकृतमेवागत्या स्वीकरणीयमेवेति प्रार्थना दाधिमथानाम् ॥ ६ **सिध्यतीति** । एवं चानन्यथासिद्धेट्प्रतिषेधार्थमावश्यकेन णुवद्भावेनैव यङ्सिद्धेरामप्रतिषेधस्य च सिद्धौ तदर्थं वार्तिकान्तरं न कर्तव्यमेवेति यङाम्विधिसूत्रयोर्भाष्ये स्पष्टम् ॥

शक्ल-पच्-मुच्-रिच्-वच्-विच्-सिच्-प्रच्छि-त्यज्-निजिर्-भजः ॥
भञ्ज्-भुज्-भ्रस्ज्-मस्जि-यज्-युज्-रुज्-रञ्ज्-विजिर्-स्वञ्जि-सञ्ज्-सृजः ॥ २ ॥
अद्-क्षुद्-खिद्-छिद्-तुदि-नुदः, पद्य, भिद्, विद्यति-विनद् ॥
शद्-सदी, स्विद्यति, स्कन्दि-हदी, क्रुध्, क्षुधि-बुध्यती ॥ ३ ॥
बन्धि-युधि-रुधी, राधि-व्यध्-शुधः, साधि-सिध्यती ॥
मन्य-हन्नाप्-क्षिप्-छुपि-तप्-तिपस्तृप्यति-दृप्यती ॥ ४ ॥
लिप्-लुप्-वप्-शप्-स्वप्-सृपि-यभ्-रभ्-लभ्-गम्-नम्-यमो, रमिः ॥
क्रुशि,-दंशि-दिशी, दृश्-मृश्-रिश्-रुश्-लिश्-विश्-स्पृशः, कृषिः, ॥ ५ ॥
त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्यतयो, घसिः ॥
वसति,-दह्-दिहि-दुहो, नह्-मिह-रुह्-लिह्-वहिस्तथा ॥ ६ ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥ तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥ ७ ॥
तृप्-दृपी, तौ वारयितुं श्यना निर्देश आदृतः ॥ किं च । दिवद्य-पद्यौ, सिध्य-बुध्यौ, मन्य-पुष्य-श्लिषः श्यना॥८॥

---

त्याद्यपि सिद्धम् । 'वसातिशक्लृघस्लृभ्यः' इति प्राचो ग्रन्थस्थं पाठमुपेक्ष्य हलन्तेषु कादिक्रमेणाह—**शक्लृ इति** । कान्त एकः । **चान्तेषु**–पच्मुच्रिच्वच्विच्सिचः षट् । **'डुपचष्** पाके' । '**पचि** व्यक्तीकरणे'[1] । द्वावपि पचित्यनेन गृह्येते । '**मुच्लृ** मोक्षणे' । रिचित्यनेन '**रिचिर्** विरेके' '**रिच** वियोजनसंपर्चनयोः' इति यौजादिकश्च गृह्यते । वचित्यनेन तु '**वच** परिभाषणे' ब्रुवो वचिरपि । वचियौंजादिकोऽपि गृह्यते । '**विचिर्** पृथग्भावे' । '**षिच** क्षरणे' । **छान्तेषु**–प्रच्छयेकः । **जान्तेषु**–त्यज्निजिर्सज्भञ्ज्भुज्भ्रस्ज्मस्ज्यज्युज्रुज्रञ्ज्विजिर्स्वञ्ज्सञ्जसृजः पञ्चदश । भुजित्यनेन '**भुज** पालनाभ्यवहारयोः' '**भुजो** कौटिल्ये' इति च गृह्यते युजित्यनेन '**युजिर्** योगे' । '**युज** समाधौ' इति च गृह्यते । केचित्तु व्याघ्रभूतिश्लोके भाष्ये च युजिरयेतत् '**युजिर्** योगे' इत्यस्यैकदेशोच्चारणमित्याहुः, तन्मते '**युज** समाधौ' सेट् । सृजित्यनेन तु '**सृज** विसर्गे' दिवादिस्तुदादिश्च गृह्यते । **दान्तेषु**–अद्क्षुद्खिद्छिद्तुद्नुद्पद्यभिद्विद्यतिविनद्शद्सद्स्विद्यस्कन्दहदः पञ्चदश । खिदित्यनेन '**खिद** दैन्ये' खिद्यतिः, खिन्दतिः, खिनत्तिश्च गृह्यन्ते ॥ **विद्यतीति** । '**विद** सत्तायाम्' ॥ **विनदिति** । '**विद** विचारणे' । **धान्तेषु**–क्रुध्क्षुध्बुध्यबन्ध्युध्रुध्राध्व्यध्शुध्साध्सिध्यतय एकादश । रुधित्यनेन '**रुधिर्** आवरणे' । '**अनो रुध** कामे' इति दिवादिश्च गृह्यते । नान्तेषु मन्यहनौ द्वौ । '**मन** ज्ञाने' दिवादिः ॥ **पान्तेषु**–आप्क्षिप्छुप्तप्तिप्तृप्यदृप्यालिप्लुप्वप्शप्स्वप्सृपस्त्रयोदश । क्षिपित्यनेन '**क्षिप** प्रेरणे' क्षिप्यतिः क्षिपतिश्च गृह्यन्ते । '**छुप** स्पर्शे' । तपित्यनेन '**तप** संतापे,' '**तप** ऐश्वर्ये' दिवादिः, '**तप** दाहे' इत्यपि णिजभावपक्षे गृह्यते[2] । '**तिपृ** क्षरणे' तृप्यतिदृप्यत्योर्वेट्कत्वेऽपि 'अनुदात्तस्य चर्दुपधस्य–३२०५' इत्यमर्थोऽयं पाठः। **भान्तेषु**–यभ्रभ्लभस्त्रयः । **मान्तेषु**–गम्नम्यम्रमश्चत्वारः।**शान्तेषु**–क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । '**रिश् रुश्** हिंसायाम्' । लिशित्यनेन '**लिश्** अल्पीभावे' दिवादिः, '**लिश्** गतौ' तुदादिश्च गृह्यते । **षान्तेषु**–कृष्त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष्य एकादश । कृषिति भौवादिकतौदादिकौ गृह्येते विषित्यनेन '**विष्लृ** व्याप्तौ' तिष्विष्मिषिति दण्डकस्थोऽपि गृह्यते । शिषित्यनेन '**शिष्लृ** विशेषणे' कषखषशिषेति दण्डकस्थश्च गृह्यते ॥ विषिति '**विष्लृ** व्याप्तौ' इति जौहोत्यादिक एव गृह्यते, न तु दण्डकस्थः । शिषित्यनेनापि '**शिष्लृ** विशेषणे' इति रौधादिक एव न तु दण्डकस्थ इति बोपदेवादयः । **सान्तेषु**–घस्लृवसती द्वौ, '**घस्लृ** अदने,' 'लुङ्सनोर्घस्लृ३२३३' इत्यत्तेरादेशस्य तु स्थान्यनुदात्तत्वेनापि सिद्धम् । **हान्तेषु**–दह्दिह्दुह्मिह्नह्रुह्लिह्वहयोऽष्टौ । दुहित्यनेन दुहिरिति भौवादिको न गृह्यते,किन्तु '**दुह** प्रपूरणे' इति आदादिक एवेति प्राञ्चः । इह मनोरमायां संग्रहश्लोक उक्तः–"कचच्छजा दधनपा भमशाः षसहाः क्रमात् । कचका णणटा खण्डो गघजाष्टखजाः स्मृताः॥" इति । तत्र पूर्वार्धोपात्ता ये चतुर्दश वर्णास्तदन्ता धातवः उत्तरार्धोपात्तकादिक्रमेण ये वर्णास्तत्संख्याका बोध्या इत्यर्थः । अत एव कान्त एकः, चान्ताः षट्, छान्त एकः, जान्ताः पञ्चदशेत्यादि व्याख्यानम् । क इत्येकस्य, च इति षण्णाम्, ण इति पञ्चदशानां संज्ञेत्याद्यभ्युपगमात् ॥ पान्तेषु द्वयोः श्यना निर्देशस्य फलमाह—**तुदादाविति** । तृप्दृपी मतभेदेन तुदादौ स्थितौ । चुरादौ तु तृपिः सर्वमते स्थितः दृपिस्त्वेकीयमतेनेति विवेकः । अत एव वक्ष्यति–'**तृप तृम्फ** तृप्तौ' । द्वावपि द्वितीयान्तावित्यन्ये । '**दृप दृम्फ** उत्क्लेशे' । प्रथमः प्रथमान्तः, द्वितीयो द्वितीयान्त इत्येके इति च

---

१ इदं दुर्गवर्धमानादिरीत्या—अन्त्यस्योदित्त्वस्वीकारेण भाष्येऽनिदित्पाठेन तद्ग्रहासम्भवात् । अत एव 'पचि विस्तारवचने' इति चुरादेरिदित्त्वाण्णिजभावेऽपि न ग्रहणम् ॥ इति शब्दरत्नम् ॥ २ इत्यपि णिजभावपक्षे गृह्यते इति । भाष्ये वपीति सामान्यत एव निर्देशादिति भावः ॥

वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ॥ णिजिर्-विजिर्-शक्ल-इति सानुबन्धा अमी तथा ॥ ९ ॥
विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते ॥ व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥ १० ॥
रञ्जि-मस्जी, अदि-पदी, तुद्, क्षुध्, शुषि-पुषी, शिषि:॥भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमतेः॥११॥

स्पर्ध संघर्षे । संघर्षः पराभिभवेच्छा । धात्वर्थेनोपसंग्रहादकर्मकः । स्पर्धते ॥ ( ३०२२ ) सू. **शर्पूर्वाः खयः** ।७।४।६१। अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते । [२१३३]हलादिः शेष इत्यस्यापवादः । पस्पर्धे । स्पर्धिता । स्पर्धिष्यते । स्पर्धताम् । अस्पर्धत । स्पर्धेत । स्पर्धिषीष्ट । अस्पर्धिष्ट । अस्पर्धिष्यत ॥ २ ॥ **गाधृ** प्रतिष्ठालिप्सयोर्ग्रन्थे च । गाधते । जगाधे ॥४॥ **बाधृ** लोडने । लोडनं प्रतिघातः । बाधते ॥५॥ **नाथृ नाधृ** याच्ञोपतापैश्वर्याशीःषु ॥ (३०२३) वा. **आशिषि नाथ इति वाच्यम्** ॥ अस्याशिष्येवात्मनेपदं स्यात् । नाथते अन्यत्र नाथति ॥६॥नाधते॥७॥ **दध** धारणे । दधते॥ ( ३०२४ ) सू. **अत एकहल्मध्येऽनादेशादेर्लिटि** ।६।४।१२०। लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयव-स्यासंयुक्तहल्मध्यस्थस्याकारस्य एकारः स्यादभ्यासलोपश्च किति लिटि ॥ ( ३०२५ ) सू. **थलि च सेटि** । ६ । ४ । १२१ । प्रागुक्तं स्यात् । आदेशश्चेह वैरूप्यसंपादक एवाश्रीयते । [१]शसिदद्योः प्रतिषेधवचनाज्ज्ञापकात् । तेन प्रकृ-तिजश्चरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव । देधे । देधाते । देधिरे । अतः किम् । दिदिवतुः । तपरः किम् ।

---

तुदादौ । चुरादौ तु 'तृप तृप्तौ' । '**तृप दृप** संदीपने' इत्येके इति च ॥ **अन्यनिवृत्तये इति** । निवर्तनीयास्तु-'**ञिष्विदा** स्नेहनमोचनयोः' । '**पद** स्थैर्ये' । '**षिध** गत्याम्' । '**षिधू** शास्त्रे माङ्गल्ये च' । '**बुधिर्** बोधने' इति भौवादिकाः । '**मनु** अव-बोधने' तानादिकः । '**पुष** पुष्टौ' भौवादिकः क्रैयादिकश्च । '**श्लिष** दाहे' भौवादिकः । '**वस** आच्छादने' आदादिकः, एते अनुदात्तत्वराहित्यात् सेटः । '**युञ्** बन्धने' क्रैयादिकोऽयमनुदात्त इत्यनिट् । श्यना निर्देशेन संग्राह्यास्तु-'**ञिष्विदा** गात्रप्रक्ष-रणे' । '**पद** गतौ' । '**षिधु** संराद्धौ' । '**बुध** अवगमने' । '**मन** ज्ञाने' । '**पुष** पुष्टौ' । '**श्लिष** आलिङ्गने' । **वस** 'निवासे'। एतेऽनिटः । 'यु' मिश्रणामिश्रणयोः' । अयं सेट् ॥ '**अमी तथेति** । '**णिजि** शुद्धौ' '**ओविजी** भयचलनयोः' '**शक** मर्षणे' । इत्येवं क्रमेण आदादिकतौदादिकदैवादिकानां व्यावृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः । **विन्दतिरिति** । '**विद्लृ** लाभे' । **इष्ट इति** । अनिट्त्वेनेति शेषः ॥ **भाष्यानुक्ता इति** । भाष्यकृताऽनुक्ताः, न तु प्रत्याख्याता इति नास्तीह तद्विरोधः । ततश्च व्याघ्रभूत्यादिग्रन्थानुरोधात् 'शुष्क धृष्टौ ५५६९' 'क्तेन नञ्विशिष्टेनानञ् १०६७' इत्यादि सौत्रप्रयोगादत्तुं प्रतिपत्तुमित्यादि-सार्वलौकिकव्यवहाराच्च उपलक्षणतयैव भाष्यं नेयमिति भावः ॥ **अकर्मक इति** । अत्र केचित्-अभिभवेच्छा धात्वर्थः । तथा च-स्पर्धार्थकस्य सकर्मकता दृश्यते 'आह्वास्त मेरावमरावतीं या' इति । उदाहरिष्यते च-'स्पर्धायामाङः ३६२४' इत्यत्र स्वय-मेव 'कृष्णश्चाणूरमाह्वयते स्पर्धत इत्यर्थः' इति । श्रीहर्षोऽपि प्रायुङ्क्त—'तन्नासत्ययुगान्तं वा त्रेता स्पर्धितुमर्हति' इति । अतोऽस्य सकर्मकत्वं न्याय्यमित्याहुः ॥ ( ३०२२ ) **शर्पूर्वाः**—। अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः । तेन शरो न शेषः,किन्तु खयामेव । इह स्पर्ध इत्यत्र रेफस्यापि द्वित्वं भवति द्वितीयस्यैकाचः संबन्धिरेफस्यैव 'न न्द्राः—३२५६' इति निषेधादिति बोध्यम् ॥ **गाधृ** । ऋकारो 'नाग्लोपिशास्वृदिताम् ३४१२' इति निषेधार्थः । अजगाधत् । [३]आस्पदं स्थापनम् अवस्थानं वा प्रतिष्ठा । [४]एकत्र स्थापनं संदर्भो वा ग्रन्थः ॥ **नाथृ नाधृ** । उपतापो रोगः ॥ ( ३०२३ ) अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्तिकमित्याह—**आशिष्येवेति** ॥ ( ३०२४ ) **अत एकहल्-मध्ये**—। इष्टानुरोधेन लिटीत्यावर्त्य आदेशविशेषणमेतस्य निमित्तं च क्रियत इत्याह—**लिण्निमित्तेति** । **किति लिटि** । यद्यपि'गमहन-३१५६' इति सूत्रे क्ङितीति वर्तते तथापि प्रयोजनाभावात् ङितीत्येतन्नानुवर्तत इति भावः । एक-शब्दोऽत्रासहायवचनः । एकयोर्हलोर्मध्ये इत्यर्थः । तद्व्याचष्टे-**असंयुक्तेति** । किति किम्, ननाद । लिटि किम्, पापच्यात् ॥

---

१ **शसिदद्योरिति**-यद्यत्र सामान्यतो ग्रहणं स्यात्तर्हि शसिदद्योरपि 'अभ्यासे चर्च' इति चर्त्वेनादेशादित्वादेवैत्वाभ्यास-लोपौ न भविष्यत इति तन्निषेधार्थः पाठो व्यर्थः स्यादिति भावः ॥ शसिदद्योरिति द्विवचनेन "अभ्यासे चर्च" इत्यत्र 'झशां जशः खरां चरः' इत्येव पाठो युक्तः, अत एव "प्रकृतिचरां प्रकृतिचरः" इत्येवं भाष्योक्तमत्राप्यग्रे वक्ष्यमाणं स्थानिवु-चर्पदोपादानं संगच्छते ॥ 'खयां चरः' इति पाठे तु शसधातोर्ज्ञापकत्वकथनमसङ्गतं स्यादिति विभावयन्तु सुधियः ॥ २ **ओविजीति** । न चास्य, ईदित्त्वसामर्थ्यादत्र सेट्कत्वावधारणे सिद्धे विजिरिति सानुबन्धपाठो व्यर्थ इति वाच्यम् । तत एवैवं पाठात् ॥ ३ प्रसिद्धकरं नामग्रामादि वा । यथा-'मया प्रतिष्ठा लब्धा' इति ॥ स्थापनेति । यथा 'त्वयाऽस्य प्रतिष्ठा कृता इति । अवस्थानमिति ॥ यथा 'क ते प्रतिष्ठा' इति ॥ इति शब्दरत्नम् । ४ एकत्र स्थापनं मण्यादेः, सूत्रादेर्वा **संदर्भ इति** । शब्दानामित्यर्थः ॥ इति शब्दरत्नम् ॥

रराखे। एकेत्यादि किम्। तत्सरतुः। अनादेशादेः किम्। चकणतुः। लिट आदेशविशेषणादिह स्यादेव-नेमिथ। सेहे। ८॥ स्कुदि आप्रवणे। आप्रवणमुत्प्लवनमुद्धरणं च॥ (३०२६) ॥ इदितो नुम् धातोः।७।१।५८। स्कुन्दते। चुस्कुन्दे॥ ९॥ श्विदि श्वैत्ये। अकर्मकः। श्विन्दते। शिश्विन्दे। १०॥ वदि अभिवादनस्तुत्योः। वन्दते। ववन्दे। ॥ ११॥ भदि कल्याणे सुखे च। भन्दते। बभन्दे। १२॥ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। मन्दते। ममन्दे। १३॥ स्पदि किंचिच्चलने। स्पन्दते। पस्पन्दे। १४॥ क्लिदि परिदेवने। शोक इत्यर्थः। सकर्मकः। क्लिन्दते चैत्रम्। चिक्लिन्दे। १५॥ मुद हर्षे। मोदते। मुमुदे॥ १६॥ दद दाने। ददते॥ ( ३०२७ ) ॥ न शसदद-वादिगुणानाम्। ६। ४। १२६। शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्य एत्वाभ्यासलोपौ न। ददुदे। दददाते। दददिरे। १७॥ ष्वद स्वर्द आस्वादने। अयमनुभवे सकर्मकः। रुचावकर्मकः॥ ( ३०२८ ) ॥ धात्वादेः षः सः। ६। १। ६४। धातोरादेः षस्य सः स्यात्। सात्पदाद्योरिति[२८६३] षत्वनिषेधः। अनुस्वदते। सस्वदे। १८॥ स्वर्दते। सस्वर्दे। १९॥ उर्द माने क्रीडायां च॥ ( ३०२९ ) ॥ उपधायां च। ८। २। ७८। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परतः इको दीर्घः स्यात्। ऊर्दते। ऊर्दांचक्रे। २०॥ कुर्द खुर्द गुर्द गुद क्रीडायामेव। कूर्दते। चुकूर्दे। २१॥ खूर्दते। २२॥ गूर्दते। २३॥ गोदते। जुगुदे। २४॥ षूद क्षरणे। सूदते। सुषूदे॥

---

चकणतुरिति। न चैवमपि बभणतुरित्यत्र 'अभ्यासे चर्च २९३६' इत्यस्यासिद्धत्वादेत्वाभ्यासलोपौ स्त एवेति वाच्यम्, फलभजग्रहणेन एत्वविधिं प्रति तत्सूत्रस्य सिद्धत्वज्ञापनात्। एवं च 'आदेशश्चेह वैरूप्यसंपादक एव गृह्यते' इति व्याख्यानमवश्यं कर्तव्यमेवेति दिक्॥ **मदि स्तुति-**। मोदः संतोषः। मदो गर्वः। स्वप्न आलस्यम्॥ (३०२७) **न शसदद-**। 'शसु हिंसायाम्' दन्त्यान्तः। सूत्रेऽवयवाऽवयविभावः षष्ठ्यर्थः। तथा च-शसददवादीनां योऽकार इत्यन्वयसंभवेऽपि अकारस्य गुणरूपत्वाद्भेदनिबन्धना षष्ठी न संभवतीत्याशङ्क्य तन्निर्वाहार्थं व्याचष्टे--**गुणशब्देन भावितस्येति**। भावितत्वं च साक्षात्परंपरासाधारणम्। तथा च-शशरतुः पपरतुरित्यादौ गुणशब्देन क्रियमाणो योऽर्, तदवयवोऽकारः, लुलविथेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्यावादेशस्यावयवोऽकार इत्यर्थान्नास्त्यत्रानुपपत्तिः॥ **ददद इति**। शशसतुः। शशसुः। ववमतुः। ववमुरित्यादावपि निषेधो बोध्यः॥ **ष्वद स्वर्द। अयमिति**। प्रत्येकाभिप्रायेणोक्तमित्याहुः॥ **सकर्मक इति**। स्वदस्व हव्यान्यनुभवेत्यर्थः॥ **अकर्मक इति**। 'अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा' इति श्रीहर्षः। न स्वदते। न रोचते इत्यर्थः॥ (३०२८) **धात्वादेः-**। धातुग्रहणं किम्, षँट्-षड्। आदेः किम्, लेषाति॥ ( ३०२९ ) **उपधायां च**। 'सिपि धातोः-३३०३' इत्यतो धातोरित्यनुवर्तते, 'र्वोरुपधायाः-५८०' इत्यतः र्वोरिकः दीर्घ इति, 'हलि च ४८१' इत्यतो हलीति च, तदाह—**धातोरित्यादि**। धातोः किम्, 'ऊडुतः ७५०' कुरूः कुर्वौ कुर्व इत्यत्रेको दीर्घो मा भूत्। न चात्र रेफस्य प्रातिपदिकोपधात्वेऽपि पदोपधात्वाभावादेव दीर्घो न भवेदिति धातोरित्यनुवर्तनमिहानावश्यकमिति वाच्यम्, पदस्येत्यनुवृत्तौ तु कूर्दते खूर्दते इत्याद्यसिद्धिप्रसङ्गात्। वस्तुतस्तु-पूर्वत्रासिद्धे न स्थानिवदिति स्वीकारात् 'अचः परस्मिन्-७७' इति स्थानिवत्त्वस्य निषेधाभ्युपगमेऽपि कार्यकालपक्षे 'असिद्धं बहिरङ्गम्-७२' इति परिभाषायाः प्रवृत्तेर्बहिरङ्गस्य यणोऽसिद्धत्वात् कुर्वौ कुर्व इत्यत्र 'उपधायां च ३०२९' इति दीर्घो न भवेदिति धातुग्रहणाऽनुवर्तनस्य नात्यन्तावश्यकता, पदस्येत्यनुवृत्त्या कूर्दते इत्यादौ दीर्घः सिद्ध्यत्येवेत्याहुः। रेफवकारयोः किम्, (पुष्प विकसने) पुष्प्यति। हल्परयोः किम्, चिरिणोति। जिरिणोति। इकः किम्, अर्वते। नर्दति। ननु 'हलि च ४८१' इत्यत्र रेफवकारयोर्हल्परयोरिको दीर्घः स्यादिति व्याख्यायां कूर्दते गूर्दते इत्यादि सिध्यत्येवेति सूत्रमिदं व्यर्थमिति चेत्। अत्राहुः--'हलि च ४८१' इत्यत्र धातुग्रहणमनुवर्तनीयमेव। अन्यथा दिवमिच्छति दिव्यतीत्यादावतिप्रसङ्गः स्यात्। तथा च 'उपधायां च ३०२९' इति सूत्राभावे उपधाभूतयोः र्वोः परतो दीर्घो न स्यात्, किन्तु रेफवान्तयोरेव धात्वोः 'हलि च ४८१' इति सूत्रेण स्यादित्ये-

---

१ **अनादेशादेः किमिति**। ननु तद्ग्रहणाभावे फेलुः-भेजुरित्यादावप्यनेनैवेत्वाभ्यासलोपयोः सिद्धयोः-'तॄफलभजत्रपश्च' इति सूत्रे फलभजग्रहणस्य 'आदेशादेर्यद्येत्वाभ्यासलोपौ, तर्हि फलिभज्योरेव' इति नियमेन चकणतुरित्यादौ दोषाभावात्तद्ग्रहणं निष्फलमेवेति चेन्न-तथा नियमे नेमिथ, सेहे इत्यादावप्येत्वाभ्यासलोपानुपपत्तेः॥ २ मोदते इत्यत्र सावकाशस्य लघूपधगुणस्य ईजतुरित्यादौ सावकाशस्य लिटः किस्त्वस्य च मुमुदे इत्यादौ प्राप्तौ परत्वाद्गुणे प्राप्ते नित्यत्वात् कित्त्वमेव भवति न गुण इति भावः॥ ३ 'न शसददवादिग्रहणाम्' इत्येव सिद्धे गुणग्रहणसामर्थ्याद्गुणशब्देन भावितस्थानिकत्वमादाय 'लुलविथ' इत्यादावपि प्रवृत्तिरिति भावः॥ इति शब्दरत्नम्॥ ४ **षट् षडिति**। वस्तुत 'आदेच उपदेशे' इत्यत उपदेशपदानुवृत्त्या उपदेशे षादिश्च धातुरेव न प्रातिपदिकम् **'उद्देशश्च प्रातिपदिकानां नोपदेशः'** इति भाष्याद् दोषाभावेन, धातुग्रहणं स्पष्टार्थमेव॥ ५ **लषतीति**। न चास्य सत्वे षकारोच्चारणवैयर्थ्यमिति वाच्यम्। लेषतुः-लेषुरित्यत्र षत्वसंपत्त्या चरितार्थत्वात्॥ ६ अपिना 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इत्युक्त्या प्रकृते लोपाजादेशत्वाभावेन निषेधाप्रवृत्तेरनङ्गीकारेऽपीत्यत्रास्वरसः सूचितः॥ ७ **नात्यन्तावश्यकतेति**-'कार्यकालपक्षेऽपि बहिरङ्गपरिभाषायास्त्रिपाद्यामप्रवृत्तिरेव' इति विसर्जनीयसूत्रे भाष्यकृताऽङ्गीकृतत्वात् धातुग्रहणानुवर्तनस्यावश्यकत्वमेवेति बोध्यम्॥

( ३०३० ) सेक्-सृप्-सृ-स्तृ-सृज्-स्तॄ-स्त्यान्ये दन्त्याजन्तसादयः ॥
एकाचः षोपदेशाः ष्वष्क्-स्विद्-स्वद्-स्वञ्ज-स्वप्-स्मिङः ॥ १ ॥

[ दन्त्यः[1] केवलदन्त्यो न तु दन्तोष्ठजोऽपि, ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात् । ] २५ ॥ ह्लाद अव्यक्ते शब्दे । ह्लादते । जह्लादे । २६ ॥ ह्लादी सुखे च । चादव्यक्ते शब्दे । ह्लादते । २७ ॥ स्वाद आस्वादने । स्वादते । २८ ॥ पर्द कुत्सिते शब्दे । गुदरवे इत्यर्थः । पर्दते । २९ ॥ यती प्रयत्ने । यतते । येते । ३० ॥ युतृ जुतृ भासने । योतते । युयुते । ३१ ॥ जोतते । जुजुते । ३२ ॥ विथृ वेथृ याचने । विविथे । ३३॥विवेथे । ३४ ॥ श्रथि शैथिल्ये । श्रन्थते । ॥ ३५ ॥ ग्रथि कौटिल्ये । ग्रन्थते । ३६ ॥ कत्थ श्लाघायाम् । कत्थते । ३७ ॥ एधादयोऽनुदात्तेतो गताः ॥

अथाष्टात्रिंशत्तवर्गीयान्ताः परस्मैपदिनः॥ अत सातत्यगमने । अतति । अतं आदेः । आत । आततुः। आतुः। लुङि आतिस् ई त् इति स्थिते-॥ ( ३०३१ ) (सू) इट ईटि । ८ । २ । २८ । इटः परस्य सस्य लोपः स्यादीटि परे ॥ ( ३०३२ ) (वा) सिज्लोप एकादेशे सिद्धो वाच्यः ॥ आतीत् । आतिष्टाम् । आतिषुः ॥ (३०३३) (सू) वदव्रजहलन्तस्याचः । ७ । २ । ३ । वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु । इति प्राप्ते-॥ ( ३०३४ ) नेटि । ७ । २ । ४ । इडादौ सिचि प्रागुक्तं न स्यात् । मा भवानतीत् । अतिष्टाम् । मा भवानतीत् । अतिष्टाम् । अतिषुः । १ ॥ चिती संज्ञाने । चेतति । चिचेत । अचेतीत् । अचेतिष्टाम् । अचेतिषुः । २ ॥ च्युतिर् आसेचने । सेचनमार्द्रीकरणम् । आङीषदर्थेऽभिव्याप्तौ च ॥ ( ३०३५ ) (वा) इर इत्संज्ञा वाच्या ॥

---

तत्सूत्रमावश्यकमेवेति ॥ सूदते इति । स्रवतीत्यर्थः । ( ३०३० ) ननु स्वर्दतिवत् स्वद सूदेति दन्त्यादय एव धातवः पठ्यन्ताम्, षोपदेशान् पठित्वा सत्वविधौ गौरवात् । मैवम्, तथाहि सति ण्यन्ताच्चङि असिष्वदत् असूषुदत्--इत्यादौ लिटि सुष्वदे सिषेधेत्यादौ च 'आदेशप्रत्यययोः २९८' इति षत्वं न स्यात् । इणः परस्य सकारमात्रस्य षत्वविधौ तु सुपिसौ सुपिस इत्यादावपि स्यादिति धातुपाठे पाणिनिना तालव्यदन्त्यादिपाठवत् षोपदेशा अपि व्यवस्थयैव पठिताः, स च पाठ इदानीं परिभ्रष्टः । साधादिषु सादिपाठस्यैव दृश्यमानत्वात् ॥ अतो लक्षणमुखेन तान्व्यवस्थापयति-सेगित्यादि । दन्त्यश्च अच दन्त्याचौ तौ अन्तौ अव्यवहितपरौ[2] यस्य स दन्त्याजन्तः, दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्यान्तसादयोऽजन्तसादयश्चैकाचः षोपदेशा बोध्याः । तथा च साधादौ सांप्रतं पठ्यमानः सकार उपदेशे न स्थित इत्यनुमेयमिति भावः । दन्त्येत्यादि किम्, चुस्कुन्दे । एकाचः किम्, । सोसूच्यते । सोसूत्र्यते । सूचिसूत्री चुरादावदन्तौ ॥ उक्तलक्षणस्यातिव्याप्तिं वारयितुमाह-सेगिति । 'सेकृ गतौ' । 'सृप्लृ गतौ' । 'सृ गतौ' । 'स्तृञ् आच्छादने' । 'सृज विसर्गे' । 'स्तॄञ् आच्छादने' । 'स्त्यै[3] शब्दसंघातयोः', । एभ्योऽन्ये ॥ पूर्वेण केषांचिदसंग्रहादाह--ष्वष्केति । 'ष्वष्क गतौ' । 'ञिष्विदा गात्रप्रक्षरणे' । 'स्वद आस्वादने' । 'ष्वञ्ज परिष्वङ्गे' । 'ञिष्वप् शये' । 'ष्मिङ् ईषद्धसने' । एते षोपदेशा इत्यन्वयः । 'स्वाद आस्वादने' इत्यादावतिव्याप्तिमाशङ्क्याह--दन्त्यः केवलदन्त्य इति । तथा च असिस्वददित्यादौ षत्वं नेति भावः । ह्लादी सुखे च । चादव्यक्ते शब्दे । ईकारः 'श्वीदितो निष्ठायाम् ४०५२' इतीण्निषेधार्थः । प्रह्लन्नः, प्रह्लन्नवान् । 'इह 'ह्लादो निष्ठायाम् ४०९०' इत्युपधाह्रस्वः ॥ श्लाघायामिति । अविद्यमानगुणसंबन्धज्ञापनं श्लाघा ॥ आततुरिति । हल्मध्यस्थत्वाभावादेत्वं न ॥ ( ३०३१ ) इट ईटि । 'संयोगान्तस्य लोपः ८१' इत्यतो लोप इति 'रात्सस्य ३९१' इत्यतः सस्येति चानुवर्तते, तदाह-लोपः स्यादिति । इटः किम्, अहार्षीत् । ईटि किम्, आतिष्टाम् । आतिषुः ॥ (३०३२) सिज्लोप इति । अत्र वदन्ति-सलोप इति वक्तव्ये सिज्ग्रहणं 'झलो झलि ३०४८' इत्यादिसूत्रत्रयं सिज्विषयकमिति ज्ञापनार्थम् । तेनेह न-सोमसुत् । स्तोता । द्विष्टराम् । द्विष्टमाम् । 'धि च ३०११' इति सूत्रे तु वामनमते[4] सिचो लोपः । भाष्यमते तु सस्येति भेदो बोध्य इति॥ (३०३३) वदव्रज-। अवादीत् । अव्राजीत् । 'अतो हलादेः-३०५१' इति विकल्पं बाधित्वा अनेन नित्यं वृद्धिः । हलन्तस्योदाहरणमपाक्षीत् , अधाक्षीदिति । तदन्तविधिनैव सिद्धे अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् । 'हलोऽच' इत्युक्ते त्वजन्ताङ्गस्य हलः स्थाने वृद्धिरिति कदाचिदाशङ्क्येत । अच इति तु इक्परिभाषाया अनुपस्थानार्थम् । अन्यथा अभैत्सीदित्यत्र स्यान्न त्वपाक्षीदित्यादौ ॥ (३०३४) नेटि । प्रागुक्तं नेति । हलन्तत्वादेव सिद्धे वदव्रजोर्विशिष्य विधानान्न निषेधः, किन्तु हलन्तलक्षणाया एव वृद्धेर्निषेधः, तस्या अनिडादौ सिचि चरितार्थत्वात् । अमुमेवार्थं मनसि निधाय कचित्पुस्तकेषु हलन्तलक्षणा वृद्धिर्नेत्येव पठ्यते ॥ ( ३०३५ ) इर इत्संज्ञेति । इकारस्य 'उपदेशेऽजनुनासिकः-६' इति रेफस्य तु 'हलन्त्यम् ५' इति प्रत्येकमित्संज्ञायामिदित इति नुम् स्यादिति भावः । एतस्य वैयर्थ्यं 'चक्षिङ्

---

१ स्थानिवत्प्रकरणभाष्यानङ्गीकृतस्य 'अगुह्वहि' इत्यत्र क्सलुकः साधनाय प्रौढ्या प्रवृत्तस्य कैयटस्यानुरोधेनायं कोष्ठकान्तर्गतो ग्रन्थः॥भाष्यप्रातिशाख्यादिसंमतेऽन्तस्थावकारस्य दन्त्यत्वाभावे तु स्वीकृते नास्य ग्रन्थस्योपयोग इति दाधिमथा वदन्ति ॥ २ अव्यवहितपराविति । अव्यवधानांशलाभस्तु पर्युदासस्य सदृशग्राहित्वाद् बोध्यः ॥ ३ स्त्यै शब्दसंघातयोरिति । पर्युदासे मूलमत्र स्त्यै ष्ट्यै इति द्विः पाठ एवेति वेदितव्यम् ॥ ४ वामनमते इत्यनेन सूचितामरुचिं प्रकटयति-भाष्यमते त्विति । 'चकाधीत्येवेष्यते' इत्याकरसिद्धान्तः ॥

च्योतति । चुच्योत ॥ ( २०३६ ) (सू) इरितो वा । ३ । १ । ५७ । इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदे परे । अच्युतत्, अच्योतीत् । ३ ॥ श्च्युतिर् क्षरणे । श्च्योतति । चुश्च्योत । अश्च्युतत्, अश्च्योतीत् । ४ ॥ यकाररहितोऽप्ययम् । श्चोतति । ५ ॥ मन्थ विलोडने । विलोडनं प्रतीघातः । मन्थति । ममन्थ । यासुटः किदाशिषीति कित्त्वाँ-दनिदितामिति नलोपः । मथ्यात् । ६ ॥ कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः । इदित्वान्नलोपो न । कुन्थ्यात् । मन्थ्यात् । १० ॥ षिध गत्याम् । सेधति । सिषेध । सेधिता । असेधीत् । सात्पदाद्योरिति निषेधे प्राप्ते—॥

( २०३७ ) (सू) उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । ८ । ३ । ६५ । उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात् ॥ ( २०३८ ) (सू) सदिरप्रतेः । ८ । ३ । ६६ ॥ प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात् ॥ ( २०३९ ) (सू) स्तन्भेः । ८ । ३ । ६७ । स्तन्भेः सौत्रस्य सस्य षः स्यात् । योगविभाग उत्तरार्थः । किञ्च, अप्रतेरिति नानुवर्तते । बाहुप्रतिष्टम्भविवृद्धमन्युः ॥ ( २०४० ) (सू) अवाच्चालम्बनाविदूर्ययोः । ८ । ३ । ६८ । अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात् ॥ ( २०४१ ) (सू) वेश्च स्वनो भोजने । ८ । ३ । ६९ । व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने ॥ ( २०४२ ) (सू) परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् । ८ । ३ । ७० । परिनिविभ्यः

---

व्यक्तायां वाचि १०४२' इत्यत्र स्फुटीभविष्यति ॥ **चुश्च्योतेति** । 'शर्पूर्वाः खयः ३०२२' ॥ **यकाररहितोऽप्ययमिति** । तथा च प्रयुज्यते 'मधुश्चुतं घृतमिव सुपूतम्' इति ॥ **मन्थ** । अयं क्र्यादावपि । 'षिध गत्याम्' । अयमुदिदिति केचित् । तत्तु सिध्यतिबुध्यत्योः श्यना निर्देशात् सिधितं बुधितमिति वृत्तिग्रन्थविरुद्धम् । उदित्त्वे तु 'उदितो वा ५१४९' इति क्त्वायामिड्विकल्पान्निष्ठायामिड् न स्यात्, 'यस्य विभाषा ४०२६' इति निषेधात् ॥ **सिषेधेति** । 'आदेशप्रत्यययोः २९८' इति षत्वम् ॥ ( ३०३७ ) **उपसर्गात्**—। 'सुनोति सुवति' इत्यादि श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । तेन अभिसोषवीति अभिसोषोतीत्यादौ षत्वं नेति प्राञ्चः । स्थादिष्वेवाभ्यासस्य षत्वं न तु सुनोत्यादिष्विति नियमान्नेह षत्वप्राप्तिरिति व्यर्थः प्रतिषेध इति मनोरमादौ स्थितम् । सेनयेति णिजन्तो नामधातुः । सेनया अभियाति अभिषेणयति । सेधेति शपा निर्देशाद्भौवादिकस्य ग्रहणं, न तु सिध्यतेः । परिसिध्यति ॥ गृहा दारा इत्यत्रेव 'तात्स्थ्यात्ताच्छब्द्यम्' इत्याह—**उपसर्गस्थादिति** ॥ **निमित्तादिति** । इण्रूपात् । कवर्गस्तु नेह संबध्यते, असंभवात् । न च निःषुणोति, निःषेधति, निःषिञ्चतीत्यादौ व्यवधानेन इणः परत्वाभावात् सस्य षत्वं न स्यादिति शङ्क्यम्, षत्वविधौ 'नुम्विसर्जनीयशर्व्यवायेऽपि ५८१' इत्यधिकारात् । इणन्तादुपसर्गादिति व्याख्याने तु स्यादेवात्राव्याप्तिः । 'दुरः षत्वणत्वयोः—२९८७' इत्युपसर्गत्वप्रतिषेधाद्दुःसुनोति दुःसेधतीत्यादौ तु षत्वेन न भवितव्यमिति दिक् ॥ मूर्धन्यादेशे फलितमाह—**सस्य षः स्यादिति** । ( ३०३८ ) 'स्थादिषु ३०४४' 'प्राक् सितात्—३०४३' इत्यत्र क्रमज्ञानस्यापेक्षितत्वात्तेनैव क्रमेण षत्वसूत्राणि व्याचष्टे—**सदिरप्रतेः** । अप्रतेः किम्, प्रतिसीदति । षष्ठ्यर्थे प्रथमेत्याह—**सदेरिति** ॥ ( ३०३९ ) **स्तन्भेः सौत्रस्येति** । 'स्तन्भुस्तुन्भु—३३८६' इति सूत्रे निर्दिष्टस्य रोधनार्थस्य, न तु 'ष्टभि प्रतिबन्धे' इत्यस्येति भावः । एवं 'जॄस्तन्भु—३०६१' इत्यङ्विधायकसूत्रेऽपि सौत्रस्यैव ग्रहणमिति बोध्यम्, एतच्च 'लक्षणप्रतिपदोक्त—११५३-२' परिभाषया लभ्यते । सौत्रो हि धातुर्नकारोपध इति प्रतिपदोक्तः । इदित्त्वान्नुमि ष्टभिर्लाक्षणिकः । तेन विस्तम्भते इत्यादौ षत्वं न । 'उदः स्थास्तम्भोः—१८३' इति सूत्रे मकारोपधग्रहणेनोभयोरपि ग्रहणादुत्तम्भते इति द्वयोरपि रूपं तुल्यं, मकारस्योभयत्रापि लाक्षणिकत्वात् ॥ **उत्तरार्थ इति** । उत्तरसूत्रे स्तन्भेरेवानुवृत्त्यर्थ इति भावः । ननु 'सदिस्तन्भ्योः' इति सूत्रितेऽपि एकदेशे स्वरितत्वप्रतिज्ञानात्कथंचिदनुवृत्तिर्भविष्यतीत्यत आह—**किंचेति** ॥ **नानुवर्तत इति** । तथा च 'स्तन्भेः ३०३९' इत्यत्राऽननुवृत्तये योगविभाग आवश्यक इति भावः ॥ ( ३०४० ) **अवाच्चा**—। चकारश्चिन्त्यप्रयोजन इत्याहुः । आलम्बनमाश्रयणम् । यथा यष्टिमवष्टभ्य आस्ते । तामाश्रित्य तिष्ठतीत्यर्थः । आविदूर्यं सामीप्यम् । तच्च प्रयोगोपाधिः । अवष्टब्धा गौः । निरुद्धा सती समीपे आस्त इत्यर्थः । एतयोः किम्, अवस्तब्धो वृषलः शीतेन । केचिदिह अविदूरशब्दात्स्वार्थे ष्यञ् । आविदूर्यमनतिदूरम् । ईषद्दूरमित्यर्थः । तथा च अविदूरशब्दात् 'न नञ्पूर्वात्तत्पुरुषात्—२४१४' इति निषेधे प्राप्ते अत एव निपातनाद्भावे प्रत्यय इति मनोरमाग्रन्थोक्तिर्नातीवोपयुज्यत इत्याहुः ॥ ( ३०४१ ) **वेश्च**—। विष्वणति । सशब्दं भुङ्क्त इत्यर्थः । 'अट्कुप्वाङ्—२८२' इति णत्वम् । एवमवष्वणति । व्यष्वणत् । विषष्वाण । 'स्थादिष्वभ्यासेन—३०४४' इति षत्वम् । भोजने किम्, विस्वनति वीणा ॥ ( ३०४२ ) **परिनिविभ्यः**—। सेवेत्यत्र अकार उच्चारणार्थः । न च यङ्लुङ्निवृत्तये शपा निर्देश एवास्त्विति शङ्क्यम्, वकारान्तानामूठ्भाविनां यङ्लुग् नास्तीति वक्ष्यमाणत्वात् । 'षेवृ सेवायाम्' परिषेवते । 'षिञ् बन्धने' । क्तान्तः सितशब्दः, एरजन्तः पचाद्यजन्तो वा सयशब्दः । विषितः । विषयः । प्रत्ययविशिष्टग्रहणं किम्, विसिनोति, 'षिवु तन्तुसन्ताने' । परिषीव्यति । 'षह मर्षणे' । परिषहते । सुडागमः, परिष्करोति । विष्करोति । स्तुस्वञ्जोः 'उपसर्गात्सुनोति—३०३७' इत्येव सिद्धे परिनिविभ्यः परयोरेतयोः 'सिवादीनां वाऽड्व्यवायेऽपि ३१५२' इति विकल्पार्थं

---

१ अत एव न्यासपदमञ्जर्योरपि 'षिधेरुदित्त्वमनार्षम्' इत्युक्तम्—इति मनोरमा ॥

परेषामेषां सस्य षः स्यात् । निषेधति ॥ ( ३०४३ ) (सू) प्राक्सितादड्व्यवायेऽपि । ८ । ३ । ६३ । सेवसिते-त्यत्र सितशब्दात्प्राग् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत् । न्यषेधीत् । न्यषेधिष्यत् ॥ ( ३०४४ ) (सू) स्थादिष्वभ्यासेन चाभ्यासस्य । ८ । ३ । ६४ । प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् । एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम् । निषिषेध । निषिषिधतुः । १० ॥ ( ३०४५ ) (सू) सेधते-र्गतौ । ८ । ३ । ११३ । गत्यर्थस्य सेधतेः षत्वं न स्यात् । गङ्गां विसेधति ॥ ११ ॥ षिधू शास्त्रे माङ्गल्ये च । शास्त्रं शा-सनम् ॥ (३०४६) (सू) स्वरतिसूतिसूयतिधूञूदितो वा । ७ । २ । ४४ । स्वरत्यादेरूदितश्च परस्य वलादेरार्धधा-तुकस्येड्वा स्यात् ॥ (३०४७ ) (सू) झषस्तथोर्धोऽधः । ८।२।४० । झषः परयोस्तथयोर्धः स्यान्न तु दधातेः । जङ्त्वम् । सिषेद्ध, सिषेधिथ । सेद्धा, सेधिता । सेत्स्यति, सेधिष्यति । असैत्सीत् ॥ (३०४८) (सू) झलो झलि । ८।२।२६ । झलः परस्य सस्य लोपः स्यात् झलि । असैद्धाम् । असैत्सुः । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म । पक्षे, असेधीत् । असेधिष्टाम् । इत्यादि । १२ ॥ खादृ भक्षणे । ऋकार इत् । खादति । चखाद । १३ ॥ खद स्थैर्ये हिंसायां च । चाद्भक्षणे । स्थैर्ये अकर्मकः । खदति ॥ ( ३०४९ ) (सू) अत उपधायाः । ७ । २ । ११६ । उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । चखाद ॥ ( ३०५० ) (सू) णलुत्तमो वा । ७ । १ । ९१ । उत्तमो णल्वा णित्स्यात् । चखाद, चखद ॥ ( ३०५१ ) (सू) अतो हलादेर्लघोः । ७।२।७ । हलादेर्लघोरकारस्य इडादौ पर-

---

पुनर्वचनम् ॥ ( ३०४३ ) प्राक् सितात्–। 'उपसर्गात्सुनोति–३०३७' इत्यादिना विहितं षत्वम् अड्व्यवाय एवेति भ्रम-निवारणार्थमपिशब्दस्योपादानम् ॥ तेषामिति । पञ्चदशानामित्यर्थः । अभ्यषुणोदित्यादीन्युदाहर्तव्यानि ॥ ( ३०४४ ) स्था-दिषु—। इह द्वे वाक्ये, आद्यं षत्वविध्यर्थं, द्वितीयं तु नियमार्थमित्याशयेनाह—व्यवायेऽपि षत्वमेषामेव चेति । स्थादीनां दशानामेवाभ्यासस्य षत्वमित्यर्थः । तत्फलं तु 'षू प्रेरणे' अभिसुसूषति । अत्रोक्तनियमादभ्याससकारस्य न षत्वं, द्वितीयस्य तु 'स्तौतिण्योः–३४९१' इति नियमान्न भवति । अभिसिषासतीत्यत्र तु षणोऽभावादभ्यासात्परस्य षत्वं पूर्वस्य तूक्तनियमान्नेति बोध्यम् । स्यादेतत्, निषिषेधेत्यादौ अभ्यासस्य 'उपसर्गात्सुनोति–३०३७' इत्यनेन सिद्धम्, अभ्यासात्परस्य तु 'आदेशप्रत्ययोः २९८' इत्यनेनेति किमाद्यवाक्येन । अत्राहुः– फलत्रयार्थमाद्यं वाक्यम् । १ अषोपदेशार्थम् । तथाहि–सेनया अभियातुमिच्छति अभिषिषेणयिषति । २ अवर्णान्ताभ्यासार्थं च । 'अर्धासनं गोत्रभिदोऽधितष्ठौ' । ३ षणि प्रतिप्रस-वार्थं च । अभिषिषिक्षति । 'षिच क्षरणे' । 'स्तौतिण्योरेव–३४९१' इति नियमात् षभूते सनि निवर्तितमपि षत्वमुपसर्गमा-श्रित्यात्र भवतीति ॥ ( ३०४५ ) सेधतेर्गतौ । श्तिपा निर्देशाद्गत्यर्थादस्माद्यङ्लुकि न निषेधः । तेनोपसर्गमाश्रित्य षत्वं भवत्येव–विषेषिधीति । न च सेधेति शपा निर्देशाद्यङ्लुकि 'उपसर्गात्सुनोति–३०३७' इति षत्वं न भवेदिति शङ्क्यम्, दैवा-दिकनिवृत्त्यर्थतया शपा निर्देशस्य चारितार्थ्यात् । अन्यथा सेधतेरिति श्तिपा निर्देशस्य वैयर्थ्यापत्तेरिति दिक् ॥ षिधू शास्त्रे । माङ्गल्यं मङ्गलक्रिया । स्वार्थे ष्यञ् ॥ ( ३०४६ ) स्वरतिसूति—। 'स्वृ शब्दोपतापयोः' भ्वादिः । ननु 'स्वरतिसूधूञू-दितो वा' इति सूत्र्यतां किमनेन सूतिसूयत्योः पृथग्ग्रहणेन । मैवम्, तथाहि सति निरनुबन्धकपरिभाषया 'षू प्रेरणे' इति तौदादिकस्यैव ग्रहणं स्यान्न त्वादादिकदैवादिकयोरेतयोः । न चैवं षूङ् इति पठ्यतामिति वाच्यम्, 'लुग्विकरणाऽलुग्विकरण-योः–३१३६' इति परिभाषया अलुग्विकरणस्य सूयतेरेव ग्रहणप्रसङ्गात् । अस्याश्च परिभाषायाः सूतिसूयत्योः पृथग्ग्रहणमेव ज्ञापकमित्याहुः ॥ 'धूञ् कम्पने' स्वादिः क्र्यादिश्च । सानुबन्धनिर्देशो 'धू विधूनने' इत्यस्य निवृत्त्यर्थः । 'इट् सनि वा ४४८८' इत्यतो वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्विकल्पनिवृत्त्यर्थम् । (अन्यथा लिङ्सिज्विशिष्टं वापदमत्रापि लिङ्सिचोरेव विकल्पं कुर्यात् । पुनर्वाग्रहणे तु वलाद्यार्धधातुकमात्रस्य विकल्पः सिद्ध इति भावः) ॥ (३०४७) झषस्तथोः–। अध इति किम्, धत्तः ॥ असैत्सीदिति । 'अस्तिसिचः–२९८०' इति ईडागमः । 'वदव्रज–३०३३' इति वृद्धिः । ततश्चर्त्वम् ॥ (३०४८) झलो झलि । 'संयोगान्तस्य–८१' इत्यतो लोप इति 'रात्सस्य ३९१' इत्यतः सस्येति चानुवर्तते, तदाह—सस्य लोपः स्या-दिति । पदस्येत्यधिकारात्प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टानां त्रयाणामेकपदसंबन्धित्वे लोपोऽयम् । तेन सोमसुत् स्थानमित्यत्र न भवति । झलः किम्, अनैष्टाम् । झलि किम्, असैत्सीत् ॥ असेधीदिति । 'नेटि ३०३४' इति वृद्धिप्रतिषेधः । गुणः ॥ खादृ ॥ ऋकार इदिति । तेन 'नाग्लोपि–३४१२' इति निषेधे अचखादत् ॥ ( ३०४९ ) अत उप—। अतः किम्, तुतोद । उपधायाः किम्, गणयति । इह अतो लोपं बाधित्वा परत्वाद्वृद्धिः स्यात् ॥ (३०५१) अतो हलादेः । इह 'सिचि वृद्धिः–३०७०' इति सूत्रमनुवर्तते । 'नेटि ३०३४' इति सूत्रादिटि इति 'ऊर्णोतेर्विभाषा ३२७०' इत्यतो

---

१ आद्यमिति । 'स्थादिष्वभ्यासेन च' इत्येतदित्यर्थः ॥ २ अत्र सेनाशब्दस्याव्युत्पन्नत्वेनादेशसकाराभाव इति भावः । इति शब्दरत्नम् ॥ ३ अवर्णान्ताभ्यासार्थं चेति । तत्रेणः परत्वाभावादिति भावः । न च पूर्वत्रासिद्धत्वस्य द्वित्वे निषेधात् 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्षेऽन्तरङ्गत्वात्पूर्वं षत्वे कृतषत्वानामेव द्वित्वमित्यधितष्ठावित्यस्यैतद्वचनं विनाऽपि सिद्धिरिति वाच्यम्—'पूर्वं धातुः साधनेन' इति पक्षस्य मुख्यत्वात् ॥

स्मैपदपरे सिचि वृद्धिर्वा स्यात् । अखादीत् , अखदीत् । १४ ॥ बद स्थैर्ये । पवर्गीयादिः । बदति । बबाद । बेदतुः । बेदिथ । बबाद, बबद । अबादीत्, अबदीत् । १५ ॥ गद व्यक्तायां वाचि । गदति ॥ (३०५२) (सू) नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ८ । ४ । १७ । उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्यात् गदादिषु । प्रणिगदति । जगाद ।१६॥ रद विलेखने । विलेखनं भेदनम् । रराद । रेदतुः । १७ ॥ णद अव्यक्ते शब्दे ॥ ( ३०५३ ) (सू) णो नः । ६ । १ । ६५ । धातोरादेर्णस्य नः स्यात् । णोपदेशास्त्वनर्द्-नाटि-नाथ्-नाधृ-नन्द्-नक्क-नॄ-नृतः । नाटेर्दीर्घोऽर्हस्य पर्युदासाद्घटादेर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेर्नूनन्द्योश्च केचिण्णोपदेशतामाहुः ॥ ( ३०५४ ) (सू) उपसर्गादसमासेऽपि णोपदेशस्य । ८ । ४ । १४ । उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । प्रणिनदति । १८ ॥ अर्द गतौ याचने च । अर्तं॰ आदेः ॥ (३०५५) (सू) तस्मान् नुड् द्विहलः ।७।४।७१ । द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्द । आर्दीत् । १९ ॥ नर्द गर्द शब्दे । णोपदेशत्वाभावान्न णः । प्रनर्दति । २० ॥ गर्दति । जगर्द । २१ ॥ तर्द हिंसायाम् । तर्दति । २२ ॥ कर्द कुत्सिते शब्दे । कुत्सिते कौक्षे । कर्दति । २३॥ खर्द दन्दशूके । दंशहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः । खर्दति । चखर्द । २४ ॥ अति अदि बन्धने । अन्तति । आनन्त । २५ ॥ अन्दति । आनन्द । २६ ॥ इदि परमैश्वर्ये । इन्दति । इन्दांचकार ।२७॥ बिदि अवयवे । पवर्गतृतीयादिः । बिन्दति । अवयवं करोतीत्यर्थः । भिदीति पाठान्तरम् । २८ ॥ गडि वदनैकदेशे । गण्डति । अन्तत्यादयः पञ्चैते न तिङ्विषया इति काश्यपः । अन्ये तु तिङमपीच्छन्ति । २९ ॥ णिदि कुत्सायाम् । निन्दति । प्रणिन्दति । ३०॥ टुनदि समृद्धौ॥ ( ३०५६ ) (सू) आदिर्ञिटुडवः । १ । ३ । ५ । उपदेशे धातोराद्या एते इतः स्युः । नन्दति । इदित्त्वान्नलोपो न । नन्द्यात् । ३१ ॥ चदि आह्लादे । चचन्द । ३२ ॥ त्रदि चेष्टायाम् । तत्रन्द । ३३ ॥ कदि क्रदि क्लदि आह्वाने रोदने च । चकन्द । ३४ ॥ चक्रन्द । ३५ ॥ चक्लन्द । ३६ ॥ क्लिदि परिदेवने । चिक्लिन्द । ३७ ॥ शुन्ध शुद्धौ । शुशुन्ध । नलोपः । शुध्यात् ॥३८॥

अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत् ॥ शीकृ सेचने । तालव्यादिः । दन्त्यादिरित्येके । शीकते । शिशीके । १ ॥ लोकृ दर्शने । लोकते । लुलोके । २ ॥ श्लोकृ संघाते । संघातो ग्रन्थः । स चेह ग्रथ्यमानस्य

---

विभाषाग्रहणं च तदाह—इडादावित्यादि । अतः किम् , अदेवीत् । हलादेः किम् , मा भवानतीत् , अटीत् । लघोः किम् , अगर्दीत् । अरक्षीत् । इडादौ किम् , अपाक्षीत् । परस्मैपदे किम् , अयतिष्ट । अयतिषाताम् । अचकासीदित्यत्र चकारादकारस्य वृद्धिवारणाय 'येन नाव्यवधानम्' इति न्यायेन यद्येकवर्णव्यवधानमेवाश्रीयते, तदा स्वरक्षीदित्यत्रापि प्रसक्त्यभावाल्लघोरिति शक्यमकर्तुमित्याहुः । तपरकरणं स्पष्टार्थम् ॥ पवर्गीयादिरिति । दन्त्योष्ठ्यादित्वे तु 'न शसदद–३०२७' इत्येत्वाभ्यासलोपनिषेधात् बेदतुः बेदिथेत्यादि न सिध्येदिति भावः ॥ ( ३०५२ ) नेर्गदनद—। गदादीनां चतुर्णां शपा निर्देशः स्यत्यादीनामेकादशानां श्तिपा निर्देशश्च यङ्लुङ्निवृत्त्यर्थः । तेन प्रनिजागदीति । प्रनिनानदीति । प्रनिसासेति । प्रनिजंघनीति इत्यादौ णत्वं न घुशब्देन । घुसंज्ञका दाधादयः षट् गृह्यन्ते । डुदाञ्–प्रणिददाति । दाण्–प्रणियच्छति । दो–प्रणिद्यति । देङ्–प्रणिदयते । धेट्–प्रणिधयति । डुधाञ्–प्रणिदधाति । माशब्देन मेङ्माङोरेव ग्रहणं, घुप्रकृतिमाङिति पठित्वा भाष्यादौ तथा व्याख्यानात् ॥ ( ३०५३ ) णो नः ॥ धातोरिति । 'धात्वादेः षः सः ३०२८' इत्यतोऽनुवर्तनाद्धात्वादेरित्येव । नेह, अणति । णोपदेशान्पर्युदासमुखेनाह—णोपदेशास्त्विति । नर्द शब्दे । नट अवस्यन्दने । चुरादिः । यस्तु नट नृत्ताविति घटादिः स नेह गृह्यते नाटीति दीर्घनिर्देशात् । नाथृ नाधृ याच्ञादौ । टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एभ्योऽष्टाभ्यो भिन्ना इत्यर्थः ॥ तवर्गेति । तेषां मते तु पञ्चभ्यो भिन्ना णोपदेशाः॥ (३०५४) उपसर्गाद—। 'समासेऽङ्गुलेः सङ्गः १४६६' इत्यतोऽनुवर्तनात्समास एव स्यादित्यसमासग्रहणम् । कृते तु तस्मिन्नसमास एव स्यादित्यपेर्ग्रहणं कृतम् ॥ प्रणिनदतीति । नेर्गदेति णत्वम् । धातुनकारस्य तु 'उपसर्गादसमास–३०५४' इति णत्वं न भवत्यडादिभिन्नेन व्यवधानात् (३०५५) । तस्मात् 'इति' तच्छब्देन कृतदीर्घाकारः परामृश्यत इत्याह—दीर्घीभूतादिति । खर्द । दन्दशूकस्य सर्पत्वात्तद्वाचित्वे धातुत्वं न संगच्छत इत्यत आह–दन्दशूकक्रियायामिति । दन्दशूककर्तृकायामित्यर्थः। आनन्तेति । इदित्त्वान्नुम् 'तस्मान्नुड् द्विहलः ३०५५' इति नुट् ॥ वदनैकदेश इति । तत्क्रियायामित्यर्थः ॥ ( ३०५६ ) आदिर्ञिटुडवः । 'उपदेशेऽजनुनासिक–६' इत्यतोऽनुवर्तनादाह—उपदेशे इति । उपदेशे किम् , ञिकारीयति । ञिष्वप् 'ञीतः क्तः ४१०६' । सुप्तः ॥ 'ट्वितोऽथुच् ५०६२' । नन्दथुः ॥ 'ड्वितः क्त्रिः ५०६१' । कृत्रिमम् । क्लिदि परिदेवने । अनुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः । क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थः । स्वरितेत्स्वयं न पठितः ॥ शुन्ध शुद्धौ । अयं शौचकर्मणि युजादौ माङ्गालिकः । एधातिस्तवर्गीयान्तस्तदनुरोधेन कतिचित् तवर्गीयान्ताः

---

१ उपदेशेऽज्–' इत्यतोऽनुवृत्तस्य उपदेपदशस्य संबन्धे ञिटुडूनामादित्वमुपदेशे धातोरेव संभवतीति संभवप्रदर्शनमेवेदम् । न तु धातुपदस्यात्रानुवृत्तिः संभवति व्यवहितत्वान्मण्डूकानुवृत्तिं विनापीष्टसिद्धेरित्याभिप्रेत्याह—धातोरिति ॥

व्यापारो ग्रन्थितुर्वा । आद्ये अकर्मको, द्वितीये सकर्मकः । श्लोकते ।३॥ द्रेकृ ध्रेकृ शब्दोत्साहयोः। उत्साहो वृद्धिरौद्धत्यं च । दिद्रेके । ४ ॥ दिध्रेके ।५ ॥ रेकृ शङ्कायाम् । रेकते । ६ ॥ सेकृ स्रेकृ स्रकि श्रकि श्लकि गतौ । त्रयो दन्त्यादयः । द्वौ तालव्यादी । अषोपदेशत्वान्न षः । सिसेके । ११ ॥ शकि शङ्कायाम् । शङ्कते । शशङ्के । १२ ॥ अकि लक्षणे । अङ्कते । आनङ्के । १३ ॥ वकि कौटिल्ये । वङ्कते । १४ ॥ मकि मण्डने । मङ्कते । १५ ॥ कक लौल्ये । लौल्यं गर्वश्चापल्यं च । ककते । चकके । १६ ॥ कुक वृक आदाने । कोकते । चुकुके । १७ ॥ वर्कते ॥ ( ३०५७ ) वा॰ ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन[1] ॥ ववृके । १८ ॥ चक तृप्तौ प्रतीघाते च । चकते । चेके। १९ ॥ ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि गत्यर्थाः । कङ्कते । डुढौके । तुत्रौके ॥ ( ३०५८ ) वा॰ सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः ॥ ष्वष्कते । षष्वष्के । अत्र तृतीयो दन्त्यादिरित्येके । लघि भोजननिवृत्तावपि । ३४ ॥ अघि वघि मघि गत्याक्षेपे । आक्षेपो निन्दा । गतौ गत्यारम्भे चेत्यन्ये । अङ्घते । आनङ्घे । ३५ । वङ्घते । ३६ ॥ मङ्घते । मघि कैतवे च । ३७ ॥ राघृ लाघृ द्राघृ सामर्थ्ये । राघते । ३८ ॥ लाघते । ३९ ॥ ध्राघृ इत्यपि केचित् । ४० ॥ द्राघृ आयामे च । आयामो दैर्घ्यम् । द्राघते । ४१ ॥ श्लाघृ कत्थने । श्लाघते । ४२ ॥

अथ परस्मैपदिनः पञ्चाशत् ॥ फक्क नीचैर्गतौ । नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च । फक्कति । पफक्क । १ ॥ तक हसने । तकति ।२॥ तकि कृच्छ्रजीवने । तङ्कति ।३॥ बुक्क भषणे । भषणं श्वरवः । बुक्कति ।४॥ कख हसने । प्रनिकखति । ५ ॥ ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः । ओखति । ओखांचकार । १० ॥ शाखृ श्लाखृ व्याप्तौ । शाखति । १२ ॥ उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख इखि ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः । द्वितीयान्ताः पञ्चदश । तृतीयान्तास्त्रयोदश । इह खान्तेषु रिख त्रख त्रिखि शिखि इत्यपि चतुरः केचित्पठन्ति ॥ ( ३०५९ ) सू॰ अभ्यासस्यासवर्णे ।६।४।७८। अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । उवोख । सन्निपातपरिभाषया ईजादेरित्याम्न । ऊखतुः । ऊखुः । इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न भवति, सकृत्प्रवृत्तत्वात् ।

---

पठिताः । इदानीं लोकप्रसिद्धकादिपाठक्रमेणाह—**अथेत्यादि** ॥ **चुकुके इति** । परमपि गुणं बाधित्वा नित्यत्वात् 'असंयोगात्-३००२' इति कित्त्वम् ॥ ( ३०५८ ) **सुब्धात्वित्यादि** । सुब्धातोरुदाहरणानि-षट् दन्ता अस्य षोडन्, तमाचष्टे णिचि टिलोपः,षोडयति । एवम्-षण्ढं करोत्याचष्टे वा-षण्ढयति । षण्ढीयतीत्यत्र षण्ढशब्दात् क्यचि ईत्वं बोध्यम् । एतच्च वार्तिकं भाष्ये प्रत्याख्यातम् । तथाहि-'धात्वादेः-३०२८' इति सूत्रे उपदेश इति वर्तते । न च सुब्धातूनामुपदेशोऽस्ति[2] । ष्ठिवुष्वष्कती तु यकारादी । 'लोपो व्योः-१२५४' इति यलोपः ॥ **प्रनिकखतीति** । 'शेषे विभाषा-२९८९' इत्यत्र अकखादाविति पर्युदासान्नेणत्वं नेति भावः ॥ ( ३०५९ ) **असवर्णेऽचीति** । असवर्णे किम्, ऊखतुः । अचि किम्, इयाज, उवाय ॥ **उवोखेति** । 'द्विर्वचनेऽचि ३००३' इति निषेधात्पूर्वं द्वित्वं पश्चादुकारस्य लघूपधगुणे कृते अभ्यासस्योवङ् । एवमियेषेत्यत्रेयङ् । असवर्णग्रहणसामर्थ्यादियङादौ[3] कर्तव्ये गुणोऽत्र न स्थानिवदिति बोध्यम् ॥ **संनिपातपरिभाषयेति** । आमि सति लिट्परत्वं धातोर्न सिध्येदिति[4] भावः । अन्ये तु 'इजादेः-२९९६' इति सूत्रे गुरुमानिति नित्ययोगे मतुप् । ततश्च नित्यं यो गुरुमान् 'एध वृद्धौ' इत्यादिस्तत्रैव स्यादिति नात्र आमः प्रसक्तिरित्याहुः ॥ ऊखतुरिति । अत्र कित्त्वात् गुणाभावे 'अभ्यासस्यासवर्णे ३०५९' इति उवङ् न भवति । ननु इयेष उवोषेत्यत्राप्यन्तरङ्गत्वात्सवर्णदीर्घे कृतेऽच्परत्वाभावादियङुवङौ न स्तः इतीष्टरूपासिद्धेः किं तत्रासवर्णग्रहणेनेति चेत् । अत्राहुः-'वार्णादाङ्गं बलीयः ३०६०' इति परिभाषाज्ञापनार्थमेवासवर्णग्रहणं कृतम्[5] । तेन भवतीत्यत्रान्तरङ्गमपि यणं बाधित्वा गुणो भवति । तथा करोतेर्घञि कार इत्यत्र यणं बाधित्वा वृद्धिर्भवति । न चैवं सिवेरौणादिके नप्रत्यये स्योन इत्यत्र 'च्छ्वोः शूड्-३३९४' इत्यूठि कृते लघूपधगुणं बाधित्वा यण् न स्यादिति वाच्यम्, समानाश्रय एव वार्णादाङ्गस्य बलीयस्त्वात् । इह तु

---

१ ऋदुपधेषु लिटः कित्वात् परत्वात्पूर्वंलघूपधगुणे रपरत्वे च जाते संयोगसत्त्वेन न कित्त्वप्राप्तिरिति न नित्यत्वं कित्त्वस्येति पूर्वविप्रतिषेधवार्तिकारम्भ इति भावः॥ २ **न च सुब्धातूनामुपदेशोऽस्तीति** । 'उद्देशश्च प्रातिपदिकानाम्, नोपदेशः' इति भाष्योक्तेरिति भावः ॥ ३ **असवर्णग्रहणसामर्थ्यादिति** । एतद्धि यत्रासवर्णपरत्वं तत्रैव यथा स्यादित्येवमर्थम् । यद्येतत्प्रवृत्तिकाले 'अचः परस्मिन्-'इति स्थानिवद्भावः स्यात्तदाऽसवर्णपरत्वं दुर्लभं स्यादिति भावः॥४ **न सिध्येदिति** । णलुनिमित्तिका ह्यस्य गुरुमत्ता, यदि णलो निवृत्तिः स्यात्तदोपजीव्यविरोधः स्पष्ट एवेति भावः॥ ५ **परिभाषाज्ञापनार्थमिति**—केचित्त्वत्र परिभाषायां संपूर्णसूत्रस्यैव ज्ञापकत्वमिति वदन्ति, न चेयेष, इयायेत्यादावभ्यासस्येत्यंशश्चरितार्थ इति वाच्यम्, तत्रापि गुणवृद्धी बाधित्वा 'द्विर्वचनेऽचि' इति सूत्रबलात्पूर्वं द्वित्वे पुनः प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात्सवर्णदीर्घस्यैव प्रवृत्तेः—इयर्तीत्याद्यर्थमपि न, तावन्मात्रप्रयोजनकत्वे 'न ह्येकमुदाहरणं योगारम्भं प्रयोजयति' इति भाष्याद्-उरित्येव ब्रूयात्—श्वोरित्यनुवृत्त्यार्तेरिवर्णस्येयङित्यर्थसम्भवात् ॥

आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः । ( ३०६० ) वा॰ वार्णादाङ्गं बलीय इति न्यायात्, परत्वाच्च । उङ्खति । ववखतुः । वङ्खति । मेखतुः ॥ त्वगि कम्पने च । ४५ ॥ युगि जुगि वुगि वर्जने । युङ्गति । ४७ । घघ हसने । घघति । जघाघ । ४८ ॥ मघि मण्डने । मङ्घति । ४९ ॥ शिघि आघ्राणे । शिङ्घति ॥ ५० ॥

अथ चवर्गीयान्ताः । तत्रानुदात्तेत एकविंशतिः । वर्च दीप्तौ । वर्चते । १॥ षच सेचने सेवने च । सचते । सेचे । सचिता । २ ॥ लोचृ दर्शने । लोचते । लुलोचे । ३ । शच व्यक्तायां वाचि । शेचे । ४ ॥ श्वच श्वचि गतौ । श्वचते । ५ ॥ श्वञ्चते । ६ । कच बन्धने । कचते । ७ । कचि काचि दीप्तिबन्धनयोः । चकञ्चे । ८ ॥ चकाञ्चे । ९ ॥ मच मुचि कल्कने । कल्कनं दम्भः शाठ्यं च । कथनमित्यन्ये । मेचे । १० । मुमुञ्चे । ११ ॥ मचि धारणोच्छ्रायपूजनेषु । ममञ्चे । १२ ॥ पचि व्यक्तीकरणे । पञ्चते । १३ ॥ ष्टुच प्रसादे । स्तोचते । तुष्टुचे । १४ ॥ ऋज गतिस्थानार्जनोपार्जनेषु । अर्जते । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते । तेन द्विहल्त्वान्नुट् । आनृजे । १५ ॥ ऋजि भृजी भर्जने । ऋञ्जते । उपसर्गादृतीति वृद्धिः । प्रार्ञ्जते । ऋञ्जाञ्चक्रे । आर्ञ्जिष्ट । १६ ॥ भर्जते । बभृजे । अभर्जिष्ट । १७ ॥ एजृ भ्रेजृ भ्राजृ दीप्तौ । एजाञ्चक्रे । २० । ईज गतिकुत्सनयोः । ईजाञ्चक्रे ॥ २१ ॥

अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः ॥ शुच शोके । शोचति । १ ॥ कुच शब्दे तारे । कोचति । २ ॥ कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः । अनिदितामिति नलोपः । कुच्यात् । ३॥ क्रुच्यात् । ४॥ लुञ्च अपनयने । लुच्यात् । ५ ॥ अञ्चु गतिपूजनयोः । अच्यात् । गतौ नलोपः । पूजायां तु अञ्च्यात् । ६ ॥ वञ्चु चञ्चु तञ्चु त्वञ्चु म्रुञ्चु म्लुञ्चु म्रुचु म्लुचु गत्यर्थाः । वच्यात् । चच्यात् । तच्यात् । त्वच्यात् । अम्रुञ्चीत् । अम्लुञ्चीत् ॥ (३०६१) सू॰ जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । ३ । १ । ५८ । एभ्यश्च्लेरङ् वा स्यात् । अम्रुचत्, अम्रोचीत् । अम्लुचत्, अम्लोचीत् । १४ ॥ ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे । जुग्रोच । अग्रुचत्, अग्रोचीत् । १५॥ जुग्लोच । अग्लुचत्, अग्लोचीत् । १६ ॥ अकोजीत् । १७ ॥ अखोजीत् । १८॥ ग्लुञ्चु षस्ज गतौ । अङ् । अग्लुचत्, अग्लुञ्चीत् । १९ ॥ सस्य श्चुत्वेन शः । जश्त्वेन जः । सज्जति । अयमात्मनेपद्यपि । सज्जते । २० ॥ गुजि अव्यक्ते शब्दे । गुञ्जति । गुञ्ज्यात् । २१ ॥ अर्च पूजायाम् । आनर्च । २२ ॥ म्लेच्छ अव्यक्ते शब्दे । अस्फुटेऽपशब्दे चेत्यर्थः ।

---

निमित्तभेदेन व्याश्रयत्वमिति ॥ अभ्यासग्रहणेनेति । पूर्वस्यान्तवत्त्वेनेत्यर्थः ॥ पर्जन्यवल्लक्षणेति । उपयोगानुपयोगाविचारेण प्रवर्तमानं शास्त्रं ह्रस्वं प्रवर्तयतीत्यर्थः । तथा चैकस्मिँल्लक्ष्ये लक्षणं सकृदेव प्रवर्तते इति न तस्य पुनः प्रवृत्तिरिति भावः ॥ ( ३०६० ) आङ्गं बलीय इति । नन्वत्र ह्रस्वसवर्णदीर्घयोर्निमित्तभेदात्समानाश्रयत्वाभावे कथमाङ्गस्य बलीयस्त्वमिति चेत् । सत्यम्, इष्टानुरोधेन स्थानिनमादाय क्वचित्समानाश्रयत्वाभ्युपगमात् । अत एवोङ् शब्दे इत्यस्माल्लिटि ऊवे ऊवाते इत्यादीष्टं सिध्यति । उवङः प्राक् सवर्णदीर्घप्रवृत्तौ तन्न सिध्येदिति दिक् ॥ परत्वाच्चेति । आपाततोऽयं हेतुः, ह्रस्वस्याङ्गत्वेन बहिरङ्गत्वादन्तरङ्गं सवर्णदीर्घं प्रति परत्वोपन्यासस्यायुक्तत्वात् । उङ्खतीति । इदित्वान्नुम् । लिटि उङ्खांचकार । आशिषि उङ्ख्यात् ॥ ववखतुरिति । वादित्वादेत्वाभ्यासलोपौ न । एखति । इङ्खति । इङ्खांचकार । ईखति । ईखांचकार । इङ्गति । इङ्गांचकार ॥ त्वगि कम्पने इति । अयम् उख उखीति दण्डके गतौ पठितस्य गतिविशेषे वृत्तिं बोधयितुं पठ्यते । अत एवानतिप्रयोजनत्वाद्बहुषु पुस्तकेषु न पठितः ॥ सेवने चेति । 'यं पूरवो वृत्रहणं सचन्ते' इत्यादौ सेवन्ते इत्यभियुक्तैर्व्याख्यातत्वात् । स्वरितत्सु षच समवाय इति वक्ष्यते ॥ लोचृ । ऋदित्वात् 'नाग्लोपि-२४१२' इति ह्रस्वनिषेधः । अलुलोचत । पचि व्यक्तीकरणे । पचि विस्तारवचने इति चुरादौ ॥ ऋज गति । अर्जनं प्राधान्येन, उपार्जनं तु, प्रासङ्गिकम् ॥ नुड्विधावित्यादि । 'नुड्विधिलादेशविनामेषु तु प्रतिविधेयम्' इति वचनान्नुडादिविधिषु वर्णैकदेशस्य वर्णत्वेन ग्रहणादिति भावः । यद्वा-द्विहल्ग्रहणं भाष्यादौ प्रत्याख्यायते । न च आट आटतुरित्यत्रातिप्रसङ्गः । 'अश्नोतेश्च ३३५३' इत्यनेन अवर्णोपधस्य यदि भवति, तर्ह्यश्नोतेरेवेति नियमात्सिद्धमिष्टमित्यन्यत्र विस्तरः ॥ ऋजिभृजी । भर्जनं जलं विना तण्डुलादेः संतापविशेषः । ईदित्वात् 'श्वीदितो निष्ठायाम् ४०५२' इति नेट् । भृक्तः । भृक्तवान् ॥ एजृ भ्रेजृ भ्राजृ । भ्राजेरृदित्करणमनुदात्तेत्त्वमात्रफलम् । 'भ्राजभास-३३९८' इत्यादिना चङ्परे णौ उपधाह्रस्वस्य विकल्पितत्वात् । अबिभ्रजत् । अबभ्राजत् ॥ परस्मैपदिन इति । चवर्गीयान्ताः परस्मैपदिनः ॥ पूजायां त्विति । 'नाञ्चेः पूजायाम्' इति निषेधादिति भावः ॥ (३०६१) जॄस्तन्भु-॥ स्तन्भुः सौत्रः । अजरत । अजारीत् । अस्तभत् । अस्तम्भीत् । अश्वत् । अश्वताम् । अश्वन् । अश्वयीत् । 'विभाषा धेट्श्व्योः ३१६८' इति चङि अशिश्वियत् ॥ अर्च पूजायाम् । अयं युजादौ

---

१ नन्वनेन सूत्रेणान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यताम्, तावतैव सकलेष्टसिद्धिर्भविष्यतीतीयं परिभाषा नारब्धव्येति मतेनाह-परत्वाच्चेति ॥ २ क्रुच्यादिति । कुञ्चेर्नलोपाभावस्य ऋत्विक्सूत्रे निपातनात्क्वाऽपि न लोपो नेति प्राञ्चः । तन्न, क्विन्संनियोगेनैव नकारलोपाभावस्य निपातनादत्र क्विनोऽभावेन निपातनाप्रसङ्गान्नकारलोपो भवत्येवेति भावः ॥ भाष्यमते तु-चवर्गपञ्चमोपधत्वस्यैव 'परेश्च घाङ्कयोः' इति सूत्रे निपातनेनाङ्गीकृतत्वान्न लोपप्राप्तिरिति बोध्यम् ॥ ३ अयमात्मनेपद्यपीति-'हेतुमति च' इति सूत्र 'यदभिप्रायेषु सज्जते,' इति भाष्यप्रयोगादिति भावः ॥

म्लेच्छति । मिम्लेच्छ । २३ ॥ **लच्छ लाछि** लक्षणे । ललच्छ । २४ ॥ ललाञ्छ । २५॥ **वाछि** इच्छायाम् । वाञ्छति । २६ ॥ **आछि** आयामे । आञ्छति । अत आदेरित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम् । तेन दीर्घाभावान्न नुट् । आञ्छ । तपरकरणं मुखसुखार्थमिति मते[1] तु नुट् । आनाञ्छ ।२७॥ **ह्रीच्छ** लज्जायाम् । जिह्रीच्छ ।२८॥ **हुर्छा** कौटिल्ये । कौटिल्यमपसरणमिति मैत्रेयः । उपधायां चेति दीर्घः । हूर्छति । २९ ॥ **मुर्छा** मोहसमुच्छ्राययोः । मूर्छति । ३० ॥ **स्फुर्छा** विस्तृतौ । स्फूर्छति । ३१ ॥ **युच्छ** प्रमादे । युच्छति । ३२ ॥ **उछि** उञ्छे । उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः । उञ्छति । उञ्छांचकार । ३३ ॥ **उच्छी** विवासे । विवासः समाप्तिः । प्रायेणायं विपूर्वः । व्युच्छति । ३४ ॥ **ध्रज ध्रजि धृज धृजि ध्वज ध्वजि** गतौ । ध्रजति । ध्रञ्जति । धर्जति । धृञ्जति । ध्वजति । ध्वञ्जति । ४० ॥ **कूज** अव्यक्ते शब्दे । चुकूज । ४१ ॥ **अर्ज षर्ज** अर्जने । अर्जति । आनर्ज । ४२ ॥ सर्जति । ससर्ज । ४३ ॥ **गर्ज** शब्दे । गर्जति । ४४ । **तर्ज** भर्त्सने । तर्जति । ४५ ॥ **कर्ज** व्यथने । चकर्ज । ४६ । **खर्ज** पूजने च । चखर्ज । ४७ ॥ **अज** गतिक्षेपणयोः । अजति ॥ ( ३०६२ ) सू. **अजेर्व्यघञपोः** । २ । ४ । ५६ । अजेर्वी इत्ययमादेशः स्यादार्धधातुकविषये घञमपं च वर्जयित्वा ॥ ( ३०६३ ) वा. **वलादावार्धधातुके वेष्यते** ॥ विवाय । विव्यतुः । विव्युः । अत्र वकारस्य हल्परत्वादुपधायां चेति दीर्घे प्राप्ते अचः परस्मिन्निति स्थानिवद्भावेनाच्परत्वम् । न च न पदान्तेति निषेधः । ( ३०६४ ) स्वरदीर्घयलोपेषु[2] लोपाजादेश एव न स्थानिवदित्युक्तेः । थलि एकाच इतीण्निषेधे प्राप्ते-॥ ( ३०६५ ) सू. **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि** । ७ । २ । १३ । एभ्यो लिट इण्न स्यात् । क्रादीनां चतुर्णां ग्रहणं नियमार्थम्-प्रकृत्याश्रयः[4] प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य

---

स्वरितेत् । इह पाठस्तु कर्तृगेऽपि फले परस्मैपदार्थः ॥ **दीर्घाभावादिति** । स्वाभाविकह्रस्वस्थानिकदीर्घाभावादित्यर्थः ॥ **मुखसुखार्थमिति** । कृतह्रस्वस्थानिकदीर्घाकारात्परस्यापि नुट् भवत्येवेति भावः ॥ **युच्छ प्रमादे । युच्छतीति** । अन्तरङ्गत्वात् 'छे च २२०' इति तुकि लघूपधत्वाभावान्न गुणः । न च 'वार्णादाङ्गं बलीयः ३०६०' इति वाच्यम्, आङ्गवार्णयोर्युगपत्प्रवृत्तावेव आङ्गस्य बलीयस्त्वात् । न च युच्छेति चकारछकारावुच्चार्येतां किमनेन तुग्विधिनेति शङ्क्यम्, बहुषु धातुरूपेषु चकारछकारयोरुच्चारणे गौरवात् 'छे च २२०' इत्यस्य शिवच्छायेत्यादावावश्यकत्वाच्च ॥ ( ३०६२ ) **अजेर्व्य—** । वी इति च्छेदः । तेन संवीतः संवीतिरित्यादि[3] सिध्यति ॥ **आर्धधातुकविषय इति** । तेन वीभावोत्तरं यङि वेवीयते इत्यादि सिध्यति, परसप्तम्यां तु हलादित्वाभावाद्यङ् न स्यादिति भावः । यङ्लुक् तु अस्मान्न भवति, लुका यङोऽपहारे आर्धधातुकविषयत्वाभावान्नार्धधातुकाभिव्याक्तिरीति वीभावस्यैवाप्रसक्तेः । एतच्च 'न लुमता-' इति सूत्रे कैयटे स्पष्टम् । अघञपोः किम्, समाजः । 'समुदोरजः पशुषु ५०४१' इत्यप् । समजः । उदजः ॥ **विव्यतुरिति** । 'एरनेकाचः-३८०' इति यण् ॥ ( ३०६४ ) **लोपाजादेश एवेति** । एतच्च 'न पदान्त-७८' इति सूत्र एवाऽस्माभिरुपपादितम् ॥ **एकाच इतीति** । अजेरुदात्तत्वेऽपि वीभावोऽनुदात्तः, ऊदृदन्तादिभिन्ना एकाचोऽजन्ताः सर्वेऽप्यनुदात्ता इत्यभ्युपगमात् ॥ ( ३०६५ ) **कृसृभृ—** । **डुकृञ्** करणे । **कृञ्** हिंसायाम् । इह निरनुबन्धग्रहणादेकानुबन्धद्व्यनुबन्धयोरुभयोर्ग्रहणम् । एवमग्रेऽपि, । **भृञ्** भरणे **डुभृञ्** धारणपोषणयोरित्युभयोर्ग्रहणम् । **सृ** गतौ । **वृङ्** संभक्तौ । **वृञ्** वरणे । इह निरनुबन्धकग्रहणाद्भिन्नानुबन्धयोरप्युभयोर्ग्रहणम् ॥ कृ सृ भृ एषामनुदात्तत्वात् 'एकाच उपदेशे-३००६' इति प्रकृत्याश्रये निषेधे प्राप्ते वृङ्वृञोस्तूदात्तत्वात् श्र्युकः किति ३१७४' इति प्रत्ययाश्रये निषेधे प्राप्ते नियमोऽयमित्याह—**क्रादीनां चतुर्णामिति** । इह[5] स्तुद्र्वादीनां चतुर्णां ग्रहणस्य भारद्वाजनियमप्रापितेण्निषेधोऽपि प्रयोजनमिति बोधयितुमष्टानां ग्रहणमिति नोक्तम् ॥ **इण्निषेध इति** । 'नेड्वशि-३९८१' इति प्रक्रमानन्नाऽऽपादितस्यैवाभावस्य नियमो न तु विभाषाबललभ्यस्यापि । 'अनन्तरस्य-४८८' इति न्या-

---

१ **इति मते त्विति**-स्वाभाविकह्रस्वपरिग्रहार्थमित्यत्र भाष्यसम्मतसाधकाभावान्मुखसुखार्थत्वमेव युक्तं तपरकरणस्येति तद्भावः ॥ २ **स्वरदीर्घेति** । 'पूर्वत्रासिद्धम्' इति निषेधस्याप्ययं नियम इति भावः ॥ ३ **संवीतिरिति** । असंज्ञायां क्तिन्नन्तस्य रूपमिदमिति बोध्यम् । संज्ञायां स्त्रीलिङ्गे भावादौ तु 'समजा' इति क्यपा भाव्यम् ॥ ४ **प्रकृत्याश्रयः**-प्रकृतिविशेषसम्बन्धी, तस्मिन्नित्यर्थः । प्रत्ययाश्रयः-गिक्किदिति प्रत्ययविशेषोपादानेनारब्धस्तस्मिन् ॥ ५ ननु क्रादीनां चतुर्णां ग्रहणस्य नियमार्थतोक्ता सा नोचिता, स्तुद्र्वादीनामप्यनुदात्तत्वात्तेष्वपि प्रतिषेधस्य प्राप्तेरष्टानामिति वक्तुमुचितमित्याशंकां निराकर्तुमाह-**इहहीति** ॥ ६ केचित्तु-'यावान्कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा सर्वो बाध्यत इति मन्वानाः सिषेधिथेत्यादि एकमेव रूपम्, न त्वनिट्कत्वमपि' इत्याहुः-इति मनोरमा ॥ अत एव 'उपदेशेऽत्वतः' इति सूत्रे 'नित्यानिटः' इत्यस्याऽजिव्र्यावर्त्यत्वेन भाष्ये उक्तः । अन्यथा तदभावे 'ऋतो भारद्वाजस्य इति' विकल्पः स्यात् ॥ तत्सत्त्वेऽप्यूदित्त्वप्रयुक्तविकल्पस्यैव सत्त्वेन तदसंगतिः स्पष्टैव । न तु क्रादिनियमेन तत्सत्त्वे नित्य इडिति विशेषोऽस्त्येवेतीदमेव मतं युक्तम् । इति शब्दरत्नम् ॥

एव नान्येभ्य इति । ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् ॥
( ३०६६ ) (सू) अचस्तास्वत्थल्यनिटो नित्यम् । ७ । २ । ६१ । उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात् ॥ ( ३०६७ ) (सू) उपदेशेऽत्वतः । ७ । २ । ६२ । उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात् ॥ ( ३०६८ ) (सू) ऋतो भारद्वाजस्य । ७ । २ । ६३ । तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव ॥ अयमत्र संग्रहः—

( ३०६९ ) अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् । ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत् ॥ १ ॥

न च स्तुद्रुादीनामपि थलि विकल्पः शङ्क्यः । 'अचस्तास्वदिति[३०६६] उपदेशेऽत्वत[३०६७]' इति च योगद्वयप्रापितस्यैव हि

---

यादपि संनिहितस्यैव नियम उचितः । तेन सिषेधिथ । सिषेद्ध । सिषिधिव । सिषिध्व इत्याद्युभयं भवति ॥ **नान्येभ्य इति** । तेन पेचिव, बभूविवेत्यादि सिद्धम् । न चैवं क्रादिनियमेनैव 'नेड्वशि कृति ३९८१' इति निषेधस्याप्यप्रवृत्तौ सेदिवान् जक्षिवानित्यादि सिध्यत्येवेति 'वस्वेकाजाद्घसाम् ४११४' इतीड्विधानं किमर्थमिति शङ्क्यम्, तस्य नियमार्थत्वेन व्याख्यास्यमानत्वात् । अन्यथा बभूवानित्यत्रापीडागमः स्यादिति । नन्विह क्रादिभ्यश्चेदिण् न स्यात्तर्हि लिट्येवेति विपरीतनियमः किं न स्यात् । तथा च कर्ता अकार्षीदित्यादाविडागमः स्यादिति चेत् । मैवम्, 'कृते ग्रन्थे २०६०' 'तमधीष्टो भृतः–२३६९' 'परिवृतो रथः १७१४' इत्यादिनिर्देशविरोधापत्तेः ॥ **वमादिष्विति** । आदिशब्देन सेध्वेवहिमहीनां ग्रहणम् । तुष्टुषे । तुष्टुध्वे । तुष्टुवहे । तुष्टुमहे–इत्यादि । स्यादेतत्, अस्तु प्रकृत्याश्रयनिषेधस्य नियमः, प्रत्ययाश्रयस्य तु न संभवति । वृग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वात् । न ह्यत्र प्रत्ययाश्रयो निषेधः प्राप्नोति, थलोऽकित्त्वात् ॥ नापि प्रकृत्याश्रयः, वृञ उदात्तत्वात् । न चैवमपि वृङो नियमार्थत्वमस्त्विति वाच्यम्, तस्य विशिष्याग्रहणात् । यद्यपि विशिष्य ग्रहणं वृञोऽपि नास्ति, तथाप्यप्राप्तनिषेधप्राप्तिफलकत्वात् । वृ इति वृञ एव ग्रहणं भवेत् । विधिनियमयोर्विधिरेव ज्यायानिति न्यायात् । एवं च बभूविवेत्यादौ 'श्र्युकः क्किति ३१७४' इतीण्निषेधो दुर्वार इति चेत् । अत्राहुः–'बभूथाततन्थजगृभ्मववर्थेति निगमे ३३४७' इति सूत्रेण छन्दसि ववर्थेति निपातनाद्भाषायां वृञस्थल इटः स्वीकर्तव्यतया वृग्रहणस्य थल्विषयत्वायोगाद्वमादीनां च कित्त्वेन नियमस्य सुस्थत्वादिति ॥ **( ३०६६ ) अचस्तास्वत्**—उत्तरसूत्रादुपदेश इत्यपकृष्यते, तच्चाजन्तस्य विशेषणमित्याह—**उपदेशेऽजन्त इति** । धातुरित्याक्षेपाल्लभ्यते, न ह्यधातोस्थल् संभवति । नित्यग्रहणमनिटो विशेषणम् । क्व च नित्यमनिडित्यपेक्षायां संनिधानात्तासाविवेति विज्ञायते, 'तासि च क्लृपः ३१३३' इति सन्निहितं वाऽनुवर्तते ॥ 'न वृद्भ्यः ३१२९' इत्यस्मान्नेत्यनुवर्तते, तदाह—**तासौ नित्यानिट् ततः परस्येति** । तासाविव तास्वदिति सप्तम्यन्ताद्वतिः । यथा तासौ न भवति, एवं थल्यपीत्यर्थः[१] । अच इति किम् । बिभेदिथ । रुरोधिथ । उपदेशे इति किम्, जहर्थ । इह परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृते अजन्तत्वाभावादेतस्याप्रवृत्ताविट् प्रसज्येतेत्युपदेश इत्युक्तम् । थलीति किम्, पपिव, पपिम । नित्यमनिटः किम्, सस्वरिथ, नायं तासौ नित्यमनिट् । 'स्वरतिसूति–३०४६' इति विकल्पितेट्त्वात् ॥ इह तासीति नेति चानुवृत्त्यैवेष्टसिद्धेः तास्वदित्येतन्नातीवोपयुज्यत इति केचित् ॥ अन्ये तु यस्य तासौ विद्यमानत्वं तस्मादेव परस्य थल इण्निषेध इत्येतल्लाभार्थं तत् । तेन उवयिथ, जघसिथेत्यत्र न निषेध इत्याहुः ॥ **( ३०६७ ) उपदेशेऽत्वतः** । पपक्थ । इयष्ठ । उपदेशे किम् । कर्ष्टा । चकर्षिथ । अकारवत इति किम्[२] । भेत्ता । बिभेदिथ । तपरकरणं किम् । राद्धा । रराधिथ । तासौ किम् । जिघृक्षति । जग्रहिथ । 'सनि ग्रहगुहोश्च ३४६७' इति सनि नित्यमनिट् । क्रान्तः । चक्रमिथ । ऊदित्त्वेन क्त्वायां वेट्कत्वात् 'यस्य विभाषा ४०२६' इति निष्ठायां नेट् । नित्यानिटः किम् । अङ्क्ता । अञ्जिता । आनञ्जिथ । किञ्च नित्यग्रहणानुवर्तनाच्चक्रमिथेत्यपि सिध्यति । नहि क्रमिस्तासौ नित्यानिट् 'स्नुक्रमोरनात्मनेपदनिमित्ते ३१०२' इति परस्मैपदे सेट्कत्वात् ॥ ( ३०६८ ) **ऋतो भारद्वाजस्य** । तपरकरणात्कॄगॄप्रभृतिषु दीर्घान्तेषु नायं निषेधः प्रवर्तते । ह्रस्वान्तेषु हृञ्धृञादिषु 'अचस्तास्वत्–३०६६' इत्येव सिद्धं वृञ्वृङौ तु यद्यपि सेटौ तथापि वृङः थलेव नास्ति, आत्मनेपदित्वात्, वृञस्तु च्छन्दसि 'ववर्थ' इति निपातनाद्ववरिथेति भाषायामिटा भाव्यम् । तस्मान्नियमोऽयमित्याह—**ऋदन्तादेवेति** । जहर्थ । दधर्थ ॥ **अन्यस्य स्यादेवेति** । एवं च भारद्वाजमते स्यादन्यमते न स्यादिति विकल्पः फलितः[३] । पपिथ, पपाथ । पेचिथ, पपक्थ । इयजिथ, इयष्ठ ॥ **( ३०६९ ) अकारवानिति** । ह्रस्वाकारवानित्यर्थः ॥ **ईदृगिति** । यस्तास्यनिट्, स ऋदन्तः थलि नित्यानिट् भवतीत्यर्थः । ननु स्तुद्रुस्रुश्रुवामपि थलि भारद्वाजनियमादिट् स्यात् । न चैवं क्रादिसूत्रे तेषां पठनं निरर्थकं स्यादिति वाच्यम्, तत्पठनस्य वमादिष्वनिवृत्त्यर्थतया सफलत्वात् । अन्यथा क्रादिनियमात्तत्र इडागमो दुर्वारः स्यादित्याशङ्क्याह—**न चेति** । योग-

---

१ **एवं थल्यपीति** । तेन तासौ दृष्टस्येडभावस्य थल्यतिदेशः । तेनादेर्घस्लादेशे जघसिथेत्यत्र नित्यमिट् ॥
२ **अकारवतः किमिति** । आत्वतस्तास्वत्थल्यनिटो नित्यमुपदेशे, इत्येव कार्यमिति प्रश्नः । अजन्तात्त्वदभिन्नोऽत्वान् व्यावर्त्य इत्युत्तरमिति शब्दरत्नकृत् ॥ ३–'कृसृभृवृ–' इति नियमस्य विकल्पप्रयुक्तेडभावस्य वारकत्वाभावे भाष्योक्तं प्रयोजनमिदमसंमतं स्यात् । भारद्वाजनियमेन विकल्पाभावेऽपि 'स्वरति–' इति विकल्पस्यावारितत्वात् ॥

प्रतिषेधस्य भारद्वाजनियमो निवर्तकः । अनन्तरस्येति न्यायात् । विवयिथ, विवेथ, आजिथ । विव्यथुः । विव्य । विवाय, विवय । विव्यिव, विव्यिम । वेता, अजिता । वेष्यति, अजिष्यति । अजतु । आजत् । अजेत्, वीयात् ॥ ( ३०७० ) सिचि वृद्धिः परस्मैपदेषु । ७ । २ । १ । इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदपरे सिचि । अवैषीत्, आजीत् । अवेष्यत्, आजिष्यत् । ४८ ॥ तेज पालने । तेजति । ४९ ॥ खज मन्थे । खजति । ५० ॥ खजि गतिवैकल्ये । खञ्जति । ५१ ॥ एजृ कम्पने । एजांचकार । ५२ ॥ टुओस्फूर्जा वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज । ५३ ॥ क्षि क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । चिक्षयिथ, चिक्षेथ । चिक्षियिव । चिक्षियिम । क्षेता ॥ ( ३०७१ ) अकृत्सार्वधातुकयोर्दीर्घः । ७ । ४ । २५ । अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे न तु कृत्सार्वधातुकयोः । क्षीयात् । अक्षैषीत् । ५४ ॥ क्षीज अव्यक्ते शब्दे । कूजिना सहायं पठितुं युक्तः । चिक्षीज । ५५ ॥ लज लजि भर्जने । ५७ ॥ लाज लाजि भर्त्सने च । ५९ ॥ जज जजि युद्धे । ६१ ॥ तुज हिंसायाम् । तोजति । तुतोज । ६२ ॥ तुजि पालने । ६३ ॥ गज गजि गृज गृजि मुज मुजि शब्दार्थाः । ६९ ॥ गज मदने च । ७० ॥ वज व्रज गतौ । वदव्रजेति वृद्धिः । अव्राजीत् । ७२ ॥

अथ टवर्गीयान्ताः शाडन्ता अनुदात्तेतः षट्त्रिंशत् ॥ अट्ट अतिक्रमहिंसयोः । दोपधोऽयम् । तोपध

---

द्वयेति । क्रादियोगप्रापितस्य तु न निवर्तक इति भावः ॥ कुत इत्याकाङ्क्षायामाह—अनन्तरस्येति । न चैवम् 'उपदेशेऽत्वतः ३०६७' इत्यस्यैव बाधः स्यादिति वाच्यम्, अत्वत्सु धातुषु ऋदन्तत्वादर्शनेन यद्यत्वतः थलि इण्निषेधस्तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात् । ननु तर्हि 'अचस्तास्वत्–३०६६' इत्यस्यैव बाधोऽस्तु, तत्कथं योगद्वयप्रापितस्येत्युक्तम् । अत्राहुः–उपदेशेऽचस्तास्वदित्येवं सूत्रे कृतेऽपि तास्वनिट्थलीत्यादिपदानामिवोपदेशपदस्याप्यनुवृत्तिसंभवे अत्वत इति सूत्रे उपदेशपदस्याच इति पूर्वसूत्रे तु तास्वत्थलीत्यादेश्चाकरणादुभयोः समानयोगक्षेम इति ज्ञायते । तस्मादिष्टानुरोधाच्च योगद्वयमपि भारद्वाजनियमेन बाध्यते । यदि तु 'उपदेशेऽत्वतोऽचस्तास्वत्थल्यनिटो नित्यम्' इति एको योगः स्वीक्रियते, तदाऽत्र नास्त्येव शङ्कालेशोऽपीति बोध्यमिति । अन्ये तु व्याचक्षते–'अचस्तास्वत्–३०६६' इति सूत्रानन्तरमेव 'ऋतो भारद्वाजस्य ३०६८' इति पठनीयं, द्वयोरनन्तरमस्यारम्भादिह तास्वत्थल्यनिटो नित्यं तासीत्यनुवर्त्य योऽयं तासि नित्यानिटस्थलि इण्निषेधः स भारद्वाजमते ऋकारान्तस्यैवेति व्याख्यायते । तेन सर्वेष्टसिद्धिः । यद्वा–क्रादिसूत्रे स्तुप्रभृतीनां ग्रहणमेवेड्द्वयस्यापि[1] बाधकमस्तु, पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् । अनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन[2][3][4] प्रतिषेधेन यथा बाधेतेत्येतदर्थो हि स आरम्भः । अमुमेवार्थं सिद्धवत्कृत्य ततश्चतुर्णां थालि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थमिति मूलेऽप्युपनिबद्धमिति ॥ विव्यिव, विव्यिमेति । क्रादिनियमान्नित्यामिट् ॥ ( ३०७० ) सिचि वृद्धिः—। 'इको गुणवृद्धी ५७' इति परिभाषोपस्थानादाह–इगन्तेति । परस्मैपदेष्विति किम् । अधविष्ट । अधोष्ट । सिचि किम् । एति । बिभर्ति । गुणं बाधित्वा वृद्धिः स्यात् । खज मन्थे । कजेति केचित्पठन्ति । एजृ कम्पने । दीप्तौ त्वात्मनेपदी गतः । टुओस्फूर्जा । 'द्वितोऽथुच् ५०६२' । स्फूर्जथुः ॥ 'ओदितश्च ४०३०' इति निष्ठानत्वार्थमोकारः । स्फूर्णः, स्फूर्णवान् ॥ आकारस्तु 'आदितश्च ४०४८' इति निष्ठायामिटो निषेधार्थः 'विभाषा भावादिकर्मणोः ४०६८' इति विकल्पार्थश्च । स्फूर्णं स्फूर्जितमनेनेत्यादि । 'उपधायां च ३०२९' इति दीर्घस्यानित्यत्वज्ञापनार्थमिह दीर्घोपदेशः । तेन हुर्छति मुर्छति इत्यपि भवतीति केचित् ॥ क्षि क्षये अजन्तेष्वस्य पाठो युक्तः । क्षि निवासगत्योरिति तुदादौ ॥ ( ३०७१ ) अकृत्सार्व—। दीर्घग्रहणेन 'अचश्च ५८' इति परिभाषोपस्थानादाह–अजन्तेति ॥ यादौ प्रत्यय इति । 'अयङ् यि क्ङिति' इत्यतो यीत्यनुवर्त्य अङ्गाक्षिप्तप्रत्ययस्तेन विशिष्यते विशेषणेन तदादिविधिः, 'यस्मिन्विधिः–' इति परिभाषोपस्थानादिति भावः ॥ न त्विति । कृद्यकारे–प्रकृत्य । प्रहृत्य । उच्चैःकृत्य । तुकं बाधित्वा परत्वाद् दीर्घः स्यात् । तुग्विधिस्तु–अग्निचित् । सोमसुत्–इत्यादौ चरितार्थः । ल्यपः पित्त्वमप्यनुदात्तार्थतया चरितार्थमित्याहुः । सार्वधातुकयकारे तु चिनुयात् सुनुयात् ॥ कूजिनेति । अर्थैक्यादेकत्र पाठ उचित इति भावः ॥ लज लजि । लज्यात् । लञ्ज्यात् ॥ लज प्रकाशने इति कथादौ ॥ भर्त्सने चेति । चात् भर्जने ॥ तुजि पालने । भाषार्थोऽयं युजादौ ॥ गज गजि । 'गजा तु मदिरागृहम्' ॥ गज मदने च । मदनं मदः चित्तविकारः ॥ वज व्रज । वादित्वादेत्वाभ्यासलोपौ न । ववजतुः । वव्रजतुः ॥ शाडन्ता इति । शाडृ श्लाघायामित्यन्ता इत्यर्थः ॥ दोपधोऽयमिति । तथा च ष्टुत्वशास्त्रस्यासिद्धत्वात् 'न न्द्राः–३२५६' इति द्वित्वनिषेधेन दकारं विहाय टिशब्दस्य द्वित्वे पश्चाद्दकारस्य ष्टुत्वे चर्त्वे च अटिट्टिषते आटिट्टदित्यादि सिध्यति । टोपधत्वे तु अटिट्टिषते । आटिट्टदिति स्यादिति भावः ॥ तोपध इति । अस्मिंस्तु पक्षे अतित्तिषते । आतित्तदित्यादि बोध्यम् । हलादिःशेषेण टकारनिवृत्तौ तन्निमित्तस्यापि ष्टुत्वस्य निवृत्तत्वादिति नव्याः ॥ मनोरमायां तु 'पूर्वत्रासिद्धीयमद्विर्वचने ३२५७' इति ष्टुत्वस्यासिद्धत्वाभावाट्टकारद्वयसहितस्य द्वित्वे हलादिःशेषे अटिट्टिषते आटिट्टदित्यादि सिध्यती-

---

१ इड्द्वयस्यापीति । क्रादिनियमभारद्वाजनियमप्रापितस्यापीत्यर्थः ॥ २ अनाश्रितेति–। न आश्रितो विधानविशेषो येन नाप्राप्तिरूपो यस्य तदित्यर्थः ॥ ३ इण्मात्रमिति–। अनन्तरमन्तरं चेत्यर्थः ॥ ४ अनारभ्याधीतेनेति–। विधिमनारभ्याधीतेनेत्यर्थः ॥

इत्येके । अट्टते । आनट्टे । १ ॥ वेष्ट वेष्टने । विवेष्टे । २ ॥ चेष्ट चेष्टायाम् । अचेष्टिष्ट । ३ ॥ गोष्ट लोष्ट संघाते । जुगोष्टे । ४ ॥ लुलोष्टे । ५ ॥ घट्ट चलने । जघट्टे । ६ ॥ स्फुट विकसने । स्फोटते । पुस्फुटे । ७ ॥ अठि गतौ । अण्ठते । आनण्ठे । ८ ॥ वठि एकचर्यायाम् । वण्ठते । ववण्ठे । ९ ॥ मठि कठि शोके । शोक इह आध्यानम् । मण्ठते । १० ॥ कण्ठते । ११ ॥ मुठि पालने । मुण्ठते । १२ ॥ हेठ विबाधायाम् । जिहेठे । १३ ॥ एठ च । एठांचक्रे । १४ ॥ हिडि गत्यनादरयोः । हिण्डते । जिहिण्डे । १५ ॥ हुडि संघाते । जुहुण्डे । १६ ॥ कुडि दाहे । चुकुण्डे । १७ ॥ वडि विभाजने । मडि च । ववण्डे । १९ ॥ भडि परिभाषणे । परिहासः सनिन्दोपालम्भश्च परिभाषणम् । बभण्डे । २० ॥ पिडि संघाते । पिपिण्डे । २१ ॥ मुडि मार्जने । मार्जनं शुद्धिर्न्यग्भावश्च । मुण्डते । २२ ॥ तुडि तोडने । तोडनं दारणं हिंसनं च । तुण्डते । २३ ॥ हुडि वरणे । वरणं स्वीकारः । हरण इत्येके । हुण्डते । २४ ॥ चडि कोपे । चण्डते । २५ ॥ शडि रुजायां संघाते च । शण्डते । २६ ॥ तडि ताडने । तण्डते । २७ ॥ पडि गतौ । पण्डते । २८ ॥ कडि मदे । कण्डते । २९ ॥ खडि मन्थे । ३० ॥ हेडृ होडृ अनादरे । जिहेडे । ३१ ॥ जुहोडे । ३२ ॥ बाडृ आप्लाव्ये । बशादिः । आप्लाव्यमाप्लवः । बाडते । ३३ ॥ द्राडृ ध्राडृ विशरणे । द्राडते । ३४ ॥ ध्राडते । ३५ ॥ शाडृ श्लाघायाम् । शाडते । ३६ ॥

अथ आ टवर्गीयान्तसमाप्तेः परस्मैपदिनः ॥ शौटृ गर्वे । शौटति । शुशौट । १ ॥ यौटृ बन्धे । यौटति । २ ॥ म्लेटृ म्रेडृ उन्मादे । द्वितीयो डान्तः । टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत् । म्लेटति । ३ ॥ म्रेडति । ४ ॥ कटे वर्षावरणयोः । चटे इत्येके । चकाट । सिचि अतो हलादेर्लघोरिति वृद्धौ प्राप्तायाम्—॥(३०७२) ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । ७।२।५। हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि । अकटीत् । ६ ॥ अट पट गतौ । आट । आटतुः । आटुः । ७ ॥ पपाट । पेटतुः । पेटुः । ८ ॥ रट परिभाषणे । रराट । ९ ॥ लट बाल्ये । ललाट । १० ॥ शट रुजाविशरणगत्यवसादनेषु । शशाट । ११ ॥ वट वेष्टने । ववाट । ववटतुः । ववटुः । ववटिथ । १२ ॥ किट खिट त्रासे । केटति । १३ ॥ खेटति । १४ ॥ शिट षिट अनादरे । शेटति । शिशेट । १५ ॥ सेटति । सिषेट । १६ ॥ जट झट संघाते । १८ ॥ भट भृतौ । १९ ॥ तट उच्छ्राये । २० ॥ खट काङ्क्षायाम् । २१ ॥ णट नृत्तौ । २२ ॥ पिट शब्दसंघातयोः । २३ ॥ हट दीप्तौ । २४ ॥ षट अवयवे । २५ ॥ लुट विलोडने । डान्तोऽयमित्येके । २७ ॥ चिट परप्रेष्ये । २८ ॥ विट शब्दे । २९ ॥ बिट आक्रोशे । बशादिः । ३० ॥ हिटेत्येके । ३१ ॥ इट किट कटी गतौ । एटति । ३२ ॥ केटति । ३३ ॥ कटति । ईकारः श्वीदितो निष्ठायामितीण्निषेधार्थः । ३४ ॥ केचित्तु—इदितं मत्वा कुमि

---

त्युक्तम् । 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति त्वनित्यमिति तदाशयः ॥ आनट्टे इति । इह ' न न्द्राः—३२५६ ' इति निषेधो न । तत्र द्वितीयस्येत्यनुवर्तनात् द्वितीयैकाच एव नदराणां निषेधात् ॥ घट्ट चलने । अयं चुरादावपि ॥ स्फुट । अयं कुटादावपि ॥ आनण्ठे इति । 'तस्मान्नुड् द्विहलः ३०५५' इति नुट् ॥ वण्ठते इति । सहायं विना चरतीत्यर्थः । मडि च । पृथक्पाठादयं वेष्टनेऽपीत्याहुः । मडि भूषायामित्यग्रे परस्मैपदिषु ॥ भडि । ' यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्' इत्यमरः ॥ शडि । 'शण्डोऽसुरपुरोहितः' ॥ द्राडृ । विशरणमवयवविभागः । शाडृ । डलयोरैक्यात् शालते इति काश्यपः ॥ शौटृ गर्वे । अस्योणादिषु ईरन्वक्ष्यते । 'तदेतदतिशौटीर्यमौड्डलोमेर्न मृष्यति' इति कल्पतरुः ॥ कटे । (३०७२) ह्म्यन्तक्षण—। अग्रहीत् । टुवमु, अवमीत् । हय गतौ, अहयीत् । क्षणु हिंसायाम्, अक्षणीत् । श्वस प्राणने, अश्वसीत् । जागृ निद्राक्षये, अजागरीत् । ण्यन्ते छन्दसि ' नोनयतिध्वनयति—५२३२ ' इत्यादिना चङि निषिद्धे ऊनयीदिति उदाहरणम् । टुओश्वि, अश्वयीत् ॥ इडादौ सिचीति । इडादौ किम् । दह भस्मीकरणे, अधाक्षीत् ॥ किट खिट । इट किटेति, किटिर्गतौ पठिष्यते । इह पाठस्त्वर्थभेदात् ॥ जट झट । जेटतुः । जझटतुः । इह त्वादेशादित्वादेत्वाभ्यासलोपौ न ॥ खट । 'अशूप्रुषिलटिखटिकणिविशिभ्यः क्वन् ४३५१' । खट्वा ॥ णट नृत्तौ । प्रणटति । णोपदेशपर्युदासे नाटीति सैवृद्धिकनिर्देशेन नट अवस्यन्दने इति चौरादिकस्यैव ग्रहणादयं णोपदेश एव ॥ हट दीप्तौ । हाटकं सुवर्णम् । ' संज्ञायां च ५७८१' इति ण्वुल् बाहुलकादक्रियामपि ॥ षट । पचाद्यजन्ताट्टाप् । 'सटा जटाकेसरयोः' ॥ चिट । 'सर्वधातुभ्यः—४७६३' इति औणादिक इन् । चेटिः । ' कृदिकारात्—७७८ ' इति ङीष् चेटी ॥ विट । ईगुपधलक्षणः कः । विटः ॥

---

१ पडि गताविति । पण्डो गमनकर्ता । धातूनामनेकार्थत्वात्पण्डा विलक्षणा बुद्धिरित्यपि भवति ॥ २ केचिदित्वत्याग्भ्योदाहरन्तीत्यन्तमरुचिग्रस्तम्, इकारप्रश्लेषस्य प्रामाणिकत्वेऽस्येदित्त्वसम्भावना कर्तुं शक्या तत्रैव मानाभावादिति कश्चित् ॥ ३ एकस्याऽसहायस्य चर्या गमनं तस्यामित्यर्थं इत्याशयेनाह—सहायं विनेति । गमनं चात्र धातौ नोत्तरदेशसंयोगानुकूलव्यापार एव किन्तु स्थित्यनुकूलव्यापारोऽपि । तेनापत्यरहितायां विधवायां च वण्ठेति प्रयोगसिद्धिः ॥ ४ सवृद्धिकेति । नित्यं वृद्धियुतस्येत्यर्थः ॥

कृते कण्टतीत्यादि–वदन्ति। अन्ते च इ ई इति प्रश्लिष्य, अयति। इयाय। इयतुः। इयुः। इययिथ, इयेथ। इयाय, इयय। दीर्घस्य तु [2]ईजांदेरित्यामि अयांचकारेत्याद्युदाहरन्ति। ३५॥ मडि भूषायाम्। ३६॥ कुडि वैकल्ये। कुण्डति। कुण्डत इति तु दाहे गतम्। ३७॥ मुड प्रुड मर्दने। ३९॥ चुडि अल्पीभावे। ४०॥ मुडि खण्डने। मुण्डति। ४१॥ पुडि चेत्येके। पुण्डति। ४२॥ रुटि लुटि स्तेये। रुण्टति। ४३॥ लुण्टति। ४४॥ रुठि लुठि इत्येके। ४६॥ रुडि लुडि इत्यपरे। ४८॥ स्फुटिर् विशरणे। इरित्त्वादङ्वा। अस्फुटत्, अस्फोटीत्। ४९॥ स्फुटि इत्यपि केचित्। इदित्त्वान्नुम्। स्फुण्टति। ५०॥ पठ व्यक्तायां वाचि। पेठतुः। पेठिथ। अपठीत्, अपाठीत्। ५१॥ वठ स्थौल्ये। ववठतुः। ववठिथ। ५२॥ मठ मदनिवासयोः। ५३॥ कठ कृच्छ्रजीवने। ५४॥ रट परिभाषणे। ५५॥ रठेत्येके। ५६॥ हठ प्लुतिशठत्वयोः। बलात्कार इत्येके। हठति। जहाठ। ५७॥ रुठ लुठ उठ उपघाते। ओठति। ६०॥ ऊठेत्येके। ऊठति। ऊठांचकार। ६१॥ पिठ हिंसासंक्लेशनयोः। ६२॥ शठ कैतवे च। ६३॥ शुठ प्रतिघाते। शोठति। ६४॥ शुठीति स्वामी। शुण्ठति। ६५। कुठि च। कुण्ठति। ६६॥ लुठि आलस्ये, प्रतिघाते च। ६७॥ शुठि शोषणे। ६८॥ रुठि लुठि गतौ। ७०॥ चुड्ड भावकरणे। भावकरणमभिप्रायसूचनम्। चुड्डति। चुचुड्ड। ७१॥ अड्ड अभियोगे। अड्डति। आनड्ड। ७२॥ कड्ड कार्कश्ये। कड्डति। ७३॥ चुड्डादयस्त्रयो दोपधाः। तेन क्विपि चुत् अत् कत्–इत्यादि॥ क्रीडृ विहारे। चिक्रीड। ७४॥ तुडृ तोडने। तोडति। तुतोड। ७५॥ तूडृ इत्येके। ७६॥ हुडृ हूडृ होडृ गतौ। हुड्यात्। ७७॥ हूड्यात्। ७८॥ होड्यात्। ७९॥ रौडृ अनादरे। ८०॥ रोडृ लोडृ उन्मादे। ८२॥ अड उद्यमे। अडति। आड। आडतुः। आडुः। ८३॥ लड विलासे। लडति। ८४॥ लडयोर्लळयोश्चैकत्वस्मरणाळ्लतीति स्वाम्यादयः॥ कड मदे। कडति। ८५॥ कडि इत्येके। कण्डति। ८६॥ गडि वदनैकदेशे। गण्डति। ८७॥ इति टवर्गीयान्ताः॥

अथ पवर्गीयान्ताः। तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत्॥ तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः। आद्योऽनुदात्तः। क्षीरस्वामी त्वयं सेडिति बभ्राम। तेपते। तितिपे। क्रादिनियमादिट्। तितिपिषे। तेप्ता। तेप्स्यते॥ (३०७३) लिङ्सिचावात्मनेपदेषु। १।२।११। इक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदपरः सिचेत्येतौ कितौ स्तः। कित्त्वान्न गुणः। तिप्सीष्ट। तिप्सीयास्ताम्। तिप्सीरन्। लुङि [3]झलो झलीति सलोपः। अतिप्त। अतिप्साताम्। अतिप्सत। १॥ तेपते। तितेपे। २॥ तिष्टिपे। तिष्टिपाते। तिष्टिपिरे। ३॥ तिष्टेपे। तिष्टेपाते। तिष्टेपिरे॥ तेपृ कम्पने च। ४॥ ग्लेपृ दैन्ये। ग्लेपते। ५॥ टुवेपृ कम्पने। वेपते। ६॥ केपृ गेपृ ग्लेपृ च।

---

इयायेति। द्वित्वे कृते णलि वृद्धौ सत्यामायादेशः। 'अभ्यासस्यासवर्णे ३०५९' इति इयङ्॥ इयतुरिति। द्वित्वे कृते 'एरनेकाचः–३८०' इति यणं बाधित्वा अन्तरङ्गत्वात्सवर्णदीर्घः। ततः 'अचि श्नुधातु–३७९' इतीयङ्, एकादेशस्य पूर्वान्तत्वेन अभ्यासग्रहणेन ग्रहणात्। 'अभ्यासस्यासवर्णे ३०५९' इत्यनेनेत्येके॥ केचित्तु–'वार्णादाङ्गं बलीयः ३०६०' इति दीर्घं बाधित्वा यण्। न चेह समानाश्रयत्वं नेति वाच्यम्, अभ्यासोत्तरस्येकारस्य सवर्णदीर्घयणौ प्रति स्थानित्वेन तयोः समानाश्रयत्वात्। अत एव ईयतुरित्यत्र 'इणो यण् ३२६६' इति यणि ततो 'दीर्घ इणः किति ३२६७' इत्यभ्यासस्य दीर्घो विधीयते अन्यथा सूत्रमिदं निर्विषयं स्यात्, अभ्यासाभावादित्याहुः। स्यादेतत्, णल्थलोस्त्वभ्यासस्येयङ् दुर्लभः, तस्मिन्कर्तव्ये 'अचः परस्मिन्–७७' इति वृद्धिगुणयोः स्थानिवद्भावेन असवर्णे इति प्रतिषेधादिति चेत्। मैवम्, असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वस्याप्रवृत्तेः। ननु नास्ति सामर्थ्यम्, इयर्ति इयृत इत्यादौ सावकाशत्वादिति चेत्। अत्राहुः—न ह्येकमुदाहरणं [2]योगारम्भं प्रयोजयति। अन्यथा हि 'अभ्यासस्याताँ' इति ब्रूयात्। एवं चान्तरङ्गत्वात्सवर्णदीर्घे कृते ततो वृद्धिगुणयोः सतोः णलि आय, थलि एथ, इट्पक्षे तु अयियेति स्यादित्याशङ्काऽपि न कार्या, 'अभ्यासस्यासवर्णे ३०५९' इत्यस्य वैयर्थ्यापत्तेरिति। एता। एष्यति। 'अकृत्सार्व–३०७१' इति दीर्घः। ईयात्। ऐषीत्॥ कुडि। वैकल्यमविवेकः॥ तुडृ। तोडनं दारणं हिंसनं च॥ रोडृ लोडृ। उन्मादश्चित्तविभ्रमः॥ गडि वदनैकदेशे। टवर्गीयप्रकरणादिह पाठस्तु उचितः। अन्तत्यादिषु तु पञ्चैते न तिङ्विषया इति मतान्तरं बोधयितुं प्रसङ्गादुपन्यस्तः॥ तिपृ तेपृ। (३०७३) लिङ्सिचावात्मनेपदेषु। 'इको झल् ३४६९' 'हलन्ताच्च ३४७०' इति वर्तते। 'असंयोगाल्लिट् कित् ३००२' इत्यतः किदिति च तदाह—इक्समीपादित्यादि। इकः किम्। यक्षीष्ट। सति कित्त्वे संप्रसारणं स्यात्। आत्मनेपदेति किम्, अद्राक्षीत्। कित्त्वे सति 'सृजिदृशोर्झल्यमकिति ३२०८' इत्यम् न स्यात्। आत्मनेपदपरत्वं सिच एव विशेषणं न तु लिङ्स्थानिकस्यात्मनेपदस्य, लिङः परत्वासंभवात्॥ तेपृ कम्पने च। चकारात्क्षरणार्थस्य लाभादस्य पूर्वत्र पाठस्त्यक्तुं शक्यः। केचित्तु तिपृ तेपृ इति पठन्ति॥ टुवेपृ। वेपथुः। केपृ गेपृ ग्लेपृ च। योगविभागात्पूर्वोत्तरार्थौ चकारेणानुकृष्येते, तदाह–

---

१ केचित्त्विति। इदमेव युक्तमिति बोध्यम्॥ २ योगारम्भमिति। सामान्ययोगारम्भमिति तदर्थः। अत एव 'अभैर्दकू' इत्यादीनां चरितार्थतेति बोध्यम्॥

चात्कम्पने गतौ च। सूत्रविभागादिति स्वामी। मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्यपेक्षत इत्याह। श्लेपेरर्थभेदात्पुनः पाठः। ९॥ मेपृ रेपृ लेपृ गतौ। १२। त्रपूष् लज्जायाम्। त्रपते ॥ (३०७४) ॥ तॄफलभजत्रपश्च। ६। ४। १२२। एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च। त्रेपे। त्रेपाते। त्रेपिरे। ऊदित्वादिड्वा। त्रपिता, त्रप्ता। त्रपिषीष्ट, त्रप्सीष्ट,। १३॥ कपि चलने। कम्पते। चकम्पे। १४॥ रबि लबि अबि शब्दे। ररम्बे। ललम्बे। आनम्बे॥ लबि अवस्रंसने च। १७॥ कबृ वर्णे। चकबे। १८॥ क्लीबृ अधार्ष्ट्ये। चिक्लीबे। १९॥ क्षीबृ मदे। क्षीबते। २०॥ शीभृ कत्थने। शीभते। २१॥ चीभृ च। २२॥ रेभृ शब्दे। रिरेभे। २३। अभिरभी क्वचित्पठ्येते। अम्भते। २४॥ रम्भते। २५॥ ष्टभि स्कभि प्रतिबन्धे। स्तम्भते। उत्तम्भते। उदः स्थास्तम्भोरिति पूर्वसवर्णः। विस्तम्भते। स्तन्भेरिति षत्वं तु न भवति, श्नुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात्। तद्बीजं तूदः स्थास्तम्भोरिति पवर्गीयोपधपाठः, स्तन्भेरिति तवर्गीयोपधपाठश्चेति माधवः। केचिदस्य टकार औपदेशिक इत्याहुः। तन्मते। ष्टम्भते। टष्टम्भे। २७॥ जभी जृभी गात्रविनामे॥ (३०७५) ॥ रधिजभोरचि। ७। १। ६१। एतयोर्नुमागमः स्यादचि। जम्भते। जजम्भे। जम्भिता। अजम्भिष्ट। २८॥ जृम्भते। जजृम्भे। २९॥ शल्भ कत्थने। शशल्भे। ३०॥ वल्भ भोजने। दन्त्योष्ठ्यादिः, ववल्भे। ३१॥ गल्भ धार्ष्ट्ये। गल्भते। ३२॥ श्रम्भु प्रमादे। तालव्यादिर्दन्त्यादिश्च। श्रम्भते। स्रम्भते। ३३॥ ष्टुभु स्तम्भे। स्तोभते। विष्टोभते। तुष्टुभे। व्यष्टोभिष्ट। ३४॥

अथ परस्मैपदिनः। गुपू रक्षणे॥ (३०७६) ॥ गुपूधूपविच्छिपणिपनिभ्य आयः। ३। १। २८। एभ्य आयप्रत्ययः स्यात्स्वार्थे। पुगन्तेति गुणः॥ (३०७७) ॥ सनाद्यन्ता धातवः। ३। १। ३२। सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः। धातुत्वाल्लडादयः। गोपायति॥ (३०७८) ॥ आयादय आर्धधातुके वा। ३। १। ३१। आर्धधातुकविवक्षायामायादयो वा स्युः॥ (३०७९) ॥ कास्प्रत्ययादाममन्त्रे लिटि। ३। १। ३५। कास्धातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि न तु मन्त्रे॥ (३०८०) ॥ कास्यनेकाज्ग्रहणं कर्तव्यम्॥ सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः॥ (३०८१) ॥ आर्धधातुके। ६। ४। ४६। इत्यधिकृत्य—॥ (३०८२) ॥ अतो लोपः। ६। ४। ४८॥ आर्धधातुकोपदेशकाले

---

चात्कम्पने गतौ चेति। योगविभागसामर्थ्यादेवार्थद्वयलाभे चकारो व्यर्थ इत्यन्ये॥ पुनः पाठ इति। दैन्ये पठितस्य कम्पनाद्यर्थलाभार्थमिति भावः॥ (३०७४) तॄफल—। तरतेरकारस्य गुणशब्देन भावितत्वात्फलभजोर्वैरूप्यसंपादकादेशादित्वात् त्रपतेस्त्वेकहल्मध्यस्थत्वाभावादप्राप्ते विधिरयम्। तेरतुः। तेरुः। फेलतुः। फेलुः। भेजतुः। भेजुः॥ अबि शब्दे। अस्मात् 'गुरोश्च हलः ५०८३' इति अप्रत्यये अम्बाशब्दः। तिस्रः अम्बा अकारोकारमकारात्मकाः शब्दा यस्य इति बहुव्रीहौ 'शेषाद्विभाषा १२७४' इति कप्रत्यये त्र्यम्बक इत्येके॥ केचित्तु त्रीणि अम्बकानि नेत्राणि यस्येति विगृह्णन्ति॥ अभिरभी इति। 'सर्वधातुभ्योऽसुन् ४८३४' इत्यधिकारे 'उदके नुम्भौ च ४८५५' इति वक्ष्यमाणत्वात् धात्वन्तरेणापि अम्भः—शब्दः सिद्ध्यतीति बोध्यम्। अम्भस्तोयम्। तस्यापत्यमाम्भिः भीष्मः। 'अम्भसो लोपश्च' इति बाह्वादिपाठादिञि सलोपः॥ तद्बीजं त्विति। पूर्वसवर्णप्रवृत्तेः षत्वाप्रवृत्तेश्च बीजमित्यर्थः॥ (३०७५) रधिजभोरचि। रन्धयति। पराऽपि वृद्धिर्नित्येन नुमा बाध्यते। अचीति किम्, रद्धा। जब्धा॥ (३०७७) सनाद्यन्ताः—। सनादय इति। "सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब् णिज्यङौ तथा। यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः"॥ धातुत्वादिति। प्रत्ययविशिष्टस्य धातुत्वादित्यर्थः। सुप्तिङन्तमित्यनेन 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ३१२' इति ज्ञापितत्वाद्विशिष्टस्य धातुसंज्ञालाभाय अस्मिन् सूत्रे अन्तग्रहणं कृतम्। 'भूवादयो धातवः ३९' इत्यस्यानन्तरं 'सनाद्यन्ताश्च' इति न सूत्रितम्, सनादयो द्वादशैवेति निर्धारणाभावापत्तेः। 'सनाद्यन्ता धातवः ३०७७' इत्यस्यानन्तरं तु 'भूवादयश्च' इति पठित्वा धातव इत्येतत्तत्र त्यक्तुं[1] शक्यम्॥ (३०७८) आयादयः—। आयेयङ्णिङ इत्यर्थः॥ विवक्षायामिति। परसप्तम्यां तु आर्धधातुकोपदेशकाले यददन्तमित्यनुपदं वक्ष्यमाणं न संगच्छेतेति भावः॥ अन्ये तु 'गुपू रक्षणे' इत्यस्मात् क्तिनि पश्चादायप्रत्यये गोपायतिरित्यनिष्टं प्रसज्येत, विवक्षायामित्युक्ते तु आयप्रत्यये कृते क्तिनं बाधित्वा 'अप्रत्ययात् ५०८२' इत्यकारप्रत्यये टापि च गोपाया धूपायेति सिध्यतीत्याहुः॥ (३०७९) कास्प्रत्यया—। अमन्त्रेइति किम्, कृष्णो नोनाव। अच्छन्दसीति तु नोक्तम्, मन्त्रभिन्ने छन्दसि आम इष्टत्वात्। यथा पुत्रमामन्त्रयामास। प्रत्ययान्तत्वादाम्। 'अथ ह शुनःशेप ईक्षांचक्रे' ईजादेश्चेत्याम्। इह चुलुम्पचकास्दरिद्रादिभ्य आमोऽप्राप्तौ 'कास्यनेकाचः—३०८०' इति वार्तिकमारभ्यते॥ (३०८०) प्रत्ययग्रहणमपनीयेति। अन्यथा अ इवाचरति अति, अस्य लिटि औ अतुरित्यादि वक्ष्यमाणं न सिध्येदिति भावः॥ अन्ये तु भाष्यवार्तिकयोः प्रत्ययग्रहणमपनीयेत्यनुक्त्या प्रत्ययान्तादेकाचोऽप्याम् भवत्येव। अ इवाचरति इत्याचारे क्विपि

---

१ त्यक्तुं शक्यमिति। 'अनुदात्तङितः—' इत्यादौ तदनुवृत्तये 'धातोः कर्मणः—' इत्यादौ धातुपदार्थसन्देहनिवृत्तये च तथा पाठस्यावश्यकत्वाच्चिन्त्यमिति केचित्। 'अनुदात्तङितः—' इति प्रकरणस्य धातुभ्य एव विहितानां नियमार्थत्वेन 'अनुदात्तङितः—' इत्यत्र धातुपदानुवृत्तेर्न दृढतरं प्रयोजनमिति विभाव्यते, तदा त्याज्यमेवेति परे॥

यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे । गोपायांचकार । गोपायांबभूव । गोपायामास । जुगोप । जुगुपतुः । ऊदित्त्वाद्वेट् । जुगोपिथ, जुगोप्थ । गोपायिता, गोपिता, गोप्ता । गोपाय्यात् , गुप्यात् । अगोपायीत्, अगोपीत्, अगौप्सीत् । १ ॥ धूप संतापे । धूपायति । धूपायांचकार । दुधूप । धूपायितासि, धूपितासि । २ ॥ जप जल्प व्यक्तायां वाचि । जप मानसे च । ४ ॥ चप सान्त्वने । ५ ॥ षप समवाये । समवायः संबन्धः, सम्यगवबोधो वा । सपति ।६॥ रप लप व्यक्तायां वाचि ।८॥ चुप मन्दायां गतौ । चोपति । चुचोप । चोपिता ।९॥ तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ हिंसार्थाः । तोपति । तुतोप । तुम्पति।तुतुम्प । तुतुम्पतुः । संयोगात्परस्य लिटः कित्त्वाभावान्नलोपो न । किदाशिषीति कित्त्वान्नलोपः । तुप्यात् ॥ ( ३०८३ ) ॥ प्रात्तुम्पतौ गवि कर्तरि ॥ इति पारस्करादिगणे पाठात्सुट् । प्रस्तुम्पति गौः । श्तिपा निर्देशाद्यङ्लुकि न । प्रतोतुम्पीति । त्रोपति । त्रुम्पति । तोफति । तुम्फति । त्रोफति । त्रुम्फति । इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः । अन्ये सरेफाः । आद्याश्चत्वारः प्रथमान्ताः । ततो द्वितीयान्ताः । अष्टावप्युकारवन्तः । १७ ॥ पर्प रफ रफि अर्ब पर्ब लर्ब बर्ब मर्ब कर्ब खर्ब गर्ब शर्ब षर्ब चर्ब गतौ । आद्यः प्रथमान्तः । ततो द्वौ द्वितीयान्तौ । तत एकादश तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः । पर्पति । पपर्प । रफति । रम्फति । अर्बति । आनर्ब । पर्बति । लर्बति । बर्बति । पवर्गीयादिरयम् । मर्बति । कर्बति । खर्बति । गर्बति । शर्बति । सर्बति । चर्बति । ३१ ॥ कुबि आच्छादने । कुम्बति । ३२ ॥ लुबि तुबि अर्दने । लुम्बति । ३३ ॥ तुम्बति । ३४ ॥ चुबि वक्त्रसंयोगे । चुम्बति । ३५ ॥ षृभु षृम्भु हिंसार्थौ । सर्भति ।ससर्भ । सर्भिता । सृम्भति । ससृम्भ । सृम्भ्यात् ।३७॥ षिभु षिम्भु इत्येके।सेभति । सिम्भति ।३९॥ शुभ शुम्भ भाषणे।भासने इत्येके।हिंसायामित्यन्ये ४१॥

अथानुनासिकान्ताः । तत्र कम्यन्ता अनुदात्तेतो दश ॥ घिणि घुणि घृणि ग्रहणे । नुम् । ष्टुत्वम् । घिण्णते । जिघिण्णे । घुण्णते । जुघुण्णे । घृण्णते ।जघृण्णे । ३॥ घुण घूर्ण[1] भ्रमणे । घोणते । घूर्णते । इमौ तुदादौ परस्मैपदिनौ । ५ ॥ पण व्यवहारे स्तुतौ च ॥ पन च । स्तुतावित्येव[2] संबध्यते, पृथङ्निर्देशात् । पनिसाहचर्यात्पणेरपि स्तुतावेवायप्रत्ययः । व्यवहारे तु पणते । पेणे । पणितेत्यादि । स्तुतावनुबन्धस्य[3] केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् । पणायति । पणायांचकार । पेणे । पणायितासि । पणितासे । पणाय्यात् । पणिषीष्ट । ६ ॥ पनायति । पनायांचकार । पेने । ७ ॥ भाम क्रोधे । भामते । बभामे ।८॥ क्षमूष् सहने । क्षमते । चक्षमे । चक्षमिषे । चक्षंसे । चक्षमिध्वे, चक्षन्ध्वे । चक्षमिवहे ॥ ( ३०८४) ॥ म्वोश्च । ८ । २ । ६५ । मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे । णत्वम् । चक्षण्वहे । चक्षमिमहे, चक्षण्महे । क्षमिष्यते। क्षंस्यते । क्षमेत । आशिषि,क्षमिषीष्ट ।

---

लिटि आंचकार आंचक्रतुरित्यादीत्याहुः ॥ ( ३०८२ ) अतो लोपः । अनुदात्तोपदेश इति सूत्रादुपदेश इत्यनुवर्तते । तदाह- आर्धधातुकोपदेशेत्यादि । उपदेशे इति किम् । अय पय गतौ । आभ्यां क्विपि ' वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन इति वार्तिकात् ' लोपो व्योः—१२५४ ' इति यलोपे ' अतो लोपः ३०८२ ' इति लोपो मा भूत् । अत्, पत् । इह 'ह्रस्वस्य पिति-३८०६' इति तुक् । आर्धधातुके पर इति किम् , कथयति । वृद्धौ कर्तव्यायां 'अचः परस्मिन्-७७' इति स्थानिवत्त्वं यथा स्यात् ॥ गोपायामिति । नन्विह आयप्रत्ययस्यादन्ततामाश्रित्य लोपकरणे फलाभावादुच्चारणार्थ एव तत्राकारोऽस्त्विति चेत् । अत्राहुः-' गोपायतं नः ' इत्यत्र गोपायशब्दस्य धातुत्वात् धातोरन्त उदात्तो भवति, ततः शबकारेणैकादेशेऽपि 'एकादेश उदात्तेन-५५२९ ' इत्युदात्त एव, तकाराकारस्तु ' तास्यनुदात्तेन्ङिददुपदेशात् ५६९५ ' इत्यनुदात्तः, ततश्चोदात्तादनुदात्तस्येति स्वरितो भवति । ' स्वरितात्संहितायामनुदात्तानाम् ५५४३ ' इति न इत्यस्य एकश्रुतिः । आयप्रत्ययस्य अनदन्तत्वे नेदमिष्टं सिध्यतीति ॥ स्तुतावित्येवेति । भट्टिस्तु व्यवहारेऽपि आयं प्रायुङ्क्त-' न चोपलेभे वणिजां पणायाम् ' इति । वणिजां व्यवहारमित्यर्थः । ' अ प्रत्ययात् ५०८२ ' इति आयप्रत्ययान्तादकारप्रत्यये टाप् ॥ चक्षंसे

---

१ घुणघूर्णेति । अस्य दीर्घपाठः प्रक्रियालाघवार्थः, ह्रस्वं पठित्वा ' उपधायां च ' इति दीर्घकरणे प्रक्रियागौरवं स्पष्टमेव । नन्वस्माद्धातोः ' अन्येभ्योऽपि दृश्यते ' इति वनिपि कृते ' विड्वनोरनुनासिकस्य ' इत्यनेन णकारस्याकारे ह्रस्वपाठे घुरावेति , दीर्घपाठे घूरावेति फलभेदाभावाय दीर्घोच्चारणमावश्यकम्—न च दीर्घे कर्तव्ये परनिमित्तकत्वेन बहिरङ्गस्यात्वस्यासिद्धत्वादादौ दीर्घे न फलभेद इति वाच्यम् , त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तिस्वीकारादिति चेन्न, कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्तत इति प्राचीनसम्मतपक्षाभिप्रायेण प्रक्रियालाघवार्थ इत्यभिधानात् । नव्यमते तु ह्रस्वपाठः सुवच एव, तन्मते कार्यकालपक्षेऽपि तदप्रवृत्तिस्वीकारात् ॥ २ स्तुतावित्येवेति । यद्यपि, ' पृथग् निर्देशो यथासंख्यनिवृत्त्यर्थः ' इत्यपि शक्यते वक्तुम्, तथापि वृत्तिसम्मतव्याख्यानानुरोधादेवमुक्तम् ॥ ३ स्तुतावनुबन्धस्येति ।आर्द्धधातुकविषये आयादीनां वैकल्पिकत्वेन आयप्रत्ययाभावेऽनुबन्धस्य चारितार्थ्यमिति भावः ॥ ४ तुकं बाधित्वेति शेषः॥ ५ आर्धधातुके परे इति किमिति । सार्वधातुकस्य शप उपदेशेऽकारान्तस्य गोपायेत्यस्य सत्यपि लोपे रूपे न विशेष इति प्रश्नः ॥ ६ स्थानिवत्त्वमिति । आर्धधातुक परत एव लोपविधाने एव लोपस्य परनिमित्तकत्वं भवति । नान्यथेति भावः ॥

क्षंसीष्ट । अक्षमिष्ट, अक्षंस्त ।९॥ **कमु कान्तौ** । कान्तिरिच्छा॥ (३०८५) (सू) **कमेर्णिङ्** ।३।१।३०। स्वार्थे । ङित्वात्तङ् । कामयते[1]॥ (३०८६) (सू) **अयामन्ताल्वाय्येत्न्विष्णुषु**।६।४।५५। आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः[2] । कामयांचक्रे ॥ आयादय आर्धधातुके वा॥ चकमे । कामयिता । कमिता । कामयिष्यते । कमिष्यते ॥ ( ३०८७ ) (सू) **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** । ३ । १ । ४८ । ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । काम् इ अ त इति स्थिते ॥ (३०८८) (सू) **णेरनिटि** । ६ । ४ । ५१ । अनिडादावार्धधातुके परे परे णेर्लोपः स्यात् । परत्वादेरनेकाच इति याणि प्राप्ते-॥ (३०८९) (वा) **ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन** इति वार्तिकम्[3]॥ णिलोपस्य तु पाचयतेः पाक्तिरित्यादिक्तिजन्तमवकाश इति भावः । वस्तुतस्त्वनिटीति वचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः । तथा चेयङादेरपवाद एवायम् । इयङ्-अततक्षत् । यण्-आटिटत् । गुणः-कारणा । वृद्धिः-कारकः । दीर्घः-कार्यते ॥ ( ३०९० ) (सू) **णौ चङ्युपधाया ह्रस्वः** ।७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥ ( ३०९१ ) (सू) **चङि** । ६ । १ । ११ । चङि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य ॥ ( ३०९२ ) (सू) **सन्वल्लघुनि चङ्परेऽनग्लोपे** ।७।४।९३। चङ्परे इति बहुव्रीहिः । स चाङ्गस्येति च द्वयमप्यावर्तते । आङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् , तत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्यात् णावग्लोपेऽसति । अथवाऽङ्गस्येति नावर्तते । चङ्परे णौ यदङ्गं तस्य

---

इति । इह 'अनुनासिकस्य क्विझलोः-३५४५' इत्युपधादीर्घो न कृतः, संज्ञापूर्वकविधेरनित्यत्वादिति स्थितस्य गतिमुत्प्रेक्षयन्ति[5] ॥ **कमु** कान्तौ ॥ अस्य णिङभावे 'उदितो वा ५१४९' इति क्त्वायामिड्विकल्पः । कमित्वा, कान्त्वा । निष्ठायां तु 'यस्य विभाषा ४०२६' इति निषेधात्–कान्तः ॥ ( ३०८६ ) **अयामन्ता**—। नामन्तेति सूत्रितेऽपि 'णेरनिटि ३०८८' इति वक्ष्यमाणलोपस्य निषेधे गुणायादेशयोः सतोः कामयांचक्रे इत्यादिरूपाणि सिध्यन्त्येव, तथापि 'ल्यपि लघुपूर्वात्५१५८' इत्येवमर्थमयादेशवचनम् । प्रस्तनय्य । सङ्गमय्य । न ह्यत्र गुणायादेशौ लभ्येते ॥ आम्–कारयामास । अन्त–गण्डयन्तो, मन्डयन्तः । 'तृभूवहिवसिभासिसाधिगडिमाण्डिजिनन्दिभ्यश्च ४६११' इत्यौणादिको झच् । 'झोऽन्तः २९२३' ॥ 'स्पृहिगृहि–४१५९' इत्यालुच् । स्पृहयालुः ॥ 'श्रुदक्षिस्पृहिगृहिभ्यः–४५७९' इत्यौणादिक आय्यः । स्पृहयाय्यः ॥ 'स्तनिहृषिपुषि–४५०२' इत्यौणादिक एव इत्नुच् । स्तनयित्नुः ॥ 'णेश्छन्दसि ४१३७' इति इष्णुच् । वीरुधः पारयिष्णवः॥ (३०८७) **णिश्रिद्रु**–। च्लेः सिचोऽपवादः ॥ ( ३०८८ ) **णेरनिटि** । णेरिति णिङ्णिचोर्ग्रहणम्[6] । एवमन्यत्रापि बोध्यम् । अनिटीत्यनेनाधिकृतमार्धधातुक इत्येतद्विशेष्यते । 'यस्मिन्विधिः–' इति तदादिविधिः, 'अतो लोपः ३०८२' इत्यस्माल्लोप इति चानुवर्तते, तदाह—**अनिडादावित्यादि** ॥ **याणि प्राप्त इति** । ननु परत्वादियङ्यणादिविधयो यथासंभवमत्र सन्तु नाम, तेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो भविष्यतीति चेत् । नैवं शङ्क्यम् , इयङादेशे ह्यन्त्यलोपः प्रसज्येतेति दोषः स्यात् । एतच्च 'अतो लोपः' इति सूत्रे भाष्ये स्थितम् । न चात्र कारणा कारक इत्यादौ गुणवृद्ध्योः कृतयोरन्तरङ्गत्वादयादेशयोः कृतयोरन्त्यस्य लोपः प्राप्नोतीति कथमियङादेश एव दोष उक्त इति शङ्क्यम् , 'वार्णादाङ्गं बलीयः ३०६०' इत्ययायौ बाधित्वा णिलोपो भविष्यतीति भाष्याशयात् ॥ ( ३०८९ ) **ण्यल्लोपाविति** । णिलोपः इयङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन अल्लोपस्तु वृद्धिदीर्घाभ्यामिति विवेकः। णिलोपस्य निरवकाशत्वेन वार्तिकस्योक्तिसंभव एव नास्तीत्यत आह–**पाक्तिरित्यादि।** **क्तिजन्तमिति** । तत्र 'तितुत्र—४१९४' इतीण्निषेधादिति भावः ॥ **वचनसामर्थ्यादिति** । अयं भावः–णेरित्येतावति सूत्रे कृतेऽप्यार्धधातुक इत्यनुवृत्त्या आर्धधातुके परतो वर्तमानो णिलोप इयङ्यणादिभिर्बाधितः सन् परिशेषात् क्तिच्येव स्यादित्यनिटीत्यस्य वैयर्थ्यं प्रसज्येत, तथा चानिडाद्यार्धधातुकं सर्वमप्यस्य विषयो न तु क्तिजन्तमेवेति ॥ **अयमिति** । णिलोप इत्यर्थः । अल्लोपांशे तु वचनमपेक्षितमेव । तेन चिकीर्षक इत्यत्र वृद्धिं चिकीर्ष्यादित्यत्र 'अकृत्सार्व–३०७१' इति दीर्घं बाधित्वा पूर्वविप्रतिषेधेन 'अतो लोपः ३०८२' इति लोपो भवतीत्याहुः ॥ ( ३०९० ) **णौ चङ्युपधाया ह्रस्वः** । उपधायाः किम् , अचकाङ्क्षत् ॥ ( ३०९२ ) **सन्वल्लघुनि**—। चङ्पर इत्येतावतैव णिरिति न लभ्यते । श्रिद्रुस्रुवामपि चङ्परत्वादत आह—**अङ्गसंज्ञानिमित्तमिति** ॥ **अङ्गस्याभ्यास इति**। अङ्गस्य ये द्वे विहिते तयोः पूर्वोऽभ्यास इत्यर्थः॥ **अङ्गस्येति नावर्तत इति** । अस्मिंस्तु व्याख्याने चङ्परे इत्येतावतैव णिरिति लभ्यते , श्रिद्रुस्रुषु परेषु अङ्गत्वासंभवादतो व्याचष्टे—**चङ्परे णौ यदङ्गमिति** । चङ्परे इत्यस्यैव व्याख्यानं णाविति ज्ञेयम् । अनग्लोपे किम्, अचकथत् ॥

---

१ **कामयत इति** । इग्लक्षणत्वाभावादुपधावृद्धिनिषेधो न ॥ २ **लोपापवाद इति** । णिलोपापवाद इत्यर्थः ॥ ३ ननु परत्वादियङादिषु कृतेषु णिलोपो न स्यादित्यत आह–**ण्यल्लोपाविति**॥ ४ **क्तिजन्तमिति** । क्तिन्प्रत्ययस्तु दुर्लभ एव 'अ प्रत्ययात्' इत्यनेन बाधादिति भावः ॥ ५ **स्थितस्य गतिमिति** । अत एव क्विप्साहचर्येण तिङ्भिन्नस्यैव झलादेर्ग्रहणादत्र तेन दीर्घो नेति केचिद् वदन्ति ॥ ६ **णिङ्णिचोरिति** ।'त्यक्तानुबन्धग्रहणे सामान्यस्य ग्रहणम्'इति परिभाषणात् एकस्यैव ग्रहणे साधकाभावाच्च ॥

योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् ॥ ( ३०९३ ) सन्यतः । ७ । ४ । ७९ । अभ्यासस्यात इकारः स्यात्सनि ॥ ( ३०९४ ) दीर्घो लघोः । ७ । ४ । ९४ । लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये । अचीकमत ॥ णिङभावपक्षे- । ( ३०९५ ) कमेश्च्लेश्चङ्वक्तव्यः ॥ णेरभावान्न दीर्घसन्वद्भावौ । अचकमत ॥

(३०९६) संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ॥ तत्रैव दीर्घः सन्वच्च नानेकाक्ष्विति माधवः ॥ १ ॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ॥ किं त्वस्यावयवः कश्चित्तस्मादेकाक्ष्विदं द्वयम् ॥ २ ॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ॥ ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥ ३ ॥
चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया । णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ ४ ॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् ॥ णेरग्लोपेऽपि संबन्धस्त्वागितामपि सिद्धये ॥ ५ ॥

---

( ३०९३ ) सन्यतः ॥ ‘अत्र लोपोऽभ्यासस्य ३४७९’ इत्यतोऽभ्यासस्येति ‘भृञामित् ३३१४’ इत्यत इद्ग्रहणं चानुवर्तते तदाह—**अभ्यासस्येत्यादि**। तपरकरणं किम्, पापच्यतेः सन् । पापचिषते । न च सनि योऽभ्यासः सन्निमित्त इति विज्ञानात्तपरकरणाभावेऽपि नोक्तातिप्रसङ्गः, अभ्यासस्येह यन्निमित्तत्वादिति वाच्यम्, तादृशविवक्षायामधीषिषति प्रतीषिषतीत्यादावव्याप्तेः । न हि कार्यी निमित्तत्वेनाश्रीयते । यद्याश्रीयेत तर्हि ‘द्विर्वचनेऽचि ३००३’ इति निषेधेन रिसुशब्दस्य द्वित्वाप्रवृत्तावरिरिषतीत्यादि न सिध्येत् । नन्वेवं पिपक्षतीत्यादावव्याप्तिः, अभ्यासस्य सन्परत्वाभावात् । न च ‘येन नाव्यवधान-२९४४-२’ न्यायेन सन्प्रवृत्त्या व्यवहितेऽप्यभ्यासस्येत्वं स्यादेवेति वाच्यम्, प्रतीषिषतीत्यादावभ्यासस्याव्यवहितसन्परत्वसंभवादुक्तन्यायस्याप्रवृत्तिरिति चेत् । अत्राहुः—सना धातुमाक्षिप्य सनि सति यो धातुः सन्नन्तस्तदीयाभ्यासस्येति व्याख्यानान्नोक्तदोषः । न च सनि परे अभ्यासस्येति यथाश्रुतं परित्यज्योक्तव्याख्याने किं मानमिति वाच्यम्, तपरकरणस्यैव तत्र मानत्वात् । किञ्च, अकारग्रहणमपि तत्र मानम् । अन्यथा सन इत्येव ब्रूयात् । तावताऽप्यधीषिषति प्रतीषिषतीत्यादावित्वप्रवृत्तिसिद्धेरिति ॥ ( ३०९४ ) **दीर्घो लघोः । लघोरभ्यासस्येति** । ननु अज्झल्समुदायस्याभ्यासस्य लघुसंज्ञा दुर्लभा ‘ह्रस्वं लघु ५४’ इति सूत्रितत्वात् । नैष दोषः, इमे हि न समानाधिकरणे षष्ठ्यौ किन्तु व्यधिकरणे, तथा चाभ्यासावयवस्य लघोर्दीर्घ इत्यर्थः । ‘लघुनि चङ्परेऽनग्लोपे’ इति सर्वमिहानुवर्तते । तच्च प्राग्वदेव द्वेधा व्याख्येयम् । तदाह—**सन्वद्भावविषय इति** । हलादेरिति प्राचोक्तमिहोपेक्षितं निष्प्रमाणत्वात् । न हि मुनित्रयोक्तिं विना हलादेरिति व्याख्यातुमुचितम्, न चैवमौन्दिदत् आट्टिटदित्यादौ दीर्घः स्यादिति शङ्क्यम्, अङ्गलघ्वोरुभयोरपि णिचं प्रति विशेष्यत्वे दीर्घस्य तत्राप्राप्तेः । चङ्परं हि यदङ्गम् उन्द इति न तदीयोऽभ्यासो, न वा चङ्परणिच्परं यल्लघु तत्परः । एतेन अट्टिटदित्यादिभाष्योदाहरणमेव ‘हलादेः’ इति व्याख्याने प्रमाणमिति केषांचिदुत्प्रेक्षाऽपि प्रत्युक्ता । दीर्घाप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात् । लघोः किम् । क्षणु हिंसायाम् । अचिक्षणत् ॥ ( ३०९६ ) शास्त्रे अस्मिन् ‘कार्यकालं संज्ञापरिभाषम्’ ‘यथोद्देशं संज्ञापरिभाषम्’ इति पक्षद्वयमप्यस्ति, जातिव्यक्तिपक्षवत् । तथा च—‘पूर्वोऽभ्यासः २९३२’ इत्यस्य ‘सन्वल्लघुनि-३०९२’ इत्यादिना सह पक्षद्वयेऽपि एकवाक्यता समानैव, तथापि कार्यकालपक्षे पदैकवाक्यता, यथोद्देशपक्षे तु वाक्यैकवाक्यतेत्यस्ति विशेषः । तत्रेदानीं कार्यकालपक्षपातिमाधवमतं तावद्व्याचष्टे—**संज्ञाया** इत्यादिना श्लोकद्वयेन ॥ **अङ्गं यत्रेति** । अयं भावः—‘सन्वल्लघुनि-३०९२’ ‘दीर्घो लघोः ३०९४’ इति सूत्रद्वये अङ्गस्येत्यनुवर्तते, अभ्यासस्येति च । तेनाङ्गस्य ये द्वे तयोः पूर्वोऽभ्याससंज्ञकस्तस्येति फलितम् । द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याह्रियते, तच्च कृदन्तं, तद्योगादङ्गस्येति कर्मणि षष्ठी । तेन यत्राङ्गं द्विरुच्यते, तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्त इति । अचीकरत् । अपीपचत् । युक्तं चैतत्, अङ्गस्येति षष्ठ्याः कारकविभक्तित्वसंभवे तदुपेक्ष्य शेषषष्ठीत्वकल्पनाया अन्याय्यत्वात् ॥ **नाङ्गं द्विरुच्यते इति** । एवं च अचचकासत् । आर्तथपत् । और्णुनवत् इत्येव भवतीति भावः ॥ **अवयवः कश्चिदिति** । हलादेः प्रथमावयवो द्विरुच्यते, अजादेस्तु द्वितीयावयव इत्यर्थः । अङ्गं यत्र द्विरुच्यते तत्र पूर्वस्य दीर्घसन्वद्भावौ विधीयमानौ एकाक्ष्वेवेति च फलितम् । किञ्च, अस्मिन्पक्षे एकाच इत्यङ्गस्य विशेषणं शब्दतोऽपि सुलभम् ‘एकाचो द्वे-२९२९’ इत्यधिकारादित्याशयेनाह—**तस्मादेकाक्ष्विति** । स्यादेतत्, उक्तरीत्या ह्रस्वहलादिःशेषचुत्वादीन्यपि अनेकाक्षु न स्युः । न चेष्टापत्तिः । दिद्रासति । दिदरिद्रासति । जिगणयिषतीत्यादिलक्ष्यस्य सर्वसंमतत्वात् । तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयत इति चेत्, तर्हि इहापि स एवोचितः, अर्थाधिकारपक्षस्यैवाभ्यर्हितत्वात्, वृत्त्यादिषु स्वीकृतत्वाच्चेत्यभिप्रेत्याह—**वस्तुत** इति ॥ **ऊर्णौ दीर्घ इति** । स्यादित्यपकृष्यते और्णूनवत् । इह सन्वद्भावस्तु नोपयुज्यते[1], णौ कृतस्यादेशस्य स्थानिवद्भावेन निषेधेन वा नुशब्दस्य द्वित्वे सति अभ्यासे अवर्णाभावादिति भावः ॥ **अर्थापयताविति** । अर्थमाचष्ट इत्यर्थे णिच्यापुगागमे ततश्च च्लेश्चङि ‘सन्यतः ३०९३’ इतीत्वस्य दीर्घस्य च प्रवृत्तौ आर्तीथपदित्येव भवतीति भावः । अर्थ उपयाच्ञायामित्यस्य तु चङ्परे णौ आर्तथतेति भवति, न तत्र दीर्घसन्वद्भावयोः प्रवृत्तिरिति चुरादौ स्फुटीभविष्यति ॥ **उभयमिति** । दीर्घः सन्वच्चे-

---

१ नोपयुज्यत इति । ‘सन्यतः’ इत्यभ्यासस्येत्वादेशानिमित्तत्वाय-इत्यादौ शेषः । अत एवाग्रिमग्रन्थसंगतिः । यथाश्रुते तु नैव संदर्भसंगतिः ॥ किंच सन्वद्भावमन्तरा दीर्घस्यैवानुपपत्तिर्दुष्परिहरा स्यादिति बोध्यम् ॥

अथ क्रम्यन्तास्त्रिंशत्परस्मैपदिनः ॥ **अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण** शब्दार्थाः । अणति । रणति । वणति । वकारादित्वादेत्वाभ्यासलोपौ न । ववणतुः ववणिथ । १० ॥ धणिरपि कैश्चित्पठ्यते । धणति ॥ **ओणृ** अपनयने । ओणति । ओणांचकार । ११ ॥ **शोणृ** वर्णगत्योः । शोणति । शुशोण । १२ ॥ **श्रोणृ** संघाते । श्रोणति । १३ ॥ **श्लोणृ** च । शोणादयस्त्रयोऽमी तालव्योष्मादयः । १४ ॥ **पैणृ** गतिप्रेरणश्लेषणेषु । **प्रैणृ** इति क्वचित्पठ्यते । पिपैण । १५ ॥ **ध्रण** शब्दे । उपदेशे[1] नान्तोऽयम् । रषाभ्यामिति[2] णत्वम् । ध्रणति । नोपदेशफलं तु यङ्लुकि । दन्ध्रन्ति । १६ ॥ बणेत्यपि केचित् । बेणतुः । बेणिथ । १७ ॥ **कनी** दीप्तिकान्तिगतिषु चकान । १८ ॥ **ष्टन वन** शब्दे । स्तनति । वनति । २० ॥ **वन षण** संभक्तौ । वनेरर्थभेदात्पुनः पाठः । सनति । ससान । सेनतुः ॥ ( ३०९७ ) (सू) **ये विभाषा** । ६ । ४ । ४३ । जनसनखनामात्वं वा स्याद्यादौ क्ङिति । सायात्, सन्यात् । २१ ॥ **अम** गत्यादिषु । कनी दीप्तिकान्तिगतीत्यत्र गतेः परयोः शब्दसंभक्त्योरादिशब्देन ग्रहः । अमति । आम । २२ ॥ **द्रम हम्म मीमृ** गतौ । द्रमति । दद्राम । ह्म्यन्तेति न वृद्धिः । अद्रमीत् । हम्मति । जहम्म । मीमति । मिमीम । अयं शब्दे च । २५ ॥ **चमु छमु जमु झमु** अदने ॥ ( ३०९८ ) (सू) **ष्ठिवुक्लमुचमां शिति** । ७ । ३ । ७५ । एषामचो दीर्घः स्याच्छिति ॥ ( ३०९९ ) (वा) **आङि चम इति वक्तव्यम्** ॥ आचामति । आङि किम् । चमति । विचमति । अचमीत् । २९ ॥ जिमिं केचित्पठन्ति ॥ जेमति ॥ **क्रमु** पादविक्षेपे ॥ ( ३१०० ) (सू) **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः** । ३ । १ । ७० । एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे ॥ ( ३१०१ ) (सू) **क्रमः परस्मैपदेषु** । ७ । ३ । ७६ । क्रमेर्दीर्घः स्यात्परस्मैपदे परे शिति । क्राम्यति । क्रामति । चक्राम । क्राम्यतु । क्रामतु[3] ॥ ( ३१०२ ) (सू) **स्नुक्रमोरनात्मनेपदनिमित्ते** । ७ । २ । ३६ । अत्रैवेट् । अक्रमीत् । ३० ॥

---

त्येतद्द्वयमित्यर्थः ॥ **न स्यात् स्याच्च व्यवस्थयेति** । चङ्परे णौ यल्लघ्विति व्याख्यानं न स्यात् । चङ्परे णौ यदङ्गमिति व्याख्याने तु स्यात् । एवं च–अचचकासत् । अचीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः । ननु यथा चङ्परे णौ यल्लघ्विति व्याख्याने 'येन नाव्यवधान–' न्यायेन अपीपचदित्यादावेवोभयं भवति न त्वनेकव्यवाये अचचकासदित्यादौ, तथा न्यायसाम्येन लघुनि योऽभ्यास इत्यत्राप्येकेनैव व्यवायस्य स्वीकार्यत्वादचिक्षणदित्यादौ 'सन्यतः ३०९३' इतीत्वं न स्यादिति चेत् । अत्राहुः–'अत्स्मृदृत्वर–३३९९' इतीत्वापवादेन अत्ववचनेन तुल्यजातीयापेक्षेण संयोगस्य व्यवधानेऽपीत्वस्य ज्ञापितत्वान्नोक्तदोषः । अत एव 'दीर्घो लघोः ३०९४' इति सूत्रे लघोरिति सार्थकम् ॥ माधवोऽपि जागृधातावित्थमेवाह । एवं च वदन् यथोद्देशपक्षमेवाशिश्रियत् । तथा च–ऊर्णुधातौ यत्तेनोक्तमौर्णुनवदित्यत्र 'दीर्घो लघोः ३०९४' इत्यभ्यासस्य दीर्घो न भवति 'चङ्परे णौ यदङ्गं तस्य योऽभ्यासः' इति सूत्रार्थात् । अत्र त्वङ्गावयवस्याभ्यासो न त्वङ्गस्येत्यादि । तत्र तस्याप्याग्रहो नास्तीति गम्यते । अत एव चकास्तावचीचकासदित्युदाजहार । तथा च–मतभेदाभिप्रायेण पूर्वापरग्रन्थविरोधः समाधेय इति ॥ कातन्त्रपरिशिष्टे त्वित्वदीर्घयोः अजीजागरदित्युदाहृतम् । तन्मतद्वयमप्यसंभवादुपेक्ष्यम् । व्यवस्थामेव विवृणोति—**णेरिति** । सन्निहितमिति हेतुगर्भविशेषणं, लघुनीत्येतत् णेर्विशेष्यं भवति, सन्निहितत्वादित्यर्थः ॥ **अङ्गमेवेति** । अस्य चङ्परे इत्यत्र आदेशरूपचङंशे आकाङ्क्षाभावेऽपि णाविति प्रत्ययांशे उत्थिताकाङ्क्षत्वादिति हेतुः स्पष्ट एवेति भावः ॥ **कैयटेनैवेति** । तथा च एकं हरदत्तमतम्, अपरं तु कैयटमतमिति विषयविभागेन व्याचक्षाणा उपेक्ष्या इति भावः । चङ्पर इत्यावर्त्य अग्लोपविशेषणतयाऽपि योजितम्, तस्य फलमाह—**णेरिति** । श्रिद्रुस्रुषु परतोऽग्लोपित्वासंभवादिहापि चङ्पर इत्येतावतैव णाविति लभ्यत इति बोध्यम् ॥ **अगितामपीति** । पचिकामिशाकिप्रभृतीनामित्यर्थः । न हीत्संज्ञकानां लोपो णिचं प्रतीक्षत इति भावः ॥ **नोपदेशफलमिति** । अनुस्वार इत्यर्थः ॥ **दन्ध्रन्तीति** । 'नुगतोऽनुनासिकान्तस्य ३५१०' इत्यभ्यासस्य नुक् ॥ **गत्यादिष्विति** । गतिशब्दसंभक्तिष्वित्यर्थः ॥ **मीमृ** । ऋदित्फलं तु 'नाग्लोपि–३४१२' इति निषेधः । अमिमीमत् ॥ ( ३०९८ ) **ष्ठिवुक्लमु–** । ष्ठीवति । क्लाम्यति ॥ ( ३०९९ ) **आङि चम इति** । 'ष्ठिवुक्लमुआचमाम्' इति वृत्तिकारोक्तपाठोऽयुक्त इति भावः ॥ **जिमिं केचिदिति** । तथा च जेमनमिति भोजने प्रयुञ्जते ॥ ( ३१०० ) **वा भ्राश–** । उभयत्रविभाषेयम् । अनवस्थानार्थो भ्रमिः । क्लमित्रसी च दिवादी, तेभ्यो नित्यं प्राप्ते इतरेषामप्राप्ते चारम्भात् । भ्राशृ भ्लाशृ दीप्तौ । फणादावेतौ । भ्रमु चलने भ्वादिः, ज्वलादिः फणादिरपि मनोरमायां पठ्यते तद्भ्रमसादिति नव्याः । **भ्रमु** अनवस्थाने । दिवादिः, पुषादिः, शमादिः । तत्र भ्वादेः–भ्रम्यति, भ्रमति । शमादेस्तु श्यनि दीर्घे भ्राम्यतीति त्रैरूप्यम् । **क्लमु** ग्लानौ, **त्रसी** उद्वेगे, **त्रुट** छेदने, **लष** कान्तौ ॥ ( ३१०१ ) **क्रमः–** । 'ष्ठिवुक्लमुचमाम्–३०९८' इत्यतोऽनुवर्तनादाह—**परस्मै-**

---

१ **उपदेशे नान्तोऽयमिति–** । अयं पाठः पूर्वोपस्थितत्वाद् 'रण' धातावेव वक्तुं योग्यः, 'षाष्टवर्गस्तवर्गजः' इत्यभियुक्तोक्तेस्तत्राऽपि समत्वात् ॥ २ **रषाभ्यामिति णत्वमिति** । रषाभ्यां परस्य नस्य णत्वमित्यर्थेकेन 'अट्कुप्वाङ्–' इति सूत्रेणेत्यर्थः । 'रषाभ्यां नो णः समानपदे' इत्यस्य तु न प्राप्तिः, अटा व्यवधानादिति बोध्यम् ॥ ३ **क्रामत्विति–** । ननु 'क्रमः परस्मैपदेषु' इति सूत्रे परस्मैपदेष्वित्युपादानाद्यत्र क्रामत्वित्यादौ परस्मैपदपरत्वं तत्रैव स्यादिति हेर्लुकि, उत्क्रामेत्यत्र न स्यात् 'न लुमता–' इति निषेधादिति चेन्न, 'क्रम–' इति सूत्रेऽनुवृत्तस्याङ्गस्य परस्मैपदपरशिन्निरूपितस्यैव ग्रहणात्, लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्य एव निषेधप्रवृत्तेः ॥

(२)

संज्ञाशास्त्रस्य विधेयैकवाक्यतया सन्वल्लघुनि सूत्रे अंगाधि-
कारे पूर्वोऽभ्यास इत्युपस्थित्या अङ्गकर्मकद्विरुक्तौ पूर्वोऽ-
भ्यासः तस्य सन्वत्कार्यमित्यर्थे एकाच्सु धातुषु अङ्गक-
र्मकद्विरुक्तिसत्त्वात् तत्रैव सन्वद्भावो दीर्घश्च अनेकाच्सु
अङ्गकर्मकद्विरुक्त्यभावात् न दीर्घसन्वद्भावौ —
इति माधवमतम् — ।

तन्न युक्तम् । यथोद्देशपक्षे अङ्गस्य योऽभ्यासो लघु-
परः तस्य सन्वद्भाव इत्यर्थेऽविशेषात् कार्यकालपक्षेऽ-
पि तथैवार्थो युक्तः । तथा चानेकाच्स्वपि लघुपरत्वे
अभ्यासस्य दीर्घसन्वद्भावौ विधेयौ । तेन ऊर्णौ दीर्घः
अर्थापत्तेऽप्यनयि भवति । तत्र चङ्परे णौ इत्यस्य
(प्रत्ययस्य अङ्गं प्रति उत्थिताकांक्षत्वात्) तत्रैवान्वयो यु-
क्तः । तथा च चङ्परे णौ यदङ्गम् तस्य योऽभ्या-
सः लघुपरः तस्य सन्वत्कार्यमित्यर्थे (अचचका-
स + इ + अत्)— इत्यत्र अभ्यासस्य लघुपरत्वात्
दीर्घसन्वद्भावौ भवतः । तथा च- अचीचकासदि-
त्येव रूपम् ।

(2)

यदि तु चङ्परे णौ इत्यस्य सन्निहितत्वाल्लघुनि

अन्वयः तदा चङ्परे णौ यल्लघु तत्परो योऽङ्गा-

वयवोऽभ्यासः तस्य सन्वदित्यर्थः। तदा (अ च च-

कास् इ अत्) इत्यत्र एतदप्राप्त्या नेत्वं

नापि दीर्घः। तथा च अचचकासदित्येव रूपम्।

इति काशिकाविकल्पस्य कैयटेनैव वर्णनात्।

वस्तुतः पूर्वपक्ष एव युक्तः। इति दिक्।

अथ रेवत्यन्ता अनुदात्तेतः । अय वय पय मय चय तय णय गतौ । अयते ॥ ( ३१०३ ) (सू) दयायासश्च । ३ । १ । ३७ । दय अय आस् एभ्य आम् स्याल्लिटि । अयांचक्रे । अयेत । अयिषीष्ट ॥ ( ३१०४ ) (सू) विभाषेटः । ८ । ३ । ७९ । इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात् । अयिषीढ्वम्, अयिषीध्वम् । आयिष्ट । आयिढ्वम्, आयिध्वम् ॥ ( ३१०५ ) (सू) उपसर्गस्यायतौ । ८ । २ । १९ । अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते । निस्दुसोरुत्वस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते । निर्दुरोस्तु निलयते । दुलयते । प्रत्यय इति त्विणो रूपम् । अथ कथम्—उदयति विततोर्ध्वरश्मिरज्जाविति माघः । इटकिटकटी इत्यत्र प्रश्लिष्टस्य भविष्यति । यद्वा-( ३१०६ ) (प) अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् । चक्षिङो ङित्करणाज्ज्ञापकात् । वादित्वात् ववये । पेये । मेये । चेये । तेये । प्रणयते । नेये । ७ ॥ दय दानगतिरक्षणहिंसादानेषु । आदानं ग्रहणम् । दयांचक्रे । ८ ॥ रय गतौ । ९ ॥ ऊयी तन्तुसन्ताने । ऊयांचक्रे । १० ॥ पूयी विशरणे दुर्गन्धे च । पूयते । पुपूये । ११ ॥ क्नूयी शब्दे उन्दे च । चुक्नूये । १२ ॥ क्ष्मायी विधूनने । चक्ष्माये । १३ ॥ स्फायी ओप्यायी वृद्धौ । स्फायते । पस्फाये । प्यायते ॥ ( ३१०७ ) (सू) लिड्यङोश्च । ६ । १ । २९ । लिटि यङि च प्यायः पीभावः स्यात् । (प) पुनः प्रसङ्गविज्ञानात्पीशब्दस्य द्वित्वम् । एरनेकाचः इति यण् । पिप्ये । पिप्याते । पिप्यिरे ॥ ( ३१०८ ) (सू) दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । ३ । १ । ६१ । एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे ॥ ( ३१०९ ) (सू) चिणो लुक् । ६ । ४ । १०४ । चिणः परस्य लुक् स्यात् । अप्यायि, अप्यायिष्ट । १५ ॥ तायृ सन्तानपालनयोः । सन्तानः प्रबन्धः । तायते । तताये । अतायि, अतायिष्ट । १६ ॥ शल चलनसंवरणयोः । १७ ॥ वल वल्ल संवरणे संचरणे च । ववले । ववल्ले । १९ ॥ मल मल्ल धारणे । मेले । ममल्ले । २१ ॥ भल भल्ल परिभाषणहिंसादानेषु । बभले । बभल्ले । २३ ॥ कल शब्दसंख्यानयोः । कलते । चकले । २४ ॥ कल्ल अव्यक्ते शब्दे । कल्लते । अशब्द इति स्वामी अशब्दस्तूष्णींभाव इति च । २५ ॥ तेवृ देवृ देवने । तितेवे । दिदेवे । २८ ॥ षेवृ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ सेवने । परिनिविभ्यः[३०४२] इति षत्वम् । परिषेवते । सिषेवे । अयं सोपदेशोऽपीति न्यासकारादयः, तद्भाष्यविरुद्धम् । गेवते । जिगेवे । जिग्लेवे । पिपेवे । मेवते । म्लेवते । ३३ ॥ शेवृ खेवृ केवृ इत्यप्येके । ३६ ॥ रेवृ प्लवगतौ । प्लवगतिः प्लुतगतिः । रेवते । ३७ ॥

---

पदे शितीति । परस्मैपदे किम्, उपक्रमते । पराक्रमते ॥ ( ३१०२ ) स्नुक्रमोः—। अनात्मनेपदनिमित्ते इति । आत्मनेपदनिमित्ताभावे इत्यर्थः ॥ अन्ये तु द्विवचनस्थाने व्यत्ययेन एकवचनम्, अनात्मनेपदनिमित्तयोरित्यर्थ इत्याहुः ॥ उभयोरपि भावकर्मकर्मव्यतिहारास्तङो निमित्तम्, क्रमेस्तु वृत्तिसर्गादयोऽपीति बोध्यम् । स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थोऽयमित्याह—अत्रैवेडिति । अनात्मनेपदेति किम्, उपस्नोष्यते जलेन । उपक्रंस्यते । निमित्त इति किम्, स्नौतीति स्नविता, स इवाचरति—स्नवित्रीयते । इह क्यङ् आत्मनेपदनिमित्तं, न तु स्नौतिरित्याहुः ॥ ( ३१०४ ) लुङ्लिटां धस्येति । लिटि । लिलिहिढ्वे, लिलिहिध्वे ॥ अथ कथमिति । शानचा भाव्यमिति शङ्कितुराशयः ॥ क्नूयी शब्दे उन्दे च । उन्दः क्लेदनम् ॥ ( ३१०७ ) लिड्यङोश्च ॥ यङि पेपीयते ॥ ( ३१०८ ) दीपजन—। दीपी दीप्तौ, जनी प्रादुर्भावे, बुध अवगमने, पूरी आप्यायने । एते दिवादयः ॥ ( ३१०९ ) चिणो लुक् । परस्य लुक् स्यादिति । तशब्दस्येति केश्चित्पठ्यते, तदार्थिकार्थकथनम् । तशब्दे परतः चिणि विहिते चिणः परस्य जायमानो लुक् 'प्रत्ययस्य लुक्श्लुलुपः ३६५' इति वचनात्तशब्दस्यैवेति स्पष्टत्वात् ॥ अयमिति । षेवृ धातुः ॥ भाष्यविरुद्धमिति । यदि सोपदेशः स्यात्तदा स्त्यायतिरिवायमपि षोपदेशलक्षणे पर्युदस्येत, तदकरणान्नास्ति सोपदेश इति भावः ॥ प्लवगताविति । केचित् प्लवेति धात्वन्तरमित्याहुस्तद्धि मनोरमायां दूषितम् । प्लवेति धात्वन्तरत्वे 'विभाषाऽऽङि रुप्लुवोः ५०१६' इत्यत्र प्लुवः पक्षे घञ्विधानं व्यर्थं स्यात् । प्लवेरेवैतस्माद् घञ आप्लावशब्दस्य सिद्धत्वात् । तथा 'स्रवतिशृणोति—३४३८' इति सूत्रेण प्लवतेरभ्यासोकारस्येत्वविधानमपि व्यर्थं स्यात्, तद्धि पक्षे अपिप्लवदिति रूपसिद्ध्यर्थं क्रियते, तच्च रूपं प्लवधातोः 'सन्यतः ३०९३' इत्यनेन सिद्धमिति किं तदुपादानेनेति ॥

---

१ इकारप्रश्लेषे मानाभाववादिनां मतेऽप्याह—यद्वेति ॥ अनुदात्तेत्त्वलक्षणमिति । 'ननु ङित्त्वादिप्रयुक्तमात्मनेपदं क्वचिन्न ॥ तत्रोपपत्तिमाह—ङित्करणादिति । न चेकारो नानुदात्तः इति वाच्यम्, आख्यानमित्यत्र 'अनुदात्तेतश्च हलादेः' इति युच् न स्यात् । न च ङकाराभावे 'इदितो नुम् धातोः' इति नुम् स्यात्, तत्सत्त्वे त्वन्तेदित्त्वविरहान्न नुमिति वाच्यम्, इकारस्य स्थानेऽकारस्य पाठेनापि नुमभावस्य सिद्धेरित्याशयात् । परं तु भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे मानाभावाच्चिन्त्यमेतत् ॥ २ पुनः प्रसङ्गेति । द्वित्वे कृतेऽपि सावकाश इति तद्भावः । वस्तुतो लिण्निमित्तकपीभावस्यानवकाशत्वेन चारितार्थ्यस्य वक्तुमशक्यत्वाच्चिन्त्यमेतत् । तस्माल्लिटीति विषयसप्तमीति स्वीकार्यम् ॥ एवं च स्वीकारे लिड्गततः प्रागेव पीभावो भविष्यतीति बोध्यम् ॥

अथावत्यन्ताः परस्मैपदिनः । मव्य बन्धने । ममव्य । १ ॥ सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः । ४ ॥ हय गतौ । अहयीत् । यान्तत्वान्न वृद्धिः । ५ ॥ शुच्य अभिषवे । अवयवानां शिथिलीकरणं सुरायाः सन्धानं वाऽभिषवः स्नानं च । शुशुच्य । ६ ॥ चुच्य इत्येके । ७ ॥ हर्य गतिकान्त्योः । जहर्य । ८ ॥ अल भूषणपर्याप्तिवारणेषु । अलति । आल ॥ ( ३११० ) अतो ल्रान्तस्य । ७ । २ । २ । ल्रेति लुप्तषष्ठीकम् । अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात्परस्मैपदपरे सिचि । नेटीति निषेधस्यातो[३०३४] हलादेरिति[३०५१] विकल्पस्य चापवादः । मा भवानालीत् । अयं स्वरितेदित्येके । तन्मते, अलते इत्याद्यपि । ९ ॥ ञिफला विशरणे । [१]तृफलेत्येत्वम् । फेलतुः । फेलुः । अफालीत् ॥ १० ॥ मील श्मील स्मील क्ष्मील निमेषणे । निमेषणं संकोचः । द्वितीयस्तालव्यादिः । तृतीयो दन्त्यादिः । १४ ॥ पील प्रतिष्टम्भे । प्रतिष्टम्भो रोधनम् । १५ ॥ नील वर्णे । निनील । १६ ॥ शील समाधौ । शीलति । १७ ॥ कील बन्धने । १८ ॥ कूल आवरणे । १९ ॥ शूल रुजायां संघोषे च । २० ॥ तूल निष्कर्षे । निष्कर्षो निष्कोषणम् । तन्त्रान्तर्गतस्य बहिर्निःसारणम् । तुतूल । २१ ॥ पूल संघाते । २२ ॥ मूल प्रतिष्ठायाम् । २३ ॥ फल निष्पत्तौ । फेलतुः । फेलुः । २४ ॥ चुल्ल भावकरणे । भावकरणमभिप्रायाविष्कारः । २५ ॥ फुल्ल विकसने । २६ ॥ चिल्ल शैथिल्ये भावकरणे च । २७ ॥ तिल गतौ । तेलति । २८ ॥ तिल्लेत्येके । तिल्लति । २९ ॥ वेल्ल चेल्ल केल्ल खेल्ल क्ष्वेल्ल वेल्ल चलने । पञ्च ऋदितः । षष्ठो लोपधः । ३५ ॥ पेल्ल फेल्ल शेल्ल गतौ । ३८ ॥ षेल्ल इत्येके । ३९ ॥ स्खल संचलने । चस्खाल । अस्खालीत् । ४० ॥ खल संचये । ४१ ॥ गल अदने । गलति । अगालीत् । ४२ ॥ षल गतौ । सलति । ४३ ॥ दल विशरणे । ४४ ॥ श्वल श्वल्ल आशुगमने । शश्वाल । अश्वालीत् । शश्वल्ल ।

---

**ममव्येति**।'यस्य हलः ३४९७'इति लोपस्तु न भवति, यस्येति संघातग्रहणमिति सिद्धान्तितत्वात् । वर्णग्रहणे त्वर्थवद्ग्रहणपरिभाषाया अप्रवृत्त्या पुत्रकाम्येत्यादावपि लोपः स्यादिति दिक् । लुटि, मव्यिता । आशिषि, मव्यात् । 'हलो यमाम्–९१' इति धातुयकारस्य वा लोपः ॥ **सूर्क्ष्य ईर्क्ष्य** । णलि । सुसूर्क्ष्य । ईर्क्ष्यांचकार । ईर्ष्यांचकार । एभ्यः क्विपि 'लोपो व्योः–१२५४' इति लोपे 'स्कोः–५१६' इति कलोपे जश्त्वचर्त्वयोः सूर्ट्, ईर्ट् । संयोगान्तलोपस्त्विह न भवति, 'रात्सस्य ३९१' इति नियमात् । सूर्क्ष्य आदर इति वक्ष्यते, तस्यापि सूर्ट् इत्येव रूपम् । **हय गतौ** । जहाय । हय्यात ॥ **शिथिलीकरणमिति** । सोममभिषुणोतीत्यादौ दर्शनात् ॥ **सुराया इति** । तत्प्रकरणे 'संधानं स्यादभिषवः' इत्यमरोक्तेः ॥ ( ३११० ) **अतो ल्रान्तस्य** । यद्यवयववचनेनान्तशब्देन बहुव्रीहिरङ्गं चान्यपदार्थस्तत्पक्षे विशेषणेन तदन्तविधेः सिद्धत्वादन्तग्रहणमनर्थकम् । अश्वल्लीदित्यत्रातिव्याप्तिश्च, [२]समीपवाचिना अन्तशब्देन षष्ठीसमासपक्षे रपिरणिशल्लप्रभृतिष्वतिव्याप्तिः, अङ्गस्यातः ल्रोः समीपत्वात् । ल्रं च तदन्तश्चेति समीपवाचिनाऽन्तशब्देन कर्मधारयपक्षे त्वन्तशब्दस्य विशेषणत्वात्पूर्वनिपातः स्यादत आह—**लुप्तषष्ठीकमिति** । अन्तशब्दः समीपवाचीत्यभिप्रेत्याह—**अतः समीपाविति** ॥ **अतो वृद्धिः स्यादिति** । इह अत इत्यस्य तन्त्रावृत्त्यादिकं स्वीकर्तव्यम् । अन्यथा प्रयोजनाभावादिकपरिभाषानुपस्थानेऽप्यलोऽन्त्यपरि[३]भाषयाऽन्त्यस्य स्यादिति भावः । यद्यपि 'अतो ल्रस्य' इत्युक्तेऽपि ल्रान्तस्याङ्गस्य अतः सिचि परे वृद्धिरित्यर्थे स्वीकृते 'येन नाव्यवधान–' न्यायेनेष्टं सिध्यति, तथाप्यङ्गस्य सिचि परे अतो वृद्धिरित्यर्थोऽपि प्रतीयेत । ततश्चाश्वल्लीदित्यत्रातिप्रसङ्गः स्यात् । तद्वारणाय सूत्रेऽन्तग्रहणं कृतमिति तदनुरोधेनान्तशब्दस्य समीपवाचित्वमत इत्यस्य चावृत्तिः स्वीकृतेति बोध्यम् । अतः समीपाविति किम् । अखोरीत् । अमीलीत् । ल्रान्तस्याङ्गस्य किम् । श्वल्ल आशु गमने । अश्वल्लीत् । अत्र अकारसमीपो यो लकारः स नाङ्गस्यान्तः, यस्त्वङ्गस्यान्तः स तु नाकारस्य समीपः । ननु ल्रेत्यस्य लुप्तषष्ठीकत्वाभ्युपगमेऽप्यन्तशब्दस्यावयववाचित्वं स्वीकृत्य अङ्गस्यान्तं यत् ल्रं, तस्यातः तत्समीपस्यातो वृद्धिरिति व्याख्याने त्वत इत्यस्यावृत्तिर्नापेक्षितेति चेत् । अत्राहुः–'हलन्त्यम्' इति सूत्रे मनोरमायां 'सामीप्यं षष्ठ्यर्थः' इति पक्षस्य निराकरणात्तदनुरोधेनात्रात इत्यस्यावृत्तिराश्रितेति । अत्र केचित्–'अतो ल्रान्तस्य ३११०' इत्यत्र ल्रेति लुप्तसप्तमीकम् । अथवा 'अतो ल्रान्ते' इति व्यस्तमेव सूत्रयितुं शक्यम् । तथा च अङ्गस्यान्तं यद् ल्रं तस्मिन्परेऽव्यवहितस्यातो वृद्धिरिति व्याख्यानसंभवान्न तन्त्रावृत्त्याद्याश्रयणक्लेशः । न चाङ्गस्य विशेष्यत्वेनैवान्वयो युज्यते न तु विशेषणत्वेन 'पदाङ्गाधिकारे तस्य च तदन्तस्य च ३२६' इति परिभाषायाः पदमङ्गं च विशेष्यं भवतीत्यभिप्रायवर्णनादिति वाच्यम्, 'अल्लोपोऽनः' इति सूत्रेऽङ्गावयवोऽसर्वनामस्थानेत्येवं भाष्यकारादिभिर्विशेषणतया व्याख्यानात्क्वचिद्विशेषणत्वेऽप्यङ्गस्य न क्षतिरित्याहुः ॥ **नेटीत्यादि** । यद्यपि पुरस्तादपवादन्यायेन 'नेटि ३०३४' इत्यस्यापवादो न तु विकल्पस्यापि, तथापि बाध्यसामान्यचिन्तायां 'स्वविषये प्राप्तं सर्वं बाध्यते' इति पुरस्तादपवादन्यायोऽत्र न प्रवर्तत इति भावः ॥ **मील** ।

---

१ **तृफलेत्येत्वमिति**–। न च 'दिव औत्' इति सूत्र इवाप्रत्ययविधावपि निरनुबन्धकपरिभाषाप्रवृत्त्या 'फल निष्पत्तौ' इति धातोरेव ग्रहणं युक्तमिति वाच्यम्, प्रकृतसूत्रस्थचकारेण 'ञिफला–' इत्यस्यापि ग्रहणात् ॥ २ 'ओदकान्तादावनान्तात्प्रियं प्रोथमनुव्रजेत्' इत्यादौ दृष्टेनेत्यर्थः ॥ ३ तथा च रेफग्रहणवैयर्थ्यापत्तिरिति तात्पर्यम् ॥

अचस्खलीत् । ४६ ॥ खोल्ट खोर्ऋ गतिप्रतिघाते । खोलति । खोरति । ४८ ॥ धोर्ऋ गतिचातुर्ये । धोरति । ४९ । त्सर छद्मगतौ । तत्सार । अत्सारीत् । ५० ॥ क्मर हूर्च्छने । चक्मार । ५१ ॥ अभ्र वभ्र मभ्र चर गत्यर्थाः ॥ चरतिर्भक्षणेऽपि । अभ्रति । आनभ्र । मा भवानभ्रीत् । अङ्गान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः । ५५ ॥ ष्ठिवु निरसने । ष्ठिवुँ क्लमु चेति दीर्घः । ष्ठीवति । अस्य द्वितीयस्थकारष्ठकारो वेति वृत्तिः । तिष्ठेव । तिष्ठिवतुः । तिष्ठिवुः । टिष्ठेव । टिष्ठिवतुः । टिष्ठिवुः । हलि चेति दीर्घः । ष्ठीव्यात् ।५६॥ जि जये । अयमजन्तेषु पठितुं युक्तः । जय उत्कर्षप्राप्तिः । अकर्मकोऽयम् । जयति ॥ ( २१११ ) सन्लिटोर्जेः । ७ । ३ । ५७ । जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात् । जिगाय । जिग्यतुः । जिग्युः । जिगयिथ, जिगेथ । जिगाय, जिगय । जिग्यिव । जिग्यिम । जेता । जीयात् । अजैषीत् । ५७ ॥ जीव प्राणधारणे । जिजीव । ५८ ॥ पीव मीव तीव णीव स्थौल्ये । पिपीव । मिमीव । तितीव । निनीव । ६२ ॥ क्षीवु क्षेवु निरसने । ६४ ॥ उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः । ऊर्वांचकार । उपधायां चेति दीर्घः । तुतूर्व । ६९ ॥ गुर्वी उद्यमने । गूर्वति । जुगूर्व । ७० ॥ मुर्वी बन्धने । ७१ ॥ पुर्व पर्व मर्व पूरणे । ७४ ॥ चर्व अदने । ७५ ॥ भर्व हिंसायाम् । ७६ ॥ कर्व खर्व गर्व दर्पे । ७९ ॥ अर्व शर्व षर्व हिंसायाम् । आनर्व । शर्वति । सर्वति । ८२ ॥ इवि व्याप्तौ । इन्वति । इन्वांचकार । ८३ ॥ पिवि मिवि णिवि सेचने । तृतीयो मूर्धन्योष्मादिरित्येके । सेवने इति तरङ्गिण्याम् । पिन्वति । पिपिन्व । ८६ ॥ हिवि दिवि धिवि जिवि प्रीणनार्थाः । हिन्वति । दिन्वति ॥ ( २११२ ) धिन्विकृण्व्योर च । ३ । १ । ८० । अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये । अतो लोपः । तस्य स्थानिवद्भावाल्लघूपधगुणो न । उप्रत्ययस्य पित्सु गुणः । धिनोति । धिनुतः । धिन्वन्ति ॥ ( २११३ ) लोपश्चास्यान्यतरस्यां म्वोः । ६ । ४ । १०७ । असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात् म्वोः परयोः । धिन्वः, धिनुवः । धिन्मः, धिनुमः । मिपि तु परत्वाद्गुणः । धिनोमि ॥ (२११४) उतश्च प्रत्ययादसंयोगपूर्वात् । ६ । ४ । १०६ । असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक् स्यात् । धिनु । नित्यत्वादुकारलोपात्पूर्वमाट् । धिनवाव । धिनवाम । जिन्वति । इत्यादि । ९० ॥ रिवि रवि धवि गत्यर्थाः । रिण्वति । रण्वति । धन्वति । ९३ ॥ कृवि हिंसाकरणयोश्च । चकाराद्गतौ । कृणोतीत्यादि धिनोतिवत् । अयं स्वादौ च । ९४ ॥ मव बन्धने । मवति । मेवतुः । मेवुः । अमवीत् । अमावीत् । ९५॥ अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अवति । आव । मा भवानवीत् । ९६ ॥ धावु गतिशुद्ध्योः । स्वरितेत् । धावति । धावते । दधाव । दधावे । ९७ ॥

---

संकोच इति । नेत्रसंकोचे तु प्रचुरप्रयोगः[1] ॥ तिल गतौ । तिल स्नेहने इति चुरादौ ॥ दल विशरणे । विशरणमवयवानां विभागः ॥ धोर्ऋ । धोरितकमश्वानां[2] गतिविशेषः । निष्ठान्तात्संज्ञायां कन् ॥ त्सर । छद्मना कपटेन गतिः छद्मगतिः ॥ क्मर हूर्च्छने । हूर्च्छनं कौटिल्यम् ॥ ष्ठिवु निरसने । अस्य ल्युटि ष्ठेवनम् । 'ष्ठीवनाऽ.... स्वप्सु न निक्षिपेत्' इत्यत्र पृषोदरादित्वात्पक्षे[3] दीर्घ ईकार इत्याहुः ॥ ( २१११ ) सन्लिटोर्जेः ॥ सन्लिण्निमित्त इति । यदि तु 'सनि लिटि च परे योऽभ्यासः' इति प्राचो व्याख्यानमाद्रियेत, तदा 'येन नाव्यवधान-' न्यायेन प्रकृतिव्यवधानं सोढव्यमेव । परं तु यङ्लुगन्तात्सनि जेजयिषतीत्यत्र कुत्वं स्यात्, न च तन्माधवग्रन्थसंमतमिति[4] भावः ॥ ( २११२ ) धिन्विकृण्व्योर च । 'अलोऽन्त्यस्य ६६' इति वकारस्याकारादेशः । चकारेण तु उप्रत्ययोऽनुकृष्यते । बोपदेवेन त्वनयोस्तनादित्वं स्वीकृतम् । तन्मते तु चकारं विनाऽप्युप्रत्ययलाभः ॥ अतो लोप इति । धयप्युपदेशेऽदन्तत्वं नास्ति अथाप्यार्धधातुकोपदेशे तदस्त्येव । 'धिन्विकृण्व्योर च ३११२' इति श्रुतत्वात्, अकारादेशे कृते चातुकृष्टस्य पश्चाज्जायमानत्वादिति[5] भावः ॥ ( २११३ ) लोपश्चा- । यः प्रत्ययोकार इति । असंयोगपूर्वो यः प्रत्यय इति प्रत्ययविशेषणं तु न कृतम् । अक्ष्णुवः अक्ष्णुम इत्यादावनिष्ठाभावेऽपि अस्नुवहे इत्यादावतिप्रसङ्गात् । एवम् 'उतश्च-३११४' इति सूत्रेऽपि अक्ष्णुहीत्यत्र दोषाभावेऽपि अस्नुहीत्यत्रातिप्रसङ्गः स्यादित्यसंयोगपूर्वेति प्रत्ययविशेषणं न कृतमित्याहुः । अस्नुहीति परस्मैपदं यद्यपि लोके दुर्लभं, तथापि वेदाभिप्रायेण तत्प्रयोगस्य साधुत्वं बोध्यम् । आप्नुहीति पाठस्तूचितः ॥ कृवि । अयमिति । कृणोतीत्यादिरित्यर्थः । स्वादौ हि कृवीत्ययं धातुर्न पठ्यते, किन्तु-कृञ् हिंसायामिति । तस्य च परस्मैपदेषु सार्वधातुके कृणोतीत्यादीनि रूपाणि तुल्यानीति फलितोऽर्थः । अव रक्षणे ।

---

१ प्रचुरप्रयोग इति । क्वचित्तु स्पष्टप्रतिपत्तये गम्यमानस्यापि नेत्रपदस्य प्रयोगोऽपि 'सम्मीलने नयनयोर्न हि किंचिदस्ति' इत्यत्र यथा ॥ २ अश्वानामिति—गतिचातुर्यमश्वनिष्ठमेव धातुपाठे विवक्षितमिति भावः ॥ ३ पक्षे दीर्घ इति । तथा च चान्द्रसूत्रम्—'ष्ठिवुसिवोर्दीर्घश्च' इति ॥ ४ माधवग्रन्थेति । यदि तु जेयेङ्लुक्सत्त्वेतदन्ताच्च सनुसत्त्वे न दृढतरं मानमित्युच्यते, तदा परत्वेन व्याख्यानेऽपि न दोषः ॥ एतच्च 'न च तन्माधवग्रन्थसम्मतम्' इत्यनेन ध्वनितम् ॥ ५ पश्चादिति । एककालविधानेऽपि तदुपदेशेऽदन्तत्वमस्त्येवेति चिन्त्यमेतत् ॥

अथोष्मान्ता आत्मनेपदिनः । धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु । धुक्षते । दुधुक्षे । धिक्षते । दिधिक्षे । २ ॥ वृक्ष वरणे । वृक्षते । ववृक्षे । ३ ॥ शिक्ष विद्योपादाने । शिक्षते । ४ ॥ भिक्ष भिक्षायामलाभे लाभे च । भिक्षते । ५ ॥ क्लेश अव्यक्तायां वाचि । बाधन इति दुर्गः । क्लेशते । चिक्लेशे । ६ ॥ दक्ष वृद्धौ शीघ्रार्थे च । दक्षते । ददक्षे । ७ ॥ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । ८ ॥ ईक्ष दर्शने । ईक्षांचक्रे । ९ ॥ ईष गतिहिंसादर्शनेषु । ईषांचक्रे । १० ॥ भाष व्यक्तायां वाचि । भाषते । ११ ॥ वर्ष स्नेहने । दन्त्योष्ठ्यादिः । ववर्षे । १२॥ गेषृ अन्विच्छायाम् । ग्लेषृ इत्येके । अन्विच्छा अन्वेषणम् । जिगेषे । १३ ॥ पेषृ प्रयत्ने । पेषते । १४ ॥ जेषृ णेषृ एषृ प्रेषृ गतौ । जेषते । नेषते । एषांचक्रे । पिप्रेषे । १८ ॥ रेषृ हेषृ ह्रेषृ अव्यक्ते शब्दे । आद्यो वृकशब्दे । ततो द्वावश्वशब्दे । रेषते । हेषते । ह्रेषते । २१ ॥ कासृ शब्दकुत्सायाम् । कासांचक्रे । २२॥ भासृ दीप्तौ । बभासे। २३॥ णासृ रासृ शब्दे । नासते । प्रणासते । २५ ॥ णस कौटिल्ये । नसते । २६ ॥ भ्यस भये । भ्यसते । बभ्यसे। २७॥ आङः शसि इच्छायाम् । आशंसते । आशशंसे । २८॥ ग्रसु ग्लसु अदने । जग्रसे । जग्लसे । ३०॥ ईह चेष्टायाम्। ईहांचक्रे । ३१ ॥ बहि महि वृद्धौ । बंहते । बबंहे । मंहते । ३३ ॥ अहि गतौ । अंहते । आनंहे । ३४ ॥ गर्ह गल्ह कुत्सायाम् । जगर्हे। जगल्हे। ३६॥ बर्ह बल्ह प्राधान्ये। ओष्ठ्यादी। ३८॥ वर्ह वल्ह परिभाषणहिंसाच्छादनेषु। दन्त्योष्ठ्यादी। केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः । ४० ॥ प्लिह गतौ । पिप्लिहे । ४१॥ वेहृ जेहृ बाहृ प्रयत्ने । आद्यो दन्त्योष्ठ्यादिः । अन्त्यः केवलोष्ठ्यादिः। उभावप्योष्ठ्यादी इत्येके । दन्त्योष्ठ्यादी इत्यपरे । जेहतिर्गत्यर्थोऽपि । बबाहे । ४४ ॥ द्राहृ निद्राक्षये । निक्षेप इत्येके । ४५ ॥ काशृ दीप्तौ । चकाशे । ४६ ॥ ऊहँ वितर्के । ऊहांचक्रे । ४७ ॥ गाहू विलोडने । गाहते । जगाहे । जगाहिषे, जघाक्षे । जगाहिढ्वे, जगाहिध्वे, जघाढ्वे । गाहिता ॥

---

एकोनविंशतिरर्थाः। कान्तिः शोभा, दीप्तिस्तेज इत्याहुः । तृप्तिरिच्छानाशः। स्वाम्यर्थः। स्वामित्वम् । हिंसा हननम् । आदानं ग्रहणम् । न चात्र दानमेवार्थोऽस्त्विति वाच्यम् , 'भागे वृद्धौ ग्रहे वधे ' इत्येवमर्थानां विशिष्य बोपदेवेन गणितत्वात् ॥ भिक्ष । याच्ञालाभालाभाख्ययोऽर्थाः। स्वामी तु-'क्लेशे व्यक्तायां वाचि च' इति पठित्वा इमावपि भिक्षधातोरर्थाविति मन्यते । क्लिश उपतापे इति दिवादौ । क्लिशू विबाधने इति क्र्यादौ॥ दीक्ष । पञ्चार्थाः॥ ईष गति-।'गुरोश्च हलः ५०८३' इत्यप्रत्यये टाप् । ईषा । मनस ईषा मनीषा । शकन्ध्वादिः । मनीषामभिनिविष्टं मनीषितम् । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ३४१६' इति णिचि तदन्तात् क्तः । ईष उञ्छे इति तु परस्मैपदिषु । हस्वादयस्त्रयः । इष गतौ दिवादिः । इष इच्छायां तुदादिः । इष आभीक्ष्ण्ये क्र्यादिः ॥ कासांचक्रे इति । 'कास्प्रत्ययात्-३०७९' इत्याम् । भासृ दीप्तौ । अस्य ऋदित्त्वं भ्राजतेरिव तङ्मात्रफलकम् । 'भ्राजभास—३३९८' इत्यादिनोपधाह्रस्वस्य विकल्पितत्वात् ॥ णस कौटिल्ये । लिण्निमित्तादेशादित्वाभावादेत्वम् । नेसे ॥ आङः शसि । शंसु स्तुताविति तु परस्मैपदिषु वक्ष्यते ॥ ग्रसु ग्लसु । 'उदितो वा ५१४९' इति क्त्वायां वेट् । ग्रसित्वा, ग्रस्त्वा । 'यस्य विभाषा ४०२६' इति नेट् । ग्रस्तः । वेहृ जेहृ बाहृ ॥ आद्य इति । वेहतेरतिप्रत्यये वेहत्शब्दो निपातितः । 'पोटायुवति-१०७३' इति सूत्रे इति भावः । वेहद्गर्भोपघातिनी ॥ अन्त्य इति । बाहुशब्दस्य भुजपर्यायस्य 'क्षुब्धस्वान्तध्वान्त-४०७३' इति निपातितस्य बाढशब्दस्य च निर्विवादत्वादिति भावः ॥ दन्त्योष्ठ्यादी इति । उभावपीत्यनुषज्यते । अनुदात्तेत्त्वंकृतमात्मनेपदमनित्यम् । तेन 'ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः' इति सिद्धम् । न चात्रार्थासंगतिः, धातूनामनेकार्थत्वात्प्रस्रवणार्थकत्वे बाधकाभावादित्याहुः । ऊह । कथं तर्हि 'अनुक्तमप्यूहति पण्डितो जनः' इति । अत्राहुः । अनुदात्तेत्त्वलक्षणस्य तङो-

---

१ केचित्त्विति । अत्रारुचिबीजं तु-'देवासुरान् प्रवल्ह्य' इतिश्रौतप्रयोगविरोधः । प्रवल्ह्येत्यस्यानृतं भाषित्वेति व्याख्यातारः ॥ २ आद्य इति-वेहधातुः । अन्त्यो बाहधातुरित्यर्थः। अत एव'बाहवः परिघोषमानाः' इत्यस्योपपत्तिः ॥ ३ गत्यर्थोऽपीति । 'अरेणुभिर्जेहमानं पतत्री' इत्यत्र तथा दर्शनादिति भावः ॥ ४ ऊह वितर्के इति । वितर्कोऽत्रानेकधर्मप्रकारकं ज्ञानम् । ऊहतीति प्रयोगस्तु प्रामादिकः ॥ ५ एकोनविंशतिरर्था इति । तथा च-बोपदेवः-'अव्-रक्षणे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ । प्राप्तौ श्लेषेऽर्थने वेशे भागे वृद्धौ ग्रहे वधे ॥ स्वाम्यर्थेऽवगमे कामे कृतौ'इति ॥ द्युतिर्दीप्तिः, श्रुतिः श्रवणम् , वेशः प्रवेशः, वधो हिंसा, काम इच्छा, कृतिः क्रिया, इत्यादितुल्योऽर्थः ॥ ६ ननु भुजपर्यायो बाहुर्बाधतेरित्यरुचेराह-क्षुब्धेत्यादि । ७ केचित्तु'ववाह'इति रूपमार्षत्वाद् इति वदन्ति । अनुदात्तेत्यादिसमाधानस्य भाष्यानुक्तत्वात्॥ ८ अनुदात्तेत्त्वलक्षणस्येति । चक्षिङो ङित्करणाज्ज्ञापकादिति भावः ॥ वस्तुतस्तु 'उपसर्गादस्यत्यूह्योर्वा' इति वार्तिकेनात्मनेपदविकल्पस्य सिद्धत्वात् तद्विस्मरणमूलकोऽयं ग्रन्थ इति ज्ञेयम् ॥ परे तु 'अपि' इत्यस्य समुच्चयार्थकस्य कर्मप्रवचनीयस्य क्रियायोगाभावसूचकोऽयं ग्रन्थ इति वदन्ति ॥ उक्तस्योहायोग्यत्वेन समुच्चयार्थस्यापेरुपयोगाभावेन 'अभ्यूहति' इत्येव पाठो भवेदिति सारम् ॥ 'अनुदात्तेत्त्वलक्षणमात्मनेपदम्-' इत्यस्य प्रामाणिकत्वे अनुदात्तेभ्यः परस्मैपदविधानमेव व्यर्थं स्यादित्यपि मनसि ध्येयम् ॥

३११५ (सू) ढो ढे लोपः ।८।३।१३। ढस्य लोपः स्याड्ढे परे । गाढा । गाहिष्यते, घाक्ष्यते । गाहिषीष्ट, घाक्षीष्ट । अगाहिष्ट । अगाढ । अघाक्षाताम् । अघाक्षत । अगाढाः । अघाढ्वम् । अघाक्षि । ४८ ॥ गृहू ग्रहणे । गर्हते । जगृहे ॥ (३११६) (वा) ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन ॥ जगृहिषे, जघृक्षे, जघृढ्वे । गर्हिता, गर्ढा । गर्हिष्यते, घर्क्ष्यते । गर्हिषीष्ट, घृक्षीष्ट । लुङि—अगर्हिष्ट । इडभावे-॥ (३११७) (सू) शल इगुपधादनिटः क्सः । ३।१।४५। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अघृक्षत ॥ (३११८) (सू) क्सस्याचि ।७।३।७२। अजादौ तङि क्सस्य लोपः स्यात् । 'अलोऽन्त्यस्य' । अघृक्षाताम् । अघृक्षन्त ।४९॥ ग्लह च । ग्लहते । ५० । घुषि कान्तिकरणे । घुंषते । जुघुंषे । केचिद्घषेत्यदुपधं पठन्ति । ५१॥

अथार्हत्यन्ताः परस्मैपदिनः । घुषिर् अविशब्दने । विशब्दनं प्रतिज्ञानं ततोऽन्यस्मिन्नर्थे इत्येके । शब्दे इत्यन्ये पेठुः । घोषति । जुघोष । घोषिता । इरित्वादङ् वा । अघुषत्, अघोषीत् । १ ॥ अक्षू व्याप्तौ ॥ (३११९) (सू) अक्षोऽन्यतरस्याम् ।३।१।७५। अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे । पक्षे शप् । अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति । अक्षति । अक्षतः । अक्षन्ति । आनक्ष । आनक्षिथ, आनष्ठ । अक्षिता, अष्टा । अक्षिष्यति । 'स्कोरिति कलोपः । 'षढोः कः सि । अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्यात् । ऊदित्त्वादिट् । नेटि । मा भवानक्षीत् । आक्षिष्टाम् । आक्षिषुः । इडभावे तु मा भवानाक्षीत् । आष्टाम् । आक्षुः । २ ॥ तक्षू त्वक्षू तनूकरणे ॥ ( ३१२० ) (सू) तनूकरणे तक्षः । ३।१।७६। श्नुः स्याद्वा शब्विषये ॥ तक्ष्णोति तक्षति वा काष्ठम् । ततक्षिथ, ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् । वाग्भिः संतक्षति । भर्त्सयतीत्यर्थः । ४ ॥ उक्ष सेचने । उक्षांचकार । ५ ॥ रक्ष पालने । ६ ॥ णिक्ष चुम्बने । प्रणिक्षति । ७ ॥ तृक्ष स्तृक्ष णक्ष गतौ । तृक्षति । स्तृक्षति । नक्षति । १० ॥ वक्ष रोषे । संघात इत्येके । ११ ॥ मृक्ष संघाते ॥ म्रक्ष इत्येके । १३ ॥ तक्ष त्वचने । त्वचनं संवरणं त्वचो ग्रहणं च । पक्ष परिग्रह इत्येके । १५ ॥ सूर्क्ष आदरे । सुसूर्क्ष । अनादर इति तु काचित्कोऽपपाठः । अवज्ञावहेलनमसूर्क्षणमित्यमरः । १६ ॥ काक्षि वाक्षि माक्षि काङ्क्षायाम् । १९ ॥ द्राक्षि ध्राक्षि ध्वाक्षि घोरवासिते च । २२ ॥ चूष पाने । चुचूष । २३ ॥ तूष तुष्टौ । २४ ॥ पूष वृद्धौ । २५ ॥ मूष स्तेये । २६ ॥ लूष रूष भूषायाम् । २८ ॥ शूष प्रसवे । प्रसवोऽभ्यनुज्ञानम् । तालव्योष्मादिः । २९ ॥ यूष हिंसायाम् । जूष च । ३१ ॥ भूष अलंकारे । भूषति । ३२ ॥ ऊष रुजायाम् । ऊषांचकार । ३३ ॥ ईष उञ्छे । ३४ ॥ कष खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः । तृतीयषष्ठौ तालव्योष्मादी । सप्तमो दन्त्योष्ठ्यादिः ।

---

ऽनित्यत्वान्न दोष इति ॥ गाहू । ऊदित्त्वादिड्वा । इडभावे ढत्वम् । 'एकाचः-४४९' इति भष्भावः । 'षढोः कः सि ४१२' इति कः । कात्परस्य षत्वम् । जघाक्षे । 'विभाषेटः ३१०४' इति वा मूर्धन्यः । जगाहिढ्वे । जगाहिध्वे । इडभावे तु भष्भावः ॥ ( ३११५ ) ढो ढे लोपः । जघाढ्वे । ढे किम् । ऊढः । इह पूर्वं ढलोपो मा भूत् । कृते तु ढग्रहणे 'ष्टुना ष्टुः १७६' इत्यस्य आश्रयात् सिद्धत्वं भवतीति सिद्धमिष्टमित्याहुः ॥ अगाढेति । 'झलो झलि ३०४८' इति सलोपः । ढत्वधत्वष्टुत्वढलोपाः । सिचो लोपात्पूर्वं भष्भावस्तु न । असिद्धत्वात् । भष्भावस्तु सिज्लोपानन्तरमपि न भवति सकारपरत्वाभावात् ॥ न च कृतेऽपि सलोपे प्रत्ययलक्षणेन सिच्परत्वाद्भष्भावो दुर्वार इति शङ्क्यम् । वर्णाश्रये प्रत्ययलक्षणाभावात् । अन्यथा गवे हितं गोहितमित्यत्रावादेशः स्यादिति दिक् ॥ जगृहे इति । कित्त्वात्परत्वात् 'पुगन्त-२९४४' इति गुणे प्राप्ते 'ऋदुपधेभ्यः-३११६' इति वार्तिकात्कित्त्वे गुणाभावः ॥ ( ३११७ ) शल इगुपधा—। शल इति धातोर्विशेषणादन्तलाभः । शल इति किम् । अतिप्त । इगिति किम् । अगाढ । अनिटः किम् । औहिष्ट ॥ ( ३११८ ) क्सस्याचि । अजादाविति । अङ्गाक्षिप्तप्रत्ययोऽत्र विशेष्यः । तङीति तु केषांचित्प्रक्षेपस्तस्य काशिकादावनुक्तत्वादित्याहुः । अन्ये तु 'लुग्वा दुह-३१५८' इत्यत आत्मनेपद इत्यपकर्षणात्तङीति लभ्यते । तेन 'शलः क्सः' इति वार्तिकोक्तक्सप्रत्ययस्य लोपो न भवति सदृक्षा अन्यादृक्षा इत्यत्रेत्याहुः । घुषि कान्तिकरणे । लुङि अघुंषिष्ट । अघुंषिषाताम् । अदुपधपाठे तु अघांषीत् । अघषीत् ॥ अतक्षीदिति । 'नेटि ३०३४' इति वृद्धिनिषेधः । इडभावे तु अताक्षीत् ॥ प्रणिक्षतीति । 'उपसर्गादसमासेऽपि-३०५४' इति नित्यं णत्वम् । 'वा निंसनिंक्षनिन्दाम् ३७८१' इति तु कृद्विषयम् । 'ण्वुल्तृचौ ३८५१' । प्रणिक्षकः । प्रनिक्षकः । प्रणिक्षिता । प्रनिक्षिता ॥ अवज्ञेत्यादि । सूर्क्षणमादरस्ततोऽन्यदसूर्क्षणमित्यमरग्रन्थार्थः । यदि तु सूर्क्षणमनादर इत्युच्येत तर्हि असूर्क्षणमवज्ञापर्यायो न स्यादिति भावः ॥ काक्षि । काङ्क्षा इच्छा । द्राक्षि ध्राक्षि ध्वाक्षि । घोरवासितं घोरशब्दः । वाशृ शब्दे ॥ ध्वाक्षद्धतीति । ध्वाङ्क्षः काकः । द्राक्षिधातोः 'गुरोश्च हलः ५०८३' इति अप्रत्यये द्राक्षा । यवादिगणे निपातनान्नलोपः, द्राक्षामान्, इह मतोर्वत्वं तु न भवति, 'अयवादिभ्यः' इत्युक्तेः । तूष तुष्टौ । दिवादौ तु ह्रस्वोपधः । मूष स्तेये । संज्ञायां क्वुनि मूषकः । क्र्यादौ तु ह्रस्वोपधोऽयम् । भूष अलंकारे । अयं चुरादावपि । ईष उञ्छे ।

---

१ तङीति । 'अधुक्षन्, अधुक्षम्' इत्यत्र तु लोपाभावेऽपि पररूपेणैवेष्टसिद्धिरिति भावः ॥ २ 'अघषिष्ट' इत्येव पाठ उचितः ॥ 'अघाषीत् अघषीत्' इति परस्मैपदोल्लेखस्तु प्रामादिक एव परस्मैपदिषु पाठस्य माधवादिभिरनङ्गीकृतत्वात् ॥

चकाष । चखाष । शिशेष । शिशेषिथ । शेष्टा । क्सः । आशिक्षत् । अशेक्ष्यत् । जेषतुः । जक्षषतुः । शेषतुः । ववषतुः । सेषतुः ॥ (३१२१) तीषसहलुभरुषरिषः ।७।२।४८। इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । रोषिता, रोष्टा । रोषिष्यति । रेषिता, रेष्टा । रेषिष्यति । ४४ ॥ भष भर्त्सने । इह भर्त्सनं श्वरवः । भषति । बभाष । ।४५॥ उष दाहे । ओषति ॥ (३१२२) उषविदजागृभ्योऽन्यतरस्याम् ।३।१।३८। एभ्यो लिटयाम्वा स्यात् । ओषांचकार । उवोष । ऊषतुः । उवोषिथ । ४६ ॥ जिषु विषु मिषु सेचने । जिजेष । क्रादिनियमादिट् । विवेषिथ । विविषिव । वेष्टा । वेक्ष्यति । अविक्षत् । ४९ ॥ पुष पुष्टौ । पोषति । पोषिता । पोषिष्यति । अपोषीत् । अनिट्केषु पुष्यतेति श्यना निर्देशादयं सेट् । अतो न क्सः । अङ्विधौ दैवादिकस्य ग्रहणान्नाङ् । ५० ॥ श्रिषु श्लिषु प्रुषु प्लुषु दाहे । श्रेषति । शिश्रेष । श्रेषिता । श्लेषति । शिश्लेष । श्लेषिता । अयमपि सेट् । अनिट्सु दैवादिकस्यैव ग्रहणमिति कैयटादयः । यत्त्वनिट्कारिकान्यासे द्वयोर्ग्रहणमित्युक्तम्, तत्स्वोक्तिविरोधाद्ग्रन्थान्तरविरोधाच्चोपेक्ष्यम् । पुप्रोष । पुप्लोष । ।५४॥ पृषु वृषु मृषु सेचने । मृषु सहने च । इतरौ हिंसासंक्लेशनयोश्च । पर्षति । पपर्ष । पृष्यात् । ५७ ॥ घृषु संघर्षे । ।५८॥ हृषु अलीके । ५९ ॥ तुस ह्रस ह्लस रस शब्दे । तुतोस । जह्रास । जह्लास । रराल । ६३ ॥ लस श्लेषणक्रीडनयोः । ।६४॥ घस्लृ अदने । अयं न सार्वत्रिकः । लिट्यन्यतरस्यामित्यदेर्घस्लादेशविधानात् । ततश्च यत्र लिङ्गं वचनं वाऽस्ति तत्रैवास्य प्रयोगः । अत्रैव पाठः शपि परस्मैपदे लिङ्गम् । लृदित्करणमङि । अनिट्कारिकासु पाठो वलाद्यार्धधातुके । क्मरचि तु विशिष्योपादानम् । घसति । घस्ता ॥ ( ३१२३ ) सः स्यार्धधातुके । ७ । ४ । ४९ । सस्य तः स्यात्सादावार्धधातुके । घत्स्यति । घसतु । अघसत् । घसेत् । लिङ्गाद्यभावादाशिष्यस्याप्रयोगः ॥ (३१२४) पुषादिद्युताद्यलृदितः परस्मैपदेषु । ३ । १ । ५५ । श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु । अघसत् ।

---

'गुरोश्च हलः ५०८३' इत्यप्रत्यये ईषा लाङ्गलदण्डः । कष खष । षान्तौ । शिषेत्ययमप्यनिट्को न तु रौधादिक एव, संकोचे मानाभावादित्यभिप्रेत्योदाहरति—शेष्टा । अशिक्षदित्यादि ॥ ( ३१२१ ) तीषसह—। इष इच्छायाम् । षह मर्षणे । लुभ गार्ध्ये । रुष रिष हिंसायाम् । एषिता । एष्टा । सहिता । सोढा । लोभिता । लोब्धा ॥ ( ३१२२ ) उवोषेति । 'पुगन्त–२९४४' इति गुणः । 'अभ्यासस्यासवर्णे ३०५९' इत्युवङ् ॥ घृषु संघर्षे । स्फुटि घर्षणम् । घस्लृ अदने ॥ अयमिति । यद्ययं सार्वत्रिकः स्यात्तदा लिट्यपि प्रयुज्येत, ततश्च 'लिट्यन्यतरस्याम् ३२३०' इति विकल्पेनादेशविधानं व्यर्थं भवेदिति भावः ॥ अत्रैव पाठ इति । भ्वादौ परस्मैपदे पाठ इत्यर्थः ॥ क्मरचीति । 'सृघस्यदः क्मरच् ४१६२ ' इति सूत्रे ॥ ( ३१२३ ) सः स्यार्ध—। सः सीति च्छेदः । सादौ किम् , घस्मरः । आर्धधातुके इति किम् , वस्से ॥ आशिषीति । आशीर्लिङीत्यर्थः । एतच्च कर्तरि प्रयोगमभिप्रेत्योक्तम् । कर्मणि तु यविषये प्रयोगो नेति बोध्यम् ॥ ( ३१२४ ) पुषादिद्युता—। पुषधातुर्भ्वादौ दिवादौ क्र्यादौ चुरादौ च पठ्यते । यदि तु पुष पुष्टाविति भौवादिकधातुमारभ्य पुषादिगणो गृह्येत तदा द्युतादिग्रहणमनर्थकं भवेत् , पुषेरुत्तरत्र द्युतादीनां पाठात् । नापि क्र्याद्यन्तर्गणः । तत्र हि पुषधातोरग्रे मुष स्तेये, खच भूतप्रादुर्भावे, हेठ च, ग्रह उपादाने, इति चत्वार एव पठ्यन्ते । यदि तु त एव जिघृक्षिताः स्युस्तर्हि लाघवाल्लृदित एव क्रियेरन् । ग्रहेः स्वरितत्वेऽपि लृकारेणैव तन्निर्वाहादनेकानुबन्धासङ्गगौरवशङ्काया अप्यभावात् । नापि चुरादिः । णिचा व्यवधानेन ततोऽनन्तरस्य च्लेरसंभवात् । अतः परिशेषाद् दिवादय एव गृह्यन्त इत्याह–श्यन्विकरणपुषादेरिति । केचित्तु–दिवाद्यन्तर्गत एव पुषादिर्गृह्यते व्याख्यानादित्याहुः । चुरादीनां सर्वेषां णिज्विकल्प इति पक्षे चौरादिकपुषादेरपि परः च्लिः संभवतीति तेषामाशयः । 'नन्दिग्रहिपचादिभ्यः–२८५३' इतिवत् 'पुषद्युताद्यलृदितः' इति सूत्रयितुमुचितम् । ननु पुषादयो द्युतादयश्च लृदित एव कुतो न कृता इति चेत् । अत्राहुः–निरनुबन्धेषु सानुबन्धेषु च प्रत्येकं लृकारपाठे विपरीतगौरवं स्यात् । न च अनुबन्धान्तरस्य यत्प्रयोजनमात्मनेपदं तत्तु लृदित्करणेऽपि सिध्यतीत्यनेकानुबन्धासङ्गगौरवदोषो नास्तीत्यपि वाच्यम् , आदितामीदि-

---

१ नन्वत्रानुवृत्तस्यार्द्धधातुकशब्दस्य सप्तम्यन्तत्वाभावेन यत्रोभयोर्विशेष्यविशेषणयोः सप्तम्यन्तत्वं तत्रैव प्रवृत्तस्य 'यस्मिन्–' इति वचनस्य प्रवृत्त्यभावात्कथं तदादिविधिरिति चेत्, प्रकारान्तरेणात्र तदादिविधिर्बोध्यः । तथा हि—पूर्वसूत्राद्वलादेरित्यनुवर्त्य विशेषणीभूतवल्पदार्थस्य तकारो विशेषणम् , तेन तकाररूपवलादेरिति वाच्योऽर्थः । तत्फलितमाह–त**ादे**रिति ॥ २ न सार्वत्रिक इति । परे तु 'लिट्यन्यतरस्याम्' इत्येतत्सामर्थ्याल्लिटि माऽस्तु प्रयोगः, अन्यत्र तु भवत्येव । जघस्थेति रूपवारणे तत्सार्थक्यम् । जघस्थेत्यस्येष्टत्वे हि असार्वत्रिकत्वबोधनेऽपि न कथमपि सार्थक्यम् । अत एव 'उपदेशेऽत्वतः' इति सूत्रे 'घसेः प्रतिषेधो वक्तव्यो जघसिथ ।' इति वार्त्तिकं तासौ नित्यानिट्त्वाभावात्प्रत्याख्यातं भाष्ये । अन्यथाऽस्य प्रतिषेधार्थं वार्त्तिकं स्यादिति तत्प्रत्याख्यानासङ्गतिः । अच्प्रत्यये घस्लादेशविधानं तु अदः इत्येतद्रूपवारणार्थमित्याहुरिति शेखरकृत् ॥ ३ आशिषीति । ननु'आशिष्यप्रयोगः' इति न्यूनम् , आशिषि यत्र लोट् तत्र शपि परस्मैपदे ज्ञापकेनैव प्रयोगसम्भवादिति शङ्का निराकर्तुमाह–लिङीत्यर्थ इति ॥ ४ कर्त्तरीति । कर्मणि ' घसीष्ट ' इत्यादौ वलाद्यार्द्धधातुकत्वाद्यस्यैव प्रयोगः । एवं कर्मव्यतिहारे कर्त्तर्यस्यैव प्रयोग इति भावः ॥ ५ यग्विषये इति । चिणोऽप्युपलक्षणम् इति शब्दरत्नम् ॥

।६५॥ **जर्ज चर्च झर्झ** परिभाषणहिंसातर्जनेषु । ६८ ॥ **पिसृ पेसृ** गतौ । पिपिसतुः । पिपेसतुः । ७० ॥ **हसे** हसने । एदित्वान्न वृद्धिः । अहसीत् । ७१ ॥ **णिश** समाधौ । तालव्योष्मान्तः । प्रणेशति । ७२ ॥ **मिश मश** शब्दे रोषकृते च । तालव्योष्मान्तौ । ७४ ॥ **शव** गतौ । दन्त्योष्ठ्यान्तस्तालव्योष्मादिः । शवति । अशवीत्, अशावीत् । ७५ ॥ **शश** प्लुतगतौ । तालव्योष्माद्यन्तः । शशाश । शेशतुः । शेशुः । शेशिथ । ७६ ॥ **शसु** हिंसायाम् । दन्त्योष्मान्तः । न [३०२७]शसददेत्येत्वं न । शशसतुः । शशसुः । शशसिथ । ७७ ॥ **शंसु** स्तुतौ । अयं दुर्गतावपीति दुर्गः । 'नृशंसो घातुकः क्रूरः' इत्यमरः । शशंस । आशिषि नलोपः । शस्यात् । ७८ ॥ **चह** परिकल्कने । परिकल्कनं शाठ्यम् । अचहीत् । ७९ ॥ **मह** पूजायाम् । अमहीत् । ८० ॥ **रह** त्यागे । ८१ ॥ **रहि** गतौ । रंहति । रंह्यात् । ८२ ॥ **दृह दृहि बृह बृहि** वृद्धौ । दर्हति । ददर्ह । ददृहतुः । दृंहति । बर्हति । बृंहति । **बृहि** शब्दे च । बृंहितं करिगर्जितम् । बृहिर् इत्येके । अबृहत्, अबर्हीत् । ८६ ॥ **तुहिर् दुहिर् उहिर्** अर्दने । तोहति । तुतोह । अतुहत्, अतोहीत् । दोहति । दुदोह । अदुहत्, अदोहीत् । अनिट्कारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति । ओहति । उवोह । ऊहतुः । ओहिता । मा भवानुहत् । औहीत् । ८९ ॥ **अर्ह** पूजायाम् । आनर्ह । ९० ॥

अथ कृपूपर्यन्ता अनुदात्तेतः । **द्युत** दीप्तौ । द्योतते ॥ ( ३१२५ ) **द्युतिस्वाप्योः संप्रसारणम्** । ७ । ४ । ६७ । अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते । दिद्युताते । द्योतिता ॥ ( ३१२६ ) **द्युद्भ्यो लुङि** । १ । ३ । ९१ । द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । [३१२४]पुषादिसूत्रेण परस्मैपदेऽङ् । अद्युतत्, अद्योतिष्ट । १ ॥ **श्विता** वर्णे । श्वेतते । शिश्विते । अश्वितत्, अश्वेतिष्ट । २॥ **ञिमिदा** स्नेहने । मेदते ॥ ( ३१२७ ) **मिदेर्गुणः** । ७ । ३ । ८२ । मिदेरिको गुणः स्यादित्संज्ञकशकारादौ प्रत्यये । एश आदिशित्त्वाभावान्नानेन गुणः । मिमिदे । अमिदत्, अमेदिष्ट । ३ ॥ **ञिष्विदा** स्नेहनमोचनयोः । मोहनयोरित्येके । स्वेदते । सिष्विदे । अस्विदत्, अस्वेदिष्ट । ४ ॥ **ञिक्ष्विदा** चेत्येके । अक्ष्विदत्, अक्ष्वेदिष्ट ।५॥ **रुच** दीप्तावभिप्रीतौ च । रोचते सूर्यः । हरये रोचते भक्तिः । अरुचत्, अरोचिष्ट । ६ ॥ **घुट** परिवर्तने । घोटते । जुघुटे । अघुटत्, अघोटिष्ट । ७॥ **रुट लुट लुठ** प्रतिघाते । अरुटत्, अरोटिष्ट । १० ॥ **शुभ** दीप्तौ । ११ ॥ **क्षुभ** संचलने । १२ ॥ **णभ तुभ** हिंसायाम् । आद्योऽभावेऽपि । 'नभन्तामन्यके समे'मा भूवन्नन्यके सर्वे इति निरुक्तम् । अनभत्, अनभिष्ट । अतुभत्, अतोभिष्ट । इमौ दिवादी क्र्यादी च ।१४॥ **स्रंसु ध्वंसु भ्रंसु** अवस्रंसने । **ध्वंसु** गतौ च । आङि नलोपः । अस्रसत्, अस्रंसिष्ट । 'नाजस्रत्करिणां ग्रैवम्' इति

---

तामूदितां च तेषु सत्त्वात् लृकारेण तत्तत्कार्याणामनिर्वाहादनेकानुबन्धासङ्गगौरवस्य दुर्निवारत्वादिति ॥ **जर्ज चर्च झर्झ** । एषां परिभाषणादिभिः सह यथासङ्ख्यं नास्ति व्याख्यानादित्याहुः । परिभाषणं सनिन्दोपालम्भः । त्रयाणामपि चवर्गीयान्तेषु पाठ उचितो न त्विहोष्मान्तेषु ॥ **णिश** समाधौ । समाधिरन्तःकरणनिरोधः॥ **प्रणेशतीति** । 'उपसर्गादसमासेऽपि–३०५४' इति णत्वम् ॥ **रोषकृते चेति** । चकारात्समाधौ ॥ **शश** प्लुतगतौ । 'न शसदद–३०२७' इति प्रतिषेधसूत्रे सान्तस्य ग्रहणमित्यभिप्रेत्य व्याचष्टे—**शेशतुरिति** । प्राचा तु शशशतुरित्युक्तं, तदयुक्तमिति भावः ॥ **अचहीदिति** । 'ह्यन्त–३०७२' इति न वृद्धिः ॥ **रह** त्यागे । अयं कथादावपि । 'ज्ञप मिच्च' इति मित्प्रकरणेऽप्ययमेकीयमतेन पठितः ॥ **नेच्छन्तीति** । व्याख्यानमेवात्रावलम्बनम् ॥ **मा भवानुहदिति** । 'न माङ्योगे २९८३' इत्याडभावः । 'इरितो वा ३०३६' इत्यङ् वा ॥ अथ द्युतादिः ॥ **द्युत** दीप्तौ ॥ ( ३१२५ ) **द्युतिस्वाप्योः**—। स्वापीति णिजन्तस्य ग्रहणम् ॥ **दिद्युते इति** । संप्रसारणे कृते 'संप्रसारणाच्च ४५४' इति पूर्वरूपम् । स्वापेरुदाहरणं तु सुष्वापयिषति । इह स्वापेर्णिजन्तस्याऽभ्यासनिमित्तप्रत्ययेनानन्तर्ये सति संप्रसारणमिष्यते । तेनेह न, स्वापेर्ण्वुल् स्वापकः तमिच्छति स्वापकीयति, ततः सन् सिस्वापकीयिषति ॥ ( ३१२६ ) **द्युद्भ्यो लुङि** । बहुवचननिर्देशात् शौण्डैरित्यत्रेव तदादिग्रहणम्, तदाह–**द्युतादिभ्य इति** । द्युतादयो घट चेष्टायामित्यवधिकाः । 'ङः सि–१९९' इत्यत्रेव लुङीति सप्तम्याः । [1]षष्ठ्यर्थतेत्यभिप्रेत्याह—**लुङः परस्मैपदमिति** । **ञिमिदा** । ( ३१२७ ) **मिदेर्गुणः** ।'ष्ठिवुक्लमुचमाम्–३०१८' इत्यतः शितीत्यनुवर्तते, तत्र शश्चासौ इच्चेति कर्मधारयात्सप्तमी । अङ्गाक्षिप्तप्रत्ययस्तु विशेष्यः । तेन 'यस्मिन्विधिः–' इति तदादिविधिः प्रवर्तते । तदाह—**इत्संज्ञकशकारादाविति** ॥ **आदिशित्त्वाभावादिति** । मेद्यति । मेद्यत इत्यादौ तु 'दिवादिभ्यः–३२२३' इति श्यन् । आदिशित्त्वात् गुणो भवत्येव ॥ **मिमिदे इति** । शितीति बहुव्रीहौ त्विह स्यादेव गुणः । तथा पपे, तस्थे इत्यादौ पिबादयोऽपि स्युरिति भावः ॥ **ञिष्विदा** । अनिट्कारिकायां स्विद्यतिरिति श्यना निर्देशादयं सेट् । स्वेदिता । स्वेदिष्यते ॥ **ञिक्ष्विदा चेति** । पूर्वोक्तयोरेवार्थयोरयमिति बोध्यम् ॥ **हरये इति** । 'रुच्यर्थानाम्–८३१' इति संप्रदानसंज्ञायां चतुर्थी ॥ **घुट** । परिवर्तनमितस्ततो भ्रमणम् ॥ **जुघुटे इति** । 'असंयोगात्–३००२' इति कित्त्वात् गुणाभावः॥ **क्षुभ** । संचलनं [2]प्रकृतिविपर्यासो मन्थनं च ।

---

१ **षष्ठ्यर्थतेति** ।'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इत्युक्तेरिति भावः ॥ २ **प्रकृतिविपर्यासो मन्थनं चेति** । पित्तादेः क्षोभः, अत्र पूर्वावस्थाविपर्यासः प्रतीयते, दध्नः क्षोभे नवनीतं भवतीत्यत्र मन्थनम् ॥

रघुकाव्ये। भ्रंशु इत्यपि केचित्पेठुः। अत्र तृतीय एव तालव्यान्त इत्यन्ये। भ्रशु भ्रंशु अधः पतन इति दिवादौ। ।१९॥ स्रम्भु विश्वासे। अस्रभत्, अस्रम्भिष्ट। दन्त्यादिरयम्। तालव्यादिस्तु प्रमादे गतः। २०॥ वृतु वर्त्तने। वर्तते। ववृते॥ (३१२८) वृद्भ्यः स्यसनोः।१।३।९२। वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च॥ (३१२९) न वृद्भ्यश्चतुर्भ्यः।७।२।५९। एभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे। वर्त्स्यति, वर्तिष्यते। अवृतत्, अवर्तिष्ट। अवर्त्स्यत्, अवर्तिष्यत॥२१॥ वृधु वृद्धौ। शृधु शब्दकुत्सायाम्। इमौ वृतिवत्।२३॥ स्यन्दू प्रस्रवणे। स्यन्दते। सस्यन्दे। सस्यन्दिषे, सस्यन्त्से। सस्यन्दिध्वे, सस्यन्द्ध्वे। स्यन्दिता, स्यन्त्ता। वृद्भ्यः स्यसनोरिति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः। स्यन्त्स्यति, स्यन्दिष्यते, स्यन्त्स्यते। स्यन्दिषीष्ट, स्यन्त्सीष्ट। द्युद्भ्यो लुङीति परस्मैपदपक्षे अङ्। नलोपः। अस्यदत्। अस्यन्दिष्ट। अस्यन्त्त। अस्यन्त्साताम्। अस्यन्त्सत। अस्यन्त्स्यत्, अस्यन्दिष्यत, अस्यन्त्स्यत॥ (३१३०) अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु।८।३।७२। एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। अनुष्यन्दते, अनुस्यन्दते वा जलम्। अप्राणिषु किम्। अनुस्यन्दते हस्ती। अप्राणिष्विति पर्युदासान्मत्स्योदके अनुष्यन्दते इत्यत्रापि पक्षे षत्वं भवत्येव। प्राणिषु नेत्युक्तौ तु न स्यात्। २४॥ कृपू सामर्थ्ये॥ (३१३१) कृपो रो लः।८।२।१८। कृप उः इति च्छेदः। कृपेति लुप्तषष्ठीकम्। तच्चावर्तते। कृपो यो रेफस्तस्य लः स्यात्। कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लकारसदृशः स्यात्। कल्पते। चक्लृपे। चक्लृपिषे, चक्लृप्से। इत्यादि स्यन्दिवत्॥ (३१३२) लुटि च क्लृपः।१।३।९३। लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात्॥ (३१३३) तासि च क्लृपः।७।२।६०। क्लृपेः परस्य तासेः सकारादेरार्धधातुकस्य चेण्न स्यात्तङानयोरभावे। कल्प्तासि। कल्प्तास्थः। कल्पितासे, कल्प्तासे। कल्प्स्यति, कल्पिष्यते। कल्प्स्यते। कल्पिषीष्ट, क्लृप्सीष्ट। अक्लृपत्, अकल्पिष्ट, अक्लृप्त। अकल्प्स्यत्, अकल्पिष्यत, अकल्प्स्यत॥ वृत्॥ वृत्तः संपूर्णो द्युतादिर्वृतादिश्चेत्यर्थः।२५॥

अथ त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च॥ घट चेष्टायाम्। घटते। जघटे। घटादयो मित इति वक्ष्यमाणेन मित्संज्ञा। तत्फलं तु णौ मितां ह्रस्व इति, चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति च वक्ष्यते। घटयति। विघटयति।

---

क्षोभते। क्षुभ्यतीति दिवादौ। क्षुभ्नातीति क्र्यादौ॥ **नास्रसदिति**। नाऽसंसदित्यपपाठ एव। न चेदं लङो रूपम्। तत्र परस्मैपदासंभवादिति भावः॥ (३१२८) **वृद्भ्यः**—। वृतादयः पञ्च॥ (३१२९) **न वृद्भ्यः**—। गणकार्यत्वादुभयोर्यङ्लुक्यप्रवृत्तिः। वर्वर्तिष्यति। वर्वर्तिषति। चतुर्ग्रहणफलं तु मूल एव स्फुटीभविष्यति॥ 'सेऽसिचि–३२२४' इति सूत्रात्से इत्यनुवर्तते, तदाह—**सकारादेरिति**॥ **इण् न स्यादिति**। स्यन्देरूदित्त्वाद्विकल्पे प्राप्ते, इतरेषां नित्यमिटि प्राप्ते, निषेधोऽयम्॥ **तङानयोरिति**। जिगमिषिता। जिगमिषितारौ इत्यादौ तृचि परतः सन इडागमसिद्धये 'गमेरिट् परस्मैपदेषु ३२०४' इत्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयतीत्यभ्युपगम्यते। तच्चात्रापि तथैवानुवर्तते, अर्थाधिकाराश्रयणात्। तेन परस्मैपदाभावेऽपि तृचि विवृत्सिता विवृत्सितारावित्यत्र, 'अतो हेः २९५७' इति हेर्लुकि त्वं विवृत्स इत्यत्र च सन इण्निषेधः सिध्यतीति भावः। अत्र भाष्यवार्तिकयोर्वृतादीनामात्मनेपदेन समानपदस्थस्येड्वचनादन्यत्र निषेध इति स्थितम्। तेन विवर्तिषते, विवर्धिषते इत्यादाविड् भवति। विवृत्सितेवाचरति विवृत्सित्रीयते इत्यत्र त्वात्मनेपदोत्पत्तेः पूर्वं तत्समानपदस्थत्वाभावादन्तरङ्गोऽयं निषेधः प्रवर्तते। स च पश्चात्तङि कृतेऽपि न निवर्तते चतुर्ग्रहणसामर्थ्यादिति। अत्र व्याचख्युः। 'पञ्चभ्यः' इति वक्तुमुचितम्। एवं च 'तासि च' इत्येव सूत्रं कर्तव्यम्। न च वृतादिष्वतिव्याप्तिः, तङानयोः सत्त्वादिति॥ **अस्यन्त्तेति**। अत्र 'अनिदिताम्–५५७' इति नलोपो न भवति, सिज्लोपस्यासिद्धत्वेनानुपधात्वात्॥ (३१३०) **अनुविपर्यभिनिभ्यः**—। **एभ्य इति**। पञ्चभ्य इत्यर्थः॥ **षत्वं भवत्येवेति**। प्राण्यप्राणिकर्तृकस्याप्यप्राणिकर्तृकत्वानपायादिति भावः। असमर्थसमासवाक्यभेदापत्तिदोषाभ्यां प्रसज्यप्रतिषेधो न सूत्रेऽभिप्रेत इत्याशयेनाह—**प्राणिषु नेत्युक्काविति**॥ **कृपू सामर्थ्ये**। (३१३१) भाष्यकृतां व्याख्यामाह—**कृप उ इति**[3]। 'कृपे रो लः' इत्यर्वाचीनपाठस्तु नादर्तव्य इति ध्वनयति—**कृपेर्ऋकारस्येत्यादिना**॥ वर्णैकदेशस्य वर्णग्रहणेन ग्रहणादाह—**रेफसदृश इति**। एवं चात्र कृपेत्यस्यावृत्तिरवश्यं स्वीकर्तव्या। तथा च—'लुटि च क्लृपः ३१३२' इत्यादिसौत्रनिर्देशोऽप्युपपद्यत इति भावः॥ (३१३३) **तासि च क्लृपः**। चकारात्साद्यार्धधातुकं गृह्यते॥ **क्लृप्सीष्टेति**। 'लिङ्सिचावात्मनेपदेषु ३०७३' इति कित्त्वान्न गुणः॥ **वृदिति**। वृतु वर्तने इत्यस्मात्क्विप्। ञित्वरा संभ्रम इत्यस्यानन्तरं 'घटादयः

---

१ एवं हि तत्र भाष्यम्–अविशेषेण वृतादिभ्य इट्प्रतिषेधमुक्त्वा 'वृतादीनामात्मनेपदेन समानस्थस्येड् भवतीति वक्तव्यम्' इति॥ 'वृतादिसंबन्धिनः सादेरार्धधातुकस्यात्मनेपदेन समानपदस्थस्येद्' इति तदर्थः॥ इति शब्दरत्नम्॥ २ वार्तिके 'आत्मनेपदेनैव समानपदस्थस्य' इत्यर्थात्। अयं च क्यङ्युत्पत्तेः प्राक् सुबन्तेनापि समानपदस्थ इति न दोष इत्याशयः॥ इति शब्दरत्नम्॥ ३ कृप उरिति, इत्युचितम्॥

कथं तर्हि कमलवनोद्घाटनं कुर्वते ये। प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिवेत्यादि। शृणु। घट संघात इति चौरादिकस्येदम् । न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यम्, 'नान्ये मितोऽहेताविति निषेधात्। अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः। १॥ व्यथ भयसंचलनयोः। व्यथते॥ ( ३१३४ ) ॐ व्यथो लिटि। ७। ४। ६८। व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि। हलादिःशेषापवादः। थस्य हलादिःशेषेण निवृत्तिः। विव्यथे। २॥ प्रथ प्रख्याने। पप्रथे। ३॥ प्रस विस्तारे। पप्रसे। ४॥ म्रद मर्दने। ५॥ स्खद स्खदने। स्खदनं विद्रावणम् । ६॥ क्षजि गतिदानयोः। मित्त्वसामर्थ्याद्‌नुपधात्वेऽपि चिण्णमुलोरिति दीर्घविकल्पः। अक्षञ्जि, अक्षाञ्जि। क्षञ्जंक्षञ्जम्। क्षाञ्जंक्षाञ्जम्। ७॥ दक्ष गतिहिंसनयोः। योऽयं वृद्धिशैघ्ययोरनुदात्तेत्सु पठितस्तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः। ८॥ क्रप कृपायां, गतौ। ९॥ कदि क्रदि क्लदि वैक्लव्ये। वैकल्य इत्येके। त्रयोऽप्यनिदित इति नन्दी। इदित इति स्वामी। कदिक्रदी इदितौ। क्रद क्लदेति चानिदिताविति मैत्रेयः। कदिक्रदिक्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थ आत्मनेपदार्थश्च। १२॥ ञित्वरा संभ्रमे। १३॥ ( ३१३५ ) ॐ घटादयः षितः। षित्त्वादङ् कृत्सु वक्ष्यते॥

अथ फणान्ताः परस्मैपदिनः॥ ज्वर रोगे। ज्वरति। जज्वार। १॥ गड सेचने। गडति। जगाड। २॥ हेड वेष्टने। हेडृ अनादर इत्यात्मनेपदिषु गतः, स एवोत्सृष्टानुबन्धोऽनूद्यते अर्थविशेषे मित्त्वार्थम्। परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादसामर्थ्यात्परस्मैपदम्। हेडति। जिहेड। हिडयति। अहिडि[१]। अहीडि। अनादरे तु हेडयति। ३॥ वट भट परिभाषणे। वट वेष्टने भट भृताविति पठितयोः परिभाषणे मित्त्वार्थोऽनुवादः। ५॥ नट नृत्तौ। इत्थमेव पूर्वमपि पठितम्। तत्रायं विवेकः। पूर्वं पठितस्य नाट्यमर्थः। यत्कारिषु नटव्यपदेशः। वाक्यार्थाभिनयो नाट्यम्। घटादौ तु नृत्यं नृत्तं चार्थः। यत्कारिषु नर्तकव्यपदेशः। पदार्थाभिनयो नृत्यम्। गात्रविक्षेपमात्रं नृत्तम्। केचित्तु घटादौ नट नताविति पठन्ति। गताविंत्यन्ये। णोपदेशपर्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठाद् घटादिर्णोपदेश एव। ६॥ ष्टक प्रतीघाते। स्तकति। ७॥ चक तृप्तौ। तृप्तिप्रतीघातयोः पूर्वं पठितस्य तृप्तिमात्रे मित्त्वार्थोऽनुवादः। आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मैपदम्। ८॥ कखे हसने। एदित्त्वान्न वृद्धिः। अकखीत्। ९॥ रगे शङ्कायाम्। १०॥ लगे सङ्गे। ११॥ ह्रगे ह्लगे षगे ष्टगे संवरणे। १५॥ कगे नोच्यते। अस्यायमर्थ इति विशिष्य नोच्यते। क्रियासामान्यार्थत्वात्। अनेकार्थत्वादित्यन्ये। १६॥ अक अग कुटिलायां गतौ। १८॥ कण रण गतौ। चकाण। रराण। २०॥ चण शण श्रण दाने च। शण

---

षितः ३१३५' इत्युक्तत्वात्त्वरत्यन्तास्त्रयोदशैव षितो न तु फणान्ताः सर्वेऽपीति सिद्धम्, तथापि स्पष्टप्रतिपत्त्यर्थमाह—षितश्चेति। प्रयोजनं तु 'षिद्भिदादिभ्यः-५०८६' इत्यङि टाप्। घटा व्यथेत्यादिरूपसिद्धिः॥ घट चेष्टायाम्। ये धातवोऽन्यत्राधीतास्तेषामिह पाठोऽर्थनियमार्थः। ये त्विहैव पठ्यन्ते तेषामुपसर्गादिनाऽर्थान्तरपरत्वेऽपि मित्त्वमस्त्येवेति धातुवृत्त्यादिषु स्थितम्, तदेतत् ध्वनयन्नुदाहरति—विघटयतीति॥ ( ३१३४ ) व्यथो लिटि॥ हलादिःशेषापवाद इति। हलादिःशेषप्रक्रमणादिति भावः। एवं च 'उत्सर्गसदेशश्चापवादः' इति परस्यैव संप्रसारणं भवति न पूर्वस्येति कैयटाद्युक्तः 'न संप्रसारणे-४९३' इति निषेधोऽत्र नापेक्षितः। केचित्तु—हलादिःशेषेण यकारनिवृत्तावपि वकारस्य सत्त्वात्सूत्रमिदं सावकाशमिति अपवादत्वं न संभवतीति मत्वा 'संप्रसारणं तदाश्रयं च कार्यं बलवत् ३४३०' इति वचनाद्धलादिःशेषं बाधित्वा परस्य संप्रसारणे पूर्वस्य निषेधः। 'संप्रसारणं तदाश्रयं च कार्यम्-३४३०' इति वचनाभावे तु 'व्यथो लिटि ३१३४' इति संप्रसारणस्य धातुविशेषप्रत्ययविशेषाश्रयत्वेन 'इग्यणः-४५२' इति संज्ञाविशेषद्वयाश्रयत्वेन च बह्वपेक्षस्य बहिरङ्गत्वात्संप्रसारणं बाधित्वा हलादिःशेषे जाते वकारस्य संप्रसारणं स्यादित्याहुः॥ थस्येति। संप्रसारणस्याभ्यासान्तर्गतयकारनिवृत्तेरपवादत्वं, न तु थकारनिवृत्तेरिति भावः। लिटीति किम्, विव्यथिषते। इह 'सन्यतः ३०९३' इति इत्वम्। वाव्यथ्यते। वाव्यथीति॥ क्रप कृपायां गतौ। चकाराभावेऽपीहार्थद्वयमित्येव बोध्यमित्याहुः॥ कदि क्रदि। कन्दयति। अकन्दि, अकान्दि। कन्दंकन्दम्। कान्दंकान्दम्॥ ञित्वरा। आदित्त्वमिह व्यर्थम्। ह्रस्वोच्चारणेनाप्यात्मनेपदसिद्धेः। न च निष्ठायाम् 'आदितश्च ४०४८' इतीट्प्रतिषेधार्थमिति शङ्क्यम् 'रुष्यमत्वर-४०८४' इति निष्ठायामिटो विकल्पितत्वात्। तूर्णः। त्वरितः॥ ज्वर रोगे। णौ ज्वरयति। अज्वरि। अज्वारि। ज्वरंज्वरम्। ज्वारंज्वारम्॥ गड सेचने। णौ गडयति। अगडि। अगाडि। गडंगडम्। गाडंगाडम्। एवमन्यत्राप्यूह्यम्॥ हेड वेष्टने॥ उत्सृष्टानुबन्ध इति। तेन वेष्टने 'नाग्लोपि-३४१२' इति निषेधशङ्कैव नास्तीति भावः॥ णोपदेश एवेति। प्रणटति, प्रणटयति। नाटीत्यस्य तु प्रनाटयति॥

---

१ अहिडि, अहीडीति। 'चिण्णमुलोः-' इति सूत्रस्थदीर्घग्रहणप्रत्याख्यानपरभाष्यविरोधादत्राऽस्य पाठोऽप्रामाणिक इति केचित्॥ २ आदित्त्वम्-'रुष्यमत्वर-' इत्यस्य भावादिकर्मणोर्निष्ठायामप्रवृत्तिज्ञापनार्थम्, एवं च-'विभाषा भावादिकर्मणोः' इत्यर्थं तत् इति शब्दरत्नकृत्॥

गतावित्यन्ये ।२३॥ **श्रथ श्लथ क्रथ क्लथ** हिंसार्थाः । जासिनिप्रहणेति सूत्रे क्राथेति मित्त्वेऽपि वृद्धिर्निपात्यते । क्राथयति । मित्त्वं तु निपातनात्परत्वाच्चिण्णमुलोरिति दीर्घे चरितार्थम् । अक्रथि । अक्राथि । क्रथंक्रथम् । क्राथंक्राथम् ।२७॥ **वन च** । हिंसायामिति शेषः । २८ ॥ **वनु च नोच्यते** । वनु इत्यपूर्व एवायं धातुर्न तु तानादिकस्यानुवादः । उदित्करणसामर्थ्यात् । तेन क्रियासामान्ये वनतीत्यादि । प्रवनयति । अनुपसृष्टस्य तु मित्त्वविकल्पो वक्ष्यते । २९ ॥ **ज्वल दीप्तौ** । णप्रत्ययार्थं पठिष्यमाण एवायं मित्त्वार्थमनूद्यते । प्रज्वलयति ।३०॥ **ह्वल ह्मल चलने** । प्रह्वलयति । प्रह्मलयति ।३२ ॥ **स्मृ आध्याने** । चिन्तायां पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवादः । आध्यानमुत्कण्ठापूर्वकं स्मरणम् । ३३ ॥ **दॄ भये** । दॄ विदारणे इति क्र्यादेरयं मित्त्वार्थोऽनुवादः । इणन्तं प्रेरयति दरयति । भयादन्यत्र दारयति । धात्वन्तरमेवेदमिति मते तु दरतीत्यादि । केचिद्घटादौ ३३०९ अर्तिस्मृदॄत्वरेति सूत्रे च दॄ इति दीर्घस्थाने ह्रस्वं पठन्ति । तन्नेति माधवः । ३४ ॥ **नॄ नये** । क्र्यादिषु पठिष्यमाणस्यानुवादः । नयादन्यत्र नारयति । ३५ ॥ **श्रा पाके** । श्रै इति कृतात्वस्य श्रा इत्यादादिकस्य च सामान्येनानुकरणम् ॥ ( ३१३६ ) (प) **लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य**, (प) ११९३-२ **लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्**-इति परिभाषाभ्याम् । श्रपयति । विक्लेदयतीत्यर्थः । पाकादन्यत्र श्रापयति । स्वेदयतीत्यर्थः । ३६ ॥ **मारणतोषणनिशामनेषु ज्ञा** । निशामनं चाक्षुषज्ञानमिति माधवः । ज्ञापनमात्रमित्यन्ये । निशानेष्विति पाठान्तरम् । निशानं तीक्ष्णीकरणम् । एष्वेवार्थेषु जानातिर्मित् । ज्ञप मिच्चेति चुरादौ । ज्ञापनं मारणादिकं च तस्यार्थः । कथं विज्ञापना भर्तृषु सिद्धिमेतीति । तज्ज्ञापयत्याचार्य इति च । शृणु । माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात् । ज्ञापनमात्रे मित्त्वमिति मते तु ज्ञा नियोग इति चौरादिकस्य, धातूनामनेकार्थत्वात् । निशानेष्विति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिः । ३७ ॥ **कम्पने चलिः** । चल कम्पने इति ज्वलादिः । चलयति शाखाम् । कम्पनादन्यत्र तु शीलं चालयति । अन्यथाकरोतीत्यर्थः । हरतीत्यर्थ इति स्वामी । सूत्रं चालयति । क्षिपतीत्यर्थः । ३८ ॥ **छदिरूर्जने** । छद अपवारण इति चौरादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः । अनेकार्थत्वादूर्जेरर्थे वृत्तिः । छदन्तं प्रयुङ्क्ते छदयति । बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । अन्यत्र छादयति । अप-

---

**वृद्धिर्निपात्यत इति** । तेन 'मितां ह्रस्वः ३४०२' इति न प्रवर्तत इति भावः॥ **निपातनात्परत्वादिति** । निपातनविषयीभूतमितां ह्रस्व इत्यस्मात्परत्वात् 'मितां ह्रस्वः ३४०२' इत्येतदेव निपातनेन बाध्यते न तु ततः परम् 'चिण्णमुलोः-३६८७' इत्येतादित्यर्थः ॥ **वन च** । संभक्तौ पठितस्य हिंसायां मित्त्वार्थोऽनुवादः । वनति । णौ वनयति । अवनि । अवानि । वनंवनम् । वानंवानम् ॥ **तानादिकस्येति** । वनु याचन इत्यस्येत्यर्थः ॥ **सामर्थ्यादिति** । अनुवादे तु तत्र कृतेनोदित्त्वेन क्त्वायामिड्विकल्पस्य निष्ठायामिट्प्रतिषेधस्य च सिद्धेः पुनरुदित्करणं व्यर्थं स्यादिति भावः॥ **वनतीत्यादीति** । णौ वनयति । तानादिकस्य तु वनुते । वानयति॥ **मित्त्वविकल्प इति** । 'ग्लास्नावनुवमां च ३१४१' इति गणसूत्रेण॥ **णप्रत्ययार्थमिति** । 'ज्वलितिकसन्तेभ्यो णः ३८६४' इति ज्वलादिभ्यो णप्रत्ययार्थम् ॥ **दॄ भये** । धातोरनेकार्थत्वाद्भयार्थकत्वम् । दृणाति । दरयति॥ **तन्नेतीति** । माधवस्यायमाशयः । सूत्रे दीर्घान्त एव पाठः सर्वसंमतः । तेन घटादावपि दीर्घान्त एव सर्वैः पठ्यते । यद्ययं ह्रस्वान्तो भवेत्तर्हि 'शॄदॄप्रां ह्रस्वो वा ३३१३' इति ह्रस्वविकल्पविधायके सूत्रे दॄग्रहणमनर्थकं स्यात् ॥ धातुद्वयेन दद्रतुः ददरतुरिति रूपद्वयसिद्धेः । न च विदारणे रूपद्वयलाभार्थं दॄग्रहणमावश्यकमिति वाच्यम्, धातूनामनेकार्थत्वात्समीहितसिद्धेरिति॥ **नॄ नये** । नृणाति । नरयति । अनरि । अनारि । नरंनरम् । नारंनारम् ॥ **श्रै इति** । अयं हि वक्ष्यमाणो भौवादिकः ॥ **(३१३६) लुग्विकरणेति**। अत्र व्याचक्षते-'स्वरतिसूति-३०४६' इति सूत्रे सूङ् इति पठितेऽपि द्वयोर्ग्रहणे सिद्धे सूतिसूयत्योः पृथग्ग्रहणं व्यर्थं सदिमां परिभाषां ज्ञापयति । नन्वलुग्विकरणं बलीय इति वैपरीत्यं किं न स्यादिति न शङ्क्यम्, इष्टानुरोधात् । सूङ् इति पठिते स्वरतिसाहचर्यादलुग्विकरणस्यैव ग्रहणं स्यान्न तूभयोरित्यपि न शङ्क्यम्, साहचर्यस्यानित्यत्वात्, तस्मात्पृथग्ग्रहणं व्यर्थं सज्ज्ञापकमेवेति । ११९३-२ 'लक्षणप्रतिपदोक्तपरिभाषा तु न्यायसिद्धा, लाक्षणिकं हि विलम्बितोपस्थितिकम्, प्रतिपदोक्तं तु शीघ्रोपस्थितिकमिति ॥ **परिभाषाभ्यामिति** । यद्यप्युक्तपरिभाषयोः परस्परविरोधेनाप्रवृत्तावपीष्टं सिध्यति, तथाप्यविशेषादुभयोः प्रवृत्तिरप्यत्र युक्तैवेति भावः ॥ **मारणतोषण**—। निशामनमित्यस्य शम आलोचन इत्यस्मान्निष्पन्नत्वादाह— **चाक्षुषं ज्ञानमिति** ॥ **एष्वेवार्थेष्विति** । पशुं संज्ञपयति । मारयतीत्यर्थः । विष्णुं विज्ञपयति । संतोषयतीत्यर्थः। संज्ञपयति रूपम् । माधवमते दर्शयतीत्यर्थः । मतान्तरे तु बोधयतीत्यर्थः। प्रज्ञपयति शरम् । तीक्ष्णीकरोतीत्यर्थः । स्यादेतत्, निशामनं ज्ञापनमात्रमिति वदतां मते 'श्लाघह्नुङ्स्था-८३२' इति सूत्रे ज्ञीप्स्यमानो बोधयितुमभिप्रेत इति वृत्तिग्रन्थः संगच्छतां नाम । माधवमते तु तद्ग्रन्थस्य का गतिरित्यत आह-**ज्ञप मिच्चेति** ॥ **ज्ञापनमिति** । एवं च वृत्तिग्रन्थो माधवमतेऽपि संगच्छत इति भावः ॥ **मारणादिकं चेति** । एतच्च मतान्तराभिप्रायेणोक्तं, चुरादिषु तु ज्ञप मिच्च, अयं ज्ञाने ज्ञापने च वर्तत इति वक्ष्यमाणत्वात् ॥ **कथमिति** । ज्ञाधातोर्ज्ञपधातोश्च णौ मित्त्वात् ह्रस्वेन भवितव्यमिति भावः ॥ **मित्त्वाभावादिति** । एवं च बोधने ज्ञाधातोः ज्ञापयति, ज्ञपधातोस्तु ज्ञपयतीति रूपद्वयं माधवमते बोध्यम् ॥ **छदिरूर्जने**। ऊर्ज बलप्राणनयोः । अत्र छदिर्मित् । चुराद्यन्तर्गणो यौजादिकः स्वार्थे ॥ **णिजभाव इति** । 'आधृषाद्वा ३४१३' इति वैकल्पिक-

---

१ बाध्यत्वेन-इति शेषः ॥

वारयन्तं प्रयुङ्क्ते इत्यर्थः। स्वार्थे णिचि तु छादयति। बलीभवति, प्राणीभवति, अपवारयति, वेत्यर्थः। ३९॥ जिह्वोन्मथने लडिः। लड विलास इति पठितस्य मित्त्वार्थोऽनुवादः। उन्मथनं ज्ञापनम्। जिह्वाशब्देन षष्ठीतत्पुरुषः। लडयति जिह्वाम्। तृतीयातत्पुरुषो वा। लडयति जिह्वया। अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते। समाहारद्वन्द्वोऽयम्। लडयति शत्रुम्। लडयति दधि। अन्यत्र लाडयति पुत्रम्।४०॥ मदी हर्षग्लेपनयोः। ग्लेपनं दैन्यम्। दैवादिकस्य मित्त्वार्थोऽयमनुवादः। मदयति। हर्षयति, ग्लेपयति वेत्यर्थः। अन्यत्र मादयति। चित्तविकारमुत्पादयतीत्यर्थः। ४१॥ ध्वन शब्दे। भाव्ययं मित्त्वार्थमनूद्यते। ध्वनयति घण्टाम्। अन्यत्र ध्वानयति। अस्पष्टाक्षरमुच्चारयतीत्यर्थः। ४२॥ (३१३७) अत्र भोजः—दलि-वलि-स्खलि-रणि-ध्वनि-त्रपि-क्षपयश्चेति पपाठ। तत्र ध्वनिरणी उदाहृतौ। दल विशरणे। वल संवरणे। स्खल संचलने। त्रपूष् लज्जायामिति गताः। तेषां णौ-दलयति। वलयति। स्खलयति। त्रपयति। क्षै क्षये इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः। क्षपयति। ४९॥ स्वन अवतंसने। शब्दे इति पठिष्यमाणस्यानुवादः। स्वनयति। अन्यत्र स्वानयति। ५०॥ ( ३१३८ ) ग्रा. घटादयो मितः॥ मित्संज्ञा इत्यर्थः॥ ( ३१३९ ) ग्रा. जनीजृष्क्नसुरञ्जोऽमन्ताश्च॥ मित इत्यनुवर्तते। जृषिति षित्त्वनिर्देशाज्जीर्यतेर्ग्रहणम्। जृणातेस्तु जारयति। केचित्तु जनीजृष्णसु इति पठित्वा ष्णसु निरसने इति दैवादिकमुदाहरन्ति। ५४॥ ( ३१४० ) ग्रा. ज्वलह्वलह्मलनमामनुपसर्गाद्वा॥ एषां मित्त्वं वा। प्राप्तविभाषेयम्। ज्वलयति। ज्वालयति। उपसृष्टे तु नित्यं मित्त्वम्। प्रज्वलयति। कथं तर्हि प्रज्वालयति, उन्नामयतीति। घञन्तात्तत्करोतीति णौ॥ कथं संक्रामयतीति। मितां ह्रस्वे[२५०२] इति सूत्रे वा चित्तविरागे[२४६] इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत्। एतेन रजो विश्रामयन् राज्ञाम्, धुर्यान्विश्रामयेति स इत्यादि व्याख्यातम्। ५८॥ ( ३१४१ ) ग्रा. ग्लास्नावनुवमां च॥ अनुपसर्गादेषां मित्त्वं वा स्यात्। आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा। ६२॥(३१४२) ग्रा. न कम्यमिचमाम्॥ अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात्। कामयते। आमयति। चामयति। ६५॥ ( ३१४३ ) ग्रा. शमो दर्शने॥ शाम्यतिर्दर्शने मिन्न स्यात्। निशामयति रूपम्। अन्यत्र तु प्रणयिनो निशमय्य वधूः कथाः। कथं तर्हि—निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति। शम आलोचने इति चौरादिकस्य। धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः शाम्यतिवत्। ६६॥ (३१४४) ग्रा. यमोऽपरिवेषणे॥ यच्छतिर्भोजनातोऽन्यत्र मिन्न स्यात्। आयामयति। द्राघयति, व्यापारयति वेत्यर्थः। परिवेषणे तु यमयति ब्राह्मणान्। भोजयतीत्यर्थः। पर्यवसितं नियमयन्नित्यादि तु नियमवच्छब्दात्तत्करोतीति णौ बोध्यम्।६७॥ ( ३१४५ ) ग्रा. स्खदिरवपरिभ्यां च। मिन्नेत्येव। अवस्खादयति। परिस्खादयति। अपावपरिभ्य इति न्यास-

---

त्वादिति भावः॥ **लडयति जिह्वामिति**। जिह्वां ज्ञापयतीत्यर्थः॥ **जिह्वयेति**। जिह्वया पदार्थान्तरं ज्ञापयतीत्यर्थः। जिह्वाव्यापारे उदाहरणमाह—**लडयति शत्रुमिति**। शत्रुमुद्दिश्य गालनादि करोतीत्यर्थः॥ **लडयति दधीति**। उन्मथ्नाति विलोडयतीत्यर्थः। केचित्तु—जिह्वाव्यापारे लडयति दधि, उन्मथने तु लडयति शत्रुमिति व्यत्यासेन योजयन्ति॥ **लाडयति पुत्रमिति**। शर्करादिदानेनानुकूलयतीत्यर्थः॥ ( ३१३७ ) **ध्वनिरणी उदाहृताविति**। ध्वनिरव्यवधानेनोदाहृतः, रणिस्तु कण रण गतावित्यत्रेत्यर्थः॥ **स्वन अवतंसने**। अवतंसनं भूषणम्॥ **स्वनयतीति**। भूषयतीत्यर्थः। अस्वनीत्, अस्वानीत्। अस्वनि, अस्वानि। स्वनंस्वनम्। स्वानंस्वानम्॥(३१३८) **घटादयो-। मित्संज्ञा इत्यर्थ इति**। अन्ये तु मकारानुबन्धा इति व्याचक्षते। घट चेष्टायामिति प्रत्येकं पाठे गौरवादेकत्रैव सर्वेषां मित्संज्ञा मकारानुबन्धकत्वं वाऽनेन सूत्रेण विधीयत इति भावः॥ ( ३१३९ ) **जनीजृष्-**। जनी प्रादुर्भावे। जृष् वयोहानौ। क्नसु ह्वरणदीप्त्योः। त्रयोऽपि दिवादयः। रञ्ज रागे। दैवादिको भौवादिकश्च। अमन्ताः कमिगमीत्यादयः। जनयति। जरयति। क्नसयति। रजयति मृगान्। रञ्जयति पक्षिणः। कमयति। गमयति। रमयति॥ ( ३१४० ) **ज्वलह्वल-॥ एषां मित्त्वमिति**। मित इत्यनुवृत्तस्येह भावप्रधानता अनुपसर्गादिति तु षष्ठ्यर्थेयं पञ्चमीत्येवं क्लेशेन व्याख्येयमिति भावः। 'नमोऽनुपसर्गाद्वा' इति पाठान्तरं तत्र न कश्चित्क्लेशः॥ **प्राप्तविभाषेति-**। ज्वल दीप्तौ। ह्वल ह्मल चलने इति त्रयाणां पूर्वपठितत्वान्नमेस्त्वमन्तत्वादिति भावः॥ **कथं संक्रामयतीतीति**। क्रमेः 'नोदात्तोपदेशस्य-२६८८' इति वृद्धिप्रतिषेधात् घञि क्रम इत्येव भवति न तु काम इति पूर्वोक्तसमाधानस्यात्रासंभवात्पृथक्प्रश्नः॥ **व्यवस्थितविभाषेत्यादि**। क्वचित् णौ मितां ह्रस्वो न प्रवर्तत इति भावः॥ **वृत्तिकृदिति**। केचित्तु—घञन्तात्क्रमशब्दात्प्रज्ञाद्यणि कामशब्दं स्वीकृत्य तस्मात् 'तत्करोति-३४१७' इति णौ संक्रामयतीति समादधत इति भावः॥ ( ३१४१ ) **इतरयोः प्राप्ते इति**। वनेः पूर्वं पाठाद्वमेरमन्तत्वाच्चेति भावः। ग्लापयति, ग्लपयति। स्नापयति, स्नपयति। वानयति, वनयति। वामयति, वमयति॥ ( ३१४३ ) **शाम्यतिवदिति**। यथा शाम्यतिर्निशामयतीत्यादौ दर्शने प्रयुज्यते, तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीत्यर्थः॥(३१४४) **यमोऽपरिवेषणे। यच्छतिरिति**॥ यम उपरमे इत्ययं धातुर्भोजनातोऽन्यत्र। भोजनाशब्दो 'ण्यासश्रन्थो युच् ५०८९' इति युजन्तो ज्ञेयः। परिवेषणमिह भोजनानुकूलव्यापारस्ततोऽन्यस्मिन्नर्थे मिन्निषेधः॥ **नियमयन्निति**। नियमवच्छब्दाण्णिचि क्विन्म-

कारः । स्वामी तु न कमीति नञमुत्तरत्रिसूत्र्यामननुवर्त्य शमः अदर्शने इति चिच्छेद । यमस्त्वपरिवेषणे मित्त्वमाह । तन्मते पर्यवसितं नियमयन्नित्यादि सम्यगेव । उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्येति नियमात्प्रस्खादयतीत्याह । तस्मात् सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः । इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम् । ६९ ॥ फण गतौ । नेति निवृत्तमसंभवात् । निषेधात्पूर्वमसौ न पठितः, फणादिकार्यानुरोधात् ॥ (३१४६) (सू) फणां च सप्तानाम् । ६ । ४ । १२५ । एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । फेणतुः । फेणुः । फेणिथ । पफणतुः । पफणुः । फणयति ॥ (३१४७) वृत् । घटादिः समाप्तः ॥ फणेः प्रागेव वृद्धिरित्येके । तन्मते फाणयतीत्येव । ७० ॥ राजृ दीप्तौ । स्वरितेत् । राजति, राजते । रेजतुः, रराजतुः । रेजे, रराजे । अत इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम् । ७१ ॥ टुभ्राजृ टुभ्राशृ टुम्लाशृ दीप्तौ । अनुदात्तेतः । भ्राजतेरिह पाठः फणादिकार्यार्थः । पूर्वं पाठस्तु व्रश्चादिषत्वाभावार्थः । तत्र हि राजिसाहचर्यात् फणादेरेव ग्रहणम् । भ्रेजे, बभ्राजे । वा भ्राशेति श्यन्वा । भ्राश्यते, भ्राशते । भ्रेशे, बभ्राशे । भ्लाश्यते, भ्लाशते । भ्लेशे, बभ्लाशे । द्वावपीमौ तालव्यान्तौ । ७४ ॥

स्यमु स्वन ध्वन शब्दे । स्यमादयः क्षरत्यन्ताः परस्मैपदिनः । स्येमतुः, सस्यमतुः । अस्यमीत् । स्वेनतुः, सस्वनतुः । अस्वानीत्, अस्वनीत् । विष्वणति । अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः । वेश्च स्वने इति षत्वम् । फणादयो गताः । दध्वनतुः । ३ ॥ षम ष्टम अवैकल्ये । ससाम । तस्ताम । ५ ॥ ज्वल दीप्तौ । अज्वालीत् । ६ ॥ चल कम्पने । ७ ॥ जल घातने । घातनं तैक्ष्ण्यम् । लज इत्येके । ८ ॥ टल ट्वल वैक्लव्ये । १० ॥ ष्ठल स्थाने । ११ ॥ हल विलेखने । १२ ॥ णल गन्धे । बन्धन इत्येके । १३ ॥ पल गतौ । पलति । १४ ॥ बल प्राणने धान्यावरोधने च । बलति । बेलतुः । बेलुः । १५ ॥ पुल महत्त्वे । पोलति । १६ ॥ कुल संस्त्याने बन्धुषु च । संस्त्यानं संघातः । बन्धुशब्देन तद्व्यापारो गृह्यते । कोलति । चुकोल । १७ ॥ शल हुल पत्लृ गतौ । शशाल । जुहोल । पपात । पेततुः । पतिता ॥ ( ३१४८ ) (सू) पतः पुम् । ७ । ४ । १९ । अङि परे । अपप्तत् । नेर्गदेति णत्वम् । प्रण्यपप्तत् । २० ॥ क्वथे निष्पाके । क्वथति । चक्वाथ । अक्वथीत् । २१ ॥ पथे गतौ । अपथीत् । २२ ॥ मथे विलोडने । मेथतुः । अमथीत् । २३ ॥ टुवम उद्गिरणे । इहैव निपातनादूत इत्त्वमिति सुधाकरः । ववाम । ववमतुः । वादित्वादेत्वाभ्यासलोपौ न । भागवृत्तौ तु वेमतुरित्याद्यप्युदाहृतं तद्भाष्यादौ न दृष्टम् । २४॥ भ्रमु चलने ।

---

तोर्लुकि शतारि शप्प्रत्यये गुणे च ज्ञेयम् ॥ ( ३१४५ ) व्यत्यासः फलित इति । स्वामिमते त्वपरिवेषणे आयामयाति । परिवेषणे तु यमयाति ब्राह्मणान् । अवादिपूर्वस्य स्खदेरवस्खदयाति । परिस्खदयाति । प्रपूर्वस्य तु प्रस्खादयतीत्येवं व्यत्यासो ज्ञेयः ॥ उपेक्ष्यमिति । 'न पादम्याङ्–' इति सूत्रे आयामयत इत्युदाहृत्य वृत्तावुक्तं यमोऽपरिवेषण इत्यनेन मित्त्वं प्रतिषिध्यते इति, न्यासेऽपि तत्र 'न कम्यमि–३१४२' इत्यतो नेत्यनुवर्तत इत्युक्तम् । एवं हि निषेधानन्तरं पाठ उपपद्यते । अन्यथा 'न कमि–३१४२' इत्यतः प्रागेव त्रिसूत्रीं पठेदिति भावः । फण गतौ । फणति । लुङि अफाणीत्, अफणीत् । णौ तु 'चिण्णमुलोः–३६८७' इति वा दीर्घः । अफणि । अफाणि । फणंफणम् । फाणंफाणम् ॥ असंभवादिति । मित्त्वप्राप्तिं विना निषेधासंभवादिह नेत्येतन्न संबध्यते किं तु मित्संज्ञैव । तदेतदाह—फणयतीति ॥ ( ३१४६ ) सामर्थ्यादिति । फणादिषु पाठसामर्थ्यादित्यर्थः ॥ तत्र हीति । षत्वविधौ हीत्यर्थः । तथा च विभ्राट् विभ्राड्भ्याम् । पूर्वं पठितस्य तु विभ्राक् विभ्राग्भ्यामित्यादि सिध्यतीति भावः ॥ अस्यमीदिति । मान्तत्वान्न वृद्धिः ॥ अथ ज्वलादिः ॥ अज्वालीदिति । 'अतो ल्रान्तस्य ३११०' इति वृद्धिः ॥ वैक्लव्य इति । वैक्लव्यं भयादिजनितोद्विग्नता ॥ तद्व्यापार इति । बन्धुतानुकूलो व्यापारः ॥ ( ३१४८ ) पतः पुम् । मित्त्वादन्त्यादचः परः ॥ अक्वथीदिति । एदित्त्वान्न वृद्धिः । एवम्–अपथीत् । अमथीदित्यत्रापि ॥ टुवम । केचिदमुमुदितं पठित्वा वान्त्वा वमित्वेत्युदाहरन्ति । तत्तु वामनेन विरुध्यते । तेन हि 'आदितश्च ४०४८' इति चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य वान्त इत्यत्र इडभावः साधितः । उदित्त्वे तु 'यस्य विभाषा ४०२६' इत्यनेनैव वान्त इति सिद्धेस्तदसंगतं स्यात् । एवं च क्त्वाप्रत्यये वमित्वेत्येव साधु ॥ निपातनादिति । अन्यथा गुणे सति उद्वरण इति स्यात् । यद्यपि अर्थनिर्देश आधुनिकस्तथापि पृषोदरादित्वमित्यत्रैव तात्पर्यं बोध्यम् ॥ इत्याद्यप्युदाहृतमिति । 'वेमुश्च केचिद्रुधिरम्' इत्यादिप्रयोगानुरोधेन तथोदाहृतमित्याहुः । ननु वादित्वेन निषेधादेत्वाभ्यासलोपौ कथमिह स्याताामिति चेत् । अत्राहुः–'न शसददवादिगुणानाम्' इति सूत्रितेऽपि वेत्यकारान्तसंघातग्रहणेनेष्टसिद्धेरादिग्रहणमौपदेशिकप्रतिपत्त्यर्थम् । एकान्ता अनुबन्धा इति च स्वीक्रियते । तथा च नायं वादिः किंतु ट्वादिरिति । अन्ये तु–वमेरादौ 'लोपो व्योः–१२५४' इति लोपेन यकारः प्रश्लिष्यते । ततश्चोपदेशे वादित्वाभावान्निषेधो नेत्याहुः ॥ भ्रमु चलने । मण्डलाकारेण चलनमेव धात्वर्थो न तु चलनमात्रं तदभाववद्विशेष्यकं तत्प्रकारकज्ञानं च धात्वर्थः । 'शुक्तिं पश्यन् रजतमिति भ्रमति' इति प्रयोगात् । 'उदितो वा ५१४९' इति क्त्वायां वेट् । भ्रमित्वा । भ्रान्त्वा । 'यस्य विभाषा ४०२६' इति निष्ठायां नेट् । भ्रान्तः । नन्वस्य ज्वलादिगणे पाठः किमर्थः । न चात्र णप्रत्ययार्थमेव पाठ इति वाच्यम् । पचादेराकृतिगणत्वादच्प्रत्ययेनापि भ्रम इति रूपसिद्धेः 'नोदात्तोपदेशस्य–३६८८' इति वृद्धिनिषेधात् णप्रत्यये अच्प्रत्यये च रूपस्य तुल्यत्वादिति चेत् । अत्राहुः—यदि पचादित्वादच्प्रत्ययः स्यात्तर्हि अभ्रम इत्यत्र 'अच्कावशक्तौ ५९६३' इति नञः परमन्तोदात्तं स्यात् । णप्रत्यये

वा आशीति श्यन्वा । भ्रम्यति । भ्रमति । भ्राम्यतीति तु दिवादेर्वक्ष्यते ॥ ( ३१४९ ) (सू०) वा जॄभ्रमुत्रसाम् । । ६ । ४ । १२४ । एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः । बभ्रमतुः । अभ्रमीत् । २५ ॥ क्षर संचलने । अक्षारीत् । २६ ॥

अथ द्वावनुदात्तेतौ ॥ षह मर्षणे । परिनिविभ्यः इति षत्वम् । परिषहते । सेहे । सहिता । तीषसह इति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः ॥ ( ३१५० ) (सू०) सहिवहोरोदवर्णस्य । ६ । ३ । ११२ । अनयोरवर्णस्य ओत्स्याड्ढलोपे सति ॥ ( ३१५१ ) (सू०) सोढः । ८ । ३ । ११५ । सोढ्रूपस्य सहेः सस्य षत्वं न स्यात् । परिसोढा ॥ ( ३१५२) (सू०) सिवादीनां वाड्व्यवायेऽपि ।८।३।७१। परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि । पर्यसहत, पर्यषहत ।१ ॥ रम क्रीडायाम् । रेमे । रेमिषे । रन्ता । रंस्यते । रंसीष्ट । अरंस्त।२॥

अथ कसन्ताः परस्मैपदिनः ॥ षद्लृ विशरणगत्यवसादनेषु ॥ ( ३१५३ ) (सू०) पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७। ३ । ७८ । पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । सीदति । ससाद । सेदतुः । सेदिथ, ससत्थ । सत्ता । सत्स्यति । लृदित्वादङ् । असदत् । सदिरप्रतेः । निषीदति । न्यषीदत् ॥ ( ३१५४) (सू०) सदेः परस्य लिटि । ८ । ३ । ११८ । सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि । निषसाद । निषेदतुः । १ ॥ शद्लृ शातने । विशीर्णतायामयम्[1] । शातनं तु विषयतया[2] निर्दिश्यते ॥ ( ३१५५ ) (सू०) शदेः शितः । १ । ३ । ६० । शित्भाविनोऽस्मादात्मनेपदं स्यात् । शीयते । शशाद । शेदतुः । शेदिथ, शशत्थ । शत्ता । अशदत् । २ ॥ क्रुश आह्वाने रोदने च । क्रोशति । क्रोष्टा । च्लेः क्सः । अक्रुक्षत् । । ३ ॥ कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कोचति । चुकोच । ४ ॥ बुध अवगमने । बोधति । बोधिता । बोधि-

---

त्विह ' तत्पुरुषे तुल्यार्थ--५७०२ ' इत्याद्युदात्तमेव भवतीति ॥ ( ३१४९ ) **वा जॄभ्रमुत्रसाम्** । अप्राप्तविभाषेयम् ॥ **अभ्रमीदिति** । मान्तत्वान्न वृद्धिः ॥ **अक्षारीदिति** । हलन्तलक्षणाया वृद्धेः 'नेटि ३०३८' इति निषेधे 'अतो ल्रान्तस्य ३११०' इति वृद्धिः ॥ **षह** । अपराधे सत्यपि कोपानाविष्करणं मर्षणम् ॥ ( ३१५० ) **सहिवहो**--। इह रेफलोपस्यासंभवात् 'ढ्रलोपे पूर्वस्य-२५८' इत्यतो ढलोप एवानुवर्तते, तदाह-**ढलोप इति** । ढलोपे किम्, सहते । वहते ॥ ( ३१५१ ) **सोढः** । **षत्वं नेति** । ' न रपर-४३७३ ' इति सूत्रान्नेत्यनुवर्तत इति भावः ॥ ( ३१५२ ) **सिवादीनां**--। सिवुसहसुट्स्तुस्वञ्जः सिवादयः । पर्यषीव्यत्, पर्यसीव्यत् । पर्यष्करोत्, पर्यस्करोत् । न्यष्टौत्, न्यस्तौत् । व्यष्वजत् । व्यस्वजत् ॥ **रम क्रीडायाम्** । अनुसुदितं मत्वा रन्त्वा रमित्वेति केचिदुदाजहुस्तन्माधवादयो न सहन्ते । तथा च क्त्वायां रन्त्वेत्येव साधु ॥ **रेमिष इति** । कादिनियमादिट् । पचाद्यचि टाप् । रमा । घञि तु रामः । अमन्तत्वेन मित्त्वात् णौ ह्रस्वः । रमयति ॥ **षद्लृ** । विशरणमवयवानां विश्लेषः । अवसादनं नाशः ॥ ( ३१५३ ) **पाघ्राध्मा**--। पा पाने । पा रक्षणे इति तु न गृह्यते, लुग्विकरणत्वात् । 'ध्रैष्टि' इति केषांचित्पाठस्तत्र 'सृजिदृशोः-३२०८' इत्यम् । अर्तीत्यादौ ऋच्छादेशाद्यभाव इव सौत्रत्वात्पश्यादेशाभाव इति बोध्यम् । दृश्यर्तीति पाठस्तु निर्दुष्ट एव ॥ **पादीनामिति** । एकादशानामेषां यथासंख्यमेकादश पिबाद्यादेशाः स्युरित्यर्थः । 'ष्ठिवुक्लमुचमाम्-३०९८' इत्यतः शितीत्यनुवर्तते, स च कर्मधारय इत्यभिप्रेत्याह—**इत्संज्ञकशकारादाविति** । शकारादाविति किम्, पपे । जघ्रे । दध्मे । शितीति बहुव्रीहिरित्यभ्युपगमे त्विह पिबाद्यादेशाः स्युरेव ॥ **सेदिथेति** । 'उपदेशेऽत्वतः ३०६७' इति क्रादिनियमप्राप्तस्येटो निषेधेऽपि भारद्वाजनियमादिट् ॥ (३१५४) **सदेः परस्य**--। सदेरिति षष्ठी । फलितमाह--**अभ्यासात्परस्येति** । 'स्थादिष्वभ्यासेन च-३०४४' इति प्राप्तिः । लिटीति किम्, निषिषित्सति । सदिस्वञ्ज्योरिति वृत्त्यादिरूढोऽपि पाठ इहोपेक्षितः भाष्याननुगुणत्वात् ॥ **निषसादेति** । 'सदिरप्रतेः ३०३८' इत्यत्राप्रतेरिति पर्युदासात्प्रतिससादेत्यत्राभ्यासस्यापि षत्वं नेति बोध्यम् ॥ **शद्लृ** । विशीर्णतायामिति वक्तव्ये शातने इत्युक्तिरसंगतेत्याशङ्क्य कथंचित्समाधत्ते-**शातनं त्विति** । शदेरेव हि णिचि 'शदेरगतौ-३४५३' इति तत्वे ल्युटि च शातनमिति रूपम् । तथा चास्यैव धातोरिदं रूपं प्रसिद्धं चेत्यभिप्रेत्य तान्निर्देशः कृतः । यथा गम्लृ गतौ । डुपचष् पाके इत्यादाविति भावः ॥ **कुच संपर्चनादौ** । कुच शब्दे तारे इति चवर्गीयान्तेषु पठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादित्वप्रयुक्तो णप्रत्ययो यथा स्यादिति मनोरमादौ स्थितम् । अत्र नव्याः-अनेनैव ग्रन्थेन पाणिनिनाऽपि क्वचित्क्वचिदर्थनिर्देशः कृत इत्यनुमीयते । अन्यथाऽत्रत्यग्रन्थस्वारस्यभङ्गापत्तेरित्याहुः ॥ **बोधितेति** । बुध्यतेरेवानिट्कारिकासु पठितत्वादयं सेडिति भावः ॥

---

१ **विशीर्णतायामिति** । विशरणे इत्यर्थः । ननु शातनं विशीर्णत्वानुकूलो व्यापारः । एवं च तेनार्थकथनमसङ्गतं, सकर्मकत्वापत्तेरत आह-**शातनं त्विति** ॥ २ **विषयतयेति** । विषयताऽत्र जनकतारूपा । एवं च शातनपदवाच्यो यो व्यापारस्तज्जन्यविशरणमात्रमर्थ इति भावः ॥ ३ 'द्रष्टि' इत्येव प्राचीनः पाठ इति मनोरमातोऽध्यवसीयते ॥

ष्यति । ५ ॥ रुह बीजजन्मनि प्रादुर्भावे च । रोहति । रुरोह । रुरोहिथ । रोढा । रोक्ष्यति । अरुक्षत् । ६ ॥ कस गतौ । अकासीत्, अकसीत् । ७ ॥ वृत् । ज्वलादिगणः समाप्तः ॥

अथ गूहत्यन्ताः स्वरितेतः ॥ हिक्क अव्यक्ते शब्दे । हिक्कति । हिक्कते । १ ॥ अञ्चु गतौ याचने च । अञ्चति । अञ्चते । २ ॥ अचु इत्येके । ३ ॥ अचि इत्यपरे । ४ ॥ टुयाचृ याच्ञायाम् । याचति । याचते । ५ ॥ रेटृ परिभाषणे । रेटति । रेटते । ६॥ चते चदे याचने । चचात । चेते । अचतीत् । चचाद । चेदे । अचदीत् ।८॥ प्रोथृ पर्याप्तौ । पुप्रोथ । पुप्रोथे । ९ ॥ मिदृ मेदृ मेधाहिंसनयोः । मिमेद । मिमिदे । मिमेदे । थान्ताविमाविति स्वामी । मिमेथ । धान्ताविति न्यासः ॥ मेधृ सङ्गमे च । मेधति । मिमेधे । १२ ॥ णिदृ णेदृ कुत्सासन्निकर्षयोः । निनेद । निनिदतुः । निनिदे । निनेदे ।१४॥ शृधु मृधु उन्दने । उन्दनं क्लेदनम् । शर्धति । शर्धते । शर्धिता । मर्धति । मर्धते ।१६॥ बुधिर् बोधने । बोधति । बोधते । इरित्वादङ् वा । अबुधत्, अबोधीत्, अबोधिष्ट । दीपजनेति चिण् तु न भवति । पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात् । १७ ॥ उबुन्दिर् निशामने । निशामनं ज्ञानम् । बुबुन्दे । अबुदत्, अबुन्दीत् ।१८॥ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेणति । वेणते । नान्तोऽप्ययम् ।१९॥ खनु अवदारणे । खनति । खनते ॥ ( ३१५६ ) (सू.) गमहनजनखनघसां लोपः क्ङित्यनङि । ६ । ४ । ९८ । एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । चख्नतुः । ये विभाषा[१] । खायात्, खन्यात् । २०॥ चीवृ आदानसंवरणयोः । चिचीव । चिचीवे । २१ ॥ चायृ पूजानिशामनयोः । २२ ॥ व्यय गतौ । अव्ययीत् । २३ ॥ दाशृ दाने । ददाश । ददाशे । २४ ॥ भेषृ भये । गतावित्येके । भेषति । भेषते । २५ ॥ भ्रेषृ भ्लेषृ गतौ । २६ ॥ अस गतिदीप्त्यादानेषु । असति । असते । आस । आसे । अयं षान्तोऽपि । २७ ॥ स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् । स्पशति । स्पशते । २८ ॥ लष कान्तौ । वा भ्राशेति[१] श्यन्वा । लष्यति । लषति । लेषे । २९ ॥ चष भक्षणे । ३० ॥ छष हिंसायाम् । चच्छषतुः । चच्छषे । ३१ ॥ झष आदानसंवरणयोः । ३२ ॥ भ्रक्ष भ्लक्ष अदने । ३४ ॥ भक्ष इति मैत्रेयः । ३५ ॥ दासृ दाने । ३६ ॥ माहृ माने । ३७ ॥ गुहू संवरणे ॥ ( ३१५७ ) (सू.) ऊदुपधाया गोहः । ६।४। ८९ । गुह उपधाया ऊत्स्याद्गुणहेतावजादौ प्रत्यये । गूहति । गूहते । ऊदित्त्वादिड्वा । गूहिता, गोढा । गूहिष्यति, घोक्ष्यति । गूहेत् । गुह्यात् । अगूहीत् । इडभावे क्सः । अघुक्षत् ॥(३१५८)(सू.) लुग्वा दुहदिहलिहगुहामात्मनेपदे

---

**अकासीदिति** । हलन्तलक्षणाया वृद्धेः 'नेटि २०३८' इति निषेधेऽपि 'अतो हलादेः-२०५१' इति वैकल्पिकी वृद्धिः ॥ **वृदिति** । अत्र नव्याः 'ज्वलितिकसन्तेभ्यः-२८६४' इति निर्देशाद्वृत्करणमिहानार्षमित्यनुमीयते । अन्यथा 'ज्वलादिभ्यो णः' इत्येव सूत्रयेदित्याहुः । **अञ्चु** गतौ । 'अनिदिताम्-५५७' इति नलोपः । अच्यात् । अचीत्येकीयमते तु इदित्त्वादञ्च्यात् । **मेधृ** संगमे च । चात्पूर्वोक्तेऽर्थे । 'प्रजायै गृहमेधिनाम्' इत्यत्र गृहैर्दारैर्मेधन्ते संगच्छन्ते इति विग्रहः । 'सुप्यजातौ-२९९१' इति णिनिः ॥ **शृधु मृधु** ॥ **क्लेदनमिति** । आर्द्रीभाव इत्यर्थः । उदित्त्वात् क्त्वायां वेट् । शर्धित्वा, शृद्ध्वा ॥ **उबुन्दिर्** । बुन्दित्वा, बुत्त्वा । निष्ठायां बुन्नः । निशामनं चाक्षुषं ज्ञानम् ॥ **वेणृ** । गत्यादयः पञ्चार्थाः । वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम् । वेणिः वेणी वेणुरित्यादिरूपाण्यस्यैव धातोः ॥ **नान्तोऽपीति** । 'उत माता महिषमन्ववेनत्' इत्यत्र नान्तदर्शनादिति भावः ॥ **खनु** । खनित्वा, खात्वा । निष्ठायां खातः ॥ ( ३१५६ ) **गमहन-** । 'अचि श्नुधातुभ्रुवाम्-२७९' इत्यतोऽचीत्यनुवर्तते, 'ऊदुपधाया गोहः ३१५७' इत्यत उपधाग्रहणं च । तदाह-**एषामुपधाया इत्यादि** । जग्मतुः । जग्मुः । जघ्नतुः । जघ्नुः । जज्ञे । जज्ञाते । जक्षतुः । जक्षुः । अनङीति किम् । अगमत् ॥ **चीवृ** । चीवरं वस्त्रम्, 'चीवरपीवरमीवर—' इत्युणादिषु निपातितोऽयम् ॥ **व्यय** गतौ । वित्तत्यागे तु नित्यमात्मनेपदी गत इति मनोरमा, न कुत्रापि गत इति चिन्त्यैव सा ॥ **अव्ययीदिति** । यान्तत्वान्न वृद्धिः । **स्पश** बाधनस्पर्शनयोः । 'णिश्रि-३०८७' इति च्लेश्चङि अपस्पशत् । 'अत्स्मृदॄत्वरप्रथ-२३९९' इत्यादिना अभ्यासस्यात्त्वं सन्वदित्त्वापवादः । पस्पशा । यङन्तादचि 'यङोऽचि च ३५१९' इति लुक् । 'अजाद्यतः-६१३' इति टाप् । 'दीर्घोऽकितः ३४९८' इत्यभ्यासस्य दीर्घस्तु न भवति संज्ञापूर्वकविधेरनित्यत्वादित्याहुः । 'जपजभदहदशभञ्जपशां च ३५०५' इत्यत्र पशेति सौत्रो धातुः ॥ **पस्पशीत्यादि** । यङ्लुकोस्तु 'जपजभ-३५०५' इत्यनेनैवाभ्यासस्य नुक् । यङि पंपस्यते । लुकि । पंपसीति । पंपस् इति कण्ड्वादिः । पंपस्यति ॥ ( ३१५७ ) **ऊदुपधायाः-** । **गुणहेताविति** । एतच्च गोह इति विकृतनिर्देशाल्लब्धम् । 'अचि श्नुधातु-२७९' इत्यतोऽनुवृत्तेनाचीत्यनेनाङ्गाक्षिप्तप्रत्ययो विशेष्यते । विशेषणेन तदादिविधिस्तदाह-**अजादाविति** ॥ (३१५८)

---

१-यद्यपि पूर्वं न पठितः, तथापि 'क्वचिद्धातुवृत्तौ पठ्यते' इत्यभिप्रायेणेदम्-इति शब्दरत्नम् ॥ विपूर्वस्य 'अय गतौ' इत्यस्य शब्दशक्तिस्वाभाव्याद् द्रव्यत्याग एव शक्तिस्वीकारपरत्वे तु न कोऽप्यपराधः-इति वदन्तस्तु द्वित्वाडागमविषये फलभेदेन प्रत्युक्ताः ॥

दन्त्ये । ७ । ३ । ७३ । एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ, अघुक्षत । [१]क्सस्याचीत्यन्तलोपः । अघुक्षाताम् । अघुक्षन्त । अगुह्वहि, अघुक्षावहि । अघुक्षामहि । ३८ ॥

**अथाजन्ता उभयपदिनः** ॥ **श्रिञ् सेवायाम्** । श्रयति । श्रयते । शिश्रियतुः । श्रयिता । णिश्रीति [२]चङ् ॥ अशिश्रियत् । १ ॥ **भृञ् भरणे** । भरति । बभार । बभ्रतुः । बभर्थ । बभृव । बभृषे । भर्ता ॥ (३१५९) (सू) **ऋद्धनोः स्ये** । ७ । २ । ७० । ऋतो हन्तेश्च स्यस्य इट् स्यात् । भरिष्यति ॥ ( ३१६० ) (सू) **रिङ् शयग्लिङ्क्षु** । ७ । ४ । २८ । शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न । भ्रियात् ॥ ( ३१६१ ) (सू) **उश्च** । १ । २ । १२ । ऋवर्णात्परौ झलादी लिङ् तङ्परः सिच्चेत्येतौ कितौ स्तः । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः ॥ ( ३१६२ ) (सू) **ह्रस्वादङ्गात्** । ८ । २ । २७ । सिचो लोपः स्याज्झलि । अभृत । अभृषाताम् । अभरिष्यत् ।२॥ **हृञ् हरणे** । हरणं प्रापणं स्वीकारः स्तेयं नाशनं च । जहर्थ । जहिव । जहिषे । हर्ता । हरिष्यति । ३ ॥ **धृञ् धारणे** । धरति । अधार्षीत् , अधृत । ४ ॥ **णीञ् प्रापणे** । निनयिथ, निनेथ । निन्यिषे । ५ ॥

---

**दन्त्ये तङीति** । दन्त्यादौ तङीत्यर्थः । अदुग्ध । अघुक्षत । अधिग्ध । अदिक्षत । अलीढ । अलिक्षतेत्यादि॥(३१६०) **रिङ् शयग्लिङ्क्षु** । 'अयङ् यि क्ङिति ३५१८' इत्यतोऽनुवृत्तं यीत्येतल्लिङ एव विशेषणं शेऽसंभवात् । यकि तु वैयर्थ्यात् । तथा 'अकृत्सार्वधातुकयोः-३०७१' इत्यनुवृत्तमपि लिङ एव विशेषणमित्यभिप्रेत्याह-**यादावित्यादि** । शे म्रियते । तुदादिभ्य इति शः । यकि क्रियते । म्रियते ॥ **(३१६१) उश्च** । 'इको झल् ३४६९' इत्यतो झल्ग्रहणं 'लिङ्सिचौ-३३४८' इति पूर्वसूत्रं चानुवर्तते तदाह—**ऋवर्णादित्यादि** ॥ **अभार्षीदिति** । 'सिचि वृद्धिः-३०७०' इति वृद्धिः ॥ (३१६२) **ह्रस्वादङ्गात्** । ह्रस्वात् किम् , अच्योष्ट । अप्लोष्ट । अङ्गग्रहणादिह 'रात्सस्य ३९१' इत्यतः सस्येत्यनुवृत्तावपि प्रत्ययस्यैव तत्रापीष्टत्वात्सिच एव लोपो भवति । तेनेह न । अस्तं द्विष्टमाम् । केचित्त्विहाङ्गग्रहणाभावे अयाविष्टाम् अलाविष्टामित्यादावपि अतिप्रसङ्गः स्यादित्याहुस्तदपरे न क्षमन्ते, संनिपातपरिभाषयाऽपि परिहारसंभवादिति । झलीति किम् , अभृषाताम् । अभृषत ॥ **हृञ्** हरणे । चत्वार इहार्थाः । भारं हरति, प्रापयतीत्यर्थः । अंशं हरति, स्वीकरोतीत्यर्थः । स्वर्णं हरति, चोरयति । पापं हरति, नाशयति ॥ **धृञ्** । दधार । दध्रतुः । दधर्थ । दध्रे । दध्राते । धर्ता । ध्रियात् ॥ **णीञ्** । **निनयिथेति** । भारद्वाजनिय-

---

१ **अगुह्वहीति** । 'दन्त्योष्ठ्यो वः स्मृतो बुधैः' इति शिक्षाप्रामाण्येन वकारस्य दन्त्यत्वमाश्रित्य क्सस्य लुगिति प्राञ्चः काशिकानुसारिकैयटानुसारिणः । वस्तुतस्तु 'न पदान्त-' सूत्रे भाष्ये 'पूर्वत्रासिद्धे च न स्थानिवत्' इत्यस्य प्रयोजननिरूपणावसरे "क्सलोपः सलोपे" इति वार्तिकस्य "क्सलोपः सलोपे प्रयोजनम् । अदुग्ध, अदुग्धाः । 'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इति लुग्ग्रहणं न कर्तव्यं भवति" इति भाष्यग्रन्थेन 'वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इत्येवमेव सूत्रे कृते 'घोर्लोपो लेटि वा' इत्यतो लोपपदमनुवर्त्य क्सस्यान्त्याकारस्य लोपे कृतेऽपि 'झलो झलि' इति सलोपे कर्तव्ये सलोपस्य त्रैपादिकत्वेन तस्मिन्कर्तव्ये क्ससंबन्ध्यकारलोपस्य स्थानिवत्त्वनिषेधेन सिद्धत्वाल्लुग्ग्रहणं न कर्तव्यं भवति इत्यर्थकेन वहौ सलोपाप्राप्त्या फलभेदापत्त्या न भवत्येवात्र क्सलुक् । अन्यथा फलभेदे प्रत्याख्यानासंभवात् न कर्तव्यं भवति इति भाष्यमसंगतमेव स्यात् । यद्यपि कैयटेन 'लुग्ग्रहणं न' इति प्रयोजनग्रन्थस्य 'कर्तव्यं भवति' इति निराकरणग्रन्थः-इति व्याख्यातत्वात् नैव भाष्यविरोधः, तथापि कैयटस्य सार्वत्रिकभाष्यशैलीविरुद्धत्वेनानादरणीयत्वमेव । तथाहि भाष्यकारस्य शैली-प्रत्याख्यानोत्तरं 'न तर्हीदानीमयं योगो वक्तव्यः' इत्यनुयोगोत्तरमेव 'वक्तव्यश्च' इत्युत्तरस्य 'किं प्रयोजनम्' इत्यादिका 'षष्ठी स्थानेयोगा' 'प्रत्ययलोपे-' इत्यादिसूत्रेषूपलभ्यते । तथाऽत्राभावान्न 'कर्तव्यं भवति' इति च्छेदो भाष्यसंमतः । एवं च 'दन्त्यपदेन वकारग्रहणे फलभेदस्तदवस्थ एव लुक्पक्षे सकाराश्रवणम् , प्रत्याख्यानपक्षे सकारस्य लोपाप्राप्त्या सकारश्रवणमिति रूपभेदप्राप्तेः । तस्माल्लुग्विधायकसूत्रेऽपि 'दन्त्यपदेन केवलदन्त्य एव गृह्यते न तु दन्त्योष्ठ्योऽपि' इति कल्पनीयम् । वस्तुतस्तु-'सिद्धमेङः सस्थानत्वात्' इति वार्तिकेन एङंशे कण्ठस्थानस्यैव लुग्ग्रहणप्रत्याख्यानभाष्येण वकारस्य दन्तस्थानस्यापि स्वीकाराभाव एव सूच्यते । किञ्च , वकारोच्चारणे यथौष्ठ्यव्यापारोऽनुभूयते न तथा दन्तव्यापारः । शिक्षाकाराशयस्तु "ओष्ठान्ताभ्यां दन्तैर्वकारे" इति तैत्तिरीयप्रातिशाख्यस्य **'वकार ओष्ठस्थानीयो दन्ताग्रकरणः स्मृतः'** इति शिक्षानुसारेण **'दन्तैरिति करणनिर्देशः, ओष्ठान्ताभ्यामिति स्थाननिर्देशः'** इत्येवं त्रिभाष्यरत्नपूर्तिं कृत्वाऽऽशयवर्णनेनैव वर्णित इति नास्माकं वकारे दन्त्यत्वमिति वा भाष्यकृतां सिद्धान्तः ॥ केवलदन्त्यग्रहणे 'तौ' इत्येव सिद्धौ दन्त्यग्रहणेन दन्तोष्ठजोऽपि गृह्यते इति चेत् ,-यथोत्तरं मुनीनां प्रामाण्यम् ॥ यदि क्वापि वेदे 'अगुह्वहि' इति प्रयोग उपलभ्येत तर्हि तस्य लङि **'बहुलं छन्दसि'** इति शपो लुकि सिद्धिर्बोध्येति न तद्विरोधः ॥ काव्ये चेदुपलभ्येत तर्हि तस्य **'छन्दोवत् कवयः कुर्वन्ति नैषेष्टिरस्ति'** इति भाष्येण बोधिता गतिरवगन्तव्येति दिक् ॥

---

१ स्थानत्रयेऽपि लङ्साध्यम् 'अगुह्वहि' इति प्रयोगं परिहाय लङ्साध्यम् 'अदुह्वहि' इत्यत्रैव प्रयोजनमुपन्यस्यता कैयटेनापि लुग्ग्रहणेऽकर्तव्यतैव ध्वनितेति रहस्यम् ॥

**अथाजन्ताः परस्मैपदिनः ॥** धेट् पाने । धयति ॥ ( ३१६३ ) सू० **आदेच उपदेशेऽशिति** । ६ । १ । ४५ । उपदेशे एजन्तस्य धातोरात्त्वं स्यान्न तु शिति ॥ ( ३१६४ ) सू० **आत औ णलः** । ७ । १ । ३४ । आदन्ताद्धातोर्णल औकारादेशः स्यात् । दधौ ॥ (३१६५) सू० **आतो लोप इटि च** । ६ । ४ । ६४ । अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । द्वित्वात्परत्वाल्लोपे प्राप्ते द्विर्वचनेऽचीति निषेधः । द्वित्वे कृते आलोपः । दधतुः । दधुः । दधिथ, दधाथ । दधिव । धाता ॥ ( ३१६६ ) सू० **दाधा घ्वदाप्** । १ । १ । २० । दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना ॥ ( ३१६७ ) सू० **एर्लिङि** । ६ । ४ । ६७ । घुसंज्ञानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । धेयात् । धेयास्ताम् । धेयासुः ॥ ( ३१६८ ) सू० **विभाषा धेट्श्व्योः** । ३ । १ । ४९ । आभ्यां च्लेश्चङ् स्यात्कर्तृवाचिनि लुङि परे । [३००३]चङीति द्वित्वम् । अदधत् । अदधताम् ॥ (३१६९) सू० **विभाषा घ्राधेट्-**

---

मादिड्विकल्पः॥ (३१६३) **आदेच उपदेशेऽशिति** । 'लिटि धातोः-२९३१' इत्यतो धातोरित्यनुवृत्तमेचा विशेष्यते । तदाह-**एजन्तस्य धातोरिति** । उपदेशे किम्, चेता । स्तोता । ननु लाक्षणिकत्वादेवात्र न भविष्यतीति चेत् । अत्राहुः-वर्णग्रहणे '[१]लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इति ज्ञापनार्थमुपदेशग्रहणम् । तेन 'क्रीङ्जीनां णौ' इति कृतात्त्वे क्रापयतीत्यादौ पुक् सिध्यतीति मनोरमाकृत् । धातोः किम्, गोभ्याम् । नौभ्याम् । अस्ति ह्यत्रापि 'गमेर्डोः:४४२८', 'ग्लानुदिभ्यां डौः:४४२५' इत्युपदेशे एच् ॥ अशितीति प्रसज्यप्रतिषेध इत्याह—**न तु शितीति** । पर्युदासे तु जग्ले मम्ले इत्यादौ 'द्विर्वचनेऽचि ३००३' इति निषेधादात्त्वं न स्यादभ्यासे इकारश्च श्रूयेत । किञ्च, सुग्ल इत्यत्र 'आतश्चोपसर्गे ३८५८' इति कः, सुग्लेत्यत्र 'आतश्चोपसर्गे ५०८८' इति स्त्रियामङ्, सुग्लान इत्यत्र 'आतो युच् ५१२९' इति युच् च न स्यात् । प्रत्ययनिमित्तं ह्यात्त्वमादन्ताच्च प्रत्यय इत्यन्योन्याश्रयात् । प्रसज्यप्रतिषेधे तु न कोऽपि दोषः । 'ह्वावामश्च ३८८२' इति सूत्रेण कबाधनार्थं पुनरण्विधानं च प्रतिषेधपक्षे ज्ञापकम् । तदाहुः-अनैमित्तिकमात्त्वं शिति तु प्रतिषेध इति । नन्वेवमपि एशः शित्त्वाज्जग्ले मम्ले इत्यादि न सिध्यतीति चेत् । अत्राहुः-यदि तु शितीति बहुव्रीहिः स्यात्तदाऽत्र स्यादेव दोषः । किंतु कर्मधारयोऽयम् । तथा चाशितीत्यत्रेत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थः । धातुग्रहणाक्षिप्तस्य प्रत्ययस्य शितीति कर्मधारयेण विशेषणाद्विषयसप्तम्यां तु इत्संज्ञकशकारादिभिन्नप्रत्ययविषये आत्त्वमित्यर्थात्पर्युदासेऽपि न क्षतिरिति ॥ (३१६४) **आत औ णलः** । इह अङ्गस्येत्यनुवर्तते धातोरिति तु फलितार्थकथनम् । आदन्तादङ्गादित्यर्थः ॥ (३१६५) **आतो लोप इटि च** । आर्धधातुक इत्यनुवर्तते 'दीङो युडचि क्ङिति ३३२५' इत्यतोऽचि क्ङितीति च, तदेतत्फलितमाह-**अजाद्योरार्धधातुकयोरिति** । अजाद्योः किम्, ग्लायते, यक् । जाग्लायते, यङ् । दासीय, डुदाञो लिङुत्तमैकवचनमिद् । आर्धधातुकयोः किम्, यान्ति । वान्ति । व्यतिरे । रा दाने । कर्मव्यतिहारे धातोर्लडुत्तमैकवचनमिद् ॥ **दधिथेति** । एवं च अजाद्यार्धधातुकस्य क्ङित्त्वेन दधिव दधिमेत्यादिष्वातो लोपसिद्धावपि दधिथ पपिथेत्यादिरूपसिद्धये सूत्रेऽस्मिन्निटीति ग्रहणमावश्यकमिति ज्ञेयम् । यदि तु इडागम एवात्र गृह्यते व्याख्यानात्तदाऽचि क्ङितीत्येतदार्धधातुकस्यैव विशेषणं न तूभयोः ॥ (३१६६) **दाधा घ्वदाप्** । इह दारूपाश्चत्वारः । डुदाञ् दाने । दाण् दाने । दो अवखण्डने । देङ् रक्षणे । धारूपौ तु द्वौ । डुधाञ् धारणपोषणयोः । धेट् पाने । अनुबन्धानामनेकान्तत्वात् 'आदेच उपदेशे-३१६३' इत्यात्त्वे दोदेङ्धेटामनुकरणे दाधारूपत्वमस्ति । एवं च दाश्च दाश्च दाश्च दाः । धाश्च धाश्च धौ । दाश्च धौ च दाधाः इति विग्रहः ॥ **दाप्दैपौ विनेति** । दाप् लवने । दैप् शोधने एतद्भिन्ना इत्यर्थः । दैपः पित्त्वमिह प्रतिषेधार्थं न त्वनुदात्तार्थम् । 'अनुदात्तौ सुप्पितौ ५६८१' इति प्रत्ययस्यैव पितोऽनुदात्तत्वात् । न च दैपो लाक्षणिकत्वान्नास्य प्रतिषेध इति शङ्क्यम्, पित्करणस्यानर्थक्यप्रसङ्गात् । इदमेव दैपः पित्त्वं 'गामादाग्रहणेष्वविशेषः' इति परिभाषाया ज्ञापकमित्याहुः । अदाबिति किम्, दातं बर्हिः । लूनमित्यर्थः । इह 'दो दद्धोः ४०९४' इति दद्भावो न । अवदातं मुखम् । शुद्धमित्यर्थः । इह तु 'अच उपसर्गात्-४०९५' इति तादेशो न ॥ (३१६७) **एर्लिङि** ॥ **मास्थादीनामिति** । मास्थागापाजहातिसामित्यर्थः । मा माने । गामादाग्रहणेष्वविशेषेऽपि माङ्मेङो नेह गृह्येते, लिङि कित्त्वाभावात् । ष्ठा गतिनिवृत्तौ । गै शब्दे । गाङ् गतौ इति तु न गृह्यते लिङि कित्त्वासंभवादेव । पा पाने । ओहाक् त्यागे । षोऽन्तकर्मणि । देयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् । आर्धधातुके किम् । मायात् । मायाताम् । मायुः । कितीति किम् । दासीष्ट । इह 'दीङो युडचि-३३२५' इत्यतः क्ङितीत्यनुवर्तमानेऽपि प्रकृतोपयोगितया कितीत्यस्यैवानुवृत्तिः कृता ॥ (३१६८) **विभाषा धेट्**—। 'च्लि लुङि २९७६' इत्य[२]नुवर्तते 'णिश्रि-३०८७' इत्यस्मात्कर्तरीति च तदाह—**च्लेश्चङ् वेत्यादि** ॥ **अदधदिति** । चङि आतो लोपः । श्वयतेरुदाहरणमशिश्वियत् ॥ (३१६९) **विभाषा घ्रा**—। इह

---

१ वर्णग्रहणे उक्तपरिभाषाया अप्रवृत्तौ 'ओत्-'सूत्रस्थभाष्यविरोधः । 'अध्याप्य गतः' इति भाष्यप्रयोगात्कृतात्त्वानामपि पुग्विधौ ग्रहणमिति न दोषः । २ 'च्लेः सिच्' इत्यतश्च्लेरिति तूचितम् ॥

शाच्छासः । २ । ४ । ७८ । एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे । अधात् । अधाताम् । अधुः ॥ ( ३१७० ) (सू) यमरमनमातां सक् च । ७ । २ । ७३ । एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अधासीत् । अधासिष्टाम् । अधासिषुः । १ ॥ ग्लै म्लै हर्षक्षये । हर्षक्षयो धातुक्षयः । ग्लायति । जग्लौ । जग्लिथ, जग्लाथ ॥ ( ३१७१ ) (सू) वाऽन्यस्य संयोगादेः । ६ । ४ । ६८ । घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि । ग्लायात्, ग्लेयात् । अग्लासीत् । म्लायति । ३ ॥ द्यै न्यक्करणे । न्यक्करणं तिरस्कारः । ४ ॥ द्रै स्वप्ने । ५ ॥ ध्रै तृप्तौ । ६ ॥ ध्यै चिन्तायाम् । ७ ॥ रै शब्दे । ८ ॥ स्त्यै ष्ट्यै शब्दसंघातयोः । स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम् । षोपदेशफलं तु तिष्ट्यासति । अतिष्ट्यैपदित्यत्र षत्वम् । १० ॥ खै खदने । ११ ॥ क्षै जै षै क्षये । क्षायति । जजौ । ससौ । साता । घुमास्थेत्यत्र विभाषा घ्राधेडित्यत्र च स्यतेरेव ग्रहणं न स्वस्य । तेन एत्वसिज्लुकौ न । सायात् । असासीत् । १४ ॥ कै गै शब्दे । गेयात् । अगासीत् । १६ ॥ शै श्रै पाके । १८ ॥ पै ओवै शोषणे । पायात् । अपासीत् । घुमास्थेतीत्त्वं तदपवादं एर्लिङीत्येत्वं गातिस्थेति सिज्लुक् च न, पारूपस्य लाक्षणिकत्वात् । २० ॥ ष्टै वेष्टने । स्तायति । २१ ॥ ष्णै वेष्टने । शोभायां चेत्येके । शौच इत्यन्ये । स्नायति । २२ ॥ दैप् शोधने । दायति । अघुत्वादेत्वसिज्लुकौ न । दायात् । अदासीत् । २३ ॥ पा पाने । पाघ्राध्मेति पिबादेशः । तस्यादन्तत्वान्नोपधागुणः । पिबति । पेयात् । अपात् । २४ ॥ घ्रा गन्धोपादाने । जिघ्रति । घ्रायात्, घ्रेयात् । अघ्रासीत्, अघ्रात् । २५ ॥ ध्मा शब्दाग्निसंयोगयोः । धमति । २६ ॥ ष्ठा गतिनिवृत्तौ । तिष्ठति । स्थादिष्वभ्यासेनेति षत्वम् । अधितष्ठौ । उपसर्गादिति षत्वम् । अधिष्ठाता । स्थेयात् । २७ ॥ म्ना अभ्यासे । मनति । २८ ॥ दाण् दाने । प्रणियच्छति । देयात् । अदात् । २९ ॥ ह्वृ कौटिल्ये । ह्वरति ॥ ( ३१७२ ) (सू) ऋतश्च संयोगादेर्गुणः । ७ । ४ । १० । ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि । किदर्थमपीदं परत्वाण्णल्यपि भवति । रपरत्वम् । उपधावृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । ह्वर्ता । ऋद्धनोः स्ये । ह्वरिष्यति ॥ ( ३१७३ ) (सू) गुणोऽर्तिसंयोगाद्योः । ७ । ४ । २९ । अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि

---

'व्यक्षत्रियार्ष-१८०६' इत्यतो लुगनुवर्तते 'गातिस्था-२९७८' इत्यतः सिचः परस्मैपदेष्विति च तदाह—सिचो लुग्वेत्यादि ॥ परस्मैपदे किम् । व्यत्यघ्रास्त ॥ अधुरिति । 'आतः २९८२' इति झेर्जुस् ॥ (३१७०) यमरमनमातां—। इह 'आर्धधातुकस्येड्वलादेः २९३९' इतीडनुवर्तते । 'अञ्जेः सिचि ३३७६' इत्यतः सिज्ग्रहणं, 'स्तुसुधूञ्भ्यः—३१७८' इत्यतः परस्मैपदग्रहणं च तदाह—एभ्यः सिच इडित्यादि । अयंसीत् । अयंसिष्टाम् । व्यरंसीत् । व्यरंसिष्टाम् । अनंसीत् । अनंसिष्टाम् । परस्मैपदेषु किम्, उदायंस्त भारम् । अरंस्त । अरंसाताम् ॥ (३१७१) वाऽन्यस्य—। अन्यस्य किम्, स्थेयात् । द्यै न्यक्करणे । द्यायति । दद्यौ । अद्यासीत् ॥ घुमास्थेत्यत्रेति । व्याख्यानात्तन्त्रान्तरे जहातिस्यतीनामिति श्यना निर्देशाच्चेति भावः ॥ विभाषा घ्रेति । श्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः । एवं शाच्छासेति लुग्विधावपि स्यतेरेव ग्रहणमिति बोध्यम् । तेनास्य धातोः 'अर्तिह्री-३४०५' इति पुगेव । सापयति ॥ पै ओवै । पायति । वायति । शुष्यतीत्यर्थः । 'ओदितश्च ४०३०' इति निष्ठानत्वम् । वानम् । 'शुष्के वानमुभे त्रिषु' इत्यमरः ॥ अदन्तत्वादिति । केचित्तु—अङ्गवृत्तपरिभाषयाऽपि गुणाभावं समर्थयन्ति ॥ घ्रा गन्धोपादाने । गन्धोपादानं गन्धग्रहणम् । नन्वेवं कर्मणो धात्वर्थेनोपसंग्रहादकर्मकत्वेन 'जिघ्रति कुसुमम्' इत्यादिप्रयोगो न सिध्येदिति चेत् । अत्राहुः—यद्धात्वर्थेन कर्तृनिष्ठकर्मण उपसंग्रहस्तस्यैव धातोरकर्मकत्वं नान्यस्य । भवति हि जीवति नृत्यतीत्यादेरकर्मकत्वम् । तदर्थोपसंगृहीतकर्मणः कर्तृनिष्ठत्वात् । घ्राधातोः कर्मणस्त्वतथात्वान्नाकर्मकतेति ॥ ध्मा शब्दाग्निसंयोगयोः । शब्दशब्देन तदनुकूलो वायुरिह गृह्यते । तेन शङ्खं धमतीतिवत् मृदङ्गं धमतीति प्रयोगो नेत्याहुः । अग्निसंयोगे सुवर्णं धमति । अग्निना संयुनक्तीत्यर्थः ॥ स्थेयादिति । 'एर्लिङि ३१७६' इति नित्यमेत्वम् । लुङि अस्थात् ॥ म्ना अभ्यासे । मनति विद्याम् । अभ्यसतीत्यर्थः । मम्नौ । अम्नासीत् ॥ अदादिति । 'गातिस्था-२९७८' इति सिचो लुक् ॥ (३१७२) ऋतश्च—। संयोगादेः किम्, चक्रतुः । चक्रुः । तपरकरणं स्पष्टार्थम् । स्तॄञ् इत्यादेर्लिटि तस्तरतुरित्यादौ 'ऋच्छत्यॄताम् ३१७६' इति गुणस्य जायमानत्वात्, चकारो मन्दप्रयोजनः ॥ 'दयतेर्दिगि लिटि ३१८१' इत्यतोऽनुवर्तनादाह—गुणः स्याल्लिटीति । अवृद्धिनिमित्ते लिटीति प्राचो व्याख्यानं तु नादर्तव्यम् । न च स्वविषये वृद्धिबाधिकेति फलितार्थकथनपरतया तदुक्तिः संगच्छत इति वाच्यम्, परत्वेन गुणस्यैव न्याय्यत्वादिति भावः ॥ ( ३१७३ ) गुणोऽर्ति—। अर्तीति भ्वादिह्वाद्योर्ग्रहणम् । लुका निर्देशस्तु सौत्रः । ऋग्रहणे कर्तव्ये श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । 'रीङ् ऋतः १७३९' इत्यस्मादृत इति वर्तते, तच्च संयोगादित्वेन विशेष्यते । तदाह—संयोगादेरिति । अर्तिसंयोगाद्योरः इत्यकारे विधेये गुणग्रहणं चिन्त्यप्रयोजनम् । 'अयङ् यि क्ङिति ३५१८' इति सूत्रात् यीत्यनुवर्तते । तच्च लिङो

यादावार्धधातुके लिङि च। ह्वर्यात्। अह्वार्षीत्। अह्वार्ष्टाम्। ३०॥ स्वृ शब्दोपतापयोः। [३०४५]स्वरतिसूतीति वेट्। सस्वरिथ। सस्वर्थ। वमयोस्तु--॥ ( ३१७४ ) (सू) श्र्युकः क्किति। ७। २। ११। श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिण्न स्यात्। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सस्वरिव। सस्वरिम। परत्वा[३०५९]द्दृढ्नोरिति नित्यमिट्। स्वरिष्यति। स्वर्यात्। अस्वारीत्। अस्वारिष्टाम्। अस्वार्षीत्। अस्वार्ष्टाम्। ३१॥ स्मृ चिन्तायाम्। ३२॥ ह्वृ संवरणे। ३३॥ सृ गतौ। क्रादित्वान्नेट्। ससर्थ। ससृव। रिङ्। स्रियात्। असार्षीत्। असार्ष्टाम्॥ (३१७५) (सू) सर्तिशास्त्यर्तिभ्यश्च। ३। १।५६। एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि। इह लुक्शपा शासिना साहचर्यात्सर्त्यर्ती जौहोत्यादिकावेव गृह्येते। तेन भ्वाद्योर्नाङ्। शीघ्रगतौ तु [३१६३]पाघ्राध्मेति शिति धौरादेशः। धावति। ३४॥ ऋ गतिप्रापणयोः। ऋच्छति॥ (३१७६) (सू) ऋच्छत्यॄताम्। ७। ४। ११। तौदादिकऋच्छेर्ऋधातोर्ऋतां च गुणः स्याल्लिटि। णलि प्राग्वदुपधावृद्धिः। आर। आरतुः। आरुः॥ ( ३१७७ ) (सू) इडत्त्यर्तिव्ययतीनाम् ७। २। ६६। अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात्। आरिथ। अर्ता। अरिष्यति। अर्यात्। आर्षीत्। आर्ष्टाम्। ३५॥ गृ घृ सेचने। गरति। जगार। जगर्थ। जग्रिव। रिङ्। ग्रियात्। अगार्षीत्। ३७॥ ध्वृ हूर्छने। ३८॥ स्रु गतौ। सुस्रोथ। सुस्रुव। स्रूयात्। णिश्रीति [३०८७]चङ्। लघूपधगुणादन्तरङ्गत्वादुवङ्। असुस्रुवत्। ३९॥ षु प्रसवैश्वर्ययोः। प्रसवोऽभ्यनुज्ञानम्। सुषोथ, सुषविथ। सुषुविव। सोता॥ ( ३१७८ ) (सू) स्तुसुधूञ्भ्यः परस्मैपदेषु। ७। २। ७२। एभ्यः सिच इट् स्यात्परस्मैपदेषु। असावीत्। पूर्वोत्तराभ्यां ञिद्भ्यां साहचर्यात्सुनोतेरेव ग्रहणमिति पक्षे असौषीत्। ४०॥ श्रु श्रवणे॥ ( ३१७९ ) (सू) श्रुवः शृ च। ३। १। ७४। श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च। शपोऽपवादः। श्नोर्ङित्त्वाद्धातोर्गुणो न। शृणोति। शृणुतः॥ ( ३१८० ) (सू) हुश्नुवोः सार्वधातुके। ६। ४। ८७। जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके। उवङोऽपवादः। शृण्वन्ति। शृणोमि। शृण्वः,

---

विशेषणम्। 'रिङ् शयग्लिङ्क्षु ३१६०' इति सूत्रायग्ग्रहणस्य लिङ्ग्रहणस्य चानुवर्तनादित्यभिप्रेत्याह—**यकि यादाविति**। 'आर्धधातुके' इत्येतत् 'अकृत्सार्वधातुकयोः-३०७१' इत्यनुवृत्तिपर्यालोचनया फलितार्थकथनमिति ज्ञेयम्। संयोगादेरिति किम्, क्रियात्। यादीति किम्, संस्कृषीष्ट। आर्धधातुके किम्, इययात्॥ स्वृ। उपतापो रोगः॥ ( ३१७४ ) **श्र्युकः क्किति**। 'एकाच उपदेशे--३००६' इत्यतः एकाच इत्यनुवर्तते तच्च उको विशेषणमित्याह--**एकाच उगन्तादिति**। श्रितः। श्रितवान्। श्रित्वा। भूतः। भूत्वा। भूतिः। इत्युदाहरणम्। भूष्णुः 'ग्लाजिस्थश्च-४१३९' इति ग्स्नुः। स च गिद्भवति न कित्, स्थास्नुरित्यत्र 'घुमास्था-३२७४' इतीत्त्वप्रसङ्गात्। एकाच इति किम्, जागरितः। जागरितवान्। ऊर्णोतेस्तु नुवद्भावेन ऊर्णुतः। ऊर्णुतवान् इति सिध्यति। उगन्तात्किम्, शयितः। शयितवान्॥ **पुरस्तादित्यादि**। 'आर्धधातुकस्येड्वलादेः २९३९' इत्यादिविधिकाण्डात्प्रागेव, 'नेड्वशि कृति ३९८१' इत्यादिप्रतिषेधकाण्डारम्भसामर्थ्यादित्यर्थः॥ **निषेधे प्राप्ते इति**। स्वृतः। सूतः। धूत इत्यादौ यथेति भावः॥ स्रृ गतौ सरति। सरिष्यति॥(३१७५)**सर्तिशास्त्यर्ति**—। परस्मैपदेष्विति न संबध्यते, पुषादियोगादस्य पृथक्करणात्। 'आङः शासु इच्छायाम्' इत्यस्यात्र न ग्रहणं, किंतु सर्त्यर्तिभ्यां साहचर्यात्परस्मैपदिनः शासेरेवेत्याहुः। असरत्। अशिषत्। आरत्॥ ( ३१७६ ) **प्राग्वदिति**। किदर्थमारब्धोऽपि गुणः परत्वाण्णल्यपि भवति, रपरत्वम्। तत उपधावृद्धिरित्यर्थः॥ ( ३१७७ ) **नित्यमिट् स्यादिति**। 'विभाषा सृजिदृशोः ३२०७' इत्यतो विभाषा नानुवर्तत इति भावः। **ध्वृ हूर्छने**। हूर्छनं कौटिल्यम्॥ **स्रु गतौ**। यद्यपि सामान्येन गतिरुक्ता, तथापि द्रवद्द्रव्यस्यैव गतिरिह ज्ञेया। स्रवति घृतम्॥ **प्रसवोऽभ्यनुज्ञानमिति**। 'देवस्य त्वा सवितुः प्रसवे' इत्यादावभ्यनुज्ञानार्थदर्शनात्॥ ( ३१७८ ) **स्तुसुधूञ्भ्यः**—। परस्मैपदेषु किम्, अस्तोष्ट। अधोष्ट॥ ( ३१७९ ) **श्रुवः शृ च**। यद्ययं श्रुधातुः स्वादौ पठ्येत, तर्हि चकारो न कर्तव्य इति लाघवमित्याहुः ( ३१८० ) **हुश्नुवोः**—। जुह्वति। सुन्वन्ति। हुश्नुवोः किम्, योयुवति। नोनुवति। सार्वधातुके किम्, जुहुवतुः। जुहुवुः। असंयोगपूर्वेति किम्, अक्ष्णुवन्ति। असंयोगपूर्वग्रहणमोर्विशेषणं न तु श्नुप्रत्ययस्य, तेन आप्नुवन्ति इत्यत्रापि यण्निषेधः सिध्यति। प्रत्ययविशेषणत्वे तु अक्ष्णुवन्तीत्यत्रैव निषेधः स्यादिति भावः। स्यादेतत्, यङ्लुकश्छान्दसत्वाद्योयुवतीत्यादौ प्रत्ययस्य 'छन्दस्युभयथा ५२७०' इत्यनेनार्धधातुकत्वाश्रयणे यणादेशो न भवेदिति किमनेन हुश्नुग्रहणेन। न च युवन्ति नुवन्ति इत्यत्रातिप्रसङ्गवारणार्थं तद्ग्रहणमिति वाच्यम्, अनेकाच इत्यस्यानुवर्तनेनोक्तदोषाभावादिति चेत्। अत्राहुः—'दाधर्तिदर्धर्तिदर्धर्षिबोभूतु-५४५६' इति च्छन्दसि निपातनाद्भाषायां यङ्लुकि बोभवीतीत्यादौ 'भूसुवोः-२९७९' इति गुणनिषेधो न प्रवर्तते। अत एव भाषायामपि यङ्लुक् सिद्ध इति वक्ष्यमाणत्वात् योयुवतीत्यादावतिप्रसङ्गवारणाय हुश्नुग्रहणं कर्तव्यमेवेति। हुश्नुग्रहणाज्ज्ञापकात् भाषायामपि क्वचिद्यङ्लुग्भवतीति भाष्यकाराः। एवं च सार्वधातुकपरयोर्हुश्नुवोरनेकाच्त्वाव्यभिचारादनेकाच इत्यस्यानुवृत्तिरिह किमर्थेत्याशङ्काया निरवकाश एव। तदनुवृत्त्यभावे हुश्नुग्रहणस्य ज्ञाप-

---

१ 'ऋ' इत्यनेन पूर्वसाहचर्यादश्रूयमाणशप्को जौहोत्यादिर्गृह्यते, परसाहचर्याच्छ्रूयमाणशब् भौवादिकश्च गृह्यते इति बोध्यम्॥

शृणुवः । शृण्मः, शृणुमः । शुश्रोथ । शुश्रुव । शृणु । शृणवानि । शृणुयात् । श्रूयात् । अश्रौषीत् । ४१ ॥ ध्रु स्थैर्ये । ध्रवति । अयं कुटादौ गत्यर्थोऽपि । दु द्रु गतौ । दुदोथ, दुदविथ । दुद्रोथ । दुद्रुव । णिश्रीति [३५६७]चङ् । अदुद्रुवत् ।४३॥ जि ज्रि अभिभवे । अभिभवो न्यूनीकरणं न्यूनीभवनं च । आद्ये सकर्मकः, शत्रून् जयति । द्वितीये त्वकर्मकः । अध्ययनात्पराजयते । अध्येतुं ग्लायतीत्यर्थः । [३५६४]विपराभ्यां जेरिति तङ् । [६]पराजेरसोढ इत्यपादानत्वम् । ४५ ॥

अथ ङीङन्ता ङितः ॥ ष्मिङ् ईषद्धसने । स्मयते । सिष्मिये । सिष्मियिढ्वे, सिष्मियिध्वे । १ ॥ गुङ् अव्यक्ते शब्दे । गवते । जुगुवे । २ ॥ गाङ् गतौ । गाते । गाते । गाते । इट एत्वे कृते वृद्धिः । गै । लङ इटि-अगे । गेत । गेयाताम् । गेरन् । गासीष्ट । गाङ्[३२७३]कुटादिसूत्रे इङादेशस्यैव गाङो ग्रहणं न त्वस्य । तेनाङित्त्वाद् [३२७४]घुमास्थेतीत्त्वं न । अगास्त । आदादिकोऽयमिति हरदत्तादयः । फले तु न भेदः । ३ ॥ कुङ् घुङ् उङ् ङुङ् शब्दे । अन्ये तु उङ् कुङ् खुङ् गुङ् घुङ् ङुङ् इत्याहुः । कवते । चुकुवे । घवते । अवते । ऊवे । [३०६]वार्णादाङ्गं बलीय इत्युवङ् । ततः सवर्णदीर्घः । ओता । ओष्यते । ओषीष्ट । औष्ट । ङवते । जुङुवे । ङोता । ७ ॥ च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ । ११ ॥ क्लुङ् इत्येके । १२ ॥ रुङ् गतिरेषणयोः । रेषणं हिंसा । रुरुवे । रवितासे । १३ ॥ धृङ् अवध्वंसने । धरते । दध्रे । १४ ॥ मेङ् प्रणिदाने । प्रणिदानं विनिमयः प्रत्यर्पणं च । प्रणिमयते । नेर्गदेति [३०५२]णत्वम् । तत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात् । १५ ॥ देङ् रक्षणे । दयते ॥ ( ३१८१ ) सू० दयतेर्दिगि लिटि । ७ । ४ । ९ । दिग्यादेशेन द्वित्वबाधनमिष्यत इति वृत्तिः । दिग्ये ॥ ( ३१८२ ) सू० स्थाघ्वोरिच्च । १ । २ । १७ । अनयोरिदादेशः स्यात् सिच्च कित्स्यात् । अदित । अदिथाः । अदिषि । १६ ॥ श्यैङ् गतौ । श्यायते । शश्ये । १७ ॥ प्यैङ् वृद्धौ । प्यायते । पप्ये । प्याता । १८ ॥ त्रैङ् पालने । त्रायते । तत्रे । १९॥ पूङ् पवने । पवते । पुपुवे । पविता । २० ॥ मूङ् बन्धने । मवते । २१ ॥ डीङ् विहायसा गतौ । डयते । डिड्ये । डयिता । २२ ॥ तॄ प्लवनतरणयोः ॥

---

क्त्वासंभवादिति दिक् ॥ दुदविथेति । भारद्वाजनियमादिट् ॥ दुद्रोथ दुद्रुवेति । क्रादित्वाल्लिटि नेट् ॥ गाङ् गतौ ॥ गाते गाते गात इति । पूर्वं शपा सह सवर्णदीर्घे कृते 'आतो ङितः २९९४' इति न प्रवर्तते 'आत्मनेपदेष्वनतः ३०२०' इति तु प्रवर्तते इति ताताञ्झेषु तुल्यं रूपमित्याहुः ॥ गै । गावहे । गामहे । जगे । जगाते । गाताम् । गाताम् । गाताम् । गास्व । उत्तमे तु-गै । गावहै । गामहै । अगात । अगाताम् ॥ न त्वस्येति । गाते इत्यादौ तङ प्रवर्त्य ङकारस्य चरितार्थत्वात् । आदेशङकारस्तु न चरितार्थः, स्थानिवद्भावेन ङित्त्वादेव तङः सिद्धत्वादिति भावः॥ आदादिकोऽयमिति । एवं च गाते गाथे इत्यादावाताभाथामोः परतः 'आतो ङितः २९९४' इत्यस्य प्रवृत्तिशङ्कैव नास्तीति भावः॥ फले तु न भेद इति । न च गाते गाथे इत्यादौ शपा सह सवर्णदीर्घे कृतेऽपि पूर्वस्मात्परस्य विधौ कर्तव्ये स्थानिवत्त्वादतः परत्वेन ङितामाकारस्य इय् स्यादिति शङ्क्यम्, पञ्चमीसमासपक्षस्यानित्यत्वाभ्युपगमादिति भावः ॥ जुङुवे इति । 'कुहोश्चुः ३००५' इति ङस्य ञः ॥ क्लुङ् इति । अस्मात् पचाद्यचि विक्लवः वबयोरभेदाद्विक्लब इत्यन्ये ॥ मेङ् । प्रणिमयत इति । ननु 'नेर्गद-३०५२' इति कथमिह णत्वं स्यात् । शिद्विषये आत्त्वाभावेन मारूपाभावादशिद्विषये कृतात्त्वेऽप्यस्मिन् णत्वं दुर्लभमेव । प्रतिपदोक्तस्यैव माधातोर्ग्रहणौचित्यान्न त्वस्य लाक्षणिकस्य । 'गामादाग्रहणेष्वविशेषः' इत्यभ्युपगमे तु मीनातिमिनोत्योरात्त्वे कृते प्रनिमाता प्रनिमास्यतीत्यादावतिप्रसङ्गः स्यादित्यत आह—तत्रेति ॥ इष्टत्वादिति । अयं भावः-घुसंज्ञासूत्रे प्रणिदयते प्रणिधयतीत्यादौ णत्वसिद्धये भाष्यकारैरित्थं सिद्धान्तितम् । 'नेर्गदनद-३०५२' इति णत्वविधौ 'घुमा-' इत्यस्य स्थाने 'घुप्रकृतिमाङ्' इति पठनीयम् । घुश्च प्रकृतिश्च माङ् चेति द्वन्द्वः । प्रकृतिश्च कस्येत्याकाङ्क्षायां संनिधानात्पूर्वोत्तरयोरेव । तेन न क्वाप्यव्याप्तिः । नापि मा माने इत्यत्र मीनातिमिनोत्योश्चातिव्याप्तिः, माङ् इति ङकारानुबन्धकस्यैव पठितत्वादिति ॥ ( ३१८१ ) दिग्यादेशेनेति । दयतेर्लिटि परे द्वित्वं प्राप्तं दिग्यादेशश्च तत्र विशेषविहितेन दिग्यादेशेन द्वित्वशास्त्रस्य बाधः । न चैवं 'प्यायः पी ४०८८' 'चक्षिङः ख्याञ् ३२४३' इति पीख्याञोरपि विशेषविहितत्वात्ताभ्यां द्वित्वबाधः स्यादिति वाच्यम्, विषयसप्तमीमाश्रित्य लिड्उत्पत्तेः प्रागेव तयोः प्रवृत्तत्वात् । दिग्यादेशविधौ तु लिटीति परसप्तम्येव न तु विषयसप्तमी लक्ष्यानुरोधात् । तदेतत्सूचयति—इष्यत इति । दयतेर्लिटि द्वित्वे प्राप्ते तद्बाधित्वा परत्वाद्दिग्यादेश इति तु नोक्तम् । परस्परलब्धावकाशयोरेव परस्य बलीयस्त्वात् । दिग्यादेशं विना द्वित्वस्य सावकाशत्वेऽपि द्वित्वं विना दिग्यादेशस्य तदभावादिति दिक् ॥ ( ३१८२ ) स्थाघ्वोरिच्च । इह लिङ्सिचौ-३३४८' इति सूत्रादात्मनेपदेष्विति नानुवर्तितम् । परस्मैपदेषु 'गातिस्था-३९७८' इति लुकः प्रवृत्तेर्व्यावर्त्यालाभात् । अस्थित । अस्थिषाताम् । भाव्यमानोऽण् क्वचित्सवर्णान् गृह्णातीत्यत्रेदमपि तपरकरणं लिङ्गमित्याहुः । अत्र वदन्ति । विधीयमानस्य सवर्णग्राहकत्वेऽपि तपरकरणमिह व्यर्थम् । न चात्र दीर्घः स्यादिति वाच्यम्, 'घुमास्था-३२७४' इत्यनेनैव तत्सिद्धौ विधिवैयर्थ्यापत्तेः । न चैवमपि प्लुतः स्यादिति वाच्यम्, प्लुताऽप्लुतप्रसङ्गे 'प्लुतश्च विषये स्मृतः' इति सिद्धान्तादिति ॥ डीङ् । विहायसा आकाशेन । विहायसामिति पाठस्त्वनाकर इत्याहुः ॥

---

१ 'वर्णाश्रयविधावन्तादिवद्भावो न' इति परादिवद्भावस्य प्रतिषेधादत्त्वस्यानतिदेशादिति शेषः ॥

( ३१८३ ) सू ऋत इद्धातोः । ७ । १ । १०० । ऋदन्तस्य धातोरङ्गस्य इत्स्यात् ॥ ( ३१८४ ) वा इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन ॥ तरति । ऋच्छत्यृतामिति गुणः । तॄफलेत्येत्वम् । तेरतुः । तेरुः ॥ ( ३१८५ ) सू वॄतो वा ।७।२।३८। वृङ्वॄञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । तरीता, तरिता । अलिटीति किम् । तेरिथ । हलि चेति दीर्घः । तीर्यात् ॥ ( ३१८६ ) सू सिचि च परस्मैपदेषु । ७ । २ । ४० । अत्र वॄत इटो दीर्घो न । अतारिष्टाम् । २३ ॥

अथाष्टावनुदात्तेतः ॥ गुप गोपने ॥ तिज निशाने ॥ मान पूजायाम् ॥ बध बन्धने ॥ ( ३१८७ ) सू गुप्तिज्किद्भ्यः सन् ।३ ।१।५।( ३१८८ ) सू मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य । ३।१।६ । सूत्रद्वयोक्तेभ्यः सन् स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च ॥ ( ३१८९ ) वा गुपेर्निन्दायाम् ॥ ( ३१९० ) वा तिजेः क्षमायाम् ॥ ( ३१९१ ) वा कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च ॥ (३१९२) वा मानेर्जिज्ञासायाम् ॥(३१९३) वा बधेश्चित्तविकारे ॥(३१९४) वा दानेरार्जवे ॥ (३१९५) वा शानेर्निशाने ॥ सनाद्यन्ता इति धातुत्वम् ॥ (३१९६) सू सन्यङोः ।६।१।९। सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । अभ्यासकार्यम् । गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवानुदात्तेतो दानशानौ च स्वरितेतौ । एते नित्यं सन्नन्ताः । अर्थान्तरे त्वननुबन्धकाश्चुरादयः । अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्तङ् । धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम् । तेनेड्गुणौ न । जुगुप्सते । जुगुप्सांचक्रे । तितिक्षते । मीमांसते । भष्भावः । चर्त्वम् । बीभत्सते । ४ ॥ रभ राभस्ये । आरभते । आरेभे । रब्धा । रप्स्यते । ५ ॥ डुलभष् प्राप्तौ । लभते । ६ ॥ ष्वञ्ज परिष्वङ्गे ॥ ( ३१९७ ) सू दंशसञ्जस्वञ्जां शपि ।६।४।२५। (३१९८) सू रञ्जेश्च । ६ । ४ । २६ । एषां शपि नलोपः स्वजते । परिष्वजते ॥ ( ३१९९ ) श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा इति व्याकरणान्तरम् । देभतुः । सस्वजे इति भाष्योदाहरणादेकदेशानुमत्या इहाप्याश्रीयते ॥ सदेः परस्य लिटीति सूत्रे (३२००) वा स्वञ्जेरुपसंख्यानम् ॥ अतोऽभ्यासात्परस्य षत्वं न । परिषस्वजे । परिषस्वञ्जे । सस्वजिषे । सस्वञ्जिषे । स्वङ्क्ता । स्वङ्क्ष्यते । स्वजेत । स्वङ्क्षीष्ट । प्रत्यष्वङ्क्त । प्राक्सितादिति षत्वम् । परिनिविभ्यस्तु सिवादीनां वेति विकल्पः । एतदर्थमेवोपसर्गात्सुनोतीत्येव सिद्धे स्तुस्वञ्ज्योः परिनिविभ्य इत्यत्र पुनरुपादानम् । पर्यष्वङ्क्त, पर्यस्वङ्क्त । ७ ॥ हद पुरीषोत्सर्गे । हदते । जहदे । हत्ता । हत्स्यते । हदेत । हत्सीष्ट । अहत्त । ८ ॥

---

( ३१८३ ) ऋत इद्धातोः । किरति । गिरति । कीर्णः । गीर्णः । स्तीर्णः । धातोः किम् , मातॄणाम् ॥ ( ३१८४ ) इत्वोत्वाभ्यामिति । परत्वाद् गुणवृद्धी भवत इति वक्तव्ये किमिदं वार्तिकमिति चेत् । अत्राहुः–'परादप्यन्तरङ्गं प्रबलम्' इतीत्त्वे प्राप्ते वार्तिकमिदमारब्धमिति ॥ ( ३१८५ ) वॄतो वा । इह ' आर्धधातुकस्येड्–२९३९ ' इत्यत इडित्यनुवर्तते, ' ग्रहोऽलिटि–३३९५ ' इत्यतोऽलिटि दीर्घ इति च तदाह–इटो दीर्घो वेत्यादि ॥ ( ३१८६ ) सिचि च–। 'न लिङि ३३४९ ' इत्यतो नेत्यनुवर्तनादाह—इटो दीर्घो नेति ॥ ( ३१८८ ) मान्बध—। आभ्यासस्येति च्छेदः । अभ्यासस्य विकार आभ्यासः । स चात्र 'सन्यतः ३०९३ ' इतीत्त्वमेव । यदि तु ह्रस्व इत्येव गृह्येत, तर्हि तद्धितनिर्देशो व्यर्थः स्यात्तदेतदाह–अभ्यासस्येकारस्येति । ( ३१८९–३१९५ ) वृत्तिकाराद्युपनिबद्धार्थान्दर्शयति–गुपेर्निन्दायामित्यादिना ॥ ( ३१९६ ) सन्यङोः । सप्तमीमाश्रित्य सनि यङि च परे इति व्याख्यायां प्रतीषिषति अटाटयते इत्यादि न सिध्येत् ॥ सन्यङोः प्रकृतिभागस्यैव द्वित्वप्रसक्तेरत आह—सन्नन्तस्येति । ननु सप्तमीपक्षेऽपि सन्यङोरेव द्वित्वं स्यान्न तु प्रकृतिभागस्य । शपोऽकारेणैव जुगुप्सते तितिक्षते इत्यादिरूपासिद्धेस्तयोरकारोच्चारणस्य 'अजादेर्द्वितीयस्य २९३० ' इति द्वित्वार्थत्वात् । यद्यपि निमित्तस्य कार्यित्वस्वीकारे आट आटतुरित्यादौ लिटि परतः पूर्वभागमात्रस्य द्वित्वं न सिध्येत्तथाप्यकारोच्चारणसामर्थ्यात् सन्यङोः कार्यित्वमभ्युपगन्तुं शक्यमिति चेत् । मैवम्–अकारफलानां बहूनां सत्त्वात् । तथाहि दित्स्यं धित्स्यमित्यत्र 'अचो यत् ३७८७ ' इति यति कृते 'यतोऽनावः ५५७६ ' इत्याद्युदात्तः सिध्यति । अकाराभावे तु 'ऋहलोः–३८२४ ' इति ण्यतीष्टस्वरो न सिध्येत । किञ्च, पिपाठिषि ब्राह्मणकुलानीत्यत्राल्लोपस्य स्थानिवत्त्वात् झलन्तलक्षणो नुम् न भवति, अकाराभावे तु स्यादेव नुम् । अपि च पापचक इत्यादावल्लोपस्य स्थानिवत्त्वात् 'अत उपधायाः ३०४९ ' इति वृद्धिर्न प्रवर्तते । अपि च 'यस्य हलः ३४९७ ' इत्यत्र यस्येति संघातग्रहणमहर्यादित्यादौ यलोपव्यावृत्त्यर्थमिति सर्वसंमतम् । तथा च अपापाचिष्टेत्यादौ यलोपोऽप्यकारफलमिति 'सन्यङोः ' इति षष्ठ्येव युक्ता । एवं हि यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वं सिध्यति । परसप्तम्यां तु द्वित्वस्याङ्गकार्यत्वात् 'न लुमता–२६८' इति निषेधः प्रवर्तेतेति दिक् ॥ दानशानौ चेति । आर्जवनिशानार्थाविति भावः ॥ अर्थान्तरे त्विति । धातुपाठोपात्ते गोपनादिरूपेऽर्थे इत्यर्थः ॥ अननुबन्धका इति । सानुबन्धकत्वे तु केवलेऽचरितार्थत्वात् अनुबन्धस्य सन्नन्तादिवाकर्तृगफलात् ण्यन्तादपि तङ् स्यादिति भावः । एवं चानुपूर्वीमात्रसाम्येऽपि भ्वादयश्चुरादिभ्यो भिन्ना एवेति फलितम् ॥ इड्गुणौ नेति । यद्यपि ' हलन्ताच्च ३४७० ' इति सनः कित्त्वेनापि गुणाभावः सुसाधस्तथापीडभावार्थमुक्तहेतुरेवाश्रयणीय इति किं हेत्वन्तराश्रयणेनेति भावः । केचित्तु–अर्थवद्ग्रहणपरिभाषया इच्छासन एव 'हलन्ताच्च ३४७०' इति सूत्रे ग्रहणमिति नास्य स्वार्थसनः कित्त्वमित्याहुः ॥ रभ राभस्य इति।

अथ परस्मैपदिनः॥ ञिष्विदा अव्यक्ते शब्दे । १ ॥ स्कन्दिर् गतिशोषणयोः । चस्कन्दिथ, चस्कन्थ । स्कन्ता । स्कन्स्यति । नलोपः । स्कद्यात् । इरित्वादङ् वा । अस्कदत्, अस्कान्त्सीत् । अस्कान्ताम् । अस्कान्त्सुः ॥ ( ३२०१ ) **वेः स्कन्देरनिष्ठायाम्** । ८ । ३ । ७३ । षत्वं वा स्यात् । कृत्यैवेदम् । अनिष्ठायामिति पर्युदासात् । विष्कन्त्ता । विस्कन्त्ता । निष्ठायां तु-विस्कन्नः॥ (३२०२) **परेश्च** ।८।३।७४। अस्मात्परस्य स्कन्देः सस्य षो वा । योगविभागादनिष्ठायामिति न संबध्यते । परिष्कन्दति, परिस्कन्दति । परिष्कण्णः, परिस्कन्नः । षत्वपक्षे णत्वम् । न च पदद्वयाश्रयतया बहिरङ्गत्वात्षत्वस्यासिद्धत्वम् । धातूपसर्गयोः कार्यमन्तरङ्गमित्यभ्युपगमात् । पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेनेति भाष्यम् । पूर्वं साधनेनेति मतान्तरे तु न णत्वम्[1] । २ ॥ यभ मैथुने । येभिथ, ययब्ध । यब्धा । यप्स्यति । अयाप्सीत् । ३ ॥ णम प्रह्वत्वे शब्दे च । नेमिथ, ननन्थ । नन्ता । अनंसीत् । अनंसिष्टाम्। ४ ॥ गम्लृ सृप्लृ गतौ ॥ ( ३२०३ ) **इषुगमियमां छः**[2] । ७ । ३ । ७७ । एषां छः स्याच्छिति परे । गच्छति । जगाम । जग्मतुः । जग्मुः । जगमिथ, जगन्थ । गन्ता ( ३२०४ ) **गमेरिट् परस्मैपदेषु**[3] । ७ । २ । ५८ । गमेः परस्य सकारादेरिट् स्यात् । गमिष्यति । लृदित्वादङ् । अनङीति पर्युदासान्नोपधालोपः । अगमत् । सर्पति । ससर्प ॥ ( ३२०५ ) **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** । ६ । १ । ५९ । उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति परे । स्रप्ता, सर्प्ता । स्रप्स्यति, सर्प्स्यति । असृपत् ।६॥ यम उपरमे । यच्छति । येमिथ, ययन्थ । यन्ता । अयंसीत् । अयंसिष्टाम् । ७ ॥ तप सन्तापे । तप्ता । अताप्सीत् ॥ ( ३२०६ ) **निसस्तपतावनासेवने** । ८ । ३ । १०२ । षः स्यात् । आसेवनं पौनःपुन्यं ततोऽन्यस्मिन्विषये । निष्टपति । ८ ॥ त्यज हानौ । तत्यजिथ, तत्यक्थ । त्यक्ता । अत्याक्षीत् । ९ ॥ षञ्ज सङ्गे । दंशसञ्जस्वञ्जां शपीति नलोपः । सजति । सङ्क्ता ।१०॥ दृशिर् प्रेक्षणे । पश्यति ॥ ( ३२०७ ) **विभाषा सृजिदृशोः** । ७ । २ । ६५ । आभ्यां थल इड्वा ॥ ( ३२०८ ) **सृजिदृशोर्झल्यमकिति** । ६ । १ । ५८ । अनयोरमागमः स्याज्झलादावकिति । ददृष्ठ, ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरित्वादङ् वा ॥ (३२०९) **ऋदृशोऽङि गुणः** । ७ । ४ । १६ । ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । अदर्शत् । अङभावे-॥ ( ३२१० ) **न दृशः** । ३ । १ । ४७ । दृशश्च्लेः क्सो न । अद्राक्षीत् । ११ ॥ दंश दशने । दशनं दंष्ट्राव्यापारः, पृषोदरादित्वादनुनासिकलोपः । अत एव निपातनादित्येके । तेषामप्यत्रैव तात्पर्यम् , अर्थनिर्देशस्याधुनिकत्वात् । दंशसञ्जेति नलोपः । दशति । ददंशिथ, ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात् । अदाङ्क्षीत् । १२ ॥ कृष विलेखने । विलेखनमाकर्षणम् । क्रष्टा, कर्ष्टा । क्रक्ष्यति, कर्क्ष्यति ॥ (३२११) **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः** ॥ अक्राक्षीत् । अक्राष्टाम् । अकार्क्षीत् । अकार्ष्टाम् । अकार्क्षुः । पक्षे क्सः । अकृक्षत् । अकृक्षताम् । अकृक्षन् । १३ ॥ दह भस्मीकरणे । देहिथ, ददग्ध । दग्धा । धक्ष्यति । अधाक्षीत् । अदाग्धाम् ।

---

राभस्यमुपक्रमः । लिटि रेभे । रेभाते । लुङि अरब्ध । अरप्साताम् ॥ **डुलभष्** । 'ड्वितः क्त्रिः ५०६१' लब्ध्रिमम् । 'षिद्भिदादिभ्यः-५०८६' इत्यङ् । लभा । लिटि लेभे । लुङि अलब्ध ॥ ( ३२०१ ) **वेः स्कन्देरनिष्ठायाम्** । 'सिवादीनाम्-३१५२' इत्यतो वेत्यनुवर्तते । अषोपदेशत्वादप्राप्ते विभाषेयम् ॥ माधवादिग्रन्थानुरोधेनाह—**कृत्यैवेदमिति** । प्राचा तु विष्कन्दतीत्युदाहृतं तत्र मूलं मृग्यमिति भावः ॥ ( ३२०२ ) **न संबध्यत इति** । अत एव तिङन्तेऽपि षत्वमुदाहरति-**परिष्कन्दतीति** ॥ **णम प्रह्वत्वे** । केचिदसुदितं पठन्ति, तत्प्रामादिकमित्याहुः ॥ **जग्मतुरिति** । 'गमहन-३१५६' इत्युपधालोपः ॥ ( ३२०५ ) **अनुदात्तस्य**—। 'आदेच उपदेशेऽशिति ३१६३' इत्यत उपदेशे इत्यनुवर्तते । उपदेशे किम् , स्रप्तुम् । तुमुनि उदात्तः । ऋदुपधस्य किम्, कर्ता । झलीति किम् , ससर्प । अकितीति किम् , सृप्तः ॥ **असृपदिति** । लृदित्त्वादङ् । 'स्पृशमृश-३२११' इति सिज्विकल्पवार्तिके सृपं प्रक्षिप्य अस्राप्सीदिति केचिदुदाहरन्ति, तत्प्रामादिकमित्याहुः ॥ **अयंसीदिति** । 'यमरम-३१७०' इतीट्सकौ ॥ ( ३२०६ ) **निसस्तपता**—। मूर्धन्य इत्यनुवर्तमाने फलितमाह—**षः स्यादिति** । आसेवने तु निस्तपति । पुनःपुनस्तपतीत्यर्थः ॥ (३२०७) **विभाषा सृजिदृशोः** । क्रादिनियमान्नित्ये प्राप्ते विभाषेयम् ॥ ( ३२०८ ) **सृजिदृशोः**—। झलि किम् , ससर्ज । ददर्श । अकितीति किम् , सृष्टः । सृष्टवान् । दृष्टः । दृष्टवान् ॥ **अदाङ्क्षीदिति** । 'वदव्रज-२०३३' इति वृद्धिः । अदाङ्ष्टाम् । अदाङ्क्षुः । क्रष्टा, कर्ष्टेति । 'अनुदात्तस्य च-३२०५' इत्यम् वा ॥ **धक्ष्यतीति** । घत्वषत्वभष्भावाः ॥ **अधाक्षीदिति** । 'अस्तिसिचः-

---

१ **मतान्तरे त्विति** । तुनाऽरुचिर्बोधिता, तद्बीजं तु—लक्ष्यानुरोधेनान्यतरपक्षानुसरणस्यैवावश्यकतया प्रकृते उभयानुसरणवैयर्थ्यमिति । नन्वनयोर्मतयोः कस्याश्रयणमिहोचितमितिचेत्-'अभिषिषेणयिषति, अभिषुणु' इति भाष्यप्रयोगदर्शनेनाद्यपक्ष एवेह ग्रहीतुमुचित इति गृहाण ॥ २ **इषुगमीति** । अत्र 'इषु' इत्युकारानुबन्धान्तः पाठोऽनार्षः । अत एव दिवादिक्र्याद्योरपि छत्ववारणाय 'इषेस्छत्वमहालि' इति वार्त्तिकस्य 'क्सस्याचि' इत्यतो मण्डूकप्लुत्याऽचीत्यनुवर्त्य 'अज्रूपे शिति' इतीत्यर्थाश्रयणेन प्रत्याख्यानं संगच्छते । इकः कित्त्वेऽपि सौत्रत्वान्न गमीत्यत्रोपधालोपः ॥ ३ **परस्मैपदेष्विति** । आत्मनेपदाभावोपलक्षणम् । अत एव सञ्जिगमिषितेत्यत्र तृजन्तेऽपीट् सिध्यति ॥

अधाक्षुः । १४ ॥ मिह सेचने । मिमेह । मिमेहिथ । मेढा । मेक्ष्यति । अमिक्षत् । १५ ॥ कित निवासे रोगापनयने च । चिकित्सति । संशये प्रायेण विपूर्वः । विचिकित्सा तु संशय इत्यमरः । अस्यानुदात्तत्त्वमाश्रित्य चिकित्सते इत्यादि कश्चिदुदाजहार । निवासे तु केतयति । १६ ॥

दान खण्डने । शान तेजने ॥ इतो वहत्यन्ताः स्वरितेतः ॥ दीदांसति, दीदांसते । शीशांसति, शीशांसते । अर्थविशेषे सन् । अन्यत्र दानयति । शानयति । २ ॥ डुपचष् पाके । पचति, पचते । पेचिथ, पपक्थ । पेचे । पक्ता । पक्षीष्ट । ३ ॥ षच समवाये । सचति, सचते । ४ ॥ भज सेवायाम् । बभाज । भेजतुः । भेजुः । भेजिथ, बभक्थ । भक्ता । भक्ष्यति, भक्ष्यते । अभाक्षीत्, अभक्त । ५ ॥ रञ्ज रागे । नलोपः । रजति, रजते । अराङ्क्षीत्, अरंक्त । ६ ॥ शप आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । शशाप । शेपे । अशाप्सीत्, अशप्त । ७ ॥ त्विष दीप्तौ । त्वेषति, त्वेषते । तित्विषे । त्वेक्ष्यति । त्विक्षीष्ट । अत्विक्षत् । अत्विक्षाताम् । ८ ॥ यज देवपूजासङ्गतिकरणदानेषु । यजति, यजते ॥ ( ३२१२ ) लिट्यभ्यासस्योभयेषाम् । ६ । १ । १७ । वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि । इयाज ॥ ( ३२१३ ) वचिस्वपियजादीनां किति । ६ । १ । १५ । वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात्किति । पुनः प्रसंगविज्ञानाद् द्वित्वम्[1] । ईजतुः । ईजुः । इयजिथ, इयष्ठ । ईजे । यष्टा । यक्ष्यति । इज्यात्, यक्षीष्ट । अयाक्षीत्, अयष्ट । ९ ॥ डुवप् बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि । केशान्वपति । उवाप, ऊपे । वप्ता । उप्यात्, वप्सीष्ट । अवाप्सीत्, अवप्त । १० ॥ वह प्रापणे । उवाह । उवहिथ । सहिवहोरोदवर्णस्य[३१६८] । उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवोढ्वम् । ११ ॥

वस निवासे । परस्मैपदी । वसति । उवास ॥ ( ३२१४ ) शासिवसिघसीनां च । ८ । ३ । ६० । इण्कुभ्यां परस्यैषां सस्य षः स्यात् । ऊषतुः । ऊषुः । उवसिथ, उवस्थ । वस्ता ॥ [ ३१२३ ] सः स्यार्धधातुके । ७ । ४ । ४९ । सस्य तः स्यात्सादावार्धधातुके । वत्स्यति । उष्यात् । अवात्सीत् । अवात्ताम् । १ ॥

वेञ् तन्तुसन्ताने । वयति । वयते ॥ (३२१५) वेञो वयिः । २ । ४ । ४१ । वा स्याल्लिटि । ईकार[2] उच्चारणार्थः । उवाय ॥ (३२१६) ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६ । १ । १६ । एषां किति ङिति च संप्रसारणं स्यात् । इति यकारस्य प्राप्ते—॥ ( ३२१७ ) लिटि वयो यः । ६ । १ । ३८ ।

---

२९८१' इतीट् । वृद्धिः । षत्वादि प्राग्वत् ॥ मिह सेचने । सेचनमिह मिश्रीकरणं विवक्षितं न तु सेचनमात्रम् । 'मेढ्रं मेहनशेफसी' इत्यमरः ॥ कित निवासे । कितेर्व्याधिप्रतीकारादावेव सन्नित्युक्तं, तदुदाहरति—चिकित्सतीति । रोगमपनयतीत्यर्थः । शत्रुं चिकित्सति । निगृह्णातीत्यर्थः । क्षेत्रे तृणं चिकित्सति । अपनयति नाशयति वेत्यर्थः ॥ अर्थान्तरे चुरादिरित्युक्तं तदुदाहरति—केतयतीति ॥ षच समवाये । समवायः संबन्धः ॥ भेजतुरिति । 'तृफलभज–३०७४' इत्येत्वम् ॥ भक्ष्यतीति । कुत्वषत्वे ॥ त्विष दीप्तौ ॥ अत्विक्षदिति । 'शल इगुपधा–३११७' इति क्सः । कत्वषत्वे ॥ अत्विक्षातामिति । 'क्सस्याचि ३११८' इति लोपः ॥ यज देव–। देवपूजा त्विह देवोद्देशेन विधिबोधितो द्रव्यत्यागः ॥ ( ३२१२ ) लिट्यभ्यासस्येति । वच्यादयो वचिस्वपियजादयः । ग्रह्यादयस्तु 'ग्रहिज्यावयि–३२१६' इत्यादयः । यद्यपि ग्रहिपृच्छतिभृज्जतीनामभ्यासस्य संप्रसारणे कृतेऽकृते च विशेषो नास्ति, तथापि पर्जन्यवल्लक्षणं प्रवर्तते । जग्राह । पप्रच्छ । बभ्रज्ज । वृश्चतेस्तु विशेषः–संप्रसारणस्याकरणे वव्रश्चेत्यत्र वकारस्य संप्रसारणं स्यात् । कृते तु संप्रसारणे 'न संप्रसारणे–४९३' इति निषेधप्रवृत्तिरिति । लिटीति किम्, विवक्षति । यियक्षति ॥ ( ३२१३ ) वचिस्वपि—। आगणान्ता यजादयः ॥ "यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ इत्यपि । ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव" ॥ कितीति किम्, इयष्ठ ॥ डुवप् । 'ड्वितः क्त्रिः ५०६१' उप्त्रिमम् ॥ ( ३२१४ ) शासिवसिघसीनां च । धातुसकारस्याप्राप्ते विधिरयम् । ननु सुपिसौ सुपिस इत्यादावतिप्रसङ्गवारणाय धातोः सकारस्य चेदेषामेवेति नियमार्थतां स्वीकृत्य 'आदेशप्रत्यययोः २९८' इति सूत्रे त्यज्यतामिति चेत् । अत्राहुः–आदेशावयवस्य षत्ववारणाय आदेशस्येत्यंशस्तावदावश्यकः । तद्ग्रहणे कृते धातुभिन्नसकारस्य चेद्भवति आदेशरूपस्यैवेति नियमप्रसङ्गवारणाय प्रत्ययग्रहणमपि कर्तव्यमेवेति ॥ अवात्सीदिति । 'वदव्रज–३०३३' इति वृद्धिः । 'सः सि–३१३३' इति तः । 'अस्तिसिचः–२९८०' इतीट् ॥ (३२१५) उच्चारणार्थ इति । इत्संज्ञायाम् 'इदितः–३०२६' इति नुम् स्यादिति भावः ॥ उवायेति । 'ग्रहिज्या–३२१६' इत्यत्र वयिग्रहणात् 'वेञः ३२१९' इति निषेधोऽत्र न प्रवर्तत इत्याहुः ॥ ( ३२१६ ) ग्रहिज्यावयि—। गृह्णाति । गृहीतः । जिनाति । जिनीतः । जीनः । ङिति वयेरुदाहरणं नास्ति, किति तु 'वचिस्वपियजादीनाम्–३२१३' इति सिद्धम्, यजादिषु वेञः पाठात् । अत एवाभ्याससंप्रसारण-

---

१ परत्वात्संप्रसारणे कृते सकृद्गतिन्यायेन द्वित्वाप्राप्तेराह । पुनरिति ॥ २ इकार इति–वयिरित्यादौ स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वं गृहीत्वा धातुनिर्देशे इकः सत्त्वेन न नुमित्याह कश्चित् । एवं चेत्संज्ञालोपौ विना निवृत्त्युपायाभावादुच्चारणार्थ इत्यस्योच्चारणातिरिक्तप्रयोजनाभाव एव तात्पर्यमिति सूचितम् ॥

वयो यस्य संप्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः ॥ ( ३२१८ ) (सू) वश्चास्यान्यतरस्यां किति । ६ । १ । ३९ । वयो यस्य यो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयेस्तासावभावात्थलि नित्यमिट् । उवयिथ । स्थानिवद्भावेन वित्वात्तङ् । ऊये, ऊवे । वयादेशाभावे-॥ ( ३२१९ ) (सू) वेञः । ६ । १ । ४० । वञो न संप्रसारणं स्याल्लिटि । ववौ । ववतुः । ववुः । वविथ, ववाथ । ववे । वाता । ऊयात्, वासीष्ट । अवासीत् । १ ॥ व्येञ् संवरणे । व्ययति ॥ ( ३२२० ) (सू) न व्यो लिटि । ६ । १ । ४६ । व्येञ आत्वं न स्याल्लिटि । वृद्धिः । परमपि हलादिःशेषं बाधित्वा यस्य संप्रसारणम्, उभयेषांग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धं किं तेन । विव्याय । विव्यतुः । विव्युः । इडत्त्यर्तीति नित्यमिट् । विव्ययिथ । विव्याय, विव्यय । विव्ये । व्याता । वीयात्, व्यासीष्ट । अव्यासीत्, अव्यास्त । २ ॥ ह्वेञ् स्पर्धायां शब्दे च ॥ ( ३२२१ ) (सू) अभ्यस्तस्य च । ६ । १ । ३३ । अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणं स्यात् । ततो द्वित्वम् । जुहाव । जुहुवतुः । जुहुवुः । जुहोथ, जुहविथ । जुहुवे । ह्वाता । हूयात्, ह्वासीष्ट ॥ ( ३२२२ ) (सू) लिपिसिचिह्वश्च । ३ । १ । ५३ । एभ्यश्च्लेरङ् स्यात् ॥ ( ३२२३ ) (सू) आत्मनेपदेष्वन्यतरस्याम् । ३ । १ । ५४ । आतो लोपः । अह्वत् । अह्वताम् । अह्वन् । अह्वत, अह्वास्त । ३ ॥

अथ द्वौ परस्मैपदिनौ ॥ वद व्यक्तायां वाचि । अच्छ वदति । उवाद । ऊदतुः । उवदिथ । वदिता । उद्यात् । वदव्रजेति वृद्धिः । अवादीत् । १ ॥ टुओश्वि गतिवृद्ध्योः । श्वयति ॥ ( ३२२४ ) (सू) विभाषा श्वेः । ६ । १ । ३० । श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च । शुशाव । शुशुवतुः ॥ ( ३२२५ ) (वा) श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः ॥ तेन लिट्यभ्यासस्येति संप्रसारणं न । शिश्वाय । शिश्वियतुः । श्वयिता । श्वयेत् । शूयात् । जॄस्तम्भ्विवत्यङ् वा ॥ ( ३२२६ ) (सू) श्वयतेरः । ७ । ४ । १८ । श्वयतेरिकारस्य अकारः स्यादङि । पररूपम् । अश्वत् । अश्वताम् । अश्वन् । विभाषा धेट्श्व्योरिति चङ् । इयङ् । अशिश्वियत् । ह्म्यन्तेति न वृद्धिः । अश्वयीत् । २ ॥ ( ३२२७ ) वृत् ॥ यजादयो वृत्ताः । भ्वादिस्त्वाकृतिगणः । तेन चुलुम्पतीत्यादिसंग्रहः ॥ इति भ्वादयः ॥

---

मपि सिद्धम् ॥ 'वेञ ३२१९' इति संप्रसारणनिषेधस्तु 'लिटि वयो यः ३२१७' इति निषेधारम्भान्न प्रवर्तते । तस्मात् ग्रहिज्यादिषु वयिग्रहणं स्पष्टार्थमेवेति बोध्यम् ॥ ( ३२१८ ) वश्चास्या—। अस्येत्यनेन 'लिटि वयो यः ३२१७' इति परामृश्यते, तदाह—वयो यस्येति । 'वो वा किति' इत्येव सुवचम् । 'लिटि वयो यः ३२१७' इति प्रकृतत्वात् । 'उपदेशेऽत्वतः ३०६७'इति निषेधमाशङ्क्याह—वयस्तासावभावादिति । ननु स्थानिनस्तासौ विद्यमानत्वात् स्थानिवद्भावेन तासौ विद्यमानत्वं सुलभमिति चेत् । अत्राहुः—शास्त्रीयकार्ये हि स्थानिवद्भावो न तु लौकिके । 'अचस्तास्वत्–३०६६' इति निषेधस्य शास्त्रीयत्वेऽपि सोऽत्र नातिदिश्यते, अच इत्युक्तेरल्विधित्वादिति ॥ ( ३२१९ ) वेञः । लिटि किम्, उतम्, उतवान् ॥ ( ३२२० ) न व्यो लिटि । लिटि किम्, व्याता । व्यास्यति ॥ हलादिःशेषं बाधित्वेति । हलादिःशेषे तु वस्य संप्रसारणं स्यादिति भावः ॥ अजन्तोऽकारवान्वा यस्तास्यानिट् थलि वेट् भवतीत्याशङ्कायामाह—नित्यमिडिति । वीयादिति । संप्रसारणे 'अकृत्सार्व–३०७१' इति दीर्घः । ह्वेञ् । शब्द इति सामान्योक्तावपि आकारणरूपशब्द एवात्र गृह्यत इत्याहुः । तथा च माघे–'यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरादुद्वाहुना जुहुविरे मुहुरात्मवर्ग्याः' इति कर्मणि प्रयोगः ॥ ( ३२२१ ) 'ह्वः संप्रसारणमभ्यस्तस्य च' इति सूत्रं योगविभागेन व्याचष्टे—अभ्यस्तस्य चेति । पूर्वयोगस्तु 'णौ च संश्चङोः ३४२९' विषये प्रवर्तते । जुहावयिषति । अजूहवत् ॥ अभ्यस्तीभविष्यतो ह्वेञ इति । अभ्यस्तनिमित्ते प्रत्यये परे 'द्विर्वचनात्प्रागेव ह्वेञः संप्रसारणमिति फलितोऽर्थः । अभ्यस्तमस्यास्तीति अभ्यस्तः सनादिस्तस्य यो ह्वेञ् तत्प्रकृतिभूतस्तस्येत्यादिव्याख्यानस्य स्वीकारात् । तेन जिह्वायकीयिषतीत्यत्र ह्वेञः संप्रसारणं न भवति, ण्वुलो द्वित्वनिमित्तत्वाभावात् । अत एव णिचो द्वित्वनिमित्तत्वं नेति 'ह्व संप्रसारणम् ३४३९' इति योगविभागः क्रियते । एतच्च आकरे स्पष्टम् ॥ ( ३२२२ ) लिपिसिचि–। लिप उपदेहे । षिच क्षरणे । अलिपत् । असिचत् ॥ अच्छ वदतीति । अच्छेत्यस्य वदयोगे गतित्वाद्धातोः प्राक् प्रयोगः ॥ ( ३२२४ ) विभाषा श्वेः । लिटि यङि चेति । 'लिड्यङोश्च ३१०७' इति पूर्वसूत्रमिहानुवर्तत इति भावः । उभयत्रविभाषेयं लिडंशे अतुसादौ नित्यं प्राप्ते णलादावप्राप्ते । यङंशे त्वप्राप्तविभाषा । शोशूयते । शेश्वीयते ॥ ( ३२२५ ) संप्रसारणं नेति । अन्यथा शुश्वायेत्यादि स्यादिति भावः ॥ ( ३२२६ ) श्वयतेरः । अलोऽन्त्यपरिभाषालभ्यमाह—इकारस्येति ॥ पररूपमिति । अतो लोपस्तु न भवति, आर्धधातुकोपदेशे यदकारान्तमिति व्याख्यातत्वात् ॥ इयङिति । लघूपधगुणापेक्षयाऽन्तरङ्गत्वादिति भावः ॥ अश्वयीदिति । नन्विहान्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तत्वादेव वृद्धिनिषेधो भवेदिति किमनेन णिश्विग्रहणेनेति चेत् । अत्राहुः—न सिच्यन्तरङ्गमस्तीति ज्ञापनार्थं णिश्विग्रहणम् । तेन चिरिणोतिजिरिणोत्योर्यङ्लुगन्तानां चिनीप्रभृतीनां च सिचि बहिरङ्गा वृद्धिरेव भवति । अचिरायीत् । अजिरायीत् । अचेचायीत् अनेनायात् इति ॥ ( ३२२७ ) तेनेति । उक्तं च वार्तिककृता–'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इति ॥ चुलुम्पतीति । लुम्पतीत्यर्थः । 'चुलुम्प लोपे' इति कविकल्पद्रुमे उक्तत्वात् ॥

इति भ्वादयः ॥

( ३२२८ ) ऋतेरीयङ् । ३ । १ । २९ । ऋतिः सौत्रः तस्मादीयङ् स्यात्स्वार्थे । जुगुप्सायामयं धातुरिति बहवः । कृपायां चेत्येके । सनाद्यन्ता इति धातुत्वम् । ऋतीयते । ऋतीयांचक्रे । आर्धधातुकविवक्षायां तु आयादय आर्धधातुके वेतीयङभावे शेषात्कर्तरीति परस्मैपदम् । आनर्त । अर्तिष्यति । आर्तीत् । १ ॥

अथादादयः ।

अद भक्षणे । द्वौ परस्मैपदिनौ ॥ (३२२९) अदिप्रभृतिभ्यः शपः । २ । ४ । ७२ । लुक् स्यात् । अत्ति । अत्तः । अदन्ति ॥ (३२३०) लिट्यन्यतरस्याम् । २ । ४ । ४० । अदो घस्लृ वा स्याल्लिटि । जघास । गमहनेत्युपधालोपः । तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम् । शासिवसीति षत्वम् । जक्षतुः । जक्षुः । घसस्तासावभावात्थलि नित्यमिट् । जघसिथ । आद । आदतुः । इडत्त्यर्तीति नित्यमिट् । आदिथ । अत्ता । अत्स्यति॥(३२३१) हुझल्भ्यो हेर्धिः । ६ । ४ । १०१ । होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अत्तात् । अदानि ॥ ( ३२३२ ) अदः सर्वेषाम् । ७ । ३ । १०० । अदः परस्यापृक्तसार्वधातुकस्य अडागमः स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः ॥ ( ३२३३ ) लुङ्सनोर्घस्लृ । २ । ४ । ३७ । अदो घस्लृ स्यात् लुङि सनि च । लृदित्वादङ् । अघसत् । १ ॥ हन हिंसागत्योः प्रणिहन्ति ॥ ( ३२३४ ) अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति । ६ । ४ । ३७ । अनुनासिकेति लुप्तषष्ठीकं वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । हतः । घ्नन्ति ॥ ( ३२३५ ) वमोर्वा । ८ । ४ । २३ । उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः । प्रहण्मि, प्रहन्मि । प्रहण्वः , प्रहन्वः । हो हन्तेरिति कुत्वम् । जघान । जघ्नतुः ।

---

(३२२८) **ऋतेरीयङ्** । तान्तोऽयं धातुरिका निर्दिष्टो न त्विकारान्तः,'वाञ्छिलुञ्च्यृतश्च ५१४६'इति निर्देशात् । केचित्तु ईयङ् इति दीर्घोच्चारणात्तान्तोऽयमिति ज्ञायते । इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यादित्याहुः । तच्चिन्त्यम् , इदन्तत्वे तु ' एरनेकाचः-२८० ' इति यणा सवर्णदीर्घस्य बाधात् । न च ऋतेर्यङ्विधौ 'अकृत्सार्व-३०७१' इति दीर्घोपपत्तेरीयङ्विधानं तान्तत्वे लिङ्गं भवत्येवेति वाच्यम् , यङ्विधौ 'सन्यङोः ३१९६ ' इति द्वित्वापत्तेः[१] ॥ **कृपायां चेति** । 'अर्तनं च ऋतीया च घृणीया च घृणार्थकाः ' इति, ' जुगुप्सा करुणा घृणा ' इति चामरः ॥

( ३२३१ ) **हुझल्भ्यो हेर्धिः** । जुहुधि । ' घसिभसोर्हलि च ५४०२ ' इत्यतो हलीत्यनुवर्त्य हलादेरिति व्याख्यानात्[२] रुदिहि स्वपिहि इत्यादाविडादेर्हेर्धिर्न भवति, अत्तादित्यत्र तु धित्वात्परत्वात्तातङि कृते स्थानिवद्भावेन पुनर्धित्वं तु 'सकृद्गतौ-' इति न्यायान्नेत्याहुः । अन्ये तु-'हेर्धिः'इत्यत्र स्थान्यादेशयोर्द्वयोरपीकार उच्चारणार्थ इति हकारस्य धकार आदेशः । तेन हलीत्यनुवृत्तिर्न कर्तव्या, नापि[३] तातङो धित्वप्रसङ्ग इति सकृद्गतिन्यायाश्रयणमपि माऽस्त्वित्याहुः ॥ (३२३२) **अदः सर्वेषाम्** । 'अड्गार्ग्यगालवयोः ३२९०' इत्यतः अडित्यनुवर्तते । गार्ग्यगालवयोरित्यस्य त्वनुवृत्तिशङ्कां निवारयितुं सर्वेषांग्रहणम् ॥ (३२३३) **लुङ्सनोः**- । जिघत्सति ॥ **प्रणिहन्तीति** । 'नेर्गद-३०५२' इति णत्वम् ॥ (३२३४) **अनुदात्तोपदेश**- । यद्यत्र 'एतेषामनुनासिकस्य लोपः'इति व्याख्यायेत तदा मन्यतेर्नमनहमिमिहमुचमस्जादीनां चानन्त्यस्यापि लोपः स्यात् , तथा च मतः, नतः, नद्धः, मीढः, मग्नः, इत्यादि न सिध्येत् । अत आह-**लुप्तषष्ठीकमिति** ॥ **वनतीतरेषामिति** । वनतेरव्यभिचाराद्विशेषणं व्यर्थमिति भावः । वतिः । इह क्तिनि 'तितुत्र-४१९४' इतीण्निषेधाज्झलि क्ङिति नलोपः ॥ **लोपः स्यादिति** । अलोऽन्त्यस्येति भावः ॥ अनुनासिकान्तानुदात्तोपदेशान्दर्शयति—**यमिरमीति** ॥ तनोत्यादीनप्यनुनासिकान्तान्दर्शयति—**तनुक्षणुक्षिण्विति** । करोतिवर्जितास्तनोत्यादयो नव, तन्मध्ये सनोतेः 'जनसनखनाम्-३३२२' इत्यात्त्वं वक्ष्यतीति न स परिगणितः । ततः, क्षतः, क्षितिः, इत्यादीन्युदाहरणानि । तनोत्यादीनामुदित्त्वात् क्त्वायामिड्विकल्पनान्निष्ठायां नेट् । अनुनासिकान्तानामिति किम्, शक्तः । रुद्धः । झलीति किम् , गम्यते । नम्यते । क्ङितीति किम् , गन्ता । मन्ता ॥ **जघान जघ्नतुरिति** । यद्यप्यत्र 'अभ्यासाच्च ३२३६ ' इत्यस्यापि प्रवृत्तिरस्ति तथाप्यन्तरङ्गत्वात् 'हो हन्तेः-४८५' इत्युपन्यस्तम् ॥

---

१ **द्वित्वापत्तेरिति** । 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया ' सन्यङोः ' इत्यस्याप्रवृत्तयेऽनुबन्धकाकारादौ यङ्प्रत्यये 'अकृत्सार्व-' इति दीर्घेण सिद्धे ईयङ्करणात् तान्तोऽयं, न त्विकारान्त इति केचित् ॥ छडेव सिद्धा ईयङ्विधिः 'धातुविहितानामायन्नादयो न भवन्ति ' इति ज्ञापयति ॥ २ **हलादेरिति व्याख्यानादिति** । निर्दिश्यमानपरिभाषयैव रुदिहीत्यादौ दोषाभावे सिद्धे 'हलि' इत्यनुवृत्तेर्गौरवग्रस्तत्वाच्चिन्त्यमेतत् ॥ ३ **नापि तातङ**-इति । हत्वस्याल्विधित्वेन स्थानिधर्मत्वाभावेन च स्थानिवत्त्वाभावादिति भावः । एवं च हिशब्देन सर्वत्रैव ' हकारस्यैवैतदशक्तिजेनेकारेण ग्रहणम् ' इति भाष्येण केवलं हकारस्यैव विवक्षितत्वेन 'शानज्झौ, आ च हौ, शा हौ, ध्वसोरेद्धौ-' इत्येतेषां पुष्णीतात् , जहितात् , शिष्टात् , स्तादित्यत्र नापत्तिस्तत्रापि हादावित्यर्थादिति बोध्यम् ॥

जघ्नुः ॥ (३२३६) अभ्यासाच्च ।७।३।५५। अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ, जघन्थ । हन्ता । ऋद्धनोरितीट् । हनिष्यति । हन्तु । हतात् । घ्नन्तु ॥ (३२३७) हन्तेर्जः । ६ । ४ । ३६ । हौ परे । आभीयतया जस्यासिद्धत्वाद्धेर्न लुक् । जहि । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहनम् ॥ (३२३८) आर्धधातुके । २ । ४ । ३५ । इत्यधिकृत्य–॥ ( ३२३९ ) हनो वध लिङि । २ । ४ । ४२ । (३२४०) लुङि च । २ । ४ । ४३ । वधादेशोऽदन्तः । आर्धधातुक इति विषयसप्तमी । तेनार्धधातुकोपदेशे अकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । आर्धधातुके किम् । विध्यादौ हन्यात् । हन्तेरिति णत्वम् । प्रहण्यात् । अल्लोपस्य स्थानिवत्त्वादतो हलादेरिति न वृद्धिः[2] । अवधीत् । २ ॥

अथ चत्वारः स्वरितेतः ॥ द्विष अप्रीतौ । द्वेष्टि, द्विष्टे । द्वेष्टा । द्वेक्ष्यति, द्वेक्ष्यते । द्वेष्टु । द्विष्टात् । द्विड्ढि । द्वेषाणि । द्वेषै । द्वेषावहै । अद्वेट् ॥ ( ३२४१ ) द्विषश्च । ३ । ४ । ११२ । लङो झेर्जुस्वा स्यात् । अद्विषुः । अद्विषन् । अद्वेषम् । द्विषीत । द्विक्षीष्ट । अद्विक्षत । १ ॥ दुह प्रपूरणे । दोग्धि । दुग्धः । धोक्षि । दुग्धे । धुक्षे । धुग्ध्वे । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अधुग्ध्वम् । अधुक्षत्,अधुक्षत । लुग्वा[3] दुहेति लुक् । पक्षे तथास्ध्वंवहिषु लङ्वदपि । २ ॥ दिह उपचये । प्रणिदेग्धि । ३ ॥ लिह आस्वादने । लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिक्षे । लीढ्वे । लेढु । लीढि । लेहानि । अलेट् । अलिक्षत् , अलिक्षत, अलीढ । अलिक्षाताम् । अलिक्षावहि । अलिह्वहि । ४ ॥

चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । विचक्षणः प्रथयन् । नुम् तु न, अन्तेदित इति व्याख्यानात् । ङकारस्तु ( ३२४२ ) अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः[1] । तेन स्फायन्निर्मोकसन्धीत्यादि सिध्यति । चष्टे । चक्षाते । आर्धधातुके इत्यधिकृत्य–॥ ( ३२४३ ) चक्षिङः ख्याञ् । २ । ४ । ५४ । ( ३२४४ ) वा लिटि ।२।४।५५। अत्र भाष्ये क्शादिरयमादेशः । असिद्धकाण्डे(३२४५)शस्य यो वेति स्थितम् । ञित्त्वात्पदद्वयम् । चख्यौ, चख्ये । चक्शौ, चक्शे । चयो[4] द्वितीया इति तु न, चर्त्वस्यासिद्धत्वात् । चचक्षे । ख्याता, क्शाता । ख्यास्यति, ख्यास्यते । क्शास्यति, क्शास्यते । अचष्ट । चक्षीत । ख्यायात् , ख्येयात् ।

---

(३२३७) आभीयतयेति । सन्निपातपरिभाषयाऽपि हेर्लुग् नेति वक्तुं शक्यमिति केचित् । तन्मन्दम् । 'अतो हेः २९५७' इत्यारम्भसामर्थ्यात्तस्याप्रवृत्तेरिति नव्याः ॥ ( ३२३९–३२४० ) वधादेशोऽदन्त इति । तेन आदेशोपदेशेऽनेकाच्त्वात् अवधीदित्यत्र 'एकाचः–३००६' इतीण्निषेधाप्रवृत्ताविडादौ सिचि 'अतो हलादेः–३०५१' इति प्राप्ता वृद्धिरल्लोपस्य स्थानिवत्त्वान्नेति भावः ॥ दुह प्रपूरणे । प्रपूरणं त्याजनम् ॥ लङ्वदपीति । अदुग्ध । अदुग्धाः । अधुग्ध्वम् । अदुह्वहि ॥ दिह । उपचयो वृद्धिः ॥ प्रणिदेग्धीति । 'नेर्गद–३०५२' इति णत्वम् ॥ अलिक्षतेति । 'शल इगुपधा–३११७' इति क्सः । अलिक्षाताम् । अलिक्षन्त ॥ अलीढेति । 'लुग्वा दुह–३१५८' इति वा लुक् । अलीढाः । अलीढ्वम् ॥ चक्षिङ् । दर्शनेऽपीति । 'विश्वा रूपा अभिचष्टे शचीभिः' इत्यत्र दर्शनार्थत्वेन व्याख्यातत्वादिति भावः ॥ युजर्थ इति । 'अनुदात्तेतश्च हलादेः ४१५०' इति युच् ॥ अन्तेदित इति । 'इदितः–३०२६' इति नुम्विधौ 'गोः पादान्ते ५४२८' इत्यस्मादन्ते इत्यनुवर्तत इति भावः । एवं च नुमागमशङ्कानुत्थानाय चाक्षिङ इकारस्थानेऽकार एवासक्तुमुचितः ॥ ( ३२४२ ) अनुदात्तत्वेनैव ताङि सिद्धे ङकारो व्यर्थ इत्याशङ्क्याह—ङकारस्त्विति ॥ स्फायन्निति । स्फायी वृद्धावित्यनुदात्तेतो लटः शत्रादेशः ॥ चष्टे इति । 'स्कोः–५१६' इति कलोपः । ष्टुत्वम् ॥ ( ३२४३–३२४४ ) ख्शादिरिति । तेन पुंख्यानमित्यत्र 'पुमः खय्यम्परे २११' इति रुत्वं नेत्यादि पूर्वार्धे एवोक्तम् ॥ असिद्धकाण्डे इति । णत्वप्रकरणानन्तरमिति शेषः । तेन पर्याख्यानमित्यत्र शकारेण व्यवधानात् 'कृत्यचः ३७७६' इति णत्वं न । तथा सुप्रख्येन निर्वृत्तं सौप्रख्यं, तत्र भवः सौप्रख्यीयः । यत्वस्यासिद्धत्वात् 'धन्वयोपधात्–१८९०' इति वुञ् न । किंतु छ एवेति बोध्यम् ॥ अचष्टेति । 'स्कोः–५१६' इति कलोपः ष्टुत्वम् ॥ 'अस्यतिवक्तिख्यातिभ्यः–३२४६' इत्यत्र विधिसामर्थ्याद्यत्वं नासिद्धम् । स्वतन्त्रस्य ख्याधातोः

---

[1] ज्ञापनेति । अन्त्येदित्त्वव्याघाताय ङकारस्य चरितार्थत्वेन वैयर्थ्याभावाद्भाष्यानुक्तत्वाच्च ज्ञापनानङ्गीकारेण 'स्फायन्' इत्यादीनामसाधुत्वमेवाङ्गीकरणीयमिति तत्त्वम् ॥ [2] स्थानिवत्त्वान्नेतीति । हलादेर्लघोरकारस्य सिच्परत्वेन विशेषणात् 'येन नाव्यवधानम्' इति न्यायेनैकवर्णव्यवधानस्यैव ग्रहणेनानेकवर्णव्यवधाने वृद्ध्यप्राप्तेः । अन्त्यस्य तु वृद्धिर्न 'ण्यल्लोपावियङ्–' इति लोपेन बाधादिति भावः । अदन्तप्रतिज्ञासामर्थ्यात् स्वतन्त्रस्य लुङि प्रयोगाभाव एव कल्प्यत इति बोध्यम् ॥ [3] अदुहहीति । इदं च काशिकानुसारिकैयटानुरोधेन ॥ भाष्यकारेण तु वहौ लुग् नाङ्गीक्रियते । अदुहहि, अदिहहि, अलिहहीति प्रयोगास्तु लङ्येव साधनीयाः । अदुहहीति प्रयोगस्तु लोकेऽसाधुरेवेति प्रपञ्चितं प्राक् ॥ [4] छ एवेति । एतेन ख्याधातोः स्वतन्त्रस्यार्द्धधातुके प्रयोग एव नेति यकारोपधत्वप्रयुक्तकार्याभाव एवेति ध्वन्यते ॥ अन्ये तु–स्वतन्त्रभूधातोरस्त्यादेशभुवश्चेव स्वतन्त्रवचधातोर्ब्रूञादेशवचेश्चेव च सर्वत्र स्वतन्त्रख्याधातोरपि प्रयोगाङ्गीकारे योपधत्वाश्रयकार्याण्यपि भवन्त्येव । अत एव 'ख्या प्रकथने' इत्यस्यैव 'न ख्याख्या–' इत्यत्र ग्रहणमित्याकरः संगच्छत इति वदन्ति ॥

क्शायात्, क्शेयात् ॥ ( ३२४६ ) अस्यतिवक्तिख्यातिभ्योऽङ् । ३ । १ । ५२ । एभ्यश्च्लेरङ् । अख्यत्, अख्यत । अक्शासीत्, अक्शास्त ॥ ( ३२४७ ) वर्जने क्शाञ् नेष्टः ॥ समचाक्षिष्टेत्यादि । १ ॥

अथ पृच्यन्ता अनुदात्तेतः ॥ ईर गतौ कम्पने च । ईर्ते । ईरांचक्रे । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट । १ ॥ ईड स्तुतौ । ईट्टे ॥ ( ३२४८ ) ईशः से । ७ । २ । ७७ । ( ३२४९ ) ईडजनोर्ध्वे च । ७ । २ । ७८ । ईशीड्जनां सेध्वेशब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः । ईडिषे । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात्–ईडिष्व । ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात् ऐड्ढ्वम् । २ ॥ ईश ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे । ३ ॥ आस उपवेशने । आस्ते । दयायासश्च । आसांचक्रे । आस्स्व । आध्वम् । आसिष्ट । ४ ॥ आङः शासु इच्छायाम् । आशास्ते । आशासाते । आङ्पूर्वत्वं प्रायिकम् । तेन नमोवाकं प्रशास्महे इति सिद्धम् । ५ ॥ वस आच्छादने । वस्ते । वस्से । वध्वे । ववसे । वसिता । ६ ॥ कसि गतिशासनयोः । कंस्ते । कंसाते । कंसते । अयमनिदिदित्येके । कस्ते । तालव्यान्तोऽप्ययमनिदित् । कष्टे । कशाते । कक्षे । कड्ढ्वे । ७ ॥ णिसि चुम्बने । निंस्ते । दन्त्यान्तोऽयम् । आभरणकारस्तु तालव्यान्त इति बभ्राम । ८ ॥ णिजि शुद्धौ । निङ्क्ते । निङ्क्षे । निञ्जिता । ९ ॥ शिजि अव्यक्ते शब्दे । शिङ्क्ते । १० ॥ पिजि वर्णे । संपर्चने इत्येके । उभयत्रेत्यन्ये । अवयवे इत्यपरे । अव्यक्ते शब्दे इतीतरे । पिङ्क्ते । ११ ॥ पृजीत्येके । पृङ्क्ते । १२ ॥ वृजी वर्जने । दन्त्योष्ठ्यादिः । ईदित् । वृक्ते । वृजाते । वृक्षे । इदिदित्यन्ये । वृङ्क्ते । १३ ॥ पृची संपर्चने । पृक्ते । १४ ॥ षूङ् प्राणिगर्भविमोचने । सूते । सुषुवे । सुषुविषे । सविता, सोता । भूसुवोरिति गुणनिषेधः । सुवै । सविषीष्ट, सोषीष्ट । असविष्ट, असोष्ट । १५ ॥ शीङ् स्वप्ने ॥ ( ३२५० ) शीङः सार्वधातुके गुणः । ७ । ४ । २१ । क्ङिति चेत्यस्यापवादः । शेते । शयाते ॥ ( ३२५१ ) शीङो रुट् । ७ । १ । ६ । शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । अशयिष्ट । १६ ॥

अथ कौत्यन्ताः परस्मैपदिनः । ऊर्णुस्तूभयपदी । यु मिश्रणेऽमिश्रणे च ॥ ( ३२५२ ) उतो वृद्धिर्लुकि हलि । ७ । ३ । ८९ । लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । युयाव । यविता । युयात् । इह उतो वृद्धिर्न, भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात् ।[1]विशेषविहितेन

---

सार्वधातुकमात्रविषयताया वक्ष्यमाणत्वात् । अस्यतेः पुषादिपाठादङि सिद्धे तदर्थं ग्रहणमित्यादि पुषादिषु वक्ष्यति ॥ ( ३२४६ ) वक्तीति । 'ब्रुवो वचिः ३२४६' 'वच परिभाषणे' इति उभयोर्ग्रहणम् ॥ ईर । ईरिता । ईरिष्यते । लङि ऐर्त । ऐराताम् । ऐरत । ऐरि । ऐर्वहि । ऐर्महि ॥ ( ३२४८–३२४९ ) ईशः से । यथाश्रुतसूत्रन्यासे ईशो ध्वेशब्दे परे ईशिध्वमिति न सिध्येदत आह—ईशीड्जनामिति ॥ वैचित्र्यार्थ इति । ध्वे इत्यस्य पूर्वत्रापकर्षः । से इत्यस्योत्तरत्रानुवृत्तिरित्येवं विचित्रबोधार्थ इत्यर्थः । इह काशिकादौ जनेरुदाहरणमुक्तम् । तथाहि–जनी प्रादुर्भाव इत्यस्माच्छपः छान्दसो लुक् उपधालोपाभावश्च । जनिषे । जनिध्वे । जनिष्व । जनिध्वम् । जन जनने इति श्लुविकरणस्याप्युपधालोपे व्यतिजज्ञिषे । व्यतिजज्ञिध्वे । 'कर्तरि कर्मव्यतिहारे ३५७८' इति तङ् ॥ नमोवाकमिति । 'नमस्ते रुद्र मन्यवे' इत्यादि नमोवचनम् । वचंधञ् । 'चजोः–२८१४' इति कुत्वम् ॥ ववसे इति । वादित्वादेत्वाभ्यासलोपौ न ॥ णिसि चुम्बने ॥ बभ्रामेति । 'नुम्विसर्जनीय–' इति सूत्रे वृत्तिपदमञ्जर्यादिभिरुक्तं 'नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते तेन निंस्ते निंस्स्वेत्यत्र न भवति' इति, तदस्य सान्तत्वे युज्यते । शान्तत्वे तु 'व्रश्च–४११' इत्यादिना षत्वे 'षढोः–४१२' इति कत्वे कवर्गात्परत्वेन षत्वं दुर्वारमिति प्रत्युदाहरणमिदं न संगच्छत इति भावः ॥ णिजि शुद्धौ । अनिट्केषु णिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेडिति ध्वनयति—निञ्जितेति ॥ शिजि अव्यक्ते शब्दे । क्तप्रत्यये शिञ्जितम् । आवश्यकणिन्यन्तान्ङीपि शिञ्जिनी । 'भूषणानां तु शिञ्जितम्' । 'मौर्वी ज्या शिञ्जिनी गुणः' इति चामरः ॥ सुषुविषे इति । 'स्वरतिसूति–३०४६' इति विकल्पं बाधित्वा 'श्र्युकः क्किति ३१७४' इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् ॥ शीङ् स्वप्ने ॥ ( ३२५० ) क्ङिति चेत्यस्येति । अन्यत्र 'सार्वधातुकार्धधातुकयोः २९२२' इत्यनेन सिद्धमिति भावः ॥ ( ३२५१ ) शीङो रुट् । 'झोऽन्तः २९२३' इत्यतो झ इत्यनुवर्तते । 'अदभ्यस्तात् ३२९३' इत्यतोऽदिति च । तथा चेष्टानुरोधेनाऽदिति प्रथमान्तस्य षष्ठ्यन्तत्वमाश्रित्य व्याचष्टे–झादेशस्यात इति । झस्यैव रुडागमे तु अदादेशो दुर्लभ इत्यादित्यस्याप्यनुवृत्तिः कृता ॥ शिश्ये इति । 'एरनेकाचः–३८०' इति यण् । शेताम् । शयाताम् । शेरताम् । शेष्व । शयाथाम् । शेध्वम् ॥ ( ३२५२ ) उतो वृद्धिः–। 'नाभ्यस्तस्याचि पिति–३३२१' इत्यतो निषेधानुवृत्तेराह—न त्वभ्यस्तस्येति । उतः किम्, एति । एषि । लुकीति किम्, सुनोति । जुहोति । हलि किम्, यवानि । यवाव । 'आडुत्तमस्य–२९५९' इत्याडागमः पित् । पितीति किम्, युतः । रुतः । 'नाभ्यस्तस्य' इति किम्, योयोति । रोरोति । सार्वधातुके किम्, यूयात् । न चात्र ङिच्च पिन्नेति व्याख्यानान्निर्वाहः शङ्क्यः, 'किदाशिषि २९७१' इति यासुटः कित्त्वात् । केचित्तु युयात्, स्तुयात् इत्यादावपि ङिच्च पिन्नेत्येतदाश्रित्य व्याच-

---

[1] ननु पूर्ववाक्येन ङित्त्वमपि दुर्लभमत आह–विशेषेति ॥

ङित्वेन पित्त्वस्य बाधात् । यूयात् । अयावीत् । १ ॥ रु शब्दे ॥ ( ३२५३ ) तुरुस्तुशम्यमः सार्वधातुके । ७ । ३ । ९५ । एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा[१] स्यात् । नाभ्यस्तस्येत्यतो[३३२१]ऽनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणमपिदर्थम् । रवीति । रौति । रुवीतः । रुतः । हलादेः किम् । रुवन्ति । तिङः किम् । राव्यति । सार्वधातुके किम् । आशिषि रूयात् । विध्यादौ तु रुयात् । रुवीयात् । अरावीत् । अराविष्यत् । २॥ तु इति सौत्रो धातुर्गतिवृद्धिहिंसासु । अयं च लुग्विकरण इति स्मरन्ति । तवीति, तौति । तुवीतः, तुतः । तोता । तोष्यति । ३ ॥ णु स्तुतौ । नौति । नविता । ४ ॥ टुक्षु शब्दे । क्षौति । क्षविता । ५ ॥ क्ष्णु तेजने । क्ष्णौति । क्ष्णविता । ६ ॥ ष्णु प्रस्रवणे । स्नौति । सुष्णाव । स्नविता । स्नुयात् । स्नूयात् । ७ ॥ ऊर्णुञ् आच्छादने ॥ ( ३२५४ ) ऊर्णोतेर्विभाषा । ७ । ३ । ९० । वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति, ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते ॥ ( ३२५५ ) ऊर्णोतेराम् नेति वाच्यम् ॥ ( ३२५६ ) न न्द्राः संयोगादयः । ६ । १ । ३ । अचः पराः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य[२] द्वित्वम् । णत्वस्यासिद्धत्वात् ॥ ( ३२५७ ) पूर्वत्रासिद्धीयमद्विर्वचने-इति त्वनित्यम् । उभौ साभ्यासस्येति लिङ्गात् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ॥ ( ३२५८ ) विभाषोर्णोः । १।२।३। इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ, ऊर्णुनविथ । ऊर्णुविता, ऊर्णविता । ऊर्णौतु, ऊर्णोतु । ऊर्णवानि । ऊर्णवै ॥ ( ३२५९ ) गुणोऽपृक्ते । ७ । ३ । ९१ । ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । इह वृद्धिर्न, ङिच्च पिन्नेति

---

क्षते । संज्ञापूर्वकविधेरनित्यत्वाद्वृद्धिर्न भवति । अन्यथा 'उत औत्' इत्येव वदेदिति ॥ ( ३२५३ ) तुरुस्तु—। तुः सौत्रो धातुरिति वक्ष्यति ॥ अपिदर्थमिति । एभ्यः परस्य पितः सार्वधातुकस्येति प्राचो व्याख्यानं प्रामादिकम्, रुवीतः, स्तुवीतः, इत्याद्यसिद्ध्यापत्तेरिति भावः । शम्यमोरुदाहरणं तु-शमीध्वम् । अभ्यमीति । अभ्यन्ति । शम्यमोश्छन्दसि विकरणस्य लुकि सति हलादिसार्वधातुकमनन्तरं संभवतीति काशिकायामुक्तम् । आपिशलास्तु 'तुरुस्तुशम्यमः सार्वधातुके छन्दसि' इति पठन्ति, तन्मते सूत्रमिदं छन्दस्येव ॥ ( ३२५४ ) ऊर्णोतेर्विभाषा । 'उतो वृद्धिः-३२५२' इति नित्ये प्राप्ते विभाषेयम् । हलादौ किम्, ऊर्णवानि । पिति किम्, ऊर्णुतः । सार्वधातुके किम्, ऊर्णूयात् ॥ ( ३२५५ ) ऊर्णोतेराम्नेति । 'ऊर्णोतेर्णुवद्भावो वाच्यः ४०२३' इति वक्ष्यमाणस्यामभावोऽपि फलमिति भावः ॥ ( ३२५६ ) न न्द्राः—। अजादेरिति वर्तते । स च कर्मधारयः । आदिग्रहणस्य तु प्रकृतेऽनुपयोगस्तदेतदाह—अचः परा इति । उन्दिदिषति । इन्दिदिषति । अड्डिडिषति । अर्चिचिषति । 'न्द्राः' इति किम्, ईक्षतेः सनि ईचिक्षिषते । संयोगादयः किम्, प्राणिणिषति । अरिरिषति । अचः पराः किम्, इन्द्रीयितुमिच्छतीति क्यजन्तात्सनि इन्दिद्रीयिषति । इह नकारस्य द्वित्वाभावेऽपि दकारस्तु द्विरुच्यत एव, अचः परत्वाभावात् ॥ नुशब्दस्येति । उपदेशे नकार एव । णत्वं तु 'रषाभ्याम्-२३६' इत्यनेनेति भावः ॥ ( ३२५७ ) पूर्वत्रासिद्धीयमिति । अत्र द्विर्वचनशब्देन षाष्ठमाष्टमिकं चोभयं गृह्यते । तत्र षाष्ठस्य ऊढिमाख्यत् औडिढत् इत्युदाहरणम् । आष्टमिकस्य तु द्रोग्धा द्रोग्धा, द्रोढा द्रोढेति । इह त्रिपादीस्थं घत्वढत्वादिकं द्विर्वचने सिद्धमेव । असिद्धत्वे तु त्रिपादीस्थकार्यात्पूर्वमेव द्रोहृता इत्यस्य द्वित्वे पश्चात् 'वा द्रुह-४५१' इति घत्वढत्वयोः प्रवृत्तौ द्रोग्धा द्रोढेत्यपि द्विर्वचनं कदाचित्स्यात् न तु द्रोग्धा द्रोग्धेति समानजातीयस्यैव नियमेन द्विर्वचनं सिध्यति । किञ्च, षट् सन्त इत्यत्र डस्य चर्त्वे टकारस्य द्वित्वं 'पूर्वत्रासिद्धीयमद्वित्वे ३२५७' इत्युक्तेरिति मनोरमादावुक्तम् । अत एव सुद्ध्युपास्य इत्यत्र धस्य जश्त्वेन दकारे व्यक्तिभेदाद्दकारस्यापि द्वित्वं सुवचमेवेत्याहुः ॥ अनित्यमिति । अत एव हृतिशब्दस्य द्वित्वमौजिढदित्यपि नामधातुषु वक्ष्यति ॥ उभौ साभ्यासस्येति । 'अनितेः ३२९२' इत्यनेन णत्वं कृत्वा द्विर्वचने कृते प्राणिणत्, प्राणिणिषतीति सिद्धमिति सूत्रमिदं ज्ञापकमित्यर्थः । एवं च प्रणिनायेत्यादौ द्वितीयस्य णत्वाभावः सिद्धः ॥ ( ३२५८ ) विभाषोर्णोः । 'गाङ्कुटादिभ्यः-३२७३' इत्यतो ङिदिति 'विज इट् ३३६०' इत्यत इडिति चानुवर्तते इत्याशयेनाह—इडादिप्रत्यय इत्यादि । तेन गुणविकल्पे पक्षे उवङ् ॥ ( ३२५९ ) गुणोऽपृक्ते । 'नाभ्यस्तस्याचि-३३२१' इत्यतः पिति सार्वधातुके इति 'उतो वृद्धिर्लुकि हलि ३२५२' इत्यतो हलीति चानुवर्तते

---

१ अव्यवहिततिङ ईड्विधानमत्र बीजम् ॥ २ ननूत्तरखण्डेऽपि णकारश्रवणं स्यादत आह-नुशब्दस्येति । णत्वस्यासिद्धतया नुबुद्ध्यैव द्वित्वकरणात् यद्बुद्ध्या शास्त्रप्रवृत्तिस्तदीयद्वितीयप्रयोगस्यैव साधुत्वान्वाख्यानान्नोत्तरखण्डे णकारश्रवणमिति भावः ॥ ३'प्रत्ययः' 'अध्ययने' इत्यादिनिर्देशैर्धातुप्रत्ययनिमित्तककार्यकरणोत्तरमेवोपसर्गयोगस्य सर्वसंमतत्वेन 'आनिनत्' 'अनिनिषति' प्रयोगसिद्ध्युत्तरमेवोपसर्गयोगे प्रापणीयस्य णत्वस्य द्वित्वप्रवृत्तिकाले प्राप्तेरेवासंभवेन द्वयोर्णत्वार्थं सूत्रस्यावश्यकत्वेन ज्ञापकत्वासंभव एव । अत एव 'द्विर्वचनेऽचि' इति सूत्रे भाष्यप्रदीपोद्द्योते 'तत्रानित्यत्वकल्पने मानाभावाच्च' इति नागेशोक्तं सङ्गच्छते ॥ तस्मात् द्वित्वोत्तरं च 'द्विः प्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्ते 'दयतेर्दिगि लिटि' इति सूत्रभाष्यध्वनितरीत्या परस्य पूर्वेण व्यवधानात् प्रोर्णुनाव' 'प्रोर्णोनूयते' इति भाष्यकृतादाहृतत्वात् 'वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्' इत्युक्त्या एकाच्पदकार्यसिद्धये 'ऊर्' इति पृथक्कृत्य कार्यसिद्ध्युत्तरमेव 'ऊर्' भागयोग इति सूचितत्वेन प्रकृते 'नुनाव' इति सिद्ध्युत्तरमेव 'ऊर्भागयोगे प्रथमणकारस्यैव णत्वम् 'ऊर्णुनाव' इत्यादिसिद्धिः कार्या ॥

नाव्यात् । ऊर्णूयात् । ऊर्णविषीष्ट, ऊर्णुविषीष्ट । और्णुवीत् । और्णुविष्टाम् ॥ ( ३२६० ) ऊर्णोतेर्विभाषा । ७ । २ । ६ । इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत् । और्णाविष्टाम् । और्णाविषुः । और्णवीत् । ८ ॥ द्यु अभिगमने । द्यौति । द्योता । ९ ॥ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सोता । असौषीत् । १० ॥ कु शब्दे । कोता । ११ ॥ ष्टुञ् स्तुतौ । स्तौति, स्तवीति । स्तुतः, स्तुवीतः । स्तुते, स्तुवीते । स्तुसुधूञ्भ्य इतीट् । अस्तावीत् । प्राक्सितादिति षत्वम् । अभ्यष्टौत् । सिवादीनां वा । पर्यष्टौत्, पर्यस्तौत् । १२ ॥ ब्रूञ् व्यक्तायां वाचि ॥ ( ३२६१ ) ब्रुवः पञ्चानामादित आहो ब्रुवः । ३ । ४ । ८४ । ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । अकार उच्चारणार्थः । आह । आहतुः । आहुः ॥ ( ३२६२ ) आहस्थः । ८ । २ । ३५ । झलि परे । चर्त्वम् । आत्थ । आहथुः ॥ ( ३२६३ ) ब्रुव ईट् । ७ । ३ । ९३ । ब्रुवः परस्य हलादेः पित ईट् स्यात् । आत्थेत्यत्र स्थानिवद्भावात्प्राप्तोऽयं झलीति थत्वविधानान्न भवति । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । आर्धधातुकाधिकारे–॥ ( ३२६४ ) ब्रुवो वचिः । २ । ४ । ५३ । उवाच । ऊचतुः । ऊचुः । उवचिथ, उवक्थ । ऊचे । वक्ता । ब्रवीतु । ब्रूतात् । ङिच्च पिन्नेत्यपित्त्वादीण्न । ब्रवाणि । ब्रवै । ब्रूयात् । उच्यात् । अस्यतिवक्तीत्यङ् ॥ ( ३२६५ ) वच उम् । ७ । ४ । २० । अङि परे । अवोचत्, अवोचत । १३ ॥

अथ शास्यन्ताः परस्मैपदिनः । इङ् त्वात्मनेपदी । इण् गतौ । एति । इतः ॥ ( ३२६६ ) इणो यण् । ६ । ४ । ८१ । अजादौ प्रत्यये परे । इयङोऽपवादः । यन्ति । इयाय ॥ ( ३२६७ ) दीर्घ इणः किति । ७ । ४ । ६९ । इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि । ईयतुः । ईयुः । इययिथ, इयेथ । एता । इतात् । इहि । अयानि । ऐत् । ऐताम् । आयन् । इयात् । ईयात् ॥ ( ३२६८ ) एतेर्लिङि । ७ । ४ । २४ । उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । ( ३२६९ ) उभयत आश्रयणे नान्तादिवत् । अभीयात्[1] । अणः किम् । समेयात् । समीयादिति प्रयोगस्तु भौवादिकस्य ॥ ( ३२७० ) इणो गा लुङि । २ । ४ । ४५ । गातिस्थेति सिचो लुक् । अगात् । अगाताम् । अगुः । १ ॥ इङ् अध्ययने । नित्यमधिपूर्वः । अधीते । अधीयाते । अधीयते ॥ ( ३२७१ )

---

तद्दाह—हलादावित्यादि ॥ ( ३२६० ) ऊर्णोतेर्विभाषा । 'सिचि वृद्धिः–३०७०' इति सूत्रं 'नेटि ३०३४' इत्यत इटीति चानुवर्तत इत्याशयेनाह—इडादावित्यादि ॥ स्तवीतीति । 'तुरुस्तुशम्यमः–३२५३' इति ईट् । 'स्तुसुधूञ्भ्यः–३१७८' इत्यत्र परस्मैपदेष्वित्युक्तेः आत्मनेपदे तु नेट् । अस्तोष्ट । अस्तोषाताम् ॥ ( ३२६१ ) ब्रुवः पञ्चानाम्–। 'विदो लटो वा ३२७७' इत्यतो लटो वेति वर्तते । ब्रुव इत्येतदादिमं पञ्चम्यन्तमान्तिमं तु षष्ठ्यन्तमित्याशयेनाह–ब्रुवो लट इत्यादि ॥ ( ३२६२ ) चर्त्वमिति । प्रक्रियालाघवात् 'आहस्तः' इत्येव सुवचमित्याहुः ॥ ( ३२६३ ) ब्रुव ईट् । हलादेः किम् । ब्रवाणि । पितः किम् । ब्रूतः ॥ झलीति थत्वविधानादिति । ईडागमे कृते झलादित्वाभावादिति भावः । इण् गतौ ॥ ( ३२६६ ) इयङोऽपवाद इति । येन नाप्राप्तिन्यायेनेति भावः । गुणवृद्धी तु परत्वादस्य बाधिके । अयनम् । आयकः ॥ ( ३२६७ ) दीर्घ इणः किति । 'अत्र लोपोऽभ्यासस्य ३४७९' इत्यतोऽभ्यासस्येत्यनुवर्तते 'व्यथो लिटि ३१३४' इत्यतो लिटीति च । किति किम्, इयाय । अत्र वदन्ति–इह दीर्घे कृतेऽपि 'अभ्यासस्यासवर्णे ३०५९' इतीयङा रूपासिद्धेः कितीति व्यर्थम् । न च दीर्घस्येयङि दीर्घविधानं व्यर्थमिति वाच्यम्, ईयतुः । ईयुरित्यत्र 'वार्णादाङ्गं बलीयः ३०६०' इति यणि कृते दीर्घविधेरावश्यकत्वात् । किञ्च, लिटीत्यनुवर्तमानमपीह व्यर्थमेव व्यावर्त्याभावादिति । एता । एष्यति । एतु । इतात् । इताम् । यन्तु । इहि । उत्तमे तु अयानि । अयाव । अयाम । लङ्मध्यमे ऐः । ऐतम् । ऐत । उत्तमे तु आयम् । ऐव । ऐम ॥ ईयादिति । 'अकृत्सार्व–३०७१' इति दीर्घः ॥ ( ३२६८ ) एतेर्लिङि । इहार्धधातुक इति स्वरूपकथनार्थं प्रक्षिप्तम् । किति लिङीत्येतावतैवेष्टसिद्धेः ॥ ( ३२६९ ) उभयत आश्रयण इति । अन्तादिशब्दाववयवविशेषवाचिनौ । तत्र यदि पूर्वस्यावयवबुद्ध्या एकादेश आश्रीयते तदा तस्यैव परस्य कथमादिवद्भावः स्यात् । एवं परस्यादिवत्त्वे पूर्वस्यान्तवद्भावो न स्यात्, एकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः । नन्वेवं रामौ इत्यस्य 'सुप्तिङन्तम्–५२' इति पदत्वं न स्यात् । परादित्वे रामेति प्रकृतेरभावात् । यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणमिति स्त्रीकाराद्रामम् इत्यस्याप्रकृतित्वात् । पूर्वान्तत्वे तु परत्र प्रत्ययाभावात् । अत्राहुः–पूर्वं पदसंज्ञा पश्चादेकादेश इति नोक्तदोषः । इह च ज्ञापकं 'सुपिसूतिसमाः' इति ॥ विध्यादौ समीयादिति न भवत्येव । आशीर्लिङि तु 'अकृत्सार्व–३०७१' इति दीर्घे कृतेऽपि ह्रस्वत्वेन भाव्यमित्याशङ्क्याह—भौवादिकस्येति । इटकिटकटीत्यत्र प्रश्लिष्टस्य ईधातोराशीर्लिङि इदं रूपम् । वी

---

१ 'अभि ईयात्' इत्यत्र ह्रस्वे सवर्णदीर्घे च प्राप्ते 'वार्णादाङ्गं बलीयः' इत्यनेन प्राग् ह्रस्वे सवर्णदीर्घे च जाते पुनः प्राप्तो ह्रस्वः 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति न्यायेन न भवतीति तत्त्वम् । 'उभयत आश्रयणे नान्तादिवत्' इत्यस्य भाष्य उदाहरणादानाद् वैयर्थ्यमेवेति ध्वनितम् ॥ 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इत्यस्य तु 'अवेहि' 'अव आ ऊढः' इत्यादिरेव विषयः न तु प्रकृतिप्रत्ययकार्यतोऽप्यन्तरङ्गत्वबोधनम् । 'षत्वतुकोरसिद्धः' इत्यत्र तुग्ग्रहणं तु नव्यमते 'जनिवध्योश्च' इत्यत्र वधिग्रहणमिव स्पष्टार्थमेवेति दाधिमथानां सिद्धान्तः ॥

गाङ् लिटि । २ । ४ । ४९ । इङो गाङ् स्याल्लिटि लावस्थायां विवक्षिते वा । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अध्ययै । गुणायादेशयोः कृतयोरुपसर्गस्य यण् । पूर्वं धातुरुपसर्गेणेति दर्शनेऽन्तरङ्गत्वाद्गुणात्पूर्वं सवर्णदीर्घः प्राप्तः । णेरध्ययने वृत्तमिति निर्देशान्न भवति । अध्यैत । परत्वादियङ् । तत आट् । वृद्धिः । अध्यैयाताम् । अध्यैयत । अध्यैथि । अध्यैवहि । अधीयीत । अधीयीयाताम् । अधीयीध्वम् । अधीयीय । अध्येषीष्ट ॥ ( ३२७२ ) (सू) विभाषा लुङ्लृङोः । २ । ४ । ५० । इङो गाङ् वा स्यात् ॥ ( ३२७३ ) (सू) गाङ्कुटादिभ्योऽञ्णिन्ङित् । १ । २ । १ । गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ॥ ( ३२७४ ) (सू) घुमास्थागापाजहातिसां हलि । ६ । ४ । ६६ । एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत । २ ॥ इक् स्मरणे । अयमप्यधिपूर्वः, अधीगर्थदयेशामिति लिङ्गात् । अन्यथा हीगर्थस्येव ब्रूयात् ॥ (३२७५) (वा) इणवदिक इति वक्तव्यम् ॥ अधियन्ति । अध्यगात् । केचित्तु आर्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः । तन्मते यण्न । तथा च भट्टिः—ससीतयो राघवयोरधीयन्निति । ३ ॥ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । प्रजनं गर्भग्रहणम् । असनं क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । अडागमे सत्यनेकाच्त्वाद्यणिति केचित् । अव्यन् । ४ ॥ अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । इतः । इयन्ति । ईयात् । ऐषीत् । ५ ॥ या प्रापणे । प्रापणमिह गतिः । प्रणियाति । यातः । यान्ति ॥ ( ३२७६ ) (सू) लङः शाकटायनस्यैव । ३ । ४ । १११ । आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः, अयान् । यायात् । यायाताम् । यायास्ताम् । ६ ॥ वा गतिगन्धनयोः । गन्धनं सूचनम् । ७ ॥ भा दीप्तौ । ८ ॥ ष्णा शौचे । ९ ॥ श्रा पाके । १० ॥ द्रा कुत्सायां गतौ । ११ ॥ प्सा भक्षणे । १२ ॥ पा रक्षणे । पायास्ताम् । अपासीत् । १३ ॥

---

गतीत्यत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यत इति मते तु विध्यादिलिङ्यपि भवत्येवेति बोध्यम् ॥ ( ३२७१ ) **गाङ् लिटि । लावस्थायामिति ।** वार्तिकमते तु एशादेशात्प्रागेव गाङादेशे 'द्विर्वचनेऽचि ३००३' इति सूत्रं न प्रवर्तते द्वित्वनिमित्ताचोऽभावात् ॥ **विवक्षित इति ।** भाष्यमते तु सुतरां न प्रवर्तते अनैमित्तिकत्वादिति भावः ॥ **निर्देशान्न भवतीति ।** 'वार्णादाङ्गं बलीयः ३०६०' इति समाधानं तु न प्रवर्तते व्याश्रयत्वादिति भावः ॥ **अध्यैयतेति ।** 'आत्मनेपदेष्वनतः ३०२०' इति झस्य अत् । लङ्मध्यमे तु अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् ॥ **अध्येषीष्टेति ।** लिङः सीयुट् । अध्येषीयास्ताम् । अध्येषीरन् ॥ ( ३२७३ ) **गाङ्कुटादिभ्यो—।** इह 'गाङ्-गतौ' इत्यस्य न ग्रहणम्, तदर्थतया ङकारानुबन्धस्य तत्र चरितार्थत्वात् । आदेशङकारस्तु अचरितार्थः । स्थानिवद्भावेनैव तङः सिद्धत्वादत आह—**गाङादेशादिति ।** कुटादिस्तुदाद्यन्तर्गणः । केचित्तु—कुट आदिर्येषां ते कुटादयः, कुटस्य आदिः कुटादिः, कुटादिश्च कुटादयश्च कुटादयः इति समासद्वयमाश्रित्यकुटपूर्वस्य लिखधातोरपि ग्रहणाल्लिखनमिति प्रयोगः सिद्ध इत्याहुः, तच्च 'रलो व्युपधात्—' इति सूत्रस्थेन लिखित्वा लेखित्वा, लिलिखिषति लिलेखिषति—इति वृत्तिग्रन्थेन, 'शकुनिष्वालेखने' इति सौत्रप्रयोगेण च विरुध्यते । अञ्णिदिति किम्, घञि—कोटः । पोटः । णलि—चुकोट । पुपोट ॥ ( ३२७४ ) **घुमास्था—।** 'दीङो युडचि—३३२५' इत्यतः क्ङितीत्यनुवर्तते, आर्धधातुक इति चाधिक्रियत एव । क्ङिति किम्, दाता । धाता । हलादौ किम्, ददतुः । ददुः । अन्यथ आतो लोपात्परत्वादीत्वं स्यात् । आर्धधातुके किम्, मातः । माथः । **अध्यगीष्टेति ।** सिचो ङित्त्वादीत्त्वम् ॥ **इक् स्मरणे ।** ककार इह 'इणवदिकः ३२७५' इति विशेषणार्थः । एरित्युक्ते तु इट किट कटीत्यत्र प्रश्लिष्टस्य ईधातोरपि ग्रहणं स्यादित्याहुः ॥ ( ३२७५ ) **केचित्त्विति ।** आर्धधातुकाधिकारे वार्तिकपाठात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादतिदेश इति भावः ॥ **अधीयन्निति ।** स्मरन्नित्यर्थः । राघवयोरित्यत्र 'अधीगर्थदयेशां कर्माणि ८९६' इति षष्ठी ॥ **वी गति—॥ अवियन्निति ।** अडागमात्परत्वादियङ् ॥ **अडागमे सतीति ।** कृताकृतप्रसङ्गित्वमात्रेण अटो नित्यत्वादिति भावः । अत एवापरितोषात् 'असिद्धवदत्राभात् २९३७' इति समानाश्रये यणि कर्तव्ये अटोऽसिद्धत्वादियङेवोचित इत्याशयेन वा केचिदित्युक्तम् । लावस्थायामेवाडागम इति पक्षे तु यणेवेति बोध्यम् ॥ **ईकारोऽपीति ।** प्रयुञ्जते च 'न हि तरणिरुदीते दिक्पराधीनवृत्तिः' इति । व्याख्यातं च मनोरमायाम्—कर्मव्यतिहारे तङ् । न च 'न गतिहिंसार्थेभ्यः ३५७२' इति निषेधः शङ्क्यः, उत्पूर्वस्याविर्भावार्थत्वादिति । अत्र वदन्ति—व्यतिशब्दं विना कर्मव्यतिहारकल्पनं क्लेशावहम् । परकीयकर्म च कर्मव्यतिहारेऽपेक्ष्यते,

---

१ अस्य तु 'धात्वर्थः पूर्वम् उपसर्गद्योत्यार्थेन युज्यते न तु कारकार्थेन' इत्येवार्थो न तु उपसर्गसंज्ञकशब्देनेति । तथा च 'अनुभूयते' इत्यादीनां सकर्मकत्वसिद्धिः नापि 'सुट् कात्पूर्वः' इत्यत्र कात्पूर्वग्रहणवैयर्थ्यम् । तत्प्रत्याख्यानं भाष्यकृतामेकदेशिनामेव, तथाऽङ्गीकारे 'संचस्कार' 'समस्करोत्' इत्यादिसिद्धावपि 'संचेस्कीयते' इत्यादीनामायासमन्तरेणासिद्ध्यापत्तेः ॥ तस्मात् प्रकृतिप्रत्ययनिमित्तककार्योत्तरमेवोपसर्गसंज्ञकशब्दयोग इति सर्वेष्टसिद्धिः । कात्पूर्वग्रहणेन 'प्रकृतिप्रत्ययनिमित्तककार्योत्तरमेवोपसर्गसंज्ञकशब्दयोगः' इति ध्वन्यते । 'षत्वतुकोरसिद्धः' इत्यत्र तुग्ग्रहणेन 'प्रागेवोपसर्गसंज्ञकशब्दयोगस्ततः प्रकृतिप्रत्ययनिमित्तककार्यम्' इति ध्वन्यते । तत्रैवं विप्रतिपत्तौ 'सुट् कात्पूर्वः' 'गतिर्गतौ' इत्यत्र भाष्यकृतोपसर्गसंज्ञकशब्दयोगे पश्चात्करणीयत्वस्यैव सिद्धान्तितत्वेन तुग्ग्रहणे सांन्यासिकत्वस्यैव ध्वनितत्वादिति दाधिमथाः ॥

---

१ अयं चायासो नित्यग्रहणोपदेशग्रहणानुवृत्तिपरोऽप्यसंभव एव । दूरतरत्वेनानुवृत्तेरसंभवात् । नित्यसंयोगादित्त्वमपि सस्वरतुरित्यत्राप्यसंभवात् अस्मर्यत तरीस्तर्यते इत्यत्राप्यसंभवापत्त्याऽनुवृत्तौ दोषसंभवाच्च ॥

रा दाने । १४ ॥ ला आदाने । द्वावपि दाने इति चन्द्रः । १५ ॥ दाप् लवने । प्रणिदाति । प्रनिदाति । दायास्ताम् । अदासीत् । १६ ॥ ख्या प्रकथने । अयं सार्वधातुकमात्र[१]विषयः । सस्थानत्वं नमः ख्यात्रे इति वार्तिकं तद्भाष्यं चेह लिङ्गम् । सस्थानो जिह्वामूलीयः, स नेति ख्याञादेशस्य खशादित्वे प्रयोजनमित्यर्थः । संपूर्वस्य ख्यातेः प्रयोगो नेति न्यासकारः । १७ ॥ प्रा पूरणे । १८ ॥ मा माने । अकर्मकः । तनौ ममुस्तत्र न कैटभद्विष इति माघः । उपसर्गवशेनार्थान्तरे सकर्मकः । उदरं परिमाति मुष्टिना । नेर्गदे[२२५२]त्यत्र नास्य ग्रहणम् । प्रणिमाति । प्रनिमाति । १९ ॥ वच परिभाष[२]णे । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । बहुवचनपर इत्यन्ये । झिपर इत्यपरे । वग्धि । वच्यात् । उच्यात् । अवोचत् । २० ॥ विद ज्ञाने ॥ ( ३२७७ ) विदो लटो वा । ३ । ४ । ८३ । वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे–वेत्ति । वित्तः इत्यादि । विवेद । विविदतुः । [३१२२]उषविदेत्याम्पक्षे विदेत्यकारान्तनिपातनान्न लघूपधगुणः । विदाञ्चकार । वेदिता ॥ ( ३२७८ ) विदाङ्कुर्वन्त्वित्यन्यतरस्याम् । ३ । १ । ४१ । वेत्तेर्लोटयाम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते इतिशब्दात्[३] ॥ ( ३२७९ ) तनादिकृञ्भ्य उः । ३ । १ । ७९ । तनादेः कृञश्च उप्रत्ययः स्यात् । शपोऽपवादः । तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम्[४] । तेन न विश्वसेद-

---

त्वात्र नोपात्तम् । परस्परकरणं तु न संभवत्येव । ततश्चोदीते इति भावे निष्ठा ज्ञेया । तथा चोदये दिक्पराधीनवृत्तिस्तरणिरित्यर्थः सुगमः इति ॥ **प्रणिदातीति** । 'शेषे विभाषा–२९८९' इति णत्वविकल्पः॥ **अदासीदिति** । अलघुत्वान्न सिज्लुक्॥**नमः ख्यात्रे इति** । यद्ययमार्धधातुकेऽपि प्रयुज्येत, तर्हि तृजन्तेऽस्मिन्परे 'शर्परे विसर्जनीयः २२४' इत्यस्याप्रवृत्त्या 'कुप्वोः–२१५' इति जिह्वामूलीयो दुर्वारः स्यादेवेति तदभावः खशादित्वे प्रयोजनमिति वार्तिककाराद्युक्तिर्व्याकुप्येतेति भावः॥**संपूर्वस्येत्यादि** । संख्यातीत्यादिप्रयोगो नास्त्येव । संख्येति प्रयोगस्तु ख्याञादेशस्येति न्यासकाराशयः ॥ **मा माने** ॥ **नास्येति** । 'घुप्रकृतिमाङ्' इति पाठात् ङितामेव तत्र ग्रहणम्, ततश्च 'शेषे विभाषा–२९८९' इति विकल्प एव प्रवर्तत इत्याह–**प्रणिमाति । प्रनिमातीत्यादि** ॥ **वच भाषणे** । उवाच । वक्ता । वक्ष्यति । वक्तु । वक्तात् । अवक् । अवक्ताम् ॥ **अयमन्तिपर इति** । तथा च–वचन्ति, वक्ष्यन्ति, वचन्तु, अवचन्, अवोचन्, अवक्ष्यन्नित्येतेऽसाधवः ॥ **बहुवचनपर इति** । अस्मिन् पक्षे लटि मध्यमे वक्थ । उत्तमे तु वच्मः । लिटि ऊचुः । मध्यमे ऊच । उत्तमे तु ऊचिम । लुटि वक्तारः । लिङि वच्यासुः, उच्यासुरित्यादयोऽप्यसाधवः ॥ **झिपर इति** । अस्मिंस्तु पक्षे वक्थः । वच्मः । ऊच । लिटि ऊचिमेत्यादयः साधवः इति दिक् ॥ **( ३२७७ ) विदो लटो वा** । पञ्चमीयं न तु षष्ठी । तेन वियतिविन्दत्योरव्यवहितपरस्य लटोऽभावान्नैते आदेशास्तदाह–**वेत्तेरिति** ॥ **( ३२७८ ) लोटो लुगिति** । 'आमः २९९७' इति सूत्रे 'मन्त्रे घस–५२२९' इत्यतो लेरित्यनुवर्त्य आमः परस्य लेर्लुगिति व्याकुर्वतां मतेनेदमुक्तम् । निष्कर्षे तु तेनैव लुगिति बोध्यम् ॥ **पुरुषवचने इति** । प्रथमपुरुषो बहुवचनं चेत्यर्थः । परस्मैपदमप्यविवक्षितमेवेति केषांचिन्मते ( कर्तरि ) कर्मव्यतिहारे तङ् । व्यतिविदांकुरुताम् ।

---

१ **सार्वधातुकमात्रेति** । आर्धधातुकेषु नास्य प्रयोगः किंतु चक्षिङादेशस्यैव । तेन 'सौप्रख्ये भवः' इत्यत्र वुञ्, आख्यातशब्दे निष्ठानत्वम्, 'पुंख्यानम्' इत्यत्र रुः, पर्याख्यानशब्दे णत्वम्, 'नमः ख्यात्रे' इत्यत्र जिह्वामूलीयश्च नैव भवति ॥ परे तु–'न ध्याख्या–' इति सूत्रे ख्याग्रहणवैयर्थ्यापत्त्याऽऽर्धधातुकेष्वपि प्रयोगाङ्गीकारावश्यकत्वे तु–निष्ठानत्वाभावे स्वतन्त्रधातौ 'न ध्याख्या–' इति निषेधेन आदेशभूते यण्वत्त्वाभावेन नत्वाप्राप्त्या, णत्वाभावे स्वतन्त्रे धातौ 'लुङ्योगाप्रख्यानात्' इति निर्देशाण्णत्वाभावनिपातनेन, आदेशभूते शर्व्यवधानाण्णत्वाप्राप्त्या संवादस्य सत्त्वेऽपि 'रामः ख्याति' इत्यत्रेव "रामः ख्याता" इत्यादौ जिह्वामूलीयाभावे सौप्रख्यशब्दाद् वुञभावे 'पुंख्यानम्' इत्यत्र रुत्वाभावे संवादाभाव एवेति "चक्षिङः क्शाञ्ख्याञौ" इत्युभयविधादेशासिद्धान् 'लक्ष्ये रूपद्वयप्रदर्शनात्' इति कैयटसंमतान् उभयविधप्रयोगान् कथं वारयेमेति विदांकुर्वन्तु विद्वांस इति वदन्ति ॥ २ अत्र 'भाषणे' इत्येव पाठः, न तु 'परिभाषणे' ॥ 'आदादिको यो वच भाषणेऽस्ति' इति दशबलकारिकोक्तेः । 'अथ मुक्तकाश्च काश्चित्ततः क्रिया वच्मि काश्चिदेकैकाः ।' इति क्रियाकलापग्रन्थीयप्रयोगे, कारकप्रकरणे स्वयमेव अभिधत्ते भाषते वक्तीत्यादि इति 'आचष्टे वक्ति वदति रपत्याख्याति भाषते । ब्रूतेऽभिधत्ते गदति व्याहरत्यपि जल्पति । ब्रवीत्यभिदधाति व्याहरते कथयत्यपि ।' इत्यादिनाऽऽख्यातचन्द्रिकायां भट्टमल्लेन 'वक्ति ब्रवीति चाचष्टे भाषतेऽभिदधाति च ।' इति क्रियाकलापग्रन्थे विजयानन्देन च पर्यायतया कथितेषु च'यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम् ।' इति बोधितस्य सनिन्दोपालम्भस्याप्रतीतेः ॥ ३ **इतिशब्दादिति** । ये त्वाहुः––इतिशब्दः स्वरूपवचनो न प्रकारवाची गमकाभावात्–इति । तदपरे न क्षमन्ते निपातानामनेकार्थत्वेन तदर्थबाधे मानाभावात् । '**शमित्यष्टाभ्यो घिनुण्**' इत्यादौ इतिशब्दस्य तथाऽर्थदर्शनाच्चेत्यलं भाष्यविरुद्धकल्पनया ॥ ४ अथ "गणकार्यमनित्यम्" इति परिभाषा भाष्यानुक्तत्वादप्रमाणमिति "विश्वसेद्" इत्यादिप्रयोगाणां का गतिरिति चेत् । अत्र दाधिमथाः––'विश्व–असेत्' इति च्छित्त्वा तादृशप्रयोगनिर्वाह इति । "विश्व" इति हि नानार्थकमव्ययम्, "विष्वग्विश्वक् स्मृतं बुधैः" इति द्विरूपकोशात् ॥ "असेत्" इति च "अस गतिदीप्त्यादानेषु" इति भौवादिकस्य विधिलिङि रूपम् ॥

विश्वस्तमित्यादि सिद्धम् । विदाङ्करोतु ॥ (३२८०) (सू) अत उत्सार्वधातुके । ६ । ४ । ११० । उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । उदिति तपरकरणसामर्थ्यान्न गुणः । विदाङ्कुरुतात् । विदाङ्कुरुताम् । [३]उतश्चेति हेर्लुक् । आभीयत्वेन लुकोऽसिद्धत्वादुत्वम् । विदांकुरु । विदांकरवाणि । अवेत् । अवित्ताम् । सिजभ्यस्तेति झेर्जुस् । अविदुः ॥ ( ३२८१ ) (सू) दश्च । ८ । २ । ७५ । धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा । अवेः, अवेत् । २१ ॥ अस भुवि । अस्ति ॥ ( ३२८२ ) (सू) श्नसोरल्लोपः । ६ । ४ । १११ । श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति । स्तः । सन्ति । तासस्त्योरिति सलोपः । असि । स्थः । स्थ । अस्मि । स्वः । स्मः । आर्धधातुके इत्यधिकृत्य-॥ (३२८३) (सू) अस्तेर्भूः । २ । ४ । ५२ । बभूव । भविता । अस्तु । स्तात् । स्ताम् । सन्तु ॥ (३२८४-१) (सू) घ्वसोरेद्धावभ्यासलोपश्च । ६ । ४ । ११९ । घोरस्तेश्च एत्वं स्याद्धौ परे अभ्यासलोपश्च । आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः । [१]श्नसोरित्यल्लोपः । एधि । तातङ्पक्षे एत्वं न, परेण तातङा बाधात् ॥ ( ३२८४-२ ) (प) सकृद्गताविति न्यायात् । स्तात् । स्तम् । स्त । असानि । असाव । असाम । [२६]अस्तिसिच इतीट् । आसीत् । [३]श्नसोरित्यल्लोपस्याभीयत्वेनासिद्धत्वादाट् । आस्ताम् । आसन् । स्यात् । भूयात् । अभूत् । सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादीण्न ॥ ( ३२८५ ) (सू) उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । ८ । ३ । ८७ । उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे । निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । यच्परः किम् । अभिस्तः । २२ ॥ मृजू शुद्धौ ॥ (३२८६) (सू) मृजेर्वृद्धिः । ७ । २ । ११४ । मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे ॥ (३२८७) (वा) क्ङित्यजादौ वेष्यते ॥ [३]व्रश्चेति षः । मार्ष्टि । मृष्टः । मृजन्ति, मार्जन्ति । ममार्ज । ममार्जतुः, ममृजतुः । ममार्जिथ, ममार्ष्ठ । मार्जिता, मार्ष्टा । मृड्ढि । अमार्ट् । अमार्जम् । अमार्जीत्, अमार्क्षीत् । २३ ॥

रुदिर् अश्रुविमोचने ॥ (३२८८) (सू) रुदादिभ्यः सार्वधातुके ।७।२।७६। रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । रुदितः । हौ परत्वादिटि धित्वं न । रुदिहि ॥ (३२८९) (सू) रुदश्च पञ्च-

---

भ्यातिविदांकुर्वतामित्यादि ज्ञेयम् ॥ (३२७९) लेनेति । विश्वसेदित्यत्र शपो लुगभावः सिद्ध इति भावः । एवमप्यविश्वस्तमित्यत्रेडभावः कथमिति चेदागमशास्त्रस्यानित्यत्वादिति गृहाण ॥ ( ३२८० ) अत उत्सार्व—। क्ङिति किम्, करोति । करोषि ॥ लुकोऽसिद्धत्वादिति । सार्वधातुकग्रहणमुत्तरार्थमेव नात्रावश्यकम्, इह भूतपूर्वगत्या सार्वधातुकपरत्वमाश्रीयत इति वृत्तिमते त्वसिद्धत्ववर्णनस्योपयोगलेशोऽपि नास्तीति ज्ञेयम् ॥ (३२८१) दश्च । 'सिपि धातो रुर्वा ३३०३' इत्यनुवर्तते, पदस्येति, 'झलां जशोऽन्ते १३५' इत्यस्मादन्त इति च, तदाह—धातोर्दस्येत्यादि । सिपि किम्, तिपि–अवेत् । दान्तस्य धातोः सिपि रुर्वेत्येतावतैवेष्टसिद्धौ पदान्तानुवृत्तिर्मन्दप्रयोजनेत्याहुः । तच्चिन्त्यम्, वेत्सीत्यत्रातिप्रसङ्गाच्चर्त्वस्यासिद्धत्वेन दान्तत्वात् ॥ ( ३२८२ ) श्नसोरल्लोपः । 'अत उत्–३२८०' इति सूत्रादत इत्यनुवर्त्याद्ग्रहणं त्यक्तुं शक्यमित्याहुः ॥ श्नसोरिति शकन्ध्वादित्वात्पररूपमित्याह-श्नस्यास्तेश्चेति । श्नस्योदाहरणम्–रुन्धः । रुन्धन्तीत्यादि । क्ङिति किम् । रुणद्धि । अस्ति । तपरकरणमास्तामासन्नित्यत्र ह्याडागमे कृते तस्य लोपो मा भूदित्येतदर्थम् । निष्कर्षस्तु–अनुपदं स्फुटीभविष्यति ॥ (३२८४-१) घ्वसोरेद्धा-। एत्वमलोऽन्त्यस्य लोपस्तु शित्त्वात्सर्वस्येति भाष्यादौ स्पष्टम् । देहि । धेहि ॥ असिद्धत्वादाडिति । नन्वेवमाटोऽसिद्धत्वात् 'श्नसोः–३२८२' इत्यल्लोपो न भवेदिति तपरकरणं तत्र व्यर्थमिति चेत् । अत्राहुः–आभाच्छास्त्रस्यानित्यताज्ञापनाय तपरकरणम् । तेन देभतुरित्यादि सिद्धमिति । स्यादेतत् । अत्र केचित्–अद्ग्रहणस्य निष्फलत्वे तपरकरणस्य ज्ञापनार्थत्वं न सिध्येत् । न च 'अत उत्–३२८०' इति सूत्रस्थतपरकरणमेव ज्ञापनार्थमस्त्विति वाच्यम्, अस्येत्युक्तौ गौरवादर्धमात्रालाघवाय तत्र तपरत्वमिति सुवचत्वात् । तस्मादुक्तज्ञापनार्थमद्ग्रहणमावश्यकमित्याहुः ॥ ( ३२८५ ) उपसर्गप्रादुर्भ्याम्–। प्रादुसश्चेति । प्रादुस् इति सान्तमव्ययम् । 'प्रादुषः' इति पाठे प्रादुर्भ्यामिति निर्देशो न युज्यते इति प्राचां षान्तपाठः प्रामादिकः ॥ परस्येति । अयमस्तेः सस्य विशेषणं त्वस्तेः । तेन प्रादुरस्तीत्यत्र न षत्वम् । उपसर्गेत्यादि किम्, दधि स्यात् । अस्तेः किम्, परिसृजति ॥ मृजू शुद्धौ । अयं न षित्, भिदादिपाठसामर्थ्यात् ॥ ( ३२८६ ) मृजेर्वृद्धिः । गुणापवादः । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्याह—धातुप्रत्यये इति । धातुप्रत्यये किम्, कंसपरिमृड्भ्याम् ॥ ( ३२८७ ) क्ङित्यजादाविति । एतच्चान्येषां वैयाकरणानां मतम् 'इको गुणवृद्धी' इति सूत्रे भाष्यकृता स्वीकृतम् ॥ मृड्ढीति । 'हुझल्भ्यः-३२३१' इति हेर्धिः । षत्वष्टुत्वजश्त्वानि ॥ ( ३२८८ ) वलादेः सार्वधातुकस्येति । वलादेः किम्, रुदन्ति । सार्वधातुके किम्, रुदिता ॥ धित्वं नेति । सकृद्गताविति न्यायात्, हेर्धिरिति स्थान्यादेशयोरिकार उच्चार-

---

१ विद्यमानत्वेनेति । सर्वादेशेनानपहृतत्वं विद्यमानत्वम् । श्रौतो यः सर्वादेशस्तेनानपहृतत्वमिति तदर्थः । अभूदित्यत्र श्रौतो यः सर्वादेशो भूभावरूपस्तेनापहृतत्वमेवास्तीति विशिष्टाभावः । आसीदित्यत्र तु 'आटश्च' इति वृद्धिरूपादेशसत्त्वेऽपि स न श्रौतः सर्वादेश इति निष्कर्षे विद्यमानत्वमस्त्येव ॥ 'अस्तेः सकारान्तात्' इति भाष्योक्तार्थाङ्गीकारे तु नैव क्वापि कष्टकल्पनेति बोध्यम् ॥

भ्यः । ७ । ३ । ९८ । हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् ॥ ( ३२९० ) (सू) अड्गार्ग्यगालवयोः । ७ । ३ । ९९ । अरोदीत्, अरोदत् । अरुदिताम् । अरुदन् । अरोदीः, अरोदः । प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट् । रुद्यात् । अरुदत्, अरोदीत् । १ ॥ ञिष्वप् शये । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुषुपुः । सुष्वपिथ, सुष्वप्थ ॥ ( ३२९१ ) (सू) सुविनिर्दुर्भ्यः सुपिसूतिसमाः । ८ । ३ । ८८ । एभ्यः सुप्यादेः सस्य षः स्यात् । पूर्वं धातुरुपसर्गेण युज्यते । किति लिटि परत्वात्संप्रसारणे षत्वे च कृते द्वित्वम् ॥ [ ३२५७ ] (प) पूर्वत्रासिद्धीयमद्विर्वचने ॥ सुषुषुपतुः । सुषुषुपुः । अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम् । षत्वस्यासिद्धत्वात्ततः पूर्वं हलादिः शेषः, नित्यत्वाच्च । ततः सुपिरूपाभावान्न षः । सुसुष्वाप । सुस्वप्ता । अस्वपीत्, अस्वपत् । स्वप्यात् । सुष्यात् । सुषुप्यात् । अस्वाप्सीत् । २ ॥ श्वस प्राणने । श्वसिति । श्वसिता । अश्वसीत्, अश्वसत् । श्वस्याताम् । श्वस्यास्ताम् । ह्म्यन्तक्षणेति न वृद्धिः । अश्वसीत् । ३ ॥ अन च । अनिति । आन । अनिता । आनीत्, आनत् ॥ ( ३२९२ ) (सू) अनितेः । ८ । ४ । १९ । उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति । ४ ॥ जक्ष भक्षहसनयोः । जक्षिति । जक्षितः ॥ ( ३२९३ ) (सू) अदभ्यस्तात् । ७ । १ । ४ । झस्य अत्स्यात् । अन्तापवादः । जक्षति । सिजभ्यस्तेति जुस् । अजक्षुः । अयमन्तस्थादिरित्युज्ज्वलदत्तो बभ्राम । ५ ॥ रुदादयः पञ्च गताः ॥

जागृ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । उषविदेत्याम्वा । जागराञ्चकार । जजागार ॥ ( ३२९४ ) (सू) जाग्रोऽविचिण्णल्ङित्सु । ७ । ३ । ८५ । जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च । जजागरतुः । अजागः । अजागृताम् । अभ्यस्तत्वाज्जुस् ॥ ( ३२९५ ) (सू) जुसि च । ७ । ३ । ८३ । अजादौ जुसीगन्ताङ्गस्य गुणः स्यात् । अजागरुः । अजादौ किम् । जागृयुः । आशिषि तु जागर्यात् । जागर्यास्ताम् । जागर्यासुः । लुङि अजागरीत् । जागृ इस् इत्यत्र यण् प्राप्तः, तं सार्वधातुकेगुणो बाधते, तं सिचि वृद्धिः, तां जाग्रोगुणः, तत्र कृते हलन्तलक्षणा प्राप्ता, नेटीति निषिद्धा, ततोऽतो हलादेरिति बाधित्वाऽतो ल्रान्तस्येति प्राप्ता, ह्म्यन्तेति निषिध्यते ॥ तदाहुः—

( ३२९६ ) गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् । पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव ॥ १॥ इति ।

---

णार्थ इत्यादिप्रागुक्तसमाधानाद्वेति भावः ॥ ( ३२८९ ) रुदश्च—। पञ्चभ्यः किम्, जागर्तेर्लङि अजागः ॥ प्रकृतिप्रत्ययेत्यादि । हलादिपित्सार्वधातुकापृक्तापेक्षत्वाच्च बहिरङ्गत्वमडीटोः ॥ अरुददिति । 'इरितो वा ३०३६' इत्यङ् ॥ अरोदीदिति । 'अस्तिसिचः—२९८०' इति ईट् । 'रुदश्च—३२८९' इत्यनेन तु न, सिचा व्यवधानेन रुदादेः परत्वाभावात् ॥ सुषुपतुरिति । 'वचिस्वपि—३२१३' इति संप्रसारणम् । ततो द्वित्वम् ॥ ( ३२९१ ) सुपिसूतिसमा इति । सूतीति क्तिन्नन्तः । समेति पचाद्यजन्तः । सुषुप्तिः । सुषूतिः । सुषमा । विषमः ॥ अद्विर्वचन इति । तेन षत्वसहितस्य द्वित्वम् ॥ सुपिरूपाभावादिति । 'एकदेशविकृतमनन्यवत् २५५' इति तु न प्रवर्तते, तस्य स्थानिवत्सूत्रशेषत्वात् । षत्वस्य त्रैपादिकत्वेन तत्कार्यं प्रति स्थानिवत्त्वाभावादित्याहुः । वस्तुतस्तु—'स्थानिवदादेशः—७६' इत्येतं प्रति त्रिपादी सिद्धेत्युक्तम् । तस्मादिह समाधानान्तरमूह्यमित्यन्ये ॥ ( ३२९२ ) अनितेः । 'उपसर्गादसमासेऽपि—३०५४' इत्यत उपसर्गादिति वर्तते, 'रषाभ्याम्—३३६' इत्यतो 'नो णः' इति च, तदाह—उपसर्गस्थादित्यादि ॥ ( ३२९३ ) अन्तापवाद इति । 'झोऽन्तः २९२३' इत्यस्य अदादेशोऽपवादः । अस्य त्वपवादो जुसिति ज्ञेयम् ॥ बभ्रामेति । "जक्षन् क्रीडन् रममाणः" इत्युपनिषदि जशादित्वस्य निर्विवादत्वात् । 'नाभ्यस्ताच्छतुः ५७३' इति निषेधेन जक्षन् इति नुमश्छान्दसत्वेऽपि जशादित्वस्य तत्कल्पनाया अन्याय्यत्वात्, धातुवृत्त्यादौ जशादिपाठाच्च ॥ ( ३२९४ ) जाग्रोऽविचिण्णल्—ङिद्भ्योऽन्यस्मिन्निति । जागृविः । विशब्देन वादिप्रत्ययो गृह्यते । इकारस्तूच्चारणार्थ इति वदतां मते क्वसावपि न भवति । जजागृवान् । जजागृवांसो । चिण् । अजागारि । णल् । जजागार । ङित् । जागृतः । जागृथः ॥ वृद्धिविषये इति । ण्वुलि जागरकः । घञि जागरः । णिचि जागरयति । न चैतेषु गुणे कृतेऽपि 'अत उपधायाः ३०४९' इति वृद्धिः स्यादिति वाच्यम्, गुणविधेश्चिण्णल्प्रतिषेधस्य चानर्थक्यापत्तेः ॥ ( ३२९५ ) जुसि च । चकारः स्पष्टप्रतिपत्त्यर्थः । 'क्सस्याचि ३११८' इत्यतोऽचीत्यनुवर्तत इत्याह—अजादाविति ॥ जागृयुरिति । एवं श्रुणुयुः चिनुयुरित्यादावपि गुणो नेति बोध्यम् । 'यासुटो ङित्त्वाच्छृणुयुरित्यादौ गुणो न' इति प्राचामुक्तिस्तु मनोरमायां दूषिता, 'जुसि च ३२९५' इति गुणस्य निषेधापवादत्वादिति । केचित्तु 'जुसि च ३२९५' इत्यत्र उसीत्यावर्त्य उसूरूपे जुसीति व्याख्यानान्नोक्तदोष इत्याहुः । अजादौ जुसीति समाधानं तु भाष्यारूढम् ॥ जागर्तेः सिच इटि कृते यणादिप्राप्तिक्रमं दर्शयति—जागृ इस् इत्यत्रेति ॥ तत्र कृते इति । हलन्तलक्षणाया वृद्धेर्जा-

---

१ जकारोच्चारणम् 'अजुहवुः' इत्यत्र गुणप्रवृत्त्यर्थम् । जुहुवुरित्यत्र गुणनिवृत्त्यर्थम् ॥

दरिद्रा दुर्गतौ । दरिद्राति ॥ ( ३२९७ ) इद्दरिद्रस्य । ६ । ४ । ११४ । दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके । दरिद्रितः ॥ ( ३२९८ ) श्नाभ्यस्तयोरातः । ६ । ४ । ११२ । अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके । दरिद्रति । अनेकाच्त्वादाम् । दरिद्राञ्चकार । [१]आत औ णल इत्यत्र ओ इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम् । अत एव ज्ञापकादाम्नेत्येके । ददरिद्रौ । ददरिद्रतुरित्यादि । यत्तु-णलि ददरिद्रेति तन्निर्मूलमेव । ( ३२९९ ) दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः ॥ ( ३३०० ) लुङि वा ॥ ( ३३०१ ) सनि ण्वुलि ल्युटि च न ॥ दरिद्रिता । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः । दरिद्रियात् । दरिद्र्यात् । अदरिद्रीत् । इट्सकौ । अदरिद्रासीत् ।२॥ चकासृ दीप्तौ । चकास्ति । झस्य अत् । चकासति । चकासाञ्चकार । धि चेति [२]सलोपः सिच एवेत्येके । चकाद्धि । चकाधीत्येव भाष्यम् ॥ ( ३३०२ ) तिप्यनस्तेः ।८।२।७३। पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । अचकात्, अचकाद् । अचकासुः ॥ ( ३३०३ ) सिपि धातो रुर्वा । ८ । २ । ७४ । पदान्तस्य धातोः सस्य रुः स्याद्वा पक्षे[३] दः । अचकाः, अचकात् । ३ ॥ शासु अनुशिष्टौ । शास्ति ॥ ( ३३०४ ) शास इदङ्हलोः । ६।४।३४ । शास उपधाया इत्स्यादङि हलादौ क्ङिति च । [३]शासि-

---

गर्तिगुणेन बाधस्तेन हलन्तत्वसंपादनात् । या हि गुणप्रवृत्ति समये वृद्धिः सा बाध्यते नान्येति भावः । अजागरिष्टाम् । अजागरीरित्यादि ॥ दरिद्रा ॥ ( ३२९७ ) इद्दरिद्रस्य । 'इद्दरिद्रः' इति वक्तुमुचितम् ॥ ( ३२९८ ) श्नाभ्यस्त-। क्रीणन्ति, क्रीणते । पुनन्ति, पुनते । दधति, दधते । क्ङिति किम्, क्रीणाति । पुनाति । दधाति । अतः किम्, बिभ्रति ॥ ओ इत्येव सिद्धे इति । प्रथमत्यागे मानाभावादिति भावः ॥ निर्मूलमेवेति । यत्तु व्याख्यातृभिः समर्थ्यते-'आमोऽभावे आतो लोपे कृते आदन्तत्वाभावादौत्वं न' इति तन्न, 'आत औ णलः ३१६४' इत्यत्र प्राथम्यादोकारे कर्तव्ये औकारविधानं दरिद्रातेरालोपेऽपि श्रवणार्थं सत् आमभावे लिङ्गमिति हरदत्तमाधवादिग्रन्थैः, स्वग्रन्थेन च विरोधात् । तत्कथमौत्वस्याप्रवृत्तिर्भवेत् । यदप्युक्तम्, ओकारौकारयोर्द्विमात्रत्वाविशेषादौकारविधानामिति । तदपि स्थवीयः, तस्मिन्पक्षे आमो दुर्वारत्वप्रसङ्गात् ॥ ( ३२९९ ) विवक्षित इति । तेन दरिद्रातीति दरिद्र इति पचाद्यजेव भवति परसप्तम्यां तु 'श्याद्व्यधा-३८६६' इत्यादन्तलक्षणो णः स्यात् । सति तु तस्मिन् 'आतो युक् चिण्कृतोः ३६८५' इति युकि दरिद्राय इति स्यादिति भावः ॥ ( ३३०१ ) सनि ण्वुलीति । एतेष्वालोपो नेत्यर्थः । दिदरिद्रासति । दरिद्रायकः । दरिद्राणम् ॥ अदरिद्रुरिति । 'सिजभ्यस्त-२९८१' इति झेर्जुस् । 'लङः शाकटायनस्यैव २२७६' इत्यादन्तलक्षणो विकल्पस्तु न भवति । परत्वात् 'श्नाभ्यस्तयोः-३२९८' इत्यालोपे आकारान्तस्यैवाभावात् । 'ई हल्यघोः ३३१५' इत्यात ईत्वमिह न शङ्क्यमेव झेर्जुसि हलादिपरत्वाभावादिति भावः । ननु दरिद्रा झि इति स्थिते जुसः प्रागेव आल्लोपात्परत्वादपवादत्वाच्च ईत्वं स्यात् मैवम्, अकृतव्यूहपरिभाषाया जागरूकत्वात् । ईत्वनिमित्तं हलादित्वं, तच्च विनाशोन्मुखं, जुसो भावित्वात् ॥ झस्य अदिति । 'अदभ्यस्तात् ३२९३' इत्यनेन ॥ ( ३३०२ ) तिप्यनस्तेः । पदान्तस्य किम्, चकास्ति । सस्येति किम्, बध्नोर्लङि तिपि अबद् । तिपि किम्, क्विपि चकाः । अनस्तेः किम्, सर्वमा इदम् । आ इति लङि तिपि अस्ते रूपम् । 'बहुलं छन्दसि' इति ईट् न ॥ ( ३३०४ ) शास इदङ्हलोः । अङि अशिषत् । अशिषताम् । क्ङिति शिष्टः । शिष्टवान् । शिष्यात् । शिष्यास्ताम् । अङ्साहचर्या-

---

१ सनि ण्वुलीति । इदं 'न दरिद्रायके लोपो दरिद्राणे च नेष्यते । दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥' इति 'इद्दरिद्रस्य' इति सूत्रभाष्यकारिकाफलितार्थभूतं वार्तिकम् 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायेन 'श्नाभ्यस्तयोरातः' इत्यस्यैव बाधकम् । तेनैतत्पक्षे सनि दिदरिद्रिषतीत्यत्र 'आतो लोप इटि च' इत्याकारलोपो भवत्येवेति केचित् ॥ तन्न, सनि ण्वुलि ल्युटि सार्वधातुकत्वाभावेन 'श्नाभ्यस्तयोः-' इति लोपाप्राप्त्या वार्तिकवैयर्थ्यापत्तेः ॥ क्ङित्परत्वाभावेन 'आतो लोप इटि च' इत्यस्याप्यप्राप्तेः ॥ किंतु 'दरिद्रातेरार्धधातुके-' इति वार्तिकप्राप्तलोपस्यैव व्यवस्थार्थं भाष्ये कारिकेयं पठिता 'अद्यतन्यां वा' इति वार्तिकं च ॥ एवं च 'लुङ्सनोर्वा' 'ण्वुलि ल्युटि च न' इत्येवं वार्तिके लेखनीये ॥ २ पक्षे द इति ॥ पूर्वसूत्रेणेति केचित् । तन्न, सिपि तस्याप्राप्तेः ॥ जश्त्वेनेति परे । रुत्वस्य जश्त्वापवादतया तत्कदानोत्तरं दाधिदानस्यैवाप्रवृत्त्यापत्तेर्न तत्सम्यक् ॥ पुनः प्रसङ्गविज्ञानेन रुत्वविनिर्मुक्ते जश्त्वेनेत्यन्ये । तत्र त्रैपादिकेषु विप्रतिषेधाभावेन न समञ्जसता ॥ तस्मात् 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इत्यत्र 'अन्यतरस्याम्' ग्रहणस्येवात्रापि वापदस्यैव समुच्चयार्थत्वेन प्रक्रान्तस्य दकारविधानस्यैव समुच्चय इत्युभयविधायकमिदमेव सूत्रमिति तु तत्त्वम् ॥ एवं च 'वा' इत्यस्यैव व्याख्यानम्-'पक्षे दः' इति बोध्यम् ॥ ३ ननु लाघवाभावेन शङ्काया अनौचित्यमत आह-प्रथमत्याग इति । 'स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् ॥ तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥' इति शिक्षया विवृततराविवृततमप्रयत्नभेदेन लाघवेन विवृततरस्यैवोपदेशे कर्तव्ये विवृततमोपदेशः किमर्थ इति प्रश्न इति केचित् ॥

वसीति षः । शिष्टः । शासति । शशासतुः । शास्तु । शिष्टाम् । शासतु ॥ ( ३३०५ ) शा हौ । ६ । ४ । ३५ । शास्तेः शादेशः स्याद्धौ परे । तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः । शाधि । अशात् । अशिष्टाम् । अशासुः । अशाः, अशात् । शिष्यात् । सर्तिशास्तीत्यङ् । अशिषत् । अशासिष्यत् । ४ ॥

दीधीङ् दीप्तिदेवनयोः । एतदादयः पञ्च धातवश्छान्दसाः॥ दीधीते । एरनेकाचः इति यण् । दीध्याते॥(३३०६) यीवर्णयोर्दीधीवेव्योः । ७ । ४ । ५३ । एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे । इति लोपं बाधित्वा नित्यत्वाट्टेरेत्वम्। दीध्ये । दीधीवेवीटामिति गुणनिषेधः। दीध्याञ्चक्रे। दीधिता। दीधिष्यते।१॥ वेवीङ् वेतिना तुल्ये ।वी गतीत्यनेन तुल्येऽर्थे वर्तत इत्यर्थः। २ ॥

अथ त्रयः परस्मैपदिनः। षस सस्ति स्वप्ने। सस्ति। सस्तः। ससन्ति। ससास। सेसतुः। सस्तु। सधि। पूर्वत्रासिद्धमिति सलोपस्यासिद्धत्वाद्दतो हेरिति लुक् न। असत्। असस्ताम्। असः। असत्। सस्यात्। असासीत्, अससीत् । १ ॥ सन्ति । सन्तः । संस्तन्ति ॥ बहूनां समवाये द्वयोः संयोगसंज्ञा नेत्याश्रित्य स्कोरिति लोपाभावात् संस्ति। संस्तः—इत्येके। २ ॥ वश कान्तौ । कान्तिरिच्छा । वष्टि । उष्टः । उशन्ति । वक्षि । उष्ठः । उवाश । ऊशतुः । वशिता । वष्टु । उष्टात् । उड्ढि । अवट् । औष्टाम् । औशन् । अवशम् । उश्यातम् । उश्यास्ताम् । अवाशीत्, अवशीत् । ३ ॥

चर्करीतं च ॥ यङ्लुगन्तमदादौ बोध्यम् । ह्नुङ् अपनयने । ह्नुते । जुह्नुवे । ह्नुवीत । ह्नोषीष्ट ।अह्नोष्ट । १ ॥ इत्यदादयः ॥

---

## अथ जुहोत्यादयः ।

हु दानादनयोः । आदाने चेत्येके । प्रीणनेऽपीति भाष्यम् । दानं चेह प्रक्षेपः । स च वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते ॥ इतश्चत्वारः परस्मैपदिनः ॥ (३३०७) जुहोत्यादिभ्यः श्लुः ।२।४।७५। शपः श्लुः स्यात् ॥ (३३०८) श्लौ ।६।१।१०। धातोर्द्वे स्तः। जुहोति। जुहुतः। अदभ्यस्तादित्यत्। हुश्नुवोरिति यण्। जुह्वति ॥ (३३०९) भीह्रीभृहुवां श्लुवच्च ।३।१।३९। एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार, जुहाव । होता । होष्यति । जुहोतु । जुहुतात् । हुझल्भ्यो हेर्धिः । जुहुधि । आटि परत्वाद्गुणः । जुहवानि । परत्वाज्जुसि चेति गुणः । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् ।१॥ ञिभी भये । बिभेति ॥ (३३१०) भियोऽन्यतरस्याम् ।६।४।११५। इकारः स्या-

---

त्परस्मैपद एवेत्त्वम् । नेह, आशास्ते । अन्ये तु यस्माच्छासेरङ् संभवति तस्यैवेत्त्वमिति व्याख्याय व्यतिशिष्टे व्यतिशिड्ढ्वे इत्यात्मनेपदेऽपि इत्त्वं स्वीकुर्वन्ति ॥ (३३०५) **शा हौ** । पूर्वसूत्रे उपधापदान्वयानुरोधेन शास इत्यवयवषष्ठ्यपि इह स्थानषष्ठ्येव, उपधाया इत्यस्य निवृत्तत्वादित्याह—**शास्तेः शादेश इति** । 'धि च ३०११' इति सलोपेन शाधीति रूपे सिद्धेऽपि सलोपस्यासिद्धत्वात् 'शास इत्–३३०४' इति इत्त्वं स्यात् तद्वारणाय शाविधानमित्याहुः ॥ (३३०६) **यीवर्णयोः**—। य्वोरित्युक्तेऽपीष्टसिद्धौ यकारेकारयोरिति स्फुटप्रतिपत्तिर्न स्यादिति वर्णग्रहणं कृतम् । यिश्च इवर्णश्च यीवर्णौ तयोः ॥ यिश्चेति इकार उच्चारणार्थो न तु विवक्षितस्तदाह—**यकारे इवर्णे चेति** । 'यिवर्णयोः' इति पाठस्तूचितः ॥ **लोपं बाधित्वेति** । लोपस्य तूदाहरणम्—आदीध्य गतः । आवेव्य गतः । दीधिता । दीधिष्यते । वेविता । वेविष्यते । यीवर्णयोरिति किम्, आदीध्यनम् । आवेव्यनम् ॥ **षस** । **असदिति** । 'तिप्यनस्तेः ३३०२' इति दत्वम्॥ **अस इति** । 'सिपि धातोः–३३०३' इति रुर्वा । पक्षे दः ॥ **सन्तीति** । इदित्त्वान्नुमि सन्स्ति इति स्थिते 'स्कोः–५१६' इति सलोपे 'झरो झरि सवर्णे १०६' इति तकारस्य वा लोपः ॥ **संस्ति संस्त इति** । इहापि पूर्ववत्तलोपो वा बोध्यः ॥ **वश कान्तौ** । भाषायामप्यस्य प्रयोगो दृश्यते । 'वष्टि भागुरिरल्लोपम्–' 'जयाय सेनान्यमुशन्ति देवाः' इति ॥ **चर्करीतं च** । गणसूत्रमिदम् । चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्याणां संज्ञा ॥ **अदादौ बोध्यमिति** । तेन यङ्लुगन्तेषु 'अदिप्रभृतिभ्यः–३२२९' इति शपो लुग् भवतीति भावः । प्राचा तु चर्करीतमिति यङ्लुगन्तं परस्मैपदमित्युक्तं तच्चेहाप्रकृतत्वादुपेक्षितम् ॥ इत्यदादयः ॥

---

**हु दाना**–। यद्यपि स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनमेव दानं तथापि प्रयोगमनुसृत्य व्याचष्टे—**प्रक्षेप इति** ॥ **वैध इति** । आहवनीयादौ ॥ **हविष इति** । विधिबोधितद्रव्यस्येत्यर्थः ॥ **स्वभावादिति** । तेन आहवनीये पुरोडाशे प्रक्षेप्तव्ये प्रमादेन कोपेन वा पाषाणः प्रक्षिप्तः पुरोडाशो वा गर्तादौ स तु प्रक्षेपो, न होम इति ज्ञेयम् ॥ **परस्मैपदिन इति** । तेन होष्य इति केषांचित्प्रयोगोऽसाधुरेव । 'स्मरामो जुह्वानाः' इत्यानन्दलहरीप्रयोगस्तु साधुरेव। शानचोऽप्रवृत्तावपि चानशन्तत्वात्॥ **आटीति** । 'आडुत्तमस्य–२५५९' इत्यनेन ॥ **परत्वादिति** । 'हुश्नुवोः–३१८०' इति यणपेक्षया परत्वादित्यर्थः॥(३३१०) **भियोऽन्यतरस्याम्** । सार्वधातुके किम्, भीयते । बेभीयते । हलादौ किम्, बिभ्यति । क्ङिति किम्, बिभेति।केचिदत्र हलादौ

हलादौ क्ङिति सार्वधातुके । बिभितः, बिभीतः । । बिभ्यति । बिभयाञ्चकार । बिभाय । भेता । २ ॥ ह्री लज्जायाम् । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार । जिह्राय । ३ ॥ पॄ पालनपूरणयोः ॥ ( ३३११ ) अर्तिपिपर्त्योश्च । ७ । ४ । ७७ । अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ ॥ ( ३३१२ ) उदोष्ठ्यपूर्वस्य । ७ । १ । १०२ । अङ्गावयवौष्ठ्यपूर्वो य ॠत्तदन्तस्याङ्गस्य उत्स्यात् । गुणवृद्धी परत्वादिमं बाधेते । पिपर्ति । उत्वम् । रपरत्वम् । हलि चेति दीर्घः । पिपूर्तः । पिपुरति । पपार । किति लिटि [3176]ऋच्छत्यॄतामिति गुणे प्राप्ते-॥ ( ३३१३ ) शॄदॄप्रां ह्रस्वो वा । ७ । ४ । १२ । एषां किति लिटि ह्रस्वो वा स्यात् । पक्षे गुणः । पप्रतुः । पप्रुः । पपरतुः । पपरुः । परिता, परीता । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत् । अपारिष्टाम् । ह्रस्वान्तोऽयमिति केचित् । पिपर्ति । पिपृतः । पिप्रति । पिपृयात् । आशिषि प्रियात् । अपार्षीत् । पाणिनीयमते तु तं रोदसी पिपृतमित्यादौ छान्दसत्वं शरणम् । ४ ॥

डुभृञ् धारणपोषणयोः॥ (३३१४) भृञामित् । ७ । ४ । ७६ । भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । बिभर्ति । बिभृतः । बिभ्रति । बिभृध्वे । इलुवद्भावाद् द्वित्वेत्त्वे । बिभरामास । बभार । बभर्थ । बभृव । बिभृहि । बिभराणि । अबिभः । अबिभृताम् । अबिभरुः । बिभृयात् । भ्रियात्, भृषीष्ट । अभार्षीत्, अभृत ।१॥

माङ् माने शब्दे च ॥ ( ३३१५ ) ई हल्यघोः । ६ । ४ । ११३ । श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य । मिमीते । [3298]श्नाभ्यस्तयोरित्यालोपः । मिमाते । मिमते । ममामास । १ ॥ ओहाङ् गतौ । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । २ ॥

ओहाक् त्यागे । परस्मैपदी । जहाति॥ (३३१६) जहातेश्च । ६ । ४ । ११६ । इत्स्याद्वा हलादौ क्ङिति सार्वधातुके । पक्षे ईत्वम् । जहितः, जहीतः । जहति । जहौ ॥ ( ३३१७ ) आ च हौ । ६ । ४ । ११७ । जहातेर्हौ परे आ स्यात् चादिदीतौ । जहाहि, जहिहि, जहीहि । अजहात् । अजहुः ॥ ( ३३१८ ) लोपो यि । ६ । ४ । ११८ । जहातेरालोपः यादौ सार्वधातुके । जह्यात् । एर्लिङि । हेयात् । अहासीत् । २ ॥

डुदाञ् दाने । प्रणिददाति । दत्तः । ददति । दत्ते । ददौ । घ्वसोरित्येत्वाभ्यासलोपौ । देहि । अददात् । अदत्ताम् । अददुः । दद्यात् । देयात् । अदात् । अदाताम् । अदुः । आदित । १ ॥ डुधाञ् धारणपोषणयोः । दानेऽप्येके । प्रणिदधाति ॥ ( ३३१९ ) दधस्तथोश्च । ८ । २ । ३८ । द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः । वचनसामर्थ्यादालोपो न स्थानिवदिति वामनमाधवौ । वस्तुतस्तु-पूर्वत्रासिद्धीये न स्थानिवत् । धत्तः । दधति । धत्थः । दध्वः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित । २ ॥

अथ त्रयः स्वरितेतः ॥ णिजिर् शौचपोषणयोः ॥ ( ३३२० ) निजां त्रयाणां गुणः श्लौ । ७ । ४ । ७५ ।

---

क्ङितीत्येतन्नातीवोपयुज्यते, इत्त्वविधानस्य बिभित इत्यादौ चरितार्थत्वात् । बिभ्यति बिभेतीत्यादौ यणादेः प्रवृत्तिसंभवादित्याहुः ॥ ( ३३११ ) अर्तिपिपर्त्योश्च । अर्तेरुदाहरणमियर्तीति वक्ष्यति ॥ ( ३३१२ ) उदोष्ठ्य-। अङ्गावयवेति किम्, 'ॠ गतौ' क्र्यादिस्तस्मात् क्तप्रत्यये 'श्र्युकः क्किति ३१७४' इति इण्निषेधात् समीर्ण इति भवति, अन्यथा तु समूर्ण इति स्यात् ॥ ( ३३१३ ) शॄदॄप्रां-। शॄ हिंसायाम् । दॄ विदारणे । इमौ क्र्यादी ॥ पक्षे गुण इति । 'ऋच्छत्यॄताम् ३१७६' इत्यनेन ॥ पप्रतुरिति । ह्रस्वपक्षे यण् । ननु ह्रस्वग्रहणमिह माऽस्तु गुणानुवृत्त्या तस्यैव विकल्पोऽस्तु । तथा च यणादेशेन पप्रतुः शश्रतुरित्यादि सिध्यत्येव, गुणपक्षे तु पपरतुः शशरतुरित्याद्यपि सिध्यतीति चेत् मैवम्, गुणाभावपक्षे-'ॠत इद्धातोः ३१८३' इतीत्त्वप्रसङ्गात् । न चान्तरङ्गत्वाद्यणेव स्यादिति वाच्यम्, वार्णादाङ्गस्य बलीयस्त्वात् ॥ डुभृञ्—।'ड्वितः क्त्रिः ५०६१' । भृत्रिमम् ॥ ( ३३१४ ) भृञामित् । 'निजां त्रयाणां-३३२०' इत्यतोऽनुवर्तनादाह-एषां त्रयाणामिति । केचित्तु कपिञ्जलाधिकरणन्यायेन त्रयाणामिति लभ्यत इत्याहुः । त्रयाणां किम्, जहाति । श्लौ किम्, बभार ॥ ( ३३१५ ) ई हल्यघोः । श्नाभ्यस्तयोरिति । लुनीते, पुनीते । क्ङितीति किम्, लुनाति । अघोः किम् , धत्तः । दत्तः ॥ मिमीते इति । 'घुमास्था-३२७४' इतीत्त्वमिह न प्रवर्तते, तत्रार्धधातुके इत्यनुवृत्तेः अन्यथा मातः । माथः । गाते । गासे-इत्यादावतिप्रसङ्गात् । अत एव काशिकायामुक्तम्-'आर्धधातुक इत्यधिकारो न ल्यपीति योगं यावत्' इति ॥ ( ३३१६ ) जहातेश्च । क्ङितीति किम्, जहाति । सार्वधातुके किम्, हीयते ॥ ( ३३१७ ) चादिदीताविति । अत एव भट्टिः प्रायुङ्क्त । 'जहिहि जहीहि जहाहि रामभार्याम्' इति ॥ ( ३३१८ ) लोपो यि । सार्वेति किम्, हेयात् ॥ प्रणिददातीति । 'नेर्गद-३०५२' इति णत्वम् ॥ दत्त इति । 'श्नाभ्यस्तयोः-३२९८' इत्यालोपः । अघोरित्युक्तत्वादीत्वं तु न ॥ अदादिति । 'गातिस्था-२९७८' इति सिचो लुक् ॥ (३३१९)दधस्तथोश्च । दध इति कृतद्विर्वचनाभ्यासकार्यो धाञेव गृह्यते, न तु दध धारण इत्ययमिति व्याचष्टे--द्विरुक्तस्येति । झषन्तस्य किम्, दधाति । नन्वेवं धत्त इत्यादावपि न स्यादल्लोपस्य स्थानिवत्त्वेनाझषन्तत्वादत आह--वचनसामर्थ्यादिति ॥ ( ३३२० ) निजाम्-। श्लाविति किम्, निनेज ॥

---

१ झषा व्यवायात्, व्याख्यानाच्च ॥

निज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । निनेज । नेक्ता । नेक्ष्यति । नेनेक्तु । नेनिग्धि ॥ ( ३३२१ ) ⊛ नाभ्यस्तस्याचि पिति सार्वधातुके । ७ । ३ । ८७ । लघूपधगुणो न स्यात् । नेनि-जानि । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । नेनिज्यात् । निज्यात् । अनिजत्, अनैक्षीत् । अनिक्त । १ ॥ विजिर् पृथग्भावे । वेवेक्ति, वेविक्ते । विवेजिथ । अत्र विज इडिति ङित्त्वं न, ओविजी इत्यस्यैव तत्र ग्रहणात् । णिजिविजी रुधादावपि । २ ॥ विष्लृ व्याप्तौ । वेवेष्टि । वेविष्टे । लृदित्त्वादङ् । अविषत् । तङि क्सः । अजादौ क्सस्याचीति अल्लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त । ३ ॥

अथ आगणान्ताः परस्मैपदिनश्छान्दसाश्च ॥ घृ क्षरणदीप्त्योः । जिघर्म्यग्निं हविषा घृतेन । भृञामित् । बहुलं छन्दसीति इत्वम् । १ ॥ हृ प्रसह्यकरणे । अयं स्रुवो अभिजिहर्ति होमान् । २ ॥ ऋ सृ गतौ । बहुलं छन्दसीत्येव सिद्धे अर्तिपिपर्त्योश्चेतीत्त्वविधानादयं भाषायामपि । अभ्यासस्यासवर्ण इतीयङ् । इयर्ति । इयृतः । इयृति । आर । आरतुः । इडत्त्यर्तीति नित्यमिट् । आरिथ । अर्ता । अरिष्यति । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । अर्यात् । आरत् । ३ ॥ससर्ति । ४ ॥ भस भर्त्सनदीप्त्योः । बभस्ति । घसिभसोर्हलि चेत्युपधालोपः । झलो झलीति सलोपः । बब्धः । बप्सति । ५ ॥ कि ज्ञाने । चिकेति । ६ ॥ तुर त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति । ७ ॥ धिष शब्दे । दिधेष्टि । दिधिष्टः । ८ ॥ धन धान्ये । दधन्ति । दधन्तः । दधनति ॥ ९ ॥ जन जनने । जजन्ति ॥ ( ३३२२ ) ⊛ जनसनखनां सञ्झलोः । ६ । ४ । ४२ । एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च । जजातः । जज्ञति । जजंसि । जजान । जजन्यात्, जजायात् । जन्यात्, जायात् । १० ॥ गा स्तुतौ । देवाञ्जिगाति सुम्नयुः । जिगीतः । जिगति । ११ ॥ इति जुहोत्यादयः ॥

## अथ दिवादयः ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । शुषन्ताः परस्मैपदिनः ॥ ( ३३२३ ) ⊛ दिवादिभ्यः श्यन् । ३ । १ । ६९ । शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । १ ॥ षिवु तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत्, न्यसेवीत् । २ ॥ स्रिवु गतिशोषणयोः । ३ ॥ ष्ठिवु निरसने । केचिदिहेमं न पठन्ति । ४ ॥ ष्णुसु अदने । आदान इत्येके । अदर्शन इत्यपरे । स्नुस्यति । सुष्णोस । ५ ॥ ष्णसु निरसने । स्नस्यति । सस्नास । ६ ॥ क्नसु ह्वरणदीप्त्योः । ह्वरणं कौटिल्यम् । चक्नास । ७ ॥ व्युष दाहे । वुव्योष । ८ ॥ प्लुष च । ९ ॥ नृती गात्र-

---

( ३३२१ ) नाभ्यस्तस्य—। अभ्यस्तस्य किम्, द्वेषाणि । अचि किम्, देद्वेष्टि । पिद्ग्रहणम् 'उतो वृद्धिर्लुकि हलि ३२५२' इत्युत्तरार्थम् । सार्वेति किम्, निनेज ॥ **बहुलं छन्दसीति इत्वमिति** । एतच्च पूर्वोत्तरान्वयि ॥ **इयर्तीति** । अभ्यासस्य इयङ्, अभ्यासादुत्तरस्य तु गुणः ॥ **इयृतीति** । 'अदभ्यस्तात् ३२९३' इत्यत् ॥ **अर्यादिति** । 'गुणोऽर्ति– ३१७३' इति गुणः ॥ **आरदिति** । 'सर्तिशास्ति–३१७५' इत्यङि 'ऋदृशोऽङि–३२०९' इति गुणः ॥ **बब्ध इति** । तस-स्तकारस्य 'झषस्तथोः–३०४७' इति धत्वम् ॥ **तुतूर्त इति** । 'हलि च ४८१' इति दीर्घः ॥ **धन धान्ये** । धान्यार्जन इत्यर्थः ॥ **दधन्त इति** । छान्दसत्वात् 'अनुनासिकस्य–३५४५' इति नेह दीर्घ इत्याहुः ॥ ( ३३२२ ) **जनसनखनाम्**–। जन जनने, जनी प्रादुर्भावे इत्युभयोरपि ग्रहणम् । झलादौ सनि सिषासति ॥ **जज्ञतीति** । 'गमहन–३१५६' इत्युपधा-लोपः ॥ **जजायादिति** । 'ये विभाषा ३०९७' इति वा आत्त्वम् । एवं जायादित्यत्रापि ॥ **जिगातीति** । 'बहुलं छन्दसि ५४५८' इति इत्वम् ॥ इति जुहोत्यादयः ॥

---

**दिवु क्रीडा**–। उदित्करणं क्त्वायामिड्विकल्पार्थं निष्ठायामनिडर्थं च । देवित्वा, द्यूत्वा द्यूतम् । क्रीडायाम्—दीव्यन्ति माणवकाः । विजिगीषायाम्–शत्रुं दीव्यति । विजिगीषते इत्यर्थः । कान्तिरिच्छा द्युतेः पृथग्ग्रहणात् ॥ **षिवु** ॥ **परिषिषेवेति** । 'स्थादिष्वेवाभ्यासस्य' इति नियमो नेह प्रवर्तते, तत्र 'प्राक् सितात्—३०४३' इत्यनुवृत्तेः । अस्य चाप्राक्सितीयत्वात् । तेनाभ्यासस्य षत्वं 'परिनिविभ्यः–३०४२' इत्यनेन भवत्येव ॥ **न्यषेवीदिति** । 'सिवादीनां वा–३१५२' इति विकल्पः ॥ **नृती** । ईदित्करणं 'श्वीदितः–४०५२'इति निष्ठायामिण्निषेधार्थम् । यद्यपि 'सेऽसिचि–३३२४' इति इटो विकल्पितत्वात् 'यस्य विभाषा ४०२६' इत्यनेनैवेष्टं सिध्यति, तथापि 'यस्य विभाषा ४०२६' इत्यस्यानित्यत्वज्ञापनार्थमीदित्क-

---

१ **ओविजी इत्यस्यैवेति** । '**विज इट्**' इति सूत्रे ङिद्ग्रहणं '**गाङ्कुटादिभ्यः**–' इत्यतोऽनुवर्तते । तत्र सूत्रे च कुटादिपदेन श्रूयमाणविकरणकस्यैव ग्रहणमिति प्रकृतसूत्रेऽपि श्रूयमाणविकरणयोर्विजधात्वोर्ग्रहणमिति बोध्यम् ॥
२ **णिजिविजी इति** । '**णिजिविजी द्वौ रुधादावपि**' इति माधवोक्तिरेवेयं लिखिता । तथा च रुधादौ णिजिः पूर्वमासीत् । अधुना लेखकप्रमादान्नष्ट इति प्रतीयते माधवेन 'द्वौ' इति स्पष्टमुक्तत्वात् ॥ कौमुदीलेखस्तु–' अत्र णिजिधातोरनन्तरपठितो यो विजिधातुः स रुधादावपि बोध्यः' इत्येवं व्याख्यानेनापि सुयोज इति बोध्यम् ॥

विक्षेपे । नृत्यति । ननर्त ॥ (३३२४) सेऽसिचि कृतचृतछृदतृदनृतः । ७ । २ । ५७ । एभ्यः परस्य सिजिभन्नस्य सादेरार्धधातुकस्येड्वा स्यात् । नर्तिष्यति, नर्त्स्यति । नृत्येत् । नृत्यात् । अनर्तीत् । १० ॥ त्रसी उद्वेगे । वा भ्राशेति ईयॅन्वा । त्रस्यति, त्रसति । त्रेसतुः, तत्रसतुः । ११ ॥ कुथ पूतीभावे । पूतीभावो दौर्गन्ध्यम् । १२ ॥ पुथ हिंसायाम् । १३ ॥ गुध परिवेष्टने । १४ ॥ क्षिप प्रेरणे । क्षिप्यति । क्षेप्ता । १५ ॥ पुष्प विकसने । पुष्प्यति । पुपुष्प । १६ ॥ तिम ष्टिम ष्टीम आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति । १९ ॥ व्रीड चोदने लज्जायां च । व्रीड्यति । २० ॥ इष गतौ । इष्यति ।२१॥ षह षुह चक्यर्थे । चक्यर्थस्तृप्तिः । सह्यति । सुह्यति । २३ ॥ जॄष झॄष् वयोहानौ । जीर्यति । जजरतुः, जेरतुः । जरिता, जरीता । जीर्येत् । जीर्यात् । जॄस्तम्भ्विति अङ्वा । ऋदृशोऽङि गुणः । अजरत्, अजारीत् । अजारिष्टाम् । झीर्यति । जझरतुः । अझारीत् । २५ ॥ षूङ् प्राणिप्रसवे । सूयते । सुषुवे । स्वरतिसूतीति विकल्पं बाधित्वा श्र्युकः क्कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता, सविता । २६ ॥ दूङ् परितापे । दूयते । २७ ॥ दीङ् क्षये । दीयते ॥ ( ३३२५ ) दीङो युडचि क्ङिति । ६ । ४ । ६३ । दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् ॥ वुंग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ॥ दिदीये ॥ ( ३३२६ ) मीनातिमिनोतिदीङां ल्यपि च । ६ । १ । ५० । एषामात्त्वं स्यात् ल्यपि चकारादशित्येज्निमित्ते । दाता । दास्यते । अदास्त । अदास्थाः । २८ ॥ डीङ् विहायसा गतौ । डीयते । डिड्ये ।२९॥ धीङ् आधारे । धीयते । दिध्ये । धेता । ३० ॥ मीङ् हिंसायाम् । हिंसाऽत्र प्राणवियोगः । मीयते । ३१ ॥ रीङ् स्रवणे । रीयते ।३२॥ लीङ्

---

रणम् , तेन—'धावितमिभराजधिया ' इत्यादि सिद्धम् ॥ ( ३३२४ ) सेऽसिचि-। नर्तिष्यति नर्त्स्यतीति । निनर्तिषति, निनृत्सति । कर्तिष्यति, कर्त्स्यति । चिकर्तिषति, चिकृत्सति—इत्यादि ज्ञेयम् ॥ अनर्तीदिति । असिचीत्युक्तत्वादिह नित्यमिट् ॥ त्रेसतुरिति । ' वा जॄभ्रमुत्रसाम् २१४९ ' इत्येत्त्वाभ्यासलोपौ ॥ कुथ । पूतीभावः पवित्रीभवनं वा । कुथ्यति भूमिः । पवित्रीभवतीत्यर्थः ॥ पुष्प विकसने । ' कालात्साधु-२९७९ ' इत्यत्र पुष्प्यतिः श्यन्नन्तः । पचाद्यचि पुष्पम् । संज्ञायां कन् । पुष्पकम् ॥ व्रीड—। ' गुरोश्च हलः ५०८३ ' इत्यप्रत्यये टाप् । व्रीडा । घञि तु व्रीडः । अत एव 'व्रीडमावहति मे स संप्रति' इति कालिदासः ; 'व्रीडादिवाभ्यासगतैर्विलिल्ये' इति माघश्च ॥ षह षुह । ' परिनिविभ्यः-३०४२' इत्यत्र सहेत्यकार उच्चारणार्थ इति षत्वमिह भवति । परिषह्यति । 'तीषसह-३१२१ ' इतीड्विकल्पस्तु नास्य भवति सहेति शबन्तनिर्देशात्, किं तु 'षह मर्षणे' इत्यस्यैव स इत्यात्रेयादयः । सहेति निर्देशस्योभयत्र तुल्यत्वे 'तीषसह-३१२१'इत्यत्र शपा निर्देशः, 'परिनिविभ्यः-३०४२' इत्यत्र तु नेत्यर्धजरतीयमिदं हेयमेव । तत्त्वं तु प्रयोगमनुसृत्य महद्भिरेव निर्धार्यम् । 'नपुंसके भावे क्तः ४१०८ ' । सुहितं तृप्तिः । अत एव ' पूरणगुण-१०२२ ' इति सूत्रे सुहितार्थास्तृप्त्यर्था इति व्याख्यातम् ॥ जेरतुरिति । ' ऋच्छत्यॄताम् ३१७६ ' इति गुणे कृते ' न शस-३०२७ ' इति गुणशब्देन भावितस्य निषेधात् ' अत एकहल्मध्ये-३०२४ ' इत्यप्रवृत्तौ ' वा जॄभ्रमुत्रसाम् ३१४९ ' इत्येत्त्वाभ्यासलोपविकल्पः ॥ षूङ् । प्रसव उत्पत्तिः । मृत्पिण्डो घटं सूयत इत्यादिप्रयोगाभावात्प्राणीत्युक्तम् । 'स्वादय ओदितः ३३२८' इति वक्ष्यमाणत्वात् 'ओदितश्च ४०३०' इति निष्ठातस्य नत्वम् । प्रसूनम् ॥ विकल्पमिति । परमपीति शेषः ॥ निषेधे प्राप्त इति । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादिति भावः ॥ (३३२५) दीङो—। पञ्चमीत्यभिप्रायेण व्याचष्टे—परस्येति ॥ अजादेरिति । 'ङसि-१९९' इत्यत्रेव ' उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ' इति सप्तम्याः षष्ठीकल्पनम् । अचि किम्, देदीयेत । क्ङितीति किम्, उपादानम् ॥ आभीयत्वेनासिद्धत्वमाशङ्क्याह—वुग्युटाविति । दिदीये इति । परमपि यणं बाधित्वा नित्यत्वादादौ युट् । सति तु यणि ईकारस्य श्रवणं न स्यादिति युटः सिद्धत्वमुक्तम् ॥ ( ३३२६ ) मीनाति—। मीञ् हिंसायाम् । डुमिञ् प्रक्षेपणे । प्रमाय । उपदायः । प्रमातव्यम् । उपदातव्यम् । एज्निमित्त इति विषयसप्तमी । तेन आदावात्त्वं पश्चाद्यञ्, 'आतो युक्-३६८५' इति युक् । उपदाय इति सिध्यति । अन्यथा 'एरचि कृते तत आत्त्वे उपदा इति स्यात् ॥ अदास्तेति । 'दीङः प्रतिषेधः स्थाघ्वोरित्त्वे' इति न घुत्वमित्यदितेति रूपं न भवतीत्येके । अन्ये तु 'स्थाघ्वोरिच्च ३१८२' इत्येतत्तु न भवति, दीङोऽनुकरणे दारूपासंभवेनाघुत्वात् । अत एव प्रनिदातेत्यादौ 'नेर्गद-२०५२' इति णत्वमपि न भवतीत्याहुः । अयं भावः—'दो अवखण्डने' इत्यादेर्दारूपत्वं संभवति, 'आदेश उपदेशे-३१६३' इत्यस्यानैमित्तिकत्वात् । दीङस्तु एज्निमित्तप्रत्ययविषये आत्त्वं दा इत्यनुकरणे एज्निमित्तस्याभावित्वान्न घुत्वम् । एवं च घुप्रकृतित्वमपि नास्तीति णत्वस्याप्रसक्तिरिति ॥

---

दन्त्यादिः स्रवणशब्दः क्षरणपर्यायोऽत्र प्रयुक्तः । यतो रीणशब्दं भट्टिकाव्ये वृन्तयमके—'नारीणामपनुनुदुर्न देहखेदान्नारीणामलसलिला हिरण्यवाप्यः ॥ ' इत्यत्र अरीणम् अस्रुतम् अमलं सलिलम् इति स्रवणे व्युत्पादितं प्रयुक्तवान् ॥ स्यन्नं रीणं स्रुतं स्नुतम् ' इत्यमरे च ॥ २ इदमसंगतम्, 'प्रकृतिग्रहणं शिदर्थं कर्त्तव्यं प्रणिधयतीत्यादौ ' नेर्गद- ' इति णत्वं यथा स्यात्' इति वार्त्तिकोत्थानानापत्तेः, 'दीङः प्रतिषेधः स्थाघ्वोरित्त्वे' इति वार्त्तिकानुत्थानापत्तेश्च । तस्मात्कृतात्वदाधामेवानुकरणं सूत्रे कथितात्पर्यस्य कृषिवाक्यैरेव निर्णयत्वात् । एवं च, 'प्रणिदाता' इत्यादौ णत्वं भवत्येवेति शब्दरत्नम् ॥

श्लेषणे ॥ ( ३३२७ ) (सू) विभाषा लीयतेः । ६ । १ । ५१ । लीयतेरिति यका निर्देशो न तु श्यना । लीलीङो-रात्वं वा स्यादेज्विषये ल्यपि च । लेता, लाता । लेष्यते, लास्यते । एज्विषये किम् । लीयते । लिल्ये । ३३ ॥ व्रीङ् वृणोत्यर्थे । व्रीयते । विव्रिये ॥ ( ३३२८ ) (ग) स्वादय ओदितः ॥ तत्फलं तु निष्ठानत्वम् । ३४ ॥ पीङ् पाने । पीयते । ३५ ॥ माङ् माने । मायते । ममे । ३६ ॥ ईङ् गतौ । ईयते । अयाञ्चक्रे । ३७ ॥ प्रीङ् प्रीतौ । सकर्मकः । प्रीयते । पिप्रिये । ३८ ॥

अथ परस्मैपदिनश्चत्वारः । शो तनूकरणे ॥ ( ३३२९ ) (सू) ओतः श्यनि । ७ । ३ । ७१ । लोपः स्यात् श्यनि । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यति । विभाषा घ्राधेटिति सिचो वा लुक् । लुग-भावे यमरमेतीट्सकौ । अशात् । अशाताम् । अशुः । अशासीत् । अशासिष्टाम् । १ ॥ छो छेदने । छ्यति । २ ॥ षोऽन्तकर्मणि । स्यति । ससौ । अभिष्यति । अभ्यष्यत् । अभिससौ । ३ ॥ दो अवखण्डने । द्यति । ददौ । प्रणि-दाता । देयात् । अदात् । ४ ॥

अथात्मनेपदिनः पञ्चदश ॥ जनी प्रादुर्भावे ॥ ( ३३३० ) (सू) ज्ञाजनोर्जा । ७ । ३ । ७९ । अनयोर्जादेशः स्याच्छिति । जायते । जज्ञे । जज्ञाते । जज्ञिरे । जनिता । जनिष्यते । दीपजनेति वा चिण् ॥ ( ३३३१ ) (सू) जनिवध्योश्च । ७ । ३ । ३५ ॥ अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि, अजनिष्ट । १ ॥ दीपी दीप्तौ । दीप्यते । दिदीपे । अदीपि, अदीपिष्ट । २ ॥ पूरी आप्यायने । पूर्यते । अपूरि, अपूरिष्ट । ३ ॥ तूरी गति-त्वरणहिंसनयोः । तूर्यते । तुतूरे । ४ ॥ धूरी गूरी हिंसागत्योः । धूर्यते । दुधूरे । गूर्यते । जुगूरे । ६ ॥ घूरी जूरी हिंसा-वयोहान्योः । ८ ॥ शूरी हिंसास्तम्भनयोः । ९ ॥ चूरी दाहे । १० ॥ तप ऐश्वर्ये वा । अयं धातुरैश्वर्ये वा तङ्-श्यनौ लभते । अन्यदा तु शब्विकरणः परस्मैपदीत्यर्थः । केचित्तु वाग्रहणं वृतुधातोराद्यवयवमिच्छंति । तप्यते । तप्ता । तप्स्यते । पतेति व्यत्यासेन पाठान्तरम् । द्युतधामा नियुतः पत्यमानः । ११ ॥ वृतु वरणे । वृत्यते । पक्षान्तरे वावृ-त्यते । ततो वावृत्यमाना सा रामशालां न्यविक्षतेति भट्टिः । १२ ॥ क्लिश उपतापे । क्लिश्यते । क्लेशिता । १३ ॥ काशृ दीप्तौ । काश्यते । १४ ॥ वाशृ शब्दे । वाश्यते । ववाशे । १५ ॥

अथ पञ्च स्वरितेतः ॥ मृष तितिक्षायाम् । मृष्यति, मृष्यते । ममर्ष, ममृषे । १ ॥ ईशुचिर् पूतीभावे । पूतीभावः क्लेदः । शुच्यति, शुच्यते । शुशोच, शुशुचे । अशुचत्, अशोचीत् । अशोचिष्ट । २ ॥ णह बन्धने । नह्यति । नह्यते । ननाह । ननद्ध, नेहिथ । नेहे । नद्धा । नत्स्यति । अनात्सीत् । ३ ॥ रञ्ज रागे । रज्यति, रज्यते । ४ ॥ शप आक्रोशे । शप्यति, शप्यते । ५ ॥

---

डीङ् । डीनः । डीनवान् । स्वादिषु पाठसामर्थ्यान्निष्ठायामिण्न । इटि हि सति व्यवधानात् ' ओदितश्च ४०३० ' इति नत्वं न स्यादिति । स्वादिषु पाठसामर्थ्यादिड्व्यवधानेऽपि नत्वमस्त्विति न शङ्क्यम्, इष्टानुरोधात् । डयित इति प्रयोगस्तु भौवा-दिकस्य । ' निष्ठा शीङ्-४०६५ ' इत्यत्र निष्ठेति योगविभागादकित्त्वे गुण इत्याहुः ॥ मीङ् हिंसायाम् । मीञ् इति क्र्यादौ ॥ **प्राणवियोग इति** । मीयते प्राणैर्वियुज्यत इत्यर्थः ॥ **लीङ्** । ली श्लेषण इति क्र्यादौ ॥ ( ३३२७ ) **यकेति** । 'सार्व-धातुके यक् ३६८० ' इति विहितेन ॥ **न तु श्यनेति** । अन्यथा 'लीङः' इत्येव ब्रूयादिति भावः ॥ यका निर्देशस्य फल-माह— **लीलीङोरिति** । ल्यपि विलाय, विलीय ॥ **व्रीङ्** । वृणोत्यर्थो वरणम् । 'वृञ् वरणे ' इति स्वादौ पठिष्यमाणत्वात् । 'वरणे' इति वक्तव्ये 'वृणोत्यर्थे' इति वचनं वैचित्र्यार्थम् । व्री वरण इति क्र्यादौ ॥ **माङ्** । **मायत इति** । 'घुमास्था-३२७४'इतीत्वं तु न, तत्रार्धधातुक इत्यधिकारात् ॥ **षो अन्त-** । अन्तकर्म नाशनम् 'राघव स्य शरैर्घोरैर्घोरं रावणमाहवे'इति । राघवेति संबुद्ध्यन्तम् । स्येति लोण्मध्यमैकवचनम् ॥ **अभिष्यतीति** । 'उपसर्गात्सुनोति-३०३७ ' इति षत्वम् ॥ **अभ्य-ष्यदिति** । 'प्राक्सितादड्व्यवायेऽपि ३०४३' इति षत्वम् ॥ **अभिससाविति** । 'स्थादिषु-३०४४' इति नियमान्न षत्वम् ॥ दो अवखण्डने । अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः । खण्डने इत्येतावत्युक्तेऽपीष्टसिद्धेः ॥ **प्रणिदातेति** । ' नेर्गद-३०५२ ' इति णत्वम् ॥ **देयादिति** । 'एर्लिङि ३१६७' इत्येत्वम् ॥ **अदादिति** । 'गातिस्था-२९७८' इति सिचो लुक् ॥ (३३३०) **ज्ञाजनोर्जा** । जानाति । शिति किम्, ज्ञाता । 'ज' इति ह्रस्वोच्चारणेऽपि 'अतो दीर्घो यञि २९२४' इति दीर्घे सिद्धे जाग्र-हणम् 'अङ्गवृत्त-' परिभाषाज्ञापनार्थम् । तेन पाधातोः पिबादेशे कृते गुणो न भवति । पिबादेशस्यादन्तत्वाश्रयणं तूपायान्तर-मित्याहुः ॥ (३३३१) **ञिति णिति कृति चेति** । ञिति कृत्युदाहरणं घञि जनः । णिति कृति तु जनकः । जनयतीत्यत्रोपधावृद्धौ सत्यां 'जनीजॄष्-३१३९' इति मित्त्वात् 'मितां ह्रस्वः ३४०२' इति ह्रस्वः ॥ **दीपी दीप्तौ** । ईदित्त्वान्निष्ठायामिण्न । दीप्तः । एवं पूरीत्यादरीदित्त्वात्पूर्ण इत्यादि ज्ञेयम् । **केचित्त्विति** । तेषां मते ऐश्वर्ये तप्यते इत्येव प्रयोगो न तु तपतीति ॥ **न्यवि-क्षतेति** । निपूर्वाद्विशतेर्लुङि 'शल इगुपधा-३११७ ' इति क्सः । ' नेर्विशः ३५८४ ' इति तङ् ॥ वाशृ शब्दे । 'मन्दि-वाशि-' इत्युरच् । वाशुरा रात्रिः ॥ **तितिक्षायामिति** । 'गुप्तिज्किद्भ्यः-३१८७' इति सन् । तत्र हि तिजेः क्षमाया-

अथैकादशानुदात्तेतः ॥ पद गतौ । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट ॥ ( ३३३२ ) चिण् ते पदः ।३।१।६०। पदश्लेश्चिण् स्यात्तशब्दे परे । प्रण्यपादि । अपत्साताम् । अपत्सत । १ ॥ खिद दैन्ये । खिद्यते । चिखिदे । खेत्ता । अखित्त । २ ॥ विद सत्तायाम् । विद्यते । वेत्ता । ३ ॥ बुध अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि । अबुद्ध । अभुत्साताम् । ४ ॥ युध संप्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध । कथं युध्यतीति । युधमिच्छतीति क्यच् । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति वा । ५ ॥ अनो रुध कामे । अनुरुध्यते । ६ ॥ अण प्राणने । अण्यते । आणे । अणिता । ७ ॥ अनेति दन्त्यान्तोऽयमित्येके । ८ ॥ मन ज्ञाने । मन्यते । मेने । मन्ता । ९ ॥ युज समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः । युज्यते । योक्ता । १० ॥ सृज विसर्गे । अकर्मकः । संसृज्यते सरसिजैररुणांशुभिन्नैः । ससृजिषे । स्रष्टा । स्रक्ष्यते । लिङ्सिचाविति कित्त्वान्न[३०७३] गुणो नाप्यम् । सृक्षीष्ट । असृष्ट । असृक्षाताम् । ११ ॥ लिश अल्पीभावे । लिश्यते । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलिक्षाताम् । १२ ॥

अथागणान्ताः परस्मैपदिनः ॥ (ग.) राधोऽकर्मकाद्वृद्धावेव[२] । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह–वृद्धाविति । यन्मह्यमपराध्यति । द्रुह्यतीत्यर्थः । विराध्यन्तं क्षमेत कः । द्रुह्यन्तमित्यर्थः । राध्यत्योदनः । सिध्यतीत्यर्थः । कृष्णाय राध्यति । दैवं पर्यालोचयतीत्यर्थः । दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । रराधिथ । राधो हिंसायामित्येत्वाभ्यासलोपाविह[३३८२] न । हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् । राद्धा । रात्स्यति । अयं स्वादिश्चुरादिश्च । १ ॥ व्यध ताडने । ग्रहिज्येति संप्रसारणम्[३२१६] । विध्यति । विव्याध । विविधतुः । विव्यद्ध, विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । २ ॥ पुष पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादीत्यङ्[३१२४] । अपुषत् ।३॥ शुष शोषणे । अशुषत् ।४॥ तुष प्रीतौ । ५ ॥ दुष वैकृत्ये । ६ ॥ श्लिष आलिङ्गने । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति ॥ (३३३३-१) (सू.) श्लिषः । ३ । १ । ४६ । अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोऽपवादो न तु चिणः । पुरस्तादपवादन्यायात् ॥ ( ३३३३-२ ) (सू.) आलिङ्गने । ३ । १ । ४६ । श्लिषश्च्लेरालिङ्गन एव क्सो नान्यत्र । योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं[३११७] नियमः । अश्लिक्षत्कन्यां देवदत्तः । आलिङ्गन एवेति किम् । समश्लिषज्जतु काष्ठम् । अङ् । प्रत्यासत्ताविह श्लिषिः । कर्मणि अनालिङ्गने सिजेव न तु क्सः । एकवचने चिण् । अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्ठाः । अश्लिड्ढ्वम् ।७॥

मित्युक्तम् ॥ ईशुचिर् । ईदित्त्वान्नेट् । शुक्तम् । क्लिन्नमित्यर्थः ॥ ननद्धेति । 'नहो धः ५९०' इति धत्वम् ॥ (३३३२) चिण् ते पदः । तशब्द इति सामर्थ्यादात्मनेपदप्रथमपुरुषैकवचनम् । तशब्दे किम्, अपत्थाः ॥ प्रण्यपादीति । 'चिणो लुक् ३१०९' इति तशब्दस्य लुक् । 'नेर्गद-३०५२' इति णत्वम् ॥ अबोधीति । 'दीपजनबुध-३१०८' इति चिण् ॥ अनो रुध कामे । अनोः परो रुधधातुः कामे । काम इच्छा । दिवादिषु पाठसामर्थ्यात्–'रुधादिभ्यः-३३७३' इति श्नमं बाधित्वा श्यन् ॥ नाप्यमिति । 'सृजिदृशोर्झल्यमकिति ३२०८' इत्यकित्येव विधानात् ॥ लिश । आतपादिनाऽनल्पस्य अल्पभावोऽल्पीभावः ॥ लिक्षीष्टेति । 'लिङ्सिचावात्मनेपदेषु ३०७३' इति कित्त्वान्न गुणः ॥ अलिक्षतेति । 'शल इगुपधा-३११७' इति क्सः ॥ राधोऽकर्मकात्–। भिन्नक्रमं दर्शयति–अकर्मकादेवेति । राधो वृद्धावेव श्यन्निति व्याख्यायामकर्मकादिति विशेषणं व्यर्थं स्याद्, वृद्धावस्याकर्मकत्वात् । अकर्मकात्किम्, शत्रुमपराध्नोति । हिनस्तीत्यर्थः । राध संसिद्धाविति स्वादौ । राधो हिंसायामित्यनुवादाद्धिंसायामप्ययम्[३३५२] ॥ उदाहरणमाहेति । अकर्मकत्वप्रयोजकस्य कस्यचिदर्थस्येति भावः ॥ अकर्मके श्यन्नन्तस्य प्रयोगान्दर्शयति–यन्मह्यमित्यादिना ॥ कृष्णायेति । 'राधीक्ष्योः-८३९' इति चतुर्थी ॥ अपुषदिति । ङित्त्वाद्गुणाभावः ॥ शुष । शोष्टा । शोक्ष्यति ॥ (३३३३-१) 'श्लिष आलिङ्गने' इति सूत्रं योगविभागेन व्याचष्टे–श्लिष इति ॥ अनिटश्च्लेः क्स इति । एतच्च 'च्लेः सिच् २९७७' 'शल इगुपधात्-३११७' इत्यतोऽनुवर्तत इति भावः । अनिटः किम्, 'श्लिषु दाहे' इति भौवादिकस्य सेटो मा भूत् । अश्लेषीत् ॥ 'शल इगुपधा-३११७' इति सिद्धे पुनः क्सविधेः फलमाह–पुषाद्यङ इति ॥ (३३३३-२) सामर्थ्यादिति । यदि हि श्लिष इति प्राप्त एव क्सो नियम्येत तर्हि योगविभागो व्यर्थः स्यादिति भावः ॥ शल इगुपधादित्यस्यापीति । तेन कर्मण्यातांप्रभृतिष्वनालिङ्गने सिजेव भवति न तु क्सः, समाश्लिक्षत जन्तूनि काष्ठैरिति । क्सप्रत्यये सति तु समाश्लिक्षन्तेति स्यादिति भावः ॥ प्रत्यासत्ताविति । आलिङ्गनं हि प्राणिकर्तृकं, न तु काष्ठादिकर्तृकमिति भावः । श्लिषश्च्लेरालिङ्गन एव क्स इति व्याख्यानफलं दर्शयति–कर्मणीत्यादिना । अश्लिक्षातामित्यादौ यद्यपि क्ससिचोर्विशेषो

१ अकर्मक इति । अकर्मकोऽपीत्यर्थः ॥ अपिना सकर्मकः । अत एव "सृजियुज्योः सकर्मकयोः कर्मवद्भावः" इति कर्मवत्सूत्रस्थवार्तिकेन न विरोधः ॥ २ राधोऽकर्मकादिति । अन्तर्गणसूत्रमेतत् ॥ एवकारादर्थान्तरे राधः श्यन् न स्यादत आह–भिन्नेति ॥ एवकारस्य भिन्नक्रमत्वादेव 'अकर्मकात्' इति सार्थकम् । एवकारस्य भिन्नक्रमत्वाभावे तु 'राधो वृद्धावेव' इत्युक्तेऽपि वृद्धिवाचकस्याकर्मकत्वाव्यभिचाराद् 'अकर्मकात्' इति व्यर्थमेव स्यादिति बोध्यम् ॥

शक विभाषितो मर्षणे । विभाषित इत्युभयपदीत्यर्थः । शक्यति, शक्यते हरिं द्रष्टुं भक्तः । शशाक । शेकिथ, शशक्थ । शेके । शक्ता । शक्ष्यति, शक्ष्यते । अशकत्, अशक्त । सेट्कोऽयमित्येके । तन्मतेनानिट्कारिकासु लृदित्पठितः । शकिता । शकिष्यति । ८ ॥ ञिष्विदा गात्रप्रक्षरणे । घर्मस्रुतावित्यर्थः । अयं ञीदिति न्यासकारादयः । नेति हरदत्तादयः । स्विद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । अस्विदत् । ९॥ क्रुध क्रोधे । क्रोद्धा । क्रोत्स्यति ।१०॥ क्षुध बुभुक्षायाम् । क्षोद्धा ॥ कथं क्षुधित इति । संपदादिक्विबन्तात्तारकादित्वादितजिति माधवः । वस्तुतस्तु–वसति क्षुधोरितीट् । ११ ॥ शुध शौचे । शुध्यति । शुशोध । शोद्धा । १२ ॥ षिधु संराद्धौ । ऊदित्पाठः प्रामादिकः । सिध्यति । सेद्धा । सेत्स्यति । असिधत् । १३ ॥ रध हिंसासंराद्ध्योः । संराद्धिर्निष्पत्तिः । रध्यति । रधिजभोरचीति नुम् । ररन्धतुः[1] ॥ ( ३३३४ ) रधादिभ्यश्च । ७ । २ । ४५ । रध्, नश्, तृप्, दृप्, द्रुह्, मुह्, ष्णुह्, ष्णिह्, एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । ररन्धिथ, ररद्ध । ररन्धिव, रेध्व ॥ (३३३५) नेट्यलिटि रधेः । ७ । १ । ६२ । लिड्वर्जे इटि रधेर्नुम्न स्यात् । रधिता, रद्धा । रधिष्यति, रत्स्यति । अङि नुम् । अनिदितामिति नलोपः । अरधत् । १४ ॥ णश अदर्शने । नश्यति । ननाश । नेशतुः । नेशिथ ॥ ( ३३३६ ) मस्जिनशोर्झलि । ७ । १ । ६० । नुम् स्यात् । ननंष्ठ । नेशिव, नेश्व । नेशिम, नेश्म । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति ( ३३३७ ) नशेः षान्तस्य । ८ । ४ । ३६ । णत्वं न स्यात् । प्रनंष्टा । अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति । नशिष्यति ।१५॥ तृप प्रीणने । प्रीणनं तृप्तिस्तर्पणं च । नाग्निस्तृप्यति काष्ठानाम् । पितॄनताप्सीदिति भट्टिः । इत्युभयत्र दर्शनात् । ततर्पिथ, तत्रप्थ, ततर्प्थ । तर्पिता, तर्प्ता, त्रप्ता । स्पृशमृशकृषेति सिज्वा । अताप्सीत्, अत्राप्सीत्, अतर्पीत्, अतृपत् । १६ ॥ दृप हर्षमोहनयोः । मोहनं गर्वः । दृप्यतीत्यादि । रधादित्वादिमौ वेट्कावमर्थमनुदात्तता । १७ ॥ द्रुह जिघांसायाम् । दुद्रोहिथ । वा द्रुहमुहेति वा घः, पक्षे ढः । दुद्रोग्ध, दुद्रोढ । द्रोहिता, द्रोग्धा, द्रोढा । द्रोहिष्यति, ध्रोक्ष्यति ढत्वघत्वयोस्तुल्यं रूपम् । अद्रुहत् । १८ ॥ मुह वैचित्त्ये । वैचित्त्यमविवेकः । मुह्यति । मुमोहिथ, मुमोग्ध, मुमोढ । मोहिता, मोग्धा, मोढा । मोहिष्यति, मोक्ष्यति । अमुहत् । १९ ॥ ष्णुह उद्गिरणे । स्नुह्यति । सुष्णोह । सुष्णोहिथ, सुष्णोग्ध, सुष्णोढ । सुष्णुहिव, सुष्णुह्व । स्नोहिता, स्नोग्धा, स्नोढा । स्नोहिष्यति, स्नोक्ष्यति । अस्नुहत् । २० ॥ ष्णिह प्रीतौ । स्निह्यति । सिष्णेह ॥ वृत् ॥ रधादयः समाप्ताः ॥ पुषादयस्तु आ गणान्तादिति सिद्धान्तः । २१ ॥

शमु उपशमे ॥ ( ३३३८ ) शमामष्टानां दीर्घः श्यनि । ७ । ३ । ७४ । शमादीनामित्यर्थः । प्रणिशाम्यति । शेमतुः । शेमिथ । शमिता । अशमत् । १ ॥ तमु काङ्क्षायाम् । ताम्यति । तमिता । अतमत् । २ ॥ दमु उपशमे । उपशमे इति ण्यन्तस्य । तेन सकर्मकोऽयम् । न तु शमिवदकर्मकः । अदमत् ।३॥ श्रमु तपसि खेदे च । श्राम्यति । अश्रमत् । ४ ॥ भ्रमु अनवस्थाने । वा भ्राशेति श्यन्वा । तत्र कृते शमामष्टानामिति दीर्घः । भ्राम्यति । लुङ्यङ् । अभ्रमत् । शेषं भ्वादिवत् । ५ ॥ क्षमू सहने । क्षाम्यति । चक्षमिथ, चक्षन्थ । चक्षमिव, चक्षण्व । चक्षमिम, चक्षण्म ।

---

नास्ति ' क्सस्याचि ३११८ ' इत्यकारलोपात्तथापि थासादावस्त्येव विशेष इति ध्वनयन्नुदाहरति–अश्लिक्ष्ठाः अश्लिक्षद्ध्वमिति ॥ न्यासकारादय इति । तथा च तन्मते 'ञीतः क्तः ४१०६' इति वर्तमाने क्तो भवति । आदित्त्वान्निष्ठायां नेट् । स्विन्नः । ' विभाषा भावादिकर्मणोः ४०६८ ' । स्विन्नम् । स्वेदितमित्यादि सिद्धम् ॥ षिधु । संराद्धिर्निष्पत्तिः । ' उदितो वा ५१४९ ' इति क्त्वायामिड्विकल्पः । इट्पक्षे 'रलो व्युपधात्–३४७५' इति वा कित्त्वम् । सिधित्वा । सेधित्वा । सिद्ध्वा । प्रामादिक इति । ऊदित्त्वे त्वनुदात्तेषु सिध्यतेः पाठो व्यर्थः स्यादिति भावः ॥ ( ३३३४ ) रधादिभ्यश्च । ' स्वरतिसूति–३०४६ ' इत्यतो वेत्यनुवर्तते । योगविभागो वैचित्र्यार्थः । गणनिर्देशाद्यङ्लुकि राराधितेत्येव न तु रारद्धेति ॥ ( ३३३५ ) नेट्यलिटि–। इटीति किम्, रन्धकः । अलिटीति किम्, ररन्धिव । नुमि कृते संयोगात्परत्वेनाकित्वान्नलोपो न ॥ ( ३३३६ ) नंष्टेति । ' नशेर्वा ५७७ ' इति कुत्वमिह न शङ्क्यं, पदान्त एव तद्विधानात् । अन्यथा नष्टं नष्टिरित्यादि न सिध्येत् ॥ प्रणश्यतीति । ' उपसर्गादसमासेऽपि–३०५४ ' इति णत्वम् ॥ ( ३३३७ ) नशेः–। ' न भाभूपूकमिगमि–३७८२' इत्यतो नेत्यनुवर्तते, तदाह–णत्वं न स्यादिति ॥ षस्येत्युक्तेऽपि पदस्येत्यस्य विशेषणेन षान्तस्येति लाभादन्तग्रहणं व्यर्थं सज्ज्ञापयतीत्याह—भूतपूर्वेति ॥ काष्ठानामिति । करणस्य शेषत्वविवक्षायां षष्ठी ॥ तत्रप्थेति । 'अनुदात्तस्य चर्दुपधस्य–३२०५ ' इति विकल्पेनामागमः ॥ रधादय इति । रधनशतृपदृपद्रुहमुहष्णुहाष्णिह इत्यर्थः ॥ शमु । उदित्त्वात्क्त्वायां वेट् । शमित्वा । शान्त्वा । ' यस्य विभाषा ४०२६ ' इति निष्ठायामनिट् । शान्तः ॥ भ्रमु अनवस्थाने । शेषमिति । श्यनि दीर्घो लुङि अङ् च विशेष उक्तस्ततोऽन्यादित्यर्थः ॥ चक्षण्वेति । 'म्वोश्च ३०६४ ' इति मस्य नत्वे

---

१ ररन्धतुरिति । परत्वान्नुमि कृते सति संयोगसत्त्वेन कित्त्वाप्राप्त्या नकारलोपो न ॥

क्षमिता, क्षन्ता । अयमषित् । भ्वादिस्तु षित् । अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा । ६ ॥ क्लमु ग्लानौ । क्लाम्यति, क्लामति । शपीव श्यन्यपि ष्ठिवुक्लम्वित्येव[३२१६] दीर्घे सिद्धे शमादिपाठो घिनुणर्थः । अङ् । अक्लमत् । ७ ॥ मदी हर्षे । माद्यति । अमदत् ॥ शमादयोऽष्टौ गताः । ८ ॥

असु क्षेपणे । अस्यति । आस । असिता ॥ (३३३९) (सू) अस्यतेस्थुक् । ७ । ४ । १७ । अङि परे । आस्थत् । अस्य पुषादित्वादङि सिद्धे अस्यतिवक्तीति[३२४६] वचनं तङर्थम् । तङ् तूपसर्गादस्यत्यूह्योरिति[३६२७] वक्ष्यते । पर्यास्थत । १ ॥ यसु प्रयत्ने ॥ ( ३३४० ) (सू) यसोऽनुपसर्गात् । ३ । १ । ७१ । ( ३३४१ ) (सू) संयसश्च । ३ । १ । ७२ । श्यन्वा स्यात् । यस्यति, यसति । संयस्यति, संयसति । अनुपसर्गात्किम् । प्रयस्यति । २ ॥ जसु मोक्षणे । जस्यति । ३ ॥ तसु उपक्षये । दसु च । तस्यति । अतसत् । ४ ॥ दस्यति । अदसत् । ५ ॥ वसु स्तम्भे । वस्यति । ववास । ववसतुः । न शसददेति[३०२७] निषेधः । वशादिरयमिति मते तु-बेसतुः । बेसुः । ६ ॥ व्युष विभागे । अयं दाहे पठितः । अर्थभेदेन त्वङर्थं पुनः पठ्यते । अव्युषत् । आष्ट्यादिर्दन्त्यान्तोऽयं व्युस इत्यन्ये । अयकारो वुस इत्यपरे । ७॥ प्लुष दाहे । अप्लुषत् । पूर्वत्र पाठः सिजर्थ इत्याहुः । तद्भ्वादिपाठेन गतार्थमिति सुवचम् । ८ ॥ बिस प्रेरणे । बिस्यति । अबिसत् । ९ ॥ कुस संश्लेषणे । अकुसत् । १० ॥ बुस उत्सर्गे । ११ ॥ मुस खण्डने । १२ ॥ मसी परिणामे । परिणामो विकारः । समी इत्येके । १३ ॥ लुठ विलोडने । १४ ॥ उच समवाये । उच्यति । उवोच । ऊचतुः । मा भवानुचत् । १५ ॥ भृशु भ्रंशु अधःपतने । बभर्श । अभृशत् । अनिदितामिति[४१५] नलोपः । भ्रश्यति । अभ्रशत् । १७ ॥ वृश वरणे । वृश्यति । अवृशत् । १८ ॥ कृश तनूकरणे । कृश्यति । १९ ॥ ञितृषा पिपासायाम् । २० ॥ हृष तुष्टौ । श्यन्नङौ भ्वादिकाद्विशेषः । २१ ॥ रुष रिष हिंसायाम् । तीषसहेति वेट्[३१२१] । रोषिता, रोष्टा । रेषिता, रेष्टा । २३ ॥ डिप क्षेपे । २४ ॥ कुप क्रोधे । २५ ॥ गुप व्याकुलत्वे । २६ ॥ युप रुप लुप विमोहने । युप्यति । रुप्यति । लुप्यति । लोपिता । लुप्यतिः सेट्कः । अनिट्कारिकासु लिपिसाहचर्यात्तौदादिकस्यैव ग्रहणात् । २९ ॥ लुभ गार्ध्ये । गार्ध्यमाकाङ्क्षा । तीषसहेति वेट्[३१२१]-लोभिता, लोब्धा । लोभिष्यति । लुभ्येत् । लुभ्यात् । अलुभत् । भ्वादेरवृत्करणत्वाल्लोभतेरप्यपीत्याहुः । ३० ॥ क्षुभ संचलने । क्षुभ्यति । ३१ ॥ णभ तुभ हिंसायाम् । क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते । तेषां द्युतादित्वादङ् सिद्धः । क्र्यादित्वात्पक्षे सिज्भवत्येव । इह पाठस्तु श्यनर्थः । ३३ ॥ क्लिदू आर्द्रीभावे । क्लिद्यति । चिक्लेदिथ, चिक्लेत्थ । चिक्लिदिव, चिक्लिद्व । चिक्लिदिम, चिक्लिद्म । क्लेदिता, क्लेत्ता । ३४ ॥ ञिमिदा स्नेहने । मिदेर्गुणः[३१२०] । मेद्यति । अमिदत् । द्युतादिपाठादेवामिदत्, अमेदिष्टेति सिद्धे इह पाठोऽमेदीदिति मा भूदिति । द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः । ३५ ॥ ञिक्ष्विदा स्नेहनमोचनयोः । ३६ ॥ ऋधु वृद्धौ । आनर्ध । आर्धत् । ३७॥ गृधु अभिकाङ्क्षायाम् । अगृधत् । ३८ ॥ ( ३३४२ ) वृत् । पुषादयो दिवादयश्च वृत्ताः । केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम् । दिवादिस्तु भ्वादिवदाकृतिगणः[१] । तेन क्षीयते सृग्यतीत्यादिसिद्धिरित्याहुः ॥ इति दिवादयः ॥

---

## अथ स्वादयः ।

षुञ् अभिषवे । अभिषवः स्नपनं पीडनं स्नानं सुरासंधानं च । तत्र स्नानेऽकर्मकः ॥ ( ३३४३ ) (सू) स्वादिभ्यः श्नुः । ३ । १ । ७३ । सुनोति । सुनुतः । हुश्नुवोरिति[३१८०] यण् । सुन्वन्ति । सुन्वः, सुनुवः । सुन्वहे , सुनुवहे । सुषाव, सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् । स्तुसुधूञ्भ्य इतीट्[३१८४] । असावीत्, असोष्ट । अभिषुणोति । अभ्यषुणोत् । अभिसुषाव ॥ ( ३३४४ ) (सू) सुनोतेः स्यसनोः । ८ । ३ । ११७ । स्ये सनि च परे सुनः षो न स्यात् । विसोष्यति । १ ॥ षिञ् बन्धने । सिनोति । विसिनोति । सिषाय, सिष्ये । सेता । २ ॥ शिञ् निशाने । तालव्यादिः । शेता । ३ ॥ डुमिञ् प्रक्षेपणे । मीनातिमिनोतीत्यात्त्वम्[३३२६] । ममौ । ममिथ, ममाथ । मिम्ये ।

---

कृते णत्वम् ॥ शमादिपाठ इति । 'शमित्यष्टाभ्यो घिनुण् ४१४२' ॥ शमादय इति । शम्तम्दम्श्रम्भ्रम्क्षम्क्लम्मद इत्यर्थः ॥ (३३४०) यसोऽनुप-। अत्र वदन्ति-यस इत्येवास्तु । ततः "समः" नियमार्थमिदम्-'सोपसर्गाच्चेत्संपूर्वकादेव' इति। एवं च पूर्वसूत्रेऽनुपसर्गादिति ग्रहणमुत्तरत्र च यसश्चेति ग्रहणं त्यक्तुं शक्यमिति॥ दाहे पठित इति । व्युष दाह इत्यस्मिन्नेव गणे पठित इत्यर्थः ॥ अङर्थमिति । दाहे पठितस्य तु सिजेव । अव्योषीत् ॥ इति दिवादयः ॥

---

षुञ् । सुन्व इति । 'लोपश्चास्या-३११३' इत्युकारस्य बा लोपः ॥ सुनवानीति । 'आडुत्तमस्य-३९५९ ' इत्याटि कृते 'हुश्नुवोः-३१८० ' इति यणं बाधित्वा परत्वाद्गुणः ॥ ( ३३४४ ) सुनोतेः स्यसनोः । ' न रपर-४३७३ ' इत्य-

---

१ 'आकृतिगणत्वात्' इति पाठान्तरम् ॥

माता। मीयात्, मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त। ४॥ चिञ् चयने। प्रणिचिनोति॥ (३३४५) (सू) विभाषा चेः। ७। ३। ५८। अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च। प्रणिचिकाय। चिचाय। चिक्ये, चिच्ये। अचैषीत्, अचेष्ट। ५॥ स्तृञ् आच्छादने। स्तृणोति, स्तृणुते। [३१०३]गुणोऽर्तीति गुणः। स्तर्यात्॥ (३३४६) (सू) ऋतश्च संयोगादेः। ७। २। ४३। ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि। स्तरिषीष्ट, स्तृषीष्ट। अस्तरिष्ट, अस्तृत। ६॥ कृञ् हिंसायाम्। कृणोति, कृणुते। चकार। चकर्थ। चक्रे। क्रियात्, कृषीष्ट॥ अकार्षीत्, अकृत। ७॥ वृञ् वरणे॥ (३३४७) (सू) बभूथाततन्थजगृभ्मववर्थेति निगमे। ७। २। ६४। एषां वेदे इडभावो निपात्यते। तेन भाषायां थलीट्। ववरिथ। ववृव। ववृवहे। वरिता। वरीता॥ (३३४८) (सू) लिङ्सिचोरात्मनेपदेषु। ७। २; ४२। वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि॥ (३३४९) (सू) न लिङि। ७। २। ३९। वॄतो लिङ इटो दीर्घो न स्यात्। वरिषीष्ट, वृषीष्ट। अवारीत्, अवरिष्ट, अवरीष्ट, अवृत। ८॥ धुञ् कम्पने। धुनोति, धुनुते। अधौषीत्। अधोष्यत्। ९॥ दीर्घान्तोऽप्ययम्। धूनोति, धूनुते। [२०४६]स्वरतिसूतीति वेट्। दुधविथ, दुधोथ। किति लिटि तु [३१७४]श्र्युकः इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट्। दुधुविव। [३१७८]स्तुसुधूञ्भ्य इति नित्यमिट्। अधावीत्, अधविष्ट, अधोष्ट। १०॥

अथ परस्मैपदिनः॥ टुदु उपतापे। दुनोति। १॥ हि गतौ वृद्धौ च॥ (३३५०) (सू) हिनुमीना। ८। ४। १५। उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात्। प्रहिणोति॥ (३३५१) (सू) हेरचङि। ७। ३। ५५। अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि। जिघाय। २॥ पृ प्रीतौ। पृणोति। पर्ता। ३॥ स्पृ प्रीतिपालनयोः। प्रीतिचलनयोरित्यन्ये। चलनं जीवनमिति स्वामी। स्पृणोति। पस्पार। ४॥ स्मृ इत्येके। स्मृणोति। पृणोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः। ५॥ आप्लृ व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नुवः। आप। आप्ता। आप्नुहि। लृदित्त्वादङ्। आपत्। ६॥ शक्लृ शक्तौ। अशकत्। ७॥ राध साध संसिद्धौ। राध्नोति॥ (३३५२) (सू) राधो हिंसायाम्। ६। ४। १२३। एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। अपरेधतुः। रेधुः। रेधिथ। राद्धा। साध्नोति। साद्धा। असात्सीत्। असाद्धाम्। ९॥

अथ द्वावनुदात्तेतौ॥ अशू व्याप्तौ संघाते च। अश्नुते॥ (३३५३) (सू) अश्नोतेश्च। ७। ४। ७२। दीर्घा-

---

स्मान्नेत्यनुवर्तनादाह—षो न स्यादिति। सनि तु अभिसुसूः। सन्नन्तादस्मात्क्विप्यतो लोपे रुत्वे [ कृते ] दीर्घः[२]। सुसूषतीत्येतत्तु नोदाहरणम्, 'स्तौतिण्योरेव षणि—३४९१' इति नियमेनैव षत्वाभावसिद्धेः। एतच्च काशिकायां स्पष्टम्॥ चिञ्। चयनं रचनाविशेषः॥ (३३४५) विभाषा चेः। 'चजोः—३८१४' इति सूत्रात्कुरित्यनुवर्तते 'सन्लिटोर्जेः ३१११' इत्यतः सन्लिटोरिति च। सन्युदाहरणम्—चिकीषति। चिचीषति। (३३४६) ऋतश्च संयोगादेः। 'इट् सनि वा ३४८८' इत्यत इट् वेत्यनुवर्तते। 'लिङ्सिचोः—३३४८' इति सूत्रादात्मनेपदेष्विति च तदाह—इड् वा स्यात्तङीति। तङि किम्, अस्तार्षीत्॥ (३३४७) बभूथाततन्थ—। भूधातोस्तनोतेश्च थलि इडभावो निपात्यते। 'त्वं हि होता प्रथमो बभूथ' 'येनान्तरिक्षमुर्वाततन्थ'। भाषायां तु बभूविथ। तेनिथ। 'जगृभ्मा ते दक्षिणमिन्द्र हस्तम्'। भाषायां तु जगृहिम। 'वृणोतेस्थलि क्रादिसूत्रेणेण्निषेधे सिद्धेऽपि निगम एव निषेधो नान्यत्रेति नियमार्थं ववर्थग्रहणम्। 'ववर्थ त्वं हि ज्योतिषाम्'। भाषायां ववरिथ। वव्रे॥ (३३४८) लिङ्सिचोः—। वॄत इत्यनुवर्तते। आत्मनेपदेषु किम्, अवारीत्। अवारिष्टाम्। अवारिषुः। 'सिचि च परस्मैपदेषु ३१८६' इति निषेधादिह 'वॄतो वा ३१८५' इति न दीर्घः॥ (३३५०) हिनुमीना। प्रमीणाति॥ (३३५१) हेरचङि। जेघीयते। अचङीति किम्, अजीहयत्। इह ण्यन्तस्य धात्वन्तरत्वात्केवलस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावात्कुत्वप्राप्तिरेव नास्तीत्यचङीति निषेधो व्यर्थः सन् ज्ञापयति—'ण्यधिकस्यापि कुत्वं भवति' इति। तेन जिघापयिषतीत्यादि सिद्धम्॥ आप्नुहीति। संयोगपूर्वत्वात् 'उतश्च प्रत्ययात्—३११४' इति हेर्लुङ् न॥ (३३५२) राधो हिंसायाम्। अत इत्यनुवर्तमानेऽपि सामर्थ्यादकारमात्रं स्थानित्वेनाश्रीयते॥ (३३५३) अश्नो-

---

१ अत्र 'क्विप्यतो लोपे रुत्वम्' इत्येतावानेव पाठो योग्यः। न तु 'लोपे रुत्वे [ कृते ] दीर्घः' इति। तथा पाठेन—'पिपठीः' इत्यादाविव 'र्वोरुपधायाः—' इत्यनेन दीर्घः इति प्रतीयते। तथा चौजसादावनिष्टरूपापत्तिः 'सुसुषौ' सुसुषः—' इत्यादिरूपाणामिष्टत्वाभावात्। 'अज्झनगमाम्—' इत्यनेन 'अतो लोपः' इत्यतः प्रागेव दीर्घे 'सुसूः सुसूषौ सुसूषः' इत्यादीनामेवेष्टत्वात्॥ अत एव माधवेन—'सुसूषतेरप्रत्ययः अतो लोपः सुसूरिति। अत्र हि सनः षत्वस्यासिद्धत्वात् [ क्विब्लोपस्वादिपदसंज्ञासु जातासु ] सस्य रुत्वे विसर्जनीये कृतषत्वस्य सनोऽभावात् 'स्तौतिण्योरेव—' इति न प्रवर्तते— इति प्रक्रियायामतो लोपात् पूर्वमेव दीर्घ उदाहृतः। न तु रुत्वोत्तरं दीर्घः कृत इति बोध्यम्॥ २ सनः षत्वस्यासिद्धत्वात् रुत्वे 'अज्झनगमाम्—' इति कृतदीर्घस्यापि पर्जन्यवल्लक्षणप्रवृत्त्या 'र्वोः—' इति दीर्घ इत्यर्थः। इदं सुप्रत्ययमात्रेऽन्यत्र रेफान्तत्वाभावेन दीर्घाप्रवृत्तेः। औजसादिषु—'अभिसुसूषौ' इत्यादीनि रूपाणि॥

दभ्यासावर्णात्परस्य नुट् स्यात् । आनशे । अशिता, अष्टा । अशिष्यते, अक्ष्यते । अश्नुवीत । अक्षीष्ट, अशिषीष्ट । आशिष्ट, आष्ट । आक्षाताम् । १ ॥ ष्टिघ आस्कन्दने । स्तिघ्नुते । तिष्टिघे । स्तेघिता । २ ॥

अथ आ गणान्तात्परस्मैपदिनः ॥ तिक तिग गतौ च । चादास्कन्दने । तिक्नोति । तिग्नोति । २ ॥ षघ हिंसायाम् । सघ्नोति । ३ ॥ ञिधृषा प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता । ४ ॥ दम्भु दम्भने । दम्भनं दम्भः । दभ्नोति । ददम्भ । श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम् । अनिदिताम् इति नलोपः । तस्याभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ—॥ ( ३३५४ ) वा॰ दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ ॥ देभतुः, ददम्भतुः । इदं कित्त्वं पिदपिद्विषयकमिति सुधाकरादयः । तन्मते तिप्सिप्मिप्सु—देभ । देभिथ । देभेति रूपान्तरं बोध्यम् । अपिद्विषयकमिति न्यासकारादिमते तु—ददम्भ । ददम्भिथ । ददम्भेत्येव । दभ्यात् । ५ ॥ ऋधु वृद्धौ । ६ ॥ तृप प्रीणन इत्येके । क्षुभ्नादित्वाण्णत्वं न । तृप्नोति ॥

( ३३५५ ) सू॰ छन्दसि ॥ आ गणान्तादधिकारोऽयम् ॥ अह व्याप्तौ । अह्नोति । १ ॥ दघ घातने पालने च । दघ्नोति । २ ॥ चमु भक्षणे । चम्नोति । ३ ॥ रि क्षि चिरि जिरि दाश दृ हिंसायाम् । रिणोति । क्षिणोति । अयं भाषायामपीत्येके । न तद्यशः शस्त्रभृतां क्षिणोति । ऋक्षीत्येक एवाजादिरित्यन्ये । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । ९ ॥ ( ३३५६ ) वृत ॥ इति स्वादयः ॥

---

अथ तुदादयः ।

तुद व्यथने । इतः षट् स्वरितेतः ॥ ( ३३५७ ) सू॰ तुदादिभ्यः शः । ३ । १ । ७७ । तुदति, तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत्त । १ ॥ णुद प्रेरणे । नुदति, नुदते । नुनोद, नुनुदे । नोत्ता । २ ॥ दिश अतिसर्जने । अतिसर्जनं दानम् । देष्टा । दिक्षीष्ट । अदिक्षत् । अदिक्षत । ३ ॥ भ्रस्ज पाके । ग्रहिज्येति संप्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति, भृज्जते । ( ३३५८ ) सू॰ भ्रस्जो रोपधयो रमन्यतरस्याम् । ६ । ४ । ४७ । भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः ॥ स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ । बभर्जे । रमभावे—बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः ।

---

तेश्च । 'तस्मान्नुड्—२०५५' इत्यनुवर्तत इत्याह—दीर्घादिति । श्नुविकरणनिर्देशः किम्, श्नादेः ' अश भोजने ' इत्यस्य मा भूत् । आश । आशतुः ॥ ञिधृषा । शूलेन धृष्णोति प्रगल्भते इति शूलधृक् । शूलधृषौ । ' ऋत्विग्दधृग्—५०७ ' इति किनो विधानादन्यत्रापि पदान्तविषये कुत्वम् ॥ दम्भु । लोकवञ्चनाय विहितकर्मानुष्ठानं दम्भः ॥ तृप । अयं सेट्कः । अनुदात्तेषु श्यना निर्देशात् ॥ अह व्याप्तौ । अस्मात् ' ऋहलोर्ण्यत् ३५४ ' इति ण्यति अह्य इति ' तस्यादित उदात्तमर्धह्रस्वम् १४' इत्यत्रास्माभिरुपपादितम् । अन्ये त्वाहुः—'शतचक्रं यो १ ह्यो वर्तनिः ' इत्यत्र अह्य इति षष्ठ्यन्तमेव । 'घेर्ङिति ३४९ ' इति गुणस्तु अहिशब्दस्य च्छान्दसत्वान्नेति । रि क्षि । एते षड् धातवः । एक एवाजादिरिति मते तु पञ्च धातवः ॥ इति स्वादयः ॥

---

( ३३५७ ) तुदतीति । परमपि लघूपधगुणं बाधित्वा नित्यत्वात् श इत्येके । अकृतव्यूहपरिभाषया गुणो न प्रवर्तत इत्यन्ये ॥ भ्रस्ज पाके । भर्जनरूपः पाकोऽत्र धात्वर्थो न त्वोदनादेः पाकः तत्र प्रयोगाभावादित्याहुः ॥ ' भ्रस्जो ' इति केषांचित्पाठे तु ' ओदितश्च ४०३० ' इति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत् ॥ ( ३३५८ ) भ्रस्जो रोपधयोः—। रमकार उच्चारणार्थः । रमित्यस्यान्त्यादचः परत्वे ' रोपधयोः ' इति षष्ठीनिर्देशस्य वैयर्थ्यमाशङ्क्याह—निवृत्तिरिति ॥ अयं भावः—स्थानविशेषलाभाय मित्त्वस्य करणान्न रोपधयोः स्थाने रम् भवति । यत्र ह्यनिर्धारितः स्थानषष्ठ्या निर्दिश्य विधीयते स तत्स्थाने भवति । यथा ' इको यणचि ७४ ' इत्यादौ यणादिः । प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयोः स्थाने न भवति । एवं चास्य आदेशागमत्वे भवतो यथा श्नमः प्रत्ययागमत्वे इति । अन्ये तु—'एतादृग् व्याख्यानमयुक्तमिति मत्वा ' सनः क्तिचि—५१३६ ' इत्यतो लोपमनुवर्त्य भ्रस्जो रोपधयोर्लोपः रम् तु आगम एवेत्याहुः । अपरे तु—'भ्रस्जो रसरन्यतरस्याम् ' इत्येव सूत्रमस्तु । रसः ऋ इति च्छेदः । रस इति रेफाकारसकाराणां यः संघातस्तस्य ऋ इत्यादेशः स्यादित्यर्थः । ततश्च अङिति—भर्जको भर्जनं बभर्जेत्यादि सिध्यति । ऋकाराभावपक्षे तु भ्रज्जको भ्रज्जनं बभ्रज्जेत्यादि । क्ङिति तु ऋकारपक्षे भृष्टिः भृज्यादित्यादि । तदभावे संप्रसारणे सति तदेव रूपम् । एवं च बरीभृज्यत इत्यादौ रीको रेफस्य निवृत्तिं वारयितुम् ' अनुदात्तोपदेश—३२३४ ' इत्यत उपदेशग्रहणमनुवर्त्यमिदानीं तु नानुवर्त्यं, क्ङिति ऋकारागमं बाधित्वा संप्रसारणमिति पूर्वविप्रतिषेधश्च न कर्तव्य इति महदेव लाघवमित्याहुः । इदं च 'रसोर्वर्वचनात्सिद्धम् ' इति वार्तिकाशयवर्णनमेव न त्वपूर्वम् ॥ र्वर्वचनादित्यस्य वा ऋवचनादिति च्छेदः । भाष्यकारैस्तु ' सूत्रं भिद्यते यथान्यासमेवास्तु' इति वदद्भिरस्यां कल्पनायां दुष्टत्वं सूचितं, तच्च मनोरमायां स्पष्टमेव । तथाहि—रेफाकारसकारसमुदायस्य ऋभावे पञ्च दोषाः—अपिल्लिटि बभर्जतुः बभर्जुरित्यादीष्यते बभृजतुः बभृजुरित्यादि स्यात् । न चात्र गुणेन निर्वाहः, ऋभावे सति 'असंयोगाल्लिट् कित् २००२ ' इति कित्त्वप्रवृत्त्या

वृश्चेति षः । बभ्रष्ठ । बभ्रज्जे । भ्रष्टा, भर्ष्टा । भ्रक्ष्यति, भर्क्ष्यति ॥ ( ३३५९ ) वा॰ क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन ॥ भृज्ज्यात् । भृज्ज्यास्ताम् । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत् । अभर्ष्ट, अभ्रष्ट । ४ ॥ क्षिप प्रेरणे । क्षिपति, क्षिपते । क्षेप्ता । अक्षैप्सीत् । अक्षिप्त । ५ ॥ कृष विलेखने । कृषति, कृषते । क्रष्टा, कर्ष्टा । कृष्यात् , कृक्षीष्ट । स्पृशमृशकृषेति सिज्वा । पक्षे क्सः । सिचि अम्वा । अक्राक्षीत् , अकार्क्षीत् । अकृक्षत् । तङि लिङ्सिचाविति किरवांदन्न । अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षत । अकृक्षाताम् । अकृक्षन्त । ६ ॥

ऋषी गतौ । परस्मैपदी । ऋषति । आनर्ष । १ ॥

जुषी प्रीतिसेवनयोः॥ आत्मनेपदिनश्चत्वारः । जुषते । १॥ ओविजी भयचलनयोः । प्रायेणायमुत्पूर्वः। उद्विजते ॥ (३३६०) सू॰ विज इट् । १ । २ । २ । विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते ।२॥ ओलजी ओलस्जी व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे । ४ ॥

अथ परस्मैपदिनः ॥ ओव्रश्चू छेदने । ग्रहिज्या । वृश्चति । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ, वव्रष्ठ । लिटयं-

---

तन्निषेधात् । 'सनीवन्त–३४७७ ' इति इड्विकल्पाद्विभर्क्षतीत्यादि इष्यते बिभृक्षतीत्यादि स्यात् । ऋभावे 'हलन्ताच्च ३४७०' इति सनः कित्त्वप्रवृत्तेः । लिङ्सिचोस्तङि भर्क्षीष्ट अभर्ष्टेत्यादि इष्यते भृक्षीष्ट, अभृष्टेत्यादि स्यात् । ' लिङ्सिचावात्मनेपदेषु ३०७३ ' इति कित्त्वाद् । णिजन्ताच्चङि अबभर्जदितीष्यते, अबीभृजदित्यपि स्यात् । इररारामपवादत्वेन 'उर्ऋत् ३४०० ' इति ऋत्वप्रवृत्तौ 'सन्वल्लघुनि–३०९२' इति सन्वद्भावात् 'सन्यतः ३०९३ ' इतीत्वे ' दीर्घो लघोः ३०९४ ' इति प्रवृत्तेः । यद्यपि ' उर्ऋत् ३४०० ' इत्यस्य वैकल्पिकत्वादबभर्जदिति सिध्यत्येव, तथापि पक्षे अबीभृजदित्यनिष्टं स्यादिति बोध्यम् ॥ ऋजि भृजी भर्जने इति भ्वादेस्तादृशं रूपमिष्टमिति चेत् । मैवम् ,भर्जनार्थे हि तादृग् रूपमिष्टं न तु पाकसामान्ये । उभयोरेकार्थत्वाभ्युपगमेऽपि प्राचीनाश्चत्वारो दोषास्तु दृढा एव न हि तेऽपि धात्वन्तरेण सुपरिहराः । अपिल्लिटि भृजेरपि धातोर्गुणाभावादनुदात्तत्वेन आत्मनेपदित्वाच्च बभर्जतुरित्यादिरूपस्य तेनाप्यासिद्धेः । तथा भृजेरुदात्तत्वेन ततः परेषां सन्लिङ्सिचामिडागमध्रौव्यात् । बिभर्क्षति, भर्क्षीष्ट, अभर्ष्टेत्यादिरपि तेन न सिध्यति । एतेन ' भ्रस्जेर्भृजिरादेशः ' इति पक्षोऽपि निरस्तः, पूर्वोक्तदूषणगणप्रसङ्गात् । किञ्च, अस्मिन्पक्षे यङ्लुकि आधिको दोषः–वधादेशवत्साभ्यासस्य भृज्ज्यादेशे पुनर्द्विर्वचनस्य दुर्लभत्वात्स्थानिवत्त्वेन ' अनभ्यासस्य ' इति निषेधात् । स्वीकृतेऽपि द्विर्वचने रुग्रिग्रीकोऽभ्यासस्य स्युरेवेति रुगादिरहितं बाभर्जिष्यतीत्यादि रूपं नैव सिध्येत् । यदि तु लाघवे पक्षपातेन स्वातन्त्र्यं चिकीर्ष्यते, तर्हि ' भ्रस्जे रसोः ' इति पठित्वा रसिति समुदायस्य अरेव विधीयताम् , तथा च न कोऽपि दोष इति । अयमत्र संग्रहः—'रस ऋच्चेदपिल्लिट्सन्लिङ्सिच्चङ्परणिक्षु ते । दोषो भ्रस्जेर्भृजौ चैवं दोषो यङ्लुकि चाधिकः ॥ साभ्यासस्य हि भृज्भावो भवेद्धन्तेर्वधिर्यथा । द्वित्वं पुनर्न लभ्येत स्थानिवत्त्वाद्वधेरिव ॥ तस्मादस्तु यथान्यासं स्वातन्त्र्येऽस्तु रसोरिति ॥" ( ३३५९ ) **पूर्वविप्रतिषेधेनेति** । नित्यत्वादित्यपि सुवचम् । न च संप्रसारणात्पूर्वं धातो रेफस्य पश्चात्तु रमागमे रेफस्येति शब्दान्तरप्राप्त्या संप्रसारणस्य नित्यत्वं नेति शङ्क्यम् , लक्ष्यानुरोधेन कृताकृतप्रसङ्गित्वेनापि क्वचिन्नित्यत्वस्वीकारात् ॥ ( ३३६० ) **विज इट्** । इह ' वृद्धिर्यस्या–१८७८ ' इति सूत्रान्मण्डूकप्लुत्या यस्यादिरिति अनुवर्तते, तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितम् । नव्यास्तु–इह इडित्यनेनोत्तमैकवचनं न गृह्यते । तथा च सति विजिषीयेत्यत्रैव स्यान्न तूद्विजितेत्यादौ । ततश्चेष्टसिद्ध्यर्थमिडागमो गृह्यते, तस्य तु ङित्त्वं व्यर्थम् , तन्निमित्तगुणस्याप्राप्तेरतो लक्षणया इड्वान् गृह्यते । इट् प्रत्ययस्यादिरिति फलितार्थकथनमिडादिप्रत्ययो ङिद्वदिति । एवं च इडादिरिति लाभाय यस्यादिरित्यनुवर्तनक्लेशो व्यर्थ एवेत्याहुः । इह ओविजीति तुदादिः रुधादिश्च गृह्यते, न तु विजिर् पृथग्भावे इति जुहोत्यादिर्व्याख्यानात् । यस्त्वत्र हरदत्तेन जुहोत्यादेरग्रहणे हेतुरुक्तः–तस्यानिट्कत्वादिति । तदयुक्तम् , क्रादिनियमेन लिटि इट्संभवात् । न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्वं व्यर्थमिति वाच्यम् , अपिल्लिटः कित्त्वेऽपि विवेजिथेत्यत्र पित्त्वेन ङित्त्वाभावात् ॥ **वव्रश्चेति** । अत्र नव्याः–वव्रश्चेत्यादौ 'लिट्यभ्यासस्य–३२१२' इत्यभ्यासावयवयोर्द्वयोरपि यणोः संप्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय 'न संप्रसारणे–४९३' इति सूत्रं स्वीक्रियते, ततश्च अत एव ज्ञापकात्परस्य प्रथमं संप्रसारणमिति परिकल्प्य ' आ पादपरिसमाप्तेरङ्गाधिकारः ' इति पक्षमभ्युपगम्य उरदत्वस्याङ्गाक्षिप्तप्रत्ययनिमित्तकत्वस्वीकारात् ' अचः परस्मिन्–७७ ' इति स्थानिवद्भावप्रवृत्त्या संप्रसारणपरत्वमाश्रित्य वकारस्य संप्रसारणनिषेधः कथंचिदुपपद्यते । 'परस्य संप्रसारणम् ' ' परस्य यणः संप्रसारणम् ' इति वा सूत्रिते परस्यैव संप्रसारणं न तु पूर्वस्य, यण इत्यर्थलाभाद् उक्तक्लेशं विनैव वव्रश्च यून इत्यादि सर्वं सिध्यति । न चैवं ' लिटि वयो यः ३२१७ ' ' वेञः ३२१९ ' इत्यत्र संप्रसारणनिषेधाय नञोऽनुवृत्तिर्न लभ्येतेति वाच्यम् , ' न लिटि वयो यः ' इति सूत्रकरणे बाधकाभावात् , ' न संप्रसारणे–४९३ ' इति यथाश्रुतसूत्रप्रणयने त्वन्ततो गत्वा मात्राद्वयस्याधिक्याच्च । एवं च लघूपायेनेष्टसिद्धौ 'न संप्रसारणे–

---

१ अयं तवर्गपञ्चमादिरिति चान्द्राः । तन्मतेन नम्र–नम्रिकाशब्दव्युत्पत्तौ तवर्गादिरयं स्वामिना पठितः ॥ आत्रेयमैत्रेयस्वामिसंमताकरशाकटायनादयः सर्वे यणादिमेवाहुः । नम्रशब्दस्तु पृषोदरादित्वाद् वर्णव्यत्ययेनेति मैत्रेय इति माधवः ॥

[२३१२] ग्र्यासस्येति संप्रसारणम् । रेफस्य ऋकारः । उरत् । तस्यांचः परस्मिन्निति स्थानिवद्भावान्न संप्रसारणं इति । षस्योत्वं न । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्, अव्राक्षीत् । अव्रक्ष्यत् । १ ॥ व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत्, अव्यचीत् । ( ३३६१ ) ***** व्यचेः कुटादित्वमनसि इति तु नेह प्रवर्तते, अनसीति पर्युदासेन कृन्मात्रविषयत्वात् । २ ॥ उछि उञ्छे । उञ्छति । ३ ॥ उछी विवासे । उच्छति । ४ ॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । [३१७६] ऋच्छत्यृतामिति गुणः । द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्छ । आनर्छतुः । ऋच्छिता । ५ ॥ मिच्छ उत्क्लेशे । उत्क्लेशः पीडा । मिमिच्छ । अमिच्छीत् । ६ ॥ जर्ज चर्च झर्झ परिभाषणभर्त्सनयोः । ९ ॥ त्वच संवरणे । तत्वाच । १० ॥ ऋच स्तुतौ । आनर्च । ११ ॥ उब्ज आर्जवे । १२ ॥ उज्झ उत्सर्गे । १३ ॥ लुभ विमोहने । विमोहनमाकुलीकरणम् । लुभति । लोभिता, लोब्धा । लोभिष्यति । १४ ॥ रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । रिफति । रिरेफ । रिरे-

---

४९३ ' इति सूत्रारम्भो ज्ञापयति-' निमित्तभेदाभावेऽपि स्थानिभेदे पुनरपि कार्यं प्रवर्तते ' इति । तथा च-सुध्युपास्य इत्यादौ उकारात्परस्य धकारस्य द्वित्वे कृते पुनरुकारात्परस्य दकारस्यापि द्वित्वमिति प्रक्रियाकारादिव्याख्यानं सूत्रकाराभिप्रेतमेव । यदि स्थानिभेदेऽपि निमित्तैक्ये कार्याप्रवृत्तिः क्वचिद् दृश्यते, तत्र तु 'ज्ञापकसिद्धं न सर्वत्र' इति स दोषः परिह्रियतामित्याहुः ॥ **अव्रश्चीदिति** । ऊदित्त्वात्पक्षे इट् । 'वदव्रज-३०१३' इति वृद्धेः 'नेटि ३०३४' इति निषेधः ॥ **अव्राक्षीदिति** । 'स्कोः-५१६' इति सलोपः 'व्रश्च-४११' इति षः । 'षढोः-४१२' इति कः । ततः सस्य षत्वम् । न चात्र सकारस्य कथं लोप इति वाच्यम्, धातुपाठे सकारस्य पाठात् । तदाहुः-'नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः ॥ ' इति ॥ **व्यच-** । व्याजीकरणं छद्मकरणम् ॥ ( ३३६१ ) **पर्युदासेनेति** । प्रसज्यप्रतिषेधे हि वाक्यभेदोऽ ( समर्थ ) समासश्च प्रसज्येतेति भावः ॥ **कृन्मात्रविषयत्वादिति** । तेन उद्विचिता उद्विचितुमित्यत्र संप्रसारणं भवति । व्यचितेत्यादौ तु तिङ्विषये न भवति । विव्याचेत्यत्र कुटादित्वे जातेऽपि न क्षतिः । 'गाङ्कुटादिभ्यः-२२७३ ' इति सूत्रे अञ्णितः प्रत्यया ङितः स्युरित्युक्तत्वात् । उत्तमे णलि तु णित्त्वाभावपक्षे ङित्त्वात्संप्रसारणे विव्यचेति न सिध्येदिति अनसीति पर्युदास आवश्यक इति बोध्यम् ॥ **'उछि उञ्छे' 'उछी विवासे'** इमौ भ्वादिगणे व्याख्यातौ । इह पाठस्तु उञ्छतीत्यत्र 'आच्छीनद्योः-५१९' इति नुम्विकल्पार्थः । पूर्वपाठस्तु स्वरार्थः । तथाहि-उञ्छती उच्छतीत्यादौ पिद्वचने शप्तिबादीनां पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं पदम् । शे तु प्रत्ययस्वरेण मध्योदात्तमिति । न च ' सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः ' इति वक्ष्यमाणत्वात्कथमिह मध्योदात्ततेति वाच्यम्, कुरुत इत्यादौ तसादेर्विकरणात्परत्वेन तत्स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेऽपि शस्य धातोः परत्वेन धातुस्वरापेक्षया शस्वरस्योदात्तस्य प्रबलत्वात् ॥ **उपलक्षणत्वादिति** । अत एव ' अदुपधस्य चेत् अश्नोतेरेव ' इति नियममाश्रित्य द्विहल्ग्रहणं भाष्यकारैः प्रत्याख्यातम् । अन्यथा तत्र संगच्छेतेति भावः ॥ **आनर्छेति** । 'अनृच्छः ' इति पर्युदासान्नाम् । नव्यास्तु-' ऋच्छत्यृताम् ३१७६ ' इति लिटि परे गुणविधानसामर्थ्यादामभावः सिद्ध इति 'इजादेः-२९९६ ' इति सूत्रे अनृच्छ इत्येतत्स्पष्टप्रतिपत्त्यर्थमित्याहुः । अन्ये तु ' ऋच्छत्यृताम् ३१७६ ' इत्यत्र तौदादिकऋच्छेरिति सर्वैरेव व्याख्यातत्वात् गणान्तरेऽपि ऋच्छिरस्तीत्यनुमीयते, तद्धातोस्तु लिट्याम्निवारणाय अनृच्छ इत्येतदावश्यकमित्याहुः ॥ **मिच्छ** । उत्कटः क्लेश उत्क्लेशः ॥ **ऋच स्तुतौ** । ऋच्यते स्तूयते देवतादिकमनयेति ऋक् । बाहुलकादिह करणे

---

१ **नकारजाविति** ॥ धातुषु झलि परतो यावनुस्वारपञ्चमान्यतरौ दृश्येते तौ नकारजौ ज्ञेयौ । तत्र झलि परतः **'नश्चापदान्तस्य झलि'** इत्यनेनौपदेशिकस्य नकारस्य स्थानेऽनुस्वारो जातः । यथा-बृंह स्रंसु ध्वंसु इत्यादौ । झयि परतस्तु नकारस्यौपदेशिकस्य स्थाने **' नश्चापदान्तस्य- '** इत्यनुस्वारे **' अनुस्वारस्य ययि परसवर्णः '** इति परसवर्णेन पञ्चमो दृश्यते यथा-अङ्क अञ्चु मन्थ गुम्फ इत्यादाविति भावः ॥ न चैवं **' परेश्च घाङ्कयोः '** इति सूत्रभाष्ये-क्रुञ्चाशब्दे नकारस्य स्थाने **' चोः कुः '** इति कुत्वं झलि चकारे परत आपादितं विरुध्येत **' चोः कुः '** इत्येतत्सूत्रदृष्ट्या परसवर्णजातचवर्गस्यासिद्धत्वात्-इति वाच्यम् । एतत्कुत्वापादनपरभाष्यप्रामाण्येन **' नकारजावनुस्वार- '** इत्यस्य प्रायिकत्वमभ्युपगम्यत इति **नागेशभट्टाः** ॥ वस्तुतस्तु **' क्रुश्वां च '** इति निर्देशेनैवात्रौपदेशिकस्य नकारस्य ञकारोऽपि विधीयते **' अन्तर्वत्पतिवतोर्नुक् '** इत्यत्र वत्वमिव । तथा च तस्य कुत्वदृष्टावसिद्धत्वाभावेन कुत्वमापादितमिति नास्य प्रायिकत्वकल्पनावश्यकता । ' बाधकान्येव निपातनानि ' इति सूचयता भाष्यकृता निपातनाङ्गीकारेण चसंनियोगे कुत्वं निवारितम् । एवं ञादेशनिपातनेन नकाराभावान्नलोपाप्राप्त्या नलोपाभावनिपातनमपि व्यर्थमिति सर्वमनवद्यम् ॥ एवं चे चकारे परतो दृश्यमानस्तालव्यः शकारो दन्त्यसकारस्थानिकः श्चुत्वेनेति श्चुत्वस्यासिद्धत्वाद्दन्त्यसकारप्रयुक्तः संयोगादिलोपादिर्भवत्येवेति भावः ॥ एवं रेफात् परो दृश्यमानष्टवर्गस्तवर्गजो यथा-ऊर्णुधात्वादौ । तथा च 'ऊर्णुनाव' इत्यादौ नकारस्यैव द्वित्वादिरिति भावः ॥ एवं षकारात् परो दृश्यमानष्टवर्गादेशस्तवर्गस्थानिक एव यथा-ष्ठाप्रभृतिषु । तथा च षकारस्य सकारादेशे जाते षकारयोगाभावात्तवर्गस्यैव श्रवणम्-स्थाता स्थास्यतीत्यादाविति भावः ॥

त्येके। शिशुं न विप्रा मतिभी रिहन्ति। १५॥ **तृप तृम्फ** तृप्तौ। आद्यः प्रथमान्तः द्वितीयो द्वितीयान्तः। द्वावपि द्वितीयान्तावित्यन्ये। तृपति। ततर्प। तर्पिता। स्पृशिमृशेति सिज्विकल्पः पौषादिकस्यैव, अङ्पवादत्वात्। तेनात्र नित्यं सिच्। अतर्पीत्। १६॥ शस्य ङित्वादनिदितामिति नलोपे—॥ ( ३३६२ ) **शे तृम्फादीनां नुम्वाच्यः॥** आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः। तृम्फति। ततृम्फ। तृम्फ्यात्। १७॥ **तुप तुम्प तुफ तुम्फ** हिंसायाम्। तुपति। तुम्पति। तुफति। तुम्फति। २१॥ **दृप दृम्फ** उत्क्लेशे। प्रथमः प्रथमान्तः। द्वितीयो द्वितीयान्तः। प्रथमो द्वितीयान्त इत्येके। दृपति। दृम्फति। २३॥ **ऋफ ऋम्फ** हिंसायाम्। ऋफति। आनर्फ। ऋम्फति। ऋम्फाञ्चकार। २५॥ **गुफ गुम्फ** ग्रन्थे। गुफति। जुगोफ। गुम्फति। जुगुम्फ। २७॥ **उभ उम्भ** पूरणे। उभति। उवोभ। उम्भति। उम्भाञ्चकार। २९॥ **शुभ शुम्भ** शोभार्थे। शुभति। शुम्भति। ३१॥ **दृभी** ग्रन्थे। दृभति। ३२॥ **चृती** हिंसाग्रन्थनयोः। चर्तिता। सेऽसिचीति वेट्[३३२४]। चर्तिष्यति, चर्त्स्यति। अचर्तीत्। ३३॥ **विध** विधाने। विधति। वेधिता। ३४॥ **जुड** गतौ। तवर्गपञ्चमान्त इत्येके। जुडति। मरुतो जुनन्ति। ३५॥ **मृड** सुखने। मृडति। मर्डिता। ३६॥ **पृड** च। पृडति। ३७॥ **पृण** प्रीणने। पृणति। पपर्ण। ३८॥ **वृण** च। वृणति। ३९॥ **मृण** हिंसायाम्। ४०॥ **तुण** कौटिल्ये। तुतोण। ४१॥ **पुण** कर्मणि शुभे। पुणति। ४२॥ **मुण** प्रतिज्ञाने। ४३॥ **कुण** शब्दोपकरणयोः। ४४॥ **शुन** गतौ। ४५॥ **द्रुण** हिंसागतिकौटिल्येषु। ४६॥ **घुण घूर्ण** भ्रमणे। ४८॥ **षुर** ऐश्वर्यदीप्त्योः। सुरति। सुषोर। आशिषि सूर्यात्। ४९॥ **कुर** शब्दे। कुरति। कूर्यात्। अत्र न भकुर्छुरामिति निषेधो न, करोतेरेव तत्र ग्रहणादित्याहुः। ५०॥ **खुर** छेदने। ५१॥ **मुर** संवेष्टने। ५२॥ **क्षुर** विलेखने। ५३॥ **घुर** भीमार्थशब्दयोः। ५४॥ **पुर** अग्रगमने। ५५॥ **वृहू** उद्यमने। दन्त्योष्ठ्यादिः। पवर्गीयादिरित्यन्ये। ५६॥ **तृहू स्तृहू तृंहू** हिंसार्थाः। तृहति। ततर्ह। स्तृहति। तस्तर्ह। स्तर्हिता, स्तर्ढा। अतृंहीत्, अताङ्क्षीत्। अताण्ढाम्। ५९॥ **इषु** इच्छायाम्। इषुगमीति छः। इच्छति। एषिता, एष्टा। एषिष्यति। इष्यात्। ऐषीत्। ६०॥ **मिष** स्पर्धायाम्। मिषति। मेषिता। ६१॥ **किल** श्वैत्यक्रीडनयोः। ६२॥ **तिल** स्नेहने। ६३॥ **चिल** वसने। ६४॥ **चल** विलसने। ६५॥ **इल** स्वप्नक्षेपणयोः। ६६॥ **विल** संवरणे। दन्त्योष्ठ्यादिः। ६७॥ **बिल** भेदने। ओष्ठ्यादिः। ६८॥ **णिल** गहने। ६९॥ **हिल** भावकरणे। ७०॥ **शिल षिल** उञ्छे। ७२॥ **मिल** श्लेषणे। ७३॥ **लिख** अक्षरविन्यासे। लिलेख। ७४॥ **कुट** कौटिल्ये। गाङ्कुटादिभ्य इति ङित्वम्। चुकुटिथ। चुकोट। चुकुट। कुटिता। ७५॥ **पुट** संश्लेषणे। ७६॥ **कुच** सङ्कोचने। ७७॥ **गुज** शब्दे। ७८॥ **गुड** रक्षायाम्। ७९॥ **डिप** क्षेपे। ८०॥ **छुर** छेदने। न भकुर्छुरामिति न दीर्घः। छुर्यात्। ८१॥ **स्फुट** विकसने। स्फुटति। पुस्फोट। ८२॥ **मुट** आक्षेपमर्दनयोः। ८३॥ **त्रुट** छेदने। वा भ्राशेति श्यन्वा। त्रुट्यति, त्रुटति। तुत्रोट। त्रुटिता। ८४॥ **तुट** कलहकर्मणि। तुटति। तुतोट। तुटिता। ८५॥ **चुट छुट** छेदने। ८७॥ **जुड** बन्धने। ८८॥ **कड** मदे। ८९॥ **लुट** संश्लेषणे। ९०॥ **कृड** घनत्वे। घनत्वं सान्द्रता। चकर्ड। कृडिता। ९१॥ **कुड** बाल्ये। ९२॥ **पुड** उत्सर्गे। ९३॥ **घुट** प्रतिघाते। ९४॥ **तुड** तोडने। तोडनं भेदः। ९५॥ **थुड स्थुड** संवरणे। थुडति। तुथोड। तुस्थोड। ९७॥ **खुड छुड** इत्येके। ९९॥ **स्फुर स्फुल** संचलने। १०१॥ **स्फुर**

---

क्विप्॥ **लोभिता लोब्धा।** 'तीषसह–३१२१' इति वेट्॥ **शिशुं न विप्रा इति।** नशब्द इवार्थे। विप्रा ब्राह्मणाः शिशुमिव मतिभी रिहन्ति हिंसन्ति। न्यूनीकुर्वन्तीत्यर्थः॥ **चृती** हिंसाग्रन्थनयोः। ईदित्करणं 'श्वीदितो निष्ठायाम् ४०५२' इतीण्निषेधार्थम्। यद्यप्यस्य वेट्कत्वान्निष्ठायामिण्निषेधः सिध्यति, तथापि 'यस्य विभाषा ४०२६' इत्यस्यानित्यतां ज्ञापयितुमीदित्करणम्। तेन 'धावितमिभराजधिया' इत्यादि सिद्धमित्याहुः॥ **कुर** शब्दे। **करोतेरेवेति।** सुप्रसिद्धत्वात्। कुर्यादित्युक्ते हि लोकानां कृञ एवोपस्थितिर्भवति न त्वस्येति भावः॥ **मुर** संवेष्टने। इगुपधलक्षणः कः। मुरो दैत्यः, मुरारिर्विष्णुः॥ **क्षुर** विलेखने। विलेखनं छेदनम्। केशान् क्षुरति 'इगुपध–३८५७' इति कः। क्षुरः शस्त्रम्॥ **तिल** स्नेहने। तिलति। 'इगुपध–३८५७' इति कप्रत्यये तिलः। तिल गतौ। तेलतीति शपि गतम्॥ **लिख** अक्षरविन्यासे। लिखितुं लिखिष्यतीति प्रयोगः प्रामादिकः। यत्तु कैश्चित् कुटस्यादिः कुटादिः, कुट आदिर्येषां ते कुटादयः, कुटादयश्च कुटादिश्च कुटादयः—इत्येकशेषं स्वीकृत्य लिखितुमित्यादि समर्थितम्। तदसत्, लेखिता लेखिष्यतीत्यादौ गुणनिषेधापत्तेः। न चेष्टापत्तिः, वृत्तिकारहरदत्तादिग्रन्थविरोधात्। 'गाङ्लिखादिभ्यः' इत्येव सूत्रितव्ये 'कुटादिभ्यः' इति पठनस्य स्वारस्यभङ्गापत्तेश्च। किञ्च 'शकुनिष्वालेखने' इति सौत्रप्रयोगोऽपि विरुध्यत इति प्रागेवोक्तमित्यास्तां तावत्। लिखापयतीति प्रयोगस्तु मनोरमायामित्थं समर्थितः—आपनम् आपः प्राप्तिः, लिखस्यापो लिखापस्तं करोति॥ **स्फुट** विकसने। स्फुटत्यर्थोऽस्मादिति स्फोटः, स च पदस्फोटवाक्यस्फोटादिभेदेनानेकविधः॥ **कड** मदे। कुटादिकार्याभावेऽपि डान्तानुरोधेनायं कुटादौ पठितः। भ्वादौ पठि-

---

१ अत्रोदित्पाठः प्रामादिकः।

स्फुरणे । स्फुल संचलन इत्येके ॥ ( ३३६३ ) सू० स्फुरतिस्फुलत्योर्निर्निर्विभ्यः । ८ । ३ । ७६ । षत्वं वा स्यात् । निःष्फुरति । निःस्फुरति । स्फर इत्यकारोपधं केचित्पठन्ति । पस्फार । १०२ ॥ स्फुड चुड व्रुड संवरणे । १०५ ॥ क्रुड भृड निमज्जन इत्येके । १०७ ॥ गुरी उद्यमने । अनुदात्तेत् । गुरते । जुगुरे । गुरिता । १०८ ॥

णू स्तवने । दीर्घान्तः । परिणूतगुणोदयः ॥ **इतश्चत्वारः परस्मैपदिनः** ॥ नुवति । अनुवीत् । १ ॥ धू विधूनने । धुवति । २ ॥ गु पुरीषोत्सर्गे । जुगुविथ, जुगुथ । गुता । गुष्यति । अगुषीत् । ह्रस्वादङ्गात् । अगुताम् । अगुषुः । ३ ॥ ध्रु गतिस्थैर्ययोः । ध्रुव इति पाठान्तरम् । आद्यस्य ध्रुवतीत्यादि गुवतिवत् । द्वितीयस्तु सेट् । दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रूव्यात् । अध्रुवीत् । अध्रुविष्टाम् । ४ ॥

कूङ् शब्दे । दीर्घान्त इति कैयटादयः । कुविता । अकुविष्ट । ह्रस्वान्त इति न्यासकारः । कुता । अकुत । १ ॥ ( ३३६४ ) वृत् । कुटादयो वृत्ताः । पृङ् व्यायामे । प्रायेणायं व्याङ्पूर्वः । रिङ् । इयङ् । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । २ ॥ मृङ् प्राणत्यागे ॥ ( ३३६५ ) सू० म्रियतेर्लुङ्लिङोश्च । १ । ३ । ६१ । लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । ङित्त्वं स्वरार्थम् । म्रियते । ममार । ममर्थ । मम्रिव । मर्तासि । मरिष्यति । मृषीष्ट । अमृत । २ ॥

**अथ परस्मैपदिनः सप्त** ॥ रि पि गतौ । अन्तरङ्गत्वादियङ् । रियति । पियति । रेता । पेता । २ ॥ धि धारणे । ३ ॥ क्षि निवासगत्योः । ४ ॥ षू प्रेरणे । सुवति । सविता । ५ ॥ कॄ विक्षेपे । किरति । किरतः । चकार । चकरतुः । करिता, करीता । कीर्यात् । अकारीत् ॥ ( ३३६६ ) सू० **किरतौ लवने** । ६ । १ । १४० । उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे । उपस्किरति ॥ ( ३३६७ ) वा० **अडभ्यासव्यवायेऽपि ( सुट् कात्पूर्वं ) इति वक्तव्यम्** ॥

---

तस्य पुनरत्र पाठः शतरि नुम्विकल्पार्थः, पूर्वं पाठस्तु उच्छतीत्यादाविव कडतीत्यादौ आद्युदात्तार्थः ॥ ( ३३६३ ) **स्फुरतिस्फुलत्योः--** । ' सिवादीनाम्-३१५२ ' इत्यतो वेत्यनुवर्तनादाह—**षत्वं वा स्यादिति** ॥ **परिणूतेति** । 'श्र्युकः क्किति ३१७४ ' इतीण्निषेधः ॥ ( ३३६५ ) **म्रियतेर्लुङ्लिङोश्च** । चात् शित इति अनुकृष्यते तदाह-**शितश्च प्रकृतिभूतादिति** । **तङिति** । आत्मनेपदमित्यर्थः । तेन म्रियमाण इति सिद्धम् ॥ **स्वरार्थमिति** । मा हि मृतेत्यत्र ' तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम् ५६९५ ' इत्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः । ङित्त्वाभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यात् । न च सिज्लोपस्यासिद्धत्वात् ङितः परत्वं लसार्वधातुकस्य दुरुपपादमिति तस्य कथमनुदात्तता स्यादिति शङ्क्यम्, ङित्त्वसामर्थ्यात् सिज्लोपस्यासिद्धत्वं नेति सुवचत्वात् । अमृतेत्यत्राडागमस्यैवोदात्तत्वात् मृङो ङित्त्वस्य न किंचित्प्रयोजनमिति आण्निवारणाय मा हि मृतेति माङ्प्रयोगे ' तिङ्ङतिङः ५९११ ' इति तिङन्तनिघातेऽपि ङित्त्वं व्यर्थमेव स्यादिति ( हिशब्दप्रयोगः । ) हिशब्दप्रयोगे तु ' हि च ५९१७ ' इत्यनेन तिङन्तनिघातनिषेधादिष्टस्वरः सिध्यतीति बोध्यम् । रि पि गतौ । परत्वाल्लघूपधगुणः स्यादित्याशङ्कायामाह--**अन्तरङ्गत्वादिति** । ( ३३६६ ) **किरतौ लवने** । ' उपात्प्रतियत्न-३३८२ ' इति सूत्रादुपादिति वर्तते । लवने किम्, उपकिरति ॥

---

१ ननु 'म्रियतेः-' इति सूत्रस्य विध्यर्थत्वमेवास्तु धातोर्ङित्त्वं माऽस्त्वित्यत आह-**स्वरार्थमिति** ॥ २ इदं वार्तिकं सूत्रेषु कैश्चित्प्रक्षिप्तम् । वार्तिके किमपि विधेयं नास्तीत्यतोऽधिकारसूत्रमनुवर्त्य तदेकवाक्यतयोपन्यस्तमिति भावः ॥ स्वार्थद्रव्यलिङ्गसंख्याकारकाणि पञ्चकं प्रातिपदिकार्थ इति सिद्धान्ते प्रत्यया द्योतकाः । तथा भाव ( फलव्यापार ) कालकारकसंख्याश्चत्वारोऽर्था धातूनामेव उपसर्गप्रत्यया द्योतका एवेति सिद्धान्ते उपसर्गाणामिव प्रत्ययानामपि धात्वर्थद्योतकत्वे विशेषाभावादुपसर्गनिमित्तककार्याणामिव प्रत्ययनिमित्तककार्याणामप्यन्तरङ्गतरत्वेन विशेषाभावेन प्रत्ययनिमित्तककार्यं प्राक् करणीयम् उपसर्गनिमित्तककार्यं वा इति संशये **'प्रत्ययः' 'अध्ययने'** इत्यादिनिर्देशः प्रकृतिप्रत्ययनिमित्तककार्यमेव प्राग्भवति तत उपसर्गनिमित्तककार्यम्, ततः शब्दान्तरनिमित्तककार्यम् इति निर्णये द्वित्वाट्प्रभृतिषु कार्येषु जातेषु उपसर्गनिमित्तके सुटि करणीये देशप्रकॢप्त्यर्थं कात्पूर्वग्रहणे कृतेऽन्यव्यवधाने सुड्वारणाय ' **अडभ्यासव्यवायेऽपि** ' इति वार्तिककृता वार्तिकं रचितमिति प्रत्याख्यानपरं भाष्यमेकदेश्येव सुटोऽन्तरङ्गतरत्वस्येव द्वित्वाटोरपि तत्त्वस्यावश्यकत्वात् **'लिटि गुण-चङि दीर्घप्रतिषेधार्थम्** ' इति वार्तिकानुरोधेन **'उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते'** इत्यङ्गीकारेण 'संचस्करतुः' 'समचिस्करत्' इत्यादिसिद्धिः । **'पदादाविड्गुणप्रतिषेधः'** इति वार्तिकानुरोधेन 'उपजनिष्यमाण-' इति न्यायानङ्गीकारेण प्राग्निषिद्धयोरिड्गुणयोर्न पुनरुज्जीवनमिति संस्कृषीष्ट इत्यत्र नेट्, 'संस्क्रियते' इत्यत्र न गुण इति लक्ष्यानुसाराद् व्यवस्थेति वयम् ॥ संपरिभ्यां तृतीयात्वमाश्रित्य व्यवहितेऽपि प्रकृतिस्वीकारोऽप्येकशेषित्वमेव दर्शयति ' उपात् प्रतेः ' इत्यादिसमानप्रकरणत्वेन तथाऽऽकलयितुमशक्यत्वात् तयोः सूत्रयोर्विषये अडभ्यासव्यवाये सुट्प्रदेशप्रकॢप्त्यर्थं कात्पूर्वग्रहणवार्तिकयोरत्यावश्यकत्वात् ॥ ३ अस्य धातोर्ङित्त्वादात्मनेपदे सिद्धे 'म्रियतेः-' इति सूत्रं नियमार्थम् । स च—आत्मनेपदसामान्यस्यैव अनुवृत्तस्यात्मनेपदपदस्य विशेषपरत्वे प्रमाणाभावादित्याह-आत्मनेपदमिति ॥

उपास्किरत् । उपचस्कार ॥ (३३६८) (सू) हिंसायां प्रतेश्च । ६ । १ । १४१ । उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति । प्रतिस्किरति । ६ ॥ गॄ निगरणे ॥ ( ३३६९ ) (सू) अचि विभाषा । ८ । २ । २१ । गिरते रेफस्य लत्वं वा स्यादजादौ । गिरति । गिलति । जगार, जगाल । जगरिथ, जगलिथ । गरिता, गरीता । गलिता, गलीता । ७ ॥ दृङ् आदरे । आद्रियते । आद्रियेते । आदद्रे । आदद्रिषे । आदर्ता । आदरिष्यते । आदृषीष्ट । आदृत । आदृषाताम् । १ ॥ धृङ् अवस्थाने । ध्रियते । २ ॥

अथ परस्मैपदिनः षोडश ॥ प्रच्छ ज्ञीप्सायाम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छिथ, पप्रष्ठ । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । १ ॥ ( ३३७० ) वृत् ॥ किरादयो वृत्ताः ॥ सृज विसर्गे । विभाषा[३२०७] सृजिदृशोः । ससर्जिथ, सस्रष्ठ । स्रष्टा । स्रक्ष्यति । सृजिदृशोर्झल्यमकिति[३३३६] त्यमागमः । सृजेत् । सृज्यात् । अस्राक्षीत् । २ ॥ टुमस्जो शुद्धौ । मज्जति । ममज्ज । मस्जिनशोर्झलीति नुम्[३३३६] ॥ ( ३३७१ ) (वा) मस्जेरन्त्यात्पूर्वो नुम्वाच्यः ॥ संयोगादिलोपः । ममङ्क्थ, ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः । ३ ॥ रुजो भङ्गे । रोक्ता । रोक्ष्यति । अरौक्षीत् । अरौक्ताम् । ४ ॥ भुजो कौटिल्ये । रुजिवत् । ५ ॥ छुप स्पर्शे । छोप्ता । अच्छौप्सीत् । ६ ॥ रुश रिश हिंसायाम् । तालव्यान्तौ । रोष्टा । रोक्ष्यति । रेष्टा । रेक्ष्यति । ८ ॥ लिश गतौ । अलिक्षत् । ९ ॥ स्पृश संस्पर्शने । स्प्रष्टा, स्पर्ष्टा । स्प्रक्ष्यति, स्पर्क्ष्यति । अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत् । १० ॥ विच्छ गतौ । गुपूधूप[३०६]त्यायः । आर्धधातुके वा । विच्छायति । विच्छायाञ्चकार । विविच्छ । ११ ॥ विश प्रवेशने । विशति । वेष्टा । १२ ॥ मृष आमर्शने । आमर्शनं स्पर्शः । अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् । १३ ॥ णुद प्रेरणे । कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनः पाठः । १४ ॥ षद्लृ विशरणगत्यवसादनेषु । सीदतीत्यादि भौवादिकवत् । इह पाठो नुम्विकल्पार्थः—सीदती । सीदन्ती । ज्वलादौ पाठस्तु णार्थः—सादः । स्वरार्थश्च—शबनुदात्तः । शस्तूदात्तः । १५ ॥ शद्लृ शातने । स्वरार्थ एव पुनः पाठः । शता तु नास्ति, शदेः शित[३१५५] इत्यात्मनेपदोक्तेः । १६ ॥

अथ षट् स्वरितेतः । मिल संगमे । मिल संश्लेषणे इति पठितस्य पुनः पाठः कर्त्रभिप्राये तदर्थः । मिलति, मिलते । मिमेल, मिमिले । १ ॥ मुच्लृ मोक्षणे ॥ ( ३३७२ ) (सू) शे मुचादीनाम् । ७ । १ । ५९ । नुम् स्यात् । मुञ्चति, मुञ्चते । मोक्ता । मुच्यात्, मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् । २॥ लुप्लृ छेदने । लुम्पति, लुम्पते । अलुपत्, अलुप्त । ३ ॥ विद्लृ लाभे । विन्दति, विन्दते । विवेद, विविदे । व्याघ्रभूत्यादिमते सेट्कोऽयम् । वेदिता । भाष्यादिमतेऽनिट्कः । वेत्ता । परिवेत्ता । परिर्वर्जने । ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः । तृन्तृचौ । ४ ॥ लिप उपदेहे । उपदेहो वृद्धिः । लिम्पति, लिम्पते । लेप्ता । लिपिसिचि[३२२२]ह्वश्चेति अङ् । तङि तु वा । अलिपत्, अलिपत, अलिप्त । ५ ॥ षिच क्षरणे । सिञ्चति, सिञ्चते । असिचत्, असिचत, असिक्त । अभिषिञ्चति । अभ्यषिञ्चत् । अभिषिषेच । ६ ॥

अथ त्रयः परस्मैपदिनः ॥ कृती छेदने । कृन्तति । चकर्त । कर्तिता । कर्तिष्यति । कर्त्स्यति । अकर्तीत् । १ ॥ खिद परिघाते । खिन्दति । चिखेद । खेत्ता । अयं दैन्ये दिवादौ रुधादौ च । २ ॥ पिश अवयवे । पिंशति । पेशिता । अयं दीपनायामपि । त्वष्टा रूपाणि पिंशतु । ३ ॥ वृत् । मुचादयो वृत्ताः तुदादयश्च ॥ इति तुदादयः ॥

---

(३३६८) हिंसायां प्रतेश्च । चादुपात् 'उरोविदारं प्रतिचस्करे नखैः' इति माघः । कर्मणि लिट् । 'ऋच्छत्यॄताम् ३१७६' इति गुणः ॥ दृङ् आदरे । 'तथाऽऽद्रियन्ते न बुधाः सुधामपि' इति श्रीहर्षः ॥ प्रच्छ ज्ञीप्सायाम् । ज्ञातुमिच्छा ज्ञीप्सा । अत्र ज्ञपिर्ज्ञाने । 'आप्ज्ञप्यृधामीत् ३४७८' 'अत्र लोपः–३४७९' इत्यभ्यासलोपः । ण्वुलि प्रच्छकः । पृच्छाशब्दात् 'तत्करोति–३४१७' इति णिजन्ताण्ण्वुलि तु पृच्छकः । पृच्छाशब्दस्तु भिदादेराकृतिगणत्वादङि संप्रसारणे बोध्यः ॥ (३३७०) किरादयो वृत्ता इति । एते च 'भूषाकर्मकिरादिसनाम्–३७०१' इति वक्ष्यमाणयक्चिणादिनिषेधवार्तिके उपयोक्ष्यन्ते । 'किरश्च पञ्चभ्यः ३४६८' इत्यत्र पञ्चभ्य इत्येतदुत्तरसूत्रेऽनुवृत्त्यर्थमिति बोध्यम् ॥ ससर्जिथेति । 'विभाषा सृजिदृशोः ३२०७' इति थलि वेट् ॥ विच्छ गतौ । तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो न तु शप् । तेन विच्छायती, विच्छायन्ती इति नुम्विकल्पः । केचित्तु–तुदादिपाठसामर्थ्यादायप्रत्ययस्य पाक्षिकत्वं स्वीकृत्य विच्छती, विच्छन्ती इति नुम्विकल्पं विच्छाति विच्छतः विच्छन्तीत्यादिरूपाणि चोदाजहस्तेषां तु मते तुदादिपाठस्य केवले चरितार्थत्वादायप्रत्ययान्ताच्छबेव । तेन विच्छायन्ती इति नित्यमेव 'शप्श्यनोः–६००' इति नुम् ॥ पठितस्येति । अस्मिन्नेव गणे परस्मैपदिषु पठितस्येत्यर्थः ॥ तदर्थ इति । पूर्वपाठस्तु संश्लेषणे कर्त्रभिप्रायेऽपि परस्मैपदार्थः ॥ षिच क्षरणे । षिचिरिति केचिदिरितं पठन्ति । तत्तु फलाभावादुपेक्ष्यम् । इह 'लिपिसिचिह्वश्च ३२२२' इति च्लेरङ् विधीयते स चाप्राप्तविधिः, इरित्त्वे तु विकल्पेन प्राप्तौ नित्यार्थो विधिरिति फलाभावः ॥ पिंशत्विति । दीपयत्वित्यर्थः ॥

इति तुदादयः ॥

अथ रुधादयः ।

**रुधिर् आवरणे ॥ नव स्वरितेत इरितश्च ॥ ( ३३७३ ) रुधादिभ्यः श्नम् । ३ । १ । ७८ ॥** शपोऽपवादः । मित्त्वादन्त्यादचः परः। नित्यत्वाद्गुणं बाधते । रुणद्धि । [३२८२]श्नसोरल्लोपः । णत्वस्यासिद्धत्वादनुस्वारः । परसवर्णः। तस्यासिद्धत्वाण्णत्वं न । न पदान्तेति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत् । रुन्धः । रुन्धन्ति । रुन्धे । रोद्धा, रोत्स्यति । रुणद्धु । रुन्धात् । रुन्धि । रुणधानि । रुणधै । अरुणत् । अरुन्धाम् । अरुणत्, अरुणः । अरुणधम् । अरुधत् । अरौत्सीत् , अरुद्ध । १ ॥ **भिदिर् विदारणे** । भिनत्ति, भिन्ते । भेत्ता, भेत्स्यति, भेत्स्यते । अभिनत्, अभिनः । अभिनदम् । अभिन्त । अभिदत्, अभैत्सीत्, अभित्त । २ ॥ **छिदिर् द्वैधीकरणे** । अच्छिदत् । अच्छैत्सीत् । अच्छित्त । ३ ॥ **रिचिर् विरेचने** । रिणक्ति, रिङ्क्ते, रिरेच, रिरिचे । रेक्ता । अरिणक् । अरिचत् , अरैक्षीत् , अरिक्त । ४ ॥ **विचिर् पृथग्भावे** । विनक्ति, विङ्क्ते । ५ ॥ **क्षुदिर् संपेषणे** । क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत्, अक्षौत्सीत् , अक्षुत्त । ६ ॥ **युजिर् योगे** । योक्ता ।७॥ **उच्छृदिर् दीप्तिदेवनयोः** । छृणत्ति, छृन्ते । चच्छर्द । सेऽसिचीति वेट् । चच्छृदिषे, चच्छृत्से । छर्दिता । छर्दिष्यति, छर्त्स्यति । अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट । ८॥ **उतृदिर् हिंसानादरयोः** । तृणत्तीत्यादि । ९ ॥

**कृती वेष्टने** । परस्मैपदी । कृणत्ति । आर्धधातुके तौदादिकवत् । १ ॥

**ञिइन्धी दीप्तौ ॥ त्रय आत्मनेपदिनः ॥ (३३७४) श्नान्नलोपः । ६ । ४ । २३ ।** श्नमः परस्य नस्य लोपः स्यात् । [३२८२]श्नसोरल्लोपः । इन्धे । इन्त्से । इन्धिता । इनधै । ऐन्ध । ऐन्धाः । १॥ **खिद दैन्ये** । खिन्ते । खेत्ता । २ ॥ **विद विचारणे** । विन्ते । वेत्ता । ३ ॥

**अथ परस्मैपदिनः ॥ शिष्लृ विशेषणे** । शिनष्टि । शिष्टः । शिंषन्ति । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । जश्त्वम् । [१०६]झरो झरीति वा डलोपः । अनुस्वारपरसवर्णौ । शिण्ढि, शिण्ड्ढि । शिनषाणि । अशिनट् । लृदित्वादङ् । आशिषत् । १ ॥ **पिष्लृ संचूर्णने** । शिषिवत् । पिनष्टि । २ ॥ **भञ्जो आमर्दने** । भनक्ति । बभञ्जिथ, बभङ्क्थ । भङ्क्ता । ३ ॥ **भुज पालनाभ्यवहारयोः** । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् । ४ ॥ **तृह हिसि हिंसायाम् ॥ ( ३३७५ ) तृणह इम् । ७ । ३ । ९२ ।** तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिंसिता । ६ ॥ **उन्दी क्लेदने** । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः, औनत् । औनदम् । ७ ॥ **अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु** । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज ।

---

**( ३३७३ ) रुधादिभ्यः श्नम्** । प्रत्ययत्वेऽपि मित्त्वादन्त्यादचः परः । प्रत्ययसंज्ञाफलं तु शस्येत्संज्ञा । शस्योच्चारणं तु 'श्नसोरल्लोपः ३२८२' 'श्नान्नलोपः ३३७४ ' इत्यत्र विशेषणार्थं[1], न तु सार्वधातुकसंज्ञार्थं फलाभावात् । न चापित्सार्वधातुकस्य ङित्त्वे गुणनिषेधः फलमिति शङ्क्यम्, इगन्तस्याङ्गत्वाभावात् ॥ **अरुण इति** । सिपि ' दश्च ३२८१ ' इति रुर्वा । एवमभिन इत्यत्रापि ॥ **उच्छृदिर्** । उकारः क्त्वायामिड्विकल्पार्थः । छृत्त्वा, छर्दित्वा । इट्पक्षे ' न क्त्वा सेट् ५१४३ ' इति कित्त्वनिषेधाद् गुणः ॥ **( ३३७४ ) श्नान्नलोपः** । अस्य मुख्योदाहरणम्—अनक्ति । भनक्ति । श्नादित्युत्सृष्टमकारानुबन्धस्य श्नमो ग्रहणमित्याह—**श्नमः परस्येति** । एवं च ' यजयाच-३८३६ ' इति विश्नशब्दस्यामि नुटि विश्नानामित्यत्र ' लक्षणप्रतिपदोक्त—११५३-२' ' प्रत्ययग्रहण-६२१ ' परिभाषयोः प्रवृत्त्या नलोपशङ्कैव नास्तीत्याहुः ॥ **इन्धे** । **इन्त्से** । श्नमो नकारस्यानुस्वारपरसवर्णौ । ' अनिदिताम्-५५७ ' इति नलोपस्तु न भवति । नलोपस्य ' असिद्धवदत्र-२९३७' इत्यसिद्धत्वात्स्थानिवत्त्वाद्वा ॥ **भञ्जो** । ओदित्करणं निष्ठानत्वार्थम् । भग्नः॥**भुज** पालनादौ ।'भुजोऽनवने ५६५९' इत्यात्मनेपदं वक्ष्यते । भुङ्क्ते । भुञ्जाते ॥ **( ३३७५ ) तृणह इम्** । ' तृहः ' इति वक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमा श्नमो बाधो मा भूदित्येवमर्थम् । न च तौदादिकस्य तृह इत्यस्य व्यावृत्त्यर्थमेवास्त्विति शङ्क्यम् । ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानात् ।' नाभ्यस्तस्याचि पिति-३३२१ ' इत्यतः पितीति, ' उतो वृद्धिः-३२५२ ' इत्यतो हलीति च वर्तते, तदाह—**हलादौ पितीति** । ' प्रत्ययलोपे प्रत्ययलक्षणम् ' इति सूत्रस्थभाष्यकारीयनिष्कर्षे तु हलीति नानुवर्तते किन्तु, पितीति अनुवर्तत एव । तेन तृढ इत्यत्र नातिप्रसङ्गः । न च हलीत्यननुवृत्तौ तृणहानीत्यत्राति-

---

१ **विशेषणार्थ इति** । तेन यत्नानामित्यादौ न नलोपाद्यापत्तिः । न च शकारः श्रवणार्थ एवास्त्विति वाच्यम्, 'तृणहः' इति निर्देशात् ॥ न च श्नमः प्रत्ययत्वे भनक्तीत्यत्र ' **अतो दीर्घो यञि** ' इति दीर्घापत्तिरिति वाच्यम्, ' **यस्मात्प्रत्ययविधिः**' इत्यस्य 'यद्रूपावच्छिन्नमुद्दिश्य प्रत्ययविधिः' इत्यर्थात् । स च धर्मो 'रुध ' इत्यानुपूर्वीरूप एव । तदाश्रयत्वं नावयवानाम् ॥ समुदायस्याप्यत्र नाङ्गत्वम्, तत्प्रत्ययपरत्वाभावात् ॥ शप् त्वेभ्यो न 'सत्यपि संभवे बाधनम्' इति न्यायेन श्नमो बाधकत्वात् ॥ रुधादिभ्यो धातुभ्योऽन्त्यादचः परः श्नम् प्रत्ययो भवतीति निर्गलितोऽर्थो बोध्यः ॥

आनञ्जिथ, आनङ्क्थ । अङ्क्ता, अञ्जिता । अङ्ग्धि । अनजानि । आनक् ॥ (३३७६) अञ्जेः सिचि ।७।२।७१। अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । ८ ॥ तञ्चू सङ्कोचने । तनक्ति । तङ्क्ता, तञ्चिता । ९ ॥ ओविजी भयचलनयोः । विनक्ति । विङ्क्तः । विज इडिति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् ।१०॥ वृजी वर्जने । वृणक्ति । वर्जिता । ११ ॥ पृची संपर्के । पृणक्ति । पपर्च । १२ ॥ इति रुधादयः ॥

अथ तनादयः ।

अथ सप्त स्वरितेतः ॥ तनु विस्तारे । तनादिकृञ्भ्य उः । तनोति । तन्वः, तनुवः । तनुते । ततान, तेने । तनु । अतनीत्, अतानीत् ॥ ( ३३७७—१ ) तनादिभ्यस्तथासोः । २ । ४ । ७९ । तनादेः सिचो वा लुक् स्यात्तथासोः । थासा साहचर्यादेकवचनं तशब्दो गृह्यते । तेनेह न, यूयमतनिष्ट, अतानिष्ट । अनुदात्तोपदेशेत्यनुनासिकलोपः । तङि अतत, अतनिष्ट । अतथाः, अतनिष्ठाः । १ ॥ षणु दाने । सनोति, सनुते । ये विभाषा । सायात्, सन्यात् । जनसनखनेत्यात्वम् । असात, असनिष्ट । असाथाः, असनिष्ठाः । २ ॥ क्षणु हिंसायाम् । क्षणोति, क्षणुते । ह्म्यन्तेति न वृद्धिः । अक्षणीत्, अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः । ३ ॥ क्षिणु च । उप्रत्ययनिमित्तो लघूपधगुणः (३३७७—२) संज्ञापूर्वको विधिरनित्यः—इति न भवतीत्यात्रेयादयः । भवत्येवेत्यन्ये । क्षिणोति, क्षेणोति । क्षेणितासि, क्षेणितासे । अक्षेणीत्, अक्षित, अक्षेणिष्ट । ४ ॥ ऋणु गतौ । ऋणोति, अर्णोति । अर्णुतः । अर्ण्वन्ति । आनर्ण, आनृणे । अर्णितासि । आर्णीत्, आर्त, आर्णिष्ट । आर्थाः, आर्णिष्ठाः । ५ ॥ तृणु अदने । तृणोति, तर्णोति । तृणुते, तर्णुते । ६ ॥ घृणु दीप्तौ । जघर्ण, जघृणे । ७ ॥

अथ द्वावनुदात्तेतौ ॥ वनु याचने । वनुते । ववने । चान्द्रमते परस्मैपदी । वनोति । ववान । १॥ मनु अवबोधने । मनुते । मेने । २ ॥

डुकृञ् करणे । करोति । अत उत्सार्वधातुके । कुरुतः । यण् । न भकुर्छुरामिति न दीर्घः । कुर्वन्ति॥(३३७८) नित्यं करोतेः । ६ । ४ । १०८ । करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यात् म्वोः परयोः । कुर्वः । कुर्मः । चकर्थ । चकृव । चकृषे । कर्ता । करिष्यति ॥ ( ३३७९) ये च । ६ । ४ । १०९ । कृञ उलोपः स्याद्यादौ प्रत्यये परे । कुर्यात् । आशिषि क्रियात्, कृषीष्ट । अकार्षीत् । तनादिभ्य इति लुकोऽभावे ह्रस्वादङ्गादिति सिचो लोपः । अकृत । अकृथाः ॥ ( ३३८० ) संपरिभ्यां करोतौ भूषणे । ६ । १ । १३७ । ( ३३८१ ) समवाये च । ६ । १ । १३८ । संपरिपूर्वस्य करोतेः सुट् स्याद्भूषणे संघाते चार्थे । संस्करोति । अलंकरोतीत्यर्थः । संस्कुर्वन्ति । संघीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट्, संस्कृतं भक्षा इति ज्ञापकात् । परिनिविभ्य इति षः । परिष्करोति । सिवादीनां वा । पर्यष्कार्षीत्, पर्यस्कार्षीत् ॥ ( ३३८२ ) उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च । ६ । १ । १३९ । उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः । वाक्यस्याध्याहार आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । अलंकृतेत्यर्थः । उपस्कृता ब्राह्मणाः । समुदिता इत्यर्थः । एधो दकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृतं ब्रूते । वाक्याध्याहारेण ब्रूत इत्यर्थः ॥ ( ३३८३ ) सुट् कात्पूर्वः । ६ । १ । १३५ । अड्भ्यासव्यवायेऽपीत्युक्तम् । संचस्कार । कात्पूर्व इत्यादि भाष्ये प्रत्याख्यातम् । तथा हि—पूर्वं धातुरुपसर्गेण युज्यते । अन्तरङ्गत्वात्सुट् । ततो द्वित्वम् । एवं

---

सङ्ग इति वाच्यम्, अचि नेत्यनुवर्तनात् ॥ उन्दी । क्लेदनमार्द्रीभावः ॥ अञ्जू । व्यक्तिर्विवेचनम् । म्रक्षणं स्निग्धता ॥ ( ३३७६ ) अञ्जेः सिचि । नित्यमिट् स्यादिति । विभाषाग्रहणं नानुवर्तत इति भावः । सिचि किम्, अङ्क्ता ॥ पृची । ईदित्त्वान्निष्ठायां नेट् । पृक्तः । 'अपृक्त एकाल्—३५५' इत्यत्र नञ्पूर्वः ॥ इति रुधादयः ॥

( ३३७७-१ ) अतनिष्ट । अतानिष्टेति । 'तस्थस्थमिपाम्—२९५४' इति तादेशः । 'अतो हलादेः—३०५१' इति वा वृद्धिः ॥ अततेति । 'तनादिभ्यस्तथासोः ३३७७—१' इति सिज्लुक्यनुनासिकलोपः ॥ अतनिष्टेति । लुगभावपक्षे इट् ॥ षणु दाने । नान्तोऽयं, णकारस्तु लाक्षणिकः । तेन यङ्लुकि संसन्ति संसन्त इत्यादावनुस्वारपरसवर्णौ ॥ क्षणु हिंसायाम् । क्षिणु च । इमावपि लाक्षणिकणकारौ । तेन चङ्क्षन्ति । चेक्षेन्ति इत्यत्रानुस्वारपरसवर्णौ॥ सिचो लोप इति । न चास्मिन्पक्षे प्रत्ययलक्षणप्रवृत्त्या अकृतेत्यत्र गुणः स्यादिति वाच्यम्, 'उश्च ३१६१' इति सिचः कित्त्वेन तन्निषेधात् ॥ (३३८०) 'संपर्युपेभ्यः—' इति वृत्तिस्थपाठं विहाय भाष्यवार्तिकानुसारेणाह—संपरिभ्यामिति ॥ इति तनादयः ॥

---

१ 'नित्यानिटः किम् । आनञ्जिथ' इति भाष्यात्क्रादिनियमान्नित्यमेव थलीट् । २ "सुट् कात् पूर्वः" इति स्वाधिकारसूत्रम् । "अड्भ्यासव्यवायेऽपि" इति तु वार्तिकमित्येव भाष्यविदां सिद्धान्तः ॥ ३ प्रौढिवादेनैकदेशिनामिति बोध्यम् । संस्क्रियात् संस्कृषीष्टेत्यादेसाधनायासंभाविमहायासकरणस्यापत्तेः । नित्यग्रहणस्य विप्रकृष्टतरत्वेनानुवृत्त्यसंभवात् । यथाकथंचिदनुवृत्तावपि सस्वरतुरित्यादौ तदभावात्, न प्रयोगमात्रावच्छेदेन तद् वाच्यम् अस्त-

च ऋतश्च संयोगादेर्गुणः । संचस्करतुः । ऋच्छत्यॄतामिति सूत्रे ऋतो भारद्वाजस्येति सूत्रे च ( ३३८४ ) सुट्कात्पूर्वः इत्यत्र सुट् कृञोऽसुट इति वक्तव्यम् । तेन ससुट्कारपरस्येट् । संचस्करिथ । संचस्करिव । गुणोऽर्तीति सूत्रे नित्यं छन्दसीति सूत्रान्नित्यमित्यनुवर्तते । नित्यं यः संयोगादिस्तस्येत्यर्थात्सुटि गुणो न । संस्क्रियात् । ऋतश्च संयोगादेरिति लिङ्सिचोर्नेट् । एकाच उपदेश इति सूत्रादुपदेश इत्यनुवर्त्य उपदेशे यः संयोगादिरिति व्याख्यानात् । संस्कृषीष्ट । समस्कृत । समस्कृषाताम् । १ ॥ इति तनादयः ॥

---

## अथ क्र्यादयः ।

डुक्रीञ् द्रव्यविनिमये । ( ३३८५ ) क्र्यादिभ्यः श्ना । ३ । १ । ८१ । क्रीणाति । ई हल्यघोः । क्रीणीतः । ईत्वात्पूर्वं झेरन्तादेशः, परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । एवं झस्याद्भावः । ततः श्नाभ्यस्तयोरात इत्यालोपः । क्रीणन्ति । क्रीणीते । क्रीणाते । क्रीणते । चिक्राय । चिक्रियतुः । चिक्रयिथ, चिक्रेथ । चिक्रियिव । चिक्रियिषे । क्रेता । क्रेष्यति । क्रीयात् । क्रेषीष्ट । अक्रैषीत् , अक्रेष्ट । १ ॥ प्रीञ् तर्पणे कान्तौ च । कान्तिः कामना । प्रीणाति, प्रीणीते । २ ॥ श्रीञ् पाके । ३ ॥ मीञ् हिंसायाम् । हिनुमीना ३३५४ । प्रमीणाति । प्रमीणीतः । मीनातिमिनोतिदीङां ल्यपि चेति विषये आत्त्वम् । ममौ । मिम्यतुः । ममिथ, ममाथ । मिम्ये । माता । मास्यति । मीयात् , मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । ४ ॥ षिञ् बन्धने । सिनाति, सिनीते । सिषाय, सिष्ये । सेता । ५ ॥ स्कुञ् आप्रवणे ॥ ( ३३८६ ) स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ।३।१।८२। चात् श्ना । स्कुनोति, स्कुनुते । स्कुनाति, स्कुनीते । चुस्काव, चुस्कुवे । स्कोता । अस्कौषीत् , अस्कोष्ट । ६ ॥ स्तन्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्था इत्येके । माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थ इत्याह । सर्वे परस्मैपदिनः । नलोपः । विष्टभ्नोति, विष्टभ्नाति । अवष्टभ्नोति, अवष्टभ्नाति । अवतष्टम्भ । जृस्तम्भ्विति वाङ् । व्यष्टभत् , व्यष्टम्भीत् । स्तुभ्नोति, स्तुभ्नाति ॥ ( ३३८७ ) वेः स्कभ्नातेर्नित्यम् । ८ । ३ । ७७ । वेः परस्य स्कभ्नातेः सस्य षः स्यात् । विष्कभ्नोति, विष्कभ्नाति । स्कुभ्नोति, स्कुभ्नाति ॥ ( ३३८८ ) हलः श्नः शानज्झौ । ३ । १ । ८३ । हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान । स्तुभान । स्कभान । स्कुभान । पक्षे स्तभ्नुहीत्यादि ॥ युञ् बन्धने । युनाति, युनीते । योता । ७ ॥ क्नूञ् शब्दे । क्नूनाति, क्नूनीते । क्नविता । ८ ॥ द्रूञ् हिंसायाम् । द्रूणाति, द्रूणीते ।९॥ पूञ् पवने ॥(३३८९) प्वादीनां ह्रस्वः । ७ । ३ । ८० । शिति परे । पुनाति, पुनीते । पविता । १० ॥ लूञ् छेदने । लुनाति, लुनीते । ११ ॥ स्तॄञ् आच्छादने । स्तृणाति, स्तृणीते । तस्तार । तस्तरतुः । स्तरिता, स्तरीता । स्तृणीयात् । स्तृणीत । आशिषि स्तीर्यात् । लिङ्सिचोरिति वेट् ॥ [ ३३४९ ] न लिङि ।७।२।३९। वॄत इटो लिङि दीर्घो न स्यात् । स्तरिषीष्ट । उश्चेति कित्त्वम् । स्तीर्षीष्ट । सिचि च परस्मैपदेष्विति न दीर्घः । अस्तारीत् । अस्तारिष्टाम् । अस्तरिष्ट, अस्त-

---

एवं झस्याद्भाव इति । ' आत्मनेपदेष्वनतः ३०२० ' इत्यनेन ॥ ( ३३८६ ) सौत्रा इति । नकारोपधा इत्यपि ज्ञेयाः ॥ विष्टभ्नोतीति । ' अनिदिताम्–५५७ ' इति नलोपः । ' स्तन्भेः ३०३९ ' इति षत्वम् ॥ ( ३३८७ ) वेः स्कभ्नातेर्नित्यम् । 'सिवादीनां वा–३१५२' इत्यतो वेति नानुवर्तते इति ध्वननार्थमिह नित्यग्रहणम् ॥ विष्कभ्नोतीति । स्कभ्नातेरित्यत्र श्नाविशिष्टं रूपं न विवक्षितम्, किंतु धातुमात्रम् । अन्यथा विष्कम्भितमित्यादावपि षत्वं न स्यात् । न चेष्टापत्तिः, माधवादिग्रन्थविरोधादिति भावः ॥ ( ३३८८ ) हलः श्नः—॥ स्तभानेति । 'अतो हेः २९५७ ' इत्यारम्भसामर्थ्यात्संनिपातपरिभाषया अप्रवृत्तेर्हेर्लुक् । अत एव जहीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः । यत्तु कैश्चित् शानजादेशो धातुपाठपठितेभ्यः परस्य श्नो भवति, न तु सौत्रेभ्य इति व्याख्याय स्तभ्नीहीत्युदाहृतम् , तन्निष्प्रमाणं माधवादिग्रन्थविरुद्धं च ॥ ( ३३८९ ) प्वादीनां ह्रस्वः । ' ष्ठिवुक्लमुचमाम्–३०९८ ' इत्यतः शितीत्यनुवर्तत इत्याह—शिति पर इति ॥ [ ३३४९ ] न लिङीति । अनेन वॄत इटो लिङि दीर्घो नेति स्मारितम् ॥

—येत तरीस्तर्यते तरीस्तर्यात् इत्यादौ तदभावेन यगादिघटितप्रयोगमात्रावच्छेदेनापि न तद् वाच्यम् ॥ एवमेवोपदेशग्रहणानुवृत्तिरपि न फलसाधिका । तस्मादिड्गुणयोः प्रतिषेधाय वचनारम्भे गौरवात्तदपेक्षया ' उपसर्गार्थसंबन्धोत्तरं प्रकृतिप्रत्ययनिमित्तककार्योत्तरमुपसर्गसंज्ञकशब्दयोगे कात्पूर्व एव सुट् करणीय इति प्रक्रियैव साधीयसी । 'संपरिभ्याम्' इति तृतीयान्तमाश्रित्य व्यवहितेऽप्युपसृष्टत्वमङ्गीकृत्य ' अडभ्यासव्यवायेऽपि ' इति वार्तिकप्रत्याख्यानध्वननमप्येकदेशिन एव 'समुत्करोति इत्यत्र सुडापत्तेः ' उपचस्कार ' ' प्रतिचस्कार ' इत्यादौ सुटो देशप्रक्लृप्त्यर्थं 'कात्पूर्वः' ' अडभ्यासव्यवायेऽपि ' इति वचनयोरावश्यकत्वात् 'उपात् ' 'प्रतेः' इत्यनयोस्तृतीयान्तत्वाभावेन व्यवहिते कार्याजनकत्वात् ॥ इतोऽप्यधिकं भाष्यटिप्पण्यां द्रष्टव्यमिति दाधिमथाः ॥

---

१ विष्कभ्नोतीति । ननु 'वेः स्कभ्नातेर्नित्यम्' इति सूत्रे श्नाविकरणनिर्देशात् यदा श्नाप्रत्ययस्तदैव षत्वं न्याय्यमिति कथं श्नुप्रत्ययपक्षे षत्वम्–इति चेत् । न, धातुनिर्देशे श्तिपूप्रत्यये कृते विकरणस्यावश्यकतया शबपवादयोः श्नाश्नुविकरणयोः प्रवृत्तिरवश्यं स्वीकार्या । तत्रान्यतरोच्चारणं साधुत्वार्थमेव न तु विवक्षयेतरव्यावृत्त्यर्थमिति स्वीकारात् ॥

१ अत एव राजानावित्यादौ ' स्तोः श्चुना– ' इत्यस्य नापत्तिरिति भावः ॥

रीष्ट, अस्तीर्ष्ट। १२ ॥ **कॄञ्** हिंसायाम् । कृणाति, कृणीते । चकार, चकरे । १३ ॥ **वॄञ्** वरणे । वृणाति, वृणीते । ववार, ववरे । वरिता, वरीता । आशिषि उदोष्ठ्यपूर्वस्य । वूर्यात्, वरिषीष्ट, वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट। १४ ॥ **धूञ्** कम्पने । धुनाति, धुनीते । दुधविथ, दुधोथ । दुधुविव । धोता, धविता । स्तुसुधूञ्भ्य इतीट् । अधावीत्, अधविष्ट, अधोष्ट । १५ ॥

**अथ बध्नात्यन्ताः परस्मैपदिनः। शॄ** हिंसायाम् । शॄदॄप्रां ह्रस्वो वेति ह्रस्वपक्षे यण् । अन्यदा ऋच्छत्यॄतामिति गुणः । शश्रतुः, शशरतुः । श्र्युकः क्ङितीति निषेधस्य क्रादिनियमेन बाधः । शशरिव, शश्रिव । शरिता, शरीता । शृणीहि । शीर्यात् । अशारिष्टाम् । १ ॥ **पॄ** पालनपूरणयोः । पप्रतुः, पपरतुः । आशिषि पूर्यात् । २ ॥ **वॄ** वरणे । भरण इत्येके । ३ ॥ **भॄ** भर्त्सने । भरणेऽप्येके । ४ ॥ **मॄ** हिंसायाम् । मृणाति । ममार । ५ ॥ **दॄ** विदारणे । ददरतुः, दद्रतुः । ६ ॥ **जॄ** वयोहानौ । ७ ॥ **झॄ** इत्येके । ८ ॥ **धॄ** इत्यन्ये । ९ ॥ **नॄ** नये । १० ॥ **कॄ** हिंसायाम् । ११ ॥ **ॠ** गतौ । ऋणाति । अराञ्चकार । अरिता, अरीता । आर्णात् । आर्णीताम् । ईर्यात् । आरीत् । आरिष्टाम् । १२ ॥ **गॄ** शब्दे । १३ ॥ **ज्या** वयोहानौ । ग्रहिज्या–॥ ( ३३९० ) हलः । ६ । ४ । २ । अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्य दीर्घः स्यात् । इति दीर्घे कृते प्वादीनां ह्रस्वः । जिनाति । जिज्यौ । जिज्यतुः । १४ ॥ **री** गतिरेषणयोः । रेषणं वृकशब्दः । १५ ॥ **ली** श्लेषणे । विभाषा लीयतेरित्येज्विषये आत्वं वा । ललौ । लिलाय । लाता, लेता । १६ ॥ **व्ली** वरणे । व्लिनाति । १७ ॥ **प्ली** गतौ । १८ ॥ ( ३३९१ ) **वृत्** ॥ ल्वादयो वृत्ताः । ष्वादयोऽपीत्येके । **व्री** वरणे । १९ ॥ **भ्री** भये । भरण इत्येके । २० ॥ **क्षीष्** हिंसायाम् । एषां त्रयाणां ह्रस्वः । केषांचिन्मते तु न । २१ ॥ **ज्ञा** अवबोधने । ज्ञाजनोर्जा । जानाति । दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः । २२ ॥ **बन्ध** बन्धने । बध्नाति । बबन्धिथ । बन्धा । बन्धारौ । भन्त्स्यति । बधान । अभान्त्सीत् । पूर्वत्रासिद्धमिति भष्भावात्पूर्वं झलो झलीति सिज्लोपः । प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न, प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् । अबान्धाम् । अभान्त्सुः । २३ ॥

**वृङ्** संभक्तौ । वृणीते । वव्रे । ववृषे । ववृढ्वे । वरिता, वरीता । अवरिष्ट, अवरीष्ट, अवृत । १ ॥

**श्रन्थ** विमोचनप्रतिहर्षयोः । इतः **परस्मैपदिनः** । श्रथ्नाति । श्रन्थिग्रन्थीत्यादिना कित्त्वपक्षे एत्वाभ्यासलोपाव-प्यत्र वक्तव्यौ इति हरदत्तादयः । श्रेथतुः । श्रेथुः । इदं कित्त्वं पितामपीति सुधाकरमते श्रेथिथ । अस्मिन्नपि पक्षे णलि–शश्राथ । उत्तमे तु–शश्राथ, शश्रथेति माधवः । तत्र मूलं मृग्यम् । १ ॥ **मन्थ** विलोडने । २ ॥ **श्रन्थ ग्रन्थ** सन्दर्भे । अर्थभेदाच्छ्रन्थेः पुनः पाठः, रूपं तूक्तम् । ४ ॥ **कुन्थ** संश्लेषणे । संक्लेशे इत्येके । कुथ्नाति । चुकुन्थ । ५ ॥ कुथेति दुर्गः । चुकोथ ।६॥ **मृद** क्षोदे । मृद्नाति । मृदान ।७॥ **मृड** च । अयं सुखेऽपि । ष्टुत्वम् । मृड्णाति ।८॥

---

**उदोष्ठ्य–**। दन्तोष्ठ्योऽपि ओष्ठ्यग्रहणेन गृह्यत इत्याह–**वूर्यादिति** ॥ **वरिषीष्टेति** । 'लिङ्सिचोरात्मनेपदेषु ३३४८' इति वेट् ॥ **वूर्षीष्टेति** । 'उश्च ३१६१' इति लिङ्सिचोः कित्त्वाद् गुणाभावे सत्युत्त्वम् ॥ ( ३३९० ) **हलः** । संप्रसारणस्येत्यनुवर्तते । अङ्गस्येत्यवयवषष्ठी । हल इति पञ्चमी तदेतदाह–**अङ्गावयवादिति** । अङ्गावयवात्किम्, निरुतम् । दुरुतम् । तदन्ताङ्गस्य किम्, विध्यति ॥ **क्षीष्** हिंसायाम् । षित्त्वादङ् । क्षिया । 'इति क्षियायाम्' 'क्षियाशीः' इत्यादौ क्षिया धर्मव्यतिक्रम आचारभेद इति वक्ष्यति ॥ **दीर्घनिर्देशसामर्थ्यादिति** । ननु दीर्घग्रहणेनाङ्गवृत्तपरिभाषा ज्ञाप्यत इत्याकरे स्थितम् । अन्यथा ज्ञाजनोर्जं विदध्यात्, 'अतो दीर्घो यञि २९२४' इति दीर्घसिद्धेः । तथा च दीर्घनिर्देशसामर्थ्यस्योपक्षयात्कथमिह ह्रस्वाभावसिद्धिरिति चेत् । अत्राहुः–ह्रस्वाभावे सत्येव दीर्घनिर्देश उक्तपरिभाषाया ज्ञापकः, सति तु ह्रस्वे पुनरङ्गकार्यं प्रवृत्तमेवेति न ज्ञापकः । तथा च ह्रस्वाभावसिद्धौ न किंचिद्बाधकमिति । किञ्च, 'अङ्गवृत्ते पुनरङ्गवृत्तावविधिः ५२६' इत्येव परिभाषाशरीरम्, तच्चोक्तज्ञापकात्सिद्धम् । यदि तु 'भ्यसो भ्यम्' इति सूत्रे भाष्ये 'परिनिष्ठितस्य' इत्येव पाठस्तर्हि स्वतन्त्रमेवेदं वचनं न तु ज्ञापकसिद्धमिति पक्षोऽपि युष्मदस्मच्छब्दगतमनोरमाग्रन्थादवगम्यते । तस्मिंस्तु पक्षे दीर्घग्रहणसामर्थ्यं नोपक्षीणमिति सम्यगेवायं ग्रन्थ इति । केचित्तु संज्ञापूर्वकविधेरनित्यत्वान्न ह्रस्व इति व्याख्येयमित्याहुः ॥ **बध्नातीति** । 'अनिदिताम्–५५७' इति नलोपः ॥ **अभान्त्सीदिति** । 'वदव्रज–३०३३' इति वृद्धिः । भष्भावः ॥ **अबान्धामिति** । 'झषस्तथोः–३०४७' इति तस्य धत्वम् । 'झरो झरि–१०६' इति वा लोपः ॥ **वृङ्** संभक्तौ । भक्तिर्भजनम् ॥ **श्रन्थ** ॥ **कित्त्वपक्षे इति** । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा ३१९९' इति व्याकरणान्तरमित्युक्तत्वात् ॥

---

१ '**चॄ चरणे**' इत्येवं पाठकल्पने तु चीर्णशब्दो निरायासं सिध्येत । त्रुटितो वा पाठो भवेत् । कल्पनीय एव वा धातुपाठनिर्देशो '**बहुलम्**' इत्युक्तत्वात् ॥ इति दाधिमथाः । २ **असिद्धत्वादिति** । '**वर्णाश्रये नास्ति प्रत्ययलक्षणम्**' इति वक्तव्यम् इति तु न सम्यक् प्राप्त्युत्तरमेव निषेधस्यावश्यकत्वे प्रकृते सिज्लोपस्यासिद्धत्वेन प्रत्ययलक्षणप्राप्तेरेवाभावे निषेधपरिभाषोपन्यासस्य व्यर्थत्वात् ॥

शुध रोषे । शुध्नाति । ९ ॥ कुष निष्कर्षे । कुष्णाति । कोषिता ॥ ( ३३९२ ) निरः कुषः । ७ । २ । ४६ । निरः परात्कुषो वलादेरार्धधातुकस्य इड्वा स्यात् । निष्कोषिता, निष्कोष्टा । निरकोषीत्, निरकुक्षत् । १० ॥ क्षुभ संचलने ॥ [ ११३८ ] क्षुभ्नादिषु च । ८ । ४ । ३९ । क्षुभ्नाति । क्षुभ्नीतः । क्षोभिता । क्षुभाण[1] । ११ ॥ णभ तुभ हिंसायाम् । नभ्नाति । तुभ्नाति । नभते । तोभते इति शपि । नभ्यति, तुभ्यतीति श्यनि । १३ ॥ क्लिशू विबाधने । श्नादिति ईदुत्त्वनिषेधः । क्लिश्नाति । क्लेशिता, क्लेष्टा । अक्लेशीत्, अक्लिक्षत् । १४ ॥ अश भोजने । अश्नाति । आश । १५ ॥ उध्रस उञ्छे । उकार इत् । ध्रस्नाति । १६ ॥ उकारो धात्ववयव इत्येके । उध्रस्नाञ्चकार । १७ ॥ इष आभीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम् । इष्णाति । तीषसहेत्यत्र[३१२१] सहिना साहचर्यादकारविकरणस्य तौदादिकस्यैव इषेर्ग्रहणं न तु इष्यतीष्णात्योरित्याहुः । एषिता । वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः । तथा च वार्तिकम्—॥ ( ३३९३ ) इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति । १८ ॥ विष विप्रयोगे । विष्णाति । वेष्टा । १९ ॥ प्रुष प्लुष स्नेहनसेवनपूरणेषु । प्रुष्णाति । प्लुष्णाति । २१ ॥ पुष पुष्टौ । पोषिता । २२ ॥ मुष स्तेये । मोषिता । २३ ॥ खच भूतप्रादुर्भावे । भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । खच्नाति । वान्तोऽयमित्येके ॥ ( ३३९४ ) च्छ्वोः शूडनुनासिके च । ६ । ४ । १९ । सतुकस्य छस्य वस्य च क्रमाच्छ ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति । खौनाति । चखाव । खविता । शानचः परत्वादूठि कृते हलन्तत्वाभावान्न शानच् । खौनीहि । २४ ॥ हिठ च । ष्ठत्वम् । हिठ्णाति । २५ ॥

ग्रह उपादाने । स्वरितेत् । ग्रहिज्येति[२३१६]— । गृह्णाति गृह्णीते ॥ ( ३३९५ ) ग्रहोऽलिटि दीर्घः । ७ । २ । ३७ । एकाचो[2] ग्रहेर्विहितस्येटो दीर्घः स्यान्न तु लिटि । ग्रहीता । लिटि तु जग्रहिथ । गृह्यात् । ग्रहीषीष्ट । ह्म्यन्तेति[२०७२] न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् । अग्रहीषत । १ ॥ इति क्र्यादयः ॥

---

अथ चुरादयः ॥

चुर स्तेये । ( ३३९६ ) सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् । ३ । १ । २५ । एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थे[६९१] इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् ।

---

(३३९२)निरः कुषः । 'स्वरति-३०४६' इति सूत्राद्वेत्यनुवर्तते 'आर्धधातुकस्येट्-२९३९' इत्यधिक्रियत एव तदाह—वलादेरित्यादि । निरः किम्, कोषिता । कोषितुम् ॥ निरकुक्षदिति । इडभावे क्सः ॥ सहिना साहचर्यादिति । यद्यपि षह षुह चक्यर्थ इति दिवादिरपि सहिरस्ति तथापि सहेति शपा निर्देशाद् भौवादिकेनैव सहिना साहचर्यमित्याहुः ॥ (३३९३) श्यन्प्रत्ययादिति । बहुव्रीहिरयम् । श्यन्प्रत्ययवत इषेस्तकारे परत इड्विकल्पप्रतिषेध इति वार्तिकार्थः । तथा च दैवादिकाद्विकल्पो नेति फलितम् । एवं च 'तीषसह-३१२१' इत्यत्र इष्णातेरपि ग्रहणमिति बोध्यम् ॥ पोषितेति । अनिट्केषु पुष्येति श्यना निर्देशादयं सेडिति भावः ॥ ( ३३९४ ) च्छ्वोः शूडनु—। च्छ्वोरिति सतुकक्स्यानुकरणम् । श्चुत्वेन तकारस्थाने चकार इत्याह—सतुकस्येति । एवं च सूत्रे छकारात्पूर्वश्चकारो ज्ञेयः । सतुक्कस्य किम्, विच्छप्रच्छाभ्यां नङ्प्रत्यये छकारस्य शकारे कृते तुकोऽश्रवणं यथा स्यात् । अकृतव्यूहपरिभाषा त्वनित्या, अस्मादेव सतुक्कग्रहणात् । तेनातिक्रान्तो भवकन्तमतिभवकानित्यादि सिद्धमित्याहुः ॥ सूत्रस्थेन चशब्देन क्विझलोः क्ङितीत्यनुकृष्यत इत्याह—क्वावित्यादि ॥ ( ३३९५ ) ग्रहोऽलिटि दीर्घः । एकाचः किम्, जाग्रहिता, जाग्रहिष्यति इत्यादौ यङ्लुकि मा भूत् । विहितस्येति किम्, ग्राहितम् । न चात्र णिलोपस्य स्थानिवद्भावाद्ग्रहेः परत्वं नेति वाच्यम्, दीर्घविधौ स्थानिवत्त्वनिषेधात् । त्रैपादिकदीर्घविधावेव स्थानिवत्त्वनिषेध इत्यभ्युपगमे तु विहितविशेषणं व्यर्थमेवेत्याहुः[3] । प्रकृतस्येटो ग्रहणात् ग्राहिता, ग्राहिष्यत इत्यादौ चिण्वदिटो न दीर्घः ॥ ग्रहीषीष्टेति । वृत इत्यनुवृत्तेः 'न लिङि ३३४९' इति दीर्घनिषेधो न प्रवर्तते ॥ अग्रहीषातामिति । लुङात्मनेपदद्विवचनम् ॥ इति क्र्यादयः ॥

---

१ क्षुभाणेति । यत्र भकारनकारयोरव्यवहितसंयोगस्तत्रैव 'क्षुभ्नादिषु च' इति निषेध इति क्षुभाणेत्यत्र णत्वं भवत्येवेति बोध्यम् ॥ २ एकाच इति । वस्तुतः 'लावस्थायामट्' इति भाष्योक्तसिद्धान्ते अग्रहीष्टामित्यादावेकाचो विहितत्वाभावेन दीर्घाप्राप्त्या हरदत्तानुयायिकथनं न सम्यगिति बोध्यम् । न चाडागमस्य बहिरङ्गत्वेनासिद्धत्वादेकाचो विधानमस्त्येवेति वाच्यम् । नाजानन्तर्यपरिभाषायास्तन्मते सत्त्वेन तथा निषेधात् । बहिरङ्गपरिभाषाया अनित्यत्वाच्च ॥ ३ अनित्यैति ॥ नास्त्येवेति प्रामाणिकाः । अत एव प्रकृतसूत्रे भाष्ये—'अवश्यमत्र तुगभावार्थो यत्नः कार्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति' इत्युक्तम् । एतत्सत्त्वे तु तुकोऽप्राप्त्या यत्नस्यावश्यकत्वकथनमसंगतमेव स्यात् । तदनित्यत्वज्ञापनार्थमेतदिति भाष्याभिप्राय इत्यपि वक्तुमशक्यम्, 'अवश्यमत्र' इत्यक्षरस्वारस्यभङ्गापत्तेः ॥ इति विरम्यतेऽधिकप्रपञ्चेन विस्तरभियेति दिक् ॥

चुरादिभ्यस्तु स्वार्थे[१] । [२१४४]पुगन्तेति गुणः । [३२०७]सनाद्यन्ता इति धातुत्वम् । तिप्शबादि । गुणायादेशौ । चोरयति ॥ (३३९७) णिचश्च । १ । ३ । ७४ । णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात्, चोरयिषीष्ट । णिश्रीति [३८८७]चङ् । णौ चङीति [३०१४]ह्रस्वः । द्वित्वम् । [२१४३]हलादिः शेषः । दीर्घो लघोरित्य[३२१४]भ्यासदीर्घः । अचूचुरत्, अचूचुरत । १ ॥ चिति स्मृत्याम् । चिन्तयति । अचिचिन्तत् । चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन चिन्त्यात् । चिन्त्यते इत्यादौ नलोपो न । चिन्तति । चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्षमित्येके । अत एकहलित्यत्र वृत्तिकृता जगाण जगणतुरित्युदाहृतत्वात् ॥ विशेषापेक्षमित्यपरे । अत [२४१३]एवाधृषाद्वेत्यस्य न वैयर्थ्यम् । २ ॥ यत्रि संकोचे । यन्त्रयति । यन्त्रेति पठितुं शक्यम् । यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम् । एवं कुद्रितन्त्रिमन्त्रिषु । ३ ॥ स्फुडि परिहासे । स्फुण्डयति । इदित्करणात् स्फुण्डति । स्फुटीति पाठान्तरम् । स्फुण्टयति । ४ ॥ लक्ष दर्शनाङ्कनयोः । ५ ॥ कुद्रि अनृतभाषणे । कुन्द्रयति । ६ ॥ लड उपसेवायाम् । लाडयति । ७ ॥ मिदि स्नेहने । मिन्दयति, मिन्दति । ८ ॥ ओलडि उत्क्षेपणे । ओलण्डयति, ओलण्डति । ९ ॥ ओकार इदित्येके । लण्डयति, लण्डति । १० ॥ उकारादिरयमित्यन्ये । उलण्डयति । ११ ॥ जल अपवारणे । १२ ॥ लज इत्येके । १३ ॥ पीड अवगाहने । पीडयति ॥ ( ३३९८ ) भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । ७ । ४ । ३ । एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अपीपिडत्, अपिपीडत् । १४ ॥ नट अवस्यन्दने । अवस्यन्दनं नाट्यम् । १५ ॥ श्रथ प्रयत्ने । प्रस्थान इत्येके । १६ ॥ बध संयमने । बाधयति । बन्धेति चान्द्रः । १७ ॥ पॄ पूरणे । पारयति । दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम् । तद्धि सेट्कत्वाय । एवं च पृणातिपिपर्तिभ्यां परितेत्यादिसिद्धावपि परति परत इत्यादिसिद्धिः फलम् । १८ ॥ ऊर्ज बलप्राणनयोः । १९ ॥ पक्ष परिग्रहे । २० ॥ वर्ण चूर्ण प्रेरणे ॥ वर्ण वर्णन इत्येके । २२ ॥ प्रथ प्रख्याने । प्राथयति । नान्ये मितोऽहेताविति [३४०६]वक्ष्यमाणत्वान्नास्य मित्त्वम् ॥ ( ३३९९ ) अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् । ७ । ४ । ९५ । एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्त्वापवादः । अपप्रथत् । २३ ॥ पृथ प्रक्षेपे ।

---

( ३३९६ ) सत्यापपाश-- । एतस्योदाहरणानि अग्रे नामधातुषु स्फुटीभविष्यन्तीति नास्माभिरुपपाद्यन्ते । त्वचशब्दोऽकारान्तः ॥ प्रपञ्चार्थमिति । सत्यापग्रहणं तु आपुगर्थमिति ज्ञेयम् । अन्ये त्वाहुः--सापेक्षेभ्योऽपि णिजर्थमेषामुपादानम् । अन्यथा रमणीयं घटं करोतीत्यादाविव रमणीयं रूपयतीत्यादावपि णिज् न स्यादिति ॥ अचूचुरदिति । अत्र प्राचा व्याख्यात्रा 'सन्वल्लघुनि-३०९२' इति सन्वद्भाव इत्युक्तम् । तद्भ्रमसात्, सन्वद्भावविषये हि जायमानो दीर्घः सन्वद्भावं नापेक्षत इति ॥ सामान्यापेक्षमिति । सर्वेऽपि चुरादयो विकल्पेन णिचं लभन्त इत्येतदर्थकमित्यर्थः । न चैवम् 'आधृषाद्वा ३४१३' इति व्यर्थमिति वाच्यम्, ज्ञापकसिद्धस्यासार्वत्रिकत्वात् । एवं चास्मिन्पक्षे आधृषीयाणामेवैच्छिको विकल्पः, अन्येषां तु शिष्टप्रयोगाद्व्यवस्थित इत्यर्थः ॥ जगाण । जगणतुरिति । वृत्तौ चकाण चकणतुरिति प्रचुरः पाठस्तास्मिंस्तु पाठे नास्त्येव प्रकृतार्थसिद्धिः । केचित्तु णिजभावे गणयामासेत्यादिरूपाभावेऽपि गणधातोरदन्तत्वाद्गणामासेत्यामा भवितव्यमिति जगाणेत्यादिपाठश्चिन्त्य इत्याहुः ॥ न वैयर्थ्यमिति । वैयर्थ्यशङ्कापि नेत्ययमेव पक्षो युक्त इति भावः । न च पूर्वोक्तपक्षस्य शिथिलत्वे जगाण जगणतुरिति वृत्तिप्रयोगः कथं संगच्छतामिति शङ्क्यम्, भ्वादेराकृतिगणत्वात् तत्रत्यधातोस्तद्रूपसिद्धेः ॥ तच्चिन्त्यमिति । यत्रितत्रिमन्त्र्यादिषु इकारो व्यर्थ एव न तु ज्ञापनार्थः । तेषां संयोगान्तत्वात् यन्त्रतन्त्रमन्त्र इति नकारे पठितेऽपि 'अनिदिताम्-५५७' इति लोपो न लभ्यते नकारस्यानुपधात्वात् । चिन्त्यादित्यत्र तु चिन्त स्मृत्यामिति नकारोपधपाठे नलोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः ॥ लड । स्नेहपूर्विका सेवोपसेवा । लाडयति पुत्रम् । लडयोरभेदाल्लालयति ॥ ओकार इदित्येक इति । ओदित्करणम् 'ओदितश्च ४०३०' इति धातोरव्यवहितस्य निष्ठातकारस्य नत्वार्थमिति तद्बलान्नेडित्येके । लण्ड्णः । ओदिद्बलादिड्व्यवधानेऽपि नत्वमित्यन्ये । लण्डिनः ॥ पीड अवगाहने ॥ 'भ्राजभास-३३९८' इति ह्रस्वपक्षे सन्वद्भावविषयत्वात् 'दीर्घो लघोः ३०९४' इत्यभ्यासस्य दीर्घः । ह्रस्वाभावपक्षे तु न दीर्घः इत्याह—अपीपिडदित्यादि ॥ पॄ पूरणे ॥ दीर्घोच्चारणमित्यादि । पारयतीत्यादिरूपाणि ह्रस्वोच्चारणेऽपि सिध्यन्तीति परतीत्याद्यर्थं दीर्घोच्चारणमित्यर्थः । अत्र वदन्ति—धातुपाठकृता पाणिनिना विशिष्यैव उदात्ता अनुदात्ताश्च पठिताः । न हि ॠकारान्ताः सेट्का इति तेन परिभाषितं येनेत्थं तस्याशयः कल्प्येत । कविकल्पद्रुमे त्वस्य नित्यण्यन्तत्वमुक्तमिति । एवं चास्मिन्पक्षे दीर्घोच्चारणं व्यर्थमिति फलितम् । अन्ये तु दीर्घोच्चारणं परिता परीतेत्यादौ 'वॄतो वा ३१८४' इति इटो दीर्घविकल्पार्थम् । ततश्च णिज्विकल्पः सिद्ध एवेति परतीत्यादिरूपमाहुः ॥ ऊर्ज । ऊर्जयति । बलवा-

---

१ स्वार्थे इति । 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इत्युक्तेरिति भावः । अनिर्दिष्टो विशेषतः शब्दविशेषेणाप्रतिपादितः र्थो येषामित्यर्थः । स्वार्थ इत्यस्य 'स्वीयप्रकृत्यर्थे' इत्यर्थः ॥ 'शब्दवैर-' इत्यतः 'करणे' इत्यस्यानुवृत्तिस्तु विच्छिन्नत्वान्न भवतीति बोध्यम् ॥

पर्थयति ॥ (३४००) उर्ऋत् । ७ । ४ । ७ । उपधाया ऋवर्णस्य स्थाने ऋत्स्याद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत्, अपपर्थत् । २४ ॥ पथ इत्येके । पाथयति । २५ ॥ षम्ब सम्बन्धने । सम्बयति । असंसम्बत् । २६ ॥ शम्ब च । अशशम्बत् । २७ ॥ साम्ब इत्येके । २८ ॥ भक्ष अदने । २९ ॥ कुट्ट छेदनभर्त्सनयोः । पूरण इत्येके । कुट्टयति । ३० ॥ पुट्ट चुट्ट अल्पीभावे । ३२ ॥ अट्ट षुट्ट अनादरे । अट्टयति । अयं दोपधः । टुत्वस्यासिद्धत्वान्न न्द्राः इति निषेधः । आट्टिटत् । ३४ ॥ लुण्ठ स्तेये । लुण्ठयति । लुण्ठतीति लुठि स्तेये इति भौवादिकस्य । ३५ ॥ शठ श्वठ असंस्कारगत्योः । ३७ ॥ श्वठि इत्येके । ३८ ॥ तुजि पिजि हिंसाबलादाननिकेतनेषु । तुञ्जयति । पिञ्जयति । इदित्करणात्तुञ्जति । पिञ्जति । ४० ॥ तुज पिजेति केचित् । ४२ ॥ लजि लुजि इत्येके । ४४ ॥ पिस गतौ । पेसयति : पेसतीति तु शपि गतम् । ४५ ॥ षान्त्व सामप्रयोगे । ४६ ॥ श्वल्क वल्क परिभाषणे । ४८ ॥ ष्णिह स्नेहने । स्फिट इत्येके । ५० ॥ स्मिट अनादरे । अषोपदेशत्वान्न षः । असिस्मिटत् । ५१ ॥ ष्मिङ् अनादर इत्येके । ङित्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ् । स्माययते । ५२ ॥ श्लिष श्लेषणे । ५३ ॥ पथि गतौ । पन्थयति । पन्थति । ५४ ॥ पिच्छ कुट्टने । ५५ ॥ छदि संवरणे । छन्दयति । छन्दति । ५६ ॥ श्रण दाने । प्रायेणायं विपूर्वः । विश्राणयति । ५७ ॥ तड आघाते । ताडयति । ५८ खड खडि कडि भेदने । खाडयति । खण्डयति । कण्डयति । ६१ ॥ कुडि रक्षणे । ६२ ॥ गुडि वेष्टने । रक्षण इत्येके । ६३ ॥ कुठि इत्यन्ये । अवकुण्ठयति । अवकुण्ठति । ६४ ॥ गुठि इत्यपरे । ६५ ॥ खुडि खण्डने । ६६ ॥ वटि विभाजने । ६७ ॥ वडि इत्येके । ६८ ॥ मडि भूषायां हर्षे च । ६९ ॥ भडि कल्याणे । ७० ॥ छर्द वमने । ७१ । पुस्त बुस्त आदरानादरयोः । ७३ ॥ चुद संचोदने । ७४ ॥ नक्क धक्क नाशने । णोपदेशलक्षणे पर्युदस्तोऽयम् । प्रनक्कयति । ७६ ॥ चक्क चुक्क व्यथने । ७८ ॥ क्षल शौचकर्मणि । ७९ ॥ तल प्रतिष्ठायाम् । ८० ॥ तुल उन्माने । तोलयति । तोलयामास । अतूतुलत् । कथं तुलयति तुलना इत्यादि । अतुलोपमाभ्यामिति निपातनादन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच् । ८१ ॥ दुल उत्क्षेपे । ८२ ॥ पुल महत्त्वे । ८३ ॥ चुल समुच्छ्राये । ८४ ॥ मूल रोहणे । ८५ ॥ कल विल क्षेपे । कालयति । ८७ ॥ बिल भेदने । ८८ ॥ तिल स्नेहने । ८९ ॥ चल भृतौ । ९० ॥ पाल रक्षणे । ९१ ॥ लूष हिंसायाम् । ९२ ॥ शुल्ब माने । शूर्प च । ९४ ॥ चुट छेदने । ९५ ॥ मुट संचूर्णने । ९६ ॥ पडि पसि नाशने । पण्डयति । पण्डति । पंसयति । पंसति । ९८ ॥ व्रज मार्ग संस्कारगत्योः । १०० ॥ शुल्क अतिस्पर्शने । १०१ ॥ चपि गत्याम् । चम्पयति, चम्पति । १०२ ॥ क्षपि क्षान्त्याम् । क्षम्पयति, क्षम्पति । १०३ ॥ क्षजि कृच्छ्रजीवने । १०४ ॥ श्वर्त गत्याम् । १०५ ॥ श्वभ्र च । १०६ ॥ ( ३४०१ ) ज्ञप मिच्च । अयं ज्ञाने ज्ञापने च वर्तते ॥ ( ३४०२ ) मितां ह्रस्वः । ६ । ४ । ९२ । मितामुपधाया ह्रस्वः स्याण्णौ परे । ज्ञपयति । १०७ ॥ यम च परिवेषणे । चान्मित् । परिवेषण-

---

न्सवति । जीवीति वेत्यर्थः ॥ (३४००) उर्ऋत् । 'जिघ्रतेर्वा ३४४२' इत्यतो वेति वर्तते ॥ **इररारामिति** । ऋकारोपधे 'उपधायाश्च ३४०७' इत्यचीकृतदित्यादौ इर् प्राप्तः, अमीमृजदित्यत्र मृजेर्वृद्धिरार्[१] प्राप्तः, इतरेषाम् ऋदुपधानां गुणेन अपीपृथदित्यादावर् इति विवेकः । नन्विह उरित्यनूद्यमानः सवर्णान् गृह्णाति ऋदिति विधीयमानस्तु न गृह्णाति । तथा च अचीक्लृपदित्यत्र 'उर्ऋत् ३४००' इत्यनेन ऋवर्णे सति अचीकृपदिति प्रसज्येतेति चेत् । मैवम्, लत्वस्यासिद्धत्वेन प्रथमम् 'उर्ऋत् ३४००' इत्यस्य प्रवृत्तौ पश्चात् 'कृपो रो लः ३१३१' इत्यनेन ऋकारैकदेशस्य लृकारैकदेशविधानादिष्टसिद्धेः । न च चलीक्लृप्यत इत्यादौ रीगागमादेर्लत्वार्थं 'कृपो रो लः ३१३१' इत्यस्यावश्यकत्वेऽपि क्लृपूधातुः 'क्लृपू सामर्थ्ये' इत्येव पठ्यताम् । एवं हि प्रक्रियालाघवं लभ्यते । ऋकारैकदेशस्य लृकारैकदेश इति व्याख्यानक्लेशोऽपि न भवतीति वाच्यम्, अचीक्लृपदित्यत्र 'उर्ऋत् ३४००' इत्यस्य प्रवृत्तावनिष्टरूपप्रसङ्गात् । 'कृपो रो लः ३१३१' इत्यनेन ऋकारैकदेशस्य लृकारैकदेश इत्यभ्युपगमे तु उक्तव्याख्यानक्लेशध्रौव्यात् । इदं च कैयटरीत्योक्तम् । न त्विदं क्षोदक्षमम् 'ऋत उत् ३९०' इत्यनेन तपरकरणेन लृवर्णग्राहकत्वे रूपासिद्धेः स्पष्टत्वात् ॥ **अयं दोपध इति** । टोपधत्वे स्वाटिट्टदिति स्यादिति भावः ॥ **शठ श्वठ** । शाठयति । असंस्कृतो भवति गच्छति वेत्यर्थः ॥ **स्माययत इति** । आत्वं तु नेह भवति, 'नित्यं स्मयतेः ३४५१' इति निर्देशेन 'स्मिङ् ईषद्धसने' इति भौवादिकादेव हेतुमण्णौ तद्विधानात् ॥ **श्रण दाने** । विश्राणनं वितरणम् ॥ **चुद संचोदने** । 'न्यासश्रन्थः-५०८९' इति चुचि चोदना ॥ **व्रज मार्ग** । वाजयति । मार्गयति । केचित्तु मार्गेति न धात्वन्तरं, किं तु व्रजेत्येक एव धातुर्मार्गसंस्कारे गतौ चेति व्याचख्युः ॥ ( ३४०१ ) **ज्ञप मिच्च** । चादृतावित्येके । ज्ञपधातुर्णिचं लभते मित्संज्ञकश्चेत्यन्ये ॥ **ज्ञाने ज्ञापने चेति** । 'प्रतिपज्ज्ञप्तिचेतनाः' प्रच्छ ज्ञीप्सायामित्यत्र

---

१ अवयव इति । 'घेटष्टित्वमिवावयवेऽचरितार्थं लिङ्गं समुदायोपकारकम्' इति स्वीकारादिति भावः ॥

मिह वेष्टनम् । न तु भोजना नापि वेष्टना । यमयति चन्द्रम् । परिवेष्टत इत्यर्थः । १०८ ॥ चह परिकल्कने । चहयति । अचीचहत् । ( ३४०३ ) कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचचहत् । १०९॥ चप इत्येके । चपयति ।११०॥ रह त्याग इत्येके । अरीरहत् ।कथादेस्तु अररहत् ।१११॥ बल प्राणने । बलयति ।११२॥ चिञ् चयने ॥ (३४०४) ꙮ चिस्फुरोर्णौ ।६।१।५४। आत्त्वं वा स्यात् ॥ (३४०५) ꙮ अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ।७।३।३६। चपयति, चययति । ञित्करणसामर्थ्यादस्य णिज्विकल्पः । चयति, चयते । प्रणिचययति, प्रनिचययति । (३४०६) ꙮ नान्ये मितोऽहेतौ ॥ अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न । ११३॥ घट्ट चलने । ११४ ॥ मुस्त संघाते । ११५॥ खट्ट संवरणे । ११६॥ षट्ट स्फिट्ट चुबि हिंसायाम् । ११९॥ पूल संघाते । १२०॥ पूर्ण इत्येके । पुणेत्यन्ये । १२१ ॥ पुंस अभिवर्धने ।१२२॥ टकि बन्धने । टङ्कयति । टङ्कति । १२३ ॥ धूस कान्तिकरणे । धूसयति । दन्त्यान्तः । मूर्धन्यान्त इत्येके । तालव्यान्त इत्यपरे । १२४ ॥ कीट वर्णे । १२५ ॥ चूर्ण संकोचने । १२६ ॥ पूज पूजायाम् । १२७ ॥ अर्क स्तवने । तपन इत्येके । १२८ ॥ शुठ आलस्ये । १२९ ॥ शुठि शोषणे । शुण्ठयति । शुण्ठति । १३० ॥ जुड प्रेरणे । १३१ ॥ गज मार्ज शब्दार्थौ । गाजयति । मार्जयति । १३३ ॥ मर्च च । मर्चयति । १३४ ॥ घृ प्रस्रवणे । स्रावण इत्येके । १३५ ॥ पचि विस्तारवचने । पञ्चयति । पञ्चति । पञ्चते इति व्यक्तार्थस्य शपि गतम् । १३६ ॥ तिज निशाने । तेजयति । १३७ ॥ कृत संशब्दने ॥ ( ३४०७ ) ꙮ उपधायाश्च । ७ । १ । १०१ । धातोरुपधाभूतस्य

---

ज्ञाने, 'श्लाघह्नुङ्–८३२' इति सूत्रे ज्ञीप्स्यमानो बोधयितुमिष्यमाण इति व्याख्याया ज्ञापने च प्रयोगदर्शनादिति भावः ॥ **वेष्टनमिति** । 'परिवेषस्तु परिधिः' इत्यमरः ॥ **न त्वित्यादि** । अयं भावः–घटादौ 'यमोऽपरिवेषणे ३१४४' इति पठितं तत्र परिवेषणमिति हेतुमण्ण्यन्तस्य रूपम् । हेतुमण्ण्यन्तस्य हि भोजना वेष्टना चार्थः । तथा च अपरिवेषणे इत्यनेन भोजनातो वेष्टनातश्चान्यत्र मित्त्वनिषेधेऽपि तयोरर्थयोस्त्वमन्तत्वादेव मित्त्वसिद्धेरिति । यद्यपि घटादौ यच्छतिर्भोजनातोऽन्यत्र मिन्नेति व्याख्यातं तथाप्यत्रत्यग्रन्थानुगुण्येनोपलक्षणतया तद्व्याख्येयमित्याहुः । अत्रेदं बोध्यम्–घटादौ 'यमोऽपरिवेषणे ३१४४' इत्यत्र परिपूर्वकस्य विषेर्णिजन्तस्य ल्युटि रूपम् 'यम च परिवेषणे' इत्यत्र तु केवलस्यैव ल्युटि रूपं न तु णिजन्तस्य । तथा च भोजनावद्वेष्टनाया अपि परिवेषणशब्दार्थत्वादुभयत्राप्यमन्तत्वेनैव मित्त्वं सिध्यति । वेष्टने तु अपरिवेषण इत्यनेन अमन्तत्वप्रयुक्तमित्त्वस्य निषेधेऽपि 'यम च परिवेषणे' इत्यनेन मित्त्वं सिध्यतीति दिक् ॥ ( ३४०४ ) **चिस्फुरोर्णौ** । 'आदेच उपदेशे–३१६३' इत्यत आदित्यनुवर्तते 'विभाषा लीयतेः ३३२७' इत्यतो विभाषाग्रहणं च तदाह—**आत्त्वं वा स्यादिति** ॥ ( ३४०५ ) **अर्तिह्री–**। परत्वादन्तरङ्गत्वाच्च आदौ पुक्, पश्चाद्गुणः । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । यलोपः क्नोपयति । क्ष्मापयति । स्थापयति ॥ **चपयतीति** । वर्णग्रहणे [१] 'लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते, 'आतोऽनुपसर्गे कः ३८८३' इति कबाधनाय 'ह्वावामश्च ३८८२' इत्यारम्भादिति भावः ॥ (३४०६) **ज्ञपादिभ्य इति** । मुख्यमते पञ्च ज्ञपादयः । मतान्तरे तु सप्त ॥ **पूर्ण इत्येके । पुणेत्यन्ये** इति । ईदृशेषु पाठशुद्धिर्निर्णेतुमशक्या । अत एव क्षीरस्वामिनोक्तम्—'पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः । न विद्मः किं जहीमोऽत्र किमुपादद्महे वयम्' इति ॥ पूलपूर्णादिषु पाठे भ्रंशः, वजधातोर्मार्गसंस्कारोऽर्थः, उत संस्कार एवेत्यर्थे भ्रंशः । आगमभ्रंशात् शास्त्रभ्रंशात् ॥ **चूर्ण** संकोचने । प्रेरणे पठितस्य पुनः पाठोऽर्थभेदकृतः ॥ **मर्च चेति** । कचिद्धातुपाठेऽस्यादृष्टत्वेऽपि नायमप्रामाणिक इति मन्तव्यम्, 'मिदचोऽन्त्यात्परः' इति सूत्रे कैयटेनास्योपन्यस्तत्वात्,–'मर्तो मर्तं मर्चयति द्वयेन' इति प्रयोगदर्शनाच्च ॥ ( ३४०७ ) **उपधायाश्च** । 'ॠत इद्धातोः ३१८३' इति वर्तते तदाह—**धातोरुपधाभूतस्येति** । ननु 'ॠत इद्धातोः ३१८३' इति सूत्रे धातोर्ॠत इति वैयधिकरण्येन व्याख्याने सिद्धमिष्टमिति किमनेन सूत्रेणेति चेत्, मैवम्, तथा

---

१ **चिस्फुरोरिति** ॥ ननु स्थानषष्ठीनिर्देशेन '**अलोऽन्त्यस्य**' इति सूत्रप्रवृत्त्या च्यंशे दोषाभावेऽपि स्फुरंशे दोषापत्तिरिति चेत् । न, '**आदेच उपदेशे–**' इत्यत एच्पदानुवृत्त्या एचः स्थाने विधानेन रेफस्यात्त्वाप्रवृत्तेः ॥ केचित्तु–स्फुर उः स्फुरुः चिश्च स्फुरुश्च चिस्फुरु तस्य चिस्फुरोरिति षष्ठ्येकवचनम्, सौत्रं पुंस्त्वम् । एवं च 'स्फुरधातोरुवर्णस्यात्त्वम्' इत्यर्थेन न रेफस्यात्त्वम् । गुणं बाधित्वा च पूर्वमात्वम्–इति वदन्ति ॥ तदपरे न क्षमन्ते अनेकाक्लिष्टकल्पनापेक्षयाऽनुवृत्तेरेव लघीयस्त्वात् ॥ अत्र च सूत्रे स्वार्थिकणिच एव ग्रहणम् न पुनर्हेतुमण्णिचः, लक्षणप्रतिपदोक्तपरिभाषाङ्गीकारात् । अत एव स्वादेश्चिधातोरन्यस्य स्फुरधातोश्चात्र न ग्रहणम्–इति सरलव्यवहारिणः प्राचीनाः ॥ चिञो ञित्त्वसामर्थ्यात् चिशब्देन णिशब्देन चोभयोर्ग्रहणम् । तत्साहचर्यात् स्फुरशब्देनापि । लक्षणप्रतिपदोक्तपरिभाषायास्तु 'यावत्पुरानिपातयोः–' इति सूत्रस्थनिपातपदेनासार्वत्रिकत्वबोधनेनेष्टस्थले प्रवृत्त्यनङ्गीकारादत्र प्रवृत्त्यनङ्गीकारः–इति वदन्ति प्रतिभाशालिनो नूतनाः ॥

ॠत इत्स्यात् । रपरत्वम् । [2]उपधायां चेति दीर्घः । कीर्तयति । [3]अचीकृतत्, अचिकीर्तत् । १३८ ॥ वर्ध छेदनपूरणयोः । १३९ ॥ कुबि आच्छादने । कुम्बयति, कुम्बति । १४० ॥ कुभि इत्येके । १४१ ॥ लुबि तुबि अदर्शने । अर्दन इत्येके । १४३ ॥ ह्लप व्यक्तायां वाचि । १४४ ॥ क्लप इत्येके । १४५ ॥ चुटि छेदने । १४६ ॥ इल प्रेरणे । एलयति । ऐलिलत् । १४७ ॥ म्रक्ष म्लेच्छने । १४८ ॥ म्लेच्छ अव्यक्तायां वाचि । १४९ ॥ ब्रूस बर्ह हिंसायाम् । १५१ ॥ केचिदिह गर्ज गर्द शब्दे । गर्ध अभिकांक्षायामिति पठन्ति । १५४ ॥ गुर्द पुर्व निकेतने । १५६ ॥ जसि रक्षणे । मोक्षण इति केचित् । जंसयति, जंसति । १५७ ॥ ईड स्तुतौ । १५८ ॥ जसु हिंसायाम् ।१५९॥ पिडि संघाते । १६० ॥ रुष रोषे । १६१ ॥ रुट इत्येके । १६२ ॥ डिप क्षेपे । १६३ ॥ ष्टुप समुच्छ्राये । १६४ ॥

आ कुस्मादात्मनेपदिनः । कुस्मनाम्नो वेति वक्ष्यते । तमभिव्याप्येत्यर्थः । अकर्तृगामिफलार्थमिदम् । चित संचेतने । चेतयते । अचीचितत । १ ॥ दशि दंशने । दंशयते । अददंशत । इदित्त्वाण्णिजभावे दंशति । आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः । [3]नलोपे सञ्जिसाहचर्याद् भ्वादेरेव ग्रहणम् । २ ॥ दसि दर्शनसंदर्शनयोः । दंसयते, दंसति । ३ ॥ दसेत्यप्येके । ४ ॥ डप डिप संघाते । ६ ॥ तन्त्रि कुटुम्बधारणे । तन्त्रयते । चान्द्रास्तु धातुद्वयमिति मत्वा कुटुम्बयते इत्युदाहरन्ति । ८ ॥ मन्त्रि गुप्तभाषणे । ९ ॥ स्पश ग्रहणसंश्लेषणयोः । १० ॥ तर्ज भर्त्स तर्जने । १२ ॥ बस्त गन्ध अर्दने । बस्तयते । गन्धयते । १४ ॥ विष्क हिंसायाम् । १५ ॥ हिष्केत्येके । १६ ॥ निष्क परिमाणे । १७ ॥ लल ईप्सायाम् । १८ ॥ कूण संकोचने । १९ ॥ तूण पूरणे । २० ॥ भ्रूण आशाविशङ्कयोः । २१ ॥ शठ श्लाघायाम् । २२ ॥ यक्ष पूजायाम् । २३ ॥ स्यम वितर्के । २४ ॥ गूर उद्यमने । २५ ॥ शम लक्ष आलोचने । [3406]नान्ये मित इति मित्त्वनिषेधः । शामयते । २७ ॥ कुत्स अवक्षेपणे । २८ ॥ त्रुट छेदने । कुट इत्येके । ३० ॥ गल स्रवणे । ३१ ॥ भल आभण्डने । ३२ ॥ कूट आप्रदाने । अवसादने इत्येके । ३३ । कुट्ट प्रतापे । ३४ ॥ वञ्चु प्रलम्भने । ३५ ॥ वृष शक्तिबन्धने । शक्तिबन्धनं प्रजननसामर्थ्यं शक्तिबन्धश्च । वर्षयते । ३६ ॥ मद तृप्तियोगे । मादयते । ३७ ॥ दिव परिकूजने । ३८ ॥ गॄ विज्ञाने । गारयते । ३९ ॥ विद चेतनाख्याननिवासेषु । वेदयते । ४० ॥

---

हि सति ॠकारीयतीत्यत्रापि इत्त्वप्रसङ्गात् ॥ **अर्दन इत्येक इति** । अत्र वदन्ति–अर्दने लुबितुबी भ्वादौ पठितौ तयोस्तत्र पाठो वृथा स्यात्, इदित्त्वादेव लुम्बति तुम्बतीत्यादिरूपसिद्धेः । अदर्शने त्वर्थेऽर्थभेदात् भ्वादिपाठः सार्थक इत्यर्दनार्थत्वं चौरादिकयोरप्युक्तमित्यस्वरसादेक इत्युक्तमिति ॥ **म्रक्ष** म्लेच्छने । म्रक्षणेऽप्ययम् । तच्च तैलादिनाऽभ्यञ्जनम् । म्रक्षयति । अमम्रक्षत् ॥ **गुर्द पुर्व** निकेतने । गूर्दयति पूर्वयति । केचित्तु पूर्वनिकेतने इति पठित्वा गुर्दधातुः पूर्वनिवासे वर्तते इति व्याचक्षते ॥ **जसु** हिंसायाम् । क्त्वायामिड्विकल्पार्थमुदित्करणमिति तत्सामर्थ्यादस्य णिजनित्यः । जासयति, जसति । जसित्वा, जस्त्वा । जस्तम् ॥ **चित संचेतने** । संचेतनं मूर्छाद्यवस्थानिवृत्त्युत्तरकालिकं ज्ञानम् ॥ **दंशतीति** । इह 'दंशसञ्ज–३१९७' इति नलोपमाशङ्क्याह—**सञ्जिसाहचर्यादिति** ॥ **स्पश** । स्पाशयते । 'अत्स्मृदृत्वर–३३९९' इत्यादिनाऽभ्यासस्य अत्वम् । इत्त्वापवादः । अपस्पशत् ॥ **तर्ज भर्त्स** तर्जने । तर्जयते । भर्त्सयते । 'तर्जयन्निव केतुभिः' इति प्रयोगस्तु णिजन्तादस्माद्, भौवादिकात् तर्जतेर्वा हेतुमण्णिचि बोध्यः ॥ **भ्रूण** । भ्रूणयते । 'भ्रूणोऽर्भके स्त्रैणगर्भे' इत्यमरः । **गूर** उद्यमने । दीर्घोपधोऽयम् । गूरयते । ह्रस्वोपधस्तु दिवादौ तुदादौ चेति मनोरमायां स्थितम् । यद्यपि तुदादौ गुरी उद्यमने इति पाठाद्ध्रस्वोपध एव, तथापि दिवादौ धूरी गूरी हिंसागत्योरिति पाठान्नास्ति ह्रस्वोपध इति नव्याः॥ **शम लक्ष**–। ननु 'निशामय तदुत्पत्तिम्' इत्यत्र शामय इत्येतत् शमु उपशम इत्यस्माण्णिचि रूपं चेत् अमन्तत्वान्मित्त्वे सति ह्रस्वेन भाव्यमित्याशङ्क्य कथमनेन सिद्धमिति वदन्ति, आकुस्मीयत्वात्ताङि निशामयस्वेति रूपस्य सर्वसंमतत्वादिति चेत् । अत्राहुः–स्वार्थण्यन्तादस्माद्धेतुमण्णिचि निशामयेति रूपम् । न चार्थासंगतिः 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति सिद्धान्तादिति ॥ **कुत्स** अवक्षेपणे । 'यूनश्च कुत्सायाम् १५६८' इति निर्देशादङ् । कुत्सा । 'ण्यासश्रन्थः–५०८९' इति युच् । कुत्सना ॥ **भल**–। आभण्डनं निरूपणमित्याहुः॥ **वञ्चु** प्रलम्भने। ल्युटि वञ्चनम् । उदित्करणस्य क्त्वायामिड्विकल्पार्थत्वाण्णिजनित्यः । वञ्चयति, वञ्चति । वचित्वा, वञ्चित्वा, वक्त्वा । 'वञ्चिलुञ्च्यृतश्च ५१४६' इति सेटः क्त्वः कित्त्वविकल्पनात् पाक्षिको नलोपः॥

---

१ अचिकीर्तदिति । पूर्वम् 'उपधायाश्च' इतीत्त्वे रपरत्वम् ततो द्वित्वम् । एवं चाभ्यासस्य संयोगपरत्वेन गुरुभूतेकारपरत्वेन सन्वद्भावाभावे '**दीर्घो लघोः**' इति दीर्घत्वं न भवति । यथाऽत्र '**णिच्यच आदेशो न द्वित्वे कर्तव्ये**' इत्यस्य न प्रवृत्तिस्तथाऽग्रे ऊनधातोरुपरि स्फुटीभवति मूले॥ २ '**गुप्तभाषणे**' इत्येवमेव पाठः, न तु '**गुप्तपरिभाषणे**' इति, '**गुप्तोक्तौ स्यान्मन्त्रयते**' इत्याख्यातचन्द्रिकायां भट्टमल्लोक्तेः ॥

( ३४०८ ) सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे । विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥

मान स्तम्भे । मानयते । ४१ ॥ यु जुगुप्सायाम् । यावयते । ४२ ॥ (ग.) कुस्म नाम्नो वा ॥ कुस्मेति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अचुकुस्मत । ४३ ॥ अथवा कुस्मेति प्रातिपदिकं ततो धात्वर्थे णिच् । इत्याकुस्मीयाः ॥

चर्च अध्ययने । १ ॥ बुक्क भषणे । २ ॥ (ग.) शब्द उपसर्गादाविष्कारे च ॥ चाद्भषणे । प्रतिशब्दयति । प्रतिश्रुतमाविष्करोतीत्यर्थः ॥ ( ३४०९-१ ) (ग.) अनुपसर्गाच्च ॥ आविष्कारे इत्येव । शब्दयति । ३ ॥ कण निमीलने । काणयति । णौ [३]चङ्युपधाया ह्रस्वः ॥ ( ३४०९-२ ) (वा.) काण्यादीनां वेति विकल्प्यते । अचीकणत्, अचकाणत् । ४ ॥ जभि नाशने । जम्भयति, जम्भति । ५ ॥ षूद क्षरणे । सूदयति । असूषुदत् । ६ ॥ जसु ताडने । जासयति, जसति । ७ ॥ पश बन्धने । पाशयति । ८ ॥ अम रोगे । आमयति । [३४०६]नान्ये मित इति निषेधः । अम गत्यादौ शपि गतः । तस्माद्धेतुमण्णौ न [३१४२]कम्यमिचमामिति निषेधः । आमयति । ९ ॥ चट स्फुट भेदने । विकासे शशपोः स्फुटति स्फोटते इत्युक्तम् । ११ ॥ घट संघाते । घाटयति । १२ ॥ ( ३४१० ) (ग.) हन्त्यर्थाश्च । नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः ।दिवु मर्दने । उदि[१]त्त्वाद्देवतीत्यापि । १३ ॥ अर्ज प्रतियत्ने । अयमर्थान्तरेऽपि । द्रव्यमर्जयति । १४ ॥ घुषिर् विशब्दने । घोषयति । घुषिरविशब्दन इति सूत्रेऽविशब्दन इति निषेधाल्लिङ्गादनित्योऽस्य णिच् । घोषति । इरित्त्वादङ्वा । अघुषत्, अघोषीत् । ण्यन्तस्य तु अजूघुषत् । १५ ॥ आङः क्रन्द सातत्ये । भौवादिकः क्रन्दधातुराह्वानाद्यर्थे उक्तः स एवाङ्पूर्वो णिचं लभते सातत्ये । आक्रन्दयति । अन्ये तु आङ्पूर्वो घुषिः क्रन्दसातत्ये इत्याहुः । आघोषयति । १६ ॥ लस शिल्पयोगे । १७ ॥ तसि भूष अलंकरणे । अवतंसयति, अवतंसति । भूषयति । १८ ॥ मोक्ष असने । मोक्षयति । १९ ॥ अर्ह पूजायाम् । २० ॥ ज्ञा नियोगे । आज्ञापयति । २१ ॥ भज विश्राणने । २२ ॥ शृधु प्रहसने । अशशर्धत्, अशीशृधत् । २३ ॥ यत निकारोपस्कारयोः । २४ ॥ रक लग आस्वादने । रघ इत्येके । रग इत्यन्ये । २८ ॥ अञ्चु विशेषणे । अञ्चयति । उदित्त्वमिड्विकल्पार्थम् । अत एव विभाषितो णिच् । अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् । २९ ॥ लिगि चित्रीकरणे । लिङ्गयति । लिङ्गति । ३० ॥ मुद संसर्गे । मोदयति सक्तून् घृतेन । ३१ ॥ त्रस धारणे । ग्रहण इत्येके । वारण इत्यन्ये । ३२ ॥ उध्रस उञ्छे । उकारो धात्ववयव इत्येके । नेत्यन्ये । ध्रासयति, ध्रसति । उध्रासयति । ३४ ॥ मुच प्रमोचने मोदने च । ३५ ॥ वस स्नेहच्छेदापहरणेषु । ३६ ॥ चर संशये । ३७ ॥ च्यु सहने । हसने चेत्येके । च्यावयति । च्युसेत्येके । च्योसयति । ३९ ॥ भुवोऽवकल्कने । अवकल्कनं मिश्रीकरणमित्येके । चिन्तनमित्यन्ये । भावयति । ४० ॥ कृपेश्च । कल्पयति । ४१ ॥

( ३४११ ) (ग.) आ स्वदः सकर्मकात् । स्वदिमभिव्याप्य संभवत्कर्मभ्य एव णिच् । ग्रस ग्रहणे । ग्रासयति फलम् । १ ॥ पुष धारणे । पोषयत्याभरणम् । २ ॥ दल विदारणे । दालयति । ३ ॥ पट पुट लुट तुजि मिजि

---

इडभावे तु नित्यम् । निष्ठायां तु वक्तम् । 'यस्य विभाषा ४०२६' इतीण्निषेधः ॥ नाम्नो वेति वाशब्दं व्याचष्टे—अथवेति ॥ **प्रातिपदिकमिति** । ' अन्येष्वपि दृश्यते ४०१८ ' इति सूत्रे ' अन्येभ्योऽपि- ' इति वक्ष्यमाणत्वात्कुपूर्वात्स्मयतेर्डप्रत्यये टिलोपे ' कुगति-१०९७ ' इति समासे च निष्पन्नमित्यर्थः । यद्यपि कुपूर्वस्य स्मिङो लडादिषु कुस्मयते इत्यादि सिद्धम्, तथापि—प्रकुस्मयते इत्यादि न सिध्येत्, उपसर्गस्य धातुना व्यवधानायोगात् । कुस्मयाञ्चक्रे इत्याद्यर्थमपि कुस्मेति पाठोऽर्थवान् ॥ इत्याकुस्मीयाः ॥ **चर्च-** । सर्वोऽपि चुरादिणिच् पाक्षिक इति पक्षे 'गुरोश्च हलः ५०८३' इत्यप्रत्ययः । चर्चा ॥ **कण** निमीलने । एकनेत्रनिमीलन एवायं, शब्दस्वभावात् । काणः ॥ ( ३४०९-२ ) **काण्यादीनामिति** । एते हेतुमण्ण्यन्तेषु वक्ष्यन्ते ॥ ( ३४१० ) **हन्त्यर्थाश्च** ॥ तेन घातयति हन्तीत्येतौ समानार्थौ ॥ **अर्ज-** । प्रतियत्नो गुणाधानम् ॥ **अर्जयतीति** । संगृह्णातीत्यर्थः ॥ **घुषिर्-** । विशब्दनं प्रतिज्ञानम् ॥ **निषेधाल्लिङ्गादिति** । ' घुषिरविशब्दने ४०७८ ' इति सूत्रेण अविशब्दने निष्ठाया इण्निषिध्यते विशब्दनार्थादेतस्मादनन्तरा निष्ठा नास्त्येव, णिचा व्यवधानात् । अतो घुषिरविशब्दन इति भौवादिकादेव निष्ठाया इण्निषेधो भवेदिति किं विशब्दनप्रतिषेधेन । ततश्चानेनैव विशब्दनप्रतिषेधेनानित्योऽस्य णिजिति ज्ञाप्यत इति भावः । इरित्करणादपि णिज्विकल्पः सिध्यतीति केचित् ॥ **शिल्पयोग इति** । क्रियाकौशलं शिल्पम् ॥ **यत** निकारोपस्कारयोः । यत्नो वा प्रैषो वा निकारः । निराकारोपस्करयोरिति पाठान्तरम् । क्रियानिघण्टौ च 'यत्ने प्रैषे निराकारे पादपे चाप्युपस्कृतौ । निसोऽयं धान्यधनयोः प्रतिदाने ' इत्युक्तम् । अस्यार्थः—यत्नाद्यर्थेषु चतुर्षु यतधातुं प्रयुञ्जीत । निसः परभागे चेत्प्रयुज्यते तदाऽयं धान्यधनयोः प्रतिदाने वर्तत इति । ऋणं निर्यातयति । प्रतिददातीत्यर्थः ॥ **अञ्चु** विशेषणे । विशेषणं व्यावर्तनम् ॥ **भुवोऽवकल्कने** । भूधातोर्णिच् स्यात् ॥ **भावयतीति** । मिश्रीकरोतीति चिन्तयति वेत्यर्थः ॥ **कृपेश्च** । कृपेर्णिच् स्यादवकल्कने ॥ ( ३४११ ) **आस्वदः** । **अभिव्याप्येति** । आ कुस्मादिति

---

१ **उदित्त्वादिति** । तद्धि क्त्वायाम् **'उदितो वा'** इतीड्विकल्पार्थमेव क्रियते । यदि चास्मान्नित्यमेव णिच् स्यात् तदा णिचा व्यवधानेनेडागमाप्राप्त्योदित्करणं व्यर्थमेव स्यात् । अतोऽस्माण्णिजभावोऽपि कल्पनीय इति भावः ॥

पिजि लुजि भजि लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति ॥ ( ३५१२ ) नाग्लोपिशास्वृदिताम् । ७ । ४ । २ । णिच्यग्लोपिनः शास्ते-र्ऋदितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्धयति । उदित्त्वाद्वर्तति । वर्धति । २४ ॥ रुट लजि अजि दसि भृसि रुशि शीक नट पुटि जिवि रघि लघि अहि रहि महि च । ४९ ॥ लडि तड नल च । ५२ ॥ पूरी आप्यायने । ईदित्त्वं निष्ठायामिण्निषेधाय । अत एव णिज्वा । पूरयति, पूरति । ५३ ॥ रुज हिंसायाम् । ५४॥ ष्वद आस्वादने । स्वाद इत्येके । असिष्वदत् । दीर्घस्य त्वषोपदेशत्वात् । असिस्वदत् । ५६ ॥ ( इत्यास्वदीयाः ) ॥

( ३५१३ ) आ धृषाद्वा॥ इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य ॥युज पृच संयमने । योजयति, योजति । अयौक्षीत् । पर्चयति, पर्चति । पर्चिता । अपर्चीत् । २ ॥ अर्च पूजायाम् । ३ ॥ षह मर्षणे । साहयति ॥ स एवायं नागः सहति कलभेभ्यः परिभवम् । ४ ॥ ईर क्षेपे । ५ ॥ ली द्रवीकरणे । लाययति, लयति । लेता । ६ ॥ वृजी वर्जने । वर्जयति, वर्जति । ७ ॥ वृञ् आवरणे । वारयति, वरति, वरते । वरिता, वरीता । ८ ॥ जॄ वयो-हानौ । जारयति, जरति । जरिता, जरीता । ९ ॥ ज्रि च । ज्राययति, ज्रयति । ज्रेता । १० ॥ रिच वियोजनसंपर्च-नयोः । रेचयति, रेचति । रेक्ता । ११ ॥ शिष असर्वोपयोगे । शेषयति, शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये । १२ ॥ तप दाहे । तापयति, तपति । तप्ता । १३॥ तृप तृप्तौ । सन्दीपन इत्येके । तर्पयति, तर्पति । तर्पिता । १४ ॥ छृदी सन्दीपने । छर्दयति, छर्दति । छर्दिता । छर्दिष्यति । सेऽसिचीति विकल्पो न, साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात् । १५ ॥ चृप छृप दृप सन्दीपन इत्येके । चर्पयति । छर्पयति । १८ ॥ दृभी भये । दर्भ-यति, दर्भति । दर्भिता । १९ ॥ दृभ सन्दर्भे । अयं तुदादावीदित् । २० ॥ श्रथ मोक्षणे । हिंसायामित्येके । २१ ॥ मी गतौ । माययति, मयति । मेता । २२ ॥ ग्रन्थ बन्धने ॥ ग्रन्थयति, ग्रन्थति । २३ ॥ शीक आमर्षणे । २४ ॥ चीक च । २५ ॥ अर्द हिंसायाम् । स्वरितेत् । अर्दयति, अर्दति, अर्दते । २६ ॥ हिसि हिंसायाम् । हिंसयति, हिंसति । हिनस्तीति इनमि गतम् । २७ ॥ अर्ह पूजायाम् । २८ ॥ आङः षद पद्यर्थे । आसादयति, आसीदति । पाघ्रा इति सीदादेशः । आसत्ता । आसात्सीत् । २९ ॥ शुन्ध शौचकर्मणि ॥ शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् । । ३० ॥ छद अपवारणे । स्वरितेत् । ३१॥ जुष परितर्कणे । परितर्कणमूहो हिंसा वा । परितर्पण इत्यन्ये ॥ परितर्पणं परितृप्तिक्रिया । जोषयति, जोषति । प्रीतिसेवनयोर्जुषते इति तुदादौ । ३२ ॥ धूञ् कम्पने । णावित्यधिकृत्य-॥

---

पूर्वत्र आधृषादागर्वादिति परत्र च आङोऽभिविध्यर्थतायाः सर्वसंमतत्वेन तन्मध्यपातितेऽत्रापि तथैव व्याख्यानमुचितमिति भावः ॥ अन्ये त्वाङ्पूर्वकात्स्वदः सकर्मकाण्णिजिति व्याचख्युः । आस्वदीयेषु धातवः सर्वे सकर्मकाः ॥ **घाटयतीति** । अयं चुरादावेव संघाते गतः, पुनः पाठस्तु अर्थभेदात् ॥ **स्वाद इत्येक इति** । अस्मिन् मते पूर्वत्रापि 'आस्वादः सकर्म-कात्' इति पाठ्यम् । ननु दीर्घपाठो व्यर्थः । ह्रस्वपाठेऽप्युपधावृद्ध्या स्वादयतीति रूपाणां तुल्यत्वादत आह—**दीर्घस्य त्विति** ॥ 'सः स्विदिस्वदिसहीनां च ३४९२' इति सूत्रेण अभ्यासेणः परस्य तस्य सकारो न तु षत्वमिति वक्ष्यमाणत्वा-त्सन्नन्तेऽपि सिस्वादयिषतीत्यादि रूपं तुल्यमेवेत्यभिप्रेत्याह—**असिस्वददिति** ॥ इत्यास्वदीयाः ॥ **(३५१३) आधृषाद्वा** । व्याख्यानात्, योग्यताबलाद्वा णिजिति संबध्यते ॥ **अयौक्षीदिति** । णिजभावपक्षे अनिट्कोऽयमिति भावः ॥ **ली** द्रवी-करणे । 'लिनातिलीयत्योर्यका निर्देशः' इति भाष्यकारोक्तत्वात् 'विभाषा लीयतेः ३३२७' इत्यात्त्वमिह न प्रवर्तत इति ध्वनयति—**लेतेति** ॥ **वरीतेति** । 'वृतो वा ३१८५' इति वा दीर्घः । लिङि व्रियात् । आत्मनेपदे तु वृषीष्ट, वरिषीष्ट । 'लिङ्सिचोरात्मनेपदेषु ३३४८' इति वेट् । 'न लिङि ३३४९' इति इटो दीर्घनिषेधः । इडभावपक्षे 'उश्च ३१६१' इति कित्त्वान्न गुणः । लुङि अवारीत् । अवारिष्टाम् । अवारिषुः । 'सिचि च परस्मैपदेषु ३१८६' इति दीर्घनिषेधः । आत्मनेपदे तु अवरिष्ट, अवरीष्ट । इडभावे सिचो लोपः । अवृत ॥ **रिच** । णिजभावे अयमनिडित्याह-**रेक्तेति** ॥ **अशि-क्षदिति**। 'शल इगुपधा-३११७' इति क्सः ॥ **तृप** । आनिट्सु श्यना निर्देशादयं सेडिति ध्वनयति—**तर्पितेति** ॥ **छृदी** ।

---

१ **लाययतीति** । 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इति न्यायेन '**लीलोर्नुग्लुकावन्यतरस्याम्**' इति नुगपि लीधातोरपि हेतुमण्णावेवेति नात्र नुगागम इति बोध्यम् ॥ २ **छृदीति** । अस्य धृषादित्वे फलं चिन्त्यम् । ईदि-त्करणेन णिज्विकल्पसिद्धेः ॥ तद्धीदित्करणं '**श्वीदितो निष्ठायाम्**' इति निष्ठायामिड्निषेधार्थं क्रियते । यदि चास्माण्णिच् स्यादेव तर्हि णिचा व्यवधानादव्यवहिता निष्ठा नास्त्येवेति व्यर्थमेव स्यादीदित्करणमिति बोध्यम् ॥ ३ **दृभीति** । अस्यापि पाठो धृषादिषु व्यर्थः । ईदित्करणादेव णिज्विकल्पसिद्धेः ॥ एवमेव वृजृवृञ् इति धात्वोरपि पाठो व्यर्थ इति बोध्यम् ॥

( ३४१४-१ ) (वा) धूञ्प्रीञोर्नुग्वक्तव्यः ॥ धूनयति, धवति, धवते । केचित्तु-धूञ्प्रीणोरिति पठित्वा प्रीणातिसाहचर्याद्धुनातेरेव नुकमाहुः । धावयति । ३३ ॥ अयं स्वादौ क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च । तथा च कविरहस्ये ॥

धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ॥
वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च ॥ १ ॥ इति ॥

प्रीञ् तर्पणे । प्रीणयति । धूञ्प्रीणोरिति हरदत्तोक्तपाठे तु प्राययति, प्रयति, प्रयते । ३४ ॥ श्रन्थ ग्रन्थ सन्दर्भे । ३६ ॥ आप्लृ लम्भने । आपयति । आपिपत् । आपति । आप्ता । आपत् । स्वरितेदयमित्येके । आपते । ३७ ॥ तनु श्रद्धोपकरणयोः ॥ ( ३४१४-२ ) (ग) उपसर्गाच्च दैर्घ्ये । तानयति । वितानयति । तनति । वितनति । ३८॥ चन श्रद्धोपहननयोरित्येके । चानयति, चनति ।३९॥ वद सन्देशवचने । वादयति । स्वरितेत् । वदति, वदते । अनुदात्तेदित्येके । ववदतुः । ववदिथ । ववदे । वधात् । ४० ॥ वच भाषणे[1] । वाचयति, वचति । वक्ता । अवाक्षीत् । ४१ ॥ मान पूजायाम् । मानयति, मानति । मानिता । विचारणे तु भौवादिको नित्यसन्नन्तः । स्तम्भे मानयते इत्याकुस्मीयः, मन्यते इति दिवादौ, मनुते इति तनादौ च । ४२ ॥ भू प्राप्तावात्मनेपदी । भावयते, भवते । णिच्सन्नियोगेनैवात्मनेपदमित्येके । भवति । ४३ ॥ गर्ह विनिन्दने । ४४ ॥ मार्ग अन्वेषणे । ४५ ॥ कठि शोके । उत्पूर्वोऽयमुत्कण्ठायाम् । कण्ठते इत्यात्मनेपदी गतः । ४६ ॥ मृजू शौचालंकारयोः । मार्जयति, मार्जति । मार्जिता, मार्ष्टा । ४७ ॥ मृष तितिक्षायाम् । स्वरितेत् । मर्षयति, मर्षति, मर्षते । मृष्यति, मृष्यते इति दिवादौ । सेचने शपि मर्षति । ४८ ॥ धृष प्रहसने । धर्षयति, धर्षति । ४९ ॥ इत्याधृषीयाः ॥

अथादन्ताः॥कथ वाक्यप्रबन्धे ॥ अल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । अचकथत् । १ ॥ वर ईप्सायाम् । वरयति । वारयतीति गतम् । २ ॥ गण संख्याने । गणयति ॥ ( ३४१५ ) (सू) ई च गणः । ७ । ४ । ९७ । गणेरभ्यासस्य ई स्याच्चङ्परे णौ । चादत् । अजीगणत्, अजगणत् । ३ ॥ शठ श्वठ सम्यगवभाषणे । ५ ॥ पट वट ग्रन्थे । ७ ॥ रह त्यागे । अररहत् । ८ ॥ स्तनगदी देवशब्दे । स्तनयति । गदयति । अजगदत् । १० ॥ (ग) पत गतौ वा । वा णिजन्तः । वाऽदन्त इत्येके । आद्ये पतयति, पतति । पताञ्चकार । अपतीत् । द्वितीये पातयाति । अपीपतत् । ११ ॥ पष अनुपसर्गात् । गतावित्येव । पषयति । १२ ॥ स्वर आक्षेपे । स्वरयति । १३ ॥ रच प्रतियत्ने । रचयति । १४ ॥ कल गतौ संख्याने च । १५ ॥ चह परिकल्कने । परिकल्कनं दम्भः शाठ्यं च । १६ ॥ मह पूजायाम् । महयति । महतीति शपि गतम् । १७ ॥ सार कृप श्रथ दौर्बल्ये । सारयति । कृपयति । श्रथयति । २० ॥ स्पृह ईप्सायाम् । २१ ॥ भाम क्रोधे । अबभामत् । २२ ॥

---

ईदित्त्वान्निष्ठायामनिट् । ऋवर्णान्तस्य णत्वम् । छृण्णः । छृण्णवान् ॥ ह्रस्वश्चेति । धुञ् कम्पने इत्यर्थः ॥ अवाक्षीदिति । 'अस्यतिवक्ति-३२४६' इति लुका निर्देशादङ् नेति भावः । 'वचिस्वपि-३२१३' इति संप्रसारणम् । उच्यात् ॥ धृष प्रसहने । केचित्त्वादितमाहुस्तन्मते धृष्टो मुख्यमते धर्षितः । नन्वत्र 'निष्ठा शीङ्-४०६५' इत्यादिना सेण्निष्ठायाः कित्त्वनिषेधाद्गुणेन भाव्यमिति चेत् । अत्राहुः- आदित्साहचर्यादादित एव ञिधृषेत्यस्य तत्र ग्रहणात् । न च आदितो निष्ठाया इट् दुर्लभ इति शङ्क्यम्, 'विभाषा भावादिकर्मणोः ४०६८' इति तत्संभवादिति ॥ इत्याधृषीयाः॥ अथादन्ता इति । वक्ष्यमाणेषु धातुषु अन्त्याऽवयवोऽकारो न तूच्चारणार्थ इत्यर्थः ॥ स्थानिवत्त्वान्न वृद्धिरिति । 'अचः परस्मिन्-७७' इति सूत्रेणेत्यर्थः । न च स्थानिनि सति यत्कार्यं तदेव स्थानिवदित्यनेनातिदिश्यते न त्वादेशप्रयुक्तं वार्यते अन्यथा नायकः पावकः इत्यादि न सिध्येदिति वृद्धिरत्र दुर्वारेति वाच्यम्, 'अचः परस्मिन्-७७' इत्यत्र स्थानिवदित्यनुवर्त्य शब्दाधिकारपक्षाश्रयेण भावाभावावुभावप्यतिदिश्येते[2] इति सिद्धान्तात् स्थानिनि सत्यभवन्त्या वृद्धेरादेशेऽप्यभावात् । स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीत्यत्र तु 'न पदान्त-७८' इति सूत्रस्थयलोपादिग्रहणमेव लिङ्गमिति दिक् ॥ ( ३४१५ ) ई च गणः । 'अत्स्मृदृत्वर-३३९९' इत्यत्र योऽत् स चकारेण समुच्चीयते ॥ स्तनगदी । गदीत्यत्र इका निर्देशादतो लोपः । अनेकाच्त्वेनाषोपदेशत्वात्षत्वं न । तिस्तनयिषति । 'स्तनिहृषिपुषि-४५०२' इति णेरिष्णुचि 'अयामन्ता-३०८६' इत्ययादेशः । 'स्तनयित्नुर्बलाहकः' ॥ पत गतौ वा । गणसूत्रमिदम् ॥ कृपयतीति । 'कृपो रो लः ३१३१' इति न प्रवर्तते । तत्र 'कृपू सामर्थ्ये' इत्यस्य ग्रहणात् । कृपप्रकृतिकणिजन्तस्य तु धात्वन्तरत्वात् ॥ स्पृह । आप्तुमिच्छा ईप्सा ॥ अबभामदिति । अल्लो-

---

[1] 'भाषणे' इत्येवमेव पाठः, न तु 'परिभाषणे' इति । 'गृणात्युदीरयत्युक्तौ कीर्तयत्यालपत्यपि । भणत्यपि वचत्येके वाचयत्यपि शंसति ॥' इत्याख्यातचन्द्रिकायां भट्टमल्लोक्तेः ॥ "आदादिको यो 'वच भाषणे'ऽस्ति चौरादिको यो वचिराधृषीयः । तस्मिण्णिचा वाचयतीति रूपं पक्षे वचत्यन्यगणे च वक्ति ॥" इति दशबलकारिकोक्तेश्च॥ [2] भावाभावाविति । तथा चोक्तम् 'अचः परस्मिन्-' इति सूत्रभाष्ये-'काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति । कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि ॥' इति ॥

**सूच** पैशुन्ये । सूचयति । अषोपदेशत्वान्न षः । असुसुचत् । २३ ॥ खेट भक्षणे । तृतीयान्त इत्येके ॥ **खोट** इत्यन्ये । २५ ॥ **क्षोट** क्षेपे । २६ ॥ **गोम** उपलेपने । अजुगोमत् । २७ ॥ **कुमार** क्रीडायाम् । अचुकुमारत् । २८ ॥ **शील** उपधारणे । उपधारणमभ्यासः । २९ ॥ **साम** सान्त्वप्रयोगे । अससामत् । साम सान्त्वने इत्यतीतस्य तु असीषमत् । ३० ॥ **वेल** कालोपदेशे । वेलयति । ३१ ॥ **काल** इति पृथग्धातुरित्येके । कालयति । ३२ ॥ **पल्पूल**[1] लवनपवनयोः । ३३ ॥ **वात** सुखसेवनयोः । गतिसुखसेवनेष्वित्येके । वातयति । अववातत् । ३४ ॥ **गवेष** मार्गणे । अजगवेषत् । ३५ ॥ **वास** उपसेवायाम् । ३६ ॥ **निवास** आच्छादने । अनिनिवासत् । ३७॥ **भाज** पृथक्कर्मणि । ३८ ॥ **सभाज** प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्यन्ये । सभाजयति । ३९ ॥ **ऊन** परिहाणे । ऊनयति । ओः पुयण्ज्यपरे (३४२७) इति सूत्रे पययोरिति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गम्(३४१५-२)'णिच्यच आदेशो न स्याद् द्वित्वे कार्ये' इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः, ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाचिकीर्तदिति सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वं तत उत्तरखण्डेऽल्लोपः। औननत् । मा भवानू-

---

पस्य स्थानिवत्त्वात् ' णौ चङि-३०९० ' इत्युपधाह्रस्वो न ॥ **सूच**-। पिशुनो दुर्जनस्तस्य कर्म पैशुन्यम् ॥ **अषोपदेशत्वादिति** । अनेकाच्त्वादिति भावः ॥ **साम सान्त्वने इत्यतीतस्य त्विति** । अयं तु धातुः इतः प्राङ् मूलपुस्तके न कुत्रापि दृष्टः, पुस्तकान्तरेषु मृग्यः । केचित्तु 'साम सान्त्वने' इत्यस्य क्वाप्यपठितत्वेऽपि 'षान्त्व साम प्रयोगे ' इति प्राक्पठितमेव । तत्र च षान्त्वसामेति धातुद्वयं प्रयोगे वर्तते । प्रयोगश्च सान्त्वप्रयोगपरः । स च सान्त्वनमेवेत्येवं ग्रन्थकाराशयं वर्णयित्वा स्थितस्य गतिं समर्थयन्ते ॥ **गवेष**-। मार्गणमन्वेषणम् ॥ **ऊन** परिहाणे । अस्माण्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपेन 'अजादेर्द्वितीयस्य २९३०' इति णिचा सह द्वित्वे औनिनदित्यनिष्टं प्रसज्येत, किंतु औननदित्येव रूपमिष्टम् । तच्च नशब्दस्य द्वित्वं विना न संभवति । न च 'द्विर्वचनेऽचि ३००३ ' इति सूत्रेण द्वित्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावान्निषेधाद्वा नशब्दस्य द्वित्वं सिध्यतीति वाच्यम्, णिचो द्वित्वनिमित्तत्वाभावादत आह—**ओः पुयण्जीत्यादि** ॥ संपूर्णसूत्रं लिङ्गमिति केषांचिद् भ्रमं निवर्तयितुमाह—**पययोरिति** । अयं भावः-'स्मिपूङ्रञ्ज्वशां सनि ३४८९ ' ' सनीवन्तर्ध-३४७७' इति सूत्राभ्यां पूङ्यौतिभ्यां परस्य सन इडागमे कृते 'द्विर्वचनेऽचि ३००३ ' इति स्थानिवद्भावादादेशनिषेधाद्वा उवर्णान्तस्यैव द्वित्वमिति पुपविषते युयविषतीत्यनिष्टं प्रसज्येत । ततश्चाभ्यासोवर्णस्येत्त्वार्थं पययोरित्यपेक्षितम् । अन्यथा पिपविषते । यियविषतीति न सिध्येदिति ॥ **वर्गप्रत्याहारेति** । पुयण्जीति वर्गादिग्रहणफलं तु अबीभवत्, अमीमवत्, अरीरवत्, अलीलवत्, अजीजवत्, बिभावयिषति, मिमावयिषति, रिरावयिषति, लिलावयिषतीत्यादिरूपसिद्धिरिति वाच्यम् । तद्दुरुपपादम्, णिचि परत्वादन्तरङ्गत्वाच्च वृद्ध्यादौ कृते द्वित्वे सत्यभ्यासे उवर्णस्य दुर्लभत्वादकारस्य 'सन्यतः ३०९३' इतीत्त्वेन रूपसिद्धेश्च । ततो वर्गादिग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः । ज्ञापनफलं तु यत्र 'ओः पुयण्जि-३४२७' इत्यस्याप्राप्तिस्तत्र बोध्यम् । तद्यथा—चुक्षावयिषति । चङि अचुक्षवत् । उड्डारिवाचरति उडवति । 'सर्वप्रातिपदिकेभ्यः-३५३७' इत्याचारे क्विप् तदन्ताद्धातोर्णौ सन् । उडुडावयिषति । चङि औडूडवत् । तु इति सौत्रो धातुस्ततो णौ सन् । तुतावयिषति । चङि अतूतवत् । नुनावयिषति । अनूनवत् । पुस्फारयिषति । अपुस्फुरत् ।'चिस्फुरोर्णौ ३४०४'इति वाऽऽत्वम् । अपुस्फुरदित्यादिष्वभ्यासे उकारश्रवणं भवति ज्ञापनात्, अन्यथा चिक्षावयिषतीत्यादि प्रसज्येत । तदेतत्सकलमभिप्रेत्य वार्तिककृतोक्तम् ' ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य ' इति । स्थानिवद्भावः प्रतिषेधस्याप्युपलक्षणम् । **अच आदेशो न स्यादिति** । प्रतिषेधपक्षो मुख्य इत्यभिप्रेत्येदमुक्तम् । प्रतिषेधः स्थानिवद्भावस्याप्युपलक्षणमिति बोध्यम् । नन्वेवं 'कॄत संशब्दने' इति धातोर्णौ चङि इरादेशात्प्रागेव कॄत इत्यस्य द्वित्वे उरदत्त्वे च अचकीर्तदिति स्यान्न तु अचिकीर्तदित्यत आह—**यत्र द्विरुक्ताविति** ॥ **आद्योऽजिति** । चङ्सहितस्योत्तरखण्डत्वमभ्युपेत्येदमुक्तम् । अन्ये तु—आद्यग्रहणं स्पष्टप्रतिपत्त्यर्थं धातोरवयवस्यैकाचो द्वित्वे सत्यभ्यासोत्तरखण्डे अज्द्वयासंभवादित्याहुः ॥ औजढत्, औननदित्यादौ परिनिष्ठिते अवर्णस्यालाभादाह—**प्रक्रियायामिति** ॥ चुक्षावयिषतीत्यादौ प्रक्रियायामवर्णो न लभ्यत इत्याह—**परिनिष्ठिते रूपे वेति** । वाशब्दोऽनास्थायां क्वचिदवर्णपरत्वं विवक्षितं न तु अमुकत्रैवेत्याग्रह इति भावः ॥ **सजातीयापेक्षत्वादिति** । पुयण्जीत्यभ्यासोत्तरखण्डे अवर्णपरा भवन्ति । अतस्तथैव ज्ञापकमित्यर्थः । अत एव भाष्यकृता-'पवर्गादेरन्यस्मिन्नपि हलि अवर्णपरे एव स्थानिवत्त्वामिति अचिकीर्तदित्यादौ नातिव्याप्तिः' इति सिद्धान्तितम् । ननु 'ओः पुयण्जि-३४२७' इति सूत्रे णिचि इति नास्ति, तथा च-'णिच्यच आदेशो न स्यात्' इत्यर्थे कथमिदं ज्ञापकं भवेत् । न च सामान्यतो ' द्वित्वे कार्ये अच आदेशो न स्यात्' इत्येव ज्ञाप्यतामिति वाच्यम्, दिद्यवनीयिषति निनवयिषतीत्यादावभ्यासे उकारश्रवणप्रसङ्गादिति चेत्, अत्राहुः-'येन नाव्यवधानम्' इत्येकेन प्रत्ययेन द्वित्वनिमित्तप्रत्ययस्य व्यवधानमाश्रीयते । तच्च णेरेव संभवतीति णिज्विषयकमेव ज्ञापकम्, दिद्यवनीयिषतीत्यत्र तु ल्युटा क्यचा च व्यवधानादन्येन व्यवधानमिति न तद्विषयकं ज्ञापनमिति । अस्मिन् मते आचारक्विबन्ताद्द्वनशब्दात्सनि दुद्वनिषतीति स्यात्, तच्च नेष्यते, णौ स्थानिवद्भावस्य ज्ञापकमिति वार्तिकोक्तेः । स्थानिवत्त्वेन प्रतिषेधेन वा णावेवाभ्यासे उकारेण भवितव्यम् ।

---

1 पल्पूल इति।ओष्ठ्यद्वयवान् ।'पल्पूलनं शोधनद्रव्यम्'इति तैत्तिरीयसंहिताभाष्यम् । शोधनद्रव्यं सावणेति प्रसिद्धम्॥

ननत् । ४०॥ ध्वन शब्दे । अदध्वनत् । ४१ ॥ कूट परितापे । परिदाहे इत्यन्ये । ४२॥ **सङ्केत ग्राम कुण गुण** चामन्त्रणे । चात्कूटोऽपि । कूटयति । सङ्केतयति । ग्रामयति । कुणयति । गुणयति ॥ पाठान्तरम्—केत श्रावणे निमन्त्रणे च । केतयति । निकेतयति । कुण गुण चामन्त्रणे । चकारात्केतने कूण सङ्कोचने इति । ४६ ॥ **स्तेन** चौर्ये । अतिस्तेनत् । ४७ ॥

**आ गर्वादात्मनेपदिनः** ॥ **पद** गतौ । पदयते । अपपदत । १ ॥ **गृह** ग्रहणे । गृहयते । २ ॥ **मृग** अन्वेषणे । मृगयते । मृग्यतीति कण्ड्वादिः । ३ ॥ **कुह** विस्मापने । ४ ॥ **शूर वीर** विक्रान्तौ । ६ ॥ **स्थूल** परिबृंहणे । स्थूलयते । अतुस्थूलत । ७ ॥ **अर्थ** उपयाच्ञायाम् । अर्थयते । आर्तथत । ८ ॥ **सत्र** सन्तानक्रियायाम् । असंसत्रत । अनेकाच्त्वान्न षोपदेशः । सिसत्रयिषते । ९ ॥ **गर्व** माने ॥ गर्वयते । अदन्तत्वसामर्थ्याण्णिज्विकल्पः । धातोरन्त उदात्तो लिट्याम् च फलम् । एवमग्रेऽपि । १० ॥ इत्यागर्वीयाः ॥

**सूत्र** वेष्टने । सूत्रयति । असुसूत्रत् । १ ॥ **मूत्र** प्रस्रवणे । मूत्रयति, मूत्रति । २ ॥ **रूक्ष** पारुष्ये । ३ ॥ **पार तीर** कर्मसमाप्तौ । अपपारत् । अतितीरत् । ५ ॥ **पुट** संसर्गे । पुटयति । ६ ॥ **धेक** दर्शन इत्येके । अदिधेकत् ।७॥

---

अतो वार्तिककारवचनादेव णौ स्थानिवदिति स्वीकर्तव्यम् । तथा च न पूर्वोदाहरणेषु दोष इति दिक् ॥ फलितमाह—**प्रकृते त्विति** ॥ **औननदिति** ; 'नोनयतिध्वनयति–५२३२' इति चङ्निषेधस्त्विह न, तत्र च्छन्दसीत्यनुवृत्त्या 'मा त्वायतो जरितुः काममूनयीः' इत्यादावेव तन्निषेधात् । यद्यपि परिनिष्ठित एवावर्णपरत्वमित्याशयेन उवर्णादेश एव स्थानिवत्स्यान्नान्य इति वदतां बोपदेवादीनां मते औनिनदित्येव भाव्यम् । अवर्णादेशस्य स्थानिवत्त्वे तु परिनिष्ठितरूपे अवर्णपरत्वालाभात्तथापि अचिकीर्तदित्यादौ स्थानिवत्त्वमाशङ्क्य उत्तरभागे अवर्णाभावादिति भाष्यकारोक्तपरिहारपर्यालोचनया उवर्णादेश एव स्थानिवदिति नियमो नास्तीत्यौननदिति रूपं निर्बाधमेव । किञ्च, उवर्णादेश एवेति नियमे 'लोपः पिबतेरीच्चाभ्यासस्य' इति सूत्रे अपीप्यदित्यत्र पिबतेर्णौ 'शाच्छासा–३४३८' इत्यादिना युकि चङि उपधालोपे तस्य स्थानिवत्त्वात्पायूशब्दस्य द्वित्वमिति वृत्तिग्रन्थो विरुध्येत। अपिच 'शुष्किका शुष्कजंघा च क्षामिमानौजढत्तथा' इति वैयाघ्रपद्यवार्तिकस्थः'औजढत्'इति प्रयोगोऽपि विरुध्येत । एतद्धि 'पूर्वत्रासिद्धम् २५' इत्यस्य प्रयोजनकथनवार्तिकम् । तद्यथा–शुष्किकेत्यत्र तु 'उदीचामातः–६४३' इतीत्त्वविकल्पो न,[1] 'शुषः कः ४०४२' इति कत्वस्यासिद्धत्वेन यकपूर्वत्वाभावात् । शुष्कजङ्घेत्यत्र कत्वस्यासिद्धत्वादेव 'न कोपधायाः १२०८' इति पुंवद्भावनिषेधो न । क्षामिमानित्यत्र तु 'मादुपधाया–२५६२' इति वत्वं न, 'क्षायो मः ४०४४' इति मत्वस्यासिद्धत्वात् । वहेः क्तान्ताण्णिचि चङि औजढदित्यत्र ढत्वस्यासिद्धत्वाण्णौ कृतस्य टिलोपस्य स्थानिवत्त्वाच्च ऊढशब्दस्य द्वित्वं 'कुहोश्चुः ३००५' 'अभ्यासे चर्च २९३६' सन्वदित्त्वं तु अनग्लोपीति प्रतिषेधान्न भवति । एवं काशिकायामपि 'पूर्वत्रासिद्धम् २५' इति सूत्रे औजढदित्युदाहृत्य ऊढिमाख्यदौजिढादित्येतत्तु क्तिन्नन्तस्य ऊढिशब्दस्य भवतीत्युक्तं तदपि विरुध्येत । उवर्णादेश एव स्थानिवदिति नियमे णौ कृतस्य टिलोपस्यात्र स्थानिवत्त्वाभावेन ऊढशब्दस्य ऊढिशब्दस्य वा द्वित्वासंभवात् । एवं चाङ्कधातोर्णिच्यलोपे चङि स्थानिवत्त्वात्कशब्दस्य द्वित्वे आञ्चकदिति रूपमेव सर्वसंमतं न त्वाञ्चिकदिति बोपदेवोक्तमिति बोध्यम् । नन्वचिकीर्तदित्यादौ स्थानिवत्त्वमाशङ्क्योत्तरभागे अवर्णाभावादिति वदन्भाष्यकारो न बोपदेवग्रन्थस्य प्रतिकूलः । उत्तरभागे परिनिष्ठितरूपे अवर्णपरत्वमुवर्णादेशस्यैव संभवति नान्यस्येत्याशयेनैव भाष्यकारेण तथोक्तमिति वक्तुं शक्यत्वादिति चेत्, मैवम्, तथा हि सति यत्र 'ओः पुयण्जि–३४२७' इत्यस्याप्राप्तिस्तत्राप्युवर्णादेश एव स्थानिवज्ज्ञापकस्य सजातीयापेक्षत्वादित्येवमेव भाष्यकारो वदेत् । ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगादिति दिक् ॥ **संकेत** । चत्वारोऽत्र धातवः ॥ **पाठान्तरमिति** । संकोचन इत्येतत्पर्यन्तम् ॥ अनेकाच्त्वेनाषोपदेशत्वात्षत्वं नेति ध्वनयति—**अतिस्तेनदिति** ॥ **गृहयते इति** । अल्लोपस्य स्थानिवत्त्वान्न गुणः । लुङि अजगृहत् । अग्लोपान्न सन्वद्भावः ॥ **मृगयते इति** । मार्गयति । मार्गतीति तु 'मार्ग अन्वेषणे' इत्याधृषीयस्य ॥ **अर्थ** । **अर्थयत इति** । 'वृद्धेर्लोपो बलीयान्' इत्यल्लोपान्न वृद्धिः । बोपदेवस्तु वृद्धौ कृतायां पुकि चार्थापयते इति रूपमाह, तद्भ्रमसात् । न च 'अर्थवेदसत्यानाम्–' इत्यापुक् स्यादेवेति वाच्यम्, तत्र प्रातिपदिकस्य ग्रहणात् ॥ **अदन्तत्वसामर्थ्यादिति** । कथादिषूपधावृद्धिदीर्घसन्वद्भावविरहेण सारभामप्रभृतीनामुपधाह्रस्वस्य गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्तनेनादन्तत्वं सार्थकम् । इह त्वदन्तत्वे प्रागुक्तफलाभावाण्णिचः पाक्षिकत्वं ज्ञापयतीति भावः । ननु अदन्तत्वसार्थकत्वाय वाऽल्लोप इति प्राचोक्तमेवाभ्युपगम्यतामिति

---

१ ननु परिहारबलादेव 'उवर्णादेशः' इत्यर्थलाभः । तथाहि–ज्ञापकस्य सजातीयापेक्षत्वेन पुयण्जीनां परिनिष्ठितरूपे एवोवर्णादेशाऽवर्णपरत्वस्य संभवेन तत्साध्यस्तदर्थलाभ इत्यरुचेराह–**किंचेति** ॥ भाष्यस्थस्य 'अवर्ण–' इत्यस्य तथा लाक्षणिकतया व्याख्याने न मानमित्यपि बोध्यम् ॥ २ नन्वभ्यासात्पूर्वं नैव लोपस्य प्रवृत्तिः 'संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' । 'संनियोगशिष्टानामन्यतराप्राप्तौ उभयोरप्यप्राप्तिः' इति न्यायादत आह—**अपिचेति** ॥

**कत्र** शैथिल्ये। कत्रयति, कत्रति।८॥ **कर्तेत्यप्येके**। कर्तयति कर्तति।९॥ ( ३४१६ ) ॥ **प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च** ॥ प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्ठे यथा प्रातिपदिकस्य पुंवद्भाव—रभाव—टिलोप-विन्मतुल्लोप-यणादिलोप-प्र-स्थ-स्फाद्यादेश-भसंज्ञास्तद्वण्णावपि स्युः। पटुमाचष्टे पटयति। परत्वाद्वृद्धौ सत्यां टिलोपः। अपीपटत्। णौ चङीत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम्। अपपटत् ॥ ( ३४१७ ) ॥ **तत्करोति तदाचष्टे** ॥ पूर्वस्य प्रपञ्चः। करोत्याचष्ट इति धात्वर्थमात्रं णिजर्थः। लडर्थस्त्वविवक्षितः ॥( ३४१८)

---

चेत्। अत्राहुः-चिन्तयतेर[1]दित्त्वं सामान्यापेक्षं ज्ञापकमिति मते इह अदन्तत्वस्य फलं स्पष्टमेव। विशेषापेक्षं ज्ञापकमिति मते तु तत्रतत्र आकार[2] इकार[3] ईकार[4] उकार[5] ऊकारश्चेत्यनुबन्धा यथा ज्ञापकतया स्वीकृताः तथा अदन्तताऽपि णिज्विकल्पमेव ज्ञापयतु, क्लृप्तेनैव णिज्विकल्पेन कृतार्थत्वे अपूर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात्। तथा हि सति मतद्वयेऽप्येकरूपमेव फलं लभ्यत इति ॥ **असुसूत्रदिति**। अनेकाच्त्वान्न षत्वम् ॥ ( ३४१६ ) **प्रातिपदिकादिति**। यदि सुबन्ताण्णिच् स्यात्तदा स्रजयतीत्यादौ कुत्वं स्यादिति भाव इति केचित्। तन्न, इष्ठवद्भावेन भत्वे कुत्वस्याप्रसक्तेः। अत्र बहुलं णिच् स्यात्। स च णिच् इष्ठवद्भवतीति अन्वयात्पक्षे वाक्यमपि भवतीत्याह—**पटुमाचष्ट इति**। धात्वर्थ इत्यनेन करणाख्यानादिर्गृह्यत इति भावः। तेन बहून्याचष्टे भावयतीत्यत्र 'इष्ठस्य यिट् च २७३२' इति णिचोऽपि यिट् स्यात्। अत्राहुः-'टेः २४१७' इति सूत्रे 'णाविष्ठवत्प्रातिपदिकस्य' इति वार्तिके प्रातिपदिकग्रहणं प्रत्ययकार्याणामातिदेशो मा भूदित्येवमर्थम्। तेनात्र णिचो यिण्न भवति तदभावे भूभावेनापि न भवितव्यम्, संनियोगशिष्टत्वात्। किन्तु बह्वयतीत्येव भवितव्यमिति मतान्तरम्। एतच्च तत्रैव सूत्रे कैयटे स्पष्टमिति। अन्ये त्वाहुः-इष्ठवादिति हि सप्तम्यन्ताद्वतिर्णावित्युपमेये सप्तमीदर्शनात्तेन इष्ठनि परे पूर्वस्य यत्कार्यं तदतिदिश्यते न त्विष्ठनोऽपीति ॥ **पुंवद्भावेति**। अतिशयेन पट्वी पटिष्ठेत्यत्र 'भस्याढे तद्धिते १२०४' इति पुंवद्भावः। क्रशिष्ठः द्रढिष्ठ इत्यत्र 'र ऋतो हलादेः--२४१६' इति रभावः। साधिष्ठ इत्यादौ टिलोपः। अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र 'विन्मतोर्लुक् २७३४' इति विनो लुक्। अतिशयेन गोमान् गविष्ठ इत्यादौ मतुपो लुक्। स्थविष्ठ इत्यादौ 'स्थूलदूर-२७२९' इत्यादिना यणादिलोपः। प्रेष्ठ इत्यादौ 'प्रियस्थिर-२७३०' इत्यादिना प्रस्थाद्यादेशाः ॥ **तद्वण्णावपीति**। पुंवद्भावस्योदाहरणमेणीमाचष्ट एतयति। टिलोपेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्भावग्रहणं दरदमाचष्टे दारदयतीत्यादिसिध्यर्थमिति बोध्यम्। द्रढयतीत्यादौ रभावः। स्रग्विणमाचष्टे स्रजयतीत्यत्र विनो लुक्। गोमन्तमाचष्टे गवयतीत्यत्र मतुपो लुक्। 'अङ्गवृत्त-' परिभाषया वृद्धिरत्र न भवति। प्रियमाचष्टे प्रापयति, स्थिरमाचष्टे स्थापयतीत्यादौ तु वृद्धिर्भवत्येव। 'द्वयोः[6]' इति निर्देशेन तस्याः परिभाषाया अनित्यत्वज्ञापनादिति दिक् ॥ **परत्वाद्वृद्धाविति**। लोपः शब्दान्तरप्राप्त्याऽनित्यः, वृद्धिरप्यनित्या। उभयोरनित्ययोः परत्वाद्वृद्धिः। तस्यां कृतायामौकारस्यावादेशात्प्रागेव परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाच्च[7] लोप इत्यर्थः। एवं चानग्लोपित्वाद्दीर्घसन्वद्भावौ स्त इत्याह—**अपीपटदिति**। इह टिलोपस्य स्थानिवद्भावेन व्यवधानाद्दीर्घसन्वद्भावौ नेति न भ्रमितव्यम्। स्थानिवत्त्वेऽप्यङ्गस्य णिच्परत्वानपायात्। चङ्परे णौ यल्लघ्विति पक्षेऽपि अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति दीर्घसन्वद्भावौ स्त एव। **केचित्तु**-चङ्परे णौ यल्लघ्विति पक्षे पटुशब्दोकारस्य वृद्धौ कृतायां णिच्परं लघु दुर्लभमिति सन्वद्भावाप्राप्त्याऽपपटदित्येव रूपम्। प्रथमं टिलोपः पश्चाद् द्विर्वचनमिति मत्वा अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति मनोरमोक्तं यत्, तन्नादर्तव्यम्। णिच्यच आदेशो न स्याद् द्वित्वे कर्तव्ये इति निषेधपक्षस्य मुख्यतया प्रागुक्तत्वेन प्रथमं टिलोपस्य दुरुपपादत्वादित्याहुः। तन्मन्दम्, अपीपटदित्यत्र द्वितीयाच्पर्यन्तस्य प्रथमावयवस्य द्वित्वमिति हि निर्विवादम्। तथा च-द्वितीयस्याचो द्वित्वाकरणात्प्रथमं टिलोपः स्यादेवेति ॥ **वृद्धेर्लोप इति**। कृताकृतप्राप्तिमात्रेण लोपो नित्यः। वृद्धिस्त्वनित्या, टिलोपे सति स्थानिनः पूर्वत्र कर्तव्यायां लोपस्य स्थानिवत्त्वात्, स्वविधौ स्वस्य स्थानिवत्त्वाभावाच्च। अस्मिंस्तु पक्षे 'मुण्डमिश्र-३५६९' इति सूत्रे हलिकल्योरदन्तत्वनिपातनस्य वैयर्थ्यमेव, वृद्धेः प्राक् टिलोपे सति अग्लोपित्वसंभवात्। तथा च-अदन्तत्वनिपातनसामर्थ्याट्टिलोपात्पूर्वं वृद्धिरेवेत्यनग्लोपित्वादपीपटदित्येव रूपं साध्विति प्रतीयते। भाष्यद्वयप्रामाण्याद्रूपद्वयमपि साध्विति बहवः ॥ ( ३४१७ ) **लडर्थस्त्विति**। करोत्याचष्टे इति हि कर्तरि वर्तमाने लडेकवचनम्। लडर्थाविवक्षायां तु ण्यन्ताद्भावकर्मणोः भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययो भवत्येवेति भावः। यद्यप्येकत्वादिसंख्या लडर्थो न भवति तथापि-लडा-

---

१ **अदन्तत्वस्येति**। 'गर्ववान् बभूव' इत्यर्थे 'गर्वाचकार' इत्यामूरूपमिति शेषः ॥ २ **आकार इति**। 'पक्ष परिग्रहे' इत्यस्य स्थाने 'पक्षा परिग्रहे' इति पठतां मत इदम् ॥ ३ **इकार इति**। इकारश्चिन्त्यादेः ॥ ४ **ईकार इति**। वृजी इत्यादेः ॥ ५ **उकारो** वञ्चु इत्यस्य ॥ ६ **द्वयोरिति**। एतत्परिभाषासत्त्वे त्यदाद्यत्वोत्तरम् 'ओसि च' इत्येत्त्वं न स्यादिति निर्देशासंगतिः स्यादिति भावः ॥ ७ **व्यवधानादिति**। एवं च चङ्परणिपरलघुपरत्वासंभव इति भावः ॥

(ग) तेनातिक्रामति ॥ अश्वेनातिक्रामति-अश्वयति । हस्तिनाऽतिक्रामति-हस्तयति ॥ (३४१९) (ग) धातुरूपं च॥ णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते ॥ चशब्दोऽनुक्तसमुच्चयार्थः । तथा च वार्तिकम् । ( ३४२० ) (वा) आख्यानात्कृत-स्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्॥ इति। कंसवधमाचष्टे कंसं घातयति। इह कंसं हन् इ इति स्थिते-॥ ( ३४२१ ) (सू) हनस्तोऽचिण्णलोः । ७ । ३ । ३२ । हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति । नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता । ततश्चाड्द्वित्वयोर्दोषः । किञ्च, कुत्वतत्वे न स्याताम् । ( ३४२२-१ ) (प) धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । सत्यम्—प्रकृतिव-च्चेति चकारो भिन्नक्रमः । कारकं च, चात्कार्यम् । हेतुमण्णिचः प्रकृतेर्हन्त्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशं च कार्यं कुत्वतत्वादि तदिहापीत्यर्थः । कंसमजीघतत् ॥ (३४२२-२)(ग) कर्तृकरणाद्धात्वर्थे ॥ कर्तुर्व्यापारार्थं यत्करणं न तु चक्षुरादिमात्रमित्यर्थः । असिना हन्ति-असयति ॥

---

देशातिङर्थोऽपीह लङर्थत्वेन गृहीत इति ज्ञेयम् ॥ ( ३४१८ ) **तेनातिक्रामति** । तृतीयाप्रकृतिभूतात्प्रातिपदिकाण्णिच् । तृतीयान्ताण्णिजित्यन्ये । एवं तत्करोतीत्यत्रापि द्वितीयाप्रकृतिभूताद् द्वितीयान्ताद्वा णिच् । न च सुबन्ताण्णिचि वाचं करोत्याचष्टे वाचाऽतिक्रामति वा वाचयतीत्यत्र कुत्वं स्यादिति शङ्क्यम्, इष्टवद्भावेन भसंज्ञया पदसंज्ञाया बाधात् । यशस्विनमाचष्टे यशसयति, स्रग्विणमाचष्टे स्रजयतीत्यादौ विनो लुकि प्राप्तस्य पदकार्यस्य बाधार्थं भसंज्ञातिदेशस्यावश्यकत्वात् 'तत्करोति-३४१७' इत्यादिर्निर्देशानुगुणत्वाच्च सुबन्ताण्णिजिति पक्ष एव ज्यायानित्याहुः ॥ ( ३४१९ ) **णिच्प्रकृतिरिति** । वधशब्दो णिच्प्रकृतिरिदानीं तु कृल्लुक्यवशिष्टभाग एव प्रकृतिरित्यर्थः ॥ ( ३४२० ) **आख्यानात्कृत इति**[१] यद्यपि वधशब्दः कृदन्तः स आख्यानं न भवति, तथापि-आख्यानवाची कृदन्तश्च कंसवधशब्दो भवत्येव कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् ॥ **कृल्लुगिति** । 'हनश्च वधः ५०४८' इति विहितस्य अप्प्रत्ययस्य लुक् ॥ **प्रकृतिप्रत्यापत्तिरिति** । विकारपरित्यागेन स्वरूपेणावस्थितिरित्यर्थः । तदेतत्सकलमभिप्रेत्याह—**कंसं हन् इ इति स्थिते इति** । **कंसविशिष्टस्येति** । तस्मादेव णिचो विधानादिति भावः॥ **दोष इति** । कंसशब्दात्पूर्वमडागमः कंस इत्यस्य द्विर्वचनं च स्यादित्यर्थः॥ **किञ्चेति** । एवं च कंसमजीघतदितीष्टं न सिध्येदिति भावः ॥(३४२२-१) **तत्प्रत्यये** धातोर्विहितप्रत्यये । तेन वार्त्रघ्नमित्यत्र 'हनस्तः-३४२१' इति तत्वं न भवतीति ज्ञेयम् ॥ उक्तदोषान्परिहरति—**सत्यमिति** । प्रकृतिवच्चेति चकारोऽनुक्तसंग्रहार्थ इत्याह—**चात्कार्यमिति** । यद्यपि अन्यतरातिदेशेनाप्यड्द्विर्वचने सिध्यतः, तथापि धातावनन्तर्भूतद्वितीयान्तादिलाभाय कारकातिदेशः । कार्यातिदेशस्तु कुत्वतत्वादिलाभायेति विवेकः । इह भारतभागवतादिप्रसिद्धे कंसवधाद्युपाख्याने एव णिजिति नाग्रहः, किन्तूपाख्यानमात्रे । तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिध्यति । इह कृत्प्रकृतौ राज्ञः कर्तृत्वेऽपि गमेर्हेतुमण्णौ 'गतिबुद्धि-७७९' इत्यनेन तस्य कर्मत्वमिति द्वितीयान्तमेव रूपातिदेशबलात्स्वीक्रियते । देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीत्यत्र तु देवदत्तस्य कर्तृत्वानपायात्तृतीयैव भवति । रुक्मिणीहरणमाचष्टे इत्यादौ 'हृक्रोरन्यतरस्याम् ७८९' इति विकल्पात् रुक्मिणीं रुक्मिण्या वा हारयतीति प्रयोगः ॥ (३४२२-२ ) **कर्तृकरणादिति** । कर्तृग्रहणाभावे चक्षुषा पश्यति चक्षयतीत्यादावेव स्यान्न तु करिभिरवबध्नाति अवकरयतीत्यादौ । लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वात्, अतस्तत्संग्रहार्थं कर्तृग्रहणमिति मनोरमायां स्थितम् । नव्यास्तु—साधकतमत्वेन विवक्षितं

---

१ **आख्यानादिति** ॥ आख्यानवाचकात् कृत्प्रत्ययान्ताद् द्वितीयान्तात् णिच् स्याद् 'आचष्टे' इत्यभिधेये, कृत्प्रत्ययस्य लुक्, कृत्प्रत्ययप्रकृतिभूतधातोर्यादृग् रूपं धातुपाठे पठितं तादृग्रूपप्रत्यापत्तिः, अर्थात् 'आदेशादिनिवृत्तिः' कारकं प्रकृतितुल्यम्, चकारेण कार्यं च प्रकृतिवद् इति वार्तिकार्थः । चो भिन्नक्रमे कारकं च इत्येवं वेदितव्यः ॥ एवं च 'धातुरूपं च' इत्यत्र चकारोऽनुक्तसमुच्चयार्थ इत्यत्र प्रमाणं दर्शितम् ॥ २ **धातोरिति** । '**धातोः कार्यमुच्यमानं तत्प्रत्यये भवति**' इत्येवमेव पाठः साधीयान् '**स्वरूपग्रहणे**' इति प्राचीनाङ्गीकृतस्य व्यावर्तकत्वे प्रसङ्गाभिरित्यादौ '**अनुदात्तस्य चर्दुपधस्य-**' इत्यमापत्तिर्दुर्वारा स्यात् ॥ भ्रौणहत्ये तत्त्वनिपातनमेवास्यां परिभाषायां ज्ञापकम् ॥ ३ **तदिहापीति** । **तत्** कारकं कार्यं चेत्यर्थः । **इहापि** णिच्यपि-इत्यर्थः ॥ ४ **आवश्यकत्वादिति** । द्वितीयाप्रकृतिभूतात् णिच् इति भवदभिमतपक्षेऽपि इत्यादेः ॥ ५ **हृक्रोरिति** ॥ राजागमनामिति कृत्प्रयोगे गम्धात्वर्थकर्तृत्वेन राज्ञो णिचि कर्मत्वं भवतीति निरवद्यम् । न तथा रुक्मिणीहरणमिति कृत्प्रयोगे णिचः प्राक् रुक्मिण्या हृधात्वर्थकर्तृत्वमिति '**हृक्रोः-**' इत्यस्याप्राप्त्या रुक्मिण्या हृधात्वर्थं प्रति कर्मत्वस्यैव सत्त्वेन 'कंसं घातयति' इतिवत् 'रुक्मिणीं हारयति' इत्येवमेव प्रयोगः । न तु 'रुक्मिण्या हारयति' इत्यपि ॥ 'राजागमनमाचष्टे' इत्यतो राजकर्तृको गमनकर्मकाख्यानवत् 'रुक्मिणीहरणमाचष्टे' इत्यतो रुक्मिणीकर्तृकाहरणकर्मकाख्यानस्याप्रतीत्या श्रीकृष्णकर्तृकरुक्मिणीकर्मकहरणकर्माख्यानस्यैव सहृदयानां प्रतीत्या चिन्त्यतैवात्रत्याऽपि तत्त्वबोधिनीति विभावयन्तु सुधियः ॥

बष्क दर्शने । १ ॥ चित्र चित्रीकरणे । आलेख्यकरण इत्यर्थः । कदाचिद्दर्शने । चित्रेत्ययमद्भुतदर्शने णिचं लभते। चित्रयति । २ ॥ अंस समाघाते । ३ ॥ वट विभाजने । ४ ॥ लज प्रकाशने । ५ ॥ वटि लजि इत्येके । वण्टयति । लञ्जयति । अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये । वण्टापयति । लञ्जापयति । ७ ॥ शाकटायनस्तु कथादीनां सर्वेषां पुकमाह । तन्मते कथापयति । गणापयतीत्यादि ॥ मिश्र सम्पर्के । ८ ॥ संग्राम युद्धे । अयमनुदात्तेत् अकारप्रश्लेषात् । अससंग्रामत । ९ ॥ स्तोम श्लाघायाम् । अतुस्तोमत् । १० ॥ छिद्र कर्णभेदने । करणभेदन इत्यन्ये । ११ ॥ कर्णेति धात्वन्तरमित्यन्ये । १२ ॥ अन्ध दृष्ट्युपघाते । उपसंहार इत्यन्ये । आन्दधत् । १३ ॥ दण्ड दण्डनिपातने । १४ ॥ अङ्क पदे लक्षणे च । आञ्चकत् । १५ ॥ अङ्ग च । आञ्जगत् । १६ ॥ सुख दुःख तत्क्रियायाम् । १८ ॥ रस आस्वादनस्नेहनयोः । १९ ॥ व्यय वित्तसमुत्सर्गे । अवव्ययत् । २० ॥ रूप रूपक्रियायाम् । रूपस्य दर्शनं करणं वा रूपक्रिया । २१ ॥ छेद द्वैधीकरणे । अचिच्छेदत् । २२ ॥ छद अपवारण इत्येके । छदयति । । २३ ॥ लाभ प्रेरणे । २४ ॥ व्रण गात्रविचूर्णने । २५ ॥ वर्ण वर्णक्रियाविस्तारगुणवचनेषु । वर्णक्रिया वर्णकरणम् । सुवर्णं वर्णयति । कथां वर्णयति । विस्तृणातीत्यर्थः । हरिं वर्णयति । स्तौतीत्यर्थः । २६ ॥

(३४२३-१) ॥ बहुलमेतन्निदर्शनम् । अदन्तधातुनिदर्शनमित्यर्थः । बाहुलकादन्येऽपि बोध्याः । तद्यथा । पर्ण हरितभावे । अपपर्णत् । १ ॥ विष्क दर्शने । २ ॥ क्षप प्रेरणे । ३॥ वस निवासे । ४ ॥ तुत्थ आवरणे । ५ ॥ एवमान्दोलयति । प्रेङ्खोलयति । विडम्बयति । अवधीरयतीत्यादि ॥ अन्ये तु दशगणीपाठो बहुलमित्याहुः । तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः । अपरे तु नवगणीपाठो बहुलमित्याहुः । तेनापठितेभ्योऽपि क्वचित्स्वार्थे णिच् । रामो राज्यमचीकरदिति यथेत्याहुः ॥ चुरादिभ्य एव बहुलं णिजित्यर्थ इत्यन्ये ॥ सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः ॥ (३४२३-२) ॥ णिङङ्गान्निरसने ॥ अङ्गवाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात् । हस्तौ निरस्यति हस्तयते । पादयते॥(३४२३-३) ॥ श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च ॥ श्वेताश्वादीनां चतुर्णामश्वादयो लुप्यन्ते णिङ् च धात्वर्थे । श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते । अश्वतरमाचष्टेऽश्वयते । गालोडितं वाचां विमर्शः, तत्करोति गालोडयते । आह्वरयते । केचित्तु-णिचमेवानुवर्तयन्ति तन्मते परस्मैपदमपि ॥ ( ३४२४ ) ॥ पुच्छादिषु धात्वर्थ इत्येव सिद्धम् ॥ णिजन्तादेव बहुलवचनादात्मनेपदमस्तु । माऽस्तु पुच्छभाण्डेति णिङ्विधिः । सिद्धशब्दो ग्रन्थान्ते मङ्गलार्थः ॥ इति चुरादयः ॥

## अथ ण्यन्तप्रक्रिया ।

( ३४२५ ) ॥ तत्प्रयोजको हेतुश्च । १ । ४ । ५५ । कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ॥

---

यत् तत्करणशब्देन गृह्यते न तु लोकप्रसिद्धकरणमेव । अन्यथा 'कर्तृकरणयोस्तृतीया ८१४' इत्यादावपि लोकप्रसिद्धकरणग्रहणप्रसक्त्या बाणेन हत इत्यादि रूपं न सिध्येत् । तथा च कर्तृग्रहणं विनाप्यवकरयतीति रूपसिद्धौ न किंचिद्बाधकमिति व्याख्याय कर्तृकरणादित्यत्र समाहारद्वन्द्वं मत्वा देवदत्तेन पाचयति देवदत्तयतीत्युदाजह्रुः ॥ कदाचिद्दर्शने । 'चित्रकरणकदाचिद्दर्शनयोः' इति सुवचम् ॥ अदन्तेषु पाठबलादिति । अदन्तस्य फलान्तर्भावादतो लोपं बाधित्वा वृद्धिरित्यर्थः ॥ संग्राम- । संग्रामेति युद्धवाचि प्रातिपदिकं करोत्यर्थे णिचं लभते ॥ अनुदात्तेदिति । एतच्च 'भृशादिभ्यो भुवि-' इति सूत्रे कैयटेनोक्तम् ॥ अकारप्रश्लेषादिति । तेन प्रश्लिष्टस्येत्संज्ञा प्रकृत्यकारस्य तु इष्ठवदिति टिलोपः । तथा च-अग्लोपादससंग्रामतेत्यत्र नोपधाह्रस्वः ॥ सुख दुःख- । तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ परामृश्येते । 'प्रातिपदिकाद्धात्वर्थे-३४१६' इत्येव सिद्धे अनयोः पाठः सोपसर्गात्प्रत्ययार्थ इत्येके । सुखदुःखाभ्यां तत्क्रियायामेव णिच् स्यान्न त्वाचष्ट इत्यस्मिन्नर्थे इत्येतदर्थः पाठः इत्यन्ये ॥ (३४२४) पुच्छादिष्विति । भीमसेनस्य वाक्यम् ॥ ग्रन्थान्त इति । भू सत्तायामित्यादिधातुपाठस्यान्त इत्यर्थः ॥ इति चुरादयः ॥

( ३४२५ ) तत्प्रयोजको हेतुश्च । तच्छब्देन 'स्वतन्त्रः कर्ता ८१२' इति पूर्वसूत्रोपात्तः कर्ता परामृश्यते । तस्य कर्तुः प्रयोजकः प्रेरकः, तद्व्यापारानुकूलव्यापारवानित्यर्थः ॥ चकार एकसंज्ञाधिकारबाधनार्थस्तदाह-हेतुसंज्ञः कर्तृसंज्ञश्चेति । हेतुसंज्ञायाः प्रयोजनं-'भीस्म्योर्हेतुभये ३४४९' 'भियो हेतुभये षुक् ३४५०' इत्यादौ प्रयोजकस्य हेतुत्वेन व्यवहारः । कर्तृसंज्ञायास्तु 'लः कर्मणि च भावे च-२९०६' इति सूत्रेण प्रयोजके वाच्ये लकारादयः ॥

---

१ मङ्गलार्थ इति । "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि-" इति भाष्यमूलकस्य 'ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयम्' इति शिष्टाचारस्यानुरोधादिति भावः ॥ २ प्रातिपदिकमिति । 'प्रातिपदिकाद्धात्वर्थे-' इति गणसूत्रात् 'प्रातिपदिकात्' इत्यधिकाराल्लब्धमिदमिति भावः ॥ ३ कैयटेनेति । " अवश्यं संग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या 'असंग्रामयत शूरः'इत्येवमर्थम् । तन्नियमार्थम्-संग्रामयतेरेव सोपसर्गात्, नान्यस्मात्सोपसर्गात्" इति भाष्यमुपादाय तेनोक्तम् ॥ ४ ननु ग्रन्थसमाप्तेरभावाद् ' ग्रन्थान्ते ' इत्यनुचितमत आह--भ्वित्यादिधातुपाठस्येति ॥ एवं च नोक्तशङ्कावसर इति भावः ॥

(३४२६) (सू) हेतुमति च।३।१।२६। प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति भावयति । णिचश्चेति कर्तृगे फले आत्मनेपदम् । भावयते । भावयाम्बभूव ॥ ( ३४२७ ) (सू) ओः पुयण्ज्यपरे । ७ । ४ । ८० । सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्त्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत् । मूङ् । अमीमवत् । अयीयवत् । अरीरवत् । अलीलवत् । अजीजवत् ॥ ( ३४२८ ) (सू) स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा । ७ । ४ । ८१ । एषामभ्यासोकारस्येत्वं वा स्यात्सन्यवर्णपरे धात्वक्षरे परे । असिस्रवत्, असुस्रवत् । नाग्लोपीति ह्रस्वनिषेधः । अशशासत् । अडुढौकत् । अचीचकासत् । मतान्तरे अचचकासत् । अग्लोपीति सुब्धातुप्रकरणे उदाहरिष्यते । ण्यन्ताण्णिच् । पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः । चोरयति । णौ चङीति ह्रस्वः । दीर्घो लघोः । न चाग्लोपित्वाद् द्वयोरप्यसंभवः, ण्याकृतिनिर्देशात् । अचूचुरत् ॥

---

(३४२६) हेतुमति च । स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन हेतुर्यत्रास्ति स हेतुमान्व्यापारः । तस्मिन्वाच्ये णिजित्याहुः॥ **प्रयोजकव्यापार इति।** प्रयोजकश्चेतनाचेतनसाधारण्येन विवक्षितः,स च क्वचित्सिद्धः क्वचित्फलरूपः । देवदत्तः पाचयति, गमयतीत्यादौ सिद्धः । भिक्षा वासयति, संग्रामो वासयतीत्यादौ तु फलरूपः ॥ **प्रेषणादाविति।** भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणा । आज्ञेत्यर्थः । आदिशब्देनाध्येषणानुमत्यादीनामुपादानम् । समानस्याधिकस्य वा ऋत्विगाचार्यादेः प्रवर्तना अध्येषणम् । प्रार्थनेत्यर्थः । अनुमतिस्तु राजादेः संमतिः, तां विना यागादिक्रिया न निष्पद्यत इत्यनुमतिमात्रेण राजादिः प्रयोजकः । अनुमत्यादीत्यादिशब्देनात्रोपदेशानुग्रहयोरुपादानम् । 'ज्वरितः कषायं पिबेत्' इत्युपदेशमात्रेण वैद्यादिः प्रयोजकः । यस्तु केनचिद्धन्तुमिष्टं पलायमानं निरुणद्धि, सोऽपि हन्तुरनुग्राहकत्वेन प्रयोजकः । सर्वेऽप्येते विशेषाः कथं णिच्प्रत्ययगम्या इति चेत् । अत्राहुः–सर्वानुगतं प्रवर्तनासामान्यं णिचोऽर्थः, विशेषास्त्वर्थप्रकरणादिगम्या इति । नन्वेवं णिचो लोडादीनां च पर्यायता स्यात्ततश्च इदानीं पृच्छतु भवानिति वक्तव्ये प्रच्छयतीति णिजपि प्रयुज्येतेति चेत् । मैवम्, कर्तुः प्रयोजको हि हेतुः प्रैषविषयो यः संबोध्यो देवदत्तादिः स तु नाद्यापि प्रश्नकर्तृत्वेनावधारितः । तथा च–प्रयोज्यप्रवृत्त्युपहिता या प्रयोजकनिष्ठा प्रवृत्तिः सा णिजर्थः, तदनुपहिता प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः । उक्तं च–'द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते । सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः ॥' इति । अस्यार्थः–कर्तृत्वेनानवधारितस्य देवदत्तादेस्तु प्रैषे 'प्रच्छ ज्ञीप्सायाम्' इत्यादेर्लोड् भवति । प्रयोज्यप्रवृत्त्युपहितप्रवृत्त्याश्रयस्य प्रयुक्तिस्तु यदा सा णिचो विषय इति । किञ्च, प्रयोक्तृनिष्ठा प्रयुक्तिर्लोडर्थः प्रयोक्तृप्रयोक्तृकर्तृका तु णिजर्थः । पच देवदत्तेत्यत्र हि वक्तैव प्रेरकः । पाचयतीत्यादौ वक्तृभिन्नः, पाचयामीत्यादौ तु वक्तेति दिक् ॥ **( ३४२७ ) ओः पुयण्जि—।** पुयण्जीति समाहारद्वन्द्वात्सप्तम्येकवचनम् ॥ '**अपरे**' इति बहुव्रीहिः । 'अत्र लोपोऽभ्यासस्य ३४७९' इत्यतः अभ्यासस्येत्यनुवर्तते । 'भृञामित् ३३१४' इत्यत इद्ग्रहणं 'सन्यतः ३०९३' इत्यतः सनीति च । अङ्गस्येति तु अधिक्रियत एव तदेतदभिप्रेत्याह—**सनि परे यदङ्गमित्यादि** । अपरे किम्, बुभूषति । पवर्गयण्जीति किम्, ऊर्णुनविषति ॥ **अबीभवदित्यादि** । भू सत्तायाम् । पूङ् पवने । मूङ् बन्धने । यु मिश्रणादौ । रु शब्दे । लूञ् छेदने । जु गतौ, सौत्रोऽयं धातुः 'जुचंक्रम्य–४१५१' इत्यत्र निर्दिष्टः । ननु भू भू इति द्वित्वोत्तरं वृद्ध्यावादेशौ भवतस्ततः कृतस्य 'णौ चङि–३०९०' इति ह्रस्वस्य स्थानिवद्भावेन लघुपरत्वाभावात्सन्वद्भावाप्रवृत्त्याऽबीभवदित्यादावभ्यासोवर्णस्येत्त्वं दुर्लभमिति चेत् । अत्राहुः–आरम्भसामर्थ्यादेव न स्थानिवत्त्वमिति ॥ **( ३४२८ ) स्रवतिशृणोति–।** अपर इत्यनुवर्तते न तु पुयण्जीति, पवर्गजकारयोरसंभवाद्यणः संभवेऽप्यव्यभिचारात्तदाह—**अवर्णपरे धात्वक्षरे इति** । अक्षरशब्दोऽत्र वर्णपरः । अवर्णपरे किम्, सुस्रूषति । शृणोत्यादेरुदाहरणं तु–अशिश्रवत्, अशुश्रवत् ।

---

१ अन्यव्यापारानधीनव्यापारवान् प्रयोजकः । अन्यव्यापाराधीनव्यापारवांस्तु प्रयोज्यः । तत्र प्रयोज्यप्रवर्तकप्रयोजकव्यापारस्य विवक्षायां णिच्प्रत्ययः । तदाह—**प्रयोजकव्यापार इति** ॥ २ **धात्वक्षर इति** । धात्वक्षरं च पूर्वसूत्रोपात्तत्वात् संभवाच्च यणेव ग्राह्यम् । तथा च 'येननाव्यवधानन्यायेनैकवर्णव्यवधानमपि सोढव्यमेवेति भावः ॥ ३ **द्वयोरिति** ॥ ह्रस्वदीर्घयोरित्यर्थः । तत्र ह्रस्वस्यासंभवस्तु 'नाग्लोपि–' इति ह्रस्वनिषेधात् । दीर्घस्य तु अग्लोपस्य जातत्वेन सन्वद्भावाप्राप्त्याऽसंभवः । हेतुमण्णौ स्वार्थणिज्रूपस्याको लुप्तत्वेनाग्लोपित्वादिति भावः ॥ ४ **ण्याकृतिनिर्देशादिति** । इदं चिन्त्यम् '**वर्णग्रहणे जातिग्रहणम्**' इति परिभाषायां '**निपात एकाज्**–'इति सूत्रे **अपृक्तसंज्ञा–सूत्रे** '**इको झल्**' सूत्रस्थे '**हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्**' इति वार्तिके च वर्णग्रहण-हल्ग्रहणयोरुपादानेन णिग्रहणे जातिग्रहणस्यासंभवात् ॥ 'जातेः पौर्वापर्याभावेन चिण्णमुल्परे इति विशेषणासंगत्या जातिग्रहणस्य वक्तुमशक्यत्वात्'॥ इति **चिण्णमुलोरिति** सूत्रस्थोद्द्योतस्तु 'हल्जातिः' इत्यस्य तज्जात्याश्रयहल्समुदाय इत्यर्थः । तस्य च साक्षादेव सामीप्यं ततः परत्वं चोपपद्यते । तदुक्तं भाष्ये—'**इक उत्तरा या हल्जातिरिति**' इति स्वोक्तिविरुद्ध एव । तस्मात् यत्र णौ णिः संभवति तत्र सर्वत्र 'णौ चङ्युपधायाः–' 'सन्वल्लघुनि–' 'चिण्णमुलोर्दीर्घः–' इत्यत्र "**णेर्णिच्युपसंख्यानम्**" इति भाष्योपलब्धवार्तिकपाठेनैव निर्वाहः करणीयः ॥ ५ नन्वाधेयमेवाधिकरणाश्रितमवलोकितम्, न कदाप्यधिकरणमाधेयाश्रितम्, अतो व्यापारस्य हेतुमत्त्वाप्रसिद्ध्या 'हेतुमति' इत्यनुचितमत आह—**स्वनिष्ठेति** । एवं च तथा विवक्षायां कदाचित् तथा प्रयोगोऽपि भवत्येवेति भावः ॥

( ३४२९ ) (सू.) **णौ च संश्वङोः** । ६ । १ । ३१ । सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात् ॥ ( ३४३० ) (प.) **संप्रसारणं तदाश्रयं च कार्यं बलवत्**—इति वचनात्संप्रसारणं पूर्वरूपम् । अशूशवत् । अलघुत्वान्न दीर्घः । अशिश्वयत् ॥ ( ३४३१ ) (सू.) **स्तन्भुसिवुसहां चङि** । ८ । ३ । ११६ । उपसर्गस्थान्निमित्तादेषां सस्य षो न स्याच्चङि । अवातस्तम्भत् । पर्यसीषिवत् । न्यसीषहत् । आटिटत् । आशिशत् । ( ३४३२ ) बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात्प्रागेव, ओणेर्ऋदित्करणाल्लिङ्गात् । मा भवानिदिधत् । एजादावेधतौ विधानान्नेह वृद्धिः । मा भवान्प्रेदिधत् । न न्द्राः[३२५६] इति नदराणां न द्वित्वम् । औन्दिदत् । आड्डिडत् । आर्चिचत् । उब्ज आर्जवे । उपदेशे[1] दकारोपधः । भुजन्युब्जौ[३८३१] पाण्युपतापयोरिति सूत्रे निपातनात्[2] दस्य बः । स चान्तरङ्गोऽपि द्वित्व-

---

अदिद्रवत्, अदुद्रवत् । अपिप्रवत्, अपुप्रवत् । अचिच्यवत्, अचुच्यवत् ॥ **अडुढौकदिति** । ढौकृ गतौ । 'चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः' इति पक्षाश्रयेणाह—**अचीचकासदिति** ॥ **मतान्तर इति** । 'अङ्गं यत्र द्विरुच्यते' इति मते 'चङ्परे णौ यल्लघु तत्परो योऽङ्गस्याभ्यासः' इति मते चेत्यर्थः ॥ **सुब्धातुप्रकरण इति** । अतितिरायत् । असस्रध्यायत् । अविविष्वद्रायत । अदिदेवद्रायत् । इत्याद्युदाहरिष्यत इत्यर्थः ॥ **वृद्धिं बाधित्वेति** । 'ण्यल्लोपावियङ्–३०८९' इत्यादिवचनाण्णिलोपांशप्रत्याख्यानपक्षेऽपवादत्वाद्वेत्यर्थः ॥ **असंभव इति** । तथा च—अचुचोरदित्येव रूपमिति भावः ॥ **ण्याकृतिनिर्देशादिति**। चङ्परे णावित्यत्र चङ्परे णित्वे इत्यर्थः । तेन णिद्वये सत्यपि णित्त्वं चङ्परमस्तीति ह्रस्वदीर्घयोरस्ति संभव इति भावः । एतेन अवीवदद्वीणां परिवादकेनेत्यादौ सन्वद्भावो व्याख्यातस्तत्रापीत्थमेव पूर्वपक्षसिद्धान्तयोस्तुल्यत्वात् ॥ ( ३४२९ ) **णौ च**—। 'विभाषा श्वेः ३२३४' इत्यनुवर्त्तते । संश्वङोरिति णावित्यस्य विशेषणं 'ह्वः संप्र–३४३९' इत्यतः संप्रसारणमनुवर्तत एवेत्याह—**सन्परे चङ्परे चेत्यादि** ॥ ( ३४३० ) **वचनादिति** । इयं च परिभाषा 'लिट्यभ्यासस्योभयेषाम् ३२१२' इत्यत्र वच्यादीनां ग्रह्यादीनामनुवृत्त्यैवेष्टसिद्धावुभयेषांग्रहणसामर्थ्याल्लभ्यते । अन्यथा वव्रश्चेत्यत्र 'हलादिः[२१३३]शेषे कृते वस्य संप्रसारणं स्यादित्याहुः ॥ ( ३४३१ ) **स्तन्भुसिवु**–। स्तन्भुः सौत्रः । षिवु तन्तुसंताने । षह मर्षणे । स्तन्भतेः 'स्तन्भेः ३०३९' इत्यनेन प्राप्तिः, अन्ययोस्तु 'परिनिविभ्यः–३०४२' इत्यनेनेति विवेकः ॥ **आटिटत् । आशिशदिति** । णिचा सह द्वित्वात्सन्वद्भावो नेति तद्विषये विहितो यो 'दीर्घो लघोः ३०९४' इति दीर्घः स न प्रवर्तते ॥ ( ३४३२) **ऋदित्करणाल्लिङ्गादिति** । यदि पूर्वं द्विर्वचनं भवेत्तदा णिशब्दस्य द्वित्वे सत्युपधाह्रस्वस्याप्राप्तेस्तत्प्रतिषेधार्थमृदित्करणं व्यर्थं स्यादतस्तदुक्तेऽर्थे ज्ञापकमेव ॥ **एजादावेधताविति** । 'एत्येधत्यूठ्सु १०८' इति सूत्रे एजाद्योरेत्येधत्योरिति व्याख्यातत्वादिति भावः । न च मा भवान्प्रेदिधदित्यत्र 'णौ चङि–३०९०' इति ह्रस्वे कृते नायमेधातिरिति वृद्धेरप्रवृत्तौ किमेधतेरजादिविशेषणेनेति वाच्यम्, एकदेशविकृतस्यानन्यत्वात्[२८८] । न चैवमपि 'अजादेर्द्वितीयस्य २९३०' इति धिशब्दस्थाने विधिशब्दादेशे सति वस्नसोरिव प्रकृतिप्रत्ययविभागसंमोह इति वाच्यम्, 'द्विः प्रयोगो द्विर्वचनं षाष्ठम्' इति भाष्ये सिद्धान्तितत्वात् । अन्यथा इहैव प्रेदिधदित्यत्र णिलोपो न स्यात् । जिघांसतीत्यादौ सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यादिति दिक् ॥ **उब्ज आर्जव इति** । अयमुपध्मानीयोपध इति वार्तिककृतोक्तम् । तस्य 'झलां जश् झशि ७९' इति जश्त्वेन बकारे कृते उब्जिता, उब्जितमिति रूपम् । एतच्चायोगवाहानां शर्षु पाठस्य फलम् । भाष्यकारादयस्तूपध्मानीयोपधपाठे उब्जिजिषतीति रूपं न सिध्येत् । यदि 'पूर्वत्रासिद्धीयमद्विर्वचने ३२५७' इत्याश्रित्य बकारोत्तरं द्वित्वं क्रियते, यदि वा अस्यानित्यतामाश्रित्य बकारात्पूर्वमेवोपध्मानीयस्य द्वित्वम्, उभयथापि इष्टरूपासिद्धिः, आद्ये उबिब्जिषति, द्वितीये तूपध्मानीयस्याच्त्वात्तदादेः 'अजादेर्द्वितीयस्य २९३० 'इति द्वित्वे 'हलादिः[२१३३]शेषे द्वितीयोपध्मानीयस्य जश्त्वेन बकारे पश्चात्प्रथमस्यापि तथैव बकारे उब्ब्जिषतीत्यापत्तेः । ततश्चेष्टसिद्धये दकारोपधोऽयं स्वीकार्यः । भुजन्युब्जा[३८३१]विति निपातनादुपधादकारस्य बो भवतीति वाक्यं कल्प्यते, तच्च 'स्तोः श्चुना श्चुः १७४' इत्यस्याग्रे । तदयमर्थः—श्चुना योगे उद्जेर्दकारस्य बकार इति । अभ्युद्गः, समुद्गः इत्यत्र तु उब्जिता, उब्जितुमित्यत्रेव चवर्गयोगो नास्तीति न बकारः । दकारोपधे चास्मिन्स्वीकृते 'न न्द्राः–३२५६' इति निषेधाज्जिशब्दस्य द्वित्वं ततो बकारे च उब्जिजिषतीति सिध्यति रूपम् । न च 'पूर्वत्रासिद्धीयमद्विर्वचने ३२५७' इति बकारोत्तरं द्विर्वचने सति स्यादेवानिष्टमिति वाच्यम्, द्विर्वचने हि त्रैपादिकं सिद्धं न तु तन्निषेधेऽपि । तथा च—निषेधे त्रिपादीस्थस्यासिद्धत्वात् 'न न्द्राः–३२५६' इति निषेधः प्रवर्तते ।

---

१ **उपदेश इति** । पाणिनिकृते धातूपदेश इत्यर्थः ॥ लेखस्तु 'ऊर्णुप्रभृतिष्विव कृतादेशस्यैवेति भावः ॥ २ **निपातनादिति** । अग्रह्यग्रार्थं कृते न्युब्जोपतापग्रहणे इति प्राक् शेषः ॥ **हयवरट्सूत्रभाष्येऽपूर्ववार्तिकरचनखण्डनाय** निपातनेनैव दकारस्य भकारविधानाङ्गीकारात् ॥ न्युब्जोपतापग्रहणप्रत्याख्याने तु '**स्तोः श्चुना**–' इत्यत्र '**भ उद्जेः**' इत्यपूर्ववार्तिकमेव करणीयम् ॥

विषये 'न [३२५६]न्द्राः' इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्तते न तु ततः प्राक्, दकारोच्चारणसामर्थ्यात्। औज्जिजत्। अजादेरित्येव। नेह। अदिद्रपत् ॥ ( ३४३३ ) रभेरशब्लिटोः । ७ । १ । ६३ । रभेर्नुम् स्यादचि न तु शब्लिटोः ॥ ( ३४३४ ) लभेश्च । ७ । १ । ६४ । अररम्भत्। अललम्भत्। हे[२३५१]रचङीति सूत्रे अचङीत्युक्तेः कुत्वं न। अजीहयत्। [३३१९]अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् । असस्मरत् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः ॥ ( ३४३५ ) विभाषा वेष्टिचेष्ट्योः ।७।४।९६॥ अभ्यासस्याऽत्त्वं वा स्याच्चङ्परे णौ । अववेष्टत्, अविवेष्टत्। अचचेष्टत्, अचिचेष्टत्। [३३९८]भ्राजभासेत्यादिना वोपधाह्रस्वः। अबिभ्रजत्, अबभ्राजत् ॥ ( ३४३६ ) काण्यादीनां वेति वक्तव्यम्॥ण्यन्ताः कणरणभणश्रणलुपहेठाः काण्यादयः षड् भाष्ये उक्ताः।ह्वायिवाणिलोटिलोपयश्चत्वारोऽधिका न्यासे। चाणिलोठी इत्यप्यन्यत्र। इत्थं द्वादश। अचीकणत्, अचकाणत्॥(३४३७) स्वापेश्चङि।६।१।१८। ण्यन्तस्य स्वापेश्चङि संप्रसारणं स्यात्। असूषुपत् ॥ (३४३८) शाच्छासाह्वाव्यावेपां युक् ।७।३।३७। णौ परे। पुकोऽपवादः। शाययति। ह्वाययति ॥( ३४३९) ह्वः संप्रसारणम् ।६।१।३२। सन्परे चङ्परे च णौ ह्वः संप्रसारणं

---

यद्वा—तादृशवाक्यमिह न कल्प्यते, किन्तु 'भुजन्युब्जौ—३८३१' इति निपातनेन दस्य ब इति। न चैवं बकारसहितस्य द्वित्वप्रसङ्गः, धातौ दकारोच्चारणसामर्थ्यात्। न चाभ्युद्र इत्यादावपि बकारश्रवणप्रसङ्गः। अकुत्वविषय एव बकारनिपातनाभ्युपगमात्। यद्वा—अभ्युद्र इत्यादि रूपं द्व्युपसर्गाद्रमेर्डप्रत्यये ज्ञेयम्। उद्जेस्तु घञि अनभिधानात् प्रयोगाभाव इति वदन्ति। तदेतद्भाष्यादिमतमभिप्रेत्याह—**उपदेशे दकारोपध इत्यादि** ॥ **अजादेरित्येवेति**। 'न न्द्राः—३२५६' इत्यत्र अजादेरित्यनुवर्तते, तेन आदिभूतादचः परा एव नदरा द्विर्नोच्यन्ते नान्ये इत्यर्थः। ननु लावस्थायामेव आडिति भाष्यकारोक्तपक्षे अदिद्रपदित्यत्र अजादित्वमस्त्येव, न्याय्यश्च प्रथममट् परत्वादन्तरङ्गत्वाच्चेति चेत् अत्राहुः—द्वितीयस्येत्यप्यत्रानुवर्तते तत्सामर्थ्याच्च नित्यं द्वितीयस्येति तदर्थः। तेन लावस्थायामटि कृतेऽपि धातुसंज्ञाप्रवृत्तिकाले अजादित्वाभावान्नोक्तदोषः। नित्यं द्वितीयस्यैकाचो ये नदरास्तेषामेव निषेधात्। न चैवं नित्यं द्वितीयस्येति व्याख्ययैव इष्टसिद्धावजादेरित्यस्यात्रानुवृत्तिर्माऽस्त्विति वाच्यम्, इन्दिद्रीयिषतीत्यत्र दकारस्यापि द्वित्वनिषेधापत्तेः। अजादेरित्युक्तौ त्वादिभूतादचः परत्वं दकारस्य नेति सिद्धमिष्टम्। न च अजादेरित्युक्तावपि चान्दिद्रीयिषतीत्यत्र दोषः स्यादेव, आद्यवयवस्य हल्त्वान्नकारस्य द्वित्वनिषेधाप्रसङ्गादिति वाच्यम्, अजादेरिति कर्मधारयात् पञ्चमीत्युक्तत्वात्। इह च एकदेशे स्वरितत्वं प्रतिज्ञाय अच इत्येवानुवर्त्यताम्। अथवा आदेरित्यस्याप्यनुवर्तनमस्तु तस्य नावयवपरत्वम्, किन्तु पूर्ववर्तिमात्रपरत्वं शब्दाधिकाराश्रयणादिति ज्ञेयम् ॥ नन्वेवमुत्तरार्थतया द्वितीयस्येति ग्रहणस्य सार्थकत्वे स्थिते द्वितीयस्येति न वक्तव्यमिति भाष्यं विरुध्येतेति चेत्। नैवम्, यस्मिन्सूत्रे पठितं तत्र माऽस्त्विति तदाशयात्। न च अजादेरित्येतावत्युक्ते यस्यकस्यचिदेकाचो द्वित्वं स्यादिति वाच्यम्, प्रथमस्यैकाचः पूर्वेणैव सिद्धेः पुनरारम्भो द्वितीयस्य द्वित्वार्थमिति सुवचत्वात् ॥ ( ३४३३ ) **रभेरशब्लिटोः**। 'रधिजभोः—३०७५' इत्यतोऽचीति 'इदितः—३०२६' इत्यतो नुमिति चानुवर्तते। अचि किम्, आरब्धम्। अशब्लिटोः किम्, रभते। रेभे ॥ ( ३४३४ ) **लभेश्च**। योगविभागः 'आङो यि ३७९२' इत्यत्र लभेरेवानुवृत्तिर्यथा स्यादिति ॥ ( ३४३६ ) **काण्यादीनामिति**। कण निमीलने। रण शब्दे। भण शब्दे। श्रण दाने। लुप्लृ छेदने। हिठ विबाधायाम्। षट्। हेञ् स्पर्धायां शब्दे च। बण शब्दे। लुट प्रतिघाते। लुप्लृ छेदने। लोपीति णिजन्तानिर्देशः। लापय इति पाठान्तरे लप व्यक्तायां वाचि। केचित्तु लप हेठ इति पठन्ति। न्यासे चत्वारः। अण दाने। लुठ स्तेये। भ्वादिः। चुरादौ दण्डकपाठे भाषार्थकोऽपि। अरीरणत्, अरराणत्। अबीभणत्, अबभाणत्। अशिश्रणत्, अशश्राणत्। अलूलुपत्, अलुलोपत्। अजीहिठत्, अजिहेठत् ॥ ( ३४३७ ) **स्वापेश्चङि**। चङि किम्, स्वापयति ॥ **असूषुपदिति**। इह संप्रसारणोत्तरं द्वित्वम् ॥ ( ३४३८ ) **शाच्छासा—**। शो तनूकरणे। छो छेदने। षोऽन्तकर्मणि। ह्वेञ् स्पर्धायाम्। व्येञ् संवरणे। वेञ् तन्तुसंताने। पा पाने। 'लुग्विकरणालुग्विकरण—३१३६' इति परिभाषया पा रक्षणे इति नेह गृह्यते। तस्य तु पालयतीति रूपमनुपदं वक्ष्यति। शाययति। अशीशयत्। छाययति। अचिच्छयत्। साययति। असीषयत्। ह्वाययति। अजूहवत्। व्याययति। अविव्ययत्। वाययति। अवीवयत्। पाययति। अपीप्यत्। इह शाच्छासादीनां कृतात्वानां निर्देशः पुकः प्राप्तिं ध्वनयितुम्, तत्प्रयोजनं त्वस्मिन्प्रकरणे [२२६४३]लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिः। तेन ध्यापयति, क्षापयतीत्यादि सिद्धम् ॥ ( ३४३९ ) **ह्वः संप्र—**। 'णौ च संश्चङोः—३४२९' इति वर्तते तदाह—

---

१ **दकारेति**। 'भ उद्जेः' इति 'स्तोः श्चुना—' इत्यत्रापूर्वं वार्तिकं क्रियेत चेत् तस्य त्रैपादिकत्वेनासिद्धत्वात्पूर्वं द्वित्वे कर्तव्ये 'न न्द्राः—' इति प्रवर्तत एव ॥ गमूधातुमन्तराऽपि समुद्ग इत्यस्य साधनाग्रहे तत्र दकारश्रवणस्य तोपधत्वथोपधत्वधोपधत्वान्यतराङ्गीकारेणैव सिद्धौ दोपधत्वाङ्गीकारः केवलं 'न न्द्राः—' इत्येतत्प्रवृत्तय एवेति फलभेदाभावादेव 'भ उद्जेः' इत्यस्य 'न कर्तव्यम्' इत्युक्त्या प्रत्याख्यानं हयवरट्सूत्रे भाष्ये ॥ २ 'भ्राजभासभाषजीव—' इत्यत्रेत्यर्थः।

स्यात् । अजूहवत्, अजुहावत्[1]॥(३४४०) सू लोपः पिबतेरीच्चाभ्यासस्य।७।४।४। पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत् । अर्तिह्रीति [2]पुक्[3]। अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । यलोपः। क्नोपयति । क्ष्मापयति । स्थापयति ॥ (३४४१) सू तिष्ठतेरित् ।७।४।५। उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् ॥ ( ३४४२ ) सू जिघ्रतेर्वा ।७।४।६। अजिघ्रिपत्, अजिघ्रपत् । [4]ऊर्त्तत् । अचीकृतत्, अचिकीर्तत् । अवीवृतत्, अववर्तत् । अमीमृजत्, अममार्जत् ॥ ( ३४४३ ) वा पातेर्णौ लुग्वक्तव्यः ॥ [5]पुकोऽपवादः । पालयति ॥ ( ३४४४ ) सू वो विधूनने जुक् । ७ । ३ । ३८ । वातेर्जुक् स्याण्णौ कम्पार्थे । वाजयति । कम्पे किम् । केशान्वापयति । विभाषा[3326] लीयतेः ॥ ( ३४४५ ) सू लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने । ७ । ३ । ३९। लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्तो णौ स्नेहद्रवे । विलीनयति, विलाययति, विलालयति, विलापयति वा घृतम् । ली ई इति ईकारप्रश्लेषादात्त्वपक्षे नुक् न । स्नेहद्रवे किम् । लोहं विलापयति । विलाययति ॥ ( ३४४६ ) वा प्रलम्भनाभिभवपूजासु लियो नित्यमात्त्वमशिति वाच्यम् ॥ ( ३४४७ ) सू लियः संमाननशालीनीकरणयोश्च । १ । ३ । ७० । लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे । जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः । श्येनो वार्तिकामुल्लापयते । अभिभवतीत्यर्थः । बालमुल्लापयते । वञ्चयतीत्यर्थः ॥ ( ३४४८ ) सू बिभेतेर्हेतुभये । ६ । १ । ५६ । बिभेतेरेच आत्त्वं वा स्यात्प्रयोजकाद्भयं चेत् ॥

---

सन्पर इत्यादि ॥ अजूहवत् । अजुहावदिति । 'काण्यादीनां वा ३४३६' इति ह्रस्वविकल्पः ॥ (३४४०) अपीप्यदिति । उपधालोपस्य द्वित्वे कर्तव्ये प्रतिषेधात् कृते लोपे स्थानिवद्भावाद्वा पायूशब्दस्य द्वित्वे [2133]हलादिःशेष ईकारः । स च 'अनभ्यासविकारे' इति निषेधादन्त्यस्यादेशः । इहाग्लोपित्वादलघूपधत्वाच्च सन्वदित्त्वदीर्घयोरप्राप्तावीत्त्वं विधीयते ॥ व्लेपयतीत्यादि । व्ली वरणे । रीङ् क्षये, क्नूयी शब्दे उन्दे च । क्ष्मायी विधूनने ॥ ( ३४४१ ) तिष्ठतेरित् । तकारो मन्दप्रयोजनः । श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । अतास्थपत् । लटि तास्थापयतीति ॥ उर्त्तत् । चुरादौ [34]व्याख्यातम् ॥ अचीकृतदिति । ऋदादेशाभावपक्षे 'उपधायाश्च ३४०७' इतीत्त्वे रपरत्वम् 'उपधायां च २०२९' इति दीर्घः ॥(३४४३) पुकोऽपवाद इति । आदन्तत्वात्पुकः प्राप्तिः । एवं च लुगागमस्य पुङ्निवृत्तिरेव फलम् । पालयतीति रूपस्य पाल रक्षणे इति धातुनाऽपि सिद्धेरिति भावः ॥ ( ३४४४ ) वो विधू—। 'लुग्विकरणाऽलुग्विकरण-३१३६' परिभाषया 'ओवै शोषणे' इत्यस्यैव ग्रहणं न तु 'वा गतिगन्धनयोः' इत्यस्य । 'लक्षणप्रतिपदोक्त ११५२-२' परिभाषा त्वस्मिन्प्रकरणे न प्रवर्तते इत्युक्तं प्राक् । 'ओवै शोषणे' इत्यस्य रूपमिति वदन् वामनोऽप्यत्रानुकूलः । 'वज गतौ' इति धातुना वाजयतीति रूपे सिद्धे जुगागमस्य पुङ्निवृत्तिरेवेहापि फलम् ॥ वातेरिति । 'वायतेः' इति वक्तुं युक्तम् ॥ [ ३३२६ ] आत्त्वविधायकसूत्रं स्मारयति—विभाषा लीयतेरिति । लीयतेरिति यका निर्देशो न तु श्यना । अन्यथा 'विभाषा लीङः' इत्येवावक्ष्यत् । तेन लीलीङोरुभयोरप्यात्त्वं भवति ॥ ( ३४४५ ) लीलोः—। 'लीङ् श्लेषणे' दिवादिः, 'ली श्लेषणे' क्र्यादिः, लाग्रहणेन 'ला आदाने' अदादिः कृतात्त्वौ लीलीङौ च त्रयोऽपि गृह्यन्ते । लीयतेरिति औचित्यादिहापि यका निर्देश इत्युभयोरपि ग्रहणम् । न च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्' इति परिभाषया सूत्रेऽपि लीङो न ग्रहणमिति वाच्यम्, इयं हि परिभाषा 'वामदेवाड् ड्यड्ड्यौ १७१२' इत्यत्र डित्त्वेन ज्ञापिता । ज्ञापनं च उत्सर्गतः सजातीयापेक्षमिति प्रत्ययग्रहणविषयत्वमस्याः कल्प्यते । यथा 'सदव्ययतव्यसमानाधिकरणेन' इत्यत्र तव्यस्यैव ग्रहणं न तु तव्यतः, अत एव 'जॄव्रश्च्योः क्त्वि' इति सूत्रे जृणातिजीर्यत्योरुभयोर्ग्रहणमिति न्यासकृतोक्तम् । अतोऽत्र लीलीङोर्ग्रहणमिति सम्यगेव । न चैवं 'दिव औत् ४६०' इत्यत्र 'निरनुबन्ध-' परिभाषया दिविति प्रातिपदिकस्यैव ग्रहणं न तु धातोरिति ग्रन्थः कथं संगच्छत इति वाच्यम्, उत्सर्गतः प्रत्ययग्रहणविषयत्वेन क्वचिदन्यत्रापि प्रवृत्तौ बाधकाभावादिति वदन्ति ॥ विलीनयतीति । लीलीङोरीकारान्तयोर्नुकि रूपम् ॥ विलाययतीति । नुगभावपक्षे तयोरेव रूपम् ॥ विलालयतीति । लातेः कृतात्त्वयोर्लीलीङोश्च लुकि रूपम् ॥ विलापयतीति । लुगभावपक्षे आदन्तानां तेषामेव रूपम् ॥ लोहं विलापयतीति । नुग्लुकोरभावादात्त्वपक्षे पुक् । आत्त्वाभावे तु वृद्ध्यायादेशौ ॥ ( ३४४६ ) प्रलम्भनेति । प्रलम्भनं वञ्चनम् । अशिति किम्, लीयते । लिनाति ॥ (३४४७) लियः संमानन—। चात्प्रलम्भने । (३४४८) बिभेतेर्हेतुभये । हेतुः प्रयोजकः । इह 'आदेच उपदेशे-३१६३'

---

१ अजूहवदिति । 'शाच्छासाह्वा-' इति सूत्रे 'अर्तिह्री-' इत्यत 'आतः' इत्यनुवर्त्तनात् 'संप्रसारणं संप्रसारणाश्रयं च कार्यं बलवत्' इति परिभाषया पूर्वं संप्रसारणपूर्वरूपयोर्जातयोरादन्तत्वाभावाद् युगागमाभावः ॥ एतेन 'एकदेशविकृतम्-' इति न्यायेन युगागमापत्तिर्विहितेऽपि संप्रसारणे-इति मन्दोक्तमपास्तम् । 'विकृतावयवनिबन्धनकार्ये नायं न्यायः' इति लौकिकन्यायस्य आल्विधित्वात् शास्त्रीयस्याप्रवृत्तेरिति भावः ॥ २ अर्पयतीति । 'अर्तिह्रीव्ली-' इति सूत्रे जौहोत्यादिकेन ह्रीधातुना साहचर्याद् अर्तिरपि लुप्तविकरणो जौहोत्यादिक एव गृह्यते 'सर्तिशास्त्यर्तिभ्यश्च' इत्यत्रेव । द्वयोर्ग्रहणे मानानुपलम्भात् । तथा च भौवादिकस्य न पुकः प्राप्तिरिति 'आरयति' इत्येवमादीनि रूपाणि बोध्यानि ॥ ३ इदं वार्तिकं 'शाच्छासाह्वा-' इति सूत्रे ॥ ४ पुक इति । युकोऽप्युपलक्षणम् । यद्वा-अलुग्विकरणपरिभाषया जुङ्नेति समाधानस्य स्पष्टत्वान्नोक्तम् ॥ ५ 'संनियोगशिष्टानामन्यतरापाये उभयोरप्यप्राप्तिः' इति न्यायाङ्गीकारे तु अभ्यासेत्त्वसंनियोगशिष्टस्योपधालोपस्य द्वित्वात्प्राक् प्राप्तिरेव नेति चिन्त्योऽयं लेख इति नवीनाः ॥

( ३४४९ ) (सू) **भीस्म्योर्हेतुभये**।१।३।६८। ण्यन्ताभ्यामाभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ । सूत्रे भयग्रहणं धात्वर्थोपलक्षणम् । मुण्डो भापयते ॥ ( ३४५० ) (सू) **भियो हेतुभये षुक्** । ७।३ । ४० । भी ई इतीकारः प्रश्लिष्यते। ईकारान्तस्य भियः षुक् स्यात् णौ हेतुभये । भीषयते ॥ ( ३४५१ ) (सू) **नित्यं स्मयतेः** । ६ । १ । ५७ । स्मयतेरेचो नित्यमात्त्वं स्याण्णौ हेतोः स्मये । जटिलो विस्मापयते । हेतोश्चेद्भयस्मयावित्युक्तेर्नेह । कुञ्चिकयैनं भाययति। विस्माययति । कथं तर्हि विस्मापयन् विस्मितमात्मवृत्ताविति । मनुष्यवाचेति करणादेव हि तत्र स्मयः । अन्यथा शानजपि स्यात् । सत्यम्, विस्माययन्नित्येव पाठ इति साम्प्रदायिकाः । यद्वा—मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते तया सिंहो विस्मापयन्निति[1] ण्यन्ताण्णौ शतेति व्याख्येयम् ॥ ( ३४५२ ) (सू) **स्फायो वः** । ७ । ३ । ४१ । णौ । स्फावयति ॥ ( ३४५३ ) (सू) **शदेरगतौ तः** । ७ । ३ । ४२ । शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ । शातयति । गतौ तु गाः शादयति गोविन्दः । गमयतीत्यर्थः ॥ ( ३४५४ ) (सू) **रुहः पोऽन्यतरस्याम्** । ७ । ३ । ४३ । णौ । रोपयति, रोहयति ॥ ( ३४५५ ) (सू) **क्रीङ्जीनां णौ** । ६ । १ । ४८ । एषामेच आत्त्वं स्याण्णौ । क्रापयति । अध्यापयति । जापयति ॥ ( ३४५६ ) (सू) **णौ च संश्चङोः** । २ । ४ । ५१ । सन्परे चङ्परे च णौ इङो गाङ्वा स्यात् । अध्यजीगपत्, अध्यापिपत् ॥ ( ३४५७ ) (सू) **सिध्यतेरपारलौकिके**[2] । ६ । १ । ४९ । ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्त्वं स्याण्णौ । अन्नं साधयति । निष्पादयतीत्यर्थः । अपारलौकिके किम् । तापसः सिद्ध्यति । तत्त्वं निश्चिनोति । तं प्रेरयति सेधयति तापसं तपः ॥ ( ३४५८ ) (सू) **प्रजने वीयतेः** । ६ । १ । ५५ । अस्यैच आत्त्वं वा स्याण्णौ प्रजनेऽर्थे । वापयति, वाययति वा गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः ॥ ऊदुपधाया[3] गोहः । गूहयति ॥ ( ३४५९ ) (सू) **दोषो णौ** । ६ । ४ । ९० । दुष इति सुवचम् । दुष्यतेरुपधाया ऊत्स्याण्णौ । दूषयति ॥ ( ३४६० ) (सू) **वा चित्तविरागे** । ६ । ४ । ९१ । विरागोऽप्रीतता । चित्तं दूषयति, दोषयति वा कामः ॥

---

३१६३' इत्यत एच आदित्यनुवर्तते 'विभाषा लीयतेः ३३२७' इत्यतो विभाषा, 'चिस्फुरोः–३४०४' इत्यतो णाविति च तदाह—**विभतेरेच इत्यादि** ॥ ( ३४४९ ) **भीस्म्योः**—। व्यत्ययेन षष्ठीत्याह—**आभ्यामिति** । 'णेरणौ–३६६०' इत्यतो णेरित्यनुवृत्तेर्ण्यन्ताभ्यामेव विधिरकर्त्रभिप्रायार्थः ॥ ( ३४५० ) **ईकारान्तस्येति** । तेन आत्त्वपक्षे भापयते इत्येव न त्वत्र षुगित्यर्थः ॥ ( ३४५१ ) **करणादेव हीति** । तथा च–करणात् स्मये आत्त्वाभावेन पुग्दुर्लभ इति भावः ॥ **प्रयोज्यकर्त्रीति** । यद्यपि प्रथमणिजर्थं प्रति मनुष्यवागेव प्रयोजिका । अत एव आत्त्वं प्रवृत्तं तथापि द्वितीयणिजर्थाभिप्रायेणेदमुक्तमिति मनोरमायाम् । केचित्तु प्रयोज्यस्य कर्त्री प्रयोजककर्त्रीति यावदिति प्रथमणिजभिप्रायेणैवेदं सुयोजमित्याहुः ॥ **ण्यन्ताण्णाविति** । राजा विस्मयते तं मनुष्यवाग्विस्मापयते तया सिंहो विस्मापयन्नित्यर्थः । एवं च प्रथमणिचि हेतुर्मनुष्यवागिति आत्त्वपुकावुपपन्नौ ॥ ( ३४५५ ) **क्रीङ्जीनाम्**—। डुक्रीञ् द्रव्यविनिमये । इङ् अध्ययने । जि जये। अचिक्रपत् । अजीजपत् ॥ ( ३४५६ ) **अध्यजीगपदिति** । नात्र णिजिनिमित्तस्य गाङो द्वित्वे कर्तव्ये स्थानिवद्भावो निषेधो वा शङ्क्यः, यत्राभ्यासोत्तरखण्डे आद्योऽजवर्णोऽस्ति तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात् । इह तु गाङः पूर्वं सति हि द्वित्वे 'अजादेर्द्वितीयस्य २९३०' इति णिच एव द्वित्वं भवेत्ततश्चङ्परणिज्निमित्तो गाङ् ततश्च प्रक्रियायां परिनिष्ठितरूपे वा अवर्णवदुत्तरखण्डं दुर्लभं कीर्तयतिसाम्यादिति नोक्तशङ्कावकाशः ॥ **अध्यापिपदिति** । पिशब्दस्यात्र द्वित्वम् ॥ ( ३४५७ ) **सिध्यतेरपार**—। श्यना निर्देशाद्धौवादिकस्याग्रहणम् ॥ **तत्त्वं निश्चिनोतीति** । तत्त्वनिश्चयश्चात्मविषयकः, स च परलोके उपयुज्यते ॥ ( ३४५८ ) **प्रजने**—। वीयतेरिति 'वी गतिप्रजनादौ' आदादिकस्य यका निर्देशः । अत्र केचिदुत्प्रेक्षयन्ति–'वीतेः' इति वक्तव्ये यका निर्देशाद्वयेञोऽपि ग्रहणम्, तस्यापि यकि संप्रसारणे वीधातुना समानरूपत्वात् । अतो द्वयोरपि प्रजनेऽर्थे आत्त्वं वा स्यात् । तत्र आत्त्वे तदभावे च यद्यपि व्येञः व्याययतीति रूपं तुल्यं 'शाच्छासा–३४३८' इति पुकोऽपवादतया युग्विधानात्, तथापि णिजन्तात्क्विपि व्याः व्यौ व्याः । आत्त्वाभावपक्षे व्यैः व्यायौ व्यायः इत्यस्ति विशेषः । विभाषाविधानसामर्थ्यात्पक्षेऽपि 'आदेच उपदेशेऽशिति ३१६३' इति न प्रवर्तते । अनेकार्थत्वाच्च धातूनां व्ययतेरपि प्रजनोऽर्थ इति ॥ ( ३४५९ ) **दोषो णौ** । 'दुष वैकृत्ये' दिवादिः । णौ किम्, दोषः ॥ ( ३४६० ) **चित्तमिति** । 'चिती संज्ञाने' इत्यस्मात् क्तः ॥ **दूषयति दोषयति वेति** । चित्तं दुष्यति ज्ञानसंध्यादौ विरक्तं

---

१ राजा विस्मयते तं मनुष्यवाक् प्रेरयत इति मनुष्यवाग् राजानं विस्मापयते इत्यत्र प्रथमणिचि आत्वपुकौ । तां सिंहः प्रेरयतीति द्वितीयणिचि तु स्मिप्रकृतिकण्यन्तत्वाभावादात्मनेपदाप्राप्त्या सिंहो मनुष्यवाचा राजानं विस्मापयतीति रूपम् । ततः शतृप्रत्ययः ॥ २ **अपारलौकिक इति** । परलोकः परलोकप्राप्यं प्रयोजनमस्येति पारलौकिकम् । पारलौकिकोऽर्थस्तु प्रकृतधात्वर्थफलरूपो विवक्षितः । अन्नं साधयतीत्यत्र धात्वर्थफलं निष्पत्तिरूपम्, तच्च परम्परया यद्यपि ब्राह्मणेभ्यो दानादिना पारलौकिकं भवति तथापि यत् साक्षात् पारलौकिकं तदेव फलम् 'अपारलौकिके' इत्यत्र प्रतियोगित्वेन विवक्षितमित्येतत्सूचनाय ऐहलौकिक इत्यनुक्त्वा अपारलौकिक इत्युक्तम् ॥

मितां ह्रस्वः । ज्वादौ चुरादौ च मित उक्ताः । घटयति । जनीजॄष्क्नसु–। जनयति । जरयति । जॄणातेस्तु––जारयति ॥ ( ३४६१ ) **वा० रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः** ॥ मृगरमणमाखेटकम् । रजयति मृगान् । मृगेति किम् । रञ्जयति पक्षिणः । रमणादन्यत्र तु रञ्जयति मृगांस्तृणदानेन । चुरादिषु ज्ञपादिश्चिञ् । चिस्फुरोर्णौ । चपयति । चययतीत्युक्तम् । चिनोतेस्तु । चापयति, चाययति । स्फारयति, स्फोरयति । अपुस्फरत् । अपुस्फुरत् ॥ ( ३४६२ ) **सू० उभौ साभ्यासस्य** । ८ । ४ । २१ । साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति । प्राणिणत् ॥ ( ३४६३ ) **सू० णौ गमिरबोधने** । २ । ४ । ४६ । इणो गमिः स्याण्णौ । गमयति । बोधने तु प्रत्याययति ॥ इण्वदिकः । अधिगमयति ॥ हनस्तोऽचिण्णलोः । हो हन्तेरिति कुत्वम् । घातयति ॥ ( ३४६४ ) **वा० ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्** ॥ तृतीयव्यञ्जनस्य तृतीयैकाच इति वाऽर्थः । आद्ये षकारस्य द्वित्वं वारयितुमिदम् । द्वितीये त्वजादेर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते प्रवर्तते । ऐर्ष्यियत्, ऐर्षिष्यत् । द्वितीयव्याख्यायां णिजन्ताच्चङि षकार एवाभ्यासे श्रूयते । हलादिःशेषात् । द्वित्वं तु द्वितीयस्यैव, तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः । निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थः । तेन प्रार्थयन्ति शयनोत्थितं प्रिया इत्यादि सिद्धम् । एवं सकर्मकेषु सर्वेषूह्यम् ॥ इति ण्यन्तप्रक्रिया ॥

---

भवति । तत्प्रयुङ्क्त इत्यर्थः ॥ **जॄणातेस्त्विति** । अषित्त्वादस्य मित्त्वं नेति भावः ॥ ( ३४६१ ) **आखेटकमिति** । मृगयेत्यर्थः ॥ **रजयतीति** । रजन्ति मृगाः ग्रहणमरणाद्यनुकूलव्यापारविषया भवन्ति, तान्मृगांस्ताहग्व्यापारविषयान्करोतीत्यर्थः ॥ **ज्ञपादिश्चिञ् इति** । तेन मित्त्वाध्द्रस्व इति भावः । स्वादिगणस्थस्य तु मित्त्वं नेत्युदाहरति––**चापयतीत्यादि** ॥ **अपुस्फरदिति** । द्वित्वे कर्तव्ये अजादेशस्य स्थानिवत्त्वान्निषेधाद्वा स्फुरत्युकारवतो द्वित्वम्, ततः 'चिस्फुरोर्णौ ३४०४' इति वा आत्वम् ॥ ( ३४६२ ) **उभौ सा-**। 'रषाभ्याम्–३३६' इति सूत्रे न इति षष्ठ्यन्तं प्रथमाद्विवचनान्ततया विपरिणम्यत इत्याह––**उभौ नकाराविति** । ननु साभ्यासस्येत्युक्त्या उभयोरपि भविष्यतीत्युभौग्रहणं व्यर्थमिति चेत् । अत्राहुः–'साहित्यमात्रं विवक्षितं न तुल्ययोगः' इत्यभ्युपगमे द्वयोर्युगपन्न सिध्येदित्युभौग्रहणम् । न च तुल्ययोगाविवक्षायां 'तेन सहेति तुल्ययोगे १२२१' इति समासोऽत्र न स्यादिति शङ्क्यम्, तुल्ययोगग्रहणं प्रायिकं, सकर्मकः सलोमक इत्युक्तत्वादिति । कैयटे तु–उभावित्यस्मिन्नसति साभ्यासस्यानितेर्णो भवतीत्युच्यमाने वचनसामर्थ्याच्च 'पूर्वत्रासिद्धीयमद्विर्वचने ३२५७' इत्यनाश्रीयमाणे अकृतणत्वस्य द्विर्वचने कृते अनन्तरस्यानितेरिति पूर्वेणैव णत्वस्य सिद्धत्वाद् व्यवहितनकारार्थमिदं णत्वं स्यात् । अनन्तरस्य तु 'तक्रकौण्डिन्य–' न्यायेन न स्यादिति उभावित्युच्यत इति स्थितम् । साभ्यासस्येति किम्, प्राण् नमति । असत्यस्मिन् 'अनितेः ३२९२' इति षष्ठी संबन्धसामान्ये स्यात्तत्रश्चानन्तर्यादिसंबन्धोऽपि गृह्येत । सति त्वस्मिन्नवयवावयविभावसंबन्धो लभ्यते । अतोऽर्थवत्साभ्यासग्रहणम् । यदि त्विष्टानुरोधेनानितेरिति षष्ठी अवयवसंबन्धे व्याख्यायते अनितेश्च नकारद्वयाभावात्सामर्थ्याद् द्विर्वचनं प्राप्त एवानितिर्गृह्येत, तदा साभ्यासस्येति मन्दप्रयोजनम् । इह पूर्वं णत्वं कृत्वा द्वित्वे कृते प्राणिणदित्यादिसिद्धावयमारम्भः ' पूर्वत्रासिद्धीयमद्विर्वचने ३२५७ ' इत्यस्यानित्यत्वज्ञापनार्थः । तेन ऊर्णुनावेत्यत्र णत्वात्पूर्वमेव नुशब्दस्य द्वित्वादभ्यासोत्तरखण्डे णत्वाभावः सिद्धः ॥ ( ३४६३ ) **प्रत्याययतीति** । प्रतिपूर्वस्येणो ज्ञानार्थता । लुङि प्रत्यायियत् । इह इणो णिचि कृते 'इणो यण् ३२६६' इति यणं बाधित्वा परत्वाद्वृद्धिः । न च 'ओः पुयण्जि–३४२७' इति ज्ञापकात्पूर्वं द्वित्वं पश्चाद्वृद्धिरिति शङ्क्यम्, ' अजादेर्द्वितीयस्य २९३० ' इति णिचो द्वित्वेऽभ्यासोत्तरखण्डस्यावर्णपरत्वाभावात् ॥ ( ३४६४ ) **इति वाऽर्थ इति** । व्याख्यानद्वयमप्याकराख्ढमिति भावः ॥ **षकारस्येति** । रेफस्य तु ' न न्द्राः–३२५६ ' इत्यनेन निषेधादिति भावः ॥ **द्वितीये त्विति** तृतीयस्यैकाच इति पक्षे ॥ **सन्नन्ते प्रवर्तत इति** । वचनसामर्थ्यादिति भावः ॥ **ऐर्ष्यियदिति** । तृतीयव्यञ्जनस्येति पक्षे इदमुदाहरणम् ॥ ऐर्षिष्यदिति रूपस्यासाधुत्वमाशङ्क्योपपादयति–**द्वितीयव्याख्यायामित्यादिना** ॥ **द्वितीयस्यैवेति** । एकाच इति शेषः ॥ **अप्रवृत्तेरिति** । किन्तु सन्नन्त एव प्रवर्तते । तत्र ह्युपदम् ईर्ष्यिषिषति इत्युदाहरिष्यति ॥ '**अर्थ उपयाच्ञायाम्** ' इत्यस्य आगर्वीयत्वादात्मनेपदेन भाव्यमिति प्रार्थयन्तीति माघकाव्यादिप्रयोगोऽसाधुरित्याशङ्क्य तत्समर्थनायाह–**निवृत्तप्रेषणादिति** । उक्तं च–' निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति ॥ **तेनेत्यादि** । प्रार्थनां कुर्वन्तीति विवक्षितार्थे प्रयोगः सिद्ध इति भावः । केचित्तु–परस्मैपदसिद्ध्यर्थं प्रार्थनं प्रार्थः, तं कुर्वन्ति प्रार्थयन्तीति व्याचक्षते । तदसत्, धातुसंज्ञाप्रयोजकप्रत्यये चिकीर्षिते उपसर्गाणां पृथक्करणस्य वक्ष्यमाणतया ' अर्थवेद–३५७३ ' इत्यापुगागमस्य दुर्वारत्वात् ॥ इति ण्यन्तप्रक्रिया ॥

---

१ वस्तुतस्तु 'परे तु–' **रजयांचकार विरजाः समृगान्** ' इति भारविप्रयोगान्मृगरमणं यथाश्रुतमेव । अत एव भगवता ' **मृगरमण इति किमर्थम् ? रञ्जयति वस्त्राणि** ' इति प्रत्युदाहृतम् ।' इत्युद्द्योतोक्तमेव वरम् ॥ तथा च रमणं स्वसमीपीकरणमेव । समीपीकरणं च विश्वासदानेन पाशादिबन्धनादिना वेत्यन्यदेतत् ॥ २ रजयतीति । नलोपे वृद्धौ च ' **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** ' इति गणसूत्रेण मित्त्वाद् ह्रस्व इति भावः ॥

## अथ सन्नन्तप्रक्रिया ।

( ३४६५ ) (सू) **धातोः कर्मणः समानकर्तृकादिच्छायां वा । ३ । १ । ७ ।** इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् । धातोर्विहितत्वादिह सन आर्धधातुकत्वम् । इट् । द्वित्वम् । सन्यतः । पठितुमिच्छति पिपठिषति । कर्मणः किम् । गमनेनेच्छतीति करणान्मा भूत् । समानकर्तृकात्किम् । शिष्याः पठन्त्वितीच्छति गुरुः । वाग्रहणात्पक्षे वाक्यमपि । लुङ्सनोर्घस्लृ । एकाच उपदेश इति नेट् । सस्य तत्वम् । अत्तुमिच्छति जिघत्सति । ईर्ष्यतेस्तृतीयस्येति यिसनोर्द्वित्वम् । ईर्ष्यियिषति, ईर्ष्यिषिषति ॥ (३४६६) (सू) **रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।१।२।८।** एभ्यः सन् क्त्वा च कितौ स्तः । रुरुदिषति । विविदिषति । मुमुषिषति ॥ (३४६७) (सू) **सनि ग्रहगुहोश्च । ७ । २ । १२ ।** ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात् । ग्रहिज्येति संप्रसारणम् । सनः षत्वस्यासिद्धत्वाद्भष्भावः । जिघृक्षति । जुघुक्षति ॥ ( ३४६८-१ ) (सू) **किरश्च पञ्चभ्यः । ७ ।२।७५ ।** कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यः सन इट् स्यात् । पिपृच्छिषति । चिकरिषति । जिगरिषति, जिगलिषति ॥ (३४६८-२)इ० अत्रेटो दीर्घो नेष्टः॥ दिदरिषते । दिधरिषते । कथमुद्दिधीर्षुरिति । भौवादिकयोर्धृङ्धृञोरिति गृहाण ॥ ( ३४६९ ) (सू) **इको झल् । १ । २ । ९ ।** इगन्ताज्झलादिः सन् कित्स्यात् । बुभूषति । दीङ् । दातुमिच्छति दिदीषते । एज्विषयत्वाभावान्मीनातिमिनोतीत्यात्वं न । अत एव सनि मीमेति सूत्रे माधातोः पृथङ्मीग्रहणं कृतम् ॥ ( ३४७० ) (सू) **हलन्ताच्च । १ । २ । १० ।** इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । गुहू । जुघुक्षति । बिभित्सति । इकः किम् । यियक्षते । झल्किम् । विवर्धिषते । ( ३४७१ ) हल्ग्रहणं जातिपरम् । तृन्हू । तितृक्षति, तितृंहिषति ॥ ( ३४७२ ) (सू) **अज्झनगमां सनि । ६ । ४ । १६ ।** अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । सन्लिटोर्जेः । जिगी-

---

**(३४६५) धातोः कर्मणः**—। **इषिकर्मण इत्यादि** । इच्छायामिति श्रुतत्वात्कर्मत्वं कर्तृत्वं च तदपेक्षमेव गृह्यत इति भावः॥ **पठितुमिच्छतीति** । एकनिष्ठा पाठगोचरा वर्तमानेच्छेत्यर्थः॥ **यिसनोरिति** । तृतीयव्यञ्जनस्येति पक्षे यकारस्य द्वित्वम्, तृतीयस्यैकाच इति पक्षे तु सन इत्यर्थः ॥ **( ३४६६ ) रुदविद**—। रुदसाहचर्याद् वेत्तेरेव ग्रहणम्, इह रुदविदमुषाणां ग्रहणं 'रलो व्युपधात्-३४७५' इति विकल्पे प्राप्ते ग्रहेः 'न क्त्वा सेट् ५१४३' इति निषेधात्क्त्वाया अप्राप्ते स्वपिप्रच्छयोस्तु क्त्वः कित्त्वेऽपि सनः कित्त्वस्याप्राप्तौ वचनम् । रुदित्वा । विदित्वा । मुषित्वा । एतेषु गुणाभावः कित्त्वस्य फलम् । गृहीत्वा सुप्त्वा । पृष्ट्वा । एतेषु संप्रसारणमपि फलम् ॥ **( ३४६७ ) सनि ग्रहगुहोश्च** । ग्रहेर्नित्यं, गुहेर्विकल्पेन प्राप्ते निषेधोऽयम् ॥ **सनः षत्वस्यासिद्धत्वाद्भष्भाव इति** । कत्वस्यासिद्धत्वाद्भष्भाव इत्येव सुवचम् । केचित्तु-ढत्वे सति भष्भाव इत्यध्याहारेण योजयन्ति । तथा च-जिगृह् स इति स्थिते इणः परत्वेन सस्य षत्वं प्राप्तं तस्यासिद्धत्वाड्ढत्वे भष्भावः । ततश्च कत्वे कवर्गात्परस्य षत्वमिति विधिक्रमः । अन्ये तु-षत्वे ढत्वे च कृते पश्चाद्भष्भावे कर्तव्ये सकारपरत्वाभावाद्भष्भावो न स्यादित्याशङ्कायां सनः षत्वस्यासिद्धत्वादिति ग्रन्थः प्रवृत्त इति कार्यासिद्धिपक्षावलम्बनेन व्याचक्षते ॥ **जिघृक्षतीति** । गुहेर्जुघुक्षति । सूत्रे चकारात् 'श्र्युकः क्किति ३१७४' इत्यत उक इत्यनुकृष्यते । उगन्तात् बुभूषति । लुलूषति । श्रयतिस्तु नानुकृष्यते, तस्य 'सनीवन्तर्ध-३४७७' इति विकल्पविधानात् ॥ **( ३४६८-१ ) किरश्च पञ्चभ्यः** । पञ्चग्रहणमुत्तरार्थं स्पष्टप्रतिपत्तये इहैव कृतम् । एवं च प्रच्छधातोरनन्तरं गणपाठस्थं वृत्करणं त्यक्तुं शक्यम् । अत्रत्यपञ्चभ्य इत्यनेनैव वृत्करणं यत्तदपाणिनीयमिति व्याख्येयमित्याहुः । केचित्तु-'भूषाकर्मकिरादिसनाम्-३७०१' इति वार्तिके किरादिज्ञानार्थं वृत्करणमावश्यकमित्याहुः । **( ३४६८-२ ) अत्रेट इति** । 'वॄतो वा ३१७५' इति प्राप्ते भाष्यकारेष्टिरियम् ॥ **भौवादिकयोरिति** । तथा च-'अज्झनगमाम्-३४७२' इति वक्ष्यमाणेन दीर्घ इति भावः ॥ **( ३४६९ ) इको झल्** । 'रुदविद-३४६६' इत्यतः सन्ननुवर्तते, सनाऽऽक्षिप्तो धातुरिका विशेष्यते, विशेषणेन च तदन्तविधिरित्याह—**इगन्तादिति** । इगन्तात् किम्, पिपासति । तिष्ठासति । झलिति किम्, शिशयिषते ॥ **कित्स्यादिति** । 'असंयोगाल्लिट् कित् ३००२' इत्यतः किदनुवर्तत इति भावः ॥ **एज्विषयत्वाभावादिति** । कित्त्वेन गुणाप्राप्तेरित्यर्थः ॥ **अत एवेति** । यद्येज्विषयादन्यत्राप्यात्वं भवेत्तदा मीग्रहणं तत्र न कुर्याद्दामादाग्रहणेष्वविशेषादिति भावः ॥ **( ३४७० ) हलन्ताच्च** । इगित्यनुवर्तते तदवयवत्वं हलो न संभवतीति समीपवाच्यत्रान्तशब्द इत्याशयेन व्याचष्टे—**इक्समीपादिति** । सौत्रत्वाद्विशेषणस्यान्तशब्दस्य परनिपातः ॥ **( ३४७१ ) तितृक्षतीति** । कित्त्वे सति 'अनिदिताम्—५५७' इति नलोपः ॥ **( ३४७२ ) अज्झनगमाम्**—। गमः सामान्येन ग्रहणे 'गम्लृ गतौ' इत्यस्मात् सञ्जिगंसते इत्य-

---

१ **उगन्ताच्चेति** । यद्यपि चकारेण '**श्र्युकः क्किति**' इति सूत्रनिर्दिष्टं श्र्युक इति समस्तमेवानुवर्तते तथापि श्रिधातोरग्रे '**सनीवन्तर्ध-**' इति विकल्पस्य वक्ष्यमाणत्वाद् '**उकः**' इत्येव पर्यवसितम् । तत्र '**एकाच उपदेशे-**' इति पूर्वसूत्रानुवृत्तं संबध्यत एवेति '**उपदेशे एकाच उगन्तात्**' इत्येव निर्गलितोऽर्थः । तस्माज्जागृधातोः सन इड् भवत्येवेति बोध्यम् ॥ २ एज्विषयत्वसंभावनायामेवात्त्वप्रवृत्तिरित्यत्र प्रमाणं दर्शयितुमाह—**अत एवेति** । एज्विषयत्वाभावेनात्वप्रवृत्त्यभावादेवेत्यर्थः॥अन्यथा मीधातोरात्वे कृते मारूपत्वाविशेषेण माग्रहणेन ग्रहणे सिद्धे पृथक् पाठो व्यर्थ एव स्यादिति भावः ॥

षति । विभाषा वेः । चिकीषति, चिचीषति । जिघांसति ॥ ( ३४७३ ) **सनि च । २ । ४ । ४७ ।** इणो गमिः स्यात्सनि न तु बोधने । जिगमिषति । बोधने प्रतीषिषति । इण्वदिकः । अधिजिगमिषति ॥ कर्मणि तङ् । परस्मैपदेष्वित्युक्तेर्नेट् । झलादौ सनीति दीर्घः । जिगांस्यते । अधिजिगांस्यते ॥ अजादेशस्येत्युक्तेर्गच्छतेर्न दीर्घः । जिगंस्यते, संजिगंसते ॥ ( ३४७४ ) **इङश्च । २ । ४ । ४८ ।** इङो गमिः स्यात्सनि । अधिजिगांसते ॥ ( ३४७५ ) **रलो व्युपधाद्धलादेः संश्च । १ । २ । २६ ।** उश्च इश्च वी, ते उपधे यस्य तस्माद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतिस्वाप्योः संप्रसारणम् । दिद्युतिषते, दिद्योतिषते । रुरुचिषते, रुरोचिषते । लिलिखिषति, लिलेखिषति । रलः किम् । दिदेविषति । व्युपधात्किम् । विवर्तिषते । हलादेः किम् । एषिषिषति । इह नित्यमपि द्वित्वं गुणेन बाध्यते । ( ३४७६ ) उपधाकार्यं हि द्वित्वात्प्रबलम् । ओणेर्ऋदित्करणस्य[1] सामान्यापेक्षज्ञापकत्वात् ॥ ( ३४७७ ) **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।७।२।४९।** इवन्तेभ्य ऋधादिभ्यश्च सन इड्वा स्यात् । इडभावे हलन्ताच्चेति कित्वम् । च्छ्वोरिति वस्य ऊठ् । यण् । द्वित्वम् । दुद्यूषति। दिदेविषति । स्तौतिण्योरेवेति षत्वनियमान्न षः । सुस्यूषति, सिसेविषति ॥ ( ३४७८ ) **आप्ज्ञप्यृधामीत् । ७ । ४ । ५५ ।** एषामच इस्स्यात्सादौ सनि ॥ ( ३४७९ ) **अत्र लोपोऽभ्यासस्य । ७ । ४ । ५८ ।** सनि मीमेत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात् । आप्तुमिच्छति ईप्सति । अर्धितुमिच्छति-। रपरत्वम् । चर्त्वम्। ईर्त्सति । अर्दिधिषति । बिभ्रजिषति, बिभर्जिषति, बिभ्रक्षति, बिभर्क्षति ॥ ( ३४८० ) **दम्भ इच्च । ७ । ४ । ५६ ।** दम्भेरच इत्स्यादीच सादौ सनि । अभ्यासलोपः । हलन्ताच्चेत्यत्र हल्ग्रहणं जातिपरमित्युक्तम् । तेन सनः कित्वान्नलोपः । धिप्सति, धीप्सति । दिदम्भिषति । शिश्रीषति, शिश्रयिषति । उदोष्ठ्यपूर्वस्य । सुस्वूर्षति । सिस्वरिषति । युयूषति, यियविषति । ऊर्णुनूषति, ऊर्णुनुविषति, ऊर्णुनविषति । न च परत्वाद्गुणावादेशयोः सतोरभ्यासे उकारो न श्रूयेतेति वाच्यम्, द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा[2] । न च सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता कथमिति वाच्यम्। ( ३४८१ ) **कार्यमनुभवन्[3] हि कार्यी निमित्ततया नाश्रीयते ।** न त्वननुभवन्नपि । न चेह सन् द्वित्वमनुभवति । बुभूर्षति । बिभरिषति । ज्ञपिः पुगन्तो मित्संज्ञकः, पकारान्तश्चौरा-

---

त्रातिप्रसङ्गः स्यादतः 'सनि च ३४७३' 'इङश्च ३४७४' इति सूत्राभ्यां विहितस्येणिङोरादेशस्य 'इण्वदिकः ३२७५' इति इक आदेशस्य च ग्रहणमित्याशयेनाह-**अजादेशगमेरिति** । एतच्च सूत्रेऽज्ग्रहणाल्लभ्यते। तथाहि-इह 'सनि' इत्येव सूत्रं कर्तव्यं दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्य विशेषणादजन्ताङ्गस्य दीर्घः । चिचीषति । ततो 'हनिगम्योः' इत्यपरं कर्तव्यम् । एवं चाज्ग्रहणमतिरिच्यमानं प्रवृत्तिभेदेन गमेर्विशेषणार्थम् । अजन्तस्य दीर्घो भवति अजादेशगमेश्चेति ॥ झलादाविति किम् , जिगमिषति ।'गमेरिट् परस्मैपदेषु ३१०४' इति इट् ॥ ( ३४७३ ) **सनि च** 'णौ गमिरबोधने ३४६३' इत्यतोऽबोधन इत्यनुवर्तते ॥ **प्रतीषिषतीति** । 'तक्रकौण्डिन्य-' न्यायस्यानित्यत्वात्सन्रूपस्याभ्यासस्येत्त्वम् । अनित्यत्वे लिङ्गन्तु 'नित्यं कौटिल्ये गतौ ३५०१' इत्यत्र नित्यग्रहणमिति वक्ष्यते ॥ **संजिगंसते इति** । 'समो गम्यृच्छिभ्याम् ३६१५'इति तङ् 'पूर्ववत्सनः ३६५५' इति सन्नन्तादपि भवति ॥ (३४७५) **रलो व्युपधा-**। 'न क्त्वा सेट् ५१४३' इत्यतः सेडिति वर्तते । चकारेण क्त्वायाः संग्रहः। 'असंयोगात्-३००२' इत्यतः किदिति 'नोपधात्-५१४५' इत्यतो वेति चानुवर्तते तदाह-**क्त्वासनावित्यादि** । सेट् किम्, भित्त्वा । छित्त्वा । बुभुक्षते॥ (३४७८) **आप्ज्ञप्यृ-**।'सनि मीमा-३४८५' इत्यतः अच इत्यनुवर्त्तते 'सः स्यार्धधातुके ३१२३' इत्यतः सीति च तदाह-**अच इत्स्यात्सादाविति** । सीत्यस्य सनो विशेषणात्सादाविति लाभः ॥ (३४७९) **ईप्सतीति** । 'अजादेर्द्वितीयस्य २९३०' इति प्सशब्दस्य द्वित्वम् ॥ **बिभ्रज्जिषतीति** । इटि तदभावे च रमागमविकल्पाच्चत्वारि रूपाणि ॥ **सुस्वूर्षतीति** । 'अज्झनगमाम्-३४७२' इति दीर्घे सत्युत्त्वम् ॥ **यियविषतीति** । 'द्विर्वचनेऽचि ३००३' इत्यादेशनिषेधाद् द्वित्वे कृते अभ्यासस्योवर्णस्येत्त्वम् ॥ **ऊर्णुनूषतीति** । इडभावे 'अज्झनगमाम्-३४७२'

---

१ **ओणेर्ऋदित्करणादिति** । यदि नित्यत्वाद्द्वित्वमुपधाकार्यात् प्रागेव प्रवर्तेत तदा णिशब्दस्य द्वित्वे सति ओकारस्योपधात्वाभावादेव ह्रस्वाप्राप्तौ तन्निषेधाय कृतम् ऋदित्करणं व्यर्थमेव स्यादिति भावः ॥ २ आदेश स्यस्थानिरूपातिदेशापेक्षया आदेशनिषेध एव श्रेयान् ' प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ' इति न्यायादित्याह-**आदेशनिषेधाद्वेति** ॥ वाशब्दोऽत्रैवकारार्थेऽभिप्रेत इति भावः ॥ ३ **कार्यमनुभवन्निति** । कार्येण संबद्धः कार्यीत्यर्थः ॥ एतत्फलितमेव न तु कार्यमननुभवन्नपीति । परिभाषास्वरूपं तु **'कार्यमनुभवद्धि कार्यी निमित्ततया नाश्रीयते'** इत्येव । 'स्थण्डिलाच्छयितरि-' इति सूत्रे 'शयितरि' इति निर्देशोऽस्यां ज्ञापकः । यदि हि कार्यमनुभवन् कार्य्यपि निमित्ततयाऽऽश्रीयेत तदा शीङो ङित्त्वेन **'क्ङिति च'** इति गुणनिषेधे 'शयितरि' इति गुणघटितनिर्देशोऽनुपपन्न एव स्यात् ॥

दिकश्च । इडभावे इको झलिति किरवान्न[३४६१] गुणः । अज्झनेति[३४७२] दीर्घः परत्वाण्णिलोपेन बाध्यते । आप्ज्ञपीति[३४७०] ईत् । ज्ञीप्सति, जिज्ञपयिषति । अमितस्तु—जिज्ञापयिषति । जनसनेत्यात्वम्[६३२२] । सिषासति, सिसनिषति ॥ ( ३४८२ ) वा॰ तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः ॥ ( ३४८३ ) सू॰ तनोतेर्विभाषा । ६ । ४ । १७ । अस्योपधाया दीर्घो वा स्याज्झलादौ सनि । तितांसति, तितंसति, तितनिषति ॥ ( ३४८४ ) वा॰ आशङ्कायां सन्वक्तव्यः ॥ श्वा मुमूर्षति । कूलं पिपतिषति ॥ ( ३४८५ ) सू॰ सनि मीमाघुरभलभशकपतपदामच इस् । ७ । ४ । ५४ । एषामच इस् स्यात्सादौ सनि । अभ्यासलोपः । स्कोरिति सलोपः[६१६] । पित्सति । दिदरिद्रिषति, दिदरिद्रासति ॥ डुमिञ् मीञ् आभ्यां सन् । कृतदीर्घस्य मिनोतेरपि मीरूपाविशेषादिस् । सः सीति[३१२३] तः । मित्सति, मित्सते । मा माने, मित्सति । माङ्मेङोः, मित्सते । दोदाणोः, दित्सति । देङ्, दित्सते । दाञ्, दित्सति, दित्सते । धेट्, धित्सति । धाञ्, धित्सति, धित्सते । रिप्सते । लिप्सते । शक्लृ, शिक्षति । शक मर्षण इति दिवादिः स्वरितेत् । शिक्षति, शिक्षते । पित्सते ॥ ( ३४८६ ) वा॰ राधो हिंसायां सनीस् वाच्यः ॥ रित्सति । हिंसायां किम् । आरिरात्सति ॥ ( ३४८७ ) सू॰ मुचोऽकर्मकस्य गुणो वा । ७ । ४ । ५७ । सादौ सनि । अभ्यासलोपः । मोक्षते मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णः । न वृद्भ्यश्चतुर्भ्यः[३१२९] । विवृत्सति । तङि तु विवर्तिषते । सेऽसिचीति[३३२४] वेट् । निनर्तिषति, निनृत्सति ॥ ( ३४८८ ) सू॰ इट् सनि वा । ७ । २ । ४१ । वृङ्वृञ्भ्यामृदन्ताच्च सन इड्वा स्यात् । तितरिषति, तितरीषति, तितीर्षति । विवरिषति, विवरीषति, वुवूर्षति । वृङ् । वुवूर्षते, विवरिषते । दुध्वूर्षति ॥ ( ३४८९ ) सू॰ स्मिपूङ्रञ्ज्वशां सनि । ७ । २ । ७४ । स्मि पूङ् ऋ अञ्जू अश् एभ्यः सन इट् स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति । इह रिसंशब्दस्य[१] द्वित्वम् । इस् इति सनोऽवयवः कार्यभागिति कार्यिणो[२] निमित्तत्वायोगाद् द्विर्वचनेऽचीति न प्रवर्तते । अञ्जिजिषति । अशिशिषते । उभौ साभ्यासस्य[३४६३] । प्राणिणिषति । उच्छेस्तुक् ।

---

इति दीर्घः । इट्पक्षे तु 'विभाषोर्णोः ३२५८' इति वा ङित्त्वम् ॥ ( ३४८१ ) **न चेह सन्निति** । किंतु नुशब्द इत्यर्थः ॥ **किरवान्न गुण इति** । णिचः स्थाने इत्यर्थः ॥ ( ३४८४ ) **श्वा मुमूर्षतीति** । एकश्वविषया मरणशङ्केति बोधः । मरणशङ्काविषयो भवतीत्यन्ये । 'पूर्ववत्सनः ३६५५' इत्यात्मनेपदमिह न शङ्क्यम्, 'शदेः–३१५५–३३६५' इत्यादिसूत्रद्वये सनो नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयमिति वक्ष्यमाणत्वात् ॥ ( ३४८५ ) **सनि मीमा–** । 'सः सि–३१२३' इत्यतः सीत्यनुवर्तते, तस्य सनो विशेषणत्वात्सादौ सनीति लाभः ॥ **मीरूपाविशेषादिति** । ननु मिनोतेर्मीरूपस्य लाक्षणिकत्वात् मीग्रहणेन ग्रहणं न प्राप्नोति । नैष दोषः, यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र 'लक्षणप्रतिपदोक्तयोः–११५३-२' इति परिभाषोपस्थानं, न तु यत्र प्रयोगाश्रयणं तत्रेति 'इको झल्' इति सूत्रे कैयटेनोक्तत्वात् । तस्यायमाशयः—मीरूपमात्रस्य प्रयोगोऽत्राश्रितः 'विभाषा दिक्समासे–४०८' इत्यत्र तु लक्षणाभिनिर्वृत्तस्य समासशब्दस्याश्रयणात् 'दिङ्नामान्यन्तराले १२१७' इति प्रतिपदोक्त एव समास आश्रीयते इति लक्षणप्रतिपदोक्तपरिभाषाया[११६३-२] अनित्यत्वात्क्वचिदुपतिष्ठते क्वचिन्नोपतिष्ठते इति तु निष्कृष्टोऽर्थः ॥ **मित्सतीति** । 'हलन्ताच्च ३४७०' इति किरवान्नोपधागुणः ॥ **शिक्षतीति** । ननु 'निरनुबन्ध–' परिभाषया 'शक मर्षणे' इत्यस्यैव ग्रहणमुचितमिति चेत्, अत्राहुः—इयं हि परिभाषा प्रत्ययग्रहणविषया । अत एव 'जृव्रश्च्योः–५१४८' इत्यत्र जॄझषोरुभयोर्ग्रहणमिति न्यासकारेणोक्तमतोऽत्रापि स्वादिदैवादिकयोर्ग्रहणं युक्तमेवेति ॥ ( ३४८७ ) **मुचोऽकर्मकस्य–** । 'हलन्ताच्च ३४७०' इति किरवेन गुणाभावे प्राप्ते विधिरयम् ॥ **विवृत्सतीति** । 'वृद्भ्यः स्यसनोः ३१२८' इति विकल्पेन परस्मैपदम् ॥ ( ३४८८ ) **इट् सनि वा** । चिकीर्षतीत्यादौ 'अज्झनगमाम्–३४७२' इति दीर्घे कृते नेदं प्रवर्तते । 'एकाच उपदेशे–३००६' इत्यतः उपदेश इत्यनुवर्त्य उपदेशे ऋकारान्तादिति व्याख्यानात् । अत एवेटं विनैवोदाहरति—**दुध्वूर्षतीति** । ध्वृ कौटिल्ये । 'अज्झन–३४७२' इति दीर्घः । 'उदोष्ठ्यपूर्वस्य ३३१२' इत्युत्वम् । रपरत्वम् । 'हलि च ४८१' इति दीर्घः ॥ ( ३४८९ ) **स्मिपूङ्–** । पूङिति ङकारानुबन्धग्रहणात् पूञः पुपूषतीत्येव, 'सनि ग्रह–३४६७' इतीण्निषेधात् ॥ **सिस्मयिषत इति** । 'स्मिङ् ईषद्धसने' अस्यानिट्त्वादिडागमस्याप्राप्तिः । 'स्तौतिण्योरेव–३४९१' इति नियमान्न षः ॥ **अरिरिषतीति** । अस्याप्यनिट्त्वादिडागमस्याप्राप्तिः ॥ **रिस्शब्दस्येति** । सन इटि गुणे च कृते अरिस इति स्थिते 'अजादेर्द्वितीयस्य २९३०' इति रिस्शब्दस्य द्वित्वमित्यर्थः ॥ **अञ्जिजिषतीत्यादि** । अञ्जू व्यक्ति-

---

१ 'ऋ इ स' इत्यवस्थायाम् '**सन्यङोः**' इत्यस्य षष्ठीत्वात् 'ऋ इ स' इति समुदायस्यैव द्वित्वकार्यित्वात्तदन्तर्गतस्येकारस्य निमित्तत्वाभावाद् 'द्विर्वचनेऽचि' इत्यस्याप्रवृत्त्या द्वित्वात् पूर्वं गुणे 'अरिस' इत्यत्र '**अजादेर्द्वितीयस्य**' इत्यनेन 'रि'रूपस्यैव द्वितीयैकाचो द्वित्वेन सकलेष्टसिद्धौ 'रिस्' इत्यस्य द्वित्वस्वीकारो वृथैव । किंचैवं सति '**व्यञ्जनं स्वराङ्गम्**' '**तत्परस्वरम्**' इति प्रातिशाख्येन सकारस्याकाराङ्गत्वबोधनेनेकाराङ्गत्वाभावान्न तद्विरोधोऽपि । 'हलादिः शेषः' इति सूत्रं तु 'चिक्लिन्दे' 'चुच्योत' इत्यादौ चरितार्थम् ॥ **नटभार्यावद् व्यञ्जनानि** इत्यपि परस्वरसत्त्वे पराङ्गत्वमेव बोधयति न पूर्वाङ्गत्वमिति न '**न न्द्राः–**' इत्यस्य वैयर्थ्यम् । धातुसंज्ञेऽवसितं तु पूर्वस्यैवाङ्गमिति न निजौ जकारविशिष्टस्यैकाच्त्वदर्शकभाष्यविरोधः ॥ इति बोध्यम् ॥

२ अवयवगतमपि कार्यित्वमवयविनि समारोप्यैव सनो द्वित्वनिमित्तत्वमनाश्रित्य गुणप्रतिषेधकस्यास्य सूत्रस्य न प्रवृत्तिरिति भावः ॥

चुत्वम् । पूर्वत्रासिद्धीयमद्वित्व इति च्छाभ्यां सहितस्येटो द्वित्वम् । हलादिः शेषः । उच्चिच्छिषति । ( ३४९० ) ⁽¹⁾निमित्तापाये नैमित्तकस्याप्यपायः इति त्वनित्यम्, च्छ्वोरिति सतुग्ग्रहणाज्ज्ञापकात्, प्रकृतिप्रत्ययापत्तिवचनाद्वा । णौ च संश्चङोरिति सूत्राभ्यामिङो गाङ्, श्वयतेः संप्रसारणं च वा । अधिजिगापयिषति, अध्यापिपयिषति । शिश्वाययिषति, शुशावयिषति । ह्वः संप्रसारणम् । जुहावयिषति । णौ द्वित्वात्प्रागच आदेशो नेत्युक्तत्वादुकारस्य द्वित्वम् । पुस्फारयिषति । चुक्षावयिषति । ओः पुयण्ज्यपरे । पिपावयिषति । बिभावयिषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । पुयणजि किम् । नुनावयिषति । अपरे किम् । बुभूषति । स्रवतीतीत्वं वा । सिस्रावयिषति, सुस्रावयिषतीत्यादि । अपर इत्येव । शुश्रूषते ॥ ( ३४९१ ) ⓢ स्तौतिण्योरेव षण्यभ्यासात् । ८ । ३ । ६१ । अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात्षभूते सनि नान्यस्य । तुष्टूषति । सुतिस्वाप्योरित्युत्वम् । सुष्वापयिषति । सिषाधयिषति । स्तौतिण्योः किम् । सिसिक्षति । उपसर्गात्तु स्थादिष्वभ्यासेन चेति षत्वम् । परिषिषिक्षति । षणि किम् । तिष्ठासति । सुसुप्सति । अभ्यासादित्युक्तेर्नेह निषेधः। इण् । प्रतीषिषति । इक् । अधीषिषति ॥ ( ३४९२ ) ⓢ सः स्विदिस्वदिसहीनां च । ८ । ३ । ६२ । अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव न षः षणि परे । सिस्वेदयिषति, सिस्वादयिषति । सिसाहयिषति । स्थादिष्वेवाभ्यासस्येति नियमान्नेह । अभिसुसूषति ॥

( ३४९३ ) शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ॥ सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ १ ॥

शैषिकाच्छैषिकः सरूपो न, तेन शालीये भव इति वाक्यमेव, न तु छान्ताच्छः । सरूपः किम् । अहिच्छत्रे भव आहिच्छत्रः, आहिच्छत्रे भव आहिच्छत्रीयः, अणन्ताच्छः । तथा मत्वर्थात्सरूपः स न, धनवानस्यास्ति । इह मतुबन्तान्मतुब् न । विरूपस्तु स्यादेव, पण्डिमती शाला । सरूप इत्यनुषज्यते । अर्थद्वारा सादृश्यं तस्यार्थः । तेन इच्छासन्नन्तादिच्छासन्न । स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते । मीमांसिषते ॥ इति सन्नन्तप्रक्रिया ॥

---

## अथ यङन्तप्रक्रिया ।

( ३४९४ ) ⓢ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् । ३ । १ । २२ । पौनःपुन्यं भृशार्थश्च क्रियासमभिहारस्तस्मिन् द्योत्ये यङ् स्यात् ॥ ( ३४९५ ) ⓢ गुणो यङ्लुकोः । ७ । ४ । ८२ । अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च । सनाद्यन्ता इति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् । पुनःपुनरतिशयेन वा भवति बोभूयते । बोभूयाञ्चक्रे । अबोभूयिष्ट । धातोः किम् । आर्धधातुकत्वं यथा स्यात् । तेन ब्रुवो वचिरित्यादि । एकाचः किम् ।

---

प्रक्षणादौ, अशू व्याप्तौ, अनयोरूदित्त्वाद्विकल्पे प्राप्ते नित्यमिट् । अश भोजने इति क्र्यादिस्तु नित्यं सेडेव ॥ सूत्राभ्यामिति । एकं द्वितीयेऽपरं तु षष्ठे । तत्राद्येन गाङादेशोऽपरेण संप्रसारणम् ॥ ह्वः संप्रसारणम् । इदं च णिजन्तेषु व्याख्यातमिह तु स्मारितम् ॥ जिजावयिषतीति । जुः सौत्रो धातुः 'जुचंक्रम्य-४१५१' इत्यत्रोक्तः ॥ शुश्रूषते इति । 'ज्ञाश्रुस्मृदृशां सनः ३६५२' इत्यात्मनेपदम् ॥ ( ३४९१ ) स्तौतिण्योरेव-। एवं च सिषाधयिषेति प्रयोगस्य साधुत्वं, न तु सिसाधयिषेत्यस्येति ज्ञेयम् ॥ उपसर्गात्त्विति । 'मध्येऽपवाद-७३२' न्यायात् 'स्तौतिण्योः-३४९१' इति नियमेन 'आदेशप्रत्यययोः २९८' इति षत्वमेव बाध्यते, न तु 'स्थादिष्वभ्यासेन च-३०४४' इत्युत्तरेण विहितमिति भावः ॥ सुषुप्सतीति । 'रुदविद-३४६६' इति सनः कित्त्वान्न गुणः ॥ प्रतीषिषतीति । इह षभूते सनीण् गताविति धातोः परस्य सस्य षत्वं भवत्येवेत्यर्थः ॥ ( ३४९२ ) नियमान्नेहेति । न चात्र नियमादेव निषेधे 'सुनोतेः स्यसनोः ३३४४' इति सूत्रं सन्विषये निर्विषयं स्यादिति वाच्यम्, अभिसुसूषतेरप्रत्ययः । अभिसुसूरित्यत्र षत्वनिषेधाय तस्यावश्यकत्वात् । एतच्च काशिकायां स्पष्टम् ॥ ( ३४९३ ) शैषिकेति । एतच्च श्लोकवार्तिकमिति केचित् । भाष्यमिति बहवः । शेषे भवः शैषिकः । अध्यात्मादित्वाट्ठञ् । मतुबर्थे भवो मतुबर्थीयः । गहादित्वाच्छः । मतुबर्थोऽस्यास्तीति मतुबर्थिकः 'अत इनिठनौ १९००' इति ठन् ॥ इति सन्नन्तप्रक्रिया ॥

---

१ ननु सतुक्ग्रहणस्य ज्ञापकत्वमनुपपन्नम्, वाञ्छादिभ्यः क्विपि शत्वादेशापत्तिवारणाय तस्यावश्यकत्वादित्यरुचेराह—प्रकृतिप्रत्ययापत्तिवचनाद्वेति । "नक्षत्रयोगे ज्ञि" इति वार्तिके भाष्यकृतप्रकृतिप्रत्ययापत्तिवचनमित्यर्थः । तद्धि पुष्ययोगं जानाति पुष्येण योजयति इत्यत्र घिति परतः 'चजोः-' इति विहितं कुत्वं घितो लुकि स्वयमेव निवर्तेत इति व्यर्थं सत् तदनित्यत्वे ज्ञापकमिति बोध्यम् ॥ अन्ये तु अस्य वार्तिकस्य प्रत्याख्यातत्वात् प्रथमवार्तिक एव परे निमित्तत्वस्य पूर्वे नैमित्तिकत्वस्य चोपलक्षणतया संगमयन्ति । तथाहि—तद्धि कंसं घातयतीत्यादौ 'हनश्च वधः' इति विहितस्यापो लुकि हनूरूपप्रकृत्यवस्थापनाय क्रियते । यद्ययं न्यायः स्यात् तदाऽप्प्रत्ययवधादेशयोः संनियोगशिष्टत्वेन कृतोऽपो लुकि तत्संनियोगशिष्टो वधादेशोऽपि 'संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः' इति न्यायेन निवर्तेतैवेति व्यर्थं प्रकृतिप्रत्ययापत्तिवचनं तस्यानित्यत्वमेव ज्ञापयतीति भावः ॥ वस्तुतो वाञ्छादिभ्यः क्विपोऽनभिधानेन पूर्वोक्तज्ञापकमपि युक्तमेव ॥ अकृतव्यूहपरिभाषार्थभूतेयम् । सर्वमिदं प्राचामनुरोधेन ॥ भाष्यानुसारिणस्तु 'नास्त्येवेयम्' इति नोक्तशङ्कावकाशः इति वदन्ति ॥

पुनःपुनर्जागर्ति । हलादेः किम् । भृशमीक्षते । भृशं रोचते शोभते इत्यत्र यङेति भाष्यम् । पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते ॥ ( ३४९६ ) (वा) सूचिसूत्रिमूत्र्यटयर्त्यशूर्णो[2]तिभ्यो यङ्वाच्यः ॥ आद्यास्त्रयश्चुरादावदन्ताः । अनेकाच्त्वेनाषोपदेशत्वात्षत्वं न ॥ ( ३४९७ ) (सू) यस्य हलः । ६ । ४ । ४९ । यस्येति संघातग्रहणम् । हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके । आदेः परस्य । अतो लोपः । सोसूचांचक्रे । सोसूचिता । सोसूत्र्यते । सोसूत्रिता ॥ मोमूत्र्यते मोमूत्रिता ॥ ( ३४९८ ) (सू) दीर्घोऽकितः । ७ । ४ । ८३ । अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च । अटाटयते ॥ ( ३४९९ ) (सू) यङि च । ७ । ४ । ३० । अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि ॥ ( ३५०० ) यकार[3]पररेफस्य न द्वित्वनिषेधः, अरार्यते इति भाष्योदाहरणात् । अरारिता । अशाशिता । ऊर्णोनूयते । बेभिद्यते । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः । बेभिदिता ॥ ( ३५०१ ) (सू) नित्यं कौटिल्ये गतौ । ३ । १ । २३ । गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे । कुटिलं व्रजति वाव्रज्यते ॥ ( ३५०२ ) (सू) लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् । ३ । १ । २४ । एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति । लोलुप्यते । सासद्यते ॥ (३५०३-१) (सू) चरफलोश्च । ७ । ४ । ८७ । अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः । नुगित्यनेनानुस्वारो लक्ष्यते ॥ ( ३५०३-२ ) (वा) स च पदान्तवद्वाच्यः ॥ वा पदान्तस्येति यथा

---

( ३४९४ ) **धातोरेकाचो**—। क्रियासमभिहार इत्युक्तत्वाद्धातोरेष स्यान्न तु प्रातिपदिकादिति पृच्छति—**धातोः किमिति ॥ ब्रुवो वचिरित्यादीति** । वावच्यते, चाख्यायत इत्यादिरूपासिद्धिः प्रयोजनमित्यर्थः । धातुग्रहणाभावे धिगित्यव्ययादपि स्यात्तस्य क्रियावाचित्वादेकाच्त्वाच्चेति तद्वारणार्थमपि धातुग्रहणमावश्यकमित्याहुः ॥ ( ३४९७ ) **यस्य हलः ॥ संघातग्रहणमिति** । तेन ईर्ष्यिता, अहर्यीदित्यादौ यलोपो न । संघातग्रहणेन च 'अर्थवद्ग्रहण–११२' परिभाषोपस्थित्या पुत्रकाम्येत्यादौ नातिप्रसङ्गः । वर्णग्रहणे तु उक्तपरिभाषाया अनुपस्थित्या स्यादेवात्र यलोप इति भावः । हलः किम्, लोलूयिता । पोपूयिता ॥ ( ३४९८ ) **दीर्घोऽकितः** । अकितः किम्, यंयम्यते । रंरम्यते । ननु दीर्घश्रुत्योपस्थितेनाचा 'अत्र लोपोऽभ्यासस्य ३४७९' इत्यतोऽनुवृत्तमभ्यासस्येत्येतद्विशिष्यताम् । ततश्चाजन्ताभ्यासस्य दीर्घो भवतीत्यर्थात्पापच्यत इत्यादावेव दीर्घो भवेन्न तु यंयम्यते जङ्घनीतीत्यादौ । तत्र हि परत्वान्नुकि कृतेऽभ्यासस्याजन्तत्वाभावाद्दीर्घस्य प्रसक्तिरेव नास्तीति किमनेनाकित इत्यनेन । न चाभ्यासावयवस्याचो दीर्घ इति वैयधिकरण्यान्वये स्वीकृतेऽकिद्ग्रहणं प्रयोजनवदिति वाच्यम्, संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्, 'येन नाप्राप्ते–' न्यायेन नुको दीर्घापवादत्वस्वीकाराच्च । तस्मादकित इति व्यर्थमिति चेत् । अत्राहुः—डोढौक्यते इत्यत्राभ्यासह्रस्वं बाधित्वा परत्वात् 'दीर्घोऽकितः ३४९८' इति दीर्घे कृते डोढौक्यत इति स्यात् । तस्माद् 'अभ्यासविकारेषु उत्सर्गविधीन् बाधका न बाधन्ते' इति ज्ञापनायाकित इति ग्रहणं कर्तव्यमिति । तथा च—उक्तज्ञापकनिर्वाहाय 'दीर्घोऽकितः ३४९८' इत्यत्राभ्यासस्याच इति वैयधिकरण्यपक्षस्याश्रयणात् यंयम्यत इत्यादौ दीर्घात्प्रागेव नुकि कृतेऽपि दीर्घः स्यात्, तद्वारणार्थमकित इत्यावश्यकमिति दिक् ॥ **अटाट्यत इति** । इह टयशब्दस्य द्वित्वम् ॥ ( ३४९९ ) **यङि च** । इह 'गुणोऽर्तिसंयोगाद्योः ३१७३' इत्येतत्सर्वमप्यनुवर्तते ॥ ( ३५०० ) **यकारपररेफस्येति** । यदि भाष्योदाहरणं सामान्यापेक्षं ज्ञापकं स्यात्तदाऽर्यमाख्यत् आरर्यदित्यादि सिध्यति ( ३५०१ ) **नित्यं कौटिल्ये**—। नित्यशब्दोऽवधारणार्थक इत्याह—**कौटिल्ये एवेति** । 'तक्रकौण्डिन्य–' न्यायेनैवेष्टे सिद्धे नित्यग्रहणं तस्य न्यायस्यानित्यत्वज्ञापनार्थम् । तेन 'मतिबुद्धिपूजार्थेभ्यश्च ४१०७' इति वर्तमाने क्तेनाबाधनात्पूजार्थेभ्यो भूते क्तः सिध्यति । ततश्च 'क्तस्य च वर्तमाने ९१३' इति षष्ठी न प्रवर्तत इति 'पूजितो यः सुरासुरैः' इति

---

१ **ईक्षत इति** । ये तु 'अनेकाज्भ्योऽजादिभ्यो वा यङ् चेत्, वार्तिकपठितेभ्य एव' इति नियमेनैवानेकाज्भ्योऽजादिभ्यो वा व्यावृत्तेः सिद्धौ सूत्रे हलाद्येकाज्ग्रहणं व्यर्थमेवेति वदन्ति ॥ तन्न सम्यक् वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्त्या वार्तिकमाश्रित्य सूत्रप्रत्याख्यानस्यानुचितत्वात् ॥ २ अत्र वार्तिक ऊर्णोतिग्रहणम् 'ऊर्णोतेराम्न' इति वार्तिकं च भाष्यकृता प्रत्याख्यातम् । ऊर्णुत ऊर्णुतवान् इत्यादौ 'श्युकः क्किति' इत्येतत्प्रवृत्तये अत्यावश्यकेन "**वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्** ॥" इति श्लोकवार्तिकेन णुवद्भावे । एकाज्हलादित्वेनैव यङ्सिद्धेर्निशबाधत्वात् । वाक्यवार्तिककाराच्छ्लोकवार्तिककारो भिन्न एवेति वाक्यवार्तिके रचिते ॥ श्लोकवार्तिके त्रयाणामपि प्रयोजनानां सिद्धिं दृष्ट्वा भाष्यकारः श्लोकवार्तिकाङ्गीकारे लाघवेन वाक्यवार्तिके प्रत्याख्यातवात् ॥ ३ 'न न्द्राः' इति निषेधमाशङ्क्याह—**यकारपरेति** । यकारः परो यस्मात् स यकारपरः ततः स चासौ रेफश्चेति कर्मधारयः ॥ तत्रोपपत्तिमाह—**अरार्यत इतीति** । उक्तनिषेधप्रवृत्तौ तु 'अर्यायते' इति प्रयोगापत्तिः स्यात् । भाष्योक्तप्रयोगस्य रेफद्वित्वमन्तरा नैव संभव इति भावः ॥ '**न चोदाहरणमादरणीयम्**' इति भाष्यं तु—'प्रयोगदर्शनादेव यणादिकार्यसिद्धौ किं तत्तद्विधायकवचनेन इत्यादिकुकल्पनाप्रसङ्गं वारयितुमेव प्रवृत्तम् इति न विरोधसंभावना ॥

स्यात् ॥ ( ३५०४ ) उत्परस्याऽतः । ७ । ४ । ८८ । चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः ॥ हलि चेति दीर्घः । चञ्चूर्यते, चंचूर्यते । पम्फुल्यते, पंफुल्यते ॥ (३५०५) जपजभदहदशभञ्जपशां च । ७ । ४ । ८६ । एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः । गर्हितं जपति जञ्जप्यते इत्यादि ॥ ( ३५०६ ) ग्रो यङि । ८ । २ । २० । गिरते रेफस्य लत्वं स्याद्यङि । गर्हितं गिलति जेगिल्यते । घुमास्थेतीत्त्वम् । गुणः । देदीयते । पेपीयते । सेषीयते । विभाषा श्वेः । शोशूयते, शेश्वीयते । यङि च । सास्मर्यते । रीङ् ऋतः । चेक्रीयते । सुट् । संचेस्क्रीयते ॥ (३५०७) सिचो यङि । ८ । ३ । ११२ । सिचः सस्य षो न स्याद्यङि । निसेसिच्यते ॥ ( ३५०८ ) न कवतेर्यङि । ७ । ४ । ६३ । कवतेरभ्यासस्य चुत्वं न स्याद्यङि । कोकूयते । कौतिकुवत्योस्तु चोकूयते ॥ ( ३५०९ ) नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् । ७ । ४ । ८४ । एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः । अकित इत्युक्तेर्न दीर्घः । नलोपः । वनीवच्यते[1] । सनीस्रस्यते इत्यादि ॥ ( ३५१० ) नुगतोऽनुनासिकान्तस्य । ७ । ४ । ८५ । अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् । नुकाऽनुस्वारो लक्ष्यत ईत्युक्तम् । यँय्यम्यते, यंयम्यते । तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न । भाम क्रोधे । बाभाम्यते । ये विभाषा । जाजायते, जञ्जन्यते ॥ ( ३५११ ) हन्तेर्हिंसायां यङि घ्नीभावो[2] वाच्यः ॥ जेघ्नीयते । हिंसायां किम् । जंघन्यते ॥ (३५१२) रीगृदुपधस्य च । ७ । ४ । ९० । ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्य-

---

तृतीया साधुरेव ॥ ( ३५०५ ) इत्यादीति । जंजभ्यते । दंदह्यते । दंदश्यते । बंभज्यते । पस धातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति 'स्पश बाधनस्पर्शनयोः' इत्यत्र माधवः । पंपस्यते । काशिकायां तु तालव्यान्तः क्वचिद् दृश्यते । एवं जञ्जपीति । जञ्जभीति । दन्दहीतीत्यादि यङ्लुकि उदाहर्तव्यम् ॥ ( ३५०६ ) ग्रो यङि । 'कृपो रो लः ३१३१' इत्यतो रो ल इति वर्तते तदाह—**रेफस्य लत्वमिति** ॥ **चेक्रीयते इति** । परत्वाद्रीङि कृते द्विर्वचनम् ॥ **संचेस्क्रीयते इति** । रीङि द्वित्वे च सुट् । न च सं कृ इत्यस्यामवस्थायां द्वित्वात्परत्वात्सुटि कृते संयोगादित्वेन रीङ्प्रवृत्तेः प्राक् गुणः स्यादिति वाच्यम्, 'अड्भ्यासव्यवायेऽपि' इत्यस्यारम्भे अड्भ्यासयोः कृतयोरेव सुट् न तु ततः प्रागिति सिद्धान्तात् । एतेन सुटो बहिरङ्गत्वान्न संयोगादित्वेन गुण इति केषांचित्समाधानं परास्तम् । अभ्यासात्परस्य सुटि कृते साभ्यासस्याङ्गस्य संयोगादित्वमृदन्तत्वं च नास्तीति गुणप्राप्तेरभावात् । ननु 'अड्भ्यासव्यवायेऽपि सुट् कात्पूर्वः ३३६७' इति वार्तिकप्रत्याख्यानाय 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्षं स्वीकृत्य भाष्यकृता संचस्करतुरित्यादावन्तरङ्गत्वात्सुटि ससुट्कस्यैव द्वित्वाभ्युपगमात् संचेस्क्रीयते इति न सिध्येत् । तत्र हि सुटि कृते रीङं बाधित्वा परत्वात् 'यङि च ३४९९' इति गुणे संचस्कर्यत इत्यनिष्टरूपप्रसङ्गात् । यदि तु इष्टानुरोधेन पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति मताश्रयणेन रीङादेशं द्वित्वं च कृत्वा पश्चात्सुटि इष्टं रूपं न सिध्यतीत्युच्यते, तर्हि 'अड्भ्यासव्यवायेऽपि ३३६७' इति वचनं स्वीकर्तव्यमेव स्यादिति चेत् । अत्राहुः—'अड्भ्यास—३३६७' इत्यादिवार्तिकं विनाऽपि संचस्करतुरित्यादिरूपासिद्धये भाष्यकृता 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्ष आश्रितः । संचेस्क्रीयते, समचेस्क्रियत इत्यादिसिद्धिस्तु वार्तिकायत्तैवेति[3] ॥ ( ३५०७ ) **सिचो यङि** । अभ्याससकारस्य 'उपसर्गात्सुनोति—३०३७' इति, ततः परस्य तु 'स्थादिष्वभ्यासेन च—३०४४' इति षत्वे प्राप्ते निषेधोऽयम् । यङि किम् , अभिषिषिक्षति ॥ ( ३५०८ ) **न कवतेर्यङि** । इह 'कोः' इत्येव वाच्ये कवतेरिति शपा निर्देशात् 'कुङ् शब्दे' इति भ्वादिरेव गृह्यते, न तु 'कु शब्दे' इति अदादिः, 'कुङ् शब्दे' इति तुदादिश्चेत्याशयेनाह—**कौतिकुवत्योस्त्विति** । ननु कोरित्युक्तेऽपि कूङः प्रसङ्गो नास्ति, दीर्घान्तत्वाल्लुग्विकरणपरिभाषया च कौतेरपि प्रसङ्गो नास्तीति चेत्, अत्राहुः—कोरित्युक्ते तु 'निरनुबन्ध—' परिभाषाया अपि जागरूकत्वादुभयोर्ग्रहणं स्यादिति कौतिव्यावृत्त्यर्थं शपा निर्देशः कर्तव्यः । कृते च तस्मिन्कुवातिमपि व्यावर्तयतीत्यत्र तात्पर्यमिति कुङ इत्येवात्र सुवचम् ॥ ( ३५०९ ) **इत्यादीति** । दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते । एवं वनीवञ्चीति । सनीस्रंसीति । दनीध्वंसीतीत्यादि यङ्लुक्युदाहर्तव्यम् ॥ ( ३५११ ) **घ्नीभाव इति** । ह्नीभावे कृतेऽपि 'अभ्यासाच्च ३२३६' इति कुत्वेन जेघ्नीयत इति सिध्यति तथापि प्रक्रियालाघवाय घ्नी इत्युक्तमिति मनोरमा । अन्ये तु 'सेर्हिः', 'मेर्निः २९५८' इति इकारोच्चारणसामर्थ्याद्यथा 'एरुः २९५१' इत्युत्वं न भवति तथा ह्नीभावे हि कृते 'अभ्यासाच्च ३२३६' इति कुत्वं न स्यादित्याशयेन घ्नीभावः कृत इत्याहुः । अत्र च दिग्यादेशेनेव घ्नीभावेन द्वित्वं न बाध्यते पुनःप्रसङ्गविज्ञानादिति केचित् । वस्तुतस्तु—यङन्तावयवस्य द्वितीयाजवधिकस्य द्वित्वं, घ्नीभावस्तु प्रकृतिमात्रस्येति विषयभेदाद् द्वित्वं निर्बाधमेव ॥ ( ३५१२ ) **रीगृदुप-**

---

1 **वनीवच्यत इति** । दीर्घोच्चारणसामर्थ्याद् गुणो न भवति ॥ 2 **घ्नीभाव इति** । यद्यपि ह्रस्वविधानेऽपि 'अकृत्सार्वधातुकयोः—' इति दीर्घेण 'जेघ्नीयते' इत्यादीनां सिद्धिः स्यादेव । तथापि दीर्घोच्चारणं यङ्लुगर्थम् । तेन 'जेघ्नीतः' इत्यादि सिध्यति ॥ 3 **वार्तिकेति** । 'सुट् कात् पूर्वः' इत्यधिकारसूत्रे 'कात् पूर्वः' इति 'अड्भ्यासव्यवायेऽपि' इति वार्तिकं च प्रत्याख्यातमिति बोध्यम् ॥

घङ्यङ्लुकोः । वरीवृत्यते । क्षुम्नादिर्ष्वार्न्न णः । नरीनृत्यते । जरीगृह्यते । उभयत्र ऋत्वम् । चलीक्लृप्यते ॥ (३५१३) रीगृत्वत इति वक्तव्यम् ॥ वरीवृश्च्यते । परीपृच्छ्यते ॥ (३५१४) स्वपिस्यमिव्येञां यङि ।६।१।१९। संप्रसारणं स्याद्यङि । सोषुप्यते । सेसिम्यते । वेवीयते ॥ ( ३५१५ ) न वशः । ६ । १ । २० । वावश्यते ॥ ( ३५१६ ) चायः की । ६ । १ । २१ । चेकीयते ॥ ( ३५१७ ) ई घ्राध्मोः । ७ । ४ । ३१ । जेघ्रीयते । देध्मीयते ॥ ( ३५१८ ) अयङ् यि क्ङिति । ७ । ४ । २२ । शीङोऽयङादेशः स्याद्यादौ क्ङिति परे। शाशय्यते। अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्यते । तोत्रौक्यते ॥ इति यङन्तप्रक्रिया ॥

## अथ यङ्लुगन्तप्रक्रिया ।

( ३५१९ ) यङोऽचि च । २ । ४ । ७४ । यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनाऽपि बहुलं लुक् स्यात् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । शेषात्कर्तरीति परस्मैपदम् । अनुदात्तङित इति तु न, ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः । यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत् । अत एव सुदृषत्प्रासाद इत्यत्रात्वसंतस्येति दीर्घो न । येऽपि स्पर्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न, अनुदात्तङित इत्यनुबन्धनिर्देशात् । तत्र च श्तिपा शपेति निषेधात् । अत एव

---

धस्य च । क्ङिदिति किम्, चेकीर्त्यते । णिजभावपक्षे एकाच्त्वाद्यङ्॥(३५१४)स्वपिस्यमि–। यङि किम्, स्वप्नक्॥सेसिम्यते इति। 'स्यमु शब्दे' दन्त्याजन्तसादित्वाभावेनाषोपदेशत्वान्न षः॥वेवीयते इति। 'हलः ३३९०'इति,'अकृत्सार्व–३०७१' इति वा दीर्घः ॥ (३५१६) चायः की। यङि परे चायः की स्यात्। दीर्घोच्चारणं यङ्लुगर्थम्। अत एव 'न लुमता–३६८'इति निषेधोऽपि न प्रवर्तत इति यङ्लुक्यपि चायः की स्यादेव। चेकीतः॥(३५१७)ई घ्राध्मोः। दीर्घोच्चारणं प्राग्वत्। जेघ्रीतः। 'अस्य च्वौ २८५७' इत्याद्यर्थं दीर्घग्रहणमिति तु सुवचम्॥(३५१८) शाशय्यते इति। परत्वादन्तरङ्गत्वाच्चायङादेशे कृते द्वित्वम्॥ इति यङन्तप्रक्रिया॥

(३५१९) यङोऽचि च ॥ यङा साहचर्यादचीति प्रत्ययो गृह्यते न तु प्रत्याहारः । 'ण्यक्षत्रियार्ष—१८०६' इत्यतोऽत्र लुगनुवर्तते । तदाह—अच्प्रत्यये लुक् स्यादिति ॥ चकारेण 'बहुलं छन्दसि ५२२७' इत्यतो बहुलमित्यनुकृष्यत इत्याह—बहुलं लुक् स्यादिति । केचित्तु–छन्दसीत्यनुकर्षन्ति तेषामपि मते क्वचिद्भाषायां यङ्लुग्भवत्येव, 'भूसुवोः–२९७९' इति गुणनिषेधे सिद्धे 'बोभूतु–' इति छन्दसि निपातनाज्ज्ञापकात् । एतच्च मूले एव स्फुटीभविष्यति ॥ अनैमित्तिकोऽयमिति । अच्प्रत्यये विधीयमानो यङ्लुक् तु तन्निमित्त एव । तेन लोलुवः पोपुव इत्यादौ 'न धातुलोपे–३५२७' इति निषेधः सिध्यति ॥ यङन्तत्वादिति । 'सन्यङोः ३१९६' इति षष्ठी, न तु सप्तमी । अन्यथा यङो लुका लुप्तत्वेन प्रत्ययलक्षणाप्रवृत्तेर्द्वित्वं न स्यादिति भावः । न चाङ्गाधिकारविहितकार्यस्यैव 'न लुमता–३६८' इति निषेधाद् द्वित्वमत्र स्यादेवेति सप्तमीपक्षोऽपि निर्दुष्ट इति वाच्यम्, 'न लुमता–३६८' इत्यत्राङ्गाधिकारो न गृह्यते किन्तु आङ्गमनाङ्गं वा प्रत्यये परतः पूर्वस्य विधीयमानं सर्वमिति सिद्धान्तात् । अन्यथा राजपुरुष इत्यादौ नलोपो न स्यात्, त्वदुक्तरीत्या प्रत्ययलक्षणप्रवृत्तौ भत्वेन पदत्वबाधात् । यद्यपि 'एकाचः–३००६' इति विधीयमानं द्वित्वं 'श्तिपा शपा–' इत्यादिना निषिध्यते तथापि तत्स्यादेव । 'गुणो यङ्लुकोः ३४९४' 'रुग्रिकौ च लुकि ३५२३' इत्याद्यभ्यासकार्यविधिभिर्द्वित्वानिषेधस्य ज्ञापनात् ॥ प्रत्ययाप्रत्ययेति । प्रत्यये ङित्त्वं दृश्यते 'कृतेरीयङ् ३२२८' इत्यादिषु, अप्रत्ययेऽपि दृश्यते चित्रङादिषु । एवं च यङो लुकि प्रत्ययलक्षणेन यङाश्रितङित्त्वप्रयुक्तकार्यमात्मनेपदमत्र न शङ्क्यमिति भावः । ङित इत्यनुबन्धनिर्देशादिति परिहारस्त्वत्र नोक्तः शीङादीनामिव भू इत्यादिधातूनामनुबन्धेनानिर्दिष्टत्वात् । यङो ङकारस्य प्रत्ययानुबन्धत्वेन समुदायाननुबन्धत्वात् यङन्तोऽपि धातुरनुबन्धेनानिर्दिष्ट इति बोध्यम् ॥ सुदृषदिति । शोभना दृषदोऽस्मिन्निति बहुव्रीहौ दृषच्छब्दो जसन्तः ॥ दीर्घो नेति । आसिति प्रत्ययोऽप्रत्ययश्चास्तीति प्रत्ययस्यासाधारणरूपानाश्रयणात्प्रत्ययलक्षणेनासन्तत्वाभावादिति भावः ॥ तेभ्योऽपीति । ये

---

१ न वश इति । संनिपातपरिभाषयैव संप्रसारणाभावे सिद्धे सूत्रं व्यर्थं सत् तस्याः परिभाषाया अनित्यत्वं बोधयाति इति प्राञ्चः ॥ अन्ये तु परिभाषा वार्तिककृताऽङ्गीकृतेति न वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्तिरिति न सूत्रवैयर्थ्यशङ्का ॥ २ धातुत्वादिति । 'चर्करीतं च' इति भ्वाद्यन्तर्गतादादिगणे गणसूत्रेण भ्वादित्वसूचनाद् यङ्लुगन्तस्यापि धातुसंज्ञाऽदादीनामिव 'भूवादयः–'इति सूत्रेणैव निराबाधा सिद्धेति 'सनाद्यन्ताः–'इत्यनेन धातुसंज्ञार्थं प्रत्ययलक्षणाङ्गीकारो वृथैवेति वदन्ति प्रतिभाशालिनो दाधिमथाः ॥ ३ तदिति । प्रत्ययलक्षणमित्यर्थः ॥ एतच्च स्थानिवत्सूत्रेणैव सिद्धे नियमार्थं प्रत्ययलक्षणसूत्रमित्याशयेन ॥ नियमार्थत्वमेव सूत्रस्य युक्तमिति ध्वनयन्नाह–अत एवेति । प्रत्ययस्यासाधारणरूपोपादान एव प्रत्ययलक्षणप्रवृत्त्यङ्गीकारादेवेत्यर्थः ॥ ४ तत्र चेति ॥ अनुबन्धनिर्देशे चेत्यर्थः ॥ वस्तुतः—"तेतिक्ते इति किं निपात्यते ? अत्रैव यङ्लुगन्तस्यात्मनेपदं भवति नान्यत्र बेभिदीति चेच्छिदीतीति" इति भाष्योक्तनियमेनैवात्मनेपदव्यावृत्तौ परस्मैपदं निराबाधमेवेति बोध्यम् ॥ ५ अत एवेति । श्तिपा शपेति निषेधादेवेत्यर्थः । इदं प्राचामनुरोधेन ॥ वस्तुतस्तु 'यङोऽचि च' इति सूत्रे 'बहुलं छन्दसि' इत्यतश्छन्दःपदानुवृत्त्या यङ्लुकश्छान्दसत्वे छन्दसि दृष्टानुविधित्वादेवानिष्टापत्तिव्यावृत्तौ निष्फलेयमिति प्रतिभाशालिनो नवीना वदन्ति ॥ एकाज्ग्रहणस्य वधिव्यावृत्त्यर्थत्वेन ज्ञापकाभावान्निर्मूला चेत्यतोऽधिकं नागेशीयतो बोध्यम् ॥

'अन्त्यबाधेऽन्त्यसदेशस्ये'ति परिभाषाऽन्तानन्त्ययोरितराव्यवधाने प्रवर्तते 'अदमुयङ्' यथा । अत्र तु– अन्त्यानन्त्ययोर्मध्ये – ईकारेण व्यवधानान्न तस्याः प्रवृत्तिरिति स्मारयामि ॥

इयङादयो न, गणेन निर्देशात् । किन्तु शबेव । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् ॥ ( ३५२० ) (सू) यङो वा । ७ । ३ । ९४ । यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड्वा स्यात् । भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां[१] न, बोभूतु तेतिक्ते इति छन्दसि निपातनात् । अत एव यङ्लुग्भाषायामपि सिद्धः । न च यङ्लुकि अप्राप्त एव गुणाभावो निपात्यतामिति वाच्यम् ॥ ( ३५२१ ) (प) प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणात् । ( ३५२२ ) द्विःप्रयोगो द्विर्वचनं षाष्ठमिति सिद्धान्तात् । बोभवीति,बोभोति । बोभूतः । बोभुवति । बोभवाञ्चकार । बोभविता । अबोभवीत्, अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयास्ताम् । गातिस्थेति सिचो लुक् । यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत्, अबोभोत् । अबोभूताम् । अभ्यस्ताश्रयो जुस्[२] । नित्यत्वाद्वुक् । अबोभूवुः ॥ अबोभविष्यदित्यादि ॥ पास्पर्धीति, पास्पर्धि । पास्पर्धः । पास्पर्धति । पास्पर्त्सि । हुझल्भ्यो

---

त्वनुदात्तेतः प्रत्ययलक्षणं विनैव ङितश्च तेभ्योऽपीत्यर्थः ॥ **अदादौ पाठादिति** । तथा च–'अदिप्रभृतिभ्यः शपः ३२२९' इत्यनेन यङ्लुगन्तात्परस्य शपो लुगित्यर्थः ॥ **(३५२०) यङो वा** । 'नाभ्यस्तस्याचि–३३२१' इति सूत्रात्पिति सार्वधातुक इति, 'उतो वृद्धिः–३२५२' इत्यतो हलीति चानुवर्तते, 'ब्रुव ईट् ३२६३' इत्यत ईडिति च । तदेतदाह—**यङन्तादित्यादि** । यङो लुक्यपि प्रत्ययलक्षणेनात्र यङन्तत्वम् । एतेन 'यङन्ताद्धलादिपित्सार्वधातुकं न संभवतीति यङ्शब्देन यङ्लुगन्तं लक्ष्यते' इति व्याख्यानं परास्तम्, उक्तरीत्या यङन्तत्वानपायात् । किञ्च, यङन्ताद्धलादिपिन्न संभवतीति यङ्शब्देन यङ्लुगन्तं लक्ष्यते' इति व्याख्यानं परास्तम्, उक्तरीत्या यङन्तत्वानपायात् । किञ्च, यङन्ताद्धलादिपिन्न संभवतीति यङ्शब्देन यङ्लुगन्ते लक्षितेऽपि 'सन्यङोः ३१९६' इति द्वित्वस्य यङन्ते चरितार्थतया यङ्लुगन्तलक्षणायां बीजाभावाद्यङ्लुकि द्वित्वाभावप्रसङ्गादिति दिक् ॥ **छन्दसि निपातनादिति** । गुणनिषेधे सिद्धे निपातनमिदं छन्दस्येव गुणनिषेधो नान्यत्र इति नियमार्थमित्यर्थः ॥ **बोभूत्विति** । समुदायस्यातिरिक्तत्वात् 'भूसुवोः–२९७९' इति गुणनिषेधो न प्राप्नोतीति निपातनमिदं न नियमार्थमित्याशङ्कायामाह—**न चेति** ॥ **( ३५२२ ) द्विः प्रयोग इति** । तथा च 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ३५२१' इत्येतन्न्यायसिद्धं नापूर्वं वचनमिति भावः ॥ **बोभुवतीति** । 'अदभ्यस्तात् ३२९३' इत्यत् ॥ **अबोभूवीदिति** । केचिदिह 'भुवो वुक्–२९२८' इति सूत्रे 'ओः सुपि ३९३' इत्यत ओरित्यनुवर्तते । तथा च उवर्णान्तस्य भुवो वुगित्यर्थात् गुणे कृते वुकः प्राप्तिर्नास्तीत्यनित्यो वुक् । स च पराभ्यां गुणवृद्धिभ्यां बाध्यते । तेन अबोभवीदिति रूपमाहुः । तच्चिन्त्यम्, भुवो वुको नित्यत्वादिति भाष्यग्रन्थविरोधात् । तस्माद्वुको नित्यत्वमाश्रित्य 'इन्धिभवतिभ्यां च ५२१८' इति सूत्रं प्रत्याख्यातवतो भाष्यकृत ओरित्यनुवर्तनमसंमतमेव॥आत इति नियमाज्जुसभावमाशङ्क्याह–**अभ्यस्ताश्रय इति** । अयं भावः–'सिजभ्यस्त–२९८१' इति सूत्रेण सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तस्यैवायं नियमो न त्वभ्यस्ताश्रयस्य जुस इति ॥ 'जुसि च ३२९५' इति गुणमाशङ्क्याह–**नित्यत्वाद्वुगिति** ॥ **अबोभूवुरिति** । न चात्र परत्वात् 'अदभ्यस्तात् ३२९३' इति अदादेशः स्यादिति वाच्यम्, अभ्यस्ताश्रयजुसोऽदादेशापवादत्वात् ॥ **पास्पर्धीतीति** । 'स्पर्ध सङ्घर्षे' । 'दीर्घोऽकितः ३४९८' इत्यभ्यासस्य दीर्घः । 'यङो वा ३५२०' इति ईड्विकल्पः । ईडभावपक्षे 'झषस्तथोः–२०४७' इति धत्वम् 'झरो झरि सवर्णे १०६'

---

१ **भाषायामिति** ॥ "बोभूतु इति किं निपात्यते? भवतेर्यङ्लुगन्तस्यागुणत्वं निपात्यते । नैतदस्ति प्रयोजनम्, सिद्धमत्रागुणत्वं 'भूसुवोस्तिङि' इति। एवं तर्हि नियमार्थं भविष्यति–**अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्र । क्व माभूत्? 'बोभवीति' इति**" इति भाष्ये '**अत्रैव**' इत्यस्य '**छन्दस्येव**' इत्यर्थाङ्गीकारे '**अन्यत्र**' इत्यस्य '**भाषायाम्**' इत्यर्थाङ्गीकारावश्यकत्वेन गुणाभावव्यावर्त्यत्वेन भाषायामपि प्रयोगाङ्गीकारो ध्वनित इति भावः ॥ वस्तुतस्तु '**अत्रैव**' इत्यस्य '**लोटच्येव**' इत्यर्थसंभवे '**अन्यत्र**' इत्यस्य '**लोड्भिन्ने**' इत्यर्थसंभवेन लोटयेव गुणबाधकताप्रतीतौ नास्य भाष्यस्य भाषायां यङ्लुक्प्रयोगसाधकत्वमिति ॥ यदि "**एवं तर्हि** सिद्धे सति यद् हुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यो 'भाषायामपि यङ्लुग् भवति' इति" इति किमेतस्य ज्ञापने प्रयोजनम् **बेभिदीति चेच्छिदीति इत्येतद् भाषायामपि सिद्धं भवति ॥** इति ॥" इति 'हुश्नुवोः–' इति सूत्रस्थं भाष्यमेव यङ्लुको भाषायां मानम्–इति विभाव्यते तर्हि 'क्ङिति च' इति सूत्रभाष्ये रोरवीति इत्यस्य छान्दसत्वकथनेन 'किमेतस्य ज्ञापने प्रजोजनम्' इति प्रश्नस्य 'बेभिदीति चेच्छिदीति–' इत्येतत् सिद्धं भवति भाषायामपि इत्युत्तरे 'इत्येतद्' इत्युक्त्वा यङ्लुकः सर्वधातुप्रकृतिकस्य भाषाविषयत्वाङ्गीकारे मानाभावः । एतद्भाष्यस्यैकदेशित्वमेव, भाष्यकृता सर्वत्र यङ्लुग्विषये वैदिकोदाहरणस्यैव दानादिति नैतद्भाष्यमपि यङ्लुको भाषायां सर्वधातुविषयत्वसाधकमिति शम् ॥ अप्रयुक्ते लक्षणाप्रवृत्त्यभावस्यैव '**यथालक्षणमप्रयुक्ते**' इति ग्रन्थेन तत्र तत्रोक्तत्वान्नैव स्वकल्पनयाऽप्रयुक्तप्रयोगवर्णनं सम्यगिति नवीनाः ॥ २ **अभ्यस्ताश्रय इति** ॥ ननु विदेर्हि लङ्येवानन्तरो झिः संभवतीति तत्रैव जुस् भवति तत्साहचर्याद् अभ्यस्तादपि लङ्येव जुस् स्यात् न लुङि । न च सिचा साहचर्यात् लुङ्येव किं न स्यादिति वाच्यम्, परसाहचर्यस्य बलीयस्त्वाद्–इति चेत् ॥ न, '**द्विस्त्रिः**–' इति सूत्रे कृत्वोऽर्थग्रहणेन तस्या अनित्यत्वात् । अत एव भगवता भाष्यकारेण '**अचः परस्मिन्**–' इति सूत्रे पञ्चमीसमासप्रयोजनतया 'अपीपचन्' इत्युदाहृतम् ॥ अन्यथा त्वद्रीत्या जुसः प्राप्तेरेवाभावेन तत्प्रयोजनतयोपन्यासोऽसंगतः स्यादिति भावः ॥

हेर्धिः । पास्पर्द्धि । लङ् । अपास्पर्त्, अपास्पर्द् । सिपि दश्चेति रुत्वपक्षे रो रि । अपास्पाः । जागाद्धि । जाघास्ति । अजाघात् । सिपि रुत्वपक्षे अजाघाः ॥ नाथृ । नानात्ति । नानात्तः ॥ दध । दादद्धि । दादद्धः । दाधत्ति । अदाधत् । अदादद्धाम् । अदादधुः । अदाधः । अदाधत् । लुङि अदादाधीत्, अदादधीत् ॥ चोस्कुन्दीति, चोस्कुन्ति । अचोस्कुन् । अचोस्कुन्ताम् । अचोस्कुन्दुः ॥ मोमुदीति, मोमोत्ति । मोमोदाञ्चकार । मोमोदिता । अमोमुदीत्, अमोमोत् । अमोमुत्ताम् । अमोमुदुः । अमोमुदीः, अमोमोः, अमोमोत् । लुङि गुणः । अमोमोदीत् ॥ चोकूर्दीति, चोकूर्त्ति। लङ् तिप् । अचोकूर्दीत्, अचोकूर्त् । सिप्पक्षे--अचोकूः । अचोकूः । अजोगूः ॥ वनीवञ्चीति, वनीवङ्क्ति । वनीवक्तः । वनीवचति । अवनीवञ्चीत्, अवनीवन् ॥ जङ्गमीति, जङ्गन्ति । अनुदात्तोपदेशेत्यनुनासिकलोपः । जङ्गतः । जङ्ग्मति । म्वोश्च[२८४] । जङ्गन्मि । जङ्गन्वः । एकाज्ग्रहणेनोक्तत्वान्नेण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । जङ्गहि ॥ मो नो धातोः । अजङ्गन् । अनुबन्धनिर्देशान्न च्लेरङ् । ह्ययन्तेति न वृद्धिः । अजङ्गमीत् । अजङ्गमिषाम् ॥ हन्तेर्यङ्लुक् । अभ्यासाच्चेति कुत्वं यद्यपि हो हन्तेरित्यतो हन्तेरित्यनुवर्त्य विहितम् । तथापि यङ्लुकि भवत्येवेति न्यासकारः । श्तिपा शपेति निषेधस्त्वनित्यः, गुणो यङ्लुकोरिति सामान्यापेक्षज्ञापकादिति भावः। जङ्घनीति,जङ्घन्ति । जङ्घतः। जङ्घ्नति । जङ्घनिता । श्तिपा निर्देशान्नादेशो न । जङ्घहि । अजङ्घनीत्,अजङ्घन् । जङ्घन्यात् । आशिषि तु वध्यात् । अवधीत्,अवधिष्टामित्यादि। [वधादेशस्य द्वित्वं तु न भवति, स्थानिवत्त्वेनानभ्यासस्येति निषेधात् । तद्धि समानाधिकरणं धातोर्विशेषणम्, बहुव्रीहिबलात् ।] आङ्पूर्वात्तु आङो यमहन इत्यात्मनेपदम् । आजङ्घते इत्यादि ॥ उत्परस्येति तपरत्वान्न गुणः । हलि चेति दीर्घस्तु स्यादेव । तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात् । चञ्चुरीति, चञ्चूर्ति । चञ्चूर्तः । चञ्चुरति । अचञ्चुरीत् , अचञ्चूः ॥ चङ्खनीति, चङ्खन्ति । जनसनेत्यात्त्वम् । चङ्खातः । गमहनेत्युपधालोपः । चङ्ख्नति । चङ्खाहि । चङ्खनानि । अचङ्खनीत् ,अचङ्खन् । अचङ्खा-

---

इति वा धलोपः । लिटि पास्पर्धाञ्चकार । पास्पर्धिता । लृटि पास्पर्धिष्यति । लोटि पास्पर्धीतु, पास्पर्द्धु, पास्पर्धात् । पास्पर्धाम् । पास्पर्धतु । पास्पर्धीति । हेर्धित्वे वा धिलोपः । लङि ईडागमपक्षे अपास्पर्धीत् ॥ रुत्वपक्षे इति । पक्षान्तरे तु अपास्पर्त्, अपास्पर्द् । लिङि पास्पर्ध्यात् । पास्पर्ध्याताम् । पास्पर्ध्यास्ताम् । लुङि 'अस्तिसिचोऽपृक्ते' इति नित्यमीट् । 'इट ईटि ३०३१' इति सलोपः । अपास्पर्धीत् । अपास्पर्धिष्टाम् । अपास्पर्धिषुः । लृङि अपास्पर्धिष्यत्॥जागाद्धीति। गाधृ प्रतिष्ठादौ । ईट्पक्षे तु जागाधीति ॥ जाघास्तीति । 'एकाचः-४४९' इति भष्भावः । वस्य चर्त्वम् । लोटि जागाधीतु, जागाद्धु । जागाद्धाम् । जागाधतु । लङि अजागाधीत्, अजाघात् । अजागाद्धाम् । अजागाधुः । लुङि अजागाधीत् । अजागाधिष्टाम् ॥ नाथृ नाधृ याच्ञादौ ॥ नानात्तीति । ईट्पक्षे नानाथीति॥'दध धारणे' । ईट्पक्षे दादधीति । लुङि 'अतो हलादेः-२०५१' इति वा वृद्धिः ॥ चोस्कुन्तीति । 'स्कुदि आप्रवणे' । 'इदितः-३०२६' इति नुम् । ईडभावे 'झरो झरि सवर्णे १०६' इति वा लोपः । लङि ईट्पक्षे अचोस्कुन्दीत् । लुङि तु 'अस्तिसिचः-२९८०' इति नित्यमीट् । अचोस्कुन्दीत् । अचोस्कुन्दिष्टाम् ॥ मोमुदीतीति । 'मुद हर्षे' । 'नाभ्यस्तस्याचि-३३२१' इति लघूपधगुणनिषेधः ॥ मोमोदितेति । न चात्र 'न धातुलोपे-३५२७' इति गुणनिषेधः शङ्क्यः, बहुलग्रहणेन प्राप्तस्य यङ्लुकोऽनैमित्तिकत्वात् ॥ लुङि गुण इति । सिज्निमित्तकोऽयं गुणस्तेन 'नाभ्यस्तस्याचि-३३२१' इति निषेधो न शङ्कनीय इति भावः ॥ चोकूर्तीति । 'कुर्द खुर्द गुर्द गुद क्रीडायाम्' लङि तिपि ईट्पक्षे अचोकूर्दीत् । अजोगूर्दीत् ॥ पक्षे अचोकूरिति । 'दश्च ३२८१' इति रुत्वपक्षे इत्यर्थः ॥ वनीवञ्चीतीति । 'वञ्चु गतौ' । 'नित्यं कौटिल्ये गतौ ३५०१' इति यङ् । 'नीग्वञ्चु-३५०९' इत्यभ्यासस्य नीगागमः । यङो लुका लुप्तत्वात् न तदाश्रितो नलोपः ॥ वनीवक्त इति । तसो ङित्त्वादिह स्यादेव 'अनिदिताम्-५५७' इति नलोपः । लोटि वनीवञ्चीतु, वनीवङ्क्तु । वनीवक्तात् । वनीवक्ताम् । वनीवचतु । वनीवग्धि । वनीवञ्चानि ॥ जङ्गमीतीति । 'नुगतोऽनुनासिकान्तस्य ३५१०' इति नुक्॥जङ्ग्मतीति । 'गमहन-३१५६' इत्युपधालोपः॥अजङ्गन्निति । ईट्पक्षे त्वजङ्गमीत्। अजङ्गताम् । अजङ्ग्मुः । अजङ्गमीः । अजङ्गतम् । अजङ्गत । अजङ्गमम् । अजङ्गन्व । अजङ्गन्म ॥ सामान्यापेक्षेति । अयं भावः-एकाचं इत्यत्रैकाज्ग्रहणाद्यङ्लुकि द्विर्वचनं न कुत्रापि प्राप्नोति । तथा च 'गुणो यङ्लुकोः३४९४ इत्यभ्यासस्य विधीयमानो गुणो द्विर्वचनं विना निवेशमलभमानः सन् 'श्तिपा शपा-'इति सर्वेषामपि निषेधानां कचिद्यङ्लुक्यप्रवृत्तिं ज्ञापयतीति । तथा च प्रयुज्यते-'राजा वृत्रं जङ्घनत्' इत्यादि॥ द्वित्वं तु न भवतीति । वध्यात्,अवधीदित्यत्र कृतद्विर्वचनस्य 'हनो वध लिङि३२३९' 'लुङि च३२४०'इति वधादेशात्पुनर्द्वित्वं न भवतीत्यर्थः ॥ तत्र हेतुमाह-स्थानिवत्त्वेनेति॥आङ्पूर्वादिति । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः॥ चञ्चूर्तीति । चरतिर्गतौ भक्षणे च । 'चरफलोश्च३५०३ इत्यभ्यासस्य नुक् । 'उत्परस्यातः ३५०४' इत्युत्त्वम् । 'हलि च ४८१' इति दीर्घः । अचञ्चूरित्यत्र तु पदान्तविषयत्वात्

---

१ इदं च माधवानुरोधेन ॥ वस्तुतस्तु 'लिङि लुङि' इत्यनयोर्विषयसप्तमीत्वेन तद्विषये पूर्वमेव वधादेशे तस्यानेकाच्त्वेन यङः प्राप्तिरेव नेति क्व यङ्लुक् इति शुद्धस्यैव रूपाणि भवन्ति ॥ इत्येव सारम् ॥ २ इदं तु 'दयतेर्दिगि लिटि' इति सूत्रभाष्यविरुद्धम् ॥ तत्र हि 'द्विः प्रयोगो द्विर्वचनम्' इति सिद्धान्ते परस्य आदेशे पूर्वस्य श्रवणं प्राप्नोति इत्युक्तम् ॥

ताम् । अचङ्खुः । ये विभाषा । चङ्खायात्, चङ्खन्यात्। अचङ्खनीत्, अचङ्खानीत्॥ अतो वृद्धिरित्यत्र नाभ्यस्तस्येत्यनुवृत्तेस्तो वृद्धिर्न । योयवीति, योयोति । अयोयवीत्, अयोयोत्। योयुयात् । आशिषि दीर्घः। योयूयात्। अयोयावीत्॥ नोनवीति, नोनोति ॥ जाहेति, जाहाति । ई हल्यघोः । जाहीतः । इह जहातेश्च, आ च हौ, लोपो यि, घुमास्था एर्लिङीत्येते पञ्चापि न भवन्ति, श्तिपा निर्देशात् । जाहति । जाहासि, जाहेषि । जाहीथः । जाहीथ । जाहीहि । अजाहेत्, अजाहात् । अजाहीताम् । अजाहुः । जाहीयात् । आशिषि जाहायात् । अजाहासीत् । अजाहासिष्टाम् । अजाहिष्यत् ॥ लुका लुप्ते प्रत्ययलक्षणाभावात्स्वपिस्य मीत्युत्वं न । रुदादिभ्य इति गणनिर्दिष्टत्वादिण्न । सास्वपीति, सास्वप्ति । सास्वप्तः । सास्वपति । असास्वपीत्, असास्वप्। सास्वप्यात् । आशिषि तु वचिस्वपीत्युत्वम् । सासुप्यात्। असास्वापीत् , असास्वपीत् ॥ (३५२३) सू॰ रुग्रिकौ च लुकि । ७।४।९१। ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि ॥ ( ३५२४ ) सू॰ ऋतश्च । ७। ४ । ९२ । ऋदन्ताद्धातोरपि तथा । वर्वृतीति, वरिवृतीति, वरीवृतीति, वर्वर्ति, वरिवर्ति, वरीवर्ति । वर्वृतः ३ । वर्वृतति ३ । वर्वर्तामास ३ । वर्वर्तिता ३ । गणनिर्दिष्टत्वान्न वृद्भ्यश्चतुर्भ्य इति न । वर्वर्तिष्यति ३ । अवर्वृतीत् ३, अवर्वर्त् ३ । सिपि दश्चेति रुत्वपक्षे रो रि । अवर्वाः ३ । गणनिर्दिष्टत्वादङ् न । अवर्वर्तीत् ३ । चर्करीति ३, चर्कर्ति, चरिकर्ति, चरीकर्ति । चर्कृतः ३ । चर्क्रति ३ । चर्कराञ्चकार ३ । चर्करिता ३ । अचर्करीत् ३, अचर्कः ३ । चर्क्रियात् ३ । आशिषि रिङ् । चर्क्रियात् ३ । अचर्कारीत् ३ ॥ ऋतश्चेति तपरत्वान्नेह । कॄ विक्षेपे । चाकर्ति ॥ तातर्ति । तातीर्तः । तातिरति । तातीर्हि । तातराणि । अतातरीत्, अतातः । अतातीर्ताम् । अतातरुः । अतातारीत् । अतातारिष्टामित्यादि ॥ अर्तेर्यङ्लुकि द्वित्वेऽभ्यासस्योरदत्वं रपरत्वम् । हलादिः शेषः । रुक् । रिग्रीकोस्तु अभ्यासस्यासवर्ण इति इयङ् । अरर्ति । अरियरीति, अरर्ति । अरियर्ति । अर्ऋतः । अरियृतः । झि अत् । यण् । रुको रो रीति लोपः । न च तस्मिन् कर्तव्ये यणः स्थानिवत्त्वम्, पूर्वत्रासिद्धीये तन्निषेधात् । आरति, अरियृति । लिङि श्तिपा निर्देशाद्गुणोऽर्तीति गुणो न । रिङ् । रलोपः । दीर्घः ।

---

'र्वोरुपधायाः-५८०' इति दीर्घः॥ **चङ्खनीतीति** । 'खनु अवदारणे'॥ **चङ्खात इति** । यत्तु केचित्–धातुग्रहणेन कृतं कार्यं यङ्लुकि वा' इति 'जनसन-३३२२' इत्यात्त्वाभावे 'अनुनासिकस्य क्विझलोः-३५४५' इति दीर्घोऽपि न भवति क्विप्साहचर्याद्धि झलादिः कृदेव तत्र गृह्यते न तु तिङित्यभ्युपेत्य चङ्खन्त इति रूपमाहुः। तदयुक्तम्, धातुग्रहणेन कृतस्य यङ्लुक्यप्रवृत्तौ मानाभावात् । सत्यपि प्रमाणे आत्त्वं वेति विकल्पोक्त्या चङ्खात इति रूपं केन वार्यताम्। यच्चोक्तम् 'अनुनासिकस्य-३५४५' इति सूत्रे 'क्विप्साहचर्याज्झलादिरपि कृदेव गृह्यते' इति तदप्ययुक्तमेव । यदि हि–कृदेव क्विप् स्यात्तदा साहचर्योक्तिः सङ्गच्छेत किन्तु क्वाद्भिन्नोऽप्यस्त्येवाचारक्विप् । अत एव राजानति, चर्माणति इत्यादौ माधवादिभिः क्विनिमित्तो दीर्घ उक्तः ॥ **चङ्खाहीति** । हेरपित्त्वेन ङित्वात् 'जनसन-३३२२' इत्यात्त्वम् ॥ **अचङ्खानीदिति** । 'अतो हलादे-३०५१' इति वा वृद्धिः ॥ **जाहेतीत्यादि** । हाङ्हाकोस्तुल्यानि रूपाणि । ङित्त्वप्रयुक्तस्यात्मनेपदस्य यङ्लुक्यप्रवृत्तेः । 'भृञामित् ३३१४' इति हाङ इत्त्वस्य श्लुनिमित्ताभ्यासस्यैव विहितत्वाच्च । न च अकित इति निषेधेन हाकोऽभ्यासस्य दीर्घो दुर्लभ इति कथमुभयोस्तुल्यरूपतेति शङ्क्यम्, 'अकितः' इत्यत्र हि न विद्यते किद्यस्याभ्यासस्येति बहुव्रीहिराश्रीयते, तेन 'द्विः प्रयोगो द्विर्वचनं षाष्ठम् ३५२२' इत्यभ्युपगमाद्धातोः कित्त्वे अभ्यासस्य कित्त्वेऽपि वनीवञ्चीतीत्यादाविव कित्त्वाभावान्न दोषः । किञ्च द्वित्वाभावे केवलस्यार्थवत्त्वेऽपि द्वित्वे सति समुदाय एवार्थवानिति हि सर्वसम्मतम् । तथा–कित्त्वमपि समुदायस्यैवास्तु न तु प्रत्यवयवमिति नास्त्येव दीर्घे प्रतिबन्धः ॥ **जाहीयादिति** । 'ई हल्यघोः ३३१५' इतीत्त्वम् ॥ **लुका लुप्त इति** । सर्वविधिभ्यो लुग्विधेर्बलीयस्त्वादकृतव्यूहपरिभाषया च लुकः पूर्वं न शङ्क्यमेवेति भावः ॥ **उत्वं नेति** । फलितार्थकथनमिदम् । 'स्वपिस्यमि-३५१४' इत्यादिना विधीयमानं यत्संप्रसारणं तन्नेत्यर्थः ॥ **असास्वापीदिति** । 'अतो हलादेः-३०५१' इति विकल्पेन वृद्धिः ॥ ( ३५२३ ) **रुग्रिकौ च**—। चकारेण 'रीगृदुपधस्य-३५१२' इत्यतो रीगनुकृष्यते । रुक उकार उच्चारणार्थः ॥ ( ३५२४ ) **ऋतश्च** । ऋताऽनुवर्तमानमङ्गं विशेष्यते । ऋदन्तस्याङ्गस्य योऽभ्यासस्तस्येत्यर्थः । ऋदन्ताद्धातोरिति पाठस्तु फलितार्थकथनपरतया नेयः । लोटि वर्वृतीतु ३ । वर्वर्तु ३ । वर्वृतात् ३ । वर्वृताम् ३ । वर्वृततु ३ । वर्वृद्धि ३ ॥ **अङ् नेति** । 'पुषादिद्युतादि-३१२४' इत्यनेन ॥ **चर्करीतीति** । 'डुकृञ् करणे' ॥ **चर्कृयादिति** । सार्वधातुकत्वात् 'अकृत्सार्व-३०७१' इति न दीर्घः । लुङि 'सिचि वृद्धिः-३०७०' इति वृद्धिः । अचर्कारीत् ३ । अचर्कारिष्टाम् ३ । अचर्कारिषुः ३ । अचर्कारीः ३ ॥ **चाकर्तीति** । ईट्पक्षे चाकरीति । लोटि चाकरीतु, चाकर्तु । चाकीर्तात् । चाकीर्ताम् । चाकिरतु । चाकीर्हि । लङि अचाकरीत् । अचाकः । अचाकीर्ताम् । अचाकरुः । लिङि चाकीर्यात् । आशिषि तु चाकीर्यास्ताम् । लुङि अचाकारीत् । अचाकारिष्टाम् ॥ एवं तातरीतीत्यादि ॥ **अर्तेरिति** । भौवादिकजौहोत्यादिकयोर्ग्रहणम् ॥ **उरदत्त्वमिति** । केचित्तु–'गुणो यङ्लुकोः ३४९४' इत्यभ्यासस्य गुणमाहुः । फले तु न विशेषः ॥ **रिग्रीकोस्त्विति** । एवं च अरियर्तीति रूपमुभयोस्तुल्यमिति भावः ॥ **आरतीति** । 'रो रि २५७' इति लोपे 'ढ्रलोपे-२५८' इति दीर्घः । 'दीर्घोऽकितः ३४९८' इति दीर्घस्तु न भवति कित्त्वात् ॥ **अरियृतीति** । परत्वात्पूर्वमियङ् ।

आरियात्, आरियृयात् । गृहू ग्रहणे । जर्गृहीति ३, जर्गर्ढि ३ । जर्गृढः ३ । जर्गृहति ३ । अजर्घर्ट् ३ ॥ गृह्णातेस्तु जाग्रहीति, जाग्राढि । तसादौ ङिन्निमित्तं संप्रसारणम् । तस्य बहिरङ्गत्वेनासिद्धत्वान्न रुगादयः । जागृढः । जागृहति । जाग्रहीषि, जाग्राक्षि । लुटि । जाग्रहिता । [३३९५]ग्रहोऽलिटीति दीर्घस्तु न, तत्रैकाच इत्यनुवृत्तेः । माधवस्तु दीर्घमाह तद्भाष्यादिविरुद्धम् ॥ जर्गृधीति ३, जर्गर्द्धि ३ । जर्गृद्धः ३ । जर्गृधति ३ । जर्गृधीषि ३ ,

---

ततो यण् रिम्रीकोस्तुल्यमिदम् । मध्यमोत्तमयोस्तु अरर्षि, आरियर्षि, अररीषि, आरियरीषि । अर्कृथः, आरियृथः । अरर्मि, अरियर्मि, अररीमि, आरियरीमि । अर्कृवः, आरियृवः ॥ लिटि अररांचकार । रिम्रीकोस्तु आरियरांचकार ॥ लुटि अररिता । रिम्रीकोस्तु आरियारिता । अररिष्यति, आरियारिष्यति । अरर्तु, आरियर्तु । अर्कृतात्, अरियृतात् । अर्कृताम्, आरियृताम् । आरतु, आरियृतु । अर्कृहि, आरियृहि । अरराणि, अरियराणि । अरराव, आरियराव । लङि आरः, आरियः । आररीत्, आरियरीत् । आर्कृताम्, आरियृताम् । आररुः, आरियरुः । आरः, आरियः, आररीः, आरियरीः । आर्कृतम्, आरियृतम् । आर्कृत, आरियृत । आररम्, आरियरम् । आर्कृव, आरियृव । विधिलिङि अर्कृयात्, आरियृताम्, अर्कृयाताम्, आरियृयाताम् । अर्कृयुः ॥ **लिङीति** । आशीर्लिङीत्यर्थः ॥ **अरियृियादिति** । रिम्रीकोः आरियृ इति स्थिते लिङि रिङ्, बहिरङ्गत्वेन रिङोऽसिद्धत्वाद्यलोपो न भवति 'अचः परस्मिन्–७७' इति स्थानिवत्त्वाच्च । न च 'नपदान्त–७८' इति निषेधः शङ्क्यः 'स्वरदीर्घयलोपेषु लोपरूपाजादेश एव न स्थानिवत् ३०६४' इत्युक्तत्वात् । न च 'अकृतव्यूह–७३' परिभाषया इयङ् नेति शङ्क्यम्, रिङः स्थानिवत्त्वेन निमित्तविनाशाभावाद् उक्तपरिभाषाया अप्रवृत्तेः । अत एव आरियृतीत्यपि सिद्धम् । तत्रापि यणः स्थानिवत्त्वेन निमित्तविनाशाभावात् तत्परिभाषाऽप्रवृत्तेरियङो निर्बाधत्वात् । क्वचित्तु मूलपुस्तकेषु परत्वान्नित्यत्वाच्च पूर्वं रिङि कृते इयङोऽप्रवृत्तिरित्याशयेन अरिरियात् अरीरियादिति पठ्यते । तदापाततः, आरियृतीति रूपासिद्ध्या पूर्वोत्तरग्रन्थयोर्विरोधापत्तेः । लुङि–आरारीत्, आरियारीत् । लृङि आरारिष्यत्, आरियरिष्यत् ॥ **जर्गृहीतीति** । 'नाभ्यस्तस्याचि–३३२१' इति गुणनिषेधः । मध्यमोत्तमयोस्तु जर्गृहीषि ३, जर्घर्क्षि ३ । जर्गृढः ३ । जर्गृहीमि ३, जर्गर्ह्मि ३ । जर्गृह्वः ३ । जर्गृह्मः३। जर्गृहांचकार ३ । जर्गर्हिता, जरिगर्हिता, जरीगर्हिता । इहानुबन्धनिर्देशाद्दूदिल्लक्षणो [३०४६] इड्विकल्पो न । जर्गृहीतु ३, जर्गर्ढु ३। जर्गृढाम् ३। जर्गृहतु ३ । जर्गृढि ३ । मिपि जर्गृहाणि ३ । लङि अजर्गृहीत् ३ । ईडभावे 'एकाचः–४४९' इति भष्भावः । अजर्घर्ट् ३ । यद्यपि इह 'यत्रैकाज्ग्रहणं च–' इति निषेधाद्भष्भावो दुर्लभः, तथापि 'गुणो यङ्लुकोः ३४९४' इत्यनेन 'श्तिपा शपा–' इत्यादिनिषेधस्यानित्यत्वज्ञापनात् भष्भावोऽत्र प्रवर्तत इत्याहुः । अजर्गृढाम् ३ । अजर्गृहुः ३, अजर्गृहीः ३, अजर्घर्ट् ३, अजर्घर्ड् ३। अजर्गृहम् ३ । अजर्गृह्व ३ । जर्गृह्यात् ३ । अजर्गर्हीत् ३ । अजर्गर्हिष्टाम् ३ । अजगर्हिष्यत् ३ ॥ **जाग्रहीतीति** । 'ग्रह उपादाने' । यङो लुका लुप्तत्वात्तन्निमित्तं 'ग्रहिज्या–३२१६' इति संप्रसारणमिह नेति भावः ॥ **जागृढ इति** । 'उरत् ३००४' । 'दीर्घोऽकितः ३४९८' ॥ **तत्रैकाच इति** । 'ग्रहोऽलिटि–३३९५' इत्यत्र 'एकाचः–' इति अनुवर्तत इति 'एकाचो द्वे–' इत्यस्मिन् सूत्रे हरदत्तेनोक्तत्वादिति भावः ॥ **माधवस्त्विति** । अयं भावः–'ग्रहोऽलिटि–३३९५' इति सूत्रे 'यङ्लोपे चोक्तम्' इति वार्तिकतदीयभाष्यकैयटादिपर्यालोचनया जरीगृहितेत्यादिषु ग्रहेर्यङन्तात्तृचस्तासेर्वा य इट् तस्य दीर्घाभावे युक्तिद्वयं लभ्यते 'पूर्वस्मादपि विधौ स्थानिवद्भावः' इत्येके । 'ग्रहेर्विहितो य इट् तस्य दीर्घः' इत्यपरे । तत्राद्यः पक्षो भाष्यवार्तिककाररीत्या, ताभ्यां हि 'पूर्वत्रासिद्धे न स्थानिवत् ३३८' इत्यवष्टभ्य दीर्घादिग्रहणस्य प्रत्याख्यानात् । त्रैपादिकदीर्घातिरिक्तदीर्घेऽस्मिन् कर्तव्ये स्थानिवद्भावस्य तन्मते सुवचत्वात् । द्वितीयस्तु सूत्ररीत्या, तेन तु सामान्यतो दीर्घविधौ स्थानिवद्भावस्य निषिद्धत्वात्, तन्मते स्थानिवद्भावस्य वक्तुमशक्यत्वात् । एवं च यङ्लुकि दीर्घप्रवृत्तौ न किंचिद्बाधकं यङ्लुकोऽनैमित्तिकत्वात्, अज्झलादेशत्वाच्च स्थानिवद्भावायोगात् । 'द्विः प्रयोगो द्विर्वचनं षाष्ठम् ३५२२' इति सिद्धान्ताद्यङ्लुगन्ताद् गृह्णातेर्विहितस्य ग्रहेर्विहितत्वानपायाच्च ॥ **तद्भाष्यादिविरुद्धमिति** । आदिशब्देन कैयटहरदत्तौ गृह्येते । विरोधश्चात्र मनोरमायामुपपादितः । तथाहि–'एकाचो द्वे प्रथमस्य' इति सूत्रे 'ग्रहेरङ्गात्' इति भाष्यमुपादाय कैयट आह—'तृचो हि जरीगृहीत्यङ्गं न तु ग्रहिः, विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणम्' इति । यद्यपि तत्र यङन्तं प्रक्रम्येदमुक्तम्, तथापि युक्तिसाम्याद्यङ्लुगन्तेऽपि न दीर्घ इति लक्ष्यते । एकाज्ग्रहणमनुवर्तयन् हरदत्तोऽप्यत्रानुकूलः । न ह्यस्मिन्पक्षे यङ्लुकि दीर्घस्य प्रसक्तिरस्ति, एवं च पूर्वस्मादपि विधौ स्थानिवद्भाव इति ग्रहेर्विहितस्य य इट् दीर्घ इति च प्रागुक्तसमाधानमुपायस्योपायान्तरादूषकत्वादिति न्यायेन यङन्तांशे उपायान्तरपरतया नेयम् । न च ग्रहिति यथाश्रुतरूपाश्रयणे गृहीत इत्यादाविटो दीर्घो न स्यादिति वाच्यम्, अङ्गसंज्ञाप्रवृत्तिवेलायां यथाश्रुतरूपस्यैव सत्त्वात् । ग्राहितमित्यादौ तु नैवम् । एकाच इति समाधानं तु णिज्भिन्नविषयकमेव, 'निष्ठायां सेटि ४०७२' इति णिलोपे ग्राहितमित्यादावेकाच्त्वानपायात् । तदित्थम्—'यङ्लुगन्ताण्णिजन्ताच्च यङन्ताच्च ग्रहेरिटः । द्विधा त्रिधा चतुर्धा च दीर्घप्राप्तिः समाहिता' ॥ अस्यार्थः–यङ्लुगन्ताद्दीर्घे प्राप्ते समाधानद्वयम् । ग्रहेरङ्गादिति व्याख्यानमेकाच इत्यनुवृत्तिश्चेति । णिजन्तात्तु ग्रहिस्वरूपाभावः, विहितविशेषणम्, स्थानिवद्भावश्चेति समाधानत्रयम् । यङन्तात्समाधानचतुष्टयम् । 'एकाचः–' इत्यनुवृत्तिः, पूर्वोक्तसमाधानत्रयं चेति ॥

जर्घर्सि ३ । अजर्गृधीत् ३ । ईडभावे गुणः । [३५६]हल्ङ्याादिलोपः । भष्भावः । जश्त्वचर्त्वे । अजर्घर्त् ३ । अजर्गृद्धाम् ३ । सिपि दश्चेति पक्षे [३२८१]रुत्वम् । अजर्घाः ३ । अजर्गर्धीत् ३ । अजर्गर्धिष्टाम् ३॥ पाप्रच्छीति, पाप्रष्टि । तसादौ ग्रहिज्येति संप्रसारणं न भवति,श्तिपा निर्देशात् । च्छ्वोः शूडिति [३३९४]शः । [४११]व्रश्चेति षः । पाप्रष्टः । पाप्रच्छति । पाप्रश्मि । पाप्रच्छ्वः। पाप्रश्मः ॥ यकारवकारान्तानां तूठ्भाविनां यङ्लुङ् नास्तीति च्छ्वोरिति सूत्रे भाष्ये ध्वनितम् । कैयटेन च स्पष्टीकृतम् । इदं च्छ्वोरिति यत्रोठ् तद्विषयकम् । [३५२५]ज्वरत्वरेत्यूठ्भाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यम्, माधवादिसंमतं च ॥ मव्य बन्धने । अयं यान्त ऊठ्भावी ॥ तेवृ देवृ देवने इत्यादयो वान्ताः । हय गतौ । जाहयीति, जाहति । जाहतः । जाहयति । जाहयीषि, जाहसि । वलि लोपे यञादौ दीर्घः । जाहामि । जाहावः । जाहामः ॥ हर्य गतिकान्त्योः । जाहर्यीति, जाहर्ति । जाहर्तः । जाहर्यति । लोटि । जाहर्हि । अजाहः । अजाहर्ताम् । अजाहर्युः ॥ मव बन्धने ॥ ( ३५२५ ) (सू) ज्वरत्वरस्रिव्यविमवामुपधायाश्च । ६ । ४ । २० । ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये । अत्र क्ङितीति नानुवर्तते, अवतेस्तुनि कृते ओतुरिति दर्शनात् । अनुनासिकग्रहणं चानुवर्तते, अवतेर्मन्प्रत्यये तस्य टिलोपे ओमिति दर्शनात् । ईडभावे ऊठि पिति गुणः । मामोति, मामवीति । मामूतः । मामवति । मामोषि । मामोमि । मामावः । मामूमः । मामूहि । मामवानि । अमामोत् । अमामोः । अमामवम् । अमामाव । अमामूम ॥ तुर्वी हिंसायाम् । तोतूर्वीति ॥ ( ३५२६ ) (सू) राल्लोपः । ६ । ४ । २१ । रेफात्परयोश्च्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये । इति वलोपः । लघूपधगुणः ॥ ( ३५२७ ) (सू) न धातुलोप आर्धधातुके । १ । १ । ४ । धात्वंशलोपनिमित्ते आर्धधातुके परे इको गुणवृद्धी न स्तः । इति

---

अजर्घा इति । 'गृधु अभिकांक्षायाम्' इह अपदान्तस्यापि रेफस्य 'रो रि २५७' इति लोपो भवत्येव, अत्र [ पदस्येत्यस्यासंबन्धेऽप्युत्तरत्र ] मण्डूकप्लुत्या पदस्येत्यनुवर्तनात्॥ पाप्रष्टीति । 'प्रच्छ ज्ञीप्सायाम्' । 'व्रश्च-४११' इति षः । पाप्राच्छिता। पाप्राच्छिष्यति । पाप्रष्टु । पाप्रष्टात् । पाप्रष्टाम् । पाप्रच्छतु । पाप्रड्ढि । पाप्रच्छानि । अपाप्रच्छीत्, अपाप्रट् । अपाप्रच्छुः । अपाप्रच्छीः, अपाप्रट् । अपाप्रष्टम् । अपाप्रष्ट । अपाप्रच्छम् । अपाप्रच्छ्व । अपाप्रश्म ॥ भाष्ये ध्वनितमिति । 'च्छ्वोः शूड्-' इति सूत्रे भाष्ये क्ङिद्ग्रहणमनुवर्तते न वेति विकल्प्य कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तम्-'एतावानेव विशेषः ।' अनुवर्तमाने क्ङिद्ग्रहणे 'च्छः षत्वं वक्तव्यम्' इति । अननुवर्तमाने त्वनेन च्छः शत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा, प्रष्टुमित्यादिसिद्धये व्रश्चादिसूत्रे छग्रहणं न कर्तव्यमिति भावः । एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो यङ्लुक् नास्तीत्युक्तप्रायम्, अन्यथा दिवेर्यङ्लुकि इडभावपक्षे देदेति,देदेषि-इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात् । तत्र क्ङिद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योति, देद्योषीत्यादिरूपविशेषलाभात् । ततश्चैतावानेवेत्येवकारो विरुध्येत ॥ स्रिविमव्योस्त्विति । 'स्रिवु गतिशोषणयोः' 'मव बन्धने' ॥ जाहामीति । ईट्पक्षे जाहयीमि । लोटि जाहयीतु, जाहतु । जाहतात् । जाहताम् । जाहयतु । जाहहि, जाहतात् । जाहयानि । जाहयाव । जाहयाम । लङि अजाहयीत्, अजाहत् । आजाहताम् । अजाहयुः । अजाहयीः, अजाहः । अजाहतम् । अजाहत । अजाहयम् । अजाहाव । अजाहाम । जाहय्यात् ।'ह्म्यन्तक्षण-३०७२' इति वृद्धिनिषेधः । अजाहयीत् । अजाहयिष्टाम् । अजाहयिष्यत् ॥ ( ३५२५ ) ज्वरत्वर-'ज्वर रोगे' 'ञित्वरा संभ्रमे' ॥ अत्र वृत्तौ झलादौ क्ङितीत्युक्तं तत्र क्ङितीत्येतद्भ्रमसकृतमेवेत्याह—क्ङितीति नानुवर्तत इति॥ अवतेस्तुनीति।'ज्वरत्वर-३५२५' इत्युपधावकारयोरूठि गुणे च कृते ओतुरिति सिध्यति नान्यथा । तेनात्र क्ङितीति नानुवर्तनीयमिति भावः॥ अवतेरिति । उपधावकारयोरूठि गुणे च कृते मन्प्रत्ययस्य टिलोपे चोमिति सिध्यतीत्यर्थः । ज्वरादेरुदाहरणं क्विपि जूः जूरौ, जूरः । झलादौ तु जूर्तिः । जूर्णः । जूर्णवान्॥ त्वर । तूः । तूरौ । तूरः । तूर्तिः । तूर्णः । तूर्णवान् ॥ स्रिवि । स्रूः । स्रुवौ । स्रुवः । स्रूतिः ॥ अवि । ऊः । उवौ । उवः । ऊतः । ऊतिः ॥ मव । मूः । मुवौ । मुवः । मूतः । मूतिः॥ मामोषीत्यादि। ईट्पक्षे मामवीषि । मामवीमि । मामवीतु । अमामवीत् । अमामवीरिति बोध्यम् ॥ ( ३५२६ ) राल्लोपः । 'च्छ्वोः शूड्-३३९४' इत्यतः च्छ्वोरित्यनुवर्तते । क्वावुदाहरणम्-तूः । तुरौ । तुरः ॥ धुर्वी । धूः । धुरौ । धुरः ॥ मुर्छा । मूः मुरौ । मुरः ॥ ( ३५२७ ) न धातुलोपे-। आर्धधातुके धातुलोपो नास्तीति लक्षणया व्याचष्टे--धात्वंशेति । यद्यपि

---

१ 'लोपो व्योः-' इति सूत्रे वकारप्रत्याख्यानभाष्यमपि वकारान्तानां यङ्लुगभावे मानमिति बोध्यम् ॥ देदेतीत्यादौ वकारलोपस्य सिद्धये सूत्रे वकारग्रहणमावश्यकमेव स्यादिति भावः ॥ २ असंबन्धेऽपीति । 'अयं तर्हि नित्यो लोपः-'रो रि' इति' इति सिद्धान्त्युक्तौ 'पदान्तस्येत्येवं सः' इति पूर्वपक्ष्युक्तेः ''न शक्यः स पदान्तस्येत्येवं विज्ञातुम् । इह हि लोपो न स्यात्-जर्गृधेर्लङ् अजर्घाः, पास्पर्धेः-अपास्पाः इति''इति सिद्धान्तिनो लण्सूत्रभाष्ये दूषितत्वादिति भावः ॥ ३ उत्तरत्रेति । 'खरवसानयोः-' इत्यत्र पदस्येत्येतत्संबन्धस्य चर्चा कर्ता संपर्क इत्यादौ विसर्गवारणायावश्यकत्वादिति भावः ॥

नेह निषेधः, तिबादीनामनार्धधातुकत्वात्। तोतोर्ति। 'हलि चेति दीर्घः। तोतूर्तः। तोतूर्वति॥ तोथोर्ति॥ दोदोर्ति॥ दोधोर्ति॥ मुर्छा। मोमूर्च्छीति, मोमोर्ति। मोमूर्तः। मोमूर्छतीत्यादि। आर्धधातुक इति विषयसप्तमी। तेन यङि विवक्षिते अजेर्वी। वेवीयते। अस्य यङ्लुङ्नास्ति, लुकाऽपहारे विषयत्वाभावेन वीभावस्याप्रवृत्तेः॥ इति यङ्लुगन्तप्रक्रिया॥

---

## अथ नामधातुप्रक्रिया।

( ३५२८ ) ॐ सुप आत्मनः क्यच्। ३।१।८। इषिकर्मण एषितृसंबन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात्। धात्ववयवत्वात्सुब्लुक्॥ ( ३५२९ ) ॐ क्यचि च। ७।४।३३। अस्य ईत्स्यात्। आत्मनः पुत्रमिच्छति पुत्रीयति। वान्तो यि प्रत्यये। गव्यति। नाव्यति। लोपः शाकल्यस्येति तु न, अपदान्तत्वात्। तथाहि—॥

---

'दुरिणो लोपश्च ४३८०' इत्यौणादिके रक्प्रत्यये धातुलोपः प्रसिद्धः, तथापि प्रयोजनवानप्रसिद्धः, इणो लुप्तत्वादेव गुणाप्रसङ्गात्। प्रत्ययसन्नियोगेन धातुलोपविधानात् आर्धधातुकस्य निमित्तत्वमपि नास्ति। अत एव दूरमित्यत्र 'ढ्लोपे—२५८' इति दीर्घे कर्तव्ये धातुलोपस्य स्थानिवत्त्वं नास्ति, इह धातोर्लोपो यस्मिन्निति बहुव्रीहिर्विशेष्यं चार्धधातुकमित्याशयेनाह—**लोपनिमित्ते इति। गुणवृद्धी न स्त इति।** यद्यपि—'क्ङिति च २९७२' इति सूत्रे लैगवायन इत्यत्र गुणनिषेधो मा भूदिति 'इग्लक्षणे गुणवृद्धी न स्तः' इति व्याख्यातं तथापि इह प्रयोजनाभावादिग्लक्षणे इति नोक्तम्। धाताविति किम्, लून्। लविता। पून्। पविता। नन्वत्रानुबन्धलोपनिमित्तमार्धधातुकं न भवतीति व्यङ्गविकलमिदमिति चेत्। अत्राहुः—धातुग्रहणे सति धातोर्लोपो यस्मिन् इति बहुव्रीहिलाभात् लोपनिमित्त इत्यर्थो लभ्यते, तदभावे तु लोपे सत्यार्धधातुक इत्यर्थाल्लवितेत्यादौ दोषः स्यादेवेति। यदा तु लोपयतीति लोपः तस्मिँल्लोपनिमित्ते आर्धधातुके इको गुणवृद्धी न स्त इति व्याख्यायते, तदा धातुग्रहणं स्पष्टप्रतिपत्त्यर्थम्। 'उत्सृष्टानुबन्धस्य धातुत्वम्' इति कैयटादिमते तु धातुलोप इत्यत्र बहुव्रीह्याश्रयणं विनापि धात्ववयवलोपे सत्यार्धधातुक इति व्याख्यायां लवितेत्यादौ नातिप्रसङ्ग इति बोध्यम्। आर्धधातुके किम्, "त्रिधा बद्धो वृषभो रोरवीति"। 'रु शब्दे' इत्यस्मात् 'धातोरेकाचः—३४९४' इति यङि तस्य लुक्। यङन्तस्य धातुत्वे यङो धात्ववयवत्वाल्लुप्तत्वाच्चात्रापि निषेधः स्यात्तन्मा भूदिति। नन्वत्र यङ्लुकोऽनैमित्तिकत्वादिको लोपनिमित्तपरत्वं नास्तीति व्यङ्गविकलमिति चेत्। अत्राहुः—आर्धधातुकग्रहणे सति अन्यपदार्थलाभात् बहुव्रीहिर्लभ्यते, तदभावे त्ववयवलोपे सति गुणवृद्धी न स्त इत्यर्थाद्रोरवीतीत्यत्र दोषः स्यादेवेति। केचित्तु—धातुं लोपयतीति धातुलोपः, 'ढ्लोपे—२५८' इत्यत्रेव 'कर्मण्यण् ३८७९' इत्यभ्युपेत्य व्यधिकरणबहुव्रीह्याश्रयणं विनैव धात्ववयवलोपनिमित्ते गुणवृद्धी न स्त इति व्याचक्षते। इक इति किम्, रागः, अभाजि। 'घञि च भावकरणयोः ४९७७' इति रञ्जेर्नलोपे कृते वृद्धिः। अभाजीत्यत्र तु 'भञ्जेश्च चिणि ३६९०' इति नलोपे वृद्धिः। **इति नेह निषेध इति।** सूत्रस्योदाहरणं तु लोलुवः, पोपुवः, मरीमृज इत्यादि बोध्यम्। तत्र लोलूयपोपूयशब्दाभ्यां पचाद्यचि 'यङोऽचि च ३५१९' इति यङ्लुकि कृते अच्प्रत्ययमाश्रित्य प्राप्तो गुणो निषिध्यते, मरीमृज इत्यत्र तु वृद्धिः। ननु लोलूयादिभ्योऽच्प्रत्यये 'अतो लोपः ३०८२' इत्यल्लोपे यकारस्य 'यङोऽचि च ३५१९' इति लुक्यल्लोपस्य स्थानिवत्त्वादच्प्रत्ययनिमित्तः 'सार्वधातुकार्धधातुकयोः २९२२' इति गुणो 'मृजेर्वृद्धिः ३२८६' इति वृद्धिश्च न भवेदिति किमनेन निषेधसूत्रेण। न चैवमपि लोलुव इत्यादावुवङि कृते लघूपधगुणः स्यात् तद्वारणाय निषेधोऽयमावश्यकः उवङ आदिष्टादचः पूर्वत्वेन लघूपधगुणे कर्तव्ये स्थानिवत्त्वाभावादिति वाच्यम्, स्थानिद्वाराऽनादिष्टादचः पूर्वत्वेन उवङो दृष्टत्वात्। स्थानिद्वारा दृष्टत्वेऽपि स्थानिवद्भवतीत्येतत् 'न पदान्त—७८' इति सूत्रे सवर्णग्रहणेन ज्ञापितम्, न हि शिण्ढि इत्यत्र स्थानिभूतादचः पूर्वत्वेनानुस्वारो दृष्टः किं तु स्थानिद्वारा। तथा च—अनुस्वारस्य परसवर्णे कर्तव्ये श्नमः अल्लोपस्य स्थानिवत्त्वनिषेधाय तत्र सवर्णग्रहणं कृतमितीह स्थानिवद्भावः सिद्धः। नोनोनावेत्यत्र तु लिडुत्पत्तेः प्रागेव बहुलग्रहणादकारविशिष्टस्य यङो लुकि स्थानिवद्भावाप्रसक्त्या न वृद्ध्यभावशङ्केति 'न धातुलोपे—३५२७' इति सूत्रस्य न किंचित्प्रयोजनमिति चेत्। सत्यम्, अत एव भाष्ये प्रत्याख्यातमिदमिति संक्षेपः॥ **तोतोर्तीति।** यद्यप्यत्र 'लोपो व्योः—१२५४' इत्यनेन लोपः सिध्यति, तथापि तोतूर्त इत्यादौ वलोपार्थं 'राल्लोपः ३५२६' इत्युपन्यस्तम्, अन्यथा तत्र 'लोपो व्योः—१२५४' इति लोपं बाधित्वा वस्य 'च्छ्वोः शूड्—३३९४' इति ऊठ् स्यात्॥ **तोथोर्तीत्यादि।** थुर्वी दुर्वी हिंसायाम्॥ **मुर्छा** मोहसमुच्छ्राययोः। मोमूर्छीमि, मोमोर्मि। मोमूर्थः। मोमूर्थ। मोमूर्छीमि। मोमोर्मि। मोमूर्छ्वः। मोमूर्मः। मोमूर्छाचकार। मोमूर्छिता। मोमूर्छीतु, मोमोर्तु। मोमूर्तात्। मोमूर्हि। अमोमूर्छीत्, अमोमोः। अमोमूर्छुः। मोमूर्छ्यात्। अमोमूर्छीत्। अमोमूर्छिष्टाम्। अमोमूर्छिष्यत्॥ इति यङ्लुगन्तप्रक्रिया॥

---

(३५२८) **सुप आत्मनः क्यच्।** 'धातोः कर्मणः—३४६५' इति पूर्वसूत्रात् कर्मण इच्छायां वेत्यनुवर्तते। ततश्च सन्निधानादिच्छाकर्मण एव भवतीत्याह—**इषिकर्मण इति।** परस्य पुत्रमिच्छतीत्यत्रातिप्रसङ्गवारणाय सूत्रे आत्मशब्द उपात्तः। स तु स्वशब्दपर्यायः। स्वश्च क इत्याकाङ्क्षायामिच्छायाः सन्निधापितत्वादेषितैव गृह्यते तदाह—**एषितृसंबन्धिन इति।** सुबन्त-

( ३५३० ) (सू) नः क्ये । १ । ४ । १५ । क्यचि क्यङि च नान्तमेव पदं स्यान्नान्यत् ॥ सन्निपातपरिभाषया[१] क्यचो यस्य लोपो न । गव्यांचकार । गव्यिता । नाव्यांचकार । नाव्यिता ॥ [३३०]नलोपः–राजीयति ॥ [१०२४]प्रत्ययोत्तरपदयोश्च । त्वद्यति । मद्यति ॥ एकार्थयोरित्येव । युष्मद्यति । अस्मद्यति ॥ [४८१]हलि च । गीर्यति । पूर्यति ॥ धातोरित्येव । नेह । दिवमिच्छति दिव्यति[२] । इह पुरमिच्छति पुर्यतीति माधवेनोक्तं प्रत्युदाहरणं चिन्त्यम्[३], पूर्गिरोः साम्यात् ॥ दीव्यतीति दीर्घस्तु प्राचः प्रामादिक एव ॥ अदस्यति ॥ [१२३९]रीङृतः । कर्त्रीयति ॥ [१२४८]क्यच्व्योश्च । गार्गीयति ॥ वाच्यति[४] ॥ [३०८]अकृत्सार्वेति दीर्घः । कवीयति ॥ समिध्यति ॥ ( ३५३१ ) (सू) क्यस्य विभाषा । ६ । ४ । ५० । हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके । आदेः परस्य । [३०८]अतो लोपः । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता, समिध्यिता ॥ ( ३५३२ ) (वा) मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच्न ॥ किमिच्छति । इदमिच्छति । स्वरिच्छति ॥ ( ३५३३ ) (सू) अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु । ७ । ४ । ३४ । क्यजन्ता निपात्यन्ते ।

---

स्योक्तविशेषणद्वयमर्थद्वारकं बोध्यम् ॥ ( ३५३० ) नः क्ये । 'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि ३५५१ ' इति वक्ष्यमाणतया हलन्तात्क्यष् दुर्लभ इत्यभिप्रेत्याह—**क्यचि क्यङीति** । एवं चेह क्यषीत्यपि कैश्चिदुक्तं तदुपेक्ष्यम् ॥ 'यस्य हलः ३४९७' इति लोपमाशङ्क्याह—**सन्निपातपरिभाषयेति** । यकारे परे वान्तादेशविधानाद्यकारो यलोपस्य निमित्तं न भवतीति भावः ॥ **गव्यतीति** । अत्रान्तर्वर्तिविभक्त्या पदत्वाल्लोपो दुर्वारः स्यादित्याशङ्क्याह—**अपदान्तत्वादिति** । इदं च समाधानस्य समाधानान्तरादूषकत्वादिति न्यायेन समाधिसौकर्यादुक्तम् । वस्तुतस्तु उक्तरीत्या शङ्कैव नेति बोध्यम् । अन्ये तु–वार्तिक एव प्रश्लेष इति द्वितीयपक्षमाश्रित्येदं सूत्रं वकारप्रश्लेषे लोपासंभवात् न हि कार्यीति न्यायात् । न च वलीति निमित्तत्वेनाश्रयणात् तत्रापि लोपो भवत्येव, अन्यथा वलीत्येव कुर्यादिति वाच्यम्, वकारे परतो यकारलोपे तस्य निमित्तत्वेनाश्रयणावश्यकत्वादिति द्वितीयकल्प एव युक्त इत्याहुः ॥ **राजीयतीति** । 'क्यचि च ३५२९' इत्यवर्णस्य ईत्वे कर्तव्ये 'पूर्वत्रासिद्धम् २५' इति नलोपोऽसिद्धो न भवति, 'नलोपः सुप्स्वर–४८०' इति नियमात् । यद्यपि नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति 'नलोपः सुप्स्वर–४८०' इति सूत्रं राजीयतीत्यादिषु पठनीयम् । राजभ्यामित्यादौ तु 'पूर्वत्रासिद्धम् २५' इति नलोपस्यासिद्धत्वेन दीर्घाद्यभावसिद्धेः, तथापि विधिमुखेन प्रवृत्तिरिति पक्षाभ्युपगमेन हलन्तेषु राजभ्यां राजभिरित्यत्रैव पठितमिति ज्ञेयम् । न च विधिमुखप्रवृत्तिपक्षो निरालम्ब एवेति वाच्यम्, 'अनुपराभ्यां कृञः' इति सूत्रस्थभाष्यग्रन्थपर्यालोचनया तत्पक्षावगमात् । यत्तु 'नलोपः सुप्स्वर–' इति सूत्रे मनोरमायामुक्तम्, 'नियमसूत्राणां विधिमुखेन प्रवृत्तिः सामान्यशास्त्रतात्पर्यसङ्कोचकता च' इति पक्षस्य 'द्युद्भ्यो लुङि' इति सूत्रे भाष्यकृता ध्वनितत्वादिति । तच्चिन्त्यम्, तत्सूत्रस्य भाष्यकारैरस्पृष्टत्वात् । केचित्तु–'द्युद्भ्यो लुङि' इत्यत्र ध्वनितत्वादिति वक्तव्ये सूत्रग्रहणं बहुव्रीहिलाभार्थम् 'द्युद्भ्यो लुङि' इति सूत्रं यस्मिन्प्रकरणे तद् 'द्युद्भ्यो लुङि' इतिसूत्रम् । परस्मैपदप्रकरणमित्यर्थः । तत्र हि 'अनुपराभ्याम्–' इति सूत्रं वर्तत इति तत्सूत्रे यद् ध्वनितं तत्तु परस्मैपदप्रकरणे ध्वनितं भवति । यद्वा–'अनुपराभ्यां कृञः' इत्यत्र हि भाष्यकृता 'द्युद्भ्यो लुङि' इति परामृष्टम् । तथा च–'द्युद्भ्यो लुङि' इति सूत्रं यस्मिंस्तत् 'द्युद्भ्यो लुङि' इतिसूत्रम्, 'अनुपराभ्यां कृञः' इति सूत्रमित्यर्थ इत्येवं कुकविकृतिवत् कथंचित्स्थितस्य गतिः समर्थनीयेत्याहुः ॥ **पूर्गिरोः साम्यादिति** । 'गॄ शब्दे' 'पॄ पालनपूरणयोः' इत्येताभ्यां क्विपि 'ॠत इद्धातोः ३१८३' 'उदोष्ठ्यपूर्वस्य ३३१२' इति प्रवृत्तेरिति भावः ॥ **प्रामादिक एवेति** । दिवुधातोः क्विपि तु द्यूरिति स्यात् । ततः क्यचि तु द्यूयतीति भवति । क्विपं विहाय विचि कृते तूपधागुणो वलोपश्च स्यात् । ततः क्यचि तु देवयतीति भवति । तथा च–' हलि च ' इति सूत्रे वृत्तावपि ' धातोरित्येव । नेह, दिवमिच्छति दिव्यति' इत्येवोक्तमिति भावः ॥ आपत्ययकारस्य लोपं स्मारयति—**क्यच्व्योश्चेति** ॥ 'नः क्ये ३५३०' इति नियमेन पदत्वाभावात्कुत्वं नेत्याह—**वाच्यतीति** । एवं समिध्यतीत्यत्र जश्त्वं नेति बोध्यम् ॥ ( ३५३२ ) 'मान्ताव्ययेभ्यः प्रतिषेधः' इति वार्तिकस्य यथाश्रुतव्याख्याने पुत्रमिच्छतीत्यत्रापि न स्यात् । पुत्रौ पुत्रान् वा इच्छतीत्यादावेव स्यात्, अतो व्याचष्टे–**मान्तप्रकृतिकादिति** ॥ (३५३३) **अशनायोदन्य–। क्यजन्ता इति**। उदकशब्दस्योदन्भावोऽन्ययोर्दीर्घ इत्यपि ज्ञेयम् । इह यः सद्य एव भोक्तुमशनमिच्छति, यश्च पातुमुदकं, यश्च धने सत्यपि पुनर्धनं तत्रोदाहरणानि । यस्तु कालान्तरोपयोगार्थमशनमिच्छति, यश्च स्नातुमुदकं, यश्च दरिद्रः सन् धनमिच्छति, तत्र प्रत्युदाहरणानि । ननु ' उदन्या तु पिपासा तृट् ' इति निघण्टौ परस्परसामानाधिकरण्यं न स्याद्, उदन्याशब्दस्य उदकेच्छावाचित्वादिति चेत् । अत्राहुः–

---

१ ' यस्य हलः ' इति लोपं वारयितुमाह–**संनिपातेति** । यादिप्रत्ययं निमित्तीकृत्य जायमानः '**वान्तो यि–**' इति वान्तादेशो यादिप्रत्ययलोपस्य निमित्तं न भवतीति भावः ॥ २ **दिवमिति** ॥ '**दिवेर्डिविः**' इत्युणादिनिष्पन्नत्वेन नास्य धातुत्वमिति भावः ॥ ३ **चिन्त्यमिति** । '**विप्रत्ययान्ताः प्रातिपदिकत्वं लभन्ते धातुत्वं न जहति**' इति सिद्धान्तेन धातुत्वस्यानिवर्तनादिति भावः ॥ ४ **वाच्यतीति** । '**वचिस्वपि–**' इत्यनेन संप्रसारणं तु क्यचः कित्त्वेऽपि न भवति, '**धातोः कार्यमुच्यमानं तत्प्रत्यये भवति**' इति न्यायेन सुबन्ताद्विहिते प्रत्ययेऽप्राप्तेरिति बोध्यम् ॥

अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् । अशनीयति । उदकीयति ॥ धनीयति ॥ ( ३५३४ ) सू अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । ७ । १ । ५१ । एषां क्यचि असुगागमः स्यात् ॥ ( ३५३५ ) वा अश्ववृषयोर्मैथुनेच्छायाम् ॥ अश्वस्यति वडवा । वृषस्यति गौः ॥ ( ३५३६ ) वा क्षीरलवणयोर्लालसायाम् ॥ क्षीरस्यति बालः । लवणस्यति उष्ट्रः ॥ ( ३५३७ ) वा सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ ॥ दधिस्यति, दध्यस्यति । मधुस्यति, मध्वस्यति ॥ ( ३५३८ ) सू काम्यच्च । ३ । १ । ९ । उक्तविषये काम्यच्स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यांचकार । पुत्रकाम्यिता । इह यस्य 'हलः'[१] इति लोपो न, अनर्थकत्वात् । यस्येति संघातग्रहणमित्युक्तम् । यशस्काम्यति । सर्पिष्काम्यति । मान्ताव्ययेभ्योऽप्ययं स्यादेव । किंकाम्यति, स्वःकाम्यति ॥ (३५३९) सू उपमानादाचारे ।३।१।१०। उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात् । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् ॥ ( ३५४० ) वा अधिकरणाच्चेति वक्तव्यम् ॥ प्रासादीयति कुट्यां भिक्षुः । कुटीयति प्रासादे ॥ (३५४१) सू कर्तुः क्यङ् स लोपश्च । ३ । १ । ११ । उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात् । सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात् । क्यङ् वेत्युक्तेः पक्षे वाक्यम् । सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः, स च व्यवस्थितः ॥ ( ३५४२ ) वा ओजसोऽप्सरसो नित्यमितरेषां विभाषया ॥ कृष्ण इवाचरति कृष्णायते । ओजःशब्दो वृत्तिविषये तद्वति । ओजायते । अप्सरायते । यशायते, यशस्यते । विद्वायते, विद्वस्यते । त्वद्यते । मद्यते । अनेकार्थत्वे तु युष्मद्यते । अस्मद्यते ॥ क्यङ्मानिनोश्च ॥ कुमारीवाचरति कुमारायते । हरिणीवाचरति हरितायते । गुर्वीव गुरूयते । सपत्नीव सपत्नायते, सपतीयते, सपत्नीयते । युवतिरिव युवायते । पट्वीमृद्व्याविव पट्वीमृदूयते ॥ न कोपधायाः । पाचिकायते ॥ ( ३५४३ ) वा आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः ॥ वाग्रहणात् क्यङपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते, तेन तङ् । अवगल्भते । क्लीबते । होडते । भूतपूर्वादप्यनेकाच आम् । एतद्वार्तिकारम्भसामर्थ्यात् । न च अवगल्भते इत्यादिसिद्धिस्तत्फलम् , केवलानामेवाचारेऽपि वृत्तिसंभवात्, धातूनामनेकार्थत्वात् । अवगल्भांचक्रे । क्लीबांचक्रे । होडांचक्रे । वार्तिकेऽवेत्युपसर्गविशिष्टपाठात्केव-

---

अशनायतीत्यादिषु अविवक्षितप्रकृत्यर्थं बुभुक्षापिपासादिकमेवार्थः, तथा च नोक्तदोष इति॥(३५३४)अश्वक्षीर–। 'आज्जसेः–५४२६' इत्यतोऽसुगिति वर्तते ॥ ( ३५३५ ) अश्वस्यतीति । मैथुनार्थमश्वमिच्छतीत्यर्थः । एवं वृषमिच्छति मैथुनार्थं वृषस्यति गौः । ननु 'इति रामो वृषस्यन्तीम्' इति प्रयोगो मनुष्यविषये कथं संगच्छत इति चेत् । अत्राहुः–अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छैवार्थः, अत एव 'वृषस्यन्ती तु कामुकी' इति कोशोऽपि स्वरसतः संगच्छते इति ॥ ( ३५३६ ) लालसायामिति । उत्कटेच्छायामित्यर्थः ॥ ( ३५३८ ) काम्यच्च । उच्चारणसामर्थ्यान्न कस्येत्संज्ञा । 'मान्ताव्ययेभ्यः प्रतिषेधः ३५३२' इत्यस्यानुवृत्त्यभावं सूचयति—अयं स्यादेवेति ॥ ( ३५३९ ) आचरतीति । व्यवहरतीत्यर्थः ॥ ( ३५४० ) अधिकरणाच्चेति । सप्तम्यन्तरूपात्सुबन्तादित्यर्थः ॥ ( ३५४१ ) कर्तुः क्यङ् स लोपश्च । 'धातोः कर्मणः–३४६५' इति सूत्राद्वेत्यनुवर्तत इत्याह—क्यङ्वा स्यादिति ॥ सेति लुप्तषष्ठीकं कर्तृविशेषणमित्याह—सान्तस्येति । चकारस्तु अन्वाचये बोध्यः ॥ ( ३५४२ ) तद्वतीति । तथा च–ओजायत इत्यत्र ओजस्वीवाचरतीति विग्रहो बोध्यः ॥ विद्वस्यत इति । नान्तस्यैव पदत्वात्सस्य रुत्वं न ॥ पुंवद्भावं स्मारयति—क्यङ्मानिनोश्चेति ॥ सपत्नीवेति । त्रितयसाधारणं विग्रहवाक्यम् ॥ सपत्नायत इति । शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादिङीनन्तात्क्यङि पुंवद्भावे 'अकृत्सार्व–३०७१' इति दीर्घे च रूपमिदम् ॥ सपतीयत इति । समानस्वामिकाभिधायिनो भाषितपुंस्कस्य 'नित्यं सपत्न्यादिषु ६८३' इति नादेशे नान्तत्वान् ङीप्, ततः क्यङि पुंवद्भावे च दीर्घः ॥ सपत्नीयत इति । विवाहजन्यसंस्कारविशेषनिमित्तकेन पतिशब्देन समासे सति नित्यस्त्रीत्वान्न पुंवत् ॥ युवायत इति । न च ङ्याप्सूत्रे भाष्ये युवतितरेत्युदाहरणाद् यौवनं जातिरिति 'जातेश्च १२१४' इति निषेधे युवतीयत इत्युदाहरणमिहोचितमिति वाच्यम्, वयसोऽनित्यत्वेनाजातित्वात् । अन्यथा युवजानिरिति 'अचः परस्मिन्–' इति सूत्रस्थो भाष्यग्रन्थो विरुध्येत । युवतितरेति भाष्यस्य तु का गतिरिति चेत् । अत्राहुः–'तसिलादिषु–१२०१' इति पुंवद्भावे प्राप्ते भाष्यनिर्देशादेव न पुंवदिति । युवतीशब्दस्य तु तरपि 'घरूप–१४१४' इति ह्रस्वे युवतितरेति भवत्येव ॥ पट्वीमृदूयत इति । पूर्वपदस्य क्यङ्परत्वाभावान्न पुंवत् ॥ पाचिकायत इति । पुंवद्भावे सति कात्पूर्वस्येत्त्वं न श्रूयेतेति भावः । एवं पञ्चमीयते । स्रौघ्नीयते । सुकेशीयते ब्राह्मणीयत इत्यादि ॥ (३५४३) आचारेऽवगल्भ–। 'गल्भ धार्ष्ट्ये' 'क्लीबृ अधार्ष्ट्ये' 'होडृ अनादरे'॥ क्यङपीति । अपिशब्दाद्वाक्यम् । तत्तु 'सर्वप्रातिपदिकेभ्यः–३५४४' इत्यत्र वाग्रहणाल्लभ्यते इत्याहुः ॥ क्विप्सन्नियोगेनेत्यादि । तेन क्यङ्सन्नियोगेनानुदात्तत्वानुनासिकत्वयोरभावादित्संज्ञालोपौ न स्त इति 'अकृत्सार्व–३०७१' इति दीर्घे सति अवगल्भायते, क्लीबायत इत्यादि भवति ॥

---

१ वर्णग्रहणपक्षेऽपि 'अङ्गसंज्ञानिमित्तस्य यकारस्य' इत्यर्थाश्रयणेन न लोपापत्तिरिति भाष्ये स्पष्टम् ॥

लादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः । तङ् नेति तूचितम् ॥ (३५४४) ꣸ सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः ॥ पूर्ववार्तिकं तु अनुबन्धासञ्जनार्थम्, तत्र क्विबनूद्यते । प्रातिपदिकग्रहणादिह सुप इति न संबध्यते, तेन पदकार्यं न । कृष्ण इवाचरति कृष्णति । अतो गुणे इति शपा सह पररूपम् ॥ अ इवाचरति अति । अतः । अन्ति । प्रत्ययग्रहणमपनीय अनेकाच इत्युक्तेर्नाम् । औ । अतुः । उः । द्वित्वम् । अतो गुणे । अत आदेरिति दीर्घः । णल्

---

तेन तङिति । आत्मनेपदमित्यर्थः । तथा च अवगल्भमानः, क्लीबमान इत्यादि सिध्यति ॥ माधवादय इति । केचित्तेषामाशयमाहुः-'आचारेऽवगल्भ-३५४३' इत्यत्र सुप इत्यनुवर्तते । तथा च-केवलादुपसर्गान्तराविशिष्टादवगल्भप्रगल्भादिसुबन्तात्क्यङेव न तु क्विप् ॥ तङ् नेति तूचितमिति । उत्तरवार्तिकेन प्रातिपदिकमात्रात्क्विब् विधीयत इति एतेभ्योऽपि त्रिभ्यः क्विपि सिद्धे तत्सन्नियोगेनानुदात्तत्वानुनासिकत्वमात्रमच्प्रत्ययस्य 'आचारेऽवगल्भ-३५४३' इत्यवगल्भादिषु प्रतिज्ञायते लाघवाद्, अन्यत्र तु गल्भप्रगल्भादिप्रातिपदिकेषु क्विपि परस्मैपदमेव भवति, न तु तङिति भावः । नन्वेवम् 'आचारेऽवगल्भ-३५४३' इत्यत्र वाग्रहणात् क्यङमनुवर्त्य अवगल्भादिप्रातिपदिकेभ्यः क्यङ्विधानेऽप्यन्यत्र सुबन्तादेव क्यङिति क्यङो विषय एव नास्ति । तथा च केवलादुपसर्गान्तरविशिष्टाच्च क्यङप्ययुक्त इति चेत् । अत्र वदन्ति-प्रातिपदिकेभ्यः क्विप्, सुबन्तेभ्यः क्यङिति विषयभेदेनापि गल्भति, गल्भायते, प्रगल्भति, प्रगल्भायते इत्यादि सिध्यत्येवेति । स्यादेतत्, 'गल्भ धार्ष्ट्ये' इत्यादीनामनुदात्तत्वादवगल्भते इत्यादिप्रयोगासिद्धावपि अवगल्भादिषूत्तरवार्तिकेन क्विपि सत्यवगल्भतीत्याद्यनिष्टप्रयोगः स्यात्तद्वारणार्थम् आचारेऽवगल्भ-३५४३'इति वार्तिकारम्भस्यावश्यकतया सामर्थ्यस्योपक्षीणत्वात् 'भूतपूर्वादप्यनेकाच आम्'इत्येतदप्ययुक्तमिति चेत् । सत्यम्, अत्र ह्ययमाशयः-'सर्वप्रातिपदिकेभ्यः-३५४४' इति वार्तिके वाग्रहणेन व्यवस्थितविभाषाऽऽश्रीयते । तथा च-अवगल्भक्लीबहोडेभ्यः क्विपोऽभावादनिष्टप्रयोगो न भविष्यतीति स्वीकृते सामर्थ्यं नोपक्षीणामिति दिक् ॥ (३५४४) पदकार्यं नेति । सवर्णदीर्घो यद्यपि पदमात्रकार्यं न भवति तथापि पदस्य जायमानं कार्यं नेत्यत्र तात्पर्यं बोध्यम् ॥ तनोतीति तत् स इव आचरति तताति, अत्र जश्त्वं न ॥ त्वगिव आचरति त्वचाति, अत्र कुत्वं नेत्याद्यपि बोध्यम् ॥ द्वित्वमिति । अ णल् इति स्थिते 'द्विर्वचनेऽचि ३००३' इति निषेधादतो लोपोऽत्र न भवतीति भावः ॥ अतो गुणे इति । द्वित्वे कृतेऽप्यतो लोपो न भवति, अन्तरङ्गेणानेन बाधितत्वादिति भावः । यद्यप्यत्र फले विशेषो नास्ति, तथापि शास्त्रप्रासिक्रममनुरुध्योक्तम् । यद्यप्यत्र 'वार्णादाङ्गं बलीयः ३०६०' इति परिभाषयाऽतो लोप एवोचित इति चेत् । मैवम्, तस्याः समानाश्रये कारश्चकारेत्यादौ प्रवृत्तिस्वीकारान्न तु व्याश्रयेऽपि । न च परत्वान्नित्यत्वाच्च 'अत आदेः ३०१०' इत्यनेनैव प्रथमं भाव्यमिति वाच्यम्, तस्य बहिरङ्गत्वेनासिद्धत्वात् । न चापवादत्वात् 'अत आदेः ३०१०' इत्यनेन भाव्यमिति वाच्यम्, 'अपवादो यद्यन्यत्र चरितार्थस्तर्हि अन्तरङ्गेण बाध्यते' इत्युक्तत्वात् । आनर्देत्यादौ तस्य चरितार्थत्वात् । तत्र हलादिःशेषात्प्रागेव परत्वात् 'अत आदेः ३०१०' इत्यस्य प्रवृत्तेः । न च नित्यत्वात् 'हलादिः शेषः २९३३' एव प्रथमं स्यादिति वाच्यम्, नित्यत्वस्य 'अत आदेः ३०१०' इत्यत्रापि तुल्यत्वात् । एतच्च मनोरमानुसारेणोक्तम् । केचिदत्र वदन्ति । 'अतो गुणे २७६', इति पररूपापवादस्य 'अत आदेः ३०१०' इत्यस्य आनर्देत्यादौ चरितार्थत्वादन्तरङ्गमेव भवतीति मनोरमोक्तं चिन्त्यम्, स्वविषयमध्ये एकत्रोदाहरणे चरितार्थस्योदाहरणान्तरेऽपि प्रवृत्त्यभ्युपगमात् । न हि गोद इत्यत्र 'आतोऽनुपसर्गे कः ३८८३' इति चरितार्थमिति गोप इत्यादौ न प्रवर्तते । तस्मादणं बाधित्वा कप्रत्ययो यथा स्वविषये सर्वत्र प्रवर्तते, तथेहापि प्रवर्तते

---

१ वस्तुत इदं सर्वं हरदत्तानुरोधेनेति ध्वनयन्नाह—**पूर्ववार्तिकं त्विति** ॥ अच्प्रत्ययान्तादाचारक्विपि 'अवगल्भति' इति प्रयोगवारणाय 'सर्वप्रातिपदिकेभ्यः-' इत्येतद्विहितक्विबनुवादेनानुदात्तासङ्ग एषां बोध्यते इत्यर्थः ॥ अत्र चातिरिक्तोऽकारः पररूपेण प्रश्लिष्टोऽनुनासिके आसज्यते इत्यनेकाच्त्वप्रयुक्तस्यामः सिद्धिरिति भावः ॥ २ एकाज्भ्य आचारक्विपोऽनभिधानमिति परे । एवमेव हलन्तेभ्योऽपि तेषां मते बोध्यम् ॥ ३ **अपनीयेति** । वस्तुतस्तु तदपनये न मानम् । एवं च प्रत्ययान्तत्वादाम् भवत्येव ॥ किंच तदपनयवादिना एकाज्भ्योऽनभिधानादेव क्विबनुत्पत्तिर्बोध्या । अन्यथा सूत्रवार्तिकयोः फलभेदापत्तिः । यत्र तु भिन्नफलार्थमेवोत्तरस्य प्रवृत्तिस्तत्र फलभेदेऽपि प्रत्याख्यानमस्तु न चात्र तथा । तथा सति **'अनेकाज्ग्रहणं चुलुम्पाद्यर्थम्'** इतिवद् **'एकाज्व्यावृत्त्यर्थम्'** इति वदेत् ॥ किंचैवं सति 'न कादेः' इत्यादौ **'अनर्थकः प्रतिषेधो निष्ठायामनिटः कुत्वविधानात्'** इतिवत् **'प्रत्ययादित्यनर्थकम् अनेकाच आमुविधानात्'** इति वदेदिति दिक् ॥ ४ **अतो गुणे अत आदेरिति दीर्घ इति** । **'अतो गुणे'** इति पररूपे जाते अ इति स्थिते वृद्धिं बाधित्वा प्राप्तम् **'अतो लोपः'** इति लोपं बाधित्वा **'अत आदेः'** इति दीर्घः । **'ण्यल्लोपावियङ्'**-इति तु **'अकृतसार्वधातुक-'** इत्यस्यैव बाधदर्शकम्, तस्यैव भाष्येऽवकाशप्रदर्शनात् । इयङादिसाहचर्येणाभ्यासानिमित्तकदीर्घस्यैव तत्र ग्रहणाच्चेति भावः ॥ परे तु **'अतो गुणे'** इति । **'पररूपं बाधित्वा'** इति शेषः ॥ तेन न पूर्वापरविरोधः स्वग्रन्थे । इति वदन्ति ॥ वस्तुतस्तु-अप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव सर्वसंमतत्वात्काकदन्तगणनाया इव निरर्थक एवात्र सर्वोऽप्ययं विचार इति दिक् ॥

औ । वृद्धिः । अतुसादिषु स्वौतो लोप इति चेत्यालोपः ॥ मालेवाचरति मालाति । लिङ्गविशिष्टपरिभाषया[१] एकादेशस्य पूर्वान्तत्वाद्वा क्विप् । मालाञ्चकार । लङि अमालात् । अत्र हल्ङ्यादिलोपो न । ङीसाहचर्यादापोऽपि सोरेव लोपविधानात् । इट्सकौ । अमालासीत् ॥ कविरिव कवयति । आशीर्लिङि कवीयात् । सिचिवृद्धिरित्यत्र धातोरित्यनुवर्त्य धातुरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः । अकवयीत् । माधवस्तु–नामधातोरपि वृद्धिमिच्छति । अकवायीत् ॥ विरिव वयति । विवाय । विव्यतुः । अवयीत्, अवायीत् ॥ श्रीरिव श्रयति । शिश्राय । शिश्रियतुः ॥ पितेव पितरति । आशिषि रिङ् । पित्रियात् ॥ भूरिव भवति । अत्र गतिस्थेति, भुवो वुगिति, भवतेर इति च न भवन्ति, अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात् । बुभाव । अभावीत् ॥ द्रुरिव द्रवति । णिश्रीति चङ् न । अद्रावीत् ॥ ( ३५४५ ) **अनुनासिकस्य क्विझलोः क्ङिति** । ६ । ४ । १५ । अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति ॥ राजेव राजानति ॥ पन्था इव पथीनति ॥ मथीनति ॥ ऋभुक्षीणति ॥ द्यौरिव देवतीति माधवः । अत्र ऊठि यवतस्युचितम् ॥ क इव कति । चकाविति हरदत्तः । माधवस्तु ण्यल्लोपाविति वचनात् णलि वृद्धिं बाधित्वाऽतो लोपात्[२] चक इति रूपमाह ॥ स्व इव स्वति । सस्वौ । सस्व । यत्तु स्वामी स्वांचकारेति तदनाकरमेव ॥ ( ३५४६ ) **भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः** । ३ । १ । १२ । अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात् हलन्तानामेषां लोपश्च । अभृशो

---

इति । तदपरे न क्षमन्ते–गोदगोपादौ सर्वत्राणः कस्य च प्राप्तिसंभवे विनिगमनाविरहादणं बाधित्वा कप्रत्यय एव भवति, प्रकृते त्वानर्देत्यादौ हलादिःशेषात्प्राक् 'अतो गुणे २७६' इत्यस्य प्राप्त्यभावाद्वैषम्यमस्तीति । ननु 'अत आदेः ३०१०' इत्यस्य पररूपापवादत्वमेषामासेत्यत्र यदुक्तं तत्कथं संगच्छते, आनृधतुरित्यादौ 'आद्गुणः १०४' इति गुणस्यापि प्राप्तेः । न च यथा सवर्णदीर्घो यण्गुणयोरपवादस्तथाऽयमप्युभयोरपवाद इति वाच्यम्, एवमप्यानर्देत्यत्रेव हलादिःशेषात्प्रागेवासेत्यत्रापि 'अत आदेः ३०१०' इत्यस्य प्रवृत्तौ किं तेन पररूपापवादत्वकथनेनेति चेत् । अत्र केचिदाहुः–'द्वन्द्वापवाद एकशेषः' इति केषांचित्प्रवादे यथाऽपवादशब्दो बाधकपरः 'सरूपाणाम्–२७३' इत्येकशेषानारम्भे हि स्वाद्युत्पत्तौ द्वन्द्वस्य प्रवृत्तेरेकशेषसूत्रारम्भे तु पदान्तराभावेन तदप्रवृत्तेस्तथाऽत्रत्यापवादशब्दोऽपि बाधकपरः । 'अत आदेः ३०१०' इत्यनारम्भे हि हलादिःशेषे पररूपप्रवृत्तावेधामासेति न स्यात्, आरब्धे तु तत्सूत्रे [तथा स्यादेव] परत्वाद्धलादिःशेषात्प्रागेव दीर्घप्रवृत्त्या पररूपस्याप्रसक्तेरिति । यद्यप्यासेत्यादौ प्रथमतः 'अत आदेः ३०१०' इति दीर्घाकरणेऽपि हलादिःशेषे पररूपे च कृते तस्य पूर्वान्तवद्भावे सति अभ्यासग्रहणेन ग्रहणात् 'अत आदेः ३०१०' इति दीर्घप्रवृत्त्या समीहितरूपासिद्धिः तथाप्यानर्देत्यादि न सिध्यत्येव । तत्र हि 'तस्मान्नुड् द्विहलः ३०५५' इति दीर्घीभूतादकारान्नुटि नकारोपर्यकारश्रवणाभावप्रसङ्गादिति दिक् ॥ प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्क्विपोऽनुत्पत्तिमाशङ्क्याह—**लिङ्गविशिष्टेत्यादि** ॥ **सिचि वृद्धिरित्यत्रेति** ॥ सिचा धातोराक्षेपात् 'ऋत इद्धातोः ३१८३' इत्यतो धातोरित्यनुवर्तनाच्च धातुरेव यो धातुरिति व्याख्या लभ्यत इति ज्ञेयम् ॥ **विरिवेति** । विः पक्षी ॥ ( ३५४५ ) **अनुनासिकस्य**—। अङ्गस्येति विशेष्यसन्निधानात्तदन्तलाभः । 'ढ्रलोपे–२५८' इत्यतो दीर्घग्रहणं, 'नोपधायाः ५०१' इत्यत उपधाग्रहणं चानुवर्तते तदाह—**अनुनासिकान्तस्येत्यादि** ॥ **झलादाविति** । एतच्च 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया लभ्यते । झलादौ किति शान्तः, दान्त इत्युदाहरणम् । ङिति तु यङ्लुकि तसि शंशान्तः, दन्दान्तः ॥ **पथीनतीति** । अन्तरङ्गत्वाद्दीर्घस्ततो न गुण इत्याहुः । 'इन्हन्–४८३' इत्यनेन शावेवेति नियमाद्दीर्घाभावे गुणे सति पथेनतीत्येव रूपमित्यन्ये । येषामिन्नादीनां शावुपधादीर्घः क्रियते परमदण्डीनीत्यादौ तेषामेव दण्डिन्वृत्रहन्नादीनाम् 'इन्हन्–४८३' इति नियमो न तु पथ्यादीनाम्, तेषां तु शौ परतः सुपन्थानीत्यादावुपधादीर्घप्रवृत्तावपि 'इतोऽत्सर्वनामस्थाने ४९६' इत्यत्त्वे कृते 'इन्हन्–४८३' इति नियमाप्रवृत्तेः । अन्यथा पन्थानौ पन्थान इति न सिध्येत्, तथा च–पथीनतीत्याद्येव साध्वित्यपरे ॥ **देवतीति माधव इति** । अपदान्तत्वात् 'दिव उत् ४६१' न ॥ **अत्रेति** । लघूपधगुणं बाधित्वाऽन्तरङ्गत्वादूठि यण्, तस्मिन्कर्तव्ये बहिरङ्गस्याप्यूठो नासिद्धत्वम् 'नाजानन्तर्ये–' इति निषेधात् । न च वार्णादाङ्गस्य बलीयस्त्वाद्यणं बाधित्वा लघूपधगुणः स्यादिति वाच्यम्, व्याश्रयत्वात् । अत एव सिवेरौणादिके नप्रत्यये स्योनशब्दः सिध्यतीति भावः ॥ **क इवेति** । कः ब्रह्मा ॥ **चक इतीति** । नन्वेवमौ, अतुरित्यत्रापि 'अत आदेः ३०१०' इति दीर्घं बाधित्वा 'अतो लोपः ३०८२' एव स्यादिति चेत् । अत्राहुः—'ण्यल्लोपौ–३०८९' इति वचनेन जायमानो योऽतो लोपः, स तु सन्निहितमेव 'अकृत्सार्व–३०७१' इति दीर्घं बाधते, 'अनन्तरस्य–४८८' इति न्यायात्, न तु व्यवहितमपि 'अत आदेः ३०१०' इति दीर्घमिति माधवाशयान्नानेन तद्ग्रन्थस्य विरोध इति ॥ **अनाकरमेवेति** ॥ अनेकाच्त्वाभावादित्यर्थः । अन्ये तु–भाष्ये प्रत्ययग्रहणमपनीयेत्यनुक्तत्वात्प्रत्ययान्ततया स्वामासेत्यादि रूपं शुद्धमेवेत्याहुः ॥ ( ३५४६ ) **भृशादिभ्यो**—। भुवीत्येतद्व्याचष्टे—**भवत्यर्थ इति** । भृश, शीघ्र, मन्द,

---

१ 'शक्तिलाङ्गलाङ्कुश–' इति वार्तिके घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाऽनित्येति मतेऽप्याह–एकादेशस्येति ॥
२–इदमेव भाष्यसंमतम्, इति शब्देन्दुशेखरे स्पष्टम् ॥

भृशो भवति, भृशायते । अच्वेरिति पर्युदासबलादभूततद्भाव इति लब्धम् । तेनेह न, क दिवा भृशा भवन्ति । ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क भवन्तीत्यर्थः । सुमनस् । अस्य सलोपः । सुमनायते । चुरादौ संग्राम युद्धे इति पठ्यते तत्र संग्रामेति प्रातिपदिकम् । तस्मात्तत्करोतीति णिच् सिद्धः । तत्सन्नियोगेनानुबन्ध आसज्यते । युद्धे योऽयं ग्रामशब्द इत्युक्तेऽपि सामर्थ्यात्संग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति । (३५४७) 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इति । तेन मनश्शब्दात्प्रागट् । स्वमनायत । उन्मनायते । उदमनायत । एवं चावागल्भत अवागल्भिष्टेत्यादावप्यवेत्यस्य पृथक्करणं बोध्यम् । ज्ञापकं च सजातीयविषयम् । तेन यत्रोपसर्गरूपं सकलं श्रूयते न त्वादेशेनापहृतं तत्रैव पृथक्कृतिः । एवं च आ ऊढः ओढः, स इवाचर्य ओढायित्वा । अत्र उन्मनाय्य अवगल्भ्येतिवन्न ल्यप् । ज्ञापकस्य विशेषविषयत्वे षाष्ठं वार्तिकं तद्भाष्यं च प्रमाणम् । तथाहि-॥(३५४८) **उस्योमाङ्क्ष्वाटः प्रतिषेधः** ॥ उसि ओमाङोश्च परयोराटः पररूपं नेत्यर्थः । उस्रामैच्छत्-औस्रीयत् । औङ्कारीयत् । औढीयत् । आटश्चेति चशब्देन पुनर्वृद्धिविधानादिदं सिद्धमिति षाष्ठे स्थितम् ॥ ( ३५४९ ) **लोहितादिडाज्भ्यः क्यष्** । ३ । १ । १३ । लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात् ॥ ( ३५५० ) **वा क्यषः** । १ । ३ । ९० । क्यषन्तात्परस्मैपदं वा स्यात् । लोहितायति, लोहितायते । अत्राच्वेरित्यनुवृत्त्याऽभूततद्भावविषयत्वं लब्धम्, तच्च लोहितशब्दस्यैव विशेषणम्, न तु डाचोऽसंभवात् । नाप्यादिशब्दग्राह्याणाम्, तस्य प्रत्याख्यानात् । तथा च वार्तिकम् ॥ ( ३५५१ ) **लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति** ॥ न चैवं काम्यच

---

पण्डित, दुर्मनस्, सुमनस्, उन्मनस्, इत्यादयो भृशादयः । क दिवेत्यादि भाष्यकारीयं प्रत्युदाहरणं व्याचष्टे--**ये रात्रावित्यादिना** ॥ **प्रातिपदिकमिति**-न त्वयं धातुः 'प्रसेरा च ४३४२' इत्यौणादिकेन मन्प्रत्ययान्ततया निष्पादितत्वात् । एवं च वक्ष्यमाणज्ञापकं संगच्छत इति भावः ॥ **अनुबन्ध इति** । संग्रामेति मशब्दाकारात् भिन्नोऽकारोऽनुबन्ध इत्यर्थः । तथा च-अत्र 'अतो गुणे २७६' इति पररूपं ज्ञेयम् । यदि तु मकारादकारोऽनुबन्धः स्यात्तर्हि अससंग्रामतेत्यत्र 'णौ चङि-३०९०' इत्युपधाह्रस्वः स्यात् । णिच्सन्नियोगेनानुबन्धकरणे तु अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्याप्रवृत्त्या 'णिचश्च ३३९७' इति कर्तृगामिनि क्रियाफल एवात्मनेपदं स्यान्न तु परगामिनीति विवेकः ॥ **सामर्थ्यादिति** । केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाभावादिति भावः ॥ ( ३५४७ ) क्रियायोगाभावादुपसर्गो नेत्यभिप्रेत्याह—**समानाकारमिति** ॥ **पूर्वपदमिति** । तच्च समास एव संभवति, तेन आन्दोलयित्वा, प्रेङ्खोलयित्वेत्यादौ आप्रेत्यादीनां न पृथक्करणम्, अन्यथा तेषां क्त्वाप्रत्ययान्तेन समासे सति ल्यप् स्यादिति भावः ॥ पृथक्करणस्य फलमाह--**तेनेति** । सुमिमनायिषति, उन्मिमनायिषतीत्यादौ मनश्शब्दस्य द्विर्वचनं पृथक्करणस्य फलमिति बोध्यम् ॥ **अवागल्भतेति** । 'आचारेऽवगल्भ-३५४३' इति क्विब्विधौ अवेत्यस्य पृथक्करणात् गल्भशब्दात्प्रागट् ॥ किं तत्साजात्यमित्यत आह—**तेनेति** ॥ ( ३५४८ ) **उस्रामिति** । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' इत्यमरः ॥ **औस्रीयदिति** । क्यजन्तादुस्राशब्दाल्लङि अङ्गस्याटि च कृते 'उस्यपदान्तात् २९६९' इति पररूपं प्राप्तम् । न चानर्थकोऽयमुस् न ग्रहीष्यत इति वाच्यम्, छिन्द्युर्भिन्द्युरित्यादावप्युसोऽनर्थकत्वादागमसहितस्यैवार्थवत्त्वात् । तथा च-अयुः, अपुरित्यादावेव स्यात् । एवं चायमेवाडागमस्य उसि परे प्रतिषेधोऽर्थवद्ग्रहणपरिभाषाया अत्राप्रवृत्तौ ज्ञापक इति स्थितम् । अत एव 'उस्यपदान्तात्' इत्यत्राऽपदान्तात् किं कोस्रेति भाष्ये प्रत्युदाहृतम् ॥ **औङ्कारीयदिति** 'ओमाङोश्च १२९' इति पररूपं प्राप्तम् । आडागमस्याङि परे उदाहरणमाह-**औढीयदिति** । यत्रादेशेनापहृतं तत्रापि यदि पृथक्कृतिस्तदा आङः परत्राटा भाव्यमित्याडागमस्याङि परे पररूपनिषेधो व्यर्थः स्यात् । तथा च ज्ञापकस्य विशेषविषयत्वे प्रमाणमयमेव निषेध इति भावः ॥ चशब्दं प्रयुञ्जानः सूत्रकारोऽपि ज्ञापकस्य विशेषविषयत्वेऽनुकूल इत्याह--**चशब्देनेति** ॥ **षाष्ठे स्थितमिति** । भाष्यकारोऽप्युक्तार्थे प्रमाणभूत इति भावः । स्यादेतत्, अवधीरयतीत्यादाववशब्दस्य पृथक्करणमस्ति वा न वा । आद्ये बोपदेवेनावशब्दात् प्रागाडागमं वकारद्वित्वं च कृत्वा चङि आववधीरदित्युदाहृतं तन्न संगच्छेत । द्वितीये तु 'इतीव धारामवधीर्य मण्डलीक्रियाश्रिया मण्डितुरङ्गमैर्मही' इति श्रीहर्षप्रयोगो न संगच्छेतेति चेत् । अत्राहुः-नायं धातुश्चुरादौ पठितः किंतु 'बहुलमेतन्निदर्शनम्' इति बाहुलकादूहितः । ऊहश्च धीरेत्यस्यापि संभवति, अवधीरेत्यस्यापि प्रयोगद्वयप्रामाण्यान्मुनित्रयविरोधाभावाच्च । यदा त्ववधीरेति विशिष्टस्यैव धातुत्वं तदाऽवधीरयित्वेति साधु । धीरेत्यस्यैव धातुत्वे तु अवधीर्येत्यस्य साधुत्वमिति ॥ ( ३५४९ ) **तस्येति** । आदिशब्दस्येत्यर्थः ॥

---

१ आटः प्रतिषेध इति ॥ 'उस्यपदान्तात्' 'ओमाङोश्च' इति प्राप्तस्य पररूपस्य प्रतिषेध इत्यर्थः ॥ एतन्निषेधसामर्थ्यात् प्रकृते 'अर्थवद्ग्रहणे-' इति परिभाषायाः प्रतिपदोक्तपरिभाषायाश्चाप्रवृत्तिरिति बोध्यम् ॥ विशेषापेक्षज्ञापकाभावे तु प्रकृतवार्तिकोदाहरणविषयेऽप्याङः पृथक्कृतिः स्यादिति क्यच्प्रत्यय ऊढशब्दादेव स्यादिति क्यजन्ताल्लुङि कृतेऽङ्गसंज्ञा 'ऊढीय' इत्यस्य स्यादिति अङ्गस्य विहित आडागमः आङः पर एव स्यादिति आटः पर आङ् संभवत्येव नेति पररूपं प्राप्नोत्येव नेति प्रतिषेधवार्तिकं व्यर्थमेव स्यादिति भावः ॥

इच क्यषोऽपि ककारः श्रूयेत उच्चारणसामर्थ्यादिति वाच्यम्, तस्यापि भाष्ये प्रत्याख्यानात्। पटपटायति, पटपटायते। कृभ्वस्तियोगं विनाऽपीह डाच्, डाजन्तात् क्यषो विधानसामर्थ्यात्। यत्तु—

( ३५५२ ) लोहितश्यामदुःखानि हर्षगर्वसुखानि च। मूर्छानिद्राकृपाधूमाः करुणा जिह्मचर्मणी ॥ १ ॥

इति पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति, तद्भाष्यवार्तिकविरुद्धम्। तस्मात्तेभ्यः क्यङेव। श्यामायते। दुःखादयो वृत्तिविषये तद्वति वर्तन्ते। लिङ्गविशिष्टपरिभाषया[1] लोहिनीशब्दादपि क्यष्। लोहिनीयति, लोहिनीयते ॥ ( ३५५३ ) (सू) कष्टाय क्रमणे। ३। १। १४। चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः ॥ ( ३५५४ ) (वा) सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ॥ कण्वं पापम्। सत्रादयो वृत्तिविषये पापार्थाः। तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ्। पापं चिकीर्षतीत्यस्वपदविग्रहः। सत्रायते। कक्षायते इत्यादि॥ ( ३५५५ ) (सू) कर्मणो रोमन्थतपोभ्यां वर्तिचरोः। ३। १। १५। रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात्। रोमन्थं वर्तयति–रोमन्थायते। ( ३५५६ ) (वा) हनुचलन इति वक्तव्यम् ॥ चर्वितस्याकृष्य पुनश्चर्वणमित्यर्थः। नेह कीटो रोमन्थं वर्तयति। अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः। तदश्नातीत्यर्थ इति कैयटः। वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्तौ ॥ ( ३५५७ ) (वा) तपसः परस्मैपदं च। तपश्चरति तपस्यति ॥ ( ३५५८ ) (सू) बाष्पोष्मभ्यामुद्वमने। ३। १। १६। आभ्यां कर्मभ्यां क्यङ् स्यात्। बाष्पमुद्वमति–बाष्पायते। ऊष्मायते ॥ ( ३५५९ ) (वा) फेनाच्चेति वाच्यम् ॥ फेनायते ॥ ( ३५६० ) (सू) शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे। ३। १। १७। एभ्यः कर्मभ्यः करोत्यर्थे[2] क्यङ् स्यात्। शब्दं करोति शब्दायते। पक्षे तत्करोतीति णिजपीष्यत इति न्यासः। शब्दयति ॥ ( ३५६१ ) (वा) सुदिनदुर्दिननीहारेभ्यश्च। सुदिनायते ॥ ( ३५६२ ) (सू) सुखादिभ्यः कर्तृवेदनायाम्। ३। १। १८। सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्तुरेव चेत्सुखादीनि स्युः। सुखं वेदयते सुखायते। कर्तृग्रहणं किम्। परस्य सुखं वेदयते ॥ ( ३५६३ ) (सू) नमोवरिवश्चित्रङः क्यच्। ३। १। १९। ( ३५६४ ) करणे इत्यनुवृत्तेः क्रियाविशेषे पूजायां परिचर्यायामाश्चर्ये च। नमस्यति[3] देवान्। पूजयतीत्यर्थः। वरिवस्यति गुरून्।

---

**तस्यापीति**। क्यषः ककारस्येत्यर्थः। एतेन 'नः क्ये ३५३०' 'क्यस्य विभाषा ३५३१' इति सूत्रद्वये क्यषोऽपि ग्रहणं वदन्तः परास्ताः ॥ **लोहिनीयतीति**। क्यङि सति तङेव स्यात्, 'क्यङ्मानिनोश्च १२०७' इति पुंवद्भावश्चेति भावः ॥ (३५५३) **कष्टाय क्रमणे**। क्यङेवानुवर्तते स्वरितत्वात्, न तु क्यष्। कष्टायेति निर्देशादेव चतुर्थ्यन्तं लभ्यते। क्रमणमुत्साहः। 'वृत्तिसर्गतायनेषु–३६३१' इति क्रमेरात्मनेपदविधायकसूत्रे सर्ग उत्साह इति सर्वैर्व्याख्यातत्वात्। कष्टं कृच्छ्रम्। 'कृच्छ्रगहनयोः कषः ४०७७' इति इडभावः। न च दुःखं कर्तुमुत्साहः संभवतीति तत्साधनं पापमिह गृह्यते इत्याह–**पापं कर्तुमिति** ॥ ( ३५५४ ) **द्वितीयान्तेभ्य इति**। चिकीर्षायां द्वितीयान्तस्यैवान्वययोग्यत्वादेवमुक्तम् ॥ ( ३५५५ ) **कर्मणो**–। रोमन्थतपोभ्यामित्यनेन सामानाधिकरण्यात्कर्मण इति पञ्चमी, प्रत्येकं संबन्धादेकवचनमित्याह–**कर्मभ्यामिति** ॥ **वर्तनायां चरण इति**। सूत्रे 'वर्ति' इति ण्यन्तात् वृतेः 'ण्यासश्रन्थः–५०८९' इति युचं बाधित्वा अस्मादेव निपातनात् क्तिन्। चरतेस्तु संपदादित्वात् भावे क्विबिति भावः। केचित्तु–वर्तिशब्दो वर्तयतेः 'इक्कृष्यादिभ्यः'–५०९५'इति इकि रूपम्। लक्षणया चार्थलाभ इत्याहुः ॥ ( ३५६० ) **शब्दवैर**––। कर्मण इत्यनुवर्तत इत्याह––**एभ्यः कर्मभ्य इति** ॥ ( ३५६२ ) **सुखादिभ्यः**––। कर्तृ इति पृथक्पदं लुप्तषष्ठीकम्। 'विद चेतनाख्याननिवासेषु' इति चौरादिकाद्युचि वेदनाशब्दो ज्ञानवाची, तदपेक्षमेव कर्तृत्वम्। कर्ता च सुखादिभिरन्वेति। तदेतदाह––**वेदनाकर्तुरेवेति** ॥ **परस्य सुखमिति**। इह यन्निष्ठं सुखं तद्भिन्नो वेदनाकर्तेति वाक्यमेव। सुखादयः सुखदुःखतृप्रकृच्छ्रादयः ॥ ( ३५६३ ) **नमोवरिवः**–। चित्रङः क्यच्विधा-

---

१ अत्र भाष्ये 'अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणम्' इति वार्तिकमुक्त्वा अटायते, अट्टायते, शीकायते, कोटायते, पोटायते, सोटायते, प्रुष्टायते, प्लुष्टायते इत्युदाहृतम् ॥ २ यद्यपि 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति न्यायेन करणसंज्ञायाः 'साधकतमं करणम्' इति कृत्रिमत्वात्साधकतमस्यैव ग्रहणं प्राप्नोति। तथापि "करणप्रदेशेषु चोभयगतिर्भवति– **'कर्तृकरणयोस्तृतीया'** इति कृत्रिमस्य ग्रहणम्, **'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे'** इत्यकृत्रिमस्य" इति संख्यासंज्ञासूत्रभाष्योक्तमनुसृत्याह—**करोत्यर्थे इति** ॥ अत एव 'एभ्यः कर्मभ्यः' इति सङ्गच्छते कर्मत्वस्य क्रियामात्रनिरूपितत्वात् साधकतमे कर्मणः क्रियायामिवान्वयाभावाच्चेति दिक् ॥ ३ **नमस्यति देवानिति** ॥ अत्र नमःशब्दस्य योगेऽपि वृत्तिघटकस्यानर्थकत्वान्न तद्योगे 'नमःस्वस्ति–' 'इति चतुर्थी ॥ स एवायम्' इति रूपसामान्यप्रयुक्तप्रत्यभिज्ञयाऽर्थवत्त्वमेवेति चेत्, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति द्वितीयेति भाष्य उक्तम् ॥ चतुर्थी तु नमोऽस्तु ते नमस्ते इत्यादौ चरितार्था। 'नारायणं नमस्कृत्य' इत्यादावपि द्वितीयैवोक्तन्यायात् नमःपदस्य द्योतकतया करोतेरेव स्वनिष्ठापकृष्टत्वनिरूपितोत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापारवाचितया देवानां स्वनिष्ठापकृष्टत्वनिरूपितोत्कृष्टत्वप्रकारकज्ञानविषयतया कर्मत्वात् ॥

शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत इत्यर्थः । विस्मापयत इत्यन्ये ॥ (३५६५) (सू) **पुच्छभाण्डचीवराण्णिङ्** । ।३।१।२०॥ (३५६६) (वा) **पुच्छादुदसने व्यसने पर्यसने च** ॥ विविधं विरुद्धं वोत्क्षेपणं व्यसनम् । उत्पुच्छयते । विपुच्छयते । परिपुच्छयते ॥ ( ३५६७ ) (वा) **भाण्डात्समाचयने** ॥ संभाण्डयते । भाण्डानि समाचिनोति । राशीकरोतीत्यर्थः । समबभाण्डत ॥ ( ३५६८ ) (वा) **चीवरादर्जने परिधाने च** ॥ सञ्चीवरयते भिक्षुः । चीवराण्यर्जयति परिधत्ते वेत्यर्थः ॥ ( ३५६९ ) (सू) **मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्** । । ३ । १ । २१ । कृञर्थे । मुण्डं करोति मुण्डयति ॥ ( ३५७० ) (वा) **व्रताद्भोजनतन्निवृत्त्योः** ॥ पयः शूद्रान्नं वा व्रतयति ॥ ( ३५७१ ) (वा) **वस्त्रात्समाच्छादने** ॥ संवस्त्रयति ॥ ( ३५७२ ) (वा) **हल्यादिभ्यो ग्रहणे** ॥ हलिकल्योरदन्तत्वं च निपात्यते । हलिं कलिं वा गृह्णाति । हलयति । कलयति । महद्धलं हलिः । परत्वाद्वृद्धौ सत्यामपीष्ठवद्भावेन अगेव लुप्यते । अतः सन्वद्भावदीर्घौ न । अजहलत् । अचकलत् । कृतं गृह्णाति कृतयति । तूस्तानि विहन्ति वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे । मुण्डादयः सत्यापपाशेत्यत्रैव पठितुं युक्ताः प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे केषांचिद्ग्रहणं सापेक्षेभ्योऽपि णिजर्थम् । मुण्डयति माणवकम् । मिश्रयत्यन्नम् । श्लक्ष्णयति वस्त्रम् । लवणयति व्यञ्जनमिति । हलिकल्योरदन्तत्वार्थम् । सत्यस्य आपुगर्थम् । केषांचित्तु प्रपञ्चार्थम् । सत्यं करोत्याचष्टे वा सत्यापयति ॥ (३५७३-१) (वा) **अर्थवेदयोरप्यापुग्वक्तव्यः** ॥ अर्थापयति । वेदापयति । पाशं विमुञ्चति विपाशयति । रूपं पश्यति रूपयति । वीणयोपगायत्युपवीणयति । तूलेनानुकुष्णात्यनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति, उपसर्गात्सुनोतीति षः । अभ्यषेणयत्, प्राक्सितादिति षः । अभिषिषेणयिषति, स्थादिष्वभ्यासेन चेति षः । लोमान्यनुमार्ष्टि अनुलोमयति । त्वच संवरणे । घः । त्वचं गृह्णाति त्वचयति । वर्मणा संनह्यति संवर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसते अवचूर्णयति ॥ इष्ठवदित्यतिदेशात्पुंवद्भावादयः । एनीमाचष्टे एतयति । दरदमाचष्टे दारदयति । पृथुं प्रथयति । वृद्धौ सत्यां पूर्वं वा टिलोपः । अपिप्रथत्, अपप्रथत् । मृदुम् म्रदयति । अमिम्रदत्, अमम्रदत् । भृशं कृशं दृढम् । भ्रशयति । क्रशयति । द्रढयति । अबभ्रशत् । अचक्रशत् । अदद्रढत् । परिव्रढयति । पर्यवव्रढत् । ऊढिमाख्यत् औजिढत् । ढत्वादीनामसिद्धत्वात् ढतिशब्दस्य द्वित्वम् । (प) **पूर्वत्रासिद्धीयमद्वित्वे** । इति त्वनित्यमित्युक्तम् । ढि इत्यस्य द्वित्वमित्यन्ये । औढिढत् । ऊढमाख्यत् । औजढत् । औडढत् । ओः पुयण्जीति सूत्रे वर्गप्रत्याहारजग्रहो लिङ्गम् । द्वित्वे कार्ये णौ अच आदेशो नेति ऊचयतानुक्तम् ॥ प्रकृत्यैकाच् । वृद्धिपुकौ । स्वापयति । त्वां मां वाऽऽचष्टे त्वापयति । मापयति । मपर्यन्तस्य त्वमौ । पररूपात्पूर्वं नित्यत्वाट्टिलोपः । वृद्धिः । पुक् ॥ त्वादयति । मादयतीति तु न्याय्यम्, अन्तरङ्गत्वात्पररूपे कृते प्रकृत्यै-

---

नमीत्वार्थं, ङित्करणं तु तङर्थम् ॥ **विस्मापयत इत्यन्य इति** । तथा च भट्टिः—'ततश्चित्रीयमाणोऽसौ' इति । असौ मायामृगश्चित्रीयमाणो विस्मयमुत्पादयन्नित्यर्थः ॥ ( ३५६५ ) **पुच्छभाण्ड—** ॥ (३५६६-३५६८) करणे इत्यनुवृत्तेरत्रापि क्रियाविशेषं दर्शयति-**पुच्छादित्यादिना** । ङकारोऽत्र 'णेरनिटि ३०८८' इति णिङ्णिचोः सामान्यग्रहणार्थो नित्यात्मनेपदार्थश्च । उदपुपुच्छत ॥ ( ३५६९ ) **मुण्डमिश्र—** । **कृञर्थ इति** । क्वचित्क्रियासामान्ये प्राचुर्येण तु क्रियाविशेषे ॥ ( ३५७० ) **व्रतादिति** । पयो व्रतयति अश्नातीत्यर्थः । शूद्रान्नं व्रतयति । वर्जयतीत्यर्थः ॥ ( ३५७१ ) **वस्त्रादिति** । समाच्छादने यो वस्त्रशब्दस्तस्मात्करोत्यर्थे णिजित्यर्थः ॥ **संवस्त्रयतीति** । वस्त्राच्छादनं करोतीत्यर्थः । ( ३५७२ ) **अदन्तत्वमिति** । अयमेव निपातो 'वृद्धौ सत्यां टिलोपः' इत्यत्र ज्ञापकः । यदि पूर्वं लोपो भवेत्तदाऽल्लोपकार्यसिद्धौ किमनेन निपातनेन । तथा च-अपीपटदिति सिध्यतीत्यादि चुरादिष्वेवोपपादितम् ॥ **कृतयतीति** । उपकारं स्वीकरोतीत्यर्थः ॥ **पठितुं युक्ता इति** । एकसूत्रकरणे लाघवमिति भावः ॥ **सापेक्षेभ्योऽपीति** । विधानसामर्थ्यादिति भावः । अन्यत्र तु रमणीयं पटुमाचष्टे इत्येव न तु पटयतीति वृत्तिः ॥ सापेक्षत्वमेव दर्शयति-**माणवकमित्यादिना** । अयं भावः—द्वितीयान्ताद्विधीयमानो णिच् पदविधित्वात्सापेक्षेभ्यो न भवेत्, किन्तु यदा प्रकरणादिना माणवकस्येति ज्ञायते तदैव मुण्डयतीति वृत्तिः स्यात्, न तु माणवकादिप्रयोगे । णिजन्तस्य सनाद्यन्तवृत्तित्वात्सविशेषणानां वृत्त्यभावाच्चेति ॥ **घ इति** । 'पुंसि संज्ञायाम्-५११२' इत्यनेन ॥ **पुंवद्भावादय इति** । आदिशब्देन रभावटिलोपादयः । टिलोपेनैवैतयतीत्यादिरूपसिद्धौ पुंवद्भावग्रहणं दारदयतीति सिद्ध्यर्थमिति चुरादिष्वेवास्माभिरुक्तम् । दरदोऽपत्यं दारदः । 'द्व्यञ्मगध-१६८०' इत्यण् । तस्य स्त्रियाम् 'अतश्च १६८९' इति लुकि दरद्, तामाचष्टे दारदयति । इह पुंवद्भावाभावे टिलोपे सति दरयतीति स्यात् । **प्रथयतीति** । 'र ऋतो हलादेः-२४१६' इति रभावः ॥ **अपिप्रथदिति** । वृद्धौ सत्यां टिलोपेऽनग्लोपित्वात्सन्वद्भावे सति 'सन्यतः ३०९३' इतीत्त्वम् । वृद्धेः पूर्वं टिलोपे तु अपप्रथत् ॥ **औजढदिति** । इह टिलोपे सति णिच्सहितस्य द्वित्वे पश्चादभ्यासेऽकारो दुर्लभ इत्यत आह—**ओः पुयण्जीत्यादि** ॥ **त्वमाविति** । 'प्रत्ययोत्तरपदयोश्च १३२४' इत्यनेन ॥

काजिति प्रकृतिभावात् । न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यम्, भाष्यस्य प्रेष्ठाद्युदाहरणविशेषेऽन्यथासिद्धिपरत्वात् । युवामावां वा युष्मयति अस्मयति ॥ श्वानमाचष्टे शावयति । नस्तद्धित इति टिलोपः । प्रकृतिभावस्तु न ॥ ( ३५७३-२ ) (प) येन नाप्राप्तिन्यायेन टेरित्यस्यैव बाधको हि सः । भत्वात्संप्रसारणम् । अन्ये तु नस्तद्धित इति नेहातिदिश्यते, इष्ठनि तस्यादृष्टत्वात् । स्रजिष्ठ इत्यादौ परत्वाट्टेरित्यस्यैव प्रवृत्तेः । तेन शुनयतीति रूपमाहुः ॥ विद्वांसमाचष्टे विद्वयति । अङ्गवृत्तपरिभाषया संप्रसारणं नेत्येके । संप्रसारणे वृद्धावावादेशे च विदावयतीत्यन्ये । नित्यत्वाट्टिलोपात्प्राक्संप्रसारणम् । अन्तरङ्गत्वात्पूर्वरूपम् । टिलोपः । विदुयतीत्यपरे ॥ उदञ्चमाचष्टे उदीचयति । उदैचिचत् ॥ प्रत्यञ्चम् प्रतीचयति । प्रत्यचिचत् । इकोऽसवर्णे इति प्रकृतिभावपक्षे–प्रतिअचिचत् ॥

---

अन्तरङ्गत्वादिति । न च 'वार्णादाङ्गम्–३०६०' इति टिलोपस्यैव प्रवृत्तिरुचितेति वाच्यम्, व्याश्रयत्वात् ॥ भाष्यस्येति । वृत्तिकारैर्हि 'प्रकृत्यैकाच्' इति सूत्रे प्रेयान्, प्रेष्ठ इत्यादय उदाहृताः । ते च प्रस्थाद्यादेशविधायकस्य 'प्रियस्थिर–२७३०' इत्यादिशास्त्रस्य 'असिद्धवदत्राभात् २९३७' इत्यसिद्धवद्भावेन प्रस्थादावकारोच्चारणसामर्थ्याद्वा भाष्ये प्रकृतिभावं विनैव साधिताः ॥ स्रग्वान्, स्रजिष्ठ इत्यादावपि टिलोपो न भविष्यति, लोपापवादस्य विन्मतोर्लुकस्तत्र प्रवर्तनात् । एवमनेकाक्षु पयस्वान्, पयसिष्ठः, चम्पकस्रजिष्ठ इत्यादिषु गतिः । न चैतावता 'प्रकृत्यैकाच् २७२४' इति सूत्रं प्रत्याख्यातमिति मन्तव्यम्, स्थापयतीत्यादौ तस्यावश्यकत्वादिति भावः ॥ युवामावामिति । युष्मानस्मानिति विग्रहेऽपि युष्मयति, अस्मयतीत्येव रूपम् । न च द्वयोरुक्तौ युवावौ भवत इति रूपे विशेषः शङ्क्यः, विभक्तिपरत्वाभावात् । न च प्रत्ययलक्षणम्, लुका लुप्तत्वात् । न च प्रागेवादेशोऽस्त्विति वाच्यम्, 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते ५१५६' इति न्यायात् । अकृतव्यूहपरिभाषाया जागरूकत्वाच्च ॥ ( ३५७३-२ ) येन नाप्राप्तीति । यत्रयत्र 'प्रकृत्यैकाच् २७२४' इत्यस्य प्रवृत्तिस्तत्र 'टेः २४१७' इत्यस्य प्रवृत्तिर्न तु 'नस्तद्धिते ९८६' इत्यस्य । स्रजिष्ठ इत्यादौ तस्याप्रवृत्तेरिति भावः । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ४८८' इति न्यायेनेत्यन्ये ॥ संप्रसारणमिति । न च टिलोपे सत्यनन्तत्वाभावात् 'श्वयुवमघोनाम्–४९२' इति कथमिह संप्रसारणप्रवृत्तिरिति शङ्क्यम्, स्थानिवत्त्वादसिद्धत्वाद्वा टिलोपेऽप्यन्नन्तत्वलाभात् । अतद्धित इति हि तत्र पर्युदासो न तु प्रतिषेधः । तेन तद्धिते न विधिर्न निषेधः । किन्तु तद्धितभिन्ने परे विधिः । तद्धितभिन्नत्वं तु णिचोऽस्त्येवेति न संप्रसारणप्रतिबन्धः, नापि दविष्ठ इत्यादाविष्ठनि ओर्गुणो दृष्ट इतीहापि वृद्धिं बाधित्वा गुणः स्यादिति वाच्यम्, जातेऽपि गुणे पुनर्वृद्धौ रूपसिद्धेः । अथवा टिलोपसंप्रसारणयोर्गुणं प्रति 'असिद्धवदत्र–२९३७' इत्यसिद्धत्वादिष्ठवद्भावेन नास्ति गुणप्रसङ्गः ॥ शुनयतीति । इष्ठवद्भावेन भत्वात्संप्रसारणम् । 'प्रकृत्यैकाच् २७२४' इति प्रकृतिभावः ॥ नित्यत्वादिति । शब्दान्तरप्राप्त्या तु टिलोपस्यानित्यत्वमिति भावः ॥ उदीचयतीति । उपसर्गे पृथक्कृत्याञ्चुशब्दादेव णिजिति 'प्रकृत्यैकाच् २७२४' इति प्रवृत्तेः टिलोपो न । 'उद ईत् ५६४' इतीत्त्वम् । 'अनिदिताम्–५५७' इति क्विनिमित्तो नलोपः ॥ उदैचिचदिति । लुङि 'द्विर्वचनेऽचि ३००३' इति णिलोपस्य निषेधाच्चिशब्दस्य द्वित्वम् ॥ प्रतीचयतीति । 'अचः ५५८' इत्यल्लोपे 'चौ ५५९' इति पूर्वस्य दीर्घः ॥ प्रत्यचिचदिति । इह धात्वकारस्याच इति लोपे चिशब्दात्प्रागटि पूर्वस्य यण् । न चास्तामासन्नित्यादिवदल्लोपस्यासिद्धत्वादाट् स्यादिति वाच्यम्, व्याश्रयत्वात् । णिनिमित्तो हि लोपो लुङ्-

---

१ भत्वादिति । 'इष्ठवत्' इत्यतिदेशेन भत्वात् 'श्वयुव–' इति संप्रसारणम्, नान्तश्वादीनामित्यर्थेऽपि टिलोपस्याभीयासिद्धत्वान्न दोष इति भावः ॥ वस्तुतस्तु 'श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्' इति वार्तिकानुसारेण बहुश्वन्शब्दाड् डापि 'बहुश्वा' इत्येवं रूपमङ्गीकृतम्, तथैवात्रापि टिलोपासिद्धत्वस्यानित्यत्वेनानङ्गीकारे नकारान्तत्वाभावात् संप्रसारणाप्रवृत्तौ 'नैकाच्' इत्येव सिद्धे प्रकृतिग्रहणेन प्रकृतिभावे 'येन नाप्राप्त–'न्यायाप्रवृत्तेः'षपूर्वहन्–'इति सूत्रभाष्ये ध्वनितत्वेन 'नस्तद्धिते' इति टिलोपस्याप्यप्रवृत्तौ 'अत उपधायाः' इति वृद्धौ जातायां 'श्वानयति'इत्येव रूपं न्याय्यमिति केचित्॥ २ शुनयतीति । ननु संप्रसारणे पूर्वरूपं बाधित्वा 'वार्णादाङ्गम्–' इति न्यायेन टिलोपे इदं रूपं दुर्लभम्–इति चेत् ॥ 'संप्रसारणं संप्रसारणाश्रयं च कार्यं बलवत्' इति न्यायेन पूर्वरूपस्यैव टिलोपाद्यपेक्षया बलवत्त्वात् । अत एव शुशुवतुरित्यादौ संप्रसारणे जाते पूर्वरूपं बाधित्वा 'एरनेकाचः–' इति यणापत्तिरपि नेति भावः ॥ ३ आहुरिति । अत्रारुचिस्तु–ब्रह्मवच्छब्दादिष्ठनि मतोर्लुकि 'टेः' इत्यस्याप्रवृत्तौ 'नस्तद्धिते' इत्यस्य प्रवृत्तेर्दृष्टत्वेन 'इष्ठनि तस्यादृष्टत्वात्' इत्यसंगतम् । तथाहि–केवलाद् ब्रह्मशब्दाद् गुणवचनत्वाभावादेव इष्ठनेव दुर्लभः । मत्वन्तादिष्ठनि मतोर्लुकि तेन 'टेः' इत्यस्य प्रवृत्तिमात्रबाधनेन लुगुत्तरं तदप्रवृत्त्या 'परत्वात्' इत्यस्यासंगतिः । किंच 'नस्तद्धिते' इत्यस्य 'टेः' इत्यपेक्षया 'परत्वम्' इत्यस्यार्थस्य 'प्रकृत्यैकाच्' इति सूत्रे भाष्ये ध्वनितया तदयुक्तम्–इति ॥ ४ नेत्येक इति ॥ टिलोपेनासो लोपे वस्तवमेव दुर्लभम्, राजकीयमित्यादावन्त्यवत् । एवं च संप्रसारणप्राप्तेरेवाभावेनाङ्गवृत्तपरिभाषोपन्यासो वृथैवेति ॥ अत्रारुचिस्तु–तत्परिभाषाया अभाव एवेति । रूपं तु विद्वयतीत्येव सत्यभिधाने ॥ ५ अत्र टिलोपस्याज्झलादेशत्वेन स्थानिवद्भावाप्राप्तावपि णिचो धातोरित्यधिकृत्याविहितत्वादार्धधातुकत्वाभावान्न गुणः ॥

सम्यञ्चमाचष्टे समीचयति। सम्याचिचत्, समिअचिचत् ॥ तिर्यञ्चमाचष्टे तिराययति। अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः। असिद्धवदत्रेति चिणो लुङ्न्यायेन प्रथमटिलोपोऽसिद्धः। अतः पुनष्टिलोपो न। अङ्गवृत्तपरिभाषया वा। चङ्यग्लोपित्वादुपधाह्रस्वो न। अतितिरायत् ॥ सध्र्यञ्चमाचष्टे सध्राययति। अससध्रायत् ॥ विष्वद्र्यञ्चम् अविविष्वद्रायत् ॥ देवद्र्यञ्चम् देवद्राययति। अदिदेवद्रायत् ॥ अदद्र्यञ्चम् आददद्रायत् ॥ अदमुयञ्चम् अदमुआययति। आददमुआयत्। अमुमुयञ्चम् अमुमुआययति। चङ्। आमुमुमुआयत्॥ भुवं भावयति। अबीभवत्। भ्रुवम् अबुभ्रवत् ॥ श्रियम् अशिश्रयत् ॥ गाम् अजूगवत् ॥ रायम् अरीरयत् ॥ नावम् अनूनवत् ॥ स्वश्वम् स्वाशश्वत् ॥ स्वः। अव्ययानां भमात्रे टिलोपः। स्वयति। अससस्वत्, असिस्वत् ॥ बहून् भावयति। बहयतीत्यन्ये। विन्मतोरिति लुक्। स्रग्विणम् स्रजयति। संज्ञापूर्वकत्वान्न वृद्धिः। श्रीमतीं, श्रीमन्तं वा श्राययति। अशिश्रयत्। पयस्विनीम्।

---

निमित्तश्वात्। आसन्नित्यादौ तु न तथेति वैषम्यम् ॥ **तिराययतीति**। उपसर्गसमानाकारत्वाभावादिह तिरसः पृथक्करणं नास्ति, तेन 'प्रकृत्यैकाच् २७२४' इत्यप्रवृत्तेष्टिलोपस्तदाह-**अञ्चेरिति** ॥ **चिणो लुङ्न्यायेनेति**। यथाऽपाचितरामित्यत्र चिणः परस्य तशब्दस्य लुकि पुनस्तरप्रत्ययस्य लुङ् न भवति, प्रथमलुकोऽसिद्धत्वेन व्यवधानात् तथेत्यर्थः ॥ **पुनष्टिलोपो नेति**। तिर्यादेशस्येकारस्य लोपो नेत्यर्थः ॥ **अग्लोपित्वादिति**। अनग्लोपिनोऽप्यग्लोपित्वस्वीकारादिति भावः ॥ **देवद्र्यञ्चमिति**। ननु 'आख्यानात्कृतस्तदाचष्टे-३४२०' इति कारकस्य पृथक्करणाद्देवानञ्चयतीति प्रसज्येत, बलिबन्धनमाचष्टे बलिं बन्धयतीतिवत्। इष्यते तु देवद्राययतीत्येव रूपम्। किञ्च, कारकस्य पृथक्करणेऽदिदेवद्रायदित्याद्यपि न सिध्येत्। न च पुराणप्रसिद्धाख्यान एव कारकस्य पृथक्करणादिकमिति वाच्यम्। राजानमागमयतीत्यत्राव्याप्तेरिति चेत्, अत्राहुः—यत्राख्याने कृल्लुक् श्रूयते तत्रैवेदं प्रवर्तते, कृल्लुगिति संनियोगशिष्टविधानात्। किंच, आख्यानग्रहणसामर्थ्यान्महाजनप्रवादविषयीभूतार्थविषयकमेव तत्। भाष्यादौ तादृशानामेवोदाहृतत्वात्। यदि तु देवाञ्चनमाचष्टे इत्यादौ महाजनप्रसिद्धिरस्ति, तदा देवानञ्चयतीति भवत्येवेति ॥ **आमुमुआयदिति**। 'पूर्वत्रासिद्धीयमद्विर्वचने ३२५७' इत्यसिद्धत्वनिषेधान्मुशब्दस्य द्वित्वम् ॥ **अबीभवदिति**। 'ओः पुयण्जि-३४२७' इत्यभ्यासोवर्णस्येत्त्वम्। 'दीर्घो लघोः ३०९४' इति दीर्घः। ननु परत्वात्प्रथमं दीर्घे कृते पश्चादित्त्वं स्यात्। न चैवं 'दीर्घो लघोः ३०९४' इत्यस्य वैयर्थ्यमिति वाच्यम्, अजूहवदित्यादौ तस्य सावकाशत्वादिति चेत्। अत्राहुः-'विप्रतिषेधे परम्-२५९' इत्यत्र परशब्दस्येष्टवाचित्वाल्लक्ष्यानुरोधेन दीर्घात्प्रागित्त्वमेव भवति। लक्ष्यभेदात्पुनरिकारस्य दीर्घो वा भवतीति ॥ **अबुभ्रवदिति**। इहाभ्यासात्परो यः पवर्गः स त्ववर्णपरो न। यस्त्ववर्णपरो यण् नासावभ्यासात्पर इत्यभ्यासोकारस्येत्त्वं न। गां गावयति ॥ **स्वश्वमिति**। शोभनोऽश्वः स्वश्वः। शोभनोऽश्वो यस्येति बहुव्रीहिर्वा ॥ **स्वाशश्वदिति**। उपसर्गसमानाकारस्य पृथक्करणाद् 'अजादेः-२९३०' इति द्वितीयस्य द्वित्वमाडागमश्च ॥ **स्वयतीति**। 'प्रकृत्यैकाच् २७२४' इति प्रकृतिभावस्तु 'येन नाप्राप्ति-३५७३-२' न्यायात् 'टेः २४१७' इत्यस्यैव बाधको न तु 'अव्ययानां भमात्रे टिलोपः १८६४' इत्यस्येति भावः ॥ **अससस्वदिति**। 'ओः पुयण्जि-३४२७' इति ज्ञापकेन द्वित्वे कार्येऽजादेशस्य स्थानिवत्त्वान्निषेधाद्वा स्वर्शब्दस्य द्वित्वमिति मतेनेदम्। अनग्लोपित्वाभ्युपगमेऽप्यज्झलादेशेऽजादेशत्वव्यवहारो नास्तीति मते तु णिच्सहितस्यैव द्वित्वं, तदाह—**असिस्वदिति** ॥ **भावयतीति**। 'बहोर्लोपो भू च बहोः २७३१' 'इष्ठस्य यिट् च २७३२' इति भूभावः। न चैवं यिडागमोऽपि णेरस्त्विति वाच्यम्, णावित्युपमेये सप्तमीनिर्देशादिष्ठवदित्यत्र सप्तम्यन्ताद्वतिरित्यभ्युपगमात्। एवं चेष्ठनि परे पूर्वस्य यत्कार्यं तदेवातिदिश्यते, न त्विष्ठनो कार्यमिति स्थितम् ॥ **बहयतीत्यन्य इति**। यिडभावे तत्सन्नियोगशिष्टस्य भूभावस्याप्यभाव इति भावः। नन्वेवमन्यमतत्वेन किमर्थमिदमुपन्यस्तमिति चेत्। अत्राहुः-प्राधान्यादिष्ठवदिति कार्यातिदेशो न त्वयं शास्त्रातिदेशः। तथा चेष्ठनि दृष्टं भूभावं स एवातिदेशो विधत्त इति नात्र सन्नियोगशिष्टपरिभाषायाः[१८४८-२] प्रवृत्तिः। इत्थं च भावयतीत्येव रूपं सम्यगिति ॥ **स्रजयतीति**। इष्ठवद्भावेन 'विन्मतोः-२७३४' इति लुक्। ननु 'अजादी गुणवचनादेव २७२०' इत्युक्तत्वाद् इष्ठन्प्रत्ययः स्रग्विन्शब्दाद् दुर्लभ इति इष्ठवद्भावोऽत्रायुक्त इति न वाच्यम्, अस्मादेव लुग्वचनाज्ज्ञापकाद्विन्नन्तान्मतुबन्ताच्च अजादी भवत इत्यभ्युपगमात् ॥ **श्रीमतीमिति**। मतुपो लुक् ॥ **श्राययतीति**। **अशिश्रयदिति**। द्वित्वे णिनिमित्तगुणे सत्ययादेशः। एतेन 'स संचरिष्णुर्भुवनान्तरेषु यां यदृच्छयाऽशिश्रयदाश्रयः श्रियाम्' इति माघश्लोके आशिश्रयदिति प्रचुरः पाठो व्याख्यातः, यां दिशं श्रीमतीमकरोदित्यर्थादिति मनोरमायां स्थितम् ॥ अत्र केचित्—सापेक्षाणां वृत्त्यभावान्मनोरमोक्तं यत्तदयुक्तम्। नहि कश्चित् यं घटं करोति तमानयेत्यर्थे यं घटयति तमानयेति प्रयुङ्क्ते। अत एव 'तत्करोति-३४१७' इत्यनेनैव सिद्धे मुण्डादिग्रहणं सापेक्षेभ्योऽपि णिजर्थमिति पूर्वोक्तं संगच्छते। यद्यन्यत्रापि सापेक्षेभ्यो णिच् स्यात्तर्हि तन्न संगच्छेत। न चात्र सापेक्षत्वं नेति विवदितव्यम्, यां दिशं श्रीमतीमकरोदिति स्वयमेव व्याख्यातत्वात्। नापि सविशेषणानां वृत्त्यभावेऽपि विशेष्ययोगे स्यादेव वृत्तिरिति

---

१ **आमुमुआयदिति**। अत्र मुत्वस्यासिद्धत्वेन दशब्दस्यैव द्वित्वेऽभ्यासे दकारस्यैव श्रवणापत्तिरिति तु न शङ्क्यम् 'पूर्वत्रासिद्धीयमद्विर्वचने' इति निषेधात् ॥

पयसयति । इह टिलोपो न, तदपवादस्य लुकः प्रवृत्तत्वात् ॥ स्थूलम् स्थवयति ॥ दूरम् दवयति । कथं तर्हि दूरयत्यवनते विवस्वतीति । दूरमतति अयते वा दूरात् । दूरातं कुर्वतीत्यर्थः ॥ युवानं यवयति, कनयति । युवाल्पयोरिति वा कन्। अन्तिकं नेदयति ॥ बाढं साधयति ॥ प्रशस्यं प्रशस्ययति । इह श्रज्यौ न, उपसर्गस्य पृथक्कृतेः॥ वृद्धं ज्यापयति, वर्षयति ॥ प्रियं प्रापयति ॥ स्थिरं स्थापयति ॥ स्फिरं स्फापयति ॥ उरुं वरयति, वारयति ॥ बहुलं बंहयति ॥ गुरुं गरयति ॥ तृप्रं त्रापयति ॥ दीर्घं द्राघयति ॥ वृन्दारकं वृन्दयति ॥ इति नामधातुप्रक्रिया ॥

---

## अथ कण्ड्वादयः।

( ३५७४ ) कण्ड्वादिभ्यो यक् । ३ । १ । २७ । एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे । धातुभ्यः किम् । प्रातिपदिकेभ्यो मा भूत् ॥ द्विधा हि कण्ड्वादयः । धातवः प्रातिपदिकानि च । कण्डूञ् गात्रविघर्षणे । कण्डूयति,

---

नात्रानुपपत्तिरिति श्रीमतीमित्यर्थं प्रति दिशो विशेष्यत्वादिति वाच्यम्, विशेष्ये हि बहिर्भूते विशेषणानां वृत्तिर्नाङ्गीक्रियते । न हि कश्चित् श्रीमतो राज्ञ इदमित्यर्थे राज्ञः श्रैमतमिति वृत्तिमभ्युपैति । किञ्च, माघश्लोके अशिश्रियदित्येव पाठो बहुषु पुस्तकेषु दृश्यते न त्वशिश्रयदित्यलमशुद्धग्रन्थसमर्थनाभिनिवेशेनेत्याहुः ॥ **पयसयतीति** । इह विन्मतोर्लुकि अग्लोपात्सन्वदित्त्वादिकं च न, अनग्लोपेऽपि सन्वद्भावाभावात् । 'णौ चङ्यु-' इति सूत्रे अत्यरराजदिति भाष्यमिह प्रमाणम् । लुङि अपपयसत् । एवं स्रग्विणमाख्यत् असस्रजदित्यत्रापि सन्वदित्त्वं न ॥ गोमन्तं गवयति । लुङि अजुगवत् । इहाग्लोपात् 'दीर्घो लघोः २०९४' इति दीर्घो न ॥ गां स्रजं पय इति विग्रहे तु अजूगवत् । असिस्रजत् । पययति । अपपयत् । टेर्लोपस्य बहिरङ्गत्वेन असिद्धत्वादिह वृद्धिर्न । अग्लोपित्वात्तु सन्वद्भावदीर्घौ न ॥ **तदपवादस्येति** । 'येन नाप्राप्ति-३५७३-२' न्यायेन टिलोपापवादो लुक् ॥ **स्थवयतीति** । 'स्थूलदूर-२७२९' इति यणादिलोपो गुणश्च । न च गुणस्य 'अचो ञ्णिति ३५९' इति वृद्धिः स्यादिति वाच्यम्, अङ्गकार्ये कृते पुनरङ्गकार्यस्याप्रवृत्तेः, 'प्रातिपदिकाद्धात्वर्थे-३४१६' इति बहुलग्रहणाद्वा । लुङि अतुस्थवत् ॥ **दवयति यवयतीत्यादि** । इहापि पूर्ववद्वृद्ध्यभावः । लुङि अदूदवत् । अयूयवत् । अचीकनत् ॥ **नेदयतीति** । 'अन्तिकबाढयोर्नेदसाधौ २७२८' टिलोपः । लुङि अनिनेदत् । अससाधत् । प्रशस्यम् प्राशशस्यत् ॥ **पृथक्कृतेरिति** । तेन विशिष्टस्य स्थानिनोऽभावात् नादेशाविमौ भवत इत्यर्थः ॥ **ज्यापयतीति** । 'वृद्धस्य च २७२७' इति ज्यादेशः । स च 'प्रियस्थिर-२७३०' इति वर्ष्यादेशेन सह विकल्प्यत इत्याह—**वर्षयतीति** । लुङि अजिज्यपत् । अववर्षत् ॥ प्रियम् अपिप्रपत् ॥ स्थिरम् अतिस्थपत् ॥ सस्यादेशावयवत्वात्षत्वं न ॥ स्फिरम् अपिस्फपत् ॥ **उरुमिति** । वरादेशे कृते संज्ञापूर्वकविधेरनित्यत्वाद्बाहुलकाद्वा माधवेन विकल्पेन उपधावृद्धिरुदाहृतेति स्वयमपि तथैवाह—**वरयति,वारयतीति** । अवीवरत् ॥ **बंहयतीति** । अग्लोपित्वादबबंहत् ॥ **गरयतीति** । अजीगरत् ॥ **त्रापयतीति** । अतित्रपत् ॥ **द्राघयतीति** । अदद्राघत् ॥ **वृन्दयतीति** । अववृन्दत् ॥ इति नामधातुप्रक्रिया ॥

---

( ३५७४ ) **कण्ड्वादिभ्यो यक्**। 'धातोरेकाचः-३४९४' इत्यस्माद्धातोरिति वर्तते । वेति निवृत्तम् । अन्यथा कण्डवतीति स्यात्तदाह—**धातोर्नित्यमिति** । केचित्तु—'नित्यं कौटिल्ये गतौ ३५०१' इत्यतो नित्यमित्यनुवर्तत इत्याहुः। तच्चिन्त्यम्, तत्र हि नित्यग्रहणमेवकारार्थे वर्तते तक्रकौण्डिन्यन्यायस्यानित्यतां ज्ञापयितुमिति प्राग्व्याख्यातत्वात् । किञ्च, 'नित्यं कौटिल्ये गतौ ३५०१' इत्यत्रापि वेत्यनुवर्तते । अन्यथा गत्यर्थेभ्यो नित्यं यङ् स्यादिति ॥ **स्वार्थे इति** । कण्ड्वादिभ्यो यक् स्यात् कृदर्थे इति प्राचोक्तमयुक्तमिति भावः ॥ **द्विधा इति** । यकः कित्त्वेन धातव इति ज्ञायते । कण्डूञ् इति दीर्घपाठेन प्रातिपदिकान्यपीति । यदि तु धातव एव स्युस्तर्हि ह्रस्वान्ते पठितेऽपि यकि परे 'अकृत्सार्व-३०७१' इति दीर्घेण कण्डूयतीत्यादिसिद्धेः किं तेन दीर्घपाठेन । द्वैविध्ये तु धातुभ्यो यकि गुणनिषेधेन कित्त्वं सार्थकम् । कण्डूरित्यादियग्रहितरूपसिद्ध्या दीर्घपाठोऽपि सार्थकः । अत एवोक्तं भाष्ये—'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः' ॥ इति । एतेन कण्डूं करोति कण्डूयति इति प्राचोक्तविग्रहोऽपि परास्तः । कण्ड्वादयः प्रातिपदिकान्येवेत्यनभ्युपगमात् । न च द्वैविध्याभ्युपगमेऽपि प्रातिपदिकादेव यक् स्यादिति वाच्यम्, तथा हि सति धातोर्लडादौ कण्डवतीत्याद्यनिष्टप्रसङ्गात् । सुखदुःखादिप्रातिपदिकेभ्यो यकि अल्लोपासंभवेन सुख्यतीत्याद्यसिद्धिप्रसङ्गाच्च । यत्तु केचित् 'शब्दवैरकलह-३५६०'

---

१ 'युवाल्पयोरिति वा कन्' इति ग्रन्थेन कनादेशमुपपाद्य तत्प्रसङ्गेन स्मृतौ श्रज्यावप्युपस्थिताविति तद्विषये विशेषमाह—**श्रज्यौ नेति** ॥ २ गरादेशस्य हलन्तत्वाद्गारयतीत्येव ज्यायः । ३ ननु 'एभ्यो धातुभ्यः' इत्यनुपपन्नम्, भ्वादिगणपठितानामेव धातुसंज्ञाविधानादित्यत आह—**धातोरेकाच इत्यादि** ॥ 'धातोरेकाचः' इत्यतोऽनुवृत्तिसामर्थ्यादेषां धातुत्वमस्ति। **'बहुलमेतन्निदर्शनम्'** इत्यनेनैवैषां ग्रहणमित्यपि केचित् ॥ ४ धातुप्रकरणरूपोपायस्य कित्त्वकरणरूपोपायान्तरादूषकत्वमित्याह—**यकः कित्त्वेनेति** ॥ ५ **दीर्घपाठेनेति** । न च **'अकृत्सार्वधातुकयोः-'** इति दीर्घमन्तराऽपि **'सर्वप्रातिपदिकेभ्यः-'** इत्यनेन क्विपि जाते पुनः कर्तरि क्विपि 'कण्डूः' इति दीर्घश्रवणार्थं दीर्घान्तपाठस्य चारितार्थ्येन न प्रातिपदिकत्वज्ञापकत्वमिति वाच्यम्, **'नैतेभ्यः क्विब् दृश्यते'** इति ग्रन्थेन भाष्यकृतैव समाहितत्वात् ॥

कण्डूयते । १ ॥ **मन्तु** अपराधे । रोष इत्येके । मन्तूयति । चन्द्रस्तु वितमाह । मन्तूयते । २ ॥ **वल्गु** पूजामाधुर्ययोः । वल्गूयति । ३ ॥ **असु** उपतापे ॥ **असू असूञ्** इत्येके । अस्यति । असूयति, असूयते । ५ ॥ **लेट् लोट्** धौर्त्ये पूर्वभावे स्वप्ने च । दीप्तावित्येके । लेटयति । लेटिता । लोटयति लोटिता । ७ ॥ **लेला** दीप्तौ । ८ ॥ **इरस् इरज् इरञ्** ईर्ष्यायाम् । इरस्यति । इरज्यति । ४हलि चेति दीर्घः । ईर्यति, ईर्यते । ११ ॥ **उषस्** प्रभातीभावे । १२ ॥ **वेद्** धौर्त्ये स्वप्ने च । १३ ॥ **मेधा** आशुग्रहणे । मेधायति । १४ ॥ **कुषुभ** क्षेपे । कुषुभ्यति । १५ ॥ **मगध** परिवेष्टने । नीचदास्य इत्यन्ये । १६ ॥ **तन्तस् पम्पस्** दुःखे । १८ ॥ **सुख दुःख** तत्क्रियायाम् । सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः । २० ॥ **सपर** पूजायाम् । २१ ॥ **अरर** आराकर्मणि । २२ ॥ **भिषज्** चिकित्सायाम् । २३ ॥ **भिष्णज्** उपसेवायाम् । २४ ॥ **इषुध** शरधारणे । २५ ॥ **चरण वरण** गतौ । २७ ॥ **चुरण** चौर्ये । २८ ॥ **तुरण** त्वरायाम् । २९ ॥ **भुरण** धारणपोषणयोः । ३० ॥ **गद्गद** वाक्स्खलने । ३१ ॥ **एला केला खेला** विलासे । ३४ ॥ इलेत्यन्ये ॥ **लेखा** स्खलने च । अदन्तोऽयमित्यन्ये । लेख्यति । ३६ ॥ **लिट** अल्पकुत्सनयोः । लिट्यति । ३७ ॥ **लाट** जीवने । ३८ ॥ **हृणीङ्** रोषणे लज्जायां च । ३९ ॥ **महीङ्** पूजायाम् । महीयते । पूजां लभत इत्यर्थः । ४० ॥ **रेखा** श्लाघासादनयोः । ४१ ॥ **द्रवस्** परितापपरिचरणयोः । ४२ ॥ **तिरस्** अन्तर्धौ । ४३ ॥ **अगद** नीरोगत्वे । ४४ ॥ **उरस्** बलार्थः । उरस्यति । बलवान् भवतीत्यर्थः । ४५ ॥ **तरण** गतौ । ४६ ॥ **पयस्** प्रसृतौ । ४७ ॥ **संभूयस्** प्रभूतभावे । ४८ ॥ **अंबर संवर** संभरणे । ५० ॥ आकृतिगणोऽयम् ॥ इति कण्ड्वादयः ॥

---

### अथ प्रत्ययमाला ।

कण्डूयतेः सन् । ³¹⁷⁶सन्यङोरिति प्रथमस्यैकाचो द्वित्वे प्राप्ते-॥ (३५७५) **वा॰ कण्ड्वादेस्तृतीयस्येति वाच्यम्** ॥ कण्डूयियिषति । क्यजन्तात्सन् ॥ (३५७६) **वा॰ यथेष्टं नामधातुषु** ॥ आद्यानां त्रयाणामन्यतमस्य द्वित्वमित्यर्थः । अजादेस्त्वाद्येतरस्य । पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति । अशिश्वीयिषति, अश्वीयियिषति । नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः । इन्द्रीयतेः सन् । द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम् । इन्दिद्रीयिषति, इन्द्रीयियिषति । चिचन्द्रीयिषति, चन्दिद्रीयिषति, चन्द्रीयियिषति । प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति-पिप्रापयिषति, प्रापिपयिषति, प्रापयियिषति । उरुं विवारयिषति, वारिरयिषति, वारयियिषति । बाढं सिसाधयिषतीत्यादि रूपत्रयम् । षत्वं तु नास्ति, आदेशो यः सकार इत्युक्तेः । यङ्, सन्, ण्यन्तात्सन् । बोभूयिषयिषति । यङ्, णिच्, सन्नन्ताण्णिच् । बोभूयियिषयतीत्यादि ॥ इति प्रत्ययमाला ॥

---

इति सूत्रात्करणे इत्यनुवर्तनात् कृत्रर्थे यगिति प्राचोक्तव्याख्यायां न किंचिद्बाधकमित्युक्तं तच्चिन्त्यम्, अनुवृत्तौ मानाभावात् । अन्यथा णिजन्तेष्विव प्रकृतिप्रत्ययाभ्यां व्यापारद्वयापत्तेरिति दिक् ॥ **पूर्वभाव इति** । पूर्वत्वमित्यर्थः ॥ **लेटितेति** । 'यस्य हलः ३४९७' इति यलोपः ॥ **सुख्यतीति** । चुरादौ तु 'सुख दुःख तत्क्रियायाम्' सुखयतीत्याद्युदाहृतम् ॥ **सपर** । यगन्तात् 'अ प्रत्ययात् ५०८२' 'गुरोश्च हलः ५०८३' इत्यनेन वा अप्रत्यये टाप् । सपर्या । **अरर** । आरा प्रतोदः । तत्करणकं कर्म आराकर्म ॥ **अदन्तोऽयमिति** । लेख्यति । आदन्तपक्षे तु लेखायति ॥ **महीङ्** । 'प्रेत्य स्वर्गे महीयते' इति रामायणम् ॥ **प्रसृताविति** । प्रसृतिः परिमाणविशेषः ॥ **प्रभूतभावे इति** । बाहुल्य इत्यर्थः । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इत्यमरः । संभूयस्यति । असंभूयसीत् । न इह संशब्दस्य पृथक्कृतिः, यत्र प्रातिपदिकाद्धातुसंज्ञाप्रयोजकप्रत्ययस्य विधानं तत्रैव पृथक्कृतिरित्याहुः ॥ **आकृतिगण इति** । तेन 'दुवस् सन्दीपने' इत्यादि सिद्धम् । प्रयुज्यते च 'समिधाऽग्निं दुवस्यत' इत्यादि ॥ इति कण्ड्वादिप्रक्रिया ॥

---

**प्रथमस्येति** । अजादेस्तु द्वितीयस्य, द्वित्वे प्राप्ते इत्यपि ज्ञेयम् । प्राचा तु 'यथेष्टं नामधातुषु ३५७६' इति प्राप्ते 'कण्ड्वादेस्तृतीयस्य ३५७५' इत्युक्तमित्यवतारितम् । तदयुक्तम्, नामधातुत्वस्य निराकृतत्वात् । अत एव मूले नामधातून् समाप्य कण्ड्वादयः पृथगेवोक्ताः ॥ **द्रीशब्दयिशब्दयोरिति** । नकारस्य त्वचः परत्वात् द्वित्वं नेति भावः ॥ **पिप्रापयिषतीति** । णाविष्ठवद्भावेन प्रियशब्दस्य 'प्रियस्थिर-२७३०' इत्यादिना प्रादेशः ततो द्वित्वादि ॥ **सिसाधयिषतीति** । इष्ठवद्भावादिह 'अन्तिकबाढयोः-२७२८' इति साधादेशः ॥ **षत्वं तु नास्तीति** । आदेशावयवत्वादिति भावः ॥ **बोभूयिषयिषतीति** । इह यङ्निमित्तद्वित्वे कृतेऽपि सन्निमित्तद्वित्ववारणाय 'लिटि धातोः-२९३१' इति सूत्रे अनभ्यासस्येत्येतदवश्यं कर्तव्यम् । एवं च 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति अनभ्यासग्रहणं तत्र माऽस्त्विति भाष्यस्थं प्रत्याख्यानं प्रौढिवादमात्रमिति भावः ॥ इति प्रत्ययमाला ॥

---

१ **नामधातुष्विति** । नामपदं प्रातिपदिक-सुबन्तान्यतरपरम् । तथा च प्रातिपदिकसुबन्तप्रकृतिकप्रत्ययान्तत्वप्रयुक्तधातुसंज्ञकेषु यथेष्टं प्रथमस्य द्वितीयस्य तृतीयस्य वा एकाचो द्वित्वं भवतीत्येवार्थः ॥

## अथात्मनेपदप्रक्रिया ।

अनुदात्तङित आत्मनेपदम् । आस्ते । शेते ॥ ( ३५७७ ) (सू) भावकर्मणोः । १ । ३ । १३ । बभूवे । अनुबभूवे ॥ (३५७८) (सू) कर्तरि कर्मव्यतिहारे । १ । ३ । १४ । क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । व्यतिलुनीते । अन्यस्य योग्यं लवनमन्यः करोतीत्यर्थः । श्नसोरल्लोपः । व्यतिस्ते । व्यतिषाते । व्यतिषते । तासस्त्योरिति सलोपः । व्यतिसे । धि च । व्यतिध्वे । ह एति । व्यतिहे । व्यत्यसै । व्यत्यास्त । व्यतिषीत ॥ व्यतिराते ३ । व्यतिभाते ३ । व्यतिबभे ॥ ( ३५७९ ) (सू) न गतिहिंसार्थेभ्यः । १ । ३ । १५ । व्यतिगच्छन्ति । व्यतिघ्नन्ति ॥ ( ३५८० ) (वा) प्रतिषेधे हसादीनामुपसंख्यानम् ॥ हसादयो हसप्रकाराः शब्दक्रियाः । व्यतिहसन्ति । व्यतिजल्पन्ति ॥ (३५८१) (वा) हरतेरप्रतिषेधः ॥ संप्रहरन्ते राजानः ॥ ( ३५८२ ) (सू) इतरेतरान्योन्योपपदाच्च । १ । ३ । १६ । ( ३५८३ ) (वा) परस्परोपपदाच्चेति वक्तव्यम् ॥ इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति ॥ (३५८४) (सू) नेर्विशः । १ । ३ । १७ । निविशते ॥ ( ३५८५ ) (सू) परिव्यवेभ्यः क्रियः । १ । ३ । १८ । अकर्त्रभिप्रायार्थमिदम् । परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥ (३५८६) (सू) विपराभ्यां जेः ।१।३।१९। विजयते । पराजयते ॥ ( ३५८७ ) (सू) आङो दोऽनास्यविहरणे । १ । ३ । २० । आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात् । विद्यामादत्ते । अनास्येति किम् । मुखं व्याददाति । आस्यग्रहणमविवक्षितम् । विपादिकां व्याददाति । पादस्फोटो विपादिका । नदी कूलं व्याददाति ॥ ( ३५८८ ) (वा) पराङ्गकर्मकान्न निषेधः ॥ व्याददते पिपीलिकाः पतङ्गस्य मुखम् ॥ (३५८९) (सू) क्रीडोऽनुसंपरिभ्यश्च । १ । ३ । २१ । चादाङः । अनुक्रीडते । संक्रीडते । परिक्रीडते । आक्रीडते । अनोः कर्मप्रवचनीयान्न, उपसर्गेण समा साहचर्यात् । माणवकमनुक्रीडति । तेन सहेत्यर्थः । तृतीयार्थ इत्यनोः कर्मप्रवचनीयत्वम् ॥ ( ३५९० ) (वा) समोऽकूजने ॥ संक्रीडते । कूजने तु संक्रीडति चक्रम् ॥ ( ३५९१ ) (वा) आगमेः क्षमायाम् ॥ ण्यन्तस्येदं ग्रहणम् । आगमयस्व तावत् । मा त्वरिष्ठा इत्यर्थः ॥ (३५९२) (वा) शिक्षेर्जिज्ञासायाम् ॥ धनुषि शिक्षते । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ॥ (३५९३) (वा) आशिषि

---

( ३५७७ ) भावकर्मणोः । भावे कर्मणि यो लकारस्तस्यात्मनेपदमित्यर्थः ॥ (३५७८) कर्तरि कर्म– । अन्यस्येति । शूद्रस्य योग्यं सस्यादिलवनं ब्राह्मणः करोतीत्यर्थः । परस्परकरणमपि कर्मव्यतिहारः । संप्रहरन्ते राजानः । पृथक्सूत्रारम्भादेव सिद्धे कर्तृग्रहणमुत्तरार्थम् ॥ व्यतिस्त इति । यच्परत्वाभावान्न षः ॥ व्यतिस इति । 'उपसर्गप्रादुर्भ्याम्–३२८५' इति नेह षत्वम् । सकारस्यास्त्यवयवत्वाभावात् । 'आदेशप्रत्यययोः २९८' इति षत्वं तु 'सात्पदाद्योः २८६३' इति निषिद्धम् । 'एकदेशविकृत–२५५' न्यायेन प्रत्ययमात्रस्य पदत्वात् ॥ ( ३५७९ ) न गतिहिंसार्थेभ्यः । अर्थशब्दः प्रत्येकमभिसंबध्यते । कर्मव्यतिहारे यदात्मनेपदं तस्य निषेधः । अर्थग्रहणसामर्थ्यात् ये शब्दान्तरमनपेक्ष्य गतिहिंसयोर्वर्तन्ते त एवेह गृह्यन्ते । हरतिस्तूपसर्गवशात् हिंसायां प्रवर्तते इति 'हरतेरप्रतिषेधः ३५८१' इति वार्तिकमर्थग्रहणलभ्यमेवेत्याहुः ॥ ( ३५८२ ) इतरेतरा– । नन्वितरेतरादिशब्दैरेव कर्मव्यतिहारस्य द्योतितत्वात्तद्द्योतकमात्मनेपदं न प्राप्नोतीति किमर्थो निषेधः । अत्राहुः–लौकिके व्यवहारे लाघवानादरादात्मनेपदं प्रसज्येतेति निषेधोऽयमारभ्यते । अत एव व्यतिलुनीत इत्यादौ कर्मव्यतिहारद्योतनाय व्यतीत्युपसर्गावात्मनेपदं च समुच्चित्य प्रयुज्यत इति ॥ ( ३५८४ ) नेर्विशः । नेः किम्, प्रविशति । 'अर्थवद्ग्रहण–११२' 'लक्षणप्रतिपदोक्त–११५३–२' परिभाषाभ्यां नेरुपसर्गस्य ग्रहणम् । तेनेह न । 'मधूनि विशन्ति भ्रमराः' । 'इत्युक्त्वा मैथिली भर्तुरङ्के निविशती भयात्' इत्यत्र तु अङ्गानि विशतीति पाठ्यम् । न च पदसंस्कारपक्षे त्वङ्के निविशतीति पाठेऽप्यदोष इति वाच्यम्, त्वं करोति भवान् करोषीत्यादिप्रयोगस्यापि त्वदुक्तरीत्या साधुत्वापत्तेः, 'वा लिप्सायाम्–३६०७' इत्यादेर्वैयर्थ्यापत्तेश्च । स्यादेतत्–'नवाम्बुदश्यामवपुर्न्यविक्षत' इत्यत्रात्मनेपदं न स्यात् । अटा व्यवधानात् । न च स्वाङ्गमव्यवधायकमिति वाच्यम्, अङ्गभक्तस्याटो विकरणविशिष्टस्यावयवत्वेऽपि धातोरनवयवत्वादिति चेत् । अत्राहुः–लावस्थायामडागम इति भाष्यमते न कश्चिद्दोषः । मतान्तरे तु–'उपसर्गनियमे अड्व्यवाये उपसंख्यानम्' इति वार्तिकमस्तीति दिक् ॥ ( ३५८७ ) आङो दो— । अकर्त्रभिप्रायार्थमिदम् । तेन 'व्यादत्ते विहगपतिर्मुखं स्वकीयम्' इति प्रयोग आस्यविहरणेऽपि सिद्धः । क्रियाफलस्य कर्तृगामित्वविवक्षणात् ॥ (३५९२) शिक्षेर्जिज्ञासायामिति । 'शिक्ष विद्योपादाने' इत्यस्य नेह ग्रहणमनुदात्तेत्त्वादेवात्मनेपदसिद्धेः । किंतु शकेः सन्नन्तस्येति ध्वनयति—धनुर्विषय इत्या-

---

१ ननु 'पूर्वं धातुः साधनेन युज्यते' इति पक्षे साधनबोधके लकारे तस्यापरनिमित्तकत्वेनान्तरङ्गत्वात् 'तिप्तस्झि–' इति सूत्रेण सामान्यत आदेशे उपसर्गयोगेऽपि कृताकृतप्रसङ्गित्वेन नित्यत्वाद् विकरणे विकरणान्ताङ्गस्याटि कृते तस्य समुदायभक्ततया धातोर्नेः परत्वासंभवान्नियमो न स्यादिति शङ्कां निराकर्तुमाह—मतान्तरे त्विति ॥ 'नेः' इति षष्ठी नेरर्थद्वारकसंबन्धवतः तद्द्योत्यार्थकस्य विशेरित्यर्थः ॥ तेन न्यविशत इत्यादौ न दोष इति केचित् ॥ एवमेव 'परिव्यवेभ्यः–' इत्यादावपि षष्ठ्यर्थे पञ्चमी इत्यपि त एव वदन्ति ॥

नाथः ॥ आशिष्येवेति नियमार्थं[1] वार्तिकमित्युक्तम् । सर्पिषो नाथते । सर्पिर्मे स्यादित्याशास्ते इत्यर्थः । कथं तर्हि नाथसे किमु पतिं न भूभृतामिति । नाधसे इति पाठ्यम्[2] ॥ ( ३५९४ ) वा० हरतेर्गतताच्छील्ये ॥ गतं प्रकारः । पैतृकमश्वा अनुहरन्ते । मातृकं गावः । पितुर्मातुश्च गतं प्रकारं सततं परिशीलयन्तीत्यर्थः । ताच्छील्ये किम् । मातुर[3]नुहरति ॥ ( ३५९५ ) वा० किरतेर्हर्षजीविकाकुलाय[4]करणेष्विति वाच्यम् ॥ हर्षादयो विषयाः । तत्र हर्षो विक्षेपस्य कारणम् । इतरे फले ॥ ( ३५९६ ) सू० अपाच्चतुष्पाच्छकुनिष्वालेखने । ६ । १ । १४२ । अपात्किरतेः सुट् स्यात् ॥ ( ३५९७ ) वा० सुडपि हर्षादिष्वेव वक्तव्यः ॥ अपस्किरते वृषो हृष्टः । कुक्कुटो भक्षार्थी । श्वा आश्रयार्थी च । हर्षादिष्विति किम् । अपकिरति कुसुमम् । इह तङ्सुटौ न । हर्षादिमात्रविवक्षायां यद्यपि तङ् प्राप्तस्तथापि सुडभावे[5] नेष्यत इत्याहुः । गजोऽपकिरति ॥ (३५९८) वा० आङि नुप्रच्छ्योः ॥ आनुते । आपृच्छते ॥ (३५९९) वा० शप उपालम्भे ॥ आक्रोशार्थात्स्वरितेतोऽकर्तृगेऽपि फले शपथरूपेऽर्थे आत्मनेपदं वक्तव्यमित्यर्थः । कृष्णाय शपते ॥ (३६००) सू० समवप्रविभ्यः स्थः । १ । ३ । २२ । सन्तिष्ठते । ईर्ष्यद्वोरिच । समस्थित । समस्थिषाताम् । समस्थिषत ॥ अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ॥ ( ३६०१ ) वा० आङः प्रतिज्ञायामुपसंख्यानम् ॥ शब्दं नित्यमातिष्ठते । नित्यत्वेन प्रतिजानीत इत्यर्थः ॥ ( ३६०२ ) सू० प्रकाशनस्थेयाख्ययोश्च । १ । ३ । २३ । गोपी कृष्णाय तिष्ठते । आशयं प्रकाशयतीत्यर्थः । संशय्य कर्णादिषु तिष्ठते यः । कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः ॥ ( ३६०३ ) सू० उदोऽनूर्ध्वकर्मणि । १ । ३ । २४ । मुक्तावुत्तिष्ठते ॥ अनूर्ध्वेति किम् । पीठादुत्तिष्ठति ॥ ( ३६०४ ) वा० ईहायामेव ॥ नेह । ग्रामाच्छतमुत्तिष्ठति ॥ (३६०५) सू० उपान्मन्त्रकरणे । १ । ३ । २५ । आग्नेय्याऽऽग्नीध्रमुपतिष्ठते ॥ मन्त्रकरणे किम् । भर्तारमुपतिष्ठति यौवनेन ॥ (३६०६) वा० उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् ॥ आदित्यमुपतिष्ठते । कथं तर्हि–स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वतीति । देवतात्वारोपात्[6], नृपस्य

---

दिना ॥ ( ३५९३ ) **नियमार्थमिति** । नाथतेरनुदात्तेत्त्वं तु 'अनुदात्तेतश्च हलादेः ४१५०' इति युचि नाथन इति रूपसिद्ध्यर्थमिति भावः ॥ ( ३५९४ ) **मातुरनुहरतीति** । सादृश्यमात्रमत्र विवक्षितं न तु प्रकारताच्छील्यम् ॥ ( ३५९५–३५९७ ) **गजोऽपकिरतीति** । अत्र हर्षे सत्यपि आलेखनाभावात् सुटोऽप्राप्तिः ॥ ( ३५९९ ) **कृष्णाय शपते इति** । 'श्लाघह्नुङ्–८३२' इति संप्रदानसंज्ञा । 'नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि' इत्यत्र तु स्वाशयं प्रकाशयामीत्यर्थो विवक्षितो न तु शपथ इति न तङित्याहुः ॥ ( ३६०२ ) **प्रकाशन––** । प्रकाशनं ज्ञापनम् । स्थेयो विवादपदनिर्णेता, तिष्ठन्तेऽस्मिन् विवादपदनिर्णयार्थमिति व्युत्पत्तेः । बाहुलकादधिकरणे 'अचो यत् ३७८७' । 'स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते' इति मेदिनी । कर्णादिष्विति अधिकरणे सप्तमी । तेषां स्थेयत्वं तिष्ठते इत्यात्मनेपदेन द्योत्यते तमेवार्थमाह––**कर्णादीनिति** । प्रकाशनेत्यादि किम्, चैत्र तिष्ठति ॥ (३६०३) **उदोऽनूर्ध्वकर्मणि** । स्थ इत्यनुवर्तते । ऊर्ध्वदेशसंयोगानुकूलं यत्कर्म तदूर्ध्वकर्म । ( ३६०४ ) 'उदोऽनूर्ध्वे–' इत्युक्तेऽप्यनूर्ध्वक्रियायां वर्तमानादुत्पूर्वात्तिष्ठतेर्लस्यात्मनेपदमित्यर्थो लभ्यत एव । तथापि परिस्पन्दार्थलाभाय कर्मपदमित्यभिप्रेत्याह––**ईहायामेवेति** । इच्छापूर्विका चेष्टा ईहा । सा च ग्रामाच्छतमित्यत्र नास्ति ॥ ( ३६०५) **उपान्मन्त्रकरणे** । मन्त्रः करणं यत्र मन्त्रकरणं स्तुतिः तत्र वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं स्यात् ॥ **आग्नेय्येति** । अग्निदेवताकया ऋचा आग्नीध्रमग्निविशेषं स्तौतीत्यर्थः । अत्र केचित्–श्लोकै राजानं स्तौतीत्यर्थे श्लोकैरुपतिष्ठत इति प्रयोगो नेष्यते । 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' । 'आग्नेय्या आग्नीध्रम्' इति वैदिकविषय एव सर्वैरुदाहृतत्वात् । तथा च–तिष्ठतेरर्थे यदा मन्त्रः करणं तदा तङिति व्याख्येयम् । उपतिष्ठत इत्यस्य तु समीपावस्थानमेवार्थः । न च तत्र यष्ट्यादिवन्मन्त्रस्य करणत्वं न संभवतीति वाच्यम्, उपस्थानस्वरूपे तस्योपयोगाभावे तत्कार्ये स्तुतावुपयोगादुपस्थानकरणत्वं मन्त्रस्य न विहन्यते । आग्नीध्रमिति द्वितीया तु करणत्वान्यथानुपपत्तिलभ्येन स्तोतुमित्यनेनान्वेति । एवं चाग्नेय्या आग्नीध्रं स्तोतुं तत्समीपे तिष्ठतीत्येव वाक्यार्थः । आदित्यमुपतिष्ठते इत्यत्र तु तत्समीपावस्थानस्यासंभवादादित्यं स्तोतुं तदभिमुखतया तिष्ठतीत्यर्थ इत्याहुः ॥

---

१ नियमार्थमिति ॥ न चैतादृशानियमस्वीकारेऽस्यानुदात्तेत्त्वं व्यर्थमिति वाच्यम् । युजर्थं तस्यावश्यकत्वात् ॥ २ एवमेव 'दीनं त्वामनु नाधते' इति काव्यप्रकाशोदाहरणेऽपि तवर्गचतुर्थान्तप्रयोगेणैव च्युतसंस्कृतिः परिहार्येति बोध्यम् ॥ 'नाथति स्तनयुगम्' इति पाठकल्पनेन च्युतसंस्कृतिपरिहरणं मम्मटस्य स्तनंधयप्रार्थनीयस्तनप्रावरणाभावप्रार्थनया प्रार्थके कामुकत्वप्रतीत्यनुपपत्तिरिति भावः ॥ ३ मातुरनुहरतीति । सादृश्यमात्रप्रतीतिरत्र, न तु मातृवृत्तिगुणस्य सततं परिशीलनमिति नात्मनेपदमिति भावः ॥ ४ कुलायेति । यद्यपि 'कुलायो नीडमस्त्रियाम्' इति कोषवाक्यात्कुलायशब्दो नीडवाची तथापि भाष्ये–'अपस्किरते श्वाऽऽश्रयार्थी' इत्युदाहृतामिति कुलायशब्दोऽत्र निवासस्थानमात्रपर एवेति बोध्यम् ॥ ५ सुडभाव इति ॥ 'अपाच्चतुष्पात्–' इति सूत्रविहितसुटोऽभाव इत्यर्थः ॥ नेष्यत इति । किरतेरिति वार्तिकोदाहरणानां ससुट्कानामेव भाष्यकृतोदाहृतत्वादिति भावः ॥ ६ तदवृत्तिधर्मस्य तद्वृत्तित्वेन प्रतिपादनमारोपः ॥

देवतांशत्वाद्वा । गङ्गा यमुनामुपतिष्ठते । उपश्लिष्यतीत्यर्थः । रथिकानुपतिष्ठते । मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः ॥ ( ३६०७) वा० वा लिप्सायामिति वक्तव्यम् ॥ भिक्षुः प्रभुमुपतिष्ठते, उपतिष्ठति वा । लिप्सया उपगच्छतीत्यर्थः ॥(३६०८) सू० अकर्मकाच्च ।१।३।२६। उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् । भोजनकाले उपतिष्ठते । सन्निहितो भवतीत्यर्थः ॥ ( ३६०९ ) सू० उद्विभ्यां तपः । १ । ३ । २७ । अकर्मकादित्येव । उत्तपते । वितपते । दीप्यत इत्यर्थः ॥ ( ३६१० ) वा० स्वाङ्गकर्मकाच्चेति वक्तव्यम् । स्वमङ्गं स्वाङ्गं न तु अद्रवमिति परिभाषितम् । उत्तपते, वितपते वा पाणिम् । नेह सुवर्णमुत्तपति । सन्तापयति विलापयति वेत्यर्थः । चैत्रो मैत्रस्य पाणिमुत्तपति । सन्तापयतीत्यर्थः ॥ (३६११) सू० आङो यमहनः । १ । ३ । २८ । आयच्छते । आहते । अकर्मकात्स्वाङ्गकर्मकादित्येव । नेह, परस्य शिर आहन्ति । कथं तर्हि–‘ आजघ्ने विषमविलोचनस्य वक्षः ’ इति भारविः । ‘आहध्वं मा रघूत्तमम् ’ इति भट्टिश्च । प्रमाद एवायमिति भागवृत्तिः । प्राप्येत्यध्याहारो वा । ल्यब्लोपे पञ्चमीति तु ल्यबन्तं विनैव तदर्थावगतिर्यत्र तद्विषयकम् । भेत्तुमित्यादि तुमुन्नन्ताध्याहारो वा । समीपमेत्येति वा॥ ( ३६१२ ) सू० आत्मनेपदेष्वन्यतरस्याम् । २ । ४ । ४४ । हनो वधादेशो वा लुङि आत्मनेपदेषु परेषु । आवधिष्ट । आवधिषाताम् ॥ ( ३६१३ ) सू० हनः सिच् । १ । २ । १४ । कित्स्यात् । अनुनासिकलोपः । आहत । आहसाताम् । आहसत ॥ ( ३६१४ ) सू० यमो गन्धने । १ । २ । १५ । सिच् कित्स्यात् । गन्धनं सूचनं परदोषाविष्करणम् । उदायत । गन्धने किम् । उदायंस्त पादम् । आकृष्टवानित्यर्थः ॥ ( ३६१५ ) सू० समो गम्यृच्छिभ्याम् । । १ । ३ । २९ । अकर्मकाभ्यामित्येव । संगच्छते ॥ ( ३६१६ ) सू० वा गमः । १ । २ । १३ । गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः । संगसीष्ट, संगंसीष्ट । समगत, समगंस्त । समृच्छिष्यते । अकर्मकाभ्यां किम् । ग्रामं संगच्छति ॥ ( ३६१७ ) वा० विदिप्रच्छिस्वरतीनामुपसंख्यानम् ॥ वेत्तेरेव ग्रहणम् । संवित्ते । संविदाते ॥ ( ३६१८ ) सू० वेत्तेर्विभाषा । ७ । १ । ७ । वेत्तेः परस्य झादेशस्यातो रुडागमो वा स्यात् । संविद्रते, संविदते । संविद्रताम् , संविदताम् । समविद्रत, समविदत । संपृच्छते । संस्वरते ॥ ( ३६१९ ) वा० अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम् ॥ अर्तीति द्वयोर्ग्रहणम् । अङ्विधौ त्वियर्तेरेवेत्युक्तम् । मा समृत । मा समृषाताम् । मा समृषतेति । समार्त । समार्षाताम् । समार्षतेति च भ्वादेः । इयर्तेस्तु मा समरत । मा समरेताम् । मा समरन्त । समारत ।

---

( ३६०६ ) गङ्गा यमुनामिति । एतेन यमुनैव प्राचीना गङ्गा तु पश्चाद्यमुनया सह मिलितेति प्रतीयते ॥ ( ३६१० ) स्वाङ्गकर्मकाच्चेति । चकारेणाकर्मकस्य संग्रहः ॥ न त्वद्रवमिति । अन्यथा चैत्रो मैत्रस्येत्यादि वक्ष्यमाणं न सङ्गच्छेतेति भावः ॥ ( ३६११ ) आङो यमहनः ॥ प्राप्येति । तथा च—हन्तेरकर्मकतया आजघ्ने आहध्वमित्यात्मनेपदं युक्तमित्यर्थः ॥ भेत्तुमित्यादीति । एवं च ल्यब्लोपपञ्चम्याः प्रसक्तिरेव नास्तीति भावः ॥ समीपमेत्येति । विषमविलोचनस्य समीपमेत्य वक्षः आजघ्ने । स्वकीयमेव वक्षो मल्ल इव सन्तोषातिशयादास्फालयांचक्रे इत्यर्थात्स्वाङ्गकर्मकत्वमस्त्येवेति भावः ॥ ( ३६१२ ) आत्मनेपदेष्विति । तङीत्येव सुवचम् ॥ ( ३६१५ ) 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' इति वृत्तिस्थं पाठमुपेक्ष्य भाष्यस्थं पाठमनुसरति–समो गम्यृच्छिभ्यामिति ॥ संगच्छत इति । सङ्गतं भवतीत्यर्थः ॥ (३६१६) वा गमः । 'असंयोगाल्लिट् कित् ३००२' इत्यतः किदनुवर्तते, 'इको झल् ३४६९' इत्यतो झल्ग्रहणं, 'लिङ्सिचौ–३०७३' इत्यतो लिङ्सिचाविति चानुवर्तते । कित्त्वपक्षे ' अनुदात्तोपदेश–३२३४' इति मलोपः । समृच्छिष्यत इति लृटः प्रयोगस्तु तौदादिकऋच्छेरत्र ग्रहणं, न तु ऋच्छादेशस्येति ध्वननार्थम् ॥ ग्रामं संगच्छतीति । 'तच्चैक्यं समगच्छत' इत्यत्र तु एकं जातमित्यर्थाद्गमेरकर्मकत्वमेवेति तङ् । एकमेवैक्यम् । स्वार्थे ष्यङ् ॥ ( ३६१७ ) विदिप्रच्छि––। परस्मैपदिसाहचर्यादाह–वेत्तेरेवेति । विन्दतिर्हि स्वरितेत् । सत्ताविचारणार्थयोस्तु अनुदात्तेत्त्वादेव सिद्धम् । न च 'निरनुबन्ध–' परिभाषयैव वेत्तेर्ग्रहणं स्यादिति वाच्यम्, 'लुग्विकरणाऽलुग्विकरणयोः–३१३६' इति परिभाषया तु विन्दतेर्ग्रहणप्रसङ्गात् ॥ (३६१८)वेत्तेर्विभाषा । 'शीङो रुट् ३२५१' इत्यतो रुडनुवर्तते॥'अदभ्यस्तात् ३२९३' इत्यतः अदित्यनुवर्त्य षष्ठ्यन्तत्वेन विपरिणम्यत इत्याह—अतो रुडागम इति ॥ (३६१९) अङ्विधौ त्विति । ' सर्तिशास्त्यर्ति–३१७५ ' इति लुप्तविकरणेन शासिना साहचर्यादिति भावः ॥ मा समृतेति । 'उश्च ३१६१ ' इति कित्त्वम् । माङ्योगादडभावः ॥ समार्तेति । ननु सिज्लो-

---

१ देवतांशेति । तथा चोक्तं मनुस्मृतौ–“अराजके जनपदे सर्वतो विद्रुते भयात् । रक्षार्थमस्य लोकस्य राजानमसृजत्प्रभुः ॥३॥ इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥४॥ यस्मादेषां नरेन्द्राणां मात्राभ्यो निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ ५ ॥ सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् । स कुबेरः स वरुणः स महेन्द्रः प्रभावतः॥७॥बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः। महती देवता ह्येषा नररूपेण तिष्ठति”॥८॥इति। २ लिप्सायामिति । लिप्सोपसर्जनकेऽर्थे वर्तमानादित्यर्थः ॥ लिप्सा लाभेच्छा । भिक्षुकः प्रभुमुपतिष्ठत इत्यत्र स्थाधातोः लिप्सया समीपगमनानुकूलो व्यापारोऽर्थः । तथा च लिप्सा करणभूतेति भवत्युदाहरणम् ॥ ३ 'अकर्मकाच ' इत्यनुवर्तमानं द्विवचनान्तानुरोधेन द्विवचनान्तत्वेन विपरिणम्यत इत्याशयेनाह—अकर्मकाभ्यामित्येवेति ॥

समारेताम् । संमारन्तेति च । संशृणुते । संपश्यते । अकर्मकादित्येव । अत एव-रक्षांसीति पुराऽपि संशृणुमहे-इति मुरारिप्रयोगः प्रमादिक इत्याहुः । अध्याहारो वा 'इति कथयन्द्वयः' इति ॥ अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेत् । शृणु-

(३६२०) धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ १ ॥

वहति भारम् । नदी वहति । स्यन्दत इत्यर्थः । जीवति । नृत्यति । प्रसिद्धेर्यथा । मेघो वर्षति । कर्मणोऽविवक्षातो यथा । हितान्न यः संशृणुते स किं प्रभुः ॥ (३६२१) (वा॰) उपसर्गादस्यत्यूह्योर्वेति वाच्यम् ॥ अकर्मकादिति निवृत्तम् । बन्धं निरस्यति, निरस्यते । समूहति, समूहते ॥ (३६२२) (सू॰) उपसर्गाद्ध्रस्व ऊहतेः । ७ । ४ । २३ । यादौ क्ङिति । ब्रह्म समुह्यात् । अग्निं समुह्य ॥ (३६२३) (सू॰) निसमुपविभ्यो ह्वः । १ । ३ । ३० । निह्वयते ॥ (३६२४) (सू॰) स्पर्धायामाङः । १ । ३ । ३१ । कृष्णश्चाणूरमाह्वयते । स्पर्धायां किम् । पुत्रमाह्वयति ॥ (३६२५) (सू॰) गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः । १ । ३ । ३२ । गन्धनं हिंसा । उत्कुरुते । सूचयतीत्यर्थः । सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुदाकुरुते । भर्त्सयतीत्यर्थः । हरिमुपकुरुते, सेवते । परदारान्प्रकुरुते, तेषु सहसा प्रवर्तते । एधोदकस्योपस्कुरुते, गुणमाधत्ते । गाथाः प्रकुरुते, प्रकथयति । शतं प्रकुरुते, धर्मार्थं विनियुङ्क्ते । एषु किम् । कटं करोति ॥ (३६२६) (सू॰) अधेः प्रसहने । १ । ३ । ३३ । प्रसहनं क्षमाऽभिभवश्च, षह मर्षणेऽभिभवे चेति पाठात् । शत्रुमधिकुरुते । क्षमत इत्यर्थः । अभिभवतीति वा ॥ (३६२७) (सू॰) वेः शब्दकर्मणः । १ । ३ । ३४ । स्वरान्विकुरुते । उच्चारयतीत्यर्थः । शब्द-

---

पस्यासिद्धत्वात् 'आटश्च ३७७' इति वृद्धौ कृतायां 'ह्रस्वादङ्गात् ३१६२' इति सिज्लोपाप्रवृत्त्या समार्ष्टेति रूपं स्यात् । न च ह्रस्वाद्विहितस्येति व्याख्यानादिष्टसिद्धिरिति वाच्यम्, विहितविशेषणे मानाभावात्, उदायत आहतेत्याद्यसिद्ध्यापत्तेश्च ॥ अत्र केचित्-' सिज्लोप एकादेशे सिद्धो वाच्यः ३०३२ ' इत्यनेन पूर्वं सिज्लोपे पश्चात् वृद्धिर्भवति, एकादेश इति विषयसप्तम्याश्रयणात् । न चैवमध्यैष्टेति न सिध्येत्तत्राप्युक्तरीत्या पूर्वं सिज्लोपे वृद्धौ सत्यामध्यैतेति रूपप्रसङ्गादिति वाच्यम्, ' वार्णादाङ्गं बलीयः ३०६०' इति पूर्वमेव गुणे कृते सिज्लोपो न प्रवर्तते इति 'आटश्च ३७७' इति वृद्धौ कृतायामध्यैष्टेति रूपस्य निर्बाधत्वात् । समार्तेत्यत्र तु ' उश्च ३१६१ ' इति कित्त्वेन गुणाप्रवृत्त्या पूर्वमेव सिज्लोपे पश्चात् ' आटश्च ३७७ ' इति वृद्धिरिति वैषम्यमित्याहुः ॥ अन्ये तु सिज्लोपानन्तरं यत्रैकादेशः प्रसज्यते तत्रैव सिज्लोपः सिद्धो यथा अग्रहीदिति । न चात्र तादृशो विषयोऽस्ति । किञ्च, 'वार्णादाङ्गं बलीयः ३०६०' इति पूर्वमेव गुणे कृते इत्यादि यदुक्तम् । तदसत्, समानाश्रये हि वार्णादाङ्गं बलीयः । अन्यथा द्यौरिवाचरति द्यवतीत्यत्र यण् न स्यात्, किन्तु 'पुगन्त-२९४४' इति गुण एव स्यात् । तथा च--समार्ष्टेत्येव वक्तव्ये समार्तेति लेखकप्रमाद इत्याहुः ॥ (३६२५) **गन्धनं हिंसेति** । 'गन्ध अर्दने,' 'अर्द हिंसायाम्' इत्यनयोश्चुरादौ पाठादिति भावः । सहसा वर्तते साहसिकः । 'ओजःसहोम्भस्-२१६२ ' इति ठक् । तस्य कर्म साहसिक्यम् । ब्राह्मणादित्वात्ष्यञ् ॥ **परदारानित्यादि** । तान्वशीकरोतीत्यर्थः ॥ साहसिक्यं न धात्वर्थः । तथा हि सति—परदारानिति कर्मणोऽनन्वयः स्यात्, किन्तु प्रयोगोपाधिरित्यभिप्रेत्याह-**तेषु सहसेति** ॥ **एधोदकस्येति** । एधशब्दोऽकारान्तः । 'अवोदैधौद्म-४९७५ ' इति निपातितः । एधाश्च उदकं च तेषां समाहारः । यद्वा-एधःशब्दः सकारान्तः । तथा च—एधांसि च दकं चेति विग्रहः । दकशब्दोऽप्युदकवाच्येवेत्यर्थोऽत्र न भिद्यते । उक्तं च हलायुधे-'प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च'

---

१ तथा च भट्टिः-'समरन्त ममाऽभीष्टास्सकल्पास्त्वय्युपागते' इति ॥ २ **धातोरिति** । सकर्मकधातोरपि क्रिया अकर्मिका भवति, कुत इत्याकाङ्क्षायां चतुर्भिर्हेतुभिरकर्मकत्वं साधयति-**धातोरिति** । अर्थान्तरे अन्योऽर्थोऽर्थान्तरम्, तत्र वृत्तेः शक्तेः, यदा प्रकृतमर्थं विहाय नानार्थत्वादन्यस्मिन् अर्थे धातुर्वर्तते, तदा स धातुरकर्मकः । पुनः कर्मणो धात्वर्थेनोपसंग्रहादकर्मकः, किमित्याकाङ्क्षा यत्र धात्वर्थेनैव पूर्येत तत्र नैराकाङ्क्ष्यैण कर्मणोऽनुपस्थितौ धातुरकर्मक इति भावः । कर्मणो यत्र प्रसिद्धत्वम्, तत्राप्यकर्मकत्वव्यवहारः कर्मविषयकोत्थिताकाङ्क्षाऽविषयत्वं हि तत्त्वमित्याशयः । किमित्याकाङ्क्षासत्त्वेऽपि कर्मान्तरासत्त्वेन तस्यैव लाभः सुतरामिति ज्ञातप्रयोगोऽनुचित इति यावत् । कर्मणोऽविवक्षायामपि धातुरकर्मकः, किमित्याकाङ्क्षाया वक्तुरधीनत्वेन तथा कल्पनेति भावः । एवं च प्रकृतेऽर्थान्तरवृत्तित्वाद्धनिगम्यादीनामकर्मकत्वमिति भावः ॥ अर्थान्तरवृत्तेरुदाहरणम्-**नदी वहतीति** । धात्वर्थसंगृहीतकर्मण उदाहरणं-**जीवति नृत्यतीति** ॥ ३ **निवृत्तमिति** । सोपसर्गास्यत्यूहोः सकर्मकत्वेनाकर्मकादित्येतत्संबन्धस्य वक्तुमशक्यत्वादिति भावः ॥ ४ **निसमुपविभ्यो ह्व इति** । अत्र ह्व इत्येकारान्तानुकरणं लक्षणवशसंपन्नमात्त्वम् । तेन निह्वयते इत्यत्राप्यात्मनेपदं भवत्येव । कृतात्त्वानुकरणे तु यत्रात्त्वविषयताऽस्ति, तत्रैव स्यादिति बोध्यम् ॥ ५ लावस्थायामडिति भाष्योक्तसिद्धान्तादटि कृते सर्वतोऽन्तरङ्गत्वाद् वृद्धौ ह्रस्वाऽभावान्न सिज्लोप इति समार्ष्टेत्येव रूपमित्यपरेऽपि ॥ ६ **साहसिक्यमिति** । बलात्कारेणाविचारेण वा यः कर्म करोति तत्कर्तृका क्रियेत्यर्थः ॥ ७ कारके षष्ठीप्रकरणेऽस्माभिरुक्तं न विस्मर्तव्यम् ॥

कर्मणः किम् । चित्तं विकरोति कामः ॥ ( ३६२८ ) **अकर्मकाच्च** । १ । ३ । ३५ । वेः कृञ इत्येव । छात्रा विकुर्वते । विकारं लभन्त इत्यर्थः ॥ ( ३६२९ ) **संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः** । १ । ३ । ३६ । अत्रोत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः । इतरे प्रयोगोपाधयः । तथाहि–शास्त्रे नयते । शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः । तेन च शिष्यसंमाननं फलितम् । उत्सञ्जने–दण्डमुन्नयते । उत्क्षिपतीत्यर्थः । माणवकमुपनयते । विधिना आत्मसमीपं प्रापयतीत्यर्थः । उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते । ज्ञाने–तत्त्वं नयते । निश्चिनोतीत्यर्थः । कर्मकरानुपनयते । भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः । विगणनमृणादेर्निर्यातनम् । करं विनयते । राज्ञे देयं भागं परिशोधयतीत्यर्थः । शतं विनयते । धर्मार्थं विनियुङ्क्त इत्यर्थः ॥ ( ३६३० ) **कर्तृस्थे चाशरीरे कर्मणि** । १ । ३ । ३७ । नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्ने एव स्यात् । सूत्रे शरीरशब्देन तदवयवो लक्ष्यते । क्रोधं विनयते, अपगमयति । तत्फलस्य चित्तप्रसादस्य कर्तृगत्वात्स्वरितञित इत्येव सिद्धे नियमार्थमिदम् । तेनेह न । गण्डं विनयति । कथं तर्हि विगणय्य नयन्ति पौरुषमिति । कर्तृगामित्वाविवक्षायां भविष्यति ॥ ( ३६३१ ) **वृत्तिसर्गतायनेषु क्रमः** । १ । ३ । ३८ । वृत्तिरप्रतिबन्धः[1] । ऋचि क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः । सर्ग उत्साहः[2] । अध्ययनाय क्रमते । उत्सहते इत्यर्थः । क्रमन्तेऽस्मिन् शास्त्राणि । स्फीतानि भवन्तीत्यर्थः ॥ ( ३६३२ ) **उपपराभ्याम्** । १ । ३ । ३९ । वृत्त्यादिष्वाभ्यामेव क्रमेर्न तूपसर्गान्तरपूर्वात् । उपक्रमते । पराक्रमते । नेह, संक्रामति ॥ ( ३६३३ ) **आङ उद्गमने**[3] । १ । ३ । ४० । आक्रमते सूर्यः । उदयत इत्यर्थः ॥ ( ३६३४ ) **ज्योतिरुद्गमन इति वाच्यम्** ॥ नेह । आक्रामति धूमो हर्म्यतलात् ॥ ( ३६३५ ) **वेः पादविहरणे** । १ । ३ । ४१ । साधु विक्रमते वाजी । पादविहरणे किम् । विक्रामति सन्धिः । द्विधा भवति । स्फुटतीत्यर्थः ॥ ( ३६३६ ) **प्रोपाभ्यां समर्थाभ्याम्** । १ । ३ । ४२ । समर्थौ तुल्यार्थौ । शकन्ध्वादित्वात्पररूपम् । प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । समर्थाभ्यां किम् । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामति । आगच्छतीत्यर्थः ॥ ( ३६३७ ) **अनुपसर्गाद्वा** । १ । ३ । ४३ । क्रामति, क्रमते । अप्राप्तविभाषेयम् । वृत्त्यादौ तु नित्यमेव[4] ॥ ( ३६३८ ) **अपह्नवे ज्ञः** । १ । ३ । ४४ । शतमपजानीते । अपलपतीत्यर्थः ॥ ( ३६३९ ) **अकर्मकाच्च** । १ । ३ । ४५ । सर्पिषो जानीते । सर्पिषा उपायेन प्रवर्तत इत्यर्थः ॥ ( ३६४० ) **संप्रतिभ्यामनाध्याने** । १ । ३ । ४६ । शतं संजानीते । अवेक्षत इत्यर्थः । शतं प्रतिजानीते । अङ्गीकरोतीत्यर्थः । अनाध्यान इति योगो विभज्यते । तत्सामर्थ्यादकर्मकाच्चेति प्राप्तिरपि वार्यते । मातरं मातुर्वा संजानाति । कर्मणः शेषत्वविवक्षायां षष्ठी ॥ ( ३६४१ ) **भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः** । १ । ३ । ४७ । उपसंभाषोपमन्त्रणे धातोर्वाच्ये । इतरे प्रयोगोपाधयः । शास्त्रे वदते[5] । भासमानो ब्रवीतीत्यर्थः । उपसंभाषोपसान्त्वनम् । भृत्यानुपवदते । सान्त्वयतीत्यर्थः । ज्ञाने–शास्त्रे वदते । यत्ने[6]-क्षेत्रे वदते । विमतौ–क्षेत्रे[7] विवदन्ते । उपमन्त्रणमुपच्छन्दनम्, उपवदते । प्रार्थयत इत्यर्थः ॥ ( ३६४२ ) **व्यक्तवाचां समुच्चारणे** । १ । ३ । ४८ । मनुष्याणां संभूयोच्चारणे वदेरात्मनेपदं स्यात् । संप्रवदन्ते ब्राह्मणाः । नेह । संप्रवदन्ति खगाः ॥ (३६४३) **अनोरकर्मकात्** । १ । ३ । ४९ । व्यक्तवाग्विषयादनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात् । अनुवदते

---

**उपनयनपूर्वकेणेति** । उपनयनं बटुसंस्कारः । तस्य परगामित्वात्परस्मैपदे प्राप्ते अनेनात्मनेपदं विधीयते । न ह्युपनयनमात्रेण आचार्यत्वं भवति, किन्तु–तत्पूर्वकाध्यापनेनेत्याचार्यकरणस्य प्रयोगोपाधित्वं परंपरया ज्ञेयम् । 'उपनीय ददद्वेदमाचार्यः स उदाहृतः' इति स्मृतिः ॥ ( ३६३० ) **कर्तृस्थे–। कर्मणीति** । आत्मगामिनि क्रियाफले इत्यर्थः ॥ ( ३६३१ ) **वृत्तिसर्ग–**। 'तायृ सन्तानपालनयोः' तायनं स्फीतता, तदाह–**स्फीतानीति** । प्रवृद्धानीत्यर्थः ॥ ( ३६३५ ) **वेः पाद–**। यद्यपि क्रमेः पादविक्षेप एवार्थस्तथापि धातूनामनेकार्थत्वादेवमुक्तम् ॥ ( ३६३६ ) **प्रोपाभ्याम्–**। 'प्रोपाभ्यां प्रारम्भे' इत्येव सुवचम् ॥ **उपक्रामतीति** । वृत्त्याद्यर्थेष्वेवोपपराभ्यामिति प्रवृत्तेर्नात्रात्मनेपदं शङ्क्यमिति भावः ॥ ( ३६३७ ) **वृत्त्यादौ त्विति** । न च वृत्त्यादिसूत्रं सोपसर्गे चरितार्थमित्यनुपसर्गात्क्रमेर्वृत्त्याद्यर्थेऽपि विभाषैवास्त्विति वाच्यम्, 'उपपराभ्याम् ३६३२' इति नियमस्योक्तत्वात् ॥ (३६३९) **अकर्मकाच्च** । 'अनुपसर्गाज्ज्ञः ३६६५' इत्यनेनैव सिद्धे सर्पिषोऽनुजानीते इत्यादिसोपसर्गार्थमिदं सूत्रम् ॥ ( ३६४१ ) **भासनोपसंभाषा–**। एषु किम्, यत्किंचिद्वदति ॥ ( ३६४२ ) **अनुवदते**

---

१ **वृत्तिरप्रतिबन्ध इति** । यत्र न प्रतिबन्धस्तत्रैव लोके एतादृशव्यवहारस्य दर्शनादिति भावः ॥ २ **उत्साह इति** । उत्साहश्चित्तवृत्तिविशेषः, तद्विषयकविलक्षणज्ञानजन्यसुखविशेषो वा ॥ ३ **उद्गमन इति** । उद्गमनमूर्ध्वदेशसंयोगानुकूलव्यापारः ॥ ४ **नित्यमेवेति** । पूर्वविप्रतिषेधेनेति भावः ॥ ५ **शास्त्रे वदत इति** । बोधोत्तरं शास्त्रविषयकज्ञानवत्त्वं मनसा बुध्यत इत्यर्थः ॥ ६ **यत्न इति**––यत्न उत्साहः । क्षेत्रे वदत इत्यस्य तद्विषयकमुत्साहमाविष्करोतीत्यर्थः ॥ ७ **क्षेत्रे विवदन्त इति**––वैमत्यहेतुकं नानाविधं भाषन्त इत्यर्थः ॥

कठः कलापस्य । अकर्मकात्किम् । उक्तमनुवदति । व्यक्तवाचां किम् । अनुवदति वीणा ॥ ( ३६४४ ) ❀ विभाषा विप्रलापे । १ । ३ । ५० । विरुद्धोक्तिरूपे[1] व्यक्तवाचां समुच्चारणे उक्तं वा स्यात् । विप्रवदन्ते, विप्रवदन्ति वा वैद्याः ॥ ( ३६४५ ) ❀ अवाद्ग्रः । १ । ३ । ५१ । अवगिरते । गृणातिस्त्ववपूर्वो न प्रयुज्यत एवेति भाष्यम्[2] ॥ ( ३६४६ ) ❀ समः प्रतिज्ञाने । १ । ३ । ५२ । शब्दं नित्यं संगिरते । प्रतिजानीत इत्यर्थः । प्रतिज्ञाने किम् । संगिरति ग्रासम् ॥ ( ३६४७ ) ❀ उदश्चरः सकर्मकात् । १ । ३ । ५३ । धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः । सकर्मकात्किम् । बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ॥ (३६४८) ❀ समस्तृतीयायुक्तात्[3] । १ । ३ । ५४ । रथेन संचरते ॥ ( ३६४९ ) ❀ दाणश्च सा चेच्चतुर्थ्यर्थे । १ । ३ । ५५ । संपूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् । तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते । पूर्वसूत्रे सम इति षष्ठी । तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्तते । रथेन समुदाचरते । दास्या संप्रयच्छते ॥ ( ३६५० ) ❀ उपाद्यमः स्वकरणे । १ । ३ । ५६ । स्वकरणं स्वीकारः । भार्यामुपयच्छते ॥ ( ३६५१ ) ❀ विभाषोपयमने । १ । २ । १६ । यमः सिच् किद्वा स्याद्विवाहे । रामः सीतामुपायत, उपायंस्त वा । उदवोढेत्यर्थः । गन्धनाङ्गे उपयमे तु पूर्वविप्रतिषेधान्नित्यं कित्वम् ॥ (३६५२) ❀ ज्ञाश्रुस्मृदृशां सनः । १ । ३ । ५७ । सन्नन्तानामेषां प्राग्वत् । धर्मं जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ॥ ( ३६५३ ) ❀ नानोर्ज्ञः । १ । ३ । ५८ । पुत्रमनुजिज्ञासति । पूर्वसूत्रस्यैवायं निषेधः, अनन्तरस्येति न्यायात् । तेनेह न । सर्पिषोऽनुजिज्ञासते । सर्पिषा प्रवर्तितुमिच्छतीत्यर्थः । पूर्ववत्सन[३६५५] इति तङ् । अकर्मकाच्च[३६३०] इति केवलाद्विधानात् ॥ ( ३६५४ ) ❀ प्रत्याङ्भ्यां श्रुवः । १ । ३ । ५९ । आभ्यां सन्नन्ताच्छ्रुव उक्तं न स्यात् । प्रतिशुश्रूषति । आशुश्रूषति । कर्मप्रवचनीयात्तु स्यादेव । देवदत्तं प्रति शुश्रूषते ॥ [ ३६५५ ] ❀ शदेः शितः । १ । ३ । ६० ॥ [ २३६५ ] ❀ म्रियतेर्लुङ्लिङोश्च । १ । ३ । ६१ । व्याख्यातम् ॥ ( ३६५५ ) ❀ पूर्ववत्सनः । १ । ३ । ६२ । सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । एदिधिषते । शिशयिषते । निविविक्षते । पूर्ववत्किम् । बुभूषति । शदेरित्यादिसूत्रद्वये सनो नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेनेह न । शिशत्सति । मुमूर्षति ॥ [ २९९९ ] ❀ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । १ । ३ । ६३ । एधांचक्रे ॥ (३६५६) ❀ प्रोपाभ्यां[4] युजेरयज्ञपात्रेषु । ३ । १ । ६४ । प्रयुङ्क्ते । उपयुङ्क्ते ॥ ( ३६५७ ) ❀ स्वराद्यन्तोपसर्गादिति वक्तव्यम् ॥ उद्युङ्क्ते । नियुङ्क्ते । अयज्ञपात्रेषु किम् । द्वन्द्वं[5] न्यञ्चि पात्राणि प्रयुनक्ति ॥ ( ३६५८ ) ❀ समः क्ष्णुवः । १ । ३ । ६५ । संक्ष्णुते शस्त्रम् ॥ ( ३६५९ ) ❀ भुजोऽनवने । १ । ३ । ६६ । ओदनं भुङ्क्ते । अभ्यवहरतीत्यर्थः ॥ बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् । वृद्धो जनो दुःखशतानि भुङ्क्ते । इहोपभोगो भुजेरर्थः । अनवने किम् । महीं भुनक्ति ॥ ( ३६६० ) ❀ णेरणौ यत्कर्म णौ चेत्स

---

कठ इति । अनुः सादृश्ये । तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठी ॥ ( ३६४४ ) विभाषा विप्रलापे । अप्राप्तविभाषा ॥ ( ३६५० ) स्वकरणं स्वीकार इति । स्वकरणमित्यत्र च्विर्न भवति, 'समर्थानां प्रथमाद्वा १५३४' इति विकल्पात् । स्वकरणशब्देन भार्यास्वीकारो गृह्यते इति वृत्तिकृत् । भट्टिस्तु स्वीकारमात्रेऽपि प्रायुङ्क्त-'उपायंस्त महास्त्राणि' इति ॥ ( ३६५१ ) गन्धनाङ्गे इति । पूर्वविप्रतिषेधश्च 'न वेति विभाषा' सूत्रे भाष्ये उक्तः ॥ नित्यं कित्त्वमिति । 'यमो गन्धने ३६१४' इति पूर्वसूत्रेणेत्यर्थः ॥ ( ३६५२ ) ज्ञाश्रुस्मृ-। 'अपह्नवे ज्ञः ३६३८' इत्यादिना ज्ञाधातोः 'अर्तिश्रुदृशिभ्यश्च ३६१९' इति श्रुदृशिभ्यां चात्मनेपदे कृते तस्मिन्विषये 'पूर्ववत्सनः ३६५५' इत्यनेन सिद्धेऽपि विषयान्तरे सन्नन्तादनेन विधीयत इति ज्ञेयम् ॥ ( ३६५५ ) निविविक्षत इति । 'नेर्विशः ३५८४' इत्यात्मनेपदविधानात्सन्नन्तादपि आत्मनेपदम् ॥ सनो नेत्यनुवर्त्येति । 'नानोर्ज्ञः ३६५३' 'पूर्ववत्सनः ३६५५' इति सूत्राभ्यामिति शेषः ॥ ( ३६५८ ) समः क्ष्णुवः । 'समो गम्यृच्छिक्ष्णुभ्यः' इति पठनीये पृथगस्य पाठः सकर्मकादपि विधानार्थ इति ध्वनयन्नुदाहरति--संक्ष्णुते शस्त्रमिति ॥ ( ३६५९ ) भुजोऽनवने । अवनं पालनम्, 'अदने' इति वक्तव्ये 'अनवने' इति पर्युदासस्य प्रयोजनद्वयम् । संयोगवद्विप्रयोगस्यापि विशेषावधारणहेतुत्वाद्रौधादिकस्यैव भुजेर्ग्रहणमित्येकम् । अदनादर्थादर्थान्तरेऽप्युपभोगादौ आत्मनेपदं भवतीति द्वितीयम्, तदाह-बुभुजे पृथिवीपाल इति ॥ इहेति । उपभोग इत्युपलक्षणम्-आत्मसात्करणस्यापि । पृथिवीं बुभुजे । स्वाधीनां चकारेत्यर्थः । 'भुज पालनाभ्यवहारयोः' इत्यस्य रुधादेरेव ग्रहणमिति 'भुजो कौटिल्ये' इत्यस्मात्तुदादेः परस्मैपदमेव । पाणीं विभुजति मूलानि विभुजति ॥ ( ३६६० ) णेरणौ

---

१ 'विप्रलापो विरुद्धोक्तिः' इति कोशादाह-विरुद्धोक्तिरूप इति ॥ २ इति भाष्यमिति । तत्र हि-"गिरतेरिति वक्तव्यं गृणातेर्मा भूत् । तत्तर्हि वक्तव्यम् । न वक्तव्यम्, प्रयोगाभावात् । न चावपूर्वस्य गृणातेः प्रयोगोऽस्ति" इत्युक्तम् ॥ ३ तृतीयायुक्तादिति ।'समस्तृतीयया' इत्येव सिद्धे युक्तग्रहणाद्यत्र श्रूयमाणतृतीयान्तपदयोगस्तत्रैवात्मनेपदमिति विज्ञायते । तेन 'उभौ लोकौ सञ्चरसि' इति प्रत्युदाहरणं साधु सङ्गच्छते ॥ ४ प्रोपाभ्यामिति । प्रोपाभ्यां युक्ताद् युजेरात्मनेपदं स्यात्, यज्ञपात्रेषु साधनेषु नेत्यर्थः ॥ ५ द्वन्द्वं न्यञ्चीति । न्यञ्चि न्युब्जीकृतानि, पात्राणि द्वन्द्वं प्रयुनक्तीत्यर्थः ॥

**कर्ताऽनाध्याने । १ । ३ । ६७ ।** ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेत् ण्यन्तेनोच्येत, अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यान्न त्वाध्याने । णिचश्च[३३१७] इति सिद्धेऽकर्त्रभिप्रायार्थमिदम् । कर्त्रभिप्राये तु विभाषोपपदेनेति विकल्पेऽणावकर्मकादिति[३६७७] परस्मैपदे च परत्वात्प्राप्ते पूर्वविप्रतिषेधेनेदमेवेष्यते ॥ कर्तृस्थभावकाः कर्तृस्थक्रियाश्चोदाहरणम् । तथा हि—पश्यन्ति भवं भक्ताः । चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः । प्रेरणांशत्यागे—पश्यति भवः । विषयो भवतीत्यर्थः । ततो हेतुमण्णिच् । दर्शयन्ति भवं भक्ताः । पश्यन्तीत्यर्थः । पुनर्ण्यर्थस्याविवक्षायां दर्शयते भवः । इह प्रथमतृतीययोरवस्थयोर्द्वितीयचतुर्थ्योश्च तुल्योऽर्थः । तत्र तृतीयकक्षायां न तङ्, क्रियासाम्येऽप्यणौ कर्मकारकस्य णौ कर्तृत्वाभावात् । चतुर्थ्यां तु तङ्, द्वितीयामादाय क्रियासाम्यात्, प्रथमायां कर्मणो भव-

---

यत्कर्म-। आत्मनेपदमित्यधिक्रियते। इहावान्तरवाक्यानि चत्वारि प्रतीयन्ते । णेरात्मनेपदमित्येकं वाक्यम्। तच्च स्यादित्यन्तेन व्याख्यातम् । अणौ यत्कर्म णौ चेदिति द्वितीयम् । कर्मशब्दः क्रियापरः 'कर्तरि कर्मव्यतिहारे ३५७८' इतिवत् । तथा च अणौ या क्रिया सैव ण्यन्ते चेदित्यर्थः । एवं स्थिते फलितमाह—**सैव चेद् ण्यन्तेनोच्येतेति** । स कर्तेति तृतीयं वाक्यम् । अणावित्यादि चेच्छब्दान्तमिहानुवर्तते । कर्मशब्दश्चात्र कारकविशेषपरः, शब्दाधिकाराश्रयणात्तदेतद्व्याचष्टे—**अणौ यदित्यादिना स्यादित्यन्तेन** ॥ अनाध्यान इति वाक्यान्तरं व्याचष्टे—**न त्विति** । आध्यानमुत्कण्ठापूर्वकं स्मरणम् । वस्तुतस्तु—पर्युदास एव लाघवादाश्रयणीयः । अस्मिन्पक्षे आध्यानभिन्ने इत्यर्थे सति फलितो न त्वाध्याने इति नेयः । तथा च—अत्र वाक्यत्रयमेवेति बोध्यम् ॥ **विकल्प इति** । परत्वात्प्राप्ते इत्युत्तरेणान्वयः ॥ **पूर्वविप्रतिषेधेनेति** । 'विभाषोपपदेन–३६६६' इत्यस्यावकाशः—स्वं यज्ञं यजति, स्वं यज्ञं यजते इत्यादि । णेरणावित्यस्य तु दर्शयते राजेत्यादि । तथा 'अणावकर्मकात्–३६७७' इत्यस्य शेते कृष्णस्तं गोपी शाययतीत्यवकाशः, 'णेरणौ–३६६०' इत्यस्य तु लावयते केदारः स्वयमेवेति । तत्र हि लूयते केदार इति द्वितीयकक्षायामणावकर्मकत्वादिति भावः । न च पश्यति भव इतिवद् द्वितीयकक्षायां लुनाति केदार इत्येव प्रयोग इति भ्रमितव्यम्, लवनस्य कर्मस्थक्रियात्वेन 'कर्मवत्कर्मणा–३६९३' इति यगात्मनेपदप्रवृत्तेः । नव्यास्तु—'अणावकर्मकात्–३६७७' इत्यस्य बाधे दर्शयते राजेति भाष्यप्रयोगो मानम् । तत्र हि निवृत्तप्रेषणपक्षे दृशेरणावकर्मकत्वाच्चित्तवत्कर्तृकत्वाच्च परस्मैपदप्राप्तेः 'विभाषोपपदेन–३६६६' इति विकल्पबाधे तु न किंचिन्मानम् । किञ्च, 'अणावकर्मकात्–३६७७' इत्यस्य बाधेऽपि नास्त्येव प्रमाणम्, पूर्वोक्तभाष्यस्य परगामिनि क्रियाफले चरितार्थत्वात्, तथा च—कर्तृगामिनि क्रियाफले परत्वात् 'अणावकर्मकात्–३६७७' इत्यस्य प्रवृत्तौ न किंचिद्बाधकमस्तीति पूर्वविप्रतिषेधेनेदमेवेष्यत इत्येतच्चिन्त्यमित्याहुः ॥ वस्तुतस्तु—'णेरणौ–३६६०' इति सूत्रस्याचित्तवत्कर्तृकेऽपि लावयते केदार इत्यादौ चरितार्थत्वात् 'अणावकर्मकात्–३६७७' इत्यनेन परगामिनि क्रियाफलेऽपि परत्वात्परस्मैपदे प्राप्ते दर्शयते राजेति भाष्यप्रयोगबलात्पूर्वविप्रतिषेधाभ्युपगमेन 'णेरणौ–३६६०' इत्यात्मनेपदप्रवृत्तावपि आत्मार्थं दर्शयते, स्वार्थं दर्शयते इत्यादौ परत्वात् 'विभाषोपपदेन–३६६६' इत्यस्य प्रवृत्तौ न किंचिद्बाधकमस्ति । ततोऽपि परत्वात् 'अणावकर्मकात्–३६७७' इति परस्मैपदमेव स्यादिति तद्बाधेन पूर्वविप्रतिषेधे स्वीकृते 'विभाषोपपदेन–३६६६' इत्यस्याप्यर्थात्पूर्वविप्रतिषेधेन बाधो जात एवेति चेत् । एवं तर्हि दर्शयते राजेति भाष्यप्रयोगस्य केवले चरितार्थत्वात्सोपपदप्रयोगे 'अणावकर्मकात्–३६७७' इति परस्मैपदमेवास्तु । तत्रापि पूर्वविप्रतिषेधेन 'णेरणौ–३६६०' इत्यस्य प्रवृत्तौ मानाभावादिति दिक् ॥ 'कर्मवत्कर्मणा–३६९३' इत्यनेन गतार्थत्वशङ्कां निरस्यति—**कर्तृस्थभावका इति** । अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः, सपरिस्पन्दनसाधनसाध्या तु क्रिया, साधनं कारकं तत्साध्यत्वाद्धात्वर्थस्य । ननु नृत्यन्तं भवं पश्यतीत्यत्र दृशेः कर्तृस्थभावकता न स्यात्, किन्तु कर्तृस्थक्रियाकर्तृतैव स्यात् । न च साधनशब्देन लकारवाच्यं कारकं विवक्षितमिति वाच्यम्, नृत्यन्भवः पश्यतीत्यत्र तद्दोषतादवस्थ्यादिति चेत् । अत्राहुः—आरोहणादौ सपरिस्पन्द एव देवदत्तादिर्यथा साधनं तथा दर्शनश्रवणादौ न भवति, किन्तु स्पन्दनरहितोऽपीति नोक्तदोष इति । कर्तृस्थभावकमुदाहरति—**पश्यन्तीति** ॥ **प्रेरणांशेति** । सौकर्यविवक्षयेति भावः ॥ **तत इति** । त्यक्तप्रेरणांशकाद्धातोरित्यर्थः ॥ **पुनर्ण्यर्थस्येत्यादि** । न चैवं णिजपि गच्छतीति दर्शयते भव इति न सिद्ध्येदिति वाच्यम्, उपायनिवृत्तावप्युपेयानिवर्तनादिति कैयटोक्तेः ॥ एवं च स्वार्थ एव णिजिति पर्यवसानादाह—**द्वितीयचतुर्थ्योरिति** ॥ **तुल्योऽर्थ इति** । न्यूनाधिकभावरहितः ॥ **तत्र तृतीयेति** । प्रथमाद्वितीययोस्तु ण्यन्तत्वाभावात् तङः प्रसक्तिरेव नास्तीति भावः ॥ **क्रियासाम्येऽपीति** । प्रथमकक्षया सहेत्यर्थः ॥ **द्वितीयामादायेति** । अणौ या क्रिया

---

१ **कर्तृस्थभावका इति** । कर्तृस्थभावकत्वादिनिरूपणं कर्मकर्तृप्रक्रियातोऽवसेयम् ॥ २ भवनिष्ठचाक्षुषज्ञानविषयीभवनानुकूलव्यापाररूपेऽर्थे भक्तनिष्ठे **पश्यन्ति भवं भक्ता** इति प्रथमा कक्षा ॥ ३ भक्तनिष्ठव्यापारस्य त्यागेन भवनिष्ठचाक्षुषज्ञानविषयीभवनमात्रस्य धात्वर्थत्वविवक्षया **पश्यति भव** इति द्वितीया । ४ पुनर्भवनिष्ठचाक्षुषज्ञानविषयीभवनानुकूलव्यापारे भक्तनिष्ठे प्रेरणात्वेन विवक्षिते तत्र प्रेरणायां णिचि **दर्शयन्ति भवं भक्ता** इति तृतीया ॥ ५ पुनः प्रेरकभक्तप्रेरणारूपव्यापारस्य त्यागेन भवनिष्ठचाक्षुषज्ञानविषयीभवनमात्रविवक्षायां **दर्शयते भव** इति तुरीया कक्षा ॥

स्येह कर्तृत्वाच । एवमारोहयते हस्तीत्युदाहरणम् । आरोहन्ति हस्तिनं हस्तिपकाः । न्यग्भावयन्तीत्यर्थः । तत आरोहति हस्ती । न्यग्भवतीत्यर्थः । ततो णिच् । आरोहयन्ति । आरोहन्तीत्यर्थः । तत आरोहयते । न्यग्भवतीत्यर्थः । यद्वा—पश्यन्त्यारोहन्तीति प्रथमकक्षा प्राग्वत् । ततः कर्मण एव हेतुत्वारोपाण्णिच् । दर्शयति भवः । आरोहयति हस्ती । पश्यत आरोहतश्च प्रेरयतीत्यर्थः । ततो णिज्भ्यां तत्प्रकृतिभ्यां च उपात्तयोरपि प्रेषणयोस्त्यागे–दर्शयते । आरोहयते इत्युदाहरणम् । अर्थः प्राग्वत् । अस्मिन्पक्षे द्वितीयकक्षायां न तङ्, समानक्रियत्वाभावाण्णिजर्थस्याधिक्यात् । अनाध्याने किम् । स्मरति वनगुल्मं कोकिलः । स्मरयति वनगुल्मः । उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः ॥

---

सैव चेद् ण्यन्ते इत्यस्य न्यूनाधिकभावव्यवच्छेदपरत्वमभ्युपेत्येदमुक्तम् । यदा त्वधिकव्यवच्छेदमात्रपरत्वमभ्युपगम्यते, तदा प्रथमामादाय तत्संभवति । इदानीं कर्तृस्थक्रियाकमुदाहरति—एवमित्यादिना ॥ **आरोहति हस्तीति** । प्रेषणांशत्यागे उदाहरणमिदम् ॥ **ततो णिजिति** । निवृत्तप्रेषणाद्धातोः प्रेषणांशविवक्षायां णिजित्यर्थः ॥ पुनर्ण्यर्थस्याविवक्षायामुदाहरणमाह–**आरोहयते इति** ॥ एवं निवृत्तप्रेषणपक्षमुपपाद्येदानीमध्यारोपितप्रेषणपक्षमाह––**यद्वेति** ॥ **हेतुत्वारोपादिति** । प्रयोजककर्तृत्वारोपादित्यर्थः । अत्रापि सौकर्यविवक्षैव बीजम् ॥ **पश्यत इति** । पश्यतो भक्तान् आरोहतो हस्तिपकानिति क्रमेणार्थः ॥ **आधिक्यादिति** । अस्मिन्पक्षे णौ चेत्सा क्रियेत्यनेन आधिक्यमात्रं व्यवच्छिद्यते, न तु न्यूनत्वमपि । अन्यथा तृतीयकक्षायामपि तङ् न स्यात् । प्रकृत्युपात्तप्रेषणांशस्य त्यागेन न्यूनतायाः सत्त्वादिति भावः । णेरिति किम् , पश्यत्यारोहतीत्यादिनिवृत्तप्रेषणान्मा भूत् । न च णौ चेदिति श्रुतत्वात् ण्यन्तादेव स्यादिति वाच्यम् , अणावित्यस्यापि श्रुतत्वात् । तस्याग्रिमप्रयोगार्थमवश्यकर्तव्यस्य स्पष्टार्थमिहैव कर्तुमौचित्याच्च । 'अणौ या क्रिया सैव चेण्ण्यन्ते' इति किम् , । दर्शयति भवः । आरोहयति हस्तीत्यध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां मा भूत् । कथं तर्हि 'करेणुरारोहयते निषादिनम् ' इति माघप्रयोगः, 'स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधुबन्धुताम् ' इति भारविप्रयोगश्च संगच्छत इति चेत् । अत्राहुः–'णिचश्च ३३९७ ' इत्यनेन क्रियाफले कर्तृगामिनि तङ् , न तु प्रकृतसूत्रेणेति । 'अणौ यत्कर्मकारकं णौ चेत्स कर्ता ' इति किम् , दर्शयन्ति भवामिति निवृत्तप्रेषणपक्षे तृतीयकक्षायां मा भूत् ॥ **स्मरति वनगुल्ममिति** । पक्षद्वयेऽपीयं प्रथमकक्षा ॥ **स्मरयति वनगुल्म इति** । निवृत्तप्रेषणपक्षे चतुर्थकक्षेयम् । अध्यारोपितपक्षे तु तृतीयकक्षेति ज्ञेयम् । केचित्तु–एतत्सूत्रस्थे भाष्ये दर्शयते भृत्यान् राजेत्युदाहरणं, स्मरयत्येनं वनगुल्म इति प्रत्युदाहरणं च दृश्यते । ततश्च अध्यारोपितप्रेषणपक्षे द्वितीयकक्षायामेवानेनात्मनेपदं भवति, न तु तृतीयकक्षायामिति प्रतीयते । तथा च–कर्मपदमावर्त्य तस्य क्रियावाचित्वं स्वीकृत्याणौ या क्रिया सैव चेण्ण्यन्तेनोच्येतेति वाक्यान्तराभ्युपगमेऽप्येवकारेणाधिक्यं न व्यवच्छिद्यते किन्तु न्यूनतैवेत्यस्मादेव भाष्यादवगम्यते । एवं च–दर्शयते भवः, आरोहयते हस्तीति कर्मप्रयोगराहितं मूलग्रन्थस्योदाहरणं,स्मरयति वनगुल्म इति प्रत्युदाहरणं च भाष्यविरुद्धमेवेत्याहुः । अन्यैस्त्वविवक्षितमिह कर्मेत्युक्त्वाऽत्र मूलग्रन्थाविरोधेनैव भाष्यग्रन्थः समर्थितः । तेषामयमाशयः–गभीरायां नद्यां घोष इत्यत्र गभीराभिन्ननद्यामिति गभीरनदीपदार्थयोरभेदबोधानन्तरं तीरलक्षणायां तीरस्य गभीरत्वाभावान्वयास्तु गभीरत्वेऽप्येकदेशान्वयासंभवाच्च अनर्थकमपि गभीरायामिति पदं प्राथमिकबोधमादाय सार्थकं, तद्वदिहापि अध्यारोपितप्रेषणापक्षे द्वितीयकक्षायां कर्मण्यन्वितं ततो णिजर्थस्येव कर्मणोऽपि त्यागे णिचः कर्मपदस्य च प्राथमिकबोधमादाय सार्थक्यम् , स्वबोध्यसंबन्धो लक्षणेत्यभ्युपगमात् । विशिष्टवाक्यार्थस्य चेह बोध्यत्वेन तत्संबन्धस्य बोधकतारूपस्य वाक्ये सत्त्वात् । एषैवार्थवादैः प्राशस्त्यलक्षणाया गतिः । अन्यथा 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादिविधिवाक्यस्य योऽर्थवादः 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति ' इत्यादिस्तत्र वायुमेव स्वेन भागधेयेन स एवैनमित्यादिरूपस्य विभक्तिभेदेन प्रयोगस्य वैयर्थ्यं स्यादिति ॥ नन्वेतत्सूत्रस्योदाहरणं च यथाश्रुतभाष्यानुसारेण सकर्मकमेवास्तु, किमनेन विद्यमानकर्मणोऽविवक्षितत्वोपपादनक्लेशेनेति चेत् मैवम् , निवृत्तप्रेषणपक्षे दर्शयते भव इत्याद्युदाहरणस्य प्रत्युदाहरणस्य च कर्मरहितस्य स्वीकर्तव्यतया तदेकरूप्यस्यास्मिन्नपि पक्षे अकर्मकोदाहरणप्रत्युदाहरणयोः सिद्ध्ये कर्मणोऽविवक्षितत्वव्याख्याया उचितत्वात् । किञ्च, 'कर्मवत्कर्मणा–३६९३ ' इत्यनेनैव सिद्धे कर्तृस्थभावक्रियार्थं सूत्रमिति भाष्यग्रन्थस्वारस्यादप्यकर्मकमेवोदाहरणं प्रत्युदाहरणं चायाति । न च ' कर्मवत्कर्मणा–३६९३ ' इति सूत्रे तुल्यशब्देनापि कर्मस्थक्रियातो न्यूनतैव व्यवच्छिद्यते न त्वाधिक्यमिति स्वीकृते नास्ति भाष्यग्रन्थस्वारस्यभङ्ग इति वाच्यम् , तथा

---

१ आरोहन्ति हस्तिनं हस्तिपका इति–प्रथमकक्षायां हस्तिनिष्ठन्यग्भवनानुकूलव्यापारानुकूलो यो हस्तिपकनिष्ठो व्यापारस्तस्य प्रतीतिः ॥ २ आरोहति हस्तीति–द्वितीयकक्षायां हस्तिनिष्ठन्यग्भवनसमानाधिकरणो व्यापारो विवक्षितः ॥ ३ हस्तिपकस्य प्रयोजकत्वविवक्षया तदीयव्यापारे णिचि आरोहयन्ति हस्तिनं हस्तिपका इति तृतीया ॥ ४ पुनः प्रेरकहस्तिपकव्यापारत्यागे हस्तिनिष्ठन्यग्भवनानुकूलव्यापारमात्रविवक्षायां तुरीयाऽवस्था 'आरोहयते हस्ती ' इति पूर्ववत् ॥ एवमेव प्रत्युदाहरणेष्वपि ज्ञेयम् ॥

[ ३४४९ ] (सू) भीस्म्योर्हेतुभये । १ । ३ । ६८ । व्याख्यातम् ॥ ( ३६६१ ) (सू) गृधिवञ्च्योः प्रलम्भने । १ । ३ । ६९ । प्रतारणेऽर्थे ण्यन्ताभ्यामाभ्यां प्राग्वत् । माणवकं गर्धयते वञ्चयते वा । प्रलम्भने किम् । श्वानं गर्धयति । अभिकांक्षामस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । वर्जयतीत्यर्थः ॥ [ ३४४७ ] (सू) लियः संमानन-शालीनीकरणयोश्च । १ । ३ । ७० । व्याख्यातम् ॥ ( ३६६२ ) (सू) मिथ्योपपदात्कृञोऽभ्यासे । १।३।७१। णेरित्येव ॥ पदं मिथ्या कारयते । स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। मिथ्योपपदात्किम् । पदं सुष्ठु कारयति । अभ्यासे किम् । सकृत्पदं मिथ्या कारयति ॥ [ २९१२ ] (सू) स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ । यजते । सुनुते । कर्त्रभिप्राये किम् । ऋत्विजो यजन्ति । सुन्वन्ति ॥ ( ३६६३ ) (सू) अपाद्वदः । १ । ३ । ७३ । न्यायमपवदते । कर्त्रभिप्राय इत्येव । अपवदति ॥ [ ३३९७ ] (सू) णिचश्च । १ । ३ । ७४ । कारयते ॥ (३६६४) (सू) समुदाङ्भ्यो यमोऽग्रन्थे । १ । ३ । ७५ । अग्रन्थे इति च्छेदः । व्रीहीन्संयच्छते । भारमुद्यच्छते । वस्त्रमाय-च्छते । अग्रन्थे किम् । उद्यच्छति वेदम् । अधिगन्तुमुद्यमं करोतीत्यर्थः। कर्त्रभिप्राय इत्येव ॥ ( ३६६५ ) (सू) अनु-पसर्गाज्ज्ञः । १ । ३ । ७६ । गां जानीते । अनुपसर्गात्किम् । स्वर्गं लोकं न प्रजानाति । कथं तर्हि भट्टिः–'इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य' इति कर्मणि लिट् । नृपेणेति विपरिणामः ॥ ( ३६६६ ) (सू) विभाषो-पपदेन प्रतीयमाने । १ । ३ । ७७ । स्वरितञित इत्यादिपञ्चसूत्र्या यदात्मनेपदं विहितं तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात् । स्वं यज्ञं यजति, यजते वा । स्वं कटं करोति, कुरुते वा । स्वं पुत्रमपव-दति, अपवदते वा । स्वं यज्ञं कारयति, कारयते वा । स्वं व्रीहिं संयच्छति, संयच्छते वा । स्वां गां जानाति जानीते वा ॥ इत्यात्मनेपदप्रक्रिया ॥

---

## अथ परस्मैपदप्रक्रिया ।

[ २९१३ ] (सू) शेषात्कर्तरि परस्मैपदम् ।१।३।७८। भाति ॥ (३६६७) (सू) अनुपराभ्यां कृञः। १।३।७९।

---

हि सति कर्मवत्कर्मस्थक्रिय इत्युक्तेऽपि ' कर्मस्था क्रिया यस्य कर्तुः स कर्ता कर्मवत् ' इत्यर्थलाभात् तत्समीहितसिद्धौ कर्मणा तुल्यक्रिय इत्यस्य वैयर्थ्यापत्तेः । द्वितीयकक्षायां भवे हस्तिनि च विषयत्वापादनविषयकप्रेरणायाश्च न्यग्भवनविषयकप्रेरणाया-श्च क्रमेण सत्त्वेऽपि विषयत्वापत्तिरूपाया न्यग्भवनविषयकप्रेरणायाश्च कर्मस्थक्रियायाः सत्त्वात् । यदि तु 'कर्मणा तुल्यक्रियः' इत्येतत्सार्थक्याय तुल्यशब्देनात्र न्यूनाधिकव्यवच्छेदः क्रियत इत्युच्यते, तदा ' कर्मवत्कर्मणा–३६९३' इति सूत्रस्य द्वितीय-कक्षायामप्रवृत्तेः ' कर्मवत्कर्मणा–३६९३ ' इत्यनेनैव सिद्धे–इत्यादिभाष्यग्रन्थस्वारस्यभङ्गो भवत्येव । ततश्च अध्यारोपितप्रे-षणपक्षे तृतीयकक्षायामेवोदाहरणम्, न तु द्वितीयकक्षायामित्यभ्युपगन्तव्यम् । एतेनाध्यारोपितप्रेषणपक्षे णौ चेत्सा क्रियेत्य-नेनाधिक्यमात्रं व्यवच्छिद्यते न्यूनत्वं नेत्यत्र विनिगमनाभावान्न्यूनत्वव्यच्छेद एव स्वीकृते द्वितीयकक्षायां तङ् दुर्वार इति न्यूनाधिकव्यच्छेद एव ग्राह्यस्तेन कक्षाचतुष्टयपक्ष एव साधीयानिति वदन्तः परास्ताः । दर्शयते भृत्यान् राजेति भाष्योदाह-रणबलेन अध्यारोपितपक्षस्यैव प्रबलत्वादिति दिक् ॥ ( ३६६१ ) गृधिवञ्च्योः प्रलम्भने । अकर्त्रभिप्रायार्थ आरम्भः ॥ ( ३६६२ ) मिथ्योपपदात्कृञोऽभ्यासे । इह करोतिरुच्चारणार्थत्वादकर्मकः । उच्चारणं निःसरणम् । ण्यन्तस्तूच्चारणवृत्तिः सकर्मकः ॥ उच्चारयतीति । निःसारयतीत्यर्थः । असकृदुच्चारणे तु धातोर्लक्षणा, आत्मनेपदं तु द्योतकं तेनैव द्योतितत्वात् 'नित्यवीप्सयोः २८८३' इति न द्विर्वचनम् ॥ [ २९१२ ] ऋत्विजो यजन्तीति । दक्षिणादिकं तु न यागफलम् । ' स्वर्गकामो यजेत ' इत्यादिना स्वर्गाद्युद्देशेन यागादिविधानात्स्वर्गादिरेव फलमिति भावः ॥ ( ३६६४ ) समुदाङ्भ्यो–। ' आङो यमहनः ३६११ ' इत्येव सिद्धे आङ्पूर्वकस्य वचनं सकर्मकार्थमिति ध्वनयन्नुदाहरति–वस्त्रमायच्छत इति ॥ ( ३६६५ ) अनुपसर्गाज्ज्ञः । 'अकर्मकाच्च ३६३९ ' इत्येव सिद्धे सकर्मकार्थ आरम्भः ॥ ( ३६६६ ) विभाषोपप-देन–। उपपदेन फलस्य कर्तृगामित्वे द्योतिते तङोऽप्राप्तावप्राप्तविभाषेयम् । कर्तृगामिनि क्रियाफले नित्ये प्राप्ते प्राप्तवि-भाषेत्यन्ये ॥ स्वं यज्ञमिति । स्वमित्युपलक्षणम् । स्वार्थं यज्ञं यजति । आत्मार्थं यज्ञं यजति इत्याद्यपि बोध्यम् ॥

इत्यात्मनेपदप्रक्रिया ॥

---

[ २९१३ ] शेषात् कर्तरि–। ' अनुदात्तङितः–२९११ ' इत्यादिष्वात्मनेपदमेवेति नियमान्न तत्र परस्मै-पदस्य संभवः । तथा च कर्तरि परस्मैपदमित्यनेन परस्मैपदमेवेति नियमिते तद्भिन्नानामेव तद्भविष्यतीति शेषग्रहणं स्पष्टप्रति-पत्त्यर्थमित्याहुः । ' अनुदात्तङितः–२९११ ' इत्यादिष्वेवात्मनेपदमिति नियमात् 'शेषात्कर्तरि–२९१३' इत्यनेन परस्मैपद-

---

१ कर्मणीति । ' ततोऽनुजज्ञौ गमनं सुतस्य ' इत्येवं पाठाङ्गीकारे तु नैव काप्यनुपपत्तिः, लेखकप्रमादेनापि तथा पाठसंभवात् ॥

कर्तृगेऽपि फले[1] गन्धनादौ च परस्मैपदार्थमिदम् । अनुकरोति । पराकरोति । कर्तरीत्येव[2] । भावकर्मणोर्मा भूत् । न चैवमपि कर्मकर्तरि प्रसङ्गः कार्यातिदेशपक्षस्य[3] मुख्यतया तत्र कर्मवत्कर्मणेत्यात्मनेपदेन परेणास्य बाधात् । शास्त्रातिदेशपक्षे तु कर्तरि कर्मव्यतिहारे इत्यतः शेषादित्यतश्च कर्तृग्रहणद्वयमनुवर्त्य कर्तैव यः कर्ता न तु कर्मकर्ता तत्रेति व्याख्येयम् ॥ ( ३६६८ ) सू. अभिप्रत्यतिभ्यः क्षिपः । १ । ३ । ८० । क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति ॥ ( ३६६९ ) सू. प्राद्वहः । १ । ३ । ८१ । प्रवहति ॥ ( ३६७० ) सू. परेर्मृषः । १ । ३ । ८२ । परिमृष्यति । भौवादिकस्य तु परिमर्षति । इह परेरिति योगं विभज्य वहेरपीति केचित् ॥ ( ३६७१ ) सू. व्याङ्परिभ्यो रमः । १ । ३ । ८३ । विरमति ॥ ( ३६७२ ) सू. उपाच्च । १ । ३ । ८४ । यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥ ( ३६७३ ) सू. विभाषाऽकर्मकात् । १ । ३ । ८५ । उपाद्रमेरकर्मकात्परस्मैपदं वा । उपरमति, उपरमते वा । निवर्तत इत्यर्थः ॥ ( ३६७४ ) सू. बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । १ । ३ । ८६ । एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । णिचश्चेत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । अध्यापयति वेदम् । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्यन्दयतीत्यर्थः ॥ ( ३६७५ ) सू. निगरणचलनार्थेभ्यश्च । १ । ३ । ८७ । निगारयति । आशयति । भोजयति । चलयति । कम्पयति ॥ ( ३६७६ ) वा. अदेः प्रतिषेधः ॥ आदयते देवदत्तेन । गतिबुद्धीति कर्मत्वमादिखाद्योर्नेति प्रतिषिद्धम् । निगरणचलनेति सूत्रेण प्राप्तस्यैवायं निषेधः । शेषादित्यकर्त्रभिप्राये परस्मैपदं स्यादेव आदयत्यन्नं बटुना ॥ ( ३६७७ ) सू. अणावकर्मकाच्चित्तवत्कर्तृकात् । १ । ३ । ८८ । ण्यन्तात्परस्मैपदं स्यात् । शेते कृष्णस्तं गोपी शाययति ॥ ( ३६७८ ) सू. न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः । १ । ३ । ८९ । एभ्यो ण्यन्तेभ्यः परस्मैपदं न । पिबतिर्निगरणार्थः । इतरे चित्तवत्कर्तृका अकर्मकाः । नृतिश्चलनार्थोऽपि । तेन सूत्रद्वयेन प्राप्तिः ।

---

मेव तत्र भविष्यतीति परस्मैपदग्रहणं स्पष्टप्रतिपत्त्यर्थमिति केचित् ॥ ( ३६६७ ) **अस्य बाधादिति** । 'अनुपराभ्याम्–३६६७' इत्यस्येत्यर्थः । अत एव 'कर्मवत्कर्मणा–३६९३' इति सूत्रे कार्यातिदेशोऽयमिति वक्ष्यति ॥ शास्त्रातिदेशपक्षे 'कर्मवत्कर्मणा–३६९३' इत्यनेनात्मनेपदं न विधीयते किन्तु तद्विधायकं 'भावकर्मणोः ३५७७' इति शास्त्रमतिदिश्यते, तस्य च पूर्वत्वात्परेण 'अनुपराभ्याम्–३६६७' इत्यनेन बाधमाशङ्क्याह–**शास्त्रातिदेश इत्यादि** ॥ (३६६८) **स्वरितेदिति** । तथा च कर्तृगामिनि क्रियाफलेऽपि परस्मैपदार्थः सूत्रारम्भ इति भावः ॥ ( ३६७० ) **परेर्मृषः** । स्वरितेत्त्वात्पदद्वये प्राप्तेऽयमारम्भः ॥ **परिमर्षतीति** । 'आ धृषाद्वा' इति वैकल्पिकत्वाण्णिजभावः ॥ ( ३६७२ ) **उपाच्च** । 'व्याङ्पर्युपेभ्यः' इति नोक्तम्, उत्तरसूत्रे उपेत्यस्यैवानुवृत्तिर्यथा स्यादिति ॥ ( ३६७५ ) **निगरणचलनार्थेभ्यश्च** । निगरणं भक्षणम् । प्रुद्रुस्रूणां चलनार्थानामनेनात्मनेपदे सिद्धेऽप्यचलनार्थानां तत्सिद्धये पूर्वसूत्रे ग्रहणम् । अत एव तत्र विवृतं प्रापयतीत्यर्थ इत्यादिना । कथं तर्हि 'इमां किमाचामयसे न चक्षुषी' इति श्रीहर्षः । आङ्पूर्वाच्चमेरनेन परस्मैपदौचित्यादिति चेत्, अत्राहुः– आचामयेति पृथक्पदम् । ईर्लक्ष्मीस्तया सहिता सेस्तस्याः संबोधने हे से इति । केचित्तु–सा त्वम् इने चक्षुषी इनचक्षुषी श्रेष्ठचक्षुषी आचामय किमिति व्याचक्षते[4] ॥ ( ३६७७ ) **अणावकर्मकात्–** । क्रियाफलस्य कर्तृगामित्वविवक्षायामात्मनेपदे प्राप्ते परस्मैपदार्थमिदम् । अणाविति किम्, हेतुमण्ण्यन्तादकर्मकात्परस्मैपदनियमो मा भूत् । आरोह्यमाणं प्रयुङ्क्ते आरोहयते । न्यग्भवन्तं प्रेरयतीत्यर्थः । 'णेरणौ–३६६०' इति सूत्रे उदाहरणत्वेन य आरोहयतिरकर्मको निर्णीतस्तस्माद् द्वितीये णिचि प्रत्युदाहरणमिदम् । केचित्तु–अणाविति किम्, चुरादिण्यन्तात्परस्मैपदनियमो मा भूत् । तद्यथा–'पुट्ट चुट्ट अल्पीभावे' । पुट्टयति । चुट्टयति । अल्पीभवतीत्यर्थः । अकर्मकाविमौ । ततो हेतुमण्णिचि पुट्टयते । चुट्टयते । इति प्रत्युदाहरन्ति । तद्भाष्यादिविरुद्धम् । तथा हि–बुधादिसूत्रादिह णेरिति वर्तते बुधादिभ्यश्च हेतुमण्णिरेव संभवतीति तदन्तादेवायं विधिः अणाविति प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः । तेन चुरादिण्यन्ताद्धेतुमण्णौ परस्मैपदं भवत्येवेति भाष्यादौ स्थितम् । तथा च––हेतुमण्णेः प्राग योऽकर्मको हेतुमण्ण्यन्तभिन्नस्तस्माद्धेतुमण्णावात्मनेपदं नेति फलितोऽर्थः । अकर्मकात्किम्, कटं यः करोति तं प्रयुङ्क्ते कटं कारयति । चित्तवत्कर्तृकादिति किम्, शुष्यन्ति व्रीहयस्तान्शोषयते ॥ ( ३६७८ ) **न पाद–** । **चित्तवत्कर्तृका अकर्मका इति** । दिवादौ दमिः सकर्मक इत्युक्तम्, इह त्वकर्मक इति पूर्वोत्तरविरोधो यद्यप्यस्ति, तथापि कर्मणः कर्तृत्व-

---

१ **कर्तृगेऽपि फल इति** । कर्तृगामिक्रियाफलविवक्षायां 'स्वरितञितः–' इत्यस्य बाधनार्थमिदं सूत्रमित्यर्थः ॥ २ **कर्तरीत्येवेति** । एतच्च प्रत्ययनियमपक्षे बोध्यम् ॥ ३ **कार्यातिदेशपक्षस्य मुख्यतयेति** । शास्त्रातिदेशस्य कार्यसम्पत्तिफलकत्वात् कार्यातिदेशस्य मुख्यत्वम् । एवञ्च प्रकृते आत्मनेपदविधायकं 'कर्मवत् कर्मणा–' इत्येव । तच्च 'अनुपराभ्याम्–' इत्यतः परमिति कर्मकर्तरि न भविष्यतीति भावः ॥ यादेशस्य सुप्त्वात् 'सुपि च' इति दीर्घ इतिवत् प्रकृते कार्यं 'भावकर्मणोः' इत्यनेनैवेत्याश्रीयते, तदाप्याह–**शास्त्रातिदेशपक्षे त्विति** ॥ ४ दाधिमथास्तु आचामयतः सादरज्ञानलाक्षणिकतया निगरणार्थत्वाभावान्नानेन परस्मैपदापत्तिः । अत एव चक्षुषोः कर्मत्वं ज्ञानार्थत्वादिति वदन्ति ॥

पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते ॥ ( ३६७९ ) वा० धेट उपसंख्यानम् ॥ धापयेते शिशुमेकं समीची । अकर्त्रभिप्राये शेषादिति परस्मैपदं स्यादेव । वत्सान्पाययति पयः । दमयन्ती कमनीयतामदम् । भिक्षा वासयति ॥ [ ३५५० ] सू० वा क्यषः । १ । ३ । ९० । लोहितायति, लोहितायते ॥ [ ३१२६ ] सू० द्युद्भ्यो लुङि । १ । ३ । ९१ । अद्युतत्, अद्योतिष्ट ॥ [ ३१२८ ] सू० वृद्भ्यः स्यसनोः । १ । ३ । ९२ । वर्त्स्यति, वर्तिष्यते । विवृत्सति, विवर्तिषते ॥ [ ३१३२ ] सू० लुटि च क्लृपः । १ । ३ । ९३ । कल्प्ता । कल्प्तासि, कल्पितासे, कल्प्तासे । कल्प्स्यति, कल्पिष्यते, कल्प्स्यते । चिक्लृप्सति, चिकल्पिषते, चिक्लृप्सते ॥ इति परस्मैपदप्रक्रिया ॥ समाप्ता पदव्यवस्था ॥

---

## अथ भावकर्मप्रक्रिया ।

अथ भावकर्मणोर्लडादयः । भावकर्मणोः इति तङ् ॥ ( ३६८० ) सू० सार्वधातुके यक् । ३ । १ । ६७ । धातोर्यक् प्रत्ययः स्याद्भावकर्मवाचिनि सार्वधातुके परे । भावो भावना उत्पादना क्रिया । सा च धातुत्वेन सकलधातुवाच्या भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमपुरुषः । तिङ्वाच्यभावनाया असत्त्व-

---

विवक्षायां दमिरत्राकर्मक इत्याहुः ॥ **पाययत इति** । 'शाच्छासा-३४३८' इति युक् ॥ **आयामयत इति** । 'यमोऽपरिवेषणे ३१४४' इति मित्त्वनिषेधः ॥ **वासयत इति** । 'वस निवासे' इत्यस्य ग्रहणम्, 'वस आच्छादने' इत्यस्य तु न निषेधः, सकर्मकत्वेन तस्य प्राप्त्यभावात् । कर्मकर्तृत्वविवक्षायामकर्मकत्वेऽपि 'लुग्विकरण-३१३६' परिभाषया नात्र ग्रहणमित्याहुः ॥ ( ३६७९ ) **समीची इति** । प्रथमाद्विवचनम् । 'वा छन्दसि ५३६२' इति पूर्वसवर्णदीर्घः ॥ **परस्मैपदं स्यादेवेति** । 'अनन्तरस्य-४८८' इति न्यायेन योगद्वयेन प्राप्तस्यैव परस्मैपदस्य प्रतिषेध इति भावः ॥ इति परस्मैपदप्रक्रिया ॥ इति पदव्यवस्था ॥

---

(३६८०) **सार्वधातुके यक्** । 'धातोरेकाचः-३४९४' इत्यतो धातोरिति, 'चिण् भावकर्मणोः ३६८२' इत्यतो भावकर्मणोरिति चानुवर्तते ॥ **भावो भावनेति** । उत्पत्त्यर्थाद्भवतेर्णिजन्तात् 'एरच् ५०२२' इति भावः । 'एरजण्यन्तानाम्' इति त्वनार्षमिति तस्मिन्नेव सूत्रे कैयटः ॥ भवतेरुत्पत्त्यर्थत्वं, ण्यन्तस्य भवतेः शुद्धेन करोतिना तुल्यार्थत्वं च दर्शयति–**उत्पादना क्रियेति** । यथा करोति घटमित्यादावुत्पत्त्यनुकूलो व्यापारः कुलालनिष्ठः । तथा भावयति घटमित्यादावपि । भवति घट इत्यत्रापि घटनिष्ठ उत्पत्त्यनुकूलो व्यापारोऽस्त्येव, परंतु फलसमानाधिकरणः सः । कुलालनिष्ठस्तु फलव्यधिकरण इतीयान्भेदः । अत एव फलव्यापारयोः सामानाधिकरण्याद्भवत्यादिरकर्मकः, तयोस्तु वैयधिकरण्यात् करोत्यादिः सकर्मक इत्याहुः । एतेन भावो भावनेत्यादिग्रन्थेन 'भूवादयो धातवः ३९' इत्यत्र क्रियावाचिनः किम्, विकल्पार्थकवाशब्दाद्भावे लिण् मा भूत् । अन्यथा भ्वादिगणे वाशब्दमात्रपठनादक्रियावाचिनोऽपि वाशब्दस्य धातुत्वे 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति विकल्पस्यापि भावत्वापत्त्या तद्वाचकवाशब्दाल्लिट् स्यादेवेति केषांचिद्व्याख्यानं परास्तम्, भावनावाचकादेव भावे लिटः स्वीकारात् । विकल्पस्य तु भावनाभिन्नत्वात् । अन्यथा क्रियावाचिन इति विशेषणे दत्तेऽपि तद्दोषतादवस्थ्यात् । विकल्पवाचकाल्लिडभावेऽपि लडादयः स्युरिति तु न शङ्कनीयमेव, वर्तमानक्रियावृत्तेर्धातोरेव लडादीनां विधानात् । किमर्थं तर्हि क्रियावाचिनो भ्वादय इति सर्वैरेव तत्र व्याख्यातम् । याः पश्यसीत्यत्रापि 'लक्षणप्रतिपदोक्त-११५३-२' परिभाषया याशब्दस्य धातुत्वासंभवात् 'आतो धातोः ३४४' इति तत्राल्लोपाप्रसक्तिरिति चेत् । अत्राहुः—'कार्यकालं संज्ञापरिभाषम्' इति पक्षे 'आतो धातोः ३४४' इति कार्यप्रदेशे 'भ्वादयो धातवः' इत्युपतिष्ठते भ्वादिषु याशब्दमात्रपठनाद् द्रव्यवाचकोऽपि याशब्दस्तत्रोपतिष्ठते, वर्णग्रहणे 'लक्षणप्रतिपदोक्त-११५३-२' परिभाषाया अप्रवृत्तेः । 'आतो धातोः ३४४' इत्यत्र त्वात इति वर्णग्रहणात् । तस्माद् द्रव्यवाचकस्य याशब्दस्य धातुसंज्ञा मा भूदिति क्रियावाचिन इति विशेषणमवश्यं वक्तव्यमेवेति । उत्पादना क्रियेत्यनेन तु 'क्रियावाची धातुः, धात्वर्थः क्रियेत्यन्योन्याश्रयोऽत्र दुष्परिहरः' इति केषांचिदाक्षेपो निरस्तः, उत्पत्त्यनुकूलव्यापारस्य क्रियात्वात् । तदुक्तम्—'व्यापारो भावना सैवोत्पादना सैव च क्रिया' इति ॥ **धातुत्वेनेति** । सकलधातुषु धातुत्वं जातिः, अखण्डोपाधिर्वेत्यन्यदेतत् । तच्च वाचकतावच्छेदकम् । क्रियात्वं तु वाच्यतावच्छेदकमिति भावः ॥ **धातुवाच्येति** । नन्वेवं पचतीत्यादावेककर्तृका वर्तमाना पचिक्रियेति क्रियाविशेष्यको बोधो न स्यात्, प्रत्ययार्थं प्रति प्रकृत्यर्थस्य विशेषणताया औपगवादौ क्लृप्तत्वात् । तथा च–भावना तिङ्प्रत्ययवाच्येति मीमांसकमतमेव रमणीयमिति चेत्, अत्राहुः–'प्रत्ययार्थः प्रधानम्' इत्युत्सर्गः । स चेह त्यज्यते, 'क्रियाप्रधानमाख्यातम्' इति स्मरणात् । टाबाद्यर्थत्वेन मीमांसकैरभ्युपगतस्य स्त्रीत्वस्य पाचिकादौ विशेषणत्वाभ्युपगमात् 'प्रत्ययार्थः प्रधानम्' इति नियमस्य प्रत्युक्तत्वाच्च । किञ्च, भोक्तव्यमित्यादौ तिङं विनाऽपि भावना प्रतीयते, कारकापेक्षा च दृश्यते, अस्ति च करोतिसामानाधिकरण्यम् । किं कर्तव्यं भोक्तव्यम्, किं कृतवान् भुक्तवान् इति । न च कृतामपि तव्यदादीनां भावनावाचकत्वमस्त्विति शङ्क्यम्, नामार्थयोरभेदान्वयानुरोधेन 'कर्तरि कृत् ३७७१' इति । 'तव्यदादयः कर्मादौ' इति परैरप्यभ्युपगमात् । अन्यथा पाचको देवदत्तः, पक्तव्य ओदन इत्यत्राभेदबोधो न स्यात् । तथा च–धातुवाच्य-

रूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि । किन्त्वेकवचनमेव, तस्यौत्सर्गिकत्वेन[1] संख्यानपेक्षत्वात् । अनभिहिते कर्तरि तृतीया-त्वया मयाऽन्यैश्च भूयते । बभूवे ॥ ( ३६८१ ) स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।६।४।६२। उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु परेषु भावकर्मणोर्गम्यमानयोःस्यादीनामिडागमश्च । अयमिट् चिण्वद्भावसंनियोगशिष्टत्वात्तदभावे न । इहार्धधातुक इत्यधिकृतं सीयुटो विशेषणं नेतरेषामव्यभिचारात् । चिण्वद्भावाद्वृद्धिः । भाविता, भविता । भाविष्यते, भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट, भविषीष्ट ॥ ( ३६८२ ) चिण् भावकर्मणोः । ३ । १ । ६६ । च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि । अभाविष्यत, अभविष्यत । तिङोक्तत्वात्कर्मणि न द्वितीया । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम्, अन्वभ-

---

त्वं भावनाया इत्येव मतं रमणीयतरमिति ॥ लकारस्य सामानाधिकरण्यं कर्तृकर्माभिधायिन एव संभवति, न भावाभिधायिन इत्याशयेन व्याचष्टे-**सामानाधिकरण्याभावादिति** । न चैवं युष्मदस्मद्भिन्नोपपदे समानाधिकरणे देवदत्तः पचतीत्यादाविव प्रथमपुरुषेण भाव्यमिति प्रथमपुरुषोऽन्यत्र न स्यादिति वाच्यम्, 'शेषे प्रथमः२९१९' इत्यत्र मध्यमोत्तमयोरविषये प्रथमा स्यादिति व्याख्यानात् ॥ **तिङ्वाच्येति** । घञादिवाच्यायास्तु सत्त्वरूपत्वमिष्टमेवेति पाकं पाकेनेत्यादौ यथायथं द्वितीयादयः प्रवर्तन्ते । अत एव भाष्यकृतोक्तं[2] ' कृदभिहितो भावो द्रव्यवत्प्रकाशते ' इति । द्रव्यधर्माँल्लिंगसंख्याकारकादीन् गृह्णातीत्यर्थः ॥ **एकवचनमेवेति** । प्रायोवादोऽयम् । अन्यथा 'उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते ' इति भाष्ये धात्वर्थनिर्देशे ण्वुलि 'कृदभिहितो भावो द्रव्यवत्प्रकाशते ' इत्यासिकाः शायिकाः इत्यत्र बहुवचनसिद्धावपि आस्यन्ते शय्यन्ते इत्यत्र तन्न सिध्येत् । न च कर्मण्येवात्र लकारोऽस्त्विति शक्यम्, धातुद्वयस्याप्यकर्मकत्वेन तदसंभवात्, अर्थासङ्गतेश्च । तत्र ह्युष्ट्राणां यादृशान्यासनानि, हतानां यादृशानि शयनानि, तादृशानि देवदत्तादिकर्तृकान्यासनादीनीत्यर्थः । सादृश्यावगमादिह आख्यातवाच्यस्यापि भावस्य भेदावभासाद्बहुवचनम् । न चैवं संख्यान्वयित्वे असत्त्वरूपता न स्यादिति वाच्यम्, लिङ्गक्रियानाधारकारकयोगाभावमात्रेणासत्त्वरूपत्वमुपपद्यत इति कारकेषूक्तत्वात् । केचिदिह उष्ट्रासिकाहतशायिकाशब्दयोस्तत्सदृशे लक्षणां स्वीकृत्य आस्यन्त इत्यादिना अभेदान्वयमाहुः । मनोरमायां तु आसिकाः शायिका इति च द्वितीयाबहुवचनं क्रियाविशेषणत्वेन कर्मत्वात् । न चैवं क्लीबत्वमेकवचनान्तत्वं च स्यादिति वाच्यम्, ' स्त्रियां क्तिन् ५०६७ ' इत्यधिकारात्स्त्रीत्वावधारणेन 'सामान्ये नपुंसकम् ११८२ ' इत्यस्याप्रवृत्तेः । बहुत्वावधारणेनैकवचनाप्रवृत्तेश्चेत्युक्तम् ॥ ( ३६८१ ) **स्यसिच्सीयुट्तासिषु-**। यद्यप्यजादयो द्वन्द्वेन निर्दिष्टास्तथाप्युपदेश इत्यच एव विशेषणं न हनादीनामव्यभिचारात्तदाह—**उपदेशे योऽजिति** । उपदेशे अजन्तानामिति न व्याख्यातम् । तथा हि सति णिजन्तस्य न स्यात्, तस्योपदेशाभावात् । उपदेशो हि साक्षादुच्चारणम् । न च ण्यन्तस्य तदस्ति ॥ चिण्वदिति सप्तम्यन्ताद्वतिः, ' स्यसिच्सीयुट्तासिषु ' इति प्रतियोगिनि सप्तमीनिर्देशादतो व्याचष्टे--**चिणीवेति** । ननु चिणि दृष्टमात्रस्य वृद्ध्यादिकार्यस्यातिदेशे घानिष्यते । आयिष्यते । अध्यायिष्यते इत्यत्र हनो वधादेशः, इणो गादेशः, इङो गाङादेशोऽपि स्यादिति चेत् । मैवम्, अङ्गाधिकारबलेन आङ्गस्यैव कार्यस्यातिदेशात् ॥ न चैते हनिणिङादेशा आङ्गास्तदेतदाह-**अङ्गकार्यं वा स्यादिति** ॥ **सीयुट इति** । तथा च-सीयुट्शब्देन तद्विशिष्टं लक्ष्यत इति भावः । आर्धधातुक इत्यनेन व्यावर्त्यस्तु विधिलिङ् । तेन भूयेतेत्यत्र न भवति । न चात्र 'लिङः सलोपः-२९६६' इति सलोपाद्वलादित्वं नास्तीति वाच्यम्, तस्येहानपेक्षणात् । यदाहुः-' चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति । इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वलिमित्तो विघाती' ॥ इति । अस्यार्थः-चिण्वदित्यतिदेशस्य वृद्ध्यादिकं प्रयोजनम् । तथाहि-भाविता भाविष्यते इत्यादौ वृद्धिः, दायिता दायिषीष्टेत्यादौ युक्, घानिता घानिष्यते इत्यादौ घत्वम्, हेतुमण्ण्यन्तात्कर्मणि लकारे शामिता शमिता शामिष्यते शमिष्यते इत्यादौ 'चिण्णमुलोः-३६८७' इति मितामुपधाया वा दीर्घः । अत्रैव शामितेत्यादौ 'स्यसिच्सीयुट्-३६८१' इत्यनेन कृत इट् आभीयत्वेनासिद्धस्तेनानिटीति निषेधो न प्रवर्तत इति णेर्लोपो भवति भाविष्यते इत्यादौ भू स्य इति स्थिते परमपि वलादिलक्षणमिटं बाधित्वा चिण्वदिडेव भवति यतोऽयं नित्यः । वलिमित्तो विघातीत्यनित्यः । सासमिके तस्मिन्कृतेऽयं चिण्वदिड्भवति । अस्मिन्कृते तु स न भवति, वलादिनिमित्तस्य विहितत्वात् । एवं च नित्यत्वात् सेड्भ्योऽप्ययमेवेड्भवति । एतदभावपक्षे तु सेड्भ्यो वलादिलक्षण इट् भवतीति बोध्यम् ॥ ( ३६८२ ) **चिण् भावकर्मणोः** । 'च्लेः सिच् २९८७' इत्यतः च्लेरिति 'चिण् ते पदः ३३३२' इत्यतस्ते इति चानुवर्तते । तत्रत्यं तु चिण्ग्रहणं 'न रुधः ३७०२' इति निषेधेन तिरोहितमिति पुनरत्र चिण्ग्रहणं कृतम् ।

---

१ **औत्सर्गिकत्वेनेति** । अयं भावः—' **एकवचनम्** ' इति सामान्यसूत्रं संख्यानपेक्षत्वेनैकवचनविधायकम् । तस्य सर्वत्र प्राप्तस्यैकवचनस्य ' **द्विबह्वोर्द्विवचनबहुवचने**' इति विशेषसूत्रं बाधकमेवेति न द्वित्वबहुत्वयोरेकवचनापत्तिः । एवं चैकवचनस्य संख्यानपेक्षत्वेन सर्वत्र प्राप्तत्वादौत्सर्गिकत्वमिति भावः ॥ २ भाष्यकारा इति शेषः ।

विषाताम् ॥ णिलोपः । भाव्यते । भावयांचक्रे, भावयांबभूवे, भावयामासे । इह तशब्दस्य एशि इट एत्त्वे च कृते ह [३०१२]एतीति ह्रस्वं न, तासिसाहचर्यादस्तेरपि व्यतिहे इत्यादौ सार्वधातुके एव ह एतीति ह्रस्वप्रवृत्तेरित्याहुः । भाविता । चिण्वदिट आभीयत्वेनासिद्धत्वाण्णिलोपः । पक्षे भावयिता । भाविष्यते, भावयिष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भाविषीष्ट, भावयिषीष्ट । अभावि । अभाविषाताम्, अभावयिषाताम् ॥ बुभूष्यते । बुभूषांचक्रे । बुभूषिता । बुभूषिष्यते ॥ बोभूय्यते ॥ यङ्लुगन्तात्तु बोभूयते । बोभवांचक्रे । बोभाविता, बोभविता ॥ [२३७७]अकृत्सार्वेति दीर्घः । स्तूयते विष्णुः । तुष्टुवे । स्ताविता, स्तोता । स्ताविष्यते, स्तोष्यते । अस्तावि । अस्ताविषाताम्, अस्तोषाताम् ॥ गुणोऽर्तीति [२१७३]गुणः । अर्यते । स्मर्यते । सस्मरे । परत्वान्नित्यत्वाच्च गुणे रपरे कृतेऽजन्तत्वाभावेऽप्युपदेशग्रहणाच्चिण्वदिट् । आरिता, अर्ता । स्मारिता, स्मर्ता ॥ गुणोऽर्तीत्यत्र[३१७३] नित्यग्रहणानुवृत्तेरुक्तत्वान्नेह गुणः । संस्क्रियते ॥ अनिदितामिति [५५७]नलोपः । स्रस्यते ॥ इदितस्तु नन्द्यते ॥ संप्रसारणम् । इज्यते ॥ [३५१]अर्थङिय क्ङिति ॥ शय्यते ॥

( ३६८३ ) [सू] तनोतेर्यकि । ६ । ४ । ४४ । आकारोऽन्तादेशो वा स्यात् । तायते, तन्यते । ये विभाषा[३०९७] । जायते, जन्यते ॥ ( ३६८४ ) [सू] तपोऽनुतापे च । ३ । १ । ६५ । तपश्च्लेश्चिण्न स्यात्कर्मकर्तर्यनुतापे च । अन्वतप्त पापेन[१] । पापं कर्तृ । तेनाभ्याहत इत्यर्थः । कर्मणि लुङ् । यद्वा—पापेन पुंसा कर्त्रा अशोचीत्यर्थः ॥ [३२७४]घुमास्थेतीत्त्वम् । दीयते ॥ धीयते ॥ आदेच [३१६३]इत्यत्रात्शितीति कर्मधारयादित्संज्ञकशकारादौ निषेधः । एश आदिशित्त्वाभावात्तस्मिन् आत्त्वम् । जग्ले ॥ ( ३६८५ ) [सू] आतो युक् चिण्कृतोः । ७ । ३ । ३३ । आदन्तानां युगागमः स्याच्चिणि ञिति णिति कृति च । दायिता, दाता । दायिषीष्ट, दासीष्ट । अदायि । अदायिषाताम् । [३१८२]स्थाघ्वोरिच्च । अदिषाताम् । अधायिषाताम्, अधि-

---

तशब्दे किम्, अभाविषाताम् ॥ **चिण्वदिट इति** । ण्यन्तस्य धातोरुपदेशाभावेऽप्युपदेशे योऽजिति व्याख्यानाच्चिण्वदिडिह प्रवर्तत एवेति भावः ॥ **परत्वादिति** । चिण्वदिडपेक्षया ॥ **नित्यत्वादिति** । न च कृते चिण्वदिटि वृद्धिप्रवृत्त्या गुणस्य नित्यत्वं नेति शङ्क्यम्, 'अचो ञ्णिति ३५९' इति वृद्धिं बाधित्वा परत्वाद्गुणे रपरत्वे च पश्चात् 'अत उपधायाः ३०४९' इति वृद्धिप्रवृत्त्या गुणस्य नित्यत्वानपायात् ॥ **उपदेशग्रहणादिति** । तत्सामर्थ्यादुपदेशे योऽच् तदन्तत्वम्, ऋधातोर्व्यपदेशिवद्भावेन यत्स्थितं तदादाय ण्यन्तादप्यारितेत्यादौ चिण्वदिट् प्रवर्तत इति भावः ॥ नन्वेवं स्मारितेत्यादि न सिध्येत्, स्मृ इत्यस्य उपदेशे योऽच् तदन्तत्वाभावात् । उपदेशेऽजन्तानामिति व्याख्याने तु ण्यन्तस्य न स्यादित्युक्तत्वादिति चेत् सत्यम्, अत एवापरितोषान्मनोरमायामुक्तम्—'अस्तु वा उपदेशे यदजन्तं तस्य' इति व्याख्यानम् । अङ्गस्येति व्यधिकरणषष्ठी । अङ्गावयवस्याजन्तस्येत्यर्थ इति । एवं च णिजन्तेऽपि शामितेत्यादौ चिण्वदिट् सिध्यति व्यपदेशिवद्भावेन णिजेव णिजन्तस्तदवयवकं शामीत्यङ्गमित्याश्रयणात् । आरिता स्मारितेत्याद्यपि सिध्यति । ऋधातुः स्मृधातुश्चोपदेशेऽजन्तस्तदवयवकं भवत्यार् स्मारित्यङ्गमिति दिक् ॥ **नित्यग्रहणानुवृत्तेरिति** । 'नित्यं छन्दसि ५४४' इति सूत्रात् । काशिकायां तु सुटो बहिरङ्गलक्षणस्यासिद्धत्वादभक्तत्वाद्वा संयोगादित्वमङ्गस्य नास्तीति गुणोऽत्र न प्रवर्तत इत्युक्तम् । 'सुट् कात्पूर्वः ३३८३' इति विधीयमानः कभक्तो न त्वङ्गभक्तः । तेनासंयोगाद्येव अङ्गमित्यभक्तत्वादित्यस्याशयः ॥ ( ३६८३ ) **तनोतेर्यकि** । 'विड्वनोः—३९८२' इति सूत्रादादिति, 'ये विभाषा ३०९७' इत्यतो विभाषेति चानुवर्तते । यकि किम्, तंतन्यते ॥ ( ३६८४ ) **तपोऽनु—** । चकारेण 'अचः कर्मकर्तरि ३६९७' इत्यतः कर्मकर्तरीत्येतदनुकृष्यते ॥ कर्मण्युदाहरणमिति ध्वनयति—**अभ्याहत इत्यर्थ इति** ॥ भावेऽपीदमुदाहरणमित्याह—**पापेन पुंसेति** । अविचार्य[४] कर्म कृत्वा पश्चादशोचीत्यर्थः । कर्मकर्तरि तु तत्प्रक्रियायामुदाहरिष्यति ॥ ( ३६८५ ) **आतो युक्—** । 'अचो ञ्णिति ३५९' इत्यतो ञ्णितीत्यनुवर्तते तच्च कृतो विशेषणं न तु चिणः, तस्य णित्त्वेनाव्यभिचारात् । चिण्कृतोः किम्, चौडिः । बालाकिः । बाह्वादित्वादिञ् ॥ ददौ । ञ्णितीति किम्, पानीयम् । दानीयम् ॥ **अदायिषातामिति** । 'स्थाघ्वोरिच्च ३१८२' इत्येतद्बाधित्वा परत्वाच्चिण्वदिटि कृते 'घुमास्था—३२७४' इतीत्त्वं न भवति, अजादित्वात् । 'स्थाघ्वोरिच्च ३१८२' इत्यपि पुनर्न भवति, अझलादित्वादित्याहुः ।

---

१ तपश्च्लेः स्थाने प्राप्तश्चिणनुतापे गम्ये यत्र निषिध्यते तत्र कर्मणि भावे वा लुङ् सम्भाव्यते इत्याशयेन प्रथमं कर्मणि लुङ् उदाहरणमाह—**अन्वतप्त पापेनेति** । अत्र तपधातुर्दुःखानुकूलव्यापारबोधकः । दुःखवत्त्वाच्चैत्रः कर्म ॥ **पापं कर्त्रिति** । पापनिष्ठो व्यापारश्चात्मधारणादिरूप इति फलव्यापारयोर्वैयधिकरण्यादयं सकर्मकः । पापदुःखयोर्जन्यजनकभावे पापनिष्ठात्मधारणमपि दुःखजनकम् । अत्र फलतावच्छेदकसम्बन्धोऽवच्छेदकता । तेन सम्बन्धेन दुःखस्य चैत्रनिष्ठत्वात्तस्य कर्मत्वम् । पापेन कर्त्रा दुःखित इत्यर्थः । यस्य दुःखमुत्पन्नं तेन 'अहमन्वतप्सि' इति प्रयुक्ते दुःखितगतोऽनुतापो गम्यते । यत्र त्वन्यदीयकार्श्यरोदनादिविषयकज्ञानोत्तरम् 'अयमन्वतप्त' इति दुःखितपुरुषादन्येन प्रयुज्यते, तदा प्रयोक्तुरनुतापो गम्यते ॥ **पापेन पुंसेति** । पापमस्यास्तीति विग्रहे पापशब्द अर्शआद्यजन्तः । कर्तरि तृतीया । अत्र दुःखानुभवानुकूलव्यापार एव धात्वर्थः । धात्वर्थसंगृहीतकर्मत्वेनायमकर्मकः । अशोचीत्यत्र शुच्धात्वर्थोऽपि स एव । अनुभवफलत्वं समवायसम्बन्धावच्छिन्नाश्रयतया । तदनुकूलो व्यापारश्च मनःसंयोगादिरूप एव । अशोचीत्यत्रापि भावे लुङ् ॥ ४ अत्रानुतापो यथा गम्यते तथाह—**अविचार्येति** ॥

घाताम् । [1]अघ्लायि ॥ हन्यते । अचिण्णलोरित्युक्तेर्हनस्तो न । हो हन्तेरिति कुत्वम् । घानिता, हन्ता । घानिष्यते, हनिष्यते । आशीर्लिङि वधादेशस्यापवादश्चिण्वद्भावः । आर्धधातुके सीयुटीति विशेषविहितत्वात् । घानिषीष्ट । पक्षे वधिषीष्ट । अघानि । अघानिषाताम्, अहसाताम् । पक्षे वधादेशः । अवधि । अवधिषाताम् । [2]अघानिष्यत, अहनिष्यत । न च स्यादिषु चिण्वदित्यतिदेशाद्वधादेशः स्यादिति वाच्यम्, अङ्गस्येत्यधिकारादाङ्गस्यैवातिदेशात् ॥ गृह्यते । चिण्वदिटो न दीर्घत्वम्, प्रकृतस्य वलादिलक्षणस्यैवेटो ग्रहोऽलिटीत्यनेन दीर्घविधानात् । ग्राहिता, ग्रहीता । ग्राहिष्यते, ग्रहीष्यते । ग्राहिषीष्ट, ग्रहीषीष्ट । अग्राहि अग्राहिषाताम्, अग्रहीषाताम् ॥ दृश्यते । अदर्शि । अदर्शिषाताम् । सिचः कित्त्वादम्न । अदृक्षाताम् ॥ गिरतेर्लुङि ध्वमि चतुरधिकं शतम् । तथा हि-चिण्वदिटो दीर्घो नेत्युक्तम् । अगारिध्वम् । द्वितीये त्विटि [3]वृतो वेति वा दीर्घः । अगरीध्वम्, अगरिध्वम् । एषां त्रयाणां लत्वं ढत्वं द्वित्वत्रयं चेति पञ्च वैकल्पिकानि । इत्थं षण्णवतिः । लिङ्सिचोरिति विकल्पितत्वादिडभावे उश्चेति कित्त्वम् । इत्वं रपरत्वं [4]हलि चेति दीर्घः । [5]इणः षीध्वमिति नित्यं ढत्वम् । अगीर्ढ्वम् । ढवमानां द्वित्वविकल्पे अष्टौ । उक्तषण्णवत्या सह संकलने उक्ता संख्येति ॥

( ३६८६ ) इड् दीर्घश्चिण्वदिड् लत्वं ढत्वं द्वित्वात्रिकं तथा । इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम् ॥ १ ॥

हेतुमण्ण्यन्तात्[6]कर्मणि लः । यक् । णिलोपः । शम्यते मोहो मुकुन्देन ॥ ( ३६८७ ) **चिण्णमुलोर्दीर्घोऽन्यतरस्याम्** । ६ । ४ । ९३ । चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् । प्रकृतो मितां ह्रस्व एव तु न विकल्पितः, ण्यन्तात्णौ [7]ह्रस्वविकल्पस्यासिद्धेः । दीर्घविधौ हि णिचो लोपो न स्थानिवदिति दीर्घः सिध्यति, ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम् ॥ भाष्ये तु पूर्वत्रासिद्धीये न स्थानिवदित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः ।

---

तेषामयमाशयः-'इको झल् ३४६९' इति सूत्रात् झलनुवर्तते, तथा च-झलादिरेव सिच् किन्न त्वयमिडादिः सिच् । एवं च तत्संनियोगशिष्टत्वादित्वमप्यत्र न भवतीति । वस्तुतस्तु-सत्यपि तस्मिन्नेह काचित्क्षतिः, सिचः कित्त्वेऽप्यनिग्लक्षणाया अनिषेधात् 'अचो ञ्णिति ३५९' इति वृद्ध्या रूपनिष्पत्तेः ॥ **आशीर्लिङीति** । न तु लुङि । तत्र चिण्वद्भावात् 'आत्मनेपदेष्वन्यतरस्याम् ३६१२' इति वधादेशस्यापि वैकल्पिकतया 'येन नाप्राप्ति-३५७३-२' न्यायाभावादिति भावः ॥ **आर्धधातुके सीयुटीत्यादि** । यद्यपि 'हनो वध लिङि ३२३९' इत्यत्रापि आर्धधातुकाधिकारादार्धधातुके लिङीत्यपि समानम्, तथापि-लिङीति पदद्वयसाधारणं, सीयुट् तु आत्मनेपद एवेति विशेषविहितत्वमस्तीति भावः ॥ **अहसातामिति** । चिण्वदिटोऽभावे 'हनः सिच् ३६१३' इति कित्वात् 'अनुदात्तोपदेश-३२३४' इत्यनुनासिकलोपः ॥ चिणि वधादेशस्य दृष्टत्वाच्चिण्वद्भावेन स्यादिषु प्राप्तिमाशङ्क्य परिहरति--**न चेत्यादिना** ॥ **अदर्शिषातामिति** । 'न दृशः ३३१०' इति क्सस्य निषेधादिह सिचि चिण्वदिट् ॥ **सिचः कित्त्वादिति** । 'लिङ्सिचावात्मनेपदेषु ३०७२' इत्यनेन ॥ **लत्वमिति** । 'अचि विभाषा ३३६९' इति गिरते रेफस्य लत्वे षट् ॥ **ढत्वमिति** । 'विभाषेटः ३१०४' इत्यनेन षण्णां ढत्वे द्वादश । **द्वित्वत्रयं चेति** । 'अनचि च ७५' इति द्वादशानां मध्ये षण्णां ढस्य षण्णां धस्य च द्वित्वे चतुर्विंशतिः । मय इति पञ्चमी यण इति षष्ठीति पक्षे वकारस्य द्वित्वे त्वष्टाचत्वारिंशत् । 'अनचि च ७५' इति मकारस्य द्वित्वे षण्णवतिः ॥ **ढवमानामिति** । 'अचो रहाभ्याम्-९०' इति ढस्य द्वित्वे द्वयम् । द्वयोरपि वस्य 'यणो मयः-८३' इति द्वित्वे चत्वारि । चतुर्णामपि मस्य 'अनचि च ७५' इति द्वित्वे त्वष्टौ ॥ ( ३६८७ ) **चिण्णमुलोः**—। शामितेत्यादौ 'जनीजॄष्-३१३९' इत्यादिना मित्त्वेन मितामुपधाया नित्यं ह्रस्वे प्राप्ते दीर्घोऽनेन विकल्प्यते ॥ **ण्यन्तात्णाविति** । णिलोपस्य स्थानिवत्त्वेन व्यवधानादिति भावः ॥ **दीर्घः सिध्यतीति** । 'न पदान्त-७८' इति निषेधादित्यर्थः ॥ ननु त्रिपादीस्थे दीर्घे कर्तव्ये स्थानिवत्त्वाभावः 'पूर्वत्रासिद्धम् २५' इत्यनेनैव सिद्ध इति दीर्घग्रहणस्योपयोगाभावेऽपि ण्यन्तात्णौ 'चिण्णमुलोः-३६८७'

---

१ **अघ्लायीति** । भावे लुङ्, तेनैकमेव रूपम् ॥ २ **घानिष्यत इति** । ननु चिण्वद्भावसंनियोगशिष्टे इटि कृते 'ऋद्धनोः स्ये' इतीट् पुनः कुतो नेति चेन्न, तत्र सूत्रे वलीमत्यनुवर्त्य वलादेः स्यस्येडित्यर्थेन प्राप्तेरभावात् । अत एव नित्यत्वाच्चिण्वदिडेव भवति ॥ ३ **कर्मणि ल इति** । शमूधात्वर्थो नाशानुकूलो व्यापारः । तत्र फलतावच्छेदकसम्बन्धः प्रतियोगिता । ततो हेतुमति णिचि कृते नाशानुकूलव्यापाराश्रयस्य 'गतिबुद्धि-' इति सूत्रेण शमूधातोस्कर्मकत्वात्कर्मत्वम् ॥ ४ **ह्रस्वविकल्पासिद्धेरिति** । अनेन प्रथमस्य णेर्लोपस्तस्य स्थानिवद्भावे सति चिण्परणिपरत्वं नास्तीति दर्शयति ॥

णाविति जातिपरो[1] निर्देशः दीर्घग्रहणं चेदं माऽस्तु[2] इति तदाशयः । शामिता, शमिता, शमयिता । शामिष्यते, शमिष्यते, शमयिष्यते । यङन्ताण्णिच् । शंशम्यते । शंशामिता, शंशमिता, शंशमयिता । यङ्लुगन्ताण्णिच्यप्येवम् । भाष्यमते तु यङन्ताच्चिण्वदिटि दीर्घो नास्तीति विशेषः । ण्यन्तत्वाभावे शम्यते मुनिना ॥ ( ३६८८ ) (सू) नोदात्तोपदेशस्य मान्तस्यानाचमेः । ७ । ३ । ३४ । उपधाया वृद्धिर्न स्याच्चिणि ञिति णिति कृति च । अशमि । अदमि । उदात्तोपदेशस्येति किम् । अगामि । मान्तस्य किम् । अवादि । अनाचमेः किम् । आचामि ॥ ( ३६८९ ) (वा) अनाचमिकमिवमीनामिति वक्तव्यम् ॥ णिचि आयादय इति णिङभावे—अकामि । णिङ्णिचोरप्येवम् । अवामि ॥ वध हिंसायाम् । हलन्तः । जनिवध्योरिति न वृद्धिः । अवधि ॥ जाग्रोऽविचिण्णल्ङित्स्वित्युक्तेर्न[3] गुणः । अजागारि ॥ ( ३६९० ) (सू) भञ्जेश्च चिणि । ६ । ४ । ३३ । नलोपो वा स्यात् । अभाजि, अभञ्जि ॥ ( ३६९१ ) (सू) विभाषा चिण्णमुलोः । ७ । १ । ६९ । लभेर्नुमागमो वा स्यात् । अलम्भि, अलाभि । व्यवस्थितविकल्पत्वात्प्रादेर्नित्यं नुम् । प्रालम्भि । द्विकर्मकाणां तु—

( ३६९२ ) गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ॥ बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥ १ ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥

गौर्दुह्यते पयः ॥ अजा ग्रामं नीयते । ह्रियते । कृष्यते । उह्यते ॥ बोध्यते माणवकं धर्मः, माणवको धर्ममिति वा ॥ देवदत्तो ग्रामं गम्यते ॥ अकर्मकाणां कालादिकर्मकाणां[3] कर्मणि भावे च लकार इष्यते । मासो मासं वा आस्यते देवदत्तेन । णिजन्तात्तु प्रयोज्ये प्रत्ययः । मासमास्यते माणवकः ॥ इति भावकर्मप्रक्रिया ॥

---

इति दीर्घे कर्तव्ये स्थानिवद्भावनिवारणाय दीर्घग्रहणमावश्यकमित्यत आह-**जातिपरो निर्देश इति** ॥ **इदं माऽस्त्विति** । ह्रस्वविकल्पेनापीष्टं सिध्यतीति भावः । वस्तुतस्तु-‘ चिण्णमुलोः-३६८७ ’ इति सूत्रे दीर्घग्रहणं कर्तव्यमेव । तथाहि-‘हेडृ अनादरे ’ घटादिः । मितां ह्रस्वे कर्तव्य एच इक् । हिडयति । अत्र चिण्णमुलोः कृतयोर्ह्रस्वे विकल्प्यमाने अहिडि अहेडि इति स्यात् । दीर्घे तु अहिडि अहीडीति भवति । एतच्चात्रैव सूत्रे कैयटे स्पष्टम् ॥ **शंशामितेत्यादि** । चिणि अशंशामि, अशंशामि । णमुलि शंशमंशंशमं, शंशामंशंशामामित्यादि द्रष्टव्यम् ॥ **दीर्घो नास्तीति** । यङोऽल्लोपस्य स्थानिवत्त्वेन णिच्परत्वाभावादुपधादीर्घस्योपधावृद्धेश्चाप्रवृत्तेः । तथा च-फलभेदाद्दीर्घग्रहणप्रत्याख्यानं न युज्यत इति भावः ॥ **शम्यते मुनिनेति** । अकर्मकत्वात् भावे लः ॥ **( ३६८८ ) नोदात्तोपदेशस्य-**। ञिति कृति-शमः । दमः । घञ् । णिति कृति-शमकः । दमकः । ण्वुल् । उपदेश इति किम् , शमी । दमी । इह घिनुणि कृते वर्ज्यमानस्वरेण उदात्तत्वाभावान्निषेधो न स्यात् । कथं तर्हि ‘ हरेर्यदक्रामि पदैककेन खम् ’ इति श्रीहर्षप्रयोग इति चेत् । अत्राहुः—निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिचि ततश्चिण् बोध्यः । तथा च णिचोऽकृत्त्वाद्वृद्धेरनिषेधः । मितामिति ह्रस्वस्तु न भवति, ‘वा चित्तविरागे ३४६०’ इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति घटादावुक्तत्वात् । किञ्च, ह्रस्वे जातेऽपि न क्षतिः । ‘ चिण्णमुलोः-३६८७ ’ इति दीर्घविकल्पनादिति । कथम् ‘ अड उद्यमे ’ ‘ यम उपरमे ’ इति प्रयोगः । संज्ञापूर्वकविधेरनित्यत्वाद् वृद्ध्यभाव इति ज्ञेयम् । अथवा उद्यमोपरमशब्दौ घञर्थे कविधानाद् बोध्यौ ॥ **णिङ्णिचोरप्येवमिति** । णिङन्ताण्णिजन्ताद्वा कर्मणिचिणि ‘णेरनिटि ३०८८’ इति णिलोपे सति रूपं तुल्यमिति भावः ॥ **( ३६९१ ) विभाषा-**। ‘लभेश्च ३४३४’ इत्यतो लभेरिति वर्तते । णमुलि लम्भंलम्भम्, लाभंलाभम् । प्रादेस्तु प्रलम्भंप्रलम्भमित्येव ॥ अथ ये द्विकर्मकास्तेषु लकृत्यक्तखलर्थाः किं मुख्ये कर्मणि, उत गौणे, किं वोभयोरिति संदेहे व्यवस्थामाह--**द्विकर्मकाणां त्विति** ॥ **( ३६९२ ) दुह्यादेरिति** । ‘दुह्याच्पच्-७७६’ इति श्लोके पूर्वार्धोपात्ता द्वादश दुह्यादयस्तेभ्यो गौणे कर्मणि लादयो मता इत्यन्वयः । ‘ अकथितं च ७७५ ’ इति सूत्रेण यस्य कर्मसंज्ञा तद्गौणम् ॥ ‘ गतिबुद्धि-७७९ ’ इति सूत्रेण ये द्विकर्मकास्तत्र व्यवस्थामाह—**बुद्धिभक्षार्थयोरिति** ॥ **निजेच्छयेति** । गौणे वा मुख्ये वा कर्मणीत्यर्थः । इह ‘ गतिबुद्धि-७७९ ’ इति सूत्रेण यस्य कर्मसंज्ञा तद् गौणम् ॥ **प्रयोज्येति** । अणौ कर्तुर्णौ कर्मसंज्ञा यस्य तत्प्रयोज्यकर्म ॥ **अन्येषामिति** । गत्यर्थाकर्मक-

---

१ **जातिपर** इति । अत्र नागेशः प्रदीपोद्द्योते-‘व्याकृतिनिर्देशात् ’ इति तु चिन्त्यम् , जातेः पौर्वापर्याभावेन चिण्णमुल्पर इति विशेषणासंगत्या जातिग्रहणस्य वक्तुमशक्यत्वात् ॥ इति ॥ तद् **‘निपात एकाच्-’** इति सूत्रस्थया **‘जातिग्रहणम्’** इत्यस्य ‘तज्जात्याश्रयानेकव्यक्तिग्रहणम्’ इति स्वोक्त्या **“न ह्या कृतिपदार्थस्य द्रव्यं न पदार्थः”** इति भाष्येण च विरुद्धत्वाद् चिन्त्यमेव ॥ तस्मादत्र खण्डनस्यैव करणीयत्वे **‘ वर्णग्रहणे जातिग्रहणम् ’** इत्यनया वर्णसमुदायग्रहणे जातिग्रहणाभाव इत्येव वाच्यम् ॥ २ अयमपपाठः-आहिडि, अहीडीति रूपार्थं तस्यावश्यकत्वात् ॥ परं च हेडधातोर्घटादिषु पाठोऽनार्ष इति तत्रैवोक्तमिति विभावनायां ‘मा स्तु’ इति सम्यगेव ॥ ३ कालादिकर्मसत्त्वे कथमकर्मकत्वमिति तु न भ्रमितव्यम्, गतीत्यादिसूत्रे कालादिव्यतिरिक्तकर्मसत्त्वे एव सकर्मकत्वव्यवहारात्, तदसत्त्वे तु न सकर्मकतेत्यङ्गीकारात् ॥

## अथ कर्मकर्तृप्रक्रिया ।

यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते, स्वव्यापारे स्वतन्त्रत्वात् । तेन पूर्वं करणत्वादिसत्त्वेऽपि संप्रति कर्तृत्वात्कर्तरि लकारः । साध्वसिश्छिनत्ति । काष्ठानि पचन्ति । स्थाली पचति । कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकास्तेभ्यो भावे कर्तरि च लकाराः । पच्यते ओदनेन । भिद्यते काष्ठेन । कर्तरि तु-॥(३६९३) **कर्मवत्कर्मणा तुल्यक्रियः**।३।१।८७। कर्मस्थया क्रियया तुल्यक्रियः [लकारवाच्यश्च] कर्ता कर्मवत्स्यात् । कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । कर्तुरभिहितत्वात्प्रथमा । पच्यते ओदनः । भिद्यते काष्ठम् । अपाचि । अभेदि । ननु भावे लकारे कर्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न, लकारवाच्य एव कर्ता कर्मवत् ( व्यत्ययो बहुलँ-) ल्लिङ्याशिष्यङ्ङिति द्विलकारकात् इत्यनुवृत्तेः । भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेः । अत एव कृत्यक्तखलर्थाः कर्मकर्तरि न भवन्ति, किंतु भावे एव । भेत्तव्यं कुसूलेन । ननु पाचि-

---

हकरोतीनाम् ॥ **ल्लादय इति** । कृत्यक्तखलर्था आदिशब्देन ग्राह्याः ॥ **गौर्दुह्यते इति** । देवदत्तेनेति शेषः । कृत्यादिषु गौर्दोग्धव्या दोहनीया पयः । गौः सुदोहा दुर्दोहा पयः । अजा ग्रामं नेतव्या । नयनीया । हर्तव्या । हरणीया । अजा ग्रामं नेया इत्याद्युदाहर्तव्यम् ॥ **ग्रामं गम्यत इति** । यज्ञदत्तेनेत्यध्याहारः ॥ **माणवक इति** । अयं प्रयोज्यः कर्ता देवदत्तेनेति प्रयोजकस्त्वध्याहर्तव्यः ॥ इति भावकर्मप्रक्रिया ॥

**कर्मणस्त्विति** । सौकर्यातिशयं द्योतयितुमित्यनुषङ्गः ॥ **प्रायेणेति** । ये भिदिच्छिदिप्रभृतय एककर्मकास्ते अकर्मकाः, ये तु द्विकर्मकास्ते सकर्मका इति भावः । अकर्मकत्वस्य फलमाह--**भावे कर्तरि चेति** । 'भावे चाकर्मकेभ्यः' इत्युक्तत्वादिति भावः । 'द्विकर्मकेषु कर्मणः कर्तृत्वविवक्षायामुदाहरणम् 'मथ्नाति सागरोऽमृतम्' 'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी' इति । प्रदुग्धे इत्यत्र 'कर्मवत्कर्मणा-३६९३' इति प्राप्तस्य 'सकर्मकाणाम्-३६९४' इति निषेधे 'दुहिपच्योः-३६९५' इति प्रतिप्रसूतस्य यको 'न दुहस्नुनमाम्-३६९६' इति निषेधः । उक्तप्रयोगानुरोधात् द्विकर्मकेषु गौणस्यैव कर्मणः कर्तृत्वविवक्षा न मुख्यस्येत्याहुः । तच्चिन्त्यम्, अजां ग्रामं नयतीत्यत्र मुख्यकर्मणः कर्तृत्वविवक्षादर्शनात् । अत्रेदमवधेयम्-अधिकरणत्वाविवक्षायां व्रजो गौणकर्मेति रुणद्धि व्रजो गां स्वयमेवेति भवति, यदा तु व्रजस्य न कर्मत्वं तदा मुख्यकर्मणोऽपि कर्तृत्वविवक्षा भवति-रुध्यते व्रजे गौः स्वयमेवेति । तथा गोरपादानत्वाविवक्षायां गोर्दुह्यते पयः स्वयमेवेत्यादि ॥ ( ३६९३ ) **कर्मवत्कर्मणा**— । वत्करणं किमर्थम्, यथा अब्रह्मदत्ते प्रयुज्यमानो ब्रह्मदत्तशब्दः ब्रह्मदत्तवदित्यर्थं वदति तथा कर्मेत्युच्यमानेऽपि कर्मवदित्यर्थलाभात् । सत्यम्, 'कर्मणा तुल्यक्रियः कर्ता कर्म' इत्युच्यमाने कर्मसंज्ञक इत्यर्थः स्यात् । तथा हि सति अकर्मकव्यपदेशाभावाद् भावे लकारो न स्यात् । किंतु कर्मणि स्यात् । पच्यते ओदनः भिद्यते काष्ठमिति । यद्यप्ययं प्रयोगः सिद्धान्ते इष्ट एव, तथापि पच्यते ओदनेन भिद्यते काष्ठेनेति भावे न स्यादिति बोध्यम् ॥ कर्मशब्देनात्र कर्मस्थक्रिया लक्ष्यत इत्याह—**कर्मस्थयेति** । कर्मकारकस्थयेत्यर्थः ॥ 'कर्तरि शप् २९२१' इत्यतः कर्तरीत्यनुवर्त्य प्रथमया विपरिणम्यते स च विशेष्यस्तदाह—**तुल्यक्रियः कर्तेति** ॥ **कार्यातिदेशोऽयमिति** । यद्यपि शास्त्रातिदेशेऽपि लक्ष्यं सिध्यति, तथापि शास्त्रस्यापि कार्यार्थतया मुख्यत्वात्कार्यातिदेश एवाश्रितः ॥ **भावे लकारे इति** । तत्र कर्तुरनभिहितत्वादिति भावः ॥ **द्विलकारकादिति** । 'व्यत्ययो बहुलँल्लिङ्याशिष्यङ्' इति संहितया पाठेऽनुस्वारस्य परसवर्णेन जाते लकारे तस्योपरि लद्वयमित्यर्थः । तेन लकारवाच्यः कर्ता कर्मवदित्यर्थलाभाद्यगादिकमेव भवति, न तु द्वितीयेत्यभिमतसिद्धिः ॥ यत्र लकारवाच्यः कर्ता तत्रैव कर्मवत्त्वमिति व्युत्पादनस्य फलमाह—**अत एवेति** ॥ **न भवन्तीति** । लकारेणैव कर्मकर्तुरुपस्थानात्कृत्यादीनां प्रसक्तिर्नास्ति, उक्तार्थानामप्रयोगात् । लविधेः पूर्वं तु सुतरां नास्ति, लकारोपस्थाप्यकर्तुरभावेन कर्मवत्त्वाभावादिति भावः । अत्रेदं बोध्यम्-कृत्यक्तखलर्था इत्यत्र क्तग्रहणं त्यक्तुमुचितं, तस्य कर्मकर्तरि इष्टत्वात् भिन्नः कुसूलः स्वयमेवेति । वक्ष्यति च स्वयमपि 'सिनोतेर्ग्रासकर्मकर्तृकस्य ४०२९' इति वार्तिके सिनो ग्रासः स्वयमेवेति । ननु 'गत्यर्थाकर्मक-४१०४' इत्यत्राविवक्षितकर्माणोऽकर्मका इति न गृह्यन्ते, दत्तवान् पक्वान् इत्यर्थे दत्तः पक्व इत्यापत्तेरिति चेत् । अत्राहुः-'सिनोतेर्ग्रासकर्मकर्तृकस्य ४०२९' इति निष्ठातकारस्य नकारविधानसामर्थ्यादविवक्षितकर्माणोऽपि क्वचित् गृह्यन्ते । अन्यथा निष्ठातकारस्तत्र न लभ्येत, तेन सिनो ग्रासः स्वयमेव, भिन्नः कुसूलः स्वयमेवेत्यादि सङ्गच्छते इति । अत्र केचिद्वदन्ति—लकारवाच्यस्यैव कर्तुः कर्मवत्त्वे 'कर्मवत्कर्मणा-३६९३' इत्यत्र वद्ग्रहणं व्यर्थम् । न च कर्तुः कर्मसंज्ञायां भावे लकारो न स्यादित्युक्तमिति वाच्यम्, कर्मणः कर्तृत्वविवक्षायां धातुरकर्मक इत्यकर्मकात्कर्तरीव भावे लकारस्य निर्बाधत्वात् । लकारवाच्यस्य कर्मसंज्ञायामपि केवलकर्तुस्तदनभ्युपगमात् । न हि भावे लकारः कर्तारं वक्ति । न च

---

१ **द्विलकारकादिति** । द्वौ लकारौ यस्मिन् सूत्रे तस्मादित्यर्थः । तच्च लुप्तषष्ठीकलकारसहितं 'ल्लिङ्याशिष्यङ्' इति सूत्रम् । 'बहुलं लिङि' इत्यवस्थायां जातस्य लकाररूपपरसवर्णस्य द्वित्वेन, अनुस्वारद्वित्वे परसवर्णद्वयेन वा नात्र लकारत्रयसंयोगः किन्तु 'बहुलं ऌ लिङि' इति लुप्तषष्ठीकलकारो निर्दिष्ट इति द्विपदमनेकोपलक्षणमेवेति भावः ॥

॥ तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं तुल्यत्वम् ॥

भिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनं च, सैवेदानीं कर्तृस्था न तु तत्तुल्या। सत्यम्, कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्य तुल्यत्वव्यवहारः ॥ कर्मणेति किम् । करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा भूत्। किञ्च, कर्तृस्थक्रियेभ्यो मा भूत्। गच्छति ग्रामः। आरोहति हस्ती। 'अधिगच्छति शास्त्रार्थः स्मरति श्रद्धाति च' । यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया नेतरत्र। न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते ॥ करोतिरुत्पादनार्थः । उत्पत्तिश्च कर्मस्था । तेन कारिष्यते घट इत्यादि । यत्नार्थत्वे तु नैतत्सिध्येत्, ज्ञानेच्छादिवद्यत्नस्य कर्तृस्थत्वात् । एतेन अनुव्यवस्यमानेऽर्थे इति व्याख्यातम्। कर्तृस्थत्वेन यगभावाच्छ्यनि कृते ओलोपे च रूपसिद्धेः। ताच्छील्यादावयं चानश् न त्वात्मनेपदम् ॥ (३६९४) वा॰ सकर्मकाणां प्रतिषेधो वक्तव्यः ॥ अन्योन्यं स्पृशतः । अजा ग्रामं नयति॥

---

वत्करणाभावे कर्तुः कर्मसंज्ञायां कर्तृव्यपदेशाभावात् नमते दण्ड इत्यत्र 'न दुहस्नुनमाम्-३६९६' इति यको निषेधेऽपि शप् न स्याद्वत्करणे कृते तु कर्तृकार्यमपि स्यादिति वाच्यम्, एकसंज्ञाधिकारादन्यत्र संज्ञाद्वयसमावेशादिष्टसिद्धेरिति ॥ न तु तत्तुल्येति । तुल्यत्वं हि सादृश्यम्, तच्च भेदनिबन्धनम् । न च प्रकृते भेदोऽस्ति कर्मणः कर्तृत्वविवक्षायां कर्मस्थफलरूपक्रियाया एव कर्तृस्थत्वात् । तथा च सूत्रमिदमसमञ्जसमिति भावः ॥ वास्तविकभेदाभावेऽप्यौपाधिकभेदोऽस्तीत्याह—**कर्मत्वेति** । कर्मत्वकर्तृत्वावस्थयोर्भेदस्तद्धेदौपाधिकमवस्थाभेदसमानाधिकरणं क्रियाभेदमाश्रित्येत्यर्थः । एवं चावस्थाभेदेन क्रियाभेदात्कर्मस्थक्रियातुल्यक्रियत्वं कर्तुरस्तीति भावः ॥ **करणाधिकरणाभ्यामिति** । 'तुल्यक्रियः कर्ता' इत्येतावत्युच्यमाने असिना छिनत्ति, स्थाल्यां पचतीत्यादौ करणाधिकरणयोर्यो व्यापारः स एवेदानीमसिश्छिनत्ति, स्थाली पचतीत्यादौ कर्तृस्थ इत्यतिप्रसङ्गः स्यात् तन्मा भूदित्यर्थः । न च कर्मत्वावस्थायां विक्लित्त्यादिरिव करणत्वाद्यवस्थायामपि असिस्थाल्योर्व्यापारो वस्तुतः सन्नपि धातुना नोपात्त इति कथमतिप्रसङ्ग इति वाच्यम्, सादृश्यप्रतियोगिक्रियाया धातूपात्तत्वेनाविशेषितत्वात् । न ह्येतस्मिन्सूत्रे धातूपात्तक्रियया तुल्यक्रिय इत्युक्तमस्ति येनातिप्रसङ्गो न भवेत् ॥ ननु 'तुल्यक्रियः कर्ता कर्मवद्भवति' इत्युक्ते केनेत्याकाङ्क्षायामनेककारकोपस्थितावपि कर्मवदिति प्रत्यासत्त्या कर्मणेति लभ्यत एवेत्यत आह—**किञ्चेति** । 'अधिगच्छति—' इत्यादिश्लोकस्योत्तरार्धं तु—'यत्कृपावशतस्तस्मै नमोऽस्तु गुरवे सदा' ॥ ननु फलं व्यापारश्च धात्वर्थः स एव क्रियाशब्दवाच्यः । तत्र व्यापाराश्रयः कर्ता फलाश्रयस्तु कर्म । एवं च पचिभिदिप्रभृतीनां गमिरुहिप्रभृतीनां च सकर्मकत्वे फलस्य कर्मनिष्ठत्वे च तुल्ये कर्तृस्थभावका गम्यादय इति कथं ज्ञातव्या इत्यत आह—**यत्र कर्मणीति** ॥ **ग्रामेष्विति** । आरूढानारूढहस्तिषु अधिगतानधिगतशास्त्रार्थेष्वित्यादावपि वैलक्षण्यं नोपलभ्यत इति बोध्यम् ॥ **कारिष्यत इति** । 'स्यसिच्सीयुट्–३६८१' इति वैकल्पिकश्चिण्वदिट् । पक्षे 'ऋद्धनोः स्ये३१५९' इति इट् । करिष्यते । एवं लृङि अकारिष्यत, अकरिष्यत । सिचश्चिण्वदिटि अकारिष्ट । पक्षे अकृत । सीयुटश्चिण्वदिटि कारिषीष्ट। पक्षे कृषीष्ट । तासि तु कारिता, कर्ता । यक्चिणोस्तु क्रियते घटः स्वयमेव । अकारीत्यादि ॥ **नैतत्सिध्येदिति** । 'कर्मवत्कर्मणा–३६९३' इति कर्मवत्त्वं न सिध्येदित्यर्थः । एतेन पचति पाकं करोतीति विवरणादाख्यातस्य यत्ने शक्तिरिति नैयायिकोक्तिः परास्ता । करोतेर्यत्नार्थत्वे तु यतते इतिवत्सकर्मकताऽपि न स्यादिति ॥ **एतेनेति** । ज्ञानस्य कर्तृस्थत्वाभ्युपगमेनेत्यर्थः ॥ **यगभावादिति** । सति तु यक्यनुव्यवसीयमान इति स्यादिति भावः ॥ **ओल्लोप इति** । 'ओतः श्यनि ३३२९' इत्यनेन ॥ ननु कर्मवत्त्वाभावे कथमिह शानजित्यत आह—**ताच्छील्यादाविति** ॥ **न त्विति** । 'शानच् न भवतीत्यर्थः ॥ ( ३६९४ ) देवदत्तयज्ञदत्तावन्योन्यं स्पृशत इत्यत्र तयोरेव कर्मत्वं कर्तृत्वं चास्तीति कर्मस्थक्रियायाः कर्तृस्थत्वात्कर्मवद्भावप्राप्तिमाशङ्क्याह—**सकर्मकाणामिति** । न चात्र देवदत्तो यज्ञदत्तं स्पृशति यज्ञदत्तस्तु देवदत्तमिति क्रियाभेदोऽवश्यमाश्रयितव्यः । तथा च—स्वनिष्ठां क्रियां प्रति कर्तृत्वम् इतरक्रियां प्रति तु कर्मत्वं भवति । अन्यथा द्वयोरपि कर्तृत्वमेव स्यात्, इमौ गङ्गां स्पृशत इत्यत्र यथा । एवं च कर्मस्थक्रियायाः कर्तृस्थत्वाभावात्कर्मवद्भावो न प्राप्नोति। न च संयोगस्य द्विष्ठत्वात्कर्मस्थफलस्य कर्तृस्थत्वाचास्त्येवेति शङ्क्यम्, तत्तन्निरूपितसंयोगस्य भिन्नत्वात् । अन्यथा फलव्यापारयोरेकाश्रयत्वे सकर्मकत्वमेव न लभ्येत ॥ किञ्च, रुहिगम्योः कर्तृस्थक्रियत्वादारोहति हस्ती, गच्छति ग्राम इत्यत्र कर्मवद्भावो नेति भाष्यकैयटादिसंमतम् । तथा च संयोगरूपफलस्य सर्वत्र तुल्यतया रुहिगमिभ्यां स्पृशेर्वैषम्यं दुरुपपादमिति नात्र कर्मवत्त्वप्रसक्तिरित्युदाहरणान्तरमाह—**अजेति** ॥ **ग्रामं नयतीति** । इह प्रतिषेधाभावे यक् स्यात्, क्रियाफलस्याकर्तृगामित्वेऽप्यात्मनेपदं स्यादिति भावः । नन्विहापि कर्मणि क्रियाकृतो विशेषो नोपलभ्यत इति कर्मस्थक्रियत्वं दुरुपपादमिति चेत् । अत्राहुः—क्रियाकृतविशेषोपलम्भानुपलम्भवदुद्देश्यताऽपि नियामिका । यत्र कर्मस्थांशस्योद्देश्यता सा कर्मस्थक्रिया, यत्र तु व्यापारांशस्य सा कर्तृस्थेति । तथा हि—दर्शनारोहणाभ्यां विषये

---

१ **अजा ग्रामं नयतीति** । अत्र नयतेर्द्विकर्मकतया अजारूपकर्मणः कर्तृत्वविवक्षायां कर्मस्थया क्रियया तुल्यक्रियत्वसत्त्वात् प्राप्तः कर्मवद्भावो ग्रामरूपकर्मणा सकर्मकत्वात् निषिध्यत इति भावः॥ २ 'सादृश्यमुपमाभेदे' इत्यत्र भेदशब्दस्य 'नञिवयुक्तमन्यसदृशाधिकरणे' इत्यत्रान्यशब्दस्य चोपादानेन सादृश्यं न भेदघटितम्, अत एव बाधातोर्धातुसंज्ञेति मञ्जूषायां विस्तरः ॥

**( ३६९५ ) (वा) दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्** ॥ **( ३६९६ ) (सू) न दुहस्नुनमां यक्चिणौ** । ३ । १ । ८९ । एषां कर्मकर्तरि यक्चिणौ न स्तः । दुहेरनेन यक एव निषेधः । चिण् तु विकल्पिष्यते । शल्लुक् । गौः पयो दुग्धे ॥ **( ३६९७ ) (सू) अचः कर्मकर्तरि** । ३ । १ । ६२ । अजन्तात् च्लेश्चिण् वा स्यात्कर्मकर्तरि तशब्दे परे । अकारि, अकृत ॥ **( ३६९८ ) (सू) दुहश्च** । ३ । १ । ६३ । अदोहि । पक्षे क्सः । लुग्वेति पक्षे लुक् । अदुग्ध, अधुक्षत । उदुम्बरः फलं पच्यते ॥ **( ३६९९ ) (वा) सृजियुज्योः श्यंस्तु** ॥ अनयोः सकर्मकयोः कर्ता बहुलं कर्मवत् यगपवादश्च श्यन्वाच्य इत्यर्थः ॥ **( ३७०० ) (वा) सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्** ॥ सृज्यते स्रजं भक्तः । श्रद्धया निष्पादयतीत्यर्थः । असर्जि ॥ युज्यते ब्रह्मचारी योगम् ॥ **( ३७०१ ) (वा) भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्** ॥ भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वाच्यमित्यर्थः । अलंकुरुते कन्या । अलमकृत । अवकिरते हस्ती । अवाकीर्ष्ट ॥ गिरते । अगीर्ष्ट ॥ आद्रियते । आदृत ॥ किरादिस्तुदाद्यन्तर्गणः ॥ चिकीर्षते कटः । अचिकीर्षिष्ट । इच्छायाः कर्तृस्थत्वेऽपि करोतिक्रियापेक्षमिह कर्मस्थक्रियत्वम् ॥ **( ३७०२ ) (सू) न रुधः** । ३ । १ । ६४ । अस्मात् च्लेश्चिण्न । अवारुद्ध गौः । कर्मकर्तरीत्येव । अवारोधि गौर्गोपेन ॥ **( ३७०३ ) (सू) तपस्तपःकर्मकस्यैव** । ३ । १ । ८८ । कर्ता कर्मवत्स्यात् । विध्यर्थमिदम्[2] । एवकारस्तु व्यर्थ एवेति वृत्त्यनुसारिणः । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । तपोऽनुतापे[३६८४] चेति चिण्निषेधात्सिच् । अतप्त ॥ तपःकर्मकस्येति किम् । उत्तपति सुवर्णं सुवर्णकारः ॥ न [३६०६] दुहस्नुनमां यक्चिणौ ॥ प्रस्नुते । प्रास्नाविष्ट, प्रास्नोष्ट । नमते[3] दण्डः । अनंस्त । अन्तर्भावितण्यर्थोऽत्र नमिः ॥

---

न्यग्भूते च विशेषानुपलम्भात्कर्तृस्थता, उद्देशानुरोधाच्च । अहं पश्येयमित्युद्देशः, न त्वयं विषयो भवत्विति । एवमहमुपरि गच्छेयमित्युद्देशः न तु हस्तिनो न्यग्भावो भवत्विति । ऊर्ध्वदेशसंयोगानुकूलव्यापारविशेष उपरि गमनं तदेव रुहेरर्थः न तु न्यग्भावमात्रम् । वृक्षस्य शाखां हस्ताभ्यामवनमयत्यपि भूमिष्ठे पुरुष आरोहतीत्यप्रयोगात् । अत एव हि 'यद्वि तु परं छन्दसि' इत्यत्र भाष्यं 'रुहिर्गत्यर्थः' इति । अत एव चारोहन्ति हस्तिनं हस्तिपकास्तानारोहयति महामात्र इत्यादिप्रयोगेष्वणौ कर्तुर्णौ कर्मत्वं संगच्छते । पचिभिद्योस्तु विक्लित्तिर्द्विधाभवनरूपो विशेषः कर्मणि दृष्टस्तदुद्देशेनैव कारकव्यापार इति कर्मस्थक्रियत्वात्पच्यते ओदनः, भिद्यते काष्ठमित्यत्र कर्मवद्भावो भवत्येव । अजा ग्रामं नयतीत्यत्रापि कर्मस्थांशस्य संयोगस्योद्देश्यता, न तु व्यापारांशस्येति कर्मवद्भावे प्राप्ते प्रतिषेधोऽयमावश्यक इति दिक् ॥ ( ३६९५ ) **दुहिपच्योरिति**[1] । द्विकर्मकत्वादनयोरेकस्य कर्मणः कर्तृत्वविवक्षायामपि सकर्मकत्वान्निषेधे प्राप्तेऽयमारम्भः ॥ ( ३६९६ ) **गौः पयो दुग्धे इति** । अत्र कर्मवद्भावेनात्मनेपदं नित्यम् । 'गौणे कर्मणि दुह्यादेः' इत्युक्तत्वात् मुख्यकर्मणः कर्तृत्वविवक्षायां पयो गां दुग्धे इति नोदाहृतमित्याहुः । एवं च 'प्रधाने नीहृकृष्वहाम्' इत्युक्तत्वात् तुल्यन्यायेन न्यादीनां मुख्यकर्मण एव कर्तृत्वविवक्षेति फलितम् ॥ ( ३६९७ ) **अचः कर्म-** । 'चिण् ते पदः ३३३२' इत्यतश्चिण्तेशब्दावनुवर्तेते, 'दीपजन—३१०८' इत्यतोऽन्यतरस्यामिति च तदाह—**अजन्तादित्यादि** । अचः किम्, अभेदि काष्ठम् । अत्र नित्यं चिण् । कर्मकर्तरि किम्, अकारि घटः कुलालेन । अत्रापि नित्यमेव ॥ ( ३६९८ ) **दुहश्च** । कर्मकर्तरीत्येव । अदोहि गौर्गोपेनेत्यत्र तु नित्यम् ॥ **उदुम्बरः फलमिति** । कालः उदुम्बरं फलं पचतीति स्थिते—गौणकर्मण उदुम्बरस्य कर्तृत्वविवक्षायामिह कर्मवद्भावः । ननु द्विकर्मकेषु पचेरप्रामाणिकः पाठ इति ये वदन्ति तेषामयं ग्रन्थः कथं संगच्छत इति चेत् । अत्राहुः—उदुम्बरः फलं पचतीत्यत्र 'कर्मवत्कर्मणा—३६९३' इत्यस्याप्राप्तौ दुहिपच्योरित्यनेन कर्मवद्भावो बहुलं विधीयते, सृजियुज्योरिवेति न काप्यनुपपत्तिरिति ॥ ( ३६९९ ) **सृजियुज्योश्श्यंस्तु** । श्यनो नित्त्वमाद्युदात्तार्थम्, यकि तु 'तास्यनुदात्तेत्—५६९५' इत्यादिना लसार्वधातुकानुदात्तत्वे कृते यक उदात्तत्वं श्रूयेत ॥ ( ३७०० ) **श्रद्धोपपन्न इति** । अश्रद्धायुक्ते कर्तरि तु यगेव ॥ ( ३७०१ ) **भूषाकर्मेति** । कर्मशब्दः क्रियावाचीत्याह—**भूषावाचिनामिति** ॥ **अन्यत्रेति** । आत्मनेपदादन्यस्य निषेधः आत्मनेपदमेव भवतीत्यर्थस्तदेतदाह—**यक्चिणाविति** ॥ **अवाकीर्ष्टेति** ॥ 'लिङ्सिचौ—३०७३' इति वेट् ॥ **आद्रियत इति** । तुदादित्वाच्छे 'रिङ् शयग्लिङ्क्षु ३१६०' इति रिङि इयङ् ॥ **आदृतेति** । 'उश्च ३१६१' इति कित्त्वम् । 'ह्रस्वादङ्गात् ३१६२' इति सिचो लोपः ॥ ( ३७०२ ) **न रुधः** । 'चिण् ते पदः ३३३२' इत्यतश्चिणनुवर्तते ॥ 'अचः कर्मकर्तरि ३६९७' इत्यतोऽनुवर्तनादाह—**कर्मकर्तरीत्येवेति** ॥ ( ३७०३ ) **अतप्तेति** । तपस्तापस इत्यनुषज्यते ॥ [ ३६९६ ] **न दुहस्नु-** । ननु दोग्धिपर्यायत्वेन स्नौतेरपि द्विकर्मकत्वाद्गोरूपकर्मणः कर्तृत्वविवक्षायामपि पयोरूपकर्मणो

---

१ **दुहिपच्योरिति** । दुग्धे गौः पयः स्वयमेवेत्यत्र गोकर्मणः कर्तृत्वविवक्षायां द्रवद्रव्यवृत्तिविभागानुकूलव्यापारमात्रं धात्वर्थः । गोः कर्तृत्वेऽपि पयसः कर्मणः सत्त्वान्निषेधे प्राप्ते वचनम् ॥ २ **विध्यर्थमिति** । उपवासादितपस्तापसं तपति, दुःखयतीत्यर्थः । एवं च तापसस्य कर्मत्वे तेपर्दुःखजननमर्थः । कर्तृत्वे स्वर्जनमर्थः । तापसस्तपस्तप्यते अर्जयतीत्यर्थः । एवं च क्रियाभेदात्सकर्मकत्वाच्चाप्राप्ते विधिरिति भावः ॥ ३ **नमत इति** । एतेन कोटिद्वयस्य 'लाभेऽपि लक्षाय नमते धनुः' इत्यपि व्याख्यातम् ॥

(३७०४) वा॰ यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम् ॥ कारयते । अचीकरत ॥ उच्छ्रयते दण्डः । उदशिश्रियत । चिण्वदिट् तु स्यादेव । कारिष्यते । उच्छ्रायिष्यते ॥ ब्रूते कथा । अवोचत ॥ भारद्वाजीयाः पठन्ति—॥ ( ३७०५ ) वा॰ णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् ॥ पुच्छमुदस्यति—उत्पुच्छयते गौः । अन्तर्भावितण्यर्थतायाम्—, उत्पुच्छयते गाम् । पुनः कर्तृत्वविवक्षायाम्—उत्पुच्छयते गौः । उदपुपुच्छत । यक्चिणोः प्रतिषेधाच्छप्चङौ । श्रन्थिग्रन्थ्योराधृषीयत्वाण्णिजभावपक्षे ग्रहणम् । ग्रन्थति ग्रन्थम् । श्रन्थति मेखलां देवदत्तः । ग्रन्थते ग्रन्थः । अग्रन्थिष्ट । श्रन्थते । अश्रन्थिष्ट । क्रैयादिकयोस्तु—श्रथीते ग्रथीते स्वयमेव । विकुर्वते सैन्धवाः । वल्गन्तीत्यर्थः । वेः शब्दकर्मणो[३६२७]ऽकर्मकाच्च[२३२८] इति तङ् । अन्तर्भावितण्यर्थस्य पुनः प्रेषणत्यागे—विकुर्वते सैन्धवाः । व्यकारिष्ट । व्यकारिषाताम् । व्यकारिषत । व्यकृत । व्यकृषाताम् । व्यकृषत ॥ ( ३७०६ ) सू॰ कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च । १ । ३ । ९० । अनयोः कर्मकर्तरि न यक् किन्तु श्यन्परस्मैपदं च । आत्मनेपदापवादः । कुष्यति, कुष्यते पादः स्वयमेव । रज्यति, रज्यते वस्त्रम् । यगविषये तु नास्य प्रवृत्तिः । कोषिषीष्ट । रंक्षीष्ट ॥ इति कर्मकर्तृप्रक्रिया ॥

---

## अथ लकारार्थप्रक्रिया ।

( ३७०७ ) सू॰ अभिज्ञावचने लृट् । ३ । २ । ११२ । स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात् । लङोऽपवादः । स्मरसि कृष्ण गोकुले[१] वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादियोगेऽपि, तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसंभवात् ॥ ( ३७०८ ) सू॰ न यदि । ३ । २ । ११३ । यद्योगे उक्तं न । अभिजानासि कृष्ण यद्वने[२] अभुञ्ज्महि ॥ ( ३७०९ ) सू॰ विभाषा साकाङ्क्षे । ३ । २ । ११४ । उक्तविषये लृड्वा स्यात् लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः । स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः । वासो लक्षणं,चारणं लक्ष्यम् । पक्षे लङ् । यच्छब्द-

---

विद्यमानत्वात्सकर्मकाणां प्रतिषेधेन यक्चिणोः प्राप्तिरेव नास्तीति चेत् । अत्राहुः—वत्सादियोगेन क्षीरप्रस्रवणानुकूला उत्कण्ठा स्नुधातोरर्थः । सा च गोनिष्ठा । 'स्नु प्रस्रवणे' इत्यत्रापि करणे ल्युट् । प्रस्नूयतेऽनेनेति प्रस्रवणं सा चोत्कण्ठा । 'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी' इति प्रयोगे उपस्नुता उत्कण्ठितेत्यर्थः । वत्सो गां प्रस्नौति उत्कण्ठयति । अन्तर्भावितण्यर्थोऽत्र स्नौतिः । गोः कर्तृत्वविवक्षायां प्रस्नुते गौरिति ॥ **प्रास्नाविष्टेति** । चिण्वदिट् । न च चिणि निषिद्धे चिण्वदिडपि न स्यादिति शङ्क्यम् , चिण्वदित्यनेन हि चिणीव कार्यमतिदिश्यते । न च चिण् नेत्युक्त्या सोऽतिदेशो निषेद्धुं शक्यते येन चिण्वदिटो निषेधः स्यात् ॥ **प्रास्नोष्टेति** । 'स्नुक्रमोरनात्मनेपदनिमित्ते ३१०२' इति नियमाद्वलादिलक्षण इड् न ॥ ( ३७०४ ) **नमते दण्ड इति** । इह नमितानमितयोर्विशेषदर्शनादुद्देश्यानुरोधाच्च कर्मस्थक्रियत्वमस्ति कर्मस्थांशस्य नमनस्य उद्देश्यता, न तु तदनुकूलव्यापारस्येति कर्मवद्भावस्य प्राप्तिरस्तीति भावः ॥ **अचीकरतेति** । चिणि प्रतिषिद्धे 'णिश्रि–३०८७' इति चङ् ॥ ( ३७०५ ) **णिश्रन्थीति** । णेः सामान्यग्रहणस्य फलमाह । **पुच्छमुदस्यतीत्यादि** । 'पुच्छभाण्ड—३५६५' इति णिङ् ॥ आत्मनेपदविधौ योऽकर्मकस्तमुदाहरति—**विकुर्वते सैन्धवा इति** ॥ ( ३७०६ ) **कुषिरञ्जोः**—। 'न दुहस्नुनमाम्–३६९६' इत्यतो नेति वर्तते तदाह—**न यगिति** ॥ **किन्तु श्यन्निति** । तस्मिन्नेव विषय इति भावः । 'न गिरा गिरेति ब्रूयात् ' इत्यादौ ' गिरं कृत्वा गेयम् ' इत्यत्र गिरापदं प्रतिषिध्य गिरा ( गिरं ) पदं विधीयमानं गिरापदस्थान एव यथा भवति,एवमिहापि यकः प्रतिषेधं कृत्वा विधीयमानः श्यन् तदीयस्थान एव भवत्यतो व्याचष्टे—**यगविषये तु नास्येति** ॥ श्यना सन्नियोगशिष्टं परस्मैपदं श्यन्नभावे न भवतीत्यात्मनेपदमेवोदाहरति—**कोषिषीष्टेति** । चुकुषे । कोषिष्यते । अकोषि । अकोषिष्यत । ररञ्जे । रङ्क्ष्यते । अराञ्जि । अरङ्क्ष्यत इत्याद्यपि ज्ञेयम् । श्यन्पक्षे कुष्यन्तीत्यत्र नित्यं नुम् । यक्पक्षे तु 'आच्छीनद्योः–५९९' इति विकल्पः । स्वरे विशेषोऽप्यस्त्येव । इह प्रकरणे भिद्यते काष्ठं स्वयमेवेति वृत्त्यादौ प्रयुज्यते तत्र स्वयंशब्दः करणार्थको ज्ञेयः—आत्मना करणेनेति । कर्मत्वे तु कर्माणि लः स्यात् । स्पष्टं चेदं कैयटादौ ॥ इति कर्मकर्तृप्रक्रिया ॥

---

( ३७०७ ) **अभिज्ञा**—। 'भूते ४००१' इत्यधिक्रियते । 'अनद्यतने लङ् २९६०' इत्यतः अनद्यतन इति वर्तते । अभिज्ञा स्मृतिः सा उच्यते बोध्यतेऽनेनेति विग्रहस्तदाह—**स्मृतिबोधिनीत्यादि** ॥ **वत्स्याम इति** । अवसामेत्यर्थः । पश्य मृगो धावतीत्यत्र वाक्यार्थरूपमृगकर्तृकधावनमिव स्मरसीत्यत्र गोकुलाधिकरणकास्मत्कर्तृकभूतानद्यतनवासो वाक्यार्थः कर्म । कृष्णेति संबोधनं स्मरणक्रियायां विशेषणम् । तथा च पूर्वोक्तनिवासकर्मकं कृष्णसंबन्धकं स्मरणमिति फलितोऽर्थः ॥ ( ३७०८ ) **न यदि** । लृटः प्रतिषेधे उत्सर्गो लङ् ॥ ( ३७०९ ) **वासो लक्षणमिति** । प्रसिद्धत्वाज्ज्ञापकमित्यर्थः ॥ **चारणं लक्ष्यमिति** । सहसा बुद्ध्यनारोहाज्ज्ञाप्यम् ॥ **पक्षे लङिति** । वने अवसाम, गा अचारयाम ॥ यच्छब्द-

---

१ गोकुले वत्स्याम इति । गोकुले वत्स्याम इति वाक्यार्थोऽभिजानासीत्यस्यार्थे कर्मत्वेन सम्बध्यते । तेनास्मिन् विषये पश्य मृगो धावतीत्यत्रेव गोकुलाधिकरणकास्मत्कर्तृकभूतानद्यतनवासकर्मकं कृष्णसंबोध्यकं स्मरणमिति बोधः ॥

२ यद्वन इति—भूतानद्यतनवनाधिकरणकास्मत्कर्तृकभोजनकर्मकं स्मरणमिति बोधः ॥

योगेऽपि न [३७०८] यदीति बाधित्वा परत्वाद्विकल्पः ॥ [ २९२५ ] परोक्षे लिट् । ३ । २ । ११५ । चकार । उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम् । सुप्तोऽहं किल विललाप । बहु जगद पुरस्तात्तस्य मत्ता किलाहम् ॥ ( ३७१० ) अत्यन्तापह्नवे लिड्वक्तव्यः ॥ कलिङ्गेष्ववात्सीः । नाहं कलिङ्गान् जगाम । ( ३७११ ) हशश्वतोर्लङ् च । ३ । २ । ११६ । अनयोरुपपदयोर्लिड्विषये लङ् स्यात् चाल्लिट् । इति हाकरोच्चकार वा । शश्वदकरोच्चकार वा ॥ ( ३७१२ ) प्रश्ने चासन्नकाले । ३ । २ । ११७ । प्रष्टव्यः प्रश्नः । आसन्नकाले पृच्छयमानेऽर्थे लिड्विषये लङ्लिटौ स्तः । अगच्छत्किम् । जगाम किम् । अनासन्ने तु कंसं जघान किम् ॥ ( ३७१३ ) लट् स्मे । ३ । २ । ११८ । लिटोऽपवादः । यजति स्म युधिष्ठिरः ॥ ( ३७१४ ) अपरोक्षे च । ३ । २ । ११९ । भूतानद्यतने लट् स्यात् स्मयोगे । एवं स्म पिता ब्रवीति ॥ ( ३७१५ ) ननौ पृष्टप्रतिवचने । ३ । २ । १२० । अनद्यतनेऽपरोक्ष इति निर्वृत्तम् । भूते लट् स्यात् । आकार्षीः किम् । ननु करोमि भोः ॥ ( ३७१६ ) नन्वोर्विभाषा । ३ । २ । १२१ । अकार्षीः किम् । न करोमि, नाकार्षम् । अहं नु करोमि, अहं न्वकार्षम् ॥ ( ३७१७ ) पुरि लुङ् चास्मे । ३ । २ । १२२ । अनद्यतनग्रहणं मैण्डूकप्लुत्याऽनुवर्तते । पुराशब्दयोगे भूतानद्यतने विभाषा लुङ् चाल्लट् न तु स्मयोगे । पक्षे यथाप्राप्तम् ; वसन्तीह पुरा छात्राः । अवात्सुः, अवसन्, ऊषुर्वा । अस्मे किम्, यजति स्म पुरा ॥ भविष्यतीत्यनुवर्तमाने-॥ ( ३७१८ ) यावत्पुरानिपातयोर्लट् । ३ । ३ । ४ । यावद्भुङ्क्ते । पुरा भुङ्क्ते । निपातावेतौ निश्चयं द्योतयतः । निपातयोः किम् । यावद्दास्यते, तावद्भोक्ष्यते । करणभूतया पुरा यास्यति ॥ ( ३७१९ ) विभाषा कदाकर्ह्योः । ३ । ३ । ५ । भविष्यति लट् वा स्यात् । कदा कर्हि वा भुङ्क्ते, भोक्ष्यते, भोक्ता वा ॥ ( ३७२० ) किंवृत्ते लिप्सायाम् । ३ । ३ । ६ । भविष्यति लड्वा स्यात् । कं कतरं कतमं वा

---

योगेऽपीति । अत एव 'न यदि ३७०८' इति योगात्पूर्वं 'विभाषा साकाङ्क्षे ३७०८' इति न कृतमिति भावः ॥ ( ३७१० ) अत्यन्तापह्नव इति । अपह्नवोऽपलापस्तत्र आत्यन्तिकत्वं नामेत्थं यदभियुक्तस्तद्धेतोरप्यपह्नुतिः ॥ नाहमित्यादि । कलिङ्गो नाम निषिद्धो देशः 'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति' इति स्मरणात्तस्मिन्देशे त्वया गतं चिरं स्थितमिति केनचित्कश्चिदुक्तः सन्नाह-नाहं कलिङ्गाञ्जगामेति । न केवलमवस्थानमेव निषिध्यते किं तर्हि तद्धेतुभूतं गमनमपीति भवत्यत्यन्तापह्नवः । यदा तु कलिङ्गेष्वगमः इत्युक्तः सन्गमनमेवापलपति न तदाऽत्यन्तापह्नव इति लङेव भवति, न कलिङ्गेष्वगच्छमिति ॥ ( ३७१२ ) प्रश्ने च-। भूतानद्यतनपरोक्षे इति वर्तते । प्रश्न इत्यत्र कर्मणि नङित्याह--प्रष्टव्य इति ॥ आसन्नेति । पञ्चवर्षाभ्यन्तरमासन्नकालं पञ्चवर्षातीतं तु विप्रकृष्टकालमित्याहुः ॥ पृच्छ्यमान इति । आसन्नकालिके भूतानद्यतनपरोक्षार्थवृत्तिधात्वर्थे प्रष्टव्ये सतीत्यर्थः । प्रश्ने किम्, भूतानद्यतनपरोक्षे लिडेव । जगाम चैत्रः ॥ ( ३७१३ ) लट् स्मे । स्मे इत्यव्ययं भूतकालद्योतकम् ॥ ( ३५१५ ) ननौ-। पृष्टस्य प्रतिवचनमिति विग्रहः । समाहारद्वन्द्वे तूभयत्र स्यात्, इष्यते च प्रतिवचने एव लट् । तदाह--ननु करोमीति । न च पृष्टग्रहणं व्यर्थं यावता प्रश्नपूर्वकमेव प्रतिवचनं भवतीति वाच्यम्, विरुद्धमपि वचनं प्रतिवचनं वचनाभिमुख्यमपि प्रतिवचनमिति पृष्टग्रहणं कर्तव्यमिति कैयटे स्थितत्वात् ॥ ( ३७१६ ) नन्वोः-। भूत इत्येव । पक्षे लुङ् । अनद्यतने तु लङ् ॥ ( ३७१७ ) पक्षे यथाप्राप्तमिति । लुङ्लटोरभावपक्षे लङ्, पारोक्ष्ये तु लिडित्यर्थः ॥ भविष्यतीति । 'भविष्यति गम्यादयः ४९५८' इति सूत्रात् ॥ ( ३७१८ ) यावत्पुरा-। 'लक्षणप्रतिपदोक्त-११५३-२' परिभाषाऽनित्येति निपातग्रहणेन ज्ञाप्यते ॥ यावद्भुङ्क्ते इति । निश्चितं भोक्ष्यते इत्यर्थः ॥ यावद्दास्यत इति । अनद्यतनभविष्यति तु यावद्दाता, तावद्भोक्तेति प्रत्युदाहर्तव्यम् ॥ ( ३७१९ ) विभाषा-। ननु 'अनद्यतने र्हिलन्यतरस्याम् २६७२' इत्यनद्यतने किमो र्हिल्विहितस्ततश्च कर्हियोगे लुटैव भाव्यमिति कथमुदाह्रियते कर्हि भोक्ष्यत इति । अत्राहुः-भविष्यत्सामान्ये भोक्ष्यते इति लट् । कर्हियोगे तु अनद्यतनावगतिर्लक्षणयेति ॥ भोक्ता वेति । ननु भविष्यत्सामान्येऽयं लड्विहितस्तस्य लुटा सह कथं विकल्पो विषयभेदादिति चेत् । अत्राहुः-'अनद्यतने लुट् २९४०' इत्यत्र 'विभाषा कदा-३७१९' इत्यादीनि कानिचित्सूत्राणीष्टानुरोधेनानुवर्तन्ते, तेन लुड्विषयेऽपि लङ् भवति, न त्वनद्यतने लुटा लङ् बाध्यत इति ॥ ( ३७२० ) किंवृत्ते-। किमा वृत्तं किंवृ-

---

१ लिड्विषय इति । अनेन भूत इत्यादीनामिहानुवृत्तिर्ध्वनिता ॥ २ निवृत्तमिति । 'लट् स्मे' इति सूत्रभाष्ये "अपरोक्षानद्यतनौ ननौ च नन्वोश्च विनिवृत्तौ ॥" इत्युक्तिरत्र प्रमाणम् ॥ ३ मण्डूकप्लुत्येति । लुङित्यस्य पुनरुपादानेन 'लुङ्' इति सूत्रापेक्षया अस्य वैलक्षण्यं बोधितमिति प्रकृतसूत्रेऽनद्यतन इत्यस्य सम्बन्धः । अत एव एतदभावेऽनद्यतनत्वमात्रविवक्षायां लङ्, परोक्षत्वस्यापि विवक्षायां तु लिट् भवति । न तु लुङ्, अपवादविषयतायाः सत्त्वात् । तथा चोक्तम् 'लट्-स्मे' इत्यत्र भाष्यकृता 'न पुराऽद्यतन इति भवेत्तत्र वापि लुङ्ग्रहणम्' इति ॥ ४ करणभूतयेति । एतेन पुरा यास्यतीत्यत्र पुरीवाचकात् पूःशब्दात् तृतीयेति ध्वनितम् ॥ ५ यदिति । यस्मात्कारणादभियुक्तः प्रत्यवायित्वस्थापनेन परै रुद्धः । 'अभियुक्तः परै रुद्धः' इति मेदिनीवाक्यात् । वाक्स्तम्भीकृतः । तद्धेतोः प्रत्यवायकारणस्य हेतोरपि अपलाप इत्यर्थः ॥

भोजयसि, भोजयिष्यासि, भोजयितासि वा । लिप्सायां किम् । कः पाटलिपुत्रं गमिष्यति ॥ ( ३७२१ ) (सू) लिप्स्यमानसिद्धौ च । ३ । ३ । ७ । लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यमानायां भविष्यति लङ्वा स्यात् । योऽन्नं ददाति, दास्यति, दाता वा स स्वर्गं याति, यास्यति, याता वा ॥ ( ३७२२ ) (सू) लोडर्थलक्षणे च । ३ । ३ । ८ । लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्तमानाद्धातोर्भविष्यति लङ्वा स्यात् । कृष्णश्चेद्भुङ्क्ते त्वं गाश्चारय । पक्षे लुङ्लृटौ ॥ ( ३७२३ ) (सू) लिङ् चोर्ध्वमौहूर्तिके । ३ । ३ । ९ । ऊर्ध्वं मुहूर्तान्द्भवः ऊर्ध्वमौहूर्तिकः । निपातनात्समासः । उत्तरपदवृद्धिश्च । ऊर्ध्वमौहूर्तिके भविष्यति लोडर्थलक्षणे वर्तमानाद्धातोर्लिङ्लटौ वा स्तः । मुहूर्तादुपरि उपाध्यायश्चेदागच्छेत्[1], आगच्छति, आगमिष्यति, आगन्ता वा । अथ त्वं छन्दोऽधीष्व ॥ ( ३७२४ ) (सू) वर्तमानसामीप्ये वर्तमानवद्वा । ३ । ३ । १३१ । समीपमेव सामीप्यम् । स्वार्थे ष्यञ् । वर्तमाने लडित्यारभ्य[३१२०] उणादयो बहुलमिति[३१६६] यावत् येनोपाधिना प्रत्यया उक्तास्ते तथैव वर्तमानसमीपे भूते भविष्यति च वा स्युः । कदा आगतोऽसि । अयमागच्छामि, अयमागमम् । कदा गमिष्यसि । एष गच्छामि, गमिष्यामि वा ॥ (३७२५-१) (सू) आशंसायां भूतवच्च । ३ । ३ । १३२ । वर्तमानसामीप्य इति नानुवर्तते । भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम् । देवश्चेदवर्षीत्, वर्षति, वर्षिष्यति वा । धान्यमवाप्स्म, वपामो, वप्स्यामो वा ॥ ( ३७२५-२ ) (प) सामान्यातिदेशे विशेषानतिदेशः[2] ॥ तेन लङ्लिटौ न ॥ ( ३७२६ ) (सू) क्षिप्रवचने लृट् । ३ । ३ । १३३ । क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात् । वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वाऽऽयास्यति शीघ्रं वप्स्यामः । नेति[3] वक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यात् । श्वः शीघ्रं वप्स्यामः ॥ ( ३७२७ ) (सू) आशंसावचने लिङ् । ३।३।१३४।

---

त्तम् । केचित्तु यद्यपि कदा कुत्रेत्याद्यपि किंवृत्तं तथापि तन्न गृह्यते, अनभिधानात् । तेन कदा भोजयिष्यसीत्यादौ भविष्यति लङ् नेत्याहुः ॥ ( ३७२१ ) **लिप्स्यमान-** । लिप्स्यमानसिद्धौ लिप्सायाः सत्त्वात्[4]पूर्वेण सिद्धेऽप्यकिंवृत्तार्थमिदमिति ध्वनयन्नुदाहरति—**योऽन्नमिति** ॥ ( ३७२२ ) **लोडर्थ-** । लोडर्थस्य लक्षणमिति षष्ठीतत्पुरुषः । कृष्णभोजनं लोडर्थः, गोचारणं प्रैषस्य लक्षणम् । भोजनकाले गोचारणं त्वया कर्तव्यमित्यर्थः ॥ **पक्षे लुडिति** । कृष्णश्चेद्भोक्ता कृष्णश्चेद्भोक्ष्यते त्वं गाश्चारयेत्यर्थः ॥ ( ३७२३ ) **लिङ् चोर्ध्व-** । 'कालाट्ठञ् १९३२' । 'तद्धितार्थोत्तरपद-१०५२' इत्यत्र 'दिक्संख्ये-१०५१' इत्यनुवर्तनादिह समासो दुर्लभ इत्याशङ्कायामाह—**निपातनादिति** ॥ ( ३७२४ ) **वर्तमान-** । **स्वार्थे ष्यञिति** । अस्मादेव सामीप्य इति निर्देशात्ष्यञि सिद्धे 'चतुर्वर्णादिभ्यः-२४२३' इति वार्तिकं प्रपञ्चार्थमित्याहुः । न चात्र 'पूरणगुण-१०२२' इति निषेधात्षष्ठीसमासो न प्राप्नोतीति वाच्यम्, अनेनैव निर्देशेन तन्निषेधस्यानित्यत्वाभ्युपगमात् । तेन बुद्धिमान्द्यमित्यादि सिद्धम् ॥ **येनोपाधिनेति** । धातुविशेषाद्युपाधिना । तथाहि—पूङ्यजोः[४१२८] शानन्विहितः, स ताभ्यामेव धातुभ्यां भवति, न तु धात्वन्तरात् । तच्छीलादिविशिष्टे कर्तरि 'अलंकृञ्-४१३६' इत्यारभ्य 'भ्राजभास-४१४३' इति यावत् ये इष्णुजादय उक्तास्तेऽपि कृञादिभ्यो धातुभ्यस्तस्मिन्नुपाधौ सत्येव भवन्ति ॥ कदा आगतोऽसीति भूतकालेन प्रश्नवाक्यम्, आगच्छामीत्युदाहरणे भूतकालाभिव्यक्तये, अयमिति प्रयोगस्त्विदानीमेवागममिति वर्तमानसमीपभूतकालद्योतनाय । तेन ह्यागमनाविनाभूतं यद्रूपं धूलीधूसरताप्रस्वेदादियुक्तं तत्प्रतिनिर्दिश्यते । एवं कदा गमिष्यसीति भविष्यत्कालेन प्रश्नवाक्यम्—गच्छामीत्युदाहरणे भविष्यत्कालाभिव्यक्तये । एष इति प्रयोगस्तु इदानीमेव गमिष्यामीति वर्तमानसमीपभविष्यत्कालद्योतनाय । तेन हि गमनाऽविनाभूतं यद्रूपं परिकरबन्धादियुक्तं तत्प्रतिनिर्दिश्यते । न च कदेति प्रश्ने उत्तरवाक्ययोः कालानुपादानादसंगतिः शङ्क्या, उत्तरत्रायमेषशब्दाभ्यामिदानीमिति कालावगमात् । सामीप्ये किम्, कदा आगतो भवान् । अस्मान्मासात्पूर्वस्मिन्मासे आगच्छम् । एतच्च सूत्रमाकरे प्रत्याख्यातम्, गङ्गासमीपे गङ्गात्वारोपवद्वर्तमानसमीपे वर्तमानत्वारोपसंभवात् ॥ ( ३७२५-१ ) **आशंसायाम्-** । आशंसनमाशंसा अप्राप्तस्य प्राप्तुमिच्छा । आशंसायां वर्तमानत्वेऽपि तद्विषयस्य वर्षादेर्भविष्यत्कालसंबन्धाद्भविष्यतीत्युक्तम् । आशंसायां किम्, गमिष्यति ॥ ( ३७२६ ) **क्षिप्रवचने-** । वचनग्रहणं स्वरूपग्रहणनिरासार्थम् । तदाह—**क्षिप्रपर्याय इति** ॥ **पूर्वविषय इति** । आशंसायामित्यर्थः । तेन पूर्वलकारापवादोऽयम् ॥ ( ३७२७ ) **आशंसा-**

---

१ उपाध्यायस्य स्वगृहासत्त्वे तत्र समागतं कालविलम्बेन ततः परावृत्य स्वगृहं प्रति गन्तुं प्रवृत्तं शिष्यं प्रति गुरुपत्न्यादेरुक्तिरिहोदाहरणमित्याशयेनाह—**उपाध्यायश्चेदित्यादि** ॥ २ **सामान्यातिदेश इति** । भूतवदित्यनेन भूतसामान्यस्योपस्थितिर्न तु भूतत्वव्याप्यधर्मस्येति भूतत्वव्याप्यधर्मविशिष्टकालनिमित्तकं कार्यमत्र न भवतीत्यर्थः । 'हशश्वतोर्लङ्-' इति लङ्विधानं चास्या ज्ञापकम् । पूर्वसूत्राद् वाग्रहणानुवृत्त्याऽस्यातिदेशस्य वैकल्पिकत्वादेतदभावे स्वाश्रयभविष्यत्सामान्यकृतमपि कार्यमित्याशयेन 'वर्षिष्यति' 'वप्स्यामः' इत्युपात्तम् ॥ ३ नेत्युक्तौ भूतवदित्यस्यातिदेशस्य निवृत्तौ चकारेण बोधितस्य वर्तमानवदित्यस्याप्यतिदेशस्य निवृत्तौ आशंसाविषयस्य च भविष्यत्त्वात् लृटः सिद्धौ लृड्ग्रहणमनर्थकमित्यत आह—**लुटोऽपि विषय इति** ॥ तस्या विषयतायाः सूचनाय च इत्युपात्तम् ॥ ४ **सत्त्वादिति** । लिप्सायाः किंवृत्तेन व्यञ्जनस्य संभवेऽपि लिप्स्यमानसिद्धौ न किंवृत्तप्रयोगावश्यकतेत्येव तत्त्वम् ॥ लिप्स्यमानसिद्धौ जातायां लिप्सा तु न सर्वैरङ्गीक्रियते ॥

आशंसावाचिन्युपपदे भविष्यति लिङ् स्यान्न तु भूतवत् । गुरुश्चेदुपेयादाशंसेऽधीयीय । आशंसे क्षिप्रमधीयीय ॥ (३७२८) (सू) **नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः** । ३ । ३ । १३५ । क्रियायाः सातत्ये सामीप्ये च गम्ये लङ्लुटौ न । यावज्जीवमन्नमदाद्दास्यति वा । सामीप्यं तुल्यजातीयेनाव्यवधानम् । येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित सोमेनायष्ट । येयममावास्याऽऽगामिनी तस्यामग्नीनाधास्यते । सोमेन यक्ष्यते ॥ ( ३७२९ ) (सू) **भविष्यति मर्यादावचनेऽवरस्मिन्** । ३ । ३ । १३६ । भविष्यति काले मर्यादोक्ताववरस्मिन्प्रविभागेऽनद्यतनवन्न । योऽयमध्वा गन्तव्य आ पाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून्पास्यामः ॥ ( ३७३० ) (सू) **कालविभागे चानहोरात्राणाम्** । ३ । ३ । १३७ । पूर्वसूत्रं सर्वमनुवर्तते । अहोरात्रसंबन्धिनि विभागे प्रतिषेधार्थमिदम् । योगविभाग उत्तरार्थः । योऽयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अनहोरात्राणां किम् । योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः तत्राध्येतास्महे ॥ ( ३७३१ ) (सू) **परस्मिन्विभाषा** । ३ । ३ । १३८ । अवरस्मिन्वर्ज्यं पूर्वसूत्रद्वयमनुवर्तते । अप्राप्तविभाषेयम् । योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे । अध्येतास्महे ॥ [२९८४] (सू) **लिङ्निमित्ते लृङ् क्रियातिपत्तौ** । ३ । ३ । १३९ । भविष्यतीत्येव । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् ॥ ( ३७३२ ) (सू) **भूते च** । ३ । ३ । १४० । पूर्वसूत्रं संपूर्णमनुवर्तते ॥ ( ३७३३ ) (सू) **वोताप्योः** । ३ । ३ । १४१ । वा आ उताप्योः । उताप्योरित्यतः प्राग्भूते लिङ्निमित्ते लृङ् वेत्यधिक्रियते । पूर्वसूत्रं तु उताप्योरित्यादौ प्रवर्तते इति विवेकः ॥ ( ३७३४ ) (सू) **गर्हायां लडपिजात्वोः** । ३ । ३ । १४२ । आभ्यां योगे लट् स्यात् कालत्रये गर्हायाम् । लुङादीन्परत्वादयं बाधते । अपि जायां त्यजसि जातु

---

**वचने-** । भूतवर्तमानवत्प्रत्यययोरपवादः ॥ **न तु भूतवदिति** । न वर्तमानवदित्यपि बोध्यम् ॥ **आशंसेऽधीयीयेति** । एवं प्रार्थये अधीयीय इच्छामो वयमधीयीमहीत्यादि ज्ञेयम् ॥ **क्षिप्रमिति** । क्षिप्रप्रयोगेऽपि परत्वाल्लिङिति भावः ॥ ( ३७२८ ) **नानद्यतन-** । भूतानद्यतने लङ्विहितो भविष्यत्यनद्यतने तु लुट्, तौ चानयोरर्थयोर्निषिध्येते, तदाह—**लङ्लुटौ नेति**[1] ॥ एवं च भूते लुङ्, भविष्यति तु लृडित्याशयेनोदाहरति—**अन्नमदात् दास्यतीत्यादि** ॥ **अग्नीनिति** । आहवनीयादीन् ॥ ( ३७२९ ) **भविष्यति मर्यादा-** । अक्रियाप्रबन्धार्थमसामीप्यार्थं चेदं वचनम् ॥ नानद्यतनवदित्यनुवर्तते इत्याह—**अनद्यतनवन्नेति** । लुडत्र नेत्यर्थः । इह सूत्रे देशकृता मर्यादा उत्तरत्र कालकृता, तत्र विशेषं वक्ष्यति ॥ **तस्य यदवरमिति** । पाटलिपुत्रावधिकमार्गस्य यदवरं कौशाम्ब्याः सकाशादित्यर्थः । कौशाम्ब्याः पूर्वमिति यावत् । भविष्यति किम् , योऽध्वा अतिक्रान्त आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तूनपिबाम । मर्यादावचने इति किम् , योऽध्वा गन्तव्यो निरवधिकस्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून्पास्यामः । अवरस्मिन्निति किम् , योऽध्वा गन्तव्य आ पाटलिपुत्रात्तस्य यत्परं कौशाम्ब्यास्तत्र सक्तून्पातास्मः ॥ ( ३७३० ) **कालविभागे च--** । कालविभागः कालविशेषः । अनहोरात्राणामिति संबन्धषष्ठी ॥ **पूर्वसूत्रमिति** । तदयमर्थः—मर्यादोक्तौ कालविशेषाद्यदवरं तस्मिन्प्रविभागे भविष्यत्यनद्यतनवन्न, स चेत्कालविभागः अहोरात्रसंबन्धी न चेदित्यर्थः । इह कालविभागे सत्यवरस्मिन्ननद्यतनवन्नेत्युक्ते कस्मादित्यपेक्षायामर्थात्कालविशेषादिति लभ्यत इत्येके । केचित्तु—कालविभाग इति पञ्चम्यर्थे सप्तमीत्याहुः ॥ **उत्तरार्थ इति** । 'परस्मिन्विभाषा ३७३१' इति सूत्रे कालमर्यादाया एवानुवृत्तिर्यथा स्यात् । भविष्यतीति किम् , यः संवत्सरोऽतीतस्तस्य यदवरं मासात्तत्र पयोऽपिबाम । मर्यादायामिति किम् , यो निरवधिः समयस्तस्य यदवरं मासात्तत्र पयः पातास्मः ॥ **पञ्चदशरात्र इति** । नन्वत्र 'संख्यापूर्वं रात्रम्-११६७' इति क्लीबत्वेन भाव्यम् । न च पञ्चदश रात्रयो यस्मिन्पक्षे इति बहुव्रीह्याश्रयणात्पुंल्लिङ्गः सिद्ध इति वाच्यम् , 'अहःसर्वैकदेश-११२३' इत्यच्प्रत्ययस्याभावप्रसङ्गादिति चेत् । सत्यम्—अत एव हि भाष्यप्रयोगात्क्लीबत्वं नेत्याहुः ॥ ( ३७३१ ) **परस्मिन्-** । 'भविष्यत्यनद्यतनवन्न' इति विकल्पेन निषिध्यते ॥ **वर्ज्यमिति** । णिजन्तात् 'अचो यत् ३७८७' इति कर्मणि यत् । 'वर्जम्' इति पाठे तु 'द्वितीयायां च ५११६' इति णमुल् । अनहोरात्राणामित्येव । योऽयं वत्सर आगामी तस्य यत्परं पञ्चदशरात्रात्तत्र पयः पातास्म इत्यादि ॥ [ २९८४ ] **लिङ्निमित्ते-** । अतिपत्तिरनिष्पत्तिः ॥ ( ३७३२ ) **भूते च** । लिङ्निमित्ते लृङ् स्याद् भूते भविष्यति च क्रियातिपत्तौ । अद्यतनानद्यतनसाधारणं भूतसामान्यमिह ज्ञेयम् । अस्योदाहरणानि 'उताप्योः समर्थयोर्लिङ् ३७४५' इत्यारभ्य 'समानकर्तृकेषु तुमुन् ४९६३' इति विहाय सप्तसूत्र्यां बोध्यानि । ततः प्राचीनेषु 'वोताप्योः ३७३३' इत्यनेन विकल्पोक्तेः ॥ ( ३७३३ ) **लृङ् वेति** । लिङ्निमित्ते भूत एवायं विकल्पो, भविष्यति तु नित्यमेव लृङ् ॥ ( ३७३४ ) **गर्हायाम्—** । अत्र 'वोताप्योः ३७३३' इति न संबध्यते । वर्तमाने लड्क्तः कालत्रये तु न प्राप्नोतीति विधिरयम् ॥ **कालत्रय इति** । कालविशेषानुपादानादिति भावः । **परत्वादिति** । निरवकाशत्वादित्यपि बोध्यम् ॥ **अपि जायामिति** । त्यक्ष्यसि, अत्याक्षीरित्यादिविषयेऽपि त्यजसीत्यादि लडेव प्रयुज्यत इति भावः । एवं यो जायां तत्याज, अत्यजत्, अत्याक्षीत् , त्यक्ता, त्यक्ष्यतीत्यादि-

---

१ **लङ्लुटौ नेति** । लिङपि नेति पूरणीयम् । एतेषां प्राप्तिश्च भूतत्वभविष्यत्त्वात्मकसामान्यधर्मसमानाधिकरणविशेषधर्मविवक्षायां बोध्या ॥

गणिकामाधत्से गर्हितमेतत् ॥ ( ३७३५ ) (सू) विभाषा कथमि लिङ् च । ३ । ३ । १४३ । गर्हायामित्येव । कालत्रये लिङ् चाल्लट् । कथं धर्मं त्यजेस्त्यजसि वा । पक्षे कालत्रये लकाराः । अत्र भविष्यति नित्यं लृङ् , भूते वा । कथं नाम तत्र भवान् धर्ममत्यक्ष्यत् , अत्याक्षीद्वा ॥ ( ३७३६ ) (सू) किंवृत्ते लिङ्लृटौ । ३ । ३ । १४४ । गर्हायामित्येव । विभाषा तु नानुवर्तते । कः कतर कतमो वा हरिं निन्देत् , निन्दिष्यति वा । लृङ् प्राग्वत् ॥ (३७३७) (सू) अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । ३ । ३ । १४५ । गर्हायामिति निवृत्तम् । अनवक्लृप्तिरसंभावना । अमर्षोऽक्षमा । न संभावयामि न मर्षये वा भवान् हरिं निन्देत् , निन्दिष्यति वा । कः कतरः कतमो वा हरिं निन्देत्, निन्दिष्यति वा । लृङ् प्राग्वत् ॥ ( ३७३८ ) (सू) किङ्किलास्त्यर्थेषु लृट् । ३ । ३ । १४६ । अनवक्लृप्त्यमर्षयोरित्येतद्गर्हायां चेति यावदनुवर्तते । किङ्किलेति समुदायः क्रोधद्योतक उपपदम् । अस्त्यर्थाः अस्तिभवतिविद्यतयः । लिङोऽपवादः । न श्रद्दधे न मर्षये वा किङ्किल त्वं शूद्रान्नं भोक्ष्यसे । अस्ति, भवति, विद्यते वा शूद्रीं गमिष्यसि । अत्र लृङ् न ॥ ( ३७३९ ) (सू) जातुयदोर्लिङ् । ३ । ३ । १४७ । ( ३७४० ) (वा) यदायद्योरुपसंख्यानम् ॥ लृटोऽपवादः । जातु यद्यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि न मर्षयामि । लृङ् प्राग्वत् ॥ (३७४१) (सू) यच्चयत्रयोः । ३ । ३ । १४८ । यच्च यत्र वा त्वमेवं कुर्याः । न श्रद्दधे न मर्षयामि ॥ ( ३७४२ ) (सू) गर्हायां च । ३ । ३ । १४९ । अनक्लृप्त्यमर्षयोरिति निवृत्तम् । यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात् । यच्च यत्र वा त्वं शूद्रं याजयेः । अन्याय्यं तत् ( ३७४३ ) (सू) चित्रीकरणे च । ३ । ३ । १५० । यच्च यत्र वा त्वं शूद्रं याजयेः । आश्चर्यमेतत् ॥ ( ३७४४ ) (सू) शेषे लृडयदौ । ३ । ३ । १५१ । यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात् । आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति । अयदौ किम् । आश्चर्यं यदि सोऽधीयीत ॥ ( ३७४५ ) (सू) उताप्योः समर्थयोर्लिङ् । ३ । ३ । १५२ । बाढमित्यर्थेऽनयोस्तुल्यार्थता । उत अपि वा हन्यादघं हरिः । समर्थयोः किम् । उत दण्डः पतिष्यति । अपिधास्यति द्वारम् । प्रश्नः प्रच्छादनं च गम्यते ॥ इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ् ॥ (३७४६) (सू) कामप्रवेदनेऽकच्चिति । ३ । ३ । १५३ । स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यात्

---

विषयेऽपि यो जायामपि त्यजति जातु गणिकामाधत्ते इति लडेव कालत्रयलकारापवादतया प्रयोक्तव्यः । लिङ्निमित्ताभावादिह क्रियातिपत्तौ लृङ् न भवति ॥ ( ३७३५ ) **कालत्रये लकारा इति** । परोक्षानद्यतनभूते लिट्—कथं धर्मं तत्यक्थ-भूतानद्यतने लङ्—कथं धर्ममत्यजः, भूतसामान्ये लुङ्—अत्याक्षीः । भविष्यत्यनद्यतने लुट्—त्यक्तासि, भविष्यत्सामान्ये लृट्—कथं धर्मं त्यक्ष्यसीत्यादि ॥ **अत्रेति** । क्रियातिपत्ताविति ज्ञेयम् ॥ (३७३६) **किंवृत्ते**—। लिङ्लृटौ कालत्रये स्तः ॥ **नानुवर्तते इति** । एवं चास्मिन्विषये निन्दति, निन्दिष्यति, अनिन्ददिति कालत्रये लकाराः पक्षे न भवन्तीति भावः ॥ **प्राग्वदिति** । क्रियातिपत्तौ भविष्यति नित्यं लृङ् भूते वेत्यर्थः ॥ ( ३७३७ ) **अनवक्लृप्त्यमर्षयोः**—। लिङ्लृटावनुवर्तेते, तौ च कालत्रये भवतस्तेन सर्वलकाराणामपवादौ । किंवृत्तस्यानधिकारादेवाविशेषादुभयोर्भविष्यतीत्यकिंवृत्तेऽपीति न कर्तव्यम् , पूर्वनिपातार्हस्याल्पाचः परनिपातो यथासंख्यनिवृत्त्यर्थः ॥ **लृङ् प्राग्वदिति** । भूते वा भविष्यति नित्यमित्यर्थः । नाहं भावयामि चैत्रो हरिमनिन्दिष्यदित्याद्युदाहर्तव्यम् ॥ ( ३७३८ ) **किंकिलास्त्यर्थेषु**—। लिङ्लृटोः प्राप्तयोरिह लृङ्ग्रहणाल्लिङ् निवर्तत इत्याशयेनाह—**लिङोऽपवाद इति** ॥ **अस्ति भवतीति** । त्वत्कर्तृकं शूद्रीगमनमस्तीत्यादिरर्थः ॥ **लृङ् नेति** । लिङो निवृत्तत्वेन तन्निमित्तत्वाभावात् ॥ ( ३७३९ ) **जातुयदोर्लिङ्** । अनवक्लृप्त्यमर्षयोरिति वर्तते । तथा च 'अनवक्लृप्त्यमर्षयोः-३७३७' इति लिङ्लृटोः प्राप्तयोर्वचनमिदं लृटो बाधनार्थम्, तदाह—**लृटोऽपवाद इति** । अयं कालत्रये ॥ **लृङ् प्राग्वदिति** । क्रियातिपत्तौ भूते वा भविष्यति नित्यमित्यर्थः । जातु भवान् हरिमनिन्दिष्यदित्याद्युदाहर्तव्यम् । अगर्हार्थमिदम् । गर्हायां तु जातुयोगे लडुक्तः ॥ (३७४१) **यच्चयत्रयोः** । 'अनवक्लृप्त्यमर्षयोः' इति वर्तते । यथासंख्यमिह नेष्यते । अयमपि लिङ्लृटोरपवादः । योगविभागस्तु उत्तरसूत्रद्वये यच्चयत्रयोरेवानुवृत्तिर्यथा स्यादित्येतदर्थः । क्रियातिपत्तौ लृङ् प्राग्वत् । यच्च यत्र वा त्वमेवमकरिष्यो न श्रद्दधे न मर्षयामीत्यादि ॥ ( ३७४२ ) **गर्हायां च** । कालत्रयेऽयं भवतीति सर्वलकारापवादः ॥ **लिङेव स्यादिति** । गर्हायां 'विभाषा कथमि-३७३५' इति लट् प्राप्तस्तत्रैव 'किंवृत्ते-३७३६' इति लट् प्राप्तस्तयोरपवादो यच्चयत्रयोर्योगे विहितोऽयं लिङिति भावः । लृङ् प्राग्वत् । यच्च यत्र वा त्वं शूद्रमयाजयिष्यस्तदन्याय्यमित्यादि ॥ ( ३७४३ ) **चित्रीकरणे च** । अयमपि कालत्रये । लृङ् प्राग्वत् । यच्च यत्र वा त्वं शूद्रमयाजयिष्यः । आश्चर्यमेतत् ॥ ( ३७४४ ) **शेषे**—। सर्वलकारापवादः ॥ **सोऽधीयीतेति** । यदायद्योरुपसंख्यानात् 'जातुयदोः-३७३९' इति लिङ् । लिङ्निमित्ताभावादिह लृङ् न ॥ ( ३७४५ ) **उताप्योः**—। धातोर्लिङ् स्यात्कालत्रये ॥ **भूतेऽपि नित्य इति** । वाग्रहणस्य निवृत्तत्वात् भविष्यतीव भूतेऽपि नित्यो लृङ् । उताहनिष्यद्दस्युं राजा । नाहन् न हनिष्यतीति गम्यते ॥ ( ३७४६ ) **कामप्रवेदने**- **लिङ् स्यादिति** । कालत्रये । सर्वलकारापवादः ॥

न तु कच्चिति । कामो मे भुञ्जीत भवान् । अकच्चितीति किम् । कच्चिंजीवति ॥ ( ३७४७ ) **संभावनेऽलमिति चेत्सिद्धाप्रयोगे।३।३।१५४।** अलमर्थोऽत्र प्रौढिः।संभावनमित्यलमिति च प्रथमया सप्तम्या च विपरिणम्यते । संभावनेऽर्थे लिङ् स्यात्तच्चेत्संभावनमलमिति सिद्धाऽप्रयोगे सति। अपि गिरिं शिरसा भिन्द्यात्। सिद्धाप्रयोगे किम् । अलं कृष्णो हस्तिनं हनिष्यति ॥ ( ३७४८ ) **विभाषा धातौ सम्भावनवचनेऽयदि । ३ । ३ । १५५ ।** पूर्वसूत्रमनुवर्तते । सम्भावनेऽर्थे धातावुपपदे उक्तेऽर्थे लिङ् वा स्यात्, न तु यच्छब्दे । पूर्वेण नित्ये प्राप्ते वचनम् । संभावयामि भुञ्जीत, भोक्ष्यते वा भवान् । अयदि किम् । संभावयामि यद्भुञ्जीथास्त्वम् ॥ ( ३७४९ ) **हेतुहेतुमतोर्लिङ् । ३ । ३ । १५६ ।** वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात्, कृष्णं नंस्यति चेत्सुखं यास्यति ॥ ( ३७५० ) **भविष्यत्येवेष्यते ॥** नेह । हन्तीति पलायते ॥ ( ३७५१ ) **इच्छार्थेषु लिङ्लोटौ । ३ । ३ । १५७ ।** इच्छामि भुञ्जीत, भुङ्क्तां वा भवान् । एवं कामये प्रार्थये इत्यादियोगे बोध्यम् ॥ ( ३७५२ ) **कामप्रवेदन इति वक्तव्यम् ॥** नेह । इच्छन् करोति ॥ ( ३७५३ ) **लिङ् च । ३ । ३ । १५९ ।** समानकर्तृकेषु इच्छार्थेषूपपदेषु

---

**कच्चिज्जीवतीति** । कामो मे इत्यनुषञ्जनीयम् । 'वर्तमानसामीप्ये ३७२४' इति लट् ॥ ( ३७४७ ) **संभावनेऽल-॥ प्रौढिरिति** । पर्याप्तिरित्यर्थः ॥ **प्रथमया सप्तम्या चेति** । संभावने इति सप्तम्यन्तं प्रथमया विपरिणम्यते, अलमिति प्रथमान्तं सप्तम्येति संबन्धः ॥ **संभावनेऽर्थे इति** । ननु प्रथमया विपरिणमितत्वात्कथमत्र सप्तम्यर्थलाभ इति चेत् । अत्राहुः–संभावनेऽलमित्यावर्त्य द्वितीयस्यैव विपरिणामात्सर्वेष्टसिद्धिरिति । संभावनं क्रियासु योग्यताध्यवसायः॥ **अलमितीति** । तच्च संभावनं समर्थ इति चेत् भवति, तदा लिङ् स्यादित्यर्थः ॥ **सिद्धेति** । सिद्धः अप्रयोगो यस्य तस्मिन्नलमि सति । यत्रालंशब्दो न प्रयुज्यते, तदर्थस्तु गम्यते तत्रेति फलितोऽर्थः । मनोरमायां तु 'अलमिति संभावने सिद्धाप्रयोगश्चेत्' इति सूत्रयितुमुचितमित्युक्तम् । तत्र सिद्धस्याप्रयोग इति विग्रहः । कस्याप्रयोग इत्याकाङ्क्षायामर्थादलंशब्दस्येति बोध्यम् ॥ **अपि गिरिमिति** । संभावनद्योतकोऽपिशब्दः गिरिविदारणे पर्याप्त इति संभावनाऽत्र गम्यते। कालसामान्येऽयं लिङ्। लृङ् प्राग्वत्। अपि गिरिं शिरसाऽभेत्स्यत् ।अलमिति चेत् किम्, प्रायेण गमिष्यति ॥ ( ३७४८ ) **विभाषा धातौ–** । संभावनमुच्यते येन तत्संभावनवचनं तस्मिन्धातौ । संभावनार्थकधातावित्यर्थः॥ **भुञ्जीथास्त्वमिति** । अत्र पूर्वेण नित्यो लिङ्। धातौ किम्, संभावनवचने स्वरूपग्रहणं मा भूत् । कृते तु संभावनवचने तद्वाचकधातोरप्रयोगादिह विभाषा न भवति । भुञ्जीत भवान् । पूर्वेणात्र नित्यो लिङ्॥( ३७४९ ) **हेतुहेतु–** । विभाषेत्यस्यानुवर्तनादाह––**वा स्यादिति** ॥ **नमेच्चेदिति** । कृष्णनतिः सुखप्राप्तौ हेतुः ॥ ( ३७५० ) **भविष्यत्येवेति** । लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणं कालविशेषप्रतिपत्त्यर्थमिति भावः ॥ **हन्तीत्यादि** । ननु 'लक्षणहेत्वोः क्रियायाः ४१२३' इति हन्तेः शतृप्रत्ययः स्यात् हननस्य पलायने हेतुत्वात् । मैवम्, **'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः'** इति 'शाच्छोरन्यतरस्याम्' इति सूत्रे भाष्ये व्यवस्थापितत्वात् । व्याख्यातं च कैयटेन तत्रैव सूत्रे । देवत्रात इति संज्ञा । तत्र 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ४०५१' इति न नत्वं भवति देवत्राण इति, किंतु देवत्रात इत्येव । 'ग्रो यङि ३५०६' 'अचि विभाषा ३३६९' इति प्राण्यङ्गे नित्यं लत्वम् । गलः। विषवाचके गर इत्यत्र न भवति । 'विभाषा ग्रहः ३८६८' इति णप्रत्ययो जलचरे भवति ग्राहः, ज्योतिषि न, ग्रहः । 'लक्षणहेत्वोः–४१२३' इति सूत्रे 'नन्वोर्विभाषा ३७१६' इत्यतो विभाषेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणात् इतिशब्दयोगे सद्विधिः शतृशानचौ न भवतः–हन्तीति पलायते । वातायने गवाक्षः, अन्यत्र त्ववङ् न भवति, गोक्षः । संशितव्रत इति बहुव्रीहिः । अत्र 'शाच्छोरन्यतरस्याम् ४०९२' इति संशात इतीत्वविकल्पो न भवति । अन्यत्र तु शातः, शितः । ते पूर्वोक्तनत्वादिविधयो मिथः परस्परं एकविषये न विकल्प्यन्ते तत्तद्विधायकसूत्रे व्यवस्थितविभाषाश्रयणादिति भावः । क्रियातिपत्तौ तु भूते भविष्यति च नित्यं लृङ् । यद्यवर्षिष्यत् सस्यमुदपत्स्यत् ॥ ( ३७५१ ) **इच्छार्थेषु लिङ्लोटौ** । एषूपपदेषु धातोरेतौ स्तः । सर्वलकाराणामपवादः । 'लिङ् च ३७५३' इत्यनेन समानकर्तृकेषु लिङो विधानादिह लिङ्लोटावसमानकर्तृकेषु भवत इति बोध्यम् ॥ ( ३७५२ ) **इच्छन् करोतीति** । अत्रानभिधानात् 'समानकर्तृकेषु–४९६३' इति तुमुन् न । ननु 'कामप्रवेदनेऽकच्चिति ३७४६' इत्यनेनैव लिङः सिद्धत्वादिह लिङ्ग्रहणं माऽस्तु लोडेव विधीयतामिति चेन्न, लोटा लिङो बाधा मा भूदिति लिङ्ग्रहणस्यात्रावश्यकत्वात् । न चैवम् 'इच्छार्थेषु लोट् च' इत्येव सूत्र्यतामिति वाच्यम्, चकारेण लिङोऽनुकर्षे तत्संबद्धस्य विभाषाग्रहणस्यानुकर्षणप्रसक्त्या लकारान्तरमपि स्यादिति । न चैवमपि कामप्रवेदन इत्युपसंख्यानादनेनैव सिद्धे 'कामप्रवेदनेऽकच्चिति ३७४६' इति सूत्रं माऽस्त्विति वाच्यम्, यत्रार्थप्रकरणादिना कामप्रवेदनं गम्यते इच्छार्थकमुपपदं नास्ति तदर्थं तदारम्भात् ॥ ( ३७५३ ) **लिङ् च** । 'समानकर्तृकेषु तुमुन् ४९६३' इत्यनेन 'इच्छार्थेषु लिङ्लोटौ ३७५१' इति

---

१ **कच्चिज्जीवतीति** । न चात्र कामप्रवेदनस्य गमकाभावान्न लिङः प्राप्तिरित्यकच्चितीति व्यर्थमिति वाच्यम्, कामो मेऽस्ति कच्चिज्जीवतीति वाक्यस्य कल्पनसम्भवात् ॥ २ **हेतुहेतुमतोरिति** । हेतुहेतुमतोरर्थयोर्वर्तमानाभ्यां धातुभ्यां लिङ् । यत्र द्वयोर्धात्वर्थयोर्हेतुहेतुमद्भावः प्रतिपिपादयिषितस्तत्र विनिगमनाविरहादुभाभ्यामपि धातुभ्यां लिङ् भवति ॥

लिङ् । भुञ्जीयेतीच्छति ॥ ( ३७५४ ) ❁ **इच्छार्थेभ्यो विभाषा वर्तमाने** । ३ । ३ । १६० । लिङ् स्यात्पक्षे लट् । इच्छेत् । इच्छति । कामयेत । कामयते । विधिनिमन्त्रणेति लिङ् । विधौ–यजेत । निमन्त्रणे–इह भुञ्जीत भवान् । आमन्त्रणे–इहासीत । अधीष्टे–पुत्रमध्यापयेद्भवान् । संप्रश्ने–किं भो वेदमधीयीय उत तर्कम् । प्रार्थने–भो भोजनं लभेय । एवं लोट् ॥ ( ३७५५ ) ❁ **प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च** । ३ । ३ । १६३ । प्रैषो विधिः । अतिसर्गः कामचारानुज्ञा । भवता यष्टव्यम् । भवान्यजताम् । चकारेण लोटोऽनुकर्षणं प्राप्तकालार्थम् ॥ ( ३७५६ ) ❁ **लिङ् चोर्ध्वमौहूर्तिके** । ३ । ३ । १६४ । प्रैषादयोऽनुवर्तन्ते । मुहूर्तादूर्ध्वं यजेत । यजताम्, यष्टव्यम् ॥ ( ३७५७ ) ❁ **स्मे लोट्** । ३ । ३ । १६५ । पूर्वसूत्रस्य विषये । लिङः कृत्यानां चापवादः । ऊर्ध्वं मुहूर्ताद् यजतां स्म ॥ ( ३७५८ ) ❁ **अधीष्टे च** । ३ । ३ । १६६ । स्मे उपपदेऽधीष्टे लोट् स्यात् । त्वं स्म अध्यापय ॥ ( ३७५९ ) ❁ **लिङ् यदि** । ३ । ३ । १६८ । यच्छब्दे उपपदे कालसमयवेलासु च लिङ् स्यात् । कालः समयो वेला वा यद्भुञ्जीत भवान् ॥ ( ३७६० ) ❁ **अर्हे कृत्यतृचश्च** । ३ । ३ । १६९ । चाल्लिङ् । त्वं कन्यां वहेः ॥ (३७६१) ❁ **शकि लिङ् च** ।३।३।१७२। शक्तौ लिङ् स्यात् चात्कृत्याः । त्वं भारं वहेः ॥ [ २९७४ ] ❁ **माङि लुङ्** ।३।३।१७५। मा कार्षीः । कथं मा भवतु, मा भविष्यतीति । नायं माङ् किन्तु माशब्दः ॥ ( ३७६२ ) ❁ **धातुसम्बन्धे प्रत्ययाः**[1] ३।४।१। धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः । तिङ्वाच्यक्रियायाः[2] प्राधान्यात्तदनुरोधेन

---

विहितयोर्लिङ्लोटोर्बाधे प्राप्ते लिङः प्रतिप्रसवार्थं सूत्रम् । न चात्र वाऽसरूपविधिना लिङ्लोटोर्नित्यं बाधा नेति शङ्क्यम्, ल्युट्तुमुन्खलर्थेषु तदभावात् । अथापि वासरूपविधिः स्यात्, एवमपि लिङेव यथा स्याल्लोट् मा भूदित्येवमर्थं तदारम्भव्यमेव । क्रियातिपत्तौ लृङ् प्रागवत् ॥ ( ३७५४ ) **इच्छार्थेभ्यः—** । इच्छार्थेभ्यः किम्, पचति । गच्छति ॥ ( ३७५५ ) **प्रैषातिसर्ग—** । **प्रैषो विधिरिति** । विधिग्रहणे कर्तव्ये प्रैषग्रहणं शिष्यबुद्धिवैशद्यार्थमित्याहुः ॥ **लोटोऽनुकर्षणमिति** । 'लोट् च २९४९' इति योगस्येदमेव प्रयोजनम्, एकयोगत्वे तु लिङोऽप्यनुकर्षणं स्यात् ॥ **प्राप्तकालार्थमिति** । प्रैषातिसर्गयोः पूर्वेणैव सिद्धत्वादिति भावः ॥ ( ३७५६ ) **लिङ् चोर्ध्व—** । प्राप्तकालविशेषेऽप्राप्तस्य लिङो विधानार्थमिदं सूत्रम् । प्रैषातिसर्गयोस्तु पूर्वेण प्राप्त एव लिङ् । लोट्कृत्यानां कालविशेषेऽस्मिन् लिङा बाधा मा भूदिति चकारः ॥ ( ३७५७ ) **पूर्वसूत्रस्य विषय इति** । प्रैषादय 'ऊर्ध्वमौहूर्तिके' इति चानुवर्तत इति भावः ॥ ( ३७५८ ) **अधीष्टे च** । लिङोऽपवादः । योगविभागस्तु ऊर्ध्वमौहूर्तिकानुवृत्त्यर्थः ॥ ( ३७५९ ) **लिङ् यदि** ॥ **कालसमयवेलासु चेति** । उपपदेष्विति वचनविपरिणामेन संबध्यते । तुमुनोऽपवादः ॥ **यद्भुञ्जीतेति** । यत्कालः पचतीत्यत्र तु न प्रैषादीनामनुवृत्तेः ॥ ( ३७६० ) **अर्हे—** । योग्ये कर्तरि गम्यमाने कृत्यतृचो भवन्ति । त्वया कन्या वोढव्या, वहनीया, त्वं कन्यां वोढा ॥ **कन्यां वहेरिति** । कन्योद्वहने योग्यस्त्वमित्यर्थः । नन्वर्हे किमर्थं कृत्यतृचो विधीयन्ते । यावता सामान्येन विहितत्वादनर्हेऽपि भविष्यन्तीति चेत् । अत्राहुः–अर्हतायां द्योत्यायामप्राप्तो लिङ् विधीयते, तेन तु लिङा बाधा मा भूदिति कृत्यतृचोर्विधानम् । न च वाऽसरूपविधिना समीहितसिद्धिः–त्र्यधिकारादूर्ध्वं तदप्रवृत्तेरिति ॥ ( ३७६२ ) **धातुसंबन्धे—** । इह धात्वोर्विशेषणविशेष्यभावादिसंबन्धोऽनुपपन्नः, स्वार्थस्मारणेनोपक्षीणत्वात् । पदार्थसंसर्गो वाक्यार्थः, कारकविशिष्टा क्रिया चेति स्वीकारात् । 'शब्दानुगमादृते न शाब्दोऽस्ति प्रत्ययः' इत्यवष्टभ्य शाब्दबोधे शब्दोऽपि भासत इत्यभ्युपगमेऽपि शब्दस्य स्वार्थे प्रत्येव प्रकारत्वं न तु शब्दान्तरं प्रति । तथा च–धातुसंबन्धो वाक्येन न बुध्यते इति तस्य वाक्यार्थत्वासंभवाद्धातुशब्देन धात्वर्थो लक्ष्यते । ननु 'धातोः कर्मणः समानकर्तृकात्–२४६५' इति सन्विधौ कर्मत्वं समानकर्तृत्वं च धातोरर्थद्वारकं विशेषणमाश्रितं तथेहापि धात्वोरर्थद्वारकः संबन्धोऽस्त्विति चेत् । मैवम्, तथा हि सति परस्परसंबद्धार्थबोधकानेकधातुप्रयोग एव प्रत्ययाः स्युस्ततश्च गोमानासीत्, गोमान् भवितेत्यादि न सिध्येत् । न ह्यत्र 'वसन् ददर्श' इत्यत्र वर्तमानकालो वसिरिव वर्तमानकालोऽस्तिः प्रयुज्यते । न चाप्रयुज्यमानस्य धात्वन्तरेण संबन्धोऽस्ति । अर्थयोः संबन्धाभ्युपगमे धातुद्वयाभावेऽपि धात्वर्थद्वयस्य सत्त्वात् गोमानासीदित्यादौ नानुपपत्तिः । तदेतदभिप्रेत्याह—**धात्वर्थानामिति** । विषयबहुत्वापेक्षं बहुवचनम् । एकैकविषयापेक्षायां तु धात्वर्थयोरिति बोध्यम् । एतच्च मनोरमानुसारेण व्याख्यातम् । केचित्तु–धात्वोरर्थद्वारकसंबन्धेऽभ्युपगते गोमानासीद्भवितेत्यादि न सिध्येदिति मनोरमोक्तं चिन्त्यमेव, 'तत्करोति तदाचष्टे ३४१७' इत्यत्रेव 'तदस्यास्त्यस्मिन्–२५५५' इत्यत्राप्येकत्ववर्तमानत्वयोरविवक्षितत्वात्प्रकृतसूत्रानपेक्षयैव तत्सिद्धेः । न ह्यत्र मतुब्विधौ 'वर्तमाने लट् २९०५' इत्यादाविव कालविशेषपरिग्रहोऽस्तीत्याहुः । तद्भाष्यकैयटायननुगुणम् । तथा हि भाष्ये 'प्रत्यय इत्यनुवर्तमाने पुनरत्र प्रत्ययग्रहणं किमर्थम्' इत्याक्षिप्य 'अधातुप्रत्ययानामपि संबन्धे साधुत्वं यथा स्यात् गोमानासीत् भविता वा' इति समाहितम् । कैयटेन तु 'तदस्यास्त्यस्मिन्निति–२५५५' मतुप् प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तो विहित इत्युक्तम् । तथा च–

---

१ **धातुसम्बन्ध इति** । इदं च विधिसूत्रं न त्वधिकारसूत्रम्, तथा सति 'धातुसम्बन्धे' इत्येव सिद्धे प्रत्यया इत्यस्य वैयर्थ्यापत्तेः ॥ २ ननु विनिगमनाविरहाद् वर्तमाने लिङेव कुतो न तत्राह—**तिङ्वाच्येति** ॥

गुणभूतक्रियावाचिभ्यः प्रत्ययाः । वसन् ददर्श । भूते लट् । अतीतवासकर्तृकर्तृकं दर्शनमर्थः । सोमयाज्यस्य पुत्रो भविता । सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम् ॥ ( ३७६३ ) क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः । ३ । ४ । २ । पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च हिस्वौ स्तस्तिङामपवादः । तौ च हिस्वौ क्रमेण[1] परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च । तध्वमोर्विषये तु हिस्वौ वा स्तः । पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते, हिस्वविधानसामर्थ्यात् । तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि, आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु ॥ (३७६४) समुच्चयेऽन्यतरस्याम् ।३।४।३। अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात् ॥

---

मतुब्विधावस्तीत्यत्र एकत्वस्याविवक्षितत्वेऽपि वर्तमानत्वं विवक्षितमिति तद्ग्रन्थबलादवगम्यते । किञ्च, दण्डिनमानयेत्युक्ते वर्तमानसत्ताविशिष्टदण्डयुक्त एवाऽऽनीयते नान्यः । तथा च-आसीत् भवितेति तिङन्तपदानुरोधेन गोमानित्यत्र गावोऽस्यासन्, गावोऽस्य भवितार इत्यतीतानागतसत्ताविशिष्टप्रकृत्यर्थयुक्तो मतुप्प्रत्ययः प्रकृतसूत्रेणैव विधीयते न तु तदुक्तरीत्या लभ्यत इति दिक् । ननु तत्तद्विधिवाक्यैरेव स्वविषये प्रत्ययाः सिद्धाः किमनेन सूत्रेणेत्यत आह—**यत्र काल इति** । 'वर्तमानसामीप्ये-३७२४' इत्यारभ्य कालान्यत्वं प्रायेण प्रतिपाद्यते तदेव चेह गृह्यत इति भावः ॥ वनानि पश्यन् ययावित्यादौ वर्तमानभूतकालादिप्रत्ययेषु को वा स्वकालात्प्रच्युतो भवतीत्याकाङ्क्षायामाह—**तिङ्वाच्येति** । प्रधानानुरोधेन गुणस्य नयनमुचितं न तु विपरीतमिति भावः ॥ **प्रत्यया इति** । कालान्तरभाजो भवन्तीत्यर्थः । **भूते लडिति** । एवं चोषित्वा ददर्शेत्यर्थः । **अतीतेति** । अतीतवासकर्ता कर्ता यस्य दर्शनस्येति बहुव्रीहिः ॥ **सोमयाजीति** । 'करणे यजः ४०-२' इति भविष्यति णिनिः॥ अत एवाह-**सोमेन यक्ष्यमाण इति** । एवं च पश्यन् ययावित्यत्र दृशेर्भूते लट् । दृष्ट्वा ययावित्यर्थः । 'निवेदयिष्यतो मनो न विव्यथे' इत्यत्र तु वेदयतेर्भूते लृट्, तस्य 'लृटः सद्वा ४१२७' इति शतृप्रत्ययः । निवेदनं कृतवत इत्यर्थ इत्यायूह्यम् । स्यादेतत्, भावि कृत्यमासीदित्यत्र सूत्ररीत्या भाविशब्दस्य भूतकालत्वे स्वीकृते सत्यतीतं भवनमित्यर्थादासीच्छब्दस्याप्येककर्तृकमतीतं भवनमित्यर्थात् भाव्यासीच्छब्दयोर्युगपत्प्रयोगो न स्यात् । भाविशब्दार्थस्य आसीच्छब्देनैव लाभात् । ततश्चैतावन्तं कालं भावितया व्यवहृतं तदिदानीमासीदित्यर्थोऽत्रावश्यं स्वीकर्तव्यः । स्वीकृते तु गोमानासीदित्यत्रापि गोमानिति व्यवहारविषय आसीदित्यर्थोऽस्तु । 'वसन् ददर्श—' इत्यादौ भूते लक्षणया यथायथं लडादिः स्वीकर्तव्यः । सोमयाजीत्यत्र तु भूत एव णिनिप्रत्यये जातेऽपि भवितेति लुडन्तसमभिव्याहारे सति सोमयाजीति व्यवहरिष्यमाण इत्यध्याहारेण णिनेर्भविष्यदर्थे लक्षणया वा प्रयोगो भवेदिति किमनेन सूत्रेणेति चेत् । अत्राहुः—अध्याहारलक्षणप्रयुक्तक्लेशं विनैव प्रायशो निर्वाहार्थः सूत्रारम्भः । नहि भावि कृत्यमासीदित्यादौ क्वचिदध्याहारादिकमगत्या भवतीति सर्वत्र तत्स्वीकर्तुमुचितमिति ॥ ( ३७६३ ) **क्रियासमभिहारे—**॥ **द्योत्य इति** । क्रियासमभिहारो धातोरेवार्थः । लोट् तु द्योतक इति भावः ॥ **तस्य च हिस्वौ स्त इति** । ननु लोट इत्यनेन तिङो लक्षयित्वा तिङामेव हिस्वौ विधीयेताम् । तथा सति तिङन्तत्वात्पदत्वं लभ्यत इति गुणोऽप्यस्ति । वा च तध्वमोरिति वाक्यशेषोऽपि स्वरसतः संगच्छते । अन्यथा 'येन नाप्राप्ति-३५७३-२' न्यायेन हिस्वयोस्तिङपवादत्वे सति तध्वमोः स्थाने तयोर्विकल्पेन विधानसंभवादुक्तवाक्यशेषो दुरुपपाद इतिचेत् । अत्राहुः—लोट्शब्दस्य तिङ्लक्षणा न न्याय्या असंजातविरोधित्वेनोपक्रमस्य प्राबल्याद्विषयसप्तम्याश्रयणेन वाक्यशेषस्योपपन्नत्वाच्च । किञ्च, तिङामादेशत्वे तिप्सिप्मिपां स्थाने विहितस्य हेः स्थानिवद्भावेन पित्त्वाङित्त्वाभावेन लुनीहीत्यत्र 'ई हल्यघोः ३३१५' इतीत्वं न स्यात् । ब्रूहीत्यत्र 'ब्रुव ईट् ३२६३' इतीडागमे ब्रवीहि इति स्यात् । तृण्ढीत्यत्र तु 'तृणह इम् ३३७५' इतीमागमे तृणेढीति स्यात् । किञ्च, लादेशानामेव परस्मैपदात्मनेपदसंज्ञे न तु लादेशतिङादेशानामिति सर्वेषां तिङां द्वावपि हिस्वौ पर्यायेण स्याताम्, न तु तिबादीनां हिस्तङां स्व इति पदव्यवस्थया । ततश्च लकारस्यैवादेशौ हिस्वौ न तु तिङामित्यवश्यं स्वीकर्तव्यमिति ॥ नन्वेवं द्वयोरपि 'लः परस्मैपदम् २९०९' इति परस्मैपदसंज्ञा स्यात्ततश्च परस्मैपदिभ्य एव हिस्वौ स्यातामत आह—**तौ चेति** । अयं भावः—लोटो हिस्वौ इति वाक्ये 'क्रियासमभिहारे लोट्' इति वाक्याल्लोडित्यनुवर्तते तच्च हिस्वावित्यस्य विशेषणम् । न च हिस्वौ लोटो भवत इति सामर्थ्याल्लोड्धर्मकावित्यर्थः संपद्यते । तत्रापि मुख्यलोट्संबन्धिनो धर्मस्य प्रत्ययत्वस्यातिदेशो व्यर्थः । स्थानिवत्त्वेनैव तत्सिद्धेः । किन्तु, स्थानिवद्भावलब्धलोड्व्यपदेशकौ तिङ्भूतौ यौ हिस्वौ तयोरेव धर्म इहातिदिश्यते । केचित्तु—क्रियासमभिहारे लोडित्यनन्तरं लाघवात्तस्य हिस्वाविति वक्तव्ये लोड्ग्रहणसामर्थ्याल्लोड्धर्मकावेव हिस्वौ लोटः स्थाने भवत इत्यर्थः संपद्यते । तथा च—पूर्वोक्तरीत्या तिङ्भूतौ यौ हिस्वौ तयोरेव धर्म इहातिदिश्यत इति सिद्धमिष्टम् । एवं च लोटो हिस्वाविति वाक्ये पूर्ववाक्याल्लोड्ग्रहणं नानुवर्तनीयमित्याहुः ॥ **तिङ्संज्ञौ चेति** । तेन पदत्वं 'तिङ्ङतिङः ५९११' इति च भवति ॥ **हिस्वविधानेति** । यदि हि पुरुषवचनसंज्ञे अपि स्याताम्, तर्हि युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव हिस्वाभ्यां भाव्यम्, तत्र च व्यर्थौ हिस्वविधिरिति भावः॥ **हिः कर्तरि । स्वो भावकर्मकर्तृष्विति** । उक्तं च कैयटेनापि—'हिशब्दस्य कर्ता वाच्यः, स्वशब्दस्य तु भावकर्मकर्तारः' इति । अत्र नव्याः—'अल्पे २७६६' 'ह्रस्वे २७६७' इत्यादौ कप्रत्ययवत्क्रियासमभिहारे

---

1 हिस्वयोरतिदिष्टे परस्मैपदात्मनेपदसंज्ञे यथासंख्येन भवतस्तदाह-क्रमेणेति ॥

(३७६५) यथाविध्यनुप्रयोगः पूर्वस्मिन् ।३।४।४। आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः ॥ (३७६६) समुच्चये सामान्यवचनस्य ।३।४।५। समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात् । अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च । ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः ॥ (३७६७) क्रियासमभिहारे द्वे वाच्ये ॥ याहियाहीति याति । पुनःपुनरतिशयेन वा यानं ह्यन्तस्यार्थः । एककर्तृकं वर्तमानकालिकं यानं यातीत्यस्य । इति शब्दस्त्वभेदान्वये तात्पर्यं ग्राहयति । एवं-यातः । यान्ति । यासि । याथः । याथ । यातयातेति यूयं याथ । याहियाहीत्ययासीत्, यास्यति वा । अधीष्वाधीष्वेत्यधीते । ध्वंविषये पक्षेऽधीध्वमधीध्वमिति यूयमधीध्वे । समुच्चये

---

लोडयं स्वार्थिक एव । न त्वस्मिँल्लोटि 'लः कर्मणि च-२९०६' इत्याद्यर्थोऽभ्युपेयः, प्रयोजनाभावात् । यदि तु हिशब्दस्य कर्ता अर्थः स्यात्, पुनःपुनरतिशयेन वा यानं ह्यन्तस्यार्थ इति वक्ष्यमाणग्रन्थः स्वरसतो न संगच्छते । याहियाहीत्यादौ तु कर्त्रादिप्रतीतिर्यातीत्यादिसमभिव्याहारेण सुलभैव । यथा-एधांचक्रे इत्यत्र तङादेशात्प्रागेव आमः परस्य लेर्लुक्यामन्ते संख्याप्रतीत्यभावेऽपि चक्रे इत्यनुप्रयोगवशेन एककर्तृका वृद्धिरूपा क्रियेत्यविद्यमानाऽपि संख्या प्रतीयते, तथैव हिस्वान्तेष्वपि कालकारकसंख्याप्रतीतिर्यातीत्याद्यनुप्रयोगबलेन भवतीत्याहुः । स्यादेतत्, 'क्रियासमभिहारे हिस्वौ लोड्वा च तध्वमोः' इति सूत्रमस्तु । तथा च-हिस्वौ लोटौ न भवत इति लोड्धर्मकावित्यर्थः पूर्वोक्तरीत्या स्यादिति सर्वेष्टसिद्धौ किमनेन लोट इति षष्ठ्यन्तकरणेनेति चेत् । अत्राहुः हिस्वयोर्यदि लोट्स्थानिकत्वं न स्वीक्रियते तर्हि तयोर्लोडादेशवद्भावेन 'ई हल्यघोः ३३१५' इत्यादिप्रवृत्त्या लुनीहीत्यादिसिद्धावपि हिस्वान्तस्य लोडन्तत्वं न सिध्येत् । तथा च-'हन्त च ५९३७' इत्यनुदात्तविकल्पो न स्यात् । हन्त प्रलुनीहिप्रलुनीहीत्ययं लुनाति । एवं च लोडन्तत्वलाभार्थं लोटो हिस्वाविति विधीयेते । यदि तु 'हिस्वौ लोट्' इत्युक्तेऽपि लोड्भावाश्रयेण लोट्कार्यं हन्त चेति स्वरविकल्पः सिध्यतीति ब्रूषे तर्हि स्थानिवद्भावलब्धलोड्धर्मकौ हिस्वावित्यर्थस्यानाश्रयणाल्लोडादेशकार्याणि परस्मैपदात्मनेपदसंज्ञादीन्यपि न सिध्यन्ति । तथा च-पूर्वोक्तदोषस्तदवस्थः स्यात् 'लोट् लोटो हिस्वौ' इत्युक्ते तु स्थानिवद्भावेन हिस्वयोर्लोट्त्वाल्लोडन्तकार्यं स्वरविकल्पः सिध्यति 'क्रियासमभिहारे लोट्' इति वाक्याल्लोडित्यनुवर्त्य हिस्वौ लोडिति प्रागेव व्याख्यातत्वाल्लोडादेशवद्भावेन परस्मैपदात्मनेपदसंज्ञादीन्यपि सिध्यन्तीति ॥ ( ३७६४ ) **समुच्चय इति** । चिनोतेर्भावे 'एरच् ५०२२' इत्यच् ॥ **प्रागुक्तमिति** । धातोर्लोट् लोटो हिस्वौ तध्वमोर्विषये वेत्यर्थः ॥ ( ३७६५ ) **यथाविध्यनु-** ॥ पूर्वस्मिन्क्रियासमभिहारविषये । अत्र संख्याकारकादीनां हिस्वान्तादप्रतीतेस्तद्बोधनायानुप्रयोगो न्यायत एव प्राप्तस्तदनुवादेन यथाविधीति नियम्यते । तथा च-पक्षे प्राप्तस्य नियमनाद्याहियाहीति गच्छतीत्यादि न भवति । यद्यप्यन्यत्र 'इन्हन्पूषार्यम्णां शौ ४८३' इत्यादौ नियमशब्देन परिसंख्या व्यवह्रियते 'सर्वनामस्थाने च-३५४' इत्यादिना शौ तद्भिन्ने च दीर्घे प्राप्ते शेरन्यत्र तु तन्निवृत्तिपरत्वात्तथापीह कदाचिद्यातीत्यस्य कदाचिद्गच्छतीत्यस्यानुप्रयोगे प्राप्ते यथाविधीत्ययमप्राप्तांशपरिपूरणाय 'व्रीहीनवहन्ति' इत्यादिवद्विधीयत इति नियमविधिरेवायम् । एतेन मीमांसकप्रसिद्धनियमविधिः शब्दशास्त्रेऽप्रसिद्ध इति वदन्तः परास्ताः ॥ ( ३७६७ ) **द्वे वाच्ये इति** । वार्तिकमिदं द्विरुक्तप्रक्रियायां व्याख्यातम् ॥ **इतिशब्दस्त्विति** । ननु इतिशब्देन व्यवधानाद्यातीत्यस्यानुयोगत्वं कथमिति चेत्, अत्राहुः—अनुशब्दस्येहानुवादित्वमात्रपरत्वाद्व्यवहितविपरीतप्रयोगयोरिष्टापत्तिः । एतच्च-भाष्यकारीयोदाहरणसूत्रप्रत्याख्यानाभ्यां निर्णीयते । न च 'समुच्चये सामान्यवचनस्य ३७६६' इति विशेषस्योक्तत्वात्सूत्रैकदेशस्य पूर्वस्मिन्निति पदस्य वैयर्थ्यमस्तु नाम । यथाविध्यनुप्रयोग इति तु यथाविधीति नियमार्थं स्वीकर्तव्यमेव । अन्यथा याहि याहीति गच्छतीत्यादि स्यादिति वाच्यम्, यस्माल्लोड्विधिस्तत्प्रकृतिकातिङन्तस्यैवोपस्थितत्वेनानुप्रयोक्तुमर्हत्वान्न तूपस्थितपरित्यागेन यत्किंचिद्धातुप्रकृतिकतिङन्तस्यानुप्रयोगार्हतेति । अत एव 'स्वं रूपं शब्दस्य-४६' इत्यपि सूत्रं प्रत्याख्यातं भाष्यकारेण । 'अग्नेर्ढक् १७४१' इत्यादौ विधिवाक्यगतस्याङ्गारवाचकाग्निशब्दादेरुपस्थितत्वात् तत्परित्यागेनानुपस्थितवह्न्यादिशब्देभ्यो ढगादिर्न भवेदिति । एवं चास्मिन्प्रत्याख्याते यथाविध्यनुप्रयोगसूत्रे मीमांसकप्रसिद्धनियमविधेः स्थितोदाहरणमन्यदन्वेषणीयमिति दिक् ॥ **एवमिति** । याहियाहीति यातः । याहियाहीति यान्तीत्येवमूह्यमित्यर्थः ॥ **पक्षे इति** । 'वा च तध्वमोः' इत्युक्तत्वात् हिस्वाभावपक्ष इत्यर्थः । तध्वमोरित्यत्र तशब्देन मध्यमपुरुषबहुवचनं गृह्यते, ध्वंसाहचर्यात् ॥ यद्यपि ध्वमित्यस्यात्मनेपदत्वमस्तीति तत्साहचर्येण प्रथमपुरुषैकवचनस्य ग्रहणं प्राप्नोति, तथापि बहुवचनत्वमध्यमत्वरूपधर्माभ्यां मध्यमपुरुषबहुवचनमेव गृह्यत इत्याशयेनोदाहरति-**यातयातेति यूयमिति** । अस्यापि लोटो लड्वत्त्वात् 'तस्थस्थमिपाम्-१५५४' इति यात इत्यत्र थस्य तादेशः । विध्यादिलोड्विषये त्वनुप्रयोगेऽपि थस्य तादेशप्रवृत्तेर्यूयं यातेत्यनुप्रयोक्तव्यम् ॥ **अधीध्वमधीध्वमिति** । 'सवाभ्याम्-३०१४' इत्यम् ॥ **अधीध्वे इति** । विध्यादिलोड्विषये तु अधीध्वमित्येवानुप्रयोक्तव्यम् । भावकर्मणोस्तु-भूयस्वभूयस्वेति भूयते । पच्यस्वपच्यस्वेति पच्यते इत्याद्यूह्यम् ॥ 'समुच्चयेऽन्यतरस्याम् ३७६४' इति

तु सक्तून्पिब धानाः खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व दाधिकमास्वादयस्वेत्यभ्यवहरते । तध्वमोस्तु पिबत खादते-त्यभ्यवहरथ । भुङ्ग्ध्वमास्वादयध्वमित्यभ्यवहरध्वे । पक्षे हिस्वौ । अत्र समुच्चीयमानविशेषणाम[1]नुप्रयोगार्थेन सामान्येनाभेदान्वयः । पक्षे–सक्तून्पिबति । धानाः खादति । अन्नं भुङ्क्ते । दाधिकमास्वादयते । एतेन-

"पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥"

इति व्याख्यातम् । अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात् । इह पुनः-पुनश्चस्कन्देत्यादिरर्थ इति तु व्याख्यानं भ्रममूलकमेव, द्वितीयसूत्रे क्रियासमभिहार इत्यस्यानुवृत्तेः । लोडन्तस्य द्वित्वापत्तेश्च । पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषांचिद्भ्रम एव, पुरुषवचनसंज्ञे इह नेत्युक्तत्वात् ॥ इति लकारार्थप्रक्रिया ॥

इति भट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्धे तिङन्तं समाप्तम् ॥

---

सूत्रे क्रियासमभिहार इत्यननुवर्तनात् द्वित्वमकृत्वैवोदाहरति—**सक्तून् पिब धानाः खादेति** । **अभ्यवहरथेति** । विध्या-दिलोड्विषये तु अभ्यवहरतेत्यनुप्रयोक्तव्यम् । एवम् अभ्यवहरध्वे इत्यत्राप्युक्तविषये अभ्यवहरध्वमित्यनुप्रयोक्तव्यम् ॥ **पक्षे हिस्वाविति** । पिब खादेत्यभ्यवहरथ । भुङ्क्ष्व आस्वादस्वेत्यभ्यवहरध्वे इत्युदाहार्यम् ॥ **लवनादीति** । आदिशब्देन मोषणहरणे ग्राह्ये ॥ अनुवृत्त्यभ्युपगमे बाधकमाह—**लोडन्तस्येति** ॥ **भ्रम एवेति** । पुरुषांशे वचनांशे च । लोडंशे तु भ्रमैवेति भावः । एवमुक्तोदाहरणेषु हिस्वान्तेषु तिङन्तत्वं यथायथं परस्मैपदात्मनेपदान्तत्वं च सिद्धं, पुरुषवचनसंज्ञे तु विधानसामर्थ्याद्धिस्वयोर्न स्त इत्युक्तामिति सर्वेष्टसिद्धिः ॥ इति लकारार्थप्रक्रिया ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामिचरणारविन्दसेवकज्ञानेन्द्रसरस्वतीकृतौ
सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां तिङन्तं संपूर्णम् ॥

---

१ अनुप्रयोगार्थेनेति । अनुप्रयुज्यमानधातुना । अभेदेनेति । नीलाभिन्नो घट इत्यर्थके नीलो घट इत्यादौ सामान्य-विशेषयोरभेददर्शनादिति भावः ॥

॥ श्रीः ॥

# तत्त्वबोधिनीव्याख्योपेता
# वैयाकरणसिद्धान्तकौमुदी ।

## कृदन्तप्रकरणम् ।

(३७६८) धातोः ।३।१।९१। आ तृतीयसमाप्तेरधिकारोऽयम् ॥ [ ११२५ ] तत्रोपपदं सप्तमीस्थम् ॥ [५०९] कृदतिङ् ॥ (३७६९) वाऽसरूपोऽस्त्रियाम् ।३।१।९४। परिभाषेयम् । अस्मिन्धात्वधिकारेऽसरूपोऽपवाद-

---

**समस्तजगतामीशौ जगदानन्दकारकौ । जगतीजनकौ वन्दे पार्वतीपरमेश्वरौ ॥**

( ३७६८ ) 'कृदतिङ् ५०९' इति तिङ्भिन्नप्रत्ययस्य कृत्संज्ञाकरणात् कृतां तिङ्ज्ञानाधीनज्ञानत्वात्तिङ्निरूपणानन्तरमेव कृतां निरूपणमुचितमिति तिङो निरूप्य कृतो निरूपयितुमाह—**धातोरिति** । ननु तिङ्निरूपणात्प्रागेव 'स्पृशोऽनुदके क्विन् ५७८' 'ऋत्विग्दधृग्-५०७' इत्यादिना क्विन्नादिनिरूपणं कृतमिति कथमियं भवदुक्तसंगतिः संगच्छत इति चेत् अत्राहुः—क्विन्नादिनिरूपणस्य तत्र प्रासङ्गिकत्वात्, प्राधान्येन च कृतामत्रैव निरूपणान्नोक्तशङ्कावकाश इति । यद्यपि 'धातोरेकाचो हलादेः-३४९४' इति सूत्राद्धातोरित्यनुवर्तत एव तथापि आर्धधातुकसंज्ञाया आश्रितशब्दव्यापारत्वलाभाय पुनर्धातोरिति ग्रहणं कृतम् । अन्यथा 'आर्धधातुकं शेषः २९४२' इत्यनेन तिङ्शिद्भिन्नस्य धातोर्विहितप्रत्ययमात्रस्यार्धधातुकसंज्ञायां लूभ्यां पूभ्यामित्यादाविड्गुणौ स्याताम्, धातोर्विहितत्वेन भ्यामादेरार्धधातुकत्वात्, पुनर्धातुग्रहणे कृते तु तव्यत्तव्यादय इव धातोरित्येवमविधानाद् भ्यामादेरार्धधातुकत्वं नेति दिक् ॥ 'प्राग्लादेशाद्धात्वधिकारः' इति पक्षोऽप्युक्त इत्याशयेनाह—**आ तृतीयसमाप्तेरिति** । तृतीयाध्यायसमाप्तिपर्यन्तमित्यर्थः । प्राग्लादेशादिति पक्षे तु 'तिङ्शित्सार्वधातुकम् २९२०' इत्यत्र धातोरित्यधिकाराभावात् शित्प्रत्ययमात्रस्य सार्वधातुकत्वेन शसोऽपि सार्वधातुकत्वे 'सार्वधातुकमपित् २९९३' इति ङित्त्वे च हरीनित्यादौ 'घेर्ङिति ३४९' इति गुणः स्यादिति ज्ञेयम् । स्यादेतत्—धातोर्लकारे सति तस्मिन् परतो नित्यत्वात्करिष्यतीत्यादौ प्रथमं स्यप्रत्ययप्रवृत्तौ तिबाद्यप्रसङ्गः, यत्र तु तिबाद्याश्रयो विकरणस्तत्रैव व्यवधानाभावाद्भवतीत्यादौ तिबादयः स्युरिति चेत् । नैवम्, 'विकरणेभ्यो नियमो बलीयान्' इति स्वीकारात् । अथवा—विहितविशेषणाश्रयणेन धातोर्विहितस्य लस्येति व्याख्यानादिष्टसिद्धेः । नन्वेवं विहितविशेषणाश्रयणे 'विद्लृ लाभे' इत्यस्माद्धातोर्विहितस्य लटः शविकरणव्यवायेऽपि 'विदो लटो वा ३२७७' इति णलादयः स्युरिति चेत् । अत्र हरदत्तः—धातुनाऽत्र विहितं विशेष्यते विदिना त्वानन्तर्यमिति । तथा चायमर्थः संपद्यते—धातोर्विहितस्य विदोऽनन्तरस्य लटो णलादय इत्यभ्युपगमात् वेत्तेरेव विहितस्य लटो णलादयो भवन्ति, न तु विन्दतेर्लट इति दिक् ॥ विधेयानिर्देशात्स्वरितत्वाच्चाधिकारसूत्रमिदमित्याह—**अधिकारोऽयमिति** ॥ [ ११२५ ] **तत्रोपपदमित्यादि** । एतेन कृत्संज्ञोपपदसंज्ञयोरिह विधानसौष्ठवाय द्वितीयो धात्वधिकार आवश्यक इति ध्वनितम् । अयं भावः—यदि द्वितीयधात्वधिकारो न स्यात्तदा पूर्वधात्वधिकारेऽपि कृदुपपदसंज्ञे स्याताम् । इष्टापत्तौ तु सप्तमीनिर्दिष्टमात्रस्योपपदत्वेन 'च्लि लुङि २९७६' इत्यादौ लुङन्ते उपपदे च्लिरित्येवमनिष्टोऽर्थः प्रसज्येत । तिङ्भिन्नधात्वाधिकारप्रत्ययस्य कृत्संज्ञायां करिष्यतीत्यादौ स्यप्रत्ययस्य कृत्त्वेन 'कृत्तद्धित-२६३' इति प्रातिपदिकत्वादौत्सर्गिकमेकवचनमिति सर्वसंमतत्वेन सुप्प्रत्ययप्रसङ्गाच्च । तस्मादधिकारविशेषे अनयोः संज्ञयोर्विधानार्थमयमधिकार इति ॥ ( ३७६९ ) **वाऽसरूपोऽस्त्रियाम्** । अपवादेन नित्यं बाधे प्राप्ते क्वचिदुत्सर्गस्यापि प्रवृत्त्यर्थमिदं सूत्रम् । अत एव 'अचो यत् ३७८७' 'ऋहलोर्ण्यत् ३८२४' इत्याद्यपवादविषये तव्यदादयोऽपि प्रयुज्यन्ते—भव्यम्, भवितव्यम् । कार्यम्, कर्तव्यम्, करणीयम् । वाच्यम्, वक्तव्यमित्यादि ॥ **परिभाषेति** । अधिकारसूत्रमिति स्वीकृते तु व्यधिकारेण विच्छेदाद्वाऽसरूपसूत्राप्रवृत्त्या आसित्वा भुङ्क्ते, आस्यते भोक्तुमित्यादिरूपाणि न सिद्ध्यन्ति । इह

---

१ असरूप इति च्छेदः, असरूपत्वं च किमपेक्षयेत्याकाङ्क्षायां यस्य स्वविषये सर्वत्र प्रवृत्तिस्तदपेक्षयेति प्रत्यासत्त्या लभ्यते । एतादृशश्चोत्सर्ग एवेति फलितमाह—असरूपोऽपवादेति ॥

प्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना ॥ ( ३७७० ) कृत्याः । ३ । १ । ९५ । अधिकारोऽयं ण्वुलः प्राक् ॥ (३७७१) कर्तरि कृत् ।३।४।६७। कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते-॥ (३७७२) तयोरेव कृत्यक्तखलर्थाः ।३।४।७०। एते भावकर्मणोरेव स्युः ॥ (३७७३) तव्यत्तव्यानीयरः ।३।१।९६। धातोरेते प्रत्ययाः स्युः । तकाररेफौ स्वरार्थौ । एधितव्यम्, एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यः, चयनीयो वा धर्मस्त्वया ॥ (३७७४) वसेस्तव्यत्कर्तरि णिच्च ॥ वसतीति वास्तव्यः ॥ (३७७५) केलिमर उपसंख्यानम् ॥ पचेलिमा माषाः, पक्तव्याः । भिदेलिमाः सरलाः, भेत्तव्याः । कर्मणि प्रत्ययः ॥ वृत्तिकारस्तु कर्मकर्तरि चायमिष्यत इत्याह, तद्भाष्यविरुद्धम् [1] ॥ ( ३७७६ ) कृत्यचः । ८ । ४ । २९ । उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात् । प्रयाणीयम् । अचः किम् । प्रमग्नः ॥ ( ३७७७ ) निर्विण्णस्योपसंख्यानम् ॥ अचः परत्वाभावादप्राप्ते [2] वचनम् । परस्य णत्वम् । पूर्वस्य ष्टुत्वम् । निर्विण्णः ॥ ( ३७७८ ) णेर्विभाषा । ८ । ४ । ३० । उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद्विहितो यः कृत्तत्स्थस्य नस्य णो वा स्यात् । प्रयापणीयम्, प्रयापनीयम् । विहितविशेषणं किम् । यका व्यवधानेऽपि यथा स्यात् । प्रयाप्यमाणं पश्य । णत्वे दुर उपस-

---

भोजनार्थत्वादासनस्य पूर्वकालता गम्यते, क्त्वाप्रत्ययश्च तुमर्थाधिकाराद्भावे भवति, लकारोऽपि तत्रैवेति समानविषयत्वादुभयोर्बाध्यबाधकभावः स्यात् । किञ्च, ‘ वर्णात्कारः ५०९६ ’ इत्युत्सर्गः स च ‘ रादिफः ५०९७ ’ इत्यनेन बाध्येत । न चेष्टापत्तिः, ‘ रकारादीनि नामानि शृण्वतो मम पार्वति ’ इत्यादिप्रयोगविरोधात् । अमुमेवार्थं मनसि निधाय हरदत्तादिभिः परिभाषेयमित्युक्तम् । एतेन ‘शकि लिङ् च ३७६१’इति ज्ञापकाद्वाऽसरूपविधेरनित्यत्वेन स्त्र्यधिकारादुत्तरेषु ल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्तीति सिद्धान्तः संगच्छत इति दिक्। ‘वाऽसरूपः-३७६९’ इत्यत्राऽसरूप इति च्छेदः। अन्यथा लाघवे विशेषाभावेनासन्देहाय सरूपो वेति ब्रूयादित्याशयेनाह—**असरूप इति** । असरूप इति किम् । ‘कर्मण्यण् ३८७९’ इत्युत्सर्गः । ‘आतोऽनुपसर्गे कः ३८८३’ इत्यपवादः । स तूत्सर्गस्य नित्यं बाधको यथा स्यात् । गोदः । कम्बलदः । न च क्तेऽप्यसरूपग्रहणे अण्कयोरप्यसरूपत्वान्नेष्टसिद्धिरिति वाच्यम्, ‘ नानुबन्धकृतमसारूप्यम् ’ इति सिद्धान्तात् ॥ ‘ अस्त्रियाम् ’ इत्यत्र स्त्रीशब्दः स्वर्यते, स्वरितेन चाधिकारावगतिरित्याशयेनाह-**स्त्र्यधिकारोक्तं विनेति** । तेन ‘ स्त्रियां क्तिन् ५०६७ ’ इत्युत्सर्गम् ‘अ प्रत्ययात् ५०८२ ’ इत्यपवादो नित्यं बाधते । चिकीर्षा । जिहीर्षा ॥ नन्वस्त्रियामित्यत्र स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञाय स्वरितेनाधिकारावगतिरित्यादिव्याख्यां विहाय स्त्रियामभिधेयायां वाऽसरूपविधिर्नेति स्त्रियामित्येवं शब्दमुच्चार्य विहिते वाऽसरूपविधिर्नेति वा व्याख्यायतामिति चेत् । अत्राहुः-स्त्रियां वाच्यायामिति पक्षे लव्या, लवितव्येति यतो विषये तव्यो न स्यात्, द्वयोरपि इह स्त्रीत्ववाचकत्वात् । स्त्रियामिति शब्दोच्चारणपक्षे तु व्यावक्रोशी, व्यावकृष्टिरिति कर्मव्यतिहारे णचो विषये क्तिन्न स्यात्, द्वयोरपि स्त्रियामित्युच्चार्य विधानात् । ततश्च स्त्र्यधिकारोक्तं विनेति व्याख्यैव ज्यायसीति दिक् ॥ ( ३७७० ) कृत्याः । अत्र ‘प्रत्ययः २६४’ इत्यादिवत् ‘कृत्यः ’ इत्यधिकारेणापीष्टसिद्धेर्बहुवचनमुक्तप्रत्ययसमुच्चयार्थं, तेन केलिमरादयो ज्ञापकसिद्धा इति नोपसंख्येया इत्याहुः ॥ **ण्वुलः प्रागिति** । ‘ण्वुल्तृचौ ३८५१ ’ इत्यतः प्रागित्यर्थः । ‘रोगाख्यायां ण्वुल् बहुलम् ५०९३’ इति नावधिः, प्रत्यासत्तिन्यायात् । अवधिविशेषे ज्ञापकं तु ‘ अर्हे कृत्यतृचश्च ३७६० ’ इत्यत्र कृत्यात्पृथक् तृचो ग्रहणमेव । न चैवं तृचः कृत्यत्वेऽपि ण्वुलः कृत्यत्वं दुर्वारं स्यात्, इष्टापत्तौ तु ‘ तयोरेव-३७७२ ’ इति भावकर्मणोरेव ण्वुल् स्यान्न तु कर्तरीति वाच्यम्, भाष्ये एव ण्वुलः कृत्यत्वमाशङ्क्य योगापेक्षं ज्ञापकमिति सिद्धान्तितत्वात् । वृत्तिकारस्तु सूत्रे ‘प्राग् ण्वुलः’ इति प्रचिक्षेप ॥ ( ३७७२ ) **तयोरेव**-। तच्छब्देन भावकर्मणी परामृश्येते । एवकारस्तु कर्तृयोगव्यवच्छेदार्थस्तदाह--**भावकर्मणोरेवेति** । यद्यप्येतत् ‘ तक्रकौण्डिन्य- ’ न्यायेनैव लभ्यते, तथापि स्पष्टप्रतिपत्त्यर्थमेवकार इत्येके । तन्न्यायस्यानित्यत्वज्ञापनार्थमित्यन्ये ॥ ( ३७७३ ) **स्वरार्थाविति** । तकारः ‘तित्स्वरितम् ५६९४ ’ इति स्वरितत्वार्थः । रेफस्तु ‘उपोत्तमं रिति ५६९९’ इति मध्योदात्तार्थः ॥ ( ३७७६ ) **कृत्यचः** । ‘उपसर्गात्’ इत्यनुवर्तते, ‘रषाभ्याम् ’ इति च । तत्र तात्स्थ्यात्ताच्छब्द्यमित्याह-**उपसर्गस्थादिति** ॥ **कृत्स्थस्य नस्येति** । अच उत्तरस्येत्यस्य कृतो विशेषणत्वे तु प्रयापणमित्यादौ न स्यादिति भावः ॥ **प्रमग्न इति** । ‘टुमस्जो शुद्धौ’ ‘ ओदितश्च ४०३० ’ इति निष्ठानत्वम्, तस्यासिद्धत्वात् ‘स्कोः-५१६’ इति सलोपे ‘चोः कुः ५१३’ ॥ (३७७७) **निर्विण्णस्येति** । विदेः क्तस्य ‘रदाभ्याम्-४०२४’ इति नत्वं पूर्वस्य दस्य च ॥ ( ३७७८ ) **प्रयापणीयमिति** । या प्रापणे । णिचि ‘अर्तिह्री-३४०५’ इति पुक्, ‘णेरनिटि ३०८८’ इति णिलोपः ॥ **प्रयाप्यमाणमिति** । यातेर्णिचि पुकि ण्यन्तस्य धातुत्वेन वर्तमाने कर्मणि लटि लटः शानच् तस्य शित्त्वेन ‘तिङ्शित्-२९२०’ इति सार्वधातुकत्वे ‘सार्वधातुके यक् ३६८०’ इत्यनेन यकि कृते ‘णेरनिटि ३०८८’ इति णिलोपे ‘आने मुक् ४१२०’ इति मुगागमे णत्वे च सिध्यति रूपम् । विहितविशेषाकरणे तु यका व्यवधानेन ण्यन्तात्परत्वाभावान्न सिध्यति ।

---

१ **भाष्यविरुद्धमिति** । तत्र भिदेलिमा इत्यस्य भेत्तव्या इति विवरणादिति भावः ॥ २ **अचः परत्वाभावादिति** । नकारेण व्यवधानादिति भावः ॥

णत्वं नेत्युक्तम् । दुर्यानम् । दुर्यापनम् ॥ ( ३७७९ ) **हलश्चेजुपधात्** । ८ । ४ । ३१ । हलादेरिजुपधात्कृतः स्याचः परस्य णो वा स्यात् । प्रकोपणीयम्, प्रकोपनीयम् । हलः किम् । प्रोहणीयम् । इजुपधात्किम् । प्रवपणीयम् ॥ ( ३७८० ) **इजादेः सनुमः** । ८ । ४ । ३२ । सनुमश्चेद्भवति तर्हि इजादेर्हलन्ताद्विहितो यः कृत्तत्स्थस्यैव । प्रेङ्खणीयम् । इजादेः किम् । मगि सर्पणे । प्रमङ्गनीयम् ॥ नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । अट्कुप्वाङिति सूत्रेऽप्येवम् । तेनेह न-प्रेन्वनम् । इह तु स्यादेव-प्रोम्भणम् ॥ ( ३७८१ ) **वा निंसनिक्षनिन्दाम्** । ८ । ४ । ३३ । एषां नस्य णो वा स्यात् कृति परे । प्रणिंसितव्यम्, प्रनिंसितव्यम् ॥ ( ३७८२ ) **न भाभूपूकमिगमिप्यायीवेपाम्** । ८ । ४ । ३४ । एभ्यः कृन्नस्य णो न । प्रभानीयम् । प्रभवनीयम् ॥ ( ३७८३ ) पूञ एवेह ग्रहणमिष्यते ॥ पूङस्तु प्रपवणीयः सोमः ॥ ( ३७८४ ) **ण्यन्तभादीनामुपसंख्यानम्** ॥ प्रभापनीयम् ॥ ( ३७८५ ) **खशात्रः शस्य यो वेत्युक्तम्** । णत्वप्रकरणोपारि तद्बोध्यम् । यत्वस्यासिद्धत्वेन शकारव्यवधानान्न णत्वम् । प्रख्यानीयम् ॥ ( ३७८६ ) **कृत्यल्युटो बहुलम्** । ३ । ३ । ११३ । स्नान्त्यनेन स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ॥ ( ३७८७ ) **अचो यत्** । ३ । १ । ९७ । अजन्ताद्धातोर्यत्स्यात् । चेयम् । जेयम् । अज्ग्रहणं शक्यमकर्तुम् । योगविभागोऽप्येवम् । तव्यदादिष्वेव यतोऽपि सुपठत्वात् ॥ ( ३७८८ ) **ईद्यति** । ६ । ४ । ६५ । यति परे आत ईत्स्यात् । गुणः । देयम् । ग्लेयम् ॥ ( ३७८९ ) **तकिशसिचतियतिजनिभ्यो यद्वाच्यः** ॥ तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । जनेर्यद्विधिः स्वरार्थः, ण्यताऽपि रूपसिद्धेः । न च वृद्धिप्रसङ्गः, जनिवध्योश्चेति निषेधात् ॥ ( ३७९० ) **हनो वा यद्वधश्च वक्तव्यः** ॥ वध्यः । पक्षे वक्ष्यमाणो ण्यत् ।

---

न च 'अड्व्यवायेऽपि' इति भविष्यतीति वाच्यम्, रषाभ्यां परस्य नस्येत्यंशे 'तस्मात्-६५' इति निर्दिष्टपरिभाषया प्रापितस्याव्यवधानस्य रामाणामित्यादिसिद्धये 'व्यवायेऽपि' इति योगविभागेन बाधे सति आदर्शेनेत्यादावतिप्रसङ्गे प्राप्ते 'अट्कुप्वाङ्' इत्यंशो नियमार्थः । आङ्ग्रहणं तु 'पदव्यवायेऽपि १५१६' इति निषेधं बाधितुमिति स्थितम् । 'णेर्विभाषा ३७७८' इत्यत्र तु ण्यन्तकृतोरव्यवधानस्यापेक्षा कथमड्ग्रहणेन निवार्येतेति भावः ॥ ( ३७७९ ) **हलश्च-** । इजुपधस्य हलन्तत्वाव्यभिचाराद्धल इत्यनेन तदादित्वं लक्ष्यत इत्याह-**हलादेरिति** ॥ **प्रकोपणीयमिति** । 'कुप क्रोधे' । **प्रोहणीयमिति** । 'ऊह वितर्के' । अत्र 'कृत्यचः ३७७६' इति नित्यमेव णत्वम् । एवं प्रवपणीयमित्यत्रापि । 'डुवप् बीजसंताने' ॥ ( ३७८० ) **इजादेः सनुमः** । 'कृत्यचः ३७७६' इत्येव सिद्धे नियमार्थमिदमित्याह-**सनुमश्चेदित्यादि** । इह हल इत्यनुवृत्तं तदन्तपरं न तु तदादिपरम् । इजादेर्हलादित्वासंभवात्तदाह--**हलन्तादिति** ॥ **विहित इति** । यदि तु विहितविशेषणं न व्याख्यायेत तर्हि नियमार्थता न लभ्येत, णिजन्ताद्विहितस्यापि कृत्स्थनकारस्य णिलोपे कृते हलन्तात्परत्वेन 'णेर्विभाषा ३७७८' इति विकल्पं बाधितुं विधेः संभवात् । इष्टापत्तौ तु अणिजन्तप्रकृतिकानीयर्प्रत्ययान्तं प्रेङ्खणीयमित्याद्युदाहरणं न स्यात्, किन्तु णिजन्तप्रकृतिकमेवोदाहरणं स्यात् । किञ्च अस्य सूत्रस्य नियमार्थत्वाभावात्प्रमङ्गनीयमित्यत्र 'कृत्यचः ३७७६' इत्यनेन णत्वं स्यात्, अतो विहितविशेषणमवश्यं स्वीकार्यमिति दिक् ॥ नन्वेवमपि नियमार्थता न युज्यते, प्रेन्वनमित्यत्र विध्यर्थत्वसंभवात्, नुम्नकारेण व्यवधानात् 'कृत्यचः ३७७६' इत्यस्याप्राप्तेरित्यत आह-**नुम्ग्रहणमिति** । 'अट्कुप्वाङ्-२८२' इति सूत्र इवात्रापि नुमाऽनुस्वारो लक्ष्यत इति विध्यर्थत्वमिह न शङ्कनीयमिति भावः ॥ **प्रोम्भणमिति** । 'उम्भ पूरणे' इत्यस्माद्भावे ल्युट् ॥ ( ३७८१ ) **वा निंस-** । 'कृत्यचः ३७७६' इत्यतोऽनुवर्तनादाह--**कृति पर इति** ॥ ( ३७८४ ) **ण्यन्तभादीनामिति** । ण्यन्तस्य प्रकृत्यन्तरत्वादप्राप्ते वचनम् । 'हेरचङि २३५१' इति सूत्रे अचङीति पर्युदासेन 'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्' इति ज्ञापनादेतत्सिद्धमिति केचिदाहुः, तद्भसात् । ज्ञापनं तु कुत्वमात्रविषयकमिति भाष्यादौ सिद्धान्तितत्वात् ॥ (३७८७) **अचो यत्** । धातोरिति वर्तते । अज्ग्रहणं च धातोर्विशेषणं विशेषणेन तदन्तविधिस्तदाह-**अजन्तादिति** ॥ **शक्यमकर्तुमिति** । अत्र केचिदज्ग्रहणमजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थमपेक्षितम् । तेन दित्स्यं धित्स्यमित्यत्र यति कृते 'यतोऽनावः ५५७६' इत्याद्युदात्तत्वं सिध्यति, ण्यति कृते तु 'तित्स्वरितम् ५६९४' इति प्रसज्येत । न च दित्स्यं धित्स्यमित्यत्र 'ऋहलोः-३८२४' इति ण्यतः प्रसक्तिरेव नास्तीति वाच्यम्, आर्धधातुकविवक्षायामेव अतो लोपे कृते हलन्तत्वेन तत्संभवादित्याहुः । तदापाततः, आर्धधातुके विवक्षिते यद्यतो लोपः स्यात्तदा हीदं संभवेत्, लोपस्तु आर्धधातुके पर एवोचितः अन्यथा परनिमित्तत्वाभावेन स्थानिवत्त्वाभावे गणयतीत्यादावुपधावृद्धिप्रसङ्गादिति भावः ॥ **सुपठत्वादिति** । द्वये धातवोऽजन्ता हलन्ताश्च । तत्र हलन्ताण्ण्यतं वक्ष्यतीति परिशेषादजन्तादेव यद्भविष्यतीति भावः ॥ (३७८९) **तकिशसि-** । 'तक हसने' 'शसु हिंसायाम्' 'चते याचने' । यत्तु केचिच्छंसीति सानुस्वारं पठन्ति । तदुपेक्ष्यम्, 'ईडवन्दवृशंसदुहां ण्यतः ५५७७' इति सूत्राविरोधेन शंसेर्ण्यत एव स्वीकर्तव्यत्वात् ॥ ( ३७९० ) **हनो वा यदिति** ॥ हन्तेर्वा यत्स्यात्, यत्संनियोगेन वधादेशस्तु नित्य एव । यद्यपि वधमर्हतीति वध्य इति 'शीर्षच्छेदाद्यच २३५१' इत्यतो यदित्यनुवर्तमाने 'दण्डादि-

---

१ **शक्यमकर्तुमिति** । हलन्तेभ्यो ण्यद्विधानात् परिशेषादेव तल्लब्धेरिति भावः ॥

घात्यः ॥ ( ३७९१-१ ) पोरदुपधात् । ३ । १ । ९८ । पवर्गान्तादुपधाद्यत्स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् । ( ३७९१-२ ) नानुबन्धकृतमसारूप्यम् । अतो न ण्यत् । तव्यदादयस्तु स्युरेव ॥ ( ३७९२ ) आङो यि । ७ । १ । ६५ । आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते । नुमि कृतेऽदुपधत्वाभावात् ण्यदेव । आलम्भ्यो गौः ॥ ( ३७९३ ) उपात्प्रशंसायाम् । ७ । १ । ६६ । उपलम्भ्यः साधुः । स्तुतौ किम् । उपलब्धुं शक्य उपलभ्यः ॥ ( ३७९४ ) शकिसहोश्च । ३ । १ । ९९ । शक्यम् । सह्यम् ॥ ( ३७९५ ) गदमदचरयमश्चानुपसर्गे । ३ । १ । १०० । गद्यम् । मद्यम् । चर्यम् ॥ ( ३७९६ ) चरेराङि चागुरौ ॥ आचर्यो देशः । गन्तव्य इत्यर्थः । अगुरौ किम् । आचार्यो गुरुः । यमेर्नियमार्थम्[1] । सोपसर्गान्मा भूदिति । प्रयाम्यम् । निपूर्वात्स्यादेव । तेन न तत्र भवेद्विनियम्यमिति वार्तिकप्रयोगात् । एतेनानियम्यस्य नायुक्तिः । त्वया नियम्या ननु दिव्यचक्षुषेत्यादि व्याख्यातम् । नियमे साधुरिति वा[2] ॥ ( ३७९७ ) अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु । ३ । १ । १०१ । वदेर्नञि उपपदे "वदः सुपीति यत्क्यपोः प्राप्तयोर्यदेव सोऽपि गर्ह्यायामेवेत्युभयार्थं निपातनम् । अवद्यं पापम् । गर्ह्ये किम् । अनुद्यं गुरुनाम । तद्धि न गर्ह्यं वचनानर्हं च ॥

आत्मनाम[3] गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥ इति स्मृतेः ।

---

भ्यः-२३५२ ' इति तद्धितेन यताऽपि सिध्यति, तथाप्यसिवध्यो मुसलवध्य इति समासो न सिध्येत् । कृति पुनः 'कर्तृकरणे कृता-१००४' इति सिध्यति । न चासिवधमर्हतीति विग्रहे कृतसमासादेव तद्धितोऽस्त्विति वाच्यम्, दण्डादिषु केवलस्य वधशब्दस्य पाठात्प्रत्ययविधौ तदन्तविधेश्च प्रतिषेधात्स्वरे भेदाच्च । असिवधशब्दाद्यति हि सति 'तित्स्वरितम् ५६९४' इति स्वरितः प्रसज्येत । कृदन्तेन समासे तु कृदुत्तरपदप्रकृतिस्वरेण वध्यशब्द आद्युदात्तः । अत एव वध्यशब्देन तद्धितान्तेन सह 'सुप्सुपा ९४९-१' इति समास इत्यपि न वाच्यम्, अन्तोदात्तत्वप्रसङ्गादिति दिक् ॥ घात्य इति । 'हनस्तोऽचिण्णलोः ३४२१' इति तत्वम् । 'हो हन्तेः-४८५' इति कुत्वम् ॥ (३७९१-१) पोरदुपधात् । पोः किम्, पाक्यम् । अदुपधात्किम्, कोप्यम् । तपरकरणं किम्, 'आप्लृ व्याप्तौ' आप्यम् ॥ ( ३७९१-२ ) नानुबन्धेति । अनुबन्धानामनवयवत्वात् तत्कृतमसारूप्यं नाश्रीयते । एकान्तत्वपक्षेऽपि 'ददातिदधात्योर्विभाषा ३८६३' इति विभाषाग्रहणाल्लिङ्गान्नाश्रीयते । अन्यथा अनुबन्धकृतादसारूप्यादेव शविषये णो भविष्यतीति किं तेन विभाषाग्रहणेन । ततश्च पक्षद्वयेऽपि शप्यमित्यादौ ण्यन्न भवतीति भावः । एतच्च 'ददाति-३८६३' इत्यादिसूत्रे विभाषाग्रहणमनुबन्धानामनेकान्तत्वपक्षे शविषये णस्याप्राप्तौ विभाषा, एकान्तत्वपक्षे तु प्राप्तविभाषेति पक्षद्वयसाधारणं विभाषाग्रहणं लिङ्गं मनोरमायामेकान्तत्वपक्ष एवोपन्यस्तमिति तदनुसारेणेहाप्युक्तम् । अनेकान्तत्वपक्षे त्वसाधारणं लिङ्गम् 'उदीचां माङः-५१२८' इति सूत्रे माङो ग्रहणम् । मेङ इत्यत्र हि सत्यपि ङकारानुबन्धे तस्यानवयवत्वाद् एजन्तत्वमविहतमिति 'आदेच उपदेशे-३१६३' इत्यात्वस्वीकारादिति दिक् ॥ ( ३७९२ ) ण्यदेवेति । तेन 'तित्स्वरितम् ५६९४' इति स्वरिते सति आलम्भ्य इत्यत्र समासान्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण स्वरितान्तत्वमिष्टं सिध्यति, यति तु 'यतोऽनावः ५५७६' इत्याद्युदात्तत्वेनोत्तरपदाद्युदात्तत्वं प्रसज्येत तच्चानिष्टमिति भावः ॥ ( ३७९३ ) उपात्प्रशंसायाम् । यादौ प्रत्यये विवक्षिते उपपूर्वाल्लभेर्नुम् स्यात्प्रशंसायाम् । सा चेह गम्यमानतया विशेषणम् । धात्वर्थस्तु प्राप्तिरेव, तेन यस्य प्राप्तिर्यस्माद्वा प्राप्तिः प्रशंसाहेतुर्भवति तदिहोदाहरणम् । विपरीतं तु प्रत्युदाहरणम् । इहापि यादौ प्रत्यये विवक्षिते इत्यर्थान्नुमि कृते ण्यति सत्यन्तस्वरितत्वं भवति, यति तु सत्युत्तरपदाद्युदात्तत्वं स्यात् । प्राचा तु स्वरे विशेषमनालोच्य 'पोरदुपधात् ३७९१-१' इति यतमेव स्वीकृत्य यति परे नुमिति व्याख्यातं तदाकरविरोधादुपेक्ष्यमित्याहुः ॥ ( ३७९५ ) गदमद-। व्यत्ययेन पञ्चम्यर्थे सप्तमी । एभ्योऽनुपसर्गेभ्यो यत्स्यात् ण्यतोऽपवादः । अनुपसर्गे किम् । 'न नैषधे कार्यमिदं निगाद्यम्' इति श्रीहर्षः ॥ यमेरिति । 'पोरदुपधात् ३७९१-१' इत्यनेनैव सिद्धेरिति भावः ॥ नियमे साधुरिति । 'यमः समुपनिविषु च ५०३५' इति वैकल्पिकेऽप्प्रत्यये कृते 'तत्र साधुः २२४४' इति तद्धितो यदित्यर्थः । यद्यप्यस्मिन्पक्षे 'कृत्यानां कर्तरि वा ९२१' इत्यस्याप्रवृत्तेः कर्तरि तृतीया दुर्लभा, तथापि त्वयेति तेनेति च करणत्वविवक्षया तृतीयेति स्थितस्य गतिर्बोध्या । केवलाद्यतं कृत्वा निशब्देन समास इत्यपरे । यद्वा-'यमोऽपरिवेषणे मित्' इति मतमाश्रित्य 'पर्यवसितं नियमयन्' इत्यादाविव मित्त्वं स्वीकृत्य ण्यन्ताद्यत् बोध्यः । अथवा संज्ञापूर्वकविधेरनित्यत्वात् ण्यत्येव वृद्धिर्न प्रवृत्तेति दिक् ॥ एवं च वार्तिकप्रयोगोऽप्यन्यथासिद्ध इति तद्बलेन निपूर्वाद्यदिति न कल्पनीयमिति भावः ॥ ( ३७९७ ) अनुद्यमिति । अत्र वदेः क्यबेव भवति, यजादित्वात्संप्रसारणम् । 'नलोपो नञः १०९१' 'तस्मान्नुडचि १०९२' ॥

---

१ नियमार्थमिति । यमेर्यदि यत् तदोपसर्गाभाव एवेति नियमशरीरम् ॥ २ नियमे साधुरिति वेति । यदि पूर्वोक्तनियमस्याबाध एव स्वीक्रियते तदा नियमशब्दात् 'तत्र साधुः' इति यत् इत्यर्थः ॥ ३ आत्मनामेति । सांव्यवहारिकाभिवादनीयनामितरनाम्न एवोच्चारणनिषेधपरेति प्रपञ्चितं भाष्यटिप्पण्याम् ॥

पण्या गौः। व्यवहर्तव्येत्यर्थः। पाण्यमन्यत्। स्तुत्यर्हमित्यर्थः। अनिरोधोऽप्रतिबन्धस्तस्मिन्विषये वृङो यत्। शतेन वर्या कन्या। वृत्याऽन्या॥ (३७९८) ◎ **वह्यं करणम्।** ३।१।१०२। वहन्त्यनेनेति वह्यं शकटम्। करणं किम्। वाह्यम्। वोढव्यम्॥ (३७९९) ◎ **अर्यः स्वामिवैश्ययोः।** ३।१।१०३। ऋ गतौ अस्माद्यत्। ण्यतोऽपवादः। अर्यः स्वामी वैश्यो वा। अनयोः किम्। आर्यो ब्राह्मणः। प्राप्तव्य इत्यर्थः॥ (३८००) ◎ **उपसर्या काल्या प्रजने।** ३।१।१०४। गर्भग्रहणे प्राप्तकाला चेदित्यर्थः। उपसर्या गौः। गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः। प्रजने काल्येति किम्। उपसार्या काशी। प्राप्तव्येत्यर्थः॥ (३८०१) ◎ **अजर्यं संगतम्।** ३।१।१०५। नञ्पूर्वाज्जीर्यतेः कर्तरि यत् संगतं चेद्विशेष्यम्। न जीर्यतीत्यजर्यम्। तेन संगतमार्येण रामाजर्यं कुरु द्रुतमिति भट्टिः। मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्धेत्यत्र तु संगतमिति विशेष्यमध्याहार्यम्। संगतं किम्। अजरिता कम्बलः। भावे तु संगतकर्तृकेऽपि ण्यदेव। अजार्यं संगतेव॥ (३८०२) ◎ **वदः सुपि क्यप् च।** ३।१।१०६। उत्तरसूत्रादिह भाव इत्यपकृष्यते। वदेर्भावे क्यप्स्याच्चाद्यत् अनुपसर्गे सुप्युपपदे। ब्रह्मोद्यम्। ब्रह्मवद्यम्। ब्रह्म वेदः तस्य वदनमित्यर्थः। कर्मणि प्रत्ययावित्येके। उपसर्गे तु ण्यदेव। अनुवाद्यम्। अपवाद्यम्॥ (३८०३) ◎ **भुवो भावे।** ३।१।१०७। क्यप्स्यात्। ब्रह्मणो भावो ब्रह्मभूयम्। सुपीत्येव। भव्यम्। अनुपसर्ग इत्येव। प्रभव्यम्॥ (३८०४) ◎ **हनस्त च।** ३।१।१०८। अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप् स्यात्तकारश्चान्तादेशः। ब्रह्मणो हननं ब्रह्महत्या। स्त्रीत्वं लोकात्॥ (३८०५) ◎ **एतिस्तुशास्वृदृजुषः क्यप्।** ३।१।१०९। एभ्यः क्यप्स्यात्॥ (३८०६) ◎ **ह्रस्वस्य पिति कृति तुक्।** ६।१।७१। इत्यः। स्तुत्यः। शास[२३०४] इदङ्हलोः। शिष्यः। वृ इति वृञो ग्रहणं न वृङः। वृत्यः। वृङस्तु वार्या ऋत्विजः। आदृत्यः। जुष्यः। पुनः क्यबुक्तिः परस्यापि ण्यतो बाधनार्था। अवश्यस्तुत्यः॥ (३८०७) **शंसिदुहिगुहिभ्यो वा॥** इति काशिका। शस्यम्। शंस्यम्। दुह्यम्। दोह्यम्। गुह्यम्। गोह्यम्। प्रशस्यस्य[२७२३]

---

**व्यवहर्तव्येति।** यद्यपि पणितव्यशब्दोऽर्थद्वयसाधारणस्तथापि निपातनस्येह रूढ्यर्थत्वाद्व्यवहर्तव्य एवायं निपात्यते। उक्तं च हरिणा—'धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च। अनुबन्धविकाराणां रूढ्यर्थं च निपातनम्' इति॥ अनुबन्धविकाराणां नियमस्य प्राप्त्यर्थमिति पूर्वेणान्वयः॥ **शतेनेति।** शतशब्दोऽनियमपरः। कन्याया वरणे वरयितॄणां नियमो नास्तीत्यर्थः॥ **वर्येति।** संभक्तव्येत्यर्थः। 'वृङ् संभक्तौ' इत्यस्येदं निपातनम्, तत्रैवानिरोधरूपस्यार्थस्य संभवादिति भावः॥ अनिरोधेष्वित्यस्यानुक्तौ वृञोऽपि स्यादिति ध्वनयति—**वृत्येति।** 'एतिस्तुशास्-३८०५' इत्यादिना वृञः क्यप्। इह सूत्रेऽवद्यादीनि निर्विभक्तिकानि पृथक्पदानि तत्र वर्याशब्दष्टाबन्तोऽनुक्रियते। न त्वयं द्वन्द्वेन जसन्तेन निर्देशः। तेन वर्येति स्त्रियामेव निपात्यते। अस्त्रियां तु वृङः 'ऋहलोर्ण्यत् ३८२४' वार्या ऋत्विजः। ऋत्विजामपि यज्ञमात्रे वरणीयत्वादनिरोधोऽस्ति स्त्रीत्वं तु नास्तीति ण्यदेव भवति। एतच्च वृत्तिकारमतम्। न चात्र 'एतिस्तु-३८०५' इति क्यप् शङ्क्यः, तत्र वृञ एव ग्रहणं न तु वृङ इति सिद्धान्तात्। भट्टिस्तु 'द्वन्द्वाज्जसा निर्देशः' इति मत्वा पुंलिङ्गेऽपि यतं प्रायुङ्क्त। 'सुग्रीवो मम वर्योऽसौ' इति॥ (३७९८) **वाह्यमिति।** वहनकर्मेत्यर्थः॥ (३८००) **उपसर्या—।** उपपूर्वात्सरतेः सर्तेर्वा यन्निपात्यते। कालः प्राप्तोऽस्याः काल्या। '—तदस्य प्राप्तम् २३९७' इति वर्तमाने 'कालाद्यत् २३९९' इति यत्। प्रजननं प्रजनः गर्भग्रहणम्। भावे घञ्। 'जनिवध्योश्च ३३३१' इति वृद्धिनिषेधः॥ **उपसार्येति।** कर्मणि ण्यत्॥ (३८०१) **कर्तरि यदिति।** 'तयोरेव-३७७२' इति भावे प्राप्ते कर्तरि यन्निपात्यत इति भावः॥ **संगतं चेदिति** 'नपुंसके भावे क्तः ४१०८'॥ **विशेष्यमिति।** इहाजर्यमिति समुदायस्य संगतं वाच्यमित्यर्थो न ग्राह्यः, पर्यायाणां युगपत् प्रयोगासंभवेन 'अजर्यं सतां संगतम्' इति प्रयोगानापत्तेः, 'तेन संगतम्' इति भट्टिप्रयोगानुपपत्तेश्च॥ (३८०२) **वदः—।** सकर्मकत्वाद्भावे कृत्यप्रत्ययो दुर्लभः 'लः कर्मणि-२९०६' इति सूत्र इव 'तयोरेव-३७७२' इत्यत्रापि सकर्मकेभ्यः कर्मणि। अकर्मकेभ्य एव भावे इति सिद्धान्तादत आह—**भाव इत्यपकृष्यत इति।** 'भुवो भावे ३८०३' इत्यत्र 'अनुपसर्गे' इत्यनुवर्तनात् निरुपसर्गस्य भवतेरकर्मकत्वात् 'तयोरेव कृत्य-३७७२' इति भावे कृत्यप्रत्ययसिद्धौ भावग्रहणस्य वैयर्थ्यशङ्कायां भावग्रहणमुत्तरार्थमिति भाष्ये स्थितम्। तद्भाष्यस्वारस्यग्राहिणां मतमाह—**कर्मणीति॥ सुप्यनुपसर्ग इति।** सुपि किम्, 'हनस्तोऽचिण्णलोः ३४२१' घातः। अनुपसर्गे किम्, प्रघातः। भावे घञ्॥ (३८०५) **एतिस्तु—। एभ्य इति।** सुप्यनुपसर्गे भावे इति च निवृत्तमिति भावः। एतीतीण एव ग्रहणं नेङिकोः, तयोरधिपूर्वयोरेव ग्रहणादेतीति निर्देशानुपपत्तेः। तथा च 'रक्षार्थं वेदानामध्येयं व्याकरणम्' इति भाष्ये यदेव प्रयुक्तः। केचित्तु 'इण्वदिक इति वक्तव्यम् ३२७५' इति वचनादिकोऽपि भवतीत्यधीत्या मातेत्युदाहरन्ति॥ (३८०६) **इत्य इति।** कथं तर्हि 'उपेयम्' इति। 'ईङ् गतौ' इति दैवादिकाद् यत्॥ **न वृङ इति।** 'ईडवन्द-५५७७' इति ज्ञापकात्। तत्र हि ईडवन्दिभ्यां साहचर्यादात्मनेपदिनो वृङ एव ग्रहणमिति भावः॥ **परस्यापीति।** 'ओरावश्यके ३८४२' इति प्राप्तस्य। तस्यावकाशोऽवश्यं लाव्यमिति आवश्यकविवक्षायाम्। स्तुत्य इत्यादौ क्यपोऽवकाशः। अवश्यस्तुत्य इत्यादावुभयप्राप्तौ 'विप्रतिषेधे परम्-२५९'

श्र:, ईड्वन्द्वृशंसदुहां ण्यत इति सूत्रद्वयबलाच्छंसेः सिद्धम् । इतरयोस्तु मूलं मृग्यम् ॥ ( ३८०८ ) आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् ॥ अञ्जू व्यक्तिम्रक्षणादिषु । बाहुलकात्करणे क्यप् । अनिदितामिति नलोपः । आज्यम् ॥ ( ३८०९ ) ऋदुपधाच्चाक्लृपिचृतेः । ३ । १ । ११० । वृत् । वृत्यम् । वृधु । वृध्यम् । क्लृपिचृत्योस्तु-कल्प्यम् । चर्त्यम् । तपरकरणं किम् । कृत् । कीर्त्यम् । अनित्य-ण्यन्ताश्चुरादय इति णिजभावे ण्यत् । णिजन्तात्तु यदेव ॥ ( ३८१० ) ई च खनः । ३ । १ । १११ । चात् क्यप् । आद्गुणः । खेयम् । इ चेति ह्रस्वः सुपठः ॥ ( ३८११-१ ) भृञोऽसंज्ञायाम् । ३ । १ । ११२ । भृत्याः कर्मकराः । भर्तव्या इत्यर्थः । क्रियाशब्दोऽयं न तु संज्ञा ॥ ( ३८१२ ) समश्च बहुलम् ॥ संभृत्याः संभार्याः। असंज्ञायामेव विकल्पार्थमिदं वार्तिकम् । असंज्ञायां किम् । भार्या नाम क्षत्रियाः । अथ कथं भार्या वधूरिति । इह हि संज्ञायां समजेति क्यपा भाव्यम् । संज्ञापर्युदासस्तु पुंसि चरितार्थः । सत्यम् । बिभर्तेर्भ्रूं इति दीर्घान्तात् क्या-देर्वा ण्यत् । क्यप्तु भरतेरेव ॥ ( ३८११-२ ) तदनुबन्धकग्रहणे-इति परिभाषया ॥ ( ३८१३ ) मृजे-र्विभाषा । ३ । १ । ११३ । मृजेः क्यप् वा स्यात् । पक्षे ण्यत् । मृज्यः ॥( ३८१४ ) चजोः कु घिण्ण्यतोः । ७ । ३ । ५२ । चस्य जस्य च कुत्वं स्यात् घिति ण्यति च परे । मृजेर्वृद्धिः । मार्ग्यः ॥( ३८१५ ) निष्ठाया-

---

इति ण्यत्स्यात् तन्मा भूदिति पुनः क्यब्रुक्तिरिति भावः ॥ ( ३८०८ ) आङ्पूर्वादञ्जेरिति । ननु ण्यत्येव नलोपः कस्मा-न्नोक्त इति चेन्न, कुत्वप्रसङ्गात् तित्[2]स्वरप्रसङ्गाच्च । तस्मात् क्यबन्त एवाज्यशब्दः । नन्वेवमवग्रहः प्राप्नोति । न चेष्टापत्तिः, 'आज्यं किमासीत्' इत्यादौ पदकारैस्तदकरणादिति चेद्[3] । अत्र भाष्यम्-'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैस्तु लक्षणमनुव-र्त्यम्' इति । सत्यपि अवान्तरपदत्वे 'ऋत्विजं पूर्वेभिः' इत्यादाविव संप्रदायानुरोधेन क्वचिदवग्रहो न क्रियते इत्यादिस्त-दाशयः ॥ ( ३८०९ ) क्लृपिचृत्योस्त्विति । 'कृपू सामर्थ्ये' 'चृती हिंसाग्रन्थनयोः' ॥ कल्प्यमिति । कृपेर्लत्वस्या-सिद्धत्वात् ऋलवर्णयोः सावर्ण्यविधानाच्च[1] ऋदुपधत्वम् ॥ ( ३८१० ) ह्रस्वः सुपठ इति । दीर्घं पठतः सूत्रकृतस्त्वयमा-शयः-दीर्घनिर्देशः 'इ इ' इति प्रश्लेषार्थः, तत्र द्वितीय इकारो 'ये विभाषा ३०९७' इत्यात्त्वबाधनार्थः । अन्यथा 'ये विभाषा ३०९७' इत्यस्यावकाशः खायते खन्यते इत्त्वस्यावकाशः यस्मिन् पक्षे आत्त्वं नास्ति, आत्त्वपक्षे तु उभयप्रसङ्गे परत्वाद-न्तरङ्गत्वाच्चात्त्वं स्याद् । 'ये विभाषा ३०९७' इत्यत्र हि ये इति विषयसप्तमी, तथा च यकारादौ बुद्धिस्थे एव प्राप्तमा-त्त्वमन्तरङ्गम्, ईकारस्तु क्यपा सह विधानाद्बहिरङ्गः । तथा चान्तरङ्गस्यात्त्वस्य बाधनाय प्रश्लेषेण द्वितीय इकारविधिराव-श्यक इति 'ई च-३८१०' इति दीर्घोच्चारणं कृतमिति । दीर्घं प्रत्याचक्षाणस्य भाष्यकृतस्त्वयमाशयः-इत्त्वमन्तरङ्गं पर-निमित्तमनपेक्ष्य विधानात्, क्यप्संनियोगशिष्टं हि तत् । आत्त्वं तु बहिरङ्गं ये इति परसप्तम्याश्रयणात् । एवं च इत्त्वेनात्त्व-बाधो न्याय्य एवेति दीर्घो न पठनीयः । ह्रस्वपाठे मात्रालाघवमस्तीति तदनुरोधेन ये इति परसप्तम्याश्रयणमपि युक्तमिति । स्यादेतत्, इ चेति ह्रस्वादेशाभ्युपगमे तस्यादेशस्य पूर्वेण सह आद्गुणे तस्यासिद्धतया 'ह्रस्वस्य पिति-३८०६' इति तुक् स्यात् 'षत्वतुकोरसिद्धः ५१५४' इति षत्वे तुकि च कर्तव्ये एकादेशशास्त्रस्यासिद्धत्वस्वीकारादतो दीर्घ एव विधेय इति चेत् । मैवम्, 'पदान्तपदाद्योरादेशोऽसिद्धो न त्वन्योऽपि' इति सिद्धान्तात् । अन्यथा 'वृक्षे छत्रम्' इत्यत्र ह्रस्वाद्गुण-स्यासिद्धतया 'छे च २२०' इति ह्रस्वाश्रयो नित्यस्तुक् स्यात् । इष्यते तु दीर्घात् 'पदान्ताद्वा २२३' इति वैकल्पिक इति दिक् ॥ ( ३८११-१ ) 'भृञोऽसंज्ञायाम् ३८११-१' इत्यसंज्ञाग्रहणसामर्थ्याद्भार्येत्यत्र सूत्रान्तरेणापि क्यप् न भविष्यती-त्यत आह-पुंसि चरितार्थ इति । भार्या नाम क्षत्रिया इत्यत्रेत्यर्थः ॥ ( ३८११-२ ) तदनुबन्धेति । 'डुभृञ्', इत्यनेकानुबन्धत्वात् बिभर्तेः क्यपोऽप्रसङ्ग इति भावः ॥ ( ३८१३ ) मृजेर्विभाषा । ऋदुपधत्वान्नित्यं क्यपि प्राप्ते-ऽयमारम्भः ॥ ( ३८१४ ) चजोः-। यथासंख्यं नेह विवक्षितं 'तेन रक्तं रागात् १६९७' इति लिङ्गात्-इति कैयटहरदत्ता-दिभिरुक्तं, तदालोच्याह-चस्य जस्य चेत्यादि॥ घिति ण्यति च चस्य कुत्वम्, घिति ण्यति च जस्य कुत्वमिति विवेकः॥

---

१ चितेरिदित्करणस्य सामान्यापेक्षज्ञापकत्वादिति भावः ॥ २ इदं च-"ननु स्वरभेदो भवति क्यपि सत्याद्युदात्तं पदम्, ण्यति सत्यन्तस्वरितम् ( आद्यनुदात्तम् ) । नैष दोषः 'तद्विषयस्यानिसन्तस्य' इत्याद्युदात्तविधानात्" इति प्रदीपादर्शनमूलकप्रमादजम् ॥ ३ अयं पाठः कैयटहरदत्तोपदर्शितस्य 'व्याकरणेन पदकारानुरोधो न कर्तव्यः पदपाठस्य पौरुषेयत्वेनार्वाचीनत्वात्' इत्याशयस्यानुसारेणामनोरम एव लिखितः ॥ तथाहि-अयमाशयो न मुनि-त्रयसंमतः पदपाठमात्रप्रवृत्तिकसूत्राणां रचनस्यानुपपत्तेः 'महो वाऽच्छन्दस्यानङोऽवग्रहदर्शनात्' इत्यादिवार्तिकैः पदपाठानुसरणस्यावश्यकरणीयत्वसूचनाच्च ॥ तस्मादत्र भाष्ये 'अनुवर्त्य' पदे णिचमङ्गीकृत्य 'व्याकरणेन पदपाठस्यै-वानुसरणं कर्तव्यम्' इत्येवाशयो भाष्यस्य प्रकाशनीयः । अत एव 'सत्यपि' इत्यादिग्रन्थेन कैयटहरदत्तादि-लिखितेनाग्रे वक्ष्यमाणेन संगतिर्भवति । अन्यथा 'तदाशयः' इति लेखोऽसंबद्ध एव स्यादिति दाधिमथानां सिद्धान्ते 'तदकरणात् । तथा चात्र भाष्यम्' इत्येतादृक्पाठकल्पनेन नासंबद्धत्वमिति बोध्यम् ॥

मनिट इति वक्तव्यम् । तेनेह न गर्ग्यम् ॥ ( ३८१६ ) न्यङ्क्वादीनां च । ७ । ३ । ५३ । कुत्वं स्यात् । न्यङ्कुः ॥ नौवंञ्चेरित्युप्रत्ययः॥ ( ३८१७ ) राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।३।१।११४ एते सप्त क्यबन्ता निपात्यन्ते । राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः यद्वा लतात्मकः सोमो राजा स सूयते कण्डयतेऽत्रेति अधिकरणे क्यप् । निपातनाद्दीर्घः । राजसूयः । राजसूयम् । अर्धर्चादिः । सरत्याकाशे सूर्यः । कर्तरि क्यप् । निपातनादुत्त्वम् । यद्वा–षू प्रेरणे तुदादिः । सुवति कर्माणि लोकं प्रेरयति । क्यपो रुट् । मृषोपपदाद्वदेः कर्मणि नित्यं क्यप् । मृषोद्यम् । विशेष्यनिघ्नोऽयम् । उच्छ्रायसौन्दर्यगुणा मृषोद्याः । रोचते रुच्यः । गुपेरादेः कत्वं च संज्ञायाम् । सुवर्णरजतभिन्नं धनं कुप्यम् । गोप्यमन्यत् । कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः कर्मकर्तरि । शुद्धे तु कर्मणि कृष्टपाक्याः । न व्यथतेऽव्यथ्यः ॥ ( ३८१८ ) भिद्योद्ध्यौ नदे । ३ । १ । ११५ । भिदेरुज्झेश्च क्यप् । उज्झेर्धत्वं च । भिनत्ति कूलं भिद्यः । उज्झत्युदकमुद्ध्यः । नदे किम् । भेत्ता । उज्झिता ॥ ( ३८१९ ) पुष्यसिद्ध्यौ नक्षत्रे । ३ । १ । ११६ । अधिकरणे क्यन्निपात्यते । पुष्यन्त्यस्मिन्नर्थाः पुष्यः । सिध्यन्त्यस्मिन्सिध्यः ॥ ( ३८२० ) विपूयविनीयजित्या मुञ्जकल्कहलिषु । ४ । १ । ११७ ॥ पूङ्नीजिभ्यः क्यप् । विपूयो मुञ्जः । रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः । विनीयः कल्कः । "पिष्ट ओषधिविशेष इत्यर्थः" । पापमिति वा । जित्यो हलिः । बलेन कृष्टव्य इत्यर्थः । कृष्टसमीकरणार्थं स्थूलकाष्ठम् । अन्यत्र तु विपव्यम् । विनेयम् । जेयम्॥ (३८२१-१) प्रत्यपिभ्यां ग्रहेः । ३ । १ । ११८ ॥ ( ३८२१-२ ) छन्दसीति वक्तव्यम् ॥ प्रतिगृह्यम् । अपिगृह्यम् । लोके तु प्रतिग्राह्यम् । अपिग्राह्यम् ॥ ( ३८२२ ) पदास्वैरिबाह्यापक्ष्येषु च । ३ । १ । ११९ । अवगृह्यम्, प्रगृह्यं पदम् ॥ अस्वैरी परतन्त्रः । गृह्यकाः शुकाः । पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः ॥ बाह्यायां ग्रामगृह्या सेना । ग्रामबहिर्भूतेत्यर्थः । स्त्रीलिङ्गनिर्देशात्पुन्नपुंसकयोर्न ॥ पक्षे भवः पक्ष्यः । दिगादित्वाद्यत् । आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः ॥ (३८२३) विभाषा कृवृषोः । ३ । १ । १२० । क्यप्स्यात् । कृत्यम् । वृष्यम् । पक्षे–॥ ( ३८२४ ) ऋहलोर्ण्यत् । ३ । १ । १२४ । ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्स्यात् । कार्यम् । वर्ष्यम्॥ ( ३८२५ ) युग्यं च पत्रे । ३ । १ । १२१ । पत्रं वाहनम् । युग्यो गौः । अत्र क्यप् कुत्वं च निपात्यते ॥ ( ३८२६ ) अमावस्यदन्यतरस्याम् । ३ । १ । १२२ । अमोपपदाद्वसेरधिकरणे ण्यत् । वृद्धौ सत्यां पाक्षिको

---

( ३८१६ ) न्यङ्कुरिति । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररोहिषाः' इत्यमरः ॥ ( ३८१७ ) राजसूय–। यद्वेति । 'राजानं क्रीणन्ति' इत्यादौ तथा दर्शनादिति भावः । 'षुञ् अभिषवे' इत्यस्य ह्रस्वान्तत्वात्तदाह–निपातनाद्दीर्घ इति । निपातनं च रूढ्यर्थमपि । तेनाद्यपक्षे अश्वमेधादौ, द्वितीयपक्षे ज्योतिष्टोमादौ च नातिप्रसङ्गः ॥ उत्त्वमिति । तस्य परत्वाद् 'हलि च ४८१' इति दीर्घ इति भावः ॥ नित्यं क्यबिति । तेन 'वदः सुपि क्यप् च ३८०२' इति यत् प्रत्ययो नेति भावः ॥ ( ३८१८ ) भिद्योद्ध्यौ–। क्यबिति । कर्तरीति शेषः ॥ उद्ध्य इति । 'तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम्' इति रघुः ॥ (३८१९) पुष्यसिद्ध्यौ । नक्षत्रे किम्, पोषणं, सेधनम् । अधिकरणे ल्युट् पुष्यसिद्ध्ययोः पर्यायत्वेऽपि स्वरूपपरत्वात्सूत्रे द्वन्द्वः । 'पुष्ये तु सिद्ध्यतिष्यौ' इत्यमरः ॥ ( ३८२० ) पापमिति वेति । 'तपो न कल्कोऽध्ययनं न कल्कः' इत्युपक्रम्य 'तान्येव भावोपहतानि कल्कः' इति भारते दर्शनात् 'कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि' इति कोशाच्चेति भावः ॥ ( ३८२१–२ ) वक्तव्यमिति । वृत्तिकृता तु सूत्रे प्रक्षिप्तम् । क्यप उदाहरणं तु छन्दस्येव––मत्तस्य न प्रतिगृह्यम्, तस्मान्नापिगृह्यम् ॥ लोके त्विति । ण्यदेवेति भावः ॥ ( ३८२२ ) पदास्वैरि–। एष्वर्थेषु ग्रहेः क्यप्स्यात् ॥ अवगृह्यमिति । यस्य पदस्यावग्रहः क्रियते तत्पदम् । अवग्रहो विच्छेदः, अवान्तरपदसंज्ञां सूचयितुं पदपाठकाले किंचित्कालमवसानम् ॥ प्रगृह्यमिति । यस्य प्रग्रहस्तत्पदम् ॥ प्रग्रहस्तु प्रकृतिभावायणाद्यभावे परस्परमचोरसंनिकर्षः । यस्य प्रगृह्यसंज्ञा विहिता तत्प्रगृह्यमिति वृत्तिः । यद्यपि पदावयवस्य द्विवचनादेः प्रगृह्यसंज्ञा नतु पदस्य, तथाप्यवयवधर्मस्य समुदाये उपचारो बोध्यः । अवगृह्यप्रगृह्यशब्दौ प्रातिशाख्यादिषु पदविशेषपरतया निरूढौ ॥ अस्वैरीति । स्वेन ईरितुं शीलमस्य स्वैरी स्वतन्त्रः 'स्वादीरेरिणोः १११' इति वृद्धिः । नञ्पूर्वस्तु अस्वैरी ॥ गृह्यका इति । 'अनुकम्पायाम् २७४८' इति कन् । 'गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इत्यमरः ॥ ( ३८२३ ) विभाषा कृ–। करोतेः क्यप्यप्राप्ते, वृषेस्तु ऋदुपधत्वान्नित्यं प्राप्तेऽयमारम्भः ॥ ( ३८२५ ) पत्रं वाहनमिति । पतत्यनेनेत्यर्थे 'दाम्नीशस–४१९३' इत्यादिना करणे ष्ट्रन् ॥ युग्यो गौरिति । यद्यपि 'तद्वहति रथयुगप्रासङ्गम् २२२१' इति तद्धितयताऽपि इदं सिद्ध्यति, तथापि ण्यतं व्यावर्तयितुमिदं सूत्रम् । अन्यथा हि योग्यो गौरिति स्यात् । अन्ये त्वाहुः–युग्यो हस्ती इति हि वृत्तावुदाहृतम् । तत्तु तद्धितेन न सिध्यति, न हि हस्ती युगं वहति । कृता तु सिद्ध्यति युज्यते संबध्यते ह्यसौ कुथादिनेति ततश्चात्र वैयर्थ्यशङ्कैव नास्तीति दिक् ॥ ( ३८२६ ) वृद्धौ सत्यामिति । तेन 'अमावास्याया-

---

१ अयं पाठः शेखरस्थः ।

ह्रस्वश्च निपात्यते। अमा सह वसतोऽस्यां चन्द्राकौं अमावास्या, अमावस्या॥ ऋहलोर्ण्यत्। चजोरिति कुत्वम्। पाक्यम्॥ (३८२७) पाणौ सृजेर्ण्यद्वाच्यः॥ ऋदुपधलक्षणस्य क्यपोऽपवादः। पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः॥ (३८२८) समवपूर्वाच्च॥ समवसर्ग्या॥ (३८२९) न कादेः। ७। ३। ५९। कादेर्धातोः कुत्वं न। गर्ज्यम्। वार्तिककारस्तु चजोरिति सूत्रे निष्ठायामनिट इति पूरयित्वा न कादेरित्यादि प्रत्याचख्यौ। तेन अर्जितर्जिप्रभृतीनां न कुत्वं, निष्ठायां सेट्त्वात्। भुजुग्लुञ्चुप्रभृतीनां तु कादित्वेऽपि कुत्वं स्यादेव। सूत्रमते तु यद्यपि विपरीतं प्राप्तं तथापि यथोत्तरं मुनीनां प्रामाण्यम्॥ (३८३०) अजिव्रज्योश्च। ७। ३। ६०। न कुत्वम्। समाजः। परिव्राजः॥ (३८३१) भुजन्युब्जौ पाण्युपतापयोः। ७। ३। ६१। एतयोरेतौ निपात्यौ। भुज्यतेऽनेनेति भुजः पाणिः। हलश्चेति घञ्। न्युब्जन्त्यस्मिन्निति न्युब्जः। उपतापो रोगः। पाण्युपतापयोः किम्। भोगः, समुद्गः॥ (३८३२) प्रयाजानुयाजौ यज्ञाङ्गे। ७। ३। ६२। एतौ निपात्यौ यज्ञाङ्गे। पञ्च प्रयाजाः। त्रयोऽनुयाजाः। यज्ञाङ्गे किम्। प्रयागः। अनुयागः॥ (३८३३) वञ्चेर्गतौ। ७। ३। ६३। कुत्वं न। वञ्च्यम्। गतौ किम्। वङ्क्यं काष्ठम्। कुटिलीकृतमित्यर्थः॥ (३८३४) ओक उचः के। ७। ३। ६४। उचेर्गुणकुत्वे निपात्येते के परे। ओकः शकुन्तवृषलौ। इगुपधलक्षणः कः। घञा सिद्धे अन्तोदात्तार्थमिदम्॥ (३८३५) ण्य आवश्यके। ७। ३। ६५। कुत्वं न। अवश्यपाच्यम्॥ (३८३६) यजयाचरुचप्रवचर्चश्च। ७। ३। ६६। ण्ये कुत्वं न। याज्यम्। याच्यम्। रोच्यम्॥ प्रवाच्यम्। ग्रन्थविशेषः॥ ऋच अर्च्यम्। ऋदुपधत्वेऽपि अत एव ज्ञापकात् ण्यत्॥ (३८३७) त्यजेश्च॥ त्याज्यम्। त्यजिपूज्योश्चेति काशिका॥ तत्र पूजेर्ग्रहणं चिन्त्यं, भाष्यानुक्तत्वात्। ण्यत्प्रकरणे त्यजेरुपसंख्यानमिति हि भाष्यम्॥

---

वा १९६०? इति विहितस्ताद्धितो ह्रस्वपक्षेऽपि सिद्ध्यति, एकदेशविकृतस्यानन्यत्वात्। यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमित्याश्रीयेत, तदा यता मुक्तेऽधिकरणे ण्यदेव तावद् दुर्लभः। अथापि बाहुलकमाश्रयेत, एवमपि ण्यदन्तमनूद्य विहितस्ताद्धितो यदन्तान्न स्यादिति दिक्॥ [३८२४] ऋहलो-। पञ्चम्यर्थे षष्ठी। ऋ इति ऋधातोर्न ग्रहणं किन्तु ऋवर्णस्य, हला साहचर्यात्, '-परं कार्यम् २५९' इति निर्देशात्, 'ईडवन्द-५५७७' इत्यादिलिङ्गाच्च॥ 'ऋहलोः' इत्येतदनुवर्तमानस्य धातोर्विशेषणम्, विशेषणेन तदन्तविधिस्तदेतदाह-ऋवर्णान्तादित्यादि। अत्रेदमवधेयम्-मूलपुस्तकेषु सर्वत्र 'विभाषा कृवृषोः ३८२३' इत्यत्र पक्षे ण्यत् भवतीति वक्तुम् 'ऋहलोर्ण्यत् ३८२४' इति सूत्रं पठित्वा पश्चात् 'युग्यं च पत्रे ३८२५' 'अमावस्यदन्यतरस्याम् ३८२६' इति पठितम्। मनोरमायां तु सूत्रपाठक्रमेण 'युग्यं च पत्रे ३८२५' 'अमावस्यदन्यतरस्याम् ३८२६' इति व्याख्याय पश्चात् 'ऋहलोः-३८२४' इति सूत्रं व्याख्यातम्, तथैवात्रापि व्याख्यातमिति॥ (३८२९) गर्ज्यमिति। 'गर्ज शब्दे'। 'ऋहलोः-३८२४' इति ण्यति 'चजोः-३८१४' इति कुत्वे प्राप्तेऽयं निषेधः॥ कुत्वं स्यादेवेति। 'उदितो वा ५१४९' इति क्त्वायामिड्विकल्पाद् 'यस्य विभाषा ४०२६' इति निष्ठायामनिट्त्वादिति भावः॥ विपरीतमिति। सूत्रकारमते भुजुग्लुञ्चुप्रभृतीनां 'न कादेः ३८२९' इति कुत्वं न भवतीति। वार्तिककारमते तु निष्ठायामनिट्त्वात् 'चजोः-३८१४' इति कुत्वं भवतीति परस्परविरुद्धमित्यर्थः॥ यथोत्तरमिति। तथा च वार्तिकानुरोधेन कुत्वं स्वीकर्त्तव्यमिति भावः॥ (३८३०) समाज इति। 'अज गतिक्षेपणयोः' इत्यस्माद् घञि 'चजोः-३८१४' इति कुत्वे प्राप्तेऽयं निषेधः। एवं व्रजेरपि॥ (३८३१) न्युब्ज इति। 'उब्ज आर्जवे' निपूर्वस्यास्य जस्य कुत्वाभावो दस्य च बकारो निपात्यते॥ (३८३४) घञा सिद्धे इति। 'उच समवाये' इत्यस्माद्घञि 'चजोः-३८१४' इति कुत्वे लघूपधगुणे च ओक इति रूपं सिद्ध्यति, परं तु 'ञ्नित्यादिर्नित्यम् ५५६१' इत्याद्युदात्तमनिष्टं स्यादिति भावः॥ (३८३५) ण्य आवश्यके। अवश्यंभावः आवश्यकम्। मनोज्ञादित्वाद्वुञ्, 'अव्ययानां भमात्रे टिलोपः १८६४' ॥ अवश्यपाच्यमिति। 'आवश्यकाधमर्ण्ययोर्णिनिः ५१३२' 'कृत्याश्च ५१३३' इति ण्यत्। आवश्यकशब्दोऽर्थद्योतनार्थो न तु प्रयोगार्थः। तेनार्थप्रकरणादिगम्येऽपि तस्मिन् ण्यत्कुत्वाभावश्च भवति। यथा 'अशोच्यानन्वशोचस्त्वम्' इति। केचित्तु 'शोचितुमर्हाः शोच्याः न शोच्याः अशोच्याः' इति भगवद्गीतास्विदं व्याचक्षते। तच्चिन्त्यम्, 'अर्हे कृत्यतृचश्च ३७६०' इति ण्यति 'चजोः-३८१४' इति कुत्वप्रसङ्गात्। 'चजोः-३८१४' इति कुत्वं 'निष्ठायामनिटः ३८१५' इति वार्तिकमते तु सम्यगेवेति दिक्॥ (३८३६) यज-। यज देवपूजादौ। 'टुयाचृ याच्ञायाम्'। 'रुच दीप्तौ'। प्रपूर्वो 'वच परिभाषणे'। 'ऋच स्तुतौ' ॥ ग्रन्थविशेष इति। तथा च संज्ञेयमिति 'वचोऽशब्दसंज्ञायाम् ३८३८' इत्यस्याप्रसङ्गान्निषेधोऽयमिति भावः॥ ज्ञापकादिति। सरूपत्वाद्वाऽसरूपविधिना ण्यद्भवेदिति

---

१ पूजेर्नित्यण्यन्तत्वेन तद्ग्रहे फलाभाव इति भावस्तदाह-भाष्येति॥ २ उपपदसमासतत्प्रयुक्त-स्वरासिद्धिर्दिगर्थ इति शब्दरत्नम्॥ ३ बकार इति। 'हयवरट्' सूत्रभाष्ये तु 'असिद्धे भ उब्जेः' इति भकारो निपातितोऽनेनैव निर्देशेन तथापि प्रक्रियालाघवाय बकारो दर्शित इति बोध्यम्॥

( ३८३८ ) सू. **वचोऽशब्दसंज्ञायाम्** ।७।३।६७ । वाच्यम् । शब्दाख्यायां तु वाक्यम् ॥ ( ३८३९ ) सू. **प्रयोज्यनियोज्यौ शक्यार्थे** । ७ । ३ । ६८ । प्रयोक्तुं शक्यः प्रयोज्यो नियोक्तुं शक्यो नियोज्यो भृत्यः॥ ( ३८४० ) सू. **भोज्यं भक्ष्ये** । ७ । ३ । ६९ । भोग्यमन्यत् ॥ ( ३८४१ ) वा. **ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम्** ॥ लाप्यम् । दभिर्धातुष्वपठितोऽपि वार्तिकबलात् स्वीकार्यः । दाभ्यः ॥ ( ३८४२ ) सू. **ओरावश्यके** । ३ । १ । १२५ । उवर्णान्ताद्धातोर्ण्यत्स्यादवश्यंभावे द्योत्ये । लाव्यम् । पाव्यम् ॥ ( ३८४३ ) सू. **आसुयुवपिरपित्रपिचमश्च** । ३ । १ । १२६ । षुञ् । आसाव्यम् ॥ यु मिश्रणे । याव्यम् ॥ वाप्यम् । राप्यम् । त्राप्यम् । चाम्यम् ॥ ( ३८४४ ) सू. **आनाय्योऽनित्ये** । ३ । १ । १२७ । आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते । दक्षिणाग्निविशेष एवेदम् । स हि गार्हपत्यादानीयतेऽनित्यश्च सततमप्रज्वलनात् । आनेयोऽन्यः घटादिः । वैश्यकुलादेरानीतो दक्षिणाग्निश्च । ( ३८४५ ) सू. **प्रणाय्योऽसंमतौ** । ३ । १ । १२८ । संमतिः प्रीतिविषयीभवनं कर्मव्यापारः । तथा भोगेष्वादरोऽपि संमतिः । प्रणाय्यश्चौरः । प्रीत्यनर्ह इत्यर्थः । प्रणाय्योऽन्तेवासी । विरक्त इत्यर्थः । प्रणेयोऽन्यः ॥ ( ३८४६ ) सू. **पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु** । ३ । १ । १२९ । मीयतेऽनेन पाय्यं मानम् । ण्यत् धात्वादेः पत्वं च । आतो युगिति युक् । सम्यङ् नीयते होमार्थमग्निं प्रतीति सान्नाय्यं हविर्विशेषः । ण्यदायादेशः समो दीर्घश्च निपात्यते । निचीयतेऽस्मिन्धान्यादिकं निकाय्यो निवासः । अधिकरणे ण्यत् । आय् धात्वादेः कुत्वं च निपात्यते । धीयतेऽनया समिदिति धाय्या ऋक् ॥ ( ३८४७ ) सू. **क्रतौ कुण्डपाय्यसंचाय्यौ** । ३ । १ । १३० । कुण्डेन पीयतेऽस्मिन् सोमः कुण्डपाय्यः क्रतुः । संचीयतेऽसौ संचाय्यः ॥ ( ३८४८ ) सू. **अग्नौ परिचाय्योपचा-**

---

न शङ्कनीयमिति भावः ॥ ( ३८३८ ) **वाक्यमिति** । 'तिङ्सुबन्तचयो वाक्यम्' ॥ ( ३८४० ) **भोज्यम्**—। भक्ष्यमिहाऽभ्यवहार्यमात्रं विवक्षितम्, न तु खरविशदमभ्यवहार्यम् । तेन भोज्या यवागूरित्यपि भवतीत्याहुः ॥ **भोग्यमन्यदिति** । पालनीयमुपभोग्यं चेत्यर्थः ॥ ( ३८४१ ) **लपिदभिभ्यां चेति** । 'पोरदुपधात् ३७९१' इति प्राप्तस्य यतोऽपवादः । जयादित्यस्तु 'आसुयुवपिरपि-३८४३' इति सूत्रे लपिं प्रक्षिप्य 'रपिलपित्रपि-' इति पठित्वाऽनुक्तसमुच्चयार्थेन चकारेण दभेः संग्रह इत्युक्तवान् । तत्र वैषम्येण व्याख्यानं निर्बीजं भाष्यविरोधश्च स्पष्ट एवेति बोध्यम् ॥ **स्वीकार्य इति** । 'कास्यनेकाच आम्वक्तव्यश्चुलुम्पाद्यर्थम् ३०८०' इति वार्तिकबलाद्यथा चुलुम्पादिभ्य आम् स्वीक्रियते तद्वदिति भावः । तथा च प्रयुज्यते—'न ता नशन्ति न दभाति तस्करः, विष्णुर्गोपा अदाभ्यः' इत्यादि ॥ ( ३८४२ ) **लाव्यमिति** । 'आवश्यके उपपदे' इति व्याख्याने तु नेदं सिध्यतीति भावः । कश्चित्तु लाघवं प्रत्यनादरात् व्यतिसे इत्यादौ व्यतिशब्दवत् द्योतितार्थस्यापि प्रयोगो दृश्यते । अवश्यलाव्यम् । अत्रोपपदसमासासंभवेऽपि मयूरव्यंसकादेराकृतिगणत्वात्समासः ॥ ( ३८४३ ) **आसु**—। षुञ् । **आसाव्यमिति** । 'षुञ् अभिषवे' इत्ययं गृह्यते, न 'षु प्रसवैश्वर्ययोः' इति 'कृत्यल्युटो बहुलम् ३७८६' इति बहुलग्रहणादिति भावः ॥ **यु मिश्रण इति** । 'युञ् बन्धने' इति तु न गृह्यते, सानुबन्धकत्वादिति भावः । अत्र युप्रभृतीनां द्वन्द्वं कृत्वा पश्चादासुशब्देन द्वन्द्वः, तेन 'अल्पाच्तरम् १२९९' इति युशब्दस्य न पूर्वनिपातः शङ्क्यः । इहाऽऽद्ययोः 'अचो यत् ३७८७' इत्यनेन, रपित्रपिचमां तु 'पोरदुपधात् ३७९१' इत्यनेन यत्प्रत्यये प्राप्तेऽयमारम्भः॥ ( ३८४४ ) अनित्यमात्रे यदि प्रयोगस्तर्हि घटादावतिप्रसङ्ग इत्यत आह—**दक्षिणाग्निविशेष इत्यादि** ॥ **वैश्यकुलादेरिति**[1] । दक्षिणाग्नेर्हि योनिर्विकल्प्यते वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वेति ॥ ( ३८४५ ) **कर्मव्यापार इति** । तथा चायमर्थः—लोकानां या प्रीतिस्तद्विषयीभवनं यस्मिन्नास्ति चोरादौ सोऽसंमतिरिति । वस्तुतस्तु प्रीतिविषयीभवनापेक्षया लाघवात्प्रीतिरेव संमतिः सा यस्मिंश्चौरादौ नास्ति लोकानां सोऽसंमतिः । यद्वा—संमतिः प्रीतिर्विषयेषु यस्य नास्ति स विरक्तोऽसंमतिः । तन्त्रेणार्थद्वयमपि गृह्यते॥ ( ३८४६ ) **पाय्यसान्नाय्य**—॥ चतुर्षु अर्थेषु चत्वारो निपात्यन्ते ॥ **मीयतेऽनेनेति** ॥ माङः करणे ण्यत् । मेयमन्यत् ॥ **हविर्विशेष इति** । 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्' इति विहितो दधिपयोरूपः ॥ **धीयतेऽनयेति** । अत्र सर्वा सामिधेनी न ग्राह्या किन्तु समिध्यमानवतीं समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा 'पृथुपाजा अमर्त्यः' इत्यादिकैव । अयं च विशेषो निपातनस्य रूढ्यर्थत्वाल्लभ्यते । नन्वेवं निपातनात्सामिधेनीविशेषवाचकत्वे सामिधेनीग्रहणं व्यर्थमिति चेद् । अत्राहुः—सूत्रे सामिधेनीग्रहणं प्रयोगविशेषोपलक्षणार्थम् । तथा चासामिधेन्यामपि दृश्यते 'धाय्याः शंसन्ति' इति । न हि शस्त्रेण समित् प्रक्षिप्यते ॥ ( ३८४७ ) **क्रतौ**—। **कुण्डपाय्य इति** । कुण्डशब्दे तृतीयान्ते उपपदे पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते । नन्वत्र ण्यदेव निपात्यतां प्रकृतत्वात्, एवं च 'आतो युक् चिण्कृतोः ३६८५' इति सिद्धत्वात् युक् च न निपातनीय इति लाघवमस्तीति चेत् । मैवम्, तित्स्वरप्रसङ्गाद् । इष्यते तु 'यतोऽनावः ५५७६' इत्याद्युदात्तः

---

१ **वैश्यकुलादेरिति** । वित्तवद्वैश्यकुलादेरित्यर्थः । आदिना भ्राष्ट्रपरिग्रहः ॥ २ भावे क्तिन्प्रत्ययेनैवेष्टसिद्धौ तावत्पर्यन्तानुसरणं व्यर्थमित्याशयेनाह—**भोगेष्वादरोऽपीति** । **प्रणेयोऽन्य इति** । घटादिरिति शेषः । अत्र कर्मणि यत् ॥ ३ **धाय्या ऋगिति** । सामिधेनीनां मध्ये ऋग्विशेषः ॥ ४ मनोरमायां भाष्यादीति पाठः । शब्दरत्ने न तत्प्रतीकमादाय 'तत्रोभयविषयवार्तिकस्यैव पाठादिति भावः' इत्युक्तम् ॥

य्यसमूह्याः । ३ । १ । १३१ । अग्निधारणार्थे स्थलविशेष एते साधवः । अन्यत्र तु परिचेयम् । उपचेयम् । संवाह्यम् ॥ ( ३८४९ ) (सू) चित्याग्निचित्ये च । ३ । १ । १३२ । चीयतेऽसौ चित्योऽग्निः । अग्नेश्चयनमग्निचित्या ॥ [ ३७५५ ] (सू) प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च । ३ । ३ । १६३ । त्वया गन्तव्यम् । गमनीयम् । गम्यम् । इह लोटा बाधा मा भूदिति पुनः कृत्यविधिः–स्त्र्यधिकारादूर्ध्वं वाऽसरूपविधिः क्वचिन्नेति ज्ञापयति । तेन क्तल्युट्तुमुन्खलर्थेषु नेति सिद्धम् ॥ [ ३७६० ] (सू) अर्हे कृत्यतृचश्च । ३ । ३ । १६९ । स्तोतुमर्हः स्तुत्यः । स्तुतिकर्म । स्तोता । स्तुतिकर्ता । लिङा बाधा मा भूदिति कृत्यतृचोर्विधिः ॥ ( ३८५० ) (सू) भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा । ३ । ४ । ६८ । एते कृत्यान्ताः कर्तरि वा निपात्यन्ते । पक्षे तयोरेवेति [३७७२] सकर्मकात्कर्मणि अकर्मकात्तु भावे ज्ञेयाः । भवति इति भव्यः । भव्यमनेन वा । गायतीति गेयः साम्नामयम् । गेयं सामानेन वा । इत्यादि ॥ [ ३७६१ ] (सू) शकि लिङ् च । ३ । ३ । १७२ । चात्कृत्याः । वोढुं शक्यो वोढव्यः, वहनीयो, वाह्यः । लिङा बाधा मा भूदिति कृत्योक्तिः । लाघवादनेनैव ज्ञापनसंभवे प्रैषादिसूत्रे [३७५५] कृत्यांश्चेति सुत्यजम्, अर्हे [३७६०] कृत्यतृचोर्ग्रहणं च ॥

इति कृत्सु कृत्यप्रक्रिया ॥

---

## अथ कृत्प्रक्रिया ।

( ३८५१ ) (सू) ण्वुल्तृचौ । ३ । १ । १३३ । धातोरेतौ स्तः । कर्तरि [३७७१] कृत् इति कर्त्रर्थे । [१०६१] युवोरनाकौ । कारकः । कर्ता । वोढुमर्हो वोढा । कारिका । कर्त्री । गाङ्कुटेति [३२७३] ङित्वम्–कुटिता । अञ्णिदित्युक्तेर्न ङित्वम्–कोटकः । विज इट् [३३६०]–विजिता । हनस्तोऽचिण्णलोः [३४२१]–घातकः । आतो युक् [३६८५]–दायकः । नोदात्तोपदेशस्य [३६८८] इति न वृद्धिः–शमकः । दमकः । अनिटस्तु नियामकः । जनि–वध्योश्च [३३३१]–जनकः । वधं[1] हिंसायाम् । वधकः । रधि–जभोरचि [३०७६]–रन्धकः । जम्भकः । नेटय-

---

कृदुत्तरपदप्रकृतिस्वरः । तथा च प्रयुज्यते–प्रणायात् कुण्डपाय्य इति । संपूर्वाच्चिनोतेस्तु ण्यदायौ निपात्येते । क्रतौ किम्, कुण्डपानम् । संचेयम् ॥ ( ३८४८ ) अग्नौ परि–। अग्निरिह न ज्वलनः किन्तु तद्धारणार्थमिष्टकाचयनेन निर्मितं स्थलं, तदाह–**स्थलविशेष इति ॥ एते साधव इति** । स्थलविशेषेऽभिधेये परिपूर्वाच्चिनोतेर्ण्यदायादेशयोः संपूर्वस्य वहेस्तु संप्रसारणदीर्घयोश्च निपातनादिति भावः ॥ ( ३८४९ ) **चित्योऽग्निरिति** । चिनोतेः कर्मणि क्यप् यतोऽपवादः । इह सूत्रे अग्नावित्यनुवर्तते तच्च चित्यशब्दस्यैव विशेषणं न द्वितीयस्य, तस्य भावार्थकत्वेनाग्निवाचकत्वासंभवात् । अग्नेरन्यत्र चेयमित्येव ॥ शब्दकौस्तुभादौ तु अग्निचित्येत्यत्र भावे यकारप्रत्ययस्तुक् च निपात्यते, न तु क्यप्, तेनान्तोदात्तत्वं भवति । क्यपि तु कृते क्यपः पित्त्वादनुदात्तत्वे धातुस्वरेण चित्य इवाद्युदात्तः स्यादिति स्थितम् ॥ [ ३७५५ ] ननु वाऽसरूपविधिना कृत्या अपि भविष्यन्तीत्यत आह–**स्त्र्यधिकारादूर्ध्वमिति । क्तल्युडिति** । हसितं हसनं छात्रस्य 'नपुंसके भावे क्तः ४१०८' 'ल्युट् च ५१०६' इत्यनयोर्विषये 'भावे ४९७२' इति घञ् ॥ इच्छति भोक्तुम् । अत्र 'इच्छार्थेषु लिङ्लोटौ ३७५१' इति लोण्न, लिङ् तु भवत्येव, 'समानकर्तृकेषु तुमुन् ४९६३' 'लिङ् च ३७५३' इति वचनात् । ईषत्पानः । 'आतो युच् ५१२९' इति युच् । अत्र 'ईषद्दुस्सुषु–५१२३' इति खल् न ॥ [ ३७६० ] **लिङा बाधेति** । चकारेण 'लिङ् यदि ३७५९' इत्यतो लिङनुकृष्यत इति भावः ॥ ( ३८५० ) **भव्य–**। 'तयोरेव–३७७२' इति नियमात्कर्तर्यप्राप्ते वचनम् ॥ **साम्नामिति** । कर्मणि षष्ठी ॥ **इत्यादीति** । प्रवक्तीति प्रवचनीयो गुरुः स्वाध्यायस्य, प्रवचनीयो गुरुणा स्वाध्यायः । उपस्थानीयः शिष्यो गुरोः, उपस्थानीयो गुरुः शिष्येण । जायते जन्यः, जन्यमनेन वा । आप्लवते आप्लाव्यः ण्यत्, आप्लाव्यमनेन वा ॥ [ ३७६१ ] **शकि लिङ् च । वोढव्य इति** । 'वह प्रापणे' इत्यस्मात्तव्यः हस्य 'हो ढः ४४७' इति ढत्वे 'झषस्तथो–३०४७' इति धत्वे 'ष्टुना ष्टुः १७६' इति ष्टुत्वे 'ढो ढे लोपः ३११५' 'सहिवहो–३१५०' इत्यवर्णस्यौत्त्वम् । अत्र ढलोपे कर्तव्ये ष्टुत्वमसिद्धमिति नाशङ्क्यम्, आश्रयात् सिद्धत्वात् ॥ **बाधा मा भूदिति** । कृत्यानामिति शेषः ॥ **कृत्योक्तिरिति** । कृत्यानुकर्षकचकारोक्तिरित्यर्थः ॥ इति कृत्यप्रक्रिया ॥

---

1 **वध हिंसायामिति** । **'जनिवध्योश्च'** इति सूत्रनिर्दिष्टो वधधातुर्हिंसायां वर्तत इत्यर्थः ॥ **'जुचंक्रम्य–'** इत्यादिसूत्रनिर्दिष्टजुधात्वादिवत् सौत्रोऽयं धातुरिति भावः ॥ सूत्रपाठाद् धातुपाठेऽपि पाठोऽनुमेयः । अन्यथा धातुसंज्ञा न स्यात् । धातुसंज्ञाया अभावे धातुसंज्ञाप्रयुक्तप्रत्ययादीनामभावे तत्तत्कार्यविधानमनर्थकं सत् तेषां धातुपाठे सत्तामनुमापयति, इत्येव **'धातुसंज्ञा ज्ञाप्यते'** इति वदतामपि भावोऽवसेयः । पाणिनिना पठिता अपि लेखकप्रमादाद् नष्टा इत्येव कल्पनीयम् । अत एव **'णिजिविजी द्वौ रुधादावपि'** इति माधवोक्तिरधुना रुधादौ णिजिधातोरनुपलम्भेऽपि संगच्छते ॥ यत्तु—स्वतन्त्रवधधातुस्तु नास्त्येव वधादेशस्य हलन्तत्वपक्षे अवधीत् वधक इत्यत्र प्राप्ताया अदुपधत्वलक्षणवृद्धेर्वारणाय वधिग्रहणस्य चारितार्थ्यात्—इति । तन्न सिद्धान्तभूते वधादेशस्यादन्तत्वपक्षे[1] वृद्धेरप्राप्तौ वधिग्रहणवैयर्थ्यापत्तेः॥—

---

1 **अदन्तत्वपक्ष इति** । वधक इत्यत्र हनधातोर्वधादेशो **'बहुलं तणि अत्र वधकमात्रविचक्षणाजिराद्यर्थम्'** इति भवतीति बोध्यम् ॥

लिटि [३३३५]रधेः-रधिता, रद्धा। [३३३६]मस्जिनशोरिति नुम्-मङ्क्ता। नंष्टा, नशिता। रभे [३४३३]रशब्लिटोः-रम्भकः। रब्धा। [३४३४]लभेश्च-लम्भकः। लब्धा। तीषसह [३१२१]-एषिता, एष्टा। सहिता, सोढा। दरिद्रातेरालोपः-दरिद्रिता। [३३०१]ण्वुलि न-दरिद्रायकः॥ कृत्यल्युट इत्येव सूत्रमस्तु। यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात्। एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थम्। पादाभ्यां ह्रियते पादहारकः। कर्मणि ण्वुल्॥ (३८५२) [वा] क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः॥ प्रक्रन्ता। कर्तरीति किम्। प्रक्रमितव्यम्। आत्मनेपदेति किम्। संक्रमिता। अनन्यभावो विषयशब्दः। [१]तनानुपसर्गाद्वेति विकल्पार्हस्य न निषेधः। क्रमिता। तदर्हत्वमेव तद्विषयत्वम्। तेन क्रन्तेत्यपीति केचित्[२]। गमेरिडि[३२०४]त्यत्र परस्मैपदग्रहणं तङानयोरभावं[३] लक्षयति। सञ्जिगमिषिता। एवं न [३१२०]वृद्भ्यः स्यसनोः-विवृत्सिता॥ यङन्तात् ण्वुल्। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। पापचकः। यङ्लुगन्तात्तु-पापाचकः॥

(३८५३) [सू] नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः। ३। १। १३४। नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच्

---

(३८५१) ण्वुल्तृचौ। णकारो वृद्ध्यर्थः। लकारो 'लिति ५५५१' इति स्वरार्थः। तृचश्चकारस्तु 'तुरिष्ठेमेयस्सु २७२२' 'तुश्छन्दसि २७२१' इत्यादौ सामान्यग्रहणाविघातार्थः। 'चितः ५६७२' इत्यन्तोदात्तार्थस्तु न भवति 'आद्युदात्तश्च ५६७०' इत्यनेनैव सिद्धेः। एवं च 'अप्तृन्-३८८' इति सूत्रे तृन्तृचोः पृथग्ग्रहणं विहाय 'अप्तृस्वसृ-' इत्येव सुवचमित्येके॥ अन्ये तु 'सामान्यग्रहणेऽपि क्वचिद्विशेषस्यैव ग्रहणं भवति' इति ज्ञापनार्थम् 'अप्तृन्-३८८' इति सूत्रे तृन्तृचोरुभयोर्ग्रहणम्। तेन कोपधग्रहणे तद्धितवुग्ग्रहणमित्येतत्सिद्धमित्याहुः॥ वोढेति। 'अर्हे कृत्यतृचश्च ३७६०' इति तृच्। ढत्वादयस्तु वोढव्य इत्यत्रेवात्राप्यूह्याः॥ रधितेति। 'रधादिभ्यश्च ३३३४' इति वेट्॥ रद्धेति। इह 'नेट्यलिटि-३३३५' इति निषेधाप्रवृत्तावपि 'रधि-३०७५' इत्यनेन अच्परत्वाभावान्नुम्न। मङ्क्तेति। 'टुमस्जो शुद्धौ'। अस्मात् तृच् 'मस्जि-३३३६' इति नुम् अन्त्यात्पूर्वः॥ 'स्कोः-५१६' इति सलोपः। जस्य कुत्वे चर्त्वम्, अनुस्वारपरसवर्णौ 'बहूनां समवाये द्वयोर्द्वयोः संयोगः' इति पक्षे तु नुमागमस्याच्परत्वेऽपि 'स्कोः-५१६' इति सलोपो भवत्येवेति ज्ञेयम्॥ नंष्टेति। रधादित्वादिडभावपक्षे नुम्॥ लब्धेति। 'झषस्तथोः-३०४७' इति धः, भकारस्य जश्त्वम्। 'लभेश्च ३४३४' इति नुम् तु न भवति, अचीत्यनुवर्तनात्॥ ण्वुलि नेति। 'सनि ण्वुलि ल्युटि च न ३३०१' इति वचनात्॥ योगविभागेनेति। 'कृत्यल्युटो बहुलम् ३७८६' इति सूत्रे 'कृतो बहुलम्' इत्येवाकारे स्थितम्। तथा च योगविभागं विनैव सर्वेष्टसिद्धिरित्याहुः॥ (३८५२) प्रक्रन्तेति। 'प्रोपाभ्यां समर्थाभ्याम् ३६३६' इति क्रमेरात्मनेपदविषयता॥ अनन्यभावो विषयशब्द इति। तदन्याविषयत्वे सति तद्विषयत्वमनन्यभावः, तथा च विकल्पार्हस्य क्रमेः परस्मैपदात्मनेपदोभयप्राप्तिविषयत्वान्निषेधो नेति भावः॥ संजिगमिषितेति। संपूर्वाद्गमेः सन्, 'सन्यङोः ३१९६' इति द्वित्वे [२०३३]हलादिःशेषे 'सन्यतः ३०९३' इत्यभ्यासस्येत्त्वम् 'आर्द्धधातुकस्य-२९३९' इति सन इट्, षत्वं, सन्नन्तात्तृच्, पुनरिट्॥ अल्लोपस्येति। प्राचा तु 'न धातुलोपे-३५२७' इति सूत्रे इक इत्यनुवृत्तेर्वृद्धेरनिषेधः पापाचक इत्युक्तम्। तन्न, यङन्ते अल्लोपस्य स्थानिवत्त्वेन वृद्धेः प्राप्त्यभावात्॥ ननु यङ्लुकि पापाचकरूपाभिप्रायेण तथोक्तम्। तत्र हि अकारविशिष्टस्यैव यङो लुगिति सर्वसंमतत्वेन स्थानिवत्त्वाभावादिति चेत्। मैवम्, एवं तर्हि आर्द्धधातुकस्य धात्ववयवलोपनिमित्तत्वाभावेन यङ्लुगन्ते 'न धातुलोपे-३५२७' इति निषेधस्य प्रसक्त्यभावात्॥ (३८५३) नन्दिग्रहि-।द्वन्द्वान्ते श्रूयमाण आदिशब्दः

---

--न चैवं सूत्रेऽपि वधिग्रहणं माऽस्त्विति लाघवमेवेति वाच्यम्। ब्रह्मयज्ञार्थं तस्यावश्यकत्वस्य 'क्रियते न्यास एव' इति ग्रन्थेन तत्र तत्र सूचनात्॥ आदेशेन सूत्रसार्थक्ये स्वतन्त्रधातुकल्पनमन्याय्यम्-इत्यपि न सम्यक् अस्त्यादेशभूग्रहणेनैव 'भवतेः' इत्यादिसूत्रसार्थक्ये स्वतन्त्रभूधातोः, ब्रूञादेशवचिग्रहणेनैव 'अस्यतिवक्ति-' इति निर्देशसार्थक्ये स्वतन्त्रवचधातोरपि ग्रहणानुपपत्तेः। न चेष्टापत्तिः, 'बभूव अभूवन्' इति द्वयोरपि 'वक्ष्यते अवोचत्' इत्यादिद्वयोरपि इत्यादिशिष्टपरम्पराव्याख्यानविरोधापत्तेः। 'भवतेः' 'अस्यतिवक्तिख्यातिभ्यः' इत्यादिसूत्रेषु शब्देन्दुशेखरे द्वयोरपि ग्रहणस्य निर्देशेन दर्शितत्वात् स्वतन्त्रधात्वङ्गीकारप्रयोगयोरप्यूषितात्पर्यविषयत्वावगमादिति बोध्यम्॥

---

१ अनन्यभाव इति-अर्थशब्दाध्याहारः, अनन्यभावो विषयशब्दार्थ इति। (तदन्याविषयत्वे सति तद्विषयत्वमनन्यभावः)। अत एव भाष्ये सोपसर्गमेवोदाहृतम्॥ सप्तम्यन्तपाठे तु वर्तत इति शेषः॥ २ केचिदिति। कैयटस्वरसस्तत्र पक्षे दृश्यते॥ ३ तङानयोरभावमिति। फलोपहिततङाननिमित्तत्वाभावमित्यर्थः॥ ४ निरनुबन्धकस्य कुत्राप्यभावादिति भावः॥ ५ आर्द्धधातुकस्येति। 'एकाच उपदेशे-' इत्यत्र 'उपदेशे य एकाच्' इति व्याख्यानाद् अत्रत्यमूलग्रन्थानुरोधाच्च 'गमेरिट्-' इति वक्तुमुचितम्॥

स्यात्, नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । मधुसूदनः । विशेषेण भीषयतीति विभीषणः । लवणः । नन्द्यादिगणे निपातनाण्णत्वम् । ग्राही । स्थायी । मन्त्री । विशयी । वृद्ध्यभावो निपातनात् । विषयी । इह षत्वमपि । परिभावी । परिभवी । पाक्षिको वृद्ध्यभावो निपात्यते ॥ पचादिराकृतिगणः । शिवशमरिष्टस्य करे, कर्मणि घटोऽठच् इति सूत्रयोः करोतेर्घटेश्च अच्प्रयोगात्, अच्प्रत्यये परे यङ्लुग्विधानाच्च । केषांचित्पाठस्त्वनुबन्धासञ्जनार्थः । केषांचित् प्रपञ्चार्थः । केषांचिद्बाधकबाधनार्थः । पचतीति पचः ॥ नदट् । चोरट् । देवट् । इत्यादयष्टितः । नदी । चोरी । देवी । दीव्यतेरिगुपधेति कः प्राप्तः ॥ जारभरा । श्वपचा । अनयोः कर्मण्यण् प्राप्तः । न्यङ्क्वादिषु पाठात् श्वपाकोऽपि ॥ यङोऽचि चेति लुक् । न धातुलोप इति गुणवृद्धिनिषेधः । चेक्रियः । नेन्यः । लोलुवः । पोपुवः । मरीमृजः ॥ ( ३८५४ ) वा **चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्** ॥ आगमस्य दीर्घत्वसामर्थ्याद्भ्यासह्रस्वो हलादिःशेषश्च न । चराचरः । चलाचलः । पतापतः । वदावदः ॥ (३८५५) वा **हन्तेर्घत्वं च** ॥ घत्वमभ्यासस्य, उत्तरस्य त्वभ्यासाच्चेति कुत्वम् । घनाघनः ॥ ( ३८५६ ) वा **पाटेर्णिलुक् चोक् च दीर्घश्चाभ्यासस्य** ॥ पाटूपटः । पक्षे-चरः । चलः । पतः । वदः । हनः । पाटः । रात्रेः कृतीति वा मुम् । रात्रिंचरो रात्रिचरः ॥ (३८५७) सू **इगुपधज्ञाप्रीकिरः कः** ।३। १ । १३५ । एभ्यः कः स्यात् । क्षिपः । लिखः । बुधः । कृशः । ज्ञः । प्रीणातीति प्रियः । किरतीति किरः । वाऽसरूपविधिना ण्वुल्तृचावपि । क्षेपकः । क्षेप्ता ॥ ( ३८५८ ) सू **आतश्चोपसर्गे** । ३ । १ । १३६ । कः स्यात् । श्याद्व्यधेति णस्यापवादः । सुग्लः । प्रज्ञः ॥ ( ३८५९ ) सू **पाघ्राध्माधेट्दृशः शः** । ३ । १ । १३७ । पिबतीति पिबः । जिघ्रः । धमः । धयः । धया कन्या । धेटष्टित्वात् स्तनन्धयीति खशीव ङीप् प्राप्तः, खशोऽन्यत्र नेष्यत इति हरदत्तः । पश्यतीति पश्यः । घ्रः संज्ञायां न, व्याघ्रादिभिरिति निर्देशात् ॥ ( ३८६० ) सू **अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च** । ३ । १ । १३८ । शः स्यात् । लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातिः सुखार्थः सौत्रो हेतुमण्ण्यन्तः-सातयः । वाऽसरूपन्यायेन क्विपि सात् परमात्मा । सात्वन्तो भक्ताः । षह मर्षणे चुरादिः, हेतुमण्ण्यन्तो वा । साहयः । अनुपसर्गात्किम् । प्रलिपः ॥ ( ३८६१ ) वा **नौ लिम्पेर्वाच्यः** ॥ निलिम्पा देवाः ॥ ( ३८६२ ) वा **गवादिषु विन्देः संज्ञायाम्**

---

प्रत्येकं संबध्यते तदाह-**नन्द्यादेर्ल्युरित्यादि** । **मधुसूदन इति** । मधुं दैत्यं सूदयतीति विग्रहः । 'सूद क्षरणे' । इह अर्दिसूदिभ्यां कर्मण्याणि प्राप्ते नन्द्यादिपाठात् ल्युः ॥ **विभीषण इति** । 'भियो हेतुभये षुक्' ॥ **ग्राहीति** । णिनेर्णित्त्वादुपधावृद्धिः ॥ **स्थायीति** । 'आतो युक्-३६८५' ॥ **मन्त्रीति** । मत्रीति चुरादाविदित्पाठान्नुम् 'णेरनिटि ३०८८' इति लोपः ॥ **विषयीति** । 'षिञ् बन्धने' 'धात्वादेः-३०२८' इति षस्य सत्वे 'आदेशप्रत्यययोः २९८' इति प्राप्तस्य षत्वस्य 'सात्पदाद्योः २८६३' इति निषेधादाह-**इह षत्वमपीति** । निपातनादित्यनुषज्यते ॥ 'परिनिविभ्यः-३०४२' इति सूत्रे सितसयेति क्तान्ताजन्तसिनोतेर्ग्रहणाण्णिन्यन्तसिनोतेर्निपातनं विना षत्वं दुर्लभमिति भावः ॥ **जारभरेत्यादि** । जारं बिभर्ति, श्वानं पचतीति विग्रहः ॥ **श्वपाकोऽपीति** । 'कर्मण्यण् ३८७०' अपि पक्षे भवतीति भावः ॥ **चेक्रिय इति** । संयोगपूर्वत्वात् 'एरनेकाचः-३८०' इति न यण् ॥ **लोलुव इति** । इह सुबभावात् 'ओः सुपि ३९३' इति यण्नेति 'अचि श्नुधातु-३७९' इत्युवङ् ॥ **मरीमृज इति** । 'रीगृदुपधस्य च ३५१२' इति रीगागमः ॥ (३८५४) **हलादिःशेषश्च नेति** । सति तु हलादिःशेषे आगमस्य आदेशस्य वा विशेषो नास्तीति 'आ चाभ्यासस्य' इत्येव ब्रूयादिति भावः ॥ ( ३८५६ ) **पाटेर्णिलुगिति** । 'णेरनिटि ३०८८' इति लोपे हि प्रत्ययलक्षणन्यायेन पाटूपट इत्यत्रोपधावृद्धिः स्यादिति भावः । इहापि पूर्ववद्ध्रस्वहलादिःशेषयोरभावः ॥ ( ३८५७ ) **इगुपध-** । इक् उपधा यस्य सः । 'ज्ञा अवबोधने, 'प्रीञ् तर्पणे', 'कॄ विक्षेपे' एषामितरेतरयोगद्वन्द्वे व्यत्ययेन पञ्चम्येकवचने । कॄशब्दस्य धात्वनुकरणत्वेन 'प्रकृतिवदनुकरणम्' इत्यतिदेशात् 'ॠत इद्धातोः ३१८३' इति इत्त्वम् । समाहारद्वन्द्वे तु नपुंसकह्रस्वत्वे सति इत्त्वं न स्यात् ॥ **ज्ञ इति** । जानातीति ज्ञः 'आतो लोप इटि च ३१६५' इत्यालोपः ॥ (३८५९) **पाघ्राध्मा-** । 'पा पाने' । 'पा रक्षणे' इत्ययं तु नगृह्यते, लुग्विकरणत्वात् । इह सूत्रे उपसर्ग इति केचिदनुवर्तयन्ति, तद् बहूनामसंमतम् । तथा च श्रीहर्षः-'फलानि धूमस्य धयानधोमुखान्' इति । श्रूयते च-'यदा पश्यः पश्यते रुक्मवर्णम्' इति ॥ ( ३८६० ) **अनुपसर्गाल्लिम्पविन्द-** । इह लिम्पविन्देति भाविना नुमा सनुम्कौ निर्दिष्टौ । तेन लाभार्थस्यैव विन्देर्ग्रहणं, न तु सत्ताद्यर्थकानाम् ॥ **धारय इति** । 'धृञ् धारणे' । 'धृङ् अवस्थाने' । ण्यन्तयोर्द्वयोरपि ग्रहणम् । अथ कथं 'न मध्यमन्त्रोत्तरधारयस्य ते' इति श्रीहर्षः । परत्वाद्धि सूत्रधारादिष्विव कर्मण्यणा भाव्यम् । तथा च वार्तिकम्-'अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन' इति । सत्यम्, कर्मणः शेषत्वविवक्षायामणोऽप्राप्त्या शे कृते शेषषष्ठ्यन्तेन समासो भविष्यति । एतेन गङ्गाधरभूधरजलधरादयो व्याख्याताः ॥ **पारय इति** । 'पार कर्मसमाप्तौ' चुरादिण्यन्तः । 'पॄ पालनपूरणयोः' इति वा हेतुमण्ण्यन्तः ॥ **वेदय इति** । 'विद चेतनाख्यानादिषु' चुरादिः, ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः । इहोदाहरणेषु लिपिविदिभ्यां 'तुदादिभ्यः शः ३३५७' 'शे मुचादीनाम् ३३७३'

गोविन्दः। अरविन्दम्॥ (३८६३) ददातिदधात्योर्विभाषा। ३। १। १३९। शः स्यात्। ददः। दधः। पक्षे वक्ष्यमाणो[३८६६] णः। अनुपसर्गादित्येव। प्रदः। प्रधः॥ (३८६४) ज्वलितिकसन्तेभ्यो णः। ३। १। १४०। इतिशब्द आद्यर्थः। ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा। पक्षेऽच्। ज्वालः, ज्वलः। चालः, चलः। अनुपसर्गादित्येव। उज्ज्वलः॥ (३८६५) तनोतेरुपसंख्यानम्॥ इहानुपसर्गादिति विभाषेति च न संबध्यते। अवतनोतीत्यवतानः॥ (३८६६) श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च। ३। १। १४१। श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात्। श्यैङोऽवस्यतेश्चादन्तत्वात्सिद्धे पृथग् ग्रहणमुपसर्गे कं बाधितुम्। अवश्यायः। प्रतिश्यायः॥ आत्। दायः। धायः। व्याधः। स्रु गतौ आङ्पूर्वः संपूर्वश्च। आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः॥ (३८६७) दुन्योरनुपसर्गे। ३। १। १४२। णः स्यात्। दुनोतीति दावः। नीसाहचर्यात्सानुबन्धकाद् दुनोतेरेव णः। दवतेस्तु पचाद्यच्। दवः। नयतीति नायः। उपसर्गे तु प्रदवः। प्रणयः॥ (३८६८) विभाषा ग्रहः। ३। १। १४३। णो वा। पक्षेऽच्। व्यवस्थितविभाषेयम्। तेन जलचरे ग्राहः, ज्योतिषि ग्रहः॥ (३८६९) भवतेश्चेति काशिका। भवो देवः संसारश्च। भावाः पदार्थाः। भाष्यमते तु प्राप्त्यर्थाच्चुरादिण्यन्तादच्। भावः॥ (३८७०) गेहे कः। ३। १। १४४। गेहे कर्तरि ग्रहेः कः स्यात्। गृह्णाति धान्यादिकमिति गृहम्। तात्स्थ्याद् गृहा दाराः॥ (३८७१) शिल्पिनि ष्वुन्। ३। १। १४५। क्रियाकौशलं शिल्पं तद्वत्कर्तरि ष्वुन् स्यात्॥ (३८७२) नृतिखनिरञ्जिभ्य एव॥ नर्तकः। नर्तकी। खनकः। खनकी॥ (३८७३) अस्यकेऽने च रञ्जेर्नलोपो वाच्यः॥ रजकः। रजकी। भाष्यमते तु नृतिखनिभ्यामेव ष्वुन्।

---

इति नुम्। धार्यादिभ्यस्तु शब्, गुणायादेशौ॥ (३८६२) अरविन्दमिति। चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अराः तदाकाराणि दलानि तत्सादृश्यादरास्तान् विन्दति लभते इत्यर्थे कर्मण्यणो बाधनायेदम्॥ (३८६३) ददातिदधात्योर्विभाषा। ददः दध इति। शे परे 'जुहोत्यादिभ्यः–३३०७' इति श्लुः, 'श्लौ ३३०८' इति द्वित्वम्, अपित्सार्वधातुकस्य शस्य ङित्त्वात् 'आतो लोपः–३१६५'[1] (श्नाभ्यस्तयोरिति) इत्याल्लोपः॥ वक्ष्यमाणो ण इति। 'श्याद्व्यधा–३८६६' इति णप्रत्यये आतो युकि दायः, धायः॥ प्रदः। प्रध इति। 'आतश्चोपसर्गे ३८५८' इति कः। स्यादेतत्, 'दद दाने' 'दध धारणे' आभ्यामचि ददो दध इति सिद्धम्, दाधाभ्यामादन्तलक्षणे णप्रत्यये दायो धाय इत्यपि, ततश्चेदं व्यर्थमिति चेत्। सत्यम्, स्वरार्थमिदं सूत्रम्। अददः, अदधः। इह हि अव्ययपूर्वपदप्रकृतिस्वर इष्यते। अजन्तत्वे तु 'अच्कावशक्तौ ५८६३' इत्यन्तोदात्तत्वं स्यात्॥ (३८६४) इतिशब्द आद्यर्थ इति। निपातानामनेकार्थत्वादिति भावः॥ (३८६६) श्याद्व्यधा–। अनुपसर्गादिति निवृत्तम्। उत्तरसूत्रे पुनरनुपसर्गग्रहणाद्। एवं च तत्संबद्धं विभाषाग्रहणमपि निवृत्तं तदाह–नित्यमिति। इह सूत्रे 'श्यैङ् गतौ' इत्यस्य आत्त्वे श्या आद् इति प्रश्लेषो, न तु शीङो यणादेशेन, नाप्यततेः अच्छब्दान्तानां वा यतिप्रभृतीनां, नाप्यकारान्तानां वा प्रश्लेषेण ग्रहणं व्याख्यानादिति भावः॥ कं बाधितुमिति। अन्यथा 'आतश्चोपसर्गे ३८५८' इति विशेषविहितः कः सामान्यविहितस्य णस्य बाधकः स्यादित्यर्थः॥ स्रु गतौ। प्राचा तु सूत्रे 'आश्रु संश्रु' इति तालव्यं पठित्वा शृणोतिरुदाहृतः तदनाकरम्, तथा च प्रयुञ्जते–'अनाश्रवा वः किमहं कदापि वक्तुं विशेषः परमस्ति शेषः' इति नैषधादौ। अमरोऽप्याह–'वचने स्थित आश्रवः' इति। यदि तु सूत्रे अस्मिन्–शृणोतेर्ग्रहणं स्यात्तर्हि 'ऋदोरप्[2] ५०२४' इति सामान्यविहितमपं बाधित्वा आङ्पूर्वकाच्छृणोतेर्विशेषविहितो ण एव स्यात्। तथा च आश्रव इति रूपं न स्यात्किन्त्वाश्राव इति स्यादिति दिक्॥ लेहः। श्लेष इति। 'इगुपधज्ञा–३८५७' इति कप्रत्यये गुणो न स्यादिति भावः॥ (३८६७) दुनोतेरिति। 'टुदु उपतापे' इत्यस्मात्॥ दवतेरिति। 'दु गतौ' इत्यस्मात्॥ दव इति। 'दवदावौ वनारण्यवह्नी' इत्यमरः॥ (३८६९) काशिकेति। भाष्ये त्वेतद्वार्तिकं नास्तीति तन्मते भावशब्दोऽसाधुरित्यत आह–भाष्यमते त्विति॥ (३८७०) गेहे कः। गेह इति प्रत्ययार्थस्य कर्तुर्विशेषणं नोपपदम्। 'गृहपतिना संयुक्ते ञ्यः। २२३६' इति निर्देशादित्यभिप्रेत्याह–गेहे कर्तरीति। एतत्सूत्रं तु शक्यमकर्तुं 'गृह ग्रहणे' इति भ्वादेरिगुपधलक्षणे[३८५७] कप्रत्यये कृते गृहशब्दस्य सिद्धेः॥ तात्स्थ्यादिति। भवति हि तात्स्थ्यात्ताच्छब्द्यम्। मञ्चाः क्रोशन्तीत्यादौ मञ्चशब्देन पुरुषा अपि व्यपदिश्यन्ते। एवं च गृहशब्दो वेश्मनि मुख्यो दारेषु त्वौपचारिक इत्यर्थः। अत्रेदमवधेयम्–गृहशब्दोऽयमर्धर्चादित्वादुभयलिङ्गः। तत्र नपुंसकलिङ्गोऽभिधेयवचनः, पुंल्लिङ्गस्तु बहुवचनान्त एव। 'गृहाः पुंसि च भूम्न्येव' इत्यमरोक्तेरिति॥ (३८७१) शिल्पिनि ष्वुन्। पूर्वेण साहचर्याच्छिल्पिनीत्यपि प्रत्ययार्थस्य विशेषणं, न तु उपपदमित्याह–तद्वति कर्तरीति॥ (३८७३) भाष्यमते त्विति। तथा च षष्ठे 'रजकरजनरजःसूपसंख्यानम्' इति वार्तिकं प्रत्या-

---

१ आतो लोप इत्याल्लोप इति। अनेन 'आतो लोप इटि च' इति स्मारितम्। परं तु तन्न सम्यक्, शप्रत्ययस्य सार्वधातुकत्वेनार्धधातुकत्वाभावादस्याप्राप्तेः। तस्मादत्र 'श्नाभ्यस्तयोरातः' इत्युपन्यास उचितः॥ २ इदं तु 'कृतो बहुलम्' इत्यङ्गीकृत्य प्रत्ययार्थं निमित्तमनपेक्ष्य, तदाश्रयणे तु सामान्यत्वेनाभिमतस्यापो भावे कर्तृभिन्नकारके वा विधानेन विशेषत्वेनाभिमतस्य णस्य कर्तरि विधानेन सामान्यविशेषभावस्यासंभवात्।

रञ्जेस्तु (सू) कुन् शिल्पिसंज्ञयोरिति कुन्[३४९१][१]। टाप्। रजिका। पुंयोगे तु रजकी॥ (३८७४) (सू) **गस्थकन्**।३।१।१४६। गायतेस्थकन् स्यात् शिल्पिनि कर्तरि। गाथकः॥ (३८७५) (सू) **ण्युट् च**।३।१।१४७। गायनः। टित्त्वाद् गायनी॥ (३८७६) (सू) **हश्च व्रीहिकालयोः**।३।१।१४८। हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि। जहात्युदकमिति हायनो व्रीहिः। जहाति भावानिति हायनो वर्षम्। जिहीते प्राप्नोतीति वा॥(३८७७) (सू) **प्रुसृल्वः समभिहारे वुन्**।३।१।१४९। समभिहारग्रहणेन साधुकारित्वं लक्ष्यते। प्रवकः। सरकः। लवकः॥ (३८७८) (सू) **आशिषि च**।३।१।१५०। आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात्कर्तरि। जीवतात्—जीवकः। नन्दतात्—नन्दकः। आशीः प्रयोक्तुर्धर्मः। आशासितुः पित्रादेरियमुक्तिः॥ (३८७९) (सू) **कर्मण्यण्**।३।२।१। कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्। उपपदसमासः[११२६]। कुम्भं करोतीति कुम्भकारः। आदित्यं पश्यतीत्यादावनभिधानान्न॥ (३८८०) (वा) **शीलिकामिभक्ष्याचरिभ्यो णः**॥ अणोऽपवादार्थं वार्तिकम्। मांसशीला। मांसकामा। मांसभक्षा। कल्याणाचारा॥ (३८८१) (वा) **ईक्षिक्षमिभ्यां च**॥ सुखप्रतीक्षा। बहुक्षामा। कथं तर्हि गङ्गाधरभूधरादयः। कर्मणः शेषत्वविवक्षायां भविष्यन्ति॥ (३८८२) (सू) **ह्वावामश्च**।३।२।२। अण् स्यात्। कापवादः। स्वर्गह्वायः। तन्तुवायः। धान्यमायः॥ (३८८३) (सू) **आतोऽनुपसर्गे कः**।३।२।३। आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात् नाऽण्। आतो लोपः[३१६८]। गोदः। पार्ष्णित्रम्। अनुपसर्गे किम्। गोसन्दायः॥ (३८८४) (वा) **कविधौ सर्वत्र प्रसारणिभ्यो डः**॥ ब्रह्म जिनाति ब्रह्मज्यः। सर्वत्रग्रहणात् आर्तिश्चोपसर्गे[३१६८]। आह्वः। प्रह्वः॥(३८८५) (सू) **सुपि स्थः**।३।२।४। सुपीति योगो विभज्यते। सुपि उपपदे आदन्तात्कः स्यात्। द्वाभ्यां पिबतीति द्विपः। समस्थः। विषमस्थः॥ ततः-स्थः। सुपि तिष्ठतेः कः स्यात्। आरम्भसामर्थ्याद्भावे। आखूनामुत्थानमाखूत्थः॥

---

ख्यातुं भाष्यकृतोक्तम्—'रजकरजनरजःसु कित्त्वात् सिद्धे कित एवैते औणादिकाः' इति। तत्र कैयटः—रजक इति 'क्वुन् शिल्पि—४३९३' इति क्वुन्। रजनमिति 'रञ्जेः क्युन् ४४४०' इति क्युन्। रज इति 'भूरञ्जिभ्यां कित् ४८६२' इत्यसुन् प्रत्यय इत्यादि॥ (३८७४) **गस्थकन्**। गामादाग्रहणेष्वविशेषेऽपि 'गै शब्दे' इत्ययमेवेह गृह्यते, न तु 'गाङ् गतौ' इति। थकन् प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थ इत्याशयेनाह—**गायतेरिति**॥ (३८७५) **ण्युट् च**। योगविभाग उत्तरत्र अस्यैवानुवृत्त्यर्थः॥ **गायन इति**। 'आतो युक्—३६८५'॥ (३८७६) **जहात्युदकमिति**। उदकादधिकं वर्द्धनात्। **भावान् इति**। भावाः पदार्थाः तान्॥ **जिहीते इति**। 'ओहाङ् गतौ' 'भृञामित् ३३१४' इत्यभ्यासस्येत्त्वम्॥ (३८७७) **प्रुसृल्वः**—। पञ्चमीस्थाने व्यत्ययेन जस्। 'ओः सुपि ३९३' इति यण्॥ **लक्ष्यत इति**। भूयः सहचाराद्यो हि यां क्रियां पुनः पुनरनुभवति स तत्र प्रायेण कौशलं लभते, तेन सकृदपि यः सुष्ठु करोति तत्र वुन्, यस्तु बहुशोऽपि दुष्टं करोति तत्र नेति भावः॥ (३८७८) **आशिषि च**। अप्राप्तप्रार्थनमाशीः, सा च प्रयोक्तृधर्मः प्रत्ययार्थः 'कर्तरि कृत् ३७७०' इति कर्त्रर्थे विधानादित्याशयेनाह—**आशीर्विषयार्थेत्यादिना**॥ **जीवतादिति**। जीवनं तव भूयादित्यर्थः॥ **जीवक इति**। स्त्रियां तु टापि 'आशिषि वुनश्च न ६१५' इति निषेधात् 'प्रत्ययस्थात्—६३०' इति इत्वाभावः। जीवका॥ (३८७९) **कर्मण्यण्**। **उपपदसमास इति**। 'तत्रोपपदम्—११२५' इति कर्मादिवाच्यकुम्भादिवाचकपदस्योपपदसंज्ञायाम् 'उपपदमतिङ् ११२६' इति समास इत्यर्थः॥ **कुम्भकार इति**। अणि कृते 'कर्तृकर्मणोः कृति ९०७' इति षष्ठ्यन्तस्य कुम्भशब्दस्य कारशब्देन समासः॥ **शेषत्वविवक्षायामिति**। पदसंस्कारपक्षे तु धरतीति धरः गङ्गाया धर इति कर्मणि या षष्ठी तदन्तेन समास इति सुवचम्। स्यादेतत्, धातोर्विधीयमानस्याणादेः पदविधित्वाभावेन समर्थपरिभाषाया अनुपस्थानात्पश्यति कुम्भं करोति कटमित्यादावसमर्थादपि धातोरणादयः स्युरिति चेद्। अत्राहुः—कुम्भाद्युपपदे विधीयमानस्याणादेरपि पदाश्रितविधित्वात्समर्थपरिभाषोपस्थानान्नोक्तदोषः। उपोच्चारितं पदं ह्युपपदं, पदं च सुप्तिङन्तमिति प्रागेवोक्तत्वादिति॥ (३८८२) **ह्वावामश्च**। **कापवाद इति**॥ 'आतोऽनुपसर्गे—३८८३' इति प्राप्तिर्बोध्या॥ **स्वर्गह्वाय इत्यादि**। ह्वेञ्वेञोः 'आदेचः—३१६३' इत्यात्त्वे 'आतो युक्—३६८५' इति युक्। 'माङ् माने' 'मेङ् प्रणिदाने' अनयोरिह ग्रहणं, न तु 'मा माने' इत्यस्य, अकर्मकत्वात्॥(३८८३) कविधानस्य फलमाह—**आतो लोप इति**॥ **पार्ष्णित्रमिति**। पार्ष्णि त्रायत इति 'त्रैङ् पालने'॥ **गोसंदाय इति**। अण् युक्॥ (३८८४) **प्रसारणिभ्य इति**। प्रसारणमिति संप्रसारणपर्यायः॥ **जिनातीति**। 'ज्या वयोहानौ'। 'क्र्यादिभ्यः—३३८५' इति श्नाप्रत्यये 'ग्रहिज्या—३२१६' इति संप्रसारणे पूर्वरूपे 'हलः ३३९०' इति दीर्घे च कृते 'प्वादीनाम्—३३८९' इति ह्रस्वः॥ **ब्रह्मज्य इति**। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। पूर्वेण के हि सति कित्त्वात्संप्रसारणादौ च ब्रह्मजिय इति स्यात्॥ **आह्वः प्रह्व इति**। के हि सति 'वचिस्वपि—३२१३' इत्यादिना ह्वेञः संप्रसारणे सत्याहुवः प्रहुव इति स्यादिति बोध्यम्॥ (३८८५) **सुपि स्थः**। सुबिति प्रत्याहारो गृह्यते न तु सप्तमीबहुवचनं, कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणात्॥ **आरम्भसामर्थ्यादिति**। कर्तरि पूर्वेणैव सिद्धत्वा-

---

१ 'सौत्रमेकत्वम्' इत्येव तूचितम् इत्यपीष्टरूपासिद्धेर्जसः कल्पनायां फलाभावात्॥

( ३८८६ ) (सू०) **प्रष्ठोऽग्रगामिनि** । ८ । ३ । ९२ । प्रतिष्ठत इति प्रष्ठो गौः । अग्रतो गच्छतीत्यर्थः । अग्रेति किम् । प्रस्थः ॥ ( ३८८७ ) (सू०) **अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः** । ८ । ३ । ९७ । स्थ इति कप्रत्ययान्तस्यानुकरणम् । षष्ठ्यर्थे प्रथमा । एभ्यः स्थस्य सस्य षः स्यात् । द्विष्ठः । त्रिष्ठः ॥ इत ऊर्ध्वं कर्मणि सुपीति द्वयमप्यनुवर्तते । तत्राकर्मकेषु सुपीत्यस्य सम्बन्धः ॥ ( ३८८८ ) (सू०) **तुन्दशोकयोः परिमृजापनुदोः** । ३ । २ । ५ । तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात् ॥ ( ३८८९ ) (वा०) **आलस्यसुखाहरणयोरिति वक्तव्यम्** ॥ तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता । अलसादन्यत्र तुन्दपरिमार्ज एव । यश्च संसारासारत्वोपदेशेन शोकमपनुदति स शोकापनोदः ॥ ( ३८९० ) (वा०) **कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्** ॥ मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः । गिलतीति गिलः ॥ ( ३८९१ ) (सू०) **प्रे दाज्ञः** । ३ । २ । ६ । दारूपाज्जानातेश्च प्रोपसृष्टात्कर्मण्युपपदे कः स्यात् । अणोऽपवादः । सर्वप्रदः । पथिप्रज्ञः । अनुपसर्ग इत्युक्तेः प्रादन्यस्मिन्सुपि न कः—गोसम्प्रदायः ॥ ( ३८९२ ) (सू०) **समि ख्यः** । ३ । २ । ७ । गोसंख्यः ॥ ( ३८९३ ) (सू०) **गापोष्टक्** । ३ । ३ । ८ । अनुपसृष्टाभ्यामाभ्यां टक् स्यात्कर्मण्युपपदे । सामगः । सामगी । उपसर्गे तु—सामसङ्गायः ॥ ( ३८९४ ) (वा०) **पिबतेः सुराशीध्वोरिति वाच्यम्** ॥ सुरापी । शीधुपी । अन्यत्र क्षीरपा ब्राह्मणी । सुरां पाति रक्षतीति सुरापा ॥ ( ३८९५ ) (सू०) **हरतेरनुद्यमनेऽच्** । ३ । २ । ९ । अंशहरः । अनुद्यमने किम् । भारहारः ॥ ( ३८९६ ) (वा०) **शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम्** ॥ शक्तिग्रहः । लाङ्गलग्रहः ॥ ( ३८९७ ) (वा०) **सूत्रे च धार्यर्थे** ॥ सूत्रग्रहः । यस्तु सूत्रं केवलमुपादत्ते न तु धारयति तत्र अणेव—सूत्रग्राहः ॥ ( ३८९८ ) (सू०)

---

दिह 'कर्तरि कृत् ३७७१' इति न संबध्यते । अनिर्दिष्टार्थश्च स्वार्थे । धातोः स्वार्थो भाव एव ॥ नन्वेवं 'घञर्थे कविधानम् ५०२८' इत्यनेन गतार्थतेति चेत् । न, वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः । किंच, 'षष्ठी १०१६' इति सूत्रेण पाक्षिकसमासे प्रसक्ते 'उपपदमतिङ् ११२६' इति नित्यसमासार्थमिदम् । अत एव ल्युडन्तेनाऽस्वपदविग्रहमाह—**आखूनामुत्थानमिति** ॥ नन्वेवं 'घञर्थे कविधाने स्थास्नापाव्यधिहनियुध्यर्थम्' इति वार्तिके स्थाग्रहणं व्यर्थमिति चेद् । अत्राहुः—अकर्तरि कारके विधानार्थं तत्र स्थाग्रहणमिति ॥ **आखूत्थ इति** । स्था इत्यस्य के परे 'आतो लोपः—३१६५' इत्यालोपः 'उदः स्थास्तम्भोः—१८३' इति उदः परस्य थः, उदो दस्य चर्त्वम् । अत्र प्राचा आखूत्थं वर्तते इति नपुंसके पठितं, तदुपेक्ष्यमिति मनोरमायामुक्तम् । भाष्यादौ सर्वत्र पुँल्लिङ्गस्यैव उदाहृतत्वात् । 'ल्युः कर्तरीमनिज् भावे को घोः किः प्रादितोऽन्यतः' इत्यमरकोशे भावे कस्य पुंस्त्वविधानात् 'भावे नणकचिद्भ्योऽन्ये' इति नपुंसकविधाने कस्य पर्युदासाच्चेति नणकचिद्भ्य इत्यत्र चकार इत्यस्य स चित्, नश्च णश्च कश्च चिच्च नणकचितस्तेभ्योऽन्य इति विग्रहः ॥ ( ३८८७ ) **अम्बाम्ब—। कप्रत्ययान्तेति** । तेन भूमिस्थितम् । गोस्थानमित्यादौ नेति भावः । प्राचा तु स्थस्य सस्येति व्याख्यातव्ये स्थः सस्येति व्याख्यातं तदाकरविरोधेन कप्रत्ययान्तस्येत्यध्याहृत्य व्याख्येयम् ॥ **द्विष्ठः त्रिष्ठ इति** । द्वयोस्तिष्ठतीत्यादिविग्रहः । एवमम्बष्ठः, आम्बष्ठः, गोष्ठः, भूमिष्ठः, सव्यष्ठः, अपष्ठः, कुशेष्ठः, कुष्ठः, शङ्कुष्ठः, अङ्गुष्ठः, मञ्जिष्ठः, पुञ्जिष्ठः, परमेष्ठः, बर्हिष्ठः, दिविष्ठः, अग्निष्ठः ॥ ( ३८८८ ) **आभ्यामिति** । परिमृजापनुदोरित्यत्र पञ्चम्यर्थे षष्ठीति भावः ॥ ( ३८८९ ) **तुन्दपरिमृज इति** । अत्र 'मृजेरजादौ—३२८७' इति वैकल्पिकी वृद्धिर्व्यवस्थितविभाषया नेत्येके । स्यादेवेत्यन्ये ॥ ( ३८९० ) **मूलविभुजादिभ्य इति** । तादर्थ्ये एषा चतुर्थी । मूलविभुजादिसिद्ध्यर्थमित्यर्थः ॥ ( ३८९१ ) प्रे दा—। गामादाग्रहणेष्वविशेषादाह—**दारूपादिति** ॥ **पथिप्रज्ञ इति** । पन्थानं प्रकर्षेण जानातीत्यर्थः ॥ **प्रादन्यस्मिन्निति** । प्रशब्दमात्रोपपदे अस्य सूत्रस्य चरितार्थत्वादुपसर्गान्तरे सति 'आतोऽनुपसर्गे—३८८३' इत्यनेनापि न भवतीति भावः ॥ ( ३८९२ ) **गोसंख्य इति** । गाः संचष्टे इति विग्रहः । 'चक्षिङः ख्याञ् ३२४३' । 'ख्या प्रकथने' इत्यस्य तु संपूर्वस्य प्रयोगो नास्तीति न्यासकारः । सार्वधातुकमात्रविषयोऽसौ[2] धातुरिति च मनोरमादौ स्थितम् ॥ ( ३८९३ ) **गापोष्टक्** । इह गामादाग्रहणेष्वविशेषेऽपि गायतेरेव ग्रहणं, न तु 'गाङ् गतौ' 'गा स्तुतौ' इत्यनयोः, अनभिधानात् ॥ **सामगः । सामगीति** । एतेन टकः कित्त्वमालोपार्थं, टित्त्वं तु ङीबर्थमिति ध्वनितम् । प्रत्ययाधिकाराट्टकः प्रत्ययत्वेन 'प्रत्ययः २६४' 'परश्च २६५' इति धातोः पर एव स्यादिति 'आद्यन्तौ टकितौ ५९' इत्यस्यात्र आशङ्कैव नास्तीति बोध्यम् ॥ **सामसंगाय इति** । कर्मण्यणि सति 'आतो युक्—३६८५' इति युक् ॥ ( ३८९४ ) **पिबतेरिति** । 'लुग्विकरणालुग्विकरणयोः—३११६' इति परिभाषालब्धार्थकथनम्, उपपदपरिगणनं तु वाचनिकमेव ॥ **क्षीरपेति** । क्षीरं पिबतीति 'आतोऽनुपसर्गे कः ३८८३' ॥ ( ३८९६ ) **शक्तीति** । घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन मद्रराज्ञीत्यत्र टच्

---

१ मूलविभुज, नखमुच, काकगृह, कुमुद, महीध्र, कुध्र, गिल, आकृतिगणोऽयम् ॥ २ **सार्वधातुकेति**—तथा सति 'न ल्याप्या—' इति सूत्रे ख्याग्रहणं व्यर्थं स्यादिति प्रागुक्तं न विस्मर्तव्यम् ॥

वयसि च । ३ । २ । १० । उद्यमनार्थं सूत्रम् । कवचहरः कुमारः ॥ ( ३८९९ ) आङि ताच्छील्ये । ३ । २ । ११ । पुष्पाण्याहरति तच्छीलः पुष्पाहरः । ताच्छील्ये किम् । भारहारः ॥ ( ३९०० ) अर्हः । ३ । २ । १२ । अर्हतेरच् स्यात्कर्मण्युपपदे । अणोऽपवादः । पूजार्हा ब्राह्मणी ॥ ( ३९०१ ) **स्तम्बकर्णयो रमिजपोः** । ३ । २ । १३ । ( ३९०२ ) **हस्तिसूचकयोरिति वक्तव्यम्** ॥ स्तम्बे रमते स्तम्बेरमो हस्ती । तत्पुरुषे कृतीति, हलदन्तादिति वा ङेरलुक् । कर्णेजपः सूचकः ॥ ( ३९०३ ) **शमि धातोः संज्ञायाम्** । ३ । २ । १४ । शम्भवः । शंवदः । पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम् । कृञो हेत्वादिषु टो मा भूत् । शङ्करा नाम परिव्राजिका तच्छीला च ॥ ( ३९०४ ) **अधिकरणे शेतेः** । ३ । २ । १५ । खे शेते खशयः ॥ ( ३९०५ ) **पार्श्वादिषूपसंख्यानम्** ॥ पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः ॥ ( ३९०६ ) **उत्तानादिषु कर्तृषु** ॥ उत्तानः शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य सः अवमूर्धा । अधोमुखः शेते इत्यर्थः ॥ ( ३९०७ ) **गिरौ डश्छन्दसि** ॥ गिरौ शेते गिरिशः । कथं तर्हि गिरिशमुपचचार प्रत्यहं सा सुकेशीति । गिरिरस्यास्तीति विग्रहे लोमादित्वाच्छः ॥ ( ३९०८ ) **चरेष्टः** । ३ । २ । १६ । अधिकरणे उपपदे । कुरुचरः । कुरुचरी ॥ ( ३९०९ ) **भिक्षासेनादायेषु च** । ३ । २ । १७ । भिक्षां चरतीति भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः ॥ कथं प्रेक्ष्य स्थितां सहचरीमिति । पचादिषु चरडिति पाठात् ॥ ( ३९१० ) **पुरोऽग्रतोऽग्रेषु सर्तेः** । ३ । २ । १८ । पुरस्सरः । अग्रतस्सरः । अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः । सूत्रेऽग्रे इति एदन्तत्वमपि निपात्यते । कथं तर्हि यूथं तदग्रसरगर्वितकृष्णसारमिति । बाहुलकादिति हरदत्तः ॥ ( ३९११ ) **पूर्वे कर्तरि** । ३ । २ । १९ । कर्तृवाचिनि पूर्वशब्दे उपपदे सर्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरतीति पूर्वसारः ॥ ( ३९१२ ) **कृञो हेतुताच्छील्यानुलोम्येषु** । ३ । २ । २० । एषु द्योत्येषु करोतेष्टः स्यात् । अतः कृकमीति सः । यशस्करी विद्या । श्राद्धकरः । वचनकरः ॥ ( ३९१३ ) **दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु** । ३ । २ । २१ । एषु कृञष्टः स्यात् अहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः—भास्करः । बहुकरः । बहुशब्दस्य वैपुल्यार्थे संख्यापेक्षया पृथग्ग्रहणम् । लिपिलिबिशब्दौ पर्यायौ । संख्या । एककरः । द्विकरः । करकादित्वादहस्करः । नित्यं समासेऽनुत्तरपदस्थस्येति षत्वम् । धनुष्करः । अरुष्करः ॥ ( ३९१४ ) **किंयत्तद्बहुषु कृञोऽज्विधानमिति वार्तिकम्** ॥ किंकरा । यत्करा । तत्करा । हेत्वादौ टं बाधित्वा परत्वादच् । पुंयोगे ङीष् ।

---

न, द्विषतीताप इत्यत्र 'द्विषत्परयोः–३९४१' इति खच् नेति दिक् ॥ ( ३८९८ ) **कवचहर इति** । कवचोद्यमनं क्रियमाणं संभाव्यमानं वा वयो गमयति तेनासत्यपि कवचग्रहणे कवचहर इति भवत्येव ॥ ( ३९०२ ) **हस्तिसूचकयोरिति** । अन्यत्र तु स्तम्बे रन्ता कर्णे जपिता ॥ ( ३९०३ ) **शमि धातोः**–। शमि उपपदे धातुमात्रात्संज्ञायामच्स्यात् ॥ **पुनर्धातुग्रहणमिति** । असति धातुग्रहणे 'शमि संज्ञायाम्' इत्यस्यावकाशः । शंभवः शंवदः । 'कृञो हेतुताच्छील्या–३९१२' इत्यस्यावकाशः श्राद्धकरः । शङ्कर इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्यात्, धातुग्रहणे कृते तु तत्सामर्थ्यादजेव भवति तदाह–**शङ्करा नामेत्यादि** ॥ ( ३९०५–३९०७ ) अनधिकरणार्थमुपसंख्यानमिति दर्शयति–**पार्श्वाभ्यामित्यादिना** ॥ ( ३९०८ ) **कुरुचर इति** । कुरुषु देशेषु चरत्यटतीत्यर्थः ॥ ( ३९०९ ) **भिक्षासेना**–। अनधिकरणार्थ आरम्भः ॥ **भिक्षां चरतीति** । चरतिरत्र चरणपूर्वके अर्जने वर्तते, चरणेन भिक्षामर्जयतीत्यर्थः ॥ **सेनाचर इति** । सेनां चरति प्रविशतीत्यर्थः ॥ **पचादिष्विति** । टविधानं तु 'उपपदमतिङ् ११२६' इति नित्यसमासार्थम् । सहचरः । सहचरीत्यत्र तु 'सुप्सुपा ९४९' इति वैकल्पिकः समासः ॥ ( ३९१२ ) **कृञो**–। हेतुरिह लौकिको न तु 'तत्प्रयोजको हेतुश्च ३४२५' इति कृत्रिमः, केवले कृञि तदसंभवात् ॥ **द्योत्येष्विति** । न तु वाच्येषु 'कर्तरि कृत् ३७७१' इत्यस्य बाधापत्तेरिति भावः ॥ हेत्वादिषु क्रमेणोदाहरति—**यशस्करीत्यादि** । एषु किम्, कुम्भकारः । इह प्रसिद्धतरत्वाद् डुकृञ्‌ करोतिरेव गृह्यते, न तु 'कृञ् हिंसायाम्' इति । हेतुः कारणम् । आनुलोम्यमाराध्यचित्तानुवर्तनम् ॥ ( ३९१३ ) **दिवाविभा**—। ननु अन्तकरशब्देन नञ्समासे स्वीकृतेऽपीष्टसिद्धौ सूत्रे त्वनन्तशब्दात्पृथगनन्तग्रहणं व्यर्थमिति चेद् । अत्राहुः—स्वरे तु विशेषोऽस्ति । नञ्समासे हि अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः स्यात्, अनन्तशब्दस्योपपदत्वे तु 'गतिकारकोपपदात् कृत् ५८४५' इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वमिति ॥ **दिवाकर इति** । दिवा दिवसं करोतीति विग्रहः । 'दिवाभूता रात्रिः' इत्यादाविव दिवाशब्दस्य वृत्तिविषये शक्तिमत्परत्वात् ॥ मूलेऽनुक्तान्यपि कानिचिदुदाहरणानि ऊह्यानि ॥ कर एव कारः प्रज्ञादित्वादण् । कारं करोतीति कारकरः, आदिकरः, नान्दीकरः, किंकरः, बलिकरः, भक्तिकरः, कर्तृकरः, चित्रकरः, क्षेत्रकरः, जङ्घाकरः, बाहुकर इति ॥ ( ३९१४ ) **वार्तिकमिति** । कैयटहरदत्तादिरीत्योक्तम् । माधवस्तु इष्टिरियमित्याह ॥ **पुंयोगे ङीषिति** । यत्तु न्यासकृतोक्तं हेत्वादिषु पूर्वसूत्रेण ट एव भवति, तेन किंकरणशीला किंकरीत्युपपन्नं भवतीति । तन्नादर्तव्यम्, परत्वादचा टचो बाधितत्वात्पूर्वविप्रतिषेधस्य निर्मूलत्वाच्चेति भावः । वृत्तौ तु पक्षान्तरमप्युक्तम् । अथवा पचादिषु पाठः करिष्यत इति ।

किङ्करी ॥ ( ३९१५ ) (सू॰) **कर्मणि भृतौ** । ३ । २ । २२ । कर्मशब्द उपपदे करोतेष्टः स्यात् । कर्मकरो भृतकः । कर्मकारोऽन्यः ॥ ( ३९१६ ) (सू॰) **न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु** । ३ । २ । २३ । एषु कृञष्टो न । हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकार इत्यादि ॥ ( ३९१७ ) (सू॰) **स्तम्बशकृतोरिन्** । ३ । २ । २४ ॥ ( ३९१८ ) (वा॰) **व्रीहिवत्सयोरिति वक्तव्यम्** ॥ स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोः किम् । स्तम्बकारः ॥ शकृत्कारः ॥ ( ३९१९ ) (सू॰) **हरतेर्दृतिनाथयोः पशौ** । ३ । २ । २५ । दृतिनाथयोरुपपदयोर्हृञ इन् स्यात् पशौ कर्तरि । दृतिं हरतीति दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः । पशौ किम् । दृतिहारः । नाथहारः ॥ ( ३९२० ) (सू॰) **फलेग्रहिरात्मम्भरिश्च** । ३ । २ । २६ । फलानि गृह्णाति फलेग्रहिः । उपपदस्य एदन्तत्वं ग्रहेरिन् प्रत्ययश्च निपात्यते । आत्मानं बिभर्तीति आत्मम्भरिः । आत्मनो मुमागमः । भृञ इन् । चात्कुक्षिम्भरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । ज्योत्स्नाकरम्भमुदरम्भरस्यश्चकोरा इति मुरारिः ॥ ( ३९२१ ) (सू॰) **एजेः खश्** । ३ । २ । २८ । ण्यन्तादेजेः खश् स्यात् ॥ ( ३९२२ ) (सू॰) **अरुर्द्विषदजन्तस्य मुम्** । ६ । ३ । ६७ । अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे न त्वव्ययस्य । शिच्वाच्छबादिः । जनम् एजयतीति जनमेजयः ॥ ( ३९२३ ) (वा॰) **वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम्** ॥ वातमजा मृगाः ॥ ( ३९२४ ) (सू॰) **खित्यनव्ययस्य** । ६ । ३ । ६६ । खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात् । ततो मुम् । शुनिन्धयः । तिलन्तुदः । शर्द्धंजहा माषाः । शर्द्धोऽपानशब्दः तं जहति इति विग्रहः । जहातिरन्तर्भावितण्यर्थः ॥ ( ३९२५ ) (सू॰) **नासिकास्तनयोर्ध्माधेटोः** । ३ । २ । २९ ॥ अत्र वार्तिकम्–। ( ३९२६ ) **स्तने धेटो नासिकायां ध्मश्चेति वाच्यम्** ॥ स्तनं धयतीति स्तनन्धयः । धेट्टित्वात् स्तनन्धयी । नासिकन्धमः । नासिकन्धयः ॥ ( ३९२७ ) (सू॰) **नाडीमुष्ट्योश्च**। ३ । २ । ३० ॥ एतयोरुपपदयोः कर्मणोर्ध्माधेटोः खश् स्यात् ॥ ( ३९२८ ) इ॰ **यथासंख्यं नेष्यते**[1] ॥

---

'दिवाविभा–३९१३' इत्यस्मिन् सूत्रे किमादिग्रहणमपनीय पचादिष्वेव 'किंयत्तद्बहुषु कृञः' इति पठितव्यम् । वार्तिकमपीत्थमेव नेयमिति तस्याशयः । अस्मिन्पक्षे कर्मण्यणं बाधित्वा चरितार्थमिदं वचनं हेत्वादिविवक्षायां परत्वाट्टेन बाध्यते । तेन पुंयोगं विनाऽपि किंकरी स्यादेव, पुंयोगविवक्षायां तु निर्विवादो ङीष् ॥ 'किंयत्तद्बहुष्वज्वा' इति प्रक्रियायां विकल्पोक्तिस्त्वाकरविरुद्धत्वात्कर्मण्यणोऽपि पक्षे प्रसङ्गाच्चायुक्तैव । न चाजभावे 'दिवाविभा–३९१३' इति टः स्यादिति वाच्यम् । सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वाद् । अथवा सूत्रे किमाद्यपनयनं माऽस्त्विति प्रौढिवादेन प्रक्रियाग्रन्थः प्रवृत्त इति स्वीक्रियते । तथा च हेत्वाद्यविवक्षायां 'किंयत्तत्–३९१४' इति वार्तिकेनाच्, तद्विवक्षायां तु परत्वाट्ट इति विषयविशेषे व्याख्याभेदात् फलितं विकल्पमाश्रित्य प्रक्रियायामज्वेति प्राचोक्तमिति स्थितस्य गतिः समर्थनीया ॥ ( ३९१५ ) **कर्मणि भृतौ** । भृतिर्वेतनम् । कर्मानुवृत्तौ पुनः कर्मग्रहणात्स्वरूपपरतेत्याह–**कर्मशब्द इति** ॥ ( ३९१७ ) **स्तम्बकरिरित्यादि** । इनो नित्त्वात् कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तम् ॥ ( ३९२० ) **कुक्षिम्भरिरिति** । एवं च "गिरिस्तु कनकाचलः कति न सन्ति चाश्मव्रजाः किटिस्तु धरणीधरः कति न सन्ति भूदारकाः । मरुत्तु मलयानिलः कति न सन्ति झञ्झानिलाः प्रभुस्तु विबुधाश्रयः कति न सन्ति कुक्षिम्भराः ।" इति केषांचित्प्रयोगः प्रामादिक एव ॥ ( ३९२१ ) **एजेः खश्** । 'एजृ कम्पने एजेरिति ण्यन्तस्य निर्देशो, न तु शुद्धस्यैका निर्देशः । खशः शित्करणाल्लिङ्गात् । तद्धि सार्वधातुकत्वे सति शब्यथा स्यादिति ' न च शुद्धस्य शपि सत्यसति वा विशेषोऽस्ति । न चोत्तरार्थं शित्त्वमिति वाच्यम्, इहार्थत्वे संभवति केवलोत्तरार्थत्वस्यान्याय्यत्वात्तदेतदाह–**ण्यन्तादेजेरिति** ॥ ( ३९२२ ) **अरुर्द्विषत्**––। वर्णग्रहणे तदन्तविधेः सिद्धावप्यन्तग्रहणं शुनिंधय इत्यादौ ह्रस्वे कृते मुम्प्रवृत्त्यर्थम् । तथा हि । अन्तशब्दः समीपपरः अच्चासावन्तश्चेति विग्रहः । निपातनाद्विशेषणस्य परनिपातः । अन्तः समीपः 'खित्यनव्ययस्य ३९२४' इति सूत्रेण विहितो योऽच् तदन्तस्य मुमिति व्याख्यायते । एवं च जनमेजय इत्यादौ स्वतो ह्रस्वेऽपि मुम्सिद्धये प्रथमं 'खिति–३९२४' इति ह्रस्वः प्रवर्तनीय इत्यवधेयम् ॥ ( ३९२३ ) **शर्द्धंजहा इति** । शर्द्धनं शर्द्धः । 'शृधु कुत्सायाम्' घञ् ॥ **तं जहति इति** । ननु माषाः शर्द्धमपानशब्दं त्याजयन्ति न तु स्वतो जहतीत्याशङ्कायामाह–**अन्तर्भावितण्यर्थ इति** ॥ ( ३९२५ ) यथासंख्यं वारयितुमाह–**अत्रेति** ॥ **धेटष्टित्त्वादिति**। अवयवे अचरितार्थत्वादिति भावः । खश्प्रत्ययान्तादेव धेटो ङीबिष्टो नान्यत इति वर्द्धमानक्षीरस्वामिहरदत्तादयः । तेन 'पाघ्राध्माधेट्–३८५९' इति शप्रत्यये 'आतोऽनुपसर्गे कः ३८८३' इति कप्रत्यये च टाबेव । धया कन्या । गां धयतीति गोधा । अत्र च संप्रदाय एव शरणम् ॥ **नासिकन्धम इति** । 'पाघ्राध्मा–३१५३' इति धमादेशः ॥ ( ३९२७ ) **नाडीमुष्ट्योश्च** ॥ ( ३९२८ ) **यथासंख्यं नेति** । एतच्चेहैव सूत्रे भाष्ये वृत्तौ च स्थितम् । यत्तु 'यथासंख्यम्–' इति सूत्रे 'नाडीमुष्ट्योः–' इत्युदाहृतं भाष्ये । तत्प्राप्तिमात्राभिप्रायेणेत्येके । शब्दकौस्तुभे तु मतभेदेन तद् बोध्यमिति स्थितम् ॥

---

[1] **यथासंख्यं नेष्यत इति** । पूर्वसूत्रे भाष्ये 'स्तने धेटः' 'मुष्टौ ध्मश्च धेटश्च' ' नासिकानाडीमुष्टिघटीखारीषु ध्मश्च धेटश्च ' इति कथनादिति भावः ॥

नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः ॥ ( ३९२९ ) (वा.) घटीखारीखरीषूपसंख्यानम् ॥ घटिन्धमः । घटिन्धयः । इत्यादि । खारी परिमाणविशेषः । खरी गर्दभी ॥ ( ३९३० ) (सू.) उदि कूले रुजिवहोः । ३ । २।३१। उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहः ॥ ( ३९३१ ) (सू.) वहाभ्रे लिहः । ३ । २ । ३२ । वहः स्कन्धस्तं लेढीति वहंलिहो गौः । अदादित्वाच्छपो लुक् । खशो ङित्वान्न गुणः । अभ्रंलिहो वायुः ॥ ( ३९३२ ) (सू.) परिमाणे पचः । ३ । २ । ३३ । प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः ॥ ( ३९३३ ) (सू.) मितनखे च । ३ । २ । ३४ । मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । पचिरत्र तापवाची ॥ ( ३९३४ ) (सू.) विध्वरुषोस्तुदः । ३ । २ । ३५ । विधुन्तुदः । मुमि कृते संयोगान्तस्य लोपः । अरुन्तुदः ॥ ( ३९३५ ) (सू.) असूर्यललाटयोर्दृशितपोः । ३ । २ । ३६ । असूर्यमित्यसमर्थसमासः । दृशिना नञः सम्बन्धात् । सूर्यं न पश्यन्तीत्यसूर्यम्पश्या राजदाराः । ललाटन्तपः सूर्यः ॥ ( ३९३६ ) (सू.) उग्रम्पश्येरम्मदपाणिन्धमाश्च । ३ । २ । ३७ । एते निपात्यन्ते । उग्रमिति क्रियाविशेषणं तस्मिन्नुपपदे दृशेः खश् । उग्रं पश्यतीत्युग्रंपश्यः । इरा उदकं तेन माद्यति दीप्यतेऽविन्धनत्वादिति इरम्मदो मेघज्योतिः । इह निपातनात् श्यन्न । पाणयो ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा । अन्धकाराद्यावृत इत्यर्थः । तत्र हि सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते ॥ ( ३९३७ ) (सू.) प्रियवशे वदः खच् । ३ । २ । ३८ । प्रियंवदः । वशंवदः ॥ ( ३९३८ ) (वा.) गमेः सुपि वाच्यः ॥ असंज्ञार्थमिदम् । मितङ्गमो हस्ती ॥ ( ३९३९ ) (वा.) विहायसो विह इति वाच्यम् ॥ ( ३९४० ) (वा.) खच्च डिद्वा वाच्यः ॥ विहङ्गमः । विहङ्गः । भुजङ्गमः । भुजङ्गः ॥ ( ३९४१ ) (सू.) द्विषत्परयोस्तापेः । ३ । २ । ३९ । खच् स्यात् ॥ ( ३९४२ ) (सू.) खचि ह्रस्वः ।६।४।९४। खच्परे णौ उपधाया ह्रस्वः स्यात् । द्विषन्तं परं वा तापयतीति द्विषन्तपः । परन्तपः । घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या । तेनेह न । द्विषन्तीं तापयतीति द्विषतीतापः ॥ ( ३९४३ ) (सू.) वाचि यमो व्रते । ३ । २ । ४० । वाक्शब्दे उपपदे यमेः खच् स्याद्व्रते गम्ये ॥ ( ३९४४ ) (सू.) वाचंयमपुरन्दरौ च । ६ । ३ । ६९ । वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः ॥

---

(३९२९) घटीखारीखरीष्विति । जयादित्यस्तु वातशब्दमप्युदाजहार–वातंधमः, वातंधय इति । तत्तु भाष्यादौ न दृश्यत इति मूलेऽत्रोपेक्षितम् ॥ (३९३०) उदि कूले—। ननु कूलस्येवोच्छब्दस्यापि सप्तम्यन्तत्वादुपपदत्वं स्यात्ततश्च रुजिवहिभ्यां सह यथासंख्यं स्यादिति चेत् । अत्राहुः–'नाडीमुष्टयोः–३९२७' इतिवल्लाघवात् 'उत्कूलयोः' इति वक्तव्ये उदीति व्यस्तोच्चारणान्नोपपदम् । एवं चोदीति पञ्चम्याः स्थाने सप्तमी, रुजिवहोरिति तु पञ्चम्याः स्थाने षष्ठीति । एतच्च यथासंख्यसूत्रे कैयटे स्पष्टम् । किञ्च, रुजेः सकर्मकत्वात्कर्मणीत्युपातिष्ठते तेन कूलं विशेष्यते, नोच्छब्दः । असत्त्ववाचित्वेनासंभवात् तदेतदाह–उत्पूर्वाभ्यामित्यादिना ॥ ( ३९३४ ) विधुन्तुद इति । 'अरुर्द्विषदजन्तस्य–३९२२' इत्युकारात्परो मुम् । 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः ॥ अरुन्तुद इति । 'अरुन्तुदस्तु मर्मस्पृग्' इत्यमरः । 'व्रणोऽस्त्रियामीर्ममरुः' इति च ॥ ( ३९३५ ) असूर्यपश्या इति । 'पाघ्राध्मा–३१५३' इति पश्यादेशः । गुप्तिपरं चेदम् । एवं नाम राजदाराः गुप्ताः–यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति किं पुनः परपुरुषमिति । तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते । यदा तु सूर्याभावदर्शनमात्रं सूर्येतरचन्द्रादेर्दर्शनं वा विवक्षितं तदा खश् न भवत्यनभिधानादिति न्यासकारादयः ॥ ( ३९३७ ) प्रियवशे वदः खच् । खकारो मुमर्थः । चकारस्तु 'खचि ह्रस्वः ३९४२' इति विशेषणार्थ इति वृत्तिः । 'खे ह्रस्वः' इत्युच्यमाने एजेः खशि जनमेजय इत्यत्रापि स्यादिति तदाशयः । 'एकानुबन्धग्रहणे द्व्यनुबन्धस्य न ग्रहणम्' इति खशि न भविष्यतीत्यादिना वृत्तिग्रन्थस्यायुक्तत्वमाहुः ॥ खशि प्रकृते प्रत्ययान्तरकरणमुत्तरार्थम् । द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्यातां शप् च मा भूदिति । नन्वेवमुत्तरत्रैव क्रियतामिति चेत् । सत्यम्, इह करणमन्यतोऽपि क्वचित् भवतीति ज्ञापनार्थं, तेन 'गमेः सुपि-३९३८' इति नापूर्वं वार्तिकं, किंतु ज्ञापकसिद्धमेव ॥ ( ३९३८ ) असंज्ञार्थमिति । संज्ञायां तु वक्ष्यमाणेन 'गमश्च ३९५२' इति सूत्रेणैव सिद्धमिति भावः ॥ (३९३९) विहंगम इति । विहायसा आकाशेन गच्छतीति विग्रहः ॥ (३९४०) पूर्ववार्तिकेनैक्यमकृत्वा 'खच्च डिद्वा ३९४०' इति पृथक्करणसामर्थ्यादन्यत्रापि क्वचिद्भवतीत्याशयेनोदाहरति–भुजंगमः । भुजंग इति । इह 'गमेः सुपि ३९३८' इति खच् ॥ (३९४१–३९४२) द्विषन्तप इति । 'अरुर्द्विषत्–३९२२' इति मुमि कृते संयोगान्तलोपः ॥ (३९४४) निपात्यत इति । न चैवं खच् प्रत्ययोऽप्यत्रैव निपात्यतामिति वाच्यम्, व्रतादन्यत्रापि प्रसङ्गात् । यदि तु निपातनबलादेव व्रतविषयता आश्रीयते तत्रैव वा व्रतग्रहणं क्रियते 'वाचंयमो व्रते' 'पुरन्दरश्च' इति, तदा इह 'वाचि यमो व्रते ३९४३'

---

१–दमयन्त्यादिपतिव्रताभिः कृतस्य चन्द्रवर्णनस्यान्यथानुपपत्त्या राजदाराणां चन्द्रादिदर्शनं भवत्येव । ललाटंतपसूर्यं तु ताः सौन्दर्यविघातकमुखमेचाकिमोत्पादकत्वेन न पश्यन्ति ॥ सूर्यदर्शनस्य पातिव्रत्यविघातकत्वे तु 'अथैनां सूर्यमुदीक्षयति–' इति गृह्यसूत्रोक्तकर्मणोऽकरणेऽङ्गवैगुण्यमेव स्यादिति केचित् ॥

( ३९४५ ) पूःसर्वयोर्दारिसहोः । ३ । २ । ४१ । पुरं दारयतीति । पुरन्दरः । सर्वंसहः । सहिग्रहणमसंज्ञार्थम् ॥
( ३९४६ ) भगे च दारेरिति काशिका । बाहुलकेन लब्धमिदमित्याहुः । भगं दारयतीति भगन्दरः ॥ ( ३९४७ )
(सू) सर्वकूलाभ्रकरीषेषु कषः । ३ । २ । ४२ । सर्वंकषः खलः । कूलंकषा नदी । अभ्रंकषो वायुः ।
करीषंकषा वात्या ॥ ( ३९४८ ) (सू) मेघर्तिभयेषु कृञः । ३ । २ । ४३ । मेघंकरः । ऋतिंकरः । भयंकरः । भय-
शब्देन तदन्तविधिः । अभयंकरः ॥ ( ३९४९ ) (सू) क्षेमप्रियमद्रेऽण् च ।३।२।४४। एषु कृञोऽण् स्यात् । चात् खच् ।
क्षेमंकरः, क्षेमकारः। प्रियंकरः प्रियंकारः । मद्रङ्करः, मद्रकारः । वेति वाच्येऽण्ग्रहणं हेत्वादिषु टा मा भूदिति । कथं
तर्हि 'अल्पारम्भाः क्षेमकराः' इति । कर्मणः शेषत्वविवक्षायां पचाद्यच् ॥ ( ३९५० ) (सू) आशिते भुवः करण-
भावयोः । ३ । २ । ४५ । आशितशब्दे उपपदे भवतेः खच् । आशितो भवत्यनेनाशितम्भव ओदनः । आशितस्य
भवनम् आशितम्भवः ॥ ( ३९५१ ) (सू) संज्ञायां भृतॄवृजिधारिसहितपिदमः । ३ । २ । ४६ । विश्वं बिभ-
र्तीति विश्वम्भरः, विश्वम्भरा । रथन्तरं साम । इह रथेन तरतीति व्युत्पत्तिमात्रं, न त्ववयवार्थानुगमः । पतिंवरा
कन्या । शत्रुञ्जयो हस्ती । युगन्धरः पर्वतः । शत्रुंसहः । शत्रुंतपः । अरिंदमः । दमिः शमनायां तेन सकर्मक इत्यु-
क्तम् । मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः ॥ ( ३९५२ ) (सू) गमश्च । ३ । २ । ४७ । सुतङ्गमः ॥ ( ३९५३ )
(सू) अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । ३ । २ । ४८ । संज्ञायामिति निवृत्तम् । एषु गमेर्डः स्यात् । डित्व-
सामर्थ्यादभस्यापि टेर्लोपः । अन्तं गच्छतीत्यन्तग इत्यादि ॥ ( ३९५४ ) (वा) सर्वत्रपन्नयोरुपसंख्यानम् ॥
सर्वत्रगः । पन्नं पतितं गच्छतीति पन्नगः । पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम् ॥ ( ३९५५ ) (वा) उरसो लोपश्च ॥
उरसा गच्छतीत्युरगः ॥ ( ३९५६ ) (वा) सुदुरोरधिकरणे ॥ सुखेन गच्छत्यत्र सुगः । दुर्गः ॥ ( ३९५७ ) (वा)
अन्यत्रापि दृश्यत इति वक्तव्यम् ॥ ग्रामगः ॥ ( ३९५८ ) (वा) डे च विहायसो विहादेशो वक्तव्यः ॥
विहगः ॥ ( ३९५९ ) (सू) आशिषि हनः । ३ । २ । ४९ । शत्रुं बध्याच्छत्रुहः । आशिषि किम् । शत्रुघातः ॥
( ३९६० ) (वा) दारावाहनोऽणन्तस्य च टः संज्ञायाम् । दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो
वक्तव्य इत्यर्थः । दार्वाघाटः ॥ ( ३९६१ ) (वा) चारौ वा ॥ चार्वाघाटः ॥ ( ३९६२ ) (वा) कर्मणि समि च कर्म-
ण्युपपदे संपूर्वाद्धन्तेरुक्तं वेत्यर्थः । वर्णान्संहन्तीति वर्णसङ्घाटः । पदसङ्घाटः । वर्णसङ्घातः । पदसङ्घातः ॥ ( ३९६३ )
(सू) अपे क्लेशतमसोः । ३ । २ । ५० । अपपूर्वाद्धन्तेर्डः स्यात् । अनाशीरर्थमिदम् । क्लेशापहः पुत्रः । तमोऽपहः
सूर्यः ॥ ( ३९६४ ) (सू) कुमारशीर्षयोर्णिनिः । ३ । २ । ५१ । कुमारघाती । शिरसः शीर्षभावो निपात्यते । शीर्ष-
घाती ॥ ( ३९६५ ) (सू) लक्षणे जायापत्योष्टक् । ३ । २ । ५२ । हन्तेष्टक् स्याल्लक्षणवति कर्तरि । जायाघ्नो ना ।
पतिघ्नी स्त्री ॥ ( ३९६६ ) (सू) अमनुष्यकर्तृके च ।३।२।५३। जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् ।

---

इति सूत्रं 'पूःसर्वयोः-३९४५' इत्यत्र पुरिदारेत्यंशश्च शक्यमकर्तुम् ॥ ( ३९४५ ) पूःसर्वयोः- । 'दॄ विदारणे' अयमेव
गृह्यते, न तु 'दॄ भये' 'दृङ् आदरे' इत्येताविति संप्रदायः ॥ असंज्ञार्थमिति । संज्ञायां तु 'संज्ञायां भृतॄवृजि-३९५१'
इति वक्ष्यमाणेन सिध्यतीति भावः ॥ ( ३९५० ) आशितंभव इति । यावता ओदनेन अतिथ्यादिर्भोजितो भवति स
एवमुच्यते । इह वाऽसरूपविधिना ल्युडपि । आशितभवनम्, घञ् तु बाध्यत एव सरूपत्वादित्याहुः । न चात्र 'क्तल्युट्तुमुन्ख-
लर्थेषु वाऽसरूपविधिर्न' इति ल्युटो निषेधः शङ्क्यः, यत्र हि घञादेर्बाधकत्वेन क्तल्युडादयः प्रसक्तास्तत्र नित्यं बाधो न तु
जयादित्यस्यापि संमतमेवेति दिक् ॥ ( ३९५१ ) संज्ञायां भृतॄ- ॥ 'विश्वंभरः कैटभजित्' । 'रसा विश्वंभरा स्थिरा'
इत्यमरः ॥ व्युत्पत्तिमात्रमिति । तत्फलं तु स्वरावग्रहौ 'रथंतरमाजभारा वसिष्ठः' इत्यत्र हि रथमित्यवगृह्णन्ति, कृदु-
त्तरपदप्रकृतिस्वरेणान्तोदात्तत्वं चाधीयते । अखण्डत्वे त्ववग्रहो न स्यात् ॥ 'नञ्विषयस्य-५६०८' इत्याद्युदात्तश्च स्यात् ॥
इत्युक्तमिति । माधवाद्यनुरोधेनेत्यर्थः ॥ मतान्तरं त्विति । हरदत्तादिमत इत्यर्थः । चित्तव्यापारोपरमः शमः, इन्द्रिय-
व्यापारोपरमस्तु दम इत्यादिवेदान्तग्रन्थाश्चेहानुकूलाः । संज्ञायां किम्, कुटुम्बं बिभर्तीति कुटुम्बभारः ॥ ( ३९५२ ) गमश्च ।
पूर्वसूत्र एव गमिर्नोक्तः उत्तरसूत्रे गमेरेवानुवृत्तिर्यथा स्यात् भृतॄप्रभृतीनां मा भूदिति ॥ ( ३९५६ ) सुदुरोरधिकरणे ।
कर्माणि तु 'ईषद्दुःसुषु-५१२३' इति खलेव, सुखेन गम्यत इति सुगमः पन्थाः । दुर्गमः ॥ ( ३९६० ) दाराविति ।
शब्दापेक्षया पुँल्लिङ्गता तदाह-दारुशब्द इति । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः । टविधानार्थमिदम् । अण् तु 'कर्मण्यण्
३८७९' इत्येव सिद्धः । 'अलोऽन्त्यस्य ६६' इत्येव सिद्धेऽन्तग्रहणं स्पष्टार्थम् । अन्यथा हि टः प्रत्ययः संभाव्येत ॥ दार्वा-
हन्तीति दार्वाघाटः । 'गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्' ॥ ( ३९६४ ) कुमारशीर्षयोर्णिनिः ॥ एतयोः कर्म-
णोरुपपदयोर्हन्तेर्णिनिः स्यात् । 'सुप्यजातौ-३९९१' इत्यादिभिः सिद्धे ताच्छील्यावश्यकाधमर्ण्यविरहेऽपि णिन्यर्थं, शिरसः
शीर्षभावार्थं च वचनम् ॥ ( ३९६५ ) लक्षणवतीति ॥ सूत्रे लक्षणशब्दोऽर्शआद्यजन्त इति भावः ॥ जायाघ्न इति ॥
जायामरणसूचकं पाणिरेखाविशेषादिकं यस्यास्ति स तां हन्तीति गौणो व्यवहारः । एवं पतिघ्नीत्यत्रापि बोध्यम् ॥ ( ३९६६ )
अमनुष्यकर्तृके च ॥ मनुष्यभिन्नकर्तृकेऽर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टक् स्यात् ॥ यद्यप्यमनुष्यशब्दो रूढ्या रक्षःपिशा-

अमनुष्येति किम् । आखुघातः शूद्रः । अथ कथं 'बलभद्रः' 'प्रलम्बघ्नः शत्रुघ्नः' 'कृतघ्नः' इत्यादि । मूलविभुजादित्वा- त्सिद्धम् । चोरघातो नगरघातो हस्तीति तु बाहुलकादपि ॥ ( ३९६७ ) शक्तौ हस्तिकपाटयोः । ३ । १ । ५४ । हन्तेष्टक् स्यात् शक्तौ द्योत्यायाम् । मनुष्यकर्तृकार्थमिदम् । हस्तिघ्नो ना । कपाटघ्नश्चोरः । कवाटेति पाठान्तरम् ॥ ( ३९६८ ) पाणिघताडघौ शिल्पिनि । ३ । २ । ५५ । हन्तेष्टक् टिलोपो घत्वं च निपात्यते पाणिताडयोरुपप- दयोः । पाणिघः । ताडघः । शिल्पिनि किम् । पाणिघातः । ताडघातः ॥ ( ३९६९ ) राजघ उपसंख्यानम् ॥ राजानं हन्ति राजघः ॥ ( ३९७० ) आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ।३।२।५६। एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् । अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यङ्करणम् । अच्वौ किम् । आढ्यीकुर्वन्त्यनेन । इह प्रतिषेधसामर्थ्यात् ल्युडपि नेति काशिका । भाष्यमते तु ल्युट् स्यादेव । अच्वावि- त्युत्तरार्थम् ॥ (३९७१) कर्तरि भुवः खिष्णुच्खुकञौ ।३।२।५७। आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवतीति आढ्यम्भविष्णुः आढ्यम्भावुकः ॥ [५७८] स्पृशोऽनुदके क्विन् ।३।२।५८। घृतस्पृक् । कर्मणीति निवृत्तम् । मन्त्रेण स्पृशतीति मन्त्रस्पृक् ॥ [५०७] ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।३।२।

---

चादीनाहेति प्रागुक्तम्, तथापीह लक्ष्यानुरोधेन व्याख्यातव्यमित्याशयेनाह-**तिलकालक इति** ॥ 'नानुबन्धकृतमसारू- प्यम्, इति टगणोः सारूप्याद्वाऽसरूपविध्यप्रवृत्तेराह-**बाहुलकादिति** ॥ ( ३९६७ ) **शक्तौ हस्ति-**। शक्तौ किम्, विषेण हस्तिनं हन्तीति हस्तिघातः । यद्यपीह शक्तिरस्ति, अशक्तस्य कर्तृत्वानुपपत्तेस्तथापि शक्तिग्रहणसामर्थ्यात्प्रकर्षो विज्ञायते । तेन स्वबलेनैव हन्तुं या शक्तिः सा गृह्यते ॥ **कपाटघ्न इति** ॥ कं शिरः पाटयति प्रविशत इति कपाटम् । पाठान्तरे तु अटतेः पचाद्यच् 'कवं चोष्णे १४८२' इत्यत्र योगविभागात्कोः कवादेश इति हरदत्तः ॥ ( ३९७० ) **आढ्यसुभग-। च्व्यर्थेष्विति** । अभूततद्भावविषयेष्वित्यर्थः ॥ **आढ्यंकरणमिति** । लिङ्गविशिष्टपरिभाषया आढ्याशब्देऽप्युपपदे यदा ख्युन्, तदापि 'खित्यनव्ययस्य ३९२४' इति ह्रस्वेन एतदेव रूपम् ॥ **आढ्यीकुर्वन्त्यनेनेति** ॥ नन्विह ख्युनोऽभावे- ऽपि 'करणाधिकरणयोश्च ५१०९' इति ल्युटा भवितव्यमित्यत आह-**प्रतिषेधसामर्थ्यादिति**[1] ॥ तथाहि-आढ्यीकरण- मिति रूपं ल्युट्ख्युनोस्तुल्यम् । न च ख्युनि मुम्ह्रस्वौ स्यातामिति वाच्यम्, अनव्ययस्येति पर्युदासात् । 'ऊर्यादिच्विडाचश्च १०९८' इति निपातसंज्ञकत्वेन च्व्यन्तस्य अव्ययत्वात् । न च ख्युनि सति 'उपपदमतिङ् ११२६' इति नित्यसमासो लभ्यते ल्युटि तु नेति वाच्यम्, ल्युट्यपि गतिसमासस्य सम्भवात् । तस्यापि नित्यसमासत्वात् । न च स्त्रीप्रत्यये विशेषः, ल्युटि 'टिड्ढा—६५१' इति सूत्रेण, ख्युनि तत्रत्येन ख्युन उपसंख्यानेन च ङीपस्तुल्यत्वात् । नापि स्वरे विशेषः, ल्युटि लित्स्वरेण कृञ उदात्तत्वाविशेषात् । न चोत्तरार्थमच्वावित्युक्तमिति वाच्यम्, केवलोत्तरार्थत्वे हि तत्रैव ब्रूयात् । तदेतदुक्तम्- **इह ल्युडपि नेति** ॥ **भाष्यमते त्विति**[2] । भाष्यवार्तिकस्वरसेन ल्युडिष्ट इति केवलोत्तरार्थत्वं लभ्यते । अतस्तद्विरोधात् वृत्तिकृन्मतमयुक्तमिति कैयटः ॥ ( ३९७१ ) **कर्त्तरि भुवः-। अच्व्यन्तेष्विति** । अच्वावित्यनुवर्तते, अन्यथा आढ्यी- भविष्णुः, आढ्यीभावुक इति स्यादिति भावः । कर्तृग्रहणं करणानुवृत्तिभ्रमनिरासार्थमुत्तरार्थं चेति प्राञ्चः । वस्तुतस्तु व्यर्थ- मेव, अस्वीरतत्वोदवाननुवृत्तिसिद्धेः । उत्तरत्राप्युपयोगो नेति स्पष्टीकरिष्यमाणत्वाच्च । खकारो मुमर्थः । चकारः 'चितः ५६७२' इत्यन्तोदात्तार्थः । ञकारो वृद्ध्यर्थः । स्यादेतत्, खिष्णुच इकारो माऽस्तु, खस्नुरित्येवोच्यताम् । एवं चकारोऽपि न कर्तव्यः प्रत्ययस्वरेणैवाभिमतसिद्धेः । इकारादित्वासिद्धये इडागमे कृतेऽपि 'आगमा अनुदात्ताः' इति तस्यानुदात्तत्वात् । न च 'कृत्योकेष्णुच्चार्वादयश्च ५८६६' इति स्वरसूत्रे अस्य ग्रहणं न स्यात् । चकारानुबन्धाभावादिकारस्य लाक्षणिकत्वात्षत्व- णत्वयोरसिद्धत्वेनेष्णु इति रूपाभावाच्चेति वाच्यम्, कृतेऽपि इकारे 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य ३८११—२' इति परिभाषया अलंकृञादीष्णुच एव ग्रहणं स्यान्न त्वेतस्य, इकारोच्चारणसामर्थ्यादस्यापि ग्रहणमिति चेद्धन्तैवं खष्णुजयमस्तु तत्रेटि कृते चकारानुबन्धसामर्थ्यादस्यापि ग्रहणमस्त्विति किमिकारेणेति चिन्त्यमेतत् । न चेह लाघवाभावादिकारोऽस्तु चकार एव माऽस्त्विति शङ्क्यम्, 'एकमात्रो ह्रस्वः, व्यञ्जनं त्वर्द्धमात्रकम्' इति सर्वसम्मतत्वात् । यत्तु हरदत्तेनोक्तं षत्वणत्वयोः सामर्थ्यादस्य ग्रहणमिति । तदापाततः, स्नुजपेक्षया ष्णुजुक्तौ प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सामर्थ्यायो- गादिति दिक् ॥ [ ५७८ ] **निवृत्तमिति** । ननु स्पृशेः सकर्मकत्वात्कर्मण्युपपदे इति चेत् । अत्र प्राञ्चः-पूर्वसूत्रात्कर्त्तरि इत्यनुवर्त्तते, सा चानुवृत्तिः 'कर्तरि कृत् ३७७१' इत्यनेनैव कर्त्तरि क्विनः सिद्धत्वाद्व्यर्था सती कर्तृप्रचयार्था । कर्मण्युपपदे एकः कर्त्ता, करणादौ चापर इत्येवं कर्तृप्रचयस्तथा च सुबन्ते उपपदे इति फलितं भवतीति मन्त्रस्पृगित्याद्यपि सिद्धमिति । वस्तुतस्तु कर्तृग्रहणं व्यर्थमिति पूर्वसूत्र एवोक्तम् । न चेह कर्तृप्रचयार्थं तदावश्यकमिति शङ्क्यम्, मन्त्रस्पृगित्यादेः क्विपि

---

१ **प्रतिषेधसामर्थ्यादिति** । च्व्यन्ते उपपदे ख्युनो निषेधेऽपि यदि ल्युट् स्यात् तदा प्रतिषेधोऽनर्थकः स्यात् रूपे विशे- षाभावादिति भावः ॥ २ **भाष्यमते त्विति** । 'कर्तरि भुवः खिष्णुच्खुकञौ' इत्युत्तरत्रानुवृत्त्यर्थत्वेन अच्वावित्यस्य चारितार्थ्य- प्रदर्शनात्, तेनाढ्यो भवितेति तौ नेति पूर्वसूत्रविषये ल्युड् भवत्येवेति भावः ॥

। ५९ । व्याख्यातम् [५७५] ॥ (सू) त्यदादिषु दृशोऽनालोचने कञ्च । ३ । २ । ६० । (३९७२) (वा) समानान्ययोश्चेति वाच्यम् ॥ सदृक् । सदृशः । अन्यादृक् । अन्यादृशः ॥ (३९७३) (वा) क्सोऽपि वाच्यः ॥ तादृक्षः । सदृक्षः । अन्यादृक्षः ॥ ( ३९७४ ) (सू) सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् । ३ । २ । ६१ । एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे । द्युसत् । उपनिषत् । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुक् । प्रध्रुक् । गोधुक् । प्रधुक् । अश्वयुक् । प्रयुक् । वेदवित् । निविदित्यादि ॥ ( ३९७५ ) (वा) अग्रग्रामाभ्यां नयतेर्णो वाच्यः ॥ अग्रणीः । ग्रामणीः ॥ ( ३९७६ ) (सू) भजो ण्विः । ३ । २ । ६२ । सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात् । अंशभाक् । प्रभाक् ॥ ( ३९७७ ) (सू) अदोऽनन्ने । ३ । २ । ६८ । विट् स्यात् । आममत्ति आमात् । सस्यात् । अनन्ने किम् । अन्नादः ॥ ( ३९७८ ) (सू) क्रव्ये च । ३ । २ । ६९ । अदेर्विट् । पूर्वेण सिद्धे वचनमण्बाधनार्थम् । क्रव्यात् । आममांसभक्षकः । कथं तर्हि क्रव्यादोऽस्रप आशर इति । पक्वमांसशब्दे उपपदेऽण् । उपपदस्य क्रव्यादेशः पृषोदरादित्वात् ॥ (३९७९) (सू) दुहः कब् घश्च । ३ । २ । ७० । कामदुघा ॥ (३९८०) (सू) अन्येभ्योऽपि दृश्यन्ते । ३ । २ । ७५ । छन्दसीति निवृत्तम् । मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ॥ ( ३९८१ ) (सू) नेड्वशि कृति । ७ । २ । ८ । वशादेः कृत इण् न स्यात् । शॄ । सुशर्मा । प्रातरित्वा ॥ ( ३९८२ ) (सू) विड्वनोरनुनासिकस्यात् । ६ । ४ । ४१ । अनुनासिकस्य आत्स्यात् । विजायत इति विजावा । ओणृ । अवावा । विच् । रोट् । रेट् । सुगण् ॥ ( ३९८३ ) (सू) क्विप् च । ३ । २ । ७६ । अयमपि दृश्यते । [३९७४]सत्सूद्विषेति त्वस्यैव प्रपञ्चः । उखास्रत् । पर्णध्वत् । वाहभ्रट् ॥ ( ३९८४ ) (सू) अन्तः । ८ । ४ । २० । पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण् । [३३०४]शासि इदितीत्वम् । मित्राणि शास्ति मित्रशीः ॥ ( ३९८५ ) (वा) आशासः क्वावुपधाया इत्वं वाच्यम् ॥ आशीः । इत्वोत्वे । गीः । पूः ॥ ( ३९८६ ) (सू) इस्मन्त्रन्क्विषु च ।

---

सिद्धेः । न च क्विपि कुत्वं न स्यादिति वाच्यम् , क्विन्प्रत्ययो यस्मादिति बहुव्रीहिबलादेव कुत्वसंभवादिति दिक् ॥ ( ३९७२ ) सदृगिति । तमिवेमं पश्यन्ति जनाः । स इवायं पश्यति ज्ञानविषयो भवतीति व्युत्पत्त्या कर्मकर्तरि प्रत्ययः रूढ्यर्थानुगुणत्वात् ॥ ( ३९७४ ) सत्सूद्विष— । षद्लृ विशरणादौ । सू इति द्विषा साहचर्यात्सूतेरादादिकस्य ग्रहणं, न तु सुवतिसूयत्योः । 'युजिर् योगे' 'युज समाधौ' द्वयोरपि ग्रहणम् । 'विद ज्ञाने', 'विद विचारणे', 'विद सत्तायां' त्रयाणामपि ग्रहणम्, 'विद्लृ लाभे' इत्यस्य तु न ग्रहणम् , विदेरित्यकारस्य विवक्षितत्वात् ॥ द्युसदिति । 'पूर्वपदात् ५५०८' इति षत्वं तु न भवति, छन्दसीत्यनुवृत्तेः । तथा च माघः—'मनस्सु येन द्युसदां न्यधीयत' इति । 'आदितेया दिविषदः' इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः । उपनिषदित्यत्र तु 'सदिरप्रतेः ३०३८' इति षः ॥ ( ३९७५ ) अग्रग्रामाभ्यामिति । 'स एषां ग्रामणीः २५३८' इति निर्देशेन ज्ञापितमेतत् । नीरूपप्रत्ययविषयत्वे चेदम् । तेन कर्मण्यणि णत्वं न भवति । ग्रामनाथः । ज्ञापकस्य सामान्यविषयत्वादग्रशब्दोपपदादपि णत्वम् । तेनाग्रणीरित्यपि सिद्धमित्याहुः ॥ ( ३९७७ ) अदोऽनन्ने । विट् स्यादिति । 'जनसनखनक्रमगमो विट् ५२४१' इति पूर्वसूत्रादनुवृत्तेः । पूर्वसूत्रं त्विह नोपन्यस्तम् । तत्र हि 'छन्दसि सहः ५२३७' इत्यतः छन्दसीत्यनुवर्तनात् ॥ (३९७९) कामदुघेति । धेनुरिति शेषः । कामं दोग्धीति विग्रहः ( ३९८० ) अन्येभ्योऽपि दृश्यन्ते । इह 'विजुपे छन्दसि ५२४६' इत्यतो विच्प्रत्ययः 'आतो मनिन्–५२४७' इति सूत्रान्मनिन्नादयश्चानुवर्त्तन्ते, तदाह—मनिन्क्वनिबित्यादि ॥ (३९८१) सुशर्मेति । सुष्ठु शृणोतीति विग्रहः । प्रातरेतीति प्रातरित्वा । इणः क्वनिपि 'ह्रस्वस्य पिति–३८०६' इति तुक् ॥ (३९८२) अवावेति । अनुनासिकस्य आत्त्वे अवादेशः, सौ दीर्घनलोपौ ॥ रोट् रेडिति । 'रुष रिष हिंसायाम्' उपधागुणः । जश्चर्त्वे ॥ ( ३९८३ ) वाहभ्रडिति । वाहादश्वाद् भ्रश्यतीति विग्रहः । वृत्तौ तु वहाभ्राडिति पाठः । वहः स्कन्धः 'अन्येषामपि दृश्यते ५३९०' इति पूर्वपदान्तस्य दीर्घ इति हरदत्तः ॥ ( ३९८४ ) अन्तः । 'अनितेः ३२९२' इति वर्त्तते, अन्तोत्तरपदापेक्षो गृह्यते, नानितेरपेक्षाया अव्यभिचारादत आह—पदान्तस्येति ॥ हे प्राणिति । 'अन प्राणने' क्विप् 'अनुनासिकस्य–३५४५' इति दीर्घः । 'न ङिसंबुद्ध्योः ४७७' इति नलोपनिषेधः । अन्यत्र तु नलोपेन भाव्यमिति संबुद्ध्यन्तमुदाहृतम् ॥ मित्रशीरिति । लुप्तेऽपि क्विप्प्रत्यये प्रत्ययलक्षणन्यायेन हलादिकित्प्रत्ययपरत्वमस्ति, 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इत्येतद्वर्णप्राधान्य एवेत्युक्तत्वादिति भावः ॥ ( ३९८५ ) आशास इति । 'शासु अनुशिष्टौ' 'आङः शासु इच्छायाम्' आत्मनेपदे, 'शास इद्–३३०४' इत्यादिना सिद्धे क्वावेव उपधाया इत्वमिति नियमार्थमिदम् । तेन आशास्ते इति सिद्धमित्येके ॥ अन्ये तु विध्यर्थमेवेदं, न नियमार्थं प्राप्त्यभावात् । न च 'शास इदङ्हलोः ३३०४' इति इत्वस्य प्राप्तिरस्तीति वाच्यम् , तत्राङ्साहचर्यात्परस्मैपदिन एव शासेर्ग्रहणात् । यद्यपि 'सर्त्तिशास्ति–४१७५' इति सूत्रे पृथक् योगकरणादर्त्तेर्लुङि आरत समारतेति पदद्वयेऽप्यङिति सिद्धान्तस्तथाप्युत्तरार्थतया परस्मैपदग्रहणानुवृत्तेर्व्याकरे स्पष्ट-

---

१–अरुचिबीजं तु 'पूर्वपदात्संज्ञायाम्–' इत्यनेनैव सिद्धौ अपूर्ववचनकल्पनं तस्यापि विशेषविषयत्वकल्पनं गुरुभूतम्–इति॥

६ । ४ । ९७ । एषु छादेर्ह्रस्वः स्यात् । तनुच्छत् । अनुनासिकस्य क्वीति दीर्घः । मो नो धातोः । प्रतान् । प्रशान् । च्छ्वोरित्यूठ् । अक्षद्यूः । ज्वरत्वरेत्यूठ् । जूः । जूरौ । जूरः । तूः । सूः । ऊठ् । वृद्धिः । जनानवतीति जनौः । जनावौ । जनावः । मूः । मुवौ । मुवः । सुमूः । सुम्वौ । सुम्वः । राल्लोपः । मुर्छा । मूः । मुरौ । मुरः । धुर्वी । धूः ॥ ( ३९८७ ) सू० गमः क्वौ । ६ । ४ । ४० । अनुनासिकलोपः स्यात् । अङ्गगत् ॥ ( ३९८८ ) वा० गमादीनामिति वक्तव्यम् ॥ परीतत् । संयत् । सुनत् ॥ ( ३९८९ ) वा० ऊङ् च गमादीनामिति वक्तव्यम् ॥ लोपश्च[1] । अग्रेगूः । भ्रसु । अग्रेभ्रूः ॥ ( ३९९० ) सू० स्थः क च । ३ । २ । ७७ । चात् क्विप् । शंस्थः । शंस्थाः । शमि धातोरित्यचं बाधितुं सूत्रम् ॥ ( ३९९१ ) सू० सुप्यजातौ णिनिस्ताच्छील्ये । ३ । २ । ७८ । अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी । अजातौ किम् । ब्राह्मणानामन्त्रयिता । ताच्छील्ये किम् । उष्णं भुङ्क्ते कदाचित् । इह वृत्तिकारेणोपसर्गभिन्ने[2] एव सुपि णिनिरिति व्याख्याय ( ३९९१ ) उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानमिति पठितम् । हरदत्तमाधवादिभिश्च तदेवानुसृतम् । एतच्च भाष्यविरोधादुपेक्ष्यम् । प्रसिद्धश्चोपसर्गेऽपि णिनिः । स बभूवोपजीविनाम् । अनुयायिवर्गः । पतत्यधो धाम विसारि । न वञ्चनीयाः प्रभवोऽनुजीविभिरित्यादौ ॥ ( ३९९३ ) वा० साधुकारिण्युपसंख्यानम् ॥ ( ३९९४ ) वा० ब्रह्मणि वदः ॥ अताच्छील्यार्थं वार्तिक-

---

तया परस्मैपदे दृष्टो यः शास्तिस्तस्मात्परस्याङिति निष्कर्षः । तथा चाऽऽशास्ते इत्यत्र इत्वप्रसक्तिरेव नास्तीत्याहुः । वस्तुतस्तु 'आशिषि लिङ्लोटौ २९५०' 'क्षियाशीःप्रैषेषु-५४८५' इत्यादिनिर्देशेनैव सिद्धमिति नेदमपूर्वं वार्तिकम् । ततश्च इत्त्वं वाच्यमित्यस्य इत्त्वं व्याख्येयमित्यर्थः । आशिषत्याद्युक्तानिर्देशादिति दिक् ॥ **सुम्वाविति** । 'ओः सुपि ३९३' इति यण् । **( ३९९० ) स्थः क च । शंस्था इति** । क्विपि लुप्ते 'घुमास्था-३२७४' इति इत्त्वं न स्थानिवद्भावस्यानल्विधाविति निषेधात् । प्रत्ययलक्षणसूत्रं तु प्रत्ययस्याधारणरूपं यत्राश्रीयते तत्रैवेति नियमार्थमिति निष्कर्षात् । यत्तु कैयटेनोक्तम् । 'ईत्त्वमवकारादौ' इति वचनाद्भाष्यकारीयोदाहरणप्रामाण्याद्वा प्रत्ययलक्षणेन ईत्त्वं नेति । तत् अतृणेडित्यादिसिद्धये प्रत्ययप्राधान्ये अल्विध्यर्थं प्रत्ययलक्षणसूत्रमिति पक्षमभिप्रेत्य । तथाप्यवकारादाविति वचनस्वीकारे सुधीवेति न सिध्येदित्यपरितोषेण पक्षान्तरस्वीकार इति बोध्यम् । न तु नियमार्थमिति निष्कर्षपक्षे तु प्रागुक्तमित्रशीरित्यत्र कथमित्त्वं भवेदिति चेत् । अत्राहुः- 'शास इत्' इति, ततः 'अङि' नियमार्थमिदम् । अजादौ चेदित्त्वं स्यादङ्येव नान्यत्रेति हल्ग्रहणं माऽस्त्विति ज्ञेयमिति । न चैवमपि हलादौ पिति सार्वधातुके तृणह इमो विधानादतृणेडित्यादि नियमपक्षे न सिध्यतीत्यल्विधौ विध्यर्थमिति पक्षोऽपि स्वीकार्य इति वाच्यम्, 'उतो वृद्धिः-३२५२' इति सूत्राद्धल्ग्रहणमननुवर्त्य तृणहानीत्यत्रानिष्टवारणाय 'नाभ्यस्तस्याचि-३३२१' इति सूत्रादचि नेत्यनुवर्त्य व्याख्यानात् ॥ एतच्च रुधादिगण एव व्याख्यातम् ॥ स्यादेतत्, 'सुपि स्थः ३८८५' 'क्विप् च ३९८३' इति सूत्राभ्यां कक्विपौ सिद्धौ तत्राह-**शमीत्यादि** । धातुग्रहणसामर्थ्याद्धि धातुमात्राद्भवन्नच् प्रत्ययो हेत्वादिषु कृत्रष्टं यथा बाधते तथा तिष्ठतेः कक्विपावपि बाधेतेति 'स्थः क च ३९९०' इत्यारम्भ इति भावः । नन्वेवं 'शमि धातोः-३९०३' इत्यस्यानन्तरं 'स्थः क च ३९९०' इति सूत्र्यतां चकारेणाचि समुच्चिते सवर्णदीर्घेण शंस्था इति भविष्यति । एवं चोत्सर्गापवादयोः समानदेशतया संदर्भशुद्धिरपि लभ्यते इत्त्वाभावार्थं च न यतनीयमिति महल्लाघवमिति चेत् । अत्राहुः- अशंस्था इत्यत्र 'अच्कावशक्तौ ५८६३' इति सूत्रेणोत्तरपदमन्तोदात्तं स्यात् । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि-१००५' इति शंस्थाशब्दस्याजन्तत्वात् ॥ क्विबन्तेन नञ्समासे तु नञ्पूर्वपदप्रकृतिस्वरः सिध्यतीति ॥ **( ३९९१ ) उष्णभोजीति** । उष्णं भोक्तुं शीलमस्य ॥ **आमन्त्रयितेति** । 'मत्रि गुप्तपरिभाषणे' चुरादिराङ्पूर्वः । इदित्त्वान्नुम् । ताच्छील्यस्य विवक्षितत्वात्तृन् । अत एव 'न लोका-९१५' इति निषेधात् ब्राह्मणानित्यत्र कर्मणि षष्ठी न कृता ॥ **उपसर्गभिन्न एवेति** । 'सत्सूद्विष-३९७४' इति सूत्रे उपसर्गेऽपीत्युक्तत्वादुपसर्गभिन्नस्यैव सुपो लाभायास्मिन्सूत्रे पुनः सुब्ग्रहणं कृतमिति भावः ॥ **( ३९९२ ) भाष्यविरोधादिति** । उक्तं च भाष्ये—"सुबिति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् । अनुपसर्ग इत्येवं तद्भूत्, इदं तु सुब्मात्रे यथा स्यादुदासारिण्यः, प्रत्यासारिण्यः" इति । अस्यायमाशयः-'सत्सूद्विष-३९७४' इति सूत्रे 'सुपि स्थः ३८८५' इत्यतः सुपीत्यनुवर्तते । तच्च उपसर्गेतरपरम्, उपसर्गेऽपीति पृथगुक्तेः । तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यादिति निष्कर्षे तु मा भूदिह सुब्ग्रहणमुपसर्गेऽपीत्यंशस्यानुवृत्त्या निर्वाहात् । सर्वथापि सुब्मात्रे उपपदे णिनिः, न त्वनुपसर्ग एवेति सिद्धान्तः । एतच्च शब्दकौस्तुभे स्पष्टम् ॥ **प्रसिद्धश्चेति** ॥ एवं च 'पाणिनीयानुसारिणीम्' इति प्रक्रियाकारप्रयोगोऽपि निर्बाध एव । अमरश्च प्रायुङ्क्त—'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति दिक् ॥ **( ३९९३ ) साधुकारिणीति** ।

---

१ **लोपश्चेति** 'ऊङ् च' इति चकारादनुनासिकलोपोऽप्यनुकृष्यत इति पूर्वमनुनासिकलोपे शिष्टे 'ग' इत्यत्रान्त्यस्याकारस्योङादेश इति भावः ॥ अनुनासिकलोपोत्तरं शिष्टस्य 'ग' इत्यस्यैवार्थवत्त्वात् **'नानर्थकेऽलोऽन्त्यविधिः-'** इत्यस्याप्रवृत्त्या **'अलोऽन्त्यस्य'** इत्यन्त्यस्याकारस्यैवोकारादेशेनापि सिद्धौ ङित्करणं व्यर्थमेवेति प्रदीपे स्पष्टम् ॥ २ **उपसर्गभिन्न एवेति** । सुपीत्यनुवर्तमाने सुपिग्रहणमुपसर्गनिवृत्त्यर्थमिति केवलस्योपसर्गस्य निवृत्त्यर्थं द्रष्टव्यम् । अन्यथा-अजाताविति किं ब्राह्मणानामन्त्रयितेति न युज्यते । आङित्यस्योपसर्गत्वादिति तन्मतेऽपि बोध्यम् ॥

द्वयम् । साधुदायी । ब्रह्मवादी ॥ ( ३९९५ ) ॐ कर्तर्युपमाने । ३ । २ । ७९ । णिनिः । उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । अताच्छील्यार्थं जात्यर्थं च सूत्रम् । कर्तरि किम् । अपूपानिव भक्षयति माषान् । उपमाने किम् । उष्ट्रः क्रोशति ॥ (३९९६) ॐ व्रते । ३ । २ । ८० । णिनिः स्यात् । स्थण्डिलशायी ॥ ( ३९९७ ) ॐ बहुलमाभीक्ष्ण्ये । ३ । २ । ८१ । पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः । क्षीरपायिण उशीनराः ॥ ( ३९९८ ) ॐ मनः । ३ । २ । ८२ । सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ॥ ( ३९९९ ) ॐ आत्ममाने खश्च । ३ । २ । ८३ । स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् चात् णिनिः । पण्डितमात्मानं मन्यते पण्डितम्मन्यः, पण्डितमानी । खित्यनव्ययस्य । कालिम्मन्या । अनव्ययस्य किम् । दिवामन्या ॥ ( ४००० ) ॐ इच एकाचोऽम्प्रत्ययवच्च । ६ । ३ । ६८ । इजन्तादेकाचोऽम् स्यात्स च स्वाद्यम्वत् खिदन्ते परे । औतोऽम्शसोः । गाम्मन्यः । वाऽसरूपः । स्त्रियम्मन्यः, स्त्रीम्मन्यः । नृ । नरम्मन्यः । भुवम्मन्यः । श्रियमात्मानं मन्यते श्रिमन्यं कुलम् । भाष्यकारवचनात् श्रीशब्दस्य ह्रस्वो मुममोरभावश्च ॥ ( ४००१ ) ॐ भूते ।

---

एतच्च ज्ञापकसिद्धम् । 'आ क्वेः-४१३४' इति सूत्रे हि तच्छीलात्पृथक् साधुकारी गृह्यते तच्च ताच्छील्यं विनापि णिनौ सत्येव संगच्छते । 'ब्रह्मणि वदः ३९९४' इदं तु वाचनिकमेव । अताच्छील्यार्थमिदम् । एतच्च कैयटहरदत्तादिग्रन्थे स्पष्टम् ॥ यत्तु भट्टवार्तिके ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यानं कृतम् । 'आ क्वेः-४१३४' इत्यधिकारे तु ब्रह्मणि वदेर्णिनिविधायकं वचनं नास्त्येवेति कथमिदं संगच्छते इति चेत् । अत्राहुः-भट्टपादानामयमाशयः 'सुप्यजातौ-३९९१' इति सूत्रेण ताच्छील्ये णिनिः, उपसंख्यानेन ज्ञापकेन वा साधुकारिणि णिनिः, 'आवश्यकाधमर्ण्ययोर्णिनिः ५१३२' इत्यावश्यके णिनिस्तु तद्धर्मे पर्यवस्यति, न त्विह 'आ क्वेः-४१३४' इति सूत्रस्य व्यापारोऽस्तीति । ननु ब्रह्मवादिनो वदन्ति इत्यत्र ब्रह्म वेद इति ब्रह्मशब्दस्यापि जातिवाचकत्वात्कथमिह ताच्छील्ये णिनिरिति समर्थनमिति चेत् । अत्र नव्याः--'सुप्यजातौ-३९९१' इत्यत्र प्राणिजातिरेव पर्युदस्यते, ताच्छील्यसमभिव्याहारात् । ब्राह्मणानामन्त्रयितेति प्रत्युदाहरणानुगुण्याच्चेति न काऽप्यनुपपत्तिरिति ॥ ( ३९९८ ) मनः । बहुलग्रहणानुवृत्तेरिह 'मन ज्ञाने' इति दैवादिकस्यैव ग्रहणं, न तु 'मनु अवबोधने' इति तानादिकस्य । तेन उत्तरसूत्रे खशि श्यन्नेव भवति, न तूप्रत्ययस्तदाह-मन्यतेरिति ॥ ( ३९९९ ) आत्ममाने-। मननं मानः भावे घञ् । आत्मनो मान इति कर्मणि[3] षष्ठ्या समासः । स्वपर्याय आत्मशब्दः प्रत्ययार्थत्वेन संनिहितः । कर्ता स्वपदार्थस्तदाह-स्वकर्मक इत्यादि ॥ चेदिति । ननु 'वाऽसरूपः-३७६९' विधिना लभ्यत एव णिनिरिति किमर्थश्चकार इति चेत् । अत्राहुः--चकारेणाविच्छेदाय णिनिः समुच्चीयते । तेन 'करणे यजः ४००२' इत्यादौ णिनिरेवानुवर्तते न तु खश्, एवं चोक्तप्रयोजनानुरोधेन 'चानुकृष्टं नोत्तरत्र' इतीह न प्रवर्तत इति ॥ पण्डितमात्मानमिति । एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं पण्डितत्वविशिष्टरूपेण च कर्मत्वं बोध्यम् । आत्ममाने किम्, दर्शनीयमानी देवदत्तो यज्ञदत्तस्य ॥ [३९२४] कालिमन्येति । 'स्त्रियाः पुंवद्-११९६' इति प्राप्तं पुंवद्भावं बाधित्वा परत्वाद् ह्रस्वः । यत्त्वत्र 'क्यङ्मानिनोश्च १२०७' इति प्राप्तः पुंवद्भाव इति प्रसादकृतोक्तं, तदुरमसोक्तमेव, मानिन्रूपाभावस्य स्पष्टत्वात् ॥ दिवामन्येति । अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिस्वभावात्कर्मत्वम् ॥ ( ४००० ) इच एकाचः—। अम्ग्रहणमिहावर्तते तत एकेन अम् विधीयते, परेण प्रत्ययो विशेष्यते, तदाह—स्वाद्यम्वदिति । एवं च 'न विभक्तौ तुस्माः २७५' इति निषेधान्मकारस्य नेत्संज्ञा । अत एव परश्च भवति ॥ 'औतोऽम्शसोः ३९९' इत्यत्र शसा साहचर्यात् सुबेवाम् गृह्यते इत्युक्तत्वादोत आकारश्च भवतीत्याशयेनोदाहरति—गाम्मन्य इति ॥ नरम्मन्य इति ॥ 'ऋतो ङि-३८६' इत्यादिना गुणः ॥ भाष्यकारेति ॥ अयं भावः--यथा पृष्ठादयः शब्दाः पुंयोगात्स्त्रियां वर्तन्ते पृष्ठी गणिकेति, तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्तते, तत्र 'ह्रस्वो नपुंसके-४४०' इति ह्रस्वः । मुम् तु न, अपवादेन अमा बाधात् । 'स्वमोर्नपुंसकात् ४४१' इत्यमो लुक् । न चैवं गाम्मन्य इत्यादावपि 'सुपो धातुप्रातिपदिकयोः ९५०' इति लुक् स्यादिति वाच्यम्, अम्विधिसामर्थ्यादेव तद्बाधादित्याहुः ॥ अम्प्रत्ययस्तु 'मध्येऽपवादाः-७३२' इति न्यायेन 'सुपो धातुप्रातिपदिकयोः ९५०' इति लुकमेव बाधते न तु 'स्वमोर्नपुंसकात् ४४१' इति लुकमिति भाष्यादौ स्थितम् । स्यादेतत्, नपुंसकह्रस्वे कृते मुमः प्राप्तिरेव नास्ति, कथमत्रापवादेन अमा बाधादित्युक्तिः संगच्छेत, 'अरुर्द्विषत्-३९२२' इति सूत्रे हि अन्तग्रहणस्य समीपवाचित्वेन 'खित्यनव्ययस्य ३९२४' इति ह्रस्वे कृते पश्चान्मुमिति व्याख्यातत्वात् । सत्यम्, जनमेजय इत्यत्र स्वतःसिद्धेऽपि ह्रस्वे यथा 'खित्यनव्ययस्य ३९२४' इति पुनर्ह्रस्वो मुमर्थं स्वीक्रियते, तथाऽत्रापि भवेदित्यस्यैव मुमः प्राप्तिरिति ॥ ( ४००१ ) भूते । धातोरित्यधिकाराद्धात्वर्थस्य विशेषणमिदम् । भूतेऽर्थे विद्यमानाद्धातोरित्यर्थः ॥

---

१ अत्र भाष्ये-'कर्मकर्तृग्रहणं कर्तव्यम्, कर्मापदिष्टो यक् यथा स्यात् श्यन् मा भूत्' इत्युक्तम् । श्यन् मा भूदित्यनेन दिवादेरेव ग्रहणमिति स्पष्टमेव दृश्यत इत्यभिप्रेत्याह । मन्यतेरिति ॥ २ बहुलेति-उत्तरसूत्रे दिवादेरेव ग्रहणेनात्रापि तद्ग्रहणमर्थाधिकारादिति केचित् ॥ ३ कर्मणि षष्ठ्येति । न तु कर्तृषष्ठ्या, आत्मशब्दोपादानसामर्थ्यादिति भावः ॥

३।२।८४। अधिकारोऽयम्। "वर्तमाने लडिति यावत्॥ (४००२) करणे यजः।३।२।८५। करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी॥ (४००३) कर्मणि हनः।३।२।८६। पितृव्यघाती। कर्मणीत्येतत्संहे चेति यावदधिक्रियते॥ (४००४) ब्रह्मभ्रूणवृत्रेषु क्विप्।३।२।८७। एषु कर्मसूपपदेषु हन्तेर्भूते क्विप्स्यात्। ब्रह्महा। भ्रूणहा। वृत्रहा। क्विप्[८३] चेत्येव सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव, हन्तेरेव, भूते एव, क्विबेवेति चतुर्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव, क्विबेवेति द्विविधो नियम इति भाष्यम्॥ (४००५) सुकर्मपापमन्त्रपुण्येषु कृञः।३।२।८९। सौ कर्मादिषु च कृञः क्विप्स्यात्। त्रिविधोऽत्र नियम इति काशिका। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। क्विबेवेति नियमात्कर्म कृतवानित्यत्राऽण् न। कृञ एवेति नियमान्मन्त्रमधीतवान्मन्त्राध्यायः। अत्र न क्विप्। भूत एवेति नियमात् मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप्। स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप्। शास्त्रकृत्। भाष्यकृत्॥ (४००६) सोमे सुञः।३।२।९०। सोमसुत्। चतुर्विधोऽत्र नियम इति काशिका। एवमुत्तरसूत्रेऽपि॥ (४००७) अग्नौ चेः।३।२।९१। अग्निचित्॥

---

(४००२)करणे-। स्वरितत्वाण्णिनिरेवानुवर्तते न तु खश् इत्याह-**णिनिः स्यादिति**॥ सोमेन लताविशेषेण यागं कृतवानित्यर्थः॥ **अग्निष्टोमेति**। अग्निष्टोमस्तोत्रेण समाप्यमानो यो यागः स लक्षणयाऽग्निष्टोमस्तेनापूर्वं भावितवानित्यर्थः। उक्तं च काशिकायाम्-'अग्निष्टोमः फलभावनायां करणम्' इति॥ (४००३) **कर्मणि हनः**। **पितृव्यघातीति**॥ अत्र काशिका-'कुत्सितग्रहणं कर्तव्यमिह मा भूत्। चोरं हतवान् इति'। यद्यपीदं भाष्ये नास्ति, तथापि शब्दशक्तिस्वाभाव्यादिदं लभ्यत इत्याहुः॥ (४००४) **चतुर्विध इति**। अयमाशयः-इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद्धन्तिस्ततः परिशेषाद्भूत इति क्विप् तु सर्वान्ते निर्देष्टव्यः, विधेयत्वात्। तदेवं वचनव्यक्तिः। ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति। एवं स्थिते यत्रैवकारस्ततोऽन्यत्र नियम इति न्यायेन नियमोऽत्र भवन्ननन्तरे भवति, ततश्च ब्रह्मादिष्वेवेत्यवधारणे, हन्तेस्तदनन्तरं निर्दिष्टत्वादुपपदान्तरसंबन्धनिवृत्तिफलो नियमो भवति। ब्रह्मादिषु हन्तेरेव, भूते इत्यवधारणे त्वनन्तरत्वाविशेषेऽपि प्राथम्यादुपपदनियमो धात्वन्तरनिवृत्तिफलकः, ब्रह्मादिषु हन्तेर्भूते एव क्विबित्यवधारणे तु क्विब्हन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधान्यात्कालान्तरसंबन्धनिवृत्तिफलकः प्रत्ययनियमः। ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ प्रत्ययान्तरसंबन्धनिवृत्तिफलकः कालनियमः। सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः। अगृह्यमाणविशेषात्तु चतुर्विधस्यापीह ग्रहणम्। तत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूत इत्याश्रयणाद्वर्तमानकाले भविष्यत्काले चोपपदान्तरेऽपि भवत्येव। पुरुषं हन्ति, हनिष्यति वा पुरुषहा 'अरिहयोऽरिहयोगविचक्षणः'। अरीन् हन्तीति अरिहा स चासौ योगश्च अरिहयोगस्तत्र विचक्षण इत्यर्थः। प्रकृतिनियमफलं तु पुरुषं हतवान् पुरुषहा इति भूतार्थे प्रयोगाभावः। ब्रह्मादिषु हन्तेरेवेत्युपपदनियमेऽपि भूत इत्याश्रयणाद्वर्तमानभविष्यत्कालयोर्धात्वन्तरादपि भवत्येव। वृत्रं जयति, जेष्यति वा वृत्रजिदिति। उपपदनियमफलं तु वृत्रं जितवान् वृत्रजिदिति प्रयोगाभावः। भूत एव क्विबिति प्रत्ययनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे वर्तमानभविष्यत्कालयोर्हन्तेः क्विप् भवत्येव। पुरुषं हन्ति हनिष्यति वा पुरुषहा, अरिहेति प्राग्वत्। प्रत्ययनियमफलं तु ब्रह्माणं हन्ति ब्रह्महेत्यादिप्रयोगाभावः। भूते क्विबेवेति कालनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव पितृव्यं हतवान् पितृव्यघाती, इह 'कर्मणि हनः ४००३' इति भूते णिनिः। कालनियमफलं तु ब्रह्माणं हतवान् ब्रह्मघातीति प्रयोगाभावः। सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते। निष्ठा तु भवत्येव वृत्रं हतवानिति। भाष्यकारस्तु प्रकृतिकालनियमावेवाशिश्रियत्। तस्यायमाशयः-धातुकालौ हि नेह सूत्रे श्रुतौ किन्तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ अतस्तयोरेवोपरोधो न्याय्यो न तूपपदप्रत्यययोः श्रुत्युपस्थापितत्वात्। एवं न्यायोपष्टम्भेन भाष्येण सह विरोधात् वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम्। यत्त्विह हरदत्तेनोक्तं धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम्॥ (४००५) **सुकर्म-**। **त्रिविध इति**। धातुनियमस्त्विह नेष्यत इति भावः॥ **क्विबेवेतीति**। भूते क्विबेवेति प्रत्ययान्तरसंबन्धनिवृत्तिफलककालनियमादित्यर्थः॥ **कृञ एवेतीति**। सुकर्मादिषु कृञ एवेति धात्वन्तरसंबन्धनिवृत्तिफलकोपपदनियमादित्यर्थः॥ **भूत एवेतीति**। भूत एव क्विबिति कालान्तरसंबन्धनिवृत्तिफलकप्रत्ययनियमादित्यर्थः॥ **स्वादिष्वेवेतीति**। स्वादिष्वेव कृञ इत्युपपदान्तरसम्बन्धनिवृत्तिफलकधातुनियमाभावादित्यर्थः॥ (४००६)**सोमे सुञः**। इहापि चतुर्विधो नियम इति वृत्तिः। एवमुत्तरसूत्रेऽपि। तत्र भूतकालस्य क्विपि नियतत्वात्सोमं सुतवान् सोमसावः, अग्निं चितवान् अग्निचाय इत्यण् न भवति। सुनोतेः सोम एव उपपदे नियतत्वाच्चिनोतेस्त्वग्नावेवोपपदे नियतत्वात् सुरां सुतवान् सुरासुत्, इष्टकाश्चितवानिष्टकाचिदिति न भवति। किन्तु सुरासावः, इष्टकाचाय इत्यणेव भवति, सोमस्य सुनोतावेव धातोर्नियतत्वात्। अग्नेस्तु चिनोतावेव नियतत्वात्। सोमं क्रीतवान् सोमक्रीः, अग्निं कृतवान् अग्निकृद् इति क्विप् न भवति। किन्तु सोमक्रायः, अग्निभार इत्यणेव भवति। भूत एव क्विपो नियतत्वात्सोमं सुनोति सोष्यति वेत्यर्थे क्विप् न भवति। तथा अग्निं चिनोति चेष्यति वेत्यर्थे क्विबभावः, किन्त्वणेव॥

(४००८) (सू०) **कर्मण्यग्न्याख्यायाम्** ।३।२।९२। कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप्स्यात् अग्न्याधारस्थलविशेषस्याख्यायाम्। श्येन इव चितः श्येनचित् ॥ (४००९) (सू०) **कर्मणीनि विक्रियः** ।३।२।९३। कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात् ॥ (४०१०) (वा०) **कुत्सितग्रहणं कर्तव्यम्** ॥ सोमविक्रयी। घृतविक्रयी ॥ (४०११) (सू०) **दृशेः क्वनिप्** । ३ । २ । ९४। कर्मणि भूत इत्येव। पारं दृष्टवान् पारदृश्वा ॥ (४०१२) (सू०) **राजनि युधिकृञः** । ३ । २ । ९५। क्वनिप् स्यात्। युधिरन्तर्भावितण्यर्थः। राजानं योधितवान् राजयुध्वा। राजकृत्वा ॥ (४०१३) (सू०) **सहे च** । ३ । २ । ९६। कर्मणीति निवृत्तम्। सहयुध्वा। सहकृत्वा ॥ (४०१४) (सू०) **सप्तम्यां जनेर्डः** । ३ । २ । ९७। सरसिजम्। मन्दुरायां जातो मन्दुरजः। [३१४३]ङ्यापोरिति ह्रस्वः ॥ (४०१५) (सू०) **पञ्चम्यामजातौ** । ३ । २ । ९८। जातिशब्दविवर्जिते पञ्चम्यन्त उपपदे जनेर्डः स्यात्। संस्कारजः। अदृष्टजः ॥ (४०१६) (सू०) **उपसर्गे च संज्ञायाम्** । ३ । २ । ९९। प्रजा स्यात्सन्ततौ जने ॥ (४०१७) (सू०) **अनौ कर्मणि** । ३ । २। १००। अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात्। पुमांसमनुरुध्य जाता पुमनुजा ॥ (४०१८) (सू०) **अन्येष्वपि दृश्यते** । ३ । २। १०१। अन्येष्वप्युपपदेषु जनेर्डः स्यात्। अजः। द्विजः। ब्राह्मणजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्। परितः खाता परिखा ॥ (४०१९) (सू०) **क्तक्तवतू निष्ठा** । १। १।२६। एतौ निष्ठासंज्ञौ स्तः ॥ (४०२०) (सू०) **निष्ठा** । ३ । २। १०२। भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र [३७७२]तयोरेवेति भावकर्मणोः क्तः। कर्तरि कृदिति कर्तरि [३१७१]क्तवतुः। उकारावितौ। स्नातं मया। स्तुतस्त्वया विष्णुः। विष्णुर्विश्वं कृतवान् ॥ (४०२१) (सू०) **निष्ठायामण्यदर्थे** । ६ । ४ । ६०। ण्यदर्थो भावकर्मणी ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात् ॥ (४०२२) (सू०) **क्षियो दीर्घात्** । ८ । २ । ४६। दीर्घात् क्षियो निष्ठातस्य नः स्यात्। क्षीणवान्। भावकर्मणोस्तु क्षितः कामो मया। [३१७४]श्र्युकः क्किति। श्रितः। श्रितवान्। भूतः। भूतवान्।

---

(४००८) **कर्मण्यग्न्याख्यायाम्** । **श्येनचिदिति** । समुदायोऽयम् आहवनीयधारणार्थे इष्टकानिर्मितस्थलविशेषे निरूढः॥ (४००९) **कर्मणीति**॥ (४०१०) **कुत्सितग्रहणमिति** । एतच्च वार्तिकं पुनः कर्मग्रहणसामर्थ्याल्लभ्यते, यत्कर्म क्रियया संबध्यमानं कर्तुः कुत्सामावहति तत्रेत्यर्थः। सोमादयश्च विक्रीयमाणाः शास्त्रे प्रतिषेधात्कुत्सावहाः। कुत्सितग्रहणान्नेह धान्यविक्रायः ॥(४०११) **दृशेः क्वनिप्**। 'अन्येभ्योऽपि दृश्यन्ते ३९८०' इति सिद्धे। नियमार्थमिदं–क्वनिबेव यथा स्यात्तत्सहनिर्दिष्टौ मनिन्वनिपौ मा भूताम्, न वा अणादय इति। सोपपदप्रत्ययस्यैव नियमेन निवर्तनान्निष्ठा तु भवत्येव ॥ **पारं दृष्टवानिति**। एवं स्थिते 'विश्वदृश्वनयना वयमेव' इत्यादौ विश्वं पश्यन्ति विश्वदृश्वानि तानि नयनानि येषां ते विश्वदृश्वनयना इत्येवं क्वनिबन्तस्य लटा विग्रहेऽपि न क्षतिः। प्रत्ययान्तरनिवृत्त्यर्थं सूत्रमित्येवं वृत्तिकारादिभिर्व्याख्यातत्वात्। कालान्तरनिवृत्त्यर्थमिदमिति केरप्यभियुक्तैरनुक्तत्वादिति दिक् ॥ (४०१२) **राजनि युधिकृञः**। (४०१३) **सहे च**। इदमपि सूत्रद्वयं 'दृशेः क्वनिप् ४०११' इतिवन्नियमार्थमिति न्याय्यम्। वस्तुतस्तु दृशिग्रहणेन निर्वाहस्यागतिकत्वादियं त्रिसूत्री विधात्रीत्यपि सुवचम्। प्राचां ग्रन्थास्त्विह उदासीना एवेति शब्दकौस्तुभे स्थितम् ॥ (४०१४) **मन्दुरायामिति**। 'वाजिशाला तु मन्दुरा' इत्यमरः ॥ (४०१७) **पुमनुजेति**। इह जनिः सकर्मकः, अनुरोधविशिष्टजननवृत्तित्वात् ॥ (४०१८) **अन्येष्वपि दृश्यते**। 'सप्तम्यां जनेः–४०१४' इत्युक्तमसप्तम्यामपि दृश्यते इत्याह–**अजः**। **द्विजः इति**। न जायत इत्यजः, द्विर्जातो द्विजः, 'जन्मना जायते शूद्रः[१] कर्मणा जायते द्विजः' इत्यभियुक्तोक्तेः ॥ 'पञ्चम्यामजातौ ४०१५' इत्युक्तं, जातावपि दृश्यत इत्याह–**ब्राह्मणज इति** ॥ **अपिशब्द इति**। यत्तु 'अन्तात्यन्ताध्व–३९५३' इति प्रकरणे 'अन्यत्रापि दृश्यते ३९५७' इत्युपसंख्यातं तद्भूतकालं विनाऽपि यथा स्यादित्येवमर्थम्। वस्तुतस्तु प्रकृतसूत्रस्थस्यापिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्तद्वार्तिकमनेनैव गतार्थम्। विभावितं चेदम्—'इको गुणवृद्धी' इति सूत्रे जनेर्ड प्रक्रम्य 'गमेरप्ययं डो वक्तव्यः' इति वदता भाष्यकारेण, एवं च प्रकृतसूत्रस्थम् 'अन्येभ्योऽपि दृश्यते' इति वार्तिकमपि गतार्थमिति बोध्यम् ॥ (४०१९) **क्तक्तवतू निष्ठा**। ननु क्तक्तवत्वोः सिद्धयोर्निष्ठेति संज्ञासिद्धिः, सिद्धायां निष्ठासंज्ञायां क्तक्तवत्वोर्विधानमित्यन्योन्याश्रय इति चेत्। अत्राहुः–भाविनी संज्ञाऽत्र विज्ञायते स भूते भवति यस्योत्पन्नस्य निष्ठेति संज्ञा भवति इत्याश्रयणे सामर्थ्यात् क्तक्तवत्वोर्विधानमेतदिति नास्त्युक्तदोष इति ॥ (४०२१) **ण्यदर्थो भावकर्मणी इति**। यद्यपि याज्या ऋगित्यादौ करणादावपि बाहुलकाण्ण्यद्भवति तथापि 'तयोरेव–३७७२' इति वचनाद्भावकर्मणी एव साक्षादुपात्तोऽर्थ इति स एवेह विवक्षित इति भावः ॥ (४०२२) **क्षियो**—। 'क्षिक्षये' 'क्षि निवासगत्योः' द्वयोरपि ग्रहणम् ॥ **क्षितः काम इति**।

---

१ शूद्रसमः 'वृत्त्या शूद्रसमो ज्ञेयः' इति वसिष्ठबौधायनोक्तेः। 'वृत्त्या शूद्रसमास्तावद्विज्ञेयास्ते विचक्षणैः। यावद्वेदे न जायन्ते द्विजा ज्ञेयास्ततः परम् (१।१८) इति शङ्खस्मरणात्। 'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते। विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ॥' (१३८) इत्यत्रिस्मृतेश्च ॥ 'जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः। स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शितः ॥ ४ ॥ भक्ष्याभक्ष्ये तथाऽपेये वाच्यावाच्य ऋतानृते। अस्मिन्काले न दोषः स्याद् यावद् वेदे न जायते ॥ ५ ॥' इति दक्षस्मृतेश्च। यथाश्रुते शूद्रस्यापि संस्कारैर्द्विजत्वापत्तिः ॥

क्षुतः ॥ (४०२३) वा॰ ऊर्णोर्णुवद्भावो वाच्यः ॥ तेन एकाच्त्वान्नेट् । ऊर्णुतः । नुतः । वृतः ॥ (४०२४) सू॰ रदाभ्यां निष्ठातो नः पूर्वस्य च दः । ८ । २ । ४२ । रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च । शॄ । ॠत[३१८३] इत् । रपरः । णत्वम् । शीर्णः । बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्नेह, कृतस्यापत्यं कार्तिः । भिन्नः । छिन्नः ॥ ( ४०२५ ) सू॰ संयोगादेरातो धातोर्यण्वतः । ८ । २ । ४३ । निष्ठातस्य नः स्यात् । द्राणः । स्त्यानः । ग्लानः । म्लानः ॥ ( ४०२६ ) सू॰ ल्वादिभ्यः ।८।२।४४। एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्या । ग्रहिज्या[३२१६] । जीनः ॥ (४०२७) वा॰ दुग्वोर्दीर्घश्च ॥ दु गतौ दूनः । टुदु उपताप इत्ययं तु न गृह्यते, सानुबन्धकत्वात् । मृदुतया दुतयेति माघः । गूनः ॥ ( ४०२८ ) वा॰ पूञो विनाशे ॥ पूना यवाः । विनष्टा इत्यर्थः । पूतमन्यत् ॥ ( ४०२९ ) वा॰ सिनोतेर्ग्रासकर्मकर्तृकस्य ॥ सिनो ग्रासः । ग्रासेति किम् । सिता पाशेन सूकरी । कर्मकर्तृकेति किम् । सितो ग्रासो देवदत्तेन ॥ ( ४०३० ) सू॰ ओदितश्च ।८।२।४५ । भुजो । भुग्नः । टुओश्वि । उच्छूनः । ओहाक् । प्रहीणः । स्वादय[३३२८] ओदित इत्युक्तम् । सूनः । सूनवान् । दूनः । दूनवान् । ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट्, उड्डीनः ॥ ( ४०३१ ) सू॰ द्रवमूर्तिस्पर्शयोः श्यः । ६ । १ । २४ । द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम् ॥ ( ४०३२ ) सू॰ श्योऽस्पर्शे । ८ । २ । ४७ । श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे । हलः[३३९०] इति दीर्घः । शीनं घृतम् । अस्पर्शे किम् । शीतं जलम् । द्रवमूर्तिस्पर्शयोः किम् । संश्यानो वृश्चिकः । शीतात्संकुचित इत्यर्थः ॥ ( ४०३३ ) सू॰ प्रतेश्च । ६ । १ । २५ । प्रतिपूर्वस्य श्यः संप्रसारणं स्यान्निष्ठायाम् । प्रतिशीनः ॥ ( ४०३४ ) सू॰ विभाषाऽभ्यवपूर्वस्य । ६ । १ । २६ । श्यः संप्रसारणं वा स्यात् । अभिश्यानं घृतम् । अभिशीनम् । अवश्यानोऽवशीनो वृश्चिकः । व्यवस्थितविभाषेयम् । तेनेह न । समवश्यानः ॥(४०३५) सू॰ अञ्चोऽनपादाने । ८ । १ । ४८ । अञ्चो निष्ठातस्य नः स्यान्न त्वपादाने ॥ (४०३६) सू॰ यस्य विभाषा ।७।२।१५ । यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठाया न स्यात् । उदितो वेति क्त्वीयां[३१४०] वेट्त्वादिह नेट् । समक्नः । अनपादाने[1] किम् । उदक्तमुदकं कूपात् । नत्वस्यासिद्धत्वाद्[२१११] श्चेति षत्वे प्राप्ते—॥ ( ४०३७ ) वा॰ निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु

---

अन्तर्भावितण्यर्थत्वेन[2] सकर्मकत्वात्कर्मणि क्तः । एतत् ‘ अक्षितोतसनेदिमम् ’ इति मन्त्रव्याख्यायां माधवग्रन्थे स्पष्टम् । भावे तु क्षितं कामेनेत्याद्युदाहरणीयम् ॥ इण्निषेधसूत्रं स्मारयति–श्र्युकः क्किताति ॥ क्षुत इति । ‘ टु क्षु शब्दे ’ ॥ नुत इति । ‘णु स्तुतौ’ ॥ वृत इति । ‘वृङ् संभक्तौ’ ‘वृञ् वरणे’॥ (४०२४) रदाभ्याम्–। इह रदाभ्यामित्यनेन तकारो विशेष्यते, न निष्ठा, तेन चरितमुदितमित्यत्र न, तकारस्येटा व्यवहितत्वात्तदेतदाह–परस्य निष्ठातस्येति ॥ बहिरङ्गत्वेनेति । निष्ठातकाराद्बहिर्भूततद्धितञित्प्रत्ययमाश्रित्याङ्गस्यादेरचो विधीयमानत्वाद्वृद्धिर्बहिरङ्गेति भावः ॥ ( ४०२५ ) द्राण इति । ‘द्रा कुत्सायां गतौ’ ॥ ग्लानः । म्लान इति । ‘ग्लै म्लै हर्षक्षये’ ॥ ( ४०२६ ) एकविंशतेरिति । क्र्यादिषु प्वादयो द्वाविंशतिः पठ्यन्ते, तत्र पूञं विहाय ल्वादयो ज्ञेयाः ॥ जीन इति । सिद्धत्वान्नित्यत्वाच्च ‘ग्रहिज्या––३२१६’ इति संप्रसारणे कृते ‘संयोगादेरातः–४०२५ ’ इत्यस्याप्राप्तिः ॥ ( ४०२७ ) गून इति । ‘ गु पुरीषोत्सर्गे ’ ॥ ( ४०२८ ) विनष्टा इति । धातूनामनेकार्थत्वात् ‘पूञ् पवने’ इत्यस्य विनाशेऽपि वृत्तिः ॥ ( ४०२९ ) सिनोतेरिति । ‘षिञ् बन्धने’ । ग्रासरूपं ( कर्म ) ग्रासकर्म तत्कर्तृ यस्य सिनोतेस्ततः परस्य निष्ठातस्य नः स्यादित्यर्थः ॥ सिनो ग्रास इति । पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशाद् बन्धनेऽनुकूलो भवति तदा कर्मण एव कर्तृत्वमिति बोध्यम् ॥ ग्रासेति किमिति । ग्रासकर्मकर्तृकस्येति किमर्थमित्यर्थः ॥ कर्मकर्तृकेति किमिति ग्रासकर्मकस्येत्येवास्तु, कर्तृपदं किमर्थमित्यर्थः। कर्मपदं विहाय ग्रासकर्तृकस्येत्युक्तौ तु ग्रासेन कण्ठः सित इत्यत्रापि स्यादिति बोध्यम् ॥( ४०३० ) भुग्न इति । ‘भुजो कौटिल्ये ’ नत्वस्यासिद्धत्वात् झलि परतः कुत्वम् ॥ उच्छून इति । श्वयतेर्यजादित्वात्संप्रसारणे पूर्वरूपे च ‘हलः ३३९०’ इति दीर्घः ॥ प्रहीण इति । ‘घुमास्था–३२७४’इति ईत्वम् ॥ सून इति।‘षूङ् प्राणिप्रसवे’ ॥ दून इति। दूङ् परितापे ॥ ओदिन्मध्ये इति । यदि डीङ इट् स्यात्तर्हि धातोः परो निष्ठातकारो न संभवतीति नत्वार्थः पाठोऽनर्थकः स्यादिति भावः । न च ओदिन्मध्ये पाठसामर्थ्यादिटा व्यवधाने नत्वं भवेदिति वैपरीत्यं किं न स्यादिति शङ्क्यम्, लक्ष्यानुरोधेन इडभावकल्पनाया एव न्याय्यत्वात् । अन्ये तु सत्यपि इडागमे सवर्णदीर्घे चैकादेशस्य पूर्वान्तत्वेन ग्रहणादिडा व्यवधानं नास्त्येवेतीष्टं सिध्यतीत्याहुः॥ (४०३१–४०३२) संश्यान इति । ‘श्यैङ् गतौ’ इत्यस्य ’ आदेचः–३१६३ ’ इत्यात्त्वे ‘ संयोगादेरातः–४०२५ ’ इति निष्ठातस्य नः॥(४०३६) यस्य विभाषा । यस्येत्यार्द्धधातुकापेक्षया षष्ठी । यदीयस्यार्द्धधातुकस्येत्यर्थः ॥ समक्न इति । ‘ अञ्चु गतिपूजनयोः ’ संपूर्वः । नत्वस्यासिद्धत्वात् झलि परतः कुत्वम् ॥ उदक्तमिति । उद्धृतमित्यर्थः । व्यक्तमित्येतत्तु ‘अञ्जू व्यक्ति–’इत्यस्य, न त्वञ्चेः, तेनात्र

---

१ अनपादान इति–अनपादान इत्यसमर्थसमासः ‘असूर्यललाटयोः–’इतिवत् । अपादानवाचकस्य प्रयोगे नेति तदर्थात् ॥

२ क्षिधातोरकर्मकत्वेन क्षितं कामेनेति वक्तव्ये क्षितः काम इत्यनुचितमिति शङ्कां निराकर्तुमाह–अन्तर्भावितेति ॥

सिद्धो वाच्यः ॥ ॠवर्णान्नस्य णत्वम् । वृक्णः । वृक्णवान् ॥ (४०३८) (सू) परिस्कन्दः प्राच्यभरतेषु । ८।३।७५। पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते। परिस्कन्दः । प्राच्येति किम् । परिष्कन्दः । परिस्कन्दः । परेश्चेति विकल्पः । स्तम्भेरिति षत्वे प्राप्ते-॥ ( ४०३९ ) (सू) प्रतिस्तब्धनिस्तब्धौ च । ८ । ३ । ११४ । अत्र षत्वं न स्यात् ॥ ( ४०४० ) (सू) दिवोऽविजिगीषायाम् । ८ । २ । ४९ । दिवो निष्ठातस्य नः स्यादविजिगीषायाम् । द्यूनः । विजिगीषायां तु द्यूतम् ॥ ( ४०४१ ) (सू) निर्वाणोऽवाते । ८ । २ । ५० । अवाते इति च्छेदः । निष्पूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता न । निर्वाणोऽग्निर्मुनिर्वा[1] । वाते तु निर्वातो वातः ॥ ( ४०४२ ) (सू) शुषः कः । ८ । २ । ५१ । निष्ठात इत्येव । शुष्कः ॥ ( ४०४३ ) (सू) पचो वः । ८ । २ । ५२ । पक्वः ॥ ( ४०४४ ) (सू) क्षायो मः । ८ । २ । ५३ । क्षामः ॥ ( ४०४५ ) (सू) स्त्यः प्रपूर्वस्य । ६ । १ । २३ । प्रात् स्त्यः सम्प्रसारणं स्यान्निष्ठायाम् ॥ ( ४०४६ ) (सू) प्रस्त्योऽन्यतरस्याम् । ८ । २ । ५४ । निष्ठातस्य मो वा स्यात् । प्रस्तीमः, प्रस्तीतः । प्रात्किम् । स्त्यानः ॥ (४०४७) (सू) अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः । ८ । २ । ५५ । त्रिफला । फुल्लः । निष्ठातस्य लत्वं निपात्यते ॥ क्तवत्वेकदेशस्यापीदं निपातनमिष्यते ॥ फुल्लवान् । क्षीबादिषु तु क्तप्रत्ययस्यैव तलोपः, तस्यासिद्धत्वात्प्राप्तस्येटोऽभावश्च निपात्यते । क्षीबो मत्तः । कृशस्तनुः । उल्लाघो नीरोगः । अनुपसर्गात्किम्॥ ( ४०४८ ) (सू) आदितश्च । ७ । २ । १६ । आकारेतो निष्ठाया इण् न स्यात् ॥ ( ४०४९ ) (सू) ति च । ७ । ४ । ८९ । चरफलोरत उत्स्यात्तादौ किति । प्रफुल्तः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः ॥ कथं तर्हि लोध्रद्रुमं सानुमतः प्रफुल्लमिति । फुल्ल विकसने । पचाद्यच् ॥ सूत्रं तु फुल्तादिनिवृत्त्यर्थम् ॥ ( ४०५० ) (वा) उत्फुल्लसंफुल्लयोरुपसंख्यानम् ॥ ( ४०५१ ) (सू) नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् । ८ । २ । ५६ । एभ्यो निष्ठातस्य नो वा । नुन्नः, नुत्तः । विद विचारणे रौधादिक एव गृह्यते, उन्दिना परेण साहचर्यात् । विन्नः, वित्तः । वेत्तेस्तु विदितः । विद्यतेर्विन्नः । उन्दी-॥ (४०५२) (सू) श्वीदितो निष्ठायाम् । ७ । २ । १४ । श्वयतेरीदितश्च निष्ठाया इण् न । उन्नः, उत्तः । त्राणः, त्रातः । घ्राणः, घ्रातः । ह्रीणः, ह्रीतः ॥ (४०५३) (सू) न ध्याख्यापॄमूर्च्छिमदाम् । ८ । २ । ५७ । एभ्यो निष्ठातस्य नत्वं न । ध्यातः । ख्यातः[2] । पूर्तः ॥ रालोपः । मूर्तः । मत्तः ॥ ( ४०५४ ) (सू) वित्तो भोगप्रत्यययोः

---

नत्वाभावः ॥ (४०३७) वृक्ण इति । 'ओव्रश्चू छेदने' 'ग्रहिज्या-३२१६' इति संप्रसारणम् । नत्वस्यासिद्धत्वात् 'स्कोः-५१६' इति सलोपः, चोः कुत्वं च । ऊदित्त्वेन वेट्कत्वाद् 'यस्य विभाषा-४०३६' इति निष्ठाया इडभावः । क्षुभ्नादिषु वर्णैकदेशस्यापि वर्णत्वेन ग्रहणादृकारैकदेशो रेफो निमित्तमिति 'अट्कुप्वाङ्-२८२' इति नस्य णत्वम् । णत्वस्य विनाम इति प्राचां संज्ञा ॥ ऋवर्णान्नस्य णत्वमिति । यथाश्रुतपक्षेऽपि णत्वनिषेधार्थं क्षुभ्नादिषु नृनमनशब्दपाठादृकारं निमित्तीकृत्यापि 'अट्कुप्वाङ्--२८२' इति णत्वं भवत्येवेति दिक् ॥ ( ४०३८ ) परिस्कन्दः--। अचि निपातनम् । अथवा निष्ठातकारस्य लोप इति काशिका ॥ ( ४०४० ) द्यून इति । 'च्छ्वोः शूड्-३३९४' इत्यूठ् । क्षीण इत्यर्थः ॥ द्यूतमिति । विजिगीषया हि तत्राक्षाः पात्यन्त इति गम्यते विजिगीषा ॥ ( ४०४१ ) निर्वाणोऽवाते । 'वा गतिगन्धनयोः' निष्पूर्वादस्मान्निष्ठातस्य नत्वे णत्वम् ॥ वातश्चेत्कर्त्ता नेति । एवं च वातेन हेतुना निर्वाणो दीप इत्यत्र निषेधो नेत्याहुः ॥ निर्वात इति । 'गत्यर्थाकर्मक-४१०४' इति कर्तरि क्तः । नितरां वातो गत इत्यर्थः ॥ ( ४०४२ ) शुष्क इति । 'शुष शोषणे' ॥ ( ४०४४ ) क्षाम इति । 'क्षै क्षये' 'आदेचः-३१६३' इत्यात्त्वम् ॥ ( ४०४५-४०४६ ) प्रस्तीमः, प्रस्तीत इति । 'स्त्यै ष्ट्यै शब्दसंघातयोः' आत्त्वे कृते 'संयोगादेः-४०२५' इत्यस्यासिद्धत्वात्पूर्वं संप्रसारणे पूर्वरूपे च कृते 'हलः ३३९०' इति दीर्घः । पश्चाद्यण्वत्त्वादन्तरत्वयोर्विरहान्न नत्वम् । संस्त्यान इत्यत्र तु भवत्येव ॥ (४०४७) क्षीबादिष्विति । 'क्षीबृ मदे' 'कृश तनुत्वे' 'लाघृ शक्तौ' उत्पूर्वः, एभ्यः क्तः ॥ ननु 'फुल्ल विकसने' इत्यस्मादुल्लाघेश्च पचाद्यचि इतराभ्यामिगुपधलक्षणे कप्रत्यये च फुल्लादयः सिद्ध्यन्ति तत्किं सूत्रेणेत्यत आह-सूत्रं त्विति । निवृत्त्यर्थमित्युपलक्षणम् । फुल्लवानिति रूपस्य, 'निष्ठा च द्व्यजनात् ५५८६' इत्याद्युदात्तस्य च सिद्ध्यर्थमिति बोध्यम् ॥ ( ४०५० ) उत्फुल्लसंफुल्लयोरिति । यद्यपि प्रफुल्ल इतिवत्फुल्लेः पचाद्यचा सिद्धं, तथापि उत्फुल्तः, संफुल्त इति प्रयोगनिवृत्त्यर्थं वचनम् ॥ ( ४०५१ ) नुद-। 'रदाभ्याम्-४०२४' 'संयोगादेरातः-४०२५' इति नित्ये प्राप्ते, ह्रीत्यस्याप्राप्ते उभयत्रविभाषेयम् ॥ वेत्तेस्त्विति । तथा च भाष्यम् । 'वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । विन्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः' इति ॥ ( ४०५२ ) उन्नः उत्त इति । 'अनिदिताम्-५५७' इति नलोपः ॥ ( ४०५३ ) न ध्या-। 'ध्यै चिन्तायाम्' । 'ख्या प्रकथने' । 'पॄ पालनपूरणयोः' । 'मुर्च्छा मोहसमुच्छ्राययोः' । 'मदी हर्षे' ॥ पूर्त इति । 'श्र्युकः किति ३१७४'

---

१ निर्वाण इति । समानपदत्वाभावाण्णत्वाभावे प्राप्ते निपातनमिदम् ॥ २ ख्यात इति । ख्शाञादेशे शकारस्य 'शस्य यो वा' इति जातो यकार एतत्प्रकरणं प्रति नैव सिद्ध इति नत्वप्राप्त्यभावेन निषेधो व्यर्थ एव स्यादिति स्वतन्त्रख्याधातोरपि प्रयोगं ज्ञापयतीति सार्वधातुकमात्रविषयत्वं स्वतन्त्रधातोर्नैव न्याय्यमित्यभिहितं प्राक् ॥ एतदेवाभिप्रेत्य 'ख्या प्रकथने' इति टीकायामुपन्यस्तम् । ख्याञादेशे न इत्यादेशपदं चोपन्यस्तम् ।

। ८ । २ । ५८ । विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीते चार्थे । वित्तं धनम् । वित्तः पुरुषः । अनयोः किम् ? विन्नः । विभाषा गमहनेति क्वसौ वेट्त्वादिह नेट् ॥ (४०५५) (सू०) भित्तं शकलम् । ८ । २ । ५९ । भिन्नमन्यत् ॥ ( ४०५६ ) (सू०) ऋणमाधमर्ण्ये । ८ । २ । ६० । ऋधातोः क्तकारस्य नत्वं निपात्यते अधमर्णव्यवहारे । ऋतमन्यत् ॥ ( ४०५७ ) (सू०) स्फायः स्फी निष्ठायाम् । ६ । १ । २२ । स्फीतः ॥ ( ४०५८ ) (सू०) इण् निष्ठायाम् । ७ । २ । ४७ । निरः कुषो निष्ठाया इट् स्यात् । यस्य विभाषेति निषेधे प्राप्ते पुनर्विधिः । निष्कुषितः ॥ (४०५९) (सू०) वसतिक्षुधोरिट् । ७ । २ । ५२ । आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात् । उषितः । क्षुधितः ॥ ( ४०६० ) (सू०) अञ्चेः पूजायाम् । ७ । २ । ५३ । पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात् । अञ्चितः । गतौ तु अक्नः[1] ॥ ( ४०६१ ) (सू०) लुभोऽविमोहने । ७ । २ । ५४ । लुभः क्त्वानिष्ठयोरिट् स्यान्न तु गार्ध्ये । लुभितः । गार्ध्ये तु लुब्धः ॥ ( ४०६२ ) (सू०) क्लिशः क्त्वानिष्ठयोः । ७ । २ । ५० । इड्वा स्यात् । क्लिश उपतापे नित्यं प्राप्ते, क्लिशू विबाधने अस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां निषेधे प्राप्ते विकल्पः । क्लिशितः । क्लिष्टः ॥ ( ४०६३ ) (सू०) पूङश्च । ७ । २ । ५१ । पूङः क्त्वानिष्ठयोरिट् स्यात् ॥ (४०६४) (सू०) पूङः क्त्वा च । १ । २ । २२ । पूङः क्त्वा निष्ठा च सेट् किन्न स्यात् । पवितः । पूतः । क्त्वाग्रहणमुत्तरार्थम् । नोपधादित्यत्र हि क्त्वैव सम्बध्यते ॥ ( ४०६५ ) (सू०) निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः । १ । २ । १९ । एभ्यः सेण्निष्ठा किन्न स्यात् । शयितः । शयितवान् । अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । शेशियतः । शेशियतवान् ॥ (४०६६) (वा०) आदिकर्मणि निष्ठा वक्तव्या ॥ ( ४०६७ ) (सू०) आदिकर्मणि क्तः कर्तरि च ।३।४।७१। आदिकर्मणि यः क्तः स कर्तरि स्यात् चाद्भावकर्मणोः ॥ ( ४०६८) (सू०) विभाषा भावादिकर्मणोः ।७।२।१७। भावे आदिकर्मणि चादितो निष्ठाया इड्वा स्यात् । प्रस्वेदितश्चैत्रः प्रस्वेदितं तेन । ञिष्विदेति भ्वादिरत्र गृह्यते, मीदिः साहचर्यात् । स्विद्यतेस्तु स्विदित इत्येव । ञिमिदा, ञिक्ष्विदा दिवादी भ्वादी च । प्रमे-

---

इति इण्निषेधः ॥ लोपविधिं स्मारयति–राल्लोप इति ॥ मूर्त इति । 'आदितश्च ४०४८' इति नेट् ॥ मत्त इति । 'श्वीदितः–४०५२' इति नेट् ॥ ( ४०५४ ) वेत्तेर्ज्ञानार्थकाद्विदेरिटा भाव्यं सत्तार्थकविदेर्विचारणार्थकविदेश्च भोगप्रत्यययोर्वृत्तिर्न संभवतीत्याशयेनाह–विन्दतेरिति । 'विदॢ लाभे' इत्यस्येत्यर्थः ॥ भुज्यत इति भोगः । प्रतीयत इति प्रत्यय इति कर्मसाधनावेताविति व्याचष्टे–भोग्ये प्रतीते चार्थे इति ॥ ( ४०५५ ) भित्तं शकलम् ॥ भिदेः क्ते 'रदाभ्याम्–४०२४' इति प्राप्तनत्वस्याभावो निपात्यते । 'भित्तं शकलखण्डे वा' इत्यमरः ॥ भिन्नमन्यदिति । विदीर्णमित्यर्थः ॥ ( ४०५६ ) ऋणमाधमर्ण्ये । अधमं दुःखप्रदमृणमस्य सोऽधमर्णः, तस्य भाव आधमर्ण्यं तेन व्यवहारविशेषो लक्ष्यते ॥ ततश्च उत्तमर्णेऽपि सिध्यतीत्याशयेन व्याचष्टे–अधमर्णव्यवहार इति ॥ स व्यवहारो दातृग्रहीत्रोः सम्बन्धी भवतीत्युत्तमर्णेऽपि प्रयोगो न विरुध्यते, लक्षणायां तु 'धारेरुत्तमर्णः ८३३' इति निर्देशो लिङ्गम् ॥ ( ४०५७ ) स्फायः स्फी–। 'स्फायी वृद्धौ' । कथं तर्हि 'स्फीतिकामः' इति । स्फीतमाचष्टे इति ण्यन्तात् 'अच इः ४७८४' अल्लोपणिलोपौ ॥ (४०५८) यस्येति । 'निरः कुषः ३३९२' इति विकल्पितेट्त्वादिति भावः ॥ (४०५९) उषित इति । यजादित्वात्संप्रसारणम् । 'शासिवसि– ३२१४' इति षः । वसतीति शपा निर्देशः स्पष्टार्थः । वस्तेः सेट्कत्वाद्भवितव्यमेवेटा ॥ क्षुधित इति । एवं च 'तस्यालमेषा क्षुधितस्य' इति प्रयोगो निर्बाध एवेति क्षुधेर्धातोर्भावे क्विपि तारकादित्वादितजिति धातुवृत्तिषु यदुक्तं तन्नादर्तव्यम् । समानन्यायतया क्रुधितादावुपयोक्ष्यत इति वा कथंचिन्नेयम् ॥ ( ४०६० ) अञ्चेः–। उदित्त्वात् क्त्वायां विकल्पे प्राप्ते निष्ठायां 'यस्य विभाषा ४०३६' इति निषेधे च वचनम् ॥ अञ्चित इति । 'नाञ्चेः पूजायाम् ५६८' इति नलोपनिषेधः ॥ अक्न इति । 'अनिदिताम्–५५७' इति नलोपः ॥ ( ४०६१ ) लुभो–। 'तीषसह–३१२१' इति क्त्वायां विकल्पे निष्ठायां निषेधे च प्राप्ते वचनम् ॥ ( ४०६३ ) पूङश्च । 'श्र्युकः क्किति ३१७४' इति निषेधे प्राप्ते वचनम् ॥ ( ४०६४ ) पूङः क्त्वा च । 'न क्त्वा सेट् ५१४३' इत्यनेनैव सिद्धे क्त्वाग्रहणमिह व्यर्थमित्यत आह–उत्तरार्थमिति ॥ क्त्वैवेति । न तु निष्ठा, चानुकृष्टत्वादिति भावः ॥ ( ४०६५ ) शेशियत इति । 'एरनेकाचः–३८०' इति यण् ॥ ( ४०६६ ) आदिकर्मणीति । आद्येषु क्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम् । आदिकर्मणि क्तस्य कर्तरि विधानार्थं चेत्याहुः ॥ ( ४०६७ ) चादिति । अन्यथा 'तक्रकौण्डिन्य–' न्यायेन भावकर्मणोर्न स्यादिति भावः ॥ ( ४०६८ ) प्रस्वेदित इति । प्रशब्द आदिकर्मद्योतनार्थः, स्वेदितमित्यादि भावे ॥ भ्वादिरत्रेति । 'ञिष्विदा स्नेहनमोचनयोः' इति पठितः । स्विद्यतेस्त्विति । 'ञिष्विदा गात्रप्रक्षरणे' इति दिवादिषु पठितस्य ॥ स्विदित इत्येवेति । कित्त्वनिषेधाभावादिति भावः । न च ष्विदेति दैवादिकोऽपि ञीदिति वाच्यम्, हरदत्तग्रन्थविरोधादिति भावः ॥ अत्र हरदत्तः—'ञिष्विदा स्नेहनमोचनयोः' इति दिवादिर्गृह्यते न तु 'ञिष्विदा अव्यक्ते शब्दे' इति भ्वादिरपि, मिदिना साहचर्यादित्याह । तच्चिन्त्यम्, भ्वादिष्वपि मिदेः पठ्यमानत्वात् । तस्मादविशेषादुभयोर्ग्रहणं न्याय्यं तदेतदाह—दिवादी भ्वादी चेति ।

---

[1] अक्न इति । 'अञ्चोऽनपादाने' इति नत्वम् । अक्त इति रूपं तु 'अञ्जू' धातोर्बोध्यम् ॥

दितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । धर्षितं तेन । सेट् किम् । प्रस्विन्नः । प्रस्विन्नं तेनेत्यादि ॥ ( ४०६९ ) सू मृषस्तितिक्षायाम् । १ । २ । २० । सेण्निष्ठा किन्न स्यात् । मर्षितः । मर्षितवान् । क्षमायां किम् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः ॥ ( ४०७० ) सू उदुपधाद्भावादिकर्मणोरन्यतरस्याम् । १ । २ । २१ । उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न स्यात् । द्युतितम्, द्योतितम् । मुदितम्, मोदितं साधुना । प्रद्युतितः, प्रद्योदितः । प्रमुदितः, प्रमोदितः साधुः । उदुपधात्किम् । विदितम् । भावेत्यादि किम् । रुचितं कार्षापणम् । सेट् किम् । कुष्टम् ॥ ( ४०७१ ) वा शब्विकरणेभ्य एवेष्यते ॥ नेह गुध्यतेर्गुधितम् ॥ ( ४०७२ ) सू निष्ठायां सेटि । ६ । ४ । ५२ । णेर्लोपः स्यात् । भावितः । भावितवान् । श्वीदित [४०५२] इति नेट् । संप्रसारणम् । शूनः । दीप्तः । गुहू । गूढः । वनु । वतः । तनु । ततः । पतेः सनि वेट्कत्वादिडभावे [३४८२] प्राप्ते द्वितीया श्रितेति सूत्रे निपातनादिट्—पतितः । सेऽसिचीति वेट्कत्वासिद्धे [३२२४] कृन्तत्यादीनामीदित्त्वेनानित्यत्वज्ञापनाद्वा । तेन धावितमिभराजधियेत्यादि ॥ यस्य विभाषेत्यत्रैकाच इत्येव [४०३६] । दारिद्रितः ॥ ( ४०७३ ) सू क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताऽविस्पष्टस्वराऽनायासभृशेषु । ७ । २ । १८ । क्षुब्धादीन्यष्टावनिट्कानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु । द्रवद्रव्यसंपृक्ताः सक्तवो मन्थो, मन्थनदण्डश्च । क्षुब्धो मन्थश्चेत् । स्वान्तं मनः । ध्वान्तं तमः । लग्नं सक्तम् । निष्ठानत्वमपि निपातनात् । म्लिष्टमविस्पष्टम् । विरिब्धः स्वरः । म्लेच्छ रेभृ अनयोरुपधाया इत्त्वमपि निपात्यते । फाण्टमनायाससाध्यः कषायविशेषः । माधवस्तु नवनीतभावात् प्रागवस्थापन्नं द्रव्यं फाण्टमिति वेदभाष्ये आह । बाढं भृशम् । अन्यत्र तु क्षुभितम् । क्षुब्धो राजेति त्वागमशास्त्रस्यानित्यत्वात् । स्वनितम् । ध्वनितम् । लगितम् । म्लेच्छितम् । विरेभितम् । फणितम् । बाहितम् ॥ ( ४०७४ ) सू धृषिशसी वैयात्ये । ७ । २ । १९ । एतौ निष्ठायामविनये एवानिटौ स्तः । धृष्टो विशस्तः । अन्यत्र धर्षितः । विशसितः । भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्ति । अत एव नियमार्थमिदं सूत्रमिति वृत्तिः । धृषेरादित्त्वे फलं चिन्त्यमिति हरदत्तः । माधवस्तु भावादिकर्मणोरवैयात्ये विकल्पमाह । धृष्टम्, धर्षितम् । प्रधृष्टः, प्रधर्षितः ॥ ( ४०७५ ) सू दृढः स्थूलबलयोः । ७ । २ । २० । स्थूले बलवति च निपात्यते । दृह दृहि वृद्धौ । क्तस्येडभावः । तस्य ढत्वम् हस्य लोपः ।

---

स्विदादीनाम् ' आदितश्च ४०४८ ' इतीण्निषेधात्सेण् निष्ठा न संभवतीत्यादिकर्मणि निष्ठोदाहृता ॥ ( ४०६९ ) अविस्पष्टमिति । मृषधातोस्तितिक्षायामेव वृत्तिसत्त्वेऽपि सूत्रस्थतितिक्षाग्रहणमेव ज्ञापयति—'अनेकार्था धातवः' इति ॥ ( ४०७ ) रुचितमिति । ' रुच दीप्तौ ' । ' गत्यर्थाकर्मक—४१०४ ' इति कर्तरि क्तः ॥ कुष्टमिति । ' कुश आह्वाने रोदने च ' व्रश्चादिना षत्वे ष्टुत्वम् ॥ ( ४०७१ ) गुधितमिति । ' गुध परिवेष्टने ' दिवादिः ॥ संप्रसारणमिति । ' वचिस्वपि— ३२१३ ' इत्यनेन ॥ शून इति । ' टुओश्वि गतिवृद्ध्योः ' ' हलः ३३९० ' इति दीर्घः, ' ओदितश्च ४०३० ' इति निष्ठातस्य नः ॥ गूढ इति । ' यस्य विभाषा ४०३६ ' इति नेट् । ढत्वधत्वष्टुत्वढलोपदीर्घाः । वतः, तत इति । 'अनुदात्तोपदेश—३२३४ ' इति नलोपः ॥ सनि वेट्कत्वादिति । ' तनिपतिदरिद्रातिभ्यः सनो वेड्वाच्यः ३४८२ ' इति वचनात् ॥ कृन्तत्यादीनामिति । ' श्वीदितः—४०५२ ' इति निष्ठायामनिट्कार्यम् । ' कृती छेदने ' ' चृती हिंसाग्रन्थनयोः' ' नृती गात्राविक्षेपे ' इत्येतेषामीदित्त्वकरणेन ' यस्य विभाषा ४०३६ ' इत्यस्यानित्यत्वज्ञापनाद्वा पतित इति सिद्धमित्यर्थः ॥ ( ४०७३ ) क्षुब्ध— । ' क्षुभ संचलने ' ' झषस्तथोः—३०४७' इति धत्वम् । ' स्वन ध्वन शब्दे' इडभावे 'अनुनासिकस्य क्विझलोः—३५४५ ' इति दीर्घः । ' लगे सङ्गे ' । ' म्लेच्छ अव्यक्ते शब्दे ' ' व्रश्च—४११ ' इति षत्वे ष्टुत्वम् । ' रेभृ शब्दे ' ' फण गतौ ' दीर्घः, ष्टुत्वम् । ' बाह प्रयत्ने ' इडभावे ढत्वधत्वष्टुत्वढलोपाः । अनायासशब्देन तत्साध्यो लक्ष्यत इत्याह—अनायाससाध्य इति । क्षुण्णमौषधजातमुष्णोदके प्रक्षिप्य सद्योऽभिषुत्य पूत्वा यत्पीयते तत्फाण्टमित्याहुः ॥ वेदभाष्ये इति । ' तद्वै नवनीतं भवति घृतं देवानाम्, फाण्टं मनुष्याणाम् ' इति शतपथश्रुतेर्व्याख्यायामित्यर्थः ॥ अन्यत्र त्विति । मन्थादेरवाच्यत्वे त्वित्यर्थः ॥ ( ४०७४ ) धृषिशसी— । ' ञिधृषा प्रागल्भ्ये ' ' शसु हिंसायाम् ' । अनयोः ' आदितश्च ४०४८ ' ' विभाषा—४०६८ ' इति सूत्राभ्यामिट्प्रतिषेधे हि सिद्धेऽप्यनयोर्वैयात्य एवानिट्त्वं नान्यत्रेति नियमार्थमित्याह—अविनये एवेति । विरुद्धं यातो वियातः अविनीतस्तस्य भावो वैयात्यम् ॥ ननु धृषेः 'विभाषा भावादिकर्मणोः ४०६८' इति विकल्पे प्राप्ते नित्यार्थं कस्मान्न भवतीत्याशङ्कायामाह—नास्तीति ॥ अनभिधानादिति भावः ॥ अत्र प्रमाणमाह—अत एवेति । माधवस्त्विति । एवं च—आदित्त्वस्य फलवत्त्वात् हरदत्तोक्तं यच्चिन्त्यं तदेव चिन्त्यमिति भावः ॥ ( ४०७५ ) दृढः स्थूल— । बलमस्यास्तीति बलः 'अर्शआदिभ्योऽच् २६२५'। तदाह—बलवतीति ॥ स्थूलो मांसलः स च निर्बलोऽपि, बलवांस्तु कृशोऽपि दृढ इति फलितोऽर्थः ॥ तस्येति । तकारस्येत्यर्थः ॥ दृहस्येति । ननु 'हो ढः ४४७' इति ढत्वे ढो ढे लोपेनैव सिद्धमिति तस्य ढत्वं हस्य लोपश्च न निपात्यतामिति चेत् । मैवम्, तथा हि सति ढलोपस्यासिद्धत्वेन द्रढिमेत्यत्र ' र ऋतो हलादेर्लघोः २४१६ ' इति रभावो न स्यात् । परिद्रढय्य

---

१ भावादिकर्मणोर्वैयात्ये धृषेर्वृत्त्यभावे मानमाह—अत एवेति । तत्र वृत्त्यभावादेव ॥

इदितो नलोपश्च ॥ दृहितः । दृंहितोऽन्यः ॥ ( ४०७६ ) सू. प्रभौ परिवृढः । ७ । २ । २१ । बृह बृहि वृद्धौ । निपातनं प्राग्वत् । परिबृहितः । परिबृंहितोऽन्यः ॥ ( ४०७७ ) सू. कृच्छ्रगहनयोः कषः । । ७ । २ । २२ । कषो निष्ठायामिण्न स्यादेतयोरर्थयोः । कष्टं दुःखं तत्कारणं च । स्यात्कष्टं कृच्छ्रमाभीलम् । कष्टो मोहः । कष्टं शास्त्रम् । दुरवगाहमित्यर्थः । कषितमन्यत् ॥ ( ४०७८ ) सू. घुषिरविशब्दने । ७ । २ । २३ । घुषेर्निष्ठायामनिट् स्यात् । घुष्टा रज्जुः । अविशब्दने किम् । घुषितं वाक्यम् । शब्देन प्रकटीकृताभिप्रायमित्यर्थः ॥ ( ४०७९ ) सू. अर्देः संनिविभ्यः । ७ । २ । २४ । एतत्पूर्वादर्देर्निष्ठाया इण्न स्यात् । समर्णः । न्यर्णः । व्यर्णः । अर्दितोऽन्यः ॥ ( ४०८० ) सू. अभेश्चाविदूर्ये । ७ । २ । २५ । अभ्यर्णम् । नातिदूरम् आसन्नं वा । अभ्यर्दितमन्यत् ॥ ( ४०८१ ) सू. णेरध्ययने वृत्तम् । ७ । २ । २६ । ण्यन्ताद् वृतेः क्तस्येडभावो णिलुक् चाधीयमानेऽर्थे । वृत्तं छन्दश्छात्त्रेण । सम्पादितम् । अधीतमिति यावत् । अन्यत्र तु वर्तिता रज्जुः ॥ ( ४०८२-१ ) सू. शृतं पाके । ६ । १ । २७ । श्रातिश्रपयत्योः क्ते शृभावो निपात्यते ॥ ( ४०८२-२ ) वा. क्षीरहविषोः पाके ॥ शृतं क्षीरं स्वयमेव । विक्लिन्नं पक्वं वेत्यर्थः । क्षीरहविर्भ्यामन्यत्तु श्राणं, श्रपितं वा ॥ (४०८३) सू. वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः । ७ । २ । २७ । एते णिचि निष्ठान्ता वा निपात्यन्ते । पक्षे-दमितः । शमितः । पूरितः । दासितः । स्पाशितः । छादितः । ज्ञपितः ॥ ( ४०८४ ) सू. रुष्यमत्वरसंघुषास्वनाम् । ७ । २ । २८ । एभ्यो निष्ठाया इड्वा । रुषितः, रुष्टः । आन्तः, अमितः । तूर्णः, त्वरितः । अस्याऽऽदित्त्वे फलं मन्दम् । संघुष्टः, संघुषितः । आस्वान्तः, आस्वनितः ॥ ( ४०८५ ) सू. हृषेर्लोमसु । ७ । २ । २९ । हृषेर्निष्ठाया इड्वा स्यात् लोमसु विषये । हृष्टं, हृषितं लोम ॥ ( ४०८६ ) वा. विस्मितप्रतिघातयोश्च ॥ हृष्टो, हृषितो मैत्रः । विस्मितः प्रतिहतो वेत्यर्थः ।

---

गत इत्यत्र 'ल्यपि लघुपूर्वात् ५१५८' इत्ययादेशो न स्यात् । परिदृढस्यापत्यं पारिदृढी कन्येत्यत्र गुरूपोत्तमलक्षणः ष्यङ् स्यात् । अतोऽसिद्धत्वनिवृत्तये हलोपो निपात्यत-इति भाष्यादौ स्थितम् । अत एव 'ढ्रलोपे-२५८' इति सूत्रे अणः किं दृढ इति प्राचो ग्रन्थस्य प्रामादिकतामभिप्रेत्य तृढो वृढ इति प्रत्युदाहृतम् ॥ ( ४०७६ ) प्रभौ--। निपातनमिति । हलोपो प्रयोजनमपि द्राढिमा परिव्रढय्येत्यादिसिद्धिरिति प्राग्वदेव बोध्यम् ॥ ( ४०७७ ) कृच्छ्रगहनयोः-। कृच्छ्रं दुःखं, तत्कारणं च लक्षणया गृह्यते । कषतिर्हिंसार्थः ॥ कष्टो मोह इति । दुःखहेतुरित्यर्थः ॥ ( ४०७८ ) घुषिरवि-। घुषिरविशब्दार्थ इति भ्वादिः । 'घुषिर्विशब्दने' इति चुरादिर्द्वयोरपि सामान्येन ग्रहणम् ॥ ननु विशब्दनार्थाद् घुषेश्चुरादिणिचा भाव्यं ततश्च णिचा व्यवधानाद् घुषेः परा निष्ठा नास्तीति कथमिण्निषेधप्रसङ्गः, किंच विशब्दने त्विण्निषेधाभावाण्णिच्युपधागुणे 'निष्ठायां सेटि ४०७२' इति णिलोपे च घोषितं वाक्यमित्यपि स्यादिति चेत् । अत्राहुः-एवं तर्हि विशब्दनप्रतिषेध एव ज्ञापकः 'विशब्दनार्थस्य चुरादिणिजनित्यः' इति नास्त्युक्तदोष इति दिक् ॥ ( ४०८० ) अभेः-। विशेषेण दूरं विदूरं ततोऽन्यदविदूरं तस्य भाव आविदूर्यम् । ब्राह्मणादित्वात्ष्यञ् । अस्मादेव निर्देशात् 'न नञ्पूर्वात्तत्पुरुषात्-२४१४' इति निषेधो न भवति । सामीप्य इत्येव तु नोक्तं, नातिदूरस्यासंग्रहापत्तेस्तदेतद्ध्वनयन्व्याचष्टे-नातिदूरमासन्नं वेति । एवं च 'सामीप्ये' इति प्राचीनव्याख्यानमुपलक्षणतया नेयमित्याहुः ॥ ( ४०८१ ) णे-। अधीयत इति अध्ययनम् । 'कृत्यल्युटः-३७८६' इति बहुलवचनात्कर्मणि ल्युट् ॥ (४०८१) णिलुक् चेति । निपात्यत इति शेषः । लोपे हि प्रत्ययलक्षणेन गुणः स्यादिति भावः ॥ ( ४०८२-१ ) शृतम्-। श्रातिश्रपयत्योरिति । 'श्रा पाके' इत्यदादौ पठ्यते चुरादावपि घटादिष्वपि पठ्यते मित्त्वार्थम् । 'श्रै पाके' इति च भ्वादौ तस्यापि कृतात्त्वस्येह ग्रहणम् । निपातनसामर्थ्याल्लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इत्याहुः ॥ शृभावो निपात्यत इति । 'ष्यङः संप्रसारणम्-१४३९' इति प्रकृतमेव संप्रसारणं न विहितम् । श्रयतेरपि शृतमेव यथा स्यादिति ॥ ( ४०८२-२ ) अत्र 'विभाषाऽभ्यवपूर्वस्य ४०३४' इति विभाषाऽनुवर्तते, सा च व्यवस्थिता, तेन क्षीरहविषोरेव शृभावो नित्यश्च, अन्यत्र तु नैव भवतीत्याशयेनाह-क्षीरहविषोः पाक इति ॥ अन्यत्विति । शाकादि ॥ श्रपितमिति । णौ 'मितां ह्रस्वः ३४०२' ॥ ( ४०८३ ) वा दान्त-। 'शमु दमु उपशमे' 'पूरी आप्यायने' दिवादिश्चुरादिश्च, 'दसु उपक्षये' 'स्पश बाधने' 'छद अपवारणे' । ज्ञपिर्मित्, संज्ञायां 'मारणतोषणनिशामनेषु' इत्युक्तेः ॥ ( ४०८४ ) रुष्य-। 'रुष रोषे' 'तीषसह-३१२१' इति विकल्पितेट्कत्वात् 'यस्य विभाषा ४०३६' इति नित्ये निषेधे प्राप्ते विकल्पो विधीयते । 'अम गत्यादिषु,' 'अम रोगे' इति चौरादिकस्तु न गृह्यते 'एकाचः' इत्यधिकारादित्याहुः ॥ आन्त इति । 'अनुनासिकस्य-३५४५' इति दीर्घः ॥ तूर्ण इति । 'ञित्वरा संभ्रमे' 'ज्वरत्वर-३५२५' इत्यूठ् निष्ठानत्वम् । 'आदितश्च ४०४८' इति निषेधे प्राप्ते विकल्पः, एवं च आदित्त्वस्य फलमात्मनेपदमात्रम् । तच्च एधत्यादिवद् ह्रस्वानुबन्धत्वेऽपि सिध्यत्येवेत्याशयेनाह-फलं मन्दमिति । संघुष्ट इति । संपूर्वाद् घुषेर्विशब्दने इटि प्राप्ते विकल्पोऽयम् । अविशब्दनेऽपि संपूर्वस्य परत्वादयं विकल्प एव ॥ आस्वान्त इति । आङ्पूर्वस्य स्वनेर्मनोऽभिधानेऽप्ययमेव विकल्पः स्यात् । आस्वान्तं मनः । आस्वनितं मन इति ॥ ( ४०८५ ) हृषेः-। 'हृषु अलीके' उदित्त्वान्निष्ठायामनिट्, 'हृष तुष्टौ' सेट्, उभयोरपि ग्रहणमित्युभयत्र-

अन्यत्र तु हृषु अलीके उदित्वान्निष्ठायां नेट् । हृष तुष्टौ इट् ॥ ( ४०८७ ) 
(सू) अपचितश्च । ७ । २ । ३० । चायतेर्निपातोऽयं वा । अपचितः, अपचायितः ॥ ( ४०८८ ) (सू) प्यायः पी । ६ । १ । २८ । वा स्यान्निष्ठायाम् । व्यवस्थितविभाषेयम् । तेन स्वाङ्गे नित्यम् । पीनं मुखम् । अन्यत्र प्यानः पीनः स्वेदः । ( ४०८९ ) सोपसर्गस्य न । प्रप्यानः । आङ्पूर्वस्यान्धूधसोः स्यादेव । आपीनोऽन्धुः । आपीनमूधः ॥ ( ४०९० ) (सू) ह्रादो निष्ठायाम् । ६ । ४ । ९५ । ह्रस्वः स्यात् । प्रह्लन्नः ॥ ( ४०९१ ) (सू) द्यतिस्यतिमास्थामित्ति किति । ७ । ४ । ४० । एषामिकारोऽन्तादेशः स्यात्तादौ किति । इत्त्वदद्भावयोरपवादः । दितः । सितः । मा माङ् मेङ् । मितः । स्थितः ॥ (४०९२) (सू) शाच्छोरन्यतरस्याम् । ७ । ४ । ४१ । शितः, शातः । छितः, छातः । व्यवस्थितविभाषात्वाद्व्रतविषये श्यतेर्नित्यम् । संशितं व्रतम् । सम्यक् सम्पादितमित्यर्थः । संशितो ब्राह्मणः । व्रतविषयकयत्नवानित्यर्थः ॥ ( ४०९३ ) (सू) दधातेर्हिः ।७।४।४२। तादौ किति । अभिहितम् । निहितम् ॥ ( ४०९४ ) (सू) दो दद्घोः ।७।४।४६। घुसंज्ञकस्य दा-इत्यस्य दथ् स्यात्तादौ किति । चर्त्वम् । दत्तः । घोः किम् । दातः । तान्तो वाऽयमादेशः । न चैवं विदत्तमित्यादावुपसर्गस्य [1]दस्तीति दीर्घापत्तिः । तकारादौ तद्विधानात् । दान्तो वा धान्तो वा । न च दान्तत्वे निष्ठानत्वं, धान्तत्वे झषस्तथोरिति धत्वं शङ्क्यम्, सन्निपातपरिभाषाविरोधात् ॥ ( ४०९५ ) (सू) अच उपसर्गात्तः । ७ । ४ । ४७ । अजन्तादुपसर्गात्परस्य दा इत्यस्य घोरचस्तः स्यात्तादौ किति । चर्त्वम् । प्रत्तः । अवत्तः ॥

( ४०९६ ) अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ॥ सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥ १ ॥

---

विभाषेयम् ॥ ( ४०८८ ) पीनमिति । ओदित्त्वान्निष्ठानत्वम् ॥ प्यान इति । 'श्वीदितो निष्ठायाम् ४०५२' इतीड्भावे यलोपः ॥ ( ४०८९ ) नत्वे व्यवस्थान्तरमाह-सोपसर्गस्य नेत्यादि ॥ अन्धूः कूपः ॥ ( ४०९० ) प्रह्लन्न इति । 'ह्लादी सुखे' ईदित्त्वादिड्भावे 'रदाभ्याम्-४०२४' इति नत्वम् ॥ ( ४०९१ ) द्यतिस्यति-। 'दोऽवखण्डने', 'षोऽन्तकर्मणि', 'मा माङ् माने', 'मेङ् प्रणिदाने', 'ष्ठा गतिनिवृत्तौ' श्तिपा निर्देशो धातुविशेषणार्थः । न हि श्तिपं विना श्यन् सुलभः । यत्तु प्रसादकृतोक्तम्-श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः-दादत्तः, सासात इति । तन्न, यङ्लुकि हि इटा भाव्यं दादितः, सासित इति । तत्र 'ति किति' इति वचनान्नास्ति प्रसङ्गः । किञ्च, 'दो दद् घोः ४०९४' इति विधीयमान आदेशः अनेकाल्त्वात्सर्वस्येति निर्विवादः । तथा च हन्तेर्यङ्लुगन्तस्य वधादेशवत्साभ्यासस्य प्रवर्तेतेति, दादत्त इति त्वदुदाहृतरूपं कथमुक्तिसंभवं लभेतेत्याहुः ॥ ( ४०९२ ) शाच्छोः-। 'शो तनूकरणे', 'छो छेदने' ॥ ( ४०९३ ) दधातेर्हिः । श्तिपा निर्देशो धेटो निवृत्त्यर्थः । तीत्यनुवृत्तेर्यङ्लुकि न, दाधितः । अत्रापि प्रसादकृता श्तिपा निर्देशस्य यङ्लुङ्निवृत्त्यर्थत्वादाधीत इति 'घुमास्था--३२७४' इतीत्त्वमुदाहृतं, तत्पूर्ववदेव हेयम् ॥ ( ४०९४ ) दो दद् घोः ॥ इहादेशः थान्त एव, न तु तदधान्तः, जश्त्वे कृते संहितायास्तुल्यत्वेऽपि प्रक्रियाया दोषादिति प्राञ्चः । तथा चाहुः—'तान्ते दीर्घत्वाख्यो दोषो दान्ते दोषो निष्ठानत्वम् । धान्ते दोषो धत्वाख्यः स्यान्निर्दोषत्वात् थान्तो ग्राह्यः' इति तदनुसारेणाह—दथ् स्यादिति ॥ दात इति । 'दाप् लवने' 'अदाप्' इति निषेधान्न घुत्वम् ॥ इह सर्वे पक्षाः सापवादा इत्याह-तान्तो वेत्यादिना । दीर्घापत्तिरिति । विदत्तमित्यादावुपसर्गस्येत्यर्थः । अत्र द्वौ पक्षौ-दा इत्यस्य य आदेशः स तकारान्तः तकारादिर्वेति । तत्राद्ये पक्षेऽयं दोषो नान्त्ये, इत्याशयेनोक्तदोषं परिहरति-तकारादाविति ॥ निष्ठानत्वमिति । 'रदाभ्याम्-४०२४' इत्यनेन ॥ सन्निपातेति । तादिं निमित्तीकृत्य विहितो यो दान्ताद्यादेशः स तकारविघातकनत्वादिविधेर्निमित्तं न भवतीति भावः ॥ ( ४०९५ ) अच उपसर्गात्तः । तकारादकार उच्चारणार्थः ॥ अच इत्यावर्तते तत्रैकं पञ्चम्यन्तमुपसर्गं विशिनष्टि, अपरं षष्ठ्यन्तं स्थानलाभायेति व्याचष्टे-अजन्तादित्यादिना । यद्वा अच इत्यनावृत्तं पञ्चम्यन्तमेवास्तु किन्तु द्वितकारकोऽयमादेशस्तेनानेकाल्त्वात्सर्वस्य घोर्भविष्यति एकतकारो हि 'अलोऽन्त्यस्य ६६' इति बाधित्वा 'आदेः परस्य ६८' इत्यादेरेव स्यादच इति पञ्चमीनिर्देशात् । यद्येवम् 'अपो भि ५९२' इत्युत्तरसूत्रेऽपि द्वितकार एवेति सर्वादेशः स्यादिति चेत् । अत्राहुः-पञ्चम्यन्तस्याच इत्यनुवृत्तेरचः परस्य पकारस्यैव भविष्यति तत्रान्तस्य संयोगान्तलोपे पूर्वस्य जश्त्वेन सिद्धमिष्टमिति ॥ ( ४०९६ ) अवदत्तमित्यादि । आदिकर्मणीत्येतत्प्रदत्तमित्यस्यैव विशेषणं नेतरेषामसंभवात् । दातुं प्रकान्तमारब्धमिति प्रदत्तमित्यस्यैवार्थः ॥ इष्यते इति । तादेशबाधनार्थं निपातनमिष्यत इत्यर्थः । अन्ये तु अवादीनामुपसर्गप्रतिरूपकत्वाश्रयणे ह्यवदत्तं, विदत्तमित्यादि सिद्ध्यति उपसर्गत्वाश्रयणे तु पूर्वोक्तमवत्तमित्यादीति नापूर्वमिदं वचनमित्याहुः ॥

---

१ इह जश्त्वे कृते निर्देशस्य तान्तादेशपक्षेऽप्युपपत्तिरित्याशयेन आह—तान्तो वेति ॥ २ 'दस्ति' इति सूत्रस्य दाधातोर्यस्तान्तादेशस्तस्मिन् सति उपसर्गस्य दीर्घ इत्यर्थाभिप्रायेण शङ्कते-न चैवमिति । एवम्-आदेशस्य तान्तत्वे दाधातोर्यस्तकारादेशस्तस्मिन्नित्यर्थे 'यस्मिन् विधिः-' इति परिभाषया तदादिविधिः स्यात्, तथा च तकारादावुत्तरपदे दीर्घ इत्यर्थाभिप्रायेण समाधत्ते-तकारादाविति ॥

चशब्दाद्यथाप्राप्तम् ॥ (४०९७) (सू.) दस्ति । ६ । ३ । १२४ । इगन्तोपसर्गस्य दीर्घः स्यादादेशो यस्तकारस्तदादावुत्तरपदे । [१९६] खरि चेति चर्त्वमाश्रयात्सिद्धम् । नीत्तम् । [ सूत्तम् ] [illegible] घुमास्थेतीत्त्वम् । धेट् । धीतम् । गीतम् । पीतम् । [illegible] जनसनेत्यात्त्वम् । जातम् । सातम् । खातम् ॥ (४०९८) (सू.) अदो जग्धिर्ल्यप्ति किति । २ । ४ । ३६ । ल्यबिति लुप्तसप्तमीकम् । अदो जग्धिः स्यात् ल्यपि तादौ किति च । इकार उच्चारणार्थः । धत्वम् । [१६] झरो झरि । जग्धः ॥ आदिकर्मणि [४०६७] क्तः कर्तरि च । प्रकृतः कटं सः । प्रकृतः कटस्तेन । [illegible] निष्ठायामण्यदर्थ इति दीर्घः । क्षियो दीर्घादिति नत्वम् । प्रक्षीणः सः ॥ (४०९९) (सू.) वाऽऽक्रोशदैन्ययोः । ६ । ४ । ६१ । क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च । क्षीणायुर्भव । क्षितायुर्वा । क्षीणोऽयं तपस्वी । क्षितो वा ॥ (४१००) (सू.) निनदीभ्यां स्नातेः कौशले । ८ । ३ । ८९ । आभ्यां स्नातेः सस्य षः स्यात्कौशले गम्ये । निष्णातः शास्त्रेषु । नद्यां स्नातीति नदीष्णः । [३८८] सुपीति कः ॥ (४१०१) (सू.) सूत्रं प्रतिष्णातम् । ८ । ३ । ९० । प्रतेः स्नातेः षत्वम् । प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः । अन्यत्र प्रतिस्नातम् ॥ (४१०२) (सू.) कपिष्ठलो गोत्रे । ८ । ३ । ९१ । कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः । गोत्रे किम् । कपीनां स्थलं कपिस्थलम् ॥ (४१०३) (सू.) विकुशमिपरिभ्यः स्थलम् । ८ । ३ । ९६ । एभ्यः स्थलस्य सस्य षः स्यात् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ॥ (४१०४) (सू.) गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च । ३ । ४ । ७२ । एभ्यः कर्तरि क्तः स्यात् । भावकर्मणोश्च । गङ्गां गतः । गङ्गां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः ॥ शेषमधिशयितः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिदिनमुपोषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे, प्राप्ता गङ्गा तेनेत्यादि ॥ (४१०५) (सू.) क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः । ३ । ४ । ७६ । एभ्योऽधिकरणे क्तः स्यात् । चाद्यथाप्राप्तम् । ध्रौव्यं स्थैर्यम् ॥

मुकुन्दस्यासितमिदमिदं यातं रमापतेः ॥ भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥ १ ॥

पक्षे आसेरकर्मकत्वात्कर्तरि भावे च । आसितो मुकुन्दः । आसितं तेन । गत्यर्थेभ्यः कर्तरि कर्मणि च । रमापतिरिदं यातः । तेनेदं यातम् । भुजेः कर्मणि । अनन्तेनेदं भुक्तम् । कथं भुक्ता ब्राह्मणा इति । भुक्तमस्ति एषामिति मत्वर्थीयोऽच् ॥ वर्तमाने इत्यधिकृत्य—॥ (४१०६) (सू.) ञीतः क्तः । ३ । २ । १८७ । ञिक्ष्विदा । क्ष्विण्णः । ञिइन्धी । इद्धः ॥ (४१०७) (सू.) मतिबुद्धिपूजार्थेभ्यश्च । ३ । २ । १८८ । मतिरिहेच्छा, बुद्धेः पृथगुपादानात् । राज्ञां मतः । इष्टः । तैरिष्यमाण इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । शीलितो,

---

(४०९७) दस्ति ॥ 'इकः काशे १४९८' इत्यत इक इति 'उपसर्गस्य घञि—१०९६' इत्यत उपसर्गस्येति 'ढ्रलोपे—२५८' इत्यतो दीर्घ इति चानुवर्त्तते 'अलुगुत्तरपदे १३७४' इत्यतोऽनुवृत्तस्योत्तरपदे इत्यस्य तीति विशेषणं 'यस्मिन्विधिः—' इति तदादिविधिस्तदेतत्सकलमभिप्रेत्य व्याचष्टे—**इगन्तोपसर्गस्येत्यादिना** ॥ ननु चर्त्वस्यासिद्धत्वादादेशतकारो नास्तीत्यत आह—**आश्रयात्सिद्धमिति** । 'अतो रोः—२४३' इत्युत्वं प्रति रुत्ववदिति भावः ॥ **धीतमिति** ॥ 'दधातेर्हिः ४०९३' इत्यत्र लुग्विकरणस्य निर्देशात् 'धेट् पाने' इति भ्वादेर्हिर्न भवति, नापि दत् 'दो दद् घोः ४०९४' इति 'दः' इत्युपादानादिति भावः ॥ (४०९८) **उच्चारणार्थ इति** । इदित्त्वे तु नुम् स्यादिति भावः ॥ **धत्वमिति** । 'झषस्तथोः—३०४७' इत्यनेन ॥ **झरो झरीति** । अनेन पाक्षिको धलोप इत्यर्थः ॥ [ ४०६७ ] इदानीं क्तार्थान् प्रपञ्चयति—**आदिकर्मणि**—॥ व्याख्यातम् ॥ **प्रकृतः कटमिति** । कटं कर्तुमारब्धवानित्यर्थः । प्रशब्द आदिकर्मद्योतनार्थः । क्तेनोक्तत्वात्कर्तरि प्रथमा, कर्मण्यनुक्तत्वाद् द्वितीया ॥ **प्रकृतः कटस्तेनेति** । कर्मणि प्रयोगे तु विपर्ययः ॥ (४१००) **नदीष्ण इति** । नद्यां स्नातो नदीस्नाने कुशल इत्यर्थः ॥ (४१०४) **गत इति** । 'अनुदात्तोपदेश—३२३४' इति मलोपः ॥ **प्राप्त इति** । प्रपूर्वः 'आप्लृ व्याप्तौ' । व्याप्तिरपीह सूत्रे गतिशब्देन विवक्षितेति भावः ॥ **ग्लान इति** । 'ग्लै हर्षक्षये' अकर्मकोऽयम् । 'आदेच:—३१६३' इत्यात्त्वे 'संयोगादेरात:—४०२५' इति नत्वम् ॥ **शेषमिति** । 'अधिशीङ्स्थासां कर्म ७९१' इति कर्मत्वम् ॥ **अधिष्ठित इति** । 'द्यतिस्यति—४०९१' इति इत्त्वम् ॥ **उपोषित इति** । 'वसतिक्षुधोः—४०५९' इतीट् , 'शासिवसि—३२१४' इति षत्वम् ॥ **अनुजीर्ण इति** । 'जॄष् वयोहानौ' 'ॠत इद्धातोः ३१८३' 'हलि च ४८१' इति दीर्घः, नत्वं, णत्वम् ॥ (४१०५) **मुकुन्दस्येति** । आस्यतेऽस्मिन्नित्यासितमासनमित्यर्थः । यायतेऽस्मिन्निति यातं मार्गः । भुज्यतेऽस्मिन्निति भुक्तं भोजनमित्यर्थः । त्रिष्वपि 'अधिकरणवाचिनश्च ९१४' इति कर्त्तरि षष्ठी ॥ (४१०६) **क्ष्विण्ण इति** । 'आदितश्च ४०४८' इति नेट् ॥ **इद्ध इति** । 'श्वीदित:—४०५२' इति नेट् ॥ नलोपः ॥ (४१०७) **राज्ञामिति** । 'क्तस्य च वर्त्तमाने ९१३' इति षष्ठी ॥ **इष्ट इति** ।

---

१ 'सूत्तम्' इति लेखकप्रमादेन पतितः "तत्र—सुदत्तम् 'अच उपसर्गाद्—' इति तत्वं मा भूदिति" इति भाष्येण 'सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु' इति वार्तिकेन च "गतिश्च" इति सूत्रस्थेन विरोधात् ।

२ कपिष्ठल इति । गोत्रेऽभिधित्सिते कपिष्ठल इति निपात्यते । यः कपिष्ठलशब्दो गोत्रप्रत्ययप्रकृतित्वेन दृष्ट इति यावत् ॥

रक्षितः, क्षान्तः, आक्रुष्टो, जुष्ट इत्यादि ॥ ( ४१०८ ) (सू.) नपुंसके भावे क्तः। ३ । ३ । ११४ । क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात्। जल्पितम्। शयितम्। हसितम् ॥ (४१०९) (सू.) सुयजोर्ङ्वनिप् ।३।२।१०३। सुनोतेर्यजेश्च ङ्वनिप् स्याद्भूते। सुत्वा। सुत्वानौ। यज्वा। यज्वानौ ॥ ( ४११० ) (सू.) जीर्यतेरतृन् ।३।२।१०४। भूत इत्येव। जरन्। जरन्तौ। जरन्तः। वाऽसरूपन्यायेन निष्ठाऽपि। जीर्णो, जीर्णवान् ॥ (४१११) (सू.) छन्दसि लिट् । ३ । २। १०५। ( ४११२ ) (सू.) लिटः कानज्वा। ३ । २ । १०६ ॥ ( ४११३ ) (सू.) क्वसुश्च ।३।२।१०७। इह भूतसामान्ये छन्दसि लिट् तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम्। कवयस्तु बहुलं प्रयुञ्जते। तं तस्थिवांसं नगरोपकण्ठे। श्रेयांसि सर्वाण्यधिजग्मुषस्त इत्यादि ॥ ( ४११४ ) (सू.) वस्वेकाजाद्घसाम् । ७। २ । ६७ । कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् नान्येषाम्। एकाच्। आदिवान् । आरिवान्। आत्। ददिवान्। जक्षिवान्। एषां किम्। बभूवान् ॥ ( ४११५ ) (सू.) भाषायां सदवसश्रुवः। ३ । ४ । १०८ । सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्। तस्य च नित्यं क्वसुः। निषेदुषीमासनबन्धधीरः। अध्यूषुषस्तामभवज्जनस्य। शुश्रुवान् ॥ ( ४११६ ) (सू.) उपेयिवाननाश्वाननूचानश्च। ३ । २ । १०९ । एते निपात्यन्ते। उपपूर्वादिणो भाषायामपि भूतमात्रे लिड्वा तस्य नित्यं क्वसुः। इट्। उपेयिवान्। उपेयुषः स्वामपि मूर्तिमग्र्याम्। उपेयुषी।

---

'तीषसह-३१२१' इति वेट्कत्वाद् 'यस्य विभाषा ४०३६' इति नेट् ॥ **शीलित इत्यादि।** 'शील समाधौ' 'रक्ष पालने' 'क्षमूष् सहने' 'क्रुश आह्वाने' 'जुषी प्रीतिसेवनयोः' ॥ (४१०९) **सुयजोर्ङ्वनिप्। सुनोतेरिति।** 'षुञ् अभिषवे' यद्यपीह 'षु गतौ' 'षु प्रसवैश्वर्ययोः' इति निरनुबन्धकयोरेव ग्रहणं न्याय्यं तथाप्यनभिधानादुभयपदिना साहचर्याद्वा तयोर्ग्रहणं न भवतीति भावः। ङकारः सुनोतेर्गुणप्रतिषेधार्थः। पकारस्तु स्वरार्थस्तुगर्थश्च ॥ **यज्वेत्यादि।** क्वनिपि कृते त्वत्र 'वचिस्वपि-३२१३' इति संप्रसारणं स्यादिति ङ्वनिबुक्तः ॥ ( ४११० ) **अतृनिति।** नकारः स्वरार्थः। ऋ इत् ॥ **जरन्निति।** ऋकारस्य गुणे रपरोऽकारः 'उगिदचाम्-३६१' इति नुम्। संयोगान्तलोपस्यासिद्धत्वान्न दीर्घः ॥ ( ४१११ ) **छन्दसि लिडिति।** ( ४११२-४११३ ) सूत्रस्यार्थमाह-**भूतसामान्ये इति।** न च 'छन्दसि लुङ्लङ्लिटः-५२५४' इत्यनेन गतार्थता शङ्क्या। धातुसंबन्धाधिकारे हि स विधिः। इदं तु धातुसंबन्धं विनापि भवतीति विशेषात्। अत्र व्याचख्युः—कानचः कित्करणं तिस्तिराण इत्यत्र 'ऋच्छत्यृताम् ३१७६' इति गुणस्य निषेधार्थं सति प्रतिषेधविषये आरभ्यते। 'चक्राणः' इत्यत्र तु 'असंयोगाल्लिट् कित् ३००२' इत्येव सिद्धं कित्त्वमिति ॥ **त्रिमुनिमतमिति।** सूत्रकृता 'छन्दसि' इति प्रक्रान्तत्वादुत्तरसूत्रे भाषाग्रहणाच्च, भाष्यवार्तिकयोरपि क्वसुकानचोः 'छन्दस्युभयथा ५२७०' इति वचनात्सार्वधातुकत्वेन 'सार्वधातुकमपित् २९९३' इति ङित्वादेवाजिवानित्यादौ नलोपादीनां कित्कार्याणामन्यथासिद्धिमाशङ्क्य तितीर्वान् तिस्तिराण इत्यादौ 'ऋच्छत्यृताम् ३१७६' इति प्राप्तस्य गुणस्य बाधनार्थं कित्करणमिति सिद्धान्तितत्वात्। अत एव कित्करणसामर्थ्याद्भाषायामपि क्वसुकानचौ स्त इति केषाञ्चिदुत्प्रेक्षा नादर्त्तव्येति हरदत्तमाधवादिग्रन्थे स्पष्टमिति भावः ॥ **कवयस्त्विति।** गतानुगतिकतयेति भावः ॥ (४११४) **वस्वे-।** 'वसु' इत्यविभक्तिको निर्देशस्तथा च व्याख्यास्यति-वसोरिति ॥ नित्यत्वाद् द्वित्वे कृते एकाच्त्वमेव नेति कथमिट् स्यादित्यत आह-**कृतद्विर्वचनानामेकाचामिति।** कृतेऽपि द्वित्वे एकाच एव ये अवशिष्यन्ते तेषामित्यर्थः ॥ 'नेड्वशि कृति ३९८१' इति निषेधं बाधित्वा क्रादिनियमात्सर्वत्र प्राप्तस्येटो नियमोऽयमित्याह-**नान्येषामिति ॥ आदिवानिति।** 'अद भक्षणे' द्वित्वं हलःदिशेषाभ्यासदीर्घसवर्णदीर्घेषु कृतेषु कृतद्वित्वेऽप्ययमेकाजेवेतीड् भवति ॥ **आरिवानिति।** 'ऋ गतौ' 'ऋच्छत्यृताम् ३१७६' इति गुणे कृते द्वित्वादिषु पूर्ववत्कृतेष्वयमप्येकाच् ॥ **ददिवानिति।** 'डुदाञ् दाने' कृते द्वित्वे नायमेकाच् इणिनिमित्तश्चातो लोपो वा सति तस्मिन्भवतीत्यनेकार्थमाद्ग्रहणम् ॥ **जक्षिवानिति।** 'लिट्यन्यतरस्याम् ३२३०' इत्यदेर्घस्लादेशः। द्वित्वे कृते नायमेकाजिति घसिग्रहणम्। अत्र व्याचख्युः-द्वित्वात्पूर्वं परत्वाद् 'घसिभसोर्हलि च ५४०२' इत्युपधालोपः स्यात्तस्मिंश्च कृतेऽनेकाच्त्वात् द्वित्वमेव न स्यात्। न चास्य द्वित्वे कर्तव्ये 'द्विर्वचनेऽचि ३००३ ' इत्यनेन स्थानिवद्भावो निषेधो वा शङ्क्यः, द्वित्वनिमित्तस्याचोऽभावात्। ततश्च नायं कृतद्विर्वचन एकाच् भवतीति घसिग्रहणम्। तत्सामर्थ्यात्तु परत्वादुपधालोपमिडागमो बाधते। कृते त्विडागमे 'गमहन-३१५६' इत्युपधालोपस्तस्य चाजिनिमित्तत्वेन स्थानिवत्त्वाद् द्वित्वम्। यद्वा-'द्विर्वचनेऽचि ३००३ ' इति निषेधपक्षे तूपधालोपात्प्रागेव द्वित्वं, पश्चादुपधालोपः 'शासिवसिघसीनां च ३२१४' इति षत्वं, चर्त्वं, क्षः 'अभ्यासे चर्च २९३६ ' इत्यभ्यासघकारस्य जश्त्वमिति ॥ (४११५) **निषेदुषीमिति।** 'षद्लृ विशरणादौ'। 'लिटि धातोः-२९३१' इति द्वित्वे 'अत एकहल्मध्ये-३०२४' इत्येत्वाभ्यासलोपौ 'उगितश्च ६१९ ' इति ङीपि 'वसोः-५८२' इति संप्रसारणे वलादित्वाभावान्नेट्। 'सदिरप्रतेः-३०३८' इति षत्वम्। पुंसि तु निषेदिवान् ॥ **अध्यूषुष इति।** 'वस निवासे' अधिपूर्वः। 'वचिस्वपि-३२१३' इति संप्रसारणं द्वित्वहलादिशेषसवर्णदीर्घाः। ङसि भत्वात्संप्रसारणम्। प्रथमैकवचने तु अध्यूषिवान् ॥ (४११६) **उपेयिवानना-इडिति।** वलादिलक्षण एवेट् 'नेड्वशि कृति-३९८१ ' इति निषिद्धः क्रादिनियमात्पुनः प्राप्तः 'वस्वेकाजाद्घसाम् ४११४ ' इति सूत्रेण 'कृतद्वित्वानामेकाचामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषाम्' इति नियच्छता प्रतिषिद्धो नित्यत्वाद् द्वित्वे कृते-

उपेत्यविवक्षितम् । ईयिवान् । समीयिवान् । नञ्पूर्वादश्नातेः क्वसुरिडभावश्च । धृतजयधृतेरनाशुष इति भारविः ॥ अनुपूर्वाद्वचेः कर्तरि कानच् । वेदस्यानुवचनं कृतवाननूचानः ॥ ( ४११७ ) सू० विभाषा गमहनविदविशाम् । ३ । २ । ६८ । एभ्यो वसोरिड्वा । जग्मिवान् । जगन्वान्, जघ्निवान्, जघन्वान् । विविदिवान्, विविद्वान् । विविशिवान्, विविश्वान् । विशिना साहचर्याद्विन्दतेर्ग्रहणम् । वेत्तेस्तु विविद्वान् । नेड्वशि [३१]कृतीतीण्निषेधः ॥ ( ४११८ ) वा० दृशेश्च ॥ ददृशिवान्, ददृश्वान् ॥ ( ४११९ ) सू० लटः शतृशानचावप्रथमासमानाधिकरणे । ३ । २ । १२४ । अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः । शबादि । पचन्तं चैत्रं पश्य ॥ (४१२०) सू० आने मुक् । ७ । २ । ८२ । अङ्गस्यातो मुगागमः स्यादाने परे । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम् । तेन प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् ब्राह्मणः ॥ ( ४१२१ ) वा० माङ्याक्रोश इति वाच्यम् ॥ मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति । [२१७४]माङि लुङिति प्राप्ते एतद्वचनसामर्थ्याल्लट् ॥ (४१२२) सू० संबोधने च । ३ । २ । १२५ । हे पचन् । हे पचमान ॥ सू० (४१२३) सू० लक्षणहेत्वोः क्रियायाः । ३ । २ । १२६ । क्रियायाः परिचायके हेतौ चार्थे वर्तमानाद्धातोर्लटः शतृशानचौ स्तः । शयाना[1] भुञ्जते यवनाः । अर्जयन्वसति । हरिं पश्यन्मुच्यते । हेतुः फलं कारणं च ॥ [ ३७७६ ] सू० कृत्यचः । ८ । ४ । २९ । प्रपीयमाणः सोमः ॥ (४१२४) सू० ईदासः । ७ । २ । ८३ । आसः परस्यानस्य ईत्स्यात् । आदेः परस्य । आसीनः ॥ (४१२५) सू० विदेः शतुर्वसुः । ७ । १ । ३ । ३६ । वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात् । विदन् । विद्वान् । विदुषी ॥ (४१२६) सू० तौ सत् । ३ । २ । १२७ । तौ शतृशानचौ सत्संज्ञौ स्तः ॥ ( ४१२७ ) सू० लृटः सद्वा । ३ । ३ । १४ । व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं

---

ऽनेकाच्त्वात् । न च सवर्णदीर्घेणैकाच्त्वम्, 'दीर्घ इणः किति ३२६७' इत्यभ्यासदीर्घे कृते तत्सामर्थ्यात्सवर्णदीर्घाभाव इति पक्षाश्रयणात् । स एव वलादिलक्षण इट् इह प्रतिश्रूयते नापूर्वो विधीयते, तेन संप्रसारणविषये न भवति, अत एवोदाहरति-**उपेयुष इति** । सति त्विटि तस्य यणादेशे उपेय्युष इति स्यादिति भावः ॥ **अविवक्षितमिति** । व्याख्यानमेवात्र शरणम् ॥ **ईयिवानिति** । इणो द्वित्वे सवर्णदीर्घं बाधित्वा आन्तरत्वात् 'इणो यण् भवति, वसोरिडागमे हि परत्राजादिप्रत्ययस्य सत्त्वात् ॥ **वचेरिति** । 'वच परिभाषणे' इत्यस्माद् ब्रुवो वचेर्वा कर्त्तरि, न तु भावकर्मणोः ॥ एतच्च निपातनाल्लब्धम् ॥ **( ४११७ ) जग्मिवानित्यादि** । इट्पक्षे 'गमहन-३१५६' इत्युपधालोपः ॥ **( ४११९ ) लटः शतृ-। सामानाधिकरण्ये सतीति** । यद्यप्यादेशरहितस्य लटः प्रयोगाभावात्सामानाधिकरण्यं दुर्लभं, तथापि शतृशानचोस्तद् दृष्ट्वा स्थानिन्यपि सामानाधिकरण्यं कल्पते ॥ **शबादीति** । शित्त्वेन सार्वधातुकत्वादिति भावः ॥ **पचन्तमिति** । शतुरुगित्त्वान्नुम् । विक्लित्त्यनुकूलवर्त्तमानव्यापाराश्रयमित्यर्थः ॥ **( ४१२० ) आने मुक्** । 'अतो येयः २९६७' इति पूर्वसूत्रादनुवृत्तं पञ्चम्यन्तमप्यत इति पदं षष्ठ्या विपरिणम्यते आन इति सप्तमीबलात् । न चात इति पञ्चमीबलादान इति सप्तम्यन्तं पदं षष्ठ्या विपरिणम्यतामिति शङ्क्यम्, पञ्चम्याः पूर्वसूत्रे चरितार्थत्वात्सप्तम्याश्चाचरितार्थत्वात्तदेतदाह-**अङ्गस्यात इति** ॥ प्राचा त्वदन्ताङ्गस्येति व्याख्यातम् । तदयुक्तम्, पचमान इत्यादौ '-अदुपदेशाल्लसार्वधातुकमनुदात्तम् ५६९५' इति शानचः स्वरस्यासिद्धिप्रसङ्गात् ॥ अदन्ताङ्गस्येति पक्षे हि अङ्गभक्तो मुक् । स चाङ्गमेव न व्यवदध्यात्तदवयवमकारं तु व्यवदध्यादेव । अकारमात्रभक्तत्वे तु तदवयवत्वान्नास्ति व्यवधानमित्यदोषः ॥ ननु 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषया मुकोऽविद्यमानत्वेन व्यवधानाभावात्स्यादेवानुदात्तत्वमिति चेत् । अत्राहुः-'हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवन्नान्यत्र' इत्याकरारूढम् । न चात्र हलः स्वरप्राप्तिरस्तीति प्रकृते परिभाषेयं नोपयुज्यते । अन्यथा मरुत्वानित्यादावपि 'ह्रस्वनुड्भ्यां मतुप् ५६८६' इति मतुप उदात्तत्वं स्यादिति दिक् ॥ **लडिति** । यद्यपि प्रथमान्तं प्रकृतं, तथापि 'धातोः' इत्यधिकारात्पञ्चम्यन्तात्परं प्रथमान्तं षष्ठ्या विपरिणम्यत इति भावः । न च 'वर्तमाने लट् २९०५' इत्यत्रैवोक्तरीत्या विपरिणामोऽस्त्विति शङ्क्यम्, प्रत्ययविधौ पञ्चम्याः प्रकल्पकत्वं नास्तीति 'गुप्तिज्किद्भ्यः सन्' इत्यत्र भाष्यकारैः स्वीकृतत्वात् ॥ **प्रथमासामानाधिकरण्येऽपीति** । उपलक्षणमिदम् । अप्रथमान्तेन सामानाधिकरण्याभावेऽपीत्यर्थः । तेन कुर्वतोऽपत्यं कौर्वतः, कुर्वतो भक्तिः कुर्वद्भक्तिः, कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोरपि सिध्यति । अन्यथा कुर्वतोऽपत्यमित्यादौ तद्धितसमासौ न स्याताम् ॥ **( ४१२३ ) लक्षणहेत्वोः**—। लक्ष्यतेऽनेनेति लक्षणं परिचायकम् ॥ **शयाना इति** । शीङ आत्मनेपदित्वात्परस्य लटः शानच् । अत्र शयनं लक्षणं चिह्नं यवनकर्त्तृकभोजनस्य, न तु फलं, नापि कारणमिति हेत्वपेक्षया लक्षणस्य पृथङ् निर्देशः ॥ **अर्जयन्निति** । 'अर्ज प्रतियत्ने' चुरादिः । अर्जनार्थो वास इत्यर्थः ॥ **हरिमिति** । हरिदर्शनं मुक्तौ कारणमित्यर्थः ॥ ( ४१२५ ) **विदेः**—। स्थानिवत्त्वादेव सिद्धे सोरुगित्करणं 'वसोः सम्प्रसारणम् ५८२' इत्यत्र क्वसोरपि

---

[1] **शयाना इति** । परिचायकशयनकर्तृयवनाभिन्नानेककर्तृका वर्तमाना भुजिक्रियेति बोधः ॥

पश्य । करिष्यतोऽपत्यं कारिष्यतः । करिष्यद्भक्तिः । हे करिष्यन् । अर्जयिष्यन्वसति । प्रथमासमानाधिकरणेऽपि क्वचित् । करिष्यतीति करिष्यन् ॥ ( ४१२८ ) (सू) पूङ्यजोः शानन् । ३ । २ । १२८ । वर्तमाने । पवमानः । यजमानः ॥ ( ४१२९ ) (सू) ताच्छील्यवयोवचनशक्तिषु चानश् । ३ । २ । १२९ । एषु द्योत्येषु कर्तरि चानश् । भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रुं निघ्नानः ॥ ( ४१३० ) (सू) इङ्धार्योः शत्रकृच्छ्रिणि । ३ । २ । १३० । आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि । अधीयन् । धारयन् । अकृच्छ्रिणि किम् । कृच्छ्रेणाधीते । धारयति । ( ४१३१ ) (सू) द्विषोऽमित्रे । ३ । २ । १३१ । द्विषन् शत्रुः ॥ ( ४१३२ ) (सू) सुञो यज्ञसंयोगे । ३ । २ । १३२ । सर्वे सुन्वन्तः सर्वे यजमानाः सत्रिणः ॥ ( ४१३३ ) (सू) अर्हः प्रशंसायाम् । ३ । २ । १३३ । अर्हन् ॥ ( ४१३४ ) (सू) आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । ३ । २ । १३४ । क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु बोध्याः ( ४१३५ ) (सू) तृन् । ३ । २ । १३५ । कर्ता कटम् ॥ ( ४१३६ ) (सू) अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । ३ । २ । १३६ । अलङ्करिष्णुः । ( निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः ) ॥ ( ४१३७ ) (सू) णेश्छन्दसि । ३ । २ । १३७ । वीरुधः पारयिष्णवः ॥ ( ४१३८ ) (सू) भुवश्च । ३ । २ । १३८ । छन्दसीत्येव । भविष्णुः । कथं तर्हि जगत्प्रभोरप्रभविष्णु वैष्णवमिति । निरंकुशाः कवयः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुरिति वृत्तिः । एवं क्षयिष्णुः । नैतद्भाष्ये दृष्टम् ॥ ( ४१३९ ) (सू) ग्लाजिस्थश्च ग्स्नुः

---

सामान्यग्रहणार्थम् । तत्सामर्थ्याच्च ‘ एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ’ इत्येतदपि न प्रवर्तते ॥ ( ४१२८ ) **पूङ्यजोः**—। शानन: शकारः सार्वधातुकत्वार्थः, नकारः स्वरार्थः । ण्वुलादिवत्स्वतन्त्रोऽयं न तु शत्रादिवल्लादेशः । तथा हि सति वेति वाच्यं स्यात्पवते यजते इति तिङोऽपि यथा स्युरिति । न च वाऽसरूपन्यायेन निर्वाहः, ‘ लादेशेषु वाऽसरूपविधिर्नास्ति ’ इत्याकरे स्थितत्वात् । किञ्च, लादेशत्वे ‘ लः कर्मणि च—२९०६’ इति भावकर्मणोर्विहितं स्यादिति भावकर्मणोरपि प्रयुज्येत, इष्यते तु कर्त्तर्य्येव, एवं चानशः, ‘इङ्धार्य्योः—४१३०’ इति शतुश्च स्वातन्त्र्यं बोध्यम् ॥ अत्र केचित्—शाननो लादेशत्वे लसार्वधातुकानुदात्तत्वं स्यादित्याहुः । तच्चिन्त्यम्, परत्वान्नित्स्वरप्रवृत्त्या पवमान इत्यादेराद्युदात्तत्वे शाननोऽनुदात्तत्वस्येष्टत्वात् ॥ नन्वेषां लादेशत्वानङ्गीकारे सोमं पवमान इत्यादौ कर्मणि षष्ठी स्यादिति चेत् । मैवम्, ‘ न लोक—६१५ ’ इति सूत्रे तृन्निति प्रत्याहारनिर्देश इत्युक्तत्वात् ॥ ( ४१२९ ) **ताच्छील्य**—। वचनग्रहणं स्पष्टार्थम् । चानशो लादेशत्वाभावेनात्मनेपदत्वाभावात्परस्मैपदिभ्योऽपि विधानमिति ध्वनयन्नुदाहरति—**निघ्नान इति** । ‘ गमहन—२१५६ ’ इत्युपधालोपः ॥ ( ४१३० ) **इङ्धार्योः**—। इङ आत्मनेपदित्वात् शता न सिध्यति धारयतेरपि कर्तृगामिनि क्रियाफले न सिध्यति लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्ययमारम्भः ॥ ( ४१३२ ) **सुञो यज्ञसंयोगे** । सुनोतेः शतृप्रत्ययः स्यात् यज्ञेन संयुज्यमाने वृत्तिश्चेत् । नन्विह ‘ सुञो यज्ञे ’ इत्येवास्तु, यज्ञविषयकश्चेत्सुनोत्यर्थ इति व्याख्यायां सुरां सुनोतीत्यादेर्व्यावर्तयितुं शक्यत्वात् । अत्राहुः—संयोगग्रहणं प्रधानकर्तृसंप्रत्ययार्थं, तेन यजमानादन्यत्र न भवतीति । एवं चाप्रधाने कर्त्तरि ‘ लटः शतृशानचौ—४११९ ’ इत्यनेनापि न भवति, संयोगग्रहणसामर्थ्यादिति हरदत्तः । यः सुन्वन्तमवतीत्यादीनामेकवचनान्तानां यजमानपरत्वसंभवेऽपि बहुवचनान्तानां तु न संभवति एकस्मिन्योगे एकस्यैव यजमानत्वादित्याशङ्क्य योगविशेषे तु संभवतीति दर्शयितुमुदाहरति—**सर्वे सुन्वन्त इत्यादि** । सत्रयोगे हि बहवो यजमानास्त एव ऋत्विजां कर्म सोमाभिषवणं कुर्वन्तीति सुन्वन्त इत्यादिबहुवचनान्तस्यापि यजमानपरत्वं संभवतीति भावः ॥ ( ४१३३ ) **अर्हः**—। प्रशंसायां किम्, अर्हति चौरो वधम् ॥ ( ४१३४ ) **आ क्वेः**—। शीलादीनां त्रयाणां विशेषणं समर्थयितुं निर्दिष्टैस्त्रिभिस्तच्छब्दैः प्रकृतिभूतधात्वर्थो निर्दिश्यते ॥ **क्विपमभिव्याप्येति** । ‘ भ्राजभासधुर्विद्युतोर्जि—४१८३ ’ इति वक्ष्यमाणमिति शेषः ॥ ( ४१३५ ) **कर्ता कटमिति** । ‘ न लोकाव्यय—६१५ ’ इति षष्ठीनिषेधः ॥ ( ४१३६ ) **अलंकृञ्**—। कृञिति ‘ डुकृञ् करणे ’ इत्यस्यैव, न तु ‘ कृञ् हिंसायाम् ’ इत्यस्य, ‘ प्रसिद्धाप्रसिद्धयोः प्रसिद्धस्यैव ग्रहणम् ’ इति न्यायात् । निराङ्पूर्वोऽपि कृञ् स एव, प्रपूर्वो ‘ जनी प्रादुर्भावे ’ इह ‘ डुपचष् पाके ’, ‘ पतॢ गतौ ’, ‘ मदी हर्षे ’ त्रयोऽपि उत्पूर्वाः पठ्यन्ते, तत्र ‘ उदः पचपतमदः ’ इत्येव वक्तव्ये प्रत्येकमुत्पूर्वस्य पाठ उपसर्गान्तरनिवृत्त्यर्थः । तेन समुत्पतिष्णुरित्यादि न भवतीत्याहुः ॥ ‘ रुच दीप्तौ ’, अपपूर्वः ‘त्रपूष् लज्जायाम्’, ‘ वृतु वर्तने ’, ‘ वृधु वृद्धौ ’, ‘ षह मर्षणे ’, ‘ चर गतौ ’ ॥ **इत्यादीति** । आदिशब्दग्राह्यास्तु निराकरिष्णुः, प्रजनिष्णुः, उत्पचिष्णुः, उत्पतिष्णुरिति । ‘उत्पतिष्णुसहिष्णू च चेरतुः खरदूषणौ ’ इति भट्टिः । कालिदासोऽप्याह—‘ एलानामुत्पतिष्णवः ’ इति ॥ केचित्तु पत इति स्थाने दान्तं सूत्रे पठित्वा ‘ पद गतौ ’ इत्यस्मात्प्रत्ययमाहुः । उन्मादिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णुः, वर्द्धिष्णुः, सहिष्णुः, चारिष्णुः ॥ ( ४१३७ ) **पारयिष्णव इति** । ‘अयामन्ता—३०८६’ इति णेरय् ॥ ( ४१३८ ) **नैतदिति** । चकारस्यानुक्तसमुच्चयार्थत्वमित्यर्थः ॥

---

१ अलङ्करिष्णुरिति । अत्र अलङ्करिष्णुरित्यादीति पाठ उचितः, इत्यादीतीति प्रतीकमादाय टीकायां तथैव व्याख्यानात् । मूले त्वेतत् ( ) कोष्ठकान्तर्गतः पाठ आधुनिक एवेति प्रतीयते ॥

। ३ । २ । १३४ । छन्दसीति निवृत्तम् । गिदयं न तु कित् । तेन स्थ ईत्त्वं न । ग्लास्नुः । गित्त्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद्भुवः । श्र्युकः कितीत्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः ॥ ( ४१४० ) सू० दंशेश्छन्दस्युपसंख्यानम् ॥ दङ्क्ष्णवः पशवः ॥ ( ४१४१ ) सू० त्रसिगृधिधृषिक्षिपेः क्नुः ।३।२।१४० । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ॥ ( ४१४२ ) सू० शमित्यष्टाभ्यो घिनुण् । ३ । २ । १४१ । उकार उच्चारणार्थं इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा शमिनीतरेत्यत्र उगितश्चेति ह्रस्वविकल्पः । न चैवं शमी, शमिनावित्यादौ नुम्प्रसङ्गः, झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । नोदात्तोपदेशस्येति वृद्धिनिषेधः । शमी, तमी, दमी, श्रमी, भ्रमी, क्षमी, क्लमी, प्रमादी । उत्पूर्वान्मदेः अलंकृञादिसूत्रेणेष्णुजुक्तो वाऽसरूपविधिना घिनुणपि । उन्मादी । ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति इति तु प्रायिकम् ॥ ( ४१४३ ) सू० सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ।३।२।१४२। घिनुण् स्यात् । सम्पर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती ॥ ( ४१४४ ) सू० वौ कषलसकत्थस्रम्भः । ३ । २ । १४३ । विकाषी । विलासी । विकत्थी । विस्रम्भी ॥ ( ४१४५ ) सू० अपे च लषः । ३ । २ । १४४ । चाद्वौ । अपलाषी । विलाषी ॥ ( ४१४६ ) सू० प्रे लपसृद्रुमथवदवसः । ३ । २ । १४५ । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी ॥ ( ४१४७ ) सू० निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ् । ३ । २ । १४६ । [ पञ्चम्यर्थे प्रथमा ] एभ्यो वुञ् स्यात् । निन्दकः । हिंसक इत्यादि । ण्वुला सिद्धे वुञ्वचनं ज्ञापकं तच्छीलादिषु वाऽसरूपन्यायेन तृजादयो नेति ॥ ( ४१४८ ) सू० देविक्रुशोश्चोपसर्गे । ३ । २ । १४७ । आदेवकः । आक्रोशकः । उपसर्गे किम् । देवयिता । क्रोष्टा ॥ ( ४१४९ ) सू० चलनशब्दार्थादकर्मकाद्युच् । ३ । २ । १४८ । चलनार्थाच्छब्दार्थाच्च युच् स्यात् । चलनः ।

---

( ४१३९ ) ईत्त्वं नेति । 'घुमास्था-३२७४' इत्यादिना ॥ गित्त्वादिति । 'क्ङिति च २९७२' इत्यत्र गकारं प्रश्लिष्य गिति किति ङितीति व्याख्यानादिति भावः ॥ गकारप्रश्लेषादिति । नन्वेवं गकारे चर्त्वस्यासिद्धत्वात् 'हशि च २४६' इत्युत्त्वं स्यादिति चेत् । सत्यम् , सौत्रोऽयं निर्देशः । तथा च वार्तिकम्-'ग्स्नोर्गित्त्वान्न स्थ ईकारः क्ङितोरीत्त्वशासनात् । गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः' इति ॥ ( ४१४० ) दङ्क्ष्णव इति । 'दंश दशने' 'व्रश्च-४११' इत्यादिना षत्वे 'षढोः कः सि ४१२' इति कत्वम् । 'आदेशप्रत्यययोः २९८' इति षत्वम् । 'अनिदिताम्-५५७' इति नलोपो न, ग्स्नोर्गित्त्वेन प्राप्त्यभावात् ॥ ( ४१४१ ) त्रस्नुरिति । 'नेड्वशि-३९८१' इति नेट् ॥ ( ४१४२ ) शमित्यष्टाभ्यो--। इतिशब्द आद्यर्थः ॥ शमिनीतरेत्यत्रेति । अत्र नव्याः-विद्वत्तरेतिवत् 'तसिलादिषु-१२०१' इति पुंवद्भावेन शमितरेति भाव्यम् । न च उगित्त्वाभ्युपगमस्य फलाभावाद्ध्रस्वविकल्प एव भवतीति वाच्यम् , पाक्षिकह्रस्वेन उगित्करणस्य चरितार्थत्वाद्ध्रस्वाभावपक्षे तु पुंवद्भावस्य दुर्वारत्वादित्याहुः[2] ॥ ( ४१४३ ) संपृचा-। संपर्कीति । 'पृची संपर्के', 'चजोः-२८१४' इति कुत्वं गुणः ॥ परिदेवीति । 'देवृ देवने' भ्वादिः ण्यन्तस्य दीव्यतेस्तु नेह ग्रहणं लाक्षणिकत्वात्, अण्यन्तैः साहचर्याच्च ॥ अभ्याघातीति । अभ्याङ्पूर्वाद्धन्तेर्हस्य कुत्वेन घः 'हनस्तोऽचिण्णलोः ३४२१' इति नस्य तः, 'अत उपधायाः ३०४९' इति वृद्धिः॥ ( ४१४४ ) वौ कष-।'कष हिंसार्थयाम्', 'लस श्लेषणक्रीडनयोः', 'कत्थ श्लाघायाम्', 'स्रम्भु विश्वासे' ॥ ( ४१४५ ) अपे च लषः । 'लष कान्तौ' ॥ ( ४१४६ ) प्रे लप-। 'लप व्यक्तायां वाचि' ॥ प्रमाथीति । 'मथे विलोडने' ॥ ( ४१४७ ) निन्दहिंस--। इह सूत्रे विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः । अकारस्त्वागन्तुकः । केचित्तु विनाशीति ण्यन्तमेव पठन्ति । परिवादीति तु वदेर्ण्यन्तस्य पाठो निर्विवाद एव । असूयतिः कण्ड्वादिर्यगन्तः, निन्दादीनामसूयान्तानां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । स्यादेतत् असूयतेरेव वुञ् विधेयो नेतरेभ्यः, निन्दादीनां ण्वुलैव सिद्धेः । न हि तत्र लित्स्वरनित्स्वरयोर्विशेषोऽस्ति, उभयथाप्याद्युदात्तत्वात् । असूयतेस्तु ण्वुलि 'लिति ५५५१' इति प्रत्ययात्पूर्वमुदात्तं, वुञि तु 'ञ्नित्यादिर्नित्यम् ५५६१' इत्यादिरुदात्त इति विशेषस्तत्राह-ण्वुलेति ॥ तृजादयो नेति । नेदं ण्वुल्विषयकमेव ज्ञापकं, किन्तु सामान्यतः प्रत्ययमात्रविषयकमित्यर्थः ॥ ( ४१४८ ) देविक्रुशोः--। दीव्यतेर्हेतुमण्ण्यन्तस्य 'दिवु कूजने' इति चुरादिण्यन्तस्य च ग्रहणम् ॥ ( ४१४९ ) चलनशब्दार्था-। 'चल कम्पने', 'चुप मन्दायां गतौ', 'कपि चलने', 'शब्द शब्दने' चुरादिः, 'रु शब्दे' ॥ चलन इत्यादि ।

---

१ 'त्रसिगृधिधृषिक्षिपेः' 'भ्याहनः' इत्यादाविव पञ्चम्येकवचनेनेष्टार्थसिद्धौ 'पञ्चम्यर्थे प्रथमा' इति लेखप्रयोजनं चिन्त्यम् ॥ २ आहुरिति । 'संज्ञापूरण्योश्च' इति निषेधात् पक्षे पुंवद्भावो नेति बोध्यम्-इति शेखरे नागेशभट्टः ॥

चोपनः। कम्पनः। शब्दनः। रवणः। अकर्मकात्किम्। पठिता विद्याम्॥ (४१५०) सू अनुदात्तेतश्च हलादेः। ३। २। १४९। अकर्मकाद्युच् स्यात्। वर्तनः। वर्धनः। अनुदात्तेतः किम्। भविता। हलादेः किम्। एधिता। अकर्मकात्किम्। वसिता वस्त्रम्॥ (४१५१) सू जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः। ३। २। १५०। जु इति सौत्रो धातुर्गतौ वेगे च। जवनः। चङ्क्रमणः। दन्द्रमणः। सरणः। पूर्वेण सिद्धे पदग्रहणं लषपतपदेत्युकञा बाधा मा भूदिति। तेन ताच्छीलिकेषु परस्परं वाऽसरूपविधिर्नास्तीति। तेनालंकृञस्तृन्न॥ (४१५२) सू क्रुधमण्डार्थेभ्यश्च। ३। २। १५१। क्रोधनः। रोषणः। मण्डनः। भूषणः॥ (४१५३) सू न यः। ३। २। १५२। यकारान्ताद्युच् न स्यात्। क्नूयिता। क्ष्मायिता॥ (४१५४) सू सूददीपदीक्षश्च। ३। २। १५३। युच् न स्यात्। सूदिता। दीपिता। दीक्षिता। नमिकम्पीति रेण युचो बाधे सिद्धे दीपग्रहणं ज्ञापयति ताच्छीलिकेषु वाऽसरूपविधिर्नास्तीति प्रायिकमिति। तेन कम्रा, कमना युवतिः। कम्प्रा, कम्पना शाखा। यदि सूदेर्युज् न, कथं मधुसूदनः। नन्द्यादिः॥ (४१५५) सू लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्। ३। २। १५४। लाषुकः। पातुकः इत्यादि॥ (४१५६) सू जल्पभिक्षकुट्टलुण्टवृङः षाकन्। ३। २। १५५। जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी॥ (४१५७) सू प्रजोरिनिः। ३। २। १५६। प्रजवी। प्रजविनौ। प्रजविनः॥ (४१५८) सू जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च। ३। २। १५७। जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। अव्यथी। अभ्यमी। परिभवी। प्रसवी॥ (४१५९) सू स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्। ३। २। १५८। आद्यास्त्रयश्चुरादावदन्ताः। स्पृहयालुः। गृहयालुः। पतयालुः। दयालुः। निद्रालुः। तत्पूर्वो द्रा। तदो नान्तत्वं निपात्यते। तन्द्रालुः॥ (४१६०) वा शीङो वाच्यः॥ शयालुः॥ (४१६१) सू दाधेट्सिशदसदो रुः। ३। २। १५९। दारुः। धारुः। सेरुः। शद्रुः। सद्रुः॥ (४१६२) सू सृघस्यदः क्मरच्। ३। २। १६०। सृमरः। घस्मरः।

---

'युवोः—१७६१' इत्यनादेशः॥ (४१५०) अनुदात्तेतश्च हलादेः। ननु सर्वोऽप्यनुदात्तेत् हलन्त एवेति तदन्तविधिं बाधित्वा सामर्थ्याद्धलादिरेव ग्रहीष्यते तत्किमादिग्रहणेनेति चेत्। अत्राहुः—आदिग्रहणाभावे हलन्तादित्यर्थः स्यात्, तथा हि सत्येधितेत्यादावतिप्रसङ्गः स्याज्जुगुप्सन इत्यादि च न सिध्येत्। अस्ति चेहानुदात्तेत्त्वं गुपादिष्ववयवेष्वचरितार्थस्यानुबन्धस्य समुदायविशेषकत्वादिति दिक्॥ (४१५१) जुचङ्क्रम्य—। क्रमिद्रमी यङन्तौ 'क्रमु पादविक्षेपे', 'द्रम हम्म मीमृ गतौ'॥ पूर्वेणेति। 'अनुदात्तेतश्च—४१५०' इत्यनेन॥ इह पदिग्रहणं सकर्मकार्थमिति वृत्तिकृतोक्तम्। भाष्ये तु अनभिधानादेव सकर्मकान्न भविष्यतीत्युक्तत्वात् ज्ञापनार्थमेव तदित्याशयेनाह—बाधा मा भूदित्यादि। परस्परमिति। 'निन्दहिंस—४१४७' इत्यादिसूत्रे हि तच्छीलादिषु वाऽसरूपविधानात् तृजादयो नेति ज्ञापितम्, इह तु ताच्छीलिकेषु परस्परं नेति ज्ञापितमिति विवेक इति भावः॥ (४१५२) क्रुध—। 'क्रुध क्रोधे', 'रुष रोषे', 'मडि भूषायाम्, 'भूष अलंकारे'॥ (४१५३) न यः। 'अय वय पय मय चय तय णय गतौ' इति पठितस्य नयतेर्नायं निर्देशः। अनुदात्तेत्त्वादेव युचः सिद्धत्वात्किन्तु नेति पृथक् पदमिति मत्वाऽऽह—यकारान्तादिति॥ क्नूयिता। क्ष्मायितेति। 'क्नूयी शब्दे उन्दे च', 'क्ष्मायी विधूनने'॥ (४१५४) सूददीप—। 'सूद क्षरणे', 'दीपी दीप्तौ', 'दीक्ष मौण्ड्येज्यादौ'॥ ताच्छीलिकेष्विति। परस्परामिति शेषः॥ प्रायिकमिति। न केवलं यथाश्रुतभाष्यमवलम्ब्य युज्रयोरेव समावेश इति मन्तव्यं, किन्तु प्रायिकत्व एव भाष्यस्य तात्पर्यम्। तेन गमेः 'लषपतपद—४१५५' इत्युकञ्विषये तृन्नपि। गन्ता। गामुकः। तथा 'वौ कषलस—४१४४' इति घिनुण्विषये युजपि। विकत्थी, विकत्थन इत्यादि सिध्यतीति भावः॥ (४१५६) जल्प—। 'जप जल्प व्यक्तायां वाचि', 'भिक्ष भिक्षायां लाभेऽलाभे च', 'कुट्ट छेदने', 'लुण्ट स्तेये' चौरादिकाविमौ। अत्र व्याचख्युः—जल्पेः 'चलनशब्दार्थात्—४१४९' इति, भिक्षेः 'अनुदात्तेतश्च—४१५०' इति युचि प्राप्ते, कुट्टलुण्टयोः 'णेश्छन्दसि ४१३७' इति इष्णुचि प्राप्ते, वृङस्तु 'आदृगमहनजन—४१७३' इति किकिनोः प्राप्तयोरयं विधिरिति॥ षो ङीषर्थ इत्याह—वराकीति॥ (४१५७) प्रजोः—॥ 'जु' इति सौत्रो गत्यर्थः॥ (४१५८) जिदृक्षि—। 'जि जये', 'जि अभिभवे', 'दृङ् आदरे', 'क्षि क्षये', 'क्षि निवासगत्योः', 'श्रिञ् सेवायाम्' विपूर्वः। 'व्यथ भयसञ्चलनयोः' नञ्पूर्वः, निपातनान्नञो धातुना समासे नलोपे ततः प्रत्ययः। 'अम गत्यादिषु' अभिपूर्वः॥ प्रसवीति। 'षू प्रेरणे' अस्मादिनिः। 'षूङ् प्राणिगर्भविमोचने', 'षूङ् प्राणिप्रसवे' इमौ न गृह्येते, सानुबन्धत्वात्। 'जिदृक्षि—४१५८' इत्यत्रैव प्रजुं पठित्वा पूर्वसूत्रं त्यक्तुमुचितम्। एवं हि पृथग्विभक्तिश्चकारश्च माऽस्त्विति सुवचम्॥ (४१५९) स्पृहि—। 'स्पृह ईप्सायाम्', 'गृहू ग्रहणे', 'पत गतौ'॥ त्रयश्चुरादाविति। तेन णेरयादेशेन रूपसिद्धिरिति भावः॥ यद्येवं णिचि उपधागुणवृद्धी स्यातामत आह—अदन्ता इति। ततश्चाल्लोपस्य स्थानिवत्त्वात्तदभावः॥ तत्पूर्व इति। तच्छब्दस्य समासोऽपि निपातनादिति बोध्यम्। डुधाञ् श्रत्पूर्वः। श्रद्धालुः। धेटस्तु नेदं रूपम्। श्रत्पूर्वस्य तस्य प्रयोगाभावादिति व्याचख्युः। कथं कृपालुः, स्पर्धालुः। कृपां स्पर्धां च लातीति विग्रहे मृगय्वादित्वात्कुः॥ (४१६१) दाधेट्—। दुदाञ्दो-

अञ्जरः ॥ ( ४१६३ ) सू० भञ्जभासमिदो घुरच् । ३ । २ । १६१ । भङ्गुरः । भासुरः । मेदुरः ॥ ( ४१६४ ) सू० विदिभिदिच्छिदेः कुरच् । ३ । २ । १६२ । विदुरः । भिदुरम् । छिदुरम् ॥ ( ४१६५ ) सू० इणनशजिसर्तिभ्यः क्वरप् । ३ । २ । १६३ । इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः ॥ ( ४१६६ ) सू० गत्वरश्च । ३ । २ । १६४ । गमेरनुनासिकलोपोऽपि निपात्यते । गत्वरी ॥ ( ४१६७ ) सू० जागुरूकः । ३ । २ । १६५ । जागर्तेरूकः स्यात् । जागरूकः ॥ ( ४१६८ ) सू० यजजपदशां यङः । ३ । २ । १६६ । एभ्यो यङन्तेभ्य ऊकः स्यात् । दशामिति भाविना[1] नलोपेन निर्देशः । यायजूकः । जञ्जपूकः । दन्दशूकः ॥ ( ४१६९ ) सू० नमिकम्पिस्म्यजसकमहिंसदीपो रः । ३ । २ । १६७ । नम्रः । कम्प्रः । स्मेरः । जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते । अजस्रं सन्ततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः ॥ ( ४१७० ) सू० सनाशंसभिक्ष उः । ३ । २ । १६८ । चिकीर्षुः । आशंसुः । भिक्षुः ॥ ( ४१७१ ) सू० विन्दुरिच्छुः । ३ । २ । १६९ । वेत्तेर्नुम् इषेश्छत्वं च निपात्यते । वेत्ति तच्छीलो विन्दुः । इच्छति इच्छुः ॥ ( ४१७२ ) सू० क्याच्छन्दसि । ३ । २ । १७० । देवाञ्जिगाति सुम्नयुः ॥ ( ४१७३ ) सू० आदृगमहनजनः किकिनौ लिट् च । ३ । २ । १७१ । आदन्तादृदन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत् । पपिः सोमम् । दद्गिर्गाः । बभ्रिर्वज्रम् । जग्मिर्युवा । जघ्निर्वृत्रममित्रियम् । जज्ञिः ॥ ( ४१७४ ) वा० भाषायां धाञ्कृसृगमिजनिनमिभ्यः ॥ दधिः । चक्रिः । सस्रिः । जग्मिः । जज्ञिः । नेमिः ॥ ( ४१७५ ) वा० सासहिवावहिचाचलिपापतीनामुपसंख्यानम् ॥ यङन्तेभ्यः सहेत्यादिभ्यः किकिनौ पतेर्नी-

---

देशं त्रयाणामेव ग्रहणं, न तु दाण्दापोरित्याहुः ॥ भंगुर इति । 'चजोः-२८१४' इति कुत्वम् । अभिधानस्वभावाद्भञ्जेः कर्मकर्तर्य्येवेत्याहुः ॥ (४१६४) विदिभिदि-। विदेर्ज्ञानार्थस्यैव ग्रहणं, न तु लाभार्थस्य, व्याख्यानात् ॥ छिदुरमिति । कर्मकर्त्तरि प्रत्यय इति वृत्तिः । नैतद्भाष्ये दृष्टम् । तथा च माघः मुख्ये कर्तरि प्रायुङ्क्त-' प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाऽदुरयाचितमङ्गनाः ' इति । इह अदुरिति च्छेदः ॥ ( ४१६५ ) इत्वरः । इत्वरीति । ' इण् गतौ ' ' ह्रस्वस्य पिति--३०८६' इति तुक् । कित्त्वाद्गुणाभावः, ' टिड्ढा-६५१ ' इत्यादिना स्त्रियां ङीप् ॥ ( ४१६७ ) जागुरूकः । जागुरिति पञ्चम्यन्तं तद्व्याचष्टे--जागर्त्तेरिति ॥ ' जागरूकः ' इति सिद्धरूपमेव तु न निपातितम् । उत्तरसूत्रे ऊकस्यानुवृत्तिप्रसङ्गात् ॥ (४१६८) यजजप-। यायजूक इति । यजेर्यङि द्वित्वादि ' दीर्घोऽकितः ३४९८ ' इत्यभ्यासदीर्घः । अतो लोपे ' यस्य हलः ३४९७ ' इति लोपः ॥ जञ्जपूक इत्यादि । 'जपजभदहदश-३५०५' इत्यादिना नुक् , वावदूकशब्दस्तु ४६८४ उलूकादयश्चेत्यत्र वक्ष्यते । माधवस्त्वाह--'कुर्वादिगणे वावदूक इति पाठादेव यङन्ताद्वदेरूकः प्रत्ययः 'इति ॥ (४१७०) सनाशंस-। सनिति प्रत्ययग्रहणात्तदन्तग्रहणम् । 'षणु दाने', 'षण संभक्तौ' इति धात्वोस्तु नेह ग्रहणम् , गर्गादिषु विजिगीषुशब्दस्य पाठात् । आशंसेति ' आङः शंसु इच्छायाम् ' इत्ययं गृह्यते, न ' शंसु स्तुतौ ' इति, आङा सह निर्देशात् ॥ ( ४१७१ ) विन्दुरिच्छुः । ' विद ज्ञाने ' इत्यस्यैव ग्रहणं, नेतरेषाम् । एवमिषेरपि इच्छार्थकस्यैव ग्रहणं, न तु, ' इष गतौ ', ' इष आभीक्ष्ण्ये ' इत्यनयोः, अनभिधानान्निपातनाद्वेति भावः । बिन्दुशब्दस्तु पवर्गीयादिः ' बिदि अवयवे ' अस्मान्मृगय्वादित्वात्कुप्रत्यये बोध्यः ॥ ( ४१७२ ) क्याच्छन्दसि । क्य इति क्यच्क्यष्क्यङां सामान्यग्रहणम् । क्यान्तधातोश्छन्दसि विषये तच्छीलादिषु उप्रत्ययो भवतीति काशिका । क्य इति व्याख्यानात्कण्ड्वादियगपि गृह्यते । तेन ' तुरण्यवोऽङ्गिरसोनक्षन्त ' ' सपर्येम सपर्यवः ' 'यमस्य योनौ शकुनं भुरण्युम् ' इत्यादि सिद्धम् । ' तुरण त्वरायाम् ' । ' सपर पूजायाम् ' ' भुरण धारणपोषणयोः ' इत्येते कण्ड्वादिषु पठिताः । अथ कथं ' सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ' इति भट्टपादाः । मृगय्वादिषु असूयुशब्दो द्रष्टव्य इति हरदत्तः ॥ सुम्नयुरिति । सुम्नशब्दात्क्याचि तदन्तादुः । ' न च्छन्दस्यपुत्रस्य ५४४५ ' इति निषेधात् ' क्याचि च ३५२९ ' इति ईत्वम् , ' अकृत्सार्व--३०७१ ' इति दीर्घश्च न भवति ॥ ( ४१७३ ) आदृ-। ' ऋदोरप् ५०२४ ' इतिवदादिति दकारो मुखसुखार्थो न त्वयं तकारस्तेन तात्परत्वाभावादृ इत्यनेन दीर्घोऽपि गृह्यते । तेन ततुरिर्जगुरिः--' तॄ प्लवनतरणयोः ' इत्यस्य, ' गॄ निगरणे ' इत्यस्य च ' बहुलं छन्दसि ५४३२ ' इत्युत्वे रूपमिति प्राञ्चः । वस्तुतस्तु आदित्यादिप्रकृतिविशेषणमुदाहरणं प्रपञ्चमात्रम् । 'किकिनौ लिट् च' इत्येतावन्मात्रमेव विवक्षितम् । तथा च वार्तिकम्-' किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् ' इति । उदाहृतं च भाष्ये-' सेदिर्नेमिः ' इत्यादि । एवं स्थिते आदिति तपरकरणेऽपि न क्षतिरिति ध्वनयन्नाह--आदन्तादृदन्तादिति ॥ बभ्रिर्वज्रमिति । 'न लोका-९१५' इति षष्ठीनिषेधाद् द्वितीया । किकिनोः स्थाने तिबादयो न, लिड्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात् । छान्दससूत्रद्वयोपन्यसनं 'भाषायां धाञ्--४१७४' इत्यादिवार्तिकविषयबोधनार्थम् । इह च वार्तिके गमिर्यद्यपि न दृश्यते, तथापि धातुवृत्तौ क्वचिद्वृत्तिपुस्तके च दर्शनादुपन्यस्तः ॥ जग्मिरिति । 'गमहनजन-२१५६' इत्युपधालोपः ॥ जघ्निरिति । 'अभ्यासाच्च २३३६' इति कुत्वम् ॥ ( ४१७४ ) दधिरिति । 'आतो लोपः-२१६५' ॥ नेमिरिति । एत्वाभ्यासलोपौ ॥ ( ४१७५ ) सासहीत्यादि । यङोऽतो लोपे

---

[1] भाविनेति । यङि कृते जायमानेनेत्यर्थः ॥

गभावश्च निपात्यते ॥ ( ४१७६ ) सू. स्वपितृषोर्नजिङ् । ३ । २ । १७२ । स्वप्नक् । तृष्णक् । तृष्णजौ । तृष्णजः ॥ ( ४१७७ ) धृषेश्चेति वाच्यम् । इति काशिकादौ । धृष्णक् ॥ ( ४१७८ ) सू. शृवन्द्योरारुः । ३ । २ । १७३ । शरारुः । वन्दारुः ॥ ( ४१७९ ) सू. भियः क्रुक्लुकनौ । ३ । २ । १७४ । भीरुः । भीलुकः ॥ ( ४१८० ) वा. क्रुकन्नपि वाच्यः ॥ भीरुकः ॥ ( ४१८१ ) सू. स्थेशभासपिसकसो वरच् । ३ । २ । १७५ । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ॥ ( ४१८२ ) सू. यश्च यङः । ३ । २ । १७६ । यातेर्यङन्ताद्वरच् स्यात् । अतो लोपः । तस्याचः परस्मिन्निति स्थानिवद्भावे प्राप्ते पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् । तस्य यलोपं प्रति स्थानिवद्भावनिषेधाल्लोपो व्योरिति [१२५४]यलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्यातो लोपे प्राप्ते वरे लुप्तं न स्थानिवत् । यायावरः ॥ ( ४१८३ ) सू. भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् । ३ । २ । १७७ । विभ्राट् । भाः । भासौ । धूः । धुरौ । विद्युत् । ऊर्क् । पूः । पुरौ । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । जुवौ । जुवः । ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते । ततः क्विप् । ग्रावस्तुत् ॥ ( ४१८४ ) सू. अन्येभ्योऽपि दृश्यते । ३ । २ । १७८ । क्विप् । छित् । भित् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः, क्वचित्सम्प्रसारणं, क्वचिद् द्वे, क्वचिद्ध्रस्वः । तथा च वार्तिकम्–॥ ( ४१८५ ) वा. क्विब् वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च ॥ क्विब्वचीत्यादिना [४४१]उणादिसूत्रेण केषांचित्सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम् । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं सा श्रीः ॥ ( ४१८६ ) वा. द्युतिगमिजुहोतीनां द्वे च ॥ दृशिग्रहणादभ्याससंज्ञा । दिद्युत् जगत् ॥ ( ४१८७ ) वा. जुहोतेर्दीर्घश्च ॥ जुहूः । दॄ भये । अस्य ह्रस्वश्च । दीर्यते दद्दत् ॥ ( ४१८८ ) वा. ध्यायतेः संप्रसारणं च ॥ धीः ॥ ( ४१८९ ) सू. भुवः संज्ञान्तरयोः । ३ । २ । १७९ । मित्रभूर्नाम कश्चित् । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः ॥ ( ४१९० ) सू. विप्रसंभ्यो ड्वसंज्ञायाम् । ३ । २ । १८० । एभ्यो भुवो डुः स्यान्न तु संज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । संभुर्जनिता । संज्ञायां तु विभूर्नाम कश्चित् ॥ ( ४१९१ ) वा. मितद्र्वादिभ्य उपसंख्यानम् ॥ मितं द्रवतीति मितद्रुः । शतद्रुः । शम्भुः । अन्तर्भावितण्यर्थोऽत्र भवतिः ॥ ( ४१९२ ) सू. धः कर्मणि ष्ट्रन् । ३ । २ । १८१ । धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात् । धात्री जनन्यामलकीवसुमत्युपमातृषु ॥

---

यलोपः । अभ्यासदीर्घः ॥ नीगभावश्चेति । 'नीग्वञ्चु–३५०९' इत्यादिना प्राप्तस्य नीगागमस्याभाव इत्यर्थः ॥ ( ४१७६ ) तृष्णगिति । ङित्त्वान्न गुणः । नजिङ इकार उच्चारणार्थः ॥ ( ४१८० ) क्रुकन्नपीति । अत एव 'भीरुभीलुकभीरुकाः' इत्यमरः ॥ ( ४१८१ ) ईश्वर इति । 'नेड्वशि–३९८१' इतीडभावः ॥ पेस्वर इति । 'पिसृ पेसृ गतौ' ॥ कस्वर इति । 'कस गतौ' ॥ ( ४१८३ ) भ्राज–। 'आ क्वेः–४१३४' इत्युक्तत्वात्तच्छीलादिष्वयं क्विप् । 'भ्राजृ दीप्तौ', 'धुर्वी हिंसायाम्', 'द्युत दीप्तौ', 'ऊर्ज बलप्राणनयोः' । 'पॄ पालनपूरणयोः' । 'जु गतौ' सौत्रः । ग्रावपूर्वः, 'ष्टुञ् स्तुतौ' ॥ विभ्राडिति । 'व्रश्च–४११' इति षत्वम् । जश्त्वचर्त्वे ॥ धूरिति । 'राल्लोपः ३५२६' इति वलोपः, 'र्वोः–५८०' इति दीर्घः ॥ ऊर्गिति । 'चोः कुः ५१३' । 'रात्सस्य ३९१' इति नियमान्न संयोगान्तलोपः ॥ पूरिति । 'उदोष्ठ्यपूर्वस्य ३३१२' इत्युत्वम् । 'र्वोः–५८०' इति दीर्घः ॥ ( ४१८५ ) वाक् प्राडिति । इह दीर्घः सम्प्रसारणाभावश्च । सम्प्रसारणप्राप्तिस्तु 'वचिस्वपि–३२१३' 'ग्रहिज्यावयि–३२१६' इत्यादिना ॥ श्रयति हरिं सा श्रीरिति । प्राचा तु श्रयन्त्येतामिति कर्मणि क्विबुदाहृतस्तत्र 'कर्त्तरि कृत् ३७७१' इति सूत्रविरोधः स्पष्ट एव । बाहुलकं तु अगतिकगतिः ॥ द्युति–। द्वे चेति । कृतेऽपि द्वित्वे अभ्याससंज्ञेह दुर्लभा, प्रत्यासत्त्या षाष्ठद्वित्व एव प्रवृत्तेरत एव आष्टमिके सा नेत्याशङ्कायामाह–दृशिग्रहणादिति ॥ ( ४१८६ ) दिद्युदिति । 'द्युतिस्वाप्योः–३१२५' इत्यभ्यासस्य सम्प्रसारणम् ॥ जगदिति । 'गमः क्वौ ३९८७' इति मलोपे तुक् । ( ४१८७ ) अत्र द्वे चेति चकारेण दीर्घः समुच्चीयमानो द्युतिगम्योर्न भवति, दीर्घश्रुत्या 'अचश्च ५८' इति परिभाषोपस्थानादजन्तजुहोतेरेव संभवतीत्याशयेनाह—जुहोतेर्दीर्घश्चेति । जुहोतीति जुहूः । ह्रस्वश्चेति चकारेण द्वित्वं समुच्चीयते ॥ ( ४१८८ ) धीरिति । ध्यायतीति धीः । 'हलः ३३९०' इति दीर्घः । ननु ध्यायति पुरुषो, न तु धीः, एवं जुहोत्यनया पुरुष इति सर्वसंमतत्वात्कथं तर्हि भवदुक्तार्थः संगच्छत इति चेद् । अत्राह हरदत्तः–करणस्य कर्तृत्वविवक्षायां क्विप् भवति ॥ ( ४१८९ ) भुवः संज्ञा–। धनिकेत्यादि । तेन ग्रामयोरन्तरे यस्तिष्ठति तत्र नेति भावः । एतच्च दृशिग्रहणानुवृत्त्या लभ्यते ॥ नन्वेवं प्रतिभूशब्दः संज्ञेति फलितं, तत्र संज्ञायामित्येव सिद्धं किमन्तरग्रहणेन । अत्राहुः यावद्द्रव्यभाविन्यः संज्ञाः । प्रतिभूशब्दस्तु सत्येव तस्मिन् ऋणप्रदानेन निवर्तत इत्युभयोर्भेद इति ॥ ( ४१९१ ) शं सुखं भावयतीति शम्भुरित्यर्थाभ्युपगमनायाह–अन्तर्भावितेति । शं भवति सुखस्वरूपो भवतीति शम्भुरित्यन्ये । शं भवत्यस्मादिति व्युत्पत्तिस्तु अपादाने डुप्रत्ययाभावाच्चिन्त्येति माधवः ॥ ( ४१९२ ) धः कर्मणि–। कर्मणीति नोपपदम् । 'दाबामश्च ३८८२'

---

१ शतधा द्रवतीति विग्रहः ॥

( ४१९३ ) ⦿ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । ३ । २ । १८२ । दाबादेः ष्ट्रन् स्यात्करणेऽर्थे । दान्त्यनेन दात्रम् । नेत्रम् ॥ ( ४१९४ ) ⦿ तितुत्रतथसिसुसरकसेषु च । ७ । २ । ९ । एषां दशानां कृत्प्रत्ययानामिण् न स्यात् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री[1] ॥ ( ४१९५ ) ⦿ हलसूकरयोः पुवः । ३ । २ । १८३ । पूङ्पूञोः करणे ष्ट्रन् स्यात् । तच्चेत्करणं हलसूकरयोरवयवः । हलस्य सूकरस्य वा पोत्रम् । मुखमित्यर्थः ॥ ( ४१९६ ) ⦿ अर्तिलूधूसूखनसहचर इत्रः । ३ । २ । १८४ । अरित्रम् । लवित्रम् । धुवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥ ( ४१९७ ) ⦿ पुवः संज्ञायाम् । ३ । २ । १८५ । पवित्रम् । येनाज्यमुत्पूयते यच्चानामिकावेष्टनम् ॥ ( ४१९८ ) ⦿ कर्तरि चर्षिदेवतयोः । ३ । २ । १८६ । पुव इत्रः स्याद् ऋषौ करणे देवतायां कर्तरि । ऋषिर्वेदमन्त्रः । तदुक्तमृषिणेति दर्शनात् । पूयतेऽनेनेति पवित्रम् । देवतायां तु 'अग्निः पवित्रं' स मा पुनातु ॥ इति पूर्वकृदन्तम् ॥

अथोणादयः ।

( ४१९९ ) ⦿ कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ करोतीति कारुः शिल्पी कारकश्च । [७]आतो युक् । वातीति वायुः । पायुर्गुदम् । जयत्यभिभवति रोगान् जायुरौषधम् । मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम् । स्वादुः । साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । आशुर्व्रीहिः पाटलः स्यात् ॥ ( ४२०० ) ⦿ छन्दसीणः ॥

---

इत्यनन्तरमेव 'धः ष्ट्रन्' इति वक्तव्ये पृथक्कर्मग्रहणाद्व्याख्यानाद्वेत्याशयेनाह–कर्मण्यर्थे इति । अत एव 'धीयते पीयते' इति धात्री स्तनदायिनीत्यादि व्याचक्षते ॥ ( ४१९३ ) दाम्नी–। मेढ्रमिति । 'हो ढः ४४७' धत्वष्टुत्वढलोपाः ॥ दंष्ट्रेति । षित्त्वेऽपि ङीष् इह न भवति 'अनित्यः षितां ङीष्' इत्युक्तत्वात् । अन्ये त्वजादिपाठाट्टापमाहुः ॥ नद्ध्रीति । 'नहो धः ५९०' इति धत्वम् । 'झषस्तथोर्धोऽधः ३०४७' जश्त्वम् । सूत्रे 'दश–' इति नलोपिनो निर्देशो ज्ञापकः–'क्वचिद्क्ङित्यपि दंशेर्नलोपो भवति' इति । तेन 'दंश दशने' इत्यस्माल्ल्युटि दशना दन्ता इति सिद्धम् । न च संनिधानात् ष्ट्रन्येव नलोपः स्यादिति वाच्यम्, 'शुनो दन्तदंष्ट्रा–१५०३' इति निर्देशात् ॥ ( ४१९५ ) तच्चेत्करणमित्यादि । एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्तम् ॥ मुखमित्यर्थ इति । तत्रैव रूढिरिति भावः ॥ ( ४१९६ ) अर्तिलूधूसू–। 'धू विधूनने' इति कुटादिरेव गृह्यते, निरनुबन्धकत्वात् । अत एव 'गाङ्कुटा–१२७३' इति ङित्त्वाद् गुणनिषेधे उवङ्, तदाह–धुवित्रमिति ॥ ( ४१९७ ) पुवः–। पूङ्पूञोरुभयोर्ग्रहणमविशेषात् ॥ करण इत्यनुवृत्तेराह–येनाज्यमिति ॥ ( ४१९८ ) कर्त्तरि चर्षि–। इत्रः स्यादिति । करणे कर्त्तरि चेत्यर्थः ॥ काशिकानुसारेण यथासंख्यं व्याचष्टे–ऋषौ करणे इति । 'कर्त्तरि कृत्' इति सूत्रस्थभाष्यकैयटयोस्तु 'यथासंख्यं न' इति गम्यत इति शब्दकौस्तुभे स्थितम् ॥ इति पूर्वकृदन्तम् ॥

अथोणादयः ।

( ४१९९ ) कृवापा–। 'डुकृञ् करणे', 'वा गतिगन्धनयोः', 'पा पाने' 'पा रक्षणे', 'जि अभिभवे', 'डुमिञ् प्रक्षेपणे', 'स्वद आस्वादने', 'साध संसिद्धौ', 'अशू व्याप्तौ' ॥ 'विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः' इति मेदिनीकोशः ॥ 'कारुः शिल्पिनि कारके' इति धरणिकोशस्तदेतदभिप्रेत्याह–कारुरित्यादि । आद्ये योगरूढिर्द्वितीये तु योगमात्रमिति विवेकः । अत एव द्वितीये धात्वर्थं प्रति कारकान्वयो भवत्येव । तथा च भट्टिः–'राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः । सर्ववानरसेनानामाश्वागमनमादिशत्' इति ॥ पिबत्यनेन तैलादिकमिति पायुर्गुदस्थानम् । 'गुदं त्वपानं पायुर्ना' इत्यमरः । पाति रक्षतीति विग्रहे रक्षकोऽपि । तथा च मन्त्रः–'भुवस्तस्य स्वतवा पायुरग्ने' इति । 'स्वतवान्पायौ ५४९८' इति नस्य रुत्वम् ॥ 'अगदो जायुः' इत्यमरः पुँल्लिङ्गसाहचर्याज्जायुः पुँसि ॥ 'मायुः पित्तं कफश्लेष्मा' इत्यमरः । गोपूर्वाद्गां वाचं विकृतां मिनोति प्रक्षिपतीति गोमायुः शृगाल इत्युज्ज्वलदत्तः । वस्तुतस्तु मायुशब्दः, 'यत्पशुर्मायुमकृत गोमायुरेकः, अजमायुरेकः' इत्यादौ वेदभाष्यकारादिभिस्तथैव व्याख्यातत्वात् ॥ स्वदते रोचते इति स्वादुः, विशेष्यनिघ्नोऽयम् ॥ एवं साधुरपि ॥ आशु शीघ्रमिति । विलम्बाभावमात्रे क्लीबम्, तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गम् । 'अथ शीघ्रं त्वरितम्' इत्युपक्रम्य 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां भेद्यगामि यत्' इत्यमरः । व्रीहौ पुंस्येव ॥ 'उणादयो बहुलम् ४९५५' इति बहुलवचनादन्यस्मादप्युण् भवति । 'रह त्यागे' गृहीत्वा चन्द्रं रहति त्यजतीति राहुः ॥ 'वस निवासे' वसत्यस्मिन्सर्वमिति, सर्वत्रासौ वसतीति वा वासुः । वासुश्चासौ देवश्च वासुदेवः । वसुदेवस्यापत्यमित्यस्मिन्नर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च १५९५' इत्यणि कृते वासुदेव इति व्युत्पत्त्यन्तरमिति दिक् ॥ ( ४२०० ) छन्दसीणः । उणनुवर्तते ।

---

१ दाम्नीत्यादि । अत्र दशेति कृतनलोपस्य दंशधातोर्निर्देशेनाङित्यपि क्वचिदस्य नकारो लुप्यते । तेन दन्तेषु 'दशनाः' इति प्रयोगः सिध्यति । न च निपातनस्य बाधकत्वमेवेति सर्वत्रैवास्य नलोप इति 'दंष्ट्रा' इत्यनुपपन्नमिति शङ्क्यम्, 'शुनो दन्तदंष्ट्रा–' इति सूत्रनिर्देशेन क्वाचित्कत्वस्यैव कल्पनात् ॥

मा न आयौ ॥ (४२०१) उ० दृसनिजनिचरिचटिभ्यो ञुण्। दीर्यत इति दारुः। स्नुः प्रस्थः सानुरस्त्रियाम् ॥ जानु। जानुनी। इह जनिवध्योश्चेति न निषेधः, अनुबन्धद्वयसामर्थ्यात्। चारु रम्यम्। चाटु प्रियं वाक्यम्। मृगय्वादित्वात्कुप्रत्यये चटु इत्यपि ॥ (४२०२) उ० किञ्जरयोः श्रिणः ॥ किं शृणोतीति किंशारुः सस्यशूकं बाणश्च। जरामेति जरायुः। गर्भाशयो जरायुः स्यात् ॥ (४२०३) उ० त्रो रश्च लः ॥ तरन्त्यनेन वर्णा इति तालुः ॥ (४२०४) उ० कृके वचः कश्च ॥ कृकेन गलेन वक्तीति कृकवाकुः। कृकवाकुर्मयूरे च सरटे चरणायुधे इति विश्वः ॥ (४२०५) उ० भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः। भरति बिभर्ति वा भरुः। हरिर्हरश्च। म्रियन्तेऽस्मिन् भूतानि मरुर्निर्जलदेशः। शेते शयुरजगरः। तरुर्वृक्षः। चरन्ति भक्षयन्ति देवता इममिति चरुः। त्सरुः खड्गादिमुष्टिः। तनुः स्वल्पम्। स्त्रियां मूर्त्तिस्तनुस्तनूः। धनुः शस्त्रविशेषः। धनुषा च धनुं विदुः। धनुरिवाजनि वक्र इति श्रीहर्षः। मयुः किन्नरः। मद्गुः पानीयकाकिकेति रभसः। न्यङ्क्वादित्वात्कुत्वं जश्त्वेन सस्य दः ॥ (४२०६) उ० अणश्च ॥ लवलेशकणाणवः। चात्कटिवटिभ्याम्। कटति रसनां कटुः। वटतीति वटुः ॥ (४२०७) उ० धान्ये

---

एति गच्छतीत्यायुः। 'मा न आयौ' इति आयुशब्दो मनुष्यपर्यायेषु वैदिकनिघण्टौ पठितः। अत एव 'त्वामग्ने प्रथममायवे' 'मा नस्तोके तनये मा न आयौ' इत्यादिमन्त्रेषु वेदभाष्ये तथैव व्याख्यातम्। अर्वाचीनास्तु—'छन्दसीणः ४२००' इति सूत्रं बहुलवचनाद्भाषायामपि प्रवर्तत इति स्वीकृत्य 'आयुर्जीवितकालो ना' इत्यमरग्रन्थे आयुशब्दमुकारान्तं व्याचख्युः। ननु 'एतेर्णिच्च ४४७८' इत्युस्प्रत्यये सकारान्तो वक्ष्यमाण आयुःशब्दस्तु लोकवेदयोर्निर्विवाद एव। अत एव जटा आयुरस्येति विग्रहे 'गृध्रं हत्वा जटायुषम्' इति रामायणप्रयोगो, 'यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात्' इति श्रीहर्षप्रयोगश्च संगच्छते। तथा च 'आयुर्जीवितकालो ना' इत्यत्रायुःशब्दः सकारान्त इत्येव व्याख्यायतां किमुकारान्ताभ्युपगमेनेति चेद्। अत्राहुः—सकारान्त आयुःशब्दो नपुंसक इति तस्य पुँल्लिङ्गता नेत्याशयेन तथोक्तमिति। अन्ये तु 'छन्दसीणः ४२००' इति सूत्रस्य भाषायां प्रवृत्त्यभावे 'मा वधिष्ट जटायुं माम्' इति भट्टिप्रयोगः, 'तटीं विन्ध्यस्याद्रेरभजत जटायोः प्रथमजः' इति विन्ध्यवर्णने अभिनन्दोक्तप्रयोगश्च न संगच्छेतेत्याहुः। वस्तुतस्तु जटां याति प्राप्नोतीति जटायुः मृगय्वादित्वात्कुः, आयात्यायुः। एवं च 'जटायुषा जटायुं च विद्यादायुं तथाऽऽयुषा' इति द्विरूपकोशः, 'वायुना जगदायुना' इति वर्णविवेकश्च सुसाध इति दिक् ॥ (४२०१) **दृसनि—।** 'दॄ विदारणे', 'षणु दाने', 'जन जनने', 'चर गतौ', 'चट भेदने' ॥ **दार्विति।** 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः ॥ **चाट्विति।** 'चटु चाटु प्रियं वाक्यम्' इति हेमचन्द्रः। 'चाटुर्नारि प्रियोक्तिः स्यात्' इति रत्नमालाकोशः। नारि पुंसि। 'चकर च किल चाटून् प्रौढयोषिद्वदस्य' इति माघः। माघे तु नपुंसकमपि दर्शितम्—'चाटु चाकृतकसंभ्रममासाम्' इति ॥ (४२०२) **किंजरयोः—।** 'शॄ हिंसायाम्', 'इण् गतौ' आभ्यां ञुण् स्यात् ॥ **सस्येति।** 'किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति मेदिनीकोशः ॥ (४२०३) **त्रो रश्च लः।** 'तॄ प्लवनतरणयोः' त्रः रश्चेति च्छेदः। केचित्तु ऋ इति प्रश्लिष्य द्वयोरपि सवर्णदीर्घे त्रौ तयोस्त्रोरित्युक्त्वा 'ऋ गतौ' इत्यस्मादपि ञुण् रस्य ल इति व्याख्याय इयर्ति अर्यते वा आलुः। शाकविशेषो घटी चेत्याहुः। 'कर्कर्यालुर्गलन्तिका ॥ (४२०५) **भृमृशी—।** 'भृञ् भरणे', 'मृङ् प्राणत्यागे', 'शीङ् स्वप्ने', 'तॄ प्लवनतरणयोः', 'चर गतौ', अयं भक्षणेऽपि, 'त्सर छद्मगतौ', 'तनु विस्तारे', 'धन धान्ये,' 'डुमिञ् प्रक्षेपणे', 'टुमस्जो शुद्धौ'। 'भरुः स्वर्णे हरे पुंसि' इति मेदिनी। 'भरुर्भर्तृकनकयोः' इति हेमचन्द्रः ॥ **शयुरिति।** 'अजगरे शयुर्वाहसः' इत्यमरः ॥ **तरुरिति।** तरन्ति नरकमनेन रोपकाः ॥ **चरुरिति।** अनवस्रावितान्तरूष्मपक्व ओदन इति याज्ञिकाः। तृन्नचर्वधिकरणेऽप्येवमुक्तम्। 'उगवादिभ्यो यत्' इति सूत्रे कैयटस्त्वाह—स्थालीवाची चरुशब्दस्तात्स्थ्यादोदने भाक्त इति ॥ '**तनुः** काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनी ॥ 'धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने' इति नान्ते मेदिनी ॥ विश्वप्रकाशमुदाहरति—**धनुषा चेत्यादि।** धनुषा सार्द्धं धनुं विदुरित्यर्थः। 'स्यात्तनुस्तनुषा सार्द्धम्' इत्यतः सार्द्धमित्यनुषज्यते ॥ 'शुद्धवंशजनितोऽपि गुणस्य स्थानतामनुभवन्नपि शक्रः। क्षेप्तुरेनमृजुमाशु सपक्षं सायकम्' इति श्रीहर्षश्लोकशेषः ॥ 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति' इति धन्वन्तरिः। इह पूर्वत्र च धनुरिति नकारान्तः[1] सकारान्तो वा बोध्यः। न च सकारान्तधनुःशब्दो नपुंसक एवेति शङ्क्यम्, 'अथास्त्रियां धनुश्चापौ' इत्यमरोक्त्या तस्यापि पुंस्त्वात् ॥ **किंनर इति।** 'तुरङ्गवदनो मयुः' इत्यमरः। 'मीनातिमिनोति—३३२६' इत्यात्त्वं तु नेह, बाहुलकात्। 'मयुस्तुरङ्गवदनो मृडोऽपि मयुरिष्यते' इति विश्वः। मज्जति पानीये इति मद्गुः ॥ (४२०६) **अणश्च।** 'अण शब्दे' अस्मादुप्रत्ययः स्यात् ॥ **चादिति।** 'कटे वर्षादौ', 'वट वेष्टने'। कटति रसनामिति, '**कटुः** स्त्री कटुरोहिण्यां लताराजिकयोरपि। नपुंसकमकार्ये स्यात्पुँल्लिङ्गो रसमात्रके। त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खुरेऽपि च' इति। वटतीति वटुः। 'वटुर्द्विजसुतः स्मृतः' इति संसारावर्त्तः। नटवटुरिति तूपचारात् ॥

---

1 नकारान्त इति। कोशेषु स्वरगणना न क्रियते इत्युकारान्तेऽपि नकारान्तव्यवहार इति बोध्यम् ॥

नित् ॥ धान्ये वाच्येऽण उप्रत्ययः स्यात् स च नित् । नित्वादाद्युदात्तः । प्रियङ्गवश्च मेऽणवश्च मे । व्रीहिभेदस्त्वणुः पुमान् । निद्‌ग्रहणं फलिपाटीत्यादिसूत्रमभिव्याप्य सम्बद्धयते ॥ (४२०८) उ. **शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** ॥ शृणातीति शरुः । शरुरायुधकोपयोः । स्वर्यन्ते प्राणा अनेन स्वरुर्वज्रम् । स्नेहुर्व्याधिः चन्द्र इत्यन्ये । त्रपु सीसम् । पुंसि भूम्न्यसवः प्राणाः । वसुर्हदेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ । हनुर्वक्त्रैकदेशः, क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् बिदि अवयवे । बिन्दुः ॥ (४२०९) उ. **स्यन्देः सम्प्रसारणं धश्च** ॥ देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः ॥ (४२१०) उ. **उन्देरिच्चादेः** ॥ उनत्ति इन्दुः ॥ (४२११) उ. **ईषेः किच्च** ॥ ईषेरुः स्यात्स च कित् आदेरिकारादेशश्च । ईषते हिनस्ति इषुः शरः । इषुर्द्वयोः ॥ (४२१२) उ. **स्कन्देः सलोपश्च** ॥ कन्दुः ॥ (४२१३) उ. **सृजेरसुम् च** ॥ चात्सलोप उप्रत्ययश्च । रज्जुः ॥ (४२१४) उ. **कृतेराद्यन्तविपर्ययश्च** ॥ ककारतकारयोर्विनिमयः । तर्कुः सूत्रवेष्टनम् ॥ (४२१५) उ. **नावञ्चेः** ॥ न्यङ्कादित्वात्कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः ॥ (४२१६) उ. **फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च** ॥ फलेर्गुक् । फल्गुः । पाटेः पटिः । पाटयतीति पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति मधु । जायते इति जतु (४२१७) उ. **वलेर्गुक् च** ॥ वल संवरणे । वल्गुः ॥ (४२१८) उ. **शः कित्सन्वच्च** ॥ श्यतेरुः स्यात्स च कित्सन्वच्च । शिशुर्बालः ॥ (४२१९) उ. **यो द्वे च** ॥ ययुरश्वोऽश्वमेधीयः । सन्वदिति प्रकृते द्वेग्रहणमित्त्वनिवृत्त्यर्थम् ॥ (४२२०) उ. **कुर्भ्रश्च** ॥ बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ । चादन्यतोऽपि । चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः ॥ (४२२१) उ. **पॄभिदिव्यधिगृधिधृषिभ्यः** ॥ कुः स्यात् । पुरुः । भिनत्ति भिन्दुर्वज्रम् । ग्रहिज्येति सम्प्रसारणम्[२४१२] । विरहिणं विध्यति

---

(४२०७) **अभिव्याप्येति** । यद्यपि 'फलिपाटि–४२१६' इति सूत्रं यावदनुवर्तत इति न्यासग्रन्थेन मर्यादीकृत्येत्यपि प्रतीयते तथाप्यभिव्याप्येत्येवोचितम्, 'पिबतं सौम्यं मधु' इत्यादौ मधुशब्दस्याद्युदात्ततादर्शनात्, 'वोतो गुणवचनात्' इति सूत्रे हरदत्तेनाप्यभिव्याप्येति स्पष्टमभिधानाच्चेति भावः ॥ (४२०८) **शृस्वृस्निहि**–। 'शॄ हिंसायाम्', 'स्वृ शब्दोतापयोः', । 'ष्णिह उपतापे', 'त्रपूष् लज्जायाम्', 'असु क्षेपणे', 'वस निवासे', 'हन हिंसागत्योः', 'क्लिदू आर्द्रीभावे', 'बन्ध बन्धने', 'मन ज्ञाने' ॥ **शरुरिति** । 'शरुः कोपे शरे वज्रे' इति हेमचन्द्रः ॥ **स्वरुर्वज्रमिति** । 'शतकोटिः स्वरुः शंबः' इत्यमरः ॥ **त्रपु सीसमिति** । तद्धि अग्निं दृष्ट्वा त्रपते लज्जते इव । 'रङ्गसीसकयोस्त्रपु' इति मेदिनी ॥ अस्यन्ति क्षिपन्ति शरीरमित्यसवः प्राणाः ॥ **हनुरिति** । 'हनुः पुमानधरो गण्डात्' इति वररुचिकोशः । स्त्रीलिङ्गोऽप्ययम् 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनीकोशः । अतिशायने मतुप् । हनुमान् । 'अन्येषामपि दृश्यते ५३९०' इति दृशिग्रहणात्पाक्षिको दीर्घः । हनूमान् ॥ स्नेहेन बध्नातीति बन्धुः । प्रज्ञादित्वाद्बान्धवः । 'बन्धुर्बन्धूकपुष्पे स्याद्बन्धुर्भ्रातरि बान्धवे' इति विश्वः ॥ मनुरादिराजो मन्त्रश्च ॥ (४२०९) **स्यन्देः**–। 'स्यन्दू प्रस्रवणे' ॥ (४२१०) **उन्देः**–। 'उन्दी क्लेदने' ॥ (४२११) **ईषेः**–। 'ईष गतिहिंसादानेषु' ॥ (४२१२) **स्कन्देः**–। 'स्कन्दिर् गतिशोषणयोः' ॥ **कन्दुरिति** । स्कन्दत्यस्मिन् जनताप इति व्युत्पत्त्या भोगस्थानमिति केचित् । अन्ये तु स्कन्दति शोषयतीति कन्दुर्लोहादिपात्रमित्याहुः । अत एव 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम्' इत्यमरः । कन्दुर्वा ना इति पूर्वेणान्वयाद्वा पुमानित्यर्थः ॥ (४२१३) **सृजेः**–। 'सृज विसर्गे' सृजतीति रज्जुः स्त्रियाम् । आगमसकारस्य श्चुत्वेन शः, जश्त्वेन जः । 'सृजेरम् च' इति सुवचमिति नव्याः । 'रज्जुर्वेण्यां गुणे योषित्' इति मेदिनी ॥ (४२१४) **कृतेराद्यन्त**–। 'कृती छेदने' । **तर्कुरिति** । कृत्यतेऽनेनेति तर्कुः सूत्रवेष्टनं यन्त्रविशेषः । 'तर्कुटी सूत्रला तर्कुः' इति हारावली ॥ (४२१५) **नावञ्चेः** । 'अञ्चु गतौ' । 'न्यङ्कुर्मुनौ मृगे पुंसि' इति मेदिनी ॥ (४२१६) **फलिपाटि**–॥ 'फल निष्पत्तौ', 'पट गतौ' ण्यन्तः, 'णम प्रह्वत्वे शब्दे', 'मन ज्ञाने', 'जनी प्रादुर्भावे' एभ्य उः स्यादेषाञ्च यथाक्रमं गुगागमः, पटि नाकि ध त इत्यादेशाश्च भवन्ति । इह एकापि षष्ठी विषयभेदाद्भिद्यते । गुगागमे हि फलेरवयवषष्ठी, पट्याद्यादेशचतुष्टयविधौ तु पाट्यादिभ्यः स्थानषष्ठी, साऽपि धतयोर्विधौ अन्तेऽप्युपसंह्रियत इति विवेकः । 'अनागमकानां सागमका आदेशाः' इति पक्षे स्थानषष्ठ्येवेति बोध्यम् । '**फल्गु**रसारेऽभिधेयवत् । नदीभेदे मलय्वां स्त्री' इति मेदिनी ॥ **नाकुर्वल्मीकमिति** । 'वामलूरश्च **नाकुश्च** वल्मीकं पुंनपुंसकम्' इत्यमरः ॥ **मध्विति** । 'मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे **मधु**' इति हेमचन्द्रः । 'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्द्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधु' इति शाश्वतः ॥ (४२१७) **वलेः**–। 'वल संवरणे' इति दन्त्योष्ठ्यादिः । '**वल्गु** स्याच्छगले पुंसि सुन्दरे चाभिधेयवत्' इति मेदिनी । यत्तु उज्ज्वलदत्तेन 'बलेर्गुक् च' इति ओष्ठ्यादित्वात् 'बल प्राणने' इत्युपन्यस्तं, तल्लक्ष्यविरोधादुपेक्ष्यम् । 'अयं नाभावदति वल्गु वो गृहे' इत्यादौ दन्त्योष्ठ्यपाठस्य निर्विवादत्वात् ॥ (४२१८) **शः कित्**–। 'शो तनूकरणे' अस्मादुप्रत्ययः, 'आदेच उपदेशे–३१६३' इत्यात्त्वं, 'द्वित्वं, 'सन्यतः ३०९३' इत्यभ्यासस्येत्त्वम् । 'आतो लोप इटि च ३६६५' इत्याकारलोपः । शिशुः ॥ (४२१९) **यो द्वे च** । 'या प्रापणे' ॥ (४२२०) **कुर्भ्रश्च** । 'भृञ् भरणे' अस्मात्कुप्रत्ययो धातोर्द्वित्वञ्च भरतीति बभ्रुः ॥ धरणिकोशस्थमाह–**बभ्रुरित्यादि** । **बभ्रुर्वैश्वानरे** शूलपाणौ च गरुडध्वजे । विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्' इति मेदिनीकोशः ॥ **चादन्यतोऽपीति** । 'भ्रः कुश्च' इति वक्तव्ये प्राक् प्रत्ययनिर्देशादित्येके । भ्रश्चेति प्रकृतिसंबद्धेन चकारेण प्रकृत्यन्तरसमुच्चयादित्यन्ये ॥ (४२२१) **पॄभिदि**–। 'पॄ पालनपूरणयोः', 'भिदिर् विदारणे', 'व्यध

विधुः । विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे । गृधुः कामः । धृषुर्दक्षः॥ (४२२२) (उ) **कृग्रोरुच्च** ॥ करोतीति कुरुः । गृणातीति गुरुः ॥ ( ४२२३ ) (उ) **अपदुःसुषु स्थः** ॥ सुषामादिषु[१४६१] चेति षत्वम् । अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु ॥ ( ४२२४ ) (उ) **रपेरिच्चोपधायाः** ॥ अनिष्टं रपतीति रिपुः ॥ ( ४२२५ ) (उ) **अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकाराश्च** ॥ अर्जयति गुणान् ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः । अन्धुः कूपः । पांशुर्ना न द्वयो रजः । तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः । बाधते इति बाहुः । बाहुः स्त्रीपुंसयोर्भुजः ॥ ( ४२२६ ) (उ) **प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च** ॥ त्रयाणां कुः सम्प्रसारणं भ्रस्जेः सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वात्कुत्वम् । भृज्जति तपसा भृगुः ॥ (४२२७) (उ) **लङ्घिबंह्योर्नलोपश्च** ॥ लघुः ॥ (४२२८) (वा) **बालमूललघ्वलमङ्गुलीनां वा लो रमापद्यते** ॥ रघुर्नृपभेदः । बहुः ॥ (४२२९) (उ) **ऊर्णोतेर्नुलोपश्च** ॥ ऊरुः सक्थि ॥ ( ४२३० ) (उ) **महति ह्रस्वश्च** ॥ उरु महत् ॥ (४२३१) (उ) **श्लिषेः कश्च** ॥ श्लिष्यतीति श्लिकुर्भृत्यः । उद्यतो ज्योतिश्च ॥ ( ४२३२ ) (उ) **आङ्परयोः खनिशृभ्यां डिच्च** ॥ आखनतीत्याखुः । परं शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि ॥ ( ४२३३ ) (उ) **हरिमितयोर्द्रुवः** ॥ द्रु गतावस्माद् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः । मितं द्रवति मितद्रुः समुद्रः ॥ ( ४२३४ ) (उ) **शते च** ॥ शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च । तद्वान् द्रुमः ॥ ( ४२३५ ) (उ) **खरुशङ्कुपीयुनीलङ्गुलिगु** ॥ पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खः अश्वश्च।

---

ताडने,' 'गृधु अभिकांक्षायाम्', 'ञिधृषा प्रागल्भ्ये' ॥ **पुरुरिति** । कुप्रत्यये परत 'उदोष्ठ्यपूर्वस्य ३३१२' इत्युत्वे रपरत्वम् । 'पुरुः प्राज्येऽभिधेयवत् । पुंसि स्याद्देवलोके च नृपभेदपरागयोः' इति मेदिनी ॥ '**विधुः शशाङ्के**' इत्यादि तु विश्वकोशः । इह सूत्रे 'धृषिहृषिभ्यश्च' इति पठित्वा हृषुर्हर्षः । 'सूर्याग्निशनिराहवोऽपि हृषवः' इति केचित् ॥ (४२२२) **कृग्रोरुच्च** । 'डुकृञ् करणे', 'गॄ शब्दे' आभ्यां कुः स्यादुकारोऽन्तादेशश्च । 'उरण्रपरः १०५' '**कुरुर्नृपान्तरे** भक्ते पुमान् पुंभूम्नि नीवृति' इति मेदिनी ॥ ( ४२२३ ) **अपदुःसु**—। 'ष्ठा गतिनिवृत्तौ' ॥ **सुषामेत्यादि** । एतच्च न्यासाद्यनुरोधेनोक्तम् । वार्तिककृता तु 'स्थास्थिन्स्थूनाम्[१]' इत्युपसंख्यातम् । '**अपष्ठुः** पुंसि बाले च वामे स्यादन्यलिङ्गकः' इति मेदिनी । वामे प्रतिकूले । एषां त्रयाणां मृगय्वादिपाठेन सिद्धत्वात्सूत्रमिदं न्यासकारस्य न संमतमिति रक्षितः ॥ ( ४२२५ ) **अर्जिदृशि**—। 'अर्ज अर्जने' अस्य ऋजिरादेशः, दृशेः पशिरादेशः, कमेस्तुगागमः, 'अम रोगे, गत्यादौ वा' अस्य धुगागमः, 'पशि नाशने' सौत्रो धातुरस्य दीर्घः, 'बाधृ लोडने' अस्य हादेशः, षड्भ्योऽपि कुप्रत्ययः स्यादित्यर्थः ॥ **अविशेषेणेति** । चादिगणे पश्विति पठितम् । '**पशु** दृश्यर्थमव्ययम्' इति धरणिः । कन्तुः कन्दर्पः । 'इः **कन्तुर्मकराङ्कः**' इति त्रिकाण्डशेषः । **पांसुरिति** । 'पडि पसि नाशने' चुरादिर्ण्यन्तः ॥ **स्त्रीपुंसयोरिति** । उक्तं ह्यमरेण 'द्वौ परौ द्वयोः । भुजबाहू' इति । परौ द्वौ भुजबाहुशब्दौ द्वयोः स्त्रीपुंसयोरिति तदर्थः । अकारान्तोऽप्ययम् । अत एव '**बाहोऽ**श्वभुजयोः पुमान्' इति दामोदरः ॥ '**बाहा भुजे** पुमान्मानभेदाश्ववृषवायुषु' इति मेदिन्यां टाबन्तोऽप्ययम् ॥ (४२२६) **प्रथिम्रदि**--। 'प्रथ प्रख्याने', 'म्रद मर्दने', 'भ्रस्ज पाके'। प्रथते इति '**पृथुः** स्यान्महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेऽथ पुमानग्नौ नृपान्तरे' इति मेदिनी । म्रदितुं शक्यतेऽकठिनत्वादिति मृदुः कोमलः ॥ '**भृगुः** शुक्रे प्रपाते च जमदग्नौ पिनाकिनि' इति विश्वः ॥ ( ४२२७ ) **लङ्घि**--'लघि लाघि गतौ', 'बहि महि वृद्धौ' ॥ **लघुरिति** । 'पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णागुरुण्यपि' इति त्रिकाण्डशेषः । '**लघुरगुरौ** च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ स्त्रियाम्' इति मेदिनी ॥ ( ४२२८ ) **नृपभेद इति** । एतेन 'अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवम्' इति कालिदासवचनं व्याख्यातम् ॥ **बहुरिति** । 'बहुस्तुल्यादिसंख्यासु विपुले त्वभिधेयवत्' इति मेदिनी ॥ ( ४२२९ ) **ऊरुरिति** । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । ऊर्णूयते आच्छाद्यते इत्यूरुः कर्मणि प्रत्ययः ॥ ( ४२३० ) **उरु महदिति**। कर्त्तरि प्रत्ययः॥ (४२३१) **श्लिषेः**—। 'श्लिष आलिङ्गने' अस्मात्कुप्रत्ययः कश्चान्तादेशः ॥ **उद्यत इति** । स हि यावत्कार्यं श्लिष्यति लगति व्याप्रियत इति यावत् ॥ ( ४२३२ ) **आङ्पर**—। 'खनु अवदारणे' 'शॄ हिंसायाम्' ॥ **पर्शुरपीति** । '**पर्शुः परशुना** सह' इति विश्वः ॥ ( ४२३३ ) **हरिमित**--। 'द्रु गतौ' अस्माद्धरिमितयोरुपपदयोः कुः स्यात्स च डित् ॥ **हरिद्रुर्वृक्ष इति** । दारुहरिद्रा इत्येके । ( ४२३४ ) शतद्रुर्नदीभेदः । 'शितद्रुस्तु **शतद्रुः** स्यात्' इत्यमरः ॥ **तद्वानिति** । 'द्युद्रुभ्यां मः ॥ २५९०'॥ (४२३५) **खरुशङ्कु**—। 'खनु अवदारणे', 'शकि शङ्कायाम्' ॥ **काम इत्यादि** । खरुः पतिंवरा कन्येत्यपि बोध्यम् । '**खरुर्दर्पे** हरे दन्ते दैत्ये श्वेते तु वाच्यवत्' इति विश्व-

---

१–संप्रति भाष्ये 'स्थास्थिन्स्थूणाम्' इति पठ्यते । 'सव्येष्ठाः, परमेष्ठी, 'सव्येष्ठा सारथिः' इति चोदाहृतम् । किञ्चेदं भाष्यम् न वार्तिकमिति चिन्त्यमेतत् इति शब्दरत्नम् ॥

शङ्कुर्ना कीलशल्ययोः । पिबतेरीत्त्वं युगागमश्च । पीयुर्वायसः काकः सुवर्णं च । निपूर्वाल्लगि गतावित्यस्मात्कुत्वं नेर्दीर्घश्च । नीलङ्गुः कृमिविशेषः । शृगालश्च । नीलाङ्गुरिति पाठान्तरम् । तत्र धातोरपि दीर्घः । लगे सङ्गे । अस्य अत इत्त्वं च । लगतीति लिगु चित्तम् । लिगुर्मूर्खः॥ ( ४२३६ ) **उ॰ मृगय्वादयश्च** ॥ एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् ॥ ( ४२३७ ) **उ॰ मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्** ॥ मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वादङ्कूरोऽपि ॥ ( ४२३८ ) **उ॰ व्यथेः सम्प्रसारणं किच्च** ॥ विथुरश्चोररक्षसोः ॥ ( ४२३९ ) **उ॰ मकुरदर्दुरौ** ॥ मकुरो दर्पणः । बाहुलकान्मुकुरोऽपि । दॄ विदारणे । धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च । दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरा चण्डिकायां स्याद् ग्रामजाले च दर्दुरमिति विश्वः ॥ ( ४२४०-१ ) **उ॰ मद्गुरादयश्च** ॥ उरजन्ता निपात्यन्ते । माद्यतेर्गुक् । मद्गुरो मत्स्यभेदः । कबृ वर्णे । रुगागमः कर्बुरः श्वेतरक्षसोः । बध्नातेः खर्जूरादित्वादूरोऽपि । बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु इति रन्तिदेवः ॥ ( ४२४०-२ ) **उ॰ कोकतेर्वा कुक्** ॥ कुक्कुरः । कुकुरः ॥ ( ४२४१ ) **उ॰ असेरुरन्** ॥ असुरः ॥ प्रज्ञाद्यण् । आसुरः ॥ ( ४२४२ ) **उ॰ मसेश्च** ॥ पञ्चमे पादे मसेरूरन्निति वक्ष्यते । मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति । मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः । मसूरी पापरोगे स्यादुपधाने पुनः पुमान् । मसूरमसुरौ च द्वाविति विश्वः ॥ ( ४२४३ ) **उ॰ शावशेराप्तौ** ॥ शु इति आश्चर्ये । श्वशुरः । पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता

---

त्रिकाण्डशेषौ ॥ शङ्कतेऽस्मादिति शङ्कुः । 'शङ्कुः कीले गरे शस्त्रे संख्यापादपभेदयोः । यादोभेदे च पापे च स्थाणावपि च दृश्यते' इति विश्वः ॥ **पीयुरिति** । 'पीयुः काले रवौ घोरे' इति मेदिनी ॥ **क्रिमिविशेष इति** । '**नीलङ्गुः** क्रिमिजातौ स्याद्भम्भरालीप्रसूनयोः इति विश्वः । '**नीलङ्गुः** स्यात्क्रमौ पुंसि भम्भराल्यान्तु योषिति' इति मेदिनीकारः ॥ **पाठान्तरमिति** । 'नीलङ्गुरपि **नीलाङ्गुः**' इति विश्वः ॥ **धातोरपीति** । केचित्तु--नीलशब्दे उपपदे गमेष्टिलोपः उपपदस्य मुम् दीर्घश्च पाक्षिको निपात्यते इत्याहुः । '**लिगु** चित्ते नपुंसकम्' इति वररुचिः ॥ ( ४२३६ ) **मृगय्वादयश्च** ॥ '**मृगयुः** पुंसि गोमायौ व्याधे च परमेष्ठिनि' इति मेदिनी । '**मृगयुर्**ब्रह्मणि ख्यातो गोमायुव्याधयोरपि' इति विश्वः ॥ '**देवयुर्**वाच्यलिङ्गे स्याद्धार्मिके लोकयात्रिके' इति मेदिनी ॥ **आकृतिगण इति** । तेन 'पील प्रतिष्टम्भे' अस्मात्कुः '**पीलुर्**गजे द्रुमे काण्डे परमाणुप्रसूनयोः' इति विश्वः । भाट्टास्तु पीलुशब्दस्य वृक्षे आर्यप्रसिद्धिः, गजे तु म्लेच्छप्रसिद्धिरित्याश्रित्य व्यवजह्रुः ॥ 'पडि गतौ' अस्मात्कुः, धातोर्वृद्धिश्च पाण्डुः ॥ 'कडि मदे' कण्डुरित्यादि बोध्यम् ॥ ( ४२३७ ) **मन्दिवाशि**--। 'मदि स्तुत्यादौ,' 'वाश्रृ शब्दे', 'मन्थ विलोडने', 'चते याचने', 'चङ्क' इति सौत्रो धातुः, 'अकि लक्षणे'॥**वाशुरा रात्रिरिति** । वाश्यन्तेऽस्यामिति विग्रहः 'वाशुरो गर्दभः' इत्यन्ये । '**वाशुरा** वाशितारात्र्योः' इति मेदिनीहेमचन्द्रौ ॥ **चङ्कुर इति** । '**चङ्कुरः** स्यन्दने वृक्षे' इति मेदिनी ॥ '**अङ्कुरो** रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि' इति च ॥ **खर्जूरादित्वादिति** । ऊरप्रत्ययोऽपीति भावः । 'अङ्कुरो**ऽङ्कूर** एव च' इति विश्वप्रकाशः ॥ ( ४२३८ ) **व्यथेः**--। 'व्यथ भयसंचलनयोः' अस्मादुरच् कित्स्याद्धातोः संप्रसारणञ्च । दशपाद्यां तु 'व्यथेः सम्प्रसारणं किच्च' इति सूत्रं पठित्वा धकारमन्तादेशं विधाय--विधुरोऽनग्निक इत्युदाहृतम् । माधवप्रसादकारादिभिरिति तदेवानुसृतं, न त्वेतद्युक्तम्--'त्वमेषां विथुरा शवांसि' 'अथ विद्धा विथुरेणाचिदस्रा' इत्यादिमन्त्रेषु थकारपाठस्य निर्विवादत्वात् । यदपि माधवेनोक्तं 'विदिभिदिच्छिदि-' इत्यत्र 'व्यथेः सम्प्रसारणं च' इति वचनात्कुरचि धान्तरूपमिति । तदपि स्थवीयः, कुरज्विधायके सूत्रे व्यथेरुपसंख्यानस्याप्रसिद्धत्वात् । तस्मादिह 'धः किच्च' इति दशपादीपाठ उपेक्ष्य एव । कथं तर्हि 'विधुरः' इति प्रयोगस्य निर्वाह इति चेत् । धुरो विगत इति प्रादिसमासेनेत्यवधेहि । 'समासान्ताः' इति सूत्रे वृत्तिपदमञ्जर्योस्तथैवोक्तत्वात् । इह 'व्यथेः किच्च' इत्येवास्तु 'ग्रहिज्या-३२१६' इत्यनेन सम्प्रसारणं स्यादेवेति न भ्रमितव्यम्, ग्रहिज्यादिषु व्यधिर्वर्गचतुर्थो, न त्वयमिति निष्कर्षात् ॥ ( ४२३९ ) **मकुर इति** । 'मकि मण्डने' अस्मादुरच् नलोपश्च ॥ **बाहुलकादिति** । धातोरुपधायाः पक्षे उकार इति भावः । '**मकुरो मुकुरोऽपि** च' इति विश्वः । '**मकुरः** स्यान्मुकुरवद्दर्पणे च कुलद्रुमे । कुलालदण्डे' इति मेदिनी ॥ **धातोर्द्विर्वचनमिति** । केचित्तु गुणो दुगागमश्च निपात्यत इत्याहुः ॥ **ग्रामजाले चेति** । 'यामजाले च' इति पाठान्तरम् ॥ ( ४२४०-१ ) **मद्गुरादयश्च** । 'मदी हर्षे' 'कर्बुरं सलिले हेम्नि **कर्बुरः** पापरक्षसोः । **कर्बुरा** कृष्णवृन्तायां शबले पुनरन्यवद्' इति मेदिनी॥ **बन्धूरबन्धुराविति** । 'बन्ध बन्धने'॥ ( ४२४०-२ ) **कुक्कुर इति** । 'कुक आदाने' ॥ **कुक्कुरः कुकुरो** मतः' इति हट्टचन्द्रः । '**कुक्कुरः** सारमेये ना ग्रन्थिपर्णे नपुंसकः' इति मेदिनी । 'अत सातत्यगमने' आदिदीर्घः । आतुरः । 'वा गतिगन्धनयोः' शुगागमः । '**वाशुरा** मृगबन्धिनी' इत्यादिरपि ज्ञेयम् ॥ ( ४२४१ ) **असेः**--। 'असु क्षेपणे' ॥ ( ४२४२ ) **मसेश्च** ॥ 'मसी परिणामे' ।'**मसूरा मसुरा** वा ना वेश्याव्रीहिप्रभेदयोः । **मसूरी** पापरोगे स्यादुपधाने पुनः पुमान्' इति मेदिनी ॥ ( ४२४३ ) **शावशेः**--। शु इति कृताकारलोप आशुशब्दस्तस्मिन्नुपपदे आप्तौ गम्यमानायाम्--'अशू व्याप्तौ' इत्यस्माद्धातोरुरन्स्यात् । श्वशुरो दम्पत्योः

तयोरित्यमरः ॥ ( ४२४४ ) **उ॰ अविमह्योष्टिषच्** ॥ अविषः । महिषः ॥ (४२४५) **उ॰ अमेर्दीर्घश्च** ॥ आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि ॥ ( ४२४६ ) **उ॰ रुहेर्वृद्धिश्च** ॥ रङ्कुशम्बररौहिषाः । रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतमिति संसारावर्तः ॥ ( ४२४७ ) **उ॰ तवेर्णिद्वा** ॥ तवेति सौत्रो धातुः । तविषताविषावब्धौ स्वर्गे च । स्त्रियां ताविषी नदी देवकन्या भूमिश्च । तविषी बलमिति वेदभाष्यम् ॥ ( ४२४८ ) **उ॰ नञि व्यथेः** ॥ अव्यथिषोऽब्धिसूर्ययोः । अव्यथिषी धरारात्र्योः ॥ ( ४२४९ ) **उ॰ किलेर्बुक् च** ॥ किल्बिषम् ॥ ( ४२५० ) **उ॰ इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्** ॥ इषिरोऽग्निः । मदिरा सुरा । मुदिरः कामुकाभ्रयोरिति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । छिदिरोऽसिकुठारयोः । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि । मन्दिरं मन्दिराऽपि स्यादिति विश्वः । चन्दिरौ चन्द्रहस्तिनौ । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः । मुहिरः काम्यसभ्ययोः । मुचिरो दाता । रुचिरम् । रुधिरम् । बधिरः । शुष शोषणे । शुषिरं छिद्रम् । शुष्कमित्यन्ये ॥ ( ४२५१ ) **उ॰ अशेर्णित्** ॥ आशिरो वह्निरक्षसोः ॥ ( ४२५२ ) **उ॰ अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** ॥ अजेर्वीभावाभावः । अजिरमङ्गणम् । शशेरुपधाया इत्वम् । शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत् । श्रथ मोचने उपधाया इत्वं रेफलोपः । प्रत्ययरेफस्य लत्वम् । शिथिलम् । स्थास्फायोष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुग् ह्रस्वत्वं च । स्थविरः । खदिरः । बाहुलकात् शीङो बुग् ह्रस्वत्वं च । शिबिरम् ॥ (४२५३) **उ॰ सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्** ॥ सलति गच्छति निम्नमिति सलिलम् । कलिलम् । अनिलः । महिला । पृषोदरादित्वान्महेलाऽपि । भड इति सौत्रो धातुः । भडिलौ शूरसेवकौ । भण्डिलो दूतः कल्याणं च । शण्डिलो मुनिः । पिण्डिलो गणकः । तुण्डिलो मुखरः । कोकिलः । भविलो भव्यः । बाहुलकात्कुटिलः ॥ (४२५४) **उ॰ कमेः पश्च** ॥ कपिलः ॥ ( ४२५५ ) **उ॰ गुपादिभ्यः कित्** ॥

---

पिता । 'पतिपत्न्योः प्रसूः श्वश्रूः, श्वशुरस्तु पिता तयोः' इत्यमरः ॥ ( ४२४४ ) **अवि--** । 'अव रक्षणादौ', 'मह पूजायाम्' ॥ **अविष इति** । राजा समुद्रश्च ॥ महिषो महान् । 'तुरीयं धाम महिषो विवक्ति उत माता महिषमन्ववेनत्' । टित्त्वान्ङीप् । महिषी राजपत्नी ॥ ( ४२४६ ) **रुहेः--** । 'रुह बीजजन्मनि प्रादुर्भावे च' '**रौहिषो** मृगभेदः स्याद्रौहिषं च तृणं मतम्' इति संसारावर्त्तः ॥ ( ४२४७ ) **वेदभाष्यमिति** । 'इन्द्रो वृत्रस्य तविषीम्', 'इन्द्रस्यात्र तविषीभ्यो विरप्शिन्' इत्यादिमन्त्रेष्विति भावः । वैदिकनिघण्टौ 'ओजः पाजः' इत्यादिषु बलनामसु तविषीशब्दस्य पाठश्चेह मूलमिति बोध्यम् । '**तविषः** शोभनाकारे मेलेऽब्धिव्यवसाययोः । **तविषी** देवकन्यायां पुंसि स्वर्गे महोदधौ' । '**ताविषी** चेन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने' इति मेदिनी ॥ ( ४२४८ ) **नञि व्यथेः** । 'व्यथ भयसंचलनयोः' ॥ ( ४२४९ ) **किलेः--** । 'किल श्वैत्यक्रीडनयोः' अस्मादिषच् धातोर्बुगागमश्च । '**किल्बिषं** पापरोगयोः । अपराधेऽपि' इति मेदिनी ॥ ( ४२५० ) **इषिमदि--** । 'इषु इच्छायाम्', 'मदी हर्षे', 'खिद दैन्ये', 'छिदिर् द्वैधीकरणे', 'भिदिर् विदारणे', 'मदि स्तुत्यादौ', 'चदि आह्लादने', 'तिम आर्द्रीभावे', 'मिह सेचने', 'मुह वैचित्त्ये' 'मुचॢ मोक्षणे', 'रुच दीप्तौ', 'रुधिर आवरणे', ''बन्ध बन्धने' 'शुष शोषणे', **इषिरोऽग्निरिति** । । आहार इत्यन्ये । '**छिदिरः** पावके रज्जौ करवाले परश्वधे' इति मेदिनी । '**मन्दिरं** नगरेऽगारे क्लीबं ना मकरालये' इति मेदिनी । '**चन्दिरो**ऽनेकपे चन्द्रे' इति च । '**तिमिरं** ध्वान्ते नेत्रामयान्तरे' इति । '**मिहिरः** सूर्यबुद्धयोः' इति मेदिनी । '**मुहिरः** कामिमूर्खयोः' इति च । 'सुन्दरं **रुचिरं** चारु' इत्यमरः । '**रुधिरो**ऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः' इति मेदिनी । बधिरः श्रोत्रेन्द्रियरहितः । '**शुषिरं** विवरं बिलम्' इत्यमरः ॥ (४२५१) **अशेः--** । 'अश भोजने' ॥ ( ४२५२ ) **अजिर--** 'अज गतौ', 'शश प्लुतगतौ', 'ष्ठा गतिनिवृत्तौ', 'स्फायी वृद्धौ', 'खद हिंसायाम्' ॥ **अजिरमिति** । दशपादीवृत्तौ तु नञ्पूर्वस्य जीर्यतेर्ऋवर्णलोपो निपात्यते इत्युक्तम् । तदपि ग्राह्यम् । 'आशुद्रुतमजिरं प्रत्नमीड्यम्' इत्यादौ न जीर्यतीत्यजिर इत्यस्यानुगुणत्वात् ॥ **अङ्गणमिति** । अङ्गेर्ल्युटि अनादेशः । नकारस्य बाहुलकात् णत्वमित्येके । अन्ये तु दन्त्यमेवेच्छन्ति । '**अजिरं** प्राङ्गणे काये विषये दर्दुरेऽनिले' इति मेदिनी । '**शिशिरो** ना हिमे न स्त्री त्वृतुभेदे जडे त्रिषु' इति च । विश्वकोशस्थमाह—**शिशिरं स्यादिति** । **खदिरो** वृक्षभेदः । '**खदिरी** शाकभेदे स्त्री ना चन्द्रे दन्तधावने' मेदिनी ॥ **शिबिरमिति** । शेरतेऽस्मिन् राजबलानि, 'निवेशः **शिबिरं** शण्ढे' इत्यमरः ॥ ( ४२५३ ) **सलिकलि--** । 'षल गतौ', 'कल संख्याने', 'अन प्राणने', 'मह पूजायाम्', 'भडि परिभाषणे', 'भडि कल्याणे', 'शडि रुजायाम्', 'पिडि संघाते', 'तुडि तोडने', 'कुक आदाने', 'भू सत्तायाम्', 'कुट कौटिल्ये' ॥ **कलिल इति** । मिश्रो गहनश्च । '**कलिलं** गहनं समे' इत्यमरः ॥ **महिलेति** । '**महिला** फलिनीस्त्रियोः' इति मेदिनी । 'प्रियङ्गुः **फलिनी** फली' इत्यमरः ॥ **पृषोदरेति** । तथा च दमयन्तीकाव्ये प्रयोगः--'परमहेलारतोऽप्यपारदारिकः' इति । परस्य महेला स्त्री, अथ च परमा उत्कृष्टा हेला क्रीडा, तत्र रत इत्यर्थः ॥ (४२५४) **कमेः--** । 'कमु कान्तौ' अस्मादिलच् पश्चान्तादेशः । '**कपिला** रेणुकायां च शिंशपागोविशेषयोः । पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् । नाऽनले

गुपिलो राजा । तिजिलो निशाकरः । गुहिलं वनम् ॥ ( ४२५६ ) (उ) मिथिलादयश्च ॥ मथ्यन्तेऽत्र रिपवो मिथिला नगरी । पथिलः पथिकः ॥ ( ४२५७ ) (उ) पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥ पतेरः पक्षी गन्ता च । कठेरः कृच्छ्रजीवी । कुठेरः पर्णाशः । बाहुलकान्नुम्न । गडेरो मेघः । गुडेरो गुडकः । दशेरो हिंस्रः ॥ ( ४२५८ ) (उ) कुम्बेर्नलोपश्च ॥ कुबेरः ॥ ( ४२५९ ) (उ) शदेस्त च ॥ शतेरः शत्रुः ॥ ( ४२६० ) (उ) मूलेरादयः ॥ एरगन्ता निपात्यन्ते । मूलेरा जटा । गुधेरो गोप्ता । गुहेरो लोहघातकः । मुहेरो मूर्खः ॥ ( ४२६१ ) (उ) कबेरोतच् पश्च ॥ कपोतः पक्षी ॥ ( ४२६२ ) (उ) भातेर्डवतुः ॥ भातीति भवान् ॥ ( ४२६३ ) (उ) कठिचकिभ्यामोरन् ॥ कठोरः । चकोरः ॥ ( ४२६४ ) (उ) किशोरादयश्च ॥ किंपूर्वस्य शृणातेष्टिलोपः किमोऽन्त्यलोपश्च । किशोरोऽश्वशावः । सहोरः साधुः ॥ ( ४२६५ ) (उ) कपिगडिगण्डिकटिपटिभ्य ओलच् ॥ कपीति निर्देशान्नलोपः । कपोलः । गडोलगण्डोलौ गुडकपर्यायौ । कटोलः कटुः । पटोलः ॥ ( ४२६६ ) (उ) मीनातेरूरन् । मयूरः ॥ ( ४२६७ ) (उ) स्यन्देः सम्प्रसारणं च ॥ सिन्दूरम् ॥ ( ४२६८ ) (उ) सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ सिनोतीति सेतुः । तितुत्रेति नेट्[४११४] । तन्तुः । गन्तुः । मस्तु दधिमण्डम् । सच्यत इति सक्तुः । अर्धर्चादिः । ज्वरत्वरेत्यूठ्[३६२६] । तत्र क्ङितीत्यनुवर्तत इति मते तु बाहुलकात् । ओतुर्बिडालः । धातुः । क्रोष्टा ॥ ( ४२६९ ) (उ) पः किच्च ॥ पिबतीति पीतुर्वह्नौ दिवाकरे ॥ ( ४२७० ) (उ) अर्तेश्च तुः ॥ अर्तेस्तुः स्यात्स च कित् । ऋतुः स्त्रीपुष्पकालयोः ॥ ( ४२७१ ) (उ) कमिमनिजनिगाभायाहिभ्यश्च ॥ एभ्यस्तुः स्यात् । कन्तुः कन्दर्पचित्तयोः । मन्तुरपराधः । जन्तुः प्राणी । गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च । भातुरादित्यः । यातुरध्वगकालयोः । रक्षसि क्लीबे । हेतुः कारणम् ॥ ( ४२७२ ) (उ) चायः किः ॥ केतुर्ग्रहपताकयोः ॥

---

वासुदेवे च मुनिभेदे च कुक्कुरे' इति मेदिनी । रेणुकेह लताविशेषः, 'हरेणुरेणुकाकुन्तीकपिलाभस्मगन्धिनी' इत्यमरात् ॥ ( ४२५५ ) गुपादिभ्यः-। 'गुपू रक्षणे', 'तिज निशाने', 'गुहू संवरणे' ॥ ( ४२५६ ) मिथिलादयश्च । 'मथे विलोडने', अकारस्येत्त्वं निपातनात् । 'पथे गतौ' ॥ ( ४२५७ ) पति—। 'पत्लृ गतौ', 'कठ कृच्छ्रजीवने', 'कुठि च' 'गड सेचने', 'गुड रक्षायाम्', 'दंश दशने' ॥ कुठिधातोरिदित्त्वात् नुमि प्राप्ते आह-बाहुलकादिति । ( ४२५८ ) कुबेः-। 'कुबि आच्छादने' अन्येषामैश्वर्यं कुम्बतीति 'कुबेरस्त्र्यम्बकसखः' ॥ ( ४२५९ ) शदेः-। 'शद्लृ शातने' ॥ ( ४२६० ) मूलेरा-। 'मूल प्रतिष्ठायाम्', 'गुध परिवेष्टने', 'गुहू संवरणे', 'मुह वैचित्त्ये' ॥ ( ४२६१ ) कबे-। 'कबृ वर्णे' 'कपोतः स्याच्चित्रकण्ठे पारावतविहङ्गयोः' इति मेदिनी । 'कपोतः पक्षिमात्रेऽपि' इति त्रिकाण्डशेषः । अत्र ओतचश्चित्त्वं प्रामादिकं 'यत्कपोतः पदमग्नौ कृणोति' 'देवाः कपोत इषितो यदिच्छन्' इत्यादौ सर्वत्र प्रत्ययस्वरेण मध्योदात्तस्यैव पठ्यमानत्वादित्याहुः ॥ ( ४२६२ ) भातेः-। 'भा दीप्तौ' । भवानिति । सर्वनामशब्दोऽयम् ॥ ( ४२६३ ) कठि-। 'कठ कृच्छ्रजीवने', 'चक तृप्तौ' । कठोरः कठिनः पूर्णश्च । 'कठोरताराधिपलाञ्छनच्छविः' इति माघः । चकोरः पक्षिभेदः ॥ ( ४२६४ ) किशोरा-। 'शॄ हिंसायाम्' 'षह मर्षणे' । 'किशोरोऽश्वस्य शावके । तैलपर्ण्यौषधौ च स्यादरुणावस्थसूर्ययोः' इति मेदिनी ॥ ( ४२६५ ) कपिगडि-। 'कपि चलने', 'गड सेचने', 'गडि वदनैकदेशे', 'कटे वर्षावरणयोः', 'पट गतौ' ॥ कपोल इति । केचित्तु सूत्रे कडिं पठन्ति । 'कडि मदे' कण्डोलश्चण्डालः । 'चण्डालिका तु कण्डोलवीणा चण्डालवल्लकी' इत्यमरः ॥ पटोल इति । 'पटोलं वस्त्रभेदे नौषधौ ज्योत्स्न्यां तु योषिति' इति मेदिनी । 'कल्ल शब्दे' बाहुलकादतोऽप्योलच् । 'कल्लोलः पुंसि हर्षे स्यान्महत्सूर्मिषु वारिणः' इति मेदिनी ॥ ( ४२६७ ) स्यन्देः-। 'स्यन्दू प्रस्रवणे' । 'सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तचूर्णके' इति मेदिनीविश्वप्रकाशौ ॥ ( ४२६८ ) सितनि-। 'षिञ् बन्धने', 'तनु विस्तारे', 'गम्लृ गतौ', 'मसी परिणामे', 'षच सेचने', 'अव रक्षणादौ', 'डुधाञ् धारणपोषणयोः', 'क्रुश आक्रोशे' 'सेतुर्नाऽलौ कुमारके' इति मेदिनी । 'सेतुरालौ स्त्रियां पुमान्' इत्यमरः । 'सूत्राणि नरि तन्तवः' इत्यमरः । 'मण्डं दधिभवं मस्तु' इति च । 'धातुर्ना नेन्द्रिये त्रिषु । शब्दयोनिमहाभूततद्गुणेषु रसादिषु । मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्थ्नि च' इति मेदिनी । 'श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः' इत्यमरः ॥ ( ४२६९ ) पः किच्च । 'पा पाने' अस्मात्तुन् स च कित् कित्त्वात् 'घुमास्था-३२७४' इतीत्त्वम् ॥ ( ४२७० ) अर्तेश्च तुः । 'ऋ गतौ' तुनि प्रकृते अन्तोदात्तार्थं तुः क्रियते 'ऋतुना यज्ञं, य ऋतुर्जनीनाम्' इत्यादि । 'ऋतुर्वर्षादिषट्सु च । आर्तवे मासि च पुमान्' इति मेदिनी । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः ॥ ( ४२७१ ) कमिमनि-। 'कमु कान्तौ', 'मन ज्ञाने', 'जनी प्रादुर्भावे', 'गै शब्दे', 'भा दीप्तौ', 'या प्रापणे', 'हि गतौ' । कमिग्रहणं प्रपञ्चार्थम्, 'अर्जिदृशि-४२२५' इत्यादिना कुप्रत्यये तुकि सिद्धत्वात् ॥ मन्तुरिति । 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ' इति मेदिनी । 'गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे' इति मेदिनी । 'भातुर्ना किरणे सूर्ये' इति मेदिनी । ( ४२७२ ) चायः किः ॥ 'चायृ पूजानिशामनयोः' अस्मात्तुर्धातोः किरादेशश्च ।

---

१ गुपादिसूत्रादारभ्य एतदन्तानि सप्त सूत्राणि केषांचिदसंमतानि-इति मनोरमा ॥

( ४२७३ ) उ॰ आप्नोतेर्ह्रस्वश्च ॥ अप्तुः शरीरम् ॥ ( ४२७४ ) उ॰ वसेस्तुन् ॥ वस्तु ॥ ( ४२७५ ) उ॰ अगारे णिच्च ॥ वेश्म भूर्वास्तुरस्त्रियाम् ॥ ( ४२७६ ) उ॰ कृञः क्तुः ॥ क्रतुर्यज्ञः ॥ ( ४२७७ ) उ॰ एधिवह्योश्चतुः ॥ एधतुः पुरुषः । वहतुरनड्वान् ॥ ( ४२७८ ) उ॰ जीवेरातुः ॥ जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे ॥ ( ४२७९ ) उ॰ आतृकन् वृद्धिश्च ॥ जीवेरित्येव । जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले ॥ ( ४२८० ) उ॰ कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥ कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मतः । चमूः । तनूः । धनूः शस्त्रम् । सर्ज सर्जने । सर्जूर्वणिक् । खर्ज व्यथने । खर्जूः पामा ॥ ( ४२८१ ) उ॰ मृजेर्गुणश्च ॥ मर्जूः शुद्धिकृत् ॥ ( ४२८२ ) उ॰ वहो धश्च ॥ वधूर्जायास्नुषास्त्रीषु ॥ ( ४२८३ ) उ॰ कषेश्छश्च ॥ कच्छूः पामा ॥ ( ४२८४ ) उ॰ णित्कसिपद्यर्तेः ॥ कासूः शक्तिः । पादूश्चरणधारिणी । आरूः पिङ्गलः ॥ ( ४२८५ ) उ॰ अणो डश्च ॥ आडूर्जलप्लवद्रव्यम् ॥ ( ४२८६ ) उ॰ नञि लम्बेर्नलोपश्च ॥ तुम्ब्यलाबूरुभे समे इत्यमरः ॥ ( ४२८७ ) उ॰ के श्र एरङ् चास्य ॥ कशब्दे उपपदे शृणातेरूः स्यादेरङ् चादेशः ॥ कशेरुस्तृणकन्दे स्त्री । बाहुलकादुप्रत्यये कशेरुः क्लीबे पुंसि च ॥ ( ४२८८ ) उ॰ त्रो दुट् च ॥ तरतेरूः स्यात्तस्य दुट् । तर्दूः स्याद् दारुहस्तकः ॥ ( ४२८९ ) उ॰ दरिद्रातेर्यालोपश्च ॥ इश्च आश्च यौ तयोर्लोपः । दद्रूः कुष्ठप्रभेदः ॥ ( ४२९० ) उ॰ नृतिशृध्योः कूः ॥ नृतूर्नर्तकः । शृधूरपानम् ॥ ( ४२९१ ) उ॰ ऋतेरम् च ॥ ऋतिः सौत्रो धातुः । ततः कूरमागमश्च । रन्तूर्देवनदी सत्यवाक् च ॥ ( ४२९२ ) उ॰ अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥ एते कूप्रत्ययान्ता निपात्यन्ते । अन्दूर्बन्धनम् । दृभी ग्रन्थे । निपातनान्नुम् । दृम्भूः । अनुस्वाराभावोऽपि निपातनादित्येके । दृन्भूः ॥ जनेर्बुक् ॥ जम्बूः । जमु अदने इत्यस्येत्येके । बाहुलकाद्ध्रस्वोऽपि । जम्बुः । कफं लाति कफेलूः श्लेष्मातकः । निपात-

---

'केतुर्ना रुक्पताकाविग्रहोत्पातेषु लक्ष्मणि' इति मेदिनी ॥ ( ४२७३ ) आप्नोतेः–। 'आप्लृ व्याप्तौ' ॥ अप्तुः शरीरमिति । अभिलषितार्थश्चाप्तव्यत्वात् । अत एव यागविशेषवाचकस्याप्तोर्यामशब्दस्याभिलषिताप्रायक इत्यवयवार्थमाहुः ॥ ( ४२७४ ) वसेः–। 'वस निवासे' ॥ ( ४२७६ ) कृञः–। 'डुकृञ् करणे' क्तोः कित्त्वाद् गुणाभावे यणादेशः । 'क्रतुर्यज्ञे मुनौ पुंसि' इति मेदिनी ॥ ( ४२७७ ) एधिवह्योश्चतुः । 'एध वृद्धौ', 'वह प्रापणे' चित्त्वादन्तोदात्तः । 'स्योनं पत्ये वहतुं कृणुष्व' । 'वहतुः पथिके वृषभे पुमान्' इति मेदिनी । (४२७८) जीवेः–। 'जीव प्राणधारणे' ॥ (४२७९) आतृकन्–। 'जैवातृकः पुमान् सोमे कृषकायुष्मतोस्त्रिषु' इति मेदिनी॥(४२८०)कृषिचमि–। 'कृष विलेखने', 'चमु अदने', 'तनु विस्तारे', 'धन धान्ये' ॥ रभसकोशस्थमाह–कर्षूः पुंसीति । 'कर्षूः पुमान् करीषाग्नौ स्त्रियां कुल्याल्पखातयोः' इति मेदिनी । 'चमूः सेनाविशेषे च सेनामात्रे च योषिति' इति मेदिनी । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । 'सर्जूर्वणिजि विद्युति । स्त्रियां स्वर्गे विधौ रुद्रे' इति मेदिनी ॥ 'खर्जूः कीटान्तरे वृतौ । खर्जूरीपादपे कण्ड्वाम्' इति च ॥ ( ४२८१ ) मृजेः–। 'मृजू शुद्धौ' अस्मादूः स्याद्वृद्ध्यपवादो गुणश्च । 'मर्जूः स्त्री शुद्धौ धावकेऽपि च' इति मेदिनी ॥ ( ४२८२ ) वहो धश्च । 'वह प्रापणे' 'वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु च' इति विश्वः । 'पृक्का महिला च वःधू' इति त्रिकाण्डशेषः ॥ ( ४२८३ ) कषेश्छश्च । 'कषशिष–' इति दण्डके हिंसार्थः । अस्मादूः स्याच्छश्चान्तादेशः । 'कच्छ्वां तु पाम पामा विचर्चिका' इत्यमरः ॥ ( ४२८४ ) णित्कसि–। 'कस गतौ', 'पद गतौ', 'रि गतौ' । 'कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रियाम्' इति मेदिनी । 'कासूः शक्त्यायुधे रुजि । बुद्धौ विकलवाचि स्यात्' इति हेमचन्द्रः ॥ ( ४२८५ ) अणो डश्च । 'अण' दण्डके शब्दार्थः । अस्मादूः स्यात्स च णित् । डश्चान्तादेशः ॥ ( ४२८६ ) नञि लम्बेः–। 'लबि अवस्रंसने' न लम्बते जले इत्यलाबूः ॥ ( ४२८७ ) के श्रः–। 'शॄ हिंसायाम्' ॥ ( ४२८८ ) त्रो दुट् च । 'तॄ प्लवनतरणयोः' ॥ तर्दूरिति । 'नेड्वशि–३९८१' इति नेट् । 'वरमनादौ' इति परिगणनं तु बाहुलकान्नाश्रीयते इत्याहुः । केचित्तु इडभावाय 'त्रो दुक् च' इति पठित्वा धातोर्दुगागममाहुः । तेषां तु धातोर्गुणो दुर्लभः । दुगागमात्पूर्वं यत्प्राप्तं तदपि भवतीत्येवं चकारबलेन व्याख्याय वा गुणः साधनीयः ॥ ( ४२८९ ) दरिद्रातेः–। 'दरिद्रा दुर्गतौ' ॥ इश्च आश्चेति । भोजदेवस्तु–'र्यालोपः' इति रेफादिकं पदं छित्त्वा द्वेधा व्याख्यातवान्–रिश्च आश्चेति व्याख्याने दद्रूः 'रश्च इश्च आश्च' इति व्याख्याने तु 'अन्त्यबाधेऽन्त्यसदेशस्य ५६२' इति द्वितीयस्यैव रेफस्य लोपाद्दर्द्रूरिति ॥ मृगय्वादित्वात्कुप्रत्यये दर्द्रुरित्यन्ये । 'दर्द्रुणो दर्द्रुरोगी स्यात्' इत्यमरः । इत्थं चत्वारि रूपाणि ॥(४२९०)नृति–। 'नृती गात्रविक्षेपे', 'शृधु शब्दकुत्सायाम्' ॥ (४२९२) अन्दूदृम्भू–। 'अदि बन्धने' । 'नृतिशृध्योः कूः ४२९०' इत्यत्रादिग्रहणं न कृतं वैचित्र्यार्थमित्याहुः । 'ला आदाने' कफपूर्वः । 'डुधाञ् धारणादौ' कर्कपूर्वः । 'षोऽन्तकर्मणि' दिधिपूर्वः, षत्वं च ॥ अन्दूर्बन्धनमिति । 'अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च' इति मेदिनी । 'अन्दुको हस्तिनिगडे' इत्यमरः । संज्ञायां कन्, 'केऽणः ११९९' इति ह्रस्वः । केचित्तु 'अम गतौ' अस्य दुक् । अन्दूर्बुद्धिरिति व्याचख्युः । 'दृभी ग्रन्थे' इति तुदादिरयम् । दृभतीति दृम्भूः संदर्भकर्त्तेत्यर्थे कथक इत्यन्ये । कैयटमतानुरोधेनास्य रूपाणि हूहूवदित्युक्तम् । माधवादयस्तु–दृढशब्दे उपपदे भुवः कूप्रत्ययः, उपपदस्य दृन्नादेशो निपात्यते, यद्वा दृढार्थकं दृन्निति नान्तमव्ययमुपपदम् । 'दृन्भूस्तु सर्पः कपिर्वा' इति व्याख्याय 'दृन्कर–३९५' इति याणि

नादेस्त्वम् । कर्कं दधाति कर्कन्धूर्बदरी । निपातनान्नुम् । दिधिं धैर्यं स्यति त्यजतीति दिधिषूः । पुनर्भूः । केचित्तु--अन्दूदृम्फूजम्बूकम्बू इति पठन्ति । दृम्फ उत्क्लेशे । दृम्फूः सर्पजातिः ॥ कमेर्बुक् । कम्बूः परद्रव्यापहारी ॥ ( ४२९३ ) उ. **मृग्रोरुतिः** ॥ मरुत् । गरुत्पक्षः ॥ ( ४२९४ ) उ. **ग्रो मुट् च** ॥ गिरतेरुतिस्तस्य च मुट् । गर्मुत्सुवर्णं तृणविशेषश्च ॥ ( ४२९५ ) उ. **हृषेरुलच्** ॥ हर्षुलो मृगकामिनोः । बाहुलकाच्चटतेः चटुलं शोभनम् ॥ ( ४२९६ ) उ. **हृसृरुहियुषिभ्य इति** ॥ हरित्ककुभि वर्णे च तृणवाजिविशेषयोः ॥ सरिन्नदी । रोहित् मृगविशेषस्य स्त्री । युष इति सौत्रो धातुः । ऋश्यस्य रोहित् पुरुषस्य योषित् इति भाष्यम् ॥ ( ४२९७ ) उ. **ताडेर्णिलुक् च** ॥ ताडयतीति तडित् ॥ ( ४२९८ ) उ. **शमेर्ढः** ॥ बाहुलकादित्संज्ञा एयादेश इट् च न । शण्ढः स्यात्पुंसि गोपतौ । शण्ढः क्लीबः ॥ ( ४२९९ ) उ. **कमेरठः** ॥ कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकमिति मेदिनी । बाहुलकाज्जरठः ॥ (४३००) उ. **रमेर्वृद्धिश्च** ॥ रामठं हिङ्गु ॥ (४३०१) उ. **शमेः खः** ॥ शङ्खः ॥ (४३०२) उ. **कणेष्ठः** ॥ कण्ठः ॥ (४३०३) उ. **कलस्तृपश्च तृपतेः** ॥ कलप्रत्ययः, चात्तृफतेः । तृपला लता । तृफला तु फलत्रिके ॥ (४३०४) उ. **शपेर्वश्च** ॥ शवलः ॥ (४३०५) उ. **वृषादिभ्यश्चित्** ॥ वृषलः । पललम् । बाहुलकाद् गुणः । सरलः । तरलः ॥ (४३०६) उ. **कमेर्बुक्** । कम्बलः । मुस खण्डने । मुसलम् ॥ (४३०७) उ. **लङ्गेर्वृद्धिश्च** ॥ लाङ्गलम् ॥ (४३०८) उ. **कुटिकशि-**

---

वर्षाभूवद्रूपमस्येत्याहुः ॥ **ह्रस्वोऽपीति** । अत एव विक्रमादित्येनोक्तं--'तस्य जम्बोः फलरसो नदीभूय प्रवर्तते' इति । केचित्तु 'परिणतजम्बुफलोपभोगहृष्टा' इति भारविप्रयोगं ह्रस्वान्तत्वे साधकत्वेनोदाजह्रुः । तन्न, 'इको ह्रस्वोऽङ्यः-१४३३' इत्युत्तरपदाधिकारस्थह्रस्वविधायकसूत्रेण गतार्थत्वात् ॥ **दिधिमिति** । केचित्तु दधातेरित्त्वं द्वित्वं षुक् च निपात्यते दधात्यसौ दिधिषूरित्याहुः । 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः । द्विरूढा द्विवारं विवाहितेत्यर्थः ॥ उज्ज्वलदत्तोक्तं पाठमाह--**केचित्त्विति** । एतच्च कैयटमाधवादिग्रन्थविरुद्धम् । अत एव '**दृम्भूः** स्त्री सर्पचक्रयोः' इति भान्ते मेदिनी ॥ ( ४२९३ ) **मृग्रोः**-। 'मृङ् प्राणत्यागे', 'गॄ निगरणे' आभ्यामुतिरितीकारस्तकारस्येत्संज्ञापरित्राणार्थः ॥ **मरुदिति** प्रज्ञादित्वादणि मारुतोऽपि । मरुतशब्दोऽप्यव्युत्पन्नोऽस्ति । तथा च विक्रमादित्यकोशः--'**मरुतः** स्पर्शनः प्राणः समीरो मारुतो मरुत्' इति । 'कोऽयं वाति स दाक्षिणात्यमरुतः' इति कविराजश्लोकेऽनुपपत्तिं मत्वा 'दाक्षिणात्यपवनः' इति पाठं केचित्कल्पयन्त्यल्पदृश्वान इति वर्णविवेकः ॥ **गरुदिति** । यवादिरयं, तेनास्मात्परस्य मतुपो मस्य 'झयः ९८९' इत्यनेन वत्वं न । गरुत्मान् ॥ ( ४२९४ ) **गर्मुदिति** । 'गर्मुत्स्त्री स्वर्णलतयोः' इति मेदिनी ॥ ( ४२९५ ) **हृषेः**-। 'हृष तुष्टौ' ॥ **चटतेरिति** । 'चटे वर्षावरणयोः' ॥ ( ४२९६ ) **हृसृ**-। 'हृञ् हरणे', 'सृ गतौ', 'रुह बीजजन्मनि-' ॥ विश्वकोशस्थमाह--**हरिदिति** । 'हरिद्दिशि स्त्रियां पुंसि हर्षवर्णविशेषयोः । अस्त्रियां स्यात्तृणे च' इति मेदिनी ॥ **ऋश्यस्येति** । एतेन 'गतं रोहिद्भूतां रिरमयिषुमृश्यस्य वपुषा' इति पुष्पदन्तप्रयोगो व्याख्यातः । '**रोहिन्मृग्यां** लताभेदे स्त्री नाऽर्के' इति मेदिनी ॥ ( ४२९७ ) **ताडेः**-। 'तड आघाते' ण्यन्तः । '**तडित्सौदामनी** विद्युत्' इत्यमरः ॥ ( ४२९८ ) **शमेः**-। 'शमु उपशमे' ॥ **बाहुलकादिति** । यद्यपि 'नेड्वशि कृति ३९८१' इत्यनेनैव इडभावस्य सिद्धत्वादिट् च नेत्येतदयुक्तं, तथापि 'नेड्वरमनादौ' इति परिगणनाद्बहुलग्रहणमाश्रित्यैव इडभावोऽपि साधितः । '**शण्ढः** स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि' इति मेदिनी ॥ ( ४२९९ ) **कमेः**-। 'कमु कान्तौ ।' '**कमठः** कच्छपे पुंसि भाण्डभेदे नपुंसकः' इति मेदिनी ॥ **जरठ इति** । 'जॄ वयोहानौ' । '**जरठः** कठिने पाण्डौ कर्कशेऽप्यभिधेयवत्' इति विश्वमेदिन्यौ । '**जरठः** कठिने जीर्णे' इति वैजयन्ती ॥ ( ४३०० ) **रमेः**-। 'रम क्रीडायाम्' ॥ ( ४३०१ ) **शमेः**-। 'शम उपशमे' । '**शङ्खो** निधौ ललाटास्थि कम्बौ न स्त्री' इत्यमरः । '**शङ्खः** कम्बौ न योषिन्ना भालास्थिनिधिभिन्नखे' इति मेदिनी ॥ ( ४३०२ ) **कणेः**-। '**कण्ठो** गले संनिधाने ध्वनौ मदनपादपे' इति विश्वमेदिन्यौ ॥ (४३०३) **कल**-। 'तृप प्रीणने' ॥ **फलत्रिक इति** । '**तृपला त्रिफला** च सा' इति विश्वः । 'त्रिफलाशब्दसमानार्थस्तृपलाशब्दः' इति 'द्विगोः' इति सूत्रे रक्षितः ॥ ( ४३०४ ) **शपेः**-। 'शप आक्रोशे' ॥ ( ४३०५ ) **वृषादिभ्यः**-। 'वृषु सेचने', 'पल गतौ', 'सृ गतौ', 'तॄ प्लवनतरणयोः' । 'शूद्राश्चावरवर्णाश्च **वृषलाश्च** जघन्यजाः' इत्यमरः । '**वृषलस्तुरगे** शूद्रे' इति हेमचन्द्रः । '**पललं** तिलचूर्णे च पिके मांसे नपुंसकम् । ना राक्षसे' इति मेदिनी ॥ कलप्रत्ययस्य कित्त्वादाह--**बाहुलकादिति** । '**सरलः** पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु' इति मेदिनी । 'सरला विरलायन्ते घनायन्ते कलिद्रुमाः । न शमी न च पुन्नागा अस्मिन्संसारकानने' इत्यभियुक्तप्रयोगः ॥ ( ४३०६ ) **कमेः**-। 'कमु कान्तौ' अस्माद् वृषादित्वेन कलप्रत्यये बाहुलकादित्यनुषज्यत इति बुक् । '**कम्बलो** नागराजे स्यात्सास्नाप्रावारयोरपि । कृमावप्युत्तरासङ्गे सलिले तु नपुंसके' इति मेदिनी । '**मुसलं** स्यादयोऽग्रे च पुन्नपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि' इति मेदिनी ॥ मूर्द्धन्यमध्योऽप्ययमिति वर्णदेशना । मुस खण्डन इति धातोर्दन्त्यान्तेषु मूर्द्धन्यान्तेषु च बोपदेवादिभिः पठितत्वात् । उज्ज्वलदत्तादयस्तु--तालव्यमध्यमप्याहुः । अत एव 'मुसलो मुषलोऽपि च' इति विश्वकोशे 'मुशलोऽपि च' इति पाठान्तरम् ॥ ( ४३०७ ) **लङ्गेः**-। 'लगि गतौ' । अस्मात्कलप्रत्यये बाहुलकादित्यनुषङ्गाद्वृद्धिरिति भावः । एवमग्रेऽपि मुडागमो बाहुलकादेव ॥ ( ४३०८ ) **कुटिकशि**-। 'कुट कौटिल्ये', 'कश गतिशासनयोः', 'कु शब्दे' अस्मात्कलप्रत्यये

कौतिभ्यः प्रत्ययस्य मुट् ॥ कुट्मलः । कुडेरपि । कुड्मलः । कश्मलम् । बाहुलकाद्गुणः । कोमलम् ॥ ( ४३०९ ) (उ) **मृजेष्टिलोपश्च** ॥ मलम् ॥ ( ४३१० ) (उ) **चुपेरच्चोपधायाः** ॥ चपलम् ॥ ( ४३११ ) (उ) **शकिशम्योर्नित्** ॥ शकलम् ॥ शमलम् ॥ ( ४३१२ ) (उ) **छो गुग् ह्रस्वश्च** ॥ छगलः । प्रज्ञादित्वाच्छागलः ॥ ( ४३१३ ) (उ) **ञमन्ताड्डः** ॥ दण्डः । रण्डः । खण्डः । मण्डः । वण्डश्छिन्नहस्तः । अण्डः । बाहुलकात्सत्वाभावः । षण्डः संघातः । तालव्यादिरित्यपरे । शण्डः । गण्डः । चण्डः । पण्डः क्लीबः । पण्डा बुद्धिः । ( फंण्डः ) ॥ ( ४३१४ ) (उ) **कादिभ्यः कित्** ॥ कवर्गादिभ्यो डः कित्स्यात् । कुण्डम् । काण्डम् । गुड् । गुडः । घुण भ्रमणे । घुण्डो भ्रमरः ॥ ( ४३१५ ) (उ) **स्थाचतिमृजेरालज्वालञालीयचः** ॥ तिष्ठतेरालच् । स्थालम् । स्थाली । चतेर्वालञ् । चात्वालः ॥ मृजेरालीयच् । मार्जालीयो बिडालः ॥ ( ४३१६ ) (उ) **पतिचण्डिभ्यामालञ्** ॥ पातालम् । चण्डालः । प्रज्ञा-

---

गुणो नेत्याशङ्कयाह-**बाहुलकादिति** । ‘**कोमलं** मृदुलं मृदु’ बाहुलकादन्यत्रापि बोध्यः । तद्यथा—‘कुस श्लेषणे’ दन्त्यान्तोऽयम् । बोपदेवमते तु तालव्यान्तोऽपि । गुणः । कोशलः कोसलो वा देशविशेषः । ‘वृद्धेत्कोसला-१६८१’ इति सूत्रे तु दन्त्यान्त एव साम्प्रदायिकः । ‘सम्ब सम्बन्धे, शम्ब च’ सम्बलम् । शम्बलम् । ‘**शम्बलोऽस्त्री सम्बलवत्** कूलपाथे च मत्सरे’ इति मेदिनी । ‘कदि आह्वाने’ नलोपः । गौरादित्वान्ङीषि कदली । ‘मन्दान्दोलितकर्पूरकदलीदलसंज्ञया । विश्रमाय श्रमापन्नानाह्वयन्तमिवाध्वगान्’ इति काशीखण्डम् । अजादेराकृतिगणत्वाट्टाबपि । ‘**कदला** कदलौ पृश्न्यां **कदली** कदलौ पुनः । रम्भावृक्षेऽथ **कदली** पताकामृगभेदयोः । कदली बिम्बिकायां च’ इति मेदिनी । ‘कुश’ इति सौत्रो धातुः । ‘**कुशलः** शिक्षिते त्रिषु । क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकः’ इति मेदिनी । ‘कमु कान्तौ’ ‘**कमलं** सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु **कमलः कमला** श्रीवरस्त्रियोः’ इति विश्वमेदिन्यौ । ‘मडि भूषायाम्’ ‘**मण्डलं** परिधौ कोठे देशे द्वादशराजके’ इति मेदिनी । ‘कोठो **मण्डलकम्**’ इत्यमरः । ‘बिम्बोऽस्त्री **मण्डलं** त्रिषु’ इति च ॥ (४३०९) **मृजेः**—॥ ‘मृजू शुद्धौ’ ‘**मलोऽस्त्री** पापविट्किट्टे कृपणे त्वभिधेयवत्’ इति मेदिनी ॥ ( ४३१० ) **चुपेः**—। ‘चुप मन्दायां गतौ’ ‘**चपलः** पारदे मीने चोरके प्रस्तरान्तरे । **चपला** कमलाविद्युत्पुंश्चलीपिप्पलीषु च । नपुंसके तु शीघ्रं स्याद्वाच्यवत्तरले चले’ इति मेदिनी ॥ ( ४३११ ) **शकिशम्योः**—। ‘शक्लृ शक्तौ’, ‘शम उपशमने’ । शकलं खण्डे रोहितादीनां त्वचि च । तद्योगात् शकली मत्स्यः । मत्स्यान् शकलानीति भाष्यम् । ‘**शकलं** त्वचि खण्डे स्याद्रागवस्तुनि वल्कले’ इति मेदिनी ॥ ( ४३१२ ) **छो गुक्**—। ‘छो छेदने’ । ‘**छगलं** नीलवस्त्रे ना छागेऽस्त्री वृद्धदारके’ इति मेदिनी ॥ ( ४३१३ ) **ञमन्ताड्डः** ॥ ञमिति प्रत्याहारः । ‘दमु उपशमे’ । ‘रम क्रीडायाम्’ । ‘खनु अवदारणे’ । ‘मन ज्ञाने’ । ‘वन संभक्तौ’ । ‘अम गत्यादिषु’ । ‘षणु दाने’ । ‘गम्लृगतौ’ । ‘चण दाने’ । ‘पण व्यवहारे स्तुतौ च’ । काशिकायां तु—‘त्रिभ्य एव कणमाः स्युः’ इत्युक्तम् । ञम्प्रत्याहारस्तु न स्वीकृतः । अष्टाध्याय्यां तस्य विषयाभावात् ॥ **दण्ड इति** । बाहुलकात् ‘चुटू २७४’ इति नेत्संज्ञा । ‘**दण्डोऽस्त्री** लगुडोऽपि स्यात्’ इत्यमरः । ‘**रण्डा** मूषकपर्ण्यां च विधवायां च योषिति’ । ‘**खण्डोऽस्त्री** शकले नेक्षुविकारमणिभेदयोः’, ‘**मण्डः** पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि’ । ‘**चण्डा** तु पांशुलायां स्त्री त्रिषु हस्तादिवर्जिते’ । अमन्ति संप्रयोगं यान्ति अनेनेति अण्डः प्राण्यवयवः । ‘**षण्डः** पद्मादिसंघाते न स्त्री स्याद्गोपतौ पुमान्’ । ‘शडि रुजायाम्’ अस्मात् घञि शण्डशब्दः तालव्यादिरपि संघाते वर्तते इत्याशयेन मतान्तरमाह—**तालव्यादिरित्यपरे इति** ॥ ‘**गण्डः** स्यात्पुंसि खड्गिनि । जिह्मवीरकपालेषु हयभूषणबुद्बुदे’ । ‘**चण्डो** ना तिन्तिणीवृक्षे यमकिंकरदैत्ययोः । **चण्डी** कात्यायनीदेव्यां हिंस्राकोपनयोषितोः ।’ ‘**पण्डः** षण्डे धियि स्त्री स्यात्’ इति मेदिनी ॥ **फण्ड इति** । ‘फण गतौ’ फण्डः । प्रज्ञादित्वादण् । फाण्डमुदरम् ॥ ( ४३१४ ) **कादिभ्यः कित्** । ‘कुण शब्दोपकरणयोः’ ॥ **कुण्डमिति** । कुण्डमित्यत्र प्रायेणानुस्वारमेव लिखन्ति तत्तु प्रमादकृतमेवमन्यत्रापि बोध्यम् । डस्य कित्त्वान्न गुणः । ‘अनुनासिकस्य क्विझलोः-३५४५’ इति दीर्घस्तु न भवति बाहुलकात्संज्ञापूर्वकविधेरनित्यत्वाद्वेत्याहुः । ‘**कुण्डमग्न्यालये** मानभेदे देवजलाशये । **कुण्डी** कमण्डलौ जारात्पतिवत्नीसुते पुमान् । पिठरे तु न ना’ इति मेदिनी । ‘अमृते जारजः **कुण्डो** मृते भर्त्तरि गोलकः’ इत्यमरः । **काण्डमिति** । ‘कमु कान्तौ’ । ‘अनुनासिकस्य-३५४५’ इति दीर्घः । ‘**काण्डोऽस्त्री** दण्डबाणार्ववर्गावसरवारिषु’ इत्यमरः । अर्वा कुत्सितः । अत एव ‘**काण्डं** स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः । कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम्’ इति मेदिनी । ‘**गुङ्** अव्यक्ते शब्दे’ ‘**गुडो** गोलेक्षुपाकयोः’ इत्यमरः । गुडा स्नुही तद्वत्केशा यस्य स गुडाकेशः शिवः जटाधारित्वात् । ‘**गुडः** स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः । **गुडा** स्नुह्यां च कथिता गुडिकायां च योषिति’ इति मेदिनी । गुडाका निद्रा तस्या ईशः इति वा । जितेन्द्रियत्वादिति भावः ॥ ( ४३१५ ) **स्थाचति**—। ‘ष्ठा गतिनिवृत्तौ’, ‘चते याचने’, ‘मृजू शुद्धौ’ । लचा सिद्धे आलच आकारश्चिन्त्यप्रयोजनः चित्स्वरं बाधित्वा पक्षे आद्युदात्तार्थमित्येके । ‘**स्थालं** भाजनभेदेऽपि **स्थाली** स्यात् पाटलोखयोः’ इति मेदिनी । ‘**चात्वालो** यज्ञकुण्डे स्याद्दर्भे च’ इति विश्वः ॥ ‘**मार्जालीयः** स्मृतः शूद्रबिडाले कायशोधने’ इति मेदिनी ॥ ( ४३१६ ) **पतिचण्डि**—। ‘पत्लृ गतौ’, ‘चडि कोपे’ पतन्त्यस्मिन्नधर्मेणेति पातालम् । उपधावृद्धिः । ‘अधो-

---

१ अयं पाठो मूले नोपलभ्यते टीकानुरोधात्प्रागासीदधुना परिभ्रष्ट इत्यवगम्यते ॥

दित्वादणि चाण्डालोऽपीत्येके ॥ ( ४३१७ ) ॐ तमिविशिबिडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् ॥ तमालः । विशालः । बिडालः । मृणालम् । कुलालः । कपालम् । पलालम् । पञ्चाला: ॥ ( ४३१८ ) ॐ पतेरङ्गच् पक्षिणि ॥ पतङ्गः ॥ ( ४३१९ ) ॐ तरत्यादिभ्यश्च ॥ तरङ्गः । लवङ्गम् ॥ ( ४३२० ) ॐ विडादिभ्यः कित् ॥ विडङ्गम् । मृदङ्गः । कुरङ्गः । बाहुलकादुत्वं च ॥ ( ४३२१ ) ॐ सृवृञोर्वृद्धिश्च ॥ सारङ्गः । वारङ्गः खड्गादिमुष्टिः ॥ (४३२२) ॐ गन् गम्यद्योः ॥ गङ्गा । अद्गः पुरोडाशः ॥ (४३२३) ॐ छापूखडिभ्यः कित् ॥ छागः । पूगः । खड्गः । बाहुलकात् षिट अनादरे गन्सत्वाभावश्च । षिड्गः तरलः । षिड्गैरगद्यत ससंभ्रममेवमेके इति माघः ॥ ( ४३२४ ) ॐ भृञः किन्नुट् च ॥ भृञो गन् कित्स्यात्तस्य नुट् च । भृङ्गाः षिड्गालिधूम्याटाः ॥ (४३२५) ॐ शृणातेर्ह्रस्वश्च ॥ शृङ्गम् ॥ ( ४३२६ ) ॐ गण् शकुनौ ॥ नुट् चेत्यनुवर्तते । शार्ङ्गः ॥ ( ४३२७ ) ॐ मुदिग्रोर्गग्गौ ॥ मुद्गः ॥ गर्गः ॥ ( ४३२८ ) ॐ अण्डन् कृसृभृवृञः ॥ करण्डः । सरण्डः पक्षी । भरण्डः स्वामी । वरण्डो मुखरोगः ॥

---

भुवनपातालबलिसद्मरसातलम्' इत्यमरः । 'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी ॥ **चण्डाल इति** । इदित्त्वान्नुमि अदुपधत्वाभावान्न वृद्धिः । माधवेन तु-पतिचण्डिभ्यामालन् इति नितं पठित्वा पातालशब्दे बाहुलकाद् वृद्धिमुक्त्वा वृद्ध्यर्थमालञिति केषांचित्पाठे तु चण्डालशब्देऽपि वृद्धिः स्यादित्युक्तम् । तदातिरभसात् ॥ **एके इति** । उज्ज्वलदत्तादयः । एतच्च 'कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यश्छन्दसि' इति चण्डालात्स्वार्थेऽणं विदधता वार्तिकेन तद्भाष्येण च सह विरुद्धमिति बोध्यम् ॥ ( ४३१७ ) **तमिविशि-**। 'तमु कांक्षायाम्', 'विश प्रवेशने', 'विड आक्रोशे', 'मृण हिंसायाम्', 'कुल संस्त्याने', 'कपि चलने', निर्देशान्नलोपः । 'पल गतौ', 'पचि विस्तारे' । '**तमाल**स्तिलके खङ्गे ना पिच्छे वरुणद्रुमे' इति मेदिनी । '**विशाला** त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति । नृपवृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत्' इति मेदिनी । '**बिडालो** नेत्रपिण्डे स्याद् वृषदंशकके पुमान्' इति मेदिनी । 'ओतुर्**बिडालो** मार्जारो वृषदंशक आखुभुक्' इत्यमरः । '**मृणालं** नलदे क्लीबे पुंनपुंसकयोर्बिसे' इति मेदिनी । '**कुलालः** ककुभे कुम्भकारे स्त्रीत्वं जनान्तरे' इति च मेदिनी । '**कुलालो** घूकपक्षिणि । ककुभे कुम्भकारे च' इति हेमचन्द्रः । '**कपालो**ऽस्त्री शिरोस्थि स्याद् घटादेः शकले व्रजे' इति मेदिनीविश्वप्रकाशौ । '**पञ्चाली** पुत्रिकागीत्योः स्त्रियां पुंभूम्नि नीवृति' इति मेदिनी । बाहुलकात् श्यतेरपि कालन् 'आदेच उपदेशे-३१६३' इत्यात्त्वम् । शाला । 'शल चलने' अस्मात् घञि च शाला । '-सेनासुराच्छायाशालानिशानाम् ११९०' इति निपातनात्स्त्रीत्वमिति न्यासः । '**शाला** द्रुस्कन्धशाखायां गृहगेहैकदेशयोः । ना झषे' इति मेदिनी ॥ ( ४३१८ ) **पतेरङ्गच्-**। 'पत्लृ गतौ' पक्षिणीत्युपलक्षणम् । '**पतङ्गः** शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते' इति मेदिनी । सूते पारद इत्यर्थः ॥ ( ४३१९ ) **तरत्या-**। 'तॄ प्लवनतरणयोः', 'लूञ् छेदने', तरङ्ग ऊर्मिः । '**तरङ्ग**स्तुरगादीनामुत्फाले वस्त्रभङ्गयोः' इति विश्वः । '**लवङ्गं** देवकुसुमे' । आकृतिगणोऽयम् ॥ ( ४३२० ) **विडादिभ्यः-**। 'विड आक्रोशे', 'मृद क्षोदे', 'कॄ विक्षेपे' एभ्योऽङ्गच् कित्स्यात् । विडङ्ग ओषधिविशेष इति उज्ज्वलदत्तः । '**विडङ्गः** कृमिसंघघ्ने **विडङ्गो** नागरेऽन्यवत्' इति विश्वः । '**विडङ्ग**स्त्रिष्वभिज्ञे स्यात् कृमिघ्ने पुंनपुंसकम्' इति मेदिनी । '**मृदङ्गः** पटहे घोषे' इति च । कुरङ्गो मृगविशेषः ॥ **बाहुलकादुत्वं चेति** । 'कुर शब्दे' इत्यस्मादङ्गच् तस्य कित्त्वेन गुणाभाव इत्यन्ये ॥ ( ४३२१ ) **सृवृञोः-**। 'सृ गतौ', 'वृञ् वरणे' '**सारङ्गः** पुंसि हरिणे चातके शबले त्रिषु' इति मेदिनी । बाहुलकात् 'नॄ नये' । 'अथ **नारङ्गः** पिप्पले रसे । यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च' इति मेदिनी ॥ ( ४३२२ ) **गन्-**। 'गम्लृ गतौ', 'अद भक्षणे' । बाहुलकात् 'अम गत्यादिषु' अस्मादपि गन् । '**अङ्गं** गात्र उपाये च प्रतीके चाप्रधानके । **अङ्गो** देशविशेषः स्यादङ्ग सम्बोधनेऽव्ययम्' इति विश्वः । 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके' इति मेदिनी ॥ ( ४३२३ ) **छापू-**। 'छो छेदने', 'पूङ् पवने', 'खड भेदने' । छायते छिद्यते यज्ञार्थमिति छागः । पूयते मुखमनेनेति पूगः । 'पूगस्तु क्रमुके वृन्दे' इति मेदिनी । '**खड्गो** गण्डकश्रृङ्गे स्यात् निस्त्रिंशे गण्डकेऽपि च' इति शब्दतरङ्गिणी । '**खड्गो** गण्डकश्रृङ्गासिबुद्धभेदेषु गण्डके' इति मेदिनी ॥ ( ४३२४ ) **भृञः-**। 'डुभृञ् धारणपोषणयोः' । किदित्यनुवर्तनात्किद्ग्रहणमिह स्पष्टार्थम् । '**भृङ्गो** धूम्याटषिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि' इति मेदिनी ॥ ( ४३२५ ) **शृणातेः-**। 'शॄ हिंसायाम्' अस्माद्गन् धातोर्ह्रस्वत्वं प्रत्ययस्य तु कित्त्वं नुट् च । '**शृङ्गं** प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ **शृङ्गः** स्यात्कूर्चशीर्षके । स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ' इति मेदिनी । '**शृङ्गं** विषाणमाख्यातं शैलाग्रे जलयन्त्रके । मीनौषधिसुवर्णानां भेदे शृङ्गी प्रयुज्यते' इत्युत्पलिनीकोशः ॥ ( ४३२६ ) **गण् शकुनौ** । शृणातेः शकुनौ वाच्ये गण् स्यात्तस्य नुट् । 'अचो ञ्णिति ३५९' इति धातोर्वृद्धिः । शार्ङ्गः पक्षी । शार्ङ्गं धनुरिति तु शृङ्गस्य विकार इति बोध्यम् ॥ ( ४३२७ ) **मुदिग्रोः-**। 'मुद हर्षे', 'गॄ निगरणे' आभ्यां यथासंख्यं गक् ग इत्येतौ स्तः । मुद्गः सस्यभेदः । गर्गो मुनिविशेषः ॥ (४३२८) **अण्डन्-**। 'डुकृञ् करणे', 'सृ गतौ', 'भृञ् भरणे', 'वृञ् वरणे' । '**करण्ड**स्त्रे मधुकोशासिकारण्डेषु दलाटके' इति मेदिनी । '**वरण्डो**ऽप्यन्तरावेदौ समूहमुखरोगयोः' इति विश्वमेदिन्यौ । बाहुलकात् नॄ,

(४३२९) (उ) शृदृभसोऽदिः । शरत् । दरद्धृदयकूलयोः । भसज्जघनम् ॥ (४३३०) (उ) दृणातेः षुग् ह्रस्वश्च ॥ दृषत् ॥ (४३३१) (उ) त्यजितनियजिभ्यो डित् ॥ त्यद् । तद् । यद् । सर्वादयः ॥ (४३३२) (उ) एतेस्तुट् च ॥ एतद् ॥ ( ४३३३ ) (उ) सर्तेरटिः ॥ सरट् स्याद्वातमेघयोः । वेदभाष्ये तु—याभिः कृशानुमिति मन्त्रे सरड्भ्यो मधुमक्षिकाभ्य इति व्याख्यातम् ॥ ( ४३३४ ) (उ) लङ्घेर्नलोपश्च ॥ लघट् वायुः ॥ ( ४३३५ ) (उ) पारयतेरजिः ॥ पारक् सुवर्णम् ॥ ( ४३३६ ) (उ) प्रथेः कित्सम्प्रसारणं च ॥ पृथक् । स्वरादिपाठादव्ययत्वम् ॥ ( ४३३७ ) (उ) भियः षुग् ह्रस्वश्च ॥ भिषक् ॥ ( ४३३८ ) (उ) युष्यसिभ्यां मदिक् ॥ युष् सौत्रो धातुः । युष्मद् । अस्मद् । त्वम् । अहम् ॥ ( ४३३९ ) (उ) अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ॥ एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमः संघातः । सोमः । होमः । सर्मो गमनम् । धर्मः । क्षेमं कुशलम् । क्षोमम् । प्रज्ञाद्यणि क्षौमं च । भाम आदित्यः । यामः । वामः शोभनदुष्टयोः । पद्मम् । यक्ष पूजायाम् । यक्ष्मो रोगराजः । नेमः ॥ ( ४३४० ) (उ) जहातेः सन्वदालोपश्च ॥ जिह्मः कुटिलमन्दयोः ॥ ( ४३४१ ) (उ) अवतेष्टिलोपश्च ॥ मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः । अन्यथा डिदित्येव ब्रूयात् । ज्वरत्वरेति[1] ऊठौ तयोर्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न । तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम् । अवतीति ओम् ॥ (४३४२ ) (उ) ग्रसेरा च ॥ ग्रामः ॥ (४३४३) (उ) अविसिविसिशुषिभ्यः कित् ॥ ऊमं नगरम् । स्यूमो रश्मिः । सिमः सर्वः ।

---

प्लवनतरणयोः' अपि । 'तरण्डो बडिशीसूत्रबद्धकाष्ठादिके प्लवे' इति मेदिनी ॥ ( ४३२९ ) शृदृ—। 'शॄ हिंसायाम्', 'दॄ विदारणे', 'भस भर्त्सनदीप्त्योः' । 'शरत् स्त्री वत्सरेऽप्यृतौ' । 'दरत् स्त्रियां प्रपाते च भयपर्वतयोरपि' । 'भसत् स्त्री भास्वरे योनौ' इति मेदिनी । 'उवे अम्बसुलाभिकः' इति मन्त्रव्याख्यायां 'भसद्भगः' इति वेदभाष्यम् 'जाघन्यां पत्नीः संयाजयन्ति भसद्वीर्या हि स्त्रियः' इत्यत्र भसज्जघनमिति व्याख्यातारः ॥ ( ४३३० ) दृणातेः—। 'दॄ विदारणे' । 'दृषन्निष्पेषणशिलापट्टप्रस्तरयोः स्त्रियाम्' इति मेदिनी ॥ ( ४३३१ ) त्यजि—। 'त्यज हानौ', 'तनु विस्तारे', 'यज देवपूजादौ' ॥ त्यदित्यादि । अदेर्डित्त्वाट्टिलोपः ॥ ( ४३३२ ) एतेः—। 'इण् गतौ' अस्मादद्दिस्तस्य तुटि गुणः । एतद् ॥ ( ४३३३ ) सर्तेः—। 'सृ गतौ' ॥ ( ४३३४ ) लङ्घेः—। 'लघि शोषणे' ॥ ( ४३३५ ) पारयतेः—। 'पार तीर कर्मसमाप्तौ' चुरादिः॥ पारगिति । णिलोपः । कुत्वम् ॥ (४३३६) प्रथेः—। 'प्रथ प्रख्याने' ॥ ( ४३३७ ) भियः—। 'ञिभी भये' ॥ (४३३८) युष्यसि—। 'असु क्षेपणे' ॥ (४३३९) अर्तिस्तु—। 'ऋ गतौ', 'ष्टुञ् स्तुतौ', 'षुञ् अभिषवे', 'हु दानादनयोः', 'सृ गतौ', 'धृञ् धारणे', 'क्षि क्षये', 'टुक्षु शब्दे', 'भा दीप्तौ', 'या प्रापणे', 'वा गतिगन्धनयोः', 'पद गतौ', 'णीञ् प्रापणे' । 'सोमस्तुहिनदीधितौ । वानरे च कुबेरे च पितृदेवे समीरणे । वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ' इति मेदिनी ॥ होम इति । देवतोद्देशेन हविःप्रक्षेपः । 'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ॥' इति च । 'धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ' इति विश्वः । 'क्षौमं मन्देऽनुकूलेऽस्त्री क्षौमं वल्कलजांशुके । शणजेऽतसिजे' इति मेदिनी । 'भामः क्रोधे रवौ दीप्तौ' इति च । 'यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः' इति च । 'वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ । वामी शृगालीवडवारासभीकरभीषु च' इति , 'पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे' इति च मेदिनी ॥ यक्ष पूजायामिति । अयमन्तःस्थादिः । मनिन्प्रत्यये तु नकारान्तः शब्दः 'क्षयः शोषश्च यक्ष्मा च' इत्यमरः । 'राजयक्ष्मेव रोगाणाम्' इति माघः । 'यक्ष्मणाऽपि परिहाणिराययौ' इति रघुः । अत्र जकारयकारयोर्भेदाग्रहेण 'जक्ष भक्षहसनयोः' इत्युज्ज्वलदत्तेनोपन्यस्तम् । तन्न, तस्य चवर्गतृतीयादित्वात् । अत एव 'अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां चुबुकादधि । यक्ष्मं सर्वस्मात्' इति मन्त्रे यक्ष्मशब्दस्यान्तःस्थादित्वम् 'जक्षत् क्रीडन् रममाणः' इत्यादिमन्त्रे तु जक्षच्छब्दस्य चवर्गतृतीयादित्वं वेदभाष्यकृतो व्याचख्युः । 'नेमः कीलेऽवधौ गर्ते प्राकारे कैतवेऽपि च' इति मेदिनी । 'नेमस्त्वर्द्धे प्राकारगर्तयोः । अवधौ कैतवे च' इति हेमचन्द्रः ॥ ( ४३४० ) जहातेः—। 'ओहाक् त्यागे' ॥ जिह्म इति । मन्प्रत्ययस्य सन्वत्त्वाद् द्वित्वे 'सन्यतः ३०९३' इतीत्त्वम् । 'जिह्मस्तु कुटिले मन्दे क्लीबं तगरपादपे' इति मेदिनी ॥ ( ४३४१ ) अवतेः—। 'अव रक्षणादौ'। 'ओं प्रश्नेऽङ्गीकृतौ रोषे' इति विश्वः ॥ ( ४३४२ ) ग्रसेरा च । 'ग्रसु अदने' अतो मन् धातोराकारश्च । 'ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः' इति विश्वः । शब्दादिपूर्वको ग्रामशब्दो वृन्दे 'शब्दग्रामो गुणग्रामः' इति यथा । 'शब्दादिपूर्वो वृन्देऽपि ग्रामः —' इत्यमरः । संपूर्वोऽयं युद्धे । तदुक्तम् 'सम्पूर्वः संयुगे स्मृतः' इति ॥ ( ४३४३ ) अविसिवि—। 'अव रक्षणादौ', 'षिवु तन्तुसन्ताने', 'षिञ् बन्धने', 'शुष शोषणे' एभ्यो मन्स्यात्स च कित् । ऊठादिकं पूर्ववत् ॥ ऊमं नगरमिति । 'त्वे क्रतुम्-' इति मन्त्रे 'ऊमास्तर्पका यजमानाः' इति वेदभाष्यम् । टापि बाहुलकाद्ध्रस्वत्वे 'उमाऽतसीहैमवतीहरिद्राकान्तिकीर्तिषु' इति मेदिनी ॥

---

[1] ऊठाविति । ज्वरत्वरेत्येकस्यैवोठो विधानात् 'ऊठौ, तयोर्दीर्घे कृते' इत्यान्पाठो न सम्यक् । 'न ज्वरत्वरेति द्वावूठौ स्याताम्' इति 'च्छ्वोः—'इति सूत्रस्थभाष्यमादाय समाधानमप्यरमणीयमेव, ऊठष्टित्त्वे दोषदानार्थं तद्भाष्यप्रवृत्तेः । अत एवोक्तमग्रे तत्रैव भाष्ये—'एवं तर्हि नैष टित् । कस्तर्हि ? ठित्' इत्यादीति ।

शुष्ममग्निसमीपयोः । ( ४३४४ ) (उ) इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥ इष्मः कामवसन्तयोः । ईषीति पाठे दीर्घादिः । युध्मः शरो योद्धा च । इध्मः समित् । दस्मो यजमानः । श्यामः । धूमः । सूमोऽन्तरिक्षम् । बाहुलकादीर्मं व्रणः ॥ (४३४५) (उ) युजिरुचितिजां कुश्च ॥ युग्मम् । रुक्मम् । तिग्मम् ॥ (४३४६) (उ) हन्तेर्हि च ॥ हिमम् ॥ (४३४७) (उ) भियः षुग् वा ॥ भीमः । भीष्मः ॥ (४३४८) (उ) घर्मः ॥ घृधातोर्मग् गुणश्च निपात्यते ॥ (४३४९) (उ) ग्रीष्मः ॥ ग्रसतेर्निपातोऽयम् ॥ ( ४३५० ) (उ) प्रथेः षिवन् सम्प्रसारणं च ॥ पृथिवी ॥ षवन्नित्येके । पृथवी पृथिवी पृथ्वी इति शब्दार्णवः ॥ ( ४३५१ ) (उ) अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् ॥ अश्वः । प्रुष स्नेहनादौ । प्रुष्वः स्यादृतुसूर्ययोः । प्रुष्वा जलकणिका । लट्वा पक्षिभेदः फलं च । कण्वं पापम् । बाहुलकादित्त्वे किण्वमपि । खट्वा । विश्वम् ॥ ( ४३५२ ) (उ) इण्शीभ्यां वन् ॥ एवो गन्ता । येव एवा मरुतः । असत्त्वे निपातोऽयम् । शेवं मित्राय वरुणाय ॥ ( ४३५३ ) (उ) सर्वनिघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे ॥ अकर्तर्येते निपात्यन्ते । सृतमनेन विश्वमिति सर्वम् । निपूर्वाद् घृषेर्गुणाभावोऽपि । निघृष्यतेऽनेन निघृष्वः खुरः । रिष्वो हिंस्रः । लष्वो नर्तकः । लिष्व इत्यन्ये । तत्रोपधाया इत्वमपि । शेतेऽस्मिन् सर्वमिति शिवः शम्भुः, शीङो ह्रस्वत्वम् । पट्वो रथो भूलोकश्च । प्रहूयते इति प्रह्वः । ह्वेञ आकारवकारलोपः । जहातेरालोपो वा । ईषेर्वन्, ईष्व आचार्यः । इष्व इत्यन्ये । अतन्त्रे किम् । सर्ता सारकः । बाहुलकाद् हसतेः—ह्रस्वः ॥ ( ४३५४ ) (उ) शेवयह्वजिह्वाग्रीवाप्वामीवाः ॥ शेव इत्यन्तोदात्तार्थम् । यान्त्यनेन यह्वः, ह्रस्वो हुगागमश्च । लिहन्त्यनया जिह्वा, लकारस्य जो गुणाभावश्च । गिरन्त्यनया ग्रीवा, ईडागमश्च । आप्नोतीत्याप्वा वायुः । मीवा उदरक्रिमिः । वायुरित्यन्ये ॥ (४३५५) (उ) कृगृशृदृभ्यो वः ॥

---

स्यूमो रश्मिरिति । सूत्रं तन्तुरित्यन्ये ॥ स्मिमः सर्वनामगणे पठितः ॥ 'शुष्मं तेजसि सूर्ये ना' इति मेदिनी । 'शुष्मं बलम्' इति वेदभाष्यम् ॥ ( ४३४४ ) इषियुधि—। 'इष गतिहिंसादानेषु' । 'ईष गतौ' इति केचित् । ईष्मः । 'युध संप्रहारे', 'ञिइन्धी दीप्तौ', 'दसु उपक्षये', 'श्यैङ् गतौ', 'धूञ् कम्पने', 'षूञ् प्राणिगर्भविमोचने' ॥ युध्म इति । 'युध्मो धनुषि संयुगे' इति मेदिनी । 'दस्मस्तु यजमाने स्यादपि चौरे हुताशने' इति च । 'त्रिषु श्यामो हरितकृष्णौ श्यामा स्याच्छारिका निशा' इत्यमरः । 'श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु । मरीचे सिन्धुलवणे क्लीबं स्त्री शारिकौषधौ । अप्रसूताङ्गनायां च प्रियङ्गावपि गुग्गुलौ । यमुनायां त्रियामायां कृष्णात्रिवृतिकौषधे । नीलिकायाम्' इति मेदिनी ॥ ईर्ममिति । 'ईर गतौ' । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । बाहुलकात् 'जन जनने' इत्यस्मादपि । जन्मम् । 'रुह बीजजन्मनि' इति निर्देशान्मनिन्नन्तोऽप्यस्ति स तु नान्तः । 'जनुर्जननजन्मानि' इत्यमरस्तु अकारान्तनकारान्तोभयसाधारणः ॥ ( ४३४५ ) युजि—। 'युजिर् योगे', 'रुच दीप्तौ', 'तिज निशाने' एभ्यो मक् कवर्गश्चान्तादेशः । 'रुक्मं तु काञ्चने लोहे' इति विश्वमेदिन्यौ । तिग्मं तीक्ष्णम् ॥ ( ४३४६ ) हन्तेः—। 'हन हिंसागत्योः' अस्मान्मक् धातोर्हिरादेशश्च । 'हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः' इति मेदिनी ॥ ( ४३४७ ) भियः—। 'ञिभी भये' बिभेत्यस्मादिति विग्रहः । 'भीष्मो गाङ्गेयघोरयोः' । 'भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे' इति मेदिनी ॥ ( ४३४८ ) घर्मः—। 'घृ क्षरणदीप्त्योः' ॥ ( ४३४९ ) ग्रीष्मः—। 'ग्रसु अदने' 'घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्भसोरपि' ॥ 'ग्रीष्म ऊष्मर्तुभेदयोः' इति च मेदिनी ॥ ( ४३५० ) प्रथेः—। 'प्रथ प्रख्याने' षित्वान्ङीष् । 'पृथिवी पृथवी पृथ्वी धरा सर्वंसहा रसा' इति शब्दार्णवः ॥ ( ४३५१ ) अशूप्रुषि—। 'अशू व्याप्तौ', 'लट बाल्ये', 'कण निमीलने', 'खटि काङ्क्षायाम्', 'विश प्रवेशने' । 'अश्वः पुंजातिभेदे च तुरङ्गे च पुमानयम्' इति मेदिनी । 'अश्वः पुंभेदवाजिनोः' इति विश्वः । 'लट्वा करञ्जभेदे स्यात्फले वाद्ये खगान्तरे' इति विश्वमेदिन्यौ । 'कण्वं पापे मुनौ पुंसि' इति मेदिनी । 'किण्वं बीजाद्यसीधुषु' इति च पठ्यते । शयनार्थिभिः काङ्क्ष्यत इति खट्वा । 'विश्वा ह्यतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु' इति मेदिनी ॥ ( ४३५२ ) इण्—। 'इण् गतौ', 'शीङ् स्वप्ने', 'शेवं सुखम्' इति वेदभाष्यम् । शेवं मेढ्रमित्युज्ज्वलदत्तः ॥ ( ४३५३ ) सर्वनिघृष्व—। 'सृ गतौ', 'घृषु संघर्षे', 'रिष हिंसायाम्', 'लष कान्तौ', 'शीङ् स्वप्ने', 'पट गतौ', 'ह्वेञ् स्पर्द्धायां शब्दे च', 'ओहाक् त्यागे' इति वा, 'ईष गत्यादिषु' । तन्त्रशब्दोऽत्र कर्तृवाचीत्याह—अकर्तरीति ॥ निपात्यन्त इति । वन्प्रत्ययान्ततयेति शेषः ॥ ह्रस्व इति । 'हस शब्दे' । 'ह्रस्वो न्यक्खर्वयोस्त्रिषु' इति मेदिनी ॥ ( ४३५४ ) शेवयह्व—। एते वन्प्रत्ययान्ता निपात्यन्ते ॥ अन्तोदात्तार्थमिति । 'इण्शीभ्याम्—४३५२' इत्यनेन आद्युदात्तत्वात्सिद्धेरिति भावः । 'शीङ् स्वप्ने' शेवा लिङ्गाकृतिः ॥ दशपादीवृत्तिरीत्याऽऽह—यान्त्यनेनेति । उज्ज्वलदत्तस्तु 'यज देवपूजादौ' जकारस्य हकारो यह्वो यजमान इत्याह । वैदिकनिघण्टौ महन्नामसु यह्वशब्दः पठितः । 'प्रवो यह्वं पुरूणाम्' 'यह्वं महान्तम्' इति वेदभाष्यम् । 'लिह आस्वादने' लिहन्त्यनयेति जिह्वा । 'जि जये' हुगागमः 'जिह्वा रसना' इत्युज्ज्वलदत्तः ॥ ग्रीवेति । 'गॄ निगरणे', 'आप्लृ व्याप्तौ', 'मीञ् हिंसायाम्' ॥ मीवेति । वेदे तु 'अमीवा' इति छित्त्वा 'अम रोगे' इत्यस्माद्वः । इड् वेत्युक्तम् । 'अमीवहा वास्तोष्पते' इत्यादिमन्त्रास्तत्रानुकूलाः ॥ ( ४३५५ ) कृगृ—। 'कृ विक्षेपे', 'गॄ निगरणे', 'शॄ

कर्वः काम आखुश्च । गर्वः । शर्वः । दर्वो राक्षसः ॥ (४३५६) (उ) **कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः** ॥ यौतीति युवा । वृषा इन्द्रः । तक्षा । राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः ॥ ( ४३५७ ) (उ) **सप्यशूभ्यां तुट् च** ॥ सप्त । अष्ट ॥ ( ४३५८ ) (उ) **नञि जहातेः** ॥ अहः ॥ ( ४३५९ ) (उ) **श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति** ॥ एते त्रयोदश कनिप्रत्ययान्ता निपात्यन्ते । श्वयतीति श्वा । उक्षा । पूषा । प्लिह गतौ । इकारस्य दीर्घत्वम् । प्लेहते इति प्लीहा कुक्षिव्याधिः । क्लिदू आर्द्रीभावे । क्लिद्यति क्लेदा चन्द्रः । स्निह्यतेर्गुणः । स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते मूर्धा, मुहेरुपधाया दीर्घः धोन्तादेशो रमागमश्च । मज्जत्यस्थिषु मज्जा अस्थिसारः । अर्यपूर्वो माङ् अर्यमा । विश्वं प्सातीति विश्वप्सा ऽग्निः । परिजायते परिज्मा चन्द्रोऽग्निश्च, जनेरुपधालोपो मश्चान्तादेशः । मातरि अन्तरिक्षे श्वयतीति मातरिश्वा, धातोरिकारलोपः । मह पूजायाम् । हस्य घोऽवुगागमश्च । मघवा इन्द्रः ॥ इत्युणादिषु प्रथमः पादः ॥

---

( ४३६० ) (उ) **कृहृभ्यामेणुः** । करेणुः । हरेणुर्गन्धद्रव्यम् ॥ ( ४३६१ ) (उ) **हनिकुषिनीरमिकाशिभ्यः क्थन्** ॥ हथो विषण्णः । कुष्ठः । नीथो नेता । रथः । काष्ठम् ॥ ( ४३६२ ) (उ) **अवे भृञः** ॥ अवभृथः ॥ (४३६३) (उ) **उषिकुषिगार्तिभ्यस्थन्** ॥ ओष्ठः । कोष्ठम् । गाथा । अर्थः । बाहुलकात्—शोथः ॥ (४३६४) (उ) **सर्तेर्णित्** ॥ सार्थः समूहः ॥ (४३६५) (उ) **जॄवृञ्भ्यामूथन्** ॥ जरूथं मांसम् । वरूथो रथगुप्तौ ना ॥ (४३६६) (उ)

---

हिंसायाम्', 'दॄ विदारणे' गर्वः अहङ्कारः । शर्वो रुद्रः ॥ ( ४३५६ ) **कनिन् यु—**। 'यु मिश्रणे', 'वृषु सेचने' 'तक्ष तनूकरणे', 'राजृ दीप्तौ', 'धन्वि गत्यर्थः', 'द्यु अभिगमने', दिवु क्रीडादौ' । '**युवा** स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि' इति मेदिनी । '**वृषा** कर्णे महेन्द्रे ना' इति च । '**तक्षा** तु वर्द्धकिस्त्वष्टा रथकारस्तु काष्ठतट्' इत्यमरः । '**राजा** प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः ' इति च । 'समानौ मरुधन्वानौ' इति च । 'अथास्त्रियाम्। धनुश्चापौ **धन्व**शरासनकोदण्डकार्मुकम्' इति चामरः । '**धन्वा** तु मरुदेशे ना क्लीबे चापे स्थलेऽपि च ' इति मेदिनी ॥ ( ४३५७ ) **सप्यशूभ्याम्—**। 'षप समवाये', 'अशू व्याप्तौ' ॥ ( ४३५८ ) **नञि—**। 'ओहाक् त्यागे' कनिनि आतो लोपः ॥ ( ४३५९ ) **श्वन्नुक्षन्—**। 'टुओश्वि गतिवृद्ध्योः' 'उक्ष सेचने', 'पूष वृद्धौ', 'ष्णिह प्रीतौ', 'मुह वैचित्त्ये', 'मुर्वी बन्धने' । उकारस्य दीर्घत्वं वकारस्य धकार इत्युज्ज्वलदत्तः । ' टुमस्जो शुद्धौ' । मस्जेः सकारस्य शकारस्तस्य जश्त्वेन जः । 'माङ् माने शब्दे च' 'प्सा भक्षणे', ' जनी प्रादुर्भावे', 'टुओश्वि गतिवृद्ध्योः' ॥ **कनिप्रत्ययान्ता इति** । नायं निदिति भावः । केचित्तु नित्त्वं स्वीकृत्य उक्षन्नादीनां सूत्रेऽन्तोदात्तनिपातनमाहुः । तच्च गौरवग्रस्तमित्युपेक्ष्यम् ॥ **श्वेति** । इकारलोपो निपात्यते ॥ **पूषेति** । ' सौ च ४८४ ' इत्युपधादीर्घः । 'इन्हन्–४८३ ' इति नियमात्पूषणौ पूषण इत्यादौ न दीर्घः । '**क्लेदौ**षधिशशाङ्कयोः' इति यादवः ॥ **मूर्द्धेति** । ' **मूर्द्धा** ना मस्तकोऽस्त्रियाम्' इत्यमरः ॥ **मज्जेति** । नकारान्तोऽयम् । टाबन्तोऽप्यभ्युपगम्यते । ' ऊष्मया सार्द्धमूष्माऽपि **मज्जोक्तौ मज्जया** सह ' इति द्विरूपकोशात् । ' **अर्यमा** तु पुमान् सूर्ये पितृदेवान्तरेऽपि च ' इति मेदिनी ॥ **परिजायत इत्यादि** । एतच्च दशपादीवृत्त्यनुरोधेनोक्तम् । '**परिज्मानं** सुखं रथम्' इति मन्त्रस्य वेदभाष्ये तु 'परिज्मा परिगन्ता, अजेः परिपूर्वस्य 'श्वन्नुक्षन्–४३५९ ' इत्यादिना मन्प्रत्ययः अकारलोपः आद्युदात्तत्वं च निपात्यते ' इत्युक्तम् । उज्ज्वलदत्तस्तु परिज्वेति पठित्वा 'ज्ु इति सौत्रो धातुः परिपूर्वः, यणादेशः, परिज्वा चन्द्रः' इत्याह । तल्लक्ष्यविरोधादुपेक्ष्यम् ॥ **मातरिश्वेति** । सप्तम्या अलुक् । इह भत्वविषये संप्रसारणं न भवति, 'श्वयुव–४९२ ' इति सूत्रे अभिव्यक्ततरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य तदन्तस्य च ग्रहणात् । तेन मातरिश्वनः । मातरिश्वनेत्येव । इह सूत्रे इतिशब्द आद्यर्थः । तेनान्येभ्योऽपि यथादर्शनं कनिः प्रयोक्तव्यः । दशपाद्यां तु इतिशब्दोऽत्र न पठ्यते॥ इत्युणादिषु प्रथमः पादः॥

---

( ४३६० ) **कृहृभ्याम्—**। 'डुकृञ् करणे', 'हृञ् हरणे' ' **करेणु**रिभ्यां स्त्री नेभे ' इत्यमरः । '**करेणु**र्गजयोषायां स्त्रियां पुंसि मतङ्गजे' इति मेदिनी ॥ **गन्धद्रव्यमिति** । कलायश्चेति बोध्यम् । 'कलायस्तु सतीनकः ' इत्यमरः । '**हरेणुः** खण्डिके चास्मिन्' इत्यमरः । '**हरेणु**र्ना सतीने स्त्री रेणुकाकुलयोषितोः ' इति मेदिनीविश्वप्रकाशौ ॥ (४३६१) **हनिकुषि—** 'हन हिंसागत्योः', 'कुष निष्कर्षे', 'णीञ् प्रापणे', 'रमु क्रीडायाम्', 'काशृ दीप्तौ' । ' **कुष्ठं** रोगे पुष्करे स्त्री' इति मेदिनी । '**कुष्ठं** रोगे सुगन्धे च' इति विश्वः। 'नीथेनीथे मघवानं सुतासः' इति मन्त्रे नीथशब्दस्यान्तोदात्तत्वं बाहुलकात् । 'नीथेनीथे स्तोत्रेस्तोत्रे' इति वेदभाष्यम् । '**रथः** पुमानवयवे स्यन्दने वेतसेऽपि च' इति मेदिनी । '**रथः** स्यात्स्यन्दने काये चरणे वेतसेऽपि च'इति विश्वः । '**काष्ठा** दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्' इति मेदिनी ॥ ( ४३६२ ) **अवे—**। 'डुभृञ् धारणपोषणयोः' । अवभृथो यज्ञावसानम् ॥ ( ४३६३ ) **उषिकुषि—**। 'उष दाहे', 'कुष निष्कर्षे', 'गै शब्दे', 'ऋ गतौ' । '**कोष्ठं** कुक्षिकुसूलयोः ' । '**गाथा** श्लोके संस्कृतान्यभाषायां शेषवृत्तयोः' इति मेदिनी । '**अर्थो**ऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः ॥ शोथः श्वयथुः । 'शु गतौ' ॥ ( ४३६४ ) **सर्तेः—**। 'सृ गतौ' । '**सार्थो** वणिक्समूहे स्यादपि संपातमात्रके' इति मेदिनीविश्वप्रकाशौ ॥ ( ४३६५ ) **जॄवृञ्—**। 'जॄ वयोहानौ' क्र्यादिः । 'जूष्'

पातृतुदिवचिरिचिसिचिभ्यस्थक् ॥ पीथो रविर्घृतं पीथम् । तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतमिति विश्वः । तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकाद्दचेरपि । रिक्थमृक्थं धनं वसु । सिक्थम् ॥ (४३६७) (उ.) अर्तेर्निरि ॥ निर्ऋथः साम ॥ (४३६८) (उ.) निशीथगोपीथावगथाः ॥ निशीथोऽर्धरात्रः रात्रिमात्रं च । गोपीथं तीर्थम् । अवगथः प्रातः स्नातः ॥ (४३६९) (उ.) गश्चोदि ॥ उद्गीथः साम्नो भागविशेषः ॥ (४३७०) (उ.) समीणः ॥ समिथो वह्निः संग्रामश्च ॥ (४३७१) (उ.) तिथपृष्ठगूथयूथप्रोथाः ॥ तिजेर्जलोपः । तिथोऽनलः कामश्च । पृष्ठम् । गूथं विष्ठा । यूथं समूहः । प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते ॥ (४३७२) (उ.) स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ॥ द्वात्रिंशद्भ्यो रक् स्यात् । वलि यलोपः । स्फारम् । न्यङ्क्वादित्वात्कुत्वम् । तक्रम् । वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । सृप्रश्चन्द्रः । तृप्रः पुरोडाशः । दृप्रो बलवान् । वन्द्रः पूजकः । उन्दी—उन्द्रो जलचरः । श्वित्रं कुष्ठम् । वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे । अजेर्वी । वीरः । नीरम् । पद्रो ग्रामः । मद्रो हर्षो देशभेदश्च । मुद्रा प्रत्ययकारिणी । खिद्रो रोगो दरिद्रश्च । छिद्रम् । भिद्रं वज्रम् । मन्द्रः । चन्द्रः । पचाद्यचि चन्दोऽपि । हिमांशुश्चन्द्रमाश्चन्द्रः । शशी चन्दो हिमद्युतिः । दह्रोऽग्निः । दस्रः स्वर्वैद्यः । दभ्रः समुद्रः स्वल्पश्च ॥ वसेः सम्प्रसारणे—॥ (४३७३) (सू.) न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् । ८ । ३ । ११० । रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्धन्यो न स्यात् । पूर्वपदादिति [५५८] प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोऽभिप्राया । तेन [३२७४] शासिवसीति प्राप्तमपि न । उस्रो रश्मिः । उस्रा गौः ॥ वाश्रो

---

दिवादौ, 'वृञ् वरणे' । जरूथोऽसुरविशेष इति वेदभाष्यम् । 'वरूथः स्यात्तनुत्राणे रथगोपनवेश्मनोः' इति हेमचन्द्रः ॥ (४३६६) पातृ-। 'पा पाने', 'तॄ प्लवनतरणयोः', 'तुद व्यथने', 'वच परिभाषणे', 'रिचिर् विरेचने' 'षिचिर् क्षरणे', 'ऋच स्तुतौ' । 'तुत्थोऽग्नावञ्जने तुत्था नीलीसूक्ष्मैलयोरपि' इति विश्वः । 'तुत्थमञ्जनभेदे स्यान्नीलीसूक्ष्मैलयोः स्त्रियाम्' । 'सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्' इति मेदिनी ॥ (४३६७) अर्तेः-।'ऋ गतौ' । 'द्रोघवाचस्ते निर्ऋथं सचन्ताम्' इति मन्त्रे 'निर्ऋथो हिंसा' इति वेदभाष्यम् ॥ (४३६८) निशीथ-। 'शीङ् स्वप्ने' निपूर्वः । 'पा पाने' गोपूर्वः । 'घुमास्था—३२७४' इतीत्त्वम् । 'गाङ् गतौ' अवपूर्वस्य धातोः ह्रस्वत्वम् । 'निशीथस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनी । 'प्रातिरयं चारुमध्वरम्' इति मन्त्रे 'गोपीथः सोमपानम्' इति वेदभाष्यम् । तीर्थमिति तु वृत्तिकारः ॥ (४३६९) गश्चोदि । उदि उपपदे 'गै शब्दे' इत्यस्मात् थक् ॥ (४३७०) समी-। 'इण् गतौ' अस्मात्सामि उपपदे थक् । समिथशब्दः संग्रामपर्यायेषु वैदिकनिघण्टौ पठितः । 'श्रिये जातः' इति मन्त्रे 'समिथाः युद्धानि' इति वेदभाष्यम् । तच्च युक्तमेव, सम्यगेति जयार्थमत्रेति व्युत्पत्तेः । संपूर्वस्येणः क्तिन्नाद्यन्तस्य लोकेऽपि युद्धार्थत्वदर्शनाच्च । उक्तं ह्यमरेण 'समित्याजिसमिद्युधः' इति ॥ (४३७१) तिथपृष्ठ-। 'तिज निशाने', 'पृषु सेचने', 'गु पुरीषोत्सर्गे', 'यु मिश्रणे', 'प्रुङ् गतौ'। एते थक्प्रत्ययान्ता निपात्यन्ते । 'पृष्ठं तु चरमं तनोः' इत्यमरः । 'पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे' इति मेदिनी । स्तोत्रविशेषेऽपि पृष्ठम् । 'पृष्ठैः स्तुवत' इत्यादौ तथा निर्णयात् ॥ गूथमिति । निपातनाद्दीर्घः । एवं यूथेऽपि । 'यूथं तिर्यक्समूहेऽपि वृन्दमात्रेऽपि भाषितम्' इति विश्वः । 'यूथं तदग्रसरगर्वितकृष्णसारम्' इति रघुः ॥ प्रोथमिति । निपातनाद् गुणः ॥ 'प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु ।' इति मेदिनी ॥ (४३७२) स्फायितञ्चि-। 'स्फायी वृद्धौ', 'तञ्चू संकोचने', 'वञ्चु प्रलम्भने', 'शक्लृ शक्तौ', 'क्षिप प्रेरणे', 'क्षुदिर् संपेषणे', 'सृप्लृ गतौ', 'तृप प्रीणने', 'दृप हर्षमोचनयोः', 'वदि अभिवादनस्तुत्योः', 'उन्दी क्लेदने', 'श्विता वर्णे', 'वृतु वर्तने', 'अज गतिक्षेपणयोः', 'णीञ् प्रापणे', 'पद गतौ', 'मदी हर्षे', 'खिद दैन्ये', 'छिदिर् द्वैधीकरणे', 'भिदिर् विदारणे', 'मदि स्तुतौ', 'चदि आह्लादने', 'दह भस्मीकरणे', 'दसु उपक्षये', 'दम्भु दम्भने', 'वस निवासे', 'वाश्रृ शब्दे', 'शीङ् स्वप्ने', 'हसे हसने', 'षिध गत्याम्', 'शुभ दीप्तौ' ॥ द्वात्रिंशदिति । दशपाद्यां तु त्रयस्त्रिंशत् उक्ताः । 'दम्भिवहिवसि—' इति पठित्वा 'वह प्रापणे', 'उह्र अनड्वान्' इत्युदाहरणात् । माधवोऽप्येवम् ॥ स्फारमिति । 'नेड्वशि कृति ३९८१' इति नेट् । वलि यलोपः । 'स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे' इति मेदिनी । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्जलम्' इत्यमरः । 'वक्रः स्याज्जटिले क्रूरे पुटभेदे शनैश्चरे' इति विश्वः । 'शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः' इति मेदिनी । 'क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत्' इति मेदिनी । तृप्रः पुरोडाश इति । 'न तृप्रा उरुव्यचसम्' इति मन्त्रे वेदभाष्यकारैरित्थं व्याख्यातम् । प्रकृतसूत्रे उज्ज्वलदत्तादिभिश्च । दशपादीवृत्तौ तु 'तृप्रमाज्यं काष्ठं च' इत्युक्तम् । 'तृप्रं दुःखम्' इति सुब्धातुवृत्तौ माधवः ॥ हिमांशुरित्यादि । हिमद्युतिरित्यन्तं शब्दार्णवः । दस्यति रोगान् क्षिपतीति 'दस्रः खरेऽश्विनीसुते' इति मेदिनी । 'दस्रः खरे चाश्विनयोः' इति विश्वः ॥ (४३७३) शासिवसीति प्राप्तमपि नेति । एवं च 'अविन्द उस्रियाः' इति मन्त्रे षत्वाभावः सिद्धः । माधवस्तु वृत्तिग्रन्थानुरोधेन बाहुलकादिह षत्वं नेति व्याचष्टे । 'उस्रो वृषे च किरणे उस्राऽर्जुन्युपचित्रयोः' इति मेदिनी । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' इत्यमरः । 'वाश्रो ना दिवसे क्लीबं मन्दिरे च चतुष्पथे' इति

दिवसः । वाश्रं मन्दिरम् ॥ शीरोऽजगरः ॥ हस्रो मूर्खः । सिध्रः साधुः । शुभ्रम् ॥ बाहुलकाद् । मुसे रग् मुस्रम् । अश्रु ॥ ( ४३७४ ) (उ) **चकिरम्योरुच्चोपधायाः** ॥ चुक्रमम्लद्रव्यम् । रुम्रोऽरुणः ॥ ( ४३७५ ) (उ) **वौ कसेः** ॥ विकुस्रश्चन्द्रः ॥ ( ४३७६ ) **अमितम्योर्दीर्घश्च** ॥ आम्रम् । ताम्रम् ॥ ( ४३७७ ) (उ) **निन्देर्नलोपश्च** ॥ निद्रा ॥ ( ४३७८ ) (उ) **अर्देर्दीर्घश्च** ॥ आर्द्रम् ॥ ( ४३७९ ) (उ) **शुचेर्दश्च** ॥ शूद्रः ॥ ( ४३८० ) (उ) **दुरीणो लोपश्च** ॥ दुःखेनेयते प्राप्यत इति दूरम् ॥ ( ४३८१ ) (उ) **कृतेश्छः क्रू च** ॥ कृच्छ्रम् । क्रूरः ॥ ( ४३८२ ) (उ) **रोदेर्णिलुक् च** ॥ रोदयतीति रुद्रः ॥ ( ४३८३ ) (उ) **बहुलमन्यत्रापि संज्ञाछन्दसोः** ॥ णिलुगित्येव ॥ वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे । ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति ॥ ( ४३८४ ) (उ) **जोरी च** ॥ जीरोऽणुः । ज्यश्चेत्येके ॥ ( ४३८५ ) (उ) **सुसूधागृधिभ्यः क्रन्** ॥ सुरः । सूरः । धीरः । गृध्रः ॥ ( ४३८६ ) (उ) **शुसि-**

---

मेदिनी । '**वाश्रो** रासभपक्षिणोः' इति केचित् । माधवेन तु 'वाश्रेव विद्युन्मिमाति' इति मन्त्रे 'शब्दयुक्ता प्रस्नुतस्तना धेनुर्वाश्रा' इति व्याख्यातम् । '**शुभ्रं** स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु' इति मेदिनी ॥ **मुस्रमिति** । 'मुस खण्डने' ॥ ( ४३७४ ) **चकि-**। 'चक तृप्तौ', 'रमु क्रीडायाम्' । '**चुक्रस्त्वम्लेऽम्लवेतसे** । **चुक्री** चाङ्गरिकायां स्याद् वृक्षाम्ले **चुक्र**-मिष्यते' इति विश्वः ॥ ( ४३७५ ) **वौ कसेः** । 'कस गतौ' विपूर्वादस्माद्रक् स्यादुत्वं चोपधायाः ॥ ( ४३७६ ) **अमि-**। 'अम गत्यादिषु', 'तमु काङ्क्षायाम्' आभ्यां रक् स्यादुपधाया दीर्घश्च ॥ ( ४३७७ ) **निन्देः-**। 'णिदि कुत्सायाम्' ॥ ( ४३७८ ) **अर्देः-**।'अर्द गतौ' । '**आर्द्रा** नक्षत्रभेदे स्यात्स्त्रियां क्लिन्नेऽभिधेयवत्' इति मेदिनी ॥ ( ४३७९ ) **शुचेः-**। 'शुच शोके' अस्माद्रक् दश्चान्तादेशः, धातोर्दीर्घश्च । शूद्रो वृषलः । 'अहहारे त्वा शूद्र-' इति श्रुतौ रूढेर्बाधाद् योग एव पुरस्कृतः । तथा चोत्तरतन्त्रे भगवता न्यासेन सूत्रितम् । 'शुगस्य तदनादरश्रवणात्' इति ॥ ( ४३८० ) **दुरीणो-**। 'इण् गतौ' इत्यस्माद्दुरुपपदे रुक् स्याद्धातोर्लोपश्च । 'रो रि २५७' इति रेफस्य लोपे 'ढ्रलोपे-२५८' इति दीर्घः ॥ ( ४३८१ ) **कृतेः-**। 'कृती छेदने' इत्यस्माद्रक् स्याच्छः क्रू इत्येतावादेशौ च स्तः । छस्त्वन्त्यस्यादेशः क्रू त्वनेकाल्त्वात्सर्वस्यादेशः । '**कृच्छ्र**माख्यातमाभीले पापसंतापनादिनोः' इति विश्वमेदिन्यौ । 'स्यात्कष्टं **कृच्छ्र**माभीलम्' इत्यमरः । **क्रूर**स्तु 'कुटिले घोरे नृशंसे चाभिधेयवत्' इति विश्वः । 'नृशंसो घातुकः **क्रूरः** प्रायो धूर्तस्तु वञ्चकः' इत्यमरः ॥ ( ४३८२ ) **रोदेः-**। 'रुदिर् अश्रुविमोचने' ण्यन्तादस्माद्रक् णेश्च लुक् । 'णेरनिटि ३०८८' इति लोपे तु 'पुगन्त-२९४४' इति गुणः स्यादिति णिलुक् चेत्युक्तम् ॥ **रोदयतीति रुद्र इति** । नन्वेवं 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति श्रुत्या सह विरोधोऽत्र स्यादिति चेद् । अत्राहुः-'कर्त्तरि कृत् ३७८१' इति सूत्रानुरोधेन शम्भुरित्यत्र शं भावयतीत्यन्तर्भावितण्यर्थता यथा स्वीक्रियते, तथा 'अरोदीत्' इत्यत्राप्यन्तर्भावितण्यर्थतायां स्वीकृतायां 'रोदनं कारितवान्' इत्यर्थलाभान्नास्ति श्रुतिविरोधः । न च 'देवेरग्नौ वामं वसु स्थापितं, तच्च धनं 'देवैर्याचितं चेदग्निस्तु रोदनं कृतवान्' इति 'सोऽरोदीत्' इत्यादिश्रुत्यर्थादिहान्तर्भावितण्यर्थकल्पनं न सम्भवतीति श्रुतिविरोधस्त्वपरिहार्य एवेति वाच्यम्, 'देवैः स्थापितं वामं वसु देवेभ्योऽग्निना न दत्तं चेद्देवा एव रोदनं कृतवन्तः । अग्निस्तु तमदत्त्वा रोदनं कारितवान्' इत्यर्थकल्पनायाः सम्भवात् । अथवा अग्नौ प्रयुज्यमानरुद्रशब्दस्य रोदितीति रुद्र इत्येवार्थोऽस्तु, परन्तु ब्रह्मविष्णुरुद्रा इति व्यवह्रियमाणो यो रुद्रस्तद्वाचकरुद्रशब्दस्य 'रोदेः-४३८२' इत्युणादिसूत्रानुरोधेन रोदयतीति रुद्र इत्येवार्थकल्पनायां बाधकाभावात् श्रुतिविरोधोऽत्र नास्त्येवेति ॥ ( ४३८३ ) **अन्यत्रापीति** । धात्व-न्तरात्प्रत्ययान्तरेऽपि णेर्लुगित्यर्थः । संज्ञायामुदाहरणं—बृंहयति वर्द्धयति प्रजाः ब्रह्मा, शं सुखं भावयति शम्भुरित्यादि । छन्दसि तु, 'वृधु वृद्धौ' 'वर्द्धन्तु त्वा सुष्टुतयः' वर्द्धयन्त्वित्यर्थः । 'य इमा जजान' 'जनी प्रादुर्भावे' लिटि रूपम्, जनयामासेत्यर्थः । इह णलि परतः, 'अत उपधायाः ३०४९' इति वृद्धिर्भवत्येव, 'जनिवध्योश्च ३३३१' इति निषेधस्य चिणि ञिति णिति कृति च स्वीकारात् । न च णिलोपे सति प्रत्ययान्तत्वात्, 'कास्प्रत्ययात्-३०७९' इत्याम् स्यादिति वाच्यम्, 'अमन्त्रे' इति पर्युदासादामोऽप्रसक्तेः । 'कास्यनेकाचः-३०८०' इति वार्तिकेन तु आम्शङ्का दूरापास्तैव लिटि णिलोपे सत्यनेकाच्त्वाभावात् । ननु णलि 'णेरनिटि ३०८८' इत्यनिडादावार्द्धधातुके णिलोपे जजानेति रूपं सिद्धमिति किमनेन लुक्युदाहरणेनेति चेत् । मैवम्, णिलोपे सति 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ३१३९' इति णौ मित्त्वे 'मितां ह्रस्वः ३४०२' स्यात्, प्रत्ययलक्षणन्यायेन णिपरत्वसंभवात्, ततश्च जजनेति स्यात् लुकि सति तु प्रत्ययलक्षणन्यायो न प्रवर्त्तत इति मित्त्वाभावादिष्टं सिध्यति ॥ बाहुलकादसंज्ञाछन्दसोरपि क्वचिद्भवतीत्याशयेनोदाहरति-**वान्तीत्यादि** । पर्णानि शोषयन्तीति पर्णशुषः । पर्णानि मोचयन्तीति पर्णमुचः ॥ ( ४३८४ ) **जोरी च** । 'जु गतौ' सौत्रः । अस्माद्रक् ईकारश्चान्तादेशः । '**जीरः** खड्गे वणिग्द्रव्ये' इति विश्वः । '**जीर**स्तु जरणे खड्गे' इति मेदिनी ॥ **ज्यश्चेति** । 'ज्या वयोहानौ' अस्माद्रक् 'ग्रहिज्या-३२१६' इति संप्रसारणम्, पूर्वरूपम् । 'हलः ३०९०' इति दीर्घः ॥ **एके इति** । मुख्या इत्यर्थः । तथा च 'न धातुलोपे—' इति सूत्रे 'जीवेरदानुक्' इत्यस्य प्रत्याख्यानार्थं 'नैतज्जीवे रूपं, किन्तु रकि ज्यः सम्प्रसारणम्' इति भाष्ये उक्तम् ॥ ( ४३८५ ) **सुसूधा—**। 'षुञ् अभिषवे', 'षूङ् प्राणिगर्भविमोचने', 'डुधाञ् धारणादौ', 'गृधु अभिकाङ्क्षायाम्' । '**सुरा** चषकमद्ययोः । पुंलिङ्गस्त्रिदिवेशे स्यात्' इति मेदिनी । '**सुरो** देवे **सुरा**

च्चिमीनां दीर्घश्च ॥ शुः सौत्रः । शूरः । सीरम् । चीरम् । मीरः समुद्रः ॥ (४३८७) उ॰ वाविन्धेः ॥ वीध्रं विमलम् ॥ ( ४३८८ ) उ॰ वृधिवपिभ्यां रन् ॥ वर्ध्रं चर्म । वप्रः प्राकारः ॥ ( ४३८९ ) उ॰ ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः ॥ रन्नन्ता ऊनविंशतिः । निपातनाद् गुणाभावः । ऋज्रो नायकः । इदि-इन्द्रः । अङ्गेर्नलोपः । अग्रम् । वज्रोऽस्त्री हीरके पवौ । डुवप् । उपधाया इत्वम् । विप्रः । कुम्बिचुम्ब्योर्नलोपश्च । कुब्रमरण्यम् । चुब्रं मुखम् । क्षुर विलेखने । रेफलोपः । अगुणः । क्षुरः । खुर छेदने । रलोपो गुणाभावश्च । खुरः । भन्देर्नलोपः । भद्रम् । उच समवाये । चस्य गः । उग्रः । ञिभी-। भेरी । पक्षे लः । भेलो जलतरणद्रव्यम् । शुचेश्चस्य कः । शुक्रः । पक्षे लः । शुक्लः । गुङ् । वृद्धिः । गौरोऽरुणे सिते पीते । वन संभक्तौ । वन्रो विभागी ॥ इणो गुणाभावः-इरा मद्ये च वारिणि । मा माने-माला ॥ (४३९०) उ॰ समि कस उकन् ॥ कस गतौ । सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनः, अस्थिरश्च ॥ ( ४३९१ ) उ॰ पचिनशोर्णुकन् कनुमौ च ॥ पचेः कः । पाकुकः सूपकारः । नशेर्नुम् । नंशुकः ॥ ( ४३९२ ) उ॰ भियः क्रुकन् ॥ भीरुकः ॥ ( ४३९३ ) उ॰ क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥ रजकः । इक्षुकुट्टकः । चरकः । चष भक्षणे । चषकः । शुनकः । भषकः ॥ ( ४३९४ ) उ॰ रमे रश्च लो वा ॥ रमको विलासी । लमकः ॥ ( ४३९५ ) उ॰ जहातेर्द्वे च ॥ जहकस्त्यागी

---

मद्ये चषकेऽपि सुरा क्वचित्' इति विश्वः ॥ सुवति प्रेरयति कर्माणि लोकमिति सूरः सूर्यः । 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः' इत्यमरः ॥ 'धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे । स्त्रियां श्रवणतुल्यायाम्' इति मेदिनी ॥ 'गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके' इति ॥ ( ४३८६ ) शुसिचि—। 'शु गतौ', 'षिञ् बन्धने', 'चिञ् चयने', 'डुमिञ् प्रक्षेपणे' एभ्यः क्रन् एषां दीर्घत्वञ्च । 'शूरः स्याद् यादवे भटे' इति मेदिनी । 'शूरश्चारुभटे सूर्ये' इति विश्वहेमचन्द्रौ ॥ 'सीरोऽर्कहलयोः पुंसि' । 'चीरी झिल्ल्यां नपुंसके । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः' इति मेदिनी । 'चीरं तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च । चीरी कच्छाटिकाझिल्ल्योः' इति विश्वः ॥ ( ४३८७ ) वाविन्धेः । 'ञिइन्धी दीप्तौ' विपूर्वादस्मात् क्रन् 'अनिदिताम्–५५७' इति नलोपः । 'वीध्रं तु विमलात्मकम्' इति विशेष्यनिघ्नेऽमरः ॥ ( ४३८८ ) वृधि-। 'वृधु वृद्धौ,' 'डुवप् बीजसन्ताने' । 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः' इति धरणिरन्तिदेवौ । 'वप्रस्ताते पुमानस्त्री वेणुक्षेत्रचये तटे' इति मेदिनी ॥ ( ४३८९ ) ऋज्रेन्द्राग्र--। 'ऋजु गतिस्थानादिषु', 'इदि परमैश्वर्ये,' 'अगि गतौ', 'वज गतौ', 'डुवप् बीजसन्ताने', 'कुबि आच्छादने', 'चुबि वक्त्रसंयोगे', 'भदि कल्याणे', 'शुच शोके', 'गुङ् अव्यक्ते शब्दे', 'इण् गतौ' ॥ नायक इति । 'ऋज्राश्वः पृष्टिभिरम्बरीषः' इति मन्त्रे 'ऋज्रा गतिमन्तोऽश्वा यस्य स ऋज्राश्वः' इति वेदभाष्यम् । 'इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः' इति विश्वः । 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते स्यात्पुन्नपुंसकम् ॥ अधिके च प्रधाने च प्रथमे चाभिधेयवत् ।' इति मेदिनी । क्षुरो लोमच्छेदकः । 'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति विश्वमेदिन्यौ । 'खुरः कोलदले शफे' इति मेदिनी । 'भद्रः शिवे खञ्जरीटे वृषमेरुकदम्बके । करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः' इति च । 'उग्रः शूद्रासुते क्षत्त्राद्रुद्रे पुंसि त्रिषूत्कटे । स्त्री वचाक्षुद्रयोः' इति मेदिनी ॥ भेरीति । गौरादित्वान्ङीष् 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । 'भेलः प्लवे भीलुके च निर्बुद्धिमुनिभेदयोः' इति विश्वः । 'भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यवत्' इति । 'शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबम्, शुक्लो योगान्तरे सिते । नपुंसकं तु रजते' इति च । 'गौरः पीतेऽरुणे श्वेते विशुद्धेऽप्यभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे । गौरी त्वसंजातरजःकन्याशंकरभार्ययोः । रोचने रजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगाया विशेषेऽपि यादसांपतियोषिति' इति च मेदिनी । 'नदीभेदे च गौरी स्याद् वरुणस्य च योषिति' इति विश्वः । 'अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते । सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः' इति ब्रह्माण्डपुराणे । एतेन 'गौरः शुच्याचारः' इत्यादि भाष्यं व्याख्यातम् । 'इरा भूवाक्सुराप्सु स्यात्' इत्यमरः ॥ मालेति । प्रत्ययरेफस्य लत्वम् । 'मालं क्षेत्रे स्त्रियां पक्वाम्रजोर्जात्यन्तरे पुमान्' इति मेदिनी । 'मालं क्षेत्रेऽजिने मालो माला पुष्पादिदामनि' इति विश्वः । 'मालमुन्नतभूतलम्' इत्युत्पलः । 'क्षेत्रमारुह्य मालम्' इति मेघदूतः । मणिपूर्वोऽयमर्थान्तरे रूढः । 'मणिमाला स्मृता हारे स्त्रीणां दन्तक्षतान्तरे' इति विश्वः ॥ ( ४३९० ) समिकस-। 'संकसुकोऽस्थिरः' इति विशेष्यनिघ्नेऽमरः ॥ ( ४३९१ ) पचिनशोः-। 'डुपचष् पाके', 'णश अदर्शने' आभ्यां णुकन् प्रत्ययः स्यात् । णकारो वृद्ध्यर्थः । अनयोर्यथाक्रमं कादेशनुमागमौ च भवतः ॥ ( ४३९२ ) भियः-। 'ञिभी भये' 'अधीरे कातरस्त्रस्ते भीरुभीरुकभीलुकाः' इत्यमरः ॥ ( ४३९३ ) क्वुन्-। शिल्पिन्यभिधेये संज्ञायां गम्यमानायां च क्वुन् स्यादपूर्वस्य निरुपपदस्य च । अपिशब्दात्सोपपदस्य । पञ्चम्यर्थे षष्ठी । यद्वा-अर्थद्वारकसंबन्धे षष्ठी, प्रकृतिप्रत्ययार्थयोः क्रियाकारकभावात् । एवं च निरुपपदप्रकृत्यर्थनिरूपितकर्तृकारके क्वुनित्याद्यर्थः फलितः । शिल्पिनि तावत्--'रञ्ज रागे' 'रजको धावके शुके' इति विश्वः । 'रजकौ धावकशुकौ' इति हेमचन्द्रः । 'कुट्ट छेदने' इक्षून् कुट्टयति गौडिकः । 'चर गतिभक्षणयोः' । संज्ञायां तु 'चषकोऽस्त्री पानपात्रम्' । 'शुन गतौ', भष भर्त्सने शुनकः भषकः श्वा ॥ ( ४३९४ ) लमक इति । ऋषिविशेषः ॥

कालश्च ॥ ( ४३९६ ) (उ) ध्मो धम च ॥ धमकः कर्मकारः ॥ ( ४३९७ ) (उ) हनो वध च ॥ वधकः ॥ ( ४३९८ ) (उ) बहुलमन्यत्रापि । कुह विस्मापने । कुहकः । कृतकम् ॥ ( ४३९९ ) (उ) कृषेर्वृद्धिश्चोदीचाम् ॥ कार्षकः । कृषकः ॥ ( ४४०० ) (उ) उदकं च ॥ प्रपञ्चार्थम् ॥ ( ४४०१ ) (उ) वृश्चिकृष्योः किकन् । वृश्चिकः । कृषिकः ॥ ( ४४०२ ) (उ) प्राङि पणिकषः ॥ प्रापणिकः पण्यविक्रयी । प्राकषिकः परदारोपजीवी ॥ ( ४४०३ ) (उ) मुषेर्दीर्घश्च ॥ मूषिकः आखुः ॥ (४४०४) (उ) स्यमेः सम्प्रसारणं च ॥ चाद्दीर्घः । सीमिको वृक्षभेदः ॥ ( ४४०५ ) (उ) क्रिय इकन् ॥ क्रयिकः क्रेता ॥ ( ४४०६ ) आङि पणिनिपतिपखनिभ्यः ॥ आपणिकः । आपनिक इन्द्रनीलः किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आखनिको मूषको वराहश्च ॥ (४४०७) (उ) श्यास्त्याहृञविभ्य इनच् ॥ श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः ॥ ( ४४०८ ) (उ) वृजेः किच्च । वृजिनम् ॥ ( ४४०९ ) (उ) अजेरज च ॥ वीभावबाधनार्थम् । अजिनम् ॥ ( ४४१० ) बहुलमन्यत्रापि । कठिनम् । नलिनम् । मलिनम् । कुण्डिनम् ॥ द्यतेः-यत्परुषि दिनम् । दिवसोऽपि दिनम् ॥ (४४११) (उ) द्रुदक्षिभ्यामिनन् ॥ द्रविणम् । दक्षिणः । दक्षिणा ॥ ( ४४१२ ) (उ) अर्तेः किदिच्च ॥ इरिणं शून्यम् ॥ ( ४४१३ ) (उ) वेपितुह्योर्ह्रस्वश्च । विपिनम् । तुहिनम् ॥ ( ४४१४ ) (उ) तलिपुलिभ्यां च ॥ तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु । पुलिनम् ॥ ( ४४१५ ) (उ) गर्वेरत उच्च ॥ गौरादित्वात् ङीष् ॥ गुर्विणी गर्भिणी ॥ ( ४४१६ ) (उ) रुहेश्च ॥ रोहिणः ॥ ( ४४१७ ) (उ) महेरिनण् च ॥ चादिनन् । माहिनम् , महिनं राज्यम् ॥

---

( ४३९५ ) **जहातेः**—। 'ओहाक् त्यागे' ॥ ( ४३९६ ) **ध्मो धम च** । 'ध्मा शब्दाग्निसंयोगयोः' ॥ ( ४३९८ ) **कुहको** दाम्भिकः ॥ **कृतकमिति** । 'कृती छेदने' ॥ ( ४३९९ ) **कृषेः**—। 'कृष विलेखने' अस्मात्क्वुन् । कार्षकः' कृषीवलः, कृषकः स एव । '**कृषकः** पुंसि फाले स्यात्कार्षके त्वभिधेयवत्' इति मेदिनी ॥ ( ४४०० ) **उदकं च** । 'उन्दी क्लेदने' अस्मात्क्वुन् । ननु 'क्वुन् शिल्पि--४३९३' इत्यादिना गतार्थमित्याशङ्कायामाह--**प्रपञ्चार्थमिति** ॥ ( ४४०१ ) **वृश्चिकृष्योः**—। 'ओव्रश्चू छेदने', 'कृष विलेखने ॥ ( ४४०२ ) **प्राङि**--। 'पण व्यवहारे', 'कषशिष-' इति दण्डके हिंसार्थकः ॥ ( ४४०३ ) **मुषेः**--। 'मुष स्तेये' अस्मात्किकन् धातोर्दीर्घश्च ॥ ( ४४०४ ) **स्यमेः**--। 'स्यमु शब्दे' ॥ ( ४४०५ ) **क्रियः**--। 'डुक्रीञ् द्रव्यविनिमये' ॥ ( ४४०६ ) **आङि पणि**-। 'पण व्यवहारे स्तुतौ च', 'पन च', 'पत्लृ गतौ', 'खनु अवदारणे' एभ्य आङि उपपदे इकन् स्यात् ॥ **आपणिक इति** । अत्रैव प्रपूर्वे आङि प्रापणिक इति सिद्धौ 'आङि पणि--४४०६' इत्यत्र पणिग्रहणं प्रपञ्चार्थमित्युज्ज्वलदत्तः । उपसर्गान्तरनिवृत्त्यर्थं तु मनोरमायाम् । आपणिकशब्दोऽयं नित्स्वरेणाद्युदात्तः । आपणेन व्यवहरतीत्यर्थे ठकि तु 'कितः ५६७५' इत्यन्तोदात्तः ॥ ( ४४०७ ) **श्यास्त्या**-।'श्यैङ् गतौ', 'स्त्यै ष्ट्यै शब्दसंघातयोः', 'हृञ् हरणे', 'अव रक्षणादौ' '**श्येनः** पत्त्रिणि पाण्डुरे' इति मेदिनी । स्तेनश्चौरः 'स्तेन चौर्ये' इति चौरादिकात्पचाद्यचि तु स्तेन इति निर्यकारोऽपि । केचित्तु 'स्तायूनां पतये नमः' इत्यादिप्रयोगोपष्टम्भेन निर्यकारस्यापि ष्टैधातोर्माधवादिभिर्व्यादिषु स्वीकृतत्वात्प्रकृतसूत्रेऽपि ष्टैधातुमेव पठन्तः स्तेनशब्दो निर्यकार एवेत्याहुः । '**हरिणः** पुंसि सारङ्गे विशदे त्वभिधेयवत् । **हरिणी** हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च' इति मेदिनी ॥ ( ४४०८ ) **वृजेः**--। 'वृजी वर्जने' । वृजिनं पापम् । '**वृजिनं** कल्मषे क्लीबं केशे ना कुटिलेऽन्यवत्' इति मेदिनी ॥ ( ४४०९ ) **अजेः**--। 'अज गतिक्षेपणयोः' अस्मादिनच् ॥ अजेरजादेशविधानं व्यर्थमित्यत आह-**वीभावबाधनार्थमिति** ।'**अजिनं** चर्म कृत्तिः स्त्री' इत्यमरः ॥ ( ४४१० ) **बहुलमन्यत्रापि** । अन्यस्मादपीत्यर्थः । 'कठ कृच्छ्रजीवने', 'णल गहने', 'मल मल्ल धारणे', 'कुडि दाहे', 'दो अवखण्डने' । '**कठिनमपि** निष्ठुरे स्यात् स्तब्धे तु त्रिषु नपुंसकं स्थाल्याम् । **कठिनी** खटिकायामपि **कठिना** गुडशर्करायां च' इति मेदिनी । '**मलिनं** दूषिते कृष्णे, ऋतुमत्यां तु योषिति' इति मेदिनी ॥ **कुण्डिनमिति** । 'नगरं कुण्डिनमण्डजो ययौ' इति श्रीहर्षः । कुण्डिन ऋषिः । तस्यापत्यं कौण्डिन्यः ॥ **यत्परुषीति** । यत्परुषि पर्वणि दिनं खण्डितं तद्देवानामिति तैत्तिरीयश्रुत्यर्थः ॥ (४४११) **द्रुदक्षि**-। 'द्रु गतौ', 'दक्ष वृद्धौ' । '**द्रविणं** न द्वयोर्वित्ते काञ्चने च पराक्रमे' इति मेदिनी । '**दक्षिणो** दक्षिणोद्भूतसरलच्छन्दवृत्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्' इति च ।'**दक्षिणः** सरलोदारपरच्छन्दानुवृत्तिषु । वाच्यवद्दक्षिणावाचि यज्ञदानप्रतिष्ठयोः' इति विश्वः ॥ ( ४४१२ ) **अर्तेः**--। 'ऋ गतौ' अस्मादिनन् कित्स्याद् इकारश्च धातो रपरत्वम् । '**इरिणं** शून्यमूषरम्' इत्यमरः । '**इरिणं** तूषरे शून्येऽपि' इति मेदिनी ॥ ( ४४१३ ) **वेपि**--। 'टुवेपृ कम्पने', 'तुहिर अर्दने' । आभ्यामिनन् ॥ ह्रस्वश्च धातोः । 'अटव्यरण्यं **विपिनम्**' इत्यमरः ॥ **तुहिनमिति** । लघूपधगुणे कृते ह्रस्वः ॥ (४४१४) **तलि**-। 'तल प्रतिष्ठायाम्', 'पुल महत्त्वे' ॥ (४४१५) **गर्वेः**-। 'गर्व मोचने' अस्मादिनन् , अकारस्य उत् ॥ ( ४४१६ ) **रुहेश्च** । 'रुह बीजजन्मनि प्रादुर्भावे च' ॥ **रोहिण इति** । प्रज्ञादित्वादणि रौहिणश्चन्दनतरुः ॥ ( ४४१७ ) **महेः**—।'मह पूजायाम्' । 'कुतस्त्वमिन्द्रमाहिनः सन्' इति मन्त्रे 'माहिनो महनीयः पूजनीयः' इति वेदभाष्यम् ॥

( ४४१८ ) (उ) **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च** ॥ वाक् । प्राट् । श्रीः । स्रवत्यतो घृतादिकमिति सूर्यज्ञोपकरणम् । द्रूर्हिरण्यम् । कटप्रूः कामरूपी कीटश्च । जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम् ॥ ( ४४१९ ) (उ) **आप्नोतेर्ह्रस्वश्च** ॥ आपः । अपः । अद्भिः । अद्भ्यः ॥ ( ४४२० ) (उ) **परौ व्रजेः षश्च पदान्ते** ॥ व्रजेः क्विब्दीर्घौ स्तः पदान्ते तु षश्च । परिव्राट् । परिव्राजौ ॥ ( ४४२१ ) (उ) **हुवः श्लुवच्च** ॥ जुहूः ॥ ( ४४२२ ) (उ) **स्रुवः कः** ॥ स्रुवः ॥ ( ४४२३ ) (उ) **चिक्च** ॥ इकार उच्चारणार्थः । क इत्, कुत्वम् । स्रुक् । स्रुवं च स्रुचश्च संमृड्ढि ॥ ( ४४२४ ) (उ) **तनोतेरनश्च वः** ॥ तनोतेश्विक् प्रत्ययः । अनो वशब्दादेशश्च । त्वक् ॥ ( ४४२५ ) (उ) **ग्लानुदिभ्यां डौः** ॥ ग्लौः । नौः ॥ ( ४४२६ ) (उ) **च्विरव्ययम्** ॥ डौरित्येव । ग्लौकरोति । कृन्मेजन्त इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति ॥ ( ४४२७ ) (उ) **रातेर्डैः** ॥ राः । रायौ । रायः ॥ (४४२८) (उ) **गमेर्डोः** ॥ गौर्नाऽऽदित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ॥ बाहुलकाद् द्युतेरपि डोः । द्यौः स्त्री स्वर्गान्तरिक्षयोः ॥ ( ४४२९ ) (उ) **भ्रमेश्च डूः** ॥ भ्रूः । चाद्गमेः । अग्रेगूः ॥ ( ४४३० ) (उ) **दमेर्डोसिः** ॥ दोः । दोषौ ॥ ( ४४३१ ) (उ) **पणेरिज्यादेश्च वः** ॥ वणिक् । स्वार्थेऽण् । नैगमो वाणिजो वणिक् ॥ ( ४४३२ ) (उ) **वशेः कित्** ॥ उशिगग्नौ घृतेऽपि च ॥ ( ४४३३ ) (उ) **भृञ ऊच्च** । भूरिक् भूमिः ॥ ( ४४३४ ) (उ) **जसिसहोरुरिन्** ॥ जसुरिर्वज्रम् । सहुरिरादित्यः पृथिवी च ॥ ( ४४३५ ) (उ) **सुयुरुवृञो युच्** ॥ सवनश्चन्द्रमाः ।

---

( ४४१८ ) **क्विब्वचि**—। 'वच परिभाषणे', 'प्रच्छ ज्ञीप्सायाम्', 'श्रिञ् सेवायाम्', 'स्रु गतौ,' 'द्रुङ् गतौ', 'प्रुङ् गतौ', 'जु गतौ' सौत्रः ॥ **वागिति** । 'वचिस्वपि—३२१३' इति संप्रसारणाभावः । पृच्छतीति प्राट् । 'ग्रहिज्या—३२१६' इति सम्प्रसारणाभावः । 'च्छ्वोः शूठ्—३३९४' इति शः, 'व्रश्च—४११' इति षत्वं जश्त्वचर्त्वे । प्राशौ । प्राशः ॥ **श्रीरिति** । 'कृदिकारात्—७०८' इति ङीष् न भवति कृत्प्रत्ययस्य य इकार इति व्याख्यानात् । कृदन्तं यदिकारान्तमिति पक्षे तु यद्यपि ङीष्प्राप्तिरस्ति, तथापि कारग्रहणसामर्थ्येन केवलस्येकारस्य ग्रहणादिकारान्तपक्षे दुर्बल इत्याहुः । दुर्घटस्तु—ङीषि श्रीमित्यपि रक्षित इच्छतीत्याह। 'श्रीर्वेषरचनाशोभाभारतीसरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तिविधोपकरणेषु च॥विभूतौ च मतौ च स्त्री' इति मेदिनी ।'जूराकाशे—' इत्यादिमूलोदाहृतमपि मेदिनी ॥ ( ४४१९ ) **आप्नोतेः**—। 'आप्ऌ व्याप्तौ' अस्मात्क्विप् धातोर्ह्रस्वश्च । '**आपः** स्त्री भूम्नि वार्वारि' इत्यमरः ॥ ( ४४२० ) **परौ**—। 'व्रज गतौ' ॥ ( ४४२१ ) **हुवः**—। 'हु दानादनयोः' अस्मात्क्विप् धातोश्च दीर्घः । श्लुवद्भावाद् द्विर्वचनम् ॥ ( ४४२२ ) **स्रुवः कः** । 'स्रु गतौ' । स्रुवो यज्ञपात्रविशेषः । 'अयं स्रुवोऽभिजिहर्ति' 'स्रुवेण पार्वणौ जुहोति' इत्यादौ प्रसिद्धः ॥ (४४२३) **चिक्च** । स्रुव इत्येव ॥ योगविभाग उत्तरार्थः ॥ **क इदिति** । तेन स्रुक् स्रुचौ स्रुचः इत्यादौ गुणो न ॥ (४४२४) **तनोतेः**—। 'तनु विस्तारे' व इति संघातग्रहणं तदाह—**शब्दादेश इति** । 'स्त्रियां तु त्वगसृग्धरा' इत्यमरः ॥ ( ४४२५ ) **ग्लानुदि**—। 'ग्लै हर्षक्षये', 'णुद प्रेरणे' । '**ग्लौ**र्मृगाङ्कः कलानिधिः' इत्यमरः । 'स्त्रियां **नौ**स्तरणिस्तरीः' इति च ॥ ( ४४२६ ) **ग्लौकरोतीति** । अग्लौः ग्लौः संपद्यते तथा करोतीत्यर्थः । अव्ययत्वात्सुपो लुक् ॥ **च्व्यन्त एवेति** । तेन ग्लौर्नौर्गौरित्यादीनां नाव्ययत्वमिति भावः ॥ ( ४४२७ ) **रातेः**—। 'रा दाने' ॥ **रा इति** । 'रायो हलि ४०२' इत्यात्त्वम् । 'रः स्मृतः पावके तीक्ष्णे राः पुंसि स्वर्णवित्तयोः' इति मेदिनी । 'रस्तीक्ष्णे दहने रास्तु सुवर्णे जलदे धने' इति हेमचन्द्रः ॥ (४४२८) **गमेः**—। 'गम्ऌ गतौ' । 'गोतो णित् ३९८' गौः ॥ केशवोक्तमाह—**गौर्नाऽऽदित्य इत्यादि** । '**गौः** स्वर्गे वृषभे रश्मौ वज्रे चन्द्रे पुमान् भवेत् । अर्जुने नेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इत्यमरः ॥ **द्युतेरपीति** । 'द्युत दीप्तौ' द्योतन्ते देवा अस्यामिति द्यौः ॥ (४४२९) **भ्रमेश्च**—। 'भ्रमु अनवस्थाने' । 'गम्ऌ गतौ' अग्रेगूः सेवकः ॥ ( ४४३० ) **दमेः**—। 'दमु उपशमे' डित्त्वाट्टिलोपः । दोः । 'दोषं तस्य' इति श्रीहर्षप्रयोगात्पुंस्त्वम् । 'ककुद्दोषणी' इति भाष्यप्रयोगान्नपुंसकत्वम् । '**दोर्दोषा** च भुजो बाहुः' इति धनञ्जयकोशात्स्त्रीलिङ्गोऽप्ययमित्यादि प्रागेव प्रपञ्चितम् ॥ ( ४४३१ ) **पणेः**—। 'पण व्यवहारे स्तुतौ च ।' अमरकोशमाह—**नैगम इत्यादि** । ( ४४३२ ) **वशेः**—। 'वश कान्तौ' अस्मादिजिः कित्स्यात् । 'ग्रहिज्या—३२१६' इति संप्रसारणम् ॥ ( ४४३३ ) **भृञः**—। 'भृञ् भरणे' अस्मादिजिः कित्स्यात् धातोरूकारान्तादेशश्च ॥ (४४३४) **जसि**—। 'जसु मोक्षणे' । 'जसुरये स्तर्यं पिप्ययुर्गाम्' इति मन्त्रे जसुरये श्रान्तायेति, 'नीचायमानं जसुरिं न श्येनम्' इत्यत्र जसुरिं क्षुधितं श्येनं न श्येनपक्षिणमिवेति, 'उतस्य वाजी सहुरिर्ऋतौ' इति मन्त्रे सहुरिः सहनशील इति च वेदभाष्यम् ॥ (४४३५) **सुयु**—। 'षुञ् अभिषवे', 'यु मिश्रणे', 'रु शब्दे', 'वृञ् वरणे' । '**सवनं** त्वध्वरे स्नाने सोमनिर्दलनेऽपि च' इति मेदिनी ।

---

१—कारग्रहणस्य 'वर्णात्कारः' इत्युक्तेर्वर्णसमानार्थकत्वस्य 'तथैकारोकारौ, ऋकारस्त्रिंशतः' इत्यत्र मूल एवाङ्गीकरणेन तपरसमानार्थकतया ह्रस्वस्यैव बोधकत्वं मन्यमानास्तु प्राज्ञा एवेति बोध्यम् । अत एव 'तां दृष्ट्वा श्रीमिवायतीम्' 'कन्थामिव श्रीमपि कुत्सयन्तः' इत्यादिप्रयोगा ङीषि साधवः इति दिक् ॥

यवनः । रवणः कोकिलः । वरणः॥ ( ४४३६ ) (उ) अशे रश च ॥ अश्नोतेर्युच् स्यात् रशादेशश्च । रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् ॥ ( ४४३७ ) (उ) उन्देर्नलोपश्च ॥ ओदनः ॥ ( ४४३८ ) (उ) गमेर्गश्च ॥ गमेर्युच् स्याद्गश्चादेशः । गगनम्॥(४४३९) (उ) बहुलमन्यत्रापि॥ युच् स्यात् । स्यन्दनः । रोचना॥(४४४०) (उ) रञ्जेः क्युन्॥ रजनम् ॥ (४४४१) (उ) भूसूधूभ्रस्जिभ्यश्छन्दसि॥ भुवनम् । सुवन आदित्यः । धुवनो वह्निः । निभुवनं सुरतम् । भृज्जनमम्बरीषम् ॥ (४४४२) (उ) कृपृवृजिमन्दिनिधाञः क्युः ॥ किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनम् ॥ ( ४४४३ ) (उ) धृषेर्धिष् च संज्ञायाम् ॥ धिषणो गुरुः । धिषणा धीः ॥(४४४४) (उ) वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ॥ अतिप्रत्ययान्ता निपात्यन्ते । पृषु सेचने । गुणाभावः । पृषन्ति । बृहत् । महान् ।

---

यवनो म्लेच्छविशेषः ॥ '**रवणः** शब्दने स्वरे ' इति च मेदिनी । रवणः कोकिल इत्येके । वरणो वृक्षभेदः । टापि तु वरणा नदी । ' **वरण**स्तिक्तशाकेऽपि प्राकारे **वरणं** वृतौ ' इति विश्वः । ' वरुणो **वरणः** सेतुस्तिक्तशाकः कुमारकः' इत्यमरः ॥ ( ४४३६ ) **अशेः**–। ' अशू व्याप्तौ' ॥ **जिह्वावाची त्विति** । 'रस आस्वादने' चौरादिकः । ततो नन्द्यादित्वात् ल्युः । 'ण्यासश्रन्थः–५०८९ ' इति युज्वा । रसत्यास्वादतीति रसना । ' **रसनं** स्वदने ध्वनौ । जिह्वायां तु न पुंसि स्याद्रास्नायां **रसना** स्त्रियाम्' इति मेदिनी । काञ्चीवाची तालव्यशकारवान् जिह्वावाची दन्त्यसकारवानित्येषा व्यवस्था भूरिप्रयोगाभिप्रायेणोक्ता । वस्तुतस्तु तालव्यशकारवान् रशनाशब्दोऽपि काञ्च्यां जिह्वायां च,तथा दन्त्यसकारवान् रसनाशब्दोऽप्यर्थद्वये बोध्यः। तथा हि ' तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः । **रशना**ऽपि च जिह्वायाम् ' इति विश्वकोशाज्जिह्वायामुभयं साधु । ' **रसनं** निःस्वने स्वादे **रसना** काञ्चिजिह्वयोः ' इत्यजयधरणिकोशाभ्यां काञ्च्यामप्युभयं साधु । एवं च ' अशे रश च ४४३६' इति सूत्रे 'अशू व्याप्तौ' 'अश भोजने' इति धातुद्वयमपि ग्राह्यम् । 'रस आस्वादने ' 'रस शब्दे ' इति धातुभ्यां तु ' बहुलमन्यत्रापि ४४३९ ' इत्यनुपदमेव वक्ष्यमाणेन युच् । तेन सर्वत्रावयवार्थानुगमोऽपि सूपपाद इत्याहुः ॥ ( ४४३७ ) **उन्देः**–। 'उन्दी क्लेदने' अस्माद्युच् । '**ओदनं** न स्त्रियां भक्ते बलायामोदने स्त्रियाम्' इति मेदिनी ॥ ( ४४३८ ) **गमेः**–। 'गम्लृ गतौ' । 'नभोऽन्तरिक्षं **गगनम्**' इत्यमरः ॥ ( ४४३९ ) **बहुलम्**–। 'स्यन्दू प्रस्रवणे', 'रुच दीप्तौ' । '**स्यदनं** तु स्रुतौ नीरेऽतिनिशे ना रथेऽस्त्रियाम् ' इति मेदिनी । '**रोचना** रक्तकह्लारे गोपित्तवरयोषितोः' । '**रोचनः** कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु' इति च ॥ बहुलग्रहणात् ' चदि आह्लादे ' । ' **चन्दनं** मलयोद्भवे । **चन्दनः** कपिभेदे स्यान्नदीभेदे तु **चन्दनी**' इति विश्वः । '**चन्दनी** तु नदीभिदि । **चन्दनो**ऽस्त्री मलयजे भद्रकाल्यां नपुंसकम् ' इति मेदिनी । भद्रकाली ओषधिविशेषः । 'भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रियाम्' इति मेदिनी । 'असु क्षेपणे' । ' **असनं** क्षेपणे क्लीबे पुंसि स्याज्जीवकद्रुमे' इति मेदिनी । 'अत सातत्यगमने' राजपूर्वः । ' **राजातनः** क्षीरिकायां प्रियाले किंशुकेऽपि च ' इति विश्वमेदिन्यौ । एवमन्येऽपि द्रष्टव्याः ॥(४४४०) **रञ्जेः**–। ' रञ्ज रागे'। ल्युटि तु रञ्जनम् । '**रजनो** रागजनने **रजनं** रक्तचन्दने' इति मेदिनी । बाहुलकात्कृपेरपि क्युन् । ' कृपो रो लः ३१३१' इति प्राप्तलत्वाभावश्च । कृपणः॥(४४४१)**भूसू**–।'भू सत्तायाम्', 'षूङ् प्राणिप्रसवे', 'धूञ् कम्पने', 'भ्रस्ज पाके' बहुलवचनाद्भाषायामपि क्वचित् । '**भुवनं** विष्टपे तु स्यात्सलिले गगने जने' इति मेदिनी । '**विष्टपं** भुवनं जगत्' इत्यमरः॥ **भृज्जनमिति** । 'ग्रहिज्या–३२१६' इति सम्प्रसारणम् । सस्य जश्त्वेन दः, दस्य श्चुत्वेन जः '**क्लीबेऽम्बरीषं** भ्राष्ट्रो ना' इत्यमरः॥ ( ४४४२ ) **कृपॄ**–। 'कॄ विक्षेपे' 'पॄ पालनादौ', 'वृजी वर्जने', 'मदि स्तुत्यादौ', 'डुधाञ् धारणपोषणयोः' । 'निधनं स्यात्कुले नाशे' इति मेदिनी । '**निधनं** कुलनाशयोः' इति हेमचन्द्रः ॥ (४४४३)**धृषेः**–। 'ञिधृषा प्रागल्भ्ये' अस्मात्क्युः धिषादेशश्च धातोः । '**धिषण**स्त्रिदशाचार्ये **धिषणा** धियि योषिति' इति मेदिनी । 'गीष्पतिर्**धिषणो** गुरुः' इत्यमरः॥ ( ४४४४ ) **वर्तमाने**–। **शतृवच्चेति** । तथा च 'उगिदचाम्–३९१' इति नुमि,महान् । स्त्रियां तु 'उगितश्च ६१९' इति ङीपि महतीत्यादि सिध्यतीति भावः । ननु पृषन्महदादयः 'लटः शतृशानचौ–४११९ ' इति शतृप्रत्ययान्ता एव भवन्तु, ततश्च वर्तमान इति, शतृवच्चेति, न कर्त्तव्यमिति महदेव लाघवमिति चेत् । अत्राहुः––शतृप्रत्ययान्तत्वे तु 'कर्त्तरि शप् ३७७१ ' इति शप्प्रत्यये महतीत्यादौ ' आच्छीनद्योः–५९९' इति नुम् स्यात्, महानित्यादौ तु ' तास्यनुदात्तेन्ङिदुपदेशात्–५६९५ ' इति लसार्वधातुकस्वरः स्यात्, अतिप्रत्ययान्तत्वे तु तस्यातिप्रत्ययस्यार्द्धधातुकत्वाभ्युपगमेन शबभावान्नोक्तदोष इत्याशयेनातिप्रत्ययान्तत्वेन निपातनं स्वीकृतमिति । ' बृह वृद्धौ', ' मह पूजायाम्', 'गम्लृ गतौ' ॥ **पृषन्तीति** । बिन्दुवाची पृषच्छब्दो नपुंसकमिति ध्वननाय बहुवचनमुदाहृतम् । '**पृषन्**मृगे पुमान् बिन्दौ न द्वयोः **पृषतो**ऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी ।'**बृहती** क्षुद्रवार्त्ताक्यां कण्टकायां च वाचि च । वारिधान्यां महत्यां च छन्दोवसनभेदयोः' इति विश्वः । शतृवद्भावात् 'उगिदचाम्–३९१' इति नुम् । बृहन् विपुलः । '**महती** वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवत्' इति मेदिनी । महती नारदवीणा । 'विश्वावसोस्तु बृहती तुम्बरोस्तु कलावती । **महती** नारदस्य स्यात्सरस्वत्यास्तु कच्छपी' इति वैजयन्ती । 'अवेक्षमाणं महतीं मुहुर्मुहुः' इति माघः ॥

गमेर्जगादेशः । जगत् ॥ (४४४५) उ॰ **संश्चत्तृपद्वेहत्** ॥ एते निपात्यन्ते । पृथकरणं शतृवद्भावनिवृत्त्यर्थम् । संचिनोतेः सुट् । इकारलोपः संश्चत् कुहकः । तृपच्छत्रम् । विपूर्वाद्धन्तेष्टिलोप इत ए च । वेहत् गर्भोपघातिनी ॥ (४४४६) उ॰ **छन्दस्यसानच् शुजॄभ्याम्** । शवसानः पन्थाः । जरसानः पुरुषः ॥ (४४४७) उ॰ **ऋञ्जिवृधिमन्दिसहिभ्यः कित्** ॥ ऋञ्जसानो मेघः । वृधसानः पुरुषः । मन्दसानोऽग्निर्जीवश्च । सहसानो यज्ञो मयूरश्च ॥ (४४४८) उ॰ **अर्तेर्गुणः शुट् च** ॥ अर्शसानोऽग्निः ॥ (४४४९) उ॰ **सम्यानच् स्तुवः** ॥ संस्तवानो वाग्मी ॥ (४४५०) उ॰ **युधिबुधिदृशिभ्यः किच्च** ॥ युधानः । बुधानः । दृशानो लोकपालकः ॥ (४४५१) उ॰ **हुरछेः सनो लुक् छलोपश्च** ॥ जुहुराणश्चन्द्रमाः ॥ (४४५२) उ॰ **श्वितेर्दश्च** ॥ शिश्विदानः पुण्यकर्मा ॥ (४४५३) उ॰ **तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ** ॥ शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः । तौ चानिटौ । शंस्ता स्तोता ॥ शंस्तरौ । शंस्तरः । क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च । अनुदात्तेत् । वृक्ये चक्षदानमिति मन्त्रात् । उक्षाणं वा वेहतं वा क्षदन्ते इति ब्राह्मणाच्च । क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे ॥ (४४५४) उ॰ **बहुलमन्यत्रापि** ॥ मन् । मन्ता । हन् । हन्ता । इत्यादि ॥ (४४५५) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** ॥ न पतन्त्यनेन नप्ता पौत्रो दौहित्रश्च । नयतेः षुग्गुणश्च । नेष्टा । त्विषेरितोऽत्वम् । त्वष्टा । होता । पोता ऋत्विग्भेदः । भ्राजतेर्जलोपः । भ्राता । जायां माति जामाता । मान पूजायां नलोपः । माता । पातेराकारस्य इत्वम् । पिता ।

---

'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु । **जगती** भुवने क्ष्मायां छन्दोभेदे जनेऽपि च' इति मेदिनी । तत्र वायुवाचिनः पुंल्लिङ्गस्य शतृवद्भावादुगित्त्वेन नुमि जगन्, जगन्तौ, जगन्त इत्यादि भवति । 'द्युतिगमिजुहोतीनां द्वे च ४१९३' इति व्युत्पादितस्य तु नुमभावाज्जगत्, जगतौ, जगत इत्यादीति बोध्यम् ॥ (४४४५) **संश्चत्तृ-**। 'चिञ् चयने', 'तृप प्रीणने', 'हन हिंसागत्योः' ॥ **निपात्यन्त इति** । अतिप्रत्ययान्ता इति शेषः ॥ **निवृत्त्यर्थमिति** । एवञ्च संश्चदित्यत्र 'उगिदचाम्-३९१' इति नुमः शङ्कैव नास्ति, वेहदित्यत्र तु 'उगितश्च ६१९' इति ङीष् नेति भावः ॥ **संचिनोतेरिति** । सुभूतिचन्द्रस्तु-'संपूर्वाच्छ्यतेः संश्चत्' इत्याह ॥ **तृपच्छत्रमिति** । चन्द्रमा इत्यन्ये । विहन्ति गर्भमिति वेहत् ॥ **इत ए चेति** । विशब्दसम्बन्धिन इकारस्य एकार इत्यर्थः। गौरित्यनुवृत्तौ 'वेहद् गर्भोपघातिनी' इत्यमरः ॥ (४४४६) **छन्दसि**--। 'शु गतौ', 'जॄष् वयोहानौ' ॥ **पन्था इति** । 'प्रथन्महः' इत्यादिमन्त्रद्वये शवसानशब्दो गन्तृपरतया व्याख्यातः ॥ (४४४७) **ऋञ्जि**-। 'ऋजि भर्जने', 'वृधु वृद्धौ', 'मदि स्तुत्यादौ', 'षह मर्षणे' एभ्यो सानच्ऽकित्स्यात् ॥ **ऋञ्जसानो मेघ इति** । ऋजेरिदित्त्वान्नुम् । इदित्त्वादेव नलोपाभावः । एवं चायं मदिसही च त्रयोऽपि पूर्वसूत्र एव पठितुं शक्याः । कित्त्वं तु वृधुधातावेवोपयुज्यते । उत्तरसूत्रेऽपि गुणग्रहणं सुत्यजम्, 'अर्तेः शुट् च' 'वृधेः कित्' इत्युक्तौ सर्वसामञ्जस्यादित्याहुः । 'ऋञ्जसानः पुरुवार उक्थैः । अस्मिन् यज्ञे मन्दसानो वृषण्वसु' इत्यादिमन्त्राणां भाष्ये तु यौगिकार्थ एव पुरस्कृतः ॥ (४४४८) **अर्तेः**-। 'ऋ गतौ' धातोर्गुणः प्रत्ययस्य शुडागमः । 'असाविषदर्शसानाय' इति मन्त्रस्य भाष्ये तु 'अर्शसानाय शत्रूणां हिंसित्रे' इति व्याख्यातम् ॥ (४४४९) **समि**-। 'ष्टुञ् स्तुतौ' अस्मात्सम्युपपदे आनच् ॥ (४४५०) **युधि**-। 'युध संप्रहारे' युधानो रिपुः । 'बुधिर् बोधने' बुधान आचार्यः । 'दृशिर् प्रेक्षणे' । बाहुलकात्कृपेरप्यानच् । कृपाणः खड्गः । 'कृपाणेन कथंकारं कृपणः सह गण्यते । परेषां दानसमये यः स्वकोशं विमुञ्चति' ॥ (४४५१) **हुरछेः**-। 'हुर्च्छा कौटिल्ये' अस्मात्सन्नन्तात् आनच् स्यात्सनो लुक् छलोपश्च । 'युयोध्यस्मज्जुहुराणमेनः' इति मन्त्रे 'जुहुराणं कौटिल्यकारि एनः पापं युयोधि पृथक् कुरु' इति भाष्यम् ॥ (४४५२) **श्वितेः**-। 'श्विता वर्णे' अस्मात्सन्नन्तादानच् 'सन्यङोः ३१९६' इति द्वित्वम् । सनो लुक् तकारस्य च दकारः किदित्यनुवृत्तेर्न गुणः ॥ **पुण्यकर्मेति** । 'शिश्विदानः पुण्यकर्मा' इति विशेष्यनिघ्ने अमरः । अकृष्णं शुक्लं निष्पापत्वात् शुद्धं कर्म यस्येत्यर्थः । क्षीरस्वामिना तु प्रकृतसूत्रं विस्मृत्य 'ञिश्विदा स्नेहने' अस्माल्लिटः कानजिति व्याख्यातम् । तदसंगतम्, कानचश्छान्दसत्वात्, इदित्त्वेन नलोपानुपपत्तेश्चेति दिक् ॥ (४४५३) **तृन्तृचौ**-। **शंस्तेति** । 'शंसु स्तुतौ' अस्मात्तृन् ॥ 'अप्तृन्-३८८' इति सूत्रे नप्त्रादिग्रहणं नियमार्थमौणादिकतृन्तृजन्तानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेवेत्युक्तम् । तेनात्र दीर्घो नेत्युदाहरति-**शंस्तरौ, शंस्तर इति** । नित्त्वादाद्युदात्तः । तथा च मन्त्रः 'ग्रावग्राभ उत शंस्ता सुविप्रः' । आदिशब्दात् 'शासु अनुशिष्टौ' शास्ति विनयति सत्त्वान् शास्ता बुद्धः, शास्तरौ शास्तरः । '**शास्ता** समन्तभद्रे ना शासके पुनरन्यवत्' इति ॥ प्रपूर्वस्य तु नप्त्रादिषु पाठात् 'अप्तृन्-३८८' इति दीर्घः । प्रशास्तारौ, प्रशास्तारः । '**क्षत्ता** शूद्राच्च वैश्याजे प्रतीहारे च सारथौ' इति मेदिनीकोशानुसारेणाह—**वैश्यायामिति** । अमरस्तु—'क्षत्रियायां च शूद्रजे' इत्याह । 'णीञ् प्रापणे' उत्पूर्वः, उन्नेता ऋत्विग्भेदः ॥ (४४५४) **बहुलमन्यत्रापि** । अन्यत्रापि धातोर्बहुलं तृन्तृचौ भवतः । पूर्वसूत्रस्थादिशब्देनैव मन्ता हन्तेत्यादेः सिद्धत्वात्प्रपञ्चार्थमिदं सूत्रम् ॥ (४४५५) **नप्तृनेष्टृ**-। नप्त्रादयो दश तृन्तृजन्ता निपात्यन्ते ॥ **नप्तेति** । नञः प्रकृतिभावः 'पत्लृ गतौ' इत्यस्याच्छन्दलोपः । 'णीञ् प्रापणे', 'त्विष दीप्तौ', 'हु दानादनयोः', 'पूञ् पवने' 'भ्राजृ दीप्तौ', 'मा माने', 'पा रक्षणे', 'दुह प्रपूरणे' । '**त्वष्टा** पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि' इति मेदिनी ।

दुहेस्तृच इड् गुणाभावश्च । दुहिता ॥ ( ४४५६ ) उ. **सुञ्यसेर्ऋन्** ॥ स्वसा ॥ ( ४४५७ ) उ. **यतेर्वृद्धिश्च** ॥ याता । भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ॥ ( ४४५८ ) उ. **नञि च नन्देः** ॥ न नन्दति ननान्दा । इह वृद्धिर्नानुवर्त्तत इत्येके । ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सेति शब्दार्णवः ॥ ( ४४५९ ) उ. **दिवेर्ऋः** ॥ देवा देवरः । स्वामिनो देवृदेवरौ ॥ ( ४४६० ) उ. **नयतेर्डिच्च** ॥ ना । नरौ । नरः ॥ ( ४४६१ ) उ. **सव्ये स्थश्छन्दसि** ॥ अर्म्बाम्बेत्यत्र—॥ ( ४४६१-२ ) वा. **स्थास्थिन्स्थूणामुपसंख्यानम्** ॥ सव्येष्ठा सारथिः सव्येष्टरौ । सव्येष्ठरः ॥ ( ४४६२ ) उ. **अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः** ॥ अष्टभ्योऽनिप्रत्ययः स्यात् । अरणिरग्नेर्योनिः । सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकात् रजनिः ॥ ( ४४६३ ) उ. **आङि शुषेः सनश्छन्दसि** ॥ आशुशुक्षणिरग्निर्वातश्च ॥ ( ४४६४ ) उ. **कृषेरादेश्च चः** ॥ चर्षणिजनः ॥ ( ४४६५ ) उ. **अदेर्मुट् च** ॥ अद्मनिरग्निः ॥ ( ४४६६ ) उ. **वृतेश्च** ॥ वर्तनिः । गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह ॥ ( ४४६७ ) उ. **क्षिपेः किच्च** ॥ क्षिपणिरायुधम् ॥ ( ४४६८ ) उ. **अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः** ॥ अर्चिर्ज्वाला । इदन्तोऽप्ययम् । अग्नेर्भ्राजन्ते अर्चयः । शोचिर्दीप्तिः । हविः । सर्पिः । इस्मन्निति ह्रस्वः । छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि । छर्दतीसारशूलवान् ॥ ( ४४६९ )

---

जायां मातीत्यन्तर्भावितण्यर्थः ॥ ( ४४५६ ) **सुञ्यसेः**—। सुञि उपपदे 'असु क्षेपणे' इत्यस्मात् ऋन् । यणादेशः । स्वसा भगिनी । 'सौवसेः' इति तु क्काचित्कः पाठः ॥ ( ४४५७ ) **यतेः**—। 'यती प्रयत्ने' ॥ ( ४४५८ ) **नञि च**—। 'टुनदि समृद्धौ' अस्मान्नञ्युपपदे ऋन् ॥ **न नन्दतीति** । कृतायामपि सेवायां न तुष्यतीत्यर्थः । 'ऊषाऽप्युषा, **ननान्दा** च **ननन्दा** च प्रकीर्तिता' इति द्विरूपकोशः ॥ ४४५९ ) **दिवेः**—। 'दिवु क्रीडाविजिगीषादौ' ॥ **देवेति** । 'भ्रातरः' इत्यनुवृत्तौ 'स्वामिनो देवृदेवरौ' इत्यमरः ॥ ( ४४६० ) **नयतेः**—। 'णीञ् प्रापणे' अस्माद् ऋप्रत्ययः स च डित् । डित्त्वाट्टिलोपः । 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा **नरः** ' इत्यमरः ॥ ( ४४६१-१ ) **सव्ये**—। 'ष्ठा गतिनिवृत्तौ' अस्मात्सव्यशब्दे उपपदे ऋ स्यात्स च डित् । 'तत्पुरुषे कृति–१३९४ ' इति सप्तम्या अलुक् ॥ ( ४४६१-२ ) **उपसंख्यानमिति** । षत्वस्येति शेषः ॥ ( ४४६२ ) **अर्ति**—। 'ऋ गतौ', 'सृ गतौ', 'धृञ् धारणे', 'धमिः सौत्रः', 'अम गतौ', 'अश भोजने', 'अव रक्षणादौ', 'तॄ प्लवनतरणयोः' । ' **अरणिर्वह्निमन्थे** ना द्वयोर्निर्मथ्यदारुणि' इति मेदिनी । '**सरणिः** श्रेणिवर्त्मनोः' इति दन्त्यादौ रभसः । '**सरणिः** पङ्क्तौ मार्गेऽस्ति' इति मेदिनी । 'शॄ हिंसायाम्' ततोऽनिप्रत्ययः । शरणिरित्येके । '**शरणिः** पथि चापलौ' इति तालव्यादावजयः । 'इमामग्ने शरणिम्' इति मन्त्रे 'शरणिं हिंसां व्रतलोपरूपां मीमृषः क्षमस्व ' इति वेदभाष्यम् ॥ धरणिर्भूमिः । '**धमनी** तु शिरा हट्टविलासिन्यां तु योषिति' इति मेदिनी । अमनिर्गतिः । अश्यते भुज्यते रज्यमिन्द्रेणानयेति अशनिर्वज्रम् । '**अशनिः** स्त्रीपुंसयोः स्याच्चञ्चलायां स्वावपि' इति मेदिनी । अवनिः पृथिवी । '**तरणिर्द्यु**मणौ पुंसि कुमारीनौकयोः स्त्रियाम्' इति मेदिनी । कुमारी लताविशेषः । '**तरणी** रामतरणी कर्णिका चारुकेसरा । सहा कुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः॥**रजनिरिति** । 'रञ्ज रागे' अस्मादप्यनिः । नलोपोऽपि बाहुलकात् । 'कृदिकारात् ७०८' इति ङीष् रजनी । '**रजनी** नीलिनीरात्रिर्हरिद्राजतुकासु च' इति मेदिनी ॥ ( ४४६३ ) **आङि**—। 'शुष शोषणे' अस्मात्सन्नन्तादाङि उपपदे अनिः स्यात् ॥ ( ४४६४ ) **कृषेरादेः**— 'कृष विलेखने' । 'चर्षणिर्जनः' इति वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु पाठात् । 'ओमासश्चर्षणीधृतः ' इत्यादिमन्त्रेषु वेदभाष्यकारैस्तथैव व्याख्यातत्वाच्च । उज्ज्वलदत्तेन तु 'आदेश्च घः' इति पठित्वा घर्षणिर्बन्धकीति व्याख्यातम् । तदयुक्तम् , तथा सति 'घृषेः' इत्येव सूत्रयेत् 'प्रागल्भ्यरूपावयवार्थानुगमात् 'आदेश्च घः' इत्यंशस्य त्यागेन लाघवाच्च । तस्मात् 'आदेश्च चः' इति दशपादीपाठ एव युक्त इत्याहुः॥ (४४६५) **अदेः**—। 'अद भक्षणे' अस्मादनिस्तस्य मुडागमश्च ॥ (४४६६) **वृतेश्च** । 'वृतु वर्तने' अस्मादप्यनिः ॥ **वर्तनिरिति** ।'कृदिकारात्–७०८' इति ङीषि तु वर्तनी । 'सरणिः पद्धतिः पद्या **वर्तन्येकपदी**ति च' इत्यमरः ॥(४४६७)**क्षिपेः**—। 'क्षिप प्रेरणे' ॥ **क्षिपणिरायुधमिति** । 'उतस्य वाजी क्षिपणिं तुरण्यति' इति मन्त्रस्य वेदभाष्ये तु क्षिपणिं क्षेपणमनुतुरण्यति त्वरयति गन्तुम्' इति व्याख्यातम् ॥ ( ४४६८ ) **अर्चि**—। 'अर्च पूजायाम् ', 'शुच शोके', 'हु दाने', 'सृप्लृ गतौ', 'छद अपवारणे' ण्यन्तः, 'छर्द वमने' ॥ **अर्चिरिति** । सान्तम् । 'तमर्चिषा स्फूर्जयन्' इति मन्त्रः, 'नयनमिव सनिद्रं घूर्णते दैवमर्चिः' इति माघः । 'ज्वालाभासोर्न **पुंस्यर्चिः**' इति नानार्थे सान्तेष्वमरः ॥ **इदन्तोऽपीति**।णिजन्तादर्चेः'अच इः४७८४' इति भावः। '**अर्चिर्हेतिः** शिखा स्त्रियाम्' इत्यमरः॥ 'रोचिः **शोचिरुभे** क्लीबे' इति । सर्पिर्घृतम् । छद्यतेऽनया छदिः 'छदिः स्त्रियामेव' इति लिङ्गानुशासनसूत्रम् । एवं च 'पटलं छदिः ' इत्यमरग्रन्थे पटलसाहचर्याच्छदिषः क्लीबतां वदन्त उपेक्ष्याः ॥

---

१—मनोरमायां तु नोपलभ्यते ॥ २–'पटलच्छदिषी समे ' इति हैमीयाभिधानचिन्तामणिसंवादेन ' प्रायशो रूपभेदेन ' इत्यादिपरिभाषानुरोधेन च छदिषः क्लीबत्वस्यैव न्याय्यत्वात् , लिङ्गानुशासनसूत्रस्य प्रामाणिकत्वे 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति वदता भाष्यकृताऽप्यश्रद्धेयत्वसूचनाच्चिन्त्यमेतत् ॥

(उ) बृंहेर्नलोपश्च ॥ बर्हिर्ना कुशशुष्मणोः ॥ ( ४४७० ) (उ) द्युतेरिसिन्नादेश्च जः ॥ ज्योतिः ॥ ( ४४७१ ) (उ) वसौ रुचेः संज्ञायाम् ॥ वसुरोचिर्यज्ञः ॥ ( ४४७२ ) (उ) भुवः कित् ॥ भुविः समुद्रः ॥ ( ४४७३ ) (उ) सहो धश्च ॥ सधिरनड्वान् ॥ ( ४४७४ ) (उ) पिबतेस्थुक् ॥ पाथिश्चक्षुःसमुद्रयोः ॥ ( ४४७५ ) (उ) जनेरुसिः ॥ जनुर्जननम् ॥ ( ४४७६ ) (उ) मनेर्धश्छन्दसि ॥ मधुः ॥ ( ४४७७ ) (उ) अर्तिपॄवपियजितनिधनितपिभ्यो नित् ॥ अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः, तनुषी, तनूंषि । धनुरस्त्रियाम् ॥ धनुर्वेशविशुद्धोऽपि निर्गुणः किं करिष्यति । सान्तस्य उदन्तस्य वा रूपम् । तपुः सूर्याग्निशत्रुषु ॥ (४४७८) (उ) एतेर्णिच्च ॥ आयुः, आयुषी ॥ ( ४४७९ ) (उ) चक्षेः शिच्च ॥ शित्वात्सार्वधातुकत्वेन ख्याञ्बाधः । चक्षुः ॥ ( ४४८० ) (उ) मुहेः किच्च ॥ मुहुरव्ययम् ॥ ( ४४८१ ) (उ) बहुलमन्यत्रापि ॥ आचक्षुः । परिचक्षुः ॥ (४४८२) (उ) कॄगॄशॄवृञ्चतिभ्यः ष्वरच् ॥ कर्वरो व्याघ्ररक्षसोः । गर्वरोऽहंकारी । शर्वरी रात्रिः । वर्वरः प्राकृतो जनः । चत्वरम् ॥ ( ४४८३ ) (उ) नौ सदेः ॥ निषद्वरस्तु जम्बालः । निषद्वरी रात्रिः ॥ इत्युणादिषु द्वितीयः पादः ॥

---

( ४४८४ ) (उ) छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः ॥ एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते । छिदिर् छद् अनयोस्तकारोऽन्तादेशः, छिदेर्गुणाभावश्च । छित्वरो धूर्तः । छत्वरो गृहकुञ्जयोः । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकः । चिनोतेर्दीर्घश्च । चीवरं भिक्षुकप्रावरणम् । तीवरो जातिविशेषः । नीवरः परिव्राट् । गाहतेर्ह्रस्वत्वम् । गह्वरम् । कटे वर्षादौ । कट्वरं व्यजनम् । यमेर्दकारः । संयद्वरो नृपः । पदेः सम्पद्वर इत्येके ॥ ( ४४८५ ) (उ) इण्सिञ्जिदीङुष्यविभ्यो नक् ॥ इनः सूर्ये नृपे पत्यौ । सिनः काणः । जिनोऽर्हन् ।

---

छर्दयतीति । छर्दिश्वातीसारश्च शूलञ्च तानि यस्य सन्तीति विग्रहः ॥ ( ४४६९ ) बृंहेः-। 'बृहि वृद्धौ' अस्मादिसिः ॥ कुशशुष्मणोरिति । शुष्मा नाम अग्निः 'अग्निर्वैश्वानरो वह्निः' इत्युपक्रम्य 'बर्हिः शुष्मा' इत्यमरेणोक्तत्वात् ॥ (४४७०) द्युतेः-। 'द्युत दीप्तौ' । 'ज्योतिरग्नौ दिवाकरे । पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी ॥ ( ४४७१ ) वसौ-। 'रुच दीप्तौ' अस्माद्वसुशब्दे उपपदे इसिन्स्यात्संज्ञायाम् । बाहुलकात्केवलादपि 'रोचिः शोचिरुभे क्लीबे' इत्यमरः ॥ ( ४४७२ ) भुवः-। भवतेरिसिन्स्यात्स च कित् ॥ ( ४४७३ ) सहो-। 'षह मर्षणे' अस्मादिसिन् धश्चान्तादेशः ॥ ( ४४७४ ) पिबतेः-। 'पा पाने' अस्मादिसिन्धातोश्च थुगागमः ॥ ( ४४७५ ) जनेः-। 'जनी प्रादुर्भावे' ॥ ( ४४७६ ) मनेः-। 'मनु अवबोधने' अस्मादुसिः स्याच्छन्दसि धकारश्चान्तादेशः । मधु पवित्रद्रव्यम् ॥ ( ४४७७ ) अर्तिपॄ-। 'ऋ गतौ', 'पॄ पालनपूरणयोः', 'डुवप् बीजसन्ताने', 'यज देवपूजादौ', 'तनु विस्तारे', 'धन धान्ये', 'तप सन्तापे' एभ्य उसिर्नित्स्यात् । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । 'ग्रन्थिर्ना पर्वपरुषी' इति च । 'वपुः क्लीबं तनौ शस्ताकृतावपि' इति मेदिनी । शस्ताकृतिः प्रशस्ताकृतिरित्यर्थः ॥ यजुरिति । यजुर्वेदः । 'तनुः शरीरम्' 'तनुषे तनुषेऽनङ्गम्' इति सुबन्धुः । 'स्यात्तनुस्तनुषा सार्द्धं धनुषा च धनुं विदुः' इति द्विरूपेषु विश्वः । 'अथास्त्रियां धनुश्चापौ' इत्यमरः । 'धनुः प्रियाले ना न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिषु' इति सान्ते मेदिनी ॥ ( ४४७८ ) एतेः-। 'इण् गतौ' इत्यस्मादुसिः । णित्वाद् वृद्धौ कृतायामायादेशः ॥ ( ४४७९ ) चक्षेः-। 'चक्षिङ् व्यक्तायां वाचि' अस्मादुसिः शिद्वति । शित्वात् ख्यादेशाभावः । चक्षते रूपमनुभवत्यनेनेति चक्षुः ॥ ( ४४८० ) मुहेः-। 'मुह वैचित्त्ये' । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यव्ययेष्वमरः ॥ ( ४४८२ ) कॄगॄ-। 'कॄ विक्षेपे', 'गॄ निगरणे', 'शॄ हिंसायाम्' 'वृञ् वरणे', 'चते याचने' । 'नैर्ऋतः कर्बुरः क्रव्यात्कर्वुरो यातुरक्षसी' इति शब्दार्णवः । 'शर्वरी यामिनीस्त्रियोः' इति मेदिनी । 'वर्वरः पामरे केशविन्यासे नीवृदन्तरे । वर्वरः फञ्जिकायां तु वर्वरा शाकपुष्पयोः ।' इति विश्वः । 'वर्वरः पामरे । केशचक्रले नीवृदन्तरे । फञ्जिकायां पुमान् शाकपुष्पभेदभिदोः स्त्रियाम्' इति मेदिनी ॥ 'चत्वरं स्थण्डिले गणे' इति च ॥ ( ४४८३ ) नौ सदेः । 'षद्लृ विशरणादौ' निपूर्वादस्मात्ष्वरच् स्यात् । 'सदिरप्रतेः ३०३८' इति षत्वम् । 'निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी' इति मेदिनी ॥ इत्युणादिषु द्वितीयः पादः ॥

---

( ४४८४ ) छित्वर-। अनयोरिति । 'छिदिर् द्वैधीकरणे', 'छद अपवारणे' । 'छित्वरश्छेदने द्रव्ये धूर्ते वैरिणि च त्रिषु' इति मेदिनी । 'डुधाञ् धारणपोषणयोः', 'पा पाने', 'मा माने' एषां त्रयाणामीत्त्वमन्तस्य निपात्यते इत्येके । अन्ये तु 'पीव मीव तीव नीव स्थौल्ये' एभ्यः ष्वरचि 'लोपो व्योः-१२५४' इति लोपमाहुः । 'पीवरः कच्छपे स्थूले' इति मेदिनी ॥ मीवर इति । हिंसक इत्यर्थानुगुण्येन 'मीञ् हिंसायाम्' इत्यस्मात् ष्वरजिति केचिदाहुः । 'तीवरो नाऽम्बुधौ व्याधे' इति मेदिनी । 'स्यान्नीवरो वाणिजिके वास्तवेऽपि च दृश्यते' इति मेदिनीविश्वप्रकाशौ ॥ गाहतेरिति । 'गाहू विलोडने' 'कट्वरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम्' इति मेदिनी । बाहुलकादुपपूर्वक-'हु दानादनयोः' इत्यस्माष्वरच्युकारलोपः, उपह्वरं समीपे स्यादेकान्तेऽपि नपुंसकम्' इति मेदिनी । उपह्वरो रथ इति केचित् ॥ ( ४४८५ ) इण्-। 'इण् गतौ',

दीनः । उष्णः । ऊनः ॥ ( ४४८६ ) उ॰ फेनमीनौ ॥ एतौ निपात्येते । स्फायतेः फेनः । मीनः ॥ ( ४४८७ ) उ॰ कृषेर्वर्णे ॥ कृष्णः ॥ ( ४४८८ ) उ॰ बन्धेर्ब्रधिबुधी च ॥ ब्रध्नः । बुध्नः ॥ ( ४४८९ ) उ॰ धापॄवस्यज्यतिभ्यो नः ॥ धाना भृष्टयवे स्त्रियः । पर्णं पत्रम् । पर्णः किंशुकः । वस्नो मूल्ये वेतने च । अजेर्वी । वेनः । अत्न आदित्यः । बाहुलकात् श्रृणोतेः । श्रोणः पङ्गुः ॥ ( ४४९० ) उ॰ लक्षेरट् च ॥ लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च । चान्मुडित्येके । लक्षणं लक्ष्मणं नाम्नि चिह्ने च । लक्षणो लक्ष्मणश्च रामभ्राता । लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा ॥ ( ४४९१ ) उ॰ वनेरिच्चोपधायाः ॥ वेन्ना नदी ॥ ( ४४९२ ) उ॰ सिवेष्टेर्यू च ॥ दीर्घोच्चारणसामर्थ्यान्न गुणः । स्यून आदित्यः । बाहुलकात् केवलो नः । ऊठ् । अन्तरङ्गत्वाद्यण् । गुणः । स्योनः ॥ ( ४४९३ ) उ॰ कॄवृजॄसिद्रुपन्यनिस्वपिभ्यो नित् ॥ कर्णः । वर्णः । जर्णश्चन्द्रे च वृद्धे च । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा ॥ (४४९४) उ॰ धेट इच्च ॥ धेनः सिन्धुर्नदी धेना ॥ (३४९५) उ॰ तृषिशुषिरसिभ्यः कित् ॥ तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं द्रव्यम् ॥ ( ४४९६ ) उ॰ सुञो दीर्घश्च ॥ सूना वधस्थानम् ॥ ( ४४९७ ) उ॰ रमेस्त च ॥ रमयतीति रत्नम् ॥ ( ४४९८ ) उ॰ रास्नासास्नास्थूणावीणाः ॥ रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी ॥ ( ४४९९ ) उ॰ गादाभ्यामिष्णुच् ॥

---

'षिञ् बन्धने', 'जि जये', 'दीङ् क्षये', 'उष दाहे', 'अव रक्षणे' । 'इनः पत्यौ नृपार्कयोः' इति मेदिनी । 'जिनोऽर्हति च बुद्धे च पुंसि स्यात् त्रिषु जित्वरे ' इति च । ' दीना मूषिकयोषायां दुर्गते कातरेऽन्यवत् ' इति विश्वः । ' उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः ' इति मेदिनी । ' ज्वरत्वर-३५२५ ' इत्यूठौ । ऊनमसम्पूर्णम् ॥ ( ४४८६ ) फेन—। 'स्फायी वृद्धौ' अस्य फे इत्यादेशः । 'मीञ् हिंसायाम् ' । 'डिण्डीरोऽब्धिकफः फेनः ' इत्यमरः । 'मीनो राश्यन्तरे मत्स्ये ' इति विश्वः ॥ ( ४४८७ ) कृषे—। 'कृष विलेखने' अस्माद्वर्णे वाच्ये नक् स्यात् । ' कृष्णः सत्यवतीपुत्रे केशवे वायसेऽर्जुने । कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति । मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोः ' इति मेदिनी ॥ ( ४४८८ ) बन्धेः—। 'बन्ध बन्धने' अस्मान्नक् । 'भास्करोऽहस्करो ब्रध्नः प्रभाकरदिवाकरौ' इत्यमरः । 'बुध्नो ना मूलरुद्रयोः' इति मेदिनी ॥ ( ४४८९ ) धापॄ—। 'डुधाञ् धारणादौ', 'पॄ पालनादौ', 'वस निवासे', 'अज गतौ', 'अत सातत्यगमने' एभ्यो नः स्यात् । नक्प्रत्यये सति तु वस्न इत्यत्र संप्रसारणं स्यात्, वेन इत्यत्र तु गुणो न स्यादिति भावः । 'धाना भृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि' इति विश्वः । 'पर्णं पत्रं किंशुके ना' इति मेदिनी । ' वस्नस्त्ववक्रये पुंसि वेतने स्यान्नपुंसकम्' इति च ॥ वेन इति । लुण्टाकः प्रजापतिश्च ॥ ( ४४९० ) लक्षेः—। ' लक्ष दर्शनाङ्कनयोः ' । लक्षणमित्यादि । लक्षणलक्ष्मणशब्दौ द्वावपि नामचिह्नयोः क्लीबौ रामभ्रातरि तु पुंलिङ्गौ हंसयोषायां लक्षणा सारसस्य योषायान्तु लक्ष्मणेति व्यवस्थेत्यर्थः । 'लक्षणं नाम्नि चिह्ने च सौमित्रिरपि लक्षणः । लक्ष्मणं लांछने नाम्नि रामभ्रातरि लक्ष्मणः' इति विश्वः । ' लक्षणो लक्ष्मणोऽपि च ' इति द्विरूपेषु च विश्वः । 'लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित् । लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत् ' इति मेदिनीकोशे तु सारस्यामपि 'लक्षणा' इति निर्मकारः स्वीकृतः ॥ ( ४४९१ ) वनेः—। 'वन सम्भक्तौ ' अस्मान्न उपधाया इत्वं च ॥ वेन्नेति । लघूपधगुणः ॥ (४४९२) सिवेः—। 'षिवु तन्तुसन्ताने' ॥ बाहुलकादिति । एतच्च 'च्छ्वोः शूठ्—' इति सूत्रे वृत्तौ ' येन विधिः—' इति सूत्रे कैयटग्रन्थे च स्पष्टम् ॥ यणिति । लघूपधगुणे कृते त्वेकारस्यायादेशे ऊठोऽपि ' सार्वधातुका—२९२२' इत्यादिना गुणे कृते सयोन इति स्यादिति भावः । 'स्योनः किरणसूर्ययोः' इति मेदिनी ॥ (४४९३) कॄ वॄ—। 'कॄ विक्षेपे', 'वृञ् वरणे ' दीर्घपाठे तु 'वॄ वरणे ', 'जॄष् वयोहानौ', दिवादिः, जॄ इति क्र्यादौ चुरादौ च, ' षिञ् बन्धने ', ' द्रु गतौ', 'पन स्तुतौ', 'अन प्राणने', 'ञिष्वप् शये' एभ्यो नप्रत्ययो नित्स्यात् । 'कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि' इति विश्वमेदिन्यौ । 'वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदे रूपाक्षरविलेखने' इति मेदिनी ॥ विश्वमेदिनीस्थमाह—जर्णश्चन्द्र इति । ' जर्णो जीर्णद्रुमेन्दुषु ' इति हेमचन्द्रः । ' ध्वजिनी वाहिनी सेना' इत्यमरः । 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते'। 'अन्नं भक्ते च भुक्ते स्यात्' इति मेदिनी। 'स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्' इति मेदिनी ॥ (४४९४) धेटः—। 'धेट् पाने' अस्मान्नः स्यादिच्चान्तादेशः । 'धेना नद्यां नदे पुमान्' इति मेदिनी । 'धेनः समुद्रे नद्यां च धेना' इति विश्वः । 'श्लोको धारा' इत्यादिषु वाङ्नामसु धेनेति वैदिकनिघण्टौ पठितम् । अत एव 'धेना जिगाति दाशुषे' इत्यादिमन्त्रेषु धेना वागिति व्याख्यातं भाष्ये ॥ ( ४४९५ ) तृषि—। 'ञितृषा पिपासायाम्', 'शुष शोषणे', 'रस शब्दे' । 'तृष्णा लिप्सापिपासयोः' इति विश्वः ॥ ( ४४९६ ) सुञः—। 'षुञ् अभिषवे' अस्मान्नः स्याद्धातोर्दीर्घश्च । 'सूनाऽधोजिह्विकाऽपि च, इति नान्तेऽमरः । 'सूनं प्रसवपुष्पयोः । सूना पुत्र्यां वधस्थानगलकुण्डिकयोः स्त्रियाम्' इति मेदिनी ॥ (४४९७) रमेः—। रमेर्ण्यन्तान्नः । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी ॥ ( ४४९८ ) रास्ना—। 'रस आस्वादने' उपधादीर्घः । 'रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम्' इति मेदिनी । 'षस स्वप्ने' उपधादीर्घः । 'सास्ना तु गलक-

गेष्णुर्गायनः। देष्णुर्दाता ॥ ( ४५०० ) उ. कृत्यशूभ्यां क्स्नः ॥ कृत्स्नम् । अक्ष्णमखण्डम् ॥ ( ४५०१ ) उ. तिजेर्दीर्घश्च ॥ तीक्ष्णम् ॥ ( ४५०२ ) उ. श्लिषेरच्चोपधायाः ॥ श्लक्ष्णम् ॥ (४५०३) उ. यजिमनिशुन्धिदसिजनिभ्यो युच् ॥ यज्युरध्वर्युः । मन्युर्दैन्ये क्रतौ क्रुधि । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युः शरीरी ॥ ( ४५०४ ) उ. भुजिमृङ्भ्यां युक्त्युकौ ॥ भुज्युर्भाजनम् । मृत्युः ॥ (४५०५) उ. सर्तेरयुः ॥ सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः ॥ ( ४५०६ ) उ. पानीविषिभ्यः पः ॥ पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् ॥ ( ४५०७ ) उ. च्युवः किच्च ॥ च्युपो वक्त्रम् ॥ ( ४५०८ ) उ. स्तुवो दीर्घश्च ॥ स्तूपः समुच्छ्रायः ॥ ( ४५०९ ) उ. सुशृभ्यां निच्च ॥ चात्कित् । सूपः । बाहुलकादुत्त्वम् । शूर्पम् ॥ ( ४५१० ) उ. कुयुभ्यां च ॥ कुवन्ति मण्डूका अस्मिन् कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः ॥ (४५११) उ. खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ॥ सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम् । खष्पौ क्रोधबलात्कारौ । शीलतेर्ह्रस्वः । शिल्पं कौशलम् । शसु हिंसायाम् । निपातनात्षत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बाधतेः षः । बाष्पो नेत्रजलोष्मणोः । बाष्पं च । रौतेर्दीर्घः । रूपं स्वभावे सौन्दर्ये । पॄ । पर्पं गृहं बालतृणं पङ्गुपीठं च । तल प्रतिष्ठाकरणे । चुरादिणिचो लुक् । तल्पं शय्याट्टदारेषु ॥ ( ४५१२ ) उ. स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ॥ अयामन्तेति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुर्वावदूकः । मदयित्नुर्मदिरा ॥ ( ४५१३ ) उ. कृहनिभ्यां क्त्नुः ॥ कृत्नुः शिल्पी । हत्नुर्व्याधिः शस्त्रं च ॥(४५१४) उ. गमेः सन्वच्च ॥ जिगत्नुः॥(४५१५) उ. दाभाभ्यां नुः ॥ दानुर्दाता । भानुः॥

---

म्बलः' इत्यमरः ।'सास्ना गागलकम्बले' इति पाठांतरम् । 'ष्ठा गतिनिवृत्तौ'इत्यस्य ऊत्वं प्रत्ययस्य णत्वं च । 'अथ स्थूणा स्यात्सूर्म्यां स्तम्भे गृहस्य च' इति मेदिनी । सूर्मी लोहप्रतिमा । 'वी गत्यादिषु' गुणाभावो णत्वं च । 'वीणा विद्युति वल्लक्याम्' इति मेदिनी ॥ ( ४४९९ ) गादाभ्याम्—। 'गै शब्दे', 'डुदाञ् दाने' । 'गेष्णुर्नटे गायके च' । 'देष्णुर्दातारि दुर्दमे' इति विश्वः ॥ ( ४५०० ) कृत्यशू-। 'कृती वेष्टने', 'अशू व्याप्तौ' 'कृत्स्नं सर्वाम्बुकुक्षिषु' इति मेदिनी ॥ ( ४५०१ ) तिजेः-। 'तिज निशाने' अस्मात्क्स्नः, धातोर्दीर्घश्च । 'तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं यवाग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिषु' इति मेदिनी ॥ ( ४५०३ ) यजि-। 'यज देवपूजादौ', 'मन ज्ञाने', 'शुंध शुद्धौ', 'दसु उपक्षये', 'जनी प्रादुर्भावे' । 'दस्युश्चौरे रिपौ पुंसि' इति मेदिनी । 'अथ जन्युः स्यात्पुंसि प्राण्यग्निधातृषु' इति च ॥ ( ४५०४ ) भुजि—। 'भुज पालनादौ', 'मृङ् प्राणत्यागे' आभ्यां यथासंख्यं युक्त्युकौ स्तः । 'मृत्युर्ना मरणे यमे' इति मेदिनी ॥ ( ४५०५ ) सर्तेः--। 'सृ गतौ' ॥ ( ४५०६ ) पानी-। 'पा रक्षणे', 'णीञ् प्रापणे', विष्लृ व्याप्तौ' 'नीपः कदम्बबन्धूकनीलाशोकद्रुमेऽपि च' इति मेदिनी ॥ ( ४५०७ ) च्युवः-। 'च्युङ् गतौ' धातूनामनेकार्थत्वादिह भाषणे । च्यवन्ते भाषन्तेऽनेनेति विग्रहः । दशपाद्यां तु 'चुपः किच्च' इति पठ्यते । 'चुप मन्दायां गतौ' चोपतीति चुप्पः मन्दगमनकर्ता ॥ ( ४५०८ ) स्तुवः—। 'ष्टुञ् स्तुतौ' अस्मात्पः स्याद्धातोर्दीर्घश्च ॥ ( ४५०९ ) सुशॄ—। 'षुञ् अभिषवे', 'शॄ हिंसायाम्' आभ्यां पः स्यात्स निद्वत्, नित्त्वं तु स्वरार्थम् । 'सूपो व्यञ्जनसूदयोः' इति मेदिनी ॥ शूर्पमिति । बाहुलकादुत्वं रपरत्वं 'हलि च ४८१' इति दीर्घः । 'प्रस्फोटनं शूर्पमस्त्री' इत्यमरः ॥ ( ४५१० ) कुयु—। 'कु शब्दे', 'यु मिश्रणे' आभ्यां पः, स च निद्धातोर्दीर्घत्वं च ॥ ( ४५११ ) खष्पशिल्प-। 'खनु अवदारणे', 'शील समाधौ', 'बाधृ लोडने', 'रु शब्दे', 'पॄ पालनादौ' । 'खष्पः क्रोधे बलात्कृतौ' इति विश्वः । 'शष्पं बालतृणेऽपि च । पुंसि स्यात्प्रतिभाहानौ' इति मेदिनी । विश्वोक्तिमाह-बाष्प इति ॥ 'बाष्पमूष्मणि चाश्रुणि' इति कोशान्तरमभिप्रेत्याह-बाष्पं चेति । 'तल्पं मदे कलत्रे च शयनीये च न द्वयोः' इति मेदिनी ॥ अमरोक्तिमाह-तल्पं शय्येति ॥ ( ४५१२ ) स्तनिहृषि-। 'स्तनगदी देवशब्दे' चुरादिण्यन्तौ, 'हृष तुष्टौ', 'पुष पुष्टौ', 'मदी हर्षग्लेपनयोः' घटादिः । एभ्यो ण्यन्तेभ्य इत्नुच् स्यात् । 'स्तनयित्नुः पुमान् वारिधरेऽपि स्तनितेऽपि च' इति मेदिनी । 'स्तनयित्नुः पयोवाहे तद्ध्वनौ मृगरोगयोः' इति विश्वः । 'हर्षयित्नुः सुते हेम्नि पोषयित्नुः पिके द्विजे' इति च । 'गदयित्नुः पुमान् कामे जल्पाके कार्मुकेऽपि च'इति विश्वमेदिन्यौ । 'मदयित्नुः कामदेवे पुमान् मद्ये नपुंसकम्' इति मेदिनी ॥ ( ४५१३ ) कृहनि-। 'डुकृञ् करणे', 'हन हिंसागत्योः' ॥ कृत्नुरिति । कर्तेत्यर्थः । कित्त्वान्न गुणः ॥ हत्नुरिति । 'अनुदात्तोपदेश-३२३४' इत्यादिना अनुनासिकलोपः । एवमुत्तरत्र गमेः क्त्नुप्रत्यये गत्नुरित्यपि बोध्यः ॥ शस्त्रं चेति । चाद्धन्ता । दशपादीवृत्तौ तु क्नुरिति तकाररहितं पठित्वा कृणुः कर्ता, हनुः वक्त्रैकदेशः । बाहुलकान्नलोपः । गमेस्तु जिगन्नुरित्युदाहृतं, तत्सर्वं प्रामादिकम् । लक्ष्यविसंवादात् । तथा च श्रूयते-'सुरूपकृत्नुमूतये', 'ज्येष्ठराजं भरे कृत्नु', 'मानो वधाय हत्नवे', 'मृगेन भीममुपहत्नुमुग्रम्' 'यो नः सनुत्य उतवा जिगत्नुः' इत्यादि । अत एव हन्तिधातुं विवृण्वता माधवेन उपहत्नुरित्युदाहृत्य क्त्नोः कित्त्वादनुनासिकलोप इत्युक्तम् ॥ ( ४५१५ ) दाभाभ्याम्-। 'डुदाञ् दाने', 'भा दीप्तौ' । 'दानुर्दातार विक्रान्ते' इति मेदिनी । 'भानू रश्मिदिवाकरौ'

( ४५१६ ) (उ.) **वचेर्गश्च** ॥ वग्नुः ॥ ( ४५१७ ) (उ.) **धेट इच्च** ॥ धयति सुतानिति धेनुः ॥ ( ४५१८ ) (उ.) **सुवः कित्** ॥ सूनुः पुत्रेऽनुजे रवौ ॥ ( ४५१९ ) (उ.) **जहातेर्द्वेऽन्तलोपश्च** ॥ जह्नुः ॥ ( ४५२० ) (उ.) **स्थो णुः** । स्थाणुः कीले स्थिरे हरे ॥ ( ४५२१ ) (उ.) **अजिवृरीभ्यो निच्च** ॥ ३०६३ अजेर्वी । वेणुः । वर्णुर्नददेशभेदयोः । रेणुर्द्वयोः स्त्रियां धूलिः ॥ ( ४५२२ ) (उ.) **विषेः किच्च** ॥ विष्णुः ॥ ( ४५२३ ) (उ.) **कृदाधाराचिकलिभ्यः कः** ॥ बाहुलकान्न कस्येत्संज्ञा । कर्को धवलघोटकः । दाको दाता । धाकोऽनड्वानाधारश्च । राका पौर्णमासी । अर्कः । कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि ॥ ( ४५२४ ) (उ.) **सृवृभूशुषिमुषिभ्यः कक्** ॥ सृक उत्पलवातयोः । वृकः श्वापदकाकयोः । भूकं छिद्रम् । शुष्कः । मुष्कोऽण्डम् ॥ ( ४५२५ ) (उ.) **शुकवल्कोल्काः** ॥ शुभेरन्त्यलोपः । शुकः । वल्कं वल्कलमस्त्रियाम् । उष दाहे । षस्य लः । उल्का ॥ ( ४५२६ ) (उ.) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** ॥ एके मुख्यान्यकेवलाः । भेको मण्डूकमेघयोरिति विश्वमेदिन्यौ । काकः । पाकः शिशुः । शल्कं शकलम् । अत्कः पथिकः, शरीरावयवश्च । मर्कः शरीरवायुः ॥ ( ४५२७ ) (उ.) **नौ हः** ॥ जहातेः कन् स्यान्नौ । निहाका गोधिका ॥ ( ४५२८ ) (उ.) **नौ सदेर्डिच्च** ॥ निष्कोऽस्त्री हेम्नि तत्पले ॥ ( ४५२९ ) (उ.) **स्यमे:**

---

इत्यमरः ॥ ( ४५१६ ) **वचेः**—। 'वच परिभाषणे' वग्नुर्वाचालः ॥ ( ४५१७ ) **धेटः**—। 'धेट् पाने' अस्मान्नुः स्यादिकारश्चान्तादेशः । '**धेनुः** स्यान्नवसूतिका' इत्यमरः ॥ ( ४५१८ ) **सुवः**—। 'षूङ् प्राणिप्रसवे' अस्मान्नुः स्यात्स च कित् ॥ विश्वोक्तिमाह—**सूनुः पुत्रे इति** ॥ (४५१९) **जहातेः**—। 'ओहाक् त्यागे' '**जह्नुः** स्यात्पुंसि राजर्षिभेदे च मधुसूदने' इति मेदिनी ॥ ( ४५२० ) **स्थो णुः** । 'ष्ठा गतिनिवृत्तौ' अस्माण्णुः स्यात् । विश्वोक्तिमाह—**स्थाणुरिति** । '**स्थाणुः** कीले हरे पुमान् । अस्त्री ध्रुवे' इति मेदिनी ॥ ( ४५२१ ) **अजिवृ**—। 'अज गतौ', 'वृङ् सम्भक्तौ', 'री गतिरेषणयोः' एभ्यो णुर्नित्स्यात् । '**वेणुर्नृ**पान्तरे वंशे' इति विश्वः । '**रेणुः** स्त्रीपुंसयोर्धूलौ पुँल्लिङ्गः पर्पटे पुनः' इति मेदिनी ॥ ( ४५२२ ) **विषेः**—। 'विष्लृ व्याप्तौ' अस्माण्णुः स्यात्स च किच्चान्नित् नित्त्वादाद्युदात्तत्वम् । 'विष्णुरिद्धा' । '**विष्णुर्ना**रायणः कृष्णः' इत्यमरः ॥ ( ४५२३ ) **कृदा**—। 'डुकृञ् करणे', 'डुदाञ् दाने', 'डुधाञ् धारणपोषणयोः', 'रा दाने', 'अर्च पूजायाम्', 'कल गतौ' । '**कर्कः** कर्के तले वह्नौ शुक्लाश्वे दर्पणे घटे' इति विश्वमेदिन्यौ । '**राका** नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम् । संपूर्णेन्दुतिथौ' इति मेदिनी । '**राका** तु सरिदन्तरे । **राका** नवरजःकन्या पूर्णेन्दुः पूर्णिमाऽपि च' इति विश्वः । इह दा धा रा एषां 'केऽणः ११९९' इति ह्रस्वो बाहुलकात्संज्ञापूर्वकविधेरनित्यत्वाद्वा नेति[1] बोध्यम् । '**अर्कोऽ**र्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' इति विश्वमेदिन्यौ । '**कल्कोऽ**स्त्री घृततैलादिशेषे दम्भे विभीतके । विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः' इति मेदिनी । बाहुलकाद्रमेरपि कः '**रंकः** कृपणमन्दयोः' इति मेदिनी । कपिलकादित्वाल्लत्वं टाप् '**लंका** रक्षःपुरीशाखाशाकिनीकुलटासु च' इति विश्वमेदिन्यौ ॥ ( ४५२४ ) **सृ**—। 'सृ गतौ', 'वृञ् वरणे', 'भू सत्तायाम्', 'शुष शोषणे', 'मुष स्तेये' ॥ **सृक इति** । 'सृकं संशाय पविमिन्द्र तिग्मम्' इति मन्त्रस्य वेदभाष्ये तु 'सृकं सरणशीलं पविं वज्रं संशाय सम्यक् तीक्ष्णीकृत्य' इति व्याख्यातम् । '**भूकं** छिद्रे च काले च' इति मेदिनी । '**मुष्को** मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च' इति स एव ॥ (४५२५) '**शुको** व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम्' । '**वल्कं** वल्कलशल्कयोः' इति च । '**उल्का** ज्वाला विभावसोः' इति सुभूतिचन्द्रः ॥ (४५२६) **इण्भी**—'इण् गतौ', 'ञिभी भये', 'कै शब्दे', 'पा पाने', 'शल गतौ', 'अत सातत्यगमने' । '**एकं** संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' इति मेदिनी ।'**काकः** स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः। **काका** स्यात्काकनासायां काकोलीकाकजङ्घयोः। रक्तिकायां मलय्वां च काकमाच्यां च योषिति । **काकं** सुरतबन्धे स्यात्काकानामपि संहतौ' इति मेदिनीविश्वप्रकाशौ । '**पाकः** परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी । '**शल्कं** तु शकले वल्के' इति च । 'मर्च' इति सौत्रो धातुरिति बहवः । 'मर्च शब्दे' चौरादिक इति 'मिदचोऽन्त्यात्परः' इति सूत्रे कैयटः । 'मर्तो मर्तं मर्चयति द्वयेन' इति मन्त्रे मर्चयति विधेयीकरोति भर्त्सयतीति वेदभाष्यम् । न चैवं णिलोपस्य स्थानिवद्भावेन कुत्वाभावान्मर्क इति न सिद्ध्येदिति वाच्यम्, पूर्वत्रासिद्धे तदभावात् । 'शो तनूकरणे' अस्मादपि बाहुलकात्कन् । '**शाको** द्वीपान्तरेऽपि च । शक्तौ द्रुमविशेषे च पुमान् हारीतके स्त्रियाम्' इति मेदिनी ॥ ( ४५२७ ) **नौ हः** । 'ओहाक् त्यागे' अस्मान्निशब्दे उपपदे कन्स्यात् । '**निहाका** गोधिका समे' इत्यमरः ॥ ( ४५२८ ) **नौ सदेः**—। 'षद्लृ विशरणे' अस्मान्निशब्दे उपपदे कन् स्यात्स च डिड्डित्वाट्टिलोपः । 'सदिरप्रतेः ३०३८' इति षत्वम् । '**निष्कमस्त्री** साष्टहेमशते दीनारकर्षयोः । वक्षोऽलङ्करणे हेममात्रे हेमपलेऽपि च' इति मेदिनी ॥ ( ४५२९ ) **स्यमेः**—। 'स्यमु शब्दे' अस्मात्क-

---

[1] **नेतीति**—इदं च 'केऽणो ह्रस्वत्वे तद्धितग्रहणं कन्निवृत्त्यर्थम्' * इति वार्त्तिकस्य राका धाका इत्यादौ ह्रस्ववारकस्य प्रत्याख्यानाय 'तत्तर्हि वक्तव्यम् । न वक्तव्यम्, उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इत्यङ्गीकृतं भाष्यकृता तद्विस्मृतिमूलकमेवेति बोध्यम् ॥

रीट् च ॥ स्यमीको वल्मीकः वृक्षभेदश्च । इट् ह्रस्व इति केचित् । स्यमिकः ॥ ( ४५३० ) ॐ अजियुधूनीभ्यो दीर्घश्च ॥ वीकः स्याद्वातपक्षिणोः । यूका । धूको वायुः । नीको वृक्षविशेषः ॥ ( ४५३१ ) ॐ ह्रियो रश्च लो वा ॥ ह्रीका ह्लीका त्रपा मता ॥ ( ४५३२ ) ॐ शकेरुनोन्तोन्त्युनयः ॥ उन उन्त उन्ति उनि एते चत्वारः स्युः । शकुनः । शकुन्तः । शकुन्तिः । शकुनिः ॥ ( ४५३३ ) ॐ भुवो झिच् ॥ भवन्तिर्वर्तमानकालः । बाहुलकाद्वेश्च । अवन्तिः । वदेर्वदन्तिः । किंवदन्ती जनश्रुतिः ॥ ( ४५३४ ) ॐ कन्युच् क्षिपेश्च ॥ चाद्भुवः । क्षिपण्युर्वसन्त इत्युज्ज्वलदत्तः । भुवन्युः स्वामिसूर्ययोः ॥ ( ४५३५ ) ॐ अनुङ् नदेश्च ॥ चात्क्षिपेः । नदनुर्मेघः । क्षिपणुर्वातः ॥ ( ४५३६ ) ॐ कृवृदारिभ्यः उनन् ॥ करुणो वृक्षभेदः स्यात्करुणा च कृपा मता । वरुणः । दारुणम् ॥ ( ४५३७ ) ॐ त्रो रश्च लो वा ॥ तरुणस्तलुनो युवा ॥ ( ४५३८ ) ॐ क्षुधिपिशिमिथिभ्यः कित् । क्षुधुनो म्लेच्छजातिः पिशुनः । मिथुनम् ॥ ( ४५३९ ॐ फलेर्गुक् च । फल्गुनः पार्थः । प्रज्ञाद्यण् । फाल्गुनः॥(४५४०)ॐ अशेर्लशश्च ॥ लशुनम् ॥(४५४१)ॐ अर्जेर्णिलुक्च ॥ अर्जुनः ॥ (४५४२) ॐ तृणाख्यायां चित् ॥ चित्त्वादन्तोदात्तः। अर्जुनं तृणम् ॥(४५४३) ॐ अर्तेश्च॥अरुणः।(४५४४) अजियमिशीङ्भ्यश्च ॥ वयुनं देवमन्दिरम् ।

---

न्स्यात्तस्य च ईडागमः । 'स्यमीका नीलिकायां स्त्री स्यमीको नाकवृक्षयोः' इति मेदिनी ॥ ( ४५३० ) अजि-। 'अज गतिक्षेपणयोः', 'यु मिश्रणे', 'धुञ् कम्पने', 'णीञ् प्रापणे' एभ्यः कन् स्यादेषां दीर्घश्च, तत्सामर्थ्याद् गुणाभावः । अजेर्वीभावः ॥ ( ४५३१ ) ह्रियः-। 'ह्री लज्जायाम्' अस्मात्कन्धातोर्दीर्घत्वं च, तत्सामर्थ्याद् गुणाभावः ॥ ( ४५३२ ) शकेः-। 'शक्लृ शक्तौ' । 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः । 'शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः । शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्' इति मेदिनी ॥ 'शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः' इति । 'शकुनिः पुंसि विहगे सौबले करणान्तरे' इति च ॥ ( ४५३३ ) भुवः-। 'भू सत्तायाम्' अस्मात् झिच् स्यात् । 'झोऽन्तः २९२३ ' । 'कृदिकारात्-७०८ ' इति ङीष्, भवन्ती लटः संज्ञा । तथा-च 'अस्तिर्भवन्तीपरः प्रयोक्तव्यः' इति भाष्यम् । बाहुलकात्कर्मेरपि प्रत्ययादिलोपे धातोः कुशब्दादेशः कुन्तिः । 'इतो मनुष्यजातेः ७४९' इति ङीष् । 'कुन्ती पाण्डुप्रियायां च शल्लक्यां गुग्गुलद्रुमे' इति मेदिनी ॥ अवन्तिरित्यादि । 'अव रक्षणे', 'वद व्यक्तायां वाचि' आभ्यामपि झिच् ॥ वदन्तीति । 'कृदिकारात्-७०८ ' इति वा ङीष् ॥ ( ४५३४ ) कन्युच्-। 'क्षिप प्रेरणे', 'भू सत्तायाम्' । 'क्षिपण्युस्तु पुमान् देहे सुरभौ वाच्यलिङ्गकः' इति मेदिनी ॥ 'भुवन्युः स्यात्पुमान् भानौ ज्वलने' इति विश्वमेदिन्यौ ॥ ( ४५३५ ) अनुङ्-। 'नद अव्यक्ते शब्दे' अस्मादनुङ् प्रत्ययः स्यात् ॥ क्षिपणुरिति । ङित्त्वाद् गुणाभावः ॥ (४५३६) कृवृ-। 'कॄ विक्षेपे', 'वृञ् वरणे', 'दॄ विदारणे' ण्यन्तः । 'करुणस्तु रसे वृक्षे कृपायां करुणा मता' इति विश्वमेदिन्यौ । 'वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः' इति विश्वः । दारुणं भीषणं भीष्मम्' इत्यमरः । 'दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे' इति मेदिनी ॥ ( ४५३७ ) त्रो-। 'तॄ प्लवनतरणयोः' अस्मादुनन् स्यात् । 'तरुणं कुब्जपुष्पे ना रुचके यूनि तु त्रिषु' इति मेदिनी । गौरादित्वान् ङीष् । 'तरुणी तलुनीति च' इति द्विरूपेषु विश्वः ॥ ( ४५३८ ) क्षुधि-। 'क्षुध बुभुक्षायाम्', 'पिश अवयवे' अयं दीपनायामपि, 'मिथिः सौत्रो धातुः । 'पिशुनो दुर्जनः खलः' इत्यमरः । 'पिशुनं कुङ्कुमे स्मृतम् । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्' इति मेदिनी । 'मिथुनं न द्वयो राशिभेदे स्त्रीपुंसयुग्मके' इति च ॥ ( ४५३९ ) फलेः-। 'फल निष्पत्तौ' अस्मादुनन्गुगागमश्च धातोः । 'फल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे । तपस्यसंज्ञमासे तत्पूर्णिमायां च फाल्गुनी' इति मेदिनी ॥ फाल्गुन इति । 'फल्गुनः फाल्गुनोऽर्जुने' इति द्विरूपकोशः ॥ ( ४५४० ) अशेः-। 'अश भोजने' अस्मादुनन्, धातोर्लशादेशश्च । लशुनं महाकन्दः । 'उशना लशुनं वेश्म कश्मलं विश्वमश्ववत्' इति मध्यतालव्येषु विश्वः । 'लस च' इति दन्त्यमध्यपाठस्तु प्रामादिकः ॥ ( ४५४१ ) अर्जेः-। 'अर्ज गतिस्थानार्जनोपार्जनेषु' अस्मादुनन् स्यात्, णेश्च लुक् । इह 'णेरनिटि ३०८८' इति णिलोपेनैव सिद्धे 'णिलुक् च' इत्युक्तेः फलं चिन्त्यम् । 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत् । नपुंसकं तृणे नेत्ररोगे वाऽप्यर्जुनी गवि । उषायां बाहुदानद्यां कुट्टन्यां चापि च क्वचित्' इति विश्वमेदिन्यौ ॥ ( ४५४३ ) अर्तेश्च । 'ऋ गतौ' अस्मादुनन्स्यात्स च ङित् । 'अरुणो व्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु । अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च' इति मेदिनी ॥ ( ४५४४ ) अजि-। 'अज गतिक्षेपणयोः', 'यमु उपरमे', 'शीङ् स्वप्ने' एभ्यः उनन् स्यात्स च ङित् । अजेर्वीभावः । वीयते गम्यतेऽत्रेति वयुनम् । 'विश्वानि देव वयुनानि विद्वान्' इति मन्त्रे वयुनानि प्रज्ञानानीति वेदभाष्यम् । वैदिकनिघण्टौ प्रज्ञापर्याये प्रशस्यपर्याये च वयुनशब्दः पठितः ।

---

१ बाहुलकादिति । अत एव 'पयःपृषन्तिभिः पृक्ता वान्तिं वाताः' इति जाम्बवतीविजये' इति रायमुकुटः ॥ २ अस्य प्रायस्तदितान्तेष्वेव प्रवृत्तेश्चिन्त्यमेतत् । अत एव 'कदिकारादित्युचितम्' इति शब्दरत्नम् ॥

यमुना । शयुनोऽजगरः ॥ (४५४५) (उ) वृतृवदिहनिकमिकषिभ्यः सः ॥ वर्सम् । तर्सम् । वर्षम् तर्षः प्लवसमुद्रयोः । वत्सः । वत्सम् । वक्षः । हंसः । कंसोऽस्त्री पानभाजनम् । कक्षं नक्षत्रम् ॥ ( ४५४६ ) (उ) प्लुषेरच्चोपधायाः ॥ प्लक्षः ॥ ( ४५४७ ) (उ) मनेर्दीर्घश्च ॥ मांसम् ॥ ( ४५४८ ) (उ) अशेर्देवने ॥ अक्षः ॥ ( ४५४९ ) (उ) स्नुव्रश्चिकृत्यृषिभ्यः कित् ॥ स्नुषा । वृक्षः । कृत्समुदकम् । ऋक्षं नक्षत्रम् ॥ ( ४५५० ) (उ) ऋषेर्जातौ ॥ ऋक्षोऽद्रिभेदे भल्लूके इति च ॥ ( ४५५१ ) (उ) उन्दिगुधिकुषिभ्यश्च ॥ उत्सः प्रस्रवणम् । गुत्सः स्तबकः । कुक्षो जठरम् ॥ ( ४५५२ ) (उ) गृधिपण्योर्दकौ च ॥ गृत्सः कामदेवः । पक्षः ॥ ( ४५५३ ) (उ) अशेः सरः ॥ अक्षरम् ॥ ( ४५५४ ) (उ) वसेश्च ॥ वत्सरः ॥ ( ४५५५ ) (उ) सपूर्वाच्चित् ॥ संवत्सरः ॥ ( ४५५६ ) (उ) कृधू-

---

'यमुना शमनस्वसा' इत्यमरः ॥ (४५४५) **वृतृ**–। 'वृ वरणे', 'तृ प्लवनतरणयोः', 'वद व्यक्तायां वाचि', 'हन हिंसागत्योः', 'कमु कान्तौ', 'कष हिंसायाम्' ॥ **वर्सम् तर्समिति** । 'तितुत्र–४१९४' इति नेट् । षत्वं तु न भवति बाहुलकेन षत्वे कर्तव्ये प्रत्ययसंज्ञाया अप्रवृत्तेः । कक्षशब्दे तु षत्वं भवत्येव । एतच्च भाष्यकैयटादिपर्यालोचनयोक्तम् । कथं तर्हि सर्वैरप्युणादिवृत्तिकारैरिह षत्वमुदाहृतमिति चेद् । अत्राहुः—अस्तु भाष्यप्रामाण्यात् वर्सं तर्समिति दन्त्यपाठोऽपि साधुः । पक्षे तु षत्वमस्तु बाहुलकलभ्यषत्वाभावस्य पाक्षिकत्वेऽपि बाधकाभावाद् । वृषितृषिभ्यां घञि कृते, ण्यन्तादेरचि 'घञर्थे कविधानम् ५०२८' इति ण्यंतात्कप्रत्यये वा कृते वर्षतर्षशब्दयोर्दुर्वारत्वाद् 'अज्विधौ भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्' इत्यत्र वर्षमित्याकरे उदाहृतत्वाच्च । तस्मादिह द्विरूपता फलितेति । '**वर्षो**ऽस्त्री भारतादौ स्याज्जम्बूद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि' इति मेदिनी । '**तर्षो** लिप्सोदन्ययोः' इति च । 'पुन्नादौ तर्णके वर्षे **वत्सः** क्लीबं तु वक्षसि' इति त्रिकाण्डशेषः । 'सद्योजातस्तर्णकः' । '**हंसः** स्यान्मानसौकसि । निर्लोभनृपविष्णवर्कपरमात्मसु मत्सरे । योगभेदे मन्त्रभेदे शारीरमरुदन्तरे । तुरङ्गमप्रभेदे च' इति मेदिनी । '**कंसो** दैत्यान्तरे स्मृतः । कांस्ये च कांस्यपात्रे च मानभेदे च कीर्तितः' इति विश्वः । '**कक्षा** स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्द्धायां ना तु दोर्मूले **कक्षो** वीरुत्तृणेषु च' इति मेदिनी ॥ ( ४५४६ ) **प्लुषेः**–। 'प्लुष दाहे' अस्मात्सः स्यादुपधाया अकारश्च । '**प्लक्षो** जटी गर्दभाण्डद्वीपभित्कुञ्जराशने' इति मेदिनी । '**प्लक्षो** द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः । पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तितः' इति विश्वः ॥(४५४७) **मनेः**–। 'मन ज्ञाने' । '**मांसं** स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्' इति मेदिनी ॥ ( ४५४८ ) **अशेः**–। 'अशू व्याप्तौ' अस्माद्देवने वाच्ये सः स्यात् । 'व्रश्चभ्रस्ज–४११' इत्यादिना षत्वादिकार्यम् । 'अथाक्षमिन्द्रिये । ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे' इत्यमरः । कर्षे चक्रे इत्यर्थः । '**अक्षो** ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे बिभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थसौवर्चलेन्द्रिये' इति मेदिनी ॥ ( ४५४९ ) **स्नुव्रश्चि**–। 'ष्णु प्रस्रवणे', 'ओव्रश्चू छेदने', 'कृती छेदने', 'ऋषी गतौ' एभ्यः सः कित्स्यात् । स्नुषा पुत्रवधूः ॥ **वृक्ष इति** । सस्य कित्त्वाद् 'ग्रहिज्या–२२१६' इति संप्रसारणम् । '**ऋक्षः** पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधनेऽन्यलिङ्गं नक्षत्रे पुंनपुंसकम्' इति मेदिनी ॥ ( ४५५० ) **ऋषेर्जातौ** । पूर्वसूत्रेणैव सिद्धे 'ऋषेर्जातावेव' इति नियमार्थं सूत्रम् । तेनान्येभ्यस्त्रिभ्यः केवलयौगिकत्वेऽपि सप्रत्ययो भवति ॥ ( ४५५१ ) **उन्दिगुधि**–। 'उन्दी क्लेदने', 'गुध रोषे', 'कुष निष्कर्षे' एभ्यः सः कित्स्यात् । 'अनिदिताम्–५५७' इति नलोपः । '**उत्सः** प्रस्रवणं वारि' इत्यमरः । '**गुत्सः** स्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः' इति मेदिनी । गुच्छश्च 'गुत्सो गुच्छो गुलुच्छवत्' इति द्विरूपकोशात्, स्याद् **गुच्छः** 'स्तबके स्तम्बे हारभेदकलापयोः' इति चवर्गद्वितीयान्ते मेदिनीकोशाच्च ॥ ( ४५५२ ) **गृधि**–। 'गृधु अभिकाङ्क्षायाम्', 'पण व्यवहारे स्तुतौ च' । ननु गृधेश्चर्त्वेन गृत्स इति सिद्धे दकारविधानं व्यर्थमिति चेत् । मैवम्, चर्त्वस्यासिद्धत्वेन 'एकाचो बशः–४४९' इति भष्भावप्रसङ्गात् । न चैवमपि प्रक्रियालाघवाय तकार एव विधीयतामिति शङ्क्यम्, 'चयो द्वितीयाः–१९८' इति पक्षे तकारस्य थकारापत्तेः । '**पक्षो** मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः । चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः' इति विश्वमेदिन्यौ ॥ ( ४५५३ ) **अशेः**–। 'अशू व्याप्तौ' । 'व्रश्च–४११' इत्यादिना षत्वादिकार्यम् । '**अक्षरं** स्यादपवर्गे परमब्रह्मवर्णयोः' इति हेमचन्द्रः । '**अशेः सरन्**' इत्युज्ज्वलदत्तादिपाठस्तु प्रामादिकः । नित्स्वरापत्तेः । इष्यते तु प्रत्ययस्वरेणाक्षरशब्दस्य मध्योदात्तत्वम् । '**ऋचोऽक्षरे परमे व्योमन्**' इत्यादिऋङ्मन्त्रेषु '**त्रीणि च शतानि षष्टिश्चाक्षराणि**' इति यजुषि च तथैव पाठात् । अत एव '**अश्नोतेर्वाऽसरोऽक्षरम्**' इति द्वितीयाह्निकान्ते भाष्यकृतोक्तम् ॥ ( ४५५४ ) **वसेश्च** । 'वस निवासे' अस्मादपि सरः स्यात् 'सः स्यार्द्धधातुके ३१२३' इति तत्वम् ॥ ( ४५५५ ) **सपूर्वाच्चित्** ।

---

१–षत्वं नेत्येव तु युक्तम् इति शब्दरत्नम् ॥ २ इदं च प्रामादिकत्वकथनम् ३।३।१६, ७।१५।९, ७।३६।७ ऋक्षूपलभ्यमानस्यापि अक्षरशब्दे नित्स्वरस्याद्युदात्तत्वस्यापलपनेन प्राचां मिथ्यानिन्दाकरणायैव । द्वितीयाह्निकान्ते वार्तिके छन्दोऽनुरोधेन तथा पाठेऽपि अग्रे भाष्ये '**औणादिकः सरन् प्रत्ययः**' इत्येवं स्पष्टं नकारस्योच्चारणात् '**सरन्प्रत्ययस्यानुबन्धलोपे कृते अनुकरणं सर इति**' इत्येवं प्रदीपेऽप्युपलम्भात् प्रामादिकत्वलेखनमेव प्रामादिकम् । अक्षरशब्दे मध्योदात्तता तु व्यत्ययेन सिद्धेति दाधिमथाः ॥

**मदिभ्यः कित्** ॥ बाहुलकात्सत्वम् । कृसरः स्यात्तिलौदनम् । धूसरः । मत्सरः । मत्सरा मक्षिका ज्ञेया भम्भराली च सा मता ॥ (४५५७) **उ॰ पते रश्च लः** ॥ पत्सलः पन्थाः ॥ (४५५८) **उ॰ तन्यृषिभ्यां क्सरन्** । तसरः सूत्रवेष्टने । ऋक्षरः ऋत्विक् ॥ (४५५९) **उ॰ पीयुक्कणिभ्यां कालन् ह्रस्वः सम्प्रसारणं च** ॥ पीयुः सौत्रः । पियालो वृक्षभेदः । कुणालो देशभेदः ॥ (४५६०) **उ॰ कठिकुषिभ्यां काकुः** ॥ कठाकुः पक्षी । कुषाकुरग्निः सूर्यश्च ॥ (४५६१) **उ॰ सर्तेर्दुक् च** ॥ सृदाकुर्वातसरितोः ॥ (४५६२) **उ॰ वृतेर्वृद्धिश्च** ॥ वार्ताकुः । बाहुलकादुकारस्य अत्वम् । वार्ताकम् ॥ (४५६३) **उ॰ पर्देर्नित्संप्रसारणमल्लोपश्च** ॥ पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे ॥ (४५६४) **उ॰ सृयुवच्यिभ्योऽन्युजागूजक्नुचः** ॥ अन्युच् आगूच् अक्नुच् एते क्रमात्स्युः । सरण्युर्मेघवातयोः । यवागूः । वचक्नुर्विप्रवाग्मिनोः ॥ (४५६५) **उ॰ आनकः शीङ्भियः** ॥ शयानकोऽजगरः । भयानकः ॥ (४५६६) **उ॰ आणको लूधूशिङ्घिधाञ्भ्यः** ॥ लवाणकं दात्रम् । धवाणको वातः । शिङ्घाणकः श्लेष्मा । पृषोदरादित्वात्पक्षे कलोपः । शिङ्घाणं नासिकामले । धाणको दीनारभागः ॥ (४५६७) **उ॰ उल्मुकदर्विहोमिनः** ॥ उष दाहे । षस्य लः मुकप्रत्ययश्च । उल्मुकं ज्वलदङ्गारम् । दृणातेर्विः । दर्विः । जुहोतेर्मिनिः । होमी ॥ (४५६८) **उ॰ ह्रियः कुक् रश्च लो वा** ॥ ह्रीकुर्ह्लीकुर्लज्जावान् ॥ (४५६९) **उ॰ हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** ॥ दशभ्यस्तन् स्यात् । तितुत्रेति नेट्[३१६४] । हस्तः । मर्तः । गर्तः । एतः । कर्बुरः । वातः । अन्तः ।

---

पूर्वसहिताद्वसतेः सरः स्यात्स च चित्, चित्त्वादन्तोदात्तः । 'इद्वत्सराय परिवत्सराय' 'सम्पूर्वात्' इति पाठान्तरम् । तच्च लक्ष्यविरोधादुपेक्ष्यम् ॥ (४५५६) **कृधू**-'डुकृञ् करणे', 'धूञ् कंपने', 'मदी हर्षे' एभ्यः सरः कित्स्यात् ॥ **कृसर** इत्यादि हारावलीस्थम् । '**धूसरी** किन्नरीभेदे ना खरे त्रिषु पाण्डुरे' इति मेदिनी । '**मत्सरा** मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसम्पत्तौ कृपणे चाभिधेयवत्' इति च । '**मत्सरो**ऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इत्यमरः । 'अथ **मत्सरः** । असह्यपरसम्पत्तौ मात्सर्ये कृपणे क्रुधि ।' इति विश्वः । वेदे तु 'मदी हर्षे' इति योगार्थं पुरस्कृत्य प्रयुज्यते । 'इन्दुमिन्द्राय मत्सरम्' । 'तं सिन्धवो मत्सरमिन्द्रियानम्' इत्यादि । मत्सरं हर्षहेतुमिति तद्भाष्यम् ॥ (४५५७) **पतेः**-। 'पत्लृ गतौ' अस्मात्सरः स्याद्रेफस्य लश्च ॥ (४५५८) **तन्यृषि**-। 'तनु विस्तारे', 'ऋषी गतौ' ॥ अमरोक्तिमाह—**तसर इति** । कित्त्वात् 'अनुदात्तोपदेश-३२३४' इत्यादिनाऽनुनासिकलोपः ॥ **ऋक्षरः ऋत्विगिति** । '**ऋक्षरं** वारिधारायामृक्षरस्त्वृत्विजि स्मृतः' इति मेदिनी । 'अनृक्षरा ऋजवः सन्तु पन्थाः' इति मन्त्रस्य वेदभाष्ये तु 'ऋक्षरः कण्टकः' इति व्याख्यातम् ॥ (४५५९) **पीयुक्कणिभ्याम्**-। 'अण रण' इति दण्डके कणिः पठ्यते, स च शब्दार्थकः । आभ्यां कालन् स्यात् यथाक्रमं ह्रस्वः संप्रसारणं च । 'राजादनं **पियालः** स्यात्' इत्यमरः । '**पियालः** स्यात्प्रियालवत्' इति द्विरूपकोशः । बाहुलकाद्भजेरपि कालन् कित्त्वान्नलोपः, न्यङ्क्वादित्वात्कुत्वम् । भगालं नरमस्तकम् ॥ 'चण्डीकान्तो **भगाली** च लेलिहानो वृषध्वजः' इति राजशेखरः ॥ (४५६०) **कठिकुषि**-। 'कठ कृच्छ्रजीवने', 'कुष निष्कर्षे' । '**कुषाकुः** कपिवह्न्यर्के ना परोत्तापिनि त्रिषु' इति मेदिनी । उज्ज्वलदत्तस्तु 'कठिकषिभ्याम्' इति पठित्वा 'कषशिष' इति दण्डके धातुमुपन्यस्य कषाकुरित्युदाजहार तत्कोशविरुद्धम् । मेदिनीकोशे षुकारप्रक्रमे पाठात् ॥ (४५६१) **सर्तेः**-। 'सृ गतौ' अस्मात्काकुः स्याद्धातोर्दुगागमश्च । '**सृदाकु**र्नाऽनिले चक्रे ज्वलने प्रतिसूर्यके' इति मेदिनी ॥ (४५६२) **वृतेः**-। 'वृतु वर्तने' '**वार्त्ताकुः** प्रियवार्ताकी वृन्ताकेऽपि च दृश्यते' इति द्विरूपे विश्वः । '**वार्त्ताकी** हिंगुली सिंही भण्टाकी दुष्प्रधर्षिणी' इत्यमरः । '**वार्ताकं** पित्तलं किंचिदङ्गारपरिपाचितम्' इति वैद्यशास्त्रम् ॥ (४५६३) **पर्देः**-। 'पर्द कुत्सिते शब्दे' अस्मात्काकुः स्यात्स च नित् । धातो रेफस्य संप्रसारणमकारलोपश्च । विश्वकोशस्थमाह—**पृदाकुरिति** ॥ '**पृदाकु**र्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान्' इति मेदिनी ॥ (४५६४) **सृयु**-। 'सृ गतौ', 'यु मिश्रणे', 'वच परिभाषणे' । '**सरण्यु**स्तु पुमान् वारिवाहे स्यान्मातरिश्वनि' इति मेदिनी ॥ 'सरण्युरस्य सूनुरश्वः' इति मन्त्रस्य भाष्ये सरण्युः शीघ्रगामीति व्याख्यातम् । '**यवागू**रुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः । '**वचक्नु**स्तु पुमान् विप्रे वावदूकेऽभिधेयवत्' इति मेदिनी ॥ (४५६५) **आनकः**-। 'शीङ् स्वप्ने', 'ञिभी भये' बिभेत्यस्मादिति भयानको भयंकरः । '**भयानकः** स्मृतो व्याघ्रे रसे राहौ भयंकरे' इति मेदिनी॥ (४५६६) **आणको**-। 'लूञ् छेदने', 'धूञ् कम्पने', 'शिघि आघ्राणे', 'डुधाञ् धारणपोषणयोः' । हारावलीस्थमाह—**शिङ्घाणमिति** । '**शिङ्घाणं** काचपात्रे स्याल्लौहनासिकयोर्मले' इति विश्वः । '**शिङ्घाणः** फेनडिण्डीरो नक्रेत्पश्च पिच्छलः' इति विक्रमादित्यकोशः ॥ (४५६७) **उल्मुक**-। एते निपात्यन्ते । निपातनप्रकारमेवाह—**उष दाहे इत्यादिना** । हारावलीस्थमाह—**उल्मुकमिति** । '**दर्विः** कम्बिः खजाका च' इत्यमरः ॥ (४५६८) **ह्रियः**-। 'ह्री लज्जायाम्' अस्मात्कुक् प्रत्ययः स्यात्ककारो गुणनिषेधार्थः ॥ (४५६९) **हसि**-। 'हसे हसने', 'मृङ् प्राणत्यागे', 'गॄ निगरणे', 'इण् गतौ', 'वा गतिगन्धनयोः', 'अम गत्यादिषु', 'दमु उपशमे', 'लूञ् छेदने', 'पूञ् पवने', 'धुर्वी हिंसायाम्' । '**हस्तः** करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते' इति मेदिनी । अत्रायमर्थः—केशवाचकात्परो यो हस्तशब्दः स समूहवाची । तथा च केशहस्तशब्दः केशसमूहशब्दपर्यायः इति । मर्तो भूलोकस्तत्र भवो मर्त्यः । दिगादेराकृतिगणत्वाद्यत् । '**गर्त**-

दन्तः । लोतः स्यादश्रुचिह्नयोः । पोतो बालवहित्रयोः । धूर्तः । बाहुलकात्तुसेर्दीर्घश्च । तूस्तं पापं धूलिर्जटा च ॥ ( ४५७० ) (उ) नञ्याप इट् च ॥ नापितः ॥ ( ४५७१ ) (उ) **तनिमृङ्भ्यां किच्च** ॥ ततम् । मृतम् ॥ ( ४५७२ ) (उ) **अञ्जिघृसिभ्यः क्तः** ॥ अक्तम् । घृतम् । सितम् ॥ ( ४५७३ ) (उ) **दुतनिभ्यां दीर्घश्च** ॥ दूतः । तातः । ( ४५७४ ) (उ) **जेर्मूट् चोदात्तः** ॥ जीमूतः ॥ ( ४५७५ ) (उ) **लोष्टपलितौ** ॥ लुनातेः क्तः तस्य सुट् धातोर्गुणः । लोष्टम् । पलितम् ॥ ( ४५७६ ) (उ) **हृश्याभ्यामितन्** ॥ हरितश्येतौ वर्णभेदौ ॥ ( ४५७७ ) (उ) **रुहे रश्च लो वा** ॥ रोहितो मृगमत्स्ययोः । लोहितं रक्तम् ॥ ( ४५७८ ) (उ) **पिशेः किच्च** ॥ पिशितं मांसम् ॥ ( ४५७९ ) (उ) **श्रुदक्षिस्पृहिगृहिभ्य आय्यः** ॥ श्रवाय्यो यज्ञपशुः । दक्षाय्यो गरुडो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी ॥ ( ४५८० ) (उ) **दिधिषाय्यः** ॥ दधातेर्द्वित्वमित्वं षुक् च । मित्र इव यो दिधिषाय्योऽभूत् ॥

---

त्रिगर्तभेदे स्यादवटे च कुकुन्दरे' इति मेदिनी । ' एतः कर्बुर आगते' इति । '**अन्तः** स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु' इति च । '**दन्तो**ऽद्रिकटके कुञ्जे दशने चौषधौ स्त्रियाम्' इति च मेदिनी । '**लोत**मश्रुणि चोरिते' इति विश्वः। 'क्तक्तवतू निष्ठा' इति सूत्रे 'लोतो मेषः' इति कैयटः । '**पोतः** शिशौ वहित्रे च' इति विश्वमेदिन्यौ ॥ **धूर्त इति** । 'लोपो व्योर्वलि १२५४' इति वलोपः, 'राल्लोपः ३५२६' इत्यनेन लोपस्तु क्विङतीत्यननुवृत्तिपक्षे बोध्यः । 'हलि च ४८१' इति दीर्घः । '**धूर्तं** तु खण्डलवणे धत्तूरे ना शठे त्रिषु' इति मेदिनी ॥ **तूस्तमिति** । 'तुस खण्डने' इत्यस्मात्तन् ॥ ( ४५७० ) **नञ्या–**। 'आप्लृ व्याप्तौ' अस्मान्नञ्युपपदे तन्स्यादिडागमश्च । बाहुलकान्नञो नलोपाभावः ॥ ( ४५७१ ) **तनि–**। 'तनु विस्तारे', 'मृङ् प्राणत्यागे' आभ्यां तन्प्रत्ययः स्यात्स च कित् किત્त्वादनुनासिकलोपः । '**ततं** वीणादिकं वाद्यम्' इत्यमरः । 'अथ **ततं** व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुँल्लिङ्गस्तु समीरणे' इति मेदिनी । '**मृतं** तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिषु' इति च ॥ ( ४५७२ ) **अञ्जि–**। 'अञ्जू व्यक्तिम्रक्षणादौ', 'घृ क्षरणदीप्त्योः', 'षिञ् बन्धने' एभ्यः क्तः स्यात् । निष्ठासंज्ञा त्वेतस्य न भवति, उणादीनामव्युत्पन्नत्वाद्बाहुलकाद्वा । अन्यथा 'निष्ठा च द्व्यजनात् ५५६८' इत्याद्युदात्तत्वं स्यादिति 'क्तक्तवतू निष्ठा' इति सूत्रे कैयटः । अक्तं परिच्छिन्नम् 'अक्तः परिमाणवाचकः' इति भाष्यस्य कैयटेन तथा व्याख्यातत्वात् । '**अक्तं** व्याघ्रे च संकुले' इति विश्वः इत्युज्ज्वलदत्तेनोक्तम् । तच्च लिपिभ्रमप्रयुक्तम् । विश्वकोशे हि–'व्यस्तं व्यासे च संकुले' इति स्थितत्वात् । तथा च मेदिन्यां वकारादिप्रक्रमे 'व्यस्तं तु व्याकुले व्याप्ते' इत्युक्तम् । '**घृत**माज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्' । '**सित**मवसिते च वृद्धे धवले त्रिषु शर्करायां स्त्री' इति मेदिनी । बाहुलकात् 'ऋ गतौ' इत्यस्मात् क्तः । '**ऋत**मुञ्छे शिले जले । सत्ये दीप्ते पूजिते स्यात्' इति मेदिनी ॥ ( ४५७३ ) **दुतनि–**। 'दु गतौ', 'तनु विस्तारे' आभ्यां क्तः स्याद्धातोर्दीर्घश्च । दूतः प्रैष्यः । गौरादित्वान्ङीष् । दूती । कथं तर्हि 'तेन दूतिविदितं निषेदुषा' इति रघुरिति चेद् । अत्राहुः–'दूङ् परितापे' इत्यस्मात् क्तिचि दूतिरिति । 'दूत्यां **दूति**रपि स्मृता' इति द्विरूपकोशः । '**तातो**ऽनुकम्प्ये जनके' इति विश्वमेदिन्यौ । बाहुलकात् '**शीङ्** स्वप्ने' इत्यस्मादपि क्तः । शीता लाङ्गलपद्धतिः रामपत्नी च । '**शीता** नभःसरिति लाङ्गलपद्धतौ च **शीता** दशाननरिपोः सहधर्मिणी च । **शीतं** स्मृतं हिमगुणे च तदन्विते च **शीतो**ऽलसे च बहुवारतरौ च दृष्टः' इति तालव्यादौ धरणिः । सीता दन्त्यादिरप्यस्ति । '**सीता** लाङ्गलपद्धतिः । वैदेहीस्वर्गगङ्गासु' इति दन्त्यादौ मेदिनी । '**सीता** लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी' इति दन्त्यादौ रभसकोशाच्च ॥ ( ४५७४ ) **जेः–**। 'जि जये' अस्मात् क्तप्रत्ययस्तस्योदात्तमूडागमः स्यात् । दीर्घ इत्यनुवृत्त्या धातोर्दीर्घश्च स्यात् । इदं सूत्रमनार्षमिति केचित् । अत एव वृत्त्यादिग्रन्थे पृषोदरादिषु जीमूतशब्द उदाहृतः । '**जीमूतो**ऽद्रौ भूतिकरे देवतादौ पयोधरे' इति मेदिनी । 'वेणी खरा गरी देवताडो **जीमूतः**' इत्यमरः । '**जीमूतः** स्याद्वृत्तिकरे शक्रेऽद्रौ घोषके घने' इति विश्वः ॥ ( ४५७५ ) **लोष्ट–**। 'लूञ् छेदने', 'पल गतौ' एतौ क्तान्तौ निपात्येते । '**लोष्टानि** लेष्टवः पुंसि' इत्यमरः । अत्र पुंसीत्युभयान्वयि तेन पुंनपुंसकलिङ्गो लोष्टशब्दः । तथा च 'स्थानेऽन्तरतमः' इति सूत्रे भाष्यम्–'लोष्टः क्षिप्तो बाहुवेगं गत्वा' इत्यादि । अत एव 'लोष्टुः शण्डेऽपि **लोष्टः** स्यात्' इति पुँल्लिङ्गकाण्डे बोपालितः । '**पलितं** शैलजे तापे केशपाके च कर्दमे' इति मेदिनी ॥ ( ४५७६ ) **हृश्या–**। 'हृञ् हरणे', 'श्यैङ् गतौ' । '**हरिता** स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत्' इति मेदिनी । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमरः ॥ ( ४५७७ ) **रुहेः–**। 'रुह बीजजन्मनि प्रादुर्भावे च' अस्मादितन् । '**रोहितं** कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे' इति मेदिनी । '**लोहितं** रक्तगोशीर्षकुङ्कुमाजिकुचन्दने । पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति' इति च ॥ ( ४५७८ ) **पिशेः–**। 'पिश अवयवे' अयं दीपनायामपि । अस्मादितन्स्यात्स च कित् । '**पिशितं** मांसं मांस्यां स्त्री' इति मेदिनी । मांस्यां जटामांस्याम् । तथा च 'जटा च **पिशिता** पेशी' इति धन्वन्तरिः ॥ ( ४५७९ ) **श्रुदक्षि–**। 'श्रु श्रवणे', 'दक्ष वृद्धौ', 'स्पृह ईप्सायाम्', 'गृह ग्रहणे' चुरादावदन्तौ । 'उद्यतः स्रुचे भवति श्रवाय्यः' इति मन्त्रे श्रवाय्यो मन्त्रैः श्रवणीय इति वेदभाष्यम् । 'दक्षाय्यो योदम आस नित्यः' इत्यादिष्वपि यौगिकार्थ एव भाष्ये पुरस्कृतः ॥ **स्पृहयाय्य इति** । 'अयामन्त–२०८६' इति णेरयादेशः । एवं गृहयाय्य इति ॥ ( ४५८० ) **दिधिषाय्य इति** ।

( ४५८१ ) (उ.) वृञ एण्यः ॥ वरेण्यः ॥ ( ४५८२ ) (उ.) स्तुवः क्सेय्यश्छन्दसि ॥ स्तुषेय्यं पुरुवर्चसम् ॥ ( ४५८३ ) (उ.) राजेरन्यः ॥ राजन्यो वह्निः ॥ ( ४५८४ ) (उ.) शॄरम्योश्च ॥ शरण्यम् । रमण्यम् ॥ ( ४५८५ ) (उ.) अर्तेर्निच्च ॥ अरण्यम् ॥ ( ४५८६ ) (उ.) पर्जन्यः ॥ पृषु सेचने । षस्य जः । पर्जन्यः शक्रमेघयोः ॥ ( ४५८७ ) (उ.) वदेरान्यः ॥ वदान्यस्त्यागिवाग्मिनोः ॥ ( ४५८८ ) (उ.) अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥ अमत्रं भाजनम् । नक्षत्रम् । यजत्रः । वधत्रमायुधम् । पतत्रं तनूरुहम् ॥ ( ४५८९ ) (उ.) गडेरादेश्च कः ॥ कडत्रम् । डलयोरेकत्वस्मरणात्—कलत्रम् ॥ ( ४५९० ) (उ.) वृञश्चित् ॥ वरत्रा चर्ममयी रज्जुः ॥ ( ४५९१ ) (उ.) सुविदः कत्रन् ॥ सुविदत्रं कुटुम्बकम् ॥ ( ४५९२ ) (उ.) कृतेर्नुम् च ॥ कृन्तत्रं लाङ्गलम् ॥ ( ४५९३ ) (उ.) भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् ॥ दशभ्योऽतच् स्यात् । भरतः । मरतो मृत्युः । दर्शतः सोमसूर्ययोः । यजत ऋत्विक् । पर्वतः । पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्यतोऽश्वः ॥ (४५९४) (उ.) पृषिरञ्जिभ्यां कित् ॥ पृषतो मृगो विन्दुश्च । रजतम् ॥ (४५९५) (उ.) खलतिः ॥ स्खलतेः सलोपः । अतच्प्रत्ययान्तस्य इत्वं च । खलतिर्निष्केशशिराः ॥ (४५९६) (उ.) शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ॥ सप्तभ्योऽथः स्यात् । शयथोऽजगरः । शपथः । रवथः कोकिलः । गमथः पथिकः पन्थाश्च । वञ्चथो धूर्त्तः । वन्दीति पाठे वन्दतेर्वन्द्यतेर्वा वन्दथः स्तोता स्तुत्यश्च ॥ जीवथ आयुष्मान् । प्राणथो बलवान् । बाहुलकाच्छमिदमिभ्याम् ।

---

'डुधाञ् धारणपोषणयोः' । उज्ज्वलदत्तस्तु 'दधिषाय्यः' इति सूत्रं पठित्वा दधिपूर्वात्स्यतेराय्यः षत्वं च दधिषाय्यो घृतमिति व्याख्यत् । दशपादीवृत्तिकारस्तु 'धिषु शब्दे' अस्य द्वित्वं गुणाभावः अत्वं चाभ्यासस्य निपात्यत इत्याह । प्रसादकारादयोऽप्येवमेवाहुः । तदेतत्सर्वं प्रामादिकम् । 'मित्र इव यो दिधिषाय्योऽभूत्' इति वैदिकप्रयोगाद्दिधिषाय्य इत्येव सूत्रं युक्तमिति प्रामाणिकाः ॥ ( ४५८१ ) वृञः—। 'वृञ् वरणे' । वरेण्यः श्रेष्ठः ॥ ( ४५८२ ) स्तुवः—। 'ष्टुञ् स्तुतौ' । स्तुषेय्यं स्तोतव्यम् । पुरुवर्चसं बहुरूपमिति वेदभाष्यम् । 'स्तुवः केय्यः' इति पठित्वा कित्त्वाद् गुणाभावे उवङि सति स्तुवेय्यः पुरन्दर इत्युदाहरन् उज्ज्वलदत्तस्तु उदाहृतश्रुतितद्भाष्यादिविरोधादुपेक्ष्यः । तस्मादिह क्सेय्यप्रत्ययं पठन् दशपादीवृत्तिकृदेव ज्यायानित्याहुः ॥ ( ४५८३ ) राजेः—। 'राजृ दीप्तौ' क्षत्त्रियजातौ तु 'राजश्वशुराद्—१६३४' इति यत्प्रत्यये राजन्य इत्यन्तस्वरितः ॥ ( ४५८४ ) शॄरम्योः—। 'शॄ हिंसायाम्', 'रमु क्रीडायाम्', आभ्यामन्यः स्यात् ॥ ( ४५८५ ) अर्तेः—। 'ऋ गतौ' अस्मादन्यः स च नित् । 'अटव्यरण्यं विपिनम्' इत्यमरः ॥ ( ४५८६ ) पर्जन्यः । 'पृषु सेचने' षस्य जः । 'पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः' इति मेदिनी ॥ ( ४५८७ ) वदेः—। 'वद व्यक्तायां वाचि' ॥ अजयकोशस्थमाह—वदान्य इति॥ ( ४५८८ ) अमिनक्षि—। 'अम गत्यादिषु', 'नक्ष गतौ', 'यज देवपूजादौ', 'वध हिंसायाम्', 'पत्लृ गतौ' ॥ नक्षत्रमिति । 'नभ्राण्नपात्—१०९५' इति सूत्रे नञः प्रकृतिभावेन नक्षत्रमिति साधितं, तत्तु व्युत्पत्त्यन्तरमिति बोध्यम् । यजत्रमग्निहोत्रमिति प्राञ्चः । वस्तुतस्तु यजत्री यष्टव्यदेवता । 'सन्तो वायुर्वातेन गच्छतां संयजत्रैरङ्गानि' इति मन्त्रे तथैव व्याख्यातत्वात् ॥ अमरकोशस्थमाह—पतत्रं चेति ॥ ( ४५८९ ) गडेः—। 'गड सेचने' अस्मादत्रन्स्यादृकारस्य ककारादेशश्च । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः ॥ ( ४५९० ) वृञः—। 'वृञ् वरणे' अस्मादत्रन् चित्स्यात् । चित्त्वादन्तोदात्तः । 'नद्ध्री वध्री वरत्रा स्यात्' इत्यमरः । 'वरत्रायां दार्वां नह्यमानः' इत्यादौ चित्स्वरः स्पष्टः ॥ ( ४५९१ ) सुविदः कत्रः । 'विद ज्ञाने' इह कत्रनिति नितं केचित्पठन्ति तत्प्रामादिकम्, 'बृहस्पते सुविदत्राणि राध्या' इत्यादौ नित्स्वरादर्शनात् । कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययस्वरस्यैव दर्शनाच्चेत्याहुः ॥ ( ४५९२ ) कृतेः—। 'कृती छेदने' अस्मात्कत्रः स्याद्धातोर्नुमागमश्च । 'धन्व च यत्कृन्तत्रं च' इति मन्त्रे कृन्तत्रं कर्तनीयमरण्यमिति वेदभाष्यम् ॥ ( ४५९३ ) भृमृ—।'भृञ् भरणे', 'मृङ् प्राणत्यागे', 'दृशिर् प्रेक्षणे', 'यज देवपूजादौ', 'पर्व पूरणे', 'डुपचष् पाके', 'अम गतौ', 'तमु काङ्क्षायाम्', 'णम प्रह्वत्वे शब्दे', 'हर्य गतिकान्त्योः' । दशपाद्यां तु 'भृदृशीङ्—'इति पठित्वा 'दृङ् आदरे' द्रियते दरतः शेते शयतः, इत्युदाहृतम् । तन्न, 'रुशन्तमग्निन्दर्शतं बृहतम्', 'तरणिर्विश्वदर्शतः', 'दैव्यो दर्शतो रथः' इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात् । 'भरतो नाट्यशास्त्रे मुनौ नटे । रामानुजे च दौष्यन्तौ' इति मेदिनी । यजतः ऋत्विगिति । उज्ज्वलदत्तानुरोधेन एवमुक्तम् । वेदभाष्ये तु 'निरण्यशम्यं यजतो बृहतम्' इत्यादिषु यजतशब्दो यष्टव्यपरतया व्याख्यातः । 'पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले' इति मेदिनी ॥ हर्यतोऽश्व इति । 'परित्यं हर्यतं हरिम्' इत्यादिमन्त्रेषु हर्यतः सर्वैः स्पृहणीय इति वेदभाष्यम् ॥ ( ४५९४ ) पृषि—। 'पृषु सेचने', 'रञ्ज रागे' आभ्यामतच् कित्स्यात् । 'पृषन् मृगे पुमान् बिन्दौ नद्वये पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी । 'रजतं त्रिषु शुक्लं स्यात् क्लीबे हारे च दुर्वर्णे' इति च ॥ ( ४५९५ ) खलतिः । 'स्खल संचलने' ॥ ( ४५९६ ) शीङ्शपि—। 'शीङ् स्वप्ने', 'शप आक्रोशे', 'रु शब्दे', 'गम्लृ गतौ', 'वञ्चु गतौ' भ्वादिः, 'वञ्चु प्रलम्भने' चुरादिः, 'जीव प्राणधारणे', 'अन प्राणने' प्रपूर्वः । उज्ज्वलदत्तेन 'वञ्चिजीवि—' इति पठ्यते, अन्यैस्तु वञ्चिस्थाने वन्दिः पठ्यते । वञ्चथवन्दथयोरन्यतरं वेदादुपलभ्य बहुश्रुतैः पाठो निर्णेयः ॥ वन्दथ इति । कर्मणि कर्तरि वा प्रत्ययः ॥ प्राणथ इति । 'अनितेः ३२९२' इति णत्वम् ॥ शमिदमिभ्या-

शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ॥ ( ४५९७ ) उ॰ भृञश्चित् ॥ भरथो लोकपालः ॥ ( ४५९८ ) उ॰ रुदिविदिभ्यां ङित् ॥ रोदितीति रुदथः शिशुः । वेत्तीति विदथः ॥ ( ४५९९ ) उ॰ उपसर्गे वसेः ॥ आवसथो गृहम् । संवसथो ग्रामः ॥ ( ४६०० ) उ॰ अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् ॥ त्रयोदशभ्योऽसच् स्यात् । अततीत्यतसो वायुरात्मा च । अवतीत्यवसो राजा भानुश्च । चमत्यस्मिन् चमसः सोमपानपात्रम् । ताम्यत्यस्मिन् तमसोऽन्धकारः । नमसः अनुकूलः । रभसो वेगहर्षयोः । लभसो धनं याचकश्च । नभति नभ्यति वा नभस आकाशः । तपसः पक्षी चन्द्रश्च । पतसः पक्षी । पनसः कण्टकिफलः । पणसः पण्यद्रव्यम् । महसं ज्ञानम् ॥ ( ४६०१ ) उ॰ वेञस्तुट् च ॥ बाहुलकादात्वाभावः । वेतसः ॥ ( ४६०२ ) उ॰ वहियुभ्यां णित् । वाहसोऽजगरः । यावसस्तृणसङ्घातः ॥ ( ४६०३ ) उ॰ वयश्च ॥ वय गतौ । वायसः काकः । ( ४६०४ ) उ॰ दिवः कित् । दिवसम् । दिवसः ॥ ( ४६०५ ) उ॰ कृशृशलिकलिगर्दिभ्योऽभच् ॥ करभः । शरभः । शलभः । कलभः गर्दभः ॥ ( ४६०६ ) उ॰ ऋषिवृषिभ्यां कित ॥ ऋषभः । वृषभः ॥ ( ४६०७ उ॰ रुषेर्निल्लुष् च ॥ रुष हिंसायाम् । अस्मादभच् नित्किरयात् लुषादेशश्च । लुषभो मत्तदन्तिनि ॥ ( ४६०८ ) उ॰ रासिवल्लिभ्यां च ॥ रासभः । वल्लभः ॥ ( ४६०९ ) उ॰ जॄविशिभ्यां झच् ॥ जरन्तो महिषः । वेशन्तः पल्वलम् ॥ ( ४६१० ) उ॰ रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥ रोहन्तो वृक्षभेदः । नन्दन्तः पुत्रः । जीवन्त औषधम् । प्राणन्तो वायुः । षित्वान् ङीष् । रोहन्ती ॥ ( ४६११ ) उ॰ तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥ दशभ्यो झच् स्यात्स च षित् । तरन्तः समुद्रः । तरन्ती नौका । भवन्तः कालः । वहन्तो वायुः । वसन्त ऋतुः । भासन्तः सूर्यः । साधन्तो भिक्षुः । गडेर्घटादित्वान्मित्त्वं ह्रस्वः । अर्थामन्तोति णेरयः ।

---

मिति । 'शम उपशमे', 'दमु उपशमे' । '**शमथः** शान्तिमन्त्रिणोः' इति मेदिनी । '**दमथस्तु** पुमान् दण्डे दमे च परिकीर्तितः' इति च ॥ ( ४५९७ ) **भृञः**—। 'डुभृञ् धारणपोषणयोः' अस्मादथः स्यात्स च चित् ॥ ( ४५९८ ) **रुदि**—। 'रुदिर् अश्रुविमोचने', 'विद ज्ञाने' आभ्यामथः स्यात्स च ङित् । '**विदथो** योगिकृत्तिनोः' इति मेदिनी । अत्रोज्ज्वलदत्तः—'रुविदिभ्यां कित्' इति पठित्वा रौतीति रुवथः श्वेत्युदाजहार । दशपादीवृत्तिकारस्तु 'रुदिविदिभ्यां कित्' इति पपाठ । इह तु भाष्यानुरोधेन ङिदिति पठितम् । तथा हि ग.ङ्कुटादिसूत्रे के पुनश्चङादयः । 'चङ्—अङ्—नजिङ्—अथङ्—नङः' इति भाष्यम् । किदिति पठतां तु अथङिति भाष्यं न सङ्गच्छेतेति दिक् ॥ ( ४५९९ ) **उप**—। 'वस निवासे' अस्मादुपसर्गे उपपदे अथः स्यात् । उज्ज्वलदत्तेन तु 'सोपसर्गाद्वसेः' इति पठितम् । अन्यैस्तु 'आङि वसेः' इति पठितम् ॥ ( ४६०० ) **अत्यवि**—। 'अत सातत्यगमने', 'अव रक्षणादौ', 'चमु अदने', 'तमु कांक्षायाम्', 'णम प्रह्वत्वे शब्दे', 'रभ राभस्ये', 'डुलभष् प्राप्तौ', 'णभ तुभ हिंसायाम्', भ्वादौ क्र्यादौ चायम् , 'तप सन्तापे', 'पत्लृ गतौ', 'पण व्यवहारे स्तुतौ च', 'पन च', 'मह पूजायाम्' । गौरादित्वात् ङीष् । '**अतसी** स्यादुमा क्षुमा' इत्यमरः । '**चमसो** यज्ञपात्रस्य भेदे स्त्री पिष्टके स्त्रियाम्' इति मेदिनी । '**पनसः** कण्टकिफले कन्दके वानरान्तरे । स्त्रियां रोगप्रभेदे स्यात्' इति च ॥ ( ४६०१ ) **वेञः**—। 'वेञ् तन्तुसंताने' अस्मादसच् स्यात्तस्य तुट् । दशपादीवृत्तौ तु 'वियस्तुट् च' इति पठित्वा 'वी गतिप्रजनकान्त्यादिषु' इति धातुरुदाहृतः ॥ ( ४६०२ ) **वहि**—। 'वह प्रापणे', 'यु मिश्रणादौ' । 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः । 'वा तु क्लीबे दिवसवासरौ' इति च ॥ **यावस इति** । असचो णित्त्वाद् वृद्धिः ॥ ( ४६०४ ) **दिवः**—। 'दिवु क्रीडादौ' ( ४६०५ ) **कृशृ**—। 'कॄ विक्षेपे', 'शॄ हिंसायाम्', 'शल गतौ', 'कल गर्द शब्दे' । ' मणिबन्धादाकनिष्ठं करस्य **करभो** बहिः ' इत्यमरः । ' **करभो** मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' इति मेदिनी । 'समौ पतङ्गशलभौ' इत्यमरः । '**शरभस्तु** पशोर्भिदि । '**करभो** वानरभिदि' इति मेदिनी । '**कलभः** करिपोतके' इति च । '**गर्दभः** श्वेतकुमुदे **गर्दभो** गन्धभिद्यपि । रासभे **गर्दभी** क्षुद्रजन्तुरोगप्रभेदयोः' इति मेदिनी ॥ ( ४६०६ ) **ऋषि**—। 'ऋषी गतौ', 'वृषु सेचने' आभ्यां अभच्स्यात्स च कित् । '**ऋषभस्त्वौषधान्तरे** । स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छयोः । उत्तरस्थः स्मृतः श्रेष्ठे स्त्री नराकारयोषिति । शूकशिम्ब्यां शिरालायां विधवायां क्वचिन्मता' इति मेदिनी । '**वृषभः** श्रेष्ठवृषयोः' इति च ॥ ( ४६०८ ) **रासिवल्लि**—। 'रासृ शब्दे', 'वल्ल संवरणे' । '**वल्लभो** दयितेऽध्यक्षे सुलक्षणतुरङ्गमे' इति मेदिनी ॥ ( ४६०९ ) **जॄविशि**—। 'जॄ वयोहानौ', 'विश प्रवेशने' । '**वेशन्तः** पल्वलं चाल्पसरः' इत्यमरः । बाहुलकादर्हतेरपि झच् । '**अर्हन्तः** क्षपणको जिनः' इति विक्रमादित्यकोशः ॥ ( ४६१० ) **रुहि**—। 'रुह बीजजन्मनि', 'टुनदि समृद्धौ', 'जीव प्राणधारणे', 'अन प्राणने' प्रपूर्वः । एभ्यः आशिषि झच् स च षिद्भवति ॥ **प्राणन्त इति** । 'अनितेः ३२९२' इति णत्वम् ॥ ( ४६११ ) **तॄभू**—। 'तॄ प्लवनतरणयोः', 'भू सत्तायाम्', 'वह प्रापणे', 'वस निवासे', 'भासृ दीप्तौ', 'साध संसिद्धौ', 'गड सेचने'

---

१ अग्रिम—'दिवः कित्' इति सूत्रोदाहरणदिवसशब्दस्यात्रैव कोषोल्लेखस्तु पूर्वत्र 'इत्यमरः' इत्युक्त्या चकारेणैवास्याप्यमरोक्तित्वबोधाय ॥

गण्डयन्तो जलदः। मण्डयन्तो भूषणम्। जयन्तः शक्रपुत्रः। नन्दयन्तो नन्दकः॥ (४६१२) उ० हन्तेर्मुट् हि च॥ हेमन्तः॥ (४६१३) उ० भन्देर्नलोपश्च ॥ भदन्तः प्रव्रजितः॥ (४६१४) उ० ऋच्छेररः॥ ऋच्छरा वेश्या। बाहुलकाज्जर्जर-झर्झरादयः॥ (४६१५) उ० अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित्॥ षड्भ्योऽरश्चित् स्यात्। अररं कपाटम्। कमरः कामुकः। भ्रमरः। चमरः। देवरः। वासरः॥ (४६१६) उ० कुवः क्ररन्॥ कुररः पक्षिभेदः॥ (४६१७) उ० अङ्गिमदिमन्दिभ्य आरन्॥ अङ्गारः। मदारो वराहः। मन्दारः॥ (४६१८) उ० गडेः कड च॥ कडारः पारिजातकः॥ (४६१९) उ० शृङ्गारभृङ्गारौ॥ शृभृञ्भ्यामारन्नुम् गुक् ह्रस्वश्च। शृङ्गारो रसः। भृङ्गारः कनकालुका॥ (४६२०) उ० कञ्जिमृजिभ्यां चित्॥ कञ्जिः सौत्रो धातुः। कञ्जारो मयूरः। मार्जारः॥ (४६२१) उ० कमेः किदुच्चोपधायाः॥ चिदित्यनुवृत्तेरन्तोदात्तः। कुमारः॥ (४६२२) उ० तुषारादयश्च॥ तुषारः। कासारः। सहार आम्रभेदः॥ (४६२३) उ० दीङो नुट् च॥ दीनारः सुवर्णाभरणम्॥ (४६२४) उ० सर्तेरपः षुक् च॥ सर्षपः॥ (४६२५) उ० उषिकुटिदलिकचिखजिभ्यः कपन्॥ उषपो वह्निसूर्ययोः। कुटपो मानभाण्डम्। दलपः प्रहरणम्। कचपं शाकपत्रम्। खजपं घृतम्॥ (४६२६) उ० क्वणेः संप्रसारणं च॥ कुणपम्॥ (४६२७) उ० कपश्चाक्रवर्म्मणस्य॥ स्वरे भेदः॥ (४६२८) उ० विटपविष्टपविशिपोलपाः॥ चत्वारोऽमी कपन्प्रत्ययान्ताः। विट शब्दे। विटपः। विशतेरादेः पः। प्रत्ययस्य तुट् षत्वम्। पिष्टपं भुवनम्। विशतेः प्रत्ययादेरित्वम्। विशिपं मन्दिरम्॥ वलतेः संप्रसारणम्। उलपं कोमलं तृणम्॥ (४६२९) उ० वृते-

---

'मडि भूषायाम्', उभौ ण्यन्तौ, 'जि जये', 'टुनदि समृद्धौ' ण्यन्तः॥ **नन्दयन्त इति**। उज्ज्वलदत्तस्तु नन्दन्त इत्युदाहृत्य पूर्वसूत्रेण गतार्थमाशङ्क्य अनाशीरर्थं नन्दिग्रहणमित्याह। तच्चिन्त्यम् इहाप्याशिषीत्यस्य स्वयमेवानुवर्तितत्वात्॥ (४६१२) **हन्तेः**-। 'हन हिंसागत्योः' अस्मात् झच् प्रत्ययः स्यात्तस्य मुडागमः धातोर्हिंशब्दादेशश्च॥ (४६१३) **भन्देः**-। 'भदि कल्याणे सुखे च' अस्मात् झच् स्याद्धातोर्नकारलोपश्च॥ (४६१४) **ऋच्छेः**-। 'ऋच्छ गतौ'॥ **बाहुलकादिति**। 'जर्ज चर्च झर्झ परिभाषणहिंसातर्जनेषु' परिभाषणभर्त्सनयोरिति तुदादौ। '**जर्जरं** शैवले शक्रध्वजे त्रिषु जरत्तरे'। '**झर्झरः** स्यात्कलियुगे वाद्यभेदे नदांतरे' इति च मेदिनी। बाहुलकादेव झस्य जादेशे जर्झर इत्युज्वलदत्तः॥ (४६१५) **अर्तिकमि**-। 'ऋ गतौ', 'कमु कान्तौ', 'भ्रमु अनवस्थाने', 'चमु अदने', 'दिवु क्रीडादौ', 'वस निवासे' उभावपि ण्यन्तौ। '**अररं** छदकपाटयोः' इति मेदिनी। 'कपाटमररं तुल्ये' इत्यमरः। '**भ्रमरः** कामुके भृङ्गे' इति मेदिनी। '**चमरं** चामरे स्त्री तु मञ्जरीमृगभेदयोः' इति च। चमरो मृगभेदः। देवरः पत्युः कनिष्ठभ्राता। **वासर इति**। केचित्तु सूत्रे 'वाशिभ्यः' इति तालव्यं पठित्वा 'वाशृ शब्दे' इत्यस्मादरप्रत्ययो वाश्यत इति वाशरः कोकिल इत्याहुः॥ (४६१६) **कुवः**-। 'कु शब्दे'॥ (४६१७) **अङ्गि**-। 'अगिर्गत्यर्थः', 'मदी हर्षे', 'मदि स्तुत्यादौ'। '**अङ्गार** उल्मुके न स्त्री पुँल्लिङ्गस्तु महीसुते' इति मेदिनी। '**मन्दारः** स्यात्सुरद्रुमे। पारिभद्रेऽर्कपर्णे च **मन्दारो** हस्तिधूर्तयोः' इति च। 'मदि स्तुत्यादौ' इत्यस्माद्बाहुलकादारुरपि। 'पारिभद्रे तु **मन्दारु**र्मन्दारः पारिजातकः' इति शब्दार्णवः॥ (४६१८) **गडेः**-। 'गडि वदनैकदेशे', 'गड सेचने' अस्मादारन्प्रत्ययः स्यात्कडादेशश्च। '**कडारः** कपिले दासे' इति मेदिनी। '**कडारः** कपिलः पिङ्गः' इत्यमरः॥ (४६१९) **शृङ्गार**-। एतौ निपात्येते। 'शॄ हिंसायाम्', 'डुभृञ् धारणपोषणयोः' आभ्यामारन्नुम् गुग् ह्रस्वश्च। '**शृङ्गारः** सुरते नाट्ये रसे च गजमण्डने। नपुंसकं लवङ्गेऽपि नागसंभवचूर्णयोः' इति मेदिनी। '**भृङ्गारी** झिल्लिकायां स्यात्कनकालौ पुनः पुमान्' इति च॥ (४६२०) **कञ्जि**-। 'मृजू शुद्धौ'। चित्त्वादारन्प्रत्ययः अन्तोदात्तः। '**कञ्जारो** जठरे सूर्ये विरिञ्चौ वारणे मुनौ' इति विश्वमेदिन्यौ। '**मार्जार** ओतौ खट्टाङ्गे' इति च। 'ओतुर्बिडालो **मार्जारः**' इत्यमरः॥ (४६२१) **कमेः**-। 'कमु कान्तौ' अस्मादारन्कित्स्यात्। '**कुमारः** स्याच्छुके स्कन्दे युवराजेऽश्ववारके। बालके वरुणादौ ना न द्वयोर्जात्यकाञ्चने। **कुमारी** शैलतनयावनकाल्योर्नदीभिदि। सहापराजिताकन्याजम्बूद्वीपेषु च स्त्रियाम्' इति मेदिनी। विश्वप्रकाशे तु '**कुमारी** रामतरणी' इति पाठः। रामतरणी लताविशेषः सेहेति प्रसिद्धः। 'तरणी रामतरणी कर्णिका चारुकेसरा। सहा **कुमारी** गन्धाढ्या' इति धन्वन्तरिनिघण्टुः। 'जम्बूद्वीपसहाकन्याकुमार्योऽथाश्ववारके। बालके कार्त्तिकेये च **कुमारो** भर्तृदारके' इति त्रिकाण्डशेषः॥ (४६२२) **तुषारा**-। एते निपात्यन्ते। 'तुष तुष्टौ' आरन्। '**तुषारस्तुहिनं** हिमम्' इत्यमरः। 'कासृ शब्दकुत्सायाम्'। '**कासारः** सरसी सरः' इत्यमरः॥ **सहार इति**। 'षह मर्षणे'॥ (४६२३) **दीङो**-। 'दीङ् क्षये' अस्मादारन् तस्य नुडागमश्च॥ (४६२४) **सर्तेः**-। 'सृ गतौ' अस्मादपः स्याद्धातोः षुगागमश्च॥ (४६२५) **उषि**-। 'उष दाहे', 'कुट कौटिल्ये', 'दल विदारणे', 'कच बन्धने', 'खज मन्थे'॥ (४६२६) **क्वणेः**-। 'क्वण शब्दे' अस्मात्कपन् धातुवकारस्य संप्रसारणञ्च। '**कुणपः** पूतिगन्धे शवेऽपि च' इति मेदिनी। '**कुणपः** शवमस्त्रियाम्' इत्यमरः॥ (४६२८) **विटप**-। '**विटपो** न स्त्रियां स्तम्बशाखाविस्तारपल्लवे। विटाधिपे ना' इति मेदिनी॥ **विशतेरिति**। 'विश प्रवेशने'॥ **आदेः प इति**। एतच्च उज्ज्वलदत्तरीत्योक्तम्। अन्ये तु सूत्रे 'विष्टप' इति दन्त्योष्ठ्यादिमेव पठन्ति। युक्तञ्चैतत्। 'अत्र भ्रमस्य विष्टपम्' इत्यादौ तथा दर्शनात्। अमरकोशेऽपि 'विष्टपं भुवनं जगत्' इति प्रचुरपाठः॥ **वलतेरिति**।

स्तिकन् ॥ वर्तिका ॥ (४६३०) ॐ कृतिभिदिलतिभ्यः कित् ॥ कृत्तिका। भित्तिका भित्तिः। लत्तिका गोधा ॥ (४६३१) ॐ इष्यशिभ्यां तकन् ॥ इष्टका। अष्टका ॥ (४६३२) ॐ इणस्तशन्तशसुनौ ॥ एतशो ब्राह्मणः। स एव एतशाः ॥ (४६३३) ॐ वीपतिभ्यां तनन् ॥ वी गत्यादौ। वेतनम्। पत्तनम् ॥ (४६३४) ॐ दृदलिभ्यां भः ॥ दर्भः। दल्भः स्यादृषिचक्रयोः ॥ (४६३५) ॐ अर्तिगृभ्यां भन् ॥ अर्भः। गर्भः। (४६३६) ॐ इणः कित् ॥ इभः ॥ (४६३७) ॐ असिसञ्जिभ्यां क्थिन् ॥ अस्थि। सक्थि ॥ (४६३८) ॐ प्लुषिकुषिशुषिभ्यः क्सिः ॥ प्लुक्षिर्वह्निः। कुक्षिः। शुक्षिर्वातः ॥ (४६३९) ॐ अशेर्नित् ॥ अक्षि ॥ (४६४०) ॐ इषेः क्सुः ॥ इक्षुः ॥ (४६४१) ॐ अविनृस्तृतन्त्रिभ्य ईः ॥ अवीर्नारी रजस्वला। तरीर्नौः। स्तरीर्धूमः। तन्त्रीर्वीणादेर्गुणः ॥ (४६४२) ॐ यापोः किद्द्वे च ॥ ययीरश्वः। पपीः स्यात्सोमसूर्ययोः ॥ (४६४३) ॐ लक्षेर्मुट् च ॥ लक्ष्मीः ॥ इत्युणादिषु तृतीयः पादः ॥

(४६४४) ॐ वातप्रमीः ॥ वातशब्दे उपपदे प्रपूर्वान्माधातोरीप्रत्ययः स च कित्। वातप्रमीः ॥ अयं स्त्रीपुंसयोः ॥ (४६४५) ॐ ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निज्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः ॥ द्वादशभ्यः क्रमात्स्युः। अर्तेः कत्निच् यण्। बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृता-

---

'वल वल्ल संवरणे संचरणे च'। 'उलपो ना स्त्री गुल्मिन्यां ना तृणान्तरे' इति मेदिनी ॥ (४६२९) वृतेः—। 'वृतु वर्तने' ॥ (४६३०) कृतिभिदि—। 'कृती छेदने', 'भिदिर् विदारणे' 'लतिः' सौत्रो धातुः ॥ (४६३१) इष्यशि—। 'इष इच्छायाम्', 'अशू व्याप्तौ' आभ्यां तकन् कित्स्यात् ॥ इष्टकेति। 'इष्टकेषीकामालानाम्–१४४४' इति निर्देशात् प्रत्यय स्थात्–६३०' इति नेत्वम्[1]। केचित्तु 'प्रत्ययस्थात्–६३०' इतीत्वमिह न भवत्यनित्यत्वात्। तज्ज्ञापकं तु 'मृदस्तिकन् २८४३' इति इकारोच्चारणमित्याहुः ॥ (४६३२) इणस्तश—। एतशा इति। 'अत्वसन्तस्य–५७०' इति दीर्घः। एतशसौ। एतशसः ॥ (४६३३) वीपति—। 'पत्लृ गतौ'। 'पत्तनं पुटभेदनम्' इति पुरीपर्यायेष्वमरः ॥ (४६३४) दृदलि—। 'दृ विदारणे', 'दल विकसने' ॥ (४६३५) अर्तिगृ—। 'ऋ गतौ'। इयर्तीति अर्भः शिशुः। संज्ञायां कनि अर्भकः। 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इति मेदिनी ॥ (४६३६) इणः—। 'इण् गतौ' अस्माद्भन् कित्स्यात्। 'इभः स्तम्बेरमः पद्मी' इत्यमरः ॥ (४६३७) असि—। 'असु क्षेपणे', 'षञ्ज सङ्गे'। 'कीकसं कुल्यमस्थि च' इत्यमरः। 'सक्थि क्लीबे पुमानूरुः' इति च ॥ (४६३८) प्लुषि—। 'प्लुष दाहे', 'कुष निष्कर्षे', 'शुष शोषणे' ॥ (४६३९) अशेः—। 'अशू व्याप्तौ' अस्मात् क्सिर्नित्स्यात्। अक्षि नयनम् ॥ (४६४०) इषेः—। 'इष इच्छायाम्'। 'रसाल इक्षुः' इत्यमरः ॥ (४६४१) अवि—। 'अव रक्षणादौ', 'तॄ प्लवनतरणयोः', 'स्तृञ् आच्छादने', 'तन्त्रि कुटुम्बधारणे' चुरादिण्यन्तः ॥ तरीरिति। 'स्त्रियां नौस्तरणिस्तरीः' इत्यमरः ॥ (४६४२) यापोः—। 'या प्रापणे', 'पा पाने' आभ्यामीः कित्स्यात् द्वित्वं च धातोः ॥ (४६४३) लक्षेः—। 'लक्ष दर्शनाङ्कनयोः' चुरादिण्यन्तः, अस्मादीप्रत्ययः स्यात्तस्य मुडागमो णिलोपश्च। 'लक्ष्मीः पद्मा विभूतिश्च'। 'कृदिकारात्–७०८' इति ङीषि लक्ष्मी इत्यपि भवतीति रक्षितः। 'लक्ष्मीः संपत्तिशोभयोः। ऋद्ध्यौषधौ च पद्मायाम्' इति मेदिनी ॥

इत्युणादिषु तृतीयः पादः ॥

(४६४४) माधातोरिति। 'मा माने' कित्वात् 'आतो धातोः ३४४' इत्यालोपः[2]। 'वातप्रमीर्वातमृगः' इत्यमरः। अयमिति। 'द्विचतुःषट्पदोरगाः' इत्यमरेण चतुष्पाद्वाचिनामुभयलिङ्गतोक्तेः। सुभूतिचन्द्रादिभिरपि वातप्रमीशब्दस्य द्विलिङ्गतोक्तेश्चेति भावः ॥ तत्र 'कृदिकारात्–७०८' इति पाक्षिको ङीष् कैश्चिदिष्यते। न च ह्रस्वादेव 'कृदिकारात्–७०८' इति ङीष् भवति न तु दीर्घादिति शङ्क्यम्, वर्णनिर्देशे कारप्रत्ययस्य विधानेन दीर्घादपि 'कृदिकारात्–७०८' इति ङीष्संभवात्। अत एव 'वातप्रमीश्रीलक्ष्मीति पक्षे ङ्यन्ताः सुसाधवः' इति रक्षितः। एतच्च दुर्घटग्रन्थे स्पष्टम्। 'आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशः। अत एव 'आशीविषो विषधरः' इत्यमरकोशः सङ्गच्छते। 'अश भोजने' इत्यस्मात् 'इणजादिभ्यः ५०९९' इति इण्प्रत्यये उपधावृद्धौ 'कृदिकारात्–७०८' इति ङीषः स्वीकारात् आशीति च। 'आशीमिव कलामिन्दोः' इति राजशेखरः। 'आशीर्हिताशंसाहिदंष्ट्रयोः' इति सान्तेऽमरात्सान्तोऽप्याशिस्शब्दोऽस्तीत्यन्येदेतत् ॥ (४६४५) ऋतनि—। 'ऋ गतौ', 'तनु विस्तारे', 'अञ्जू व्यक्त्यादौ', 'वनु याचने', 'अञ्जू स एव', 'ऋ गतौ' ण्यन्तः, 'मदी हर्षे', 'अत सातत्यगमने', 'अगि गत्यर्थः', 'कुशब्दे', 'यु मिश्रणे', 'कृश तनूकरणे'। प्रसङ्गादाह—अरत्निरिति। न रत्निः अरत्निरिति नञ्समासः। प्रसृताङ्गुलिः स हस्त अरत्निरित्यर्थः। दशपादीवृत्तौ तु कत्निजित्यत्र ककारमपठित्वा अर्ते-

---

1 नेत्वमिति। उणादीनामव्युत्पन्नत्वादिति तु तत्त्वम् ॥ 2–'न हि कारग्रहणे केवलग्रहणम्' इति मुनित्रयेण परिभाषितम्–इति मनोरमा॥ 3 'आतो धातोः' इत्यस्य भसंज्ञां विना प्रवृत्तेर्दुरुपपादत्वाच्चिन्त्यमेतत्। 'आतो लोपः–' इति तु न्याय्यम्॥

ङ्गुलिः । तनोतेर्यतुच् । तन्यतुर्वायू रात्रिश्च । अञ्जेरलिच् । अञ्जलिः । वनेरिष्ठुच् । वनिष्ठुः स्थविरान्त्रम् । अञ्जेरिष्ठच् । अञ्जिष्ठो भानुः । अर्पयतेरिसन् । अर्पिसोऽग्रमांसम् । मदेः स्यन् । मत्स्यः । अतेरिथिन् । अतिथिः । अङ्गेरुलिः अङ्गुलिः । कौतेरसः । कवसः । अच इत्येके । कवचम् । यौतेरासः । यवासो दुरालभा । कृशेरानुक् कृशानुः ॥ ( ४६४६ ) (उ०) **शः करन्** ॥ उत्तरसूत्रे किद्ग्रणादिह ककारस्य नेत्त्वम् । शर्करा ॥ ( ४६४७ ) (उ०) **पुषः कित्** ॥ पुष्करम् ॥ ( ४६४८ ) (उ०) **कलंश्च** ॥ पुष्कलम् ॥ ( ४६४९ ) (उ०) **गमेरिनिः** ॥ गमिष्यतीति गमी ॥ ( ४६५० ) (उ०) **आङि णित्** ॥ आगामी ॥ ( ४६५१ ) (उ०) **भुवश्च** ॥ भावी ॥ ( ४६५२ ) (उ०) **प्रे स्थः** ॥ प्रस्थायी ॥ ( ४६५३ ) (उ०) **परमे कित्** ॥ परमेष्ठी ॥ ( ४६५४ ) (उ०) **मन्थः** ॥ मन्थतेरिनिः कित्स्यात् । कित्त्वान्नकारलोपः । मन्थाः । मन्थानौ । मन्थानः ॥ ( ४६५५ ) (उ०) **पतस्थ च** ॥ पन्थाः । पन्थानौ ॥ ( ४६५६ ) (उ०) **खजेराकः** ॥ खजाकः पक्षी ॥ ( ४६५७ ) (उ०) **बलाकादयश्च** ॥ बलाका । शलाका । पताका ॥ ( ४६५८ ) (उ०) **पिनाकादयश्च** ॥ पातेरित्त्वं नुम् च । क्लीबपुंसोः पिनाकः स्यात् शूलशङ्करधन्वनोः । तड आघाते । तडाकः ॥ ( ४६५९ ) (उ०) **कषिदूषिभ्यामीकन्** ॥ कषीका पक्षिजातिः । दूषीका नेत्रयोर्मलम् ॥ ( ४६६० ) (उ०) **अनिहृषिभ्यां किच्च** ॥

---

रलिचमकितं विधाय अरत्निः साधितः॥ उज्ज्वलदत्तानुसारेणाह—**वायू रात्रिश्चेति** । तन्यतुः—शब्दो, मेघः, अशनिश्चेत्यपि बोध्यम् । 'आविष्कृणोमि तन्यतुर्न वृष्टिम्' इति मन्त्रे तन्यतुर्गर्जितमिति, 'सृजावृष्टिर्न तन्यतुः' इति मन्त्रे तन्यतुर्मेघ इति, 'उतस्मास्यतन्यतोरिव द्यौः' इति मन्त्रे, 'दिवश्चिन्नन्न तन्यतुम्' इति मन्त्रे, च तन्यतुरशनिरिति वेदभाष्ये व्याख्यातत्वात् । 'अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि च' इति मेदिनी॥ **स्थविरान्त्रमिति** । 'वनिष्ठोर्हृदयादधि' इति मन्त्रभाष्ये तथोक्तत्वात् । **अञ्जिष्ठ इति** । केचिदञ्जेरिष्णुचमिच्छन्ति, तेषामजिष्णुरुदाहरणम् ॥ **अर्पिस इति** । 'अर्तिह्री—३४०५' इत्यादिना पुक् 'णेरनिटि ३०८८' इति णिलोपः ॥ **मदेरिति** । '**मत्स्यो** मीनेऽथ पुम्भूम्नि देशे' इति मेदिनी । '**अतिथिः** कुशपुत्रे स्यात्पुमानागन्तुके त्रिषु' इति च । '**अङ्गुलिः** करशाखायां कर्णिकायां गजस्य च' इति च ॥ **कवसः** संनाहः कंकटजातिश्च ॥ **अच इति** । '**कवचो** गर्दभाण्डे च संनाहे पर्पटेऽपि च' इति मेदिनी ॥ **यौतेरिति** । 'दुरालभा कटुस्पर्शा यासो धन्वयवासकः' इति धन्वन्तरिनिघण्टुः । '**कृशानुः** पावकोऽनलः' इत्यमरः ॥ ( ४६४६ ) **शः**—। 'शॄ हिंसायाम्' ॥ '**शर्करा** खण्डविकृतावुपलाशर्करांशयोः । शर्करान्वितदेशे च रुग्भेदे शकलेऽपि च' इति मेदिनी ॥ ( ४६४७ ) **पुषः**—। 'पुष पुष्टौ' अस्मात्करन्स्यात्स च कित् । '**पुष्करं** खेऽम्बुपद्मयोः॥ तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः । कुष्ठौषधिद्वीपतीर्थभेदयोश्च नपुंसकम् । ना रागनागविहगनृपभेदेषु वारुणौ' इति मेदिनी ॥ ( ४६४८ ) **कलंश्च** । पुष्यतेः कलन् स च कित् । '**पुष्कलस्तु** पूर्णे श्रेष्ठे' इति हेमचन्द्रः ॥ ( ४६४९ ) **गमेः**—। 'गम्लृ गतौ' । 'भविष्यति गम्यादयः ४९५८' इत्याशयेनाह—**गमिष्यतीति** ॥ ( ४६५० ) **आगामीति** । इनिप्रत्ययस्य णित्त्वादुपधावृद्धिः । आगमिष्यतीत्यर्थः ॥ ( ४६५१ ) **भुवश्च** । 'भू सत्तायाम्' अस्मादिनिः स च णित्स्यात् । भविष्यतीति भावी ॥ ( ४६५२ ) **प्रे स्थः** । 'ष्ठा गतिनिवृत्तौ' प्रपूर्वादस्मादिनिः स च णित् । णित्त्वात् 'आतो युक्—३६८५' इति युक् । प्रस्थायी गन्तुकामः ॥ ( ४६५३ ) **परमे**—। परमशब्दे उपपदे तिष्ठतेरिनिः कित्स्यात् । कित्त्वादातो लोपः 'हलदन्तात्—१३८६' इत्यलुक् । '**परमेष्ठी** पितामहः' इत्यमरः॥ ( ४६५४) **मन्थः** । 'मन्थ विलोडने' ॥ **मन्था इति** । 'पथिमथि—४९५' इत्यात्वम् । 'इतोऽत्सर्वनामस्थाने ४९६' '**मन्था** मन्थनदण्डे च वज्रे वातेऽपि च स्मृतः' ॥ ( ४६५५) **पतः**—। 'पत्लृ गतौ' इत्यस्मादिनिः, थश्चान्तादेशः । 'पथे गतौ' इत्यस्मात्पचाद्यचि अकारान्तोऽप्यस्ति । 'वाटः पथश्च मार्गश्च' इति सुभूतिचन्द्रः । 'त्वचि त्वचः किरोऽपि स्यात्किरौ प्रोक्तः पथः पथि' इति द्विरूपेषु विश्वः । इह ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे 'अन्येभ्योऽपि दृश्यते ४७५१' इति उः । '**ऋभुक्षः** स्वर्गवज्रयोः' इति विश्वः । ततो मत्वर्थीयेनिः, ऋभुक्षिन्निति नान्तं प्रातिपदिकम् । 'पथिमथि—४९५' इत्यात्वे, 'इतोऽत्—४९६' इत्यत्त्वे च ऋभुक्षा इन्द्रः ऋभुक्षाणौ ऋभुक्षाण इत्युज्ज्वलदत्तः । दशपाद्यां तु 'अर्तेः भुक्षिनक्' इति सूत्रमुपन्यस्य ऋभुक्षिन्नित्युदाहृतम् । 'ऋभुक्षिणमिन्द्रमाहुव ऊतये' इति मन्त्रस्य वेदभाष्ये तत्सूत्रमुदाहृतम् । अत्रायं विवेकः—इनिप्रत्ययान्ता इति मते अन्तोदात्तत्वं न्याय्यं, प्रत्ययस्वरेण इनेरिकारस्योदात्तत्वात् । अवग्रहाभावो बाहुलकात् । द्वितीयमते त्ववग्रहाभावो न्याय्यः, परन्तु प्रत्ययस्वरेणोकारस्योदात्ततया भुक्षिनक्प्रत्ययान्तस्य मध्योदात्तत्वे प्रसक्ते बाहुलकादन्तोदात्तः स्वीकर्तव्य इति ॥ ( ४६५६ ) **खजेः**—। 'खज मन्थे' ॥ ( ४६५७ ) **बलाका**—। 'बल प्राणने', 'शल गतौ', 'पत्लृ गतौ' एते आकप्रत्ययान्ता निपात्यन्ते । '**बलाका** बकपङ्क्तिः स्याद्बलाका बिसकण्ठिका । **बलाका** कामुकी प्रोक्ता बलाकश्च बको मतः' इति विश्वशाश्वतौ । '**शलाका**ऽञ्जनयष्टिका' '**पताका** वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च' इति विश्वः । '**पताका** वैजयन्त्यां च सौभाग्ये नाटकाङ्कयोः' इति मेदिनी । ( ४६५८ ) **पिनाका**—। एते आकप्रत्ययान्ता निपात्यन्ते । 'पा रक्षणे' । '**पिनाको**ऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः' इति मेदिनी ॥ अमरोक्तिमाह—**क्लीबपुंसो**रिति ॥ किंच, 'पिष्लृ संचूर्णने' षकारस्य णत्वं धातोर्यगागमः । '**पिण्याको**ऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके' इति मेदिनी ॥ ( ४६५९ ) **कषि**—। 'कष खष—' इति दण्डके हिंसार्थकः, 'दुष वैकृत्ये' ण्यन्तः, 'दोषो णौ ३४५९'

अनीकम् । हृषीकम् ॥ ( ४६६१ ) ॐ चङ्कणः कङ्कणश्च ॥ कण शब्दे अस्माद्यङ्लुगन्तादीकन् धातोः कङ्कणादेशश्च । घण्टिकायां कङ्कणिका सैव प्रतिसराऽपि च ॥ ( ४६६२ ) ॐ शॄपॄवृञां द्वे रुक्चाभ्यासस्य ॥ शर्शरीको हिंस्रः । पर्परीको दिवाकरः । वर्वरीकः कुटिलकेशः ॥ ( ४६६३ ) ॐ फर्फरीकादयश्च ॥ स्फुर स्फुरणे अस्मादीकन् धातोः फर्फरादेशः । फर्फरीकं किसलयम् । दर्दरीकं वादित्रम् । झर्झरीकं शरीरम् । तित्तिडीको वृक्षभेदः । चरेर्नुम् च । चञ्चरीको भ्रमरः । मर्मरीको हीनजनः । कर्करीका गलन्तिका । पुणतेः पुण्डरीकं वादित्रम् । पुण्डरीको व्याघ्रोऽग्निर्दिग्गजश्च ॥ ( ४६६४ ) ॐ ईषेः किद्ध्रस्वश्च ॥ इषीका शलाका ॥ ( ४६६५ ) ॐ ऋजेश्च ॥ ऋजीकः उपहतः ॥ ( ४६६६ ) ॐ सर्तेर्नुम् च ॥ सृणीका लाला ॥ ( ४६६७ ) ॐ मृडः कीकन्कङ्कणौ ॥ मृडीको मृगः । मृगङ्कुणः शिशुः ॥ ( ४६६८ ) ॐ अलीकादयश्च ॥ कीकनन्ता निपात्यन्ते । अल भूषणादौ । अलीकं मिथ्या । विपूर्वाद्व्यलीकं विप्रियं खेदश्च । वलीकं पटलप्रान्ते इत्यादि ॥ ( ४६६९ ) ॐ कृतॄभ्यामीषन् ॥ करीषोऽस्त्री शुष्कगोमये । तरीषः तरीता ॥ (४६७० ) ॐ शॄपॄभ्यां किच्च ॥ शिरीषः । पुरी-

---

इत्युपधाया ऊकारः ॥ अमरोक्तिमाह—दूषिकेति । किंच, अञ्चतेऽपि ईकनि दूषयतेः 'अचः इः ४७८४' इति इप्रत्यये दूषिः । कृदिकारात्—७०८' इति ङीषि दूषी । उभाभ्यामपि स्वार्थे कनि दूषिका ह्रस्वमध्यैव 'केऽणः ११९९' इति ङीषोऽपि ह्रस्वादेशात् । 'पिचण्डी दूषिका दूषी पिचाटं च दृशोर्मलम्' इति विक्रमादित्यकोशः । 'दूषिका तूलिकायां च मले स्याल्लोचनस्य च' इति मेदिनी ॥ ( ४६६० ) अनिहृषि—। 'अन प्राणने', 'हृष तुष्टौ' आभ्यामीकन्स्यात् स च कित् । 'अनीकोऽस्त्री रणे सैन्येऽपि' इति मेदिनी । 'हृषीकं विषयीन्द्रियम्' इत्यमरः ॥ ( ४६६१ ) चङ्कणः—। कणधातोर्यङ्लुकि प्रत्ययलक्षणन्यायेन 'सन्यङोः ३१९६' इति द्वित्वे 'कुहोश्चुः ३००५' इत्यभ्यासस्य चुत्वे 'नुगतोऽनुनासिकान्तस्य ३५१०' इति नुकि चकणु, ङसिङसोश्च चङ्कणः ॥ धातोरिति । चकणित्यस्य ॥ ( ४६६२ ) शॄपॄ—। 'शॄ हिंसायाम्' 'पॄ पालनादौ', 'वृञ् वरणे' एभ्य ईकन् एषां द्विर्वचनमभ्यासस्य रुगागमश्च ॥ शर्शरीक इत्यादि । 'उरदत्त्वे रपरत्वम् ॥ (४६६३ ) फर्फरीकाद—। ईकनंता एते निपात्यन्ते । फर्फरादेश इति । एतच्चोज्ज्वलदत्तरीत्योक्तम् । वस्तुतस्तु 'धातोर्द्वित्वमुकारस्याकारः सलोपः रुक् चाभ्यासस्य' इति दशपाद्यां यदुक्तं तदेव न्याय्यम् । 'चरेर्नुम् च' इत्युत्तरग्रन्थानुरोधेन 'द्वे रुक् च' इत्याद्यनुवृत्तेर्न्याय्यत्वात् ॥ किसलयमिति । 'नैतौ शवतुर्फरीपर्फरीकौ' इति मन्त्रस्य वेदभाष्ये तु 'त्रिफला विशरणे', 'पॄ पालनपूरणयोः', 'पर्व पुर्व पूरणे' एषामन्यतमस्य निपातनम् इत्याश्रित्य शत्रूणां विदारयितारौ स्तोतॄणां पालको इष्टार्थस्य पूरयितारौ चेति व्याख्यातम् ॥ दर्दरीकमिति । 'दॄ विदारणे' अस्मादीकन्धातोर्दर्दरादेशः ॥ झर्झरीकमिति । 'झॄष् वयोहानौ' अस्मादीकन्धातोर्झर्झरादेशः । वस्तुतस्तु दर्दरीकझर्झरीकावपि पर्फरीकवत् 'धातोर्द्विः रुक् चाभ्यासस्य' इति व्याख्येयम् । उत्तरखण्डे ऋकारस्य गुणे रपरत्वम् ॥ तित्तिडीक इति । 'तिम ष्टीम आर्द्रीभावे' मकारस्य डकारः अभ्यासस्य तुक् च । तिन्तिडी चिञ्चाम्लिका' इत्यमरे तु शब्दान्तरम् । तथा च 'तिन्तिडी त्वम्लिका चिञ्चा तित्तिडीका कपिप्रिया' इति वाचस्पतिः । 'अम्लीका चाम्लिका चिञ्चा तित्तिडीका च तिन्तिडा' इति चन्द्रः । 'अम्लीका चुक्रिका चुक्रा साम्ला शुक्राथ शुक्रिका । अम्लिका चिञ्चिका तित्तिडीका चुतिन्तिडा' इति धन्वन्तरिनिघण्टुः ॥ चरेः । 'चर गतिभक्षणयोः' अस्मादीकन् द्विर्वचनमभ्यासस्य नुमागमश्च । 'भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः । इन्दिन्दिरः पुष्पकीटो मधुद्रो मधुके शठः' इति त्रिकाण्डशेषः ॥ मर्मरीक इत्यादि । 'मृङ् प्राणत्यागे', 'डुकृञ् करणे' आभ्यामीकन् धातोर्द्वित्वम् अभ्यासस्य रुक् 'कर्कर्यालुर्गलन्तिका' इत्यमरः । 'पुण कर्मणि शुभे' णस्य डः प्रत्ययस्य रुडागमश्च । 'पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च ॥' इति मेदिनी ॥ ( ४६६४ ) ईषेः—। 'ईष गतौ' अस्मादीकन् ह्रस्वश्च कित्त्वाद् गुणाभावः । ह्रस्वविधानसामर्थ्यादेव गुणाभावे सिद्धेऽप्युत्तरार्थं कित्त्वमित्याहुः । 'ईषीका स्यादिषिकाऽपि वानायुजवनायुजौ' इति द्विरूपकोशः ॥ ( ४६६५ ) ऋजेः—। 'ऋज गतौ' ॥ ( ४६६६ ) सर्तेः—। 'सृ गतौ' अस्मादीकन् स्याद्धातोर्नुमागमश्च । 'सृणीका स्यन्दिनी लाला' इत्यमरः ॥ ( ४६६७ ) मृडः कीकन्—। 'मृड सुखने' । 'मृडः कीकन्' इत्युज्ज्वलदत्तादिपाठः प्रामादिकः । मृडीकशब्दस्य चित्स्वरेणान्तोदात्तत्वात् । 'मृडीके अस्य सुमतौ स्याम' इत्यादौ चित्स्वरस्यैव दर्शनात् ॥ ( ४६६८ ) अलीकाद—। 'अलीकमप्रियेऽपि स्याद्दिव्यसत्ये नपुंसकम्' इति मेदिनी । 'अलीकमप्रिये प्रोक्तम् लीकमनृते दिवि' इति विश्वः । 'अलीकमप्रिये भाले वितथे' इति हेमचन्द्रः । तथा चाभियुक्तैः प्रयुज्यते—'ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च । नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतां च न संत्यजन्ति' इति । इहालीकलग्नाः भाललग्ना अप्रिये लग्ना इत्याद्यर्थे यथायोग्यं बोध्यम् । 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने । ना नागरे' इति मेदिनी । 'वल संवरणे' । 'वलीकनीध्रे पटलप्रान्ते' इत्यमरः । वलतेर्नुमागमे वल्मीकं 'वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम्' इत्यमरः । वहतेर्वृद्धिश्च वाहीको गौरश्वश्च । सुप्रपूर्वाद्दिणस्तुट् च । सुप्रतीकः । शाम्यतेः शमीकः ऋषिः । एवमन्येऽप्यूह्या इत्याशयेनाह—इत्यादीति ॥ ( ४६६९ ) कृतॄ—। 'कॄ विक्षेपे', 'तॄ प्लवनतरणयोः' ॥ ( ४६७० ) शॄपॄ—। 'शॄ हिंसायाम्', 'पॄ पालनादौ' आभ्यामीषन् कित्स्यात् । 'ऋत इद्धातोः ३१८३' इति इत्वे रपरत्वम् । शिरीषो

षम् ॥ ( ४६७१ ) (उ) **अर्जेर्ऋज च** ॥ ऋजीषं पिष्टपचनम् ॥ ( ४६७२ ) (उ) **अम्बरीषः** ॥ अयं निपात्यते । अबि शब्दे । अम्बरीषः पुमान् । भ्राष्ट्रम् । अमरस्तु क्लीबेऽम्बरीषं भ्राष्ट्रो ना ॥ ( ४६७३ ) (उ) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** ॥ करीरो वंशाङ्कुरः । शरीरम् । परीरं फलम् । कटीरः कन्दरो जघनप्रदेशश्च । पटीरश्चन्दनः कण्टकः कामश्च । शौटीरस्त्यागिवीरयोः । ब्राह्मणादित्वात् ष्यञ् । शौटीर्यम् ॥ ( ४६७४ ) (उ) **वशेः कित्** ॥ उशीरम् ॥ ( ४६७५ ) (उ) **कशेर्मुट् च** ॥ कश्मीरो देशः ॥ ( ४६७६ ) (उ) **कृञ उच्च** ॥ कुरीरं मैथुनम् ॥ ( ४६७७ ) (उ) **घसेः किच्च** ॥ क्षीरम् ॥ ( ४६७८ ) (उ) **गम्भीरगभीरौ** ॥ गमेर्भः पक्षे नुम् च ॥ ( ४६७९ ) (उ) **विषा विहा** ॥ स्यतेर्जहातेश्च विपूर्वाभ्यामाप्रत्ययः । विषा बुद्धिः । विहा स्वर्गः । अव्यये इमे ॥ ( ४६८० ) (उ) **पच एलिमच्** ॥ पचेलिमो वह्निरव्योः ॥ ( ४६८१ ) (उ) **शीङो धुक्लक्वलञ्वालनः** ॥ चत्वारः प्रत्ययाः स्युः । शीधु मद्यम् । शीलं स्वभावः । शैवलः । शेवालम् । बाहुलकाद्ध्रस्य पोऽपि । शेवालं शैवलो न स्त्री शेपालो जलनीलिका ॥ ( ४६८२ ) (उ) **मृकणिभ्यामूकोकणौ** ॥ मरूको मृगः । काणूक काकः ॥ ( ४६८३ ) (उ) **वलेरूकः** ॥ वलूकः पक्षी उत्पलमूलं च ॥ ( ४६८४ ) (उ) **उलूकादयश्च** ॥ वलेः संप्रसारणमूकश्च । उलूकाविन्द्रपेचकौ । वावदूको वक्ता । भल्लूकः ॥ ( ४६८५ ) (उ) **शमेर्बुक्च** ॥ शम्बूको जलशुक्तिः ॥ ( ४६८६ ) (उ) **शलिमण्डिभ्यामूकण्** ॥ शालूकं कन्दविशेषः। मण्डूकः ॥ ( ४६८७ ) (उ) **नियो मिः** ॥ नेमिः ॥ ( ४६८८ ) **अर्तेरूच्च** ॥ ऊर्मिः ॥

---

वृक्षभेदः । 'उदोष्ठ्यपूर्वस्य ३३१२' इत्युत्त्वे 'गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम्' इत्यमरः ॥ ( ४६७१ ) **अर्जेः**–। 'अर्ज षर्ज अर्जने' अस्मादीषन् कित्स्यात् । धातोर्ऋजादेशश्च । अमरोक्तिमाह–**ऋजीषमिति** । किंच, उद्धृतरसः सोमलतायाः शेषोऽपि ऋजीषम् । एतच्च 'ऋजीषिणं वृषणं सश्चतश्रिये असत्योपातुमघवान् ऋजीषी' इत्यादिमन्त्रे भाष्ये स्पष्टम्॥( ४६७२ ) **अयमिति** । ईषन्प्रत्ययस्तस्य अरुडागमश्चेत्यर्थः । बोपालितोक्तिमाह–**अम्बरीषमिति** । 'क्लीबेऽम्बरीषं भ्राष्ट्रः' इत्यमरः । 'अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च । आम्रातकेऽनुपाते च' इति मेदिनी ॥ ( ४६७३ ) **कॄशॄपॄ**—। 'कॄ विक्षेपे', 'शॄ हिंसायाम्', 'पॄ पालनपूरणयोः', 'कटे वर्षावरणयोः', 'इट किट कटी गतौ' चुरादौ 'पट पुटेति दण्डको भाषार्थः', 'शौटृ गर्वे', । 'वंशाङ्कुरे **करीरो**ऽस्त्री वृक्षभिद्घटयोः पुमान् । करीरा चीरिकायां च दन्तमूले च दन्तिनाम्' इति मेदिनी । शीर्यत इति शरीरम् । '**शरीरं** वर्ष्म विग्रहः' इत्यमरः । अर्द्धर्चादित्वाच्छरीर इति पुँल्लिङ्गोऽपि ॥ **परीरमिति** । पूर्यतेऽनेनेति विग्रहः । बाहुलकात् 'हिडि गत्यनादरयोः' हिण्डते इतस्ततो गच्छति हिण्डीरः । '**हिण्डीरो**ऽब्धिकफः फेनः' इत्यमरः । 'दिण्डीरोऽपि च **हिण्डीरः**' इति द्विरूपकोशः। किर्मीरजम्बीरतूणीरादयोऽपि बाहुलकादेव बोध्याः । '**किर्मीरो** नागरङ्गे च कर्बुरे राक्षसान्तरे' इति मेदिनी । '**जम्बीरः** प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे' इति च ॥ ( ४६७४ ) **वशेः**––। वश कान्तौ अस्मादीरन्कित्स्यात् । कित्त्वात्संप्रसारणादि । उशीरं वीरणमूलम्, उशीरोऽपि 'मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यम्' इत्यमरः ॥ ( ४६७५ ) **कशेः**–। कश इति सौत्रो धातुः । अस्मादीरन् तस्य मुडागमश्च । पृषोदरादित्वात्काश्मीरः ॥ ( ४६७६ ) **कृञः**–। 'डुकृञ् करणे' अस्मादीरन् धातोरन्त्यस्य उदादेशो रपरः ॥ ( ४६७७ ) **घसेः**–। 'घस्लृ अदने' अस्मादीरन् कित्स्यात् । 'गमहन–३१५६' इत्युपधालोपे कत्वं षत्वञ्च । '**क्षीरं** दुग्धे च नीरे च इति विश्वः ॥ ( ४६७८ ) **गम्भीर**–। 'गम्लृ गतौ' अस्मादीरन् भकारोऽन्तादेशः, पक्षे नुमागमश्च निपात्यते । 'निम्नं **गभीरं गम्भीरम्**' इत्यमरः ॥ ( ४६७९ ) **विषा**–। 'षोऽन्तकर्मणि', 'ओहाक् त्यागे' आभ्यां विपूर्वाभ्यामाप्रत्ययो निपात्यते ॥ ( ४६८० ) **पचः**–। 'डुपचष् पाके' अस्मादेलिमच् स्यात् । कर्तरि अयम् । कृत्यप्रत्ययेषु तु केलिमर उपसंख्यातः[1] ॥ ( ४६८१ ) **शीङः**–। 'शीङ् स्वप्ने' । शेरतेऽनेनेति शीधुर्मद्यविशेषः 'मैरेयमासवः **शीधुः**' इत्यमरः । अर्द्धर्चादिपाठात् क्लीबं च । 'पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवः' इति त्रिकाण्डशेषः । '**शीलं** स्वभावे सद्वृत्ते' इति मेदिनी । 'जलनीली तु **शेवालं शैवलः**' इत्यमरः । '**शैवलं** पद्मकाष्ठे स्याच्छेवाले तु पुमानयम्' इति मेदिनी । शब्दार्णवोक्तिमाह–**शेवालं शैवल इति** ॥ ( ४६८२ ) **मृकणि**–। 'मृङ् प्राणत्यागे', 'कण शब्दार्थः' । ऊकश्च ऊकण् च ऊकोकणौ एतौ प्रत्ययौ यथाक्रमः भवतः ॥ ( ४६८३ ) **वलेः**–। 'वल संवरणे' 'उलूकः पुंसि काकादौ इन्द्रे भारतयोधिनि' इति मेदिनी । ( ४६८४ ) वदेर्यङ्लुगन्तादूकः । 'वाचोयुक्तिपटुर्वाग्मी **वावदूको**ऽतिवक्तरि' इत्यमरः ॥ **भल्लूक** इति । 'भल परिभाषणे' इत्यस्मादूकः ॥ ( ४६८५ ) **शमेः**–। 'शम उपशमे' अस्मादूकः । धातोर्बुगागमश्च '**शम्बूको** गजकुम्भान्ते घोषे च शूद्रतापसे' इति मेदिनी । बाहुलकादुकप्रत्यये ह्रस्वमध्योऽपि 'जम्बूकं जम्बुकं प्राहुः '**शम्बूकमपि शम्बुकम्**' इति द्विरूपकोशः । जम्बूकवधूकादयोऽप्यत्रैव द्रष्टव्याः । '**जम्बूकः** फेरवे नीचे पश्चिमाशापतावपि' इति मेदिनीविश्वप्रकाशौ । '**बन्धुकं** बन्धुजीने स्याद्बन्धूकः पीतसारके' इति च ॥ ( ४६८६ ) **शलिमण्डि**–। 'शल गतौ' 'मडि भूषायां हर्षे च' 'सौगन्धिकं तु कह्लारम्' इत्याद्युपक्रम्य '**शालूकमेषां** कन्दः स्यात्' इत्यमरः । एषां च सौगन्धिकादीनां कुमुदकैरवान्तानां कन्दो मूलं शालूकमित्यर्थः । मण्डते वर्षासमयमिति मण्डूको भेकः ॥ ( ४६८७ ) **नियो मिः** । 'णीञ् प्रापणे' । नयति चक्रमिति नेमिश्चक्रावयवः । '**नेमिर्ना** तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्' इति मेदिनी । बाहुलकादन्यतोऽपि ।

---

[1] 'कर्मणि' इति शेषः' ॥

( ४६८९ ) (उ) **भुवः कित्** ॥ भूमिः ॥ (४६९०) (उ) **अश्नातेरशच्च** ॥ रश्मिः किरणो रज्जुश्च ॥ (४६९१) (उ) दल्मिः ॥ दल विशरणे । दल्मिरिन्द्रायुधम् ॥ ( ४६९२ ) (उ) **वीज्याज्वरिभ्यो निः** ॥ बाहुलकाण्णत्वम् । वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे । ज्यानिः । जूर्णिः ॥ (४६९३) (उ) **सृवृषिभ्यां कित्** ॥ सृणिरङ्कुशः । वृष्णिः क्षत्रियमेषयोः ॥ (४६९४) (उ) **अङ्गेर्नलोपश्च** ॥ अग्निः ॥ (४६९५) (उ) **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** ॥ वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः तूर्णिः । बाहुलकान्म्लानिः (४६९६) (उ) **घृणिपृश्निपार्ष्णिचूर्णिभूर्णि** ॥ एते पञ्च निपात्यन्ते । घृणिः किरणः । स्पृशतेः सलोपः । पृश्निरल्पशरीरः । पृषेर्वृद्धिश्च । पार्ष्णिः पादतलम् । चरेरुपधाया उत्त्वम् । चूर्णिः कपर्दकशतम् । बिभर्तेरुत्वम् । भूर्णिर्धरणी ॥ ( ४६९७ ) (उ) **वृदृभ्यां विन्** ॥ वर्विर्घस्मरः । दर्विः ॥(४६९८) (उ) **जॄशॄस्तॄजागृभ्यः क्विन्** ॥ जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युः । जागृविर्नृपः ॥ (४६९९) (उ) **दिवो द्वे दीर्घश्चाभ्यासस्य** ॥ दीदिविः स्वर्गमोक्षयोः ॥(४७००) (उ) **कृविघृष्विछविस्थविकिकीदिवि** ॥ कृविस्तन्तुवायद्रव्यम् ॥ घृष्विर्वराहः । छास्थोर्ह्रस्वत्वं च । छविर्दीप्तिः । स्थविस्तन्तुवायः । दीव्यतेः किकीपूर्वात् । किकीदिविश्चाषः । बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः । चाषेण किकिदीविना ॥ ( ४७०१ ) (उ) **पातेर्डतिः** ॥

---

'या प्रापणे' '**यामिः** स्वसृकुलस्त्रियोः' इत्यन्तःस्थादौ रभसः । '**जामिः** स्वसृकुलस्त्रियोः' इति चवर्गतृतीयादावजयकोशः । 'चवर्गादिरपि प्रोक्तो **जामिः** स्वसृकुलस्त्रियोः' इति द्विरूपेषु विश्वः ॥ ( ४६८८ ) **अर्तेरूच्च** । 'ऋ गतौ' इत्यस्मान्मिः धातोरूकारादेशश्च । उच्चेति वक्तुमुचितम् । रपरत्वे 'हलि च ४८१' इति दीर्घसंभवात् । '**ऊर्मिः** स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोरपि' इति मेदिनी ॥ ( ४६८९ ) **भुवः**—। भवतेर्मिः कित्स्यात् । भवन्ति भूतान्यस्यामिति भूमिः । '**भूमिर्वसुन्धरायां** स्यात् स्थानमात्रेऽपि च स्त्रियाम्' इति मेदिनी । '**भूर्भूमिरचलाऽनन्ता**' इत्यादि त्वमरः ॥ ( ४६९० ) **अश्नातेः**—। 'अशू व्याप्तौ' अस्मान्मिः धातोरशादेशश्च । '**रश्मिः** पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि' इति मेदिनी ॥ ( ४६९२ ) **वीज्या**—। 'वी गतौ', 'ज्या वयोहानौ', 'ज्वर रोगे' । अमरोक्तिमाह—**वेणिः स्यादित्यादि** । 'कृदिकारात्–७०८' इति ङीष् '**वेणी** केशस्य बन्धने । नद्यादेरन्तरे देवताडे' इति मेदिनी । '**वेणी** खरा गरी देवताडो जीमूत इत्यपि' इत्यमरः । '**ज्यानिर्हानौ** स्रवन्त्यां च' इति विश्वः । 'ज्वरत्वर–३५२५' इत्युपधाया वकारस्य च ऊठ् । जूर्णिः स्त्रीरोगः ॥ ( ४६९३ ) **सृवृषि**—। 'सृ गतौ', 'वृषु सेचने' आभ्यां निः कित्स्यात् । 'अङ्कुशोऽस्त्री **सृणिः** स्त्रियाम्' इत्यमरः । '**सृणिः** स्यादङ्कुशे पुमान्' इति कोशान्तरम् । अत एव 'आरक्षमग्नमवमत्य सृणिं शिताग्रम्' इति माघे पुँल्लिङ्गप्रयोगः । '**वृष्णिस्तु** यादवे मेषे **वृष्णिः** पाखण्डचण्डयोः' इति विश्वः । 'ऐन्द्रे वृष्णिं षोडशिनि तृतीयम्' इति श्रुतौ वृष्णिं मेषमित्यर्थः ॥ ( ४६९४ ) **अङ्गेः**—। अगिर्गत्यर्थः । '**अग्निर्वैश्वानरेऽपि** स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी ॥ ( ४६९५ ) **वहि**—। 'वह प्रापणे', 'श्रिञ् सेवायाम्', 'श्रु श्रवणे', 'यु मिश्रणे', 'द्रु गतौ', 'ग्लै म्लै हर्षक्षये', 'ओहाक् त्यागे', 'ञित्वरा संभ्रमे' एभ्यो निः प्रत्ययः स्यात्स च नित् । '**वह्निर्वैश्वानरेऽपि** स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी । 'पङ्क्तिः **निःश्रेणिस्त्वधिरोहिणी**' । **श्रेणिः** स्त्रीपुंसयोः पङ्क्तौ समाने शिल्पिसंहतौ' इति मेदिनी । श्रोणिः कटिप्रदेशः । 'कटिः **श्रोणिः** ककुद्मती' इत्यमरः । योनिर्भगम् । '**योनिः** स्त्रीपुंसयोश्च स्यादाकारे स्मरमन्दिरे' इति मेदिनी । द्रोणिः सेचनी । 'कृदिकारात्–७०८' इति ङीषि द्रोणी । '**द्रोणी** स्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे ॥' इति मेदिनी । ग्लानिर्दौर्बल्यम् । हानिरपचयः ॥ ( ४६९६ ) **घृणि**—।'घृ सेचने', 'स्पृश संस्पर्शने', 'पृषु सेचने', 'चर गतौ', 'डुभृञ् धारणपोषणयोः' । निप्रत्ययो गुणाभावश्च निपात्यते । '**घृणिः** पुनः । अंशुज्वालातरङ्गेषु' इति हेमचन्द्रः । '**पृश्निरल्पतनौ**' इत्यमरः । **पार्ष्णिः** स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति मेदिनी ॥ **भूर्णिरिति** । 'तक्वान भूर्णिः' इति मन्त्रभाष्ये तु भूर्णिर्धारकः पोषको वेति व्याख्यातम् ॥ ( ४६९७ ) **वृदृ**—। 'वृञ् वरणे', 'दृङ् आदरे' । स्त्रियां 'कृदिकारात्–७०८' इति ङीष् । दर्वी ॥ ( ४६९८ ) **जॄशॄ**—। 'जॄ वयोहानौ', 'शॄ हिंसायाम्', 'स्तॄञ् आच्छादने', 'जागृ निद्राक्षये' । क्विनः कित्त्वात् 'ॠत इद्धातोः ३१८३' इति इत्वे रपरत्वे जीर्विरित्यादि ॥ (४६९९) **दिवो**—'दिवु क्रीडादौ' अस्मात्क्विन् कित्त्वाद् गुणाभावः । **दीदिविर्धिषणान्नयोः**' इति विश्वः । **दीदिविर्ना** धिषणेऽन्ने तदा स्त्रियाम्' इति मेदिनी । धिषणो बृहस्पतिः । '**दीदिविः** द्वादशकरश्चक्षुः । सुरगुरुर्गुरुः' इति त्रिकाण्डशेषः । '**दीदिविर्द्वादशार्चिः** स्याज्जीवः प्राक्फल्गुनीसुतः' इति हारावली । 'ओदनोऽस्त्री **सदीदिविः**' इत्यमरः । अत्र सदीदिविर्दीदिविसहित इति व्याख्यानं न्याय्यम् । अत्र स इति विशेषणाद्दीदिवेः पुंल्लिङ्ग इति केषांचिद्व्याख्यानं नादर्तव्यम् । स इति च्छेदने तु अस्त्रियामिति न लभ्येत, ततश्च 'अन्ने तदास्त्रियाम्' इति पूर्वोक्तमेदिनी ग्रन्थो विरुध्येतेति ध्येयम् । 'गोपामृतस्य दीदिविम्' इति मन्त्रे तु द्योतमानमित्यर्थः ॥ ( ४७०० ) **कृविघृष्वि**—। 'डुकृञ् करणे', 'घृषु सेचने' 'छो छेदने', 'ष्ठा गतिनिवृत्तौ', 'दिवु क्रीडादौ' एते क्विन्नन्ताः ॥ **घृष्विर्वराह इति** । 'उग्रस्य चूनस्थविरस्य घृष्वेः' इति मन्त्रे तु घृष्वेः कामानां वर्षकस्येत्यर्थ इति व्याख्यातम् । 'घृषु सेचने' इति धात्वर्थानुगमात् । '**छविः** शोभारुचोर्योषित्' इति मेदिनी । 'अथ चाषः **किकीदिविः**' इत्यमरः । **विनिमय इति** । 'किकिदीविः किकी-

पतिः ॥ ( ४७०२ ) उ. **शकेर्ऋतिन्** ॥ शकृत् ॥ ( ४७०३ ) उ. **अमेरतिः** ॥ अमतिः कालः ॥ ( ४७०४ ) उ. **वहिवस्यर्तिभ्यश्चित्** ॥ वहतिः पवनः । वसतिर्गृहयामिन्योः । अरतिः क्रोधः ॥ ( ४७०५ ) उ. **अञ्चेः को वा** ॥ अङ्कतिः, अञ्चतिर्वातः ॥ ( ४७०६ ) उ. **हन्तेरंह च** ॥ हन्तेरतिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया अहंतिर्दानम् । प्रादेशनं निर्वपणमपवर्जनमंहतिः ॥ ( ४७०७ ) उ. **रमेर्नित्** ॥ रमतिः कालकामयोः ॥ ( ४७०८ ) उ. **सूङः क्रिः** ॥ सूरिः ॥ ( ४७०९ ) उ. **अदिशदिभूशुभिभ्यः क्रिन्** ॥ अद्रिः । शद्रिः शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा ॥ ( ४७१० ) उ. **वङ्क्र्यादयश्च** ॥ क्रिन्नन्ता निपात्यन्ते । वङ्क्रिर्वाद्यभेदो गहदारु पार्श्वास्थि च । वप्रिः क्षेत्रम् । अंहिरङ्घ्रिश्च चरणः । तद्रिः सौत्रो धातुः । तन्द्रिर्मोहः । बाहुलकाद् गुणः । भेरिः ॥ ( ४७११ ) उ. **राशदिभ्यां त्रिप्** ॥ रात्रिः । शत्रिः कुञ्जरः ॥ ( ४७१२ ) उ. **अदेस्त्रिनिश्च** ॥ चात्त्रिप् । अत्त्री । अत्त्रिणौ । अत्त्रिणः । अत्त्रिः । अत्त्री । अत्त्रयः ( ४७१३ ) उ. **पतेरत्रिन्** ॥ पतत्रिः पक्षी ॥ ( ४७१४ ) उ. **मृकणिभ्यामीचिः** ॥ मरीचिः । कणीचिः पल्लवो निनादश्च ॥ ( ४७१५ ) उ. **श्वयतेश्चित्** ॥ श्वयीचिर्व्याधिः ॥ ( ४७१६ ) उ. **वेञो डिच्च** ॥ वीचिस्तरङ्गः । नञ्समासे अवीचिर्नरकभेदः । ( ४७१७ ) उ. **ऋहनिभ्यामूषन्** ॥ अरूषः सूर्यः । हनूषो राक्षसः ॥ ( ४७१८ ) उ. **पुरः कुषन्** ॥ पुर अग्रगमने । पुरुषः । 'अन्येषामपीति दीर्घः । पूरुषः ॥ ( ४७१९ ) उ. **पॄनहिकलिभ्य उषच्** ॥ परुषम् । नहुषः । कलुषम् ॥ ( ४७२० ) उ. **पीयेरूषन्** ॥ पीय इति सौत्रो धातुः ।

---

दिवौ' इति द्विरूपकोशः ॥ ( ४७०१ ) **पातेः**—। 'पा रक्षणे' । डित्त्वाट्टिलोपः । 'पतिर्धवे ना त्रिष्वीशे' इति मेदिनी ॥ ( ४७०२ ) **शकेः**—। 'शक्लृ शक्तौ' । 'उच्चारावस्करौ, शमलं **शकृत्** । गूथं पुरीषं वर्चस्कमस्त्रियाम्' इत्यमरः ( ४७०३ ) **अमेः**—। 'अम गतौ' । 'अथा**मतिः** पुंसि हिमदीधितिकालयोः' इति मेदिनी । 'अमितिश्चा**मतिः** काले' इति द्विरूपेषु विश्वः ॥ ( ४७०४ ) **वहि**—'वह प्रापणे' 'वस निवासे', 'ऋ गतौ' । '**वसतिः** सचिवे गवि' इति विश्वः । '**वसतिः** स्यात् स्त्रियां वासे यामिन्यां च निकेतने' इति मेदिनी ॥ ( ४७०५ ) **अञ्चेः**—'अञ्चु गतौ' अस्मादतिः स्यात्ककारश्चान्तादेशो विकल्पेन ॥ ( ४७०६ ) **हन्तेः**—। 'हन हिंसागत्योः' ॥ अमरोक्तिमाह—**प्रादेशनमित्यादि** ॥ ( ४७०७ ) **रमेः**—। रमतेरतिः स्यात्स च नित् । '**रमति**र्नायके पुंसि स्यात्' इति मेदिनी । नित्त्वमाद्युदात्तार्थम् । 'रन्तिरासि रमतिरासि' ( ४७०८ ) **सूङः**—। 'षूङ् प्राणिप्रसवे' कित्त्वाद् गुणाभावः । 'पुमान् **सूरिः** कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः । दशपाद्यां तु 'सुञो रिन् दीर्घश्च' इति पाठः । तत्र रिनो नकारो नानुबन्धः, उत्तरसूत्रे क्रिन्प्रत्ययारम्भात् । अनुबन्धत्वे हि लाघवादिहैव क्रिन्नुच्येत । तथा च सूरी सूरिणौ सूरिण इत्यादि रूपम् । अत एवाभिधानमालायां सूरीति नान्तमुदाहृतमित्यवधेयम् । दशपादीवृत्तिकारैस्तु नित्त्वं स्वीकृत्य सूरिरित्युदाहृतं, तदेतेन प्रत्युक्तम् । स्वरविरुद्धमपि 'सदा पश्यन्ति सूरयः', विसूरयो दधातो विश्वमायुः' इत्यादौ सूरिशब्दस्यान्तोदात्तत्वदर्शनात् ॥ ( ४७०९ ) **अदि**—। 'अद् भक्षणे', 'शद्लृ शातने', 'भू सत्तायाम्', 'शुभ शुम्भ शोभार्थे' '**अद्रयो** द्रुमशैलार्काः' इत्यमरः । '**भूरिर्ना** वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः' इति मेदिनी ॥ ( ४७१० ) **वङ्क्र्यादयः**—। 'वकि कौटिल्ये', 'डुवप् बीजसन्ताने' । निपातनात्सम्प्रसारणाभावः । 'अहिर्भाषार्थः' चुरादिण्यन्तः, अचि गतौ गत्यारम्भे च', 'ञिभी भये' ॥ **तन्द्रिरिति** । 'कृदिकारात्—७०८' इति ङीष् '**तन्द्री** निद्राप्रमीलयोः' इति मेदिनी । **तन्द्री तन्द्रिश्च** तन्द्रायाम्' इति द्विरूपकोशः । 'विभज्य नक्तंदिवसमस्ततन्द्रिणा' इति भारविः ॥ प्रत्ययस्य कित्त्वाद् गुणाभावमाशङ्क्याह—**बाहुलकादिति** ॥ ( ४७११ ) **राशदि**—। 'रा दाने' शद्लृ शातने' । 'शत्त्रिर्नाऽम्भोधरे विष्णौ' इति मेदिनी । 'शत्त्रिमग्र उपमाकेतुमर्ययः' इति मन्त्रस्य वेदभाष्ये उपमा उपमानभूतं केतुं प्रख्यातं शत्त्रिमेतन्नामकं राजर्षिमिति व्याख्यातम् ॥ ( ४७१२ ) **अदेः**—। अद भक्षणे' । अत्त्रिर्मुनिभेदः । उज्ज्वलदत्तादयस्तु 'अदेस्त्रिन्' इति पठित्वा अत्त्रीरित्युदाजहुस्तन्न । त्रिपैवेष्टसिद्धौ प्रत्ययान्तरवैयर्थ्यात् । गोवर्धनस्तु—'अदेस्त्रिन्' इति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा । अत्त्री अत्त्रिणौ अत्त्रिण इत्याह । तदपि नित्त्वे सत्याद्युदात्तत्ववत् । न चेष्टापत्तिः, 'जहीन्या अत्त्रिणं पणिम्', 'अग्ने हंसिन्या अत्त्रिणम्' इत्यादावन्तोदात्तस्य निर्विवादत्वात् । अत एव 'न लुमताङ्गस्य' इति सूत्रे अदेस्त्रिनिश्च' इत्येव कैयटोऽप्याहेति दिक् ॥ ( ४७१३ ) **पतेः**—। 'पत्लृ गतौ' **पतत्रिरिति** । पक्षवाचकात्पतत्रशब्दान्मत्वर्थे इति तु नान्तः पतत्री पतत्रिणौ पतत्रिण इत्यादि ॥ ( ४७१४ ) **मृकणि**—। 'मृङ् प्राणत्यागे', 'कण शब्दार्थः' '**मरीचिः** कृपणे दीप्तौ ऋषिभेदे च दृश्यते' इति विश्वः । '**मरीचि**र्मुनिभेदे ना गभस्तावनपुंसकम्' इति मेदिनी । '**कणीचिः** पुष्पितलतागुञ्जयोः शकटे स्त्रियाम्' इति च ॥ ( ४७१५ ) **श्वयतेः**—। 'टु ओश्वि गतिवृद्ध्योः' अस्मादीचिप्रत्ययश्चित्स्यात् ॥ ( ४७१६ ) **वेञः**—। 'वेञ् तन्तुसन्ताने' अस्मादीचिर्डित्स्यात् । ( ४७१८ ) 'वीचिः स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोः' इति विश्वमेदिन्यौ ॥ ( ४७१७ ) **ऋहनि**—। 'ऋ गतौ', 'हन हिंसागत्योः' ॥ **पुरः**—। कुषणः कित्त्वाद् गुणाभावः । '**पुरुषः** पूरुषे सांख्यज्ञे च पुंनागपादपे' इति विश्वमेदिन्यौ ॥ ( ४७१९ ) **पॄनहि**—। 'पॄ पालनपूरणयोः', 'णह बन्धने', 'कल शब्दसंख्यानयोः' । '**परुषं** कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत्' इति मेदिनी । '**नहुषो** राजविशेषे नागभिद्यपि' इति हेमचन्द्रः । उषचश्चित्त्वान्नहुषशब्दस्यान्तोदात्तत्वे प्राप्ते ग्रामादित्वाद्वृषादित्वाद्वाद्युदात्त-

पीयूषम् । बाहुलकाद् गुणे पेयूषोऽभिनवं पयः॥(४७२१) (उ) **मस्जेर्नुम् च** ॥ मञ्जूषा ॥ (४७२२) (उ) **गण्डेश्च**॥ गण्डूषः । गण्डूषा ॥(४७२३) (उ) **अर्तेररुः** ॥ अररुः शत्रुः । अररू । अररवः॥(४७२४) (उ) **कुटः किच्च** ॥ कुटरुर्वस्त्रगृहम् । कित्वप्रयोजनं चिन्त्यम् ॥ (४७२५) (उ) **शकादिभ्योऽटन्** ॥ शकटोऽस्त्रियाम् । ककिर्गत्यर्थः । कङ्कटः सन्नाहः । देवटः शिल्पी । करट इत्यादि ॥ ( ४७२६ ) (उ) **कृकदिकडिकटिभ्योऽम्ब च** ॥ करम्बं व्यामिश्रम् । कदिकडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् ॥ ( ४७२७ ) (उ) **कदेर्णित्पक्षिणि** ॥ कादम्बः कलहंसः ॥ ( ४७२८ ) (उ) **कलिकर्दोरमः** ॥ कलमः । कर्दमः ॥ ( ४७२९ ) (उ) **कुणिपुल्योः किन्दच्** ॥ कुण शब्दोपकरणयोः । कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः ॥ ( ४७३० ) (उ) **कुपेर्वा वश्च** ॥ कुपिन्दकुविन्दौ तन्तुवाये ॥ ( ४७३१ ) (उ) **नौ षञ्जेर्घथिन्** ॥ निषङ्गथिरालिङ्गकः ॥ (४७३२) (उ) **उदर्तेश्चित्**॥ उदरथिः समुद्रः ॥ ( ४७३३ ) (उ) **सर्तेर्णिच्च** ॥ सारथिः ॥ ( ४७३४ ) (उ) **खर्जिपिञ्जादिभ्य ऊरोलचौ** ॥ खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्तिः ॥ ( ४७३५-१ ) (ग) **लङ्गेर्वृद्धिश्च** ॥ लाङ्गूलम् । कुसूलः ॥ ( ४७३५-२ ) (ग) **तमेर्बुग्वृद्धिश्च** ॥ ताम्बूलम् ॥ ( ४७३५-३ ) (ग) **शृणातेर्दुग्वृद्धिश्च** ॥ शार्दूलः ॥

---

त्वमित्याहुः । एतच्च 'देवा अकृण्वन्नहुषस्य विश्पम्' इति मन्त्रस्य भाष्ये स्पष्टम् । '**कलुषं** त्वाविलैनसोः' इति विश्वः ॥ ( ४७२० ) **पीयेः**—। '**पीयूषममृतं** सुधा' इत्यमरः । '**पीयूषं** सप्तदिवसावधिक्षीरे तथाऽमृते' इति मेदिनी । अमरोक्तिमाहै**पेयूष इत्यादि** ॥ (४७२१) **मस्जेः**—। 'टुमस्जो शुद्धौ' अस्मादूषन्स्यान्नुमागमश्च धातोः । 'मिदचोऽन्त्यात्परः ६०' सस्य श्चुत्वेन शस्तस्य जश्त्वेन जस्तस्य 'झरो झरि १०६' इति वा लोपः । लोपाभावपक्षे जकारद्वयम् । मञ्जूषा काष्ठमयं द्रव्यं पेटक इति यावत् । 'पिटकः पेटकः पेटा **मञ्जूषा**' इत्यमरः ॥ (४७२२) **गण्डेः**—। 'गडि वदनैकदेशे' । '**गण्डूषो** मुखपूरणः' ॥ ( ४७२३ ) **अर्तेः**—। 'ऋ गतौ' उकारान्तोऽयं प्रत्ययो न तु सकारान्त इति स्फोरयति—**अररू । अररवः इत्यनेन** । न चोकारान्तत्वे विवदितव्यम्, 'कश्चियाविररुं सूरमर्त्यम्', 'आपाररुमदेवयजना जहि' इत्यादिमन्त्रेषु तथा दर्शनात् । अत्र व्याचक्षते—'मानः शंसोरररुषः' इति मन्त्रस्य भाष्ये सान्तोऽमिति माधवेनोक्तं यत्, तत्प्रौढिवादमात्रं न तु वास्तवम्, अररुष इति पदस्य आद्युदात्तत्वानुपपत्तिप्रसङ्गात् । तस्माद्रातेः लिटः 'क्वसुश्च ४११३' इति क्वसौ ररिवानित्यनेन नञ्समासे कृत्स्यररुष इति व्याख्येयम् । ततश्च 'तत्पुरुषे तुल्यार्थ—५७०२' इत्यादिना पूर्वपदप्रकृतिस्वरे सत्याद्युदात्तत्वं सिद्ध्यति 'गुरुद्वेषोऽररुषे दधन्ति' इत्यत्र स्वयमेव रातेः क्वस्वन्तस्य नञ्समास इत्यादिव्याख्यानात्, 'यो नो अग्ने अरारिवां अघायुः' इत्यादिमन्त्रान्तरसंभवाच्चेति ॥ (४७२४) **कुटः**—। 'कुट कौटिल्ये' अस्मादरुः स्यात्स च कित् ॥ **चिन्त्यमिति** । ' गाङ्कुटादिभ्यः—३२७३' इति ङित्त्वेनैव गुणाभावसिद्धेरिति भावः ॥ (४७२५)**शकादीति** । शकिर्गत्यर्थः । 'शक्ल शक्तौ' इत्यस्मादटन्निर्देके । 'क्लीबेऽनः **शकटोऽस्त्री** स्यात्' इत्यमरः । 'देवृ देवने' ॥ **करट इति** । 'डुकृञ् करणे', 'कॄ विक्षेपे' इत्यस्माद्वा अटन् । 'काकेभगण्डौ **करटौ** ' इत्यमरः । '**करटो** गजगण्डे स्यात्कुसुम्भे निन्द्यजीविनि । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे' इति मेदिनी॥(४७२६) **कृकदि**—। 'डुकृञ् करणे', 'कटे वर्षावरणयोः' । '**करम्बो** मिश्रिते बान्तो, भान्तस्तु दधिसक्तुषु' इति विश्वः । ' **कदम्बं** निकुरम्बं स्यान्नीपसर्षपयोः पुमान्' इति च ॥ ( ४७२८ ) **कलि**—। 'कल संख्याने', 'कर्द कुत्सिते शब्दे' । ' **कलमः** पुंसि लेखन्यां शालौ पाटच्चरेऽपि च' इति मेदिनी ॥ ( ४७२९ ) **कुणिपुल्योः**—। 'पुल महत्त्वे' ॥ ( ४७३० ) **कुपेः**—। 'कुप क्रोधे' अस्मात्किन्दच् स्यात् वकारश्चान्तादेशो विकल्पेन । 'तन्तुवायः **कुविन्दः** स्यात् ' इत्यमरः । बाहुलकात् 'अल भूषणादौ' अलिन्दम् । 'यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि' इति माघः ॥ ( ४७३१ ) **नौ षञ्जेः**—। 'षञ्ज सङ्गे' निपूर्वादस्मात् घथिन्स्यात् । 'उपसर्गात्सुनोति—३०३७' इत्यादिना षत्वम् । 'चजोः—३८१४' इति कुत्वम् । 'आसुरस्य निषङ्गथिः' रथकूबर इत्यर्थः ॥ ( ४७३२ ) **उदर्तेः**—। 'ऋ गतौ' उत्पूर्वादस्मात् घथिन् स्यात्, स च चित् ॥ ( ४७३३) **सर्तेः**—। 'सृ गतौ' अस्मात् घथिन् णित्स्यात् । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च **सारथिः**' इत्यमरः ॥ (४७३४) **खर्जि**—। 'खर्ज मार्जने', 'पिज हिंसायाम्' । खर्जादिभ्यः पिञ्जादिभ्यश्च यथाक्रमम् ऊर—ऊलचौ स्तः । '**खर्जूरं** रूप्यफलयोः, **खर्जूरः** कटिवृक्षयोः' इति मेदिनीहेमचन्द्रौ । 'कृपू सामर्थ्ये' बाहुलकात् ' कृपो रो लः ३१३१ ' इति लत्वाभावः । ' अथ **कर्पूरम**स्त्रियाम् । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ' इत्यमरः । 'वल्ल संवरणे' वल्लूरम् । 'उत्तप्तं शुष्कमांसं स्यात्त**द्वल्लूरं** त्रिलिङ्गकम् ' इत्यमरः । एवं शालूरादयो द्रष्टव्याः, 'भेके मण्डूकवर्षाभू**शालूर**प्लवदर्दुराः' इत्यमरः ॥ ( ४७३५-१) **लङ्गेः**—। लगिर्गत्यर्थः । '**लाङ्गूलं** पुच्छशेफसोः' इति मेदिनी ॥ **कुसूल इति** । ' कुस श्लेषणे' दन्त्यसकारवान् '**कुसूलं** च कुसीदञ्च मध्यदन्त्यमुदाहृतम् ' इति विश्वः । ( ४७३५-२ ) ताम्बूलादयोऽप्यत्र द्रष्टव्याः । 'तमु ग्लानौ' बुग् दीर्घत्वञ्च । '**ताम्बूलो** नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्' इति । ( ४७३५-३ ) ' शॄ हिंसायाम् ' धातोर्वृद्धिर्दुगागमश्च । '**शार्दूलो** राक्षसान्तरे । व्याघ्रे च पशुभेदे च पत्तने तूत्तरस्थितः'

( ४७३५-४ ) (ग.) **दुकोः कूक्च** ॥ दुकूलम् । कुकूलम् ॥ ( ४७३६ ) (उ.) **कुवश्चट् दीर्घश्च** ॥ कूची चित्रलेखनिका ॥ ( ४७३७ ) (उ.) **समीणः** ॥ समीचः समुद्रः । समीची हरिणी ॥ ( ४७३८ ) (उ.) **सिवेष्टेरू च** ॥ सूची दर्भाङ्कुरः । सूची ॥ ( ४७३९ ) (उ.) **शमेर्बन्** ॥ शम्बो मुसलम् ॥ ( ४७४० ) (उ.) **उल्बादयश्च** ॥ बन्नन्ता निपात्यन्ते । उच समवाये । चस्य लत्वं गुणाभावश्च । उल्बो गर्भाशयः । शुल्बं ताम्रम् । बिम्बम् ॥ ( ४७४१ ) (उ.) **स्थः स्तोऽम्बजबकौ** ॥ तिष्ठतेरम्बच् अबक एतौ स्तः स्तादेशश्च । स्तम्बो गुच्छस्तृणादीनाम् । स्तबकः पुष्पगुच्छः ॥ ( ४७४२ ) (उ.) **शाशपिभ्यां ददनौ** ॥ शादो जम्बालशष्पयोः । शब्दः ॥ ( ४७४३ ) (उ.) **अब्दादयश्च** ॥ अवतीत्यब्दः ॥ ( ४७४४ ) (ग.) **कौतेर्नुम्** ॥ कुन्दः ॥ ( ४७४५ ) (उ.) **वलिमलितनिभ्यः कयन्** ॥ वलयम् । मलयः । तनयः ॥ ( ४७४६ ) (उ.) **वृहोः षुग्दुकौ च** ॥ वृषय आश्रयः । हृदयम् ॥ ( ४७४७ ) (उ.) **मिपीभ्यां रुः** ॥ मेरुः । पेरुः सूर्यः । बाहुलकात् पिबतेरपि । संवत्सरवपुः पारुः पेरुर्वासीर्दिनप्रणीः ॥ ( ४७४८ ) (उ.) **जत्र्वादयश्च** ॥ जत्रु, जत्रुणी । अश्रु, अश्रुणी ॥ ( ४७४९ ) (उ.) **रुशातिभ्यां क्रुन्** ॥ रुरुर्मृगभेदः । शातयतीति शत्रुः । प्रज्ञादौ पाठाद्ध्रस्वत्वम् ॥ ( ४७५० ) (उ.) **जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्नण्क्निन्शक्स्यढडटाटचः** ॥ जनित्वौ मातापितरौ । दात्वो दाता । च्यौत्नो गन्ता अण्डजः क्षीणपुण्यश्च । सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च । वृशः आर्द्रकं मूलकं च । मत्स्यः । षण्ढः । डित्वाट्टिलोपः । नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च ॥

---

इति मेदिनीविश्वप्रकाशौ । उत्तरास्थितः उत्तरपदभूतः शार्दूलशब्दस्तु श्रेष्ठवाची राजशार्दूल इति यथा ॥ ( ४७३५-४ ) 'दु गतौ', 'कु शब्दे' अनयोः कूक्च '**दुकूलं** श्लक्ष्णवस्त्रे स्यात् क्षौमे च' इति मेदिनी । '**कुकूलं** शङ्कुसंकीर्णश्वभ्रे ना तु तुषानले' इति विश्वमेदिन्यौ । 'शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना । अयं क्व च कुकूलाग्निकर्कशो मदनानलः' इति प्रयोगश्च ॥ ( ४७३६ ) **कुवः**-। 'कु शब्दे' कूचः स्तनः । '**कुचकूचौ** स्तनौ मतौ' इति विश्वः । कूचीति टित्वान्ङीप् ॥ ( ४७३७ ) **समीणः**-। 'इण् गतौ' अस्मात्सम्युपपदे चट् स्याद्दीर्घश्च धातोः ॥ ( ४७३८ ) **सिवेः**-। 'षिवु तन्तुसंताने' अस्माच्चट् प्रत्ययः स्यात्, टेरूत्वं च टित्वान्ङीप् । '**सूची** तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे' इति मेदिनी ॥ ( ४७३९ ) **शमेः**-। 'शमु उपशमे' । '**शम्बः** स्यान्मुसलाग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिषु' इति विश्वमेदिन्यौ ॥ ( ४७४० ) **उल्ब इति** । 'गर्भाशयो जरायुः स्यादुल्बं तु कललेऽस्त्रियाम्' इत्यमरः । 'शुच शोके' चस्य लत्वं गुणाभावश्च प्राग्वत् । '**शुल्बं** ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ' इति मेदिनीहेमचन्द्रौ । 'वी गतिप्रजनकान्त्यसनखादनेषु' अस्य नुमागमो ह्रस्वत्वश्च । वबयोरभेदाद्बिम्बम् । '**बिम्बस्तु** प्रतिबिम्बे स्यान्मण्डले पुंनपुंसकम् । बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान्' इति मेदिनी ॥ ( ४७४१ ) **स्थः स्तः**-। 'ष्ठा गतिनिवृत्तौ' । '**स्तम्बो** गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च' इति विश्वः '**स्तम्बोऽ**प्रकाण्डद्रुमगुच्छयोः' इति मेदिनी । 'स्याद् गुच्छकस्तु **स्तबकः**' इत्यमरः ॥ ( ४७४२ ) **शाशपि**-। 'शो तनूकरणे', 'शप आक्रोशे' । '**शादो** जम्बालशष्पयोः' इत्यमरः । '**शष्पं** बालतृणं घासः' इति च । '**शादः** स्यात्कर्दमः शष्पे' इति मेदिनी । शब्दो निनादः ॥ ( ४७४३ ) **अब्दादयः**-। एते दन्नन्ता निपात्यन्ते । 'अव रक्षणे' वस्य बः । '**अब्दः** संवत्सरे वारिवाहमुस्तकयोः पुमान्' इति मेदिनी ॥ ( ४७४४ ) **कौतेः**-। 'कु शब्दे' । '**कुन्दो** माध्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' इति च मेदिनी ॥ ( ४७४५ ) **वलिमलि**-। 'वल संवरणे संचरणे च', 'मल मल्ल धारणे', 'तनु विस्तारे' । '**वलयः** कण्ठरोगे ना कङ्कणे पुंनपुंसकम्' इति मेदिनी । '**मलयः** पर्वतान्तरे । शैलांशे देश आरामे त्रिवृतायां तु योषिति' इति च । 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः ॥ ( ४७४६ ) **वृहोः**-। 'वृञ् वरणे', 'हृञ् हरणे' आभ्यां कयन् स्यात्, यथाक्रमं षुग्दुगावागमौ च भवतः । कयनः कित्त्वं त्विह गुणाभावार्थम् । ह्रियते विषयैरिति हृदयं मनः ॥ ( ४७४७ ) **मिपीभ्याम्**-। 'डुमिञ् प्रक्षेपणे', 'पीङ् पाने' । '**मेरुः** सुमेरुर्हेमाद्रिः' इत्यमरः । पीयते रसानिति पेरुः ॥ **पिबतेरिति** । 'पा पाने' । हट्टचन्द्रोक्तिमाह-**संवत्सरवपुरित्यादि** । ( ४७४८ ) **जत्र्वादयः**-। रुप्रत्ययान्ता निपात्यन्ते । 'जनी प्रादुर्भावे' नकारस्य तकारः जत्रुः स्कन्धसन्धिः । 'संधी तस्यैव **जत्रुणी**' इत्यमरः । तस्य पूर्वोक्तस्य स्कन्धस्य संधी इत्यर्थः । 'असु क्षेपणे', 'अशू व्याप्तौ संघाते च' असु अश्रु च नयनजलम् । बाहुलकाद् शीङो ह्रस्वत्वं गुगागमश्च । '**शिग्रुर्ना** शाकमात्रेऽपि शोभाञ्जनमहीरुहे' इति मेदिनी ॥ ( ४७४९ ) **रुशाति**-। 'रु शब्दे', 'शद्लृ शातने' ण्यन्तः । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः' इत्यमरः । '**रुरुर्दैत्ये** मृगेऽपि च' इति मेदिनी ॥ ( ४७५० ) **जनिदा**-। 'जनी प्रादुर्भावे', 'डुदाञ् दाने', 'च्युङ् गतौ', 'सृ गतौ', 'वृञ् वरणे', 'मदी हर्षे', 'षम ष्टम अवैकल्ये', 'णम प्रह्वत्वे शब्दे च', 'डुभृञ् धारणपोषणयोः' एभ्यो नवभ्यो यथासंख्यं नव स्युः । जनेरित्वन् जनेरिडागमेनापि जनित्वेति रूपसिद्धाविकारोच्चारणमुत्तरार्थम् ॥ **च्यौत्न इति** । णतो णित्वाद्वृद्धिः ॥ **सृणिरिति** । क्निनिः कित्वान्न गुणः । नित्वं त्वाद्युदात्तार्थम् । 'सृवृषिभ्यां कित् ४६९३' इति निप्रत्यये त्वन्तोदात्तः साधितः ॥ **वृश इति** । शकः कित्वान्न गुणः ॥ **मत्स्य इति** । स्यप्रत्यये चर्त्वेन दस्य तः । आन्तोदात्तोऽयम् । 'कृतन्यजि-४६४५' इति सूत्रे तु तालव्यादिः साधितः । **षण्ढ इति** । बाहुलकाद्धात्वादेः षस्य सकारो न, प्रत्ययादेर्ढस्य तु प्रयोजनाभावान्नेत्संज्ञा । 'शमेर्ढः ४२९८' इति सूत्रे तु

(४७५१) (उ) **अन्येभ्योऽपि दृश्यन्ते** ॥ पेत्वममृतम् । भृशम् ॥ (४७५२) (उ) **कुसेरुम्भोमेदेताः** ॥ कुसुम्भम् । कुसुमम् । कुसीदम् । कुसीतो जनपदः ॥ (४७५३) (उ) **सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः** । सनोतेरसिप्रत्यय उपधावृद्धिः । सानसिर्हिरण्यम् । वृञो नुक् च । वर्णसिर्जलम् । पॄ । पर्णसिर्जलगृहम् । तड आघाते । तण्डुलाः । अकि लक्षणे उशच् । अङ्कुशः । चषेरालः । चषालो यूपकटकः । इल्वलो दैत्यभेदः । पल्वलम् । ञिधृषा– ऋकारस्य इकारः धिष्ण्यम् । शलेर्यः । शल्यं वा पुंसि शङ्कुर्ना ॥ ( ४७५४ ) (उ) **मूशक्यबिभ्यः क्लः** ॥ मूलम् । शक्लः प्रियंवदे । अम्बलो रसः । बाहुलकादमेः । अम्लः ॥ ( ४७५५ ) (उ) **माछासससिभ्यो यः** ॥ माया । छाया । सस्यम् । बाहुलकात्सुनोतेः । सव्यं दक्षिणवामयोः ॥ ( ४७५६ ) (उ) **जनेर्यक्** ॥ ये विभाषा । जन्यं युद्धम् । जाया भार्या ॥ ( ४७५७ ) (उ) **अघ्न्यादयश्च** ॥ यगन्ता निपात्यन्ते । हन्तेर्यक् अडागम उपधालोपश्च । अघ्न्यः प्रजापतिः । अघ्न्या माहेयी । कनी दीप्तौ । कन्या । बवयोरैक्यम् । वन्ध्या ॥ ( ४७५८ ) (उ) **स्नामदिपद्यर्त्तिपॄशकिभ्यो वनिप्** ॥ स्नावा रसिकः । मद्वा शिवः । पद्वा पन्था: । अर्वा तुरङ्गगर्ह्ययोः । पर्वा ग्रन्थिः प्रस्तावश्च ।

---

तालव्यादिः साधितः । 'सायं सायो भवेत्कोशः कोषः **षण्ढश्च शण्ढवत्**' इति द्विरूपकोशः । '**षण्ढो** वर्षवरः' इत्यमरः ॥ **नट इति** । नमतेर्डटः । '**नटी** नल्यौषधी स्त्री स्याच्छैलूषाशोकयोः पुमान्' इति मेदिनी ॥ **भरट इति** । बिभर्तेरटच् । ( ४७५१ ) **अन्येभ्योऽपि**–। इत्वन्नादयोऽनुवर्त्तन्ते ॥ **पेत्वमिति** । 'पा पाने' अस्मादित्वन् ॥ **भृशमिति** । भृञः शक् ॥ ( ४७५२ ) **कुसेः**–। 'कुस श्लेषणे' अस्मादुम्भ उम ईद ईत एते प्रत्ययाः स्युः । '**कुसुम्भं** हेमनि महारजने ना कमण्डलौ' इति मेदिनी । '**कुसुमं** स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति च । '**कुसीदं** जीवने वृद्ध्यां क्लीबं त्रिषु कुसीदके' इति च । इह सूत्रे तृतीयो ह्रस्वादिर्दीर्घादिश्च तन्त्रेणोपात्तः । 'वृषाकप्यग्नि–६८५' इति सूत्रे ह्रस्वादिरेवेति वृत्तिकारहरदत्तादिग्रन्थोपष्टम्भेन निर्णीतम् । पारलौकिककुसीदसीदत्' इति श्रीहर्षप्रयोगात्तु दीर्घादिरपि ॥ ( ४७५३ ) **सानसि**–। **सनोतेरिति** । 'षणु दाने' ॥ **वृञो नुक् चेति** । 'वृञ् वरणे' अस्मादसिः । दशपाद्यां तु 'सानसिधर्णसि–' इति पठित्वा 'धृञो नुक् च' धर्णसिर्लोकपाल इति व्याख्यातम् । युक्तं चैतत्, 'धर्णसिं भूर्यायसम्' इत्यादिमन्त्रानुगुणत्वात् ॥ **पर्णसिरिति** । 'पॄ पालनपूरणयोः' अस्मादसिप्रत्ययो नुक् च ॥ **तण्डुला इति** । उलच् प्रत्ययो नुमागमश्च धातोः । 'त्रेधा तण्डुलान्विभजेत्' इह चित्स्वरः । '**तण्डुलः** स्याद्विडङ्गे च धान्यादिनिकरे पुमान्' इति मेदिनी ॥ **अङ्कुश इति** । अयमपि चित्स्वरेणान्तोदात्तः । तथा मन्त्रः–'दीर्घं ह्यङ्कुशं यथा' इति । '**अङ्कुशो**ऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ॥ **चषेराल इति** । 'चष भक्षणे' प्रत्ययस्वरेणाद्युदात्तः । उज्ज्वलदत्तस्तु कालजिति चितमाह तन्न, 'चषालं ये अश्वयूपाय तक्षति' । 'चषालवन्तः स्वरवः पृथिव्याम्' इत्यादौ चित्स्वरादर्शनात् ॥ अमरोक्तिमाह–**चषाल इति** । **इल्वल इति** । 'इल स्वप्नप्रेरणयोः' वलच्, गुणाभावः । '**इल्वला** तारका राजभेदे ना दैत्यमत्स्ययोः' इति मेदिनी । '**इल्वला**स्तच्छिरोदेशे तारका निवसन्ति याः' इत्यमरः । 'पा पाने' अस्माद्वलच्, लुगागमः, ह्रस्वत्वं च । पिबत्यस्मिन्निति पल्वलमल्पसरः । **इकार इति** । रपरत्वाभावो ण्यप्रत्ययश्चेति बोध्यम् । '**धिष्ण्यं** स्थाने गृहे भेऽग्नौ' इत्यमरः । '**धिष्ण्यं** स्थानाग्निसद्मसु । ऋक्षे शक्तौ च' इति मेदिनी ॥ **शलेः**–। 'शल गतौ' । '**शल्यं** तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे । मदनद्रुमश्वाविधोर्ना' इति मेदिनी ॥ ( ४७५४ ) **मूशकि**–। 'मूङ् बन्धने', 'शक्लृ शक्तौ', 'अबि शब्दे' । '**मूलं** शिफाद्ययोः । **मूलं** वित्तेऽन्तिके' इति मेदिनी । '**शक्लः** प्रियंवदे' इति विशेष्यनिघ्नेऽमरः । 'अम रोगे' चुरादिण्यन्तः । बाहुलकादेवोपधाह्रस्वः । '**अम्ला** रसविशेषे स्यादम्ला चाङ्गेरिकौषधौ' इति मेदिनी ॥ ( ४७५५ ) **माछा**–। 'मा माने', 'छो छेदने', 'षस स्वप्ने' । '**माया** स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे' इति मेदिनी ॥ '**छाया** स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति विश्वमेदिन्यौ । 'वृक्षादीनां फलं **सस्यम्**' इत्यमरः ॥ **सुनोतेरिति** । 'षुञ् अभिषवे' । '**सव्यं** वामे प्रतीपे च' इति मेदिनी ॥ ( ४७५६ ) **जनेः**–। 'जन जनने' यकः कित्त्वमुत्तरार्थम् ॥ '**जन्यं** हट्टपरीवादे सङ्ग्रामे च नपुंसकम् । **जन्या** मातृवयस्यायां **जन्यः** स्याज्जनके पुमान् । त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः । स्निग्धे' इति मेदिनी ॥ आत्त्वपक्षे रूपमाह–**जायेति** । ( ४७५७ ) **अघ्न्यादयश्च** । **अघ्न्य इति** । यकः कित्त्वात् 'गमहन–३१५६' इत्युपधालोपे 'हो हन्तेः–४८५' इति कुत्वेन हस्य घः । अडागममनुक्त्वा नञ्पूर्वाद्धन्तेर्यगित्यन्ये ॥ **अघ्न्येति** । स्त्रियां टाप् । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यात्' इत्यमरः । सम्पूर्वाद्धाञो यक् आतो लोपश्च । '**सन्ध्या** पितृप्रसूनद्यन्तरयोर्युगसन्धिषु' इति मेदिनी ॥ '**कन्या** कुमारिकागौर्योरोषधीराशिभेदयोः' इति विश्वमेदिन्यौ ॥ **वन्ध्येति** । 'बन्ध बन्धने' । '**वन्ध्य**स्त्वफलवृक्षादौ स्त्रियां स्यादप्रजःस्त्रियाम्' इति मेदिनी । कातेर्यति इक् । कुड्यमित्युज्ज्वलदत्तः । 'यतोऽनावः ५५७६' इत्याद्युदात्तः । क्यप्प्रत्ययान्तोऽयमन्तोदात्तः इत्यन्ये–इति 'निवाते वातत्राणे' इति सूत्रे वृत्तिः । ङित्त्वाट्टिलोपे सति कित्करणं व्यर्थं स्यादिति गुणप्रतिषेधार्थात्ककाराद्इकारस्येत्त्वं नेति तत्रैव हरदत्तः । एवं स्थितेऽघ्न्यादयो यगन्ता इति प्रायोवादः ॥ ( ४७५८ ) **स्नामदि**–। 'ष्णा शौचे', 'मदी हर्षे', 'पद गतौ', 'ऋ गतौ', 'पॄ पालनपूरणयोः', 'शक्लृ शक्तौ' । '**अर्वा** तुरङ्गमे पुंसि कुत्सिते वाच्य-

शक्का हस्ती । ङीप्रौ । शक्करी अङ्गुलिः ॥ ( ४७५९ ) (उ) शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥ शीवा अजगरः । क्रुश्वा सृगालः । रुह्वा वृक्षः । जित्वा जेता । क्षित्वा वायुः । सृत्वा प्रजापतिः । धृत्वा विष्णुः ॥ ( ४७६० ) (उ) ध्याप्योः संप्रसारणं च ॥ धीवा कर्मकरः । पीवा स्थूलः ॥ ( ४७६१ ) (उ) अदेर्ध च ॥ अध्वा ॥ ( ४७६२ ) (उ) प्र ईरशदोस्तुट् च ॥ प्रेत्वा प्रशत्वा च सागरः । प्रेत्वरी प्रशत्वरी च नदी ॥ ( ४७६३ ) (उ) सर्वधातुभ्य इन् ॥ पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । देवयजिः । काशत इति काशिः । यतिः । मलिः । मल्ली । केलिः । मसी परिणामे । मसिः । बाहुलकाद् गुणः । कोटिः । हेलिः । बोधिः । नन्दिः । कलिः ॥ ( ४७६४ ) (उ) हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च ॥ हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः । पेषिर्वज्रम् । रोहिर्व्रती । वर्तिः । वेदिः । छेदिश्छेत्ता । कीर्तिः ॥ ( ४७६५ ) (उ) इगुपधात्कित् ॥ कृषिः । ऋषिः । शुचिः । लिपिः । बाहुलकाद्वत्वे लिबिः । तूल निष्कर्षे । तूलिः, तूली कूर्चिका ॥ ( ४७६६ ) (उ) भ्रमेः संप्रसारणं च ॥ भृमिर्वातः । बाहुलकाद् भ्रमिः ॥ ( ४७६७ ) (उ) क्रमितमिशतिस्तम्भामत इच्च ॥ क्रिमिः । संप्रसारणानुवृत्तेः कृमिरपि । तिमिर्मत्स्यभेदः । शितिर्मेचकशुक्लयोः । स्तिम्भिः समुद्रः ॥

---

लिङ्गकः' इति मेदिनी । 'पर्व क्लीबं सहे ग्रन्थे प्रस्तावे लक्षणान्तरे । ' दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि ' इति च ॥ ङीप्राविति । 'वनो र च ६२०' इत्यनेन ॥ अङ्गुलिरिति । एतच्च 'आरोहतं दशतं शक्वरीर्मम' इत्यादिमन्त्रव्याख्यायां स्पष्टम् । 'शक्करी छन्दसो भेदे नदीमेखलयोरपि' इति मेदिनी ॥ ( ४७५९ ) शीङ्-। 'शीङ् स्वप्ने', 'क्रुश आह्वाने रोदने च', 'रुह बीजजन्मनि प्रादुर्भावे च', 'जि जये', 'क्षि निवासगत्योः', 'सृ गतौ', 'धृ धारणे' ॥ ( ४७६० ) ध्याप्योः-। 'ध्यै चिन्तायाम्', 'प्यैङ् वृद्धौ' आभ्यां क्वनिप्स्यात्संप्रसारणं च । धातोः 'हलः ३३९०' इति दीर्घः ॥ ( ४७६१ ) अदेः-। 'अद भक्षणे' अस्मात्क्वनिप् धकारश्चान्तादेशः । अध्वा मार्गः ॥ ( ४७६२ ) प्र ईर-। 'ईर गतौ', ' शद्लृ शातने ' आभ्यां प्रपूर्वाभ्यां क्वनिप्स्यात्तस्य तुडागमश्च ॥ प्रेत्वरीति । स्त्रियाम्-'वनो र च ६२०' इति ङीप्रौ ॥ ( ४७६३ ) सर्वधातुभ्य इन् । 'डुपचष् पाके', 'तुडि तोडने' तोडनं दारणं हिंसनं च, 'वल संवरणे' 'वट वेष्टने', 'यज देवपूजादौ', 'काशृ दीप्तौ', ' यती प्रयत्ने ' । 'यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान्' इति मेदिनी । ' मल मल्ल धारणे ', ' केलृ चलने ' भ्वादिः, 'केला विलासे' कण्ड्वादिः, 'किल शैत्यक्रीडनयोः' तुदादिः, 'कुट कौटिल्ये', ' हिल भावकरणे', ' बुध अवगमने ' 'टुनदि समृद्धौ', 'कल शब्दसंख्यानयोः ' ॥ ' गाङ्कुटादिभ्यः—३२७३ ' इति ङित्त्वाद् गुणाभावमाशङ्क्याह-बाहुलकादिति । 'कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः' इति मेदिनी । 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' इति च । 'नन्दिर्धूताङ्ग आनन्देऽस्त्री नन्दिकेश्वरे पुमान्' इति च । इह 'इन्' इत्येव सूत्रं 'सर्वधातुभ्यः' इति तु प्रक्षिप्तं व्यर्थं च । एवं 'सर्वधातुभ्यष्ट्रन् ४८०४ ' इत्यादावपि बोध्यमित्याहुः ॥ ( ४७६४ ) हृपिषि-—। 'हृञ् हरणे', ' पिष्लृ संचूर्णने ', ' रुह बीजजन्मनि प्रादुर्भावे च ', 'वृतु वर्तने' । वर्तिर्दीपोपकरणम् । ' विद सत्तायाम् ' विद्यते पुण्यमस्यामिति वेदिः परिष्कृता भूमिः । ' छिदिर् द्वैधीकरणे', 'कृत संशब्दने ' । हरतेः कीर्तयतेश्च ' अच इः ४७८४ ' इति प्राप्ते इतरेषां तु ' इगुपधात्-४७६५' इति कित्प्रत्यये प्राप्ते वचनमिदम् । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ' इत्यमरः । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीपेषु योषिति' इति मेदिनी । वेदिः स्यान्मण्डले पुमान् । स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले ' इति च । ' कीर्तिः प्रसादयशसोर्विकारे कर्दमेऽपि च ' इति विश्वः ॥ ( ४७६५ ) इगुपधात्-। 'कृष विलेखने', 'ऋषी गतौ', ' शुच शोके ', 'लिप उपदेहे ' इत्यादेरिगुपधाद्धातोरिन्स्यात्स च कित् । केचित्तु 'इगुपधात्किः ' इति पठित्वा इनोऽपवादः किप्रत्यय इति व्याचख्युः । तन्न, प्रत्ययस्वरेण कृष्यादीनामन्तोदात्ततापत्तः । न चेष्टपत्तिः, 'अग्निः पूर्वेभिर्ऋषिभिः' 'ऋषिर्विप्रः शुचिः कविः' इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात् । न चैवम् ' अक्षैर्मा दीव्यः कृषिमित् कृषस्व ' इत्यादौ कृषिशब्दस्यान्तोदात्तता न सिध्येदिति वाच्यम्, ' इक्कृष्यादिभ्यः ५१०१' इतीक्प्रत्यये सत्यन्तोदात्तत्वसिद्धेः । 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्' इति मेदिनी । ' शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वाषाढे शुद्धमन्त्रिणि ' इति च ॥ ( ४७६६ ) भ्रमेः-। 'भ्रमु अनवस्थाने ' अस्मादिन्स्यात्स च कित् संप्रसारणं च । 'भृमिं विद्यथावसवो पुषन्ति ' इति मन्त्रे भृमिं भ्रमणशीलं दरिद्रजनमिति वेदभाष्यम् ॥ ( ४७६७ ) क्रमि-। ' क्रमु पादविक्षेपे', ' तमु काङ्क्षायाम् ', ' शतिस्तम्भौ सौत्रौ' एभ्य इन्स्यात्स च कित्, एषामत इकारादेशश्च । क्रिमिः क्षुद्रजन्तुः । 'कृमिर्ना कृमिवत्कीटे लाक्षायां क्रिमिले खरे' इति विश्वमेदिन्यौ । 'पारतं पारदं वासो वासरः क्रिमिवत्कृमिः' इति द्विरूपकोशः॥ तिमिरिति । 'अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति लक्ष्मण' इति रामायणे सप्तमे काण्डे रामवाक्यम् । केचित्तु 'तद्गिलोऽप्यस्ति राघव' इति पठित्वा राघवं प्रति लक्ष्मणवाक्यमित्याहुः । 'शितिः

---

१ 'कित्त्वे प्राप्ते' इति मनोरमैव समीचीना ॥

(४७६८) (उ.) मनेरुच्च ॥ मुनिः ॥ (४७६९) (उ.) वर्णेर्बलिश्चाहिरण्ये ॥ वर्णिः सौत्रः। अस्य बलिरादेशः। करोपहारयोः पुंसि बलिः प्राण्यङ्गके स्त्रियाम्। हिरण्ये तु वर्णिः सुवर्णम् ॥ (४७७०) (उ.) वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् ॥ वासिश्छेदनवस्तुनि। वापिः। वापी। याजिर्यष्टा। राजिः। राजी। व्राजिर्वातालिः। सादिः सारथिः। निघातिर्लोहघातिनी। वाशिरग्निः। वादिर्विद्वान्। वारिर्गजबन्धनी। जले तु क्लीबम्। बाहुलकाद्धारिः पथिकसंहतौ ॥ (४७७१) (उ.) नहो भश्च ॥ नाभिः स्यात्क्षत्त्रिये पुंसि। प्राण्यङ्गे तु स्त्रियां पुंस्यपीति केचित् ॥ (४७७२) (उ.) कृषेर्वृद्धिश्छन्दसि ॥ कार्षिः ॥ (४७७३) (उ.) श्रः शकुनौ ॥ शारिः। शारिका ॥ (४७७४) (उ.) कृञ उदीचां कारुषु ॥ कारिः शिल्पी ॥ (४७७५) (उ.) जनिघसिभ्यामिण् ॥ जनिर्जननम्। घासिर्भक्ष्यमग्निश्च ॥ (४७७६) (उ.) अज्यतिभ्यां च ॥ आजिः संग्रामः। आतिः पक्षी ॥ (४७७७) (उ.) पादे च ॥ पदाजिः। पदातिः ॥ (४७७८) (उ.) अशिपणाय्यो रुडायलुकौ च ॥ अशे रुट्। राशिः पुञ्जः। पणायतेरायलुक्। पाणिः करः ॥ (४७७९) (उ.) वातेर्डिच्च ॥ विः पक्षी। स्त्रियां वीत्यपि ॥ (४७८०) (उ.) प्रे हरतेः कूपे ॥ प्राहिः कूपः ॥ (४७८१) (उ.) नौ व्यो यलोपः पूर्वस्य च दीर्घः ॥ व्येञ इण् स्याद् यलोपश्च नेर्दीर्घः। नीविः। नीवी वस्त्रग्रन्थौ मूलधने च ॥ (४७८२) (उ.) समाने ख्यः स चोदात्तः ॥ समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात्स च डित् यलोपश्च समानस्य तूदात्तः स इत्यादेशश्च। समानं ख्यायते

---

कृष्णे सिते भूर्जे' इति विश्वः। 'शितिर्भूर्जे ना सितासितयोस्त्रिषु' इति मेदिनी॥(४७६८)मनेः-। 'मन ज्ञाने' अस्मादिन्स्यात्स च कित्, अकारस्योकारादेशश्च स्यात्। मन्यते जानातीति मुनिः 'मुनिः पुमान्वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी ॥ (४७६९) वर्णेः-। अस्मादिन् स्यात्स च कित् ॥ (४७७०) वसि-। 'वस निवासे', 'डुवप् बीजसन्ताने', 'यज देवपूजादौ, 'राजृ दीप्तौ', 'व्रज गतौ', 'षद्लृ विशरणादौ', 'हन हिंसागत्योः', 'वाश्ट शब्दे', 'वद व्यक्तायां वाचि' ण्यन्तः, 'वृञ् वरणे' ण्यन्तः ॥ वासिरिति। दन्त्यसकारवान्। सूत्रेऽष्टमस्तु तालव्यशकारवान्। 'वास्यादीनामिव करणानां कर्तृव्यापार्यत्वनियमात्' इति वैशेषिकाः। 'वास्यर्थमित्यत्र 'स्कोः-५१६' इति सलोपः प्राप्नोति' इति भाष्यम्। वापिरुदकाधारः। वापी प्रसिद्धा। 'राजिः स्त्री पङ्क्तिरेखयोः' इति मेदिनी। इह वादीति ण्यन्तनिर्देशेऽपि बाहुलकादण्यन्तादपि इञ्। तथा च 'भूवादि-' सूत्रे 'वदन्तीति वादयो वाचकाः' इति न्यासकारादयः। 'वारिः स्मृता सरस्वत्यां वारि ह्रीबेरनीरयोः। वारी घटीभवन्धन्योः' इति विश्वः। 'हृञ् हरणे' अस्मादिञ्। 'हारिः पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्' इति मेदिनी ॥ (४७७१) नहः-। 'णह बन्धने' अस्मादिञ् स्यात् भश्चान्तादेशः ॥ स्त्रियामिति। लिङ्गानुशासने 'स्त्रियाम्' इत्यधिकारे 'नाभिरक्षत्रिये १५' इति सूत्रितत्वादिति भावः ॥ पुंस्यपीति। तथा च मेदिनी 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात्त्रिषु कस्तूरिकामदे' इति। भारविश्च पुंसि प्रायुङ्क्त-'समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीविनाभिभिः' इति॥ (४७७२)कृषेः-। 'कृष विलेखने' इत्यस्मादिञ्, वृद्धिश्च। 'इको गुणवृद्धी ५७' इतीकः स्थाने एव वृद्धिरित्युदाहरति-कार्षिरिति ॥ भाषायां तु कृषिरित्येव॥(४७७३)श्रः-। 'शॄ हिंसायाम्' अस्माच्छकुनौ वाच्ये इञ् स्यात्। 'शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे। युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च' इति मेदिनी। कपिलकादित्वाल्लत्वम्। 'शालिस्तु कलमादौ च गन्धमार्जारके पुमान्' इति मेदिनी॥(४७७५)जनि-। 'जनी प्रादुर्भावे','घस्लृ अदने' आभ्यामिण्। 'जनिवध्योश्च ३३३१' इतीणि वृद्धिप्रतिषेधः ॥ जनिरिति। स्त्रीलिङ्गम्। 'कृदिकारात्-७०८'इति पक्षे ङीष्।'जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि' इति मेदिनी॥(४७७६)अजि-। 'अज गतिक्षेपणयोः', 'अत सातत्यगमने'। बाहुलकादजेर्वीभावो न ॥(४७७७)पादे-। पादोपपदे अज्यतिभ्यामिण्। 'पादस्य पदाज्यातिगोपहतेषु १४२१' इति पदादेशः। पदाजिः पादचारी। 'पदातिपत्तिपदगपादातिकपदाजयः। पद्गश्च पथिकश्च' इत्यमरः ॥ (४७७८) अशिपणाय्योः। अशिश्च पणायिश्च अशिपणायी तयोरिति विग्रहः। 'अशू व्याप्तौ', 'पण व्यवहारे' आयप्रत्ययान्तः, आभ्यामिण् स्यादनयोर्यथाक्रमं रुडायप्रत्ययलुकौ च भवतः। 'राशिर्मेषादिपुञ्जयोः' इति मेदिनी ॥ (४७७९) वातेः-। 'वा गतिगन्धनयोः' अस्मादिण् स्यात् डित्त्वाट्टिलोपः ॥ (४७८०) प्रे-। प्रपूर्वाद्धरतेः कूपे वाच्ये इण्। 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' इत्यमरः ॥ (४७८१) नौ-। 'व्येञ् संवरणे'। 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः। परिपणो मूलधनम् ॥ (४७८२) समाने-। 'ख्या प्रकथने' ॥ इण् स्यादिति। यत्तूज्ज्वलदत्तेनोक्तमिञ् स्यात्स चोदात्त इति। तन्न, संनिहितेन 'जनिघसिभ्यामिण् ४७७५' इत्यनेन 'वसिवपि-४७७०' इत्यादिना विहितस्येञो विच्छिन्नत्वात्। यदपि तेनैव 'नौ व्यः-४७८१' इति पूर्वसूत्रे उक्तमिञत्रानुवर्तते न त्विण्, उत्तरसूत्रे उदात्तवचनाज्ज्ञापकादिति। तदपि न, स चोदात्त इति हि नायं धातोः परत्र विहितं प्रत्ययं निर्देष्टुं तच्छब्दः, किन्तु समानशब्दस्य स्थाने विधीयमानमादेशं निर्देष्टुं शब्दस्वरूपपरः। तथा च कथं ज्ञापकता स्यात्। यदपि स इञ् उदात्त इति व्याख्याय समानस्य सभाव इति प्रक्रियास्मरणमात्रं कृतम्। तदपि न, सभावविधायकस्याभावात्। यदपि स्वरमञ्जरीकारादिभिरुक्तं 'समानस्य च्छन्दसि-१४५८' इति सूत्रेण सभाव इति। तदपि न, लोके सखिशब्दस्यासाधुत्वापत्तेः। अपि च 'सखायमब्रवीत्','सखायस्त्वा वृणुमहे', 'सखा सखिभ्य ईड्यः' इत्यादि-

जनैरिति सखा ॥ ( ४७८३ ) उ॰ आङि श्रिहनिभ्यां ह्रस्वश्च ॥ इण् स्यात्स च डित् आङो ह्रस्वश्च । स्रियः पाल्यश्रिकोटयः । सर्पे वृत्रासुरेऽप्यहिः ॥ ( ४७८४ ) उ॰ अच इः ॥ रविः । पविः । तरिः । कविः । अरिः । अलिः ॥ ( ४७८५ ) उ॰ खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च ॥ खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चलिः पशुः ॥ ( ४७८६ ) उ॰ वृतेश्छन्दसि ॥ वर्तिः ॥ ( ४७८७ ) उ॰ भुजेः किच्च ॥ भुजिः ॥ ( ४७८८ ) उ॰ कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च ॥ इः किस्स्यात् । किरिर्वराहः । गिरिर्गोत्राक्षिरोगयोः । गिरिणा काणः गिरिकाणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः ॥ ( ४७८९ ) उ॰ कुडिकम्प्योर्नलोपश्च ॥ कुडि दाहे । कुडिर्देहः । कपिः ॥ (४७९०) उ॰ सर्वधातुभ्यो मनिन् ॥ क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् । इस्मिन्निति हैस्वः । छद्म । सुत्रामा ॥ ( ४७९१ ) उ॰ बृंहेर्नोऽच्च ॥ नकारस्याकारः । ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः ॥ (४७९२ ) उ॰ अशिशकिभ्यां छन्दसि ॥ अश्मा । शक्मा ॥ (४७९३ ) उ॰ हृभृधृसृस्तृशॄभ्य इमनिच् ॥ हरिमा कालः। भरिमा कुटुम्बम्। धरिमा रूपम् । सरिमा वायुः। स्तरिमा तल्पम् । शरिमा प्रसवः ॥ (४७९४) उ॰ जनिमृङ्भ्यामिमनिन् ॥ जनिमा जन्म । मरिमा मृत्युः ॥ (४७९५) उ॰ वेञः सर्वत्र ॥

---

मन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवादम् । एवं च इन्नुदात्त इत्युज्ज्वलदत्तादिव्याख्यानं वेदवार्त्तानभिज्ञत्वप्रयुक्तमेवेति दिक् ॥ ( ४७८३ ) आङि-। 'श्रिञ् सेवायाम्', 'हन हिंसागत्योः' अमरोक्तिमाह—स्रिय इति । एवं च 'सुप्रातसुश्व–१२४०' इति सूत्रे चतुरश्रेति तालव्यपाठः संगच्छत एव । तत्सूत्रे दन्त्यपाठस्त्वेतत्सूत्रापर्यालोचनामूलक एवेत्यवधेयम् । नन्वेवं चतुरस्रमिति दन्त्यप्रयोगस्य कथं निर्वाह इति चेत् । अत्राहुः-अकारान्तेन दन्त्यगर्भिणाऽस्रशब्देन विग्रहे तत्प्रयोगः । न च तादृशे शब्दे विप्रतिपत्तव्यम्, 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनीकोशादिति । 'अहिर्वृत्रासुरे सर्पे' इति मेदिनी ॥ ( ४७८४ ) अच इः । अजन्ताद्धातोरिः स्यात् । 'रु शब्दे' । 'पूञ् पवने' पविर्वज्रम् । 'तॄ प्लवनतरणयोः' । तरिर्वस्त्रादिस्थापनभाण्डम् । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । 'कु शब्दे' । 'कविर्वाल्मीकशुक्रयोः । सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति' इति मेदिनी । 'ऋ गतौ' । अरिः शत्रुः । कपिलकादित्वाद्वैकल्पिकलत्वम् । अलिर्भ्रमरः ॥ ( ४७८५ ) खनि-। 'खनु अवदारणे', 'कष खष–' इति दण्डको हिंसार्थकः, 'अज गतिक्षेपणयोः', 'असु क्षेपणे', 'वस आच्छादने', 'वन षण सम्भक्तौ', 'वनु याचने', 'षणु दाने', 'ध्वन शब्दे', 'ग्रन्थ बन्धने' उभौ चुरादी, 'चल कम्पने' एभ्यः इः स्यात् । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । ण्यन्तात् 'अच इः ४७८४' इति इप्रत्यये खानिरपि । 'खनिरेव मता खानिः' इति द्विरूपकोशः । 'ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः' इति मेदिनी । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः ॥ वनिरग्निरिति । 'वनु याचने' इत्यस्मादिप्रत्यये वनिर्याच्ञा इत्याहुः ॥ चलिः पशुरिति । 'चरिभ्यश्च' इति पाठान्तरम् । 'चर गतौ' चरतिर्भक्षणेऽपि, चरिः पशुः ॥ ( ४७८६ ) वृतेः-। 'वृतु वर्तने' अस्मादिः स्यात् । बाहुलकाल्लोकेऽपि 'साज्यं त्रिवर्तिसंयुक्तम्' इति प्रयोगः । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीपेषु योषिति' इति मेदिनी ॥ ( ४७८७ ) भुजेः-। 'भुज पालनाभ्यवहारयोः' अस्मादिः स्यात्स कित् । भुजिरग्निः ॥ ( ४७८८ ) कॄगॄशॄ-। 'कॄ विक्षेपे', 'गॄ निगरणे', 'शॄ हिंसायाम्, 'पॄ पालनपूरणयोः', 'कुट कौटिल्ये', 'भिदिर् विदारणे', 'छिदिर् द्वैधीकरणे' । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । 'इगुपधज्ञाप्रीकिरः–२८५७' इति कप्रत्यये किर इत्यकारान्तोऽपि ।'त्वचि त्वचः किरोऽपि स्यात् किरौ प्रोक्तः पथः पथि' । इति द्विरूपकोशः । 'गिरिर्ना नेत्ररुग्भिदि । अद्रौ गिरिजके योषिद्गीर्णौ पूज्ये पुनस्त्रिषु' इति ॥ कुटिरिति । ङीपि तु कुटी । 'कुटीशमीशुण्डाभ्यो रः २७६९' । कुटीरः । 'कुटिः कीटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे । कुटी स्यात्कुम्भदास्यां च सुरायां चित्रगुच्छके' इति मेदिनी ॥ ( ४७८९ ) कुडि-। 'कुडि दाहे', 'कपि चलने' आभ्यामिः कित्स्याद्धातोर्नलोपश्च । 'कपिर्ना सिंहके शाखामृगे च मधुसूदने' इति च ॥ ( ४७९० ) सर्वधातुभ्यः-। 'डुकृञ् करणे', 'चर गतौ' चरतिर्भक्षणेऽपि, 'जन जनने', 'भस भर्त्सनदीप्त्योः', 'शॄ हिंसायाम्' शर्म सुखे । 'ष्ठा गतिनिवृत्तौ', 'छद अपवारणे' चुरादिः । 'त्रैङ् पालने' । सुष्ठु त्रायते इति सुत्रामा इन्द्रः । 'कर्म व्याप्ये क्रियायाञ्च पुंनपुंसकयोर्मतम्' इति रुद्रः । 'चर्म कृत्तौ च फलके' इति मेदिनी ॥ ( ४७९१ ) बृंहेः-। 'बृहि वृद्धौ' अस्मान्मनिन्नुमो नस्याकारे ऋकारस्य यणादेशः । 'ब्रह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' इति मेदिनी ॥ (४७९२ ) अशि-। 'अशू व्याप्तौ संघाते च' । 'शक्लृ शक्तौ' शक्मा इन्द्रः । छन्दसीत्यस्य शकिना संबन्धो न त्वशिना । अत एव 'अश्मानमारोपयतः स्मरारेः' इति प्रयोगः । (४७९३) हृभृ-। 'हृञ् हरणे', 'डुभृञ् धारणपोषणयोः', 'धृ धारणे', 'सृ गतौ', 'स्तृञ् आच्छादने', 'शॄ हिंसायाम्' ॥ शरिमेति । एतच्चोज्ज्वलदत्तरीत्योक्तम् । दशपाद्यां तु शृणातिर्न पठ्यते, तत्स्थाने सृधातुं प्रक्षिप्य प्रत्ययं च दीर्घादिं नितं च कृत्वा 'स्तृसृभ्यामीमन्' इति पठ्यते, छन्दोग्रहणं चानुवर्तितम् । युक्तं चैतत्, 'पिपृतान्नो भरीमभिः', 'वातस्य सर्गो अभवत्सरीमणि', 'स्तीर्णं बर्हिः सुष्टरीमा जुषाणा यस्यामतिर्भा अदिद्युतत्सवीमाणि:', 'हिरण्यपाणिः' इत्यादिमन्त्राणां तद्भाष्यस्य चानुगुणत्वात् । उक्तप्रयोगाणां भाषायामदर्शनेन च्छन्दोऽनुवृत्तेर्न्याय्यत्वाच्च । अत एव 'वेञः सर्वत्र ४७९५' इति सूत्रे सर्वत्रग्रहणं करिष्यति ॥ ( ४७९४ ) जनि-। 'जन जनने', 'मृङ् प्राणत्यागे' ॥ (४७९५)

छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः । सामनी वेमनी इति वृत्तिः ॥ ( ४७९६ ) उ॰ **नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् धामन्** ॥ सप्त अमी निपात्यन्ते । ज्ञायतेऽनेनेति नाम । सिनोतेर्दीर्घः । सीमा । सीमानौ । सीमानः । पक्षे डाप् । सीमे । सीमाः । व्येञोऽन्त्यस्योत्वं गुणः । व्योम । रौतेः रोम । लोम । पाप्मा पापम् । धाम परिमाणं तेजश्च ॥ ( ४७९७ ) उ॰ **मिथुने मनिः** ॥ उपसर्गक्रियासंबन्धो मिथुनम् । स्वरार्थमिदम् । सुशर्मा । (४७९८) उ॰ **सातिभ्यामनिन्मनिणौ** ॥ स्यति साम । सामनी । आत्मा ॥ (४७९९) उ॰ **हनिमशिभ्यां सिकन्** ॥ हंसिका हंसयोषिति । मक्षिका ॥ ( ४८०० ) उ॰ **कोररन्** ॥ कवरः ॥ ( ४८०१ ) उ॰ **गिर उडच्** ॥ गरुडः ॥ ( ४८०२ ) उ॰ **इन्देः कमिन्नलोपश्च** ॥ इदम् ॥ ( ४८०३ ) उ॰ **कायतेर्डिमिः** ॥ किम् ॥ ( ४८०४ ) उ॰ **सर्वधातुभ्यः ष्ट्रन्** ॥ वस्त्रम् । अस्त्रम् । शस्त्रम् । इस्मन्निति ह्रस्वत्वम् । छादनाच्छत्रम्॥ (४८०५) उ॰ **भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च** ॥ भ्राष्ट्रः । गात्रं शकटम् । नान्त्रं स्तोत्रम् । हान्त्रं मरणम् । वैष्ट्रं विष्टपम् । आष्ट्रमाकाशम् ॥ ( ४८०६ ) उ॰ **दिवेर्द्युच्च** ॥ द्यौत्रं ज्योतिः ॥ ( ४८०७ ) उ॰ **उषिखनिभ्यां कित्** ॥ उष्ट्रः । खात्रं खनित्रं जलाधारश्च ॥ ( ४८०८ ) उ॰ **सिविमुच्योष्टेरू च** ॥ सूत्रम् । मूत्रम् ॥ (४८०९) उ॰ **अमिचिमिदिशसिभ्यः क्त्रः** ॥ आन्त्रम् । चित्रम् । मित्त्रम् । शस्त्रम् ॥ ( ४८१० ) उ॰ **पुवो ह्रस्वश्च** ॥ पुत्रः ॥

---

**वेञः**—। 'वेञ् तन्तुसन्ताने' ॥ ( ४७९६ ) **निपात्यन्त इति** । मनिन्नन्ता इति शेषः । 'म्ना अभ्यासे' मलोपो नाभावो वा । नाम संज्ञा । 'षिञ् बन्धने' । '**सीमसीमे** स्त्रियामुभे' इत्यमरः । 'व्येञ् संवरणे' । 'रु शब्दे' रोम गात्रकेशः । 'लूञ् छेदने' । लोम स एव । 'पा पाने' पुगागमः । 'ध्यै चिन्तायाम्' । बाहुलकादन्येऽपि । 'यक्ष पूजायाम्' । 'क्षयः शोषश्च **यक्ष्मा** च' इत्यमरः । 'षू प्रेरणे' सोमा चन्द्रः । 'डुधाञ् धारणपोषणयोः' । '**धाम** देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति मेदिनी ॥ (४७९७) **मिथुने**—। 'शॄ हिंसायाम्' । सुष्ठु श्रृणाति इति सुशर्मा राजविशेषः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदम्, मनिनि तु मध्योदात्तं स्यात् ॥ ( ४७९८ ) **साति**—। 'षोऽन्तकर्मणि', 'अत सातत्यगमने' आभ्यां यथासंख्यमेतौ स्तः । स्यति दुःखयति दुरध्येयत्वात् साम । ' **साम** क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी । '**आत्मा** पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि' इति च ॥ ( ४७९९ ) **हनि**—। 'हन हिंसागत्योः', 'मश शब्दे रोषकृते च' । '**मक्षिका** भम्भराली स्यात् ' इति हारावली ॥ ( ४८०० ) **कोररन्** । 'कु शब्दे' कवरः पाठकः । वबयोरैक्यात्कबरी केशविन्यासः । 'जानपद—७००' इति ङीष् । अन्यत्र कबरा ॥ ( ४८०१) **गिरः**—। 'गॄ निगरणे' । केचित्तु सूत्रमिदं परित्यज्य गरुता डयत इति विगृह्य डीङो डप्रत्यये पृषोदरादित्वाद्गरुतस्तकारलोपे गरुडशब्दं क्लेशेन व्युत्पादयन्ति ॥ ( ४८०२ ) **इन्देः**—। 'इदि परमैश्वर्ये' उज्ज्वलदत्तस्तु कमिन्निति नितं पपाठ । तच्चिन्त्यम् , 'इदं तत्पात्रमिन्द्रपानम्', 'इदं ते सोम्यं मधु' इत्यादौ नित्स्वराभावात् । दशपाद्यां तु 'इणो दमक्' इति सूत्रितम् ॥ **इदमिति** । सर्वनामशब्दोऽयं संनिहितपरामर्शी ॥ ( ४८०३ ) **कायतेः**—। 'कै गै शब्दे' प्रयोजनाभावादेव मकारस्येत्संज्ञाविरहे सिद्धे डिमेरिकार उच्चारणार्थः । डकारस्तु टिलोपार्थः । दशपाद्यां तु मान्तमेव डिमिति सूत्रितम् ॥ **किमिति** । सर्वनाम ॥ ( ४८०४ ) **सर्वधातुभ्यः**—। दशपाद्यां तु अर्थात्सर्वधातुभ्यो भविष्यतीत्याशयेन 'ष्ट्रन्' इत्येव सूत्रितम् । अत एवाधिकं प्रक्षिप्तमित्याहुः । 'वस निवासे', 'असु क्षेपणे', 'शसु हिंसायाम्', 'छद अपवारणे' ण्यन्तः । '**अस्त्रं** प्रहरणे पापे करवाले नपुंसकम्' इति मेदिनी । 'पत्लृ गतौ' । '**पत्त्रं** तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' इति मेदिनी । 'पा पाने' । पात्रम् । षित्वान्ङीष् । '**पात्र्यमत्रे** त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । तरिद्वयान्तरे योग्ये' इति मेदिनी । 'दंश दशने' । व्रश्चादिना षत्वे ष्टुत्वे षित्वा ङीषोऽनित्यत्वाट्टाप् । दंष्ट्रा ॥ ( ४८०५ ) **भ्रस्जि**—। 'भ्रस्ज पाके', 'गम्लृ गतौ', 'णम प्रह्वत्वे शब्दे च', 'हन हिंसागत्योः', 'विश प्रवेशने', 'अशू व्याप्तौ' एभ्यः ष्ट्रन् स्यादेषां वृद्धिश्च ॥ **भ्राष्ट्र इति** । संयोगादिलोपः । 'व्रश्च ४११' इति षत्वे ष्टुत्वम् । 'क्लीबेऽम्बरीषं **भ्राष्ट्रो** ना' इत्यमरः । वैष्ट्रं विष्टपम् ॥ ( ४८०६ ) **दिवेः**—। 'दिवु क्रीडादौ' अस्मात् ष्ट्रन् स्यात् द्युदादेशः वृद्धिश्च धातोः ॥ ( ४८०७ ) **उषि**—। 'उष दाहे', 'खनु अवदारणे' आभ्यां ष्ट्रन् कित्स्यात् । उष्ट्रः क्रमेलकः । 'उष्ट्रे क्रमेलकमयमहाङ्गाः' इत्यमरः ॥ ( ४८०८ ) **सिवि**—। 'षिवु तन्तुसन्ताने', 'मुच्लृ मोक्षणे' आभ्यां ष्ट्रन्कित्स्यात् टेरूकारादेशश्च । सूत्रिमूत्रिभ्यां चुरादिण्यन्ताभ्यामेरचा रूपसिद्धेर् द्युदात्तार्थमिदं सूत्रम् । न च घञा तत्सिद्धिः, 'एरच् ५०२२' इत्यस्य घञो बाधकत्वात् । '**सूत्रं** तु सूचनाग्रन्थे सूत्रतन्तुव्यवस्थयोः' इति विश्वः ॥ ( ४८०९ ) **अमि**—। 'अम गतिशब्दसंभक्तिषु', 'चिञ् चयने', 'ञिमिदा स्नेहने', 'शसु हिंसायाम्' । **आन्त्रमिति** । 'अनुनासिकस्य—३५४५' इति दीर्घः । 'श्रोणिलम्बिपुरुषान्त्रमेखलाम्' इति कालिदासः । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । '**मित्रं** सुहृदि न द्वयोः । सूर्ये पुंसि' इति मेदिनी । '**शस्त्रं** लोहास्त्रयोः क्लीबं क्षुरिकायां तु योषिति' इति च । प्रत्ययस्वरेणैतेऽन्तोदात्ताः । 'शुन आन्त्राणि पेचे', 'चित्रं देवानाम्', 'मित्रं न यम्'। 'शस्त्रस्य शस्त्रमसि' इत्यादि ॥ ( ४८१० ) **पुवः**—। 'पूञ् पवने' अस्मात् क्त्रः स्यात् धातोर्ह्रस्वत्वं च । पुनाति स्ववंश्यानिति पुत्रः । पुन्नामा नरकस्तस्मात् त्रायते इत्यर्थे 'आतोऽनुपसर्गे कः ३८८३' इति कप्रत्यये पुत्त्र इति व्युत्पत्त्यन्तरम् ॥

(४८११) (उ) स्त्यायतेर्ड्रट् ॥ स्त्री ॥ (४८१२) (उ) गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ॥ गोत्रं स्यान्नाम वंशयोः। गोत्रा। पृथिवी। धत्रं गृहम्। वेत्रम्। पक्त्रम्। वक्त्रम्। यन्त्रम्। सत्त्रम्। क्षत्त्रम्॥ (४८१३) (उ) हुयामाश्रुभसिभ्यस्त्रन्॥ होत्रम्। यात्रा। मात्रा। श्रोत्रम्। भस्त्रा ॥ (४८१४) (उ) गमेरा च ॥ गात्रम् ॥ (४८१५) (उ) दादिभ्यश्छन्दसि ॥ दात्रम्। पात्रम् ॥ (४८१६) (उ) भूवादिगृभ्यो णित्रन् ॥ भावित्रम्। वादित्रम्। गारित्रमोदनम् ॥ (४८१७) (उ) चरेर्वृत्ते ॥ चारित्रम् ॥ (४८१८) (उ) अशित्रादिभ्य इत्रोत्रौ ॥ अशित्रम्। वहित्रम्। धरित्री मही। त्रैङ्-एवमादिभ्य उत्रः। त्रोत्रं प्रहरणम्। वृञ्। वरुत्रं प्रावरणम् ॥ (४८१९) (उ) अमेर्द्विषति चित् ॥ अमित्रः शत्रुः ॥ (४८२०) (उ) आ समिण्निकषिभ्याम् ॥ संपूर्वादिणो निपूर्वात्कषेश्च आ स्यात्। स्वरादित्वादव्ययत्वम्। समया। निकषा ॥ (४८२१) (उ) चितेः कणः कश्च ॥ बाहुलकाद्गुणः। चिक्कणं मसृणं स्निग्धम्॥ (४८२२) (उ) सूचेः स्मन् ॥ सूक्ष्मम् ॥ (४८२३) (उ) पातेर्डुम्सुन्। पुमान् ॥ (४८२४) (उ) रुचिभुजिभ्यां किष्यन् ॥ रुचिष्यमिष्टम्। भुजिष्यो दासः॥ (४८२५) (उ) वसेस्तिः॥ वस्तिर्नाभेरधो द्वयोः। वस्तयः स्युर्दशासूत्रे। बाहुलकात् शासः। शास्तिः राजदण्डः। विन्ध्याख्यमगमस्यतीत्यगस्तिः। शकन्ध्वादिः ॥ (४८२६) (उ) सावसेः ॥ स्वस्ति। स्वरादिपाठादव्ययत्वम् ॥ (४८२७) (उ) वौ तसेः ॥ वितस्तिः ॥ (४८२८) (उ) पदिप्रथिभ्यां नित् ॥ पत्तिः। प्रथितिः। तितुत्रेष्वग्रहादीनामितीट् ॥ (४८२९) (उ) दृणातेर्ह्रस्वश्च ॥ दृतिः ॥

---

(४८११) स्त्यायतेः-। 'स्त्यै ष्ट्यै शब्दसंघातयोः'। स्त्रीति। डित्वाट्टिलोपः। 'लोपो व्योः--१२५४' इति यलोपः, टित्वान्ङीप्। 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः ॥ (४८१२) गुधृ-। 'गुङ् अव्यक्ते शब्दे', 'धृञ् धारणे', 'वी गतिप्रजननादौ', 'डुपचष् पाके', 'वच परिभाषणे', 'यम उपरमे', 'षद्लृ विशरणगत्यादौ', 'क्षद' इति सौत्रः। 'गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः। संभावनीयबोधे च काननक्षेत्रवर्त्मसु' इति मेदिनी। 'सत्त्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इत्यमरः। 'सत्त्रं यज्ञसदादानच्छादनारण्यकैतवे' इति मेदिनी। क्षत्त्रं ब्राह्मणानन्तरजातिः ॥ (४८१३) हुयामा--। 'हु दानादनयोः', 'या प्रापणे', 'मा माने', 'श्रु श्रवणे', 'भस भर्त्सनदीप्त्योः'। होत्राशब्द ऋत्विक्ष्वपि स्त्रीलिङ्ग इति 'होत्राभ्यश्छः' इति सूत्रे हरदत्तादयः। 'यात्रा तु पातनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्' इति मेदिनी। 'मात्रा तु कर्णभूषायां वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे' इति च। 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः। 'भस्त्रा चर्मप्रसेविका' इति च ॥ (४८१४) गमेः--। 'गम्लृ गतौ' अस्मात् त्रन्स्याद्धातोराकारान्तादेशश्च। 'गात्रमङ्गे कलेवरे। स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरितम्' इति विश्वः ॥ (४८१५) दादिभ्यः--। 'दाप् लवने' एवमादिभ्यस्त्रन्। दात्रं धान्यादिच्छेदनसाधनम्। 'पा पाने'। 'योग्यभाजनयोः पात्रम्' इत्यमरः। 'क्षि निवासगत्योः'। क्षेत्रमित्यादि योज्यम् ॥ (४८१६) भूवादि--। 'भू सत्तायाम्'। भावित्रं त्रैलोक्यम्। 'वद व्यक्तायां वाचि' ण्यन्तः। वादित्रं तूर्यादि। 'गॄ निगरणे' ॥ (४८१७) चरेः--। 'चर गतौ' अस्माण्णित्रन्स्यात् वृत्ते वाच्ये। 'वृत्तं पद्ये चारित्रे च' इत्यमरः। ननु इत्रप्रत्यये चरित्रमित्युक्तम्[४१९६], ततश्च प्रज्ञाद्यणि चारित्रमिति सिद्धौ किमनेनेति चेत्। मैवम्, स्वरे विशेषात् ॥ (४८१८) अशि--'अशू व्याप्तौ' एवमादिभ्य इत्रः। 'त्रैङ् पालने' एवमादिभ्य उत्रश्च स्यात् ॥ वहित्रमिति। 'वह प्रापणे' ॥ धरित्रीति। 'धृञ् धारणे' गौरादित्वात् ङीष् ॥ (४८१९) अमेः--। 'अम गतौ' अस्मादित्रः स्यात्स च चित्। उत्रस्तु नानुवर्तते, अस्वरितत्वात्। मित्रं नेति विग्रहे त्वमित्त्रमिति नपुंसकम् ॥ (४८२०) आ--। 'इण् गतौ' अस्मादाप्रत्यये गुणे समयादेशः ॥ कषेरिति--। 'कष खष--' इति दण्डकः। समयानिकषाशब्दौ समीपवाचकौ बाहुलकात् दुषेः-। दोषा। दिवेराप्रत्यये बाहुलकादेवास्य गुणाभावे दिवा। स्वदेराप्रत्यये बाहुलकादेव धातोर्धान्तादेशश्च स्वधेत्यादि ॥ (४८२१) चितेः-। 'चिती संज्ञाने' अस्मात्कणः प्रत्ययः स्यात्कश्चान्तादेशः ॥ अमरोक्तमाह--चिक्कणमिति। (४८२२) 'सूच पैशुन्ये' चुरादिरस्मात्स्मन्, णिलोपः, कुत्वषत्वे। 'सूक्ष्मं स्यात्कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी ॥ (४८२३) पातेः--। 'पा रक्षणे' अस्मात् डुम्सुन्स्यात्। डित्वाट्टिलोपः। उकार उच्चारणार्थ इत्युज्ज्वलदत्तः। वस्तुतस्तूगित्कार्यार्थः। सुपुंसीति 'उगितश्च ६१९' इति ङीप्। 'पुंसोऽसुङ्' इति सूत्रे न्यासरक्षिताभ्यां 'पुनातेर्मक्सुन् ह्रस्वश्च' इति पठितम्। 'पूञो डुम्सुन्' इत्यन्ये। भाष्ये तु-'सूतेः सप् प्रसवे पुमान्' इत्युक्तम् 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति तत्त्वम् ॥ (४८२४) रुचि--। 'रुच दीप्तावभिप्रीतौ च'। 'भुज पालनादौ'। 'भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकयोः स्त्रियाम्' इति मेदिनी ॥ (४८२५) वसेः--। 'वस निवासे', 'वस आच्छादने'। 'वस्ति-र्द्वयोर्निरूहे नाभ्यधोभूमिदशासु च' इति मेदिनी ॥ शास इति। 'शासु अनुशिष्टौ' ॥ अस्यतीति। 'असु क्षेपणे'। 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' इति मेदिनी ॥ (४८२६) सावसेः। 'अस भुवि' अस्मात्सावुपपदे तिः स्यात् बहुलवचनान्न भूभावः ॥ (४८२७) वौ-। 'तसु उपक्षये' अस्माद्विपूर्वात्तिः स्यात्। 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः।' इत्यमरः। 'स्त्रीपुंसयोर्वितस्तिः स्यात्' इत्यमरमाला॥ (४८२८) पदि-। पद गतौ',

---

1 वार्तिकमिदं 'गुरोश्च हलः' इति सूत्रे आगमिष्यति।

( ४८३० ) (उ) **कॄतॄकृपिभ्यः कीटन्** ॥ किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णम् । कृपीटं कुक्षिवारिणोः ॥ ( ४८३१ ) (उ) **रुचिवचिकुचिकुटिभ्यः कितच्** ॥ रुचितमिष्टम् । उचितम् । कुचितं परिमितम् । कुटितं कुटिलम् ॥ ( ४८३२ ) (उ) **कुटिकुषिभ्यां क्मलन्** ॥ कुट्मलम् । कुष्मलम् ॥ ( ४८३३ ) (उ) **कुषेर्लश्च** ॥ कुल्मलं पापम् ॥ ( ४८३४ ) (उ) **सर्वधातुभ्योऽसुन्** ॥ चेतः । सरः । पयः । सदः ॥ ( ४८३५ ) (उ) **रपेरत एच्च** ॥ रेपोऽवद्यम् ॥ ( ४८३६ ) (उ) **अशेर्देवने युट् च** ॥ देवने स्तुतौ । यशः ॥ ( ४८३७ ) (उ) **उब्जेर्बले बलोपश्च** ॥ ओजः ॥ ( ४८३८ ) (उ) **श्वेः संप्रसारणं च** ॥ शवः । शवसी । बलपर्यायोऽयम् ॥ ( ४८३९ ) (उ) **श्रयतेः स्वाङ्गे शिरः किच्च** ॥ श्रयतेः शिर आदेशोऽसुन् किच्च । शिरः । शिरसी ॥ ( ४८४० ) (उ) **अर्तेरुच्च** ॥ उरः ॥ ( ४८४१ ) (उ) **व्याधौ शुट् च** ॥ अर्शो गुदव्याधिः ॥ ( ४८४२ ) (उ) **उदके नुट् च** ॥ अर्तेरसुन् स्यात्तस्य च नुट् । अर्णः । अर्णसी ॥ ( ४८४३ ) (उ) **इण आगसि** ॥

---

'प्रथ प्रख्याने' आभ्यां तिः स्यात्स च नित् ॥ **पत्तिरिति** । पदातिः ॥ **प्रथितिरिति** । प्रख्यातिः ॥ **तितुत्रेष्विति** । ग्रहादित्वादिडागमनिषेधो नेति भावः ॥ ( ४८२९ ) **दृणातेः**—। 'दॄ विदारणे' अस्मात्तिः स्याद्धातोर्ह्रस्वत्वं च । '**दृतिः** चर्मपुटे मत्स्ये ना' इति मेदिनी ॥ (४८३०) **कॄतॄ**—। 'कॄ विक्षेपे', 'तॄ प्लवनतरणयोः', 'कृपू सामर्थ्ये' । '**किरीटं** मुकुटे न स्त्री' इति चन्द्रगोमी । '**कृपीट**मुदरे नीरे' इति विश्वः । दशपाद्यां तु 'कॄगॄकृपिकपिभ्यः' इति पठित्वा कम्पीट इति चतुर्थ-मुदाहृतम् ( ४८३१ ) **रुचिवचि**—। 'रुच दीप्तावभिप्रीतौ च', 'वच परिभाषणे', 'कुच शब्दे तारे' [ अथवा कुञ्च 'कौटिल्याल्पीभावयोः' कितचः कित्त्वात्सूत्रे नलोपेन निर्देशः । ][1] 'कुट कौटिल्ये' ॥ **उचितमिति** । 'वचिस्वपि—३२१३ इत्यादिना संप्रसारणम् ॥ (४८३२) **कुटिकुषि**—। '**कुट्मलो** मुकुले पुंसि न द्वयोर्नरकान्तरे' इति मेदिनी । 'कुष निष्कर्षे' । कुष्मलं छर्दनम् । विकसितमित्यन्ये ॥ ( ४८३४ ) **सर्वधातुभ्योऽसुन्** । दशपाद्यां तु 'असुन्' इत्येव सूत्रम् । 'चिती संज्ञाने', 'चित सञ्चेतने' चुरादिः, 'सृ गतौ' गौरादित्वान्ङीष् । '**सरसी** तु महासरः' इति शब्दार्णवः । 'महान्ति सरांसि सरस्यः' इति भाष्यम् । 'पय गतौ', 'पीङ् पाने' । '**पयः** स्यात् क्षीरनीरयोः' इति मेदिनी । 'षद्लृ विशरणादौ' सदः सभा । 'वर्च दीप्तौ' । '**वर्चो** नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये' इति मेदिनी । 'रुदिर् अश्रुविमोचने' । '**रोदश्च रोदसी** चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयोः रोदस्यावपि **रोदसी**' इति विश्वः ॥ 'वी गत्यादिषु' । '**वयः** पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी । 'अन प्राणने' अनो भक्तम् । 'अनोऽश्मायःसरसां जातिसंज्ञयोः ११४२' इति टचि तु अदन्तम् । 'पाकस्थानं **महानसम्**' इत्यमरः । 'तमु काङ्क्षायाम्' '**तमः** क्लीबं गुणे शोके सैंहिकेयान्धकारयोः ' इति रभसः । ' **तमो** ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे ' इति मेदिनी ॥ 'षह मर्षणे' । '**सहो** बले ज्योतिषि च पुंसि हेमन्तमार्गयोः' इति मेदिनी । 'तप संतापे' । '**तपो** लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः' इति ॥ 'मह पूजायाम्' । 'मह उत्सवतेजसोः' इति मेदिनी । 'नभ हिंसायाम्' भौवादिकः क्रैयादिकश्च । '**नभो**ऽन्तरिक्षं गगनम्' इत्यमरः । 'नभं तु **नभसा** सार्द्धं तपं तु तपसा सह । सहं च सहसा सार्द्धं महं च महसा सह ॥ तमेन च तमः प्रोक्तं रजेनापि रजः समम्' इति द्विरूपकोशः । नन्वसुन्प्रत्यये नभः सहस्तम इत्यादिसान्तशब्दाः सिध्यन्ति, पचाद्यचि नभं सहं तमामित्याद्यजन्ता अपि सिध्यन्ति, परन्तु रज इति अकारान्तसकारान्तौ नलोपवच्छब्दौ न सिध्यत इति 'रजेनापि रजः समम्' इति कोशश्चिन्त्य एवेति चेत् । अत्राहुः—'रञ्ज रागे' अस्मादसुनि 'भूरञ्जिभ्यां कित् ४८६२ ' इति वक्ष्यमाणेनासुनः कित्त्वान्नलोपे रज इति सिध्यति 'घञर्थे कविधानम् ५०२८ ' इति कप्रत्यये तु रज इत्यदन्तोऽपि सिध्यतीति ॥ ( ४८३५ ) **रपेः**—। 'रप व्यक्तायां वाचि' अस्मादसुन् स्यादत एकारश्च ॥ **रेपोऽवद्यमिति** । 'अरेपसा तन्वा' इति मन्त्रे निरवद्ययेति भाष्ये उक्तं नञ्पूर्वकरेपश्शब्दस्यानवद्यवाचकत्वात् ॥ ( ४८३६ ) **अशेः**—। 'अशू व्याप्तौ' अस्मादसुन्स्याद्धातोर्युडागमश्च । यशः कीर्तिः ॥ ( ४८३७ ) **उब्जेः**—। 'उब्ज आर्जवे' अस्मादसुन् स्याद्बले वाच्ये बकारस्य लोपश्च । '**ओजो** दीप्ताववष्टम्भे प्रकाशबलयोरपि' इति मेदिनी ॥ ( ४८३८ ) **श्वेः**—। 'टुओश्वि गतिवृद्ध्योः' अस्मादसुन्स्यात्संप्रसारणं च ॥ ( ४८३९ ) **श्रयतेः**—। 'श्रिञ् सेवायाम्' अस्मात्स्वाङ्गे वाच्येऽसुन्स्यात्स च किद्धातोः शिरादेशश्च । 'उत्तमाङ्गं **शिरः** शीर्षम्' इत्यमरः । घञर्थे कप्रत्यये तु शिर इत्यदन्तोऽपि ' शिरोवाची **शिरो**ऽदन्तो रजोवाची रजस्तथा' इति कोशान्तरम् 'पिण्डं दद्याद्गयाशिरे' इति वायुपुराणे । 'कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त शिरान् द्रौणिर्नालेभ्य इव पङ्कजान्' इति महाभारतम् ॥ (४८४०) **अर्तेः**—। 'ऋ गतौ' अस्मादसुन् कित्स्याद्धातोरुत्वं च । रपरत्वम् । '**उरो** वत्सं च वक्षश्च' इत्यमरः ॥ ( ४८४१ ) **व्याधौ**—। अर्तेरेव व्याधौ वाच्येऽसुन्, तस्य शुडागमश्च स्यात् ॥ ( ४८४२ ) **अर्ण इति** । पानीयमित्यर्थः ॥ ( ४८४३ ) **इणः**—। 'इण् गतौ' अस्मात्पापे वाच्येऽसुन्स्यात्तस्य

---

१ अथवेत्यादिकोष्ठकान्तर्गतः पाठो न सिद्धान्तिसंमतः ' परेश्च घाङ्कयोः ' इति सूत्रभाष्ये कुञ्चधातोश्चवर्गोपधत्वनिपातनेन नलोपानुपपत्तेः, रेफलोपस्याप्यङ्गीकरणीयत्वापत्तेश्च ॥

एनः ॥ ( ४८४४ ) उ. **रिचेर्धने चिच्च** ॥ चात्प्रत्ययस्य नुट्। चित्वात्कुत्वम्। रेक्णः सुवर्णम् ॥ ( ४८४५ ) उ. **चायतेरन्ने ह्रस्वश्च** ॥ चनो भक्तम् ॥ ( ४८४६ ) उ. **वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च** ॥ वर्पो रूपम्। शेपो गुह्यम्। ( ४८४७ ) उ. **स्रुरीभ्यां तुट् च** ॥ स्रोतः। रेतः ॥ ( ४८४८ ) उ. **पातेर्बले जुट् च** ॥ पाजः। पाजसी ॥ ( ४८४९ ) उ. **उदके थुट् च** ॥ पाथः ॥ ( ४८५० ) उ. **अन्ने च** ॥ पाथो भक्तम् ॥ ( ४८५१ ) उ. **अदेर्नुम्धौ च** ॥ अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च। अन्धोऽन्नम् ॥ (४८५२) उ. **स्कन्देश्च स्वाङ्गे** ॥ स्कन्धः। स्कन्धसी ॥ ( ४८५३ ) उ. **आपः कर्माख्यायाम्** ॥ कर्माख्यायां ह्रस्वो नुट् च वा। अप्नः। अपः। बाहुलकात्-आपः। आपसी ॥ ( ४८५४ ) उ. **रूपे जुट् च** ॥ अब्जो रूपम् ॥ ( ४८५५ ) उ. **उदके नुम्भौ च** ॥ अम्भः ॥ (४८५६) उ. **नहेर्दिवि भश्च** ॥ नभः ॥ (४८५७) उ. **इण आगोऽपराधे च** ॥ आगः पापापराधयोः ॥ (४८५८) उ. **अमेर्हुक्च** ॥ अंहः ॥ (४८५९) उ. **रमेश्च** ॥ रंहः ॥ (४८६०) उ. **देशे ह च** ॥ रमन्तेऽस्मिन् रहः ॥

---

नुडागमश्च। एनः पापम् ॥ ( ४८४४ ) **रिचेः**-। 'रिचिर विरेचने', 'रिच वियोजनसंपर्चनयोः' इत्यस्माद्वा धने वाच्येऽसुन् ॥ **रेक्ण इति**। 'चजोः-३८१४' इति कुत्वे 'अट्कुप्वाङ्-२८२' इति णत्वम्। इह दशपादीवृत्तौ नुटं नानुवर्त्य रेकः, रेकसी इत्युदाहृतम्। तन्न, उत्तरसूत्रे नुडनुवृत्तेर्निर्विवादत्वात्। मण्डूकप्लुतौ मानाभावाल्लक्ष्यविसंवादाच्च। उज्ज्वलदत्तेन तु 'रिचेर्धने चित्किच्च' इति पठित्वा नुटं चानुवर्त्य कित्वाद् गुणाभावे नुटस्णुत्वेन अकारे रिक्ण इति साधितम्। तल्लोकवेदयोरप्रसिद्धत्वादुपेक्ष्यम्। 'नित्यं रेक्णोमर्त्याः परिषव्यं ह्यरण्यस्य रेक्णः' इत्यस्य प्रसिद्धत्वात्। वैदिकनिघण्टौ च सुवर्णपर्यायेषु तथा पाठात्। वेदभाष्ये तु प्रकृतसूत्रेणैव तस्य साधितत्वाच्च रेक्ण इति प्रयोग एव साधीयानिति दिक्। ( ४८४५ ) **चायतेः**-। 'चायृ पूजानिशामनयोः' अस्मादन्ने वाच्येऽसुन्स्यात्तस्य नुट् च धातोर्ह्रस्वत्वं च यलोपः। 'चनो दधिष्वपवता', 'सुते दधिष्वनश्चनः' इत्यादिमन्त्रेषु प्रसिद्धोऽयं चनशब्दः। एतेन 'च णोऽन्नम्' इत्युदाहृत्य बाहुलकाण्णत्वमिति वदन्तो दशपादीवृत्तिकारास्तदनुसारिणः प्रसादकारादयश्च परास्ताः ॥ ( ४८५६ ) **वृङ्**-। 'वृङ् संभक्तौ', 'शीङ् स्वप्ने' आभ्यां यथाक्रमं रूपे स्वाङ्गे च वाच्येऽसुन्स्यात्तस्य पुडागमश्च ॥ **वर्पो रूपमिति**। 'अच्छिद्रदेवा अभिवर्पसाऽभूत्' इत्यादिमन्त्रेषु प्रसिद्धमिदम्। '**शेपः** स्याद्वृषणं पेलम्' इति सुभूतिचन्द्रः। अकारान्तोऽप्ययम्, 'शेपपुच्छलाङ्गूलेषु शुनः' इति वार्तिके शेप इति निर्देशात् 'यस्यामुशन्तः प्रहराम शेपम्' इति वैदिकप्रयोगाच्च ॥ ( ४८४७ ) **स्रुरीभ्याम्**-। 'स्रु गतौ', 'रीङ् श्रवणे' आभ्यामसुन् तस्य तुट् च स्यात्। '**स्रोतो**ऽम्बुवेगेन्द्रिययोः' इति विश्वः। 'रेतः शुक्रे पारदे च' इति मेदिनी ॥ ( ४८४८ ) **पातेः**-। 'पा रक्षणे' अस्माद्बले वाच्येऽसुन् जुडागमश्च। युट् चेत्यन्तस्थादिपाठस्तूज्ज्वलदत्तस्य प्रामादिकः। 'पृथुपाजा अमर्त्यः' इत्यादिमन्त्रतद्भाष्यविरोधात् ॥ ( ४८४९ ) **उदके**-। पातेरुदके वाच्येऽसुन्स्यात्तस्य थुडागमश्च। 'कबन्धमुदकं पाथः' इत्यमरः ॥ ( ४८५१ ) **अदेः**-। 'अद भक्षणे'। 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः। 'द्विजातिशेषेण यदेतदन्धसा' इति भारविः ॥ ( ४८५२ ) **स्कन्देः**-। 'स्कन्दिर् गतिशोषणयोः' अस्मात्स्वाङ्गे वाच्येऽसुन्धश्चान्तादेशः ॥ (४८५३) **आपः**-। 'आप्लृ व्याप्तौ'। अस्मात्कर्माख्यायामसुन् ह्रस्वश्च धातोः प्रत्ययस्य नुडागमस्तु वा स्यात्। 'अस्वप्नस्वतीमाश्विना' 'अपांसि यस्मिन्नधिसंदधुः' ॥ **बाहुलकादिति**। उपलक्षणं ह्रस्वनुटौ वा स्त इति व्याख्यानस्यापि सम्भवात्। तथा च 'ब्रुवते कतमेऽपि नपुंसकमापः' इति कोशमुदाहृत्य 'सर्वमापोमयं जगत्' इति प्रयोगो दुर्घटवृत्तौ समर्थितः ॥ ( ४८५४ ) **रूपे**-। रूपे वाच्ये आप्नोतेरसुन् ह्रस्वत्वं च धातोः प्रत्ययस्य जुडागमश्च स्यात् ॥ **अब्ज इति**। 'झलां जश् झशि ७९' इति पकारस्य बकारः ॥ ( ४८५५ ) **उदके**-। उदके वाच्ये आप्नोतेरसुन् ह्रस्वत्वं च नुमागमो भश्चान्तादेशः ॥ ( ४८५६ ) **नहेः**—। 'णह बन्धने' अस्माद्गगने वाच्येऽसुन्भश्चान्तादेशः स्यात्। '**नभो** व्योम्नि **नभो** मेघे श्रावणे च पतद्ग्रहे। घ्राणे मृणालसूत्रे च वर्षासु च **नभः** स्मृतः' इति विश्वः। '**नभः** खं श्रावणो **नभाः**' इत्यमरः। '**नभं** तु नभसा सार्द्धम्' इति द्विरूपकोशादकारान्तोऽपि ॥ ( ४८५७ ) **इणः**—। इणोऽसुन्स्यादपराधे वाच्ये धातोरागादेशश्च ॥ विश्वोक्तिमाह—**आग इति** ॥ ( ४८५८ ) **अमेः**-। 'अम गत्यादौ' अस्मादसुन् हुगागमश्च धातोः स्यात्। अमन्ति गच्छन्त्यनेनाधस्तादित्यंहो दुरितम् ॥ ( ४८५९ ) **रमेश्च**। रमेरसुन्स्यात् हुगागमश्च धातोः। रंहो वेगः। अहिरहिभ्यामसुना सिद्धे अघिरघिभ्यामसुनि अङ्घो रङ्घ इति मा भूदिति सूत्रद्वयमिति गोवर्द्धनः। तथा च 'स्यान्मध्योष्मचतुर्थत्वमंहसो रंहसस्तथा' इति द्विरूपकोशः। एवं च 'दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमङ्घोविघातम्' इति, 'रङ्घस्सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेस्सोऽवतात्स्यन्दनो वः' इत्यत्र अङ्घो रङ्घ इति घकारपाठोऽनुप्रासरसिकानां प्रामादिक इति वदन्ति ॥ (४८६०) **देशे**-। देशे वाच्ये रमेरसुन् हकारश्चान्तादेशः स्यात्। '**रहस्त**-

---

१-दशममण्डले पञ्चाशीतितमे सूक्ते विवाहे कन्याप्रार्थनाविषयकोऽयं मंत्रः ॥ २ अत्रारुचिबीजं तु अमो रम इति प्रयोगवारणाय सूत्रस्याऽऽवश्यकत्वेन नियमार्थत्वे न मानमिति। एवं चाङ्घो रङ्घ इत्यपि साध्वेवेति शब्दरत्नम्।

(४८६१) (उ) **अञ्च्यञ्जियुजिभृजिभ्यः कुश्च** ॥ एभ्योऽसुन् कवर्गश्चान्तादेशः । अङ्कश्चिह्नशरीरयोः । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः ॥ (४८६२) (उ) **भूरञ्जिभ्यां कित्** ॥ भुवः । रजः । (४८६३) (उ) **वसेर्णित्** ॥ वासो वस्त्रम् ॥(४८६४) (उ) **चन्देरादेश्च छः** ॥ छन्दः ॥ (४८६५) (उ) **पचिवचिभ्यां सुट् च** ॥ पक्षसी तु स्मृतौ पक्षौ । वक्षो हृदयम् ॥ ( ४८६६ ) (उ) **वहिहाधाञ्भ्यश्छन्दसि** ॥ वक्षाः अनड्वान् । हासाश्चन्द्रः । धासाः पर्वत इति प्राञ्चः । वस्तुतस्तु णिदित्यनुवर्तते न तु सुट् । तेन वहेरुपधावृद्धिः । इतरयोरातो युगिति युँक् । शोणा धृष्णू नृवाहसा । श्रोता हवं गृणतः स्तोमवाहाः । विश्वो विहायाः । वाजम्भरो विहायाः । देवो न यः पृथिवीं विश्वधायाः। अधारयत् पृथिवीं विश्वधायसम् ॥ ( ४८६७ ) (उ) **इण आसिः** ॥ अयाः वह्निः । स्वरादिपाठादव्ययत्वम् ॥ ( ४८६८ ) (उ) **मिथुनेऽसि पूर्ववच्च सर्वम्** ॥ उपसर्गविशिष्टो धातुर्मिथुनं तत्रासुनोऽपवादोऽसिः स्वरार्थः । सुयशाः॥ ( ४८६९ ) (उ) **नञि हन एह च** ॥ अनेहाः । अनेहसौ ॥ ( ४८७० ) (उ) **विधाञो वेध च** ॥ विदधातीति वेधाः ॥ ( ४८७१ ) (उ) **नुवो धुट् च** ॥ नोधाः ॥ ( ४८७२ ) (उ) **गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च** ॥ असिः स्यात् । सुतपाः । जातवेदाः । गतिकारकोपपदात् कृदित्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम् ॥ ( ४८७३ ) (उ) **चन्द्रे मो डित्** ॥ चन्द्रोपपदान्माङोऽसिः स्यात्स च डित् । चन्द्रमाः ॥ ( ४८७४ ) (उ) **वयसि धाञः** ॥ वयोधास्तरुणः ॥ ( ४८७५ ) (उ) **पयसि च** ॥ पयोधाः समुद्रो मेघश्च ॥ ( ४८७६ ) (उ) **पुरसि च** ॥ पुरोधाः ॥ ( ४८७७ ) (उ) **पुरूरवाः** ॥ पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते ॥ ( ४८७८ ) (उ) **चक्षेर्बहुलं शिच्च** ॥ नृचक्षाः ॥ ( ४८७९ ) (उ) **उषः कित्** ॥ उषः ॥ ( ४८८० ) (उ) **दमेरु-**

---

स्वरते गुह्ये' इति मेदिनी ॥ ( ४८६१ ) **अञ्चि–**। 'अञ्चु गतिपूजनयोः', 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु', 'युजिर् योगे', 'युज समाधौ', 'भ्रस्जि भर्जने' । अङ्कः, अङ्कसी, अङ्कांसि । अङ्गः, अङ्गसी, अङ्गांसि । योगः, योगसी, योगांसि ॥ **भर्गस्तेज इति** । 'हरः स्मरहरो भर्गः' इत्यत्र भर्गशब्दो घञन्तः पुँल्लिङ्ग इति बोध्यः । 'उच समवाये' अस्मादसुनि बाहुलकात्कुत्वम्, न्यङ्क्वादित्वाद्वा । '**ओक** आश्रयमात्रेऽपि मन्दिरेऽपि नपुंसकम्' इति मेदिनी ॥ (४८६२) **भूरञ्जि–**। 'भू सत्तायाम्', 'रञ्ज रागे' आभ्यामसुन्कित्स्यात् । भुवः अन्तरिक्षम् । षष्ठ्यन्तप्रतिरूपकमव्ययमिदम् । रजो रेणुः । '**रजः** क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी । घञर्थे कप्रत्यये तु अकारान्तोऽप्ययम् । '**रजो**ऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिषु इत्यजयकोशः ॥ ( ४८६३ ) **वसेः–**। 'वस निवासे' अस्मादसुन् स्यात्स च णित् । णित्त्वाद्वृद्धिः ॥ ( ४८६४ ) **चन्देः–**। 'चदि आह्लादने' अस्मादसुन् आदेश्छकारश्च । '**छन्दः** पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः' इति मेदिनी । अकारान्तोऽप्ययम् । '**छन्दा**वभिप्रायवशौ' इत्यमरद्विरूपकोशौ ॥ ( ४८६५ ) **पचि–**। 'डुपचष् पाके', 'वच परिभाषणे' आभ्यामसुन् स्यात्तस्य सुडागमश्च । चस्य कुत्वे सस्य षत्वम् । पक्षः, पक्षसी, पक्षांसि । 'यथा शालायै पक्षसी ' इति श्रुतिः । ' पूर्वोत्तरे द्वे पक्षसी ' इति अनीकाधिकरणे शाबरभाष्यम् । माधवस्तु 'पक्ष परिग्रहे' इत्यस्मादसुन्—इत्याह ॥ ( ४८६६ ) **वहि—**। 'वह प्रापणे', 'ओहाक् त्यागे ', ' डुधाञ् धारणादौ ' एभ्योऽसुन् स्यात् । अत्र पूर्वसूत्रात्सुटमनुवर्तयतामुज्ज्वलदत्तादीनां मतेनोदाहरणमाह— **वक्षाः, हासाः, धासा इति** ॥ **प्राञ्च इति** । सकलवृत्तिकृतः प्रसादकारादयश्चेत्यर्थः । एतच्चायुक्तम्, उक्तोदाहरणानि हि लोके तु न दृश्यन्ते न वा संभवन्ति, सूत्रेऽस्मिन् छन्दसीत्युक्तत्वात् ॥ वेदे तु विपरीतान्येवोदाहरणानि दृश्यन्त इत्याह—**वस्तुतस्त्विति** । वेदभाष्यकारादयश्चेहानुकूला इत्यवधेयम् ॥ ( ४८६७ ) **इणः–**। 'इण् गतौ' अस्मादासिः स्यात् ॥ ( ४८६८ ) **मिथुने–**। **सुयशा इति** । 'अशेर्देवने युट् च ४८३६ ' इत्यादि पूर्ववत् । सुपयाः, सुस्रोता इत्याद्युदाहार्यम् ॥ ( ४८६९ ) **नञि–**। हन्तेर्नञ्युपपदेऽसिः स्यात् धातोरेहादेशश्च 'ऋदुशनस्पुरुदंसो–३८७' इत्यादिना सावनङ् ॥ ( ४८७० ) **विधाञः–**। 'डुधाञ् धारणादौ' विपूर्वादस्मादसिः स्याद्वेधादेशश्च सोपसर्गधातोः । '**वेधाः** पुंसि हृषीकेशे बुधे च परमेष्ठिनि' इति मेदिनी ॥ ( ४८७१ ) **नुवः–**। 'णु स्तुतौ' अस्मादसिः स्यात्तस्य धुडागमश्च ॥ **नोधा इति** । ' मयो भवद्वीर्याय नोधाः ' इति मन्त्रे ' नोधा ऋषिर्भव नोधा ऋषिर्भवति ' इति निरुक्तम् । नवं दधातीति तु नैरुक्तं व्युत्पत्त्यन्तरं बोध्यम् ॥ ( ४८७२ ) **गति–**। गतौ कारके चोपपदेऽसिः स्यात् । 'तप संतापे', 'विद ज्ञाने', 'विदॢ लाभे' ॥ ( ४८७३ ) **चन्द्रे–**। चन्द्रं रजतममृतं च तद्विव मीयतेऽसौ चन्द्रमा इति हरदत्तः ॥ **स च डिदिति** । डित्त्वाट्टिलोपे चन्द्रमसौ, चन्द्रमस इत्यादि सिध्यति ॥ ( ४८७४ ) **वयसि–**। 'डुधाञ् धारणे' अस्माद्वयस्युपपदेऽसिः स्यात्स च डित् ॥ ( ४८७५ ) **पयोधा इति** । पयःशब्दे उपपदे डुधाञः पूर्ववत् ॥ (४८७६) **पुरसि च** । पुरःशब्द उपपदे पूर्ववत् । '**पुरोधा**स्तु पुरोहितः' इत्यमरः ॥ ( ४८७७ ) **रौतेरिति** । 'रु शब्दे' । '**पुरूरवा** बुधसुतो राजर्षिश्च **पुरूरवाः**' इत्यमरः ॥ ( ४८७८ ) **चक्षेः–**। 'चक्षिङ् व्यक्तायां वाचि' अस्मादसिः स्यात्स च बहुलं शित् । शित्वात्सार्वधातुकसंज्ञायां ख्याञ् न । नृचक्षा राक्षसः । शित्वाभावपक्षे तु ख्याञादेशः । प्रख्याः प्रजापतिः । (४८७९) **उषः–**। 'उष दाहे' अस्मादसिः स्यात्स च कित् । उषः प्रभातम् । दशपाद्यां तु 'वसः कित् ' इति पाठः । वसति सूर्येण सहेति उषा देवताविशेषः । 'अपो भि ५९२' इति सूत्रे '**उषसश्चेष्यते** ' इति वार्तिकस्य समुषद्भि-

नसिः ॥ सप्तार्चिर्दमुनाः ॥ ( ४८८१ ) उ. अङ्गतेरसिरिरुडागमश्च ॥ अङ्गिराः ॥ ( ४८८२ ) उ. सर्तेरप्पूर्वादसिः । अप्सराः । प्रायेणायं भूम्नि । अप्सरसः ॥ ( ४८८३ ) उ. विदिभुजिभ्यां विश्वे ॥ विश्ववेदाः । विश्वभोजाः ॥ ( ४८८४ ) उ. वशेः कनसिः ॥ संप्रसारणम् । उशना ॥ इत्युणादिषु चतुर्थः पादः ॥

---

(४८८५) उ. अदि भुवो डुतच् ॥ अद्भुतम् ॥ (४८८६) उ. गुधेरूमः ॥ गोधूमः ॥ ( ४८८७ ) उ. मसेरूरन् ॥ मसूरः । प्रथमे पादे असेरुरन्मसेश्चेत्यत्र व्याख्यातः ॥ ( ४८८८ ) उ. स्थः किच्च ॥ स्थूरो मनुष्यः ॥ ( ४८८९ ) उ. पातेरतिः ॥ पातिः स्वामी । सम्पातिः पक्षिराजः ॥ ( ४८९० ) उ. वातेर्नित् ॥ वातिरादित्यसोमयोः ॥ ( ४८९१ ) उ. अर्तेश्च ॥ अरतिरुद्वेगः ॥ ( ४८९२ ) उ. तृहेः क्नो हलोपश्च ॥ तृणम् ॥ ( ४८९३ ) उ. वृञ्लुटितनिताडिभ्य उलच् तण्डश्च ॥ व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः ॥ ( ४८९४ ) उ. दंसेष्टटनौ न आ च । दासः सेवकशूद्रयोः ॥ ( ४८९५ ) उ. दंशेश्च ॥ दाशो धीवरः ॥ ( ४८९६ ) उ. उदि चेर्डैसिः ॥ स्वरादिपाठादव्ययत्वम् । उच्चैः ॥ ( ४८९७ ) उ. नौ दीर्घश्च ॥ नीचैः ॥ ( ४८९८ ) उ. सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः ॥ रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात् । कित्त्वादनुनासिकलोपः । सूरत उपशान्तो दयालुश्च ॥ ( ४८९९ ) उ. पूञो यण्णुक् ह्रस्वश्च ॥ यत्प्रत्ययः । पुण्यम् ॥ ( ४९०० ) उ. स्रंसेः शिः कुट् किच्च ॥ स्रंसतेः शिरादेशः यत्प्रत्ययः कित्तस्य कुडागमश्च । शिक्यम् ॥ ( ४९०१ ) उ. अर्तेः क्युरुच्च ॥ उरणो मेषः ॥ ( ४९०२ ) उ. हिंसेरीरन्नीरचौ ॥ हिंसीरो व्याघ्रदुष्टयोः ॥ ( ४९०३ ) उ. उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ॥ उदरम् ॥ ( ४९०४ ) उ. डित् खनेर्मुट् स चोदात्तः ॥ अच् अल् च डित्स्याद्धातोर्मुट् स चोदात्तः । मुखम् ॥ ( ४९०५ ) उ. अमेः सन् ॥ अंसः ॥ ( ४९०६ ) उ. मुहेः खो मूर् च ॥ मूर्खः ॥

---

रित्युदाहरणं विवृण्वद्भिरयं पाठः पुरस्कृतः । ( ४८८० ) दमेः–। 'दम उपशमे' । 'सप्तार्चिर्दमुनाः शुक्रः' इत्यमरः । पक्षे 'अन्येषामपि दृश्यते ५३९०' इति दीर्घः । 'जुष्टो दमूनाः' 'दमूनसंगृहपतिं वरेण्यम्' । दशपाद्यां तु 'दमेरूनसिः ४८८०' इति सूत्रे एव दीर्घः पठ्यते । तन्मते बाहुलकाद्ध्रस्वो बोध्यः । ( ४८८१ ) अङ्गिरा ऋषिभेदः ॥ ( ४८८२ ) सर्तेः–। 'सृ गतौ' ॥ प्रायेणेति । 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवः ॥ 'अप्सरःस्वप्सराः प्रोक्ता सुमनः सुमनस्सु च' इति द्विरूपकोशः । 'एकाप्सरःप्रार्थितयोर्विवादः' इति रघुः ॥ ( ४८८३ ) विदि–। 'विद ज्ञाने', 'भुज पालनाभ्यवहारयोः' आभ्यां विश्वशब्दे उपपदेऽसिः स्यात् । शब्दस्वरूपपरत्वाद्विश्वे इत्यत्र स्मिन्नादेशो न कृतः । उदाहरणे विश्वं वेत्ति भुङ्क्ते इति विग्रहः । यत्तु 'तत्पुरुषे कृति–१३२४' इति सप्तम्या अलुक् । विश्वेवेदाः अग्निः, विश्वेभोजाः इन्द्र इत्युज्ज्वलदत्तेनोक्तम् । तन्न, तथा सति स्मिन्नादेशस्य दुर्वारत्वापत्तेः । 'सुमृळीको भवतु विश्ववेदाः' 'पूषा भगः प्रमृडे विश्वभोजाः' इत्यादिमन्त्रेषु सुपो लुक एव दर्शनात्, वृत्तौ तथैवोदाहरणाच्च ॥ (४८८४) वशेः–। 'वश कान्तौ' । 'उशना भार्गवः कविः' इत्यमरः ॥ इत्युणादिषु चतुर्थः पादः ॥

---

( ४८८५ ) अदि भुवो–। अद् इत्यव्ययम् आकस्मिकार्थेऽस्मिन्नुपपदे भूधातोर्डुतच्स्यात् । डित्त्वाट्टिलोपः । अद्भुतमाश्चर्यम् ॥ ( ४८८६ ) गुधेः–। 'गुध परिवेष्टने' गुध्यते परिवेष्ट्यते प्राणिभिरिति 'गोधूमो नागरङ्गे स्यादोषधीव्रीहिभेदयोः' इति मेदिनी ॥ ( ४८८७ ) मसेः–। 'मसी परिणामे' ॥ ( ४८८८ ) स्थः–। 'ष्ठा गतिनिवृत्तौ' अस्माद्रूरन् । कित्त्वादालोपः ॥ स्थूरो मनुष्य इति । 'स्थूरस्य रायो बृहतो य ईशे' इति मन्त्रे तु योगपुरस्कारात्स्थिरस्येत्यर्थ इति व्याख्यातम् ॥ ( ४८८९ ) पातेः–। 'पा रक्षणे' ॥ ( ४८९० ) वातेः–। 'वा गतिगन्धनयोः' । रभसकोशस्थमाह–वातिरिति । ( ४८९१ ) अर्तेः–। 'ऋ गतौ' अस्मादतिः स्यात्स च नित् ॥ ( ४८९२ ) तृहेः–। 'तृह हिंसायाम्' क्नस्य कित्त्वाद् गुणाभावः ॥ ( ४८९३ ) वृञ्–। 'वृञ् वरणे', 'लुट विलोडने', 'तनु विस्तारे', 'तड आघाते' चुरादिः । एभ्य उलच् स्यात् तण्डादेशश्च धातोः । यद्यपि 'सानसिपर्णसि–४७५३' इति सूत्रे तण्डुलशब्दो निपातितस्तथापि प्रत्ययस्वरेण मध्योदात्तः सः । अयं तु चित्स्वरेणान्तोदात्त इति विवेकः ॥ (४८९४) दंसेः–। 'दसि सेवने' अस्माट्टटनौ स्यातां नकारस्याकारश्च । टनो नकार आद्युदात्तार्थः । 'दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि' इति विश्वः ॥ ( ४८९५ ) दंशेः–। 'दंश दशने' अस्मादपि टटनौ नकारस्य चात्त्वं स्यात् । 'कैवर्ते दाशधीवरौ' इत्यमरः ॥ ( ४८९६ ) उदि–। 'चिञ् चयने' डैसो डित्त्वाट्टिलोपः ॥ ( ४८९८ ) सौ रमेः–। 'रमु क्रीडायाम्' ॥ ( ४८९९ ) पूञः–। 'पूञ् पवने' । 'पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः ॥ ( ४९०० ) स्रंसेः–। 'स्रंसु अधःपतने' कित्त्वं तु गुणाभावार्थम् ॥ ( ४९०१ ) अर्तेः–। 'ऋ गतौ' अस्मात्क्युप्रत्ययः स्याद्धातोरुत्वं च, रपरत्वम् । 'युवोरनाकौ १७६१' । 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः ॥ ( ४९०२ ) हिंसेः–। 'हिसि हिंसायाम्' ॥ ( ४९०३ ) उदि–। 'दॄ विदारणे' ॥ ( ४९०४ ) डित्खनेः–। 'खनु अवदारणे' अस्मादजलौ स्तः ॥ 'मुखं निस्सरणे वक्त्रप्रारम्भोपाययोरपि । सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्' इति मेदिनी ॥ ( ४९०५ ) अमेः–। 'अम गतौ । 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः । 'अंसः स्कन्धे विभागे च' इति दन्त्यान्ते विश्वः ॥ ( ४९०६ ) मुहेः–। 'मुह वैचित्त्ये' अस्मात्खप्रत्ययो धातोर्मूरादेशश्च । मुह्यतीति मूर्खः । 'अज्ञे मूढयथा-

(४९०७) उ॰ **नहेर्हलोपश्च** ॥ नखः ॥ (४९०८) उ॰ **शीङो ह्रस्वश्च** ॥ शिखा ॥ (४९०९) उ॰ **माङ ऊखो मय् च** ॥ मयूखः ॥ ( ४९१० ) उ॰ **कलिगलिभ्यां फगस्योच्च** ॥ कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः ॥ ( ४९११ ) उ॰ **स्पृशेः श्वण्शुनौ पृ च** ॥ श्वण्शुनौ प्रत्ययौ, पृ इत्यादेशः । पार्श्वोऽस्त्री कक्षयोरधः । पर्शुरायुधम् ॥ ( ४९१२ ) उ॰ **श्मनि श्रयतेर्डुन्** ॥ श्मन्शब्दो मुखवाची । मुखमाश्रयत इति श्मश्रु ॥ ( ४९१३ ) उ॰ **अश्वादयश्च** ॥ अश्रु नयनजलम् ॥ ( ४९१४ ) उ॰ **जनेष्टन् लोपश्च** ॥ जटा ॥ (४९१५) उ॰ **अच् तस्य जङ्घ च** ॥ तस्य जनेः जङ्घादेशः स्यादच् । जङ्घा ॥ (४९१६) उ॰ **हन्तेः शरीरावयवे द्वे च** ॥ जघनम् । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ ( ४९१७ ) उ॰ **क्लिशेरन् लो लोपश्च** ॥ लकारस्य लोपः । केशः ( ४९१८ ) उ॰ **फलेरितजादेश्च पः** ॥ पलितम् ॥ ( ४९१९ ) उ॰ **कृञादिभ्यः संज्ञायां वुन्** ॥ करकः । करका । कटकः । नरकम् । नरकः । नरको नारकोऽपि चेति द्विरूपकोशः । सरकं गगनम् । कोरकः । कोरकं च ॥ ( ४९२० ) उ॰ **चीकयतेराद्यन्तविपर्ययश्च** ॥ कीचको वंशभेदः ( ४९२१ ) उ॰ **पचिमच्योरिच्चोपधायाः** ॥ पेचकः । मेचकः ॥ ( ४९२२ ) उ॰ **जनेररष्ठ च** ॥ जठरम् ॥ ( ४९२३ ) उ॰ **वचिमनिभ्यां चिच्च** ॥ वठरो मूर्खः । मठरो मुनिशौण्डयोः । बिदादित्वान्माठरः । गर्गादित्वान्माठर्यः । ( ४९२४ ) उ॰ **ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च** ॥ ऊर्दरः शूररक्षसोः ॥ ( ४९२५ ) उ॰ **कृदरादयश्च** ॥ कृदरः कुसूलः । मृदरं विलसत् । सृदरः सर्पः ॥ ( ४९२६ ) उ॰ **हन्ते-**

---

जातमूर्खवैधेयबालिशाः ' इत्यमरः ॥ ( ४९०७ ) **नहेः**–। ' णह बन्धने ' । ' **नखं** कररुहे षण्ढे गन्धद्रव्ये **नखं नखी** ' इति विश्वः । '**नखी** स्त्रीक्लीबयोः शुक्तौ नखरे पुन्नपुंसकम्' इति मेदिनी ॥ ( ४९०८ ) **शीङः**–। 'शीङ् स्वप्ने ' अस्मात्खः धातोर्ह्रस्वश्च । ह्रस्वविधानसामर्थ्याद् गुणाभावः । '**शिखा** शाखाबर्हिचूडालाङ्गलिक्वग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च' इति मेदिनी ॥ ( ४९०९ ) **माङः**–। 'माङ् माने' '**मयूख**स्त्विट्करज्वालासु ' इत्यमरः ॥(४९१०) **कलि**–। 'कल शब्दसंख्यानयोः', 'गल अदने ' आभ्यां फक् स्यात् धातोरकारस्योत्त्वं च ॥ **गुल्फ इति** । 'तद्ग्रन्थी घुटिके **गुल्फौ** ' इत्यमरः । तयोः पादयोर्ग्रन्थी इत्यर्थः ॥ ( ४९११ ) **स्पृशेः**–। 'स्पृश संस्पर्शे' । ' **पार्श्वं** कक्षधरे चक्रोपान्तपर्शुगणेऽपि च' इति विश्वमेदिन्यौ ॥ ( ४९१२ ) **श्मनि**–। 'श्रिञ् सेवायाम् ' अस्मात् श्मन्युपपदे डुन्स्यात् । डित्त्वाट्टिलोपः । 'तद्वृद्धौ **श्मश्रु** पुंमुखे ' इत्यमरः । पुरुषस्य मुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्तत इत्यर्थः ॥ ( ४९१३ ) **अश्वादयः**–। 'अशू व्याप्तौ ' अस्मात् रुन् प्रत्ययो, नञ्पूर्वात् श्रयतेर्डुन् च । यत्तूज्ज्वलदत्तेनोक्तम् ' अश्नातेर्डुन् रुट् च ' इति तदयुक्तम्, डित्त्वाट्टिलोपे सति धातोरश्रवणप्रसङ्गात् । न च टिलोपाभावो निपात्यत इति वाच्यम्, तथा सति डित्त्वोत्प्रेक्षणस्यानिष्फलत्वापत्तेरिति दिक् ॥ ( ४९१४ ) **जनेः**–। ' जनी प्रादुर्भावे ' अस्माट्टन्प्रत्ययः स्याद्धातोरन्त्यलोपश्च । '**जटा** लग्नकचे मूले मांस्यां प्लक्षे पुनर्**जटी** ' इति मेदिनी ॥ ( ४९१५ ) **जङ्घेति** । जनेरच्प्रत्यये सति ' अजाद्यतः–६१३ ' इति टाप् ॥ ( ४९१६ ) **हन्तेः**–। देहावयवे वाच्ये हन्तेरच् प्रत्ययः स्यात्, द्वित्वं च धातोः । अभ्यासकार्यम् । ' अभ्यासाच्च ३२३६ ' इति कुत्वम् ॥ अमरोक्तिमाह—**पश्चान्नितम्ब इति** । ' **जघनं** च स्त्रियाः श्रोणिपुरोभागे कटावपि ' इति मेदिनी ॥ ( ४९१७ ) **क्लिशेः**–। 'क्लिशू विबाधने' अस्मादन्स्यात् । '**केशः** स्यात्पुंसि वरुणे ह्रीबेरे कुण्डलेऽपि च' इति मेदिनी ॥ ( ४९१८ ) **फलेः**–। 'फल निष्पत्तौ' । '**पलितं** जरसा शौक्ल्यम्' इत्यमरः ॥ '**पलितं** शैलजे तापे केशपाके च कर्दमे' इति मेदिनी ॥ ( ४९१९ ) **कृञादिभ्यः**–। 'डुकृञ् करणे' । करकः कमण्डलुः, करका वृष्टिपाषाणः । 'कटे वर्षावरणयोः' । '**कटको** वलये सानौ' । 'क्वुन् शिल्पिसंज्ञयोः ४३९३' इति क्वुनाऽप्ययं सिद्धः, तथा च गुणभाज इहैव वुनि उदाहार्याः, निषेधभाजस्तु क्वुनि, उदासीनास्तु यत्रकुत्रचिदिति भावः । 'नॄ नये' । 'स्यान्नारकस्तु **नरको** निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । '**नरकः** पुंसि निरये देवारातिप्रदेशयोः' इति मेदिनी । उदयनाचार्यास्तु 'न च नरकाण्येव न सन्ति' इति क्लीबं प्रयुञ्जते, तन्निर्मूलमित्याहुः । 'सृ गतौ' । ' **सरकोऽस्त्री** शीधु पात्रे शीधुपानेक्षुशीधुनोः' इति मेदिनी । 'कुर शब्दे' । '**कोरकोऽस्त्री** कुड्मले स्यात्कक्कोलकमृणालयोः' इति मेदिनी । 'विचकार कोरकाणि' इति माघः । '**कोरकः** पुमान्' इत्यमरोक्तिस्तु नादर्त्तव्येत्याहुः । अपचरकादयोऽपि इहैव बोध्याः ॥ ( ४९२० ) **चीकयतेः**–। 'चिक आमन्त्रणे', 'चीक च', चुरादिः अस्याद्यन्तविपर्ययः, पचिमच्योरित्त्वं चानुपदं [४९२१] वक्ष्यमाणं बाहुलकबललभ्यं बोध्यम् । '**कीचको** दैत्यभिद्वाताहतसस्वनवंशयोः' इति मेदिनी । ( ४९२१ ) 'डुपचष् पाके' । 'उलूके करिणः पुच्छमूलोपान्ते च **पेचकः**' इत्यमरः । '**पेचको** गजलाङ्गूलमूलोपान्ते च कौशिके' इति मेदिनी । 'मच मुचि कल्कने' । '**मेचक**स्तु मयूरस्य चन्द्रके श्यामले पुमान् । तद्युक्ते वाच्यवत् क्लीबं स्रोतोऽञ्जनान्धकारयोः' इति मेदिनी ॥ ( ४९२२ ) **जनेः**–। 'जन जनने', 'जनी प्रादुर्भावे' वा । '**जठरः** कठिनेऽपि स्यात्' इत्यमरः । '**जठरो** न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिषु' इति मेदिनी ॥ ( ४९२३ ) **वचि**–। 'वच परिभाषणे', 'मन ज्ञाने' आभ्यामरप्रत्ययः स्यात्स च चित् ठश्चान्तादेशः । '**वठरः** कुक्कुटे वण्टे शठे च' इति मेदिनी ॥ ( ४९२४ ) **ऊर्जि**–। 'दॄ विदारणे' अस्मादूर्ज्युपपदे अलचौ प्रत्ययौ स्तः ॥ ( ४९२५ ) **कृदरादयश्च** । कृ मृ सृ एतदव्ययपूर्वकदृणातिप्रकृतिकाऽलजन्ता निपात्यन्ते ॥ ( ४९२६ ) **हन्तेः**–। 'हन

पुंन्नाद्यन्तयोर्धत्वतत्वे ॥ घातनो मारकः ॥ ( ४९२७ ) ॐ क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥ क्रान्तुः पक्षी । गान्तुः पथिकः । क्षान्तुर्मशकः ॥ ( ४९२८ ) ॐ हर्यतेः कन्यन् हिरच् ॥ कन्यन् प्रत्ययः । हिरण्यम् ॥ ( ४९२९ ) ॐ कृञः पासः ॥ कर्पासः । बिल्वादित्वात्कार्पासं वस्त्रम् ॥ ( ४९३० ) ॐ जनेस्तु रश्च ॥ जर्तुर्हस्ती योनिश्च ॥ ( ४९३१ ) ॐ ऊर्णोतेर्डः ॥ ऊर्णा ( ४९३२ ) ॐ दधातेर्यन्नुट् च ॥ धान्यम् ॥ ( ४९३३ ) ॐ जीर्यतेः क्रिन् रश्च वः ॥ जिव्रिः स्यात्कलपक्षिणोः । बाहुलकाद्धलि चेति दीर्घो न ॥ ( ४९३४ ) ॐ मव्यतेर्यलोपो मश्चापतुडालः ॥ मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य । ममापतालो विषये ॥ ( ४९३५ ) ॐ ऋजेः कीकन् ॥ ऋजीक इन्द्रो धूमश्च ॥ ( ४९३६ ) ॐ तनोतेर्डउः सन्वच्च ॥ तितउः पुंसि क्लीबे च ॥ ( ४९३७ ) ॐ अर्भकपृथुकपाका वयसि ॥ ऋधु वृद्धौ । अतो वुन् । भकारश्चान्तादेशः । प्रथेः कुकन्संप्रसारणं च । पिबतेः कन् ॥ ( ४९३८ ) ॐ अवद्यावमाधमार्वरेफाः ॥ कुत्सिते वदेर्नञि यत् । अवद्यम् । अवतेरमः । वस्य पक्षे धः । अवमः । अधमः । अर्तेर्वन् । अर्वा । रिफतेस्तौदादिकाद् रेफः ॥ ( ४९३९ ) ॐ लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः ॥ तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट् । लिप्तं श्लिष्टम् । रिप्रं कुत्सितम् ॥ ( ४९४० ) ॐ क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च ॥ क्लिशेः कन् स्यात् उपधाया ईत्त्वं लस्य लोपो नामागमश्च । कीनाशो यमः । किरवफलं चिन्त्यम् ॥ ( ४९४१ ) ॐ अश्नोतेराशुकर्मणि वरट् च ॥ चकारादुपधाया ईत्त्वम् । ईश्वरः ॥ ( ४९४२ ) ॐ चतेरुरन् ॥ चत्वारः ॥ ( ४९४३ ) ॐ

---

हिंसागत्योः' ॥ ( ४९२७ ) क्रमि-। 'क्रमु पादविक्षेपे', 'गम्लृ गतौ', 'क्षमूष् सहने' एभ्यस्तुन्स्यादेषां वृद्धिश्च ॥ ( ४९२८ ) हर्यतेः-। 'हर्य गतिकान्त्योः' । 'हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः । अक्षये मानभेदे स्यादकुप्यं च नपुंसकम् ' इति मेदिनी ॥ ( ४९२९ ) कृञः-। 'डुकृञ् करणे' ॥ ( ४९३० ) जनेः-। तु इत्यविभक्तिकम् । जनेस्तुप्रत्ययो रेफश्चान्तादेशः स्यात् ॥ ( ४९३१ ) ऊर्णोतेः-। 'ऊर्णुञ् आच्छादने' अस्मात् डः स्यात् । डित्त्वाट्टिलोपः । टाप् । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः । भ्रुवोर्मध्ये य आवर्त्तस्तत्रेत्यर्थः । 'अन्तरान्तरेण-७९८ ' इति द्वितीया ॥ ( ४९३२ ) दधातेः-। 'डुधाञ् धारणादौ' अस्माद्यत् प्रत्ययः स्यात्तस्य नुडागमश्च । 'धान्यं व्रीहिषु धान्याकम् ' इति मेदिनी ॥ ( ४९३३ ) जीर्यतेः-। 'जॄ वयोहानौ' अस्मात् क्रिन्स्यात् । 'ऋत इद्धातोः ३१८३ ' । रपरत्वम् । रेफस्य वकारादेशः ॥ ( ४९३४ ) मव्यतेः-। 'मव्य बन्धने' ॥ अन्त्यस्येति । बकारस्येत्यर्थः ॥ ( ४९३५ ) ऋजेः-। 'ऋज गतौ' ॥ ( ४९३६ ) तनोतेः-। 'तनु विस्तारे' अस्मात् डउः प्रत्ययस्तस्य सन्वद्भावात् द्वित्वमभ्यासस्येत्त्वं च । डित्त्वाट्टिलोपः । पृथगुच्चारणसामर्थ्याद् गुणो न । तितउः चालिनी । ' सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत' । 'तितउ परिपवनं भवति' इति पस्पशायां भाष्यम् ! 'चालिनी तितउः पुमान्' इत्यमरः । 'चालनं तितउन्युक्तम्' इति कोशान्तरम् । 'स्याद्वास्तु हिंगु तितउ' इति पुंनपुंसकवर्गे त्रिकाण्डशेषः ॥ ( ४९३७ ) अर्भक-। एते निपात्यन्ते । निपातनप्रकारमेवाह-ऋधु वृद्धौ इत्यादि ॥ प्रथेरिति । 'प्रथ प्रख्याने' । 'पा पाने' पिबति स्तनादिकमिति पाकः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । ' अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च ' । ' पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत् ' । 'पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी ॥ ( ४९३८ ) अवद्य-। एते कुत्सिते निपात्यन्ते । 'वद व्यक्तायां वाचि', अव रक्षणादौ', 'ऋ गतौ', 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु' । ' निकृष्टप्रतिकृष्टार्वरेफयाप्याऽवमाधमाः' इत्यमरः । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इति च । 'अधमः स्यादधर्मे ऊनेऽपि' इति मेदिनी । 'अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः' । 'रेफो वर्णे पुंसि स्यात्कुत्सिते पुनरन्यवत्' इति च मेदिनी ॥ ( ४९३९ ) लीरीङोः-। 'लीङ् श्लेषणे', 'रीङ् श्रवणे' ॥ क्रमादिति । श्लेषणे वाच्ये तप्रत्ययः, कुत्सिते वाच्ये रप्रत्यय इत्यर्थः । 'लिप्तं विषाक्ते भुक्ते च वाच्यवत्स्याद्विलेपिते' इति विश्वः ॥ ( ४९४० ) क्लिशेः-। क्लिशू विबाधने' ॥ नामागमश्चेति ॥ प्रत्ययस्येति शेषः ॥ चिन्त्यमिति । ईत्त्वविधानसामर्थ्यादेव गुणाभावसिद्धेरिति भावः । 'कीनाशः कर्षकक्षुद्रपांशुघातिषु वाच्यवत् । यमे ना' इति मेदिनी ॥ ( ४९४१ ) अश्नोतेः-। 'अशू व्याप्तौ' अस्माद्वरट् स्यात् । आशु कर्म वरदानादिक्रिया यस्य तस्मिन्वाच्ये शीघ्रदातरीत्यर्थः ॥ ईश्वर इति । स्त्रियां तु टित्त्वान्ङीप् । ईश्वरी प्रत्ययस्वरेण मध्योदात्ता । ईशेः वनिपि 'वनो र च ६२०' इति ङीब्रयोस्तु धातुस्वरेणाद्युदात्ता । पुंयोगलक्षणे ङीषि अन्तोदात्ता । 'स्थेशभासपिसकसः-४१८१ ' इति वरचि तदन्तादपि ईश्वरेति विवेकः । 'ईश्वरो मन्मथे शंभौ नाट्ये स्वामिनि वाच्यवत् । ईश्वरी चेश्वरोमायाम् ' इति मेदिनी॥ ईश्वरा उमायामिति च्छेदः । 'ईश्वरः शङ्करेऽधीशे तत्पत्न्यामीश्वरा' इति बोपालितः । 'विन्यस्तमङ्गलमहौषधिरी-

---

१ 'चान्तरा भ्रुवौ' इति पाठो भवेदित्याहुः ॥ २-प्रत्ययस्य नामागमे कीनाशेति रूपासिद्ध्या चिन्त्यम् । किंतु 'प्रकृतेः' इत्येवोचितम् ॥ ३ इत्त्वे नामागमे च लघूपधत्वाभावादेव गुणस्य प्राप्त्यभावादिति तु तत्त्वम् ॥

प्राततेररन् ॥ प्रातः ॥ ( ४९४४ ) (उ.) अमेस्तुट् च ॥ अन्तर्मध्यम् ॥ ( ४९४५ ) (उ.) दहेर्गो लोपो दश्च नः ॥ गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारः । नगः ॥ (४९४६) (उ.) सिचेः संज्ञायां हनुमौ कश्च ॥ सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात् । सिंहः ॥ (४९४७) (उ.) व्याङि घ्रातेश्च जातौ ॥ कप्रत्ययः स्यात् । व्याघ्रः ॥ ( ४९४८ ) (उ.) हन्तेरच् घुर च ॥ घोरम् ॥ ( ४९४९ ) ॥ (उ.) क्षमेरुपधालोपश्च ॥ चादच् । क्ष्मा॥ ( ४९५० ) (उ.) तरतेर्ड्रिः ॥ त्रयः । त्रीन् ॥ ( ४९५१ ) (उ.) ग्रहेरनिः ॥ ग्रहणिः । ङीष् ग्रहणी व्याधिभेदः ॥ ( ४९५२ ) (उ.) प्रथेरमच् ॥ प्रथमः ( ४९५३ ) (उ.) चरेश्च ॥ चरमः ॥ ( ४९५४ ) (उ.) मङ्गेरलच् ॥ मङ्गलम् ॥ इत्युणादिषु पञ्चमः पादः ॥ इत्युणादिप्रक्रिया ॥

---

म्बरायाः' इति भारविः । दशपाद्यां तु सूत्रान्तरमपि ॥ हन्ते रन् घश्च । 'हन हिंसागत्योः' अस्माद्रन् प्रत्ययः स्यात् घश्चान्तादेशः । हन्यते गम्यतेऽतिथिभिरिति घरः गृहम् ॥ ( ४९४२ ) चतेः—। 'चते याचने' अस्मादुरन् स्यादकार उच्चारणार्थः । 'चतुरनडुहोरामुदात्तः ४५५' इत्याम् ॥ ( ४९४३ ) प्राततेः—। 'अत सातत्यगमने' प्रपूर्वादस्मादरन्स्यात् रेफादकार उच्चाणार्थः । स्वरादिपाठादव्ययत्वम् ॥ ( ४९४४ ) अमेः—। 'अम गतिशब्दसंभक्तिषु' अस्मादरन्स्यात्तस्य तुडागमश्च । अन्तःशब्दोऽपि प्रातःशब्दवत् अव्ययम् ॥ ( ४९४५ ) दहेः—। 'दह भस्मीकरणे' 'नगो महीरुहे शैले भास्करे पवनाशने' इति मेदिनी ॥ ( ४९४६ ) सिचेः—। षिच क्षरणे' ॥ हकारादेश इति । धातोरन्त्यस्येत्यर्थः । 'सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः । सिंही क्षुद्रबृहत्योः स्याद्वासके राहुमातरि' इति विश्वः ॥ (४९४७ ) व्याङि—। 'घ्रा गन्धोपादाने' अस्माज्जातौ वाच्यायां कः स्यात् । कित्त्वादातो लोपः । 'व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः । श्रेष्ठे नरादुत्तरस्थः कण्ठकार्यां च योषिति' इति मेदिनी । (४९४८)हन्तेः—। हन्तेरच् स्याद्धातोर्घुरादेशश्च । 'घोरं भीमे हरे घोरः' इति विश्वः॥ (४९४९) क्षमेः-।'क्षमूष् सहने'। 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः॥ (४९५०) तरतेः-।'तॄ प्लवनतरणयोः'। अस्मात् ड्रिः स्यात्, डित्त्वाट्टिलोपः । (४९५१) ग्रहेः—। 'ग्रह उपादाने' ॥ ङीषिति । 'कृदिकारात्—७०८' इत्यनेन । 'ग्रहणी रुक् प्रवाहिका' इत्यमरः ॥ (४९५२) प्रथेः— 'प्रथ प्रख्याने' । 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी । 'प्रथमचरम—३२३' इति वैकल्पिकसर्वनामत्वात्पक्षे जसः शीभावः । प्रथमे, प्रथमाः ॥ (४९५३) चरेश्च । 'चर गतिभक्षणयोः' अस्मादमच्स्यात् । चरमे, चरमाः । योगविभागश्चिन्त्यप्रयोजनः । 'प्रथिचरिभ्याम्' इत्येव सुवचम् ॥ ( ४९५४ ) मङ्गेः—। 'उख उखि—' इत्यादिदण्डके गत्यर्थको मगिः पठ्यते । 'कल्याणं मङ्गलं शुभम्' मङ्गलो ग्रहभेदः । 'मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थे रक्षणेऽपि च' इति मेदिनी । भावे ष्यञि माङ्गल्यम् । 'तत्र साधुः २२४४' इति यत् । 'मङ्गल्यः स्यात्त्रायमाणाश्वत्थबिल्वमसूरके । स्त्रियां शम्यामधःपुष्पामिसिशुक्लवचासु च ॥ रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु' इति मेदिनी ॥ इत्युणादिषु पञ्चमः पादः ॥

उणादिप्रत्ययाः सन्ति पादोत्तरशतत्रयम् । तेषां विवेचनं त्वत्र ज्ञानेन्द्रस्वामिभिः कृतम् ॥

प्राचा तु कतिपयानामेवोणादीनामुपन्यासः कृतो न तु सर्वेषां, सोऽप्युपन्यासो नैकप्रघट्टकतया कृतः । किन्तु विच्छिद्येति स्पष्टम् । तत्रापि केचित्प्रमादा मनोरमायां प्रदर्शितास्तेष्वेव कांश्चित्प्रमादान्दर्शयामः—'भजो ण्विः' इति ण्विप्रकरणे 'छन्दसि सहः' 'वहश्च' इत्युपन्यस्य 'परौ व्रजेः षः पदान्ते' इति ण्विस्तेनैव षः परिव्राडित्ययं हि प्राचो ग्रन्थस्तद्व्याख्यायां तत्पौत्रेण पञ्चपाद्युणादिसूत्रे इदं पठ्यते इत्युक्तम् तदुभयमपि प्रामादिकम्, 'क्विब्वचि—४४१८' इति क्विब्दीर्घौ हि प्रक्रम्य'परौ व्रजेः—४४२०' इति सूत्रस्य पाठात् । अस्मिन्नंशे पञ्चपादीदशपाद्योरेकवाक्यत्वात् । यदपि 'धनर्त्तिचक्षिङ्त्रपितपिजनियजेरुस्' इति पठितम् । तदप्यनाकरम् । तथा हि—'जनेरुसिः ४४७५' । 'अर्तिपूवशियजितनिधनितपिभ्यो नित् ४४७७' । 'एतेर्णिच्च ४४७८' । 'चक्षेः शिच्च ४४७९' इति सर्वसंमतः पाठः । 'तपूंषि तस्मै', 'वपुष्टरम्' इत्यादिमन्त्रेषु आद्युदात्ततया अनुकूलश्च । वेदभाष्ये एवमेव स्थितम् । इत्यादयो द्वितीयपादे प्रमादाः ॥ तृतीयपादेऽपि 'स्तनिदूषिपूषिगदिहृदिभ्यो णेरित्नुच्' इति प्राचा पठितं, तत्र दूषिहृदी केषामपि वृत्तिकृतां ग्रन्थे न पठितौ, दूषयित्नुः हृदयित्नुरिति प्रयोगोऽपि आकरे न दृष्टः । 'स्तनिहृषिपुषिमुदिगदिमदिभ्यः ४५०२' इति पञ्चपादीपाठः । 'घुषिगन्धिमण्डिजनिगामिभ्यः 'इति दशपाद्यामधिकं पठितमित्यन्यदेतत् । यदपि 'श्रुदक्षिस्पृहिगृहिदृजॄभ्य आय्यः' इति पठित्वा दराय्य जराय्यः इति प्राचोक्तं तदपि न, दृजॄग्रहणस्याकरानारूढत्वात् । इत्यादयस्तृतीयपादे प्रमादाः ॥ यदपि 'कॄगॄस्तॄभ्यः क्रिन्' कीर्विः, गीर्विः, स्तीर्विरिति प्राचोक्तम् । तदपि लिपिभ्रमप्रयुक्तमेव । 'कॄ विक्षेपे', 'गॄ निगरणे', 'स्तॄञ् आच्छादने', इति प्राचो ग्रन्थं विवृण्वतामुक्तिरपि मूलाशुद्ध्यैवाशुद्धा 'जॄशॄस्तॄजागृभ्यः क्विन् ४६९८' इति हि पाठ उणादिवृत्तिकृतां माधवादीनां च संमतः । जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युरिति तद्ग्रन्थेषूपपादितम् । स्तॄ इत्यस्य दीर्घान्तत्व एव 'ॠत इद्धातोः ३१८३' इतीत्त्वं लभ्यते न तु ह्रस्वान्तत्वेऽपि तस्माद्यथाकरमेव हि ग्रहीतुमुचितमिति दिक् ॥ यदपि प्राचोक्तं 'ग्लाज्याहात्वरिभ्यो निः' इति । तदप्यनाकरम्, आकरे हि 'वीज्याज्वरिभ्यो निः ४६९२' इति पठित्वा सूत्रद्वयानन्तरम् 'वहिश्रि—४६९५' इति सूत्रे 'ग्लाहात्वरिभ्यो नित्' इति सूत्रितत्वात् । 'तूर्णी रथः सदानवः' इत्यादावाद्युदात्तदर्शनाच्च । न च 'स्त्रियां क्तिन् ५०६७' इत्यधिकारस्थं वार्तिकमेवेदं प्राचोदाहृतं, न तूणादिसूत्र-

अथोत्तरकृदन्तम् ।

( ४९५५ ) ⊛ **उणादयो बहुलम्** । ३।३।१। एते वर्तमाने संज्ञायां च बहुलं स्युः केचिदविहिता अप्यूह्याः ॥

( ४९५६ ) संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

( ४९५७ ) ⊛ **भूतेऽपि दृश्यन्ते** । ३ । ३ । २ । ( ४९५८ ) ⊛ **भविष्यति गम्यादयः** । ३ । ३ । ३ । ( ४९५९ ) ⊛ **दाशगोघ्नौ संप्रदाने** । ३ । ४ । ७३ । एतौ संप्रदाने कारके निपात्येते । दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिः ॥ ( ४९६० ) ⊛ **भीमादयोऽपादाने** । ३ । ४ । ७४ । भीमः । भीष्मः । प्रस्कन्दनः । प्रपक्षः । मूर्खः । खलतिः ॥ ( ४९६१ ) ⊛ **ताभ्यामन्यत्रोणादयः** । ३ । ४ । ७५ । संप्रदानपरामर्शार्थं ताभ्यामिति । ततोऽसौ भवति तन्तुः । वृत्तं तदिति वर्त्म । चरितं तदिति चर्म ॥ ( ४९६२ ) ⊛ **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** । ३ । ३ । १० । क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । अत्र वाऽसरूपन्यायेन तृजादयो न । पुनर्ण्वुलुक्तेः ॥

---

स्थमिति वाच्यम्, एवमपि त्वरतेः पाठस्यानुचितत्वात् । 'न ह्यसौ वार्तिकेऽस्तीति दिक् । एवं 'संस्त्याने स्त्यायतेर्ड्रट्' इत्यपि प्राचोदाहरणमनाकरम्, । 'स्त्यातेर्ड्रट्-४८११' इत्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां चोपलम्भात् । 'संस्त्याने स्त्यायतेर्ड्रड्भो सूतेः सप्प्रसवे पुमान्' इति भाष्ये श्लोकपाठो, न तु सूत्रपाठस्य तथात्वं दृश्यते । एवं तद्ग्रन्थव्याख्यातॄणामपि प्रमादाः ऊह्याः । तद्यथा-पाणिन्यादिमुनीनिति व्याचक्षाणैरुक्तम् 'मनेरुच्चोपधायाः' इति, न ह्येवंविधं सूत्रं पञ्चपाद्यां दशपाद्यां वाऽस्ति । अत इत्यनुवर्तमाने 'मनेरुच ४७६८' इत्येव सूत्रितत्वादिति दिक् ॥ इति चतुर्थपादे प्राचः प्रमादाः ॥

इत्युणादयः ॥ शिवम् ॥

---

**( ४९५५ ) उणादयो बहुलम्** । 'वर्तमाने लट् २९०५' इत्यतो वर्तमानग्रहणं, 'पुवः संज्ञायाम् ४१९७' इत्यतः संज्ञाग्रहणं चानुवर्तते तदाह—**एते इति** । अत्र हि सूत्रे 'धातोः ३७६८', 'प्रत्ययः २६४', 'कृदतिङ् ५०९' इति चानुवर्तते, तेन 'कृवापाजिमि-४१९९-४९५४' इत्यादिना विहितानामष्टाध्यायीबहिर्भूतानामप्युणादीनां प्रत्ययसंज्ञा कृत्संज्ञा च सिध्यति । तथा चोणादिप्रत्ययाः सर्वे धातोः परत्र 'कर्त्तरि कृत् ३७७१' इति कर्त्रर्थे भवन्ति । उणादिप्रत्ययान्तस्य 'कृत्तद्धित-२६३' इति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिरित्यादि सर्वमपीष्टं सिध्यति । अपरिपूर्णानामुणादीनां परिपूर्णार्थं बहुलग्रहणं, तस्य फलमाह-**केचिद्विहिता अपीति** । हृषेरुलज्विहितः स तु शङ्केरपि भवति शङ्कुलेति प्रयोगदर्शनात् । किंच, फिड-फिड्डप्रत्ययौ कुत्रापि न विहितौ अर्तेरुह्येते, ऋफिडः, ऋफिड्डः इति तयोः कित्त्वं च कल्प्यते । तथा षण्ढ इत्यत्र सत्वाभावश्चेत्यादि ॥ **( ४९५६ ) संज्ञास्विति** । अनादिसंज्ञास्वेव, न तु सर्वास्वित्याहुः । 'हृषेरुलच् ४२९५' इति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरुह्यते, तेन शङ्कुलेति सिद्धम् । 'ऋ गतौ' इत्यादिभ्यः फिडफिड्डादिप्रत्यया गृह्यन्ते ॥ **कार्याद्विद्यादिति** । ऋफिड इत्यादौ गुणप्रतिषेधादिकार्यानुरोधादनूबन्धं ककारादिकं विद्यात् । अनूबन्धमित्यत्र 'उपसर्गस्य घञि-१०९७' इति दीर्घः । एतदुणादिषु शास्त्रं शासितव्यमित्यर्थः ॥ **( ४९५७ ) भूतेऽपि दृश्यन्ते** । नन्वेवं वर्तमानग्रहणं च 'उणादयो बहुलम् ४९५५' इत्यत्र नानुवर्त्यताम् । एतच्चोत्तरसूत्रं च त्यज्यताम् । अविशेषेण कालत्रयेऽपि प्रत्ययलाभादिति चेत् । अत्राहुः—बाहुल्येन वर्तमाने भवन्ति, भूतभविष्यतोस्तु क्वचिदेवेति विवेकप्रदर्शनार्थमिदमिति ॥ **( ४९५८ ) भविष्यति गम्यादयः** । गमिष्यतीति गमी ग्रामम् । आगमिष्यतीति आगामी । 'गमेरिनिः ४६४९' 'आङि णित् ४६५०' इत्याङ्पूर्वस्य तु णित्त्वादुपधावृद्धिः ॥ **( ४९६० ) भीमः । भीष्म इति** । 'भियो हेतुभये षुक् ३४५०' इति मप्रत्ययसंनियोगेन वैकल्पिकः षुक् । प्रस्कन्दत्यस्मादिति प्रस्कन्दनः । अपादाने ल्युट् । प्रपक्षत्यस्मादिति प्रपक्षः, पचाद्यच् । मुह्यत्यस्मादिति मूर्खः । 'मुहेः खो मूर्च ४९०६' । स्खलत्यस्मादिति खलतिर्निष्केशशिरा इति प्रागुक्तम् ॥ **( ४९६१ ) ताभ्यामितीति** । ताभ्यामित्यनुक्तौ तु संनिहितापादानस्यैव परामर्शादपादानादन्यत्रेत्यर्थः स्यादिति भावः । **ततोऽसाविति** । तनोतेः कर्त्तरि क्तः । 'अनुदात्तोपदेश-२२३४' इत्यनुनासिकलोपः । असौ ततो भवति विस्तृतो भवतीत्यर्थे तनोतेस्तुन् ॥ **वृत्तमिति** । गमनादिना निष्पन्नं यत्तद्वर्त्म । वृतेः कर्मणि मनिन् । 'अयनं **वर्त्म** मार्गः' इत्यमरः ॥ **( ४९६२ ) तुमुन्ण्वुलौ**—। क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था तस्याम् ॥ अत्रेदं बोध्यम्—तुमुन्ण्वुलोः कृत्त्वाविशेषेऽपि 'अव्ययकृतो भावे' इति वचनाद्भावे तुमुन् । ण्वुल् तु कर्त्तरि । क्रियायामिति सप्तमीनिर्देशात्तद्वाचकस्य यातीत्यादेः 'तत्रोपपदं सप्तमीस्थम् ११२५' इत्युपपदत्वमिति । **कृष्णं द्रष्टुमिति** । कृष्णकर्मकं भविष्यद्दर्शनं तत्प्रयोजनकं यानमित्यर्थः ॥ **कृष्णं दर्शक इति** । कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं दर्शनप्रयोजनकं च यानमित्यर्थः । क्रियायां किम्, भिक्षिष्ये इत्यस्य जटाः । इह भिक्षार्थाः जटाः, ताश्च द्रव्यं न तु क्रिया, भिक्षितुं जटा इति प्रयोगस्तु धारयतीत्यध्याहारेण समर्थनीयः । क्रियार्थायां किम्, धावतस्ते पतिष्यति दण्डः । अस्त्यत्र

---

१ संज्ञासु अनादिभूतासु कोशादिप्रसिद्धासु । २ कार्यात् गुणनिषेधादिकार्यात् ॥ ३ अत्र च भावोऽसत्त्वभूत एव अव्ययार्थे लिङ्गाद्यभावेन प्रत्ययार्थे वैलक्षण्याननुभवात् 'भाववचनाश्च' इत्यनेन सत्त्वभूते भावे घञादीनामेव विधानाच्च । इति शब्दरत्नम् ॥

( ४९६३ ) (सू॰) **समानकर्तृकेषु तुमुन्** । ३ । ३ । १५८ । अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् । इच्छति भोक्तुम् । वष्टि वाञ्छति वा ॥ ( ४९६४ ) (सू॰) **शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्** । ३ । ४ । ६५ । एषूपपदेषु धातोस्तुमुन् स्यात् । शक्नोति भोक्तुम् ॥ एवं धृष्णोतीत्यादौ । अर्थग्रहणमस्तिनैव संबध्यते, अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् ॥ ( ४९६५ ) (सू॰) **पर्याप्तिवचनेष्वलमर्थेषु** । ३ । ४ । ६६ । पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात् । पर्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम् । अलं भुक्त्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते । प्रभूतमिह गम्यते न तु भोक्तुः सामर्थ्यम् ॥ ( ४९६६ ) (सू॰) **कालसमयवेलासु तुमुन्** । ३ । ३ । १६७ । पर्यायोपादानमर्थोपलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन् स्यात् । कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते तेनेह न—भूतानि कालः पचतीति वार्ता ॥ ( ४९६७ ) (सू॰) **भाववचनाश्च**[1] । ३ । ३ । ११ । भावे इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । यागाय याति ॥ ( ४९६८ ) (सू॰) **अण् कर्मणि च** । ३ । ३ । १२ । कर्मण्युपपदे क्रियार्थायां क्रियायां चाण् स्यात् । ण्वुलोऽपवादः । काण्डलावो व्रजति । परत्वादयं कादीन् बाधते । कम्बलदायो व्रजति ॥ ( ४९६९ ) (सू॰) **पदरुजविशस्पृशो घञ्** । ३ । ३ । १६ । भविष्यतीति निवृत्तम् । पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति स्पर्शः ॥ ( ४९७० ) (सू॰) **सृ स्थिरे** । ३ । ३ । १७ । सृ इति लुप्तविभक्तिकम् । सर्तेः स्थिरे कर्तरि घञ् स्यात् । सरति कालान्तरमिति सारः ॥ ( ४९७१ ) (वा॰) **व्याधिमत्स्यबलेषु चेति वाच्यम्** ॥ अतीसारो व्याधिः । अन्तर्भावितण्यर्थोऽत्र सरतिः । रुधिरादिकमतिशयेन सारयतीत्यर्थः । विसारो मत्स्यः । सारो बले दृढांशे च ॥ ( ४९७२ ) (सू॰) **भावे** । ३ । ३ । १८ । सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः । पाकौ ॥ ( ४९७३ ) (सू॰) **स्फुरतिस्फुलत्योर्घञि** । ६ । १ । ४७ । अनयोरेच आत्वं स्याद्घञि । स्फारः । स्फालः । उपसर्गस्य घञीति दीर्घः । परीहारः ॥ [ १४९८ ] (सू॰) **इकः काशे** । ६ । ३ । १२३ । काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः । नीकाशः ।

---

धावत इति क्रिया न त्वसौ दण्डपातनार्था । धावनं तु दण्डपतने हेतुर्भवति न तूद्देश्यमिति दिक् ॥ (४९६३) **समानकर्तृकेषु—। अक्रियार्थेति** । भोक्तुमिच्छतीत्यत्र भोजनविषयिणीच्छेति प्रतीयते, न तु भोजनार्थेच्छेति । अतः पूर्वेणात्राप्राप्तिरिति भावः ॥ सूत्रस्थसमानशब्द एकतावचन इत्याह—**एककर्तृकेष्विति** । एकेति किम्, पुत्रस्य पठनमिच्छति । पुत्रस्येति कर्तरि षष्ठी । पुत्रकर्तृकं पठनमित्यर्थः । इह सूत्रे समानकर्तृकेति पदाभावे पुत्रस्य पठितुमिच्छतीति प्रयोगः स्यात् । देवदत्तं भुञ्जानमिच्छतीति काशिका । अत्र काशिकायामुक्तम्—इच्छन् करोतीत्यत्रानभिधानान्नेति । अत्र निष्कर्षमाहुः—उक्तविषये इच्छन्कर्तुमिति प्रयोगाभावेऽपि इच्छन्कर्तुं गच्छतीत्यादौ तु 'तुमुन्ण्वुलौ--४९६२' इति सूत्रेण स्यादिति । तच्चिन्त्यम्, करोतीत्यर्थे तुमुनः प्राप्तेरेवाभावात् । तस्य भावार्थकत्वात् । इह च लटा कर्तृप्रतीतेः । किंचेच्छन्कर्तुमिति प्रयोगो नेष्यते इति रिक्तं वचः । कर्तुमिच्छन्निति प्रयोगस्य सकलसंमतत्वात् । पदानुपूर्व्याश्चाहर पात्रं पात्रमाहरेत्यादाविव स्वेच्छायत्तत्वात् । विस्तरस्त्विह मनोरमादावनुसंधेयः ॥ **वष्टीति** । 'वश कान्तौ' कान्तिरिच्छेति वशधातुरपीच्छार्थकः ॥ (४९६४) **शकधृष—।** अयमप्यक्रियार्थोपपदार्थ आरम्भः । भोक्तुं शक्नोति धृष्णोति जानाति इत्यत्र हि भुज्यर्थो विषयतया संबध्यते, नैपुण्यं च गम्यते । ग्लायति भोक्तुमित्यत्र भोजनविषयिण्यशक्तिर्गम्यते । भोक्तुं घटते इत्यत्र तु भोक्तुमर्हतीति योग्यता । आरभते भोक्तुमित्यत्र भोक्तुं प्रक्रमते उत्सहते इति भुजेराद्यावस्था । लभते इत्यत्राप्रत्याख्यानमस्ति भोक्तुमित्यादौ तु संभवमात्रम् । ( ४९६५ ) **पर्याप्तो भोक्तुमिति** । भोक्तुं समर्थ इत्यर्थः ॥ ( ४९६६ ) **उपलक्षणार्थमिति** । तस्य फलमाह—**अनेहा इति** । 'कालो दिष्टोऽप्यनेहाऽपि' इत्यमरः ॥ **तेनेह इति** । अनुवादे न भवतीत्यर्थः । ( ४९६७ ) **यागायेति** । यष्टुमित्यर्थः । 'तुमर्थाच्च भाववचनात् ८४८' इति चतुर्थी ॥ ( ४९६८ ) **ण्वुलोऽपवाद इति** । 'अव्ययकृतो भावे' इति भावे विहितत्वात्तुमुनः प्राप्तिरेव नास्तीति भावः ॥ ( ४९६९ ) **पदरुज—। पद्यतेऽसाविति** । करणस्य कर्तृविवक्षाऽत्र बोध्या । पद्यते गच्छति येनेति फलितोऽर्थः ॥ ( ४९७० ) **सृ स्थिरे । सर्तेरिति** । भ्वादेर्जुहोत्यादेश्च ग्रहणम् ॥ स्थिरग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणं न तूपपदमिति ध्वनयन्नाह—**स्थिरे कर्तरीति** । अर्द्धर्चादिषु सारशब्दपाठोऽत्र मानम् ॥ ( ४९७१ ) **व्याधीत्यादि** । अस्थिरार्थमिदं वचनम् । तेन विसारो मत्स्य इत्यत्र विविधं सरतीत्यर्थः संगच्छते ॥ **अतीसार इति** । 'उपसर्गस्य घञि—१४९७' इति दीर्घः ॥ **सारो बले इति** । अत्रापि सृधातुरन्तर्भावितण्यर्थः । सारयति चेष्टयतीत्यर्थानुरोधात् । बलवानेव हि चेष्टते ॥ ( ४९७२ ) **सिद्धावस्थापन्न इति** । पचतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थ इति भावः ॥

---

[1] **भाववचनाश्चेति** । वक्ष्यमाणानां प्रत्ययानां घञादीनां विशेषविहितेन तुमुना बाधाभावायेदं सूत्रम् । न च वाऽसरूपविधिनापि तेऽपि भविष्यन्तीति वाच्यम्, पूर्वसूत्रघटक ण्वुल्ग्रहणेन क्रियार्थायां क्रियायामुपपदे वाऽसरूपन्यायेन तृजादयो नेत्युक्तत्वेन घञपि न स्यादित्याशयात् ॥

अनूकाशः । इकः किम् । प्रकाशः । नोदात्तोपदेशेति न वृद्धिः । शमः । आचमादेस्तु—आचामः । कामः । वामः । विश्राम इति त्वपाणिनीयम् ॥ ( ४९७४ ) (सू) स्यदो जवे । ६ । ४ । २८ । स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः॥(४९७५) (सू) अवोदैधौद्मप्रश्रथहिमश्रथाः । ६ । ४ । २९ । अवोदः अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । श्रन्थेर्नलोपो वृद्ध्यभावश्च ॥ ( ४९७६ ) (सू) अकर्तरि च कारके संज्ञायाम् ।३।३।१९। कर्तृभिन्ने कारके घञ् स्यात् ॥ ( ४९७७ ) (सू) घञि च भावकरणयोः ।६।४।२७। रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् । रज्यत्यस्मिन् रङ्गः । प्रास्यते इति प्रासः । संज्ञायामिति प्रायिकम् । को भवता लाभो लब्धः । इत उत्तरं भावे अकर्तरि कारक इति कृत्यल्युटो बहुलमिति यावद् द्वयमप्यनुवर्तते ॥ ( ४९७८ ) (सू) परिमाणाख्यायां सर्वेभ्यः ।३।३।२०। घञ् । अजपोर्बाधनार्थमिदम् । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ ॥ (४९७९) (सू) दारजारौ कर्तरि णिलुक्च ॥ दारयन्तीति दाराः । जारयन्तीति जाराः ॥ (४९८०) (सू)

---

[ ३६८८ ] आचाम इति । ‘ नोदात्त-३६८८’ इति सूत्रे ‘अनाचमेः’ इत्युक्तत्वादिति भावः ॥ तत्रैव सूत्रे ‘अनाचमिकमिवमीनाम्-३६८९’ इति वार्तिकाद्वृद्धिनिषेधो नेत्याह-कामो वाम इति । अपाणिनीयमिति । श्रमेरुदात्तोपदेशत्वात् घञि वृद्धेर्दुर्लभत्वात् । यदि तु ‘धुर्यान्विश्रामय’ इत्यादिवण्णिचि वृद्धिमाश्रित्य णिजन्तादेरच् क्रियते, तदा रूपं सिध्यति । न च णिच्यपि वृद्धिनिषेधः शङ्क्यः, ‘ नोदात्त-३६८८ ’ इत्यत्र कृतीत्यनुवृत्त्या णिचि निषेधाभावात् । न चैवमपि मितां [३४०२] ह्रस्वः स्यादिति शङ्क्यम्, वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणेन ह्रस्वाभावसिद्धेः । परन्तु णिजन्तकल्पनायामर्थो भिद्यते इति भावः । वस्तुतस्तु निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायां तु न दोष इत्यवधेयम् । एवं च ‘ रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ’ इत्यादिकविप्रयोगाः साधव एवेति बोध्यम् ॥ ( ४९७५ ) अवोदै-। अवोद इति । ‘उन्दी क्लेदने’ अवपूर्वः । घञि नलोपो निपात्यते ॥ एध इति । इन्धेर्घञि नलोपो गुणश्च निपात्यते ‘न धातुलोपे-३५२७’ इति निषेधादप्राप्तगुणस्य निपातनमिति ज्ञेयम् ॥ ओद्म इति । उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्चात्रापि निपात्यते ॥ श्रन्थेरिति[1] । प्रपूर्वस्य हिमपूर्वस्य च घञि निपात्यते इति बोध्यम् ॥ ( ४९७६ ) प्रायिकमिति[2] । सर्वात्मना संज्ञाग्रहणत्यागे कृतः कट इत्यत्र कारः कट इति स्यादिति भावः । भाष्ये[3] त्वनभिधानमाश्रित्य प्रत्याख्यातम् ॥ ( ४९७८ ) परिमाणाख्यायाम्-। सर्वेभ्यो धातुभ्यः । परिमाणं परिच्छित्तिः । आख्यानमाख्या उक्तिः । परिच्छित्तेरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिरिति चेत्प्रत्ययार्थस्येत्युच्यते । आख्याग्रहणं रूढिनिरासार्थम् । तेन परिमाणग्रहणेन संख्या च गृह्यते । सर्वेभ्यः किम्, अन्यथा ‘पुरस्तादपवाद-१०९’ न्यायेनाचमेव घञ् बाधेत न त्वपम् ॥ तण्डुलनिचाय इति । निचीयते राशीक्रियते इति निचायः । अत्र राश्येकत्वेन समुदायिनां परिच्छित्तिरर्थाद्गम्यते । ‘एरच् ५०२२ ’ इत्याचि प्राप्ते घञ् । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स निष्पावः ‘ऋदोरप् ५०२४’ इत्यपि प्राप्ते घञ् । शूर्पेणेति करणतृतीयान्तस्य ‘ कर्तृकरणे कृता बहुलम् १००४ ’ इति समासः । अत्र शूर्पसंख्यया तण्डुलादेरपि परिच्छित्तिः । शूर्पद्वित्वं तु आर्थिकं, न तु शाब्दं, निष्पावगतद्वित्वं तु शाब्दम् । यद्यप्यत्र ‘निरभ्योः पूल्वोः ४९९० ’ इति घञ् लभ्यते, तथापि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः ॥ अप्प्रत्ययस्य मुख्योदाहरणमाह-द्वौ काराविति । ‘कॄ विक्षेपे ’ । कर्मणि घञ् । शूर्पादिना विक्षिप्तो धान्यादिराशिः कारः । इह प्रकृत्याश्रय एवापवादो न त्वर्थाश्रयः, सर्वेभ्य इति पञ्चमीनिर्देशेन तथैवावगमात्, तेनायं प्रकृत्याश्रयो घञ् क्तिनोऽपवादो न भवति । एका तिलोच्छ्रितिः । उत्पूर्वकाच्छ्रयतेः कर्मणि भावे वा क्तिन् । ऊर्ध्वीकृतो राशीकृत इत्यर्थः । तदेतत्सूचयितुमुक्तम्-अजपोरपवाद इति । तयोरपि प्रकृत्याश्रयत्वादपवादयोः समानविषयौचित्यात् । ‘स्त्रियां क्तिन् ५०६७’ त्वर्थाश्रय इति दिक् ॥ ( ४९७९ ) दारजाराविति । ‘अकर्तरि कारके’ इत्यधिकारात् ‘ऋदोरप् ५०२४’ इत्यस्य घञपवादत्वाच्च कर्तरि घञर्थमिदं वचनम् ॥ णिलुक् चेति । चात् घञ् । लोपे हि सति घञाश्रया वृद्धिर्न स्याण्णिलोपस्य स्थानिवद्भावेन व्यवधानात् । न च णिज्निमित्तैव वृद्धिरस्त्विति वाच्यम्, जारशब्दे ‘ मितां ह्रस्वः ३४०२ ’ इति ह्रस्वापत्तेः । ‘ जनीजॄष्-३१३९ ’ इति जॄधातोर्णौ मित्त्वात् । लुकि सति तस्य परनिमित्तत्वाभावेन ‘ क्ङिति च-’ इति कौ लुप्तस्य निषेधेन वा स्थानिवत्त्वाभावाज्जार इति रूपं सिध्यतीति भावः । एतेन दीर्यते यैस्ते दाराः, जीर्यतेऽनेनेति जार इत्यण्यन्ताभ्यामेव करणे घञस्तु, किमनेन वचनेनेति केषांचिदुक्तिः परास्ता । ‘ऋदोरप् ५०२४ ’ इत्यपवादविषये उत्सर्गस्य घञो दुर्लभत्वात् । ण्यधिकारादूर्ध्वं वाऽसरूपविधेरनङ्गीकारादपवादोऽप्यच् ‘ करणाधिकरणयोः-

---

१ श्रन्थेरिति-। प्रहिमान्यतरपूर्वस्येत्यादिः ॥ २ अकर्तरि चेति—चकारस्य संज्ञायामित्युत्तरं योजना बोध्येत्याशयेनाह-प्रायिकमिति ॥ ३ भाष्ये त्विति । तत्र हि—संज्ञाग्रहणमनर्थकमसंज्ञायामपि घञ् दृश्यते-को भवता लाभो लब्धः । को भवता दायो दत्त इति । यदि संज्ञाग्रहणं न क्रियतेऽतिप्रसङ्गो भवति कृतः कट इत्यत्र कारः कट इति प्राप्नोति । अतिप्रसङ्ग इति चेत् ॥ तन्न, किं कारणम्, अनभिधानलक्षणत्वात् प्रत्ययस्य सिद्धम् । अभिधानलक्षणाः कृत्तद्धितसमासाः । अनभिधानान्न भविष्यन्तीत्युक्तम् ॥

इङश्च । ३ । ३ । २१ । घञ् । अचोऽपवादः । उपेत्य अस्मादधीयते उपाध्यायः ॥ (४९८१) (वा०) अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् ॥ उपाध्याया । उपाध्यायी ॥ (४९८२) (वा०) शॄ वायुवर्णनिवृतेषु ॥ शॄ इत्यविभक्तिको निर्देशः । शारो वायुः । करणे घञ् । शारो वर्णः । चित्रीकरणमिह धात्वर्थः । निव्रियते आव्रियतेऽनेनेति निवृतमावरणम् । बाहुलकात्करणे क्तः । गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । अकृतप्रावरण इत्यर्थः ॥ (४९८३) (सू) उपसर्गे रुवः । ३ । ३ । २२ । घञ् । संरावः । उपसर्गे किम् । रवः ॥ ( ४९८४ ) (सू) अभिनिसः स्तनः शब्दसंज्ञायाम् । ८ । ३ । ८६ । अस्मात् स्तनेः सस्य मूर्धन्यः । अभिनिःष्टानो वर्णः । शब्दसंज्ञायां किम् । अभिनिःस्तनति मृदङ्गः ॥ ( ४९८५ ) (सू) समि युद्रुदुवः । ३ । ३ । २३ । संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः । सन्द्रावः । सन्दावः ॥ ( ४९८६ ) (सू) श्रिणीभुवोऽनुपसर्गे । ३ । ३ । २४ । श्रायः । नायः । भावः । अनुपसर्गे किम् । प्रश्रयः । प्रणयः । प्रभवः । कथं प्रभावो राज्ञ इति । प्रकृष्टो भावः इति प्रादिसमासः । कथं राज्ञो नय इति । बाहुलकात् ॥ ( ४९८७ ) (सू) वौ क्षुश्रुवः । ३ । ३ । २५ । विक्षावः । विश्रावः । वौ किम् । क्षवः । श्रवः ॥ ( ४९८८ ) (सू) अवोदोर्नियः । ३ । ३ । २६ । अवनायः अधोनयनम् । उन्नायः ऊर्ध्वनयनम् । कथमुन्नयः उत्प्रेक्षेति । बाहुलकात् ॥ ( ४९८९ ) (सू) प्रे द्रुस्तुस्रुवः । ३ । ३ । २७ । प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रे इति किम् । द्रवः । स्तवः । स्रवः ॥ ( ४९९० ) (सू) निरभ्योः पूल्वोः । ३ । ३ । २८ । निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम् । पवः । लवः ॥ ( ४९९१ ) (सू) उन्न्योर्ग्रः । ३ । ३ । २९ । उद्गारः । निगारः । उन्न्योः किम् । गरः ॥ ( ४९९२ ) (सू) कॄ धान्ये । ३ । ३ । ३० । कॄ इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात् । उत्कारो निकारो धान्यस्य । विक्षेप इत्यर्थः । धान्ये किम् । भिक्षोत्करः । पुष्पनिकरः ॥ ( ४९९३ ) (सू) यज्ञे समि स्तुवः । ३ । ३ । ३१ । समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः । यज्ञे किम् । संस्तवः परिचयः ( ४९९४ ) (सू) प्रे स्त्रोऽयज्ञे । ३ । ३ । ३२ । अयज्ञे इति च्छेदः । यज्ञे इति प्रकृतत्वात् । प्रस्तारः । अयज्ञे किम् । बर्हिषः प्रस्तरो मुष्टिविशेषः ॥ ( ४९९५ ) (सू) प्रथने वावशब्दे । ३ । ३ । ३३ । विपूर्वात् स्तृणातेर्घञ् स्यादशब्दविषये प्रथने । पटस्य विस्तारः । प्रथने किम् । तृणविस्तरः । अशब्दे किम् । ग्रन्थविस्तरः ॥ ( ४९९६ ) (सू) छन्दोनाम्नि च । ३ । ३ । ३४ । वौ इत्यनुवर्तते । विष्टारपङ्क्तिश्छन्दः । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः ॥ ( ४९९७ ) (सू) छन्दोनाम्नि च । ८ । ३ । ९४ । विपूर्वात् स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि । इति षत्वम् ॥ ( ४९९८ ) (सू) उदि ग्रहः । ३ । ३ । ३५ । उद्ग्राहः ॥ ( ४९९९ ) (सू) समि मुष्टौ । ३ । ३ । ३६ । मल्लस्य संग्राहः । मुष्टौ किम् । द्रव्यस्य संग्रहः ॥ ( ५००० ) (सू) परिन्योर्नीणोर्द्यूताभ्रेषयोः । ३ । ३ । ३७ । परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् । क्रमेण द्यूतेऽभ्रेषे च विषये । परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताभ्रेषयोः किम् । परिणयो विवाहः । न्ययो नाशः ॥ ( ५००१ ) (सू) परावनुपात्यय इणः । ३ । ३ । ३८ । क्रमप्राप्तस्य अनतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् । कालस्य पर्ययः अतिपात इत्यर्थः ॥ ( ५००२ ) (सू)

---

५१०९' इति ल्युटा बाधादिह दुर्लभ इत्यन्यदेतत् ॥ (४९८०) उपेत्येति । गुरुसमीपमेत्येत्यर्थः ॥ (४९८१) अपादाने इति । 'पुरस्तादपवाद-१०९' न्यायेन 'इङश्च ४९८०' इत्यस्याच एवापवादत्वात्स्त्रियां तु क्तिन् स्यादिति तद्बाधनायायमारम्भः । 'घञनुक्रमणमजपोर्विषये' इति वचनात्स्त्रियां घञ् न स्यादिति स्त्रियांग्रहणम् ॥ उपाध्यायेति । या स्वयमध्यापयति तस्यामिदं रूपद्वयम् । पुंयोगे तु ङीषेव । आनुगागमश्च पाक्षिक इत्युक्तम् ॥ (४९८२) करणे इति । 'वृञ् वरणे' इत्यस्मादित्यर्थः ॥ नीशार इति । 'उपसर्गस्य घञि-१४९७' इति दीर्घः । ननु 'प्रदक्षिणप्रसव्यगामिनां शाराणाम्' इति कथं प्रयोगः । 'वायुवर्ण-' इत्यर्थपरिगणनादिति चेत् । अत्राहुः-अत एव वार्तिकप्रयोगादक्षेष्वपि शृणातेर्घञ् ॥ (४९८३) रव इति । 'ऋदोरप् ५०२४' इत्यप् ॥ (४९८६) राज्ञो नय इति । 'णीञ् प्रापणे' इत्यस्मात् 'अचो यत् ३७८७' ॥ (४९९३) यज्ञे समि- । अधिकरणे ल्युटोऽपवादोऽयं घञ् ॥ (४९९६) छन्दो- । 'शब्दविषयत्वात्पूर्वेणाप्राप्ते वचनम्, केचित्तु प्रस्तारपङ्क्तिरित्यादिप्रयोगानुरोधेनात्र वाविति नानुवर्तयन्ति ॥ (४९९८) उदि ग्रहः । भावादौ घञ् स्यात् । 'ग्रहवृदृ-५०२६' इति प्राप्तस्यापोऽपवादः ॥ (५०००) परिन्योः- । अक्षादिभिः क्रीडनं द्यूतम् । यथाप्राप्तकरणमभ्रेषः ॥ (५००१) परावनु- । अत्र व्याचख्युः-द्विःपरिग्रहणमिह व्यर्थं सकृदेव कर्तुं शक्यम् । तथा हि 'परौ नियो द्यूते', 'इणोऽनुपात्यये', 'नावभ्रेषे' । इह इण इत्यनुवर्तनात् 'इणोऽनुपात्यये' इत्यत्र तु परा-

---

१ 'एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते' इति मन्वेकवाक्यतया वेदैकदेशवेदाङ्गान्यतरत्कर्म बोध्यम् । एवं चान्यथानुपपत्त्या स्त्रीणां वेदाध्ययनेऽधिकारः सूचितो भवति । अत एव कठी बह्वृची अध्वर्युरित्यादिव्यवहाराः ॥ २ 'एरच्' इति तूचितम् । 'अचो यत्' इत्यस्योपन्यासस्तु भ्रममूलकः ॥

व्युपयोः शेतेः पर्याये । ३ । ३ । ३९ । तव विशायः । तव राजोपशायः । पर्याये किम् । विशयः संशयः । उपशयः समीपशयनम् ॥ ( ५००३ ) (सू) हस्तादाने चेरस्तेये । ३ । ३ । ४० । हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । हस्तादाने किम् । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति । अस्तेये किम् । पुष्पप्रचयश्चौर्येण ॥ ( ५००४ ) (सू) निवासचितिशरीरोपसमाधानेष्वादेश्च कः । ३ । ३ । ४१ । एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधानं राशीकरणं तच्च धात्वर्थः । अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । निवासे-काशीनिकायः । चितौ-आकायमग्निं चिन्वीत । शरीरे-चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । समूहे-गोमयनिकायः । एषु किम् । चयः । चः क इति वक्तव्ये आदेरित्युक्तेर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः । पुनः पुना राशीकरणमित्यर्थः ( ५००५ ) (सू) सङ्घे चानौत्तराधर्ये । ३ । ३ । ४२ । चेर्घञ् आदेश्च कः । भिक्षुनिकायः । प्राणिनां समूहः सङ्घः । अनौत्तराधर्ये किम् । सूकरनिचयः । सङ्घे किम् । ज्ञानकर्मसमुच्चयः ॥ ( ५००६ ) (सू) कर्मव्यतिहारे णच् स्त्रियाम् । ३ । ३ । ४३ । स्त्रीलिङ्गे भावे णच् । ( ५००७ ) (सू) णचः स्त्रियामञ् ॥ । ५ । ४ । १४ । ( ५००८ ) (सू) न कर्मव्यतिहारे । ७ । ३ । ६ । अत्र ऐच् न स्यात् । व्यावक्रोशी । व्यावहासी ॥ ( ५००९ ) (सू) अभिविधौ भाव इनुण् । ३ । ३ । ४४ । ( ५०१० ) (सू) अणिनुणः । ५ । ४ । १५ ॥ इनण्यनपत्ये । सांराविणं वर्तते ॥ ( ५०११ ) (सू) आक्रोशेऽवन्योर्ग्रहः । ३ । ३ । ४५ । अव । नि एतयोर्ग्रहेर्घञ् स्यात् शापे । अवग्राहस्ते भूयात् । अभिभव इत्यर्थः । निग्राहस्ते भूयात् । बाध इत्यर्थः । आक्रोशे किम् । अवग्रहः पदस्य । निग्रहश्चोरस्य ॥ ( ५०१२ ) (सू) प्रे लिप्सायाम् । ३ । ३ । ४६ । पात्रप्रग्राहेण चरति भिक्षुः ॥ ( ५०१३ ) (सू) परौ यज्ञे । ३ । ३ । ४७ । उत्तरः परिग्राहः । स्फ्येन वेदेः स्वीकरणम् ॥ ( ५०१४ ) (सू) नौ वृ धान्ये । ३ । ३ । ४८ । वृ इति लुप्तपञ्चमीकम् । नीवाराः । धान्ये किम् । निवरा कन्या । क्विन्विषयेऽपि बाहुलकादप् ।

---

वित्यनुवर्तनाचेष्टं सिध्यतीति भावः । ( ५००२ ) ननु पूर्वसूत्रेऽनुपात्ययः पर्यायार्थकत्वेन व्याख्यातः, तथा च तदनुवृत्त्यैव सिद्धे पर्यायग्रहणमिह व्यर्थमिति चेत् । अत्राहुः-पर्यायग्रहणं पुनर्विधानार्थम् । तेनात्राभिविधिविवक्षायां परमपि 'अभिविधौ भाव इनुण् ५००९' इति इनुणं बाधित्वाऽयमेव घञ् भवतीति ॥ ( ५००४ ) आकायमिति । आचीयन्तेऽस्मिन्निष्टका इत्याकायम् । अधिकरणे घञ् । अग्निस्थलविशेषं चिन्वीत, चयनेन निष्पादयेदिति श्रुत्यर्थः ॥ ( ५००५ ) सङ्घे चानौत्तराधर्ये । उत्तरे चाधरे चोत्तराधरास्तेषां भाव औत्तराधर्यम् ॥ सूकरेति । स्तनपानार्थमुत्तराधरभावेन सूकराः शेरते तदेतत्प्रत्युदाहरणम् । यदा तु भिक्षुवत्पृथक्पृथगेवावातिष्ठन्ते, तदा भवत्येव घञिहापि ॥ (५००६) कर्मव्यतिहारे णच्-। कर्मव्यतिहारः क्रियाव्यतिहारः । परस्परकरणामिति यावत् । तत्र वर्तमानाद्धातोरित्यर्थः ॥ भावे णजिति । कर्तृवर्जिते कारके न भवत्यनभिधानादित्याहुः । भावादाविति प्राचोक्तं यत्तदुपेक्ष्यमाकरविरोधात् ॥ ( ५००७ ) णचः स्त्रि-। अनेन णजिति चकारोऽत्र विशेषणार्थ इति ध्वनितम् ॥ स्त्रियां किम् । व्यतिपाको वर्तते ॥ ( ५००८ ) ऐच् नेति । 'न य्वाभ्याम्-- १५७४' इति प्राप्तस्य निषेधेनादिवृद्धिरेव । णचस्ताद्धितत्वाभावेऽप्यञस्तद्धितत्वादिति भावः ॥ 'कृद्ग्रहण-१००५' परिभाषया सोपसर्गधातोर्णिजन्तत्वात्ततोऽञि तत्प्रयुक्तादिवृद्धिरुपसर्गस्येत्याशयेनोदाहरति-व्यावक्रोशीति । 'क्रुश आह्वाने' । 'हसे हसने' स्यादेतत्, 'स्त्रियां क्तिन् ५०६७' इति प्रकरण एवायं णज्विधेयः । एवं च स्त्रियामिति न कर्तव्यमिति लाघवमिति चेत् । मैवम्, स्त्रियामित्यधिकारे वाऽसरूपविधिनिषेधापत्तेः । इष्यते तु व्यावक्रुष्टिरिति स्त्रियां क्तिन्नपि, अपवादविषये क्वचिदिष्यते, व्यावचोरी । इह 'ण्यासश्रन्थः-५०८९' इति युच् प्राप्तः । व्यात्युक्षी अत्र 'गुरोश्च हलः ५०८३' इत्यकारप्रत्ययः प्राप्तः । क्वचिदकार एवेष्यते न तु णच्, व्यतीक्षा, व्यतीहा । सैषा व्यवस्था न्यायतो दुर्लभाऽपि बाहुलकात्स्वीकार्या ॥ ( ५००९ ) अभिविधौ-। अभिविधौ किम् । संरावः । वाऽसरूपेण घञ् क्तश्च न भवति, पुनर्भावग्रहणात् । न च कर्तृभिन्नकारकनिवृत्तये भावग्रहणमिति वाच्यम्, पूर्वसूत्र इव शक्तिस्वाभाव्यादेवेनुणोऽप्रवृत्तेः । ल्युटा तु समावेश इष्यते संरवणमिति । तच्च बाहुलकाल्लभ्यत इत्याकरः ॥ ( ५०१० ) अणिनुणः । अत एवेनुणो णानुबन्धो विशेषणार्थ इति ध्वनितम् ॥ सांराविणमिति । समन्ताच्छब्द इत्यर्थः । संशब्दोऽभिविधिद्योतकः । पूर्ववत्सगतिकादण्, अणस्ताद्धितत्वादादिवृद्धिः । 'इनण्यनपत्ये १७५९' इत्यनपत्याणि इनः प्रकृतिभावात् 'नस्तद्धिते ९८६' इति टिलोपेन न निवृत्तिः । स्वभावतश्चेदमाणिनुणन्तं नपुंसकम् ॥ (५०११) आक्रोशे-। 'ग्रहवृद-५०२६' इत्यपि प्राप्तेऽयमारम्भः ॥ अवग्रहः पदस्येति[1] । छेदाविशेष इत्यर्थः । निग्रहो निरोधः[2] ॥ ( ५०१२ ) प्रे लिप्सायाम् । लिप्सायां किम्, देवदत्तस्य प्रग्रहः । प्रकृष्टो विनिवेश इत्यर्थः ॥ पात्रप्रग्राहेणेति । भिक्षापात्रोपादानेन पात्रं गृहीत्वेति यावत् ॥ ( ५०१४ ) नौ वृ-। नौ उपपदे वृञो भावादौ घञ् स्यात् ॥ निवरा कन्येति । 'ग्रहवृद-५०२६' इत्यादिना कर्मण्यप् ॥ ननु स्त्रीत्वविशिष्टे कर्मणि परत्वात् क्तिना

---

१ अवग्रहः पदस्येति । 'ग्रहवृदनिश्चि—' इत्यप् । अत्रावग्रहो विलम्बेनोच्चारणम् । स्वाभाविकार्धमात्राधिककालेनोच्चारणात्मकम् ॥ २ निरोध इति । देशान्तरसंचारविरोधिव्यापारानुकूलव्यापारश्चोरस्येत्यर्थः ।

प्रवरा क्षेतिवत् ॥ ( ५०१५ ) उदि श्रयतियौतिपूद्रुवः । ३ । ३ । ४९ । उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । कथं पतनान्ताः समुच्छ्र्या इति । बाहुलकात् ॥ ( ५०१६ ) विभाषाऽऽङि रुप्लुवोः । ३।३।५०। आरावः, आरवः । आप्लावः, आप्लवः॥(५०१७) अवे ग्रहो वर्षप्रतिबन्धे ।३।३।५१। विभाषेति वर्तते । अवग्रहः अवग्राहः । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य ॥ ( ५०१८ ) प्रे वणिजाम् । ३ । ३ । ५२ । प्रे ग्रहेर्घञ् वा वणिजां संबन्धी चेत्प्रत्ययार्थः । तुलासूत्रमिति यावत् । तुलाप्रग्राहेण चरति । तुलाप्रग्रहेण ॥ ( ५०१९ ) रश्मौ च । ३ । ३ । ५३ । प्रग्रहः । प्रग्राहः ॥ ( ५०२० ) वृणोतेराच्छादने । ३ । ३ । ५४ । विभाषा प्र इत्येव । प्रावारः । प्रवरः ॥ (५०२१) परौ भुवोऽवज्ञाने । ३ । ३ । ५५ । परिभावः । परिभवः । अवज्ञाने किम् । सर्वतोभवनं परिभवः ॥ ( ५०२२ ) एरच् । ३ । ३ । ५६ । चयः । जयः ॥ ( ५०२३ ) भयादीनामुपसंख्यानम् ॥ नपुंसके क्तादिनिवृत्त्यर्थम् ॥ भयम् । वर्षम् ॥ ( ५०२४ ) ॠदोरप् । ३ । ३ । ५७ । ॠवर्णान्तादुवर्णान्तादप् । करः । गरः । शरः । यवः । लवः । स्तवः । पवः ॥ ( ५०२५ ) वृक्षासनयोर्विष्टरः । ८ । ३ । ९३ । अनयोर्विपूर्वस्य स्त्रः षत्वं निपात्यते । विष्टरो वृक्ष आसनं च । वृक्षेत्यादि किम् । वाक्यस्य विस्तरः ॥ ( ५०२६ ) ग्रहवृदृनिश्चिगमश्च । ३ । ३ । ५८ । अप् स्यात् । घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः ॥ ( ५०२७ ) वशिरण्योरुपसंख्यानम् ॥ वशः । रणः ॥ ( ५०२८ ) घञर्थे कविधानम् ॥ प्रस्थः । विघ्नः ॥ ( ५०२९ ) द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् ॥ चक्रम् । चिक्लिदम् । चक्नसः ॥ ( ५०३० ) उपसर्गेऽदः । ३ । ३ । ५९ । अप् स्यात् ॥ ( ५०३१ ) घञपोश्च । २ । ४ । ३८ । अदेर्घस्ल स्यात् घञि अपि च । प्रघसः । विघसः । उपसर्गे किम् । घासः ॥ ( ५०३२ ) नौ ण च । ३ । ३ । ६० । नौ उपपदे अदेर्णः स्यादप् च । न्यादः । निघसः ॥ ( ५०३३ ) व्यधजपोरनुपसर्गे । ३ । ३ । ६१ । अप् स्यात् । व्यधः । जपः । उपसर्गे तु आव्याधः । उपजापः ॥ ( ५०३४ ) स्वनहसोर्वा । ३ । ३ । ६२ । अप् पक्षे घञ् । स्वनः । स्वानः । हसः । हासः । अनुपसर्ग इत्येव । प्रस्वानः । प्रहासः ॥ ( ५०३५ ) यमः समुपनिविषु च । ३ । ३ । ६३ । एषु अनुपसर्गे च यमेरप् वा । संयमः । संयामः । उपयमः । उपयामः । नियमः । नियामः । वियमः । वियामः । यमः । यामः ॥ ( ५०३६ ) नौ गदनदपठस्वनः । ३ । ३ । ६४ । अप् वा स्यात् । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः ॥ ( ५०३७ ) क्वणो वीणायां च । ३ । ३ । ६५ । नावनुपसर्गे च वीणाविषयाच्च क्वणतेरप् वा स्यात् । वीणाग्रहणं प्रादयर्थम् । निक्वणः ।

---

भाव्यम् 'अजब्भ्यां स्त्रीखलनाः' इत्युक्तेरत आह–क्तिन्विषयेऽपीति । एवं च प्रायेण भावार्थ एव 'घञजबन्ताः पुंसि ३६' इति द्रष्टव्यम् ॥ ( ५०१९ ) रश्मौ च । रथादियुक्तानामश्वानां संयमनार्था रज्जू रश्मिः, तस्यामभिधेयायां प्रे उपपदे ग्रहेर्घञ् स्याद्वावादौ । इह द्विः प्रहिरुपात्तः सकृदेव तु वक्तुं शक्यः । तथा हि–'उदि ग्रहः', 'समि मुष्टौ', 'आक्रोशेऽवन्योः–', 'प्रे लिप्सायाम्', 'परौ यज्ञे', 'अवे वर्षप्रतिबन्धे विभाषा', 'प्रे वणिजाम्' इत्यादि 'परौ भुवोऽवज्ञाने' इत्यस्यानन्तरम् 'आङि रुप्लुवोः' इत्यस्तु, तथा तु न कृतमित्येव ॥ ( ५०२० ) वृणोतेः–प्रावार इति । 'उपसर्गस्य घञ्यमनुष्ये बहुलम् १४९७' इत्युपसर्गस्य दीर्घः । आच्छादने किम्, प्रवरो गौः, प्रशस्त इत्यर्थः ॥ ( ५०२१ ) परिभाव इति । 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः । परत्वाद्धि ऋल्युटौ प्राप्तौ । तथा च पूर्वविप्रतिषेधोऽयं फलितः । एवं च वाऽसरूपन्यायोऽत्र न प्रवर्तते, अनपवादत्वादिति भावः । ( ५०२३ ) वर्षमिति । 'वृषभो वर्षणात्' इति भाष्यप्रयोगात्तु ल्युडपि । वर्षणम् ॥ ( ५०२४ ) ॠदोरप् । ॠच उश्च तयोः समाहारे सौत्रं पुंस्त्वम् । 'ॠदोः' इत्ययं न तकारः किं तर्हि दकारः ॥ 'निरभ्योः पूल्वोः ४९९०' इत्यपवादतया घञ्विधानाज्ज्ञापकादीर्घान्तादप्युदाहरति–लवः पवः इति ॥ ( ५०२६ ) घञचोरपवाद इति । निश्चय इत्यत्राचः प्राप्तिरन्यत्र घञ इति विवेकः । हस्तादाने तु प्रपूर्वकाच्चिनोतेर्घञुदाहृतः ॥ ( ५०२७ ) वशिरण्योरिति । घञि प्राप्ते वचनम् । वशनं वशः । रणन्ति शब्दं कुर्वन्त्यस्मिन्निति रणः संग्रामः ॥ ( ५०३०–५०३१ ) व्यद्यते विशेषेण भक्ष्यते इति विघसो वैश्वदेवशिष्टमन्नम् । 'शष्पं बालतृणं घासः' इत्यमरः ॥ ( ५०३३ ) उपजापो मन्त्रभेदः ॥ ( ५०३४ ) 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । स्वान–' इत्यमरः ॥ ( ५०३७ ) क्वणो–। 'निक्वाणो निक्वणः क्वाणः

---

१ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ इति ॥ २ रण इति । अत्र रणन्त्यस्मिन् पुरुषाः स रणः संग्रामः इत्यर्थेन 'अकर्तरि च कारके–' इत्यनेन प्राप्तस्य घञो बाधकोऽप् विधीयते । वश इत्यत्रापि भावे घञ् प्राप्तो बाध्यते ॥ ३ प्रस्थ इति । अत्राधिकरणे कः परिमाणविशेषस्य सानोश्च संज्ञेयम् । प्रतिष्ठन्त्यस्मिन् धान्यानि प्रतिष्ठन्ते जना अस्मिन्निति व्युत्पत्तेः । 'प्रस्थे हिमवतः शृङ्गे' इति क्वाचित्कः प्रयोगो न तु तस्यैव संज्ञा, 'स्नुः प्रस्थः सानुरस्त्रियाम्' इति कोशात् ॥ ४ विघ्न इति । विघ्नन्ति मनांसि यस्मिन् इत्यधिकरणे के 'गमहन–' इत्युपधालोपे च 'हो हन्तेः–' इति कुत्वम् ॥ ५ वीणाग्रहणस्यानुपसर्गं इत्येतद्बाधरूपं प्रयोजनमाह–वीणाग्रहणमिति । 'वीणाग्रहणं सोपसर्गार्थम्' इति वार्तिककारोक्तेः ॥

निक्काणः । क्वणः । क्काणः । वीणायां तु प्रक्वणः । प्रक्काणः ॥ ( ५०३८ ) (सू) नित्यं पणः परिमाणे । ३ । ३ । ६६ । अप् स्यात् । मूलकपणः । शाकपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । परिमाणे किम् । पाणः ॥ ( ५०३९ ) (सू) मदोऽनुपसर्गे । ३ । ३ । ६७ । धनमदः । उपसर्गे तु उन्मादः । ( ५०४० ) (सू) प्रमदसम्मदौ हर्षे । ३ । ३ । ६८ । हर्षे किम् । प्रमादः । संमादः ( ५०४१ ) (सू) समुदोरजः पशुषु । । ३ । ३ । ६९ । संपूर्वोऽजिः समुदाये उत्पूर्वश्च प्रेरणे तस्मात्पशुविषयकादप् स्यात् । अघञपोरित्युक्तेर्वीभावो न । समजः पशूनां सङ्घः । उदजः पशूनां प्रेरणम् । पशुषु किम् । समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् ॥ ( ५०४२ ) (सू) अक्षेषु ग्लहः । ३ । ३ । ७० । अक्षशब्देन देवनं लक्ष्यते, तत्र यत्पणरूपेण ग्राह्यं तत्र ग्लह इति निपात्यते । अक्षस्य ग्लहः । व्यात्युक्षीमभिसरणग्लहामदीव्यन् । अक्षेषु किम् । पादस्य ग्रहः ॥ ( ५०४३ ) (सू) प्रजने सर्तेः । ३ । ३ । ७१ । प्रजनं प्रथमगर्भग्रहणम् । गवामुपसरः । कथमवसरः प्रसर इति । अधिकरणे पुंसि संज्ञायामिति घः ॥ ( ५०४४ ) (सू) ह्वः संप्रसारणं च न्यभ्युपविषु । ३ । ३ । ७२ । निहवः । अभिहवः । उपहवः । विहवः । एषु किम् । प्रह्वायः ॥ ( ५०४५ ) (सू) आङि युद्धे । ३ । ३ । ७३ । आहूयन्तेऽस्मिन्नित्याहवः । युद्धे किम् । आह्वायः ॥ ( ५०४६ ) (सू) निपानमाहावः । ३ । ३ । ७४ । आङ्पूर्वस्य ह्वयतेः संप्रासणमप् वृद्धिश्चोदकाधारश्चेद्वाच्यः । आहावस्तु निपानं स्यादुपकूपजलाशये ॥ ( ५०४७ ) (सू) भावेऽनुपसर्गस्य । ३ । ३ । ७५ । अनुपसर्गस्य ह्वयतेः संप्रसारणमप् च स्याद् भावे । हवः ॥ ( ५०४८ ) (सू) हनश्च वधः । ३ । ३ । ७६ । अनुपसर्गाद्धन्तेर्भावे अप् स्यात् वधादेशश्चान्तोदात्तः । वधेन दस्युम् । चाद्घञ् । घातः ॥ (५०४९) (सू) मूर्तौ घनः । ३ । ३ । ७७ । मूर्तिः काठिन्यं तस्मिन्नभिधेये हन्तेरप् स्यात् घनश्चादेशः । अभ्रघनः । कथं सैन्धवघनमानयेति । धर्मशब्देन धर्मी लक्ष्यते ॥ ( ५०५० ) (सू) अन्तर्घनो देशे । ३ । ३ । ७८ । वाहीकग्रामविशेषस्य संज्ञेयम् । अन्तर्घण इति पाठान्तरम् ॥ ( ५०५१ ) (सू) अगारैकदेशे प्रघणः प्रघाणश्च । । ३ । ३ । ७९ । द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च तत्र बाह्ये प्रकोष्ठे निपातनमिदम् । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति प्रघणः । कर्मण्यप् । पक्षे वृद्धिः ॥ ( ५०५२ ) (सू) उद्घनोऽत्याधानम् । ३ । ३ । ८० । अत्याधानमुपरि स्थापनम् । यस्मिन् काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः । अधिकरणेऽप् ॥ ( ५०५३ ) (सू) अपघनोऽङ्गम् । ३ । ३ । ८१ । अङ्गं शरीरावयवः । स चेह न सर्वः किन्तु पाणिः पादश्चेत्याहुः । करणेऽप् ॥ अपघातोऽन्यः ॥ (५०५४) (सू) करणेऽयोविद्रुषु । ३ । ३ । ८२ । एषु हन्तेः करणेऽप् स्याद्घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्येके । पूर्वपदात्संज्ञायामिति णत्वम् । संज्ञैषा कुठारस्य । द्रुर्वृक्षः ॥ ( ५०५५ ) (सू) स्तम्बे क च । ३ । ३ । ८३ । स्तम्बे उपपदे हन्तेः करणे कः स्यादप् च पक्षे घनादेशश्च । स्तम्बघ्नः । स्तम्बघनः । करण इत्येव । स्तम्बघातः ॥ ( ५०५६ ) (सू) परौ घः । ३ । ३ । ८४ । परौ हन्तेरप् स्यात्करणे घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः ॥ ( ५०५७ ) (सू) परेश्च घाङ्कयोः । ८ । २ । २२ । परे रेफस्य लो वा स्याद्घशब्देऽङ्कशब्दे च । पलिघः । परिघः । पल्यङ्कः । पर्यङ्कः । इह तरप्तमपौ घ इति कृत्रिमस्य न ग्रहणं व्याख्यानात् ॥ ( ५०५८ ) (सू) उपघ्न आश्रये । ३ । ३ । ८५ । उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च । आश्रयशब्देन सामीप्यं लक्ष्यते । पर्वतेनोपहन्यते सामीप्येन गम्यते इति पर्वतोपघ्नः ॥ ( ५०५९ ) (सू) सङ्घोद्घौ गणप्रशंसयोः । ३ । ३ । ८६ । संहननं सङ्घः । भावेऽप् । उद्धन्यते उत्कृष्टो ज्ञायते इत्युद्घः । कर्मण्यप् । गत्यर्थानां बुद्ध्यर्थत्वात् हन्तिर्ज्ञाने ॥ ( ५०६० ) (सू) निघो निमितम् । ३ । ३ । ८७ । समन्तान्मितं निमितम् । निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघाः वृक्षाः । समारोहपरिणाहा इत्यर्थः ॥ ( ५०६१ ) (सू) ड्वितः क्त्रिः । ३ । ३ । ८८ । अयं भाव एव स्वभावात् । क्त्रेर्मम्नित्यम् । नित्यग्रहणात् क्त्रिमब्विषयः । अत एव क्त्यन्तेन न विग्रहः । डुपचष्

---

क्वणः क्वणनमित्यपि । वीणायाः क्वणिते प्रादेः प्रक्काणप्रक्वणादयः' इत्यमरः ॥ ( ५०३९ ) मदो-। अनुपसर्गे सुप्युपपदे नित्यमप् स्याद्घावादौ ॥ ( ५०४० ) प्रमद-। 'प्रसंभ्यां हर्षे' इति नोक्तम् । प्रसंमदः । संप्रमद इति हर्षे मा भूदिति ॥ ( ५०४३ ) प्रजने सर्तेः । प्रजननं प्रजनः । भावे घञ् 'जनिवध्योः—३३३१' इति वृद्धिनिषेधः । प्रशब्दबलादत्र जनेरर्थान्तरत्वम् । प्रतिष्ठते इत्यत्र प्रादुर्भावो यथा ॥ तदेतदाह-प्रथमगर्भग्रहणमिति । काशिकानुरोधेनेदमुक्तम् । प्रथमं द्वितीयं वेत्यनाग्रहः, किन्तु गर्भग्रहणमित्यन्ये ॥ ( ५०४८ ) हनश्च वधः । अन्तोदात्त इति । सूत्रे वधशब्दोऽन्तोदात्ततयोच्चारित इति भावः ॥ ( ५०५१ ) अगारैक-। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः ॥ ( ५०५९ ) संघोद्घौ-। 'मतल्लिकामचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः ॥ ( ५०६० ) ड्वितः-। अयमिति । अत एव पाकेन निर्वृत्तामिति विगृह्यते न तु पक्त्रेनेति । यत्तु प्राचोक्तं भावदादूविति तन्नेति भावः ॥ [ २१५४ ] क्त्रेर्मप्-। तद्धितेषु व्याख्यातमिदम् ॥ नित्यग्रहणादिति । तत्र हि नित्यमिति योगो विभज्यते । तत्सामर्थ्यादर्थविशेषानादरेणैव मब्विषयत्वं निर्णीयते, एकयोगत्वे तु निर्वृत्त इत्यधिकारान्निर्वृत्तार्थस्याविवक्षायां स्वातन्त्र्यं प्रसज्येत,

पाके । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् । उप्त्रिमम् ॥ ( ५०६२ ) ट्वितोऽथुच् । ३ । ३ । ८९ । अयमपि स्वभावाद् भाव एव । टुवेपृ । वेपथुः । श्वयथुः ॥ (५०६३) यजयाचयतविच्छप्रच्छरक्षो नङ् ।३।३।९०। यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । प्रश्ने चासन्नेति ज्ञापकान्न संप्रसारणम् । ङित्त्वं तु विश्न इत्यत्र गुणनिषेधाय । रक्ष्णः ॥ ( ५०६४ ) स्वपो नन् ।३।३।९१। स्वप्नः ॥ (५०६५) उपसर्गे घोः किः ।३।३।९२। प्रधिः । अन्तर्धिः । उपाधीयतेऽनेनेत्युपाधिः ॥ (५०६६) कर्मण्यधिकरणे च ।३।३।९३। कर्मण्युपपदे घोः किः स्यादधिकरणेऽर्थे । जलानि धीयन्तेऽस्मिन्निति जलधिः ॥ ( ५०६७ ) स्त्रियां क्तिन् । ३ । ३ । ९४ । स्त्रीलिङ्गे भावादौ क्तिन् स्याद्घञोऽपवादः । कृतिः । अजपौ तु परत्वाद्बाधते–चितिः । स्तुतिः । स्फायी । स्फातिः । स्फीतिकाम इति तु प्रामादिकम् । क्तान्ताद्धात्वर्थे णिचि [४७८४]ओर्चे इरिति वा समाधेयम् ॥ ( ५०६८ ) श्रुयजीषिस्तुभ्यः करणे ॥ श्रूयतेऽनया श्रुतिः । यजेरिषेश्च इष्टिः । स्तुतिः ॥ ( ५०६९ ) ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः ॥ तेन नत्वम् । कीर्णिः । गीर्णिः । लूनिः । धूनिः । पूनिः ॥ [४]ह्लादः इति योगविभागात् क्तिनि ह्रस्वः । प्रह्लत्तिः[१] ॥ ति च [४०४९] । चूर्तिः । फुल्लतिः ॥ ( ५०७० ) चायतेः क्तिनि चिभावो वाच्यः ॥ अपचितिः ॥ ( ५०७१ ) सम्पदादिभ्यः क्विप् ॥ सम्पत् । विपत् ॥ ( ५०७२ ) क्तिन्नपीष्यते ॥ सम्पत्तिः । विपत्तिः ॥ ( ५०७३ ) स्थागापापचो भावे । ३ । ३ । ९५ । क्तिन् स्यादङोऽपवादः । प्रस्थितिः । उपस्थितिः । सङ्गीतिः । सम्पीतिः । पक्तिः । कथमवस्था संस्थेति । व्यवस्थायामिति ज्ञापकात् ॥ ( ५०७४ ) ऊतियूतिजूतिसातिहेतिकीर्तयश्च । ३ । ३ । ९७ । अवतेर्ज्वरत्वरेत्यूठ्[३५२६] । ऊतिः । स्वरार्थं वचनम् । उदात्त इति हि वर्तते । यूतिः । जूतिः । अनयोर्दीर्घत्वं च निपात्यते । स्यतेः सातिः । द्यतिस्यति[४०९१]मास्थेतीत्वे प्राप्ते इत्त्वाभावो निपात्यते । सनोतेर्वा [३३२२]जनसनेत्यात्त्वे कृते स्वरार्थं निपातनम् । हन्तेर्हिनोतेर्वा हेतिः । कीर्तिः ॥ ( ५०७५ ) व्रजयजोर्भावे क्यप् । ३ । ३ । ९८ । व्रज्या ।

---

ततश्च मपं विनाऽपि पक्तिरिति प्रयोगः स्यादिति भावः ॥ **उप्त्रिममिति** । वपेर्यजादित्वात्किति संप्रसारणे वापेन निर्वृत्तमित्यर्थः ॥ ( ५०६३ ) **यजयाच–**। भावेऽकर्तरि कारके चेति वर्तते । अत एव 'यज्ञेन यज्ञमयजन्त देवाः' इत्यत्र इज्यते यज्ञ इति व्याचक्षते ॥ **विश्न इति** । 'च्छ्वोः शूडनुनासिके च ३३९४' इति शः ॥ (५०६५) **उपसर्गे–प्रधिरित्यादि** । कित्त्वादातो लोपः ॥ **अन्तर्धिरिति** । 'अन्तःशब्दस्याङ्किविधि–२९८८' इति वार्तिकादुपसर्गत्वम् ॥ **उपाधीयतेऽनेनेति** । एतेन उप समीपे स्वधर्ममादधातीत्युपाधिः । बाहुलकात्कर्त्तरि किरिति माधवादिग्रन्थो नादर्त्तव्य इति ध्वनितम् । 'विधाता विश्वसृड् **विधिः**' इत्यत्रापि कर्त्तरि मा भूत् किः, किन्तु, 'विध विधाने' इत्यस्मात् 'इगुपधात्कित् ४७६५' इतीनि रूपसिद्धेः ॥ ( ५०६७ ) **स्त्रियां क्तिन्** । **घञोऽपवाद इति** । यत्तु प्रक्रियाग्रन्थं व्याचक्षाणा आहुः–'भाष्ये तु–'अधिकः कारोऽधिकारः' इति घञप्युदाहृतः' इति । तद्रभसात्, न हि तत्र स्त्रीत्वविशिष्टो भावोऽर्थः, किन्तु पुंस्त्वविशिष्ट इति ध्येयम् ॥ **अजपौ त्विति** । तयोरवकाशः चयः लवः, क्तिनोऽवकाशः कृतिः ह्रतिः । चिनोतिस्तौतिभ्यां तु स्त्रियामुभयप्रसङ्गे परत्वात् क्तिन्नित्यर्थः ॥ **प्रामादिकमिति** । 'स्फायः स्फी निष्ठायाम् ४०५७' इति निष्ठायामेव स्फीभावविधानादिति भावः ॥ (५०६८) **श्रुयजीषि–**। परत्वात् 'करणाधिकरणयोश्च ५१०९' इति ल्युटि प्राप्ते वचनम् । श्रुतिः श्रोत्रम् ॥ **यजेरिति** । यजेः क्तिनि 'वचिस्वपि–३२१३' इति संप्रसारणं 'व्रश्चभ्रस्ज–४११' इति षत्वे इष्टिरिति रूपम् । इज्यतेऽनयेति विग्रहः । एवमिष्यतेऽनया इष्टिः । स्तूयतेऽनया स्तुतिः ॥ ( ५०६९ ) **तेन नत्वमिति** । कीर्णिरित्यादौ 'रदाभ्याम्–४०२४' इत्यनेन नत्वम् । लूनिरित्यादौ तु 'ल्वादिभ्यः ४०२६' इत्यनेनेति विवेकः ॥ **ह्लाद इति** । 'ह्लादो निष्ठायाम् ४०५०' इत्यत्रेत्यर्थः ॥ **चूर्तिरिति** । 'ति च ४०४९' इति चरफलोरुत्त्वे 'र्वोरुपधायाः—५८०' इति दीर्घः ॥ ( ५०७० ) **चायतेः–**। 'चायृ पूजानिशामनयोः' ॥ ( ५०७२ ) **क्तिन्नपीति** । अस्त्रियामिति प्रतिषेधेन स्त्रियां वाऽसरूपविधेरभावादिदमुक्तम् ॥ ( ५०७३ ) **अङोऽपवाद इति** । 'पुरस्तादपवाद—१०९' न्यायेन स्थादिभ्यः 'आतश्चोपसर्गे ५०८८' इति, पचेस्तु 'षिद्भिदादिभ्यः—५०८६–१' इति प्राप्तस्याङोऽपवादो, न तु ण्वुलिञोरिति भावः । ण्वुलिञौ तु परत्वाद्भवत एव । 'कां त्वं स्थायिकां कां त्वं स्थायिम्' इति भाष्यकारप्रयोगात् ॥ **प्रस्थितिरिति** । 'द्यतिस्यतिमास्थाम्—४०९१' इत्यात इत्त्वम् ॥ **सङ्गीतिरिति** । 'घुमास्था–३२७४' इत्यादिना ईत्त्वम् ॥ ( ५०७४ ) **उदात्त इतीति** । 'मन्त्रे वृष—५२५१' इति सूत्रादनुवर्तते इत्यर्थः । एवं च क्तिन्नन्तस्याद्युदात्तत्वे प्राप्ते 'ऊतियूति–५०७४' इत्यादयोऽन्तोदात्ता इति पर्यवसन्नोऽर्थः ॥ **इत्त्वाभाव इति** । 'द्यतिस्यति–४०९१' इति प्राप्तस्याभाव इत्यर्थः ॥ **हन्तेरिति** । नकारस्येत्त्वं, हिनोतेस्तु गुण इति बोध्यम् ॥ **कीर्त्तिरिति** । कीर्त्तयतेः 'ण्यासश्रन्थः–५०८९' इति युचि प्राप्ते क्तिन्निपात्यते

---

१ **प्रह्लत्तिरिति** । 'निष्ठावत्त्वं क्तिन्' इत्युक्त्वाऽपि नत्वाघटितप्रयोगो मूलकृतः प्रमादादेवेति केचित् । तदसंगतमेव, 'ऋल्वादिभ्यः' एव क्तिनो निष्ठावत्त्वातिदेशे ह्लादेरेतद्भिन्नत्वान्नत्वाप्राप्तेर्मूलकृतः प्रमादवक्तुरेव प्रमादात् ॥ अत एव निष्ठावत्त्वाभावसत्त्वादेव योगविभागेन ह्रस्वः साधितः ॥

इज्या ॥ ( ५०७६ ) (सू०) संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः । ३ । ३ । ९९ । समजादिभ्यः स्त्रियां भावादौ क्यप्स्यात्स चोदात्तः संज्ञायाम् ॥ ( ५०७७ ) (वा०) अजेः क्यपि वीभावो नेति वाच्यम् ॥ समजन्त्यस्यामिति समज्या सभा । निषीदन्त्यस्यामिति निषद्या आपणः । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः । मन्यतेऽनयेति मन्या गलपार्श्वशिरा । विदन्त्यनया विद्या । सुत्या अभिषवः । शय्या । भृत्या । ईयतेऽनया इत्या शिबिका ॥ ( ५०७८ ) (सू०) कृञः श च । ३ । ३ । १०० । कृञ इति योगविभागः । कृञः क्यप्स्यात् । कृत्या ॥ श च । चात् क्तिन् । क्रिया । कृतिः ॥ ( ५०७९ ) (सू०) इच्छा । ३ । ३ । १०१ । इषेर्भावे शो यगभावश्च निपात्यते । इच्छा ॥ ( ५०८० ) (वा०) परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम् ॥ शो यक् च निपात्यते । परिचर्या पूजा । परिसर्या परिसरणम् । अत्र गुणोऽपि ॥ मृग अन्वेषणे चुरादावदन्तः । अतो लोपाभावोऽपि । शे यकि णिलोपः । मृगया । अटतेः शे यकि टयशब्दस्य द्वित्वं पूर्वभागे यकारनिवृत्तिर्दीर्घश्च । अटाट्या ॥ ( ५०८१ ) (वा०) जागर्तेरकारो वा ॥ पक्षे शः । जागरा । जागर्या ॥ ( ५०८२ ) (सू०) अ प्रत्ययात् । ३ । ३ । १०२ । प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या ॥ ( ५०८३ ) (सू०) गुरोश्च हलः । ३ । ३ । १०३ । गुरुमतो हलन्तात् स्त्रियामकारः स्यात् । ईहा । ऊहा । गुरोः किम् । भक्तिः । हलः किम् । नीतिः ॥ ( ५०८४ ) (वा०) निष्ठायां सेट इति वक्तव्यम् ॥ नेह । आप्तिः । तितुत्र-४११४ इति नेट् । दीप्तिः ॥ ( ५०८५ ) (वा०) तितुत्रेष्वग्रहादीनामिति वाच्यम् ॥ निगृहीतिः । निपठितिः॥ (५०८६-१) (सू०) षिद्भिदादिभ्योऽङ् । ३ । ३ । १०४ । षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् । जॄष् । ऋदृशोऽङि गुणः[२३९४] । जरा । त्रपूष् । त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा ॥ ( ५०८६-२ ) (ग०) कृपेः संप्रसारणं च ॥ कृपा ॥ ( ५०८७ ) (सू०) चिन्तिपूजिकथिकुम्बिचर्चश्च । ३ । ३ । १०५ । अङ् स्याद्युचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा ॥ (५०८८-१) (सू०) आतश्चोपसर्गे । ३ । ३ । १०६ । अङ् स्यात् । क्तिनोऽपवादः । प्रदा । उपदा ॥ (५०८८-२) (वा०) श्रदन्तरोरुपसर्गवद्वृत्तिः ॥ श्रद्धा । अन्तर्धा । उपसर्गे घोः किः[३२६६] इत्यनेन किः । अन्तर्धिः ॥ ( ५०८९ ) (सू०)

---

उदात्तत्वं च । 'तां सुते कीर्तितम्' ॥ ( ५०७५ ) व्रजयजोः—। उदात्त इत्येव । पित्करणं तूत्तरत्र तुगर्थम् ॥ ( ५०७६ ) गलपार्श्वेति । तथा हि क्रुद्धो ज्ञायते इति भावः । शेरतेऽस्यामिति शय्या । भरणं भृत्या जीविका । 'कुमारभृत्याकुशलैरधिष्ठिते' इति रघुः॥ संज्ञायां किम्, मतिः । स्मृतिः । आसुतिः । तथा च व्यवहृतम्—'मतिबुद्धिपूजार्थेभ्यश्च ४१०७', 'कर्मणि भृतौ ३९१५', 'रजःकृष्यासुति-२५९६' इत्यादि ॥ एतेन 'मतिबुद्धि-४१०७' इत्यादिसूत्रप्रयोगादेव मतिभृतीत्यादीनां साधुत्वमिति दुर्घटावृत्तिः प्रत्युक्ता ॥ ( ५०७८ ) क्रियेति । यदा भावकर्मणोः शः, तदा 'सार्वधातुके यक् ३६८०', 'रिङ् शयग्लिङ्क्षु ३१६०' इति रिङादेशः । अन्यत्र तु यगभावेऽपि शे परतो रिङादेशे कृते इयङि सति रूपं तुल्यम् ॥ ( ५०७९ ) इच्छा । इषेर्भाव इति । न त्वकर्तरि कारकेऽपीत्यर्थः । अत एव करणेऽर्थे इष्यतेऽनया इष्टिरिति प्रागुक्तम् ॥ ( ५०८० ) यकारनिवृत्तिरिति । हलादिशेषस्तु नास्ति, षाष्ठद्वित्वे धातुद्वित्वे वाऽभ्याससंज्ञास्वीकारात् । इह च तदुभयाभावादिति भावः ॥ अटाट्येति । यदा तु अटतेर्यङन्तात् 'अ प्रत्ययात् ५०८२' इत्यकारस्तदाऽलोपे 'यस्य हलः ३४९७' इति यलोपेऽटाटेति रूपं बोध्यम् । द्वित्वे हलादिशेषे सति 'दीर्घोऽकितः ३४९८' इत्यभ्यासस्य दीर्घप्रवृत्तेः ॥ ( ५०८१ ) जागर्तेरिति । शे परतः 'सार्वधातुके यक् ३६८०' । 'जाग्रोऽविचिण्-३२९४' इति गुणः ॥ ( ५०८३ ) गुरोश्च-। 'धातोः ३७६८' इत्यनुवृत्त्या हल इति धातोर्विशेषणात्तदन्तविधौ हलन्तो धातुर्लभ्यते, न चायं गुरुरिति संभवति अज्विषयो हि गुरुः अतो मत्वर्थो लक्ष्यते तदाह-गुरुमत इति । ननु विपरीतमस्तु 'गुर्वन्ताद्धलः' इति तादृशस्यापि धातोः 'डुक्रीञ्-' इत्यादेः सत्त्वादिति चेत् । मैवम्, '-चेष्टायामनध्वनि ८५५', 'आशंसायां भूतवच्च ३७२५' इति निर्देशेन विपरीतशङ्काया अप्रवृत्तेः ॥ ( ५०८६-१ ) षिद्भिदा-। कथं तर्हि 'मधुसुरभिमुखाब्जगन्धलब्धेः' इति माघः, 'प्रेक्षोपलब्धिः' इत्यमरश्च । षित्त्वादङि लब्धेत्येव ह्युचितम् । सत्यम्, 'अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः' इति भाष्यप्रयोगाद्बाहुलकाद्वा क्तिन्नपि बोध्यः । विस्तरस्त्विह मनोरमायां बोध्यः ॥ भिदेति । एवमादयोऽदन्ताः समुदाया एव गणे पठ्यन्ते । तत्र ये प्रकृतिभागाः 'भिद-छिद' इत्यादयस्ते आदिशब्देन सूत्रे निर्दिष्टाः, गणे विशिष्टपाठस्तु लोकप्रसिद्धार्थविशेषस्य क्वचिदलाक्षणिककार्यस्य संग्रहार्थः ॥ भित्तिरन्येति । भिद्यत इति भित्तिः कुड्यम् ॥ छिदेति । द्वैधीकरण एवायम् । अन्यत्र तु छित्तिश्छिद्रम् ॥ मृजेति । 'मृजू शुद्धौ' अस्याषित्त्वाद्भिदादौ पाठः ॥ ( ५०८७ ) चिन्तिपूजि-। चकारोऽनुक्तसमुच्चयार्थः । तेन तोलयतेस्तुलेति हरदत्तः । अत एव 'तुलां यदारोहति दन्तवाससा' इति नैषधकृदाह ॥ युचोऽपवाद इति । 'ण्यासश्रन्थः-५०८९' इति

---

१ भिदा, छिदा, विदा, क्षिपा, गुहा, श्रद्धा, मेधा, गोधा, आरा, हारा, कारा बन्धने, क्षिया, तारा ज्योतिषि, धारा, रेखा, चूडा, पीडा, वपा, वसा, मृजा, कृपा, इति भिदादिः ॥ भिदा विदारणे ॥*॥ भित्तिरन्या ॥ छिदा द्वैधीकरणे ॥ छित्तिरन्या ॥ आरा शस्त्र्याम् ॥*॥ आर्तिरन्या । धारा प्रपाते ॥*॥ धृतिरन्या ॥ गुहा गिर्योषध्योः ॥*॥ गूढिरन्या ॥
२ नैषधकृदिति । कारकप्रकरणोक्तं 'कालिदासः' इति कथं विस्मृतमिति न जानीमः ॥

ण्यासश्रन्थो युच् । ३ । ३ । १०७ । अकारस्यापवादः । कारणा । हारणा । आसना । श्रन्थना ॥ ( ५०९० ) वा० घट्टिवन्दिविदिभ्यश्चेति वाच्यम् ॥ घट्टना । वन्दना । वेदना ॥ ( ५०९१ ) वा० इषेरनिच्छार्थस्य ॥ अन्वेषणा ॥ ( ५०९२ ) वा० परेर्वा ॥ पर्येषणा । परीष्टिः ॥ (५०९३) सू० रोगाख्यायां ण्वुल्बहुलम् । ३ । ३ । १०८ । प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न । शिरोऽर्तिः ॥ (५०९४) वा० धात्वर्थनिर्देशे ण्वुल्वक्तव्यः ॥ आसिका । शायिका ॥ (५०९५) वा० इक्श्तिपौ धातुनिर्देशे ॥ पचिः । पचतिः ॥ ( ५०९६ ) वा० वर्णात्कारः ॥ निर्देश इत्येव । अकारः । ककारः ॥ ( ५०९७ ) वा० रादिफः ॥ रेफः ॥ ( ५०९८ ) वा० मत्वर्थाच्छः ॥ बहुलवचनादकारलोपः ॥ मत्वर्थीयः ॥(५०९९) वा० इणजादिभ्यः ॥ आजिः । आतिः ॥ (५१००) वा० इञ् वपादिभ्यः ॥ वापिः । वासिः । स्वरे भेदः ॥ ( ५१०१ ) वा० इक् कृष्यादिभ्यः ॥ कृषिः । गिरिः ॥ ( ५१०२ ) सू० संज्ञायाम् । ३ । ३ । १०९ । अत्र धातोर्ण्वुल् । उद्दालकपुष्पभञ्जिका ॥ ( ५१०३ ) सू० विभाषाऽऽख्यानपरिप्रश्नयोरिञ्च । ३ । ३ । ११० । परिप्रश्ने आख्याने च गम्ये इञ् स्याच्चात् ण्वुल् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । कां कारिं त्वं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः । सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षम् । एवं गाणिं गणिकां गणनाम् । पाचिं पाचिकां पचां पक्तिम् ॥ ( ५१०४ ) सू० पर्यायार्हणोत्पत्तिषु ण्वुच् । ३ । ३ । १११ । पर्यायः परिपाटी क्रमः । अर्हणमर्हः योग्यता । पर्यायादिषु द्योत्येषु ण्वुच् वा स्यात् । भवतः आसिका । शायिका । अग्रगामिका । भवानिक्षुभक्षिकामर्हति । ऋणे इक्षुभक्षिकां मे धारयति । उत्पत्तौ–इक्षुभक्षिका उदपादि ॥ ( ५१०५ ) सू० आक्रोशे नञ्यनिः । ३ । ३ । ११२ । विभाषेति निवृत्तम् । नञि उपपदेऽनिः स्यादाक्रोशे । अजीवनिस्ते शठ भूयात् । अप्रयाणिः ॥ [ ३७८६ ] सू० कृत्यल्युटो बहुलम् । ३ । ३ । ११३ । भावेऽकर्तरि च कारके संज्ञायामिति च निवृत्तम् । राज्ञा भुज्यन्ते राजभोजनाः शालयः ॥ [ ४१०८ ] सू० नपुंसके भावे क्तः । ३ । ३ । ११४ । ( ५१०६ ) ल्युट् च

---

वक्ष्यमाणस्येत्यर्थः ॥ ( ५०८९ ) **आसनेति** । आस्यतेऽस्यामिति विग्रहः । 'ऋहलोर्ण्यत् ३८२४' इति ण्यत्प्रत्यये त्वास्या । न च 'स्त्रीप्रत्यये वाऽसरूपविधिर्न' इति शङ्क्यम्, अपवादस्य युचः स्त्रीप्रकरणस्थत्वेऽपि उत्सर्गस्य ण्यतस्तदभावात् ॥ (५०९०) **घट्टिवन्दि–**। विदिर्लाभार्थो गृह्यते, ज्ञानार्थस्य तु संवित्तिः[1] ॥ ( ५०९१ ) **इषेरिति** । अनिच्छार्थस्य युच् । इच्छार्थस्य त्विषेरिच्छेत्येव ॥ (५०९३) **रोगाख्या–**। धातोर्बहुलं ण्वुल् स्यात्प्रत्ययान्तं चेद्रोगस्य संज्ञा । क्तिन्नादीनामपवादः ॥ **प्रच्छर्दिकेति** । 'छर्द वमने' । **प्रवाहिकेति** । प्रवाहयति मुहुर्मुहुः प्रवर्तयतीति प्रवाहिका ग्रहणी ॥ **विचर्चिकेति** । 'चर्च अध्ययने' प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः । 'पामपामे विचर्चिका' इत्यमरः ॥ **शिरोऽर्तिरिति** । शिरःपीडा । 'अर्द हिंसायाम्' । 'तितुत्र–४१९४' इति नेट् ॥ (५०९४) **धात्वर्थनिर्देश इति** । क्रियानिर्देश इत्यर्थः ॥ **आसिका । शायिकेति** । आसनं शयनमित्यर्थः ॥ (५०९५) **इक्श्तिपौ–**। धातोर्निर्देशोऽनुकरणम् । बहुलमित्यनुवृत्तेः क्वचिन्न 'गुप्तिज्किद्भ्यः सन् ३१८७' 'भुवो वुग् लुङ्लिटोः २९२८' ॥ **पचतिरिति** । 'उपसर्गात्सुनोतिसुवतिस्यति–३०३७' 'ध्यायतेः संप्रसारणं च ४१८८' इत्यादिनिर्देशादकर्तृवाचिन्यपि सार्वधातुके परे शबादयः । एवं भावकर्मवाचिन्यपि सार्वधातुके क्वचिद्यक् 'विभाषा लीयतेः ३३२७' इति यथा । तत्र हि लीलीङोर्यका निर्देशो न तु श्यनेत्युक्तम् । यत्तु प्राचा श्तिपः शित्करणसामर्थ्याच्छबादयः इत्युक्तम् । तन्न, पिबतिर्ग्लायतिरित्यादौ पिबादेशप्रवृत्त्या आत्त्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् ॥ ( ५०९६ ) **वर्णादिति** । वर्णानुकरणादित्यर्थः । न तु वर्णादुच्चार्यमाणादिति । तथा हि सत्यकार इत्यादावेव स्यान्न तु ककार इत्यादौ, अत्र हि संघातस्योच्चारणात् । अनुकार्यं त्विह वर्णमात्रम् अकारस्योच्चारणार्थत्वात् । कथं तर्हि 'समुच्चयार्थश्चकारः', 'एवकारोऽन्यनिवृत्त्यर्थः' इत्यादिप्रयोगा इति चेत् । अत्राहुः—क्वचित्सङ्घातादपि भवति 'उच्चैस्तरां वा वषट्कारः ५५३५' इति सूत्रनिर्देशात्, 'सर्वे चकाराः प्रत्याख्यायन्ते' इति भाष्यप्रयोगाद्, बहुलवचनाच्चेति ॥ इह कारप्रत्ययस्य धातोरविहितत्वेऽपि धात्वधिकारस्थत्वात्कृत्संज्ञा, तेन कृदन्तत्वात्प्रातिपदिकत्वम् । प्रयोजनाभावान्न ककारस्येत्संज्ञा । आर्द्धधातुकत्वाभावादिडागमो न, 'अस्य च्वौ २८५७' इत्यादौ तु कारप्रत्ययाभावो बाहुलकादेव ॥ ( ५०९७ ) **रादिफः** । वाऽसरूपविधिना कारोऽपि, तेन 'रकारादीनि नामानि शृण्वतो मम पार्वति' इत्यादिप्रयोगः साधुरेव ॥ ( ५०९८ ) **अकारलोप इति** । अतद्धितपरत्वादभत्वाच्च 'यस्येति–४३१' लोपस्याप्राप्तिरिति भावः । कृदन्तत्वात्प्रातिपदिकत्वमिह पूर्ववद् बोध्यम् । 'तसौ मत्वर्थे २५६०' इत्यत्र बाहुलकाच्छो न, 'शैषिकान्मतुबर्थीयात्–३४९३' इत्यत्र तु बाहुलकादेव मतुबर्थशब्दाच्छः । अन्ये तु नैतत्कृदन्तं मत्वर्थे भव इति विगृह्य गहादित्वाच्छप्रत्यये तद्धितान्तमेवेत्याहुः ॥ ( ५०९९ ) **इणजा–**। धात्वर्थनिर्देशे प्राप्तस्य ण्वुलोऽपवादोऽयम् । एवमग्रेऽपि ॥ **आजिरिति** । बाहुलकादजेर्वीभावो न ॥ ( ५१०२ ) **संज्ञायाम्** । अधिकरणे ण्वुलर्थोऽयमारम्भः । उद्दालकः श्लेष्मान्तकः तस्य पुष्पाणि भज्यन्ते यस्यां क्रियायां सा, तथा भञ्जनं भञ्जिका भावे ण्वुल् । उद्दालकपुष्पाणां भञ्जिकेत्यन्ये । ( ५१०३ ) सूत्रे आख्यानशब्दस्याल्पाच्तरत्वेन पूर्वनिपाते व्याख्यानस्य प्रश्नपूर्वकतयाऽर्थप्रासक्रममनुसृत्य व्याचष्टे–**परिप्रश्ने आख्याने चेति** ॥ ( ५१०४ ) **परिपाटीति** । 'पट गतौ' परिपूर्वः । 'इणजादिभ्यः ५०९९' इतीण् 'कृदिकारात्–७०८' इति ङीष् ॥ ( ५१०५ ) **आक्रोशे–**। आक्रोशः शापः ॥ [ ४१०८ ] **नपुंसके**

---

[1] 'विद चेतनाख्यानानिवासेषु' इति चुरादिना ज्ञानेऽपि वेदनेति सिद्धमिति मनोरमा ॥

। ३ । ३ । ११५ । हसितम् । हसनम् । योगविभाग उत्तरार्थः ॥ ( ५१०७ ) सू० कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् । ३ । ३ । ११६ । येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे ल्युट् स्यात् । पूर्वेण सिद्धे नित्यसमासार्थं वचनम् । पयःपानं सुखम् । कर्तुरिति किम् । गुरोः स्नापनं सुखम् । नेह गुरुः कर्ता किन्तु कर्म ॥ ( ५१०८ ) सू० वा यौ । २ । ४ । ५७ । अजेर्वी वा स्याद् यौ । प्रवयणम् । प्राजनम् ॥ ( ५१०९ ) सू० करणाधिकरणयोश्च । ३ । ३ । ११७ । ल्युट् स्यात् । इध्मप्रव्रश्चनः कुठारः । गोदोहनी स्थाली । खलः प्राक् करणाधिकरणयोरित्यधिकारः ॥ ( ५११० ) सू० अन्तरदेशे । ८ । ४ । २४ । अन्तःशब्दाद्धन्तेर्नस्य णः स्यात् । अन्तर्हणनम् । देशे तु अन्तर्हननो देशः । अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति । तपरः किम् । अन्तरघानि ॥ ( ५१११ ) सू० अयनं च । ८ । ४ । २५ । अयनस्य णोऽन्तःशब्दात्परस्य । अन्तरयणम् । अदेश इत्येव । अन्तरयनो देशः ॥ ( ५११२ ) सू० पुंसि संज्ञायां घः प्रायेण । ३ । ३ । ११८ । ( ५११३ ) छादेर्घेऽद्व्युपसर्गस्य । ६ । ४।९६ । द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद्घे परे । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । प्रच्छदः । अद्व्यीति किम् । समुपच्छादः । आकुर्वन्त्यस्मिन् आकरः ॥ ( ५११४ ) सू० गोचरसंचरवहव्रजव्यजापणनिगमाश्च । ३ । ३ । ११९ । घान्ता निपात्यन्ते । हलश्चेति वक्ष्यमाणस्य घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरो देशः । संचरन्तेऽनेन संचरो मार्गः । वहन्त्यनेन वहः स्कन्धः । व्रजः । व्यजस्तालवृन्तम् । निपातनाद्वीभावो न । आपणः पण्यस्थानम् । निगच्छन्त्यनेन निगमश्छन्दः । चात्कषः । निकषः ॥ ( ५११५ ) सू० अवे तॄस्त्रोर्घञ् । ३ । ३ । १२० । अवतारः कूपादेः । अवस्तारो जवनिका ॥ ( ५११६ ) सू० हलश्च । ३ । ३ । १२१ । हलन्ताद्घञ् स्यात् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः । विमार्गः समूहनी ॥ ( ५११७ ) सू० अध्यायन्यायोद्यावसंहाराश्च । ३ । ३ । १२२ । अधीयतेऽस्मिन् अध्यायः । नियन्ति उद्युवन्ति संहरन्त्यनेनेति विग्रहः ॥ ( ५११८ ) वा० अवहाराधारावायानामुपसंख्यानम् ॥ ( ५११९ ) सू० उदङ्कोऽनुदके ।३।३।१२३। उत्पूर्वादञ्चतेर्घञ् स्यात् न तूदके । घृतमुदच्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्कश्चर्ममयं भाण्डम् । अनुदके किम् । उदकोदञ्चनः ॥

---

भावे क्तः । ननु ' तयोरेव कृत्यक्तखलर्थाः ३७७२ ' इति लिङ्गत्रयसाधारण्येन भावकर्मणोः कृत्यादिविधानात्तेनैव नपुंसके भावे क्तः सिध्यति किमनेन पुनर्विधानेनेति चेत् । अत्राहुः–'भूते ४००१' इत्याधिकृत्य 'निष्ठा ४०२०' इति सूत्रेण विहितस्य क्तस्य भावोऽर्थः 'तयोरेव–३७७२ ' इति सूत्रेण विहितः, अनेन तु कालसामान्ये नपुंसके भावे क्तो विधीयते, एवं च स्वविषये परत्वात् घञजपां बाधक इति परिशेषादेवैषां पुंविषयत्वं सिध्यति । किञ्च, इह ' भावे चाकर्मकेभ्यः ' इत्यस्यासंनिधानात्सकर्मकेभ्योऽप्ययं भवति । घञादिवत् । 'गतं तिरश्चीनमनूरुसारथेः' इत्यादिदर्शनात् । तथा च नास्त्यत्र शङ्केति । नन्वेवं तद्योगे कर्मणि द्वितीया स्यात् । क्तयोगलक्षणषष्ठ्याः 'न लोका–९१५ ' इति निषेधात् । एवं च घटं कृतं वृक्षं भिन्नमित्यादि प्रसज्येत, 'अनूरुसारथेः' इत्यत्र तु कर्तरि तृतीया नापाद्यते, कारकषष्ठ्या निषेधेऽपि शेषत्वविवक्षया षष्ठीति समाधानसम्भवादिति चेत् । मैवम्, नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यातत्वात्कर्मणि द्वितीयाया अभावात् । शेषत्वविवक्षामाश्रित्य वार्तिकमिदं प्रत्याख्यातमाकरे इति चेत् । तर्हि तत्प्रामाण्यात्प्रायेण शेषत्वविवक्षैवेत्यस्तु । तथा च घटं कृतमित्यादि तु न प्रसज्यते एव । क्वचित्तु द्वितीयाऽपि दृश्यते 'भ्रान्तं देशमनेकदुर्गविषमम्' इति दिक् ॥ ( ५१०७ ) **कर्मणि च**--। 'कर्तुः' इति कर्मणि षष्ठी ' उभयप्राप्तौ कर्मणि ९०९ ' इति नियमात् येनेति तृतीया, तदाह–**येन स्पृश्यमानस्य कर्तुरिति । ल्युट् स्यादिति** । 'नपुंसके भावे' इति बोध्यम् । अत एवाह--**पूर्वेणेति** । 'ल्युट् च ५१०६' इत्यनेनेत्यर्थः ॥ **नेहेति** । स्नानकर्तृत्वेऽपि स्नापने न गुरुः कर्ता, किन्तु शिष्य इत्यर्थः । शरीरग्रहणं किं, पुत्रस्य परिष्वञ्जनं सुखम् । मानसी प्रीतिरत्र ॥ ( ५१०९ ) **करणाधिकरणयोः**--। 'येन नाप्राप्ति–३५७३–२' न्यायेन घञोऽपवादोऽयम् अजपौ स्त्रीप्रत्ययांश्च परत्वाद् बाधते । उक्तं हि 'अजब्भ्यां स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेन' इति ॥ **इध्मेति** । इध्मानि प्रवृश्च्यन्ते येन, गौर्दुह्यते यस्यामिति विग्रहः ॥ **आकुर्वन्तीति** । एत्य कुर्वन्त्यस्मिन्व्यवहारमित्याकरः उत्पत्तिस्थानम् ॥ ( ५११५ ) **अवे**–। अवे उपपदे तॄस्तॄभ्यां करणाधिकरणयोः पुंसि संज्ञायां घञ् स्यात्, घस्यापवादः ॥ ( ५११८ ) **अवहारेत्यादि** । वृत्तिकारस्त्वाधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं संजग्राह, तदसंबद्धमिति स्पष्टमेव ॥ ( ५११९ ) **उदङ्को**–। 'हलश्च ५११६', इत्येव सिद्धे उदकप्रतिषेधार्थमिदम् ॥ **उदकोदञ्चन इति** । 'पुंसि संज्ञायाम्–५११२' इति घे प्राप्ते घञ्विहितः । उदके तु घञि प्रतिषिद्धे घ एव स्यान्न तु ल्युडिति चेत् । मैवम्, प्रतिषेधसामर्थ्यात् घस्याप्यप्रवृत्तेः । न हि इह घे घञि वा रूपे विशेषोऽस्ति । न च स्वरे विशेषः, घे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तता, घञ्यपि 'थाथादि–५८५० ' स्वरेण तथैवेति ॥

---

१ आकर इति । ' खनिः स्त्रियामाकरः स्यात् ' इत्यमरः ॥ २ उदङ्क इति । अधिकरणे घञन्तोऽयं निपातितो ल्युटं बाधितुमनुदके इति च बोधयितुम् । यदि तु 'हलश्च' इति सूत्रे प्रायेणेत्यस्य सम्बन्धादेवेष्टसिद्धिरित्युच्यते, तदेदं नारम्भणीयम् । तदुक्तं भाष्ये--'उदङ्कोऽनुदकग्रहणमनर्थकम्–। घञ् कस्मान्न भवति–प्रायवचनात्–' इति ॥

( ५१२० ) (सू) जालमानायः । ३ । ३ । १२४ । आनीयन्ते मत्स्यादयोऽनेनेत्यानायः । जालमिति किम् । आनयनः ॥ ( ५१२१ ) (सू) खनो घ च । ३ । ३ । १२५ । चाड्डञ् । आखनः । आखानिः । घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम्।[1] तेन भगः पदमित्यादि ॥ ( ५१२२ ) (वा) खनेर्डडरेकेकवका वाच्याः ॥ आखः । आखरः । आखनिकः । आखनिकवकः । एते खनित्रवचनाः ॥ ( ५१२३ ) (सू) ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।३।३।१२६। करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् स्यात्। तयोरेवेति भावे कर्मणि च । कृच्छ्रे दुष्करः कटो भवता । अकृच्छ्रे-ईषत्करः । सुकरः ॥ ( ५१२४ ) (वा) निमिमीलियां खलचोरात्त्वं नेति वाच्यम् ॥ ईषन्निमयः । दुष्प्रमयः । सुविलयः । निमयः । मयः । लयः ॥ ( ५१२५ ) (सू) उपसर्गात् खल्घञोः ।७।१।६७। उपसर्गादेव लभेर्नुम् स्यात् । ईषत्प्रलम्भः । दुष्प्रलम्भः । सुप्रलम्भः । उपालम्भः । उपसर्गात्किम् । ईषल्लभः । लाभः ॥ ( ५१२६ ) (सू) न सुदुर्भ्यां केवलाभ्याम् । ७ । १ । ६८ । उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात् खल्घञोः । सुलभम् । दुर्लभम् । केवलाभ्यां किम् । सुप्रलम्भः । अतिदुर्लम्भः । कथं तर्हि अतिसुलभमतिदुर्लभमिति । यदा[2] स्वती कर्मप्रवचनीयौ तदा भविष्यति ॥ ( ५१२७ ) (सू) कर्तृकर्मणोश्च भूकृञोः । ३ । ३ । १२७ । कर्तृकर्मणोरीषदादिषु च उपपदेषु भूकृञोः खल् स्यात् । यथासंख्यं नेष्यते । कर्तृकर्मणी च धातोरव्यवधानेन प्रयोज्ये ईषदादयस्तु ततः प्राक् ॥ ( ५१२८ ) (वा) कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम् ॥ खित्वान्मुम् । अनाढ्येनाढ्येन दुःखेन भूयते दुराढ्यम्भवम् । ईषदाढ्यम्भवम् । स्वाढ्यम्भवम् । ईषदाढ्यङ्करः । दुराढ्यङ्करः । स्वाढ्यङ्करः । च्व्यर्थयोः किम् । आढ्येन सुभूयते ॥ ( ५१२९ ) (सू) आतो युच् ।३।३।१२८। खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥ ( ५१३० ) (वा) भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः ॥ दुःशासनः । दुर्योधन इत्यादि ॥ ( ५१३१ ) (सू) षात्पदान्तात् ।८।४।३५। नस्य णो न । निष्पानम् । सर्पिष्पानम् । षात्किम् ।

---

( ५१२० ) **जालमा-**। 'जल धान्ये' 'ज्वलितिकसन्तेभ्यो णः ३८६४' इति णप्रत्यये जालशब्दः सिद्धः । तेन जालशब्दोऽत्र निपात्यत इति न भ्रमितव्यम् ॥ ( ५१२१ ) **खनो-**। **घित्करणमिति** । आखन इत्यादौ 'चजोः-३८१४' इति कुत्वस्य प्रसक्त्यभावादिति भावः ॥ **भगः पदमिति** । ननु पदमित्यत्र घस्य किं प्रयोजनमिति चेत् । अत्राहुः-करणाधिकरणयोः 'पुंसि संज्ञायाम्-५११२' इति यदि घः स्यात्तदा पदमिति नपुंसकं न स्यात्[3], अनेन चेत् घो भवति तदा त्विष्टसिद्धिरिति ॥ ( ५१२२ ) **एते इति** । आखनादयः षडित्यर्थः ॥ ( ५१२३ ) **ईषद्दुःसुषु-**। इह सामान्योक्तावपि योग्यताबलाद्विशेषणस्य विषयविभागो लभ्यते--दुरिति कृच्छ्रार्थे, इतरौ त्वकृच्छ्रार्थे, तदेतद्दर्शयति-**कृच्छ्रे दुष्कर इत्यादिना** ॥ **भवतेति** । 'न लोका-५१५' इति षष्ठीनिषेधात्कर्तरि तृतीया । कृच्छ्रेत्यादि किम्, ईषत्कार्यं, स्वल्पं कार्यमित्यर्थः । खलिति लकारः स्वरार्थः । खित्करणं तूत्तरत्र[4] मुमर्थम् ॥ ( ५१२४ ) **निमिमीति** । 'मीनातिमिनोतिदीङां ल्यपि च ३३२६' 'विभाषा लीयतेः ३३२७' इति प्राप्तं निषिध्यते ॥ **निमय इत्यादि** । 'एरच् ५०२२' ॥ ( ५१२५ ) **उपसर्गात्खल्घञोः** । 'लभेश्च ३४३४' इत्यनेनैव सिद्धे नियमार्थमिदमित्याह---**उपसर्गादेवेति** ॥ ( ५१२६ ) **यदा स्वती इति** । 'सुः पूजायाम् ८०८' 'अतिरतिक्रमणे च ८०९' इति तयोः कर्मप्रवचनीयत्वम् । ( ५१२७ ) **कर्तृकर्मणोः--**। चकारः सन्नियोगार्थः । यदा कर्तृकर्मणोरीषदादीनां च युगपत्प्रयोगस्तदैव प्रत्ययो यथा स्यात् । न च कर्तृकर्मणोः प्रत्ययार्थत्वमेवास्तु, न तूपपदत्वमिति वाच्यम् , ईषदादीनामेवोपपदत्वे तु खलः खित्त्वस्य वैयर्थ्यापत्तेः । मुमर्थं हि तत् , मुम् चानव्ययस्य विधीयते, तस्मात्कर्तृकर्मणोरिति उपपदत्वमेव तदेतदाह-**ईषदादिषु चेति** । कर्तृकर्मणी द्वे, भूकृञौ च द्वौ, तयोर्यथासंख्यं प्राप्तम् । स्वीकृतं च काशिकाकृता, न्यासकारहरदत्तादिभिश्च, प्राचाऽपि तथैवोक्तं, तद्व्याख्यातृभिश्चानुमोदितम् । तत्सर्वं नादर्तव्यम् , यथासंख्यसूत्रस्थभाष्यविरोधादिति ध्वनयन्नाह-**यथासंख्यं नेष्यत इति** । ननूपपदयोर्मध्ये पूर्वापरीभावव्यवस्था न सिध्यति । भूकृञोरव्यवहितत्वं कर्तृकर्मणोरेवेष्यते, न त्वीषदादीनाम् । एवं च कथमत्रेष्टव्यवस्था सिध्यतीति चेत् । अत्राहुः-बहुलग्रहणानुवृत्त्या दुराढ्यंभव इति भाष्योदाहरणादिष्टव्यवस्था सिध्यतीति तदेतदभिप्रेत्याह-**कर्तृकर्मणी चेति** ॥ ( ५१२८ ) भवतेः कर्त्युदाहरति-**अनाढ्येनाढ्येनेति** ॥ कर्मणि त्वनाढ्य आढ्यो भूयते इति विग्रहः । भाव्यते इति तदर्थः । एवमग्रेऽपि विग्रहद्वयमुन्नेयम् । अनाढ्येनाढ्येन स्वयमेव क्रियते अनाढ्यः आढ्यः क्रियत इति ॥ ( ५१३० ) **इत्यादीति** । आदिशब्देन दुर्दर्शनः, दुर्धर्षणः, दुर्मर्षणः ॥

---

१ नन्वस्य घित्त्वं व्यर्थम्, नहि खन-धातोः 'चजोः-' इत्येतत्प्रवृत्तियोग्यः कश्चन वर्णोऽस्तीत्यत आह-**घित्करणमिति**॥ २ **यदा स्वती कर्मप्रवचनीयाविति** । अतः कर्मप्रवचनीयत्वे उपसर्गान्तरराहित्यमस्त्येव, कर्मप्रवचनीयसंज्ञाया उपसर्गसंज्ञाबाधकत्वात् । सोः कर्मप्रवचनीयत्वे तु उपसर्गात्परत्वमेव नास्तीत्यभिप्रायेणोभयोरुपादानम् ॥ ३ **न स्यादिति** । 'घनजपः पुंसि' इत्युक्तेरिति भावः । ननु घञोऽभावे कथमस्य प्रवृत्तिरिति चेन्न, पुंसीति विहित-घप्रत्ययस्य घञोऽपवादत्वेन 'तत्स्थानापन्नस्तद्धर्मं लभते' इति न्यायेनैव प्रवृत्तिस्वीकारात् ॥ ४ नन्वीषदादीनामव्ययत्वात् खलः खित्त्वस्य न फलमत आह **खित्करणं तूत्तरत्रेति** ॥

निर्णयः । पदान्तात्किम् । पुष्णाति । पदे अन्तः पदान्त इति सप्तमीसमासोऽयम् । तेनेह न । सुसर्पिष्केण॥ (५१३२) (सू) आवश्यकाधमर्ण्ययोर्णिनिः । ३ । ३ । १७० । अवश्यङ्कारी । शतन्दायी ॥ ( ५१३३ ) (सू) कृत्याश्च । ३ । ३ । १७१ । आवश्यकाधमर्ण्ययोरित्येव । अवश्यं हरिः सेव्यः । शतं देयम् ॥( ५१३४ ) (सू) क्तिच्क्तौ च संज्ञायाम् । ३ । ३ । १७४ । धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम् । तितुत्रेति नेट्[४११४] । भवतात् भूतिः ॥ ( ५१३५ ) (सू) न क्तिचि दीर्घश्च । ६ । ४ । ३९ । अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे । यन्तिः । रन्तिः । वन्तिः । तन्तिः ॥ ( ५१३६ ) (सू) सनः क्तिचि लोपश्चास्याऽन्यतरस्याम् । ६ । ४ । ४५ । सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा । सनुतात् । सातिः । सतिः । सन्तिः । देवा एनं देयासुर्देवदत्तः ॥ ( ५१३७ ) (सू) अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा । ३ । ४ । १८ । प्रतिषेधार्थयोरलङ्खल्वोरुपपदयोः क्त्वा स्यात् । प्राचांग्रहणं पूजार्थम् । अमैवाव्ययेनेति[७७२] नियमान्नोपपदसमासः । दो[४०१४] र्दद्धोः । अलं दत्त्वा । घुमास्था[३२७४] । पीत्वा खलु । अलंखल्वोः किम् । मा कार्षीत् । प्रतिषेधयोः किम् । अलङ्कारः ॥ ( ५१३८) (सू) उदीचां माङो व्यतीहारे । ३ । ४ । १९ । व्यतीहारेऽर्थे माङः क्त्वा स्यात् । अपूर्वकालार्थमिदम् ॥ ( ५१३९ ) (सू) मयतेरिदन्यतरस्याम् । ६ । ४ । ७० । मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि । अपमित्य याचते । अपमाय । उदीचांग्रहणाद्यथाप्राप्तमपि । याचित्वा अपमयते ॥ ( ५१४० ) (सू) परावरयोगे च । ३ । ४ । २० । परेण पूर्वस्यावरेण परस्य योगे गम्ये धातोः क्त्वा स्यात् । अप्राप्य नदीं पर्वतः । परनदीयोगोऽत्र पर्वतस्य । अतिक्रम्य पर्वतं स्थिता नदी । अवरपर्वतयोगोऽत्र नद्याः ॥ ( ५१४१-१ ) (सू) समानकर्तृकयोः पूर्वकाले । ३ । ४ । २१ । समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । क्त्वा तु-अव्ययकृतो भावे । भुक्त्वा व्रजति । द्वित्व-

---

( ५१३४ ) क्तिच्क्तौ-। क्तिचश्चकारो 'न क्तिचि-५१३५ ' इति विशेषणार्थः । 'न क्तौ' इत्युक्ते हि क्तिनोऽपि ग्रहणं स्यादिति प्राञ्चः । तन्न, 'एकानुबन्ध-' परिभाषयैव क्तिनो व्यावृत्तिसिद्धेरिति हरदत्तः । यत्तु वदन्ति-'तितुत्र—४१९४ ' इत्यत्र सामान्यग्रहणार्थश्चकारः । अन्यथा एकानुबन्धत्वादस्यैव ग्रहणं स्यान्न तु क्तिन इति तद्भ्रमसात्, 'तितुत्र-४१९४' इति सूत्रेऽनुबन्धविशिष्टरूपानुच्चारणेनैकानुबन्धपरिभाषाया उक्तिसम्भवस्यैवाभावात् ॥ एतेन 'तितुत्र-४१९४ ' इति सूत्रे एकानुबन्धत्वात्तिवेव गृह्यते, न त्वयं क्तिच्, ततश्च रोदितीति रूपं न स्यादिति शङ्काऽप्यपास्ता ॥ भूतिरिति । यद्यपीह परत्वात् 'श्र्युकः किति ३१७४ ' इत्येवेण्निषेधो न्याय्यः तथापि वन्तितन्त्योरिण्निषेधार्थमावश्यकत्वात्फले विशेषाभावाच्च 'तितुत्र-४१९४ ' इत्युपन्यस्तम् ॥ ( ५१३५ ) दीर्घानुनासिकेति । 'अनुनासिकस्य क्विझलोः-३५४५ ' इति दीर्घस्य, 'अनुदात्तोपदेश-३२३४ ' इत्यादिनाऽनुनासिकलोपस्य च प्राप्तिरिति बोध्यम् ॥ यन्तिरित्यादि । 'यम उपरमे', 'रमु क्रीडायाम्', 'वनु याचने', 'तनु विस्तारे' ॥ ( ५१३७ ) अलंखल्वोः-। पूजार्थमिति । ननु विकल्पार्थमेवास्तु, अलं रुदित्वा, अलं रोदनेनेति रूपद्वयसिद्ध्यर्थमिति चेत् । मैवम्, वाऽसरूपन्यायेनैतत्सिद्धेः । न च 'क्त्ल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्न' इति सिद्धान्तात् ल्युटि वाऽसरूपन्यायो नास्तीति वाच्यम्, क्तल्युडादयोऽपवादभूताः स्वबाध्यं नित्यं बाधन्ते इति हि तस्य निष्कृष्टोऽर्थः । इह तु ल्युटोऽपवादः क्त्वेति वैषम्यात् । ननु प्रैषादिषु 'कृत्याश्च ३७५५ ' इति वचनेन स्त्र्यधिकारादूर्ध्वं वाऽसरूपविधिर्नावश्यमस्तीति ज्ञापितमिति चेत् । किं ततः, 'ज्ञापकसिद्धं न सर्वत्र' इतीष्टानुरोधेन तदभ्युपगमे बाधकाभावात् ॥ अलं दत्त्वेति । अपात्रे न देयमिति फलितोऽर्थः ॥ ( ५१३८ ) उदीचाम्-। व्यतीहारो व्यतिक्रमः । मेङः कृतात्वस्य माङ इति निर्देशो 'नानुबन्धकृतमनेजन्तत्वम्' इति परिभाषां ज्ञापयति, तेन घुसंज्ञायां दैपोऽपि 'अदाप्' इति पर्युदासः सिध्यति ॥ ( ५१३९ ) अपमित्यैति । 'समासेऽनञ्पूर्वे-५१५३ ' इति वक्ष्यमाणेन क्त्वो ल्यपि तुक् । याचित्वा प्रणिददातीत्यर्थः ॥ ( ५१४० ) परावर-। अप्राप्येति । दक्षिणदेशस्थानां गङ्गामप्राप्य विन्ध्यः । गङ्गाप्राप्तिविरहविशिष्टदेशस्थो विन्ध्य इत्यर्थः । अत्र विन्ध्यात्परा गङ्गेति गम्यते ॥ अतिक्रम्यैति । दक्षिणदेशस्थानामेवायमपि प्रयोगः । अत्र हि गङ्गायाः पूर्वो विन्ध्य इति गम्यते । इह त्रिसूत्र्यां क्त्वाप्रत्ययस्य भावमात्रार्थत्वेऽपि विशेषणविशेष्यसंसर्गा भिद्यन्त इति नास्ति वैयर्थ्यमिति दिक् ॥ ( ५१४१-१ ) समानक-। इह धात्वधिकारेऽपि समानकर्तृत्वं क्रिययोरेव संभवतीत्याशयेनाह-धात्वर्थयोरिति । निर्धारणे षष्ठी, सप्तमी वा । धात्वर्थयोर्मध्ये पूर्वकालो यस्य धात्वर्थस्य तस्मिन्विद्यमानादित्यर्थः । एवं च निर्धारणे विभक्तिरेव पूर्वकाल इत्यस्य बहुव्रीहित्वद्योतिकेति फलितम् ॥ क्त्वा स्यादिति । स च भावे 'अव्ययकृतः-' इति वचनात् । भावोऽपि घञादाविव नेह सिद्धावस्थः किन्तु साध्यावस्थः, स च धातुनैव लब्धः । क्त्वाप्रकृत्यर्थभूता क्रिया च क्रियान्तरं प्रति विशेषणं, धातुसम्बन्धाधिकारात् । संसर्गश्चेह सामानाधिकरण्यं पूर्वोत्तरकालत्वं च, तत्र संसर्गविशेषतात्पर्यग्राहकाः क्त्वाणमुलादयः । अत्र च 'समानकर्तृकयोः' इति सूत्रांशेन सामानाधिकरण्यमुपनिबद्धम्, धातूपात्तव्यापाराश्रयस्य कर्तृतया तथा पर्यवसानादिति दिक् ॥ द्वित्वमिति । नन्वमीषां ब्राह्मणानां पूर्वमानयेत्युक्ते मध्यमो नानीयते, तथेहापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् क्त्वाप्रत्ययो न स्यादिति चेत् । अत्राहुः-इहाप्याख्यातवाच्या क्रिया प्रधानं तां प्रति क्त्वान्तोपस्थिताः क्रियाः सर्वा एव विशेषणं, न तु तासां परस्परसम्बन्धः 'गुणानां च परार्थत्वात्'

मर्तन्त्रम् । स्नात्वा भुक्त्वा पीत्वा व्रजति । [३२३४]अनुदात्तेत्यनुनासिकलोपः । विष्णुं नत्वा स्तौति ॥ (५१४१--२) (वा) स्वरत्यादेः श्युकः क्कितीति नित्यमिडभावः पूर्वविप्रतिषेधेन ॥ स्वृत्वा । सूत्वा । धूत्वा ॥ ( ५१४२ ) (सू) क्त्वि स्कन्दिस्यन्दोः । ६ । ४ । ३१ । एतयोर्नलोपो न स्यात् क्त्वि परे । स्कन्त्वा । ऊदित्त्वादिड्वा–स्यन्त्वा । स्यन्दित्वा ॥ (५१४३) (सू) न क्त्वा सेट् ।१।२।१८। सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् । कृत्वा ॥ (५१४४) (सू) मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।१।२।७। एभ्यः सेट् क्त्वा कित् । मृडित्वा । [४०६२]क्लिशः क्त्वेति वेट् । क्लिशित्वा । क्लिष्ट्वा । उदित्वा । उषित्वा । रुदविदेति [३४६६]कित्त्वम् । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा ॥ ( ५१४५ ) (सू) नोपधात्थफान्ताद्वा ।१।२।२३। सेट् क्त्वा कित्स्याद्वा । श्रथित्वा । श्रन्थित्वा । गुफित्वा । गुम्फित्वा । नोपधात्किम् । कोथित्वा । रेफित्वा ॥ (५१४६) (सू) वञ्चिलुञ्च्यृतश्च ।१।२।२४। सेट् क्त्वा किद्वा । वचित्वा । वञ्चित्वा । लुचित्वा । लुञ्चित्वा । ऋतित्वा । अर्तित्वा ॥ ( ५१४७) (सू) तृषिमृषिकृशेः काश्यपस्य ।१।२।२५। एभ्यः सेट् क्त्वा किद्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । रलो [३४७५]व्युपधादिति वा कित्त्वम् । द्युतित्वा । द्योतित्वा । लिखित्वा । लेखित्वा । रलः किम् । सेवित्वा । व्युपधात्किम् । वर्तित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा॥ [४०५९]वसतिक्षुधोरिट् । उषित्वा । क्षुधित्वा । क्षोधित्वा । [३]अञ्चेः [४०६०]पूजायामिति नित्यमिट् । अञ्चित्वा । गतौ तु अक्त्वेत्यपि ॥ लुभित्वा । लोभित्वा । [४०६१]लुभोऽविमोहन इतीट् । विमोहने तु लुब्ध्वा ॥ (५१४८) (सू) जॄव्रश्च्योः क्त्वि ।७।२।५५। आभ्यां परस्य क्त्व इट् स्यात् । जरीत्वा । जरित्वा । व्रश्चित्वा ॥ (५१४९) (सू) उदितो वा ।७।२।५६। उदितः परस्य क्त्व इड्वा । शमित्वा । [३८४५]अनुनासिकस्य क्वीति दीर्घः । शान्त्वा । द्यूत्वा । देवित्वा ॥ ( ५१५० ) (सू) क्रमश्च क्त्वि । ६ । ४ । १८ । क्रम उपधाया वा दीर्घः स्यात् झलादौ क्त्वि परे । क्रान्त्वा । क्रन्त्वा । झलि किम् । क्रमित्वा ॥ [४०६३]पूङश्चेति वेट् । पवित्वा । पूत्वा ॥ (५१५१–१) (सू) जान्तनशां विभाषा । ६ । ४ । ३२ । जान्तानां नशेश्च नलोपो

---

इति न्यायात् । अत एव स्नात्वा पीत्वा भुक्त्वा व्रजतीत्याद्यनियमेन प्रयुज्यते इति ॥ ( ५१४१–२ ) 'स्वरतिसूति–३०४६' इत्यादिना विकल्पे प्राप्ते नित्यार्थमाह–**स्वरत्यादेरिति** ॥ ( ५१४२ ) **क्त्वि स्कन्दि–**। 'स्कन्दिर्गतिशोषणयोः' । 'इर इत्संज्ञा–३०३५' इति वार्तिकादिकारमात्रस्येत्संज्ञा नेति 'अनिदिताम्–५५७' इति पर्युदासोऽत्र न प्रवर्तत इति स्कन्दिग्रहणम् ॥ **स्कन्त्वेति** । 'एकाचः–३००६ ' इति नेट् ॥ ( ५१४४ ) **मृडमृद–**। 'मृड सुखने', 'मृद क्षोदे', 'गुध परिवेष्टने', 'गुध रोषे च', 'कुष निष्कर्षे', 'क्लिशू हिंसायाम्' दिवादिः, 'क्लिशू विबाधने' क्र्यादिः, 'वद व्यक्तायां वाचि', 'वस निवासे' ॥ **किदिति** । 'असंयोगाल्लिट् कित् ३००२ ' इत्यतः किदित्यनुवर्तते इति भावः ॥ **उदित्त्वेति** । यजादित्वात्संप्रसारणम् ॥ **उषित्वेति** । 'वसतिक्षुधोः–४०५९ ' इतीट् । यजादित्वात्संप्रसारणम् । 'शासिवसि–३२१४ ' इति षः ॥ **गृहीत्वेति** । 'ग्रहिज्या–३२१६ ' इति संप्रसारणम् । 'ग्रहोऽलिटि–३३९५ ' इति इटो दीर्घः ॥ ( ५१४५ ) **नोपधात्थ–**। अन्तग्रहणं स्पष्टार्थम् । थफादित्युक्तेऽपि धातोरेव क्त्वाप्रत्ययविधानाद्विशेष्यसंनिधानेन तदन्तविधिना थफान्तादिति लाभात् ॥ **कोथित्वा** । **रेफित्वेति** । 'कुथ पूतीभावे', 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु ' इह 'रलो व्युपधात्–३४७५' इति विकल्पोऽपि न भवति, नोपध[१]ग्रहणसामर्थ्यात् ॥ ( ५१४६ ) **वचित्वेति** । 'वञ्चु प्रलम्भने' ॥ **लुचित्वेति** । 'लुञ्च अपनयने' ॥ **ऋतित्वेति** । 'ऋतिः' सौत्रो धातुर्घृणार्थकः, तस्यार्द्धधातुकविषये 'ऋतेरीयङ् ३२२८' इत्यस्य वैकल्पिकत्वात्तदभावे कित्त्वमनेन विकल्प्यते ॥ ( ५१४७ ) **तृषिमृषि–**। 'ञितृषा पिपासायाम्', 'मृष तितिक्षायाम्', 'कृश तनूकरणे' । 'नोपधात्–५१४५' इत्यतो वेत्यनुवर्तनात्काश्यपग्रहणं पूजार्थम् ॥ [ ४०६० ] **अञ्चेरिति** । 'उदितो वा ५१४९' इति विकल्पप्राप्तावयमारम्भः ॥ **अञ्चित्वेति** । 'न क्त्वा सेट् ५१४३' इति कित्त्वाभावान्नलोपो न । एवं चेह 'नाञ्चेः पूजायाम् ५६८' इति नलोपो नेति प्रसादकारोक्तिर्वृथेत्याहुः ॥ ( ५१४८ ) **जॄव्रश्च्योः–**। 'जॄ' इत्यस्मात् 'श्र्युकः किति ३१७४' इति निषेधे प्राप्ते, व्रश्चेरूदित्त्वाद्विकल्पे प्राप्ते वचनमिदम् ॥ **जरीत्वेति** । 'वॄतो वा ३१८५' इति इटो वा दीर्घः ॥ **व्रश्चित्वेति** । इह 'न क्त्वा सेट् ५१४३' इति कित्त्वनिषेधाद् 'ग्रहिज्या–३२१६' इति संप्रसारणं न ॥

---

१ सूत्रे 'समानकर्तृकयोः' इति द्विवचननिर्देशाद् द्वित्वं विवक्षितमिति भ्रमवारणायाह –**द्वित्वमतन्त्रमिति** । एवं चान्यलब्धस्याप्यर्थस्य स्पष्टप्रतिपत्त्यर्थं द्विवचननिर्देशो न तु विवक्षितत्वादेव, पूर्वकालविशिष्टा क्रिया च समानकर्तृकत्वसम्बन्धेन प्रधानक्रियायां विशेषणम् ॥ २ यद्यपीह 'सेट् ' इति न प्रकृतं, तथाप्यस्य सूत्रस्य 'न क्त्वा सेट्' इति सूत्रप्राप्तकित्कार्यप्रतिषेधबाधकतया सेड्विषयकमेवेदमित्याशयेनाह–**सेट् क्त्वेति** ॥ ३ अञ्चुधातोरुदित्त्वाद् 'उदितो वा' इति विकल्पे प्राप्ते आह–**अञ्चेः पूजायामिति** ॥ ४ **नोपधग्रहणसामर्थ्यादिति**–न च ऋफधातोः क्त्वाप्रत्यये विकल्पवारणाय नोपधग्रहणमस्त्विति वाच्यम्, द्वाविमौ धातू ऋफ ऋम्फेति, तत्राद्यस्य ऋफधातोः क्त्वाप्रत्ययेऽस्मिन् सूत्रे नोपधग्रहणे विकल्पस्य वारणेऽपि 'न क्त्वा सेट्' इति कित्त्वनिषेधेऽर्फित्वेति रूपम्, द्वितीयस्य 'नोपधाद्–' इति विकल्पेन कित्त्वपक्षे ऋफित्वेति रूपमिति फलतो विशेषाभावेन नोपधग्रहणस्य तद्व्यावर्तकत्वाभावात् ॥

वा स्यात् क्त्वि परे । भक्त्वा । भङ्क्त्वा । रक्त्वा । रङ्क्त्वा । मस्जिनशोरिति नुम् । तस्य पक्षे लोपः । नष्ट्वा । नंष्ट्वा ॥ रधादिभ्यश्चेतीट्पक्षे नशित्वा ॥ ( ५१५१-२ ) (वा) झलादाविति वाच्यम् ॥ नेह । आञ्जित्वा । ऊदित्वाद्वेट् । पक्षे-अक्त्वा । अङ्क्त्वा । जनसनखनेत्यात्त्वम् । खात्वा । खनित्वा । द्यतिस्यतीतीत्त्वम् । दित्वा । सित्वा । मित्वा । स्थित्वा । दधातेर्हिः । हित्वा ॥ ( ५१५२ ) (सू) जहातेश्च क्त्वि । ७ । ४ । ४३ । हित्वा । हाङस्तु हात्वा । अदो जग्धिः । जग्ध्वा ॥ ( ५१५३ ) (सू) समासेऽनञ्पूर्वे क्त्वो ल्यप् । ७ । १ । ३७ । अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् । अकृत्वा । पर्युदासाश्रयणान्नेह । परमकृत्वा ॥ ( ५१५४ ) (सू) षत्वतुकोरसिद्धः । ६ । १ । ८६ । षत्वे तुकि च कर्तव्ये एकादेशशास्त्रमसिद्धं स्यात् । कोऽसिचत् । इह षत्वं न । अधीत्य । प्रेत्य । ह्रस्वस्येति तुक् ॥ ५१५५) (सू) वा ल्यपि । ६ । ४ । ३८ । अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्याल्ल्यपि । व्यवस्थितविभाषेयम् । तेन मान्तानिटां वा नान्तानिटां वनादीनां च नित्यम् । आगत्य । आगम्य । प्रणत्य । प्रणम्य । प्रहत्य । प्रमत्य । प्रवत्य । वितत्य । अदो जग्धिः- प्रजग्ध्य ॥ ( ५१५६ ) (प) अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते । जग्धिविधौ ल्यब्ग्रहणात् । तेन हित्वदत्त्वाऽऽत्त्वेत्त्वदीर्घत्वशूडिटो ल्यपि न । विधाय । प्रदाय । प्रखन्य । प्रस्थाय । प्रक्रम्य । आपृच्छ्य । प्रदीव्य ॥ (५१५७) (सू) न ल्यपि । ६ । ४ । ६९ । ल्यपि परे घुमास्थादेरीत्त्वं न । धेट् । प्रधाय । प्रमाय । प्रगाय । प्रपाय । प्रहाय । प्रसाय । मीनातिमिनोतीत्यात्त्वम् । प्रमाय । निमाय । उपदाय । विभाषा लीयतेः । विलाय । विलीय । णिलोपः । उत्तार्य । विचार्य ॥ ( ५१५८ ) (सू) ल्यपि लघुपूर्वात् । ६ । ४ । ५६ । लघुपूर्वात्परस्य णेरयादेशः स्यात् ल्यपि । विगणय्य । प्रणमय्य । प्रबेभिदय्य । लघुपूर्वात्किम् । संप्रधार्य ॥ ( ५१५९ ) (सू) विभाषाऽऽपः ।

---

( ५१४९ ) धूत्वेति । इडभावपक्षे 'च्छ्वोः-३३९४' इत्यूठ् ॥ ( ५१५१-२ ) झलादावितीति । 'जान्तनशाम्-५१५१' इति सूत्रे वक्तव्यमित्यर्थः ॥ खात्वा । खनित्वेति । 'उदितो वा ५१४९' इति वेट् ॥ जग्ध्वेति । 'झरो झरि-१०६' इति पाक्षिको धलोपः ॥ (५१५३) समासेऽनञ्—। नञ्भिन्नं नञ्सदृशमव्ययमिति यावत् । तत्पूर्वपदं यस्य समासस्येति व्याचष्टे-अव्ययेति । प्रकृत्येति । प्रशब्दः क्त्वाप्रत्ययार्थगतप्रकर्षस्य द्योतकः, स तु 'कुगतिप्रादयः १०९७' इति क्त्वान्तेन नित्यं समस्यते ॥ पर्युदासेति । प्रसज्यप्रतिषेधाश्रयणे तु स्यादेवात्र ल्यबिति भावः ॥ ( ५१५४ ) षत्वतुकोः-। प्रासङ्गिकषत्वविषयमुदाहरति-कोऽसिचदिति । को असिचदिति स्थिते 'एङः पदान्तादति १४१' इति पूर्वरूपमेकादेशः । तस्य 'अन्तादिवच्च ११७' इति परादिवत्त्वेन 'सात्पदाद्योः २८६३' इति निषेधाभावादिणः परत्वेन षत्वं प्राप्तम् । एकादेशस्यासिद्धत्वे सति अकारेण व्यवधानादिणः परत्वाभावान्न भवति ॥ प्रकृतं ल्यपि कार्यमुदाहरति—अधीत्येति ॥ ( ५१५६ ) विधायेति । दधातेर्हिर्न ॥ प्रदायेति । 'दो दद् घोः ४०९४' इति न ॥ प्रखन्य । 'जनसनखनां-३३२२' इत्यात्त्वं न ॥ प्रस्थाय । 'द्यतिस्यति-४०९१' इतीत्त्वं न ॥ प्रक्रम्य । 'क्रमश्च क्त्वि ५१५०' इति दीर्घो न ॥ आपृच्छ्य । प्रदीव्य । छकारवकारयोः 'च्छ्वोः-३३९४' इति शूठौ न । इडभावस्योदाहरणं तु प्रखन्य प्रदीव्येत्याद्येव ॥ (५१५७) न ल्यपि । कथं तर्हि 'निपीय यस्य' इति श्रीहर्षप्रयोग इति चेत् । अत्राहुः-'पीङ् पाने' इति दिवादिगणस्थात् ल्यपि न दोष इति । इह प्रशाय प्रच्छायेत्यत्र 'शाच्छोरन्यतरस्याम् ४०९२' इति प्राप्तस्येत्वस्याप्यभावो बोध्यः ॥ (५१५८) लघुपूर्वादिति । लघुः पूर्वो यस्माद्वर्णात् । लघुपूर्ववर्णात्परस्येत्यर्थः ॥ विगणय्येति । नन्विह णौ कृतस्याल्लोपस्य पूर्वस्माद्विधौ स्थानिवद्भावाल्लघुपूर्वकवर्णात्परत्वं नास्ति । न चारम्भसामर्थ्यम्, अनुगमय्येत्यादौ मित्सु चरितार्थत्वात् । अत्रोच्यते-पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यम्, 'निष्ठायां सेटि ४०७२' इति लिङ्गात् । तथा चात्र स्थानिवत्त्वाभावाण्णेरयादेशो भवत्येव, 'निष्ठायां सेटि ४०७२' इत्यस्यानित्यत्वज्ञापकत्वं तु 'अचः परस्मिन्-७७' इति सूत्रे एवास्माभिरुपपादितमिति नात्रोपपाद्यते ॥ प्रणमय्येति । अमन्तत्वान्मित्त्वे 'मितां ह्रस्वः ३४०२' ॥ प्रबेभिदय्येति । भिदेर्यङन्ताद्बेभिद्येत्यस्माण्णिच्यल्लोपे 'यस्य हलः ३४९७' इति यलोपः । ननु ह्रस्वयलोपाल्लोपानामाभीयत्वेनासिद्धत्वाल्लघुपूर्वकवर्णात्परो णिर्नास्तीति कथमिह णेरयादेशः स्यादिति चेत् । नैवम्, 'असिद्धवदत्राभात् २९३७' इत्यत्र समानाश्रये तस्मिन् कर्तव्ये तदसिद्धं स्यादिति हि व्याख्यातम् । तेनात्राशङ्कैव नास्ति । ह्रस्वादयो हि णौ, णेरयादेशस्तु ल्यपि परत इति व्याश्रयत्वात् ॥ (५१५९) विभाषाऽऽपः । अप्राप्तविभाषेयम् ॥

---

१ अव्ययपूर्वपद इति । 'विनाऽपि प्रत्ययं पूर्वपदोत्तरपदयोर्लोपो वक्तव्यः' इत्यनेन पूर्वपदभूतस्याव्ययस्य लोपे क्वचित्केवलल्यबन्तमुत्तरपदमेव श्रूयते, यथा-'एवं विनायकं पूज्य' इति याज्ञवल्क्यस्य, 'संध्यावधूं गृह्य करेण भानुः' २ जाम्बवतीविजये काव्ये व्याकरणाचार्यस्य पाणिनेश्च प्रयोगः ॥ समासघटकपूर्वपदभूताव्ययलोपमजानानेन नमिसाधुना त्वस्य पाणिनिप्रयोगस्यासाधुतैव रुद्रटालंकारव्याख्यायां प्रदर्शितेति सोऽविकृतबुद्धिरेव व्याकरणमर्मानभिज्ञत्वात् । रामायणभारतादिष्वार्षग्रन्थेषु त्वीदृशाः प्रायेण प्रयोगाः समुपलभ्यन्ते इति बोध्यम् ॥

६ । ४ । ५७ । आप्नोतेर्णेरयादेशो वा स्यात् ल्यपि । प्रापय्य । प्राप्य ॥ ( ५१६० ) (सू) क्षियः । ६ । ४ । ५९ । क्षियो ल्यपि दीर्घः स्यात् । प्रक्षीय ॥ ( ५१६१ ) (सू) ल्यपि च । ६ । १ । ४१ । वेञो ल्यपि संप्रसारणं न स्यात् । प्रवाय ॥ ( ५१६२ ) (सू) ज्यश्च । ६ । ३ । ४२ । प्रज्याय ॥ ( ५१६३ ) (सू) व्यश्च । ६ । १ । ४३ । उपव्याय ॥ ( ५१६४ ) (सू) विभाषा परेः । ६ । १ । ४४ । परेर्व्येञो वा संप्रसारणं स्यात् ल्यपि । तुकं बाधित्वा परत्वाद्दीर्घ इति दीर्घः । परिवीय । परिव्याय । कथं[1] मुखं व्यादाय स्वपिति । नेत्रे निमील्य हसतीति । व्यादानसंमीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तद्दंश[2]विवक्षया भविष्यति ॥ ( ५१६५ ) (सू) आभीक्ष्ण्ये णमुल् च । ३ । ४ । २२ । पौनःपुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च । द्वित्वम् । स्मारंस्मारं नमति शिवम् । स्मृत्वास्मृत्वा । पायंपायम् । भोजंभोजम् । श्रावंश्रावम् । चिण्णमुलोरिति णमुल्परे णौ वा दीर्घः । गामंगामम् । गमंगमम् । विभाषा चिण्णमुलोरिति नुम् वा । लम्भंलम्भम् । लाभंलाभम् । व्यवस्थितविभाषया उपसृष्टस्य नित्यं नुम् । प्रलम्भंप्रलम्भम् । जाग्रोऽविचिण्णल्ङित्सु गुणः । जागरंजागरम् । ण्यन्तस्याप्येवम् ॥ ( ५१६६ ) (सू) न यद्यनाकाङ्क्षे । ३ । ४ । २३ । यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तं तन्न, यत्र पूर्वोत्तरे क्रिये तद्वाक्यमपरं नाकाङ्क्षते चेत् । यदयं भुङ्क्ते ततः पठति । इह क्त्वाणमुलौ न । अनाकाङ्क्षे किम् । यदयं भुक्त्वा व्रजति ततोऽधीते ॥ ( ५१६७ ) (सू) विभाषाऽग्रेप्रथमपूर्वेषु । ३ । ४ । २४ । आभीक्ष्ण्ये इति नानुवर्तते । एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः । अग्रे भोजं व्रजति । अग्रे भुक्त्वा । प्रथमम्भोजम् । प्रथमम्भुक्त्वा । पूर्वम्भोजम् । पूर्वम्भुक्त्वा । पक्षे लडादयः । अग्रे भुङ्क्ते ततो व्रजति । आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः । अग्रे भोजम्भोजं व्रजति ।

---

**आप्नोतेरिति** । यद्यपीङो णिचि परतः 'क्रीङ्जीनां णौ ३४५५' इत्यात्वे 'अर्तिह्री–३४०५' इत्यादिना पुकि आपिति शब्दोऽस्ति । तथापि तस्य नेह ग्रहणं, लाक्षणिकत्वादिति भावः ॥ **प्राप्येति** । एतेन 'अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते' इति श्रीहर्षप्रयोगो व्याख्यातः ॥ अवाप्येत्यस्यावापय्येत्यर्थसम्भवात् । एतेन तत्रान्तर्भावितण्यर्थतेति क्लेशमनुभवन्तः परास्ताः ॥ ( ५१६१ ) ल्यप्स्थानिनः कित्त्वात् 'वचिस्वपि–३२१३' इति प्राप्तसंप्रसारणं निषेधयितुमाह–**ल्यपि चेति** ॥ ( ५१६२ ) **ज्यश्च** । संप्रसारणं न स्यात् । एवं '**व्यश्च** ५१६३' इत्यत्रापि व्याख्येयम् ॥ **कथमिति** । ल्यबादेशस्य स्थानिभूतः क्त्वाप्रत्ययो दुर्लभः, तद्विधौ 'पूर्वकाले' इत्युक्तेः । न चेह तदस्ति, पूर्वं ह्यसौ स्वपिति पश्चान्मुखं व्यादत्ते, यदैव हसति तदैव नेत्रे सम्मीलयति, तथा च क्त्वाप्रत्ययस्य दुर्लभत्वाल्ल्यपः प्रसक्तिरेव नास्तीति प्रश्नः ॥ समाधत्ते–**व्यादानेत्यादिना** । एतेन 'ईश्वरः सर्वं व्याप्य वर्तते, ज्ञात्वा तिष्ठति' इत्यादि व्याख्यातम् । 'श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते' इत्यादौ तु समानकर्तृकतानिर्वाहाय स्थितस्येत्यादि यथासंभवमध्याहार्यम् ॥ (५१६५) **आभीक्ष्ण्ये णमुल् च** । ननु 'वाऽसरूप–३=६९' न्यायेन क्त्वाप्रत्ययो भविष्यतीति चग्रहणमिह व्यर्थमिति चेत् । मैवम्, उक्तन्यायस्वीकारे तु लडादिरपीह प्रवर्तेत । न चेष्टापत्तिः, 'विभाषाग्रे–५१६७' इति वक्ष्यमाणसूत्रस्थविभाषाग्रहणस्य वैयर्थ्यप्रसङ्गात् । तत्र हि क्त्वाणमुलौ विभाषाग्रहणेन लडादिसमावेशार्थं विकल्प्येते । यद्यपि 'वाऽसरूप–३७६९' न्यायेनैव लडादिः सिध्यति, तथापि 'णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्र वाऽसरूपविधिर्न प्रवर्तते' इति ज्ञापनार्थं विभाषाग्रहणम् । तत्फलं तु 'आभीक्ष्ण्ये णमुल् च ५१६५' इत्यत्र लडाद्यप्रवृत्तिः । ततश्च चकारेणैव क्त्वाप्रत्ययो लभ्यत इति नास्त्येव तस्य वैयर्थ्यम् । किञ्च, वाऽसरूपं विनैव क्त्वालडाद्योः स्वीकारे 'न यद्यनाकाङ्क्षे ५१६६' इत्यत्र क्त्वाप्रत्ययवत् लडादिरपि निषिध्येत । तथा च यदयं भुङ्क्ते ततः पठतीत्युदाहरणं न स्यात् , सिद्धान्ते तु 'आभीक्ष्ण्ये णमुल् च ५१६५' इति विशेषविहितयोः क्त्वाणमुलोरेव निषेधात्सामान्यविहितलडादिर्भवत्येवेति नास्त्येवानुपपत्तिरिति दिक् ॥ ( ५१६५ ) **पूर्वविषय इति** । 'समानकर्तृकयोः पूर्वकाले ५१४१' इत्यर्थे ॥ **पायंपायमिति** । आतो युक् ॥ **वा दीर्घ इति** । गमेर्ण्यन्ताण्णमुलि मितां ह्रस्वे च कृते वा दीर्घ इत्यर्थः ॥ **ण्यन्तस्यापीति** । यत्तु प्राचा ण्यन्तजागर्तेश्चिण्णमुलोर्वा वृद्धिरिति मतमुपन्यस्तं, तदपाणिनीयमिति भावः ॥ ( ५१६६ ) **न यदि–। अनाकाङ्क्ष इति।** पचाद्यजन्ते नञ्समासस्तद्दर्शयति–**नाकाङ्क्षते चेदिति । इहेति** । नन्वेवम् 'अनन्तरस्य–४८८' इति न्यायात् णमुल् मा भूत् , क्त्वा तु 'समानकर्तृकयोः—५१४१' इति सूत्रान्तरेण स्यादेवेति चेत् । अत्राहुः—पूर्वकाले यत्प्राप्नोति तन्नेति व्याख्यानात् क्त्वाप्रत्ययोऽपि न भवतीति ॥ ( ५१६७ ) **विभाषाऽग्रे**—। यद्यप्यग्रेशब्दो देशविशेषवचनोऽप्यस्ति, प्रभोरग्रे भुङ्क्ते इत्यादिप्रयोगात् , तथापीह कालविशेषवाच्येव गृह्यते, प्रथमशब्दसाहचर्यात् । 'प्रथमं भुङ्क्ते' इत्यादौ तु काल एव प्रतीयते । अग्रे इति सप्तम्यन्तस्यानुकरणम् । 'प्रकृतिवदनुकरणम्' इत्यस्य वैकल्पिकत्वाद्विभक्तेर्लुङ् न कृतः ' अस्यवामीयम् ' इतिवत् ॥ **अग्रे भोजमिति** । ' अमैवाव्ययेन ११२९ ' इति नियमाद्व्यस्तमेवेदं, न त्वत्रोपपदसमासः । नन्वग्रे-

---

१ **कथमिति** । मुखव्यादानस्य नेत्रनिमीलनस्य च स्वापहासोत्तरकालिकत्वेन पूर्वकालविशिष्टार्थवृत्तित्वाभावात्प्रश्नः ।
२ **तद्दंशविवक्षयेति**–एतेन विवक्षैव वक्तुः शब्दानां साधुत्वनियामिका,–यथा आदिकर्मणि निष्ठास्थले धात्वर्थैकदेशस्य स्थितस्यापि उत्पत्तिकालावच्छिन्नस्य कस्यचिदवयवस्यातीतत्वविवक्षया निष्ठा भवति, तथा प्रकृतेऽपि स्वापहासयोर्यत्किंचिदवयवस्य मुखव्यादाने नेत्रनिमीलनोत्तरकालत्वेन तदंशापेक्षया पूर्वकालसम्बन्धिक्रियावचनत्वमादायाऽयं प्रयोग इत्युक्तम् ॥

भुक्त्वाभुक्त्वा ॥ (५१६८) (सू) **कर्मण्याक्रोशे कृञः खमुञ्** । ३ । ४ । २५ । कर्मण्युपपदे आक्रोशे गम्ये । चौरङ्कारमाक्रोशति । करोतिरुच्चारणे । चोरशब्दमुच्चार्येत्यर्थः ॥ ( ५१६९ ) (सू) **स्वादुमि णमुल्** । ३ । ४ । २६ । स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले । पूर्वपदस्य मान्तत्वं निपात्यते । अस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते । संपन्नङ्कारम् । लवणङ्कारम् । संपन्नलवणशब्दौ स्वादुपर्यायौ । वाऽसरूपेण क्त्वाऽपि । स्वादुं कृत्वा भुङ्क्ते ॥ ( ५१७० ) (सू) **अन्यथैवङ्कथमित्थंसु सिद्धाप्रयोगश्चेत्** । ३।४।२७ । एषु कृञो णमुल् स्यात् सिद्धः अप्रयोगोऽस्य एवंभूतश्चेत् कृञ् । व्यर्थत्वाप्रयोगानर्ह इत्यर्थः । अन्यथाकारम् । एवङ्कारम् । कथङ्कारम् । इत्थङ्कारं भुङ्क्ते । इत्थं भुङ्क्त इत्यर्थः । सिद्धेति किम् । शिरोऽन्यथा कृत्वा भुङ्क्ते ॥ ( ५१७१ ) (सू) **यथातथयोरसूयाप्रतिवचने** । ३ । ४ । २८ । कृञः सिद्धाप्रयोग इत्येव । असूयया प्रतिवचने । यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये किं तवानेन ॥ ( ५१७२ ) (सू) **कर्मणि दृशिविदोः साकल्ये** । ३ । ४ । २९ । कर्मण्युपपदे णमुल् स्यात् । कन्यादर्शं वरयति । सर्वाः कन्या इत्यर्थः । ब्राह्मणवेदं भोजयति । यंयं ब्राह्मणं जानाति लभते विचारयति वा तं सर्वं भोजयतीत्यर्थः ॥ ( ५१७३ ) (सू) **यावति विन्दजीवोः** । ३ । ४ । ३० । यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः । यावज्जीवमधीते ॥ ( ५१७४ ) (सू) **चर्मोदरयोः पूरेः** । ३ । ४ । ३१ । कर्मणीत्येव । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते ॥ ( ५१७५ ) (सू) **वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्** । ३ । ४ । ३२ । कर्मण्युपपदे पूरेर्णमुल् स्यादूकारलोपश्च वा समुदायेन वर्षप्रमाणे गम्ये । गोष्पदप्रं वृष्टो देवः । गोष्पदपूरं वृष्टो देवः । अस्येति किम् । उपपदस्य मा भूत् । मूषिकाबिलप्रम् ॥ ( ५१७६ ) (सू) **चेले क्नोपेः** । ३ । ४ । ३३ । चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल् स्याद्वर्षप्रमाणे । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपम् । वसनक्नोपम् ॥ ( ५१७७ ) (सू) **निमूलसमूलयोः**

---

प्रथमपूर्वशब्दैः पूर्वकालत्वमुच्यते इति कथमिह क्त्वाणमुलौ स्यातामिति चेत् । अत्राहुः—अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीति हि वाक्यार्थः । तत्राग्रेप्रभृतिभिर्भोक्त्रपेक्षया पूर्वत्वमुच्यते चेदत्रापि अन्येभ्यो भोक्तृभ्यः पूर्वं व्रजतीति व्रजनापेक्षया पूर्वत्वं तु क्त्वाणमुल्भ्यां द्योत्यत इत्याशङ्कैवात्र नास्तीति ॥ **नित्यमेव विधिरिति** । अग्रे भुङ्क्ते इत्येवं लडादिर्न प्रयुज्यत इति भावः ॥ ( ५१६९ ) **स्वादुमि**—। स्वादुमीत्यर्थग्रहणं व्याख्यानात्तदाह—**स्वाद्वर्थेष्विति** ॥ **मान्तत्वमिति** । ननु 'स्वादौ' इत्येव सूत्रमस्तु, माऽस्त्वत्र णमुल्, खमुञेवानुवर्त्यताम्, 'अरुर्द्विषत्–३९२५' इति मुम्भविष्यति । एवं च निपातनं विनाऽपि मान्तत्वं सिध्यतीति महल्लाघवमिति चेत् । मैवम्, च्व्यन्तस्य मुम् न स्यात् । 'अनव्ययस्य' इति वचनात्, ततश्च स्वादुंकारमित्यत्र 'च्वौ च २८६०' इति दीर्घः स्यात्, संपन्नंकारमित्यादिषु 'अस्य च्वौ २८५७' इतीत्वं स्यात् । किंच, स्त्रियां 'वोतो गुणवचनात् ७०५' इति ङीषि स्वाद्वीकारमिति स्यात् । अतोऽत्र स्वादुमीति रूपं निपात्यते । ततश्चानजन्तत्वान्नेत्वदीर्घौ, न वा ङीष् । निपातनमिह भावप्रत्ययमात्रविषयकम् । तेन स्वादुंकृत्वेत्यपि सिध्यति । स्यादेतत्, उक्तदोषपरिहाराय 'स्वादुमि' इत्येव सूत्रमङ्गीक्रियतां, णमुल् तु त्यज्यतां, कृञः खमुञि कृतेऽपि स्वादुङ्कारमित्यादिरूपसिद्धिरिति चेत् । मैवम्, तथा सत्युत्तरसूत्रेषु संनिहितत्वात् खमुञेवानुवर्तेत इति कन्यादर्शं ब्राह्मणवेदमित्यादिषु पूर्वपदस्य मुमागमः स्यादिति दिक् ॥ ( ५१७० ) **व्यर्थत्वादिति** । निष्प्रयोजनत्वादित्यर्थः । तदेतद्दर्शयति—**इत्थं भुङ्क्त इत्यर्थ इति** । इह शाब्दबोधे विशेषसत्त्वेऽपि फलितार्थकथनपरतया कारमिति णमुलन्तस्य निष्फलत्वमुक्तमनतिप्रयोजनत्वात् । विस्तरस्तु मनोरमादावनुसंधेयः ॥ **शिरोऽन्यथेति** । इह शिरोऽन्यथा कृत्वौदनादिकं भुङ्क्त इत्यर्थलाभाय करोतेः प्रयोग आवश्यकः । तदभावे तु भुक्तिक्रियागत एव प्रकारो गम्येत, न तु शिरसोऽन्यथाकरणम् । अतः करोतेः प्रयोगार्हत्वमस्तीति णमुलन्तः करोतिरिह न प्रयुज्यत इति भावः ॥ ( ५१७१ ) **यथाकारमिति** । प्रष्टुमनर्हः सन्यदि पृच्छति तदेदमुत्तरम् । अत्रापि 'वाऽसरूप–३७६९' न्यायेन पक्षे क्त्वाप्रत्ययो बोध्यः ॥ ( ५१७२ ) **कन्यादर्शमिति** । अत्र दर्शनविषयीभूतानां सर्वासां कन्यानां वाक्यार्थे अन्वयात्साकल्यं बोध्यम् । **सर्वा इति** । दर्शनविषयीभूताः सर्वा इत्यर्थः । अतिशयप्रतिपादनपरमेतत् ॥ **ब्राह्मणवेदमिति** । 'विद ज्ञाने', 'विद्लृ लाभे', 'विद विचारणे' इति धात्वर्थान् पर्यालोच्य व्याचष्टे—**जानातीत्यादि** । सत्तार्थस्य विदेरकर्मकत्वान्नेह ग्रहणमिति भावः ॥ ( ५१७३ ) **यावति विन्द**—। विदेर्लाभार्थस्यानुकरणम् । तस्य हि विन्दतीत्यादौ 'शे मुचादीनाम् ३३७२' इति नुमस्ति ॥ **यावल्लभत इति** । असाकल्यमनेन दर्शयति । साकल्ये हि 'कर्मणि दृशिविदोः–५१७२' इत्यनेनैव सिद्धम् ॥ (५१७४) **चर्मोद**—। **कर्मणीत्येवेति** । एवं च पूरेरिति ण्यन्तस्य निर्देशो, न तु केवलस्य, 'इक्श्तिपौ–५०९५' इति इका निर्देशः । तस्याकर्मकत्वादिति भावः ॥ **चर्मपूरमित्यादि** । चर्म पूरयित्वा । उदरं पूरयित्वा । उदरपूरणविशिष्टा भुजिक्रियेत्यर्थः । इह पूर्वकाले इति न संबध्यतेऽसंभवादप्रतीतेश्च । एवमन्यत्रापि यथासंभवं बोध्यम् ॥ ( ५१७६ ) **चेले**—। व्याख्यानादर्थग्रहणमित्याह—**चेलार्थेष्विति** ॥ **चेलक्नोपमित्यादि** । यथा वर्षणे

---

[1] णमुलन्तोत्तरपदकस्य समासस्य सकलकन्याकर्मकदर्शने शक्तिः, तस्य दर्शनस्य स्वसमानकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन वरणे ( स्वीकारे )ऽन्वयः । एवं च यत्फलितं तदाह—**सर्वाः कन्या इति** ॥

कषः । ३ । ४ । ३४ । कर्मणीत्येव । कषादिष्वनुप्रयोगं वक्ष्यति । अत्र प्रकरणे पूर्वकाल इति न सम्बध्यते । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः । एकस्यापि धात्वर्थस्य निमूलादिविशेषणसंबन्धाद्भेदः[1] । तेन सामान्यविशेषभावेन विशेषणविशेष्यभावः ॥ ( ५१७८ ) सू० शुष्कचूर्णरूक्षेषु पिषः । ३ । ४ । ३५ । एषु कर्मसूपपदेषु पिषेर्णमुल् । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् ॥ ( ५१७९ ) सू० समूलाकृतजीवेषु हन्कृञ्ग्रहः । ३ । ४ । ३६ । कर्मणीत्येव । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवति इति जीवः । इगुपधलक्षणः कः । जीवन्तं गृह्णातीत्यर्थः ॥ ( ५१८० ) सू० करणे हनः । ३ । ४ । ३७ । पादघातं हन्ति । पादेन हन्तीत्यर्थः । यथाविध्यनुप्रयोगार्थः सन्निप्रत्ययसमासार्थोऽयं योगः । भिन्नधातुसम्बन्धे तु हिंसार्थानां चेति वक्ष्यते ॥ ( ५१८१ ) सू० स्नेहने पिषः । ३ । ४ । ३८ । स्निह्यते येन तस्मिन् करणे पिषेर्णमुल् । उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः ॥ ( ५१८२ ) सू० हस्ते वर्तिग्रहोः । ३ । ४ । ३९ । हस्तार्थे करणे । हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुलिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् ॥ ( ५१८३ ) सू० स्वे पुषः । ३ । ४ । ४० । करण इत्येव । स्व इत्यर्थग्रहणम् । तेन स्वरूपे पर्याये विशेषे च णमुल् । स्वपोषं पुष्णाति । धनपोषम् । गोपोषम् ॥ ( ५१८४ ) सू० अधिकरणे बन्धः । ३ । ४ । ४१ । चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः ( ५१८५ ) सू० संज्ञायाम् । ३ । ४ । ४२ । बध्नातेर्णमुल् संज्ञायाम् । क्रौञ्चबन्धं बद्धः । मयूरिकाबन्धम् । अट्टालिकाबन्धम् । बन्धविशेषाणां संज्ञा एताः ॥ ( ५१८६ ) सू० कर्त्रोर्जीवपुरुषयोर्नशिवहोः । ३ । ४ । ४३ । जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः[2] । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः ॥ ( ५१८७ ) सू० ऊर्ध्वे शुषिपूरोः । ३ । ४ । ४४ । ऊर्ध्वे कर्तरि । ऊर्ध्वशोषं शुष्यति । वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः ॥ ( ५१८८ ) सू० उपमाने कर्मणि च । ३ । ४ । ४५ । चात्कर्तरि । घृतनिधायं निहितं जलम् । घृतमिव सुरक्षितमित्यर्थः । अजकनाशं नष्टः । अजक इव नष्ट इत्यर्थः ॥ ( ५१८९ ) सू० कषादिषु[3] यथाविध्यनुप्रयोगः । ३ । ४ । ४६ । यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्य इत्यर्थः । तथैवोदाहृतम् ॥ ( ५१९० ) सू० उपदंशस्तृतीयायाम् । ३ । ४ । ४७ । इतः प्रभृति पूर्वकाल इति संबध्यते । तृतीयाप्रभृतीन्यन्यतरस्यामिति वा समासः । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशम् । दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात्तृतीया । यद्यप्युपदंशिना सह न शाब्दः सम्बन्धस्तथाऽप्यार्थोऽस्त्येव कर्मत्वात् । एतावतैव सामर्थ्येन प्रत्ययः समासश्च । तृतीयायामिति वचनसामर्थ्यात् ॥ ( ५१९१ ) सू० हिंसार्थानां च समानकर्मकाणाम् ।

---

चेलानि शब्दायन्ते तथा वृष्ट इत्यर्थः । अन्ये तु 'क्नूयी शब्दे उन्दे च', 'उन्दी क्लेदने', 'क्लिदू आर्द्रीभावे' इत्येवं क्नोपमिति णमुलन्तस्य प्रकृत्यर्थं पर्यालोच्य यथा वर्षणेन चेलान्यार्द्रीभवन्ति तावद्वृष्ट इति व्याचख्युः ॥ ( ५१७७ ) **निमूलमिति** । निर्गतं मूलमस्य निमूलं, सह मूलेन समूलम् । निमूलसमूलकषणाभिन्नं कषणमिति शाब्दबोधः ॥ **तेनेति** । अत्रेदं बोध्यम्—सामान्यं विशेष्यं, विशेषस्तु विशेषणम् । आम्रो वृक्ष इत्यादौ आम्रो विशेषणं, वृक्षस्तु विशेष्यमिति सर्वजनानुभवात् । यतश्चात्र निमूलकषणादिकं विशेषणं, केवलकषणं तु विशेष्यमिति ॥ ( ५१८१ ) ॥ **स्नेहने**-। 'शुष्कचूर्ण-५०७८' इति सूत्रे एव स्नेहनग्रहणं न कृतम् । तत्र हि 'कर्मणि दृशिविदोः-५१७२' इति सूत्रात्कर्मणीत्यनुवर्तते, इह तु पूर्वसूत्रात् 'करणे' इत्यनुवर्तनीयमिति ॥ ( ५१८२ ) **हस्ते**-। हस्त इत्यर्थग्रहणं तदाह—**हस्तार्थे इति** ॥ ( ५१८३ ) **संज्ञायाम्** । अनधिकरणार्थ आरम्भः ॥ ( ५१८९ ) **तथैवेति** । निमूलकाषं कषतीत्याद्युदाहृतमित्यर्थः ॥ ( ५१९० ) **मूलकोपदंशमिति** । अयमर्थः—मूलकेन भुङ्क्ते, किं कृत्वा, उपदश्य, किमुपदश्य, अर्थान्मूलकमिति संबध्यते ॥ **एतावतैवेति** । शाब्दान्वयाभावेऽपि आर्थिकान्वयमात्रेणेत्यर्थः ॥ **वचनसामर्थ्यादिति** । यदि हि तृतीयान्तेन शाब्दान्वये सत्येव प्रत्ययो भवेत्तर्हि 'करणे हनः ५१८०' इतिवत् 'उपदंशः करणे' इत्येव ब्रूयात् । ततश्च क्रियान्तरं प्रति करणत्वं मूलकेनेत्यस्येष्टमिति भावः । एतच्च मनोरमाग्रन्थानुसारेणोक्तम् । अत्र केचित्—नन्वेवम् 'उपदंशः कर्मणि' इत्येव सूत्रमस्तु अत्र 'उपदंशः' इत्येवास्तु 'उपमाने कर्मणि-५१८८' इत्यतः कर्मणीत्यनुवर्त्य कर्मण्युपपदे उपपूर्वकाद्दंशेर्णमुलिति व्याख्यायतां किमनया कुसृष्ट्येति । न चैवं कर्मण्युपपदे नित्यसमासः स्यादिति वाच्यम्, 'करणे' इत्युक्तेऽप्युक्तदोषस्य तुल्यत्वात् । न च 'तृतीयाप्रभृतीनि-११३०' इति सूत्रे 'करणप्रभृतीनि' इत्युक्ते नास्त्येव दोषः, 'करणे हनः ५१८०' इत्यारभ्य विकल्प इति संदेहवारणाय 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति परिभाषास्वीकारादिति वाच्यम्, 'तृतीयाप्रभृतीनि-११३०' इति सूत्रे

---

१ **भेद इति** । विशेष्यतया प्रतीयमानसामान्यधर्मावच्छिन्नात् पृथक्त्वेन भानम्, कषादिषु यथाविधीत्यारम्भादेवमेव प्रयोगः ॥ २ जीवकर्तृकनाशाभिन्नो नाश इति शाब्दबोधे वृत्ते यत्फलितं तदाह—**जीवो नश्यतीति** ॥ ३ **कषादिष्विति** । कषादिप्रकृतिकणमुल्प्रत्ययस्य धातुसम्बन्धाधिकारे विधानादनुप्रयोगे सिद्धे यथाविध्येवानुप्रयोग इति नियमार्थमिदं सूत्रम् । यथाविधीत्यस्य विधानमनतिक्रम्येत्यर्थः, विधानस्य यत्सम्बन्धित्वं तस्यैवानुप्रयोगे तदनतिक्रमो भवतीत्याह—**यस्मादिति** ॥

३ । ४ । ४८ । तृतीयान्ते उपपदेऽनुप्रयोगधातुना समानकर्मकाद्धिंसार्थाण्णमुल् स्यात् । दण्डोपघातं गाः कालयति । दण्डेनोपघातम् । दण्डताडम् । समानकर्मकाणामिति किम् । दण्डेन चोरमाहत्य गाः कालयति ॥ (५१९२) ॐ सप्तम्यां चोपपीडरुधकर्षः । ३ । ४ । ४९ । उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् स्यात् । पार्श्वोपपीडं शेते । पार्श्वयोरुपपीडम् । पार्श्वाभ्यामुपपीडम् । व्रजोपरोधं गाः स्थापयति । व्रजेन व्रजे उपरोधं वा । पाण्युपकर्षं धानाः संगृह्णाति । पाणावुपकर्षम् । पाणिनोपकर्षम् ॥ ( ५१९३ ) ॐ समासत्तौ । ३ । ४ । ५० । तृतीयासप्तम्योर्धातोर्णमुल् स्यात्सन्निकर्षे गम्यमाने । केशग्राहं युध्यन्ते । केशेषु गृहीत्वा । हस्तग्राहम् । हस्तेन गृहीत्वा ॥ ( ५१९४ ) ॐ प्रमाणे च ।३।४।५१। तृतीयासप्तम्योरित्येव । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुलेन द्व्यङ्गुले वोत्कर्षम् ॥ (५१९५) ॐ अपादाने परीप्सायाम् । ३।४।५२। परीप्सा त्वरा । शय्योत्थायं धावति॥ (५१९६) ॐ द्वितीयायां च ।३।४।५३। परीप्सायामित्येव । यष्टिग्राहं युध्यन्ते । लोष्टग्राहम् ॥ (५१९७) ॐ अपगुरो णमुलि । ६ । १ । ५३ । गुरी उद्यमने इत्यस्यैचो वा आत्स्याण्णमुलि । अस्यपगारं युध्यन्ते । अस्यपगोरम् ॥ (५१९८) ॐ स्वाङ्गेऽध्रुवे । ३ । ४ । ५४ । द्वितीयायामित्येव । अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल् । भ्रूविक्षेपं कथयति । भ्रुवं विक्षेपम् । अध्रुवे किम् । शिर उत्क्षिप्य । येन विना न जीवनं तद्ध्रुवम् ॥[1] ( ५१९९ ) ॐ परिक्लिश्यमाने च । ३ । ४ । ५५ । सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते णमुल् स्यात् । उरः प्रतिपेषं युध्यन्ते । कृत्स्नमुरः पीडयन्त इत्यर्थः । उरोविदारं प्रतिचस्करे नखैः । ध्रुवार्थमिदम् ॥ ( ५२०० ) ॐ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः । ३ । ४ । ५६ । द्वितीयायामित्येव । द्वितीयान्ते उपपदे विश्यादिभ्यो णमुल् स्याद्व्याप्यमाने आसेव्यमाने चार्थे गम्ये । गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः । क्रियायाः पौनःपुन्यमासेवा । नित्यवीप्सयोरिति द्वित्वं तु न भवति, समासेनैव स्वभावतस्तयोरुक्तत्वात् । यद्यप्याभीक्ष्ण्ये णमुलुक्त एव तथापि उपपदसंज्ञार्थमासेवायामिह पुनर्विधिः । गेहानुप्रवेशमास्ते । गेहङ्गेहमनुप्रवेशम् । गेहमनुप्रवेशमनुप्रवेशम् । एवं गेहानुप्रपातम् । गेहानुप्रपादम् । गेहानुस्कन्दम् । असमासे तु गेहस्य णमुलन्तस्य च पर्यायेण द्वित्वम् ॥

---

'कर्मणिप्रभृतीनि-' इत्युक्तेऽपि दोषाभावात् । 'कर्मण्याक्रोशे कृञः खमुञ् ५१६८' 'कर्मणि दृशिविदोः-५१७२' इत्यारभ्य विकल्प इति संदेहस्य 'व्याख्यानतो विशेषप्रतिपत्तिः-' इति परिभाषया वारयितुं शक्यत्वात् । तस्मात् 'उपदंशः करणे' इत्येव ब्रूयात् इति मनोरमा चिन्त्येत्याहुः । वस्तुतस्तु 'कर्मणिप्रभृतीन्यन्यतरस्याम्' इत्युक्ते 'उपमाने कर्मणि च ५१८८' इत्यतः कर्मणीत्यनुवर्त्य 'उपदंशः' इत्येव सूत्रमिति स्वीकारपक्षे कषादिषु यथाविध्यनुप्रयोगोऽपि विकल्पेन स्यात् । मण्डूकप्लुत्याश्रयणं त्वगतिकगतिः । 'उपदंशः कर्मणि' इति सूत्रस्वीकारपक्षेऽपि मूलकोपदंशमिति समासस्य वैकल्पिकत्वात्समासाभावपक्षे मूलकमुपदंशमिति वाक्यं स्यात्, इष्यते तु मूलकेनोपदंशमिति । 'करणेप्रभृतीनि' इति मनोरमोक्तौ तु समासाभावपक्षे मूलकेनोपदंशमिति सिध्यत्येव, करणतृतीयायाः प्रवृत्तेरिति दिक् ॥ ( ५१९१ ) **कालयतीति** । 'कल विक्षेपे' चुरादिः । प्रेरयतीत्यर्थः ॥ **दण्डताडमिति** । 'तड आघाते' अयमपि चुरादिरेव ॥ ( ५१९२ ) **सप्तम्यां चो-** । उपपूर्वेभ्य इति । सूत्रे पीडादीनां समाहारद्वन्द्वं कृत्वा उपपूर्वः पीडरुधकर्ष इति उत्तरपदलोपी समास इति भावः । इह सौत्रं पुंस्त्वं पञ्चम्यर्थे प्रथमेति ज्ञेयम् । कर्षेति शपा निर्देशः । 'कृष विलेखने' इत्यस्य गुणसहितस्योच्चारणात् । तत्फलं तुदादेर्व्युदासः । यद्यपि विलेखन एव सोऽपि पठ्यते, तथापि क्षेत्रविषयकविलेखन एव स प्रयुज्यते पञ्चभिर्हलैः कृषतीति दर्शनात् । एवं च तौदादिकात् कृषेः क्त्वाप्रत्यय एव भवति, क्षेत्रे उपकृष्य हलेनोपकृष्येति न त्विह णमुलिति स्थितमाकरे ॥ ( ५१९३ ) **समासत्तौ** । **केशग्राहमिति** । केशेषु ग्रहणं भवतु वा मा भूत् संनिकर्षप्रतिपादनपरमेतत् ॥ (५१९४) **द्व्यङ्गुलोत्कर्षमिति** । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम् । 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ११३२' इत्यच् समासान्तः । द्व्यङ्गुलेनोत्कृष्य परिच्छिद्येत्यर्थः । स्वल्पः खण्डः खण्डिका, ह्रस्वः खण्डः खण्डिकेति मनोरमायामुक्तम् । यद्यपि ह्रस्वशब्दो वामनपर्यायतया चेतनेष्वेव प्रायेण प्रयुज्यते 'अल्पे २७६६', 'ह्रस्वे २७६७' इति पृथक्सूत्रस्वारस्यात् । तथापि ह्रस्वदीर्घ इत्यादिनिर्देशादचेतनेष्वपि क्वचिद्भवतीत्याहुः ॥ (५१९६) **द्विती-** । **परीप्सायामित्येवेति** । कथं तर्हि 'अनुदात्तं पदमेकवर्जम् ५५१५' इति, नह्यत्र त्वरा गम्यते । अत्राहुः-अस्यां हि परिभाषायां त्वरा विवक्षिता, तेनायमर्थः। उदात्तः स्वरितो वा यत्र विधीयते, तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्त्तव्यं न विलम्बितव्यमिति ॥ **यष्टिग्राहमित्यादि** । एवं खलु युद्धाय त्वरन्ते यदासन्नं यष्ट्यादिकमपि गृहीत्वा धावन्ति नायुधं प्रतीक्षन्त इति भावः॥ (५१९७) **अस्यपगोरमिति** । असिमुद्यम्येत्यर्थः ॥ ( ५२०० ) **उपपदसंज्ञार्थमिति** । 'विशिपति-५२००' इति सूत्रे 'द्वितीयायाम्' इत्यनुवर्तनात्तदन्तस्योपपद-

---

1 अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात् ध्रुवपदार्थं तत्पदाद-येन विनेति ॥

(५२०१) **अस्यतितृषोः क्रियान्तरे कालेषु**।३।४।५७। क्रियामन्तरयति व्यवधत्त इति क्रियान्तरः। तस्मिन्धात्वर्थे वर्तमानादस्यतेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषु उपपदेषु णमुल् स्यात्। द्व्यहात्यासं गाः पाययति। द्व्यहमत्यासम्। द्व्यहतर्षम्। द्व्यहन्तर्षम्। अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः॥ (५२०२) **नाम्न्यादिशिग्रहोः**।३।४।५८। द्वितीयायामित्येव। नामादेशमाचष्टे। नामग्राहमाह्वयति॥ (५२०३) **अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ**।३।४।५९। अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य नीचैः कथनम्। उच्चैःकृत्य। उच्चैः कृत्वा। उच्चैःकारमप्रियमाचष्टे। नीचैःकृत्य। नीचैः कृत्वा। नीचैःकारं प्रियं ब्रूते॥ (५२०४) **तिर्यच्यपवर्गे**।३।४।६०। तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ स्तः समाप्तौ गम्यायाम्। तिर्यक्कृत्य तिर्यक्कृत्वा तिर्यक्कारं गतः। समाप्य गत इत्यर्थः। अपवर्गे किम्। तिर्यक्कृत्वा काष्ठं गतः॥ (५२०५) **स्वाङ्गे तस्प्रत्यये कृभ्वोः**।३।४।६१। मुखतःकृत्य गतः। मुखतः कृत्वा। मुखतःकारम्। मुखतोभूय। मुखतो भूत्वा। मुखतोभावम्॥ (५२०६) **नाधार्थप्रत्यये च्व्यर्थे**।३।४।६२। नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलौ स्तः। अनाना नाना कृत्वा नानाकृत्य। नानाकारम्। विनाकृत्य। विना कृत्वा। विनाकारम्। नानाभूय। नाना भूत्वा। नानाभावम्। अनेकं द्रव्यमेकं भूत्वा एकधाभूय। एकधा भूत्वा। एकधाभावम्। एकधाकृत्य। एकधा कृत्वा। एकधाकारम्। प्रत्ययग्रहणं किम्। हिरुक्कृत्वा। पृथग्भूत्वा॥ (५२०७) **तूष्णीमि भुवः**।३।४।६३। तूष्णींशब्दे उपपदे भुवः क्त्वाणमुलौ स्तः। तूष्णींभूय। तूष्णींभूत्वा। तूष्णींभावम्॥ (५२०८) **अन्वच्यानुलोम्ये**।३।४।६४।

---

संज्ञार्थमित्यर्थः॥ (५२०३) **अव्ययेऽयथेति**। न यथाऽभिप्रेतमयथाऽभिप्रेतं तथाऽऽख्यान इत्यर्थः। प्रियस्योच्चैः अप्रियस्य नीचैःकथनं यथाभिप्रेताख्यानम्। तद्विपरीताख्याने इति यावत्। ननु 'अप्रियाख्याने' इत्येव कुतो नोक्तमिति चेत् अत्राहुः— प्रियस्य नीचैः कथनमपि प्रियाख्यानमेव, न त्वप्रियाख्यानमिति नीचैःकृत्य नीचैःकारं प्रियं ब्रूते इति प्रयोगो न स्यात्। अप्रियस्य नीचैः कथनमप्यप्रियाख्यानमिति नीचैःकृत्य नीचैःकारमप्रियं ब्रूते इति प्रयोगोऽपि स्यादित्ययथाभिप्रेताख्याने इत्युक्तमिति॥ (५२०४) **तिर्यक्कृत्वेति**॥ अनृजुत्वादग्रतः स्थितं पार्श्वतः कृत्वा गत इत्यर्थः॥ (५२०५) **स्वाङ्गे—**। तस् प्रत्ययो यस्मात्तत्प्रत्ययस्तस्मिन्स्वाङ्गे उपपदे इत्येके। 'प्रत्ययग्रहण—' परिभाषया तस्प्रत्ययान्ते स्वाङ्गे इत्यन्ये। तस् चासौ प्रत्ययश्चेति कर्मधारयः। तस्प्रत्यये परतो यत्स्वाङ्गं तस्मिन्नुपपद इति तु प्राञ्चः। तत्र यद्यपि स्वाङ्गमात्रं नोपपदं तथापि तस्मिन्नित्येतत्प्रकृतिप्रत्ययसमुदायपरमिति बोध्यम्॥ **मुखतःकारम्। मुखतोभूयेति**। क्त्वाणमुलोः कृभुवोश्च यथासंख्यं नेष्यते इति भावः। मुखत इत्यत्राद्यादित्वात्सप्तम्यर्थे तसिः। प्रत्ययग्रहणं किम्, मुखे तस्यति मुखतः 'तसु उपक्षये' क्विप्। धातुत्वादेव 'अत्वसन्तस्य—५७०' इति दीर्घो न। मुखतः कृत्वा गत इति काशिकादौ स्थितम्। वस्तुतस्तु प्रत्ययपरिभाषयैवेष्टसिद्धेः प्रत्ययग्रहणं सुत्यजम्॥ (५२०६) **नाधार्थ—**। नाञौ 'विनञ्भ्याम्—२४६९' इति विहितौ नानाञौ। धार्थाः 'द्वित्र्योश्च धमुञ् २७०२' इति धमुञादयः॥ 'संख्याया विधार्थे धा २६९९' इति धाप्रत्ययो धार्थको भवतीत्याशयेनोदाहरति—**एकधाभूयेत्यादि**। एवं द्वैधंकृत्य द्वैधंभूय द्वैधम्भावमित्याद्युदाहर्तव्यम्॥ ननु नानाञौ प्रत्ययौ धा च प्रत्ययः, धमुञादिविधौ तु 'एकाद्धो ध्यमुञन्यतरस्याम् २७०१' इत्यतो ध इत्यनुवर्त्य तेषामादेशत्वाश्रयणेऽपि स्थानिवद्भावेन ध्यमुञादेर्धाप्रत्ययो भवतीति किमर्थं प्रत्ययग्रहणमित्याक्षिपति—**प्रत्ययग्रहणमिति**। यद्यप्युक्तरीत्या धाग्रहणेन ध्यमुञादेर्ग्रहणं संभवतीत्यर्थग्रहणमिह व्यर्थम्, तथापि 'धमुञन्तात्स्वार्थे डदर्शनम् २७०३' इति डप्रत्ययान्तसंग्रहार्थमर्थग्रहणम्। तत्फलं तु द्वैधीकृत्येत्यादिप्रयोगः॥ (५२०७) **तूष्णीमि—**। कृञो निवृत्त्यर्थं भूग्रहणम्॥ (५२०८) **अन्वच्या—**। नन्विह 'अचः ५५८' इत्यकारलोपे 'चौ ५५९' इति पूर्वस्याणो दीर्घे 'अनूचि' इति निर्देष्टुमुचितम्। 'गुप्रागपाक्—१८५९' इति सूत्रे 'प्रतीचो यत्' इतिवत्, एवं 'तिर्यच्यपवर्गे ५२०४' इति सूत्रेऽपि तिरश्चीत्येव निर्देष्टुमुचितमिति चेत्। अत्र केचित्—शास्त्रोक्तं कार्यमर्थवदेव भवति अर्थश्च लोके प्रसिद्ध एव गृह्यते, 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः' इति न्यायात्। अतोऽनुकरणे न भविष्यतीत्यन्वचीति सम्यगेवेति। तच्चिन्त्यम्, एवं तर्हि 'क्षियो दीर्घात् ४०२२' इत्यादावियङादिकं न स्यात्। 'प्रतीचो यत्' इत्यपि न सिध्येदिति। वस्तुतस्तु

---

१ **नाम्नीति**—अत्र नाम्नीति न सुबन्तपरं, किन्तु स्वरूपपरं तत्त्वे सुपीत्येव वदेदिति बोध्यम्॥ २ **तिर्यचीति**। अत्र तिरश्चीति पठितव्ये तिर्यचीति सौत्रः प्रयोगः। न च तिर्यच्यपवर्गे इत्यत्र तिर्यच् इत्यनुकरणं शब्दविशेषस्य, तत्रानुकार्यस्वरूपभङ्गाभिया 'एतदोऽन्' इत्यत्र त्यदाद्यत्वमिवाल्लोपो न कृत इत्येव कुतो नोक्तम्, किं सौत्रत्वकल्पनया इति वाच्यम्, 'न हि प्रयोजनानुवर्ति प्रमाणम्' इति न्यायविरुद्धत्वात्। सौत्रत्वस्वीकारे तु 'बाधकानि निपातनानि' इत्यनेन शास्त्राप्रवृत्तिरुचितैव॥

अन्वक्शब्दे उपपदे भुवः क्त्वाणमुलौ स्तः आनुकूल्ये गम्यमाने । अन्वग्भूय आस्ते । अन्वग् भूत्वा । अन्वग्भावम् । अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वा आस्त इत्यर्थः । आनुलोम्ये किम् । अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वेत्यर्थः ॥

इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम् । विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥ १ ॥
भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी । प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः ॥ २ ॥
इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्धं समाप्तम् ॥

---

'प्रकृतिवदनुकरणम्—' इत्यस्य वैकल्पिकत्वादन्वचीत्यादिनिर्देशे न दोषः वैकल्पिकत्वञ्च 'यत्तदेतेभ्यः-२४९६' इति सूत्रे त्यदाद्यत्वस्य चरणादेकशेषाभावदर्शनाच्च निर्णीयत इति प्रागेव प्रपञ्चितम् ॥ अग्रत इत्यादि । अन्वक्छब्दस्यानुकूल्यमात्रे विश्रान्तेर्देशविशेषवाचित्वे नियमो नेति ध्वनयितुमिदम् ॥ पृष्ठतो भूत्वेत्यर्थ इति । इहान्वक्छब्देनानुकूलोऽननुकूलो वेति न स्पृश्यते, तस्य देशविशेषमात्रे पर्यवसानात् । प्रमाणान्तरेण क्वचिदनुकूलालाभेऽपि अन्वक्छब्दस्य तत्समर्पणे व्यापाराभावाण्णमुल् न, किन्तु क्त्वैव भवतीति व्यवस्था बोध्या ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामिचरणसेवकज्ञानेन्द्रसरस्वतीकृतायां
सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां कृदन्तप्रकरणम् ॥

समाप्तेयं तत्त्वबोधिनी ।

श्रीगणेशाय नमः।

# वैदिकप्रकरणं प्रारभ्यते।

(५२०९) ॐ छन्दसि पुनर्वस्वोरेकवचनम्। १।२।६१। द्वयोरेकवचनं वा स्यात्। पुनर्वसुर्नक्षत्रं पुनर्वसू वा। लोके तु द्विवचनमेव॥ (५२१०) ॐ विशाखयोश्च। १।२।६२। प्राग्वत्। विशाखा नक्षत्रम्। विशाखे॥ (५२११) ॐ षष्ठीयुक्तश्छन्दसि वा। १।४।९। षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात्। क्षेत्रस्य पतिना वयम्। इह वेति योगं विभज्य छन्दसीत्यनुवर्तते। तेन सर्वे विधयश्छन्दसि वैकल्पिकाः। बहुलं छन्दसीत्यादिरस्यैव प्रपञ्चः। यचि भम्॥ (५२१२) ॐ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्॥ नभसा तुल्यं नभस्वत्। भत्वाद्रुत्वाभावः। अङ्गिरस्वदङ्गिरः। मनुष्वदग्ने। जनेरुसिरिति विहित उसिप्रत्ययो मनेरपि बाहुलकात्॥ (५२१३) ॐ वृषण्वस्वश्वयोः॥ वृष वर्षकं वसु यस्य स वृषण्वसुः। वृषा अश्वो यस्य वृषणश्वः। इहा-

---

सिन्दूरेण विराजितं त्रिनयनं दिक्संख्यदोर्भिर्युतं भक्तानुग्रहकारकं प्रमदयाऽऽश्लिष्टं सदानन्दनम्।
अष्टाविंशतिवर्णकैश्च सततं यं चिन्तयन्ते जनास्तं देवं गणपं स्मरामि सततं चन्द्रार्धचूडं विभुम्॥ १॥
यस्तर्कादिसमस्ततन्त्रकमलव्रातप्रसादेष्विव प्रत्यक्षप्रमितः परः किरणवानन्वर्थगोवर्द्धनः।
सोऽयं पण्डितमण्डलोद्धटरटद्वादीन्द्रवृन्दाग्रणीः श्रीरामाङ्घ्रिनिषेवकः समजनि **श्रीमौनिगोवर्द्धनः**॥ २॥
रघुनाथपदारविन्दसेवावशतस्तस्य बभूव नन्दनः। **रघुनाथ** इतीड्यनामगम्यो रघुनाथाङ्घ्रिनिषेवकः सुधीः॥ ३॥
बभूवुस्तस्य चत्वारस्तनयाः सुनया बुधाः॥ **महादेवाभिधः** श्रेष्ठो महाभाष्यसुभाषितः॥ ४॥
**रामकृष्णो** द्वितीयोऽसौ रामकृष्णाङ्घ्रिसेवकः। तृतीयो **जयकृष्णो**ऽस्मि **श्रीकृष्णा**यास्तनूद्भवः॥ ५॥
श्रीमत्सिद्धान्तकौमुद्याः स्वरवैदिकखण्डयोः। नत्वा मुनित्रयं हृद्यां टीकां कुर्वे **सुबोधिनीम्**॥ ६॥
सुशब्दव्रातश्रीकुमुदवनविद्योतनकरी सदासद्व्युत्पत्तिप्रसरणपरानन्दनकरी।
कुशब्दध्वान्तस्य प्रसभमभिविध्वंसनकरी कृतिर्भूयादेषा बुधजनमनःप्राङ्गणचरी॥ ७॥

(५२०९) इयता प्रबन्धेन लौकिकेषु शब्देष्वन्वाख्यातेष्वपि वैदिकान्वाख्यानमवशिष्यते। न चेदिदमप्रयोजनम् 'रक्षोहागमलघ्वसंदेहाः प्रयोजनम्' इति वदता भाष्यकारेण वेदरक्षाया व्याकरणारम्भस्य प्रयोजनत्वेन मुख्यतयाऽभिधानात्, ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति वेदार्थज्ञानोपायतया वेदाङ्गत्वेनैव व्याकरणाध्ययनविधानाच्च। नन्वेवमपि वैदिकशब्दानां लौकिकशब्दाभिन्नत्वात्तदनुशासनेनैव सिद्धे किमर्थमेषामनुशासनमिति चेत्। न, लौकिकशब्देभ्यो भिन्ना अपि वैदिकशब्दाः सन्ति। तद्यथा 'त्मना देवेषु, मध्वा जभार, गृभ्णामि ते' इत्यादयो वेदे दृश्यन्ते। लोके तु—आत्मना, जहार, गृह्णामीत्यादयः। अत एव भाष्यकारो लौकिकेभ्यो वैदिकान् भेदेन व्यपदिशति—'अथ शब्दानुशासनम्। केषां शब्दानां लौकिकानां वैदिकानां चेति' इति। तेषामाख्यानमावश्यकमिति मनसि विभाव्याह—**छन्दसीत्यादि**। पुनर्वसुशब्देनोद्भूतावयवस्य ज्योतिःसमुदायस्याभिधानाद् द्वयोर्द्विवचने प्राप्ते एकवचनं विधीयते तदाह—**द्वयोरित्यादि**॥ **वा स्यादिति**। 'जात्याख्यायाम्–११७०' इत्यतः अन्यतरस्यामित्यनुवर्तनात्॥ **लोके त्विति**। 'गां गताविव दिवः पुनर्वसू' इत्यादौ॥ **(५२१०) विशाख-। प्राग्वदिति**। द्वयोरेकवचनं वा स्यादित्यर्थः॥ **विशाखेति**। अमरस्तु 'राधा विशाखा' इति प्रयुञ्जानो द्विवचननियमं नेच्छति, सूत्रं तूदासीनम्॥ **(५२११) षष्ठीयुक्तश्छन्दसि वा**। 'पतिः समास एव ३६२' इत्यतः पतिरिति वर्तते, 'पतिः समास एव' इति नियमादसमासे न प्राप्नोतीति वचनमारभ्यते॥ **पतिनेति**। घित्वात् 'आङो ना–३४८' इति नाभावः। षष्ठीति किम्, 'मया पत्या जरदष्टिर्यथा सः'। छन्दसीति किम्, ग्रामस्य पत्ये॥ **योगं विभज्येति**। षष्ठीयुक्तश्छन्दसीति उक्त एवार्थः। ततो वा छन्दसीति वर्तते। यावदिह शास्त्रे कार्यं तच्छन्दसि वा भवति तदाह—**तेनेत्यादिना**॥ **(५२१२) नभोऽङ्गिरो-**। नभस् अङ्गिरस् मनुष् एषां वति परे, भत्वं वक्तव्यमित्यर्थः॥ **नभस्वदिति**। 'तेन तुल्यम्–२४०९' इति वतिः॥ भत्वफलमाह—**रुत्वाभाव इति**। 'ससजुषोः–२४२' इति प्राप्तस्य। तत्र हि 'पदस्य' इत्यनुवर्तते। अङ्गिरसा तुल्यमङ्गिरस्वत्। अत्रापि देहलीदीपकन्यायेन रुत्वाभाव इति संबध्यते॥ **मनुष्वदिति**। मनुषा तुल्यम्। अत्र भत्वात् 'आदेशप्रत्यययोः २९८' इति षः। पदसंज्ञायां तु रुत्वं स्यात् न षत्वम्, 'अपदान्तस्य–२९६' इति वचनात्॥ **बाहुलकादिति**। बहूनर्थाँल्लातीति बहुलम्। 'ला आदाने' अस्मात् 'आतोऽनुपसर्गे–२८८३' इति कः। बहुलस्य भावो बाहुलकं मनोज्ञादित्वाद् वुञ्। **(५२१३) वृष-**। वृषन्नित्येतद् वसु—अश्व—एतयोश्च परतो भं स्यात्। निपातनान्येतानि छन्दोविषयाणीति कैयटः॥ **वृषण्वसुरिति**। लोके वृषवसुः। वृषाश्वः॥

न्तवर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तो भत्वाद्वार्यते । अत एव पदान्तस्येति णत्वनिषेधोऽपि न । अल्लोपोऽन ईत्येल्लोपो न, अनङ्गत्वात् ॥ ( ५२१४ ) ॐ अयस्मयादीनि च्छन्दसि । १ । ४ । २० । एतानि च्छन्दसि साधूनि । भपदसंज्ञाधिकाराद्यथायोगं संज्ञाद्वयं बोध्यम् । तथा च वार्तिकम् ॥ ( ५२१५ ) ॐ उभयसंज्ञान्यपीति वक्तव्यम् । इति॥ स सुष्टुभा स ऋक्वता गणेन । पदत्वात्कुत्वम् । भत्वाज्जश्त्वाभावः । जश्त्वविधानार्थाया: पदसंज्ञाया भत्वसामर्थ्येन बाधात् । नैनं हिन्वन्त्यपि वाजिनेषु । अत्र पदत्वाद् जश्त्वम् । भत्वात्कुत्वाभावः ॥ ते प्राग्धातोः ॥ ( ५२१६ ) ॐ छन्दसि परेऽपि । १ । ४ । ८१ । ( ५२१७ ) ॐ व्यवहिताश्च । १ । ४ । ८२ । हरिभ्यां याह्योक आ । आ मन्द्रैरिन्द्र हरिभिर्याहि ॥ ( ५२१८ ) ॐ इन्धिभवतिभ्यां च । १ । २ । ६ । आभ्यां परो लिट् कित् । समीधे दस्युहन्तमम् । पुत्र ईधे अथर्वणः । बभूव । इदं प्रत्याख्यातम् । ( ५२१९ ) इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति ॥ इति प्रथमोऽध्यायः ॥ १ ॥

( ५२२० ) ॐ तृतीया च होश्छन्दसि । २ । ३ । ३ । जुहोतेः कर्मणि तृतीया स्याद् द्वितीया च । यवाग्वाऽग्निहोत्रं जुहोति । अग्निहोत्रशब्दोऽत्र हविषि वर्तते । यस्याग्निहोत्रमधिश्रितममेध्यमापद्येतेत्यादिप्रयोगदर्शनात् । अग्नये हूयते इति व्युत्पत्तेश्च । यवाग्वाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः ॥ ( ५२२१ ) ॐ द्वितीया ब्राह्मणे । २ । ३ । ६० । ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात् । षष्ठ्यपवादः । गामस्य तदहः सभायां दीव्येयुः ॥ ( ५२२२ ) ॐ चतुर्थ्यर्थे बहुलं छन्दसि । २ । ३ । ६२ । षष्ठी स्यात् । पुरुषमृगश्चन्द्र-

---

नलोपः प्राप्त इति । 'न लोपः प्रातिपदिकान्तस्य ३३९' इत्यनेन ॥ **अत एवेति** । भत्वादेवेत्यर्थः । **अनङ्गत्वादिति** । 'अल्लोपोऽनः ३३५' इत्यत्र 'अङ्गस्य २८५' इत्यधिकारात् ॥ ( ५२१४ ) **अयस्मयादीनि**—। आनन्तर्याद्भसंज्ञाद्वारेणैव निपातनं प्राप्तमित्याह–**संज्ञाद्वयमिति**। नन्वनन्तरस्येति न्यायं बाधित्वोभयसंज्ञाविधाने किं प्रमाणमित्याशङ्कयाह–**तथा च वार्तिकमिति**॥(५२१५)**कुत्वमिति** । 'चोः कुः ५११' इत्यनेन ॥ **जश्त्वाभाव इति** । 'झलां जशोऽन्ते १३५' इति प्राप्तस्य ॥ **ऋक्वतेति** । अयस्मयादिषु ऋक्वतेत्यादयः समुदाया एव बोध्याः । तेन जश्त्वमस्तु, कुत्वं मा भूदिति वैपरीत्यं न प्रसज्येतेति बोध्यम् ॥ **नैनमिति**। वाचामिनाः प्रभवस्तेष्वप्येनं विद्वांसः न हिन्वन्ति, विवदितुं न गच्छन्तीत्यर्थः ॥ [ २९८५ ] **ते प्राक्**–। व्याख्यातम् ॥ ( ५२१६–५२१७ ) अस्यापवादमाह–**छन्दसीत्यादि** । गत्युपसर्गसंज्ञकाश्छन्दसि परे प्रयोक्तव्याः । अपिशब्दात्पूर्वे । व्यवहिता अपि गत्युपसर्गसंज्ञकाः प्रयोक्तव्याः । सूत्रद्वयस्योदाहरणे आह–**हरिभ्यामित्यादि** । आयाहीति प्राप्ते 'ते प्राक्–२९८५' इत्यत्र संज्ञानियमपक्षो भाष्ये उक्तः, ते इत्यनेन प्रादीनुपेत्येतत्पर्यन्तान्स्वरूपेण परामृश्य धातोः प्राक् प्रयुक्तानामेषां पूर्वसूत्रैकवाक्यतया संज्ञाविधानात् । अस्मिंश्च पक्षे 'छन्दसि परेऽपि ५२१६' 'व्यवहिताश्च ५२१७' इति सूत्रद्वयं न कर्तव्यम् ॥ ( ५२१८ ) **इन्धि**—। इन्धीत्युच्चारणार्थेन इकारेण निर्देशः 'सुट् तिथोः २९६५' इतिवत्, न तु 'इक्श्तिपौ–५०९५' इति इका, यलोपापत्तेः । 'असंयोगात्–३००२' इत्यतः लिट् किदित्यनुवर्तते तदाह–**लिट् किदिति** । 'ञिइन्धी दीप्तौ' । लिटः कित्वात् 'अनिदिताम्–५५७' इति नलोपः । संयोगात्परत्वात्पूर्वेणाप्राप्तौ वचनम् ॥ **बभूवेति** । कित्त्वाद्वृद्ध्यभावे 'भुवो वुक्–२९२८' इति वुक् । अत्र पित्त्वात्पूर्वेणाप्राप्तौ वचनम् ॥ **इदमिति** । इन्धीति सूत्रम् ॥ ( ५२१९ ) **छन्दोविषयत्वादिति** । अयमभिप्रायः—इन्धेर्भाषायाम् 'इजादेश्च––२९९६' इत्याम भाव्यं, छन्दसि तु 'अमन्त्रे' इति प्रतिषेधात् यद्यप्याम् नास्ति, तथापि 'छन्दस्युभयथा ५२७०' इति लिटः सार्वधातुकत्वे ङित्त्वात्समीधे इति नलोपः । श्नमभावस्त्वार्धधातुकत्वात्, छन्दसि दृष्टानुविधानात् ॥ **वुको नित्यत्वादिति** । 'परनित्य–७१' इति परिभाषया परान्नित्यस्य बलीयस्त्वात् । कृताकृतप्रसङ्गित्वेन नित्यत्वात् ॥ इति प्रथमोऽध्यायः ॥ १ ॥

( ५२२० ) **तृतीया**—। 'कर्मणि द्वितीया ७७१' इत्यतः कर्मणीति वर्तते । द्वितीयायां प्राप्तायां तृतीया विधीयते, चशब्दात्साऽपि भवति । तदाह–**कर्मणीति** । **यवाग्वेति** । अत्र यवागूशब्दात्तृतीया, अग्निहोत्रशब्दाच्च द्वितीया । अग्निहोत्रशब्दो हविर्वाचकः जुहोतिश्च प्रक्षेपणार्थः । यवाग्वभिन्नं हविरग्नौ प्रक्षिपतीत्यर्थस्तदाह–**यवाग्वाख्यमिति** । भिन्नविभक्त्यवरुद्धत्वेऽपि भिन्नार्थकविभक्त्यनवरुद्धत्वान्नामार्थयोरभेदान्वयः । भाष्ये चैतत्सूत्रं प्रत्याख्यातम् । अग्निहोत्रशब्दो ह्यग्नावपि वर्तते । 'यस्याग्निहोत्रं प्रज्वलितम्' इति दर्शनात् । हूयतेऽस्मिन्निति व्युत्पत्तेश्च । तदा यवागूशब्दाद् द्वितीया तदा अग्निहोत्रशब्दो ह्यग्नौ वर्तते जुहोतिश्च प्रीणने । यवाग्वा अग्निं प्रीणयतीत्यर्थः । यदा यवागूशब्दाद् द्वितीया तदा अग्निहोत्रशब्दो हविषि वर्तते । जुहोतिश्च प्रक्षेपणे । यवाग्वाख्यं हविर्द्रव्यं प्रक्षिपतीत्यर्थः ॥ (५२२१) **द्वितीया**–। 'दिवस्तदर्थस्य ९०३' इति वर्तते । तदाह–**ब्राह्मणेत्यादि** । सोपसर्गस्य च्छन्दसि 'विभाषोपसर्गे ९०४' इत्यनेन व्यवस्थितविभाषया सिद्धे निरुपसर्गार्थ आरम्भः॥ **षष्ठ्यपवाद इति** । 'दिवस्तदर्थस्य ९०३' इति प्राप्तायाः ॥ ( ५२२२ ) **चतुर्थ्यर्थे**–। बहुलग्रहणात् 'चन्द्रमसे कृष्णो

---

१–न चैवं लोकेऽपि यथेच्छं प्रयोगापत्तिः । क्वचिदिष्टापत्तेः । तथा च माघः–वारुणीमदविशङ्कमथ।विश्वक्षुपोऽभवदसाविव रागः' इति । भवति प्रेत्यादि तु नापादनीयम्, अनभिधानात्–इति मनोरमा ॥

मसे गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। वतस्पतिभ्य इत्यर्थः ॥ ( ५२२३ ) (वा॰) षष्ठ्यर्थे चतुर्थीति वाच्यम् ॥ या खर्वेण पिबति तस्यै खर्वः ॥ ( ५२२४ ) (सू॰) यजेश्च करणे। २। ३। ६३। इह छन्दसि बहुलं षष्ठी। घृतस्य घृतेन वा यजते ॥ ( ५२२५ ) (सू॰) बहुलं छन्दसि। २। ४। ३९। अदो घस्लादेशः स्यात्। घस्तान्नूनम्। लुङि [५२२१]मन्त्रे घसेति च्लेर्लुक्। अडभावः। सग्धिश्च मे ॥ ( ५२२६ ) (सू॰) हेमन्तशिशिरावहोरात्रे च च्छन्दसि। २। ४। २८। द्वन्द्वः पूर्ववल्लिङ्गः हेमन्तश्च शिशिरं च हेमन्तशिशिरौ। अहोरात्रे ॥ अदिप्रभृतिभ्यः [३२२९]शपः ॥ ( ५२२७ ) (सू॰) बहुलं छन्दसि। २। ४। ७३। वृत्रं हनति वृत्रहा। अहिः शयत उपपृक्। अत्र लुङ् न। अदादिभिन्नेऽपि कचिल्लुक्। त्राध्वं नो देवाः ॥ जुहोत्यादिभ्य[३३०७]ः श्लुः ॥ ( ५२२८ ) (सू॰) बहुलं छन्दसि। २। ४। ७६। दाति प्रियाणि चिद्वसु। अन्यत्रापि। पूर्णां विवष्टि ॥ ( ५२२९ ) (सू॰) मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः। २। ४। ८०। एभ्यो लेर्लुक् स्यान्मन्त्रे। अक्षन्नमीमदन्त हि। घस्लादेशस्य [२१६३]गमहनेत्युपधालोपे [३२१४]शासिवसीति षः। मा ह्वर्मित्रस्य धूर्त्तिः प्रणङ् मर्त्यस्य। नशेर्वेति [५०७]कुत्वम्। सुरुचो वेन आवः। मा न आवक्। आदित्याकारान्तग्रहणम्। आप्रा द्यावापृथिवी। परावर्ग्भारभृद्यथा। अक्रन्नुषासः। त्वे रयिं जागृवांसो अनुग्मन्।•मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणम्। अज्ञत वा अस्य दन्ताः। विभाषाऽनुवृत्तेः—न ता अगृभ्णन्नजनिष्ट हि षः ॥ इति द्वितीयोऽध्यायः ॥

---

रात्र्यै' इत्यादौ षष्ठ्यभावः ॥ (५२२४) **यजेः**–। यजेर्धातोः करणे कारके छन्दसि विषये बहुलं षष्ठी स्यात् ॥ (५२२५) **बहुलम्**–। 'अदो जग्धिः–४०९८' इत्यतः अद इति, 'लुङ्सनोः–३२३३' इत्यतः घस्ल इति च। अदो बहुलं घस्लादेशः स्यात् छन्दसि ॥ **घस्तामिति**। अदेर्लुङि रूपम् ॥ **अडभाव इति**। 'बहुलं छन्दस्यमाङ्योगे–५३९७' इत्यनेन ॥ नन्विदं 'लुङ्सनोः–३२३३' इत्यनेन सिद्धमित्याशङ्क्योदाहरणान्तरमाह–**सग्धिरिति**। अदनं ग्धिः। अदेः क्तिनि घस्लादेशे 'घसिभसोर्हलि च ५४०२' इत्युपधालोपे 'झलो झलि ३०४८' इति सलोपः। 'झषस्तथोः–३०४७' इति धत्वम्। घस्य जश्त्वम्। न च जश्त्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वम्। 'न पदान्त–७८' इति सूत्रेण जश्त्वे तन्निषेधात्। ततः समानशब्देन समासे कृते 'समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु १४५८' इति सूत्रेण समानस्य सः ॥ ( ५२२६ ) **हेमन्तशिशिरा**–। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ११६३' इति प्राप्तम् ॥ **अहोरात्रे इति**। अहश्च रात्रिश्चेति द्वन्द्वे कृते 'अहःसर्वैकदेश–११३३' इत्यनेन समासान्तोऽच्। 'यस्येति च ४३१' इतीकारलोपः। 'रात्राह्नाहाः पुंसि ११६६' इति प्राप्तम्। द्वित्वमतन्त्रम्। अहोरात्राणि विदधत्। छन्दसि किम्, हेमन्तशिशिरे। अहोरात्रौ। यद्यपि पाठक्रमेणेदं 'बहुलं छन्दसि ५२२५' इति घस्लादेशविधायकसूत्रात्पूर्वं व्याख्यातुं युक्तं, तथापि 'व्यत्ययो बहुलम् ५२६६' इति वक्ष्यमाणेन लिङ्गव्यत्ययविधायकेन गतार्थमिति ध्वनयितुं तथा न व्याख्यातम् ॥ ( ५२२७ ) **बहुलं छन्दसि**। बहुलं शपो लुक् स्यात्। 'अदिप्रभृतिभ्यः–३२२९' इत्युक्तं ततो न भवति। तथैवोदाहरति–**वृत्रं हनतीत्यादि**। हन्ति, शेते इति लोके ॥ **त्राध्वमिति**। 'त्रैङ् पालने' 'आदेच उपदेशेऽशिति ३१६३' इत्यात्त्वम्। त्रायध्वमिति लोके ॥ ( ५२२८ ) **दातीति**। ददातीति लोके ॥ **अन्यत्रापीति**। जुहोत्यादिभिन्नेऽपि श्लुर्भवतीति शेषः ॥ **विवष्टीति**। 'वश कान्तौ' अदादिः 'श्लौ ३३०८' इति द्वित्वम्। 'भृञामित् ३३१४' 'बहुलं छन्दसि ५४५८' इति सूत्रेणाभ्यासस्येकारः। 'व्रश्च–४११' इति षत्वं ष्टुत्वम् ॥ (५२२९) **मन्त्रे घस**–। घस अत्तेरादेशः। ह्वर 'ह्वृ कौटिल्ये' अस्य कृतगुणानुकरणं ह्वरेति। अकारस्तूच्चारणार्थः। 'णश अदर्शने', 'वृञ् वरणे', 'वृञ् संभक्तौ', 'दह भस्मीकरणे'। आत् आकारान्ताः 'प्रा पूरणे' इत्यादयः। 'वृजी वर्जने', 'डुकृञ् करणे', 'गम्लृ गतौ', 'जनी प्रादुर्भावे' ॥ **अक्षन्निति**। अत्तेर्लुङि झिः ॥ **घस्लादेशस्येति**। 'लुङ्सनोः–३२३३' इति विहितस्य ॥ **मा ह्वरिति**। माङि उपपदे ह्वरतेः लुङि तिप्। 'इतश्च २९६२' इतीकारलोपः। च्लेर्लुकि कृते 'सार्वधातुका–२९२२' इति गुणे कृते रपरत्वे 'हल्ङ्याब्–३५६' इति लोपः ॥ **प्रणगिति**। प्रपूर्वान्नशेर्लुङ्। 'हल्ङ्याब्–३५६' इति लोपः। 'उपसर्गादसमासेऽपि–३०५४' इति णत्वम्। मर्त्यस्येति मकारेऽनुनासिके परे 'यरोऽनुनासिके–१८०' इति ङः ॥ **कुत्वमिति**। पक्षे 'व्रश्च–४११' इति षत्वेन नडिति रूपं बोध्यम् ॥ **आव इति**। वृञो रूपम् ॥ **आधगिति**। आङ्पूर्वाद्दहेर्लुङ्। 'दादेर्धातोः–४४८' इति घः। 'एकाचो बशो भष्–४४९' इति भष्भावः ॥ **आप्रा इति**। आङ्पूर्वात्प्राधातोः सिप् रुत्वे यत्वे च यलोपः ॥ **परावर्गिति**। परापूर्वाद्वृजेस्तिप्, उपधागुणे 'चोः कुः ५१३' इति कुत्वम् ॥ **अक्रन्निति**। झेर्ङित्त्वाद् गुणाभावे यण् ॥ **अनुग्मन्निति**। अनुपूर्वाद्गच्छतेर्झिः। 'गमहन–३१५६' इत्युपधालोपः। ननु मन्त्रशब्दः संहितायां रूढ इति 'अज्ञत' इत्यादौ ब्राह्मणप्रयोगे लुक् न प्राप्नोतीत्याशङ्क्याह—**मन्त्रग्रहणमित्यादि** ॥ **अज्ञतेति**। 'गमहन—३१५६' इत्युपधालोपः। ब्राह्मणप्रयोगोऽयम्। मन्त्रेति किम्, अघसत्। अह्वार्षीत्। अनशत्। अवारीत्। अधाक्षीत्। अप्रासीः। अवर्जीत्। अकार्षीत्। अगमत्। अजनि। अजनिष्ट। इति द्वितीयोऽध्यायः ॥

(५२३०) (सू) **अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि।** ३ । १ । ४२ । आद्येषु चतुर्षु लुङि आम् अक इत्यनुप्रयोगश्च । अभ्युत्सादयामकः । अभ्युदसीषददिति लोके । प्रजनयामकः । प्राजीजनदित्यर्थः । चिकयामकः । अचैषीदित्यर्थे चिनोतेराम् द्विर्वचनं कुत्वं च । रमयामकः । अरीरमत् । पावयांक्रियात् । पाव्यादिति लोके । विदामक्रन् । अवेदिषुः ॥ (५२३१) (सू) **गुपेश्छन्दसि** । ३ । १ । ५० । च्लेश्चङ्वा । गृहानजूगुपतं युवम् । अगौप्तमित्यर्थः ॥ (५२३२) (सू) **नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः** । ३ । १ । ५१ । च्लेश्चङ् न । मात्वायतो जरितुः काममूनयीः । मा त्वाग्निर्ध्वनयीत् ॥ (५२३३) (सू) **कृमृदृरुहिभ्यश्छन्दसि** । ३ । १ । ५९ । च्लेरङ् वा । इदं तेभ्योऽकरं नमः । अमरत् । अदरत् । यत्सानोः सानुमारुहत् ॥ (५२३४) (सू) **छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि** । ३ । १ । १२३ । कृन्ततेर्निष्पूर्वात् क्यपि प्राप्ते ण्यत् । आद्यन्तयोर्विपर्यासः निसः षत्वं च । निष्टर्क्यं चिन्वीत पशुकामः । देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप् । दीर्घश्च । स्पर्धते वा उ देवहूये । प्र उत् । आभ्यां नयतेः क्यप् । प्रणीयः । उन्नीयः । उत्पूर्वाच्छिषेः क्यप् । उच्छिष्यः । मृङ्स्तृध्वृभ्यो यत् । मर्यः । स्तर्या । स्त्रियामेवायम् । ध्वर्यः । खनेर्यण्ण्यतौ । खन्यः । खान्यः । यजेर्यः । शुन्धध्वं दैव्याय कर्मणे देवयज्यायै । आङ्पूर्वात्पृच्छेः क्यप् । आपृच्छ्यं धरुणं वाज्यर्षति । सीव्यतेः क्यप् षत्वं च । प्रतिषीव्यः । ब्रह्माणि वदेर्ण्यत् । ब्रह्मवाद्यम् । लोके तु [३८८२] 'वदः सुपि क्यप् च' इति क्यप्ण्यतौ । भवतेः स्तौतेश्च ण्यत् । भाव्यः । स्ताव्यः । उपपूर्वाच्चिनोतेर्ण्यत् आयादेशश्च पृडे उत्तरपदे । उपचाय्यपृडम् ॥ (५२३५) (वा) **हिरण्य इति वक्तव्यम्** ॥ उपचेयपृडमन्यत् । मृड सुखने पृड चेत्यस्मादिगुपधलक्षणः [३२४०] कः ॥ (५२३६) (सू) **छन्दसि वनसनरक्षिमथाम्** । ३ । २ । २७ । एभ्यः कर्मण्युपपदे इन् स्यात् । ब्रह्मवनिं त्वा क्षत्रवनिम् । उत नो गोषणिं

---

(५२३०) **अभ्युत्सादयाम्**—। अभ्युत्सादयामित्यादयश्छन्दसि विषये अन्यतरस्यां निपात्यन्ते । 'षद्लृ विशरणगत्यवसादनेषु', 'जनी प्रादुर्भावे', 'रम क्रीडायाम्' । ण्यन्तेभ्य एभ्यो लुङि आम् प्रत्ययो निपात्यते । 'चिञ् चयने' शुद्धादस्मादाम्प्रत्यये द्विर्वचनं कुत्वं च । अक इति प्रत्येकं संबध्यते तदाह-**आद्येष्विति** ॥ **अक इति** । कृञो लुङि तिपि च्लेः 'मन्त्रे घस-५२२९' इत्यादिना लुक् । तिपो [२५६] हल्ङ्यादिलोपः ॥ **सादयामक इति** । 'आमः २९९७' इति लुङो लुक् ॥ **अभ्युदसीषददिति** । सदेर्ण्यन्ताल्लुङि चङि 'णौ चङ्युपधायाः-३०९०' इति ह्रस्वः 'चङि ३०९१' इति द्विर्वचनम् । 'हलादिः शेषः २९३३' 'सन्वल्लघुनि-३०९२' इति सन्वद्भावे 'सन्यतः ३०९३' इतीत्त्वम् । लघोर्दीर्घः ॥ **लोक इति** । वेदेऽपि पाक्षिकमिदं बोध्यम् । 'विदांकुर्वन्त्विति-३२७८' इति सूत्रादन्यतरस्यांग्रहणानुवृत्तेः ॥ **पावयामिति** । पवतेः पुनातेर्वा ण्यन्तादाशीर्लिङ्याम् क्रियादित्यनुप्रयोगश्च ॥ **क्रियादिति** । करोतेराशीर्लिङि रूपम् । 'लिङाशिषि २९७०' इत्यार्द्धधातुकत्वाद्विकरणाभावः । 'रिङ् शयग्-३१६०' इति रिङ् ॥ **विदामक्रन्निति** । विदेर्लुङि आम् । गुणाभावः । लुगन्तकरोत्यनुप्रयोगश्च ॥ (५२३१) **गुपेः**—। आयप्रत्ययाभावस्थले एवेदम् । सूत्रे केवलस्योच्चारणात् ॥ **अजूगुपतमिति** । 'गुपू रक्षणे' 'तस्थस्थमिपाम्-२९५४' इति थसस्तम् । 'तुजादीनां दीर्घोऽभ्यासस्य ५३५४' इत्यभ्यासस्य दीर्घः ॥ **अगोप्तमिति** । ऊदित्त्वादिडभावे 'वदव्रज-३०३३' इति वृद्धिः । 'झलो झलि ३०४८' इति सिचो लोपः । इट्पक्षे अगोपिष्टम् ॥ आयप्रत्यये अगोपायिष्टम् । इत्थं चत्वारि च्छन्दसि । लोके तु चङं वर्जयित्वा त्रीण्येवेति विवेकः ॥ (५२३२) **नोनयति**—। 'ऊन परिहारणे' । 'ध्वन शब्दे' । 'इल प्रेरणे' । 'अर्द गतौ याचने च' एभ्यो ण्यन्तेभ्यश्च्लेः 'णिश्रि-३०८७' इति प्राप्तश्चङादेशो नेत्यर्थः । तत्रोनयत्येलयती चुरादी ण्यन्तौ ॥ ध्वनयतिरपि चुरादिरदन्तो घटादिर्णान्तश्च । अर्दयतिस्तु हेतुमण्ण्यन्तः ॥ **ऊनयीरिति** । मध्यमपुरुषैकवचनम् । 'न माङ्योगे २९८३' इति आट्प्रतिषेधः । इदमिन्द्रं प्रति सव्यस्य ऋषेर्वचनम् । त्वायतस्त्वामिच्छतः जरितुः स्तोतुः मम काममभिलाषं मा ऊनयीः । ऊनं मा कार्षीरित्यर्थः । औननदिति भाषायाम् ॥ **ध्वनयीदिति** । तिप् 'न माङ्योगे २९८३' इत्यट्प्रतिषेधः । भाषायां घटादेरदिध्वनत् । चुरादेरदध्वनत् । एलयीत् । आर्दयीत् । आर्दिदत् । ऐलिलदिति लोके ॥ (५२३३) **कृमृदृ**—। 'च्लि लुङि २९७६' इत्यतः च्लिरिति 'अस्यतिवक्ति-३२४६' इत्यतोऽङ्ङिति 'इरितो वा ३०३६' इत्यतो वेत्यनुवर्तते तदाह-**च्लेरित्यादि** ॥ **अकरमिति** । 'डुकृञ् करणे' मिप् अङि कृते 'ऋदृशोऽङि-३२०९' इति गुणः ॥ **अमरदिति** । 'मृङ् प्राणत्यागे' व्यत्ययेन परस्मैपदम् ॥ **अदरदिति** । 'दॄ विदारणे' ॥ **आरुहदिति** । 'रुह बीजजन्मनि प्रादुर्भावे च' लोके तु अकार्षीत् । अमृत । अदारीत् । आरुक्षत् ॥ (५२३४) **छन्दसि**—। निष्टर्क्यादयः शब्दाश्छन्दसि निपात्यन्ते इति सूत्रार्थः ॥ **क्यपि प्राप्त इति** । 'ऋदुपधाच्चा-३८०९' इति सूत्रेण ॥ **आपृच्छ्यमिति** । 'प्रच्छ ज्ञीप्सायाम्' । 'ग्रहिज्या-३२१६' इति संप्रसारणम् ॥ **प्रतिषीव्येति** । 'षिवु तन्तुसंताने' । 'हलि च ४८१' इति दीर्घः ॥ **उपचाय्यपृडमिति** । उपचाय्यं च तत्पृडं चेति कर्मधारयः ॥ (५२३५) **हिरण्य इति** । हिरण्येऽभिधेये इत्यर्थः ॥ (५२३६) **छन्दसि**—। **एभ्य इति** । 'वन षण संभक्तौ', 'रक्ष पालने', 'मन्थ विलोडने', एभ्य इत्यर्थः । 'स्तम्बशकृतोरिन् ३९१७' इत्यतः इनिति वर्तते तदाह-**इन्स्या-**

धियम् । ये पथां पथिरक्षयः । चतुरक्षौ पथिरक्षी । हविर्मथीनामभि ॥ ( ५२३७ ) (सू) छन्दसि सहः ।३।२।६३। ण्विः स्यात् । पृतनाषाट् ॥ ( ५२३८ ) (सू) वहश्च । ३ । २ । ६४ । प्राग्वत् । दित्यवाट् । योगविभाग उत्तरार्थः ॥ ( ५२३९ ) (सू) कव्यपुरीषपुरीष्येषु ञ्युट् । ३ । २ । ६५ । एषु वहेर्ञ्युट् स्याच्छन्दसि । कव्यवाहनः । पुरीषवाहनः । पुरीष्यवाहनः ॥ ( ५२४० ) (सू) हव्येऽनन्तःपादम् । ३ । २ । ६६ । अग्निश्च हव्यवाहनः । पादमध्ये तु वहेश्चेति ण्विरेव । हव्यवालग्निरजरः पिता नः ॥ ( ५२४१ ) (सू) जनसनखनक्रमगमो विट् । ३ । २ । ६७ । विड्वनोरित्यात्त्वम् । अब्जाः । गोजाः । गोषा इन्द्रो नृषा असि । सनोतेरनः इति षत्वम् । इयं शुष्मेभिर्विसखा इवारुजत् । आ दधिक्राः शवसा पञ्च कृष्टीः । अग्रेगाः ॥ ( ५२४२ ) (सू) मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् । ३ । २ । ७१ । ( ५२४३ ) (वा) श्वेतवहादीनां डस्पदस्येति वक्तव्यम् ॥ यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस्वक्तव्य इत्यर्थः । श्वेतवाः । श्वेतवाहौ । श्वेतवाहः । उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः । उक्थशासौ । उक्थशासः । पुरो दाश्यते दीयते पुरोडाः ॥ ( ५२४४ ) (सू) अवे यजः । ३ । २ । ७२ । अवयाः । अवयाजौ । अवयाजः ॥ ( ५२४५ ) (सू) अवयाः श्वेतवाः पुरोडाश्च । ८ । २ । ६७ । एते सम्बुद्धौ कृतदीर्घा निपात्यन्ते । चादुक्थशाः ॥ (५२४६) (सू) विजुपे च्छन्दसि । ३ । २ । ७३ । उपे उपपदे यजेर्विच् । उपयट् ॥ (५२४७ ) (सू) आतो मनिन्क्वनिब्वनिपश्च । ३ । २ । ७४ । सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिन्नादयस्त्रयः प्रत्ययाः स्युः । चाद्विच् । सुदामा । सुधीवा । सुपीवा । भूरिदावा । घृतपावा । विच् । कीलालपाः ॥ ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ( ५२४८ ) (सू) बहुलं छन्दसि । ३ । २ । ८८ । उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात् । यो मातृहा पितृहा ॥ [ ४१११ ] (सू) छन्दसि लिट् । ३ । २ । १०५ । भूतसामान्ये । अहं द्यावापृथिवी आततान ॥ [ ४११२ ] (सू) लिटः कानज्वा । ३ । २ । १०६ । [ ४११३ ] (सू) क्वसुश्च । ३ । २ । १०७ । छन्दसि लिटः कानच् क्वसुर्वा स्तः । चक्राणा वृष्णिम् । यो नो अग्ने अररिवाँ अघायुः ॥ [ ४१३७ ] (सू) णेश्छन्दसि ।३।२।१३७। ण्यन्ताद्धातोश्छन्दसि इष्णुच् स्यात्तच्छीलादौ । वीरुधः पारयिष्णवः ॥ [ ४१३८ ] (सू) भुवश्च । ३ । २ । १३८ । अस्मात् केवलात्प्राग्वत् । भविष्णुः ॥ ( ५२४९ ) (वा) छन्दसि परेच्छायां क्यच उपसंख्यानम् ॥

---

दिति । 'वन षण संभक्तौ' इति भ्वादिगणे सहनिर्दिष्टयोरेव ग्रहणम्, न तु 'वनु याचने' 'षणु दाने' इति तानादिकयोः सानुबन्धकत्वात् ॥ ब्रह्मवनिमिति । ब्रह्म वनति क्षत्रं वनति गां सनतीति विवक्षायामिन् । तदन्तात् द्वितीयैकवचनम् । सुषामादित्वात्षत्वम् ॥ पथिरक्षय इति । पन्थानं रक्षयन्तीति विग्रहः ॥ पथिरक्षीति । पन्थानं रक्षतीति विग्रहः । हविर्मन्थतीति विग्रहः ॥ (५२३७)छन्दसि–। 'षह मर्षणे' । 'भजो ण्विः ३९७६' इति वर्तते । तदाह–ण्विः स्यादिति । ननु 'तुरासाहं पुरोधाय' इति लोके प्रयोगा दृश्यन्ते तेषां का गतिरिति चेत् णिजन्ताद्विच् बोध्यः ॥ पृतनाषाडिति । 'सहेः साडः सः ४५९' इति षत्वम् ॥ ( ५२३८ ) वहः–। प्राग्वदिति । 'ण्विः स्यादित्यर्थः ॥ ( ५२४० ) हव्ये–। अन्तःशब्दो मध्यमवाची । हव्यशब्दे उपपदे वहेर्ञ्युट् स्यात् पादमध्ये चेन्न पादान्ते इति फलितोऽर्थः ॥ हव्यवालग्निरिति । अत्र 'डस्य ळः' 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः' इति प्रातिशाख्ये विहितः ॥ ( ५२४१ ) जनसन–। जनादिभ्यो धातुभ्यश्छन्दसि विट् स्यात् ॥ अग्रेगा इति । 'हलदन्तात्–१३८६' इति सप्तम्यलुक् ॥ ( ५२४२ ) मन्त्रे श्वेतवहो–। श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन्स्यात् । अलाक्षणिककार्यार्थं निपातनम् । श्वेतशब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि कारके ण्विन्प्रत्ययः । उक्थे कर्मणि करणे चोपपदे शंसतेः ण्विन् प्रत्ययः नलोपश्च । पुरःपूर्वस्य 'दाश्टृ दाने' इत्यादेर्डत्वं कर्मणि च प्रत्ययः । (५२४३) डस्पदस्येति । प्रत्येकमभिसंबध्यते । भाविपदत्वाश्रयणेन चेदमुच्यते तदाह–यत्र पदत्वं भावीति ॥ डसन्तस्येत्यर्थः ॥ श्वेतवा इति । श्वेता एनं वहन्ति श्वेतवा इन्द्रः । 'अत्वसन्तस्य–५७०' इति दीर्घः । उक्थशासाविति । नलोपे कृते 'अत उपधायाः २०४९' इति वृद्धिः ॥ ( ५२४४ ) अवे–। योगविभाग उत्तरार्थः । 'पुरोडाशावयजोर्ण्विन्' इत्येकयोगे श्वेतवहादीनामप्युत्तरत्रानुवृत्तिः स्यात् । यजश्चावपूर्वस्यैवानुवृत्तिः स्यात् केवलस्यैवेष्यत इति ॥ (५२४५) अवयाः श्वेतवाः–। ननु 'मन्त्रे श्वेतवह–५२४२' इत्यादिना डसि कृते सौ 'अत्वसन्तस्य–५७०' इति दीर्घे रुत्वे च श्वेतवा इत्यादिसिद्धेर्नार्थोऽनेन योगेनेत्याशङ्क्याह–एते संबुद्धाविति । संबुद्धौ हि 'अत्व सन्तस्य–५७०' इति न प्राप्नोति, तत्र 'असंबुद्धौ' इत्यनुवर्तनात् ॥ ( ५२४६ ) विजुपे–। ननु छन्दसीति व्यर्थं मन्त्रे इत्यनुवृत्तेरेव भाषायां न भविष्यतीति चेत्, सत्यम्–ब्राह्मणसंग्रहार्थं छन्दोग्रहणम् । मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणम् । तदुक्तम्–'तच्चोदकेषु मन्त्राख्या, शेषे ब्राह्मणशब्दः' इति ॥ (५२४७) सुधीवा सुपीवेति । 'घुमास्था–३२७४' इतीत्वम् ॥ कीलालपा इति । कीलालं जलम् । 'पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः । तत् पिबतीति 'पा पाने' विच् ॥ ( ५२४८ ) उपपदान्तरेऽपीति । ब्रह्मभ्रूणवृत्राभिन्नेष्वपीत्यर्थः ॥ [४१११] आततानेति । 'णलुत्तमो वा ३०५०' इति णित्त्वपक्षे वृद्धिः ॥[४११३] अररिवाँ इति । 'रा दाने' । लिटः क्वसुः । 'वस्वेकाजाद्घसाम् ४११४' इत्यादन्तत्वादिट् । ततो नञ्समासः । 'दीर्घादटि–५४९६' इति वक्ष्यमाणेन नस्य रुत्वम् । 'आतोऽटि नित्यम् ५७९७' इति रोः पूर्वस्यातो नित्यमनुनासिकः ॥ (५२४९) प्रसङ्गादषाढशब्दं व्युत्पाद-

[ ४१७२ ] सू क्याच्छन्दसि । ३ । २ । १७० । उप्रत्ययः स्यात् । अघायुः ॥ ( ५२५० ) वा एरजधिकारे जवसवौ छन्दसि वाच्यौ ॥ जवे याभिर्यूनः ॥ ऊर्वोस्तु मे जवः । देवस्य सवितुः सवे ॥ ( ५२५१ ) सू मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः । ३ । ३ । ९६ । वृषादिभ्यः क्तिन् स्यात्स चोदात्तः । वृष्टिं दिवः । सुम्नमिष्टये । पचात्पक्तीरुत । इयं ते नव्यसी मतिः । वित्तिः । भूतिः । अग्न आ याहि वीतये । रातौ स्यामोभयासः ॥ ( ५२५२ ) सू छन्दसि गत्यर्थेभ्यः । ३ । ३ । १२९ । ईषदादिषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि युच् स्यात् । खलोऽपवादः । सूपसदनोऽग्निः ॥ (५२५३) सू अन्येभ्योऽपि दृश्यते । ३ । ३ । १३० । गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्योऽपि छन्दसि युच् स्यात् । सुवेदनामकृणोद् ब्रह्मणे गाम् ॥ ( ५२५४ ) सू छन्दसि लुङ्लङ्लिटः । ३ । ३ । ६ । धात्वर्थानां सम्बन्धे सर्वकालेष्वेते वा स्युः । पक्षे यथास्वं प्रत्ययाः । देवो देवेभिरागमत् । अत्र लोडर्थे लुङ् । इदं तेभ्योऽकरं नमः । लङ् । अग्निमद्य होतारमवृणीतायं यजमानः । लिट् । अद्य ममार । अद्य म्रियत इत्यर्थः ॥ ( ५२५५ ) सू लिङर्थे लेट् ।३।४।७। विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि ॥ ( ५२५६ ) सू सिब्बहुलं लेटि । ३ । १ । ३४ । ( ५२५७ ) सू इतश्च लोपः परस्मैपदेषु । ३ । ४ । ९७ । लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु ॥ ( ५२५८ ) सू लेटोऽडाटौ । ३ । ४ । ९४ । लेटः अट् आट् एतावागमौ स्तस्तौ च पितौ ॥ ( ५२५९ ) वा सिब्बहुलं णिद्वक्तव्यः ॥ वृद्धिः । प्र ण आयूंषि तारिषत् । सुपेशसस्करति जोषिषद्धि आसाविषदर्शसानाय । सिप इलोपस्य चाभावे । पताति विद्युत् । प्रियः सूर्ये प्रियो अग्ना भवाति ॥ ( ५२६० ) सू स उत्तमस्य । ३ । ४ । ९८ । लेडुत्तमसकारस्य वा लोपः स्यात् । करवाव । करवावः । टेरेत्त्वम् ॥ ( ५२६१ ) सू आत ऐ । ३ । ४ । ९५ । लेट आकारस्य ऐ स्यात् । सुतेभिः सुप्रयसा मादयैते । आतामित्याकारस्य ऐकारः । विधिसामर्थ्यादाट एत्त्वं न । अन्यथा हि एटमेव विदध्यात् । यो यजाति यजात इत् ॥ ( ५२६२ ) सू वैतोऽन्यत्र । ३।४।९६ । लेट एकारस्य ऐ स्याद्वा आत ऐ इत्यस्य विषयं विना । पशूनामीशै ग्रहा गृह्यान्तै । अन्यत्र

---

यितुमाह-**छन्दसीति** । 'सुप आत्मनः-३५२८' इत्यत्र आत्मन इति विशेषणात्परेच्छायां न प्राप्नोतीति वचनम् ॥ [४१७२] **क्याच्छन्दसि** । 'सनाशंसाभिक्ष उः ४१७०' इत्यत उरिति वर्तते । क्यान्ताद्धातोरुः स्याच्छन्दसि ॥ **अघायुरिति** । परस्याघमिच्छतीत्यर्थे क्यच् । 'अश्वाघस्यात् ५४४८' इति वक्ष्यमाणेनाकारादेशः । तदन्तादुप्रत्ययः ॥ **(५२५०) जवसवाविति** । जु इति सौत्रो धातुः 'षूङ् प्राणिगर्भविमोचने' । 'षु प्रसवैश्वर्ययोः' इति आभ्याम् 'ऋदोरप् ५०२४' इति प्राप्तेऽज्विधीयते, स्वरे भेदः ॥ ( ५२५१ ) **मन्त्रे वृषेष-** । 'स्त्रियां क्तिन् ५०६७' इत्यतः क्तिन्निति वर्तते । 'वीराः' इति पञ्चम्यर्थे प्रथमा तदाह-**वृषादिभ्य इति** ॥ **वृष्टिमिति** । 'वृषु सेचने' । **इष्टये इति** । 'इषु इच्छायाम्' ॥ चतुर्थ्येकवचनम् ॥ **मतिरिति** । 'मन ज्ञाने' क्तिन् । 'अनुदात्तोपदेश-३२३४' इत्यनुनासिकलोपः ॥ **वित्तिरिति** । 'विद सत्तायाम्' । कित्त्वान्न लघूपधगुणः ॥ **वीतये इति** । 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' ॥ **रातावित्ति** । 'रा दाने' ॥ **(५२५४) छन्दसि लुङ्लङ्लिटः** ॥ उदाहरणेषु धातुसंबन्धो मृग्यः ॥ **आगमदिति** । 'गम्लृ गतौ' । 'पुषादि-३१२४' इति लृदित्त्वादङ् ॥ **अकरमिति** । 'कृमृदृरुहिभ्यश्छन्दसि ५२३३' इति च्लेरङ् । 'ऋदृशोऽङि-३२०९' इति गुणः ॥ **अवृणीतेति** । 'वृञ् वरणे' । लङ् । 'क्र्यादिभ्यः श्ना ३३८५' 'ई हल्यघोः ३३१५' इतीत्त्वम् ॥ ( ५२५७ ) **इतश्च-** । 'लेटोऽडाटौ ५२५८' इत्यतः लेट इति, 'वैतोऽन्यत्र ५२६२' इत्यतो वेति चानुवर्तते तदाह-**लेट इत्यादि** ॥ ( ५२५८ ) **लेटो-** । **आगमौ स्त इति** । तौ च पर्यायेण न तु यौगपद्येन अड्विधिसामर्थ्याद् । अन्यथा सवर्णदीर्घे कृते विशेषाभावात् । 'आडुत्तमस्य-२९५९' इति सूत्रान्मण्डूकप्लुत्या पिच्चेत्यनुवर्तते इत्याशयेनाह-**तौ च पिताविति** । तत्फलं तु 'विक्रन्दसी उर्वरासु ब्रवैते' इत्यादिषु गुणः ॥ **वृद्धिरिति** । 'अचो ञ्णिति ३५९' इत्यनेन । **तारिषदिति** ॥ 'तॄ प्लवनतरणयोः' तिप इकारलोपः, सिप इट् ॥ **जोषिषदिति** । 'जुषी प्रीतिसेवनयोः' अनुदात्तेत् । व्यत्ययेन परस्मैपदम् ॥ **आसाविषदिति** । आङ्पूर्वात् 'षु प्रसवैश्वर्ययोः' इत्यस्माल्लेट् ॥ **पतातीति** । 'पत्लृ पतने' तिप् आडागमः ॥ **(५२६०) करवावेति** । कृञो लेटो वस् 'तनादिकृञ्भ्यः-३२७९' इति उः । गुणः रपरः 'लेटोऽडाटौ ५२५८' इत्याट् । तस्य पित्त्वेनाङित्त्वाद्विकरणस्य गुणः 'अत उत्सार्वधातुके ३२८०' इत्युत्त्वाभावश्च ॥ **( ५२६१ ) मादयैते इति** । 'मदी हर्षे' । णिच्, तदन्ताल्लेट् । आतामि कृते आह-**टेरेत्त्वमिति** । 'टित आत्मनेपदानाम्-२९९२' इत्यनेन ॥ **आकारस्येति** । प्रथमस्येत्यर्थः द्वितीयस्य 'टित आत्मनेपदानाम्-२९९२' इत्यनेनैत्त्वमेव नित्यत्वात् । न च शब्दान्तरप्राप्त्याऽनित्यत्वम्, कृताकृतप्रसङ्गित्वमात्रेण क्वाचिन्नित्यताश्रयणात् । उत्तरसूत्रेऽन्यत्रेति लिङ्गाच्च । आट एत्त्वं नेत्युक्तं तस्य फलमाह-**यजाति यजात इति** । 'यज देवपूजादौ' । लेट् । आडागमः ॥ (५२६२) **वैतो-** । अन्यत्र किमपेक्षयेत्याकाङ्क्षायां पूर्वसूत्रविषयादिति लभ्यते संनिधानात्, तदाह-**आत इत्यादि** । **ईशै इति** । 'ईश ऐश्वर्ये' उत्तमैकवचनामिदं, इतश्च लोपो

किम् । सुप्रयसा मादयैते ॥ (५२६३) सू उपसंवादाशङ्कयोश्च । ३ । ४ । ८ । पणबन्धे आशङ्कायां च लेट् स्यात् । अहमेव पशूनामीशै । नेजिह्मायन्तो नरकं पताम । हलः श्नः शैर्निज्झौ ॥ (५२६४) सू छन्दसि शायजपि । ३ । १ । ८४ । अपिशब्दाच्छानच् ॥ (५२६५) वा हृग्रहोर्भश्छन्दसि इति । हस्य भः । गृभाय जिह्वया मधु । बधान देव सवितः । अनिदितामिति बध्नातेर्नलोपः । गृभ्णामि ते । मध्वा जभार ॥ (५२६६) सू व्यत्ययो बहुलम् । ३ । १ । ८५ । विकरणानां बहुलं व्यत्ययः स्याच्छन्दसि । आण्डा शुष्णस्य भेदति । भिनत्तीति प्राप्ते । जरसा मरते पतिः । म्रियते इति प्राप्ते । इन्द्रो वस्तेन नेषतु । नयतेर्लोट् शप्सिपौ द्वौ विकरणौ । इन्द्रेण युजा तरुषेम वृत्रम् । तरेमेत्यर्थः । तरतेर्विध्यादौ लिङ् उः सिप् शप् चेति त्रयो विकरणाः ॥

(५२६७) सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥ १ ॥

धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । उपग्रहः परस्मैपदात्मनेपदे । ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत इति प्राप्ते । मधोस्तृप्ता इवासते । मधुन इति प्राप्ते । नरः पुरुषः । अधा स वीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते । कालः कालवाची प्रत्ययः । श्वोऽग्नीनाधास्यमानेन । लुटो विषये लट् । तमसो गा अदुक्षत् । अधुक्षदिति प्राप्ते । मित्र वयं च सूरयः । मित्रा वयमिति प्राप्ते । स्वरव्यत्ययस्तु वक्ष्यते । कर्तृशब्दः कारकमात्रपरः । तथा च–तद्वाचिनां कृत्तद्धितानां व्यत्ययः । अन्नादाय । अण्विषये अच् । अवग्रहे विशेषः । यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण प्रत्याहारः, तेषां व्यत्ययो भेदतीत्यादिरुक्त एव ॥ (५२६८) सू लिङ्याशिष्यङ् । ३ । १ । ८६ । आशीर्लिङि परे धातोरङ् स्याच्छन्दसि । वचे उम् । मन्त्रं वोचेमाग्नये ॥ (५२६९) वा दृशेरग्वक्तव्यः ॥ पितरं च दृशेयं मातरं च ।

---

नास्ति, 'परस्मैपदेषु' इत्युक्तेः । टेरेत्त्वे तस्य ऐ ॥ गृह्यान्ता इति । ग्रहेः कर्मणि लेट् झिः । तस्याडागमः । यक् 'ग्रहिज्या–३२१६' इति संप्रसारणम्, टेरेत्त्वम्, पूर्ववदैत्त्वम् ॥ (५२६३) पणबन्ध इति । यदि मे भवानिदं कुर्यात्तर्हीदमहं दास्यामीति समयकरणं पणबन्धः आशङ्का संभावना ॥ अहमेवेति । त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचनम् । पशवः संसारिणः ॥ नेदिति । इच्छब्द आशङ्कां द्योतयति । जिह्माचरणेन नरकपातः स मा भूदित्यर्थः ॥ पतामेति । 'स उत्तमस्य ५२६०' इति सलोपः ॥ (५२६४) छन्दसि शाय–। छन्दसि श्नः शायजप्यादेशः स्याद्धौ परे ॥ (५२६५) गृभायेति । 'ग्रह उपादाने' । लोटः सेर्हिः 'क्र्यादिभ्यः श्ना ३३८५' । 'ग्रहिज्या–३२१६' इति संप्रसारणम् ॥ बधानेति । 'बन्ध बन्धने' 'अतो हेः २९५७' इति लुक् ॥ प्रसङ्गात् 'हृग्रहोर्भश्छन्दसि–५२६५' इत्यस्योदाहरणमाह—गृभ्णामि इति । जभारेति । 'हृञ् हरणे' लिटो णलि वृद्धौ हस्य भः । गृह्णामि जहारेत्यर्थः ॥ (५२६६) भेदतीति 'भिदिर् विदारणे' । रौधादिकः । श्नमि प्राप्ते शप् ॥ म्रियत इति । 'मृङ् प्राणत्यागे' । 'तुदादिभ्यः–३३५७' इति शे कृते 'रिङ् शयग्लिङ्क्षु ३१६०' इति रिङादेशः इयङ् ॥ नेषत्विति । नयत्वित्यर्थः ॥ द्वौ विकरणाविति । तत्र शप् न्याय्यः, सिप्तु बाहुलकात् । एतेन 'सेमामविड्ढि' इत्यादि व्याख्यातम् । 'अव रक्षणे' अस्माल्लोटि शपि प्राप्ते बाहुलकात्सिप् । 'हुझल्भ्यो हेर्धिः ३२३१' षत्वम्, ष्टुत्वम् । जश्त्वम् ॥ तरुषेमेति । तरुषमसिति जाते यासुट् 'लिङ्सलोपोऽनन्त्यस्य २९६६' । 'नित्यं ङितः २९५५' । 'अतो येयः २९६७' 'लोपो व्योर्वलि १२५४' 'आद् गुणः १०४' अत्रोप्रत्ययान्तस्य सिपं प्रत्यङ्गत्वात् 'सार्वधातुका–२९२२' इति गुणः प्राप्तः । सिबन्तस्य शपि लघूपधगुणश्च प्राप्तो बाहुलकान्न भवति ॥ (५२६७) सुप्तिङिति । शास्त्रकृत्पाणिनिराचार्य एषां सुप्प्रभृतीनां व्यत्ययमिच्छति । सोऽपि तथाविधो व्यत्ययो बाहुलकेन सिध्यति । बहुलस्य भावो बाहुलकम् । मनोज्ञादित्वाद् वुञ् । तत्पुनर्बहुलशब्दस्य प्रवृत्तिनिमित्तं बह्वर्थादानत्वम्, चशब्दो हेतौ, यस्मादेवमुक्तप्रकारो व्यत्ययो बहुलग्रहणेनैव सिध्यति, तस्माद्बहुलग्रहणं कृतमित्यर्थः ॥ वियूया इति । 'यु मिश्रणे' विपूर्वः । आशिषि लिङ् ॥ आधास्यमानेनेति । आङ्पूर्वाद्धधातेः 'लृटः सद्वा ४१२७' इत्यनेन शानजादेशः । 'स्यतासी–२९४१' इति स्यः । 'आने मुक् ४१२०' इति मुक् ॥ मित्र वयमिति । दीर्घस्य ह्रस्वव्यत्ययः ॥ स्वरव्यत्ययस्त्विति । 'गवामिव श्रियसे' इत्यत्र 'तुमर्थे–५२७१' इत्यनेन कसेनि कृते 'ञ्नित्यादिः–५५६१' इत्याद्युदात्ते प्राप्ते व्यत्ययेन मध्योदात्तता ॥ कृत्तद्धितानामिति । 'तेन दीव्यति–२१३१' इत्यादौ विधीयमानानां ठगादीनां देवनादिकर्तृत्वादेवमुक्तम्, न त्विह कारकवाचित्वेऽप्याग्रहः, कृत्तद्धितमात्रे तात्पर्यात् । तथा च–किमो विहितो डतिर्यच्छब्दादपि भवति । 'त्वं वेत्थ यदि जातवेदः । विश्वे देवासो मरुतो यतिष्ठन' ॥ अन्नादायेति । अन्नमत्तीत्यन्नादस्तस्मै । अन्ने कर्मण्युपपदेऽदेः कर्मण्यणि प्राप्तेऽच् ॥ अवग्रह इति । अणि कृते अन्न आदायेति, अचि तु अन्न अदायेति भावः ॥ (५२६८) वोचेमेति । वचेराशीर्लिङो मस् अङ् । 'वच उम् ३२६५' यासुट् । 'छन्दस्युभयथा

---

१–मरत इति प्रतीकमुपादाय तुदादित्वाच्छे प्राप्ते शपि गुणः, इति व्याख्यातुमुचितम् ॥

अङि तु 'ऋदृशोऽङि इति गुणः स्यात् ॥ ( ५२७० ) सू० छन्दस्युभयथा । ३ । ४ । ११७ । धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात् । वर्धन्तु त्वा सुष्टुतयः । वर्धयन्त्वित्यर्थः । आर्धधातुकत्वाण्णिलोपः । विशृण्विरे । सार्वधातुकत्वात् श्नुः श्नभावश्च । हुश्नुवोरिति यण् ॥ [ ४१७३ ] सू० आदृगमहनजनः किकिनौ लिट् च । ३ । २ । १७१ । आदन्तादृवर्णान्ताद्गमादेश्च किकिनौ स्तस्तौ च लिड्वत् । बभ्रिर्वज्रम् । पपिः सोमम् । ददिर्गाः । जग्मिर्युवा । जघ्निर्वृत्रममित्रियम् । जज्ञिः । लिड्वद्भावादेव सिद्धे ऋच्छत्यॄतामिति गुणबाधनार्थं कित्त्वम् । बहुलं छन्दसीत्युत्त्वम् । ततुरिः । जगुरिः ॥ ( ५२७१ ) सू० तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः । ३ । ४ । ९ । से । वक्षे रायः ॥ सेन् । ता वामेषे । असे । शरदो जीवसे धाः । असेनित्याद्युदात्तः । क्से प्रेषे । कसेन् । गवामिव श्रियसे । अध्यै । अध्यैन् । जठरं पृणध्यै । पक्षे आद्युदात्तम् । कध्यै । कध्यैन् । आहुवध्यै । पक्षे नित्स्वरः । शध्यै । राधसः सह मादयध्यै । शध्यैन् । वायवे पिबध्यै । तवै । दातवा उ । तवेङ् । सूतवे । तवेन् । कर्तवे ॥ ( ५२७२ ) सू० प्रयै रोहिष्यै अव्यथिष्यै । ३ । ४ । १० । एते तुमर्थे निपात्यन्ते । प्रयातुं रोढुमव्यथितुमित्यर्थः ॥ ( ५२७३ ) सू० दृशे विख्ये च । ३ । ४ । ११ । द्रष्टुं विख्यातुमित्यर्थः ॥ ( ५२७४ ) सू० शकि णमुल्कमुलौ । ३ । ४ । १२ । शक्नोतावुपपदे तुमर्थे एतौ स्तः । विभाजं नाशकत् । अपलुपं नाशकत् । विभक्तुमपलोप्तुमित्यर्थः ॥ ( ५२७५ ) सू० ईश्वरे तोसुन्कसुनौ ।३।४।१३। ईश्वरो विचरितोः । ईश्वरो विलिखः । विचरितुं विलेखितुमित्यर्थः ॥ ( ५२७६ ) सू० कृत्यार्थे तवैकेन्केन्यत्वनः ।३।४।१४। न म्लेच्छितवै । अवगाहे । दिदृक्षेण्यः । भूर्यस्पष्ट कर्त्वम् ॥ ( ५२७७ ) सू० अवचक्षे च ।३।४।१५। रिपुणा नावचक्षे ।

---

५२७० ' इति लिङः सार्वधातुकसंज्ञाऽप्यस्ति, तेन यासुट इयादेशः, वालि लोपः ॥ [ ४१७३ ] आदृ-॥ परार्थे प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति गौर्वाहीक इतिवदित्याशयेनाह—लिड्वदिति ॥ किकिनौ भवतः । लिट् प्रत्ययश्च भवतीत्ययमर्थस्तु न भवति, तथा हि सति 'लिट्किकिनः' इत्येव ब्रूयात् ॥ बभ्रिरिति । भृञ् अस्मात् किः । लिड्वद्भावात्कित्त्वम् । किकिनोः स्थाने तिबादयस्तु न, लिड्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात् । 'न लोकाव्यय-६१५ ' इति षष्ठीनिषेधे वज्रशब्दाद् द्वितीया ॥ जग्मिरिति । 'गमहन-३१५६ ' इत्युपधालोपः ॥ जघ्निरिति । 'हो हन्तेः-४८५' इति कुत्वम् ॥ जज्ञिरिति । श्चुत्वम् । जज्ञोर्ज्ञः । ननु लिड्वद्भावे सति 'असंयोगात् लिट् कित् ३००२ ' इत्येव सिद्धे कित्त्वकरणमनर्थकमित्याशयेनाह-लिड्वद्भावादिति । 'असंयोगात् लिट् कित् ३००२ ' इति कित्त्वं सिद्धमिति भावः । आदिति मुखसुखार्थो दकारो न तु तकारः । तेन तात्परत्वाभावाद्दीर्घस्यापि ऋकारस्य ग्रहणं तदाह-ततुरिजगुरिरिति । 'तॄ प्लवनतरणयोः' 'गॄ निगरणे' आभ्यां किः द्वित्वात्परत्वाद् 'बहुलं छन्दसि ५४३२ ' इत्युत्वे प्राप्ते 'द्विर्वचनेऽचि ३००३ ' इति निषेधादुत्वाभावे द्वित्वम् । उरदत्वम् । उत्तरस्योत्त्वम् ॥ ( ५२७१ ) तुमर्थे-। तुमुनोऽर्थस्तुमर्थो भावः । ननु 'कर्तरि कृत् ३७७१ ' इति वचनात्कर्तरि तुमुनो विधानात्कथं भावोऽर्थ इति चेत्, शृणु-'अव्ययकृतो भावे' इति वचनात्तुमुनो भावे विधानात् । तुमर्थे पञ्चदश प्रत्यया भवन्ति ॥ वक्षे इति । वचः से कुत्वं षत्वम् । कषसंयोगे क्षः ॥ एषे इति । इणो गुणः । नकारो 'ञ्नित्यादिर्नित्यम् ५५६१ ' इत्याद्युदात्तार्थः ॥ प्रेषे इति । इणः क्से, कित्त्वाद् गुणे 'आद् गुणः १०४' ॥ श्रियसे इति । इयङ् नित्वादाद्युदात्तः । इह मन्त्रे मध्योदात्तः पठ्यते, तत्र बाहुलकात्प्रत्ययस्वरो बोध्यः । आहुवध्यै इति । जुहोतेरुवङ् ॥ मादयध्यै इति । 'मदी हर्षे' ण्यन्ताच्छध्यैप्रत्ययः । तस्य भाववाचिसार्वधातुकत्वात्सार्वधातुके यकि प्राप्ते व्यत्ययेन शप् । गुणायादेशौ ॥ पिबध्यै इति । अत्रापि यक्प्रसङ्गे व्यत्ययेन शप् । 'पाघ्रा-३१५३' इति पिबादेशः ॥ दातवा उ इति । ददातेस्तवै आयादेशे 'लोपः शाकल्यस्य १०१' इति यलोपः ॥ सूतवे इति । ङित्वान्न गुणः ॥ कर्तव इति । कृञो गुणः । कर्तुमित्यर्थः ॥ ( ५२७२ ) प्रयै-। प्रपूर्वाद्यातेः कैप्रत्ययः । रुहेरिष्यै । नञ्पूर्वाद्व्यथेश्च ॥ ( ५२७३ ) दृशे-। योगविभागश्चिन्त्यप्रयोजनः । दृशेः ख्यातेश्च केप्रत्ययः । कित्त्वाद् दृशेर्न गुणः ख्यातेरालोपश्च ॥ ( ५२७४ ) विभाजमिति । विपूर्वाद्भजतेर्णमुल् णित्वात् 'अत उपधायाः ३०४९ ' इति वृद्धिः ॥ अपलुपमिति । 'लुप्लृ छेदने' कित्त्वाद् गुणाभावः ॥ ( ५२७५ ) ईश्वरे-। ईश्वरशब्दे उपपदे धातोस्तोसुन्कसुनौ स्तश्छन्दसि ॥ विचरितोरिति । 'चर गतौ' इट् ॥ विलिख इति । 'लिख विलेखने' कित्वान्न गुणः ॥ 'क्त्वातोसुन्कसुनः ६०६ ' इत्यव्ययत्वात् 'अव्ययादाप्सुपः ६०८ ' इति विभक्तेर्लुक् 'न लुमता-३६८' इति निषेधात् 'अत्वसन्तस्य-५७०' इति दीर्घो न ॥ ( ५२७६ ) कृत्यार्थे-। कृत्यानामर्थौ भावकर्मणी, 'तयोरेव-३७७२ ' इति कृत्यानां भावकर्मणोर्विधानात् । तत्र एते प्रत्ययाः स्युः । यद्यपि-कृत्यानामर्थौ 'भव्यगेय-३८५० ' इत्यादौ कर्ताऽपि, वद्यं स्नानीयमित्यादौ करणादिरपि । तथापि न तत्र कृत्यत्वेन कर्त्रादिषु विधानम्, किं तर्हि स्वरूपेण । कृत्यतया विधानं तु भावकर्मणोरेवेति भावः ॥ न म्लेच्छितवै इति । 'म्लेच्छ अव्यक्ते शब्दे' । न म्लेच्छितव्यमित्यर्थः ॥ अवगाहे इति । 'गाहू विलोडने' ॥ दिदृक्षेण्य इति । दृशेः सन्नन्तात्केन्यः 'अतो लोपः ३०८३ ' ॥ कर्त्वमिति । कृञस्त्वन् । कृत्यमित्यर्थः । यद्यपि 'तुमर्थे सेसेन्-५२७१ ' इत्यनेन तुमर्थे तवै विहितः । तथापि-भावभिन्नेऽपि कर्मकारके तवै यथा स्यादित्येवमर्थम् ॥ ( ५२७७ ) अवचक्षे-। अवपूर्वात् चक्षिङ एश्प्रत्ययो निपात्यते शित्त्वात्सार्वधातुकत्वं तेन ख्याना-

अवस्थातव्यामित्यर्थः ॥ ( ५२७८ ) ⓢ भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् । ३ । ४ । १६ । आसंस्थातोः सीदन्ति । आ समाप्तेः सीदन्तीत्यर्थः । उदेतोः । अपकर्तोः । प्रवदितोः । प्रचरितोः । होतोः । आतमितोः काममाविजनितोः संभवाम ॥ ( ५२७९ ) ⓢ सृपितृदोः कसुन् । ३ । ४ । १७ । भावलक्षणे इत्येव । पुरा क्रूरस्य विसृपो विरप्शिन् । पुरा जत्रुभ्यः आतृदः ॥ इति तृतीयोऽध्यायः ॥ ३ ॥

( ५२८० ) ⓢ रात्रेश्चाजसौ । ४ । १ । ३१ । रात्रिशब्दान्ङीप्स्यात् अजस्विषये छन्दसि । रात्री व्यख्यदायती । लोके तु कृदिकारादिति ङीष्यन्तोदात्तः । ( ५२८१ ) ⓢ नित्यं छन्दसि । ४ । १ । ४६ । बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष् । बह्वीषु हित्वा । नित्यग्रहणमुत्तरार्थम् ॥ ( ५२८२ ) ⓢ भुवश्च । ४ । १ । ४७ । ङीष् स्यात् छन्दसि । विभ्वी । प्रभ्वी । विप्रसंभ्य इति डुप्रत्ययान्तं सूत्रेऽनुक्रियते, उत इत्यनुवृत्तेः । उवङादेशस्तु सौत्रः ॥ ( ५२८३ ) ⓢ मुद्गलाच्छन्दसि लिच्च । ङीषो लित्वमानुक् चागमः । लित्स्वरः । रथीरभून्मुद्गलानी ॥ ( ५२८४ ) ⓢ दीर्घजिह्वी च च्छन्दसि । ४ । १ । ५९ । संयोगोपधत्वादप्राप्तो ङीष्विधीयते । आसुरी वै दीर्घजिह्वी देवानां यज्ञवाट् ॥ ( ५२८५ ) ⓢ कद्रुकमण्डल्वोश्छन्दसि । ४ । १ । ७१ । ऊङ् स्यात् । कद्रूश्च वै । कमण्डलूः ॥ ( ५२८६ ) ⓢ गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् ॥ गुग्गुलूः । मधूः । जतूः । पतयालूः ॥ अव्ययात्त्यप् ॥ ( ५२८७ ) ⓢ आविष्ट्यस्योपसंख्यानं छन्दसि ॥ आविष्ट्यो वर्धते ॥ ( ५२८८ ) ⓢ छन्दसि ठञ् । ४ । ३ । १९ । वर्षाभ्यष्ठकोऽपवादः । स्वरे भेदः । वार्षिकम् ॥ ( ५२८९ ) ⓢ वसन्ताच्च । ४ । ३ । २० । ठञ् स्यात् छन्दसि । वासन्तिकम् ॥ ( ५२९० ) ⓢ हेमन्ताच्च । ४ । ३ । २१ । छन्दसि ठञ् । हैमन्तिकम् । योगविभाग उत्तरार्थः ॥ [ २०४९ ] ⓢ शौनकादिभ्यश्छन्दसि । ४ । ३ । १०६ । णिनिः प्रोक्तेऽर्थे । छाणोरपवादः । शौनकेन प्रोक्तमधीयते शौनकिनः । वाजसनेयिनः । छन्दसि किम् । शौनकीया शिक्षा ॥

---

देशो न ॥ ( ५२७८ ) **भावलक्षणे**–। कृत्यार्थे इति निवृत्तम् । 'तुमर्थे' इति वर्तते प्रकृत्यर्थविशेषणं भावलक्षणग्रहणम् । भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यस्तुमर्थे तोसुन् स्याच्छन्दसि । संस्थानादीनामवधित्वेन लक्षणं भावः ॥ **आ समाप्तेरिति** । संपूर्वो हि तिष्ठतिः समाप्तौ रूढः । 'संतिष्ठते पिण्डपितृयज्ञः' इत्यादौ तथा दर्शनात् ॥ **आतमितोरिति** । 'तमु उपक्षये' ॥ ( ५२७९ ) **सृपितृदोः**–। 'सृप्लृ गतौ', 'उतृदिर् हिंसानादरयोः' । भावलक्षणेऽर्थे वर्तमानयोः सृपितृदोस्तुमर्थे कसुन् ॥ **विसृप इति** ॥ गमनादित्यर्थः ॥ इति तृतीयोऽध्यायः ॥ ३ ॥

( ५२८० ) **रात्रेश्चाजसौ** । न जसिरजसिस्तस्मिन् । इकार उच्चारणार्थः, 'आहौ प्रभृतादिभ्यः २१२८' इतिवत् ॥ **छन्दसीति** । ननु 'तिमिरपटैरवगुण्ठिता रात्र्यः' इति प्रयोगो न स्यात् । छन्दसीत्युच्यते, न चेदं छन्दः, अजसाविति निषेधाच्च, किंच वेदेऽपि रात्र्य इति प्रयोगो न स्यादित्याशङ्कयाह–**लोके त्विति** । तुशब्दोऽनुक्तसमुच्चयार्थः । लोके, जसि वेदे चेत्यर्थः ॥ **कृदिकारादिति** । 'राशदिभ्यां त्रिः ४७११' इति व्युत्पत्तिपक्षे कृदिकारान्तः । अव्युत्पत्तिपक्षे तु 'सर्वतोऽक्तिन्नर्थात्–७०९' इति ङीष् बोध्यः ॥ ( ५२८१ ) **नित्यम्**–। 'बह्वादिभ्यश्च ७०७' इति वर्तते । 'अन्यतो ङीष् ६९२' इत्यतो ङीषिति च तदाह–**बह्वादिभ्य इति** । नन्वारम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं व्यर्थमित्याशङ्कयाह–**नित्यग्रहणमुत्तरार्थमिति** । ( ५२८२ ) **भुवः**–। **विभ्वीति** । 'विप्रसंभ्यो ड्वसंज्ञायाम् ४१९०' इत्यतो डुप्रत्ययान्तान्ङीष् । ननु स्वयंभूरित्यत्रापि स्यादित्याशङ्कयाह–**डुप्रत्ययान्तमिति** । ननु डुप्रत्ययान्तानुकरणे प्रमाणं किमत आह–**उत इत्यनुवृत्तेरिति** । 'वोतो गुणवचनात् ७०५' इति सूत्रात् । ननु तर्हि डुप्रत्ययान्तस्य 'घेर्ङिति ३४९' इति गुणे कृते भोः इति निर्देशः प्राप्नोति तदाह–**उवङादेशस्तु सौत्र इति** । ( ५२८३ ) **मुद्गला** । 'इन्द्रवरुण–७१२' इति सूत्रस्थं वार्तिकमिदम् । **लित्स्वर इति** । 'लिति ५५५१' इत्यानुगाकारस्योदात्तत्वम् ॥ ( ५२८४ ) **दीर्घजिह्वी**–। दीर्घजिह्वीति निपात्यते छन्दसि ॥ **अप्राप्तो ङीषिति** । 'स्वाङ्गाच्चोपसर्जनात्–७२७' इति न प्राप्नोति, तत्र हि 'असंयोगोपधात्' इति प्रतिषेधात् ॥ ( ५२८५ ) **कद्रु**–। 'ऊङुतः ७५०' इत्यत ऊङिति वर्तते । कद्रुशब्दात्कमण्डलुशब्दाच्च स्त्रियामूङ् स्याच्छन्दसि ॥ ( ५२८६ ) **गुग्गुलुमधु**–। एषां व्यत्ययेन च्छन्दसि स्त्रीत्वम् । पतयालुशब्दः 'स्पृहिगृहि–४१५९' इत्यादिना आलुजन्तः ॥ [ १८६२ ] **अव्ययात्**–। व्याख्यातमपि त्यबनुवृत्तिप्रदर्शनार्थं स्मारितम् ॥ ( ५२८७ ) **आविष्ट्यस्येति** । 'अव्ययात्त्यप् १८६२' इत्यत्र 'अमेहक्वतसित्रेभ्यः–१८६३' इति नियमादप्राप्तः शैषिकस्त्यब् विधीयते ॥ **आविष्ट्य इति** । आविर्भूतमाविष्ट्यम् । 'ह्रस्वात्तादौ–१८६६' इति षत्वम्, तकारस्य ष्टुत्वम् ॥ ( ५२८८ ) **ठकोऽपवाद इति** । 'वर्षाभ्यष्ठक् १९४१' इति प्राप्तस्य । ननु ठक्ठञोः को विशेषस्तत्राह–**स्वरे भेद इति** । ठञि कृते 'ञ्नित्यादिर्नित्यम् ५५६१' इत्याद्युदात्तत्वम् । ठकि तु सति 'कितः ५६७५' इत्यनेनान्तोदात्तत्वं स्यादिति भावः ॥ **वार्षिकमिति** । 'ठस्येकः १६५४' ॥ ( ५२९० ) **उत्तरार्थ इति** । 'सर्वत्राण् च तलोपश्च १९४२' इत्येतदर्थः । तत्र ह्यस्यैवानुवृत्तिर्यथा स्यात्, वसन्तस्य मा भूत् ॥ [ २०४९ ] **शौनका**–। 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः २०४६' इत्यतो णिनिरिति वर्तते तदाह–**णिनिरिति** ॥

( ५२९१ ) (सू) द्व्यचश्छन्दसि । ४ । ३ । १५० । विकारे वा मयट् स्यात् । शरमयं बर्हिः । यस्य पर्णमयी जुहूः ॥ ( ५२९२ ) (सू) नोत्वद्वर्ध्रबिल्वात् । ४ । ३ । १५१ । उत्वान् उकारवान् । मौञ्जं शिक्यम् । वर्ध्रं चर्म तस्य विकारो वार्ध्री रज्जुः । बैल्वो यूपः ॥ सभाया यः ॥ ( ५२९३ ) (सू) ढश्छन्दसि । ४ । ४ । १०६ । सभेयो वा ॥ ( ५२९४ ) (सू) भवे छन्दसि । ४ । ४ । ११० । सप्तम्यन्ताद्भवार्थे यत् । मेघ्याय च विद्युत्याय च । यथायथं शैषिकाणामणादीनां च घादीनामपवादोऽयं यत् । पक्षे तेऽपि भवन्ति । सर्वविधीनां छन्दसि वैकल्पिकत्वात् । तद्यथा-मुञ्जवान्नाम पर्वतः । तत्र भवो मौञ्जवतः । सोमस्येव मौञ्जवतस्य भक्षः । आचतुर्थसमाप्तेश्छन्दोऽधिकारः ॥ ( ५२९५ ) (सू) पाथोनदीभ्यां ड्यण् । ४ । ४ । १११ । तमु त्वा पाथ्यो वृषा । चनो दधीत नाद्यो गिरो मे । पाथसि भवः पाथ्यः । नद्यां भवो नाद्यः ॥ ( ५२९६ ) (सू) वेशन्तहिमवद्भ्यामण् । ४ । ४ । ११२ । भवे । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा ॥ ( ५२९७ ) (सू) स्रोतसो विभाषा ड्यड्ड्यौ । ४ । ४ । ११३ । पक्षे यत् । ड्यड्ड्ययोस्तु स्वरे भेदः । स्रोतसि भवः स्रोत्यः । स्रोतस्यः ॥ ( ५२९८ ) (सू) सगर्भसयूथसनुताद्यन् । ४ । ४ । ११४ । अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्य उत वा जिघत्नुः । नुतिर्नुतम् । नपुंसके भावे क्तः । सगर्भादयस्त्रयोऽपि कर्मधारयाः । समानस्य च्छन्दसीति सः । ततो भवार्थे यन् । यतोऽपवादः ॥ ( ५२९९ ) (सू) तुग्राद्घन् । ४ । ४ । ११५ । भवेऽर्थे । पक्षे यदपि । आ व शर्म वृषभं तुग्र्यास्विति बह्वृचाः । तुग्रियास्विति शाखान्तरे । धनाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति वृत्तिः ॥ (५३००) (सू) अग्राद्यत् । ४ । ४ । ११६ । (५३०१) (सू) घच्छौ च । ४ । ४ । ११७ । चाद्यत् । अग्रे भवोऽग्र्यः । अग्रियः । अग्रीयः ॥ (५३०२) (सू) समुद्राभ्राद् घः । ४ । ४ । ११८ । समुद्रिया अप्सरसो मनीषिणम् । नानदतो अभ्रियस्येव घोषाः ॥ ( ५३०३ ) (सू) बर्हिषि दत्तम् । ४ । ४ । ११९ । प्राग्घितीयद्वदित्येव । बर्हिष्येषु निधिषु प्रियेषु ॥ ( ५३०४ ) (सू) दूतस्य भागकर्मणी । ४ । ४ । १२० । भागोंऽशः । दूत्यम् ॥ ( ५३०५ ) (सू) रक्षोयातूनां हननी । ४ । ४ । १२१ । या ते अग्ने रक्षस्या तनूः ॥ ( ५३०६ ) (सू) रेवतीजगतीहविष्याभ्यः प्रशस्ये । ४ । ४ । १२२ । प्रशंसने यत्स्यात् । रेवत्यादीनां प्रशंसनं रेवत्यम् । जगत्यम् । हविष्यम् ॥ ( ५३०७ ) (सू) असुरस्य स्वम् ।

---

प्रोक्ते इति । 'तेन प्रोक्तम् २०४४' इत्येतस्मिन्नर्थे ॥ शौनकीयेति । 'वृद्धाच्छः १८८०' । ( ५२९१ ) द्व्यचः-। 'मयड्वैतयोर्भाषायाम्-२०९६' इत्युक्तेर्वेदेऽप्राप्तौ विधीयते ॥ ( ५२९२ ) नोत्वद्व-। उकारवतः प्रातिपदिकाद्वर्ध्रबिल्वशब्दाभ्यां च मयण्न स्यात् । 'द्व्यचश्छन्दसि ५२९१' इति प्राप्तः प्रतिषिध्यते ॥ मौञ्जमिति । मुञ्जशब्दादौत्सर्गिकोऽण् ॥ वार्ध्रीति । वर्ध्रशब्दादौत्सर्गिकोऽण् 'टिड्ढाणञ्-६५१' इति ङीप् ॥ ( ५२९३ ) ढश्छन्दसि । सप्तम्यन्तात्सभाशब्दात् ढः साध्वर्थे ॥ ( ५२९४ ) अणादीनां चेति । 'तत्र भवः १९८९' इति प्राप्तानाम् ॥ ( ५२९५ ) पाथोनदीभ्याम्-। सप्तम्यन्ताभ्यामाभ्यां भवार्थे ड्यण् स्यात् ॥ पाथसीति । पाथो जलम् । 'कबन्धमुदकं पाथः' इत्यमरात् । 'पाथोऽन्तरिक्षम्' इति वृत्तिः ॥ ( ५२९६ ) वैशन्तीभ्य इति । 'विशेर्झच्' । 'वेशन्तः पल्वलम्' तत्र भवा आपः वैशन्त्यः ॥ ( ५२९८ ) सगर्भसयूथस-। ' अर्तिगॄभ्यो भन् ४६३५ ' । गिरति गीर्यते वा गर्भः । युता भवन्त्यस्मिन्निति यूथम् । 'तीर्थपृष्ठयूथगूथप्रोथाः ४३७१' इति थक्प्रत्ययान्तो निपातितः । दीर्घोऽपि निपातनादेव ॥ कर्मधारया इति । समानश्चासौ गर्भश्च । तत्र भवः सगर्भ्य इति विग्रहः ॥ यतोऽपवाद इति । 'भवे छन्दसि ५२९४' इति प्राप्तस्य ॥ ( ५३०० ) अग्राद्यत् । 'भवे छन्दसि ५२९४' इत्येव सिद्धे घादिभिर्बाधा मा भूदिति यद्विधीयते ॥ ( ५३०२ ) समुद्रा-। समुनत्तीति समुद्रः । 'स्फायितञ्चि-४३७२' इति रक् । अपो बिभर्ति इत्यभ्रम् । मूलविभुजादित्वात्कः । 'अभ्रसमुद्रात्' इति वक्तव्ये 'समुद्राभ्रात्' इत्युक्तिः पूर्वनिपातस्यानित्यत्वज्ञापनार्था ॥ ( ५३०३ ) बर्हिषि-। 'तत्र भवः १९८९' इति निवृत्तम् । बर्हिःशब्दाद्दत्तमित्यर्थे यत्प्रत्ययो भवति ॥ बर्हिष्येति । 'बृंहतेर्नलोपश्च ४४६९' इतीस्प्रत्ययान्तो बर्हिस्तस्माद्यत् ॥ ( ५३०४ ) दूतस्य-। दूतशब्दात्षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत्प्रत्ययः स्यात् । भागे 'तस्येदम् २०६४' इत्यणि प्राप्ते वचनम् । कर्मणि तु 'दूतवणिग्भ्यां च २४२८' इत्यौपसंख्यानिको यः ॥ दूत्यमित्यादि । दूतस्य भागो दूत्यः, कर्म दूत्यम् ॥ ( ५३०५ ) रक्षोयातूनाम्-। षष्ठीबहुवचनान्ताभ्यां रक्षस्यातुशब्दाभ्यां हननीत्यस्मिन्नर्थे यत्स्यात् । रक्षेरसुनि १३३५' इत्येकशेषः स्यादिति वाच्यम्, बह्वर्थाभिधायिस्वरूपवचनत्वेन सूत्रे भिन्नार्थत्वात् ॥ रक्षस्येति । हन्यतेऽनया सा हननी, रक्षसां हननी, रक्षस्या । एवं यातव्या । बहुवचनं स्तुतिवैशिष्ट्यज्ञापनाय, बहूनां रक्षसां हनने हि स्तुतिः प्रतीयते ॥ ( ५३०६ ) रेवतीजगती-। प्रशंसनं प्रशस्यम् । प्रपूर्वात् 'शंसु स्तुतौ' इत्यस्माद्भावे क्यप् तदाह-प्रशंसने इति । रयिरस्यास्तीति रेवती रयिशब्दान्मतुप् 'छन्दसीरः ५४६०' इति वत्वम् । 'रयेर्मतौ बहुलम् ५३५७' इति । संप्रसारणम् । उगित्वान्ङीप्, नक्षत्रे गौरादित्वान्ङीष् । जगच्छब्दात् 'वर्तमाने-४४४४' इत्यनेन शतृवद्भावात् । 'उगितश्च-६१९' इति ङीप् । हविषे हिता हविष्या उगवादित्वाद्यत् तासां प्रशंसनं हविष्यं 'यस्येति-४३१' लोपे कृते 'हलो यमां यमि-९१' इति यलोपः ॥ ( ५३०७ ) असुरस्य स्वम् । असुरशब्दात्षष्ठीसमर्थात्स्वमित्येतस्मिन्नर्थे यत्स्यात् । असुर्यमिति ।

।४।४।१२३। असुर्यं देवेभिर्धायि विश्वम् ॥ ( ५३०८ ) मायायामण् ।४।४।१२४। आसुरी माया ॥ ( ५३०९ ) तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ।४।४।१२५। वर्चस्वानुपधानो मन्त्र आसामिष्टकानां वर्चस्याः। ऋतव्याः ॥ ( ५३१० ) अश्विमानण् ।४।४।१२६। आश्विनीरुपदधाति ॥ ( ५३११ ) वयस्यासु मूर्ध्नो मतुप् ।४।४।१२७। तद्वानासामिति सूत्रं सर्वमनुवर्तते। मतोरिति पदमावर्त्य पञ्चम्यन्तं बोध्यम्। मतुबन्तो यो मूर्धशब्दस्ततो मतुप्स्यात्प्रथमस्य मतोर्लुक्च वयश्शब्दवन्मन्त्रोपधेयास्विष्टकासु। यस्मिन्मन्त्रे मूर्द्धवयःशब्दौ स्तस्तेनोपधेयासु। मूर्द्धन्वतीरुपदधातीति प्रयोगः ॥ ( ५३१२ ) मत्वर्थे मासतन्वोः ।४।४।१२८। नभोऽस्मिन्। तदस्मिन्नस्तीति नभस्यो मासः। ओजस्या तनूः ॥ ( ५३१३ ) मधोर्ञ च ।४।४।१२९। माधवः। मधव्यः ॥ ( ५३१४ ) ओजसोऽहनि यत्खौ ।४।४।१३०। ओजस्यमहः। ओजसीनं वा ॥ ( ५३१५ ) वेशोयशआदेर्भगाद्यल्खौ ।४।४।१३१।१३२।

न सुरोऽसुरः सुरप्रतिपक्षी अथवा 'असेरुरन्' अस्यति अस्यते वा असुरः। तस्य स्वमसुर्यम् ॥ ( ५३०८ ) मायायामण्। मीयतेऽनयेति माया असदर्थप्रकाशनशक्तिः। माङः औणादिको यः। तस्यां वाच्यायामसुरशब्दादण् स्यात्। पूर्वसूत्रापवादः ॥ आसुरीति। 'टिड्ढाणञ्–६५१' इति ङीप् ॥ ( ५३०९ ) तद्वानासा–। मत्वन्तात्प्रथमान्तात्समर्थादासामिति षष्ठ्यर्थे यत्स्यात्। तत्प्रथमान्तसमर्थमुपधानो मन्त्रश्चेत्स भवति, यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति। मतोश्च लुक् ॥ वर्चस्वानिति। वर्चःशब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान् कुम्भेष्टकोपधानमन्त्रः। 'भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवे' इत्यादिकः। उपधीयतेऽनेनेत्युपधानम्। चयनं रचनमित्यर्थः ॥ ऋतव्या इति। ऋतुशब्दो यस्मिन्मन्त्रेऽस्ति स ऋतुमान्, स च 'मधुश्च माधवश्च' इत्यादिकः। ऋतुमानुपधानो मन्त्र आसामिष्टकानामृतव्याः। तद्वानिति किम्। मन्त्रादेव समुदायान्मा भूदिति काशिका। अत्र हरदत्तः। ननु तद्वानित्यस्मिन्नसति 'समर्थानां प्रथमाद्वा १५३४' इति वचनादासामिति प्रथमानिर्दिष्टत्वात्षष्ठ्यन्तादिष्टकाभिधायिनः उपधानमन्त्रे प्रत्ययः स्यादिति वाक्यार्थः स्यात्। तथा च–समुदायान्न प्राप्नोतीति चेत्, सत्यम्–, आसामिति प्रथमं न करिष्यत इति ( मत्वा प्रश्नप्रतिवचने ततश्च ) 'उपधानो मन्त्र आसामिष्टकासु लुक् च मतोः' इति योगः करिष्यते। तथा च–तद्वानित्यस्याभावे 'भूतं च स्थ भव्यं च स्थ' इत्ययमुपधानो मन्त्र आसामिष्टकानामिति वाक्यं स्यात्। तथा चेतिना परामृष्टान्मन्त्रसमुदायादेव प्रत्ययः प्राप्नोतीति भावः। उपधान इति किम्। वर्चस्वदभिमन्त्रणमासामित्यत्र मा भूत्। 'शिवेन मा चक्षुषा' इत्यनुवाकः कुम्भेष्टकाभिमन्त्रणे विनियुक्तः। मन्त्र इति किम्। अङ्गुलिमानुपधानो हस्त आसामित्यत्र मा भूत्। इष्टकास्विति किम्। वर्चस्वानुपधान आसां शर्कराणामित्यत्र मा भूत्। इतिकरणं नियमार्थम्। अनेकपदसंभवे केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते न सर्वेण ॥ मतुब्ग्रहणमुत्तरार्थम्। 'अश्विमानण् ५३१०' इत्यत्र मतुप एव लुक् यथा स्याद् इनेर्मा भूत्। इह तु मत्वन्तात्प्रत्ययविधानात्तस्यैव लुक् भविष्यति ॥ ( ५३१० ) अश्विमानण्–। अश्विशब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान्मन्त्रः स च 'ध्रुवक्षितिः' इत्यादिकः। प्रथमान्तादश्विमच्छब्दादासामिति षष्ठ्यर्थे अण् स्यात्, यत्प्रथमानिर्दिष्टमुपधानो मन्त्रश्चेत्स भवति, यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति मतोश्च लुक् ॥ आश्विनीरुपदधातीति। अश्वशब्दात् 'अत इनिठनौ २६००' इत्यस्त्यर्थे इनिः। तदन्तान्मतुप्। अश्विमान्स उपधानो मन्त्र आसामिष्टकानामिति विगृह्याऽणि विहिते मतोश्च लुकि कृते 'इनण्यनपत्ये १७५९' इति प्रकृतिभावः ॥ ( ५३११ ) वयस्यासु–। वयस्वानुपधानो मन्त्र आसामिष्टकानां ता वयस्यास्तास्वभिधेयासु प्रथमासमर्थान्मतुबन्तमूर्द्धशब्दादासामिति षष्ठ्यर्थे मतुप्स्यात्। यत्प्रथमानिर्दिष्टमुपधानो मन्त्रश्चेत्स भवति यदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति यस्मिन्मन्त्रे मूर्द्धशब्दो वयःशब्दश्च विद्यते स मूर्द्धवान् वयस्वान् यथा 'मूर्द्धा वयः प्रजापतिश्छन्दः' इति, तत्र वयस्वच्छब्दादिव मूर्द्धवच्छब्दादपि पूर्वेण यति प्राप्ते मतुब्विधीयते इत्याशयेनाह–यस्मिन्मन्त्र इति। मूर्द्धन्वतीरिति। 'अनो नुट् ५४६१' इति नुडागमः। 'मूर्द्धवतः' इति वक्तव्ये भाविनं मतुब्लुकं चेतसि कृत्वा 'मूर्ध' इत्युक्तम् ॥ ( ५३१२ ) मत्वर्थे–। यस्मिन्नर्थे मतुब्विहितस्तस्मिन्नर्थे प्रथमान्ताद्यत्स्यात् मासतन्वोरभिधेययोः। ननु प्रथमासमर्थमिति कस्मादागतमिति चेत्, मत्वर्थग्रहणादित्यवेहि। 'कृषिचमितनिधनिसर्जिभ्य ऊः ४२८०' इति ऊकारान्तस्तनूशब्दः सूत्रे निर्दिष्टः। न तु 'भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः ४२०५' इत्युकारान्तः। 'द्वन्द्वे घि १२९५' इति पूर्वनिपातप्रसङ्गात् ॥ ओजस्या इति। ओजो यस्या यस्यां वा अस्तीत्योजस्या ॥ ( ५३१३ ) मधोः–। मधुशब्दान्मत्वर्थे ञः स्याच्चायत् ॥ मधव्य इति। 'ओर्गुणः १२१९' 'वान्तो यि–९४' इति अवादेशः ॥ ( ५३१४ ) ओजसोऽह–। ओजःशब्दान्मत्वर्थे यत्खौ स्तोऽहन्यभिधेये। ननु यद्ग्रहणं व्यर्थं 'खञ्च' इत्येवास्त्विति चेत्, मैवम्–'खञ्च' इत्युच्यमानेऽनन्तरसूत्रविहितस्य ञमात्रस्य समुच्चयो विज्ञायेत तस्माद्यद्ग्रहणम् ॥ ( ५३१५ ) वेशोयश–। वेशश्च यशश्च वेशोयशसी ते आदौ यस्य तस्माद्वेशोय-

१ अनन्तरार्थे चेति वक्तव्यम् ॥ * ॥ मध्वनन्तरमस्मिन्मधव्यो मासः ॥ लुगकारेकाररेफाश्चेति वाच्यम् ॥ * ॥ लुक्। मधुस्तपो नभः। अकारः इषः। ऊर्जः। अन्नवान्बलवानित्यर्थः। इकारः। शुचिः आतपाधिक्येन देहशोषरूपशुचवानित्यर्थः। रेफः। शुक्रः ॥ २–अयं पाठो लिखितपुस्तके नोपलभ्यते ॥

(५३१६) (उ) **यथासंख्यं नेष्यते** । वेशो बलं तदेव भग इति कर्मधारयः । वेशोभग्यः । वेशोभगीनः । यशोभग्यः । यशोभगीनः ॥ (५३१७) (सू) **पूर्वैः कृतमिनियौ च** । ४ । ४ । १३३ । गम्भीरेभिः पथिभिः पूर्विणेभिः । ये ते पन्थाः सवितः पूर्व्यासः ॥ (५३१८) (सू) **अद्भिः संस्कृतम्** । ४ । ४ । १३४ । यस्येदमप्यं हविः ॥ (५३१९) (सू) **सहस्रेण सम्मितौ घः** । ४ । ४ । १३५ । सहस्रियासो अपां नोर्मयः । सहस्रेण तुल्या इत्यर्थः ॥ (५३२०) (सू) **मतौ च** । ४ । ४ । १३६ । सहस्रशब्दान्मत्वर्थे घः स्यात् । सहस्रमस्यास्तीति सहस्रियः ॥ (५३२१) (सू) **सोममर्हति यः** । ४ । ४ । १३७ । सोम्यो ब्राह्मणः । यज्ञार्ह इत्यर्थः ॥ (५३२२) (सू) **मये च** । ४ । ४ । १३८ । सोमशब्दाद्यः स्यान्मयडर्थे । सोम्यं मधु । सोममयमित्यर्थः ॥ (५३२३) (सू) **मधोः** । ४ । ४ । १३९ । मधुशब्दान्मयडर्थे यत्स्यात् । मधव्यः । मधुमय इत्यर्थः ॥ (५३२४) (सू) **वसोः समूहे च** । ४ । ४ । १४० । चान्मयडर्थे यत् । वसव्यः ॥ (५३२५) (वा) **अक्षरसमूहे छन्दस उपसंख्यानम्** ॥ छन्दःशब्दादक्षरसमूहे वर्तमानात्स्वार्थे यदित्यर्थः । आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशाक्षरश्छन्दस्यः ॥ (५३२६) (सू) **नक्षत्राद् घः** । ४ । ४ । १४१ । स्वार्थे । नक्षत्रियेभ्यः स्वाहा ॥ (५३२७) (सू) **सर्वदेवात्तातिल्** । ४ । ४ । १४२ । स्वार्थे । सविता नः सुवतु सर्वतातिम् । प्रदक्षिणिद्देवतातिमुराणः ॥ (५३२८) (सू) **शिवशमरिष्टस्य करे** । ४ । ४ । १४३ । करोतीति करः । पचाद्यच् । शिवं करोतीति शिवतातिः । याभिः शन्ताती भवथो ददाशुषे । अथो अरिष्टतातये ॥ (५३२९) (सू) **भावे च** । ४ । ४ । १४४ । शिवादिभ्यो भावे तातिः स्याच्छन्दसि । शिवस्य भावः शिवतातिः । शन्तातिः । अरिष्टतातिः ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

(५३३०) (सू) **सप्तनोऽञ्छन्दसि** । ५ । १ । ६१ । तदस्य परिमाणमिति वर्ग इति च । सप्त साप्तानि असृजत् ॥ (५३३१) (वा) **शन्शतोर्डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः** ॥ पञ्चदशिनोऽर्धमासाः । त्रिंशिनो मासाः ॥ (५३३२) (वा) **विंशतेश्चेति वाच्यम्** । विंशिनोऽङ्गिरसः ॥ (५३३३) (वा) **युष्मदस्मदोः सादृश्ये वतुब्वाच्यः** ॥ त्वावतः पुरूवसो । न त्वावाँ अन्यः । यज्ञं विप्रस्य मावतः ॥ (५३३४) (सू) **छन्दसि च** । ५ । १ । ६७ । प्रातिपदिकमात्रात्तदर्हतीति यत् । सादन्यं विदथ्यम् ॥ (५३३७) (सू) **वत्सरान्ताच्छश्छन्दसि** । ५ । १ । ९१ । निर्वृत्तादिष्वर्थेषु । इद्वत्सरीयः ॥ (५३३६) (सू) **संपरिपूर्वात्ख च** । ५ । १ । ९२ ।

---

शआदेर्भगात्प्रातिपदिकाद्यत्खौ स्तो मत्वर्थे । लकारः स्वरार्थः ॥ **वेशोभग्य इति** । वेशोभगमस्त्यास्मिन्नस्येति वा वेशोभग्यः । वेशोभगीनः ॥ (५३१७) **पूर्वैः कृत-** । तृतीयासमर्थात्पूर्वशब्दात्कृतमित्यस्मिन्नर्थे इनियौ स्तः, चाद्यत्खौ ॥ **पूर्विणेभिरिति** । पूर्वैः कृताः पूर्विणाः-तैः । एवं पूर्व्यासः पूर्विणाः ॥ (५३१८) **अद्भिः-** । तृतीयान्तादप्शब्दात्संस्कृतमित्यर्थे यत्स्यात् ॥ (५३१९) **सहस्रेण-** । तृतीयान्तात्सहस्रशब्दात्संमितमित्येतस्मिन्नर्थे घः स्यात् । संमितः सदृशस्तुल्य इत्यर्थः ॥ **सहस्रिया इति** । सहस्रेण संमिताः सहस्रियाः । 'यस्येति च ४३१' इत्यकारलोपः । समिताविति पाठान्तरम्[1] ॥ (५३२०) **मतौ-** । 'तपः सहस्राभ्यां विनीनी २५८०' इत्यस्यापवादः ॥ (५३२१) **सोममर्हति-** ॥ द्वितीयान्तात्सोमशब्दादर्हतीत्यस्मिन्नर्थे यः स्यात् ॥ **सोम्य इति** । सोममर्हतीति सोम्यः ॥ (५३२२) **मये च** । आगतविकारावयवप्रकृता मयडर्थाः । तत्रागते पञ्चमी समर्थविभक्तिः । विकारावयवयोः षष्ठी, प्रकृतवचने प्रथमा ॥ (५३२३) **मधोर्यः स्यादिति** । वृत्तिकारस्तु यतमेवानुवर्तयति, न तु यम् ॥ (५३२६) **नक्षत्रात्-** । **स्वार्थ इति** । समूह इति नानुवर्तते । तेनाऽनिर्दिष्टार्थत्वात्स्वार्थे प्रत्यय उत्पद्यत इत्यर्थः ॥ (५३२७) **सर्वदेवात्-** । सर्वशब्दाद्देवशब्दाच्च तातिल् स्यात् ॥ (५३२८) **शिवशम-** । करशब्दसामानाधिकरण्यात्, 'शिवशमरिष्टस्य' इति 'उभयप्राप्तौ कर्मणि ९०९' इति षष्ठी ॥ इति वैदिकसुबोधिन्यां चतुर्थोऽध्यायः ॥ ४ ॥

(५३३०) **सप्तनोऽञ्-** । सप्तन्शब्दादञ्स्याच्छन्दसि ॥ **साप्तानीति** । सप्तन्शब्दादञि 'नस्तद्धिते' इति टिलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां जस् । 'जश्शसोः शिः ४३३' । 'नपुंसकस्य-४३५' इति नुम् । उपधादीर्घः ॥ (५३३१) **शन्शतोः** । डित्करणं शदन्तस्य टिलोपार्थम् ॥ **पञ्चदशिन इति** । पञ्चदशाहानि परिमाणमेषामिति डिनिः । टिलोपः । एतेन त्रिंशिनो व्याख्याताः ॥ (५३३२) **विंशिनोऽङ्गिरस इति** । विंशतिर्गोत्राणि परिमाणमेषामिति विग्रहे डिनि कृते 'ति विंशतेर्डिति १२१६' इति तिशब्दलोपे कृते 'यस्येति च ४३१' इत्यल्लोपः । अङ्गिरसः-अयास्यगार्ग्यगौतम इत्यादिप्रवरभेदभिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः ॥ (५३३३) **त्वावत इति** । त्वमिव त्वावान् । तस्य त्वावतः । अहमिवेति मावान् । तस्य मावतः । 'प्रत्ययोत्तरपदयोश्च १२२४' इति त्वमादेशौ । 'आ सर्वनाम्नः ५७६' इत्यात्वम् ॥ (५३३४) **सादन्यमिति** । सदनं गृहमर्हतीति सादन्यः । 'अन्येषामपि-५३९०' इति दीर्घः ॥ **विदथ्यमिति** । विदथो यज्ञस्तमर्हतीत्यर्थः ॥ (५३३५) **इद्वत्सरीय इति** । इद्वत्सरेण निर्वृत्तः इद्वत्सरमधीष्टो भृतो भूतो भावी वा इद्वत्सरीयः । इद्वत्सरेदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वर्षयोः संज्ञे । एवं संवत्सरपरिवत्सरशब्दावपि ॥ (५३३६) **सम्परिपूर्वा-** । सम्परिपूर्वाद्वत्सरान्ता-

---

[1] तत्त्वबोधिन्यननुकूलोऽयं पाठः ॥

वाच्छः । संवत्सरीणः । सांवत्सरीयः । परिवत्सरीणः । परिवत्सरीयः ॥ ( ५३३७ ) छन्दसि घस् । ५ । १ । १०६ । ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे । भाग ऋत्वियः ॥ ( ५३३८ ) उपसर्गाच्छन्दसि धात्वर्थे । ५ । १ । ११८ । धात्वर्थविशिष्टे साधने वर्तमानात्स्वार्थे वतिः स्यात् । यदुद्वतो निवतः । उद्गतान्निर्गतानित्यर्थः ॥ ( ५३३९ ) थट् च च्छन्दसि । ५ । २ । ५० । नान्तादसंख्यादेः परस्य डटस्थट् स्यान्मट् च । पञ्चथम् । पञ्चमम् ॥ [ २५५० ] छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि । ५।२।८९ । अपत्यं परिपन्थिनम् । मा त्वा परिपरिणो विदन् ॥ ( ५३४० ) बहुलं छन्दसि । ५ । २ । १२२ । मत्वर्थे विनिः स्यात् ॥ ( ५३४१ ) छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम् ॥ इति दीर्घः । संहिष्ठमुभयाविनम् । शुनमष्ट्राव्यचरत् ॥ ( ५३४२ ) छन्दसीवनिपौ च वक्तव्यौ ॥ ई रथीरभूत् । सुमङ्गलीरियं वधूः । मघवानमीमहे ॥ ( ५३४३ ) तयोर्दार्हिलौ च च्छन्दसि । ५ । ३ । २० । इदंतदोर्यथासंख्यं स्तः । इदाहि व उपस्तुतिम् । तर्हि ॥ ( ५३४४ ) था हेतौ च च्छन्दसि । ५ । ३ । २६ । किमस्था स्याद्धेतौ प्रकारे च । कथा ग्रामं न पृच्छसि । कथा दाशेम ॥ ( ५३४५ ) पश्च पश्चा च च्छन्दसि । ५ । ३ । ३३ । अवरस्य अस्तात्यर्थे निपातौ । पश्च हि सः । नो ते पश्चा ॥ [ २७२१ ] तुश्छन्दसि । ५ । ३ । ५९ । तृजन्तात्तृन्नन्ताच्च इष्ठनीयसुनौ स्तः । आसुतिं करिष्ठः । दोहीयसी धेनुः ॥ ( ५३४६ ) प्रत्नपूर्वविश्वेमात्थाल्छन्दसि । ५ । ३ । १११ । इवार्थे । तं प्रत्नथा पूर्वथा विश्वथेमथा ॥ ( ५३४७ ) अमु च च्छन्दसि । ५ । ४ । १२ । किमेत्तिङव्ययघादित्येव । प्रतं नय प्रतरम् ॥ ( ५३४८ ) वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि । ५ ।

---

स्मातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः स्याचाच्छः॥ (५३३७) छन्दसि घस् । 'समयस्तदस्य प्राप्तम् २३९४' इत्यतस्तदस्य प्राप्तमिति 'ऋतोरण् २३९८' इत्यतः ऋतोरिति चानुवर्तते तदाह-ऋतुशब्दादित्यादि ॥ ऋत्विय इति । 'सिति च १७७२' इति पदत्वेन भत्वे निरस्ते 'ओर्गुणः १२१९' इति गुणाभावे यण् ॥ (५३३८) उपसर्गात्-। इह धातुशब्देन धातुवाच्या क्रिया लक्ष्यते । स्वार्थः प्रयोजनं यस्य साधनस्य तस्मिन्वर्तमानादित्यर्थस्तदाह-धात्वर्थविशिष्ट इति । उपसर्गाश्च पुनरेवमात्मकाः, यदुत श्रुतायां क्रियायां तामेव विशिंषन्ति । यथा-आगच्छति । यत्र तु न श्रूयते, तत्र क्रियाविशिष्टसाधनमाहुः । यथा-निष्कौशाम्बिः । तथा च-यत्र क्रियापदं न श्रूयते, तत्रैव यथा स्यादित्येवमर्थं धात्वर्थे इत्युक्तम् ॥ (५३३९) थट् च-। 'तस्य पूरणे-२५०७' इत्यतः डडिति 'नान्तादसंख्यादेः-२५०८' इति च तदाह-नान्तादित्यादि ॥ पञ्चथमिति । पञ्चानां पूरणमित्यस्मिन्नर्थे डटि कृते तस्य थडागमः ॥ [ २५५० ] छन्दसि-। परिपन्थिन् परिपरिन् एतौ निपात्येते छन्दसि पर्यवस्थातरि वाच्ये । पर्यवस्थाता प्रतिपक्षः सपत्न इत्युच्यते । निपातनं चात्र, पर्यवस्थातृशब्दात्स्वार्थे इनिप्रत्ययोऽवस्थातृशब्दस्य पन्थ पर एतावादेशौ च निपात्येते ॥ (५३४०) बहुलम्-। 'अस्मायामेधास्रजो विनिः २६१०' इति वर्तते तदाह-विनिः स्यादिति ॥ (५३४१) अष्ट्रावीति । अशेः ष्ट्रन् अष्ट्रा दंष्ट्रापर्यायोऽयम् । मेखलावी, द्वयावी, उभयावी, रुजावी, हृदयावी । अत्र द्वयोभयहृदयान्येव दीर्घत्वं प्रयोजयन्ति, अन्येषां स्वत एव दीर्घत्वात् ॥ (५३४२) छन्दसी-। ईश्च वनिप् च ईवनिपौ ॥ ई इति ॥ ईप्रत्ययोदाहरणमुच्यते । रथीरिति । रथोऽस्यास्तीति रथीः ॥ सुमङ्गलीरिति । सुष्ठु मङ्गलमिति 'सुः पूजायाम् ८०८' इति समासः । ततोऽनेन मत्वर्थीय ईकारप्रत्ययः ॥ मघवानमिति । मघं धनं तदस्यास्तीति वनिपि । मतुपि तु मघवच्छब्दः ॥ (५३४३) तयोः-। तच्छब्देन 'इदमो र्हिल् २६६७' 'तदो दा च २६७०' इति सन्निहिताविदन्तदौ परामृश्येते तदाह-इदन्तदोरिति । सूत्रे न्यत्ययेन पञ्चम्याः स्थाने षष्ठी ॥ यथासंख्यं स्त इति । इदंशब्दाद्दा, तच्छब्दात् र्हिल् । इदा । इदम् शब्दाद्दा 'इदम इश् २६४९' इत्यनेनेशादेशः ॥ (५३४४) था हेतौ-। 'प्रकारवचने थाल् २६८१' इत्यतः 'प्रकारवचने' इति 'किमश्च २६८४' इति तदाह-किमस्था स्यादित्यादि ॥ कथा ग्रामं न पृच्छसीति । केन हेतुना न पृच्छसीत्यर्थः । तस्य 'प्राग् दिशो विभक्तिः २६४७' इत्यधिकाराद्विभक्तिसंज्ञायाम् 'किमः कः ४६६' इति कादेशः । प्रकारवचने उदाहरणमाह-कथा दाशेमेति । केन प्रकारेणेत्यर्थः । (५३४५) पश्च पश्चा-। अवरस्य पश्चभावः । अकाराकारौ च प्रत्ययौ निपात्येते ॥ अस्तात्यर्थे इति । 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः २६८५' ॥ [ २७२१ ] करिष्ठ इति । कर्तृशब्दादिष्ठन् 'तुरिष्ठेमेयःसु २७२२' इति तृलोपः ॥ दोहीयसीति । आतिशयेन दोग्ध्रीत्यर्थः । लिङ्गविशिष्टपरिभाषया दोग्ध्रीशब्दात्प्रत्ययः 'भस्याढे-१२०४' इति पुंवद्भावेन ङीपो निवृत्तिः । ततः 'तुरिष्ठेमेयःसु २७२२' इति तृचि निवृत्ते निमित्ताभावाद् घत्वकुत्वयोरपि निवृत्तिः॥(५३४६) प्रत्नपूर्व-। प्रत्न पूर्व विश्व इम एभ्यस्थाल् स्यात् ॥ (५३४७) अमु च-। किमेत्तिङव्ययघाद् द्रव्यप्रकर्षे वर्तमानादमुप्रत्ययो भवति ॥ प्रतरमिति । प्रकर्षार्थस्य प्रकर्षे तरप् । प्रकृष्टतर इतिवत् तदन्तादमुः । स्वरादिषु 'अम्' इति पठ्यते तेन तदन्तस्याव्ययत्वे सुपो लुक् । अत्रौदितकरणम् 'इच

---

१ घत्वधत्वयोरिति पाठस्तूचितः । कुत्वस्यासंभवात् ॥

। ४ । ४१ । स्वार्थे । यो न दुरेवो वृकतिः । ज्येष्ठतातिं बर्हिषदम् ॥ ( ५३४९ ) सू॰ अनसन्तान्नपुंसकाच्छन्दसि । ५ । ४ । १०३ । तत्पुरुषाट्टच् स्यात्समासान्तः । ब्रह्मसामं भवति । देवच्छन्दसानि ॥ ( ५३५० ) सू॰ बहुप्रजाश्छन्दसि । ५ । ४ । १२३ । बहुप्रजा निर्ऋतिमाविवेश ॥ ( ५३५१ ) सू॰ छन्दसि च । ५ । ४ । १४२ । दन्तस्य दतृ स्याद्बहुव्रीहौ । उभयतोदतः प्रतिगृह्णाति ॥ ( ५३५२ ) सू॰ ऋतश्छन्दसि । ५ । ४ । १५८ । ऋदन्ताद्बहुव्रीहेर्न कप् । हता माता यस्य हतमाता ॥ इति पञ्चमोऽध्यायः ॥ ५ ॥

एकाचो द्वे प्रथमस्य ॥ ( ५३५३ ) वा॰ छन्दसि वेति वक्तव्यम् ॥ यो जागार । दाति प्रियाणि ॥ (५३५४) सू॰ तुजादीनां दीर्घोऽभ्यासस्य । ६ । १ । ७ । तुजादिराकृतिगणः । प्रभरा तूतुजानः । सूर्यं मामहानम् । दाधार यः पृथिवीम् । स तूताव ॥ ( ५३५५ ) सू॰ बहुलं छन्दसि । ६ । १ । ३४ । ह्वः संप्रसारणं स्यात् । इन्द्रमाहुव ऊतये ॥ ( ५३५६ ) वा॰ ऋचि त्रेरुत्तरपदादिलोपश्च च्छन्दसि॥ऋच्शब्दे परे त्रेः संप्रसारणमुत्तरपदादेर्लोपश्चेति वक्तव्यम् । तृचं साम । छन्दसि किम् । त्र्यृचानि ॥ ( ५३५७ ) वा॰ रयेर्मतौ बहुलम् ॥ रेवान् । रयिमान् पुष्टिवर्धनः ॥ ( ५३५८ ) सू॰ चायः की । ६ । १ । ३५ । न्य १ न्यं निचिक्युरन्यम् । लिटि उसि रूपम् । बहुलग्रहणानुवृत्तेर्नेह । अग्निं ज्योतिर्निचाय्य ॥ (५३५९) सू॰ अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्ताः । ६ । १ । ३६ । एते छन्दसि निपात्यन्ते । इन्द्रश्च विष्णो यदपस्पृधेथाम् । स्पर्धेर्लङि आथाम् । अर्कमानृचुः । वसून्यानृहुः । अर्चेरर्हेश्च लिटयुसि । चिच्युषे । च्युङो लिटि थासि । यस्तित्याज । त्यजेर्णलि । श्रातास्त इन्द्र सोमाः । श्रिता नो ग्रहाः । श्रीञ् पाके निष्ठायाम् । आशिरं दुहे । मध्यत आशीर्तः । श्रीञ एव क्विपि निष्ठायां च ॥ ( ५३६० ) सू॰ खिदेश्छन्दसि । ६ । १ । ५२ । 'खिद दैन्ये' । अस्यैच आद्वा स्यात् । चिखाद । चिखेदेत्यर्थः ॥ ( ५३६१ ) सू॰ शीर्षश्छन्दसि । ६ । १ । ६० । शिरःशब्दस्य शीर्षन् स्यात् । शीर्ष्णः शीर्ष्णो

---

एकाचोऽम्प्रत्ययवच्च ४०००' इत्यत्रास्य ग्रहणं मा भूत् । यदि स्यात्तर्हि अत्रापि यद् इष्टं कार्यं तदप्यतिदिश्येत । तत्र को दोषः । इह त्रियं मन्यमानः 'यस्येति च ४३१' इति लोपः प्राप्नोति ॥ ( ५३४९ ) अनसन्तात्–। अन्नन्तस्योदाहरणमाह–**ब्रह्मसाममिति** । असन्तस्याह–**देवच्छन्दसानीति** । (५३५०) **बहुप्रजाः**–। बहुप्रजा इति निपात्यते छन्दसि ॥ **बहुप्रजा इति** । बह्व्यः प्रजा यस्येति बहुव्रीहिः । असिच् प्रत्ययः । 'यस्येति च ४३१' इत्याकारलोपः । 'अत्वसन्तस्य –५७०' इति दीर्घः, रुत्वविसर्गौ ॥ ( ५३५१ ) **छन्दसि च** । 'वयसि दन्तस्य दतृ १२६२' इत्यतो दन्तस्य दतृ इत्यनुवर्तते तदाह–**दन्तस्य दतृ स्यादिति** । **उभयतोदत इति** । उभयतो दन्ता यस्येति विग्रहः ॥ ( ५३५२ ) **हतमाता इति** । 'नद्यृतश्च ११९८' इति नित्यं कप् प्राप्तः ॥ इति सुबोधिन्यां पञ्चमोऽध्यायः ॥ ५ ॥

( ५३५३ ) **जागारेति** । 'जागृ निद्राक्षये' लिटि प्रथमपुरुषैकवचनम् । **दातीति** । 'डुदाञ् दाने' लट् । शपः श्लुः । 'श्लौ ३३०८' इति नित्यं द्वित्वे प्राप्ते विकल्पः ॥ ( ५३५४ ) **तूतुजान इति** । तुजेर्लिट् तस्य कानजादेशः । **मामहानमिति** । 'मह पूजायाम्' कानच् । **तूतावेति** । तुः सौत्रो धातुः तस्माल्लिट् । ( ५३५५ ) **बहुलं छन्दसि** । 'ह्वः संप्रसारणम् ३४३९' इति वर्तते तदाह–**ह्वः संप्रसारणं स्यादिति** । **आहुवे इति** । आङ्पूर्वात् ह्वेञो लडात्मनेपदोत्तमैकवचनम् । 'बहुलं छन्दसि ५२२७' इति शपो लुकि कृते संप्रसारणमुवङादेशश्च । ( ५३५६ ) **तृचं सामेति** । तिस्रः ऋचो यस्मिंस्तत्तृचम् । 'ऋक्पूरब्धूःपथामानक्षे १३५०' इति समासान्तः अः ॥ ( ५३५७ ) **रयेर्मतौ**–। रयिशब्दस्य मतौ परतः संप्रसारणं स्याच्छन्दसि । **रेवानिति** । 'छन्दसीरः ५४६०' इति वत्वम् । **रयिमानिति** । बहुलग्रहणात्संप्रसारणवत्वयोरभावः ॥ ( ५३५८ ) **चायः की** । चायतेर्बहुलं कीत्ययम् आदेशः स्याच्छन्दसि । **चिक्युरिति** । 'कुहोश्चुः ३००५' इति चुः । **निचाय्येति** । 'चायृ पूजानिशामनयोः' अस्मात् क्त्वा गतिसमासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ५१५३' इति ल्यबादेशः ॥ ( ५३५९ ) **स्पर्धेर्लङ्याथामिति** । द्विर्वचनं रेफस्य संप्रसारणमकारलोपश्च निपातनात् । अस्पर्धाथामिति भाषायाम् । अपरे तु अपपूर्वस्य स्पर्धेर्लङ्याथामि संप्रसारणमलोपश्च निपातनात् । 'बहुलं छन्दस्यमाङ्योगेऽपि ५३९७' इत्यडागमाभावः । तमन्ते प्रत्युदाहरणमपास्पर्धाथामिति भाषायाम् । **अर्चेरर्हेश्चेति** । संप्रसारणमलोपश्च निपातनात् । ततो द्विर्वचनमुरदत्वम् । 'अत आदेः ३०४९' इति दीर्घत्वम् । 'तस्मान्नुड् द्विहलः ३०५५' इति नुडागमः । आनर्चुरानर्हुरिति भाषायाम् । **च्युङो लिटीति** । अभ्यासस्य संप्रसारणमनिट्त्वं च निपातनात् । चुच्युविषेति भाषायाम् । **त्यजेर्णलीति** । 'त्यज वयोहानौ' । अभ्यासस्य संप्रसारणं निपात्यते । तत्याजेति भाषायाम् । **श्राता इति** । 'श्रीञ् पाके' इत्यस्य निष्ठायां श्राभावः । **श्रिता इति** । तस्यैव श्रीणातेर्ह्रस्वत्वं च ॥ **आशिरमिति** । आङ्पूर्वस्य श्रीणातेः क्विप् धातोः शिर आदेशः । तस्माद् द्वितीयैकवचनम् । **आशीर्त इति** । श्रिञः आङ्पूर्वस्य शिर इत्यादेशः । निष्ठायाश्च नत्वाभावो निपातनात् । 'हलि च ४८१' इति दीर्घः ॥ ( ५३६० ) **खिदेश्छन्दसि** । 'आदेच उपदेशे–३१६३' इत्यतः आदिति, एच इति च वर्तते 'विभाषा लीयतेः ३३२७' इत्यतो विभाषेति च तदाह–**आद्वा स्यादिति** । **चिखादेति** । व्यत्ययेन परस्मैपदम् ॥ ( ५३६१ ) **शीर्ष्ण इति** । 'अल्लोपोऽनः ३३५' इत्यल्लोपः । 'रषाभ्याम्–३६६' इति णत्वम् ।

जगत: ॥ (५३६२) (सू) वा छन्दसि । ६ । १ । १०६ । दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात् । वाराही । वाराह्यौ । मानुषीरीळते विशः । उत्तरसूत्रद्वयेऽपीदं वाक्यभेदेन संबध्यते । तेनामि पूर्वत्वं वा स्यात् । शमीं च शम्यं च । सूर्मिं सूर्म्यं सुषिरामिव । संप्रसारणाच्चेति पूर्वरूपमपि वा । इज्यमानः । यज्यमानः ॥ (५३६३) (सू) शेश्छन्दसि बहुलम् ।६।१।७०। लोपः स्यात् । या ते गात्राणाम् । ताता पिण्डानाम् ॥(५३६४) (वा) एमन्नादिषु छन्दसि पररूपं वक्तव्यम् ॥ अपां त्वेमन् । अपां त्वोद्मन् ॥ (५३६५) (सू) भय्यप्रवय्ये च च्छन्दसि । ६ । १ । ८३ । बिभेत्यस्मादिति भय्यः । वेतेः प्रवय्या इति स्त्रियामेव निपातनम् । प्रवेयमित्यन्यत्र । छन्दसि किम् । भेयम् । प्रवेयम् ॥ (५३६६) (वा) ह्रदय्या उपसंख्यानम् ॥ ह्रदे भवा ह्रदय्या आपः । भवे छन्दसि यत् ॥ (५३६७) (सू) प्रकृत्याऽन्तःपादमव्यपरे । ६ । १ । ११५ । ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यात् अति परे न तु वकारयकारपरेऽति । उपप्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । अन्तःपादं किम् । एतास एतेऽर्चन्ति । अव्यपरे किम् । तेऽवदन् ॥ (५३६८) (सू) अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च । ६ । १ । ११६ । एषु व्यपरेऽप्यति एङ् प्रकृत्या । वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रत । शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः । यद्यपि बह्वृचैस्तेनोऽवन्तु रथतूः । सोऽयमागात् । तेऽरुणेभिरित्यादौ प्रकृतिभावो न क्रियते, तथापि बाहुलकात्समाधेयम् । प्रातिशाख्ये तु वाचनिक एवायमर्थः ॥ (५३६९) (सू) यजुष्युरः । ६ । १ । ११७ । उरःशब्दः एङन्तोऽति प्रकृत्या यजुषि । उरो अन्तरिक्षम् । यजुषि पादाभावादनन्तःपादार्थं वचनम् ॥ (५३७०) (सू) आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे । ६ । १ । ११८ । यजुषि अति प्रकृत्या । आपो अस्मान्मातरः । जुषाणो अग्निराज्यस्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधिनाके । अम्बे अम्बाले अम्बिके ।

---

पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु 'अट्कुप्वाङ्–२८२' इत्यनेन ॥ (५३६२) **वा छन्दसि** । 'नादिचि २४५' 'दीर्घाज्जसि च ३४३' इति वर्तते तदाह—**दीर्घादित्यादि** । **वाराही इति** । वराहस्य विकार इति 'अवयवे च प्राण्योषधिवृक्षेभ्यः २०८८' इति 'प्राणिरजतादिभ्योऽञ् २१०७' ङीप् । द्विवचने पूर्वसवर्णदीर्घः । पूर्वसवर्णाभावे यणादेशः । **मानुषीरिति** । प्रथमाबहुवचनम् । 'मनोर्जातावञ्यतौ षुक् च १६७४' इति अञ् मनोः षुगागमः । **सूत्रद्वये इति** । 'आमि पूर्वः २७९' । 'संप्रसारणाच्च ४५४' इत्यत्र । **वाक्यभेदेनेति** । अकः अमि पूर्वरूपं वा स्याच्छन्दसि । तथा संप्रसारणादचीति पूर्वरूपं वा स्याच्छन्दसि तदाह—**तेनेति** । **शम्यं चेति** । विकल्पविधानसामर्थ्यात्पूर्वरूपत्वाभावे पूर्वसवर्णदीर्घोऽपि न भवति । तयोरत्र विशेषाभावादिति यणादेश एव भवति । **यज्यमान इति** । यजेर्लटः शानच् । 'सार्वधातुके-३६८०' इति यक् । 'आने मुक् ४१२०' इति मुक् 'ग्रहिज्या–३२१६' इति संप्रसारणं पूर्वरूपस्य वैकल्पिकत्वात्तदभावे यण् ॥ (५३६३) **या ते इति** । यानीत्यर्थः । यच्छब्दात्परस्य शेर्लोपे कृते प्रत्ययलक्षणेन 'त्यदादीनामः ३७०' इति अत्वे 'नपुंसकस्य झलचः ४३५' इति नुम् । 'सर्वनामस्थाने च–३५४' इति दीर्घः । नलोपः । **ताता इति** । तानितानीत्यर्थः पूर्ववत् ॥ (५३६५) **भय्यप्रवय्ये**—। बिभेतेः प्रपूर्वस्य वी इत्येतस्य च यति प्रत्यये परतश्छन्दसि विषये यादेशो निपात्यते । **भय्य इति** । 'कृत्यल्युटः–३७८६' इति अपादाने यत् ॥ (५३६६) **ह्रदय्या इति** । अकारस्यायादेशः ॥ (५३६७) **प्रकृत्या**—। पादस्य मध्ये इत्यन्तःपादमित्यव्ययीभावः । अन्तरित्यव्ययमधिकरणशक्तिप्रधानं मध्यमाचष्टे । पादश्चेह ऋक्पाद एव गृह्यते, न श्लोकस्य । 'वा छन्दसि ५३६२' इत्यतो मण्डूकप्लुत्या छन्दसीति वर्तते तेनास्य वैदिकत्वं संपद्यत इत्याशयेनाह—**ऋक्पादमध्यस्थ इति** । 'एङः पदान्तादति १४१' इति सूत्रादेङ इति पञ्चम्यन्तमनुवृत्तं प्रथमया विपरिणम्यतेऽन्यस्य कार्यिणोऽसंभवादित्यभिप्रेत्याह—**एङ् प्रकृत्येति** । संधिरूपं विकारं न यातीत्यर्थः ॥ **उपप्रयन्तो अध्वरमिति** । 'एङः पदान्तादति १४१' इति प्राप्तम् । **अन्तःपादं किमिति** । ऋचीत्येव किं नोक्तमित्यर्थः ॥ **एतेऽर्चन्तीति** । 'कया मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया' इति । अत्र एते इति पादस्यान्ते एङस्ति अकारश्च परस्य पादस्यादाविति तन्निमित्तिनिमित्तयोः पादमध्यस्थत्वामिति सत्यपि ऋक्त्वे प्रकृतिभावाभावः ॥ (५३६८) **अव्यात्**—। एषामनुकरणत्वात्सुबन्तेन समासः । 'अव रक्षणे' आशीर्लिङ् ॥ **अवद्यादिति** । पञ्चम्येकवचनान्तम् ॥ **अवक्रमुरिति** । अवपूर्वस्य क्रमेर्लिटि उसि 'द्विर्वचनप्रकरणे छन्दसि वा वचनम्' इति द्विर्वचनाभावे रूपम् । केचित्तु—अवचक्रमुरिति सूत्रे कृतद्विर्वचनं ये पठन्ति, तेषामुदाहरणं मृग्यम् । बह्वृचास्तावदवक्रमुरित्यधीयते ॥ **अव्रतेति** । वृङ्वृञोः 'मन्त्रे घस–५२२९' इति च्लेर्लुक् । 'आत्मनेपदेषु–३०२०' इति झस्यादादेशः ॥ **अयमिति** । इदमः सौ 'इदोऽय् पुंसि ४६८' । अवतेर्लोट्–अवन्तु ॥ **अवस्युरिति** । अवेरसुन् औणादिकः । ततः क्यच् 'क्याच्छन्दसि ४१७२' इत्युः ॥ (५३६९) **यजुष्युरः** ॥ **उरो अन्तरिक्षमिति** । नन्वत्र 'प्रकृत्याऽन्तःपादमव्यपरे ५३६७' इत्यनेनैव सिद्धे व्यर्थोऽयं योग इत्याशङ्क्याह—**यजुषि पादाभावादित्यादि** ॥ (५३७०) **आपोजुषाणो**—। आप इत्यादीनि पृथक् पदान्यनुकरणानि । विभक्तिस्तु अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वान्न भवति 'सुपां सुलुक्–५४१३' इति विभक्तेर्लुग्वा । अम्बिकेपूर्वे इत्येतदप्यनुकरणमेव तत्र प्रथमं जसन्तमनुकरणम् । द्वितीयं स्वन्तम् । तृतीयं शसन्तम् । चतुर्थं ङ्यन्तमितरे संबुध्यन्ते ।

अस्मादेव वचनादक्षोर्थेति ह्रस्वो न ॥ ( ५३७१ ) (सू) **अङ्ग इत्यादौ च** । ६ । १ । ११९ । अङ्गशब्दे य एङ् तदादौ अकारे च य एङ्पूर्वः सोऽति प्रकृत्या यजुषि । प्राणो अङ्गे अङ्गे अदीव्यत् ॥ ( ५३७२ ) (सू) **अनुदात्ते च कुधपरे** । ६ । १ । १२० । कवर्गधकारपरे अनुदात्तेऽति परे एङ् प्रकृत्या यजुषि । अयं सो अग्निः । अयं सो अध्वरः । अनुदात्ते किम् । अधोऽग्ने रुद्रे । अग्रशब्द आद्युदात्तः । कुधपरे किम् । सोऽयमग्निमतः ॥ ( ५३७३ ) (सू) **अवपथासि च** । ६ । १ । १२१ । अनुदात्ते अकारादौ अवपथाःशब्दे परे यजुषि एङ् प्रकृत्या । त्रीरुद्रेभ्यो अवपथाः । वपेस्थासि लङि तिङ्ङतिङ इत्यनुदात्तत्वम् । अनुदात्ते किम् । यद्रुद्रेभ्योऽवपथाः । निपातैर्यद्यदीति नि--घातो न ॥ ( ५३७४ ) (सू) **आङोऽनुनासिकश्छन्दसि** । ६ । १ । १२६ । आङोऽचि परेऽनुनासिकः स्यात् स च प्रकृत्या । अभ्र आँ अपः । गभीर आँ उग्रपुत्रे ॥ ( ५३७५ ) (वा) **ईषाअक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः ॥** ईषा अक्षो हिरण्ययः ॥ ज्या इयम् । पूषा अविष्टु ॥ ( ५३७६ ) (सू) **स्यश्छन्दसि बहुलम्** । ६ । १ । १३३ । स इत्यस्य सोर्लोपः स्याद्धलि । एष स्य भानुः ॥ (५३७७) (सू) **ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे** । ६।१।१५१ । ह्रस्वात्परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यान्मन्त्रे । हरिश्चन्द्रो मरुद्गणः । सुश्चन्द्र दस्म ॥ ( ५३७८ ) (सू) **पितरामातरा च च्छन्दसि** । ६ । ३ । ३३ । द्वन्द्वे निपातः । आ मा गन्तां पितरा मातरा च । चाद्विपरीतमपि । मातरा पितरा नू चिदिष्टौ ॥ [ १४५८ ] (सू) **समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु** । ६ । ३ । ८४ । समानस्य सः स्यान्मूर्धादिभिन्ने उत्तरपदे । सगर्भ्यः ॥ (५३७९) (वा) **छन्दसि स्त्रियां बहुलम्** ॥ विष्वग्देवयोरद्र्यादेशः । विश्वाची च घृताची च । देवद्रीचीं नयत देवयन्तः । कद्रीची ॥ (५३८०) (सू) **सध मादस्थयोश्छन्दसि** ।६ । ३ । ९६ । सहस्य सधादेशः स्यात् । इन्द्र त्वास्मिन्सधमादे । सोमः सधस्थम् ॥ (५३८१) (सू) **पथि च छन्दसि** ।६।३। १०८ । पथि-

---

आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते, शब्दात्पूर्वौ यौ अम्बेअम्बाले शब्दौ तौ च, ते अति परतः प्रकृत्या स्युः ॥ ( ५३७१ ) **अङ्ग इत्यादौ च ॥ अङ्गशब्दे य एङिति** । प्रकृत्या भवतीति वक्ष्यमाणेन सम्बन्धः ॥ **तदादौ अकारे च य एङ्पूर्व इति** । अत्रापि पूर्ववत्संबन्धः । अतिक्रान्तपरामर्शिना तच्छब्देन इतिशब्दार्थमाचष्टे । तस्याङ्गशब्दस्य आदिस्तदादिस्तद्रूपो य अकारस्तस्मिन् परे पूर्वो य एङ् स इत्यर्थः । नन्वत्र चकारः किमर्थ इति चेत्, शृणु–असति चकारेऽङ्गशब्दस्यैवेङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः स्यात्, ततश्च 'अङ्गे' इत्यत्रैव स्यात्, 'अङ्गे अदीव्यत्' इत्यत्र न स्यात् । सति तु तस्मिन्नङ्गशब्दस्य य एङ् यत्र कुत्रचिदति प्रकृत्या भवति तदादौ चाति परतो यः कश्चिदेङ् स प्रकृत्या भवतीत्ययमर्थो भवति, तेन 'अङ्गे अङ्गे अदीव्यत्' 'प्राणो अङ्गे' इत्युभयत्रापि भवति ॥ ( ५३७२ ) **अनुदात्ते च कुधपरे** । कुधौ परौ यस्मात्स तथोक्तः ॥ **कवर्गधकारेति** । धकारे अकार उच्चारणार्थः ॥ **अग्निरिति** । अग्निशब्दो 'अङ्गेर्निर्नलोपश्च ४६९४' इति निप्रत्ययान्तोऽन्तोदात्तः ॥ अध्वरशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ॥ **आद्युदात्त इति** । 'ऋज्रेन्द्राग्र–४३८९' इत्यादिना सूत्रेण निपातितः ॥ ( ५४७४ ) **आङो–**। आङिति ङित्त्वविशिष्ट आकारो गृह्यते 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' इत्यनेन लक्षितः । यद्यपि 'अभ्र आँ अपः' इत्यत्र आकारो न ईषदर्थादिचतुष्टयवृत्तिः सप्तम्यर्थद्योतकत्वात्, तथापि वाक्यस्मरणयोरङित् इत्यत्रैव तात्पर्यम् । अन्यत्र सर्वत्राङ् ङिद्वेदितव्यः । एवं तावद्भाष्ये स्थितम् ॥ **अभ्र आँ अप इति** । सप्तम्यर्थद्योतकोऽत्राङ् । 'उपदेशेऽजनुनासिकः–६' इतीत्संज्ञा तु न, उपदेशग्रहणात् ॥ ( ५३७६ ) **स्यश्छन्दसि–**। स्य इति त्यदित्येतस्य प्रथमान्तस्यानुकरणम् । 'सुपां सुलुक्–५४१३'इति लुप्तषष्ठीकम् ॥ **एष स्येति** । एतदस्त्यदश्च त्यदाद्यत्वं 'तदोः सः सौ–५१७' इति सः । एतदस्त्यदश्च परस्य सोः 'एतत्तदोः सुलोपः–२६०' इति 'स्यश्छन्दसि–५३७६' इति च लोपः ॥ ( ५३७७ ) **ह्रस्वात्–**। चन्द्रशब्दे उत्तरपदे ह्रस्वात्परः सुडागमो भवति । स भवन् चन्द्रशब्दस्यैव । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इत्याशयेनाह—**चन्द्रशब्दस्योत्तरपदस्येति ॥ सुडागमः स्यादिति** । 'सुट् कात्पूर्वः ३३४३' इत्यतः सुडित्यनुवर्तनात् ॥ ( ५३७८ ) **पितरा–**। पूर्वपदस्याराङादेशो निपात्यते । उत्तरपदे तु 'सुपां सुलुक्–५४१३' इत्यादिना विभक्तेराकारादेशः । 'ऋतो ङिसर्वनामस्थानयोः ३८६' इति गुणः ॥ [ १४५८ ] **समानस्य–॥ सः स्यादिति** । 'सहस्य सः १४५५' इत्यतः स इत्यनुवर्तते ॥ **सगर्भ्य इति** । समानो गर्भः सगर्भः तत्र भवः सगर्भ्यः । 'सगर्भसयूथसनुताद्यत् ५२९८' इति यत् प्रत्ययः । अमूर्द्धेत्यादि किम् । समानमूर्द्धा समानप्रभृतयः समानोदर्काः ॥ ( ५३७९ ) **छन्दसि स्त्रियाम्–**। 'विष्वग्देवयोः' इति सर्वनाम्नोऽप्युपलक्षणम् । बहुलग्रहणात्क्वचिन्न भवति ॥ **विश्वाची देवद्रीचीति** । विश्वमञ्चतीति देवानञ्चतीति क्विन् । 'उगितश्च ६१९' इति ङीप् । 'अचः ५५८' इत्यकारलोपः । 'चौ ५५९' इति दीर्घत्वम् । अत्र विष्वग्देवयोरद्र्यादेशः प्राप्तो बाहुलकान्न क्वचिच्च भवतीत्याह–**कद्रीचीति** । कुत्सितमञ्चतीति कद्रीची । किंशब्दस्य टेरद्र्यादेशः ङीब्लोपदीर्घाः पूर्ववत् ॥ ( ५३८० ) **सधमाद–**। 'सहस्य सध्रिः ५६६' इत्यतः सहस्येति वर्तते । माद-स्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययमादेशः स्यात् । सधेत्यविभक्तिको निर्देशः ॥ **सधमादे इति** । सह माद्यन्ति देवा अस्मिन्निति सधमादो यज्ञ इति । 'मदोऽनुपसर्गे ५०३९' इत्यपि प्राप्ते 'अजब्भ्यां स्त्रीखलनाः–' इति तद्बाधके ल्युटि 'हलश्च ५११६' इति घञ् । सूत्रे मादेत्यकार उच्चारणार्थः, न मादयतेः क्विबन्तस्य, मादिति यद्रूपं तत्रापि भवति । 'आत्वाबृहन्तो हरयो युज्यमाना अर्वागिन्द्र-

शब्दे उत्तरपदे कोः कवं कादेशश्च । कवपथः । कापथः । कुपथः ॥ ( ५३८२ ) सू० **साढ्यै साढ्वा साढेति निगमे ।** ६ । ३ । ११३ । सहेः क्त्वाप्रत्यये आद्यं द्वयं, तृनि तृतीयं निपात्यते । करुद्भिरुग्रः पृतनासु साह्ळा । अचोर्मध्यस्थस्य डस्य ळः ढस्य ह्ळश्च प्रातिशाख्ये विहितः । आह हि । द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः ह्ळकारतामेति स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्त इति ॥ ( ५३८३ ) सू० **छन्दसि च ।** ६ । ३ । १२६ । अष्टन आत्वं स्यादुत्तरपदे । अष्टापदी ॥ (५३८४) सू० **मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ।**६।३।१३१। दीर्घः स्यान्मन्त्रे । अश्वावतीं सोमावतीम् । इन्द्रियावान्मदन्तमः । विश्वकर्मणा विश्वदेव्यावता॥(५३८५) सू० **ओषधेश्च विभक्तावप्रथमायाम् ।**६।३।१३२। दीर्घः स्यान्मन्त्रे । यदोषधीभ्य आदधात्योषधीषु॥(५३८६) सू० **ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ।** ६।३।१३३ । दीर्घः स्यात् । आ तू न इन्द्र । नू मर्तः । उत वा घा स्यालात् । मक्षू गोमन्तमीमहे । भरता जातवेदसम् । तङिति थादेशस्य ङित्त्वपक्षे ग्रहणम् । तेनेह न । शृणोत ग्रावाणः । कूमनाः । अत्रा ते भद्रा । यत्रा नश्चक्रा । उरुष्याणः ॥ ( ५३८७ ) सू० **इकः सुञि ।** ६ । ३ । १३४ । ऋचि दीर्घ इत्येव । अभीषुणः सखीनाम् । सुञः[५५०९] इति षः । नश्च धातुस्थोरुषुभ्य[५५१४] इति णः ॥ ( ५३८८ ) सू० **द्व्यचोऽतस्तिङः ।**६ । ३ । १३५ । मन्त्रे दीर्घः । विद्मा हि चक्रा जरसम् ॥ ( ५३८९ ) सू० **निपातस्य च ।** ६ । ३ । १३६ । एवा हि ते ॥ (५३९०) सू० **अन्येषामपि दृश्यते ।** ६ । ३ । १३७ । अन्येषामपि पूर्वपदस्थानां दीर्घः स्यात् । पूरुषः । दण्डादण्डि ॥ (५३९१) सू० **छन्दस्युभयथा ।** ६ । ४ । ५ । नामि दीर्घो वा । धाता धातॄणामिति बह्वृचाः । तैत्तिरीयास्तु ह्रस्वमेव पठन्ति ॥ ( ५३९२ ) सू० **वा षपूर्वस्य निगमे ।** ६ । ४ । ९ । षपूर्वस्याच उपधाया वा दीर्घोऽसंबुद्धौ सर्वनामस्थाने परे । ऋभुक्षाणम् । ऋभुक्षणम् । निगमे किम् । तक्षा । तक्षाणौ ॥ ( ५३९३ ) सू० **जनिता मन्त्रे** । ६ । ४ । ५३ । इडादौ तृचि णिलोपो निपात्यते । यो नः पिता जनिता ॥ ( ५३९४ ) सू० **शमिता यज्ञे** । ६ । ४ । ५४ । शमयितेत्यर्थः ॥ ( ५३९५ ) सू० **युप्लुवोर्दीर्घश्छन्दसि** । ६ । ४ । ५८ । ल्यपीत्यनुवर्तते । वियूय । विप्लूय ॥ आडजादीनाम्[३०१६] ॥ ( ५३९६ ) सू० **छन्दस्यपि दृश्यते ।** ६ । ४ । ७३ । अनजादीनामित्यर्थः । आनट् । आवः ॥ न माङ्योगे[३१८३] ॥ (५३९७ ) सू० **बहुलं छन्दस्यमाङ्योगेऽपि ।** ६ । ४ । ७५ । अडाटौ न स्तः माङ्योगेऽपि स्तः । जनिष्ठा उग्रः सहसे तुराय । मा वः क्षेत्रे परबीजान्यवाप्सुः ॥ ( ५३९८ ) सू० **इरयो रे ।**

---

सधमादो वहन्तु' ॥ **सधस्थमिति** । सह तिष्ठतीति सधस्थः । 'आतोऽनुपसर्गे–३८८३' इति कः ॥ ( ५३८२ ) **साढ्यै–** । एते त्रयो निपात्यन्ते निगमे ॥ **सहेः क्त्वाप्रत्यय इति** । पक्षे क्त्वाप्रत्ययस्य ध्यै आदेशश्च निपात्यते ॥ **साढ्यै** । सहेः क्त्वाप्रत्ययस्य ध्यै 'हो ढः ४४७' ष्टुत्वम् 'ढो ढे लोपः ३११५' । 'ढ्रलोपे–२५८' इति दीर्घः ॥ **साढ्वा इति** । ढत्वादि पूर्ववत् ॥ **तृनि तृतीयमिति** । तृचि त्वन्तोदात्तं स्यात्तथा 'भूरि चक्रे' इति मन्त्रे साढेत्वाद्युदात्तं पठ्यते तन्न संगच्छेतेति भावः । सूत्रे इतिशब्दः प्रकारार्थः । तेन निष्ठायामपि निपातनं बोध्यम् । 'आषाह्ळ अग्ने वृषभः' ॥ **द्वयोरिति** । अस्य आचार्यस्य द्वयोः स्वरयोर्मध्यमेत्य डकारो ळकारतां संपद्यते ऊष्मणा संप्रयुक्तो डकारः ह्ळकारतामेतीत्यन्वयः ॥ (५३८३) **अष्टापदीति** । अष्टौ पादा अस्या इति बहुव्रीहौ 'संख्यासुपूर्वस्य १२६१' इति पादस्य लोपे कृते 'पादोऽन्यतरस्याम् ६२४' इति ङीप् ॥ (५३८४) **मन्त्रे––** । सोम, अश्व, इन्द्रिय, विश्वदेव्य एषां मतुप्प्रत्यये परे दीर्घः स्यान्मन्त्रे ॥ ( ५३८५ ) **ओषधेश्च–** । न च 'कृदिकारादक्तिनः ७०८' इति ङीषा गतार्थता, अन्तोदात्ततापत्तेः । इष्यते त्वाद्युदात्तो 'लघावन्ते––५६२४' इति फिट्सूत्रात् ॥ ( ५३८६ ) **ऋचि तुनु–** । घ इति स्वरूपग्रहणम्, न तरप्तमपोः छन्दसि घशब्दस्यैव दीर्घदर्शनात् ॥ **उतवेति** । भार्याया भ्राता स्यालस्ततः पञ्चमी ॥ **भरतेति** । लोण्मध्यमपुरुषबहुवचनस्य थस्य 'लोटो लङ्वत् २९५३' । इत्यतिदेशात्तस्य स्थाने तादेशः 'तस्थस्थमिपाम्—२९५४' इत्यनेन ॥ **शृणोतेति** । 'तप्तनप्तनथनाश्च ५४२१' इति तबादेशः । अत्र पित्त्वान्ङित्त्वं नास्ति ॥ **उरुष्याण इति** । उरुष्येति कण्ड्वादियगन्तो रक्षणार्थः । लोटः सेर्हिः । 'अतो हेः २९५७' इति लुक् । न इत्यस्य 'नश्च धातुस्थोरुषुभ्यः ५५१४' इति णत्वम् ॥ ( ५३८७ ) **इकः––** । इगन्तस्य सुञि परतो दीर्घः स्यादृचि ॥ ( ५३८८ ) **द्व्यचो—** । द्व्यचस्तिङन्तस्यातो दीर्घः स्यादृचि ॥ **विद्मेति** । 'विद ज्ञाने' लट् । 'विदो लटो वा ३२७७' इति मसः स्थाने मः ॥ **चक्रेति** । लिटो मध्यमपुरुषबहुवचनम् ॥ ( ५३८९ ) **निपातस्य च** । दीर्घः स्यान्मन्त्रे । एवशब्दश्चादिषु पाठान्निपातः ॥ ( ५३९१ ) **छन्दस्यु––** । नामीति वर्तते । 'ढ्रलोपे–२५८' इत्यतो दीर्घ इति च तदाह—**नामीत्यादि** ॥ ( ५३९२ ) **ऋभुक्षाणमिति** । ऋभुक्षिन्छब्द उणादिषु निपातितः । 'इतोऽत्सर्वनामस्थाने ४९६' इतीकारस्याकारादेशः ॥ ( ५३९३ ) **जनितेति** । जनयितेत्यर्थः ॥ ( ५३९४ ) **शमिता–** । निपातनं पूर्ववत् ॥ (५३९६) **आनडिति** । नशेर्लुङि 'मन्त्रे घस—५२२९' इति लेर्लुक् । 'नशेर्वा ५७७' इत्यस्याभावे 'व्रश्च–४११' इति षः । जश्त्वेन डः । तस्य चर्त्वेन टः ॥ **आवरिति** । वृञो लुङि लेर्लुक् । गुणः रेफस्य विसर्गः ॥ (५३९७) **बहुलं छन्दसि–** । माङ्योगेऽप्यमाङ्योगेऽपि बहुलमडाटौ भवतः । अमाङ्योगेऽपि न भवतः माङ्योगेऽपि च भवतः ॥ **जनिष्ठा इति** । जनेर्लुङ् थास् अडागमाभावः माङ्योगेऽप्यडागममुदाहरति—**मा व इति** । वो युष्माकं क्षेत्रे भार्यायां परबीजानि परेषां बीजानि वीर्याणि मा अवाप्सुः उप्तानि मा भूवन् । वपेः कर्मणि लुङ् । व्यत्ययेन परस्मैपदम् 'च्लेः सिच् २२७७' 'वदव्रज–३०३३' इति

। ६ । ४ । ७६ । प्रथमं दध्र आपः । रेभावस्याभीयत्वेनासिद्धत्वादालोपः । अत्र रेशब्दस्येटि कृते पुनरपि रेभावस्त-दर्थं च सूत्रे द्विवचनान्तं निर्दिष्टमिरयोरिति ॥ ( ५३९९ ) सू. **छन्दस्युभयथा** । ६ । ४ । ८६ । भूसुधियोर्यण् स्यादियङुवङौ च । वनेषु चित्रं विभ्वम् । विभुवं वा । सुध्यो नव्यमग्ने । सुधियो वा ॥ ( ५४०० ) सू. **तन्वादीनां छन्दसि बहुलम्** ॥ तन्वं पुषेम । तनुवं वा । त्र्यम्बकम् । त्रियम्बकम् ॥ ( ५४०१ ) सू. **तनिपत्योश्छन्दसि** । ६ । ४ । ९९ । एतयोरुपधालोपः क्ङिति प्रत्यये । वितत्निरे कवयः । शकुना इव पप्तिम ॥ ( ५४०२ ) सू. **घसिभसोर्हलि च** । ६ । ४ । १०० । सग्धिश्च मे । बब्धां ते हरी धानाः ॥ [३२३१] हुझल्भ्यो हेर्धिः ॥ ( ५४०३ ) सू. **श्रुशृणुपॄकृवृभ्यश्छन्दसि** । ६ । ४ । १०२ । श्रुधी हवम् । शृणुधी गिरः । रायस्पूर्धि । उरुणस्कृधि । अपावृधि ॥ ( ५४०४ ) सू. **वा च्छन्दसि** । ६ । १ । १०६ । हिरपिद्धा ॥ ( ५४०५ ) सू. **अङितश्च** । ६ । ४ । १०३ । हेर्धिः स्यात् । रारन्धि । रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घश्च । अस्मै । प्रयन्धि । युयोधि जातवेदः । यमेः शपो लुक् । यौतेः शपः श्लुः ॥ ( ५४०६ ) सू. **मन्त्रेष्वाङ्यादेरात्मनः** । ६ । ४ । १४१ । आत्मन्छन्दस्यादेर्लोपः स्यादाङि । त्मना देवेषु ॥ ( ५४०७ ) सू. **विभाषर्जोश्छन्दसि** । ५ । ४ । १६२ । ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्ठेमेयस्सु । त्वं रजिष्ठमनुनेषि । ऋजिष्ठं वा ॥ ( ५४०८ ) सू. **ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि** । ६ । ४ । १७५ । ऋतौ भवमृत्व्यम् । वास्तुनि भवं वास्त्व्यम् । वास्त्वं च । मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते । माध्वीर्नः सन्त्वोषधीः । हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते । हिरण्ययेन सविता रथेन ॥ इति षष्ठोऽध्यायः ॥ ६ ॥

शीङो [३२९१] रुट् ( ५४०९ ) सू. **बहुलं छन्दसि** । ७ । १ । ८ । रुडागमः स्यात् । लोपस्त [५४१७] आत्मनेपदेष्विति पक्षे तलोपः । धेनवो दुह्रे । लोपाभावे घृतं दुहते । अदृश्रमस्य ॥ [२०३] अतो भिस ऐस् ॥ ( ५४१० ) सू. **बहुलं छन्दसि**

---

वृद्धिः । इदं काशिकानुरोधेनोदाहृतम् । अध्ययने तु वाप्सुरित्येव दृश्यते । माङ्यटस्तूदाहरणान्तरमन्वेषणीयम् ॥ ( ५३९८ ) **इरयोः**--। 'इरे' इत्येतस्य रे आदेशः स्याच्छन्दसि ॥ **दध्रे इति** । धाञो लिटि झस्य 'लिटस्तझयोः--३०००' इतीरेचि कृते रेभावः । ननु चात्र परत्वाद्रेभावे कृतेऽनजादित्वादालोपो न प्राप्त इत्यत आह--**रेभावस्येति** ॥ नन्वेवमपि रेभावस्यैव क्रादिनियमादिडागमः प्राप्नोति । न च रेभावस्य वैयर्थ्यम् । कृसृप्रभृतिषु चरितार्थत्वादत आह--**अत्रेति** ॥ कथं पुनर्लाक्षणिकस्येरेशब्दस्य रेभावो भवति तत्राह--**तदर्थं चेति** ॥ द्विवचननिर्देशाल्लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तत इति भावः ॥ ( ५४०० ) **तन्वादीनाम्**-। बहुलमियङुवङादेशः स्याच्छन्दसि ॥ **तनुवमिति** । अधातुत्वादप्राप्त उवङ् विधीयते ॥ **तन्वमिति** । 'वा छन्दसि--५२६२' इत्यमि पूर्वत्वाभावे यण् । **त्र्यम्बकमिति** । त्रीणि अम्बकानि नेत्राणि यस्यासौ त्र्यम्बको रुद्रः ॥ ( ५४०१ ) **वितत्निरे इति** । 'तनु विस्तारे' । लिटः प्रथमपुरुषबहुवचनम् । अत्राल्लोपस्यासिद्धत्वेऽपि 'अत एकहल्मध्ये--३०२४' इति एत्त्वाभ्यासलोपौ न, लोपविधानसामर्थ्यात् ॥ **पप्तिमेति** । 'पत्लृ पतने' लिटो मसो मस्य इट् । वितेनिरे पेतिमेति भाषायाम् ॥ ( ५४०२ ) **घसिभसोः**--। अनयोरुपधालोपः स्याद्धलादावजादौ च क्ङिति ॥ **सग्धिरिति** । अदेः क्तिन् । 'बहुलं छन्दसि ५२२५' इति घस्लादेशे उपधालोपे च कृते 'झलो-३०४८' इति सलोपस्तकारस्य धत्वं घस्य जश्त्वं, समाना ग्धिः सग्धिरिति समासे कृते 'समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु १४५८' इति सूत्रेण समानस्य सः । **बब्धामिति** । भसेर्लोटि ताम् । श्लुः । परं नित्यमप्युपधालोपं बाधित्वा बाहुलकात्प्रथमं 'श्लौ ३२०८' इति द्वित्वम् । तत उपधालोपसलोपधत्वजश्त्वानि कर्तव्यानि ॥ ( ५४०३ ) **श्रुशृणु**--। एभ्यो हेर्धिः स्यात् ॥ **श्रुधीति** । 'बहुलं छन्दसि ५२२७' इति शपो लुक् । 'अन्येषामपि-५३९०' इति दीर्घत्वम् । **शृणुधीति** । श्रुवः श्नभावश्च । विधानसामर्थ्यात् 'उतश्च प्रत्ययात्--३११४' इति न हेर्लुक् । दीर्घः पूर्ववत् ॥ **पूर्धीति** । 'पॄ पालनपूरणयोः' शपो लुक् 'उदोष्ठ्यपूर्वस्य ३३१२' इत्युत्वम् । 'हलि च ४८१' इति दीर्घः ॥ **उरुणस्कृधीति** । 'नश्च धातुस्थोरुषुभ्यः ५५१४' इति णत्वम् । 'कःकरत्--५५००' इत्यादिना विसर्जनीयस्य सत्वम् ॥ **अपावृधीति** । दीर्घः पूर्ववत् ॥ ( ५४०५ ) **अभ्यासदीर्घश्चेति** । तुजादित्वादिति भावः । रारन्धीत्यत्र 'अनुदात्तोपदेश-३२३४' इत्यादिना मलोपो न, हेरङित्त्वात् ॥ **यमेः शपो लुगिति** । 'बहुलं छन्दसि ५२२७' इत्यनेन । एवमुत्तरत्रापि ॥ ( ५४०७ ) **विभाषर्जोः**--। 'र ऋतो हलादेर्लघोः-२४१६' इत्यतः र ऋत इति 'तुरिष्ठेमेयःसु २७२२' इति च तदाह--**ऋतः स्थाने इत्यादि** । ( ५४०८) **ऋत्व्य**--। ऋतुशब्दाद्यति वास्तुशब्दादणि यति च यणादेशो निपात्यते ॥ **मशब्दस्येति** । तस्यासिद्धत्वात् 'यस्ये-४३१' इति लोपो न । 'अकःसवर्णे--३७१' इति दीर्घस्त्वजन्तपरिभाषया वारणीयः । यद्वा--मकारमात्रस्य लोपः । ततो 'यस्येति च ४३१' इति लोपे कृते प्रत्ययाकारस्य श्रवणम् ॥ इति षष्ठोऽध्यायः ॥ ६ ॥

( ५४०९ ) **बहुलं छन्दसि** । छन्दसि विषये बहुलं रुडागमः स्यात् ॥ **दुह्रे इति** । दुहेर्लट् टेरेत्वे झस्यादादेशे रुट् तलोपः ॥ **लोपाभावे इति** । 'लोपस्त आत्मनेपदेषु ५४१७' इत्यस्य वैकल्पिकत्वादित्यर्थः ॥ **अदृश्रमिति** । 'दृशिर्

। ७ । १ । १० । अग्निर्देवेभिः ॥ ( ५४११ ) सू० **नेतराच्छन्दसि । ७ । १ । २६ ।** स्वमोरद्ड् न । वार्त्रघ्नमितरम् । छन्दसि किम् । इतरत्काष्ठम् ॥ समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ( ५४१२ ) सू० **क्त्वाऽपि च्छन्दसि । ७ । १ । ३८ ।** यजमानं परिधापयित्वा ॥ ( ५४१३ ) सू० **सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः । ७ । १ । ३९ ।** ऋजवः सन्तु पन्थाः । पन्थान इति प्राप्ते सुः । परमे व्योमन् । व्योमनि इति प्राप्ते ङेर्लुक् । धीती । मती । सुष्ठुती । धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णदीर्घः । या सुरथा रथीतमा दिविस्पृशा अश्विना । यौ सुरथौ दिविस्पृशावित्यादौ प्राप्ते आ । नताद् ब्राह्मणम् । नतमिति प्राप्ते आत् । यादेव विद्म तात्त्वा । यमिति प्राप्ते । न युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती । युष्मासु अस्मभ्यमिति प्राप्ते शे । उरुया । धृष्णुया । उरुणा धृष्णुनेति प्राप्ते या । नाभा पृथिव्याः । नाभाविति प्राप्ते डा । ता अनुष्ठ्योच्यावयतात् । अनुष्ठानमनुष्ठा । व्यवस्थावदङ् । आङो ड्या । साधुया । साध्विति प्राप्ते याच् । वसन्ता यजेत । वसन्ते इति प्राप्ते आल् ॥ ( ५४१४ ) वा० **इयाडियाजीकाराणामुपसंख्यानम् ॥** उर्विया । दार्विया । उरुणा दारुणेति प्राप्ते इया । सुक्षेत्रिया । सुक्षेत्रिणेति प्राप्ते डियाच् । दृतिं न शुष्कं सरसी शयानम् । ङेरीकार इत्याहुः । तत्राद्युदात्ते पदे प्राप्ते व्यत्ययेनान्तोदात्तता । वस्तुतस्तु—ङीषन्तात् ङेर्लुक् । ईकारादेशस्य तूदाहरणान्तरं मृग्यम् ॥ ( ५४१५ ) वा० **आङ्याजयारामुपसंख्यानम् ॥** प्रबाहवा सिसृतम् । बाहुनेति प्राप्ते आङादेशः । घेर्ङितीति गुणः । स्वप्नया । स्वप्नेनेति प्राप्ते अयाच् । स नः सिन्धुमिव नावया । नावेति प्राप्ते अयाच् । रित्स्वरः । ( ५४१६ ) सू० **अमो मश् । ७ । १ । ४० ।** मिबादेशस्यामो मश् स्यात् । मकार उच्चारणार्थः । शित्त्वात्सर्वादेशः । अस्तिसिचो॰ इति ईट् । वधीं वृत्रम् । अवधिषमिति प्राप्ते ॥

---

प्रेक्षणे' लुङ् व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैकवचनं मिप् । तस्य रुडागमः ॥ ( ५४११ ) **नेतरा—**। इतरशब्दात्परयोः स्वमोरद्ड्डादेशो न स्याच्छन्दसि ॥ **इतरमिति** । 'अद्ड् डतरादिभ्यः ४३७' इत्यद्ड्भावे 'अतोऽम् ४२९' इत्यम् ॥ **क्त्वो ल्यबिति** । ( ५४१२ ) समासेऽनञ्पूर्वे क्त्वो ल्यपि प्राप्ते छन्दसि क्त्वाऽपि विधीयते तदाह—**क्त्वाऽपि—**। अनञ्पूर्वे समासे क्त्वा इत्ययमादेशः स्यादपिशब्दाल्ल्यबपि समासेऽसमासे च भवति । अप्राप्तिविषये ल्यपः प्रापणार्थत्वादपिशब्दस्य । अन्यथा 'वा छन्दसि' इत्येव ब्रूयात् । तथा च—छन्दोविधिमनुविदधानाः कल्पसूत्रकारा अपि प्रयुञ्जते—'आज्येनाक्षिणी अज्य' इति ॥ **परिधापयित्वेति** । णिजन्तात्परिपूर्वाद्धधातेः क्त्वा तस्य ल्यबादेशे प्राप्ते क्त्वादेशः ॥ **( ५४१३ ) सुपाम्—**। सुपां स्थाने सुलुक्, पूर्वसवर्णः, आ, आत्, शे, या, डा, ड्या, याच्, आल् एते आदेशाः स्युः छन्दसि ॥ **पन्था इति** । 'व्यत्ययो बहुलम् ५२६६' इत्येव सिद्धमिदम् । उक्तं हि—तत्र—'सुप्तिङुपग्रह' इत्यादि । तस्यैवायं प्रपञ्चः । **धीतीत्यादि** । धीतीमतीसुष्टुतीशब्देभ्यस्तृतीयैकवचनस्य पूर्वसवर्ण ईकारः । प्रमाणत आन्तर्यात्सवर्णदीर्घत्वम् ॥ **दिविस्पृशावित्यादौ प्राप्ते आ इति** । अनेन 'आत्' इत्यत्राकारोऽपि प्रश्लिष्यत इति दर्शितम् ॥ **नतादिति** । नतशब्दादम् । तस्यादादेशः 'न विभक्तौ तुस्माः २७५' इतीत्संज्ञाप्रतिषेधः ॥ **यादेवेत्यादि** । यत्तच्छब्दादम् । **न युष्मे इति** । युष्मदः सप्तमीबहुवचनस्य शे आदेशः । 'शेषे लोपः ५२१' । **अस्मे इन्द्रेति** । 'शे १६४' इति प्रगृह्यत्वादयादेशाभावः । **नाभा इति** । डित्त्वाट्टिलोपः ॥ **ता अनुष्ठ्येति** । 'षड्विंशतिरस्य वङ्क्रयः' इति प्रक्रम्य इदमध्वर्युप्रैषे पठितं ताः वङ्क्रीः अनुष्ठानेन अनुक्रमेण गणनया गणयित्वा उच्यावयतात् भवान् विशसनं करोतु पृथक् करोतु भवानित्यर्थः ॥ **अनुष्ठानमनुष्ठेति** । अनुपूर्वात्तिष्ठतेरङ्, तृतीयैकवचनस्य डादेशे डित्त्वाट्टिलोपः । नन्वनुपूर्वात्तिष्ठतेः 'आतश्चोपसर्गे ५०८८' इत्यङं बाधित्वा 'स्थागापापचो भावे ५०७३' इति क्तिना भाव्यमिति चेत्, सत्यम्—'पूर्वपरावरदक्षिणोत्तरा–३१४' इति सूत्रे व्यवस्थायामिति निर्देशादङपि, सामान्यापेक्षज्ञापकाश्रयणात् । तदेतद् ध्वनयति—**व्यवस्थावदिति । साधु इति प्राप्त इति** । सोर्लुकि प्राप्त इत्यर्थः ॥ **वसन्ते इति प्राप्ते आल् इति** । पूर्वसवर्णे तु 'अतो गुणे २७६' इति स्यात् ॥ **( ५४१५ ) उर्वियेति** । उरुदारुशब्दात्तृतीयैकवचनस्येयादेशः ॥ **सुक्षेत्रियेति** । सुक्षेत्रिन्शब्दात्तृतीयैकवचनस्य डियाजादेशः डित्त्वाट्टिलोपः ॥ **( ५४१४ ) बाहुनेति प्राप्ते इति** । काशिकायां तु 'प्रबाहुनेति प्राप्ते' इत्युक्तं तत्समासभ्रमादित्यवधेयम् । प्रेति न समस्तम्, पृथक् स्वरदर्शनात्, पदकारैर्विच्छिद्य पाठाच्च । अत आख्यातान्वयीति ध्येयम् ॥ **स्वप्नयेति** । अयाचोऽकारः 'सुपि च २८७' इति दीर्घनिवृत्त्यर्थः । 'अतो गुणे २७६' इति पररूपम् ॥ **नावयेति** । नौशब्दाट्टा इत्यस्याऽयार् ॥ **रित्स्वर इति** । '–रिति ५६९९' इति सूत्रेण ॥ **( ५४१६ ) अमो—**। अम इति मिबादेशो गृह्यते, न द्वितीयैकवचनम् छन्दसि दृष्टानुविधानात् । तदेतदाह—**मिबादेशस्येति** ॥ **शित्त्वात्सर्वादेश इति** । शित्करणाभावे तु 'अलोऽन्त्यस्य ६६' इति मकारस्य स्यात् । 'आदेः परस्य ६८' इति तु न, पञ्चमीनिर्देशाभावात् । न च मकारस्य मकारवचने प्रयोजनाभावात् सर्वादेशो भविष्यतीति वाच्यम्, मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात् 'मो राजि समः क्वौ १९२' इत्यत्र यथा ॥ **वधीमिति** । हन्तेर्लुङ् 'हनो वध लिङि ३२३९' 'लुङि च ३२४०' इति वधादेशः 'च्लेः सिच् २९७७' इट् 'तस्थस्थ–२९५४' इति मिपोऽम्भावः । तस्य मश् । 'अस्तिसिचः–२९८०' इति मस्याप्रुक्तस्येट् 'इट ईटि ३०३१' इति सिचो लोपः । सवर्णदीर्घत्वम् । 'बहुलं छन्दसि ५३९७', इत्यड

( ५४१७ ) (सू) **लोपस्त आत्मनेपदेषु** । ७ । १ । ४१ । छन्दसि । देवा अदुह । अदुहतेति प्राप्ते । दक्षिणतः शये । शेते इति प्राप्ते । आत्मेति किम् । उस्रं दुहन्ति ॥ ( ५४१८ ) (सू) **ध्वमो ध्वात्** । ७ । १ । ४२ । अन्तरेवोष्माणं वारयध्वात् । वारयध्वमिति प्राप्ते ॥ ( ५४१९ ) (सू) **यजध्वैनमिति च** । ७ । १ । ४३ । एनमित्यस्मिन्परे ध्वमोऽन्तलोपो निपात्यते । यजध्वैनं प्रियमेधाः । वकारस्य यकारो निपात्यत इति वृत्तिकारोक्तिः प्रामादिकी ॥ ( ५४२० ) (सू) **तस्य तात्** । ७ । १ । ४४ । मध्यमपुरुषबहुवचनस्य स्थाने तात्स्यात् । गात्रमस्या नूनं कृणुतात् । कृणुतेति प्राप्ते । सूर्यं चक्षुर्गमयतात् । गमयतेति प्राप्ते ॥ ( ५४२१ ) (सू) **तप्तनप्तनथनाश्च** । ७ । १ । ४५ । तस्येत्येव । शृणोत ग्रावाणः । शृणुतेति प्राप्ते । तप् । सुनोतन पचत ब्रह्मवाहसे । दधातन द्रविणं चित्रमस्मै । तनप् । मरुतस्तज्जुजुष्टन । जुषध्वमिति प्राप्ते व्यत्ययेन परस्मैपदं श्लुश्च । विश्वे देवासो मरुतो यतिष्ठन । यत्संख्याकाः स्थेत्यर्थः । यच्छब्दाच्छान्दसो डतिः । अस्तेस्तस्य थनादेशः ॥ ( ५४२२ ) (सू) **इदन्तो मसि** । ७ । १ । ४६ । मसीत्यविभक्तिको निर्देशः । इकार उच्चारणार्थः । मस् इत्ययमिकाररूपचरमावयवविशिष्टः स्यात् । मस इगागमः स्यादिति यावत् । नमो भरन्त एमसि । त्वमस्माकं तव स्मसि । इमः स्म इति प्राप्ते ॥ ( ५४२३ ) (सू) **क्त्वो यक्** । ७ । १ । ४७ । दिवं सुपर्णो गत्वाय ॥ ( ५४२४ ) (सू) **इष्ट्वीनमिति च** । ७ । १ । ४८ । क्त्वाप्रत्ययस्य ईनम् अन्तादेशो निपात्यते । इष्ट्वीनं देवान् । इष्ट्वा इति प्राप्ते ॥ ( ५४२५ ) (सू) **स्नात्व्यादयश्च** । ७ । १ । ४९ । आदिशब्दः प्रकारार्थः । आकारस्य ईकारो निपात्यते । स्विन्नः स्नात्वी मलादिव । पीत्वी सोमस्य वावृधे । स्नात्वा पीत्वेति प्राप्ते ॥ ( ५४२६ ) (सू) **आज्जसेरसुक्** । ७ । १ । ५० । अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यात् । देवासः । ब्राह्मणासः ॥ ( ५४२७ ) (सू) **श्रीग्रामण्योश्छन्दसि** । ७ । १ । ५६ । आमो नुट् । श्रीणामुदारो धरुणो रयीणाम् । सूतग्रामणीनाम् ॥ ( ५४२८ ) (सू) **गोः पादान्ते** । ७ । १ । ५७ । विद्मा हि त्वा गोपतिं शूर गोनाम् । पादान्ते किम् । गवां शता पृक्षयामेषु । पादान्तेऽपि क्वचिन्न । छन्दसि सर्वेषां वैकल्पिकत्वात् । विराजं गोपतिं गवाम् ॥ ( ५४२९ ) (सू) **छन्दस्यपि दृश्यते** । ७ । १ । ७६ ।

---

भावः ॥ ( ५४१७ ) **लोपस्त-**। आत्मनेपदेषु यस्तकारस्तस्य च्छन्दसि विषये लोपः स्यात् ॥ **अदुहेति** । दुहेर्लङ् । 'आत्मनेपदेष्वनतः ३०२० ' इति झस्यादादेशः 'बहुलं छन्दसि ५४०९ ' इति रुट् । तकारस्य लोपे द्वयोरकारयोः 'अतो गुणे २६७ ' इति पररूपम् ॥ **शये इति** ॥ शेते इत्यत्र तलोपे कृतेऽयादेशः । ( ५४१८ ) **ध्वमो-**। ध्वमो ध्वादित्यादेशः स्याच्छन्दसि ॥ **वारयध्वादिति** । वृञो णिचि लोट् । ( ५४१९ ) **यज-**। वृत्तिकारस्तु यजध्यैनमिति पाठं ज्ञात्वा वकारस्य यकारश्च निपात्यत इत्याह, तद् दूषयति—**वकारस्येत्यादि** ॥ **प्रामादिकीति** । लक्ष्ये वकारपाठस्य निर्विवादत्वात् । वेदभाष्येऽपि प्रकृतसूत्रस्य मलोपमात्रपरतोक्तेश्चेति भावः ॥ ( ५४२० ) **तस्य-**। **मध्यमपुरुषबहुवचनस्येति** । प्रथमपुरुषैकवचनस्य तु न ग्रहणम् । छन्दसि दृष्टानुविधानात्, पूर्वोत्तराभ्यां बहुवचनाभ्यां साहचर्य्याच्च ॥ **कृणुतादिति** । 'कृवि हिंसाकरणयोश्च' । 'धिन्विकृण्व्योर च ३११२ ' इत्युप्रत्ययः । वकारस्य चाकारः । 'अतो लोपः ३०८३ ' ॥ **गमयतादिति** । गमेर्णिच् । 'जनीजॄष्-३१३९ ' इति अमन्तत्वान्मित्संज्ञायां 'मितां ह्रस्वः ३४०२ ' लोण्मध्यमपुरुषबहुवचनस्य तादेशः ॥ ( ५४२१ ) **तप्तनप्-**। तस्य स्थाने एते आदेशाः स्युः ॥ **शृणोतेति** । 'श्रु श्रवणे' । 'श्रुवः शृ च ३१७९ ' इति श्नुप्रत्ययः शृभावश्च । पित्त्वेनाङित्त्वाद् गुणः ॥ **सुनोतनेति** । ' षुञ् अभिषवे ' 'स्वादिभ्यः श्नुः ३३४३ ' त इत्यस्य तनप् ॥ **दधातनेति** । अत्राप्यङित्त्वात् ' श्नाभ्यस्तयोः—३२९८ ' इत्याकारलोपाभावः ॥ ( ५४२२ ) **इदन्तो-**। अन्तशब्दोऽवयववचनः । इत् अन्तो यस्य स इदन्तः । तपरकरणमसंदेहार्थम् । तथा चायमर्थः । मस् इत्ययं शब्द इकारान्तो भवति । मसः सकारान्तस्य इदागमो भवति, स च तस्यान्तो भवतीत्यर्थस्तदेतदाह—**मस् इत्ययमिति** । तत्र यदि सकारोपमर्देन इकारान्तत्वमभिप्रेतं स्यात्तर्हि मस इदिति वाच्यं स्यात् । तस्मादवस्थित एव सकारे इकार उपसञ्जनीयः । अन्तग्रहणाच्च तद्ग्रहणेन गृह्यते । ततश्च टित्वकित्त्वादेरागमलिङ्गस्याभावेऽप्यर्थादागमोऽयं संपद्यते, तदेतद् ध्वनयन्नाह—**मस इगागमः स्यादिति** ॥ एवं च मस इगिति वक्तव्यं प्रत्याहारसंदेहप्रसङ्गात्तथा नोक्तम् ॥ **एमसीति** । 'इण् गतौ' मस्, तस्य इकारः अन्तावयवः ॥ **स्मसीति** । अस्तेर्मस् श्नसोरल्लोपः ३२८२' ॥ ( ५४२३ ) **क्त्वो-**। क्त्वा इत्यस्य यगागमः स्याच्छन्दसि ॥ **गत्वायेति** । गमेः क्त्वा । 'अनुदात्तोपदेश-३२३४ ' इत्यनुनासिकलोपः क्त्वा इत्यस्य यगागमः ॥ ( ५४२४ ) **इष्ट्वीन-**। **क्त्वाप्रत्ययस्येति** । यजेः परस्येति शेषः ॥ **इष्ट्वीनमिति** । यजेः क्त्वा । 'वचिस्वपि-३२१३' इति संप्रसारणम् । 'व्रश्च-४११', इति षत्वम् । ष्टुत्वम् । आकारस्येनमादेशः ॥ ( ५४२५ ) **पीत्वेति** । पिबतेः क्त्वा । 'घुमास्था-३२७४' इतीत्त्वम् ॥ ( ५४२६ ) **आज्जसेः-**। जसेरिति पूर्वाचार्यानुरोधेन निर्देशः ॥ **देवास इति** । असुकि कृते जसः सकारस्य श्रवणम् । असुकः सकारस्य विसर्गः ॥ ( ५४२७ ) **श्रीणामिति** । अस्य 'वाऽऽमि ४२४ ' इति नदीत्वविकल्पान्नदीत्वाभावे उदाहरणमिदं बोध्यम् । नदीत्वपक्षे तु 'ह्रस्वनद्यापो नुट् २९४' इत्यनेनैव सिद्धम् ॥ **सूतग्रामणीनामिति** । सूताश्च ग्रामण्यश्चेतीतरेतरयोगः ॥ ( ५४२८ ) **गोः पा-**। गो इत्येतस्मादुत्तरस्यामो नुडागमः स्यात्पादान्ते । पादश्चेह ऋक्पादो गृह्यते, छन्दसीत्यधिकारात् ॥ ( ५४२९ ) **छन्दस्य-**। 'छन्दसि च' इत्येव सिद्धे 'अपि

अस्थ्यादीनामनङ् । इन्द्रो दधीचो अस्थभिः ॥ ( ५४३० ) ई च द्विवचने । ७ । १ । ७७ । अस्थ्यादीनामित्येव । अक्षीभ्यां ते नासिकाभ्याम् ॥ ( ५४३१ ) दृक्स्ववस्स्वतवसां छन्दसि । ७ । १ । ८३ । एषां नुम् स्यात्सौ । कीदृङ्ङिन्द्रः । स्ववान् । स्वतवान् ॥ उदोष्ठ्यपूर्वस्य ॥ ( ५४३२ ) बहुलं छन्दसि । ७ । १ । १०३ । ततुरिः । जगुरिः पराचैः ॥ (५४३३) हु ह्वरेश्छन्दसि । ७ । २ । ३१ । ह्वरेर्निष्ठायां हु आदेशः स्यात् । अहुतमसि हविर्धानम् ॥ ( ५४३४ ) अपरिह्वृताश्च । ७ । २ । ३२ । पूर्वेण प्राप्तस्यादेशस्याभावो निपात्यते । अपरिह्वृताः सनुयाम वाजम् ॥ ( ५४३५ ) सोमे ह्वरितः । ७ । २ । ३३ । इड्गुणौ निपात्येते । मा नः सोमो ह्वरितः ॥ ( ५४३६ ) ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरुत्रीरुज्ज्वलिति—क्षरितिक्षमितिवमित्यमितीति च । ७ । २ । ३४ । अष्टादश निपात्यन्ते । तत्र ग्रसु स्कम्भु स्तम्भु एषामुदित्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इण्निपात्यते । युवं शचीभिर्ग्रसितामसुञ्चतम् । विष्कभिते अजरे । येन स्वः स्तभितम् । सत्येनोत्तभिता भूमिः । स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति । चते याचने । कस गतौ आभ्यां क्तस्येडभावः । चत्ता इतश्चत्तामुतः । त्रिधाह श्यावमश्विना विकस्तम् । उत्तानाया हृदयं यद्विकस्तम् । निपातनं बहुत्वापेक्षं सूत्रे बहुवचनं विकस्ता इति । तेनैकवचनान्तोऽपि प्रयोगः साधुरेव । शसु शंसु शासु एभ्यस्तृच इडभावः । एकस्त्वष्टुरश्वस्याविशस्ता । ग्रावग्राभ उत शंस्ता । प्रशास्ता पोता । तरतेर्वृङ्वृञोश्च तृच उट् ऊट् एतावागमौ निपात्येते । तरुतारं रथानाम् । तरूतारम् । वरुतारम् । वरूतारम् । वरुत्रीभिः सुशरणो नो अस्तु । अत्र ङीबन्तनिपातनं प्रपञ्चार्थम् । वरूतृशब्दो हि निपातितः । ततो ङीपा गतार्थत्वात् । उज्ज्वलादिभ्यश्चतुर्भ्यः शप इकारादेशो निपात्यते । ज्वल दीप्तौ । क्षर संचलने । टुवम उद्गिरणे । अम गत्यादिषु । इह क्षरितीत्यस्यानन्तरं क्षमितीत्यपि केचित्पठन्ति । तत्र क्षमूष् सहन इति धातुर्बोध्यः । भाषायां तु ग्रस्तस्कब्धस्तब्धोत्तब्धचातितविकसिताः । विशसिता । शंसिता । शासिता । तरीता । तरिता । वरीता । वरिता । उज्ज्वलति क्षरति । पाठान्तरे क्षमति । वमति । अमति ॥ [ ३३४७ ] बभूथाऽऽततन्थजगृभ्मववर्थेति निगमे । ७ । २ । ६४ । विप्रा तमुत्सं यत आबभूथ । येनान्तरिक्षमुर्वाततन्थ । जगृभ्मा ते दक्षिणमिन्द्र हस्तम् । त्वं ज्योतिषा वितमो ववर्थ । भाषायां तु बभूविथ । आतेनिथ । जगृहिम । ववरिथेति ॥ ( ५४३७ ) सनिंससनिवांसम् । ७ । २ । ६९ । सनिमित्येतत्पूर्वात्सनतेः सनोतेर्वा

---

दृश्यते' इत्येतत्सर्वोपाधिव्यभिचारार्थम् । अन्यथा आरम्भसामर्थ्यात्कस्यचिदेव व्यभिचारः संभाव्येत । टादावचीत्युक्तं हलादावपि भवति–अस्थभिः । विभक्तावित्युक्तमविभक्तावपि भवति–'अस्थन्वन्तं यदनस्था बिभर्ति' अस्थन्वन्तमित्यत्रास्थिशब्दान्मतुप् अनङि कृते 'अनो नुट् ५४६१' इति मतुपो नुट् । अनङो नकारलोपः ॥ ( ५४३१ ) दृक्–। 'आच्छीनद्योर्नुम् ५९९' 'सावनडुहः ४५६' इत्यतो नुम् सावित्यनुवर्तते तदाह–नुम् स्यादिति ॥ कीदृङ्ङिन्द्र इति । किम्शब्दे उपपदे 'त्यदादिषु दृशोऽनालोचने कञ्च ५७५' इति दृशेः क्विन् । 'इदंकिमोरीश्की १४६५' इति किमः की आदेशः । नुम् । 'संयोगान्तस्य लोपः ८१' । 'क्विन्प्रत्ययस्य–५१२' इति कुत्वेन नस्य ङः 'ङमो ह्रस्वादचि–२०२' इति ङुट् ॥ स्ववानिति । अवतेरसुन् । सुष्ठु अवो यस्येति विग्रहः । स्ववःशब्दान्नुमि कृते 'सान्तमहत–४३९' इति दीर्घः । संयोगान्तलोपः । तस्यासिद्धत्वान्नलोपो न ॥ स्वतवानिति । तुधातुः सौत्रो वृद्ध्यर्थः । ततोऽसुन् । स्वं तवो वृद्धिर्यस्येति विग्रहः ॥ ( ५४३२ ) ततुरिरिति । तरतेः 'आदृगम–४१७३' इति किन्प्रत्ययः । उत्त्वम् । तस्य 'द्विर्वचनेऽचि ३००३' इति स्थानिवद्भावात्तृ इत्येतस्य द्विर्वचनम् । उरदत्त्वम् ॥ ( ५४३३ ) हु ह्वरेः–। 'श्वीदितो निष्ठायाम् ४०५२' इत्यतो निष्ठायामिति वर्तते । तदाह–निष्ठायामिति । अहुतमिति । न हुतमहुतम् । (५४३४) अपरिह्वृताः–। छन्दसि बहुवचनान्तस्यैव प्रयोगदर्शनाद्बहुवचनान्तस्य निर्देशः ॥(५४३५)सोमे–। इड्गुणाविति । हु इत्यादेशस्याभावोऽपि बोध्यः॥(५४३६)ग्रसित–। 'ग्रसु अदने' 'स्कम्भु स्तम्भु रोधनार्थौ' सौत्रौ । 'चते याचने' 'कस गतौ' 'शसु हिंसायाम्' 'शंसु स्तुतौ' 'शासु अनुशिष्टौ' 'तॄ प्लवनतरणयोः' 'वृङ् संभक्तौ' 'वृञ् वरणे' 'ज्वल दीप्तौ' 'क्षर संचलने' 'टुवम उद्गिरणे' 'अम गत्यादिषु' ॥ अष्टादशेति । क्षमितेः पाठपक्षे तु एकोनविंशतिः ॥ उदित्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इति । 'उदितो वा ५१४९' इति क्त्वायां वेट्त्वात् 'यस्य विभाषा ४०३६' इति निषेधे प्राप्ते इत्यर्थः ॥ विष्कभित इति । 'अनिदिताम्–५५७' इति नलोपः । 'वेः स्कभ्नातेर्नित्यम् ३३८७' इति षत्वम् ॥ उत्तभितेति । 'उदः स्थास्तम्भोः–१८३' इति पूर्वसवर्णः । सकारस्य थकारः । तस्य 'झरो झरि सवर्णे १०६' इति लोपः ॥ अन्योपसर्गपूर्वस्य मा भूदिति । यदि स्यादुत्तभिग्रहणं व्यर्थं स्यात् ॥ चत्ता इति । चत्तशब्दाट्टापि उञा सह 'आद्गुणः १०४' निपातेन सह एकीकृत्य छेदस्तु पदकाराणां संप्रदायसिद्धः । 'भूयामो' इति मन्त्रे भूयामो इति यथा ॥ निपातनं बहुत्वापेक्षमिति । तेन छान्दसः प्रयोग एकवचनान्तोऽप्युदाहृत इति भावः ॥ अश्वस्याविशस्तेति । 'अन्येषामपि–५३९०' इति पूर्वपदस्य दीर्घः ॥ ततो ङीपा इति । 'ऋन्नेभ्यः–४२६' इति विहितेन ॥ [ ३३४७ ] बभूथा–। निगमो वेदः । एषां वेद इडभावो निपात्यते । वृञः क्रादिसूत्रेणेडभावे सिद्धे निगम एवेति नियमार्थं निपातनं तदेतदाह–भाषायां तु ववरिथेति ॥ ( ५४३७ ) सनिंस–। सनिंपूर्वात्सनतेः सनोतेर्वा

क्सोरिट्। एत्वाभ्यासलोपाभावश्च निपात्यते ॥ ( ५४३८ ) वा॰ पावकादीनां छन्दसि प्रत्ययस्थात्कादित्त्वं नेति वाच्यम् ॥ हिरण्यवर्णाः शुचयः पावकाः ॥ ( ५४३९ ) सू॰ घोर्लोपो लेटि वा । ७ । ३ । ७० । दधद्रत्नानि दाशुषे । सोमो ददद्गन्धर्वाय । यदग्निरग्नये ददात् ॥ ( ५४४० ) सू॰ मीनातेर्निगमे । ७ । ३ । ८७ । शिति ह्रस्वः । प्रमिणन्ति व्रतानि । लोके प्रमीणन्ति ॥ [२९८०] अस्तिसिचोऽपृक्ते ॥ ( ५४४१ ) सू॰ बहुलं छन्दसि । ७ । ३ । ९७ । सर्वमा इदम् ॥ [३४५] ह्रस्वस्य गुणः । [३४६] जसि च ॥ ( ५४४२ ) वा॰ जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः ॥ अधा शतक्रत्वो यूयम् । शतक्रतवः । पश्वे नृभ्यो यथा गवे । पशवे ॥ ( ५४४३ ) वा॰ नाभ्यस्तस्याचीति निषेधे बहुलं छन्दसीति वक्तव्यम् ॥ आनुषग्जुजोषत् ॥ ( ५४४४ ) सू॰ नित्यं छन्दसि । ७ । ४ । ८ । छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यम् । अवीवृधत् ॥ ( ५४४५ ) सू॰ न च्छन्दस्यपुत्रस्य । ७ । ४ । ३५ । पुत्रभिन्नस्यादन्तस्य क्यचि ईत्वदीर्घौ न । मित्रयुः । [४९६२] क्याच्छन्दसीति उः । अपुत्रस्य किं पुत्रीयन्तः सुदानवः ॥ ( ५४४६ ) वा॰ अपुत्रादीनामिति वाच्यम् ॥ जनीयन्तो न्वग्रवः । जनमिच्छन्त इत्यर्थः ॥ ( ५४४७ ) सू॰ दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति । ७ । ४ । ३६ । एते क्यचि निपात्यन्ते । भाषायां तु उप्रत्ययाभावाद् । दुष्टीयति । द्रविणीयति । वृषीयति । रिष्टीयति ॥ ( ५४४८ ) सू॰ अश्वाघस्यात् । ७ । ४ । ३७ । अश्व अघ एतयोः क्यचि आत्स्याच्छन्दसि । अश्वायन्तो मघवन् । मात्वा वृका अघायवः । न [४५४५] च्छन्दसीति निषेधो न ईत्वमात्रस्य किंतु दीर्घस्यापीति । अत्रेदमेव सूत्रं ज्ञापकम् ॥ ( ५४४९ ) सू॰ देवसुम्नयोर्यजुषि काठके । ७ । ४ । ३८ । अनयोः क्यचि आत्स्याद्यजुषि कठशाखायाम् । देवायन्तो यजमानाः । सुम्नायन्तो हवामहे । इह यजुःशब्दो न मन्त्रमात्रपरः, किं तु—वेदोपलक्षकः । तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदस्थे भवति । किंच ऋग्वेदेऽपि भवति । स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः । यजुषीति किम् । देवाञ्जिगाति सुम्नयुः । बह्वृचानामप्यस्ति कठशाखा ततो भवति प्रत्युदाहरणमिति हरदत्तः ॥ ( ५४५० ) सू॰ कव्यध्वरपृतनस्यर्चि लोपः । ७ । ४ । ३९ । स पूर्व्या निविदा कव्यतायोः । अध्वर्युं वा मधुपाणिम् । मदयन्तं पृतन्युम् ॥ [४५०३] दधातेर्हिः ॥ [३५६२] जहातेश्च क्त्वि ॥ ( ५४५१ ) सू॰ विभाषा छन्दसि । ७ । ४ । ४४ । हित्वा शरीरम् । हीत्वा वा ॥ ( ५४५२ ) वा॰ सुधित-

---

सनिंससनिवांसमिति निपात्यते॥ **क्सोरिडिति** । 'नेड्वशि कृति ३९८१' इति निषेधे प्राप्ते निपातनम् ॥ (५४३८) **पावका इति** । पुनन्ति पावयन्ति वा पावकाः । पुनातेः पावयतेर्वा ण्वुल् । टाप्॥(५४३९) **दधदिति** । दधातेर्लेट् तिप् 'श्लौ ३३०८' इति द्वित्वम् । दधाति इति स्थिते आकारलोपः 'लेटोऽडाटौ ५२५८' इत्यडागमः । 'इतश्च लोपः परस्मैपदेषु ५२५७' इतीकारलोपः । दाशुषे यजमानाय रत्नानि दधत् । दध्यादित्यर्थः । **ददिति** । ददाते रूपम् । लोपाभावे उदाहरणमाह—**ददादिति** । ( ५४४० ) **मीनातेः**— । 'प्वादीनां ह्रस्वः ३३८९' इत्यतो ह्रस्वः इति वर्तते तदाह—**शिति ह्रस्व इति** । **प्रमीणन्तीति** । 'हिनुमीना ३३५०' इति णत्वम् ॥ (५४४१) **आ इदमिति** । अस्तेर्लङ् तिप् 'आडजादीनाम् ३०१६' इत्याट् शपो लुक् । 'अस्तिसिचः—२९८०' इतीडभावे अपृक्तत्वाद्धल्ङ्यादिलोपः ॥ रुत्वविसर्गौ । संहितायां तु 'भोभगो—२४७' इति रोर्यत्वम् । 'लोपः शाकल्यस्य १०१' इति यलोपः ॥ ( ५४४२ ) **जसादिष्विति** । आदिशब्दः प्रकारे तेन पूर्वयोगनिर्दिष्टानामपि ग्रहणम् ॥ **शतक्रत्व इति** । 'जसि च ३४५' इति गुणाभावपक्षे प्रथमयोः पूर्वसवर्णदीर्घोऽपि 'वा छन्दसि ५४४२' इति वचनादत्र न भवतीति यणादेशः प्रवर्तते ॥ **पश्वे इति** । 'घेर्ङिति ३४९' इत्यस्याभावे यण् ॥ ( ५४४३ ) **जुजोषदिति** । 'जुषी प्रीतिसेवनयोः' । लेट् । व्यत्ययेन परस्मैपदम् । तिप् 'इतश्च लोपः परस्मैपदेषु ५२५७' 'लेटोऽडाटौ ५२५८' इत्यट् व्यत्ययेन शपः श्लुः । द्विर्वचनम् ॥ ( ५४४५ ) **न च्छन्दसि**— । इह यद्यानन्तर्यादीत्वमात्रं प्रतिषिध्येत, तर्हि 'अकृत्सार्व—३०७१' इति दीर्घः स्यात् । अपवादाभावे पुनरुत्सर्गस्थितेः । अत आह—**ईत्वदीर्घौ नेति** । क्यचि यदुक्तं तन्नेति व्याख्यानादिति भावः । अत्र च ज्ञापकमनुपदमेव वक्ष्यति ॥ **पुत्रीयन्त इति** । पुत्रमिच्छन्तः पुत्रीयन्तः । जनमिच्छन्तो जनीयन्तः । लटः शत्रादेशः । 'उगिदचाम्—३६१' नुम् ॥ ( ५४४७ ) **दुरस्यु**— । दुष्टशब्दस्य दुरस्भावो द्रविणशब्दस्य द्रविणस्भावः, वृषस्य वृषण्भावः, रिष्टस्य रिषण्भावश्च निपात्यते ॥ **दुष्टीयतीति** । प्रकृतिमात्रे तात्पर्यम् । उप्रत्ययस्य समानार्थेन तृना दुष्टीयितेत्यादि बोध्यम् ॥ ( ५४४८ ) **अश्वायन्त इति** । अश्वशब्दात् क्यच् । लटः शत्रादेशः ॥ **अघायव इति** । 'छन्दसि परेच्छायां क्यच्' 'क्याच्छन्दसि ४१५२' इत्युप्रत्ययः ॥ **इदमेव सूत्रं ज्ञापकमिति** । अन्यथा दीर्घेणैव सिद्धत्वादात्ववचनमनर्थकं स्यात् ॥ ( ५४४९ ) **देवान् जिगातीति** । नन्विदं प्रत्युदाहरणमङ्गद्वयविकलम् । यजुषि काठक इत्यंशद्वयस्यापि तत्राभावादित्याशङ्क्याह—**बह्वृचानामप्यस्तीति** । तत्रेदं दृष्टमिति भावः । काठक इति किम् । यजुर्वेदे शाखान्तरे मा भूत् । अन्यत्र सुम्नयुरिदमस्ति ॥ ( ५४५० ) **कव्यध्वर**— । कवि अध्वर पृतना एषामन्त्यस्य लोपः स्यात् । क्यचि परे ऋचि विषये ॥ मृगय्वादिगणेऽध्वर्युशब्दः पठ्यते, तद्व्युत्पत्त्यन्तरं बोध्यम् ॥ ( ५४५१ ) **विभाषा**— । जहातेरत्रस्य विभाषा हि आदेशः स्यात् ॥ **हीत्वेति** । हिआदेशाभावे 'द्युमास्था—

वसुधितनेमधितधिष्वधिषीय च । ७ । ४ । ४५ । सु वसु नेम एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते । गर्भं माता सुधितं वक्षणासु । वसुधितमग्नौ । नेमधिता न पौंस्या ॥ क्तिन्यपि दृश्यते । उत श्वेतं वसुधितिं निरेके । धिष्व वज्रं दक्षिण इन्द्र हस्ते । धत्स्वेति प्राप्ते । सुरेता रेतो धिषीय । आशीर्लिङि इट् । [३०११] इटोऽत् । धासीयेति प्राप्ते ॥ [६९२] अपो भि ॥ ( ५४५३ ) (वा) मासश्छन्दसीति वक्तव्यम् ॥ माद्भिः शरद्भिः ॥ ( ५४५४ ) (वा) स्ववःस्वतवसोरुषसश्चेष्यते ॥ स्ववद्भिः । अवतेरसुन् । शोभनमवो येषां ते स्ववसस्तैः । तु इति सौत्रो धातुरतस्मादसुन् । स्वं तवो येषां तैः स्वतवद्भिः । समुषद्भिरजायथाः । मिथुनेऽसिः । वसेः किच्चेत्यसिप्रत्यय इति हरदत्तः । पञ्चपादीरीत्या तु [४८८९] उषः किदिति प्राग्व्याख्यातम् ॥ न [३५०८] कवतेर्यङि ॥ ( ५४५५ ) (सू) कृषेश्छन्दसि । ७ । ४ । ६४ । यङि अभ्यासस्य चुत्वं न । करीकृष्यते ॥ ( ५४५६ ) (सू) दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्याऽऽगनीगन्तीति च । ७ । ४ । ६५ । एतेऽष्टादश निपात्यन्ते । आद्यास्त्रयो धृङो धारयतेर्वा । भवतेर्यङ्लुगन्तस्य गुणाभावः । तेन भाषायां गुणो लभ्यते । तिजेर्यङ्लुगन्तात्तङ् । इयर्तेर्लटि हलादिःशेषापवादो रेफस्य लत्वमित्वाभावश्च निपात्यते । अलर्षि युध्म खजकृत्पुरन्दरः । सिपा निर्देशो न तन्त्रम् । अलर्ति दक्ष उत । फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते । अन्वापनीफणत् । स्यन्देः संपूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक् धातुसकारस्य षत्वम् । करोतेर्यङ्लुगन्तस्याभ्यासस्य चुत्वाभावः । क्रन्देर्लुङि च्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च । कनिक्रदज्जनुषम् । अक्रन्दीदित्यर्थः । बिभर्तेरभ्यासस्य जश्त्वाभावः । वियोभरिभ्रदोषधीषु । ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमो धातोर्ऋकारलोपश्च । दविध्वतो रश्मयः सूर्यस्य । द्युतेरभ्यासस्य संप्रसारणाभावोऽत्वं विगागमश्च । दविद्युतद्दीद्यच्छोशुचानः । तरतेः शतरि श्लौ अभ्यासस्य रिगागमः । सहोर्जा तरित्रतः । सृपेः शतरि श्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य । वृजेः शतरि श्लावभ्यासस्य रीक् । मृजेर्लिटि णल् अभ्यासस्य रुक् धातोश्च युक् । दमेराङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावो नीगागमश्च । वक्ष्यन्तीवेदागनीगन्ति कर्णम् ॥ ( ५४५७ ) (सू) ससूवेति निगमे । ७ । ४ । ७४ । सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते । गृष्टिः ससूव स्थविरम् । सुषुव इति भाषायाम् ॥ ( ५४५८ ) (सू) बहुलं छन्दसि । ७ । ४ । ७८ । अभ्यासस्य इकारः स्याच्छन्दसि । पूर्णां विवष्टि । वशेरेतद्रूपम् ॥ इति सप्तमोऽध्यायः ॥ ७ ॥

---

३२७४' इतीत्त्वम् । क्वचित्तु हात्वेति पाठस्तत्र च्छान्दसत्वाद् 'घुमास्था–३२७४' इतीत्त्वाभावः ॥ ( ५४५२ ) **वसुधितमिति** । कर्मधारय इति हरदत्तः । वसूनां धातारं प्रदातारमित्यर्थ इति वेदभाष्यम् ॥ **नेमधितमिति** । सामिपर्यायो नेमशब्दः । अयं कर्मधारयः ॥ **धत्स्वेति** । 'श्नाभ्यस्तयोरातः ३२९८' इत्याकारलोपः । 'दधस्तथोश्च ३३१९' इति भष्भावः ॥ **धिषीयेति** । आशीर्लिङात्मनेपदोत्तमपुरुषैकवचने दधातेरित्वं निपात्यते तदाह—**आशीर्लिङीति** ॥ ( ५४५३ ) **माद्भिरिति** । 'पद्दन्नोमास्–३२८' इति मासशब्दस्य मास् आदेशः ॥ [ ३५०८ ] **न कवतेरिति** । अनुवृत्त्यर्थ उपन्यासः ॥ ( ५४५५ ) **करीकृष्यत इति** । 'रीगृदुपधस्य–३५१२' इति रीगागमः । लोके तु चरीकृष्यते कृषीवलः ॥ ( ५४५६ ) **धृङ इति** । 'धृङ् अनवस्थाने' ॥ **धारयतेर्वेति** । स एव ण्यन्तः । तत्र दाधर्तीत्यत्र धारयतेः शपः श्लौ णिलुक् । अभ्यासस्य दीर्घत्वं च निपात्यते । धृङो वा शे प्राप्ते व्यत्ययेन शप् तत्र श्लावभ्यासस्य दीर्घत्वं च । अत्र परस्मैपदमपि निपात्य तस्यैव यङ्लुक्यभ्यासस्य रुगाद्यपवादकं दीर्घत्वं निपात्यत इति । दर्धर्तीत्यत्र यङ्लुक्पक्षे दाधर्तीति निपातेन प्राप्तस्य दीर्घस्याभावो निपात्यते ।'रुग्रिकौ च लुकि ३५२३' 'ऋतश्च ३५२४' इत्येव रुक् सिद्धः श्लुपक्षे तु रुगपि निपात्यः । दर्धर्षीत्यत्र यङ्लुक्पक्षे न किंचिन्निपातनं किंतु श्लावेव । भवतेर्यङ्लुगन्ताल्लोट्॥ **गुणाभाव इति** । ननु 'भूसुवोस्तिङि २९७९' इत्येव गुणनिषेधे सिद्धे निपातनमनर्थकमिति चेत्, सत्यम् । ज्ञापकार्थं तर्हि निपातनम् । एतज्ज्ञापयति 'अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवति' इति तेन बोभवीतीत्यत्र भाषायां गुणः सिद्धस्तदेतदाह—**तेन भाषायामिति** । तिजेर्यङ्लुक्यात्मनेपदं निपात्यते तदाह—**तिजेरिति** ।'ऋ गतौ' लटि सिपि 'श्लौ ३३०८'इति द्वित्वम् । अभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वं निपात्यते ।'अर्तिपिपर्त्योश्च ३३११' इत्यभ्यासस्य प्राप्तस्येत्वस्याभावो निपात्यते तदाह—**इयर्तेरिति** ॥ करोतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य चुत्वाभावो निपात्यते ऋतश्च ३५२४' इति रिगागमस्तदाह—**करोतेरिति** ॥ **चुत्वाभाव इति** । 'कुहोश्चुः ३००५' इति प्राप्तस्य । बिभर्तेर्यङ्लुगन्तस्य शतरि अभ्यासस्य जश्त्वाभावो निपात्यते तदाह—**बिभर्तेरिति** । **जश्त्वाभाव इति** । 'अभ्यासे चर्च २९३६' इति प्राप्तस्य ॥ **दविध्वत इति** । ध्वरतेर्यङ्लुगन्तस्य शतरि रूपम् । 'नाभ्यस्ताच्छतुः ५७३' इति नुम्प्रतिषेधः । द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्रसारणाभावोऽत्वं निपात्यते तदाह—**द्युतेरिति** । **संप्रसारणाभाव इति** । 'द्युतिस्वाप्योः संप्रसारणम् ३१२५' इति प्राप्तस्य ॥ ( ५४५७ ) **ससूवेति निगमे** । दाधर्त्यादिष्वेतत्पठितव्यम् ॥ ( ५४५७ ) **विवष्टीति** । 'वश कान्तौ' । लटि तिपि शपः श्लौ द्वित्वम् । अभ्यासस्येत्वम् 'व्रश्च–४११' इति षत्वम् । ष्टुत्वम् ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

(५४५९) (सू) **प्रसमुपोदः पादपूरणे** । ८ । १ । ६ । एषां द्वे स्तः पादपूरणे । प्रप्रायमग्निः । संसमिद्युवसे । उपोप मे परामृश । किं नोदुदु हर्षसे ॥ ( ५४६० ) (सू) **छन्दसीरः** । ८ । २ । १५ । इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात् । हरिवते हर्यश्वाय । गीर्वान् ॥ ( ५४६१ ) (सू) **अनो नुट्** । ८ । २ । १६ । अन्नन्तान्मतोर्नुट् स्यात् । अक्षण्वन्तः कर्णवन्तः । अस्थन्वन्तं यदनस्था ॥ ( ५४६२ ) **नाद्घस्य** । ८ । २ । १७ । नान्तात्परस्य घस्य नुट् । सुपथिन्तरः ॥ ( ५४६३ ) (वा) **भूरिदाव्नस्तुड्वाच्यः** ॥ भूरिदावत्तरो जनः ॥ ( ५४६४ ) (वा) **ईद्रथिनः** ॥ रथीतरः । रथीतमं रथीनाम् ॥ ( ५४६५ ) (सू) **नसत्तनिषत्ताऽनुत्तप्रतूर्तसूर्तगूर्तानि च्छन्दसि** । ८ । २ । ६१ । सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठाया नत्वाभावो निपात्यते । नसत्तमञ्जसा । निषत्तमस्य चरतः । असन्नं निषण्णमिति प्राप्ते । उन्देर्नञ्पूर्वस्यानुत्तम् । प्रतूर्तमिति त्वरतेः । तुर्वीत्यस्य वा । सूर्तमिति सृ इत्यस्य । गूर्तमिति । गूरी इत्यस्य ॥ ( ५४६६ ) (सू) **अम्नरूधरवरित्युभयथा छन्दसि** । ८ । २ । ७० । रुर्वा रेफो वा । अम्न एव । अम्नरेव । ऊध एव । ऊधरेव । अव एव । अवरेव । ( ५४६७ ) (सू) **भुवश्च महाव्याहृतेः** । ८ । २ । ७१ । भुव इति । भुवरिति ॥ ( ५४६८ ) (सू) **ओमभ्यादाने** । ८ । २ । ८७ । ओंशब्दस्य प्लुतः स्यादारम्भे । ओ ३ म् अग्निमीळे पुरोहितम् । अभ्यादाने किम् । ओमित्येकाक्षरम् ॥ ( ५४६९ ) (सू) **ये यज्ञकर्मणि** । ८ । २ । ८८ । ये ३ यजामहे । यज्ञेति किम् । ये यजामहे ॥

---

( ५४५९ ) **प्रसमुपोदः पादपूरणे** । समाहारद्वन्द्वः । समासान्तविधेरनित्यत्वाद् 'द्वन्द्वाच्चुदषहान्तात्–९३३४' इति न टच् । **प्रप्रायमग्निरिति** । नात्र द्विर्वचनस्य किंचिद् द्योत्यं केवलं पादपूरणमेव कार्यम् । न चैवंविधस्य भाषायां प्रयोगोऽस्तीति सामर्थ्याच्छन्दस्येवेदं विधानमित्याहुः ॥ (५४६०) **छन्दसीरः** । **हरिवते इति** । 'हरयो विद्यन्ते यस्येति हरिवान् तस्मै हरिशब्दान्मतुप् मकारस्य वकारः ॥ **गीर्वानिति** । 'र्वोरुपधाया दीर्घ इकः–५८०' इति दीर्घः ॥ ( ५४६१ ) **अक्षण्वन्त इति** । अक्षिशब्दान्मतुप् । 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ४४५' । 'छन्दस्यपि दृश्यते ५४२९' इत्यनङ् नुटोऽसिद्धत्वात्पूर्वं नलोपे भूतपूर्वगत्या नुट् णत्वम् । ननु यदि परादिर्नुट् क्रियते तस्य मतुब्ग्रहणेन ग्रहणात् 'मादुपधायाः–२५६२' इति वत्वं स्यात्, मतुबस्य तु न स्यात् नुटा व्यवधानात् । यदि तु पूर्वान्तो नुट् क्रियते तर्हि णत्वं न स्यात् । 'पदान्तस्य २८३' इति निषेधादिति चेत् सत्यम्–नुटोऽसिद्धत्वान्नोक्तदोषः । नन्वेवमवग्रहे दोषः स्यात्, अक्षणिति णान्तं ह्यवगृह्णन्ति अक्षेत्यकारान्तमवग्रहीतुमुचितमिति चेत्, सत्यम्—न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्तनीयम् , तस्माद्यथालक्षणं पदं कर्तव्यमिति महाभाष्ये स्थितम् । किंच ईयिवांसमित्यादौ पदत्वं विनापि अवग्रहः क्रियते, पूर्वेभिरग्निनेत्यादौ सत्यपि पदत्वे न क्रियत इति ॥ ( ५४६२ ) **घस्येति** । तरसमपोरित्यर्थः । 'तरप्तमपौ घः २७१७' इति तरसमपोर्घसंज्ञाविधानात् ॥ **सुपथितर इति** । सुपथिन्छब्दात् 'द्विवचनविभज्योपपदे–२७१९' इति तरप् । नलोपः । तरपो नुट् तस्यानुस्वारः ॥ ( ५४६३ ) **भूरिदाव्न इति** । भूरिदाव्नः परस्य घस्य तुट् वाच्य इत्यर्थः ॥ **भूरिदावत्तर इति** । 'आतो मनिन्–५२४७' इत्यादिना दाधातोर्वनिप् तदन्तात्तरप् 'न लोपः प्रातिपदिकान्तस्य ३३९' इति नलोपः । तुडागमः ॥ ( ५४६४ ) **ईद्रथिन इति** । रथिनः ईकारोऽन्तादेशो घे परे ॥ **रथीतर इति** । रथशब्दात् 'अत इनिठनौ २६००' इति मत्वर्थीय इनिः । तदन्तात्तरप् नकारलोपे कृते इकारस्य ईकारादेशः । यदि तु नकारलोपापवादो नकारस्थाने ईकारो विधीयते, तदा तस्यासिद्धत्वादेकादेशो न स्यात् ॥ **रथीतममिति** । इह पदकारा ह्रस्वान्तमवगृह्णन्ति । 'अन्येषामपि–५३९०' इति संहितायां दीर्घ इति तदाशयः ॥ ( ५४६५ ) **नसत्त–** । एतानि छन्दसि विषये निपात्यन्ते ॥ **नत्वाभाव इति** । 'रदाभ्याम्–४०२४' इति प्राप्तस्य ॥ **निषत्तमिति** । 'सदिरप्रतेः ३०३८' इति षत्वम् ॥ **अनुत्तमिति** । अनुन्नमिति भाषायाम् । एतन्निपातनारम्भसामर्थ्याद्भाषायां 'नुदविदोन्दत्रा—४०५१' इति विकल्पो नेत्याहुः ॥ **प्रतूर्तमिति** । यदा त्वरतेस्तदा 'ज्वरत्वर–३५२५' इत्यादिना ऊठ् । यदा 'तुर्वी हिंसायाम्' इत्यस्य, तदा 'राल्लोपः ३५२६' ॥ **सृ इत्यस्येति** । निपातनादुत्वम् । रपरत्वं तु 'उरण् रपरः १०५' इत्येव सिद्धम् । कार्यकालपक्षाश्रयणेन परिभाषाणामसिद्धत्वप्रकरणेऽपि प्रवृत्तेः ॥ **गूर्तमिति** । गूर्णमिति भाषायाम् ॥ ( ५४६६ ) **अम्न–** । उभयथेति व्याचष्टे–**रुर्वा रेफो वेति** । 'ससजुषो रुः २४२' इति नित्यं रुत्वे प्राप्ते पक्षे रेफादेशार्थमिदम् । अम्नस्शब्द ईषदर्थे । अम्नरस्तामितमिति यथा । अवो रक्षणम् ॥ **अम्न एवेति** । यदा रुत्वं तदा 'भोभगो–२४७' इति रोर्यत्वं 'लोपः शाकल्यस्य १०१' इति लोपः ॥ (५४६७) **भुवश्च–** । महाव्याहृतेर्भुवस् इत्येतस्य च्छन्दसि विषये रुर्वा रेफो वा । तिस्रो महाव्याहृतयः पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः । इह तु मध्यमाया ग्रहणम् । महाव्याहृतेरिति किम्, भुवो विश्वेषु भुवनेषु । तिङन्तमेतद्भवतेः, 'छन्दसि लुङ्लङ्लिटः ५२५४' इति वर्तमाने लङ् सिप् शपि गुणाभावश्छान्दसो 'बहुलं छन्दस्यमाङ्योगेऽपि ५३९७' इत्यडभावः । लाक्षणिकत्वादेवास्याग्रहणे सिद्धे महाव्याहृतिग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थम् । तेन क्नापयतीत्यादौ पुक् सिध्यति ॥ **भुव इति** । भुव इत्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः ॥ ( ५४६८ ) **ओम–** । अभ्यादानमारम्भस्तदाह–**आरम्भे इति** । अत्र प्लुतश्रुत्याऽच्परिभाषोपस्थानादच एव प्लुतः । मकारस्त्वर्धमात्रः, समुदायोऽप्यर्धतुर्य-

---

१ अत्र येशब्दो ये यजामह इति वाक्यघटितो गृह्यते भाष्ये सर्वत्रातिप्रसंगमाशङ्क्य सिद्धं तु ये यजामह इत्यस्य ब्रूयादिषूपसंख्यानमित्युक्तत्वात् ॥

(५४७०) प्रणवष्टेः । ८ । २ । ८९ । यज्ञकर्मणि टेरोमित्यादेशः स्यात् । अपां रेतांसि जिन्वतोम् । टेः किम् । हलन्ते अन्त्यस्य मा भूत् ॥ (५४७१) याज्यान्तः ।८।२।९०। ये याज्यान्ता मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि । जिह्वामग्ने चकृषे हव्यवाहा ३ म् । अन्तः किम् । याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः स्यात् । सर्वान्तस्य चेष्यते ॥(५४७२) ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः।८।२।९१। एषामादेः प्लुतो यज्ञकर्मणि । अग्नयेऽनुब्रू ३ हि । अग्नये गोमयानि प्रे ३ ष्य । अस्तु श्रौ ३ षट् । सोमस्याग्ने वीही ३ वौ ३ षट् । अग्निमा ३ वह ॥ ( ५४७३ ) अग्नीत्प्रेषणे परस्य च । ८ । २ । ९२ । अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात्परस्य च । ओ ३ श्रा ३ वय ॥ ( ५४७४ ) विभाषा पृष्टप्रतिवचने हेः । ८ । २ । ९३ । प्लुतः । अकार्षीः कटम् । अकार्षं हि ३ । अकार्षं हि । पृष्टेति किम् । कटं करिष्यति हि । हेः किम् । कटं करोति ननु ॥ ( ५४७५ ) निगृह्यानुयोगे च । ८ । २ । ९४ । अत्र यद्वाक्यं तस्य टेः प्लुतो वा । अद्यामावास्येत्यात्थ । अमावास्येत्येवंवादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुयुज्यते ॥ ( ५४७६ ) आम्रेडितं भर्त्सने । ८ । २ । ९५ । दस्योऽदस्यो ३ घातयिष्यामि त्वाम् । आम्रेडितग्रहणं द्विरुक्तोपलक्षणार्थम् । चौर चौर ३ ॥ ( ५४७७ ) अङ्गयुक्तं तिङाकाङ्क्षम् । ८ । २ । ९६ । अङ्गेत्यनेन युक्तं तिङन्तं प्लवते । अङ्ग कूज ३ इदानीं ज्ञास्यसि जाल्म । तिङ् किम् । अङ्ग देवदत्त मिथ्या वदसि । आकाङ्क्षं किम् । अङ्ग पच । नैतदपरमाकाङ्क्षति।भर्त्सन इत्येव । अङ्गाधीष्व भक्तं तव दास्यामि॥ (५४७८) विचार्यमाणानाम्।८।२।९७। वाक्यानां टेः प्लुतः । होतव्यं दीक्षितस्य गृहा ३ इ । न होतव्य ३ मिति । होतव्यं न होतव्यमिति विचार्यते । प्रमाणैर्वस्तुतत्त्वपरीक्षणं विचारः ॥ (५४७९) पूर्वं तु भाषायाम् ।८।२।९८। विचार्यमाणानां पूर्वमेव प्लवते । अहिर्नु ३ रज्जुर्नु । प्रयोगापेक्षत्वं पूर्वत्वम् । भाषाग्रहणात्पूर्वयोगश्छन्दसीति ज्ञायते ॥ ( ५४८० ) प्रतिश्रवणे च । ८ । २ । ९९ । वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च । गां मे देहि भोः । हन्त ते ददामि ३ । नित्यः शब्दो भवितुमर्हति ३ । दत्त किमात्थ ३ ॥ ( ५४८१ ) अनुदात्तं प्रश्नान्ताभिपूजि-

---

मात्रः संपद्यते ॥ ( ५४६९ ) ये यज्ञ-। ये इत्येतस्य यज्ञकर्मणि प्लुतो भवति ॥ ( ५४७० ) प्रणवः-। यज्ञकर्मणीति वर्तते । यज्ञकर्मणि टेः प्रणवादेशः स्यात्तदाह-यज्ञकर्मणीत्यादि ॥ जिन्वतोमिति । जिविः प्रीणनार्थः । लट् तिप् टेः प्रणवादेशः ॥ टेः किमिति । 'वाक्यस्य टेः-१५१' इत्यतः टेरित्यनुवर्तमाने पुनष्टेर्ग्रहणं किमर्थमिति प्रश्नः । असति हि टिग्रहणे 'अलोऽन्त्यस्य ६६' इति वचनाट्टेर्योऽन्त्योऽल् तस्यौकारः स्यात्, तस्मात्सर्वादेशार्थं टिग्रहणमित्याह-हलन्तेऽन्त्यस्य मा भूदिति । अजन्ते विशेषाभावाद्धलन्ते इत्युक्तम् ॥ ( ५४७१ ) याज्यान्तः । ये याज्या नाम मन्त्रा इति । याज्याकाण्डे पठ्यन्ते ये मन्त्रा याज्यानुवाक्याकाण्डमिति समाख्याने प्रकरणे ये मन्त्रा इत्यर्थः ॥ तेषामिति । मन्त्राणामित्यर्थः । तासामिति पाठे तासां याज्यानाम् । इहेदमन्तग्रहणं टेरित्यस्य निवर्तकं वा स्याद्विशेषणं वा । आद्ये चान्ते विशेषिते अजन्ताया एव याज्यायाः प्लुतः स्यात् । पक्षान्तरे त्वन्तग्रहणमनर्थकं टेरन्तत्वाव्यभिचारादित्यभिप्रायेणाह-अन्तः किमिति । इतरोऽपि विदिताभिप्राय आह-याज्यानामृचामिति । याज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपाः तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति स चान्तस्यैवेष्यते तदर्थमन्तग्रहणमिति भावः ॥ ( ५४७३ ) अग्नीत्प्रेषणे परस्य च । अग्नीधः प्रेषणमग्नीत्प्रेषणं तस्मिंस्तदाह-अग्नीधः प्रेषण इति ॥ ( ५४७४ ) विभाषा पृष्टप्रतिवचने-। विभाषा हेः प्लुतो भवति ॥ ( ५४७५ ) निगृह्या--। निगृह्येति ल्यबन्तम् । स्वमतात्प्रच्यवनं निग्रहः तस्यैव स्वमतस्य एवं किल त्वं निरुपपत्तिकमात्थेति शब्देन प्रतिपादनमनुप्रयोगः । तत्र यद्वाक्यं तदाह—अत्र यद्वाक्यमिति । निगृह्यानुयोगे यद्वाक्यमित्यर्थः । अद्यामावास्येत्येवं केनचित्प्रतिज्ञातं तमुपपत्तिभिर्निगृह्य साभ्यसूयमनुयुङ्क्ते—अद्यामावास्येत्यात्थेति ॥ तदेव विवृणोति—अमावास्येत्येवमित्यादि ॥ ( ५४७६ ) दस्योदस्यो ३ इति । 'वाक्यादेरामन्त्रितस्य-२८८७' इत्यादिना द्विर्वचनम् । ननु द्विरुक्तसमुदाये परभागस्यैव प्लुतः प्राप्नोति न तु पूर्वस्य 'तस्य परमाम्रेडितम् १३४' इति परभागस्यैवाम्रेडितसंज्ञाविधानाद्, इष्यते द्वयोरपीत्याह-आम्रेडितग्रहणमित्यादि ॥ द्विरुक्तोपलक्षणार्थमिति । द्विरुक्तसमुदाये भागद्वयोपलक्षणार्थमित्यर्थः । एतच्चाम्रेडितस्य भर्त्सने वृत्त्यसंभवाल्लभ्यते ॥ ( ५४७७ ) अङ्गयुक्तम्-। आकाङ्क्षतीत्याकाङ्क्षम्, पचाद्यच् ॥ तिङन्तमिति । आकाङ्क्षं तिङन्तमित्यर्थः ॥ अङ्ग कूज इति । अङ्गशब्दोऽमर्षे 'कूज अव्यक्ते शब्दे' लोण्मध्यमपुरुषैकवचनम् ॥ ज्ञास्यसि जाल्मेति । कूजनफलमस्मिन्नेव क्षणे ज्ञास्यसीत्यर्थः ॥ अङ्ग देवदत्तेति । अङ्ग देवदत्तेत्येकं वाक्यम् । 'एतच्च मिथ्या वदसि' एतदपेक्षते ॥ ( ५४७८ ) विचार्यमाणानाम् । कोटिद्वयस्पृग्विज्ञानं विचार इति कथ्यते, विचार्यमाणस्तत्त्वज्ञानविषयीभूत उच्यते । इह तु विचार्यमाणविषयत्वाद्वाक्यानि विचार्यमाणानि ॥ गृहा ३ इ इति । सप्तम्येकवचनान्तस्य गृहे इत्यस्य 'एचोऽप्रगृह्यस्य-५४८८' इति प्लुतविकारः ॥ ( ५४७९ ) पूर्वं तु-। पूर्वेणैव सिद्धे नियमार्थमिदम् । तुशब्दस्त्वेवार्थतोऽवधारणार्थः । यथैवं विज्ञायेत, पूर्वमेव प्लुत इति, मैवं विज्ञायि पूर्वं भाषायामेवेति । उदाहरणे तुशब्दो वितर्के ॥ ( ५४८० ) प्रतिश्रव-। प्रतिश्रवणार्थमाह-अभ्युपगमे इत्यादि । अङ्गीकारे इत्यर्थः ॥ प्रतिज्ञाने इति । अत्रोभयत्रापि गतिसमासः । अर्थद्वयेऽपि प्रतिपूर्वः शृणोतिः प्रसिद्धः ॥ आभिमुख्ये चेति । अत्र 'लक्षणेनाभिप्रती आभिमुख्ये ९७१' इत्यव्ययीभावः ॥ दत्त किमात्थ इति । किं ब्रूषे इत्येव पृच्छ्यते, अत्र श्रवणाभि-

तयोः । ८ । २ । १०० । अनुदात्तः प्लुतः स्यात् । दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्वमात्रमनेन विधीयते । अग्निभूत ३ इ । पट ३ उ । अग्निभूते पटो एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः । शोभनः खल्वसि माणवक ३ ॥ (५४८२) (सू.) **चिदिति चोपमार्थे प्रयुज्यमाने** । ८ । २ । १०१ । वाक्यस्य टेरनुदात्तः प्लुतः । अग्निचिद्भाया ३ त् । अग्निचिदिव भाया ३ त् । उपमार्थे किम् । कथंचिदाहुः । प्रयुज्यमाने किम् । अग्निर्माणवको भायात् ॥ ( ५४८३ ) (सू.) **उपरिस्विदासीदिति च** । ८ । २ । १०२ । टेः प्लुतोऽनुदात्तः स्यात् । उपरिस्विदासी ३ त् । अधःस्विदासी ३ दित्यत्र तु विचार्यमाणानामित्युदात्तः प्लुतः॥(५४८४)(सू.) **स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु**।८।२।१०३। स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये । असूयायाम् । अभिरूपक ३ अभिरूपक रिक्तं ते आभिरूप्यम् । संमतौ । अभिरूपक ३ अभिरूपक शोभनोऽसि । कोपे । अविनीतक ३ अविनीतक इदानीं ज्ञास्यसि जाल्म । कुत्सने शाक्तीक ३ शाक्तीक रिक्ता ते शक्तिः ॥ ( ५४८५ ) (सू.) **क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्** । ८ । २ । १०४ । आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यात् । आचारभेदे । स्वयं ह रथेन याति ३ उपाध्यायं पदातिं गमयति । प्रार्थनायाम् । पुत्रांश्च लप्सीष्ट ३ धनं च तात । व्यापारणे । कटं कुरु ३ ग्रामं गच्छ । आकाङ्क्षं किम् । दीर्घायुरसि । अग्नीदग्नीन्विहर ॥ ( ५४८६ ) (सू.) **अनन्त्यस्यापि प्रश्नाख्यानयोः** । ८ । २ । १०५ । अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुत एतयोः । अगमः ३ पूर्वा ३ न् ग्रामा ३ न् । सर्वपदानामयम् । आख्याने । अगमः ३ म् पूर्वा ३ न् ग्रामा ३ न् ( ५४८७ ) (सू.) **प्लुतावैच इदुतौ** । ८ । २ । १०६ । दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते । ऐ ३ तिकायन । औ ३ पगव । चतुर्मात्रावत्र ऐचौ सम्पद्येते ॥ ( ५४८८ ) (सू.) **एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्याऽऽदुत्तरस्येदुतौ** । ८ । २ । १०७ । अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्धस्याकारः प्लुतः स्यादुत्तरस्य त्वर्धस्य इदुतौ स्तः ॥ ( ५४८९ ) (वा.) **प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्वेव** ॥ प्रश्नान्ते । अगमः ३ पूर्वा ३ न् ग्रामा ३ न् । अग्निभूता ३ इ । अभिपूजिते । करोषि पटा ३ उ । विचार्यमाणे । होतव्यं दीक्षितस्य गृहा ३ इ । न होतव्य ३ मिति । प्रत्यभिवादे । आयुष्मानेधि अग्निभूता ३ इ । याज्यान्ते । स्तोमैर्विधेमाग्नया ३ इ । परिगणनं किम् । विष्णुभूते घातयिष्यामि त्वाम् । अदूराद्धूत इति

---

मुख्यं गम्यते ॥ ( ५४८१ ) **अनुदात्तं प्रश्नान्ता-**। प्रश्नवाक्ये यच्चरमं प्रयुज्यते, स प्रश्नान्तः । नानेन प्लुतो विधीयते, किंतु दूराद्धूतादिषु विहितस्य प्लुतस्योदात्तत्वे प्राप्ते प्रश्नान्ताभिपूजितयोरनुदात्तत्वगुणमात्रं विधीयते तदाह-**दूराद्धूतादिष्विति** । तत्रैषा वचनव्यक्तिः । अभिपूजिते च यः प्लुतः सोऽनुदात्तो भवतीति । तत्राभिपूजिते 'दूराद्धूते च १५६' इति प्लुत इति । इतरत्र तु 'अनन्त्यस्यापि प्रश्नाख्यानयोः ५४८६' इति । **अग्निभूत ३ इ इति पट ३ उ इति** । 'अगमः ३ पूर्वां ३ न् ग्रामा ३ न्' इत्येतद्वाक्यम् 'अग्निभूते पटो' इत्यनन्तरेण समाप्तं तत्र अगम इत्येवमादीनाम् 'अनन्त्यस्यापि प्रश्नाख्यानयोः ५४८६' इति स्वरितः । प्लुतः । अग्निभूते पटो अनयोरनुदात्तः । अभिपूजित उदाहरणमाह—**शोभनः खल्वसीत्यादि** ॥ ( ५४८२ ) **चिदिति चोप-**। चिदित्येतन्निपाते उपमानेऽर्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतो भवतीत्यर्थः । प्लुतोऽप्यत्राज्विधीयते, न गुणमात्रम् । इतीति किम् । अक्रियमाणे तस्मिन्नुपमानेऽर्थे कस्मिंश्चिच्छब्दे प्रयुज्यमाने चिच्छब्दः प्लुत इति विज्ञायेत । इतिशब्दे तु सति प्रयुज्यमान इत्येतच्चिच्छब्दस्य विशेषणम्, प्लुतस्तु 'वाक्यस्य टेः-१५१' इत्यधिकारात्तस्यैव भवतीति मनसि विभाव्योदाहरणमुखेनाह-**अग्निचिदिव भायादिति** । अत्र न चिच्छब्दस्य प्लुतः, किंतु भायादित्यस्यैव । अक्रियमाणे तु इतिशब्दे चिच्छब्दस्यैव प्लुतः स्याद्, अग्निचिद्भायादित्यत्र न स्यादिति भावः ॥ **कथंचिदिति** । अत्र कष्टे चिच्छब्दः ॥ **अग्निर्माणवको भायादिति** । अग्निरिव माणवको दीप्यत इत्यर्थः । अत्रोपमानार्थस्य गम्यमानत्वादस्ति चिच्छब्दस्य प्रतीतिः प्रयोगस्तु नास्ति । यद्यप्यन्येषामप्युपमानार्थानामिवादीनामस्ति प्रतीतिः तथापि चिच्छब्दस्यापि तावदस्तीति भावः ॥ ( ५४८३ ) **उपरिस्विदासीदिति-**॥ अत्रापि 'विचार्यमाणानाम् ५४७८' इति विहितस्य प्लुतस्य गुणमात्रं विधीयते ॥ ( ५४८४ ) **स्वरितमाम्रेडिते-**। उदाहरणे सर्वत्र 'वाक्यादेरामंत्रितस्य-२८८७' इति द्विर्वचनम् ॥ ( ५४८५ ) **क्षियाशीः—**। क्षिया आचारोल्लङ्घनम् । इष्टाशंसनमाशीः । दीर्घायुरसि अग्नीदग्नीन् विहरेति । क्षियायां तु न प्रत्युदाहृतम्, नित्यसाकाङ्क्षत्वात् । न हि स्वयं ह रथेन यातीत्युक्ते आचारभेदो गम्यते, किंतु तर्हि उपाध्यायं पदातिं गमयतीत्युक्ते ॥ ( ५४८७ ) **प्लुतावै—**। उदाहरणे 'गुरोरनृतः-१५८' इति प्लुतः ॥ **चतुर्मात्राविति** । ऐचौ समाहारवर्णौ तत्र मात्राऽवर्णस्य मात्रेवर्णोवर्णयोः । तत्र इदुतोः प्लुते कृते तयोस्तिस्रो मात्राऽवर्णस्य चैका मात्रेति समुदायश्चतुर्मात्र इत्यर्थः । नन्वत्रार्द्धमात्राऽवर्णस्याध्यर्द्धमात्रेवर्णोवर्णयोरिति मतेऽर्द्धचतुर्थमात्रावप्यैचौ प्राप्नुतः, सत्यम्-'चतुर्मात्रः प्लुतः इष्यते' इति भाष्यात् समविभाग एवात्राश्रीयते इति भावः ॥ ( ५४८९ ) परिगणनमाह—**प्रश्नान्ते इत्यादि** ॥ 'अनुदात्तं प्रश्नान्ताभिपूजितयोः ५४८१' 'अनन्त्यस्यपि प्रश्नाख्यानयोः ५४८६' इति चानुदात्तः स्वरितो वा प्लुतः । अभिपूजिते 'अनुदात्तं प्रश्नान्ताभिपूजितयोः ५४८१' इति प्लुतः । विचार्यमाणे विचार्यमाणानाम् ५४७८' इति प्लुतः । प्रत्यभिवादे 'प्रत्य-

न वक्तव्यम् । पदान्तग्रहणं तु कर्तव्यम् । इह मा भूत् । भद्रं करोषि गौरिति । अप्रगृह्यस्य किम् । शोभने माले ॥ ( ५४९० ) वा॰ आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः ॥ अग्ना ३ इ पत्नी वः ॥ ( ५४९१ ) सू॰ तयोर्य्वावचि संहितायाम् । ८ । २ । १०८ । इदुतोर्यकारवकारौ स्तोऽचि संहितायाम् । अग्ना ३ याशा । पटा ३ वाशा । अग्ना ३ विन्द्रम् । पटा ३ वुदकम् । अचि किम् । अग्ना ३ इवरुणौ । संहितायां किम् । अग्ना ३ इ इन्द्रः । संहितायामित्यध्यायसमाप्तेरधिकारः । इदुतोरसिद्धत्वादयमारम्भः सवर्णदीर्घत्वस्य शाकल्यस्य च निवृत्त्यर्थम् । यवयोरसिद्धत्वादुदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यस्य बाधनार्थो वा ॥ ( ५४९२ ) सू॰ मतुवसो रु संबुद्धौ छन्दसि । ८ । ३ । १ । रु इत्यविभक्तिको निर्देशः । मत्वन्तस्य वस्वन्तस्य च रुः स्यात् । अलोऽन्त्यस्येति[६६] परिभाषया नकारस्य । इन्द्र मरुत्व इह पाहि सोमम् । हरिवो मेदिनं त्वा । छन्दसीर[५४६] इति वत्वम् ॥ ( ५४९३ ) सू॰ दाश्वान्साह्वान्मीढ्वांश्च । ६ । १ । १२ । एते क्वस्वन्ता निपात्यन्ते । मीढ्वस्तोकाय तनयाय ॥ ( ५४९४ ) वा॰ वन उपसंख्यानम् ॥ क्वनिब्वनिपोः सामान्यग्रहणम् । अनुबन्धपरिभाषा तु नोपतिष्ठते, अनुबन्धस्येहानिर्देशात् । यस्त्वायन्तं वसुना प्रातरित्वः । इणः क्वनिप् ॥ ( ५४९५ ) सू॰ उभयथर्क्षु । ८ । ३ । ८ । अम्परे छवि नकारस्य रुर्वा । पशूँस्तांश्चक्रे ॥ ( ५४९६ ) सू॰ दीर्घादटि समानपादे । ८ । ३ । ९ । दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नाटौ एकपादस्थौ स्या-

---

भिवादेऽशूद्रे १५२ ' इति प्लुतः । याज्यान्ते 'याज्यान्तः ५४७१ ' इति प्लुतः ॥ **विष्णुभूते इति** । नन्विदं परिगणनस्योदाहरणमयुक्तम् तावता सूत्रे एव 'अदूराद्धूते' इत्युच्यते अत आह-**अदूराद्धूत इति** ॥ **न वक्तव्यमिति** । अन्यार्थमवश्यं कर्तव्ये परिगणने तेनैव सिद्धत्वाद् अदूराद्धूत इति न वक्तव्यम् ॥ **भद्रं करोषि गौ ३ रिति** । अत्र 'असर्वनामस्थाने ' इति प्रतिषेधात्सौ परतः पूर्वं पदं न भवति ॥ **शोभने माले इति** । 'ईदूदेत्-१६२ ' इति प्रगृह्यसंज्ञा ॥ **( ५४९० ) आमन्त्रितेति** । अप्राप्ते एव प्लुते वचनम् ॥ **अग्ना ३ इ इति** । अग्निशब्दस्य संबुद्धौ रूपम् 'साऽऽमन्त्रितम् ५५२' इति आमन्त्रितसंज्ञा ॥ **( ५४९१ ) तयोर्य्वा**-। नन्विदं व्यर्थम् 'इको यणचि ७४' इत्यनेनैव सिद्धमत आह-**इदुतोरसिद्धत्वादिति** ॥ सिद्धः प्लुतः स्वरसन्धिषु, कथं ज्ञायते । 'प्लुतप्रगृह्या अचि-१४६' इति प्रकृतिभावविधानात् । यस्य हि विकारः प्राप्तः, तस्य प्रकृतिभावो विधेयः प्लुतस्यासिद्धत्वेन तस्य स्वरसन्ध्याख्यो विकारः प्राप्नोति । अस्तु प्लुतः सिद्धः, किमायातमिदुतोः । उच्यते-प्लुतप्रकरणे यत्कार्यं तत्स्वरसन्धिषु सिद्धमिति सामान्येन ज्ञापकमाश्रयिष्यते ततश्चेदुतोरपि सिद्धत्वात्सिद्ध एव यणादेशोऽत आह—**सवर्णदीर्घत्वस्येति** ॥ यदीदं नोच्येत, अग्ना ३ इ इन्द्रम् , पटा ३ उ उदकमित्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घः स्यात् । अग्ना ३ याशेत्यादौ च 'इकोऽसवर्णे शाकल्यस्य—१४७' इति प्रकृतिभावः स्यात्तद्बाधनार्थमिदं वक्तव्यमेव । ननु च तन्निवृत्तये यत्नान्तरमस्ति किं पुनरप्लुतपूर्वस्य यणादेशो वक्तव्यः, सवर्णदीर्घनिवृत्त्यर्थः, शाकलनिवृत्त्यर्थश्च तच्चावश्यं वक्तव्यं य इक् प्लुतपूर्वः न च प्लुतविकारः भो ३ इन्द्र, भो इयिन्द्रं गायतीति भोशब्दस्य च्छान्दसः प्लुतः ततः परस्येकारस्य निपातत्वात् प्रकृतिभावे प्राप्ते तं बाधित्वा यणादेशः, तदेवं तस्यावश्यं कर्तव्यत्वे तेनैव यणा सिद्धेऽत आह—**यवयोरिति** ॥ तथा चोक्तं वृत्तिकृता—

किं तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति ॥ तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ ॥ १ ॥
इक् च यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् ॥ तेन तयोश्च न शाकलदीर्घौ यणूस्वरबाधनमेव तु हेतुः ॥ २ ॥

अयमर्थः । 'इको यणचि ७४ ' इति यणादेशेन किं रूपं प्रसिध्यति यतोऽयमाचार्य इदुतोर्य्वौ विदधाति तौ चेदुतौ स्वरसन्धिषु सिद्धौ ममेति सूत्रकारेणैकीभूतस्य वचनम् । एवं चोदिते परिहरति-**शाकलदीर्घविधौ तु निवर्त्याविति** । शाकलस्येदं शाकलम् 'कण्वादिभ्यो गोत्रे १८७५ ' इत्यण् । पुनश्चोदयति-**इक् च यदेति** ॥ वार्तिककारोऽपि इकः प्लुतपूर्वस्य यणं विदधाति । स च प्रकृतिभावस्यैव शाकलदीर्घविध्योरपि अपवादः, ततश्च तेनैव यणा एतयोरपि इदुतोः शाकलदीर्घौ न भविष्यति इति नार्थ एतेन । परिहरति-**यणूस्वरेति** । यणूस्वरबाधनार्थमेव हेतुः सूत्रारम्भस्येति ॥ **( ५४९२ ) मतुव**-। अनुबन्धपरित्यागेन सकारान्तस्य वस् इत्यस्य मतुपा सह द्वन्द्वः । अल्पाच्तरस्यापि सौत्रः परनिपातः ॥ **मरुत्व इति** । मरुतो यस्य सन्तीति मतुप् । 'झयः २५६३ ' इति वत्वम् , 'तसौ मत्वर्थे २५६० ' इति भत्वाज्जश्त्वं न ॥ **हरिवो मेदिनमिति** । हरयो विद्यन्ते यस्येति मतुप् हरिवच्छब्दात्संबुद्ध्येकवचने ' उगिदचाम्-३९१ ' इति नुम् हल्ङ्यादिलोपे संयोगान्तलोपे च कृते नकारस्य रुः ॥ 'संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः' इति वचनात् 'हशि च २४६' इत्युत्वम् । (५४९३) प्रसङ्गादाह-**दाश्वानिति** ॥ **( ५४९४ ) क्वनिब्वनिपोः सामान्येन ग्रहणमिति** । अनुबन्धानिर्देशात्तदनुबन्धकपरिभाषाया अनुपस्थानात् क्वनिपोऽपि ग्रहणम् ॥ **प्रातरित्व इति** । प्रातरेतीति ' अन्येभ्योऽपि दृश्यन्ते ३९८० ' इति क्वनिप् । ' ह्रस्वस्य पिति कृति तुक् ३८०६ ' तदाह-**इणः क्वनिबिति** ॥ **( ५४९५ ) उभयथा**-। 'नश्छव्यप्रशान् २१३ ' इति वर्तते । तेनैव नित्ये प्राप्ते विकल्पार्थं वचनम् ॥ **पशूँस्तांश्चक्रे इति** । पशून् तानिति स्थिते नस्य रुः । पूर्वत्र 'अत्रानुनासिकः-२०४ ' इति वाऽनुनासिकः । उत्तरत्र तु 'आतोऽटि नित्यम् ५४९७ ' इत्यनुनासिकः । रेफस्य विसर्गः । तस्य 'विसर्जनीयस्य-२०६ ' इति सः ॥ **( ५४९६ ) दीर्घादटि समानपादे** । एकपर्यायः समानशब्दस्तदाह—**तौ चेन्नाटावेकपाद**-

ताम् । देवाँ अच्छा सुमती । महाँ इन्द्रो य ओजसा । उभयथेत्यनुवृत्तेर्नेह । आदित्यान्याचिषामहे ॥ ( ५४९७ ) (सू) आतोऽटि नित्यम् । ८ । ३ । ३ । अटि परतो रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः । महाँ इन्द्रः । तैत्तिरीयास्तु अनुस्वारमधीयते । तत्र च्छान्दसो व्यत्यय इति ग्राह्यः । एवं च सूत्रस्य फलं चिन्त्यम् ॥ ( ५४९८ ) (सू) स्वतवान्पायौ । ८ । ३ । ११ । रुर्वा । भुवस्तस्य स्वतवाँ पायुरग्ने ॥ ( ५४९९ ) (सू) छन्दसि वाऽप्राम्रेडितयोः । ८ । ३ । ४९ । विसर्गस्य सो वा स्यात् कुप्वोः प्रशब्दमाम्रेडितं च वर्जयित्वा । अग्ने त्रातर्ऋतस्कविः । गिरिर्न विश्वतस्पृथुः । नेह । वसुनः पूर्व्यः पतिः । अप्रेत्यादि किम् । अग्निः प्रविद्वान् । पुरुषः पुरुषः ॥ ( ५५०० ) (सू) कःकरत्करतिकृधिकृतेष्वनदितेः । ८ । ३ ५० । विसर्गस्य सः स्यात् । प्रदिवो अपस्कः । यथा नो वस्यसस्करत् । सुपेशस्करति । उरुणस्कृधि । सोमन्न चारुं मघवत्सु नस्कृतम् । अनदितेरिति किम् । यथा नो अदितिः करत् ॥ (५५०१) (सू) पञ्चम्याः परावध्यर्थे । ८ । ३ । ५१ । पञ्चमीविसर्गस्य सः स्यादुपरिभावार्थे परिशब्दे परतः । दिवस्परिप्रथमं जज्ञे । अध्यर्थे किम् । दिवसस्पृथिव्याः पर्योजः ॥ ( ५५०२ ) (सू) पातौ च बहुलम् । ८ । ३ । ५२ । पञ्चम्या इत्येव । सूर्यो नो दिवस्पातु ॥ ( ५५०३ ) (सू) षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । ८ । ३ । ५३ । वाचस्पतिं विश्वकर्माणम् । दिवस्पुत्राय सूर्याय । दिवस्पृष्ठं भन्दमानः । तमसस्पारमस्य । परिवीत इळस्पदे । दिवस्पयो दिधिषाणाः । रायस्पोषं यजमानेषु ॥ ( ५५०४ ) (सू) इडाया वा । ८ । ३ । ५४ । पतिपुत्रादिषु परेषु । इळायास्पुत्रः । इळायाः पुत्रः । इळायास्पदं । इळायाः पदे ॥ [३२०६] (सू) निसस्तपतावनासेवने । ८ । ३ । १०२ । निसः सकारस्य मूर्द्धन्यः स्यात् । निष्टप्तं रक्षो निष्टप्ता अरातयः । अनासेवने किम् । निस्तपति । पुनःपुनस्तपतीत्यर्थः ॥ (५५०५) (सू) युष्मत्तत्तक्षुष्वन्तःपादम् । ८ । ३ । १०३ । पादमध्यस्थस्य सस्य मूर्धन्यः स्यात्तकारादिष्वेषु परेषु । युष्मदादेशाः त्वंत्वातेतवाः । त्रिभिष्ट्वं देव सवितः । तेभिष्ट्वा । आभिष्टे । अप्स्वग्ने सधिष्टव । अग्निष्टद्विश्वम् । द्यावापृथिवी निष्टतक्षुः । अन्तःपादं किम् । तदग्निस्तदर्यमा । यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः । अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यः ॥ ( ५५०६ ) (सू) यजुष्येकेषाम् । ८ । ३ । १०४ । युष्मत्तत्तक्षुषु परतः सस्य मूर्धन्यो वा । अर्चिभिष्ट्वम् । अग्निष्टे अग्रम् । अर्चिभिष्टतक्षुः । पक्षे अर्चिभिस्त्वमित्यादि ॥ ( ५५०७ ) (सू) स्तुतस्तोमयोश्छन्दसि ।८।३।१०५। नृभिष्टुतस्य । नृभिस्तुतस्य । गोष्टोमम् । गोस्तोमम् । पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम् ॥ ( ५५०८ ) (सू) पूर्वपदात् । ८ । ३ । १०६ । पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा । यदिन्द्राग्नी दिविष्ठः । युवं हि स्थः स्वर्पती ॥ ( ५५०९ ) (सू) सुञः । ८ । ३ । १०७ । पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य सस्य षः । ऊर्ध्व ऊषुणः । अभीषुणः ॥ ( ५५१० ) (सू) सनोतेरनः । ८ । ३ । १०८ । गोषा इन्द्रो नृषा असि । अनः किम् । गोसनिः ॥

---

स्थाविति ॥ नाटो नकारटौ । देवाँ अच्छा, महाँ इन्द्रो इति । देवान् महानिति नस्य रुः ॥ 'आतोऽटि नित्यम् ५४९७' इति नित्यमनुनासिकः ॥ नेहेति । एतेन 'महान् हि सः' इति बह्वृचानां पाठोऽपि व्याख्यातः । आकरे तु 'महाँ हि' इत्युदाहृतं तच्छाखान्तरे अन्वेषणीयम् ॥ ( ५४९७ ) एवं चेति । विकल्पस्यैव व्यवस्थिततया प्रकृतसूत्रत्यागेन महल्लाघवम्, सूत्रारम्भे तु व्यत्ययोऽपि शरणीकरणीय इति महान् क्लेश इति भावः ॥ ( ५४९८ ) स्वत-। स्वतवानित्येतस्य नकारस्य रुर्वा पायुशब्दे परे ॥ स्वतवाँ इति । 'तु वृद्धौ' सौत्रो धातुः ततोऽसुन् स्वं तवो यस्यासौ स्वतवान् । 'ह्रस्वनुड्भ्यां मतुप्' ... 'दृक्स्ववःस्वतवसां छन्दसि ५४३१' इति नुम् । ( ५४९९ ) पुरुषः पुरुष इति । वीप्सायां द्विर्वचनम् ॥ ( ५५०० ) कःकरत्करति-। कृञो लुङ् । 'मन्त्रे घस-५२२९' इत्यादिना च्लेर्लुक् तिपि गुणः । हल्ङ्यादिलोपः । 'बहुलं छन्दस्यमाङ्योगेऽपि ५३९७' इत्यडभावः ॥ करदिति । कृञ एव लुङ् । 'कृमृदृरुहिभ्यश्छन्दसि ५२३३' इति च्लेरङ् । 'ऋदृशोऽङि-३२०९' इति गुणः ॥ करतीति । लट् व्यत्ययेन शप् ॥ कृधीति । लोट् सेर्हिः । 'श्रुशृणुपृकृवृभ्यश्छन्दसि ५४०३' इति हेर्धिरादेशः ॥ कृतमिति । कृञ एव क्तः ॥ ( ५५०१ ) पर्योज इति । अत्र परिः सर्वतोभावे ॥ ( ५५०२ ) पातौ च—। कश्चित्पठ्यते पताविति ॥ धातुनिर्देश इति । अन्ये तूदाहरणपर्यालोचनया लोडन्तानुकरणं मन्यन्ते ॥ (५५०३) षष्ठ्याः-वाचस्पतिमिति । 'तत्पुरुषे कृति बहुलम् १३९४' इति षष्ठ्यलुक् ॥ [ ३२०६ ] निसस्तपता-। आसेवनं पौनःपुन्यं ततोऽन्यस्मिन्नित्यर्थः ॥ ( ५५०५ ) युष्मत्तत्तक्षुष्विति । सकारान्तानुकरणात् परस्य सुप्सकारस्य 'नुम्विसर्जनीयशर्व्यवायेऽपि ५८१' इति षत्वम् । 'ह्रस्वात्तादौ-१८६६' इत्यतः तादाविति वर्तते तदाह-तकारादिष्विति । एतद्युष्मद एव विशेषणं नेतरयोरव्यभिचारात् ॥ त्वं-त्वा-ते-तवा इति । एतेषामेव संभव इत्यर्थः ॥ (५५०७) स्तुतस्तोमयोः-॥ एतयोः परतः सस्य षत्वं स्यात् ॥ पूर्वपदादित्येव सिद्ध इति । पूर्वं पदं पूर्वपदमिति सामान्यत आश्रीयते, न तु समासावयव एवेति वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः । ततश्च स्तुतस्तोमग्रहणं प्रपञ्चार्थं छन्दोग्रहणं तूत्तरार्थं कर्तव्यमेव ॥ ( ५५०९ ) ऊषुण इत्यादि । 'इकः सुञि ५३८७' इति पूर्वपदस्य दीर्घत्वम् । नस् इत्यादेशस्य 'नश्च धातुस्थोरुषुभ्यः ५५१४' इति णत्वम् ॥ ( ५५१० ) सनोतेरनः । अनन्तस्य सनोतेः सस्य षः स्यात् ॥ गोषा इति । 'जनसनखनक्रमगमो विट् ५२४१'

(५५११) सहेः पृतनर्ताभ्यां च ।८।३।१०९। पृतनाषाहम्। ऋताषाहम्। चात् ऋतीषाहम्॥ (५५१२) निव्यभिभ्योऽड्व्यवाये वा छन्दसि ।८।३।११९। सस्य मूर्धन्यः। न्यषीदत्। न्यसीदत्। व्यषीदत्। व्यसीदत्। अभ्यष्टौत्। अभ्यस्तौत्॥ (५५१३) छन्दस्यृदवग्रहात् ।८।४।२६। ऋकारान्तादवग्रहात्परस्य नस्य णः। नृमणाः। पितृयाणम् इत्यादि॥ (५५१४) नश्च धातुस्थोरुषुभ्यः। ८। ४। २७। धातुस्थात्। अग्ने रक्षा णः शिक्षा णो अस्मिन्। उरु णस्कृधि। अभीषु णः। मोषुणः॥ इत्यष्टमोऽध्यायः॥ ८॥ इति वैदिकप्रकरणम्॥

---

## अथ स्वरप्रकरणम्।

(५५१५) अनुदात्तं पदमेकवर्जम्। ६। १। १५८। परिभाषेयं स्वरविधिविषया। यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात्। गोपायतं नः। अत्र सनाद्यन्ता इति धातुत्वे धातुस्वरेण यकाराकार उदात्तः शिष्टमनुदात्तम्॥ (५५१६) सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम्॥ तेनोक्तोदाहरणे गुपेर्धातुस्वर आयस्य प्रत्ययस्वरश्च न शिष्यते। अन्यत्रेति किम्।

---

'विड्वनोः-२९८३' इत्यात्त्वम्॥ **गोसनिरिति**। 'छन्दसि वनसनरक्षिमथाम् ५२३६' इतीन् प्रत्ययः॥ (५५१२) **निव्यभिभ्यो-**। 'न रपर-४३७३' इत्यतो नेति वर्तते। तत्र निषेधविकल्पे विधिविकल्प एव फलतीत्याह-**मूर्द्धन्यो वा स्यादिति**॥ **अभ्यष्टौदिति**। 'उतो वृद्धिर्लुकि हलि ३२५२' इति वृद्धिः॥ (५५१३) **छन्दस्यृदव-**। अवगृह्यते विच्छिद्य पठ्यते इत्यवग्रहः। ऋचासाववग्रहश्च ऋदवग्रहस्तस्मात्॥ **नृमणा इत्यादीति**। अत्र संहिताधिकारात्संहिताकाल एव एतेषां णत्वम्, पदकाले वाऽवग्रहः क्रियते। तेनावग्रहयोग्यत्वादकारोऽवग्रह इत्युक्तः न तु तद्दशापन्नः। अत्र हि नृ मना इति पदकालेऽवगृह्यते॥ (५५१४) **नश्च-**। धातुस्थान्निमित्तादुत्तरस्य उरुशब्दात् षुशब्दाच्च परस्य नस् इत्येतस्य णः स्यात्॥ धातौ तिष्ठतीति धातुस्थो रेफः षकारश्च। उरु इति स्वरूपग्रहणम्। षु इति कृतषत्वस्य सुनो ग्रहणम्, न सप्तमीबहुवचनस्य तेन 'इन्द्रो धर्ता गृहेषु नः' इत्यादौ न। नसिति नासिकादेशस्य नसादेशस्य च सामान्येन ग्रहणम्॥ **रक्षा ण इति**। रक्षेति लोटो मध्यमपुरुषैकवचनान्तं 'द्व्यचोऽतस्तिङः ५३८८' इति दीर्घः। **उरुणस्कृधीति**। कृञो लोट् सेर्हिः 'श्रुशृणुपृकृवृभ्यश्छन्दसि ५४०३' इति हेर्धिः। 'कःकरत्-५५००' इत्यादिना विसर्जनीयस्य सत्वम्॥ **अभीषु ण इति**। 'इकः सुञि ५३८७' इति दीर्घः। एवमूषुण इत्यत्रापि सर्वत्रोदाहरणे अस्मदादेशो नस्॥

इति श्रीमन्मौनिकुलतिलकायमानगोवर्द्धनभट्टात्मजरघुनाथभट्टात्मजेन जयकृष्णेन
कृतायां सिद्धान्तकौमुदीव्याख्यायां सुबोधिन्याख्यायां वैदिकप्रकरणखण्डं
समाप्तिमगमत्॥ श्रीसंकष्टनाशिनी विजयतेतराम्॥

---

(५५१५) **अनुदात्तं पदम्-। परिभाषेयमिति**। नाधिकारोऽस्वरितत्वात्। 'आद्युदात्तश्च ५६७०' 'समानोदरे शयित ओ चोदात्तः २२५३' इत्यादीनामसंग्रहश्च स्यात्। परिभाषाया लिङ्गापेक्षायामाह-**स्वरविधीति**। सूत्रे अनुदात्तशब्दोऽर्शआद्यजन्तः पदसामानाधिकरण्यात्। अत्रानुदात्तस्य क्रियमाणत्वात् तद्भिन्न उदात्तः स्वरितो वा वर्ज्यत इत्याह—**तमेकमिति**। यत्तदोर्नित्यसंबन्धाद्यस्योदात्तस्वरितविधानम्, तस्यैव वर्जनम्। एकग्रहणं विधीयमानस्योपलक्षणम्। तेन 'तवै चान्तश्च युगपद् ५७५५' इति द्वयोर्वर्जनम्। 'इन्द्राबृहस्पती' इत्यत्र 'देवताद्वन्द्वे च ५८४७' इति सूत्रेण पदद्वयस्यापि प्रकृतिस्वरे विधेये त्रयाणां वर्जनम्। बृहस्पतिशब्दो हि वनस्पत्यादित्वादाद्युदात्त इति स्थितम्॥ **गोपायतमिति**। गुप इत्यस्य 'धातोः ५५४६' इत्यन्त उदात्तः। तत आयप्रत्ययः 'आद्युदात्तश्च ५६७०' इति प्रत्ययस्वरेणाद्युदात्तः। ततः 'सनाद्यन्ताः-३०७७' इति धातुसंज्ञायां 'धातोः ५५४६' इति यकाराकार उदात्तः स च प्रागुक्तयोरुदात्तयोः सतोः पश्चात्प्रवृत्तत्वात्सतिशिष्टः अतो बलवान्। तस्य 'अनुदात्तौ सुप्पितौ ५६७१' इत्यनेनानुदात्तेन शबकारेण सह 'अतो गुणे २७६' इति पररूपे कृते 'एकादेश उदात्तेनोदात्तः ५५२९' इत्युदात्तः थसस्तमादेशः। तस्य 'तास्यनुदात्तेन्ङिददुपदेशात् ५६९५' इत्यनेनादुपदेशात्परत्वादनुदात्तत्वम्। तस्य 'उदात्तादनुदात्तस्य-५५३१' इति स्वरितः। नन्वत्र तमिति स्वरितमाश्रित्य 'अनुदात्तं पदम्-५५१५' इति परिभाषया शेषनिघातः स्यादिति चेत् मैवम्—यथोद्देशपक्षाश्रयणेनेयं परिभाषा त्रिपाद्यां न प्रवर्तत इत्यत्र ज्ञापकं तव्यतस्तित्वम्, 'यतोऽनावः ५५७६' इति च॥ (५५१६) **सतिशिष्टेति**। यो हि यस्मिन् सति शिष्यते स शिष्टः तस्य बाधको भवतीत्यर्थः। एतच्च सतिशिष्टस्य बाधकत्वं न्यायसिद्धम्, तथा हि उदात्तस्वरितविधिभिरेकवाक्यतामापन्नयाऽनया शेषनिघातः क्रियते, तत्रोत्सर्गस्यापवादस्य वा चरमा या प्राप्तिस्तत्रास्या उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते। तद्यथा औपगवत्वमित्यत्राण्प्रत्यये त्वप्रत्यये च 'आद्युदात्तश्च ५६७०' इति प्रवर्तमानं स्वस्यैव प्रथमप्रवृत्तिं बाधते द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयतीति दिक्। ननु यदि सतिशिष्टः स्वरो बलीयांस्तर्हि सतिशिष्टत्वाद्विकरणस्वरोऽपि बलीयान्स्यात्, तथा च गृणीत इत्यादि

यज्ञंयज्ञमभिवृधे गृणीतः । अत्र सतिशिष्टोऽपि श्ना इत्यस्य स्वरो न शिष्यते किंतु तस एव ॥ ( ५५१७ ) (सू.) **अनुदात्तस्य च यत्रोदात्तलोपः** । ६ । १ । १६१ । यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् । देवीं वाचम् । अत्र ङीबुदात्तः ॥ ( ५५१८ ) (सू.) **चौ** । ६ । १ । १२२ । लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तः स्यात् उदात्तनिवृत्तिस्वरापवादः । देवद्रीचीं नयत देवयन्तः ॥ ( ५५१९ ) (वा.) **अतद्धित इति वाच्यम्** ॥ दाधीचः । माधूचः । प्रत्ययस्वर एवात्र ॥ ( ५५२० ) (सू.) **आमन्त्रितस्य च** । ६ । १ । १९८ । आमन्त्रितस्यादिरुदात्तः स्यात् । अग्न इन्द्र वरुण मित्र देवाः ॥ ( ५५२१ ) (सू.) **आमन्त्रितस्य च** । ८ । १ । १९ । पदात्परस्यापादादिस्थितस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात् । प्रागुक्तस्य षाष्ठस्यापवादोऽयमाष्टमिकः । इमं मे गङ्गे यमुने सरस्वति । अपादादौ किम् । शुतुद्रि स्तोमम् । आमन्त्रितं पूर्वमविद्यमानवत्[५५३] । अग्न इन्द्र । अत्रेन्द्रादीनां निघातो न । पूर्वस्याविद्यमानत्वेन पदात्परत्वाभावात् ॥ नामन्त्रिते समानाधिकरणे सामान्यवचनम्[५५४] । समानाधिकरणे आमन्त्रिते परे विशेष्यं पूर्वमविद्यमानवन्न ।

---

मध्योदात्तं पदं स्यादत आह—**अन्यत्रेति** । सतिशिष्टोऽपि विकरणस्वरः प्रत्ययस्वरं न बाधत इत्यर्थः । अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्यानुदात्तविधानम् । तथा हि—यद्यपि लावस्थायां तासिर्विधीयते तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु परेषु च लादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वरस्य सतिशिष्टत्वात् शेषनिघातेनैव सिद्धेरनर्थकं तत्स्यात् ॥ **गृणीत इति** । अन्तोदात्तं पदम् । अत्र 'तास्यनुदात्तेत्–५६९५' इति लसार्वधातुकनिघातो न । अदुपदेशेति तकारकरणात् श्नाप्रत्ययस्यादन्तत्वाभावात्, 'तिङ्ङतिङः ५९११' इति निघातस्तु न भवति 'यद्वृत्तान्नित्यम् ५९४९' इति निषेधात् । स हि व्यवहितेऽपि प्रवर्त्तते ॥ **तस एवेति** । तसः । 'आद्युदात्तश्च ५६७०' इत्याद्युदात्तः स्वरः शिष्यत इत्यर्थः ॥ ( ५५१७ ) **अनुदात्तस्य–**। देवशब्दोऽच्प्रत्ययान्तत्वात् 'चितः ५६७२' इत्यन्तोदात्तः । पचादिषु 'देवट्' इति पाठात् 'टिड्ढा–६५१' इति ङीप्, तस्य 'अनुदात्तौ सुप्पितौ ५६७१' इत्यनुदात्तत्वे 'यस्येति च ४३१' इत्यकारलोपः । नन्वनुदात्तस्येति व्यर्थं नह्युदात्ते स्वरिते वा परे उदात्तलोपोऽस्ति । न च, प्रसज्यत इति प्रासङ्गः कर्मणि घञ् 'कर्षात्वतो घञोऽन्त उदात्तः ५५५५' इत्यन्तोदात्तत्वम्, 'उपसर्गस्य घञ्यमनुष्ये बहुलम् १४९७' इत्युपसर्गस्य दीर्घः । तं वहतीति 'प्राग्घितायत् २२२०' तित्त्वात्स्वरितः तास्मिन् परे 'यस्येति च ४३१' इति लोपः । अत्र स्वरिते परे उदात्तलोपोऽस्त्येवेति वाच्यम्, स्वरिते हि विधीयमाने परिशिष्टम् 'अनुदात्तं पदमेकवर्जम् ५५१५' इत्यनुदात्तं तत्कुत उदात्तलोप इति चेत् सत्यम्—मा हि धुक्षातामित्यत्र दुहेर्लुङात्मनेपदमातां 'शल इगुपधात्–३११७' इति च्लेः क्सः । आतामित्यस्य 'तास्यनुदात्तेन्ङिददुपदेशात्–५६९५' इति लसार्वधातुकानुदात्तत्वम् । क्सः प्रत्ययस्वरेणोदात्तः 'क्सस्याचि ३११८' इत्यकारलोपः । अत्र 'कर्षात्वतो घञोऽन्त उदात्तः ५५५५' इत्यतः 'अन्तः' इत्यधिकारादन्त्यस्योदात्तत्वं स्यात् । सति त्वस्मिन्नादेर्भवति । ननु 'यत्रोदात्तलोपः' इत्युच्यमाने कथमन्तस्य प्रसङ्गः । न हि तदुदात्तलोपस्य निमित्तमिति चेत् तर्हि आदेरपि न प्राप्नोति, तस्याप्युदात्तलोपं प्रत्यनिमित्तत्वात् । 'क्सस्याचि ३११८' इत्यजादौ प्रत्यये विधानात् । तस्माद्यत्र प्रत्यय उदात्तलोपस्तत्संबन्धिनोऽनुदात्तस्योदात्तो भवतीति सूत्रार्थे नान्ताधिकारादन्त्यस्य प्रसङ्गः, यदि तु निमित्तत्वानादरेण यत्रानुदात्ते परत उदात्तलोपस्तस्योदात्तो भवतीति सूत्रार्थस्तदाऽनुदात्तस्येति न वक्तव्यम् । अन्त्यस्य प्रसङ्गाभावात् । न च मा हि धुक्षातामित्यत्र 'तिङ्ङतिङः ५९११' इति निघातः स्यादिति वाच्यम्, 'हि च ५९१७' इति निषेधात् ॥ ( ५५१८ ) **उदात्तनिवृत्तीति** । कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्याञ्चत्यकारस्य 'अचः ५५८' इति लोपे सति 'अनुदात्तस्य च–५५१७' इति सूत्रेणोदात्तः प्राप्तस्तस्यायमपवाद इत्यर्थः ॥ **देवद्रीचीमिति** । देव अच् इति स्थिते 'विष्वग्देवयोः–५६०' इति देवशब्दस्याद्रिः आदेशः । 'उगितश्च ६१९' इति ङीप् । 'अचः ५५८' इत्यञ्चतेरकारलोपः । 'चौ ५५९' इति दीर्घत्वम् । द्रीतीकार उदात्तः । ततः परस्य 'उदात्तादनुदात्तस्य स्वरितः ५५३१' इति स्वरितत्वम् ॥ ( ५५१९ ) **अतद्धित इति** । चौ यः स्वरः स तद्धिते परतो न भवतीत्यर्थः । अन्यथा देवद्रीचीमित्यादौ यथोदात्तनिवृत्तिस्वरं बाधते तथा दाधीच इत्यादौ प्रत्ययस्वरमपि सतिशिष्टस्वरो बाधेत । तस्मादतद्धित इति वक्तव्यम् । अस्मिंश्च सति उदात्तनिवृत्तिस्वरस्यायमपवाद इति फलितम् ॥ **दाधीच इति** । दधि अच् अण् इति स्थितेऽणूस्वरस्योदात्तत्वे कृते 'अचः ५५८' इत्यकारलोपः । ततः सतिशिष्टत्वात् 'चौ ५५१८' इति स्वरः प्राप्तो निषिध्यते, तथा चाण्प्रत्ययस्वरेणैव व्यवस्था । तदाह—**प्रत्ययस्वर एवात्रेति** ॥ ( ५५२० ) **अग्न इत्यादि** । 'साऽऽमन्त्रितम् ५५२' इत्यनेनामन्त्रितत्वम् ॥ ( ५५२१ ) **प्रागुक्तषाष्ठस्येति** । 'आमन्त्रितस्य च ५५२०' इत्यस्य ॥ **इमं म इति** । मेशब्दात्परत्वमाश्रित्य गङ्गेप्रभृतीनां त्रयाणामनुदात्तः । स च पदपाठे स्पष्ट एव । संहितायां तु 'स्वरितात्संहितायामनुदात्तानाम् ५५४३' इति वक्ष्यमाणा प्रचयापरपर्याया एकश्रुतिः प्रवर्तते ॥ **शुतुद्रीति** । षाष्ठेन 'आमन्त्रितस्य च ५५२०' इत्यनेनाद्युदात्तः ॥ [ ५५३ ] **आमन्त्रितं पूर्वम्–**। **अग्न इन्द्रेति** । सर्वाणि षाष्ठेनाद्युदात्तानि ॥ **निघातो नेति** । आष्टमिकेनेति भावः ॥ [ ५५४ ] **नामन्त्रिते–**। अत्र

---

१ सुबन्ते तु–'विशेष्यं समानाधिकरणे आमन्त्रिते परे नाविद्यमानवत्स्यात्' इत्येवं पाठः, इह च पाठो विपर्यस्तो दृश्यत इति तु न शङ्कनीयम्, वृत्तिपाठभेदेऽप्यर्थस्य भेदाभावेन स्वल्पस्यापि दूषणस्याभावात् । पाठव्यत्यासे लेखकभ्रमस्तु नाङ्गीकर्तव्यः, शतशो लिखितमुद्रितपुस्तकेषु तथैव पाठदर्शनात् ॥

अग्ने तेजस्विन् । अग्ने त्रातः । सामान्यवचनं किम् । पर्यायेषु मा भूत् । अघ्न्य देवि सरस्वति ॥ ( ५५२२ ) (सू) **विभाषितं विशेषवचने** । ८ । १ । ७४ । अत्र भाष्यकृता बहुवचनमिति पूरितम् । सामन्यवचनमिति पूर्वसूत्रे योजितम् । आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा । देवीः षडुर्वीरुरु नः कृणोत । अत्र देवीनां विशेषणं षडिति । देवाः शरण्याः । इह द्वितीयस्य निघातो वैकल्पिकः ॥ ( ५५२३ ) (सू) **सुबामन्त्रिते पराङ्गवत्स्वरे** । २ । १ । २ । सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्यात्स्वरे कर्तव्ये । द्रवत्पाणी शुभस्पती । शुभ इति शुभेः क्विबन्तात्षष्ठ्यन्तस्य । परशरीरानुप्रवेशे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । न चाष्टमिको निघातः शङ्क्यः पूर्वामन्त्रितस्याविद्यमानत्वेन पदादित्वात् । यत्ते दिवो दुहितर्मर्तभोजनम् । इह दिवःशब्दस्याष्टमिको निघातः । परशुना वृश्चन् ॥ ( ५५२४ ) (वा) **षष्ठ्यामन्त्रितकारकवचनम्** ॥ षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकं तद्वाचकं चेति परिगणनं कर्तव्यमित्यर्थः । तेनेह न-अयमग्ने जरिता । एतेनाग्ने ब्रह्मणा । समर्थानुवृत्त्या वा सिद्धम् ॥ ( ५५२५ ) (वा) **पूर्वाङ्गवच्चेति वक्तव्यम्** ॥ आ ते पितर्मरुताम् । प्रति त्वा दुहितर्दिवः । ( ५५२६ ) (वा) **अव्ययानां न** ॥ उच्चैरधीयान ॥ ( ५५२७ ) (वा) **अव्ययीभावस्य त्विष्यते** ॥ उपाग्न्यधीयान ॥ ( ५५२८ ) (सू) **उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य** । ८ । २ । ४ । उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात् । अभ्यभि हि । स्वरितस्य यणः । खलप्व्याशा । अस्य स्वरितस्य त्रैपादिकत्वेनासिद्धत्वाच्छेषनिघातो न ॥ ( ५५२९ ) (सू) **एकादेश उदात्ते-**

---

उत्तरसूत्रस्थं सामान्यवचनमत्र सम्बन्धनीयमिति भाष्यम् । तद्व्याचष्टे-**विशेष्यमिति** ॥ विशेष्यसमर्पकमित्यर्थः । ( क्वचित्तु नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति पाठः । स वृत्त्यनुरोधेनेति ज्ञेयम् ॥ १ ) **तेजस्विन्नित्यादि** । अग्ने इत्यस्याविद्यमानत्वात्तेजस्विन्नित्यस्य त्रातरित्यस्य चाष्टमिकनिघातः ॥ **अघ्न्ये देवि सरस्वतीति** । तैत्तिरीयके ब्राह्मणे सहस्रमतीं प्रकृत्य 'इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुति एतानि ते अघ्निये नामानि' । वृत्तौ तु 'इडे काव्ये विहव्ये' इति पाठः । स तु शाखान्तरे द्रष्टव्यः । समानाधिकरणग्रहणं पाणिनिमतेऽग्न इन्द्र वरुण इत्यादौ व्यधिकरणनिवृत्त्यर्थम् । भाष्यकृन्मते विस्पष्टार्थं सामान्यवचनापेक्षत्वात्तत्र सामानाधिकरण्यस्यावश्यं स्थितत्वात् ॥ ( ५५२२ ) **सामान्य—** । बहुवचनमिति पूर्वनिषेधस्यास्य विकल्पस्य च विषयविभागार्थम् ॥ **देवीः षडिति** । अत्र देवीरित्यामन्त्रितं नाविद्यमानवत् तेन षडित्यस्य निघातः ॥ **शरण्या इति** । शरणं रक्षितृत्वं तत्र साधवः शरण्याः । 'तत्र साधुः २२४४' इति यत् ॥ **द्वितीयस्येति** । षष्शब्दस्य शरण्यशब्दस्य चेत्यर्थः ॥ ( ५५२३ ) **सुबामन्त्रिते—। परस्याङ्गवदिति** । तस्यैव परस्यामन्त्रितस्याङ्गवदेकदेशवद्भवति, तद्ग्रहणेन गृह्यत इत्यर्थः ॥ ( ५५२४ ) **षष्ठ्यामन्त्रित—** । अत्र षष्ठीशब्देन षष्ठ्यर्था विभक्तिरुच्यते । तेन गोषु स्वामिन्नित्यत्रापि पराङ्गवद्भावः सिध्यति ॥ **परशुना वृश्चन्निति** । 'आङ्परयोः खनिशॄभ्यां डिच्च ४२३२' इति कुप्रत्ययान्तोऽन्तोदात्तः ॥ **षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकमिति** । यद्यप्यामन्त्रितस्य द्रव्यवचनत्वान्न कारकापेक्षा, तथापि आमन्त्रिततया धातुवाच्या क्रिया तस्यास्तदपेक्षाऽस्तीति तत्कारकमित्यर्थः ॥ **पितर्मरुतामिति** । अत्र मरुतामिति परं पदं पूर्वस्य पितरित्यस्याङ्गवद्भवति । पितरित्यामन्त्रितनिघातेनानुदात्तं ततः परं मरुतामित्येतदप्यनुदात्तमेव भवतीत्यर्थः ॥ ( ५५२६ ) **अव्ययानां नेति** । तेनोच्चैरधीयानेत्यत्र 'आमन्त्रितस्य च ५५२०' इत्याद्युत्तत्वं न । न च निषेधवैयर्थ्यम् 'निपाता आद्युदात्ताः ५६६२' इत्याद्युदात्तत्वस्यानिवारणादिति वाच्यम्, स्वरादिष्वन्तोदात्तयोरुच्चैर्नीचैःशब्दयोः पाठात् ॥ ( ५५२७ ) **अव्ययीभावस्य त्विति** । 'अव्ययीभावश्च ६०७' इति अव्ययीभावस्याव्ययसंज्ञासूत्रे 'लुङ्मुखस्वरोपचाराः' इति परिगणनादन्यत्राव्ययसंज्ञाभावेन 'अव्ययानां न ५५२६' इति निषेधो न प्रवर्तत इति भावः ॥ **उपाग्न्यधीयानेति** । पराङ्गवद्भावेन 'आमन्त्रितस्य-५५२०' इत्याद्युदात्तत्वम् ॥ ( ५५२८ ) **अभ्यभीति** ॥ अभिशब्दे 'उपसर्गाश्चाभिवर्जम् ५६६३' इत्याद्युदात्तनिषेधात् फिट्स्वरेणान्तोदात्तः । तस्य 'नित्यवीप्सयोः २८८३' इति द्वित्वम्, 'तस्य परमाम्रेडितम् १३४' 'अनुदात्तं च ५५४५' इति परस्यानुदात्तत्वम्, तस्मिन्नेव परे ईकारस्योदात्तस्य यणि कृते उदात्तयणः परत्वात्स्वरितः ॥ खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । तस्य 'ओः सुपि ३९३' इति यण् स उदात्तयण् ततः परो ङिप्रत्ययः सुप्त्वादनुदात्तः । तस्यानेन स्वरितः 'उदात्तयणो हल्पूर्वात् ५६८४' इत्युदात्तत्वं तु न 'नोङ्धात्वोः ५६८५' इति निषेधात् । तस्य च स्वरितेकारस्य यणि ततः परस्याशाशब्दाकारस्यानेनैव स्वरितः । आशाशब्दो हि आशाया अदिगाख्या चेत् ५६००' इत्यन्तोदात्तत्वादनुदात्तादिः ॥ **अस्येति** । आशाशब्दप्रथमाकारस्थानिकस्येत्यर्थः ॥ **शेषेति** । 'आशाशब्दस्य निघातो नेत्यर्थः । ननु यणादेशं प्रति स्वरितस्यासिद्धत्वात्स्थानिन्येव यण्प्रवृत्तेः औजढदित्यत्र ढूतशब्दे द्वित्वं प्रवर्तते, न तु ढशब्दे । न च स्वरितयणः परस्येत्याश्रयणात्सिद्धत्वं शङ्क्यम्, तथा सति 'उदात्तादनुदात्तस्य स्वरितः ५५३१' इत्यनेन यत्र स्वरितः क्रियते तत्रापि ह्यसिद्धत्वं न स्यात् । न चेष्टापत्तिः, लक्ष्यविरोधात् । 'प्रत्यग्निरुषसामग्र्यमख्यत्' इत्यादौ स्वरितादर्शनात् । न च 'नोदात्तस्वरितोदयम्-५५३२' इति निषेधः शङ्क्यः, 'अनन्तरस्य-४८८' इति न्यायेन 'उदात्तादनुदात्तस्य-५५३१' इति यत्र प्राप्तिस्तन्मात्रस्य निषेधात् । अन्यथा 'खलप्व्याशान्या अग्निर्म्राह्या अस्मान्' इत्यादावपि निषेधापत्तिरिति

---

१ उपपदयोरिति शेषः ।

नोदात्तः ।८।२।५। उदात्तेन सहैकादेश उदात्तः स्यात् । वोऽश्वाः । क्वावरं मरुतः ॥ (५५३०) **स्वरितो वाऽनुदात्ते पदादौ** । ८ । २ । ६ । अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् । पक्षे पूर्वसूत्रेणोदात्तः । वी ३ दं ज्योतिर्हृदये । अस्य श्लोको दिवीयते । व्यवस्थितविभाषात्वादिकारयोः स्वरितः । दीर्घप्रवेशे तूदात्तः । किंच एङः पदान्तादिति पूर्वरूपे स्वरित एव । तेऽवदन् । सो ३ यमागात् । उक्तं च प्रातिशाख्ये—इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु चेति ॥ (५५३१) **उदात्तादनुदात्तस्य स्वरितः** ।८।४।६६। उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात् । अग्निमीळे । अस्याप्यसिद्धत्वाच्छेषनिघातो न ॥ तमीशानासः ॥ ( ५५३२ ) **नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्** ।८।४।६७। उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात् । गार्ग्यादिमते तु स्यादेव । प्रय आरुः । वोऽश्वाः क्वा ३ भीषवः ॥ ( ५५३३ ) **एकश्रुति दूरात्सम्बुद्धौ** । १ । २ । ३३ । दूरात्सम्बोधने वाक्यमेकश्रुति स्यात् ।

---

चेद्, अत्राहुर्भाष्यकाराः—योगविभागः करिष्यते । **उदात्तयणः** । परस्यानुदात्तस्य स्वरितो भवति । ततः **स्वरितयणः**। 'उदात्तयणः' इत्यनुवर्तते । उदात्तयणः इत्येवं योऽभिनिर्वृत्तः स्वरितस्तद्यणः परस्यानुदात्तस्य स्वरितः स्यादित्यर्थः । एवं चास्यैवाश्रयासिद्धत्वं नान्यस्य ॥ ( ५५२९ ) **एकादेश इति** । उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम् । अन्यतरस्यानुदात्तत्वे स्वरितत्वे वा आन्तरतम्यात् स्वरिते प्राप्ते विधिरयमिति ध्वनयन्नुदाहरणद्वयमाह—**वोऽश्वा इत्यादि** । 'बहुवचनस्य वस्नसौ ५४३' इत्यत्र 'अनुदात्तं सर्वमपादादौ ५४१' इत्यधिकाराद्वस् अनुदात्तः । 'असेः क्वन्' इति व्युत्पादनादश्वशब्द आद्युदात्तः । वसो रुत्वम्, उत्वम् । 'एङः पदान्तादति १४१' इति पूर्वरूपम् ॥ **क्वेति** । 'किमोऽत् २६६०' 'क्वाति २६६१' इति किमः क्वादेशः । 'तित् स्वरितम् ५६९४' । अवरशब्दः 'स्वाङ्गशिटामदन्तानाम् ५६११' इत्युदात्तः । तयोर्दीर्घ उदात्तः ॥ ( ५५३० ) **स्वरितो-। वीदमित्यादि** । विशब्दो निपातत्वादाद्युदात्तः । इदंशब्दः फिट्स्वरेणान्तोदात्तः । तयोरेकादेशः स्वरितः । दिविशब्दे 'ऊडिदंपदात्–५६८०' इति विभक्तिरुदात्ता ईयते । 'ईङ् गतौ' दिवादिः । 'तिङ्ङतिङः ५९११' इति निहतम् ॥ अत्रैकादेश उदात्तः ॥ **इकारयोः स्वरित इति** । ह्रस्वेकारयोरेवेत्यर्थः ॥ **दीर्घप्रवेशे त्विति** । दिवीयत इत्यत्र ॥ **उदात्त इति** । 'एकादेश उदात्तेन ५५२९' इत्यनेन । इयं च बह्वृचानां व्यवस्थोक्ता । अन्येषामपि तदीयप्रातिशाख्यानुसारेण ज्ञेया ॥ **पूर्वरूपे इति** । तेऽवदन्नित्यादौ ते इति तच्छब्दः फिट्स्वरेणान्तोदात्तः, जसः सुप्त्वात् 'अनुदात्तौ सुप्पितौ ५६७१' इत्यनुदात्तः । तयोरेकादेश उदात्तः ॥ **अवदन्निति** । वदेर्लङि प्रथमपुरुषबहुवचनम् । ते इत्यतिङन्तात्परस्य तस्य 'तिङ्ङतिङः ५९११' इति निघातः ॥ **सोऽयमिति** । स इति तच्छब्दस्य प्रथमैकवचनम्। तच्छब्दः फिट्स्वरेणान्तोदात्तः । सु इति सुप्त्वादनुदात्तः । तस्य रुत्वे उत्वे गुणे च कृते एकादेशेनौकार उदात्तः । अयमितीदमः प्रथमैकवचनं फिट्स्वरेणान्तोदात्तम् । तयोः 'एङः पदान्तात्–१४१' इति पूर्वरूपे ओकारः स्वरितः ॥ **इकारयोश्च प्रश्लेष इति** । ह्रस्वयोरिकारयोः सवर्णदीर्घे ह्रस्वयोर्यत्र सवर्णदीर्घः स प्रश्लेष इत्युच्यते । उदात्तस्वरितस्थाने यो यण् स क्षैप्रः सन्धिः । यत्र 'एङः पदान्तात्–१४१' इति स अभिनिहतसन्धिरुच्यते । तेषु स्वरितः स्वीक्रियत इत्यर्थः । 'वीदं ज्योतिः' 'अभ्याभि हि' 'तेऽवदन्' इति क्रमेणोदाहरणानि ॥ ( ५५३१ ) **उदात्तादनुदात्तस्य-**। अत्र 'तयोर्य्वावचि–५४९१' इत्यतः 'संहितायाम्' इत्यनुवर्तते, तेन पदकालेऽनुदात्तमेव ॥ **अग्निमीळे इति** । अग्निशब्दः फिट्स्वरेण प्रत्ययस्वरेण वाऽन्तोदात्तः । अम्सुप्त्वादनुदात्तः 'अमि पूर्वः २७९' इति एकादेश उदात्तः । ईळे तु 'ईड स्तुतौ' लटि उत्तमपुरुषैकवचनम् । 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः' इति वक्ष्यमाणेन प्रातिशाख्येन डस्य ळः । 'तिङ्ङतिङः ५९११' इति निहतम् । ईकारस्य स्वरितः । न च मकारेण व्यवधानम् । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषणात् । एवं सर्वत्र ज्ञेयम् । ननु 'तित्स्वरितम् ५६९४' इत्यस्यानन्तरमिदं वक्तव्यम्, एवं च स्वरितग्रहणं न कर्तव्यं भवतीत्याशङ्क्याह—**अस्येति** ॥ यदि तत्र क्रियते 'अनुदात्तं पदमेकवर्जम् ५५१५' इत्येतत्प्रवर्तेत, इह प्रकरणे न प्रवर्तते स्वरितस्यासिद्धत्वात् । तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं सिद्धम् ॥ **तमीशानास इति** । तामिति तच्छब्दस्य द्वितीयैकवचनमन्तोदात्तम् ईशानशब्दाज्जसि 'आज्जसेरसुक् ५४२६' इत्यसुगागमे कृते रूपम् । 'ईश ऐश्वर्ये' अस्माच्छानच् चित्त्वादन्तोदात्तः । जसः सुप्त्वादनुदात्तत्वम् । ईकारस्य सकाराकारस्य च स्वरितत्वम् । (५५३२) **नोदात्त-**। उदात्तस्वरितौ उदयौ यस्मादिति बहुव्रीहिः । उदयशब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः । लाघवार्थं परशब्दे प्रयोक्तव्ये मङ्गलार्थमुदयशब्दः प्रयुक्तः । तथा चोक्तं भाष्ये—'मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च' । इहादौ वृद्धिशब्दो, मध्ये शिवशब्दः 'शिवशमरिष्टस्य करे ५३२८' इति अन्ते चायमुदयशब्द इति पाणिनीये मङ्गलं कृतम् ॥ **प्र य आरुरिति** । ये इति यच्छब्दस्य प्रथमाबहुवचनं फिट्स्वरेणान्तोदात्तम् ॥ **आरुरिति** । अर्तेर्लिटि प्रथमपुरुषबहुवचनं झिः, तस्य 'परस्मैपदानाम्–२९२७' इत्युस् प्रत्ययस्वरेणोदात्तः । न च 'तिङ्ङतिङः ५९११' इति निघातः शङ्क्यः 'यद्वृत्तान्नित्यम्–५९३९' इति निषेधात् । आकारस्य 'उदात्तस्वरितपरस्य–५५४४' इति वक्ष्यमाणेन सन्नतरादेशः॥ **वोऽश्वाः क्वेति** । अत्रापि क्वेत्याकारस्य सन्नतरः ॥ **क्वेति** । 'किमोऽत् २६६०' 'तित्स्वरितम् ५६९४' ॥ (५५३३) **एकश्रुति-**। संबोधने संबुद्धिरित्यनेनान्वर्थस्य संबुद्धिशब्दस्य ग्रहणम्, न 'एकवचनं संबुद्धिः २७७' इति पारिभाषिकस्य । यति तु तस्य

त्रैस्वर्यापवादः। आगच्छ भो माणवक ॥ ( ५५३४ ) यज्ञकर्मण्यजपन्यूङ्खसामसु। १। २। ३४। यज्ञक्रियायां मन्त्र एकश्रुतिः स्याज्जपादीन्वर्जयित्वा। अग्निर्मूर्धा दिवः ककुत्। यज्ञेति किम्। स्वाध्यायकाले त्रैस्वर्यमेव। अजपेति किम्। ममाग्ने वर्चो विहवेष्वस्तु। जपो नाम उपांशुप्रयोगः। यथा जले निमग्नस्य। न्यूङ्खा नाम षोडश ओंकाराः। गीतिषु सामाख्या॥ (५५३५) उच्चैस्तरां वा वषट्कारः। १। २। ३५। यज्ञकर्मणि वौषट्शब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा॥ ( ५५३६ ) विभाषा छन्दसि। १। २। ३६। छन्दसि विभाषा एकश्रुतिः स्यात्। व्यवस्थितविभाषेयम्। संहितायां त्रैस्वर्यम्। ब्राह्मणे एकश्रुतिर्बह्वृचानाम्। अन्येषामपि यथासंप्रदायं व्यवस्था॥ ( ५५३७ ) न सुब्रह्मण्यायां स्वरितस्य तूदात्तः। १। २। ३७। सुब्रह्मण्याख्ये निगदे यज्ञकर्मणीति[५५३४] विभाषा[५५३६] छन्दसीति च प्राप्ता एकश्रुतिर्न स्यात्स्वरितस्योदात्तश्च स्यात्। सुब्रह्मण्योऽम्॥ ( ५५३८ ) असावित्यन्तः॥ तस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः स्यात्। गार्ग्यो यजते। ञित्त्वात्प्राप्त आद्युदात्तोऽनेन बाध्यते॥

---

ग्रहणे 'आगच्छत देवा ब्राह्मणाः' इत्यत्र न स्यात्तदाह–**दूरात्संबोधने इति**। अन्वर्थग्रहणं च दूरादित्यनेन संबन्धाल्लभ्यते, न ह्यामन्त्रितविभक्तेर्दूरत्वमदूरत्वं च संभवति। संबोधनस्य तु क्रियारूपत्वादपादानत्वाद् दूरादिति विशेषणसंभवः, दूरत्वं न देशस्वरूपमाश्रीयते, अनवस्थितत्वात्। किं तर्हि संबोधनक्रियापेक्षया दूरत्वं यावति देशे प्रकृतिप्रयत्नोच्चारितं संबोध्यमानेन न श्रूयते, किंत्वधिकं प्रयत्नमपेक्षते तत्संबुद्धौ दूरं भवति॥ **एकश्रुतिरिति**। उदात्तादीनां स्वराणामविभागेनावस्थानमेकश्रुतिः॥ **आगच्छेत्यादि**। 'दूराद्धूते च १५६' इति वाक्यस्य टेः प्लुत उदात्तः, प्रत्युदाहरणे त्रैस्वर्यमेव भवति। तत्राङ् 'उपसर्गाश्चाभिवर्जम् ५६६३' इत्याद्युदात्तः। गच्छेति तिङन्तस्य निघातः। भोशब्दो 'निपाता आद्युदात्ताः ५६६२' इत्याद्युदात्तः। शेषस्यामन्त्रितनिघातः॥ ( ५५३४ ) **यज्ञ–**। त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते॥ **मन्त्र इति**। एतच्च 'अजप–' इति पर्युदासाल्लभ्यते तेनोहादिषु न। अत एव 'स्वाहेन्द्रशत्रुर्वर्द्धस्व' इति समासान्तोदात्तत्वे कर्तव्ये आद्युदात्तं प्रयुक्तमिति प्रसिद्धिः॥ **जपादीनिति**। जपन्यूङ्खसामानीत्यर्थः॥ **अग्निर्मूर्द्धेति**। 'अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतो३म्'। 'अङ्गेर्निर्नलोपश्च ४६९४' इति अग्निशब्दः प्रत्ययस्वरेण फिट्स्वरेण वाऽन्तोदात्तः। 'मुर्वी बन्धने'। 'कनिन्युवृषितक्षिराजिधन्वि–४३५६' इत्यतः कनिनि वर्तमाने 'श्वन्नुक्षन्पूषन्–४३५९' इत्यत्र मूर्द्धन्शब्दः कनिन्प्रत्ययान्तोऽन्तोदात्तो निपातितः। दिव्शब्दात्परस्य षष्ठ्येकवचनस्य 'ऊडिदम्पदाद्–५६८०' इत्युदात्तत्वम्। ककुच्छब्दः प्रातिपदिकस्वरेणान्तोदात्तः। 'पातेर्डतिः ४७०१' पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः। 'प्रथेः षिवन्संप्रसारणं च ४३५०' षित्त्वान्ङीष्, षष्ठ्येकवचनस्य 'उदात्तयणो हल्पूर्वात् ५६८४' इत्युदात्तत्वम्। इदंशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। आप्नोतेः क्विप् ह्रस्वश्च। 'ऊडिदम्–५६८०' इति विभक्तेरुदात्तत्वम्। 'रीङ्सृजिभ्यां तुट्' इत्यसुन्प्रत्ययो नित्स्वरेणाद्युदात्तो रेतःशब्दः॥ **जिन्वतोमिति**। जिन्वतेः प्रीणनार्थस्य तिपि 'तिङ्ङतिङः ५९११' इति निघातः। 'प्रणवष्टेः ५४७०' इति प्रयोगकाले प्रणवः॥ **ममेत्यादि**। 'युष्मदस्मदोर्ङसि ५५७४' इत्याद्युदात्तत्वम्। अग्नेशब्दस्यामन्त्रितनिघातः, वर्चःशब्दोऽसुन्प्रत्ययान्तः। विपूर्वात् ह्वयतेः 'ह्वः सम्प्रसारणं च ५०४४' इत्यप्प्रत्यये, थाथादिसूत्रेणान्तोदात्तत्वम्॥ ( ५५३५ ) **उच्चैस्तराम्–**। वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते समानार्थत्वात्। द्वावपि हि तौ देवतासंप्रदानकस्य दानस्य द्योतकौ। नन्वेवं प्रतिपत्तिलाघवार्थं वौषट्शब्द एव कुतो नोक्त इति चेद्॥ विचित्रा हि सूत्रस्य कृतिः पाणिनेः क्वचिदक्षरलाघवमाश्रीयते क्वचित्प्रतिपत्तिलाघवमिति। ननु वषट्कार इत्यत्र कारप्रत्ययो न स्यात्, वर्णनिर्देशे हि स विहित इति चेत्, सत्यम्–एतदेव ज्ञापयति, समुदायादपि कारप्रत्ययो भवतीति। तेन एवकार इत्यादि सिद्धम्। उच्चैःशब्दोऽधिकरणप्रधानोऽपि तद्विशिष्टध्वनक्रियायां वर्तते, तेन क्रियाप्रकर्षादाम्प्रत्यय उदात्ततरो भवतीति फलितोऽर्थः। 'ब्रूहिप्रेष्य–५४७२' इति सूत्रेण वौषट्शब्दस्यादेः प्लुत उदात्तो विहितः, तदपेक्षयाऽयमुदात्ततरोऽन्त्यस्य विधीयते। अन्ये तु स्वार्थिकस्तरबित्याहुः॥ ( ५५३६ ) **विभाषा–**। वाग्रहणेऽनुवर्तमाने विभाषाग्रहणम् अच्छन्दसीति पदच्छेदेन तन्त्रादिना भाषायामपि विधानार्थम्। अत एव 'श्वेतो धावति' 'अलम्बुसानां याता' इति द्व्यर्थं वाक्यमिति पस्पशान्ते भाष्यम्। तत्र श्वेति प्रातिपदिकस्वरेणान्तोदात्तम्। इत इति इदंशब्दात्तसिल्। 'ऊडिदम्–५६८०' इत्यनेन, श्वेत इति 'वर्णानां तण–५६१५' इत्याद्युदात्ते प्राप्ते घृतादित्वादन्तोदात्तम्। अलंशब्दो निपातत्वादाद्युदात्तः। बुसशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। अलंबुसशब्दः फिट्स्वरेणान्तोदात्तः। तत्र भाषायां यद्येकश्रुतिर्न स्यात्तर्हि स्वरभेदे कथमेकवाक्यं द्व्यर्थं स्यात्॥ ( ५५३७ ) **न सु–। सुब्रह्मण्याख्ये निगदे इति**। अपादबन्धे गदिर्वर्तते। यथा गद्यमिति। निःशब्दः प्रकर्षे। उच्चैरपादबन्धं यजुरात्मकं यन्मन्त्रवाक्यं पठ्यते स निगदः। नितरां गद्यत इति कर्मणि 'नौ गदनद–५०३६' इत्यप्। तस्य च सुब्रह्मण्याशब्दोपलक्षकत्वात् सुब्रह्मण्याशब्दोऽपरित्यक्तस्त्रीलिङ्ग एव निगदविशेषस्य नाम॥ **सुब्रह्मण्योमिति**। 'तत्र साधुः २२४४' इति यत्। 'तित्स्वरितम् ५६९४' 'यतोऽनावः ५५७६' इति तु न, तत्र 'द्व्यचः' इत्यनुवृत्तेः। टापा सहैकादेशः 'स्थानेऽन्तरतमः ६२' इति स्वारितः। ततो निपातत्वादाद्युदात्तेन ओम्शब्देन 'ओमाङोश्च १२९' इत्युदात्तस्वरितयोरेकादेशः स्वरित एवेति हरदत्तादयः॥ (५५३८) असा-

( ५५३९ ) अमुष्येत्यन्तः ॥ षष्ठयन्तस्यापि प्राग्वत् । दाक्षेः पिता यजते ॥ ( ५५४० ) स्यान्तस्योपोत्तमं च ॥ चादन्तस्तेन द्वावुदात्तौ । गार्ग्यस्य पिता यजते ॥ ( ५५४१ ) वा नामधेयस्य ॥ स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात् । देवदत्तस्य पिता यजते ॥ ( ५५४२ ) देवब्रह्मणोरनुदात्तः । १ । २ । ३८ । अनयोः स्वरितस्यानुदात्तः स्यात्सुब्रह्मण्यायाम् । देवा ब्रह्माण आगच्छत । ( ५५४३ ) स्वरितात्संहितायामनुदात्तानाम् । १ । २ । ३९ । स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात् । इमं मे गङ्गे यमुने सरस्वति ॥ ( ५५४४ ) उदात्तस्वरितपरस्य सन्नतरः । १ । २ । ४० । उदात्तस्वरितौ परौ यस्मात्तस्यानुदात्तस्यानुदात्ततरः स्यात् । सरस्वति शुतुद्रि । व्यचक्षयत्स्वः ॥ तस्य परमाम्रेडितम् ॥ ( ५५४५ ) अनुदात्तं च । ८ । १ । ३ । द्विरुक्तस्य परं रूपमनुदात्तं स्यात् । दिवेदिवे ॥ इति साधारणस्वराः ॥

( ५५४६ ) धातोः । ६ । १ । १६२ । अन्त उदात्तः स्यात् । गोपायतं नः । असि सत्यः ॥ ( ५५४७ ) स्वपादिहिंसामच्यनिटि । ६ । १ । १८८ । स्वपादीनां हिंसेश्चानिटयजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात् । स्वपादिरदाद्यन्तर्गणः । स्वपन्ति । श्वसन्ति । हिंसन्ति । पक्षे प्रत्ययस्वरेण मध्योदात्तता । क्ङित्येवेष्यते । नेह । स्वपानि । हिनसानि ॥

---

विति- । प्रथमान्तस्योपलक्षणं तदाह-प्रथमान्तस्येति । गार्ग्य इति । 'गर्गादिभ्यो यञ् १५८३' ॥ ( ५५३९ ) अमुष्येति- । षष्ठयन्तस्योपलक्षणम् ॥ दाक्षेरिति । दक्षशब्दादपत्ये 'अत इञ् १५७१' । अत्रापि ञित्स्वरः प्राप्तः ॥ ( ५५४० ) स्यान्तस्येति । स्येति रूपं विवक्षितं पूर्ववार्तिकारम्भात् । स्यशब्दान्तस्योपोत्तममन्त्यश्चोभयमुदात्तं भवति ॥ ( ५५४२ ) देवब्रह्मणोः- । सुब्रह्मण्यायामेव 'देवा ब्रह्माणः' इति पठ्यते तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते, देवा ब्रह्माण इति देवब्रह्मणोर्वैयधिकरण्ये द्वयोरप्याद्युदात्तत्वम्, ततः परस्यानुदात्तस्य स्वरितः । तस्यानेनानुदात्तः । आमन्त्रितनिघातस्तूत्तरस्य न पूर्वामन्त्रिताविद्यमानत्वेन पदात्परत्वाभावात् । यदा तु सामानाधिकरण्यं तदा 'विभाषितं विशेषवचने ५५२२' इति पूर्वस्य पक्षे विद्यमानत्वात् पदात्परत्वाद् ब्रह्माण इत्यस्य निघातोऽपि भवति । अस्मिन् पक्षे देवशब्दस्यैवानेनानुदात्तत्वं विधेयम् । ब्रह्मग्रहणं तु न कर्तव्यम् ॥ ( ५५४३ ) स्वरिता- । अनुदात्तानामिति । जातौ बहुवचनम् । तेनैकस्य द्वयोर्बहूनां च भवति । एकस्य पचति । द्वयोः 'अग्निमीळे पुरोहितम्' । बहूनां तु मूल एव दर्शितम् ॥ इमं मे इति । इदम्शब्दः प्रातिपदिकस्वरेणान्तोदात्तः । विभक्तिरनुदात्ता, त्यदाद्यत्वे 'अमि पूर्वः २६९' एकादेश उदात्तः । मे इत्यनुदात्तम् । 'अनुदात्तं सर्वमपादादौ ५४१' इत्यधिकारात्तस्य 'उदात्तादनुदात्तस्य स्वरितः ५५३१' । तस्मात्परेषां गङ्गेप्रभृतीनामनुदात्तानामेकश्रुतिः । सर्वे एते आमन्त्रितनिघातानुदात्ताः । ननु मे इत्यस्य स्वरितस्य उदात्तविधायकं त्रिपादीस्थत्वादसिद्धं स्यात् । न च स्वरितादित्याश्रयात्सिद्धम्, 'क्व वः सुम्न—' इत्यादौ चरितार्थत्वादिति चेत्, मैवम् 'तस्यादितः-१४' इत्यारभ्य नवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्रान्ते भाष्यवार्तिकयोर्निवेशात् । 'न सुब्रह्मण्यायाम्-५५३७' इति सूत्रे 'स्वरितस्य तूदात्तः' इति वदतैव काण्डोत्कर्षस्य ज्ञापितत्वाच्च । न च सुब्रह्मण्योमिति सिद्धः स्वरितोऽस्तीति वाच्यम्, तत्र 'एकादेश उदात्तेन-५५२९' इति सूत्रप्रवृत्तेरावश्यकत्वात् । तत्र ह्यनुदात्तग्रहणं नानुवर्तते ॥ ( ५५४४ ) उदात्त- । सन्नशब्देन नीचैरर्थ उच्यते । तेन त्वनुदात्तत्वं लक्ष्यते इत्याह-अनुदात्ततर इति । प्रकर्षस्त्वन्यानुदात्तापेक्षः ॥ सरस्वतीत्यादि । अत्र मेशब्दमाश्रित्य सरस्वतीत्यस्यामन्त्रितनिघातः । शुतुद्रिशब्दस्य तु न, पादादित्वात् । 'आमन्त्रितस्य-५५२०' इति षाष्ठेन शुतुद्रीत्यस्योदात्तं प्रथममक्षरं तस्मिन् परे पूर्वस्य सरस्वतीकारस्य सन्नतरः ॥ व्यचक्षयत्स्वरिति । वीति उपसर्गत्वादाद्युदात्तः ततः परस्याचक्षयदिति तिङन्तस्य 'तिङ्ङतिङः ४९११' इति निघातः, स्वरिति 'न्यङ्स्वरौ स्वरितौ ५६५६' इति स्वरितः तस्मिन्परे यकारस्य सन्नतरः ॥ साधारणस्वरा इति । एकस्मिन्पदे पदद्वयेऽपि च वर्तमानात्साधारण्यम् । 'आद्युदात्तश्च ५६७०' 'ञ्नित्यादिर्नित्यम् ५५६१' इत्यादयस्तु एकस्मिन्नेव पदे वर्तमानान्न साधारणाः ॥

( ५५४६ ) प्रकृतिर्द्विधा धातुः प्रातिपदिकं च । तत्र धातुस्वरानाह-धातोरिति । 'कर्षात्वतः-५५५५' इत्यतः 'अन्त उदात्तः' इत्यनुवर्तते तदाह—अन्त उदात्त इति ॥ गोपायतमिति । यकाराकारस्योदात्तत्वे तमित्यस्य 'तास्यनुदात्तेत्-५६९५' इत्यनुदात्तत्वे 'उदात्तादनुदात्तस्य-५५३१' इति स्वरितः । 'बहुवचनस्य वस्नसौ ५४३' इति नसादेशस्य 'स्वरितात्संहितायाम्-५५४३' इति प्रचयापरपर्याय एकश्रुतिः ॥ असीति । अस्तेः सिप् 'तासस्त्योः-२९४६' इति सलोपः । अकारस्योदात्तत्वम् । ततः परस्य स्वरितः । सत्यशब्दे सकारात्परस्य 'उदात्तस्वरितपरस्य ५५४४' इत्यनुदात्ततरादेशः ॥ ( ५५४७ ) स्वपादि- । 'तास्यनुदात्तेत्-५६९५' इत्यतः 'लसार्वधातुकम्' इत्यनुवर्तते तत् 'अच्यनिटि' इति सम्बन्धादिदं सप्तम्यन्तं संपद्यते तदाह-अनिटयजादावित्यादि ॥ अदाद्यन्तर्गण इति । आगणान्तादिति भावः । हिंसन्तीति । 'हिसि हिंसायाम्' रुधादिः । 'श्नान्नलोपः ३३७४' 'श्नसोरल्लोपः ३२८२' ॥ क्ङित्येवेष्यत इति । वृत्त्यनुरोधादेतदुक्तम् । भाष्ये तु प्रायेणेदं न दृश्यते । एवं च हिनसानीत्यत्राद्युदात्तत्वमपि पक्षे भवति यदि तु आद्युदात्तत्वं पक्षे नेष्यते, तर्हि व्यवस्थितविभाषाश्रयणान्न । केचित्तु-स्वपादीत्यत्रैतदभावे धातुस्वरेणाद्युदात्तत्वमेवेति विशेषाभावादयं विधिर्न प्रवर्तते, तत्साहचर्याद्धिनसानीत्यत्राप्ययं न प्रवर्तत इति वृत्तिकाराशयं कल्पयन्ति ॥ हिनसानीति । अत्र श्नमः 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायाद्

( ५५४८ ) (सू) **अभ्यस्तानामादिः**। ६। १। १८९। अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः। ये ददति प्रिया वसु। परत्वाच्चित्स्वरमयं बाधते। दधाना इन्द्रे ॥ ( ५५४९ ) (सू) **अनुदात्ते च**। ६। १। १९०। अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः। दधासि रत्नं द्रविणं च दाशुषे ॥ ( ५५५० ) (सू) **भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति**। ६। १। १९२। भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वमुदात्तं स्यात्। योऽग्निहोत्रं जुहोति। ममत्तु नः परिज्मा। माता यद्वीरं जजनत् दधनत्। जागर्षि त्वम् ॥ ( ५५५१ ) (सू) **लिति**। ६। १। १९३। प्रत्ययात्पूर्वमुदात्तम्। चिकीर्षकः ॥ ( ५५५२ ) (सू) **आदिर्णमुल्यन्यतरस्याम्**। ६। १। १९४। अभ्यस्तानामादिरुदात्तो वा णमुलि परे। लोलूयंलोलूयम्। पक्षे लित्स्वरः ॥ ( ५५५३ ) (सू) **अचः कर्तृयकि**। ६। १। १९५। उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वा। लूयते केदारः स्वयमेव ॥ ( ५५५४ ) (सू) **चङ्यन्यतरस्याम्**। ६। १। २१८। चङन्ते धातावुपोत्तममुदात्तं वा। मा हि चीकरताम्। धात्वकार उदात्तः। पक्षान्तरे चङुदात्तः ॥ इति धातुस्वराः ॥

---

धातुग्रहणे नकाराकार उदात्तः। ततः परस्य स्वरितत्वम्। अनिटि किम्। स्वपितः। 'रुदादिभ्यः सार्वधातुके ३२८८' इतीट् ॥ **( ५५४८ ) अभ्यस्तानाम्–**। 'आदिः सिचोऽन्यतरस्याम् ५६९७' इत्यतः आदिरिति वर्तमाने पुनरादिग्रहणं नित्यार्थम्। अन्यथाऽऽदिग्रहणसंबद्धमन्यतरस्यांग्रहणमनुवर्तेत। अचि किम्। दद्यात्। अनिटि किम्। जक्षिथ ॥ **ये ददतीति** ॥ 'डुदाञ् दाने' लटि झिः तस्य 'अदभ्यस्तात् ३२९३' इत्यदादेशः। 'श्नाभ्यस्तयोः–३२९८' इत्याल्लोपः ॥ **चित्स्वरमिति**। 'चितः ५६७२' इत्यनेन विहितमन्तोदात्तस्वरमित्यर्थः ॥ **दधानेति**। लटः शानजादेशः ॥ **( ५५४९ ) अनुदात्ते च**। न विद्यते उदात्तो यस्मिन्निति बहुव्रीहिस्तदाह–**अविद्यमानेत्यादि**। अन्यथा हि शास्त्रीयेऽनुदात्ते गृह्यमाणे 'मा हि स्म दधात्' इत्यत्र नित्यत्वादन्तरङ्गत्वाद्वा इकारलोपे कृते आद्युदात्तत्वं न स्यात्। बहुव्रीहौ विज्ञाते तु भवति, हिशब्दो 'हि च ५९१७' इति निघातनिषेधार्थः ॥ **( ५५५० ) भीह्री–**। आद्युदात्तस्यापवादोऽयम्। तत्र मदिर्दिवादिः। दरिद्राजागरावदादी। अन्ये तु जुहोत्यादयः। उदाहरणानि। बिभेति। जिह्रेति। बिभर्ति। 'भृञामित् ३३१४' इत्यभ्यासस्येत्त्वम् ॥ **ममत्त्विति**। मदेर्लोट् 'बहुलं छन्दसि ५२२८' इति शपः श्लुः ॥ **जजनत्। दधनदिति**। 'जन जनने' 'धन धान्ये'। आभ्यां लेट् तिप् 'इतश्च २९६२' इतीकारलोपः। 'लेटोऽडाटौ ५२५८' इत्यट्। दरिद्राति। जागर्ति। पिति किम्। दरिद्रति। अत्र परत्वादाकारलोपे कृते इकारस्योदात्तत्वं माभूत्। ननु पूर्वग्रहणं व्यर्थं प्रत्यये 'पिति' इत्येवोक्ते 'तस्मिन्निति निर्दिष्टे–६४' इति पूर्वस्यैव भविष्यति। न च पितः पूर्वमेव कार्यभाग्यथा स्यात्, पिदन्तं मा भूदित्येवमर्थं तदिति वाच्यम्। कथं पुनः सप्तमीनिर्देशे तदन्तस्य प्रसङ्गः। एतदेव ज्ञापयति 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इति। तेन 'उपोत्तमं रिति ५६९९' रित्प्रत्ययान्ते उपोत्तममुदात्तं भवति, 'चङ्यन्यतरस्याम् ५५५४' चङन्तस्येत्यर्थो न तु रिति परतश्चङि परत इति। नन्वेवं 'चतुरः शसि ५५५७' इत्यत्रापि शसन्तस्य प्राप्नोति, शस्ग्रहणसामर्थ्यान्न भविष्यति। यदि हि 'चतुरः शसि ५५५७' इत्यनेन शस उदात्तत्वमिष्टं स्यात्ततः 'ऊडिदंपदात्–५६८०' इत्यस्यानन्तरं 'चतुरश्च' इत्येव ब्रूयात्। तत्रासर्वनामस्थानग्रहणानुवृत्त्या 'षट्त्रिचतुर्भ्यो हलादिः ५६९०' इति हलादेरुदात्तविधानाच्च शस एव भविष्यति ॥ **( ५५५१ ) लिति**। पूर्वसूत्रात् 'प्रत्ययात्पूर्वम्' इति वर्तते तदाह–**प्रत्ययात्पूर्वमिति**। तेन स्वरविधौ सप्तम्यास्तदन्तत्वज्ञापनाल्लिदन्तस्य स्वरो न शङ्कनीयः ॥ **चिकीर्षक इति**। चिकीर्षतेि सन्नन्ताण्ण्वुल् तस्याकादेशः। सनोऽतो लोपः। ककारेऽकार उदात्तः। न चाल्लोपस्य स्थानिवत्त्वम्, स्वरविधौ तन्निषेधात् ॥ क्वचित्पुस्तके 'भौरिकिविधम्। ऐषुकारिभक्तम्' इति दृश्यते। तत्र 'भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ १७८४' इति 'विषयो देशे १७८२' इत्यस्मिन्नर्थे यथाक्रमं भौरिकिशब्दादैषुकारिशब्दाच्च विधल्भक्तलौ ज्ञेयौ ॥ **( ५५५२ ) आदिर्णमुलि–**। **अभ्यस्तानामिति**। यद्यपि लोलूयमिति प्रतीकमुपादाय 'एकाक्षु धातुषु लित्स्वरस्यास्य च विशेषाभावादनेकाजुदाहृतः' इति हरदत्तग्रन्थाद् 'अभ्यस्तेति निवृत्तम्' इति प्रतीयते, तथाप्यार्थिकाथकथनपरतया नेयम् ॥ **णमुलि पर इति**। यद्यपि 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इति 'भीह्री–५५५०' इति सूत्रे व्यवस्थापितत्वात् णमुलन्तस्यादिरुदात्तो भवतीति सूत्रार्थेन भाव्यम्, तथापि फले विशेषाभावादेवमुक्तमिति प्रतिभाति ॥ **लोलूयंलोलूयमिति**। यङन्ताण्णमुल्। 'नित्यवीप्सयोः २८८३' इति द्वित्वम्। अत्र प्रथमो लोलूयशब्दः आद्युदात्तः। लू इति स्वरितः ततश्चत्वारः प्रचयाः ॥ **( ५५५३ ) अचः–**। इह 'कार्यते' इत्यादौ इत्वे रपरत्वे च सति अयं स्वर इष्टस्तन्निर्वाहार्थम्–'तास्यनुदात्तेत्–५६९५' इति सूत्रे समासैकदेशोऽप्युपदेशशब्द इहानुवर्तते, सप्तम्या च विपरिणम्यते, तदाह–**उपदेशेऽजन्तानामिति**। नन्वेवम्, 'एकं द्वादशधा जज्ञे' इत्यादाविवान्तर्भूतण्यन्तात्कर्मकर्तृविषयात् जनेर्लटि जायते स्वयमेवेत्यत्रैष स्वरो न स्यात्। 'ये विभाषा ३०९७' इत्यात्वे सति उत्तरकालमजन्तत्वेऽपि उपदेशेऽनजन्तत्वादिति चेत्, मैवम्—ये इति विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेवात्वप्रवृत्तेरित्याहुः ॥ **कर्तृयकीति**। कर्तृवाचिनि सार्वधातुके विहितो यो यक् तस्मिन् परे ॥ **लूयत इति**। आदिमध्यौ पर्यायेणोदात्तौ 'तास्यनुदात्तेत्–५६९५' इति ते इत्यस्यानुदात्तत्वम् ॥ **( ५५५४ ) चङ्यन्यतरस्याम्**। 'उपोत्तमं रिति ५६९९' इत्यतः उपोत्तम-

(५५५५) (सू) **कर्षात्वतो घञोऽन्त उदात्तः** । ६ । १ । १५९ । कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तः स्यात् । कर्षः । शपा निर्देशात्तुदादेराद्युदात्त एव । कर्षः । पाकः ॥ (५५५६) (सू) **उञ्छादीनां च** । ६।१।१६० । अन्त उदात्तः स्यात् । उञ्छादिषु युगशब्दो घञन्तोऽगुणो निपात्यते कालविशेषे रथाद्यवयवे च । वैश्वानरः कुशिकेभिर्युगेयुगे । अन्यत्र योगेयोगे तवस्तरम् । भक्षशब्दो घञन्तः । गावः सोमस्य प्रथमस्य भक्षः । उत्तमशश्वत्तमावपि । उदुत्तमं वरुण । शश्वत्तममीळते ॥ (५५५७) (सू) **चतुरः शसि** । ६।१।१६७ । चतुरोऽन्त उदात्तः शसि परे । चतुरः कल्पयन्तः । अचि र इति रादेशस्य[४१७] पूर्वविधौ स्थानिवत्त्वान्नेह । चतस्रः पश्य । चतेरुरन्[४९४२] । नित्त्वादाद्युदात्तता ॥ (५५५८) (सू) **झल्युपोत्तमम्** । ।६।१।१८० । षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात् । अध्वर्युभिः पञ्चभिः । नवभिर्वाजैर्नवती च । सप्तभ्यो जायमानः । आदशभिर्विवस्वतः । उपोत्तमं किम् । आ षड्भिर्हूयमानः । विश्वैर्देवैस्त्रिभिः । झलि किम् । नवानां नवतीनाम् ॥ ( ५५५९ ) (सू) **विभाषा भाषायाम्** । ६ । १ । १८१ । उक्तविषये ॥ (५५६०) (सू) **सर्वस्य सुपि** । ६ । १ । १९१ । सुपि परे सर्वशब्दस्यादिरुदात्तः स्यात् । सर्वे नन्दन्ति यशसा ॥ (५५६१) (सू) **ञ्नित्यादिर्नित्यम्** । ६ । १ । १९७ । ञिदन्तस्य निदन्तस्य चादिरुदात्तः स्यात् । यस्मिन्विश्वानि पौंस्या । पुंसः कर्मणि ब्राह्मणादित्वात् ष्यञ् । सुते दधिष्व नश्चनः । चायतेरसुन् । चायेरन्ने हर्सेवश्चेति चकारादसुनो नुडागमश्च ॥ ( ५५६२ ) (सू) **पथिमथोः सर्वनामस्थाने** । ६ । १ । १९९ । आदिरुदात्तः स्यात् । अयं पन्थाः । सर्वनामस्थाने किम् । ज्योतिष्मतः पथो रक्ष । उदात्तनिवृत्तिस्वरेणान्तोदात्तं पदम् ॥ ( ५५६३ ) (सू) **अन्तश्च तवै युगपत्** । ६ । १ । २०० । तवैप्रत्ययान्तस्याद्यन्तौ युगपदाद्युदात्तौ स्तः । हर्षसे दातवा उ ॥ ( ५५६४ ) ॥ (सू) **क्षयो निवासे** । ६ । १ । २०१ । आद्युदात्तः स्यात् । स्वे क्षये शुचिव्रत ॥ (५५६५) (सू) **जयः करणम्** । ६ । १ । २०२ । करण-

---

मिति वर्तते तदाह—**उपोत्तममिति** । त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम् ॥ **मा हि चीकरतामिति** । अदुपदेशात्परत्वेन लसार्वधातुकानुदात्तत्वे कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तः । उपोत्तमग्रहणानुवृत्त्या द्वयोर्न, मा हि दधत् । अत्र 'विभाषा घेट्श्व्योः ३१६८' इति चङ् ॥ इति धातुस्वराः ॥

(५५५५) **कर्षात्वतः**—। 'ञ्नित्यादिर्नित्यम् ५५६१' इत्यस्यापवादः । आदस्यास्तीति आत्वान् 'तसौ मत्वर्थे २५६०' इति भत्वाज्जश्त्वाभावः । कर्षश्चात्वांश्चेति समाहारद्वन्द्वः । कर्ष इति शबन्तस्यानुकरणं न घञन्तस्य तदाह—**शपा निर्देशादिति** ॥ **पाक इति** । पचेर्घञ् । 'चजोः—३८१४' इति कुत्वम् ॥ ( ५५५६ ) **कालविशेष इति** । कृतद्वापरादौ ॥ **भक्षशब्द इति** । 'भक्ष अदने' चुरादिः । 'अनित्यण्यन्ताश्चुरादयः' इति यदा णिच् नास्ति, तदा घञ् । ण्यन्तात्तु 'एरच् ५०२२' इत्यचि सिद्धम् । 'एरजण्यन्तानाम्' इति तु नास्तीत्याहुः ॥ **उत्तमशश्वत्तमाविति** । तमबन्तावेतौ तेन द्रव्यप्रकर्षविवक्षायामामभावः । पित्त्वादनुदात्तत्वे प्राप्ते पाठः ॥ ( ५५५७ ) **चतुरः**—। 'चतेरुरन् ४९४२' नित्त्वादाद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थमिदम् । ननु चतस्रः पश्येत्यत्र चतसृ अस् इति स्थिते परत्वात् 'अचि र ऋतः ४१७' इति रेफादेशे तकाराकारस्योदात्तत्वं प्राप्नोति अत आह—**अचि र इति** ॥ **स्थानिवत्त्वादिति** । न च स्वरविधौ स्थानिवत्त्वनिषेधः । 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत् ३०६४' इति नियमात् ॥ ( ५५५८ ) **झल्युपोत्तमम्** । 'षट्त्रिचतुर्भ्यो हलादिः ५६९०' इत्यस्यापवादः ॥ **पञ्चभिरित्यादि** । पञ्चनवसप्तदशशब्दाः कनिन्नन्ताः ॥ **आषड्भिरिति** ॥ षष्शब्दः फिट्स्वरेणान्तोदात्तः । तनोतेर्ड्रिः त्रिः । अयमपि फिट्स्वरेण प्रत्ययस्वरेण वाऽन्तोदात्तः । उभयत्रापि 'षट्त्रिचतुर्भ्यो हलादिः ५६९०' इति विभक्तेरुदात्तत्वम् ॥ **नवानामिति** । अत्रापि विभक्तिरुदात्ता ॥ (५५५९) **विभाषा**—। **उक्तविषय इति** । षट्त्रिचतुर्भ्यः परा या झलादिर्विभक्तिस्तदन्तस्योपोत्तमं भाषायामुदात्तं वा स्यात् । पञ्चभिः । सप्तभिः । तिसृभिः । चतुर्भिः । पक्षे 'षट्त्रिचतुर्भ्यो हलादिः ५६९०' इत्यन्तोदात्तानि ॥ ( ५५६० ) **सर्वस्य**—। सर्वशब्दः उञ्छादिष्वन्तोदात्तो निपातितः । सर्वस्य विकारः सार्वं इत्यत्र 'अनुदात्तादेरञ् १७७३' इत्यनुदात्तलक्षणोऽञ् यथा स्यात् । श्रवणं तु सर्वत्राद्युदात्तस्यैव प्रत्ययलक्षणेनापि सर्वस्वरस्येष्यमाणत्वात् ॥ ( ५५६१ ) **ञ्नित्यादिः**—। 'भीह्री—५५५०' इति सूत्रे पूर्वग्रहणेन 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इति ज्ञापितत्वात् तदन्तसप्तमीयमित्याह—**ञिदन्तस्येति** । (५५६२) **पथिमथोः**—। 'शमेरिनिः ४६४९' 'परमे कित् ४६५३' 'मन्थः ४६५४' 'पतेस्थ च ४६५५' इति इनिप्रत्ययान्तावेतावन्तोदात्तौ । मन्थः कित्त्वादुपधालोपः ॥ **पन्था इति** । 'पथिमथ्यृभुक्षामात् ४९५' । 'थो न्थः ४९७' ॥ **पथ इति** । 'भस्य टेर्लोपः ४९८' ॥ **उदात्तनिवृत्तिस्वरेणेति** । 'अनुदात्तस्य च यत्रोदात्तलोपः ५५१७' इति विभक्तिरुदात्ता ॥ ( ५५६३ ) **दातवा उ इति** । ददातेः 'कृत्यार्थे तवैकेन्केन्यत्वनः ५२७६' इति तवैप्रत्ययः । ऐकारस्यायादेशः । 'लोपः शाकल्यस्य १०१' इति यलोपः । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । अन्यथा । 'एकवर्जम्' इति वचनाद्यौगपद्यं न स्यात् ॥ (५५६४) **क्षयो**—। निवासेऽभिधेये क्षयशब्द आद्युदात्तः ॥ **स्वे क्षये इति** । 'क्षि निवासगत्योः' क्षयन्ति यस्मिन्नित्यधिकरणे 'पुंसि संज्ञायाम्—

---

१ उञ्छ, म्लेच्छ, भञ्ज, जल्प, जप, वध, युग, गरो दूष्ये, वेगवेदवेष्टबन्धाः करणे, स्तुयुद्रुवश्छन्दसि, वर्तनिः स्तोत्रे, श्वभ्रे दरः, साम्बतापौ भावगर्हायाम्, उत्तमशश्वत्तमौ सर्वत्र, भक्षमन्थभोगमन्थाः । इत्युञ्छादिः ॥

णवाची जयशब्द आद्युदात्तः स्यात् । जयत्यनेन जयोऽश्वः ॥ ( ५५६६ ) सू. **वृषादीनां च** । ६ । १ । २०३ । आदिरुदात्तः । आकृतिगणोऽयम् । वाजेभिर्वाजिनीवती । इन्द्रं वाणीः ॥ (५५६७) सू. **संज्ञायामुपमानम्** । ६ । १ । २०४ । उपमानशब्दः संज्ञायामाद्युदात्तः । चञ्चेव चञ्चा । कनोऽत्र लुप् । एतदेव ज्ञापयति क्वचित्स्वरविधौ प्रत्ययलक्षणं नेति । संज्ञायां किम् । अग्निर्माणवकः । उपमाने किम् । चैत्रः ॥ (५५६८) सू. **निष्ठा च द्व्यजनात्** । ६ । १ । २०५ । निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो न त्वाकारः । दत्तः । द्व्यच् किम् । चिन्तितः । अनात्किम् । त्रातः । संज्ञायामित्यनुवृत्तेर्नेह । कृतम् । हृतम् ॥ ( ५५६९ ) सू. **शुष्कधृष्टौ** । ६ । १ । २०६ । एतावाद्युदात्तौ स्तः । असंज्ञार्थमिदम् । अतसं न शुष्कम् ॥ ( ५५७० ) सू. **आशितः कर्ता** । ६ । १ । २०७ । कर्तृवाची आशितशब्द आद्युदात्तः । कृषन्नित्फाल आशितम् ॥ (५५७१-१) सू. **रिक्ते विभाषा** । ६ । १ । २०८ । रिक्तशब्दे वाऽऽदिरुदात्तः । रिक्तः ॥ ( ५५७१—२ ) वा. **संज्ञायां तु निष्ठा च द्व्यजनादिति नित्यमाद्युदात्तत्वं पूर्वविप्रतिषेधेन** ॥ ( ५५७२ ) सू. **जुष्टार्पिते च च्छन्दसि** ।६।१।२०९। आद्युदात्ते वा स्तः ॥ (५५७३) सू. **नित्यं मन्त्रे** ।६।१।२१०। एतत्सूत्रं शक्यमकर्तुम् । जुष्टो दमूनाः । षळर आहुरर्पितमित्यादेः पूर्वेणैव सिद्धेः छन्दसि पाठस्य व्यवस्थिततया विपरीतापादनायोगात्, अर्पिताः षष्टिर्न चलाचलास इत्यत्रान्तोदात्तदर्शनाच्च ॥ ( ५५७४ ) सू. **युष्मदस्मदोर्ङसि** । । ६ । १ । २११ । आदिरुदात्तः स्यात् । महिषस्तव नो मम ॥ ( ५५७५ ) सू. **ङयि च** । ६ । १ । २१२ । तुभ्यं हिन्वानः । मह्यं वातः पवताम् ॥ (५५७६) सू. **यतोऽनावः** । ६ । १ । २१३ । यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो नावं विना । युञ्जन्त्यस्य काम्या । कमेर्णिङ्ङन्तादचो यत् ॥ ( ५५७७ ) सू. **ईडवन्दवृशंसदुहां ण्यतः** ।६।१।२१४। एषां ण्यदन्तानामादिरुदात्तः । ईड्यो नूतनैरुत । आजुह्वान ईड्यो वन्द्यश्च । श्रेष्ठं नो धेहि वार्यम् । उक्थमिन्द्राय

---

५११२' इति घः ।निवासे किम् । व्याधेः क्षयः । 'क्षि क्षये' 'एरच् ५०२२' कर्तरि षष्ठी ॥ (५५६५ ) **जयः**—। **जयोऽश्व इति** । 'पुंसि–५११२' इति करणे घः । करणे किम् । जयो ब्राह्मणानाम् । भावे 'एरच् ५०२२' ॥ (५५६६) **वृषादीनाम्**—। 'वृषु सेचने' इगुपधलक्षणः कः ॥ **वाजेभिरिति** । वजेर्घञ् । 'कर्षात्वतः–५५५५' इत्यन्तोदात्ते प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तः ॥ ( ५५६७ ) **संज्ञायाम्**—। **चञ्चेति** । उपमानशब्दोऽयमुपमेयस्य संज्ञा ॥ **कनो लुबिति** । 'इवे प्रतिकृतौ २०७७' इति कनो 'लुम्मनुष्ये २०७९' इति लुप् । ननु प्रत्ययलक्षणेन नित्त्वात् 'ञ्नित्यादिर्नित्यम् ५५६१' इत्येव सिद्धमत आह–**एतदेवेति** । ( ५५६८ ) **निष्ठा**—। **दत्त इति** । ददातेः क्तः 'दो दद् घोः ४०९४' इति दथादेशः । **चिन्तित इति** । 'चिति स्मृत्याम्' । चुरादिः ॥ **कृतं हृतमिति** । प्रत्ययस्वरेणान्तोदात्तावेतौ ॥ ( ५५६९ ) **असंज्ञार्थमिति** । संज्ञायां तु 'निष्ठा च द्व्यजनात् ५५६८' इत्येव सिद्धम् ॥ **शुष्कमिति** । शुषेः क्तः, तस्य 'शुषः कः ४०४२' इति कादेशः ॥ (५५७० ) **आशितः**—। **कर्तृवाचीति** । आङ्पूर्वात् 'अश भोजने' अस्मात्कर्तरि क्तो निपात्यते । अपर आह–कर्तेत्यनेन भूतपूर्वगत्या अणौ कर्ता णौ कर्मीभूत एव विवक्षितः । तथा चाशेर्ण्यन्तस्य प्रयोज्यकर्तरि 'गतिबुद्धिप्रत्यवसानार्थ–७७९' इति कर्मसंज्ञके निष्ठायामाशित इति रूपमिति ॥ ( ५५७१-१ ) **रिक्त इति** । 'रिचिर् विरेचने' ॥ (५५७१-२ ) **संज्ञायामित्यादि** । 'निष्ठा च द्व्यजनात् ५५६८' इत्यस्यावकाशः गुप्तः । अस्य त्ववकाशः असंज्ञायां रिक्तो घट इति । संज्ञायामुभयप्रसङ्गे पूर्वविप्रतिषेधः । रिक्तो नाम कश्चित् ॥ ( ५५७२ ) **जुष्टार्पिते**—। जुष्टः अर्पितः इत्येते शब्दरूपे छन्दसि विषये आद्युदात्ते वा स्तः । 'जुषी प्रीतिसेवनयोः' क्तः । 'श्वीदितो निष्ठायाम् ४०५२' इतीट्प्रतिषेधः । जुष्टः अर्तेर्णिच् 'अर्ति–३४०५' इत्यादिना पुक् । अर्पितः ॥ ( ५५७३ ) **नित्यम्**—। जुष्टार्पिते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते स्तः ॥ **पूर्वेणैव सिद्धेरिति** । ननु पक्षेऽन्तोदात्तत्वमपि प्राप्नोतीत्याशङ्क्याह–**छन्दसीत्यादि** । न केवलं गतार्थत्वमात्रं किंत्वारभ्यमाणे सूत्रे दोषोऽप्यस्तीत्याह–**अर्पिताः षष्टिरित्यादिना** । ( ५५७४ ) **युष्मदस्मदोः**—। 'युष्यसिभ्यां मदिक् ४३३८' इति मदिक्प्रत्ययान्तावन्तोदात्तौ ॥ **ममेति** । 'युष्मदस्मद्भ्यां ङसोऽश् ५३७' 'तवममौ ङसि ५३६' इति मपर्यन्तस्य ममादेशः । 'शेषे लोपः ५२१' 'अतो गुणे २७६' इति पररूपत्वम्, 'एकादेश उदात्तेनोदात्तः ५५२९' इति विभक्तेरुदात्तत्वे प्राप्ते इदमुच्यते ॥ ( ५५७५ ) **ङयि च** । योगविभागो यथासंख्यनिवृत्त्यर्थः ॥ **तुभ्यं मह्यमिति** । 'ङे प्रथमयोरम् ५१८' । 'तुभ्यमह्यौ ङयि ५३२' ॥ ( ५५७६ ) **यतः**—। 'तित्स्वरितम् ५६९४' इत्यस्यापवादः । 'निष्ठा च द्व्यजनात् ५५६८' इत्यतो द्व्यजनुवर्तते तदाह—**द्व्यच इति** । अत्र 'अनावः' इति निषेधो ज्ञापयति 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति । अन्यथा य आदिर्नकारो नासौ स्वरयोग्यः, यश्च स्वरयोग्य अकारो नासावादिरिति प्रतिषेधोऽनर्थकः स्यात् । अनावः किम् । नावा तार्यं नाव्यम् । 'नौवयोधर्म–२२३७' इति यत् । द्व्यच् किम् , चिकीर्ष्यम् । उभयत्रापि तित्स्वरः ॥ ( ५५७७ ) **ईडवन्द**—। 'ईड स्तुतौ' 'वदि अभिवादनस्तुत्योः' 'वृङ् संभक्तौ' 'शंसु स्तुतौ' 'दुह प्रपू

---

१ वृषः, जनः, ज्वरः, ग्रहः, हयः, गयः, नयः, तायः, तयः, चयः, श्रमः, वेदः, सूदः, अंशुः, गुहा, शमरणौ संज्ञायां भावकर्मणोः, मन्त्रः, शान्तिः, कामः, यामः, आरा, धारा, कारा, वहः, कल्पः, पादः, इति वृषादिः ।

शंस्यम् ॥ (५५७८) ॐ विभाषा वेण्विन्धानयोः । ६ । १ । २१५ । आदिरुदात्तो वा । इन्धानो अग्निम् ॥ (५५७९) ॐ त्यागरागहासकुहश्वठक्रथानाम् । ६ । १ । २१६ । आदिरुदात्तो वा । आद्यास्त्रयो घञन्ताः । त्रयः पचाद्यजन्ताः ॥ (५५८०) ॐ मतोः पूर्वमात्संज्ञायां स्त्रियाम् । ६ । १ । २१९ । मतोः पूर्वं आकार उदात्तः स्त्रीनाम्नि । उदुम्बरावती । शरावती ॥ (५५८१) ॐ अन्तोऽवत्याः । ६ । १ । २२० । अवतीशब्दस्यान्त उदात्तः । वेत्रवती । ङीपः पित्त्वादनुदात्तत्वं प्राप्तम् ॥ (५५८२) ॐ ईवत्याः । ६ । १ । २२१ । ईवत्यन्तस्यापि प्राग्वत् । अहीवती । मुनीवती ॥ इति प्रातिपदिकस्वराः ॥

## अथ फिट्सूत्राणि ।

(५५८३) ❋ फिषोऽन्त उदात्तः । १ । प्रातिपदिकं फिट् तस्यान्त उदात्तः स्यात् । उच्चैः ॥ (५५८४) ❋ पाटलापालङ्काम्बासागरार्थानाम् । २ । एतदर्थानामन्त उदात्तः । पाटला, फलेरुहा, सुरूपा, पाकलेति पर्यायाः । लघावन्त इति प्राप्ते । अपालङ्क, व्याधिघात, आरेवत, आरग्वधेति पर्यायाः । अम्बार्थः माता । उनर्वन्नन्तानामित्याद्युदात्तत्वे प्राप्ते । सागरः । समुद्रः ॥ (५५८५) ❋ गेहार्थानामस्त्रियाम् । ३ । गेहम् । नब्विषयस्येति प्राप्ते । अस्त्रियां किम् । शाला । आद्युदात्तोऽयम् । इहैव पर्युदासाज्ज्ञापकात् ॥ (५५८६) ❋ गुदस्य च । ४ । अन्त उदात्तः स्यान्न तु स्त्रियाम् । गुदम् । अस्त्रियां किम् । आन्त्रेभ्यस्ते गुदाभ्यः । स्वाङ्गशिटामदन्तानामित्यन्तरङ्गमाद्युदात्तत्वम् । ततष्टाप् ॥ (५५८७) ❋ ध्यपूर्वस्य स्त्रीविषयस्य । ५ । धकारयकारपूर्वो योऽन्त्योऽच् स उदात्तः । अन्तर्धा । स्त्रीविषयवर्णनाम्नामिति प्राप्ते । छाया । माया । जाया । यान्तस्यान्त्यात्पूर्वमित्याद्युदात्तत्वे प्राप्ते । स्त्रीति किम् । बाह्यम् । यजन्तत्वादाद्युदात्तत्वम् । विषयग्रहणं किम् । इभ्या । क्षत्रिया । यतोऽनाव इत्याद्युदात्त इभ्यशब्दः । क्षत्रियशब्दस्तु यान्तस्यान्त्यात्पूर्वमिति मध्योदात्तः ॥ (५५८८) ❋ खान्तस्याश्मादेः । ६ । नखम् । उखा । सुखम् । दुःखम् । नखस्य ।

---

रणे' । ण्यतो द्व्यनुबन्धकत्वाद्यद्ग्रहणेन ग्रहणं न प्राप्नोतीति वचनम् ॥ **ईडश्च इत्यादि** । 'ऋहलोः-३८२४' इति ण्यत् ॥ **वार्यमिति** । नन्वत्र 'एतिस्तुशास्-३८०५' इत्यादिना विशेषविहितेन क्यपा भाव्यमिति चेत्, सत्यम्—क्यब्विधौ वृञ एव ग्रहणं नास्येति मूल एव स्पष्टम् ॥ (५५७८) **विभाषा-** । वेणुशब्दो नित्स्वरेण नित्यमाद्युदात्तः प्राप्तः । 'स्थो णुः ४५२०' इत्यनुवर्तमाने 'अजिवृरीभ्यो निच्च ४५२१' इति व्युत्पादनात् । इन्धनशब्दो यदि चानशन्तस्तदा चित्त्वादन्तोदात्तः । यदा शानजन्तस्तदा लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः । 'श्नसोरल्लोपः ३२८२' इति उदात्तस्य श्नमोऽकारस्य लोपात् सर्वथाप्यप्राप्तमाद्युदात्तत्वं पक्षे विधीयते ॥ (५५७९) **त्यागराग-** । 'त्यज हानौ' । 'चजोः-३८१४' इति कुत्वम् । 'रञ्ज रागे' 'घञि च भाव-४९७७' इति नलोपः । 'हसे हसने' एषां पक्षे 'कर्षात्वतो घञोऽन्त उदात्तः ५५५५' इति भवति ॥ **त्रयः पचाद्यजन्ता इति** । 'कुह विस्मापने' 'श्वठ असम्यग् भाषणे' चौरादिकावदन्तौ । 'क्रथ हिंसायाम्' । अत्र प्रत्ययस्वरेणान्तोदात्तत्वं पक्षे भवति ॥ (५५८०) **मतोः-** । **मतोः पूर्व आकार इति** । आर्थं व्याख्यानमेतत् । सूत्रे तु शब्दस्वरूपापेक्षया नपुंसकनिर्देशः । केचित्तु—सूत्रे पूर्वशब्दं पुँल्लिङ्गमेव पठन्ति ॥ **शरावतीति** । चातुरर्थिको 'नद्यां मतुप् १८३८' 'मादुपधायाः-२५६२' इति वत्वम् । 'मतौ बह्वचोऽनजिरादीनाम् १४९३' 'शरादीनां च १४९४' इति दीर्घत्वम् ॥ (५५८१) **वेत्रवतीति** । मतुप् वत्वम् । न चात्र वत्वस्यासिद्धत्वादवतीशब्दोऽयं न भवतीति शङ्क्यम् । तस्याश्रयात्सिद्धत्वेनासिद्धत्वाभावात् । 'अवत्याः' इति निर्देशादिह न भवति राजवतीति । स्वरविधौ व्यञ्जनस्याविद्यमानत्वान्नायमवतीशब्दः ॥ (५५८२) **अहीवतीति** । पूर्ववद्दीर्घः । 'संज्ञायाम् २५६४' इति वत्वम् ॥ इति प्रातिपदिकस्वराः ॥

### अथ फिट्सूत्राणि ।

(५५८३) **फिषोऽन्त उदात्तः** । फिडिति पूर्वाचार्यप्रसिद्धया प्रातिपदिकमुच्यते तदाह—**प्रातिपदिकं फिडिति** । ननु कथमपाणिनीयानि सूत्राण्युपन्यस्यन्ते, पाणिनीयसूत्रैर्यः स्वर आयाति स एव प्रमाणम् । तथा च 'शताच्च ठन्यतावशते' इति सूत्रे कैयटः 'नियतकालाश्च स्मृतयो व्यवस्थाहेतवः' इति 'मुनित्रयमते नाद्यत्वे साध्वसाधुप्रविभागः' इति नैतत्—अपाणिनीयान्यपि फिट्सूत्राणि पाणिनीयैराश्रीयन्ते भाष्यात् ज्ञापकात् । तथा च 'आद्युदात्तश्च' इति सूत्रे भाष्यम् 'प्रातिपदिकस्य चान्त इति प्रकृतेरन्तोदात्तत्वं शास्ति' इति । तथा तस्मिन्नेव सूत्रे 'प्रत्ययाद्युदात्तत्वस्यावकाशः । यत्रानुदात्ता प्रकृतिः समत्वं सिमत्वम्' इति । नहि 'फिषोऽन्त उदात्तः ५५८३' 'त्वत्त्वसमासिम-५६६०' इत्यादिफिट्सूत्राश्रयणं विना प्रकृतेरन्तोदात्तत्वं सर्वानुदात्तत्वं च संभवतीति दिक् ॥ (५५८४) **पाट-** । पाटलेत्यादय ओषधिविशेषस्य वाचकाः ॥ **लघावन्त इति प्राप्त इति** । इदं पूर्वेण परेण च संबध्यते ॥ **पर्याया इति** । वृक्षविशेषस्य वाचकाः । सागरसमुद्रयोः 'लघावन्ते-५६२४' इति प्राप्ते ॥ (५५८५) **गेहा-** । गेहार्थानामन्त उदात्तः स्यात्स्त्रियां न ॥ (५५८६) **गुद-** । अगेहार्थमिदम् ॥ (५५८७) **ध्यपूर्व-** । **धकारेति** । नित्यस्त्रीलिङ्गस्येति शेषः ॥ **प्राप्ते इति** । आद्युदात्तत्वे प्राप्ते इत्यर्थः ॥ **यजन्तत्वादिति** । 'बहिषष्टिलोपो यञ्च १५४२' इति वचनात् ॥ **यतोऽनाव इति** । इभमर्हतीति दण्डादित्वाद्यत् ॥ **यान्तस्यान्त्यादिति** । 'क्षत्राद् घः १६४४' इति प्रत्ययस्वरेणापीति वा बोध्यम् ॥ (५५८८) **खान्तस्या-** । ष् च म् च ष्मौ तौ आदी यस्य स

स्वाङ्गशिटामित्याद्युदात्तत्वे प्राप्ते । उखा नाम भाण्डविशेषः । तस्य कृत्रिमत्वात्खय्युवर्णं कृत्रिमाख्या चेदित्युवर्णस्योदात्तत्वे प्राप्ते । सुखदुःखयोर्नब्विषयस्येति प्राप्ते । अश्मादेः किम् । शिखा । मुखम् । मुखस्य स्वाङ्गशिटामिति नब्विषयस्येति वा आद्युदात्तत्वम् । शिखायास्तु शीङः खो निर्ह्रस्वश्चेति उणादिषु नित्त्वोक्तेरन्तरङ्गत्वाट्टापः प्रागेव स्वाङ्गशिटामिति वा बोध्यम् ॥ ( ५५८९ ) ❋ हिष्ठवत्सरतिशत्थान्तानाम् । ७ । एषामन्त उदात्तः स्यात् । अतिशयेन बहुलो बंहिष्ठः । नित्त्वादाद्युदात्तत्वे प्राप्ते । बंहिष्ठैरश्वैः सुवृता रथेन । यद्बंहिष्ठं नातिविधे इत्यादौ व्यत्ययादाद्युदात्तः॥परिवत्सरः। अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यते इत्याहुः । सप्ततिः । अशीतिः । लघावन्त इति प्राप्ते । चत्वारिंशत् । इहापि प्राग्वत् । अभ्यूर्णवाना प्रभृथस्यायोः । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः । थाथादिसूत्रेण गतार्थमेतत् ॥ (५५९०) ❋ दक्षिणस्य साधौ । ८ । अन्त उदात्तः स्यात् । साधुवाचित्वाभावे तु व्यवस्थायां सर्वनामतया स्वाङ्गशिटामित्याद्युदात्तः । अर्थान्तरे तु लघावन्त इति गुरुरुदात्तः । दक्षिणः सरलोदारपरच्छन्दानुवर्तिष्विति कोशः ॥ ( ५५९१ ) ❋ स्वाङ्गाख्यायामादिर्वा । ९ । इह दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्तः । दक्षिणो बाहुः । आख्याग्रहणं किम् । प्रत्यङ्मुखस्यासीनस्य वामपाणिर्दक्षिणो भवति ॥ (५५९२) ❋ छन्दसि च । १० । अस्वाङ्गार्थमिदम् । दक्षिणः । इह पर्यायेणाद्यन्तावुदात्तौ ॥ (५५९३) ❋ कृष्णस्यामृगाख्या चेत् । ११ । अन्त उदात्तः वर्णानान्तणेत्याद्युदात्तत्वे प्राप्ते अन्तोदात्तो विधीयते । कृष्णानां व्रीहीणाम् । कृष्णो नोनाव वृषभः । मृगाख्यायां तु । कृष्णो रात्र्यै ॥ ( ५५९४ ) ❋ वा नामधेयस्य । १२ । कृष्णस्येत्येव । अयं वां कृष्णो अश्विना । कृष्ण ऋषिः ॥ ( ५५९५ ) ❋ शुक्लगौरयोरादिः । १३ । नित्यमुदात्तः स्यादित्येके । वेत्यनुवर्तत इति तु युक्तम् । सरो गौरो यथा पिबेत्यत्रान्तोदात्तदर्शनात् ॥ ( ५५९६ ) ❋ अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः । १४ । अङ्गुष्ठस्य स्वाङ्गानामकुर्वादीनामिति द्वितीयस्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थ आरम्भः । वशाग्रहणं नियमार्थं छन्दस्येवेति । तेन लोके आद्युदात्ततेत्याहुः ॥ ( ५५९७ ) ❋ पृष्ठस्य च । १५ । छन्दस्यन्त उदात्तः स्याद्वा भाषायाम् । पृष्ठम् ॥ ( ५५९८ ) ❋ अर्जुनस्य तृणाख्या चेत् । १६ । उनर्वन्नन्तानामित्याद्युदात्तस्यापवादः ॥ (५५९९) ❋ अर्यस्य स्वाम्याख्या चेत् । १७ । यतोऽनाव इति वाऽऽद्युदात्ते प्राप्ते वचनम् ॥ ( ५६०० ) ❋ आशाया अदिगाख्या चेत् । १८ । दिगाख्याव्यावृत्त्यर्थमिदम् । अत एव ज्ञापकाद्दिक्पर्यायस्याद्युदात्तता । इन्द्र आशाभ्यस्परि ॥(५६०१) ❋ नक्षत्राणामाब्विषयाणाम् । १९ । अन्त उदात्तः स्यात् । आश्लेषाऽनुराधादीनां लघावन्त इति प्राप्ते । ज्येष्ठाश्रविष्ठाधनिष्ठानामिष्ठन्नन्तत्वेनाद्युदात्ते प्राप्ते वचनम् ॥ ( ५६०२ ) ❋ न कुपूर्वस्य कृत्तिकाख्या चेत् । २० । अन्त उदात्तो न । कृत्तिका नक्षत्रम् । केचित्—कुपूर्वो य आप् तद्विषयाणामिति व्याख्याय आर्यिका बहुलिका इत्यत्राप्यन्तोदात्तो नेत्याहुः ॥ (५६०३) ❋ घृतादीनां च । २१ । अन्त उदात्तः । घृतं मिमिक्षे । आकृतिगणोऽयम् ॥ ( ५६०४ ) ❋

---

श्मादिर्न श्मादिरश्मादिः तस्य । शकारमकारादिभिन्नस्य खशब्दस्यान्तोदात्तः स्यात् ॥ शीङः खो निर्ह्रस्वश्चेत्यादि । ननु बहुषूणादिपुस्तकेषु 'शीङो ह्रस्वश्च' इत्येव पठ्यते 'मुहेः खो मूर्च ४९०६' इत्यतः खोऽनुवर्त्तते । 'ह्रस्वविधानसामर्थ्याद् गुणाभावः' इति स्वयमप्युणादिष्वेवमेवोक्तम् । तस्मात्पूर्वापरविरुद्धोऽयं ग्रन्थ इत्यस्वरसादाह—अन्तरङ्गत्वादित्यादि ॥(५५८९) हिष्ठ—। एषामिति । हिष्ठ, वत्सर, ति, शत् , थ, एतदन्तानामित्यर्थः ॥ बंहिष्ठ इति । बहुलशब्दात् 'अतिशायने तमबिष्ठनौ २७१५' इतीष्ठन्, 'प्रियस्थिरस्फिर—२७३०' इत्यनेन बहुलस्य बंहिरादेशः ॥ परिवत्सर इति । क्वचित्तु संवत्सर इति पाठस्तत्र 'वसेश्च ४५५४' 'संपूर्वाच्चित् ४५५५' इति सरप्रत्ययस्य चित्त्वादपि सिद्धेः॥सप्ततिरित्यादि । 'पङ्क्तिविंशतित्रिंशत्—२३४५' इत्यत्र व्युत्पादिता एते ॥ प्राग्वदिति । 'लघावन्ते—५६२४' इति प्राप्त इत्यर्थः ॥ ( ५५९० ) दक्षिणस्य—। अस्यान्त उदात्तः स्यात्प्रावीण्येऽर्थे। वीणायां दक्षिणः प्रवीण इत्यर्थः ॥ ( ५५९२ ) छन्दसि—॥ दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्यातां वेदे ॥ ( ५५९३ ) कृष्णस्य—।अस्यान्त उदात्तश्छन्दसि न तु मृगाख्यायाम् ॥ ( ५५९५ ) एके इति । तन्मतेऽस्मिन्सूत्रे 'नामधेयस्य' इत्यनुवर्तते वचनविपरिणामेनान्वयः, नामधेययोः शुक्लगौरयोरादिरुदात्त इत्यर्थः । तेन 'सरो गौरो यथा पिब' इत्यत्रान्तोदात्तत्वमेव । नामधेयत्वाभावात् ॥ ( ५५९६ ) अङ्गुष्ठो—। एषामन्तोदात्तश्छन्दसि ॥ अङ्गुष्ठस्येति । उपलक्षणमिदम् । बकशब्देऽपि 'प्राणिनां कुपूर्वम् ५६१२' इत्याद्युदात्ते प्राप्ते इति बोध्यम् ॥ ( ५५९७ ) वा भाषायाम् ॥ पृष्ठमिति । पक्षे 'स्वाङ्गशिटाम्—५६११' इत्याद्युदात्तत्वम् ॥ ( ५५९८ ) अर्जुनस्य—। अन्त उदात्तस्तृणाख्यायाम् । तृणाख्यायां किम् । अर्जुनो वृक्षः ।'उनर्वन्नन्तानाम्—५६१४' इत्याद्युदात्तः॥(५५९९) अर्यस्य—। अन्त उदात्तः स्वाम्याख्यायाम् । 'अर्यः स्वामिवैश्ययोः ३७९९' इति निपातितोऽयमर्य्यशब्दः ॥ ( ५६०० ) आशाया—। अदिगाख्यायामाशाशब्द आद्युदात्तः स्यात् । (५६०१) ज्येष्ठेत्यादि । 'प्रशस्यस्य श्रः २७२३' 'ज्य च २७२४' इति प्रशस्यशब्दादिष्ठानि ज्यादेशः । श्रवणं श्रवः सोऽस्त्यस्याः सा श्रववती, धनं विद्यते अस्याः सा धनवती । अतिशयिता श्रववती श्राविष्ठा धानिष्ठा । इष्ठनि 'विन्मतोर्लुक् २७३४' इति मतुपो लुक् ॥ आद्युदात्ते प्राप्ते इति । 'ञ्नित्यादिः—५५६१' इत्यनेन ॥ (५६०२) कृत्तिकेति । 'लघावन्ते—५६२४' इति आद्युदात्तत्वम् ।(५६०३) घृतमिति ।'नब्विषयस्य—५६०८'

ज्येष्ठकनिष्ठयोर्वयसि ॥ २२ ॥ अन्त उदात्तः स्यात् । ज्येष्ठ आह चमसा । कनिष्ठ आह चतुरः । वयसि किम् । ज्येष्ठः श्रेष्ठः । कनिष्ठोऽल्पकः । इह नित्त्वादाद्युदात्त एव ॥ (५६०५) ❋ बिल्वतिष्ययोः स्वरितो वा । २३ । अनयोरन्तः स्वरितो वा स्यात् । पक्षे उदात्तः ॥ इति फिट्सूत्रेषु प्रथमः पादः ॥ १ ॥

(५६०६) ❋ अथादिः प्राक् शकटेः । २४ । अधिकारोऽयम् । शकटिशकट्योरिति यावत् ॥ (५६०७) ❋ ह्रस्वान्तस्य स्त्रीविषयस्य । २५ । आदिरुदात्तः स्यात् । बलिः । तनुः ॥ (५६०८) ❋ नब्विषयस्यानिसन्तस्य । २६ । वने न वायः । इसन्तस्य तु सर्पिः । नप् नपुंसकम् ॥ ( ५६०९ ) ❋ तृणधान्यानां च द्व्यषाम् । २७ । द्व्यचामित्यर्थः । कुशाः । काशाः । माषाः।तिलाः॥बह्वचां तु गोधूमाः॥(५६१०) ❋ न्रः संख्यायाः । २८ । पञ्च । चत्वारः। ( ५६११ ) ❋ स्वाङ्गशिटामदन्तानाम् । २९ । शिट् सर्वनाम । कर्णाभ्यां चिबुकादधि । ओष्ठाविव मधु । विश्वो विहायः ॥ (५६१२) ❋ प्राणिनां कुपूर्वम् । ३० । कवर्गात्पूर्व आदिरुदात्तः । काकः । वृकः । शुकेषु मे । प्राणिनां किम् । क्षीरं सर्पिर्मधूदकम् ॥ ( ५६१३ ) ❋ खय्युवर्णं कृत्रिमाख्या चेत् । ३१ । खयि परे उवर्णमुदात्तं स्यात् । कन्दुकः ॥ ( ५६१४ ) ❋ उनर्वन्नन्तानाम् । ३२ । उन । वरुणं वोरिशादसम् । ऋ । स्वसारं त्वा कृणवै । वन् । पीवानं मेषम् ॥ ( ५६१५ ) ❋ वर्णानां तणतिनितान्तानाम् । ३३ । आदिरुदात्तः । एतः । हरिणः शितिः पृश्निः हरित् ॥ ( ५६१६ ) ❋ ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये । ३४ । ऋद्वर्ज्यं ह्रस्वान्तस्यादिभूतं ह्रस्वमुदात्तं स्यात् । मुनिः ॥ ( ५६१७ ) ❋ अक्षस्यादेवनस्य । ३५ । आदिरुदात्तः । तस्य नाक्षः । देवने तु । अक्षैर्मा दीव्यः ॥ (५६१८) ❋ अर्धस्यासमद्योतने । ३६ । अर्धो ग्रामस्य । समेंऽशके तु अर्धं पिप्पल्याः ॥ (५६१९) ❋ पीतद्रर्थानाम् । ३७ । आदिरुदात्तः । पीतद्रुः । सरलः॥ (५६२०) ❋ ग्रामादीनां च । ३८ । ग्रामः । सोमः । यामः ॥ ( ५६२१ ) ❋ लुबन्तस्योपमेयनामधेयस्य । ३९ । चञ्चेव चञ्चा । स्फिगन्तस्येति पाठान्तरम् । स्फिगिति लुपः प्राचां संज्ञा ॥ (५६२२) ❋ न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् । ४० । एषामुपमेयनाम्नामादिरुदात्तो न । ताल इव तालः । मेरुरिव मेरुः । व्याघ्रः । सिंहः । महिषः ॥ (५६२३) ❋ राजविशेषस्य यमन्वा चेत् । ४१ । यमन्वा वृद्धः । आङ्ग उदाहरणम् । अङ्गाः प्रत्युदाहरणम् ॥ (५६२४) ❋ लघावन्ते द्वयोश्च बह्वषो गुरुः । ४२ । अन्ते लघौ द्वयोश्च लघ्वोः सतोर्बह्वच्कस्य गुरुरुदात्तः । कल्याणः । कोलाहलः ॥ ( ५६२५ ) ❋ स्त्रीविषयवर्णाक्षुपूर्वाणाम् । ४३ । एषां त्रयाणामाद्युदात्तः । स्त्रीविषये । मल्लिका । वर्णः । श्येनी । हरिणी । अक्षुशब्दात्पूर्वोऽस्त्येषां

---

इति प्राप्ते ॥ ( ५६०४ ) ज्येष्ठ इति । उदाहरणे वृद्धशब्दस्य 'वृद्धस्य च २७२५ ' इतिष्ठानि ज्यादेशः । 'युवाल्पयोः कनन्यतरस्याम् २७३३ ' इति युवञ्छब्दस्य कनादेशः । प्रत्युदाहरणे 'प्रशस्यस्य श्रः २७२३' 'ज्य च २७२४' इति प्रशस्यशब्दस्य ज्यादेशः । अल्पस्य कन् ॥ नित्त्वादिति । तथा च नित्स्वरापवादोऽयं योगः ॥ ( ५६०५ ) पक्षे उदात्त इति । उदात्त इत्यनुवृत्तेः ॥ इति प्रथमः पादः ॥ १ ॥

( ५६०८ ) नब्विषयस्य-। इसन्तवर्जितस्य नित्यनपुंसकस्यादिरुदात्तः स्यात् ॥ सर्पिरिति । 'अर्चिशुचि-४४६८' इत्यादिना इसिः ॥ ( ५६०९ ) तृण-। तृणवाचिनां धान्यवाचिनां च द्व्यचामादिरुदात्तः स्यात् । अषिति अचः प्राचां संज्ञा । तदाह-द्व्यचामित्यर्थ इति । गोधूमा इति । ' लघावन्ते-५६२४ ' इति मध्योदात्तता ॥ ( ५६१० ) न्रःसंख्या-। नकाररेफान्तायाः संख्याया आदिरुदात्तः स्यात् ॥ [ चतुष्कपाल इति । चत्वार इत्यत्राम्स्वरेण भाव्यम्, चतुरः इत्यत्र ' चतुरः शसि ५५५७ ' इति चतुर्भिरित्यत्र ' झल्युपोत्तमम् ५५५८ ' इति, चतुर्णामित्यत्र ' षट्त्रिचतुर्भ्यः--५६९० ' इत्यनेनेति समास उदाहृतः । ' इगन्तकालकपालभगाल-५७३० ' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तोऽयम्॥ ] ( ५६११ ) स्वाङ्गशिटाम्-। स्वाङ्गवाचिनामदन्तानां सर्वनाम्नामादिरुदात्तः स्यात् ॥ ( ५६१२ ) उदकमिति । छन्दसि ' अङ्गुष्ठोदकबककवशानाम् ५५९६ ' इत्यन्तोदात्तः । भाषायां तु कर्दमादित्वादादिर्द्वितीयं चोदात्तम् ॥ ( ५६१४ ) उनर्व-। उन ऋ वन् एतदन्तानामादिरुदात्तः स्यात् ॥ ( ५६१६ ) ह्रस्वान्तस्य--। अनृत्किम् । नृशंसः ॥ ( ५६१७ ) अक्षस्य--। अदेवनस्याक्षस्यादिरुदात्तः ॥ ( ५६१८ ) अर्द्धस्य--। असमद्योतनेऽर्द्धशब्दस्यादिरुदात्तः ॥ ( ५७२० ) ग्रामादीनां च । आदिरुदात्तः ॥ ( ५६२१ ) लुबन्तस्य-। उपमेयवाचिनो लुबन्तस्यादिरुदात्तः ॥ चञ्चेवेति । 'इवे प्रतिकृतौ २७७७' इति विहितस्य 'लुम्मनुष्ये २७७९' इति कनो लुप् । लुबन्तस्य किम् । अग्निर्माणवकः ॥ ( ५६२२ ) न वृक्ष-। पूर्वेण प्राप्तमाद्युदात्तत्वं निषिध्यते । अत्र वृक्षपर्वतविशेषग्रहणात् वृक्ष इवायं वृक्षः पर्वतः । अत्र पूर्वेणाद्युदात्तत्वं भवत्येव ॥ ( ५६२३ ) राजविशेषस्य-। लुबन्तस्योपमेयनामधेयस्य राजविशेषस्याद्युदात्तः यमन्वा चेन्नामधेयं भवति । पूर्वेणैव सिद्धे नियमार्थमिदम् । राजविशेषस्य चेद्वृद्धस्यैवेत्याहुः । फिड्वृत्तौ तु वृद्धस्य चेद्राजविशेषस्यैव इति नियमो दर्शितः ॥ आङ्ग इति । आङ्ग इवायमाङ्गः अङ्ग इवायमङ्गः ॥ ( ५६२४ ) लघावन्ते-। इह आदिरिति न संबध्यते, तेनानादेरपि गुरोरुदात्तः । अत एव 'वृषाकपिशब्दस्य गुरुरुदात्तः' इति 'वृषाकप्यग्नि-' इति सूत्रे वृत्त्यादिग्रन्थेषु विभावितम् । न च गुरूणां मध्ये य आदिरित्यर्थोऽस्त्विति वाच्यम्, 'अन्यतो ङीष्' इति सूत्रे सारङ्गकल्माषशब्दौ 'लघावन्ते-५६२४' इत्या-

ते अक्षुपूर्वाः । तरक्षुः ॥ (५६२६) ❋ शकुनीनां च लघु पूर्वम् । ४४ । पूर्वं लघु उदात्तं स्यात् । कुक्कुटः । तित्तिरिः । खञ्जरीटः ॥ (५६२७) ❋ नर्तुप्राण्याख्यायाम् । ४५ । यथालक्षणं प्राप्तमुदात्तत्वं न । वसन्तः । कृकलासः ॥ (५६२८) ❋ धान्यानां च वृद्धक्षान्तानाम् । ४६ । आदिरुदात्तः । कान्तानाम् । श्यामाकाः । षान्तानाम् । माषाः ॥ (५६२९) ❋ जनपदशब्दानामषान्तानाम् । ४७ । आदिरुदात्तः । केकयः ॥ (५६३०) ❋ हयादीनामसंयुक्तलान्तानामन्तः । पूर्वं वा । ४८ । हयिति हल्संज्ञा । पललम् । शललम् । हयादीनां किम् । एकलः । असंयुक्तेति किम् । मल्लः ॥ (५६३१) ❋ इगन्तानां च व्यषाम् । ४९ । आदिरुदात्तः । कृषिः ॥ इति फिट्सूत्रेषु द्वितीयः पादः ॥ २ ॥

(५६३२) ❋ अथ द्वितीयं प्रागीषात् । ५० । ईषान्तस्य[५६४८] हलादेरित्यतः प्राक् द्वितीयाधिकारः ॥ (५६३३) ❋ त्र्यचां प्राङ्मकरात् । ५१ । मकरवरूढेत्यतः[५६३०] प्राक् त्र्यचामित्यधिकारः ॥ (५६३४) ❋ स्वाङ्गानामकुर्वादीनाम् । ५२ । कवर्गरेफवकारादीनि वर्जयित्वा त्र्यचां स्वाङ्गानां द्वितीयमुदात्तम् । ललाटम् । कुर्वादीनां तु कपोलः । रसना । वदनम् ॥ (५६३५) ❋ मादीनां च । ५३ । मलयः । मकरः ॥ (५६३६) ❋ शादीनां शाकानाम् । ५४ । शीतन्या । शतपुष्पा ॥ (५६३७) ❋ पान्तानां गुर्वादीनाम् । ५५ । पादपः । आतपः । लघ्वादीनां तु अनूपम् । द्व्यचां तु– नीपम् ॥ (५६३८) ❋ युतान्यण्यन्तानाम् । ५६ । युत । अयुतम् । अनि । धमनिः । अणि । विपणिः ॥ (५६३९) ❋ मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा । ५७ । एषामादिर्द्वितीयो वोदात्तः । मकरः । वरूढ इत्यादि ॥ (५६४०) ❋ छन्दसि च । ५८ । अमकराद्यर्थ आरम्भः । लक्ष्यानुसारादादिर्द्वितीयश्चोदात्तो ज्ञेयः ॥ (५६४१) ❋ कर्दमादीनां च । ५९ । आदिर्द्वितीयं वोदात्तम् ॥ (५६४२) ❋ सुगन्धितेजनस्य ते वा । ६० । आदिर्द्वितीयस्तेशब्दश्चेति त्रयः पर्यायेणोदात्ताः । सुगन्धितेजनाः ॥ (५६४३) ❋ नपः फलान्तानाम् । ६१ । आदिर्द्वितीयो वोदात्तः । राजादनफलम् ॥ (५६४४) ❋ यान्तस्यान्त्यात्पूर्वम् । ६२ । कुलायः ॥ (५६४५) ❋ थान्तस्य च नालघुनी । ६३ । नाशब्दो लघु च उदात्ते स्तः । सनाथा सभा ॥ (५६४६) ❋ शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च । ६४ । अन्त्यात्पूर्वमुदात्तं द्वितीयं

---

दिना मध्योदात्ताविति हरदत्तग्रन्थविरोधादित्याहुः ॥ **कल्याण इति** । पर्यायेणादिमध्यावुदात्तौ ॥ (५६२६) **शकुनीनाम्–**। पक्षिवाचिनाम् ॥ **पूर्वमिति** । अन्त्यात्पूर्वमित्यर्थः । अत्रापि 'आदिः' इति न संबद्ध्यते, पूर्वग्रहणात् ॥ **कुक्कुट इत्यादि** । मध्योदात्तावेतौ ॥ (५६२७) **नर्तु–**। ऋतुवाचिनां प्राणिवाचिनां च यथालक्षणप्राप्तमुदात्तत्वं न ॥ (५६२८) **धान्यानाम्–**। धान्यवाचिनां वृद्धकशब्दान्तानां षशब्दान्तानां चादिरुदात्तः ॥ **श्यामाका माषा इति** । अत्र 'उशीर–५६४९' इत्यनेन 'तृणधान्यानाम्–५६०९' इत्यनेन चाद्युदात्तत्वस्य सिद्धत्वात् नैषादका राजमाषा इत्युदाहर्त्तव्यम् । फिड्वृत्तौ तु सूत्रे चशब्दो न पठितः । वृत्तौ 'गुरुरुदात्तः' इति व्याख्यातं न त्वादिरुदात्त इति । नैषादकाः कालाक्षा इत्युदाहृतं च । यत्तु धान्यानामिति किम् । श्यामाका इत्युदाहृतम् । तन्न–श्यामाके धान्यत्वाभावश्चिन्त्यः ॥ (५६२९) **जनपदा–**। जनपदवाचिनामजन्तानामादिरुदात्तः स्यात् ॥ **केकय इति** । अत्र परत्वात् 'यान्त्यस्यान्त्यात्पूर्वम् ५६४४' इति स्वरेण भाव्यमतः अङ्गा वङ्गा इत्युदाहर्तव्यमिति वदन्ति ॥ (५६३०) **हयादीनाम्–**। हयादीनामसंयोगपूर्वो यो लशब्दस्तदन्तानामादिरुदात्तः । अन्त्यात्पूर्वं वा । केचित्तु अत्र 'जनपदानाम्' इत्यनुवर्त्तयन्ति, पञ्चालाः कोशला इत्युदाहृत्य पलालमिति प्रत्युदाहरन्ति च ॥ (५६३१) **इग–**। अत्रापि जनपदानामित्यनुवर्त्य कुरवश्चेदय इत्युदाहृतं कृषिरिति प्रत्युदाहृतम् । 'अक्षैर्मा दीव्यः कृषिमित् कृषस्व' इत्यत्र कृषिशब्दस्यान्तोदात्तत्वात् ॥ इति द्वितीयः पादः ॥ २ ॥

(५६३४) **कपोल इति** । 'लघावन्ते–५६२४' इति मध्योदात्तत्वम् ॥ **रसना वदनमिति** । 'स्वाङ्गशिटाम्–५६११' इत्याद्युदात्तत्वम् ॥ (५६३५) **मादी–**। **मलयः मकर इति** । अनयोः 'मकरवरूढ–५६३९' इति, 'यान्तस्यान्त्यात्पूर्वम् ५६४४' इति विशिष्य स्वरविधानान्महेन्द्र इत्युदाहर्त्तव्यम् ॥ (५६३६) **शादीनां शा–**। शकारादीनां शाकवाचिनां त्र्यचां द्वितीयमुदात्तं स्यात् । केचित्तु 'सादीनाम्' इति पठित्वा सर्षपा इत्युदाहरन्ति ॥ (५६३७) **पान्तानाम्–**। पशब्दान्तानां गुर्वादीनां त्र्यचां द्वितीयमुदात्तं स्यात् । अनूपे 'अनोरप्रधानकनीयसी ५८९६' इत्यनेनोदात्तत्वं, नीपे 'नेरनिधाने ५९००' इत्यनेनेत्याहुः ॥ (५६३८) **युत–**। युत–अनि–अणि–एतदन्तानां त्र्यचां द्वितीयमुदात्तं स्यात् ॥ (५६३९) **इत्यादीति** । आदिशब्देन पारावत वितस्त इक्षु आर्जि द्राक्षा कला उमा काष्ठा पेष्ठा काशीना । 'काशीनानाम्' इति वक्तव्ये नुडभावः आर्षः ॥ (५६४०) **छन्दसि–**। छन्दसि मकरादीनामन्येषां चादिर्द्वितीयं वोदात्तम् । काश्यपः । कर्दमा कुलटा उदकं गान्धारिः ॥ (५६४२) **सुगन्धि–**। **आदिरिति** । सुगन्धितेजनशब्दस्य ॥ (५६४३) **नपः फलान्तानाम्** । नप् नपुंसकम् । नपः किम् । दासीफलो वृक्षः ॥ (५६४४) **यान्तस्य–**। यशब्दान्तस्यान्त्यात्पूर्वमुदात्तं स्यात् ॥ (५६४५) **थान्तस्य–**। केचित्तु 'आन्तस्य च नालघुनी' इति पठित्वा 'आकारान्तस्य नाशब्दस्य च लघुनी अन्त्यात्पूर्वे उदात्ते स्तः' इति व्याख्याय नाना दिवा मुधा इत्युदाजह्रुः ॥ (५६४६) **शिशुमारो–**। 'शिंशुमार' इति पाठान्तरम् ॥ **उष्ट्रार** । 'उष्टार' इति पाठान्त-

वा ॥ ( ५६४७ ) ❋ सांङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् । ६५ । द्वितीयमुदात्तं वा ॥ ( ५६४८ ) ❋ ईषान्तस्य हलादेरादिर्वा । ६६ । हलीषा । लाङ्गलीषा ॥ (५६४९) ❋ उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् । ६७ । एषामादिरुदात्तः स्यात् ॥ (५६५०) ❋ महिष्याषाढयोर्जायेष्टकाख्या चेत् ।६८। आदिरुदात्तः। महिषी जाया। अषाढा उपदधाति ॥ इति फिट्सूत्रेषु तृतीयः पादः ॥ ३ ॥

( ५६५१ ) ❋ शकटिशकट्योरक्षरमक्षरं पर्यायेण । ६९ । उदात्तम् । शकटिः । शकटी ॥ ( ५६५२ ) ❋ गोष्ठजस्य ब्राह्मणनामधेयस्य । ७० । अक्षरमक्षरं पर्यायेणोदात्तम् । गोष्ठजो ब्राह्मणः । अन्यत्र गोष्ठजः पशुः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः ॥ ( ५६५३ ) ❋ पारावतस्योपोत्तमवर्जम् । ७१ । शेषं क्रमेणोदात्तम् । पारावतः ॥ ( ५६५४ ) ❋ धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम् । ७२ । एषां चतुर्णां धूप्रभृतींश्चतुरो वर्जयित्वा शिष्टानि क्रमेणोदात्तानि । धूम्रजानुः । मुञ्जकेशः । कालवालः । स्थालीपाकः ॥ ( ५६५५ ) ❋ कपिकेशहरिकेशयोश्छन्दसि । ७३ । कपिकेशः । हरिकेशः ॥ ( ५६५६ ) ❋ न्यङ्स्वरौ स्वरितौ । ७४ । स्पष्टम् । न्यङ्ङुत्तानः । व्यचक्षयत्स्वः । (५६५७) ❋ न्यर्बुदव्यल्कशयोरादिः । ७५ । स्वरितः स्यात् ॥ ( ५६५८ ) ❋ तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः । ७६ । स्वरितः स्यात् । तिलानां भवनं क्षेत्रं तिल्यम् । यतोऽनाव इति प्राप्ते॥ (५६५९) ❋ बिल्वभक्ष्यवीर्याणि च्छन्दसि । ७७ । अन्तस्वरितानि । ततो बिल्व उदतिष्ठत् । (५६६०) ❋ त्वत्त्वसमसिमेत्यनुच्चानि । ७८ । स्तरीरुत्वत् । उत त्वः पश्यन् । नभन्तामन्यके समे । सिमस्मै ॥ ( ५६६१ ) ❋ सिमस्याथर्वणेऽन्त उदात्तः । ७९ । अथर्वण इति प्रायिकम् । तत्र दृष्टस्येत्येवंपरं वा । तेन वासस्तनुते सिमस्मै इत्यृग्वेदेऽपि भवत्येव ॥ ( ५६६२ ) ❋ निपाता आद्युदात्ताः । ८० । स्वाहा॥ (५६६३) ❋ उपसर्गाश्चाभिवर्जम् । ८१ । (५६६४) ❋ एवादीनामन्तः । ८२ । एवमादीनामिति पाठान्तरम् । एव । एवम् । नूनम् । सह । ते मित्र सूरिभिः सह । षष्ठस्य तृतीये सहस्य स इति प्रकरणे सहशब्द आद्युदात्त इति तु प्राञ्चः, तच्चिन्त्यम् ॥ (५६६५)❋ वाचादीनामुभावुदात्तौ । ८३ । उभौग्रहणमनुदात्तं पदमेकवर्जमित्यस्य बाधाय ॥( ५६६६ ) ❋ चादयोऽनुदात्ताः । ८४ । स्पष्टम् ॥ (५६६७)❋ यथेति पादान्ते ।८५। तन्नेमिमृभवो यथा ॥ पादान्ते किम् । यथा नो अदितिः करत् ॥ (५६६८) ❋ प्रकारादिद्विरुक्तौ ॥ ८६ । परस्यान्त उदात्तः । पटुपटुः ॥ (५६६९) ❋ शेषं सर्वमुदात्तम् । ८७ । शेषं नित्यादिद्विरुक्तस्य परमित्यर्थः । प्रप्रायम् । दिवेदिवे ॥

इति शान्तनवाचार्यप्रणीतानि फिट्सूत्राणि, फिट्सूत्रेषु तुरीयः पादः ॥ ४ ॥

(५६७०) ❋ आद्युदात्तश्च । ३ । १ । ३ । प्रत्यय आद्युदात्तः स्यात् । अग्निः । कर्तव्यम् ॥ (५६७१) ❋ अनुदात्तौ सुप्पितौ । ३ । १ ।४ । पूर्वस्यापवादः । यज्ञस्य । न यो युच्छति । शप्तिपोरनुदात्तत्वे स्वरितप्रचयौ ॥ (५६७२)

---

स्म् ॥ ( ५६४७ ) सांकाश्य-। सांकाश्यकाम्पिल्यशब्दौ 'वुञ्छण्-१८२२' इति ण्यान्तौ । दार्वाघाटशब्दो 'दारावाहनोऽणन्तस्य च टः संज्ञायाम् ३९६०' इत्यण्प्रत्ययान्तः ॥ ( ५६४८ ) ईषान्तस्य-। ईषान्तस्य हलादेरादिरुदात्तो वा स्यात् ॥ ( ५६४९ ) उशीर-। अत्र श्यामाकग्रहणं चिन्त्यम् । 'धान्यानां च वृद्धक्षान्तानाम् ५६२८' इत्यनेनैव सिद्धत्वात् । इदमेव ज्ञापयितुं मूले धान्यानामित्यत्र श्यामाक इत्युदाहृतम् । देवरग्रहणमपि चिन्त्यम् , 'लघावन्ते-५६२४' इत्यनेनैव सिद्धत्वात् । हृदयग्रहणं 'स्वाङ्गानामकुर्वादीनाम् ५६३४' इति द्वितीयस्योदात्तत्वं बाधितुमन्येषां 'लघावन्ते-५६२४' इति प्राप्ते वचनम् ॥ ( ५६५० ) महिष्य-। एतयोरादिरुदात्तः स्यात् यथासंख्यं जायाख्यायामिष्टकाख्यायां च ॥ इति तृतीयः पादः ॥ ३ ॥

( ५६६० ) त्वत्त्व-। एतानि सर्वानुदात्तानि ॥ ( ५६६१ ) सिमस्य-। सिमशब्दस्याथर्वणे वेदे उदात्तः ॥ ( ५६६३ ) उपसर्गाश्चाभि-। अभिशब्दं वर्जयित्वा उपसर्गा आद्युदात्ताः स्युः ॥ ( ५६६७ ) यथेति-। यथाशब्दः पादान्तेऽनुदात्तः स्यात् ॥ ( ५६६८ ) प्रकारादि-। ' प्रकारे गुणवचनस्य २८९२ ' इत्यादिद्वित्वे पदस्यान्तोदात्तः स्यात् । पटुपटुरिति । न च 'कर्मधारयवदुत्तरेषु २८९०' इति कर्मधारयवद्भावादेव 'समासस्य ५७००' इत्यन्तोदात्तत्वे सिद्धे व्यर्थमिदमिति वाच्यम् ,तस्य पाणिनीयात्पूर्वं प्रवृत्तत्वेनादोषात्॥(५६६९)शेषम्-। प्रकारादिद्वित्वादन्यस्मिन्द्वित्वे परं सर्वमनुदात्तं स्यात्॥इति चतुर्थः पादः॥४॥

इति श्रीमन्मौनिकुलतिलकायमानश्रीगोवर्धनभट्टात्मजरघुनाथभट्टात्मजेन जयकृष्णेन कृतायां
सिद्धान्तकौमुदीव्याख्यायां सुबोधिन्याख्यायां फिट्सूत्रव्याख्या समाप्तिमगमत् ॥

---

अथ प्रत्ययस्वराः ।

( ५६७० ) अग्निरिति । 'अङ्गेर्निर्नलोपश्च ४६९४' इति निप्रत्ययः॥ कर्तव्यमिति । तव्यप्रत्ययः । तव्यतस्तु तित्स्वरितो वक्ष्यते । न च तव्यस्याप्याद्युदात्तत्वे 'उदात्तादनुदात्तस्य-५५३१' इति स्वरितो भवत्येवेति चेत् , सत्यम्-किंत्वयमसिद्धः, तित्स्वरस्तु सिद्ध इति प्रवृत्त्यप्रवृत्तिभ्यां महान् विशेषः । तव्यतस्तित्स्वमेव शेषनिघातपरिभाषाया यथोद्देशप्रवृत्तौ ज्ञापकमिति ध्येयम् ॥ ( ५६७१ ) युच्छतीति । 'युच्छ प्रमादे' । 'धातोः ५५४६' इत्यन्तोदात्तः । ततः परः शप् ' उदात्ता-

(सू) चितः । ६ । १ । १६३ । अन्त उदात्तः स्यात् ॥ ( ५६७३ ) (वा) चितः सप्रकृतेर्बह्वकजर्थम् ॥ चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थः । नभन्तामन्यके समे । यके सरस्वतीमनु । तकत्सु ते ॥ ( ५६७४ ) (सू) तद्धितस्य । ६ । १ । १६४ । चितस्तद्धितस्यान्त उदात्तः । पूर्वेण सिद्धे ञित्स्वरबाधनार्थमिदम् । कौञ्जायनाः ॥ ( ५६७५ ) (सू) कितः । ६ । १ । १६५ । कितस्तद्धितस्यान्त उदात्तः । यदाग्नेयः ॥ ( ५६७६ ) (सू) तिसृभ्यो जसः । ६ । १ । १६६ । अन्तः उदात्तः । तिस्रो द्यावः सवितुः ॥ ( ५६७७ ) (सू) सावेकाचस्तृतीयादिर्विभक्तिः । ६ । १ । १६८ । साविति सप्तमीबहुवचनम् । तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता । वाचा विरूपः । सौ किम् । राज्ञेत्यादौ एकाचोऽपि राजशब्दात्परस्य मा भूत् ॥ राज्ञो नु ते । एकाचः किम् । विधत्ते राजनि त्वे । तृतीयादिः किम् । न ददर्श वाचम् ॥ ( ५६७८ ) (सू) अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे । ६ । १ । १६९ । नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीयाविभक्तिरन्तोदात्ता वा स्यात् । परमवाचा ॥ ( ५६७९ ) (सू) अञ्चेश्छन्दस्यसर्वनामस्थानम् । ६ । १ । १७० । अञ्चेः परा विभक्तिरुदात्ता । इन्द्रो दधीचः । चाविति पूर्वपदान्तोदात्तत्वं प्राप्तम् । तृतीयादिरित्यनुवर्तमानेऽसर्वनामस्थानग्रहणं शस्परिग्रहार्थम् । प्रतीचो बाहून् ॥ ( ५६८० ) (सू) ऊडिदंपदाद्यप्पुम्रैद्युभ्यः । ६ । १ । १७१ । एभ्योऽसर्वनामस्थानविभक्तिरुदात्ता । प्रष्ठौहः । प्रष्ठौहा ॥ ( ५६८१ ) (वा) ऊठ्युपधाग्रहणं कर्त्तव्यम् ॥ इह मा भूत् । अक्षद्युवा । अक्षद्युवे । इदम् । एभिर्नृभिर्नृतमः । अन्वादेशे न । अन्तोदात्तादित्यनुवृत्तेः । स च तत्रान्तोदात्तताऽप्यस्तीति वाच्यम्, इदमोऽन्वादेशेऽशनुदात्त-

---

दनुदात्तस्य ५५३१' इति स्वरितः । 'स्वरितात्संहितायामनुदात्तानाम् ५५४३' इति तिपः प्रचयः ॥ ( ५६७२ ) चितः । ( ५६७३ ) सप्रकृतेरिति । नन्विदं कथं लभ्यमिति चेत्, शृणु—'चितः' इत्यवयवादेषा षष्ठी, न कार्यिणः । चिदोऽवयवस्तस्य संबन्धी यः समुदायः स कार्यी । अथवा चिदस्यास्ति स चितः । अर्शआदेराकृतिगणत्वादच् प्रत्ययः । षष्ठ्यर्थे प्रथमा । तेन चिद्वतः समुदायस्येत्यर्थः । अत्र च लिङ्गमकचश्चित्करणम्, अन्यथा तस्यैकाच्त्वादनर्थकं तत्स्यात् ॥ अन्यके इति । 'अव्ययसर्वनाम्नाम्–२७४०' इत्यकच् ततः परा टिरुदात्ता । एवं यके तकदित्यत्रापि यच्छब्दादकच् । बहुच उदाहरणं तु बहुपटव इत्यादि ज्ञेयम् ॥ ( ५६७४ ) ञित्स्वरबाधनार्थमिति । चफञश्चकारो 'व्रातच्फञोरस्त्रियाम् १५७६' इति विशेषणे चरितार्थः, ञकारो वृद्धौ । तत्रासत्यस्मिन्परत्वात् ञित्स्वरः स्यात् इति भावः ॥ कौञ्जायना इति । कुञ्जस्यापत्यानि बहूनि । 'गोत्रे कुञ्जादिभ्यश्च्फञ् १५७५', 'व्रातच्फञोरस्त्रियाम् १५७६' इति ञ्यः । 'ञ्यादयस्तद्राजाः २७९९' 'तद्राजस्य बहुषु–१६८५' ॥ (५६७५) आग्नेय इति । 'अग्नेर्ढक् १७४१' ॥ (५६७६) तिसृ–। अर्थगतं बहुत्वं शब्द आरोप्य बहुवचननिर्देशः । तिसृभ्यः परस्य जसोऽन्त उदात्तः स्यात् ॥ तिस्र इति । अन्तोदात्तत्रिशब्दस्य स्थाने तिसृ आदेशः स्थानिवद्भावादन्तोदात्तः । 'अनुदात्तौ सुप्पितौ ५६७१' इति जसनुदात्तः । अत्र 'अचि र ऋतः ४१७' इति रेफादेशे कृते 'उदात्तस्वरितयोर्यणः–५५२८' इति जसः स्वरितत्वं प्राप्तमनेन बाध्यते ॥ ( ५६७७ ) सप्तमीबहुवचनमिति । न प्रथमैकवचनम्, व्याख्यानात् ॥ राज्ञेत्यादाविति । सावित्येतस्मिन्नसति एकाचः परा तृतीयादिर्विभक्तिरुदात्ता भवतीत्यर्थो भवति, भवति चायमल्लोपे कृते एकाच् ॥ राज्ञ इति । राजशब्द आद्युदात्तः । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ४३५६' इति कनिन्नन्तत्वाद् ॥ ( ५६७८ ) अन्तोदात्ता—। 'एकाचः' इति वर्तते तृतीयादिविभक्तिरिति च । नित्यशब्दः स्वर्यते तेन नित्याधिकारगतिर्भवतीत्याहुः । नित्याधिकारेत्यादि । अनित्यसमासे किम् । अग्निचित् । 'अग्नौ चेः ४००७' इति क्विप्प्रत्ययः । उपपदसमासः । 'गतिकारकोपपदात्कृत् ५८४५' इति कृदुत्तरपदप्रकृतिस्वरेण चिच्छब्द उदात्तः । अधिकारग्रहणं किम्, विग्रहाभावमात्रेण यो नित्यसमासस्तत्र पर्युदासो मा भूत् । अवाचा ब्राह्मणेन । बहुव्रीहौ 'नञ्सुभ्याम् ५८७९' इत्यन्तोदात्तत्वम् । अत्र विभक्तेर्वैकल्पिक उदात्तो भवत्येव । अन्तोदात्तात्किम् । अवाचा नञ्समासोऽयम् । न तु बहुव्रीहिः । तेन 'नञ्सुभ्याम् ५८७९' इत्यन्तोदात्तत्वं न भवति, किंत्वव्ययपूर्वपदप्रकृतिस्वर एव भवतीत्यर्थः । उत्तरपदग्रहणं तु एकाच्त्वेनोत्तरपदं विशेषयितुम् । अन्यथा समासविशेषणं स्यात् । तथा च 'शुनः ऊर्कश्च श्वोर्कः' इत्यादावेवायं विधिः स्यात् । एकाच् किम् । राजदृषदा षष्ठीसमासात् टाप् ॥ ( ५६७९ ) दधीच इति । दध्यञ्चतीति 'ऋत्विक्–५०७' इत्यादिना क्विन् । 'अनिदिताम्–५५७' इति नलोपः । 'अचः ५५८' इत्यकारलोपः । 'चौ ५५९' इति दीर्घत्वम् । अत्र 'चौ ५५१८' इति पूर्वपदान्तोदात्तत्वं प्राप्तम् ॥ शस्परिग्रहार्थमिति । शसादिग्रहणं तु न कृतं नपुंसके शसि मा भूत्, सुटि यथा स्यादिति ॥(५६८०)ऊडिदं–। अत्रैकाच् इति वर्तते, अन्तोदात्तादिति च । एकाजन्तोदात्तेभ्यः परा सर्वनामस्थानविभक्तिरुदात्ता स्यात् । षष्ठौह इति । 'छन्दसि सहः ५२३७' 'वहश्च५२३८' इति ण्विः । 'वाह ऊठ् ४५३' उपपदसमासे प्रष्ठवाह्शब्दो 'गतिकारकोपपदात्कृत् ५८४५' इत्यन्तोदात्तः । अत्र प्रष्ठौहशब्दस्यानेकाच्त्वेऽपि ऊठ्शब्दस्यैकाच्त्वमेव ॥ ( ५६८१ ) ऊठ्युपधाग्रहणमिति । उपधाभूत ऊठ् गृह्यते, न त्वन्त्य इत्यर्थः । पञ्चमीनिर्देशात्परस्यैव ग्रहणे प्राप्ते वचनम् । तेनाक्षद्यूरित्यादौ विभक्तेराद्युदात्तत्वं न, अत्र हि अक्षैर्दीव्यतीति क्विप् । अन्तरङ्गत्वादूठ् । यण् । उपपदसमासत्वात् कृत्स्वरेणान्तोदात्तोऽयम् ॥ अन्वादेशे नेति । अत एव 'सावेकाचः–५६७७' इत्यपि स्वरो न

---

१–'सुनः नुर्कश्चोर्जा' इति मुद्रितलिखितपुस्तकपाठः ॥

स्तृतीयादाविति सूत्रेणानुदात्तस्य अशो विधानात् । प्रते बभ्रु । माभ्यां गा अनु । पद्दन्नोमास्हृन्निश् इति षट् पदादयः । पद्भ्यां भूमिः । दद्भिर्न जिह्वा । अहरहर्जायते मासिमासि । मनश्चिन्मे हृदआ । अप् । अपां फेनेन । पुम् । अभ्रातेव पुंसः । रै । राया वयम् । रायो धर्ता विवस्वतः । दिव् । उप त्वाग्ने दिवेदिवे ॥ ( ५६८२ ) ⓢ अष्टनो दीर्घात् । ६ । १ । १७२ । शसादिर्विभक्तिरुदात्ता । अष्टाभिर्दशभिः ॥ ( ५६८३ ) ⓢ शतुरनुमो नद्यजादी । ६ । १ । १७३ । अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात् । अच्छा रवं प्रथमा जानती । कृण्वते । अन्तोदात्तात्किम् । दधती । अभ्यस्तानामादिरित्याद्युदात्तः । अनुमः किम् । तुदन्ती । एकादेशोऽत्र उदात्तः । अदुपदेशात्परत्वाच्छतुर्लसार्वधातुक इति निघातः ॥ ( ५६८४ ) ⓢ उदात्तयणो हल्पूर्वात् । ६ । १ । १७४ । उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिर्विभक्तिश्च उदात्ता स्यात् । चोदयित्री सूनृतानाम् । एषा नेत्री । ऋतं देवाय कृण्वते सवित्रे ॥ ( ५६८५ ) ⓢ नोङ्धात्वोः । ६ । १ । १७५ । अनयोर्यणः परे शसादय उदात्ता न स्युः । ब्रह्मबन्ध्वा । सेत्पृश्निः सुभ्वे ॥ ( ५६८६ ) ⓢ ह्रस्वनुड्भ्यां मतुप् । ६ । १ । १७६ । ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः । या अब्दिमाँ उदनिमाँ इयर्त्ति । नुटः । अक्षण्वन्तः कर्णवन्तः सखायः । अन्तोदात्तात्किम् । मास्वा विदादिषुमान् । स्वरविधौ व्यञ्जनमविद्यमानवदित्येतदत्र न । मरुत्वानिन्द्र

---

यदि स्यात्तर्हीहान्तोदात्ताधिकारो व्यर्थः स्यात् । प्रते बभ्रू इति । भिन्ना ऋक् । अन्वादेशप्रदर्शनार्थं माभ्यामित्यत्रोक्ता ॥ **माभ्यामिति** । अत्र पूर्वार्द्धर्चे बभ्रूशब्देनोक्तयोरिहेदमा परामर्शेऽप्यन्वादेशोऽस्त्येव । अन्वादेशश्च कथितानुकथितमात्रम्, न त्विदमा कथितस्येदमैवानुकथनमिति भाष्योक्तेः ॥ **षट् पदादय इति** । न तु ततः परे एकाच इत्यनुवृत्तेः ॥ **( ५६८२ ) अष्टनो**—। दीर्घान्तादष्टनः परा सर्वनामस्थानविभक्तिरुदात्ता । 'झल्युपोत्तमम् ५५५८' इत्यस्यापवादः । अष्टन्शब्दो घृतादित्वादन्तोदात्तः । तेन उत्तरार्थमनुवर्तमानस्य 'अन्तोदात्तात्' इत्यस्येहापि नान्वयः । दीर्घात्किम् । अष्टभिः । इह 'झल्युपोत्तमम् ५५५८' इति स्वरः । ननु चात्रापि 'अष्टन आ विभक्तौ ५०२' इत्यनेन भवितव्यं तद्विधौ विकल्पस्याभावादिति चेत्, सत्यम्——इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति, नित्ये ह्यात्वे व्यावर्त्याभावाद्दीर्घग्रहणमनर्थकं स्यात् । कृतात्वस्य षट्संज्ञां च ज्ञापयति । अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यते इति किं दीर्घग्रहणेन ॥ **( ५६८३ ) जानतीति** । 'ज्ञाजनोर्जा ३३३०' इति जादेशः । 'श्नाभ्यस्तयोरातः ३२९८' इति श्नाकारलोपः । अत्र प्रत्ययस्वरेण शत्रन्तोदात्तम् ॥ **कृण्वत इति** । 'धिन्विकृण्व्योर च ३११२' ॥ **तुदन्तीति** । तुदादित्वाच्छः । 'आच्छीनद्योः—५९९' इति नुम् । प्रत्युदाहरणे द्व्यङ्गविकलतां परिहरति—**एकादेशो वोदात्त इति** । तुदन्तीत्यत्र शे कृते तस्मात्परस्य शतुरदुपदेशात्परत्वात् 'तास्यनुदात्तेत्—५६९५' इति निघाते 'एकादेश उदात्तेनोदात्तः ५५२९' इत्युदात्तत्वम् । अस्मिन्कर्त्तव्ये तस्यासिद्धत्वं नास्ति, 'अनुमः' इति प्रतिषेधाज्ज्ञापकात् । न ह्येकादेशस्वरेण विना शत्रन्तं सनुम्कमन्तोदात्तं भवति ॥ **( ५६८४ ) उदात्तयणो**—। 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ५५२२' इति प्राप्ते वचनम् ॥ **चोदयित्री नेत्री सवित्री इति** । तृजन्ता एते 'चितः ५६७२' इत्यन्तोदात्ताः । हल्पूर्वादिति किम् । बहुतितवा ब्राह्मण्या । स्त्रीलिङ्गोपादानं नाभावनिवृत्त्यर्थम् । 'तानोतेर्डउः सन्वच्च ४९३६' इति डउः । 'चालनी तितउः पुमान्' । 'बहोर्नञ्वदुत्तरपदभूम्नि ५८८२' इति बहुव्रीहिरन्तोदात्तः । तत्र 'उदात्तस्वरितयोः—५५२८' इति विभक्तेः स्वरितत्वम् । अस्मिन्सूत्रे नकारग्रहणं च कर्त्तव्यम् । उदात्तस्थाने यो नकारस्ततोऽपि परस्या नद्या उदात्तत्वं वक्तव्यमित्यर्थः । तेन वाचां पतिः वाक्पत्नीति सिद्धम् । अत्र हि 'पत्यावैश्वर्ये ५७१९' इति पूर्वपदप्रकृतिस्वरस्य 'न भूवाक्चिद्दिधिषु ५७२०' इति प्रतिषेधात्समासान्तोदात्तत्वे 'विभाषा सपूर्वस्य ६८२' इति नकारे नान्तत्वान्ङीबनेनोदात्तः ॥ **( ५६८५ ) नोङ्**—। **शसादय इति** । यद्यपि पूर्वसूत्रे 'नद्यजादी' इत्यनुवर्तते, तथापि ऊङ्धात्वोर्यणः परा नदी न संभवतीति नानुवर्तिता । **ब्रह्मबन्ध्वेति** । ऊङ् प्रत्ययस्वरेणोदात्तः । तेन सह च एकादेशः सोऽप्युदात्तः । तस्मात्परस्योदात्तत्वे प्रतिषिद्धे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ५५२८' इति विभक्तिः स्वरिता ॥ **सुभ्वे इति** । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य 'ओः सुपि ३९३' इति यण् ॥ **( ५६८६ ) अब्दिमानिति** । आपो दीयन्तेऽस्मिन्निति 'कर्मण्यधिकरणे च ५०६६' इति किः । उदनिशब्दोऽव्युत्पन्नः । अस्य घृतादित्वादन्तोदात्तत्वं बोध्यम् । अन्यथा 'युतान्यण्यन्तानाम् ५६३८' इति द्वितीयस्योदात्तत्वं प्रसज्यते । 'मतुवसो रु सम्बुद्धौ छन्दसि ५४९२' इति रुः । 'आतोऽटि नित्यम् ५४९७' इत्यनुनासिकः ॥ **अक्षण्वन्त इति** । आक्षिशब्दान्मतुप् 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ४४५' इति 'छन्दस्यपि दृश्यते ५४२९' इत्यनङ् । 'अनो नुट् ५४६१' इत्यस्यासिद्धत्वात्पूर्वं नलोपः । ततो भूतपूर्वगत्या मतुपो नुट् । 'मादुपधायाः—२५६२' इति वत्वम् ॥ **इषुरिति** । 'धान्ये नित् ४२०७' इत्यधिकारे 'इषेः किच्च ४२११' इति उप्रत्ययान्त आद्युदात्तः इषुशब्दः तस्मात्परो मतुबनुदात्त एव । ननु मरुतोऽस्य सन्तीति मरुत्वान् अत्र मतुबुदात्तत्वं प्राप्नोति 'मृग्रोरुतिः ४२९३' इत्युतिप्रत्यये प्रत्ययस्वरेण मरुच्छब्दस्यान्तोदात्तत्वात् । न च तकारेण व्यवधानं स्वरविधौ व्यञ्जनस्याविद्यमानत्वात् । अत आह **स्वरविधाविति नेति** । 'समासस्य' इति सूत्रे मरुत्वानित्यत्र

नियुत्वान्वा यवागहि ॥ ( ५६८७ ) (वा) रेशब्दाच्च ॥ रेवाँ इद्रेवतः ॥ ( ५६८८ ) (सू) नामन्यतरस्याम् । ६ । १ । १७७ । मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नामुदात्तो वा । चेतन्ती सुमतीनाम् ॥ ( ५६८९ ) (सू) ङ्याश्छन्दसि बहुलम् ।६ । १ । १७८ । ङ्याः परो नामुदात्तो वा । देवसेनानामभिभञ्जतीनाम् । वेत्युक्तेर्नेह । जयन्तीनां मरुतो यन्तु ॥ (५६९०) (सू) षट्त्रिचतुर्भ्यो हलादिः । ६ । १ । १७९ । एभ्यो हलादिर्विभक्तिरुदात्ता ! आ षड्भिर्हूयमानः । त्रिभिष्ट्वं देव ॥ ( ५६९१ ) (सू) न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः । ६।१।१८२ । एभ्यः प्रागुक्तं न । गवां शता । गोभ्यो गातुम् । शुनश्चिच्छेपम् । सौ प्रथमैकवचने अवर्णान्तात् । तेभ्यो द्युम्नम् । तेषां पाहि श्रुधी हवम्॥ ( ५६९२ ) (सू) दिवो झल् । ६ । १ । १८३ । दिवः परा झलादिर्विभक्तिर्नोदात्ता । द्युभिरक्तुभिः । झलिति किम् । उप त्वाग्ने दिवेदिवे ॥ ( ५६९३ ) (सू) नृ चान्यतरस्याम् । ६ । १ । १८४ । नुः परा झलादिर्विभक्तिर्वोदात्ता । नृभिर्येमानः ॥ ( ५६९४ ) (सू) तित्स्वरितम् । ६ । १ । १८५ । निगदव्याख्यातम् । क्व नूनम् ॥ ( ५६९५ ) (सू) तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः । ६ । १ । १८६ । अस्मात्परं लसार्वधातुकमनुदात्तं स्यात् । तासि । कर्ता । कर्तारौ । कर्तारः । प्रत्ययस्वरापवादोऽयम् । अनुदात्तेत् । य आस्ते । ङितः । अभिचष्टे अनृतेभिः । अदुपदेशात् । पुरुभुजा चनस्यतम् । चित्स्वरोऽप्यनेन बाध्यते । वर्धमानं

---

'ह्रस्वनुड्भ्यां मतुप् ५६८६' इति स्वरः प्राप्नोतीति दोषमुद्भाव्य 'हल्स्वरप्राप्तौ' इति भाष्योक्तेरिति भावः ॥ ( ५६८७ ) **रेवानिति** । रयिरस्यास्तीति मतुप् 'रयेर्मतौ बहुलम् ५३५७' इति संप्रसारणं पूर्वरूपत्वम् । 'आद्गुणः १०४' ततो ह्रस्वाभावाद्वचनम् ॥ ( ५६८८ ) **नामन्य—**। ह्रस्वग्रहणमनुवर्तते मतुब्ग्रहणं च तद्धि सप्तम्या विपरिणम्यते । तेन ह्रस्वो विशेष्यते तदाह–**मतुपि यो ह्रस्व इति । सुमतीनामिति** । सुमतिशब्दो बहुव्रीहिः । 'नञ्सुभ्याम् ५८७९' इत्यन्तोदात्तः । मतुपा ह्रस्वविशेषणं किम् । भूतपूर्वेऽपि ह्रस्वे यथा स्वरः स्यात्, अग्नीनामित्यादौ । अन्यथा परत्वान्नित्यत्वाच्च दीर्घत्वे कृते ह्रस्वाभावान्न स्यात् तिसृणामित्यत्र सांप्रतिके ह्रस्वे स्यात् । सांप्रतिकाभावे हि भूतपूर्वगतिर्भवति, न तु सत्यपि तस्मिन् । नन्वेवं तिसृणामित्यत्र न स्यात्, मतुपि तिसृभावस्यैवाभावात् । इष्टमेवैतत्संगृहीतम् अत्र हि 'षट्त्रिचतुर्भ्यो हलादिः ५६९०' इति नित्यमेव विभक्तेरुदात्तत्वमिष्यते ॥ (५६९०) **षट्त्रि–**। 'अन्तोदात्तात्' इत्येतान्निवृत्तम् । यद्येतदनुवर्तेत पंचानां नवानां चतुर्णामित्यत्र न स्यात् । 'त्रः संख्यायाः ५६१०' इत्याद्युदात्तत्वात्, क्व तर्हि स्यात्, सप्तानामष्टानाम् । सप्ताष्टशब्दौ घृतादित्वादन्तोदात्तौ । हलादिः किम् । चतस्रः पश्य । यथैतदिह हलादिग्रहणस्य व्यावर्त्यं तथा 'चतुरः शसि ५५५७' इत्यत्रैवावोचाम ॥ ( ५६९१ ) **न गो—**। 'सौ' इति यदि सप्तमीबहुवचनग्रहणं स्यात् ( तर्हि ) तेभ्यः केभ्यः इत्यत्र न स्यात्, तत्किंशब्दयोः सप्तमीबहुवचने परतः त्यदाद्यत्वे कृते 'बहुवचने झल्येत् २९१' इत्येत्वविधानात्' तेषु केषु इत्यत्रावर्णान्तत्वाभावात् । ताभिर्याभिरित्यादावेव स्यात् तासु यास्वित्यत्रावर्णान्तत्वात् । तस्मात्प्रथमैकवचनमित्याह–**सौ प्रथमैकवचन इति** । अनन्तप्रतिषेधस्यासंभवात् षाष्ठिकस्वरस्य प्रतिषेधो विज्ञायते इत्याह––**प्रागुक्तं नेति** । एवं च वीरवत्तममित्यत्र 'ह्रस्वनुड्भ्यां मतुप् ५६८६' इति न भवति 'स्फायितञ्चि–४३७२' इत्यादिना रकि अन्तोदात्तो वीरशब्दः ॥ **गोभ्य इति** । 'सावेकाचः–५६७७' इति प्राप्तम् ॥ **शुनश्चिच्छेपमिति** । अत्र चिदिति पदं संहितापाठे बाहुलकात् शुनःशेपशब्दस्य मध्ये प्रक्षिप्यते, पदकाले तु 'शुनः शेपं चित्' इति पठ्यते 'शेपपुच्छलाङ्गूलेषु शुनः १४०६' इत्यलुक् वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः । श्वन्शब्दे तेभ्यः तेषामित्यत्र च 'सावेकाचः–५६७७' इति प्राप्तं प्रतिषिध्यते । **राडिति–**। क्विबन्तः राजा ॥ **अङ्ङिति** । अञ्चतिः क्विबन्तः । तस्य सनकारस्य ग्रहणं विषयावधारणार्थम् । यत्र नलोपो नास्ति तत्रैव प्रतिषेधो यथा स्यात् । प्राञ्चा । प्राङ्भ्याम् । 'नाञ्चेः पूजायाम् ५६८' इति प्रतिषिध्यते नलोपः । 'अञ्चेश्छन्दस्यसर्वनामस्थानम् ५६७९' इति प्राप्तं निषिध्यते । गतौ तु विभक्त्युदात्तः स्यादेव । प्राचा प्राचे ॥ **क्रुङ्ङिति** । क्विन्नन्तः । क्रुञ्चा । 'क्रुञ्च कौटिल्याल्पीभावयोः' । 'ऋत्विक्—५०७' इत्यादिना क्विन् । तत्रैव सूत्रे 'क्रुञ्च' इति निपातनान्नलोपाभावः ॥ **कृत्–**। करोतिः कृन्ततिर्वा क्विबन्तः कृताकृते ॥ ( ५६९२ ) **दिवो—। झलादिरिति** । नन्वसति सप्तमीनिर्देशे कथं पुनरत्र तदादिविधिः । केवलझलात्मिकाया विभक्तेरभावादेव तदादिविधिः । ननु तर्हि तदन्तविधिरस्तु का पुनर्झलन्ता विभक्तिः । शसादिः सकारान्ता इति चेत्, सत्यम् 'षट्त्रिचतुर्भ्यो हलादिः ५६९०' इत्यत आदिरिति वर्तते । दिवः परा विभक्तिर्नोदात्ता भवति, कीदृशी या स्याज्झलादिरिति । **द्युभिरिति** । 'सावेकाचः–५६७७' इति वा, 'ऊडिदम्–५६८०' इति वा प्राप्तः स्वरः प्रतिषिध्यते । **दिवेदिवे इति** । 'ऊडिदंपदात्–५६८०' इति विभक्तिरुदात्ता ॥ ( ५६९४ ) **तित्स्वरितम् । निगदव्याख्यातमिति** । उच्चारणेनैव व्याख्यातमित्यर्थः । **क्वेति** । 'किमोऽत् २६६०' । 'तित्स्वरितम् ५६९४' 'क्वाति २६६१' इति किमः क्वादेशः ॥ ( ५६९५ ) **तास्यनु––**। तास्यादीनां समाहारद्वन्द्वः । उपदेशग्रहणं संभवव्यभिचाराभ्यां ङिदद्भ्यां संबध्यते, न तु तास्यनुदात्तेद्भ्याम् ङिदिति कर्मधारयः । उपदिश्यत इत्युपदेशः । तस्याकारेण ङिता च विशेषणात्तदन्तविधिः । तथा च सूत्रार्थः–तासेरनुदात्तेतो ङिददुपदेशादकारान्तोपदेशाच्च परं लसार्वधातुकमनुदात्तं स्यात् ह्न्विङौ वर्जयित्वा । **कर्तेत्यादि** । 'लुटः प्रथमस्य डारौरसः २९४३' एकवचने डित्त्वाट्टिलोपः । इतरत्र 'रि च २९४७' इति सलोपः ॥ **आस्त इति** । अदादित्वाच्छपो लुक् ।

स्वे दमे । तास्यादिभ्यः किम् । अभि वृधे गृणीतः । उपदेशग्रहणात् नेह । हतो वृत्राण्यार्या । लग्रहणं किम् । कतीह निघ्नानाः । सार्वधातुकं किम् । शिश्ये । अह्विङोः किम् । ह्नुते । यदधीते ॥ ( ५६९६ ) (वा) विन्दीन्धिखिदिभ्यो नेति वक्तव्यम् ॥ इन्द्धे राजा । एतच्चानुदात्तस्य च यत्रेति सूत्रे भाष्ये स्थितम् ॥ ( ५६९७ ) (सू) आदिः सिचोऽन्यतरस्याम् । ६ । १ । १८७ । सिजन्तस्यादिरुदात्तो वा । यासिष्टं वर्तिरश्विनौ ॥ (५६९८) (सू) थलि च सेटीडन्तो वा । ६ । १ । १९६ । सेटि थलन्ते पदे इडुदात्तः अन्तो वा आदिर्वा स्यात् । यदा नैते त्रयस्तदा लितीति प्रत्ययात्पूर्वमुदात्तं स्यात् । लुलविथ । अत्र चत्वारोऽपि पर्यायेणोदात्ताः ॥ (५६९९) (सू) उपोत्तमं रिति । ६ । १ । २१७ । रित्प्रत्ययान्तस्योपोत्तममुदात्तं स्यात् । यदाहवनीये ॥ इति प्रत्ययस्वराः ॥

( ५७०० ) (सू) समासस्य । ६ । १ । २२३ । अन्त उदात्तः स्यात् । यज्ञश्रियम् ॥ ( ५७०१ ) (सू) बहुव्रीहौ प्रकृत्या पूर्वपदम् । ६ । २ । १ । उदात्तस्वरितयोगि पूर्वपदं प्रकृत्या स्यात् । सत्याश्चित्रश्रवस्तमः । उदात्तेत्यादि किम् । सर्वानुदात्ते पूर्वपदे समासान्तोदात्तत्वमेव यथा स्यात् । समपादः ॥ ( ५७०२ ) (सू) तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः । ६ । २ । २ । सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्या । तुल्यश्वेतः । कृत्यैस्तुल्याख्या अजात्येति तत्पुरुषः । किरिणा काणः किरिकाणः । पतयन्मन्दयत्सखम् । मन्दयति मादके इन्द्रे सखेति सप्तमी-

---

ङित इति । अस्याप्युपदेशविशेषणान्नेह । श्रृणुते जारितुर्हवम् । अत्र श्नुरतिदेशेन ङित् । चनस्यतामेति । चनोऽन्नन्तदात्मन इच्छन्तामित्यर्थः क्यच् । लोट् , थसस्तम् , शप् स चानुबन्धस्यानेकान्तत्वाददुपदेशः । चित्स्वरोऽपीति । चित्स्वरस्यावकाशः चलनः, 'चलनशब्दार्थादकर्मकाद्युच् ४१४९' अस्यावकाश आस्ते इत्यादौ, वर्द्धमानमित्यत्र त्वयं निघातश्चित्स्वरं बाधते परत्वादिति भावः ॥ वर्द्धमानमिति । वृधु वृद्धौ । लटः शानच् । शप्, 'आने मुक् ४१२०' इति मुक् । न चात्र मुका व्यवधानम् । यद्यकारस्यागमो मुक्, तदाऽकारोपदेशात् परं लसार्वधातुकमिति सिद्धो निघातः । स्वावयवेन व्यवधानाभावात् । यद्यकारान्तस्याङ्गस्य भक्तो मुक्, तदाऽदुपदेशलसार्वधातुकमात्रापेक्षत्वादन्तरङ्गस्वरं प्रत्यकारान्तविशिष्टाङ्गप्रत्ययापेक्षस्य बहिरङ्गस्य मुकोऽसिद्धत्वात्सिद्धो निघातः ॥ हत इति । यद्यपि 'अनुदात्तोपदेश-३२३४' इत्यनुनासिकलोपे कृते सत्यकारान्तात्परं लसार्वधातुकं भवति तथाप्युपदेशग्रहणान्न भवति न हि हन्तिरदन्त उपदिश्यते ॥ कतीह पचमाना इति । 'ताच्छील्यवयोवचनशक्तिषु चानश् ४९२१' । क्वचित्तु 'कतीह निघ्नानाः' इति दृश्यते । तत्र निघ्नशब्दादाचारक्विबन्ताच्छान्दसो मुगभावः । तत्तु तास्यादिभ्यः परत्वाभावाच्चिन्त्यम् ॥ शिश्ये इति । 'एरनेकाचः-३८०' इति यणादेशः । 'लिट् च २९२६' इत्यार्द्धधातुकमेतत् ॥ यदधीत इति । यच्छब्दप्रयोगो 'निपातैर्यद्यदिहन्त—५९१३' इति निघातप्रतिषेधार्थः । अत्र प्रत्ययाद्युदात्तत्वमेव । (५६९५) 'विद विचारणे' 'इन्धी दीप्तौ' 'खिद दैन्ये' इति त्रयोऽनुदात्तेतः । तेभ्यः परस्य सार्वधातुकस्यानुदात्तत्वे प्राप्ते आह-विन्दीत्यादि । एभ्यः परस्य लसार्वधातुकस्यानुदात्तत्वं नेति वक्तव्यमित्यर्थः ॥ ( ५६९७ ) यासिष्टमिति । या प्रापणे लुङ् थसस्तम् । 'च्लि लुङि २९७६' 'च्लेः सिच् २९७७' 'यमरमनमाताम्-३१७१' इतीट्सकौ 'बहुलं छन्दस्यमाङ्योगेऽपि ५३९७' इत्यडभावः । इदमाद्युदात्तत्वाभावे उदाहरणम् । आद्युदात्तत्वे तूदाहरणान्तरं मृग्यम् ॥ ( ५६९८ ) थलि-। 'णमुल्यन्यतरस्याम्' इत्यतोऽन्यतरस्यामित्यनुवर्तमाने वाग्रहणं कार्यिविकल्पार्थम् । अन्यतरस्यांग्रहणेन कार्यविकल्पस्य सिद्धत्वात् । तेनेडादयः पर्यायेण कार्यं प्रतिपद्यन्ते । ननु 'तवै चान्तश्च युगपत् ५७५५' इत्यादौ युगपद्ग्रहणादेवाऽन्यत्र पर्यायः सिद्धः । सत्यम्-आदरेऽपि प्राप्त्यर्थं वाग्रहणम् । अन्यथा श्रुतयोरिडन्तयोरेव कार्यित्वं विकल्प्येत । सेटीति किम् । यथा थलि स्वरः । नन्विड्ग्रहणात्सेडेव थल् ग्रहीष्यत इति चेत्, सत्यम् । इड्ग्रहणं तु यदेडागमः क्रियते, तदा तस्योदात्तार्थं स्यात् । यथा 'कर्तुः क्यङ् सलोपश्च ३५४१' इत्यत्र सः । ततश्च यथा लुलविथेत्यादौ चतुर्णां पर्यायेणोदात्तविधाने ययिथेत्यादौ चतुर्थाभावेऽपि पर्यायेणोदात्तत्रयं भवति एवमिडभावेऽपि स्यादित्यर्थः ॥ ( ५६९९ ) आहवनीय इति । बाहुलकादधिकरणेऽनीयर् । प्रीणनार्थात्कर्मणि वा । ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः ॥ इति प्रत्ययस्वराः ॥

( ५७०० ) समासस्य । यज्ञश्रियमिति । षष्ठीतत्पुरुषः । श्रीशब्दस्योदात्तत्वे कृते आन्तरतम्यादियङुदात्तः ॥ ( ५७०१ ) बहुव्रीहौ-। इहोदात्तस्वरितग्रहणमनुवर्त्तमानं तद्वति वर्तते । पूर्वपदसामानाधिकरण्यात्सूत्रे 'प्रकृत्या' इत्येतावदुक्तेऽपि स्वरप्रकरणात्प्रकृतिस्वरेणैव प्रकृतिभावो विज्ञायते, पूर्वपदस्य प्रकृतिभावस्तत्स्थयोरुदात्तस्वरितयोः प्रकृतिभावद्वारेणेत्याशयेनाह-उदात्तस्वरितयोगीति । चित्रेति । श्रूयते इति श्रवः कीर्तिः । चित्रं श्रवो यस्य स चित्रश्रवाः । ततस्तमप् चित्रशब्दः फिट्स्वरेणान्तोदात्तः । ततः परस्य 'उदात्तादनुदात्तस्य-५५३१' इति स्वरितः । ततः परस्य 'स्वरितात्संहितायामनुदात्तानाम् ५५४३' इति प्रचयः ॥ समपाद इति । 'त्वत्त्वसमसिमेत्यनुच्चानि ५६६०' इति सर्वानुदात्तः समशब्दः, पादशब्दो 'वृषादीनां च ५५६६' इत्याद्युदात्तः । अत्र समासान्तोदात्तत्वमेव ॥ ( ५७०२ ) तुल्यश्वेत इति । 'नौवयोधर्मविष-२२३७' इति यति, 'यतोऽनावः ५५७६' इत्याद्युदात्तस्तुल्यशब्दः । सदृक्श्वेतः । सदृशः श्वेत इति 'समानान्ययोश्च ३९७२' इति क्विन्नन्तः सदृक्शब्दः 'गतिकारकोपपदात्कृत् ५८४५' इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । एवं सदृशशब्दः कञन्तो मध्योदात्तः ॥ किरिणेति । 'कॄगॄशॄपॄहिमिदिच्छिदिभ्यश्च ४७८८' इत्यौणादिक इः स च कित् । 'भुजेः किच्च ४७८७'

तत्पुरुषः । शस्त्रीश्यामा ॥ ( ५७०३ ) वा० अव्यये नञ्कुनिपातानाम् ॥ अयज्ञो वा एषः । परिगणनं किम् । स्नात्वाकालकः । मुहूर्तसुखम् । भोज्योष्णम् ॥ ( ५७०४ ) सू० वर्णो वर्णेष्वनेते । ६ । २ । ३ । वर्णवाचिन्युत्तरपदे एतवर्जिते वर्णवाचि पूर्वपदं प्रकृत्या तत्पुरुषे । कृष्णसारङ्गः । लोहितकल्माषः । कृष्णशब्दो नक्प्रत्ययान्तः । लोहितशब्दः इतन्नन्तः । वर्णः किम् । परमकृष्णः । वर्णेषु किम् । कृष्णतिलाः । अनेते किम् । कृष्णैतः ॥ ( ५७०५ ) सू० गाधलवणयोः प्रमाणे । ६ । २ । ४ । एतयोरुत्तरपदयोः प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् । अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थः । गोलवणम् । यावद्गवे दीयते तावदित्यर्थः । अरित्रशब्द इत्रान्तो मध्योदात्तः । प्रमाणमियत्तापरिच्छेदमात्रं न पुनरायाम एव । प्रमाणे किम् । परमगाधम् ॥ ( ५७०६ ) सू० दायाद्यं दायादे । ६ । २ । ५ । तत्पुरुषे प्रकृत्या । धनदायाद्यः । धनशब्दः क्युप्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः । दायाद्यं किम् । परमदायादः ॥ (५७०७) सू० प्रतिबन्धि चिरकृच्छ्रयोः ।६।२।६। प्रतिबन्धवाचि पूर्वपदं प्रकृत्या एतयोः परतस्तत्पुरुषे । गमनचिरम् । व्याकरणकृच्छ्रम् । गमनं कारणविकलतया चिरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते । प्रतिबन्धि किम् । मूत्रकृच्छ्रम् ॥ (५७०८) सू० पदेऽपदेशे ।६।२।७। व्याजवाचिनि पदशब्दे उत्तरपदे पूर्वपदं प्रकृत्या तत्पुरुषे । मूत्रपदेन प्रस्थितः । उच्चारपदेन । मूत्रशब्दो घञन्तः । उच्चारशब्दो घञन्तस्थाथादिस्वरेणान्तोदात्तः । अपदेशे किम् । विष्णुपदम् ॥

---

इत्यतः किदित्यनुवर्त्तनात् । तेन किरिगिरिशब्दौ प्रत्ययस्वरेणान्तोदात्तौ ॥ **मन्दयत्सखमिति** । 'मदि स्तुत्यादिषु' ण्यन्ताल्लटः शत्रादेशः । तस्य 'छन्दस्युभयथा ५२७०' इत्यार्द्धधातुकत्वेन शबभावात् 'तास्यनुदात्तेन्ङिददुपदेशात्-५६९५' इति निघातो न । अतः प्रत्ययाद्युदात्तत्वमेव 'णेरनिटि ३०८८' इति णिलोपस्तु न, तं प्रति सार्वधातुकत्वाश्रयणात् । न च वैपरीत्यमापादनीयम् । छन्दसि दृष्टानुविधानात् । इत्थं मन्दयच्छब्दोऽन्तोदात्तः ॥ **शस्त्रीश्यामेति** । 'उपमानानि सामान्यवचनैः १०६०' इति समासः । शस्त्रीशब्दो गौरादिङीषन्तोऽन्तोदात्तः ॥ (५७०३) **अव्यये**—। निपातत्वादेव सिद्धे नञ्ग्रहणमकरणिरित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थम् । अकरणिरित्यादौ 'आक्रोशे नञ्यनिः ५१०५' इत्यनिः । किञ्च तिस्र इत्यत्र 'तिसृभ्यो जसः ५६७६' इति सतिशिष्टोऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते । अपि च चत्वारः अनड्वाह इत्यत्र सतिशिष्टोऽप्याम्स्वरो बाध्यते । अव्ययीत्यत्र 'जिदृक्षि-४१५८' इत्यादिना धातुना समासं निपात्य इनिः क्रियते । तस्यापि स्वरस्य बाधनार्थं, कुग्रहणं चादिषु पाठाभावात् ॥ **स्नात्वेति** । मयूरव्यंसकादिरयम् । नन्वयं तत्रैवान्तोदात्तो निपात्यतामिति चेन्न, सामिकृतं स्वयं धौतमित्यादिवारणाय परिगणनस्यावश्यकत्वात् । अन्यथा तत्रापि पूर्वपदप्रकृतिस्वरः स्यात् । इष्यते तु 'समासस्य ५७००' इत्यन्तोदात्तः । सामिकृतमित्यादौ 'सामि ९९७' 'स्वयं क्तेन ९९५' इति समासः ॥ **मुहूर्तसुखमिति** । 'कालाध्वनोः-८११' इति द्वितीया । 'अत्यन्तसंयोगे च ९९९' इति समासः । मुहूर्त्तशब्दः पृषोदरादिरन्तोदात्तः ॥ **भोज्योष्णमिति** । 'कृत्यतुल्याख्या-१०७८' इति समासः । भोज्यशब्दो ण्यदन्तः । 'तित्स्वरितम् ५६९४' इति स्वरितान्तः ॥ (५७०४) **वर्णो वर्णे**—। अत्र एत इति प्रतिषेधाद्बहुवचननिर्देशाच्च उत्तरपदे स्वरूपग्रहणं न, तत्साहचर्यात्पूर्वपदेऽपि स्वरूपग्रहणं न तदाह—**वर्णवाचिनीत्यादि** । कृष्णशब्दो नक्प्रत्ययान्त इति 'कृषेर्वर्णे४४८७'इति विहितो यो नक् तदन्त इत्यर्थः । कृष्णशब्दः 'कृष्णस्यामृगाख्या चेत् ५५९३' इत्यन्तोदात्तो वेदे, भाषायां तु 'वर्णानां तणतिनितान्तानाम् ५६१५' इत्याद्युदात्तः । **इतन्नन्त इति** । 'रुहे रश्च लो वा ४५७७' इति इतन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । **कृष्णतिला इति** । 'वर्णो वर्णेन १०७९' इति प्रतिपदोक्तः समास इह गृह्यते, तेनैव सिद्धे वर्णग्रहणं चिन्त्यप्रयोजनम् ॥ ( ५७०५ ) **गाध**—। **अरित्रगाधमिति** । अरित्रं नौकाष्ठं तस्य गाधं स्पृश्यमानं तलम् । गाध्यत इति गाधः 'गाधृ प्रतिष्ठायाम्' कर्मणि घञ् । अर्द्धर्चादित्वात् क्लीबत्वम् ॥ **गोलवणमिति** । षष्ठीसमासः । गोशब्दो 'गमेर्डोः ४४२८' इति डोप्रत्ययान्तोऽन्तोदात्तः ॥ **इत्रान्त इति** । 'अर्तिलूधूसूखनसहचर इत्रः ४१९६' इति विहितः ॥ **मध्योदात्त इति** । प्रत्ययस्वरेण ॥ **इयत्तापरिच्छेदमात्रमिति** । इयत्तायाः परिच्छित्तिरियत्तापरिच्छेदः । क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्यते, न पुनरायाममात्रे रूढ इत्यर्थः ॥ ( ५७०६ ) **दायाद्यम्**—। दातव्यो दायोंऽशः । दायमादत्ते दायादः । मूलविभुजादित्वात्कः दायादस्य भावो दायाद्यम् । दायस्य दानं तत्संबन्धो वा । इह तु लक्षणया आदीयमाने दाय एव दायाद्यशब्दो वर्तते दायादशब्दे परे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं स्यात् ॥ **क्युप्रत्ययान्त इति** । 'कृपॄवृजिमन्दिनिधाञः क्युः ४४४२' इति विहितः ॥ **परमदायाद इति** । अत्र समासान्तोदात्तत्वमेव ॥ ( ५७०७ ) **प्रतिबन्धि**—। कार्यसिद्धिं प्रतिबध्नातीति प्रतिबन्धि । आवश्यके णिनिः ॥ **गमनञ्चिरं व्याकरणकृच्छ्रमिति** । गमनव्याकरणशब्दौ ल्युडन्तौ । तयोर्लित्स्वरः । अत्र विशेषणसमासः । ननु सामानाधिकरण्ये सति विशेषणसमासो भवति । न चेह तदस्ति, गमनशब्दस्य गतिवाचित्वाच्चिरशब्दस्य कालवाचित्वात् । नैष दोषः—चिरकालवाचिनि गमनेऽत्र चिरशब्दो वर्तते, गमनमत्र विशेष्यम्, तद्विशेषणे तु चिरकृच्छ्रे, तत्र विशेष्यस्य पूर्वनिपातनार्थं मयूरव्यंसकादित्वमप्येष्टव्यम् । पूर्वपदस्य प्रतिबन्धिवाचित्वमुपपादयति—**गमनमित्यादि** । कारणवैकल्याद्धि चिरकालभावि गमनं कार्यसिद्धेः प्रतिबन्धि जायते ॥ **कृच्छ्रयोगि वा** । कृच्छ्रं दुःखं तद्योगि वा कार्यसिद्धेः प्रतिबन्धि जायते ॥ **मूत्रकृच्छ्रमिति** । षष्ठीसमासः ॥ ( ५७०८ ) **पदेऽपदेशे** । अपदेशो व्याजः । 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरात्तदाह—**व्याजवाचिनीति** । **उच्चारपदेनेति** । उच्चारः

( ५७०९ ) (सू) निवाते वातत्राणे । ६।२।८। निवातशब्दे परे वातत्राणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या । कुटीनिवातम्। कुड्यनिवातम् । कुटीशब्दो गौरादिङीषन्तः । कुड्यशब्दो ड्यगन्तः । यगन्त इत्यन्ये । वातत्राणे किम् । राजनिवाते वसति । निवातशब्दोऽयं रूढः पार्श्वे ॥ ( ५७१० ) (सू) शारदेऽनार्तवे । ६ । २ । ९ । ऋतौ भवमार्तवम् । तदन्यवाचिनि शारदशब्दे परे तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात् । रज्जुशारदमुदकम् । शारदशब्दो नूतनार्थः । तस्यास्वपदविग्रहः । रज्जोः सद्य उद्धृतम् । रज्जुशब्दः सृजेरसुम् चेत्याद्युदात्तो व्युत्पादितः । अनार्तवे किम् । उत्तमशारदम् ॥ ( ५७११ ) (सू) अध्वर्युकषाययोर्जातौ । ६ । २ । १० । एतयोः परतो जातिवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम् । कठाध्वर्युः । दौवारिककषायः । कठशब्दः पचाद्यजन्तः । तस्माद्वैशम्पायनाऽन्तेवासिभ्यश्चेति णिनेः कठचरकाल्लुगिति लुक् । द्वारि नियुक्त इति ठक्यन्तोदात्तो दौवारिकशब्दः । जातौ किम् । परमाध्वर्युः ॥ ( ५७१२ ) (सू) सदृशप्रतिरूपयोः सादृश्ये । ६ । २ । ११ । अनयोः पूर्वं प्रकृत्या । पितृसदृशः । सादृश्ये किम् । परमसदृशः । समासार्थोऽत्र पूज्यमानता न सादृश्यम् ॥ ( ५७१३ ) (सू) द्विगौ प्रमाणे । ६ । २ । १२ । द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम् । प्राच्यसप्तसमः । सप्त समाः प्रमाणमस्य । प्रमाणे लो द्विगोर्नित्यमिति मात्रचो लुक् । प्राच्यशब्द आद्युदात्तः । प्राच्यश्चासौ सप्तसमश्च प्राच्यसप्तसमः । द्विगौ किम् । व्रीहिप्रस्थः । प्रमाणे किम् । परमसप्तसमम् ॥ ( ५७१४ ) (सू) गन्तव्यपण्यं वाणिजे । ६।२।१३ । वाणिजशब्दे परे तत्पुरुषे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरम् । मद्रवाणिजः । गोवाणिजः । सप्तमीसमासः । मद्रशब्दो रक्प्रत्ययान्तः । गन्तव्येति किम् । परमवाणिजः ॥ (५७१५) (सू) मात्रोपज्ञोपक्रमच्छाये नपुंसके । ६ । २ । १४ । मात्रादिषु परतो नपुंसकवाचिनि तत्पुरुषे तथा । भिक्षायास्तुल्यप्रमाणं भिक्षामात्रम् । भिक्षाशब्दो गुरोश्च हलः इत्यप्रत्ययान्तः । पाणिन्युपज्ञम्।

---

पुरीषक्रिया ॥ विष्णुवदमिति । षष्ठीसमासः॥(५७०९)निपाते-। निवातशब्दे परे वातत्राणवाचिनीति। वातत्राणार्थे निवातशब्दे परे इत्यर्थः । वातस्याभावो निवातमित्यव्ययीभावः । निरुद्धो वातोऽस्मिन्निति बहुव्रीहिर्वा । तत्र कुड्यादयो वर्तमानाः समानाधिकरणा निवातशब्देन समस्यन्ते । कुटी एव निवातं कुटीनिवातम् । कुड्य एव निवातं कुड्यनिवातम् ॥ ड्यगन्त इति । 'कवतेड्यक्', ङकारस्येत्संज्ञा न भवति, गुणप्रतिषेधार्थात्ककारानुबन्धात् । यगन्त इत्यन्ये इति । ते तु 'कवतेर्यन्' इति सूत्रमधीयते ॥ ( ५७१० ) शारदे-। नूतनार्थ इति । अव्युत्पन्न इत्यर्थः ॥ रज्जोः सद्य उद्धृतमिति । रज्जुबद्धपात्रधृते रज्जुशब्दः । इदानीमेव कूपादुद्धृतं नूतनं जलमित्यर्थः ॥ सृजेरसुम्च इति । 'स्कन्देः सलोपश्च ४२१२' इत्यतः सलोप इति वर्तते । 'भूमृशीङ्-४२०५' इत्यतः उरिति, 'धान्ये नित् ४२०७' इत्यतो निदिति । सृजेरुः स्यात्स च नित् । धातोरसुमागमः सलोपश्चेत्यर्थः ॥ तत्र सृजेरन्त्यादचः परेऽसुमि सलोपयणादेशेऽसुम्सकारस्य जश्त्वे च रज्जुरिति भवति । आद्युदात्त इति । प्रत्ययस्य नित्त्वान्नित्स्वरेण ॥ उत्तमशारदमिति । शरदि ऋतौ भवं शारदम् ॥ (५७११) अध्व-। कठाध्वर्युरिति । अध्वरं यज्ञं यातीत्यध्वर्युः ऋत्विग्विशेषः । कठेन प्रोक्तं छन्दोऽधीते कठः । कठशब्दाण्णिनिप्रत्ययः ॥ तस्य लुक् । अध्येत्रणस्तु 'प्रोक्ताल्लुक् १८०४' इति लुक् । विशेषणसमासोऽयम् ॥ दौवारिककषाय इति, षष्ठीसमासः ॥ ( ५७१२ ) सदृश-। सादृश्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या एतयोरुत्तरपदयोः ॥ पितृसदृश इति । पितृमातृशब्दावुणादितृजन्तौ चित्स्वरेणान्तोदात्तौ । नन्वत्र 'पूर्वसदृशसमोनार्थ-१००१' इति तृतीयासमासे कृते 'तत्पुरुषे तुल्यार्थ-५७०२' इत्येव सिद्धम् । न च तुल्यार्थयोगे षष्ठ्या अपि विहितत्वेन षष्ठीसमासार्थमिदमिति वाच्यम् , तत्रानभिधानात्षष्ठीसमासो नेत्यपि सुवचत्वादिति चेत् , मैवम्-अलुक्समासानुरोधेन षष्ठीसमासस्वीकारस्यावश्यकत्वात् । तद्यथा-दास्याः सदृशो, वृषल्याः सदृश इति । 'षष्ठ्या आक्रोशे १४०२' इत्यलुक् । दासीशब्दो 'दंसेष्टो न आ च ४८९४' इति दंसेष्टः प्रत्ययः, नकारस्य चाकारः प्रत्ययस्वरेण दासशब्द उदात्तः । टित्वान्ङीप् । 'यस्येति च ४३१' इति लोपः । 'अनुदात्तस्य च यत्र-५५१७' इति ङीप उदात्तत्वम् । वृषलशब्दाज्जातिलक्षणो ङीष् । उभयत्रापि 'उदात्तयणो हल्पूर्वात् ५६८४' इति विभक्तिरुदात्ता । नन्वेवं तृतीयासमासविधायके 'पूर्वसदृश-१००१' इति सूत्रे सदृशग्रहणं माऽस्तु । सर्वत्र षष्ठीसमासोऽस्तु इति चेत् , मैवम्—यत्र षष्ठ्यर्थो नास्ति, तदर्थं सदृशग्रहणम् । विद्यया सदृशो विद्यासदृश इति । अन्यो देवदत्तादिरत्र प्रतियोगी ॥ ( ५७१३ ) प्राच्यशब्द आद्युदात्त इति । 'द्युप्रागपागुदक्प्रतीचो यत् १८५९' इति यदन्तत्वात् 'यतोऽनावः ५५७६' इत्याद्युदात्तः ॥ परमसप्तसममिति । सप्तानां समानां समाहारः सप्तसमं समाहारद्विगुः । पात्रादित्वात् स्त्रीत्वाभावः ॥ ( ५७१४ ) गन्तव्यपण्यम्-। वणिगेव वाणिजः । प्रज्ञादित्वादण् ॥ मद्रवाणिज इति । मद्रेषु गत्वा व्यवहरतीत्यर्थः ॥ गोवाणिज इति । 'गमेर्डोः ४४२८' । अन्तोदात्तोऽयम् ॥ सप्तमीसमास इति । 'सप्तमी' इति योगविभागात् । मद्रवाणिज इत्यत्र षष्ठीसमासः ॥ रक्प्रत्ययान्त इति । 'स्फायितञ्चि-४३७२' इति विहितो रक् तदन्तादित्यर्थः । प्रत्ययस्वरेणान्तोदात्तोऽयम् ॥ ( ५७१५ ) मात्रो-। तथेति । पूर्वपदं प्रकृतिस्वरं स्यादित्यर्थः। भिक्षाशब्दोऽप्रत्ययान्तोऽन्तोदात्तः । मात्रशब्दस्तु तुल्यपर्यायो वृत्तिविषये तुल्यप्रमाणे वर्तते, भिक्षायास्तुल्यप्रमाणमित्यस्वपदविग्रहः । षष्ठीतत्पुरुषः तदाह-भिक्षाया इति ॥ पाणिन्युपज्ञमिति । उपज्ञायत इति उपज्ञा । 'आतश्चोपसर्गे ५०८८' इति कर्मण्यङ् , पाणिनिशब्द इञन्तत्वाद-

पाणिनिशब्द आद्युदात्तः। नन्दोपक्रमम् । नन्दशब्दः पचाद्यजन्तः । इषुच्छायम्। इषुशब्द आद्युदात्तो नित्वात्। नपुंसके किम्। कुड्यच्छाया॥ (५७१६) (सू) **सुखप्रियपयोर्हिते**। ६। २। १५। एतयोः परयोर्हितवाचिनि तत्पुरुषे तथा। गमनप्रियम्। गमनसुखम्। गमनशब्दे लित्स्वरः। हिते किम्। परमसुखम्॥ (५७१७) (सू) **प्रीतौ च**। ६। २। १६। प्रीतौ गम्यायां प्रागुक्तम्। ब्राह्मणसुखं पायसम्। छात्रप्रियोऽनध्यायः। ब्राह्मणच्छात्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ। प्रीतौ किम्। राजसुखम्॥ (५७१८) (सू) **स्वं स्वामिनि**। ६। २। १७। स्वामिशब्दे परे स्ववाचि पूर्वपदं तथा। गोस्वामी। स्वं किम्। परमस्वामी॥ (५७१९) (सू) **पत्यावैश्वर्ये**। ६। २। १८। दमूना गृहपतिर्दमे॥ (५७२०) (सू) **न भूवाक्चिद्दिधिषु**। ६। २। १९। पतिशब्दे परे ऐश्वर्यवाचिनि तत्पुरुषे नैतानि प्रकृत्या। भुवः पतिर्भूपतिः। वाक्पतिः। चित्पतिः। दिधिषूपतिः॥ (५७२१) (सू) **वा भुवनम्**। ६। २। २०। उक्तविषये। भुवनपतिः भूसूधूभ्रस्जिभ्य इति क्युन्नन्तो भुवनशब्दः॥ (५७२२) (सू) **आशङ्काऽऽबाधनेदीयस्सु सम्भावने**। ६। २। २१। अस्तित्वाध्यवसायः सम्भावनम्। गमनाशङ्कमस्ति। गमनाबाधम्। गमननेदीयः। गमनमाशङ्क्यते आबाध्यते निकटतरमिति वा संभाव्यते। सम्भावने किम्। परमनेदीयः॥ (५७२३) (सू) **पूर्वे भूतपूर्वे**। ६। २। २२। आढ्यो भूतपूर्वः आढ्यपूर्वः। पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्तते। भूतपूर्वे किम्। परमपूर्वः॥ (५७२४) (सू) **सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये**। ६। २। २३। एषु पूर्वं प्रकृत्या। मद्रसविधम्। गान्धारसनीडम्। काश्मीरसमर्यादम्। मद्रसवेशम्। मद्रसदेशम्। सामीप्ये किम्। सह मर्यादया समर्यादं क्षेत्रम्। चैत्रसमर्यादम्॥

---

द्युदात्तः, तस्य उपज्ञा इति षष्ठीसमासः। 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ११८५' इति नपुंसकता॥ **नन्दोपक्रममिति**। षष्ठीसमासः। अत्रापि पूर्ववन्नपुंसकता। उपक्रम्यते इति कर्मणि घञ्। 'नोदात्तोपदेशस्य—३६८८' इति वृद्धिप्रतिषेधः॥ **इषुच्छायमिति**। इषूणां छायेति तत्पुरुषः। 'छाया बाहुल्ये ११८६' इति नपुंसकता। 'इषेः किच्च ४२११' इत्युप्रत्ययान्त इषुः। तत्र निदधिकारादाद्युदात्तस्तदाह—**इषुशब्द इति**॥ (५७१६) **गमनसुखमिति**। समानाधिकरणसमासो मयूरव्यंसकादिर्वा॥ **लित्स्वर इति**। गमनशब्दो ल्युडन्तः। 'लिति ५५५१' इति सूत्रेणाद्युदात्तः॥ (५७१७) **प्रागुक्तमिति**। सुखप्रिययोः परयोस्तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यादित्यर्थः। योगविभागो यथासंख्यनिवृत्त्यर्थः। ननु 'सुखप्रिययोः' इत्येतावत्पूर्वसूत्रं कृत्वा 'हिते च' इति वक्तव्यं तत्राद्ये सूत्रे सुखप्रिययोः प्रीत्यव्यभिचारादेव प्रीतौ गम्यमानायां भविष्यतीति चेत्, सत्यम्—प्रीतिग्रहणं तदतिशयप्रतिपत्त्यर्थम्॥ **ब्राह्मणच्छात्रशब्दाविति**। ब्रह्मणोऽपत्यमित्यण्। 'ब्राह्मोऽजातौ १६४१' इति जातौ टिलोपाभावे 'अन् १६३७' इति प्रकृतिभावः। छात्रशब्दः 'छत्रादिभ्यो णः २२०४' इति णप्रत्ययान्तः॥ (५७१९) **पत्या—**। ऐश्वर्यार्थे पतिशब्दे परे पूर्वपदं प्रकृतिस्वरं स्यात् तत्पुरुषे॥ **गृहपतिरिति**। षष्ठीसमासः। 'गेहे कः ३८७०' इति कप्रत्ययान्तो गृहशब्दः। प्रत्ययस्वरेणान्तोदात्तः॥ (५७२०) **न भू—**। भ्वादीनां समाहारद्वन्द्वे नपुंसकत्वं ह्रस्वत्वम्॥ **एतानीति**। भूवाक्चिद्दिधिषू एतानीत्यर्थः॥ **न प्रकृत्येति**। पूर्वेण प्राप्तः प्रतिषिध्यते॥ **भूपतिरित्यादि**। षष्ठीसमासा एते। तत्र भ्वादयस्त्रयः क्विबन्ताः दिधिषूशब्दः 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषू—४२९२' इत्यूप्रत्ययान्तो निपातितः सर्वेऽप्यन्तोदात्ताः॥ (५७२१) **वा भु—**। **उक्तविषये इति**। ऐश्वर्यवाचिनि पतिशब्दे परे भुवनशब्दः पूर्वपदं प्रकृतिस्वरं वा स्यात्। 'पत्यावैश्वर्ये ५७१९' इति प्राप्ते विकल्पोऽयम्॥ **भुवनपतिरिति**। भुवनशब्दः क्युन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः॥ (५७२२) **आशङ्काबाध—**। आशङ्काबाधनेदीयस्सूत्तरपदेषु सम्भावनवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात्। 'शकि शङ्कायाम्'। 'बाधृ लोडने'। आङ्पूर्वाभ्यां कर्मणि घञ्। अतिशयेनान्तिकं नेदीयः। द्वयोरन्तिकयोर्मध्ये एकस्यातिशयविवक्षायामीयसुनि 'अन्तिकबाढयोः—२७२८' इति नेदादेशः। गमनाशङ्कादयो विशेषणसमासाः, मयूरव्यंसकादयो वा॥ **अस्तित्वाध्यवसाय इति**। आस्तित्वनिश्चयः॥ **गमनाशङ्कमिति**। पूर्वपदानि ल्युडन्तानि। तत्र लित्स्वरः। गमनमाशङ्क्यत इत्यादि संभाव्यत इत्यस्य प्रत्येकमन्वयः। गमनमाशङ्क्यते इति संभाव्यते। गमनमाबाध्यत इति संभाव्यते गमनं निकटतरमिति वा संभाव्यते। (५७२३) **पूर्वे भूतपूर्वे**। भूतपूर्वार्थे पूर्वशब्दे परे पूर्वपदं प्रकृतिस्वरं स्यात्॥ **आढ्यो भूतपूर्व इति**। यः पूर्वमाढ्य असीत् स एवमुच्यते॥ **आढ्यपूर्व इति**। अत्र विशेषणसमासो मयूरव्यंसकादिर्वा। आढ्यशब्द आङ्पूर्वाद्ध्यायतेः 'घनर्थे कविधानम् ५०२८' इति कर्मणि कः। 'आतो लोपः—३१६५'। पृषोदरादित्वाद्धस्य ढः। थाथादिस्वरेणन्तोदात्तः॥ **परमपूर्व इति**। परमश्चासौ पूर्वश्चेति योऽयं वाक्यार्थः पूज्यमानतालक्षणस्तस्मिन्निह प्रत्युदाहरणे समासः। परमश्चासौ भूतपूर्वश्चेति विग्रहे तूदाहरणमेव॥ (५७२४) **सविध—**। सामीप्यार्थेषु सविधादिषूत्तपदेषु पूर्वपदं प्रकृत्या तत्पुरुषे॥ **मद्रसविधमिति**। सर्वत्रोदाहरणे षष्ठीसमासः। मद्रः—रगन्तेनोदात्तः। गान्धारिः 'कर्दमादीनां च ५६४१' इत्याद्युदात्तो वा। कश्मीरो 'लघावन्ते—५६२४' इति मध्योदात्तः। सविधादीनां सह विधया इत्येवमादिका व्युत्पत्तिरेव केवलं समीपवाचिनस्त्वेते समुदायाः। मद्रादीनां सविधं समीपमित्यर्थः॥ **समर्यादमिति**। 'वोपसर्जनस्य १२२२' इति सहस्य सादेशः॥ **चैत्रसमर्यादमिति**। षष्ठीसमासः। सविधादिषु

( ५७२५ ) ॐ विस्पष्टादीनि गुणवचनेषु । ६ । २ । २४ । विस्पष्टकटुकम् । विस्पष्टशब्दो गतिरनन्तरे इत्याद्युदात्तः । विस्पष्टेति किम् । परमलवणम् । गुणेति किम् । विस्पष्टब्राह्मणः ॥ विस्पष्ट, विचित्र, व्यक्त, सम्पन्न, पण्डित, कुशल, चपल, निपुण ॥ ( ५७२६ ) ॐ श्रज्याऽवमकन्पापवत्सु भावे कर्मधारये । ६ । २ । २५ । श्र, ज्य, अवम, कन् इत्यादेशवति पापवाचिनि चोत्तरपदे भाववाचि पूर्वपदं प्रकृत्या । गमनश्रेष्ठम् । गमनज्यायः । गमनावमम् । गमनकनिष्ठम् । गमनपापिष्ठम् । श्रेत्यादि किम् । गमनशोभनम् । भावे किम् । गम्यतेऽनेनेति गमनम् । गमनं श्रेयो गमनश्रेयः । केति किम् । षष्ठीसमासे मा भूत् ॥ ( ५७२७ ) ॐ कुमारश्च । ६ । २ । २६ । कर्मधारये । कुमारश्रमणा । कुमारशब्दोऽन्तोदात्तः ॥ ( ५७२८ ) ॐ आदिः प्रत्येनसि । ६ । २ । २७ । कुमारस्यादिरुदात्तः प्रत्येनसि परे कर्मधारये । प्रतिगतमेनोऽस्य प्रत्येनाः । कुमारप्रत्येनाः ॥ ( ५७२९ ) ॐ पूगेष्वन्यतरस्याम् । ६ । २ । २८ । पूगा गणास्तेपूक्तं वा । कुमारचातकाः । कुमारजीमूताः । आद्युदात्तत्वाभावे कुमारश्चेत्येव भवति ॥ ( ५७३० ) ॐ इगन्तकालकपालभगालशरावेषु द्विगौ । ६ । २ । २९ । एषु परेषु पूर्वं प्रकृत्या । पञ्चारत्नयः प्रमाणमस्य पञ्चारत्निः । दश मासान् भूतो दशमास्यः । पञ्च मासान्भूतः पञ्चमास्यः । 'तमधीष्ट इत्यधिकारे द्विगोर्यप्' । पञ्चकपालः । पञ्चभगालः । पञ्चशरावः । त्रः संख्याया इति पञ्चन्-शब्द आद्युदात्तः । इगन्तादिषु किम् । पञ्चाश्वः । द्विगौ किम् । परमारत्निः ॥ ( ५७३१ ) ॐ बह्वन्यतरस्याम् । ६ । २ । ३० । बहुशब्दस्तथा वा । बहुरत्निः । बहुमास्यः । बहुकपालः । बहुशब्दोऽन्तोदात्तः । तस्य यणि

---

किम् । मद्रसमीपम् ॥ ( ५७२५ ) विस्पष्टा-। गुणवचनेषु परेषु विस्पष्टादीनि पूर्वपदानि प्रकृत्या स्युः ॥ **विस्पष्टकटुकमिति** । 'स्पश बाधनस्पर्शनयोः' इत्यस्य ण्यन्तस्य निष्ठायां 'वा दान्तशान्त-४०८३' इति स्पष्टशब्दो निपातितः । तस्य विशब्देन गतिसमासः । विस्पष्टं कटुकमिति विग्रहः । विस्पष्टादीनि शब्दप्रवृत्तिनिमित्तस्य विशेषणानि न द्रव्यस्य । कटुकादिशब्दैर्गुणवद् द्रव्यमभिधीयते इति सामानाधिकरण्याभावात्कर्मधारयाभावे 'सुप्सुपा ९४९-१' इति समासः ॥ **विचित्रेत्यादि** । 'चित्र चित्रीकरणे' चुरादिण्यन्तात् 'एरच् ५०२२' विशेषेण चित्रं विचित्रं प्रादिसमासः । 'तत्पुरुषे तुल्यार्थ—५७०२' इत्यव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः । 'चिती संज्ञाने' निष्ठा । 'विगतं चित्रमस्य' इति विचित्रः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम् ५७०१' इत्याद्युदात्तः । 'अञ्जू व्यक्त्यादिषु' तस्य विपूर्वस्य निष्ठायां गतिस्वरे 'उदात्तस्वरितयोः—५५२८' इति स्वरितादिः । पदेः कर्त्तरि क्तः। थाथादिस्वरेणान्तोदात्तः, गतिस्वरस्तु न, कर्मणीति तत्र वर्त्तते । अयं कर्त्तरि क्तः 'फलिपाटिनमिकनिजनां कुकूपटिनाकिधतश्च ४२१६' इत्युप्रत्ययान्तः पटुशब्दः । तत्र निदित्यधिकारादाद्युदात्तः । 'पडि गतौ' क्तः प्रत्ययस्वरः । उणादिवृत्तौ तु 'पण व्यवहारे स्तुतौ च' 'अमन्ताड्डः ४३१३' पण्डा बुद्धिः सा संजाताऽस्येति तारकादित्वादितच् एवमुक्तम् । कुशान् लातीति कुशलः 'आतोऽनुपसर्गे-३८८३' इति कः । कृत्स्वरेणान्तोदात्तः । 'चुप मन्दायां गतौ' अस्मात् 'चुपेरच्चोपधायाः ४३१०' इति कलप्रत्ययः । तत्र 'वृषादिभ्यश्चित् ४३०५' इत्यतश्चिदिति वर्त्तनादन्तोदात्तः । 'पुण कर्मणि शुभे', 'इगुपधज्ञाप्रीकिरः कः ३८५७' । थाथादिस्वरेणान्तोदात्तः ॥ ( ५७२६ ) श्रज्या-। श्रज्यावमकनामादेशानामुत्तरपदत्वासंभवात्सामर्थ्यात्तद्वदुत्तरपदं गृह्यत इत्याह-**इत्यादेशवतीति** । इष्ठेयसुनोः 'प्रशस्यस्य श्रः २७२३' 'ज्य च २७२५' 'युवाल्पयोः कनन्यतरस्याम् २७३३' ॥ **गमनश्रेष्ठमित्यादि** । मयूरव्यंसकादित्वाद्राजदन्तादित्वाद्वा विशेषणस्य परनिपातः ॥ **पापिष्ठमिति** । 'विन्मतोर्लुक् २७३४' । उदाहरणे 'नपुंसके भावे क्तः ४१०८' 'ल्युट् च ५१०६' इति भावे ल्युट् तदन्तान्येतानि पूर्वपदानि लित्स्वरेणाद्युदात्तानि ॥ **गम्यतेऽनेनेति** । 'करणाधिकरणयोश्च ५१०९' इति करणे ल्युट् ॥ **केति किमिति** । कर्मधारय इति किमर्थमित्यर्थः ॥ ( ५७२७ ) **कुमारश्च** । कुमारशब्दः पूर्वपदप्रकृतिस्वरः स्यात् ॥ **कुमारश्रमणेति** । कुमारी श्रमणा कुमारश्रमणा 'कुमारः श्रमणादिभिः १०८१' इति समासः, लिङ्गविशिष्टपरिभाषया कुमारीशब्दस्य समासे पुंवद्भावः ॥ **अन्तोदात्त इति** । 'कुमार क्रीडायाम्' । पचाद्यच् चित्स्वरः । अत्र 'कुमारः श्रमणादिभिः १०८१' इत्यस्यैव ग्रहणं प्रतिपदोक्तत्वात् । केचित्तु-सर्वस्यैव कर्मधारयस्य ग्रहणमिच्छन्ति, तथा च कुमारब्राह्मण इत्यत्र पूर्वपदप्रकृतिस्वरत्वं मतभेदेन भवति ॥ ( ५७२८ ) आदिः-। आदिरिति षष्ठ्यर्थे प्रथमा । पूर्वत्र कुमारशब्दस्य प्रकृतिभावेन यः स्वरः प्राप्तः सोऽत्रादेर्भवतीति सूत्रार्थः । एवं स्थिते फलितमाह-**कुमारस्यादिरुदात्तः स्यादिति** ॥ ( ५७२९ ) पूगेषु-। गणवाचिन्युत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो वा स्यात् ॥ **कुमारचातका इति** । चातकादयः पूगशब्दास्तेभ्यः 'पूगाञ्ञ्योऽग्रामणीपूर्वात् २७९२' इति ञ्यः । तस्य 'तद्राजस्य बहुषु-१६८५' इति लुक् । **कुमारश्चेत्येव भवतीति** । तत्र प्रतिपदोक्तग्रहणपक्षे समासान्तोदात्तत्वम् ॥ ( ५७३० ) **पञ्चारत्निरिति** । पञ्चारत्नयः प्रमाणमस्येति तद्धितार्थे द्विगुः । 'प्रमाणे लो द्विगोर्नित्यम् २४९१-२' इति मात्रचो लुक् । पञ्चसु कपालेषु संस्कृतः, पञ्चसु भगालेषु संस्कृतः, पञ्चसु शरावेषु उद्धृतः । पञ्चकपालः । पञ्चभगालः । पञ्चशरावः । तद्धितार्थे द्विगुः । 'द्विगोर्लुगनपत्ये १५५१' इत्यणो लुक् ॥ **पञ्चाश्व इति** । पञ्चभिरश्वैः क्रीतः पञ्चाश्वः । आर्हीयष्ठक् तस्य 'अध्यर्ध-२३०५' इति लुक् ॥ ( ५७३१ ) बहु-। बहुशब्दः पूर्वपदप्रकृतिस्वरो वा इगन्तादिषूत्तरपदेषु द्विगौ । पूर्वेण नित्ये प्राप्ते विकल्पः ॥ **बहुशब्दोऽन्तोदात्त इति** । 'बहि वृद्धौ' अस्मात् 'लङ्घिबंह्योर्नलोपश्च ४२२७'

---

१ अयं गणो मूल एव पठितः ॥

सत्युदात्तस्वरितयोरिति भवति । ( ५७३२ ) (सू) **दिष्टिवितस्त्योश्च** । ६ । २ । ३१ । एतयोः परतः पूर्वपदं प्रकृत्या वा द्विगौ । पञ्चदिष्टिः । पञ्चवितस्तिः ॥ (५७३३) (सू) **सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्** ।६।२।३२। अकालवाचि सप्तम्यन्तं प्रकृत्या सिद्धादिषु । साङ्काश्यसिद्धः । साङ्काश्येति ण्यान्तः । आतपशुष्कः । भ्राष्ट्रपक्वः । भ्राष्ट्रेति ष्ट्रन्नन्तः । चक्रबन्धः । चक्रशब्दोऽन्तोदात्तः । अकालात्किम् । पूर्वाह्णसिद्धः । कृत्स्वरेण बाधितः सप्तमीस्वरः प्रतिप्रसूयते ॥ ( ५७३४ ) (सू) **परिप्रत्युपापा वर्ज्यमानाऽहोरात्रावयवेषु** । ६ । २ । ३३ । एते प्रकृत्या वर्ज्यमानवाचिनि अहोरात्रावयववाचिनि चोत्तरपदे । परित्रिगर्तं वृष्टो देवः । प्रतिपूर्वाह्णम् । प्रत्यपररात्रम् । उपपूर्वरात्रम् । अपत्रिगर्तम् । उपसर्गा आद्युदात्ताः । बहुव्रीहितत्पुरुषयोः सिद्धत्वादव्ययीभावार्थमिदम् । अपपर्योरेव वर्ज्यमानमुत्तरपदम् । तयोरेव वर्ज्यमानार्थत्वात् । अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्ति । वर्ज्येति किम् । अग्निं प्रति प्रत्यग्नि ॥ ( ५७३५ ) (सू) **राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु** । ६ । २ । ३४ । राजन्यवाचिनां बहुवचनान्तानामन्धकवृष्णिषु वर्तमाने द्वन्द्वे पूर्वपदं प्रकृत्या । श्वाफल्कचैत्रकाः । शिनिवासुदेवाः । शिनिराद्युदात्तो लक्षणया तदपत्ये वर्तते । राजन्येति किम् । द्वैप्यभैमायनाः । द्वीपे भवा द्वैप्याः । भैमेरपत्यं युवा भैमायनः । अन्धकवृष्णय एते, न तु राजन्याः । राजन्यग्रहणमिहाभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम् । नैते तथा । बहुवचनं किम् । संकर्षणवासुदेवौ । द्वन्द्वे किम् । वृष्णीनां कुमाराः वृष्णिकुमाराः । अन्धकवृष्णिषु किम् । कुरुपञ्चालाः ॥ ( ५७३६ ) (सू) **संख्या** । ६ । २ । ३५ । संख्यावाचि पूर्वपदं प्रकृत्या द्वन्द्वे । द्वादश । त्रयोदश । त्रेस्त्रयसादेश आद्युदात्तो निपात्यते ॥

---

इति कुप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः । पक्षे समासान्तोदात्तत्वम् । पूर्ववद्द्विग्रहप्रत्ययलुक्प्रत्युदाहरणानि । योजनीयानि । **( ५७३२ ) दिष्टि-**। दिष्टिवितस्ती प्रमाणे तेनात्र मात्रचो लुक् । अत्रापि पक्षेऽन्तोदात्तत्वं बोध्यम् ॥ **( ५७३३ ) सप्तमी-**। **ण्यान्त इति** । वुञ्छणादिषु 'संकाशादिभ्यो ण्यः १८२२' ॥ **ष्ट्रन्नन्त इति** । 'भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च ४८०५' इति ष्ट्रन् संयोगादिलोपः । 'व्रश्च-४११' इति षत्वम् । नित्त्वादाद्युदात्तः । **अन्तोदात्त इति** । 'कृञः को द्वे च' इति कप्रत्ययान्तः ॥ **प्रत्ययस्वरेण** । थाथादिस्वरेण ॥ **बाधितः सप्तमीस्वर इति** । सिद्धशुष्कपक्वानां क्तान्तत्वाद्बन्धस्य घञन्तत्वात् थाथादिस्वरेण 'तत्पुरुषे तुल्यार्थ—५७०२' इत्यादिना सप्तम्यन्तस्य यः प्रकृतिभावः स परत्वाद्बाधितस्तेन पुनर्विधीयते ॥ क्वचित्तु **कृत्स्वरेण बाधित** इति पाठः । तत्र कृदन्तस्य यः स्वरस्थाथादिलक्षणस्तेनेत्यर्थः ॥ **( ५७३४ ) परिप्रत्यु-**। परिप्रत्युपाप एते प्रकृत्या स्युः ॥ **परित्रिगर्तमिति** । त्रिगर्तं वर्जयित्वेत्यर्थः।'अपपरी वर्जने ८७७' इति कर्मप्रवचनीयसंज्ञा । 'पञ्चम्यपाङ्परिभिः ८७९' इति पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या ९६९' इत्यव्ययीभावः ॥ **प्रतिपूर्वाह्णमिति** । अह्नः पूर्वो भागः पूर्वाह्णः 'अह्नोऽह्न एतेभ्यः ११३६' इत्यह्नादेशः । 'अह्नोऽदन्तात् ११३७' इति णत्वम् । पूर्वाह्णं प्रति 'लक्षणेनाभिप्रती आभिमुख्ये ९७१' इत्यव्यीभावः ॥ **उपपूर्वाह्णमिति** । पूर्वाह्णस्य समीपम् । 'अव्ययं विभक्ति-९५३' इत्यादिना सामीप्येऽव्ययीभावः ॥ **उपपूर्वरात्रमिति** । रात्रेः पूर्वो भागः पूर्वरात्रः । 'अहःसर्वैकदेश-११३३' इत्यच् 'रात्राह्नाहाः-११६६' इति पुंस्त्वम् । पूर्वरात्रस्य समीपमुपपूर्वरात्रम् ॥ **उपसर्गा-**। आद्युदात्तानि पूर्वपदानि ॥ **सिद्धत्वादिति** । 'बहुव्रीहौ प्रकृत्या पूर्वपदम् ५७०१' 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ५७०२' इत्यनेन । ननु किं पुनः कारणम् । अपपर्योरेव वर्ज्यमान उदाहृतो नेतरयोस्तत्राह-**अपपर्योरिति** । तेन त्रिगर्तं वर्जयित्वेत्यर्थे उपत्रिगर्त्तं प्रतित्रिगर्त्तमिति न भवति । ननु पूर्वाह्णं पूर्वरात्रं वर्जयित्वेत्यर्थे अपपूर्वाह्णं परिपूर्वाह्णम् अपपूर्वरात्रं परिपूर्वरात्रमिति अहोरात्राद्यवयवा अपपर्योः कस्मान्नोदाह्रियन्ते इत्याशङ्क्याह-**अहोरात्रावयवा इति** ॥ **वर्ज्यमाना इति** । वर्ज्यमानग्रहणेनैव सिद्धत्वान्न पृथगुदाहृत इत्यर्थः ॥ **वर्ज्येति किमिति** । वर्ज्यमानाहोरात्रावयवेषु किम् ॥ **अग्निं प्रतीति** । 'लक्षणेनाभिप्रती-९७१' इत्यव्ययीभावः ॥ **(५७३५) श्वाफल्कचैत्रका इति** । श्वफल्कचैत्रकाभ्यामपत्येऽण् ॥ **शिनिराद्युदात्त इति** । 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ४६९५' इति सूत्रेण बाहुलकाच्छीङोऽपि निः । तस्य नित्त्वं ह्रस्वत्वं चेति ॥ **द्वैप्या इति** । 'द्वीपादनुसमुद्रं यञ् १९३१' ॥ **भैमेरपत्यमिति** । भीमस्यापत्यम् 'अत इञ् १५७१' तदन्तात् 'वृद्धाच्छः १८८०' । ननु च 'राज्ञोऽपत्ये जातिग्रहणम् १६३५' इति वचनाद्राजन्यशब्दः क्षत्रियजातिवचनः, ततश्च 'द्वैप्यभैमायनाः' इत्ययुक्तं प्रत्युदाहरणम्, तेषामपि क्षत्रियत्वादत आह-**राजन्यग्रहणमित्यादि** । अन्धकवृष्णीनां क्षत्रियत्वाव्यभिचाराद्राजन्यग्रहणमुक्तविशेषपरिग्रहार्थमिति भावः ॥ **(५७३६) [ एकादशेति** । 'संख्याया अल्पीयस्याः १२८५' इत्येकशब्दस्य पूर्वनिपातः । 'आन्महतः-११५३' इत्यत्र आदिति योगविभागात् 'प्रागेकादशभ्यः' इति निर्देशाद्वा आत्वम् । 'इण्भीकापाशल्यतिमर्चिभ्यः कन् ४५२६' इति नित्त्वादेकशब्दः आद्युदात्तः ॥ ] **द्वादशेति** । 'द्व्यष्टनः संख्यायाः-११५७' इत्यात्वम् ॥ **त्रयोदशेति** । 'त्रेस्त्रयः ११५९' इति त्रयसादेशः ॥ **आद्युदात्तो निपात्यत इति** । इदं काशिकानुरोधेनोक्तम् ।

---

१ क्वचिदन्तोदात्त इत्यपि पाठः ॥

(५७३७) ⓢ आचार्योपसर्जनश्चान्तेवासी । ६ । २ । ३६ । आचार्योपसर्जनान्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृत्या पाणिनीयरौढीयाः । छस्वरेण मध्योदात्तावेतौ । आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणम् । सकलो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायेत । तेनेह न । पाणिनीयदेवदत्तौ । आचार्येति किम् । छान्दसवैयाकरणाः ॥ अन्तेवासी किम् । आपिशल० पाणिनीये शास्त्रे ॥ (५७३८) ⓢ कार्तकौजपादयश्च । ६ । २ । ३७ । एषां द्वन्द्वे पूर्वपदं प्रकृत्या । कार्तकौजपौ । कृतस्येदं कुजपस्येदमित्यण्णन्तावेतौ । सावर्णिमाण्डूकेयौ ॥ (५७३९) ⓢ महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु । ६ । २ । ३८ । महच्छब्दः प्रकृत्या व्रीह्यादिषु दशसु । महाव्रीहिः । महापराह्णः । महागृष्टिः । महेष्वासः । महाहैलिहिलः । महच्छब्दोऽन्तोदात्तः । सन्महदिति प्रतिपदोक्तसमासे एवायं स्वरः । नेह । महतो व्रीहिर्महद्व्रीहिः ॥ (५७४०) ⓢ क्षुल्लकश्च वैश्वदेवे । ६ । २ । ३९ । चान्महान् । क्षुल्लकवैश्वदेवम् । महावैश्वदेवम् । क्षुधं लातीति क्षुल्लः । तस्मादज्ञातादिषु केऽन्तोदात्तः ॥ (५७४१) ⓢ उष्ट्रः सादिवाम्योः । ६ । २ । ४० । उष्ट्रसादी । उष्ट्रवामी । उषेः ष्ट्रनि उष्ट्रशब्द आद्युदात्तः ॥ (५७४२) ⓢ गौः सादसादिसारथिषु । ६ । २ । ४१ । गोसादः । गोसादिः । गोसारथिः ॥ (५७४३) ⓢ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः । पण्यकम्बलो दासीभाराणां च । ६ । २ । ४२ । एषां सप्तानां समासानां दासीभारादेश्च पूर्वपदं प्रकृत्या । कुरूणां गार्हपतं कुरुगार्हपतम् । उप्रत्ययान्तः कुरुः (५७४४) ⓥ वृजेरिति वाच्यम् ॥ वृजिगार्हपतम् । वृजिराद्युदात्तः । रिक्तो गुरुः रिक्तगुरुः । रिक्ते विभाषेति रिक्तशब्द आद्युदात्तः । असूता जरती असूतजरती ।

---

वस्तुतस्तु—'त्रयोदश च मे' इति लक्ष्यानुरोधादाद्युदात्तो निपात्यत इति बोध्यम्॥ (५७३७) आचार्योपसर्जन-। आचार्य उपसर्जनं यस्य आचार्योपसर्जनः॥अन्तेवासीति।अन्ते वसतीत्यन्तेवासी 'शयवासवासिष्वकालात्१३९८' इति सप्तम्या अलुक् । सूत्रे षष्ठीबहुवचनस्य स्थाने प्रथमैकवचनं तदाह—आचार्योपसर्जनान्तेवासिनां द्वन्द्वे इति । पाणिनीयरौढीया इति । 'वृद्धाच्छः १८८०' । रौढिशब्दात् 'इञश्च १८७६' इत्यण् न, 'न द्व्यचः प्राच्यभरतेषु १८७७' इति निषेधात् ॥ द्वन्द्वविशेषणार्थमिति । न त्वन्तेवासिविशेषणार्थम्, तस्य आचार्योपसर्जनत्वाव्यभिचारात् । किमर्थं पुनर्द्वन्द्वविशेषणं विज्ञायत इत्याह—सकलो द्वन्द्व इत्यादि । छान्दसेति । छन्दोऽधीत इत्यण् 'श्रोत्रियंश्छन्दोऽधीते २५४५' इति तु न, तत्र वाग्रहणानुवृत्तेः ॥ आपिशलपाणिनीये इति । आपिशलस्यापत्यमापिशलिराचार्यः, 'तेन प्रोक्तम् २०४४' आपिशलम् 'इञश्च १८७६' इत्यण् । पाणिनिना प्रोक्तं पाणिनीयम् । 'वृद्धाच्छः १८८०' । आपिशलं च पाणिनीयं च आपिशलपाणिनीये ॥ (५७३८) कार्त—। कुर्भूमिः तत्र जाताः कुजाः तान्पातीति कुजपः । कृतकुजपाभ्यामपत्ये ऋष्यण् । सावर्णिरिञन्तः, माण्डूकेयशब्दो 'ढक्च मण्डूकात् १६००' इति ढगन्तः ॥ (५७३९) महाव्रीहिरिति । 'आन्महतः-२१५१' इत्यात्त्वम् ॥ महेष्वास इत्यादीति । अत्रैकारः 'स्वरितो वाऽनुदात्ते पदादौ ५५३०' इति स्वरितो वा । आदिपदेन महाजाबालः महाभारः महाभारतः महाहैलिहिलः महारौरवः महाप्रवृद्धः ॥ महच्छब्दोऽन्तोदात्त इति । 'वर्त्तमाने पृषन्महत्—४४४४' इत्यत्र तथा निपातनात् । सन्महदिति । एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते । ननु प्रवृद्धग्रहणमनर्थकं 'कर्मधारयेऽनिष्ठा' इति वक्ष्यमाणेनैव सिद्धत्वात् 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति प्रवृद्धशब्दस्य क्तान्तत्वादिति चेत्, न—'कर्मधारयेऽनिष्ठा' इत्यत्रापि लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः समासः श्रेण्यादिस्तस्यैव ग्रहणमित्यर्थः ॥ (५७४०) क्षुल्लक-। क्षुल्लकमहच्छब्दौ पूर्वपदे प्रकृतिस्वरौ स्तः, वैश्वदेवशब्दे परे ॥ क्षुल्ल इति । 'आतोऽनुपसर्गे कः ३८८३' । 'तोर्लि १८२' इति परसवर्णः ॥ (५७४१) उष्ट्रः—। उष्ट्रः पूर्वपदप्रकृतिस्वरः स्यात्सादिवाम्योः परतः ॥ उषेः ष्ट्रन्निति । 'उष दाहे' अस्मात्ष्ट्रन्निति वर्त्तमाने 'उषिखनिभ्यां कित् ४८०७' इति व्युत्पादितत्वात् ॥ (५७४२) गौः साद—। गोशब्दः पूर्वपदं प्रकृत्या सादादिषूत्तरपदेषु ॥ गोसाद इत्यादि । सदेर्घञ् । तदन्तेन षष्ठीसमासः । अथवा गां सादयतीति गोसादः । सदेर्ण्यन्तात्कर्मण्यण् तस्मादेव णिनिः गोसादी तत्र सादसादिनोः कृत्स्वरस्यापवाद इत्यर्थः । सारथौ समासस्वरस्य ॥ (५७४३) कुरु—। इह पण्यकम्बलान्ताः सप्त समासाः तत्राद्ययोर्द्वयोः षष्ठ्याः सौत्रो लुगितरेषां पञ्चानां षष्ठ्याः स्थाने प्रथमैकवचनं तदाह—एषामिति ॥ दासीभाराणामिति । बहुवचननिर्देशादाद्यर्थोऽवगम्यते तदाह—दासीभारादेरिति ॥ उप्रत्ययान्त इति । 'कृग्रोरुच ४२२२' इति व्युत्पादितत्वात्प्रत्ययस्वरेणान्तोदात्तोऽयम् ॥ आद्युदात्त इति ।

---

१ कार्तकौजपौ, सावर्णिमाण्डूकेयौ, अवन्त्यश्मकाः, पैलश्यापर्णेयाः, कपिश्यापर्णेयाः, शैतिकाक्षपाञ्चालेयाः, कटुकवाधूलेयाः, शालकशुनकाः, शाकलशणकाः, शणकबाभ्रवाः । आर्चाभिमौद्गलाः, कुन्तिसुराष्ट्राः, चिन्तिसुराष्ट्राः, तण्डवतण्डाः, अविमत्तकामविद्धाः, बाभ्रवशालङ्कायनाः, बाभ्रवदानच्युताः, कठकालापाः कठकौथुमाः, कौथुमलौकाक्षाः, स्त्रीकुमारम्, मौद्गपैप्पलादाः, वत्सजरन्तः, सौश्रुतपार्थिवाः, जरामृत्यू, याज्यानुवाक्ये । इति कार्तकौजपादयः ॥ २ दासीभारः, देवहूतिः, देवभीतिः, देवलातिः, वसुनीतिः, औषधिः, चन्द्रमा इति दासीभारादिराकृतिगणः ॥

अश्लीला दृढरूपा अश्लीलदृढरूपा । अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः । श्रीर्यस्यास्ति तत् श्लीलम् । सिध्मादित्वाल्लच् । कपिलकादित्वाल्लत्वम् । पारे वडवेव पारेवडवा । निपातनादिवार्थे समासो विभक्त्यलोपश्च । पारशब्दो घृतादित्वादन्तोदात्तः । तैतिलानां कद्रूः तैतिलकद्रूः । तितिलिनोऽपत्यं छात्रो वा इत्यणन्तः । पण्यशब्दो यदन्तत्वादाद्युदात्तः । पण्यकम्बलः ॥ (५७४५) (वा) संज्ञायामिति वक्तव्यम् ॥ अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वमेव । प्रतिपदोक्ते समासे कृत्या इत्येष स्वरो विहितः । दास्या भारो दासीभारः । देवहूतिः । यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते न विशिष्य वचनं विहितं स सर्वोऽपि दासीभारादिषु द्रष्टव्यः ॥ स राये स पुरन्ध्याम् । पुरं शरीरं ध्रियतेऽस्यामिति कर्मण्यधिकरणे चेति किःप्रत्ययः । अलुक् छान्दसः । नञ्विषयस्येत्याद्युदात्तः पुरशब्दः ॥ (५७४६) (सू) चतुर्थी तदर्थे । ६ । २ । ४३ । चतुर्थ्यन्तार्थाय यत्तद्वाचिन्युत्तरपदे चतुर्थ्यन्तं प्रकृत्या । यूपाय दारु यूपदारु ॥ (५७४७) (सू) अर्थे । ६ । २ । ४४ । अर्थे परे चतुर्थ्यन्तं प्रकृत्या । देवार्थम् ॥ (५७४८) (सू) क्ते च । ६ । २ । ४५ । क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या । गोहितम् ॥ (५७४९) (सू) कर्मधारयेऽनिष्ठा । ६ । २ । ४६ । क्तान्ते परे पूर्वमनिष्ठान्तं प्रकृत्या । श्रेणिकृताः । श्रेणिशब्द आद्युदात्तः । पूगकृताः । पूगशब्दोऽन्तोदात्तः । कर्मधारये किम् । श्रेण्या कृतं श्रेणिकृतम् । अनिष्ठा किम् । कृताऽकृतम् ॥ (५७५०) (सू) अहीने द्वितीया । ६ । २ । ४७ । अहीनवाचिनि समासे क्तान्ते परे द्वितीयान्तं प्रकृत्या । कष्टश्रितः । ग्रामगतः । कष्टशब्दोऽन्तोदात्तः । ग्रामशब्दो नित्स्वरेण । अहीने किम् । कान्तारातीतः ॥ (५७५१) (वा) अनुपसर्ग इति वक्तव्यम् ॥ नेह । सुखप्राप्तः । थाथेत्यस्यापवादोऽयम् ॥ (५७५२) (सू) तृतीया कर्मणि । ६ । २ । ४८ । कर्मवाचके क्तान्ते परे तृतीयान्तं प्रकृत्या । त्वोतासः । रुद्रहतः । महाराजहतः । रुद्रो

---

'वृजी वर्जने' 'इगुपधात्कित् ४७६५' इतीन्नन्तत्वात् फिषस्तु 'इगन्तानां च द्व्यषाम् ५६३१' इत्यादिर्द्वितीयो वोदात्तः । एवं कुरुरपि । रिक्तगुर्वादयस्त्रयः कर्मधारयाः ॥ असूतजरती । अश्लीलदृढरूपेति । असूताऽश्लीलशब्दौ नञ्समासत्वादाद्युदात्तौ ॥ श्रीर्यस्यास्तीति । श्रीशब्दो लावण्यवचनः ॥ कपिलकादित्वाल्लत्वमिति । 'कृपो रो लः ३१३१' इत्यत्र कपिलकादीनामुपसंख्यानाल्लत्वम् । लावण्यरहिताऽपि कुब्जत्वादीनामभावात्संस्थानमात्रेण दृढेत्यर्थः ॥ पारेवडवेति । 'पारे मध्ये--९७५' इत्यव्ययीभावस्तु न, तथा सति सूत्रे दीर्घनिर्देशोऽयुक्तः स्याद्, वडवायाः पारस्यासंभवाच्च ॥ तितिलिनोऽपत्यमिति । तिलाः सन्त्यस्मिन्निति तिली । तिलशब्दान्मत्वर्थीय इनिः । टिलोपः । पृषोदरादित्वात्तिशब्दस्य द्वित्वम् । अत्र यदाऽपत्येऽण् तदा 'नस्तद्धिते ९८६' इति टिलोपः । यदा तु छात्रे तदानीम् 'इनण्यनपत्ये १७५९' इति प्रकृतिभावे प्राप्ते 'नान्तस्य टिलोपे सब्रह्मचारि-२०५२' इत्यनेन टिलोपः ॥ पण्यशब्द इति । 'अवद्यपण्य---३७९७' इति यदन्तो 'यतोऽनावः ५५७६' इत्याद्युदात्तः ॥ (५७४५) संज्ञायामिति । नियतप्रमाणकस्य नियतमूल्यस्य कम्बलस्यैषा संज्ञा ॥ समासान्तोदात्तत्वमेवेति । ननु पण्यशब्दस्य कृत्यप्रत्ययान्तत्वात् 'तत्पुरुषे तुल्यार्थ---५७०२' इत्यादिना पूर्वपदप्रकृतिस्वरेण भाव्यमत आह-प्रतिपदोक्ते इति । 'कृत्यतुल्याख्या अजात्या १०७८' इति यः कृत्यसमासः प्रतिपदोक्तः, तत्रैव सः, अयं तु 'विशेषणं विशेष्येण---१०६२' इति सामान्यलक्षणविहितः कम्बलशब्दस्य जातिवचनत्वात् । न च 'कृत्यतुल्याख्या अजात्या १०७८' इत्यस्य वैयर्थ्यं शङ्क्यम्, तद्धि गुणक्रियावाचिनोरनियमेन पूर्वनिपातप्रसक्ते कृत्यान्तस्य पूर्वनिपातार्थं वचनम्, न तु जातिनिषेधार्थम्, अजात्येति वचनं न्यायसिद्धार्थानुवाद एवेति स्थितम् ॥ दासीभार इति । 'दंसेष्टो न आ च ४८९४' इति टित्वान्ङीप् । उदात्तनिवृत्तिस्वरेण दासीशब्दोऽन्तोदात्तः ॥ देवहूतिरिति । देवः पचाद्यजन्तः ॥ यस्य तत्पुरुषस्येत्यादि । एतेन दासीभारादेराकृतिगणत्वं दर्शितम् ॥ (५७४६) चतुर्थी--। तस्मै इदं तदर्थं तच्छब्देन चतुर्थ्यन्तस्यार्थ उच्यते तदाह-चतुर्थ्यन्तार्थाय यदिति ॥ यूपदार्विति । निदिति दीर्घश्चेत्यनुवर्तमाने 'कुयुभ्यां च ४५१०' इति पः । नित्स्वादाद्युदात्तो यूपशब्दः ॥ (५७४७) देवार्थमिति । देवः पचाद्यजन्तः ॥ (५७४८) गोहितमिति । 'चतुर्थी चाशिष्या---९२४' इत्यादिना चतुर्थी ॥ (५७४९) आद्युदात्त इति । 'श्रिञ् सेवायाम्' । 'वहिश्रियुद्रुग्लाहात्वरिभ्यो नित् ४६९५' इति निप्रत्ययस्य नित्त्वादाद्युदात्तः ॥ पूगशब्द इति । 'मुदिग्रोर्गग्गौ ४३२७' बाहुलकात्पूञोऽपि गक् ॥ कृताकृतमिति । 'क्तेन नञ्विशिष्टेनानञ् १०६७' इति समासः । अनिष्ठेत्यनुच्यमाने इहैव स्यात् । श्रेण्यादिसमासापेक्षया 'क्तेन नञ्विशिष्टेन---१०६७' इति समासस्य प्रतिपदोक्तत्वादिति हरदत्तः ॥ (५७५०) अहीने--। हीनं त्यक्तं न हीनमहीनम् ॥ अहीनवाचिनि समास इति । पूर्वपदद्वारेण समासस्याहीनवाचित्वम् ॥ कष्टश्रित इति । 'द्वितीया श्रिता-९९३' इति समासः ॥ कष्टशब्द इति । क्तान्तत्वात् ॥ ग्रामशब्द इति । 'ग्रसेरा च ४३४२' इति मन्प्रत्ययान्त आद्युदात्तः ॥ (५७५१) अनुपसर्ग इति वक्तव्यमिति । सूत्रेऽहीनग्रहणमपनीयानुपसर्गग्रहणं कर्तव्यं व्यापकत्वादित्यर्थः ॥ थाथेत्यस्यापवाद इति । तथा च---प्रत्युदाहरणे थाथादिस्वर इति भावः ॥ (५७५२) तृतीया-। त्वोतास इति । त्वया ऊता रक्षिताः त्वोतासः । 'प्रत्ययोत्तरपदयोश्च १९२४' इति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः । अवतेः क्तः 'ज्वरत्वर-३५२५' इत्यूठ् । 'एत्येधत्यूठ्सु १०८' इति वृद्धिरिडागमस्य चाभावश्छान्दसः । तदन्ताज्जसः 'आज्जसेरसुक् ५४२६' इत्यसु-

---

१ केचित्तु-यस्य समासस्येति वदन्ति ॥

रगन्तः । कर्मणि किम् । रथेन यातो रथयातः ॥ ( ५७५३ ) (सू) गतिरनन्तरः । ६ । २ । ४९ । कर्मार्थे क्तान्ते परेऽव्यवहितो गतिः प्रकृत्या । थाथेत्यस्यापवादः । पुरोहितम् । अनन्तरः किम् । अभ्युद्धृतः । कारकपूर्वपदस्य तु सतिशिष्टस्थाथादिस्वर एव । दूरादागतः ॥ (५७५४) (सू) तादौ च निति कृत्यतौ । ६ । २ । ५० । तकारादौ निति तुशब्दवर्जिते कृति परेऽनन्तरो गतिः प्रकृत्या । अग्ने रायो नृतमस्य प्रभूतौ । सङ्गतिं गोः । कृत्स्वरापवादः । तादौ किम् । प्रजल्पाकः । निति किम् । प्रकर्ता । तृजन्तः । अतौ किम् । आगन्तुः ॥ ( ५७५५ ) (सू) तवै चान्तश्च युगपत् । ६ । २ । ५१ । तवैप्रत्ययान्तस्यान्त उदात्तो गतिश्चानन्तरः प्रकृत्या युगपच्चैतदुभयं स्यात् । अन्वेतवा उ । कृत्स्वरापवादः ॥ ( ५७५६ ) (सू) अनिगन्तोऽञ्चतौ वप्रत्यये । ६ । २ । ५२ । अनिगन्तो गतिर्वप्रत्ययान्तेऽञ्चतौ परे प्रकृत्या । ये पराञ्चस्तान् । अनिगन्त इति किम् । प्रत्यञ्चो यन्तु । कृत्स्वरात्परत्वादयमेव । जहि वृष्ण्यानि कृणुही पराचः । वप्रत्यये किम् । उदञ्चनम् ॥ ( ५७५७ ) (सू) न्यधी च । ६ । २ । ५३ । वप्रत्ययान्तेऽञ्चताविगन्तावपि न्यधी प्रकृत्या । न्यङ्ङुत्तानः । 'उदात्तस्वरितयोर्यण' इति अञ्चतेरकारः स्वरितः । अध्यङ् ॥ ( ५७५८ ) (सू) ईषदन्यतरस्याम् । ६ । २ । ५४ । ईषत्कडारः । ईषदित्ययमन्तोदात्तः । ईषद्भेद इत्यादौ कृत्स्वर एव ॥ ( ५७५९ ) (सू)

---

गागमः । पूर्वपदप्रकृतिस्वरे कृते 'एकादेश उदात्तेनोदात्तः ५५२९' ततः स्वरितप्रचयौ ॥ **महाराजहत इति** । 'राजाहःसखिभ्यष्टच् ११३४' इति टजन्तो महाराजशब्दोऽन्तोदात्तः ॥ **रगन्त इति** । 'रोदेर्णिलुक् च ४३८२' इति विहितः ॥ **रथेन यात इति** । गत्यर्थत्वात्कर्तरि क्तः ॥ ( ५७५३ ) **पुरोहितमिति** । 'पूर्वाधरावराणामसि पुरधवश्चैषाम् २६८६' इत्यसिप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः पुरःशब्दः । अत्र समासान्तोदात्तत्वम् । अव्ययपूर्वपदप्रकृतिस्वरः कृत्स्वरः थाथादिस्वर इत्येतेषु प्राप्तेषु पूर्वपदप्रकृतिस्वरो भवति ॥ **अभ्युद्धृत इति** । इह हृतशब्दस्योच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेणाद्युदात्तोद्धृतशब्दस्य पुनरभिशब्देन समासः । तस्य 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् १००५' इति परिभाषया उद्धृतशब्दः क्तान्त उत्तरपदम् । एवं समासान्तोदात्तत्वे प्राप्ते तद्बाधकाव्ययपूर्वपदप्रकृतिस्वरत्वे तदपवादे कृत्स्वरे तदपवादस्थाथादिस्वरः प्राप्तस्तमपोद्याभेरयं स्वरः स्यात्सोऽनन्तरग्रहणेन वार्यते । नन्वनन्तरग्रहणेनाप्यसौ दुर्वारः कृद्ग्रहणपरिभाषया उद्धृतशब्दस्य क्तान्तत्वेऽभेस्तदानन्तर्यसत्त्वादिति चेत्, मैवम्—अनन्तरग्रहणसामर्थ्यादिह धातोरनन्तरो गतिराश्रीयते । अभिश्च न तथा । नन्वेवं मा भूदभेः स्वरः, इष्टसिद्धिस्तु कथम्, अभ्युद्धृतशब्दे हि उच्छब्दस्य स्वर इष्यते 'संसृष्टं धनमुभयं समाकृतम्' इति मन्त्रे समाकृतशब्दे आङः स्वरदर्शनात् । न चासौ प्रकृतसूत्रेण सिध्यति । प्रथमसमासे तत्प्रवृत्तावपि द्वितीयसमासे थाथादिस्वरस्य प्राप्तेरुक्तत्वात् । न च तं बाधित्वा गतिस्वरः प्रवर्तत इति वाच्यम्, द्वितीयसमासे उदः पूर्वपदत्वाभावात् । अत्रोच्यते——धातोरनन्तर इति व्याख्यानादेव पूर्वपदत्वं विनापि स्वरोऽयं प्रवर्त्तते । न हि क्तप्रकृतिभूतं धातुं प्रति पूर्वपदत्वं गतेः संभवति । तस्मादभ्युद्धृतं समासकृतमिति तावत्सुस्थम् । ननु दूरादागत इत्यादौ कारकपूर्वेऽपि गतिस्वरः स्याद्, इष्यते तु थाथादिस्वरः । अत आह——**कारकपूर्वेति** । अयं भावः——अनन्तरशब्दोऽयमनन्तरमपेक्ष्य प्रवर्तते, तत्र चानन्तरो गतिरित्युक्ते अनन्तरोऽपि संनिधानाद्गतिरेव प्रतीयते, ततश्चापूर्वपदार्थमप्यनन्तरग्रहणं गतिद्वयसमवधाने एवानन्तरस्य प्रकृतिस्वरत्वं प्रापयतीति दूरादागतादौ न दोष इति । अथवा 'कारकाद्दत्तश्रुतयोः ५८५४' इति सूत्रे 'कारकात्' इति योगो विभज्यते, क्तग्रहणं गतिग्रहणं चानुवर्तते, कारकात्परं क्तान्तं सगतिकमुत्तरपदमन्तोदात्तं स्यादित्यर्थः । तत्र दूराद्गत इत्यादौ थाथादिसूत्रेणैव सिद्धत्वात् दूरादागत इत्यादौ 'गतिरनन्तरः ५७५३' इत्यस्य बाधनार्थमेवेदं सूत्रमिति दिक् ॥ **दूरादागत इति** । 'स्तोकान्तिक——१०१५' इति समासः । 'पञ्चम्याः स्तोकादिभ्यः १३७५' इत्यलुक् ॥ ( ५७५४ ) **प्रभूताविति** । क्तिन्नयम् ॥ **प्रजल्पाक इति** । 'जल्पभिक्षकुट्टलुण्टवृङः षाकन् ४१५६' ॥ **आगन्तुरिति** । 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ४२६८' ॥ ननु कृतीति व्यर्थम्, तथा हि—गतेरयं स्वरो विधीयते गतिसंज्ञा च धातुमाक्षिपति, स च प्रत्ययविशिष्ट एव प्रयोगार्हः । धातोश्च द्वये प्रत्ययाः, तिङः कृतश्च तत्र तिङन्ते पूर्वपदत्वासंभवाद् भविष्यतीति चेत्, सत्यम्——कृद्ग्रहणं कृत्संज्ञाप्रवृत्तिकालोपलक्षणार्थं तेन कृदुपदेशे तादित्वलाभात्प्रलपितेत्यादि सिध्यति । स्वरप्रवृत्तिवेलायां तादित्वाभावेऽपि पूर्वं तत्सत्त्वात् । आदिग्रहणं शक्यमकर्तुम्, 'यस्मिन्विधिः-' इत्येव सिद्धेः ॥ ( ५७५५ ) **तवै चा-। अन्त उदात्त इति** । कथं पुनरन्तरेणोदात्तग्रहणमुदात्तो भवतीत्ययमर्थो लभ्यते । शृणु——'प्रकृत्या' इति वर्तते तत्रैवमभिसंबन्धः क्रियते तवैप्रत्ययान्तस्य यः प्रकृत्याश्रयः स्वरः प्राप्तः सोऽन्तस्य भवतीति स चोदात्त एवेति । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् ॥ **अन्वेतवा उ इति** । 'उपसर्गाश्चाभिवर्जम् ५६६३' इत्यनुराद्युदात्तः ॥ ( ५७५६ ) **अनिगन्तोऽञ्चतौ——। पराञ्च इति** । 'ऋत्विक्——५०७' इत्यादिना किन्, स च वकारमात्रम्, ककारादीनामनुबन्धत्वात् । 'उगिदचाम्-३६१' इति नुम् । पराशब्द आद्युदात्तः ॥ **प्रत्यञ्च इति** । कृदुत्तरपदप्रकृतिस्वरः ॥ **परत्वादिति** । चुस्वरस्यावकाशः दधीचा । यत्र गतिर्नास्ति । अनिगन्तस्वरस्यावकाशः पराञ्चः । पराच इत्यादावुभयप्रसङ्गे परत्वादनिगन्तस्वर एव भवति । न चायं युक्तो विप्रतिषेधः, चुस्वरः सतिशिष्टः, भसंज्ञायामल्लोपे च कृते प्राप्तत्वात् । सत्यम्——नायं विप्रतिषेधः । किं तर्हि इष्टिरेव । चोरनिगन्तोऽञ्चतावप्रत्यये इत्येव स्वर इष्यत इति हरदत्तः । इहापि मूले परत्वादित्यस्येष्टत्वादित्यर्थः ॥ ( ५७५७ ) **न्यधी च** । अत्रापि चुस्वरादयमेव । कृत्स्वरापवादौ योगौ ॥ ( ५७५८ ) **ईषदन्य-।** ईषच्छब्दः पूर्वपदप्रकृतिस्वरो वा स्यात् ॥ **अन्तोदात्त इति** । फिट्स्वरेण । एतदभावे समासान्तोदात्तत्वम् ॥ **ईषद्भेद इति** । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ५१२३' ॥ **कृत्स्वर एव इति** । परत्वात् । अथवा 'ईषद् गुणवचनेन

हिरण्यपरिमाणं धने । ६ । २ । ५५ । सुवर्णपरिमाणवाचि पूर्वपदं वा प्रकृत्या धने । द्वे सुवर्णे परिमाणमस्येति द्विसुवर्णं तदेव धनं द्विसुवर्णधनम् । बहुव्रीहावपि परत्वाद्विकल्प एव । हिरण्यं किम् । प्रस्थधनम् । परिमाणं किम् । काञ्चनधनम् । धने किम् । निष्कमाला ॥ ( ५७६० ) (सू.) **प्रथमोऽचिरोपसम्पत्तौ** । ६ । २ । ५६ । प्रथमशब्दो वा प्रकृत्याऽभिनवत्वे । प्रथमवैयाकरणः । सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दः प्रथेरमजन्तः । अचिरेति किम् । प्रथमो वैयाकरणः ॥ ( ५७६१ ) (सू.) **कतरकतमौ कर्मधारये** । ६ । २ । ५७ । वा प्रकृत्या । कतरकठः । कर्मधारयग्रहणमुत्तरार्थम् । इह तु प्रतिपदोक्तत्वादेव सिद्धम् ॥ ( ५७६२ ) (सू.) **आर्यो ब्राह्मणकुमारयोः** । ६ । २ । ५८ । आर्यकुमारः । आर्यब्राह्मणः । आर्यो ण्यदन्तत्वादन्तस्वरितः । आर्यः किम् । परमब्राह्मणः । ब्राह्मणेति किम् । आर्यक्षत्रियः । कर्मधारय इत्येव ॥ ( ५७६३ ) (सू.) **राजा च** । ६ । २ । ५९ । ब्राह्मणकुमारयोः परतो वा प्रकृत्या कर्मधारये । राजब्राह्मणः । राजकुमारः । योगविभाग उत्तरार्थः ॥ ( ५७६४ ) (सू.) **षष्ठी प्रत्येनसि** । ६ । २ । ६० । षष्ठ्यन्तो राजा प्रत्येनसि परे वा प्रकृत्या । राजप्रत्येनाः । षष्ठी किम् । अन्यत्र न ॥ ( ५७६५ ) (सू.) **क्ते नित्यार्थे** । ६ । २ । ६१ । क्तान्ते परे नित्यार्थे समासे पूर्वं वा प्रकृत्या । नित्यप्रहसितः । कालाः इति द्वितीयासमासोऽयम् । नित्यशब्दस्त्यबन्त आद्युदात्तः । हसित इति थाथादिस्वरेणान्तोदात्तः । नित्यार्थे किम् । मुहूर्तप्रहसितः ॥ ( ५७६६ ) (सू.) **ग्रामः शिल्पिनि** । ६ । २ । ६२ । वा प्रकृत्या । ग्रामनापितः । ग्रामशब्द आद्युदात्तः । ग्रामः किम् । परमनापितः । शिल्पिनि किम् । ग्रामरथ्या ॥ ( ५७६७ ) (सू.) **राजा च प्रशंसायाम्** । ६ । २ । ६३ । शिल्पिवाचिनि परे प्रशंसार्थं राजपदं वा प्रकृत्या । राजनापितः । राजकुलालः । प्रशंसायां किम् । राजनापितः । शिल्पिनि किम् । राजहस्ती ॥ ( ५७६८ ) (सू.) **आदिरुदात्तः** । ६ । २ । ६४ । अधिकारोऽयम् ॥ ( ५७६९ ) (सू.) **सप्तमीहारिणौ धर्म्येऽहरणे** । ६ । २ । ६५ । सप्तम्यन्तं हारिवाचि च आद्युदात्तं धर्म्ये परे । देयं यः स्वीकरोति स हारी त्युच्यते । धर्म्यमित्याचारनियतं देयम् । मुकुटेकार्षापणम् । हलेद्विपदिका । संज्ञायामिति सप्तमीसमासः । कारनाम्नि चेति लुक् । याज्ञिकाश्वः । वैयाकरणहस्ती । क्वचिदयमाचारो मुकुटादिषु कार्षापणादि दातव्यं याज्ञिकादीनां त्वश्वादिरिति । धर्म्ये इति किम् । कर्मकरवर्द्धितकः । अहरणे किम् । वाडवहरणम् । वडवाया अयं वाडवः । तस्य बीजनिषे-

---

१०८९’ इति प्रतिपदोक्तसमासग्रहणादुपपदसमासेऽस्याप्रवृत्तिरिति ॥ ( ५७५९ ) **द्वे सुवर्णे इति** । ‘पञ्चकृष्णलको माषस्ते सुवर्णास्तु षोडश । पलं सुवर्णाश्चत्वारः’ इति ॥ **द्विसुवर्णमिति** । पक्षे समासस्वरः ॥ **बहुव्रीहावपीति** । अत्र तत्पुरुषाधिकाराभावात् ॥ (५७६०) **प्रथमो—**। अचिरोपसंपत्तिरचिरोपसंश्लेषः । अभिनवत्वमित्यर्थः । तदाह—**अभिनवत्व इति** । **अचिरेति किमिति** । अचिरोपसंपत्ताविति किमर्थमित्यर्थः ॥ **प्रथमवैयाकरण इति** । वैयाकरणानामाद्यो मुख्यो वा यः प्रथमवैयाकरणशब्दः स नित्यमन्तोदात्त एव ॥ ( ५७६१ ) **कतर—**। एतौ पूर्वपदभूतौ कर्मधारये प्रकृतिस्वरौ वा स्याताम् । कतरकतमौ डतरडतमयोश्चित्त्वादन्तोदात्तौ ॥ **इह त्वित्यादि** । ‘कतरकतमौ जातिपरिप्रश्ने १०७१’ इति प्रतिपदोक्तो यः समासस्तस्यैव ग्रहणम् । स च कर्मधारय एव तस्मान्नेहार्थः कर्मधारयग्रहणेनेति भावः ॥ ( ५७६२ ) **आर्यो ब्राह्मण—**। ब्राह्मणकुमारयोरुत्तरपदयोरार्यः पूर्वपदं प्रकृतिस्वरं वा स्यात्कर्मधारये ॥ ( ५७६३ ) **अन्तस्वरित इति** । ‘तित्स्वरितम् ५६९४’ इत्यनेन ॥ **ब्राह्मणेति किमिति** । ब्राह्मणकुमारयोरिति किमर्थमित्यर्थः ॥ **राजब्राह्मण इति** । राजशब्दो ब्राह्मणे ताद्धर्म्याद्वर्तत इति सामानाधिकरण्यात्कर्मधारयः । राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः ॥ **उत्तरार्थ इति** । उत्तरो विधी राजशब्दस्यैव यथा स्यादार्यशब्दस्य मा भूत् । यथासंख्याभावोऽपि पृथग्योगकरणस्य प्रयोजनं ज्ञेयम् ॥ (५७६४) **राजप्रत्येना इति** । प्रतिगतमेनः पापं यस्य स प्रत्येनाः । राज्ञः प्रत्येनाः ॥ **अन्यत्र नेति** । राजा चासौ प्रत्येनाश्च राजप्रत्येना इत्यत्र ॥ (५७६५) **द्वितीयासमासोऽयमिति** । द्वितीया पुनरत्यन्तसंयोगे । अथवा ‘अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् ७७८’ ॥ **त्यबन्त इति** । ‘त्यब्नेर्ध्रुवे १८६५’ इति त्यप् ॥ **मुहूर्तप्रहसित इति** । थाथादिस्वरः समासस्वरस्य द्वितीयापूर्वपदप्रकृतिस्वरो बाधकस्तस्य थाथादिस्वरः, तस्यापि पाक्षिकोऽपवादोऽयम् ॥ ( ५७६६ ) **ग्रामः—**। ग्राम इति स्वरूपग्रहणं शिल्पिनीत्यर्थग्रहणम् । ग्रामशब्दः पूर्वपदप्रकृतिस्वरो वा स्याच्छिल्पिवाचिन्युत्तरपदे ॥ **ग्रामनापित इति** । षष्ठीसमासः ॥ **आद्युदात्त इति** । ‘ग्रसेरा च ४३४२’ इति मनिन् । नित्त्वादाद्युदात्तः ॥ (५७६७) **राजनापित इति** । कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशंसा । षष्ठीसमासे च राजयोग्यतया तस्य प्रशंसा । स हि कर्मणि प्रवीणत्वाद्राजानं प्रति योग्यो भवति राजार्थमित्युक्ते प्रशंसा गम्यते ॥ ( ५७६८ ) **आदिरुदात्तः** । पूर्वपदमित्यस्येहार्थात्षष्ठ्या विपरिणामः । सर्वत्र चात्र प्रकरणे पूर्वपदविषये षष्ठ्यर्थे प्रथमा ॥ ( ५७६९ ) **सप्तमी—**। हारीत्यावश्यके णिनिः । जनपदे ग्रामे कुले वा परम्परया यातः सदाचारो धर्मस्तस्मादनपेतं धर्म्यम् । ‘धर्मपथ्यर्थ— २२३८’ इति यत् । तेन च प्राप्यमित्यर्थे ‘नौवयोधर्म—२२३७’ इत्यादिना यत् । आचारवशादवश्यं कर्तव्यमित्यर्थः । हारिण्युदाहरणान्याह—**याज्ञिकाश्व इति** । षष्ठीसमासः ॥ **कर्मकरवर्द्धितक इति** । वर्द्धितको नाम मूले स्थूलोऽग्रे सूक्ष्म ओदनपिण्डः स कर्मकराय दीयते । अन्यथा कर्म न कुर्यादिति । न त्वयं धर्मः ॥ **वाडवहरणमिति** । क्वचिदयमाचारः बीजनिषेकानन्तरं वाडवाय शरीरपुष्ट्यर्थं योग्यमसुरादि दातव्यं यद्गृह्यते तद्वाडवहरणमित्युच्यते । अत्रास्मिन्

कादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते तद्धरणमित्युच्यते । परोऽपि कृत्स्वरो हारिस्वरेण बाध्यत इत्यहरण इति निषेधेन ज्ञाप्यते । तेन वाडवहार्यमिति हारिस्वरः सिध्यति ॥ ( ५७७० ) सू० युक्ते च । ६ । २ । ६६ । युक्तवाचिनि समासे पूर्वमाद्युदात्तम् । गोबल्लवः । कर्तव्ये तत्परो युक्तः ॥ ( ५७७१ ) सू० विभाषाऽध्यक्षे । ६ । २ । ६७ । गवाध्यक्षः ॥ ( ५७७२ ) सू० पापं च शिल्पिनि । ६ । २ । ६८ । पापनापितः । पापाणके इति प्रतिपदोक्तस्यैव ग्रहणात् षष्ठीसमासो न ॥ ( ५७७३ ) सू० गोत्राऽन्तेवासिमाणवब्राह्मणेषु क्षेपे । ६ । २ । ६९ । भार्यासौश्रुतः । सुश्रुतोऽपत्यस्य भार्याप्रधानतया क्षेपः । अन्तेवासी । कुमारीदाक्षाः । ओदनपाणिनीयाः । कुमार्यादिलाभकामा ये दाक्ष्यादिभिः प्रोक्तानि शास्त्राण्यधीयते ते एवं क्षिप्यन्ते । भिक्षामाणवः । भिक्षां लप्स्येऽहमिति माणवः । भयब्राह्मणः । भयेन ब्राह्मणः सम्पद्यते । गोत्रादिषु किम् । दासीश्रोत्रियः । क्षेपे किम् । परमब्राह्मणः ॥ ( ५७७४ ) सू० अङ्गानि मैरेये । ६ । २ । ७० । मद्यविशेषो मैरेयः । मधुमैरेयः । मधुविकारस्य तस्य मध्वङ्गम् । अङ्गानि किम् । परममैरेयः । मैरेये किम् । पुष्पासवः ॥ ( ५७७५ ) सू० भक्ताख्यास्तदर्थेषु । ६ । २ । ७१ । भक्तमन्नम् । भिक्षाकंसः । भाजीकंसः । भिक्षादयोऽन्नविशेषाः । भक्ताख्याः किम् । समाशशालयः । समशनं समाश इति क्रियामात्रमुच्यते । तदर्थेषु किम् । भिक्षाप्रियः । बहुव्रीहिरयम् । अत्र पूर्वपदमन्तोदात्तम् ॥ ( ५७७६ ) सू० गोबिडालसिंहसैन्धवेषूपमाने । ६ । २ । ७२ । धान्यगवः । गोबिडालः । तृणसिंहः । सक्तुसैन्धवः । धान्यं गौरिवेति विग्रहः । व्याघ्रादिः । गवाकृत्या संनिवेशितं धान्यं धान्यगवशब्देनोच्यते । उपमाने किम् । परमसिंहः ॥ (५७७७) सू० अके जीविकार्थे ।६।२।७३ । दन्तलेखकः । यस्य दन्तलेखनेन जीविका । नित्यं क्रीडेति समासः । अके किम् । रमणीयकर्ता । जीविकार्थे किम् । इक्षुभक्षिकां मे धारयसि ॥ ( ५७७८ ) सू० प्राचां क्रीडायाम् । ६ । २ । ७४ । प्राग्देशवाचिनां या क्रीडा तद्वाचिनि समासे अकप्रत्ययान्ते परे पूर्वमाद्युदात्तं स्यात् । उद्दालकपुष्पभञ्जिका । संज्ञायामिति ण्वुल् । प्राचां किम् । जीवपुत्रप्रचायिका । इयमुदीचां क्रीडा । क्रीडायां किम् । तव पुष्पप्रचायिका । पर्याये ण्वुल् ॥ ( ५७७९ ) सू० अणि नियुक्ते । ६ । २ । ७५ । अणन्ते परे नियुक्तवाचिनि समासे पूर्वमाद्युदात्तम् । छत्रधारः । नियुक्ते किम् । काण्डलावः ॥

---

स्वरे निषिद्धे कृत्स्वरे प्राप्ते 'अनो भावकर्मवचनः ५८५६ ' इत्युत्तरपदान्तोदात्तत्वम् । ननु परत्वादेवायं स्वरो भविष्यति । किं प्रतिषेधेनेत्यत आह-**परोऽपीति** ॥ (५७७०) **युक्तवाचिनीति** । युक्तः कर्तव्ये तत्परः । तद्वाचिनीत्यर्थः । गोबल्लवः । बल्लवादयः शब्दा गवादीनां पालकवचनाः ॥ ( ५७७१ ) **विभाषा**—। अध्यक्षशब्दे परे पूर्वपदमाद्युदात्तं वा स्यात् । अध्यक्षशब्दोऽपि समासे युक्तवाच्येवेति पूर्वेण नित्ये प्राप्ते विकल्पः ॥ ( ५७७२ ) **पापम्**-। पापमिति स्वरूपग्रहणं शिल्पिनीत्यर्थग्रहणं व्याख्यानात् । शिल्पिवाचिनि परे पापशब्दः पूर्वपदमाद्युदात्तं वा स्यात् ॥ ( ५७७३ ) **गोत्रान्तेवासि**-। गोत्रवाचिनि अन्तेवासिवाचिनि चोत्तरपदे माणवब्राह्मणयोश्च परतः क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् ॥ **भार्यासौश्रुत इति**। सुश्रृणोतीति सुश्रुत् तस्यापत्यं सौश्रुतः ॥ **भार्याप्रधानतयेति** । भार्याप्रधानः सौश्रुत इति शाकपार्थिवादित्वादुत्तरपदलोपिसमास इति दर्शयति । दक्षेण प्रोक्तं दाक्षं तदधीते दाक्षः ॥ **कुमार्यादिलाभकाम इति** ॥ तत्प्रोक्ते ग्रन्थे श्रद्धायामसत्यामपि कुमार्यादिलाभकामः संस्तत्र प्रवर्तते तत एवं क्षिप्यते । पूर्ववत्समासः। **भयब्राह्मण इति** । 'तृतीया १०००' इति योगविभागात्समासः । योऽब्राह्मणः सन् राजदण्डादिभयेन ब्राह्मणाचारं करोति स एवमुच्यते ॥ (५७७४) **अङ्गानि**-। अङ्गमारम्भकम् । बहुवचनं स्वरूपविधिनिरासार्थम् । मैरेयशब्दे उत्तरपदे तदर्थारम्भकवाचीनि पूर्वपदान्याद्युदात्तानि स्युः ॥ **मद्यविशेष इति** । सुराव्यतिरिक्तं मद्यं मैरेयमित्यर्थः ॥ ( ५७७५ ) **भक्ताख्या**-। अन्नवाचि पूर्वपदमाद्युदात्तं स्यात्तदर्थेषूत्तरपदेषु । अत्र बहुवचननिर्देशादेव स्वरूपविधिनिरासे सिद्धे आख्याग्रहणं भक्ष्यविशेषवाचिनां भिक्षादीनां ग्रहणार्थम् । अन्यथा पर्यायाणामेवान्नादीनां ग्रहणं स्यात् । भिक्षाकंसादयः षष्ठीसमासाः । तादर्थ्ये चतुर्थीसमासस्तु न भवति, प्रकृतिविकार एव तस्येष्टत्वात् ॥ **बहुव्रीहिरिति** । तत्पुरुषश्चेदन्तोदात्तः ॥ ( ५७७६ ) **गोबिडाल**-। उपमानशब्दे प्रत्येकं संबन्धादेकवचनम् । गवादिषूपमानवाचिषूत्तरपदेषु पूर्वपदमाद्युदात्तं स्यात् ॥ **धान्यगव इति** । अत्रोपमितसमासे 'गोरतद्धितलुकि १०५५ ' इति टच् । अत्र पूर्वपदाद्युदात्तविधानसामर्थ्याट्टचश्चित्स्वरो बाध्यते । उपमानार्थो यो यत्रोदाहरणे यथा संभवति, स तथा योजयितव्यः । तत्र दिङ्मात्रं दर्शयति-**गवाकृत्येत्यादि** ॥ आकृतिः संस्थानम् ॥ संनिवेशितं व्यवस्थापितम् । एवमन्यत्रापि यत्किंचित्सादृश्यं योजयितव्यम् ॥ ( ५७७७ ) **अके**-। जीविकार्थवाचिनि समासे अकप्रत्ययान्ते उत्तरपदे पूर्वपदमाद्युदात्तं स्यात् ॥ **दन्तलेखक इति** । 'ण्वुल्तृचौ ३८५१' इति ण्वुल् ॥ ( ५७७८ ) **प्राचाम्**-। प्राचां क्रीडायामिति श्रुतयोरेवान्वयसंभवान्मतेनेत्यध्याहारो न युज्यते इति तदाह-**प्राग्देशवाचिनां या क्रीडेति** । अजीविकार्थमिदम्॥ **उद्दालकपुष्पभञ्जिकेति** । 'नित्यं क्रीडा-१०२९' इति समासः ॥ ( ५७७९ ) **अणि नियुक्ते** । 'युजिर् योगे' इत्यस्य नियुक्त इति रूपम् । नियुक्तः अधिकृतः, स च कश्चित्कर्तव्ये तत्परो न भवतीति नियुक्त इत्यनेन सिद्ध्यति । युक्त इति सूत्रे हि ' युज समाधौ ' दिवादिरात्मनेपदी गृह्यते । समाधिस्तत्परता । अत्र रौधादिकस्य स्वारितेतो ग्रहणं, योगः संबन्धमात्रम् ॥ **छत्रधार इति** । 'कर्मण्यण् ३८७९'॥

(५७८०) (सू) शिल्पिनि चाकृञः ।६ । २ । ७६ । शिल्पिवाचिनि समासे अण्णन्ते परे पूर्वमाद्युदात्तं स चेदण् कृञः परो न भवति । तन्तुवायः । शिल्पिनि किम् । काण्डलावः । अकृञः किम् । कुम्भकारः ॥ (५७८१) (सू) संज्ञायां च ।६ । २ ।७७ । अण्णन्ते परे । तन्तुवायो नाम कृमिः । अकृञ इत्येव । रथकारो नाम ब्राह्मणः ॥ (५७८२) (सू) गोतन्तियवं पाले । ६ । २ । ७८ । गोपालः । तन्तिपालः । यवपालः । अनियुक्तार्थो योगः । गो इति किम् । वत्सपालः । पाले इति किम् । गोरक्षः ॥ ( ५७८३ ) (सू) णिनि । ६ । २ ।७९ । पुष्पहारी ॥ (५७८४ ) (सू) उपमानं शब्दार्थप्रकृतावेव ।६ ।२ । ८० । उपमानवाचि पूर्वपदं णिन्यन्ते परे आद्युदात्तम् । उष्ट्रक्रोशी । ध्वाङ्क्षरावी । उपमानग्रहणमस्य पूर्वयोगस्य च विषयविभागार्थम् । शब्दार्थप्रकृतौ किम् । वृकवञ्ची । प्रकृतिग्रहणं किम् । प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्था तत्रैव यथा स्यात् । इह मा भूत् । गर्दभोच्चारी ॥ (५७८५) (सू) युक्तारोह्यादयश्च ।६।२।८१ । आद्युदात्ताः । युक्तारोही । आगतयोधी । क्षीरहोता ॥ ( ५७८६ ) (सू) दीर्घकाशतुषभ्राष्ट्रवटं जे ।६।२।८२। कुटीजः । काशजः । तुषजः । भ्राष्ट्रजः । वटजः ॥ (५७८७) (सू) अन्त्यात्पूर्वं बह्वचः ।६।२।८३। बह्वचः पूर्वस्यान्त्यात्पूर्वपदमुदात्तं जे उत्तरपदे । उपसरजः । आमलकीजः । बह्वचः किम् । दग्धजानि तृणानि ॥ ( ५७८८ ) (सू) ग्रामेऽनिवसन्तः । ६ । २ । ८४ । ग्रामे परे पूर्वपदमुदात्तम् । तच्चेन्निवसद्वाचि न । मल्लग्रामः । ग्रामशब्दोऽत्र समूहवाची । देवग्रामः । देवस्वामिकः । अनिवसन्तः किम् । दाक्षिग्रामः । दाक्षिनिवासः ॥ ( ५७८९ ) (सू) घोषादिषु च । ६ । २ । ८५ । दाक्षिघोषः । दाक्षिकटः । दाक्षिह्रदः ॥ ( ५७९० ) (सू) छात्र्यादयः शालायाम् । ६ । २ । ८६ । छात्रिशाला । व्याडिशाला । यदापि शालान्तः समासो नपुंसकलिङ्गो भवति, तदापि तत्पुरुषे शालायां नपुंसक इत्येतस्मात्पूर्वविप्रति-

---

( ५७८० ) **शिल्पि–**। 'नियुक्ते' इत्येव सिद्धे कृञः प्रतिषेधार्थं वचनम् ॥ **तन्तुवाय इति** । 'ह्वावामश्च ३८८२ ' इत्यण् । 'आतो युक्–३६८५'॥ ( ५७८१ ) **संज्ञायाम्–**। संज्ञायां विषयेऽण्णन्ते उत्तरपदे पूर्वपदमाद्युदात्तं स्यात् स चेदण् कृञो न भवति ॥ ( ५७८२ ) **गोतन्ति–**॥ गोतन्तियवशब्दा आद्युदात्ताः स्युः पालशब्दे परे ॥ **गोपाल इति** । गाः पालयतीति विग्रहः ॥ **तन्तिपाल इति** । 'तनु विस्तारे' क्तिन् । तन्तिर्वत्सानां बन्धनरज्जुः ॥ ( ५७८३ ) **णिनि** । णिन्नन्ते उत्तरपदे पूर्वपदमाद्युदात्तम् ॥ ( ५७८४ ) **उपमानम्–**। **उष्ट्रक्रोशीत्यादि** । ' कर्तर्युपमाने ३९९५ ' इति णिनिः ॥ **शब्दार्थप्रकृतौ किमिति** । सूत्रे किमर्थमित्यर्थः ॥ **वृकवञ्चीति** । कृत्स्वर एव भवति ॥ **प्रकृतिरेवेत्यादि** । असति प्रकृतिग्रहणे शब्दार्थात्परो णिनिस्तदन्ते उत्तरपदे इत्यर्थो विज्ञायेत, तथा च यत्रापि धातूपसर्गसमुदायाच्छब्दार्थात्परो णिनिस्तत्रापि स्यात् । ' कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् १००५ ' इति परिभाषया णिन्नन्तोत्तरपदत्वानपायात् । प्रकृतिग्रहणे तु न भवति, योऽत्र धातुर्नासौ शब्दार्थः । यश्च शब्दार्थो धातूपसर्गसमुदायः, न ततो णिनिर्विहित इति भावः । एव किम् । शब्दार्थप्रकृतौ उपमानमेवेत्येवं नियमो मा भूत् ॥ ( ५७८५ ) **युक्तारोह्या–**। युक्तारोह्यादयः समासा आद्युदात्ताः स्युः॥ **युक्तारोहीत्यादि** । अत्र ' णिनि ५७८३ ' इत्येव सिद्धे पूर्वोत्तरपदनियमार्थं सूत्रम् । यत्र युक्तादीन्येव पूर्वपदानि आरोह्यादीन्येवोत्तरपदानि, तत्रैव यथा स्यादित्यर्थः ॥ **क्षीरहोतेति** । याजकादित्वात्षष्ठीसमासोऽयम् । समासस्वरापवादे कृत्स्वरे प्राप्ते तदपवादे ' मन्क्तिन्–५८५७ ' इति तदपवादोऽयम् ॥ ( ५७८६ ) **दीर्घकाश–**। दीर्घान्तं पूर्वपदं काशादीनि च पूर्वपदानि आद्युदात्तानि स्युर्जे उत्तरपदे ॥ **कुटीज इति** । ' सप्तम्यां जनेर्डः ४०१४ ' ॥ ( ५७८७ ) **उपसरज इति** । स्त्रीगवादिषु पुंसां गर्भाधानाय प्रथममुपसरणमुपसरः 'प्रजने सर्तेः ५०४३' इत्यप् । तत्र जातः उपसरजः ॥ **आमलकीज इति** । ' दीर्घकाश–५७८७ ' इति बाधित्वा परत्वादयं स्वरः ॥ ( ५७८८ ) **ग्रामे–**। सूत्रे निवसत्यस्मिन्निति निपूर्वाद्वसेः 'नृवसिवहिभासिसाधिगाडिमण्डिनिनदिभ्यश्च ' इति झच् ॥ **मल्लग्राम इति** । षष्ठीसमासः । **दाक्षिग्राम इति** । दाक्षयो निवसन्त्यस्मिन्स उच्यते ॥ (५७८९) **घोषा–**। घोषादिषूत्तरपदेषु पूर्वपदमाद्युदात्तम् । अत्र ' निवसन्तः ' इति केचिदनुवर्तयन्ति, अपरे नानुवर्तयन्ति । तथा च दाक्षीणां घोषो निवासस्थानमित्यर्थे दाक्षिघोषशब्दे आद्युदात्तत्वं न भवति, मतान्तरे भवति ॥ ( ५७९० ) **छात्र्यादयः–**। शालाशब्दे परे छात्र्यादयः आद्युदात्ताः स्युः ॥ **यदापि शालान्त इत्यादि** । 'विभाषा सेनासुरा–११९० ' इत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम् । तत्रास्यावकाशो यो नपुंसकलिङ्गो न भवति, छात्रिशाला । ' तत्पुरुषे शालायाम्–५८२८ ' इत्यस्यावकाशो यश्छात्र्यादिपूर्वो न भवति प्रभुशालम् । क्षत्रियशालम् । यस्तु, छात्र्यादिपूर्वपदो नपुंसकलिङ्गश्च तत्र एकदेशविकृतस्यानन्यत्वादयमपि प्राप्नोति, 'तत्पुरुषे शालायाम्–५८२८'

---

१ युक्तारोही, आगतरोही, आगतयोधी, आगतवञ्ची, आग तनन्दी, आगतप्रहारी, आगतमत्स्यः, क्षीरहोता, भगिनीभर्ता, ग्रामगोधुक्, अश्वत्रिरात्रः, व्युष्टित्रिरात्रः, गर्गत्रिरात्रः, गणपादः, एकाशीतिपाद्, पात्रेसमितादयश्च, इति युक्तारोह्यादयः ॥ आकृतिगणोऽयम् । तेन अधिकशतवर्ष इत्यादि ॥ २ घोष, कट, वल्लभ, ह्रद, बदरी, पिङ्गल, पिशङ्ग, माला, रक्षा, शाला, कट, शाल्मली, अश्वत्थ, तृण, शिल्पी, मुनि, प्रेक्षा, इति घोषादिः ॥ ३ छात्रि, पेलि, भाण्डि, व्याडि, आखण्डि, आषाढि, गामि, इति छात्र्यादिः ॥

षेधेनायमेव स्वरः । छात्रिशालम् ॥ (५७९१) (सू) **प्रस्थेऽवृद्धमकर्क्यादीनाम्** । ६ । २ । ८७ । प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं स्यात् । इन्द्रप्रस्थः । अवृद्धं किम् । दाक्षिप्रस्थः । अकेति किम् । कर्कीप्रस्थः । मकरीप्रस्थः ॥ ( ५७९२ ) (सू) **मालादीनां च** । ६ । २ । ८८ । वृद्धार्थमिदम् । मालाप्रस्थः । शोणाप्रस्थः ॥ ( ५७९३ ) (सू) **अमहन्नवन्नगरेऽनुदीचाम्** । ६ । २ । ८९ । नगरे परे महन्नववर्जितं पूर्वमाद्युदात्तं स्यात् तच्चेदुदीचां न । ब्रह्मनगरम् । अमेति किम् । महानगरम् । नवनगरम् । अनुदीचां किम् । कार्त्तिकनगरम् ॥(५७९४) (सू) **अर्मे चावर्णं द्व्यच् त्र्यच्** । ६ । २ । ९० । अर्मे परे द्व्यच् त्र्यच् पूर्वमवर्णान्तमाद्युदात्तम् । गुप्तार्मम् । कुक्कुटार्मम् । अवर्णं किम् । बृहदर्मम् । द्व्यच् त्र्यच् किम् । कपिञ्जलार्मम् । अमहन्नवमित्येव । महार्मम् । नवार्मम् ॥ ( ५७९५ ) (सू) **न भूताधिकसञ्जीवमद्राश्मकज्जलम्** । ६ । २ । ९१ । अर्मे परे नैतान्याद्युदात्तानि । भूतार्मम् । अधिकार्मम् । सञ्जीवार्मम् । मद्राश्मग्रहणं संघातविगृहीतार्थम् । मद्रार्मम् । अश्मार्मम् । मद्राश्मार्मम् । कज्जलार्मम् ॥ ( ५७९६ ) (वा) **आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्** ॥ दिवोदासाय दाशुषे ॥ ( ५७९७ ) (सू) **अन्तः** । ६ । २ । ९२ । अधिकारोऽयं प्रागुत्तरपदादिग्रहणात् ॥ ( ५७९८ ) (सू) **सर्वं गुणकार्त्स्न्ये** । ६ । २ । ९३ । सर्वशब्दः पूर्वपदमन्तोदात्तम् । सर्वश्वेतः । सर्वमहान् । सर्वं किम् । परमश्वेतः । आश्रयव्याप्त्या परमत्वं श्वेतस्येति गुणकार्त्स्न्ये वर्तते । गुणेति किम् । सर्वसौवर्णः । कार्त्स्न्ये किम् । सर्वेषां श्वेततरः सर्वश्वेतः ॥ ( ५७९९ ) (सू) **संज्ञायां गिरिनिकाययोः** । ६ । २ । ९४ । एतयोः परतः पूर्वमन्तोदात्तम् । अञ्जनागिरिः । मौण्डनिकायः । संज्ञायां किम् । परमगिरिः । ब्राह्मणनिकायः ॥ ( ५८०० ) (सू) **कुमार्यां वयसि** । ६ । २ । ९५ । पूर्वपदमन्तोदात्तम् । वृद्धकुमारी । कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रप्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिः समानाधिकरणः । तच्च वय इह गृह्यते न कुमारत्वमेव । वयसि किम् । परमकुमारी ॥ ( ५८०१ ) (सू) **उदकेऽकेवले** । ६ । २ । ९६ । अकेवलं

---

इत्ययं च । तत्र पूर्वविप्रतिषेधादयमेव भवतीति वामनहरदत्तौ ॥ ( ५७९१ ) **प्रस्थे—**। मालादीनां वचनात् 'अवृद्धम्' इति च्छेदः । कर्क्यादिप्रतिषेधस्तु नामधेयार्थः स्यात् । 'वा नामधेयस्य १८८२' इति वृद्धसंज्ञा वक्तव्या ॥ **अकेति किमिति** । अकर्क्यादीनामिति किमित्यर्थः ॥ ( ५७९२ ) **माला-**। प्रस्थे परे मालादीनामादिरुदात्तः स्यात् ॥ **शोणाप्रस्थ इति** । 'एङ् प्राचां देशे १८८१' इति शोणाशब्दस्य वृद्धत्वम् ॥ ( ५७९३ ) **अम-**। **महन्नववर्जितं पूर्वपदमिति** । महद्वर्जितं नववर्जितं चेति प्रत्येकं संबन्धः ॥ **महानगरमिति** । 'आन्महतः समानाधिकरण-११५३' इति महत आत्त्वे कृतेऽवर्णान्तत्वादस्ति प्राप्तिः ॥ (५७९४ ) **नवार्ममिति** । नवशब्दः प्रत्यग्रवचनोऽकारान्तः ॥ ( ५७९५ ) **संघातविगृहीतार्थमिति** । मद्रशब्दस्य केवलस्य, मद्राश्मशब्दस्य संघातस्य च तस्य प्रतिषेधार्थः ॥ **मद्राश्मार्ममिति** । 'अनोऽश्मायःसरसां जातिसंज्ञयोः ११४२' इति समासान्ते कृते अवर्णान्तमेतत् । तदेवं मद्राश्मार्ममिति द्वे एवोदाहरणे । प्रायेण त्वश्मार्ममिति तृतीयमप्युदाहरणं पठ्यते, तद् वृत्त्यनुरोधादुक्तम् । अश्मशब्दस्याऽनकारान्तत्वम् । न च नलोपे कृतेऽवर्णान्तत्वम् । स्वरविधौ नलोपस्यासिद्धत्वात् । अपरे तु 'मद्राश्मग्रहणं संघातविगृहीतार्थम्' इत्यस्य भाष्येऽदर्शनादसंगतमेतादित्याहुः ॥ (५७९६ ) **दिवोदासायेति** । 'दिवश्च दासे १४०७' इति षष्ठ्या अलुक् ॥ ( ५७९७ ) **अन्तः** । अत्रापि प्रकरणे पूर्वपदविषया प्रथमा षष्ठ्यर्थे वेदितव्या ॥ ( ५७९८ ) **सर्वं गुण-**। गुणकार्त्स्न्ये वर्तमानः सर्वोऽन्तोदात्तः । यत्र गुणान्तरस्याभावस्तत्र गुणकार्त्स्न्यं भवति ॥ **सर्वश्वेत इति** । 'पूर्वकालैक-१०५०' इत्यादिना कर्मधारयः । अत्र शौक्ल्येन गुणेन सर्वावयवानां व्याप्तिर्गम्यते ॥ **आश्रयव्याप्त्येति** । न तूज्ज्वलत्वेन ॥ **सर्वसौवर्ण इति** । विकारविषयमात्रं कार्त्स्न्यम् ॥ **सर्वश्वेत इति** । 'गुणात्तरेण तरलोपश्च १०१८' इति समासः, तरप्रत्ययलोपश्च । **कार्त्स्न्ये किमिति** । गुणवाचिन्युत्तरपदे सर्वशब्दस्तत्कार्त्स्न्यं न व्यभिचरतीति प्रश्नः। अयं नियमः कर्मधारये, न षष्ठीसमास इत्याह—**सर्वेषामिति** । गुणिकार्त्स्न्ये वर्तमानः, न गुणकार्त्स्न्ये ॥ **सर्वेषामिति** । गुणसंबन्धे षष्ठी । पटस्य शौक्ल्यमितिवद् गुणवाचिन एव प्रत्ययः । सर्वेषां पटानां द्रव्यान्तराधारश्वेतगुणापेक्षया सातिशयः श्वेतो गुण इत्यर्थः । यदा तु प्रतिपदोक्तत्वात् 'पूर्वकालैक-१०५०' इति समासो गृह्यते तदा कार्त्स्न्यग्रहणं माऽस्तु ॥ ( ५७९९ ) **अञ्जनागिरिरिति** । 'वनगिर्योः संज्ञायाम्-१४९०' इति दीर्घः ॥ ( ५८०० ) **कुमार्याम्-**। कुमारीशब्दे परे पूर्वपदमन्तोदात्तं स्याद्वयसि वोत्ये ॥ **वृद्धकुमारीति** । विशेषणसमासः । 'पुंवत्कर्मधारय-१०७५' इति पुंवद्भावः । ननु कुमारीशब्दः प्रथमे वयसि वर्तते तथा च 'वयसि प्रथमे ६६५' इत्यनेन ङीबत्र विहितः, तस्य कथं चरमवयोवाचिना वृद्धेन सामानाधिकरण्यमत आह-**कुमारीत्यादि** । कुमारीशब्दे द्वयं प्रवृत्तिनिमित्तं प्रथमं वयः पुंसा सहासंप्रयोगश्च । तत्राद्यमर्थं त्यक्त्वा द्वितीयमात्रे वर्तते, तदा वृद्धादिसामानाधिकरण्यं भवति तदाह-**तच्चेति** । शब्दान्तराभिधेयमित्यर्थः ॥ **न कुमारत्वमेवेति** । यदेतत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं तद्वयो न गृह्यत इत्यर्थः । एतच्च—वयोग्रहणसामर्थ्याल्लभ्यते अन्यथा-कुमारीशब्दप्रयोगे नियोगतः प्रथमवयो गम्यते इत्यनर्थकं स्यात् । ननु तर्हि ङीबपि न स्यादिति चेत्, शृणु पूर्वं हि प्रथमं वयः प्रवृत्तिनिमित्तं कृत्वा ङीप् कृतः, सोऽनन्तरं गोत्रवृद्धादिसामानाधिकरण्येऽपि न निवर्तते ॥

---

१ कर्की, मघी, मकरी, कर्कन्धू, शमी, करीर, कन्दुक, कवल, बदर, शोण, शौण, इति कर्क्यादिः ॥ २ माला, शाला, शोणा, द्राक्षा, क्षाक्षा, क्षामा, काञ्ची, एक, काम, दिवोदास, वध्यश्च, इति मालादिराकृतिगणः ॥

मिश्रं तद्वाचिनि समासे उदके परे पूर्वमन्तोदात्तम् । गुडोदकम् । स्वरे कृतेऽत्र एकादेशः । स्वरितो वाऽनुदात्ते पदादाविति पक्षे स्वरितः । अकेवले किम् । शीतोदकम् ॥ ( ५८०२ ) (सू) **द्विगौ क्रतौ** । ६ । २ । ९७ । द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वमन्तोदात्तम् । गर्गत्रिरात्रः । द्विगौ किम् । अतिरात्रः । क्रतौ किम् । बिल्वहोमस्य सप्तरात्रो बिल्वसप्तरात्रः ॥ ( ५८०३ ) (सू) **सभायां नपुंसके** । ६ । २ । ९८ । सभायां परतो नपुंसकलिङ्गे समासे पूर्वमन्तोदात्तम् । गोपालसभम् । स्त्रीसभम् । सभायां किम् । ब्राह्मणसेनम् । नपुंसके किम् । राजसभा । प्रतिपदोक्तनपुंसकग्रहणान्नेह । रमणीयसभम् । ब्राह्मणकुलम् ॥ ( ५८०४ ) (सू) **पुरे प्राचाम्** । ६ । २ । ९९ । देवदत्तपुरम् । नान्दीपुरम् । प्राचां किम् । शिवपुरम् । ( ५८०५ ) (सू) **अरिष्टगौडपूर्वे च** । ६ । २ । १०० । पुरे परे अरिष्टगौडपूर्वे समासे पूर्वमन्तोदात्तम् । अरिष्टपुरम् । गौडपुरम् । पूर्वग्रहणं किम् । इहापि यथा स्यात् । अरिष्टाश्रितपुरम् । गौडभृत्यपुरम् ॥ ( ५८०६ ) (सू) **न हास्तिनफलकमार्देयाः** । ६ । २ । १०१ । पुरे नैतान्यन्तोदात्तानि । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम् । मृदोरपत्यमिति शुभ्रादित्वात् ढक् ॥ ( ५८०७ ) (सू) **कुशूलकूपकुम्भशालं बिले** । ६ । २ । १०२ । एतान्यन्तोदात्तानि बिले परे । कुशूलबिलम् । कूपबिलम् । कुम्भबिलम् । शालबिलम् । कुशूलादि किम् । सर्पबिलम् । बिलेति किम् । कुशूलस्वामी ॥ ( ५८०८ ) (सू) **दिक्छब्दा ग्रामजनपदाख्यानचानराटेषु** । ६ । २ । १०३ । दिक्शब्दा अन्तोदात्ता भवन्त्येषु ग्रामादिषु । पूर्वेषुकामशमी । अपरकृष्णमृत्तिका । जनपदे । पूर्वपञ्चालाः । आख्याने । पूर्वयायातम् । पूर्वचानराटम् । शब्दग्रहणं कालवाचिदिक्छब्दस्य परिग्रहार्थम् ॥ ( ५८०९ ) (सू) **आचार्योपसर्जनश्चाऽन्तेवासिनि** । ६ । २ । १०४ । आचार्योपसर्जनान्तेवासिनि परे दिक्छब्दा अन्तोदात्ता भवन्ति । पूर्वपाणिनीयाः । आचार्येति किम् । पूर्वान्तेवासी । अन्तेवासिनि किम् । पूर्वपाणिनीयं शास्त्रम् ॥ ( ५८१० ) (सू) **उत्तरपदवृद्धौ सर्वं च** । ६ । २ । १०५ । उत्तरपदस्येत्यधिकृत्य या वृद्धिर्विहिता तद्वत्युत्तरपदे परे सर्वशब्दो दिक्छब्दाश्चान्तोदात्ता भवन्ति । सर्वपाञ्चालकः । अपरपाञ्चालकः । अधिकारग्रहणं किम् । सर्व-

---

**परमकुमारीति** । अत्र कुमारत्वमेव गम्यते, न वयोऽन्तरमिति भवति प्रत्युदाहरणम् ॥ ( ५८०१ ) **उदके**–। 'अकेवल' इति पदच्छेदः । अन्यथाऽसंदेहार्थम्—'केवल उदके' इत्येव ब्रूयात्तदाह–**अकेवलं मिश्रमिति** । द्रव्यान्तरसंपृक्तं मिश्रम् ॥ **गुडोदकमिति** । गुडमिश्रमुदकम्–गुडोदकम् । शीतोदकमिति कर्मधारयः ॥ ( ५८०२ ) **गर्गत्रिरात्रमिति** । षष्ठीसमासः । तिसृणां रात्रीणां समाहारस्त्रिरात्रम् । 'अहस्सर्वैकदेश–११३३' इत्यादिनाऽच् समासान्तः । 'संख्यापूर्वं रात्रं क्लीबम् ११६७' इति क्लीबत्वम् । एवं सप्तरात्रम् । **अतिरात्र इति** । रात्रिमतिक्रान्त इति प्रादिसमासः । बिल्वसप्तरात्रमित्यत्र बिल्वशब्दो बिल्वहोमे वर्तते, तेन सह षष्ठीसमासः ॥ ( ५८०३ ) **गोपालसभमिति** । 'अशाला च ११८९' इति क्लीबत्वम् ॥ **प्रतिपदोक्तेति** ॥ 'सभा राजा–११८७' इत्यादिविहितः । **रमणीयसभमिति** । रमणीया सभा यस्येति बहुव्रीहिः । अत्राभिधेयवशान्नपुंसकत्वं न प्रतिपदोक्तम् ॥ ( ५७०४ ) **पुरे प्रा**–। पुरशब्दे परे प्राचां देशे पूर्वपदमन्तोदात्तं स्यात् ॥ ( ५८०५ ) **अरिष्ट**–। **पूर्वग्रहणं किमिति** । 'अरिष्टगौडयोः' इति वक्तव्यमिति प्रश्नः ॥ **इहापि यथा स्यादिति** । पूर्वग्रहणे हि सति बहुव्रीहिर्लभ्यते । अरिष्टगौडौ पूर्वौ यस्मिन्समास इति, तेनारिष्टाश्रितपुरं गौडभृत्यपुरमित्यत्रापि पूर्वपदमन्तोदात्तं भवति । असति तु पूर्वग्रहणे श्रितभृत्यशब्दाभ्यां व्यवहितत्वाच्चारिष्टगौडयोस्तावन्न स्यात्, समुदाययोश्च सूत्रेऽनुपात्तत्वात् ॥ ( ५८०६ ) **न हास्ति**—। 'पुरे प्राचाम् ५८०४' इति प्राप्तः प्रतिषिध्यते ॥ **मार्देयपुरमिति** । 'ढे लोपेऽकद्र्वाः १६२३' इत्युकारलोपः ॥ ( ५८०८ ) **दिक्छब्दाः**–। दिक्छब्दाः पूर्वपदानि अन्तोदात्तानि स्युर्ग्रामादिषु । चानराटे स्वरूपग्रहणमितरेष्वर्थग्रहणम् ॥ **पूर्वेषुकामशमी** । **अपरकृष्णमृत्तिकेति** ॥ 'दिक्संख्ये संज्ञायाम् १०५१' इति समासः ॥ **पूर्वपञ्चाला इति** । समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति पञ्चालैकदेशे पञ्चालशब्दः, ततः पूर्वशब्देन सामानाधिकरण्यात् 'पूर्वापरप्रथम–१०६३' इत्यादिना कर्मधारयः ॥ **पूर्वयायातमिति** । ययातिमधिकृत्य कृतो ग्रन्थ इत्यणि यायातशब्दः सिद्धः ॥ **शब्दग्रहणमित्यादि** । दिशि दृष्टः शब्द इत्युत्तरपदलोपी समासस्तेन कालवाचिनोऽपि ग्रहणात्पूर्वयायातमित्यादावपि भवति ॥ ( ५८०९ ) **आचार्योपसर्जन**—। आचार्योपसर्जनग्रहणमन्तेवासिनो विशेषणम् सप्तम्यर्थे प्रथमा तदाह—**आचार्योपसर्जनान्तेवासिनीति** । आचार्य उपसर्जनं यस्य स आचार्योपसर्जनः । स चासावन्तेवासी च तद्वाचिनि ॥ **पूर्वपाणिनीया इति** । 'पूर्वापरप्रथम—१०६३' इति समासः । पणिनश्छात्राः पाणिनीयाः । अत्रान्तेवासिनः प्रधानमाचार्यस्तूपसर्जनम् ॥ **पूर्वपाणिनीयं शास्त्रमिति** । पूर्वं चिरंतनमित्यर्थः ॥ ( ५८१० ) **उत्तरपदवृद्धौ**–। अत्र वृद्धावित्येतावतैव वृद्धिमदुत्तरपदपरिग्रहे सिद्धे उत्तरपदग्रहणात्तदधिकारो लक्ष्यते । उत्तरपदशब्दस्य स्वरितत्वादिहाधिकारप्रतिपत्तिरित्याशयेनाह–**उत्तरपदस्येत्यादि** । **सर्वपाञ्चालक इत्यादि** । 'सुसर्वार्धदिक्शब्दस्य–१९५५' इति तदन्तविधौ 'अवृद्धादपि बहुवचनविषयात् १८९४' इति वुञ् । 'सुसर्वार्द्धाज्जनपदस्य १९५४' 'दिशोऽमद्राणाम् १९५६' इत्युत्तरपदवृद्धिः । वृद्धिशब्देन यां वृद्धिर्विहिता तद्वत्युत्तरपद इत्यु-

---

१ पृषोदरादित्वाद्दन्त्यस्य तालव्य इति शब्दकल्पद्रुमः । शब्दस्तोममहानिधौ तु तालव्यान्तकुशधातोरौणादिक ऊल इत्युक्तम् ॥

भासः । सर्वकारकः ॥ ( ५८११ ) (सू) **बहुव्रीहौ विश्वं संज्ञायाम्** । ६।२।१०६ । बहुव्रीहौ विश्वशब्दः पूर्वपदभूतः संज्ञायामन्तोदात्तः स्यात् । पूर्वपदप्रकृतिस्वरेण प्राप्तस्याद्युदात्तस्यापवादः। विश्वकर्मा विश्वदेवः । आविश्वदेवं सप्ततिम् । बहुव्रीहौ किम् । विश्वे च ते देवाश्च विश्वदेवाः । संज्ञायां किम् । विश्वदेवः । प्रागव्ययीभावाद्बहुव्रीह्यधिकारः॥ (५८१२) (सू) **उदराश्वेषुषु** । ६ । २ । १०७ । संज्ञायामिति वर्तते । वृकोदरः । हर्यश्वः । महेषुः ॥ ( ५८१३ ) (सू) **क्षेपे** । ६ । २ । १०८ । उदराश्वेषुषु पूर्वमन्तोदात्तं बहुव्रीहौ निन्दायाम् । घटोदरः । कन्दुकाश्वः । चलाचलेषुः । अनुदर इत्यत्र नञ्सुभ्यामिति भवति विप्रतिषेधेन ॥ ( ५८१४ ) (सू) **नदी बन्धुनि** । ६ । २ । १०९ । बन्धुशब्दे परे नद्यन्तं पूर्वमन्तोदात्तं बहुव्रीहौ । गार्गीबन्धुः । नदी किम् । ब्रह्मबन्धुः । ब्रह्मशब्द आद्युदात्तः । बन्धुनि किम् । गार्गीप्रियः ॥ ( ५८१५ ) (सू) **निष्ठोपसर्गपूर्वमन्यतरस्याम्** । ६ । २ । ११० । निष्ठान्तं पूर्वपदमन्तोदात्तं वा । प्रधौतपादः । निष्ठा किम् । प्रसेवकमुखः । उपसर्गपूर्वं किम् । शुष्कमुखः ॥ ( ५८१६ ) (सू) **उत्तरपदादिः** । ६ । २ । १११ । उत्तरपदाधिकार आपादान्तम् । आद्यधिकारस्तु प्रकृत्या भगालमित्यवधिकः ॥ ( ५८१७ ) (सू) **कर्णो वर्णलक्षणात्** । ६ । २ । ११२ । वर्णवाचिनो लक्षणवाचिनश्च परः कर्णशब्द आद्युदात्तो बहुव्रीहौ । शुक्लकर्णः । शङ्कुकर्णः । कर्णः किम् । श्वेतपादः । वर्णलक्षणात्किम् । शोभनकर्णः ॥ ( ५८१८ ) (सू) **संज्ञौपम्ययोश्च** । ६ । २ । ११३ । कर्ण आद्युदात्तः । मणिकर्णः । औपम्ये । गोकर्णः ॥ ( ५८१९ ) (सू) **कण्ठपृष्ठग्रीवाजङ्घं च** । ६ । २ । ११४ । संज्ञौपम्ययोर्बहुव्रीहौ । शितिकण्ठः । काण्डपृष्ठः । सुग्रीवः । नाडीजङ्घः । औपम्ये । खरकण्ठः । गोपृष्ठः । अश्वग्रीवः । गोजङ्घः ॥ ( ५८२० ) (सू) **शृङ्गमवस्थायां च** । ६ । २ । ११५ । शृङ्गशब्दोऽवस्थायां संज्ञौपम्ययोश्चाद्युदात्तो बहुव्रीहौ । उद्गतशृङ्गः । द्व्यङ्गुलशृङ्गः । अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषोऽवस्था । संज्ञायाम् । ऋष्यशृङ्गः ।

---

च्यमानेऽपि न निर्वाह इत्याह-**सर्वकारक इति** ॥ ( ५८११ ) **बहुव्रीहौ-**। संज्ञायामिति बहुव्रीहेर्विशेषणम्, न विश्वशब्दस्येति । विशेः कन्, नित्त्वादाद्युदात्तो विश्वशब्दः ॥ ( ५८१२ ) **उदरा-**। एषूत्तरपदेषु बहुव्रीहौ संज्ञायां पूर्वपदमन्तोदात्तं स्यात् । अयमपि पूर्वपदप्रकृतिस्वरस्यापवादः । वृकशब्दः 'प्राणिनां कुपूर्वाणाम् ५६१२' इत्याद्युदात्तः । वृकस्येवोदरमस्य वृकोदरः ॥ **हर्यश्व इति** । हरतेः 'सर्वधातुभ्यः-४७६३' इति इन्, आद्युदात्तो हरिशब्दः । हरिरश्वोऽस्य हर्यश्वः । यणि कृते 'उदात्तस्वरितयोः-५५२८' इति स्वरितः ॥ **महेषुरिति** । महच्छब्दोऽन्तोदात्तः 'वर्तमाने पृषन्महत्-४४४' इत्यत्र तथा निपातनात् । तथा च पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति स्वन्यार्थ आरम्भोऽपवादत्वादनेनैवान्तोदात्तत्वम् । उदाहरणं तु सुवर्णपुङ्खेषुरिति ज्ञेयम् । सुष्ठु वर्णो येषां ते सुवर्णाः । 'नञ्सुभ्याम् ५८७९' इत्यन्तोदात्तत्वम् । सुवर्णाः पुङ्खा येषां ते बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण मध्योदात्तत्वं पुनरिषुशब्देन बहुव्रीहौ पूर्वपदमन्तोदात्तम् । एकादेशस्तु 'स्वरितो वाऽनुदात्ते पदादौ ५५३०' इति पक्षे स्वरितः ॥ ( ५८१३ ) **घटोदर इति** । घटशब्दः पचाद्यजन्तः ॥ कन्दुशब्दात् 'संज्ञायां कन् २७४७' । 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य ३८५४' इति पचाद्यजन्तश्चलाचलशब्दः ॥ **अनुदर इत्यत्रेति** । अस्यावकाशः-घटोदरः । 'नञ्सुभ्याम् ५८७९' इत्यस्यावकाशः-अयशाः । सुयशाः । एवं स्थिते विप्रतिषेधः ॥ ( ५८१४ ) **नदी-**। बन्धुनीति शब्दस्वरूपापेक्षया नपुंसकनिर्देशः । 'गर्गादिभ्यो यञ् १५८३' इति यञन्ताद्गर्गशब्दात् 'यञश्च ५५६' इति ङीप् । गार्गी । ञित्स्वरेणाद्युदात्तः ॥ **ब्रह्मबन्धूरिति** । 'बृंहेर्नोऽच्च ४७९१' इति नकारस्याकारादेशो मनिन्प्रत्ययश्चेति मनिन्नन्तो ब्रह्मशब्दो नित्स्वरेणाद्युदात्तस्तदाह-**ब्रह्मेत्यादि** । **गार्गीप्रिय इति** । अत्र पूर्वपदप्रकृतिस्वर एव ॥ ( ५८१५ ) **निष्ठोपसर्ग-**। उपसर्गपूर्वं निष्ठान्तं पूर्वपदमन्तोदात्तम् ॥ **प्रधौतपाद इति** । 'धावु गतिशुद्ध्योः' क्तः 'च्छ्वोः शूड्-३३९४' इत्यूठ्, 'एत्येधत्यूठ्सु १०८' इति वृद्धिः । प्रधौतशब्दो गतिस्वरेणाद्युदात्तः ॥ **प्रसेवकमुख इति** । ण्वुलन्तः प्रसेवकशब्दः कृदुत्तरपदप्रकृतिस्वरेण लित्त्वान्मध्योदात्तः ॥ **शुष्कमुख इति** । 'शुष्कधृष्टौ ५५६९' इति शुष्कशब्द आद्युदात्तः ॥ ( ५८१६ ) **उत्तरपदादिः** । उत्तरपदेति पृथक्पदं लुप्तषष्ठीकम् ॥ (५८१७) **कर्णो-**। **आद्युदात्त इति** । सिद्धार्थकथनमेतत् । उत्तरपदस्य कर्णशब्दस्यादिरुदात्त इत्यक्षरार्थः । एवं चास्मिन्प्रकरणे कर्ण इत्यादौ षष्ठ्यर्थे प्रथमेति ज्ञेयम् ॥ **शङ्कुकर्ण इति** । शङ्कुः कर्णे यस्येति विग्रहः । 'सप्तमीविशेषणे-१२८२' इति सप्तम्यन्तस्य पूर्वनिपाते प्राप्ते 'गड्वादेः परा सप्तमी १२८७' इति परनिपातः । 'कर्णे लक्षणस्य-१४८८' इति दीर्घः । पशूनां विभागज्ञानार्थं शङ्कुप्रतिरूपकं कर्णादिषु यच्चिह्नं क्रियते, तदिह लक्षणं गृह्यते पृथग्वर्णग्रहणात् । अन्यथा वर्णेनापि लक्ष्यमाणत्वादनर्थकं तत्स्यात् ॥ **श्वेतपाद इति** । 'श्विता वर्णे' पचाद्यच् ॥ **शोभनकर्ण इति** । 'शुभ शोभार्थे' 'अनुदात्तेतश्च हलादेः ४१५०' इति युच् । प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वर एव भवति ॥ ( ५८१८ ) **संज्ञौपम्य-**। संज्ञायामौपम्ये च यो बहुव्रीहिस्तत्र कर्णशब्द उत्तरपदमाद्युदात्तं स्यात् ॥ ( ५८१९ ) **कण्ठपृष्ठ-**। कण्ठादीनां समाहारद्वन्द्वे नपुंसकह्रस्वत्वम् । कण्ठादीन्युत्तरपदानि संज्ञौपम्ययोराद्युदात्तानि स्युर्बहुव्रीहौ । कण्ठपृष्ठौ 'स्वाङ्गशिटाम्-५६११' इत्याद्युदात्तौ, ग्रीवाजङ्घयोः, स्वाङ्गत्वेऽप्यदन्तत्वाभावादन्तोदात्तत्वम् ॥ **सुग्रीव इति** । अत्र परत्वात् 'नञ्सुभ्याम् ५८७९' इत्यन्तोदात्तत्वेन भाव्यम् । अस्य तु दशग्रीवादिरवकाशः। यदि तु नेष्यते, तर्हि चकारोऽस्यैव विधेः समुच्चयार्थ इति व्याख्येयम् ॥ **नाडीजङ्घ इति** । नाड्याकारे जङ्घे यस्य स

उपमायाम् । मेषश्रृङ्गः । अवस्थेति किम् । स्थूलश्रृङ्गः ॥ ( ५८२१ ) (सू) **नञो जरमरमित्रमृताः** । ६ । २ । ११६ । नञः पर एते आद्युदात्ता बहुव्रीहौ । न मे जरा अजरम् । अमरः । अमित्रमर्दय । श्रवो देवेष्वमृतम् । नञः किम् । ब्राह्मणमित्र । जेति किम् । अशत्रुः ॥ ( ५८२२ ) (सू) **सोर्मनसी अलोमोषसी** । ६ । २ । ११७ । सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तं चाद्युदात्तं स्यात् । नञ्सुभ्यामित्यस्यापवादः । सुकर्माणः सुयुजः । स नो वक्षदनिमानः । सुब्रह्मा । शिवा पशुभ्यः सुमनाः सुवर्चाः । सुपेशसस्करति । सोः किम् । कृतकर्मा । मनसी किम् । सुराजा । अलोमोषसी किम् । सुलोमा । सूषाः । कपि तु परत्वात्कपि पूर्वमिति भवति । सुकर्मकः । सुस्रोतस्कः ॥ ( ५८२३ ) (सू) **क्रत्वादयश्च** । ६ । २ । ११८ । सोः परे आद्युदात्ताः स्युः । साम्राज्याय सुक्रतुः । सुप्रतीकः । सुहव्यः । सुप्रतूर्तिमनेहसम् ॥ ( ५८२४ ) (सू) **आद्युदात्तं द्व्यच् छन्दसि** । ६ । २ । ११९ । यदाद्युदात्तं द्व्यच् तत्सोरुत्तरं बहुव्रीहावाद्युदात्तम् । अधा स्वश्वाः । सुरथाँ आतिथिग्वे । नित्स्वरेणाश्वरथावाद्युदात्तौ । आद्युदात्तं किम् । या सुबाहुः । द्व्यच् किम् । सुगुरसत्सुहिरण्यः । हिरण्यशब्दस्त्र्यच् ॥ ( ५८२५ ) (सू) **वीरवीर्यौ च** । ६ । २ । १२० । सोः परौ बहुव्रीहौ छन्दस्याद्युदात्तौ । सुवीरेण रयिणा । सुवीर्यस्य गोमतः । वीर्यशब्दो यत्प्रत्ययान्तः । तत्र यतोऽनावः इत्याद्युदात्तत्वं नेति वीर्यग्रहणं ज्ञापकम् । तत्र हि सति पूर्वेणैव सिद्धं स्यात् ॥ ( ५८२६ ) (सू) **कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे** । ६ । २ । १२१ । उपकूलम् । उपतीरम् । उपतूलम् । उपमूलम् । उपशालम् । उपाक्षम् । सुषमम् । निःषमम् । तिष्ठद्गुप्रभृतिष्वेते । कूलादिग्रहणं किम् । उपकुम्भम् । अव्ययीभावे किम् । परमकूलम् ॥ ( ५८२७ ) (सू) **कंसमन्थशूर्पपाय्यकाण्डं द्विगौ** । ६ । २ । १२२ । द्विकंसः । द्विमन्थः । द्विशूर्पः । द्विपाय्यम् । द्विकाण्डम् । द्विगौ किम् । परमकंसः ॥ ( ५८२८ ) (सू) **तत्पुरुषे शालायां नपुंसके** । ६ । २ । १२३ । शालाशब्दान्ते तत्पुरुषे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तम् । ब्राह्मणशालम् । तत्पुरुषे किम् । दृढशालं ब्राह्मणकुलम् । शालायां किम् । ब्राह्मणसेनम् । नपुंसके किम् । ब्राह्मणशाला ॥

---

नाडीजङ्घः ॥ **( ५८२१ ) नञो जर-** । 'नञ्सुभ्याम् ५८७९' इत्यस्यापवादः । जरणं जरः 'ऋदोरप् ५०२४' मरणं मरः न मरः अमरः । अस्मादेव निपातनादप् । 'ञिमिदा स्नेहने' । 'अमिचिमिदिशसिभ्यः क्त्रः ४८०९' मृङो 'नपुंसके भावे क्तः ४१०८' । सूत्रे तु शब्दपरत्वात्पुंस्त्वम् ॥ **जेति किमिति** । जरमरमित्रमृतग्रहणं किमर्थमित्यर्थः ॥ **अशत्रुरिति** । 'नञ्सुभ्याम् ५८७९' इत्युत्तरपदान्तोदात्तत्वम् ॥ **( ५८२२ ) सोर्मन-** । मन् च अस् च मनसी ॥ **सुकर्माण इत्यादि** । यद्यपि-आद्युदात्तं 'द्व्यचश्छन्दसि ५२९१' इत्यनेन सिद्धमिदम्, तथापि-सुप्राथिमेत्यादिबह्वजर्थमच्छन्दोऽर्थं च सूत्रमिति बोध्यम् । सुप्राथिमेत्यत्र पृथोर्भाव इति 'पृथ्वादिभ्य इमनिच्-२४१५' 'र ऋतो हलादेर्लघोः २४१६' इति रादेशः ॥ **सुराजेति** । राजशब्दः 'कनिन्युवृषि-४३५६' इति कनिन्प्रत्ययान्तः । लुनातेर्मनिन् । लोम । 'उष दाहे' 'मिथुनेऽसिः ४८६८' इति वर्त्तमाने 'उषः कित् ४८७९' उषः ॥ **कपि त्विति** । अस्यावकाशः सुकर्मा । 'कपि पूर्वम् ५८८०' इत्यस्यावकाशः अपवकः । एवं स्थिते विप्रतिषेधः ॥ **( ५८२४ ) आद्युदात्तम्-** । 'नञ्सुभ्याम् ५८७९' इत्यस्यापवादः । 'अशूप्रुषिलटिकणिखटि-४३५१' इति क्वन्नन्तोऽश्वशब्दः । 'हनिकुशिनीरमिकाशिभ्यः क्थन् ४३६१' इति क्थन्नन्तो रथशब्दस्तदाह-**नित्स्वरेणेति** ॥ **सुबाहुरिति** । 'अर्जिदृशिकम्यमिपशिबाध-४२२५' इति कुप्रत्ययान्तो बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः ॥ **सुहिरण्य इति** । 'हर्यतेः कन्यन् हिर च ४९२८' इति कन्यन्नन्तो हिरण्यशब्दः आद्युदात्तस्त्र्यच् ॥ **( ५८२५ ) वीरवीर्यौ-** । 'वीर विक्रान्तौ' चुरादिस्तत्र पचाद्यचि वीरः । 'अचो यत् ३७८७' । वीरेषु साधुरिति प्राग्दीव्यतीयो वा यत् वीर्यः ॥ **तत्रेत्यादि** । कथं पुनरेतज्ज्ञापकमित्याह-**तत्र हि सतीति** ॥ **( ५८२६ ) कूलतीर-** । एतान्युत्तरपदान्याद्युदात्तानि स्युरव्ययीभावे । सुषममित्यादौ 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः ३२९१' इति षत्वम् । तस्यासिद्धत्वात्समशब्द एवायम् ॥ **तिष्ठद्गुप्रभृतिष्वेत इति** । तेनाव्ययीभावसंज्ञा ॥ **( ५८२७ ) कंसमन्थ-** । एतान्युत्तरपदानि द्विगावाद्युदात्तानि स्युः ॥ **द्विकंस इति** । द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः 'कंसाट्टिठन् २३००' इति टिठन् । तस्य 'अध्यर्द्धपूर्व-२३०५' इति लुक् ॥ **द्विमन्थ इति** । 'आर्हादगोपुच्छ-२२८८' इत्यादिना ठक् शेषं पूर्ववत् ॥ **द्विशूर्प इति** । 'शूर्पादञन्यतरस्याम् २३०३' ॥ **द्विपाय्यमिति** । 'पाय्यसान्नाय्य-३८४६' इत्यादिना पाय्यशब्दः परिमाणवाची निपातितः । तत्र 'प्राग्वहतेष्ठक् २१२५' ॥ **द्विकाण्डमिति** । द्वे काण्डे प्रमाणमस्य 'प्रमाणे द्वयसच्-२४९०' इत्यादिना मात्रच्, 'प्रमाणे लो द्विगोर्नित्यम् २४९१' इति लुक् ॥ **( ५८२८ ) ब्राह्मणशालमिति** । 'विभाषा सेनासुराच्छाया-११९०' इति नपुंसकता ॥ **दृढशालमिति** । बहुव्रीहिरयं तत्र पूर्वपदप्रकृतिस्वर एव भवति, पूर्वपदं च निष्ठान्तत्वादन्तोदात्तम् । ननु चात्र 'लक्षणप्रतिपदोक्त--११५३-२' परिभाषयैव न भविष्यति,

---

१ क्रतु, दृशीक, प्रतीक, प्रतूर्ति, हव्य, भव्य, भग इति क्रत्वादिः । २ यद्यप्यत्र वीरधातोरदन्तत्वाद् 'अचो यत्' इत्यनेन यति वीर्यशब्दसिद्धिस्तथापि एतत्प्रसङ्गेन वीरशब्दोऽपि पचाद्यचि व्याख्यातः, तेनास्मात्पचाद्यचि ततोऽचो यत्-इति नैतदर्थः । आचि सति प्रातिपदिकात्तत्करोतीति णिजन्तात् अचो यदिति तु क्लिष्टकल्पनयोपेक्ष्यम् ।

( ५८२९ ) सू. कन्था च । ६ । २ । १२४ । तत्पुरुषे नपुंसकलिङ्गे कन्थाशब्द उत्तरपदमाद्युदात्तम् । सौशमिकन्थम् । आह्वरकन्थम् । नपुंसके किम् । दाक्षिकन्था ॥ ( ५८३० ) सू. आदिश्चिहणादीनाम् । ६ । २ । १२५ । कन्थान्ते तत्पुरुषे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तः । चिहणकन्थम् । मदुरकन्थम् । आदिरिति वर्तमाने पुनर्ग्रहणं पूर्वस्याद्युदात्तार्थम् ॥ ( ५८३१ ) सू. चेलखेटकटुककाण्डं गर्हायाम् । ६ । २ । १२६ । चेलादीन्युत्तरपदान्याद्युदात्तानि । पुत्रचेलम् । नगरखेटम् । दधिकटुकम् । प्रजाकाण्डम् । चेलादिसादृश्येन पुत्रादीनां गर्हा । व्याघ्रादित्वात्समासः । गर्हायां किम् । परमचेलम् ॥ ( ५८३२ ) सू. चीरमुपमानम् । ६ । २ । १२७ । वस्त्रं चीरमिव वस्त्रचीरम् । कम्बलचीरम् । उपमानं किम् । परमचीरम् ॥ ( ५८३३ ) सू. पललसूपशाकं मिश्रे । ६ । २ । १२८ । घृतपललम् । घृतसूपः । घृतशाकम् । भक्ष्येण मिश्रीकरणमिति समासः । मिश्रे किम् । परमपललम् ॥ ( ५८३४ ) सू. कूलसूदस्थलकर्षाः संज्ञायाम् । ६ । २ । १२९ । आद्युदात्तास्तत्पुरुषे । दाक्षिकूलम् । शाण्डिसूदम् । दाण्डायनस्थलम् । दाक्षिकर्षः । ग्रामसंज्ञा एताः । संज्ञायां किम् । परमकूलम् ॥ ( ५८३५ ) सू. अकर्मधारये राज्यम् । ६ । २ । १३० । कर्मधारयवर्जिते तत्पुरुषे राज्यमुत्तरपदमाद्युदात्तम् । ब्राह्मणराज्यम् । अकेति किम् । परमराज्यम् ॥ ( ५८३६ ) वा. चेलराज्यादिस्वरादव्ययस्वरः पूर्वविप्रतिषेधेन ॥ कुचेलम् । कुराज्यम् ॥ ( ५८३७ ) सू. वर्ग्यादयश्च । ६ । २ । १३१ । अर्जुनवर्ग्यः । वासुदेवपक्ष्यः । अकर्मधारय इत्येव । परमवर्ग्यः । वर्ग्यादिर्दिगाद्यन्तर्गणः ॥ ( ५८३८ ) सू. पुत्रः पुंभ्यः । ६ । २ । १३२ । पुम्शब्देभ्यः परः पुत्रशब्द आद्युदात्तस्तत्पुरुषे । दाशकिपुत्रः । माहिषपुत्रः । पुत्रः किम् । कौनटिमातुलः । पुम्भ्यः किम् । दाक्षीपुत्रः ॥ (५८३९) सू. नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः । ६ । २ । १३३ । एभ्यः पुत्रो नाद्युदात्तः । आख्याग्रहणात्पर्यायाणां तद्विशेषाणां च ग्रहणम् । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः । राजपुत्रः । ईश्वरपुत्रः । नन्दपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः । होतुःपुत्रः । संयुक्ताः सम्बन्धिनः । श्यालपुत्रः । ज्ञातयो मातापितृसम्बन्धेन बान्धवाः । ज्ञातिपुत्रः । भ्रातुष्पुत्रः ॥ ( ५८४० ) सू. चूर्णादीन्यप्राणिषष्ठ्याः । ६ । २ । १३४ । एतानि प्राणिभिन्नषष्ठ्यन्तात्पराण्याद्युदात्तानि तत्पुरुषे । मुद्गचूर्णम् । अप्रेति किम् । मत्स्यचूर्णम् ॥ ( ५८४१ ) सू. षट् च काण्डादीनि । ६ । २ । १३५ । अप्राणिषष्ठ्या आद्युदात्तानि । दर्भकाण्डम् । दर्भचीरम् । तिलपललम् । मुद्गसूपः । मूलकशाकम् । नदीकूलम् । षट् किम् । राजसूदः । अप्रेति किम् । दत्त-

---

सत्यम्-उत्तरार्थमावश्यकं तत्पुरुषग्रहणमिहैव क्रियते परिभाषानाश्रयणाय ॥ ( ५८२९ ) **सौशमिकन्थमिति** । शोभनः शमोऽस्य सुशमस्तस्यापत्यं सौशमिस्तस्य कन्था सौशमिकन्थम् । 'संज्ञायां कन्थोशीनरेषु ११८४' इति नपुंसकत्वम् ॥ **आह्वरकन्थमिति** । आङ्पूर्वात् ह्वरतेः पचाद्यच् ॥ ( ५८३० ) **आदिश्चिहणादीनाम्** । चिनोतेः क्विप् । चित् । हन्तेः पचाद्यच् । हनः ॥ **चिहण-**। निपातनात्तलोपो णत्वं च । 'मल मल्ल धारणे' आभ्यामुरः । निपातनाल्लस्य दत्वं मदुरः ॥ **आदिरिति वर्तमान इति** । पूर्वत्र ह्यादिग्रहणमुत्तरपदाभिसंबद्धम् । इह तु चिहणादीनां पूर्वपदानामाद्युदात्तत्वमिष्यते तदर्थं पुनरादिग्रहणं कर्तव्यम् ॥ ( ५८३१ ) **पुत्रचेलमिति** । चेलं वस्त्रं तद्वत्तुच्छमित्यर्थः ॥ **नगरखेटमिति** । खेटमिति तृणनाम तद्वद् दुर्बलः ॥ **दधिकटुकमिति** । कटु गतस्वादु तद्वत् गतस्वादु ॥ **प्रजाकाण्डमिति** । काण्डमिति शरनाम स यथा सत्वरपीडाकर एवम्भूतम् ॥ **व्याघ्रादित्वात्समास इति** । पुत्रश्चेलमिवेति विगृह्य व्याघ्रादेराकृतिगणत्वात् 'उपमितं व्याघ्रादिभिः-१०६९' इति समासः ॥ (५८३२) **चीर-**। उपमानवाचिचीरशब्द उत्तरपदमाद्युदात्तं स्यात्तत्पुरुषे ॥ **वस्त्रचीरमिति** । पूर्ववद् व्याघ्रादिसमासः ॥ ( ५८३३ ) **पललसूप-**। पललादीन्युत्तरपदान्याद्युदात्तानि स्युर्मिश्रे तत्पुरुषे ॥ **घृतपललमित्यादि** । घृतेन मिश्रं पललमिति विग्रहः । पललं मांसम् । 'पललं क्रव्यमामिषम्' इत्यमरः ॥ (५८३४) **कूलसूद-**। एतान्युत्तरपदान्याद्युदात्तानि स्युः संज्ञायाम् ॥ **दाण्डायनस्थलमिति** । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् २०६७' इति स्थलीशब्दो गृह्यते, 'जानपदकुण्ड-७००' इत्यनेन ङीष् ॥ ( ५८३६ ) **चेलराज्यादिस्वरादिति** । आदिशब्देन वर्ग्यादिस्वरपरिग्रहः । चेलराज्यादिस्वरस्यावकाशो भार्याचेलं ब्राह्मणराज्यम् । 'तत्पुरुषे तुल्यार्थ-' इत्यादिना विहितस्याव्ययस्वरस्यावकाशो निष्कौशाम्बिः । कुचेलं कुराज्यमित्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः ॥ ( ५८३७ ) **वर्ग्या-**। वर्ग्यादीन्युत्तरपदान्याद्युदात्तानि स्युः कर्मधारये तत्पुरुषे । ये दिगादिषु वर्गादयः पठ्यन्ते, त एवेह यत्प्रत्ययान्ता वर्ग्यादयो गृह्यन्ते, वर्ग्यादिपाठाभावात्तदाह- **वर्ग्यादिर्दिगाद्यन्तर्गण इति** ॥ ( ५८३८ ) **कौनटिमातुल इति** । कुनटस्यापत्यं कौनटिः, तस्य मातुलः ॥ ( ५८३९ ) **आख्याग्रहणादिति** । आख्याग्रहणमाचार्यादिभिः प्रत्येकं संबध्यते ॥ **होतुःपुत्र इति** । 'ऋतो विद्यायोनिसंबन्धेभ्यः १४०९' इति षष्ठ्या अलुक् ॥ **भ्रातुष्पुत्र इति** । कस्कादिपाठात्षत्वम् ॥ ( ५८४० ) **मुद्गचूर्णमिति** ॥ 'चूर्ण संकोचे' पचाद्यच् ॥ ( ५८४१ ) **षट् च-**। अप्राणिभ्यः परा या षष्ठी तदन्तात्पराणि षट् काण्डादीन्याद्युदात्तानि स्युः । चेल खेट कटुक काण्डामिति काण्डशब्दादारभ्य 'कूलसूदस्थलकर्षाः संज्ञायाम् ५८३४' इति कूलान्तानि काण्ड

---

१ चिहण, मदुर, मद्दुमर, वैतुल, पटत्क, वैडालकर्णक, वैडालिकर्णि, कुक्कुट, चिक्कण, चित्कण, इति चिहणादिः ॥ २ दिगादिषु वर्ग, इत्येवमादयो ये पठितास्ते कृतयदन्ता वर्ग्यादयः ॥ ३ चूर्ण, करिष, करीष, शाकिन, शाकट, द्राक्षा, तूस्त, कुन्द, दलप, चमसी, चक्कन, चोल, इति चूर्णादिः ॥ ४ काण्ड, चीर, पलल, सूप, शाक, कूल, इति काण्डादिः ॥

काण्डम् ॥ ( ५८४२ ) कुण्डं वनम् । ६ । २ । १३६ । कुण्डमाद्युदात्तं वनवाचिनि तत्पुरुषे । दर्भकुण्डम् । कुण्डशब्दोऽत्र सादृश्ये । वनं किम् । मृत्कुण्डम् ॥ ( ५८४३ ) प्रकृत्या भगालम् । ६ । २ । १३७ । भगालवाच्युत्तरपदं तत्पुरुषे प्रकृत्या । कुम्भीभगालम् । कुम्भीनदालम् । कुम्भीपालम् । मध्योदात्ता एते । प्रकृत्येत्यधिकृतमन्तं इति यावत् ॥ ( ५८४४ ) शितेर्नित्याबह्वज्बहुव्रीहावभसत् । ६ । २ । १३८ । शितेः परं नित्याबह्वच्कं प्रकृत्या । शितिपादः । शित्यंसः । पादशब्दो वृषादित्वादाद्युदात्तः । अंसशब्दः प्रत्ययस्य नित्वात् । शितेः किम् । दर्शनीयपादः । अभसत्किम् । शितिभसत् । शितिराद्युदात्तः पूर्वपदप्रकृतिस्वरापवादोऽयं योगः ॥ ( ५८४५ ) गतिकारकोपपदात्कृत् । ६ । २ । १३९ । एभ्यः कृदन्तं प्रकृतिस्वरं स्यात्तत्पुरुषे । प्रकारकः । प्रहरणम् । शोणा धृष्णू नृवाहसा । इध्मप्रव्रश्चनः । उपपदात् । उच्चैःकारम् । ईषत्करः । गतीति किम् । देवस्य कारकः । शेषे षष्ठी । कृद्ग्रहणं विस्पष्टार्थम् । प्रपचतितरामित्यत्र तरबाद्यन्तेन समासे कृते आम् । तत्र सतिशिष्टत्वादाम्स्वरो भवतीत्येके । प्रपचतिदेश्यार्थं तु कृद्ग्रहणमित्यन्ये ॥ ( ५८४६ ) उभे वनस्पत्यादिषु युगपत् । ६ । २ । १४० । एषु पूर्वोत्तरपदे युगपत्प्रकृत्या । वनस्पतिं वन आ । बृहस्पतिं यः । बृहच्छब्दोऽत्राद्युदात्तो निपात्यते । हर्षया । शचीपतिम् ।

---

चीर पलल सूप शाक कूल एतानि काण्डादीनि । तत्र 'काण्डं गर्हायाम् ५८३१' इत्युक्तमगर्हायामपि भवतीति, 'चीरमुपमानम् ५८३२' इत्युक्तमनुपमानेऽपि भवति, 'पललसूपशाकं मिश्रे ५८३३' इत्युक्तममिश्रेऽपि भवति, 'कूलं संज्ञायाम् ५८३४' इत्युक्तमसंज्ञायामपि भवति ॥ अप्रेति किमिति । 'अप्राणिषष्ठ्याः' इति किमर्थमित्यर्थः ॥ ( ५८४२ ) मृत्कुण्डमिति । मृद्राजनविशेष इत्यर्थः ॥ ( ५८४३ ) प्रकृत्या–। भगालमित्यर्थग्रहणं तदाह–भगालवाचीति–। अत्र व्याख्यानमेव शरणम् ॥ मध्योदात्तास्त्वेते इति । 'लघावन्ते द्वयोश्च–५६२४' इति सूत्रात् ॥ ( ५८४४ ) शितेः–। शितेः परं नित्याबह्वच्कं भसच्छब्दवर्जितं बहुव्रीहौ प्रकृतिस्वरं स्यात् ॥ अंसशब्द इति । 'अमेः सन्–४९०५' अंसः ॥ दर्शनीयपाद इति । 'बहुव्रीहौ प्रकृत्या–५७०१' इति पूर्वपदप्रकृतिस्वरः । दर्शनीयशब्दोऽनीयर्प्रत्ययान्तः । 'उपोत्तमं रिति ५६९९' इत्युपोत्तमोदात्तः ॥ शितिराद्युदात्त इति । 'वर्णानां तणतिनितान्तानाम् ५६१५' इति सूत्रेण ॥ ( ५८४५ ) गतिका–। 'शितेर्नित्याबह्वच्–५८४४' इत्यतो बहुव्रीहिग्रहणं नानुवर्ततेऽस्वरितत्वात् । किंतु 'तत्पुरुषे शालायाम्–५८२८' इत्यतो व्यवहितमपि तत्पुरुषग्रहणमनुवर्तते तदाह–तत्पुरुषे इति ॥ प्रकारक इति । 'कुगति–१०९७' इति समासः । लित्स्वरेण पूर्वपदमाद्युदात्तम् ॥ नृवाहसेति । नॄन्वहतीति विग्रहः । 'वसेर्णित् ४८६३' इत्यतो णिदित्यनुवृत्तेरसुनो णित्त्वादुपधावृद्धिः । नित्स्वरेणोत्तरपदमाद्युदात्तम् ॥ इध्मप्रव्रश्चन इति । प्रवृश्च्यते येनेति करणे ल्युट् । कर्मषष्ठ्यन्तेन इध्मशब्देन समासः । अत्र गतिप्रयुक्ते कृत्स्वरे कृते कारकप्रयुक्तः कृत्स्वरः ॥ उच्चैःकारमिति । 'अव्ययेऽयथाभिप्रेता–५२०३' इति णमुल् । तत्र हि उच्चैरित्युपपदम् ॥ ईषत्कर इति । 'ईषद्दुःसुषु कृच्छ्रा–१८३७' इति खल् । उभयथापि लित्स्वरः ॥ शेषे षष्ठीति । न कर्मलक्षणा । तथा सति कारकमेव देवदत्तः स्यात् 'तृजकाभ्यां कर्तरि १०२७' इति समासप्रतिषेधश्च स्यात् ॥ अथ कृद्ग्रहणं किमर्थम् । निर्गतः कौशाम्ब्या निष्कौशाम्बिरित्यत्र मा भूत् । नैतदस्ति । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा भवन्ति । न च कौशाम्बीशब्दं प्रति क्रियायोगः, कारकं च क्रियायामेव संभवति । उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्यते । तदेवं गत्यादिभिरपि क्रियावाच्युत्तरपदमाक्षिप्यते, धातोश्च क्रियावाचित्वम्, तस्माच्च द्वये प्रत्ययाः कृतस्तिङश्च । तत्र तिङन्तेन समासाभावात्कृदन्तमेव संभवति । अनुव्यचलदित्यत्र तु न गतित्वनिबन्धनः समासः, किं तर्हि 'सुप्' इति योगविभागात्समासः । तस्मान्नार्थः कृद्ग्रहणेनेत्यत आह—कृद्ग्रहणं विस्पष्टार्थमिति । य एवं प्रतिवक्तुमसमर्थस्तं प्रति विस्पष्टार्थं क्रियते इत्यर्थः । ननु विस्पष्टार्थमपि क्रियमाणे कृद्ग्रहणे आमन्ते न प्राप्नोति प्रपचतितरामिति, ततश्च समासस्वरं बाधित्वाऽव्ययस्वर एव स्यादत आह—प्रपचतितरामित्यादि । इत्येक इत्यस्य कृद्ग्रहणं विस्पष्टार्थमित्यादिना कृत्स्ने संबन्धः । तदयमर्थः—कृद्ग्रहणं विस्पष्टार्थम् । आमन्ते च दोषाभाव इति केचिदाचार्या व्याचक्षते इति ॥ प्रपचतिदेश्यार्थं त्विति । आदिशब्देन प्रपचतिकल्पं प्रपचतिदेशीयः प्रपचतिरूपमित्येतेषां त्रयाणां ग्रहणम् । प्रपचतिदेश्यादौ अर्थः प्रयोजनं यस्य तत्तथोक्तम् । अयमभिप्रायः—न विस्पष्टार्थं कृद्ग्रहणम् । अपितु प्रपचतिदेश्यादौ यत्र सतिशिष्टं स्वरान्तरं नास्ति तत्रापि स्वरो मा भूदव्ययपूर्वपदप्रकृतिस्वर एव यथा स्यादित्येवं सप्रयोजनमाहुः ॥ अत्र हरदत्तः । इदं तु वक्तव्यम् । प्रपचतितरामित्यादौ तरबन्तेन समासे पश्चादाम् भवन्प्रत्ययग्रहणपरिभाषया पचतितरस्यैव घान्तत्वात्तत एव स्यात् । तत्र को दोषः । सोपसर्गस्य घान्तस्यैकपद्याभावादाम् । प्रपचतितरां देवदत्तेत्यादौ 'आम एकान्तरमामन्त्रितमनन्तिके ५६३८' इत्येष विधिर्न स्यात् शेषनिघातश्च प्रशब्दस्य न स्यादिङ्भिन्नपदत्वात्तस्मात्प्रशब्दस्यामन्तेन समासोऽङ्गीकर्तव्यो, न तरबन्तेन, तत्र समासत्वात्समुदायस्य प्रातिपदिकत्वे विभक्तावेकपद्यं भवति, स्वरे तु दोषप्रसङ्गात्कृद्ग्रहणमपि त्यक्तव्यमिति भाष्ये स्थितम् । प्रपचतिदेश्यादौ का गतिरिति न विद्मः ॥ ( ५८४६ ) उभे–। वनस्पतिमिति । वनशब्दो 'नब्विषयस्यानि-

---

१ वनस्पतिः, बृहस्पतिः, शचीपतिः, तनूनपात्, नराशंसः, शुनःशेपः, शण्डामर्कौ, तृष्णावरूत्री, लम्बाविश्ववयसौ, मर्मृत्युः, इति वनस्पत्यादिः ॥ २ बहुषु पुस्तकेषूपलभ्यमानोऽप्ययं पाठः 'न च कौशाम्बीशब्दः क्रियावाच्यस्ति' इत्येव पाठनीयः ॥

शार्ङ्गरवादित्वादाद्युदात्तः शचीशब्दः । शचीभिर्न इति दर्शनात् । तनूनपादुच्यते । नराशंसं वाजिनम् ॥ निपातनाद्दीर्घः । शुनःशेपम् ॥ ( ५८४७ ) सू॰ **देवताद्वन्द्वे च** । ६ । २ । १४१ । उभे युगपत्प्रकृत्या स्तः । आप इन्द्रावरुणौ । इन्द्राबृहस्पती वयम् । देवता किम् । प्लक्षन्यग्रोधौ । द्वन्द्वे किम् । अग्निष्टोमः ॥ ( ५८४८ ) सू॰ **नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु** । ६ । २ । १४२ । पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तं न । इन्द्राग्निभ्यां कंवृषणः । अपृथिव्यादौ किम् । द्यावापृथिवी जनयन् । आद्युदात्तो द्यावा निपात्यते । पृथिवीत्यन्तोदात्तः । सोमारुद्रौ । गेदेर्णिलुक्चेति[४३८२] रगन्तो रुद्रशब्दः । इन्द्रापूषणौ । श्वन्नुक्षन्पूषन्निति[४३५९] पूषा अन्तोदात्तो निपात्यते । शुक्रामन्थिनौ । मन्थिन्निन्नन्तत्वादन्तोदात्तः ॥ उत्तरपदग्रहणमनुदात्तादावित्युत्तरपदविशेषणं यथा स्यात् द्वन्द्वविशेषणं मा भूत् । अनुदात्तादाविति विधिप्रतिषेधयोर्विषयविभागार्थम् ॥ ( ५८४९ ) सू॰ **अन्तः** । ६ । २ । १४३ । अधिकारोऽयम् ॥ ( ५८५० ) सू॰ **थाऽथघञ्क्ताऽजबित्रकाणाम्** । ६ । २ । १४४ । थ, अथ, घञ्, क्त, अच्, अप्, इत्र , क एतदन्तानां गतिकारकोपपदात्परेषामन्त उदात्तः । प्रभृथस्यायोः । आवसथः । घञ् । प्रभेदः । क्तः । धर्ता वज्री पुरुष्टुतः । पुरुषु बहुप्रदेशेषु स्तुत इति विग्रहः । अच् । प्रक्षयः । अप् । प्रलवः । इत्र । प्रलवित्रम् । क । गोवृषः । मूलविभुजादित्वात्कः । गतिकारकोपपदादित्येव । सुस्तुतं भवता ॥ ( ५८५१ ) सू॰ **सूपमानात् क्तः** । ६ । २ । १४५ । सोरुपमानाच्च परं क्तान्तमन्तोदात्तम् । ऋतस्य योनौ सुकृतस्य । शशप्लुतम् ॥ ( ५८५२ ) सू॰ **संज्ञायामनाचितादीनाम्** । ६ । २ । १४६ । गतिकारकोपपदात् क्तान्तमन्तोदात्तमाचितादीन्वर्जयित्वा । उपहूतः शाकल्यः । परिजग्धः ।

---

सन्तस्य ५६०८' इत्याद्युदात्तः । पतिशब्दोऽपि 'पातेर्डतिः ४७०१' इति डतिप्रत्ययान्तः प्रत्ययस्वरेण । पारस्करादित्वात्सुट् ॥ **बृहस्पतिमिति** । 'वर्तमाने पृषन्महत्–४४४४' इति अतिप्रत्ययान्तत्वादन्तोदात्तोऽप्यत्राद्युदात्तो निपात्यते 'तद्बृहतोः करपत्योः–१५३२ ' इति सुट्तलोपौ ॥ **शार्ङ्गरवादित्वादाद्युदात्त इति** । शार्ङ्गरवादित्वान् ङीनि कृते नित्त्वादाद्युदात्तत्वमित्यर्थः ॥ **शचीपतिरिति** । एते षष्ठीसमासाः ॥ **तनूनपादिति** । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ४२८०' इति ऊप्रत्ययान्तत्वादन्तोदात्तोऽपि तनूशब्दोऽत्राद्युदात्तो निपात्यते । न पातयतीति नपात् । 'नभ्राण्नपान्नवेदा–१०९५' इति सूत्रे आद्युदात्तो नपाच्छब्दो निपात्यते । तन्वाः नपादिति विग्रहः । **नराशंसमिति** । नरा एनं शंसन्तीत्यर्थः । 'नॄ नये' 'ऋदोरप् ५०२४' शंसेः कर्मणि घञ्, द्वावप्याद्युदात्तौ 'अन्येषामपि–५३९०' इति दीर्घः ॥ **शुनः शेपमिति** । शुन इव शेपोऽस्येति बहुव्रीहिः । 'शेपपुच्छलांगूलेषु शुनः संज्ञायाम् १४०६' इत्यलुक् षष्ठ्याः । श्वन्शब्दः प्रातिपदिकस्वरेण, शेपशब्दः 'स्वाङ्गशिटामदन्तानाम् ५६११' इत्याद्युदात्तौ ॥ ( ५८४७ ) **इन्द्रावरुणाविति** । इन्द्रशब्दः 'ऋज्रेन्द्राग्र––४३८९ ' इति रन्नन्तो, वरुणशब्दः ' कृवृदारिभ्य उनन् ४५३६ ' इत्युनन्नन्तः, उभौ आद्युदात्तौ । ' देवताद्वन्द्वे च १३२४ ' इति पूर्वपदस्यानङ् ॥ **इन्द्राबृहस्पती इति** । बृहस्पतिशब्दे वाचस्पत्यादित्वात् द्वावाद्युदात्तौ । तेनेन्द्राबृहस्पती इत्यत्र त्रय आद्युदात्ताः ॥ **अग्निष्टोम इति** । 'अग्नेः स्तुत्स्तोमसोमाः १३२७ ' इति षत्वम् ॥ ( ५८४८ ) **इन्द्राग्निभ्यामिति** । अग्निशब्दः 'अङ्गेर्नलोपश्च ४६९४ ' इति निप्रत्ययान्तत्वादन्तोदात्तः ॥ **पृथिवीत्यन्तोदात्त इति** । ङीप्प्रत्ययान्तत्वात् ॥ **सोमारुद्राविति** । ' अर्तिस्तुसुहुसृधृ–४३३९ ' इति मन्नन्तत्वादाद्युदात्तः सोमशब्दः ॥ **उत्तरपदग्रहणमित्यादि** । अन्यथाऽस्मिन् प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः, नोत्तरपदम्, तत्र 'अनुदात्तादौ' इति सप्तम्यन्तं द्वन्द्वस्य विशेषणं स्यात्, ततश्चन्द्रासूर्यावित्यादौ प्रतिषेधः स्यात्, चन्द्रशब्दो रगन्तत्वादन्तोदात्तः । सूर्यशब्दः 'राजसूयसूर्य–३८१७' इति यदन्तत्वात् 'यतोऽनावः ५५७६' इत्याद्युदात्तः । उत्तरपदग्रहणे सति तस्यैव श्रुतस्य 'अनुदात्तादौ' इत्येतद्विशेषणं भवति ॥ **अनुदात्तादाविति** । **विधिप्रतिषेधयोरित्यादि** । अन्यथा विधिप्रतिषेधयोः समानविषयत्वाद्विकल्पः प्रसज्येत । इह पृथिव्यादिप्रतिषेधो ज्ञापयति 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति । तेन 'अग्निमीळे' इत्यादौ स्वरितः सिध्यति ॥ ( ५८५० ) **थाऽथ–। प्रभृथस्येति** । 'हनिकुषिनीरमिकाशिभ्यः ४३६१' 'अवे भृञः ४३६२' इति क्थन्, नित्स्वरेणाद्युदात्तत्वे प्राप्ते ॥ **आवसथ इति** । ' उपसर्गे वसेः ४५९९' इत्यथप्रत्ययान्तः ॥ **पुरुष्टुत इति** । कर्मणि क्तः ॥ **पुरुष्विति** । तृतीयातत्पुरुषे तु 'तृतीया कर्मणि ५७५२' इति सूत्रेण कर्मणि क्तान्ते उत्तरपदे तृतीयान्तस्य पूर्वपदस्य प्रकृतिस्वरः स्यादिति भावः ॥ **प्रक्षय इति** । 'एरच् ५०२२ ' । न च क्षयशब्दस्याच्प्रत्ययान्तत्वात्कृदुत्तरपदप्रकृतिस्वरेणैवान्तोदात्तत्वं सिद्धमिति वाच्यम्, 'क्षयो निवासे५५६४' इति क्षयशब्दस्याद्युदात्तत्वात् ॥ **प्रलव इति** । 'ऋदोरप् ५०२४' ॥ **प्रलवित्रमिति** । 'अर्तिलूधूसूखनसहचर इत्रः ४१९६' ॥ **गोवृष इति** । गां वर्षते इति विग्रहः । 'वृषु सेचने' । 'वृषादीनां च ५५६६' इत्याद्युदात्तोऽयम् ॥ **सुस्तुतमिति** । ' सुः पूजायाम् ८०८' इति कर्मप्रवचनीयः । अव्ययपूर्वपदप्रकृतिस्वर एव ॥ ( ५८५१ ) **सूप–। सुकृतस्येति** । 'गतिरनन्तरः ५७५३' इति प्राप्ते ॥ **शशप्लुतमिति** । शश इव प्लुतमिति विग्रहः । 'तृतीया कर्मणि ५७५२' इति प्राप्तम् ॥ ( ५८५२ ) उप-

---

१ आचितम्, पर्याचितम्, आस्थापितम्, परिगृहीतः, निरुक्तम्, प्रतिपन्नः, अपश्लिष्टः, प्रश्लिष्टः, उपहितः, उपस्थितः, संहिताऽगवि । इत्याचितादिः ॥

अनेति किम् । आचितम् । आस्थापितम् ॥ ( ५८५३ ) (सू) प्रवृद्धादीनां च । ६ । २ । १४७ । एषां क्तान्तमुत्तरपदमन्तोदात्तम् । प्रवृद्धः । प्रयुक्तः । असंज्ञार्थोऽयमारम्भः । आकृतिगणोऽयम् ॥ ( ५८५४ ) (सू) कारकाद्दत्तश्रुतयोरेवाशिषि । ६ । २ । १४८ । संज्ञायामन्त उदात्तः । देवदत्तः । विष्णुश्रुतः । कारकात्किम् । संभूतं रामायणम् । दत्तश्रुतयोः किम् । देवपालितः । अस्मान्नियमादत्र संज्ञा[५८५२]र्थमनेनेति न । [५७५२]तृतीया कर्मणीति तु भवति । एव किम् । कारकावधारणं यथा स्यात् दत्तश्रुतावधारणं मा भूत् । अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति । संश्रुतः । आशिषि किम् । देवैः खाता देवखाता । आशिष्येवेत्येवमत्रेष्टो नियमः । तेनानाहतो नदति देवदत्त इत्यत्र न । शङ्खविशेषस्य संज्ञेयम् । [५७५२]तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वमेव भवति ॥ ( ५८५५ ) (सू) इत्थम्भूतेन कृतमिति च । । ६ । २ । १४९ । इत्थम्भूतेन कृतमित्येतस्मिन्नर्थे यः समासस्तत्र क्तान्तमुत्तरपदमन्तोदात्तं स्यात् । सुप्तप्रलपितम् । प्रमत्तगीतम् । कृतमिति क्रियासामान्ये करोतिर्नाभूतप्रादुर्भाव एव । तेन प्रलपिताद्यपि कृतं भवति । तृतीया[५७५२] कर्मणीत्यस्यापवादः ॥ ( ५८५६ ) (सू) अनो भावकर्मवचनः ।६।२।१५०। कारकात्परमनप्रत्ययान्तं भाववचनं कर्मवचनं चान्तोदात्तम् । पयःपानं सुखम् । राजभोजनाः शालयः । अनः किम् । हस्तादायः । भेति किम् । दन्तधावनम् । करणे ल्युट् । कारकात्किम् । निदर्शनम् ॥ (५८५७) (सू) मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ।६।२।१५१। कारकात्पराणि एतान्युत्तरपदान्यन्तोदत्तानि तत्पुरुषे । कृत्स्वरापवादः । रथवर्त्म । पाणिनिकृतिः । छन्दोव्याख्यानम् । राजशयनम् । राजासनम् । अश्वस्थानम् । ब्राह्मणयाजकः । गोक्रीतः । कारकात्किम् । प्रभूतौ सङ्गतिम् । अत्र [५७५४]तादौ च नितीति

---

हूत इति । ह्वेञो निष्ठायाम् , यजादित्वात्संप्रसारणम् ॥ **परिजग्ध इति** । अदो जग्धादेशः। उभयत्र 'गतिरनन्तरः ५७५३' इति प्राप्तम् ॥ **अनेति किमिति** । अनाचितादीनामिति किमर्थमित्यर्थः ॥ **आचितमित्यादि** । 'चिञ् चयने' 'ष्ठा गतिनिवृत्तौ' णिजन्तः आभ्यां कर्तरि क्तः ॥ ( ५८५३ ) **प्रवृद्धः । प्रयुक्त इति** । 'वृधु वृद्धौ' 'युँ मिश्रणे' ॥ **असंज्ञार्थोऽयमारम्भ इति** । संज्ञायां तु 'संज्ञायामनाचितादीनाम् ५८५२ ' इत्येव सिद्धम् ॥ ( ५८५४ ) **कारकाद्दत्त--**। तत्पुरुषे संज्ञायामाशिषि कारकात्परयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तः स्यात् । ' संज्ञायामनाचितादीनाम् ५८५२ ' इत्यनेन विहितमन्तोदात्तत्वमनेन नियम्यते ॥ **देवदत्त इत्यादि** । देवा एनं देयासुरित्येवं प्रार्थितैर्देवैर्दत्तो देवदत्तः । ' आशिषि लिङ्लोटौ २९५०' इति वर्तमाने 'क्तिच्क्तौ च संज्ञायाम् ५१३४' इति क्तः । 'दो दद्धोः ४०९४' इति दथादेशः । विष्णुरेनं श्रूयादित्येवं प्रार्थिते विष्णुना श्रुतो विष्णुश्रुतः । क्तप्रत्ययः पूर्ववत् ॥ **संभूतं रामायणमिति** । 'क्तिच्क्तौ च-५१३४' इत्याशिषि क्तः । संभूतमिति रामायणस्य नाम । 'संज्ञायामनाचितादीनाम् ५८५२' इत्यन्तोदात्तः संभूतशब्दः ॥ कारकादित्यनुच्यमाने 'गतिकारकोपपदात्' इति त्रितयाधिकाराद्यथैव कारकान्नियमो भवति, तथा गतेरपि स्यात् । ततश्च संभूतं रामायणमित्यनाशिषि सावकाशं 'संज्ञायामनाचितादीनाम् ५८५२' इत्येतदाशिषि न स्यात्, किंतु 'गतिरनन्तर ५७५३' एव स्यात् ॥ **एव किमिति** । सिद्धेऽधिकारे आरभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यतीति प्रश्नः ॥ **कारकावधारणमित्यादि** । असति ह्येवकारे विपरीतनियमोऽपि स्यात्--कारकादेव दत्तश्रुतयोरिति । एवं च कारकाद्दत्तश्रुतयोर्न स्याद्, इष्यते च तथा । कारकस्यानियतत्वाद्देवपालित इत्यादावन्तोदात्तः । अतः कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं मा भूदित्येवमर्थमेवकारग्रहणमित्यर्थः **देवखातेति** । 'तृतीया कर्मणि ५७५२ ' इति पूर्वपदप्रकृतिस्वरः ॥ (५८५५) **इत्थम्-**। **इत्थंभूतेन कृतमित्येतस्मिन्नर्थे इति** । इत्थंप्रकारमापन्न इत्थंभूतस्तेन कृतमित्यर्थे ॥ **सुप्तप्रलपितमित्यादि** । कथमेतान्युदाहरणानि यावता कृतमित्युच्यते । न च प्रलपितादीनि कृतानि, अभूतप्रादुर्भाव एव करोतिर्वर्तते, ततश्च सुप्तकृतं सुप्तभावितम् उन्मत्तभावितमित्यादि क्रमेणैवोदाहर्त्तव्यमित्यत आह-**कृतमितीति** । कृतिसामान्ये करोतिर्वर्त्तते । ततश्च यथा 'क्रियावचनो धातुः' 'क्रियायां क्रियार्थायाम् ४९६२ ' इत्यादौ विशेषाणामपि ग्रहणं भवति, तद्वदत्रापि ॥ **नाभूतप्रादुर्भाव इति** । अभूतप्रादुर्भावो निष्पादनम् । ननु सुप्तप्रलपितमित्यादौ 'कारकात्' इति योगविभागेनैव सिद्धमित्याशङ्क्याह-**तृतीयेति** ॥ तस्य तु योगविभागो न बाधकः, तस्य निर्विषयत्वं स्यात् ॥ (५८५६ ) **अनो-**। 'गतिकारकोपपदात्कृत् ५८४५' इत्यस्यापवादः॥ **पयःपानमिति**। 'कर्मणि च येन-५१०७' इति कर्मण्युपपदे भावे ल्युट् । उपपदसमासः ॥ **राजभोजना इति** । 'कृत्यल्युटो बहुलम् ३७८६' इति कर्माणि ल्युट्, कर्तरि षष्ठीसमासः ॥ (५८५७) **मन्क्तिन्-**। कृत्स्वरापवादः। क्रीते तु 'तृतीया कर्मणि ५७५२' इत्यस्य ॥ **रथवर्त्मेति** । वृतेरधिकरणे मनिन् कर्तरि षष्ठ्या समासः ॥ **पाणिनिकृतिरिति** । कर्मणि क्तिन् । पूर्ववत्समासः ॥ **छन्दोव्याख्यानमिति** । व्याख्यानमिति करणे ल्युट्, शयनासनस्थानेष्वधिकरणे ल्युट् ॥ **ब्राह्मणयाजक इति** । 'याजकादिभिश्च १०१७' इति सूत्रे षष्ठीसमासार्थं ये याजकादयस्त एव गृह्यन्ते ॥ **प्रभूतौ सङ्गतिमिति**। 'तादौ च निति कृत्यतौ ५७५४' इति पूर्वपदप्रक-

---

१ प्रवृद्धं यानम्, प्रवृद्धो वृषलः, प्रयुतासष्णवः, आकर्षेऽवहितः, अवहितो भोगेषु खट्वारूढः, कविशस्तः, आकृतिगणोऽयम्, प्रवृद्धो वृषकृतो रथ इत्यादि, इति प्रवृद्धादिः ॥ २ याजकादयः षष्ठीसमासे उक्ताः ॥ ३ प्रयुक्त इति प्रतीकदर्शनात्तु 'युज्' धातुर्युक्तः ॥

स्वरः ॥ (५८५८) 🔆 सप्तम्याः पुण्यम् ।६।२।१५२। अन्तोदात्तम् । अध्ययनपुण्यम् । 'तत्पुरुषे तुल्यार्थ' इति प्राप्तम् । सप्तम्याः किम् । वेदेन पुण्यं वेदपुण्यम् ॥ (५८५९) 🔆 ऊनार्थकलहं तृतीयायाः ।६।२।१५३। माषोनम् । माषविकलम् । वाक्कलहः । तृतीयापूर्वपदप्रकृतिस्वरापवादोऽयम् । अत्र केचित्त्वर्थेति स्वरूपग्रहणमिच्छन्ति । धान्यार्थः । ऊनशब्देन त्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिदोक्तत्वादेव सिद्धे तृतीयाग्रहणं स्पष्टार्थम् (५८६०) 🔆 मिश्रं चानुपसर्गमसन्धौ । ६ । २ । १५४ । पणबन्धेनैकार्थ्यं सन्धिः । तिलमिश्राः । सर्पिर्मिश्राः । मिश्रं किम् । गुडधानाः । अनुपसर्गं किम् । तिलसंमिश्राः मिश्रग्रहणे सोपसर्गग्रहणस्येदमेव ज्ञापकम् । असन्धौ किम् । ब्राह्मणमिश्रो राजा । ब्राह्मणैः सह संहित ऐकार्थ्यमापन्नः ॥ (५८६१) 🔆 नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः । ६ । २ । १५५ । सम्पाद्याद्यर्थतद्धितान्तान्नञो गुणप्रतिषेधे वर्तमानात्परेऽन्तोदात्ताः । कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकम् । न कार्णवेष्टकिकमकार्णवेष्टकिकम् । छेदमर्हति छैदिकः । न च्छैदिकोऽच्छैदिकः । न वत्सेभ्यो हितोऽवत्सीयः । न सन्तापाय प्रभवति असान्तापिकः । नञः किम् । गर्दभरथमर्हति गार्दभरथिकः । विगार्दभरथिकः । गुणप्रतिषेधे किम् । गार्दभरथिकादन्योऽगार्दभरथिकः ॥ गुणो हि तद्धितार्थे प्रवृत्तिनिमित्तं सम्पादित्वाद्युच्यते । तत्प्रतिषेधो यत्रोच्यते तत्रायं विधिः । कर्णवेष्टकाभ्यां न सम्पादि मुखमिति । संपेति किम् । पाणिनीयमधीते पाणिनीयः । न पाणिनीयः अपाणिनीयः । तद्धिताः किम् । वोढुमर्हति वोढा । न वोढाऽवोढा ॥(५८६२) 🔆 ययतोश्चातदर्थे ।६।२।१५६ । ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयात्परस्यान्त उदात्तः स्यात् । पाशानां समूहः पाश्या । न पाश्या अपाश्या । अदन्त्यम् । अतदर्थे किम् । अपाद्यम् । तद्धितः किम् । अदेयम् । गुणप्रतिषेधे किम् । दन्त्यादन्यददन्त्यम् । तदनुबन्धग्रहणे नातदनुबन्धकस्येति, नेह--अवामदेव्यम् ॥ ( ५८६३ ) 🔆 अच्कावशक्तौ । ६ । २ । १५७ । अजन्तं कान्तं च नञः परमन्तोदात्तमशक्तौ गम्यायाम् । अपचः । पक्तुमशक्तः । आवलिखः । अशक्तौ किम् । अपचो दीक्षितः । गुणप्रतिषेधे इत्येव । अन्योऽयं पचादपचः ॥ ( ५८६४ ) 🔆 आक्रोशे च । ६ । २ । १५८ । नञः परावच्कावन्तोदात्तावाक्रोशे । अपचो जाल्मः । पक्तुं न शक्नोतीत्येवमाक्रोश्यते । अविक्षिपः ॥ ( ५८६५ ) 🔆 संज्ञायाम् । ६ । २ ।

---

तिस्वर एवात्र भवति ॥ (५८५८) सप्तम्याः-। सप्तम्यन्तात्परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं स्यात्तत्पुरुषे ॥ अध्ययनपुण्यमिति । अध्ययने पुण्यमिति विग्रहः । 'सप्तमी' इति योगविभागात्समासः ॥ (५८५९) ऊनार्थ-। तृतीयान्तात्पराणि ऊनार्थानि कलहश्च एतान्युत्तरपदान्यन्तोदात्तानि स्युः । उदाहरणेषु 'पूर्वसदृश-१००१' इत्यादिना तृतीयासमासः ॥ केचित्त्वित्यादि । नन्वेवमूनशब्दस्यापि स्वरूपस्य ग्रहणं प्रसज्येत, ततश्च तदर्थानामन्येषां ग्रहणं न स्यादत आह-ऊनशब्देन त्विति । अर्थनिर्देशार्थत्वं तु व्याख्यानादवसेयम् ॥ ( ५८६० ) मिश्रं च-। तृतीयान्तात्परमनुपसर्गं मिश्रमन्तोदात्तं स्यादसन्धौ । अयमपि 'तत्पुरुषे तुल्यार्थ-५७०२' इत्यस्यापवादः ॥ पणबन्धेनैकार्थ्यमिति । पणबन्धः परिभाषणम्, यदि मे भवानिदं कुर्यादहमपि भवतः करिष्यामीत्येवंरूपम् ॥ तिलमिश्रा इति । 'पूर्वसदृशसमोनार्थ-१००१' इति समासः ॥ गुडधाना इति । 'भक्ष्येण मिश्री-१००८' इति समासः ॥ तिलसंमिश्रा इति । कथं पुनर्मिश्रशब्दस्य विधीयमानं संमिश्रशब्दस्य प्राप्नोति, कथं मिश्रशब्देनोच्यमानः समासः सोपसर्गेण लभ्यतेऽत आह-मिश्रग्रहण इत्यादि । तेन '-मिश्रश्लक्ष्णैः १००१' इति विधीयमानः समासः सोपसर्गेणापि सिद्धः ॥ ब्राह्मणमिश्र इति । यदि मे भवन्तः कार्यं कुर्युस्तदाऽहं भवतामुपकारं करिष्यामीत्येवंरूपेण पणबन्धेन कृत्वा ब्राह्मणैः सह मिलित इत्यर्थः । अपरे तु स्वरूपभेदग्रहणं सन्धिः । ब्राह्मणामिश्र इत्यत्र ब्राह्मणैनैकीभावेऽपि राजा स्वरूपेण गृह्यते । गुडमिश्र इत्यत्र गुडेनैकीभूतस्य स्वरूपभेदो न गृह्यते इत्याहुः ॥ ( ५८६१ ) नञो गुण-। कार्णवेष्टकिकमिति । 'सम्पादिनि २३९२' इति 'प्राग्वतेष्ठञ् २२८७' ॥ छैदिक इति । 'छेदादिभ्यो नित्यम् २३४९' इति ठक् ॥ अवत्सीय इति । 'तस्मै हितम् २२६२' इति छः ॥ असान्तापिक इति । 'तस्मै प्रभवति सन्तापादिभ्यः २३९४' इति ठञ् ॥ नञः किमिति । प्रतिषेधे प्रायेण नञ एव वृत्तिदर्शनात्प्रश्नः ॥ विगार्दभरथिक इति । अव्ययपूर्वपदप्रकृतिस्वर एवात्र भवति ॥ गार्दभरथिकादन्य इति । उदाहरणादस्य विशेषं दर्शयितुं गुणप्रतिषेध इति सूत्रावयवं व्याचष्टे-गुण इति ॥ तद्धितार्थे प्रवृत्तिनिमित्तमिति । तद्धितार्थः सम्पाद्यादिः तस्य यत् प्रवृत्तिनिमित्तम् ॥ सम्पादित्वादीति । आदिशब्देन तदर्हत्वादेर्ग्रहणं स गुण इत्युच्यते । उक्तं हि-'संसर्गभेदकं यच्च सव्यापारं प्रतीयते । गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् इति ॥ वोढेति ॥ 'अर्हे कृत्यतृचश्च ३७६०' इति तृच् । ढत्वधत्वष्टुत्वलोपेषु 'सहिवहोरोदवर्णस्य ३१५०' इत्योत्वम् ॥ ( ५८६२ ) अपाश्येति । समूहे 'पाशादिभ्यो यः १७७८' ॥ अदन्त्यमिति । 'शरीरावयवाच्च २१९१' इति यत् ॥ अपाद्यमिति । 'पादार्घाभ्यां च २८२२' इति यत् ॥ अदेयमिति । 'दा दाने' अर्हार्थे 'अचो यत् ३७८७' 'ईद्यति ३७८८' इतीत्वे गुणः ॥ अवामदेव्यमिति । वामदेवेन दृष्टमित्यर्थे 'वामदेवाड्ड्यड्ड्यौ १७१२' इति ड्यः ॥ ( ५८६३ ) अपच इति । पचाद्यच् ॥ अविलिख इति । 'इगुपध-३८५७' इति कः । 'कृत्योकेष्णुच्चार्वादयश्च ५८६६' इति वक्ष्यमाणैः कृत्योकेष्णुभिः साहचर्यादच्कयोः कृतोरिह ग्रहणम्, तेन कृद्ग्रहणपरिभाषया विलिखशब्दस्य कान्तत्वम् ॥ अपचो दीक्षित इति । दीक्षितः शास्त्रविरोधान्न पचति, न त्वशक्तत्वेन ॥ ( ५८६४ ) अपचो जाल्म इति । पक्तुं शक्तोऽपि पक्तुमयं न

१५९। नञः परमन्तोदात्तं संज्ञायामाक्रोशे। अदेवदत्तः ॥(५८६६-१) **कृत्योकेष्णुच्चार्वादयश्च । ६।२।१६०।** नञः परेऽन्तोदात्ताः स्युः । अकर्तव्यः । उक् । अनागामुकः । इष्णुच् । अनलङ्करिष्णुः । इष्णुज्ग्रहणे खिष्णुचो ह्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसामर्थ्यात् । अनाढ्यम्भविष्णुः । चार्वादिः । अचारुः । असाधुः ॥ ( ५८६६-२ ) **राजाह्नोश्छन्दसि ।** अराजा । अनहः । भाषायां नञः स्वर एव ॥ ( ५८६७ ) **विभाषा तृन्नन्नतीक्ष्णशुचिषु । ६ । २ । १६१ ।** तृन् । अकर्त्ता । अन्न । अनन्नम् । अतीक्ष्णम् । अशुचि । पक्षे अव्ययस्वरः ॥ ( ५८६८ ) **बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने । ६ । २ । १६२ ।** एभ्योऽनयोरन्त उदात्तः । इदं प्रथममस्य स इदंप्रथमः । एतद्द्वितीयः । तत्पञ्चमः । बहुव्रीहौ किम् । अनेन प्रथम इदंप्रथमः । तृतीयेति योगविभागात्समासः । इदमेतत्तद्भ्यः किम् । यत्प्रथमः । प्रथमपूरणयोः किम् । तानि बहून्यस्य तद्बहुः । क्रियागणने किम् । अयं प्रथमः प्रधानं येषां ते इदम्प्रथमाः । द्रव्यगणनमिदम् । गणने किम् । अयं प्रथम एषां ते इदम्प्रथमाः । इदम्प्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात्कपि पूर्वमन्तोदात्तम् । इदम्प्रथमकः । बहुव्रीहावित्यधिकारो वनं समासे इत्यतः प्राग्बोध्यः ॥ ( ५८६९ ) **संख्यायाः स्तनः । ६ । २ । १६३ ।** बहुव्रीहावन्तोदात्तः । द्विस्तना । चतुस्स्तना । संख्यायाः किम् । दर्शनीयस्तना । स्तनः किम् । द्विशिराः ॥ ( ५८७० ) **विभाषा छन्दसि । ६ । २ । १६४ ।** द्विस्तनीं करोति वामदेवः । चतुःस्तनां करोति द्यावापृथिव्योर्दोहनाय ॥ ( ५८७१ ) **संज्ञायां मित्राजिनयोः । ६ । २ । १६५ ।** देवमित्रः । कृष्णाजिनम् । संज्ञायां किम् । प्रियमित्रः ॥ ( ५८७२ ) **ऋषिप्रतिषेधोऽत्र मित्रे ॥** विश्वामित्र ऋषिः ॥ ( ५८७३ ) **व्यवायिनोऽन्तरम् । ६ । २ । १६६ ।** व्यवधानवाचकात्परमन्तोदात्तम् । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः । व्यवायिनः किम् । आत्मान्तरः । अन्यस्वभाव इत्यर्थः ॥ ( ५८७४ ) **मुखं स्वाङ्गम् । ६ । २ । १६७ ।** गौरमुखः । स्वाङ्गं किम् । दीर्घमुखा शाला ॥ ( ५८७५ ) **नाऽव्ययदिक्-**

---

शक्नोतीत्यनेन प्रकारेण क्षिप्यते तदाह-**पक्तुमित्यादि** । ( ५८६५ ) **अदेवदत्त इति** । देवदत्तः सन्यस्तकर्म न करोति स एवमाक्षिप्यते ॥ ( ५८६६-१ ) **अनागामुक इति** । 'लषपतपद-४१५५' इत्युकञ् ॥ **अनलङ्करिष्णुरिति** । 'अलंकृञ्-४१३६' इतीष्णुच् ॥ **इकारादेर्विधानसामर्थ्यादिति** । भवतेरुदात्तत्वात्ततः परस्य खिष्णुच इटैवेकारादित्वे सिद्धे इकारादेर्विधानमिह सामान्यग्रहणार्थमेवेति भावः ॥ **अनाढ्यंभविष्णुरिति** । 'भुवः खिष्णुच्खुकञौ ३९७१' इति खिष्णुच् ॥ **अचारुरिति** । 'दसनि-४२०१' इति चरेरुण् ॥ **असाधुरिति** । साध्नोतेः 'कृवापाजि-४१९९' इत्युण् ॥ ( ५८६६-२ ) **राजाह्नोः-** । चार्वाद्यन्तर्गणसूत्रम् । नञः परयोरेतयोश्छन्दसि अन्तोदात्तत्वम् ॥ **अराजेति** । 'नञस्तत्पुरुषात् १३७२' इति समासान्तनिषेधः ॥ ( ५८६७ ) **विभाषा तृन्-** । नञ उत्तरपदान्येतान्यन्तोदात्तानि स्युस्तत्पुरुषे ॥ ( ५८६८ ) **बहुव्रीहाविदम्-** । एभ्य इत्यादि । इदमेतत्तद्भ्यः ॥ **अनयोः** । प्रथमपूरणयोः । **इदं प्रथमं यस्येति** । निगमनं भोजनं वा । **अनेन प्रथम इति** । तृतीयापूर्वपदप्रकृतिस्वर एव भवति । **यत्प्रथम इति** । यत्प्रथमं गमनं यस्य स यत्प्रथमः ॥ **इदंप्रधाना इत्यर्थ इति** । अनेन प्रधानवचनः प्रथमशब्दो न त्वेकसंख्यावचन इति दर्शितम् । तेनात्र गणनाभाव उक्तः ॥ **उत्तरपदस्येत्यादि** । इह 'समासस्य' इति प्रकृतम् । 'उत्तरपदादिः' इत्यतः प्रभृति उत्तरपदस्येति च । तत्र इहोत्तरपदं कार्यित्वेनाश्रीयते, तेन यदा कबुत्पद्यते तदा कपि परतो यत्पूर्वं प्रथमेति तद् अन्तोदात्तं भवति, न तु कबन्तम् । कप्प्रत्ययो हि समासस्यैवान्तः नोत्तरपदस्य । 'उत्तरपदावयवाः समासान्ताः' इति पक्षेऽपि 'प्रथमपूरणयोः' इति विशिष्टरूपग्रहणात् कपस्तत्राऽनन्तर्भावादुपात्तयोरेव स्वरः ॥ ( ५८६९ ) **संख्यायाः-** । संख्यायाः परः स्तनशब्दोऽन्तोदात्तः स्यात् ॥ **दर्शनीयस्तनेति** । पूर्वपदप्रकृतिस्वरः । दर्शनीयशब्दोऽनीयर्प्रत्ययान्तः । रित्स्वरः ॥ ( ५८७० ) **विभाषा-** । पूर्वसूत्रोक्तं छन्दसि वा स्यात् ॥ **द्विस्तनीमिति** । अन्तोदात्तत्वं 'स्वाङ्गाच्चोपसर्जनात्-७२७' इति ङीष् ॥ **चतुःस्तनामिति** । पूर्वपदप्रकृतिस्वरेण 'चतेरुरन् ४९४२' इति चतुरशब्दस्य नित्त्वादाद्युदात्तत्वम् । अत्रान्तोदात्तत्वाभावात् 'स्वाङ्गात्-७२७' इति ङीन्न ॥ ( ५८७१ ) **संज्ञायां मित्रा-** । एतयोरुत्तरपदयोरन्त उदात्तः स्याद्बहुव्रीहौ संज्ञायाम् ॥ ( ५८७२ ) **विश्वामित्र इति** । 'मित्रे चर्षौ १५०२' इति दीर्घः । अत्र 'बहुव्रीहौ विश्वं संज्ञायाम् ५८११' इति बाधित्वा परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यतेऽतो 'बहुव्रीहौ विश्वं संज्ञायाम् ५८११' इत्यन्तोदात्तत्वं भवति ॥ ( ५८७३ ) **व्यवायि-** । उदाहरणे व्यवधानवाचिनोऽन्तरशब्दात्तत्करोति णिचि पचाद्यच् । प्रत्युदाहरणे त्वन्यवाच्यन्तरशब्दः ॥ ( ५८७४ ) **मुखम्-** । स्वाङ्गं मुखमुत्तरपदमन्तोदात्तं बहुव्रीहौ ॥ **दीर्घमुखा शालेति** । मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते । स्वाङ्गमेतद्वादिलक्षणमिह गृह्यते । न तु स्वमङ्गं स्वाङ्गमिति व्युत्पत्तिलभ्यम् । अन्यथाऽत्रापि स्यादिति भावः ॥ ( ५८७५ ) **नाव्यय-** ।

---

१ चारु, साधु, यौधिकि, अनङ्गमेजय, वदान्य, अकस्मात्, वर्त्तमान, "वर्धमान, त्वरमाण, प्रियमाण, क्रियमाण, रोचमान, शोभमानाः संज्ञायाम्" विकारसदृशे व्यस्तसमस्ते गृहपति, गृहपतिक, राजाह्नोश्छन्दसि इति चार्वादिः ॥

छन्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः । ६ । २ । १६८ । उच्चैर्मुखः । प्राङ्मुखः । गोमुखः । महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः । पूर्वपदप्रकृतिस्वरोऽत्र । गोमुष्टिवत्सपूर्वपदस्योपमानलक्षणोऽपि विकल्पोऽनेन बाध्यते ॥ ( ५८७६ ) (सू) निष्ठोपमानादन्यतरस्याम् । ६ । २ । १६९ । निष्ठान्तादुपमानवाचिनश्च परं मुखं स्वाङ्गं वाऽन्तोदात्तं बहुव्रीहौ । प्रक्षालितमुखः । पक्षे निष्ठोपसर्गेति पूर्वपदान्तोदात्तत्वम् । पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि भवति । उपमानम् । सिंहमुखः ॥ (५८७७) (सू) जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः । ६ । २ । १७० । सारङ्गजग्धः । मासजातः । सुखजातः । दुःखजातः । जातिकालेति किम् । पुत्रजातः । अनाच्छादनात्किम् । वस्त्रच्छन्नः । अकृतेति किम् । कुण्डकृतः । कुण्डमितः । कुण्डप्रतिपन्नः । अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः ॥ ( ५८७८ ) (सू) वा जाते । ६ । २ । १७१ । जातिकालसुखादिभ्यः परो जातशब्दो वाऽन्तोदात्तः । दन्तजातः ॥ मासजातः ॥ ( ५८७९ ) (सू) नञ्सुभ्याम् । ६ । २ । १७२ । बहुव्रीहावुत्तरपदमन्तोदात्तम् । अव्रीहिः । सुमाषः ॥ ( ५८८० ) (सू) कपि पूर्वम् । ६ । २ । १७३ । नञ्सुभ्यां परं यदुत्तरपदं तदन्तस्य समासस्य पूर्वमुदात्तं कपि परे । अब्रह्मबन्धुकः । सुकुमारीकः ॥ ( ५८८१ ) (सू) ह्रस्वान्तेऽन्त्यात्पूर्वम् । ६ । २ । १७४ । ह्रस्वान्ते उत्तरपदे समासे चान्त्यात्पूर्वमुदात्तं कपि नञ्सुभ्यां परं बहुव्रीहौ । अव्रीहिकः । सुमाषकः । पूर्वमित्यनुवर्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमार्थम् । ह्रस्वान्तेऽन्त्यादेव पूर्वपदमुदात्तं न कपि पूर्वमिति । अज्ञकः । कबन्तस्यैवान्तोदात्तत्वम् ॥ ( ५८८२ ) (सू) बहोर्नञ्वदुत्तरपदभूम्नि । ६ । २ । १७५ । उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य

---

एभ्यः परो मुखशब्दोऽन्तोदात्तो न स्यात् ॥ **पूर्वपदप्रकृतिस्वरोऽत्रेति** । एषूदाहरणेषु 'बहुव्रीहौ प्रकृत्या पूर्वपदम् ५७०१' इति पूर्वपदप्रकृतिस्वरेणान्तोदात्तं पूर्वपदम् । तथा हि- । 'उदि चेडेर्डिसिः ४८९६' उच्चैः । 'अनिगन्तोऽञ्चतावप्रत्यये ५७५६' इति प्रशब्द उदात्तः । तत एकादेशस्वरेण प्राङ्शब्द उदात्तः । 'गमेर्डोः ४४२८' । गौः । 'वर्तमाने पृषत्- ४४४४' इत्यादिना महच्छब्द उदात्तो निपातितः । स्थूलशब्दः 'स्फायितञ्चि- ४३८९' इत्यादावन्तोदात्तो निपातितः । मुषेः क्थिच् । मुष्टिः । 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ४२२६' इति कुः । पृथुः । 'वृतॄवदि—' इत्यादिना सः । वत्सः ॥ **उपमानलक्षणो विकल्प इति** । 'निष्ठोपमानात्-५८७६' इति प्राप्तः ॥ **बाध्यत इति** । अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न भवति गौर्मुखमिव यस्य सः । वत्सो मुखमिव यस्येति सर्वत्रात्र गवाद्युपमेयं नोपमानम् । उत्तरस्य विकल्पस्यावकाशः । यत्र गवादिपूर्वपदं न भवति । सिंहमुखः । गवादावुपमाने उभयप्रसङ्गेऽयमेव भवति पूर्वविप्रतिषेधेन ॥ **( ५८७६ ) सिंहमुख इति** । पक्षे पूर्वपदप्रकृतिस्वरः । हिंसेः पचाद्यचि सिंहः । पृषोदरादित्वाद्याद्यन्तविपर्ययः ॥ **( ५८७७ ) जातिकाल-** । जात्यादिभ्यः परं क्तान्तमन्तोदात्तं स्याद्, बहुव्रीहौ कृतादीन्वर्जयित्वा, आच्छादनवाचकात्परं चेन्न ॥ **सारङ्गजग्ध इति** । सारङ्गः पक्षिविशेषः स जग्धो भक्षितो येनेति विग्रहः । प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वरः । तत्र पुत्रशब्दोऽन्तोदात्तः । 'वसेः ष्ट्रन्' वस्त्रशब्द आद्युदात्तः । कुण्डशब्दो 'नब्विषयस्यानिसन्तस्य ५६०८' इत्याद्युदात्तः । ननूदाहरणेषु प्रत्युदाहरणेषु च 'निष्ठा १२८८' इति निष्ठान्तस्य पूर्वनिपातः प्राप्नोति तत्राह-**अस्माज्ज्ञापकादिति** ॥ इदमेव मनसि विभाव्योक्तम्, 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या १२८९' इति ॥ **( ५८७८ ) दन्तजात इति** । पक्षे पूर्वपदप्रकृतिस्वरः । दन्तशब्दः 'स्वाङ्गशिटामदन्तानाम् ५६११' इत्याद्युदात्तः । मासशब्दो 'ग्रामादीनां च ५६२०' इत्याद्युदात्तः ॥ **( ५८७९ ) नञ्सु-** नञ्सुभ्यां परमुत्तरपदमन्तोदात्तं स्यात् । समासान्ता उत्तरपदावयवाः । तेनाऽनृच इत्यत्र 'ऋक्पूर्-१३५०' इत्यकारस्योदात्तत्वं भवति ॥ समासावयवाः समासान्ता इति पक्षे तु अस्मिन् सूत्रे समासस्यैव कार्यित्वमाश्रीयते नोत्तरपदस्य 'कपि पूर्वम् ५८८०' इति ज्ञापकात् । यद्यनेनोत्तरपदस्यान्तोदात्तः स्यात् ततोऽकुमारीक इत्यादावनेनैव सिद्धत्वात् 'कपि पूर्वम् ५८८०' इत्यवाच्यं स्यात् ॥ **( ५८८० ) कपि पूर्वम्** । पूर्वेण कप एवोदात्तत्वे प्राप्तेः ततः पूर्वस्योदात्तत्वं विधीयते । 'ह्रस्वान्तेऽन्त्यात्पूर्वम् ५८८१' इति वचनादिह दीर्घान्ता एवोदाहृताः । उदाहरणे 'नद्यृतश्च ११९८' इति कप् ॥ **( ५८८१ ) ह्रस्वान्ते-** । ह्रस्वः अन्तो यस्य तदिदं ह्रस्वान्तमिति बहुव्रीहेरन्यपदार्थमुत्तरपदं समासो वा गृह्यत इत्याशयेनाह-**उत्तरपदे समासे वेति** ॥ अत्र 'कपि परे' इति सामान्यवचनात्तद्रहितमुत्तरपदं समासो वा गृह्यते । ननु पूर्वग्रहणमनर्थकं 'कपि पूर्वम् ५८८०' इत्यनुवृत्तेरत आह-**पूर्वमित्यनुवर्तमान इति** । **प्रवृत्तिभेदेन** । वाक्यभेदेन । तत्रैकेन वाक्येन ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते । द्वितीयेन तु नियम्यते । ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति । तेन किं सिद्धमत आह-**कबन्तस्यैवान्तोदात्तत्वमिति** । नास्ति ज्ञा यस्य अज्ञकः । अत्र यद्येष नियमो न स्यात्तर्हि एतस्याभावे 'कपि पूर्वम् ५८८०' इत्ययमेव स्वरः स्यात् । अस्मिंस्तु नियमे सति न भवति, 'नञ्सुभ्याम् ५८७९' इति कबन्तस्यैव भवति ॥ **( ५८८२ ) बहोर्नञ्-** । नञ इव नञ्वत् । अस्मादेव निपातनात्पञ्चमीसमर्थाद्वतिः । बहूनां भावो भूमा 'बहोर्लोपो भू च बहोः २७३१' । उत्तरपदशब्देन तदर्थो गृह्यते, स्वरूपेणोत्तरपदस्य

---

१ सुख, दुःख, तृप्र, कृच्छ्र, अस्र, आस्र, अलीक, प्रतीप, करुण, कृपण, सोढ, इति सुखादिः ॥

नञः परस्येव स्वरः स्यात् । बहुव्रीहिकः । बहुमित्रकः । उत्तरपदेति किम् । बहुषु मानोऽस्य स बहुमानः ॥ ( ५८८३ ) (सू०) न गुणादयोऽवयवाः[1] । ६ । २ । १७६ । । अवयववाचिनो बहोः परे गुणादयो नान्तोदात्ता बहुव्रीहौ । बहुगुणा रज्जुः । बह्वक्षरं पदम् । बह्वध्यायः । गुणादिराकृतिगणः । अवयवा किम् । बहुगुणो द्विजः । अध्ययनश्रुतसदाचारादयो गुणाः ॥ ( ५८८४ ) (सू०) उपसर्गात्स्वाङ्गं ध्रुवमपर्शु । ६ । २ । १७७ । प्रपृष्ठः । प्रललाटः । ध्रुवमेकरूपम् । उपसर्गात्किम् । दर्शनीयपृष्ठः । स्वाङ्गं किम् । प्रशाखो वृक्षः । ध्रुवं किम् । उद्बाहुः । अपर्शु किम् । विपर्शुः ॥ ( ५८८५ ) (सू०) वनं समासे । ६ । २ । १७८ । समासमात्रे उपसर्गादुत्तरपदं वनमन्तोदात्तम् । तस्येदिमे प्रवणे ॥ ( ५८८६ ) (सू०) अन्तः । ६ । २ । १७९ । अस्मात्परं वनमन्तोदात्तम् । अन्तर्वणो देशः । अनुपसर्गार्थमिदम् ॥ ( ५८८७ ) (सू०) अन्तश्च । ६ । २ । १८० । उपसर्गादन्तःशब्दोऽन्तोदात्तः । पर्यन्तः । समन्तः ॥ ( ५८८८ ) (सू०) न निविभ्याम् । ६ । २ । १८१ । न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरे यणि च कृते उदात्तस्वरितयोर्यण इति स्वरितः ॥ ( ५८८९ ) (सू०) परेरभितोभावि मण्डलम् । ६ । २ । १८२ । परेः परमभित उभयतो भावो यस्यास्ति तत्कूलादि मण्डलं चान्तोदात्तम् । परिकूलम् । परिमण्डलम् ॥ ( ५८९० ) (सू०) प्रादस्वाङ्गं संज्ञायाम् । ६ । २ । १८३ । प्रगृहम् । अस्वाङ्गं किम् । प्रपदम् ॥ ( ५८९१ ) (सू०) निरुदकादीनि[2] च । ६ । २ । १८४ । अन्तोदात्तानि । निरुदकम् । निरुपलम् ॥ ( ५८९२ ) (सू०) अभेर्मुखम् । ६ । २ । १८५ । अभिमुखम् । उपसर्गात्स्वाङ्गमिति सिद्धे बहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च । अभिमुखा शाला ॥ ( ५८९३ ) (सू०) अपाच्च । ६ । २ । १८६ । अपमुखम् । योगविभाग उत्तरार्थः ॥ ( ५८९४ ) (सू०) स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च । ६ । २ । १८७ । अपादिमान्यन्तोदात्तानि । अपस्फिगम् । अपपूतम् । अपवीणम् । अञ्जस् । अपाञ्जः । अध्वन् । अपाध्वम् । उपसर्गादध्वन इत्यस्याभावे इदम्[3] । एतदेव च ज्ञापकं समासान्तानित्यत्वे । अपकुक्षिः । सीरनाम । अपसीरम् । अप-

---

बहुत्वासंभवात् । तदाह–**उत्तरपदार्थबहुत्वे इति** ॥ **बहुव्रीहिक इति** । 'ह्रस्वान्तेऽन्त्यात्पूर्वम् ५८८१' इति स्वरः ॥ **बहुमान इति** । पूर्वपदप्रकृतिस्वरः । बहुशब्दस्तु 'लंघिबंह्योर्नलोपश्च ४२२७' इति कुप्रत्ययान्तोऽन्तोदात्तः ॥ ( ५८८३ ) **न गुणा–। अवयववाचिनो बहोः परे इति** । अवयववाचिन इति गुणादीनां विशेषणम् ॥ ( ५८८४ ) **उपस–**। स्वाङ्गं प्रति क्रियायोगाभावादुपसर्गग्रहणं प्राद्युपलक्षम् । प्रादेरुत्तरं ध्रुवं स्वाङ्गवाचि पर्शुवर्जितमन्तोदात्तं स्यात् बहुव्रीहौ ॥ प्रत्युदाहरणे पूर्वपदप्रकृतिस्वरः । दर्शनीयशब्दोऽनीयर्प्रत्ययान्तः रित्स्वरः ॥ **उद्बाहुरिति** । क्रोशतीति शेषः । अत्र क्रोशनसमय एवोद्बाहुत्वम्, न सर्वदैवेत्यध्रुवम् ॥ ( ५८८५ ) **वनं समासे** । 'बहुव्रीहौ' इत्यस्य निवृत्त्यर्थं समासग्रहणम् ॥ **प्रवण इति** । बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरे प्राप्ते । 'प्रनिरन्तः–१५०४' इति णत्वम् ॥ ( ५८८६ ) **अन्तः** । अन्तःशब्दात्पञ्चम्याश्छान्दसो लुक् तदाह–**अस्मात्परमिति** । अन्तःशब्दात्परमित्यर्थः ॥ **अन्तर्वण इति** । अत्रापि तेनैव णत्वम् ॥ **अनुपसर्गार्थमिति** । उपसर्गे तु पूर्वेणैव सिद्धम् ॥ ( ५८८८ ) **न निविभ्याम्** । निविभ्यामुत्तरोऽन्तःशब्दो नान्तोदात्तः स्यात् ॥ **पूर्वपदप्रकृतिस्वर इति** । बहुव्रीहिसमासे 'बहुव्रीहौ प्रकृत्या–५७०१' इति 'तत्पुरुषे तुल्यार्थ–५७०२' इत्यनेन ॥ (५८८९) **परेरभितः–**। परेरुत्तरोऽभितोभाविवाचि मण्डलं चान्तोदात्तं स्यात् । अभितोभावीत्यस्यार्थमाह–**अभित उभयतो भावोऽस्यास्तीति** । अथवा अभितः उभयतो भवति नद्यादौ कूलादिकमित्यभितोभावि 'सुप्यजातौ–२९९१' इति णिनिः ॥ **परिकूलमिति** । बहुव्रीहिः प्रादिसमासोऽव्ययीभावो वा । तत्र बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरे प्राप्ते अव्ययीभावे तु 'परिप्रत्युपापा–५७३४' इति 'कूलतीर–५८२६' इति च प्राप्ते । परितः कूलमस्य परिगतं कूलमिति (वा कूलात्कूलं वर्जयित्वेत्यर्थ इति । उदकस्याभाव इव ) विग्रहः ॥ ( ५८९० ) **प्राद–**। प्रादुत्तरमस्वाङ्गवाचि संज्ञायामन्तोदात्तं स्यात् ॥ **प्रगृहमिति** । प्रादिसमासः । बहुव्रीहिर्वा ॥ **प्रपदमिति** । पूर्वपदप्रकृतिस्वरः ॥ ( ५८९१ ) **निरुदकेत्यादि** । निर्गतमुदकं यस्मादिति बहुव्रीहिः । निर्गतमुदकमिति प्रादिसमासो वा । उदकस्याभाव इत्यव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । ( ५८९२ ) **अभेः–**। अभेरुत्तरपदं मुखमन्तोदात्तं स्यात् ॥ **उपसर्गात्स्वाङ्गमिति** । 'मुखं स्वाङ्गम् ५८७४' इति तु न भवति 'नाव्ययदिक्शब्द–५८७५' इति निषेधात् ॥ ( ५८९३ ) **अपाच्च** । अपादुत्तरं मुखमन्तोदात्तं स्यात्समासे ॥ **अपमुखमिति** । प्रादिसमासे बहुव्रीहौ च पूर्वपदप्रकृतिस्वरे प्राप्ते मुखं वर्जयित्वेत्यव्ययीभावेऽपि 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ५७३४' इति प्राप्तेऽयमारम्भः ॥ **उत्तरार्थ इति** । उत्तरत्र 'अपात्' इत्यस्यैवानुवृत्तिर्यथा स्यात् अभेर्मा भूत् ॥ ( ५८९४ ) **स्फिगपूत–**। नामग्रहणं सीरेणैव संबध्यते न स्फिगादिभिः स्फिगपूतकुक्षीणां पृथग्ग्रहणादिति हरदत्तः । तेन स्फिगपूतकुक्षयः पर्याया इति निश्चीयते ॥ **उपसर्गादध्वन इत्यस्याभाव इति** । 'उपसर्गादध्वनः १३६८' इदं समासान्ताच्प्रत्ययविधायकं तदभावे तस्मिन् सति अच्प्रत्ययस्य चित्त्वादेव सिद्धम् । ननु 'उपसर्गादध्वनः १३६८' इत्यनेन नित्यो-

---

१ गुण, अक्षर, अध्याय, सूक्त, छन्दोनाम, इति गुणादिराकृतिगणः ॥ २ निरुदक, निरुपल, निर्मक्षिक, निर्मशक, निष्कालक, निष्कालिक, निष्पेष, दुस्तरीप, निस्तरीप, निस्तरीक, निरजिन, उदजिन, उपाजिन, परेर्हस्तपादकेशकर्षाः । निरुदकादिराकृतिगणः ॥ ३ अयं पाठो लिखितपुस्तकेषु नोपलभ्यते ॥

हलम् । नाम । अपनाम ॥ स्फिगपूतकुक्षिग्रहणमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च ॥ ( ५८९५ ) (सू) **अधेरुपरिस्थम्** । ६ । २ । १८८ । अध्यारूढो दन्तोऽधिदन्तः । दन्तस्योपरि जातो दन्तः । उपरिस्थं किम् । अधिकरणम् ॥ ( ५८९६ ) (सू) **अनोरप्रधानकनीयसी** । ६ । २ । १८९ । अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम् । अनुगतो ज्येष्ठमनुज्येष्ठः । पूर्वपदार्थप्रधानः प्रादिसमासः । अनुगतः कनीयाननुकनीयान् । उत्तरपदार्थप्रधानः । प्रधानार्थं च कनीयोग्रहणम् । अप्रेति किम् । अनुगतो ज्येष्ठोऽनुज्येष्ठः ॥ ( ५८९७ ) (सू) **पुरुषश्चाऽन्वादिष्टः** । ६ । २ । १९० । अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः । अन्वादिष्टः पुरुषोऽनुपुरुषः । अन्वादिष्टः किम् । अनुगतः पुरुषोऽनुपुरुषः ॥ ( ५८९८ ) (सू) **अतेरकृत्पदे** । ६ । २ । १९१ । अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः । अत्यङ्कुशो नागः । अतिपदा गायत्री । अकृत्पदे किम् । अतिकारकः ॥ ( ५८९९ ) (वा) **अतेर्धातुलोप इति वाच्यम्** ॥ इह मा भूत् । शोभनो गार्ग्योऽतिगार्ग्यः । इह च स्यात् । अतिक्रान्तः कारुमतिकारुकः ॥ ( ५९०० ) (सू) **नेरनिधाने** । ६ । २ । १९२ । निधानमप्रकाशता । ततोऽन्यदनिधानं प्रकाशनमित्यर्थः । निमूलम् । न्यक्षम् । अनिधाने किम् । निहितो दण्डो निदण्डः ॥ ( ५९०१ ) (सू) **प्रतेरंश्वादयस्तत्पुरुषे** । ६ । २ । १९३ । प्रतेः परेऽश्वादयोऽन्तोदात्ताः । प्रतिगतोंऽशुः प्रत्यंशुः । प्रतिजनः । प्रतिराजा समासान्तस्यानित्यत्वान्न टच् ॥ ( ५९०२ ) (सू) **उपाद् द्व्यजजिनमगौरादयः** । ६ । २ । १९४ । उपात्परं यत् द्व्यच्कमजिनं चान्तोदात्तं तत्पुरुषे गौरादीन्वर्जयित्वा । उपदेवः । उपेन्द्रः । उपाजिनम् । अगौरादयः किम् । उपगौरः । उपतैषः । तत्पुरुषे किम् । उपगतः सोमोऽस्य स उपसोमः ॥ ( ५९०३ ) (सू) **सोरवक्षेपणे** । ६ । २ । १९५ । सुप्रत्यवसितः । सुरत्र पूजायामेव । वाक्यार्थस्त्वत्र निन्दा, असूयया तथाऽभिधानात् । सोः किम् । कुब्राह्मणः । अवक्षेपणे किम् । सुवृषणम् । ( ५९०४ ) (सू) **विभाषोत्पुच्छे** । ६ । २ । १९६ । तत्पुरुषे । उत्क्रान्तः पुच्छादुत्पुच्छः । यदा तु पुच्छमुदस्यति उत्पुच्छयते । एरच्[२३] उत्पुच्छस्तदा थाथादिस्वरेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम् । सेयमुभयत्रविभाषा । तत्पुरुषे किम् । उदस्तं पुच्छं येन स उत्पुच्छः ॥ ( ५९०५ ) (सू)

---

ऽच् विधीयते, तत्कथमुक्तमित्यस्याभाव इतीत्यत आह-**एतदेव च ज्ञापकमिति** । यदि हि नित्यः समासान्तः स्याद् अध्वग्रहणमिहानर्थकं स्याद् अच्प्रत्ययस्य चित्त्वादान्तोदात्तस्य सिद्धत्वात् । कृतं तु अध्वग्रहणं ज्ञापयति-'समासान्ता अनित्याः' इति ॥ **स्फिगपूतकुक्षिग्रहणमिति** । यदा ह्येतानि स्वाङ्गवाचीनि, ध्रुवाणि च भवन्ति, बहुव्रीहिश्च समासस्तदा 'उपसर्गात् स्वाङ्गम् ५८८४' इत्येव सिद्धम् ॥ ( ५८९५ ) **अधेः**-। अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं स्यात् उपरि तिष्ठतीत्युपरिस्थम् । 'सुपि स्थः ३८८५' इति कः । तदेतद्दर्शयति-**दन्तस्योपरीति** ॥ **अधिकरणमिति** । अधिक्रियतेऽस्मिन्नित्यधिकरणं नैतदुपरिस्थवाचि किंत्वधःस्थवाचि । अत्र कृदुत्तरपदप्रकृतिस्वरेण ककाराकार उदात्तः ॥ ( ५८९६ ) **अनुज्येष्ठ इति** । उत्तरपदार्थस्याप्राधान्यं दर्शयति-**पूर्वपदार्थप्रधानः प्रादिसमासोऽयमिति** ॥ **प्रधानार्थं च कनीयोग्रहणमिति** । अन्यत्राप्रधानग्रहणेनैव सिद्धत्वात् । अनुगतो ज्येष्ठ इति विग्रहविशेषेण प्रधानवाचित्वं ज्येष्ठशब्दस्य दर्शयति ॥ ( ५८९७ ) **पुरुषः**-। **अन्वादिष्ट इति** । अनु पश्चादादिष्टः कथितः कस्मिंश्चित्कथिते योऽन्यः कथ्यते स अन्वादिष्ट इत्यर्थः ॥ ( ५८९८ ) **अतेरकृत्पदे** । अकृच्च पदं च अकृत्पदे तदाह-**अकृदन्तं पदशब्दश्चेति** ॥ **अत्यङ्कुश इति** । अङ्कुशमतिक्रान्त इति विग्रहः ॥ **अतिकारक इति** । शोभनः कारकः । पूजार्थोऽयमतिः ॥ ( ५८९९ ) **अतेर्धातुलोप इति** । अत्यङ्कुशादौ वृत्तिविषयेऽतिशब्दोऽतिक्रान्तार्थवृत्तिरितिक्रमेरप्रयोग एव धातुलोपः ॥ **अतिगार्ग्य इति** । यथान्यासे त्वत्रापि प्राप्नोति, गार्ग्यशब्दस्याकृदन्तत्वात् । तस्माद् अव्याप्त्यतिव्याप्तिपरिहारार्थम् 'अकृत्पदे' इत्येतदपनीय 'धातुलोपे' इति वक्तव्यमित्यर्थः ॥ ( ५९०० ) **नेरनि**-। निशब्दादुत्तरपदमन्तोदात्तं स्यादनिधानेऽर्थे ॥ **निमूलमिति** । निर्गतं मूलमस्य निर्गतं वा मूलं निमूलम् ॥ **निदण्ड इति** । निशब्दो निधानार्थे वर्तते । कथं पुनर्निशब्दस्यायमर्थ इति चेत्, शृणु-प्रादयो हि वृत्तिविषये सक्रियं साधनमाहुः ॥ ( ५९०१ ) **समासान्तस्यानित्यत्वादिति** । इदं राजञ्छब्दस्य पाठ एव ज्ञापयति 'समासान्ता अनित्याः' इति । अन्यथा 'राजाहःसखिभ्यष्टच् ११३४' इति टचश्चित्त्वादेव सिद्धं स्यात् ॥ ( ५९०३ ) **सोरव**-। सोरुत्तरपदं निन्दायामन्तोदात्तं स्यात्तत्पुरुषे ॥ **सुप्रत्यवसित इति** । 'सुः पूजायाम् ८०८' इति कर्मप्रवचनीयस्य सोः 'स्वती पूजायाम्' इति समासः । तेन सुप्रत्यवसिते थाथादिविधिर्न शङ्कनीयः । ननु यदि सुशब्दोऽत्र पूजायां वर्तते, कथं तर्हि क्षेपो गम्यत इत्याह-**वाक्यार्थस्त्विति** ॥ कथमित्याह-**असूययेति** ॥ यः खल्वनर्थे उपस्थिते सुखायमान आस्ते तं प्रत्येवमुक्ते क्षेपो गम्यते ॥ ( ५९०४ ) **विभाषोत्**-। उच्छब्दात्परः पुच्छशब्दः अन्तोदात्तो वा स्यात्तत्पुरुषे ॥ **सेयमुभयत्रविभाषेति** । आद्यायां तु व्युत्पत्तौ अव्ययपूर्वपदप्रकृतिस्वरेण बाधितत्वात्समासस्यान्तोदात्तत्वमप्राप्तम् । द्वितीयायां तु व्युत्पत्तौ थाथादिस्वरेण नित्यमन्तोदात्तत्वं

---

१ अंशु, जन, राजन्, उष्ट्र, खेटक, आजिर, आर्द्रा, श्रवण, कृत्तिका, अर्धपुर, इत्यंश्वादिः ॥ २ गौर, तैष, तैल, लेट, लोट, जिह्वा, कृष्ण, कन्या, गुध, कल्प, पाद, इति गौरादिः ॥

**द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ** । ६ । २ । १९७ । आभ्यां परेष्वेष्वन्तोदात्तो वा । द्विपाच्चतुष्पाच्च रथाय । त्रिपादूर्ध्वः । द्विदन् । त्रिमूर्धानं सप्तरश्मिम् । मूर्धन्नित्यकृतसमासान्त एव मूर्धशब्दः । तस्यैतत्प्रयोजनमसत्यपि समासान्ते अन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकम् ( ५९०६ ) अनित्यः समासान्तो भवतीति । यद्यपि च समासान्तः क्रियते तथापि बहुव्रीहिकार्यत्वात्तदेकदेशत्वाच्च समासान्तोदात्तत्वं पक्षे भवत्येव । द्विमूर्धः । त्रिमूर्धः । द्वित्रिभ्यां किम् । कल्याणमूर्धा । बहुव्रीहौ किम् । द्वयोर्मूर्धा द्विमूर्धा ॥ ( ५९०७ ) सू० **सक्थं चाऽक्रान्तात्** । ६ । २ । १९८ । गौरसक्थः । श्लक्ष्णसक्थः । अक्रान्तात्किम् । चक्रसक्थः । समासान्तस्य षचश्चित्त्वान्नित्यमेवान्तोदात्तत्वं भवति ॥ ( ५९०८ ) सू० **परादिश्छन्दसि बहुलम्** । ६ । २ । १९९ । छन्दसि परस्य सक्थशब्दस्यादिरुदात्तो वा । अञ्जिसक्थमालभेत । अत्र वार्तिकम्-( ५९०९ ) **परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः** ॥ इति । परादिः । तुविजाता उरुक्षया । परान्तः । नि येन मुष्टिहत्यया । त्रिचक्रः । पूर्वान्तः विश्वायुर्धेहि ॥ इति समासस्वराः ॥

( ५९१० ) सू० **तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः** । ८ । १ । २७ । तिङन्तात्पदाद्गोत्रादीन्यनुदात्तान्येतयोः । पचति गोत्रम् । पचतिपचति गोत्रम् । एवं प्रवचनप्रहसनप्रकथनप्रत्यायनादयः । कुत्सनाभीक्ष्ण्यग्रहणं पाठ-

---

प्राप्तमिति कृत्वोभयत्रविभाषा ॥ (५९०५) **द्वित्रिभ्याम्**–। पादिति कृताकारलोपो गृह्यते, ददिति कृतददादेशो दन्तशब्दः ॥ **आभ्यामिति** । द्वित्रिभ्याम् ॥ **द्विपादिति** । द्वौ पादौ यस्येति द्विपात् 'संख्यासुपूर्वस्य १२६१' इति पादशब्दस्याकारलोपः ॥ **द्विदन्निति** । 'वयसि दन्तस्य दतृ १२६२' ॥ **मूर्द्धन्नित्यकृतसमासान्त एव मूर्धशब्द इति** । एतच्च 'मूर्द्धसु–' इति निर्देशादेवावसीयते । अन्यथा 'मूर्द्धेषु' इति निर्देश्यं स्यात् । किमर्थं पुनरकृतसमासान्त एव निर्दिष्ट इत्यत आह–**तस्येति** ॥ यद्यकृतसमासान्तस्योपादानम्, तर्हि यदा समासान्तः क्रियते तदा न प्राप्नोति, तस्य शब्दान्तरत्वादित्यत आह–**यद्यपीति** । इह हि बहुव्रीहिकार्यित्वेनोपात्तो न मूर्द्धञ्छब्दः ॥ **तदेकदेशत्वाच्चेति** । तस्य बहुव्रीहेरेकदेशः समासान्तस्तस्य भावस्तत्त्वं तस्मादिति स एवार्थः । 'तदेकदेशित्वात्' इति पाठे तु स बहुव्रीहिरेकदेशी अवयवी यस्य स तदेकदेशी समासान्तस्तद्भावस्तत्त्वं तस्मादिति स एवार्थः । तदेवं बहुव्रीहेः कार्यत्वात्तदेकदेशित्वाच्च समासान्तस्येति यदा समासान्तः क्रियते, तदाप्ययं विधिर्भवत्येव ॥ **द्विमूर्ध इति** । 'द्वित्रिभ्यां ष–१२२९' ॥ **कल्याणमूर्द्धेति** । पूर्वपदप्रकृतिस्वर एवात्र भवति । कल्याणशब्दो 'लघावन्ते–५६२४' इत्यादिना मध्योदात्तः ॥ ( ५९०७ ) **सक्थं च**–। 'बहुव्रीहौ सक्थ्यक्ष्णोः–१२२७' इति षजन्तः सक्थशब्दः उत्तरपदमन्तोदात्तं वा स्यात्, स चेत् क्रशब्दान्तात्परो न भवति । चित्त्वान्नित्यमन्तोदात्तत्वे प्राप्तेऽयं विकल्पः ॥ **गौरसक्थ इति** । पक्षे पूर्वपदप्रकृतिस्वरः । 'शुक्लगौरयोरादिः ५५९५' इति गौरस्याद्यन्तावुदात्तौ तेनात्र त्रैस्वर्यम् ॥ **श्लक्ष्णसक्थ इति** । 'कृत्यशूभ्यां क्स्नः ४५००' । 'श्लिषेरच्चोपधायाः ४५०२' इति श्लक्ष्णशब्दोऽन्तोदात्तः ॥ **षचश्चित्त्वादिति** । एतेन चित्स्वरस्यापवादः–'प्राप्तविभाषेयम्' इति दर्शयति । ( ५९०८ ) **परादिश्छन्दसि**–। परशब्देनात्र सक्थशब्द एव तस्यैव पूर्वसूत्रे संनिहितत्वात्तदाह–**परस्य सक्थशब्दस्येति** ॥ ननु तर्हि परग्रहणमनर्थकं प्रकृतो हि सक्थशब्दोऽनुवर्तते, नैतदस्ति–बहुव्रीहेरपि प्रकृतत्वात्तस्याद्युदात्तत्वं शङ्क्येत । 'विभाषोत्पुच्छे ५९०४' इत्यतो विभाषेति वर्तमाने बहुलग्रहणं बह्वर्थप्रदर्शनार्थम् । ( ५९०९ ) बहुलग्रहणस्यार्थं श्लोकेन दर्शयति—**परादिश्चेति** । उरूणां क्षयो निवास इति विग्रहः । 'क्षयो निवासे ५५६४' इति क्षयशब्द आद्युदात्तः । 'समासस्य ५७००' इत्यन्तोदात्तं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं तत्थाथादिस्वरेण बाधितम् । अतो बाहुलकेनोत्तरपदाद्युदात्तत्वम् । एतच्च 'क्षि निवासगत्योः' इति धातोर्बाहुलकादधिकरणे 'एरच् ५०२२' इति माधवेनोक्तम् । वस्तुतस्तु—घप्रत्ययान्तः क्षयशब्द इति हरदत्तोक्तरीत्या थाथादिस्वरस्येहाप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैव सिद्धम् । परादिश्चेत्यस्योदाहरणं तु ' चोदयित्री सूनृतानाम्' इति बोध्यम् । 'ऊन 'परिहाणे' चुरादिष्वदन्तः । णिच्, क्विप् । सुतरामूनयत्यप्रियमिति सून् तदृतं सूनृतम् । ' अयस्मयादीनि–५२१४' इति भत्वान्नलोपो न ॥ **मुष्टिहत्ययेति** । मुष्ट्या हननं मुष्टिहत्या 'हनस्त च ३८०४' इति सुबन्ते उपपदे क्यप् । कृदुत्तरपदप्रकृतिस्वरोऽत्र प्राप्तः ॥ **त्रिचक्र इति** । बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः प्राप्तः ॥ **विश्वायुरिति** । विश्वमायुर्यस्मिन्निति बहुव्रीहिः । विश्वशब्दः क्वन्प्रत्ययान्तः पूर्वपदप्रकृतिस्वरेणाद्युदात्तः प्राप्तः ॥ इति सुबोधिन्यां समासस्वराः ॥

( ५९१० ) **तिङो–। पचति गोत्रमिति** । गोत्रं स्वकुलं पीडयतीत्यर्थः । एवं हि कुत्सा भवति । आभीक्ष्ण्य उदाहरणमाह–**पचति पचति गोत्रमिति** । अनेकार्थत्वात्पचिः करोत्यर्थे वर्त्तते, विवाहादौ गोत्रं पुनःपुनः सुखीकरोतीत्यर्थः । 'नित्यवीप्सयोः २८८३ ' इति द्वित्वम् । ननु किं कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणमेतयोरर्थयोर्गोत्रादीनि भवन्ति तानि च तिङः पराण्यनुदात्तानि भवन्ति । आहोस्विदनुदात्तविशेषणं तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्त्येतयोरर्थयोरिति । अस्मिन्विचारे निर्णयमाह–**कुत्सनाभीक्ष्ण्यग्रहणमिति** । अयं चार्थो योगविभागाल्लभ्यते 'तिङो गोत्रादीनि' इत्येको योगः

---

१ गोत्र, ब्रुव, प्रवचन, प्रयतन, पवन, धनन, प्रहसन, प्रकथन, प्रत्यायन, प्रचक्षण, विचक्षण, अवचक्षण, स्वाध्याय, भूयिष्ठ, वानाम, इति गोत्रादिः ॥

विशेषणम् । तेनान्यत्रापि गोत्रादिग्रहणे कुत्सनादावेव कार्यं ज्ञेयम् । गोत्रादीनि किम् । पचति पापम् । कुत्सेति किम्। खनति गोत्रं समेत्य कूपम् ॥ ( ५९११ ) (सू) तिङ्ङतिङः । ८ । १ । २८ । अतिङन्तात्पदात्परं तिङन्तं निहन्यते । अग्निमीळे ॥ ( ५९१२ ) (सू) न लुट् । ८ । १ । २९ । लुडन्तं न निहन्यते । श्वः कर्ता ॥ ( ५९१३ ) (सू) निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् । ८ । १ । ३० । एतैर्निपातैर्युक्तं न निहन्यते । यदग्ने स्यामहं त्वम् । युवा यदा कृथः कुविदङ्ग आसन् । अचित्तिभिश्चकृमा कच्चित् । पुत्रासो यत्र पितरो भवन्ति ॥ ( ५९१४ ) (सू) नह प्रत्यारम्भे । ८ । १ । ३१ । नहेत्यनेन युक्तं तिङन्तं नानुदात्तम् । प्रतिषेधयुक आरम्भः प्रत्यारम्भः । नह भोक्ष्यसे । प्रत्यारम्भे किम् । नह वै तस्मिन् लोके दक्षिणमिच्छन्ति ॥ ( ५९१५ ) (सू) सत्यं प्रश्ने । ८ । १ । ३२ । सत्ययुक्तं तिङन्तं नानुदात्तं प्रश्ने । सत्यं भोक्ष्यसे । प्रश्ने किम् । सत्यमिद्वा उतं वयमिन्द्रं स्तवाम ॥ ( ५९१६ ) (सू) अङ्गाप्रातिलोम्ये । ८ । १ । ३३ । अङ्गेत्यनेन युक्तं तिङन्तं नानुदात्तम् । अङ्ग कुरु । अप्रातिलोम्ये किम् । अङ्ग कूजसि वृषल इदानीं ज्ञास्यसि जाल्म । अनभिप्रेतमसौ कुर्वन्प्रतिलोमो भवति ॥ ( ५९१७ ) (सू) हि च । ८ । १ । ३४ । हियुक्तं तिङन्तं नानुदात्तम् । आ हि ष्मा याति । आ हि रुहन्तम् ॥ ( ५९१८ ) (सू) छन्दस्यनेकमपि साकाङ्क्षम् । ८ । १ । ३५ । हीत्यनेन युक्तं साकाङ्क्षमनेकमपि नानुदात्तम् । अनृतं हि मत्तो वदति, पाप्मा चैनं पुनाति।

---

ऽनुदात्तविधानार्थः । 'कुत्सनाभीक्ष्ण्ययोः' इति द्वितीयो योगः । गोत्रादीनीत्येव । परिभाषेयम् । इह शास्त्रे गोत्रादीनि कुत्सनाभीक्ष्ण्यविषयाण्येव ग्राह्याणि, तेन किं सिद्धं भवतीत्यत आह--**तेनेति** ॥ **अन्यत्रापीति** । 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ५९४०' इत्यत्र ॥ **पचति पापमिति** । पापमिति क्रियाविशेषणम् ॥ **खनति गोत्रं समेत्य कूपमिति** । गोत्रं कुलं समुदितं भूत्वा कूपं खनतीत्यर्थः ॥ ( ५९११ ) **तिङ्ङ--** । 'अनुदात्तं सर्वम्' इति वर्तते तदाह-**निहन्यत इति** । सर्वानुदात्तो निघात इति वैयाकरणानां व्यवहारः । अतिङ इति किम् । पचति भवति । एककर्तृका पचिक्रिया भवतीत्यर्थः । नन्वतिङ्ग्रहणं व्यर्थम् 'समानवाक्ये निघातयुष्मदस्मदादेशाः-५४६' इत्युक्तत्वात् । एकस्मिंश्च वाक्ये तिङन्तद्वयाभावादिति चेत् , सत्यम्--सूत्रकारेण समानवाक्याधिकारो न कृत इत्यतिङ्ग्रहणमकारि, भाष्ये तु अतिङ्ग्रहणं प्रत्याख्यातम् ॥(५९१२) **न लुट्** । इत आरभ्य निषेधसूत्राणि ॥ **श्वः कर्तेति** । तासेः परस्य लसार्वधातुकस्यानुदात्तत्वे कृते तासिरुदात्तः । एकवचने टिलोपे कृते उदात्तनिवृत्तिस्वरेण डा उदात्तः ॥(५९१३) **निपातैः--** । यदित्यादीनां यत्रेत्यन्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक् । न तु युक्तशब्देन समासः, निपातैरिति विशेषणस्यानन्वयापत्तेस्तदाह-**एतैर्निपातैरिति** । यद् यदि हन्त कुवित् नेत् चण् कच्चित् यत्र एतैरित्यर्थः । "यद्यदार्थे च हेतौ च विचारे यदि चेच्चणः ॥ हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ।" "कच्चित्प्रश्ने नेत् निषेधे प्रशंसायां कुवित्स्मृतम्" ॥ यत्रेत्याधारे तत्र मूले कुविदुदाहृतः । अन्येऽप्यूह्याः ॥ तत्रग्रहणं साक्षात्संबन्धप्रतिपादनार्थम् ॥ **यदग्ने स्यामिति** ॥ अस्तेर्लिङि अम् ॥ **चकृमा कच्चिदिति** । चकृमेति लिट् प्रत्ययस्वरेणान्तोदात्तम् । कच्चिदयं निपातसमुदायः । पदकाले कत् चिदिति विच्छिद्य पाठात् । निपातैः किम् । यत्कूजति शकटम् । एतीति यत् इणः शतरि रूपम् 'इणो यण् २२६६' इति यण् । ननु प्रतिपदोक्तत्वात् यदादिभिः साहचर्याच्च निपातस्यैव यच्छब्दस्य ग्रहणं स्यादिति चेत् , सत्यम्-एतदेव ज्ञापयति 'अस्मिन्प्रकरणे नेदमुभयं व्यवस्थापकम्' इति तेन यावद्यथाभ्यामित्यत्र 'यत्तदेतेभ्यः परिमाणे वतुप् २४९६' इति व्युत्पादितस्यापि लाक्षणिकस्यानिपातस्यापि ग्रहणं भवति 'यावत् स्तोतृभ्योऽरदो गृणाना' इति । अत्रारद इत्यट्स्वरेणाद्युदात्तम् । युक्तग्रहणं किम् । अन्यान्विते मा भूत् । 'यत्र क्व च ते मनो दक्षं दधस उत्तरम्' । इह यत्रेत्यस्योत्तरमित्यनेन साक्षात्संबन्धः । 'दध धारणे' । अनुदात्तेत् ॥ ( ५९१४ ) **नह प्रत्या--** । नहशब्दो निपातसमुदायो निषेधे वर्तते **नह भोक्ष्यस इति** । अदुपदेशात्परत्वात्से इत्यस्य निघातः । स्यप्रत्ययस्वरेण मध्योदात्तं पदम् । पूर्वं भुङ्क्ष्वेत्युक्ते पुनः क्रोधेनोपहासेन वा पुनःपुनः प्रतिषेध उक्ते पृच्छति भोजनं करिष्यसि स एवमुच्यते ॥ **न ह वै तस्मिन्निति** । तस्मिन्छब्दः फिट्स्वरेणाद्युदात्तः । लोकशब्दः पचाद्यजन्तत्वादन्तोदात्तः । दक्षिणशब्दः 'स्वाङ्गशिटामदन्तानाम् ५६११' इति शिट्त्वादाद्युदात्तः ॥ (५९१५) **सत्यं भोक्ष्यस इति** । मध्योदात्तम् ॥ (५९१६) **अङ्गा--** । प्रातिलोम्यं प्रातिकूलकारित्वं ततोऽन्यदभिमतकारित्वमप्रातिलोम्यम् । एवं च 'आनुलोम्ये' इति वक्तव्यम् । अङ्गशब्द उदाहरणेऽनुज्ञायाम् । प्रत्युदाहरणे त्वमर्षे ॥ **अङ्ग कुर्विति** । करोतेर्लोण्मध्यमपुरुषैकवचनं सिप् तस्य 'सेर्ह्यपिच्च २९५६' इति हिरादेशः । 'तनादिकृञ्भ्य उः ३२७९' 'सार्वधातुकार्धधातुकयोः २१२२' इति करोतेर्गुणः । 'अत उत्सार्वधातुके ३२८०' 'उतश्च प्रत्ययादसंयोगापूर्वात् ३११४' इति हेर्लुक् । कुर्वित्युप्रत्ययस्वरेणान्तोदात्तम् ॥(५९१७) **हि च** । अत्राप्यप्रातिलोम्य इति संबध्यते । **आ हि ष्मेति** । स्मशब्दो निपातोऽपि चादित्वादनुदात्तः । दीर्घत्वं च च्छान्दसम् । प्रातिलोम्ये तु हि कूज वृषल । उदाहरणे हिशब्दोऽवधारणे हेतौ वा । स च प्रत्युदाहरणे त्वमर्षे ॥ ( ५९१८ ) **छन्दस्य--** । **अनेकमपीति** । अपिशब्दादेकम् । तत्रानेकमुदाहरति—**अनृतं हीति** । हिर्यत इत्यर्थे । यस्मादयं मत्तोऽनृतं वदति । ततः पाप्मा पापमेनं पुनाति । अनृतवदनदोषेण युज्यत इति तात्पर्यार्थः । एकस्योदाहरणम्-अग्निर्हि पूर्वमुदजयन्तमिन्द्रोनूदयन् । अत्र एकमजयदित्याद्युदात्तम् । परं निहतम् । अत्र हेतुहेतुमद्भावस्य द्योतको हिरित्यनेकमपि तिङन्तं हियुक्तं भवति । अत्र पूर्वेण सर्वस्य निघातप्रतिषेधे प्राप्ते क्वचिदनेकस्य क्वचिदेकस्य यथा स्यादिति वचनम् । तत्र च्छन्दसि

तिङन्तद्वयमपि न निहन्यते ॥ ( ५९१९ ) ⊛ **यावद्यथाभ्याम्** । ८।१। ३६ । आभ्यां योगे तिङन्तं नानुदात्तम् । यथा चित्कण्वमावतम् ॥ ( ५९२० ) ⊛ **पूजायां नानन्तरम्** । ८ । १ । ३७ । यावद्यथाभ्यां युक्तमनन्तरं तिङन्तं पूजायां नानुदात्तम् । यावत्पचति शोभनम् । यथा पचति शोभनम् । पूजायां किम् । यावद्भुङ्क्ते । अनन्तरं किम् । यावद्देवदत्तः पचति शोभनम् । पूर्वेणात्र निघातः प्रतिषिध्यते ॥ ( ५९२१ ) ⊛ **उपसर्गव्यपेतं च** । ८ । १ । ३८ । पूर्वेणानन्तरमित्युक्तम् । उपसर्गव्यवधानार्थं वचनम् । यावत्प्रपचति शोभनम् । अनन्तरमित्येव । यावद्देवदत्तः प्रपचति शोभनम् ॥ ( ५९२२ ) ⊛ **तुपश्यपश्यताऽहैः पूजायाम्** । ८ । १ । ३९ । एभिर्युक्तं तिङन्तं न निहन्यते पूजायाम् । आदह स्वधामनु पुनर्गर्भत्वमेनिरे ॥ ( ५९२३ ) ⊛ **अहो च** । ८ । १ । ४० । एतद्योगे नानुदात्तं पूजायाम् । अहो देवदत्तः पचति शोभनम् ॥ ( ५९२४ ) ⊛ **शेषे विभाषा** । ८ । १ । ४१ । अहो इत्यनेन युक्तं तिङन्तं वाऽनुदात्तमपूजायाम् । अहो कटं करिष्यति ॥ ( ५९२५ ) ⊛ **पुरा च परीप्सायाम्** । ८ । १ । ४२ । पुरेत्यनेन युक्तं वानुदात्तं त्वरायाम् । अधीष्व माणवक पुरा विद्योतते विद्युत् । निकटगामिन्यत्र पुराशब्दः । परीप्सायां किम् । न तेन स्म पुराऽधीयते । चिरातीतेऽत्र पुरा ॥ ( ५९२६ ) ⊛ **नन्वित्यनुज्ञैषणायाम्** । ८ । १ । ४३ । ननु इत्यनेन युक्तं तिङन्तं नानुदात्तमनुज्ञाप्रार्थनायाम् । ननु गच्छामि भोः । अनुजानीहि मां गच्छन्तमित्यर्थः । अन्विति किम् । अकार्षीः कटं त्वम् । ननु करोमि । पृष्टप्रतिवचनमेतत् ॥ ( ५९२७ ) ⊛ **किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्** । ८ । १ । ४४ । क्रियाप्रश्ने वर्तमानेन किंशब्देन युक्तं तिङन्तं नानुदात्तम् । किं द्विजः पचत्याहोस्विद्गच्छति । क्रियेति किम् । साधनप्रश्ने मा भूत् । किं भक्तं पचत्यपूपान्वा । प्रश्ने किम् ।

---

दृष्टानुविधानाद्यथाप्रयोगं व्यवस्था ॥ ( ५९१९ ) **यावद्यथा**–। इयं तृतीया, न पञ्चमीत्याह–**आभ्यां युक्तमिति** । तेन परभूतयोरपि भवति । देवदत्तः पचति यावदिति । यावच्छब्दो निपातश्चानिपातश्च गृह्यते 'निपातैर्यद्यदि–५९१३' इत्यत्र ज्ञापितत्वात् । आद्यः साकल्ये, द्वितीयः परिमाणोपाधिको वतुप्प्रत्ययान्तः । यथाशब्दो योग्यतादिषु ॥ **आवतमिति** । अवतेर्लोण्मध्यमपुरुषद्विवचनम् । यावच्छब्दोदाहरणं तु यावद् भुङ्क्ते देवदत्तः । पचति यावदिति यावत् । स्तोतृभ्योऽरदो गृणता इति । 'रद विलेखने' लङि सिपि अट् । अट्स्वरेणाद्युदात्तः ॥ ( ५९२० ) **पूजायाम्**–। **नानुदात्तमिति** । अनुदात्त[1] एव भवतीत्यर्थः ॥ **यावद्देवदत्त इति** । पूर्वेणात्र निघातप्रतिषेधो व्यवाये यदि भवति, उपसर्गेणैवेति नियमादत्रातिप्रसङ्गाभावेऽनन्तरग्रहणं शक्यमकर्तुम् ॥ ( ५९२१ ) **उपसर्ग**—। यावद्यथाभ्यां युक्तमनन्तरमुपसर्गेण व्यवहितं तिङन्तं पूजायां विषये नानुदात्तं स्यात् ॥ **अनन्तरमित्येवेति** । तच्चानन्तर्यं सोपसर्गस्य, न तिङन्तमात्रस्य ॥ **प्रपचतीति** । प्रशब्द आद्युदात्तः ॥ (५९२२)**तुपश्य**–। तुप्रभृतीनि पूजाविषयाणि । उदाहरणानि तु माणवको भुङ्क्ते,पश्य माणवको भुंक्ते, माणवकस्तु भुङ्क्त इति । आश्चर्ये तुशब्द इति भोजनस्य पूजा गम्यते । एवमन्यत्रापि । पूजायां किम् । पश्य मृगो धावति । तत्त्वकथनमेतत् । ननु 'पूजायां नानन्तरम् ५९२०' इत्यतः पूजायामिति वर्तमाने पूजाग्रहणं व्यर्थमिति चेत्, मैवम्—पूजाग्रहणं निघातप्रतिषेधार्थम् । तद्धि पूजाग्रहणं प्रतिषेधस्य प्रतिषेधेन संबद्धम् । ततश्च तदनुवृत्ताविहापि 'न लुट् ५९१२' इत्यादिके विषये प्रतिषेधस्य प्रतिषेधः स्यात्, मा भूदेवं निघातस्यैव यथा स्यादित्येतदर्थं पूजाग्रहणम् । किं चानन्तरमित्येवं तदभूत्, इह त्वविशेषेणेष्यते ॥ ( ५९२३ ) **अहो च**—। अहो देवदत्तः पचति शोभनमित्युदाहरणम् । पृथग्योगकरणमुत्तरार्थम् । उत्तरो योगः अहोयोग एव यथा स्यात्तुप्रभृतिभिर्योगे मा भूदिति ॥ ( ५९२४ ) **शेषे**—। पूर्वं पूजायामित्युक्तत्वात्ततोऽन्यः शेष इत्याह—**अपूजायामिति**॥**अहो कटं करिष्यतीति** । पक्षेऽस्य प्रत्ययस्वरः । अनाश्चर्यभूतमेव वस्तु असूयया आश्चर्यवत्प्रतिपाद्यते, न पूजा । शेषग्रहणं स्पष्टार्थम् । योगविभागसामर्थ्यादेव पूर्वप्रकृतेषु किंचिन्नानुवर्तते इति संज्ञायां तत्र चानुकृष्टत्वात् पूजायामित्येतन्निवर्तिष्यत इति भावः ॥ ( ५९२५ ) **पुरा**–। **पुरा विद्योतते विद्युदिति** । 'यावत्पुरा–३७१८' इति भविष्यति लट् । विद्योतनादावध्ययनं धर्मशास्त्रप्रतिषिद्धम् । अतस्तदुपन्यासेन त्वरितमधीष्वेति गम्यते ॥ पक्षे द्योतत इति धातुस्वरेणाद्युदात्तम् । 'तास्यनुदात्तेत्–५६९५' इति लसार्वधातुकनिघातः ॥ **न तेन स्म पुराऽधीयत इति** । 'लट् स्मे ३७१३' इति भूते लट् । अत्र भूतस्याध्ययनस्य चिरकालप्रवृत्तत्वं गम्यते न त्वरा ॥ ( ५९२६ ) **नन्वि**—। किंचित्कर्तुं स्वयमेवोद्यतस्य एवं क्रियतामित्यभ्युपगमोऽनुज्ञा तस्या एषणा प्रार्थनाऽनुज्ञैषणाऽनुज्ञाप्रार्थनेत्यर्थः । तदाह—**अनुज्ञाप्रार्थनायामिति** । उदाहरणे वर्तमानसामीप्ये लट्, प्रत्युदाहरणे 'ननौ पृष्टप्रतिवचने ३७१५' इति भूते लट् ॥ **अन्विति किमिति** । अनुज्ञैषणायामिति किमित्यर्थः । 'अङ्गाप्रातिलोम्ये ५९१६' इत्यादिवदितिकरणं विनापि सिद्धे एकनिपातोऽयमिति प्रदर्शनार्थमितिशब्दः ॥ अन्यथा द्वयोर्निपातयोर्ग्रहणं संभाव्येत ॥ ( ५९२७ ) **किं क्रिया**–। **अप्रतिषिद्धमिति** । अप्रतिषिद्धार्थमित्यर्थः । **किं द्विजः पचति, आहोस्विद्गच्छतीति** । आहोस्विदेको निपात आद्युदात्तः । अत्र केचित्–पूर्वं किंयुक्तं तन्न निहन्यते,

---

[1] 'लुट्' इत्यतो नेत्यनुवर्त्तमाने पुनरिह निषेधवाचकनशब्दोपादानेन अनुदात्तनिषेधनिषेधत्वमर्थो निष्पन्नस्तत्फलितमाह–अनुदात्त एवेति ॥

किं पठति । क्षेपोऽयम् । अनुपसर्गं किम् । किं प्रपचति उत प्रकरोति । अप्रतिषिद्धं किम् । किं द्विजो न पचति ॥ (५९२८) (सू०) लोपे विभाषा । ८ । १ । ४५ । किमोऽप्रयोगे उक्तं वा । देवदत्तः पचत्याहोस्वित्पठति ॥ ( ५९२९ ) (सू०) एहि मन्ये प्रहासे लृट् । ८ । १ । ४६ । एहि मन्ये इत्यनेन युक्तं लृडन्तं नानुदात्तं क्रीडायाम् । एहि मन्ये भक्तं भोक्ष्यसे युक्तं तत्त्वतिथिभिः । प्रहासे किम् । एहि मन्यसे ओदनं भोक्ष्ये इति सुष्ठु मन्यसे । गत्यर्थलोटा लृडित्यनेनैव सिद्धे नियमार्थोऽयमारम्भः । एहिमन्ये युक्ते प्रहास एव नान्यत्र । एहि मन्यसे ओदनं भोक्ष्ये ॥ ( ५९३० ) (सू०) जात्वपूर्वम् । ८ । १ । ४७ । अविद्यमानपूर्वं यज्जातु तेन युक्तं तिङन्तं नानुदात्तम् । जातु भोक्ष्यसे । अपूर्वं किम् । कटं जातु करिष्यसि ॥ ( ५९३१ ) (सू०) किंवृत्तं च चिदुत्तरम् । ८ । १ । ४८ । अविद्यमानपूर्वं चिदुत्तरं यत्किंवृत्तं तेन युक्तं तिङन्तं नानुदात्तम् । विभक्त्यन्तं डतरडतमान्तं किमो रूपं किंवृत्तम् । कश्चिद् भुङ्क्ते । कतरश्चित् । कतमश्चिद्वा । चिदुत्तरं किम् । को भुङ्क्ते । अपूर्वमित्येव । रामः किंचित्पठति ॥ ( ५९३२ ) (सू०) आहो उताहो चाऽनन्तरम् । ८ । । १ । ४९ । आहो उताहो इत्याभ्यां युक्तं तिङन्तं नानुदात्तम् । आहो उताहो वा भुङ्क्ते । अनन्तरमित्येव । शेषे विभाषां वक्ष्यति । अपूर्वेति किम् । देव आहो भुङ्क्ते ॥ ( ५९३३ ) (सू०) शेषे विभाषा । ८ । १ । ५० । आभ्यां युक्तं व्यवहितं तिङन्तं वाऽनुदात्तम् । आहो देवः पचति ॥ ( ५९३४ ) (सू०) गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् । ८ । १ । ५१ । गत्यर्थानां लोटा युक्तं तिङन्तं नानुदात्तं यत्रैव कारके लोट् तत्रैव लृडपि चेत् । आगच्छ देव ग्रामं द्रक्ष्यस्येनम् । उह्यन्तां देवदत्तेन शालयो रामेण भोक्ष्यन्ते । गत्यर्थे किम् । पच देव ओदनं भोक्ष्यसेऽन्नम् । लोटा

---

उत्तरं तु न किंयुक्तमिति निहन्यत एवेति । अन्ये तु—यद्यप्येकस्याख्यातस्य समीपे किंशब्दः श्रूयते, तथापि सर्वस्य संशयविषयस्य तेन योग इति उभयत्रापि निषेधेन भाव्यमिति ॥ अत्र हरदत्तः—ये त्वाहुः, पूर्वं किंयुक्तमिति, ते मन्यन्ते अस्तु द्वयोः संशयविषयत्वम्, किंशब्देन तु श्रुतक्रियाविषय एव प्रश्नो द्योत्यते, क्रियान्तरविषयस्तु प्रश्नः आहोस्विदित्यनेन, क्रियाप्रश्नं इति चोच्यते तस्मात्तस्यैव निघातप्रतिषेध इति । प्रश्ने किम् । किं देवदत्तः पठति । क्षेपे किंशब्दः । कच्चित्पुस्तके किमधीयत इति प्रत्युदाहरणं दृश्यते, तन्नादर्तव्यं सोपसृष्टत्वात् ॥ ( ५९२८ ) **लोपे-**। 'किं क्रियाप्रश्ने-५९२७' इति सूत्रमनुवर्तते । तथा चायमर्थः । क्रियाप्रश्ने यः किंशब्दः तस्य लोपे तदर्थेन युक्तमनुपसर्गमप्रतिषिद्धं च तिङन्तं वाऽनुदात्तं स्यात् । सूत्रेण किमो लोपस्याविधानादर्थप्रकरणादिना गम्यमानार्थत्वादप्रयोग एव लोपो विवक्षितः ॥ **देवदत्तः पचति आहोस्वित्पठतीति** । अत्र पक्षे निघातः, पक्षे धातुस्वरेणाद्युदात्तता । किंशब्दाप्रयोगादप्राप्तविभाषेयम् । यद्वा—तस्याप्रयोगेऽपि अर्थेन योगात्प्राप्तविभाषा । पूर्वसूत्रस्थानि प्रत्युदाहरणानि किंशब्दं त्यक्त्वाऽत्र योजनीयानि ॥(५९२९) **एहि-। एहि मन्य इत्यनेन युक्तमिति** । समुदायाभिप्रायमेकवचनम् । अन्यथा आख्याते द्वे, आङ् चापरः इति बहुवचनप्रसङ्गः ॥ **एहि मन्ये भक्तं भोक्ष्यस इति** । मन्यसे भोक्ष्ये इत्यर्थे 'प्रहासे च मन्योपपदे-२९१७' इत्यादिना मन्ये भोक्ष्यस इति पुरुषव्यत्ययः । इदं च वृत्तिकारमतरीत्या प्रत्युदाहरणम् । तन्मते उत्तमोपादानस्यातन्त्रत्वात् । भाष्ये तु एहि मन्ये रथेन यास्यसीति प्रत्युदाहृतम् । तत्रायमर्थः—त्वं रथेन यास्यसीत्यहं मन्य एहीति ॥ **गत्यर्थलोटा लृडित्यैव सिद्ध इति** । आङ्पूर्वादिणो लोट् सिपो हिः । अत्र एहीत्यस्य गत्यर्थत्वाद् 'गत्यर्थलोटा-५९३४' इति सिद्धमित्यर्थः । एहीत्यत्र आङः परत्वादिहीत्यत्र निघातः ॥ **मन्य इति** । 'मन ज्ञाने' अनुदात्तेत् श्यन्नन्तत्वादाद्युदात्तत्वम् । 'तास्यनुदात्तेत्-५६९५' इति अदुपदेशात्परत्वादिङनुदात्तः ॥ **(५९३०) जात्व-**। अपूर्वमित्येतज्जातुशब्दस्यैव विशेषणम् , न तिङन्तस्य 'आहो उताहो-५९३२' इति सूत्रे अनन्तरग्रहणज्ञापकात् । अन्यथा तत्राप्यपूर्वमित्यनुवृत्तेरेव केवलतिङन्तस्यानन्तर्यं लभ्यते इति किं तेन । ननु 'शेषे विभाषा ५९३३ ' इति वक्ष्यति तत्र शेषप्रक्लृप्त्यर्थं तत्स्यात् । शेषे विभाषा, कश्च शेषः, सान्तरं शेष इति अन्तरेणाप्यनन्तरग्रहणं प्रक्लृप्तः शेषः, कथम्, अपूर्वमिति प्रकृतं स पूर्वः शेष इति तदेतत्सकलमभिप्रेत्याह—**अविद्यमानपूर्वं यज्जात्विति** । **जातु भोक्ष्यस इति** । अदुपदेशात्परत्वात्से इत्यस्य निघातः । मध्योदात्तं पदम् । जातुशब्दो निपातत्वादाद्युदात्तः ॥ **कटं जातु करिष्यसीति** । कटशब्दः फिट्स्वरादन्तोदात्तः ॥( ५९३१ ) **किंवृत्तम्-**। वृत्तमित्यधिकरणे क्तः । किमो वृत्तं किंवृत्तम् । 'अधिकरणवाचिनश्च ९१४ ' इति कर्तरि षष्ठी । 'अधिकरणवाचिना च १०२५ ' इति समासनिषेधे प्राप्तेऽस्मादेव निपातनात्समासः । इह 'जात्वपूर्वम् ५९३० ' इत्यतोऽपूर्वमिति वर्तते तद्व्याचष्टे—**अविद्यमानपूर्वमिति** । यदि यत्र किंशब्दो वर्तते तत्सर्वं गृह्यते, तर्हि किमीयः कितरामित्यादेरपि प्रसङ्गः स्यादिति मत्वा परिसंचष्टे—**विभक्त्यन्तमित्यादि** ॥ (५९३३) **शेषे वि-**। अनन्तरोपक्षं शेषत्वमित्याह—**व्यवहितमिति** ॥ **पचतीति** । पक्षे धातुस्वरेणाद्युदात्तम् ॥ **गत्यर्थ-**। गतिरर्थो ( ५९३४ ) विग्रहः ॥ येषामिति **गत्यर्थलोटा युक्तमिति** । योगः पुनरर्थद्वारको निमित्तनिमित्तिभावः । लोडन्तवाच्यं हि निमित्तं लृडन्तवाच्यस्य । 'न चेत्कारकं सर्वान्यत् ' इत्यस्य व्याख्यानमाह—**यत्रैव कारके लोडित्यादि** ॥ कर्तरि, कर्मणि वा । **आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनमिति** । आङुपसर्गः, गच्छदेवदत्तशब्दयोः पदात्परत्वान्निघातः । ग्रामशब्दो 'ग्रसेरा च ४३४२ ' इति मन्नन्त आद्युदात्तः ॥ **द्रक्ष्यसीति** । प्रत्ययस्वरेण मध्योदात्तम् ॥ **उह्यन्तां देवदत्तेन शालयो रामेण भोक्ष्यन्त इति** । वहेः प्रापणार्थत्वेऽपि गतिर्गम्यत इति गत्यर्थः । उह्यन्तामित्यत्र देवदत्तरामयोः कर्त्रोर्भेदेऽपि लकार-

किम्। आगच्छेर्देव ग्रामं द्रक्ष्यस्येनम्। लट् किम्। आगच्छ देव ग्रामं पश्यस्येनम्। न चेदिति किम्। आगच्छ देव ग्रामं पिता ते ओदनं भोक्ष्यते। सर्वं किम्। आगच्छ देव ग्रामं त्वं चाहं च द्रक्ष्याव एनमित्यत्रापि निघातनिषेधो यथा स्यात्। यल्लोडन्तस्य कारकं तत्रान्यत्र लडन्तेनोच्यते॥ (५९३५) लोट् च। ८। १। ५२। लोडन्तं गत्यर्थलोटा युक्तं नानुदात्तम्। आगच्छ देव ग्रामं पश्य। गत्यर्थेति किम्। पच देवौदनं भुङ्क्ष्वैनम्। लोट् किम्। आगच्छ देव ग्रामं पश्यसि। न चेत्कारकं सर्वान्यदित्येव। आगच्छ देव ग्रामं पश्यत्वेनं रामः। सर्वग्रहणात्विह स्यादेव। आगच्छ देव ग्रामं त्वं चाहं च पश्यावः। योगविभाग उत्तरार्थः (५१३६) विभाषितं सोपसर्गमनुत्तमम्। ८। १। ५३। लोडन्तं गत्यर्थलोटा युक्तं तिङन्तं वाऽनुदात्तम्। आगच्छ देव ग्रामं प्रविश। सोपसर्गं किम्। आगच्छ देव ग्रामं पश्य। अनुत्तमं किम्। आगच्छानि देव ग्रामं प्रविशानि॥(५९३७) हन्त च। ८। १। ५४। हन्तेत्यनेन युक्तमनुत्तमं लोडन्तं वाऽनुदात्तम्। हन्त प्रविश। सोपसर्गमित्येव। हन्त कुरु। निपातैर्यद्यदीति निघातप्रतिषेधः। अनुत्तमं किम्। हन्त प्रभुञ्जावहै॥(५९३८) आम एकान्तरमामन्त्रितमनन्तिके। ८। १। ५५। आमः परमेकपदान्तरितमामन्त्रितं नानुदात्तम्। आम् पचसि देवदत्त३। एकान्तरं किम्। आम् प्रपचसि देवदत्त३। आमन्त्रितं किम्। आम् पचति देवदत्तः। अनन्तिके किम्। आम् पचसि देवदत्त॥ (५९३९) यद्धितुपरं छन्दसि। ८। १। ५६। तिङन्तं नानुदात्तम्। उदसृजो यदङ्गिरः। उशन्ति हि। आख्यास्यामि तु ते। निपातैर्यदिति हि चेति तु पश्येति च सिद्धे नियमार्थमिदम्। एतैरेव परभूतैर्योगे नान्यैरिति। जाये स्वा रोहावेहि। एहीति गत्यर्थलोटा युक्तस्य लोडन्तस्य निघातो भवति॥ (५९४०) चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः। ८। १। ५७। एषु षट्सु परतस्तिङन्तं नानुदात्तम्। देवः पचति चन। देवः पचति चित्। देवः पचतीव। देवः पचति गोत्रम्। देवः पचतिकल्पम्। देवः पचतिपचति। अगतेः किम्। देवः प्रपचति चन॥ (५९४१) चादिषु च। ८। १। ५८।

---

वाच्यस्य शालेः कर्मणः अभेदात्॥ **आगच्छेरिति**। लिङयं, न लोट्॥ **द्रक्ष्यसीति**। वर्तमानसामीप्ये लट्॥ **आगच्छ देव ग्रामं पिता ते ओदनं भोक्ष्यत इति**। कारकशब्देन सूत्रे कारकव्यक्तिरेवाश्रीयते, तेन कर्तृत्वाभेदेऽपि व्यक्तिभेदात्कारकभेदः॥ **त्वं चाहं च द्रक्ष्याव एनमिति**। अक्रियमाणे सर्वग्रहणे यत्र वाच्यं न भिद्यते तत्रैव भवितव्यम् इह च भिद्यते वाच्यम्। एकत्रैकमन्यत्र द्वयामिति निघातप्रतिषेधो न स्यात्, क्रियमाणे तु सर्वग्रहणे लोड्वाच्यकारकापेक्षया लड्वाच्यकारकाधिक्येऽपि निघातप्रतिषेधः सिद्धः॥ (५९३५) **लोट् च**। लड्ग्रहणं विहाय 'गत्यर्थलोटा–५९३४' इति संपूर्णं सूत्रमनुवर्तते। तदाह–**गत्यर्थेत्यादि**॥ **आगच्छेति**। गत्यर्थलोटा युक्तं पश्येति न निहितम्, गच्छेति तु निहतमेव॥ **योगविभाग उत्तरार्थ इति**। उत्तरो विकल्पो लोट एव यथा स्यात्। लटो मा भूद् इति॥ (५९३६) **विभाषितम्**–। पूर्वसूत्रं सर्वमनुवर्तते। प्राप्तविभाषा चेयम्। गत्यर्थलोटा युक्तं लोडन्तं सोपसर्गमुत्तमभिन्नं विभाषा नानुदात्तं स्यात्, न चेत्कारकं सर्वान्यत्॥ **सोपसर्गमिति**। उपसर्गेण सह। उपसर्गे विद्यमान इत्यर्थः। सहशब्दो विद्यमानार्थः, न तुल्ययोगेन ह्युपसर्गस्य निघातप्रसङ्गोऽस्ति॥ **आगच्छ देव ग्रामं प्रविशेति**। अत्र विशेति पक्षे निहतम्, पक्षे शप्प्रत्ययस्वरेणान्तोदात्तम्। यदाऽन्तोदात्तं तदा 'तिङि चोदात्तवति ५९५९' इति गतेर्निघातः॥ **पश्य प्रविशानीति**। उभयत्रापि पूर्वेण निघातः। प्रत्युदाहरणानि पूर्वसूत्रोक्तान्येव प्रशब्दपूर्वाणि योज्यानि॥ (५९३७) **हन्त च**। पूर्वसूत्रमनुवर्तते, लोड्ग्रहणं च, तदाह–**हन्तेत्यनेनेत्यादि**॥ प्राप्तविभाषेयम्। 'निपातैर्यद्यदि–५९१३' इति निघातनिषेधस्य सिद्धत्वात्॥ **प्रभुञ्जावहै इति**। भुजेर्लोट् 'भुजोऽनवने ३६५९' इत्यात्मनेपदं वहिः। टेरेत्वम्, श्नम्। 'आडुत्तमस्य पिच्च २९५९'। 'एत ऐ ३०१५' अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वम्। विकरणस्वरः॥ (५९३८) **आमः**–। अन्तरयतीत्यन्तरं व्यवधायकम्। एकमन्तरं यस्य तदेकान्तरम्। उदाहरणे निघाते प्रतिषिद्धे षाष्ठमाद्युदात्तत्वम्। **अनन्तिक इति**। अत्र केचिदनन्तिकं दूरं तस्यैव सामर्थ्यादेकश्रुतेर्निघातस्य च प्रतिषेधः। यदि निघातमात्रनिषेधोऽयम्, तदा निघातस्यैकश्रुत्या बाधितत्वादिदं सूत्रं व्यर्थं स्यादिति सामर्थ्यादेव चैतन्निषेधं प्रति एकश्रुतेरसिद्धत्वाभावः। प्लुतोदात्तस्तु न प्रतिषिध्यत इत्याहुः। अपरे तु–'अनन्तिके' इत्यनेन यन्न दूरम्, न च सन्निकृष्टं तदुच्यते, न दूरमेव। अन्यथा दूरमित्येव बदेत्। तेनास्मिन्नेकश्रुतेः प्राप्तिरेव नास्ति, अदूरत्वात्प्लुतोदात्तोऽपि नोदाहर्तव्य इति॥ (५९३९) **यद्धितु**–। **उदसृज इति**। तुदादेः सृजेर्लङि सिप्यट्॥ **उशन्ति हीति**। 'वश कान्तौ'। अदादिः। लटि 'झोऽन्तः २९२३'। ग्रहादित्वात्संप्रसारणम्॥ **नान्यैरिति**। 'यद्यदिहन्त–५९१३' इत्यादिभिरित्यर्थः॥ **जाये स्वा रोहावेहीति**। रुहेर्लोट्। वस्। शप्। 'आडुत्तमस्य पिच्च २९५९' 'लोटो लङ्वत् २९५३' इति लङ्वद्भावात् 'नित्यं ङितः २९५५' इति सलोपः। आङ्पूर्वादिणो लोट्। सिपो हिः। एहि। तेन परभूतेन युक्तस्य रोहावेत्यस्य 'लोट् च ५९३५' इति प्राप्तो निघातप्रतिषेधो नियमाभिवर्त्यते, तेन स्वशब्दाश्रयो निघातो भवति। स्वशब्दे 'रो रि २५७' इति लोपः। 'ढ्रलोपे–२५८' इति दीर्घः। 'स्वो रोहाव' इति पाठे तु छान्दसत्वाद्गुणत्वम्॥ (५९४०) **चनचि**–। **एष्विति**। चन, चित्, इव, गोत्रादि, तद्धित, आम्रेडित एष्वित्यर्थः। इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्यन्त इति 'तिङो गोत्रादि–५९१०' इत्यत्रैवोक्तम्॥ **पचतिकल्प**-

चवाहाहैवेषु परेषु तिङन्तं नानुदात्तम् । देवः पचति च खादति च ॥ अगतेरित्येव । देवः प्रपचति च प्रखादति च । प्रथमस्य चवायोग[1] इति निघातः प्रतिषिध्यते । द्वितीयं तु निहन्यत एव ॥ ( ५९४२ ) (सू) चवायोगे प्रथमा । ८ । १ । ५९। चवेत्याभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता । गाश्च चारयति वीणां वा वादयति । इतो वा सातिमीमहे । उत्तरवाक्ययोरनुषञ्जनीयतिङन्तापेक्षयेयं प्राथमिकी । योगे किम् । पूर्वभूतयोरपि योगे निघातार्थम् । प्रथमाग्रहणं द्वितीयादेस्तिङन्तस्य मा भूत् ॥ ( ५९४३ ) (सू) हेति क्षियायाम् । ८ । १ । ६० । हयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता धर्मव्यतिक्रमे । स्वयं ह रथेन याति ३ । उपाध्यायं पदातिं गमयति । क्षियाशीरिति प्लुतः ॥ ( ५९४४ ) (सू) अहेति विनियोगे च । ८ । १ । ६१ । अहयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता नानाप्रयोजननियोगे क्षियायां च । त्वमह ग्रामं गच्छ३ । त्वमह रथेनारण्यं गच्छ । क्षियायां स्वयमह रथेन याति ३ । उपाध्यायं पदातिं नयति ॥ ( ५९४५ ) (सू) चाहलोप एवेत्यवधारणम् । ८ । १ । ६२ । च अह एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता । देव एव ग्रामं गच्छतु । देव एवारण्यं गच्छतु । ग्राममरण्यं च गच्छत्वित्यर्थः । देव एव ग्रामं गच्छतु । राम एवारण्यं गच्छतु । ग्रामं केवलमरण्यं केवलं गच्छत्वित्यर्थः । इहाहलोपः स च केवलार्थः । अवधारणं किम् । देव क्व भोक्ष्यसे ॥ न क्वचिदित्यर्थः । अनवक्लृप्तावेव ॥ ( ५९४६ ) (सू) चादिलोपे विभाषा । ८ । १ । ६३ । चवाहाहैवानां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता । चलोपे । इन्द्र वाजेषु नोऽव । शुक्ला व्रीहयो भवन्ति । श्वेता गा आज्याय दुहन्ति । वालोपे । व्रीहिभिर्यजेत । यवैर्यजेत ॥ ( ५९४७ ) (सू) वैवावेति च छन्दसि । ८ । १ । ६४ । अहर्वै देवानामासीत् । अथं वा व हस्त आसीत् ॥ ( ५९४८ ) (सू) एकान्याभ्यां समर्थाभ्याम् । ८ । १ । ६५ । आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता छन्दसि । अजामेकां जिन्वति । प्रजामेकां रक्षति । तयोरन्यः पिप्पलं स्वाद्वत्ति । समर्थाभ्यां किम् । एको देवानुपातिष्ठत् । एक इति संख्यापरं नान्यार्थम् ॥ ( ५९४९ ) (सू) यद्वृत्तान्नित्यम् । ८ । १ । ६६ । यत्र पदे यच्छब्द-

---

मिति । अत्रानुदात्त एव तद्धितो प्राप्यः । अन्यत्र तद्धितस्वरेण तिङन्तस्वरो बाध्यते अयं पचतिदेश्यः ॥ ( ५९४१ ) **चादिषु च** । 'न चवाहाहैवयुक्ते ५४९' इति सूत्रे निर्दिष्टाश्चादयोऽत्र गृह्यन्ते संनिकृष्टत्वात् न तु 'चादयोऽसत्त्वे ४१' इति सूत्रनिर्दिष्टा विप्रकृष्टत्वात्तदेतदाह-**चवाहाहैवेषु परेष्विति** । क्वचित्पुस्तके 'एषु परतः' इत्येव पाठः, तत्रापि 'चवाहाहैवेषु परतः' इत्यर्थो बोध्यः ॥ **पचति च खादति च** । **देवः पचति वा खादति वेति** । उभयत्र खादतीत्यस्य निघातप्रसङ्ग एव नास्ति, नानावाक्यत्वात् । चवायोगे हि समुच्चये विकल्पे वा सति भवति, स चानेकस्य धर्म इति कृत्वोदाहृतम् ॥ ( ५९४२ ) **चवा-। प्रथमेति** । स्त्रीलिङ्गस्य निर्वाहमाह-**प्रथमा तिङ्विभक्तिरिति** । प्रथममुच्चारिता तिङ्विभक्तिरित्यर्थः । अगतेरिति प्रथमसूत्रे चानुकृष्टत्वादिह नानुवर्तते ॥ **उत्तरवाक्ययोरिति** । 'देवो वा पार्थिवादधि, इन्द्रं महो वा रजसः' इत्येतयोरित्यर्थः । ननु श्रुतस्यैव तिङन्तस्योत्तरानुषङ्गः, तत्कथं प्राथम्यमिति चेत्, अनुषक्तस्याप्यौपाधिकं भेदं पुरस्कृत्य प्राथम्याश्रयणेन निघातनिषेधस्य छन्दसि बहुशो दृष्टत्वात् । एतच्चैव मन्त्रे 'निनयेन मुष्टिहत्यया' इति च मन्त्रे वेदभाष्ये स्पष्टम् ॥ ( ५९४३ ) **हेति-। स्वयं ह रथेन यातीति** । उपाध्याये पदातौ गच्छति सति शिष्यस्य रथेन गमनं प्रतिषिद्धमित्याचारभेदः ॥ ( ५९४४ ) **अहेति-।** अनेकस्मिन्प्रयोजने प्रेषणं विनियोगस्तदाह-**नानाप्रयोजने नियोग इति** । अनेकप्रयोजनो नियोगः प्रेषणम् । उदाहरणे पूर्वत्र प्रैषे प्लुतः, उत्तरत्र क्षियायाम् ॥ ( ५९४५ ) **चाहलोपे-।** अवधारणार्थैवशब्दप्रयोगे सति प्रथमं तिङन्तं नानुदात्तम् । सूत्रेण चाहलोपस्याविधानात् अर्थप्रकरणादिना गम्यमानार्थत्वादप्रयोग एव लोपो विवक्षितः । चशब्दः समुच्चयार्थः । हशब्दः केवलार्थः । समानकर्तृके चलोपो नानाकर्तृकेऽहलोपः । उदाहरणे चलोप दर्शयति ॥ **ग्राममरण्यं चेति** । **क्व भोक्ष्यस इति** । अनवक्लृप्तावयमेवशब्दः 'एवे चानियोगे १२३' इति पररूपम् ॥ ( ५९४६ ) **चादि-। वाजेष्विति** । अवेति तिङन्तस्यैव निघातः । निघाताभावस्य तूदाहरणान्तरं मृग्यम् । ननु पूर्वसूत्रे समानकर्तृके चलोप इत्युक्तम्, इह तु कर्तृभेदात् कथं चलोप इति चेद्, अवधारणार्थे एवशब्दप्रयोगे समानकर्तृके चलोप इति नियमो, न तु सर्वत्रेत्यस्त्यत्र चलोपः ॥ **व्रीहिभिर्यजेतेति** । पक्षे निहतम् । पक्षे आद्युदात्तम् । द्वितीयं तु निहतमेव । एवं शेषेष्वपि यथादर्शनमुदाहरणम् ॥ ( ५९४७ ) **वैवाव-।** आभ्यां युक्तं प्रथमं तिङन्तमनुदात्तं वा स्यात् छन्दसि । वै स्फुटार्थे क्षमायां च. वाव प्रसिद्धौ स्फुटार्थे च ॥ ( ५९४८ ) **एकान्या-।** समौ तुल्यावर्थौ ययोस्तौ समर्थौ । शकन्ध्वादित्वात्पररूपम् ॥ **जिन्वतीति** । जिविः प्रीणनार्थः । इदित्त्वान्नुम् । लट्, तिप्, शप् ॥ **प्रजामेकां रक्षतीति** । अन्यां प्रीणयति अन्यां रक्षतीत्यर्थः ॥ **एक इति संख्यापरमिति** । एकशब्दस्यानेकार्थत्वात् । तथा चोक्तम्-"एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ॥ साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते" इति । साहचर्यादन्यार्थक एवैकशब्दो ग्रहीष्यत इति चेत्, सत्यम्-न साहचर्यमत्र प्रकरणे व्यवस्थापकमिति 'निपातैर्यद्यदिहन्त-५९१३' इत्यत्रैवावोचाम ॥ ( ५९४९ ) **यद्वृ-। यदञ्चत्यञ्चतीति** । यद् अञ्चतीति क्विन् । 'विष्वग्देवयोश्च-५६०' इति टेरद्र्यादेशः । कथं पुनः पञ्चमीनिर्देशे सति 'यदद्र्यङ्ङायु-

---

1 'उपाद्देवपूजा-' इति वार्तिकेनात्मनेपदं न, छान्दसत्वात् ।

एततः परं तिङन्तं नानुदात्तम् । यो भुङ्क्ते । यदद्रयङ्ङायुर्वाति । अत्र व्यवहिते कार्यमिष्यते ॥ ( ५९५० ) (सू॰) पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः । ८ । १ । ६७ । पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तम् । काष्ठाध्यापकः ॥ ( ५९५१ ) (वा॰) मलोपश्च वक्तव्यः ॥ दारुणाध्यापकः । अज्ञाताध्यापकः । समासान्तोदात्तत्वापवादः । एतत्समासे इष्यते ॥ नेह । दारुणमध्यापक इति वृत्तिमतम् । पूजनादित्येव पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम् । एतदेव ज्ञापकमत्र प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयत इति ॥ (५९५२) (सू॰) सगतिरपि तिङ् । ८ । १ । ६८ । पूजनेभ्यः काष्ठादिभ्यस्तिङन्तं पूजितमनुदात्तम् । यत्काष्ठं प्रपचति । तिङ्ङतिङ इति निघातस्य निपातैर्यदिति निषेधे प्राप्ते विधिरयम् सगतिग्रहणाच्च गतिरपि निहन्यते ॥ ( ५९५३ ) (वा॰) गतिग्रहणे उपसर्गग्रहणमिष्यते ॥ नेह । यत्काष्ठां शुक्लीकरोति ॥ (५९५४) (सू॰) कुत्सने च सुप्यगोत्रादौ । ८ । १ । ६९ । कुत्सने च सुबन्ते परे सगतिरपि तिङनुदात्तः । पचति पूति । प्रपचति पूति । पचति मिथ्या । कुत्सने किम् । प्रपचति शोभनम् । सुपि किम् । पचति क्लिश्नाति । अगोत्रादौ किम् । पचति गोत्रम् ॥ ( ५९५५ ) (वा॰) क्रियाकुत्सन इति वाच्यम् ॥ कर्तुः कुत्सने मा भूत् । पचति पूतिर्देवदत्तः ॥ ( ५९५६ ) (वा॰) पूतिश्चानुबन्ध इति वाच्यम् ॥ तेनायं चकारानुबन्धत्वादन्तोदात्तः ॥ ( ५९५७ ) (वा॰) वा बह्वर्थमनुदात्तमिति वाच्यम् ॥ पचन्ति पूति ॥ ( ५९५८ ) (सू॰) गतिर्गतौ । ८ । १ । ७० । अनुदात्तः । अभ्युद्धरति । गतिः किम् । दत्तः पचति । गतौ किम् । आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ॥ ( ५९५९ ) (सू॰) तिङि चोदात्तवति । ८ । १ । ७१ । गतिरनुदात्तः । यत्प्रपचति । तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् । अन्यथा हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गतिस्तत्र धातावेवोदात्तवति स्यात् प्रत्यये न स्यात् । उदात्तवति किम् । प्रपचति ॥ इति तिङन्तस्वराः ॥

---

धाति' इत्यादौ व्यवधाने भवत्यत आह-अत्र **व्यवहिते कार्यमिष्यत इति** । अत्र च ज्ञापकमुक्तसूत्रं मूल एव स्फुटीभविष्यति ॥ ( ५९५० ) **पूजनात्**-। 'काष्ठादिभ्यः' इति वार्तिकं दृष्टम् । तदनुरोधेन 'पूजनात्' इति बहुवचनस्थान एकवचनमिति व्याचष्टे-**पूजनेभ्यः काष्ठादिभ्य इति** । उत्तरसूत्रे तिङ्ग्रहणादिदं सुबन्तविषयकम् ॥ **काष्ठाध्यापक इति** । काष्ठादयोऽद्भुतपर्यायाः सन्तः पूजनवचना भवन्ति । समासविषयकं सूत्रमिदम् । उदाहरणे मयूरव्यंसकादित्वात्समासः ॥ ( ५९५१ ) **मलोपश्च वक्तव्य इति** । दारुणमध्यापक इति समासे कृते विभक्तेर्लुकि स्वाभाविकी मकारनिवृत्तिरित्यनेन वचनेनान्वाख्यायते इति वृत्तिन्यासकारयोर्मते तदेतदाह-**इति वृत्तिमतमिति** । भाष्यवार्तिककैयटास्तु असमास एव क्रियाविशेषणीभूतानां दारुणमित्यादीनामसमासे एवास्य सूत्रस्य प्रवृत्तिमिच्छन्ति । मयूरव्यंसकादित्वे नास्ति प्रमाणम् । हरदत्तोऽप्याह यदि समासे एवेदमभिमतमभविष्यत्तदा समास इत्येवावक्ष्यत् । युक्तं चैतत् । न ह्यत्र समासाधिकारोऽस्ति येन समासः स्याद् । अस्मिन् पक्षे मलोपवचनं च सार्थकम् ॥ **पूजनादित्येव पूजितग्रहणे सिद्ध इति** । पूजनस्य पूजितापेक्षत्वादिति भावः ॥ **अनन्तरपूजितलाभार्थमिति** । 'पूजनात्पूजितम्-५९५०' इति सूत्रे सामान्यगतमानन्तर्यविशेषणे विज्ञायत इति भावः । कथं पुनः पञ्चमीनिर्देशे व्यवहितस्य प्रसङ्गः इत्याह—**एतदेवेति** । ज्ञापकफलं तु 'यद्वृत्तान्नित्यम् ५९४९' इत्यत्रोक्तम् ॥ ( ५९५२ ) **सगति**—। **यत्काष्ठं प्रपचतीति** । ये 'मलोपश्च-५९५१' इत्यनेन वाक्ये न मलोपमाहुः, तेऽपि तिङन्ते परतो नैव लोपमिच्छन्ति ॥ **सगतिग्रहणाच्च गतिरपि निहन्यत इति** । तुल्ययोगे अत्र सहशब्दः । यत्र तुल्ययोगे सहशब्दस्तत्र द्वयोरपि कार्ययोगो भवति तद्यथा सपुत्रो भोज्यतामित्युक्ते पुत्रोऽपि भोज्यते । अपिग्रहणं यत्र गतिर्न युज्यते तत्र केवलस्यापि तिङन्तस्य यथा स्यात्, गतिप्रयोगे तु द्वयोः सहैव भवति । तिङ्ग्रहणं पूर्वयोगस्यातिङ्विषयत्वज्ञापनार्थम् ॥ ( ५९५४ ) **कुत्सने**-। 'पदात्' इति निवृत्तम् ॥ **पचति क्लिश्नातीति** । अत्र समानवाक्यत्वस्य सामर्थ्यस्य वाऽभावादेवाप्राप्तेः सुपीति स्पष्टार्थम् ॥ ( ५९५५ ) **कर्तुः कुत्सने मा भूत्** । **पचति पूतिर्देवदत्त इति** । कर्तृत्वमात्रं कुत्स्यते अस्येदमयुक्तमिति ॥ क्रिया तु शोभनैव ॥ ( ५९५६ ) **पूतिश्चानुबन्ध इति** । चकारानुबन्ध इत्यर्थः । तिबन्तपूतिशब्द आद्युदात्तः । 'वसेस्तिप् ४८२५' इति तिप् बाहुलकात्पूञोऽपि भवति, तस्मादेव गुणाभावः तस्य निघातानिमित्तस्यान्तोदात्तत्वं यथा स्यादिति चित्त्वमुपसंख्यायते ॥ ( ५९५७ ) **वा बह्वर्थमिति** । बहुवचनान्तं तिङन्तं वाऽनुदात्तं स्यात् । यदा तिङन्तस्य निघातस्तदा पूतिरन्तोदात्तः, अन्यदा त्वाद्युदात्तः ॥ ( ५९५८ ) **आमन्द्रैरिति** ॥ अत्र याहीत्येतत्प्रति क्रियायोगादाङित्येष गतिः ॥ ( ५९५९ ) **तिङि**-। उदात्तवति तिङन्ते परे गतिर्निहन्यते । 'निपाता आद्युदात्ताः ५६६२' इत्यस्यापवादः ॥ **यत्प्रपचतीति** । 'निपातैर्यद्यदि-५९१३' इति निघातप्रतिषेधात्तिङन्तमुदात्तवत् । ननु तिङ्ग्रहणं व्यर्थम् । न च तिङन्तं यथा स्यात् मन्द्रशब्दे मा भूत् 'आमन्द्रैरिन्द्र हरिभिर्याहि' इति मन्द्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्त इति वाच्यम्, 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' इति वचनात् स्वसंबन्धिनमा-

---

१ काष्ठ, दारुण, अज्ञातपुत्र, वेश, अनाज्ञात, अनुज्ञात, अपुत्र, अयुत, अद्भुत, अमुक, भृशघोर, सुख, कल्याण, अनुक्त, इति काष्ठादिः ॥ २ 'पूजितस्यानुदात्तत्वे काष्ठादिग्रहणम्' इति वार्तिकदर्शनात् सूत्रे काष्ठादिभ्य इति केश्चित्प्रक्षिप्तमिति कैयटः ॥

अथ वैदिकवाक्येषु स्वरसञ्चारप्रकारः कथ्यते ।

अग्निमीळ इति प्रथमा ऋक् । तत्राग्निशब्दोऽव्युत्पत्तिपक्षे फिष इत्यन्तोदात्त इति माधवः । वस्तुतस्तु घृतादित्वात् । व्युत्पत्तौ तु निप्रत्ययस्वरेण । अम् सुप्त्वादनुदात्तः । अमि पूर्व इत्येकादेशस्त्वेकादेश उदात्तेनोदात्त इत्युदात्तः । ईळे । तिङ्ङतिङ इति निघातः । संहितायां तूदात्तादनुदात्तस्येतीकारः स्वरितः । स्वरितात्संहितायामिति के इत्यस्य प्रचयापरपर्याया एकश्रुतिः । पुरःशब्दोऽन्तोदात्तः पूर्वाधरावराणामित्यसिप्रत्ययस्वरात् । हितशब्दोऽपि धाञो निष्ठायां दधातेर्हिरिति ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः । पुरोऽव्ययमिति गतिसंज्ञायां कुगतीति समासे समासान्तोदात्ते तत्पुरुषे तुल्यार्थेत्यव्ययपूर्वपदप्रकृतिस्वरे गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरे थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते गतिरनन्तर इति पूर्वपदप्रकृतिस्वरः । पुरःशब्दोकारस्य संहितायां प्रचये प्राप्ते उदात्तस्वरितपरस्य सन्नतर इत्यनुदात्ततरः । यज्ञस्य । नङः प्रत्ययस्वरः । विभक्तेः सुप्त्वानुदात्तत्वे स्वरितत्वम् । देवम् । पचाद्यच् । फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण वाऽन्तोदात्तः । ऋत्विक्छब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । होतृशब्दस्तृन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । रत्नशब्दो नब्विषयस्येत्याद्युदात्तः । रत्नानि दधातीति रत्नधाः । समासस्वरेण कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तः । तमपः पित्त्वादनुदात्तत्वे स्वरितप्रचयावित्यादि यथाशास्त्रमुन्नेयम् ॥

इत्थं वैदिकशब्दानां दिङ्मात्रमिह दर्शितम् । तदस्तु प्रीतये श्रीमद्भवानीविश्वनाथयोः ॥ १ ॥

इति सिद्धान्तकौमुद्यां श्रीभट्टोजिदीक्षितविरचितायां वैदिकस्वरप्रकरणम् ॥

---

क्षिपतीति क्रियावाचिन्येवोदात्तवति भविष्यति । न च कृदन्तेऽतिप्रसङ्गः, तत्र कृत्स्वरथाथादिस्वरगतिस्वरेषु कृतेषु शेषनिघातेन गतिर्निहन्यत एव । तस्मात्किमर्थः तिङ्ग्रहणेनेत्याशङ्क्याह–**तिङ्ग्रहणमिति** । परिमाणमियत्ता । परिमाणार्थत्वमेव स्पष्टयति–**अन्यथा हीति** । अक्रियमाणे तिङ्ग्रहणे धातुरेव क्रियावाचित्वाद्गतिसंज्ञानिमित्तामिति तत्रैवोदात्तवति निघातः स्यात न प्रत्यये । तिङ्ग्रहणे कृते तु 'यं धातुं प्रति गतित्वं तद्घटके तिङन्ते उदात्तवति परे' इत्यर्थो जायते । तेन यत्प्रकरोतीत्यादौ धातोः शेषनिघातेनानुदात्तत्वेऽपि तिङन्तस्य उप्रत्ययस्वरेण मध्योदात्तत्वाद्गतेर्निघातः सिद्ध इत्याहुः । **प्रपचतीति** । 'तिङ्ङतिङः ५९११' इति निघातः ॥ इति सुबोधिन्यां तिङन्तस्वरप्रकरणम् ॥

**ईळे इति** । 'ईड स्तुतौ' लडुत्तमैकवचनम्, इट्, टेरेत्वम् 'द्वयोश्चास्य स्वरयोः' इति प्रातिशाख्येन ळः ॥ **यज्ञस्येति** । 'यजयाच–५०६३' इति यजेर्नङ् ॥ **विभक्तेः सुप्त्वादनुदात्तत्वे स्वरितत्वमिति** । 'स्वरितो वाऽनुदात्ते–५५३०' इत्यनेन ॥ **ऋत्विगिति** । ऋतावुपपदे यजेः क्विन् 'ऋत्विक्–५०७' इत्यनेन । 'वचिस्वपि––३२१३' इति संप्रसारणम् । 'नब्विषयस्य–५६०८' इति इसन्तवर्जितस्य नित्यनपुंसकस्यादिरुदात्त इति सूत्रार्थः ॥ इति स्वरसञ्चारः ॥

इति श्रीमन्मौनिकुलतिलकायमानश्रीगोवर्द्धनभट्टात्मजरघुनाथात्मजेन जयकृष्णेन कृतायां
सिद्धान्तकौमुदीव्याख्यायां सुबोधिन्यां तिङन्ते स्वरप्रकरणम्
समाप्ता चेयं सुबोधिनी ॥

॥ श्रीः ॥

## भैरवीव्याख्योपेता

# वैयाकरणसिद्धान्तकौमुदी ।

## लिङ्गानुशासनप्रकरणम् ।

### अथ स्त्र्यधिकारः ।

* लिङ्गम् । १ । * स्त्री । २ । अधिकारसूत्रे एते ॥ * **ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः** । ३ । ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः। स्वस्रादिपञ्चकस्यैव ङीब्निषेधेन कर्त्रीत्यादेर्ङीपा ईकारान्तत्वात्। तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोर्ऋदन्तत्वाभावात् ॥ * **अन्यूप्रत्ययान्तो धातुः** । ४ । अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात्। अवनिः । चमूः । प्रत्ययग्रहणं किम् । देवयतेः क्विप् । द्यूः । विशेष्यलिङ्गः ॥ * **अशनिभरण्यरणयः पुंसि च** । ५ । इयमयं वा अशनिः ॥ * **मिन्यन्तः** । ६ । मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः । ग्लानिः ॥ * **वह्निवृष्ण्यग्नयः पुंसि** । ७ । पूर्वस्यापवादः ॥ * **श्रोणियोन्यूर्मयः पुंसि च** । ८ । इयमयं वा श्रोणिः ॥ * **क्तिन्नन्तः** । ९ । स्पष्टम् । कृतिरित्यादि ॥ * **ईकारान्तश्च** । १० । ईप्रत्य-

---

श्रीः ॥ **अधिकारसूत्रे इति** । उभयोरधिकारसूत्रत्वेऽपि लिङ्गमित्या शास्त्रसमाप्तेः , द्वितीयस्तु 'ताराधारा—३३' इति यावदिति विवेकः । अत्रापि लिङ्गं शास्त्रीयं प्रागुक्तमेव विवक्षितम् । तच्चार्थनिष्ठं तच्छब्दप्रतिपाद्यम् । तत्रायं विशेषः । शब्दशक्तिस्वभावेन कस्यांचित्सर्वलिङ्गप्रतिपादकता कस्यचिदेकलिङ्गप्रतिपादकता कस्याचिद् द्विलिङ्गयुक्तार्थप्रतिपादकता चेति ॥ २ ॥ यद्यपि शब्दानामर्थानां चानन्त्यात्प्रातिस्विकरूपेण तेषां ज्ञानं योगिनां युक्तयुञ्जानत्वेन व्यवहारयोग्यानामेव संभवति, न त्वस्मदादीनामज्ञानाम् , तथाप्यस्मदाद्युद्देशेन शास्त्रप्रवृत्तेर्यथा लघुनोपायेनास्मदादीनां ज्ञानं संभवेत्तथाऽऽह—**ऋका-इत्यादिना** । स्त्रीति पदमेषु सूत्रेषु संबध्यते, तच्च भावप्रधाननिर्देशेन स्त्रीत्वपरम् । तस्य लिङ्गपदेन बहुव्रीहिसमासे स्त्रीलिङ्गा इति सामानाधिकरण्येन व्यवहारः । मात्रादिशब्दानां विशेषत उपादानात्पञ्चेति लब्धम् । अवधारणस्य तु यथा लाभस्तं प्रकारमाह—**स्वस्रादिपञ्चकस्यैव ङीन्निषेधेनेति** । 'न षट्स्वस्रादिभ्यः ४२८' इति सूत्रेण ङीपो निषेधेन ॥ **कर्त्रीत्यादेरिति** । अनेन कर्तृपदेन यौगिकाः शब्दा ऋकारान्ताः परिग्राह्याः । रूढस्य क्रोष्टृप्रभृतिशब्दस्यादिना परिग्रहः । न च सप्तैवेति वक्तव्ये पञ्चैवेति नियमानुपपत्तिरिति वाच्यम् ,आदेशत्वानाक्रान्ताः पञ्चैवेत्यर्थात् । यद्यपि भाष्यसंमते 'तृज्वत्क्रोष्टुः ३८५' इत्यादित्रिसूत्र्याः प्रयोगनियमार्थत्वपक्षे स्त्रियां प्रवर्तमानस्य क्रोष्टृशब्दस्यादेशत्वानाक्रान्तत्वम् , तथापि परिनिष्ठिते शब्देऽयमीकारान्त एव प्रयुज्यत इति भावः ॥ ३ ॥ 'उणादयो बहुलम् ४९५५' इति संगृहीतसाधुत्वकानां व्युत्पन्नत्वं शास्त्रान्तरे प्रसिद्धमिति तदभिप्रायेणाह—**अन्यू इत्यादि** । अवनिः । 'अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः ४४६२' इत्यनिः ॥ **चमूरिति** । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ४२८०' इत्यूः । द्यूः । अत्र वकारस्य 'च्छ्वोः—३३९४' इत्यूठ् ॥ ४ ॥ **अशनिभरण्य**—।पूर्वसूत्रापवादोऽयम् ॥ ५ ॥ **मिन्यन्तः** । भूमिः । 'नियो मिः ४६८७' इत्यतो मिरित्यनुवर्त्य विहितो 'भुवः कित् ४६८९' इति निः । ग्लानिः । 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ४६९५' इति निः ॥ ६ ॥ वह्न्यादिशब्दानां निप्रत्ययान्तत्वेन स्त्रीत्वे प्राप्ते आह—**वह्निवृष्णि**—। वृष्णिः । 'सृवृषिभ्यां कित् ४६९३' इति निः । अग्निः। 'अङ्गेर्नलोपश्च ४६९४' इति निः ॥ ७ ॥ **श्रोणियोन्यूर्मयः**—। श्रोणिः । योनिः । 'वहिश्रि—४६९५' इति निः । ऊर्मिः । 'अर्तेरुच्च ४६८८' इति निः ॥ ८ ॥ **ईकारान्तश्चेति** । अत्र ईकारः प्रत्यय एव पूर्वोत्तरसाहचर्यात् ॥ **लक्ष्मीरिति** । अत्र 'लक्षेर्मुट् च ४६४३' इति सूत्रे 'अवितृस्तृतन्त्रिभ्य ईः ४६४१' इत्यत ईरित्यस्यानुवृत्त्या तेनेकारः प्रत्ययः । एवमव्यादिधातुभ्य ईकारप्रत्ययेऽपि स्त्रीत्वम् । तद्यथा अवीर्नारी रजस्वला, तरीर्नौः । स्तरीर्धूमः । तन्त्रीर्वीणादेर्गुणः॥ न च 'यापोः किद् द्वे च ४६४२' इति सूत्रविहितेकारान्तस्यापि स्त्रीत्वापत्तिरिति वाच्यम् , पुंस्त्वाधिकारोक्तेन 'घोपधः ८६' 'पोपधः ७७' इत्याभ्यां परत्वाद्बाधात् । यूप इत्यादौ प्रथमस्य,

---

१ पात्रीत्यर्थः ॥

षान्तः स्त्री स्यात् । लक्ष्मीः ॥ *** ऊङाबन्तश्च** । ११ । कुरूः । विद्या ॥ *** य्वन्तमेकाक्षरम्** । १२ । श्रीः । भूः । एकाक्षरं किम् । पृथुश्रीः ॥ *** विंशत्यादिरा नवतेः** । १३ । इयं विंशतिः । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः ॥ *** दुन्दुभिरक्षेषु** । १४ । इयं दुन्दुभिः । अक्षेषु किम् । अयं दुन्दुभिर्वाद्यविशेषोऽसुरो वेत्यर्थः ॥ *** नाभिरक्षत्रिये** । १५ । इयं नाभिः ॥ *** उभावप्यन्यत्र पुंसि** । १६ । दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः । नाभिः क्षत्रियः । कथं तर्हि–' समुल्लसत्पङ्कजपत्त्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिः ' इति भारविः, उच्यते–दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात्पुंस्त्वमपीह साधु । अत एव–" नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे ॥" इति मेदिनी । रभसोऽप्याह––"मुख्यराट्क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे ॥" इति । एवमेवंविधेऽन्यत्रापि बोध्यम् ॥ *** तलन्तः** । १७ । अयं स्त्रियां स्यात् । शुक्लस्य भावः शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । ग्रामाणां समूहो ग्रामता । देव एव देवता ॥ *** भूमिविद्युत्सरिल्लतावनिताभिधानानि** । १८ । भूमिर्भूः । विद्युत्सौदामनी । सरिन्निम्नगा । लता वल्ली । वनिता योषित् ॥ *** यादो नपुंसकम्** । १९ । यादःशब्दः सरिद्वाचकोऽपि क्लीबं स्यात् ॥ *** भाःस्रुक्स्रग्दिगुष्णिगुपानहः** । २० । एते स्त्रियां स्युः । इयं भा इत्यादि ॥ *** स्थूणोर्णे नपुंसके च** । २१ । एते स्त्रियां क्लीबे च स्तः । स्थूणा–स्थूणम् । ऊर्णा–ऊर्णम् । तत्र स्थूणा काष्ठमयी द्विकर्णिका । ऊर्णा तु मेषादिलोम ॥ *** गृहशशाभ्यां क्लीबे** । २२ । नियमार्थमिदम् । गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्तः । गृहस्थूणम् । 'शशोर्णं शशलोमनि' इत्यमरः ॥ *** प्रावृड्विप्रुड्रुड्विट्त्विषः** । २३ । एते स्त्रियां स्युः ॥ *** दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः** । २४ । एते स्त्रियां स्युः । पक्षे ङीष् । दर्वी । दर्विरित्यादि ॥ *** तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः** । २५ । एते प्राग्वत् । इयं तिथिरित्यादि । अमरस्त्वाह । तिथयो द्वयोरिति । तथा च भारविः । तस्य भुवि बहुतिथास्तिथय इति । स्त्रीत्वे हि बहुतिथ्य इति स्यात् । श्रीहर्षश्च निखिलाम्निशि पौर्णिमातिथीनिति ॥ *** शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः** । २६ । एतेऽपि स्त्रियां स्युः । इयं शष्कुलिः ॥ *** प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः** । २७ । इयं प्रतिपदित्यादि । उषा उच्छन्ती । उषाः प्रातरधिष्ठात्री देवता ॥ *** आशीर्धूःपूर्गीर्द्वारः** । २८ । इयमाशीरित्यादि ॥ *** अप्सुमनस्समासिकतावर्षाणां बहुत्वं च** । २९ । अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वं च । आप इमाः । स्त्रियः सुमनसः पुष्पम् । सुमना मालती जातिः । देववाची तु पुंस्येव । सुपर्वाणः सुमनसः । बहुत्वं प्रायिकम् । एका च सिकता तैलदाने असमर्थेति अर्थवत्सूत्रे भाष्यप्रयोगात् । समांसमां विजायत इत्यत्र

---

समय इत्यादौ द्वितीयस्य चारितार्थ्यात् । एवं च पंपीयर्थीशब्दयोः पुंस्त्वेऽपि न क्षतिः ॥ १० ॥ **ऊङाबन्तश्च** । 'ऊङुतः ७५०' इत्यूङ् । आब्ग्रहणेन टाबूडाप्चापां ग्रहणम् ॥ ११ ॥ **य्वन्तमेकाक्षरमिति** । ईकारोऽत्र प्रत्ययः ऊकारसाहचर्यात् ॥ १२ ॥ **विंशत्यादिरा नवतेरिति** । विंशत्यादयः ' पङ्क्तिविंशति––२३४५ ' इति सूत्रनिर्दिष्टाः ॥ १३ ॥ **दुन्दुभिरक्षेष्विति** । अक्षेषु बोधनीयेषु यः प्रयुज्यत इत्यर्थः ॥ १४ ॥ **नाभिरक्षत्रिय इति** । क्षत्रियभिन्ने यो नाभिशब्दः प्रयुज्यते स स्त्रियां स्यात् ॥ **इयं नाभिरिति** । पुरुषावयवे इदम् ॥ १५ ॥ **उभावप्यन्यत्र पुंसीति** । इदं स्पष्टार्थम् , पूर्वसूत्रयोः 'अक्षेष्वक्षत्रिये' इत्यभिधानेन सिद्धेः ॥ **कथं तर्हि** । अत्र यत्कोमलैरिति तदनुपपन्नम् । स्त्रीलिङ्गनाभिशब्दार्थविशेषणत्वात् ॥ **सामान्ये** । लिङ्गविशेषाविवक्षया नपुंसकं कोमलैरिति प्रसाध्य तस्य नाभिशब्दार्थविशेषणत्वं स्वीकार्यम् । विशेषप्रतिपादकस्य यथा पुंस्त्वं तथाऽस्यापि भविष्यतीत्याशयेन समाधानान्तरमाह–**वस्तुतस्त्विति** ॥ 'चक्रमध्यक्षत्रिययोः' इत्यत्र चक्रमध्यं च क्षत्रियश्चेति द्वन्द्वः । अत एव 'प्राण्यङ्गके द्वयोः' इति संगच्छते ॥ १६ ॥ **तलन्त इति** । 'तस्य भावस्त्वतलौ २४१२' इति सूत्रविहिततल्प्रत्ययान्तः स्त्रियां स्यात् ॥ १७ ॥ **भूमिविद्युदिति** । अत्राभिधानशब्दो भूम्यादिशब्दे शक्यतावच्छेदकधर्मावच्छिन्नशक्तपरत्वेन प्रमेयशब्दव्यावृत्तिः । एवमन्यत्रापि बोध्यम् ॥ १८ ॥ **यादो नपुंसकमिति** । पूर्वस्यापवादः ॥ १९ ॥ **स्थूणोर्णे नपुंसके चेति** । चकारेण स्त्रियामित्यस्यानुकर्षणार्थमस्यात्र लेखः ॥ २१ ॥ **प्रावृड्विप्रुडिति** । स्त्रीशब्दस्य पूर्वत्र चानुकृष्टत्वेऽपि 'स्वरितेनाधिकारः ७०' इत्यस्याधिकः कार इति व्याख्यानस्यापि प्रसिद्धत्वादत्र संबन्धः ॥ २३ ॥ **दर्विविदिवेदि–** । दर्विशब्दो 'वृदृभ्यां विन् ४६९७' इति विन्नन्तः, 'सर्वतोऽक्तिन्नर्थादित्येके ७०८–२ ' इति ङीष् दर्वी इति ॥ २४ ॥ **तिथिनाडिरुचि–** । **एते प्राग्वत्** । स्त्रियां स्युरित्यर्थः ॥ २५ ॥ **पुंस्येवेति** । ' देवासुरात्म–४३ ' इत्यनेन पुंस्त्वबोधकेन परत्वाद्बाधादिति भावः ॥ **भाष्यप्रयोगात्** । तेन भाष्ये 'णौ–' इति सूत्रनिर्दिष्टानां बहुत्वं प्रायिक-

---

१ 'ईदूतौ–' इति सूत्रस्थभाष्यव्याख्यया त्वनयारनभिधानमेव भाष्यानुयायिनो मन्यन्ते । अत एव मूले ईकारान्तेषु तौ नोदाहृताविति प्रतिभाति ॥ २ श्रीभुवोरुभयोरपि क्विबन्तत्वादिकारप्रत्ययान्तत्वाभावादीकारस्योकारस्य साहचर्येण प्रत्ययस्यैव ग्रहणमिति व्याख्यानं भ्रममूलकमेव । प्रत्ययभिन्नस्यापि लक्ष्मीवाचकस्य शब्दस्य स्त्रियां दर्शनात् ॥

समायां समायामिति भाष्याच्च । विभाषा घ्राधेडिति सूत्रे अघ्रांसातां सुमनसाविति वृत्तिव्याख्यायां हरदत्तोऽप्येवम् ॥ ✻ स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिजः । ३० । इयं स्रक् त्वक् ज्योक् वाक् यवागूः नौः स्फिक् ॥ ✻ तृटिसीमासंबध्याः । ३१ । इयं तृटिः । सीमा । संबध्या ॥ ✻ चुल्लिवेणिखार्यश्च । ३२ । स्पष्टम् ॥ ✻ ताराधाराज्योत्स्नादयश्च । ३३ ॥ ✻ शलाका स्त्रियां नित्यम् ।३४। नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयति ॥ इति स्त्र्यधिकारः॥

अथ पुंल्लिङ्गाधिकारः ।

✻ पुमान् । ३५ । अधिकारोऽयम् ॥ ✻ घञबन्तः । ३६ । पाकः । त्यागः । करः । गरः । भावार्थ एवेदम् । नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्यां स्त्रीत्वविशिष्टे तु क्तिन्नादिभिर्बाधेन परिशेषात् । कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम् । तथा च भाष्यम् । संबन्धमनुवर्तिष्यत इति ॥ ✻ घाजन्तश्च । ३७ । विस्तरः । गोचरः । चयः । जय इत्यादि ॥ ✻ भयलिङ्गभगपदानि नपुंसके । ३८ । एतानि नपुंसके स्युः । भयम् । लिङ्गम् । भगम् । पदम् ।। ✻ नङन्तः । ३९ । नङ्प्रत्ययान्तः पुंसि स्यात् । यज्ञः । यत्नः ॥ ✻ याच्ञा स्त्रियाम् । ४० । पूर्वस्यापवादः ॥ ✻ क्यन्तो घुः । ४१ । किप्रत्ययान्तो घुः पुंसि स्यात् । आधिः । निधिः । उदधिः । क्यन्तः किम् । दानम् । घुः किम् । जज्ञिर्बीजम् ॥ ✻ इषुधिः स्त्री च । ४२ । इषुधिशब्दः स्त्रियां पुंसि च । पूर्वस्यापवादः ॥ ✻ देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि । ४३ । एतानि पुंसि स्युः । देवाः सुराः । असुरा दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्वतः । समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो दोः । कण्ठो गलः । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दम इत्यादि ॥ ✻ त्रिविष्टपत्रिभुवने नपुंसके । ४४ । स्पष्टम् । तृतीयं विष्टपं त्रिविष्टपम् । स्वर्गाभिधानतया पुंस्त्वे प्राप्ते अयमारम्भः ॥ ✻ द्यौः स्त्रियाम् । ४५ । द्योदिवोस्तन्त्रेणोपादानमिदम् ॥ ✻ इषुबाहू स्त्रियां च । ४६ । चात्पुंसि ॥ ✻ बाणकाण्डौ नपुंसके च । ४७ । चात्पुंसि । त्रिविष्टपेत्यादिचतुःसूत्री देवासुरेत्यस्यापवादः ॥ ✻ नान्तः । ४८ । अयं पुंसि । राजा । तक्षा । न च चर्मवर्मादिष्वतिव्याप्तिः मन्व्यचूकोऽकर्तरीति नपुंसकप्रकरणे वक्ष्यमाणत्वात् ॥ ✻ क्रतुपुरुषकपोलगुल्फमेघाभिधानानि । ४९ । क्रतुरध्वरः । पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो नीरदः ॥ ✻ अभ्रं नपुंसकम् । ५० । पूर्वस्यापवादः ॥ ✻ उकारान्तः । ५१ । अयं पुंसि स्यात् । प्रभुः । इक्षुः । 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनी । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । एवंजातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः । उक्तं च–लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः । इति ॥ एवमन्यत्रापि ॥ ✻ धेनुरज्जुकुहुसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् । ५२ । ✻ समासे रज्जुः पुंसि च । ५३ । कर्कटरज्ज्वा । कर्कटरज्जुना ॥ ✻ श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुताल्वूनि नपुंसके । ५४ । ✻ वसु चार्थवाचि । ५५ । अर्थवाचीति किम् । वसुर्मयूखाग्निधनाधिपेषु ॥ ✻ मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च । ५६ । चात्पुंसि । अयं मद्गुः । इदं मद्गु ॥ ✻ रुत्वन्तः । ५७ । मेरुः । सेतुः ॥ ✻ दारुकसेरुजतुवस्तुमस्तूनि नपुंसके । ५८ । रुत्वन्तेति पुंस्त्वस्यापवादः । इदं दारु ॥ ✻ सक्तुर्नपुंसके च । ५९ ।

---

मिति विकल्पेनान्यत्र बहुत्वाभावेऽपि न क्षतिः ॥ २९ ॥ क्वचिद्व्यभिचारमिति । तेन तिथिशब्दस्य पूर्वत्र यथा पुंस्त्वं प्रदर्शितं तथाऽन्येषामन्यलिङ्गत्वेऽपि साधुत्वमिति सूचयति ॥ ३४ ॥ इति लिङ्गानुशासने स्त्र्यधिकारः ॥

भावार्थ एवेदमिति । भावे यो घञ् तदन्तस्य पुंस्त्वमित्युक्तम् । एतल्लाभप्रकारमाह–नपुंसकेत्यादि ॥ ३६ ॥ भयलिङ्गेत्यादि । पूर्वस्यापवादोऽयम् ॥ ३८ ॥ क्यन्तो घुरिति । किप्रत्ययोऽन्तः परो यस्मात्तादृशो घुसंज्ञको धातुस्तद्घटितः पुमानित्यर्थः ॥ ४१ ॥ देवासुरात्म–। अत्र पङ्कशब्दान्तद्वन्द्वं कृत्वा तस्य षष्ठीसमासोऽभिधानशब्देन कर्तव्यः, अभिधानशब्दः करणल्युडन्तो वाचकशब्दपरः, तेन देवादिशब्दवाच्यतावच्छेदकेत्यादि पूर्ववद्बोध्यम् । शब्दस्वरूपापेक्षया च नपुंसकत्वम् ॥ ४३ ॥ त्रिविष्टपत्रिभुवने–। स्वर्गाभिधानतया पुंस्त्वे प्राप्तेऽयमारम्भ इति । अत एवाहामरसिंहः 'क्लीबे त्रिविष्टपम्' इति ॥ ४४ ॥ द्यौः स्त्रियाम् । अस्य स्वर्गाभिधानत्वात्पुंस्त्वस्य पूर्वेण प्राप्तेऽस्यारम्भः ॥ ४५ ॥ इषुबाहू स्त्रियां–। भुजपर्यायवाचकोऽयम् ॥ ४६ ॥ बाणकाण्डौ नपुंसके–। शराभिधानोऽयम् ॥ ४७ ॥ नान्त इति । नान्तप्रत्ययान्त इत्यर्थः ॥ ४८ ॥ अभ्रं नपुंसकम् । मेघाभिधानविषये पूर्वस्यापवाद इत्यर्थः ॥ ५० ॥ लिङ्गशेषविधिः । लिङ्गस्य शेषोऽवशेषस्तस्य विधिर्व्यापी । काण्डत्रयस्य विधिर्व्यापी काण्डत्रयस्य व्यापको यदि विशेषशास्त्रेण बाधितो न स्यादित्यर्थः ॥ ५१ ॥ [ नपुंसके चेति । चात्पुंसि ॥ ५४ ॥ ] वसु चार्थवाचीति । अर्थवाची वसुशब्दो नपुंसके [ च ] द्रष्टव्यः ॥ ५५ ॥ रुत्वन्त इति । उकारो नेत्संज्ञकः । मेरुः । सेतुरित्यत्र 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ४२६८' इति तुन् । सूर्यवाचकः प्रथमः ॥ ५७ ॥ दारुकसेरुजतु–। जवादित्वाडुप्रत्ययान्ता एते ॥ ५८ ॥

---

१ कर्मणि ल्युट् । २ बाहुशब्द इत्यर्थः । इषुशब्दस्य शरे रूढत्वात् ॥

चात्पुंसि । सक्तुः । सक्तु ॥ * प्राग्रश्मेरकारान्तः । ६० । रश्मिदिवसाभिधानानीति वक्ष्यति प्रागेतस्मादकारान्त इत्यधिक्रियते ॥ * कोपधः । ६१ । कोपधोऽकारान्तः पुंसि स्यात् । स्तबकः । कल्कः ॥ * चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके । ६२ । पूर्वसूत्रापवादः ॥ * कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकतिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककर्कटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च ।६३। चात्पुंसि । अयं कण्टकः । इदं कण्टकमित्यादि ॥ * टोपधः । ६४ । टोपधोऽकारान्तः पुंसि स्यात् । घटः पटः ॥ * किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके । ६५ । किरीटमित्यादि ॥ * कुटकूटकपटकवाटतर्पटनटनिकटकीटकटानि नपुंसके च । ६६ । चात्पुंसि । कुटः कुटमित्यादि ॥ * णोपधः । ६७ । णोपधोऽकारान्तः पुंसि स्यात् । गुणः । गणः । पाषाणः ॥ * ऋणलवणपर्णतोरणरणोष्णानि नपुंसके । ६८। पूर्वसूत्रापवादः ॥ * कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च । ६९ । चात्पुंसि ॥ * थोपधः । ७० । रथः ॥ * काष्ठपृष्ठसिक्थोक्थानि नपुंसके । ७१ । इदं काष्ठमित्यादि ॥ * काष्ठा दिगर्था स्त्रियाम् । ७२ । इमाः काष्ठाः ॥ * तीर्थप्रोथयूथगाथानि नपुंसके च । ७३ । चात्पुंसि । अयं तीर्थः । इदं तीर्थम् । * नोपधः । ७४ । अदन्तः पुंसि । इनः । फेनः ॥ * जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके । ७५ । पूर्वस्यापवादः ॥ * मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसम्भावनविभावनविमानानि नपुंसके च । ७६ । चात्पुंसि । अयं मानः । इदं मानम् ॥ * पोपधः । ७७ । अदन्तः पुंसि । यूपः । दीपः ॥ * पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके । ७८ । इदं पापमित्यादि ॥ * शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च । ७९ । अयं शूर्पः । इदं शूर्पमित्यादि ॥ * भोपधः । ८० । स्तम्भः । कुम्भः ॥ * तलभं नपुंसकम् । ८१ । पूर्वस्यापवादः ॥ * जृम्भं नपुंसके च । ८२ । जृम्भम् । जृम्भः ॥ * मोपधः । ८३ । सोमः । भीमः ॥ * रुक्मसिध्मयुध्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके । ८४ । इदं रुक्ममित्यादि ॥ * संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च । ८५ । चात्पुंसि । अयं संग्रामः । इदं संग्रामम् ॥ * योपधः । ८६ । समयः । हयः ॥ * किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके । ८७ । स्पष्टम् ॥ * गोमयकषायमलयान्वयाव्ययानि नपुंसके च । ८८ । गोमयः । गोमयम् ॥ * रोपधः । ८९ । क्षुरः । अङ्कुरः ॥ * द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्त्रपात्रच्छत्राणि नपुंसके । ९० । इदं द्वारमित्यादि ॥ * शुक्रमदेवतायाम् । ९१ । इदं शुक्रं रेतः ॥ * चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च । ९२ । चात्पुंसि । चक्रः चक्रमित्यादि ॥ * षोपधः । ९३ । वृषः । वृक्षः ॥ * शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ।९४। * यूषकरीषमिषविषवर्षाणि नपुंसके च । ९५ । चात्पुंसि । अयं यूषः । इदं यूषमित्यादि ॥ * सोपधः ।९६। वत्सः । वायसः । महानसः ॥ * पनसबिसबुससाहसानि नपुंसके ।९७। * चमसांसरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च । ९८ । इदं चमसम् । अयं चमस इत्यादि ॥ * कंसं चाप्राणिनि । ९९ । कंसोऽस्त्री पानभाजनम् । प्राणिनि तु कंसो नाम कश्चिद्राजा ॥ * रश्मिदिवसाभिधानानि । १०० । एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः ॥ * दीधितिः स्त्रियाम् । १०१ । पूर्वस्यापवादः ॥ * दिनाहनी नपुंसके । १०२ । अयमप्यपवादः ॥ * मानाभिधानानि । १०३ । एतानि पुंसि स्युः । कुडवः । प्रस्थः ॥ * द्रोणाढकौ नपुंसके च । १०४ । इदं द्रोणम् । अयं द्रोणः ॥* खारीमानिके स्त्रियाम् । १०५ । इयं खारी । इयं मानिका ॥ * दाराक्षतलाजासूनां बहुत्वं च । १०६ । इमे दाराः ॥ * नाड्यपजनोपपदानि व्रणाङ्गपदानि । १०७ । यथासंख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः । अयं नाडीव्रणः । अपाङ्गः । जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् ॥ * मरुद्गरुत्तरदृत्विजम् । १०८ । अयं मरुत् ॥ * ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः ।१०९। एते पुंसि स्युः । अयमृषिः ॥* ध्वजगज-

---

कंसं चाप्राणिनि । कंसमिति शब्दस्य निर्देशात् 'नपुंसके च' इत्यस्य संबन्धः । अप्राणिनि वाच्ये कंसशब्द इत्यर्थः ॥ ॥९९॥ दिनाहनी—। दिवसाभिधानाविमौ ॥ १०२ ॥ खारीमानिके स्त्रियाम् । मानाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भः ॥ १०५॥ बहुत्वं चेति । चकारः पुंस्त्वस्य समुच्चायकः ॥१०६॥ नाड्यपजनोपपदानि व्रणाङ्गपदानि । अत्रोपपदशब्दः पूर्वपदपरो न तु 'तत्रोपपदम्–११२५' इति तत्संज्ञकपरः । तस्य प्राप्त्यभावात् ॥ क्लीबत्वनिवृत्त्यर्थम् । नपुंसकाधिकारे

मुञ्जपुञ्जाः । ११० । एते पुंसि ॥ ＊ हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः ।१११। एते पुंसि । अमरस्तु मुहूर्तोऽस्त्रियामित्याह ॥ ＊ षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः । ११२ । अयं षण्डः ॥ ＊ वंशांशपुरोडाशाः । ११३ । अयं वंशः । पुरो दाश्यते पुरोडाशः । कर्मणि घञ् । भवव्याख्यानयोः प्रकरणे पौरोडाशपुरोडाशात्ष्ठन्[2112]निति विकारप्रकरणे व्रीहेः पुरोडाशे[2102] इति च निपातनात्प्रकृतसूत्र एव निपातनाद्वा[1] दस्य डत्वम् । पुरोडाशभुजामिष्टमिति माघः ॥ ＊ ह्रदकन्दकुन्दबुद्बुदशब्दाः । ११४ । अयं ह्रदः ॥ ＊ अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः । ११५ । अयमर्घः ॥ ＊ पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धमृदङ्गसङ्गसमुद्गपुङ्खाः । ११६ । अयं पल्लव इत्यादि ॥ ＊ सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः । ११७। एते पुंसि । अयं सारथिः ॥ 　इति पुँल्लिङ्गाधिकारः ॥

## अथ नपुंसकाधिकारः ।

＊ नपुंसकम् । ११८ । अधिकारोऽयम् ॥ ＊ भावे ल्युडन्तः । ११९ । हसनम् । भावे किम् ॥ पचनोऽग्निः । इध्मप्रव्रश्चनः कुठारः ॥ ＊ निष्ठा च । १२० । भावे या निष्ठा तदन्तं क्लीबं स्यात् । हसितम् । गीतम् ॥ ＊ त्वष्यञौ तद्धितौ । १२१ । शुक्लत्वम् । शौक्ल्यम् । ष्यञः षित्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्यम् । चातुरी । सामग्र्यम् । सामग्री । औचित्यम् । औचिती ॥ ＊ कर्मणि च ब्राह्मणादिगुणवचनेभ्यः । १२२ । ब्राह्मणस्य कर्म ब्राह्मण्यम् ॥ ＊ यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि । १२३ । एतदन्तानि क्लीबानि । स्तेनाद्यन्नलोपश्च[2424] । स्तेयम् । सख्युर्यः[2427] । सख्यम् । कपिज्ञात्योर्ढक्[1428] । कापेयम् । पत्यन्तपुरोहितादिभ्यो यक्[2430] । आधिपत्यम् । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्[2432] । औष्ट्रम् । हायनान्तयुवादिभ्योऽण्[2433] । द्वैहायनम् । द्वन्द्वमनोज्ञादिभ्यो वुञ्[2438] । पितापुत्रकम् । होत्राभ्यश्छः[2440] । अच्छावाकीयम् । अव्ययीभावः । अधिस्त्रि ॥ ＊ द्वन्द्वैकत्वम् । १२४ । पाणिपादम् ॥ ＊ अभाषायां हेमन्तशिशिरावहोरात्रे च । १२५ । स्पष्टम् ॥ ＊ अनञ्कर्मधारयस्तत्पुरुषः । १२६ । अधिकारोऽयम् ॥ ＊ अनल्पे छाया । १२७ । शरच्छायम् ॥ ＊ राजाऽमनुष्यपूर्वा सभा । १२८ । इनसभामित्यादि ॥ ＊ सुरासेनाच्छायाशालानिशाः स्त्रियां च । १२९॥ ＊ परवत् । १३० । अन्यस्तत्पुरुषः परवल्लिंगः स्यात् । रात्राह्नाहाः[1166] पुंसि ॥ ＊ अपथपुण्याहे नपुंसके । १३१ ॥ ＊ संख्यापूर्वा रात्रिः । १३२ । त्रिरात्रम् । संख्यापूर्वेति किम् । सर्वरात्रः॥ ＊ द्विगुः स्त्रियां च । १३३ । व्यवस्थया । पञ्चमूली । त्रिभुवनम् ॥ ＊ इसुसन्तः ।१३४। हविः। धनुः ॥ ＊ अर्चिः स्त्रियां च । १३५ । इसन्तत्वेऽपि अर्चिः स्त्रियां नपुंसके च स्यात् । इयमिदं वा अर्चिः ॥ ＊ छदिः स्त्रियामेव । १३६ । इयं छदिः । छाद्यतेऽनेनेति छादेश्छुरादिण्यन्तादर्चिंशुचीत्यादिना इसिः[4468] । इस्मन्नित्यादिना ह्रस्वः । पटलं छदिरित्यमरः । तत्र पटलसाहचर्याच्छदिषः क्लीबतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः ॥ ＊ मुखनयनलोहवनमांसरुधिरकार्मुक-

---

'मुखनयन—१३७' इत्यादिवक्ष्यमाणसूत्रेण विवराभिधानत्वेन क्लीबत्वं प्राप्तं तन्निवृत्त्यर्थमित्यर्थः ॥ १०७ ॥ **अमरस्त्विति** । एवं च तन्मतेऽर्धर्चादिष्वयं द्रष्टव्यः ॥ १११ ॥ इति पुँल्लिङ्गाधिकारः ॥

**भावे ल्युडन्त इति** । इदं च सूत्रं यद्यपि 'नपुंसके भावे क्तः ४१०८' 'ल्युट् च ५११०६' इत्यनेन गतार्थम्, तथापि स्पष्टार्थमुपात्तम् । एवमन्तग्रहणं चेति बोध्यम् ॥ **इध्मप्रव्रश्चनः** । अत्र करणे ल्युट् ॥ ११९ ॥ **निष्ठा चेति** । अत्र निष्ठापदं क्तस्य बोधकम् । इदमपि सूत्रं 'नपुंसके भावे क्तः ४१०८' इत्यनेन गतार्थम् । प्रत्ययग्रहणे तदन्तस्य ग्रहणम् ॥ १२० ॥ **त्वष्यञौ तद्धितौ** । । भावे इत्यनुवर्तते । यद्यपि 'तस्य भावः—२४१२' इति सूत्रे भावशब्दः प्रकृतिजन्यबोधीयप्रकारताश्रयधर्मपरः । 'भावे ल्युडन्तः ११९' इत्यत्र तु भावशब्दो भावनाबोधक इति भेदः, तथापीह भावशब्दः शब्दाधिकारेणान्यार्थको द्रष्टव्यः ॥ १२१ ॥ **कर्मणि च ब्राह्मणा—**। चाद्भावे । त्वष्यञावित्याद्यनुवर्तते ॥ १२२ ॥ **स्तेनाद्यन्नलोपश्च** । यद्यपीदं सूत्रं प्राग्व्याख्यातमेव, तथापीतः प्रभृति कथितनपुंसकत्वस्पष्टप्रतिपत्त्यर्थमिहोपादानमिति बोध्यम् ॥ १२३ ॥ **द्वन्द्वैकत्वम्** । 'द्वन्द्वश्च प्राणितूर्य—१३०५' इत्यादीनां येषां द्वन्द्वानामेकवद्भावो भवति, ते द्वन्द्वा नपुंसकत्वाभिधायका बोध्या इत्यर्थः ॥ १२४ ॥ **अभाषायां—**। इदमपि सूत्रं 'हेमन्तशिशिरावहोरात्रे च च्छन्दसि' इति सूत्रे छन्दसीत्युपादानेन गतार्थम् । हेमन्तशिशिरावित्यत्र तु निर्देशादेव पुंस्त्वप्रतिपादकता बोध्या ॥ १२५ ॥ **स्त्रियां चेति** । चेन नपुंसकमित्यनुकर्षः । 'विभाषा सेना—११९०' इति विभाषापदोपादानेनेदमपि गतार्थम् ॥ १२९ ॥ **परवत्** । 'परवल्लिङ्गम्—११६३' इति सूत्रोपात्त इत्यर्थः । परवदिति सूत्रस्य स्मारकमिह परवदिति न त्विदमपूर्वम् ॥ **तत्पुरुष इति** । द्वन्द्वस्याप्युपलक्षणम् ॥ १३० ॥ **संख्यापूर्वा रात्रिरिति** । 'संख्यापूर्वं रात्रं क्लीबम् ११६७' इत्यस्यानुवादः ॥ १३२ ॥ **द्विगुः स्त्रियां चेति** । चान्नपुंसकमिति संबध्यते । इदमपि 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः ११७६' 'पात्राद्यन्तस्य न ११७९' इत्यनन गतार्थम् । अत एवाह—**व्यवस्थयेति** ॥ १३३ ॥ **इसुसन्त इति** । 'अर्चिशुचिहुसृपिच्छादिछर्दिभ्य इसिः ४४६८' 'जनेरुसिः ४४७५' एतयोरुपात्तौ एतौ ॥ १३४ ॥ **छदिः स्त्रियामेव** । यद्यपि छदिरित्यस्येसन्तत्वेन नपुंसकत्वे प्राप्ते विशेषोपादानेन स्त्रियामित्यनेनैव नित्यस्त्रीत्वलाभे सिद्धे एवकारो व्यर्थः, तथापि 'पटलं छदिः' इत्यमरग्रन्थदर्शनेन साहचर्यान्नपुंसकत्वमपीति भ्रान्तिः

---

१ 'दुरो दाशनाशदभध्येषु च' इति वार्त्तिकेन वा दस्य डो वा ॥

**विवरजलहलधनान्नाभिधानानि** । १३७ । एतेषामभिधायकानि क्लीबे स्युः । मुखमाननम् । नयनं लोचनम् । लोहं कालम् । वनं गहनम् । मांसमामिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं बिलम् । जलं वारि । हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् । अस्यापवादानाह त्रिसूत्र्या ॥ ※ **सीरार्थौदनाः पुंसि** । १३८ । ※ **वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च** । १३९ । वक्त्रो वक्त्रम् । नेत्रो नेत्रम् । अरण्योऽरण्यम् । गाण्डीवो गाण्डीवम् ॥ ※ **अटवी स्त्रियाम्** ।१४०। ※ **लोपधः** । १४१ । कुलम् । कूलम् । स्थलम् ॥ ※ **तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि** । १४२ । अयं तूलः ॥ ※ **शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः पुंसि च** १४३ । चात् क्लीबे । शीलः शीलं इत्यादि ॥ ※ **शतादिः संख्या** । १४४ । शतम् । सहस्रम् । शतादिरिति किम् । एको द्वौ बहवः ॥ संख्येति किम् । शतशृङ्गो नाम पर्वतः ॥ ※ **शतायुतप्रयुताः पुंसि च** ॥ १४५ । अयं शतः । इदं शतमित्यादि ॥ ※ **लक्षा कोटिः स्त्रियाम्** । १४६ । इयं लक्षा । इयं कोटिः । वा लक्षा नियुतं च तदियमरात् ॥ क्लीबेऽपि लक्षम् ॥ ※ **शङ्कुः पुंसि** । १४७ । सहस्रः क्वचित् । अयं सहस्रः । इदं सहस्रम् ॥ ※ **मन्द्व्यच्कोऽकर्तरि** । १४८ । मन्प्रत्ययान्तो द्व्यच्कः क्लीबः स्यान्न तु कर्तरि । वर्म । चर्म । द्व्यच्कः किम् । अणिमा । महिमा । अकर्तरि किम् । ददाति इति दामा ॥ ※ **ब्रह्मन् पुंसि च** । १४९ । अयं ब्रह्मा । इदं ब्रह्म ॥ ※ **नामरोमणी नपुंसके** । १५० । मैर्नूद्व्यच्क इत्यस्यायं प्रपञ्चः ॥ ※ **असन्तो द्व्यच्कः** ॥ १५१ । यशः । मनः । तपः । द्व्यच्कः किम् । चन्द्रमाः ॥ ※ **अप्सराः स्त्रियाम्** ॥ १५२ । एता अप्सरसः । प्रायेणायं बहुवचनान्तः[1] ॥ ※ **त्रान्तः** । १५३ । पत्त्रम् । छत्त्रम् ॥ ※ **यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव** ॥ २५४ । **भृत्रामित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि** ॥ १५५ । अयं भृत्रः । न मित्त्रममित्रः । तस्य मित्राण्यमित्रास्ते इति माघः । स्याताममित्रौ मित्त्रे चेति च । यत्तु द्विषोऽमित्र इति सूत्रे हरदत्तेनोक्तम्-अमेर्द्विषतीत्यौणादिक इत्रच् । अमेरमित्रम् , मित्त्रस्य व्यथयेदित्यादौ मध्योदात्तस्तु चिन्त्यः,नञ्समासेऽप्येवम् । परवल्लिङ्गताऽपि स्यादिति तु तत्र दोषान्तरमिति । तत्प्रकृतसूत्रापवादः

---

स्यात्तन्निवारणायैवकारः । अत एव वक्ष्यति-**अमरव्याख्यातार इति** ॥ १३६ ॥ **अस्य-**। 'मुखनयन-१३७' इति सूत्रस्य ॥ १३७ ॥ **सीरार्थौदनाः पुंसि** । सीरशब्दो हलाभिधानः । अर्थशब्दस्तु धनशब्दस्य पर्यायः । ओदनशब्दोऽन्नवाची । भिस्सा-भिस्सटाशब्दौ तु दग्धान्नपराविति तयोः स्त्रीत्वेऽपि न क्षतिरिति ॥ १३८ ॥ **अटवी स्त्रियामिति** । अयं वनाभिधानः ॥ १४० ॥ **संख्येतीति** । संख्यावाचीत्यर्थः ॥ १४४ ॥ **शतायुतप्रयुताः-**। अयं शतशब्दोऽनन्तवाची । 'शतादिः-१४४' इति पूर्वसूत्रापवादोऽयम् ॥ १४५ ॥ **लक्षा कोटिः-**। एतयोरपि संख्यावाचकत्वान्नपुंसकत्वे प्राप्ते इदम् ॥ **क्लीबेऽपि** । एवं चायमर्धर्चादिषु द्रष्टव्यः॥१४६॥ **शङ्कुः पुंसीति**। अस्य शङ्कुशब्दस्य संख्याविशेषवाचकत्वात् 'शतादिः संख्या १४४' इति नपुंसकत्वे प्राप्तेऽस्यारम्भः ॥ **सहस्रः क्वचित्** । क्वचिदिति अर्थविशेष इत्यर्थः । 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इत्यत्रानन्तवाची । न चात्र सहस्रशब्दस्यानन्तपरत्वे संख्यापरत्वाभावेन सहस्रपादित्यत्र 'संख्यासुपूर्वस्य १२६१' इति पादशब्दान्त्यलोपो न स्यादिति वाच्यम्, नियतविषयपरिच्छेदकत्वरूपसंख्यात्वाभावेऽपि यथाकथंचित्संख्यायाः प्रतीतिरिति लोपः । वस्तुतः-छान्दसो लोप इति तूचितम्॥१४७॥**मन्द्व्यच्कोऽकर्तरि** । अत्र मन्प्रत्ययः श्रूयमाणनकारान्तः 'सर्वधातुभ्यो मनिन् ४७९०' इति विहितः॥ **चर्म वर्मेति** । चरादिधातोर्मनिन्प्रत्ययः। बाहुलकादिडभावः। अणिमादौ त्विट्[2]। 'सर्वधातुभ्यो मनिन् ४७९०' इत्यनेनैव मनिन् , परंत्वयं विशेषः-उणादिप्रत्ययान्तानां संज्ञाशब्दपरत्वेन यादृशी व्युत्पत्तिर्यत्रोचिता सा कल्पनीयेति कर्तर्यपि प्रत्ययः संभवतीति ॥ १४८ ॥ **ब्रह्मेति**। 'बृंहेर्नोऽच्च ४७९१' इति मनिन्प्रत्ययः॥ १४९ ॥ **असन्तो द्व्यच्कः** । 'सर्वधातुभ्योऽसुन् ४८३४' इति विहितोऽसुन् । तस्यासुनो येष्वनुवृत्तिस्तदन्ता अपि बोध्याः । 'चन्द्रे मो डित् ४८७३' इति विहितासुन्प्रत्ययान्तश्चन्द्रमस्शब्दोऽप्यसुन्नन्तः, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् ॥ १५१ ॥ एवमप्सरःशब्दोऽपि ॥ १५२ ॥ **त्रान्तः** । त्रप्रत्ययान्तो नपुंसकः स्यात् । 'सर्वधातुभ्यष्ट्रन् ४८०४' इति त्रन्प्रत्ययो नकारानुबन्धक इति ॥ १५३ ॥ **यात्रामात्रा-**। 'हुयामा-४८१३' इति विहितत्रन्प्रत्ययोऽपि त्रग्रहणेन गृह्यत इति नपुंसकत्वे प्राप्तेऽस्यारम्भः । एवकारो न्यायसिद्धबाध्यबाधकभावानुवादकः ॥ १५४ ॥ **भृत्रामित्र-**। पूर्वस्यापवादः ॥ **यत्त्विति** । दोषान्तरमित्यन्ता तदुक्तिः । **मध्योदात्तः** । मकारेकारस्य प्रत्ययाद्युदात्तत्वेन मध्योदात्त इति तद्भावः॥ **चिन्त्य इति** । चित्त्वस्य सत्त्वात् । नन्वमित्रशब्दो नेत्रान्तः किंतु 'अमिचिमि-४८०९' इति धातुविहितक्तान्तमित्रशब्देन नञः समासे सति सिद्ध इत्याह-**नञ्समासेऽप्येवमिति** । अन्तोदात्त इत्यर्थः ॥ **परवल्लिङ्गतेति** । एवं सति नपुंसकत्वं स्यात् । हरदत्तोक्तं

---

१ 'स्त्रियां बहुष्वप्सरसः' इत्यमरकोशादित्यर्थः । २ अणुशब्दादिमनिचि त्विटः प्राप्तिरेव नास्ति, 'अन्येभ्योऽपि दृश्यन्ते' इति मनिनि तु 'नेड्वशि-' इतीण्निषेध एवेति चिन्त्यमेवेदामिति बोध्यम् । 'सर्वधातु-' इत्यौणादिके मनिन्यपि तथा, तितुत्रवन्तत्राणि 'नेड्वशि-' इत्यस्य प्रवृत्तेः ॥

र्यालोचनमूलकम् । स्वरदोषोद्भावनमपि नञो जरमरमित्रमृता इति पाठसूत्रास्मरणमूलकमिति दिक् ॥ * पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च । १५६ । * बलकुसुमशुल्बपत्तनरणाभिधानानि । १५७ । बलं वीर्यम् ॥ * पद्मकमलोत्पलानि पुंसि च ।१५८। पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः। अमरोऽप्याह । वा पुंसि पद्मं नलिनमिति । एवं चार्धर्चादिसूत्रे तु जलजे पद्मं नपुंसकमेवेति वृत्तिग्रन्थो मतान्तरेण नेयः॥*आहवसंग्रामौ पुंसि ॥ १५९ । * आजिः स्त्रियामेव ॥ १६० । * फलजातिः ॥ १६१ । फलजातिवाची शब्दो नपुंसकं स्यात् । आमलकम् । आम्रम् । * वृक्षजातिः स्त्रियामेव ॥१६२ । क्वचिदेवेदम् । हरीतकी ॥ * वियज्जगत्सकृत्शकन्पृषत्शकृद्यकृदुदश्वितः ॥१६३ । एते क्लीबाः स्युः । * नवनीतावतानानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि ॥ १६४ । * श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि ॥ १६५ । एतानि क्लीबे स्युः ॥ * दैवं पुंसि च ॥ १६६ ॥ दैवम् । दैवः॥ *धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकाव्यकव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि ॥ १६७ । इदं धान्यमित्यादि ॥ * द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि ॥ १६८ ॥ * अक्षमिन्द्रिये ॥ १६९ । इन्द्रिये किम् । रथाङ्गादौ मा भूत् ॥ ॥ इति नपुंसकाधिकारः ॥

## अथ स्त्रीपुंसाधिकारः ।

* स्त्रीपुंसयोः ॥१७० । अधिकारोऽयम् ॥ * गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः ॥ १७१ । इयमयं वा गौः ॥ * मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः ॥ १७२ । इयमयं वा मृत्युः ॥ * गुणवचनमुकारान्तं नपुंसकं च ॥ १७३ । त्रिलिङ्गमित्यर्थः ॥ पटु । पटुः । पट्वी ॥ * अपत्यार्थस्तद्धिते ॥ १७४ । औपगवः । औपगवी ॥ ॥ इति स्त्रीपुंसाधिकारः ॥

## अथ पुन्नपुंसकाधिकारः ।

* पुंनपुंसकयोः ॥ १७५ । अधिकारोऽयम् ॥ * घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ॥ १७६ । अयं घृतः। इदं घृतम् ॥* शृङ्गार्घनिदाघोद्यमशल्यदृढाः ॥ १७७। अयं शृङ्गः । इदं शृङ्गम् ॥* व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः ॥१७८। अयं व्रजः । इदं व्रजम् ॥ * कबन्धौषधायुधान्ताः ॥१७९। स्पष्टम् ॥ * दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः ॥ १८० । एते पुंनपुंसकयोः स्युः । 'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले' इति विश्वः । शलाकावाची तु स्त्रियाम् । तथा च जानपदादिसूत्रेणायोविकारे ङीषि कुशी । दारुणि तु टाप् कुशा । 'कुशा वानस्पत्याः स्थ ता मा पात' इति श्रुतिः । अतः कृकमीति सूत्रे कुशाकर्णीष्विति प्रयोगश्च । व्याससूत्रे च-'हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दः' इति । तत्र शारीरकभाष्येऽप्येवम् । एवं च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते आच्छन्द इत्याङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः ॥ * गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च ॥ १८१ । ॥ इति पुंनपुंसकाधिकारः ॥

---

दूषयति-तत्प्रकृतेत्यादिना ॥ नञो जरमरेति । यदि तु न मित्रम् अमित्र इति नञ्समासस्तदा न 'नञो जरमरमित्र-५८२१ ' इत्यस्य प्राप्तिस्तस्य बहुव्रीहिसमासे प्रवृत्तेरिति बोध्यम् ॥ १५५ ॥ कुसुमाभिधायित्वेति । वस्तुतः-कुसुमाभिधायित्वेऽपीत्यर्थः । यदि तु कुसुमविशेषाभिधायकोऽयम्, न तु कुसुमशब्दशक्यतावच्छेदकावच्छिन्नशक्त इति विभाव्यते, तदा त्वपूर्वमेवोभयलिङ्गत्वाभिधानमिति । मतान्तरेण जलजशब्दस्य जलजातकुसुमान्तराभिधायकत्वमित्यभिप्रायकमतान्तरेणेत्यर्थः ॥ १५८ ॥ आहवसंग्रामौ पुंसि । एतयोर्युद्धाभिधायकत्वान्नपुंसकत्वे प्राप्ते ॥ १५९॥ एवमाजिशब्दोऽपि ॥ १६० ॥ फलजातिरिति । फलोपादानाद्वृक्षपरस्यामलकीशब्दस्य स्त्रीत्वेऽपि न क्षतिः ॥ १६१ ॥ हरीतकीति । हरीतक्याः फलानि हरीतक्यः 'हरीतक्यादिषु व्यक्तिः १८३२ ' इति स्त्रीत्वाभिधानात् ॥ १६२ ॥ रथाङ्गादाविति । आदिना देवनाक्षपरिग्रहः ॥ १६९ ॥ इति नपुंसकाधिकारः ॥

स्त्रीपुंसयोः । अधिकारोऽयम् ॥ नपुंसकं चेति । चात्स्त्रीपुंसयोः ॥ १७३ ॥ इति स्त्रीपुंसाधिकारः ॥ ॥

शलाकावाचीति । सा च शलाका काष्ठादिनिर्मिता । तत्र मानमाह-तथा चेति ॥ १८० ॥ इति पुंनपुंसकाधिकारः॥ ॥

* अविशिष्टलिङ्गम् ॥ १८२ । * अव्ययं कतियुष्मदः ॥ १८३ । * ष्णान्ता संख्या ॥ १८४ । * शिष्टाः परवत् ॥ १८५ । एकः पुरुषः । एका स्त्री । एकं कुलम् ॥ * गुणवचनं च ॥ १८६ । शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् ॥ * कृत्याश्च ॥ १८७ । * करणाधिकरणयोर्ल्युट् च ॥ १८८ । * सर्वादीनि सर्वनामानि ॥ ॥ १८९ । स्पष्टार्थेयं त्रिसूत्री ॥ ॥ इति लिङ्गानुशासनसूत्रवृत्तिः ॥

इति श्रीभट्टोजिदीक्षितविरचिता सिद्धान्तकौमुदी संपूर्णा ॥

---

अविशिष्टलिङ्गम् । तत्तल्लिङ्गवाचकताप्रयुक्तकार्यविशेषशून्यम् ॥ १८२ ॥ शिष्टा इति । पूर्वोक्तशब्दान्यतमत्वावाच्छिन्नप्रतियोगिताकभेदवन्तः ॥ परवदिति । विशेष्यवदित्यर्थः ॥ १८५ ॥ गुणवचनं च । परवदित्यनुवर्तते ॥ १८६ ॥ कृत्याश्च । कृत्यप्रत्ययान्ताः परवद्बोध्याः ॥ १८७ ॥ सर्वादीनि सर्वनामानि । सर्वनामसंज्ञकानि सर्वादीनि परवद्बोध्यानि ॥ स्पष्टार्थेति । लोकव्युत्पत्त्यैव तत्तल्लिङ्गाभिधानसिद्धत्वात् । अत एव-'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भगवता भाष्यकृतोक्तम् । तेन यौगिकेषु शब्देषु लोकव्युत्पत्तिरेव लिङ्गाभिधाने प्रमाणमिति सिद्धम् ॥ १८८ ॥ इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलसञ्चारिविमलतरानवद्यसद्यशःपार्वणपीयूषभान्वगस्त्यकुलवंशावतंसश्रीमद्भवदेव-मिश्रात्मजभैरवीमिश्रप्रणीतभैरवी ( चन्द्रकला ) नामकव्याख्यायां लिङ्गानुशासनविवरणम् ॥ ॥

॥ समाप्तोऽयं ग्रन्थः ॥

---

१ संख्यानिष्ठप्रकारतानिरूपितसंख्येयमात्रनिष्ठविशेष्यतावन्तः षान्तनान्तशब्दा इत्यर्थः । इति वाम् ॥



श्रीः ।

# अथ पाणिनीयशिक्षाप्रारम्भः ।

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा । शास्त्रानुपूर्व्यं तद्विद्याद्यथोक्तं लोकवेदयोः ॥ १ ॥ प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः । पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् ॥ २ ॥ त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शंभुमते मताः । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥ ३ ॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः। यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ ४ ॥ अनुस्वारो विसर्गश्च ᳲ क ᳲ पौ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥ ५ ॥ १ ॥ आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥६॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् । प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितम् ॥ ७ ॥ कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् । तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥ ८॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥ ९ ॥ स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः । इति वर्णविदः प्राहुर्निपुणं तन्निबोधत ॥ १० ॥ २ ॥ उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥ ११ ॥ उदात्तो निषादगान्धारावनुदात्त ऋषभधैवतौ । स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥ १२ ॥ अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च ॥ १३ ॥ ओभावश्च विवृत्तिश्च शषसा रेफ एव च । जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४ ॥ यद्योभावप्रसंधानमुकारादि परं पदम् । स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ १५ ॥ ३ ॥ हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् । औरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥ कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू । स्युर्मूर्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः ॥ १७ ॥ जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः । एऐ तु कण्ठतालव्यावोऔ कण्ठोष्ठजौ स्मृतौ ॥ १८ ॥ अर्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् । ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९ ॥ संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् । घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥ २० ॥ ४ ॥ स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ २१ ॥ अनुस्वारयमानां च नासिका स्थानमुच्यते । अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ २२ ॥ अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वराननु । अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥ २३ ॥ अनुस्वारे विवृत्त्यां तु विरामे चाक्षरद्वये । द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः ॥ २४ ॥ व्याघ्री यथा हरेत्पुत्रान्दंष्ट्राभ्यां न च पीडयेत् । भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ २५ ॥ ५ ॥ यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते । एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया ॥ २६ ॥ रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् । दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥ २७ ॥ हृदये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि । नासिकायां तथाऽर्धं च रङ्गस्यैवं द्विमात्रता ॥ २८॥ हृदयादुत्करे तिष्ठन्कांस्येन स्वमनुस्वरन् । मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥ २९ ॥ मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समौ भवेत् । सरङ्गं कम्पयेत्कम्पं रथीवेति निदर्शनम् ॥ ३० ॥ एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः । सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ ३१ ॥ ६ ॥ गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ ३२ ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥ शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् । काकस्वरं शिरसि गतं तथा स्थानविवर्जितम् ॥ ३४ ॥ उपांशु दष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् । निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम् ॥ ३५ ॥ प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन । मध्यन्दिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ॥ ३६ ॥ तारं तु विद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् । मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥ ३७ ॥ ॥ ७ ॥ अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शरः स्मृताः । शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥ ३८ ॥ यमोऽनुनासिका न ह्रौ नादिनो हझषः स्मृताः । ईषन्नादा यणो जश्च श्वासिनस्तु खफादयः ॥ ३९ ॥ ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत्प्रचक्षते । दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं भुवि ॥ ४० ॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ ४१ ॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ ४२ ॥ ८ ॥ उदात्तमाख्याति वृतोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा । उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥ ४३ ॥ उदात्तं प्रदेशिनीं विद्यात्प्रचयं मध्यतोऽङ्गुलिम् । निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥ ४४ ॥ अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् । मध्योदात्तं स्वरितं द्व्युदात्तं

न्युदात्तमिति नवपदशय्या ॥ ४५ ॥ अग्निः सोमः प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती । अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं व इत्यनुदात्तं वीर्यं नीचस्वरितम् ॥ ४६ ॥ हविषां मध्योदात्तं स्वरिति स्वरितम् । बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति न्युदात्तम् ॥ ४७ ॥ अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः ॥ ४८ ॥ ९ ॥ चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः । शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥ ४९ ॥ कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् । न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ॥ ५० ॥ सुतीर्थादागतं व्यक्तं स्वाम्नाय्यं सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ ५१ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥ अनक्षरमनायुष्यं विस्वरं व्याधिपीडितम् । अक्षताशस्त्ररूपेण वज्रं पतति मस्तके ॥ ५३ ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ ५४ ॥ हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् । ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥ ५५ ॥ १० ॥ शंकरः शांकरीं प्रादाद्दाक्षीपुत्राय धीमते । वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥ ५६ ॥ येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ५७ ॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः । तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥ ५९ ॥ त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः । स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति दिवीति ॥ ६० ॥ ११ ॥ अथ शिक्षामात्मोदात्तश्च हकारं स्वराणां यथागीत्यचोऽस्पृष्टोदात्तं चाषस्तु शंकर एकादश ॥

इति पाणिनीया शिक्षा समाप्ता ॥

श्रीः ।

॥ श्रीगणेशाय नमः ॥

# पाणिनीयाऽष्टाध्यायीसूत्रपाठ आरभ्यते ।

## अथ प्रथमोऽध्यायः ।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ॥ कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ १ ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ॥ तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ २ ॥
वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् ॥ पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम् ॥ ३ ॥

ॐ[1]-अइउण् ॥ १ ॥ ऋऌक् ॥ २ ॥ एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ हयवरट् ॥ ५ ॥ लण् ॥ ६ ॥ ञमङणनम् ॥ ७ ॥ झभञ् ॥८॥ घढधष् ॥ ९ ॥ जबगडदश् ॥ १० ॥ खफछठथचटतव् ॥ ११ ॥ कपय् ॥१२॥ शषसर् ॥ १३ ॥ हल् ॥ १४ ॥

वृद्धिरादैच् ॥ १ ॥ अदेङ् गुणः ॥ २ ॥ इको गुणवृद्धी ॥ ३ ॥ न धातुलोप आर्धधातुके ॥ ४ ॥ क्ङिति च ॥ ५ ॥ दीधीवेवीटाम् ॥ ६ ॥ हलोऽनन्तराः संयोगः ॥ ७ ॥ मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥ तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥ नाऽऽज्झलौ ॥ १० ॥ ईदूदेद्द्विवचनं प्रगृह्यम् ॥ ११ ॥ अदसो मात् ॥ १२ ॥ शे ॥ १३ ॥ निपात एकाजनाङ् ॥ १४ ॥ ओत् ॥ १५ ॥ सम्बुद्धौ शाकल्यस्येतावनार्षे ॥ १६ ॥ उञः ॥ १७ ॥ ऊँ ॥ १८ ॥ ईदूतौ च सप्तम्यर्थे ॥ १९ ॥ दाधा घ्वदाप् ॥ २० ॥ १ ॥ आद्यन्तवदेकस्मिन् ॥ २१ ॥ तरप्तमपौ घः ॥ २२ ॥ बहुगणवतुडति संख्या ॥ २२ ॥ ष्णान्ता षट् ॥ २४ ॥ डति च ॥ २५ ॥ क्तक्तवतू निष्ठा ॥ २६ ॥ सर्वादीनि सर्वनामानि ॥ २७ ॥ विभाषा दिक्समासे बहुव्रीहौ ॥ २८ ॥ न बहुव्रीहौ ॥ २९ ॥ तृतीयासमासे ॥ ३० ॥ द्वन्द्वे च ॥ ३१ ॥ विभाषा जसि ॥ ३२ ॥ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ ३३ ॥ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ ३४ ॥ स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥ अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३६ ॥ स्वरादिनिपातमव्ययम् ॥ ३७ ॥ तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥ कृन्मेजन्तः ॥ ३९ ॥ क्त्वातोसुन्कसुनः ॥ ४० ॥ २ ॥ अव्ययीभावश्च ॥ ४१ ॥ शि सर्वनामस्थानम् ॥ ४२ ॥ सुडनपुंसकस्य ॥ ४३ ॥ नवेति विभाषा ॥ ४४ ॥ इग्यणः सम्प्रसारणम् ॥ ४५ ॥ आद्यन्तौ टकितौ ॥ ४६ ॥ मिदचोऽन्त्यात्परः ॥ ४७ ॥ एच इग्घ्रस्वादेशे ॥ ४८ ॥ षष्ठी स्थानेयोगा ॥ ४९ ॥ स्थानेऽन्तरतमः[2] ॥ ५० ॥ उरण् रपरः ॥ ५१ ॥ अलोऽन्त्यस्य ॥ ५२ ॥ ङिच्च ॥ ५३ ॥ आदेः परस्य ॥ ५४ ॥ अनेकाल्शित्सर्वस्य ॥ ५५ ॥ स्थानिवदादेशोऽनल्विधौ ॥ ५६ ॥ अचः परस्मिन्पूर्वविधौ ॥ ५७ ॥ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिषु ॥ ५८ ॥ द्विर्वचनेऽचि ॥ ५९ ॥ अदर्शनं लोपः ॥ ६० ॥ ३ ॥ प्रत्ययस्य लुक्श्लुलुपः ॥ ६१ ॥ प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६२ ॥ न लुमताऽङ्गस्य ॥ ६३ ॥ अचोऽन्त्यादि टि ॥ ६४ ॥ अलोऽन्त्यात्पूर्व उपधा ॥ ६५ ॥ तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६६ ॥ तस्मादित्युत्तरस्य ॥ ६७ ॥ स्वं रूपं शब्दस्याऽशब्दसंज्ञा ॥ ६८ ॥ अणुदित्सवर्णस्य चाऽप्रत्ययः ॥ ६९ ॥ तपरस्तत्कालस्य ॥ ७० ॥ आदिरन्त्येन सहेता ॥ ७१ ॥ येन विधिस्तदन्तस्य ॥ ७२ ॥ वृद्धिर्यस्याचामादिस्तद् वृद्धम् ॥ ७३ ॥ त्यदादीनि च ॥ ७४ ॥ एङ् प्राचां देशे ॥ ७५ ॥ १५॥ ( वृद्धिराद्यन्तवदव्ययीभावः प्रत्ययस्य लुक् पञ्चदश ) ॥

इति प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १ ॥ विज इट् ॥ २ ॥ विभाषोर्णोः ॥ ३ ॥ सार्वधातुकमपित् ॥ ४ ॥ असंयोगाल्लिट् कित् ॥ ५ ॥ इन्धिभवतिभ्यां च ॥ ६ ॥ मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ ७ ॥ रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥ ८ ॥ इको झल् ॥ ९ ॥ हलन्ताच्च ॥ १० ॥ लिङ्सिचावात्मनेपदेषु ॥ ११ ॥ उश्च ॥ १२ ॥ वा गमः ॥ १३ ॥ हनः सिच् ॥ १४ ॥ यमो गन्धने ॥ १५ ॥ विभाषोपयमने ॥ १६ ॥ स्थाघ्वोरिच्च ॥ १७ ॥ न क्त्वा सेट् ॥ १८ ॥ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥ १९ ॥ मृषस्तितिक्षायाम् ॥ २० ॥ १ ॥ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥ २१ ॥ पूङः क्त्वा च ॥ २२ ॥ नोपधात्थफान्ताद्वा ॥ २३ ॥ वञ्चिलुञ्च्यृतश्च ॥ २४ ॥ तृषिमृषिकृशेः काश्यपस्य ॥ २५ ॥

---

१ अथ महाभाष्यसंमतश्रीनागोजीभट्टकृताष्टाध्यायीपाठोऽत्र टिप्पणीरूपेण संगृह्यते ॥ उञ ऊँ इत्यस्य "उञः" इत्येकम् । "ऊँ" इत्यपरमिति योगविभागोऽत्र भाष्ये । २ 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठः क्वचित्संहितापाठेऽङ्गीकृतः ।

रलो व्युपधाद्धलादेः संश्च ॥ २६ ॥ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ २७ ॥ अचश्च ॥ २८ ॥ उच्चैरुदात्तः ॥ २९ ॥ नीचैरनुदात्तः ॥ ३० ॥ समाहारः स्वरितः ॥ ३१ ॥ तस्यादित उदात्तमर्धह्रस्वम् ॥ ३२ ॥ एकश्रुति दूरात्सम्बुद्धौ ॥३३ ॥ यज्ञकर्मण्यजपन्यूङ्खसामसु ॥ ३४ ॥ उच्चैस्तरां वा वषट्कारः ॥ ३५ ॥ विभाषा छन्दसि ॥ ३६ ॥ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ ३७ ॥ देवब्रह्मणोरनुदात्तः ॥ ३८ ॥ स्वरितात्संहितायामनुदात्तानाम् ॥ ३९ ॥ उदात्तस्वरितपरस्य सन्नतरः ॥ ४० ॥ २ ॥ अपृक्त एकाल् प्रत्ययः ॥ ४१ ॥ तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ ४२ ॥ प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ ४३ ॥ एकविभक्ति चापूर्वनिपाते ॥ ४४ ॥ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ ४५ ॥ कृत्तद्धितसमासाश्च ॥ ४६ ॥ ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ ४७ ॥ गोस्त्रियोरुपसर्जनस्य ॥ ४८॥ लुक् तद्धितलुकि ॥ ४९ ॥ इद्गोण्याः ॥ ५० ॥ लुपि युक्तवद्व्यक्तिवचने ॥ ५१ ॥ विशेषणानां चाऽजातेः ॥ ५२ ॥ तदशिष्यं संज्ञाप्रमाणत्वात् ॥ ॥ ५३ ॥ लुब्योगाऽप्रख्यानात् ॥ ५४ ॥ योगप्रमाणे च तदभावेऽदर्शनं स्यात् ॥ ५५ ॥ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥ ५६ ॥ कालोपसर्जने च तुल्यम् ॥ ५७ ॥ जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ॥ ५८ ॥ अस्मदो द्वयोश्च ॥ ५९ ॥ फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ ६० ॥ ३ ॥ छन्दसि पुनर्वस्वोरेकवचनम् ॥ ६१ ॥ विशाखयोश्च ॥ ६२ ॥ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ ६३ ॥ सरूपाणामेक शेष एकविभक्तौ ॥६४॥ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥ ६५ ॥ स्त्री पुंवच्च ॥ ६६॥ पुमान् स्त्रिया ॥ ६७ ॥ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ॥ ६८ ॥ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ ६९ ॥ पिता मात्रा ॥ ७० ॥ श्वशुरः श्वश्र्वा ॥ ७१ ॥ त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ॥७३॥१३॥ (गाङ्कुटाद्युदुपधादपृक्तश्छन्दसि पुनर्वस्वोस्त्रयोदश ) ॥

## इति प्रथमाऽध्यायस्य द्वितीयः पादः ॥ २ ॥

भूवादयो धातवः ॥ १ ॥ उपदेशेऽजनुनासिक इत् ॥ २ ॥ हलन्त्यम् ॥ ३ ॥ न विभक्तौ तुस्माः ॥ ४ ॥ आदिर्ञिटुडवः ॥ ५ ॥ षः प्रत्ययस्य ॥ ६ ॥ चुटू ॥ ७ ॥ लशक्वतद्धिते ॥ ८ ॥ तस्य लोपः ॥ ९ ॥ यथासंख्यमनुदेशः समानाम् ॥ १० ॥ स्वरितेनाधिकारः ॥ ११ ॥ अनुदात्तङित आत्मनेपदम् ॥ १२ ॥ भावकर्मणोः ॥ १३ ॥ कर्तरि कर्मव्यतिहारे ॥ १४ ॥ न गतिहिंसार्थेभ्यः ॥ १५ ॥ इतरेतरान्योन्योपपदाच्च ॥ १६ ॥ नेर्विशः ॥१७ ॥ परिव्यवेभ्यः क्रियः ॥ १८ ॥ विपराभ्यां जेः ॥ १९ ॥ आङो दोऽनास्यविहरणे ॥ २० ॥ १ ॥ क्रीडोऽनुसम्परिभ्यश्च ॥२१ ॥ समवप्रविभ्यः स्थः ॥ २२ ॥ प्रकाशनस्थेयाख्ययोश्च ॥ २३ ॥ उदोऽनूर्ध्वकर्मणि ॥ २४ ॥ उपान्मन्त्रकरणे ॥ २५॥ अकर्मकाच्च ॥ २६ ॥ उद्विभ्यां तपः ॥ २७ ॥ आङो यमहनः ॥ २८ ॥ समो गम्यृच्छिभ्याम् ॥ २९ ॥ निसमुपविभ्यो ह्वः ॥ ३० ॥ स्पर्धायामाङः ॥ ३१ ॥ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३२ ॥ अधेः प्रसहने ॥ ३३ ॥ वेः शब्दकर्मणः ॥ ३४ ॥ अकर्मकाच्च ॥ ३५ ॥ सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ ३६ ॥ कर्तृस्थे चाशरीरे कर्मणि ॥ ३७ ॥ वृत्तिसर्गतायनेषु क्रमः ॥ ३८ ॥ उपपराभ्याम् ॥ ३९ ॥ आङ उद्गमने ॥ ४० ॥ २ ॥ वेः पादविहरणे ॥ ४१ ॥ प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥ अनुपसर्गाद्वा ॥ ४३ ॥ अपह्नवे ज्ञः ॥ ४४ ॥ अकर्मकाच्च ॥ ४५ ॥ सम्प्रतिभ्यामनाध्याने ॥ ४६ ॥ भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४७ ॥ व्यक्तवाचां समुच्चारणे ॥ ४८ ॥ अनोरकर्मकात् ॥ ४९ ॥ विभाषा विप्रलापे ॥ ५० ॥ अवाद्ग्रः ॥ ॥ ५१ ॥ समः प्रतिज्ञाने ॥५२॥ उदश्चरः सकर्मकात् ॥५३॥ समस्तृतीयायुक्तात् ॥५४॥ दाणश्च सा चेच्चतुर्थ्यर्थे ॥५५॥ उपाद्यमः स्वकरणे ॥ ५६ ॥ ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥ नानोर्ज्ञः ॥ ५८ ॥ प्रत्याङ्भ्यां श्रुवः ॥ ५९ ॥ शदेः शितः ॥ ६० ॥ ३ ॥ म्रियतेर्लुङ्लिङोश्च ॥ ६१ ॥ पूर्ववत्सनः ॥ ६२ ॥ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ ६३ ॥ प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ ६४ ॥ समः क्ष्णुवः ॥ ६५ ॥ भुजोऽनवने ॥ ६६ ॥ णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ॥ ६७॥ भीस्म्योर्हेतुभये ॥ ६८ ॥ गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥ लियः संमाननशालीनीकरणयोश्च ॥ ७० ॥ मिथ्योपपदात्कृञोऽभ्यासे ॥ ७१ ॥ स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ ७२ ॥ अपाद्वदः ॥ ७३ ॥ णिचश्च ॥ ७४ ॥ समुदाङ्भ्यो यमोऽग्रन्थे ॥ ७५ ॥ अनुपसर्गाज्ज्ञः ॥ ७६ ॥ विभाषोपपदेन प्रतीयमाने ॥ ७७ ॥ शेषात्कर्तरि परस्मैपदम् ॥ ॥ ७८ ॥ अनुपराभ्यां कृञः ॥ ७९ ॥ अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥ ४ ॥ प्राद्वहः ॥ ८१ ॥ परेर्मृषः ॥ ८२ ॥ व्याङ्परिभ्यो रमः ॥ ८३ ॥ उपाच्च ॥ ८४ ॥ विभाषाऽकर्मकात् ॥ ८५ ॥ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥ निगरणचलनार्थेभ्यश्च ॥८७॥ अणावकर्मकाच्चित्तवत्कर्तृकात् ॥८८॥ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥८९॥ वा क्यषः ॥ ९० ॥ द्युद्भ्यो लुङि ॥ ९१ ॥ वृद्भ्यः स्यसनोः ॥ ९२ ॥ लुटि च क्लृपः ॥ ९३ ॥ १३ ॥ (भूवादयः क्रीडोऽनु वेः पाद म्रियतेः प्राद्वहस्त्रयोदश ) ॥

## इति प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

आकडारादेका संज्ञा ॥ १ ॥ विप्रतिषेधे परं कार्यम् ॥ २ ॥ यू स्त्र्याख्यौ नदी ॥ ३ ॥ नेयङुवङ्स्थानावस्त्री ॥ ४ ॥ वाऽऽमि ॥ ५ ॥ ङिति ह्रस्वश्च ॥ ६ ॥ शेषो घ्यसखि ॥ ७ ॥ पतिः समास एव ॥ ८ ॥ षष्ठीयुक्तश्छन्दसि वा ॥ ९ ॥

ह्रस्वं लघु ॥ १० ॥ संयोगे गुरु ॥ ११ ॥ दीर्घं च ॥ १२ ॥ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ॥ १३ ॥ सुप्तिङन्तं पदम् ॥ १४ ॥ नः क्ये ॥ १५ ॥ सिति च ॥ १६ ॥ स्वादिष्वसर्वनामस्थाने ॥ १७ ॥ यचि भम् ॥ १८ ॥ तसौ मत्वर्थे ॥ १९ ॥ अयस्मयादीनि च्छन्दसि ॥ २० ॥ १ ॥ बहुषु बहुवचनम् ॥ २१ ॥ द्व्येकयोर्द्विवचनैकवचने ॥ २२ ॥ कारके ॥ २३ ॥ ध्रुवमपायेऽपादानम् ॥ २४ ॥ भीत्रार्थानां भयहेतुः ॥ २५ ॥ पराजेरसोढः ॥ २६ ॥ वारणार्थानामीप्सितः ॥ २७ ॥ अन्तर्धौ येनादर्शनमिच्छति ॥ २८ ॥ आख्यातोपयोगे ॥ २९ ॥ जनिकर्तुः प्रकृतिः ॥ ३० ॥ भुवः प्रभवः ॥ ३१ ॥ कर्मणा यमभिप्रेति स संप्रदानम् ॥ ३२ ॥ रुच्यर्थानां प्रीयमाणः ॥ ३३ ॥ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥ ३४ ॥ धारेरुत्तमर्णः ॥ ३५ ॥ स्पृहेरीप्सितः ॥ ३६ ॥ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥ ३७ ॥ क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ ३८ ॥ राधीक्ष्योर्यस्य विप्रश्नः ॥ ३९ ॥ प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥ ४० ॥ २ ॥ अनुप्रतिगृणश्च ॥ ४१ ॥ साधकतमं करणम् ॥ ४२ ॥ दिवः कर्म च ॥ ४३ ॥ परिक्रयणे संप्रदानमन्यतरस्याम् ॥ ४४ ॥ आधारोऽधिकरणम् ॥ ४५ ॥ अधिशीङ्स्थासां कर्म ॥ ४६ ॥ अभिनिविशश्च ॥ ४७ ॥ उपान्वध्याङ्वसः ॥ ४८ ॥ कर्तुरीप्सिततमं कर्म ॥ ४९ ॥ तथा युक्तं चानीप्सितम् ॥ ५० ॥ अकथितं च ॥ ५१ ॥ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ॥ ५२ ॥ हृक्रोरन्यतरस्याम् ॥ ५३ ॥ स्वतन्त्रः कर्ता ॥ ५४ ॥ तत्प्रयोजको हेतुश्च ॥ ५५ ॥ प्राग्रीश्वरान्निपाताः ॥ ५६ ॥ चादयोऽसत्त्वे ॥ ५७ ॥ प्रादयः ॥ ५८ ॥ उपसर्गाः क्रियायोगे ॥ ५९ ॥ गतिश्च ॥ ॥ ६० ॥ ३ ॥ ऊर्यादिच्विडाचश्च ॥ ६१ ॥ अनुकरणं चानितिपरम् ॥ ३२ ॥ आदरानादरयोः सदसती ॥ ६३ ॥ भूषणेऽलम् ॥ ६४ ॥ अन्तरपरिग्रहे ॥ ६५ ॥ कणेमनसी श्रद्धाप्रतीघाते ॥ ६६ ॥ पुरोऽव्ययम् ॥ ६७ ॥ अस्तं च ॥ ६८ ॥ अच्छ गत्यर्थवदेषु ॥ ६९ ॥ अदोऽनुपदेशे ॥ ७० ॥ तिरोऽन्तर्धौ ॥ ७१ ॥ विभाषा कृञि ॥ ७२ ॥ उपाजेऽन्वाजे ॥ ७३ ॥ साक्षात्प्रभृतीनि च ॥ ७४ ॥ अनत्याधान उरसिमनसी ॥ ७५ ॥ मध्ये पदे निवचने च ॥ ७६ ॥ नित्यं हस्ते पाणावुपयमने ॥ ७७ ॥ प्राध्वं बन्धने ॥ ७८ ॥ जीविकोपनिषदावौपम्ये ॥ ७९ ॥ ते प्राग्धातोः ॥ ८० ॥ ४ ॥ छन्दसि परेऽपि ॥ ८१ ॥ व्यवहिताश्च ॥ ८२ ॥ कर्मप्रवचनीयाः ॥ ८३ ॥ अनुर्लक्षणे ॥ ८४ ॥ तृतीयार्थे ॥ ८५ ॥ हीने ॥ ८६ ॥ उपोऽधिके च ॥ ८७ ॥ अपपरी वर्जने ॥ ८८ ॥ आङ्मर्यादावचने ॥ ८९ ॥ लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ ९० ॥ अभिरभागे ॥ ९१ ॥ प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ९२ ॥ अधिपरी अनर्थकौ ॥ ९३ ॥ सुः पूजायाम् ॥ ९४ ॥ अतिरतिक्रमणे च ॥ ९५ ॥ अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु ॥ ९६ ॥ अधिरीश्वरे ॥ ९७ ॥ विभाषा कृञि ॥ ९८ ॥ लः परस्मैपदम् ॥ ९९ ॥ तङानावात्मनेपदम् ॥ १०० ॥ ५ ॥ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०१ ॥ तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०२ ॥ सुपः ॥ १०३ ॥ विभक्तिश्च ॥ १०४ ॥ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०५ ॥ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥ अस्मद्युत्तमः ॥ १०७ ॥ शेषे प्रथमः ॥ १०८ ॥ परः सन्निकर्षः संहिता ॥ १०९ ॥ विरामोऽवसानम् ॥ ११० ॥ १० ॥ ( आकडाराद्बहुष्वनुप्रतिगृण ऊर्यादि च्छन्दसि तिङो दश )॥

इति प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥ इति प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

समर्थः पदविधिः ॥ १ ॥ सुबामन्त्रिते पराङ्गवत्स्वरे ॥ २ ॥ प्राक्कडारात्समासः ॥ ३ ॥ सह सुपा ॥ ४ ॥ अव्ययीभावः ॥ ५ ॥ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ॥ ६ ॥ यथाऽसादृश्ये ॥ ७ ॥ यावदवधारणे ॥ ८ ॥ सुप् प्रतिना मात्रार्थे ॥ ९ ॥ अक्षशलाकासंख्याः परिणा ॥ १० ॥ विभाषा ॥ ११ ॥ अपपरिबहिरञ्चवः पञ्चम्या ॥ १२ ॥ आङ्मर्यादाभिविध्योः ॥ १३ ॥ लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥ अनुर्यत्समया ॥ १५ ॥ यस्य चायामः ॥ १६ ॥ तिष्ठद्गुप्रभृतीनि च ॥ १७ ॥ पारे मध्ये षष्ठ्या वा ॥ १८ ॥ संख्या वंश्येन ॥ १९ ॥ नदीभिश्च ॥ २० ॥ १ ॥ अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥ तत्पुरुषः ॥ २२ ॥ द्विगुश्च ॥ २३ ॥ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥ स्वयं क्तेन ॥ २५ ॥ खट्वा क्षेपे ॥ २६ ॥ सामि ॥ २७ ॥ कालाः ॥ २८ ॥ अत्यन्तसंयोगे च ॥ २९ ॥ तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥ कर्तृकरणे कृता बहुलम् ॥ ३२ ॥ कृत्यैरधिकार्थवचने ॥ ३३ ॥ अन्नेन व्यञ्जनम् ॥ ३४ ॥ भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३६ ॥ पञ्चमी भयेन ॥ ३७ ॥ अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३८ ॥ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ३९ ॥ सप्तमी शौण्डैः ॥ ४० ॥ २ ॥ सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥ ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥ कृत्यैर्ऋणे ॥ ४३ ॥ संज्ञायाम् ॥ ४४ ॥ क्तेनाहोरात्रावयवाः ॥ ४५ ॥ तत्र ॥ ४६ ॥ क्षेपे ॥ ४७ ॥ पात्रेसमितादयश्च ॥ ४८ ॥ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ॥ ४९ ॥ दिक्संख्ये संज्ञायाम् ॥ ५० ॥ तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥ संख्यापूर्वो द्विगुः ॥ ५२ ॥ कुत्सितानि कुत्सनैः ॥ ५३ ॥ पापाणके कुत्सितैः ॥ ५४ ॥ उपमानानि सामान्यवचनैः ॥ ५५ ॥ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे

षोत्सर्गे । १४२५ ध्रु गतिस्थैर्ययोः ॥ ध्रुव इत्येके ॥ **अनुदात्तौ परस्मैपदिनौ** ॥ १४२६ कुङ् शब्दे । **उदात्त आत्मनेपदी** ॥ दीर्घान्त इति कैयटादयः । ह्रस्वान्त इति न्यासः ॥ **वृत्** ॥ १४२७ पृङ् व्यायामे । १४२८ मृङ् प्राणत्यागे ॥ **अनुदात्तावात्मनेभाषौ** ॥१५२९ रि १४३० पि गतौ । १४३१ धि धारणे । १४३२ क्षि निवासगत्योः ॥ **रियत्यादयोऽनुदात्ताः परस्मैभाषाः** ॥ १४३३ षू प्रेरणे । १४३४ कॄ विक्षेपे । १४३५ गॄ निगरणे ॥ **उदात्ताः परस्मैभाषाः** ॥ १४३६ दृङ् आदरे । १४३७ धृङ् अवस्थाने ॥ **अनुदात्तावात्मनेभाषौ** ॥ १४३८ प्रच्छ ज्ञीप्सायाम् ॥ **वृत्** ॥ १४३९ सृज विसर्गे ।१४४० टुमस्जो शुद्धौ । १४४१ रुजो भङ्गे । १४४२ भुजो कौटिल्ये । १४४३ छुप स्पर्शे । १४४४रुश१४४५ रिश हिंसायाम् । १४४६ लिश गतौ । १४४७ स्पृश संस्पर्शने । १४४८ विच्छ गतौ । १४४९ विश प्रवेशने । १४५० मृश आमर्शने । १४५१ णुद प्रेरणे । १४५२ षद्लृ विशरणगत्यवसादनेषु । १४५३ शद्लृ शातने ॥ **पृच्छत्यादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः । विच्छस्तूदात्तः** ॥ १४५४ मिल संगमने ॥ **उदात्तः स्वरितेदुभयतोभाषः** ॥ १४५५ मुच्लृ मोक्षणे । १४५६ लुप्लृ छेदने । १४५७ विद्लृ लाभे । १४५८ लिप उपदेहे । १४५९ षिच क्षरणे ॥ **मुचादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः । विन्दतिस्तूदात्तः** ॥ १४६० कृती छेदने । **उदात्त उदात्तेत्परस्मैपदी** ॥ १४६१ खिद परिघाते ॥ **अनुदात्त उदात्तेत्परस्मैपदी**॥ १४६२ पिश अवयवे ॥ **उदात्त उदात्तेत्परस्मैपदी** ॥**वृत्**॥

**इति शविकरणास्तुदादयः ॥ ६ ॥**

---

१४६३ रुधिर् आवरणे । १४६४ भिदिर् विदारणे । १४६५ छिदिर् द्वैधीकरणे । १४६६ रिचिर् विरेचने । १४६७विचिर् पृथग्भावे । १४६८ क्षुदिर् संपेषणे । १४६९ युजिर् योगे॥ **रुधादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः**॥१४७० उछृदिर् दीप्तिदेवनयोः । १४७१ उतृदिर् हिंसानादरयोः ॥ **उदात्तौ स्वरितेतावुभयतोभाषौ** ॥ १४७२ कृती वेष्टने । **उदात्त उदात्तेत्परस्मैपदी**॥१४७३ ञिइन्धी दीप्तौ ॥ **उदात्तोऽनुदात्तेदात्मनेपदी**॥ १४७४ खिद दैन्ये । १४७५विद विचारणे ॥ **अनुदात्तावनुदात्तेतावात्मनेपदिनौ** ॥ १४७६ शिष्लृ विशेषणे । १४७७ पिष्लृ संचूर्णने । १४७८ भञ्जो आमर्दने । १४७९ भुज पालनाभ्यवहारयोः ॥ **शिषादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः**॥ १४८० तृह १४८१हिंसि हिंसायाम् । १४८२ उन्दी क्लेदने १४८३ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । १४८४ तञ्चू संकोचने । १४८५ ओविजी भयचलनयोः । १४८६ वृजी वर्जने । १४८७ पृची संपर्के ॥ **तृहादय उदात्ता उदात्तेतः परस्मैपदिनः** ॥ **वृत्** ॥

**इति श्नम्विकरणा रुधादयः ॥ ७ ॥**

---

१४८८ तनु विस्तारे । १४८९ षणु दाने । १४९० क्षणु हिंसायाम् । क्षिणु च । १४९१ ऋणु गतौ । १४९२ तृणु अदने । १४९३ घृणु दीप्तौ ॥ **तनादय उदात्ताः स्वरितेत उभयतोभाषाः** ॥ १४९४ वनु याचने । १४९५ मनु अवबोधने ॥ **उदात्तावनुदात्तेतावात्मनेभाषौ** ॥ १४९६ डुकृञ् करणे ॥ **अनुदात्त उभयतोभाषः** ॥

**इत्युविकरणास्तनादयः ॥ ८ ॥**

---

१४९७ डुक्रीञ् द्रव्यविनिमये । १४९८ प्रीञ् तर्पणे कान्तौ च । १४९९ श्रीञ् पाके । १५०० मीञ् हिंसायाम् । १५०१ षिञ् बन्धने । १५०२ स्कुञ् आप्रवणे । १५०३ युञ् बन्धने ॥ **क्र्यादयोऽनुदात्ता उभयतोभाषाः** ॥ १५०४ क्नुञ् शब्दे । १५०५ द्रूञ् हिंसायाम् । १५०६ पूञ् पवने १५०७ लूञ् छेदने । १५०८ स्तॄञ् आच्छादने । १५०९ कॄञ् हिंसायाम् । १५१० वॄञ् वरणे । १५११ धूञ् कम्पने ॥ **क्नुप्रभृतय उदात्ता उभयतोभाषाः** ॥ १५१२ शॄ हिंसायाम् । १५१३ पॄ पालनपूरणयोः । १५१४ वॄ वरणे । भरणे इत्येके ॥ १५१५ भॄ भर्त्सने । १५१६ मॄ हिंसायाम् १५१७ दॄ विदारणे १५१८ जॄ वयोहानौ ॥ झॄ इत्येके । धॄ इत्यन्ये ॥ १५१९ नॄ नये । १५२० कॄ हिंसायाम् । १५२१ ॠ गतौ । १५२२ गॄ शब्दे ॥ **श्रीणातिप्रभृतय उदात्ता उदात्तेतः परस्मैपदिनः** ॥ १५२३ ज्या वयोहानौ । १५२४ री गतिरेषणयोः । १५२५ ली श्लेषणे । १५२६ व्ली वरणे । १५२७ प्ली गतौ ॥ **वृत्** ॥ १५२८ व्री वरणे । १५२९ भ्री भये ॥ भरे इत्येके । १५३० क्षीष् हिंसायाम् । १५३१ ज्ञा अवबोधने । १५३२ बन्ध बन्धने ॥ **ज्यादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः** । १५३३ वृङ् संभक्तौ ॥ **उदात्त आत्मनेपदी** ॥ १५३४ श्रन्थ विमोचनप्रतिहर्षयोः। १५३५ मन्थ विलोडने । १५३६ श्रन्थ १५३७ ग्रन्थ संदर्भे । १५३८ कुन्थ संश्लेषणे। संक्लेशे इत्येके ॥ कुथ इति दुर्गः ॥१५३९ मृद क्षोदे । १५४० मृड च ॥ अयं सुखेऽपि ॥१५४१ गुध रोषे । १५४२ कुष निष्कर्षे। १५४३ क्षुभ संचलने । १५४४ णभ १५४५ तुभ हिंसायाम् । १५४६ क्लिशू विबाधने । १५४७ अश भोजने । १५४८ उध्रस उञ्छे । १५४९ इष आभीक्ष्ण्ये । १५५० विष विप्रयोगे । १५५१ प्रुष १५५२ प्लुष स्नेहनसेवनपूरणेषु । १५५३ पुष पुष्टौ । १५५४ मुष स्तेये । १५५५ खच भूतप्रादुर्भावे ॥ वान्तोऽयमित्येके ॥ १५५६ हिठ च ॥ **श्रन्थादय उदात्ता उदात्तेतो ( विषिवर्जं ) परस्मैभाषाः** ॥ १५५७ ग्रह उपादाने ॥ **उदात्तः स्वरितेदुभयतोभाषः** ॥

**इति श्नाविकरणाः क्र्यादयः ॥ ९ ॥**

---

१५५८ चुर स्तेये । १५५९ चिति स्मृत्याम् । १५६० यत्रि संकोचे । १५६१स्फुडि परिहासे ॥ स्फुटि इत्यपि॥१५६२लक्ष दर्शनाङ्कनयोः।१५६३ कुद्रि अनृतभाषणे । १५६४ लड उपसेवायाम् । १५६५ मिदि स्नेहने । १५६६ ओलडि उत्क्षेपणे ॥ ओकारो धात्ववयव इत्येके । न इत्यपरे । उलडि इत्यन्ये ॥१५६७ जल अपवारणे ॥ लज इत्येके ॥१५६८ पीड अवगाहने । १५६९ नट अवस्यन्दने । १५७० श्रथ प्रयत्ने ॥ प्रस्थाने इत्येके ॥ १५७१ बध संयमे ॥ बन्ध इति चान्द्राः ॥ १५७२ पॄ पूरणे । १५७३ ऊर्ज बलप्राणनयोः । १५७४ पक्ष परिग्रहे । १५७५ वर्ण १५७६ चूर्ण प्रेरणे ॥ वर्ण वर्णने इत्येके ॥ १५७७ प्रथ प्रख्याने १५७८ पृथ प्रक्षेपे । पथ इत्येके ।१५७९ षम्ब संबन्धने ।१५८० शम्ब च । साम्ब इत्येके ॥१५८१भक्ष अदने । १५८२ कुट्ट छेदनभर्त्सनयोः ॥ पूरणे इत्येके । १५८३ पुट्ट १५८४ चुट्ट अल्पीभावे । १५८५ अट्ट १५८६ षुट्ट अनादरे । १५८७ लुण्ठ स्तेये । १५८८ शठ १५८९ श्वठ असंस्कारगत्योः ॥ श्वठि इत्येके॥१५९० तुजि १५९१ पिजि हिंसाबलादाननिकेतनेषु ॥ तुज पिज इति केचित् । लजि लुजि इत्येके ॥ १५९२ पिस गतौ ।१५९३ षान्त्व सामप्रयोगे।१५९४ श्वल्क१५९५ वल्क परिभाषणे । १५९६ ष्णिह स्नेहने ॥ स्फिट इत्येके । १५९७ स्मिट अनादरे ॥ ष्मिङ् इत्येके । १५९८ श्लिष श्लेषणे । १५९९ पथि गतौ । १६०० पिच्छ कुट्टने । १६०१ छदि संवरणे १६०२ श्रण दाने । १६०३ तड आघाते १६०४ खड १६०५खडि १६०६ कडि भेदने । १६०७ कुडि रक्षणे ।१६०८ गुडि वेष्टने ॥ रक्षणे इत्येके । कुठि इत्यन्ये । गुठि इत्यपरे॥ १६०९ खुडि खण्डने । १६१० वटि विभाजने ॥ वडि इति केचित् ॥ १६११ मडि भूषायां हर्षे च । १६१२ भडि कल्याणे । १६१३ छर्द वमने । १६१४ पुस्त १६१५ बुस्त आदरानादरयोः । १६१६ चुद सञ्चोदने । १६१७ नक्क १६१८ धक्क नाशने । १६१९ चक्क १६२० चुक्क व्यथने । १६२१ क्षल शौचकर्मणि । १६२२ तल प्रतिष्ठायाम् । १६२३ तुल उन्माने । १६२४ दुल उत्क्षेपे । १६२५ पुल महत्त्वे । १६२६ चुल समुच्छ्राये । १६२७ मूल रोहणे । १६२८ कल १६२९ विल क्षेपे । १६३० बिल भेदने । १६३१ तिल स्नेहने । १६३२ चल भृतौ ॥ १६३३ पाल रक्षणे । १६३४ लूष हिंसायाम् । १६३५ शुल्ब माने । १६३६ शूर्प च । १६३७ चुट छेदने । १६३८ मुठ संचूर्णने । १६३९ पडि १६४० पसि नाशने । १६४१ व्रज मार्गसंस्कारगत्योः । १६४२ शुल्क अतिस्पर्शने । १६४३ चपि गत्याम् । १६४४ क्षपि क्षान्त्याम् । १६४५ छजि कृच्छ्रजीवने । १६४६ श्वर्त गत्याम् । १६४७ श्वभ्र च । १६४८ ज्ञप ज्ञानज्ञापनमारणतोषणनिशाननिशामनेषु ॥ मिच्चेत्येके ॥ १६४९ यम च परिवेषणे।१६५० चह परिकल्कने॥ चप इत्येके ॥ १६५१ रह त्यागे च । १६५२ बल प्राणने । १६५३ चिञ् चयने ॥ नान्ये मितोऽहेतौ । १६५४ घट्ट चलने । १६५५ मुस्त संघाते । १६५६ खट्ट संवरणे । १६५७ षट्ट १६५८ स्फिट्ट १६५९ चुबि हिंसायाम् । १६६० पूल संघाते ॥ पूण इत्येके । पूर्ण इत्यन्ये ॥ १६६१ पुंस अभिवर्धने । १६६२ टकि बन्धने । १६६३ धूस कान्तिकरणे । मूर्धन्यान्त इत्येके । तालव्यान्त इत्येन्ये ॥ १६६४ कीट वर्णे । १६६५ चूर्ण संकोचने । १६६६ पूज पूजायाम् १६६७ अर्क स्तवने ॥ तपने इत्येके ॥ १६६८ शुठ आलस्ये । १६६९ शुठि शोषणे । १६७० जुड प्रेरणे । १६७१ गज १६७२ मार्ज शब्दार्थौ । १६७३ मर्च च । १६७४ घृ प्रस्रवणे ॥ स्रावणे इत्येके । १६७५ पचि विस्तारवचने । १६७६ तिज निशाने । १६७७ कृत संशब्दने । १६७८ वर्ध छेदनपूरणयोः । १६७९ कुबि आच्छादने । कुभि इत्येके ॥ १६८० लुबि १६८१ तुबि अदर्शने ॥ अर्दने इत्येके १६८२ ह्रप व्यक्तायां वाचि ॥ क्लप इत्येके ॥ १६८३ चुटि छेदने । १६८४ इल प्रेरणे । १६८५ म्रक्ष म्लेच्छने । १६८६ म्लेच्छ अव्यक्तायां वाचि । १६८७ ब्रूस १६८८ बर्ह हिंसायाम् ॥ केचिदिह गर्ज गर्द शब्दे । गर्ध अभिकाङ्क्षायाम् इति पठन्ति ॥ १६८९ गुर्द पूर्वनिकेतने ॥ १६९० जसि रक्षणे ॥ मोक्षणे इति केचित् ॥ १६९१ ईड स्तुतौ । १६९२ जसु हिंसायाम् । १६९३ पिडि संघाते।१६९४ रुष रोषे । रुट् इत्येके ॥ १६९५ डिप क्षेपे । १६९६ ष्टुप समुच्छ्राये ॥ **आकुस्मादात्मनेपदिनः** ॥ १६९७ चित सञ्चेतने । १६९८ दशि दर्शने । १६९९ दसि दर्शनदंशनयोः ॥ दश इत्यप्येके ॥ १७०० डप १७०१ डिप संघाते । १७०२ तत्रि कुटुम्बधारणे । १७०३ मत्रि गुप्तपरिभाषणे । १७०४ स्पश ग्रहणसंश्लेषणयोः । १७०५ तर्ज १७०६ भर्त्स तर्जने । १७०७ बस्त १७०८ गन्ध अर्दने । १७०९ विष्क हिंसायाम् ॥ हिष्क इत्येके ॥ १७१० निष्क परिमाणे । १७११ लल ईप्सायाम् । १७१२ कूण संकोचे । १७१३ तूण पूरणे । १७१४ भ्रूण आशाविशङ्कयोः । १७१५ शठ श्लाघायाम् । १७१६ यक्ष पूजायाम् १७१७ स्यम वितर्के । १७१८ गूर उद्यमने १७१९ शम १७२० लक्ष आलोचने । १७२१ कुत्स अवक्षेपणे । १७२२ त्रुट छेदने ॥ कुट इत्येके ॥ १७२३ गल स्रवणे । १७२४ भल आभण्डने । १७२५ कूट आप्रदाने ॥ अवसादने इत्येके ॥ १७२६ कुट्ट प्रतापने । १७२७ वञ्चु प्रलम्भने । १७२८ वृष शक्तिबन्धने । १७२९ मद तृप्तियोगे । १७३० दिवु परिकूजने । १७३१ गॄ विज्ञाने । १७३२ विद चेतनाख्याननिवासेषु । १७३३ मान स्तम्भे । १७३४ यु जुगुप्सायाम् । १७३५ कुस्म नाम्नो वा कुत्सितस्मयने । **इत्याकुस्मीयाः** ॥ १७३६ चर्च अध्ययने । १७३७ बुक्क भषणे । १७३८ शब्द उपसर्गादाविष्कारे च । १७३९ कण निमीलने । १७४० जभि नाशने १७४१ षूद क्षरणे । १७४२ जसु ताडने । १७४३ पश बन्धने । १७४४ अम रोगे । १७४५ चट १७४६ स्फुट भेदने । १७४७ घट संघाते । हन्त्यर्थाश्च । १७४८ दिवु मर्दने । १७४९ अर्ज प्रतियत्ने । १७५० घुषिर् विशब्दने । १७५१ आङः

क्रन्द सातत्ये । १७५२ लस शिल्पयोगे । १७५३ तसि १७५४ भूष अलंकरणे । १७५५ अर्ह पूजायाम् । १७५६ ज्ञा नियोगे । १७५७ भज विश्राणने । १७५८ श्रधु प्रसहने । १७५९ यत निकारोपस्कारयोः । १७६० रक १७६१ लग आस्वादने । रघ इत्येके । रगं इत्यन्ये ॥ १७६२ अञ्चु विशेषणे । १७६३ लिगि चित्रीकरणे । १७६४ मुद संसर्गे । १७६५ त्रस धारणे ॥ ग्रहणे इत्येके । वारणे इत्यन्ये ॥ १७६६ उध्रस उञ्छे ॥ उकारो धात्ववयव इत्येके । न इत्यन्ये ॥ १७६७ मुच प्रमोचने मोदने च । १७६८ वस स्नेहच्छेदापहरणेषु । १७६९ चर संशये । १७७० च्यु सहने ॥ हसने चेत्येके । च्युस इत्येके । १७७१ भुवोऽवकल्कने । १७७२ कृपेश्च ॥ आ स्वदः सकर्मकात् । १७७३ ग्रस ग्रहणे । १७७४ पुष धारणे । १७७५ दल विदारणे । १७७६ पट १७७७ पुट १७७८ लुट १७७९ तुजि १७८० मिजि १७८१ लिजि १७८२ लुजि १७८३ भजि १७८४ लघि १७८५ त्रसि १७८६ पिसि १७८७ कुसि १७८८ दशि १७८९ कुशि १७९० घट १७९१ घाटे १७९२ बृहि १७९३ बर्ह १७९४ बह्ल १७९५ गुप १७९६ धूप १७९७ विच्छ १७९८ चीव १७९९ पुथ १८०० लोकृ १८०१ लोचृ १८०२ णद १८०३ कुप १८०४ तर्क १८०५ वृतु १८०६ वृधु भाषार्थाः । १८०७ रुट १८०८ लजि १८०९ अजि १८१० दसि १८११ भृशि १८१२ रुशि १८१३ शीक १८१४ रुसि १८१५ नट १८१६ पुटि १८१७ जि १८१८ चि १८१९ रघि १८२० लघि १८२१ अहि १८२२ रहि १८२३ महि च । १८२४ लडि १८२५ तड १८२६ नल च । १८२७ पूरी आप्यायने । १८२८ रुज हिंसायाम् । १८२९ ष्वद आस्वादने ॥ स्वाद इत्येके ॥ आ धृषाद्वा ॥ १८३० युज १८३१ पृच संयमने । १८३२ अर्च पूजायाम् । १८३३ षह मर्षणे । १८३४ ईर क्षेपे । १८३५ ली द्रवीकरणे । १८३६ वृजी वर्जने । १८३७ वृञ् आवरणे । १८३८ जॄ वयोहानौ । १८३९ ज्रि च । १८४० रिच वियोजनसंपर्चनयोः । १८४१ शिष असर्वोपयोगे । १८४२ तप दाहे । १८४३ तृप तृप्तौ ॥ संदीपने इत्येके ॥ १८४४ छृदी संदीपने ॥ चृप छृप दृप संदीपने इत्येके ॥ १८४५ दृभी भये । १८४६ दृभ संदर्भे । १८४७ श्रथ मोक्षणे ॥ हिंसायाम् इत्यन्ये ॥ १८४८ मी गतौ । १८४९ ग्रन्थ बन्धने । १८५० शीक आमर्षणे । १८५१ चीक च । १८५२ अर्द हिंसायाम् ॥ **स्वरितेत्** ॥ १८५३ हिसि हिंसायाम् । १८५४ अर्ह पूजायाम् । १८५५ आङः षद पद्यर्थे । १८५६ शुन्ध शौचकर्मणि । १८५७ छद अपवारणे ॥ **स्वरितेत्** ॥ १८५८ जुष परितर्कणे । परितर्पणे इत्यन्ये ॥ १८५९ धूञ् कम्पने । १८६० प्रीञ् तर्पणे । १८६१ श्रन्थ १८६२ ग्रन्थ संदर्भे । १८६३ आपॢ लम्भने ॥ **स्वरितेदयमित्येके** ॥ १८६४ तनु श्रद्धोपकरणयोः ॥ उपसर्गाच्च दैर्घ्ये ॥ चन श्रद्धोपहननयोः इत्येके ॥ १८६५ वद संदेशवचने । **स्वरितेत्** । **अनुदात्तेदित्येके** ॥ १८६६ वच परिभाषणे । १८६७ मान पूजायाम् । १८६८ भू प्राप्तावात्मनेपदी ॥ १८६९ गर्ह विनिन्दने । १८७० मार्ग अन्वेषणे । १८७१ कठि शोके । १८७२ मृजू शौचालंकारयोः । १८७३ मृष तितिक्षायाम् ॥ **स्वरितेत्** ॥ १८७४ धृष प्रसहने ॥ **इत्याधृषीयाः** ॥ **अथादन्ताः** ॥ १८७५ कथ वाक्यप्रबन्धे । १८७६ वर ईप्सायाम् । १८७७ गण संख्याने । १८७८ शठ १८७९ श्वठ सम्यगवभाषणे । १८८० पट १८८१ वट ग्रन्थे । १८८२ रह त्यागे । १८८३ स्तन १८८४ गदी देवशब्दे । १८८५ पत गतौ वा ॥ वा अदन्त इत्येके ॥ १८८६ पष अनुपसर्गात् । १८८७ स्वर आक्षेपे । १८८८ रच प्रतियत्ने । १८८९ कल गतौ संख्याने च । १८९० चह परिकल्कने । १८९१ मह पूजायाम् । १८९२ सार १८९३ कृप १८९४ श्रथ दौर्बल्ये । १८९५ स्पृह ईप्सायाम् । १८९६ भाम क्रोधे । १८९७ सूच पैशुन्ये । १८९८ खेट भक्षणे ॥ तृतीयान्त इत्येके । खोट इत्यन्ये ॥ १८९९ क्षोट क्षेपे । १९०० गोम उपलेपने । १९०१ कुमार क्रीडायाम् । १९०२ शील उपधारणे । १९०३ साम सान्त्वप्रयोगे । १९०४ वेल कालोपदेशे ॥ काल इति पृथग्धातुरित्येके ॥ १९०५ पल्यूल लवनपवनयोः । १९०६ वात सुखसेवनयोः ॥ गतिसुखसेवनयोरित्येके ॥ १९०७ गवेष मार्गणे । १९०८ वास उपसेवायाम् । १९०९ निवास आच्छादने । १९१० भाज पृथक्कर्मणि । १९११ सभाज प्रीतिदर्शनयोः ॥ प्रीतिसेवनयोरित्येके ॥ १९१२ ऊन परिहाणे । १९१३ ध्वन शब्दे । १९१४ कूट परितापे ॥ परिदाहे इत्यन्ये ॥ १९१५ सङ्केत १९१६ ग्राम १९१७ कुण १९१८ गुण चामन्त्रणे । १९१९ केत श्रावणे निमन्त्रणे च । १९२० कुण संकोचनेऽपि । १९२१ स्तेन चौर्ये ॥ **आ गर्वादात्मनेपदिनः** ॥ १९२२ पद गतौ । १९२३ गृह ग्रहणे । १९२४ मृग अन्वेषणे । १९२५ कुह विस्मापने । १९२६ शूर १९२७ वीर विक्रान्तौ । १९२८ स्थूल परिबृंहणे । १९२९ अर्थ उपयाच्ञायाम् । १९३० सत्र संतानक्रियायाम् । १९३१ गर्व माने ॥ **इत्यागर्वीयाः** ॥ १९३२ सूत्र वेष्टने । १९३३ मूत्र प्रस्रवणे । १९३४ रूक्ष पारुष्ये । १९३५ पार १९३६ तीर कर्मसमाप्तौ । १९३७ पुट संसर्गे । १९३८ धेक दर्शने इत्येके । १९३९ कत्र शैथिल्ये ॥ कर्त इत्येके ॥ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । तत्करोति तदाचष्टे । तेनातिक्रामति । धातुरूपं च । आख्या-

ना कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् । कर्तृकरणाद्धात्वर्थे । १९४० वष्क दर्शने । १९४१ चित्र चित्रीकरणे ॥ कदाचिद्दर्शने ॥ १९४२ अंस समाघाते । १९४३ वट विभाजने । १९४४ लज प्रकाशने ॥ वटि लजि इत्येके ॥ १९४५ मिश्र संपर्के । १९४६ सङ्ग्राम युद्धे ॥ अनुदात्तेत् ॥ १९४७ स्तोम श्लाघायाम् । १९४८ छिद्र कर्णभेदने । करणभेदने इत्येके । कर्ण इति धात्वन्तरमित्यपरे ॥ १९४९ अन्ध दृष्ट्युपघाते ॥ उपसंहारे इत्यन्ये ॥ १९५० दण्ड दण्डनिपातने । १९५१ अङ्क पदे लक्षणे च । १९५२ अङ्ग च । १९५३ सुख १९५४ दुःख तत्क्रियायाम् । १९५५ रस आस्वादनस्नेहनयोः । १९५६ व्यय वित्तसमुत्सर्गे । १९५७ रूप रूपक्रियायाम् । १९५८ छेद द्वैधीकरणे । १९५९ छद अपवारणे । १९६० लाभ प्रेरणे । १९६१ व्रण गात्रविचूर्णने । १९६२ वर्ण वर्णक्रियाविस्तारगुणवचनेषु ॥ बहुलमेतन्निदर्शनम् ॥ १९६३ पर्ण हरितभावे । १९६४ विष्क दर्शने । १९६५ क्षेप प्रेरणे । १९६६ वस निवासे । १९६७ तुत्थ आवरणे ॥ णिङ्ङ्गान्निरसने । श्वेताश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । पुच्छादिषु प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धम् ॥

इति स्वार्थणिजन्ताश्चुरादयः ॥ १० ॥

इति श्रीपाणिनिमुनिप्रणीतो धातुपाठः समाप्तः ॥



॥ श्रीः ॥

# धातुपाठकारिका ।

## सूर्यपुरस्थरैक्कजातीयज्योतिर्वित्केशवात्मजकृष्णशङ्करेण ग्रथिता ।

### भ्वादिगणः ।

श्रीकेशवं गणाधीशं नत्वा भानप्रदं गुरुम् । क्रियते बालबोधाय धातुपाठस्य कारिका ॥ १ ॥ भू[1]-सत्तायां भवेद्धातुः परस्मैपदसंज्ञकः । एध-वृद्धौ समाख्यातः, स्पर्ध-संघर्षणे तथा ॥ २ ॥ गाधृ-प्रतिष्ठालिप्सयोर्ग्रन्थे च, बाधृ-लोडने । नाथृ-नाधृ-याच्ञोपतापैश्वर्याशीःषु संमतौ ॥ ३ ॥ दध-धातुर्धारणे स्यात्, स्कुदि-आप्रवणे तथा । श्विदि-श्वैत्ये, वदि-अभिवादने च स्तुतौ मतः ॥ ४ ॥ मदि-स्तुतिमोदमदस्वप्नकान्तिगतेषु च । भदि-कल्याणे च सुखे, क्लिदि-च परिदेवने ॥ ५ ॥ स्पदि-किञ्चिच्चलने च, मुद-हर्षे तथैव च । दद-दाने, ष्वद-स्वर्द-चास्वादने प्रकथ्यते ॥ ६ ॥ उर्द-माने क्रीडने च, षूद-संरक्षणेऽपि च । कुर्द-खुर्द-गुर्द-गुद-क्रीडायां परिकीर्तिताः ॥ ७ ॥ ह्लाद-अव्यक्तशब्दे च, ह्लादी-च सुखवाचकः । स्वाद-आस्वादने प्रोक्तः, पर्द-कुत्सितशब्दके ॥ ८ ॥ यती-यत्ने, युतृ-जुतृ-भासने संमताविमौ । विथृ-वेथृ-याचने च, श्रथि-शैथिल्यवाचकः ॥ ९ ॥ ग्रथि-कौटिल्यवाच्युक्तः, कत्थ-श्लाघार्थवाचकः । एधादयोऽनुदात्तेत आत्मनेपदसंज्ञकाः ॥ १० ॥ अत-सातत्यगमने, चिती-संज्ञानसूचकः । च्युतिर्-आसेचने प्रोक्तश्च्युतिर्-क्षरणवाचकः ॥११॥ मन्थ-विलोडने प्रोक्तः, षिध-गत्यर्थवाचकः । कुथि-पुथि-लुथि-मथि-हिंसासंक्लेशनार्थकाः ॥ १२ ॥ षिधू-शास्त्रे च माङ्गल्ये, खाद-भक्षणवाचकः । खद-स्थैर्ये च हिंसायां, वद-स्थैर्ये तथैव च ॥ १३ ॥ गद-व्यक्तायां वाचि स्याद्, णद-अव्यक्तशब्दके । रद-विलेखने, नर्द-गर्द-शब्दे तथैव च ॥ ॥१४॥ अर्द-गतौ याचने च, तर्द-हिंसार्थवाचकः । दन्दशूककर्तृकायां क्रियायां खर्द-उच्यते ॥ १५ ॥ कर्द-कुत्सितशब्दे च, अत्यदी-बन्धने मतौ । इदि-च परमैश्वर्ये, बिदि-अवयवे तथा ॥ १६ ॥ भिदि-अवयवे प्रोक्त इति वा कस्यचिन्मते । गडि-वदनैकदेशे, णिदि-कुत्सार्थवाचकः ॥ १७ ॥ समृद्धौ टुनदि-प्रोक्तः, चदि-आह्लादने तथा । त्रदि-चेष्टार्थकः प्रोक्तः, क्लिदि-स्यात्परिदेवने ॥ १८ ॥ शुन्ध-शुद्धौ च संप्रोक्त आह्वाने रोदने तथा । कदि-क्रदि-क्लदि-तथा इत्येते धातवो मताः ॥ १९ ॥ अतादय उदात्तेतः परस्मैपदसंज्ञकाः । सेचने शीकृ-संप्रोक्तो, लोचृ-दर्शनवाचकः ॥ २० ॥ संघाते श्लोकृ-संप्रोक्तः, शङ्कायां रेकृ-संमतः । द्रेकृ-ध्रेकृ-शब्दोत्साहयोरिमौ कथितौ बुधैः ॥ २१ ॥ सेकृ-स्रेकृ-स्रकि-श्रकि-श्लकि-गत्यर्थवाचकाः । शङ्कायां शकि-संप्रोक्तः, अकि-लक्षणवाचकः ॥ २२ ॥ कौटिल्ये वकि-विज्ञेयो, मकि-मण्डनवाचकः । कक-लौल्ये, कुक-वृक-आदाने संप्रकीर्तितौ ॥ २३ ॥ चक-तृप्तौ प्रतीघाते बोद्धव्यः शास्त्रपारगैः । ककि-वकि-श्वकि-त्रकि-ज्ञातव्या गतिवाचकाः ॥ २४ ॥ ढौकृ-त्रौकृ-ष्वष्क-वस्क-इमेऽपि गमनार्थकाः । मस्क-टिकृ-टीकृ-तिकृ-तीकृ-रघि-लघि-तथा ॥ २५ ॥ गत्यर्थकाश्च संप्रोक्ता धातवः शास्त्रतत्परैः । तृतीयस्तत्र दन्त्यादिः "स्वकि" संप्रोक्तः कस्यचिन्मते ॥ ॥ २६ ॥ लघि-भुक्तेर्निवृत्तौ स्यादिति कैश्चन पठ्यते । गत्याक्षेपे अघि-वघि-मघि-च परिकीर्तिताः ॥ २७ ॥ मघि-धातुः कैतवे च संप्रोक्तः कस्यचिन्मते । राघृ-लाघृ-द्राघृ-तथा सामर्थ्ये पठिताः सदा ॥ २८ ॥ ध्राघृ-धातुश्च सामर्थ्ये वदन्तीत्यपरे बुधाः । द्राघृ-धातुर्हि चायामे, श्लाघृ-कत्थनवाचकः ॥ २९ ॥ शीकादयोऽनुदात्तेत आत्मनेपदगामिनः । फक्क-नीचैर्गतौ चैव, तकि-स्यात्कृच्छ्रजीवने ॥ ३० ॥ हसने स्यात् तक-कख, भषणे बुक्क-गद्यते । ओखृ-राखृ-लाखृ-ध्राखृ-द्राखृ-शोषणवाचकाः ॥ ३१ ॥ अलमर्थे तथैवैते ज्ञेयाः काव्यविशारदैः । शाखृ-श्लाखृ-हि व्याप्तौ च मन्तव्यौ तत्त्वदर्शिभिः ॥ ३२॥ उख-उखि-वख-वखि-मख-मखि-णख णखि, रख-रखि-लख-लखि-इखि-वल्ग-इख-इखि, ॥ ३३ ॥ रगि-लगि-अगि-वगि-तगि-त्वगि-मगि-श्रगि-इगि-श्लगि-रिगि-लिगि-गत्यर्था एव धातवः ॥३४॥ रिख-त्रख-त्रिखि-शिखि-गत्यर्थाः कस्यचिन्मते । कम्पने त्वगि-तत्र स्यादिति केचित्प्रचक्षते ॥ ३५ ॥ युगि-जुगि-वुगि-तथा वर्जने, हसने घघ-। मण्डने मघि-संप्रोक्तः, शिघि-आघ्राणवाचकः ॥ ३६ ॥ फक्कादय उदात्तेतः परस्मैपदसंज्ञकाः । वर्च-दीप्तौ, षच-धातुः सेचने सेवने तथा ॥३७॥शच-व्यक्तायां वाचि स्यात्, लोचृ-दर्शनवाचकः । श्वच-श्वचि-गतौ स्यातां, कच-बन्धनवाचकः ॥ ३८ ॥ दीप्तिबन्धनयोः कचि, काचि-धातुस्तथैव च । मच-मुचि-कल्कने च, कथनेऽन्ये विदुर्बुधाः ॥ ३९ ॥ धारणोच्छ्रायपूजासु मचि-धातुर्भवेद्ध्रुवम् । पचि-व्यक्तीकृतौ स्यात्तु, प्रसादे ष्टुच-कीर्तितः ॥ ४० ॥ ऋज-गतिस्थानार्जनोपार्जनेषु प्रकीर्तितः । एजृ-भ्रेजृ-भ्राजृ-दीप्तौ, ऋजि-

---

[1] सत्ता-इहात्मधारणानुकूलव्यापारः ।

भृजी-च भर्जने ॥ ४१ ॥ ईज-गतौ कुत्सने च पठन्त्यभ्यासतत्पराः । वर्चादयोऽनुदात्तेत आत्मनेपदगामिनः ॥ ॥ ४२ ॥ शुच-शोके, कुचः-शब्दे तारे चैव प्रकीर्तितः । कौटिल्याल्पीभावयोश्च कुञ्च-क्रुञ्च-प्रकीर्तितौ ॥ ४३॥ गति-पूजनयोश्चाऽञ्चु-, लुञ्च-चापनये मतः । वञ्चु-चञ्चु-त्वञ्चु-लञ्चु-म्रुञ्चु-म्रुचु-तथा म्लुचु ॥ ४४ ॥ गत्यर्थका इमे प्रोक्ताः शब्दशास्त्रविचक्षणैः । कुजु-खुजु-ग्लुचु-ग्रुचु-विज्ञेयाः स्तेयकर्मणि ॥ ४५ ॥ ग्लुञ्चु-षस्ज-गतौ ज्ञेयो, गुजि-चाव्यक्तशब्दके ॥ ४६ ॥ लछ-लाछि-लक्षणे च, इच्छायां वाछि-कीर्तितः । आयामे-आछि-विज्ञेयो, लज्जायां हीछ-संमतः ॥४७॥ मुर्छा-मोहे समुच्छ्राये, हुर्छा-कौटिल्यवाचकः । मुछ-प्रमादे, उञ्छ-उञ्छे, स्फुर्छा-विस्तृतिवाचकः ॥ ४८ ॥ उछी-विवासे संप्रोक्तः, कूज-अव्यक्तशब्दके । ध्रज-ध्रजि-धृज-धृजि-ध्वज-ध्वजि-गतौ मताः ॥ ४९ ॥ अर्ज-षर्ज-चार्जने च, गर्ज-शब्दे प्रकीर्तितः । भर्त्सने तर्ज-संप्रोक्तः, कर्ज-व्यथनवाचकः ॥ ५० ॥ अज-गतिक्षेपणयोः, पूजने खर्ज-चेरितः । पालने तेज-संप्रोक्तो, मन्थे खज-समीरितः ॥ ५१ ॥ खजि-स्याद् गतिवैकल्ये, कम्पने एजृ-भाषितः । टुओस्फूर्जा-वज्रघोषे, क्षि-क्षये च समीरितः ॥ ५२ ॥ क्षिज-अव्यक्तशब्दे च, लज-लजि-च भर्जने । लाज-लाजि-भर्त्सने च, युद्धे जज-जजी-मतौ ॥ ५३ ॥ हिंसायां तुज-संप्रोक्तः, पालने तुजि-भाषितः । शब्दार्थका गज-गजि-मुज-मुजि-गृज-गृजि ॥ ५४ ॥ मदने च गज-प्रोक्तो, वज-व्रज-गतौ मतौ । शुचादयश्च क्षि-वर्ज्य परस्मैपदगामिनः ॥ ५५॥ अट्ट-धातुः समाख्यातो ह्यतिक्रमणहिंसयोः । वेष्टने वेष्ट-संप्रोक्तश्चेष्टायां चेष्ट-उच्यते॥ ॥ ५६ ॥ गोष्ट-लोष्ट-च संघाते, चलने घट्ट-कथ्यते । स्फुट-विकसने प्रोक्तो, गमने अठि-चेरितः ॥ ५७ ॥ वठि-स्यादेकचर्यायां, शोके मठि-कठी-मतौ । एठ-हेठ-विबाधायां, पालने मुठि-संमतः ॥ ५८ ॥ संघाते हुडि-संप्रोक्तो, गत्यनादरयोर्हिडि-। विभाजने कडि-मडि, दाहे कुडि-निगद्यते ॥ ५९ ॥ संघाते पिडि-संप्रोक्तो, भडि-स्यात्परिभाषणे। मुडि-धातुर्मार्जने च, तोडने तुडि-संमतः ॥ ६० ॥ वरणे हुडि-संप्रोक्तो, हरणे कस्यचिन्मते । रुजायां शडि-संघाते, चडि-कोपे निगद्यते ॥ ६१ ॥ पडि-गतौ, कडि-मदे, लाडने लडि-कीर्त्यते । खडि-मन्थे निगदितो, हेडृ-होडृ-अनादरे ॥ ६२ ॥ द्राडृ-ध्राडृ-विशरणे, आप्लाव्ये बाडृ-कथ्यते । श्लाघायां शाडृ-कथितो, धातुपाठविशारदैः ॥ ६३ ॥ अट्टादयोऽनुदात्तेत आत्मनेपदगामिनः । शौटृ-गर्वे, यौटृ-बन्धे, उन्मादे म्लेट्ट-म्रेडृ-च ॥ ६४ ॥ कटे-वर्षावरणयोः, चटे-धातुरपि स्मृतः । अट-पट-गतौ ज्ञेयौ, रट-स्यात्परिभाषणे ॥ ६५ ॥ शट-रुजाविशरणगत्यवसादनेषु च । लट-बाल्ये, किट-खिट-त्रासे च, वट-वेष्टने ॥ ६६ ॥ जट-झट-च संघाते, भृतौ भट-समीरितः । अनादरे शिट-षिट, उच्छ्राये तट-चोच्यते ॥ ६७ ॥ काङ्क्षायां खट-संप्रोक्तो, नृत्तौ नट-समीरितः । पिट-शब्दे च संघाते, हट-दीप्तौ निगद्यते ॥ ६८ ॥ विलोडने लुट-ज्ञेयोऽवयवे षट-कथ्यते । विलोडने लुड-ज्ञेय इत्युक्तः कस्यचिन्मते ॥ ६९ ॥ परप्रेष्ये चिट-प्रोक्तो, विट-शब्दे प्रकीर्तितः । बिट-हिट-तथाऽऽक्रोशे, इट-किट-कटी-गतौ ॥ ७० ॥ भूषायां मडि-सम्प्रोक्तः, कुडि-वैकल्यवाचकः । मुट-स्यान्मर्दने, चाल्पीभावे चुडि-निगद्यते ॥ ७१ ॥ खण्डने मुडि-विज्ञेयः, पुडि-च कस्यचिन्मते । स्तेये रुटि-लुटि-ज्ञेयौ, रुठि-लुठि-तथाऽपरे ॥ ७२ ॥ रुडि-लुडि-च सम्प्रोक्तौ स्तेये वा कस्यचिन्मते । स्फुटि-स्फुटिर्-विशरणे, वठ-स्थौल्ये प्रकीर्तितः ॥ ७३ ॥ पठ-व्यक्तायां वाचि स्यात्, मठ-मदनिवासयोः । कठ-कृच्छ्रजीवने च, रट-स्यात्परिभाषणे ॥ ७४ ॥ रठ-धातुश्च विज्ञेयो, हठ-प्लुतिशठत्वयोः । बलात्कारे च विज्ञेयो हठ-धातुश्च पण्डितैः ॥ ७५ ॥ अपघाते रुठ-लुठ-उठ-ऊठ-प्रकीर्तिताः । पिठ-हिंसासंक्लेशनयोः, कैतवे शठ-गद्यते, ॥ ७६ ॥ प्रतिघाते शुठ-शुठि-कुठि-च परिकीर्तिताः । आलस्ये प्रतिघाते च लुठि-स्याच्छोषणे शुठि-॥ ॥ ७७ ॥ गतौ रुठि-लुठि-ज्ञेयौ, कड्ड-कार्कश्यवाचकः । चुड्ड-हि भावकरणेऽभियोगे अड्ड-कथ्यते ॥ ७८ ॥ कड्डादयश्चयो ज्ञेया दोपधा धातवश्च वै । लुडृ-क्रूडृ-तोडने च, विहारे क्रीडृ-कथ्यते ॥ ७९ ॥ हुडृ-होडृ-हूडृ-गतौ, रौडृ-च स्यादनादरे। उन्मादे रोडृ-लोडृ-स्यादुद्यमे अड-चेरितः ॥ ८० ॥ लड-लल-विलासे च, मदे कड-कडी-मतौ । गडि-धातुर्मुखस्यैकदेशे ज्ञेयो विचक्षणैः ॥ ८१ ॥ शौट्रादय उदात्तेतः परस्मैपदवाचकाः । तिपृ-ष्टिपृ-ष्टेपृ-तेपृ-क्षरणार्था अमी मताः ॥ ८२ ॥ कम्पने तेपृ-सम्प्रोक्तो, दैन्ये ग्लेपृ-प्रकीर्तितः । केपृ-गेपृ-ग्लेपृ-तथा, टुवेपृ-कम्पने मतः ॥ ८३ ॥ मेपृ-रेपृ-लेपृ-गतौ, लज्जायां च त्रपूष्-मतः । शब्दे रबि-लबि-अबि-,चलने कपि-सम्मतः ॥ ८४॥ कबृ-वर्णे, लबि-अवस्रंसने, परिकीर्तिताः । अधाष्टर्ये क्लीबृ-संख्यातो, मदे क्षीबृ-प्रकथ्यते ॥ ८५ ॥ चीभृ-शीभृ-कत्थने च, रेभृ-शब्दे, समीरितः । शब्दे अभि-रभि-स्यातां प्रतिबन्धे ष्टभि-स्कभि- ॥ ८६ ॥ जभि-जृभि-गात्रविनामे, शल्भ-कत्थने मतः । भोजने वल्भ-सम्प्रोक्तो, धाष्टर्ये गल्भ-समीरितः ॥८७॥ श्रम्भु-स्रम्भु-प्रमादे च, ष्टुभु-स्तम्भे निगद्यते । तिप्यादयोऽनुदात्तेत आत्मनेपदगामिनः ॥ ८८ ॥ गुपू-स्याद्रक्षणे, धूप-संतापे, जप-जल्प-च । व्यक्तायां वाचि विज्ञेयौ, मानसे च जय-स्मृतः ॥ ८९ ॥ सान्त्वने चय-संप्रोक्तः, समवाये षय-स्मृतः । व्यक्तवाचि रय-लय-,मन्दायां च गतौ चुप- ॥९०॥ तुप-तुम्प-त्रुप-त्रुम्प-त्रुम्फ-तुम्फ-तुफ-त्रुफाः-। हिंसार्थाश्चैव विज्ञेयाः, कुबि-चाच्छादने मतः ॥ ९१ ॥ चर्ब-षर्ब-शर्ब-गर्ब-कर्ब-खर्ब-राफि-रफ-। मर्ब-बर्ब-लर्ब-पर्ब-अर्ब-पर्प-गतौ मताः ॥ ९२ ॥ लुबि-स्याद्रक्षसंयोगे, अर्दने च तुबि-तुंबिः-।-षिभु-षिम्भु-भ्रभु-भ्रम्भु हिंसायां च प्रकीर्तिताः॥९३॥

शुभ-शुम्भ-भाषणे च भासने हिंसने तथा। गुपादय उदात्तेतः परस्मैपदगामिनः ॥ ९४ ॥ घिणि-घुणि-घृणि-ज्ञेया ग्रहणे, घुण-घूर्ण-च। भ्रमणे, व्यवहारे च स्तुतौ पण-पन-स्मृतौ ॥ ९५ ॥ भाम-क्रोधे, कमुः-कान्तौ, क्षमूष्-स्यात्सहने तथा। घिण्यादयोऽनुदात्तेत आत्मनेपदिनस्त्वमी ॥ ९६ ॥ अण-रण-व्रण-भण-मण-क्वण-कण-व्रण-। भ्रण-ध्वण-धण-इमे शब्दार्थाः कथिता बुधैः ॥ ९७ ॥ अथोऽपनयने ओणृ-, संघाते श्रोणृ-श्लोणृ-च। वर्ण-गत्योः शोणृ-,रण-ध्रण-शब्दे प्रकीर्तितौ ॥ ९८ ॥ पैणृ-गत्यां प्रेरणायां श्लेषणेऽपि समीरितः। कनी-धातुर्गतौ दीप्त्यां कान्त्यामपि समीरितः॥ ९९ ॥ द्रम-हम्म-मीमृ-गतौ, अम-गत्यादिषु स्मृतः। षणो-वन-श्च संभक्तौ, शब्दे ष्टन-वन-स्मृतौ ॥१००॥ अणादय उदात्तेतः परस्मैपदवाचिनः। अय-वय-पय-मय-चय-तय-णय-गतौ ॥१०१॥ आदाने दय-हिंसायां रक्षणे गतिदानयोः। ऊयी-स्यात्तन्तुसन्ताने, गतौ रय-समीरितः ॥ १०२ ॥ दुर्गन्धे च विश-रणे पूयी-धातुर्निगद्यते। क्नूयी-शब्दे तथोन्दे च, क्ष्मायी-धातुर्विधूनने ॥ १०३ ॥ ओप्यायी-च तथा स्फायी-वृद्धौ संकथितौ सदा। तायृ-धातुश्च संताने पालने च तथा स्मृतः ॥ १०४ ॥ चलने शल-धातुः स्यात्तथा संवरणेऽपि च। वल-वल्ल-संवरणे तथा संचरणे स्मृतौ ॥ १०५ ॥ मल-मल्ल-च विज्ञेयौ धातू धारणवाचकौ,। हिंसापरिभाषणयो-र्दाने भल्ल-भल-स्मृतौ ॥ १०६ ॥ शब्दसंख्यानयोश्चैव कल-धातुः समीरितः। शब्देऽव्यक्ते कल्ल-धातुरशब्दे कस्य-चिन्मते ॥ १०७ ॥ तेवृ-देवृ-देवने द्वौ, रेवृ-प्लवगतौ मतः। षेवृ-गेवृ-ग्लेवृ-पेवृ-मेवृ-म्लेवृ-च सेवने ॥ १०८ ॥ शेवृ-खेवृ-क्लेवृ-तथा सेवने कस्यचिन्मते। अयादयोऽनुदात्तेत आत्मनेपदगामिनः ॥ १०९ ॥ उदात्ताः स्युस्तथा मव्य-बन्धने कथ्यते सदा। सूर्क्ष्य-ईर्क्ष्य-ईर्ष्य-तथा ईर्ष्यार्था धातवः सदा ॥ ११० ॥ हय-गतौ, शुच्य-चुच्य-स्यातामभिषवे तथा। अल-भूषणपर्याप्तिवारणेषु समीरितः ॥ १११ ॥ स्वरितेदयमित्येके, गतिकान्त्योर्हय-स्मृतः। ञिफला-स्याद्विशरणे, नील-वर्णे निगद्यते ॥ ११२ ॥ स्मील-क्ष्मील-श्मील-मील-धातवः स्युर्निमेषणे। पील-धातुः प्रतिष्टम्भे, समाधौ शील-सम्मतः ॥ ११३ ॥ बन्धने कील-धातुः स्यात्कूल-आवरणे मतः। रुजायां शूल-संघोषे, निष्कर्षे तूल-कथ्यते ॥ ११४ ॥ मूल-धातुः प्रतिष्ठायां, संघाते पूल-कीर्त्यते। तिल-तिल्ल-गतौ धातू, फल-निष्पत्तिवाचकः ॥११५॥ चुल्ल-भावकरणे च, फुल्ल-विकसने मतः। शैथिल्ये च तथा भावकरणे चिल्ल-कथ्यते ॥ ११६ ॥ पेलृ-फेलृ-शेलृ-गतौ, कस्याचित्षेलृ-चेष्यते। वेलृ-चेलृ-केलृ-क्ष्वेलृ खेलृ-वेल्ल-च धातवः ॥ ११७ ॥ चलने कथिता एते, स्खल-संचलने मतः। खल-स्यात्संचये धातुरदने गल-कथ्यते ॥ ११८ ॥ श्वल-श्वल्ल-शीघ्रगत्यां, हलो-विशरणे मतः। तथा गतिप्रतीघाते खोलृ-खोर्ऋ-समीरितौ ॥११९॥ धोर्ऋ-स्याद् गतिचातुर्ये, गत्यां षल-निगद्यते। त्सर-छद्मगतौ धातुर्हूर्छने क्मर-कथ्यते ॥ १२० ॥ अभ्र-वभ्र-मभ्र-चर-गत्यर्था धातवः स्मृताः। चरतिर्भक्षणे धातुर्विज्ञेयः कस्य चिन्मते ॥ १२१ ॥ ष्ठिवु-धातुर्निरसने, जि-जये विबुधैर्मतः। पीव-मीव-तीव-णीव-स्थौल्येऽमी धातवः स्मृताः ॥ १२२ ॥ क्षिवु-क्षेवु-निरसने, जीव-स्यात्प्राण धारणे। उर्वी-तुर्वी-थुर्वी-दुर्वी-धुर्वी-स्युर्हनने सदा ॥ १२३ ॥ मुर्वी-स्याद्बन्धने धातुर्गुर्वी-चोद्यमने मतः। पुर्व-पर्व-मर्व-तथा पूरणे, चर्व-चादने ॥ १२४ ॥ कर्व-खर्व-गर्व-दर्पे, इवि व्याप्तौ समीरितः। अर्व-सर्व-शर्व-षर्व-हिंसायां पठिता मुदा ॥ १२५ ॥ पिवि-मिवि-णिवि-तथा सेचने सेवने सदा। हिवि-दिवि-धिवि-जिवि-प्रीणनार्थाः सुभाषिताः ॥१२६॥ रिवि-रवि-धवि-सदा गमने परिकीर्तिताः। कृवि-हिंसाकरणयो, बन्धने मव-कथ्यते ॥ १२७॥ रक्षागतिप्रीतिषु दानभागवृद्धिप्रवेशावगमेषु कान्तौ। इच्छाक्रियालिङ्गनदीप्त्यवाप्तिस्वाम्यर्थहिंसाश्रवणेषु तृप्तौ॥ १२८ ॥ स्याद्याचने धातुरव-प्रदिष्टो मव्यादयो जिस्त्वनुदात्त एव। तथा परस्मैपदवाचकाः स्युरुदात्तसंज्ञाः कथिताश्च पद्ये ॥ १२९ ॥ गतिशुद्ध्योर्धावु—धातुरुभयपदसंज्ञकः। संदीपने क्लेशने च जीवने धुक्ष-धिक्ष-च ॥ १३० ॥ वृक्ष-स्याद्वरणे, शिक्ष-विद्योपादानवाचकः। भिक्षायां च तथाऽलाभे लाभे च भिक्ष भाषितः ॥ १३१ ॥ क्लेश-चाव्यक्त वाचि स्याद्बाधने कस्याचिन्मते। दक्ष-वृद्धौ च शीघ्रार्थे, दर्शने ईक्ष-कीर्त्यते ॥१३२॥ दीक्ष-धातुश्च विज्ञेयो मौण्ड्या-दावर्थपञ्चके[1]। गतिहिंसादर्शनेषु ईष-धातुर्निगद्यते ॥ १३३ ॥ व्यक्तायां वाचि भाष-स्यात्स्नेहने वर्ष-कथ्यते। अन्वि-च्छायां गेषृ,—धातुर्ग्लेषृ-च कस्याचिन्मते ॥ १३४ ॥ येषृ-जेषृ-एषृ-प्रेषृ-गमने पठिता बुधैः। रेषृ-हेषृ-ह्रेषृ-तथा-ऽव्यक्ते शब्दे समीरिताः ॥ १३५ ॥ कासृ-स्याच्छब्दकुत्सायां, प्रयत्ने पेसृ-कीर्त्यते। भासृ-दीप्तौ, णासृ-रासृ-शब्दे: भ्यस-भये मतः॥१३६॥आङः शसि-स्यादिच्छायां,णस-कौटिल्यवाचकः। ग्रसु-ग्लसु-ह्रावदने, चेष्टायामीह-सम्मत- ॥ १३७ ॥ द्वौ कुत्सायां गर्ह-गल्ह,-वृद्धौ वहि-महि-स्मृतौ। अहि-गतौ, बर्ह-बल्ह-प्राधान्ये भणितौ सदा ॥१३८॥ आच्छादने वर्ह-वल्ह-परिभाषणहिंसयोः। प्लिह-गतौ, वेहृ-जेहृ-बाहृ-यत्नार्थवाचकाः॥ १३९ ॥ जेहृ-धातुर्गतौ चैव कथितः कस्यचिन्मते। द्राहृ-निद्राक्षये धातुर्निक्षेपे कस्याचिन्मते। काशृ-दीप्तौ तथा प्रोक्तो, वितर्के ऊह-भाषितः ॥ १४० ॥ गाहू-विलोडने धातुर्ग्रहणे द्वौ गृहू-ग्लह-। घुषि-कान्तिक्रियायां स्यात्, घष-च कस्यचिन्मते ॥ १४१ ॥

---

1 मौण्ड्येज्योपनयननियमव्रतादेशेषु।

घुक्षादयोऽनुदात्तेत आत्मनेपदगामिनः। उदात्ताश्च तथा ज्ञेया, घुषिर्-स्यादविशब्दने॥१४२॥ अक्षू-व्याप्तौ, तक्षू-त्वक्षू-तनूकरणवाचकौ॥ उक्ष-स्यात्सेचने धातुः, पालने रक्ष-कथ्यते॥१४३॥ नृक्ष-स्तृक्ष-णक्ष-गतौ, चुम्बने णिक्ष-सम्मतः। वक्ष-रोषे च संघाते विज्ञेयः कस्यचिन्मते। संघाते द्वौ म्रक्ष-मृक्ष,-त्वचने तक्ष-कथ्यते॥ १४४॥ अथो काक्षि-वाक्षि-माक्षि-काङ्क्षायां सूर्क्ष-चादरे। द्राक्षि-ध्राक्षि-ध्वाक्षि-तथा सम्प्रोक्ता घोरवासिते॥ १४५॥ चूष-पाने, तूष-तुष्टौ, पूष-वृद्धौ निगद्यते। भूषायां द्वौ लूष-रुष-मूष-,स्तेये समीरितः॥ १४६॥ यूष-जूष-च हिंसायां, प्रसवे शूष-भाषितः। अलंकारे भूष-धातू, रुजाया मूष-सम्मतः॥ १४७॥ कष-खष-शिष जष-झष-शष-वष-मष-। रुष-रिष-च हिंसार्थां, ईष-उञ्छे निगद्यते॥ १४८॥ उष--दाहे, पुष--पुष्टौ, भष--भर्त्सनवाचकः। जिषु-विषु-मिषु-पृषु--वृषु-मृषु-च सेचने॥ १४९॥ श्रिषु-श्लिषु-प्रुषु-प्लुषु-दाहे च, सहने मृषु-। संघर्षे घृषु-धातुः स्यादलीके हृषु-गद्यते॥१५०॥ तुस-ह्रस-ह्लस-रस-शब्देऽमी कथिता बुधैः। श्लेषणे क्रीडने चैव लस-धातुः समीरितः॥ १५१॥ अदने घस्लृ-धातुश्च पिसृ-पेसृ-गतौ मतौ। जर्ज-चर्च-झर्झ-तथा परिभाषणहिंसयोः॥ १५२॥ तर्जने च समाख्याता, हसे-हसनवाचकः। मिश-मश-रोषकृते शब्दे, शव-गतौ मतः॥ १५३॥ शश-प्लुतगतौ धातुः, समाधौ णिश-कथ्यते। शंसु-स्तुतौ दुर्गतौ च, हिंसायां शसु-पठ्यते॥१५४॥ चह-परिकल्कने च, पूजने मह-चेरितः। रह-त्यागे, रहि-गतौ, पूजने अर्ह-संमतः॥ १५५॥ दह-दहि-बृह-बृहि-वृद्धौ ज्ञेया मनीषिभिः। बृहि-शब्दे, बृहिर्-चैव कथ्यते कस्यचिन्मते॥ १५६॥ तुहिर्-दुहिर्-उहिर्-ज्ञेयाः पीडायां शास्त्रपारगैः। परस्मैपदिनश्चैव घुषिराद्य ईरिताः॥ १५७॥ उदात्ततस्तथोदात्ता अनुदात्तो घसि-मतः। द्युत-दीप्तौ, श्विता-वर्णे, ञिमिदा-स्नेहने मतः॥ १५८॥ स्नेहमोचनयोश्चैव ञिष्विदा-कथ्यते सदा। ञिष्विदा ञिक्ष्विदा-चैव स्नेहमोहनयोस्तथा॥१५९॥ रुच-दीप्तावभिप्रीतौ घुट-च परिवर्तने। रुट-लुट-लुठ-प्रतिघाते, दीप्तौ शुभ-स्मृतः॥ १६०॥ णभ-तुभ-च हिंसायां, क्षुभ-संचलने स्मृतः। अथोऽवस्रंसने स्रंसु-ध्वंसु-भ्रंसु-मता बुधैः॥ १६१॥ ध्वंसु-भ्रंशु-गतौ, स्रंभु-विश्वासे, वृतु-वर्तने। शृधु-स्याच्छब्दकुत्सायां, वृधु-वृद्धौ निगद्यते॥ १६२॥ स्यन्दू-प्रस्रवणे धातुः, कृपू-सामर्थ्यवाचकः। द्युतादयोऽनुदात्तेत आत्मनेपदसंज्ञकाः॥ १६३॥ चेष्टायां घट-सम्प्रोक्तो, विस्तारे प्रस-कथ्यते। भयसंचलनार्थस्तु व्यथ-धातुर्निगद्यते॥ १६४॥ प्रख्याने प्रथ-धातुः स्यान्मर्दने म्रद-पठ्यते। स्खदने स्खद-धातुश्च, क्षजि-स्याद्गतिदानयोः॥ ॥ १६५॥ गतिहिंसनयोर्दक्ष-,सम्भ्रमे ञित्वरा-स्मृतः। क्रप-धातुश्च सम्प्रोक्तः कृपायां च गतौ बुधैः॥ १६६॥ कदि-क्रदि-क्लदि-तथा वैक्लव्ये परिकीर्तिताः। घटादयोऽनुदात्तेत आत्मनेपदगामिनः॥ १६७॥ ज्वर-रोगे, गड-प्रोक्तः सेचने, हेड-वेष्टने। वट-भट-च सम्प्रोक्तौ परिभाषणवाचकौ॥ १६८॥ णट-नृत्तौ गतौ, चैव प्रतिघाते ष्टक-स्मृतः। कखे-स्याद्धसने धातुस्तृप्तौ चक-निगद्यते॥ १६९॥ रगे-धातुश्च शङ्कायां, लगे-सङ्गे निगद्यते। स्युर्धातवः संवरणे हगे-ह्लगे-षगे-ष्टगे-॥ १७०॥ कुटिलायां गतौ धातू अक-अग-मनीषिभिः। कण-रण-गतौ धातू, कगे-धातुश्च नोच्यते॥ १७१॥ अथो चण-श्रण-शण-दाने, शण-गतावपि। श्रथ-श्लथ-क्रथ-क्लथ-वन-हिंसार्थ-वाचकाः॥ १७२॥ नोच्यते वनु-धातुश्च ज्वल-दीप्तौ समीरितः। स्मृ-आध्याने, दॄ-च भये, चलने द्वौ ह्वल-ह्मल-॥ ॥ १७३॥ नॄ-नये कथितो धातुः, श्रा-पाके, कम्पने चलिः,॥ मारणे तोषणे प्रोक्तो ज्ञा-धातुश्च निशामने॥ १७४॥

---

१ स्खदनं-विद्रावणम्॥ २ कदि-क्रदि-क्लदी-नामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थ आत्मनेपदार्थश्चेति विभावनीयं विद्वद्भिः। ३ कगे (अस्यायमर्थ इति विशिष्य नोच्यते, क्रियासामान्यार्थत्वात्) अनेकार्थत्वादित्यन्ये। ४ वनु-इत्यपूर्व एवायं धातुर्न तु तानादिकस्यानुवादः। उदित्करणसामर्थ्यात्। तेन क्रियासामान्ये वनतीत्यादि। ५ चिन्तायां पठिष्यमाणस्याध्याने मित्त्वार्थोऽयमनुवादः॥ आध्यानमुत्कण्ठापूर्वकं स्मरणमित्यर्थः। ६ दॄ-विदारणे इति क्र्यादेरयं मित्त्वार्थोऽनुवादः॥ धातोरनेकार्थत्वाद्भयानकत्वम्॥ दृणाति-दृणन्तं प्रेरयति दरयति॥ भयादन्यत्र दारयति॥ धात्वन्तरमेवेदमिति मते तु दरतीत्यादिः॥ केचित्-घटादौ "अत्स्मृदॄत्वर-" इति सूत्रे च दृ-इति दीर्घस्थाने ह्रस्वं पठन्ति॥ तन्न॥ सूत्रे दीर्घान्त एव पाठः सर्वसंमतस्तेन घटादावपि दीर्घान्त एव पाठः सर्वैः पठ्यते॥ यद्ययं ह्रस्वान्तो भवेत्तर्हि "शॄदॄप्रां ह्रस्वो वा" इति ह्रस्वविकल्पविधायकसूत्रे दॄग्रहणमनर्थकं स्यात्॥ धातुद्वयेन "दद्रतुः ददरतुः" इति रूपद्वयसिद्धेः॥ न च विदारणे रूपद्वयलाभार्थं दॄग्रहणमिति वाच्यम्॥ धातूनामनेकार्थत्वात्समीहितासिद्धेरिति माधवाशयः पदमञ्जर्यामित्यलं पल्लवितेन॥ ७ क्र्यादिषु पठिष्यमाणस्यानुवादोऽयम्॥ नयादन्यत्र तु नारयतीति रूपसिद्धेः॥ ८ श्रै-इति कृतात्वस्य श्रा-इत्यादादिकस्य च सामान्येनानुकरणम् (प.) लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य, (प.) लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम् इति परिभाषाभ्याम्॥ श्रपयति विक्लेदयतीत्यर्थः॥ पाकादन्यत्र श्रापयति स्वेदयतीत्यर्थः॥ ९ चल-कम्पने, ज्वलादिः॥ चलयति शाखाम्॥ कम्पनादन्यत्र तु शीलं चालयति अन्यथाकरोतीत्यर्थः॥ हरतीत्यर्थ इति क्षीरस्वामी॥ सूत्रं चालयति क्षिपतीत्यर्थः॥ १० निशामन-मित्यस्य शम-आलोचने इत्यस्मान्निष्पन्नत्वाच्चाक्षुषज्ञानमिति पदमञ्जरीकारः॥ ज्ञापनमात्रमित्यन्ये॥ निशानेष्विति पाठान्तरम्॥ तत्र निशानं तीक्ष्णीकरणम्॥ एष्वेवार्थेषु जानातिर्मित्॥ ज्ञप मिच्चेति चुरादौ॥ ज्ञापनं—

लडि-श्च जिह्वोन्मथने, छदिर्-धातुस्तथोर्जने। मदी-हर्षग्लेपनयोर्ध्वनं-शब्दे निगद्यते ॥१७५॥ दलि-वलि-स्खलि-रणि-ध्वनि-त्रपि-क्षपि-तथा। पपाठामून् भोजराजः, स्यादवस्रंसने स्वन-॥१७६॥ फण-धातुर्गतौ ज्ञेय उदात्ताश्च समीरिताः ॥ ज्वरादय उदात्तेतः परस्मैपदसंज्ञकाः ॥१७७॥ राजृ-दीप्तावुदात्तः स्वादुभयपदसंज्ञकः। दीप्तौ टुभ्राजृ-टुभ्राशृ-टुभ्लाशृ-कथिता बुधैः ॥१७८॥ उदात्ता अनुदात्तेत आत्मनेपदगामिनः ॥ स्यमु-स्वन-ध्वन-ज्ञेयाः शब्दे,

---

—मारणादिकं च तस्यार्थः ॥ कथं तर्हि 'विज्ञापना भर्तृषु सिद्धिमेति' इति प्रयोगः संगच्छते ॥'तज्ज्ञापयत्याचार्यः' इति च ॥ शृणु॥माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात्॥ज्ञापनमात्रे मित्त्वमिति मते तु ज्ञा-नियोगे इति चौरादिकस्य॥धातूनामनेकार्थत्वात्॥ निशानेष्विति पठतां हरदत्तादीनां मते तु न काऽप्यनुपपत्तिरित्यलं प्रपञ्चकथनेन ॥

---

१ लड-विलासे इति पठितस्य मित्त्वार्थोऽयमनुवादः ॥ उन्मथनं ज्ञापनम् ॥ जिह्वाशब्देन षष्ठीतत्पुरुषः ॥ लडयति जिह्वाम्-जिह्वां ज्ञापयतीत्यर्थः ॥ तृतीयातत्पुरुषो वा ॥ लडयति जिह्वयाऽजिह्वया पदार्थान्तरं ज्ञापयतीत्यर्थः। अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते इति जगदुः ॥ समाहारद्वन्द्वोऽयम् ॥ लडयति शत्रु-शत्रुमुद्दिश्य गालनादि करोतीत्यर्थः ॥ लडयति दधि, उन्मथने तु लडयति शत्रुमिति व्यत्यासेन योजयन्ति ॥ अन्यत्र लाडयति पुत्रं शर्करादिदानेनानुकूलयतीत्यर्थः ॥ २ छद-अपवारणे इति चौरादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः ॥ अनेकार्थत्वादर्जेरर्थे वृत्तिः ॥ छदन्तं प्रयुङ्क्ते छदयति बलवन्तं प्राणवन्तं करोति वेत्यर्थस्तु ऊर्ज-बलप्राणनयोः इति धातोर्ज्ञेयः ॥ अन्यत्र छादयति अपवारयन्तं प्रयुङ्क्ते इत्यर्थः ॥ स्वार्थे णिचि तु छादयति-बलीभवति-प्राणीभवति अपवारयति वेत्यर्थः ॥ ३ ग्लेपनं-दैन्यम् ॥ दैवादिकस्य मित्त्वार्थोऽयमनुवादः ॥ मदयति--ग्लेपयति, हर्षयति वेत्यर्थः ॥ अन्यत्र मादयति चित्तविकारमुत्पादयतीत्यर्थः ॥ ४ भाव्ययं मित्त्वार्थमनूद्यते ॥ ध्वनयति घण्टाम् ॥ अन्यत्र ध्वानयति। अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥ ५ दल-विशरणे, वल-संवरणे, स्खल-संचलने, त्रपूष्-लज्जायाम्, क्षै-क्षये, इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः॥ क्षपयति ॥ ६ शब्दे इति पठिष्यमाणस्यानुवादः ॥ स्वनयति॥अन्यत्र स्वानयति ॥ ७ अत्र गणसूत्राणि ॥ (जनी जॄष्क्नसुरञ्जोऽमन्ताश्च) मित इत्यनुवर्तते। जनी-प्रादुर्भावे ॥ जॄष्-वयोहानौ, क्नसु ह्वरणदीप्त्योः, त्रयोऽपि दिवादयः ॥ रञ्ज--रागे, दैवादिको भौवादिकश्च ॥ अमन्ताः कमिगमीत्यादयः ॥ जनयति--जरयति-क्नसयति-रजयति मृगान् ॥ रञ्जयति पक्षिणः॥ क्रमयति-गमयति-रमयति ॥ जॄषिति षित्त्वनिर्देशाज्जीयतेर्ग्रहणम् ॥ जृणातेस्तु-जारयति॥केचित्तु जनी-जॄ-ष्णसु-इति पठित्वा ष्णसु-निरसने इति दैवादिकमुदाहरन्ति ॥ (ज्वलह्वलह्मलनमामनुपसर्गाद्वा मित इत्यनुवृत्तस्येह भावप्रधानता ॥ अनुपसर्गादिति तु षष्ठ्यर्थेयं पञ्चमीत्येवं क्लेशेन व्याख्येयमिति भावः ॥ (नमोऽनुपसर्गाद्वा) इति च पाठान्तरम् ॥ तत्र न कश्चित् क्लेशः ॥ प्राप्तविभाषेयम्। ज्वल-दीप्तौ, ह्वल-ह्मल-चलने, त्रयाणां पूर्वपठितत्वान्नमेस्त्वमन्तत्वादिति भावः ॥ ज्वलयति--ज्वालयति॥उपसृष्टे तु नित्यं मित्त्वम् ॥ प्रज्वलयति॥कथं तर्हि-प्रज्वालयति उन्नामयति इति ॥ घञन्तात्तत्करोतीति णौ सिद्धिः॥ कथं तर्हि-संक्रामयति-इति अत्र(क्रमेः)'नोदात्तोपदेशस्य-'इति वृद्धिप्रतिषेधात् घञि क्रम इत्येव भवति न तु क्राम इति ॥ शृणु ॥ 'मितां ह्रस्वः' इति सूत्रे 'वा चित्तविरागे' इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणात् क्वचिण्णौ मितां ह्रस्वो न प्रवर्तते ॥ केचित्तु घञन्तात् क्रमशब्दात्प्रज्ञाद्यणि क्रामशब्दं स्वीकृत्य तस्मात् तत्करोतीति णौ संक्रामयति इति समादधते ॥एतेन 'रजो विश्रामयन् राज्ञां' 'धुर्यान्विश्रामयेति सः' इत्यादिव्याख्यानमपि रमणीयम् ॥ (ग्लास्नावनुवमां च) अनुपसर्गादेषां मित्त्वं वा स्यात् ॥ आद्ययोरप्राप्ते, इतरयोः प्राप्ते विभाषा ॥ वनेः पूर्वं पाठाद्वमेरमन्तत्वाच्चेति भावः ॥ ग्लापयति-ग्लपयति ॥ स्नापयति-स्नपयति ॥ वानयति-वनयति॥ वामयति वमयति ॥ (न कम्यमिचमाम्) अमन्तत्वात्प्राप्तं मित्त्वमेषामपि न स्यात् ॥ कामयते-आमयति-चामयति॥(शमोऽदर्शने) शाम्यतिर्दर्शने मिन्न स्यात् ॥ निशामयेति रूपम् ॥ अन्यत्र तु 'प्रणयिनो निशमय्य वधूः कथाः'॥ कथं तर्हि 'निशामय तदुत्पत्तिं विस्तराद्गदतो मम' इति ॥ 'शम-आलोचने' इति चौरादिकस्य ॥ धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः शाम्यतिवत् ॥यथा ॥ शाम्यतिर्निशामयतीत्यादौ दर्शने प्रयुज्यते तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीत्यर्थः ॥ विशेषश्चात्र सप्तशत्याः सर्वस्वव्याख्यायां द्रष्टव्यम् ॥(यमोऽपरिवेषणे) यच्छतिर्भोजनातोऽन्यत्र मिन्न स्यात् ॥ 'यम-उपरमे' इत्ययं धातुः॥ भोजनाशब्दो 'ण्यासश्रन्थो युच्' इति युजन्तो ज्ञेयः ॥ परिवेषणमिह भोजनानुकूलव्यापारस्ततोऽन्यस्मिन्नर्थे मिन्निषेधः ॥ आयामयति-द्राघयति-व्यापारयतीत्यर्थः ॥ परिवेषणे तु यमयति ब्राह्मणान् भोजयतीत्यर्थः ॥ तेन 'नियमयन्' इत्यादि पर्यवसितम् ॥ नियमवच्छब्दात्तत्करोतीति णौ बोध्यम् ॥ (स्खदिरवपरिभ्यां च) मिन्नेत्येव ॥ अवस्खादयति परिस्खादयति-'अपावपरिभ्यः' इति न्यासकारः ॥ स्वामी तु 'नकमि-' इति न त्रमुत्तरत्रिसूत्र्यामनुवर्त्य शमः-अदर्शने इति चिच्छेद ॥ यमस्त्वपरिवेषणे मित्त्वमाह ॥ तन्मतेऽपि पर्यवसितं नियमयन्नित्यादि सम्यगेव ॥ उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्येति नियमात्प्रस्खादयतीत्याह ॥ तस्मात्सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः ॥ यथा स्वामिमते त्वपरिवेषणे आयमयति ॥ परिवेषणे तु यामयति ब्राह्मणान् ॥ अवादिपूर्वस्य स्खदेरवस्खदयति-परिस्खदयति-प्रपूर्वस्य तु प्रस्खादयतीत्येवं व्यत्यासो बोध्यः ॥ इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम् ॥ 'न पादम्याङ्-' इति सूत्रे आयामयत इत्युदाहृत्य वृत्तावुक्तम् ॥ 'यमोऽपरिवेषणे' इत्यनेन मित्त्वं प्रतिषिध्यते इति॥न्यासेऽपि तत्र 'न कम्यमि' इत्यतो नेत्यनुवर्तत इत्युक्तम्। एवं हि निषेधानन्तरं पाठ उपपद्यते॥अन्यथा'न कमि'-इत्यतः प्रागेव त्रिसूत्रीं पठेदिति भावः॥

दीप्तौ ज्वल-स्मृतः॥१७९॥ षम-ष्टम-अवैकल्ये, कम्पने चल-सम्मतः ॥ घातने जल-धातुः स्याद्वैक्लव्ये द्वौ टल-टुल- ॥ १८० ॥ ष्ठल-विलेखने धातुः, स्थल-स्थाने निगद्यते । णल-गन्धबन्धनयोर्गमने पल-सम्मतः ॥ १८१ ॥ बल-धातुः प्राणने च तथा धान्यावरोधने ॥ शल-हुल-पत्ल-गतौ, महत्त्वे पुल-कथ्यते ॥ १८२॥ कुल-संस्त्याने बन्धुषु, निष्पाकेऽर्थे क्वथे-स्मृतः॥मथे-विलोडने धातुः, पथे-गत्यां निगद्यते॥१८३॥ टुवम-स्यादुद्गिरणे, भ्रमु-संचलने मतः॥ क्षर-संचलने धातुरुदात्ताः कथिता बुधैः ॥१८४॥ स्यमादय उदात्तेतः परस्मैपदगामिनः ॥ षह-स्यान्मर्षणे धातुरात्मनेपदसंज्ञकः॥१८५॥ अनुदात्तेदुदात्तश्च, क्रीडायां रम-कथ्यते । उदात्तेदात्मनेभाषोऽनुदात्तश्च स्मृतो बुधैः ॥१८६ ॥ षद्लृ-धातुर्विशरणे गतावप्यवसादने । शद्लृ-स्याच्छातने धातुश्चाह्वाने रोदने क्रुश-॥ १८७ ॥ षदादयोऽनुदात्ताश्चोदात्तेतः पठिता बुधैः । परस्मैपदिनश्चैव धातुपाठविचक्षणैः॥१८८॥कुच-संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु सदा । बुध-अवगमने, प्रादुर्भावे रुहँ-बीजजन्मनि च ॥१८९॥ गमने कस-धातुः स्यादुदात्ता धातवः स्मृताः । कुचादय उदात्तेतः परस्मैपदगामिनः ॥१९०॥ हिक्क-धातुः समाख्यातोऽव्यक्ते शब्दे मनीषिभिः। अञ्चु-गतौ याचने च, अचु-अचि-तथा स्मृतौ ॥ १९१ ॥ टुयाचृ-धातुर्याच्ञायां, रेटृ-च परिभाषणे । चते-चदे-याचने द्वौ, पर्याप्तौ प्रोथृ-पठ्यते ॥ १९२ ॥ मिदृ-मेदृ-समाख्यातौ मेधाहिंसनयोर्बुधैः । थान्ताविमाविति स्वामी धान्तौ च कस्यचिन्मते ॥ १९३ ॥ कुत्सायां सन्निकर्षे च णिदृ-णेदृ-समीरितौ ॥ मेधृ-स्यात्संगमे धातुः, शृधु-मृधु-तथोन्दने ॥ १९४ ॥ बुधिर्-धातुर्बोधने स्यादुबुन्दिर्-स्यान्निशामने । वेणृ-धातुश्च विज्ञेयो गत्यादावर्थपञ्चके ॥ १९५ ॥ नान्तोऽप्ययं समाख्यातः, खनु-स्यादवदारणे । आदानसंवरणयोश्चीवृ-धातुर्निगद्यते ॥ १९६ ॥ पूजानिशामनयोश्च चायृ-,व्यय-गतौ मतः । दाशृ-दाने, भेषृ-भये, गमने कस्यचिन्मते ॥ १९७ ॥ भ्रेषृ-भ्लेषृ-गतौ ज्ञेयौ, ल्रष-कान्तौ समीरितः । द्वौ गतिदीप्त्यादानेषु अस-अष-विभाषितौ ॥ १९८ ॥ बाधनस्पर्शनयोश्च स्पश-स्याल्लक्षणे चष-।आदानसंवरणयोर्झष-धातुः समीरितः ॥ १९९ ॥ हिंसायां छष-धातुः स्यात् , भ्रक्ष-भ्लक्ष-तथाऽदने । दासृ-दाने, माहृ-माने, गुहू-संवरणे मतः॥२००॥ हिक्कादय उदात्ताश्च स्वरितेतः प्रकीर्तिताः । उभयपदिनः प्रोक्ताः, श्रिञ्-सेवायां निगद्यते ॥ २०१ ॥ उदात्तः स्यादुभयतोभाषो भृञ्-भरणे स्मृतः । हृञ्-हरणे, धृञ्-धारणे, प्रापणे णीञ्-निगद्यते ॥ २०२॥ भृञादयोऽनुदात्तेत उभयपदगामिनः ॥ धेट्-पाने च समाख्यातो, ग्लै-म्लै-हर्षक्षये मतौ ॥ २०३ ॥ द्यै-धातुर्न्यक्करणे स्यात्स्वप्ने द्रै-कीर्त्यते सदा । ध्रै-तृप्तौ पठ्यते, ध्यै-च चिन्तायां , खदने च खै-॥ २०४ ॥ रै-शब्दे च, तथा स्त्यै-ष्ट्यै-शब्दसंघातयोर्मतौ । क्षै-जै-षै-च क्षये प्रोक्ताः, कै-गै-शब्दे समीरितौ ॥ २०५ ॥ शै-श्रै-पाके निगदितौ, पै-ओवै-शोषणे मतौ । ष्टै-ष्णै-च वेष्टने ज्ञेयौ, शोभायां कस्याचिन्मते ॥ २०६ ॥ दैप्-धातुः शोधने ज्ञेयः पा-पाने भणितो बुधैः । घ्रा-धातुश्च समाख्यातो गन्धोपादानवाचकः ॥ २०७ ॥ शब्दाग्निसंयोगयोश्च ध्मा-धातुः, सृ-गतौ मतः । गतेर्निवृत्तौ ष्ठा-धातुर्म्ना-अभ्यासे समीरितः ॥ २०८ ॥ दाण्-दाने, ह्वृ-च कौटिल्ये, स्मृ-चिन्तायां निगद्यते । स्वृ-शब्दोपतापयोश्च, वृ-च संवरणे स्मृतः ॥ २०९ ॥ ऋ-च गतिप्रापणयोः, सेचने गृ-घृ-संमतौ । प्रसवैश्वर्ययोः षु, ध्वृ-हूर्छने, स्रु-गतौ स्मृतः ॥ २१० ॥ श्रु-धातुः श्रवणे प्रोक्तः स्थैर्ये ध्रु-परिकीर्तितः । दु-द्रु-गतौ समाख्यातौ, जि-ज्रि-अभिभवे मतौ॥२११॥ धयत्यादयश्चानुदात्ताः परस्मैपदवाचिनः । ष्मिङ्-ईषद्धसने धातुः, शब्देऽव्यक्ते च गुङ्-मतः ॥ २१२ ॥ कुङ्-घुङ्-गुङ्-ङुङ्-तथा शब्दे, गाङ्-गतौ, परिकीर्त्यते । उङ्-कुङ्-खुङ्-गुङ्-घुङ्-ङुङ्-तथा शब्दार्थे कस्यचिन्मते ॥ २१३ ॥ च्युङ्-ज्युङ्-प्रुङ्-प्लुङ्-गतौ, क्लुङ्-च कथ्यते कस्यचिन्मते । गतिरेषणयो रुङ्-स्यात् , धृङ्-अवध्वंसने मतः ॥ २१४॥ प्रणिदाने च मेङ्,-धातू , रक्षणे देङ्-निगद्यते । श्यैङ्-गतौ, प्यैङ्-तथा वृद्धौ, पालने त्रैङ् निगद्यते ॥ २१५ ॥ ष्मिङादयोऽनुदात्ताः स्युरात्मनेपदगामिनः । पूङ्-पवने, मूङ्-बन्धने, डीङ्-च विहायसा गतौ ॥ २१६ ॥ पूङादय उदात्ताश्च ह्यात्मनेपदसंज्ञकाः । तॄ-प्लवनतरणयोरुदात्तः परिकीर्तितः ॥ २१७ ॥ परस्मैपदगामी च, गुप-धातुश्च गोपने । निशाने तिज-धातुः स्यात्पूजायां मान-कथ्यते ॥ २१८ ॥ बध-धातुर्बन्धने स्यादनुदात्तेत ईरिताः । गुपादय उदात्ताश्च ह्यात्मनेपदसूचकाः ॥ २१९ ॥ रभ-धातुश्च राभस्ये, प्राप्तौ च डुलभष्-स्मृतः । परिष्वङ्गे ष्वञ्ज,हद-पुरिषोत्सर्गवाचकः ॥ २२० ॥ रभादयोऽनुदात्तेत आत्मनेपदगामिनः । उदात्ताश्च तथाऽव्यक्ते शब्दे च ञिष्विदा-मतः ॥ २२१ ॥ परस्मैपदगामी चोदात्तेदुदात्त ईरितः ।

---

१ वैक्लव्यं भयादिजनितोद्विग्नता ॥ २ संस्त्यानं संघातः ॥ ३ बन्धुशब्देन तद्व्यापारो गृह्यते ॥ बन्धुतानुकूलो व्यापार इति भावः ॥ ४ रुहिस्त्वनुदात्त एव । ५ क्लेदनम्-आर्द्रीभाव इत्यर्थः ॥ ६ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ॥ वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम् ॥ ७ 'उत माता महिषमन्ववेनत्' इत्यत्र नान्तदर्शनात् ॥ ८ चत्वार इहार्थाः ॥ हरणं प्रापणं स्वीकारः स्तेयं नाशनं च ॥ यथा ॥ भारं हरति-प्रापयतीत्यर्थः ॥ अंशं हरति-स्वीकरोतीत्यर्थः ॥ स्वर्णं हरति-चोरयतीत्यर्थः ॥ पापं हरति-नाशयतीत्यर्थः ॥ ९ राभस्यमुपक्रमः ॥

स्कन्दिर्–गतिशोषणयोर्मैथुने यभ–कथ्यते ॥ २२२ ॥ णम–प्रह्वत्वे शब्दे च, गम्लृ–सृप्लृ–गतौ मतौ । यम–उपरमे धातुः, संतापे तप–कथ्यते ॥ २२३॥ त्यज हानौ, षञ्ज–सङ्गे–प्रेक्षणे च दृशिर्–मतः । कृष–विलेखने धातुर्दशने दंश–भाषितः ॥ २२४ ॥ दह–भस्मीकरणे स्यात्सेचने मिह–कथ्यते । स्कन्दादयोऽनुदात्ताश्च परस्मैपदगामिनः ॥ २२५ ॥ उदात्तेतस्तथोदात्तेन्निवासे कित–सम्मतः ॥ रोगापनयने चैव कित–धातुर्मतान्तरे । परस्मैपदगामी च, दान–धातुश्च खण्डने ॥ २२६ ॥ तेजने शान–धातुः स्यादुदात्तौ च समीरितौ । स्वरितेतावुभयतोभाषौ धातू मनीषिभिः ॥ २२७ ॥ डुपचष्–पाकवाची स्यात्समवाये षच–स्मृतः ॥ भज–धातुश्च सेवायां, रञ्ज–रागे निगद्यते ॥ २२८ ॥ आक्रोशे[1] शप–धातुः स्याद्दीप्तौ त्विष–समीरितः । यज–देवपूजनादौ[2], प्रापणे वह–पठ्यते ॥ २२९ ॥ डुवप्–स्याद्बीजसन्ताने[3] छेदनेऽपि च कीर्तितः । पचादयोऽनुदात्ताश्च स्वरितेतश्च सम्मताः ॥ २३० ॥ उभयपदिनः सर्वे पचिस्तूदात्त ईरितः । वस–निवासेऽनुदात्तः परस्मैपदसंज्ञकः ॥ २३१ ॥ उदात्तेत्, तन्तुसन्ताने वेञ्–व्येञ्–संवरणे मतः । ह्वेञ्–स्पार्धायां तथा शब्दे सम्प्रोक्तः सुमहोदयैः ॥ २३२ ॥ वेञादयोऽनुदात्ताः स्युरुभयपदगामिनः ॥ वद–व्यक्तायां वाचि स्याद्गतिवृध्द्यो–ष्टुओश्वि–च ॥ २३३ ॥ उदात्तौ कथितावेतौ परस्मैपदसंज्ञकौ ॥

इति शब्विकरणा भ्वादयः ॥ १ ॥

## अथादादिगणः।

अद–धातुर्भक्षणे स्याद्धिंसागत्योर्हन–स्मृतः । अनुदात्तावुदात्तेतौ परस्मैपदिनौ मतौ ॥ १ ॥ अप्रीतौ द्विष–धातुः स्याद्,दुह–धातुः प्रपूरणे । लिह–आस्वादने ज्ञेयो, दिह–उपचये स्मृतः ॥ २ ॥ द्विषादयोऽनुदात्ताः स्युः स्वरितेतश्च संमताः । उभयपादिनश्चैव व्यक्तवाण्यां च दर्शने ॥ ३ ॥ चाक्षिङ्–धातुः समाख्यातोऽनुदात्तेदात्मनेपदी । ईर–गतौ कम्पने च, स्तुतावीड–निगद्यते ॥ ४ ॥ ऐश्वर्य ईश–विज्ञेय, आस–स्यादुपवेशने । आङः शासु–चेच्छायां स्याद्,वस–आच्छादने मतः ॥ ५ ॥कासि–गतिशासनयोः,कस–कश–तथाऽपरे । चुम्बने णिसि–सम्प्रोक्तो णिजि–शुद्धौ प्रपठ्यते॥६॥ शिजि–अव्यक्तशब्दे स्यात्, तथा वर्णे पिजिः–पृजी–। संपर्चने चावयवेऽव्यक्तशब्दे परे जगुः ॥७॥वृजि–वृजी–वर्जने च, पृजी–सम्पर्चने मतः । ईरादयोऽनुदात्तेत आत्मनेपददर्शिनः॥ ८ ॥ उदात्ताश्चैव, षूङ्–धातुर्प्राणिगर्भ––विमोचने । शीङ्–स्वप्ने, आत्मनेभाषावुदात्तौ कथितौ बुधैः॥९॥यु–मिश्रणेऽमिश्रणे च, रु–शब्दे,णु–स्तुतौ मतः । क्ष्णु–तेजने, टुक्षु–शब्दे, ष्णु–प्रस्रवणवाचकः॥१०॥युप्रभृतय उदात्ताः परस्मैपदिनस्तथा । उदात्तेतश्च विज्ञेया, ऊर्णुञ्–आच्छादने मतः ॥११॥ उदात्तश्चोभयपदी,द्यु–चाभिगमने मतः॥ऐश्वर्ये प्रसवे षु–स्यात्, कु–शब्दे ष्टुञ्–स्तुतौ स्मृतः । युप्रभृतयोऽनुदात्ताः परस्मैपदगामिनः॥१२॥स्तौति स्तूभयतोभाषो,व्यक्तायां वाचि ब्रूञ्–मतः।उदात्तश्चोभयपदी, इण्–गतौ कथ्यते सदा ॥ १३॥ इङ्–धातुःस्यादध्ययने,स्मरणे इक्–निगद्यते। वी–व्याप्तौ प्रजने कान्त्यामसने खादने गतौ॥१४॥या–प्रापणे समाख्यातो, वा–गतौ गन्धनेऽपि च । भा–धातुः कथ्यते दीप्तौ, ष्णा–शौचे च समीरितः॥१५॥श्रा–पाके, भक्षणे प्सा–स्यात्, द्रा–कुत्सायां गतौ मतः। पा–रक्षणे, रा–दाने,ला–आदाने च प्रपठ्यते॥१६॥ दाप्–लवने,ख्या–कथने, पूरणे प्रा–निगद्यते । वच–परिभाषणे, च, मा–माने हि समीरितः ॥ १७ ॥ इण्प्रभृतयोऽनुदात्ताः परस्मैपदिनस्त्वमी । इङ् त्वात्मनेपदी ज्ञेयो, विद–ज्ञाने समीरितः ॥ १८ ॥ अस्–भुवि स्यान्मृजू–शुद्धौ, रुदिर्–अश्रुविमोचने । विदादय उदात्ताश्चोदात्तेतः कथिता बुधैः॥ १९ ॥ परस्मैपदिनश्चैव, ञिष्वप्–धातुः शये मतः । उदात्तः परस्मैभाषः–प्राणने श्वस–कथ्यते॥ २० ॥ अन–च प्राणने, जक्ष–भक्ष–हसनयोर्मतः । जागृ–निद्राक्षये प्रोक्तो, दरिद्रा–दुर्गतौ मतः ॥२१॥ चकासृ–दीप्तौ,शासु–स्यादनुशिष्टौ, श्वसादयः। उदात्ता उदात्तेतश्च परस्मैपदगामिनः ॥ २२ ॥ दीधीङ्–दीप्तिदेवनयोर्वेवीङ्–वासदृशार्थकः[4] । उदात्तावात्मनेभाषौ, स्वप्ने संस्ति[5]–षस–स्मृतौ ॥ २३ ॥ वश–कान्तौ समाख्यातः, षसादय इतीरिताः। उदात्ता उदात्तेतश्च परस्मैपदसंज्ञकाः ॥ २४ ॥ चर्करीतं[6] च ह्नुङ्–धातुस्तथाऽपनयने स्मृतः ॥

इति लुग्विकरणा अदादयः ॥ २ ॥

## अथ जुहोत्यादिगणः।

हु–दानादनयोश्चैव, आदान कस्यचिन्मते। ञिभी–भये, ह्री–लज्जायां चक्षते पूर्वसूरयः ॥१॥ जुहोत्यादयोऽनुदात्ताः परस्मैपदसंज्ञकाः। पॄ–पालने पूरणे च, पृ–धातुः कस्यचिन्मते ॥ २ ॥ उदात्तश्च समाख्यातः परस्मैपदसंज्ञकः ॥

---

१ आक्रोशो विरुद्धानुध्यानम् ॥ २ देवपूजासंगतिकरणदानेषु ॥ ३ बीजसंतानं क्षेत्रे विकिरणं गर्भाधानं च ॥ ४ वेवीङ्धातुः वासदृशार्थः॥ यथा–वा–गतिगन्धनयोः गन्धनं सूचनम् ॥ ५ सस्ति–धातुः 'जक्षित्यादयः–' इति सूत्रस्थभाष्य-प्रयोगात्तु सस्ति–धातुरत्र नास्तीति प्रतीयते ॥ मूलपाठस्तु माधवानुसारेणेति बोध्यम् ॥ ६ गणसूत्रमिदम्–चर्करीतमिति यङ्-लुगन्तस्य पूर्वाचार्याणां संज्ञा ॥ तेन यङ्लुगन्तेषु 'अदिप्रभृतिभ्यः–' इति शपो लुग् भवतीति भावः ॥ प्राचा तु चर्करी-तमिति परस्मैपदमित्युक्तम्, तच्चेहाप्रकृतत्वादुपेक्षितम् ॥

डुभृञ्-धातुश्च विज्ञेयो धारणे पोषणे तथा ॥३॥ अनुदात्त उभयतोभाषायां कथितो बुधैः । माङ्-माने च तथा शब्दे, गतावोहाङ्-समीरितः ॥ ४ ॥ आत्मनेपदिनावेतावनुदात्तौ मतो सदा । ओहाक्-त्यागेऽनुदात्तश्च परस्मैपदसंज्ञकः॥५॥ डुदाञ्-दाने, डुधाञ्-चैव धारणे पोषणे तथा । अनुदात्तावुभयतोभाषौ दाने परे जगुः ॥ ६ ॥ णिजिर्-शौचे पोषणेऽपि, पृथग्भावे विजिर्-मतः ॥ व्याप्तौ विष्लृ,-समाख्यातो ह्युभयदर्शिनस्त्वमी ॥ ७ ॥ णिजिरादयोऽनुदात्ताः स्वरितेतश्च संमताः ॥ घृ-धातुश्चैव विज्ञेयो दीप्तिक्षरणयोः सदा ॥ ८ ॥ हृ-च प्रसह्यकरणे, गतौ ऋ-सृ-समीरितौ ॥ घृप्रभृतयोऽनुदात्ताः परस्मैपददर्शिनः ॥ ९ ॥ भस-धातुश्च विज्ञेयो दीप्तिभर्त्सनयोः सदा ॥ उदात्तश्च तथोदात्तेत्परस्मैपदसंज्ञकः ॥ १० ॥ कि-ज्ञाने चानुदात्तश्च परस्मैपदसूचकः । त्वरणे तुर-विज्ञेयो, धिष-शब्दे प्रकथ्यते ॥११ ॥ धन-धान्येऽथ जनने जन-धातुः प्रपठ्यते । तुरादय उदात्तेतः परस्मैपदगामिनः ॥ १२ ॥ गा-स्तुतौ, चानुदात्तश्च परस्मैपदसंज्ञकः । छन्दसीयर्ति-भाषायां घृप्रभृतय ईरिताः ॥ १३ ॥

इति श्लुविकरणा जुहोत्यादयः ॥ ३ ॥

## अथ दिवादिगणः ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिषु च । स्तुतौ मोदे मदे स्वप्ने कान्तौ गत्यामपीष्यते ॥१ ॥ षिवु-स्यात्तन्तुसन्ताने, गतिशोषणयोः स्रिवु-। निरसने ष्ठिवु-ज्ञेयोऽदने ष्णुसु-निगद्यते ॥ २ ॥ आदानेऽदर्शने चैव कथयन्ति परे बुधाः । क्नसु-ह्वरणदीप्त्योः स्यात्, मतो निरसने ष्णुसु ॥ ३ ॥ नृती-स्याद्गात्रविक्षेपे, दाहे प्लुष-व्युष-स्मृतौ । पूतीभावे कुथ-प्रोक्त, उद्वेगे च-त्रसी मतः ॥४॥ गुध-परिवेष्टने स्यात्, पुथ-हिंसार्थवाचकः ॥ क्षिप-धातुः प्रेरणे स्यात्, पुष्प-विकसने मतः ॥ ५ ॥ आर्द्रीभावे तिम-ष्टीम-ष्टिम-सम्यक्समीरिताः । लज्जायां चोदने चैव व्रीड-धातुः प्रभाषितः ॥ ॥ ६ ॥ इष-गतौ, षह-षुह-चक्यर्थे गदितौ सदा । जॄष्-झॄष्-धातू वयोहानावुदात्तेतः समीरिताः ॥ ७ ॥ दिवादय उदात्ताश्च परस्मैपदसूचकाः ॥ अनुदात्तः क्षिपिश्चैव कथितः कस्यचिन्मते ॥ ८ ॥ षूङ्-प्राणिप्रसवे ज्ञेयः, परितापे च दूङ्-मतः। उदात्तावात्मनेभाषौ, दीङ्-क्षये च निगद्यते॥९॥ विहायसा गतौ डीङ्-स्यादाधारे धीङ्-प्रभाषितः॥ मीङ्-हिंसायां, रीङ्-श्रवणे, श्लेषणे लीङ्-निगद्यते ॥१०॥ व्रीङ्-धातुश्च वृणोत्यर्थ,ओदितः। स्वादयश्च वृत्॥पीङ्-याने स्यापञ्च, माङ्-माने, प्रीङ्-प्रीतौ, ईङ्-गतौ मतः ॥११॥दीङादयोऽनुदात्ताः स्युरात्मनेपदिनस्तथा । दीङ्-तूदात्तश्च,शो-धातुस्तनूकरणवाचकः ॥ १२ ॥ छो-छेदने स्यात्, षो-धातुरन्तकर्मणि संमतः । दो-अवखण्डने प्रोक्तः, श्यतिप्रभृतयो मताः॥ ॥१३॥ अनुदात्ता धातवः स्युः परस्मैपदसंज्ञकाः । प्रादुर्भावे जनी-धातुर्दीप्तौ दीपी-निगद्यते॥१४॥पूरी-आप्याने, तूरी-गतित्वरणहिंसयोः ।धूरी-गूरी-संमतौ द्वौ हिंसागत्योर्विचक्षणैः ॥ १५ ॥ तथा हिंसावयोहान्योर्धूरी-जूरी-मतौ सदा । हिंसास्तम्भनयोश्चैव शूरी-धातुर्निगद्यते ॥ १६ ॥ चूरी-दाहे च सम्प्रोक्त, ऐश्वर्ये तप-कीर्तितः । वरणे वृतु-धातुः स्यादुपतापे क्लिश-स्मृतः ॥ १७ ॥ काश्ट-दीप्तौ निगदितः, शब्दे वाश्ट-समीरितः । जन्यादयोऽनुदात्तेत आत्मनेपददर्शिनः ॥१८॥ उदात्ताश्चैव विज्ञेयास्त्वनुदात्तस्तपिः स्मृतः । तितिक्षायां मृष-प्रोक्तः, पूतीभावे शुचिर्-मतः॥१९॥ उदात्तौ स्वरितेतौ च उभयपदगामिनौ । बन्धने णह-विज्ञेयो, रञ्ज-रागे निगद्यते ॥ २० ॥ आक्रोशे शप-धातुः स्यात्स्वरितेतश्च सम्मताः । णहादयोऽनुदात्ताः स्युरुभयपदगामिनः ॥२१॥ गतौ पद-खिदो-,दैन्ये, सत्तायां विद कथ्यते । बुध-त्ववगमे स्यात्तु, सम्प्रहारे युध-स्मृतः ॥ २२ ॥ अनोः परो रुध-धातुः कामे, ज्ञाने मन-स्मृतः । अन-अण-प्राणने द्वौ, समाधौ युज-कथ्यते ॥ २३ ॥ सृज-धातुर्विसर्गे स्यादल्पीभावे लिश-स्मृतः । पदादयोऽनुदात्तेत आत्मनेपदगामिनः ॥ २४ ॥ अनुदात्ताश्च, राधः-स्याद्वृद्धावेव ह्यकर्मकात् । व्यध-धातुस्ताडने च, पुष-पुष्टौ निगद्यते ॥ २५॥ शुष-स्याच्छोषणे, प्रीतौ तुष-धातुः समीरितः । आलिङ्गने श्लिष-प्रोक्तो, वैकृत्ये दुष-कथ्यते ॥ २६ ॥ शक-धातुर्मर्षणे स्यादुभयपदसंज्ञकः । गात्रप्रक्षरणे ज्ञेयो ञिष्विदा-पूर्वसूरिभिः ॥ २७॥ क्रुध-क्रोधे, बुभुक्षायां क्षुध-,शौचे शुध-स्मृतः । संराद्धौ षिधु-संप्रोक्त, उदात्तेतः समीरिताः ॥ २८ ॥ राधादयोऽनुदात्ताश्च, परस्मैपदवाचिनः । रध-हिंसासंराध्योश्चादर्शने णश-कथ्यते ॥ २९ ॥ दृप-हर्षमोहनयोः, प्रीणने तृप-संमतः ॥ जिघांसायां द्रुह-प्रोक्तो, वैचित्त्ये मुह-भाषितः ॥ ३० ॥ ष्णुह-उद्गिरणे चैव, ष्णिह-प्रीतौ समीरितः । रधादय उदात्तेतः परस्मैपादिनो मताः ॥ ३१ ॥ शमु-दमु-तूपशमे, काङ्क्षायां तमु-कथ्यते । तपसि श्रमु-खेदे चानवस्थाने भ्रमु-स्मृतः ॥ ३२॥ क्लमु-ग्लानौ, मदी-हर्षे, क्षमू-स्यात्सहनार्थकः। असु-धातुः क्षेपणे च, प्रयत्ने यसु-संमतः ॥ ३३ ॥ जसु-धातुर्मोक्षणे च, तसु-दसु-उपक्षये । व्युष-धातुर्विभागे च युष-व्युष-तथाऽपरे ॥ ३४ ॥ प्लुष-दाहे, वसु-स्तम्भे, प्रेरणे बिस-कथ्यते । कुस-संश्लेषणे धातुरुत्सर्गे बुस-कथ्यते ॥ ३५ ॥ खण्डने मुस-धातुः स्यात्परिणामे मसी-समी-। विलोठने लुठ-प्रोक्तः, समवाये उच-स्मृतः ॥ ३६ ॥ अथाधःपतने धातू भृशु-भ्रंशु-मतौ सदा । कृश-तनूकरणे स्याद्वरणे वृश-कथ्यते ॥ ३७ ॥ ञितृषा-स्यात्पिपासायां, हृष-तुष्टौ निगद्यते । रुष-रिष-च हिंसायां, डिप-क्षेपे समीरितः ॥ ३८ ॥ कुप-क्रोधे, व्याकुलत्वे गुप-धातुर्निगद्यते । मोहने स्युर्युपु-रुपु-लुपु,-गार्ध्ये लुभ-स्मृतः ॥ ३९ ॥ णभ-तुभ च

हिंसायां, क्षुभ-संचलने मतः। क्षुभि-नभितुभयो-र्युतादौ क्र्यादौ च संमताः ॥ ४० ॥ आर्द्रीभावे क्लिदू-ज्ञेयो, ञिमिदा-स्नेहने मतः। ञिक्ष्विदा-च स्नेहनमोचनयोः कथ्यते सदा ॥ ४१ ॥ गृधु-स्यादभिकाङ्क्षायाम्-ऋधु-वृद्धौ निगद्यते। असुप्रभृतयश्चैवोदात्तेतः कथिता बुधैः ॥ ४२ ॥ उदात्ताश्चैव विज्ञेयाः परस्मैपदगामिनः ॥

इति श्यन्विकरणा दिवादयः ॥ ४ ॥

## अथ स्वादिगणः।

षुञ्-धातुश्चाभिषवे, बन्धने षिञ्-निगद्यते। शिञ्-निशाने समाख्यातो, डुमिञ्-प्रक्षेपणे मतः ॥ १ ॥ आच्छादने स्तृञ्-सम्प्रोक्तश्चयने चिञ्-समीरितः। कृञ्-हिंसायां, वृञ्-वरणे धुञ्-धूञ्-च कम्पने मतौ ॥ २ ॥ इति स्वादयोऽनुदात्ता उभयपदगामिनः। उपतापे टुदु-ज्ञेयो, गतौ वृद्धौ च हि-स्मृतः ॥ ३ ॥ पृ-प्रीतौ, स्पृ-प्रीतिपालनयोः, स्मृ-कस्यचिन्मते। प्रीतिचलनयोरन्ये मेनिरे कतिचिद्बुधाः ॥ ४ ॥ आपॢ-व्याप्तौ, शक्लृ-शक्तौ, संसिद्धौ राध-साध च। दुनोतिप्रभृतयश्च परस्मैपदगामिनः ॥ ५ ॥ अनुदात्ता, अशू-व्याप्तौ संघाते कस्याचिन्मते। ष्टिघ-आस्कन्दने प्रोक्ते ऋषिभिस्तत्त्वदर्शिभिः ॥ ६ ॥ उदात्तावनुदात्तेतावात्मनेपदसंज्ञकौ। गतौ-तिग-तिक-ज्ञेयौ, हिंसायां षघ-संमतः ॥ ७ ॥ प्रागल्भ्ये ञिधृषा-ज्ञेयो, दम्भने दम्भु-चेरितः। तृप-धातुः प्रीणने स्यात्, ऋधु-वृद्धौ प्रकीर्तितः॥८॥ अह-व्याप्तौ, रि-क्षि-चिरि-जिरि-दाश-दृ-हिंसकाः। दघ-घातने पालने च, भक्षणे चमु-कथ्यते ॥ ९ ॥ क्षिर-धातुश्चैव भाषायां तिकादयः समीरिताः। उदात्ताश्च उदात्तेतः परस्मैपदसंज्ञकाः ॥ १० ॥

इति श्नुविकरणाः स्वादयः ॥ ५ ॥

## अथ तुदादिगणः।

व्यथने तुद-विज्ञेयः, प्रेरणे णुद-कथ्यते। दिश-अतिसर्जने च, भ्रस्ज-पाके निगद्यते ॥ १ ॥ विलेखने कृष-ज्ञेयः, प्रेरणे क्षिप-,संमतः। तुदादयोऽनुदात्तेतः स्वरितेतश्च संमताः ॥ २ ॥ उभयपदिनः सर्वे, ऋषी-गमनवाचकः। परस्मैपदगामी चोदात्तेदुदात्त ईरितः ॥ ३ ॥ प्रीतिसेवनयोश्चैव जुषी-धातुर्निगद्यते। ओविजी-कथ्यते धातुर्भये च चलने सदा ॥ ४ ॥ ओलस्जी-ओलजी-धातू व्रीडने च समीरितौ। जुषादयोऽनुदात्तेत आत्मनेपदसंज्ञकाः ॥ ५ ॥ उदात्ताः स्युश्छेदने च ओव्रश्चू-धातुरीरितः। व्यच-व्याजीकरणे स्यादुञ्छे उछि-निगद्यते ॥ ६ ॥ उछी-विवासे विज्ञेय, उत्क्लेशे मिछ-कथ्यते। ऋच्छ-गतावक्षनाशे मूर्तिभावे च संमतः ॥ ७ ॥ जर्ज-चर्च-झर्झ-परिभाषणे भर्त्सने तथा। त्वच-संवरणे ज्ञेयः, ऋच-स्तवनवाचकः ॥ ८ ॥ आर्जवे उब्ज-विज्ञेय उत्सर्गे उज्झ-कथ्यते। लुभ-विमोहने धातुः कथितः शब्दतत्परैः ॥ ९ ॥ रिफ-रिह-युद्धनिन्दाहिंसादानेषु कथने। स्यातां तृप्तौ तृप-तृम्प-फान्तो वा कस्यचिन्मते ॥ १० ॥ तुप-तुम्प-तुफ-तुम्फ-हिंसायां च समीरिताः। दृप-दृम्प-तथोत्क्लेशे, फान्तौ द्वौ च समीरितौ ॥ ११ ॥ ऋफ-ऋम्फ-च हिंसायां ग्रन्थे गुम्फ-गुफ-स्मृतौ। शुभ-शुम्भ-शोभनार्थे उभ-उम्भ-च पूरणे ॥ ॥१२॥ चृती-हिंसाग्रन्थनयोर्दृभी-ग्रन्थे निगद्यते। जुन-जुड-गतौ धातू, विधाने विध कथ्यते ॥ १३ ॥ पृण-वृण प्रीणने च, सुखने च मृडः-पृडः। मृण-हिंसायां, कौटिल्ये तुण-धातुः समीरितः ॥ १३ ॥ पुण-स्यात्कर्माणि शुभे, प्रतिज्ञाने मुण-स्मृतः। कुणः-शब्दोपकरणयोर्गतौ चशुन-कथ्यते ॥१५॥ गतिकौटिल्यहिंसासु द्रुण-धातुः समीरितः। घुर-ऐश्वर्यदीप्त्योश्च, भ्रमणे घुण-घूर्ण-च ॥ १६ ॥ कुर-शब्दे, खुर-धातुश्छेदने च निगद्यते। विलेखने क्षुर-प्रोक्तो, मुर-संवेष्टने मतः ॥ १७ ॥ पुर-अग्रगमने च, घुर-भीमार्थशब्दयोः। वृहू-वृहू-उद्यमने, स्पर्धायां मिष-कथ्यते ॥ ॥ १८ ॥ इष-इच्छायां हिंसार्थाः तृन्हू-स्तृहू-तृहू-स्मृताः। किल-श्वैत्यक्रीडनयोः, स्नेहे तिल-च भाषितः ॥ १९ ॥ चल-विलसने धातुर्वसने चिल-कथ्यते। इल-स्वप्नक्षेपणयोः, बिल-संवरणे मतः ॥ २० ॥ भेदने बिल-धातुः स्याद्ग्रहने णिल-संमतः। हिल-भावकरणे स्यादुञ्छे शिल-षिल-स्मृतौ ॥ २१ ॥ लिख-अक्षरविन्यासे, श्लेषणे मिल-कथ्यते। पुट-संश्लेषणे धातुः, कौटिल्ये कुट-संमतः ॥ २२ ॥ कुच-संकोचने ज्ञेयो, रक्षायां गुड-चेरितः। गुज-शब्दे, डिप-क्षेपे, छुर-छेदनवाचकः ॥ २३ ॥ आक्षेपे मर्दने चैव मुट-धातुः समीरितः। स्फुटो-विकसने चैव तुट-कलहकर्मणि ॥ २४ ॥ चुट-त्रुट-छुट-तथा छेदने धातवः स्मृताः। बन्धने जुड-धातुः स्यान्मदे कड-निगद्यते ॥ ॥ २५ ॥ लुट-संश्लेषणे चैव, घनत्वे कड-सम्मतः। उत्सर्गे पुड-विज्ञेयः, कुड-बाल्ये निगद्यते ॥ २६ ॥ घुट-स्यात्प्रतिघाते च, तुड-तोडनवाचकः। तथा संवरणे ज्ञेयाः खुड-छुड-थुड-स्थुड-॥ २७ ॥ फुल-स्फुर-संचरणे, स्फुर-स्फुरणवाचकः। स्फुल-स्फुर-संचलने कथितौ कस्यचिन्मते ॥ २८ ॥ तथा संवरणे चैव स्फुड-व्रुड-चुड-स्मृताः। निमज्जने क्रुड-मृड-कथितौ कस्यचिन्मते ॥ २८ ॥ व्रश्चादय उदात्तेतः परस्मैपदसंज्ञकाः ॥ उदात्ताश्चैव विज्ञेया, गुरी-उद्यमने स्मृतः ॥ ३० ॥ उदात्तश्चैव सम्प्रोक्तोऽनुदात्तेदात्मनेपदी। णू-स्तुतौ, धू-विधूनने, परस्मैपदिनो मतौ ॥ ३१॥

---

१-तेषां युतादित्वादङ् सिद्धः ॥ क्र्यादित्वात्पक्षे सिज् भवत्येव ॥ इह पाठस्तु श्यनर्थः ॥

उदात्तौ च तथा, गु-स्यात्पुरीषोत्सर्गवाचकः । ध्रु-गतिस्थैर्ययोश्चैव, ध्रुव-च कस्यचिन्मते ॥ ३२ ॥ अनुदात्तौ तथा ज्ञेयौ परस्मैपदिनौ सदा । कुङ्-शब्दे च तथोदात्त आत्मनेपदसंज्ञकः ॥ ३३ ॥ पृङ्-व्यायामे, तथा प्राणत्यागे मृङ्-च समीरितः । अनुदात्तावात्मनेभाषो, गतौ रि-पि-संमतो ॥ ३४ ॥ निवासगत्योः क्षि-धातुर्धारणे धि-निगद्यते । रीत्यादयोऽनुदात्ताः स्युः परस्मैपदगामिनः ॥३५॥ षू-प्रेरणे, कॄ-विक्षेपे, गॄ-स्यान्निगरणे तथा । परस्मैपदिनश्चैवोदात्ताः स्युरादरे च दृङ् ॥३६॥ धृङ्-धातुः स्यादवस्थाने, आत्मनेपदिनौ मतौ । अनुदात्तौ तथा,प्रच्छ-ज्ञीप्सायां कथ्यते सदा॥ ॥ ३७ ॥ सृज-विसर्गे, टुमस्जो-शुद्धौ, भञ्जे रुजो-स्मृतः । छुप-स्पर्शे, रुश-रिश-हिंसायां स्याद्गतौ लिश-॥ ३८ ॥ भुजो-कौटिल्यवाच्युक्तः, स्पृश-संस्पर्शने मतः । विश-प्रवेशने धातुर्गतो विच्छ-समीरितः ॥ ३९ ॥ मृश-आमर्शने चैव, प्रेरणे णुद-कथ्यते । विशरणगत्यवसादनेषु षद्लृ-संमतः ॥४० ॥ शद्लृ-स्याच्छातने धातुरुदात्तेतः समीरिताः । पृच्छादयोऽनुदात्तेतः परस्मैपदगामिनः ॥ ४१ ॥ विच्छस्तूदात्तः संज्ञेयः, संगमे मिल-कथ्यते । उदात्तश्चैव स्वरिते-दुभयपदसूचकः ॥ ४२ ॥ मुच्लृ-स्यान्मोक्षणे धातुश्छेदने लुप्लृ-संमतः । विद्लृ-लाभे, लिप-उपदेहे, च क्षरणे षिच-॥ ४३ ॥ मुचादयोऽनुदात्ताः स्युः स्वरितेतश्च संमताः । उभयपदिनश्चैवोदात्तो विन्दतिरीरितः ॥ ४४ ॥ कृती-स्याच्छेदने धातुरुदात्तः कथितः सदा । परस्मैपदगामी चोदात्तेच्चावयवे पिश-॥ ४५ ॥ परस्मैपद्युदात्तेच्चोदात्तश्चैव निगद्यते । खिद-स्यात्परिघाते चानुदात्तश्च निगद्यते ॥ ४६ ॥ परस्मैपदगामी चोदात्तेच्चैव सुसम्मतः ।

इति शविकरणास्तुदादयः ॥ ६ ॥

## अथ रुधादिगणः ॥

रुधिर्-आवरणे ज्ञेयो, भिदिर्-स्यात्तु विदारणे । छिदिर्-च द्वैधीकरणे, पृथग्भावे विचिर्-मतः ॥ १ ॥ विरेचने रिचिर्-, योगे युजिर्-, संपेषणे क्षुदिर्-। रुधादयोऽनुदात्तेत उभयपदगामिनः ॥ २ ॥ उच्छृदिर्-धातुः सम्प्रोक्तो दीप्तिदेवनयोर्बुधैः । उतृदिर्-चैव विज्ञेयो हिंसानादरयोस्तथा ॥ ३ ॥ उदात्तो स्वरितेतो च उभयपदगामिनौ । कृती-वेष्टने चोदात्तः परस्मैपदसंज्ञकः ॥ ४ ॥ दीप्तौ ञिइन्धी-चोदात्तोऽनुदात्तेदात्मनेपदी । विचारणे विद-,खिद-दैन्ये च कथितो बुधैः ॥ ५ ॥ आत्मनेपदिनौ ज्ञेयावनुदात्तेतसंज्ञकौ । शिष्लृ-विशेषणे ज्ञेयो पिष्लृ-संचूर्णने मतः ॥६॥ भञ्जो-आमर्दने, भुज-पालनाभ्यवहारयोः । शिषादय उदात्तेतः परस्मैपदसंज्ञकाः ॥ ७ ॥ तृह-हिंसि-च हिंसायामुन्दी-च क्लेदने मतः । अञ्जू-व्यक्तिम्रक्षणयोः कान्तिगत्योश्च गद्यते ॥ ८ ॥ तञ्चू-संकोचने ज्ञेयो, वृजी-धातुस्तु वर्जने । संपर्के च पृची-प्रोक्तो, भयचलनयोस्तथा ॥ ९ ॥ ओविजी-धातुः कथित ऋषिभिस्तत्त्वदर्शिभिः । तृहादय उदात्तेतः परस्मैपदगामिनः ॥ १० ॥

इति श्नम्विकरणा रुधादयः ॥ ७ ॥

## अथ तनादिगणः ।

विस्तारे तनु-सम्प्रोक्तः, षणु-दाने समीरितः । क्षणु-क्षिणु-च हिंसायां, गतावृणु-निगद्यते ॥ १ ॥ घृणु-दीप्तौ च विज्ञेयश्चादने तृणु-सम्मतः । तनादय उदात्ताश्च स्वरितेतश्च कीर्तिताः ॥ २ ॥ उभयपदिनः शब्दशास्त्रतत्त्वविशारदैः । अवबोधे मनु-ज्ञेयो, याचने वनु-कीर्त्यते ॥ ३ ॥ उदात्तावनुदात्तेतावात्मनेपदगामिनौ । डुकृञ्-धातुस्तु करणे, ह्यनुदात्तः समीरितः ॥ ४ ॥ उभयपदगामी च पठ्यते पूर्वसूरिभिः ॥

इत्युविकरणास्तनादयः ॥ ८ ॥

## अथ क्र्यादिगणः ।

डुक्रीञ्-द्रव्यविनिमये, पाके श्रीञ्-,षिञ्-तु बन्धने । प्रीञ्-कान्तौ तर्पणे चैव, हिंसायां मीञ्-निगद्यते ॥ १ ॥ स्कुञ्-आप्रवणे कथितो, बन्धने युञ्-च कीर्त्यते । इति क्र्यादयोऽनुदात्ता उभयपदसंज्ञकाः ॥ २ ॥ क्नूञ्-शब्दे,द्रूञ्-च हिंसायां, पवने पूञ्-निगद्यते । स्तॄञ्-आच्छादने, लूञ्-तु छेदने, धूञ्-च कम्पने ॥ ३ ॥ वॄञ्-धातुर्वरणे ज्ञेयो, हिंसायां कॄञ्-निगद्यते । क्नूप्रभृतय उदात्ता उभयपदगामिनः ॥ ४ ॥ पॄ-पालनपूरणयोर्हिंसायां शॄ-निगद्यते । वरणे वॄ-च कथितो, भरणे कस्यचिन्मते ॥ ५ ॥ भॄ-भर्त्सने, मॄ-हिंसायां दॄ-धातुश्च विदारणे । जॄ-धातुस्तु वयोहानौ-झॄ-धॄ-च कस्यचिन्मते ॥ ६ ॥ नॄ-नये, कॄ-च हिंसायां, गॄ-शब्दे, ॠ-गतौ मतः । उदात्ताश्च ह्युदात्तेतः परस्मैपदिनस्त्वमी ॥ ७ ॥ ज्या-धातुस्तु वयोहानौ, गतिरेषणयोश्च री-। ली-श्लेषणे, व्ली-वरणे, प्ली-धातुर्वरणेऽपि च ॥ ८ ॥ ल्वी-गतौ, श्री-भये चैव, भरे च कस्यचिन्मते । क्षीष्-धातुश्चैव हिंसायां ज्ञा-धातुरवबोधने ॥ ९ ॥ बन्धने बन्ध-सम्प्रोक्तः शब्दशास्त्रविचक्षणैः । ज्यादय उदात्तेतः परस्मैपदसूचकाः ॥१०॥ वृङ्-धातुश्चैव संभक्तावुदात्त आत्मनेपदी । श्रन्थ-विमोचन प्रतिहर्षयोश्च निगद्यते ॥ ११ ॥ मन्थ-विलोडने, श्रन्थ-ग्रन्थ-सन्दर्भवाचकौ । कुन्थ-संश्लेषणे ज्ञेयः संक्लेशे कस्यचिन्मते ॥ १२ ॥ मृद-मृड-धातू क्षोदे, च सुखेऽपि कस्यचिन्मते । गुध-रोषे च, निष्कर्षे कुष-, संच-

क्नने क्षुभ-॥ १३ ॥ णभ-तुभ-च हिंसायां, क्लिशू-धातुर्विबाधने। उञ्छ उध्रस-विज्ञेय, आभीक्ष्ण्ये दृष-कथ्यते ॥१४॥ विप्रयोगे विष-ज्ञेयो, भोजने अश-संमतः। प्रुष-प्लुष-स्नेहने च सेवने पूरणे तथा ॥ १५ ॥ पुष-पुष्टौ, मुष-स्तेये, कथितः शास्त्रतत्परैः। अथ भूतप्रादुर्भावे हिठ-ख च-मतौ सदा ॥ १६ ॥ खष धातुस्तु वान्तोऽयं कथ्यते हि मनीषिभिः। श्रन्थादय उदात्तेतः परस्मैपदसंज्ञकाः ॥ १७ ॥ विषिवर्जं च विज्ञेया, उपादाने ग्रह-स्मृतः। उदात्तः स्वरितेच्चैवोभयतोपदसंज्ञकः ॥ १८ ॥

इति श्नाविकरणाः क्र्यादयः ॥ ९ ॥

---

## अथ चुरादयः।

चुर-स्तेये, चिति-स्मृत्यां, यन्त्रि-संकोचने मतः। स्फुडि-स्फुटिः-परीहासे, स्नेहने मिदि-कथ्यते ॥१॥ दर्शनेऽप्यङ्कने लक्ष-,कुद्रि-चानृतभाषणे। लड-स्यादुपसेवाया, मोलडयुत्क्षेपणे तथा ॥ २ ॥ ओकारोऽवयवो धातोरिति कश्चित्तु मन्यते। जल-लज-द्वावपवारणे च कथितौ सदा ॥ ३ ॥ पीड-अवगाहनेऽवस्यन्दने नट-गद्यते। श्रथ-प्रयत्ने च तथा प्रस्थाने कस्यचिन्मते ॥ ४ ॥ बन्ध-बधौ-संयमने, पूरणे पॄ-निगद्यते। ऊर्ज-बलप्राणनयोः स्मृतः, पक्ष-परिग्रहे ॥ ५ ॥ वर्ण-चूर्ण-प्रेरणे द्वौ, वर्णने वर्ण-च स्मृतः। पृथ-पथ-द्वौ प्रक्षेपे, प्रख्याने प्रथ-सम्मतः ॥६॥ षम्ब-सम्बन्धने[1] धातुः, शम्ब-साम्ब-तथा स्मृतौ। अदने भक्ष-धातुः स्यात्कुण्ठ-स्तेये निगद्यते ॥७॥ अल्पीभावे पुट्ट-चुट्ट-, अट्ट-षुट्ट-अनादरे। कुट्ट-स्याच्छेदने धातुर्भर्त्सने पूरणे तथा ॥ ८ ॥ शठ-श्वठ-श्वठि-असंस्कारगत्योः प्रकीर्तिताः। तुज-तुजि-पिज-पिजि-लजि-लुजि-हि धातवः ॥ ९ ॥ हिंसाबलादाननिकेतनेषु कथिता बुधैः। पिस-गतौ, षान्त्व-सामप्रयोगे परिकीर्त्यते ॥१०॥ श्वल्क-वल्क-तथा धातू कथ्येते परिभाषणे। ष्णिह-धातुः स्नेहने च,स्फिट-च कस्यचिन्मते ॥११॥ श्रण-दाने, पथि-गतौ, स्मिट-स्मिङ्-द्वावनादरे। श्लिष-धातुः श्लेषणे स्यात्कुट्टने पिच्छ-गद्यते ॥१२॥ छदि-संवरणे ज्ञेय आघाते तड-संमतः। खड-खडि-कडि-तथा भेदने धातवः स्मृताः ॥ १३ ॥ कुडि-धातू रक्षणे स्याद्वेष्टने गुडि-चेरितः। कुठि-गुठि-गुडि-तथा रक्षणे कस्यचिन्मते ॥ १४॥ खुडि-स्यात्खण्डने धातुर्वटि-वडि-विभाजने। मडि-भूषायां हर्षे च, भडि-कल्याणवाचकः॥१५॥अथादरानादरयोः शुस्त-बुस्त-समीरितौ। चुद-संचोदने धातुर्वमने छर्द-कीर्त्यते ॥ १६ ॥ चक्क-चुक्क-द्वौ व्यथने, नक्क-धक्क-च नाशने। क्षल-शौचकर्मणि स्यात्प्रतिष्ठायां तक-स्मृतः ॥ १७ ॥ उन्माने तुल-धातुः स्यात्समुच्छ्राये चुल-स्मृतः। महत्त्वे पुल-धातुः स्यादुत्क्षेपे दुल-कथ्यते ॥ ॥ १८ ॥ मूल-स्याद्रोहणे धातुः, स्नेहने तिल-कथ्यते। बिल-स्याद्भेदने धातुः, क्षेपे कल-विल-स्मृतौ ॥ १९ ॥ चल-भृतौ, शुल्ब-शूर्प-माने चैव समीरितौ। रक्षणे पाल-धातुः स्याद्धिंसायां लूष-सम्मतः ॥ २० ॥ चुट-स्याच्छेदने धातुर्मुट-संचूर्णने मतः। पडि-पसि-नाशने द्वौ, चापि-गत्यां निगद्यते ॥ २१ ॥ मार्गसंस्कारगत्योश्च वज-धातुः समीरितः। स्यादतिस्पर्शने शुल्क-,क्षपि-क्षान्त्यां निगद्यते ॥ २२ ॥ चह-चप-च विज्ञेयौ परिकल्कनवाचकौ। यम-परिवेषणे च, छजि-स्यात्कृच्छ्रजीवने ॥ २३ ॥ ज्ञानज्ञापनमारणतोषणनिशाननिशामनेषु तथा। ज्ञप-धातुः संगदितः, श्वभ्र-श्वर्त-गतौ च कथितौ ॥ २४ ॥ रह-त्यागे निगदितः, प्राणने बल-कथ्यते। चिञ्-धातुः स्याच्च चयने घट्ट-संचलने मतः ॥ २५ ॥ खट्ट-संवलने धातुः, संघाते मुस्त-सम्मतः। पट्ट-स्फिट्ट-चुबि-तथा हिंसायां कथिता बुधैः ॥ २६ ॥ पूल-पूर्ण-पुण-तथा संघाते च समीरिताः। पुंस-अभिवर्धने च, टकि-बन्धनवाचकः ॥ २७ ॥ धूस-धूश-धूष-मताः कान्तिकरणवाचकाः। चूर्ण-संकोचने धातुः, कीट-वर्णे समीरितः ॥ २८ ॥ पूजायां पूज-धातुः स्यादालस्ये शुठ-सम्मतः। अर्क-धातुश्च विज्ञेयः स्तवने तपने सदा ॥ २९ ॥ शुठि-स्याच्छोषणे धातुः, प्रेरणे जुड-कथ्यते। गज-मार्ज-मर्च-तथा शब्दार्थौ भाषिता बुधैः ॥ ३० ॥ घृ-धातुः स्यात्प्रस्रवणे, विस्तारवचने पचि-। तिज-धातुर्निशाने च, कृत-संशब्दने मतः ॥ ३१ ॥ वर्ध-धातुश्छेदने च पूरणे कथितः सदा। कुबि-कुभि-तथा धातू आच्छादने च संस्मृतौ ॥ ३२ ॥ अदर्शनेऽर्दने धातू लुबि-तुबि-मतौ सदा। ह्लप-क्लप-तथा धातू व्यक्तायां वाचि भाषितौ ॥ ३३ ॥ चुस-बर्ह- च हिंसायां, गुर्द-पूर्वनिकेतने। गर्ध-स्यादभिकाङ्क्षायां, शब्दे द्वौ गर्ज-गर्द-च ॥ ३४ ॥ जसि-स्याद्रक्षणे धातुर्मोक्षणे कस्यचिन्मते। ईड-स्तुतौ च, हिंसायां जसु-धातुः समीरितः ॥ ३५ ॥ रुष-रुठ-तथा रोषे, पिडि-संघातवाचकः। छुप-धातुः समुच्छ्राये, डिप-क्षेपे निगद्यते ॥ ३६ ॥ आत्मनेपदिनः सर्वे आकुस्माद्धातवः स्मृताः। चित-संचेतने धातुर्दशने दशि-कथ्यते॥३७॥ दसि-दर्शनदंशनयोर्दस-धातुः कथ्यते तथा[2] विबुधैः। डप-डिप-संघाते द्वौ, कुटुम्बधारणे तन्त्रि-सदा ॥ ३८ ॥ स्पश-धातुश्च विज्ञेयो ग्रहणे श्लेषणे तथा। गुप्तपरिभाषणे च मन्त्रि-धातुः समीरितः ॥ ३९ ॥ तर्ज-भर्त्स-तर्जने द्वौ, बस्त-गन्ध-तथाऽर्दने। हिंसायां विष्क-हिष्क-द्वावीप्सायां लल-सम्मतः ॥ ४० ॥ परिणामे निष्क-धातुः, कण-संकोचने मतः। तूण-धातुः पूरणे च, भ्रूण-आशाविशङ्कयोः ॥ ४१ ॥ श्लाघायां शठ-धातुः स्यात्पूजायां यक्ष-सम्मतः। स्यम-धातुर्वितर्के च, गूर-उद्यमने तथा ॥ ४२ ॥ आलोचने

---

१ तथा-सम्बन्धने-इत्यर्थः॥ २ तथा-दर्शनदंशनयोरित्यर्थः॥

लक्ष-शम-,स्रवणे गल-संमतः । अथावक्षेपणे कुत्स-,छेदने च कुट-त्रुट-॥ ४३ ॥ कूट-धातुश्च विज्ञेय आप्रदानेऽव-
सादने । भल-आभण्डने धातुः, स्मृतः कुट्ट-प्रतापने ॥ ४४ ॥ वञ्चु-प्रलम्भने प्रोक्तो, वृष-स्याच्छक्तिबन्धने । मद-
धातुस्तृप्तियोगे, दिवु-स्यात्परिकूजने ॥ ४५ ॥ चेतनाख्यानवासेषु विद-धातुः समीरितः । गृ-धातुश्चैव विज्ञाने,
मान-स्तम्भे निगद्यते ॥ ४६ ॥ यु जुगुप्सार्थकः, कुस्म-कुत्सितस्मयने मतः । आकुस्मीया इमे प्रोक्ता धातुपाठविशा-
रदैः ॥ ४७ ॥ चर्च-धातुरध्ययने, भषणे बुक्क-सम्मतः । उपसर्गादाविष्कारे शब्द-धातुः समीरितः ॥ ४८ ॥ कणो-
निमीलने धातुर्नाशने जभि-कथ्यते । षूद-स्यात्क्षरणे धातुस्ताडने जसु-सम्मतः ॥ ४९ ॥ बन्धने पश,-धातुः स्याद्रोगे
अम-निगद्यते । चट-स्फुट-भेदने द्वौ, संघाते घट-गद्यते ॥ ५० ॥ दिवु-स्यान्मर्दने धातुः, घुषिर्-विशब्दने स्मृतः ।
अर्ज-स्यात्प्रतियत्ने च, शिल्पयोगे लस-स्मृतः ॥ ५१ ॥ आङ्पूर्वः क्रन्द-धातुश्च सातत्ये कथितो बुधैः । अथाऽलं-
करणे धातू तसि-भूष-मतौ सदा ॥ ५२ ॥ अर्ह-धातुश्च पूजायां, भज-विश्राणने मतः । ज्ञा-धातुः स्यान्नियोगे च,
श्रृधु-प्रसहने मतः ॥५३॥ उपस्कारे निकारे च यत-धातुर्निगद्यते । रक-लग-रघ-रग-अमी चास्वादने मताः ॥५४॥
लिगि-चित्रीकरणे स्याद्, अञ्चु-धातुर्विशेषणे । त्रस-धातुर्धारणे च ग्रहणे वारणे तथा ॥ ५५ ॥ संसर्गे मुद-धातुः
स्यादुञ्छे उध्रस-कथ्यते । उकारोऽवयवो धातोरिति च कस्यचिन्मते ॥ ५६ ॥ मुच-प्रमोचने धातुर्मोदने च तथा
मतः । स्नेहच्छेदापहारेषु धातुः संकथ्यते वस-॥ ५७ ॥ सहने हसने धातू च्युस-च्यु-,संशये चर-। भुवोऽवकल्कने
धातुः, कृपेश्च कस्यचिन्मते ॥ ५८ ॥ ग्रस-स्याद्ग्रहणे धातुर्धारणे पुष-चेरितः । पूरी-आप्यायने धातुर्दल-प्रोक्तो विदा-
रणे ॥ ५९ ॥ पट-पुट-लुट-तुजि-मिजि-पिजि-लिजि-लुजि-। भाजि-लघि-त्रसि-पिसि-धूप-विच्छ-कुसि-दशि-॥
॥ ६० ॥ कुशि-घट-घटि-बृहि-बर्ह-बल्ह-गुप-पुथ-। चीव-लोकृ-लोचृ-णद-कुप-तर्क-वृतु-वृधु-॥ ६१ ॥भाषार्थां
धातवः प्रोक्ताः शब्दशास्त्रविचक्षणैः । रुट-लजि-अजि-दशि-भृशि-रुशि-रुसि-नट-॥ ६२ ॥ पुटि-जि-चि-
शीक-रघि-लघि-अहि-रहि-महि-। लडि-तड-नल-अमी भाषार्थां भाषिता बुधैः ॥ ६३ ॥ आस्वादने ष्वद-
स्वाद-,हिंसायां रुज-कथ्यते । युज-पृज-संयमने, मर्षणे षह-कीर्त्यते ॥ ६४ ॥ अर्ज धातुश्च पूजायां, क्षेप ईर-निगद्यते ।
ली-द्रवीकरणे ज्ञेयो, वर्जने च वृजी-स्मृतः ॥ ६५ ॥ जॄ-त्रि-धातू वयोहानौ, वृञ्-चावरणवाचकः । रिच-वियोजने
धातुस्तथा संपर्चने मतः॥६६॥शिष-धातुरसर्वोपयोगे, दाहे तप-स्मृतः । दभी-भये, तृप-तृप्तौ,दृभ-संदर्भवाचकः॥६७॥
छृदि-चृप-छृप-दृप-अमी संदीपने स्मृताः । श्रथ-धातुर्मोक्षणे स्याद्धिंसायां कस्यचिन्मते ॥ ६८ ॥ आमर्षणे शीक-
चीक-,मी-गतौ, ग्रन्थ-बन्धने । अर्द-हिंसि-च हिंसायां, पूजने अर्ह-सम्मतः ॥ ६९ ॥ आङ् पूर्वः षद-धातुः स्या-
त्पद्यर्थे, धूञ्-च कम्पने । जुष-परितर्कणे स्यात्तथा च परितर्पणे ॥ ७० ॥ प्रीञ्-धातुस्तर्पणे प्रोक्तः, शुन्ध-स्याच्छौ-
चकर्मणि । श्रन्थ-ग्रन्थ-च संदर्भे, छद-स्यादपवारणे ॥ ७१ ॥ आप्लृ-स्याल्लम्भने धातुः, संदेशवचने वद-। चन-
श्रद्धोपहननयोर्मतः कस्यचिन्मते ॥ ७२ ॥ श्रद्धायामुपकरणे तनु-धातुः सूरिभिः सदा कथितः । दैर्घ्ये तथोपसर्गा-
त्कथितो धातुस्तथाऽपि बुधैः ॥ ७३ ॥ वच-परिभाषणे च पूजायां मान-सम्मतः । गर्ह-विनिन्दने धातुर्भू-प्राप्ता-
वात्मनेपदी ॥ ७४ ॥ मार्ग-चान्वेषणे धातुः, कठि-शोके निगद्यते । मृजू-धातुश्च सम्प्रोक्तः शौचालंकारयोः सदा॥७५॥
मृष-धातुस्तितिक्षायां, धृष-प्रहसने मतः । इत्याधृषीया विज्ञेया धातवः सर्वदा बुधैः ॥ ७६ ॥ अथादन्ता निगद्यन्ते
धातवः पूर्वशास्त्रतः । ईप्सायां वर-धातुः स्यात्कथ-वाक्यप्रबन्धने ॥ ७७ ॥ अथो ग्रन्थे पट-वट-,संख्याने गण-
कथ्यते । शठ-श्वठ-सम्यगवभाषणे सम्मतौ सदा ॥ ७८ ॥ रह-त्यागे, स्तन-गदी-देवशब्दे, गतौ पत-। आक्षेपे
स्वर-धातुः स्याद्गतौ पष-निगद्यते ॥ ७९ ॥ कल-गतौ च संख्याने, प्रतियत्ने रच-स्मृतः । चह-परिकल्कने च,
पूजायां मह-कथ्यते ॥ ८० ॥ सार-कृप-श्रथ-अमी दौर्बल्ये धातवः स्मृताः । ईप्सायां स्पृह-धातुः स्याद्, भाम-
क्रोधे निगद्यते ॥ ८१ ॥ पैशून्ये सूच-,धातुः स्याद्भक्षणे खेट-सम्मतः । खोट-धातुर्भक्षणे च कथितः कस्यचिन्मते ॥
॥ ८२ ॥ क्षोट-क्षेपे, स्मृतो धातुर्गोम-स्यादुपलेपने । कुमार-धातुः क्रीडायां, शील-स्यादुपधारणे ॥ ८३ ॥ साम-
सान्त्वप्रयोगे च, गवेष-मार्गणे स्मृतः । वेल-कालोपदेशे च, काल-धातुः पृथङ् मतः ॥ ८४ ॥ लवने पवने चैव
पल्यूल-धातुरीरितः । गतिसुखसेवनयोर्वात-धातुः समीरितः ॥ ८५ ॥ वास-स्यादुपसेवायां, ध्वन-शब्दे प्रकथ्यते ।
आच्छादने निवास-स्यात्पृथक्कर्मणि भाज-वै ॥ ८६ ॥ प्रीतिदर्शनयोर्धातुः सभाज-कथितः सदा । प्रीतिसेवनयोश्चैव
सभाज-कस्यचिन्मते ॥ ८७ ॥ परिहाणे ऊन-धातुश्चौर्ये स्तेन-प्रभाषितः । परितापे कूट-धातुः परिदाहे च सम्मतः
॥ ८८ ॥ वां-संकेत-ग्राम-कुण-गुण-चामन्त्रणे स्मृताः । निमन्त्रणश्रावणयोः केत-,संकोचने कुण,-॥ ८९ ॥ आग-
र्वाद्धातवः प्रोक्ता आत्मनेपदगामिनः । पद-गतौ च, ग्रहणे गृह-,विस्मापने कुह-॥ ९० ॥ विक्रान्तौ शूर-वीर-द्वौ,
मृग-अन्वेषणे मतः । अर्थ-स्यादुपयाच्ञायां, स्थूल-च परिबृंहणे॥ ९१ ॥ सत्र-संतानक्रियायां, गर्व-माने निगद्यते ।

---

१ वा-पादपूरणार्थे ।

आगर्वीया इति ज्ञेया, वेष्टने सूत्र–सम्मतः ॥९२॥ मूत्र प्रस्रवणे धातू, रूक्ष–पारुष्यवाचकः । पार–तीर–समाप्त्यर्थौ, संसर्गे पुट-कथ्यते ॥ ९३ ॥ शैथिल्ये द्वौ कर्त-कत्र–,दर्शने धेक-भाषितः । अंस–धातुः समाघाते, दर्शने वल्क-कथ्यते ॥ ९४ ॥ स्याच्चित्रीकरणे चित्र–कदाचिद्दर्शने मतः । विभाजने वट–ज्ञेयो, लज–धातुः प्रकाशने ॥ ९५ ॥ प्रकाशने तथा ज्ञेयौ वटि–लजि–सदा बुधैः । संपर्के मिश्र–धातुः स्याद्युद्धे संग्राम–सम्मतः ॥९६ ॥ श्लाघायां स्तोम–धातुश्च, दण्ड–दण्डनिपातने । छिद्र–कर्णभेदने च करणभेदने तथा ॥ ९७ ॥धात्वन्तरं कर्ण इति कथितं कस्यचिन्मते । अन्ध–दृष्ट्युपघाते स्यादुपसंहार ईरितः ॥ ९८ ॥ अङ्क–पदे लक्षणे च, अङ्ग–स्यात्कस्यचिन्मते । सुख-दुःख–तत्क्रियायां, छद–स्यादपवारणे ॥ ९९ ॥ आस्वादनस्नेहनयो रस–धातुर्निगद्यते । व्यय–वित्तसमुत्सर्गे, रूप–रूपक्रियार्थकः ॥ १०० ॥ स्याद्द्वैधीकरणे छेद–,प्रेरणे लाभ–सम्मतः । पर्ण–हरितभावे च, व्रण–गात्रविचूर्णने ॥ १०१ ॥ वर्ण–वर्णक्रियायां च, विस्तारगुणवाक्ययोः । विष्क–स्याद्दर्शने धातुः, प्रेरणे क्षप–कथ्यते ॥१०२॥ वस–धातुर्निवासे च कुत्थ-आवरणे स्मृतः । अनुक्ता धातवस्त्वत्र विज्ञेयाः सुविचक्षणैः ॥ १०३ ॥

ति स्वार्थणिजन्ताश्चुरादयः ॥ १० ॥

---

## अथ ग्रन्थालंकारः ।

सूर्यपत्तनवास्तव्यो रैक्वज्ञातीयवाडवः । गर्गगोत्रावतंसोऽभूत्केशवो गणकोत्तमः ॥ १ ॥ तत्सूनुनेयं ग्रथिता कृष्ण-शंकरशर्म्मणा । गजनेत्रष्टति १८२८ मिते शालिवाहनवत्सरे ॥ २ ॥ राधमास्यर्जुने पक्षे तृतीयाजीववासरे । प्रीत्यै भूयात्स्वेष्टदेव्याः स्वगुरोर्मानदस्य च ॥ ३ ॥ बालानां सुखबोधाय धातुपाठस्य कारिका । चापलं मे किमप्यत्र क्षन्तव्यं तद् बुधाः सदा ॥ ४ ॥

इति श्रीज्योतिर्विदुपनामककेशवरामतनुजनुषा कृष्णशङ्करेण
ग्रथिता धातुपाठकारिका सम्पूर्णा ॥

---



# लिङ्गानुशासनम् ।

१ लिङ्गम् । २ स्त्री । ३ ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः । ४ अन्यूप्रत्ययान्तो धातुः । ५ अशनिभरण्यरणयः पुंसि च । ६ मिन्यन्तः । ७ वह्निवृष्ण्यग्नयः पुंसि । ८ श्रोणियोन्यूर्मयः पुंसि च । ९ क्तिन्नन्तः । १० इकारान्तश्च । ११ ऊङ्याबन्तश्च । १२ य्वन्तमेकाक्षरम् । १३ विंशत्यादिरा नवतेः । १४ दुन्दुभिरक्षेषु । १५ नाभिरक्षत्रिये । १६ उभावन्यत्र पुंसि । १७ तलन्तः । १८ भूमिविद्युत्सरिल्लतावनिताभिधानानि । १९ यादो नपुंसकम् । २० भास्स्रुक्स्रग्दिगुष्णिगुपानहः । २१ स्थूणोर्णे नपुंसके च । २२ गृहशशाभ्यां क्लीबे । २३ प्रावृड्विप्रुड्रुट्तृड्विट्त्विषः । २४ दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः । २५ तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः । २६ शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः । २७ प्रतिपदापद्विपत्संपच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः । २८ आशीर्धूःपूर्गीर्द्वारः । २९ अप्सुमनस्समासिकतावर्षाणां बहुत्वं च । ३० स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिचः । ३१ तटिसीमासंबध्याः । ३२ चुल्लिवेणिखार्यश्च । ३३ ताराधाराज्योत्स्नादयश्च । ३४ शलाका स्त्रियां नित्यम् ॥

१ पुमान् । २ घञबन्तः । ३ घाजन्तश्च । ४ भयलिङ्गभगपदानि नपुंसके । ५ नङन्तः । ६ याच्ञा स्त्रियाम् । ७ क्यन्तो घुः । ८ इषुधिः स्त्री च । ९ देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि । १० त्रिविष्टपत्रिभुवने नपुंसके । ११ द्यौः स्त्रियाम् । १२ इषुबाहू स्त्रियां च । १३ बाणकाण्डौ नपुंसके च । १४ नान्तः । १५ क्रतुपुरुषकपोलगुल्फमेघाभिधानानि । १६ अभ्रं नपुंसकम् । १७ उकारान्तः । १८ धेनुरज्जुकुहुसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् । १९ समासे रज्जुः पुंसि च । २० श्मश्रुजानुवस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके । २१ वसु चार्थवाचि । २२ मद्गुमधुशीधुसानुकमण्डलूनि नपुंसके च । २३ रुत्वन्तः । २४ दारुकसेरुजत्रुवस्तुमस्तूनि नपुंसके । २५ सक्तुर्नपुंसके च । २६ प्राग्रश्मेरकारान्तः । २७ कोपधः । २८ चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके । २९ कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुल्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च । ३० टोपधः । ३१ किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके । ३२ कुटकूटकपटकपाटकर्पटनटनिकटकीटकटानि नपुंसके च । ३३ णोपधः । ३४ ऋणलवणपर्णतोरणरणोष्णानि नपुंसके । ३५ कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च । ३६ थोपधः । ३७ काष्ठपृष्ठरिक्थोक्थानि नपुंसके । ३८ काष्ठा दिगर्था स्त्रियाम् । ३९ तीर्थप्रोथयूथगाथानि नपुंसके च । ४० नोपधः । ४१ जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके । ४२ मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसंमानभवनवसनसंभावनविमानानि नपुंसके च । ४३ पोपधः । ४४ पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके । ४५ शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च । ४६ भोपधः । ४७ तलभं नपुंसकम् । ४८ जृम्भं नपुंसके च । ४९ मोपधः । ५० रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके । ५१ संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च । ५२ योपधः । ५३ किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके । ५४ गोमयकषायमलयान्वयाव्ययानि नपुंसके च । ५५ रोपधः । ५६ द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रच्छिद्रनीरतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदरशरीरकन्दरमन्दरपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षेत्रक्षत्रमित्रकलत्रच्छत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रास्त्रशस्त्रशास्त्रवस्त्रपत्रपात्रनक्षत्राणि नपुंसके । ५७ शुक्रमदेवतायाम् । ५८ चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च । ५९ षोपधः । ६० शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके । ६१ यूषकरीषमिषविषवर्षाणि नपुंसके च । ६२ सोपधः । ६३ पनसबिसबुससाहसानि नपुंसके । ६४ चमसरसनिर्यासोपवासकर्पासवासमासकासकांसमांसानि नपुंसके च । ६५ कंसं चाप्राणिनि । ६६ रश्मिदिवसाभिधानानि । ६७ दीधितिः स्त्रियाम् । ६८ दिनाहनी नपुंसके । ६९ मानाभिधानानि । ७० द्रोणाढकौ नपुंसके च । ७१ खारीमानिके स्त्रियाम् । ७२ दाराक्षतलाजासूनां बहुत्वं च । ७३ नाड्यपजनोपपदानि व्रणाङ्गपदानि । ७४ मरुद्गरुत्तरद्दुःखिजः । ७५ ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकपिमुनयः । ७६ ध्वजगजमुञ्जपुञ्जाः । ७७ हस्तकुन्तान्तवातव्रातदूतधूर्तसूतचूतमुहूर्ताः । ७८ षण्डमण्डकरण्डभरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः । ७९ वंशांशपुरोडाशाः । ८० ह्रदकन्दकुन्दबुद्बुदशब्दाः । ८१ अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः । ८२ पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः । ८३ सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः ॥

१ नपुंसकम् । २ भावे ल्युडन्तः । ३ निष्ठा च । ४ त्वष्यञौ तद्धितौ । ५ कर्मणि च ब्राह्मणादिगुणवचनेभ्यः । ६ यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि । ७ अव्ययीभावः । ८ द्वन्द्वैकत्वम् । ९ अभाषायां हेमन्तशिशिरावहोरात्रे च । १० अनञ्कर्मधारयस्तत्पुरुषः । ११ अनल्पे छाया । १२ राजामनुष्यपूर्वा सभा । १३ सुरासेनाच्छायाशालानिशाः स्त्रियां च । १४ परवत् ।

१५ रात्राहाहाः पुंसि । १६ अपथपुण्याहे नपुंसके । १७ संख्यापूर्वा रात्रिः । १८ द्विगुः स्त्रियां च । १९ इसुसन्तः । २० अर्चिः स्त्रियां च । २१ छदिः स्त्रियामेव । २२ मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि । २३ सीरार्थौदनाः पुंसि । २४ वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च । अटवी स्त्रियाम् । २६ लोपधः । २७ तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि । २८ शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः पुंसि च । २९ शतादिः संख्या । ३० शतायुतप्रयुताः पुंसि च । ३१ लक्षाकोटी स्त्रियाम् । ३२ सहस्रः पुंसि च । ३३ मन्द्व्यच्कोऽकर्तरि । ३४ ब्रह्मन्पुंसि च । ३५ नामरोमणी नपुंसके । ३६ असन्तो द्व्यच्कः । ३७ अप्सराः स्त्रियाम् । ३८ त्रान्तः । ३९ यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव । ४० भृत्रामित्रच्छात्रपुत्रमन्त्रवृत्रमैत्राः पुंसि । ४१ पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च । ४२ बलकुसुमयुद्धपत्तनरणाभिधानानि । ४३ पद्मकमलोत्पलानि पुंसि च । ४४ आहवसंग्रामौ पुंसि । ४५ आजिः स्त्रियामेव । ४६ फलजातिः । ४७ वृक्षजातिः स्त्रियामेव । ४८ वियज्जगत्सकृत्कृषत्पृषच्छकृद्यकृदुदश्वितः । ४९ । नवनीतावतानृतामृतनिमित्तवित्तपित्तव्रतरजतवृत्तपलितानि । ५० श्राद्धकुलिशदैवपीठकुण्डाङ्गदधिसक्थ्यक्ष्यस्थ्यास्पदाकाशकण्वबीजानि । ५१ दैवं पुंसि च । ५२ धान्याज्यसस्यरूप्यपण्यवर्ण्यधिष्ण्यहव्यकव्यकाव्यसत्यापत्यमूल्याशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि । ५३ द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचकवरवृन्दारकाणि । ५४ अक्षमिन्द्रिये ॥

१ स्त्रीपुंसयोः । २ गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमासिमरीचयः । ३ मन्युसीधुकर्कन्धुसिन्धुकण्डुरेणवः । ४ गुणवचनमुकारान्तं नपुंसके च । ५ अपत्यार्थतद्धिते ॥

१ पुंनपुंसकयोः । २ घृतभूतमुस्तक्ष्वेलितैरावतपुस्तबुस्तलोहिताः । ३ शृङ्गार्घनिदाघोद्यमशल्यदृढाः । ४ व्रजकुञ्जकुथकूर्चप्रस्थवर्पार्भार्धर्चपुच्छाः । ५ कबन्धौषधायुधान्ताः । ६ दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशाङ्कुरकाशकुशकुलिशाः । ७ गृहमेहदेहपट्टपटहाष्टापदार्बुदककुदाश्च ॥

१ अवशिष्टलिङ्गम् । २ अव्ययं कतियुष्मदस्मदः । ३ ष्णान्ता संख्या । ४ गुणवचनं च । कृत्याश्च । ६ करणाधिकरणयोर्युट् । ७ सर्वादीनि सर्वनामानि ॥

इति श्रीपाणिनिमुनिप्रणीतं लिङ्गानुशासनं समाप्तम् ॥



# अथ कौमुद्यन्तर्गतवार्त्तिकपाठः ।

## पञ्चसन्धिप्रकरणम् ।

१–ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् । २–समासप्रत्ययविधौ प्रतिषेधः । ३–उगिद्वर्णग्रहणवर्जम् । ४–यणः प्रतिषेधो वाच्यः।५–यणो मयो द्वे वाच्ये । ६–तत्परे च ।७–वा हतजग्धयोः । ८–गोर्यूतौ छन्दस्युपसङ्ख्यानम् । ९–अध्वपरिमाणे च । १०–अक्षादूहिन्यामुपसंख्यानम् । ११–स्वादीरेरिणोः । १२–प्रादूहोढोढ्येषैष्येषु । १३–ऋते च तृतीयासमासे । १४–प्रवत्सतरकम्बलवसनार्णदशानामृणे । १५–एवे चानियोगे । १६–शकन्ध्वादिषु पररूपं वाच्यम् । १७–ओत्वोष्ठयोः समासे वा । १८–एकाचो न । १९–डाचि बहुलं द्वे भवतः । २०–ऋति सवर्णे ऋ वा । २१–लृति सवर्णे लृ वा । २२–न समासे । २३–सिति च । २४–त्रियां न । २५–भोराजन्यविशां वेति वाच्यम् । २६–अनाम्नवतिनगरीणामिति वाच्यम् । २७–प्रत्यये भाषायां नित्यम् । २८–छत्वममीति वाच्यम् । २९–यवलपरे यवला वेति वाच्यम् । ३०–चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् । ३१–संपुंकानां सो वक्तव्यः । ३२–समो वा लोपमेके । ३३–शरः खयः । ३४–खर्परे शरि वा विसर्गलोपो वक्तव्यः । ३५–पाशकल्पककाम्येष्विति वाच्यम् । ३६–अनव्ययस्येति वाच्यम् । ३७–काम्ये रोरेवेति वाच्यम् । ३८–मुहुसः प्रतिषेधः । ३९–कस्कादिषु च । ४०–रूपरात्रिरथन्तरेषु रुत्वं वाच्यम् । ४१–अहरादीनां पत्यादिषु वा रेफः ॥

## षड्लिङ्गप्रकरणम् ।

४२–उभयोऽन्यत्र । ४३–अपुरीति वक्तव्यम् । ४४–विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् । ४५–पूर्वत्रासिद्धे न स्थानिवत् । ४६–तस्य दोषः संयोगादिलोपलत्वणत्वेषु । ४७–लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः । ४८–प्रथमलिङ्गग्रहणं च । ४९–क्वौ लुप्तं न स्थानिवत् । ५०–नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन । ५१–दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः । ५२–ऋवर्णान्नस्य णत्वं वाच्यम् । ५३–ओतो णिदिति वाच्यम् ।५४–मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः । ५५–औङः श्यां प्रतिषेधो वाच्यः । ५६–वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन । ५७–ङावुत्तरपदे प्रतिषेधो वक्तव्यः । ५८–संबुद्धौ नपुंसकानां नलोपो वा वाच्यः । ५९–समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः । ६०–एते वान्नावादय आदेशा अनन्वादेशे वा वक्तव्याः । ६१–वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च । ६२–अस्य–संबुद्धौ वाऽनङ् नलोपश्च वा वाच्यः । ६३–औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च । ६४–उत्तरपदत्वे चापदादिविधौ प्रतिषेधः । ६५–अन्वादेशे नपुंसके एनद्वक्तव्यः । ६६–बहूर्जि नुम्प्रतिषेधः । ६७–अन्त्यात्पूर्वो वा नुम् ॥

## स्त्रीप्रत्ययप्रकरणम् ।

६८–संभस्त्राजिनशणपिण्डेभ्यः फलात् । ६९–सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् । ७०–शूद्रा चामहत्पूर्वा जातिः । ७१–मूलान्नञः । ७२–वनो न हश इति वाच्यम् । ७३–बहुव्रीहौ वा । ७४–मामकनरकयोरुपसंख्यानम् । ७५–त्यक्त्यपोश्च । ७६–त्यकनश्च निषेधः । ७७–आशिषि वुनश्च न । ७८–उत्तरपदलोपे न । ७९–क्षिपकादीनां च । ८०–तारका ज्योतिषि । ८१–वर्णका तान्तवे । ८२–वर्त्तका शकुनौ प्राचाम् । ८३–अष्टका पितृदेवत्ये ।८४–सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम् । ८५–धात्वन्तयकोस्तु नित्यम् । ८६–नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् । ८७–आसुरेरुपसंख्यानम् । ८८–त्रयस्त्रचरम इति वाच्यम् । ८९–त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् । ९०–पिशङ्गादुपसंख्यानम् । ९१–असितपलितयोर्न । ९२–छन्दसि क्नमेके । ९३–मत्स्यस्य ङ्याम् । ९४–सूर्यागस्त्ययोश्छे च ङ्यां च ।९५–तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम् । ९६–नील्या अन् वक्तव्यः । ९७–नीलादोषधौ । ९८–प्राणिनि च । ९९–संज्ञायां वा । १००–खरुसंयोगोपधान्न । १०१–पालकान्तान्न । १०२–सूर्याद्देवतायां चाब्वाच्यः । १०३–हिमारण्ययोर्महत्त्वे । १०४–यवाद्दोषे । १०५–यवनाल्लिप्याम् । १०६–मातुलोपाध्याययोरानुग्वा । १०७–या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः । १०८–आचार्यादणत्वं च ।१०९–अर्यक्षत्रियाभ्यां वा । ११०–जातिपूर्वादिति वक्तव्यम् । १११–जातान्तान्न । ११२–पाणिगृहीती भार्यायाम् । ११३–अङ्गगात्रकण्ठेभ्यो वक्तव्यम् । ११४–पुच्छाच्च । ११५–कबरमणिविषशरेभ्यो नित्यम् । ११६–उपमानात्पक्षाच्च पुच्छाच्च ।११७–योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः । ११८–अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम् । ११९–श्वशुरस्योकाराकारलोपश्च । १२०–सहितसहाभ्यां चेति वक्तव्यम् । १२१–षायनश्चाब्वाच्यः ।

## कारकप्रकरणम् ।

१२२–अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् । १२३–नीवह्योर्न । १२४–नियन्तृकर्तृकस्य वहेरनिषेधः । १२५–आदिखाद्योर्न । १२६–भक्षेरहिंसार्थस्य न । १२७–जल्पतिप्रभृतीनामुपसंख्यानम् । १२८–दृशेश्च । १२९–शब्दायतेर्न । १३०–अभिवादिदृशोरात्मनेपदे वेति वाच्यम् । १३१–अभुक्त्यर्थस्य न । १३२–उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते । १३३–अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि । १३४–प्रकृत्यादिभ्य उपसंख्यानम् । १३५–अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया । १३६–क्रियया यमभिप्रैति

सोऽपि सम्प्रदानम् ।१३७-कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा । १३८-तादर्थ्ये चतुर्थी वाच्या ।१३९-क्लृपि सम्पद्यमाने च । १४०-उत्पातेन ज्ञापिते च । १४१-हितयोगे च । १४२-नौकाकान्नशुकशृगालवर्ज्येष्विति वाच्यम् । १४३-जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् । १४४-ल्यब्लोपे कर्मण्यधिकरणे च । १४५ यतश्चाध्वकालनिर्माणं तत्र पञ्चमी । १४६-तद्युक्तादध्वनः प्रथमासप्तम्यौ । १४७-कालात्सप्तमी च वक्तव्या । १४८-निमित्तपर्य्यायप्रयोगे सर्वासां प्रायदर्शनम् । १४९-अज्वारिसन्ताप्योरिति वाच्यम् । १५०-गुणकर्मणि वेष्यते । १५१-शेषे विभाषा । १५२-कमेरनिषेधः । १५३-द्विषः शतुर्वा । १५४-क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् । १५५-साध्वसाधुप्रयोगे च। १५६-निमित्तात्कर्मयोगे । १५७-अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च । १५८-अप्रत्यादिभिरिति वक्तव्यम् ॥

## समासप्रकरणम् ।

१५९-इवेन समासो विभक्त्यलोपश्च । १६०-समाहारे चायमिष्यते । १६१-गम्यादीनामुपसङ्ख्यानम् । १६२-अवरस्योपसंख्यानम् । १६३-अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् । १६४-भयभीतभीतिभीभिरिति वक्तव्यम् । १६५-गुणात्तरेण तरलोपश्चेति वक्तव्यम् । १६६-कृद्योगा षष्ठी समस्यत इति वाच्यम् । १६७-प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम् । १६८-एकविभक्तावषष्ठ्यन्तवचनम् । १६९-उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम् । १७०-सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । १७१-द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् । १७२-अपरस्यार्धे पश्चभावो वाच्यः । १७३-श्रेण्यादिषु च्व्यर्थवचनं कर्त्तव्यम् । १७४-शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् । १७५-ईषद् गुणवचनेनेति वाच्यम् । १७६-नञो नलोपस्तिङि क्षेपे ।१७७-कारिकाशब्दस्योपसंख्यानम् । १७८-च्व्यर्थ इति वाच्यम् । १७९-प्रादयो गताद्यर्थे प्रथमया । १८०-अत्यादयः क्रान्ताद्यर्थे द्वितीयया । १८१-अवादयः क्रुष्टाद्यर्थे तृतीयया । १८२-पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । १८३-निरादयः क्रान्ताद्यर्थे पञ्चम्या । १८४-कर्मप्रवचनीयानां प्रतिषेधः । १८५-महदात्त्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च । १८६-अष्टनः कपाले हविषि । १८७-गवि च युक्ते । १८८-प्राक् शतादिति वक्तव्यम् । १८९-षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यम् । १९०-द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः । १९१-संख्यापूर्वं रात्रं क्लीबम् । १९२-सविशेषणस्य प्रतिषेधः । १९३-अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः । १९४-आबन्तो वा । १९५-अनो नलोपश्च वा द्विगुः स्त्रियाम् । १९६-पात्राद्यन्तस्य न । १९७-पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा । १९८-पथः संख्याव्ययादेः । १९९-सामान्ये नपुंसकम् । २००-प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः । २०१-नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः । २०२-शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः।२०३-त्वतलोर्गुणवचनस्य ।२०४-भस्याढे तद्धिते ।२०५-ठक्छसोश्च ।२०६-कुक्कुट्यादीनामण्डादिषु । २०७-कोपधप्रतिषेधे तद्धितवुग्रहणम् । २०८-अमानिनीति वक्तव्यम् । २०९-अगोवत्सहलेष्विति वाच्यम् । २१०-संख्यायास्तत्पुरुषस्य वाच्यः । २११-नेतुर्नक्षत्रेऽब्वक्तव्यः । २१२-खुरखराभ्यां वा नस् । २१३-वेग्रो वक्तव्यः । २१४-ख्यश्च । २१५-गन्धस्येत्त्वे तदेकान्तग्रहणम् । २१६-ईयसो बहुव्रीहेर्नेति वाच्यम् । २१७-सर्वनामसंख्ययोरुपसंख्यानम् । २१८-मिथोऽनयोः समासे संख्या पूर्वम् । २१९-संख्याया अल्पीयस्याः । २२०-द्वन्द्वेऽपि । २२१-वा प्रियस्य । २२२-गड्वादेः परा सप्तमी । २२३-जातिकालसुखादिभ्यः परा निष्ठा वाच्या । २२४-प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ । २२५-अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे । २२६-घ्यन्तादजाद्यदन्तं विप्रतिषेधेन । २२७-ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण । २२८-लघ्वक्षरं पूर्वम् । २२९-अभ्यर्हितं च । २३०-वर्णानामानुपूर्व्येण । २३१-भ्रातुर्ज्यायसः । २३२-स्थेणोर्लुङीति वक्तव्यम् । २३३-फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम् । २३४-वायुशब्दप्रयोगे प्रतिषेधः । २३५-विष्णौ न । २३६-विरूपाणामपि समानार्थानाम् । २३७-त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते । २३८-त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि । २३९-अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् । २४०-अनेकशफेष्विति वाच्यम् ।२४१-अनृचबह्वृचावध्येतर्य्येव । २४२-अवर्णान्ताद्वा ।२४३-कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते । २४४-संख्याया नदीगोदावरीभ्यां च । २४५-त्र्युपाभ्यां चतुरोऽजिष्यते । २४६-पल्यराजभ्यां चेति वक्तव्यम् । २४७-स्वातिभ्यामेव । २४८-ब्राह्मणाच्छंसिन उपसंख्यानम् । २४९-अञस उपसंख्यानम् । २५०-पुंसानुजो जनुषान्ध इति च । २५१-पूरण इति वक्तव्यम् । २५२-हृद्द्युभ्यां च । २५३-अन्ताच्च । २५४-अपो योनियन्मतुषु । २५५-वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु । २५६-आमुष्यायणामुष्यपुत्रिकाऽऽमुष्यकुलिकेति च । २५७-देवानांप्रिय इति च मूर्खे । २५८-शेपपुच्छलाङ्गूलेषु शुनः । २५९-दिवश्च दासे । २६०-विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् । २६१-कन्यया न । २६२-इके चरतावुपसंख्यानम् । २६३-निष्के चेति वाच्यम् । २६४-उत्तरपदस्य चेति वक्तव्यम् । २६५-इयङुवङ्भाविनामव्ययानां च नेति वाच्यम् । २६६-अभ्रुंकुसादीनामिति वक्तव्यम् । २६७-मातज्मातृकमातृषु वा । २६८-अस्तोश्चेति वक्तव्यम् । २६९-धेनोर्भव्यायाम् । २७०-लोकस्य पृणे । २७१-इत्येऽनभ्यासस्य । २७२-भ्राष्ट्राग्न्योरिन्धे । २७३-गिलेऽगिलस्य । २७४-गिलगिले च । २७५-उष्णभद्रयोः करणे । २७६-दक्षे चेति वक्तव्यम् । २७७-त्रौ च ।

२७८–दिक्शब्देभ्यस्तीरस्य तारभावो वा । २७९–दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च । २८०–अपील्वादीनामिति वाच्यम् । २८१–शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः । २८२–द्व्यच्त्र्यजभ्यामेव । २८३–इरिकादिभ्यः प्रतिषेधो वक्तव्यः । २८४–गिरिनद्यादीनां वा । २८५–युवादेर्न । २८६–अतद्धित इति वाच्यम् ॥

## तद्धितप्रकरणम् ।

२८७–पृथिव्या ञाञौ । २८८–देवाद्यञञौ । २८९–बहिषष्टिलोपो यञ् च । २९०–ईकक् च । २९१–स्थाम्नोऽकारः । २९२–भवार्थे तु लुग्वाच्यः । २९३–लोम्नोऽपत्येषु बहुषु । २९४–गोरजादिप्रसङ्गे यत् । २९५–अग्निकलिभ्यां ढग्वक्तव्यः । २९६–वृद्धस्य च पूजायामिति वाच्यम् । २९७–यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम् । २९८–व्यासवरुडनिषादचण्डालबिम्बानां चेति वक्तव्यम् । २९९–चटकस्येति वाच्यम् । ३००–स्त्रियामपत्ये लुग्वक्तव्यः । ३०१–राज्ञो जातावेवेति वाच्यम् । ३०२–वा हितनाम्न इति वाच्यम् । ३०३–तक्ष्णोऽण उपसंख्यानम् । ३०४–परमप्रकृतेरेवायमिष्यते ।३०५–छागवृषयोरपि । ३०६–त्यदादीनां फिञ् वा वाच्यः । ३०७–पूरोरण् वक्तव्यः । ३०८–पाण्डोर्ड्यण् । ३०९–कम्बोजादिभ्य इति वक्तव्यम् । ३१०–शकलकर्दमाभ्यामुपसंख्यानम् । ३११–नील्या अन् । ३१२–पीतात्कन् । ३१३–हरिद्रामहारजनाभ्यामञ् । ३१४–अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः । ३१५–दोष उपसंख्यानम् । ३१६–शतरुद्राद्घश्च । ३१७–तदस्मिन्वर्तते इति नवयज्ञादिभ्य उपसंख्यानम् । ३१८–पूर्णमासादण् वक्तव्यः । ३१९–पितुर्भ्रातरि व्यत् । ३२०–मातुर्डुलच् । ३२१–मातृपितृभ्यां पितरि डामहच् । ३२२–मातरि षिच्च । ३२३–अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः । ३२४–तिलान्निष्फलात्पिञ्जपेजौ । ३२५–पिञ्जश्छन्दसि डिच्च । ३२६–प्रकृत्याऽके राजन्यमनुष्ययुवानः । ३२७–वृद्धाच्चेति वक्तव्यम् । ३२८–गणिकाया यञिति वक्तव्यम् । ३२९–पृष्ठादुपसंख्यानम् । ३३०–गजसहायाभ्यां चेति वक्तव्यम् । ३३१–अह्नः खः क्रतौ । ३३२–पर्श्वा णस् वक्तव्यः । ३३३–खलादिभ्य इनिर्वक्तव्यः । ३३४–स्वार्थ उपसंख्यानम् । ३३५–मुख्यार्थात्तूकृथशब्दाद्ठगणौ नेष्येते । ३३६–सूत्रान्तात्त्वकल्पादेरेवेष्यते । ३३७–विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम् । ३३८–अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम् । ३३९–आख्यानाख्यायिकेतिहासपुराणेभ्यश्च । ३४०–सर्वादेः सादेश्च लुग्वक्तव्यः । ३४१–इकन् पदोत्तरपदात् । ३४२–शतषष्टेः षिकन् पथः । ३४३–हरीतक्यादिषु व्यक्तिः । ३४४–खलतिकादिषु वचनम् । ३४५–मनुष्यलुपि प्रतिषेधः । ३४६–महिषाच्चेति वक्तव्यम् । ३४७–अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् । ३४८–अमेहक्कतसित्रेभ्य एव । ३४९–अव्ययानां भमात्रे टिलोपः । ३५०–त्यब्नेर्ध्रुव इति वक्तव्यम् । ३५१–निसो गते । ३५२–अरण्याण्णः ३५३–दूरादेत्यः । ३५४–उत्तरादाहञ् । ३५५–वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ३५६–आपदादिपूर्वात्कालान्तात् । ३५७–पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् । ३५८–वा गोमयेषु । ३५९–चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । ३६०–अग्रादिपश्चाड्डिमच् । ३६१–अन्ताच्च । ३६२–सुसर्वार्धदिक्शब्देभ्यो जनपदस्य । ३६३–ऋतो वृद्धिमद्विधाववयवानाम् । ३६४–चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् । ३६५–फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ । ३६६–श्रविष्ठाषाढाभ्यां छण् वक्तव्यः । ३६७–जातार्थे प्रतिप्रसूतोऽण् वा डिद्वक्तव्यः । ३६८–परिमुखादिभ्य एवेष्यते । ३६९–अध्यात्मादेष्ठञिष्यते । ३७०–सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् । ३७१–वहेस्तुरणिट् च । ३७२–अग्नीधः शरणे रण् भं च । ३७३–समिधामाधाने षेण्यण् । ३७४–पत्राद्वाह्ये । ३७५–वैरे देवासुरादिभ्यः प्रतिषेधः । ३७५–चरणाद्धर्माम्नाययोरिति वक्तव्यम् । ३७७–घोषग्रहणमपि कर्त्तव्यम् । ३७८–कौपिञ्जलहास्तिपदादण् वाच्यः । ३७९–आथर्वणिकस्येकलोपश्च । ३८०–अश्मनो विकारे टिलोपो वक्तव्यः ।३८१–एकाचो नित्यम् । ३८२–तालाद्धनुषि । ३८३–फलपाकशुषामुपसंख्यानम् । ३८४–पुष्पमूलेषु बहुलम् । ३८५–तदाहेति माशब्दादिभ्य उपसंख्यानम् । ३८६–आहौ प्रभूतादिभ्यः । ३८७–पृच्छतौ सुस्नातादिभ्यः । ३८८–गच्छतौ परदारादिभ्यः । ३८९–इकारादाविति वाच्यम् । ३९०–भावप्रत्ययान्तादिमब् वक्तव्यः । ३९१–वृद्धेर्वृधुषिभावो वक्तव्यः । ३९२–अधर्माच्चेति वक्तव्यम् । ३९३–नराच्चेति वक्तव्यम् । ३९४–विशसितुरिड्लोपश्चाच्च वक्तव्यः । ३९५–विभाजयितुर्णिलोपश्चाच्च वाच्यः । ३९६–नस् नासिकायाः । ३९७–त्रा केशेषु । ३९८–अच्चि शीर्ष इति वाच्यम् । ३९९–पञ्चजनादुपसङ्ख्यानम् । ४००–सर्वजनाट्ठञ् खश्च । ४०१–महाजनाट्ठञ् । ४०२–आचार्यादणत्वं च । ४०३–सर्वाण्णो वेति वक्तव्यम् । ४०४–पुरुषाद्वधविकारसमूहतेनकृतेषु । ४०५–अर्धाच्चेति वक्तव्यम् । ४०६–कार्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्च वा । ४०७–बहुपूर्वाच्चेति वक्तव्यम् । ४०८–केवलायाश्चेति वक्तव्यम् । ४०९–द्वित्रिपूर्वादण् च । ४१०–वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् । ४११–सन्निपाताच्चेति वक्तव्यम् । ४१२–ब्रह्मवर्चसादुपसंख्यानम् । ४१३–चतुर्थ्यर्थ उपसंख्यानम् । ४१४–अपचतीति द्रोणादण् च । ४१५–स्तोमे डविधिः । ४१६–यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् । ४१७–कोशशतयोजनशतयोरुपसंख्यानम् । ४१८–ततोऽभिगमनमर्हतीति च वक्तव्यम् । ४१९–आहतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम् । ४२०–महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् । ४२१–चतुर्मासाण्णो यज्ञे तत्र भव इत्यर्थे । ४२२–संज्ञायामण् । ४२३–अर्थाभ्यां तु यथासंख्यं नेष्यते । ४२४–चूडादिभ्य उपसंख्यानम् । ४२५–आकालाट्ठंश्च । ४२६–अर्हतो नुम् च । ४२७–चतुर्वर्णादीनां स्वार्थ उपसंख्यानम् । ४२८–श्रोत्रियस्य यलोपश्च । ४२९–सहायाद्वा । ४३०–खप्रत्ययानुत्पत्तौ

यलोपो वा वक्तव्यः । ४३१-अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् । ४३२-गोष्ठजादयः स्थानादिषु पशुनामभ्यः । ४३३-संघाते कटच् । ४३४-विस्तारे पटच् । ४३५-द्वित्वे गोयुगच् । ४३६-षट्त्वे षड्गवच् । ४३७-स्नेहे तैलच् । ४३८-भवने क्षेत्रे शाकटशाकिनौ । ४३९-कप्रत्ययचिकादेशौ च वक्तव्यौ । ४४०-क्लिन्नस्य चिल् पिल् लश्चास्य चक्षुषी । ४४१-चुल् च । ४४२-प्रमाणे लः । ४४३-द्विगोर्नित्यम् । ४४४-प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः । ४४५-वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् । ४४६-चतुरश्छयतावाद्यक्षरलोपश्च । ४४७-तावतिथेन गृह्णातीति कन् वक्तव्यो नित्यं च लुक् । ४४८-वटकेभ्य इनिर्वाच्यः। ४४९-भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः । ४५०-विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः । ४५१-वृत्तेश्च । ४५२-ज्योत्स्नादिभ्य उपसंख्यानम् । ४५३-रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् । ४५४-नगपांसुपाण्डुभ्यश्च । ४५५-कच्छ्वा ह्रस्वत्वं च । ४५६-अन्येभ्योऽपि दृश्यते । ४५७-अर्णसो लोपश्च । ४५८-अन्येभ्योऽपि दृश्यते । ४५९-अन्येभ्योऽपि दृश्यते । ४६०-आमयस्योपसंख्यानं दीर्घश्च । ४६१-शृङ्गवृन्दाभ्यामारकन् । ४६२-फलबर्हाभ्यामिनच् । ४६३-हृदयाच्चालुरन्यतरस्याम् । ४६४-शीतोष्णतृप्रेभ्यस्तदसहने । ४६५-हिमाच्चेलुः । ४६६-बलादूलः । ४६७-वातात्समूहे च । ४६८-तप्पर्वमरुद्भ्याम् । ४६९-कुत्सित इति वक्तव्यम् । ४७०-प्राण्यङ्गान्न । ४७१-पिशाचाच्च । ४७२-बाहूरुपूर्वपदाद्बलात् । ४७३-सर्वादेश्च । ४७४-अर्थाच्चासन्निहिते । ४७५-तदन्ताच्च । ४७६-सर्वोभयार्थाभ्यामेव । ४७७-समानस्य सभावो द्यश्चाहनि । ४७८-पूर्वपूर्वतरयोः पर उदारी च संवत्सरे । ४७९-इदम इश् समसण् प्रत्ययश्च संवत्सरे । ४८०-परस्मादेद्यव्यहनि । ४८१-इदमोऽश् द्यश्च । ४८२-पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस् । ४८३-द्युश्चोभयाद्वक्तव्यः । ४८४-एतदोऽपि वाच्यः । ४८५-थमुन्नन्तात्स्वार्थे डदर्शनम् । ४८६-तीयादीकक् स्वार्थे वा वाच्यः । ४८७-न विद्यायाः । ४८८-ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् । ४८९-अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः । ४९०-शीले को मलोपश्च । ४९१ चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः । ४९२-अनजादौ च विभाषा लोपो वक्तव्यः । ४९३-लोपः पूर्वपदस्य च । ४९४-विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः । ४९५-उवर्णाल्ल इलस्य च । ४९६-ऋवर्णादपि । ४९७-द्वितीयं सन्ध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः।४९८-एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः।४९९-षषष्ठाजादिवचनात्सिद्धम् । ५००-किमोऽस्मिन्विषये डतरजपि । ५०१-पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् । ५०२-चञ्चद्बृहतोरुपसंख्यानम् । ५०३-नवस्य नू आदेशस्त्नतनप्खाश्च प्रत्यया वक्तव्याः । ५०४-नश्च पुराणे प्रात् । ५०५-भागरूपनामभ्यो धेयः । ५०६-आग्नीध्रसाधारणादञ् । ५०७-लोहितालिङ्गबाधनं वा । ५०८-बह्वल्पार्थान्मङ्गलामङ्गलवचनम् । ५०९-आद्यादिभ्य उपसंख्यानम् । ५१०-अभूततद्भाव इति वक्तव्यम् । ५११-अव्ययस्य च्वावीत्वं नेति वाच्यम् । ५१२-डाचि विवक्षिते द्वे बहुलम् । ५१३-नित्यमाम्रेडिते डाचीति वक्तव्यम् । ५१४-भद्राच्चेति वक्तव्यम् । ५१५-आनुपूर्व्ये द्वे वाच्ये । ५१६-सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः । ५१७-क्रियासमभिहारे च । ५१८-कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् । ५१९-असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः । ५२०-स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः ॥

## तिङन्तप्रकरणम् ।

५२१-चुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ । ५२२-दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः । ५२३-अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् । ५२४-आशिषि नाथ इति वाच्यम् । ५२५-सिज्लोप एकादेशे सिद्धो वाच्यः । ५२६-इर इत्संज्ञा वाच्या । ५२७-ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन । ५२८-सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः । ५२९-कास्यनेकाज्ग्रहणं कर्त्तव्यम् । ५३०-ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन । ५३१-कमेश्च्लेश्चङ् वाच्यः । ५३२-आङि चम इति वक्तव्यम् । ५३३-इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन । ५३४-गुपेर्निन्दायाम् । ५३५-तिजेः क्षमायाम् । ५३६-कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने संशये च । ५३७-मानेर्जिज्ञासायाम् । ५३८-बधेश्चित्तविकारे । ५३९-दानेरार्जवे । ५४०-शानेर्निशाने । ५४१-स्वञ्जेरुपसंख्यानम् । ५४२-स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः । ५४३-श्चयतेर्लिट्यभ्यासलक्षणप्रतिषेधः । ५४४-वर्जने कृशाज् नेष्टः । ५४५-ऊर्णोतेराम्नेति वाच्यम् । ५४६-इण्वदिक इति वक्तव्यम् । ५४७-दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः । ५४८-लुङि वा । ५४९-सनि ण्वुलि ल्युटि च न । ५५०-दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ । ५५१-क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन । ५५२-शे तृम्फादीनां नुम् वाच्यः । ५५३-अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम् । ५५४-मस्जेरन्त्यात्पूर्वो नुम् वाच्यः । ५५५-इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति । ५५६-धूञ्प्रीञोर्नुग्वक्तव्यः । ५५७-काण्यादीनां वेति वक्तव्यम् । ५५८-पातेर्णौ लुग्वक्तव्यः । ५५९-प्रलम्भनाभिभवपूजासु लियो नित्यमात्वमाशिति वाच्यम् । ५६०-रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः । ५६१-ईर्ष्यतेस्तृतीयस्येति वक्तव्यम् । ५६२-तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः । ५६३-आशङ्कायां सन् वक्तव्यः । ५६४-राधो हिंसायां सनीस् वाच्यः । ५६५-सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः । ५६६-स च पदान्तवद्वाच्यः । ५६७-हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः । ५६८-रीगृत्वत इति वक्तव्यम् । ५६९-मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न । ५७०-अश्ववृषयोर्मैथुनेच्छायाम् । ५७१-क्षीरलवणयोर्लालसायाम् । ५७२-सर्वप्रातिपदिकानां क्याचि

लालसायां सुगसुकौ । ५७३-अधिकरणाच्चेति वक्तव्यम् । ५७४-ओजसोऽप्सरसो नित्यमितरेषां विभाषया । ५७५-आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः।५७६-सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः।५७७-उरस्योमाङ्क्ष्वाटः प्रतिषेधः । ५७८-लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि।५७९-सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वाच्यम्। ५८०-हनुचलन इति वक्तव्यम् । ५८१-तपसः परस्मैपदं च।५८२-फेनाच्चेति वाच्यम् ।५८३-सुदिनदुर्दिननीहारेभ्यश्च । ५८४-पुच्छादुदसने व्यसने पर्य्यसने च ।५८५-भाण्डात्समाचयने ।५८६-चीवरादर्जने परिधाने च । ५८७-व्रताद् भोजनतन्निवृत्त्योः । ५८८-वस्त्रात्समाच्छादने ।५८९-हल्यादिभ्यो ग्रहणे ।५९०-अर्थवेदयोरप्यापुग्वक्तव्यः।५९१-कण्ड्वादेस्तृतीयस्येति वाच्यम् ।५९२-यथेष्टं नामधातुषु । ५९३-प्रतिषेधे हसादीनामुपसंख्यानम् । ५९४-हरतेरप्रतिषेधः । ५९५-परस्परोपपदाच्चेति वक्तव्यम् । ५९६-पराङ्गकर्मकान्न निषेधः । ५९७-समोऽकूजने । ५९८-आगमेः क्षमायाम् । ५९९-शिक्षेर्जिज्ञासायाम् । ६००-हरतेर्गतताच्छील्ये । ६०१-किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम् । ६०२-मुडपि हर्षादिष्वेव वक्तव्यः । ६०३-आङि नुप्रच्छयोः । ६०४-शप उपालम्भे । ६०५-आङः प्रतिज्ञायामुपसंख्यानम् । ६०६-ईहायामेव । ६०७-उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् । ६०८-वा लिप्सायामिति वक्तव्यम् । ६०९-स्वाङ्गकर्मकाच्चेति वक्तव्यम् । ६१०-विदिप्रच्छिस्वरतीनामुपसंख्यानम् । ६११-अर्त्तिश्रुदृशिभ्यश्चेति वक्तव्यम् । ६१२-उपसर्गादस्यत्यूह्योर्वेति वाच्यम् । ६१३-ज्योतिरुद्गमन इति वाच्यम् । ६१४-स्वराद्यन्तोपसर्गादिति वक्तव्यम् । ६१५-अदेः प्रतिषेधः । ६१६-धेट उपसंख्यानम् । ६१७-अनाचमिकमिवमीनामिति वक्तव्यम् । ६१८-सकर्मकाणां प्रतिषेधो वक्तव्यः । ६१९-दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम् । ६२०-सृजियुज्योः श्यंस्तु । ६२१-सृजेः श्रद्धोपपन्ने कर्त्तर्य्येवेति वाच्यम् । ६२२-भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात् । ६२३-यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम् । ६२४-णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् । ६२५-अत्यन्तापह्नवे लिड्वक्तव्यः । ६२६-यदायद्योरुपसंख्यानम् । ६२७-कामप्रवेदन इति वक्तव्यम् । ६२८-क्रियासमभिहारे द्वे वाच्ये ॥

## कृदन्तप्रकरणम् ।

६२९-वसेस्तव्यत् कर्त्तरि णिच्च । ६३०-केलिमर उपसंख्यानम् । ६३१-निर्विण्णस्योपसंख्यानम् । ६३२-ण्यन्तभादीनामुपसंख्यानम् । ६३३-तकिशसिचतियतिजनिभ्यो यद्वाच्यः । ६३४-हनो वा यद्वधश्च वक्तव्यः । ६३५-चरेराङि चागुरौ । ६३६-आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् । ६३७-समश्च बहुलम् । ६३८-छन्दसीति वक्तव्यम् । ६३९-पाणौ सृजेर्ण्यद्वाच्यः । ६४०-समवपूर्वाच्च । ६४१-त्यजेश्च । ६४२-ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम् । ६४३-क्रमेः कर्त्तर्य्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः । ६४४-चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्। ६४५-हन्तेर्घत्वं च ६४६-पाटेर्णिलुक् चोक् च दीर्घश्चाभ्यासस्य । ६४७-नौ लिम्पेर्वाच्यः । ६४८-गवादिषु विन्देः संज्ञायाम् । ६४९-तुनोतेरुपसंख्यानम् । ६५०-नृतिखनिरञ्जिभ्य एव । ६५१-अस्यकेऽने च रञ्जेर्नलोपो वाच्यः । ६५२-शीलिकामिभक्ष्याचरिभ्यो णः । ६५३-ईक्षिक्षमिभ्यां च । ६५४-कविधौ सर्वत्र सम्प्रसारणिभ्यो डः । ६५५-आलस्यसुखाहरणयोरिति वक्तव्यम् । ६५६-कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् । ६५७-शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम् । ६५८-सूत्रे च धार्य्येऽर्थे । ६५९-हस्तिसूचकयोरिति वक्तव्यम् । ६६०-पार्श्वादिषूपसंख्यानम् । ६६१-उत्तानादिषु कर्त्तृषु । ६६२-गिरौ डश्छन्दसि । ६६३-कियत्तद्बहुषु कृञोऽज्विधानम् । ६६४-व्रीहिवत्सयोरिति वक्तव्यम् । ६६५-वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम् । ६६६-स्तने धेटो नासिकायां ध्मश्चेति वाच्यम् । ६६७-घटीखारीखरीषूपसंख्यानम् । ६६८-गमेः सुपि वाच्यः । ६६९-विहायसो विह इति वाच्यम् । ६७०-खच्च डिद्वा वाच्यः । ६७१-सर्वत्रपन्नयोरुपसंख्यानम् । ६६२-उरसो लोपश्च । ६७३-सुदुरोरधिकरणे । ६७४-अन्यत्रापि दृश्यत इति वक्तव्यम् । ६७५-डे च विहायसो विहादेशो वक्तव्यः । ६७६-दारावाहनोऽणन्तस्य च टः संज्ञायाम् । ६७७-चारौ वा ६७८-कर्म्मणि समि च ६७९-राजघ उपसंख्यानम् । ६८०-समानान्ययोश्चेति वाच्यम् । ६८१-क्सोऽपि वाच्यः । ६८२-अग्रग्रामाभ्यां नयतेर्णो वाच्यः ।६८३-आशासः क्वावुपधाया इत्त्वं वाच्यम् । ६८४-गमादीनामिति वक्तव्यम् । ६८५-ऊङ् च गमादीनामिति वक्तव्यम् । ६८६-साधुकारिण्युपसंख्यानम् । ६८७-ब्रह्माणि वदः । ६८८-कुत्सितग्रहणं कर्त्तव्यम् ॥६८९-ऊर्णोतेर्णुवद्भावो वाच्यः ६९०-दुग्वोर्दीर्घश्च । ६९१-पूञो विनाशे । ६९२-सिनोतेर्ग्रासकर्मकर्तृकस्य । ६९३-निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः । ६९४-उत्फुल्लसंफुल्लयोरुपसंख्यानम् । ६९५-आदिकर्मणि निष्ठा वाच्या । ६९६ क्षीरहविषोः पाके । ६९७-विस्मितप्रतिघातयोश्च । ६९८-दृशेश्च । ६९९-माड्याक्रोश इति वाच्यम् । ७०० दंशेश्छन्दस्युपसंख्यानम् । ७०१-शीङो वाच्यः । ७०२-भाषायां धाञ्कृसृगमिजनिनमिभ्यः । ७०३-सासहिवावहिचाचलिपापतीनामुपसंख्यानम् । ७०४-कृकमपि वाच्यः । ७०५-क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च ७०६-द्युतिगमिजुहोतीनां द्वे च । ७०७-जुहोतेर्दीर्घश्च । ७०८-ध्यायतेः सम्प्रसारणं च । ७०९-मितद्र्वादिभ्य उपसंख्यानम् । ७१०-व्याधिमत्स्यबलेषु चेति वाच्यम् । ७११-दारजारौ कर्त्तरि णिलुक् च । ७१२-अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् । ७१३-शॄ वायुवर्णनिवृतेषु । ७१४-भयादीनामुपसंख्यानम् । ७१५-वशिरण्योरुपसंख्यानम् । ७१६-घनर्थे कविधानम् । ७१७-द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् ।

